# MĀNAVA-DHARMA ŚĀSTRA



[ INSTITUTES OF MANU ],

WITH THE COMMENTARIES OF

MEDHÁTITHI, SARVAJÑANÁRÁYAṆA, KÚLLÚKA, RÁGHAVÁNANDA, NANDANA, AND RÁMACHANDRA,

AND AN APPENDIX

BY

THE HONORABLE RAO SAHEB

VISHVANÁTH NÁRÁYAN MANDLIK, C. S. I.; M. R. A. S.; F. R. G. S.; F.S. S. (LOND.),

ADDITIONAL MEMBER OF COUNCIL OF THE GOVERNOR GENERAL

OF INDIA,

VICE-PRESIDENT, BOMBAY BRANCH R. A. SOCIETY, FELLOW AND SYNDIC OF THE UNIVERSITY OF BOMBAY, GOVERNMENT PLEADER H. M'S HIGH COURT, BOMBAY,

&c.

---

॥ नहिसत्यात्परोधर्मः ॥

Trans: " No *Dharma* greater than truth. "

---



Bombay:

PRINTED AND PUBLISHED AT GANPAT KRISHNAJI'S PRESS, BY THE PROPRIETOR ÁTMÁRÁM KÁNOBA.

Ś. ŚAKE 1807.

A. C. 1886.

श्री

# मानवधर्मशास्त्रम्

## मेधातिथिसर्वज्ञनारायणकुल्लूकराघवानन्दनन्दनरामचन्द्र-
## प्रणीतव्याख्याभिःपरिष्कृतं परिशिष्टोपेतंच

नामदार रावसाहेब तथा कम्पेनियन आफ धि स्टार आफ इण्डिया इत्युपपदधारिणा, भारतवर्षीय गव्हर्नरजनरल
कौन्सिलाभिधनीतिशास्त्रव्यवस्थाप्रणेतृमण्डलान्तःपातिना- रायल एशिएटिकसोसायटीरायल
जिओग्राफिकलसोसायटीस्टेटिस्टिकलसोसायटीत्यभिधानां विद्वत्पर्षदां
सभासदाऽऽद्यपर्षदो मुम्बापुरस्थशाखाया उपाध्यक्षेण,

मुम्बापुरगतयुनिव्हर्सिटीनामकसर्वविद्योपचयविचारमुख्यस्थानस्थव्यवस्थापकानां सिण्डिकेटनामकमण्डलान्तर्गतेन,

मुम्बास्थहायकोर्टाभिधन्यायाधिष्ठानगतगवर्मेण्टवकीलसंज्ञकेन

मण्डलिकोपाह्वेन

## नारायणसूनुनाविश्वनाथेन

मुम्बापुर्यां

गणपतकृष्णाजीनामकमुद्रायन्त्रालये तदध्यक्षेण आत्मारामकान्होबाभिख्येन मुद्रितम्

प्रकाशितंच

शालिवाहन शाके १८०७ | इसवीसन १८८६

# प्रकरणानुक्रमणिका

॥ श्रीगणेशायनमः ॥

# अथमनुसंहितायाःसूचीपत्रम् अध्यायश्लोकसंख्याक्रमेण

## अथतृतीयोऽध्यायः

## अथचतुर्थोऽध्यायः

## अथ पंचमोऽध्यायः

## अथ षष्ठोऽध्यायः



## अथ सप्तमोऽध्यायः

## अथ अष्टमोऽध्यायः

## अथ नवमोऽध्यायः

## अथ दशमोऽध्यायः



---

## अथ एकादशोऽध्यायः

---

## अथद्वादशोऽध्यायः

इति द्वादशोऽध्यायः

# प्रस्तावना.

वर्तमानन्यायसभासु व्यवहारोपयोगार्थं शालिवाहनशकस्य १७८६ तमे वर्षे धर्मशास्त्रप्रतिपादकेभ्योबहुग्रन्थेभ्यः सारमुद्धृत्यैकोहिन्दुधर्मशास्त्रनामकोऽल्पप्रबन्धः कैलासवासिनांविद्वद्वर्यगुर्जरोपनामकपाण्डुरङ्गोपाध्यायानांसाहाय्येन रचयित्वा प्रकाशितः । कतिपयवर्षेभ्योऽनन्तरं शालिवाहनशकस्य १८०० तमे वर्षे तस्मिन्नेव शास्त्रे द्वितीयं प्रबन्धमहंरचितवान् । तस्मिन् प्रथमंयाज्ञवल्क्यस्मृतिव्यवहारमयूखयोर्मूलं संशोध्य मुद्रयित्वा तयोराङ्ग्लभाषायांटिप्पनीसहितमर्थप्रकाशनमकरवम् । तथाच तस्मिंश्चत्वारि परिशिष्टानि समगृह्णां येष्वेकोनविंशतिस्मृतिसापिण्ड्यविवाहदत्तकप्रकरणप्रतिष्ठोत्सर्गाः संक्षेपतोयथामति विवृताः । तथापि सर्वासांस्मृतीनामाद्या मूलभूता च या मनुस्मृतिस्तस्या उज्जीवनंमयावश्यंकर्तव्यमिति बहुकालंमनस्यासीत्तदनुरोधेन यत्नोऽप्यकारि । किन्त्वनभिज्ञलोकप्रमादेन प्राचीनपुस्तकानां बहुशोनष्टत्वात्कथमप्यवशिष्टानां बहुशोद्वीपान्तरंगतत्वाच्च पुस्तकप्रापणे मयाऽनल्पआयासोऽन्वभावि । तथापि नास्त्युद्यमवतां किमप्यसाध्यंनामेति श्रद्दधानः द्रव्यकालव्ययमगणयंस्तत्तत्स्थलेभ्योविद्वत्साहाय्येन पुस्तकानि प्राप्य मुद्रणउद्युक्तोऽभवम् । अनेकटीकायुतमेतादृशंपुस्तकं दृष्टिपथंनावतरतीति मनुस्मृतिप्रख्यापनेऽपूर्वोऽयंयत्नइति वदन् क्षन्तव्योयंजनोदयालुभिर्विद्वद्भिः ।

मुद्रणोपक्रमकाले प्रसिद्धक्षेत्रादिषु निवसतांविदुषांसकाशाद्यानि मानवधर्मशास्त्रपुस्तकानि समाहृत्य यथामति मूलेषु प्रामाणिकपाठान्निश्चित्यायंग्रन्थोमुद्रितस्तानि निर्दिश्यन्ते ।

अ—बंगालस्थएशियाटिकसोसैटिनामकपर्षदः पुस्तकालयात्प्रापितम् । एतत्कुलूकभट्टकृतटीकया सहितंवर्तते ।

क—उज्जनीनगरात्सोरटीबावेत्युपधाधारिभीरामभाऊशर्मभिः प्रेषितम् । इदन्तुमूलमेव ।

ख—उज्जनीनगरादाठवलेइत्युपान्वभिर्नानासाहेबइतिनामभिः प्रेषितम् । इदंरामचन्द्रकृतटीकोपेतम् ।

ग, घ, ङ, च, — एतत्पुस्तकचतुष्टयंश्रीप्रयागक्षेत्रान्मुनशीतिप्रसिद्धसंज्ञाधारिभिर्हनूमानप्रसादनामभिः प्रेषितम् । एतन्मूलमेव ।

छ—खण्डवाइतिप्रसिद्धग्रामाद्रावबहादुरइत्युपपदधारिभिः खेरेत्युपनामकबल्लाळात्मजवासुदेवशर्मभिः प्रेषितम् । एतन्मेधातिथिभाष्यसमेतम् ।

ज, झ, —एतत्पुस्तकद्वयंमिरजइत्याख्यनगरान्महाबलोपनामकवामनभट्टैः प्रेषितम् । एतन्मूलमेव ।

ञ—साताराइतिप्रसिद्धनगरसन्निहितयौतेश्वरस्थानाद्द्रविडाख्यशङ्करात्मजरामचन्द्राभिधैः प्रेषितम् । इदमपि मूलमेव

ट, ठ, ड—एतत्पुस्तकत्रितयंपुण्यपत्तनाज्जोशीत्युपनामकबलवन्तरावैः प्रेषितम् । मूलमेव ।

ढ—अहमदाबादनामकनगराच्छेटेतिसंज्ञाधारिभिर्बेचरदासाभिधैः प्रेषितम् । मूलमेव

ण—श्रीशम्भुमहादेवक्षेत्रादिन्दापुरस्थजावडेकरोपनामकगोपालात्मजबलवन्तरावैः प्रेषितम् । मूलमेव ।

त—बङ्गालस्थएशियाटिकसोसैटिनामकसभायाः पुस्तकालयात्प्रापितम् । मूलमेव

थ —आर्ष्टेनामकग्रामाल्लिमयेइत्युपनामकधोंडदेवात्मजगोविन्दाभिधैः प्रेषितम् । मूलमेव ।

द—लन्दननगरात्प्रापितम् । मूलमेव ।

ध—कालिकाताराजधान्यांमुद्रितम् । कुल्लूकभट्टकृतटीकासमवेतम् ।

न—मिरजइत्याख्यनगरान्महाबलोपनामकवामनभट्टैः प्रेषितम् । राघवानन्दकृतटीकासहितम् ।

ब—बडोदाराजधान्याः सकाशाद्वापटोपनामकसदाशिवात्मजवासुदेवैः प्रेषितम् । कुल्लूकभट्टकृतटीकासमेतम् ।

भ—जयपुरइत्याख्यनगराद्द्रविडाख्यपण्डितलक्ष्मीनाथशास्त्रिभिः प्रेषितम् । राघवानन्दकृतटीकासमेतम् ।

म—मद्रासइत्याख्यस्थानाद्दिवाणबहादुरआररघुनाथरावाभिधैः प्रेषितम् । नन्दनकृतटीकायुक्तम् ।

य — पुण्यपत्तनाद्दिडगांवकरोपनामकगणेशाभिधज्योतिर्विदांसकाशाज्जोशीत्युपनामकबलवन्तरावशर्मभिर्गृहीत्वा प्रहितम् मूलमेव

र—पुण्यपत्तनाद्गोखलेइत्युपनामकभट्टनारायणाभिधैः प्रेषितम् । मूलमेव ।

ल—जयपुरइत्याख्यनगराद्द्रविडोपनामकलक्ष्मीनाथशास्त्रिभिः प्रेषितम् । मूलमेव ।

व—इदंतुस्वकीयम् । सर्वज्ञनारायणटीकासमेतम् ।

श अथवा क्ष —आर्ष्टेनामकग्रामाल्लिमयेइत्युपाह्वधोंडदेवात्मजगोविन्दशर्मभिः प्रेषितम् । राघवानन्दकृतटीकासहितम् ।

एतानि पुस्तकानि समवलोक्य मूलगतान्पाठभेदानहं निश्चितवान् । तेचटिप्पनीरूपेणप्रदर्शिताः ।

अथ टीकापाठभेदास्तावत्कथ्यन्ते । भट्टमेधातिथिकृतव्याख्यायाः पाठभेदावङ्गलिपिपुस्तस्काद्गृहीताः । तेषु कतिपयाअस्मिन्ग्रन्थेऽधस्ताट्टिप्पनीरूपेण दत्ताः । अवशिष्टाश्चान्ते निवेशिताः । इण्डियाआफिसपुस्तकालयप्राप्तादष्टममेधातिथिरितिसंज्ञितपुस्तकाद्गृहीताः कतिपयाः पाठभेदास्तथैव टिप्पनीरूपेण दत्ताः सन्ति ।

कुल्लूकभट्टकृतटीकायाः पाठभेदाअसंज्ञितपुस्तकाद्गृहीतामूलएव दत्ताः । डाक्टरपिटरसननामभ्योलब्धे पुस्तके दृष्टानि पाठान्तराण्यग्रे दत्तानि सन्ति ।

**राघ०** २,३,४ एषु पाठभेदामूलग्रन्थएव दत्ताः । तथा च द्वितीयराघवानन्दपुस्तकस्यावशिष्टाः पाठास्तथैवपञ्चमपुस्तकस्थाःपाठभेदाश्चास्य ग्रन्थस्यान्ते विनिवेशिताः ।

नन्दनकृतव्याख्यायाः पाठान्तराण्यग्रे नियोजितान्येवसन्ति ।

टीकापुस्तकानि प्रेप्सोर्मे तदर्थयत्नोऽनुपारतएव । अतऊर्ध्वंपुस्तकान्तराण्युपलभेय पाठभेदांश्च पश्येयंचेत् तानवश्यमागामिन्यां मुद्रणावृत्तौ दर्शयिष्यामीति दृढमाशासे ।

इदानीं टीकापाठभेदाः केभ्योपुस्तकेभ्यो निश्चितास्तत्कथ्यते । आसुटीकास्वतिप्राचीनामेधातिथिकृता मनुभाष्यनाम्नी टीका वर्तते । तस्याः पुस्तकानि कालिकातावाराणसीन्दूरपुण्यपत्तनमुम्बापुरीलन्दनेभ्यः समानीतानि । तथापि साग्रंमेधातिथिभाष्यंनाद्याप्युपलब्धमित्येतत्पुस्तकदर्शनाद्यक्तंभविष्यति । अस्यांटीकायांयत्र [ ] एतादशंचिन्हंवर्तते तत्र निर्दिष्टाङ्कसंमितावर्णाभ्रष्टाउपलब्धेषु च पुस्तकेषु न कस्मिंश्चिदपि लभ्यन्तइति विभावनीयम् । कालिकातानगर्यां एशियाटिकसोसैटिनामकपर्षदः पुस्तकसङ्ग्रहालयस्थं (आ आ) इतिसंज्ञकंपुस्तकंख्रिस्तशकस्य १८२५ तमात्संवत्सरात्प्राग्लिखितमिव दृश्यते । तथा तस्यामेव नगर्यांसंस्कृतपाठशालायामन्यत्पुस्तकंवर्तते तत्पूर्वपुस्तकादेव प्रतिलिखितमिति तयोस्तुलनया.स्पष्टमवभासते । तस्मिन्नप्येतादृशानि खण्डितस्थलानि सन्ति । तत्पुस्तकद्वयंकस्मात्पुस्तकात्प्रतिलिखितमितिनिर्णेतंसम्प्रति साधनंनोपलभ्यते । मेधातिथिभाष्यपुस्तकानामतीवविरलतया लब्धपुस्तकानां पाठनिश्चयेऽपर्याप्ततया च तस्मि-

न शङ्कास्थानानि कतिचिद्वर्तन्तइतिजानन्नप्यकरणान्मन्दकरणंश्रेयइतिन्यायेन यथासंभवंशोधितस्य ग्रन्थस्य मुद्रणम-मुद्रणाद्वरमिति मनस्यकरवम्। एतद्भाष्यस्योद्धारे यः कोऽपि प्रवर्त्स्यति तस्य मदीययत्नात्किममि साहाय्यं स्याच्चेदात्मा-नंकृतार्थं मंस्ये। अस्याष्टीकायाः संशोधने विद्वन्मणीनांबोडसोपनामकराजारामशास्त्रिणामतीव साहाय्यं जातम्।

सर्वज्ञनारायणकृतटीकायास्त्रीणि पुस्तकानि लब्धानि। तेषांसमवलोकनात्प्रस्तुतटीका निश्चिता। तानि यथा

**सर्व०** १ एतत्स्वकीयंपुरातनटीकापुस्तकंगुर्जरदेशात्संप्राप्तम्। तत्तुप्रायः द्विशतवर्षेभ्योऽपि पुरातनमिति दृश्यते।

**सर्व०** २ एतज्जयपुरनगराद्द्रविडोपनामभिर्विद्वन्मणिलक्ष्मीनाथशास्त्रिभिर्लेखयित्वा प्रेषितम्।

**सर्व०** ३ इदंश्रीकाशीक्षेत्राद्बोडसोपधानैः कैलासवासिविष्णुशर्मभिः प्रेषितम्। तस्य प्रथमभागोऽतिप्राचीनोवर्तते। सतु-प्रायस्त्रिशतवर्षेभ्योऽपि पुरातनइति पत्राक्षराभ्यामवभासते। तस्य आद्यानि पञ्चाशत्पत्राणि विनष्टानि। चरमभागो-नूतनमालेख्य प्रेषितः। एते द्वेअन्त्ये पुस्तके गुर्जरदेशादेव प्रथमतः प्राप्तेइत्यनुमीयते।

कुल्लूककृतटीकायाः पुस्तकपञ्चकं लब्धम्। तद्यथा

**कु०** १ इदंस्वकीयंपुस्तकंहेगिष्टइत्युनामकहरशेटात्मजबापूशेटनामभीरामदासात्मजमहन्तमथुरादासनाम्नांपुस्तकादवतार्य स्वकीयशिलायन्त्रे मुद्रितंशालिवाहनशकाब्दाः १७८०।

**कु०** २ वर्णचिन्हितग्रन्थेष्वस्य **अ** इतिसंज्ञा वर्तते। तस्य उपरि वर्णनं कृतमेव।

**कु०** ३ नगरकरेत्युपनामकरावबहाद्दुरदाजीसाहेबनामभिः प्रेषितंतस्यास्मिन्पुस्तके क्वचित्स्थलेषु निवेशः कृतः।

**कु०** ४ इदंपुस्तकंएचूटीकोलब्रुकनाम्नाम्। तदिण्डियाआफिसपुस्तकालयाधिकारिभ्यः डाक्टररेनहोल्डराास्टनामभ्य-उपलब्धम्। एतन्मदीय पुस्तकेन प्रायः सदृशम्।

**कु०** ५ मुम्बापुरस्थएल्फिन्स्टननामकपाठशालासंस्कृताध्यापकेभ्यः डाक्टरपिटरसननामभ्यः प्राप्तम्।

राघवानन्दकृतटीकायाः पञ्चपुस्तकानि लब्धानि तानि यथा

**राघ०** १ वर्णचिन्हितपुस्तकेष्वस्य पुस्तकस्य **भ**इतिसंज्ञावर्तते तपदरिवर्णितमेव।

**राघ०** २ इदंपुस्तकंबुन्दीश्वरपुस्तकालयात् डाक्टरपिटर्सननामभिरानीतंदत्तंच। अस्य प्रायः राघवानन्दप्रथमपुस्तकेनसादृ-श्यंवर्तते। एतत्स्थपाठदर्शनेऽष्टमाध्यायस्य प्रथमश्लोकादारभ्य पञ्चाधिकशतश्लोकपर्यन्तंचतुर्थराघवानन्द इतिसंज्ञा-प्रमादाद्दत्ता।

**राघ०** ३ संज्ञितग्रन्थेष्वस्य पुस्तकस्य **न**इतिसंज्ञा वर्तते। अस्य चतुर्थराघवानन्दस्य च बाहुल्येन सादृश्यादेकस्मादेव-पुस्तकादेतद्द्वयं लिखितमथवैकस्मादन्यल्लिखितमिति भाति।

**राघ०** ४ संज्ञितग्रन्थेष्वस्य पुस्तकस्य **श**वा **क्ष**वा संज्ञा वर्तते।

**राघ०** ५ इदंपुस्तकंकालिकातानगर्यांशोभाबाजारवासिभ्योराजाकोमलकृष्णबहाद्दुरनामभ्योन्यायरत्नेत्युपपदधारिभिः प-ण्डितमहेशचन्द्रनामभिरानीय दत्तम्।

नन्दनकृतटीकापुस्तकद्वयंलब्धम्। तद्यथा

**नं०** १ एतत्पुस्तकंत्रावणकोरेश्वरैर्महाराजाधिराजरामवर्मभिः प्रेषितम्। तत्तु तैरेव संशोध्यास्मिन्पुस्तके निवेशनार्थंदत्तम्।

**नं०** २ संज्ञितपुस्तकेष्वस्य पुस्तकस्य **म**इतिसंज्ञा वर्तते। इदंदिवाणबहाद्दुरोपपदधारिभिः आररघुनाथरावैः शर्मण्यदेशे

प्रेषणार्थमत्र प्रहितम् । तत्तु तेषामनुमत्या कंचित्कालंमद्धस्तआसीत् । तस्य प्रतिलेखनंकारितम् । एतच्चातिवा शुद्धंवर्तते तथापि यानि कानिचित्पाठान्तराणि ग्राह्यण्यासंस्तानि गृहीतान्येव ।

रामचन्द्रकृतायाष्टीकायाः पुस्तकान्तरंन कुत्रापि प्राप्तम् । संज्ञितग्रन्थेष्वस्य खइतिसंज्ञावर्तते । तस्य विशेषः तत्रैव स्पष्टीकृतः । एषा टीकाऽतीवार्वाचीनापि मनुस्मृतिरद्यापि धर्मशास्त्रेष्वग्रेसरत्वेन गृह्यते परिष्क्रियते चेति दर्शयितुमस्मिन्पुस्तके प्रतिनिवेशिता ।

एतट्टीकाषङ्कंसंपाद्यायं मुद्रणारम्भः कृतः । एतद्भिन्ना मानवधर्मशास्त्रव्याख्याः सन्तीति तत्तद्धर्मशास्त्रनिबन्धेभ्योऽवगम्यते । ताश्चयथा

| | |
|---|---|
| १ श्रीमाधवाचार्यकृता | ५ रुचिदत्तकृता |
| २ धरणीधरकृता | ६ विश्वरूपकृता |
| ३ गोविन्दराजकृता | ७ भोजदेवकृता |
| ४ श्रीधरस्वामिकृता | ८ भारुचिकृता |

हिन्दुधर्मानुयायिसमयाभिज्ञानां मनुस्मृतिविभववर्णनं सर्वथा पुनरुक्तं भवेदिति नकिमपि तद्विषयेऽत्रोच्यते । केवलमिदंप्रार्थये यन्मदीयमिममारम्भमृजुधियोधर्मशास्त्रविदः परीक्षन्तां तत्रस्थान्दोषांश्च तथा प्रकाशन्तां यथा तन्निरसनेऽहं समर्थोभवेयम् । अखिलभारतवर्षे हिन्दुधर्मविषयकमज्ञानमनुदिनं वर्धमानमास्तइतिपश्यतोमेऽतीव दूयते चेतः । तत्प्रतीकारार्थंकृतोऽयमल्पःसमारम्भोजगत्पूजाय परमात्मने निवेदितो भवत्वित्यलम् ।

फाल्गुनकृष्ण १४ शालिवाहनशके १८०७

विश्वनाथशर्मा

## श्रीगणेशाय नमः॥ श्रीलक्ष्मीकेशवौ जयतः

[ स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे॥ मनुप्रणीतान्विविधान्धर्मान्वक्ष्यामि शाश्वतान्॥ १§ ॥]

मनुमेकाग्रमासीनमभिगम्य महर्षयः॥ प्रतिपूज्य यथान्यायमिदंवचनमब्रुवन्॥ १॥

( १ ) मेधातिथिकृतमनुभाष्यम्

श्रीकृष्णायनमः॥ वेदान्तवेद्यतत्त्वाय जगत्त्रितयहेतवे। प्रध्वस्ताशेषदोषाय परस्मै ब्रह्मणे नमः॥ १॥ चतुर्भिः पद्-श्लोकैर्विशिष्टकर्तृत्वमनन्यप्रमाणवेद्यपुरुषार्थोपदेशकत्वंचास्य शास्त्रस्य प्रतिपाद्यते प्रतिष्ठार्थम्। प्रतिष्ठिते हि शास्त्रे कर्तृभिः स्वर्गयशसी प्राप्येते यावत्संसारमनपायिनी च भवतः शास्त्रं च प्रतिष्ठां लभते। यदि तत्र केचिदध्ययनश्रवणचिन्तनादिषु प्रवर्तन्ते नच बुद्धिपूर्वव्यवहारिणोऽध्ययनादिष्वनवधृतप्रयोजनाः प्रवर्तितुमर्हन्त्यतःपुरुषार्थसिद्धावुपायपरिज्ञानार्थमिदं-शास्त्रमारभ्यतइत्येतत्प्रतिपादनार्थं श्लोकचतुष्टयमाचार्यः पपाठ। नचवाच्यमन्तरेणैवादितः प्रयोजनवचनं वक्ष्यमाण-शास्त्रपौर्वापर्यपर्यालोचनयैवेदंपर्यवस्यामः किंतत्प्रतिपादनार्थेन यत्नेनेति किंच उक्तमपि प्रयोजनंयावत्परस्तान्नावमृष्ट-तावन्न निश्चीयते नहि सर्वाणि पुरुषवचांस्यर्थेनिश्चयनिमित्तम् नचैषनियमः सर्वत्रप्रयोजनपरिज्ञानपूर्विकैव प्रवृत्तिः स्वाध्यायाध्ययनेऽतन्निबन्धनायाः प्रवृत्तेर्दर्शनात्। पौरुषेयेष्वपि ग्रन्थेषु नैव सर्वेषु प्रयोजनाभिधानमाद्रियते तथाहि भगवान्पाणिनिरनुक्त्वैवप्रयोजनमअथ*शब्दानुशासनमिति सूत्रसंदर्भमारभते। अत्रोच्यते। आरम्भेऽनवधृतप्रयोजनानैव प्रथमतोग्रन्थमुपाददीरन्। अनुपादानाच्च कुतः शास्त्रंकात्स्न्र्येन पर्यालोचयेयुः। किंच पौर्वापर्यपर्यालोचनया योऽर्थो-बुद्धिगोचरमावहति सएवत्वादितः संक्षेपेणोच्यमानः सुग्रहोभवति। तदुक्तम्। इष्टं हि विदुषांलोके समासव्यासधारण-मिति। तत्नूक्तमपि न निश्चीयते। पौरुषेयेभ्योवाक्येभ्योऽर्थनिश्चयाभावात् एवमेवायंपुरुषोवेदेतिभवति प्रत्ययोनत्वेवमर्थ-इति नात्र विवदामहे निश्चयोनास्ति नास्तीतिग्रन्थगौरवप्रसङ्गात्। अर्थसंशयेऽपि प्रवृत्तिसिद्धौ नियतविषयसंशयोत्पत्ति-र्नान्तरेण प्रयोजनवचनम्। अनुक्ते हि किमिदंधर्मशास्त्रमर्थशास्त्रंकाकदन्तपरीक्षादिलक्षणरूपंवेत्यपि संशयः स्यात्। अभिहिते तु प्रयोजनेऽयंतावदेव महाश्रेयसः पन्थानंदर्शयामीति। न च मे प्रवृत्तस्य काचित्क्षतिरस्ति भवतु पर्यालो-चयामीति प्रवृत्तिसिद्धिः। या तु स्वाध्यायाध्ययनेप्रवृत्तिः साऽऽचार्यप्रयुक्तस्य न स्वाधिकारप्रतिपत्त्या न हि तदानीं बालत्वात्स्वाधिकारंप्रतिपत्तुमुत्सहते परप्रयुक्त्यैव च प्रवृत्तिसिद्धिः। नाधिकारप्रतिपादनेनापि चावेद्यते। अतस्तत्र प्रवृ-त्तस्य प्रयोजनमर्थावबोधोऽतश्च प्रवृत्तिः। इह तु योऽनधीत्य द्विजोवेदमन्यत्र कुरुते श्रममिति गृहीतवेदस्याध्ययनाधिकारः। तदानींचाव्युत्पन्नबुद्धित्वात्प्रयोजनमन्विच्छति। भगवतः पुनः पाणिनेरतिसंक्षिप्तानि सूत्राणि नैवार्थान्तराभिधानपरत्वाश-ङ्का। तत्राकुमारंच यशः पाणिनेः प्रख्यातमिति सुप्रसिद्धप्रयोजनत्वादनुपन्यासः। अयंतु विततोग्रन्थोऽनेकार्थवादबहुलः सर्वपुरुषार्थोपयोगी तत्र सुखावबोधार्थं प्रयोजनाभिधाने न किंचित्परिहीणम्। द्वयेच प्रतिपत्तारोन्यायप्रतिसरणाः प्रसिद्धि-प्रतिसरणाश्च। तत्र मनुर्वै यत्किंचावदत्तद्भेषजमिति ऋचोयजूंषि सामानि मन्त्राआथर्वणाश्च ये सप्तर्षिभिस्तु यत्प्रोक्तं-

---

§ अयंश्लोकः क, ख, ग, घ, च, ज, झ, ञ, ट, ठ, ड, ढ, त, थ, न, भ, य, र, ल, चिन्हितेषु पुस्तकेषु दृष्टः। तस्य व्याख्यानं सर्वज्ञनारायणराघवानन्दाभ्यां कृतंतृतीयचतुर्थपृष्ठयोः क्रमेण द्रष्टव्यम्॥

* वस्तुतस्तु भाष्यारम्भइदम्।

तत्सर्वमनुरब्रवीदित्याद्यर्थवादेतिहासपुराणादिभ्यः प्रख्यातप्रभावोलोकेतत्प्रसिद्ध्यैव वा निरूपितमूलपातेन प्रजापतिनैतत्प्रणीतमित्येतावतैव श्रोत्रियाः प्रवर्तन्त इति तान्प्रति कर्तृविशेषसंबन्धोऽपि प्रवृत्त्यङ्गम्। अतएवच प्रश्नप्रतिवचनभङ्ग्या प्रयोजनोपन्यासोमहर्षयः प्रष्टारः प्रजापतिर्वक्ता धर्मलक्षणश्चार्थोन लोकावगम्यः शास्त्रैकगोचरोऽयम्। यत्र महर्षयोऽपि संशेरतइत्येवंपरादेशोऽपि सतैः पृष्टइति नाहंपृष्टइति तथाऽऽत्मनोब्रह्मणोऽकृत्रिमप्रतिमत्वंचेत्येवमादिस्तद्युत्पादनार्थोयुक्तः-शास्त्रारम्भइति श्लोकचतुष्टयस्य तात्पर्यम्। यथा चानेन पुरुषार्थोपदेशपरता शास्त्रस्योच्यते तथा पदार्थप्रयोजनात्प्रतिपादयिष्यामः। तत्र मनुमभिगम्य महर्षयइदंवचनमब्रुवन् धर्मान्नोवक्तुमर्हसीति सपृष्टः प्रत्युवाच। श्रूयतामित्येवं प्रश्नप्रतिवचने एकार्थप्रतिपादके तात्पर्येण भवतः। अतोधर्माअत्रप्रतिपाद्यन्तइत्युक्तंभवति। धर्मशब्दश्च लोके श्रेयःसाधने प्रत्यक्षादिभिर्लौकिकैः प्रमाणैः शब्दादितरैरविहिते प्रयुज्यते। अतः सश्रूयतामिति संबन्धे विशिष्टपुरुषार्थसाधनत्वमुक्तं भवति। मनुर्नाम कश्चित्पुरुषविशेषोऽनेकवेदशाखाध्ययनविज्ञानानुष्ठानसंपन्नः स्मृतिपरंपराप्रसिद्धस्तमभिगम्याभिमुख्येन तत्समीपंगत्वा व्यापारान्तरत्यागेन यदृच्छया संगम्य। अनेनचाभिगमनप्रयत्नेन पृच्छयमानवस्तुगौरववक्तुश्च प्रामाण्यंख्याप्यते। नह्यकुशलः प्रतिवचने यत्नेन पृच्छ्यते। आगत्यैकाग्रमासीनमेकाग्रं स्थितमेकाग्रंसन्तंनत्वत्र ब्रूस्याद्युपवेशनमासनमनुपयोगात्। आसनेन स्वस्थवृत्तिता लक्ष्यते। तथाभूतः प्रतिवचनसमर्थोभवति। अभिगम्येति केवलएव मनुः कर्मप्रश्नक्रियायास्त्वेकाग्रमासीनमिति विशेषणम्। कुशलप्रश्नानुरूपकथाप्रवृत्त्यादिनैकाग्रमविक्षिप्तमनस्कं ज्ञात्वा प्रश्नश्रवणे दत्तावधानमिदंवचनमब्रुवन्। एकाग्रशब्दोरूढ्या निश्चलतामाह। प्रत्याहारेण परित्तरागादिदोषसंसर्गस्य विकल्पनिवृत्तौ तत्त्वावबोधचिन्तायांमनसः स्थैर्यमेकाग्रता। तथाभूतएव च संनिहितरूपशब्दादिविषयानवधारणे योग्योभवति न सदसद्विकल्पयुक्तः। अथवा यौगतोऽग्रशब्दोमनसि वर्तते ऽर्थग्रहणेचक्षुरादिभ्योऽग्रगामित्वात्। प्रथमप्रवृत्तियुक्तः पुरःसरोलोकेऽग्रउच्यते। एकस्मिन्ध्येये ग्राह्ये वाऽग्रमस्येतिविग्रहोव्यधिकरणानामपि बहुव्रीहिर्गमकत्वात्। अत्रापि व्याक्षेपनिवृत्तिरेवैकाग्रता। प्रतिपूज्य यथान्यायम् न्यायः शास्त्रविहिता मर्यादा तामनतिक्रम्य यादृशी शास्त्रेणाभिवादनोपासनादिका गुरोः प्रथमोपसर्पणे पूजा विहिता तया पूजयित्वा भक्त्यादरौ दर्शयित्वा। महर्षयः ऋषिर्वेदस्तदध्ययनविज्ञानतदर्थानुष्ठानातिशययोगात्पुरुषेऽप्यृषिशब्दः महान्तश्च यऋषयश्च तेषामेव गुणानामत्यन्तातिशयेन महान्तोभवन्ति यथा युधिष्ठिरः श्रेष्ठतमः कुरूणामिति अथवा तपोविशेषात्पूजाख्यातिविशेषाद्वा महान्तः। इदंवचनमब्रुवन् उच्यतेऽनेनेतिवचनंवक्ष्यमाणंद्वितीयश्लोकप्रश्नवाक्यमिति। तदेव प्रत्यासन्नत्वादिदमिति प्रतिनिर्दिशति। येषामपि प्रत्यक्षवस्तुप्रतिनिर्देशकइदंशब्दस्तेषामपि बुद्धिस्थत्वात्प्रश्नस्य प्रत्यक्षता। अथवोच्यतइतिवचनंपृच्छयमानंवस्त्वब्रुवन्। वाक्पक्षइदं वाक्यमुच्चारितवन्तः। कर्मसाधने तु वचनशब्दइदमपृच्छन्। द्विकर्मकश्चतदाब्रूञ्। अकथितकर्मणा मनुना तिसृणांक्रियाणांमनुःकर्म ॥ १ ॥

## ( २ ) सर्वज्ञनारायणकृतमन्वर्थनिबन्धः

ॐनमःश्रीमहागणपतये ॥ अनेकशाखस्मृतिपारदर्शिसर्वज्ञनारायणनिर्मितेन ॥ मनुस्मृतेरर्थनिबन्धनेन बुधः स्वधर्मेषु धियंविधत्ते ॥ १ ॥ इहहि श्रुतिभ्यएवातिशयिततपःप्रज्ञाध्ययनप्रकर्षवत्परमाखिलपुरुषार्थसाधनसमधिगमः संभवन्नपि तासांदुरूहविप्रकीर्णार्थतया संभावितैकदेशोत्सादतया च प्रसिद्धपदप्रकरणादिशब्दबोधसाधनोपेतोत्सन्नशाखार्थस्मारकस्मृत्यादिसापेक्षएवार्वाचीनानामुदेतीति। निखिलस्य लोकस्य भावितपःप्रज्ञाध्ययनापकर्षविमर्शकारितकरुणापरवशः परमेष्ठी धर्मशास्त्रमेतत्प्रणीय मनुमध्यापयामास। मनुश्च भृगुमध्याप्य तन्मुखेन महर्षीन्ग्राहयामास। ततः पुनः सएव भृगुः

शिष्यान्तरेभ्योमनुनिर्देशप्रवृत्तपौरस्त्याध्यापनवृत्तान्तानुकथनपूर्वकं तत्कथयन्नखिलविघ्नोत्सारद्वारा शास्त्रसंप्रदायाविच्छेदाय देवतानमस्कारान्निबबन्ध स्वयंभुवे नमस्कृत्येति । स्वव्यापारमात्रगृहीतदेहः स्वयंभूर्ब्रह्मा बृंहकोऽमिततेजा-अनवच्छिन्नविषयज्ञानः । क्रियाग्रहणंकर्तव्यमितिवचनाच्चतुर्थी । मनुप्रणीतान्मनुनाप्रकाशितान् विविधान्वर्णादिभेदेनैहिकसुखमोक्षरूपफलभेदेन च नानाप्रकारान् । धर्मसाधनानि कर्माणि लक्षणया धर्माइत्युच्यन्ते । शाश्वतानिति कल्पान्तरेप्यविच्छिन्नानुष्ठानान् वक्ष्यामीतिशास्त्राभिधेयप्रतिज्ञाऽपि । नचास्य ग्रन्थसंदर्भस्य भृगुप्रोक्तत्वे ततस्तथा सतेनोक्तइत्यादिपरोक्षोक्त्यनुपपत्तिः । सर्वस्यैवास्यग्रन्थसंदर्भस्य ब्रह्मणैव प्रणीतत्वात् । तथाच वक्ष्यति इदंशास्त्रंतु कृत्वाऽसाविति । शास्त्रकारेणैव स्वसंदर्भएवोच्चकैःकृत्वेत्यभिधानात् । एवंपरोक्त्यनुवादिनोभृगोर्भूतभाविवृत्तान्तकथनप्रवृत्तस्य ब्रह्मणः स्वस्मिन्परोक्षोक्तिर्न संभाविनीति मनुप्रणीतानां स्वप्रणीतेऽपि परोक्षोक्तिः ॥१॥

[ अथ प्रकृतंप्रक्रमते मनुमेकाग्रमिति । मननान्मनुः । एकाग्रमविक्षिप्तमनस्कम् । आसीनं स्वस्थतयोपविष्टम् । अभिगम्य संमुखतः प्राप्य । महर्षयोमरीच्यादिसंततिप्रभवाः । प्रतिपूज्य प्रत्येकंपूजयित्वा । यथान्यायंयेन यादृशी पूजा कर्तव्या तेत तथैव ॥ १ ॥ ]

## ( ३ ) कुल्लूकभट्टकृतमन्वर्थमुक्तावली.

श्रीगणेशाय नमः ॥ ॐनमोभगवते वासुदेवाय ॥ गौडे नन्दनवासिनाम्निसुजनैर्वन्द्येवरेन्द्र्यांकुले श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् । काश्यामुत्तरवाहिजन्हुतनयातीरे समंपण्डितैस्तेनेयंक्रियते हिताय विदुषांमन्वर्थमुक्तावली ॥ १ ॥ सर्वज्ञस्यमनोरसर्वविदपि व्याख्यामियद्वाङ्मयंयुक्त्या तद्बहुभिर्यतोमुनिवरैरेतद्बहु व्यात्दतम् । तांव्याख्यामधुनातनैरपिकृतां न्याय्यांब्रुवाणस्य मे भक्त्या मानववाङ्मये भवभिदे भूयाद्शेषेश्वरः ॥ २ ॥ मीमांसेबहुसेविताऽसि सुत्दृदस्तर्काः समस्ताः स्थ मे वेदान्ताः परमात्मबोधगुरवोयूयंमयोपासिताः । जाता व्याकरणानि बालसखिता युष्माभिरभ्यर्थये प्राप्तोऽयंसमयोमनूक्तविवृतौसाहाय्यमालम्ब्यताम् ॥ ३ ॥ द्वेषादिदोषरहितस्य सतांहिताय मन्वर्थतत्त्वकथनाय ममोद्यतस्य । दैवाद्यदि क्वचिदिह स्खलनंतथापि निस्तारकोभवतु मे जगदन्तरात्मा ॥ ४ ॥ मानववृत्तावस्यांज्ञेया व्याख्या नवा मयोद्भिन्ना । प्राचीनाअपि रुचिरा व्याख्यातॄणामशेषाणाम् ॥ ५ ॥ मनुमेकाग्रमासीनमित्यादि अत्र महर्षीणांधर्मविषयप्रश्ने मनोः श्रूयतामित्युत्तरदानपर्यन्तश्लोकचतुष्टयेनैतस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्युपयुक्तानि विषयसंबन्धप्रयोजनान्युक्तानि । तत्र धर्मएव विषयः । तेन सहवचनसंदर्भरूपस्य मानवशास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः संबन्धः प्रमाणान्तरासन्निकृष्टस्य स्वर्गापवर्गादिसाधनस्य धर्मस्य शास्त्रैकगम्यत्वात् । प्रयोजनं तु स्वर्गापवर्गादि तस्य धर्माधीनत्वात् । यद्यपिपत्न्युपगमनादिरूपःकामोऽप्यत्राभिहितस्तथापि ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदेत्यृतुकालादिनियमेन सोऽपि धर्मएव । एवंचार्थार्जनमपि ऋतामृताभ्यांजीवेदित्यादिनियमेन धर्मएवेत्यवगन्तव्यम् । मोक्षोपायत्वेनाभिहितस्यात्मज्ञानस्यापि धर्मत्वाद्धर्मविषयत्वंमोक्षोपदेशकत्वंचास्यशास्त्रस्योपपन्नम् । पौरुषेयत्वेऽपि मनुवाक्यानामविगीतमहाजनपरिग्रहाच्छ्रुत्युपग्रहाच्च वेदमूलकतया प्रामाण्यम् । तथाच छान्दोग्यब्राह्मणे श्रूयते मनुर्वै यत्किंचिदवदत्तद्भेषजंभेषजतायाइति । बृहस्पतिरप्याह वेदार्थोपनिबद्धत्वात्प्राधान्यंहि मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा विनश्यति ॥ तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च । धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते । महाभारतेऽप्युक्तम् पुराणंमानवोधर्मःसाङ्गोवेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥ विरोधिबौद्धादितर्कैर्न हन्तव्यानि । अनुकूलस्तुमीमांसादितर्कः प्रवर्तनीयएव । अतएव वक्ष्यति आर्षंधर्मोपदेशंच वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते सधर्म-

वेद नेतरइति । सकलवेदार्थादिमननान्मनुंमहर्षयइदंद्वितीयश्लोकवाक्यरूपमुच्यतेऽनेनेतिवचनमब्रुवन् । श्लोकस्यादौ मनुनिर्देशोमङ्गलार्थः परमात्मनएव संसारस्थितये सार्वज्ञ्यैश्वर्यादिसंपन्नमनुरूपेण प्रादुर्भूतत्वात् तदभिधानस्य मङ्गलातिशयत्वात् । वक्ष्यति हि एनमेकेवदन्त्यग्निमनुमन्ये प्रजापतिमिति । एकाग्रंविषयान्तराव्याक्षिप्तचित्तम् । आसीनंसुखोपविष्टमीदृशस्यैवमहर्षिप्रश्नोत्तरदानयोग्यत्वात् । अभिगम्यअभिमुखंगत्वा । महर्षयोमहान्तश्चतऋषयश्चेतितथा । प्रतिपूज्य पूजयित्वा । यद्वा मनुना पूर्वंस्वागतासनदानादिना पूजितास्तस्य पूजांकृत्वेति प्रतिशब्दादुन्नीयते यथान्यायंयेन न्यायेन विधानेन प्रश्नः कर्तुंयुज्यते प्रणतिभक्तिश्रद्धातिशयादिना वक्ष्यतिच नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेन पृच्छतइति । अभिगम्य प्रतिपूज्याब्रुवन्नितिक्रियात्रयेऽपिमनुमित्येवकर्म । अब्रुवन्नित्यत्राकथितकर्मता ब्रुविधातोर्द्विकर्मकत्वात् ॥ १ ॥

( ४ ) राघवानन्दसरस्वतीकृतमन्वर्थचन्द्रिका.

श्रीगणेशाय नमः ॥ आनन्दमजरंब्रह्म सर्वानर्थविवर्जितम् ॥ गुरुंच नत्वा रचिता राघवानन्दभिक्षुणा ॥ १ ॥ मन्वर्थकुमुदग्रन्थिविकासनपटीयसी । चन्द्रिकास्तु मुदे विद्वद्धृदयाम्भोधिवर्धिनी ॥ २ ॥ भृगुणोक्तपदार्थोऽत्र वाक्यार्थमितये मया । विविच्यते समासेन श्रुतिन्यायानुसारिणा ॥ ३ ॥ कुल्लूकनारायणसंमतानि गोविन्दमेधातिथिलद्धृतानि ॥ ज्ञात्वा च वेदादिकमाकलय्य मनोर्मनःस्थंप्रकटीकरोमि ॥ ४ ॥ तत्र सर्वेभ्योमुनिवाक्येभ्योऽतिशयेनादर्तव्यंमनुवाक्यमित्यत्र श्रुतिस्मृतयः । तद्यथा । यद्वैमनुरवदत्तद्भेषजंभेषजमितिश्रुतिः (अ)। स्मृतिरपि वेदार्थोपनिबन्धत्वात्प्राधान्यंहि मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥ तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानिच । धर्ममोक्षोपदेष्टा तु मनुर्यावन्न दृश्यतइतिबृहस्पतिः । भारतेऽपि पुराणंमानवोधर्मः साङ्गोवेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिरिति । चिकित्सितंभिषक्शास्त्रं हेतुभिः प्रतिकूलतर्कैर्न हन्तव्यानि नान्यथयितव्यानि किंतु मीमांसितव्यानि । तथाच वक्ष्यति आर्षंधर्मोपदेशंच वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते सधर्मंवेद नेतरः ॥ तर्केण मीमांसया अतश्च हैतुकस्तर्कीतिभेदेनोपादानंतार्किणः । तथाचाह मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः । सोतोवेदोरुतांप्रासः काष्ठाम्बुलवणात्मवदिति ॥ अतएवात्र यद्वाक्यान्तरमुपादीयते न तत्प्रामाण्यदार्ढ्याय किंतु व्याख्यानदार्ढ्याय । अत्रर्षिभिः साकंमनोर्यः संवादोवृत्तोनिषेकादिश्मशानान्तेष्ववान्तरज्ञातिसहितानांचतुर्णांवर्णानामाश्रमाणांच तंमनुवचनमङ्गीकृत्य वक्तुंप्रववृते भगवान्भृगुः स्वयंभुवे नमस्कृत्येतिपञ्चभिः । स्वयंभुवे स्वभवनेऽन्यानपेक्षाय स्वयंदासास्तपस्विनइतिवत् अनादयइतियावत् । ब्रह्मणे बृहते अमिततेजसेअमितानि सृष्टिस्थितिसंहरणे तेजांसि सामर्थ्यानि यस्य तस्मै शाश्वतान्वेदोक्तत्वेन नित्यान् ॥१॥

[ मनुमिति । ] एकाग्रंएकेषुधर्मवक्तृप्रधानेषुअग्रंश्रेष्ठंएकाग्रचित्तंवा । यथान्यायम् । न्यायोऽत्रक्षत्रियेषुब्राह्मणादीनांननमस्कारः किंतु वाक्पूजा तमनतिक्रम्य पृष्टवन्तइत्यर्थः ॥ १ ॥

( ५ ) नन्दनकृतमनुव्याख्यानम्.

श्रीगणेशाय नमः ॥ मनुमिति मनुः स्वायंभुवस्तथाच वक्ष्यति स्वायंभुवोमनुर्धीमानिदं शास्त्रमकल्पयदिति । एकाग्रमवहितम् अनेन वक्ष्यमाणेष्वर्थेषु संदेहराहित्यमभिप्रेतम् । इदं वक्ष्यमाणम् ॥ १ ॥

( ६ ) रामचन्द्रकृतमनुभावार्थचन्द्रिका.

ॐ श्रीसिद्धिगणेशाय नमः ॥ गङ्गांगणेशंगरुडाधिरूढंसिद्धेश्वरींसिद्धिसरस्वतींच । नमामि भक्त्या परया च नित्यं

---

( अ ) यद्वैकिञ्चनमनुरवदत्तद्भेषजम् ॥

विश्वेश्वरंविश्वविबोधरूपम् ॥ १ ॥ श्रुत्वा कुल्लूक भट्टींच दृष्ट्वा चैव मितांक्षराम् । कृता वै रामचन्द्रेण मनुभावार्थच-न्द्रिका ॥ २ ॥ हनूमानेव जानाति श्रमंसागरलङ्घने । तथैव ग्रन्थकर्तैव ग्रन्थकर्तुः परिश्रमम् ॥ ३ ॥ ये केचिदत्रसगुणा-नपि दूषयन्तःसन्तोऽप्यसन्तइति ते न विचारणीयाः । ये तु प्रगल्भमतयः कृतसारविज्ञालोकेषु ते कृतिमिमामवधारयन्तु ॥ ॥ ४ ॥ ऋषीणांसमवाये भृगुरुवाच मनुप्रणीतान्स्वायंभुवेन मनुना प्रणीतान्प्रवर्तितान्धर्मान्वक्ष्यामीति । कीदृशान्धर्मा-न्शाश्वतान्पारंपर्यक्रमागतान् पुनःकीदृशान् विविधान्षड्विधान् तद्यथा वर्णधर्मः १ आश्रमधर्मः २ वर्णाश्रमधर्मः ३ गुण-धर्मः ४ निमित्तधर्मः ५ साधारणधर्मश्चेति ६ । तत्रवर्णधर्मः कथ्यते नित्यंमद्यंब्राह्मणोवर्जयेदित्यादिः । आश्रमधर्मः अग्नी-न्धनभैक्ष्यचर्यादिः । वर्णाश्रमधर्मः पालाशोदण्डोब्राह्मणस्येत्येवमादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्यराज्ञः प्रजापालनादिः । निमित्तधर्मः विहिताकरणप्रतिषिद्धसेवननिमित्तंप्रायश्चित्तम् । साधारणधर्मः अहिंसादिः नाहिंस्यात्सर्वाभू-तानीतिश्रुतेस्तथाशौचाचारांश्चशिक्षयेदित्यादिः । किंकृत्वा ब्रह्मणे व्यापकाय नमस्कृत्य । कीदृशाय ब्रह्मणे स्वयंभुवे स्वयं-भवतीति स्वयंभु तस्मै स्वयंभुवेऽजन्मत्वात् । पुनःकीदृशाय अमिततेजसे परिपूर्णतेजसइत्यर्थः । मनुमिति महर्षयः श्रव-णधारणयोग्याएकाग्रमेकान्तआसीनंमनुमभिगम्य प्राप्येदंवचनंवक्ष्यमाणलक्षणमब्रुवन्नुक्तवन्तः । किं कृत्वा यथान्यायं-प्रतिपूज्यपूजयित्वा यथान्यायंयेन यादृशी पूजा कर्तुंशक्यते तेन तथेति ॥ १ ॥

**भगवन्सर्ववर्णानांयथावदनुपूर्वशः ॥ (अ) अन्तरप्रभवानांच धर्मान्नोवक्तुमर्हसि ॥ २ ॥**

**[ जरायुजाण्डजानांच तथासंस्वेदजोद्भिदाम् ॥ भूतग्रामस्य सर्वस्य प्रभवंप्रलयंतथा ॥ १ ॥**

**आचारांश्चैव सर्वेषां कार्याकार्यविनिर्णयम् ॥ यथाकाम(×)ंयथायोगंवक्तुमर्हस्यशेषतः ॥ २ ॥ ऽऽ ]**

( १ ) **मेधातिथिः** । ऐश्वर्यौदार्ययशोवीर्यादिभगशब्दः सोस्यास्तीति मनुः । तेन संबोधनंभगवन्निति । वर्णशब्दश्च तिसृषु ब्राह्मणादिद्विजातिषु वर्तते । सर्वग्रहणंशूद्रावरोधार्थम् । इतरथा महर्षीणांपृष्टत्वात् । त्रैवर्णिकविषये च प्रश्नः कृतः स्यादनंतरंतन्मध्यद्वयोर्जात्योः संकरादेकाप्यपरिपूर्णा जातिः अन्तरे प्रभवउत्पत्तिर्येषांतेऽन्तरप्रभवाःअनुलोमप्रतिलोममूर्धा-वसिक्ताम्बष्ठक्षत्तृवैदेहिकादयः । न हि ते मातापित्रोरन्यतरयापि जात्या व्यपदेष्टुंयुज्यन्ते॥ यथा रासभाश्वसंयोगजः खरोन रासभोनाश्वोजात्यन्तरमेव । अतोवर्णग्रहणेनाग्रहणात्पृथगुपादीयन्ते । नन्वनुलोमामातृजातीयाइष्यंते । नेति ब्रूमः । सदृशानेवतानाहुरिति मातृजातिसदृशास्तेतज्जातीयाएव सोप्येषांधर्मोवाचनिकोनवस्तुस्वभावसिद्धोतः.प्रमाणांतरगोचरत्वा-द्धर्मपक्षपतितत्वे शास्त्रोपदेशार्हाएव । प्रतिलोमानामप्यहिंसादयोधर्मावक्ष्यंते । यत्तु धर्मादिनाइति तद्व्रतोपवासादि-धर्माभावाभिप्रायेण सर्वपुरुषोपकारिता चानेन शास्त्रस्य प्रदर्श्यते । यथावदर्हत्यर्थे वतिः येन प्रकारेणानुष्ठानमर्हतिइ-दंनित्यमिदंकाम्यमिदमंगमिदंप्रधानंद्रव्यदेशकालकर्त्रादिनियमश्च प्रकारोर्हतेर्विषयः । अनुपूर्वशः । आनुपूर्वी क्रमः । येन क्रमेणानुष्ठेयानि सोप्युच्यताम् । जातकर्मानंतरंचौडमौंजीनिबंधनेत्यादि यथावदित्यत्र पदार्थविषयंकात्स्न्र्यमुपात्तंक्रमस्तुप-दार्थोन भवत्यतः पृथगनुपूर्वशइत्युपात्तम् । धर्मशब्दः कर्त्तव्याकर्तव्ययोर्विधिप्रतिषेधयोरदृष्टार्थयोस्तद्विषयायां-चक्रियायांदृष्टप्रयोगस्तस्य तु किमुभयंपदार्थउतान्यतरत्र गौणइति नायंविचारः क्रियते । ग्रंथांतरे विस्तरेण कृतत्वा-

( अ ) अन्तरप्रभवाणांच ॥ सङ्करप्रभवानां, ( क ), ( घ ), ( अ ), चिन्हितपुस्तकेषु

( × ) कामं=कालं ( ग ), ( च ) ( ख )

( ऽऽ ) ( क ), ( ख ), ( ट ), ( त ), अनयोर्व्याख्यानंनन्दनरामचन्द्राभ्यांकृतंषष्ठे पृष्ठे द्रष्टव्यम् ।

दिहानुपयोगाच्च सर्वथा तावदष्टकाः कर्तव्याः नकलंजंभक्षयेदित्यादावष्टकाविषया कर्तव्यता प्रतीयते । कलंजभक्षणविषयश्चप्रतिषेधः । तदाष्टकाख्यंकर्मधर्मस्तद्विषया वाकर्तव्यतेति फले न विशेषः । धर्मरूपोपदेशाच्चयत्तद्विपरीतमधर्मोसावित्यर्थात्सिध्यति । अतोधर्माधर्मावुभावपि शास्त्रस्यविषयइत्युक्तंभवति । तत्राष्टकाकरणंधर्मोब्रह्महत्यादिवर्जनंधर्मः । अष्टकानामकरणमधर्मोब्रह्महत्यायाश्चकरणमधर्मोऽतोधर्माधर्मयोर्विवेकः । अर्हसीतिसामर्थ्यलक्षणयायोग्यतया प्रवचनाधिकारमाचार्यस्याहुः ॥ यतस्त्वंसमर्थोधर्मान्वक्तुमतोधिकृतः सन्नध्येष्यसे ब्रूहीति योयत्राधिकृतस्तत्तेन कर्तव्यमिति सामर्थ्यगम्यंब्रूहीत्यध्येषणापदमध्याह्रियते । उक्तमदृष्टार्थे व्यापारमात्रेण धर्मशब्दोवर्तते । तत्र यथाष्टकादौ तस्य प्रयोगएवंचैत्यवन्दनादावपीति । तत्र कतमे धर्माअत्रोच्यन्तइति संशये धर्मविशेषप्रतिपादनार्थमुक्तसामर्थ्यप्रतिपादनार्थंचत्वमेकइति ॥ ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । भगवन्निति । यथावत् यस्य यत्प्रकारोधर्मस्तथा । अनुपूर्वशःब्राह्मणादिक्रमेण । अन्तरेभवानांच वर्णद्वयसंबन्धवतां प्रतिलोमजादीनाम् ॥ २ ॥ .

( ३ ) **कुल्लूकभट्टः** । किमब्रुवन्नित्यपेक्षायामाह । भगवन्नित्यादि । ऐश्वर्यादीनांभगशब्दोवाचकः । तदुक्तंविष्णुपुराणे । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसःश्रियः । ज्ञानवैराग्ययोश्चैव षण्णांभगइतीङ्गना ॥ मतुबन्तेन संबोधनंभगवन्निति । वर्णाब्राह्मणक्षत्रियवैश्यशूद्राः सर्वे च ते वर्णाश्चेति सर्ववर्णाः तेषामन्तरप्रभवाणांच संकीर्णजातीनांचापि अनुलोमप्रतिलोमजातानाम् । अम्बष्ठक्षत्तृकर्णप्रभृतीनांतेषांविजातीयमैथुनसम्भवत्वेन खरतुरगीयसंपर्कोज्जाताश्वतरवज्जात्यन्तरत्वाद्वर्णशब्देनाग्रहणात्पृथक्प्रश्नः । एतेनास्य शास्त्रस्य सर्वोपकारकत्वंदर्शितम् । यथावत्योधर्मोयस्य वर्णस्य येन प्रकारेणार्हतीत्यनेनाश्रमधर्मादीनामपि प्रश्नः । अनुपूर्वशःक्रमेण जातकर्म तदनु नामधेयमित्यादिना धर्मान्नोऽस्मभ्यंवक्तुमर्हसि सर्वधर्माभिधाने योग्योभवसि तस्माद्ब्रूहीत्यध्येषणमध्याहार्यम् । यत्तु ब्रह्महत्यादिरूपाधर्मकीर्तनमप्यत्र तत्प्रायश्चित्तविधिरूपधर्मविषयत्वेन न स्वतन्त्रतया ॥ २ ॥

( ४ ) **राघवानन्दः** । भगवन्पूजायुक्त ऐश्वर्यादिशालित्वात् ॥ ( अ ) सर्ववर्णानां विप्रराजन्यवैश्यशूद्राणां यथावत् याथातथ्येन अनुपूर्वशः ब्राह्मणाद्यानुपूर्व्या अन्तरप्रभवानां सङ्करजातानां अनुलोमप्रतिलोमतः धर्मान् निषेकादिश्मशानान्तान्तेषु कर्तव्यान् भगवत्त्वादेव वक्तुंयोग्योसीति नोऽस्मभ्यम् ॥ २ ॥

( ५ ) **नन्दनः** । न केवलं त्रैवर्णिकानामेव किंतुशूद्राणामपीत्युक्तंसर्वशब्दग्रहणेन । अन्तरप्रभवानांवर्णसंकरजातानाम् । धर्मान्विहितानुष्ठानप्रतिषिद्धवर्जनलक्षणान् ॥ २ ॥

जरायुजेति । भूतग्रामस्यमहदादितत्त्वसङ्घस्य । आचाराणामितिकार्याणांविवादपदानाम् । यथाकालमवसरेप्राप्ते । यथायोगमुचितोपायेन लक्षणेन प्रतिपदोक्त्याचेति यावत् ॥

( ६ ) **रामचन्द्रः** । भगवन्निति । तत्र प्रश्नमाह । हेभगवन्सर्ववर्णानांब्राह्मणक्षत्रियविट्शूद्राणांयथावत्यथायोगं अनुपूर्वशःअनुक्रमेण नः अस्माकंधर्मान्वक्ष्यमाणलक्षणान् वक्तुमर्हसि च पुनःअन्तरप्रभवानांअनुलोमजातीनां मूर्द्धाभिषिक्तादीनां धर्मान्वक्तुंत्वमर्हसि ॥ २ ॥

[ प्रश्नान्तरमाह जरायुजेति । द्वाभ्यां युग्मं । सर्वस्य भूतग्रामस्य चतुर्विधानांजरायुजादीनांउत्पत्तिप्रलयंनाशंवक्तुमर्हसि च

---

( अ ) शालित्वात्= ( क्ष ) शालिनूवा ॥

पुनः सर्वेषांब्राह्मणादीनांतथानुलोमजातीनांआचारान्वक्तुंत्वमर्हसि तथा कार्यस्यउक्तस्यअकार्यस्यच विनिर्णयंवक्तुंअर्हसि यथाक्रमंब्राह्मणादिवर्णक्रमंक्रमानुसारेण यथायोगंवक्तुमर्हसि ॥ ]

**त्वमेकोह्यस्य सर्वस्य विधानस्य स्वयंभुवः ॥ अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो॥ ३ ॥**

( १ ) **मेधातिथिः**। त्वमेवैकोऽसहायोऽद्वितीयः सर्वस्य विधानस्य कार्यतत्त्वार्थवित्। विधानंशास्त्रंविधीयन्तेऽनेन कर्माणीति तस्य स्वयंभुवोनित्यस्याकृतकस्यापौरुषेयस्य वेदाख्यस्य सर्वस्य प्रत्यक्षाक्षरस्यानुमेयाक्षरस्य चाग्निहोत्रंजुहुयादभयंसहस्रमानवइत्येतयाहवनीयोपस्थाने विनियोगः। अष्टकाः कर्तव्याइत्यत्र तु स्मृत्यानुमीयते वेदः। बर्हिर्देवसदनंदामीतिलिङ्गादनेन बर्हिर्लुनातीतिश्रुतेरनुमानम्। अयंहि मन्त्रोदर्शपूर्णमासप्रकरणे पठितोबर्हिर्लवनंच तत्राम्नातमनेनमन्त्रेण लुनीयादित्येतत्तु नास्ति। मन्त्रः पुनारूपाद्बर्हिर्लवनप्रकाशनसमर्थः। प्रकरणात्सामान्यतः सिद्धदर्शपूर्णमाससंबन्धः। स्वसामर्थ्येन तु बर्हिर्लवने प्रयुज्यते। एषा ह्यत्र प्रतीतिः प्रकरणाद्दर्शपूर्णमासावनेन मन्त्रेण कुर्यात्कथमिति यथाशक्नुयादित्यनुक्तापि शक्तिः सर्वत्र सहकारिणी। किंचशक्नोतिमन्त्रः कर्तुंबर्हिर्लवनंप्रकाशयितुंततः प्रकरणात्स्वसामर्थ्याच्चानेन मन्त्रेणबर्हिर्लुनातीतिबुद्धौ शब्दआगच्छत्यविकल्पकविज्ञानैः पूर्वशब्दःप्रतीयतइति । सबुद्धिस्थः शब्दोऽनुमेयोवेदउच्यते। वेदत्वंच तस्यदर्शपूर्णमासवाक्यमन्त्रवाक्याभ्यांश्रुत्यन्तराभ्यांस्वसामर्थ्येनोत्थापितत्वादितिकुमारिलपक्षः। अथवा विधिर्विधानमनुष्ठानंप्रयोजनसंपत्तिस्तस्यस्वयंभुवोनित्यस्यानादिपरंपरायातस्य स्वयंभुवा वेदेन वा प्रतिपाद्यस्य श्रूयमाणाक्षरप्रतिपाद्यस्य प्रतिपन्नसामर्थ्यगम्यस्य च द्विविधोहि वैदिकोविधिः। कश्चित्साक्षाच्छब्दप्रतिपाद्योयथा सौर्यंचरुंनिर्वपेत् ब्रह्मवर्चसकामइति सौर्ये चरौ ब्रह्मवर्चसकामोऽधिक्रियते । तस्य चरोर्ब्रह्मवर्चसंसाधयतइयमितिकर्तव्यताआग्नेयवदित्यत्रगमयति। उभयत्रापिचेयंप्रतीतिः शब्दावगममूलत्वात्। शब्दोदयोऽपि शब्दादभिधानतः प्रतीयते। यथाभिधेयप्रतिपत्तितोविशेषस्तुव्यवधानादिकृतोन शब्दतांविहन्ति। यथावापीस्थमुदकंहस्तेनाभिहतंप्रदेशान्तरमभिहन्ति तदपिहस्तसंयोगेनैवाभिहतंभवति नतु साक्षात। शर्करारेचककर्मण्याद्यप्रयत्नकृताएवोत्प्लुत्योत्प्लुत्य पाताः। तादृशमेतद्वैकृते कर्मणि विशिष्टेतिकर्तव्यतासंबन्धोयएवंविश्वजिता यजेतेत्युत्पत्तिर्नाधिकारशून्यास्तीतिस्वर्गकामइत्यधिकारावगतिः प्रतिपन्नार्थसामर्थ्यगम्या। अन्यतोद्वैरूप्येविधानस्य सर्वस्येतिपदंसर्वस्य तात्पर्यमेवंरूपंवेदमूलाःस्मृतयइति ज्ञापयितुम्। द्वितीयेचैतद्दर्शयिष्यामः। ननु लिङादिप्रतिपाद्योऽर्थः कर्तव्यतारूपोविधिः। सच सर्वत्र प्रत्यक्षशब्दप्रतिपाद्यएव। तत्र किमुच्यते। द्विविधाहि वैदिकोविधिरिति निर्वपेदितिकर्तव्यतावगम्यते। इतिकर्तव्यतार्थसामर्थ्यगम्या। उक्तेनप्रकारेण नैषदोषः। निर्वपेद्यजेतेति न केवलेधात्वर्थविषयत्वेऽवगते परिपूर्णा कर्तव्यता भवति। यावदंशान्तराण्यधिकारेतिकर्तव्यताप्रयोगरूपाणि नावगतानि। एतैरंशैर्वितृतरूपोविधिः प्रतीयते। अतोंऽशरूपाण्यपि विधिशब्दाभिलप्यतया न विरुद्धान्येतदेवाह अचिन्त्यस्येति। अप्रत्यक्षस्येत्यर्थः। प्रत्यक्षंह्यनुभूयतइत्युच्यते। नचिन्त्यते नस्मर्यतइति। अप्रमेयस्य कल्प्यस्य प्रायशः स्मृतिवाक्यमूलस्य तद्धि प्रत्यक्षेण प्रमीयते। अतोऽप्रमेयस्येत्युच्यते। अथवाऽप्रमेयस्येयत्तया परिमातुमशक्यस्यातिमहत्वादनेकशाखाभेदभिन्नोभेदोनशक्यते सर्वैःप्रमातुम्। अतएवाचिन्त्यस्य यदतिबहु तद्दुर्ग्रहत्वादचिन्त्यमित्युच्यते। यथाच लोके वक्तारोभवन्ति। अन्येषांगतिश्चिन्तयितुमप्येतन्नयुज्यतइति। मनःकिलसर्वविषयम्। अयंचातिमहत्वात्तस्यापि न विषयइति पदद्वयेन बाह्यान्तःकरणविषयतया महत्त्वस्य। एतेनाचार्यः प्रोत्साह्यते त्वयैव केवलेनैवंविधोवेदआगमितोनस्तस्य यः कार्यरूपस्तत्त्वार्थस्तंवेत्सि जानीषे कार्यमनुष्ठेयमुच्यते। यत्र पुरुषोऽनुष्ठातृत्वेन विनियुज्यत इदंत्वया कर्तव्यमिदंत्वया न कर्तव्यमित्यग्निहोत्रादि कर्तव्यम् कलञ्जभक्षणादि न कर्तव्यम्। प्रतिषेधोऽप्यनुष्ठानमेव। यद्ब्राह्मणवधस्याननु-

ष्ठानंतदेव प्रतिषेधस्यानुष्ठानंप्रवृत्तिश्चक्रिया निवृत्तिश्चक्रियेति। नहि परिस्पन्दमानसाधनसाध्यमेवानुष्ठानमुच्यते किंतर्हि प्राप्ते तद्रूपे तन्निवृत्तिरपि यथाहितसेवीचिरायुरिति। यःप्राप्ते काले भुङ्क्तेऽप्राप्ते न भुङ्क्ते। अभोजनमपि हितमेव। अथवाकार्यशब्दः प्रदर्शनार्थोविधेः प्रतिषेधस्यच। एतावान्वेदस्य तत्त्वरूपः पारमार्थिकोऽर्थोयस्तुइतिवृत्तसंवर्णनरूपः सोरोदीद्यदरोदीतद्रुद्रस्य रुद्रत्वमिति। सन तत्त्वार्थोविध्यन्तरेणैकवाक्यत्वात्प्रशंसापरत्वेन स्वार्थनिष्ठत्वाभावात्। अस्ति ह्यत्र विध्यन्तरम्। तस्माद्बर्हिषि रजतं न देयमितिसोरोदीदित्यादीनिपुरास्यसंवत्सराद्गृहेरोदनंभवतीत्यन्तानि तदेकवाक्यतापन्नानि बर्हिषि रजतदाननिन्दया तत्प्रतिषेधंस्तुवन्ति। तदुक्तंसाध्येऽर्थे वेदः प्रमाणं न सिद्धरूपे। अर्थवादानांहि सिद्धरूपोऽर्थोनहि तदर्थस्य कर्तव्यतामतीयते। विध्युपदेशपरत्वंच प्रतीयते। यदिच स्वार्थपराअपि स्युस्तदाविधिपरत्वंव्याहन्येत। ततश्च प्रतीयमानैकवाक्यताबोधनेन च संभवत्येकवाक्यत्वे वाक्यभेदोऽन्याय्यः। नच साध्यस्य सिद्धार्थपरत्वेनैकवाक्यता घटते। तथाहि। न किंचिद्वेदेनोपदिश्यते कर्तव्यम्। अतश्चाप्रमाणमेव वेदःस्यात्। विध्यर्थता चावगम्यमाना लिङादीनांत्यक्ता स्यात्। तस्मात्कार्यरूपोवेदस्य तत्त्वार्थइतिमनुर्भगवानाह। जैमिनिनाप्युक्तम् कार्येऽर्थे वेदःप्रमाणम्। चोदनालक्षणोऽर्थोधर्मइति। अतश्चनिरवशेषपदार्थपरिज्ञानातिशययोगाद्धर्मप्रवचनसामर्थ्यसिद्धवदुपादायप्रभो इत्यामन्त्रणम्। हेप्रभो धर्माभिधानशक्त त्वमनुब्रूहि धर्मानिति। एवमनया त्रिश्लोक्या धर्मान्पृष्टउत्तरेण श्लोकेन प्रतिजज्ञे ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः**। त्वमेकइति। स्वयंभुवः प्रजापतेरभिधेयतया संबन्धिनोविधानस्य विधेर्वेदस्याचिन्त्यस्यातर्क्यार्थस्याप्रमेयस्य प्रमाणान्तरागोचरस्य कार्यतयानुष्ठेयतया यत्तत्वंतात्विकोर्थस्तद्वेदितात्वमेवास्येकइत्यर्थः ॥ ३ ॥

( ३ ) **कुल्लूकः**। सकलधर्माभिधानयोग्यत्वेहेतुमाह त्वमेकइत्यादि हिशब्दोहेतौ। यस्मात्त्वमेकोऽद्वितीयः। अस्य सर्वस्य प्रत्यक्षश्रुतस्य स्मृत्याद्यनुमेयस्य च विधानस्य विधीयन्तेऽनेनकर्माण्यग्निहोत्रादीनीति विधानंवेदस्तस्य स्वयंभुवोऽपौरुषेयस्याचिन्त्यस्य बहुशाखाविभिन्नत्वादियत्तया परिच्छेत्तुमयोग्यस्य। अप्रमेयस्य मीमांसादिन्यायनिरपेक्षतयाऽनवगम्यमानप्रमेयस्य। कार्यमनुष्ठेयमग्निष्टोमादि तत्त्वंब्रह्म सत्यंज्ञानमनन्तंब्रह्मेत्यादिवेदान्तवेद्यं तदेवार्थःप्रतिपाद्यभागस्तंवेत्तीति कार्यतत्त्वार्थवित्। मेधातिथिस्तु कर्ममीमांसावासनया वेदस्य कार्यमेव तत्त्वरूपोऽर्थ स्तंवेत्तीतिकार्यतत्त्वार्थ विदिति व्याचष्टे तन्न। वेदानांब्रह्मण्यपि प्रामाण्याभ्युपगमान्नकार्यमेव तत्त्वरूपोऽर्थः। धर्माधर्मव्यवस्थापनसमर्थत्वात्प्रभोइति संबोधनम् ॥ ३ ॥

( ४ ) **राघवानन्दः**। त्वमिति। अस्य प्रत्यक्षादिसिद्धस्य सर्वस्य स्मृत्याद्यनुमेयस्य विधीयतेकर्मानेनेति विधानंवेदः तस्यविधानस्याग्निहोत्रादिकर्मकलापबोधकस्येति यावत् स्वयंभुवोऽपौरुषेयस्य ब्रह्मस्वयंभूरितिश्रुतेः। स्वयंभूरेषभगवान्वेदोगीतस्त्वयापुरा। शिवाद्याऋषिपर्यन्ताःस्मर्तारोऽस्यनकारकाइतिस्मृतेश्च। अचिन्त्यस्य अनेकशाखाभेदभिन्नत्वादियत्तयापरिच्छेत्तुमशक्यस्य। अप्रमेयस्य दुरधिगमार्थस्य अनेनार्थतोऽप्यचिन्त्यत्वमुक्तम्। कार्यतत्त्वार्थवित् कार्यधर्मः तदेववेदस्यतात्पर्यविषयत्वात्तत्त्वं तद्वेत्तीति। तथेतिमेधातिथिः। वस्तुतस्तुकार्यधर्मः तत्त्वार्थोब्रह्म तदुभयंवेदार्थस्तद्वित् अन्यथा ज्ञानकाण्डस्य अप्रामाण्यापत्तिः कृत्स्नवेदार्थाविदित्वापत्तेश्च प्रभोइत्युभयकथने सामर्थ्यमुक्तम् ॥ ३ ॥

( ५ ) **नन्दनः**। विधीयतइति विधानम्। स्वयंभुवा भगवता विहितस्यअचिन्त्यस्य दुर्ज्ञानस्य। अप्रमेयस्यअपर्यन्तस्य। सर्वस्यप्राणिजातस्य। कार्यधर्मस्तस्यतत्त्वंपारमार्थ्यंतस्यार्थःप्रयोजनमभ्युदयसिद्धिरूपंतत्त्वमेकोवेत्सि तेन भवानेव प्रष्टव्योनान्यइति ॥ ३ ॥

( ६ ) **रामचन्द्रः**। त्वमिति। एकःअद्वितीयः हिहेत्वर्थे। अस्य विधानस्य सर्वस्य चतुर्विधस्य भूतग्रामस्य उद्भिदस्वेदजाण्डजजरायुजस्येत्यर्थः। कार्यतत्त्वार्थवित्वेत्तासि हे प्रभो मनो यःप्रभुःसर्वजानातीत्यर्थः। तथा स्वयंभुवोऽपौरुषस्य

कार्यतत्त्वार्थवित्। कीदृशस्य स्वयंभुवः अचिन्त्यस्य वाङ्मनसाभ्यामचिन्त्यप्रभावस्य। पुनःकीदृशस्य अप्रमेयस्य ॥ ३ ॥

**सतैः पृष्टस्तथा सम्यगमितौजामहात्मभिः ॥ प्रत्युवाचार्च्यतान्सर्वान्महर्षीञ्छ्रूयतामिति ॥ ४ ॥**

(१) **मेधातिथिः**। समनुरमितौजास्तैर्महर्षिभिर्महात्मभिः पृष्टस्तथा तान्प्रत्युवाच श्रूयतामिति। तथा तेन प्रागुक्तेन प्रकारेण। पृच्छयमानवस्तुप्रश्नविधिश्च प्रकारवचने तथाशब्देऽन्तर्भूतः। तेनायमर्थस्तथापृष्टस्तान्धर्मान्पृष्टःप्रत्युवाच। अथवा तथेतिप्रकारमात्रमाचष्टेपृष्टइतिपूर्वश्लोकात्पृच्छ्यमानविशेषोबुद्धौ विपरिवर्ततएव। तेन यत्पृष्टस्तत्प्रत्युवाच श्रूयतामिति प्रश्नप्रतिवचनयोरेककर्मता सिद्धा भवति। तदा च तथाशब्दः श्लोकपूरणार्थः। आद्ये तु व्याख्याने तथाशब्दोपात्तैव प्रश्नप्रतिवचनयोरेककर्मता। सम्यक्शब्दः प्रतिवचनविशेषणंसम्यक्प्रत्युवाच। प्रसन्नेन मनसा न क्रोधादियोगेन। अमितौजाअक्षीणवाग्विभवोमितमनन्तमोजोवीर्यमभिधानसामर्थ्यमस्येति । महात्मतयामहर्षीणांधर्मशब्दत्वंमहर्षित्वंचाविरुद्धमित्याह महर्षीनिति। परार्थकारी सततंमहात्मेत्युच्यते। तेन यद्यपि स्वयंविद्वांसोऽधिगतयाथातथ्या अन्यथा महर्षित्वानुपपत्तेस्तथापि परार्थमपृच्छन्। मनुःप्रख्याततरप्रमाणभावः। एतेनयदुच्यते तल्लोकेनाद्रियते। प्रत्ययतोऽयंसमुपास्यतेऽतः शास्त्रावतारार्थमुपाध्यायीकुर्मः। अस्माभिश्चपृच्छ्यमानःप्रमाणतरीकरिष्यतेऽनेनेति । अतएवार्च्यतान्सर्वानित्यर्चनमविरुद्धम्। अन्यथाशिष्यस्योपाध्यायात्कीदृश्यर्चेति । अर्चयतेराङ्पूर्वस्यल्यबन्तस्यरूपमार्च्येति। पाठान्तरमर्चयित्वा तानिति। अत्र यथोच्यते। यदिमनुनाऽयंग्रन्थःकृतः परोपदेशोन युक्तः सतैःपृष्टःप्रत्युवाचेत्यहंपृष्टःप्रत्यब्रवमितिन्याय्यम्। अथान्यतरएव ग्रन्थस्य कर्ता मानवव्यपदेशः कथमिति। तदाचार्यप्रायेण ग्रन्थकाराः स्वमतंपरापदेशेन ब्रुवते। अत्राह अत्र परिहरन्तीत्येवमहंतैः पृष्टइति। योयः पूर्वतरःसप्रमाणतरोलोकेनाभ्युपगम्यते। तत्प्रमाणंबादरायणस्येति। अथवा भृगुप्रोक्ता संहितेयंमानवीतुस्मृतिरूपनिबद्धेति मानवव्यपदेशः। प्रत्युवाचतान्महर्षीन् किंतद्यदहंपृष्टस्ततःश्रूयतामिति ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः**। सतैरिति। सम्यग्विनयाभ्युपेतंयथाभवति। अमितौजा अमितबलः। आर्च्यार्चयित्वा॥४॥

( ३ ) **कुल्लूकः**। सतैःपृष्टस्तथा सम्यगित्यादि। समनुस्तैर्महर्षिभिस्तथा तेन प्रकारेण पूर्वोक्तेन न्यायेन प्रणतिभक्तिश्रद्धातिशयादिना पृष्टस्तान्सम्यग्यथातत्त्वंप्रत्युवाच श्रूयतामित्युपक्रम्य। अमितमपरिच्छेद्यमोजःसामर्थ्यंज्ञानतत्त्वाभिधानादौ यस्य सतथा। अतएव सर्वज्ञसर्वशक्तितया महर्षीणामपि प्रश्नविषयः। महात्मभिर्महानुभावैः आर्च्य पूजयित्वा आङ्पूर्वस्यार्चतेर्ल्यबन्तस्यरूपमिदम्। धर्मस्याभिधानमपि पूजनपुरःसरमेव कर्तव्यमित्यनेन फलितम्। ननु मनुप्रणीतत्वेऽस्य शास्त्रस्य सपृष्टःप्रत्युवाच इति न युक्तमहंपृष्टोब्रवीमीति युज्यते ऽन्यप्रणीतत्वे च कथंमानवीयसंहितेति। उच्यते प्रायेणाचार्याणामियंशैली यत्स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति। अतएव कर्माण्यपि जैमिनिःफलार्थत्वादिति जैमिनेरेव सूत्रम्। अतएव तदुपर्यपि बादरायणःसंभवादिति बादरायणस्यैव शारीरकसूत्रम्। अथवा मनूपदिष्टाधर्मास्तच्छिष्येण भृगुणा तदाज्ञयोपनिबद्धाः। अतएव वक्ष्यति एतद्वोऽयंभृगुःशास्त्रंश्रावयिष्यत्यशेषतइत्यतोयुज्यतएव सपृष्टःप्रत्युवाचइति । मनूपदिष्टधर्मोपनिबद्धत्वाच्च मानवीयसंहितेति व्यपदेशः ॥ ४ ॥

( ४ ) **राघवानन्दः**। तैर्महर्षिभिःपृष्टःसन्मनुरमितौजा धर्मब्रह्मणोवेदने शक्त आर्च्य संपूज्य श्रूयतामित्याह ॥ ४ ॥

( ५ ) **नन्दनः**। आर्च्य भवन्तएवसर्वधर्मज्ञा इतिवाचा संभाव्य। आत्मनः प्रवचनादरप्रकर्षार्थमुक्तं श्रूयतामिति ॥ ४ ॥

( ६ ) **रामचन्द्रः**। सइति तैर्महर्षिभिःसमनुःसम्यग्यथा स्यात्तथा पृष्टःसंस्तान् सर्वान्महर्षीन्प्रति श्रूयतामित्यभ्यर्च्य संपूज्योवाच। कीदृशःमनुःअमितौजाःअमितंओजःप्रभावोयस्यसः ॥ ४ ॥

आसीदिदंतमोभूतमप्रज्ञातमलक्षणम् ॥ अप्रतर्क्यमविज्ञेयंप्रसुप्तमिव सर्वतः ॥ ५ ॥

( १ ) **मेधातिथिः** । क्वास्तां:ऽक्व निपतिता;शास्त्रोक्तनिपतितान् धर्मान्पृष्टस्तानेव वक्तव्यतया प्रतिज्ञाय जगतोऽव्याकृतावस्थावर्णनमप्रकृतमपुरुषार्थंच । सोऽयंसत्योजनप्रवादः आम्रान्पृष्ट कोविदारानाचष्टइति । नचास्मिन्वस्तुनि प्रमाणंनच्चप्रयोजनमित्यतः सर्वएवायमध्यायो नाध्येतव्यः । उच्यते । शास्त्रस्यमहाप्रयोजनत्वमनेनसर्वेण प्रतिपाद्यते । ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयोधर्माधर्मनिमित्ता अत्र प्रतिपाद्यन्ते । तमसा बहुरूपेण वेष्टिताः कर्महेतुनेति । वक्ष्यतिच । एतादृष्ट्वातु जीवस्य गतीः स्वेनैव चेतसा । धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनइति॥ ततश्च निरतिशयैश्वर्यहेतुर्धर्मस्तद्विपरीतश्चाधर्मस्तद्रूपपरिज्ञानार्थमिदंशास्त्रंमहाप्रयोजनमध्येतव्यमित्यध्यायतात्पर्यम् । सूत्रंत्वत्र मन्त्रार्थवादाः सामान्यतोदृष्टंच । तथाचमन्त्रः। तमआसीत्तमसा गूळ्हमग्रेप्रकेतं सलिलंसर्वमाइदंतुच्छेनाभ्वपिहितंयदासीत्तमसस्तन्महिनाजायतैकम्। चन्द्रार्काद्यादिषु बाह्याध्यात्मिकेषु महाप्रलये प्रकाशेकेषु नष्टेषु तमएवकेवलमासीत् । तदपि तमः स्थूलरूपतमसा रूढंसंवृत्तम् । न हि तदानींकश्चिदपि ज्ञाताऽस्ति । अतोज्ञातुरभावान्न कस्यचित्ज्ञानमस्तीति तमसागूढमुच्यते । अग्रे भूतसृष्टेरर्वाकूप्रकेतमज्ञातंसर्वआः आसीदिदंसलिलंसरणधर्मकम् । क्रियावद्यत्किंचिच्चेष्टावत्तत्सर्वंनिश्चेष्टमासीत् । तुच्छेन सूक्ष्मेणाभूस्थूलमपिहितंप्रकृत्यात्मनि विशेषरूपंलीनमित्यर्थः । एतावता ऽव्याकृतावस्था जगतोद्योतिता । चतुर्थेन पादेनाद्या सृष्ट्यवस्थोच्यते । तमसस्तन्महिना महत्त्वेननैकंयदासीत्तदजायत विशेषात्मनाऽभिव्यज्यतेस्म । कर्मवशात्पुनः प्रादुर्बभूवेत्यर्थः । अथवा तस्यामस्थायांतमःकर्मणा महत्त्वेनहिरण्यगर्भआत्मनाऽजायत प्रादुरासीत् । यथावक्ष्यति ततःस्वयंभूरिति । सामान्यतोदृष्टेन महाप्रलयेऽपि संभाव्यते । यस्य ह्येकदेशे नाशोदृष्टस्तस्य सर्वस्यापि नाशोदृश्यते । यथा शालापि क्वचिद्दह्यमाना दृष्टा कदाचित्सर्वोग्रामोदह्यते । ये च कर्तृपूर्वाभावास्ते सर्वे विनश्वरा गृहप्रासादादयःकर्तृपूर्वंचेदंजगत्सरित्समुद्रशैलाद्यात्मकम् । अतोगृहादिवन्नंक्ष्यतीति संभाव्यते । कर्तृपूर्वतै व न सिद्धेतिचेत्तन्निवेशविशेषवत्त्वादिना गृहादिवत्सापि साध्यतइत्यादि सामान्यतोदृष्टम् । नच प्रमाणसिद्धौ तद्दूषणे वा प्रयतामहे ऽनिर्दपरत्वाच्छास्त्रस्य । एतद्धियावन्न विचार्यनिरूपितं तावन्न सम्यगवधार्यते । तथा निरूपणे च तर्कशास्त्रता स्यान्नधर्मशास्त्रता ग्रन्थविस्तरश्च प्रसज्यते । प्रक्रियाबहुलं चेदंसर्वमुपन्यसिष्यते । क्वचित्पौराणी प्रक्रिया क्वचित्सांख्यानाम् । नतया ज्ञातयाऽज्ञातया वा कश्चिद्धर्माधर्मयोर्विशेषइतिनिपुणतया न निरूप्यते । अर्थिताचेत्ततएवान्वेष्या पदार्थयोजना । व्याख्यानमात्रंत्वध्यायस्योपदिश्यते तदेवकरिष्यामः । तात्पर्यमुपदर्शितमेव । आसीदिदंजगत्तमोभूतं तमइव । भूतशब्दोऽनेकार्थोऽप्युपमायांप्रयुक्तोयथा यत्तद्भिन्नेष्वभिन्नंछिन्नेष्वच्छिन्नंसामान्यभूतंसशब्दइतिसामान्यभूतइति सामान्यमिवेत्यर्थः । किंतमसा जगतः सादृश्यमतआह । अप्रज्ञातंविशेषाणांस्वभावानांविकाराणांप्रकृतावुपलयनादतः प्रत्यक्षेणाज्ञातम् । अनुमानात्तर्हि ज्ञायेत । तदपिचालक्षणम् । लक्षणंलिङ्गंचिन्हंतदपि तस्यामवस्थायां प्रलीनमेव सर्वविकाराणांविशेषात्मना विनष्टत्वात् । अप्रतर्क्यंयद्रूपमासीत्तर्कयितुमपि न तद्रूपतया शक्यम् । तर्कप्रकारमनुमानंनिषेधति । नसामान्यतोदृष्टमनुमानमस्ति । तद्रूपकावेदकंन विशेषतोदृष्टमतश्चाविज्ञेयम् । नैवतर्ह्यासीदसदेवाजायतेति प्राप्तमेतन्निषेधति प्रसुप्तमिव सर्वतः। नासतःसतउत्पत्तिः । उक्तंच सदेव सोम्येदमग्रआसीत् कथमसतःसज्जायेतेत्याद्युपनिषत्सु । अतंश्च विज्ञेयमवच्छेदविषयैः प्रमाणैरागमात्तादृशादेव गम्यते । प्रसुप्तमिव जाग्रत्स्वप्नवत्तांपरित्यज्य संप्रसादावस्था सुषुप्तिर्दृष्टान्तत्वेनोपात्ता यथायमात्मा सुषुप्तावस्थायांनिःसंबोधक्लेशप्रध्वस्ताशेषविकल्पआस्ते नचनास्तीतिशक्यते वक्तुं प्रबुद्धस्य सुखमस्वाप्समितिप्रत्य

भिज्ञानदर्शनात् । एवंजगदागमात्सिद्धार्थरूपादाभासानुमानेभ्यश्चतार्किकाणामवसीयते । आसीदिति । वर्तमानातुसावस्थानकस्यविज्ञेयेत्यतउक्तमविज्ञेयंसर्वतोनैकदेशप्रलयइत्यर्थः ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रच वर्णक्रमेण धर्मकथनस्याकाङ्क्षितत्वात् सर्वदेवसंभवतत्त्वोक्तिज्ञानाद्ब्राह्मणादिवर्णानांपूर्वपूर्वश्रैष्ठ्यप्रतिपादनस्येष्टत्वेन मुखादिविशिष्टस्थानोत्पादनेन च तेषांश्रेष्ठत्वात् तदभिधानार्थंशास्त्रप्रणायकब्रह्मोत्पत्तिप्रकारंच कथयितुंत्वस्यनिष्पत्तिजननद्वारा तत्पूर्वावस्थांतावदाह आसीदिदमिति। ततःशब्देन गुणैकदेशवाचिना तत्समुदायभूता प्रकृतिरुक्ता । जगतश्चोत्पत्तिसंमूढात्मकत्वेन तस्य सुप्रतिपादत्वात् । अप्रज्ञातंप्रत्यक्षागम्यम् । अलक्षणमलिङ्गम् । अप्रतर्क्यमतर्कविषयम् । अविज्ञेयंशब्दादिहीनतयाविशेषतोज्ञातुमशक्यम् । अधुनापि शब्दतःप्रतीयमानं यथाप्रतीयते तदाह प्रसुप्तमिवेति । वासनाकर्मशेषाणां पुरुषाणामवस्थानात्ततत्स्वरूपसाम्यम् । सर्वतःसर्वैःप्रकारैः । अतएवोक्तमिवेति ॥ ५ ॥

( ३ ) **कुल्लूकः** । श्रूयतामित्युपक्षिप्तमर्थमाह आसीदिदमिति । ननु मुनीनांधर्मविषयप्रश्ने तत्रैवोत्तरंदातुमुचितं तत्कोयमप्रस्तुतः प्रलयदशायां कारणलीनस्य जगतःसृष्टिप्रकरणावतारः । अत्र मेधातिथिः समादधे । शास्त्रस्य महाप्रयोजनत्वमनेन सर्वेणप्रतिपाद्यते । ब्रह्माद्याःस्थावरपर्यन्ताःसंसारगतयोधर्माधर्मनिमित्ताअत्र प्रतिपाद्यन्ते तमसा बहुरूपेण वेष्टिताःकर्महेतुनेति । वक्ष्यति च । एताद्दष्ट्वास्य जीवस्य गतीःस्वेनैव चेतसा । धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदामनइति[२] ततश्च निरतिशयैश्वर्यहेतुर्धर्मस्तद्विपरीतश्चाधर्मस्तद्रूपपरिज्ञानार्थमिदंशास्त्रंमहाप्रयोजनमध्येतव्यमित्याद्यध्यायतात्पर्यमित्यन्तेन गोविन्दराजस्यापीदमेव समाधानम् । नैतन्मनोहरम् धर्मस्वरूपप्रश्ने यद्धर्मस्य फलकीर्तनंतदप्यप्रस्तुतम् । धर्मोक्तिमात्राद्धि शास्त्रमर्थवत् । किंच कर्मणांफलनिर्वृत्तिंशंसेत्युक्ते महर्षिभिर्द्वादशे वक्ष्यमाणा सा वक्तुमादौ न युज्यते । इदंतु वदामः मुनीनांधर्मविषये प्रश्ने जगत्कारणतया ब्रह्मप्रतिपादनंधर्मकथनमेवेति नाप्रस्तुताभिधानम् । आत्मज्ञानस्यापि धर्मरूपत्वान्मनुनैव धृतिःक्षमादमोऽस्तेयंशौचमिन्द्रियनिग्रहः धीर्विद्या सत्यमक्रोधोदशकंधर्मलक्षणमिति दशविधधर्माभिधाने विद्याशब्दवाच्यमात्मज्ञानंधर्मत्वेनोक्तम् । महाभारतेऽपि आत्मज्ञानंतितिक्षा च धर्मःसाधारणोनृपेत्यात्मज्ञानंधर्मत्वेनोक्तम् । याज्ञवल्क्येन तु परमधर्मत्वेन यदाह इज्याचारदमाहिंसादानंस्वाध्यायकर्म च । अयंतु परमोधर्मोयद्योगेनात्मदर्शनमिति । जगत्कारणत्वंच ब्रह्मलक्षणमतएव ब्रह्ममीमांसायांअथातोब्रह्मजिज्ञासेति सूत्रानन्तरंब्रह्मलक्षणकथनाय जन्माद्यस्य यतइति द्वितीयसूत्रंभगवान्बादरायणःप्रणिनाय अस्य जगतोयतोजन्मादिसृष्टिस्थितिप्रलयमितिसूत्रार्थः । तथा च श्रुतिः । यतोवाइमानि भूतानि जायन्ते येनजातानिजीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व । तद्ब्रह्मेतिप्राधान्येन जगदुत्पत्तिस्थितिलयनिमित्तोपादानब्रह्मप्रतिपादनम्आत्मज्ञानरूपपरमधर्मावगमाय प्रथमाध्यायंकृत्वा संस्कारादिरूपंधर्मंतदङ्गतया द्वितीयाध्यायादिक्रमेण वक्ष्यतीति न कश्चिद्विरोधः । किंच प्रश्नोत्तरवाक्यानामेव स्वरसादयंमदुक्तोऽर्थोलभ्यते । तथाहि धर्मे पृष्टे मनुर्ब्रह्म जगतःकारणंब्रुवन् । आत्मज्ञानंपरंधर्मंवित्तेति व्यक्तमुक्तवान् ॥ प्राधान्यात्प्रथमाध्याये साधु तस्यैव कीर्तनम् । धर्मोऽन्यस्तु तदङ्गत्वाद्युक्तोवक्तुमनन्तरम् ॥ इदमित्यध्यक्षेण सर्वस्यप्रतिभासमानत्वात् जगन्निर्दिश्यते । इदंजगत्तमोभूतंतमसि स्थितंलीनमासीत्तमःशब्देन गुणवृत्त्या प्रकृतिर्निर्दिश्यते । तमइवतमः। यथा तमसि लीनाःपदार्थाअध्यक्षेण न प्रकाश्यन्त एवंप्रकृतिलीनाअपि भावानावगम्यन्त्तइति गुणयोगः । प्रलयकाले सूक्ष्मरूपतया प्रकृतौलीनमासीदित्यर्थः । तथाच श्रुतिः । तमआसीत्तमसा गूल्हमग्रइति । प्रकृतिरपि ब्रह्मात्मनाऽव्याकृतासीत् । अतएवाप्रज्ञातमप्रत्यक्षंसकलप्रमाणश्रेष्ठतया प्रत्यक्षगोचरःप्रज्ञातइत्युच्यते तन्न भवतीत्यप्रज्ञातम् अलक्षणमन-

---

( २ ) मनु अध्यायी १२ श्लोक २३

नुमेयंलक्ष्यतेऽनेनेति लक्षणंलिङ्गंतदस्य नास्तीतिअलक्षणम्अप्रतर्क्यंतर्कयितुमशक्यमदानींवाचकस्थूलशब्दाभावातच्छब्द तोऽप्यविज्ञेयम्। एतदेव च प्रमाणत्रयंसतर्कद्वादशाध्याये मनुनाभ्युपगतम्अतएवाविज्ञेयमित्यर्थापत्त्याद्यगोचरमिति धरणीधरस्यापि व्याख्यानम्। न च नासीदेवेति वाच्यंतदानींश्रुतिसिद्धत्वात्। तथा च श्रूयते तद्धेदंतर्ह्यव्याकृतमासीच्छान्दोग्योपनिषच्च सदेव सौम्येदमग्रआसीदिदंजगत्सदेवासीद्ब्रह्मात्मनाआसीदित्यर्थः । सच्छब्दोब्रह्मवाचकःअतएव प्रसुप्तमिवसर्वतः। प्रथमार्थे तसिः स्वकार्याक्षममित्यर्थः ॥ ५ ॥

( ४ ) **राघवानन्दः** । धर्मोपयोगिचातुर्वर्ण्यस्योत्पत्तिक्रमेणैव प्राधान्याप्राधान्यंमुखतोवक्तुं ब्रह्मज्ञानाय सृष्टेराविद्यकत्वं प्रकटयञ्छ्रोतव्यमाह आसीदित्यादि यावत्समाप्ति । इदमिदानींप्रमाणषट्कजधीयोग्यंजगत्सृष्टेःपूर्वंतमोभूतं तमःप्रधाना विद्यातदवच्छिन्नंब्रह्म तद्भूतंतत्प्राप्तंतत्तादात्म्यंगतं नतुतद्व्यतिरेकेणोपलब्धमासीदितियावत्। तेनशून्यमतंनिरात्ममतंचनिरस्तमतोब्रह्ममात्रपरिणतिरिति भास्करमतं परमाणूपादानमतंचनिरस्तं स्वात्मतमःस्वीकृतेः । तथा च श्रुतयः सदेवसोम्येदमग्रआसीत् एकमेवाद्वितीयंब्रह्मैवेदमग्रआसीत् तद्धेदंतर्ह्यव्याकृतमासीत् नासदासीन्नोसदासीत्तमआसीत् नैवेहकिंचनाग्रआसीत् मृत्युनैवेदमावृतमासीदित्यनेनात्रब्रह्मैवोपक्रान्तं संन्यासेनापहत्यैनः प्राप्नोतिपरमांगतिमिति । मध्येऽपितदेवपरामृष्टं ब्रह्मान्तेच एवंयः सर्वभूतेषुपश्यन्नात्मानमात्मना । ससर्वसमतामेत्यब्रह्माभ्येति परंपदमिति॥ अत्रचाप्रज्ञातमिति कीर्तनादपूर्वता ऽऽद्यन्तमध्येकथनादभ्यासः परमांगतिमितिफलमितित्रितयंदर्शितम्। तथा आत्मैवदेवताः सर्वाः सर्वमात्मन्यवस्थितम् आत्मा हिजनयत्येषांकर्मयोगंशरीरिणामित्यर्थवादोपपत्ती दर्शिते तस्मादुपक्रमादिषड्विधलिङ्गोपेतंब्रह्मैवात्रविवक्षितम्। तथाच उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती चलिङ्गंतात्पर्यनिर्णयइतितच्छेषता धर्मस्य। तथाचश्रुतिः तमेवंवेदानुवचने न ब्राह्मणाविविदिषन्ति यज्ञेनदानेनेत्यादि । तथाधर्मेणपापमपनुदतीतिःश्रुतिः । स्मृतिरपि ज्ञानमुत्पद्यते पुंसांक्षयात्पापस्य कर्मणः । सर्वंकर्माखिलंपार्थ ज्ञाने परिसमाप्यतइत्यादिका । तदर्थंधर्मोपदेशोऽत्रैव सर्वेपि क्रमशस्त्वेते यथाशास्त्रंनिषेविताः । यथोक्तकारिणंविप्रं नयन्ति परमंपदमिति । सर्वेऽत्रोक्ताधर्मधीद्वारेणेतिशेषोऽन्यथा नतत्र दक्षिणायन्तिनाविद्वांसोऽतपस्विनइति श्रुतेर्बाधः। तथा तमेवविदित्वातिमृत्युमेति नान्यः पन्थाविद्यतेऽयनायेतिच । अनेन धीकर्मणोः कार्यकारणपरत्वप्रतीतेस्तयोः समविषमसमुच्चयोऽपिनिरस्तः । तथात्रैव । सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते। दर्शनेन विहीनस्तु संसारंप्रतिपद्यतइति । तस्माद्ब्रह्मधीशेषता धर्मस्य । धर्मस्तु देहादिसृष्टिंविना नेतीयंसृष्टिद्वारिकासंगतिः शास्त्रस्येति । अप्रज्ञातमनुपलब्धं प्रत्यक्षेण तेन चार्वाकमतंनिरस्तम्। अलक्षणं लक्षणमनुमानंतदगम्यं तेनसाङ्ख्यमतंनिरस्तं तेषांप्रकृतेर्नित्यानुमेयत्वात्। अप्रतर्क्यंतर्कावेद्यं तेन नैयायिकमतंनिरस्तम् । अविज्ञेयंतदानीमागमतः तेन मीमांसकमतंनिरस्तम्। तर्ह्यसन्नेत्याह प्रसुप्तमिव सर्वतः सर्वेषां सुप्तिरिव तत्र यथात्मभावंगतस्य विश्वस्य तस्मादेवोत्पत्तिस्तथाह । यथाअग्नेःक्षुद्राविस्फुलिङ्गाः प्रभवन्तिसरूपाएवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणिभूतानि व्युच्चरन्ति जायन्ते तथान्यत्रापिमृत्युनैवेदमावृतमासीत् कथमसतः सज्जायेत .नासतोविद्यतेभावोनाभावोविद्यतेसत इत्यादिश्रुतिस्मृति शतेनावगतसत्तत्त्वस्य नासत्वम् ॥ ५ ॥

( ५ ) **नन्दनः** । तत्र सर्वतत्त्वेन सृष्टेः प्रथमंवक्तुमुचितत्वात्तांविवक्षुस्ततः पूर्वस्यांप्रलयावस्थायां जगदवस्थानं तावदाह आसीदिति । सर्वतः सर्वमिदंकार्यजातम् तमोमूलप्रकृतिः तत्तद्भूतकार्यावस्थांविहाय कारणतामधिगतम्। अलक्षणं लक्षणमाकारोधर्मः गन्धरसादिधर्मरहितमितियावत्। अनेनप्रत्यक्षाविषयत्वमुक्तम्। अप्रतर्क्यमित्यनुमानाविषयत्वमुक्तम्। अविज्ञेयमित्यागमाविषयत्वमुक्तम् । एवंप्रमाणत्रयाऽगोचरत्वादप्रज्ञातमुपरतक्रियत्वात्प्रसुप्तमिवासीत् ॥ ५ ॥

( ६ ) **रामचन्द्रः** ।आसीदिति । मनुरुवाच इदंविश्वंपूर्वंतमोभूतमासीत्। कीदृशंविश्वं नै प्रज्ञातंकैश्चित् न प्रकर्षेणज्ञातं

नलक्षणंपूर्वापरंवायस्य तदलक्षणम् पुनःकीदृशंविश्वं अप्रतर्क्यंतर्कागोचरं तथाऽविज्ञेयं किमिव सर्वतःप्रसुप्तमिव॥५॥

**ततःस्वयंभूर्भगवानव्यक्तोव्यञ्जयन्निदम् ॥ महाभूतादिवृत्तौजाःप्रादुरासीत्तमोनुदः ॥ ६ ॥**

( १ ) **मेधातिथिः** । तस्यामहाराव्याअनन्तरंस्वयंभवतीति स्वयंभूः स्वेच्छया कृतशरीरपरिग्रहोन संसार्यात्मवत्कर्मपरतन्त्रंशरीरग्रहणमस्य । अव्यक्तो ध्यानयोगाभ्यासभावनावर्जितानामप्रकाशः अथवा अव्यक्तमिदमित्येवंपठितव्यम् । इदमव्यक्तावस्थंव्यञ्जयन् स्थूलरूपैर्विकारैः प्रकाशमानयन् । यदिच्छयापुनर्जगत्प्रादुर्भवति प्रादुरासीत् । प्रादुःशब्दः प्राकाश्ये । तमोनुदः तमोमहाप्रलयावस्था तांनुदति विनाशयति पुनर्जगत्सृजत्यतस्तमोनुदः । महाभूतानि पृथिव्यादीनि । आदिग्रहणात्तद्गुणाः शब्दादयोगृह्यन्ते तेषु वृत्तंप्राप्तमोजोवीर्यंसृष्टिसामर्थ्यंयस्य । सएवमुक्तः स्वयमसमर्थानि महाभूतानि जगन्निवर्तयितुं यदात्तंतु तेन तत्र शक्तिराधीयते तदावृत्ताद्यात्मना विक्रियन्ते । ननुं प्रकृतिशक्त्यवस्थानि प्रकृतिरूपापन्नानि महाभूतानि जगत्सर्गादौ महाभूतशब्देनाभिप्रेतानि । पाठान्तरं महाभूतानुवृत्तौजाइति । अनुवृत्तमनुगतमिति प्रागुक्तएवार्थः ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । ततइति । स्वयंभूर्भगवान् जगज्जननोचितवीर्यवानव्यक्तः प्रत्यक्षागम्यः परमात्मा व्यञ्जयन्निदं महाभूतेन्द्रियप्रकृतिव्यक्तं कुर्वन्नेव प्रादुरासीद्व्यक्तोऽभवत् । जगतस्तदुपादेयस्य व्यक्तिरेव तद्व्यक्तिर्नान्येत्यर्थः । महाभूतानामादौ सृष्टेरग्रे वृत्तौजाः प्रवृत्तबलः सृष्टौ तमोनुदोमोहापनोदकः सृष्टौ प्रलयकालिकतमोऽभिभवेन रजसः प्राबल्यात् ॥ ६ ॥

( ३ ) **कुल्लूकः** । अथ किमभूदित्याह ततःस्वयंभूर्भगवानित्यादि । ततःप्रलयावसानानन्तरं स्वयंभूः परमात्मा स्वयंभवति स्वेच्छया शरीरपरिग्रहंकरोति न त्वितरजीववत्कर्मायत्तदेहः । तथा च श्रुतिः । सएकधा भवति द्विधा भवति । भगवानैश्वर्यादिसंपन्नः । अव्यक्तोबाह्यकरणागोचरोयोगाभ्यासावसेयइतियावत् । इदंमहाभूतादि आकाशादीनिमहाभूतान्यादिग्रहणान्महदादीनि च व्यञ्जयन्नव्यक्तावस्थंप्रथमंसूक्ष्मरूपेण ततःस्थूलरूपेण प्रकाशयन् । वृत्तौजावृत्तमप्रतिहतमुच्यतेऽतएव वृत्तिसर्गतायनेषु क्रमइत्यत्र वृत्तिरप्रतिघातइति व्याख्यातंजयादित्येन । वृत्तमप्रतिहतमोजःसृष्टिसामर्थ्यंयस्य सतथा । तमोनुदः प्रकृतिप्रेरकः । तदुक्तंभगवद्गीतायाम् मयाध्यक्षेण प्रकृतिःसूयते सचराचरमिति ॥ प्रादुरासीत्प्रकाशितोबभूव । तमोनुदः प्रलयावस्थाध्वंसकइति तु मेधातिथिगोविन्दराजौ ॥ ६ ॥

( ४ ) **राघवानन्दः** । एवंकारणात्मना लयमुक्त्वा सृष्टिमाह ततइति । ततःप्रलयानन्तरं स्वयंभूः स्वभवनेऽन्यानपेक्षोऽ नादिरित्युक्तम् । तस्य सृष्टिसामर्थ्यंद्योतयति भगवानिति । उत्पत्तिंच विनाशंच भूतानामागतिंगतिम् । वेत्ति विद्यामविद्यांच सवाच्योभगवानित्युक्तेः । अव्यक्तः उपनिषच्छब्दातिरिक्तप्रमाणागम्यः । तथाचश्रुतिः । तंत्वौपनिषदंपुरुषं पृच्छामीतिव्यञ्जयन्वटकणिकायांस्थितं वटवृक्षंवटकणिकेवइदं । तदा तमोभूतमविद्याद्वाराऽऽत्मन्यन्तर्लीनंव्यञ्जयन् व्यक्ततामापादयन् प्रादुरासीत् कार्योन्मुखोऽभूदित्यन्वयः । तथाचश्रुतिः तदात्मानंस्वयमकुरुतेति । तन्नामरूपाभ्यामेव व्याक्रियतइति । कथंभूतः महाभूतादिवृत्तौजाः महाभूतादिर्महाभूतस्यादिरहङ्कारतत्त्वंतत्र वृत्तसृष्टिकारणसामर्थ्यलक्षणमोजोयस्य सः । तमोनुदः तमोऽभिभवरूपः सत्त्ववृत्तिरीक्षणंकुर्वाणः । तथाचश्रुतिः तदैक्षत बहुस्यांप्रजायेयेति । एतदेवेक्षणंमहत्तत्वंबुद्धिर्महानित्युक्तेः ॥ ६ ॥

( ५ ) **नन्दनः** । विस्तरेण जगत्सृष्टिंवक्ष्यन्स्रष्टारंसृज्योपादानंसृज्यंच संक्षिप्यतावदाह ततइति । ततःप्रलयावसाने । स्वयमेवसर्वदा भवतीति स्वयंभूः । भगवाञ्ज्ञानबलैश्वर्यशक्तितेजोरूपः । अव्यक्तोदुर्विज्ञानः । विशेषणत्रयेण परस्य पुंसोनि

स्यत्वंस्वरूपंमहिमा चोच्यते । तमोनुदःप्रकृतेः प्रेरकःपरिणमयिता । महाभूतादिवृत्तौजास्तद्गुणसंविज्ञानोबहुव्रीहिः । तेषु महाभूतादिषु चतुर्विंशतितत्त्वेषु प्रवृत्तवीर्यः । अनयोर्विशेषणयोश्चायमर्थः । चतुर्विंशतितत्त्वानि तदनुप्रविष्टंच भगवद्वीर्यंजगदुपादानमिति । इदंकार्यजातंव्यञ्जयन्नाविष्कुर्वन्प्रादुरासीत् । प्रादुर्भावश्चात्रतत्त्वानुप्रविष्टस्य भगवतः शरीरवत्त्वेन व्यक्तीभावः ॥ ६ ॥

( ६ ) **रामचन्द्रः** । ततइति । ततस्तस्मात्कारणादव्यक्तोभगवानिदंविश्वंव्यञ्जयन्प्रादुरासीद्यतःस्वयंभूः । कीदृशःतमोनुदःप्रकाशकर्ता । पुनःकीदृश. महाभूतादिर्महदादीनिभूतानि तेषामादिः । पुनःकीदृशः वृत्तौजामहदादीनांभूतानामादौ प्रधाने वृत्तौजावृत्तबलः ॥ ६ ॥

## योऽसावतीन्द्रियग्राह्यः[1] सूक्ष्मोऽव्यक्तःसनातनः ॥ सर्वभूतमयोऽचिन्त्यःसएव[x]स्वयमुद्बभौ ॥ ७ ॥

( १ ) **मेधातिथिः** । योसावितिसर्वनामभ्यांसामान्यतः प्रसिद्धमिवपरंब्रह्मोद्दिशति । योऽसौवेदान्तेष्वन्यासुचाध्यात्मविद्यास्वितिहासपुराणेषु च प्रसिद्धोवक्ष्यमाणैर्धर्मैः सएषप्रादुरासीदित्यत्रोक्तः स्वयमुद्बभावुद्भूतः शरीरग्रहणंकृतवान् । भातिरनेकार्थत्वादुद्भवे वर्तते । अथवा दीप्त्यर्थएव स्वयंप्रकाशआसीन्नादित्याद्यालोकापेक्षः । इन्द्रियाणामत्ययोऽतीन्द्रियम् । अव्ययीभावः । अतीन्द्रियग्राह्यः सुप्सुपेतिसमासः । इन्द्रियाण्यतिक्रम्य गृह्यते नकदाचिदिन्द्रियस्य गोचरः । अन्यदेव तद्योगजज्ञानंयेन गृह्यते । अथवेन्द्रियाण्यतिक्रान्तमतीन्द्रियं मनउच्यते । परोक्षत्वादिन्द्रियाणामविषयः । तथाचवैशेषिकायुगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गमित्यानुमानिकत्वंमनसः प्रतिपन्नास्तेन गृह्यते । तथाच भगवान्व्यासः । नैवासौ चक्षुषा ग्राह्यो नतु शिष्टैरपीन्द्रियैः । मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिरिति ॥ प्रसन्नेन रागादिदोषैरकलुषितेन तद्रूपासनापरत्वेन लब्धसूक्ष्मदर्शनशक्तिभिः । सूक्ष्मइवसूक्ष्मोऽणुर्न ह्यसावणुस्थूलादिविकल्पानामाश्रयः । सर्वविकल्पातीतोह्यसौ । उक्तंच । यः सर्वपरिकल्पानामभ्यासेऽप्यनवस्थितः । तर्कागमानुमानेन बहुधा परिकल्पितः । व्यतीतोभेदसंसर्गाद्भावाभावौक्रमाक्रमौ । सत्यानृते च विश्वात्मा सविवेकात्प्रकाशतइति । सूक्ष्मत्वादव्यक्तः सनातनोव्यक्तत्वाभाविकेनानादिनिधनेनैश्वर्येण युक्तोयेषामपि कर्मप्राप्यंहैरण्यगर्भपदं तन्मतेपि सनातनत्वंत्यप्यादिमत्वेऽन्तत्वाभावात् । नहि सर्गादिफलभोक्तृत्वावस्था कदाचिदपैति । सर्वाणि भूतानि मया स्रष्टव्यानीत्येवंभावितचित्तोभूतात्मैवंसंपन्नः सर्वभूतमयइत्युच्यते । यथामृन्मयोघटोमृद्विकारत्वान्मृद्विरारब्धशरीर एवंयःकश्चित्किंचिदत्यन्तंभावयति सतन्मयइत्युपचाराद्रुच्यते । यथास्त्रीमयोयंपुरुषः ऋङ्मयोयजुर्मयइति । अथवाऽद्वैतदर्शनेनैव चेतनाचेतनानि भूतानि पृथक्के न सन्ति तस्यैवायंविवर्तः । अतोविवर्तानांभूतमयत्वात्तैश्चतस्याभेदाद्युक्तमेवतन्मयत्वम् । कथंपुनरेकस्यनानारूपविवर्तितोपपत्तिरेकत्वाद्विरोधिनी । उच्यते । एवमाहुर्विवर्तवादिनोयथा समुद्राद्वायुनाभिहिताऊर्मयः समुत्तिष्ठन्ति तेच न ततोऽभिपद्यन्ते नापिलिप्यन्ते सर्वथाभेदाभेदाभ्यामनिर्वाच्या एवमयंब्रह्मणोविश्वविवर्तः । अपिशब्दश्चात्र द्रष्टव्यः । स्वरूपे स्थितोऽग्राह्यो विवर्तावस्थायामिन्द्रियग्राह्यः । एवंसूक्ष्मः । अपिशब्दात् स्थूलावस्थायांस्थूलः । अव्यक्तोव्यक्तश्च शाश्वतोऽशाश्वतश्च । भूतमयस्तद्रूपरहितश्च । विवर्तावस्थाभेदेनैव व्याख्येयम् । अचिन्त्यः आश्चर्यरूपः सर्वविलक्षणया शक्त्या योगात् ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । योऽसाविति । योऽसौ परमात्मा अतीन्द्रियोऽप्रत्यक्षः अग्राह्योऽधार्यः सूक्ष्मोमनसोऽप्यगो-

---

१ यग्राह्यः= योऽग्राह्यः ( सर्वज्ञनारायणमते )

x सएव = सएष ( ख, ग, घ, च, अ, ज झ, ड, )

श्वरः अव्यक्तोव्यञ्जकशून्यः सनातनोनित्यः सर्वभूतमयः सर्वप्राणिनां तदुपादानवत्त्वात् अचिन्त्यस्तर्कागम्यः सएवपरमात्मैषजगद्रूपेण स्वयमुद्भभावाविर्भूतइति। एवंविश्वस्योपादानप्रकृतिशक्तियुक्तः परमात्मैवेति दर्शितम् ॥ ७ ॥

( ३ ) कुल्लूकः। योऽसाविति । योऽसाविति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासादिप्रसिद्धंपरमात्मानंनिर्दिशति । अतीन्द्रियग्राह्यइन्द्रियमतीत्य वर्ततइत्यतीन्द्रियंमनस्तद्ग्राह्यइत्यर्थः । यदाहव्यासः । नैवासौ चक्षुषा ग्राह्योन च शिष्टैरपीन्द्रियैः। मनसातु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः॥ सूक्ष्मोबहिरिन्द्रियागोचरः। अव्यक्तोव्यक्तिरवयवस्तद्रहितः। सनातनोनित्यः। सर्वभूतमयःसर्वभूतात्मा अतएवाचिन्त्यःइयत्तया परिच्छेत्तुमशक्यः। सएव स्वयमुद्बभौ महदादिकार्यरूपतया प्रादुर्बभूव उत्पूर्वोभातिः प्रादुर्भावेवर्तते धातूनामनेकार्थत्वात् ॥ ७ ॥

( ४ ) राघवानन्दः। किंच योसाविति। अतीन्द्रियश्चासौ ग्राह्यश्चेति न चक्षुषा गृह्यते नापि वाचेति श्रुतेः। चक्षुराद्यविषयत्वेपि शब्दजन्यलक्षणावृत्तिविषयतया ग्राह्यः सूक्ष्मोनिरवयवोऽतएवाव्यक्तः सनातनोनित्यः सर्वभूतमयः सर्वभूतानामभिन्ननिमित्तोपादानत्वात्। तथाच जन्माद्यस्य यतइति ब्रह्मलक्षणसूत्रे यतोवाइमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति । अभिन्ननिमित्तोपादानब्रह्मलक्षणार्थश्रुतिरुदाहृता कार्यस्याविद्यकतया कल्प्यत्वात्कारणतयाऽचिन्त्योऽपि विचारासहोऽप्यात्मा पञ्चभूतकारणतांगतइत्याह स्वयंउद्बभाविति। प्रादुरासीदित्यस्यानुवादमात्रम् ॥ ७ ॥

( ५ ) नन्दनः। सृष्टौ भगवान्स्वयमेव प्रवर्तते नान्यनियोगेनेत्याह योऽसाविति । संपन्नयोगसंस्कारंमनोऽतीन्द्रियंतेनग्राह्यः। अतीन्द्रियग्राह्यइत्ययमेव साधुः पाठः। सूक्ष्मः अणोरणीयान्। अव्यक्तः दर्शनागोचरः। सनातनःअनादिनिधनः। योऽसावेवंलोकशास्त्रप्रसिद्धः सएषपरमः पुमान्सर्वभूतमयः प्रपञ्चरूपःस्वयं न कस्यचिन्नियोगेन नापिकर्मवशे नोद्बभौव्यक्तोबभूव । एतदुक्तंभवत्यतीन्द्रियग्राह्यत्वादिगुणयुक्तोऽपि सदसद्विपरीतेन जगदाकारेण स्फुरन्स्वेच्छयाविहरतीति । नन्वतीन्द्रियग्राह्यत्वादिकल्याणगुणयुक्तस्य तत्प्रतिभटप्रपञ्चरूपधारणंकिमर्थमितिचोदनायामचिन्त्यइत्युक्तम्। अचिन्त्यः दुर्विज्ञानोदुर्निरूपाहीश्वरप्रवृत्तिः ॥ ७ ॥

( ६ ) रामचन्द्रः। यइति। सएवेश्वरः स्वयमुद्बभौ स्वयमुत्पन्नः। योऽसावतीन्द्रियोमनोग्राह्यइन्द्रियाण्यतिक्रम्य वर्तते सः । पुनःकीदृशः मनोवाक्कायकर्मभिरग्राह्यःसूक्ष्मः । पुनःकीदृशःअव्यक्तःन व्यक्तोऽव्यक्तः । पुनःकीदृशः सनातनःलयेऽपियोवर्तते ॥ ७ ॥

**सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ॥ अपएव ससर्जादौ तासु बीजमवासृजत् ॥ ८ ॥**

( १ ) मेधातिथिः। सपूर्वनिर्दिष्टविशेषणैर्हिरण्यगर्भः समवर्तताग्रइत्यादिभिर्मन्त्रैर्लब्धहिरण्यगर्भाभिधानः। प्रजाविविधानानारूपाःसिसृक्षुः स्रष्टुमिच्छन्नमाः उदकमादौ प्रथमंससर्जोत्पादितवान्। शरीरात्स्वाद्यत्तेन गृहीतंशरीरमद्वैवदर्शने। प्रधानमेव। तस्येदंशरीरंतदिच्छानुवर्तित्वात् स्वतःस्वशरीरनिर्माणहेतुत्वाच्च सर्वलोकानांशरीरंकिंभौतिकेन व्यापारेण कुद्दालखननादिना ससर्ज नेत्याह । कथंतर्ह्यभिध्यायापउत्पद्यन्तामेवमिच्छामात्रेण । अत्रेत्थंचोच्यते ।

---

( ८ ) भिध्याय = भिध्यायन् ( ख, च, )

(१।८ ) बीज = वीर्य ( च, ग, क, ख )

(२।८ ) सृजत् = क्षिपत् ( क )

पृथिव्यादीनांतदानीमभावादपांसृष्टानांकआधारः। अन्येभ्यइदमुच्यते स्रष्टुरपि परमेश्वरस्य गृहीतशरीरस्य कआधारइत्यपि वाच्यम्। अथ विलक्षणैश्वर्यातिशययोगादन्यैव सा कर्तृशक्तिरसङ्गचोद्या प्रकृतधर्मसामान्येनेत्येवमेष्वपि द्रष्टव्यम्। तासु वीर्यंशुक्रमवासृजत् न्यषिञ्चत्॥ ८ ॥

( २ ) **सर्वज्ञनारायणः**। अथ सृष्टिक्रममाह सोभिध्यायेति। शरीराच्छरीरतुल्याच्छक्तिभूतात्प्रधानादुपादानीभूतात्सिसृक्षुः प्रजा अपः ससर्ज। बीजाधारतया वीर्यं बीजभूता भूतमात्राः॥ ८ ॥

( ३ ) **कुल्लूकः**। सोऽभिध्यायेति। सपरमात्मा नानाविधाःप्रजाःसिसृक्षुरभिध्यायापोजायन्तामित्यभिध्यानमात्रेणापएव ससर्ज। अभिध्यानपूर्विकांसृष्टिंवदतोमनोःप्रकृतिरेवाचेतनाऽस्वतन्त्रा परिणमतइत्ययंपक्षोन संमतः किंतु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्तएवाभिमतःप्रतिभाति। तथा च छान्दोग्योपनिषत् तदैक्षत बहुस्यांप्रजायेयेति। अतएव शारीरकसूत्रकृता व्यासेन सिद्धान्तितमीक्षतेर्नाशब्दमिति। ईक्षतेरीक्षणश्रवणान्न प्रधानंजगत्कारणम् अशब्दं न विद्यते शब्दः श्रुतिर्यस्य तदशब्दमिति सूत्रार्थः। स्वाच्छरीरादव्याकृतरूपादव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिस्तदेव तस्य च शरीरमव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माविद्यावासनाएव सूक्ष्मरूपतया शक्त्यात्मना स्थिताअभिधीयन्तेऽव्याकृतस्य च ब्रह्मणा सह भेदाभेदस्वीकारात्। ब्रह्माद्वैतंशक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमतइत्युभयमप्युपपद्यते। आदौ स्वकार्यभूमिब्रह्माण्डसृष्टेःप्रागपांसृष्टिश्चेयंमहदहङ्कारतन्मात्रक्रमेण बोद्धव्या महाभूतादिव्यञ्जयन्निति पूर्वाभिधानादनन्तरमपि महदादिसृष्टेर्वक्ष्यमाणत्वात्। तास्वप्सुबीजंशक्तिरूपमारोपितवान्॥ ८ ॥

( ४ ) **राघवानन्दः**। ततोहिरण्यगर्भस्योत्पत्तिमाह सोऽभिध्यायेति। सईश्वरोऽभिध्याय सृज्यमानसूक्ष्मप्रपञ्चमाभिमुख्येन मायावृत्तिभिरालोच्य स्वादध्यस्ताच्छरीरादवच्छेदकतया शरीरस्थानीयादविद्यातोविचित्रशक्तितोऽपः ससर्जेत्यन्वयः। आदौ। सृष्टेः। किंकुर्वन् विविधाः स्थावरादिभेदभिन्नाः प्रजाः सिसृक्षुरपोऽपञ्चीकृतपञ्चभूतानि अण्व्योमात्राविनाशिन्योदशार्धानांच याःस्मृताः। ताभिः सार्धमिदंसर्वंसंभवत्यनुपूर्वशइत्यत्रोपसंहारे वक्ष्यमाणत्वात् पूर्वजन्मनि हिरण्यगर्भेण यजमानावस्थेन क्षिप्तान्यग्निहोत्रादिसमवायीनि तासु बीजं हिरण्यगर्भोऽहमित्यादिवासनावासितकर्तृत्वाद्यवच्छिन्नंचैतन्यमवासृजत्प्रकटतामनयदपञ्चीकृतंपञ्चभूततत्कार्यलिङ्गशरीरावच्छिन्नचैतन्यस्य हिरण्यगर्भत्वात्। तथा। तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणइति श्रुतेः। अन्नमत्रापञ्चीकृतपञ्चभूतानि तस्मात्प्राणोहिरण्यगर्भोभिजायतइत्यनुषङ्गः॥ ८ ॥

( ५ ) **नन्दनः**। तत्त्वसृष्टिंसंक्षेपेणोक्त्वा तात्त्विकींसृष्टिंविस्तरेण वक्तुमुपक्रमते सइति। सभगवान्स्वाच्छरीराद्विविधाः प्रजाःसिसृक्षुरित्यभिध्यायापः सृष्ट्वा तत्रस्ववीर्यमुप्त्वा तदण्डाकारेण परिणमय्य तत्रहिरण्यगर्भाख्यमात्मनः शरीरंसंपाद्य तस्मादेवोपादानात् प्रजासृजेयमितिविगणय्येत्यर्थः। आदावण्डादौ वीर्यमण्डपरिमाणानुगुणंशक्तिविशेषमवासृजदुप्तवानंशेनानुप्राविशदित्यर्थः॥ ८ ॥

( ६ ) **रामचन्द्रः**। सइति। ईश्वरोऽभिध्याय ध्यानंकृत्वा कुतःसृष्टिंकरोमीति ध्यात्वा स्वात्शरीराद्विविधाःप्रजाः सिसृक्षुः सन्नादौ सृष्ट्यादावपएव ससर्ज। तास्वप्सु बीजंचिच्छक्तिमवासृजत्॥ ८ ॥

**तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयंब्रह्मा सर्वलोकपितामहः ॥ ९ ॥**

( १ ) **मेधातिथिः** । प्रथमंप्रधानंसर्वतोभवमृद्रूपंसंपद्यते । हिरण्यगर्भवीर्यसंयोगात्काठिन्यंप्रतिपद्यते । तदण्डंसमभवदित्युच्यते। हेम्नइदंहैमं स्वर्णमयमित्यर्थः । अंशुसामान्यात्तस्य सुवर्णमयस्य । ननु नागमिकोयमर्थो न चात्र इवशब्दः श्रूयते तत्र कथमुपचारतोव्याख्यानमसति प्रमाणान्तरे । उच्यते । वक्ष्यति ताभ्यांशकलाभ्यांतु दिवंभूमिंचनिर्ममइति। इयंभूमिर्मृन्मयी न सर्वतः सुवर्णमयीत्यतउपचारआश्रितः। सहस्रांशुरादित्यइत्यर्थः । अंशवोरश्मयस्ततुल्या प्रभा दीप्तिस्तस्याण्डस्य तस्मिन्नण्डे स्वयंब्रह्मा जातोजज्ञे संभूतः। ब्रह्माहिरण्यगर्भएव । स्वयमितिउक्तार्थम्। योगशक्त्या प्राग्गृहीतंशरीरंपरित्यज्यान्तरण्डमनुप्राविशत् । अथाशरीरएवयः ससर्ज ततोऽन्तरण्डंस्वशरीरंजग्राह । अथवाऽन्योयोसावित्यत्रनिर्दिष्टः। अन्यश्चायमण्डजोब्रह्मेति । तथाचवक्ष्यति तद्विसृष्टइति। तेनेश्वरेण सृष्टः । कथंतर्हि स्वयंजज्ञे स्वयंभूतश्च तत्र ब्रह्मोच्यते । नैषदोषः ।पितृनाम्ना पुत्रोव्यपदिश्यते । आत्मा जज्ञआत्मनइति । अनिदंपरेभ्य आगमेभ्योलिखितमाचार्येण नचात्राभिनिवेष्टव्यम् । सएव स्वयंजायतामन्योवा तेन सृज्यतामिति न धर्माभिधानउपयुज्यतइत्युक्तम् । सर्वलोकानांपितामहइति संजातस्योपचारतोवास्तवदृष्टत्वात् पितुरपि सकाशादधिकः पितामहःपूज्यः ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । तदण्डमिति । तद्बीजंयदवसृष्टं तेजः तस्य च तेजोधातून्कटतांवक्तुमुक्तं सहस्रांशुसमप्रभमिति । तस्मिन्नण्डे ब्रह्मशब्दस्य नानार्थत्वात्सर्वलोकपितामहइत्युक्तम् । पितुरपि तज्जन्यत्वात्पितामहः ॥ ९ ॥

( ३ ) **कुल्लूकः** । तदण्डमभवद्धैममिति । तद्बीजंपरमेश्वरेच्छया हैममण्डमभवत् । हैममिव हैमंशुद्धिगुणयोगान्न तु हैममेव । तदीयैकशकलेन भूमिनिर्माणस्य वक्ष्यमाणत्वाद्भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचाराश्रयणम् । सहस्रांशुरादित्यस्ततुल्यप्रभंतस्मिन्नण्डे हिरण्यगर्भोजातवान् येन पूर्वजन्मनि हिरण्यगर्भोऽहमस्मीति भेदाभेदभावनया परमेश्वरोपासना कृता तदीयंलिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयंपरमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः । सर्वलोकानांपितामहोजनकःसर्वलोकपितामहइति वा तस्य नाम॥ ९ ॥

( ४ ) **राघवानन्दः** । ततोविराड्जज्ञेइत्याह तदिति । तत्पूर्वोपस्थितजलरूपमपञ्चीकृतंपञ्चीकृतपञ्चभूताण्डाकारेणाभवत्परिणनाम सोऽकामयत द्वितीयोमआत्माजायेतेत्युपक्रम्य तंजातमभिव्याददातीति श्रुतेः । सहिरण्यगर्भोद्वितीयविषयककामनांकृत्वा तंपुत्रस्थानीयं ब्रह्माण्डंजनयित्वाऽत्तुंमुखमभिव्याददादिति श्रुतेरर्थः । तेन हिरण्यगर्भस्य कार्यविराडिति । हैमंबहुलप्रकाशं न तु हेममयंमपञ्चीकृतपञ्चभूतमयत्वादण्डस्य । अहंगौरइति मनुष्यदेहआत्माभिमानइव तत्र तच्चैतन्याभिमानोवृत्तइत्याह तस्मिन्नित्यादि । तस्मिन्नण्डे ब्रह्माविराड्जज्ञेऽभिमानी जातः पञ्चीकृतपञ्चभूताभिमानिनस्तस्यैव चैतन्यस्य विराट्त्वात्। तथा च श्रुतिः आपएवेदमग्रआसुस्ताआपः सत्यमसृजन्त सत्यंब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवानिति । अपञ्चीकृतपञ्चभूतानि ताः सत्यंहिरण्यगर्भंजनयामासुः । सत्यंकर्तृ ब्रह्म विराजं जनयामास । तच्च ब्रह्म कर्तृ प्रजापतिमनुंसच मनुर्देवाञ्जनयामासेत्यनुषज्यतइति श्रुतेरर्थः । तथा च वार्त्तिकम् । आपोह्यणुतराः सत्यमसृजन्तइति श्रुतिः । क्रियाविज्ञानशक्त्यात्मा सोतिब्रह्माऽसृजत्परः। विराड् ब्रह्माथ ससृजे मनुंदेवं प्रजापतिम् । मनुर्देवान्मनुष्यांश्च स्थास्नु कृत्स्नंचरिष्णुचेति । क्रियाविज्ञानशक्त्यात्मा हिरण्यगर्भः स्वकार्याद्विराड्ब्रह्मणःपरोवर्ततइति परशब्दार्थः ॥९

---

( ९ ) तस्मिन् = यस्मिन् ( ख, च )

( ५ ) **नन्दनः**। तत् जलानुप्रविष्टं भगवद्वीर्यम्। हैमंहेममयम्। अतएव हि ब्रह्मा हिरण्यगर्भाख्यस्तस्मिन्नण्डेस्वयमेव भगवान् ब्रह्मस्वरूपधारी जज्ञे ॥ ९ ॥

( ६ ) **रामचन्द्रः**। तदण्डमिति । तत्बीजंहैमंसुवर्णमयंप्रकाशरूपमण्डमभवत् । कीदृशमण्डंसहस्रांशुसमप्रभंतस्मिन्नण्डे स्वयमीश्वरोब्रह्मा कीदृशोब्रह्मा सर्वलोकपितामहः ॥ ९ ॥

**आपोनाराइति प्रोक्ताआपोवै नरसूनवः॥ तायदस्यायनंपूर्वंतेन नारायणः स्मृतः॥ १० ॥**

**[ नारायणपरोव्यक्तादण्डमव्यक्तसंभवम् ॥ अण्डस्यान्तस्त्विमेलोकाःसप्तद्वीपाचमेदिनी ॥ ]**

( १ ) **मेधातिथिः** । यः कुत्रचिन्नारायणशब्देन कर्तृज्ञानशक्त्यतिशययोगेन जगत्कारणपुरुषतयागमेष्वाम्नातः सोऽयमेव नशब्दभेदादर्थभेदः । ब्रह्मा नारायणोमहेश्वर इत्येकएवार्थेनोपासनाकर्मतया भिद्यते । तथा च द्वादशे दर्शयिष्यामः । यथाचैतत्तथोच्यते । आपोनाराइत्यनेन शब्देन प्रोक्ताः । ननु नायंवृद्धव्यवहारेऽथच न तथा प्रसिद्धोऽतआह आपोवै नरसूनवः । सभवेद्भगवान्नरः पुरुषइतिप्रसिद्धः । आपश्च तस्य सूनवोऽपत्यानि । अतस्तानरशब्देनोच्यन्ते । दृष्टोहि पितृशब्दोऽपत्ये वसिष्ठस्यापत्यानि वसिष्ठाभगवतस्ताबभ्रुमण्डुलोमकइत्यभेदोपचारेण ताआपोनरशब्दवाच्याः। यत् येन प्रकारेण अस्य प्रजापतेः पूर्वमयनंप्रथमसर्गआश्रयोवा गर्भस्थस्य तेन हेतुना नारायणः स्मृतः । नराअयनमस्येति नरायणइति प्राप्तेन्येषामपि दृश्यतइतिदीर्घः पूरुषइतियथा । अथवा सामूहिकोऽण् ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । आपइति । नाराइति नाम्नाऽऽपः प्रोक्ताः । नरस्य नेतुः परमात्मनोहि सूनवोऽपत्यानि ताः पूर्वसृष्ट्यादावस्य ब्रह्मणस्ता अयनंस्थानंतेन नारायणोब्रह्मा । यथा विष्णुपुराणे । ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान्पुरेति ॥ १० ॥

( ३ ) **कुल्लूकः** । इदानीमागमप्रसिद्धनारायणशब्दार्थनिर्वचनेनोक्तमेवार्थंद्रढयति आपोनाराइत्यादि । आपोनाराशब्देनोच्यन्ते । अप्सु नाराशब्दस्याप्रसिद्धेस्तदर्थमाह । यतस्तानराख्यस्य परमात्मनःसूनवोऽपत्यानि। तस्येदमित्यण्प्रत्ययः । यद्यप्यणिकृते ङीप्प्रत्ययः प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात्सर्वे विधयश्छन्दसि विकल्प्यन्तइति पाक्षिकोङीप्प्रत्ययस्तस्याभावपक्षे सामान्यलक्षणप्राप्ते टापि कृते नाराइतिरूपसिद्धिः । आपोऽस्य परमात्मनो ब्रह्मरूपेणावस्थितस्य पूर्वमयनमाश्रयइत्यसौ नारायणइत्यागमेष्वाम्नातः । गोविन्दराजेन तु आपोनराइति पठितंव्याख्यातंच । नरायणइतिप्राप्ते अन्येषामपि दृश्यतइति दीर्घत्वेन नारायणइति रूपम् । अन्येत्वापोनाराइति पठन्ति ॥ १० ॥

(४) **राघवानन्दः**। संप्रति तस्यैव जगत्कारणस्य परमेश्वरस्य हिरण्यगर्भान्तर्यामित्वंप्रदर्शयन्नारायणाभिधानमाह । आपइति । अपञ्चीकृतानिपञ्चभूतानि नरइति नृनयेइति स्मरणादात्मनएव नामान्तरमिति । ततएवात्मनआकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यःपृथिवीति श्रुतेः । अतएव नरसूनवस्ताआपोयद्यस्मादस्य परमेश्वरस्य हिरण्यगर्भजननकालेऽयनमयनमिवाभूवंस्ततोन्नारायणस्ताआश्रित्य तज्जनकत्वात् । अतोऽयनंस्वमहिमप्रतिष्ठितस्या

---

( १० ) तायदस्यायनंपूर्वं = अयनंतस्यताःपूर्वं ( ग, ङ, न )

( २ ) अयं ( क, ग, ) चिन्हितयोःपुस्तकयोः दृश्यते ॥ ( ख ) पुस्तके टीकायांदृश्यते न मूले ॥

( च ) पुस्तके एतच्छ्लोकस्थानेऽयं श्लोक पठितः । सहस्रशीर्षा पुरुषोरुक्मबाहुस्त्वतीन्द्रियः ॥ ब्रह्मानारायणाख्यस्तु सुष्वाप सलिले तदा ॥

आयनान्तरानुपपत्तेः अण्डाभिमानिनारायणइति केचित्। तन्न। नारायणः परोव्यक्तादण्डमव्यक्तसंभवम्। अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनीति ब्रह्माण्डपुराणोक्तेः। अव्यक्तादपि परोनारायणः सकथं ब्रह्माण्डमात्राभिमानी स्यादिति ॥ १० ॥

( ५ ) **नन्दनः**। अथभगवतोजलसृष्टिलब्धांसंज्ञांसनिर्वचनामाह आपोनाराइति। आपोनाराइति प्रोक्ताः। कुतो नरस्य पुरुषस्य सूनवोभगवता सृष्टाइत्यर्थः। वैशब्दोहेतौ। ताःआपः अस्य नरस्य पूर्वंप्रथममयनमनुप्रवेशस्थानमासीत्तेननारायणः स्मृतः ॥ १० ॥

( ६ ) **रामचन्द्रः**। आपइति। नाराइत्यापःप्रोक्ताः। वै निश्चयेन। आपोनरसूनवो नराख्यस्य परमात्मनोनारा जीवसमूहास्ता आपो यद्यस्मादस्य ईश्वरस्य पूर्वमयनं शयनस्थानमासीत्। तेन नारायणः स्मृतः नारायणः परो व्यक्तात् अण्डस्यान्तास्त्विमे लोकाः सत्पद्वीपा च मेदिनी। पिप्पलबीजन्यायेनेत्यर्थः ॥ १० ॥

**यत्तत्कारणमव्यक्तंनित्यं[३]सदसदात्मकम् ॥ तद्विसृष्टः सपुरुषोलोके ब्रह्मेति कीर्त्यते ॥ ११ ॥**

( १ ) **मेधातिथिः**। कारणमेव न कार्योन परेच्छाविधेयशरीरः। स्वाभाविकेन महिम्ना युक्तमव्यक्तंनित्ययुक्तमित्युक्त्वा विरुद्धस्य भावाभावरूपधर्मद्वयस्य योगउच्यते। अर्वाग्दर्शनानांतद्विषयायाउपलब्धेरभावात्सत्ताव्यवहारयोग्यत्वादसदात्मेत्युच्यते। आगमेभ्यः सर्वस्यास्य तत्कारणत्वावगमात्सदात्मकम्। अतः प्रतिपत्तृत्वभेदादुभयतोऽपि व्यवहारोब्रह्मण्यविरुद्धः। ननुच सर्वएव भावाएवंरूपाःस्वेन रूपेण सदात्मकाः पररूपेणासन्तः किमुच्यते ब्रह्मण्यविरुद्धइति उच्यते अद्वैतदर्शनेनैवान्यद्ब्रह्मणः किंचिदस्तीति किंतत्परंयत्तद्रूप तयाऽभावइत्युच्यते। तेन विसृष्टउत्पादितोऽन्तरण्डंनिर्मितःपुरुषोलोके ब्रह्मेतिकीर्त्यते। योऽसावुग्रतपसांदेवासुरमहर्षीणांवरदानार्थंतत्रतत्रोपविष्टइति महाभारतादौ श्रूयते सएषतेन महापुरुषेण परेणब्रह्मणा प्रथमंविसृष्टः। अन्येतु त्वमेवैकइत्याद्यन्यथा वर्णयन्ति। अस्येतिप्रत्यक्षाभिनयने जगन्निर्दिश्यते सर्वस्यास्यजगतोयद्विधानंनिर्माणंतत्स्वयंभुवः संबन्धेऽचिन्त्यमद्भुतरूपंविचित्रमतिमहदप्रमेयं न शक्यंसर्वेण ज्ञातुम्। तथाऋषिः। कोअद्धावेदकइहप्रवोचत् कुतआजाताकुतइयंविसृष्टिरिति। किमिदंजगत्सर्वमुपादानमवेक्ष्य जायतउत नैर्माणिकमात्रम्। यद्यबुधस्य दर्शनंकिमीश्वरेच्छाधीनमुत केवलकर्मवशजमुत स्वाभाविकमप्रमेयम् तथा किंमहदादिक्रमेणोत्पद्यतउत द्व्यणुकादिक्रमेणास्य स्वंकार्यतत्त्वमर्थंच वेत्सि। कार्यंमहतोऽहङ्कारोविशेषस्तन्मात्राण्यहंकारस्य तन्मात्राणांविशेषाःपञ्चमहाभूतानि। अहङ्कारस्येन्द्रियाण्येकादश। विशेषाणामपि पिण्डीकार्यंब्रह्मादिस्तम्बपर्यन्ताः। तेषामपिप्रत्ययात्तंत्त्वंस्वभावोयथा महतोमूर्तिमात्रत्वंप्रधानस्य सर्वस्य विकारावस्था महदित्युच्यते। प्रकृतेर्महानितिप्रकृतिः प्रधानमित्येकोऽर्थः। अहङ्कारस्यतत्त्वमस्मिन्प्रत्ययमात्रत्वमविशेषाणामविशेषप्रत्ययसंवेद्यत्वमिति। अर्थः प्रयोजनंपुरुषार्थमिदंवस्त्वनेन प्रकारेण पुरुषायोपयुज्यते इमंचार्थंसाधयति। यद्यपिधर्मजिज्ञासमानस्य जगन्निर्माणज्ञता आचार्यसंबन्धिनी न क्वचिदुपकारिणी नच प्रष्टव्या तथाप्यन्यतोदुर्विज्ञानंमहर्षीणांवैषम्याज्जगन्निर्माणमादौप्रश्नार्हंभवति। मनोह्यवचनीयम्। यद्वस्तुप्रमाणषट्कस्याप्यविषयस्तदपि त्वमार्षेण चक्षुषा वेत्सि। धर्मःपुनर्वेदगोचरः सोऽवश्यंत्वया विज्ञातइत्येवंप्रकृतविषयैव प्रवक्तृप्रशंसा। एवंस्तुत्या प्रोत्साहितोजगन्निर्माणमेव तावद्वक्ति आसीदिदमिति। ततःस्वयंभूरिति। प्रधानमेवैतैः शब्दैरभिधीयते। स्वयंभवति परिणमति विक्रियामेति महदादितत्त्वभावेन। नकश्चिदीश्वरः स्वभावसिद्धोऽस्ति यथेच्छमचेतनं प्रधानमनुवर्तते वस्तु-

३ नित्यम्= लोके ( च )

स्वभावएवायं तदुत प्रकृतिरूपंप्रधानंपुनर्विक्रियते। यथाक्षीरमचेतनं मण्डकावस्थाभिर्दधीभवति । भगवानिति। स्वव्यापारंईश्वरोमहाभूतादिद्वारेण प्रवृत्तः। स्वकार्योत्साहओजः सामर्थ्यम्। आदिशब्दः प्रकारे व्यवस्थायांतेन महदादिकारणमव्यक्तंभवति। विकारावस्थायांप्रच्युतंप्राग्रूपात्सूक्ष्मभावात्प्रकाशमयंतमोनुदतीत्युच्यते । अर्थशब्दाध्याहारेण वा प्रधाने पुल्लिङ्गनिर्देशः। पुरुषशब्दश्चप्रधानादिषु दृष्टः। तेषामिदंतु सप्तानांपुरुषाणामिति। योऽसाविति पूर्ववत्। सोऽभिध्यायेति। अभिध्यानंगुणतोऽचेतनात्प्रधानस्याभिधानासंभवात्। यथा कश्चिदभिध्यायैव कार्यंनिवर्तयेदन्यकार्यनिरपेक्षमेववस्तुस्वाभाव्येन परिणममानमीश्वरेच्छानपेक्षतयाभिध्यायेत्युच्यते। अपआदौ ससर्ज। महाभूतान्तरापेक्षया तासामादित्वंनतु महदादितत्त्वोत्पत्तेः। वक्ष्यति हि तेषामिदंतुसप्तानामिति। प्रथमंतत्त्वोत्पत्तिस्तथा भूतानाम्। तासु वीर्यमिति । वीर्यंशक्तिमवासृजत्। प्रधानमेव कर्तृ भवति। सर्वतः प्रधानंपृथिव्यादिभूतोत्पत्तौ काठिन्यमेति । अण्डरूपंसंपद्यते। तदण्डमिति। यथा तत्त्वानि स्त्रीपुरुषसंयोगंविनोत्पन्नानि प्रथममेवंपूर्वकर्मवशेन ब्रह्माऽपि स्वमहिम्नैवायोनिजंतस्य शरीरंदंशमशकादिवत् । तद्विसृष्टस्तेन प्रधानेन विसृष्टस्तन्मयत्वात्तच्छरीरस्य तद्विसृष्टइत्युच्यते । शेषंपूर्ववत्। यदत्रार्थतत्त्वंतदस्माभिरुक्तमेव । अर्थवादाएते यथाकथंचिद्गुणवादेन नीयन्ते ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः**। यत्तदिति। कारणंविश्वस्य हेतुरव्यक्तंसदानुपलभ्यरूपं नित्यमनाशि सदसदात्मकंवर्तमानावर्तमानात्मकंसर्वस्य तत्रोपादेयत्वेन स्थितेः तेन परमेश्वरेण प्रधानेन च विसृष्टोयः पुरुषः सब्रह्मा कीर्त्यते ॥ ११ ॥

( ३ ) **कुल्लूकः**। यत्तत्कारणमव्यक्तमित्यादि । यत्तदिति सर्वनामभ्यांलोकवेदादिसर्वप्रसिद्धंपरमात्मानंनिर्दिशति। कारणंसर्वोत्पत्तिमतामव्यक्तंबहिरिन्द्रियागोचरंनित्यमुत्पत्तिविनाशरहितंवेदान्तसिद्धत्वात्सत्स्वभावम् प्रत्यक्षाद्यगोचरत्वादसत्स्वभावमिव । अथवा सद्भावजातमसदभावस्तयोरात्मभूतम् । तथा च श्रुतिः ऐतदात्म्यमिदंसर्वमिति। तद्विसृष्टस्तेनोत्पादितः सपुरुषः सर्वत्र ब्रह्मेति कीर्त्यते ॥ ११ ॥

( ४ ) **राघवानन्दः**। हिरण्यगर्भजोहि ब्रह्माभूरादिलोकस्य कारणमिति वक्तुंतदण्डमित्युक्तमनुवदति यदिति द्वाभ्याम्। अपञ्चीकृतपञ्चभूतात्मकंमपूशब्दवाच्यं तदेवाव्यक्तमाविष्णोर्व्यक्तं जातंकार्यतया अतएव हिरण्यगर्भादेः कारणंच सत्पृथिव्यप्तेज इतित्रयम् । असतद्द्वयूवाकाशौभूतद्वयं तदुभयात्मकंनित्यंकारणात्मना अमरादेवाइतिवद्वा। अन्यथाऽद्वैतश्रुतिविरोधः। तैर्हिरण्यगर्भावच्छेदकैः सूक्ष्मभूतैः पञ्चीकृततामापन्नैः सृष्टोजनितः पञ्चीकृतपञ्चभूतावच्छिन्नश्चिदात्मापुरुषो विराट् ब्रह्मेति कथ्यतइत्यन्वयः ॥ ११ ॥

( ५ ) **नन्दनः**। अथाण्डोद्भवस्यसंज्ञामाह यदिति। कारणशब्देन भगवानुच्यते सदसदात्मकंसदितिकारणमसदितिप्रकृत्यादिकार्यं प्रपञ्चउभयमात्मादेहोयस्य तथोक्तम्। तद्विसृष्टःतेन कारणाख्येनभगवता सृष्टः पुरुषशब्दोऽयंराजपुरुषशब्दवदधिकारवचनोभगवन्नियोगकरइत्यर्थः ॥ ११ ॥

( ६ ) **रामचन्द्रः**। यत्तदिति। यदव्यक्तंकारणंतन्नित्यंब्रह्म। कीदृशंब्रह्म। सदसदात्मकम् कार्यकारणात्मकं तद्ब्रह्म तद्ब्रह्मणा विसृष्टः विशेषेण सृष्टःसन् सोपुरुषः लोके ब्रह्मेति कीर्त्यते ॥ ११ ॥

**तस्मिन्नण्डे सभगवानुषित्वा परिवत्सरम् ॥ स्वयमेवात्मनोध्यानात्तदण्डमकरोद्द्विधा ॥ १२ ॥**

( १ ) **मेधातिथिः** । सभगवान्ब्रह्मा परिवत्सरंसंवत्सरमुषित्वातस्मिन्नण्डे स्थित उत्पन्नःसर्वज्ञः कथंनिर्गच्छेयमितिध्यातवान् । तदण्डमकरोद्द्विधा तावता कालेन गर्भःपरिपच्यते। अण्डमपि तावत्कालेन भेदजातं परिपाकादतः काकतालीयन्यायेन तदण्डमकरोद्द्विधेत्युच्यते ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । तस्मिन्निति । सएव तस्मिन्नण्डे परिवत्सरंवत्सरमभिव्याप्य स्वयमेवद्विधाकरोदात्मनोध्यानादात्मसंबन्धिनोधारणाविशेषात् ॥ १२ ॥

( ३ ) **कुल्लूकः** । तस्मिन्नण्डेसभगवानित्यादि । तस्मिन्पूर्वोक्तेऽण्डे सब्रह्मा वक्ष्यमाणब्रह्ममानेन संवत्सरमुषित्वा स्थित्वाऽऽत्मनैवाण्डंद्विधा भवत्वित्यात्मगतध्यानमात्रेण तदण्डंद्विखण्डंकृतवान् ॥ १२ ॥

( ४ ) **राघवानन्दः** । तस्मिन्नण्डे ब्रह्माण्डे सउषित्वा परिवत्सरंसंवत्सरंस्थित्वाऽऽत्मनोध्यानादहंचिदात्मा देहादिविलक्षणइत्यनुसंधानादण्डंद्विधा भूम्यन्तरिक्षेअकरोदित्यन्वयः ॥ १२ ॥

( ५ ) **नन्दनः** । परिवत्सरशब्दोऽण्डद्विधाकरणानुगुणपरिमाणकालवचनआत्मनोध्यानादिदमण्डंद्विधाकृत्यशकलाभ्यांदिवंभूमितयोर्मध्येऽन्तरिक्षलोकं च करवाणीति विगणय्य स्वयमेवात्मेच्छया न प्राकृतपुरुषवत्पराधीनइत्यर्थः॥ १२ ॥

( ६ ) **रामचन्द्रः** । तस्मिन्निति । पञ्चभिराह । सःकर्ता सर्वत्र सम्बध्यते । सभगवानात्मनोध्यानात्किंकार्यमिति विचिन्त्य तदण्डंस्वयमेव द्विधाकरोत् । किङ्कृत्वा तस्मिन्नण्डे परिवत्सरंसहस्रवत्सरमुषित्वा वासंकृत्वा ॥ १२ ॥

**ताभ्यांसशकलाभ्यांच दिवंभूमिंच निर्ममे।।मध्ये व्योमदिशश्चाष्टावपांस्थानंच शाश्वतम् ॥१३॥**

**[ वैकारिकंतैजसंच तथाभूतादिमेवच ॥ एकमेवत्रिधाभूतमहानित्येव संस्थितम् ॥ १ ॥**

**इन्द्रियाणांसमस्तानांप्रभवंप्रलयंतथा ॥ * ]**

( १ ) **मेधातिथिः** । शकलमण्डकपाले ताभ्यामण्डकपालाभ्यामुत्तरेण दिवंनिर्ममे निर्मितवानधरेण पृथिवीमध्ये व्योमाकाशंदिशोऽष्टौच प्रागाद्याः । अवान्तरदिग्भिर्दक्षिणपूर्वादिभिः सहापांस्थानमन्तरिक्षे समुद्रमाकाशंच पृथिवीपातालगता ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । ताभ्यामिति । शकलाभ्यामधः शकलाद्भूमिमूर्ध्वशकलाद्दिवम् । शकलस्य लोकावच्छेदकतया प्रकृतिताविवक्षया पञ्चमी । व्योमान्तरिक्षलोकं दिशःकाष्ठाअष्टौ निर्मितवान् । अपांस्थानंसमुद्रम् ॥ १३ ॥

( ३ ) **कुल्लूकः** । ताभ्यांसशकलाभ्यांचेत्यादि । शकलंखण्डंताभ्यामण्डशकलाभ्यामुत्तरेण दिवंस्वर्लोकमधरेण भूर्लोकमुभयोर्मध्यआकाशंदिशश्चान्तरालदिग्भिः सहाष्टौ समुद्राख्यमपांस्थानंस्थिरंनिर्मितवान् ॥ १३ ॥

( ४ ) **राघवानन्दः** । ततोभूरादिचतुर्दशभुवनानांनिर्माणमाह ताभ्यामिति । शकलाभ्यांखण्डाभ्यांनिर्ममइत्यन्वयः । तदण्डंनिरवर्तत । तत्संवत्सरस्य मात्रामशयतत्तन्निरभिद्यत तेआण्डकपाले रजतंच सुवर्णंचाभवताम् तद्यद्रजतंसेयंपृथिवी यत्सुवर्णंसा द्यौरित्यादिश्रुतेः । मात्रांपरिमाणं व्याप्याशयत तस्थौ । अपांस्थानंसमुद्राख्यं यद्वास्तेयमुदकंससमुद्रइतिश्रुतेः । बस्तिर्मूत्रस्थानम् । शाश्वतंस्थिरं द्विपरार्धकालपर्यन्तस्थायित्वात् ॥ १३ ॥

( ५ ) **नन्दनः**। सब्रह्माताभ्यामखण्डखण्डाभ्यांदिवंस्वर्गादिलोकषट्कंभूमिंससप्तपातालांस्वर्गभूम्योरूर्ध्वाधोऽवस्थितयो-

---

( १३ ) ताभ्यांसशकलाभ्यां = ताभ्यांचशकलाभ्यां ( ख )

= —— मण्डकपालाभ्यां ( च )

वपांस्थानंचशाश्वतम् = वपांस्थानमकल्पयत् ( ग, )

* अयं सार्धश्लोकः ( क, ग, ट, ) चिन्हितेषु पुस्तकेषु दृष्टः ॥

मध्ये व्योमान्तरिक्षलोकमष्टौदिशश्च तासु शाश्वतंयावत्प्रलयावस्थानमपांस्थानंसमुद्रांश्चनिर्ममे । एवंतावद्ब्रह्मा भगवतस्तृ- ष्ट्यनुप्रविष्टतत्त्वसंघातविग्रहोभगवता सृष्टोभगवन्मयउक्तः ॥ १३ ॥

( ६ ) **रामचन्द्रः** । ताभ्यामिति । सब्रह्मा ताभ्यांशकलाभ्यांखण्डाभ्यांदिवंस्वर्गंभूमिंच निर्ममे । तयोः शकलयोर्मध्ये व्योम च पुनःअष्टौ दिशः । कीदृशंव्योमशाश्वतमपांजलानांस्थानमास्पदम् ॥ १३ ॥

**उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् ॥ मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥ १४ ॥**

( १ ) **मेधातिथिः** । तत्त्वसृष्टिरिदानीमुच्यते या च यथावयवा पश्चादुक्ताऽर्थात्पूर्वैति तथोक्तम् । तत्प्रधानात्स्व- स्मादूपान्मनउद्धृतवान । प्रातिलोम्येनेयंतत्त्वोत्पत्तिरिहोच्यते । मनसःपूर्वमहंकारमभिमन्तारमहमित्यभिमानिताहंकारस्य वृत्तिः । ईश्वरंकार्यनिर्वर्तनसमर्थम् ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । उद्बबर्हेति । आत्मनः स्वस्मादेव स्वस्मिन् सुसूक्ष्मतया स्थितंमनोमहत्तत्त्वमुद्बबर्ह तत्त्वभूत मुत्पादयामास । अहंकारमनांसि परमार्थतोऽभिन्नान्यप्यध्यवसायाभिमानविकल्पव्यापारभेदमात्रभिन्नानीति कथयितुं तत्र तत्र मुक्तात्मविध्यर्थं ब्रह्मणोमनउक्तं सदसदात्मकं वर्तमानावर्तमानात्मकं तस्मान्मनसो ऽहंकारमीश्वरमीशानादिकर्तृ धर्मवन्तमभिमन्तारंस्वेच्छाभिमननशीलव्यापारधर्मम् ॥ १४ ॥

( ३ ) **कुल्लूकः** । इदानींमहदादिक्रमेणैव जगन्निर्माणमिति दर्शयितुंतत्तत्सृष्टिमाह उद्बबर्हात्मनश्चैवेत्यादि । ब्रह्मा- आत्मनःपरमात्मनःसकाशात्तेन रूपेण मनउद्धृतवान्परमात्मनएव ब्रह्मस्वरूपेणोत्पन्नत्वात्परमात्मनएव च मनःसृष्टिर्वेदान्त- दर्शनेन प्रधानात् । तथा च श्रुतिः । एतस्माज्जायते प्राणोमनःसर्वेन्द्रियाणि च । खंवायुर्ज्योतिरापश्चपृथ्वी विश्वस्य धारि- णी । मनश्च श्रुतिसिद्धत्वाद्युगपज्ज्ञानानुत्पत्तिलिङ्गाच्च सदप्रत्यक्षत्वादसदिति । मनसःपूर्वमहङ्कारतत्त्वमहमित्यभिमाना- ख्यकार्ययुक्तमीश्वरंस्वकार्यकरणक्षमम् ॥ १४ ॥

( ४ ) **राघवानन्दः** । हिरण्यगर्भसृष्ट्यनन्तरमस्मदादिलिङ्गशरीरजन्म वक्तव्यमासीत् । अपञ्चीकृतभूतकार्य- त्वात्तस्य तदिदानीमाह उद्बबर्हेति द्वाभ्याम् । उद्बबर्ह जनितवानात्मनःस्वस्माज्जीवस्य भोगार्थंवा । एतस्माज्जायते प्राणो- मनःसर्वेन्द्रियाणि च । खंवायुर्ज्योतिरापश्च पृथिवी विश्वधारिणीति ॥ तन्मनोकुरुत आत्मन्वी स्यामितिश्रुतेः । मनआ- दिका सर्वासृष्टिस्तस्य सदसदात्मकं तादृशापञ्चीकृतकार्यत्वात् मनसइति मनोवृत्त्यनन्तरभाविन्यौअहङ्कारबुद्धिसंकल्य अभिमत्य निश्चिनोति इदमित्थमितिनिश्चयात्मिका बुद्धिः । अहङ्कारंविशिनष्टि अभिमन्तारमीश्वरमिति । अभिमन्तारमहंगौ- रइत्याद्यभिमानिनमीश्वरंस्वातन्त्र्यात् सर्वप्रवृत्तेरहङ्काराधीनत्वादीश्वरः न ह्यनहंकृतिः प्रवर्ततइति ॥ १४ ॥

( ५ ) **नन्दनः** । इदानींतस्य सर्वभूतानि सिसृक्षतउपादानंश्लोकत्रयेणाह उद्बबर्हेति । आत्मनःआत्मसंबन्धि । सद- सदात्मकम् प्रकृतिविकृत्यात्मकम् ।मनःमहत्तत्वम् । तथाचोक्तं मनोमहान्मतिर्ब्रह्मापूर्बुद्धिःख्यातिरीश्वरइति । मनसोमह- त्तत्त्वादनन्तरमभिमन्तारमस्मिताप्रत्ययरूपमीश्वरंसर्वकर्मप्रवर्तकमहङ्कारंचोद्बबर्होद्धृतवान् ॥ १४ ॥

( ६ ) **रामचन्द्रः** । उद्बबर्हेति । सआत्मनःसकाशात्सदसदात्मकंकार्यकारणात्मकंमनउद्बबर्होद्धृतवानाविर- करोत् । अपि निश्चयेन । मनसःसकाशादहङ्कारमसृजत् । कीदृशमहङ्कारमभिमन्तारमहमस्मीति भावः । पुनः कीदृशम् । ईश्वरंसृष्ट्यादिकार्ये प्रभुम् ॥ १४ ॥

**महान्तमेव चात्मानंसर्वाणि त्रिगुणानि च ॥ विषयाणांग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥१५॥**

**[ अविशेषान् विशेषांश्च विषयांश्चपृथग्विधान् ॥+ ]**

( १ ) **मेधातिथिः** । महानितिसंज्ञायांसांख्यानांतत्त्वंप्रसिद्धम् । आत्मानमिति महतासामानाधिकरण्यम् । सर्वपिण्डसृष्टौ च महत्तयानुरूपमतआत्मव्यवहारः । अहङ्कारात्पूर्वपूर्वेण न्यायेन ससर्ज सर्वाणि त्रिगुणानि च । यथानुक्रान्तंयथानुक्रम्यते तत्सर्वंत्रिगुणंसत्वरजस्तमांसि गुणाः । क्षेत्रज्ञाः केवलंनिर्गुणाः प्राकृतोभागः सर्वः सत्त्वरजस्तमोमयः । पञ्चेन्द्रियाणि तेषांनिर्देशविषयाणांरूपरसादीनांयथास्वं ग्रहीतॄणि विज्ञानजनकानि पञ्च श्रोत्रंत्वगित्यादिना वक्ष्यन्ते विशेषनामच शब्दान्विषयांश्च शब्दस्पर्शरूपरसगन्धान्पृथिव्यादीनि च ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । महान्तमेवेति । महान्तंच मनोनाम तत्त्वमात्मानमात्मनोजीवस्यावच्छेदकत्वात्तद्व्यपदेशः । सर्वाणि मनोऽहंकारधर्मेण त्रिगुणानि गुणत्रयात्मकानि । प्रकृतानि पञ्चेन्द्रियाणि च शनैः क्रमेणोद्भवर्ह विषयग्रहणव्यापाराणि च तानि ॥ १५ ॥

( ३ ) **कुल्लूकः** । महान्तमेव चात्मानमित्यादि । महान्तमिति महदाख्यतत्त्वंमहङ्कारात्पूर्वंपरमात्मनएवाव्याकृतशक्तिरूपप्रकृतिसहितादुद्धृतवान् । आत्मनउत्पन्नत्वादात्मानमात्मोपकारकत्वाद्वा । यान्यभिहितान्याभिधास्यन्ते च तान्युत्पत्तिमन्ति सर्वाणि सत्त्वरजस्तमोगुणयुक्तानि विषयाणांशब्दस्पर्शरूपरसगन्धानांग्राहकाणि शनैःक्रमेण वेदान्तसिद्धेन श्रोत्रादीनि द्वितीयाध्यायवक्तव्यानि पञ्चबुद्धीन्द्रियाणि चशब्दात्पञ्च पाय्वादीनि कर्मेन्द्रियाणि शब्दतन्मात्रादीनि च पञ्चोत्पादितवान् । नन्वभिध्यानपूर्वकसृष्ट्यभिधानाद्वेदान्तसिद्धान्त एव मनोरभिमतइति प्रागुक्तंतन्नसंगच्छते । इदानींमहदादिक्रमेण सृष्ट्यभिधानाद्वेदान्तदर्शनेन च परमात्मनएवाकाशादिक्रमेण सृष्टिरुक्ता । तथा च तैत्तिरीयोपनिषत् तस्माद्वाएतस्मादात्मनआकाशःसंभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीति । उच्यते । प्रकृतितोमहदादिक्रमेण सृष्टिरिति भगवद्भास्करीयदर्शनेऽप्युपपद्यत इति तद्विदोव्याचक्षते । अव्याकृतमेव प्रकृतिरिष्यते तस्य च सृष्ट्युन्मुखत्वंसृष्ट्याद्यकालयोगरूपंतदेव महत्तत्त्वंततोबहुस्यामित्यभिमानात्मकेक्षणकालयोगित्वमव्याकृतस्याहंकारतत्त्वम् । ततआकाशादिपञ्चभूतसूक्ष्माणि क्रमेणोत्पन्नानि पञ्चतन्मात्राणि ततस्तेभ्यएव स्थूलान्युत्पन्नानि पञ्चमहाभूतानि सूक्ष्मस्थूलक्रमेणैव कार्योदयदर्शनादिति न विरोधः । अव्याकृतगुणत्वेपि सऽत्त्वरजस्तमसांसर्वाणि त्रिगुणानीत्युपपद्यते । भवतुवा सत्वरजस्तमःसमतारूपैव मूलप्रकृतिः भवन्तु च तत्त्वान्तराण्येव महदहङ्कारतन्मात्राणि तथापि प्रकृतिर्ब्रह्मणोऽनन्येति मनोः स्वरसः । यतोवक्ष्यति सर्वभूतेषु चात्मानंसर्वभूतानि चात्मनीति ॥ तथा । एवंयःसर्वभूतेषु पश्यत्यात्मानमात्मना । ससर्वसमतामेत्य ब्रह्माभ्येति परंपदमिति ॥ १५ ॥

( ४ ) **राघवानन्दः**। महान्तमिति। महानहैरण्यगर्भाबुद्धिः सर्वव्यष्टिबुद्धिव्यापकत्वादात्मानं महदवच्छिन्नंचित्तएवात्मत्वव्यवह्रतेरात्मनःसर्वार्थकारित्वान्महत्वमात्मायत्नोधृतिर्बुद्धिरित्याद्यभिधानाद्वा । क्रमवैपरीत्यंवा महान्तंसृष्ट्वाहङ्कारमसृजत् ततोमनोऽसृजदिति । सवाणि त्रिगुणादीनि मनआदीनि त्रीणि सर्वाणि कार्याणि त्रिगुणात्मकानीति वा तत्र गुणशब्दप्रयोगो जडांशस्य प्राधान्यद्योतनार्थः । चकारोऽवधारणार्थः ।अस्मिन्नेवमहति चित्तमन्तर्गतं किंच विषयाणांग्रहीतॄणि विषयाणांशब्दस्पर्शरूपरसगन्धादीनां ग्रहीतॄणि ग्रहणसाधनानि श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणाख्यानि शनैःरपञ्ची-

---

+ ( क, ग, ) चिन्हितपुस्तकयोः ॥

कृतभूतक्रमेण । चकारःकर्मेन्द्रियप्राणवर्गाणां समुच्चयार्थः । व्यष्टिलिङ्गदेहस्य एकोनविंशतित्वादेकोनविंशतिमुखइतिश्रुतेः ॥ १५ ॥

( ५ ) **नन्दनः** । महान्तमात्मानंस्थूलमन्तःकरणंमनइतियावत् । तत्तत्स्वरूपेण विषयरूपेणेन्द्रियरूपेण च त्रिगुणीभूता यावस्था तांत्रिगुणानीति तन्मात्राण्युच्यन्ते । तानिच सर्वाणितथा विषयाणांग्रहीतृणि पञ्च ज्ञानेन्द्रियाणि चकारात् कर्मेन्द्रियाणि पञ्चशनैः क्रमादुद्ववर्हेत्यनुवर्तते । अनेन श्लोकद्वयेनैतदुक्तंभवति । आत्मीयानांमहदहङ्कारमनस्तन्मात्रज्ञानकर्मेन्द्रियाणामात्मचिदंशप्रवेशेन सर्वभूतपरिणामदर्शनात्सएवभगवानुपादानमिति ॥ १५ ॥

( ६ ) **रामचन्द्रः** । महान्तमिति । सआत्मानंमहान्तमेव महत्तत्वरूपंचाकरोत् । च शब्दात्सर्वाण्यहङ्कारादीनि त्रिगुणानि त्रिगुणात्मकानि राजसाहङ्कारतामसाहङ्कारसात्विकाहङ्काररूपाणि ॥ १५ ॥

**तेषांत्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम् ॥ सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ १६ ॥**

( १ ) **मेधातिथिः** । तेषांषण्णांयाआत्ममात्रास्तासु सूक्ष्मानवयवान्सन्निवेश्य सर्वभूतानि निर्ममे । तत्र षट्संख्यया वक्ष्यमाणानि पञ्चतन्मात्राणिअतिक्रान्तश्चाहंकारः प्रतिनिर्दिश्यते । आत्ममात्रास्तेषांस्वविकारस्तन्मात्राणांभूतानि । अहङ्कारस्येन्द्रियाणि पृथिव्यादिषु भूतेषु शरीररूपतया तिष्ठन्सु सूक्ष्मानवयवांस्तन्मात्राहङ्कारात् संनिवेश्य यथास्थानयोजनंकृत्वा सर्वभूतानि देवमनुष्यतिर्यक्पक्षिस्थावरादीनि निर्ममे । एतदुक्तंभवति । षडविशेषाअवयवाएकदेशारम्भकाः सर्वस्य जगतस्तस्य तदारब्धत्वात्सूक्ष्मत्वंतन्मात्रसंज्ञयैव सिद्धम् तानि संनिवेश्य संनिहत्य तेषामेवात्ममात्रास्तद्विकाराः । भूतेन्द्रियाणि निर्ममे तैश्च पिण्डसृष्टिम् । चकारान्मात्रास्वित्यत्र मात्राभिरिति युक्तः पाठः ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । तेषामिति । एतस्मादीश्वरात् प्राणमनसेइन्द्रियाणांमहदहंकारमनोरूपप्रकारवतश्चान्तःकरणस्येत्येवं षण्णांमहौजसां कार्योत्पत्तावतिबलानां सूक्ष्मानवयवानिति । एवंस्वपुत्रादि देहस्यलिङ्गदेहभूतानात्मनः स्वप्रकाशस्य मात्रास्वंशेषु सन्निवेश्यावच्छेदकत्वेन कल्पयित्वा सर्वभूतानि प्राणिजातानि तटस्थानि ॥ १६ ॥

( ३ ) **कुल्लूकः** । तेषांत्ववयवान्सूक्ष्मानित्यादि । तेषांषण्णांपूर्वोक्ताहङ्कारस्य तन्मात्राणांच ये सूक्ष्माअवयवास्तानात्ममात्रासु षण्णांस्वविकारेषु योजयित्वा मनुष्यतिर्यक्स्थावरादीनि सर्वभूतानि परमात्मा निर्मितवान् । तत्र तन्मात्राणांविकारः पञ्चमहाभूतानि । अहङ्कारस्येन्द्रियाणि पृथिव्यादिभूतेषु शरीररूपतया परिणतेषु तन्मात्राहङ्कारयोजनांकृत्वा सकलस्य कार्यजातस्य निर्माणम् । अतएवामितौजसामनन्तकार्यनिर्माणेनातिवीर्यशालिनाम् ॥ १६ ॥

( ४ ) **राघवानन्दः** । समष्टिलिङ्गशरीरस्य हिरण्यगर्भीयस्योक्तव्यष्टिलिङ्गशरीराणि कार्यमित्यावेदयञ्जीवात्मनामाविर्भावमाह तेषामिति । तत्र च मनआदिचतुष्टयंमनोरूपान्तःकरणेनैकीकृत्य कर्मेन्द्रियाणि प्राणांश्च ज्ञानेन्द्रियत्वेन गृहीतानीति षट्कंषण्णामित्युपसंहारात् पूर्वसृष्टेन लिङ्गेन प्राणाद्येन सयुज्यते । तेन युक्तस्य बन्धोवै तेन मुक्तस्य मुक्तेर्नेति ब्रह्माण्डपुराणोक्तेः । पूर्वाष्टकस्य षट्त्वंतर्भाववदेकोनविंशतेरप्यन्तर्भावः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षतीति भगवदुक्तेः ॥ षट्त्वंतत्र प्रकृतिर्गोलकोऽवयवान्कार्यभूतान्दुरदृष्टवशेन परिच्छिन्नत्वात्सूक्ष्मानस्मदाद्यदृश्यरूपान्षण्णां मनआदीनाममितौजसांसमष्टिरूपाणां जगन्मण्डलव्यापिनाम् । सर्वएव समाः सर्वो-

---

( १६ ) षण्णामप्यमि= षण्मयानमि ( ख )

मात्रासु= मात्रास्तु ( क )

नन्तइति श्रुतेः। आत्ममात्रात्वपरिच्छिन्नस्यैकस्यात्मनउपाधिवशादवयववत्प्रतीयमानेष्वात्मसु ममैवांशोजीवलोके जीवभूतःसनातनइति स्मृतेरंशोनानाव्यपदेशादित्यादिसूत्राच्च तासु मनआदिषडवयवान्सूक्ष्मान्संनिवेश्य तत्तददृष्टवशेनलिङ्गदेहात्मनस्तादात्म्याध्यासंगमयित्वा सर्वभूतानि सर्वाञ्जीवान्निर्ममइत्यन्वयः। लिङ्गशरीरावच्छिन्नानामेव व्यवहर्तृजीवत्वात् ससप्तदशकेनैव राशिना युज्यते पृथगिति व्यासोक्तेरुपाध्यवच्छिन्नत्वमेवनिर्माणंन वस्तुतः। तथा च श्रुतिः। एतस्मादात्मनः सर्वे प्राणा लोकाः सर्वे यस्मात्सर्वाणिभूतानि सर्वएवात्मानोव्युच्चरन्तीति। व्युच्चरन्ति जायन्तइत्यर्थः ॥ १६ ॥

( ५ ) **नन्दनः**। तच्छब्देन महदहङ्कारमनस्तन्मात्रज्ञानकर्मेन्द्रियाणि परामृश्यन्ते। तत्रोत्तरेषांत्रिगुणज्ञानकर्मेन्द्रियाणांवर्गत्रयाभिप्रायेण षण्णामित्युक्तम्। अमितौजसामुपयुज्यमानेष्वप्यवयवेषु दीपवदक्षय्यवीर्याणाम्। अवयवानात्ममात्रासु स्वजीवांशेषु सन्निवेश्यात्मकार्यंसर्वभूतानि देवमनुष्यादीन्निर्ममे। एतानिसर्वभूतोपादानमित्येतावदेवात्र विवक्षितं न पुनः सृष्टिरित्यवगन्तव्यं द्विधाकृत्वेत्यादिना तस्यावक्ष्यमाणत्वात् ॥ १६ ॥

( ६ ) **रामचन्द्रः**। तेषामिति तेषांषण्णामिन्द्रियाणांमध्ये षष्ठंमनः। अहङ्कारात्पञ्चतन्मात्राणामवयवानात्ममात्रासु शब्दादिपञ्चसु विकारेषु संनिवेश्य सर्वाणि भूतानि निर्ममे ॥ १६ ॥

**यन्मूर्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयन्ति षट् ॥ तस्माच्छरीरमित्याहुस्तस्य मूर्तिमनीषिणः ॥ १७ ॥**

( १ ) **मेधातिथिः**। मूर्तिःशरीरंतदर्थास्तत्संपादकाअवयवाःसूक्ष्माःषडुक्तस्वरूपाश्च विशेषाख्यास्तानीमानीन्द्रियाणि वक्ष्यमाणानि च भूतान्याश्रयन्ति। तस्योत्पत्तेर्भूतान्याश्रयन्तीत्युच्यते। तदाश्रयोत्पत्तिस्तेषाम्। पठितंच पञ्चभ्यः पञ्चभूतानीतियद्येन कारणेनाश्रयन्ति तस्मात्कारणाच्छरीरम्। तस्य प्रधानस्य येयंमूर्तिः शरीरमित्युच्यते। मनीषिणः मनीषाबुद्धिस्तद्वन्तः। पण्डिताः। अथवा विपरीतःकर्तृभावः। सूक्ष्माःकर्तारइन्द्रियाणि कर्म। अवयवाश्चेन्द्रियाणामाश्रयभावंप्रतिपद्यमानाआश्रयन्तीत्युच्यते। यथा बहुभिर्भुक्तइति भोजयन्भुक्तइत्युच्यते। अथवाऽनेकार्थत्वाद्धातूनामाश्रयन्ति जनयन्तीत्यर्थः ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः**। यन्मूर्त्यवयवाइति। यद्यस्मान्मूर्तिभूतालिङ्गदेहभूतास्ते ऽवयवाः षट् तस्यात्मनइमानि स्थूलशरीराणि आश्रयन्तः श्रयणात् स्थूलशरीरमिति ॥ १७ ॥

( ३ ) **कुल्लूकः**। यन्मूर्त्यवयवाःसूक्ष्माइत्यादि। यस्मान्मूर्तिःशरीरंतत्संपादकाअवयवाःसूक्ष्मास्तन्मात्राहङ्काररूपाः षट्तस्य ब्रह्मणःसप्रकृतिकस्येमानि वक्ष्यमाणानि भूतानीन्द्रियाणि च पूर्वोक्तानि कार्यत्वेनाश्रयन्तितन्मात्रेभ्योभूतोत्पत्तेः अहङ्काराच्चइन्द्रियोत्पत्तेः। तथा च पठन्ति प्रकृतेर्महांस्ततोहङ्कारस्तस्माद्गणश्चषोडशकः तस्मादपि षोडशकात्पञ्चभ्यःपञ्चभूतानि तस्मात्तस्य ब्रह्मणोया मूर्तिःस्वभावस्तांतथापरिणतामिन्द्रियादिशालिनींलोकाःशरीरमिति वदन्ति षडाश्रयणाच्छरीरमिति। शरीरनिर्वचनेनानेन पूर्वोक्तोत्पत्तिक्रमएव दृढीकृतः ॥ १७ ॥

( ४ ) **राघवानन्दः**। लिङ्गशरीरस्य सृष्टिमुक्त्वा तदवच्छिन्नजीवस्यापि सृष्टिमुक्त्वा स्थूलशरीरसृष्टिवदञ्छरीरपदव्युत्पत्तिमाह यदिति। यत्यस्मात् तस्य हिरण्यगर्भस्य मूर्तेरपञ्चीकृतपञ्चभूतात्मकस्य लिङ्गस्य मूर्तेःकायस्य द्वेवावब्रह्मणोरूपेमूर्तंचामूर्तं चेति श्रुतेः। अवयवा अवयवप्रायाः सूक्ष्मा अदृश्यरूपाः षट्मनआदयइमानि प्रत्यक्षसिद्धानि पञ्चीकृतपञ्च-

---

( १७ ) स्तस्येमान्या=स्तानिमान्या ( क )

भूतारब्धानि चतुर्विधजरायुजाण्डजस्वेदजोद्भिज्जरूपाणि स्थूलशरीराणि भोगायतनत्वेनाश्रयन्ति। अतोमूर्तीनांमनआदीनामाश्रयत्वाच्छरीरंमूर्तिमाहुस्तस्य जीवात्मनः। अतएवेन्द्रियाश्रयंशरीरमिति तार्किका अवयवगतद्रव्यपरिमाणंमूर्तिरिति मूर्तिलक्षणमाहुः। तेन सर्वःप्रपञ्चोमूर्तिः। श्रुतावमूर्तपदंसूक्ष्मतापरम्॥ १७॥

(५) **नन्दनः**। हिरण्यगर्भशरीरस्य सर्वभूतोपादानत्वंशरीरशब्दनिर्वचनेनाप्याह यदिति। तस्य ब्रह्मणोमूर्त्यवयवादेहांशाः षट्पूर्वोक्तामहदादयः। इमानीतिपूर्वश्लोकोक्तानांपरामर्शः। आश्रयन्ति व्याप्नुवन्तीतियावत्। तस्माच्छ्रयणाच्छरीरमिति तस्य ब्रह्मणोमूर्तिमाहुर्नैरुक्ताः। एतदुक्तंभवति। सर्वभूतान्यंशैरुपादानत्वेन श्रयतीतिहिरण्यगर्भशरीरस्य शरीरत्वंनपुनः प्राकृतपुरुषशरीरवच्छीर्यतइति॥ १७॥

(६) **रामचन्द्रः**। यन्मूर्तीति। यद्यस्मात्कारणात्मूर्तेरहङ्काररूपस्यात्मनोवयवाःसूक्ष्मा अन्यविषया इन्द्रियाणि षट्पञ्च तन्मात्राआश्रय न्तीति॥ १७॥

**तदाविशन्ति भूतानि महान्ति सह कर्मभिः॥ मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम्॥ १८॥**

(१) **मेधातिथिः**। तदेतत्प्रधानंसर्वभूतकृद्भवति। अव्ययमविनाशंकारणात्मना कथंसर्वाणि भूतानि करोति। यतस्तदाविशन्तीमानि। कानि पुनस्तानि। मनः सूक्ष्मैरवयवैः सह तन्मात्रैर्बुद्ध्यहंकारेन्द्रियलक्षणैः। अनन्तरंमहान्ति भूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि। सहकर्मभिर्धृतिसंहननपक्तिव्यूहावकाशाः पृथिव्यादीनांयथाक्रमं कर्माणि। तत्र धृतिः कारणंसरणपतनधर्मस्य। एकशोऽवस्थानंसंग्राहकाद्विकीर्णस्य संहननं यथा पांसवोविकीर्णाउदकेन संहन्यन्ते पिण्डीक्रियन्ते। पक्तिरन्नौषधतृणादेस्तेजसः कार्यतया प्रसिद्धा। व्यूहोविन्यासः सन्निवेशः अवकाशोमूर्त्यन्तरेण प्रतिबन्धः। नहियस्मिन्देशे मूर्तिरेका स्थिता तत्र मूर्त्यन्तरस्य स्थानंसुवर्णपिण्डे न कस्य चिदन्तः संभवः। मनोग्रहणंसर्वेन्द्रियप्रदर्शनार्थम्। कर्मग्रहणेन च कर्मेन्द्रियाणि वा गृह्यन्ते। अथवा तत्कार्यैसूक्ष्मैरवयवैर्युक्तं महान्ति भूतान्यधितिष्ठति पश्चादित्येवं योजना इन्द्रियाणि च मनःशब्दस्य प्रदर्शनार्थत्वात्॥ १८॥

(२) **सर्वज्ञनारायणः**। तदाविशन्तीति। तदिति लिङ्गशरीरं महान्ति भूतानि स्थूलदेहारम्भकाण्याविशन्ति सहकर्मभिर्धर्मैरधर्मैश्च धर्माधर्मौ चापि तत्रैव सूक्ष्मतया स्थितौकार्योत्पादार्थमभिव्यक्तौ तदाश्रयतइत्यर्थः। मनश्च अन्ययाभिव्यक्तिंप्राप्तम्। अवयवैरिवावयवैर्ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्मभावनासंस्कारैः सूक्ष्मैर्दुर्विवेकभेदैः सहितंसर्वभूतकृत्सर्वप्राण्युपादानीभूतशरीरमव्ययं प्रलयेप्यात्यन्तिकनाशशून्यमाश्रयन्ते॥ १८॥

(३) **कुल्लूकः**। तदा विशन्ति भूतानीत्यादि। पूर्वश्लोकेतस्येति प्रकृतंब्रह्मात्र तदिति परामृश्यते। तद्ब्रह्म शब्दादिपञ्चतन्मात्रात्मनावस्थितंमहाभूतान्याकाशादीन्याविशन्ति तेभ्यउत्पद्यन्ते सह कर्मभिः स्वकार्यैः तत्राकाशस्यावकाशदानंकर्म वायोर्व्यूहनंविन्यासरूपंतेजसः पाकोऽपांसंग्रहणंपिण्डीकरणरूपंपृथिव्याधारणम्। अहङ्कारात्मनावस्थितंब्रह्म मनआविशत्यहङ्कारादुत्पद्यतइत्यर्थः। अवयवैःस्वकार्यैःशुभाशुभसंकल्पसुखदुःखादिरूपैःसूक्ष्मैर्बहिरिन्द्रियागोचरैः सर्वभूतकृत्सर्वोत्पत्तिनिमित्तंमनोजन्यशुभाशुभकर्मप्रभवत्वाज्जगतः। अव्ययमविनाशि॥ १८॥

(४) **राघवानन्दः**। उक्तमर्थंसंकलयति तदिति। तत्स्थूलशरीरजातं तत्तददृष्टाकृष्टं कर्मीभूतंमहान्ति भूतानि कर्तॄणि वेष्टनरूपाण्यारम्भकतया विशन्ति मनश्च जीवोपाधिःसह कर्मभिर्धर्माद्यैरवयवप्रायैरिन्द्रियैश्च सह भोगार्थंप्रवि-

शतीत्यनुषज्यते मनुष्योहमित्याद्यध्यासमनुभवतीत्यर्थः। सर्वभूतकृदिति मनसोविशेषणं तस्यैव कर्तृत्वादिसूचनार्थम्। अव्ययंज्ञानातिरिक्तानाश्यम् ॥ १८ ॥

( ५ ) **नन्दनः** । हिरण्यगर्भशरीरंतु सर्वभूतानांशरीरोपादानत्वेनोपयुज्यमानमपि न कदाचिदपि क्षीयतइत्याहतदिति । तत् हिरण्यगर्भशरीरंसूक्ष्मैरवयवैः सर्वभूतकृत् सर्वभूतानिकुर्वाणमप्यक्षय्यावयवंयथा भवति तथाऽव्ययंमहान्ति भूतान्यहङ्कारमनस्तन्मात्रज्ञानकर्मेन्द्रियाणि मनश्च महत्तत्त्वंच कर्मभिर्जीवैःसहाविशन्ति ॥ १८ ॥

( ६ ) **रामचन्द्रः** । तदेति । तस्मिन्काले कर्मभिः सह महान्ति महत्तत्त्वादीनि भूतानि पृथिव्यादीनि अहङ्कारात्मनः शरीर आविशन्तिच पुनःषष्ठंमनःकर्तृभूतंसूक्ष्मैरवयवैःसह प्रविशति । कीदृशंमनः सर्वभूतकृत् । पुनः कीदृशंमनः । अव्ययंविनाशरहितम् । पुनः कीदृशं वासनात्मकम् ॥ १८ ॥

**तेषामिदंतु सप्तानांपुरुषाणांमहौजसाम् ॥ सूक्ष्माभ्योमूर्तिमात्राभ्यः संभवत्यव्ययाद्व्ययम् ॥ १९ ॥**

( १ ) **मेधातिथिः** । सूक्ष्मात्स्थूलमुत्पद्यते सम्भवति । अव्ययाद्व्ययमित्येतावति तात्पर्यं नतु षण्णांसप्तानांवा तत्त्वानांमात्राभ्यइति । चतुर्विंशतितत्त्वानि तानिसृष्टौ सर्वेषांनिमित्तम् । अथवा पिण्डसृष्टौ सप्तैव प्रधानंकारणम् । षडविशेषाः सप्तमोमहांस्तेभ्योभूतेन्द्रियाण्युत्पद्यन्ते । तेषु चोत्पन्नेषु पिण्डीभवति शरीरम् । अथ यावत्प्रधानाद्रूपसंभूतसर्वविकारादेकीभूताद्ययंबहुधा विप्रकीर्णविश्वरूपंजगदुत्पद्यते किंः युगपदेव समस्तैर्विकारैःस्थूलरूपैः प्रधानंविक्रियते । नेत्याह तेषामिदमिति । यादृशः प्रागुक्तःक्रमस्तेनैव प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणस्तु षोडशकइतिपुरुषशब्दस्तत्त्वेपुरुषार्थत्वात्प्रयुक्तः। महौजसांस्वकार्येवीर्यवताम् । अपरिमितविकारहेतुत्वान्महत्त्वम् । तेषांयाःसूक्ष्मामूर्तिमात्रामूर्तिःशरीरं तदर्थामात्रास्ताभ्यइदंभवति । अतउच्यतेऽव्ययाद्व्ययमिति । काःपुनस्तेषांसूक्ष्मामात्राः । नहितन्मात्राणामन्यमात्राः संभवन्ति येनतेषांसूक्ष्मामात्राइतिव्यतिरेकउपपद्यते । नतेषांस्वागतमात्रापेक्षत्वम् । किंतर्हि तन्मात्रेभ्यः सूक्ष्मोमहान्महतः प्रभुरिति ॥१९॥

( २ ) **सर्वज्ञनारायणः** । तेषामिति । अन्तःकरणंपञ्चेन्द्रियाण्यात्ममात्रा च तदवच्छिन्नेति सप्त । तेषांपुरुषाणांपुरुषदेहे सीदतां कार्योत्पादने महाबलानां सूक्ष्माभ्योलिङ्गमूर्तिरूपाभ्यो मात्राभ्योऽव्ययाच्च प्रकृतेर्व्ययंविनाशि स्थूलदेहरूपंकार्यंसंभवत्युत्पद्यते ॥ १९ ॥

( ३ ) **कुल्लूकः** । तेषामिदंतुसप्तानामित्यादि । तेषांपूर्वप्रकृतीनांमहदहङ्कारतन्मात्राणांसप्तसंख्यानांपुरुषादात्मनउत्पन्नत्वात् तद्वृत्तिग्राह्यत्वाच्च पुरुषाणांमहौजसांस्वकार्यसंपादनेन वीर्यवतांसूक्ष्मायामूर्ति । मात्राःशरीरसंपादकभागास्ताभ्यइदंजगन्नश्वरंसंभवत्यनश्वराद्यत्कार्यंतद्विनाशि स्वकारणे लीयते । कारणंतु कार्यापेक्षया स्थिरं परमकारणंतु ब्रह्म नित्यमुपासनीयमित्येतद्दर्शयितुमयमनुवादः ॥ १९ ॥

( ४ ) **राघवानन्दः** । संप्रति स्थूलभूतगुणान्वक्तुं स्थूलशरीरस्य तत्कार्यत्वमनुवदन्निवाह तेषामिति द्वाभ्याम् । इदंस्थूलदेहं पुरुषाणां मनआदिपुरुषान्तानां सप्तानांमहौजसां यन्मण्डलव्यापिनांतेषांभोगार्थं सूक्ष्माभ्योऽपञ्चीकृताभ्योयार्मूर्तिमात्राःपञ्चीकृतानि महाभूतानि ताभ्यस्तदिदंस्थूलशरीरं संभवत्युत्पद्यतइत्यन्वयः । अव्ययात् अव्ययंजीवं अतत्यवच्छिनत्तीति अव्ययात् प्रथमान्तं स्थूलदेहविशेषणम् स्वतश्च व्ययप्रत्यक्षंविनाशीति ॥ १९ ॥

( ५ ) **नन्दनः** । यदुक्तंहिरण्यगर्भशरीरादपहृतंमहदादितत्त्वंतदंशाजीवाश्च सर्वभूतोपादानमिति तदिदंनिगमयति तेषामिति । सप्तानांमहदहङ्कारमनस्तन्मात्रज्ञानकर्मेन्द्रियजीवानांपुरत्वेन शरीरत्वेन 'शेरतइतिमहदादीनांपुरुषत्वं पुरेशेरतइति जीवानाम । हौजसामक्षयशक्तीनामव्ययाद्ब्रह्मशरीरात्संभूताभ्यःसूक्ष्माभ्योमूर्तिमात्राभ्यः शरीरनिष्पादनक्षमाभ्योव्य-

यं नश्वरमिदंकार्यजातंसंभवति । हिरण्यगर्भशरीरस्थाः सप्ततत्त्वमात्राः कार्यजातस्योपादानमित्यर्थः ॥ १९ ॥

( ६ ) **रामचन्द्रः** । तेषामिति । तेषांसप्तानांपुरुषाणांमहदहङ्कारपञ्चतन्मात्राणामवयवामसूक्ष्माः सूक्ष्माभ्योमूर्तिमात्राभ्यः शब्दस्पर्शरूपरसगन्धेभ्यः । अव्ययादीश्वराद्यंविश्वंसंभवतीति ॥ १९॥

## आद्याद्यस्य गुणंत्वेषामवाप्नोति परःपरः ॥ योयोयावतिथश्चैषांसस तावद्गुणःस्मृतः ॥ २०॥

( १ ) **मेधातिथिः** । पूर्वश्लोके केचिदन्यथासप्तसंख्यांपरिकल्पयन्ति । पञ्चेन्द्रियाणि चक्षुरादीनि वर्गीकृतान्येकीभवन्ति । बोधहेतुतयैकेन धर्मेण योगादेकत्वेन निर्दिश्यन्ते । एवंकर्मेन्द्रियाणि तौचवर्गद्वित्वाद्द्वौपुरुषौभवतः । पञ्चभूतानि भेदेनैव निर्दिष्टानि कार्यवैलक्षण्यात् । तदेवंसप्तपुरुषास्तेषांया मूर्त्यर्थाः सूक्ष्मामात्रा निर्माणकार्याणि तन्मात्राण्यहङ्कारश्च । अन्यत्समानम् । अतश्च भूतानांपूर्वश्लोके संनिधानादेषामिति तेषांप्रतिनिर्देशः । यद्यपि च व्यवहिते बहूनि च तानि . संनिहितानि तथापि यइहार्थः प्रतिपाद्यते विशिष्टसंख्याकर्तृगुणवत्त्वंतद्भूतानामेव संभवति नान्येषांप्रकृतत्वेसत्यपि । अतोऽयंश्लोकार्थएषांभूतानांयदाद्यन्तवत्तस्ययद्रूपंततोनन्तरंपठितं । तत्तत्पूर्वस्यसंबन्धेन गुणंगृण्हाति । गुणशब्देन शब्दादयः पञ्चोच्यन्ते । आद्यत्वंचात्रवक्ष्यमाणया व्यवस्थयाऽऽकाशंजायतइति । गुणत्वंच शब्दादीनांतत्रैव वक्ष्यति । योयआकाशादिलक्षणोऽर्थोयावतिथः यावतांपूरणः । वतेरिथुक् । द्वितीयेतृतीयेवस्थानेस्थितः सतावद्गुणस्तावन्तोगुणास्तस्य भवन्ति । द्वितीयस्थाने स्थितोद्विगुणइत्यादि परस्पराद्याद्यगुणसंबन्धित्वंप्रथमेर्धश्लोकउक्तम् । तत्र यः स्वशब्देन यस्यैव योगुणोऽभिहितस्तस्य शब्दगुणंविदुस्तद्रूपगुणमुच्यतइत्यादि । ततश्चपूर्णगुणावाप्तौ द्वैगुण्यमाकाशंवर्जयित्वा भूतानांप्राप्तमतउक्तं योयोयावतिथइति । तेन द्विगुणोवायुस्त्रिगुणंतेज श्चतुर्गुणाआपः पञ्चगुणा भूमिरिति । आद्याद्यस्येति कथम् । आद्यस्याद्यस्येहभवितव्यं । नित्यवीप्सयोरितिद्विवचनेन । यथापरःपरइति । छन्दोभिरविशेषात् स्मृतीनांलुग्वृत्तानुरोधाच्चैवंपठितम् ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । आद्याद्यस्येति । तेषामिति योग्यतया महान्तिभूतानीति प्राक्प्रक्रान्तानि महाभूतानि परामृशति । आकाशवायुतेजोजलक्षितिक्रमेणोत्पत्तेस्तत्क्रमेणाद्यस्याद्यस्य पूर्वस्य पूर्वस्य गुणंशब्दस्पर्शरूपरसगन्धान्यतमरूपंपरःपरआप्नोति स्वगुणेन च युज्यत इत्यर्थः योयोयावतिथोयावत्पूरणः सतावद्गुणः प्रथमएक गुणोऽन्यैः क्रमेण द्व्यादिगुणाइत्यर्थः ॥ २० ॥

( ३ ) **कुल्लूकः** । आद्याद्यस्य गुणंत्वेषामित्यादि । एषामिति पूर्वतरश्लोके तदा विशन्तिभूतानीत्यत्र भूतानांपरामर्शः । तेषांचाकाशादिक्रमेणोत्पत्तिक्रमःशब्दादिगुणवत्ता च वक्ष्यते । तत्राद्याद्यस्याकाशादेर्गुणंशब्दादिकंवाय्वादिःपरःपरः प्राप्नोति । एतदेव स्पष्टयति योयइति । एषांमध्ये योयोयावतांपूरणोयावतिथःवतोरिथुक् सप्तद्वितीयादिः द्वितीयोद्विगुणः तृतीयस्त्रिगुणइत्येवमादिर्मन्वादिभिःस्मृतः । एतेनैतदुक्तंभवति आकाशस्य शब्दोगुणः वायोःशब्दस्पर्शौ तेजसःशब्दस्पर्शरूपाणि अपांशब्दस्पर्शरूपरसाः भूमेःशब्दस्पर्शरूपरसगन्धाः । अत्र यद्यपि नित्यवीप्सयोरिति द्विर्वचनेनाद्यस्याद्यस्येति प्राप्तंतथापि स्मृतीनांछन्दःसमानविषयत्वात्सुपांसुलुगिति प्रथमाद्यस्य सुपलुक् तेनाद्याद्यस्येति रूपसिद्धिः ॥ २० ॥

( ४ ) **राघवानन्दः** । अतएव मूर्तिमात्राशब्दवाच्यानां स्थूलपञ्चमहाभूतानांगुणान्संकलयति आद्याद्यस्येति । एषामुक्तानामाकाशादिस्थूलपञ्चमहाभूतानांमध्ये योयोभूतविशेषोयावतिथो यावतांपूरणःस्मृतो मनीषिभिः ससतावद्गुणः । तेनाकाशाद्वायोर्द्वितीयतया वायोर्गुणद्वयम् एवमुत्तरत्रापि तेन स्थूलशरीरंतावद्गुणोपलब्धिरिति भावः । देहस्य पञ्चात्मकत्वेपि पृथिवीमयआपोमयस्तेजोमयोवायुमयआकाशमयइति श्रुतौ तत्तत्प्राधान्यमात्रंविवक्षितम् ॥ २० ॥

( ५ ) **नन्दनः** । अथपञ्चभूतानांगुणगणसंख्यानप्रसङ्गादाह आद्येति। तेषांपञ्चानांपुरुषाणांमध्यआद्याद्यस्य पूर्वपूर्वस्य गुणाःशब्दादिकास्तानेतान्परः परः पुरुषःप्राप्नोति । ततश्च योयोयावतिथोयावतांपुरुषाणांयावत्संख्याकःसतावद्गुणः स्मृतः। एतदुक्तंभवति । आकाशः पुरुषः तस्यैकोगुणः शब्दः । वायुर्द्वितीयस्तस्य द्वौ शब्दस्पर्शौ। तेजस्तृतीयस्तस्य त्रयः शब्दस्पर्शरूपाणि । आपश्चतुर्थस्तस्य चत्वारः शब्दस्पर्शरूपरसाः। भूमिःपञ्चमस्तस्य पञ्चशब्दरूपरसगन्धाइति । एवंतावत्सर्वभूतानि सिसृक्षतोहिरण्यगर्भस्य स्वशरीरंभूतमित्युक्तम् ॥ २० ॥

( ६ ) **रामचन्द्रः** । आद्येति । एषांपञ्चमहभूतानाम् । आद्याद्यस्य परःपरमवाप्नोति । तद्यथाआकाशस्य शब्दगुणं वायोः स्पर्शगुणं वायौ शब्दस्पर्शौ भवतः तेजसो रूपगुणं तेजसि शब्दस्पर्शरूपाणि भवन्ति । एवमप्यग्रेऊत्यम् । येषांपञ्च महाभूतानांयोयोयावतिथो यावत्सङ्ख्यावान् ससतावत्सङ्ख्याकगुणयुक्तः स्मृतः तद्यथाशब्दस्पर्शरूपरसगन्धापञ्चगुणापृथ्वीत्यादि ॥ २० ॥

**सर्वेषांतु सनामानि कर्माणि च पृथक्पृथक् ॥ वेदशब्देभ्यएवादौ पृथक्संस्थाश्च निर्ममे॥ २१॥**

( १ ) **मेधातिथिः** । सप्रजापतिः सर्वेषामर्थानांनामानि चक्रे । यथा कश्चित् पुत्राणांजातानामन्येषांवा संव्यवहारार्थंकरोति । वृद्धिरादैच् धीश्रीस्त्रीमितिशब्दार्थसंबन्धंकृतवान् गौरश्वः पुरुषइति । कर्माणिच निर्ममे । धर्माधर्माख्यान्यदृष्टान्यग्निहोत्रादीनिच । सृष्ट्वाच कर्माणि तत्र संस्थाव्यवस्थाश्चकार । इदंकर्म ब्राह्मणेनैव कर्तव्यं कालेऽमुष्मै च फलाय । अथवा दृष्टार्थामर्यादा संस्था गोप्रचारइहच प्रदेशेनकर्तव्यउदकं । सस्यसेकार्थममुष्मिन्ग्रामे नदेयं । यावत्तस्माद्ग्रामादस्माभिरयमुपकारोन लब्धः । दृष्टानि च कर्माणि निर्ममे । तत्र यान्यदृष्टार्थानि तानि वेदशब्देभ्योवैदिकेभ्योवाक्येभ्यः । ननु सर्वस्य तेनैव सृष्टत्वात्तस्यैवस्वातन्त्र्याद्वेदं ससर्ज कर्मानुष्ठानपरिपालनार्थमित्येवंवक्तव्यं वेदसृष्टिश्च वक्ष्यते अग्निवायुरविभ्यश्चेत्यत्रान्तरे । उच्यते । भिन्नमत्रदर्शनम् । केचिदाहुरन्यस्मिन्कल्पे वेदास्तेनाधीतास्तेच महाप्रलयेन प्रलीनाः पुनरन्यस्मिन् कल्पे सुप्तप्रबुद्धवत्सर्वंप्रथमंप्रतिभाति स्वप्नपठितोयथा कस्यचिच्छ्लोकः प्रतिभाति । भाति च वेदेगौरनुबन्ध्याऽश्वस्तूपरोगोमृगइत्यादिवाक्येभ्यः शब्दानुस्मृतिपूर्वकं झटिति तानर्थान्स्मृत्वोत्पद्यमानांश्च पदार्थान् दृष्ट्वा तस्यार्थस्यायंशब्दः कल्पान्तरे नामासी त्संप्रत्यस्यैवक्रियतामित्युभयंवेदशब्देभ्यएव नामानि कर्माणि च सृष्टवान् । अथवा नैववेदाः प्रलीयन्ते महाप्रलयेऽपि । योसौपुरुषः केषांचिदिष्टस्तथावेदाआसते । सएवान्तरण्डं ब्रह्माख्यंपुरुषंनिर्माय वेदानध्यापयामास । एवं स ब्रह्मा वेदशब्देभ्यः सर्वंनिर्मितवान् । यदत्रतत्त्वंतदस्माभिरुक्तमेव । अथ पौराणिकीप्रक्रियाप्रयुज्यते सास्माभिःप्रदर्श्यतएव । आदौ जगत्सर्गइत्यर्थः । अथवादौ यानि नामान्यनपभ्रष्टानि न पुनरिदानींतनान्यशक्तिजानि गव्यादीनि पृथक् । यथा शरीरत्वसमुदायरूपमेवंनिर्ममे । किंतर्हि पृथक् ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वेषामिति । नामानि ब्राह्मणइत्यादीनि । कर्माणि याजनादीनि । वेदशब्देभ्योऽधिगम्यनिर्ममेव्यवस्थापितवान् । पृथग्विभिन्नाःसंस्थाःसंस्थानानि द्विपात्त्वादीनि ॥ २१ ॥

( ३ ) **कुल्लूकः** । सर्वेषांतु सनामानीत्यादि । सपरमात्माहिरण्यगर्भरूपेणावस्थितःसर्वेषांनामानि गोजातेर्गौरिति अश्वजातेरश्वइति । कर्माणि ब्राह्मणस्याध्ययनादीनि क्षत्रियस्य प्रजारक्षादीनि । पृथक्पृथक् यस्य पूर्वकल्पे यान्यभूवन् । आदौ सृष्ट्यादौ वेदशब्देभ्यएवावगम्य निर्मितवान् । भगवता व्यासेनापि वेदमीमांसायांवेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता । तथा च शारीरकसूत्रं शब्दइति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम् । अस्यार्थः देवतानांविग्रहवत्त्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्याद्वेदस्यादिमत्त्वप्रसङ्गादिति चेन्नास्तिविरोधः । कस्मादतःशब्दादेव जगतःप्रभवा-

दुत्पत्तेः प्रलयकालेपि सूक्ष्मरूपेण परमात्मनि वेदराशिःस्थितःसइह कल्पादौ हिरण्यगर्भस्य परमात्मनएव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नः सुषुप्तप्रबुद्धस्येव प्रादुर्भवति तेन प्रदीपस्थानीयेन सुरनरतिर्यगादिप्रविभक्तंजगदभिधेयमूर्तंनिर्मिमीते कथमिदंगम्यते प्रत्यक्षानुमानाभ्यांश्रुतिस्मृतिभ्यामित्यर्थः । प्रत्यक्षंश्रुतिरनपेक्षत्वात् अनुमानंस्मृतिरनुमीयमानश्रुतिसापेक्षत्वात । तथा च श्रुतिः एतइति वै प्रजापतिर्देवानसृजतासृग्रमइति मनुष्यानिन्दवइति पितॄंस्तिरःपवित्रमिति ग्रहानसवइति स्तोत्रंविश्वानीति शस्त्रमिति सौभगायेत्यन्याःप्रजाः । स्मृतिस्तु सर्वेषांतु सनामानीत्यादिका मन्वादिप्रणीतैव । पृथक्संस्थाश्चेति । लौकिकीश्च व्यवस्थाः कुलालस्य घटनिर्माणंकुविन्दस्य पटनिर्माणमित्यादिकविभागेन निर्मितवान् ॥ २१ ॥

( ४ ) **राघवानन्दः** । एतइति । प्रजापतिर्देवानसृजतासृग्रमइति मनुष्यानिन्दवइति पितॄंस्तिरः पवित्रमिति ग्रहानसवइति स्तोत्रंविश्वानीति शस्त्रंसौभगाये त्येताःप्रजास्तथाभूरिति भूमिमसृजदित्यादि श्रुतिमाश्रित्याह सर्वेषांत्विति । नामानि देवोऽयं मनुष्योऽयं इत्यादीनि कर्माणि यजनयाजनादीनि । पृथक्संस्थाः कुलालस्य कम्बुग्रीवादि घटनिर्माणं कुविन्दस्य पटनिर्माणं द्विचतुष्पदाद्याकृतीर्वा निर्ममइत्यन्वयः । पुरश्चक्रे द्विपदःपुनश्चक्रे चतुष्पदइति श्रुतेः । पुरःशरीराणि ॥ २१ ॥

( ५ ) **नन्दनः** । इदानींतेन सृज्यमानानांभूतविशेषाणांनामकर्मरूपपृथक्करणंकुतस्त्यमित्यपेक्षायामाह सर्वेषामिति । सब्रह्मानामानि देवामनुष्याः पशवइत्यादीनि कर्माणि देवाएवंकुर्वन्तु मनुष्याएवंपशवएवमितिसंस्थाः संस्थानानि रूपाणीतियावत् देवानामेवंसंस्था मनुष्याणामेवंपशूनामेवमिति । वेदशब्देभ्योमन्त्रार्थवादेतिहासादिपर्यालोचनया निर्ममे ॥ २१ ॥

( ६ ) **रामचन्द्रः** । सर्वेषामिति । सब्रह्मा सर्वेषांप्राणिनांब्राह्मणादीनांवर्णानांनामान्येवंपृथक्पृथक्निर्ममे । आदौ सृष्ट्यादौ वेदशब्देभ्यो वेदाभ्यासेभ्यः ब्राह्मणोस्य मुखमासीद्बाहूराजन्यः कृतइत्यादिभ्यः श्रुतिभ्योज्ञात्वा पृथक्कर्माणि ब्राह्मणादीनांनिर्ममे पृथक् संस्थांस्थितिंत्रिलोक्याःसंस्थांमर्यादांनिर्ममे ॥ २१ ॥

**कर्मात्मनांच देवानांसोऽसृजत्प्राणिनांप्रभुः ॥ साध्यानांच गणंसूक्ष्मंयज्ञंचैव सनातनम् ॥ २२ ॥**

( १ ) **मेधातिथिः** । कर्मात्मानः शरीरिणः प्राणिनः कर्मसु तत्परामनुष्याउच्यन्ते । तेषामर्थसिद्धये यज्ञमसृजत् । ये ब्रह्मोपासनास्वभिरताः पुत्रपश्वादिफलार्थिनो द्वैतपक्षाश्रितास्तेकर्मानुष्ठानपरत्वात्कर्मात्मानउच्यन्ते । षष्ठ्यपि तादर्थ्येब्रूतइति तदर्थंयज्ञमसृजदिति गम्यते । देवानांच गणंतदर्थमेवासृजत् । तंकर्मात्मानंचेत्ययमदेशो चः पठितः । तस्य देशोंदेवानामित्यतोनन्तरंयज्ञंससर्ज । अग्निरग्नीषोमाविन्द्राग्नीइत्यादियज्ञसिद्ध्यर्थंदेवानांगणमसृजत् । तथा साध्यानांदेवानांगणमित्यनुषज्यते । भेदेनोपादानमहविर्भाकृत्वात्तेषांस्तुतिभाजएव तेकेवलम् । यत्र पूर्वे साध्याः सन्तिदेवाइति । साध्यावै नाम देवाइति । साध्यावैनाम देवाआसन् । अथवा ब्राह्मणपरिव्राजकवत् । सूक्ष्मंमरुतोरुद्राङ्गिरसइत्येतदपेक्षया साध्यगणः सूक्ष्मः । साध्यग्रहणंचान्यासामप्यहविःसंबन्धिनीनांदेवतानांवेनोस्तुनीतिरित्यादीनांप्रदर्शनार्थम् । अन्ये तु कर्मात्मनांदेवानांप्राणिनामिति समानाधिकरणानिमन्यन्ते । कर्माणि आत्मा स्वभावप्रतिलम्भोयेषांते कर्मात्मानः । यागादिकर्मनिवर्तनपरत्वात् प्रधानतयावा कर्मात्मानः । काश्चिद्देवतायागादिकर्मण्येव स्वरूपतइतिहासेश्रूयन्ते यथेन्द्रोरुद्रोविष्णुरिति । अन्यासांतु यागएवदेवतात्वंन स्वरूपतः। अक्षाग्रावाणोरथाङ्गानि । नहि यथा भारते इन्द्रादीनांवृत्रादिभिरसुरैर्युद्धादि कर्मऽश्रूयते तथाक्षादीनांवर्ण्यते । अस्तिचसूक्तहविःसंबन्धेतेषामपिदेवतात्वम् । अक्षाणां प्रावेपामाइति ग्राव्णांप्रेतेवदन्त्विति । वनस्पतेवीड्वङ्गइतिरथाङ्गानाम् । अतएव प्राणिनामिति । द्विविधाहि देवताः । प्राणवत्यस्तद्रहिताश्च । यथेन्द्रादयः

पुरुषविग्रहाः प्राणवन्तः पुराणेवर्ण्यन्ते । नाक्षादयइतिहासदर्शना । अतश्चायंसर्वःसर्गादिप्रपञ्चः । चशब्दश्चात्र द्रष्टव्यः । प्राणिनामप्राणिनामपि निरुक्तदर्शनेऽपि द्विविधा देवता । अश्वामानोमित्रइति । शकुनिः कनिक्रददिति । गावआगावो अग्मन्निति । एताः प्राणवत्यः । प्राणाउक्ताः । सनातनग्रहणंयज्ञविशेषणंपूर्वकल्पेऽपि यज्ञस्यभावात्प्रवाहनित्यतया नित्यत्वम् ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । कर्मात्मनामिति । कर्मात्मनांदेवदेहहेतुरूपकर्मयुक्तात्मनांदेवानां ये कर्मणा देवत्वमाप्नुवन्ति तेषांकर्मदेवानांगणमसृजत् । ये तु देवसुतत्वेनाजानदेवास्तेदेवैरेव सृज्याः । तथा प्राणिनामन्येषां पितृयक्षादीनांगणं तथा साध्यानांपूर्वकल्पदेवानांगणं यज्ञंयज्ञकर्माभिमानिनंपुरुषम् ॥ २२ ॥

( ३ ) **कुल्लूकः** । कर्मात्मनांच देवानामित्यादि । सब्रह्मा देवानांगणमसृजत् । प्राणिनामिन्द्रादीनां कर्मण्यात्मास्वभावोयेषांतेषामप्राणिनांच ग्रावादीनांदेवानांसाध्यानांच देवविशेषाणांसमूहंयज्ञंचज्योतिष्टोमादिकं कल्पान्तरेऽप्यनुमीयमानत्वान्नित्यं साध्यानांच गणस्य पृथग्वचनंसूक्ष्मत्वात् ॥ २२ ॥

( ४ ) **राघवानन्दः** । सर्वभूतानि निर्ममइत्युक्तांसृष्टिंविवृण्वन् विराट्सृष्टिमाह कर्मात्मनामिति दशभिः । कर्मात्मनां कर्मणैव प्राप्तदेवत्वानां ये कर्मणादेवत्वमायान्तीति श्रुतेः । कर्मणोयज्ञादेः स्वरूपनिर्वाहकत्वेन वा अमुकस्यै देवतायै इदंनममेति त्यागोद्देश्यत्वात् प्राणिनांमध्ये सूक्ष्ममस्मदाद्यदृश्यरूपंदेवानांगणमसृजत् । तथा साध्यानांगणंयज्ञंकर्म सनातनंवैदिकम् कर्मब्रह्मोद्भवंविद्धीति स्मृतेरवश्यफलदत्वात् ॥ २२ ॥

( ५ ) **नन्दनः** । अथलोकतन्त्रप्रवर्तकभाषाभिमानिनीनांदेवतानांसृष्टिंचतुर्भिः श्लोकैराह कर्मेति । प्राणिनामर्थप्राप्त्यर्थार्जनादीनि स्वभावप्राप्तान्याहारनिद्रादीनि च यानि कर्माणि तदभिमानिनोदेवाः कर्मात्मानः कर्मनिर्वर्त्यफलाभिमानिनस्तुदेवाःसाध्यास्तेषामुभयेषांसूक्ष्मंसंशयितंगणंतथा सनातनमादिकालप्रवाहरूपेण नित्यंयज्ञंयज्ञाभिमानिनींचदेवतांसोऽसृजत् ॥ २२ ॥

( ६ ) **रामचन्द्रः** । कर्मेति॥ सप्रभुः हिरण्यगर्भः कर्मात्मनांगणमसृजत् च पुनः प्राणिनांगणमसृजत् साध्यानांगणमसृजत् सनातनमविनाशंसूक्ष्ममतीन्द्रियंयज्ञमपूर्वंचैवासृजत् ॥ २२ ॥

**अग्निवायुरविभ्यस्तु त्रयंब्रह्म सनातनम् ॥ दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥ २३ ॥**

( १ ) **मेधातिथिः** । तिस्रएव देवताअग्निप्रभृतयइति नैरुक्ताः सत्यप्यभिधाननानात्वे । अतस्तेनदर्शनेनेनोच्यते । एताभ्यस्तिसृभ्योयज्ञसिद्ध्यर्थंयागसंप्रदानत्वात्तासांचतुर्थी । त्रयमृग्यजुःसामलक्षणंब्रह्म वेदाख्यंदुदोह । द्विकर्मकोऽयंधातुः प्रधानंकर्म त्रयमप्रधानेनद्वितीयेन कर्मणा भवितव्यम् । नच तदस्ति । अतः पञ्चम्येवेयमिति मन्यामहे । अग्न्यादिभ्योदुदोहाक्षारयदभावयत् । कथं पुनरग्न्यादिभ्योवर्णात्मा शब्दोमन्त्रवाक्यानि ब्राह्मणवाक्यानिच भवेयुः । किंनोपपद्यते । कःशक्तीरदृष्टाअसतीर्वक्तुमर्हति । नाख्यातार्थोविकल्पयितुंयुक्तः । पञ्चमी तर्हि किमर्थं दुहियाचीतिद्वितीयया भवितव्यम् । किंच दृष्टप्रमाणविरोधी प्राग्वृत्तोऽर्थउच्यमानोमनसः परितोषमाधत्ते प्रामाणिकानांपरित्द्वतोविरोधः । स्वरूपपरत्वाश्रयणेनैषामागमानामृग्वेदएवाग्नेरजायत यजुर्वेदोवायोः सामवेदआदित्यादिति । अग्न्यादयोऽपिदेवताऐश्वर्यभाजोनिरतिशयशक्तिश्च प्रजापतिस्तत्रकानामानुपपत्तिः । अस्मिन्दर्शनेपञ्चम्यपिविवक्ष्या । अतः कारकाणि कथितान्यत्रापादानसंज्ञेत्यपादानविवक्षायांभाष्ये समर्थितानि । अन्यदर्शने कथंचतुर्थीतावच्युक्तैव । अर्थवादाश्चैते तत्र द्वितीयंकर्मात्मैव प्रजापतिरात्मानंदुदोह । दोहनंचाध्यापनंपरसंक्रान्तिसामान्येन । अथापिपञ्चमी तत्राप्याम्नेयामन्त्राआदावृग्वेदेऽतोऽग्नेरजायतेत्यु-

च्यतेयजुर्वेदेऽपिइषेत्वोर्जेत्वेति । इडन्नंतन्मध्यस्थानत्वाद्वायुना वर्षदानेन क्रियते । ऊर्क्प्राणः स वायुरेव । अत आदितो-वायुकार्यसंबन्धाद्वायोरित्युपमा । अथवाध्वर्यवमार्त्विज्यं बहुप्रकाराश्चेष्टाश्च सर्वावायोरित्यनेन सामान्येन वायोर्जन्म यजुर्वेदस्यानधिकारस्यसामगीत्ययोग्यत्वादुत्तमाध्ययनानि सामान्युत्तमस्थानश्चादित्यइति ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । अग्निवाय्विति । अयंब्रह्म वेदत्रयंदुदोहान्तर्धृतमाकृष्टवान् ॥ २३ ॥

( ३ ) **कुल्लूकः** । अग्निवायुरविभ्यस्त्वित्यादि । ब्रह्म ऋग्यजुःसामसंज्ञंवेदत्रयं अग्निवायुरविभ्यआकृष्टवान् सनातनंनित्यम् । वेदापौरुषेयत्वपक्षएव मनोरभिमतः । पूर्वकल्पे ये वेदास्तएवपरमात्ममूर्तेर्ब्रह्मणःसर्वज्ञस्य स्मृत्यारूढाः । तानेव कल्पादौअग्निवायुरविभ्यआचकर्ष । श्रौतश्चायमर्थोन शङ्कनीयः । तथा च श्रुतिः अग्नेर्ऋग्वेदोवायोर्यजुर्वेदआदित्यात्सामवेदइति । आकर्षणार्थत्वाद्दुहिधातोर्नाग्निवायुरवीणामकथितकर्मता किंत्वपादानतैव यज्ञसिद्ध्यर्थंत्रयीसंपाद्यत्वात् यज्ञानांआपीनस्थक्षीरवद्विद्यमानानामेव वेदानामभिव्यक्तिप्रदर्शनार्थम् । आकर्षणवाचकोगौणोदुहिःप्रयुक्तः ॥ २३ ॥

( ४ ) **राघवानन्दः** । अग्निवायुरविभ्यइति । अग्नेर्ऋग्वेदोवायोर्यजुर्वेद आदित्यात्सामवेदइतिश्रुतेः । ब्रह्म वेदंसनातनंनित्यं विसदृशक्रमराहित्यात् यथापूर्वमकल्पयदिति श्रुतेः । सुप्तप्रबुद्धस्येवाविर्भावाच्च यज्ञसिद्ध्यर्थं आध्वर्यवौद्गात्रादिभेदेनैव यज्ञःसिध्यतीति दुदोहादित्यादिद्वाराविश्वकारान्यथा वेदस्यकर्त्रानन्त्यप्रसङ्गात् ॥ २३ ॥

( ५ ) **नन्दनः** । अग्निवायुरविंचसृष्ट्वातेभ्यइत्यर्थः । ब्रह्म वेदाभिमानिनींदेवतांदुदोह प्रादुष्कृतवान् । तदुक्तंबह्वृचब्राह्मणे ऋग्वेदएवाग्नेरजायत यजुर्वेदोवायो स्सामवेदआदित्यादिति ॥ २३ ॥

( ६ ) **रामचन्द्रः** । अग्निरिति । सनातनंब्रह्मत्रयंवेदत्रयमग्निवायुरविभ्यो दुदोह यज्ञसिध्यर्थम् । कीदृशंब्रह्म ऋग्यजुःसामलक्षणं अग्नेः सकाशात् ऋग्वेदः वायोः सकाशाद्यजुर्वेदः रवेः सकाशात्सामवेदइति निर्ममे निर्मितवानितिसिद्धम् ॥ २३ ॥

**कालंकालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ॥ सरितःसागराञ्छैलान्समानि विषमाणि च ॥२४॥**

( १ ) **मेधातिथिः** । धर्मसामान्यादाह । द्रव्यात्मा कालोवैशेषिकाणांक्रियारूपोऽन्येषामादित्यादिगतिप्रतानआवृत्तिमान् । कालविभक्तयोविभागामासर्त्वयनसंवत्सराद्या । नक्षत्राणि कृत्तिकारोहिण्यादीनि । ग्रहाआदित्यादयः । सरितोनद्यः । सागराःसमुद्राः । शैलाःपर्वताः । समानि स्थलान्येकरूपाभूभागाः खातप्रदरवर्जिताः । विषमाणिआरोहावरोहवन्ति ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । कालमिति ॥ कालंसामान्यकालात्मानं पुरुषं कालविभक्तीः कालविभागकल्पाद्यभिमानिदेवताः नक्षत्राण्यश्विन्न्यादीनि समानि समवस्थानानि विषमाणि विषमस्थानानि ॥ २४ ॥

( ३ ) **कुल्लूकः** । कालंकालविभक्तीश्चेत्यादि । अत्रससर्जेत्युत्तरश्लोकवर्तिनी क्रिया संबध्यते । आदित्यादिक्रियाप्रचयरूपंकालंकालविभक्तीर्मासर्त्वयनाद्याः नक्षत्राणि कृत्तिकादीनि ग्रहान्सूर्यादीन् सरितोनदीः सागरान्समुद्रान् शैलान्पर्वतान् समानि समस्थानानि विषमाणि उच्चनीचरूपाणि ॥ २४ ॥

( ४ ) **राघवानन्दः** । कालमादित्यक्रियाप्रचयं कालविभक्तीर्मासर्त्वयनाद्याः समानि एकाकारसंस्थानानि मनुष्यान् विषमाणीति देवादितिरश्चः ॥ २४ ॥

( ५ ) **नन्दनः** । चन्द्रादित्याश्विन्यादिग्रहनक्षत्रस्पन्दनः सामान्यलक्षणः कालः । कालविभक्तिस्त्रुटिलवादिरवयवः । नक्षत्राणि कृत्तिकादीनि । ससर्जेति वक्ष्यमाणत्वेन संबन्धः । एताआन्तरिक्ष्योदेवताः । सरिदादयोभौम्याः ॥२४ ॥

( ६ ) **रामचन्द्रः** । कालमिति । युग्मंसब्रह्माचेमाःप्रजाःस्रष्टुमिच्छंस्तदापूर्वमिमांसृष्टिंससर्ज कालादिसृष्टिंससर्ज

तद्यथापूर्वकालेकालात्मकसंवत्सररूपं कालमसृजत् स पुनः कालविभक्तीःकालस्य विभागांश्च षड़ृतून् अयनादींश्च पुनः नक्षत्राणि अश्विन्यादीनि तथा नवग्रहांश्च सूर्यादीनससर्ज सरिदादींश्चससर्ज ॥ २४ ॥ २५ ॥

**तपोवाचंरतिंचैव कामंच क्रोधमेवं च ॥ सृष्टिंससर्ज चैवेमांस्रष्टुमिच्छन्निमाः प्रजाः ॥ २५ ॥**

( १ ) **मेधातिथिः** । रतिर्मनसः परितोषः । कामोऽभिलाषोमन्मथोवा । अन्यत्प्रसिद्धम् । एवमादिकांसृष्टिंससर्जे मामत्रश्लोके पूर्वा च या सृष्टिरुक्ता । इमाःप्रजाःस्रष्टुमिच्छन् देवासुरायक्षराक्षसगन्धर्वाद्यास्तदुपकरणंतदात्मधर्मवच्छरीरंध- र्मंचादावसृजदित्यर्थः । अथ केयंवाचोयुक्तिः सृष्टिंससर्जेति यएवार्थःसृष्टिंकृतवानिति । सर्वेधातवः करोत्यर्थस्यविशेषाव- च्छिन्नेवर्तन्ते पचति पाकंकरोति यजति यागंकरोति । तत्रकृदन्ताद्विशेषेऽवगतआख्यातगतोधातुः करोत्यर्थमात्रप्रति- पादनपरोभवति । तस्मिन्नपिकृतश्चित्प्रतिपन्ने पुनःप्रतिपादनेऽनुवाददोषोमाभूदिति काल्कादिषुतात्पर्यम् । अथवासृज्य- मानविशेषाः प्रमाणावच्छिन्ना सृष्टिःसामान्यसृष्टेः कर्म यथा स्वपोषंपुष्टइति ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । तपइति । तपोऽनशनादि वाचमक्षरादिकां रतिंकामसुखं कामंरूयभिलाषं क्रोधंद्वेषम् इमांसृष्टिंतपआदिकामन्यांच पूर्वोक्तांसृष्टिंससर्ज इमावर्तमाना प्रजास्तत्तद्वारास्रष्टुमिच्छन् ॥२५ ॥

( ३ ) **कुल्लूकः** । तपोऽवाचमित्यादि । तपःप्राजापत्यादि वाचंवाणीं रतिंचेतःपरितोषं काममिच्छां क्रोधंचेतो विकारं इमांएतच्छ्लोकोक्तांपूर्वश्लोकोक्तांच सृष्टिंचकार । सृज्यतइति सृष्टिः कर्मणि क्तिन् । इमाःप्रजावक्ष्यमाणादेवादिकाः कर्तुमिच्छन् ॥ २५ ॥

( ४ ) **राघवानन्दः** । तश्चान्द्रायणादि वाचंस्मृत्यादिरूपां रतिंचेतःपरितोषं कामंरूयाद्यभिलाषं क्रोधमाशादे र्हेतुम् । सृष्टिमिति सृज्यतेइति सृष्टिः । तपआदेर्विशेषणम् सृष्टिंससर्जेति पाकंपचतीति वत् । प्रकृत्यर्थोऽविवक्षितः ॥ २५ ॥

( ५ ) **नन्दनः** । वाचंसरस्वतींतपःप्रमृतयो भूतधर्माभिमानिन्योदेवता इमाः प्रजाः स्रष्टुमिच्छन्नासांदेवमनुष्यादी- नांसृष्टिंनित्यर्थमित्यर्थः इमांकर्मात्मनामित्यारभ्यानुक्रान्तांसृष्टिंससर्ज चकार ॥ २५ ॥

**कर्मणां च विवेकार्थंधर्माधर्मौ व्यवेचयत् ॥ द्वन्द्वैरयोजयच्चेमाःसुखदुःखादिभिःप्रजाः ॥ २६ ॥**

( १ ) **मेधातिथिः** । धर्माधर्मौव्यवेचयद्विवेकेन पृथग्भावेन व्यवस्थापितवान् अयंधर्मएवायमधर्मएव । ननुच नैवायंविवेकोऽस्ति सन्तिहि कर्माण्युभयरूपाणि धर्माधर्मात्मकानि यथा दुःशबलानि वैदिकानि कर्माणि हिंसासाधन- कत्वात् यथाज्योतिष्टोमस्वरूपेण धर्मोहिंसाङ्गत्वात्स्वधर्मइति अतआह कर्मणांतु विवेकाय । कर्मशब्देनात्रप्रयोगः कर्मणामनुष्ठानमुच्यते । सएव पदार्थोऽन्यथाप्रयुज्यमानोविपरीतस्वभावोभवति । धर्मःसन्नधर्मरूपतामापद्यतेऽधर्मोधर्मत्वम् । तथा हिंसैव हिंसाबहिः प्रयुज्यमानाअधर्मः सः नहिंस्यात्सर्वभूतानीतिप्रतिषेधगोचरत्वात् । अन्तर्वेदिकृताअग्नीषोमीयेधर्मो- विधिलक्षणत्वात् । एवंतयोर्धर्मस्तदेवतु दम्भेनासमर्थोनवाक्रियमाणमधर्मः । एवंदेवरगमनं स्त्रीणामधर्मोगुरुनियुक्ता- नांपुत्रार्थिनीनांघृताक्ताद्यनुग्रहेणधर्मः । अतः स्वरूपैकत्वेऽपि प्रयोगभेदाद्धर्माधर्मव्यवस्था । एकत्वंच प्रमाणान्तरदृष्ट्यातु- स्वरूपभेदएव । अथच कर्मफलेषु कर्मशब्दः कारणे कार्योपचारात् । तेनैतदुक्तंभवति कर्माणित्यवेचयत्कर्मफलविभागा- य । कः पुनः कर्मणांफलविभागोऽतउक्तंद्वन्द्वैरयोजयत्सुखदुःखादिभिः । धर्मस्यफलंसुखमधर्मस्यदुःखम् । अतउभयका- रिणोद्वन्द्वैर्योज्यन्तेधर्मकारित्वात्सुखेनाधर्मकारित्वाद्दुःखेन । द्वन्द्वशब्दोऽयंरूढ्या परस्परविरुद्धेषु पीडाकरेषु वर्ततेशीतो-

---

( २५ ) तपोवाचं=तपोबलं ( ख )

ष्णवृष्ट्यातपक्षुत्सौहित्यादिषु । आदिग्रहणंसामान्यविशेषभावेनज्ञेयम् । केवलौ सुखदुःखशब्दौ स्वर्गनरकयोर्वाचकौ निरतिशयानन्दपरितापवचनौवा । विशेषस्वर्गग्रामपुत्रपश्वादिलाभस्तदपहारश्चादिशब्दस्यविषयः । कर्मणांपूर्वमुत्पत्तिरुक्ताऽनेनतेषामेवप्रयोगविभागः फलविभागश्चप्रजापतिनाकृतइतिप्रतिपाद्यविवेकः ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । कर्मणामिति । कर्मणांकार्याणामकार्येभ्योविवेकार्थंधर्माधर्मसाधने कर्मणी व्यवेचयत् द्वन्द्वैरन्योन्यविरुद्धरूपतया सदा युग्मतयैव बुद्धिसन्निहितैः सुखदुःखकामक्रोधादिभिः इमाःप्रजाःसृष्टाःअयोजयत् ॥ २६ ॥

( ३ ) **कुल्लूकः** । कर्मणांचेति । धर्मोयज्ञादिः सच कर्तव्यः अधर्मोब्रह्मवधादिः सनकर्तव्यः इतिकर्मणांविभागाय धर्माधर्मौव्यवेचयत् पृथक्त्वेनाभ्यधात् । धर्मस्य फलंसुखं अधर्मस्य फलंदुःखं धर्माधर्मफलभूतैर्द्वन्द्वैःपरस्परविरुद्धैःसुखदुःखादिभिरिमाःप्रजाःयोजितवान् । आदिग्रहणात् कामक्रोधरागद्वेषक्षुत्पिपासाशोकमोहादिभिः ॥ २६ ॥

( ४ ) **राघवानन्दः** । सृज्यमानकारणमाह कर्मणामिति । अश्वमेधादिर्धर्मकारणंब्राह्मणवधाद्यधर्मकारणमिति कर्तव्याकर्तव्यार्थंव्यवेचयत् विवेकेनोक्तवान् । द्वन्द्वैःसुखदुःखाद्यैः ॥ २६ ॥

( ५ ) **नन्दनः** । इदंकार्यमिदंवर्ज्यमिति ज्ञानंविवेकः । तदर्थं धर्माधर्मौ व्यवेचयदसंकीर्णरूपौ कृतवान् । इमाः प्रजाः सुखदुःखादिभिर्द्वन्द्वसृष्टैर्योजितवान् ॥ २६ ॥ २७ ॥

( ६ ) **रामचन्द्रः** । कर्मणामिति । ब्राह्मणादीनांविवेकाय ब्राह्मणस्य इदंकर्म क्षत्रियस्य इदंकर्मेति विवेकाय धर्माधर्मौ व्यवेचयत्व्यचारयत् । च पुनः इमाःप्रजाःद्वन्द्वैःसुखदुःखादिभिःअयोजयत् समयोजयत् ॥ २६ ॥

**अण्व्योमात्राविनाशिन्योदशार्धानांतु याःस्मृताः ॥ ताभिःसार्धमिदंसर्वंसंभवत्यनुपूर्वशः ॥ २७॥**

( १ ) **मेधातिथिः** । उपसंहारोऽयम् । दशार्धानांपञ्चानांमहाभूतानां या अण्व्यःसूक्ष्मामात्राअवयवास्तन्मात्रा स्ताविनाशिन्यः परिणामधर्मत्वात् स्थौल्यप्रतिपत्याविनाशिन्यउच्यन्ते ताभिः सार्धमिदंजगत्सर्वंसम्भवत्युत्पद्यते । अनुपूर्वशः क्रमेण । सूक्ष्मात्स्थूलंस्थूलात्स्थूलतरम् । यादृशोवाक्रमउक्तःप्राक् ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । अण्व्यइति । दशार्धानांपञ्चानांभूतानांया अण्व्यःसूक्ष्मामात्राः अवयवाः विनाशिन्यः प्राप्तस्वप्रकृतिलयास्तन्मात्ररूपास्ताभिःसार्धंविश्वंकारणोत्पत्तिक्रमेण संभवति ॥ २७ ॥

( ३ ) **कुल्लूकः** । अण्व्योमात्राइति । दशार्द्धानांपञ्चानांमहाभूतानांयाःसूक्ष्माःपञ्चतन्मात्ररूपाविनाशिन्यः पञ्चमहाभूतरूपतया विपरिगामिन्यः ताभिःसहउक्तंवक्ष्यमाणंचेदंसर्वमुत्पद्यते । अनुपूर्वशःक्रमेग सूक्ष्मात्स्थूलंस्थूलात्स्थूलतरमित्यनेन सर्वशक्तेर्ब्रह्मणोमानससृष्टिः कदाचित्तत्त्वनिरपेक्षास्यादितीमांशङ्कामपनिनीषन्तद्द्वारेणैवेयंसृष्टिरिति मध्ये पुनःपूर्वोक्तंस्मारितवान् ॥ २७ ॥

( ४ ) **राघवानन्दः** । अपएव ससर्जादावित्यत्रोक्ता । अपोऽनुवदन्तासां सर्वोपादानत्वमाह अण्व्यइति । दशार्धानांपञ्चानां अपञ्चीकृतानां आपएवेदमग्रआसुरित्याद्यपूशब्दवाच्यानां जगल्लक्षणकार्यं प्रत्युपादानकारणानां अण्व्यः सूक्ष्मामात्राः मीयन्तेअमूः विनाशिन्यः जनितत्वात् ताभिश्च सार्धंइदंचैतन्यं हिरण्यगर्भादिस्थावरपर्यन्तं अनुपूर्वशःहिरण्यगर्भाण्डादिक्रमेण जगद्बभूवेत्यर्थः । तत्र ताभ्योऽपञ्चीकृतभूतमात्राभ्योऽन्तःकरणचतुष्टयंइन्द्रियदशकंप्राणपञ्चकंच समष्टिव्यष्टिरूपंपुनस्ताभ्यः पञ्चीकृताभ्यः चतुर्दशभुवनानि ब्रह्माण्डं जरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधस्थूलशरीरं भोग्य-

---

( २७ ) सार्धं=विश्वं ( च )

चान्नपानादिकंभवतीति । वेदान्तप्रक्रियातत्रापञ्चीकृतानि परस्पराप्रविष्टानि पञ्चीकृतानि तु पञ्चभूतानि दशधाकृतानि स्वेतराविभक्तार्धभागेषु स्वस्वाष्टमांशप्रवेशात् ॥ २७ ॥

( ६ ) **रामचन्द्रः** । अण्व्यइति । दशार्धानां पञ्चतन्मात्राः याःअविनाशिन्यःमात्राःविषयाःताःमात्राःअण्व्यः सूक्ष्माःस्मृताः तु पुनःताभिःसार्द्धंसर्वंइदंविश्वंअनुपूर्वशः क्रमशःसम्भवति उत्पद्यते ॥ २७ ॥

**यंतु कर्मणियस्मिन्सन्ययुङ्क्तप्रथमंप्रभुः ॥ सतदेव स्वयंभेजे सृज्यमानःपुनःपुनः ॥ २८ ॥**

( १ ( **मेधातिथिः** । अस्यायमर्थः । यद्यपि प्रजापतिरीश्वरो भूतसृष्टौ शक्नोति यथेच्छंप्राणिनः स्रष्टुं तथापि न पूर्वकल्पकृतानि कर्माण्यनपेक्ष्य प्राणिनः सृजति येन यादृशंपुराकल्पे कर्म कृतंतत्कर्माक्षिप्तायांजातौतंजनयति नजात्यन्तरेशुभेन कर्मणा तत्फलोपभोग्यायांदेवमनुष्यादिजातौ जनयति विपरीतेन तिर्यक्प्रेतादिषु । यथैवभूतेन्द्रियगुणाः कल्पादौ प्रकृतिस्था उद्भवन्ति एवंकर्माण्यपि प्रलये स्वप्रकृतिस्थानि पुनरुद्भवन्ति सर्गादौ । ततः शेषेणेत्येषन्यायस्तत्राप्यस्त्येव । यदि तर्हिकर्मापेक्षोत्पत्तिः क्वप्रजापतेरैश्वर्यमुपयोगि कीदृशंवासापेक्षस्यैश्वर्यं तस्मिन्नसतिजगतउत्पत्तेः । कथमनुपयोगः नतमन्तरेण स्थित्युत्पत्तिप्रलयाः सन्तिनित्यत्वात्तस्यस्वकर्मणि कारणं तदिच्छापि प्रकृतिपरिणामश्च । एतस्याः कारणसामग्र्याइदंजगदुत्पद्यते तिष्ठति प्रलीयतेच । सापेक्षस्याप्यैश्वर्यंन विहन्यते यथेह राजादिरीश्वरोभृत्यादीन्फलेनयोजयेदेवमेवादिकर्मानुरूपेणैव योजयति नचानीश्वरः । ननुनास्यश्लोकस्यायमर्थः प्रतीयते । किंतर्हिप्रतीयते । विधातुरेव प्राणिनां कर्मविनियोगे स्वातन्त्र्यम् । सयंप्राणिनंप्रथमं सर्गादौयस्मिन्कर्मणि हिंसात्मके तद्विपरीतेवान्ययुङ्क्त सतदेव कर्मभजतेकरोति न पित्रादेरनुशासनमपेक्ष्य स्वेच्छयान्यथाप्रवर्तते । किंतर्हि प्राक्प्रजापतिनियोगवशात्साध्वसाधुवास्वयमन्यानुशासननिरपेक्षोऽनुतिष्ठति । सृज्यमानः पुनर्जायमानः कल्पान्तरेऽस्मिन्नेव वा कल्पे प्रजापतिरेव क्षेत्रज्ञांस्तत्कर्तृत्वेननियुङ्क्ते। अतस्तन्नियोगमेवानुवर्तमानाः प्राचीनंशुभमशुभंवाकर्मकुर्वन्ति । तदुक्तम् । कर्तृत्वंप्रतिपद्यन्तेअनीशाःस्वेषु कर्मसु। महेश्वरेण प्रेर्यन्तेशुभेवायदिवाशुभइति । अज्ञोजन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववा । उच्यते । एवंसति कर्मफलसंबन्धस्त्यक्तः स्यात् पुरुषकारानर्थक्यंच स्यादग्निहोत्रादिकर्माद्युपदेशो ब्रह्मोपासनाश्च व्यर्थाःप्रसज्येरन् । यएवेश्वरस्वरूपाऽनभिज्ञास्तएव दृष्टादृष्टार्थेषु कर्मसु प्रवर्तेरन् । ये तु तदधीनंकर्तृत्वंभोक्तृत्वंच मन्यन्ते तेषांसर्वत्राप्रवृत्तिप्रसङ्गः । कृतमपि न तत्कर्म फलति अकर्तारोऽपि भोक्ष्यामहइतिमन्यमानाउदासीरन् नच व्याधिरिवापथ्याद्विदुषांबलादिच्छोपजायते कर्तृत्वईश्वरप्रेरणया । अथ कर्मफलसृष्ट्या तदिच्छा निश्चिता अस्मात्कर्मणइदंकर्तृफलंभवतीति । नतर्हि यंतुकर्मणीत्येतदपिशास्त्रादेव नियोगः प्रतिपत्तव्यः । तस्माद्यंपुरुषंसप्रभुः प्रथमंन्ययुङ्क्तानादौ संसारे प्रथमंवर्तमानापेक्ष्यंनियोक्तृत्वंचास्यसर्वभावेषुदिक्कालनिमित्तकारणत्वात् । अन्ये तु व्याचक्षते । जात्यन्तरापन्नस्यात्मनोनपूर्वजातिसंस्कारापेक्षा अतः स्वभावानुवृत्तिः यंजातिविशेषं यस्मिन्कर्मणि नियुक्तवान् परवधादौ स सिंहादिजातीयआत्मासंपन्नोमनुष्यत्वेमार्दवमभ्यस्तमपि हित्वा जातिधर्मंप्रतिपद्यते । अन्येनानुपदिष्टमपि स्वाभाव्यात्प्रजापतिकृतत्वात्कर्माणिबलवन्तिप्रागभ्यासंजात्यन्तरगतस्यविस्मारयन्तीतिप्रदर्शितंभवति । एतदेवविस्तारयति ॥ २८॥

( २ ) **सर्वज्ञनारायणः** । अणूनांनित्यत्वपक्षंनिरस्यति 'यंत्विति । यंयज्जातीयं यत्रकर्मण्यन्नभक्षणाद्यशनादिरूपेकर्मणि न्ययुङ्क्त सतज्जातीयस्तदेव तज्जातीयं कर्म स्वयंतेनाप्रेरितोभेजे ॥ २८ ॥

---

( २८ ) यंतु=यत्तु ( ग, च. )

( ३ ) **कुल्लूकः** । यंतुकर्मणीति । सप्रजापतिर्यंजातिविशेषंव्याघ्रादिकंयस्यांक्रियायांहरिणमारणादिकायांसृष्ट्यादौ नियुक्तवान् सजातिविशेषःपुनःपुनरपि सृज्यमानः स्वकर्मवशेन तदेवाचरितवान् । एतेन प्राणिकर्मसापेक्षंप्रजापतेरुत्त-माधमजातिनिर्माणंन रागद्वेषाधीनमिति दर्शितम् । अतएव वक्ष्यति यथा कर्मतपोयोगात्सृष्टंस्थावरजङ्गममिति ॥ २८ ॥

( ४ ) **राघवानन्दः** । कर्मपूर्वप्रज्ञयोर्हेतुतामाश्रित्याह यमिति । यंब्राह्मणादिं यस्मिन्याजनादौ तथा यंव्याघ्रादिं यस्मिन्हिंसादौ प्रथमंन्ययुङ्क्त सतदेव कर्म स्वयंभेजे । किंभूतः पुनःपुनःसृज्यमानः ॥ २८ ॥

( ५ ) **नन्दनः** । नकेवलंसुखदुःखादिभिर्द्वन्द्वैः प्रजाब्रह्मा योजितवान्किंतु तद्धेतुभूतैः कर्मभिरपीत्याह यंतु क-र्मणीति । प्रभुरीश्वरः प्रथमंगर्भनिषेककाले यंदेहिनं यस्मिन्कर्मण्ययुङ्क्तअयोजयत्सदेही तदेवेश्वरनियुक्तमेव कर्म स्वयंअनन्यापेक्षयाभेजेन केवलमेकस्मिन्नेवजन्मनीश्वरनियुक्तंकर्म देही भजतेऽपितु सर्वस्मिन्नपि जन्मनि तस्मिन्नि-षेककाले नियुक्तंभजतइत्युक्तं सृज्यमानः पुनः पुनरिति ॥ २८ ॥

( ६ ) **रामचन्द्रः** । यमिति । सप्रभुःसमर्थःयस्मिन्कर्मणि यंपुरुषंप्रथमंप्रथमतः न्ययुङ्क्त संयुक्तमकरोत् पुनःपुनः सृज्यमानःसन्सःजातिविशेषस्तदेव कर्म जन्मान्तरकर्म स्वयंभेजेभजतीत्यर्थइतिसिद्धम् ॥ २८ ॥

**हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥ यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥ २९ ॥**

( १ ) **मेधातिथिः** । हिंस्रंपरप्राणवियोगकरंसर्पसिंहहस्त्यादि । तद्विपरीतमहिंस्रंरुरुपृषतादि । मृदु पेशलमनायासम् । क्रूरंकठिनं परदुःखोत्पादनात्मकम् । अन्यत्प्रसिद्धम् । यदेतद्विशःप्रसिद्धंकर्म जातंततोयस्ययदेवअदधाद्दत्तवान्कल्पितवान् सप्रजापतिः सर्गे सृष्ट्यादौ पूर्वकर्मानुरूप्यमवेक्ष्य तत्कर्मसंसृष्टः प्राणी स्वयमाविशत्प्रतिपद्यते । भूतकालता न विवक्षि-ता । आद्यत्वेऽपि जातिधर्मस्यानुपदिष्टस्य स्वयंप्रतिपत्तिदर्शनात् । अत्रदृष्टान्तः ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । नकेवलं तादृशमेवकर्म किंतुधर्माधर्मसाधने अप्येवमित्याह हिंस्राहिंस्रेरिति । हिंस्रं-कर्मव्याघ्रादेः अहिंस्रंशशादेः मृदु दुःखाजनकंक्रूरंदुःखजनकं धर्माधर्मौ धर्माधर्मसाधने कर्मणी आत्मप्रतिकूले ऋतं-सत्यंस्वर्गादिहेतुः अनृतंमिथ्या यद्यस्य सोऽदधात् व्यदधात् कर्तव्यतया सर्गे सर्गादौ तत्तज्जातीयंसतज्जातीयःस्वय-मीश्वरेच्छांविना प्राविशत्प्राप्नोति ॥ २९ ॥

( ३ ) **कुल्लूकः** । एतदेव प्रपञ्चयति हिंस्राहिंस्रेत्यादि । हिंस्रंकर्म सिंहादेःकरिमारणादिकं अहिंस्रंहरिणादेः मृदु दयाप्रधानंविप्रादेः क्रूरंक्षत्रियादेः धर्मोयथा ब्रह्मचार्यादेःगुरुशुश्रूषादिः अधर्मोयथा तस्यैव मांसमैथुनसेवादिः । ऋतंसत्यं-तच्च प्रायेण देवानां अनृतमसत्यंतदपि प्रायेण मनुष्याणां तथा च श्रुतिः सत्यवाचोदेवाअनृतवाचोमनुष्याइति तेषां-मध्ये यत्कर्म सप्रजापतिः सर्गादौ यस्याधारयत्सृष्ट्युत्तरकालमपि सतदेव कर्म प्राक्तनादृष्टवशात्स्वयमेव भेजे ॥ २९ ॥

( ४ ) **राघवानन्दः** । तथाहिंस्रंहिंसनं अहिंस्रंतद्भिन्नंमृदु मार्दवं क्रूरंक्रौर्यं संविद्याकर्मणीसमन्वारभेते पूर्वप्रज्ञाचेति विद्याविहितादिचतुर्विधंज्ञानंपूर्वप्रज्ञा पूर्वानुभूतविषयवासनातंगमनागमनशीलिनंशमाच्चारभेते स्वफलदाने न समनुगच्छती-ति श्रुतेरर्थः । स्मृतिरपि । प्रकृतिंयान्ति भूतानि निग्रहःकिंकरिष्यतीत्यत्र प्रकृतिः पूर्वप्रज्ञास्तनपानादिसंस्कारः ॥ २९ ॥

( ५ ) **नन्दनः** । एतमेवार्थंविशदयति हिंस्रेति । हिंस्राहिंस्रे मृदु क्रूरेइतिच भावप्रधानोनिर्देशः हिंसाहिंसे मार्दवक्रौर्ये

---

( २९ ) माविशत्=माविशेत् ( ख, ञ, च, ज, झ, ढ. य )

धर्माधर्मावृतानृतेइत्येवमादिषु शुभाशुभेष्वीश्वरोयत्कर्म यस्य देहिनः सर्गे जन्मन्यदधाद्दत्तवांस्तत्सदेही स्वयमेवाविशत्कृतवान् ॥ २९ ॥

( ६ ) **रामचन्द्रः** । हिंस्रेति जन्मान्तरकर्माह प्राक्तनकर्मस्वभावमाह । सब्रह्मा यस्य पुंसःयत्स्वभावंतत्सर्गे जन्मकाले तस्य अदधात् तत्स्वभावःस्वयंहिंस्राहिंस्रेत्याविशत् । तत्र दृष्टान्तमाह ॥२९॥

**यथर्तुलिङ्गान्यृतवःस्वयमेवर्तुपर्यये ॥ स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥ ३० ॥**

( १ ) **मेधातिथिः** । अचेतनाअपियथाभावास्तन्मर्यादयैव व्यवस्थितस्वभावाःएवंचेतनाअपि पुरुषकृतकर्मसहायेन प्रजापतिना कृतांमर्यादां नातिक्रामन्ति यस्यांजातौजातास्तदेव कुर्वन्ति नान्यदिच्छन्तोऽपि शक्नुवन्ति कर्तुम् । ऋतवोवसन्तादयः स्वलिङ्गानिचिन्हानि पत्रफलकुसुमशीतोष्णवर्षादीनि । पर्यये । यस्यर्तोर्यःपर्यायः स्वकार्यावसरस्तस्मिन् सऋतुस्तंधर्मंस्वयमेव प्रतिपद्यते नपुरुषप्रयत्नमपेक्षते । चूतमञ्जर्योवसन्तेस्वयमेव पुष्यन्ति न मूले सलिलसेकमपेक्षन्ते । एवंपुरुषकर्माण्यदृष्टानि । नास्तिसपदार्थो योनकर्मापेक्षते। तथाहि। वर्षाणांस्वस्वभावोयोवृष्टिप्रदोभवतिच । राजदोषाद्राष्ट्रदोषाद्वा कदाचिदवग्रहः तस्मात्कर्मशक्तिरेवानपसार्या । वृत्तानुरोधादसकृदनुग्रहणम् । अन्ये तु श्लोकत्रयमप्यन्यथा व्याचक्षते । कर्मशक्तीनांस्वभावनियमोऽनेनोच्यतइत्याहुः । यत्फलंयस्मिन्कर्मण्याहितंप्रजापतिना सकर्मविशेषः पुनःपुनः सृज्यमानोऽनुष्ठीयमानः स्वयंतत्फलं भजते ददातीत्यर्थः । तेन यागःकृतोयदा फलिष्यति न तदाकिंचिदपेक्षत इति प्रतिपादितंभवति । सर्वोहिस्वकृतावपि मन्त्रिपुरोहितादिवाक्यमपेक्षते नैवंयागः । दृष्टस्तु व्यापारस्तेनापेक्ष्यते । दृष्टादृष्टकारणद्वयजन्यत्त्वात्सर्वस्यकार्यस्यादृष्टान्तरापेक्षानिषिध्यतेतदानीम् । कर्माणीष्टानिष्टफलप्रदानि विधिप्रतिषेधविषयाणि कर्माणि द्विशउदाहरति हिंस्राहिंस्रेइति । हिंसाप्रतिषिद्धा । तस्यानरकादिफलप्रदानंनियमितम् । योब्राह्मणायावगुरेत् योमामकायावगुरेत्तंशतेनयातयादितिवाक्यशेषेभ्यःसा ततः स्वभावान्न च्यवते। प्रायश्चित्तेषु विशेषंवक्ष्यामः। अहिंसाविहितम् । तस्यापिनैष्टफलदानात्स्वभावच्युतिरस्ति । धर्माधर्मयोरेव विशेषायते । विहितंकर्म धर्मः प्रतिषिद्धमधर्मस्तयोर्विशेषाः सत्याऽनृतादयः सत्यंविहितमनृतंप्रतिषिद्धम् । एवंसर्वाणि पूर्वोत्तरपदानि विहितप्रतिषिद्धविशेषप्रदर्शनानि। अव्यभिचरितदृष्टकार्यकारणसंबन्धीनि कर्माणि । दृष्टान्तःयथर्तुलिङ्गानीति । शेषंसमानम् ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । यथर्त्विति । ऋतुलिङ्गानि चूतकुसुमादीनि ऋतोः पूर्वर्तोःपर्ययेऽपगमे स्वयमनादिष्टाएव कर्माणि हिंस्रादीनि ॥ ३० ॥

( ३ ) **कुल्लूकः** । अत्र दृष्टान्तमाह यथर्त्विति । यथा वसन्तादिऋतवऋतुचिन्हानि चूतमञ्जर्यादीनि ऋतुपर्यये स्वकार्यावसरे स्वयमेवाप्नुवन्ति तथादेहिनोऽपि हिंस्रादीनि कर्माणि ॥ ३० ॥

( ४ ) **राघवानन्दः** । तेषामावश्यकफलारम्भकत्वे दृष्टान्तोयथेति । यथर्तुवसन्ताद्यृतुमनतिक्रम्य लिङ्गानिऋतुलिङ्गानि वासन्तशारदीयानि फलपुष्पाणिऋतवःवसन्तादयः ऋतुपर्ययेअग्रिमवसन्तादावपि यथा प्रपद्यन्ते तथा स्वस्वकर्माणि देहिनः सृष्ट्यन्तरे प्रपद्यन्तइत्यन्वयः ॥ ३० ॥

( ५ ) **नन्दनः** । तमेवार्थंदृष्टान्तेनस्थापयति यथर्त्विति । ऋतुलिङ्गानि सहकारमल्लिकाकदम्बकुसुमादीनि स्वानि स्वानि कर्माणि स्वस्य स्वस्येश्वरेण विहितानि ॥ ३० ॥

( ६ ) **रामचन्द्रः** । यथेति । ऋतवः पर्यये ऋतूनांपर्यये ऋत्वन्तेयथा अन्यर्तुलिङ्गानि स्वयमेवभवन्तिकेश्चिदनोद्यमानत्वात् तथा देहिनःप्राणिनः कर्माणि प्राक्तनानि स्वानि स्वानिअभिपद्यन्ते प्रपद्यन्ते ॥ ३० ॥

**लोकानांतु विवृद्ध्यर्थंमुखबाहूरुपादतः ॥ ब्राह्मणंक्षत्रियंवैश्यंशूद्रंच निरवर्तयत् ॥ ३१ ॥**

( १ ) **मेधातिथिः**। पृथिव्यादीनांलोकानांविवृद्ध्यर्थं वृद्धिः पुष्टिर्बाहुल्यंवाब्राह्मणादिषु चतुर्षुवर्णेषु सत्सु त्रयाणांलोकानांवृद्धिः । इतः प्रदानंदेवाउपजीवन्ति । चेतनायागाद्यधिकृताअतस्तैः कर्म कृतमुभौ लोकौ वर्धयति । पुरुषकर्मप्रचोदितादेवाः ! आदित्याज्जायते वृष्टिरिति अस्यापि लोकस्य सृष्टिर्वृद्धिः ब्राह्मणादीन्वर्णान्निरवर्तयन्निर्वर्तितवान् । असृजन्मुखबाहूरुपादतः । यथाक्रमं मुखाद्ब्राह्मणं स्वमुखावयवेभ्योदैव्या शक्त्या निर्मितवान् अद्यतनानां सर्वेषांमिथुनसंप्रयोगद्वारेण तत्त्वेभ्यउत्पत्तिदर्शनात् । परमार्थतः स्तुतिरेषावर्णानामुत्कर्षापकर्षप्रदर्शनार्थम् । सर्वेषांभूतानां प्रजापतिःश्रेष्ठस्तस्यापि सर्वेषामङ्गानांमुखंब्राह्मणोऽपि सर्वेषांवर्णानां प्रशस्यतमः । एतेन सामान्येन ब्रह्ममुखादुत्पन्नइत्युच्यतेमुखकर्माध्यापनाद्यतिशयाद्वा मुखतइत्युच्यते । क्षत्रियस्यापि बाहुकर्मयुद्धंवैश्यस्याप्यूरुकर्मपशुरूपं रक्षतोगोभिश्चरन्तिभिर्भ्रमणंस्थलपथवारिपथादिषु वाणिज्यायैगमनम् । शूद्रस्य पादकर्मशुश्रूषा ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । लोकानामिति । मुखादिना मुखेन होमादिना ब्राह्मणं क्षत्रेण रक्षयेदित्यादिक्रियाभिस्तैस्तैर्वर्णैर्लोकरक्षणसंवर्तनार्थम् ॥ ३१ ॥

( ३ ) **कुल्लूकः** । लोकानांत्विति । भूर्लोकानांबाहुल्यार्थंमुखबाहूरुपादेभ्योब्राह्मणक्षत्रियवैश्यशूद्रान्यथाक्रमंनिर्मितवान् । ब्राह्मणादिभिःसायंप्रातरग्नावाहुतिःप्रक्षिप्ता सूर्यमुपतिष्ठते सूर्याद्वृष्टिर्वृष्टेरन्नमन्नात्प्रजाबाहुल्यं । वक्ष्यति च अग्नौप्रास्ताहुतिःसम्यगादित्यमित्यादि । दैव्या च शक्त्या अथादित्योब्राह्मणादिनिर्माणम् । ब्राह्मणोन विशङ्कनीयः श्रुतिसिद्धत्वात् । तथा च श्रुतिः ब्राह्मणोऽस्य मुखमासीदित्यादि ॥ ३१ ॥

( ४ ) **राघवानन्दः** । वेदादिष्वधिकारार्थंवर्णानांजनिस्थानकृतश्रैष्ठ्यान्याह लोकानांत्विति । विवृद्ध्यर्थंस्वधर्मानुष्ठानेन विविधप्रकारवृद्ध्यर्थं निरवर्तयत् मुखादिभ्योविप्रादिचतुष्टयंजनितवान् ॥ ३१ ॥

( ५ ) **नन्दनः** । अथचातुर्वर्ण्याभिमानिनांदेवतानांसृष्टिमाह लोकानामिति । लोकानांप्रजानांविवृद्ध्यर्थंबाहुल्यार्थंनिरवर्तयत् सृष्टवान् । प्रभुरित्यनुवर्तते ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । मुखबाहूरुपादतःलोकानांविवृध्यर्थंब्राह्मणादीन्वर्णान्निरवर्तयत्प्रावर्तयत् ॥ ३१ ॥

**द्विधा कृत्वाऽऽत्मनोदेहमर्धेन पुरुषोऽभवत् ॥ अर्धेन नारी तस्यांसविराजमसृजत्प्रभुः ॥ ३२ ॥**

( १ ) **मेधातिथिः** । एषासृष्टिः साक्षात्परस्य पुरुषस्य । इयंतुब्रह्मणस्तस्यैवेत्यन्ये । यत्तदन्तरण्डंसमुद्भूतंशरीरंतद्विधाकृत्वाऽर्धेन पुरुषोऽभवत् पुमान्संपन्नः शुक्रसेकसमर्थोऽर्धेन नारीगौरीश्वरभङ्ग्याऽथवा पृथगेवतांनिर्मितवान् । तांनिर्माय तस्यांमैथुनेन धर्मेण विराडितियस्यनाम प्रसिद्धंतंजनितवान् । एतदुच्यतेप्रजापतिःस्वांदुहितरमगच्छत् । इदमपि जायापत्योः शरीरमात्रभेदात् सर्वत्रकार्येष्वविभागात् तदालम्बनंद्वैधंकारवचनम् ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । द्विधेति । एतच्च प्रजानांमनसा सृष्टिमसृजत् । स्वदेहंद्विधा कृत्वा तदर्धेन पुमान्संपन्नः । अपरार्धेन नारी लोकसृष्टिमुपदेष्टुम् ॥ ३२ ॥

( ३ ) **कुल्लूकः** । द्विधाकृत्वेति । सब्रह्मा निजदेहं द्विखण्डंकृत्वा अर्द्धेन स्त्री तस्यांमैथुनधर्मेणविराट्संज्ञंपुरुषंनिर्मितवान् । श्रुतिश्च ततोविराडजायतेति ॥ ३२ ॥

---

( १ ) अथादित्यो=मुखादिभ्यो ( अ )

( ४ ) **राघवानन्दः** । संप्रति मन्वादिद्वारामैथुनजांसृष्टिमाह द्विधेति नवभिः । आत्मनोदेहंद्विधा कृत्वा स्थिताद्स्माद्ब्रह्मणः पूर्वार्धावच्छिन्नोजगत्सृष्टिभावितान्तःकरणोजीवोमन्वाख्यः पुरुषोभवत् तादृशजीवान्तरमुत्तरार्धावच्छिन्नं शतरूपाख्या नारी बभूव तस्यांभोग्यत्वेनोपस्थितायां तद्भोक्तृत्वेनतमन्वाख्यं विराजमयूयुजत्ससृजे विविधराजमानत्वात् विराजमिति ससृजे मनुंदेवं प्रजापतिरिति वार्तिकोक्तेः । अतःश्रुतिः । सवै नैव रमेततस्मादेकाकी नरमते सद्वितीयमैच्छन् सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ सइममेवात्मानंद्वेधा यातयन्ततः पतिश्च पत्नी चाभवताम् । अतएव भागवतमपि । तस्य कायमभूद्द्वेधा यत्कायमभिचक्षते । ताभ्यांरूपविभागाभ्यांमिथुनंसमपद्यत । यस्तु तत्र पुमान्सोभून्मनुः स्वायंभुवःस्वराट् । स्त्री चासीच्छतरूपाख्या महिष्यस्य महात्मनः । ततोमैथुनधर्मेण प्रजाएधांबभूविरइति ॥ ३२ ॥

( ५ ) **नन्दनः** । अथसर्व भूतानांसृष्टिंवक्तुमुपक्रमते द्विधाकृत्वेति ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । द्विधेति । प्रभुः ब्रह्मात्मनःस्वंस्वंदेहंद्विधाकृत्वा अर्द्धेन दक्षिणाङ्गे च पुरुषःअभवत् अर्द्धेन वामाङ्गेन नारी स्त्रीअभवत् तस्यांनार्यांस पुरुषःविराजंविराट् पुरुषं स्वायंभुवसंज्ञंमनुमसृजत् उदपादयत् ॥ ३२ ॥

**तपस्तप्त्वाऽसृजद्यंतु सस्वयंपुरुषोविराट् ॥ तंमांवित्तास्य सर्वस्य स्रष्टारंद्विजसत्तमाः ॥ ३३ ॥**

( १ ) **मेधातिथिः** । सविराट्तपस्तप्त्वायंपुरुषमसृजत तंमांवित्त जानीध्वम् । एवंस्मृतिपरंपरया नात्रवः किञ्चिदविदितंमम वर्णयितव्यमस्ति । तन्मध्येशुद्धिमात्मनआचष्टे । अस्य सर्वस्य स्रष्टारमनेन सर्वशक्तिमाह । जन्मकर्मातिशयवन्तंमां प्रत्यपि तरीकरिष्यतीत्यभिप्रायः निश्चयोत्पत्त्यर्थंचान्यतोऽवगतेऽपि मनुजन्मनि स्वयमभिधानात् । यथाऽन्यतः श्रुतोऽपि कश्चित्पृच्छ्यते देवदत्तस्यत्वं पुत्रइति बाढमिति तेनोक्ते निश्चयउपजायते । अभिजनवर्णनंकवी नामत्रपाकरं सत्यामपि पारंपर्येणामस्तुतौ । द्विजसत्तमाइत्यामन्त्रणम् । सत्तमाः साधुतमाः श्रेष्ठाइति यावत् ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । तपस्तप्त्वेति । स्वयमसृजदित्यन्वयः । पुरुषःपुरुषशब्देन श्रुतौप्रसिद्धः तंमांजानीत अस्य सकलस्य परंपरया च स्रष्टारम् ॥ ३३ ॥

( ३ ) **कुल्लूकः** । तपस्तप्त्वेति । सविराट्तपोविधाय यंनिर्मितवान्तंमांमनुंजानीत । अस्य सर्वस्य जगतःस्रष्टारंभोद्विजसत्तमाः । एतेन स्वजन्मोत्कर्षसामर्थ्यातिशयावभिहितवान् लोकानांप्रत्ययितप्रत्ययार्थम् ॥ ३३ ॥

( ४ ) **राघवानन्दः** । एतद्यनक्ति तपइति । यंमनुंतमेव मांवित्तजानीत स्रष्टारंतेषांमरीच्यादीनांस्रष्टृदेहावच्छिन्नानां द्विजसत्तमाद्विजश्रेष्ठाः ॥ ३३ ॥

( ५ ) **नन्दनः** । न ब्रह्माणमपेक्षितवानित्युक्तंस्वयमिति स्त्रियमपेक्षितवानित्युक्तम् पुरुषइति ॥३३॥ ॥३४॥ ॥३५॥

( ६ ) **रामचन्द्रः** । तपइति । स पुरुषःविराट्तपस्तप्त्वायंपुरुषमसृजत् हे द्विजसत्तमाः तंमांसंवित्तजानीत । कीदृशंमांअस्य विश्वस्य स्रष्टारम् ॥ ३३ ॥

**अहंप्रजाःसिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ॥ पतीन्प्रजानामसृजंमहर्षीनादितोदश ॥ ३४ ॥**

( १ ) **मेधातिथिः** । अहमसृजमुत्पादितवान् । दशप्रजापतीन्महर्षीन् । आदितःसुदुश्चरंतपःकृत्वा सुष्टु दुःखेन तपश्चर्यतेऽतिपीडाकरंबहुकालं च । तान्महर्षीन्नामतोनिर्दिशति ॥ ३४ ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । अहमिति । प्रजाःसिसृक्षुर्मरीच्यादिद्वारा आदितःसर्गादौ ॥ ३४ ॥

( ३ ) **कुल्लूकः** । अहमिति । अहंप्रजाः स्रष्टुमिच्छन् सुदुश्चरंतपस्तप्त्वा दशप्रजापतीन् प्रथमंसृष्टवान् तैरपि प्रजानांसृज्यमानत्वात् ॥ ३४ ॥

( ४ ) **राघवानन्दः** । अहमपि तथा चक्रेइत्याह अहमिति । महर्षीन् प्रजानांपतीन्दशासृजमित्यन्वयः । आदितः आदौ ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । अहमिति प्रजाःसिसृक्षुः अहंप्रजानांपतीन्महर्षीन् आदितःप्रथमतः दशअसृजंसृष्टवान् । मरीच्यादीन्देवनिकायान् देवसमूहान् ॥ ३४ ॥

**मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ प्रचेतसं वसिष्ठंच भृगुं नारदमेव च ॥ ३५ ॥**

( २ ) **सर्वज्ञनारायणः** । मरीचिमिति दशेत्यस्य प्रपञ्चः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । मरीचिमित्यादि । तएते दश प्रजापतयोनामतोनिर्दिष्टाः ॥ ३५ ॥

( ४ ) **राघवानन्दः** । नामतस्तानेवाह मरीचिमिति । प्राचेतसंदक्षम् ॥ ३५ ॥

**एतेमनूंस्तु सप्तान्यानसृजन्भूरितेजसः ॥ देवान्देवनिकायांश्चमहर्षींश्चामितौजसः ॥३६॥**

( १ ) **मेधातिथिः** । एते महर्षयः सप्तान्यान्मनूनसृजन् । अधिकारशब्दोऽयं मनुरिति । मन्वन्तरे यस्य प्रजासर्गे तत्स्थितौ वाऽधिकारउक्तेन प्रकारेण समनुरित्युच्यते। भूरितेजस अमितौजसइतिचैकएवार्थः। एकंप्रथमान्तंस्रष्टुर्विशेषणम्। द्वितीयान्तंस्रष्टव्यानांमन्वादीनां विशेषणम् । ननु देवाब्रह्मणैव सृष्टाः । सत्यं नसर्वे अपरिमिताहिदेवसंघाताः । देवनिकायाहिदेवस्थानानि स्वर्गलोकब्रह्मलोकादीनि ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । एतइति । प्रजापतिःसर्गद्वारा परंपरया सप्तान्यान्प्रजापतीन् मनून्मनुनाम्नोऽसृजन् । सावर्णिमनुनाष्टमेन सह स्वायंभुवादन्ये स्वारोचिषादयः सप्तेत्यष्टमव्यवच्छेदार्थम् । तेनाऽन्येपि षण्मनवउपलक्ष्यन्ते । देवानिति । देवान् वस्वादीन् तेषांनिकायान् विमानानीति केचित् नितरांकायोयेषु तानि देवनिकायानि संघचारीणि विश्वादीनीत्यन्ये ॥ ३६ ॥

( ३ ) **कुल्लूकः** । एते मनूंस्त्विति । एतेमरीच्यादयोदश भूरितेजसोबहुतेजसोऽन्यान् सप्तापरिमिततेजस्कान् मनून्देवान् ब्रह्मणासृष्टान् देवनिवासस्थानानि स्वर्गादीन्महर्षींश्च सृष्टवन्तः । मनुशब्दोऽयमधिकारवाची । चतुर्दशसु मन्वन्तरेषु यस्य यत्र सर्गाद्यधिकारः सएतस्मिन्मन्वन्तरे स्वायंभुवस्वारोचिषादिनामभिर्मनुरिति व्यपदिश्यते ॥ ३६ ॥

( ४ ) **राघवानन्दः** । तेषामपि कृत्यमाह एतइति । एते मरीच्यादयो मनून्मन्वन्तराधिपान् सावर्णिप्रमृतीन्भूरितेजसः भूरीणि एकसप्ततियुगपरिमितः कालस्तत्रत्यादेवतास्तदिन्द्रोमनुपुत्राऋषयः ईश्वरावतारश्चएते षट्तेजांसि मन्वन्तरपालने सहकारीणि येषांते तथेति कर्मणोविशेषणम् । देवनिकायान् देवस्थलानि देवभृत्यान्वामहर्षीन् वामदेवादीन्॥ ३६॥

( ५ ) **नन्दनः** । ब्राह्मणश्च ब्राह्मणी च क्षत्रियश्च क्षत्रिया च वैश्यश्च च वैश्या च शूद्रश्च शूद्राचे त्यष्टौ शास्त्रेषु मानवा उच्यन्ते । एतेषुब्राह्मणामनुत्वेन मरीच्यादयोमनुनैव हि सृष्टा असृष्टा ब्राह्मणीप्रभृतयः सप्त शिष्यानेतान्ससृजुः देवान् इन्द्रा दीन् देवनिकायान् मरुद्गणादीन् ॥ ३६ ॥

**यक्षरक्षःपिशाचांश्च गन्धर्वाप्सरसोऽसुरान् ॥ नागान्सर्पान्सुपर्णांश्च पितॄणांच पृथग्गणान् ॥३७॥**

( १ ) **मेधातिथिः** । यक्षादीनांस्वरूपभेदश्चेतिहासादिप्रमाणकएव नप्रत्यक्षादीनामन्यतमेन परिच्छिद्यते । तत्रवैश्रवणानुचरायक्षाः । रक्षांसिबिभीषणादयः । तेभ्यः क्रूरतराःपिशाचाः अशुचिमरुदेशादिवासिनोनिकृष्टायक्षराक्षसेभ्यः हिंस्रास्तुसर्वएव । छद्मकरगेन केनचित्प्राणिनांजीवमाकर्षन्त्यदृष्टया शक्त्या व्याधींश्चजनयन्तीत्यैतिहासिकामन्त्रवादिन-

श्च गन्धर्वादेवानुचरागीतनृत्तप्रधानाः। अप्सरसोदेवगणिका उर्वश्याद्याः। असुरादेवशत्रवो वृत्रविरोचनहिरण्याक्षप्रभृतयः। नागावासुकितक्षकादयः। सर्पाः प्रसिद्धाः। सुपर्णाः पक्षिविशेषागरुत्मत्प्रभृतयः। पितरः सोमपाज्यपादिनामानः स्वस्थाने देववद्वर्तन्ते तेषांगणमसृजन्॥ ३७॥

( २ ) **सर्वज्ञनारायणः**। यक्षामणिभद्रादयः। रक्षांसिदैत्यजातिविशेषाः क्रव्यादाः। पिशाचाःपिशुनचेतसोदैत्यजातिभेदा अक्रव्यादादेवसत्वाः। नागानाभेरूर्ध्वंनराकाराः अधःसर्पाकृतयः। सर्पास्तदन्ये फणिधराः। सुपर्णाःगरुडादयः-पक्षिभेदाः। पितॄणांगणानग्निष्वात्तादीन्॥ ३७॥

( ३ ) **कुल्लूकः**। यक्षरक्षइति। एतेऽसृजन्निति पूर्वस्यैवात्रानुषङ्गः उत्तरत्र च श्लोकद्वये च। यक्षोवैश्रवणस्तदनुचराश्च रक्षांसि रावणादीनि पिशाचास्तेभ्योऽपकृष्टाः अशुचिमरुदेशनिवासिनः गन्धर्वाश्चित्ररथादयः अप्सरसउर्वश्यादयः असुराविरोचनादयः नागावासुक्यादयः सर्पास्ततोपकृष्टाः अलगर्दादयः सुपर्णागरुडादयः पितॄणामाज्यपादीनांगणःसमूहः। एषांच भेदइतिहासादिप्रसिद्धोनाध्यक्षादिगोचरः॥ ३७॥

( ४ ) **राघवानन्दः**। यक्षेति। यक्षावैश्रवणादयः। रक्षांसि रावणादयः। पिशाचाःपूतिनरमांसाशिनः। गन्धर्वाश्चित्ररथादयः। अप्सरसः उर्वशीप्रभृतयः। असुराः हिरण्याक्षादयस्तान्। नागान्देवाकृतिसफणान् अनन्तादीन्। सुपर्णान्-गरुडादीन्। पितॄणांपृथग्गणानग्निष्वात्तादीन्॥ ३७॥

( ५ ) **नन्दनः**। नागाःसौरसेयाः सर्पाः काद्रवेयाः। तदुक्तंमहाभारते सुरसाजनयन्नागान्कद्रूराजंस्तुपन्नगानिति॥ ३७॥

## विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च॥ उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च॥ ३८॥

( १ ) **मेधातिथिः**। मेघोदरदृश्यंमध्यमंज्योतिर्विद्युदुच्यते। यस्यास्तडित्सौदामिनीत्यादयः पर्यायाविशेषाश्रयाः। अशनिःशिलाभूताहिमकणिका सूक्ष्मदृश्यश्च वर्षधारादिवत्पतन्त्योवेगवद्वातप्रेरिताःसस्यादिविनाशिन्यउच्यन्ते। मेघाअभ्रोदकमरुज्ज्योतिःसंघाता आन्तरिक्षाः। रोहितंदण्डकारमन्तरिक्षे नीललोहितरूपंकदाचिद्दृश्यते। आदित्यमण्डललग्नंकदाचित्। कदाचित्प्रदेशान्तरेपि। तस्यैवविशेष इन्द्रधनुःवक्रत्वंधनुराकारताऽधिकास्य। उल्कासंध्याप्रदोषादौविसारिप्रभाण्युत्पातेदिक्षु पतन्ति यानि ज्योतींषि दृश्यन्ते। निर्घातःभूम्यन्तरिक्षउत्पातशब्दः। केतवउत्पातेदृश्यमानानि शिखावन्तिज्योतींषि। प्रसिद्धान्यन्यान्यपिध्रुवागस्त्यारुन्धतीप्रभृतीनि नानाप्रकाराणि॥ ३८॥

( २ ) **सर्वज्ञनारायणः**। विद्युतोविद्युदधिष्ठात्रींदेवताम्। एवमुत्तरेषु। रोहितमृज्विन्द्रधनुः। निर्घातोव्योममद्गुरः। ज्योतींषिनक्षत्रादीनि। उच्चावचानि नानाभेदानि॥ ३८॥

( ३ ) **कुल्लूकः**। विद्युतइति। मेघेषु दृश्यंदीर्घाकारं ज्योतिर्विद्युत् मेघादेव यज्ज्योतिर्वृक्षादिविनाशकंतदशनिः मेघाःप्रसिद्धाःरोहितंदण्डाकारंनानावर्णंदिवि दृश्यते यज्ज्योतिस्तदेव वक्रमिन्द्रधनुः। उल्कारेखाकारमन्तरिक्षात्पतज्ज्योतिः। निर्घातोभूम्यन्तरिक्षगतउत्पातध्वनिः। केतवःशिखावन्तिज्योतींषि उत्पातरूपाणि अन्यानि ज्योतींषि ध्रुवागस्त्यादीनि नानाप्रकाराणि॥ ३८॥

---

( १ ) र्दी=र्धा ( आ )

( ४ ) **राघवानन्दः** । किंच विद्युतइति । रोहितंनानाकारदण्डायमानं तदेवेन्द्रधनुः। निर्घातोन्तरिक्षजउत्पातध्वनिः केतवः शिखावन्ति ज्योतींषि । उच्चावचानि ग्रहनक्षत्रताराः ॥ ३८ ॥

( ५ ) **नन्दनः** । ऋजुदीर्घमिन्द्रायुधं रोहितमिन्द्रायुधंशक्रधनुस्तदेवर्जुरोहितं इत्यमरसिंहेनाभिहितम् । निर्घातः पवनाहतस्य वायोर्वेगोभूगतः । तथा च संहितायामुक्तम् पवनः पवनाभिहतो गगनादवनौयदासमापतति भवतितदा-निर्घातइति । केतवः सपुच्छनक्षत्राणि । ज्योतींषिनक्षत्राणि ॥ ३८ ॥

**किंनरान्वानरान्मत्स्यान्विविधांश्चविहङ्गमान् ॥ पशून्मृगान्मनुष्यांश्च व्यालांश्चोभयतोदतः॥३९॥**

( १ ) **मेधातिथिः** । अश्वमुखाः प्राणिनोहिमवदादिपर्वतेषु भवन्तितेकिंनराः । वानरा मर्कटमुखापुरुषविग्रहाः। विहङ्गमाः पक्षिणः । अजाविकोष्ट्रगर्दभादयः पशवः । मृगारुरुपृषतादयः । व्यालाः सिंहव्याघ्रादयः । द्वेदन्तपङ्क्तीउत्तराधरे येषांभवतस्तेउभयतोदतः ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । किंनरानिति । किंनरानराश्वमूर्तिमिश्रदेहाः। पशूनग्राम्यारण्यान् । मृगानारण्यचराण्यरण्यसदः। व्यालान्हिंस्रान्व्याघ्रादीन् । उभयतोदतःउभयोष्ठप्रान्तदंष्ट्रावतः ॥ ३९ ॥

( ३ ) **कुल्लूकः** । किंनरानिति । किन्नराअश्वमुखादेवयोनयोनरविग्रहाः । वानराःप्रसिद्धाः । मत्स्यारोहितादयः । विहङ्गमाःपक्षिणः। पशवोगवाद्याः । मृगाहरिणाद्याः। व्यालाःसिंहाद्याः । उभयतोदतःद्वे दन्तपङ्क्तीयेषांउत्तराधरेभवतः ॥३९॥

( ४ ) **राघवानन्दः** । किंच किन्नरान् अश्वमुखनराकारान् । विहङ्गमान्पक्षिणः । पशून्गवादीन् । मृगान्हरिणादीन् ग्रामारण्यभेदेनवा । व्यालान् सिंहादीन् । उभयतोदतः उभयतोदन्तपङ्क्तिर्येषांअश्वादीनांतानपि ॥ ३९ ॥

( ५ ) **नन्दनः** । आस्याधरोत्तरभागयोर्दन्तायेषांतउभयतोदतोगर्दभादयः ॥ ३९ ॥

**कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम् ॥ सर्वं च दंशमशकंस्थावरंच पृथग्विधम् ॥ ४०॥**

**[ यथाकर्म यथाकालं यथाप्रज्ञं यथाश्रुतम् ॥ यथायुगंयथादेशं यथावृत्ति* यथाक्रमम् ॥ १×॥ ]**

( १ ) **मेधातिथिः** । कृमयोऽत्यन्तसूक्ष्माः प्राणिनः । कीटास्तेभ्यईषत्स्थूलाभूमिचराः । पतङ्गाः शलभादयः । स्थावरंवृक्षपर्वतादिः । पृथग्विधंनानाप्रकारम् । क्षुद्रजन्तवइत्येकवद्भावः ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । कृमीति । कृमयोमलादिसंभवाःक्षुद्रजन्तवः । कीटायोनिजाःपिपीलिकादयः। मत्कुणउद्दंशः। स्थावरंवृक्षादि ॥ ४० ॥

( ३ ) **कुल्लूकः** । कृमिकीटेति । कीटाःकृमिभ्यःकिंचित्स्थूलाः । पतङ्गाःशलभाः । यूकादयःप्रसिद्धाः । क्षुद्रजन्तवइत्यनेनएकवद्भावः । स्थावरंवृक्षलतादिभेदेन विविधप्रकारम् ॥ ४० ॥

( ४ ) **राघवानन्दः** । किंच कृमयः अपादाः। सपादाः कीटाः। पतङ्गाःशलभादयः। मत्कुणाउद्दंशाः । दंशास्तु वनमक्षिकाः । यूकादीनामेकवद्भावः क्षुद्रजन्तुत्वज्ञापनार्थः असृजन्नित्यन्वयः ॥ ४० ॥

( ५ ) **नन्दनः** । पतङ्गान् शलभान्ससृजुरित्यनुवर्तते ॥ ४० ॥

---

× ( क, ख, ञ )

* यथावृत्ति=यथोत्पत्ति ( ख )

**एवमेतैरिदंसर्वंमन्नियोगान्महात्मभिः ॥ यथाकर्म तपोयोगात्सृष्टंस्थावरजङ्गमम् ॥ ४१ ॥**

( १ ) **मेधातिथिः**। एवमितिप्रक्रान्तप्रकारप्रत्ययपरामर्शः। एतैर्महात्मभिर्मरीच्यादिभिः। इदंसर्वंस्थावरजंगमंसृष्टम्। यथाकर्म यस्यजन्मान्तरे यादृशंकर्म तदपेक्षं। यस्यांजातौ यस्य तु युक्तमुत्पत्तुंकर्मवशात्सतस्यामेवोत्पादितः। मन्नियोगान्मदाज्ञया। तपोयोगान्महत्कृत्वा तपः। यावत्किंचिन्महदैश्वर्यंतत्सर्वंतपसा प्राप्यमित्येतदनेनाह ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः**। एवमिति। मन्नियोगात्मज्ज्ञानोपदेशात् आत्मनस्तपोयोगात् यथाकर्मयादृगुत्पाद्यानां कर्म तदनुरूपेण ॥ ४१ ॥

( ३ ) **कुल्लूकः**। एवमेतैरिति। एवमित्युक्तप्रकारेण एतैर्मरीच्यादिभिरिदंसर्वंस्थावरजङ्गमंसृष्टम्। यथाकर्म यस्य जन्तोर्यादृशंकर्म तदनुरूपंतस्य देवमनुष्यतिर्यगादियोनिषूत्पादनंमन्नियोगात्मदाज्ञया तपोयोगान्महत्तपःकृत्वा सर्वमैश्वर्यंतपोऽधीनमिति दर्शितम् ॥ ४१ ॥

( ४ ) **राघवानन्दः**। जङ्गमसृष्टिमुपसंहरन् स्थावरसृष्टिं ब्रुवाणोजरायुजस्वेदजान् प्रतियोगितया भिनत्ति एवमिति दशभिः। स्थावरजङ्गमं जङ्गमवत्स्थावरमपि सृष्टमित्यर्थः। आज्ञागुरूणांह्यवधारणीयेति मानयन्नाह मन्नियोगादिति। ममनोर्नियोगादाज्ञातः। मरीच्यादिमहात्मभिरित्यनेन महतामप्यकार्यकारित्वंयत्स्थावरादिसृष्टिः॥ ४१ ॥

( ५ ) **नन्दनः**। यथाकर्म सृज्यमानप्राणिकृतकर्मानुरूपम्। तपोयोगात्ज्ञानयोगेन सृज्यमानदैहिककर्माणि ज्ञानचक्षुषा दृष्ट्वेत्यर्थः ॥ ४१ ॥

( ६ ) **रामचन्द्रः**। एवमिति। एवंमन्नियोगात् एतैर्ऋषिभिर्मरीच्यादिभिः तपोयोगात् स्थावरजङ्गमंसृष्टं यथाक्रमंपूर्वसृष्ट्यादिक्रमेण ॥ ४१ ॥

**येषांतु यादृशंकर्म भूतानामिहकीर्तितम् ॥ तत्तथा वोऽभिधास्यामि क्रमयोगंच जन्मनि ॥४२ ॥**

( १ ) **मेधातिथिः**। येषांभूतानांयादृशंकर्म स्वभावतोहिंस्रमहिंस्रंवा तद्वत्तथैवकीर्तितम्। इदानींजन्मक्रमयोगमभिधास्यामि। क्व पुनः कर्म कीर्तितं यत्रेदंयक्षरक्षइत्यादि नामनिर्देशो न कर्मनिर्देशः। उच्यते नामनिर्देशादेव कर्मावगतिः कर्मनिमित्तत्वादेषांनामप्रतिलम्भस्य। तथाहि यक्षणाद्भक्षणाद्वा यक्षाः। रहसिक्षणनाद्रक्षांसि। पिशिताशनात्पिशाचाः। अद्भ्यः सृताइत्यप्सरसः। अमृताख्यायाःसुरायाअलाभादसुरा इत्याद्यप्यूह्यम्। जन्मनि क्रमयोगोजरायुजाण्डजाइत्यादिवक्ष्यते ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः**। येषांत्विति। यज्जातीयस्य यदध्यापनादि कर्म कीर्तितंविक्षिप्तंतदिहाभिधास्यामि। तथा जन्मनि क्रमयोगंयेन क्रमेण यज्जायते येन च जराय्वादिना युक्तंयज्जायते तच्चाभिधास्यामि ॥ ४२ ॥

( ३ ) **कुल्लूकः**। येषामित्यादि। येषांपुनर्यादृशंकर्म इहसंसारे पूर्वाचार्यैःकथितं यथौषध्यःफलपाकान्ताबहुपुष्पफलोपगाः ब्राह्मणादीनांचाध्ययनादि कर्म तत्तथैव वोयुष्माकंवक्ष्यामि जन्मादिक्रमयोगंच ॥ ४२ ॥

( ४ ) **राघवानन्दः**। येषांप्राणिनांजन्मनिमित्तंयादृशंकर्म स्थावराणांकायिकंनिषिद्धाचरणं पक्ष्यादीनांवाचनिकं देवादीनांकायादिजंपुण्यंमनुष्यादीनांउभयमिति इहमनुना कीर्तितंयत्तदभिधास्यामीत्यन्वयः। क्रमयोगंच ब्राह्मणादिक्रमेण ॥ ४२ ॥

---

( ४१ ) मन्नियोगात्=सन्नियोगात् ( क, च )  ( ४२ ) येषां=तेषां ( ख )

( ५ ) **नन्दनः** । अथ वृत्तमर्थंवर्तिष्यमाणं च विवेचयति येषामिति । येषांभूतानांयादशानांयत्प्रकारंपूर्वकृतंकर्म तेषां-तत्प्रकारंफलमिहसृष्टौभवतीतिवःकीर्तितम् । इदानींजन्मनि क्रमयोगंत्वभिधास्यामि जन्मतारतम्यं च क्रमहेतुकमभि-धास्यामीत्यर्थः । तच्च तारतम्यंपशवइत्यादिनाश्लोकषट्केणवक्ष्यमाणजरायुजाण्डजस्वेदजोद्भिज्जलक्षणमित्यनुसंधात-व्यम् ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । येषामिति । येषांभूतानां चतुर्विधानांयादृशंकर्मेहकीर्तितं तथातत्कर्म वः युष्माकं अभिधा-स्यामि । च पुनः जन्मनि क्रमयोगंक्रमानुसारेण कथयिष्यामि ॥ ४२ ॥

**पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ॥ रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥४३॥**

( १ ) **मेधातिथिः** । एते जरायुजाःजरायुरुल्बंगर्भशय्या तत्रप्रथमंतेसंभवन्ति ततोमुक्ताजायन्ते । एषएतेषांजन्म-क्रमः । दन्तशब्दसमानार्थोदत्शब्दोऽन्योस्तीत्युभयतोदतइति प्रथमाबहुवचने रूपंयुज्यते ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । तत्र लघुत्वादादौ जन्मक्रममाह पशवश्चेति । एते जरायुजाजरायुसहिताजायन्ते॥४३॥

( ३ ) **कुल्लूकः** । पशवश्चेति । जरायुर्गर्भावरणचर्म तत्र मनुष्यादयःप्रादुर्भवन्ति पश्चान्मुक्ताजायन्ते । एषामेव जन्म-क्रमःप्रागुक्तोविवृतः । दन्तशब्दसमानार्थोदच्छब्दःप्रकृत्यन्तरमस्ति तस्येदंप्रथमाबहुवचनेरूपंउभयतोदतइति ॥ ४३ ॥

( ४ ) **राघवानन्दः** । किंच पशवश्चेति । जरायुरुल्बंगर्भपरिवेष्टनत्वक्ततोजाताः पशवइत्याद्यनुवादोजरायुज-त्वंविधेयम् ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । पशवइति । पश्वादिमनुष्यान्ताः जरायुजाः स्मृताः ॥ ४३ ॥

**अण्डजाःपक्षिणःसर्पानक्रामत्स्याश्चकच्छपाः॥यानिचैवंप्रकाराणि स्थलजान्यौदकानिच॥४४॥**

( १ ) **मेधातिथिः** । नक्राः शिशुमारादयः । कच्छपः कूर्मः । यानिचैवंप्रकाराणि कृकलासादीनि स्थलजानि । एवंरू-पाण्यौदकानि जलजानि शङ्खादीनि ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । अण्डजाइति । एवंप्रकाराणि स्थलजानि नकुलादीनि । औदकानि मण्डूकादीनि । एता-न्यण्डयुक्तानि जायन्तइत्यर्थः ॥ ४४ ॥

( ३ ) **कुल्लूकः** । अण्डजाःपक्षिणइति । अण्डआदौ सम्भवन्ति ततोजायन्तइतिएषांजन्मक्रमः । नक्रःकुंभीरः । स्थल-जानि कृकलासादीनि । औदकानिशङ्खादीनि ॥ ४४ ॥

( ४ ) **राघवानन्दः** । एवंपक्षिणइत्याद्यनुवादोऽण्डजत्वंविधेयम् । एवंमशकाद्यनुवादःस्वेदजत्वंविधेयम् । औदजा-निउदकजातानि ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । अण्डजाइति । अण्डजाः पक्षिणः । औदकानि जलजातान्यनन्तानि । अण्डजास्मृताः द्विविधाः-स्थलजाउदकजाः ॥ ४४ ॥

**स्वेदजंदंशमशकंयूकामक्षिकमत्कुणम् ॥ ऊष्मणश्चोपजायते यच्चान्यत्किंचिदीदृशम् ॥ ४५ ॥**

( १ ) **मेधातिथिः** । स्वेदः पार्थिवानांद्रव्याणामग्न्यादित्यादितापसंबन्धादन्तःक्लेदस्ततोजायतेदंशमशकादि । अन्यद-पियदीदृशमत्यन्तसूक्ष्मंपुत्तिकापिपीलिकादि यदूष्मणउपजायते । ऊष्मास्वेदएव तद्धेतुर्वातापःउपजायन्तेतिवा पाठोयेचान्ये केचिदीदृशाइति पठितव्यम् ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । स्वेदजमिति । स्वेदस्तेजसोष्णाजलावयवाः । ऊष्मणा ये जायन्ते कृमयः । यच्चान्यदण्डजादिजातौ । ईदृशंवृश्चिकाद्यपि ॥ ४५ ॥

( ३ ) **कुल्लूकः** । स्वेदजमिति । स्वेदःपार्थिवद्रव्याणांतापेन क्लेदः ततोदंशमशकादिर्जायते । ऊष्मणश्च स्वेदहेतुतापादपिअन्यत्दंशादिसदृशंपुत्तिकापिपीलिकादि जायते ॥ ४५ ॥

( ४ ) **राघवानन्दः** । एवंमशकाद्यनुवादः स्वेदजत्वंविधेयम् । ऊष्मणःस्वेदहेतुतापात् । ईदृशंयूकादितुल्यम् ॥ ४५॥

( ६ ) **रामचन्द्रः** । स्वेदजमिति । ऊष्मणः सकाशात्स्वेदजंदंशादिमत्कुणान्तमुपजायते यच्चान्यत्किञ्चित् ईदृशं स्वेदजंस्मृतम् ॥ ४५ ॥

**उद्भिज्जाःस्थावराःसर्वे बीजकाण्डप्ररोहिणः ॥ ओषध्यःफलपाकान्ताबहुपुष्पफलोपगाः ॥४६॥**

( १ ) **मेधातिथिः** । उद्भेदनमुद्भित्भावेक्विप् । ततोजायन्तइतिउद्भिज्जाः । उपरंबीजंभूमिंच भित्त्वा विदार्यजायन्ते वृक्षाः । सर्वे बीजात्काण्डाच्चप्ररोहन्ति जायन्ते मूलस्कन्धादिनादृढीभवन्ति । तथौषध्यः ओषधयइतियुक्तमीकारःकृदिकारादिति छान्दसोवा । इदंतासांस्वाभाविकंकर्म पाकान्ताः फलपाकः अन्तो नाशआसामिति । पक्वे फले व्रीह्यादयो नश्यन्ति बहुना च पुष्पफलेनोपगताः युक्ताभवन्ति । ओषधीनांवृक्षाणांचयथासंभवमेतद्विशेषणम् ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । उद्भिज्जाइति । भुवमुद्भिद्यजायन्त इत्युद्भिज्जाः स्थावराइत्यस्य प्रपञ्चः । बीजकाण्डेत्यादि । बीजप्ररोहिणो ये बीजाज्जायन्ते काण्डप्ररोहिणोये शाखायारोपिताजायन्ते । फलस्य पाकएवान्तो नाशकोयासांता ओषध्योपि बहुपुष्पफलाउद्भिज्जाइत्यर्थः ॥४६ ॥

( ३ ) **कुल्लूकः** । उद्भिज्जाइति । उद्भेदनमुद्भित् भावे क्विप् ततोजायन्तेऊर्ध्वंबीजंभूमिंच भित्त्वेत्युद्भिज्जावृक्षाः ते च द्विविधाःकेचिद्बीजादेव जायन्ते केचित्काण्डात्शाखाएव रोपितावृक्षतांयान्ति । इदानींयेषांयादृशंकर्म तदुच्यते ओषध्यइति । ओषध्योव्रीहियवादयःफलपाकेनैव नश्यन्ति बहुपुष्पफलयुक्ताश्चभवन्ति । ओषधिशब्दादेवकृदिकारादक्तिन इति ङीपादीर्घत्वेओषध्यइति रूपम् ॥ ४६ ॥

( ४ ) **राघवानन्दः** । उद्भिज्जाः ऊर्ध्वंभिनत्तीतिउद्भित् तज्जनित्वंविधेयं तत्रापि बीजमुद्भिद्य जातास्तरवः भूमिमुद्भिद्य जातास्तृणवृक्षादयः बीजकाण्डप्ररोहिणः प्ररोहोऽङ्कुरः बीजप्ररोहिणोवटाश्वत्थादयः काण्डाच्छिन्ना अच्छिन्नावा शाखास्तेभ्यःजाताः इक्षुगुडूच्यादयः बदर्यादयश्च बहूनि पुष्पाणि फलानि च यासां ब्राह्म्यादिजातीनाम् ॥ ४६ ॥

( ५ ) **नन्दनः** । बीजप्ररोहिणआम्रादयः । काण्डप्ररोहिणःकेतक्यादयः । फलपाकान्ताः कदल्यादयः । बहुपुष्पफलोपगानिष्पावकादयः ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । सर्वेस्थावरा वृक्षजातयः उद्भिज्जाःउद्भिज्जातीयाः एकानि बीजानि जातानि एकानि काण्डरुहाणि वल्ल्यादीनि वटरुहाणि यथा छेदनजातानि लताप्रतानिनीवीरुदित्यमरः ॥ ४६ ॥

**अपुष्पाःफलवन्तोये ते वनस्पतयःस्मृताः ॥ पुष्पिणःफलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७ ॥**

( १ ) **मेधातिथिः** । विना पुष्पेण फलंजायते येषांते वनस्पतयःकथ्यन्ते न वृक्षाः । पुष्पिणःफलिनश्च वृक्षाउभययोगात्क्वचिद्वनस्पतयोवृक्षाअपिउच्यन्ते वृक्षाश्चवनस्पतयोऽपि । तत्र विशेषहेतुत्वंदर्शयिष्यामः । वयंतुब्रूमः । नायंशब्दा-

( ४६ ) स्थावराः=तरवः ( ग, घ, च, अ, ज, झ, ढ )

र्थसंबन्धविधिर्व्याकरणस्मृतिवत् । तेननायमर्थोयएवंस्वभावास्तेवनस्पत्यादिशब्दवाच्याः । किंतर्हि पुष्पफलानांजन्मोच्यते । तस्य वक्तव्यतयां प्रकृतत्वात्क्रमयोगंतु जन्मनीति द्विधा फलानामुत्पत्तिःअन्तरेणपुष्पाणिजायन्ते पुष्पेभ्यश्च एवंपुष्पाणि वृक्षेभ्यश्च । तेन यद्यप्येवमभिधानंये फलिनस्तेवनस्पतयोज्ञेयास्तथापि प्रकरणसामर्थ्याद्यत्तदोर्व्यत्ययःकर्तव्यः ये वनस्पतयइति एवंप्रसिद्धास्तेऽपुष्पाः फलवन्तस्तेभ्यः पुष्पमन्तरेण फलानिजायन्तेइतिसामर्थ्याच्चायंक्रमोऽवतिष्ठते । यथावाससास्तम्भंपरिवेष्टयेति वाससिपरिधातव्येऽयमर्थोऽस्य भवति स्तम्भेनिधाय वासः परिधापयेति । प्रसिद्धमप्येतदनूद्यते तमसा बहुरूपेणेत्येतत्प्रतिपादयितुम् ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । अपुष्पाइति । ते वनस्पतयउद्भिज्जाःस्मृताः । उभयतः उभयेन पुष्पफलाभ्याम् ॥ ४७ ॥

( ३ ) **कुल्लूकः** । अपुष्पाइति । नास्य श्लोकस्याभिधानकोषवत्संज्ञासंज्ञिसंबंधिपरत्वमप्रकृतत्वात् । किंतु क्रमयोगंच जन्मनीति प्रकृतंतदर्थमिदमुच्यते । ये वनस्पतयस्तेषांपुष्पमन्तरेणैव फलजन्म इतरेभ्यस्तु पुष्पाणि जायन्ते तेभ्यःफलानीति एवंवृक्षाउभयरूपाः । प्रथमान्तात्तसिः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । अपुष्पाः पुष्पंविनैव फलवन्तोये ते वनस्पतयः पुष्पिनःपुष्पपूर्वकाःफलिनः तेउभयेपि वृक्षाः ॥ ४७ ॥

( ५ ) **नन्दनः** । अपुष्पाइति । पुष्पैर्विनाफलवंन्तउदुम्बरादयोवनस्पतयः पुष्पिणः फलिनश्चूतपनसादयः फलिनः फलग्राहिण उभयत उभयथेत्यर्थः । उभयथेतिसाधुः पाठः ॥ ४७ ॥

**गुच्छगुल्मंतु विविधंतथैव तृणजातयः ॥ बीजकाण्डरुहाण्येव प्रतानावल्ल्यएव च ॥ ४८ ॥**

( १ ) **मेधातिथिः** । याःसंहताभूमेर्बद्धाएकमूलाअनेकमूलाश्चलताउत्तिष्ठन्ति नच वृद्धिमहतींप्राप्नुवन्ति तासांसंघातो गुच्छगुल्मशब्दवाच्यः । तृणमूलकादिस्तयोस्तुभेदः । पुष्पवदपुष्पकृतोवान्यावा तृणजातयः कुशशाद्वलशङ्खपुष्पीप्रभृतयः । प्रतानादीर्घाभूमिगतास्तृणप्ररोहाः । वल्ल्योत्रतत्यः भूमेरुत्पत्य वृक्षमन्यंवा कंचित्परिवेष्ट्योर्ध्वमारुहन्ति । सर्वमेतत्वृक्षवत्बीजकाण्डरुहम् ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । गुच्छेति । गुच्छोमल्लिकादिः । गुल्मोवंशादिः । प्रतानाश्चैव वल्ल्यश्च वीरुधःपरिकीर्तिताः इत्युत्तरार्धपाठः । वीरुधःकीर्तिताश्चोद्भिज्जाइत्यर्थः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । गुच्छगुल्मंत्विति । मूलतएव यत्र लतासमूहोभवति न च प्रकाण्डानि ते गुच्छामल्लिकादयः । गुल्माएकमूलाःसंघातजाताःशरेक्षुप्रभृतयः तृणजातयःउलपाद्याः । प्रतानास्तन्तुयुक्तास्त्रपुषालाबूप्रभृतयः वल्ल्योगुडूच्यादयः याभूमेर्वृक्षमारोहन्ति एतान्यपिबीजकाण्डरुहाणि । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकत्वम् ॥ ४८ ॥

( ४ ) **राघवानन्दः** । गुच्छाः पृथक्जनिपूर्वकं मिलितामल्लिकाद्याः गुल्माएकमूलाःशरादयः प्रतानाःकूश्माण्डालाबुप्रभृतयः सांकुशाःवल्ल्योवासन्त्यादयः एतान्यपि बीजकाण्डरुहाणीत्यनुवादः ॥ ४८ ॥

( ५ ) **नन्दनः** । गुच्छगुल्मं स्तबकवद्गुल्मंशेफालिकादि । प्रतानामल्लिकादयः । वल्ल्यः कारवल्ल्यादयः ॥ ४८ ॥

---

( ४८ ) रुहाण्येव=रुहश्चैव ( ग, च )

**तमसा बहुरूपेण वेष्टिताःकर्महेतुना ॥ अन्तःसंज्ञाभवन्त्येते सुखदुःखसमन्विताः ॥ ४९ ॥**

( १ ) **मेधातिथिः** । कर्मअधर्माख्यंहेतुर्यस्य तमसस्तेन वेष्टिताव्याप्ताः । बहुरूपेण विचित्रदुःखानुभवनिमित्तेन । यद्यपि सर्वेत्रिगुणं तथाप्येषांतमउद्रिक्तमपचिते सत्त्वरजसी अतस्तमोबाहुल्यान्नित्यंनिर्वेददुःखादियुक्ताअधर्मफलमनुभवन्तः सुचिरंमासते । सत्त्वस्यापि तत्र भावात् कस्यांचिदवस्थायांसुखलेशमपि भुञ्जते । तदाह सुखदुःखसमन्विताइति अन्तः संज्ञाबुद्धिस्तल्लिङ्गस्य बहिर्विहारव्याहारादेः कार्यस्य चेष्टारूपस्याभावादन्तःसंज्ञाउच्यन्ते । अन्यथान्तरेवसर्वः पुरुषश्चेतयते । अथवा यथा मनुष्याः कण्टकादितोदंप्राक्चेतयन्तेनैवंस्थावराः तेहि महान्तंप्रतोदंपरशुविदारणादिदुःखसंज्ञामपेक्षन्ते यथा स्वापमदमूर्च्छावस्थागताः प्राणिनः ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । तमसेति । तमसा गुणेन बहुरूपेण नानाविधेनाल्पबहुत्वादिना कर्महेतुना अधर्मसंभवेन वेष्टिताव्याप्ताः अन्तः संज्ञामानसज्ञानमात्रवन्तः । तदेवोक्तंसुखेनेति । उपलक्षणंज्ञानादेरप्येतत् ॥ ४९ ॥

( ३ ) **कुल्लूकः** । तमसेति । एते वृक्षादयस्तमोगुणेन विचित्रदुःखफलेनाधर्मकर्महेतुकेन व्याप्ताःअन्तश्चैतन्याभवन्ति । यद्यपि सर्वे चान्तरेव चेतयन्ते तथापि बहिर्व्यापारादिकार्यविरहात्तथा व्यपदिश्यन्ते । त्रिगुणारब्धत्वेपि चैषांतमोगुणबाहुल्यात्तथा व्यपदेशः । अतएव सुखदुःखसमन्विताः । सत्त्वस्यापि भावात् कदाचित्सुखलेशोपि जलधरजनितजलसम्पर्कादेषांजायते ॥ ४९ ॥

( ४ ) **राघवानन्दः** । स्थाणुमन्ये प्रपद्यन्ते शरीरत्वाय देहिनइति श्रुतिमाश्रित्याह तमसेति । कर्महेतुना कायिकनिषिद्धाचरणजेनहेतुना शरीरजैः कर्मदोषैःयाति स्थावरतांनर इति वक्ष्यमाणत्वात् । अतोबहुरूपेण स्थावरसृष्टीनामनन्तत्वात् अन्तःसंज्ञाः पेपीयमानस्तिष्ठतीति श्रुतेः तस्मात्पश्यन्ति पादपाइति स्मृतेश्च । एतदन्ताः स्थावरान्ताःगतयइति गतिःफलोपभोगार्थंगमनम् तयाउत्पत्तिरपि लक्षिता ॥ ४९ ॥

( ५ ) **नन्दनः** । स्थावराणांचैतन्योपलम्भात्कर्मफलानुभवःकथमित्याशङ्क्य परिहरति तमसेति । एते स्थावरादयः ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । तमसेति । कर्महेतुनाबहुरूपेणएतेउद्भिज्जाः अन्तःसंज्ञाःसुखदुःखसमन्विताः भवन्ति मोक्षधर्मेप्युक्तंशीतोष्णग्राहिणःभवन्ति ॥ ४९ ॥

**एतदन्तास्तु गतयोब्रह्माद्याःसमुदाहृताः ॥ घोरेऽस्मिन्भूतसंसारे नित्यंसततयायिनि ॥ ५० ॥**

( १ ) **मेधातिथिः** । एषोऽन्तोऽवसानंवल्लीगतिर्यासांगतीनांताएतदन्ताः । कृतकर्मफलोपभोगार्थमात्मनस्तच्छरीरसंबन्धोगतिरुच्यते । अस्याः स्थावरात्मिकायागतेरन्या निकृष्टा दुःखबहुला गतिर्नास्ति । ब्रह्मगतेश्चान्याऽऽद्योत्तमागतिरानन्दरूपा नास्ति । एतागतयः शुभाशुभैः कर्मभिर्धर्माधर्माख्यैः प्राप्यन्ते । परब्रह्मावाप्तिस्तु मोक्षलक्षणा केवलानन्दरूपा ज्ञानात् ज्ञानकर्मसमुच्चयाद्वेति वक्ष्यामः । भूतसंसारे भूतानांक्षेत्रज्ञानांसंसारे जन्ममरणप्रबन्धे जात्यन्तरागमने । घोरेप्रमादालस्यवतांभीषणे । इष्टवियोगानिष्टयोगोत्पत्त्या सततंसर्वकालंगमनशालिनि विनाशिन्यसारेऽपि नित्यंघोरे

---

( ४९ ) अन्तःसंज्ञा=अतःसंज्ञा ( क )
=अन्तसंज्ञा ( ञ, ज, झ, ढ )
सुखदुःख=फलपुष्प ( भ, न )

न कदाचिदघोरे। देवादिगतिष्वपिसुचिरंस्थित्वा मर्तव्यमिति नित्यंघोरः। तदनेन धर्माधर्मनिमित्तत्वसंवर्णनेन संसारस्य शास्त्रस्य महाप्रयोजनता प्रतिपादिता भवति। शास्त्रादि धर्माधर्मयोर्विवेकज्ञानमित्यध्येतव्यम् ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः**। एतदन्ताइति। स्थावरान्ताब्रह्माद्यागतयोविधाभवन्त्यस्मिन् भूतानांप्राणिनांसंसारे नित्ये अविच्छिन्नप्रवाहे सततयायिनि सर्वदा नाशशीले। नित्यमिति पाठे नित्यंघोरइत्यन्वयः ॥५०॥

( ३ ) **कुल्लूकः**। एतदन्ताइति। स्थावरपर्यन्ताब्रह्मोपक्रमागतयउत्पत्तयःकथिताः भूतानांक्षेत्रज्ञानांजन्ममरणप्रबन्धे दुःखबहुलतया भीषणे सदाविनश्वरे ॥ ५० ॥

( ४ ) **राघवानन्दः**। भूतसंसारेभूतः क्षेत्रज्ञःतस्य संसारे प्रवाहरूपेण नित्यंसततयायिनि अनुवर्तमानं सततं सान्तत्यंअनवच्छिन्नमिति यावत् जायस्व म्रियस्वेत्यनुपरमश्रवणात् ॥ ५० ॥

( ५ ) **नन्दनः**। सृष्टिमुपसंहरति एतदिति। गतयस्तत्तत्कर्मफलानुरूपदेहप्राप्तयः। एतदन्ताःस्थावरान्ताः ॥ ५० ॥

( ६ ) **रामचन्द्रः**। एतदिति। अस्मिन्भूतसंसारे ब्रह्माद्यागतयःएतदन्ताःस्थावरान्ताः पापपुण्यानांगतयःब्रह्मादिस्तम्बपर्यन्ताउदाहृताः। कीदृशेऽस्मिन्घोरे। पुनःकीदृशे नित्यंसततयायिनि गच्छति अनित्यत्वात् ॥ ५० ॥

**एवंसर्वंससृष्ट्वेदंमांचाचिन्त्यपराक्रमः ॥ आत्मन्यन्तर्दधे भूयः कालंकालेन पीडयन् ॥ ५१ ॥**

( १ ) **मेधातिथिः**। एवंकिंचित्साक्षात्किंचित्प्रजापतिनियोगेन सभगवान् सर्वमिदंजगत्सृष्ट्वोत्पाद्यमांच जगत्स्थितौ नियोज्य स्वेऽन्तरेऽचिन्त्यआश्चर्यरूपोमहान् प्रभावः पराक्रमः सर्वविषयाशक्तिर्यस्य ससृष्ट्वाऽन्तर्दधेऽन्तर्धानंकृतवानिच्छागृहीतंशरीरंयोगशक्त्योज्झित्वा पुनरप्रकाशःसंवृत्तः। आत्मनीति। यथाऽन्येभावाः प्रकृतावन्तर्धीयन्त एवंसोऽन्यत्रेत्येवं न। किंतर्ह्यात्मन्येव प्रलीनः नहितस्यान्याप्रकृतिरस्ति यत्रान्तर्धीयेत सर्वभूतानांतत्प्रकृतित्वात्। जगत्सर्वव्यापारान्निवृत्तिर्वाऽन्तर्धानम्। भूयः कालंकालेन पीडयन् सृष्ट्वेत्येतत्क्रियापेक्षः शतार्द्धष्टव्यः प्रलयकालंसर्गस्थितिकालेन विनाशयन्। भूयः पुनरित्यर्थः। वक्ष्यत्यनन्ताः सर्गसंहाराइति ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः**। एवमिति। सोचिन्त्यपराक्रमः प्रलयकाल आत्मन्यन्तर्दधे अन्तर्हितान्यकरोत्। भूयः पुनःपुनः। कालंसृष्टिकालं प्रलयकालेन पीडयन् ॥ ५१ ॥

( ३ ) **कुल्लूकः**। इत्थंसर्गमभिधाय प्रलयदशामाह एवंसर्वमिति। एवंउक्तप्रकारेण इदंसर्वंस्थावरजङ्गमंजगत्सृष्ट्वा सप्रजापतिरचिन्त्यशक्तिरात्मनि शरीरत्यागरूपअन्तर्धानंकृतवान्। सृष्टिकालंप्रलयकालेन नाशयन्प्राणिनांकर्मवशेन पुनःपुनःसर्गप्रलयान्करोतीत्यर्थः ॥ ५१ ॥

( ४ ) **राघवानन्दः**। तस्य लयसृष्टीस्वापप्रबोधत्वेन निरूपयति एवमिति द्वाभ्याम्। मांचसृष्ट्वेत्यनुषज्यते। आत्मनिहिरण्यगर्भे अन्तर्दधे तिरोहितोभूत्। भूयइति। प्रवाहानादित्वसूचनार्थम्। कालंसर्गकालंकालेन चतुर्युगसहस्रान्तब्राह्मसंज्ञकेन प्रलयकालेन पीडयन्निरोधयन् ॥ ५१ ॥

( ५ ) **नन्दनः**। एवंतावन्महदादिहिरण्यगर्भपर्यन्तायाः सृष्टेर्भगवत्कर्तृत्वंचराचरसृष्टेर्हिरण्यगर्भकर्तृत्वंचोक्तम्। इदानींहिरण्यगर्भमन्वादयश्चराचरसृष्टेरपि निमित्तमात्रमेव नसाक्षात्स्रष्टारः साक्षात्स्रष्टा तु सभगवान्नान्यः तच्चनकस्यचिद्दर्शयतीत्याह एवमिति अचिन्त्यपराक्रमोऽप्रमेयशक्तिः। सइति परमप्रकृतस्य भगवतः परामर्शोन तु तत्सृष्टस्य हिरण्यगर्भस्य अचिन्त्यपराक्रमइतिविशेषणेन। योऽसावतीन्द्रियग्राह्यःसूक्ष्मोव्यक्तःसनातनः सर्वभूतमयोऽचिन्त्यइत्यचिन्त्यशब्देन भगवतएव प्रत्यभिज्ञाप्यमानत्वात्। सएव स्रष्टा कालं कालेन प्राणिनांकर्मानुरूपंसुखकालंदुःखकालेन दुःखकालं-

सुखकालेन च पीडयन्भूयोभूयस्तिरस्कुर्वन्नात्मनि स्वस्मिन्नन्तर्दधेस्वरूपंन कस्यचिद्दर्शितवानित्यर्थः ॥ ५१ ॥

( ६ ) **रामचन्द्रः** एवमिति । सईश्वरः इदंविश्वंसर्वेएवंसृष्ट्वा मांच सृष्ट्वा आत्मनि भूयः अन्तर्दधे । किंकुर्वन् कालंपूर्वकालं कालेनोत्तरकालेन प्रयाणकालेन पीडयन् ॥ ५१ ॥

**यदा सदेवोजागर्ति तदेदंचेष्टते जगत् ॥ यदा स्वपिति शान्तात्मा तदा सर्वनिमीलति ॥ ५२ ॥**

( १ ) **मेधातिथिः** । सदेवोयदा जागर्ति यदेतदिच्छतीदंजगदुत्पद्यतामेतांस्थितिंच कालमियन्तंलभतामिति तदा चेष्टते । मानसवाचिकभौतिकैर्व्यापारैरान्तरैर्बाह्यैश्च श्वासप्रश्वासाहारविहारकृषियागादिभिर्युक्तंभवति । यदा स्वपिति यदानिवृत्तेच्छोभवति जगत्सर्गस्थितिभ्यांतदा सर्वनिमीलति प्रलयंप्राप्नोति । जागर्यास्वापश्च प्रजापतेरिच्छा प्रवृत्तिनिवृत्ती उच्येते । शान्तात्मत्वंभेदावस्थोपसंहारः ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । तत्प्रपञ्चयति यदेति । जागर्ति सृष्ट्यर्थंचेष्टते स्वपिति ततोविरमति शान्तात्मानिवृत्त प्रयत्नः ॥ ५२ ॥

( ३ ) **कुल्लूकः** । अत्रहेतुमाह यदेति । यदा सप्रजापतिर्जागर्ति सृष्टिस्थितीइच्छति तदेदंजगच्छ्वासप्रश्वासाहारादिचेष्टांलभते । यदा स्वपिति निवृत्तेच्छोभवति शान्तात्माउपसंहारमनाः तदेदंजगत्प्रलीयते ॥ ५२ ॥

( ४ ) **राघवानन्दः** । देवोद्योतनात्मकः जागर्ति स्थूलाकाशाद्याकारेण च विवर्तते चेष्टते कर्मकरोति यदा स्वपिति निमीलति न चेष्टते ॥ ५२ ॥

( ५ ) **नन्दनः** । अथस्थितिप्रलयकालावाह यदेति । यथा सभगवाञ्जागर्तिदेवत्वेन प्रभुत्वेन कुर्वद्रूपोभवति चेष्टते जीवति शान्तात्माऽकुर्वद्रूपः स्वपितियोगेन निद्राति निमीलति न चेष्टते ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । यदेति । सदेवईश्वरःयदाजागर्ति तदेदंजगच्चेष्टते उत्पद्यते । यदाशान्तात्मासन्स्वपिति । लीनचेष्टोभवति तदा सर्वं जगत् निमीलति लयंप्राप्नोति ॥ ५२ ॥

**तस्मिन्स्वपति तु सुस्थे कर्मात्मानःशरीरिणः ॥ स्वकर्मभ्योनिवर्तन्ते मनश्च ग्लानिमृच्छति ॥५३॥**

( १ ) **मेधातिथिः** । पूर्वव्याख्याश्लोकोऽयंविस्पष्टार्थः । स्वस्थे सुस्थिरे । शान्तात्मवच्छुद्ध रूपे स्वात्मन्यवस्थानमौपाधिकभेदनिवृत्तिः । कर्मात्मानः कर्मप्रधानाः संसारिणः क्षेत्रज्ञाः शरीरिणः कर्मसंबन्धेन शरीरसंबन्धानुथवादेवमुच्यन्ते । तस्मिन्स्वपति शयाने स्वकर्मभ्योनिवर्तन्ते । दान्निवर्तते । शरीरचेष्टानिवृत्तिरेतेनोच्यते । मनश्च ग्लानिमृच्छति । एतेनान्तरव्यापारनिवृत्तिः । अतोबाह्यान्तर व्यापारनिवृत्तिः । अतोबाह्यान्तरव्यापारनिवृत्त्या प्रलयःप्रतिपादितोभवति । ग्लानिर्निरुत्साहः स्वव्यापारेऽशक्ततामृच्छतिप्राप्नोति ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । अस्मिन्निति । स्वस्थे स्वमात्रवेदिनि कर्मात्मानःकर्मसहिता आत्मानः नकेवलंकर्माणि कुर्वन्ति मनोपि तेषांवृत्तिशून्यंभवतिइत्याह मनश्चेति ॥ ५३ ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तमेव स्पष्टयति तस्मिन्स्वपतीति । तस्मिन्प्रजापतौ निवृत्तेच्छे सुस्थे उपसंहृतदेहमनोव्यापारे कर्मलब्धदेहाःक्षेत्रज्ञाः स्वकर्मभ्योदेहग्रहणादिभ्योनिवर्तन्ते । मनःसर्वेन्द्रियसहितंवृत्तिरहितंभवति ॥ ५३ ॥

( ४ ) **राघवानन्दः** । किंच तस्मिन्निति । निवर्तन्ते न कर्म कुर्वन्ति ग्लानिं सर्वेन्द्रियसहितमनः निवृत्तव्यापारतामृच्छति स्थूलाकाशाद्यभावेन तदारब्धस्थूलजरायुजादि देहाभावात् आकाशाद्यभावश्च . आकाशंजायते तस्मात्तस्य शब्द-

( ५२ ) निमीलति=प्रलीयते ( क, च )

गुणंविदुरिति वक्ष्यमाणत्वात् । तस्मिन्हिरण्यगर्भे स्वस्थे स्वस्मिन्नात्मीये कारणे तिष्ठति सति स्वयंविराट्स्वपिति लीयते । स्वपतीति पाठे स्वस्थे हिरण्यगर्भे तस्मिन् स्वपति लीने विराजि सति । व्यधिकरणे सप्तम्यौ । अयमेव दैनंदिनप्रलयो-वक्ष्यते । तावती रात्रिरित्यादिनानात्र हिरण्यगर्भस्य प्रलयइति सिद्धान्तः ॥ ५३ ॥

( ५ ) **नन्दनः** । तस्मिन्भगवति स्वस्थआत्मस्थेजगद्व्यापारतउपरते कर्मात्मानोऽनुभवितव्यफलकर्मयुक्तात्मानः स्वकर्मभ्यस्तदानींभुज्यमानेभ्यः क्रियमाणेभ्यश्च मनश्च महत्तत्वंच जगदितियावत् तत्कार्यत्वाज्जगतो ग्लानिंसंकोचंप्रलय-मितियावत् ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । तु पुनस्तस्मिन् ईश्वरे स्वपति सति कर्मात्मानःशरीरिणःसर्वकर्मभ्योनिवर्तन्ते । च पुनः मनः-ग्लानिंलयंगच्छति प्राप्नोति ॥ ५३ ॥

## युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि ॥ तदायंसर्वभूतात्मा सुखं स्वपिति निर्वृतः ॥ ५४॥

( १ ) **मेधातिथिः** । यत्तदोर्व्यत्ययेनायंश्लोकोव्याख्यातव्यः । अन्यथा पूर्वश्लोकापेक्षयेतरेतराश्रयः प्रसज्येत । एतदुक्तंयदा स्वपिति तदा निमीलतिसर्वं । सुखंस्वपिति निर्वृतः सुखस्वरूपमेव परब्रह्म न तस्य स्वापावस्था-यांसुखमन्यदादुःखम् । स्वापश्च तस्य यादृशः सप्रागुक्तएवनिर्वृतिश्च तस्य सर्वकालम् । नह्यसौ परमात्माऽविद्योपप्लव-तरङ्गैराघ्रस्यते। केवलंसुखमयस्तस्य सर्वस्य कर्तृत्वंप्रपद्यते । यथाऽयंपुरुषउपरतोगृहकृत्येभ्यः कृतकृत्यतयार्जितंमया धनं-गृहोपयोगि निरुपद्रवश्चास्मि संवृत्तइत्येवंसुखंस्वपिति निर्वृतोनिराशङ्कात्मबाधएवमुपमीयतेऽसावपि । तस्याऽपीदंजगत् कुटुम्बभूतमितिप्रशंसा । प्रधानविषयोवाऽयंश्लोकोवर्णनीयः । तदा प्रधानंस्वपिति । यदा युगपत्सर्वाणि भूतानि तत्र प्रलीयन्ते तदात्मतांकारणरूपतामापद्यन्ते विकारावस्थामुद्गच्छन्ति युगपद्यावन्तित्रैलोक्योदरवर्तीनि । स्वापश्च परिणाम निवृत्तिर्न पुनर्ज्ञानोपसंहृतिश्चैतस्य प्रधानस्य सुखेचोपचारतोऽचेतनत्वादिव ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । यदास्येदृशःस्वापस्तदाह युगपत्त्विति । युगपत् समकाले भुवनचतुष्टयंयदा लीयते तदा-स्यास्वपतोपि स्वापउच्यतइत्यर्थः । यदाऽयंसर्वभूतानामात्माधिष्ठानसुखदुःखप्रायवृत्तिजनकरजोगुणविरहेण निर्वृतो निवृत्ताज्ञानावरणः ॥ ५४ ॥

( ३ ) **कुल्लूकः** । इदानींमहाप्रलयमाह युगपत्त्विति । एकस्मिन्नेव काले यदा तस्मिन्परमात्मनि सर्वभूतानि प्रलयं-यान्ति तदायंसर्वभूतानामात्मानिर्वृतः निवृत्तजाग्रत्स्वप्नव्यापारः सुखंस्वपिति सुषुप्तइव भवति । यद्यपि नित्यज्ञानानन्द स्वरूपे परमात्मनि न सुप्वाप तथापि जीवधर्मोऽयमुपचर्यते ॥ ५४ ॥

( ४ ) **राघवानन्दः** । हिरण्यगर्भोपि नङ्क्ष्यति इति ज्ञापयन् महाप्रलयमाह युगपदिति । यदाद्विपरार्धकाले युग-पत् हिरण्यगर्भविराड्भ्यांसह पूर्वोक्ताकर्मात्मानोजीवाःसंस्कारमात्रावशेषाः परब्रह्मणि प्रलीयन्ते तदायंसर्वभूतात्माईश्वरः सुखंस्वपिति निर्वृतः सुखंस्वानन्दंनिर्वृतः प्राप्तः जगद्व्यापारोपरमः। स्वपितीत्युपचर्यते स्वस्य स्वापप्रबोधयोरभावात् ॥ ५४ ॥

( ५ ) **नन्दनः** । प्रलयकाले जीवाः कुत्र तिष्ठन्ति भगवतश्च किंकृत्यमित्यपेक्षायामाह युगपदिति । सर्वकार्याणोनि-जोनाशोयुगपच्छब्दप्रयोगोक्तः । महात्मनि महावकाशे प्रलीयन्ते । शरीरिणइत्यनुषङ्गः । सर्वे भूतात्मानोजीवायस्मिन्निति ससर्वभूतात्मा स्वेनान्देन निर्वृतोजगत्कार्यचिन्ताराहित्येन सुखंस्वपिति ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । युगपदिति । तस्मिन्महात्मनि महत्तत्वे युगपत्तदाशरीरिणः प्रलीयन्तेलीनाभवन्ति ॥ ५४ ॥

**तमोयंतु समाश्रित्य चिरंतिष्ठति सेन्द्रियः ॥ न च स्वंकुरुते कर्म तदोत्क्रामति मूर्तितः॥ ५५ ॥**

( १ ) **मेधातिथिः**। इदानीं संसारिणः पुरुषस्य मरणं देहान्तर प्राप्तिश्चाभ्यां श्लोकाभ्यां कथ्यते। तमोज्ञाननिवृत्तिस्तां समाश्रित्य चिरंतिष्ठत्यास्ते सेन्द्रियः नचस्वं कुरुते कर्म श्वासप्रश्वासादिकं तदा मूर्तितः शरीरादुत्क्रामति गच्छति। ननुच सर्वगतआत्माऽऽकाशवद्विभुस्तस्य कीदृश्युत्क्रान्तिः। कर्मोपार्जितशरीरत्यागएवोत्क्रान्तिः न पुनर्मूर्तस्यैवार्थस्य देशाद्देशान्तरगमनम्। अथवा कैश्चिदिष्यते अस्त्यन्यदन्तराभवंशरीरंसूक्ष्मंयस्येयमुत्क्रान्तिः। अन्यैस्त्वन्तराभवदेहोनेष्यते। यथाह भगवान्व्यासः अस्मिन्देहे व्यतीते तु देहमन्यन्नराधिप। इन्द्रियाणि व सन्त्येव तस्मान्नास्त्यन्तराभवः। सांख्याअपि केचिन्नान्तराभवमिच्छन्ति विन्ध्यवासप्रभृतयः। कोयमन्तराभवोनामास्मिञ्छरीरे नष्टे मातृकुक्ष्यादिस्थानंद्वितीयशरीरग्रहणार्थंयावन्न प्राप्तंतावदन्तरा निरुपयोगिशरीरमुपजायते सूक्ष्मंयस्य न क्वचित्संयोगोनाग्न्यादिदाहोन महाभूतैःप्रतिबन्धः। अन्येतु मूर्तिपरमात्मानमाहुः। सर्वात्मरूपः परमात्मा समुद्रस्थानीयस्ततः प्रादुर्भवन्तिजीवाअविद्यावशाद्भेदमुपयान्तिमहोदधेरिवोर्मयः। तस्य च ततोनिष्क्रामतःपुर्यष्टाकाख्यंलिङ्गमभ्युपगम्यते। धर्माधर्मपूर्वकृतवशात्प्रत्येकस्य जीवस्य वासः स्थानीयंसूक्ष्मंशरीरम्। यथापुराणउक्तम् पुर्यष्टकेन लिङ्गेन प्राणाख्येन सयुज्यते। तेनबद्धस्य वैबन्धोमोक्षोमुक्तस्य तेनतु ॥ ते च प्राणापानव्यानोदानसमानाः पञ्चभूतेन्द्रियवर्ग एवंकर्मेन्द्रियवर्गोऽष्टमंमनइत्येतत्पुर्यष्टकम्। तच्छरीरंन नश्यत्यामो क्षावस्थायाः। तदुक्तं संसरति निरूपभोगभावैरधिवासितंलिङ्गम् ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः**। प्रलयप्रसङ्गेन मूर्च्छामृत्यूअपिदर्शयति यमोयमिति। तमोगुणमाश्रित्य चिरंतिष्ठति तथा च रजसोभिभूतत्वात्सेन्द्रियोमनःप्रभृतीन्द्रियवानपि न स्वयं कर्मकुरुते तदा मूर्च्छितोभूत्वोत्क्रामति। जीवस्थलिङ्गदेहः प्रदेशान्तरे तिष्ठति सेयंमूर्च्छेत्युच्यते ॥ ५५ ॥

( ३ ) **कुल्लूकः**। इदानींप्रलयप्रसङ्गेन जीवस्योत्क्रमणमपि श्लोकद्वयेनाह तमोयमिति। अयंजीवस्तमोज्ञाननिवृत्तिंप्राप्य बहुकालमिन्द्रियादिसहितस्तिष्ठति। नचात्मीयंकर्म श्वासप्रश्वासादिकंकरोति तदा मूर्तितःपूर्वदेहादुत्क्रामति अन्यत्र गच्छति लिङ्गशरीरावच्छिन्नस्य जीवस्यउत्क्रमात्तद्गमनमप्युपपद्यते। तथा चोक्तं बृहदारण्यके तमुत्क्रामन्तंप्राणोनूत्क्रामति प्राणमनूत्क्रामन्तंसर्वे प्राणाअनूत्क्रामन्ति। प्राणाइन्द्रियाणि ॥ ५५॥

( ४ ) **राघवानन्दः**। प्रलयप्रसङ्गेन मरणमाह तमइति द्वाभ्याम्। अयंजीवात्मा यदा तमोचैतन्यमाश्रित्य जडत्वंप्राप्य देहाद्यध्यासपरित्यागात् एवमेवायमात्मेदंशरीरंनिहत्याविद्यां गमयित्वान्यत्रशिवतरं कल्याणतररूपंतनुतइति श्रुतेः। बहुकालंसेन्द्रियः वागादीन्द्रिययुक्तोपि न च कर्म कुरुते सुषुप्तिवत् श्वासादिकमपि कुतः। यतः मूर्तितःस्थूलशरीरात् ॥ ५५ ॥

( ५ ) **नन्दनः**। अयंभगवांस्तमोमूलप्रकृतिमाश्रित्य यदा चिरंयावत्प्रलयकालंतिष्ठति तदा सेन्द्रियोमूर्तिमान्भवति जगदाकारेण स्फुरतीत्यर्थः। किंच तमः समाश्रित्यायंस्वकर्मंदिदृक्ष्यादिकंयदा न कुरुते तदा मूर्तितउत्क्रामति जगदाकारेण न स्फुरतीत्यर्थः ॥ ५५ ॥

( ६ ) **रामचन्द्रः**। तमइति। यदा तमःसमाश्रित्य सेन्द्रियःसचिरंतिष्ठति स्वंकर्म न कुरुते तदा मूर्तितउत्क्रामति मूर्तितोनिर्गतएवभवति ॥ ५५ ॥

---

( ५५ ) तमोयन्तु=तमोयदा ( क, ख, ग )

**यदाणुमात्रिकोभूत्वा बीजं स्थास्नु चरिष्णुच ॥ समाविशति संसृष्टस्तदा मूर्तिविमुञ्चति ॥ ५६ ॥**

( १ ) **मेधातिथिः** । अण्व्यः सूक्ष्मामात्राअवयवायस्य सोऽणुमात्रिकः । पुर्यष्टकमन्तराभवदेहोवा । स्वभावतएव वाऽऽत्मनः सूक्ष्माः यथोक्तम् सएषआत्माऽन्तर्हृदयेऽणीयानित्यादिबीजंशरीरोत्पत्तिकारणम् । स्थास्नुवृक्षादिजन्महेतुभूतं- चरिष्णुजङ्गमंसमाविशत्यधितिष्ठति प्रतिनिबध्यतेयदा संसृष्टः प्राणादिभिस्तदा मूर्तिविमुञ्चत्याबध्नाति शरीरंगृह्णातीत्यर्थः॥५६

( २ ) **सर्वज्ञनारायणः** । मृतिमाह यदेति । अणुमात्रिकोमनसानुभावच्छेदात्तत्तुल्यपरिमाणः संसृष्टोलिङ्गदेहेनस- हितः स्थास्नुस्थावरंचरिष्णु जङ्गमंच बीजंरेतःशोणितादि प्रविशतितदामूर्तिं पूर्वदेहं त्यजति सम्रियत इत्यर्थः ॥ ५६ ॥

( ३ ) **कुल्लूकः** । कदा देहान्तरंगृह्णातीत्यतआह यदाणुमात्रिकइति । अणवोमात्राःपुर्यष्टकरूपा यस्य सोऽणुमा- त्रिकः । पुर्यष्टकशब्देन । भूतादीन्यष्टावुच्यन्ते । तदुक्तसनन्देन भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः अविद्या चाष्टकंप्रोक्तं- पुर्यष्टमृषिसत्तमैः । ब्रह्मपुराणेप्युक्तम् पुर्यष्टकेन लिङ्गेन प्राणाद्येन सयुज्यते । तेन बद्धस्य वैबन्धोमोक्षोमुक्तस्य तेन तु ॥ यदाऽणुमात्रिकोभूत्वासंपद्य स्थास्नु वृक्षादिहेतुभूतंचरिष्णु मानुषादिकारणंबीजंप्रविशत्यधितिष्ठति तदा संसृष्टःपुर्यष्टकयुक्तोमू- र्तिस्थूलदेहान्तरंकर्मानुरूपंविमुञ्चतिगृह्णाति ॥ ५६ ॥

( ४ ) **राघवानन्दः** । सदा मरणकालेऽउत्क्रामति देहान्तरार्थं किंभूतः अणुमात्रिकाः अणवोऽणुतुल्यामात्राः पुर्यष्ट- करूपा अवच्छेदत्वेन यस्य चैतन्यस्य सतथा पुर्यष्टकेन लिङ्गेन प्राणाद्येन सयुज्यते तेनबद्धस्य बन्धोवै मोक्षोमुक्तस्य- मुक्तता । तेनत्वित्युक्तम् । बीजंविद्याकर्मवासनाः भूत्वासम्प्राप्य तंविद्याकर्मणीसमन्वारभेते पूर्वप्रज्ञाचेति श्रुतेरुक्तत्वात् । तदनुरूपेण सृष्टंस्थावरंजङ्गमंवा विशति वृक्षोहं मनुष्योहमिति अभिमन्यते । संसृष्टः पूर्वादृष्टेन जन्मनानियुक्तः सन्मुञ्चति च मूर्तिपूर्वामिति ॥ ५६ ॥

( ५ ) **नन्दनः** । अथसृष्टिकालमाह यदेति । अणुमात्रिकंचैतन्यांशीभुयबीजंतत्त्वसंघातंसमाविशत्यनुप्रविशतिसंसृ- ष्टौसृष्ट्यांमूर्तिजगद्विमुञ्चति सृजति जगदाकारेणस्फुरतीत्यर्थः ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । यदेति । देहत्यागो वर्ण्यते । यदाअणुमात्रकोभूत्वा स्थास्नु स्थावरेषु चरिष्णु चरेषु बीजं- बीजरूपंसमाविशति संसृष्टः संयुक्तःतदामूर्तिं शरीरंमुञ्चति ॥ ५६ ॥

**एवं सजाग्रत्स्वप्नाभ्यामिदंसर्वंचराचरम् ॥ संजीवयति चाजस्रंप्रमापयति चाव्ययः ॥ ५७ ॥**

( १ ) **मेधातिथिः** । उपसंहारः पूर्वोक्तस्य । आत्मसंबन्धिभ्यांजाग्रत्स्वप्नाभ्यांचराचरंस्थावरंजङ्गमंजीवयति मारय- तिच जगत् । अव्ययोऽविनाशी ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । एवमिति । स्वेन जाग्रता सञ्जीवयति स्वीयेन स्वप्नेनाव्ययोऽविनाशी प्रमापयति मा- रयति चरमचरंच अजस्रंसर्वदा ॥५७ ॥

( ३ ) **कुल्लूकः** । प्रासङ्गिकंजीवस्योत्क्रमणमभिधाय प्रकृतमुपसंहरति एवंसजाग्रत्स्वप्नाभ्यामिति । सब्रह्मा अनेन प्रकारेण स्वीयजाग्रत्स्वप्नाभ्यामिदंस्थावरजङ्गमंसञ्जीवयति मारयति च । अजस्रंसततम् ।अविनाशीअव्ययः ॥ ५७ ॥

( ४ ) **राघवानन्दः** । प्रकृतमनुसरति एवमिति । जाग्रत्स्वप्नाभ्यां दैनंदिनसृष्टिप्रलयाभ्यां प्रमापयति नाशयति स्वप्नोऽत्र सुषुप्तिः स्वपितीत्युक्तेः ॥ ५७ ॥

---

( ५६ ) संसृष्टौइति पाठान्तरम् ( नन्दनः )

( ५ ) **नन्दनः** । प्रकरणार्थमुपसंहरति एवमिति। जागृदितिपाठः । जागृज्जागरणं सम्पदादित्वात्क्विप् । अजस्रमविच्छेदेन ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । एवमिति । सईश्वरः जाग्रदवस्थासुस्थितः सन्निदं चराचरंसर्वमेवमजस्रंसञ्जीवयति । स्वप्नेस्थितःसन्अजस्रमिमंप्रमापयति नाशयति स्वयमव्ययः देशतःकालतश्च ॥ ५७ ॥

**इदंशास्त्रंतु कृत्वासौ मांमेव स्वयमादितः ॥ विधिवद्ग्राहयामास मरीच्यादींस्त्वहंमुनीन् ॥ ५८ ॥**

( १ ) **मेधातिथिः** । इह शास्त्रशब्देन स्मार्तोविधिप्रतिषेधसमूहउच्यते नतु ग्रन्थस्तस्य मनुना कृतत्वात् । तथा हि मानवइति व्यपदेशोऽस्येतरथा हि हैरण्यगर्भइति व्यपदिश्येत । केचित्तु हिरण्यगर्भेणापि कृते ग्रन्थे मनुना बहूनां प्रकाशितत्वात्तेन व्यपदेशोयुज्यतएव यथा हिमवति प्रथममुपलभ्यमाना गङ्गाऽन्यतोप्युत्पन्ना हैमवतीति व्यपदिश्यते यथा च नित्यदर्शनात्काठकंप्रवचनंकठेन व्यपदिश्यते । सत्स्वप्यन्येष्वध्येतृष्वध्यापयितृषु च प्रवचनप्रकर्षात्कठेनव्यपदेशः । नारदश्च स्मरति शतसाहस्रोऽयंग्रन्थः प्रजापतिना कृतस्ततःसमन्वादिभिः क्रमेण संक्षिप्तइति । अतोऽन्यकृतत्वेऽपि मानवव्यपदेशोन विरुद्धः । शास्त्रशब्देनग्रन्थाभिधानमपिशासनरूपाऽर्थप्रतिपादकत्वाद्दृष्टमेव । मामेव ग्राहयामासाहंतेनाध्यापितइत्यर्थः । स्वयमादितोविधिवदित्येभिः पदैरागमस्याविभ्रंशउच्यते । ग्रन्थकारेण हि स्वकृतोग्रन्थोयः स्वयमध्याप्यते प्रथमंतत्र मात्रापि न परिहीयते । अन्यस्य हि तस्मादधिगतवतोऽन्यमध्यापयतोनतद्ग्रन्थाविनाशे यत्नोभवति कर्तुरप्यध्यापितपूर्वस्य प्रतिष्ठापितोपि मया पूर्वमयं ग्रन्थइति द्वितीयवारंप्रमादालस्यादिना भ्रंशः संभाव्यत अतआदितइत्युक्तम् । विधिवच्छिष्योपाध्याययोरनन्यमनस्कतादिगुणोऽवहितचित्तताविधिः । अर्हैवतिः । मरीच्यादींस्त्वहंमुनीन्मरीच्यादयः प्रसिद्धप्रभावास्तैरप्येतन्मत्सकाशादधीतमित्यात्मनोविशिष्टशिष्यसंबन्धेन सिद्धमौपाध्यायिकंदर्शयन्महर्षीणांशास्त्रमाहात्म्येन च श्रद्धातिशयंजनयत्यध्ययनाविरामाय । एवंविधमेतन्महच्छास्त्रंयन्मरीच्यादिभिरप्यधीतम् । एषचेदृशोमहात्मा मनुस्तेषामुपाध्यायइति युक्तमेतस्य सकाशाद्वितद्ग्रन्थाध्ययनमित्याशास्त्रपरिसमाप्तेर्नोपरमन्ते श्रोतारइत्युभयथापि शास्त्रप्रशंसा ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । इदमिति । इदंस्मार्तधर्माधर्मोपादानहानात्मकं न ग्रन्थंशास्त्रं सर्वज्ञोहिरण्यगर्भात् प्राप्य मांभृगुनामानमेव कृपयाऽध्यापयामास । पुनरहंमरीच्यादिदशमुनीन् बहुविशिष्टेभ्यःशिष्येभ्यः आदितःसर्वेभ्यः पूर्वम् ॥५८॥

( ३ ) **कुल्लूकः** । इदंशास्त्रमिति । असौ ब्रह्माइदंशास्त्रंकृत्वा सृष्ट्यादौ मामेव विधिवच्छास्त्रोक्ताङ्गजातानुष्ठानेनाध्यापितवान् । अहंतु मरीच्यादीनध्यापितवान् । ननु ब्रह्मकृतत्वेऽस्य शास्त्रस्य कथंमानवव्यपदेशः । अत्र मेधातिथिः शास्त्रशब्देन शास्त्रार्थोविधिनिषेधसमूहउच्यते तंब्रह्मा मनुंग्राहयामास मनुस्तु तत्प्रतिपादकंग्रन्थंकृतवानिति न विरोधः । अन्ये तु ब्रह्मकृतत्वेप्यस्य मनुना प्रथमंमरीच्यादिभ्यः स्वरूपतोऽर्थतश्च प्रकाशितत्वान्मानवव्यपदेशः वेदापौरुषेयत्वेपि काठकादि व्यपदेशवत् । इदंतूच्यते ब्रह्मणा शतसाहस्रमिदंधर्मशास्त्रंकृत्वा मनुरध्यापितआसीत्ततस्तेन च स्ववचनेन संक्षिप्य शिष्येभ्यःप्रतिपादितमित्यविरोधः । तथा च नारदः शतसाहस्रोयंग्रन्थ इति स्मरति स्म ॥ ५८ ॥

( ४ ) **राघवानन्दः** । गुरुपरंपरागतमिदंशास्त्रं न स्वमनीषाकल्पितमित्याह इदमिति । आदितः सृष्ट्यादौ असौ विराट्ब्रह्मा मांमनुंआह मनुर्मरीच्यादीन्मुनीन् ग्राहितवानस्मीत्यन्वयः । आदावस्य मनुवक्तृत्वं कर्तृत्वंतु विराजएवेति ध्वनिः ॥ ५८ ॥

( ५ ) **नन्दनः** । एवंतावज्जगत्सृष्टिप्रलयावुक्तौ इदानींमर्यादानांस्थापनंशास्त्रसंप्रदायोपन्यासद्वारेणस्थितिमभ्याह इदमिति । शास्त्रस्य तदा मनसि विपरिवर्तमानत्वादिदमिति परामर्शोयुज्यते ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । मनुरुवाच । असावीश्वरइदंशास्त्रं कृत्वामामेवादितः विधिवत्स्वयंग्राहयामास । तु पुनः मरीच्यादीन्मुनीन्ग्राहयामास ग्राहयतिस्म ॥ ५८ ॥

**एतद्वोऽयंभृगुः शास्त्रंश्रावयिष्यत्यशेषतः ॥ एतद्धिमत्तोऽधिजगे सर्वमेषोऽखिलंमुनिः ॥ ५९ ॥**

( १ ) **मेधातिथिः** । एतच्छास्त्रंवोयुष्माकमयंभृगुरशेषतः सर्वंश्रावयिष्यति कर्णपथंनेष्यत्यध्यापयिष्यति व्याख्यास्यतिच । एतच्छास्त्रस्यैतदा प्रत्यवमर्शः । एतच्छास्त्रमेषमुनिरखिलमशेषंमत्तोमत्सकाशादधिजगेऽधिगतवाञ्ज्ञातवान् । गुरुमुखाद्विद्यानिष्क्रामतीव शिष्यः प्रतिगृह्णातीवेत्यतोपादाने तसिर्मत्तइति युक्तः । भृगुस्तु महर्षीणांप्रख्याततरस्वभावः । तस्य प्रवक्तृत्वनियोगेनानेकाशेषनिरतिशयविद्याविदामागमनपरंपरयागतमेतच्छास्त्रमितिप्रदर्श्यते । अतश्च केषांचिदयमपि प्रवृत्तिप्रकारोदृश्यते । बहुभ्योमहात्मभ्यः शास्त्रमिदमवतीर्णमिति किमिति नाधीमहइत्यध्ययनादिप्रवृत्त्याभिमुख्यंशास्त्रे जन्यते ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । एतदिति । अखिलंकृत्स्नम् ॥ ५९ ॥

( ३ ) **कुल्लूकः** । एतद्वोयमित्यादि । एतच्छास्त्रमयंभृगुः युष्माकमखिलंकथयिष्यति यस्मादेषोऽशेषमेतन्मत्तोऽधीतवान् ॥ ५९ ॥

( ४ ) **राघवानन्दः** । भृगोरपि गुर्वधीनविद्यत्वंसूचयति एतदिति । मत्तोमनोःअधिजगे ज्ञातवान् सर्वमखिलं एतेनाक्षरमात्रमप्यस्य न त्याज्यमित्यर्थः ॥ ५९ ॥

( ५ ) **नन्दनः** । अखिलंनिरवशेषम् ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । एतदिति । अयंभृगुः एतच्छास्त्रंधर्मशास्त्रंच अशेषतःश्रावयिष्यति मुनिःभृगुःएतत् शास्त्रंसर्वमेव अखिलंसरहस्यंमत्तःसकाशात्अधिजगे ज्ञातवान् । गैशब्दे इत्यस्य धातोरूपं अधिजगेये गत्यर्थास्ते ज्ञानार्थाः ॥ ५९ ॥

**ततस्तथा सतेनोक्तोमहर्षिर्मनुना भृगुः ॥ तानब्रवीदृषीन्सर्वान्प्रीतात्मा श्रूयतामिति ॥ ६० ॥**

( १ ) **मेधातिथिः** । समहर्षिर्भृगुस्तेन मनुना तथोक्तएषवःश्रावयिष्यतीति नियुक्तस्ततोऽनन्तरंतानृषीनब्रवीच्छ्रूयतामिति । प्रीतात्माऽनेकशिष्यसन्निधावहमत्र नियुक्तइति बहुमानेन प्रीतात्मत्वंप्रवक्तृत्वयोग्यतयाज्ञाकरोऽहमनेन संभावितइत्यात्मनि भृगोर्बहुमानः ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । ततइति । सभृगुरित्यात्मनि परोक्षत्वारोपेण ॥ ६० ॥

( ३ ) **कुल्लूकः** । ततस्तथेति । सभृगुर्मनुना तथोक्तोऽयंश्रावयिष्यतीतियस्मादेषोऽधिजगइत्युक्तः ततोऽनन्तरमनेकमुनिसन्निधौ गुरुसम्भावनया प्रीतमनास्तानृषीन्प्रत्युवाच श्रूयतामिति ॥ ६० ॥

( ४ ) **राघवानन्दः** । अध्यापनेपि गुर्वाज्ञावश्यकतामाह ततइति । तान्मनुसमीपे पूर्वोपस्थितान् प्रीतात्मा प्रीतियुक्तः । एतेमनूंश्च समान्यानित्यनेन सावर्ण्याद्यामनवउक्ताअपरइति विशेषणात् सावर्ण्यादिभ्यः स्वायंभुवाद्याभिन्नाः अन्यथा मनूनांचतुर्दशत्वंव्याहन्येत ॥ ६० ॥

( ५ ) **नन्दनः** । तथा तेनोक्तोयुष्मानयंभृगुरेतच्छास्त्रंश्रावयिष्यतीति मनुनोक्तः ॥ ६०॥

( ६ ) **रामचन्द्रः** ततइति। भृगुरुवाच भृगुः धर्मानाह। ततःमनुवचनानन्तरं समहर्षिर्भृगुः तान्सर्वानृषीनश्रूयता मित्यब्रवीत्। कीदृशःप्रीतात्मा प्रफुल्लितात्मा तथा तेन मनुनोक्तः ॥ ६० ॥

**स्वायंभुवस्यास्य मनोःषड्वंश्यामनवोऽपरे ॥ सृष्टवन्तःप्रजाःस्वाःस्वामहात्मानोमहौजसः ॥ ६१ ॥**

( १ ) **मेधातिथिः** । उपाध्यायोधर्मान्पृष्टोजगदुत्पत्त्यादि वर्णितवान्। तथैवशिष्योऽपि तन्नियुक्तस्तच्छेषमेवं वर्णयितुमारब्धः। अस्येति साक्षात्कारेण मनुंप्रत्यवमृशति। अस्मदुपाध्यायस्य स्वायंभुवइतिख्यातस्य षडन्येऽपरेमनवोवंश्याएकस्मिन्वंशे कुले जाताः सर्वेवंश्याः। सर्वे हि साक्षाद्ब्रह्मणा सृष्टा इत्येककुलसंभवाद्वंश्याउच्यन्ते । अथवा एकस्मिन्कार्येऽधिकृतावंश्या एककर्मान्वयेन प्राणिनांवंशव्यवहारोभवति । द्वौ मुनी व्याकरणस्यवंश्यौ तंचैकंधर्मदर्शयति सृष्टवन्तःप्रजाः स्वास्वाः इति। मन्वतरे मन्वन्तरे यस्य मनोरधिकारः सएव प्रजानांपूर्वमन्वन्तरविनष्टानांस्रष्टा पालयिता च। अतोयेन याः प्रजा सृज्यन्ते तास्तस्य स्वाभवन्ति ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । स्वायंभुवस्येति। अस्य वंशभवाः अन्ये षण्मनवोपि स्वाइति अन्येप्युपलक्ष्याः पूर्ववत्। ६१।

( ३ ) **कुल्लूकः** । स्वायंभुवस्येति। ब्रह्मपुत्रस्यास्य मनोःषड्वंशप्रभवाअन्येमनवः एवंकार्यकारिणःस्वस्वकाले सृष्टिपालनादावधिकृताःस्वाःस्वाःप्रजाउत्पादितवन्तः ॥ ६१ ॥

( ४ ) **राघवानन्दः** । एते तु कश्यपवंश्याःकिंनामानइत्यपेक्षायामाह स्वायंभुवस्येति त्रिभिः। सृष्टिकरणे तेषांसामर्थ्यमाह अमितौजसइति अमितंओजोबलंज्ञानंतपश्च येषांते तथा ॥ ६१ ॥

( ५ ) **नन्दनः** । स्वयंभुवोभगवतः शिष्यत्वात्स्वायंभुवइदंशास्त्रमित्यनेनभगवतोहि मनुःशिष्यत्वेनोक्तः ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । अस्य मनोः षट् वंश्याःअपरे मनवश्चासन् ॥ ६१ ॥

**स्वारोचिषश्चोत्तमश्च तामसोरैवतस्तथा ॥ चाक्षुषश्च महातेजाविवस्वत्सुतएवच ॥ ६२ ॥**

( १ ) **मेधातिथिः** । तान्मनून्नामतोनिर्दिशति। महातेजाइति विशेषणम्। अन्यानि नामानि रूढ्या संबन्धेन वा। विवस्वत्सुतइति समासपदरूपंशब्दान्तरंकृष्णसर्पनरसिंहादिशब्दवत्॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । स्वारोचिषइति। विवस्वत्सुतः प्रकृतमन्वन्तराधिपः ॥ ६२ ॥

( ३ ) **कुल्लूकः** । स्वारोचिषश्चेति। एते भेदेन मनवःषट् नामतोनिर्दिष्टाः ॥ ६२ ॥

( ४ ) **राघवानन्दः** । तेषांनामापेक्षांपूरयति। स्वारोचिषइत्यादिनामानि। विवस्वत्सुतोयमः ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । स्वेति। तेषांमनूनां नामान्याह द्वाभ्यां स्वारोचिषइत्यादिना। विवस्वत्सुतोवैवस्वतः ॥ ६२ ॥

**स्वायंभुवाद्याःसप्तैते मनवोभूरितेजसः ॥ स्वेस्वेन्तरे सर्वमिदमुत्पाद्यापुश्चराचरम् ॥ ६३ ॥**

**[ कालप्रमाणंवक्ष्यामि यथावत्तन्निबोधत* ॥ ]**

( १ ) **मेधातिथिः** । अत्र सप्त मनवोमया प्रोक्ताः । अन्यत्र चतुर्दशसंपद्यन्ते। स्वे स्वेन्तरेऽवसरे प्राप्तेऽधिकारकाले

---

( ६२ ) उत्तमश्च=श्चौत्तमिश्च ( अ, द, ध )

* ( ग ) ॥ इदमर्धं ( क ) चिन्हितपुस्तके सप्ततितमश्लोकेपठितम्।

इति यावत्। उत्पाद्य प्रजा आपुः पालितवन्तः। स्वे स्वेन्तरेऽधिकारावसरे यस्य मनोर्यस्मिन्काले प्राप्तः सर्गस्थितिपालनाधिकारः। अन्येत्वन्तरशब्दंमासादिशब्दवत्कालविशेषवाचिनंमन्यन्ते तदयुक्तम् । मनुशब्दोपसंहितः कालविशेषविषयोमन्वन्तरोनाम कालोनतु केवलइति ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः**। स्वायंभुवाद्याइति। आपुर्व्याप्तवन्तश्चराचरंतत्सर्वमध्यतिष्ठन्नित्यर्थः ॥ ६३ ॥

( ३ ) **कुल्लूकः**। स्वायंभुवेति। स्वायंभुवमुखाःसप्तामी मनवः स्वीयस्वीयाधिकारकालेइदंस्थावरजङ्गममुत्पाद्य पालितवन्तः ॥ ६३ ॥

( ४ ) **राघवानन्दः**। इदानीं वर्तमानःस्वेस्वेऽन्तरे स्वकीयस्वकीयमन्वन्तरे इदंस्वानुरूपाः प्रजाउत्पाद्य चराचरंसर्वंश्चापुः रक्षितवन्तः मनूनांस्वायंभुवादीनां नामतएव मन्वन्तराणामपि नामानीति ध्येयम् ॥ ६३ ॥

( ५ ) **नन्दनः**। अन्तरशब्देन कालविशेषउच्यते। आपुःपालितम् ॥ ६३ ॥

( ६ ) **रामचन्द्रः**। स्वारोचिष २ औत्तम ३ तामस ४ रैवत ५ चाक्षुष ६ वैवस्वत ७ एतेस्वायंभुवाद्याः सप्तमनवः स्वेस्वेन्तरे इदं सर्वचराचरमुत्पाद्यापुः अगमन् ॥ ६३ ॥

**निमेषादशचाष्टौच काष्ठा त्रिंशत्तुताः कला ॥ त्रिंशत्कलामूहूर्तः स्यादहोरात्रंतु तावतः ॥ ६४॥**

( १ ) **मेधातिथिः**। स्थितिप्रलयकालपरिमाणनिरूपणार्थंज्योतिःशास्त्रगोचरंकालविभागंवक्तुमुपक्रमते। अष्टादश निमेषाः काष्ठानाम कालोभवति। त्रिंशत्काष्ठाः कलात्रिंशत्कलात्। एकोमुहूर्तः स्यात्। तावतःत्रिंशदित्यर्थः। त्रिंशन्मुहूर्तमहोरात्रम्। विद्यादिति क्रियापदमाहृत्य तावदिति द्वितीयाबहुवचनम् ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः**। अथ सृष्टिकालसङ्ख्यार्थंकालविभक्तीर्गणयति निमेषाइति । अक्षिपक्ष्मद्वयसंयोगहेतुः कर्मनिमेषः। सयदा शीघ्रस्तदपेक्षयापञ्चदशनिमेषाःकाष्ठा पुराणेषूक्ता। अत्रतुमन्दकर्माभिप्रायेणाष्टादशेति । ताःकाष्ठाः त्रिंशत्कला। तावतस्तावन्तःविभक्तिव्यत्ययात्त्रिंशदित्यर्थः। तावतेतिक्वचित्पाठः ॥ ६४ ॥

( ३ ) **कुल्लूकः**। इदानीमुक्तमन्वन्तरसृष्टिप्रलयादिकालपरिमाणपरिज्ञानायाह निमेषादशचाष्टाविति। अक्षिपक्ष्मणोःस्वाभाविकस्यउन्मेषस्य सहकारीनिमेषः तेष्टादशकाष्ठानामकालः त्रिंशच्च काष्ठाःकलासंज्ञकः त्रिंशत्कलाःमूहूर्ताख्यःकालःतावंत्रिंशन्मुहूर्तानहोरात्रंकालंविद्यात्। तावतइति द्वितीयानिर्देशात् विद्यादित्यध्याहारः ॥ ६४ ॥

( ४ ) **राघवानन्दः**। कालंकालविभक्तीश्चेत्युक्तं सर्गादिज्ञापनार्थंविवृणोति निमेषाइति दशभिः। पक्ष्मणोःस्वाभाविकः कम्पोनिमेषःसच मनुष्याधिकारकं शास्त्रमिति न्यायान्मनुष्यस्यैव देवानांनिमेषाभावाच्च तेषामष्टादशनिमेषैःकाष्ठा स्यात्। काष्ठानांत्रिंशताकलास्यात् कलानांत्रिंशतामुहूर्तः दण्डद्वयम्.। तावतोमुहूर्तान्त्रिंशन्मुहूर्तान्अहोरात्रंकालंविद्यादिति शेषः ॥ ६४ ॥

( ५ ) **नन्दनः**। अथ सृष्टिसंहारौ कालतः परिच्छेत्तुंकालपरिमाणविभागंतावन्नवभिः श्लोकैराह निमेषाइति। तावतः तावन्तस्तेमुहूर्ताः ॥ ६४ ॥

( ६ ) **रामचन्द्रः**। मन्वन्तरस्य परिमाणार्थं कालस्यपरिमाणमाह निमेषेति । अष्टादशनिमेषैःकाष्ठासंज्ञोच्यते।

---

( ६३ ) ह्यापुश्च=ह्यायुश्च ( क, ख, ग )

* स्वाभाविकस्य उन्मेषस्य सहकारी=स्वभाविकःउन्मेषसंकोचः ( अ )

तास्तुत्रिंशत्काष्ठाःकलात्रिंशत्कलात्मकःकालोमुहूर्तःस्यात् । तावतामुहूर्तेन त्रिंशदिति त्रिंशन्मुहूर्तात्मके न कालेन अहोरात्रंस्यात्मानुषाणाम् ॥ ६४ ॥

**अहोरात्रे विभजते सूर्योमानुषदैविके ॥ रात्रिःस्वमाय भूतानांचेष्टायै कर्मणामहः ॥ ६५ ॥**

( १ ) **मेधातिथिः** । अथ कोयंनिमेषोनाम । अक्षिपक्ष्मणोर्नैसर्गिकंकर्मोन्मेषसहचारी । अन्यैस्तु पठितं यावता-कालेनाविकृतमक्षरमुच्चार्यते सनिमेषः । अहश्च रात्रिश्च तेअहोरात्रे । तयोर्विभागंकरोति । आदित्यउदितआदित्येयावत्त-दीयारश्मयोदृश्यन्तेतावदहर्व्यवहारः । अस्तमिते तु प्रागुदयाद्रात्रिव्यवहारः । मनुष्यलोके देवलोके वा यत्र तर्ह्यादित्योन व्याप्नोति रश्मिभिस्तत्र कथमयमहोरात्रविभागोविज्ञेयोऽतआह रात्रिःस्वमायेति । स्वयंप्रभेषु भूतेषु नित्यप्रकाशत्वात्कर्म-चेष्टाकार्यारम्भेण स्वापेन च विभागः । यथैवौषधीनांनियतः प्रादुर्भावकालः स्वाभाव्यादेवंकर्मचेष्टास्वापावपि कालस्व-भावतएव नियतौ ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । अहोरात्रेइति । सूर्योयथा मानुषमहोरात्रंविभजते तथा दैविकमप्ययनस्य सूर्यगत्यधीनत्वात् । पित्र्याहोरात्रस्य तु तिथिनियतत्वेन चन्द्रनियम्यत्वान्न सूर्योनियामकः । मानुषलौकिकइतिक्वचित्पाठः । तत्र मानुषलोकसंबन्धिनीइत्यर्थः । यद्यपिलोके तादृगन्धकारादेव रात्रित्वाभिव्यञ्जकस्याभावस्तथापि चेष्टानिवृत्त्यैतथोच्य-तइत्याह रात्रिरिति । स्वस्यामिर्व्यामिर्बाह्यनिवृत्तिकृता स्वमश्चेष्टानिवृत्तिः तदर्थंयःकालः सरात्रिः भूतानां कर्मणां-क्रियाणां चेष्टायै निष्पादनाय ॥ ६५ ॥

( ३ ) **कुल्लूकः** । अहोरात्रेइति । मानुषदैवसम्बन्धिनौ दिनरात्रिकालावादित्यःपृथक्करोति । तयोर्मध्ये भूतानां-स्वमार्थंरात्रिर्भवति । कर्मानुष्ठानार्थंच दिनम् ॥ ६५ ॥

( ४ ) **राघवानन्दः** । एतत्सर्वंसूर्यक्रियाकृतमित्याह अहोरात्रेइति । मानुषदैविकेइति ब्राह्मपित्र्ययोरप्युपलक्षणम् । स्वमाय निर्व्यापाराय । चेष्टायै कर्मणांकर्मानुष्ठानार्थंबहिरिन्द्रियाणांप्रवृत्त्यर्थंवा । भूतानांमनुष्यपितृदेवब्रह्मणाम् ॥ ६५ ॥

( ५ ) **नन्दनः** । अहोरात्रपरिच्छेदकारणमाह अहोरात्रेइति । मानुषदैविके मनुष्यदेवसंबन्धेअहोरात्रेसूर्यउदया-स्तमयाभ्यांविभजते । पित्र्यहोरात्रस्याप्युपलक्षणमेतत् ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । अहरिति । सूर्यः स्वगत्या मानुषदैविके अहोरात्रे अहश्च रात्रिश्च अहोरात्रेविभजते वि-भागंकरोति । भूतानांप्राणिनांरात्रिःस्वमाय शयनार्थं कर्मणांचेष्टायै कर्मणांक्रियायैअहःसंज्ञः ॥ ६५ ॥

**पित्र्ये रात्र्यहनी मासःप्रविभागस्तुपक्षयोः ॥ कर्मचेष्टास्वहःकृष्णःशुक्लःस्वमाय शर्वरी ॥ ६६ ॥**

( १ ) **मेधातिथिः** । योमनुष्याणांमासः सपितॄणामहर्निशम् । कतरदहः कतमा च रात्रिरिति प्रविभागः इदमहरि-यंरात्रिरित्येषविभागः । पक्षयोःपञ्चदशरात्रिसंमितयोरर्धमासयोर्व्यवस्थितः पक्षाश्रितइत्यर्थः । एकः पक्षोहरपरोरात्रिस्तयो-श्च भिन्नस्वभावत्वान्नियतक्रमत्वाच्च विशेषमाह । अहः कृष्णःपक्षः शुक्लःपक्षः शर्वरी रात्रिः । कर्मचेष्टाभ्यइति युक्तः पाठोयथा स्वमायेति तादर्थ्यमेवविषयभावेन विवक्षितंवृत्तानुरोधादतःसप्तमी ॥ ६६ ॥

( २ ) **सर्वज्ञनारायणः** । पित्र्येइति । पक्षयोःपक्षाभ्यांविभागः कर्मचेष्टासु पितृकर्मार्थे चेष्टासु कर्तव्यासु कृष्णः पक्षोहस्त्वेनहेतुः । एवमुत्तरत्र ॥ ६६ ॥

( ३ ) **कुल्लूकः** । पित्र्येइति । मानुषाणांमासःपितॄणामहोरात्रेभवतः । तत्र पक्षद्वयेन विभागः कर्मानुष्ठानाय † पूर्वपक्षोऽहः स्वापार्थंशुक्लपक्षोरात्रिः ॥ ६६ ॥

( ४ ) **राघवानन्दः** । ततःकिमित्यतआह पित्र्येइति । प्राधान्यान्निमेषाइत्यनेन प्राप्तानांनृणांपञ्चदशाहोरात्रैःपक्षः तयोर्द्वयंमासः । सच पित्र्येराव्यहनी प्रविभागः पक्षयोःप्रविभक्तयोः पक्षयोर्मध्ये कृष्णोहः । सच साधुःकर्मचेष्टासु पितॄणांशुक्लःपक्षःशर्वरी सच तेषांस्वमायेति तयोर्विभागः। अहरित्यतिदेशोयंखलेकाष्ठन्यायेन कार्यार्थः। अविकृते तादृशे काष्ठे यथा पशुर्बध्यते तथात्र कृष्णपक्षश्राद्धादिकं क्रियतइति ॥ ६६ ॥

( ५ ) **नन्दनः** । अथ पितॄणामहोरात्रपरिमाणमाह पित्र्येइति । प्रविभागउच्यतइतिशेषः । कर्मचेष्टासु कर्मचेष्टार्थमित्यर्थः । पितृलोकेसूर्यः । कृष्णपक्षे नतु शुक्लपक्षे । तस्मात्कृष्णशुक्लपक्षौ पितॄणामहोरात्रेतेनपित्र्यकर्मानुष्ठाने कृष्णपक्षः प्रशस्तइति शास्त्रेषूच्यते ॥ ६६ ॥

( ६ ) **रामचन्द्रः** । पितॄणामहोरात्रमाह पित्र्यइति । मासःकृष्णादिमासःपित्र्ये पितॄणांराव्यहनी रात्रिश्च अहश्च राव्यहनी च कृष्णशुक्लपक्षयोःप्रविभागः । कर्मचेष्टासुअहःस्मृतःकृष्णपक्षोऽहःस्मृतःशुक्लःशुक्लपक्षःस्वमाय निद्रायैशर्वरीरात्रिसंज्ञेति ज्ञेयमिति ॥ ६६ ॥

**दैवे राव्यहनी वर्षं प्रविभागस्तयोः पुनः ॥ अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् ॥ ६७ ॥**

( १ ) **मेधातिथिः** । वर्षंमनुष्याणांद्वादशमासास्तदेकमहोरात्रदेवानाम् । तयोश्च विभागउदगयनदक्षिणाभ्यांतत्रोदीचींदिशमभिप्रतिष्ठमानस्यादित्यस्य षण्मासाउदगयनंभवति । अयनंगमनमधिष्ठानंवा । तस्यांदिशि षण्मासानादित्यउदति । ततः परावृत्तस्य दक्षिणायनम् । तथा हि दक्षिणांदिशमाक्रम्योदीचींहित्वा ह्युदयंकरोति ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः** । दैवेइति । उदगयनात्सूर्यक्रियानिमित्ततोक्तेः सौरमानकृतुवत्सरस्यैवाहोरात्रत्वंन चान्द्रमानेन ॥ ६७ ॥

( ३ ) **कुल्लूकः** । दैवे राव्यहनी वर्षमिति । मानुषाणांवर्षंदेवानांरात्रिदिने भवतः । तयोरप्ययंविभागः नराणामुदगयनंदेवानामहः । तत्र प्रायेण दैवकर्मणामनुष्ठानं दक्षिणायनंतु रात्रिः ॥ ६७ ॥

( ४ ) **राघवानन्दः** । तथादैवेइति । नृद्वादशभिर्मासैः वर्षंतच्चदैवे राव्यहनी तयोरुदगयनंदैवकर्मयज्ञादि प्रवृत्त्यर्थमहः दक्षिणायनंरात्रिरिति विभागः ॥ ६७ ॥

( ५ ) **नन्दनः** । देवलोके सूर्यउत्तरायणे दृश्यते न तु दक्षिणायने । तस्मादेतद्देवानामहोरात्रम् ॥ ६७ ॥

( ६ ) **रामचन्द्रः** । दैवइति देवानामहःपरिमाणमाह । वर्षंसंवत्सररूपं कालंदेवानांराव्यहनीइत्युच्यते पुनस्तयोराव्यन्होः प्रविभागःक्रियते । तत्र विभागे उदगयनं उत्तरायणं देवानामहरुच्यते । दक्षिणायनंरात्रिःस्यात् ॥ ६७ ॥

**ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ॥ एकैकशोयुगानांतु क्रमशस्तन्निबोधत ॥ ६८ ॥**

( १ ) **मेधातिथिः** । ब्रह्मा प्रजानांस्रष्टा तस्य योलोकस्तत्रक्षपाहस्याहोरात्रस्य यत्प्रमाणंयुगानांचैतत्समासतः संक्षेपेण निबोधत मत्सकाशाच्छृणुत । एकैकशएकैकस्य युगस्य वक्ष्यमाणस्य प्रकरणस्य पिण्डार्थकथनार्थोऽयंश्लोकः श्रोतॄणामवधारणार्थः । तथा च संनुध्यन्ते निबोधतेति । प्रकृते कालविभागे पुनः प्रतिज्ञाकरणंतत्त्वज्ञापनार्थम् । तेन वक्ष्य-

---

† पूर्वपक्षः=कृष्णपक्षः ( अ )

माणोऽर्थो न शास्त्रारम्भशषएवापि तु धर्मायापि । तथाच वक्ष्यति ब्राह्मंपुण्यमहर्विदुरिति । तद्वेदनाच्च पुण्यंभवतीत्यर्थः ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मस्येति । क्षपाहस्याहोरात्रस्य । समासतःसंक्षेपतः ॥ ६८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मस्येति । ब्रह्मणोऽहोरात्रस्य यत्परिमाणंप्रत्येकंयुगानांच कृतादीनांतत्क्रमेण समासतःसङ्क्षेपतःशृणुत । प्रकृतेपि कालविभागे यद्ब्रह्मणोऽहोरात्रस्य पृथक्प्रतिज्ञानंतत्तदीयज्ञानस्य पुण्यफलज्ञानार्थम् । वक्ष्यति च ब्राह्मंपुण्यमहर्विदुरिति । तद्वेदनात्पुण्यंभवतीत्यर्थः ॥ ६८ ॥

( ४ ) **राघवानन्दः** । किंच मनुष्यस्य युगानांसत्यत्रेताद्वापरकलिसंज्ञकानांचतुर्णांप्रमाणंतुब्रह्मणः क्षपाहस्यक्षपारात्रिःतया सहअहःक्षपाहः तस्य प्रमाणमिति प्रतिज्ञाद्वयम् । प्रमाणं परिमाणम् ॥ ६८ ॥

( ५ ) **नन्दनः** । ब्राह्मस्य हैरण्यगर्भस्य प्रमाणंपरिमाणंक्रमशोऽर्थक्रमेण ननिर्दिष्टक्रमेण ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मणः दिवसस्य परिमाण कालमाह ब्राह्मेति । ब्राह्मस्य क्षपाहस्य क्षपा रात्रिः अहःदिवसः एतयोःयत्प्रमाणं वर्षाणां यत्परिमाणं अहंकथयिष्ये । समासतः कृतादीनांएकैकशःपरिमाणं क्रमशोवक्ष्ये ॥ ६८ ॥

**चत्वार्याहुः सहस्राणि वर्षाणांतत्कृतंयुगम् ॥ तस्य तावच्छतीसंध्या संध्यांशश्चतथाविधः॥६९॥**

( १ ) **मेधातिथिः** । प्रकृतत्वाद्दैविकानि वर्षाणि परिगृह्यन्ते । तथा च पुराणकारः इत्येतदृषिभिर्गीतं । दिव्यया संख्यया द्विजाः दिव्येनैव प्रमाणेन युगसंख्या प्रकीर्तिता ॥ तानि चत्वारिसहस्राणि कृतयुगंनामकालस्तस्य कृतयुगस्य तावन्त्येव शतानि चत्वारि संध्या । संध्यांशस्तस्य तथाविधस्तत्परिमाणश्चत्वारिवर्षशतानीत्यर्थः। तत्रातीतस्य कालस्यागामिनश्च स्वभावानुवृत्तिः सा संध्या । उभयकालधर्मानुविधानंसंध्यांशोयत्रैषत्पूर्वधर्मानुवृत्तिर्भूयसी भाविनोयुगस्य ॥६९॥

( २ ) **सर्वज्ञनारायणः** । चत्वारीति । देवमानेन चत्वारि सहस्राणि वर्षाः कृतम् । तस्य च चत्वार्येव शतानिदैवेन सन्ध्या पूर्वसन्ध्या सन्ध्यांशउत्तरयुगादिसन्ध्याभागतयोत्तरसन्ध्योच्यते सोपितावानेवेत्यर्थः ॥ ६९ ॥

( ३ ) **कुल्लूकः** । चत्वार्याहुरिति । चत्वारि वर्षसहस्राणि कृतयुगकालंमन्वादयोवदन्ति तस्य तावद्वर्षशतानि सन्ध्यासन्ध्यांशश्च भवति । युगस्य पूर्वासन्ध्याउत्तरश्च सन्ध्यांशः । तदुक्तं विष्णुपुराणे तत्प्रमाणैः शतैःसन्ध्यापूर्वा तत्राभिधीयते । सन्ध्यांशकश्च तत्तुल्योयुगस्यानन्तरोहियः ॥ सन्ध्यासन्ध्यांशयोरन्तर्यःकालोमुनिसत्तम । युगाख्यःसतुविज्ञेयःकृतत्रेतादि संज्ञकः ॥ वर्षसङ्ख्याचेयंदिव्यमानेन तस्यैवान्तरप्रकृतत्वात् दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादि संज्ञितम् चतुर्युगंद्वादशभिस्तद्विभागंनिबोध म इतिविष्णुपुराणवचनाच्च ॥ ६९ ॥

( ४ ) **राघवानन्दः** । तत्र सत्ययुगसङ्ख्यामाह चत्वारीति । कृतंसत्याख्यं वर्षाणांदैवसंवत्सराणांचतुर्युगपरिमाणेन दैवद्वादशसहस्रस्य न्यूनताप्राप्तिंसन्ध्यासन्ध्यांशाभ्यांपूरयन्नाह तस्येति । तावच्छती चतुःशती सन्ध्यासन्ध्यांशः सन्ध्ययोःपूर्वापरभागः सतथाविधश्चतुःशतपरिमाणः तेनाष्टशताधिकचतुःसहस्रपरिमितंकृतम् ॥ ६९ ॥

( ५ ) **नन्दनः** । वर्षाणांदिव्यवर्षाणांसन्ध्यायुगारम्भकालः सन्ध्यांशोयुगावसानकालः ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । युगानांपरिमाणमाह चत्वारीति । वर्षाणां चत्वारि सहस्राणि तत्कृतयुगमाहुः । तस्य कृतयुगस्य सन्ध्या तावती चत्वारिंशत् शतानि भवन्ति तथाविधः तेनप्रकारेण सन्ध्यांशश्च तावती चतुःशतानि भवन्ति ॥ ६९ ॥

**इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ॥ एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ ७० ॥**

( १ ) **मेधातिथिः** । कृतयुगादन्येषु त्रेतादिषु सन्ध्यासन्ध्यांशसहितेषु सहस्राण्येकापायेन वर्तन्ते । हानिरपायः । एकसहस्रहीनं त्रेतायां कृतयुगात् । एवं त्रेताऽतोद्वापरस्य द्वापरात्कलेः । एवं च त्रीणिवर्षसहस्राणि त्रेता द्वे द्वापर एकंकलिरिति भवति । शतानिहीयन्ते सन्ध्यातदंशयोर्विशिष्टोहः संघातोयुगाख्यस्तस्य विशेषाः कृतादयः। तावच्छतीति ईकारः स्मर्तव्यः । इह स्मृतिः तावतांशतानांसमाहारस्तावच्छब्दस्यबहुगणवतुडतीति वत्वन्तत्वात्संख्यासंज्ञायांसत्यां संख्यापूर्वो-द्विगुरिति द्विगुसंज्ञायां सत्यां टापोपवादोद्विगोरिति ङीप् । शतंपरिमाणमस्य यत्तदेतेभ्यइति वतुप् । आसर्वनाम्नइत्याकारः । अन्यथाबहुव्रीहौ तावन्तिशतानियस्याः शतशब्दस्याकारान्तत्वादजाद्यतष्टाविति टापाभवितव्यम् । तस्मिन्कृते तावच्छताइतिस्यादित्यभिप्रायः ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । इतरेष्विति । ससन्ध्येषु ससन्ध्यांशेषु युगेषु यावन्त्युक्तान्यब्दसङ्ख्यात्वेन शतानि सहस्राणि च तान्येकैकसंख्यापायेनोक्तक्रमादन्ययुगेषु । सहस्रत्रयंशतत्रयंच त्रेतायाः द्वे द्वे द्वापरस्यैकैकंकलेरित्यर्थः ॥७० ॥

( ३ ) **कुल्लूकः** । इतरेष्विति । अन्येषु त्रेताद्वापरकलियुगेषु सन्ध्यासन्ध्यांशसहितेषुएकहान्या सहस्राणि शतानि च भवन्ति । तेनैवंसम्पद्यते । त्रीणि वर्षसहस्राणि त्रेतायुगंतस्य त्रीणि वर्षशतानि सन्ध्यासन्ध्यांशश्च । एवंद्वेवर्षसहस्रेद्वापरः तस्य द्वे वर्षशतेसन्ध्या सन्ध्यांशश्च । एवंवर्षसहस्रंकलिः तस्यैकवर्षशतंसन्ध्यासन्ध्यांशश्च ॥ ७०॥

( ४ ) **राघवानन्दः** । इतरेषु त्रेताद्वापरकलिसंज्ञकेषुएकापायेनेत्ययमर्थः । त्रेताख्यंयुगंषट्शताधिकसहस्रत्रितयपरिमितम् । द्वापराख्यं चतुःशताधिकसहस्रपरिमितम् । कलिसंज्ञकं द्विशताधिकसहस्रपरिमितमिति ॥ ७० ॥

( ५ ) **नन्दनः** । इतरेषु त्रेताद्वापरकलियुगेषु । एकापायेनएकलोपेन ॥ ७० ॥

( ६ ) **रामचन्द्रः** । इतरेषु त्रेतादिषु त्रिषु सन्ध्येषु सन्ध्यांशेषु सहस्राणि शतानि च एकापायेनएक चरणन्यूनाब्देनप्रवर्तन्ते । तद्यथा त्रेतायुगंत्रीणि सहस्राणि त्रिशतानि पूर्वसन्ध्या तथा सन्ध्यांशश्च त्रिशतानि च द्वापरंयुगंद्विसहस्राणि द्विशतानि सन्ध्या तथा सन्ध्यांशः द्विशतानि कलिः कलियुगं एकसहस्रमेकशतसंन्ध्या तथा सन्ध्यांशः एकशतम् ॥ ७०॥

**यदेतत्परिसंख्यातमादावेव चतुर्युगम् ॥ एतद्द्वादशसाहस्रंदेवानांयुगमुच्यते ॥ ७१ ॥**

( १ ) **मेधातिथिः** । यदेतदिति लौकिकीवाचोयुक्तिः । समुदायेनप्रक्रान्तोऽर्थः परामृश्यते । यदेतच्चतुर्युगंपरिसंख्यातं चत्वारिसहस्राणीत्यादिना निश्चितसंख्यमादौ प्रागस्मादेच्छ्लोकाकस्य चतुर्युगस्य द्वादशभिः सहस्रैर्देवानांयुगमुच्यते । द्वादशचतुर्युगसहस्राणि देवयुगंनामकालइत्यर्थः । सहस्रशब्दात्स्वार्थेऽण् । द्वादशचतुर्युगसहस्राणि परिमाणं यस्मिन्निति विग्रहः ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । यदेतदिति । एतच्चतुर्युगंद्वादशसाहस्रंद्वादशभिर्वत्सरसहस्रैर्दैविकैर्भवति । तच्च देवानामेकंयुगमुच्यते ॥ ७१ ॥

( ३ ) **कुल्लूकः** । यदेतदिति । एतस्य श्लोकस्यादौ यदेतन्मानुषंचतुर्युगंपरिगणितंएतद्देवानांयुगमुच्यते । चतुर्युगशब्देनसन्ध्यासन्ध्यांशयोरप्राप्तिशङ्कायामाह एतंद्वादशसाहस्रमिति । स्वार्थेऽण् । चतुर्युगैरेव द्वादश*संख्यैर्दिव्यंयुगमिति तु मेधातिथेर्भ्रमोनादर्तव्यः मनुनानन्तरंदिव्ययुगसहस्रेण ब्रह्माहस्याप्यभिधानात् विष्णुपुराणे च मानुषचतुर्युगसहस्रेण ब्रह्मा-

* द्वादश=द्वादशसहस्र ( अ )

हकीर्तनान्मानुषचतुर्युगेनैव दिव्ययुगानुगमनात्। तथा च विष्णुपुराणम् कृतत्रेताद्वापरंच कलिश्चेति चतुर्युगम्। प्रोच्यते तत्सहस्रंतु ब्रह्मणोदिवसोमुने ॥ ७१ ॥

( ४ ) **राघवानन्दः**। दैवयुगमाह यदिति। एतानि द्वादशसहस्राणि क्रियापरिच्छेदकानि यस्य ॥ ७१ ॥

( ५ ) **नन्दनः**। साहस्रंदेवानामिति पूर्वोत्तराभ्यां संगच्छते ॥ ७१ ॥

( ६ ) **रामचन्द्रः**। एतद्वादशसहस्रंद्वादशसहस्रकंकालोदेवानांयुगमुच्यते ॥ ७१ ॥

**दैविकानांयुगानांतु सहस्रंपरिसंख्यया ॥ ब्राह्ममेकमहर्ज्ञेयंतावतींरात्रिमेवच ॥ ७२ ॥**

( १ ) **मेधातिथिः**। देवयुगसाहस्रंब्राह्ममेकमहः। तावती ब्रह्मणोरात्रिर्दैवयुगसहस्रमेव। परिसंख्यया संख्यानेन यत्सहस्रमितिसंबन्धः। श्लोकपूरणार्थश्चायमनुवादः। नह्यसंख्यया सहस्रादिव्यवहारः। हेतौतृतीया ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः**। दैविकानामिति। रात्रिःप्रलयकालः ॥ ७२ ॥

( ३ ) **कुल्लूकः**। दैविकानामिति । देवयुगानांसहस्रंब्राह्मदिनंज्ञातव्यंसहस्रमेव रात्रिः । परिसंख्ययेति श्लोकपूरणोऽर्थानवादः ॥ ७२ ॥

( ४ ) **राघवानन्दः**। ब्राह्ममहराह । दैविकानांदेवमानेन द्वादशसहस्राब्दात्मकानांपरिसंख्यया गणनया सहस्रं ब्राह्ममहः। ब्रह्मात्रविराट्तस्य संबन्धितया तावतीरात्रिःदेवयुगसहस्रपरिमितेत्यर्थः। अतोभिधानंदैवे युगसहस्रे द्वे ब्राह्मशतत्वेत्वहोरात्रे मनुष्याणांयुगानामष्टौ सहस्राणि। कृतं त्रेताद्वापरंचकलिश्चेति चतुर्युगम् प्रोच्यते तत्सहस्रंतु ब्रह्मणोदिवसं मुनेइति विष्णुपुराणोक्तेः ॥ ७२ ॥

( ५ ) **नन्दनः**। ब्राह्मंहैरण्यगर्भम् ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । दैवानांयुगानांसहस्रसङ्ख्यया ब्राह्ममहः ब्रह्मणः एकंज्ञेयंरात्रिरेवतावती संख्यायुगानांसहस्रसङ्ख्ययारात्रिर्ज्ञातव्या ॥ ७२ ॥

**तद्वै युगसहस्रान्तंब्राह्मंपुण्यमहर्विदुः ॥ रात्रिंच तावतीमेव तेऽहोरात्रविदोजनाः ॥ ७३ ॥**

( १ ) **मेधातिथिः** । युगसहस्रमन्तोयस्याह्नस्तद्युगसहस्रान्तम् येमनुष्याएतज्जानते तेऽहोरात्रविदः । किंतेषामित्यपेक्षायां पुण्यंभवतीति संबन्धः। ब्राह्मस्याह्नः परिमाणवेदनंपुण्यंमतस्तद्वेदितव्यमितिस्तुत्या विधिप्रतिपत्तिः ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । नन्वस्तु ब्रह्मणोदिनव्यवस्था रात्रिव्यवस्थातुकथंसूर्यगत्यादेस्तदवच्छेदकस्याभावादत आह तद्यतइति। ये ब्रह्मलोकनिवासिनः स्वलोकस्थोपाध्यवच्छेदेन ब्राह्ममहर्युगसहस्रपरिसमाप्तंविदुस्ते रात्रिमपि तावतीमेव तथा च तल्लोकस्थोपाधिरेवावच्छेदइत्यर्थः। पूर्वचतुर्मुखापवर्गानन्तरकल्पभाविचतुर्मुखतासृष्टिरुक्ता ॥ ७३ ॥

( ३ ) **कुल्लूकः**। तद्वैयुगेति। युगसहस्रेणान्तःसमाप्तिर्यस्य तद्ब्राह्ममहस्तत्परिमाणांच रात्रिंये जानन्तितेऽहोरात्रज्ञाइति स्तुतिरियम्। स्तुत्या च ब्राह्ममहोरात्रंज्ञातव्यमिति विधिः परिकल्पते। अतएततपुण्यहेतुत्वात्पुण्यमितिविशेषणंकृतम् ॥ ७३ ॥

( ४ ) **राघवानन्दः**। किंच तद्वाइति। पुण्यंपुण्य हेतुत्वात्। तद्वै युगेत्यनुवादः। अहोरात्रत्वंविधेयम् ॥ ७३ ॥

---

( ७३ ) तद्वैयुगसहस्रान्तं=तथैवयुगसाहस्रम् ( क )
=एतयुगसहस्रंतु ( ग )
=एतद्युगसहस्रान्तं ( ख )

( ५ ) **नन्दनः** । अथ हिरण्यगर्भाहोरात्रविदांफलमाह तद्वाइति । युगसहस्रान्तंदेवयुगसहस्रान्तंस्वपरिमाणविदांपुण्यफलप्रदत्वात्पुण्यंतद्ब्राह्ममहस्तावतींरात्रिंच ये विदुस्ते जनाअहोरात्रविदोभवन्ति ब्रह्मलोकंप्राप्य ब्रह्माहोरात्रपरिवृत्तिमनुसंदधतइत्यर्थः ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । दैविकेप्यन्यन्मतम् । ते ब्रह्मलोकनिवासिनोजनाः अहोरात्रविदः ब्रह्मणः अहोरात्रंजानन्ति॥७३॥

**तस्य सोऽहर्निशस्यान्ते प्रसुप्तःप्रतिबुध्यते ॥ प्रतिबुद्धश्च सृजति मनःसदसदात्मकम् ॥ ७४ ॥**

( १ ) **मेधातिथिः** । सब्रह्मा तावतींदीर्घांनिशामनुभूय निद्रांप्रतिबुध्यते । ततःपुनर्जगत्सृजति । स्वापोब्रह्मणउक्तरूपः । नह्यसौ प्राकृतपुरुषवत्स्वपिति नित्यंप्रतिबोधात् । तत्र सर्गक्रममाह मनः सदसदात्मकमिति । ननु चापएवससर्जादावित्युक्तम् । केचिदाहुर्द्विविधः प्रलयः महाप्रलयोऽवान्तरप्रलयश्च । अवान्तरप्रलये ऽयंक्रमः । मनश्चात्र न तत्त्वान्तर्गतंतस्य पूर्वमुत्पन्नत्वात् । किंतर्हि प्रजापतिः प्रबुद्धः मनःसर्गाय सृजति नियुङ्क्तइत्यर्थः । द्वितीयेतुमहाप्रलयपक्षे मनः कारणत्वान्महत्तत्वमेवमनस्ततश्च प्रागुक्तंमहानिति । पुराणेहि मनोमहान्मतिर्बुद्धिर्महत्तत्वं च कीर्त्यते।पर्यायवाचकाः शब्दामहतः परिकीर्तिता इति ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः**। अथतस्यैवाहोरात्र्यन्तर्भाविनमवान्तरसृष्टिक्रममाह तस्येति । मनोमहान्तंवर्तमानावर्तमान वस्तूपादानभूतम् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । तस्येति । सब्रह्मा तस्य पूर्वोक्तस्य स्वीयाहोरात्रस्य समाप्तौ प्रतिबुद्धोभवति । प्रतिबुद्धश्च स्वीयंमनःसृजति भूर्लोकादित्रयसृष्ट्यें नियुङ्क्ते न तु जनयति । तस्य महाप्रलयानन्तरंजातत्वादनष्टत्वाच्चावान्तरप्रलये भूर्लोकादित्रयमात्रनाशात् सृष्ट्यर्थंमनोनियुक्तिरेव मनःसृष्टिः । तथा च पुराणे श्रूयते मनःसिसृक्षया युक्तंसर्गाय निदधे पुनरिति । अथवा मनःशब्दोयंमहत्तत्त्वपरएव । यद्यपि तन्महाप्रलयान्तरमुत्पन्नंमहान्तमेव चेत्यादिना सृष्टिरपि तस्योक्ता तथाप्यनुक्तंभूतानामुत्पत्तिक्रमंतद्गुणांश्च कथयितुं महाप्रलयानन्तरितामेव महदादिसृष्टिंभूतसृष्टिंच हिरण्यगर्भस्यापि § परमार्थत्वात्तत्कर्तृतामनुवदति । एतेनेदमुक्तंभवति । ब्रह्मा महाप्रलयानन्तरितसृष्ट्यादौपरमात्मरूपेण महदादितत्त्वानि जगत्सृष्ट्यर्थंसृजति । अतएव शेषे वक्ष्यति इत्येषासृष्टिरादितइति । अवान्तरप्रलयानन्तरंतु मनःप्रभृतिसृष्टावभिधानक्रमेणैव प्राथम्यप्राप्तिरित्येषासृष्टिरादितइति निष्प्रयोजनोनुवादःस्यात् ॥ ७४ ॥

( ४ ) **राघवानन्दः** । अहोरात्रादिपरिमाणफलमाह तस्येति । अहर्निशस्य अहश्चनिशाचेति अहर्निशंतस्य निशायाअन्तइत्यर्थः । प्रतिबुद्धः किंचकारेत्याह प्रतिबुद्धश्चेति । मनोलिङ्गशरीरंतत्तत्प्राण्यदृष्टसंयुक्तं सृजति प्रेरयति पुनर्भोगाय तन्मनोऽकुरुतात्मन्वीस्यांततआपोजायन्तइति श्रुतेः ॥ ७४ ॥

( ५ ) **नन्दनः** । सभगवांस्तस्यब्रह्मणोऽहर्निशस्यअह्नांनिशानांचान्तेआयुषोऽन्तइत्यर्थः । नचैवंनिशान्तइत्येववक्तव्यम् । प्रसुप्तस्तावन्तंकालमुपरतक्रियोभूत्वा प्रतिबुध्यते पुनः सृष्ट्युन्मुखोभवति । सदसदात्मकंप्रकृतिविकृत्यात्मकम् । अत्र मनश्शब्देन महदहंकारमनांसि गृह्यन्ते नातिमहत्त्वात्तेषांवैषम्यस्य ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । तस्येति सब्रह्मा तस्य सहस्राहर्निशस्यान्ते प्रसुप्तः शयनंकरोति निद्रायाअन्तेप्रतिबुध्यते जागर्ति । प्रतिबुद्धः सन्सदसदात्मकंकार्यकारणात्मकंमनः सृजति ॥ ७४ ॥

---

§ परमार्थ=परमात्म ( अ )

**मनःसृष्टिंविकुरुते चोद्यमानंसिसृक्षया ॥ आकाशंजायते तस्मात्तस्य शब्दंगुणंविदुः ॥ ७५॥**

( १ ) **मेधातिथिः** । उक्ताऽप्येषा तत्त्वस्यसृष्टिर्योविशेषोनोक्तस्तत्प्रतिपादनाय पुनरुच्यते ब्रह्मणा चोद्यमानं-तस्मान्नोदितादाकाशंजायते । तस्याकाशस्य शब्दाख्योगुणोभवति । गुणआश्रितउच्यते । आकाशांतस्याश्रयोनह्याकाश विना शब्दस्य संभवः ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । मनइति । सृष्टिंसृज्यंविकुरुते तद्रूपेण विक्रियते । ईश्वरस्य सिसृक्षया प्रेर्यमाणंनस्वे-च्छया तस्मादहंकारतया परिणतात् यद्यद्विशिष्टमेव गम्यते सतस्य गुणइति राजवार्त्तिकम् ॥ ७५ ॥

( ३ ) **कुल्लूकः** । मनःसृष्टमिति । मनोमहान्सृष्टिंकरोति परमात्मनःस्रष्टुमिच्छया प्रेर्यमाणंतस्मादाकाशमुत्पद्यते । तच्च पूर्वोक्तानुसारादहङ्कारतन्मात्रक्रमेणाकाशस्य शब्दंगुणंविदुर्मन्वादयः ॥ ७५ ॥

( ४ ) **राघवानन्दः** । लिङ्गशरीराभिव्यक्त्यनन्तरं स्थूलाकारादिसृष्टिः अतआह मनइति । सृष्टेर्मनः कर्तृ चोद्यमा-नंजीवादृष्टाकृष्टंसतसृष्टिरस्थूलाकारादि कुरुते हिरण्यगर्भावच्छेदकत्वेनापञ्चीकृतानामाकाशादीनांतदानींसत्त्वात् न तेषांप्रजा-पतिसृष्टत्वमिन्द्रियाणांवा ॥ ७५ ॥

( ५ ) **नन्दनः** । सिसृक्षया भगवतः ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । मनइति । सिसृक्षया सृष्टेः शिक्षया नोद्यमानंतामसाहंकारात्मकंमनः सृष्टिंविकुरुते करोति तस्मा-त्तामसाहंकारात्आकाशंआकाशसंज्ञंप्रथमंजायते तस्याकाशस्यगुणंशब्दंविदुः शब्दगुणमाकाशमित्यर्थः ॥ ७५ ॥

**आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ॥ बलवाञ्जायते वायुःसवै स्पर्शगुणोमतः ॥ ७६ ॥**

( १ ) **मेधातिथिः** । भूताद्भूतान्तरस्योत्पत्तिर्नेष्यते । महतः सर्वभूतानामुत्पत्त्यभ्युपगमात्तेनैवंव्याख्यायते । आका-शादनंतरंमहतोविकुर्वाणात्स्पर्शमात्राभावंगताद्वायुर्जायते सर्वगन्धाऽच्छुचीनशुचींश्च वहति । अथचशुचिः पवित्रः । बलवा-न्काचिच्चलनकतिश्चेष्टारूपा सा वायुकर्मणः कम्पाक्षेपोर्ध्वाधस्तिर्यग्गमनादिलक्षणा यत्किञ्चिच्चलितंस्पन्दितंतत्सर्ववाय्वा-यत्तमित्येनत्प्रदर्शयितुंबलवानित्युक्तम् । उत्तरत्रापिया;पञ्चम्यस्तानजन्यर्थापेक्षाः किंतर्हि वायोः परतोऽनन्तरमित्येव योजनीयाः ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । आकाशात्त्विति । सर्वगन्धवहइति तदर्थक्रियोपदर्शनम् ॥ ७६ ॥

३ ) **कुल्लूकः** । आकाशादिति । आकाशात्तुविकारजनकात्सुरभ्यसुरभिगन्धवहःपवित्रोबलवांश्च वायुरुत्पद्यते । सच स्पर्शाख्यगुणवान्मन्वादीनांसंमतः ॥ ७६ ॥

( ४ ) **राघवानन्दः** । आद्यार्धस्य गुणत्वेषामित्यत्रोक्तान् भूतगुणान्प्रपञ्चयितुंतान्यनुवदति आकाशमिति सार्ध-त्रिभिः । आकाशमत्र स्थूलंविकुर्वाणात् कार्याकारेण परिणममानात् । शुचि;पावनः पन्थानश्च विशुध्यन्ति सोमसूर्यांशु-मारुतैरित्युक्तेः ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । आकाशादिति । आकाशात्तु विकुर्वाणाद्रूपान्तरंप्राप्तवतः वायुर्जायते सवैवायुः स्पर्श-गुणोमतः ॥ ७६ ॥

**वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम् ॥ ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ॥ ७७॥**

( १ ) **मेधातिथिः** । विरोचिष्णुभास्वदिति समानार्थेन शब्दद्वयेन स्वपरप्रकाशता प्रतिपाद्यते । स्वयंदीप्तिमत्परंच भासयति ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । तमोनुदमन्धकारविरोधि । भास्वत् परप्रकाशकदीप्तिमत् । ज्योतिस्तेजः ॥ ७७ ॥

( ३ ) **कुल्लूकः** । वायोरपीति । वायोरपि तेजउत्पद्यते विरोचिष्णु परप्रकाशकंतमोनाशनंभास्वत्प्रकाशकंतच्च गुणरूपमभिधीयते ॥ ७७ ॥

( ४ ) **राघवानन्दः** । रोचिष्णु परप्रकाशकं अतएव तमोनुदं भास्वत्स्वप्रकाशम् ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । वायोरिति । विकुर्वाणात्रूपान्तरंप्राप्नवतः सकाशाज्ज्योतिरुत्पद्यते तस्य च ज्योतिषः रूपंगुणमाहुः । अन्यत्सर्वविशेषणंज्ञातव्यम् ॥ ७७ ॥

**ज्योतिषश्च विकुर्वाणादापोरसगुणाःस्मृताः ॥ अद्भ्योगन्धगुणाभूमिरित्येषा सृष्टिरादितः ॥ ७८ ॥**

**[ परस्परानुप्रवेशाद्धारयन्तिपरस्परम् ॥ गुणंपूर्वस्यपूर्वस्य धारयन्त्युत्तरोत्तरम् ॥ † ]**

( १ ) **मेधातिथिः** । रसोमधुरादिः सलिलगुणोगन्धःसुरभिरसुरभिश्च सभूमेर्गुणः । तथा च वैशेषिकाः क्षितावेवगन्धइत्येतेसांसिद्धिकाएकैकस्य गुणाः संसर्गात्तुसंकीर्यन्तेतदुक्तंयोयोयावतिथइति । एतच्च गुणानुकथनमध्यात्मचिन्तायामुपयुज्यते । उक्तंहि पुराणकारेण दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तुशतंपूर्णंसहस्रंत्वभिमानिनः ॥ अहंकारचिन्तकाः । महात्मकाःसहस्राणि दशतिष्ठन्तिविज्वराः। पूर्णंशतसहस्रंतु तिष्ठन्त्यव्यक्तचिन्तकाः । पुरुषंनिर्गुणंप्राप्यपरिसंख्या न विद्यते ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । ज्योतिषस्त्विति । रसगुणत्वमात्मा स्वभावोवा यासांतारसगुणात्मिकाः । आदितोवान्तरसृष्ट्यादौ । जलभूम्योरर्थक्रियायाःप्रसिद्धत्वेनानभिधानम् ॥ ७८ ॥

( ३ ) **कुल्लूकः** । ज्योतिषश्चेति । तेजसआपउत्पद्यन्ते । ताश्च रसगुणयुक्ताअद्भ्योगन्धगुणयुक्ता भूमिरित्येषा महाप्रलयानन्तरसृष्ट्यादौ भूतसृष्टिः । तैरेव भूतैरवान्तरप्रलयानन्तरमपि भूरादिलोकत्रयनिर्माणम् ॥ ७८ ॥

( ४ ) **राघवानन्दः** । आदितः स्थूलब्रह्माण्डसृष्टेःपूर्वम् ॥ ७८ ॥

( ५ ) **नन्दनः** । गन्धवहा गन्धगुणा । आदितोऽण्डसृष्टेः प्राक् ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । ज्योतिषइति ज्योतिषस्तु विकुर्वाणात् आपः उत्पद्यन्तेकीदृशः आपः रसगुणात्मकाः रसः गुणोयासांताः रसगुणात्मकाः अद्भ्यः सकाशात्भूमिरुत्पन्ना जाता कीदृशी भूमिः गन्धगुणाआदितः प्रथमतः एवासृष्टिः उदिता ॥ ७८ ॥

[ **रामचन्द्रः** । परस्परेति । महाभूतानांआकाशादीनां परस्परानुप्रवेशात्परस्परम् धारयन्ति । तद्यथा कारणस्य आकाशस्यकार्ये वायौ प्रवेशः । एवमग्रेप्यूह्यम् । पूर्वपूर्वस्य उत्तरोत्तरंगुणंधारयन्ति तद्यथा आकाशस्य शब्दंगुणंवायोः-स्पर्शगुणं वायौ शब्दस्पर्शौभवतः तेजसः रूपंगुणं तेजसिशब्दस्पर्शरूपाणिभवन्ति । एवमपिअग्रेऊह्यम् ॥ १ ॥ ]

**यत्प्राक्द्वादशसाहस्रमुदितंदैविकंयुगम् ॥ तदेकसप्ततिगुणंमन्वन्तरमिहोच्यते ॥ ७९ ॥**

( १ ) **मेधातिथिः** । एकसप्ततिर्दैविकानि युगानि मन्वन्तरंनामकालः ॥ ७९ ॥

---

† अयं ( ख, ग, ञ ) चिन्हितपुस्तकेषु दृष्टः ।

( ७९ ) सप्ततिगुणं=समतियुगं ( च )

( २ ) **सर्वज्ञनारायणः** । यत्प्रागिति । एकसप्ततिगुणंकिंचिदधिकमित्यल्पत्वान्नोक्तम् । मनोरधिकारलाभस्या न्तरमेकमनुपालनावच्छिन्नःकालइत्यर्थः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । यत्प्रागिति । यत्पूर्वंद्वादशवर्षसहस्रपरिमाणंसन्ध्यासन्ध्यांशसहितंमनुष्याणांचतुर्युगंदेवानामेकंयुग-मुक्तंतदेकसप्ततिगुणितंमन्वंतराख्यःकालइह शास्त्रेऽभिधीयते । तत्रैकस्य मनोःसर्गाद्यधिकारः ॥ ७९ ॥

( ४ ) **राघवानन्दः** । मन्वन्तरसङ्ख्याख्यापनार्थंपूर्वोक्तमनुवदति यदिति । दैवैकयुगसप्ततिपरिमितंमन्वन्तरमि-त्यर्थः ॥ ७९ ॥

( ५ ) **नन्दनः** । अथ मन्वन्तरंकालेन परिच्छिनत्ति यत्प्रागिति । द्वादशसाहस्रंदेववर्षाणांगणः ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । यदिति । तद्दैविकंयुगंएकसप्ततिगुणंमन्वन्तरसंज्ञकं कालइहोच्यते । परमेष्ठीपितामहइत्यमरः ॥ ७९ ॥

**मन्वन्तराण्यसंख्यानि सर्गःसंहारएव च ॥ क्रीडन्निवैतत्कुरुते परमेष्ठी पुनःपुनः ॥ ८० ॥**

( १ ) **मेधातिथिः** । नैषांसंख्याविद्यतइत्यसंख्यानि । ननु चतुर्दशमन्वन्तराणीति संख्या श्रूयते ज्योतिःशास्त्रादौ-उच्यते आवृत्त्या ह्यसंख्यानि यथा द्वादशमासाः । सर्गसंहारयोरप्यावृत्तिरनुपरतैव । क्रीडन्निवैतत्कुरुतइति सुखार्थितया क्रीडातस्यचाप्तकामत्वादानन्दैकरूपत्वाच्च न क्रीडाप्रयुक्तौ सर्गसंहारावतइवशब्दः प्रयुक्तःअत्रपरिहारःसप्रागुक्तएव । ली-लयापिकौतुकेनापिलोके राजादीनांप्रवृत्तिर्दृश्यतइति ब्रह्मविदः ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । मन्वन्तराणीति । असङ्ख्यान्येकस्मिन्ब्रह्मायुषि क्रीडन्निवेति किमर्थं करोतीतिप्रयोज-नप्रश्ननिरासार्थम् ॥ ८० ॥

( ३ ) **कुल्लूकः** । मन्वन्तराणीति । यद्यपि चतुर्दशमन्वन्तराणि पुराणेषु परिगण्यन्ते तथापि सर्गप्रलयानामानन्त्या-दसङ्ख्यानि आवृत्त्यासर्गः संहारश्चासङ्ख्यः । एतत्सर्वंक्रीडन्निव प्रजापतिःपुनःपुनःकुरुते । सुखार्थाहि प्रवृत्तिःक्रीडा तस्यचाप्तकामत्वान्नसुखार्थितेति* इव शब्दःप्रयुक्तः । परमेस्थानेऽनावृत्तलक्षणे तिष्ठतीति परमेष्ठी । प्रयोजनं विना परमा-त्मनःसृष्ट्यादौ कथं प्रवृत्तिरिति चेत् लीलयैव एवंस्वभावत्वादित्यर्थः व्याख्यातुरिव करताडनादौ । तथा च शारीरकसूत्रं लोकवत्तुलीलाकैवल्यम् ॥ ८० ॥

( ४ ) **राघवानन्दः** । सृष्ट्यादि ब्रह्मणोलीलामात्रमित्याह मन्विति ॥ ८० ॥

( ५ ) **नन्दनः** । असंख्यानीयत्तया रहितानि । एतत्जगत् । परमेष्ठीभगवान् । यत्नराहित्यमुक्तंक्रीडन्निवेतिस्प-ष्टम् ॥ ८० ॥

**चतुष्पात्सकलोधर्मःसत्यंचैव कृते युगे ॥ नाधर्मेणागमःकश्चिन्मनुष्यान्प्रतिवर्तते ॥ ८१ ॥**

( १ ) **मेधातिथिः** । चत्वारःपादायस्य चतुष्पाद्धर्मः। यागादेश्च धर्मत्वात्तस्यचानुष्ठेयस्वभावत्वाद्विग्रहाभावान्नपाद-शब्दः शरीरावयववचनः किंतर्हि अंशमात्रवचनः। नहि धर्मस्य शरीरमस्ति पुरुषविधंपशुपक्ष्यादिविधंवा । तेन स्वांशैश्च-तुर्भिरुपेतश्चतुष्पादुच्यते । तेन योयंधर्मः चतुष्पात्कृतयुग आसीत् यागस्य तावत्प्रयोगावस्थस्य चत्वारोहोतृकाः । होता

---

* सुखार्थितेति=सुखार्थेति (अ)

ब्रह्मा उद्गाता अध्वर्युरिति चत्वारोवर्णाः कर्तारआश्रमा वा सर्वथा यावान्वेदेधर्मउक्तः ससर्वस्तस्मिन्कालेऽशतोपिनहीनः अविगुणः सर्वोऽनुष्ठीयते । बाहुल्येन चतुःसंख्याः । एवंदानादिष्वपि योज्यम् । दाता द्रव्यं पात्रंभावस्तुतिः अथवा यागदानतपांसि ज्ञानंच । तथा वक्ष्यति तपः परमिति। अथवा धर्मप्रतिपादकंवाक्यंधर्मः तस्य च चत्वारः पादाः चत्वारिपदजातानि । नामाख्याते चोपसर्गनिपाताश्च । तथा चाह चत्वारिवाक्परिमितापदानितानि विदुर्ब्राह्मणाये मनीषिणः । मनसईषिणः समर्थाविद्वांसोधार्मिकाः । अद्यत्वे तु गुहायां त्रीणि निहितानि नेङ्गयन्ति न हि प्रकाशन्ते । तुरीयंभागंवैदिकानां मनुष्यावदन्ति । एतदुक्तंभवति किंचिदन्तरितम् । नन्वा काचिद्वेदशाखा । अद्यत्वे तु बह्वन्तरितम् । सत्यंचैवंसकलमित्यनुषङ्गः । सत्यपि सत्यस्यविहितत्वाद्धर्मत्वे प्राधान्यार्थः पृथगुपदेशः हेत्वर्थे वा । सकलस्य धर्मानुष्ठानस्य सत्यंहेतुः। येत्वनृतिनस्तेलोकावर्जनार्थंकिंचिदनुतिष्ठन्त्यन्यत्त्यजन्ति । नाधर्मेण निषिद्धेन मार्गेण कश्चिदागमोविद्या बार्थोवानुष्ठातुरुपवर्ततेआगच्छति युगस्वाभाव्यान्नमनुष्याअधर्मेण विद्यामागमयन्ति नापि धनमर्जयन्ति। विद्याधने धर्मानुष्ठानकारणे तत्परिशुद्धिः सकलधर्मसद्भावस्यहेतुत्वेन नोच्यते ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । चतुष्पादिति । धर्मोहितपोज्ञानयज्ञदानपादचतुष्टयवान् सत्यमूर्धा । अधर्मस्तुचौरिकानृतमायाख्यचरणत्रयमात्रात् । यथाचाधर्माभावात्तदा कृते संपूर्णएवंचतुष्पाद्धर्मः । सत्यंचैव सकलं । आगमोर्थागमोनाधर्मेणोपवर्तते । यतइतिसाकल्यहेतुः ॥ ८१ ॥

( ३ ) **कुल्लूकः** । चतुष्पात्सकलोधर्मइति । सत्ययुगे सकलोधर्मश्चतुष्पात्सर्वाङ्गसम्पूर्णआसीत्। धर्मे मुख्यपादासंभवात् वृषोहि भगवान्धर्मइत्याद्यागमे वृषत्वेन कीर्तनात्तस्य पादचतुष्टयेन सम्पूर्णसत्वात्सत्ययुगेऽपियज्ञादि धर्माङ्गांसर्वैरङ्गैःसमग्रत्वात्सम्पूर्णत्वपरोऽयंचतुष्पाच्छब्दः । अथवा तपःपरमित्यत्र मनुनैव तपोज्ञानयज्ञदानानांचतुर्णांकीर्तनात् तस्य पादचतुष्टयेन सम्पूर्णत्वात्पादत्वेन निरूपिताःसत्ययुगे समग्राइत्यर्थः । तथा सत्यंच कृतयुगमासीत्सकलधर्मश्रेष्ठत्वात् सत्यस्य पृथक्ग्रहणम् । तथा न शास्त्रातिक्रमेण धनविद्यादेरागमउत्पत्तिर्मनुष्यान्प्रतिसम्पद्यते ॥ ८१ ॥

( ४ ) **राघवानन्दः** । तत्रादौ त्रेतादिषु पादंशोधर्मस्य ह्रासंवक्तुंसत्ययुगस्य धर्मस्य संपूर्णतांदर्शयति चतुष्पादिति । वृषोहि भगवान्धर्मइत्यागमात् तपोज्ञानयज्ञदानानांपादत्वेन निरूपणम् । अतएवाह सकलइति । कलाअवयवाःपादलक्षणाः तपआदयस्तैःसहितः सत्यस्य सकलधर्मवत्त्वेन श्रेष्ठत्वज्ञापनाय पृथक्निर्देशः । सत्यमिति । अधर्मेण शास्त्रनिषेधेन धर्मविद्यादेरागमउत्पत्तिर्मनुष्यान्नगच्छतीत्यर्थः ॥ ८१ ॥

( ५ ) **नन्दनः** । अथोक्तपरिमाणानांकृतादियुगानांस्वभावंषड्भिः श्लोकैराह चतुष्पादिति । चतुष्पाच्चातुर्वर्ण्याश्रयः। सकलः संपूर्णः । सत्यस्य पृथगुपादानंप्राधान्यप्रतिपत्त्यर्थम् । आगमोऽर्थादेः प्राप्तिः । नाधर्मोनागमः कश्चिदितिचपठन्ति । तत्रायमर्थः । नाधर्मोमनुष्यानुपवर्तते । आगमःश्शास्त्रंसचापिनोपावर्तते । शास्त्रापेक्षातत्रनास्ति । स्वयमेव धर्मंधर्मफलंच ते साक्षात् कुर्वन्तीत्ययमेव साधुः पाठउत्तरश्लोकानुगुण्यात् ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । चतुरिति । कृते युगे चतुष्पात्चतुश्चरणः सकलः पूर्णः धर्मः सत्यसंज्ञकः अधर्मेण कश्चिदर्थागमः स्वीकारः मनुष्यान्प्रति नोपवर्तते ॥ ८१ ॥

**इतरेष्वागमाद्धर्मःपादशस्त्ववरोपितः ॥ चौरिकानृतमायाभिर्धर्मश्चापैति पादशः ॥ ८२ ॥**

( १ ) **मेधातिथिः** । कृतयुगादन्येषु युगेष्वागमाद्वेदाख्याद्धर्मः पादशः युगेयुगे पादेनावरोपितोव्यपनीतः अन्तर्हितःतावदेवशाखापुरुषाणांग्रहणावधारणशक्तिवैकल्याद्योऽप्यद्यत्वे धर्मोज्योतिष्टोमादिःप्रचरति सोऽपिचौर्यादिभिः पादः

शोहीयते । ऋत्विजांयजमानानांदातॄणांसंप्रदानानांचैतैर्दोषैर्युक्तत्वान्नयथाविधिधर्मोनिष्पद्यते । फलमतोयथोक्तं न परिमाप्यते तेन धर्मापायहेतूनांचौरिकादीनांनयुगैर्यथासंख्यंसर्वेषामद्योपलम्भात् ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । इतरेष्विति । त्रेतादिष्वर्थागमार्थात् निषिद्धात्पादशः तपआद्येकैकपदार्थापचयेनधर्मोवरोपितः तानेव निषिद्धागमान् धर्मस्य त्रीन्पदार्थान् । चौरिकेति । चौरिकापरस्वापन्हवः । अनृतंमिथ्योक्तिः । माया परविप्रलम्भसाधनाचरणम् ॥ ८२ ॥

( ३ ) **कुल्लूकः** । इतरेष्विति । सत्ययुगादन्येषु त्रेतादिषु आगमात् अधर्मेण धनविद्यादेरर्जनात् तस्यैव पूर्वश्लोके प्रकृतत्वात् । आगमाद्वेदादिति तु गोविन्दराजोमेधातिथिश्च । धर्मोयागादिः । यथाक्रमंप्रतियुगं पादंपादमवरोपितोहीनः कृतस्तथाधनविद्यार्जितोऽपि योधर्मः प्रचरति सोऽपि चौर्यासत्यछद्मभिः प्रतियुगं पादशोन्हासाद्यपगच्छति । त्रेतादियुगैः सहचौरिकानृतच्छद्मनां न यथासङ्ख्यं सर्वत्र सर्वेषांदर्शनात् ॥ ८२ ॥

( ४ ) **राघवानन्दः** । इतरेषु त्रेतादिषु आगमान् चौरिकादेःपादशः अंशेन तपआदिचतुर्णामिति शेषः । अवरोपितस्त्याजितः अतएवाह चौरिकेति ॥ ८२ ॥

( ५ ) **नन्दनः** । इतरेषु त्रेतादिष्वागमाच्छास्त्राद्धर्मोऽध्यवसीयते । सतु धर्मः पादशोऽवरोपितः । धर्माध्यवसायावरोपणमेव धर्मावरोपणमभिप्रेतम् । चौरकमितिपाठः । चौरकंचौर्यमनोज्ञातित्वाद्वुञ् । द्वितीयोत्रधर्मशब्दोनुष्ठानवचनः ॥८२॥

( ६ ) **रामचन्द्रः** । इतरेष्विति । इतरेषु त्रेतादिषु युगेषु अधर्मस्य आगमात् अधर्मात्पादशः एकचरणः धर्मः अवरोपितः न्यूनचरणः कृतः । तद्यथा त्रेतायुगे चौरिकारूपेणाधर्मेण धर्मः पादशः अपैतिएकचरणन्यूनोभवति । द्वापरेअनृताख्येनाधर्मेण द्वितीयः पादः धर्मस्यअपैति नाशमेति । कलौमायाख्येनाधर्मेण धर्मस्य तृतीयः पादः नाशमेति ॥ ८२ ॥

## अरोगाःसर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ॥ कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥ ८३ ॥

( १ ) **मेधातिथिः** । अधर्मस्य रोगकारणस्याभावादरोगः । रोगोव्याधिः । सर्वएव चत्वारोवर्णाः सिद्धाभिप्रेतार्थाः । अर्थः प्रयोजनम् अथवा सर्वेऽर्थाः सिद्धाः येषांकाम्यानांकर्मणांप्रतिबन्धकाभावादव्याक्षेपेणाशेषफलसिद्धिः । चतुर्वर्षशतायुषइति । ननु सहस्रषोडशंवर्षशतमजीवदिति परममायुर्वेदे श्रूयतेअतएवाहुः वर्षशतशब्दोऽत्रवयोभेदप्रतिपादकः चत्वारिवयांसिजीवन्तीति । नपुरायुषः प्रमीयते नाप्राप्यचतुर्थवयोम्रियते । अतएव द्वितीये श्लोकार्धे वयोन्ह्रसतीत्याह । पूर्वत्र वयसोवृद्धानुक्तायामुत्तरत्र तस्यैवन्हासाभिधानोपपत्तिः । पादशइति । नचात्र चतुर्थोभागः पादःकिंतर्हि भागमात्रमंशतआयुःक्षीयतइत्यर्थः । तथा च केचिद्बालाम्रियन्ते केचित्तरुणाः केचित्वामजरसः परिपूर्णमायुर्दुर्लभम् ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । अरोगाइति । सर्वःसिद्धएवार्थोपेक्षितोवा कर्मणांयत्नेन येषांते सर्वसिद्धार्थाः । वयोन्ह्रसतीत्युपलक्षणम् आरोग्यसिद्धार्थत्वे अपीति ग्राह्यम् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । अरोगाइति । रोगनिमित्ताधर्माभावादरोगाः सर्वसिद्धकाम्यफलाः प्रतिबन्धकाधर्माभावाच्चतुर्वर्षशतायुष्टंच स्वाभाविकमधिकायुःप्रापकधर्मवशादधिकायुषोपिभवन्ति । तेन दशवर्षसहस्राणि रामोराज्यमकारयदित्याद्यविरोधः । शतायुर्वैपुरुषइत्यादिश्रुतौ तु शतशब्दोबहुत्वपरःकल्पिपरोवा । एवंरूपामनुष्याःकृतेभवन्ति । त्रेतादिषु पुनःपादंपादमायुरल्पंभवतीति ॥ ८३ ॥

( ४ ) **राघवानन्दः** । किमसाध्यंधर्मस्येति साश्चर्यमाह अरोगाइति । सर्वसिद्धार्थाःसर्वेआरम्भाः फलन्ति । चतुर्वर्षशतायुषइति शतायुर्वैपुरुषइतिश्रुतेः । विरोधे त्वनपेक्षंस्यादसतिह्यनुमानमिति न्यायेन शतपरिमितंपुरुषायुरेव अधि-

कंतु तपोविद्यावशात् अतएव दशवर्षसहस्राणि रामोराज्यमकारयदित्यादिसंगतम् । यद्वावर्षशतशब्दोबाल्यादिवयश्चतुष्कपरः तेन शतान्तएव म्रियतेइत्यर्थः । न तु कलियुगमधिकृत्य श्रुतेःप्रवृत्तिः तस्याः साधारण्यात् । ह्रासवचनंतु तपोविद्याराहित्यसूचनपरम् ॥ ८३ ॥

( ५ ) **नन्दनः** । कृतयुगे पुरुषाणांस्वभावप्राप्तमायुश्चत्वारिवर्षशतानि । यत्पुनरितिहासपुराणेषु तेषांतत्र बहुवर्षसाहस्रजीवित्वमुक्तंतत्तु तेषांश्रद्धया साधितमिति वेदितव्यम् । तथाचमहाभारते कृतयुगपुरुषानधिकृत्य समर्थ्यते । यावद्यावत्कृता श्रद्धा देहंधारयितुंनृणाम् । तावत्तावदजीवंस्ते नासीद्यमकृतंभयमिति ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । अरोगेति । कृतयुगे चतुर्वर्षशतायुषः प्रजाभवन्तित्रेतादिषु युगेषु एषांप्रजानांवयः पादशः ह्रसति तद्यथा त्रेतायुगे प्रजानांआयुः त्रिशतानि द्वापरे युगे प्रजानांआयुर्द्वेशते कलौशतमित्यर्थः ॥ ८३ ॥

**वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम् ॥ फलन्त्यनुयुगंलोके प्रभावश्च शरीरिणाम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । केचिदाहुर्वैदिकैः कर्मभिः सहस्रसंवत्सरादिभिरपेक्षितमायुर्वेदोक्तम् । तदनुयुगंफलति युगानुरूपेण संपद्यते न सर्वेषु युगेषु । नाद्यकश्चित्सहस्रसंवत्सरजीवीयःसर्वश्चिरंजीवतिसवर्षशतंतदपरेनाद्रियन्ते यतोदीर्घसत्रेषु संवत्सरशब्दे दिवसेषुव्यवस्थापिते विधेयान्तरविरोधाद्वाक्यभेदापत्तेः । एषहितत्र ग्रन्थः । पञ्चपञ्चाशतस्त्रिवृतः संवत्सराइत्यादि । तत्रत्रीण्यहानिगवामयनप्रकृतित्वात्प्राप्तानि विशिष्टानुसंख्या पञ्चपञ्चाशतइत्यप्राप्तविधेया । यद्यपरा संवत्सरता प्रतीयेत वाक्यंभिद्येत तत्रावश्यमन्यतरस्यानुवादआश्रयितव्यः । संवत्सरशब्दः सौरसावनादिमानभेदेन षष्ट्यधिकशतत्रयात्मनोऽहःसंघातादन्यत्रापि दृष्टप्रयोगएवेति । तस्यैवलक्षणया दिवसेष्वनुवादोयुक्तइति । अन्ये तु मन्त्रार्थवादेषु शतमिन्नुशरदोऽन्ति देवाः शतायुर्वै पुरुषः इति । शतशब्दश्च बहुनामसु पठितोबहुत्वंचानवस्थितम् । युगानुरूपेण दीर्घजीविनोल्पायुषश्च भवन्ति । यथाश्रुतव्याख्याने तु कलौ सर्वे शतायुषश्च भवन्ति । अथ वायुःकाम्यस्य यानि कर्माणि नच तत्र प्रमाणंश्रुतम् । तत्रानुयुगंपरिमाणंवेद्यम् । आशिषोन्यापिफलविषयावेदशासनाःकाम्यानांकर्मणामः आयुषःकाम्यत्वेपिप्राधान्यात्पृथगुपदेशः । तथाह्याह आयुर्वै परमः कामः । प्रभावोऽलौकिकी शक्तिरणिमादिगुणयोगः अभिशापोवरदानम् । अनुयुगंफलन्तीति सर्वत्र योज्यम् ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । वेदोक्तमिति । यद्यपि शतायुःपुरुषइति वेदे पठ्यते तदेव चतुर्वर्षशतमेव शतवर्षत्वेनोक्तम् । भवति हि वर्षादेः परिमाणोत्कर्षोदेवादिषु तद्विशिष्टमनुष्येष्वपीति याह्यम् । तथा कर्मणामनुष्ठितानामाशिषोपि यथाकारीर्यादिभिःफलान्यर्थतानि अनुयुगंयुगानुरूपेण फलन्ति । यथाकृते कारीर्यादिभिःशीघ्रंमहतीव वृष्टिः न तथा त्रेतादावित्यर्थः । तथा परमतप आदिजाशक्तिरनुयुगंफलति । कृते तदेव फलत्यन्यदा विलम्बेनेत्यर्थः ॥ ८४ ॥

( ३ ) **कुल्लूकः** । वेदोक्तमायुरिति । शतायुर्वैपुरुषइत्यादि वेदोक्तमायुः कर्मणांच काम्यानांफलविषयाःप्रार्थना ब्राह्मणादीनांच शापानुग्रहक्षमत्वादिप्रभावायुगानुरूपेणफलन्ति ॥ ८४ ॥

( ४ ) **राघवानन्दः** । अतएवाह वेदोक्तमायुरित्यादि । अयमर्थः शतायुर्वै पुरुषइति वेदोक्तमायुः काम्यकर्मणामाशिषः फलंशरीरिणांशापानुग्रहप्रभावश्चअनुयुगंयुगेयुगे फलतिअसति प्रतिबन्धे सेत्स्यतीत्यर्थः ॥ ८४ ॥

( ५ ) **नन्दनः** । आयुश्चतुर्वर्षशतादि । आशिषः फलानि । प्रभावः शापानुग्रहादिशक्तिः । अनुयुगंयुगानुरूप्येण पूर्णानिहीनानि हीनतराणि हीनतमानि चभवन्तीत्यर्थः ॥ ८४ ॥

---

( ८४ ) प्रभावश्च=प्रभावाश्च ( ख )

( ६ ) **रामचन्द्रः** । वेदोक्तमिति । अनुयुगंयुगानुरूपंलोके सर्वंफलमित्यर्थः ॥ ८४॥

**अन्ये कृतयुगे धर्मास्त्रेतायांद्वापरे परे ॥ अन्ये कलियुगे नॄणांयुगह्रासानुरूपतः॥ ८५ ॥**

( १ ) **मेधातिथिः** । युक्तोऽस्य कालभेदेन पदार्थस्वभावभेदस्योपसंहारः धर्मशब्दोन यागादिवचनएव किंतर्हि पदार्थगुणमात्रे वर्तते । अन्ये पदार्थानांधर्माः प्रतियुगंभवन्ति यथा प्राक्दर्शितम् । यथावसन्तेन्यः पदार्थानांस्वभावोऽन्यो-ग्रीष्मेन्य एववर्षास्वेवंयुगेष्वपि । अन्यत्वंचात्र न कारणानोदृष्टकार्यत्यागेन कार्यान्तरजनकत्वमप्यपरिपूर्णस्य कार्यस्यो त्पत्तेः शक्तेरपचयात्तदाहुर्युगन्ह्रासानुरूपतइति । ह्रासोन्यूनता ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । अन्यइति । युगह्रासस्यानुरूपेण शक्त्यपेक्षया धर्माअवस्थिताइत्यर्थः ॥ ८५ ॥

( ३ ) **कुल्लूकः** । अन्यइति । कृतयुगेऽन्येधर्माभवन्ति त्रेतादिष्वपि युगापचयानुरूपेणाधर्मवैलक्षण्यम् ॥ ८५ ॥

( ४ ) **राघवानन्दः** । अतएवाह । अन्यइति । सकलासकलाभ्यांभिन्नाइति अतआह युगन्ह्रासानुरूपतइति युगा-न्ह्रासीयुगेयुगे धर्मन्ह्रासः तदनुसारेण पृथक्क्रम् न तु शूद्रस्य वेदाध्ययनं विप्रस्य सेवेति भावः ॥ ८५ ॥

( ५ ) **नन्दनः** । युगन्ह्रासानुरूपतः परेन्येभवन्तीत्यनुषङ्गः । यथायुगानामादौ धर्मा न तथा मध्ये यथामध्ये न तथाऽन्तइत्यर्थः ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । अन्येति । कृतादीनांयुगानांधर्माः युगह्रासानुरूपतः भवन्तितत्राह तपइति । कृतेतु मानवाध-र्मास्त्रेतायांगौतमाः स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥ ८५ ।

**तपःपरंकृतयुगे त्रेतायांज्ञानमुच्यते ॥ द्वापरे यज्ञमेवाहुर्दानमेकंकलौ युगे ॥ ८६ ॥**

**[ ब्राह्मंकृतयुगंप्रोक्तं त्रेतातुक्षत्त्रियंयुगम् ॥ वैश्योद्वापरमित्याहुः शूद्रःकलियुगःस्मृतः ॥ ‡ ]**

( १ ) **मेधातिथिः** । अयमन्योयुगस्वभावभेदः कथ्यते । तपःप्रभृतीनांवेदे युगभेदेन विधानाभावात्सर्वदा सर्वा-ण्यनुष्ठेयानि । अयंत्वनुवादोयथाकथंचिदाख्येयः । इतिहासेषु ह्येवंवर्ण्यते । तपःप्रधानंतच्चमहाफलम् । दीर्घायुषोरोगव-र्जितास्तपसिसमर्थाभवन्त्यनेनाभिप्रायेणोच्यते । ज्ञानमध्यात्मविषयंशरीरक्लेशादन्तर्नियमोनातिदुष्करः । यागे तु न महाक्ले-शइति द्वापरे यज्ञः प्रधानम् । दाने तु नशरीरक्लेशोनान्तः संयमो न चातीवविद्वत्तोपयुज्यतइति सुसंपादना ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । तपइति । परंअभ्यर्हितंतपो ऽन्येष्वपि ज्ञानादिषु क्रियमाणेषु तपोह्यनाशकाद्यतिबले-रेव शक्यत्तइति कृते तस्य प्राधान्यम् । त्रेतायां ज्ञानम् मन्दबलतया तपस्यशक्तानांकृतयुगानुष्ठिततपः परिपक्वक-षायाणांज्ञाने सामर्थ्यसंभवात् । तत्राप्यशक्तानांहोमाद्यल्पव्यापारोयज्ञएव द्वापरे शक्यइति तत्प्रधानोद्वापरे धर्मः । यज्ञा-ज्ञबहुव्यापारशून्यतया यज्ञादप्यल्पायाससाध्यं दानमेकंकलौ तपःप्रभृति च शक्यमेवेत्यर्थः ॥ ८६ ॥

( ३ ) **कुल्लूकः** । तपःपरमिति । यद्यपि तपःप्रभृतीनि सर्वाणि सर्वयुगेष्वनुष्ठेयानि तथापि सत्ययुगे तपःप्रधानंम-हाफलमिति ज्ञाप्यते । एवमात्मज्ञानंत्रेतायुगे द्वापरे यज्ञः दानंकलौ ॥ ८६ ॥

( ४ ) **राघवानन्दः** । सर्वयुगेषु चतुर्णामनुष्ठेयत्वेपि प्राधान्येनानुष्ठेयार्थमाह तपइति तपोध्यानं ज्ञानमात्मधीः शास्त्रधीर्वा ॥ ८६ ॥

---

( ८५ ) युगह्रासानुरूपतः=तत्तद्धर्मानुरूपतः ( ठ )

‡ अयं ( ख ) पुस्तके दृष्टोरामचन्द्रेण व्याख्यातश्च

( ५ ) **नन्दनः**। धर्मभेदमेवदर्शयति तपइति । तपः सात्त्विकोनिवृत्तिधर्मः रजस्तमोमयंयत्कर्म तपसस्तत्तल्लक्षण मितिमहाभारतेस्मरणात् । परंप्रधानंज्ञानंनानाशास्त्रविज्ञानम् । यज्ञंफलाभिसंधियुक्तंयत्कर्मएवशब्दाभ्यांपूर्वपूर्वधर्मानादरः सूचितः ॥ ८६ ॥

**रामचन्द्रः**। [ ब्राह्ममिति । कृतयुगंब्राह्मंप्रोक्तंसत्त्वगुणसंज्ञमित्यर्थः। त्रेतायुगंक्षत्रियाधिष्ठितंसत्त्वरजोगुणमित्यर्थः। द्वापरंवैश्यः वैश्याधिष्ठितंरजस्तमोभ्यांयुक्तम् । कलियुगः शूद्रः शूद्राधिष्ठितः तमोगुणरूपः एवंतद्रूपमाचार्याआहुः ॥ १ ॥ ]

**सर्वस्यास्य तु सर्गस्य गुप्त्यर्थंसमहाद्युतिः ॥ मुखबाहूरुपज्जानांपृथक्कर्माण्यकल्पयत् ॥ ८७ ॥**

( १ ) **मेधातिथिः**। उक्तः कालविभागः । ब्राह्मणादीनांगुणाइदानींकथ्यन्ते । तत्रायमुपक्रमः। सर्वस्यसर्गस्य सर्वेषांलोकानांगुप्त्यर्थंरक्षार्थंमहातेजाःप्रजापतिः मुखादिजातानांब्राह्मणादीनांचतुर्णांवर्णानांदृष्टादृष्टार्थानिकर्माण्यकल्पयद्व्यवस्थापितवान् ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः**। येषांतु यादृशमिति प्राक्प्रतिज्ञातंप्रक्रमते सर्वस्येति । गुप्त्यर्थंब्राह्मणैर्यज्ञादिद्वारा अन्यैरक्षणादिद्वारा गुप्तिंरक्षांकर्तुं ॥ ८७ ॥

( ३ ) **कुल्लूकः**। सर्वस्यास्येति । सब्रह्मा महातेजा अस्य सर्गस्यसमग्रस्याग्नौ प्रास्ताहुतिरिति न्यायेन रक्षार्थंमुखादिजातानांब्राह्मणादीनांविभागेन कर्माणि दृष्टादृष्टार्थानि निर्मितवान् ॥ ८७ ॥

( ४ ) **राघवानन्दः**। संप्रत्यनुवादपुरःसरंप्रतिवर्णव्यवस्थयाधर्मानाह सर्वस्येति पञ्चभिः । सर्वस्य सृज्यमान प्रपञ्चस्य सब्रह्मा मुखबाहूरुपज्जानांपृथक्कर्माण्यकल्पयदित्यन्वयः। तथाच श्रुतिः ब्राह्मणोऽस्य मुखमासीदित्यादि पद्भ्यांशूद्रइति व्यधिकरणनिर्देशोवेदानधिकारसूचनार्थः । अकल्पयदिति यथापूर्वमकल्पयदिति श्रुतिस्मरणार्थः। तेनानादिव्यवस्थेति ॥ ८७ ॥

( ५ ) **नन्दनः**। अथवर्णधर्मनियमोऽपि हिरण्यगर्भेणैव कल्पितस्तस्मादविमर्शमादरोत्रकर्तव्यइत्यभिप्रायेणाहसर्वस्येति । हिरण्यगर्भसर्गस्य प्रपञ्चस्य मुखबाहूरुपज्जातीनांब्राह्मणादीनांमुखाद्यङ्गजातत्वोपन्यासोवर्णानामुत्कर्षापकर्षप्रदर्शनार्थः ॥ ८७ ॥

( ६ ) **रामचन्द्रः**। अतःपरंचतुर्वर्णादीनांकर्माण्याह प्रथमंब्राह्मणस्यधर्ममाह सर्वस्येति। मुखबाहूरुपज्जानांब्राह्मणक्षत्रविट्शूद्राणांकर्माणि पृथक्पृथक्अकल्पयत् सकल्पयामास ॥ ८७ ॥

**अध्यापनमध्ययनंयजनंयाजनंतथा ॥ दानंप्रतिग्रहंचैव ब्राह्मणानामकल्पयत् ॥ ८८ ॥**

( १ ) **मेधातिथिः**। तानीदानींकर्माण्युच्यन्ते ॥ ८८ ॥

( २ ) **सर्वज्ञनारायणः**। अध्यापनमिति। अध्यापनंयज्ञादिविद्यानां ब्राह्मणानाम् । स्पष्टमन्यत् ॥ ८८ ॥

( ३ ) **कुल्लूकः**। अध्यापनमिति। अध्यापनादीनामिह सृष्टिप्रकरणे सृष्टिविशेषतयाभिधानंविधिस्तेषामुत्तरत्र भविष्यति। अध्यापनादीनि षट्कर्माणिब्राह्मणानांकल्पितवान् ॥ ८८ ॥

( ४ ) **राघवानन्दः**। कर्माण्येवाह अध्यापनमिति । अध्यापनंशिष्येभ्यःप्रतिपादनम् ॥ ८८ ॥

( ५ ) **नन्दनः**। कानि पुनस्तानिकर्माणीत्यपेक्षायामाह अध्यापनमिति ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्य षट्कर्माण्याह अध्येति । स्वयंअधीयीत शिष्यानूअध्यापयेदित्यर्थः । स्वयंयजेत्अन्यान्याजयेत्दानंदद्यात्स्वयंगृण्हीयाच्च ॥ ८८ ॥

**प्रजानांरक्षणंदानमिज्याध्ययनमेव च ॥ विषयेष्वप्रसक्तिश्च क्षत्रियस्यसमासतः ॥ ८९ ॥**

( १ ) **मेधातिथिः** । विषयाभिलाषजनकागीतशब्दादयोभावाउच्यन्ते । तत्रासंगः पुनः पुनरसेवनम् ॥ ८९॥

( २ ) **सर्वज्ञनारायणः** । प्रजानामिति । विषयेषुस्त्र्यादिषु प्रसक्तिमतिशयेनचित्तस्य निवेशनम् । यद्यपि विप्रादेरप्येतदवश्यंकार्यं तथापि विप्रादीनांव्यसनैर्नापकर्षणंयएव व्यसनी तस्यैव नाशोराज्ञस्तु व्यसनाकृष्टत्वे राष्ट्रस्यैव विनाश इत्येतदर्थमत्रोक्तम् ॥ ८९ ॥

( ३ ) **कुल्लूकः** । प्रजानामिति । प्रजारक्षणादीनि क्षत्रियस्यकर्माणि कल्पितवान् । विषयेषु गीतनृत्यवनितोपभोगादिष्वप्रसक्तिस्तेषांपुनरनासेवनं समासतःसंक्षेपेण ॥ ८९ ॥ .

( ४ ) **राघवानन्दः** । इज्या यज्ञः । अप्रसक्तिरनासङ्गः ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । क्षत्रस्य धर्मानाह प्रजेति । प्रजानांरक्षणंदानंइज्या यागः अध्ययनंवेदाध्ययनंविषयेअप्रसक्तिमनासक्तिसब्रह्माआदिशति ॥ ८९ ॥

**पशूनांरक्षणंदानमिज्याध्ययनमेव च ॥ वणिक्पथंकुसीदंच वैश्यस्य कृषिमेव च ॥ ९० ॥**

( १ ) **मेधातिथिः** । वणिक्पथः वणिक्कर्मणा स्थलपथवारिपथादिना धनार्जनमुपयुज्यमानदेशान्तरीयद्रव्यसन्निधापनं यस्य राज्ञोविषये वसति । कुसीदंवृद्ध्याधनप्रयोगः ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । पशूनामिति । वणिक्पथंवाणिज्यम् । कुसीदंवृद्धिजीवनम् । एषु च त्रयाणामपि वर्णानां इज्याध्ययनदानान्यदृष्टार्थानीतराणि जीविकाः ॥ ९० ॥

( ३ ) **कुल्लूकः** । पशूनामिति । पशूनांपालनादीनि वैश्यस्य कल्पितवान् । वणिक्पथंस्थलजलादिना वाणिज्यं कुसीदंवृद्ध्याधनप्रयोगः ॥ ९० ॥

( ४ ) **राघवानन्दः** । वणिक्पथंवाणिज्यम् । कुसीदंलाभेन वित्तवर्धनम् ॥ ९० ॥

( ५ ) **नन्दनः** । वणिक्पथंवाणिज्यार्थंस्थलजलयात्राम् । कुसीदंवार्धुष्यंअकल्पयदित्यनुवर्तते ॥ ९० ॥

( ६ ) **रामचन्द्रः** । पशूनामिति वैश्यस्य धर्मानाह कुसीदंवृद्धिजीविका ॥ ९० ॥

**एकमेव तु शूद्रस्य प्रभुःकर्म समादिशत् ॥ एतेषामेववर्णानांशुश्रूषामनसूयया ॥ ९१ ॥**

( १ ) **मेधातिथिः** । प्रभुः प्रजापतिरेकंकर्म शूद्रस्यादिष्टवानूएतेषांब्राह्मणक्षत्रियवैश्यानांशुश्रूषा त्वया कर्तव्याऽनसूययाऽनिन्दया चित्तेनापितदुपरि विषादो न कर्तव्यः । शुश्रूषा परिचर्या तदुपयोगिकर्म करणंशरीरसंवाहनादिचित्तानुपालनम् । एतद्दृष्टार्थंशूद्रस्यअविधायकत्वाच्चैकमेवेति नदानादयोनिषिध्यन्ते । विधिरेषांकर्मणामुत्तरत्र भविष्यति अतः स्वरूपविभागेन यागादीनांतत्रैव दर्शयिष्यामः ॥ ९१ ॥

---

( ८९ ) विषयेष्वप्रसक्तिश्च क्षत्रियस्यसमादिशत् ॥ ( न, भ ल, य, ग, क, )

———— क्षत्रियाणामकल्पयत् ॥ ( ख )

( २ ) **सर्वज्ञनारायणः** । एकमेवेति । शुश्रूषाऽद्वेषो अशुश्रूष्यमाणेष्वपि द्विजेषु तद्रहितेकस्मिंश्चन ब्राह्मणे क्षत्रिय वैश्ये वा शुश्रूषा परिचरणम् । एतच्चास्य जीविकार्थंपारत्रिकंच । अतएवास्यजीविकात्वेन प्रसिद्धेः पारत्रिकत्वेनाध्ययनादेः प्रसङ्गमाशंक्यैकमेवेति व्यवच्छिनत्ति ॥ ९१ ॥

( ३ ) **कुल्लूकः** । एकमेवत्विति । प्रभुर्ब्रह्माशूद्रस्य ब्राह्मणादिवर्णत्रयपरिचर्यात्मकंकर्म निर्मितवान् । एकमेवेति प्राधान्यप्रदर्शनार्थंदानादेरपि तस्य विहितत्वात् । अनसूयया गुणानिन्दया ॥ ९१ ॥

( ४ ) **राघवानन्दः** । एकमेवेत्याद्यपि धर्मान्तरव्यावृत्त्यर्थं प्रभुःविराट् अनसूययेत्ययमभिप्रायः द्विजानांवेदाध्ययनाद्युत्कर्षासहिष्णुतया तत्र न प्रवर्तितव्यं वेदमुपशृण्वतः त्रपुजतुभ्यांकर्णपूरणमिति श्रुतेः । प्राणान्तिकप्रायश्चित्त श्रवणादिति भावः ॥ ९१ ॥

( ५ ) **नन्दनः** । अनसूययाऽनहंकारेण ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । एकमिति एतेषां चतुर्णांवर्णानांसेवा अनसूयया निष्कपटेनेत्यर्थः ॥ ९१ ॥

**ऊर्ध्वंनाभेर्मेध्यतरःपुरुषःपरिकीर्तितः ॥ तस्मान्मेध्यतमंत्वस्य मुखमुक्तंस्वयंभुवा ॥ ९२ ॥**

( १ ) **मेधातिथिः** । आपादान्तान्मेध्यः पुरुषस्तस्य नाभेरूर्ध्वमतिशयेन मेध्यंततोऽपि मुखम् । एतच्चस्वयमेव जगत्कारणपुरुषेणोक्तम् ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । चतुर्वर्णकार्यमुक्त्वा प्रकृतशास्त्राध्यापकत्वेन ब्राह्मणान्नियन्तुंतत्प्रशंसामुपक्रमते ऊर्ध्वंनाभेरिति । कृत्स्नएव पुरुषोमेध्यस्त्वस्य नाभेरूर्ध्वं मेध्यतरं तस्मात्अपि मुखं मेध्यतममित्यर्थः ॥ ९२ ॥

( ३ ) **कुल्लूकः** । इदानींप्राधान्येन सर्गरक्षार्थत्वाद्ब्राह्मणस्य तदुपक्रमधर्माभिधानत्वाच्चास्य शास्त्रस्य ब्राह्मणस्य स्तुतिमाह ऊर्ध्वमिति । सर्वतएव पुरुषोमेध्यःनाभेरूर्ध्वमतिशयेन मेध्यःततोपि मुखमस्य मेध्यतमंब्रह्मणोक्तम् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । इदानीमर्थवादपूर्वकंब्राह्मणस्यैव श्रैष्ठ्यंहव्यकव्यादिभोक्तृत्वंनिध्यादिस्वामित्वमेतच्छास्त्राधिकारित्वंच विधत्ते ऊर्ध्वमिति षोडशभिः ॥ ९२ ॥

( ५ ) **नन्दनः** । एवंतावद्वर्णधर्माणांश्रद्धेयतमत्वमुक्तम् । इदानींतत्प्रवचनाधिकारिणांब्राह्मणानांवैशिष्ट्यंवक्तुमाह ऊर्ध्वमिति । तस्मान्नाभेरुर्ध्वप्रदेशादत्रसामान्येन पुरुषाणांमुखोत्कर्षवचनं ब्राह्मणोत्पत्तिस्थानस्यहिरण्यगर्भस्योत्कर्षस्य प्रतिपत्त्यर्थम् ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । ऊर्ध्वमिति । नाभेःऊर्ध्वंमेध्यतरःअतिशयेन मेध्यः मेध्यतरःहृदये मध्ये पुरुषः पुरुषसंज्ञकः कीर्तितःसर्वतःवृत्वाऽत्यतिष्ठद्दशाङ्गुलमिति श्रुतिः । तस्मात् पुरुषाधिष्ठितात् तस्य स्वयंभुवःमुखंमेध्यतमंज्ञेयम् ॥ ९२ ॥

**उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ॥ सर्वस्यैवास्य सर्गस्य धर्मतोब्राह्मणःप्रभुः॥ ९३॥**

( १ ) **मेधातिथिः** । ततःकिमतआह । उत्तमाङ्गंमूर्धा ततउद्भवउत्पत्तिर्ब्राह्मणस्य । ज्येष्ठश्चासावन्येभ्योवर्णेभ्यः पूर्वंब्रह्मणा सृष्टः। ब्रह्मणोवेदस्य धारणात्तस्य हि सविशेषंतद्विहितमतः सर्वस्य जगतोऽस्माद्धेतुत्रयाद्ब्राह्मणः प्रभुः प्रभुरिव । प्रभुर्विनयेनोपसर्पणीयः । तदाज्ञायांच धर्मे स्थातव्यंधर्मतः प्रभुर्धर्मेप्रभुरित्यर्थः । आद्यादित्वात्तसिः ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । ततःकिमतआह उत्तमाङ्गेति । तादृङ्मेध्यतमंब्रह्ममुखोद्भवत्वात् । तत्रापि प्रथमजन्मरूपात ज्यैष्ठ्यात वेदस्य च क्षत्रियाद्यपेक्षाया सम्यक्धारणात् । सर्गस्य सृज्यमानस्य । धर्मतोन बलतः। प्रभुर्यथेष्टविनियोग कारी ॥ ९३ ॥

( ३ ) **कुल्लूकः** । ततःकिमतआह उत्तमाङ्गोद्भवादिति । उत्तमाङ्गंमुखंतदुद्भवत्वात् क्षत्रियादिभ्यःपूर्वोत्पन्नत्वा-द्ध्यापनव्याख्यानादिना युक्तस्यातिशयेन वेदधारणात् सर्वस्यास्य जगतोधर्मानुशासनेन ब्राह्मणःप्रभुः । संस्कारस्य विशेषात्तु वर्णानांब्राह्मणःप्रभुः ॥ ९३ ॥

( ४ ) **राघवानन्दः** । तस्मात्ततोपिउत्तमाङ्गंशिरः तदेकदेशोमुखंतदुद्भवत्वाज्ज्यैष्ठ्यात्प्रथमजत्वात् । ब्रह्मवाइदमग्रआ-सीदिति श्रुतेः । ब्रह्मब्राह्मणजातिः ब्रह्मणोवेदस्य सर्गस्य सृष्टस्य ब्राह्मणादेः धर्मादौ शास्ता । अन्योन्यंगुरवोविप्राइत्युक्तेः विप्रस्यापि विप्रःशास्ता ॥ ९३ ॥

( ५ ) **नन्दनः** । उत्तमाङ्गंमुखंमेध्यतममित्युक्त्वाद्ब्रह्मणोवेदस्य धारणादध्यापनात् । धर्मतोन्यायतोहेतोरित्यर्थः प्रभुःस्वामी ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । उत्तमाङ्गेति । उत्तमाङ्गात् उद्भवोयस्य सउत्तमाङ्गोद्भवःतस्मात्उत्तमाङ्गोद्भवात् ब्राह्मणोस्य मुख-मासीदिति श्रुतिः ज्यैष्ठ्यात् प्रथमोत्पन्नत्वात्ब्रह्मणः वेदस्य धारणात् अस्य सर्वस्यैव सर्गस्य विश्वस्य ब्राह्मणः धर्मतः प्रभुःस्मृतः ॥ ९३ ॥

**तंहि स्वयंभूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत् ॥ हव्यकव्याभिवाह्याय सर्वस्यास्य च गुप्तये ॥ ९४**

( १ ) **मेधातिथिः** । पूर्वस्यैव हेतुत्रयस्यविशेषार्थमिदम् । अन्यस्यापिपुरुषस्योत्तमाङ्गंप्रधानम् । तंपुनर्ब्राह्मणंस्वयं-भूः स्वादास्यान्मुखादसृजत् । तपश्च कृत्वैषोत्तमाङ्गादुत्पत्तिः । ज्यैष्ठ्यमाह आदितः । यद्देवानुद्दिश्य क्रियते तद्धव्यंपि-तॄनुद्दिश्य तत्कव्यंतयोरभिवहनायदेवान्पितॄंश्च प्रति प्रापणाय अभिवाह्यायेति भावे कृत्यः कथंचिद्द्रष्टव्यः सकर्मत्वाद्वहतेः । तेनच कर्मणा सर्वस्य त्रैलोक्यस्य गुप्तिः परिपालनंभवति । इतः प्रदानंदेवाउपजीवन्ति । ते च शीतोष्णवर्षैरोषधीः पाचय-न्ति । अतःपरस्परोपकाराद्गुप्तिः ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । अन्यदप्याह तंहीति । यतःस्वादास्यादादितोऽसृजत्तपस्तप्त्वाअतस्तत्पैः प्रभावादपि प्रभुरसौ न त्वेवमन्ये तपसा सृष्टाइत्यर्थः । हव्यंदेवभागः कव्यंपित्र्यभागस्तद्रूपंयदभिवाह्यमभिवर्तनीयं तस्मै तदर्थंतस्य देवपितृप्राप्तयइति यावत् । गुप्तयेहोमजन्यवृष्टिद्वारा ॥ ९४ ॥

( ३ ) **कुल्लूकः** । कस्योत्तमङ्गादयमुद्भूतइत्यतआह तंहि स्वयम्भूरिति । तंब्राह्मणं ब्रह्मा आत्मीयमुखात् दैवपित्र्येह-विःकव्ये वहनाय तपःकृत्वा सर्वस्य जगतोरक्षायैच क्षत्रियादिभ्यःप्रथमंसृष्टवान् ॥ ९४ ॥

( ४ ) **राघवानन्दः** । अभिवाह्याय साक्षात्वहनाय देवाद्यर्थंगुप्तये संरक्षणाय च यथा गुप्तंच धनमुत्तरकाले सुखहे-तुस्तथा ब्राह्मणार्पितमपि । ब्राह्मणोहि निधिर्देवइति वक्ष्यति ॥ ९४ ॥

( ५ ) **नन्दनः** । नचैषांहेतुनामसिद्धिराशङ्कनीयेत्याह तंहीति । आस्यान्मुखाद्धव्यकव्यातिवाह्याय । हव्यंदैवंक-व्यंपित्र्यमतिवाह्यमतिवाहनंप्रापणंदेवान्पितॄंश्च हव्यकव्यादिमन्त्रैः प्रापयितुमितियावत् । अत्रस्वादास्यादित्युत्तमाङ्गोद्भ-वत्वंसमर्थ्यते । तपस्तप्त्वेत्यादरातिशयः । आदितइतिज्यैष्ठ्यम् । हव्यकव्यातिवाह्यायेतिवेदधारणम् । अस्यगुप्तयइतिप्रपञ्च-रक्षणम् । गुप्तिश्चाध्यापनयाजनप्रतिग्रहैरित्यवगन्तव्यम् । ९४ ॥

( ६ ) **रामचन्द्रः** । तमिति । स्वयंभूः तपस्तप्त्वा स्वात्आस्यात् मुखात् आदितः तंब्राह्मणं हव्यकव्याभिवाह्याय असृजत् । हव्यकव्यानांअभिवाह्यः हव्यकव्याभिवाह्यः तस्मै हव्यंदेवानां कव्यं पितॄणांप्रापकायेत्यर्थः ॥ ९४ ॥

**यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ॥ कव्यानि चैव पितरः किंभूतमधिकंततः ॥९५॥**

( १ ) **मेधातिथिः** । हव्यादिवहनंपूर्वोक्तंदर्शयति । त्रिदिवमोकोगृहंयेषान्तएवमुच्यन्ते । स्वर्गवासिनोदेवाः । ब्राह्मणेनभुक्तमन्नंदेवाउपतिष्ठन्ति श्राद्धे पित्र्यस्य कर्मणोङ्गभूतंविश्वेदेवानुद्दिश्य ब्राह्मणभोजनंविहितम् । तदपेक्ष्यैतदुक्तम् । किंभूतमन्यदधिकंश्रेष्ठंततस्तस्मादिति । स्वयंविस्मर्यते । देवाः पितरश्चोत्तमस्थानामध्यमस्थानाश्चाप्रत्यक्षान तेषांभोजनोपायोऽन्योस्त्यन्यतोब्राह्मणभोजनादतोमहान्ब्राह्मणः ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । यस्यास्येनेति । आस्येनाभ्यवहरणसाधनभूतेन ॥ ९५ ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तहव्यकव्यवहनंस्पष्टयति यस्यास्येनेति । यस्य विप्रस्य मुखेन श्राद्धादौ सर्वदा देवाहव्यानि पितरश्चकव्यानि भुञ्जते ततोन्यत्प्रकृष्टतमंभूतंकिंभवेत् ॥९५ ॥

( ४ ) **राघवानन्दः** । तमेवाह यस्येति । यस्य ब्राह्मणस्यास्येन मुखेन ब्राह्मण्ये मनुष्येष्विति श्रुतेः । अग्निरिवदेवइति शेषः । हव्यानि देवतोद्देश्यानि चरुपुरोडाशादीनि कव्यानि पित्रुद्देश्यानि श्राद्धादीनि किंभूतंजन्तुःदत्तस्य फलप्रापकंवा ततोविप्रात् ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । यस्येति । यस्य ब्राह्मणस्य आस्येन मुखेन देवताःपितरश्चहव्य कव्यानि अश्नन्तिभुञ्जते । ततःब्राह्मणात्अधिकंकिंभूतंकःप्राणाधिक इत्यर्थः ॥ ९५ ॥

**भूतानांप्राणिनः श्रेष्ठाः प्राणिनांबुद्धिजीविनः ॥ बुद्धिमत्सु नराःश्रेष्ठानरेषु ब्राह्मणाःस्मृताः ॥९६॥**

( १ ) **मेधातिथिः** । पृथिव्यांये भावाः स्थावरावृक्षादयोजङ्गमाः कृमिकीटादयस्तेभूतशब्देनोच्यन्ते । तेषांये प्राणिनआहारविहारादिचेष्टासमर्थास्तेश्रेष्ठाः प्राणिनस्तेहि पटुतरंसुखमनुभवन्ति । तेषांये बुद्ध्या जीवन्ति हिताहितेविचिन्वन्ति श्वशृगालादयः ते हि घर्मेणोपतप्ताः छायामुपसर्पन्ति शीतेनार्दिता आतपंनिराहारंस्थानंत्यजन्ति । तेषामधिकतरामनुष्यास्तेषांच ब्राह्मणा ते हि लोके पूज्यतमाः । नच सर्वेण परिभूयन्ते जातिमात्राश्रयंहि तद्वधे महत्प्रायश्चित्तम् ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । तर्हियथा तथा ब्राह्मणः श्रेयानित्यध्ययनादिप्रकर्षोव्यर्थइति नेत्याह भूतानामिति । भूतानामाकाशादिभूतविशेषाणांमध्ये प्राणिनः प्राणवन्तः शरीरभूतानि भूतानि तेषांवरःस्वपररूपाणांमध्येवराःबुद्धिजीविनः । स्वबुद्धिकृतचेष्टया स्वहिताचरणक्षमाःश्रेष्ठाः ॥ ९६ ॥

( ३ ) **कुल्लूकः** । भूतानामिति । भूतारब्धानांस्थावरजङ्गमानांमध्ये प्राणिनःकीटादयःश्रेष्ठाः । कदाचित्सुखलेशात् । तेषामपि बुद्धिजीविनःसार्थनिरर्थदेशोपसर्पणापसर्पणकारिणःपश्वादयः । तेभ्योपि मनुष्याःप्रकृष्टज्ञानसंबन्धात् । तेभ्योपि ब्राह्मणाःसर्वपूज्यत्वात् अपवर्गाधिकारयोग्यत्वाच्च ॥ ९६ ॥

( ४ ) **राघवानन्दः** । भूतानांस्थावरजङ्गमानांमध्ये प्राणिनोजङ्गमाःमहीरुहतादिभ्यःश्रेष्ठाः। तेष्वपि बुद्धिजीविनः पशुतिर्यञ्चः । तेषु नराः ॥ ९६ ॥

( ५ ) **नन्दनः** । नच सर्वत्र ब्राह्मणेषु तुल्यबुद्धिः कर्तव्येतिश्लोकाभ्यामाह भूतानामिति । अनयोः पूर्वश्लोकोदृष्टान्तार्थः । भूतानांजङ्गमस्थावराणांप्राणिनोजङ्गमाः बुद्धिजीविनः पश्वादयः ॥ ९६ ॥

( ६ ) **रामचन्द्रः** : भूतानां चराचरादीनां मध्ये प्राणिनः प्राणवन्तः श्रेष्ठाः ॥ ९६ ॥

**ब्राह्मणेषु च विद्वांसोविद्वत्सु कृतबुद्धयः ॥ कृतबुद्धिषु कर्तारःकर्तृषु ब्रह्मवेदिनः ॥ ९७ ॥**

**[ तेषांनपूजनीयोन्यस्त्रिषु लोकेषु विद्यते ॥ तपोविद्याविशेषेण पूजयन्तिपरस्परम्[1] ॥ १ ॥ ]**

**[ ब्रह्मविद्भ्यः परंभूतं न किंचिदिहविद्यते § ॥ ]**

( १ ) **मेधातिथिः**। विदुषांश्रैष्ठ्यंमहाफलेषु यागादिष्वधिकारात। तेषामपि कृतबुद्धयः परिनिष्ठितवेदतत्त्वार्था नबौद्धादिभिः कलुषीक्रियन्ते। तेषामपिकर्तारः कर्मणामनुष्ठातारः। ते हि विहितकरणात्प्रतिषिद्धासेवनाच्च नोपहन्यन्ते तेषांमपि ब्रह्मस्वरूपत्वात्तत्रास्क्षय्यानन्दः ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः**। विद्वांसःकर्मकाण्डदण्डनीत्यादिवेदितारः। कृतबुद्धयः कुशलाः सम्यक्तत्त्वज्ञाः। कर्तारोविदि त्वानुष्ठातारः। ब्रह्मवादिनोब्रह्मकाण्डार्थ तत्त्वविदः। ब्रह्मवेदिनइति कचित्पाठः। अत्र च सर्वत्रपूर्वपूर्वविशेषणवतामेवोत्तरो त्तरविशेषणसंबन्धावैशिष्ट्यमन्यथा ब्राह्मणत्वस्याप्युत्तरेष्वननुवृत्त्यापत्तेः ॥ ९७ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणेषु चेति। ब्राह्मणेषु तु मध्ये विद्वांसोमहाफलज्योतिष्टोमादिकर्माधिकारित्वात्। तेभ्योपि कृतबुद्धयःअनागतेऽपि कृतं मयेति बुद्धिर्येषांशास्त्रोक्तानुष्ठानेषूत्पन्नकर्तव्यताबुद्धयइत्यर्थः। तेभ्योपि अनुष्ठातारःहिताहितप्राप्तिपरिहारभागित्वात्। तेभ्योपि ब्रह्मविदःमोक्षलाभात् ॥ ९७ ॥

( ४ ) **राघवानन्दः**। तेष्वपि विद्वांसःयज्ञशास्त्रविदः। तेषु कृतबुद्धयः कृतंकर्तव्यं ब्राह्मणेन मयेदमिति बुद्धिर्येषां तथा आलस्यादिना केवलं न कुर्वन्तीति। तथात्वनिश्चये अनुष्ठातारोये ते कर्तारः। तेष्वपि ब्रह्मविदोब्रह्मतत्त्वज्ञाः श्रेष्ठाइति सर्वत्रानुषज्यते सर्वकर्मणांपारंपर्येण ब्रह्मण्येव तात्पर्येणोपयोगात् सर्वकर्माखिलंपार्थज्ञाने परिसमाप्यतइति भगवदुक्तेः ॥ ९७ ॥

( ५ ) **नन्दनः**। विद्वांसोवेदविदः। कृतबुद्धयः परिचितवेदार्थाः। कर्तारश्चोदितकर्मकृतः। ब्रह्मवेदिनः परमार्थवेदिनः। एवंवदता ब्रह्मविद्भिरपि कर्मकर्तव्यमितिसूचितम। ९७ ॥

( ६ ) **रामचन्द्रः**। ब्राह्मणेष्विति। सम्यक्कृता बुद्धिर्यैस्ते कृतबुद्धयस्तेषु कृतबुद्धिषु कर्मकर्तारः श्रेष्ठाः। कर्म कर्तृषुब्रह्मवेदिनः श्रेष्ठाः ॥ ९७ ॥

**उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ॥ सहि धर्मार्थमुत्पन्नोब्रह्मभूयाय कल्पते ॥ ९८ ॥**

( १ ) **मेधातिथिः**। विद्वत्तादिगुणसंबन्धिनोब्राह्मणस्य विशेषे दर्शिते जातिमात्रंब्राह्मणंकश्चिदवमन्येत तन्निवृत्त्यर्थमिदमुच्यते। उत्पत्तिरेव गुणानपहाय जन्मैव ब्राह्मणस्य जातिरेव शाश्वतीधर्मस्य मूर्तिः शरीरम। धर्मार्थमुत्पन्नो द्वितीयेनजन्मनोपनयनेन संस्कृतः सा हि तस्य धर्मार्थोत्पत्तिर्ब्रह्मत्वाय कल्पते संपद्यते। धर्मशरीरमुज्झित्वा परानन्दभाग्भवतीति श्रुतिः ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः**। उत्पत्तिरिति। याविप्रस्य शरीरोत्पत्तिः साधर्म्यस्य मूर्तिर्मूर्तावस्था शरीर्यवस्थेति यावत्। शाश्वती चिरस्थायिनी विप्रस्योत्पत्त्या धर्मस्य चिरमुपचयसिद्धेः। तदाहसहीति। धर्मार्थधर्मोत्पादनार्थकिंचान्येभ्योस्यैतदधिकं यथासौ ब्रह्मभूयाय कल्पते मोक्षाय समर्थो न क्षत्रियादयः पारिव्राज्यानधिकारात्। अतएवोक्तंपुराणे क्षत्रियस्यापि यतिधर्मोविधीयतइति। यतिधर्मोयमनियमादिः नतुयतितैव अत्रापि षष्ठाध्याये ब्राह्मणस्येत्युपसंहरिष्यति ९८

( १ ) ( ट, ड ) पुस्तकद्वये § ( क, ग )

( ३ ) **कुल्लूकः** । उत्पत्तिरेवेति । ब्राह्मणदेहजन्ममात्रमेव धर्मस्य शरीरमविनाशि यस्मादसौधर्मार्थंजातःधर्मानुगृहीतात्मज्ञानेन मोक्षायसंपद्यते ॥ ९८ ॥

( ४ ) **राघवानन्दः** । अत्र हेतुरुत्पत्तिरिति । मूर्तिर्देहइव शाश्वती शश्वत् निरन्तरंधर्महेतुत्वात् ब्रह्मभूयाय ब्रह्मत्वाय मुक्तयइति यावत् । अन्यथा ब्राह्मण्यावाप्तिर्व्यर्थैवेति भावः ॥९८ ॥

( ५ ) **नन्दनः** । वर्णान्तरेभ्योब्राह्मणस्यवैशिष्ट्यंजन्मतएव नसंस्कारविशेषतइत्याह उत्पत्तिरिति । उत्पद्यतइत्युत्पत्तिः शरीरम् । कल्पते शक्नोति ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । उत्पत्तिरिति । विप्रस्य मूर्तिः धर्मस्य मूर्तिरित्यर्थः शाश्वती एषाउत्पत्तिः उदिता । सः ब्राह्मणः ब्रह्मभूयाय ब्रह्मरूपाय कल्पते समर्थोभवेदित्यर्थः ॥ ९८ ॥

**ब्राह्मणोजायमानोहि पृथिव्यामधिजायते ॥ ईश्वरःसर्वभूतानांधर्मकोशस्य गुप्तये ॥ ९९ ॥**

( १ ) **मेधातिथिः** । सर्वलोकस्योपरिभवति । श्रैष्ठ्यमुपरिभावेनाह । ईश्वरः सर्वभूतानामिति प्रभुत्वंधर्माख्यस्य कोशस्य गुप्तये जायते । द्रव्यसंचयः कोशउपमानाद्धर्मसंचयउच्यते कोशइति ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणइति । जायमानएव पृथिव्यां पृथिव्याधीश्वरोभूत्वा जायते । नतुक्षत्रियादिः । अतोसौ सर्वभूतानामीश्वरः । स्वेच्छयाआदेष्टा यतः उपदेशादिद्वारा धर्मस्य रूपंस्वकोशस्य गुप्तयेऽसौ जनितः ॥ ९९ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणइति । यस्माद्ब्राह्मणोजायमानः पृथिव्यामधिउपरि भवति श्रेष्ठइत्यर्थः । सर्वभूतानांधर्मसमूहरक्षायै प्रभुःब्राह्मणोपदिष्टत्वात्सर्वधर्माणाम् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । किंच जायमानोजातमात्रः पृथिव्यांवर्तमानोनामाधिक्येन आधिक्यमाह ईश्वरइति । धर्मकोशस्य वेदस्य वेदाद्धर्मोहि निर्बभौ तथा ब्रह्मकर्मोद्भवंविद्धीति स्मृतेः ॥ ९९ ॥

( ५ ) **नन्दनः** । पृथिव्यांपृथिवीजातेष्वधिजायतउपरिजायते सर्वस्माद्विशिष्टइत्यर्थः । अतएवसर्वभूतानामीश्वरः । धर्मकोशस्य वेदस्य ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणेति । जायमान उत्पन्नमात्रो ब्राह्मणः पृथिव्यांसर्वभूतानांधर्मकोशस्य धर्मएव भाण्डागारः तस्य गुप्तये रक्षणाय ईश्वरः प्रभुः ॥ ९९ ॥

**सर्वंस्वंब्राह्मणस्येदंयत्किंचिज्जगतीगतम् ॥ श्रैष्ठ्येनाभिजनेनेदंसर्वंवै ब्राह्मणोऽर्हति ॥ १०० ॥**

( १ ) **मेधातिथिः** । असंतुष्टस्य प्रतिग्रहादिषु पुनः प्रवृत्तौ दुष्कृतितामाशङ्क्य समाधत्ते । सर्वमिदंत्रैलोक्यान्तर्वर्तिधनंब्राह्मणस्यस्वंनात्रप्रतिग्रहोविद्यते प्रभुत्वेनासौ गृह्णाति न प्रतिग्रहीतृतयेति । प्रशंसैषा न विधिरतएवार्हतिशब्दः । अभिजनोऽभिजातताविशिष्टत्वम् ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । सर्वस्वमिति । सर्वस्यब्राह्मणस्य यत्संबन्धिस्वंतत् ब्राह्मणस्यैव । एतच्च तस्य हरणे दोषाल्पत्वेनोपचारात् तत्रहेतुः श्रैष्ठ्येनेति । अभिजन उत्पत्तिस्थानंपुण्यरूपम् ॥ १०० ॥

( ३ ) **कुल्लूकः** । सर्वस्वमिति । यत्किंचिज्जगद्गतिधनंतद्ब्राह्मणस्य स्वमिति स्तुत्योच्यते । स्वमिवस्वं न तुस्वमेव ब्राह्मणस्यापि मनुनास्तेयस्यवक्ष्यमाणत्वात् । तस्माद्ब्रह्ममुखोद्भवत्वेनाभिजनेन श्रेष्ठतयासर्वंब्राह्मणोर्हति सर्वग्रहणयोग्योभवत्यैव । वै अवधारणे ॥ १०० ॥

( ४ ) **राघवानन्दः** । अभिजनेन उत्कृष्टस्थानजन्मना ॥ १०० ॥

( ६ ) **रामचन्द्रः** । सर्वेति । इदंवस्तु यत्किञ्चित्स्वल्पमपि वस्तु जगतीगतंसर्वस्वं ब्राह्मणस्येत्यर्थः । इदंसर्वंविश्व स्याधिपत्यंब्राह्मणःश्रेष्ठत्वेनअर्हति । अभिजनेनकुलाभिमानेन ॥ १०० ॥

**स्वमेव ब्राह्मणोभुङ्क्तेस्वंवस्तेस्वंददातिच ॥ आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरेजनाः ॥१०१॥**

( १ ) **मेधातिथिः** । यत्परगृह आतिथ्यादिरूपेण भुङ्क्तेतदात्मीयमेव नैवंमन्तव्यंपरपाकेनेति । स्वंवस्ते याचित्वाऽयाचित्वा वा वस्त्रंलभते नासौतस्य लाभाय अपितु स्वकृत्याच्छादनेविनियोगः । तिष्ठतु तावदात्मोपयोगि गृह्णाति तत्र प्रभूतंयदन्येभ्योददाति परकीयंतदपितस्य नानुचितम् । आनृशंस्यंकारुण्यंतदीयया महासत्त्वतया पृथिव्यां राजानः स्वानिधनान्युपयुञ्जते । अन्यथा यद्यसाविच्छेदहमेतदादायस्वकार्ये विनियुञ्जीयेति तदा सर्वे निर्धनाः निरुपयोगाःस्युः॥१०१॥

( २ ) **सर्वज्ञनारायणः** । स्वमेवेति । क्षत्रियादिर्यत्स्वार्जितमपि भुङ्क्ते आच्छादयति ददाति च तद्ब्राह्मणस्वमेव । अतस्तद्धनोपभोक्तृत्वात्तस्यासौ भेष्यइव भेष्यो भृत्यःभृत्यइवेत्यतआह आनृशंस्यादिति । ब्राह्मणस्य करुणया प्राणिनांस्वेच्छया भोग्यत्वंधनस्य विसृष्टत्वान्न मुख्याप्रभुतेत्यर्थः ॥ १०१ ॥

( ३ ) **कुल्लूकः** । स्वमेवेति । यत्परस्याप्यन्नंब्राह्मणोभुङ्क्तेपरस्य च वस्त्रंपरिधत्ते परस्य गृहीत्वान्यस्मै ददाति तदपि ब्राह्मणस्य स्वमिव पूर्ववत्स्तुति एवंसति ब्राह्मणस्य कारुण्यादन्ये भोजनादि कुर्वन्ति ॥ १०१ ॥

( ४ ) **राघवानन्दः** । वस्ते परिदधाति वसनादिकं आनृशंस्यादकार्पण्यात् कारुण्याद्वा ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । स्वमिति । ब्राह्मणःस्वमेव वस्तु भुङ्क्तेभोजनंकरोति । स्वंवस्ते स्ववस्तु स्ववस्त्रंवस्तेआच्छादयति । वसआच्छादनेइत्यस्य धातोःरूपम् । ब्राह्मणस्य आनृशंस्यात्कृपातइतरेजनाःक्षत्रियादयः भुञ्जतेभोगंकुर्वतइत्यर्थः ॥ १०१ ॥

**तस्य कर्मविवेकार्थंशेषाणामनुपूर्वशः ॥ स्वायंभुवोमनुर्धीमानिदंशास्त्रमकल्पयत् ॥ १०२ ॥**

( १ ) **मेधातिथिः** । सर्वस्या ब्राह्मणश्रुतेः फलप्रदर्शनार्थश्लोकोऽयम् । एवंविधमिदंमहार्थंशास्त्रंयत्तस्य स्वमहिम्नाऽऽत्यन्तिकेन महत्तमस्य ब्राह्मणस्य कर्मविवेकार्थं इमानि कर्माणि कर्तव्यानीमानि वर्ज्याणि एषविवेकस्तदर्थंशेषाणांच क्षत्रियादीनामनुपूर्वशः प्राधान्याद्ब्राह्मणस्यानुषङ्गात्क्षत्रियादीनामिदंशास्त्रमकल्पयत्कृतवान् ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतमाह तस्येति । तस्य ब्राह्मणस्य धर्माधर्मविवेकार्थंशेषाणांक्षत्रियाणां वैश्यानांचानुपूर्वशो ब्राह्मणमुखेन अकल्पयत् ॥ १०२ ॥

( ३ ) **कुल्लूकः** । इदानींप्रकृष्टब्राह्मणकर्माभिधायकतया शास्त्रप्रशंसांप्रक्रमते तस्य कर्मविवेकार्थमिति । ब्राह्मणस्य कर्मज्ञानार्थंशेषाणांक्षत्रियादीनांच स्वायंभुवोब्रह्मपुत्रोधीमान्सर्वविषयज्ञानवान्मनुरिदंशास्त्रंविरचितवान् ॥ १०२ ॥

( ४ ) **राघवानन्दः** । तस्य ब्राह्मणस्य कर्मविवेकार्थंइमानि कर्माणि कर्तव्यानि नेमानीति निर्घोषेण शुद्ध्यर्थं शेषाणांक्षत्रियादीनांचइदंमन्वाख्यंशास्त्रं अकल्पयत् पूर्वसर्गानुरोधात् ॥ १०२ ॥

( ५ ) **नन्दनः** । स्तेयादिषु पतनदण्डप्रायश्चित्तोपदेशादेवंतावद्ब्राह्मणवैशिष्ट्यमुक्तम् । इदानींशास्त्रप्रयोजनमाह तस्येति । तस्य ब्राह्मणस्य शेषाणांक्षत्रियादीनांच शास्त्रमकल्पयत्पूर्वंभगवता विस्तरेणकृत्वा ग्राहितंस्वयंकृतंग्रन्थंसंगृहीतवान् । नैवंचेदिदंशास्त्रंकृत्वेत्यनेन विरोधः प्रसज्येत ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । तस्येति । तस्य ब्राह्मणस्य कर्मविवेकार्थंशेषाणांक्षत्रियादीनांकर्मविवेकार्थंअनुपूर्वशःक्रमेण स्वा-यंभुवोमनुःइदंशास्त्रंअकल्पयतकल्पयामासेत्यर्थः ॥ १०२ ॥

**विदुषा ब्राह्मणेनेदमध्येतव्यंप्रयत्नतः ॥ शिष्येभ्यश्च प्रवक्तव्यंसम्यङ्नान्येन केन चित् ॥१०३ ॥**

( १ ) **मेधातिथिः** । अध्येतव्यंप्रवक्तव्यमित्यर्हेकृत्योन विधौ । द्वितीयादध्यायात्प्रभृतिशास्त्रंप्रवर्तिष्यते । अयं-ह्यध्यायोऽर्थवादएव नात्र कश्चिद्विधिरस्ति । तेन यथा राजभोजनाः शालयइति शालिस्तुतिर्न राज्ञोऽन्यस्येति तद्भोजन-निषेधः एवमत्रापि नान्येन केनचिदिति नायंनिषेधः केवलंशास्त्रस्तुतिः । सर्वस्मिञ्जगति श्रेष्ठोब्राह्मणः सर्वशास्त्राणांशा-स्त्रमिदमतस्तादृशस्य विदुषोब्राह्मणस्याऽध्ययनप्रवचनार्हेन सामान्येन शक्यते अध्येतुंप्रवक्तुंवा । अतएवाह प्रयत्नतइ-ति । यावन्नमहान्प्रयत्न आस्थितोयावन्नशास्त्रान्तरैस्तर्कव्याकरणमीमांसादिभिः संस्कृतआत्मातावदेतत्प्रवक्तुं न शक्यते । अतएवाध्ययनेन श्रवणंलक्ष्यते । तत्र हि विद्वत्तोपयोगिनी नसंपाठे । विधौह्यध्ययने विद्वत्ताऽदृष्टायैव स्यान्नच विधौ श्रवणमध्ययनेन लक्ष्यतइति युक्तंवक्तुंन विधेये लक्षणार्थता युक्ता । अर्थवादे तु प्रमाणान्तरानुसारेण गुणवादो न दोषाय । तस्मात्रैवर्णिकाधिकारंशास्त्रमेतच्च परस्ताद्विशेषतोवक्ष्यते ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । विदुषेति । प्रयत्नतोवश्यमध्येतव्यम् । अन्ययोस्त्वनियमः । शिष्येभ्यस्तु प्रवचनमन्ये न न कर्तव्यं किंतु विप्रेणैव । सम्यक्यथाविधि ॥ १०३ ॥

( ३ ) **कुल्लूकः** । विदुषेति । एतच्छास्त्राध्ययनफलज्ञेन ब्राह्मणेन एतस्य शास्त्रस्य व्याख्यानाध्यापनोचितंप्रयत्नतो-ऽध्ययनंकर्तव्यं शिष्येभ्यश्चेदंव्याख्यातव्यं नान्येन क्षत्रियादिना । अध्ययनमात्रंतुव्याख्यानाध्यापनरहितंक्षत्रियवैश्ययो-रपि निषेकादिश्मशानान्तैरित्यादिना विधास्यते । अनुवादमात्रमेतदिति मेधातिथिमतं तन्नमनोहरं द्विजैरध्ययनंब्राह्मणे नै-वाध्यापनव्याख्यानेइत्यस्यालाभात् । यत्तु अधीयीरंस्त्रयोवर्णाइत्यादि तद्वेदविषयमिति वक्ष्यति । विप्रेणैवाध्यापनमिति विधानेन संभवत्यपि अनुवादत्वमस्येति वृथामेधातिथेर्ग्रहः ॥ १०३ ॥

( ४ ) **राघवानन्दः** । विदुषाधीतवेदवेदाङ्गेन प्रयत्नतः प्रयत्नेन सम्यक् यथाविधिना नान्येन क्षत्रियादिना । अय-मर्थः । इदंहि धर्मशास्त्रंधर्मवत्कृत्यंच विप्रस्यैव न राजन्यादेः । तेनात्र विधिनिषेधाभ्यांविप्रएवाधिक्रियते । वैदिकत्वा-विशेषेपि बृहस्पतिसवइवअध्येतव्यमित्यर्हार्थेनान्येनेति । राजभोजनाःशालयइति वन्नान्येषांनिषेधइति मेधातिथिः॥१०३॥

( ५ ) **नन्दनः** । अथ शास्त्राध्ययनेऽधिकारिणमाह विदुषेति । विदुषा साङ्गवेदविदा । प्रयत्नतआदरेण । अन्ये-नाविदुषा ब्राह्मणेन विदुषाऽपि क्षत्रियेणेत्यर्थः ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । विदुषेति । ब्राह्मणेनइदंधर्मशास्त्रंअशेषतःसम्पूर्णतःप्रयत्नतःअध्येतव्यं सम्यक्ज्ञानेनसम्यक्प्रका-रेणकेनचित्नविदुषाशिष्येभ्यःवक्तव्यम् ॥ १०३ ॥

**इदंशास्त्रमधीयानोब्राह्मणःशंसितव्रतः ॥ मनोवाग्देहजैर्नित्यंकर्मदोषैर्न लिप्यते ॥ १०४ ॥**

( १ ) **मेधातिथिः** । एवंसंबन्धिद्वारेण ब्राह्मणार्थतया शास्त्रंस्तुत्वाऽधुनासाक्षात्स्तौति । इदंशास्त्रंजानानः शंसितव्रतो-भवतीति परिपूर्णयमनियमानुष्ठायी भवति । शास्त्रादननुष्ठाने प्रत्यवायंज्ञात्वातद्भयादनुतिष्ठति सर्वान्यमनियमान्यथाशास्त्रं-सर्वमनुतिष्ठति । अनुतिष्ठन्विहितातिक्रमप्रतिषिद्धकर्मजनितैर्दोषैर्न लिप्यते न संबध्यते ॥ १०४ ॥

---

( १०३ ) शिष्येभ्यश्चप्रवक्तव्यं=शिष्येभ्यश्च प्रकर्तव्यं ( ठ, भ, र, ल, )

( २ ) **सर्वज्ञनारायणः** । शास्त्रप्रशंसांप्रक्रमते इदमिति । शंसितव्रतः चीर्णव्रतः कर्मजन्यैर्दोषैः पापैर्मनोवाक्कायकारणभेदभिन्नैर्न लिप्यते प्रत्यवायज्ञानेन तत्राप्रवृत्तेः ॥१०४॥

३ **कुल्लूकः** । इदंशास्त्रमिति । इदंशास्त्रंपठन्नेतदीयमर्थंज्ञात्वा शंसितव्रतोऽनुष्ठितव्रतः मनोवाक्कायसम्भवैःपापैर्न संबध्यते ॥ १०४ ॥

( ४ ) **राघवानन्दः** । शंसितव्रतोनुष्ठितब्रह्मचर्यादिव्रतः कर्मदोषैःपापैः ॥ १०४ ॥

( ५ ) **नन्दनः** । शास्त्राध्ययनस्यफलमाह इदमिति ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । इदमिति । शंसितव्रतःपरिपूर्णव्रतःब्रह्मचर्ययुक्तः ॥ १०४ ॥

## पुनाति पङ्क्तिवंश्यांश्च सप्तसप्त परावरान् ॥ पृथिवीमपि चैवेमांकृत्स्नामेकोऽपि सोऽर्हति ॥ १०५ ॥

## [ यथात्रिवेदाध्ययनं धर्मशास्त्रमिदंतथा ॥ अध्येतव्यंब्राह्मणेन नियतंस्वर्गमिच्छता ‡ ॥ १ ॥ ]

( १ ) **मेधातिथिः** । पङ्क्तिपावनोभवति । विशिष्टानुपूर्वीकः संघातः पङ्क्तिरुच्यते तांपुनाति निर्मलीकरोति । सर्वे दुष्टास्तत्सन्निधानाददुष्टाः संपद्यन्ते । वंश्यान्स्वकुलसंभूतान्सप्तपरानुपरितनान्पित्रादीनागामिनोऽवराञ्जनिष्यमाणान्समुद्रपर्यन्तांपृथिवींप्रतिग्रहीतुमर्हन्ति । धर्मज्ञताहि प्रतिग्रहाधिकारे हेतुरितश्च सर्वे धर्माज्ञायन्ते ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । पुनातीति । पुनाति निष्पापांकरोति । पङ्क्तिंएकपङ्क्तिस्थांजनतां वंश्यान्स्ववंशे जातान् पूर्वापरान् सप्तसप्त । पृथिवीमिति विद्यानिमित्तकं दानपात्रत्वमुक्तम् । पृथिवींभूमात्रमर्हति । किंवा वाच्यमपि चेमांपृथ्वींकृत्स्नां सर्वधनपूर्णामर्हतीति ॥ १०५ ॥

( ३ ) **कुल्लूकः** । पुनातीति । इदंशास्त्रमधीयानइत्यनुवर्तते । अपांक्त्योपहतांपंक्तिमानुपूर्व्यानिविष्टजनसमूहंपवित्रीकरोति वंशभवांश्च सप्तपरान्पित्रादीनअवरांश्च पुत्रादीन्पृथिवीमपि सर्वांसकलधर्मज्ञतया पात्रत्वेन गृहीतुंयोग्योभवति॥१०५॥

( ४ ) **राघवानन्दः** । किंच पुनातीति । पङ्क्तिम् । यस्यांपङ्क्तौभुङ्क्ते पठति वा परावरान्पित्र्यादीन् अवरान्पुत्रादीन्विशिष्टसंस्कारवत् कुलजत्वात् कृत्स्नांससागरमेखलां एतच्छास्त्राधिगमेन धर्मज्ञता प्रतिग्रहेहेतुः ॥ १०५ ॥

( ५ ) **नन्दनः** । शास्त्राध्यायिनोवैशिष्ट्यमाहपुनातीति ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । पुनातीति । पङ्क्तिवंश्यांश्चवंशेभवावंश्यास्तान् ॥ १०५ ॥

[ यथेति । त्रिवेदाध्ययनंत्रयाणांवेदानांअध्ययने यथाफलंभवेतस्वर्गसाधनंभवेत् । तथा स्वर्गंइच्छता ब्राह्मणेन नियतंइदंधर्मशास्त्रंअध्येतव्यम् ॥ १ ॥ ]

## इदंस्वस्त्ययनंश्रेष्ठमिदंबुद्धिविवर्धनम् ॥ इदंयशस्यमायुष्यमिदंनिःश्रेयसंपरम् ॥ १०६ ॥

( १ ) **मेधातिथिः** । स्वस्त्यभिप्रेतस्यार्थस्याविनाशोऽयनंप्रापणंस्वस्ति प्राप्यते येन तत्स्वस्त्ययनंश्रेष्ठमन्येभ्यो जपहोमादिभ्यः । नहि शास्त्रमन्तरेण तेषामनुष्ठानंसंभवति अतस्तदनुष्ठानहेतुत्वाच्छ्रेष्ठमेतत् । अथवा धर्मज्ञानार्थवाक्यान्येव श्रेयस्यान्यनुष्ठानंतु क्लेशकरमतउच्यते श्रेष्ठमिति । इदंबुद्धिविवर्धनम् शास्त्रे ह्यासेव्यमाने तदर्थस्य प्रकाशनाद्ग्रन्थि-

---

‡ ( ख, ङ, ) चिह्नितपुस्तकयोर्दृष्टोरामचन्द्रेण व्याख्यातश्च ।

प्रमोक्षाद्बुद्धिविवृद्धिः प्रसिद्धैव । इदंयशस्यं धर्मज्ञः संशयानैः पृच्छयमानः ख्यातिलभते. यशसो निमित्तंयशस्यं-विद्वत्तौदार्यादिगुणवत्तया प्रसिद्धिर्यशः । निःश्रेयसंदुःखाननुविद्धायाः प्रीतेः स्वर्गापवर्गलक्षणायास्तत्प्राप्तिहेतुकर्मज्ञानहेतुत्वान्निःश्रेयसंपरंश्रेष्ठम् ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । इदंस्वस्त्ययनमिति । स्वस्तिसमृद्धिस्तस्याः अयनंस्थानंश्रेष्ठं धर्मादीनांप्रशस्ततमं निःश्रेयसं निश्चितस्य श्रेयसोमोक्षस्य साधनम् ॥ १०६ ॥

( ३ ) **कुल्लूकः** । इदमिति । अभिप्रेतार्थस्याविनाशःस्वस्ति तस्यायनंप्रापकंएतच्छास्त्रस्याध्ययनं स्वस्त्ययन जपहोमादिबोधकत्वाच्च श्रेष्ठंस्वस्त्ययनान्तरात्प्रकृष्टंबुद्धिविवर्द्धनमेतच्छास्त्राभ्यासेनाशेषविधिनिषेधपरिज्ञानात् । यशसे हितं यशस्यंविद्वत्तया ख्यातिलाभात्परंप्रकृष्टं निःश्रेयसंनिःश्रेयसस्य मोक्षस्योपायोपदेशकत्वात् ॥ १०६ ॥

( ४ ) **राघवानन्दः** । स्वस्त्ययनंमाङ्गल्यंस्वस्ति अभिप्रेतार्थाविनाशस्यअयनंप्रापणमिति वा । श्रेष्ठ्यंदृष्टादृष्टार्थत्वात् । बुद्धिविवर्धनम्बुद्धिःसद्बुद्धिः आयुष्यंपरदारादिसेवाराहित्याददृष्टाकृष्टायुः क्षयाभावात् । निःश्रेयसं संस्काराचारकर्मादिपरंपरया तत्त्वज्ञानसाधनम् । परमितिविशेषणात् यस्यैतेअष्टाचत्वारिंशत्संस्काराभवन्ति ब्रह्मणःसायुज्यंसलोकतांगच्छतीत्युक्तेः ॥ १०६ ॥

( ५ ) **नन्दनः** । शास्त्रप्रसङ्गमाह इदमिति । स्वस्त्ययनंस्वस्तिकल्याणंधर्मइति यावत्तत्प्राप्त्युपायः स्वस्त्यनम् । यशस्यंयशस्करम् । निःश्रेयसमपवर्गनिमित्तम् ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । इदंधर्मशास्त्रंपरमुत्कृष्टंनैश्रेयसंमोक्षसाधनमित्यर्थः ॥ १०६ ॥

**अस्मिन्धर्मोखिलेनोक्तोगुणदोषौचकर्मणाम् ॥ चतुर्णामपिवर्णानामाचारश्चैव शाश्वतः ॥ १०७ ॥**

( १ ) **मेधातिथिः** । इदानींस्वशास्त्रस्य स्वविषये साकल्येन वृत्तेरन्यनिरपेक्षतामाह । कश्चिद्योनाम धर्मः ससर्वः शास्त्रेऽस्मिन्कात्स्न्र्येनाभिहितोन तस्माद्धर्मज्ञानाय शास्त्रान्तरापेक्षा कर्तव्येत्यतिशयोक्तिः स्तुतिः । अस्मिञ्छास्त्रे धर्मःस्मार्तोऽखिलेन निःशेषेणोक्तौ गुणदोषौ च कर्मणामिष्टानिष्टे फले गुणदोषौ कर्मणांयागादिब्रह्महत्यादीनाम् । एवंहि साकल्यंभवति यदि कर्मस्वरूपमिति कर्तव्यताफलविशेषः कर्तृविशेषसंबन्धोनित्यकाम्यताविवेकः । एतत्सर्वगुणपदेन प्रतिज्ञातम् । धर्मइत्युक्ते कर्मग्रहणंवृत्तपूरणार्थम् । चतुर्णामपिवर्णानामेतदपि साकल्यार्थम् । योनाम कश्चिद्धर्मेऽधिकृतस्तस्य सर्वस्येतोधर्मलाभः । आचारश्चैव शाश्वत आचारप्रमाणकोधर्म आचारइत्युक्तः द्वितीये चैनंविवेक्ष्यामः । शाश्वतोवृद्धपरंपरया नेदानींतनैः प्रवर्तितः ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । अस्मिन्निति । धर्माधर्मसाधनं कर्मगुणदोषौ हिंसादिकर्मणी वैधत्वे गुणवत्त्वम् वैधत्वे दोषवत्त्वमिति । आचारःसाक्षाद्धर्ममजनयन्नपिधर्मसाधनाङ्गमाचमनादि ॥ १०७ ॥

( ३ ) **कुल्लूकः** । अस्मिन्धर्मइति । अस्मिन्कात्स्न्र्येन धर्मोऽभिहितइति शास्त्रप्रशंसा । कर्मणांच विहितनिषिद्धानामिष्टानिष्टफले वर्णचतुष्टयस्यैव पुरुषधर्मरूपआचारः शाश्वतःपारंपर्यागतः । धर्मत्वेप्याचारस्य प्राधान्यख्यापनाय पृथङ्निर्देशः ॥ १०७ ॥

( ४ ) **राघवानन्दः** । अखिलेन समग्रेण गुणदोषौ विहितस्य करणंगुणःनिषिद्धाचरणंदोषःतदुभयमप्युक्तम् ॥ १०७ ॥

( ५ ) **नन्दनः** । अत्र कारणमाह अस्मिन्निति । कर्मणांविहितप्रतिषिद्धानांगुणदोषाविष्टंफलंगुणोअनिष्टंदोषः । धर्माधिकारनिमित्तंशौचाचमनादिलक्षणः क्रियाविशेषआचारः ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । अस्मिन्निति । अस्मिन्धर्मशास्त्रेअखिलेन प्रकारेण धर्मउक्तः । अस्मिन्धर्मशास्त्रे चतुर्णामपिवर्णानांगुणदोषौउक्तौ । शाश्वताःपारम्पर्यक्रमागताःआचाराउक्ताः ॥ १०७ ॥

**आचारःपरमोधर्मःश्रुत्युक्तःस्मार्तएवच ॥ तस्मादस्मिन्सदायुक्तोनित्यंस्यादात्मवान्द्विजः॥१०८॥**

( १ ) **मेधातिथिः** । परमः प्रकृष्टोधर्म आचारस्तथा श्रुतौ वेदे यउक्तःस्मार्तः स्मृतिषूक्तस्तस्मादाचारधर्मे नित्ययुक्तःस्यान्नित्यमनुतिष्ठेदात्मवानात्मनोहितमिच्छन् । सर्वस्याऽऽत्मास्त्यतोमतुपा तद्धितपरत्वमुच्यते ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । नन्वाचारोयदिनसाक्षाद्धर्महेतुः किमिति कर्तव्यइत्यतआह आचारइति । यद्यप्यसावङ्गमेव न प्रधानंतथाप्ययमपि परमोधर्मस्तंविनाप्यप्रवृत्तेः । सच श्रुत्युक्तः दीक्षादौ नवनीताभ्यञ्जनादिः आचमनादिःस्मार्तः यद्यप्यसावपिश्रौतस्तथापि श्रुतेःप्रत्यक्षायाः तत्परया भूलोकेऽनध्ययनात्स्मार्ततोक्ता । अस्मिन्नाचारे । सदायुक्तउद्युक्तः । आत्मवान्धृतिमान् ॥ १०८ ॥

( ३ ) **कुल्लूकः** । प्राधान्यमेव स्पष्टयति । आचारइति । युक्तोयत्नवान् आत्महितेच्छुःसर्वस्यात्मास्तीतिआत्मशब्देनआत्महितेच्छा लक्ष्यते ॥ १०८ ॥

( ४ ) **राघवानन्दः** । आचारहीनं न पुनन्ति वेदा इत्युक्तिमालम्ब्यवेदार्थानुष्ठानहेतुमाचारंविधास्यंस्तमेव सप्रमाणकंस्तौति आचारइति त्रिभिः । सदा युक्ताःसर्वदोद्युक्ताः आत्मवान्पारलौकिकात्मतत्त्वज्ञानंतदभावेआचारंविश्वसन् प्रहृष्टमनावा ॥ १०८ ॥

( ५ ) **नन्दनः** । धर्मएवनिःश्रेयससाधनं तस्मात्सएव वक्तव्यः किमाचारेणेतिचेदत्राह आचारइति । श्रुत्युक्तोग्निहोत्रहोमादिः स्मार्तोऽष्टकादिः । अस्मिन्त्रये ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । आचारेति । श्रुत्युक्तःस्मृत्युक्तएवआचारःपरमोधर्मःउक्तः । तस्मात्कारणात् आचारे सदा युक्तःस्याद्विजःनित्यंआत्मवान्भवेत्जितेंद्रियःभवेत् ॥ १०८ ॥

**आचाराद्विच्युतोविप्रोन वेदफलमश्नुते ॥ आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत्॥१०९॥**

( १ ) **मेधातिथिः** । प्रकारान्तरेणेयमाचारस्तुतिः । आचारात्प्रच्युत आचारहीनो न वेदफलंप्राप्नोति । वेदविहितकर्मानुष्ठानफलंवेदफलमित्युक्तम् । समग्राणिवैदिकानि कर्माण्यनुतिष्ठन्यद्याचारभ्रष्टोन ततः पुत्रकामादिफलमश्नुतइतिनिन्दा । एषएवार्थोविपर्ययेणोच्यते । आचारेणतुसंयुक्तः सकलंफलंप्राप्नोति । काम्यानांचात्र यद्वदन्ति संपूर्णवचनादाचारहीनस्याप्यस्ति काम्येभ्यः फलसंबन्धोन कृत्स्नफललाभइति तन्न किंचिदर्थवादत्वादस्य ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । आचारादिति । विच्युतःसम्यगकर्ता वेदफलंवैदिकंकर्मफलंसंपूर्णंनाश्नुते व्यङ्गात्तादृक्फलासिद्धेः अतएवाह आचारेणत्विति ॥ १०९ ॥

( ३ ) **कुल्लूकः** । आचारादिति । आचाराद्विच्युतोविप्रोन वैदिकंफलंलभेत् । आचारयुक्तःपुनःसमग्रफलभाग्भवति ॥ १०९ ॥

( ४ ) **राघवानन्दः** । आचारात् यथाविध्याचमनादेः ॥ १०९ ॥

---

( १०८ ) परमोधर्मः=प्रथमोधर्मः ( ख ) सदायुक्तो=समायुक्तो ( मेधा० )

( ५ ) **नन्दनः** । श्रौतस्मार्ताचाराणामादरार्थमेतमेवार्थंप्रपञ्चयति आचारादितिद्वाभ्याम् वेदफलं । वेदोक्तफलंधर्मफलमितियावत् ॥ १०९ ॥

( ६ ) **रामचन्द्रः** । आचारेति । वेदफलंवेदाध्ययनंनअश्नुते नप्राप्नोति ॥ १०९ ॥

**एवमाचारतोदृष्ट्वा धर्मस्य मुनयोगतिम् ॥ सर्वस्यतपसोमूलमाचारंजगृहुः परम् ॥ ११० ॥**

( १ ) **मेधातिथिः** । यावत्किंचित्तपः प्राणायाममौनयमनियमकृच्छ्रचान्द्रायणानशनादि तस्य सर्वस्य फलप्रसवे मूलमाचारोऽतस्तमेव मुनयस्तपःफलार्थिनोमूलत्वेन कारणतया जगृहुः गृहीतवन्तः। आचारान्दृष्ट्वा धर्मस्यमुनयोगतिंप्राप्तिमतिक्लेशकरंतपस्तदाप्याचारहीनस्य न फलतीति श्रुतिः ॥ ११० ॥

( २) **सर्वज्ञनारायणः** । गतिंप्राप्तिं तपसः प्रधानस्य धर्मसाधनस्य मूलंवृक्षस्येवमूलं प्रधानमङ्गम् ॥ ११० ॥

( ३ ) **कुल्लूकः** । एवमिति । उक्तप्रकारेणाचाराद्धर्मप्राप्तिमृषयोबुद्ध्वा तपसश्चान्द्रायणादिःसमग्रस्य कारणमाचारमनुष्ठेयतया गृहीतवन्तः । उत्तरत्र वक्ष्यमाणस्याचारस्य इह स्तुतिःशास्त्रस्तुत्यर्था ॥ ११० ॥

( ४ ) **राघवानन्दः** । आचारतः आचारानुष्ठानेन शुद्धान्तःकरणात् धर्मस्य गतिंस्वरूपंदृष्ट्वा ज्ञात्वा सर्वस्य तपसो धर्मस्य आचारोमूलमित्यनुष्ठेयतया जगृहुरित्यन्वयः ॥ ११० ॥

( ५ ) **नन्दनः** । अथशिष्टपुरुषव्यवहारेण धर्मस्याचाराधीनत्वंद्रढयति एवमिति । यथामुनयस्तात्पर्येणधर्मान्तरमुपेक्षितवन्तो न तथा कदाचिदाचारम् । तस्मादाचाराधीनत्वंधर्मस्य दृष्टवन्तइत्यभिप्रायः ॥ ११० ॥

( ६ ) **रामचन्द्रः** । एवमिति । अस्मिन्धर्मशास्त्रेएतद्वस्तूनांसङ्ग्रहंअष्टभिःकथयिष्ये ॥ ११० ॥

**जगतश्च समुत्पत्तिंसंस्कारविधिमेवच ॥ व्रतचर्योपचारंच स्नानस्यच परंविधिम् ॥ १११ ॥**

( १ ) **मेधातिथिः** । उक्तधर्माअत्र विशिष्यन्ते । श्रोतृप्रवृत्त्यर्थंचानन्तफलता धर्मस्योक्ता एतदन्तास्त्वित्यादिना । तत्रातीन्द्रियोऽयमनन्तोदुष्पारइति मन्वानाअवसीदेयुरतउत्साहजननार्थंशास्त्रार्थसंकलनात्मिकामनुक्रमणींपठति । एतावन्त्यत्र वस्तूनि नातिबहूनि शक्यन्तेश्रद्दधानैः पुरुषैर्ज्ञातुमिति संक्षेपोपदिष्टमार्गआक्रम्यमाणोन दुःसहोभवतीति । जगतश्च समुत्पत्तिमिति कालपरिमाणंतत्स्वभावभेदो ब्राह्मणस्तुतिरित्यादि सर्वंजगदुत्पत्तावन्तर्भूतम् । एतच्चार्थवादतयोक्तंन प्रमेयतया । संस्कारविधिंव्रतचर्योपचारंच गर्भाधानादयः संस्काराः तेषांविधिः कर्तव्यता ब्रह्मचारिणोव्रतचर्यायाउपचारोनुष्ठानमितिकर्तव्यता वा । एतद्द्वितीयाध्यायप्रमेयार्थः । स्नानं गुरुकुलान्निवर्तमानस्य संस्कारविशेषः । दाराणामधिगमनं भार्यासंग्रहः । विवाहानांब्राह्मादीनां तत्प्राप्त्युपायानांचलक्षणं स्वरूपाधिगमनेहेतुम् । महायज्ञाः पञ्चवैश्वदेवादयः। श्राद्धस्य पितृयज्ञस्य नकल्पोविधिरितिकर्तव्यता । परग्रहणंशाश्वतग्रहणंच वृत्तपूरणार्थम् । एषतृतीयाध्यायार्थः । वृत्तीनांजीवनोपायानांधनार्जनात्मकानांभृत्यादीनांलक्षणं स्नातकस्यसमाप्तवेदाध्ययनस्य गुरुकुलान्निवृत्तस्य व्रतानि नेक्षेतोद्यन्तमादित्यमित्यादीनि । एषचतुर्थोऽर्थः । भक्ष्याभक्ष्यंपञ्चपञ्चनखाभक्ष्या अभक्ष्यंपलाण्डादि शौचंकालकृतजन्मादावुदकादिनाच द्रव्यशुद्धिः । स्त्रीधर्मयोगः सबन्धोबाल युवेत्यादि । एतत्पाञ्चमिकम् । तापसाय हितंतापस्यं तपःप्रधानस्तापोवानप्रस्थस्तस्यधर्मस्तापस्यं मोक्षः परिव्राजकधर्मः सन्यासश्च तद्विशेषएव सच तत्रैव दर्शयिष्यते । षष्ठाध्यायवस्त्वेतत् । राज्ञः पृथिवीपालनाधिकृतस्य प्राप्तैश्वर्यस्य धर्मोऽखिलोदृष्टार्थोऽदृष्टार्थश्च । एषसप्तमाध्यायगोचरः । कार्याणामृणादीनांविनिर्णयोविचार्यसंशयच्छेदेनावधारणमनुष्ठेयनिश्चयः । साक्षिणांचप्रश्ने योविधिः प्राधान्यात्पृथङ्निर्देशः । आष्ट-

मिकोऽयमर्थः धर्मःस्त्रीपुंसयोरित्येकादशे स्थितयोः प्रवासवियुक्तयोश्च परस्परंवृत्तिः । ऋक्थविभागधर्मः । द्यूतंतद्विषयो-विधिः द्यूतशब्देनोक्तः । कण्टकादीनांचोराटविकादीनांशोधनं राष्ट्रान्निरसनोपायः । यद्यपि विभागादिरष्टादशपदान्तर्गतत्वात्कार्याणांचेत्यनेनैवोपादानाद्दणादानादिवन्नपृथङ्निर्देश्योऽध्यायेभदात्तुपृथङ्निर्देशः । वैश्यशूद्रयोरुपचारः स्वधर्मानुष्ठानम् । एतन्नवमे । संकीर्णानांक्षत्रियवैदेहकादीनांसंभवमुत्पत्ति मापद्धर्मंच स्ववृत्त्याऽजीवतांप्राणात्यये योधर्मः । एतद्दशमे । प्रायश्चित्तविधिरेकादशे । संसारगमनंधर्मेण धर्मी लक्ष्यते । संसारी पुरुषआत्मा तस्य गमनंदेहाद्देहान्तरप्राप्तिरथवासंसारविषयाः पृथिव्यादयोलोकाउच्यन्ते । तत्र गमनंपूर्ववत्त्रिविधमुत्तमाधममध्यमंकर्मसंभवंशुभाशुभकर्मनिमित्तम् निःश्रेयसं न केवलंकर्मनिमित्तागतयउक्तायावद्यतः परमन्यच्छ्रेयोनास्ति तदुपायोप्यध्यात्मज्ञानमुक्तम् । कर्मणांच विहितप्रतिषिद्धानांगुणदोषपरीक्षा ॥ १११ § ॥

( २ ) **सर्वज्ञनारायणः** । अथ संक्षिप्यशास्त्रवाच्यमर्थजातमाह जगतश्चेति श्लोकैरष्टभिः । जगतः समुत्पत्तिंप्रथमेध्यायेउक्तवान् । संस्कारोजातकर्मादिः व्रतचर्या नियमचरणंव्रतिनः । उपचारंगुरोःशिष्यस्य । स्नातकस्यविधिंगुरुकुलसमावृत्तसंस्कारस्य ॥ १११ ॥

( ३ ) **कुल्लूकः** । इदानींशिष्यस्य सुखप्रतिपत्तये वक्ष्यमाणार्थानुक्रमणिकामाह जगतश्चसमुत्पत्तिमिति पाषण्डगणधर्मांश्चेत्यन्तम् । जगदुत्पत्तिर्यथोक्ता ब्राह्मणस्तुतिश्चसर्गरक्षार्थत्वेन ब्राह्मणस्य शास्त्रस्तुत्यादिकंच सृष्टावेवान्तर्भवति । एतत्प्रथमाध्यायप्रमेयम् । संस्काराणांजातकर्मादीनांविधिमनुष्ठानंब्रह्मचारिणोव्रताचरणंउपचारंच गुर्वादीनामभिवादनोपासनादि । सर्वोद्वन्द्वोविभाषयैकवद्भवतिइत्येकवद्भावः । एतद्द्वितीयाध्यायप्रमेयम् । स्नानंगुरुकुलान्निवर्तमानस्य संस्कारविशेषस्तस्य प्रकृष्टंविधानम् ॥ १११ ॥

( ४ ) **राघवानन्दः** । संप्रति द्वादशभिरध्यायैर्यत्प्रतिपाद्यंतत् संक्षेपतः सुखप्रतिपत्त्यर्थंप्रतिजानीते जगतश्चेत्यष्टभिः । समुत्पत्तिप्राप्तिरिदं तमोभूतमित्यादिनोक्तं सृष्ट्यादित्रयमिति । प्राथमिकंसंस्कारविधिंजातकर्मादेर्विधानम् । व्रतचर्योपचारं ब्रह्मचारिव्रताचरणम् । उपचारंगुर्वादीनांपूजाभिवादनादीनि । द्वैतीयकम् । स्नानस्य समावर्तनाख्यस्य ॥ १११ ॥

( ५ ) **नन्दनः** । अथशास्त्रविषयानर्थानध्येतृप्ररोचनार्थंसंक्षेपेणानुक्रामति जगतइति । संस्कारोनिषेकादिः । व्रतचर्या ब्रह्मचारिधर्मः । उपचारोगुरुशुश्रूषाम् ॥ १११ ॥

( ६ ) **रामचन्द्रः** । जगतइति । प्रथमतःजगदुत्पत्तिंसंस्कारविधिम् ॥ १११ ॥

**दाराधिगमनंचैव विवाहानांच लक्षणम् ॥ महायज्ञविधानंचश्राद्धकल्पंचशाश्वतम् ॥ ११२ ॥**

( २ ) **सर्वज्ञनारायणः** । दाराधिगमनंदाराणांयादृशानां अधिगमनंकार्यम् । विवाहानांब्राह्मादीनाम् । महायज्ञोवैश्वदेवादिः । श्राद्धस्यपित्र्यस्य कर्मणः कल्पंप्रकारम् ॥ ११२ ॥

( ३ ) **कुल्लूकः** । दाराधिगमनमिति । दाराधिगमनंविवाहः तद्विशेषाणंब्राह्मादीनांच लक्षणांमहायज्ञाःपञ्चवैश्वदेवादयः श्राद्धस्य विधिःशाश्वतःप्रतिसर्गमनादिप्रवाहप्रवृत्त्या नित्यः । एषतृतीयाध्यायार्थः ॥ ११२ ॥

---

§ जगतश्चेत्यादि संसारगमनमित्यन्तनांसप्तानां श्लोकानां व्याख्या अत्रैव द्रष्टव्या

( ४ ) **राघवानन्दः** । दाराधिगमनंविवाहः । विवाहानां ब्राह्मादीनांलक्षणमाच्छाद्येत्यादि । महायज्ञविधानंवैश्वदेवादयः पञ्चयज्ञास्तेषांविधानमनुष्ठानम् । श्राद्धकल्पंश्राद्धविधिंशाश्वतं प्रवाहानादितइति । तार्तीयके ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । दारेति । गम्यागम्यदाराणांअधिगमनंप्राप्तिंअष्टविवाहानांलक्षणंपञ्चयज्ञविधानंवैश्वदेवविधानम् ॥ ११२ ॥

**वृत्तीनांलक्षणंचैव स्नातकस्य व्रतानि च ॥ भक्ष्याभक्ष्यंच शौचंच द्रव्याणांशुद्धिमेव च ॥ ११३॥**

( २ ) **सर्वज्ञनारायणः** । वृत्तीनांधनार्जनानांप्राणयात्रार्थानाम् । स्नातकस्य स्नातस्य व्रतान्यभ्युदयसाधनान्यकरणेप्रत्यवायकारीणि । भक्ष्यंदध्याद्यभक्ष्यं लशुनादि । शौचं सूतकादि । शुद्धिंद्रव्याणांतैजसादीनां शुद्धिपाविन्यम् ॥ ११३ ॥

( ३ ) **कुल्लूकः** । वृत्तीनामिति । वृत्तीनांजीवनोपायानांऋतादीनां लक्षणं स्नातकस्य गृहस्थस्य व्रतानि नियमाः । एतच्चतुर्थाध्यायप्रमेयम् । भक्ष्यंदध्यादि अभक्ष्यंलशुनादि शौचंमरणादौ ब्राह्मणदिर्दशाहादिना द्रव्याणांशुद्धिमुदकादिना॥११३॥

( ४ ) **राघवानन्दः** । वृत्तीनांजीवनोपायानांशिलोञ्छादिभेदभिन्नानाम् । स्नातकस्य स्नातकादिनवकल्पस्य व्रतानि नियमाः एतस्माद्ब्राह्ममेतस्मान्नेति । चातुर्थिकम् । भक्ष्यंदध्यादि अभक्ष्यंलशुनादि । शौचंमरणादौ दशाहादिना । शुद्धिर्द्रव्याणांचोदकादिना ॥ ११३ ॥

( ५ ) **नन्दनः** । वृत्तीनांजीवनानाम् । स्नातकस्यगृहस्थस्य ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । वृत्तीति । द्रव्याणांवस्तूनांशुद्धिमेव च ॥ ११३ ॥

**स्त्रीधर्मयोगंतापस्यंमोक्षंसंन्यासमेव च ॥ राज्ञश्च धर्ममखिलंकार्याणांच विनिर्णयम् ॥ ११४ ॥**

( २ ) **सर्वज्ञनारायणः** । स्त्रीणांधर्मयोगं धर्मसंयोगंधर्मसंबन्धम् । तापस्यंवानप्रस्थम् । मोक्षंमोक्षहेतुकर्मसंन्यासंकर्मफलत्यागम् राज्ञोधर्मंधर्मसाधनम् । कार्याणांव्यवहाराणाम् ॥ ११४ ॥

( ३ ) **कुल्लूकः** स्त्रीधर्मयोगमिति । स्त्रीणांधर्मयोगंधर्मोपायंएतत्पाञ्चमिकम् । तापस्यंतपसे वानप्रस्थाय हितंतस्यधर्मम् । मोक्षहेतुत्वान्मोक्षंयतिधर्मम् । यतिधर्मत्वेपि संन्यासस्य पृथगुपदेशःप्राधान्यज्ञापनार्थः । एषषष्ठाध्यायार्थः । राज्ञोभिषिक्तस्य सर्वोदृष्टादृष्टार्थोधर्मः । एषसप्तमाध्यायार्थः । कार्याणामृणादीनामर्थिप्रत्यर्थिसमर्पितानां विनिर्णयोविचार्यतत्त्वनिर्णयः ॥ ११४ ॥

( ४ ) **राघवानन्दः** । स्त्रीधर्मयोगंस्त्रीनिमित्तकधर्मोपायमिति पाञ्चमिकम् । तापस्यंवानप्रस्थानांधर्मः । मोक्षंमोक्षहेतुत्वात् यतिधर्मःयतिधर्मत्वेपि सन्यासस्य पृथगुपदेशःप्राधान्यख्यापनायेति षाष्ठम् । राज्ञोभिषिक्तस्य अखिलंजाङ्गलंदेशमित्यादि दृष्टादृष्टार्थमिति साप्तमिकम् । कार्याणामृणादीनाम् ॥ ११४ ॥

( ५ ) **नन्दनः** । स्त्रीधर्मयोगंस्त्रीधर्मलक्षणम् । तापस्यंवानप्रस्थधर्मः । कार्याणांविवादपदानाम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । स्त्रीति । कण्टकानांशोधनंचौरप्रायाणांशोधनम् ॥ ११४ ॥

**साक्षिप्रश्नविधानंच धर्मंस्त्रीपुंसयोरपि ॥ विभागधर्मंद्यूतंच कण्टकानांच शोधनम् ॥ ११५॥**

( २ ) **सर्वज्ञनारायणः** । स्त्रीपुंसयोर्धर्म्यमन्योन्यकार्यम् । विभागोधनविभजनम् । कण्टकानांचौरादीनामुपद्रवहेतूनांशोधनं तद्वधज्ञानोपायम् ॥ ११५ ॥

( ३ ) **कुल्लूकः** साक्षीतिसाक्षिणांच प्रश्नेयद्विधानंव्यवहाराङ्गत्वेपि साक्षिप्रश्नस्य विधाननिर्णयोपायत्वात्पृथङ्निर्देशः। एतदाष्टमिकम्। स्त्रीपुंसयोर्भार्यापत्योः सन्निधावसन्निधौ च धर्मानुष्ठानंऋक्थभागस्य च धर्मम्। यद्यपि ऋक्थभागोपिकार्याणांच विनिर्णयमित्यनेनैव प्राप्तस्तथाप्यध्यायभेदात्पृथङ्निर्देशः। द्यूतविषयोविधिर्द्यूतशब्देनोच्यते कण्टकानांचौरादीनांशोधनंनिरसनम् ॥ ११५ ॥

( ४ ) **राघवानन्दः**। साक्षिणांव्यवहाराङ्गत्वेपि प्रधानत्वख्यापनार्थं पृथङ्निर्देशइत्याष्टमिकम्। स्त्रीपुंसयोःसंनिधानासंनिधाननिबन्धनंधर्मानुष्ठानम्। धनविभागस्य व्यवहाराङ्गत्वेपि अध्यायपृथक्त्वात्पृथक्त्वनिर्देशः। द्यूतंद्विविधम्। कण्टकानांचोराणांशोधनंनिरसनम् ॥ ११५ ॥

( ५ ) **नन्दनः**। स्त्रीपुंसधर्मोदम्पतिभ्यामन्योन्यस्मिन्कर्तव्यधर्मः ॥ ११५ ॥

**वैश्यशूद्रोपचारंच संकीर्णानांच संभवम्॥ आपद्धर्मंच वर्णानांप्रायश्चित्तिविधिंतथा ॥ ११६ ॥**

( २ ) **सर्वज्ञनारायणः**। वैश्यशूद्राभ्यांकार्यमुपचारम्। वर्णस्य संकीर्णानामनुलोमप्रतिलोमानां आपद्धर्ममापदि धर्मोत्पादनविधिम्। प्रायश्चित्तस्याधर्मनिवर्तककर्मणोविधिम् ॥ ११६ ॥

( ३ ) **कुल्लूकः**। वैश्यशूद्रोपचारंचेति। वैश्यशूद्रोपचारं स्वधर्मानुष्ठानंएतन्नवमे। एवंसङ्कीर्णानां अनुलोमप्रतिलोमजानामुत्पत्तिमापदि च जीविकोपदेशंआपद्धर्मंएतद्दशमे। प्रायश्चित्तविधिमेकादशे ॥ ११६ ॥

( ४ ) **राघवानन्दः**। वैश्यशूद्रोपचारंच स्वस्वधर्मानुष्ठानमिति नावमिकम्। सङ्कीर्णानामनुलोमप्रतिलोमजानांसंभवमुत्पत्तिम्। आपद्धर्मंजीविकान्तराद्युपदेशइति दाशमिकम्। धर्मभिक्षुकादिप्रायश्चित्तविधानमित्यैकादशिकम् ॥ ११६ ॥

( ५ ) **नन्दनः**। वैश्यशूद्रोपचारंतयोराचारंधर्ममितियावत ॥ ११६ ॥

( ६ ) **रामचन्द्रः**। संसारस्य। गमनागमनंत्रिविधंकर्मकायिकवाचिककर्मसंभवंवक्ष्ये ॥ ११६ ॥

**संसारगमनंचैव त्रिबिधंकर्मसंभवम् ॥ निःश्रेयसंकर्मणांच गुणदोषपरीक्षणम् ॥ ११७ ॥**

( २ ) **सर्वज्ञनारायणः**। संसारोजीवस्य गमनं उत्तमाधममध्यमधर्मसंभवत्वेन त्रिविधम् कर्मणांनिःश्रेयससाधनवत्त्वम्। कर्मणामेवगुणदोषयोः पुण्यहेतुत्वपापहेतुत्वयोः परीक्षणम् ॥ ११७ ॥

( ३ ) **कुल्लूकः** संसारगमनमिति। संसारगमनंदेहान्तरप्राप्तिरूपंउत्तममध्यमाधमभेदेन त्रिविधं शुभाशुभकर्महेतुकम्। निःश्रेयसमात्मज्ञानंसर्वोत्कृष्टमोक्षलक्षणस्यश्रेयोहेतुत्वात्। कर्मणांच विहितनिषिद्धानांगुणदोषपरीक्षणम् ॥ ११७ ॥

( ४ ) **राघवानन्दः**। संसारगमनंचैव। तिर्यग्योन्यादिप्राप्तिम् उत्तममध्यमाधमभेदेनत्रिविधंकायिकंवाचिकंमानसिकंचेति निःश्रेयसंतत्वज्ञानात् कर्मणांविहितनिषिद्धानामिति द्वादशिकम् ॥ ११७ ॥

( ५ ) **नन्दनः**। त्रिविधंनोवाक्कायभेदेन कर्मणांनैःश्रेयसंश्रेयोनिःश्रेयसंतत्रभवंनैःश्रेयसम्। संस्काराणांकर्मणांमध्येप्रकृष्टतरंकर्मेत्यर्थः ॥ ११७ ।

इतिलक्षणाचार्यात्मजेन श्रीवीरमल्लप्रियसखेन श्रीनन्दनेनविरचिते मानवव्याख्याने प्रथमोध्यायः ॥ १ ॥

**देशधर्माञ्जातिधर्मान्कुलधर्मांश्च शांश्वतान्॥पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान्मनुः॥११८॥**

( १ ) **मेधातिथिः**। तदेव साकल्याभिधानं द्रढयति। प्रतिनियते देशेऽनुष्ठीयमाना न सर्वस्यां पृथिव्यां

ते दशधर्माः । ब्राह्मणादिजात्याश्रयाजातिधर्माः । कुलधर्माः प्रख्यातवंश प्रवर्तिताः । पाखण्डं प्रतिषिद्धव्रतचर्या । गणः-संघातो वणिक्कारुकुशीलवादीनाम् । तान्सर्वधर्मान्भगवान्मनुरस्मिञ्छास्त्र उक्तवान् ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । देशधर्मास्तत्तद्देशासाधारणधर्मास्तत्र तत्र प्रसंङ्गेन न तु कण्ठरवेण । एवंजातिधर्मान् ब्राह्मणादिजातिधर्मान् । कुलधर्मान् तत्तदसाधारणगोत्रधर्मान् । पाषण्डधर्मान्पाषण्डान् प्रतियेन्यैःकार्याधर्माः तेपाषण्ड-धर्मास्तथागणधर्मान्नैगमादिगणधर्मास्तान्प्रति तैर्वाकर्तव्यास्तान् ॥ ११८ ॥

( ३ ) **कुल्लूकः** । देशधर्मानिति । प्रतिनियतदेशेऽनुष्ठीयमानादेशधर्माः । ब्राह्मणादिजातिनियताजातिधर्माः । कुलविशे-षाश्रयाःकुलधर्माः । वेदबाह्यागमसमाश्रयाप्रतिषिद्धव्रतचर्यापाषण्डं तद्योगात्पुरुषोपि पाषण्डः तन्निमित्तायेधर्माः पाषण्डिनो विकर्मस्थानित्यादयःतेषांपृथग्धर्मानभिधानात् । गणःसमूहोवणिगादीनाम् ॥१८॥

( ४ ) **राघवानन्दः** । देशधर्मान्प्रतिनियतदेशानुष्ठेयहोलिकादिधर्मानिति । जातिधर्मान्ब्राह्मणादिजातिनियतानध्या-पनादीन् । कुलधर्मादीन्षष्ठेन्नप्राशनंमासीत्यादिकान् । पाखण्डधर्मान्वेदबाह्याचारान् । गणःसंघातस्तद्युक्तानांवणिक्कारुकु-शीलवादीनांधर्मान् ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । अस्मिञ्छास्त्रेएतेषांवस्तूनांनिर्णयंमनुःउक्तवान्पूर्वम् ॥ ११८ ॥

**यथेदमुक्तवाञ्छास्त्रंपुरा पृष्टोमनुर्मया ॥ तथेदंयूयमप्यद्य मत्सकाशान्निबोधत ॥ ११९ ॥**

**इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ श्रीकृष्णाय नमः**

( १ ) **मेधातिथिः** । तदेव साकल्याभिधानंद्रढयति । प्रतिनियते देशेऽनुष्ठीयमाना नसर्वस्यां पृथिव्यान्ते देशधर्मा ब्राह्मणादिजात्याश्रयाजातिधर्माः । कुलधर्माः प्रख्यातवंशप्रवर्तिताइति पाखण्डप्रतिषिद्ध व्रतचर्याऽऽवाह्य स्मृतिसमाश्रया स्तत्रये धर्माः । पाखण्डिनोविकर्मस्थानिति । गणोगणःसंघातो वणिक्कारुकुशीलवादीनाम् । तान्त्सर्वान्भगवान्मनुरस्मिञ्छा स्त्रउक्तवान् । यथेदमुक्तवाञ्छास्त्रंपुरापृष्टोमनुर्मया । तथेदंयूयमप्यद्य मत्सकाशान्निबोधत अवधानार्थः प्रतिबोधः ॥ ११९॥

इतिश्रीभट्टमेधातिथिविरचिते मनुभाष्ये प्रथमोऽध्यायः ॥ १ ॥ छ ॥ ॥ ॥ छ ॥

( २ ) **सर्वज्ञनारायणः** । यथेदमिति । यथा येन श्लोकादिनिबन्धनप्रकारेण ॥ ११९ ॥

श्रीनारायणसर्वज्ञकृतावृत्तिर्मनुस्मृतेः । कुनिबन्धकृतव्याख्यामियंदूरे निरस्यति । सर्वज्ञनारायणकृतौ मनुसमस्त व्यवहारापातनिकानाम प्रथमोध्यायः ॥ १ ॥

( ३ ) **कुल्लूकः** । यथेदमिति । पूर्वंमया पृष्टोमनुर्यथेदंशास्त्रमभिहितवान् तथैवान्यूनानतिरिक्तंमत्सकाशाच्छृणुते-ति ऋषीणां श्रद्धातिशयार्थंपुनरभिधानम् ॥ १९ ॥ ॥ इतिश्रीकुल्लूकभट्टकृतायांमन्वर्थमुक्तावल्यांमनुवृत्तौ प्रथमो-ऽध्यायः ॥ १ ॥

( ४ ) **राघवानन्दः** । अध्यायमुपसंहरति यथेदमिति ॥ ११९ ॥

॥ इतिश्रीराघवानन्दसरस्वतीविरचितायांमन्वर्थचन्द्रिकायांप्रथमोध्यायः ॥ १ ॥ छ छ

( ६ ) **रामचन्द्रः** । मत्सकाशाद्भृगुःभृगोःसकाशात्यूयंऋषयोनिबोधत जानीतेति ॥ ११९ ॥

इतिश्रीरामचन्द्रविरचितायांचन्द्रिकायांमानवे धर्मशास्त्रे जगदुत्पत्तिप्रकरणंनाम प्रथमोध्यायः ॥ १ ॥

श्री

# अथ द्वितीयाध्यायः

**विद्वद्भिःसेवितःसद्भिर्नित्यमद्वेषरागिभिः ॥ हृदयेनाभ्यनुज्ञातो योधर्मस्तंनिबोधत ॥ १ ॥**

( १ ) **मेधातिथिः** । प्रथमोऽध्यायः शास्त्रप्रतिपाद्यार्थतत्त्वदर्शनार्थोऽनुक्रान्तः । जगत्सृष्ट्यादिवर्णनं च तच्छेषमेव व्याख्यातम् । इदानींशास्त्रमारभते । तत्र प्रतिज्ञातोर्थोजगत्सर्गादिवर्णनेन व्यवायाद्विस्मृतइत्यनुसंधानार्थंपुनः शिष्यान्प्रति बोधयति। योधर्मोभवतांशुश्रूषितस्तमिदानींमयोच्यमानंनिबोधतावहिताभूत्वा शृणुत । प्रथमेऽध्याये पञ्चषाः श्लोकाः प्रयोजनादिप्रतिपादनार्थाः । परिशिष्टमर्थवादरूपम्। तच्चेन्नातिसम्यगवधारितंनधर्मपरिज्ञाने महतीक्षतिः इह तु साक्षाद्धर्मउपदिश्यते । ततोऽवधानवद्भिरवधारणीयोऽयमर्थइति पुनरुपन्यासफलम् । धर्मशब्द उक्तार्थोऽष्टकाद्यनुष्ठानवचनः। बाह्यदर्शनिनस्तुभस्मकपालादि धारणमपि धर्ममन्यन्ते। तन्निवृत्त्यर्थंविद्वद्भिरित्यादीनि विशेषणपदानि। विद्वांसः शास्त्रसंस्कृतमतयः प्रमाण प्रमेयस्वरूपविज्ञानकुशलाः । तेच वेदार्थविदोविद्वांसोनान्ये यतोवेदादन्यत्रधर्मंप्रति ये गृहीतप्रामाण्यास्ते विपरीतप्रमाणप्रमेयग्रहणादविद्वांसएव । एतच्चमीमांसातस्तत्त्वतोनिश्चीयते । सन्तः साधवः प्रमाणपरिच्छिन्नार्थानुष्ठायिनोहिताहितप्राप्तिपरिहारार्थाययत्नवन्तः। हिताहितंच दृष्टंप्रसिद्धम् । अदृष्टंच विधिप्रतिषेधलक्षणम् । तदनुष्ठानबाह्याअसन्तउच्यन्ते । अतउभयमत्रोपात्तं ज्ञानमनुष्ठानंच । विद्यमानतावचनः सच्छब्दोन संभवत्यानर्थक्यात्। यद्धि येन सेव्यते तत्तेन विद्यमानेनैव सेवानुष्ठानशीलता । भूतप्रत्ययेनानादिकालप्रवृत्ततामाह । नायमष्टकादिधर्मोऽद्यत्वे केनचित्प्रवर्तितइतरधर्मवदेतदेव नित्यशब्देन दर्शयति । यावत्संसारमेषधर्मः । बाह्यधर्मास्तु सर्वे मूर्खदुःशीलपुरुषप्रवर्तिताः कयन्तंकालंलब्धावसराअपि पुनरन्तर्धीयन्ते । नहि व्यामोहो युगसहस्रानुवर्तीभवति । सम्यग्ज्ञानमविद्ययासंछन्नमपि तत्क्षयेनिर्मलतामेवैति । न हि तस्य निर्मलतया छेदः संभवः इति । अद्वेषरागिभिर्बाह्यधर्मानुष्ठाने द्वितीयंकारणम् । व्यामोहः पूर्वमुक्तः। अनेन लोभादयउच्यन्ते रागद्वेषग्रहणस्य प्रदर्शनार्थत्वात् । लोभेन मन्त्रतन्त्रादिषु प्रवर्तयन्ति । अथवा रागद्वेषयोर्लोभोन्तर्भूतः । आत्मनियेभोगोपयोगासरेण जीवितुमसमर्थालिङ्गधारणादिना जीवन्ति । तदुक्तंभस्मकपालादि धारणं नग्नता काषाये च वाससीबुद्धिपौरुषहीनानांजीविकेति । द्वेषोविपरीतानुष्ठानकारणम् । द्वेषप्रधानाहि नातीव तत्त्वावधारणे समर्थाभवन्त्यतोऽधर्ममेव धर्मत्वेनाध्यवस्यन्तीति । अथवोभावपि रागद्वेषौ तत्त्वावधारणे प्रतिबन्धकौ । सत्यामपि कस्यांचिच्छास्त्रवेदनमात्रायां लब्धेऽपि विद्वद्व्यपदेशे रागद्वेषवत्तया विपरीतानुष्ठानंसंभवति । जानानाअपि यथावच्छास्त्रंकस्यचिद्द्वेष्यस्योपघाताय प्रियस्य चोपकाराय कौटसाक्ष्याद्यधर्मंसेवन्ते तेषांवेदमूलमेवानुष्ठानमित्यशक्यनिश्चयंकारणान्तरस्य रागद्वेषलक्षणस्य संभवादतस्तत्प्रतिषेधः । अत्रचोच्यते सद्भिरिति सच्छब्दः साधुतावचनोवर्णितः । कीदृशीच साधुता तस्य यदि रागद्वेषाभ्यामधर्मे प्रवृत्तिः संभाव्यते तस्मादद्वेषरागिभिरिति न वक्तव्यम्। एवं तर्हिहेतुत्वेनोच्यते । यतोरागादिवर्जिताअतः । सन्तोभवन्ति । रागद्वेषप्रधानत्वाभावश्चात्र प्रतिपाद्यते । न सर्वेण सर्वतदभावयोग्यावस्थागतस्य हेतोर्निरन्वयमुच्छिद्यते । तथाच श्रुतिः नहवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति । रागो-

विषयोपभोगगृध्नुता तत्प्रतिषेधव्यापारोद्वेषः। लोभोमात्सर्यमसाधारण्येन स्पृहा परस्य चैतन्माभूद्विभवोऽप्यस्यापीति। चित्तधर्माएते। अथवा चेतनावत्सुस्त्रीसुतसुहृद्बान्धवादिषु स्नेहोरागः लोभोऽचेतनेष्वपि धनादिषु स्पृहा। हृदयेन हृदयशब्देन चित्तमाचष्टे। अनुज्ञानंच हृदयस्य प्रसादः। एषाहि स्थितिरन्तर्हृदयवर्तीनिबुद्धयादितत्त्वानि। यद्यपि बाह्यहिंसाभक्ष्यभक्षणादिषु मूढाधर्मबुद्ध्या प्रवर्तन्ते तथापि हृदयाक्रोशनंतेषांभवति। वैदिके त्वनुष्ठाने परितुष्यति मनः। तदस्य सर्वस्यायमर्थः। न मया तादृशोधर्मउच्यते यत्रैते दोषाः सन्ति किंतु यएवंविधैर्महात्मभिरनुष्ठीयते स्वयंच यत्र चित्तंप्रवर्तयति वा। अत आदरातिशयउच्यमानेषु धर्मेषु युक्तः। अथवा हृदयंवेदः। सह्यधीतोभावनारूपेण हृदयस्थितोहृदयम्। ततश्चत्रितयमत्रोपात्तम्। यदि तावदविचार्यैव स्वाग्रहात्काचित्प्रवृत्तिः कस्यचित्तथाप्यत्रैवयुक्ता। एतद्धृदयेनाभ्यनुज्ञातइत्यनेनोच्यते। अथाप्ययंन्यायोमहाजनोयेन गतः सपन्थाइति तदप्यत्रैवास्ति। विद्वांसोह्यत्र निष्कामाः प्रवृत्तिपूर्वाअनिन्द्याश्च लोके। अथाप्रामाणिकीप्रवृत्तिः सापि वेदप्रामाण्यात्सिद्धैवेति। सर्वप्रकारंप्रवृत्त्याभिमुख्यमनेन जन्यते। अन्येत्वेतंश्लोकंसामान्येन धर्मलक्षणार्थंव्याचक्षते। एवंविधैर्यः सेव्यते सधर्मोऽवगन्तव्यः। प्रत्यक्षवेदविहितस्य स्मार्तस्य वाचारतः प्राप्तस्य सर्वस्यैतल्लक्षणंविद्यते। अत्रतु यएतैः सेव्यते तंधर्मंनिबोधतेतिपाठोयुक्तः ॥ १ ॥

( २ ) **सर्वज्ञनारायणः**। अथ प्रकृतप्रतिज्ञातंधर्मसाधनमभिधातुमवतारयति। विद्वद्भिर्विद्यावद्भिःसद्भिराचारपरैः द्वेषःक्रोधानुबन्धो रागोभिलाषानुबन्धः तद्रहितैःसेवितोयो धर्मोधर्महेतुः तथा सेव्यमानोपि हृदयेन शङ्कावतांनाभ्यनुज्ञायते चेन्नासौ धर्मोऽतउक्तं हृदयेनेति। अभ्यनुज्ञातःस्वीकृतः एवंविधोयोधर्मस्तं अस्माच्छास्त्रान्निबोधत। तत्तत्कालपठ्यमानश्रुतिप्रतिपादितोपि हि धर्मस्ततएव प्रसिद्धोपि दुरुहपदवाक्यार्थसंकीर्णश्रुतिप्रमाणकतया स्मृतिमपेक्षतएवं ॥ १ ॥

( ३ ) **कुल्लूकः**। प्रकृष्टपरमात्मज्ञानरूपधर्मज्ञानाय जगत्कारणंब्रह्म प्रतिपाद्याधुना ब्रह्मज्ञानाङ्गभूतंसंस्कारा दिरूपंधर्मंप्रतिपिपादयिषुर्धर्मसामान्यलक्षणंप्रथममाह विद्वद्भिरिति। विद्वद्भिर्वेदविद्भिः सद्भिर्धार्मिकैरागद्वेषशून्यैरनुष्ठितः। हृदयेनाभिमुख्येन ज्ञातइत्यनेन श्रेयःसाधनमभिहितम्। तत्र हि स्वरसान्मनोभिमुखीभवति वेदविद्भिर्ज्ञातइति विशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयः साधनज्ञाने कारणत्वंविवक्षितम्। खड्ग धारिणा हतइत्युक्ते धृतखड्गस्यैव हनने प्राधान्य मतोवेदप्रमाणकःश्रेयःसाधनंधर्मइत्युक्तम्। एवंविधोयोधर्मस्तंनिबोधत। उक्तार्थसंग्रहश्लोकाः। वेदविद्भिर्ज्ञातइति प्रयुञ्जानोविशेषणम्। वेदादेव परिज्ञातोधर्मइत्युक्तवान्मनुः॥ हृदयेनाभिमुख्येन ज्ञातइत्यपि निर्दिशन्। श्रेयः साधनमित्याह तत्रह्यभिमुखंमनः॥ वेदप्रमाणकःश्रेयःसाधनंधर्मइत्यतः। मनूक्तमेव मुनयःप्रणिन्युर्धर्मलक्षणम्॥ अतएव हारीतः अथातोधर्मंव्याख्यास्यामः श्रुतिप्रमाणकोधर्मःश्रुतिश्च द्विविधा वैदिकी तान्त्रिकीच। भविष्यपुराणे धर्मःश्रेयःसमुद्दिष्टंश्रेयोभ्युदयलक्षणम्। सतु पञ्चविधःप्रोक्तोवेदमूलःसनातनः॥ अस्य सम्यगनुष्ठानात्स्वर्गोमोक्षश्च जायते। इह लोके सुखैश्वर्यमतुलंच खगाधिप॥ श्रेयःसाधनमित्यर्थः। जैमिनिरपि इदमपि धर्मलक्षणमसूत्रयत् चोदनालक्षणोऽर्थोधर्मइति। उभयचोदनया लक्ष्यतेऽर्थः श्रेयःसाधनंज्योतिष्टोमादिः अनर्थः प्रत्यवायसाधनंश्येनादिः तत्र वेदप्रमाणकंश्रेयःसाधनंज्योतिष्टोमादिधर्मइति सूत्रार्थः। स्मृत्यादयोऽपि वेदमूलत्वेनैव धर्मेप्रमाणमिति दर्शयिष्यामः। गोविन्दराजस्तु हृदयेनाभ्यनुज्ञातइत्यन्तःकरणविचिकित्साशून्यइतिव्याख्यातवान्। तन्मते वेदविद्भिरनुष्ठितःसंशयरहितश्च धर्मइति धर्मलक्षणंस्यात्। एवंच दृष्टार्थग्रामगमनादिसाधारणंधर्मलक्षणंविचक्षणान श्रद्दधते। मेधातिथिस्तु हृदयेनाभ्यनुज्ञातइति यत्र चित्तंप्रवर्तयतीति व्याख्यायाथवा हृदयंवेदः सह्यधीतोभावनादिरूपेण हृदयस्थितोहृदयमित्युच्यतइत्युक्तवान् ॥ १ ॥

( ४ ) **राघवानन्दः** । एवमाचारतोदृष्ट्वा धर्मस्य मुनयोगतिमित्यनेन पूर्वाध्याये धर्मउपक्षिप्तस्तमनुष्ठातृविशेषानुष्ठेयत्वेनाह विद्वद्भिरिति । विद्वद्भिःधर्मबुद्ध्याअनुष्ठेयत्वेन वेदवेदार्थविद्भिःसद्भिःवेदप्रमाणकाग्निहोत्राद्यनुष्ठानवद्भिःएतेन बौद्धादीनां परजिगीषाकुतूहलादिना वेदतत्त्वार्थवित्वेपि वेदार्थाननुष्ठातृत्वेनाशिष्टताव्याख्याता । अद्वेषरागिभिरित्यनेन श्येनयागवामदेव्युपासनादीनांवेदबोधितत्वेपि दृष्टार्थतया न धर्मतेति दर्शितम् । हृदयेनेति शास्त्रद्वैधे सति साधूनां मनस्यतीवेष्टोयःस धर्मः । तथाच व्यासः वैकल्पिके आत्मतुष्टिः प्रमाणमिति । तंनिबोधतेत्यन्वयः । इति तु कामयमान एतावान्वैकामइति श्रुतेरत्यन्तकामात्मता निन्दिता ॥ १ ॥

( ५ ) **नन्दनः** । धर्मोनित्यंसेवितोधर्मत्वेननित्यमनुष्ठितोनशोकमोहादिना कादाचित्केन निमित्तेन किंच हृदयेनाभ्यनुज्ञातइदमेवश्रेयइतित्वारस्ययुक्तेनहृदयेनस्वीकृतोनतुक्रोशता । एवंभूतोयोऽर्थस्तंधर्मंव्यवस्यत हे महर्षयोनिश्चिनुत । तंधर्मंव्यवस्यतेतिसाधु पाठः ॥ १ ॥

( ६ ) **रामचन्द्रः** । विद्वद्भिः सेवितः धर्मः तंधर्मंनिबोधत कीदृशैः सद्भिः नित्यंअद्वेषरागिभिः रागद्वेषरहितैः यः धर्मःहृदयेनअभ्यनुज्ञातः मनसा ज्ञातः ॥ १ ॥

## कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ॥ काम्योहिवेदाधिगमः कर्मयोगश्च वैदिकः ॥ २ ॥

( १ ) **मेधातिथिः** । फलाभिलाषः कर्मप्रवृत्तेर्हेतुर्यस्य सकामात्मा तद्भावःकामात्मता । तत्प्रधानताआत्मशब्देन प्रतिपाद्यते । सान प्रशस्ता निन्दिता अतश्च निन्दया प्रतिषेधानुमाने न कर्तव्येति प्रतीयते । अर्थात्सौर्यादीनांसर्वेषांकाम्यानांनिषेधोऽयम् । अथवाकिंविशेषेण ब्रूमः सौर्यादीनामिति सर्वमेवक्रियानुष्ठानंफलसिद्ध्यर्थंन स्वरूपनिष्पत्तये । नच काचन निष्फलाक्रिया । यदपि नकुर्वीत वृथाचेष्टामिति भस्मनिहुतंविषयान्तरे देशराजवार्ताद्यन्वेषणंतत्रापि क्रियाफलंविद्यते किंतु प्रधानफलंस्वर्गग्रामादि पुरुषस्य यद्दृष्टादृष्टयोरुपयुज्यते तदभावाद्वृथाचेष्टेत्युच्यते । अथोच्यते । भवतु क्रियाफलवती तद्विषयेऽभिलाषोन कर्तव्योवस्तुस्वाभाव्यात्फलंभविष्यति । अत्रापि सौर्यादीनामफलत्वंकाम्यमानंफलंज्ञातं नानिच्छोस्तद्भविष्यतीति । नच लौकिकीप्रवृत्तिर्दृश्यते फलाभिसन्धिनिरपेक्षा । नचात्र विशेषः श्रुतावैदिकेषु कर्मसु फलंनाभिसंधेयमिति । तत्र फलवत्सु श्रुतेषु कामनानिषेधादप्रवृत्तौ श्रुतिविरोधः । नित्येषु तु प्राप्तिरेव नास्ति । विशेषानुपादानाच्च लौकिकव्यापारनिवृत्तौ दृष्टविरोधः। तदिदमापतितम् न किंचित्केनचित्कर्तव्यंसर्वैस्तूष्णींभूतैः स्थातव्यम् । उच्यते । यत्तावदुक्तंकाम्येषु सौर्यादिषु निषेधप्रसङ्गइतितत्र वक्ष्यति यथा संकल्पितांश्चेहसर्वान्कामान्समश्नुतइति । निषेधेहि कुतः संकल्पः कुतश्च कामावाप्तिः । तदपि विशेषानुपादानाल्लौकिकेपि प्रसङ्गइति । तत्रोपात्तएव विशेषः योधर्मस्तंनिबोधतेति धर्मस्य प्रकृतत्वात् । यदप्युक्तंनित्येषु फलाश्रयणात्फलाभिसन्धेःप्राप्तिरेव नास्ति किंनिषेधेनेति तत्राप्युच्यते । फलाभावात्कश्चित्सम्यक्शास्त्रार्थमजानानोन प्रवर्तेत । सौर्यादिषु चाश्रुतफलेषु फलाभिसन्धिपूर्विकांप्रवृत्तिंदृष्ट्वासामान्यतोदृष्टेन यत्कर्तव्यं तत्फलहेतोः क्रियतइत्यश्रुतमपि फलमभिसंदधीत तन्निवृत्त्यर्थमिदमारभ्यते । यद्यप्ययंन्यायोयत्फलवच्छ्रुतंतत्तथैव कर्तव्यम् यदापि निष्फलमेव कर्तव्यतया शास्त्रेण यावज्जीवादिपदैर्विनैव विश्वजिन्न्यायेनफलकल्पनयावगमितं तस्यान्यथानुष्ठाने प्रसङ्गएव नास्ति तथापि यएतंन्यायंप्रतिपत्तुमसमर्थः सवचनेन प्रतिपाद्यते । न्यायतः प्रतिपत्तौ हि गौरवम् । वचनात्तु लघीयसी सुखप्रतिपत्तिरितिसुहृद्भूत्वाप्रमाणसिद्धमर्थमुपदिशतिस्म । नचैवेहास्त्यकामता । कामशब्दोयंयद्यपि इच्छयवचनोदृष्टस्तथापि तस्येहासंभवात्कामइच्छाभिलाषइत्यनर्थान्तरम् । तत्र वक्ष्यमाणपर्यालोचनया फलाभिलाषेण-

न सर्वत्र प्रवर्तितव्यमित्ययमर्थःस्थास्यति । परस्तु कामात्मतामिच्छामात्रसंबन्धमात्रपदार्थमन्वानश्चोदयति । नचैवेहास्त्य-कामतेति । नचेह लोके काचिदकामिनः प्रवृत्तिरस्तीत्यर्थः । आस्तांतावत्कृषिवाणिज्यादि व्युत्पन्नबुद्धिना क्रियमाणम् यः स्वयवेदाधिगमोवेदाध्ययनंबालः कार्यते पित्रादिना ताड्यमानःसोपि न काममन्तरेणोपपद्यते । अध्ययनंहि शब्दोच्चारणरूपम् । नचोच्चारणमिच्छया विना निर्घातध्वनिवदुत्तिष्ठति । इच्छति चेत्किमिति ताड्यतइति सैव तथेच्छोपजन्यते । अभिमतेतु विषये स्वयमुपजायतइत्येतावान्विशेषः । यश्चायंवैदिकोवेदविहितकर्मयोगोदर्शपूर्णमासादिकर्मानुष्ठाने नित्यत्वेनावगतः सोपि न प्राप्नोति । नह्यनिच्छतोदेवतोद्देशेन स्वद्रव्य त्यागोपपत्तिः । तस्मात्कामात्मतानिषेधे सर्वश्रौतस्मार्तकर्मनिषेधः प्रसक्तइति ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । धर्ममात्रमभिधेयतया प्रतिज्ञातमत्रावमृशति । कामात्मता रागपरता न प्रशस्ता आयत्यांनाभ्युदयहेतुः कामतः कर्मणि प्रवृत्तौ पुनःपुनर्वासनानुच्छेदे संसारानुच्छेदात् । न चाकामताइहलोकेस्ति । संभवत्वादुपपादयतिकाम्योहीति । वेदानामधिगमोध्ययनंकाम्यःकामविषयःकामनोपनिबद्धयजनयाजनादितात्पर्येण तत्र प्रवृत्तेरध्ययनानन्तरंकर्तव्योपि वैदिकोवेदप्रतिपादितःकर्मयोगःकर्मप्रयोगःकाम्यःकामनाविषयःतद्द्वाराध्ययनमपितथेत्यर्थः ॥ २ ॥

( ३ ) **कुल्लूकः** । कामात्मतेति । फलाभिलाषशीलत्वंपुरुषस्य कामात्मता सा न प्रशस्ता बन्धहेतुत्वात् । स्वर्गादिफलाभिलाषेण काम्यानि कर्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणंभवन्ति । नित्यनैमित्तिकानि त्वात्मज्ञानसहकारितया मोक्षाय कल्पन्ते । न पुनरिच्छामात्रमनेन निषिध्यते तदाह न चैवेहास्त्यकामतेति । यतोवेदस्वीकरणंवैदिकसकलधर्मसंबन्धश्चेच्छाविषयएव ॥ २ ॥

( ४ ) **राघवानन्दः** । सर्वेषांकर्तव्यस्य तु काममूलता प्रत्यक्षसिद्धा तस्तत्रव्यवस्थामाह कामात्मतेति चतुर्भिः । इहेति प्राणिभूमौअतीव फलाभिलाषिता कामात्मता तदभावस्त्वकामता तथाचकिंकार्यमित्यपेक्षायामाह वेदाधिगमेति वेदाधिगमःवेदतदर्थज्ञानंवैदिकःवेदप्रमाणकोऽग्निहोत्रादिः चकारात्स्मार्तोपि धर्मपत्नीसंयोगादिःकाम्यः । एतेनैवपुमर्थसिद्धेः नं सर्वत्र काममूलप्रवृत्तिरितिभावः ॥ २ ॥

( ५ ) **नन्दनः** । अस्मिञ्छास्त्रेऽनुशिष्यमाणस्य धर्मस्य प्रवृत्तिफलस्यापि निवृत्तिफलत्वंक्रियाविशेषसाध्यमिति चतुर्भिः श्लोकैराह कामात्मतेति । चोदितेषु कर्मसु फलाभिसंधिः कामात्मता सा न प्रशस्ता निन्दिता प्रतिषिद्धेतियावत् । न च कर्मणः स्वरूपप्रवृत्तिनिष्कामता प्रशस्तेत्युक्तं नचैवेहाऽस्त्यकामतेति । ईहा प्रवृत्तिः । अत्रहेतुरुक्तः काम्योहीति । वेदाध्ययनंवेदार्थज्ञानंच वेदाधिगमः कर्मयोगः पञ्चमहायज्ञादिकः काम्यःकामसाध्यःतौकाममन्तरेणदुष्करावित्यभिप्रायः ॥ २ ॥

( ६ ) **रामचन्द्रः** । कामेआत्मा यस्य सः कामात्मनोभावः कामात्मताप्रशस्ता न सकामता ईहाः चेष्टाः प्रशस्ता न वेदाधिगमः काम्यःवेदानांअधिगमःअध्ययनंकाम्यः कामार्हः च पुनः कर्मयोगः कर्ममार्गः वैदिकः वेदैश्चोक्तः काम्यः कार्यः ॥ २ ॥

**संकल्पमूलःकामोवैयज्ञाःसंकल्पसंभवाः ॥ व्रतानियमधर्माश्च सर्वेसंकल्पजाःस्मृताः ॥ ३ ॥**

( १ ) **मेधातिथिः** । ततश्च यदुक्तंयागस्य कामेन बिना नस्वरूपनिष्पत्तिरिति तदनेन विस्पष्टंकृत्वा कथयति ।

संकल्पोयागादीनांमूलं कामस्यच। यागादींश्चिकीर्षन्नवश्यंसंकल्पंकरोति। संकल्पे च क्रियमाणे तत्कारणेन कामेन संनिधातव्यमनिष्टेनापि यथा पाकार्थिनोज्वलनंकुर्वतस्तत्समानकारणोधूमोऽप्यनिष्टोजायते। तत्र नशङ्कयं यज्ञादयः करिष्यन्ते कामश्च न भविष्यतीति। अथकोयंसंकल्पोनाम यः सर्वक्रियामूलम्। उच्यते। यश्चेतःसंदर्शनंनाम यदनन्तरं प्रार्थनाध्यवसायौ क्रमेण भवतः। एते हि मानसाव्यापाराःसर्वक्रियाप्रवृत्तिषु मूलतांप्रतिपद्यन्ते। नहि भौतिकाव्यापारास्तमन्तरेण संभवन्ति। तथाहि प्रथमंपदार्थस्वरूपनिरूपणम्। अयंपदार्थइमामर्थक्रियांसाधयतीतियज्ज्ञानंसइह संकल्पाऽभिप्रेतः। अनन्तरंप्रार्थना भवति इच्छासैव कामः। कथमहमिदमनेन साधयामीतीच्छायां सत्यामध्यवस्यति करोमीति निश्चिनोतिसोऽध्यवसायः। ततःसाधनोपादाने बाह्यव्यापारविषये प्रवर्तते। तथाहि बुभुक्षित आदौ भुजिक्रियां पश्यति ततइच्छति भुञ्जीयेति ततोऽध्यवस्यति व्यापारान्तरेभोविनिवृत्य भोजनं करोमीति ततः कर्मकरणस्थानाधिकारिणआह सज्जीकुरुत रसवतींसंचारयतेति। नन्वेवंसति न यज्ञादयः संकल्पमात्राद्भवन्ति अपितु संकल्पप्रार्थनाध्यवसायेभ्यः तत्र किमुच्यते यज्ञाः संकल्पसंभवाइति। संकल्पसाध्यकारणत्वाददोषः। अतएवोत्तरत्र नाकामस्य क्रिया काचिद्दृश्यतइति वक्ष्यति। व्रतानि मानसोऽध्यवसायोव्रतमिदंमया यावज्जीवंकर्तव्यमिति यद्विहितम् यथा स्नातकव्रतानि। यमधर्माः प्रतिषेधरूपाः। अहिंसादयः कर्तव्येषु प्रवृत्तिर्निषिद्धेभ्योनिवृत्तिर्नान्तरेण संकल्पमस्ति ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः**। तथाऽपरमप्याह संकल्पेति। संकल्पएतत्फलंममसंपद्यतामिति फलाभिलाषःतन्मूलः कामःसाक्षात्प्रयत्नहेतुःतत्साधनविषयेच्छा। न चैतावता वैदिककर्मणांकामहेतुकता सिध्यतीत्यतउक्तंयज्ञाइति। यज्ञाः पाकयज्ञहविर्यज्ञसोमयज्ञजपयज्ञरूपाः। व्रतानि स्नातकव्रतादीनि। यमानिषिद्धाननुष्ठाननियमाः। सर्वे संकल्पजाःसंकल्पाच्चकामइति। सर्वाणि रागजानि रागश्च तद्विरुद्धविषयद्वेषानुबन्धः। ततःकथंधर्मद्वेषिणांविदुषांरागद्वेषराहित्यंसंभवतीत्याक्षेपतात्पर्यम् ॥ ३ ॥

( ३ ) **कुल्लूकः**। अत्रोपपत्तिमाह संकल्पमूलइति। अनेनकर्मणेदमिष्टंफलंसाध्यतइत्येवंविषया बुद्धिः संकल्पः। तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते तदर्थंप्रयत्नंकुरुते चेत्येवंयज्ञाः संकल्पप्रभवाः। व्रतानि यमरूपाश्च धर्माश्चतुर्थाध्याये वक्ष्यमाणाः। सर्वइत्यनेन पदेनान्येऽपि शास्त्रार्थाः संकल्पादेव जायन्तइच्छामन्तरेण तान्यपि न संभवन्तीत्यर्थः। गोविन्दराजस्तु व्रतान्यनुष्ठेयरूपाणि यमधर्माः प्रतिषेधार्थकाइत्याह ॥ ३ ॥

( ४ ) **राघवानन्दः**। सच कामःसंकल्पमूलइत्याह संकल्पमूलइति काम जानामि ते मूलंसंकल्पात्किलजायसे इत्याद्युक्तेः। संकल्पोनामानेन कर्मणेदंफलंसाध्यमिति निश्चयः। तदनन्तरमिष्टसाधनतयावगते तस्मिन्कर्मणि कामः तदनन्तरंप्रयत्नइत्येवं यज्ञाःसंकल्पसंभवाइति मनसा संकल्पयति वाचा विलपति कर्मणा चोपपादयतीति श्रुतेः ॥ ३ ॥

( ५ ) **नन्दनः**। एतदेवमपश्यतिसंकल्पमूलमिति। संकल्पः कर्मानुष्ठानाध्यवसायः तस्य मूलंकारणंकामः। यज्ञाइतिगृहस्थधर्मोलक्ष्यते। व्रतानीति ब्रह्मचारिधर्मः। यमधर्माइतिवानप्रस्थसन्यासिधर्माः ॥ ३ ॥

( ६ ) **रामचन्द्रः**। कामः इच्छासंकल्पमूलः कामः। संकल्पः कर्म मानसमित्यमरः ॥ ३॥

**अकामस्य क्रियाकाचिद्दृश्यते नेह कर्हिचित् ॥ यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥४॥**

( १ ) **मेधातिथिः**। पूर्वेण शास्त्रीये प्रवृत्तिनिवृत्ती संकल्पाधीने व्याख्याते। अनेन लौकिकेषु कर्मसु तदधीनतोच्यतइति विशेषः। नेह लोके कर्हिचित्कदाचिदपि जाग्रदवस्थायां किंचिदनुष्ठेयत्वेनानिच्छतःसंभवति। यत्किंचिल्लौकिकंवैदिकंवा कुरुते कर्मविहितंप्रतिषिद्धंच तत्सर्वंकामस्य चेष्टितम् ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । किंचाद्यापि या काचित्क्रिया काममूलैवेत्याह अकाम्यस्येति । कारणप्रोषितंव्यतिरेकमुक्त्वान्वयमाह यद्यद्धीति ॥ ४ ॥

( ३ ) **कुल्लूकः** । अत्रैव लौकिकंनियमंदर्शयति अकामस्येति । लोके या काचिद्भोजनगमनादिक्रिया साप्यनिच्छतोन कदाचिद्दृश्यते । ततश्चसर्वकर्म लौकिकंवैदिकंच यद्यत्पुरुषः कुरुते तत्तदिच्छाकार्यम् ॥ ४ ॥

( ४ ) **राघवानन्दः** । किंच प्रवृत्तेःकाममूलतामन्वयव्यतिरेकाभ्यामाह अकामस्येति । नात्र प्रमाणयुक्त्यपेक्षेति भावः ॥ ४ ॥

( ५ ) **नन्दनः** । आश्रमाणांतत्तत्प्रधानत्वाद्व्यतिरेकान्वयाभ्यामेतदेव निगमयति अकामस्येति ॥ ४ ॥

( ६ ) **रामचन्द्रः** । कर्हिचित्कदाचित् अकामस्य निष्कामस्य क्रिया न दृश्यते ॥ ४ ॥

**तेषु सम्यग्वर्तमानोगच्छत्यमरलोकताम् ॥ यथा संकल्पितांश्चेह सर्वान्कामान्समश्नुते ॥ ५ ॥**

**[ असद्वृत्तस्तुकामेषु कामोपहतचेतनः ॥ नरकंसमवाप्नोति तत्फलंन समश्नुते ॥ १ ॥**

**तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम् ॥ काम्यं कर्मेहभवति श्रेयसे न विपर्ययः+ ॥ २ ॥ ]**

( १ ) **मेधातिथिः** । हेतुत्वाच्चेष्टितंकामस्यैवेत्युक्तं तदिदमतिसंकटं कामात्मता नप्रशस्ता नचानया विना किंचिदनुष्ठानमस्ति अत्रप्रतिविधत्ते । तेषु कामेषु सम्यग्वर्तितव्यम् । कापुनःसम्यग्वृत्तिः यद्यथा श्रुतंतत्तथैवानुष्ठेयंनित्येषु फलंनाभिसंधेयमं । अश्रुतत्वात्काम्येषु त्वनिषेधः । तथा तेषांश्रुतत्वात्फलसाधनतयैव तानि विधितोवगम्यन्ते । फलानिच्छोस्तदनुष्ठानमश्रुतकारणं स्यात् । नित्येषु फलाभिसंधिर्व्यामोहएव । नह्यभिसंधिमात्रात्प्रमाणतोऽनवगते फलसाधनत्वे फलमुत्पद्यते । एवंकुर्वन्गच्छति प्राप्नोत्यमरलोकताम् अमराः देवास्तेषांलोकः स्वर्गः तन्निवासादमरेषु लोकशब्दः स्थानस्थानिनोरभेदात् । मञ्चाःक्रोशन्तीतिवत् । तेनायंसमासः अमराश्च ते लोकाश्चअमरलोकास्तद्भावः अमरलोकता देवजनत्वंप्राप्नोति देवत्वंप्राप्नोतीत्यर्थ । वृत्तानुरोधादेवमुक्तम् । अथवाऽमरांल्लोकयति पश्यत्यमरलोकः । कर्मण्यण्तदन्ताद्भावप्रत्ययः । देवदर्शीसंपद्यते । अनेनापि प्रकारेण स्वर्गप्राप्तिरेवोक्ता भवति । अथवाऽमरइव लोक्यते लोके । अर्थवादश्चायंनात्र स्वर्गःफलत्वेन विधीयते नित्यानांफलाभावात्काम्यानांच नानाफलश्रवणात् । तेन स्वर्गप्राप्त्या शास्त्रानुष्ठानसंपत्तिरेवोच्यते लक्षणया यदर्थंकर्मण्यनुष्ठानंतत्संपद्यतइत्यर्थः । तत्रनित्यानांप्रत्यवायानुत्पत्तिर्विध्यर्थसंपत्तिर्वाप्रयोजनम् । काम्येषुतुयथासंकल्पितान्यथाश्रुतंसंकल्पितान्प्रयोगकाले यस्य कर्मणोयत्फलंश्रुतंतत्संकल्पादभिसंधाय मनसा कामयित्वेदमहमतः फलंप्राप्नुयामिति । ततःसर्वान्कामान्काम्यानर्थान्समश्नुते प्राप्नोति । अतः परिहृता संकटापत्तिः यतोनसर्वविषयः कामोनिषिध्यते किंतर्हि नित्येषु फलाभिलाषलक्षणः । साधनसंपत्तिस्तु काम्यैव । ब्रह्मवादिनस्तु सौर्यादीनांनिषेधार्थंकामात्मतेतिमन्यन्ते । फलार्थितयाक्रियमाणाबन्धात्मकाभवन्ति । निष्कामस्तु ब्रह्मार्पणन्यायेन कुर्वन्मुच्यते । तदुक्तंभगवता कृष्णद्वैपायनेन माकर्मफलहेतुर्भूः । तथा साधनानामकर्तृत्वान्मौर्ख्यात्कर्मकृतस्तथा । फलस्य चाभिसंधानादपवित्रोविधिः स्मृतइति । बहवश्चात्र व्याख्याविकल्पाअसारत्वात्तु न प्रदर्शिताः ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । तत्रसमाधिः तेष्विति । तेषु यज्ञादिषु सम्यक्कामपरतांविहायकेषुचिदीश्वरार्पणबुद्ध्या केषुचित्तत्कालीपनिपतितावश्यसंपाद्यफलार्थतयावर्तमानोऽमरलोकतांन म्रियते यत्र सोमस्तादृशोलोकोयत्र तद्भावं मोक्षंगच्छति भगवत्यर्पितैः फलार्थंतु कृतैर्यथासंकल्पितान् कामान् काम्यानि फलान्यश्नुते ॥ ५ ॥

+ ( क, ग ) मध्येऽनुपलब्धौ ।

( ३ ) **कल्लूकः**। सम्प्रति पूर्वोक्तफलाभिलाषनिषेधंनियमयति तेषुसम्यग्वर्तमानइति। नात्रेच्छानिषिध्यते किंतु शास्त्रोक्तकर्मसु सम्यग्वृत्तिर्विधीयते। बन्धहेतुफलाभिलाषंविना शास्त्रीयकर्मणामनुष्ठानंतेषु सम्यग्वृत्तिः सम्यग्वर्त्तमानोऽमरलोकतामसरधर्मकंब्रह्मभावंगच्छति मोक्षंप्राप्नोतीत्यर्थः। तथाभूतश्च सर्वेश्वरत्वादिहापि लोके सर्वानभिलषितानूप्राप्नोति। तथा च छान्दोग्ये सयदा पितृलोककामोभवति सङ्कल्पादेवास्यपितरःसमुत्तिष्ठन्तीत्यादि ॥ ५ ॥

( ४ ) **राघवानन्दः**। ततःकिमित्याह तेष्विति। तेषु कर्मसु सम्यगिति अर्थकामाद्युपाधिंविना प्रवर्तते योनुष्ठाता सोऽमरलोकतांस्वर्गंसाक्षात्मुक्तिंवा सत्त्वशुद्धिद्वारेति भावः। इह च मर्त्ये लोके कामानूपशुपुत्रादीनू अश्नुते प्राप्नोति। इह संकल्पितान्वा परलोके प्राप्नोति यथा क्रतुरस्मिंल्लोके पुरुषोभवति तथेतःप्रेत्य भवतीति श्रुतेः। क्रतुरत्र संकल्पः ॥ ५ ॥

( ५ ) **नन्दनः**। फलनैरपेक्ष्येण कर्मानुष्ठायिनः फलातिशयमाह तेष्विति। तेषु वेदाऽधिगमादिषु सम्यग्वर्तमानः-समीचिनंवर्तमानः। समीचीनवृत्तित्वंचकर्मफलत्यागेनचोदितकर्मानुष्ठानम्। अमरलोकतांशाश्वतलोकान्मुक्तिमित्यर्थः। इहास्मिंल्लोके यथासंकल्पितानूस्वसंकल्पानुरूपान्कामान्भोगानू। केचित्तु वक्ष्यमाणयोर्धर्मप्रवृत्तिनिवृत्त्योः प्रतिपक्षनिराकरणपरत्वेन श्लोकचतुष्टयमिदानींव्याचक्षते। कामात्मतेतिकामात्मता निषिद्धेष्वपिप्रवर्तकः कामप्रकर्षः नचैवेहास्त्यकामतेतिकामस्यात्यन्तोच्छेदः प्रतिषिध्यते कार्यवशेन कामस्यावर्जनीयत्वातूअविहितत्वेन सर्वत्र कामोदुस्त्यजइत्यर्थः। काम्योहीत्यर्धेन कारणतोऽपि कामस्यावर्जनीयत्वंप्रतिपाद्यते। संकल्पमूलमिति। सम्यगधिगतंज्ञानंसंकल्पःतत्संभवोयज्ञाद्यनुष्ठानलक्षणः कामोऽपि संकल्पमूलत्वेनावर्जनीयःसिद्धइत्यर्थः। अकामस्येत्यत्र नास्ति व्याख्याविकल्पः। तेष्विति। सम्यग्वर्तमानःसमीचीनकामःसमीचीनसंकल्पश्च। अमरलोकतांदेवत्वमिति ॥ ५ ॥

( ६ ) **रामचन्द्रः**। तेषु कर्मसु वर्तमानः अमरलोकतांस्वर्गलोकप्राप्तिंगच्छति काम्यस्य चेष्टितकर्मणश्चेष्टितमित्यर्थः ॥ ५ ॥

**वेदोऽखिलोधर्ममूलंस्मृतिशीले च तद्विदाम् ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ६ ॥**

( १ ) **मेधातिथिः**। कोस्याभिसंबन्धः। यावता धर्मोऽत्र वक्तव्यतया प्रतिज्ञातः सच विधिप्रतिषेधलक्षणः। तत्र नवेदस्य धर्ममूलता विधेया। वेदोधर्ममूलत्वेन ज्ञातव्योधर्मप्रामाण्यआश्रयणीयः अन्तरेणैवोपदेशंतत्सिद्धेः। नहि मन्वाद्युपदेशसमधिगम्यंवेदस्य धर्ममूलत्वमपि त्वबाधितविषयप्रतीतिजनकत्वेनापौरुषेयतया च पुरुषसंसर्गदोषैरपि मिथ्याभिधानाशङ्काभावात् स्वतश्च शब्दस्यादुष्टत्वात्प्रत्यक्षवत्स्वतःप्रामाण्यसिद्धिः। अथोच्यते न्यायतः सिद्धंवेदस्य प्रामाण्यमनूद्य मन्वादिस्मृतीनांतन्मूलता वचनेन ज्ञाप्यतइति तदपिन। तत्रापि पूर्वज्ञानसापेक्षत्वात्स्मरणस्य भ्रान्तिविप्रलम्भादीनांमहाजनपरिग्रहादिना निरस्तत्वादतीन्द्रियार्थदर्शनमशक्यभावाच्च पुरुषस्य च स्वानुभवसिद्धेर्वेदार्थस्मरणस्य वेदमूलतैवावशिष्यते। नहि वेदविदांकार्यार्थविषये स्मरणंसंभवति। वेदस्यच मूलत्वेन मूलान्तरकल्पनायाऽनवसरः। नाप्येतद्युज्यते वक्तुं स्मृतिशीले च तद्विदामित्येतदप्यनूद्यते बाह्यस्मृतीनामप्रामाण्याय यतस्तासांन्यायतएव सिद्धमप्रामाण्यम्। नहि शाक्यभोजकक्षपणकादीनांवेदसंयोगसंभवोयेनतन्मूलतया स्वविषयेप्रमाणंस्युः स्वयमनभ्युपगमात्तैश्च वेदस्याप्रामाण्याभिधानात्प्रत्यक्षवेदविरुद्धार्थोपदेशाच्च। तत्रासंभवस्तासु स्मृतिषु वेदाध्ययननिषेधात्। सतिहि वेदाध्येतृत्वे बुद्धादीनांतन्मूलतास्यान्नवेति जायतेविचारणा। यत्रतु तत्संबन्धोदूरापेतस्तत्र कातन्मूलताशंङ्का। स्वयंच मुलान्तरंस्मृतिपरंपरायातमभ्युपगच्छन्ति। पश्याम्यहंभिक्षुकानांदिव्येन चक्षुषा सुगतिंदुर्गतिंच। एवंसर्वएव बाह्याभोजकपाश्चरात्रिकनिर्ग्रन्थानार्थ-

वादपाशुपतप्रभृतयःस्वसिद्धान्तानांप्रणेतॄन्पुरुषातिशयान्देवताविशेषांश्च प्रत्यक्षतदर्थदर्शिनोऽभ्युपयन्ति । न वेदमूलमपि धर्ममभिमन्यन्ते। प्रत्यक्षेण च वेदेन विरुद्धास्तत्रार्थाउपदिश्यन्ते । तथाहि हिंसाचेद्धर्मउच्यते संसारामोचकादिभिः साचात्र प्रत्यक्षतःप्रतिषिद्धा। तथान्यत्र तीर्थस्नानमधर्मोऽभ्युपेयते इहत्वहरहःस्नायात्तीर्थानिसेवेतेति च विधिः। तथाग्निष्टोमीयवधः क्वचित्पापहेतुरिष्यते सच ज्योतिष्टोमविधिना विरुद्धः। तथान्ये सर्वानेव यागहोमानात्मार्थान्संमन्यन्ते देवताभेदविधिभिर्नानादैवत्यास्तेवगमिताअतोविरोधः । येप्याहुर्ग्रहणाग्रहणवदुदितानुदितहोमकालवत्प्रत्यक्षश्रुतिविरोध दर्शनात् स्यात्संभवः शाखान्तरस्योच्छिन्नस्यानुच्छिन्नस्य वा तद्विरुद्धार्थविधिपरस्य। अनन्ताहि वेदशाखास्ताः कथमेकस्य प्रत्यक्षाउत्सादश्च संभवतीति। तत्र स्यात्तादृशी वेदशाखा यस्यामयंनरास्थिपात्रभोजननग्नचर्यादिरुपदिष्टोभवेत्। उच्यते न वयंब्रूमः वेदविरुद्धार्थोपदेशात्संभवइति । किंतु समकक्षत्वात्तयोर्विकल्पितप्रयोगयोरव्याघातः । इहतु कल्प्योवेदेन च प्रत्यक्षविरोधिकल्पनायाअवसरः। नच संभवमात्रेण तावता निश्चयः। निश्चितस्तु तद्विरुद्धप्रत्यक्षविधिनिश्चितेन। नवानिश्चितंबाध्यते। शाखोत्सादपक्षंचात्रैव श्लोके परस्तात्प्रपञ्चयिष्यामः । सर्वत्र च प्रत्यक्षश्रुतिभिर्मन्वादि स्मृतीनांव्यतिषङ्गः क्वचिन्मन्त्रेण क्वचिद्देवतयाक्वचिद्द्रव्यविधिभिः। नच बाह्यासु तत्संभवतीति तासामप्रामाण्यम्। एवमाचारस्यापि वेदविद्भिरदृष्टार्थतयाचर्यमाणस्य स्मृतिवदेव प्रामाण्यंमूलसंभवात्। असाध्वाचारस्यापि दृष्टकारणादिसंभवादविदुषांच भ्रान्त्यादिसंभवादप्रामाण्यम् । एवमात्मनस्तुष्टेरपि। यदि च वेदस्मृत्याचाराणांमन्वाद्युपदेशसमधिगम्यंप्रामाण्यं मन्वादीनांकथंतत्राप्युपदेशान्तरात् स्मार्तंच मनुरब्रवीदित्यादेस्तत्र कथंतस्मादिदंप्रमाणमिदमप्रमाणमिति युक्तितएतदवसेयम्। नोपदेशतस्तथाचायमनर्थकः श्लोकः। एतत्समानरूपाउत्तरेपि। अत्रोच्यते। इहये धर्मसूत्रकाराअव्युत्पन्नपुरुषव्युत्पादनार्थपदार्थसंपादनपरतया ग्रन्थसंदर्भानारभन्ते तत्र यथैवाष्टकादीनांवेदात्स्वयंकर्तव्यतामवगम्य परावबोधनार्थमुपनिबन्धः। एवंप्रमाणान्तरसिद्धस्य वेदप्रामाण्यादेः सन्तिकेचित्प्रतिपत्तारोये न्यायतस्तत्त्वविवेचनासमर्थाऊहापोहादिरूपबुद्ध्यभावात्। तान्प्रति न्यायसिद्धोप्यर्थः सुहृदुपदेशवदुपदिश्यते तत्र यन्न्यायतः सिद्धंवेदस्य धर्ममूलत्वंतदेवानेनानूद्यते। वेदोधर्ममूलंधर्मस्य मूलत्वेन वेदोविचार्य युक्त्या सिद्धोनात्राप्रामाण्यशङ्का कर्तव्या। भवन्ति च लोके प्रमाणान्तरसिद्धानामर्थानामुपदेष्टारः। न त्वया जीर्णेभोक्तव्यमजीर्णप्रभवाहि रोगाः। नचैतद्वक्तव्यम् ये न्यायतोवेदस्य धर्ममूलत्वं न शक्नुवन्तिप्रतिपत्तुं ते वचनादपि न प्रत्येष्यन्ति। यतोदृश्यते। यआप्तत्वेन प्रसिद्धास्तदीयंवचनमविचार्यैव के चन प्रमाणयन्ति। तदेवंसर्वमिदंप्रकरणंन्यायमूलं न वेदमूलम्। अन्यत्रापि व्यवहारस्मृत्यादौ यत्र न्यायमूलता तत्र यथावसरंदर्शयिष्यामः। अष्टकादीनांयथा वेदमूलता तथात्रैव निर्दिश्यते। वेदशब्देनर्ग्यजुःसामानि ब्राह्मणसहितान्युच्यन्ते । तानि चाध्येतॄणांवाक्यान्तरेभ्यः प्रसिद्धभेदान्युपदेशपरंपरासंस्कृताअध्येतारः श्रुत्वैव वेदोयमिति प्रतिपद्यन्ते यथा ब्राह्मणोयमिति । तत्रवाक्यसमूहेऽप्यग्निमीळेऽग्निर्वैदेवानामवमइत्यादौ संसमिद्युवसेऽथमहाव्रतमित्यन्ते वेदशब्दः प्रयुज्यते तदवयवभूतेषु केवलेषु वाक्येष्वपि। नच ग्रामादि शब्दवद्गौणमुख्यता विद्यते। तत्रसमुदायेषु हिवृत्ताः शब्दाअवयवेष्वपि वर्तन्तइत्येषन्यायः। ग्रामशब्दोहि प्रसिद्धभूयिष्ठप्रयोगः समुदायएव ग्रामोदग्धइत्यादि पदसंबन्धात्तदवयवेवर्तते । कतिपयशालादाहेपि लौकिकाग्रामोदग्धइति प्रयुञ्जते। अथवा तत्रापि समुदायवचनएव। दाहस्त्वेकदेशवर्तीसमुदायसंबन्धितया व्यपदिश्यते । अवयवद्वारकएव समुदायस्य क्रियासंबन्धः। एषएवसमुदायस्य क्रियासंबन्धोयोवयवानाम्। नह्यवयवान्परिहाप्य समुदायोद्रष्टुं स्प्रष्टुंवाऽशक्यते । व्युत्पाद्यते च वेदशब्दःविदन्त्यनन्यप्रमाणवेद्यंधर्मलक्षणमर्थमस्मादिति वेदः। तच्च वेदनमेकैकस्माद्वाक्याद्भवति न यावानृग्वेदादिशब्दवाच्योऽध्यायानुवाकसमूहः। एवंचोदाहरणे जिव्हाच्छेदइत्येकवाक्यविषयोप्ययंदण्डः।

कृत्स्नोधिगन्तव्यइतिकृत्स्नग्रहणंसकलवेदवाक्याध्ययनप्राप्त्यर्थमन्यथाकतिचिद्वाक्यान्यधीत्य कृतीस्यात्सपुनःकृत्स्नं वेदमिति। अत्रैतन्निरूपयिष्यामः। सच वेदोबहुधाभिन्नः सहस्रवर्त्मा सामवेदः सात्यमुग्रिराणायनीयादि भेदेन। एकशतमध्वर्यूणांकाठकवाजसनेयकादि भेदेन। एकविंशतिबाह्वृच्या आश्वलायनैतरेयादि भेदेन। नवधाआथर्वणंमौदकपैप्पलादकादि भेदेन। ननु नैव केचिदाथर्वणंवेदंमन्यन्ते यतस्त्रयीविद्या ऋचः सामानियजूंषीति वेदैरशून्यस्त्रिभिरेतिसूर्यः तथा त्रैवेदिकं व्रतंचरेदित्यादौ न क्वचिदाथर्वणानामप्यस्ति प्रतिषेधश्चश्रूयते तस्मादाथर्वणेन न शंसेदिति अतस्त्रयीबाह्यानाथर्वणिकान्पाषण्डिनः प्रतिजानते तदयुक्तम्। अविगानेन शिष्टानांवेदव्यवहाराच्छ्रुतीरथर्वाङ्गिरसीरित्यत्रापिव्यवहारःश्रुतिर्वेदइत्येकोर्थः। नच वेदशब्दवाच्यताग्निहोत्रादिवाक्यानामपि धर्मप्रामाण्ये कारणं। इतिहासायुर्वेदयोरपि वेदव्यवहारदर्शनादितिहासपुराणं-पञ्चमंवेदानांवेदमिति। किंतर्ह्यपौरुषेयत्वेसत्यनुष्ठेयार्थावबोधकत्वाद्विपर्ययाभावाच्च। तच्चाथर्ववेदेऽपि सर्वमस्ति ज्योतिष्टोमादि कर्मणांयजुर्वेदादिष्विव तत्राप्युपदेशात्। अभिचारमूलकर्मादिकर्माणांबाहुल्येन तत्रोपदेशादवेदत्वमितिविभ्रमः। केषांचिदभिचाराहिपरप्राणवियोगफलत्वात्प्रतिषिद्धाः। आथर्वणिकैश्च तएव प्राधान्येनानुष्ठीयन्तेराजपुरोहितैरतस्तेनिन्द्यन्ते। यत्तुवेदरशून्यइत्यादावथर्ववेदस्यानिर्देशइति अर्थवादाएते किंतत्र निर्देशेनानिर्देशेनवा। मन्त्रभेदाभिप्रायंचैतद्वचनं त्रयोवेदास्त्रयी विद्येत्यादि। नहि चतुर्थमन्त्रजातमस्ति ऋग्यजुःसामव्यतिरेकेण प्रैषनिविन्निगदेन्द्रगाथादीनामत्रैवान्तर्भावात्। अथर्ववेदेचर्चएवमन्त्रत्वेन समाम्नाताः। अतऋग्वेदएवायंमन्त्राभिप्रायेण। यस्तु प्रतिषेधः सविपरीतसाधनः प्राप्तौ सत्यां प्रतिषेधोपपत्तेः। अयंवास्यार्थः। अथर्ववेदाधीतैर्मन्त्रैस्त्रैवेदिकंकर्म न मिश्रयेत्। वाचः स्तोमेसर्वाऋचः सर्वाणि यजूंषि सर्वाणि सामानि विनियुक्तानि तत्राथर्ववेदाधीतानांप्रतिषेधः। सवेदोविशिष्टः शब्दराशिरपौरुषेयोमन्त्रब्राह्मणाख्यो नेकशाखाभेदभिन्नो-धर्मस्य मूलंप्रामाण्यपरिज्ञाने हेतुः कारणंमूलम्। तच्च वेदस्मृत्योर्धर्मप्रतिज्ञापकतयैव न निवर्तकतया नचस्थितिहेतुतया वृक्षस्येव। धर्मशब्दश्च प्राग्व्याख्यातः। यत्पुरुषस्य कर्तव्यंप्रत्यक्षाद्यवगम्य विलक्षणेन स्वभावेन श्रेयःसाधनंकृषिसेवादि भवति। पुरुषस्यकर्तव्यतस्यच तत्साधनत्वस्वभावोऽन्वयव्यतिरेकाभ्यामवगम्यते। यादृशेन व्यापारेण कृष्यादेर्व्रीह्यादिसिद्धिः साऽपि प्रत्यक्षाद्यवगम्यैव। यागादेस्तु साधनत्वंयेन च रूपेणापूर्वोत्पत्तिव्यवधानादिना तन्न प्रत्यक्षाद्यवगम्यम्। श्रेयश्चाभिलषितस्वर्गग्रामादिफलप्राप्तिः सामान्यतः सुखशब्दवाच्या। व्याधिनिर्धनत्वासौख्यनरकादिफलप्राप्तिः सामान्यतोदुःखशब्दवाच्या तत्परिहारश्च। अन्ये तु परमानन्दादि रूपंश्रेयः। अयंधर्मोब्राह्मणवाक्येभ्योऽवगम्यतेलिङादियुक्तेभ्यः क्वचिच्च-मन्त्रेभ्योपि वसन्तायकपिञ्जलानालभतइत्येवमादिभ्यः। तत्रकामपदयुक्तानि वाक्यानि फलार्थमनुष्ठानमवगमयन्ति। सौर्यंचरुंनिर्वपेद्ब्रह्मवर्चसकामोवैश्वदेवींसांग्रहिणींनिर्वपेद्ग्रामकामइति। तानि फलमनिच्छता नक्रियन्ते। अन्यानि यावज्जीवादि पदैर्नित्यतयासमर्पितानि तानि न फलहेतोरनुष्ठीयन्ते फलस्यास्याश्रुतत्वात्। नचविश्वजिता यजेतेत्यादिवदश्रुतफलत्वेऽपि फलकल्पनायतोयावज्जीवादिपदैर्विनैव फलेन कर्तव्यतयावगम्यन्ते। तच्चाकरणे शास्त्रार्थातिक्रमदोषस्तत्र तत्परिहारार्थंतानि क्रियन्ते। प्रतिषेधानामपि ब्राह्मणोनहन्तव्यः सुरानपेयेत्येषैववार्तानहि फलार्थंप्रतिषिद्धवर्जनमपितु प्रत्यवायपरिहारार्थम्। अखिलःकृत्स्नः। नकिंचित्पदवर्णोमात्रावा यन्न धर्माय। अत्रचोदयन्ति। ननुच विध्यर्थवादमन्त्रनामधेयात्मकोवेदोधर्मश्च स्वभावइत्युक्तम्। तत्रयुक्तंयद्विधिवाक्यानिधर्मेप्रमाणंस्युः। तेभ्योहियागादिविषया कर्तव्यता प्रतीयतेअग्निहोत्रंजुहोति दध्नाजुहोति यदग्नये च प्रजापतये च सायंजुहोति स्वर्गकामोजुहोतीति। अत्रह्यग्निहोत्राख्यंकर्म कर्तव्यतया प्रतीयते। दध्नेति तत्रैव द्रव्यम्। यदग्नये चेति देवता स्वर्गकामइत्यधिकारः। यत्त्वग्निर्वै सर्वादेवताअग्निरेव दैव्योहोता सदेवानाव्हयति च जुहोति चेत्यादयः। तथा प्रजापतिर्वपामात्मनउदखिददित्यादयो। नतैः किंचित्कर्तव्यमुपदिश्यते केवलंपुरावृत्तम-

न्यद्वा सांप्रतिकंभूतमनुवदन्ति । प्रजापतिना पुराआत्मनोवपोत्खाताउत्खिदत्तुमावाउत्खिदत्तुकिमस्माकमेतेन । तथाग्ने-रपि सर्वदेवतात्मत्वमाग्नेयकर्मण्युपयुज्यते । अग्निशब्देनोद्देशार्थनिवृत्तेरन्यदेवत्वेऽन्यत्वादग्नेरुद्देशएव नास्ति । आवाहन-स्यापि वचनान्तरेणाग्निमग्नआवहेत्यादिना विहितत्वात्सदेवानाव्हयति च जुहोति चेत्यादिरनर्थकः । मन्त्राअपि न मृत्यु-रासीदमृतंनर्तार्हि सुदेवोऽद्यप्रपतेदनावृदित्यादयोभाववृत्तपरिदेवनादिरूपार्थाभिधायिनः कंधर्मंप्रमिमते । तस्मिन्काले न मृत्यु-र्जातोनाप्यमृतंजीवितंप्राक्सृष्टेर्भूतानामनुत्पन्नत्वान्नकस्यचिज्जीवितमासीन्नापि मृत्युः प्रलये सर्वेषांमृतत्वाद्भवतुवां मृत्यु-र्मावा न किंचिदेतेन कर्तव्यमुपदिष्टंभवति । एवंसुदेवोऽसौ महापुण्योदेवतुल्योमनुष्योयोद्यप्रपतेच्छ्वभ्रआत्मानंक्षिपेदनावृदा-वृत्तिः प्रत्युज्जीवनंयस्मात्प्रपातान्न भवति । उर्वश्याविप्रलब्धः पुरूरवाः परिदेवयांचक्रे तथा नामधेयमुद्भिदा यजेत बलभिदा यजेतेत्यादि न कस्यचिदर्थस्य क्रियायाद्रव्यस्य वा विधायकमाख्यातेन क्रियायाविधानादद्रव्यवचनत्वाच्च बलभिदादेः सोमस्य चाव्यक्तचोदनत्वेन प्रकृतितः प्राप्तत्वान्न क्लेशेन द्रव्यवचनता कल्प्यते । तस्मान्नाम्नायेन धर्मउपदिश्यते । अतः कथमुच्यते कृत्स्नोवेदोधर्ममूलमिति । उच्यते । अनयैवाशङ्कयाऽखिलग्रहणंकृतंयतः सर्वेषामेतेषांधर्मप्रतिपादनपरत्वम् । तथा ह्यर्थवादानैव विधायकेभ्योवाक्येभ्यःपृथगर्थाः येन धर्मनप्रमिमीरन् । विभज्यमानसाकाङ्क्षत्वे विधिपरत्वावगमात्त-त्परत्वे च सिद्धायामेकवाक्यतायां यथा तदर्थानुगुण्यंप्रतिपद्यन्ते तथाव्याख्येयाः । अतःप्रजापतेर्वपोत्खादनवचनंन स्वार्थनिष्ठंकिंतर्हि विधिशेषम् । नच विधेयंद्रव्यगुणाद्यर्थवादेभ्यः प्रतीयतइतिप्रकारान्तरेण विधेयार्थस्तावकत्वेन तच्छे-षतांप्रतिपद्यन्ते । तदपि तत्र प्रतीयतएव । इत्थंनाम पशुयागः कर्तव्योयदसत्सुपशुषु गत्यन्तराभावात्प्रजापतिनात्मैव-पशुत्वेन कल्पितोवपा चोत्खिन्ना यतस्तत्सहितान्येव विधायकानि यत्रार्थवादाःसन्ति । यद्यपि तैर्विनापि भवति वि-ध्यर्थावगतिर्विध्युद्देशादेव वसन्तायकपिञ्जलानालभतइति तथापि न तेषामानर्थक्यम् । तेषु हि सत्सु नकेवलादवगतिः । नच केन चित्कृतोवेदोयेनोच्यते यथान्यत्र न सन्तितथात्रापि माभूवन् । सत्स्वर्थवादेष्वस्माभिर्गतिर्वक्तव्या सा चोक्ता । नचायमलौकिकोऽर्थोलोकेपि हि स्तुतिपदानि दृश्यन्ते विधिशेषभूतान्येव । यथा भृति दाने प्रवृत्तस्य स्वामिनः कश्चिद्भृ-तकःप्रीत्याचष्टेसाधुर्देवदत्तोनित्यसंनिहितः परिचर्याभूमिज्ञस्तत्परश्चेति । अतोविधेयार्थस्तुतिद्वारेणार्थवादाविधायकाएव । तथा क्वचिदर्थवादादेव विधेयविशेषावगतिर्यथाक्ताः शर्कराउपदधाति । अत्र ह्यञ्जनसाधनंसर्पिस्तैलादि यत्किंचिद्वि-धिनापेक्षितम् । तेजोवैघृतमित्यर्थवादे घृतस्तुत्या घृतमध्यवसीयते । एवंप्रतितिष्ठन्तियएतारात्रीरुपयन्तीति रात्रिष्वर्थ-वादादधिकारावगमस्तस्मादर्थवादाअपि धर्ममूलम् । मन्त्रास्तु केचिद्विधायकाएव यथा वसन्ताय कपिञ्जलानिति । आघारे देवताविधिर्मान्त्रवर्णिकएव । नहि तत्रदेवता कर्मोत्पत्तिवाक्ये श्रुता नापि वाक्यान्तरेण विहिता । मन्त्रस्तु विहितोनियुक्तःइतइन्द्रइत्यादिः । अतोस्मान्मन्त्रवर्णाद्देवताप्रतिपत्तिः । सहस्रशश्च मान्त्रवर्णिकादेवताविधयः सन्ति । येप्यन्ये क्रियमाणानुवादिनस्तेपिस्मृतिलक्षणंधर्ममेव बुद्धंकुर्वन्तीति । भवतिधर्ममूलमनुष्ठेयार्थप्रकाशनेन । नाम त्वाख्या-तार्थादभिन्नार्थमाख्यातार्थवत्सुप्रसिद्धधर्ममूलभावम् । गुणविधयश्च प्रायशोनामाश्रयाएव । शरदिवाजपेयेन यजेतस्वारा-ज्यकामोवाजपेयेनेति । तस्मात्सिद्धंकृत्स्नस्य वेदस्यधर्ममूलत्वम् । अन्ये तु श्येनादिवाक्यानांधर्मोत्पत्तिमत्त्वाभावंमा-शङ्कमानानिषेधानांच न लशुनंभक्षयेदित्यादीनामखिलग्रहणंमन्यन्ते । अभिचाराहि श्येनादयोमारणात्मानोहिंसारूपाः । क्रूरत्वाच्च हिंसायाअभिचाराणांच प्रतिषेधादधर्मत्वमतोन कृत्स्नोवेदोधर्ममूलम् । कर्तव्यश्चधर्मउक्तः । ब्रह्महत्यादिश्च नकर्तव्यः । अतः कथं तद्वाक्यानि धर्ममूलंस्युः । किंच येऽपि पशुयागाअग्नीषोमीयादयस्तेपि हिंसासाधकत्वाद्दूरापेतधर्म-भावाः । हिंसाहि पापमिति सर्वप्रवादेष्वभ्युपगमः । उक्तंच यत्रप्राणिवधोधर्मः अधर्मस्तत्र कीदृशः । कथंपुनरियमाश-

ह्नाऽपनुद्यते अखिलग्रहणात् । नह्यस्यान्यत्प्रयोजनमस्ति । हेतुर्नोक्तइतिचेदागमग्रन्थोयंसिद्धमर्थमाह । हेत्वर्थिनोमीमांसातोविनीयन्ते । अस्माभिरुक्तं यआगममात्रेणप्रतिपत्तारस्तान्प्रत्येतदुच्यते । विवरणकारास्तुयुक्तिलेशमत्रदर्शयन्ति यदुक्तं श्येनादयः प्रतिषिद्धत्वादधर्मइति तत्सत्यम् तथापि प्रतिषिद्धेष्वपि तेषु योऽत्यन्तप्रवृद्धद्वेषोन हिंस्याद्भूतानीत्यतिक्रान्तनिषेधाधिकारस्तस्य ते शत्रुवधलक्षणांप्रीतिमनुष्ठीयमानांनिर्वर्तयन्तीत्येतावतांशेन वेदस्य धर्ममूलत्वं श्येनादिवाक्येष्वपि न विहन्यते । निषेधेष्वपियोरागतः प्रवृत्तोहनने स निषेधे नियुज्यते। एतदेव निषेधस्यानुष्ठानंयन्निषिध्यमानस्याननुष्ठानम् । अग्नीषोमीयादौ तु नैव हिंसाप्रतिषेधोस्ति द्वेषलक्षणायालौकिक्याहिंसायानिषेधेननिषिद्धत्वात्। शास्त्रीयातु विधिलक्षणा न निषेधेन विषयीक्रियते लौकिक्यां चरितार्थत्वान्निषेधस्य । नचसामान्यतोदृष्टेन हिंसात्वाल्लौकिकहिंसावैद्दिक्याः पापहेतुत्वमापादयितुं शक्यते यतोन हिंसात्वंपापहेतुत्वेकारणं अपितु प्रतिषेधेन विषयीकरणम् । नचात्रप्रतिषेधोऽस्तीत्युक्तम् । कैश्चित्तु मूलशब्दः कारणपर्यायोव्याख्यायते । धर्मस्यवेदोमूलंप्रतिष्ठा कारणंसाक्षात्प्रणाड्याच । स्वाध्यायमधीयीत ऋग्वेदंधारयन्विप्रइत्यादि चोदनासु साक्षादग्निहोत्रादिकर्मस्वरूपज्ञापकतया प्रणाड्या । स्मृतिशीलेच तद्विदामनुभूतार्थविषयंविज्ञानंस्मृतिरुच्यते । तच्छब्देन वेदःप्रत्यवमृश्यते । तंविदन्ति तद्विदः । वेदार्थविदामिदंकर्तव्यमिदं न कर्तव्यमिति यत्स्मरणंतदपि प्रमाणम् । ननु च स्मृतिर्नप्रमाणमित्याहुः साहि पूर्वप्रमाणावगतप्रमेयानुवादिनी नाधिकमर्थंपरिच्छिनत्तीति वदन्ति । सत्यम् । ये स्मरन्ति तेषामाद्यमेव तत्र शब्दादि प्रमाणंनात्मीया स्मृतिः । अस्माकंतु मन्वादिस्मृतिरेवप्रमाणम् । नहि वयंतामन्तरेणान्यतोष्टकादिकर्तव्यतामवगच्छामः । तच्च मन्वादीनामीदृशंस्मरणंतत्कृतेभ्योवाक्येभ्यः स्मृतिपरंपरायातेभ्योऽवसीयते । तस्माच्च स्मरणादनुभूतोऽयमर्थः प्रमाणेन मन्वादिभिरितिनिश्चिनुमोयतएते स्मरन्ति । नह्यननुभूतस्य स्मरणोपपत्तिः । ननु कल्पयित्वा ग्रन्थमुपनिबध्नीयुरननुभूयैवकेन चित्प्रमाणेन यथोत्पाद्यवस्तु कथानकंकेचन कवयः कथयेयुः । अत्रोच्यते । भवेदेवंयद्यत्र कर्तव्यतोपदेशोनस्यात् । कर्तव्यतोपदेशोह्यनुष्ठानार्थः । नचकेन चित्स्वेच्छया कल्पिते बुद्धिपूर्वव्यवहारिणोऽनुष्ठातुमर्हन्ति । भ्रान्त्याप्यनुष्ठानसिद्धिरिति चेत्स्यादप्येकस्य भ्रान्तिः सर्वस्य जगतोभ्रान्तिर्यावत्संसारभाविनीचेत्यलौकिकी कल्पना । नच संभवति मन्वादीनांवेदमूलत्वे भ्रान्त्यादेरवसरः । अतएव प्रत्यक्षतो मन्वादयोधर्मान्ददृशुरिति नाभ्युपगम्यते । इन्द्रियैरर्थानांसन्निकर्षे यज्ज्ञानंतत्प्रत्यक्षम् । नच धर्मस्येन्द्रियैः सन्निकर्षः संभवति तस्य कर्तव्यतास्वभावत्वात् । असिद्धंच कर्तव्यम् सिद्धवस्तुविषयश्च संनिकर्षः । अनुमानादीनि तदात्वे यद्यप्यसन्तमर्थमवगमयन्ति पिपीलिकाण्डसंचारेण हि भविष्यन्तींवृष्टिमनुमिमते तथापि नतेभ्यः कर्तव्यतावगतिः । तस्मात्कर्तव्यतास्मरणस्यानुरूपकारणकल्पनायांवेदएवोपदिश्यते । सच वेदोऽनुमीयमानोमन्वादिभिरुपलब्धः । इदानीमुत्सन्नासा शाखा यस्याममीस्मार्ताधर्माआसन् । तथा किमेकाशाखाऽथबह्व्यस्तासु च कश्चिदष्टकादिः कस्यांचिदित्येतदनुमानंप्रवर्तते । अथाद्यत्वे पठ्यन्तएवताः शाखाः किंतुविप्रकीर्णास्ते धर्माः कस्यांचिच्छाखायामष्टकादीनांकर्मणामुत्पत्तिः कस्यांचिद्द्रव्यंक्वचिद्देवता क्वचिन्मन्त्रइत्येवं विप्रकीर्णानां मन्वादयोङ्गोपसंहारंसुखावबोधार्थंचक्रुः । अथमन्त्रार्थवादलिङ्गमात्रप्रभवाएते धर्माः । अथायमनादिरनुष्ठेयोर्थोऽविच्छिन्नपारंपर्यसंप्रदायायातोवेदवन्नित्यउतास्मदादीनामिव मन्वादीनामपिपरप्रत्ययानुष्ठानोनित्यानुमेयश्रुतिकइत्येवमादि बहुविकल्पविचारयन्तिविवरणकाराः । एतावांस्तुनिर्णयोवैदिकमेतदनुष्ठानंस्मार्तानांवैदिकैर्विधिभिर्व्यतिषङ्गावगमादनुष्ठातॄणांच तद्दृष्टानुष्ठानाद्यतिषङ्गश्च दर्शितः । क्वचिद्वैदिकमङ्गंप्रधानंस्मार्तंक्वचिदेतदेव विपरीतंक्वचिदुत्पत्तिः क्वचिदधिकारः क्वचिदर्थवादइत्येवंसर्वएव स्मार्तावैदिकैर्व्यतिषक्ताः । निपुणतश्चैतन्निर्णीतमस्माभिःस्मृतिविवेके । स्मार्तवैदिकयोर्नित्यंव्यतिषङ्गात्परस्परम् । कर्तृतः कर्मतो

बापि वियुज्येते न जातुतौ ॥ प्रत्यक्षश्रुति निर्दिष्टंयेनुतिष्ठन्ति केचन । तएव यदि कुर्वन्तितथास्याद्वेदमूलता ॥ प्रामाण्यकारणंमुख्यंवेदविद्भिः परिग्रहः । तदुक्तंकर्तृसामान्यादनुमानंश्रुतीः प्रति ॥ विशेषनिर्धारणे तु न किंचित्प्रमाणंनच प्रयोजनम् उत्सादोऽपि संभाव्यते दृश्यन्ते हि प्रविरलाध्येतृका अद्यत्वेपि शाखास्ताभ्यःसंभाव्य भाव्युत्सादाभ्यो विधिमात्रमर्थवादविरहितमुद्धृत्योपनिबद्धंस्मृतिकारैरिति कैश्चिदभ्युपगम्यते । ब्राह्मणोक्ताविधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्तइत्यापस्तम्बः । अत्रतुयैवंमहाप्रयोजनाशाखा यस्यां सर्वे स्मार्तागार्ह्याश्च सर्ववर्णाश्रमधर्माआम्नातास्तस्याउपेक्षणमसंभाव्यम् । सर्वाध्येतॄणांचोत्सादइत्यादि बह्वदृष्टंप्रकल्प्यम् । विप्रकीर्णानांत्वर्थवादगहनानांक्रत्वर्थपुरुषार्थतया च दुर्विज्ञानानांप्रयोगोन्नयनमभियुक्तानांन्यायतोनिश्चितार्थानांघटते । अस्मिंस्तु पक्षे विरोधद्वयस्यापि प्रत्यक्षश्रौतत्वाद्विकल्पेन स्मृतेर्बाधः । सचविशिष्टानांनाभिप्रेतः । स्मृतिकाराश्च बाधमनुमेयश्रुतिमूलत्वंच प्रतिपन्नाः । एवमप्याह गौतमः ऐकाश्रम्यंत्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति । यदि हि मन्वादीनांप्रत्यक्षास्ताः शाखाअभवन्केयंवाचोयुक्तिर्गार्हस्थ्यस्य प्रत्यक्षविधानादिति । ननुसर्वएवाश्रमाः प्रत्यक्षविधानाः स्वमतमेव चैतद्गौतमेनाचार्यापदेशेनोपदिष्टंतस्याश्रमविकल्पमित्याद्युपक्रम्यानेनोपसंहृतत्वात् । मन्त्रार्थवादप्रमाणभावोऽप्यविरुद्धः । यद्यप्यर्थवादाविध्युद्देशस्तुतिपरा न स्वार्थस्य विधायकास्तथापि केषांचिदन्यपरतैव नोपपद्यते यावत्स्वार्थविषयोविधिर्नावगमितः यथास्तेनोहिरण्यस्यसुरां पिबंश्चेत्यादिःपञ्चाग्निविधिशेषतैवमेतावतैव नोपपद्यते यावद्धिरण्यस्तेयादेःप्रतिषेधोनावगमितः । यएतांविद्यामधीते सहिरण्यस्तेयाद्यप्याचरंस्तैश्च संवसन्नपतति अन्यथा तु पततीत्यवगतिरविरुद्धा । अथविध्युद्देशोविधेः प्रतिपादकोनार्थवादइति केनैषा परिभाषा कृता । एतेपतन्ति चत्वारइत्यत्राप्याख्यातश्रवणमस्ति । लिङादयोनसन्तीति चेत्प्रतितिष्ठन्तीति रात्रिष्वपि नैवलिङ्श्रुतिरस्ति । अथ तत्राधिकाराकाङ्क्षायामेकवाक्यतायां सत्यां पञ्चमलकारादिकल्पनया विध्यवसायः एवमत्रापि भविष्यति । बहवश्च द्रव्यदेवताविधयोर्थवादावगम्याः सन्ति । तत्र यस्य विधेः शेषाअर्थवादास्तद्विधिनैव द्रव्यदेवतादिरपेक्षितत्वाद्विशेषसमर्पणमात्रे व्यापारान्तर्गतविशेषावगतिरर्थवादाधीना न दोषाय । इह तु तदसंबद्धस्य विध्यन्तरस्येष्यमाणत्वाद्वाक्यभेदापत्तिरतश्च न प्रकृतिशेषता । तदभावे च तन्मूलाप्रतिषेधावगतिर्नस्यादतश्चाक्ताः शर्कराउपदधाति तेजोवै घृतमित्यनेन वैषम्यमित्याहुः । तदसत् । सत्यप्यर्थान्तरत्वे तदेकवाक्यता मूलत्वादस्याऽवगतेर्नास्तिवाक्यभेदाभिचोद्यापत्तिः । मन्त्राः प्रयोगप्रकाशत्वेम रूपादिवावगतास्तस्य प्रयोगस्यान्यतोसिद्धेः प्रकाशकत्वनिर्वहणाय प्रकाश्यंकल्पयन्ति । नवा सतोरुत्पत्त्यधिकारयोः प्रकाशनमष्टकायाःसंभवतीत्युत्पत्त्यधिकारविनियोगप्रयोगबोधकामन्त्राः । एवंमान्त्रवर्णिकाश्च विधयोप्युपगम्यन्ते यथाघारे देवताविधिश्चतुष्पाद्विधर्मोभ्युपगतस्तत्राल्पतरांशः श्रुतः सकलेतरांशबोधहेतुस्तथाविधएव विधौसंबन्धग्रहणादिति सर्वथा तावत्संभवति वेदसंयोगः । मनुर्बहुभिर्बहुशाखाध्यायिभिः शिष्यैरन्यैश्चश्रोत्रियैः संगतस्तेभ्यः शाखाः श्रुत्वा ग्रन्थंचकार ताश्च मूलत्वेन प्रदर्श्यग्रन्थंप्रमाणीकृतवान् । एवमन्ये तत्प्रत्ययादनुष्ठानमादृतवन्तीन मूलोपलम्भे यत्नंकुर्वन्ति । अस्माकंचैतदनुमानम् । अतोविरोधे सत्यपि तुल्ये श्रौतत्वेबाधोपपत्तिः । प्रत्यक्षया श्रुत्या प्रयोगसंपत्तौ श्रुत्यन्तरंप्रत्याकाङ्क्षैव नास्ति । यथा सामिधेनीषु सामदश्यपाञ्चदश्ययोः पाञ्चदश्येन प्रकृतिरवरुद्धा सामदश्यंप्रत्यक्षश्रुतमपि नाकाङ्क्षति । आभिधानिकोह्यर्थः सन्निकृष्यतेऽभिहितार्थाकाङ्क्षावगम्यंप्रत्ययंविप्रकर्षाद्दुर्बलंबाधते । नचैतावताऽप्रामाण्यापत्तिः यथा प्राकृतान्यङ्गानि विकृतिषु चोदकप्रापानि वैकृतिकैर्विरुध्यमानामिबाध्यन्ते तद्वदेव द्रष्टव्यम् । यत्र । संप्रदायविछेदस्तत्रच परंपरापत्तिः । नहि तत्र कस्यचित्प्रमाणंप्रवृत्तम् । नित्यानुमेयपक्षोऽपि संप्रदायपक्षान्नातीव भिद्यते । मन्वादि स्मरणस्य वयंमूलंपरी-

क्षितुंप्रवृत्ताः । यदिच तेषामप्यसावनुमेयोवेदोवयमिव न ते स्मर्तारः । नच यः पदार्थोन कस्यचित्प्रत्यक्षस्तस्यानुमेयता- संभवत्यन्वयासंभवात् । क्रियादिषु सामान्यतोऽस्त्येव संबन्धदर्शनम् । यदि वार्थापत्त्यवसेयाः क्रियादयोनचेहान्यथा- नुपपत्तिरस्ति । तस्मादस्तिमन्वादीनामस्मिन्नर्थे वेदसंबन्धोन पुनरयमेव प्रकारइति निर्धारयितुंशक्यम् । द्रढीयसी कर्तव्य- तावगतिर्वेदविदांवेदमूलैव युक्ता कल्पयितुंन भ्रान्त्यादिमूलेत्यवगत्यनुरूपकारणकल्पना कृता भवति । तत्रोत्सादविप्र- कीर्णमन्त्रार्थवादप्रत्यक्षचोदनाकारणानांसंभवात्कल्प्यत्वमुपदिश्यते। प्रत्यक्षोऽपि विधिः क्वचिन्मूलत्वेन दृश्यते न मलवद्वा- ससा सह संवसेदिति । सचाध्ययने चोपनयने च पठ्यते। तदेतल्लेशतोऽस्माभिरुक्तम् । विस्तरस्तु स्मृतिविवेकाज्ज्ञातव्यः । शाखाः काश्चित्समुत्सन्नाःपक्षोनैषमतोमम । पक्षेस्मिन्नप्रमाणंहि बह्वदृष्टंप्रसज्यते ॥ उपपन्नतरःपक्षोविक्षिप्तानांततस्ततः । उत्पत्त्यादि समाहारः प्रायशोदृश्यते ह्यदः ॥ अनेकशिष्योपाध्यायैः श्रोत्रियैराद्दतोपरैः । शक्तोरचयितुंश्रुत्वा शाखांतांतीकुत श्चन ॥ उपपन्नस्तदानींच दृष्टमूलैः परिग्रहः । निश्चयोऽस्माकमप्यत्र यथा संभवतः स्थितः ॥ प्रयोगद्योतकामन्त्राद्योतनं- तस्य नामतः । नर्तेधिकारोत्पत्तिभ्यांप्रयोगस्यास्ति संभवः ॥ विशिष्टदेवतालाभआधारे मान्त्रवर्णिकः । प्रकाशकत्वान्मन्त्र- स्य तन्निर्वहणहेतुकः ॥ यासिद्धेरूपएकस्मिन्रूपान्तरगतिर्भवेत् । नसास्वरूपनाशाय विश्वजित्यधिकारवत् ॥ प्रतिपन्ने विधौ युक्तंतत्संबन्धार्थकल्पनम् । गतिर्मन्त्रार्थवादेभ्योन दृष्टा चेद्विधेः क्वचित् ॥ लिङादिगम्यंभगवान्विधिंस्मरति पाणि- निः । नशक्तास्ते विधिंवक्तुंसिद्धवस्त्वभिधायिनः ॥ व्याख्येयोगुणवादेन योर्थवादादतत्परात् । अर्थोधिगन्तुमिष्येत कथं- स्यात्तस्य सत्यता ॥ भिन्द्युर्द्वाक्यंन प्रतिष्ठाः साकाङ्क्षारात्रयोयतः। विशेषे तद्गते युक्ता वाक्यशेषावगम्यता ॥ स्तेयादीनां- निषेधेपि विध्यन्तरगतिर्ध्रुवा । ततश्च वाक्यभेदः स्यान्नोपन्यासस्ततः समः ॥ वाचःस्तोमे प्रयुज्यन्ते सर्वे मन्त्रविधिश्रुतेः । नाष्टकादौ विशेषोस्ति हेतुर्मन्त्रस्य बोधने ॥ विनासामान्यसंबन्धाल्लिङ्गं च विनियोजकम् । नच नास्त्यस्य संबन्धोविना प्रकरणादिभिः ॥ परिहारंब्रुवन्त्यत्र केचित्तन्मूलवादिनः। रात्रिषु प्रतितिष्ठन्तीत्यसत्स्वेवलिङादिषु ॥ पञ्चमेन लकारेण तदर्थ- गतिरिष्यते । पतन्तिनम्लेच्छितवाइत्यादिषु तथा भवेत् ॥ ऋचांविधिर्वाचिस्तोमे सर्वदाशतयीरिति । दशम्योमण्डलेऽभ्य- स्तावर्जिताः पठिताबहिः ॥ सामान्यसंबन्धकारीसमाख्यैवेति गीयते । समाख्यागृह्यमन्त्राणांतेन तेनास्ति कर्मणाम् ॥ पञ्चा- ग्निविद्याशेषत्वंहिरण्यस्तेन निन्दया । स्तेनोहिरण्यवाक्यस्य न विना तन्निषेधतः ॥ शेषत्वावगमोऽर्थाच्च तदकर्तव्यता तु या । द्रढिम्निशेषतायाःसा न पुनस्तद्विरोधिनी॥नित्यानुमेयपक्षोयोवाप्यागमपरंपरा। तयोरन्धप्रवाहत्वंन भेदः कश्चिदीक्ष्य- ते ॥ एवंच सति यागौतमेन प्रत्यक्षविधानता गार्हस्थ्यस्योक्ता सा शब्दस्याव्यवहितव्यापाराभिप्रायेण । श्रवणानन्तरंयो- र्थः प्रतीयते सप्रत्यक्षःयस्तु प्रतीतेऽर्थे तत्सामर्थ्यपर्यालोचनया गम्यः सविलम्बितत्वात्प्रतिपत्तेर्नप्रत्यक्षइति सर्वमुपप- न्नम् । स्मृतिशीलेचतद्विदाम् । स्मृतिश्चशीलंच स्मृतिशीले शीलं रागद्वेषप्रहाणमाहुस्तच्चधर्ममूलं वेदस्मृतिवन्नज्ञापक- तया किंतु निवर्तकत्वेन । रागद्वेषप्रहाणाद्धिधर्मोनिर्वर्तते । ननु च श्रेयःसाधनंधर्मइत्युक्तम् । रागद्वेषप्रहाणमेव चतत्स्व- भावम् । तत्रासति व्यतिरेके किमुच्यते रागादिप्रहाणाद्धर्मोनिर्वर्ततइति । उक्तमस्माभिर्धर्मशब्दोयंस्मृतिकारैः कदाचि द्वि- धिनिषेधविषयभूतायां क्रियायां प्रयुज्यते । कदाचित्तदनुष्ठानजन्यआफलप्रदानावस्थायिनिकस्मिंश्चिदर्थे तस्य च सद्भावे शब्दएव प्रमाणम् । यदिहि यागस्तथाविधंवस्त्वनुत्पाद्य विनश्येत्तदा कालान्तरे कुतः फलोत्पत्तिः । तदेतद्वस्तुधर्मशब्दे- नात्राभिप्रेतं तस्य शीलंमूलमिति नकिंचिदनुपपन्नम् । तदभिप्रायाएव व्यवहाराः । एकएव सुहृद्धर्मोनिधनेऽप्यनुयाति यः इति । क्रियायाअनुष्ठानसमनन्तरमेव नाशात्कुतः कालान्तरान्वयः । अत्र चोद्यते । ननु सर्वएव श्रुतिस्मृतिविहितो ऽर्थोधर्मस्य मूलंशीलस्यापि तत्रान्तर्भावाद्भेदेनोपादानमनर्थकंविधायिष्यते च इन्द्रियाणांजयेयोगंसमातिष्ठेद्दिवानिशम् । यस्मिञ्जिते जितावेतौभवतः पञ्चकौ गणाविति । अयमेव मनसोजयोयोरागद्वेषयोः परित्यागइतिवक्ष्यामः । केचिदाहुरा-

दर्थः पृथगुपदेशः एतद्धि सर्वकर्मणामनुष्ठानउपयुज्यते स्वप्रधानंच अग्निहोत्रादि कर्मवत्। सर्ववर्णधर्मश्चायं सर्वाश्रमधर्मश्च तैः सामान्यधर्म लक्षणावसरेऽस्मिन्नुच्यते । वयंतु ब्रूमः समाधिः शीलमुच्यते । तथाहिशीलसमाधाविति धातुषु पठ्यते। समाधानंच मानसोधर्मः । यच्चेतसोऽन्यविषयव्याक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणतातच्छीलमुच्यते। द्वन्द्वश्चाय मितरेतरयोगे तेन रपस्परसापेक्षयोः स्मृतिशीलयोः धर्मप्रति प्रामाण्यमेवाभिप्रेतं न पूर्ववन्निर्वर्तकत्वम्। एतदुक्तंभवति। समाधानवती या स्मृतिःसा प्रमाणं न स्मृतिमात्रम्। तेन सत्यपि वेदार्थवित्त्वे यदतत्पराणांस्मरणंन तद्धर्ममूलं भ्रान्त्यादि संभवाच्छास्त्रार्थाविधानशून्यानाम् । शब्दइह पठ्यते सतद्विदामित्यस्मा[?]न्तरंद्रष्टव्यः वृत्तानुरोधात्त्वेवंपठितः। समुच्चयार्थश्चासौ पूर्वप्रकृतस्य च समुच्चेतव्यस्याभावात्तृतीये पादे यत्साधूनामित्युक्तंतत्समुच्चिनोति । अतस्त्रीणि विशेषणान्यत्राश्रीयन्ते । विदुषामुपाध्यायादागमितविद्यानांतथा तदभ्यासपराणामनुष्ठानपराणांच स्मृतिः प्रमाणम्। एतत्सर्वमन्वादिनामासीदिति स्मर्यते। नान्यथा तत्कृतेषु ग्रन्थेषुशिष्टानांपरिग्रहोपपत्तिः। यद्येवंस्पष्टमेव वक्तव्यं मन्वादिवाक्यानि धर्ममूलमिति किमेतेन लक्षणेन। सत्यम्। यःकथंचित्तत्प्रामाण्ये विप्रतिपाद्येत तंप्रति न्यायशास्त्रप्रसिद्धंप्रामाण्यहेतुकथनमेतत् । अद्यत्वेऽपि यस्यैतद्धेतुसद्भावः सोऽपि मन्वादिवद्ग्राह्यवाक्यः स्यात्। तथा चविदुषांप्रायश्चित्ताद्युपदेशे तथा भूताएव परिषत्त्वेन प्रमाणीभवन्ति एकोपि वेदविद्धर्मयोव्यवस्येद्विजोत्तमइति। अतएव स्मर्तृपरिगणना मनुर्विष्णुर्यमोऽङ्गिराइति निर्मूला। तथा हि पैठीनसिबौधायनप्रचेतःप्रभृतयः शिष्टैरेवंरूपाः स्मर्यन्ते नच परिगणनायामन्तर्भाविताः सर्वथा यामविगानेन शिष्टाः स्मरन्ति वदन्तिवा। एवंविधैर्गुणैर्युक्तं तेन चैतत्प्रणीतमिति तस्य वाक्यंसत्यपि पौरुषेयत्वे धर्मे प्रमाणंस्यादिति स्मृतिशीलेच तद्विदामित्यस्यार्थः । अद्यत्वे यएवंविधैर्गुणैर्युक्तईदृशेनैव च हेतुना ग्रन्थमुपनिबध्नीयात्सउत्तरेषांमन्वादिवत्प्रमाणीभवेत्। इदानींतनानांतु यदेव तत्र तस्याप्र बोधकारणंतदेव तेषामस्तीति न तद्वाक्यादवगतिः। इदानींतनोहि यावन्मूलंनदर्शयति तावन्नविद्वांसस्तद्वाक्यंप्रमाणयन्ति। दर्शिते तु मूले प्रमाणीकृते ग्रन्थे कालान्तरे यदि कथंचिदष्टकादिमूलतुल्यता स्यात्तदा तेषांशिष्टपरिग्रहान्यथानुपपत्त्या तन्मूलानुमानंयुक्तम् । आचारश्चैव साधूनांचशब्देन वेदविदामिति संबध्यते । पदद्वयेन शिष्टत्वंलक्ष्यते । शिष्टानांयआचारः सोपि धर्मे मूलम्। आचारोव्यवहारः अनुष्ठानं यत्रश्रुतिस्मृतिवाक्यानि न सन्ति शिष्टाश्च धर्मबुद्ध्यानुतिष्ठन्ति तदपि वैदिकमेव पूर्ववत्प्रतिपत्तव्यम्। यथाविवाहादौ कङ्कणबन्धनादि माङ्गलिकत्वेन यत्क्रियते या च कन्यायास्तदहर्विवाहयिष्यमाणायाः प्रख्यातवृक्षयक्षचतुष्पथादि पूजा देशभेदेन तथा चूडासंख्यादेशभेदश्च या चातिथ्यादीनांगुर्वादीनांचानुवृत्तिः प्रियहितवचनाभिवादनाभ्युत्थानादि रूपा तथा पृश्निसूक्तंतृणपाणयोऽधीयते अश्वमेधमश्वंयथासमर्पयन्तः ईदृशआचारः। एषोऽपि हिस्वभावभेदेन पुरुषाणांमनः स्वास्थ्यादौःस्थ्यादिभेदेनानेकरूपः प्रतिविशेषमानन्त्यादशक्योग्रन्थेनोपनिबद्धुम्। यदेव बहुशः प्रियेत्युपलक्षितंतदेवावसरान्तरे विपरीतंसंपद्यते। तथा पर्युपासनंगृहस्थेनातिथेः क्रियमाणंकस्यचित्प्रीतिकरंममायंभृत्यवत्तिष्ठति। अन्यस्त्वन्यथानिर्यन्त्रणया नलभ्यत आसितुमस्मिन्संनिहितइति पर्युपासनयैव विरज्यति। तत्र सामान्यतःशक्यंवेदानुष्ठानंन विशेषतः । अष्टकादीनांतु नियतैकरूपसमस्तप्रयोगस्मरणमित्येषस्मृत्याचाराणांभेदः। आत्मनस्तुष्टिरेव च धर्ममूलमित्यनुषज्यते वेदविदांसाधूनामिति च । अस्याश्च धर्ममूलत्वप्रामाण्येनैवेत्याहुः । यत्र ह्येवंविधानामनुष्ठेयेर्थेमनः प्रसीदति द्वेषोन्न भवति सधर्मः। ननु च यस्य प्रतिषिद्धएवार्थेमनः प्रसीदेत्सधर्मं प्राप्नोति विहिते च किंकथितंस्यात् सन धर्मइति। एवमेतदीदृशानांमहात्मनांमतिमतां महाप्रभावोमनः प्रसादोयेनाधर्मोऽपि धर्मतामेति धर्मश्चाधर्मतां न रागद्वेषादिदोषवताम्। यथारुमायां यत्किंचिद्द्रव्यंप्रविशति तत्सर्वंलवणसात्संपद्यते एवंवेदविदा सहसोत्पन्नेन मनः परि-

तोषेण सर्वनिर्मलीक्रियते । अतोयथा प्रतिषिद्धमपि ग्रहणंषोडशिनि विधिनानुष्ठीयमानंनदोषाय । नचात्र ग्रहणवद्विकल्पः । प्रतिषेधाद्यात्मतुष्टिव्यतिरेकेणान्यत्र विषये व्यवस्थाप्यन्ते । अथवानैवतेषामधर्मेआत्मापरितुष्यति यथाविषघ्नीमेवौषधीं नकुलोदशति नान्याम् अतउच्यते नकुलोयांयांदशति सासाविषघ्नीति । इह भवन्तश्चाहुः ये वैकल्पिकाः पदार्थास्तेषु यस्मिन्पक्षे मनः प्रसीदति सपक्षआश्रयितव्यः । वक्ष्यति च द्रव्यशुद्धौ प्रायश्चित्तेषु च तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरंभवेत् । अथवा योऽश्रद्दधानोनास्तिकतया तस्यानधिकारमाह । नास्तिकस्य हि न वैदिकंकर्मकुर्वतोप्यात्मा तुष्यति । अतस्तेन क्रियमाणमपि कर्मनिष्फलमेव । अथवा सर्वकर्मविषयोभावप्रसादउपदिश्यते । अनुष्ठानकाले क्रोधमोहशोकादित्यक्त्वा प्रमुदितेन भाव्यम् । अतश्च शीलवदस्याः सर्वशेषतया धर्ममूलत्वाभिधानम् ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । एवंधर्मव्यवस्थाप्य तत्र प्रमाणान्याह । वेदोखिलइति अखिलःसार्थवादः तेषामपि विधितात्पर्यात् सवेदोधर्मस्य मूलंप्रमाणम् । यत्र साक्षात्श्रुतिर्नोपलभ्यते तत्र कथं तदुक्तं स्मृतिशीलेचेति । वेदविदांया स्मृतिर्वाक्यविशेषविवक्षोत्पादिकार्थविशेषेविषय चिन्तातत्प्रभवत्वात् वाक्यमपिस्मृतिः । वेदेनुपलभ्यमाने सा धर्मेप्रमाणम् । तस्याअप्यनुपलम्भे यत्र वेदविदांबहूनांशीलं चित्तस्य स्वभावप्रवणता सापि धर्मस्यमूलम् । यथा श्रुतिः यद्वैकिंचानूचानोभ्यूहतितदार्षेयंवेदयन्तीति । तस्याप्यनुपलम्भउक्तमाचारइति । साधवोवेदार्थसाधनप्रवृत्ताः तेषामाचारः स्वस्वपूर्वकालीनसाध्वनुष्ठितस्य प्रतिसंधानमनुष्ठानं तच्च प्रमाणंधर्मे लब्धशीलादन्यप्रयुक्तत्वशङ्कारहितान्निर्धारितमूलंमिथ्याप्रसिद्धमूलताशङ्काकलुषितमीषत्प्रत्यवरमिति क्रमार्थः । यत्राचारोऽपि नोपलभ्यते तत्राह आत्मनइति । वक्ष्यति च यत्कर्म कुर्वतोस्यस्यात्परितोषइति । तदयमर्थः यत्र विषये वेदादिकं धर्मप्रमाणचतुष्टयं सदपि नोपलब्धंउत्सादादिवशात् तत्र यत्कर्म कुर्वतश्चेतसोऽलाघवापरनामाप्रसादातिशयः तस्य साधकत्वे सएव प्रमाणम् । किंत्वेकपुरुषप्रतिभानतयास्याः शीलाचाराभ्यां बहुजनप्रतिभानतदनुष्ठानरूपत्वेनान्योन्यसंवादप्रामदार्ढ्याभ्यां किंचिदपकृष्टत्वमिति ॥ ६ ॥

( ३ ) **कुल्लूकः** । इदानींधर्मप्रमाणान्याह वेदोऽखिलोधर्ममूलमिति । वेदऋग्यजुःसामाथर्वलक्षणः ससर्वोविध्यर्थवादमन्त्रात्माधर्मे मूलंप्रमाणमर्थवादानामपि विध्येकवाक्यतयास्तावकत्वेन धर्मे प्रामाण्यात् । यदाह जैमिनिः विधिनात्वेकवाक्यत्वात्स्तुत्यर्थे न विधीनांस्युः । मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्मे प्रामाण्यंप्रयोगकाले चानुष्ठेयस्मारकत्वंवेदस्य च धर्मे प्रामाण्यंयथानुभवकरणत्वरूपंन्यायसिद्धम् । स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते । मन्वादीनांच वेदविदांस्मृतिर्धर्मे प्रमाणम् । वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनांप्रामाण्यमभिमतम् । शीलंब्रह्मण्यतादिरूपम् । तदाह हारीतः ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयत्ता मृदुताऽपारुष्यं मैत्रता प्रियवादित्वंकृतज्ञता शरण्यता कारुण्यंप्रशान्तिश्चेति त्रयोदशविधंशीलम् । गोविन्दराजस्तु शीलंरागद्वेषपरित्यागइत्याह । आचारःकम्बलवल्कलाद्याचरणरूपः । साधूनांधार्मिकाणामात्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम् । तदाह † गर्गः । वैकल्पिकेआत्मतुष्टिःप्रमाणम् ॥ ६ ॥

( ४ ) **राघवानन्दः** । अधुना प्रत्यक्षवेदमात्रमितोधर्मइतितु नार्थइत्याह वेदइति चतुर्भिः । अखिलऋग्यजुःसामाथर्वाणःधर्ममूलंधर्मे प्रमाणम् । स्मृतिशीले स्मृतिमन्वाख्याद्या शीलंवृत्तंचरित्रम् । तद्विदामनुष्ठेयत्वेन वेदार्थविदाम् । ब्रह्मण्यतापितृदेवभक्तता अपरोपतापिता मृदुता अनसूयताअपारुष्यंमैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यंप्र

† गर्गव्यासः ( अ )

शान्तिरितित्रयोदशविधशीलमिति हारीतोक्तंवा । अत्र स्मृतिः श्रुत्यविरोधिनी ग्राह्या । तथा च सूत्रं विरोधे त्वन पेक्षंस्यादसति ह्यनुमानमिति । प्रत्यक्षश्रुतिविरोधे स्मृत्यादिहेयम । यथासवोदुम्बरीवेष्टयितव्येति । असति तद्विरोधेअनु मानंयथाष्टकाःकर्तव्याइति स्मृतिवाक्यंवेदानुमापकतया मानमित्यर्थः । आचारोविवाहादौ कङ्कणबन्धादिःसाधूनाममत्सरा णांतुष्टिर्मनसःपरिणामविशेषःसोपि धर्मे मानमित्यन्वयः ॥ ६ ॥

( ५ )**नन्दनः**। अथधर्मप्रमाणान्युपन्यस्यति वेदइतिजातावेकवचनम् । धर्ममूलंधर्मस्य प्रमाणंन केवलंविध्या- देशएव धर्मप्रमाणं किंतु मन्त्रार्थवादावपीत्युक्तमखिलइति । तद्विदांवेदार्थविदाम् । स्मृतिर्धर्मशास्त्रेतिहासपुराणानि । शीलंच- धर्ममूलंसतसंभावनीयताहेतुः आत्मगुणसंपच्छीलम् । तदुक्तंमहाभारते तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि । शीलं- समासेनैतत्तेकथितंकुरुनन्दनेति । अत्रोदाहरणंयुधिष्ठिरस्य यक्षरूपधारिणोधर्मात्सोदरानादरेण नकुलजीवितवरणम् । त- द्विदामाचारश्चैवधर्ममूलम् । आचारोव्याख्यातः । साधूनांपरमधार्मिकाणामात्मनस्तुष्टिर्मनसोरुचिःसाचधर्ममूलंप्रमाणा- न्तरागोचरत्वेन धर्मत्वंप्रति संशयितेष्वर्थेषु योऽर्थोधर्मत्वेन साधूनांमनसे रोचते सधर्मइत्यर्थः ॥ ६ ॥

( ६ ) **रामचन्द्रः** । अखिलोवेदो धर्मस्यप्रमाणम् । च पुनः । तद्विदांधर्मविदांस्मृतिशीले स्मृतिश्च शीलंच स्मृतिशीले धर्मस्यमूले भवतः शुचौ तु चरिते शीलमित्यमरः । आचारः सदाचारः साधुतुष्टिरेव साधुतुष्टिकर्ता च पुनः आत्मनः स्वस्य तुष्टिकर्ता ॥ ६ ॥

**यःकश्चित्कस्य चिद्धर्मोमनुना परिकीर्तितः ॥ ससर्वोऽभिहितोवेदे सर्वज्ञानमयोहिसः ॥ ७ ॥**

( १ ) **मेधातिथिः** । यदुक्तंवेदवित्संबन्धेन स्मृतेः प्रामाण्यंतदनेन प्रकटयति । यः कश्चिद्धर्मोवर्णधर्मआश्र- मधर्मः संस्कारधर्मः सामान्यरूपोविशेषरूपश्च कस्यचितद्ब्राह्मणादेर्वर्णस्य मनुनापरिकीर्तितः ससर्वोपिवेदेऽभिहितः प्र- तिपादितोयथाचैतत्तथा पूर्वश्लोकउक्तम् । सर्वज्ञानमयोहि सः सर्वेषांज्ञानानामदृष्टविषयाणांहेतुर्निमित्तंवेदः सर्वैर्ज्ञानैर्नि- र्मितइवेतिज्ञाने तद्विकारत्वमध्यारोप्य मयट्कृतः । योहि यद्विकारः सतन्मयस्तत्स्वभावइत्युच्यते । वेदश्च ज्ञानहेतुत्वात्तन्म- यइति । यत्कार्यदर्शने कारणंकार्यस्वभावमिति । अथवा सर्वज्ञानाद्धेतोरागतोहेतुमनुष्येभ्यइति मयट्क्रियते ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । यःकश्चिदिति । यःकश्चिदिदानीमनुपलभ्यमान मूलवान् वेदोपि कस्यचित्संकीर्ण- स्यापि सर्वेषां वेदानांयतज्ज्ञानं तत्प्रायोहि सइत्यनुधापयेपितस्य सवेदः प्रत्यक्षएवेत्यर्थः ॥ ७ ॥

( ३ ) **कुल्लूकः** । वेदादन्येषांवेदमूलत्वेन प्रामाण्येऽभिहितेऽपिमनुस्मृतेः सर्वोत्कर्षज्ञापनायविशेषेण वेदमूलतामाह यःकश्चिदिति । यःकश्चित्कस्यचिद्ब्राह्मणादेर्मनुना धर्मउक्तः ससर्वोवेदे प्रतिपादितः । यस्मात्सर्वज्ञोऽसौमनुः । सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थंसम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान् । गोविन्दराजस्तु सर्वज्ञानमयइत्यस्य सर्वज्ञाना- रब्धइव वेदइति वेदविशेषणतामाह ॥ ७ ॥

( ४ ) **राघवानन्दः** । सर्वासांस्मृतीनांवेदमूलत्वेपि मनुस्मृतेरतिशयमाह यइति । कस्य चित्पुंसःसवेदःसर्वज्ञा- नमयःसर्वेषांज्ञानानामदृष्टविषयाणांहेतुतया निर्मितःसर्वविषयज्ञानबलोभगवतःपूर्वपूर्वसर्गसदृशतया कार्यत्वेपि सर्वार्थप्रका- शकत्वात् ॥ ७ ॥

( ५ ) **नन्दनः** । एषुपूर्वपूर्वबलीयः वेदविदांस्मृतिः प्रमाणमित्युक्तम् वेदवित्तमत्वान्मनुनाप्रणीतंशास्त्रंस्मृत्य- न्तरेभ्यः प्रमाणमित्यभिप्रायेणाह यःकश्चिदिति । सर्वज्ञानमयः सर्ववेदार्थज्ञानप्रकृष्टः ॥ ७ ॥

( ६ ) **रामचन्द्रः** । यः कश्चित्धर्मः कस्यचिद्विप्रादेः धर्मः मनुना परिकीर्तितः सः सर्वः धर्मः वेदेअभिहितः उक्तसवेदः सर्वज्ञानमयः सर्वजानातीत्यर्थः । यद्वा समनुः सर्वज्ञानमयः ॥ ७ ॥

**सर्वंतु समवेक्ष्येदंनिखिलंज्ञानचक्षुषा ॥ श्रुतिप्रामाण्यतोविद्वान्स्वधर्मे निविशेत वै ॥ ८ ॥**

( १ ) **मेधातिथिः** । सर्वज्ञेयकुतकाकुतकशास्त्रगोचरंप्रत्यक्षादिगोचरंसमवेक्ष्यैतज्ज्ञानचक्षुषा तर्कव्याकरणनिरुक्तमीमांसादिविद्यास्थानश्रवणचिन्तनात्मकेन चक्षुरिव चक्षुः शास्त्राभ्यासोज्ञानस्य कारणत्वसामान्यात् । यथा चक्षुषा रूपंज्ञायते एवंशास्त्रेण धर्मइति सामान्यंसमवेक्ष्य सम्यग्विचारपूर्वकंनिरूप्य श्रुतिप्रमाणतोवेदप्रामाण्येन धर्मे निविशेतधर्ममनुतिष्ठेत् । सर्वेषु हि शास्त्रेषु सम्यग्ज्ञातेषुवेदप्रामाण्यमेवावतिष्ठते नाज्ञातेषु । तथाहि तानि शास्त्राणि निपुणत्वेन चिन्तयन्ति नतेषांप्रामाण्ये सम्यग्युक्तिरस्ति वेदे त्वस्तीति निश्चिनोति । सर्वग्रहणंज्ञेयविशेषणम् । निखिलशब्दश्च समवेक्ष्येतिक्रियाविशेषणम् । निखिलंसमवेक्ष्य निःशेषेणपूर्वपक्षेण शास्त्रान्तराणांप्रामाण्ये वेदस्य वा प्रामाण्येयावन्त्यःकाश्चन युक्तयः प्रतिभासन्ते ताः सर्वाः प्रदर्श्य सिद्धान्तसिद्धैर्हेतुभिर्यथालक्षणलक्षितैर्निराकृत्य स्वपक्षसाधने चोपन्यस्तेवेदप्रामाण्यमवतिष्ठतइति निखिलशब्देन प्रदर्श्यते । तेन तौनिखिलसर्वशब्दौ पर्यायावपि भिन्नविषयत्वान्नपुनरुक्तौ । स्वग्रहणमनुवादः । योह्यन्यस्य धर्मः सोन्यस्याधर्मएव ॥ ८ ॥

(२) **सर्वज्ञनारायणः** । सर्वंत्विति । सम्यगवेक्ष्यालोच्य इदंमानवशास्त्रं एतच्छास्त्रोक्तेन ज्ञानरूपचक्षुषाऽनुपलभ्यमानवेदमूलेषुकर्मसु उपलभ्यमानतन्मूलेनच श्रुतेरपि प्रामाण्यतः प्रमाणत्वेन सिद्धेः तदुक्ते स्वधर्मे स्वसंपाद्येधर्मे निविशेत नितान्तमन्तर्भवेत् । वैप्रसिद्धौ ॥ ८ ॥

( ३ ) **कुल्लूकः** । सर्वंत्विति । सर्वशास्त्रजातंवेदार्थावगमोचितंज्ञानंमीमांसाव्याकरणादिकंज्ञानमेव चक्षुस्तेन निखिलंतद्विशेषेण पर्यालोच्य वेदप्रामाण्येनानुष्ठेयमवगम्य स्वधर्मेऽवतिष्ठेत ॥ ८ ॥

( ४ ) **राघवानन्दः** । ततःकिंतत्राह सर्वमिति । ज्ञानचक्षुषा ज्ञायते ऽनेनेति ज्ञानंगुरुःसएव चक्षुस्तेनोपदिष्टमवेक्ष्य शब्दतोर्थतश्चाधीत्येत्यर्थः । इदंमनुशास्त्रंश्रुतिप्रामाण्यतःश्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिर्गृहीततात्पर्यार्थः । विद्वान् स्वधर्मेअनुष्ठेये कर्तव्याकर्तव्येति विशेषतःप्रवर्तेत ॥ ८ ॥

( ५ ) **नन्दनः** । शीलादिभ्यःश्रुतिस्मृतीबलीयस्यावित्यभिप्रायेणाह सर्वमिति । इदंश्रुत्यादिप्रमाणजातम् । निखिलंनिरवशेषम् । ज्ञानचक्षुषा बुद्ध्या । श्रुतिप्रामाण्यतः श्रुतिशब्दःस्मृतेरप्युपलक्षणार्थउत्तरश्लोकानुगुण्याच्छ्रुतिसमत्वाभ्युपगमाच्च ॥ ८ ॥

( ६ ) **रामचन्द्रः** । इमंनिखिलंसर्वधर्मविप्रादीनांधर्मंज्ञानचक्षुषाअवदेक्ष्य विचार्य विद्वान्श्रुतिप्रामाण्यात्वै निश्चयेन निविशेतस्वधर्मे प्रविष्टोभवेत् ॥८ ॥

**श्रुतिस्मृत्युदितंधर्ममनुतिष्ठन्हि मानवः ॥ इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमंसुखम् ॥ ९ ॥**

( १ ) **मेधातिथिः** । योनास्तिकतया वैदिकानि निष्फलानि कर्माणीति व्यामुह्य नतदनुष्ठाने प्रवर्तते तस्य प्रवृत्त्यर्थंसुत्दद्भूत्वेष्टफलप्रदर्शनंकरोति । तिष्ठतु तावदन्यत्फलंश्रुतौ स्मृतिषु च यदुदितमुक्तंधर्माख्यंकर्मतदनुतिष्ठन्निहास्मिंल्लोके यावज्जीवति तावत्कीर्तिंप्रशस्यतांपूज्यतांसौभाग्यंलभते न्याय्ये पथि स्थितोमहापुण्योयमिति सर्वेण पूज्यतेप्रियश्च सर्वस्यभवति । प्रेत्य देहान्तरे यस्मादन्यदुत्तमनास्ति तत्सुखंप्राप्नोति प्रायेण स्वर्गकामस्याधिकारी । निरतिशया च प्रीतिः

स्वर्गस्ततउच्यते अनुत्तममिति । तस्मान्नास्ति कस्यापि दृष्टफलार्थिनोऽत्रैव प्रवृत्तिः प्रयुक्तेत्येवंपरमेतत् ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रफलमाह श्रुतीति । श्रुतिस्तत्कालोपलभ्या अनुत्तमंसुखंस्वर्गाख्यंमोक्षाख्यंच । अत्र चशीलादीनांमनुक्तिरपकृष्टत्वकंथनार्थम् अतएव वक्ष्यमाणस्य श्रुतिस्मृत्यमीमांस्यत्वस्य शीलादावपि प्रसङ्गंनिवारयितुं श्रुतिस्मृतिपदार्थौ व्याकर्तव्यौ ॥ ९ ॥

( ३ ) **कुल्लूकः** । श्रुतिस्मृत्युदितमिति । श्रुतिस्मृत्युदितंधर्ममनुतिष्ठन्मानवइह लोके धार्मिकत्वेनानुषङ्गिकींकीर्तिपरलोके च धर्मफलमुत्कृष्टंस्वर्गापवर्गादिसुखरूपंप्राप्नोति । अनेन वांस्तवगुणकथने श्रुतिस्मृत्युदितंधर्ममनुतिष्ठेदितिविधिःकल्प्यते ॥ ९ ॥

( ४ ) **राघवानन्दः** । किंच श्रुतीति । अनुत्तमंनास्त्युत्तमंयस्मात् । मानवःमनुष्याधिकारकंशास्त्रमिति न्यायात्॥९॥

( ५ ) **नन्दनः** । श्रुतिस्मृत्योस्तुल्यकक्षतांविशदयति श्रुतीति ॥ ९ ॥

( ६ ) **रामचन्द्रः** । श्रुतिस्मृत्युदितंश्रुतिस्मृतिभ्यांयत्उदितंउक्तंधर्ममानवः अनुतिष्ठन्इहलोके प्रेत्य परलोके कीर्तिसुखमवाप्नोति ॥ ९ ॥

## श्रुतिस्तु वेदोविज्ञेयोधर्मशास्त्रंतु वै स्मृतिः॥ ते सर्वार्थेष्वमीमांस्ये ताभ्यांधर्मोहि निर्बभौ ॥ १० ॥

( १ ) **मेधातिथिः** । किमिदंशब्दार्थसम्बन्ध स्मरणमभिधानकोशशास्त्रमात्मभूः परमेष्ठीत्यादिवन्नधर्मशास्त्रंयेनेदमुच्यते श्रुतिस्तु वेदोविज्ञेयोधर्मशास्त्रंतुवै स्मृतिरिति उच्यते । इहसदाचारोन श्रुतिर्नस्मृतिर्निबन्धाभावान्निबद्धाक्षराहिस्मृतयः प्रसिद्धाऽतस्तस्यस्मृतित्वमुपपादयति।यत्कार्यंधर्मप्राप्त्यर्थंतद्धर्मशास्त्रंयत्र धर्मःशिष्यते कर्तव्यतया प्रतीयते सा स्मृतिः।निर्बन्धानिभावप्रयोजक शिष्टसमाचारादपि धर्मस्य कर्तव्यतावगतिःसोऽपि स्मृतिरेव । ततश्च यत्र कस्मैचित्कार्याय स्मृतेरुपादानंतत्र सदाचारोपि ग्रहीतव्यः । धर्मशास्त्रंचेत्स्मृतिर्वेदोऽपि सर्वमुख्यंधर्मशासनमिति तस्यापि स्मृतित्वप्रसङ्गस्तन्निवृत्त्यर्थमाह श्रुतिस्तु वेदोविज्ञेयः। यत्रश्रूयते धर्मानुशासनशब्दः साश्रुतिः। यत्र च स्मर्यते सा स्मृतिः। तच्च समाचारे प्यस्तीत्यतः सोऽपि स्मृतिरेव । नहि तत्राप्यस्मृतवैदिके शब्दे प्रामाण्यमथवा श्रुतिग्रहणंस्मृतेर्वेदतुल्यत्वार्थंकिंपुनःश्रुतिस्मृत्योः समानंकार्यंयत्समाचारेप्यन्येन प्राप्यते।उच्यते। ते सर्वार्थेष्वमीमांस्ये ते श्रुतिस्मृती सर्वेष्वर्थेष्वत्यन्तासंभाव्येष्वपि दृष्टविषयैः प्रमाणैर्यथा तस्मादेवहिंसालक्षणात्पदार्थात्क्कचिदभ्युदयः क्कचित्प्रत्यवायः सुरापानान्नरकः सोमपानात्पापशुद्धिरित्यादौ पक्षप्रतिपक्षगमनेन विचारोन कर्तव्यः । आशङ्कापक्षान्तरसंभावनंमीमांसनम् । यथाहिंसा चेत्पापहेतुः स्वरूपाविशेषाद्वैदिक्यपि तथा भवितुमर्हति । अथवैदिक्यभ्युदयहेतुर्लौकिक्यपि तथा स्यात् । तद्रूपसमानत्वाद्यस्ययद्रूपंवेदादवगतंतस्य तद्विपरीतरूपसंभावनमसत्तर्काश्रयैरसम्यग्घेतुभिर्यद्विचारणंतत्सिद्धान्ताभिनिवेशः सइह प्रतिषिध्यते । न पुनरयमर्थोवेदस्याद्यः पूर्वपक्षउतत्विद्यः सिद्धान्तइत्येषामीमांसानिषिध्यते । यतोवक्ष्यति यस्तर्केणानुसंधत्ते सधर्मंवेद नेतरइति । किंपुनरयमदृष्टार्थोमीमांसनप्रतिषेधः नेतिब्रूमः । ताभ्यांधर्मोहि निर्बभावनेनतार्किकप्रमाणानांवेदार्थविपरीतसाधनानामाभासतामाह । ईदृशाहितेषांहेतवोवैदिकी हिंसा पापहेतुः हिंसात्वाल्लौकिकहिंसावत् । तत्र हिंसायां पापहेतुत्वंन कुतश्चिदन्यतः प्रमाणात्सिद्धमन्तरेणागमम् । एवंचेन्नास्तिहिंसायाः पापसाधन सिद्धौहेतुः यावदागमः प्रामाण्येन नाभ्युपगतः । अभ्युपगतेचागमप्रामाण्ये तद्विरुद्धे हेतुर्न युज्यतेअप्रामाण्यापत्तेरागमस्य । ततश्चेतरेतरव्यापारः पूर्वंप्रामाण्येन परिग्रहः पश्चादप्रामाण्यमिति । सोऽयं स्ववचनविरुद्धः पक्षोनैनं तार्किका अनुमन्यन्ते मममातावन्ध्येतिवदागमविरुद्धश्च । अथोच्यतेनैवागमः प्रमाणंक

थंतद्विरोधोद्भावनंदूषणम् । अनृतव्याघातपुनरुक्तदोषेभ्यः । कारीर्यादिकर्मणांतत्समनन्तरंफलार्थितयाऽनुष्ठीयमानानांन नियमतोऽनुष्ठानसमनन्तरंफलप्राप्तिः । कालान्तरेभविष्यतीतिचेदुक्तमत्र कृता शरदि कारीरी मृशंशुष्यत्सु शालिषु । वसन्ते जायते वृष्टिस्तस्यादौनभवेत्फलमिति । यान्यप्यन्यत्र भाविफलानि ज्योतिष्टोमादीनि तत्रापि निरन्वयविनाशात्कर्मणो-वर्षशते फलंभविष्यतीति निःसंदिग्धवैतानिकव्यवहारोपममेतत् । तस्मादनृतम् । व्याघातःउदिते होतव्यमनुदिते जुव्हतोदोषः। प्रातःप्रातरनृतंतेवदन्तिपुरोदयाज्जुव्हति येऽग्निहोत्रम् । तथाऽनुदिते होतव्यंयथातिथये प्रद्रुतायदद्यात्तादृगेतद्यज्जुहुयादित्येकत्रोदितहोमोविधीयतेऽनुदितहोमनिन्दया । तदेवविपरीतमन्यत् । तत्रैकः पक्षआश्रीयतामित्यनध्यवसायः यदेवाग्निहोत्राद्येकस्यां शाखायांविद्यते तदेवशाखान्तरेपि । सर्वशाखाप्रत्ययमेकंकर्मेत्यभ्युपगमः । ततश्च पुनरुक्तंतत्रानृतमेव तत्रभवतीत्येतेनैव पादेन प्रतिपाद्यते । यतोवेदाद्धर्मएव कर्तव्यतामात्रंयागादिविषयंनिर्बभौ विभाति गम्यते । न पुनः कालविशेषः फलस्योत्पत्तावधिकारवाक्येषु कालविशेषाश्रवणाद्विधितोहि फलंभवतीत्येतावद्गम्यते । कालावच्छेदोन विधिः । धात्वर्थसंबन्धिनोहि कालविभागाभूतभविष्यद्वर्तमानाः। नचैतद्धात्वर्थफलंकिन्तुवैधम् । धात्वर्थफलंहि तदानीमेवनिर्वर्तते । देव तोद्देशेनद्रव्यत्यागः हविर्विकारादि यदिकश्चित्कस्यचिदाज्ञाकारोभवति तेन प्रेष्यते गच्छ याहि ग्राममिति सआज्ञासंपादने प्रवृत्तः कदाचित्प्रारम्भएव वेतनफलंलभते कदाचिन्मध्ये कदाचित्कृतआज्ञाविषये समनन्तरमन्येद्युर्वाकालान्तरेऽथवा एवमेतच्छास्त्रफलमनियतकालम् । दिव्यवृष्ट्यादेस्तु स्वाभाव्येन प्रसक्तिमात्रंगम्यते । ननुतदहरेवोत्पत्तिः प्रतिसंबन्धकानि च यथा फलस्यैवंविधस्य लोके भवन्ति तथा वेदेपि पुराकृतंदुष्कृतादि । तथा च वेदएवैतद्दर्शयति यदि न वर्षेत्तथैव वसेदिति । सर्वस्वादौतु विवदन्ते नैतत्क्रतुफलम् । अङ्गमेतत्स्मरणम् । क्रतुफलंयः कामयेतानामयः स्वर्गलोकमियामिति । यच्चोक्तंहिंसायांलोकवेदयोर्न विशेषइति तत्र शास्त्रावगम्योहि तस्याऽयंस्वभावोन प्रत्यक्षादिगोचरस्तत्र च भेदः । रागलक्षणा लौकिकीहिंसा विधिलक्षणाऽलौकिकी हिंसा विधिलक्षणा त्वग्नीषोमीयस्येति महान्भेदः । तस्मान्न किंचिद्वेदेऽनृतम् व्याघातंपरस्तात्परिहरिष्यतिश्लोकेनैव ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । श्रुतिस्त्विति । तुशब्देन शीलादिशब्दव्यवच्छेदः । वेदइति प्रसिद्धतामाह । धर्मशास्त्रप्राधान्येन यत्रानुशासनीयं तद्धर्मशास्त्रम् । अमीमांस्ये तद्विरुद्धतर्कविचारादिभिर्न बाधनीये शीलादिकंतद्विरोधे बाध्यमेवेत्यर्थः । निर्बभौ प्रकाशितः ॥ १० ॥

( ३ ) **कुल्लूकः** । श्रुतिस्त्विति । लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धानुवादोऽयंश्रुतिस्मृत्योःप्रतिकूलतर्केणामीमांस्यत्वविधानार्थंस्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्योबलवत्त्वप्रतिपादनार्थंच । तेन स्मृतिविरुद्धाचारोहेयइत्यस्य फलम् । श्रुतिर्वेदःमन्वादिशास्त्रंस्मृतिः । तेउभेप्रतिकूलतर्कैर्न विचारयितव्ये यतस्ताभ्यांनिःशेषेण धर्मोबभौ प्रकाशतांगतः ॥ १० ॥

( ४ ) **राघवानन्दः** । श्रुतिस्मृत्युदितमित्युक्तंतत्र का श्रुतिः का च स्मृतिरित्याकाङ्क्षायामाह श्रुतिस्त्विति । धर्मशास्त्रंधर्मप्रतिपादकंमन्वादि तस्य च कर्तृविशेषात्प्रामाण्यम् । तदाह याज्ञवल्क्यः कर्तारोधर्मशास्त्राणांमनुर्विष्णुर्यमोऽङ्गिराः । वसिष्ठदक्षसंवर्तशातातपपराशराः । आपस्तम्बोशनोव्यासाःकात्यायनबृहस्पती । गौतमःशङ्खलिखितौ हारीतोऽत्रिरहंतथेति । श्रुतिस्मृती सर्वार्थेषु ज्ञातव्येषुअमीमांस्ये प्रतिकूलतर्केण न विचारयितव्येइति कुल्लूकः तन्न । सर्वार्थेषु मीमांस्येएवइतिपाठः । तथा च सर्वार्थेषु ज्ञातव्येषु मीमांस्ये एव धर्मस्यातीव सूक्ष्मत्वात् । यस्तर्केणानुसंधत्ते-

सधर्मवेदनेतरइति । त्रयंसुविदितंज्ञेयंकार्यसिद्धिमभीप्सतेति । त्रयंप्रत्यक्षानुमानशब्दाः । मीमांसा हि पूजितविचारवचनेऽथातोधर्मजिज्ञासेत्यादि । तत्र जातंतया सुत्यादिषट्कैर्निर्णेतव्येऐन्द्र्यागार्हपत्यमुपतिष्ठते अस्याःश्रुतेरपिपरतावत् ॥ १० ॥

( ५ ) **नन्दनः** । श्रुतिस्मृत्योस्तुल्यकक्ष्यतामेव, प्रकान्तरेणाहश्रुतिस्त्विति ॥ १० ॥

( ६ ) **रामचन्द्रः** श्रुतिः वेदः स्मृतिर्धर्मशास्त्रंते श्रुतिस्मृती सर्वार्थेषु सर्वकार्येषु अमीमांस्येअविचार्ये । मानविचारणे इत्यस्य धातोरूपम् । ताभ्यांश्रुतिस्मृतिभ्यांधर्मः निर्बभौ नितरांबभौ ॥ १० ॥

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ॥ ससाधुभिर्बहिष्कार्योनास्तिकोवेदनिन्दकः ॥ ११ ॥**

( १ ) **मेधातिथिः** । असत्यप्रामाण्यहेतोर्वेदस्य योद्विजोहेतुशास्त्राश्रयाद्धेतुशास्त्रंनास्तिकतर्कशास्त्रंबौद्धचार्वाकादिशास्त्रं यत्र वेदोऽधर्मायेति पुनःपुनरुद्घुष्यते तादृशंतर्कमाश्रित्य योऽवज्ञांकुर्याच्छ्रुतौ स्मृतौ च केनचिदकार्यान्निवर्त्यैतमेवंकार्षीः प्रतिषिद्धंवेदेनेति तमनादृत्य चिकीर्षेत्किनाम वेदे यदि वेदे स्मृतिषु वा प्रतिषिद्धंकितयोः सम्यक्प्रामाण्यमस्तीति कथयेन्मनसा वाविचिन्तयेत्तर्कशास्त्रेषु निबद्धादरोयदि दृश्येत ससाधुभिः शिष्यैर्बहिःकार्यस्तत्तत्कार्येभ्योयाजनाध्यापनातिथिसत्कारादिभ्यः । क्रियाविशेषस्यानिर्देशाद्द्विद्वर्हाभ्यइति गम्यते यतोऽविद्वान्सम्यगसंस्कृतात्मा तार्किकगन्धितयैवंव्यवहरति आसु च क्रियासु विद्वानधिक्रियते । अतएव पूर्वश्लोके विचारईदृशः प्रतिषिध्यते यतस्तदवज्ञानपरतया क्रियते । ननु यतस्तदर्थविशेषजिज्ञासयैवमर्थमेवहेतुमाह नास्तिकोवेदनिन्दकः । अतश्च पूर्वपक्षे योवेदस्याप्रामाण्यंब्रूयान्नासौ नास्तिकःस्यात् । सिद्धान्तदार्ढ्यार्थमेवपूर्वपक्षे हेतुकथनंवेदनिन्दकइति । स्मृतिग्रहणं नकृतंतुल्यत्वेनोभयोः प्रकृतत्वादन्यतरनिर्देशेनैव सिद्धमुभयस्यापि ग्रहणमित्यभिप्रायः ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । यइति । तथा च शीलादिभिस्तदपवादैर्धर्मव्यवस्थैव न स्यात् अतस्तदुभयंन विचार्यम् । हेतुशास्त्रंश्रुतिविरोधितर्कशासनम् । बहिष्कार्यःसाधुभावात् । सहि नास्तिकोनास्ति परलोक इत्येवंच वर्तते । वेदानांचनिन्दकोभवति । अतोबहिष्कार्यइत्यर्थः ॥ ११ ॥

( ३ ) **कुल्लूकः** । योवमन्येतेति । यःपुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत सशिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्मणोनिःसार्यः । पूर्वश्लोके सामान्येनामीमांस्येइति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्तनीयेति भ्रमोमाभूदिति विशेषयति हेतुशास्त्राश्रयात् वेदवाक्यमप्रमाणंवाक्यत्वाद्विप्रलम्भकवाक्यवदित्यादिप्रतिकूलतर्कावष्टम्भेन चार्वाकादिनास्तिकइव । नास्तिकोयतोवेदनिन्दकः ॥ ११ ॥

( ४ ) **राघवानन्दः** । अतएवाह यइति । अवमन्येतअप्रमाणोयंवेदःस्वर्गकामोयजेतेत्यादेर्भ्रज्ञानस्तृप्यतीतिवत्कार्यकारणादृष्टेःग्रावाणःशृणुतेत्यादेरर्थव्यभिचाराच्चेत्यादिहेतुशास्त्रम् । वेदनिन्दकत्वेन पतितत्वात्सर्वधर्मानधिकारित्वमाह बहिष्कार्यइति ॥ ११ ॥

( ५ ) **नन्दनः** । तेश्रुतिस्मृती । वेदस्मृतिनिन्दकइत्येव वक्तव्ये वेदनिन्दकइत्युक्तंस्मृतेरपितन्मूलत्वाद्वेदत्वाभ्युपगमनेनोक्तम् ॥ ११ ॥

( ६ ) **रामचन्द्रः** । यः पुरुषः तेउभे श्रुतिस्मृतीहेतुशास्त्राश्रयातहेतुः तर्कविद्या पाखण्डशास्त्राश्रयात् अवमन्येतसः साधुभिर्बहिष्कार्यः वेदनिन्दकत्वात् ॥ ११ ॥

---

( ११ ) योऽवमन्येत तेमूले= योऽवमन्येत तेतूभे । ( अ, च, ज, झ, ट, ठ, ड, ढ, न, ब, भ, य, ल, मेधा० )

**वेदःस्मृतिःसदाचारःस्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधंप्राहुःसाक्षाद्धर्मस्य लक्षणम् ॥ १२ ॥**

( १ ) **मेधातिथिः** । यस्त्वेतमर्थमविदित्वा वेदशब्दस्य विवक्षितार्थत्वमेव मत्वा स्मृतिनिन्दकस्य न बहिष्कारोनेन-वेदनिन्दकस्यैव विहितइतिप्रतिपद्येत तंप्रत्याह नात्र कश्चिद्विशेषः वेदनिन्दाप्रतिषेधेन स्मृतिसदाचारात्मतुष्टीनामपि निन्दकस्य बहिष्कारोनेन विहितस्तेषामपि वेदमूलधर्माभिधानमतः स्मृत्यादिनिन्दकोवेदनिन्दकएव । ननु श्लोकद्वयेननार्थः। एवंवक्तव्यं । श्रुत्यादीनात्मतुष्यन्तान्हेतुशास्त्राश्रयाद्विजः । योनिन्देत्सबहिष्कार्यः साधुभिर्नास्तिकत्वतः । उच्यते । नाचार्याग्रन्थगौरवंमन्यन्ते । बुद्धिगौरवंयत्नेन परिहरन्ति तस्मिन्हिसत्यसम्यगवबोधोधर्मस्य सच पुरुषार्थविहन्ति । भेदनिर्देशेपि हि चोदयेयुर्वेदग्रहणमेवकर्तव्यं सर्वस्य धर्मस्य वैदिकत्वात् तस्माद्विस्पष्टार्थं भेदेनोभयनिर्देशः । संक्षिप्तरुचीनांपूर्वश्लोकोऽन्येषांश्लोकद्वयम्।स्वस्य चप्रियमात्मनइत्यनेन प्रागुक्ताऽऽत्मतुष्टिरेवोक्ता। स्वग्रहणंवृत्तपूरणार्थम्। एतत्साक्षाद्धर्मस्य लक्षणनिमित्तं ज्ञापकं न पुनः प्रत्यक्षम् यथा नैरुक्तंसाक्षात्कृतधर्माणइति। विधाशब्दःप्रकारवचनः । एकमेव धर्मेप्रमाणंवेदाख्यं तस्यत्वेते भेदाः स्मृत्यादयः । अन्ये रूपसंहारार्थमिमंश्लोकंव्याचक्षते । समाप्तंधर्मलक्षणप्रकरणमिति पुनः पाठः समाप्तिंसूचयति यथा द्विरभ्यासोवेदाङ्गेषुसंस्थाजपेनोपतिष्ठन्तउपतिष्ठन्तइति । तथा च पिण्डीकृतइव प्रागुक्तोऽर्थोत्रद्विवर्तते । यथा नैयायिकाअनित्यः शब्दइतिप्रतिज्ञाय साधनोपन्यासंकृत्वा निगमयन्ति तस्मादनित्यः शब्दइति । प्रायेण चैषा ग्रन्थकाराणांरीतिः । तथा महाभाष्यकारोऽपि क्वचित्सूत्रंवार्तिकंवा पठित्वा व्याख्याय पुनः पठति ॥१२ ॥

( २ ) **सर्वज्ञनारायणः** । वेदस्मृत्योरेवात्र पुनःपुनरभिधानात् शीलादीनांव्यवच्छेदोमाभूदितिप्रागुक्तानि मूलानि संक्षिप्य दर्शयति वेदइति । सदाचारपदंबहूनां साधूनामपि प्रतिपत्तिविषयतामात्रकृतानुष्ठानपरम्। तेन शीलग्रहः स्वस्य स्वीयस्यात्मनःमनसःप्रियंसाक्षात् साक्षादिव साक्षात्कारइवेत्यर्थः आचारादात्मप्रीतिरपि प्रमाणमेव धर्मे किंतु तयोः नात्यन्तंश्रुतिस्मृतिवन्निःशङ्कप्रवृत्तिहेतुतेति च तात्पर्यसंक्षेपः ॥ १२ ॥

( ३ ) **कुल्लूकः** । इदानींशीलस्याचारएवान्तर्भावसंभवाद्वेदमूलताएव तन्त्रं न स्मृतिशीलादिप्रकारनियमइति दर्शयितुंचतुर्धा धर्मप्रमाणमाह वेदइति । वेदोधर्मप्रमाणंसक्वचित्प्रत्यक्षःक्वचित्स्मृत्यानुमितःइत्येवंतात्पर्यं नतुप्रमाणपरिगणने ।अतएव श्रुतिस्मृत्युदितंधर्ममित्यत्र द्वयमेवाभिहितवान् । सदाचारः शिष्टाचारः । स्वस्य चात्मनः प्रियमात्मतुष्टिः ॥ १२ ॥

( ४ ) **राघवानन्दः** । वेदोखिलइत्यत्रोक्तमनुवदंस्तत्रान्येषांसंमतिमाह वेदइति । वेदइत्यत्र पाठक्रमःस्मृतेर्वेदोमूलमिति सूचनार्थः । स्मृतिपूर्वकत्वाद्यन्तरितआचारः । आचारेष्वनुष्ठानंप्रत्यक्षम् । कर्तव्यताधीस्तु स्मृतिमूलैव । लोभाद्यसत्त्वे स्वस्य वेदार्थानुष्ठातुःप्रियंरागाद्यनुपहितंतदपि धर्मे प्रमाणमित्यन्वयः । संमतिंद्योतयति प्राहुरिति । लक्षणंमानम् ॥ १२ ॥

( ५ ) **नन्दनः** । धर्मप्रमाणान्युपसंहरतिवेदइति । सदाचारशब्देनात्र शीलस्यापि परिग्रहः । लक्ष्यतेनेनेतिलक्षणंप्रमाणम् ॥ १२ ॥

( ६ ) **रामचन्द्रः** । वेदः वेदोक्तधर्मः स्मृतिः स्मृत्युक्तधर्मः सदाचारः सतामाचारः आत्मनः स्वस्य यत्प्रियंतद्यथा स्वकीयस्य बन्धोः आत्मनश्च प्रियंयत् । चकारः समुच्चये । आत्मनः प्रियं परदाराभिमर्शनंप्रियंभवेत्चेत्तन्नबन्धूनांतत्प्रियंन तस्मात्स्वस्यआत्मनः प्रियंएतच्चतुर्विधंधर्मप्राहुः ॥ १२ ॥

**अर्थकामेष्वसक्तानांधर्मज्ञानंविधीयते ॥ धर्मजिज्ञासमानानांप्रमाणंपरमंश्रुतिः॥ १३ ॥**

( १ ) **मेधातिथिः** । गोभूमिहिरण्यादिधनमर्थः । तत्रसक्ति स्तात्पर्येण तदर्जनरक्षणार्थंकृषिसेवादिव्यापारकरणम् । कामः स्त्रीसंभोगः तत्रसक्तिर्नित्यंतदासेवनं तदङ्गानांचगीतवादित्रादीनाम् । तद्वर्जितानांपुरुषाणांधर्मज्ञानंधर्मावबोधोविधीयते विशेषेणधोयते व्यवस्थितंभवति । धाआधारइत्यस्यैतद्रूपम् । किमर्थंपुनस्तत्र सक्तानांनभवति धर्मज्ञानंयावता तेपि यथा लक्षणंतदविरोधिन्यवसरे भोजनादावितिहासश्रवणादन्योपदेशात्समाचाराद्वा शक्नुवन्तिज्ञातुमित्यतआह धर्मजिज्ञासमानानामिति । मुख्यंप्रमाणं धर्मेवेदः सचतैर्नशक्योज्ञातुम् । अत्यन्त दुर्विज्ञानोह्यसौ निगमनिरुक्तव्याकरणतर्कपुराणमीमांसाशास्त्रश्रवणमपेक्षते स्वार्थबोधे । न चेयान्ग्रन्थराशिः सर्वव्यापारपरित्यागेन विनाशक्यआसादयितुम् । समाचारेतिहासादेः कतिपयेधर्माअवगम्यन्ते । न वेदादिवत्समस्ताङ्गयुक्तोज्योतिष्टोमादिप्रयोगः । अतउक्तंप्रमाणंपरमंश्रुतिः । नतुसमाचारादेःप्रामाण्यापकर्षः तदुक्तं योऽहेरिव धनाद्भीतोमिष्टान्नाच्च विषादिव । राक्षसीभ्यइव स्त्रीभ्यःस विद्यामधिगच्छति । अपरेत्वर्थकामदृष्टफलैषिणउच्यन्ते । तत्र सक्तानांपूजाख्यात्यादिकामानांदृष्टफलार्थितया लोकपक्तिमात्र प्रयोजनानांन धर्मज्ञानंधर्मानुष्ठानंविधीयत उपदिश्यते। ज्ञायतेऽस्मिन्निति ज्ञानमनुष्ठानमित्युच्यते।अनुष्ठीयमानोहि धर्मोव्यक्ततरीभवति शास्त्रावगमकातरोऽपिअतोऽनुष्ठानंधर्मज्ञानमुच्यते । अतएतदुक्तंभवति । यद्यपि धर्मानुष्ठानाल्लोकऽपक्त्यादि दृष्टंप्रयोजनमुपलक्ष्यते तथापि न तत्सिद्धिपरतया तत्रप्रवर्तितव्यम् । किंतर्हि शास्त्रेण तच्चोदितमिति कृत्वा तथा च प्रवृत्तौ यदि दृष्टमपिभवति भवतु न विचार्यते । तथा च श्रुतिः स्वाध्यायस्य दृष्टंफलमनुवदति यशोलोकपक्तिरिति । लोकः पच्यमानश्चतुर्भिरेनंभुनक्ति । अर्चयादानेनाजेयतया चावध्यतयेत्यादि । श्लोकश्चात्र भवति यथेक्षुहेतोरिह सेचितंपयस्तृणानिवल्लीरपि च प्रसिञ्चति । तथा नरोधर्मपथेन संचरन्यशश्चकामांश्च वसूनि चाश्नुते । ननु च यस्ययः स्वभावोऽवगतः सोऽन्योद्देशेनाप्यनुष्ठीयमानो न स्वभावाच्च्यवते करोत्येव तत्कार्यम् यथा विषमौषधोद्देशेनापि पीतंहन्त्येव । अतोदृष्टार्थतयाप्यनुष्ठीयमानानि कर्माणि शास्त्रीयाण्यदृष्टार्थान्यपि भविष्यन्ति । कोभवतोमत्सरोलोकावर्जनहेतुतया न प्रवर्तितव्यमिति येनात्थअतआहधर्मजिज्ञासमानानां वेदो धर्मे प्रमाणम् । तेन चैतदुक्तं दृष्टफलकामार्थानांनादृष्टंभवति । न केवलमदृष्टंनभवति । यावत्प्रतिषिद्धसेवनादधर्मोऽपि भवति ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । तत्रापि श्रुतेः प्राधान्यमाह अर्थेति । धर्मविरोधिनोरर्थकामयोः प्रबन्धेन प्रवृत्तिःसङ्गस्तद्रहितानामेव धर्मज्ञानंविधेयम् । तदीयस्यैव धर्मज्ञानस्य प्रवृत्तिपर्यन्तत्वात्तेषांच परमंप्रमाणं श्रुतिरेव । अतः श्रुतिरेकवाक्यतयैव स्मृतेरप्यादरणीयतेत्यर्थः ॥ १३ ॥

( ३ ) **कुल्लूकः** । अर्थकामेष्विति । अर्थकामेष्वसक्तानामर्थकामलिप्साशून्यानांधर्मोपदेशोऽयम् । येऽत्वर्थकामसमीहयालोकप्रतिपत्त्यर्थंधर्ममनुतिष्ठन्ति न तेषांकर्मफलमित्यर्थः । धर्मंच ज्ञातुमिच्छतांप्रकृष्टंप्रमाणंश्रुतिः । प्रकर्षबोधनेन च श्रुतिस्मृतिविरोधे स्मृत्यर्थोनादरणीयइति भावः । अतएव जाबालः श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यंस्मार्तंवैदिकवत्सता ॥ भविष्यपुराणेऽप्युक्तम् श्रुत्यासह विरोधे तु बाध्यते विषयंविना । जैमिनिरप्याह विरोधे त्वनपेक्षंस्यादसतिह्यनुमानकम् । श्रुतिविरोधे स्मृतिवाक्यमनपेक्ष्यमप्रमाणमनादरणीयमसति विरोधे मूलवेदानुमानमित्यर्थः ॥ १३ ॥

( ४ ) **राघवानन्दः** । संप्रतिअधिकारिणंविशिनष्टि अर्थकामेष्विति । असक्तानांअलोलुपानांतद्यग्राणां धर्मेअनाश्वासात्धर्मज्ञानंधर्मानुष्ठानंविधीयते कर्तव्यतयाउपदिश्यते । परमंप्रमाणं परंतत्त्वम् ॥ १३ ॥

( ५ ) **नन्दनः** । यथा धर्मस्य श्रुत्यादीनध्यवसायमूलंतथार्थकामेष्वनतिसक्तिरपीत्यभिप्रायेणाहअर्थेति । प्रमाणेषु बलाबलजिज्ञासायामुक्तमुत्तरार्धम् । श्रौतस्मार्तसंनिपाते श्रौतंप्रमाणंबलीयइत्यर्थः ॥ १३ ॥

**श्रुतिद्वैधंतु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ॥ उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः॥१४॥**

( १ ) **मेधातिथिः** । प्रागुक्तोव्याघातः परिन्हियते । यत्र श्रुत्योर्द्वैधंविरुद्धाभिधानंयंधर्मोऽयमिति काचिच्छ्रुतिराह तमेवाधर्ममित्यन्या तत्र उभावपि तौ धर्मावनुष्ठेयौ विकल्पेन । तुल्यबले हि ते श्रुती । तत्रेयंप्रमाणमियंनेत्यशक्योविवेकः । अतएकार्थतुल्यबलविरोधे विकल्पइत्युभावपि तौ धर्मावित्युक्तम् । तत्र समुच्चयः प्राप्नोति । एवमुभौ धर्मौ भवतोऽन्यथा एकः स्यात् । नेति ब्रूमः । पर्यायेणापि प्रयोगेनोभयशब्दस्य प्रवृत्तिविरोधः न ह्ययंसापेक्ष्यद्वयविषयएव । न्याय्यश्च विकल्पः । यथाऽग्निहोत्राख्यमेकंकर्म तस्य कालत्रयमुपदिष्टंतत्र कर्मप्रधानंकालोगुणः नचैकस्मिन्प्रयोगे कालत्रयसंभवः नच कालानुरोधेन प्रयोगावृत्तिर्युक्ता नाङ्गानुरोधेन प्रधानमावर्तनीयम् तस्मान्न्याय्योऽयंतुल्यबलविरोधे विकल्पइति न वचनादुभावपि हि तौ धर्मौ । ननु च कोभेदस्तत्र धर्मावित्यस्मादेतस्य न कश्चित् । पूर्वेण स्वमतमुपन्यस्तमुत्तरेणान्यैरपि मनीषिभिरेतदेवोक्तमिति स्वमतमाचार्यान्तरमतसंवादेन द्रढयति ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । श्रुतिद्वैधमिति । द्वैधंविरुद्धार्थद्वयदर्शकत्वं तस्मिन्नव्यवस्था उभौ धर्मौ तत्तच्छाखीयपरतया विकल्पेनवा । सम्यगित्यव्ययम् । समीचीनौ मनीषिभिरुक्तौ यतइत्यर्थः ॥ १४ ॥

( ३ ) **कुल्लूकः** । श्रुतिद्वैधंत्विति । यत्र पुनः श्रुत्योरेव द्वैधंपरस्परविरुद्धार्थप्रतिपादनंतत्र द्वावपि धर्मौ मनुना स्मृतौ तुल्यबलतया विकल्पानुष्ठानविधानेन च विरोधाभावः । यस्मान्मन्वादिभ्यःपूर्वतरैरपि विद्वद्भिःसम्यक्समीचीनौ द्वावपि तौ धर्मावुक्तौ समानन्यायतया स्मृत्योरपि विरोधे विकल्पइति प्रकृतोपयोगस्तुल्यबलत्वाविशेषात् । तदाह गौतमः तुल्यबलविरोधेविकल्पः ॥ १४ ॥

( ४ ) **राघवानन्दः** । प्रातःप्रातरनृतंते वदति पुरोदयाज्जुव्हति येग्निहोत्रंतथाअतिथये प्रद्रुताय बलिंहरन्ति यदुदिते जुहोतीत्यर्थवादोपेतोदिते जुहोतीत्यनुदिते जुहोतीत्यादिश्रुतिमाश्रित्याह श्रुतिद्वैधमिति । द्वाभ्याम् ॥ १४ ॥

( ६ ) **रामचन्द्रः** । यत्र यस्मिन्कार्ये श्रुतिद्वैधंभवेत्तत्र तस्मिन्कार्येउभौ धर्मौ स्मृतौ उभावपि तौ धर्मौ महर्षिभिः सम्यगुक्तौ ॥ १४ ॥

**उदितेऽनुदिते चैव समयाध्युषिते तथा ॥ सर्वथा वर्तते यज्ञइतीयंवैदिकी श्रुतिः॥ १५॥**

**[ श्रुतिंपश्यन्तिमुनयःस्मरन्तितुयथास्मृति॥ तस्मात्प्रमाणंमुनयः प्रमाणंप्रथितंभुवि॥ १॥**

**धर्मव्यतिक्रमोदृष्टःश्रेष्ठानांसाहसंतथा ॥ तदन्वीक्ष्यप्रयुञ्जानाःसीदन्त्यपरधर्मजाः॥ २॥† ]**

( १ ) **मेधातिथिः** । उदाहरणमिदमनन्तरप्रदर्शिते विरोधे । यएते त्रयः कालाइतरेतरनिन्दया होमस्य विहिताः तत्रायमर्थः श्रुतिवाक्यानाम् । सर्वथावर्ततेयज्ञः सर्वप्रकारोहोमः प्रवर्तते प्रवर्तनीयइत्यर्थः । या उदितहोमनिन्दा सा

---

† ( क, ग, ट )

न तत्प्रतिषेधार्था किंतर्ह्यनुदितहोमविध्यर्था । एवमितरत्रापि । तेनायमर्थउक्तोभवति सर्वथा कर्तव्यएतेषांकालानामन्यतमस्मिन्काले तत्रयस्मिन्कुतस्तत्र संपूर्णःशास्त्रार्थोभवतीतीयवैदिकी श्रुतिरेवंपरा अस्मिन्नर्थेऽस्यास्तात्पर्येन पुनर्निन्द्यमानप्रतिषेधे । यज्ञोहोमोग्निहोत्राख्योऽभिमेतोयागहोमयोर्यतोनात्यन्तंभेदः । देवतामुद्दिश्य द्रव्यस्य स्वत्वत्यागोनेदंमम देवतायाइदमिति यागः । एतच्चस्वरूपंहोमेऽप्यस्ति । अयंतु विशेषोयष्टव्यस्य होमे प्रक्षेपोऽधिकआरोपण विशेषोऽग्न्यादावतोयज्ञशब्देनात्र होमस्याभिधानम् । होमेह्येतेकालाःश्रुतावाम्नातान यागमात्रे । उदितादिशब्दैश्चोदिते होतव्यमित्यादिका श्रुतिरेकदेशेन लक्ष्यते । येयमुदिते होतव्यंनोदितेहोतव्यमिति श्रुतिः सैवंपरेत्येवंयोजना । समयाध्युषितशब्देन समुदायेनैवौषसः कालउच्यते । अन्येतु पदद्वयमेतदित्याहुः । समयाशब्दः समीपवचनः समीपिनमपेक्षते । उदितानुदितयो । सन्निधानात्तत्र समीपंसंध्याकालः । अध्युषितंरात्रेर्विवासकालोव्युष्टायां रात्रावित्यर्थः । कासु चिच्छ्रुतिष्वेवंपठितंकासुचिदेवमिति श्रुतिवाक्यानुकरणमेषा स्मृतिस्तत्रकिंपदद्वयमे तदुतैकमिति ततएवनिर्णयः । अतोविकल्पेनैकंहोमाख्यंकर्मप्रतिकालत्रयेऽपि श्रुति विधानान्नास्तिविरोधः । सिद्धरूपे हि वस्तुनीतरेतरविरुद्धरूपसमावेशासंभवस्तस्माद्विरोधोन साध्ये साध्यंह्यनेनापि सिध्यत्यनेनापीति एवमवगम्यते । तत्र कुतोविरोधः । एषएवच स्मृतीनांविरुद्धानांविकल्पोन्याय्यः ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । विरोधमुदाहरति उदितइति । समयाध्युषिते उदयसमीपे यज्ञोग्निहोत्रहोमः वैदिकी वेदरूपाश्रुतिःशब्दः एतत्श्रुतिविरोधेउक्तं स्मृत्योरप्यन्योन्यविरोधेद्रष्टव्यम् ॥ १५ ॥

( ३ ) **कुल्लूकः** । अत्र दृष्टान्तमाह उदितेऽनुदितेचैवेति । सूर्यनक्षत्रवर्जितःकालःसमयाध्युषितशब्देनउच्यते । उदयात्पूर्वमरुणकिरणवान्प्रविरलतारकोऽनुदितकालः परस्परविरुद्धकालश्रवणेऽपि सर्वथा विकल्पेनाग्निहोत्रहोमःप्रवर्तते । देवतोद्देशेन द्रव्यत्यागगुणयोगाद्यज्ञशब्दोऽत्र गौणः । उदितेहोतव्यमित्यादिका वैदिकी श्रुतिः ॥ १५ ॥

( ४ ) **राघवानन्दः** । समयाध्युषिते सूर्यनक्षत्ररहिते काले अत्र व्यवस्थित विकल्पोऽधिकारी भेदेन सर्वथा त्रिष्वपि पक्षेषु होमस्य । नित्यत्वसिद्धिरित्यर्थः । वर्तते कर्तव्यतया ॥ १५ ॥

( ५ ) **नन्दनः** । अत्रोदाहरणमाह उदितइति । समयाध्युषितेउदितानुदितइत्यर्थः । सूर्यइतिशेषः । अतएव स्मृत्यादिद्वैधेऽपि न्यायोऽवगन्तव्यः ॥ १५ ॥

( ६ ) **रामचन्द्रः** । श्रुतिद्वैधेदृष्टान्तमाह । उदिते जुहुयातअनुदितेजुहुयात्तथा समयाध्युषितेउदितसमये जुहुयात् यज्ञः सर्वथावर्ततइतीयं वैदिकी श्रुतिः । कात्यायनः रात्र्यास्तु षोडशेभागे ग्रहनक्षत्रभूषिते । कालंचानुदितंज्ञात्वा होमंकुर्याद्विचक्षणः ॥ तथाचमातः समये नष्टे नक्षत्रमण्डले । रविर्यावन्नदृश्येतसमयाध्युषितंचतत् ॥ रेखामात्रंच दृश्येत रश्मिभिश्च समन्वितः । उदितंतंविजानीयात्तत्र होमंप्रकल्पयेत् ॥ बौधायनापस्तम्बाश्वलायनप्रभृतिभिरुदितेउदयानन्तरंहोमःकार्यः । मध्यंदिनवाजसनेयिभिरनुदितेउदयात्पूर्वंहोमःकार्यइत्युक्तम् ॥ १५ ॥

## निषेकादिश्मशानान्तोमन्त्रैर्यस्योदितोविधिः॥तस्य शास्त्रेऽधिकारोस्मिञ्ज्ञेयोनान्यस्य कस्यचित् ॥ १६ ॥

( १ ) **मेधातिथिः** । विदुषा ब्राह्मणेनेदमध्येतव्यमिति पठन्ति सचार्थवादः । तत्र तव्यप्रत्ययदर्शनात्कस्यचिद्विधिभ्रान्तिः स्यात्तथा च सति क्षत्रियवैश्ययोरध्ययनंनिवर्ततइत्येतदाशङ्कानिवृत्यर्थोऽयंश्लोकः क्षत्रियवैश्ययोः प्राप्तिंदर्शयति । तथा यथा कामी शूद्रोऽप्यप्रतिषेधादध्येतुंप्रवर्तेत तन्निवृत्यर्थमपीत्येवमिमंश्लोकंपूर्वे व्याचचक्षिरे । शास्त्रशब्दो-

यंमानवग्रन्थवचनः अधिकारोमयैतदनुष्ठेयमित्यवगमः । नच शब्दराशेःसिद्धस्वभावस्यानुष्ठेयत्वावगतिः संभवति । नहि-द्रव्यमनाश्रित्य क्रियाविशेषंसाध्यतयावगम्यते । अतः शास्त्रविषयायांकस्यांचिक्रियायामधिकारइत्यवगम्यते । तत्र-कृभ्वस्तयस्तावन्नविषयतया प्रतीयन्ते । भ्वसोरभवत्यर्थत्वात् । भ्वस्तिसंबन्धे ह्ययमर्थः प्रतीयते शास्त्रस्य यद्भवनंया चसत्ता तामनुतिष्ठेदिति । नचान्यदीयायांसत्तायामन्यस्यानुष्ठातृत्वसंभवः । करोत्यर्थेऽपि न संभवति पदानांनित्यत्वाद्वा-क्यानांचान्येन कृतत्वात् । अतः शास्त्रसहचारिण्यध्ययनक्रिया प्रतीयते । अतोऽयमर्थउक्तोभवति । शास्त्राध्ययने तस्या-धिकारः यथैवाध्ययने तथैव तदर्थश्रवणेऽपि । नचादिमत्वान्मानवस्य ग्रन्थस्य कथंतद्विषयोविधिरनादिवेदमूलइति शक्यते वक्तुम् । उच्यते । यानि कानि च शास्त्रप्रतिपादकानि वाक्यानि न तानि शूद्रेणाध्येयानीति शक्यते । सामान्यतो-ऽनुमानंयानि वेदवाक्यानि यानि तदर्थव्याख्यानवाक्यानि व्याख्यातॄणांतत्प्रतिरूपकाणि तान्यपि प्रवाहनित्यतया-नित्यान्येव। अनुष्ठानंतु शास्त्रविषयः तत्र चातुर्वर्णस्याधिकारः । नन्वेवंसत्यनुपात्तकर्तृविशेषेषु सामान्यधर्मेषु शूद्रस्या-धिकारप्रसङ्गः । यथा च न भवति तथा च तत्र तत्र कथयिष्यामः । ननु कथमध्ययनावबोधाधिकारनिषेधे कर्मा-धिकारः नह्यविदितकर्मरूपस्य तदनुष्ठानसंभवः नचाध्ययनमन्तरेण तदर्थावबोधसंभवः नचावेद्योऽधिक्रियते । सत्यम् । परोपदेशादपि यावत्तावत्सिध्यति परिज्ञानंयंब्राह्मणमाश्रितः शूद्रोयोवार्थतः प्रवृत्तः सएवंशिक्षयिष्यतीदंकुत्वे दंकुर्विति । अतोनकर्मानुष्ठानप्रयुक्ते शूद्रस्याध्ययनवेदने स्त्रीवत्परप्रत्ययादप्यनुष्ठानसिद्धेः यथा स्त्रीणांभर्तृविद्यैव प्रसङ्गादुपकरोति । न कर्मश्रुतयोविद्यांप्रयुञ्जतेतेषामेव स्वप्रत्ययोऽनुष्ठानहेतुर्येषांस्वाध्यायोऽध्येतव्यइति विधिरस्ति पुंसां सच पुंसांत्रैवर्णिका-नांतेषामपि नार्थज्ञानप्रयुक्तेऽध्ययनवेदनेअपितु विधिद्वयप्रयुक्ते आचार्यकरणविधिना स्वाध्यायाध्ययनंविधिना च । निषे-कोगर्भाधानंसआदिर्यस्य संस्कारकलापस्य सनिषेकादिः गर्भाधानंच विवाहादनन्तरंप्रथमोपगमे विष्णुर्योनिंकल्पयत्विति मन्त्रवत्केषांचि द्विहितं परेषामागर्भग्रहणात्प्रत्यृतु । श्मशानमन्तोऽस्येतिश्मशानान्तः । श्मशानशब्देन मृतशरीराणि यत्र-निधीयन्तेतत्स्थानमुच्यते । तच्च साहचर्यात्प्रेतसंस्कारंपराचीमिष्टिंलक्षयति साहिमन्त्रवती न स्थानम् । अनेन च द्वि-जातयोलक्ष्यन्ते । तेषांहिमन्त्रवन्तःसंस्काराःद्विजातीनामितिनोक्तम् । विचित्राश्लोकानांकृतिः स्वायंभुवस्यास्य मनोः । मन्त्रैरुदितउक्तोविधिरितिनायंसंबन्धः । नहिमन्त्राविधिंवदन्तिकिंतर्हिप्रयोगावस्थस्य विधेयस्य स्मारकानविधायकाः । तस्मादेवंव्याख्येयंमन्त्रैर्युक्तः समन्त्रकोयेषामयंविधिरिति नान्यस्य कस्य चिदित्यनुवादोद्विजातीनांनियतत्वात् । अथवाक-श्चिन्मन्येत द्विजातीनामयंविहितोऽवश्यकर्तव्यः । शूद्राणांत्वविशिष्टोप्रतिषिद्धइति तदा शङ्कानिवृत्त्यर्थमिदमुक्तम् ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । निषेकोरेतः । सेकःगर्भाधानम् । श्मशानमन्त्येष्टिः । अधिकारोध्ययनेनान्यस्य शूद्रस्य संकरस्यवा ॥ १६ ॥

( ३ ) **कुल्लूकः** । निषेकादीति । गर्भाधानादिरन्त्येष्टिपर्यन्तोयस्यवर्णस्य मन्त्रैरनुष्ठानकलापउक्तोद्विजातेरित्यर्थः तस्यास्मिन्मानवधर्मशास्त्रे ऽध्ययने श्रवणे ऽधिकारोन त्वन्यस्य कस्य चिच्छूद्रादेः । एतच्छास्त्रानुष्ठानंचयथाधिकारं सर्वैरेवकर्तव्यम् । प्रवचनंत्वस्याध्यापनंव्याख्यानरूपंब्राह्मणकर्तृकमेवेति विदुषा ब्राह्मणेनेत्यत्रव्याख्यातम् ॥ १६ ॥

( ४ ) **राघवानन्दः** । विदुषा ब्राह्मणेनेदमध्येतव्यमित्युक्तंतत्र पतितस्य ब्रह्मबन्धोः प्रकारान्तरेण संपादितवि-द्यस्य नास्त्यधिकारइत्यभ्यासे नद्रढयन्नाह निषेकादिरिति । यस्य मन्त्रैःसाक्षाद्विधिरनुष्ठेयत्वेनोदितःतस्यैवात्राधिकारः । तेन क्षत्रियवैश्ययोः श्रवणाधिकारिता । अत्र अपर्युदस्ततया त्रैवर्णिकोनिषेकादियोग्योविवक्षितःअन्येषांश्मशानान्तत्त्वाद्य-भावात् । निषेकोगर्भाधानम् । श्मशानान्तोदाहकालीनान्त्येष्टिः । अस्मिन्शास्त्रे सर्वेषांहितशासनात् ॥ १६ ॥

( ५ ) **नन्दनः** । धर्मप्रमाणयोः श्रुतिस्मृत्योरध्ययनाधिकारिणमाहनिषेकेति । मन्त्रैः सहितोविधिः क्रियाकलापः । तस्य त्रैवर्णिकस्य अस्मिन्प्रकृतेशास्त्रे श्रुतिस्मृत्याख्येअधिकारः अध्ययनाधिकारः । अन्यस्यशूद्रस्य ॥ १६ ॥

( ६ ) **रामचन्द्रः** । यस्य पुंसःमन्त्रैर्निषेकादिर्गर्भाधानादिश्मशानान्तःविधिःतस्य पुंसःअस्मिन्शास्त्रे अधिकारोभवेत् कस्य चिदन्यस्य नाधिकारः ॥ १६ ॥

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥ तंदेवनिर्मितंदेशंब्रह्मावर्त्तंप्रचक्षते ॥ १७ ॥**

( १ ) **मेधातिथिः** । उक्तानि धर्मे प्रमाणानि विरोधे च विकल्पोऽभिहितोऽधिकारिणश्च सामान्येनोक्ताः । इदानींयेषु योग्यतया धर्मोऽनुष्ठेयतामापद्यते तेदेशावर्ण्यन्ते । सरस्वतीनाम नदीअपरा दृषद्वती तयोर्नद्योर्यदन्तरंमध्यंतंदेशंब्रह्मावर्तइत्यनया संज्ञया प्रचक्षते व्यवहरन्तिशिष्टाः । देवग्रहणमवध्यवधिमतोः स्तुत्यर्थंदेवैः सनिर्मितोऽतः सर्वेभ्योदेशेभ्यः पावनतरइति ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । उक्तंशिष्टाचारं व्यवस्थापयितुं शिष्टस्य निमित्तान्निवासदेशविशेषानाह सरस्वतीति । दनद्योर्देवैरपि सेव्ययोर्नद्योः देवनिर्मितं देवैरुत्तमदेशतया विहितम् । ब्रह्मावर्ततेऽनुवर्तते यत्र स ब्रह्मावर्तः ॥ १७ ॥

( ३ ) **कुल्लूकः** । सरस्वतीति । धर्मस्य स्वरूपंप्रमाणंपरिभाषांचोक्त्वेदानींधर्मानुष्ठानयोग्यदेशानाह । सरस्वतीदृषद्वत्योर्नद्योरुभयोर्मध्यंब्रह्मावर्तंदेशमाहुः । देवनदीदेवनिर्मितशब्दौ नदीदेशप्राशस्त्यार्थौ ॥ १७ ॥

( ४ ) **राघवानन्दः** । आचारश्चइत्युक्तंतत्र किंदेशीयःसआचारःकिंप्रमाणकःकस्माद्गुरोःशिक्षणीयइत्यपेक्षांपूरयंस्तेषांवसतिनियममाह सरस्वतीति सप्तभिः । देवनिर्मितंदेवैर्निर्मितंदेवोदेवता तदुद्देश्यकयज्ञादि तदर्थंनिर्मितंदेवैरधिष्ठितं वा ब्रह्मावर्तमित्यपूर्वसंज्ञा ॥ १७ ॥

( ५ ) **नन्दनः** । पूर्वंसतामाचारः प्रमाणमित्युक्तंसपुनः कुत्रत्यानामित्यपेक्षायांवक्तुमारभतेसरस्वतीति । अत्रदेवसंबन्धवचनंप्रशंसार्थम् । ब्रह्म धर्मः आवृत्तमागतंमहर्षीणामत्र प्रतिभातमिति ब्रह्मावर्तः ॥ १७ ॥

( ६ ) **रामचन्द्रः** । पुण्यदेशानाह । सरस्वतीदृषद्वत्योर्यदन्तरंदेवनद्योःगङ्गायमुनयोःअन्तरंदेशंदेवनिर्मितंब्रह्मावर्तसंज्ञंप्रचक्षते ॥ १७ ॥

**तस्मिन्देशे यआचारःपारम्पर्यक्रमागतः ॥ वर्णानांसान्तरालानांससदाचारउच्यते ॥ १८ ॥**

**[ विरूद्धाच विगीताच दृष्टार्थादिष्टकारणे ॥ स्मृतिर्नश्रुति मूलास्याद्याचैषासंभवश्रुतिः॥१॥ ऽऽ]**

( १ ) **मेधातिथिः** । अथास्मिन्देशे यआचारस्तस्य प्रामाण्ये किंविद्वत्ता शिष्टता चोपाधिरङ्गीक्रियतेअथाविदुषामशिष्टानांच देशोपाधिरेव प्रमाणम् । किंचातः यदि नापेक्ष्यते यत्तदुक्तं आचारश्चैव साधूनामिति विशेषणद्वयमनर्थकम् । नत्वसाध्वाचारस्य धर्ममूलतोपपद्यतेवेदसंयोगासंभवात् । अथापेक्ष्यते देशविशेषसंबन्धानुपकारोनहि देशान्तरेऽपिशिष्टसमाचारस्याप्रामाण्यंशक्यते वक्तुम् । उच्यते। प्रायिकमेतदभिधानंप्रायोवृत्त्यास्मिन्देशे शिष्टानांसंभवइत्युक्तंतस्मिन्देशे यआचारः ससदाचारइति । अन्ये तु देशान्तरे मातुलदुहितुः परिणयनादेशाचारनिषेधार्थमिदमित्याहुः स्तदयुक्तम् । अविशेषेणैवोक्तदेशकुलजातीनामविरुद्धंप्रकल्पयेत् सच विरुद्ध ऊर्ध्वंसप्तमामितृबन्धुभ्योमातृबन्धुभ्यश्च पञ्चमादित्येतेनास्मिन्नपि देशेऽनुपनीतेन सहभोजनादिराचारोनैव धर्मत्वेनेष्यते । नच स्मृतिविरुद्धस्याचारस्य प्रामाण्यसंभवः । श्रुति-

---

ऽऽ मेधा० ।

विप्रकर्षादाचारात्स्मृतिरनुमातव्या स्मृतेः श्रुतिः स्मृतिस्त्वव्यवहितामेव श्रुतिमनुमापयति । किंचकारणयहाचैवमादिराचारस्य रूपवतींमातुलकन्यांकामयमानांराजभयाद्रूढवन्तः कन्यागमनंदण्डोमाभूदिति । अन्येत्वविद्वांसोयेनास्य पितरोयाताइत्यस्य यथा श्रुतमर्थंगृहीत्वा धर्मोयमितिप्रतिपन्नाः । अपिच । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेतेति प्रायश्चित्तंश्रुतमपि भ्रान्तिहेतुराभ्यस्तिसृभ्योऽन्यानप्रतिषिद्धाइति । यथाचास्य नायमर्थस्तथा वक्ष्यामः । नच दृष्टकारणयोः स्मृत्याचारयोः प्रामाण्यम् । उक्तंचभट्टपादैः विरुद्धाचविगीताच दृष्टार्थादिष्टकारणे । स्मृतिर्नश्रुतिमूलास्याद्याचैषासंभवश्रुतिः ॥ तस्मादेतान्द्विजातयोदेशान्संश्रयेरन्नित्येतद्विधिशेषादेशप्रशंसार्थवादाएते परंपरैव पारंपर्यमन्यस्मादन्यमुपसंक्रामति । तस्मादन्यंततोऽप्यन्यमित्येवंरूपः प्रवाहः परंपराक्रमः तदविच्छेदस्ततआगतः संप्राप्तः संकीर्णयोनयोऽन्तरालाः तत्सहितानांवर्णानाम् ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । आचार आचर्यमाणोधर्मः पारंपर्यपित्रादिपरंपराक्रमेणागतोन त्वधुनातनेन केनचिदनुष्ठितः । अन्तरालाः संकरजाताः । सदाचारः सद्भिराचीर्णोधर्मइत्युच्यते ॥ १८ ॥

( ३ ) **कुल्लूकः** । तस्मिन्देशइति । तस्मिन्देशे प्रायेणशिष्टानांसभवात्तेषांब्राह्मणादिवर्णानांसंकीर्णजातिपर्यन्तानांयआचारःपारम्पर्यक्रमागतोनत्विदानींतनःससदाचारोऽभिधीयते ॥ १८ ॥

( ४ ) **राघवानन्दः** । तस्मिन्पारंपर्यक्रमप्रमाणआचारःसान्तरालानांअन्तरालःसंकरजातिः तत्सहितानांआन्तरोऽव्यवहितः किंचिन्न्यूनोवा ॥१८ ॥

( ५ ) **नन्दनः** । सान्तरालानांवर्णसंकरजसहितानांससदाचारः । तस्यधर्मंप्रतिप्रामाण्यमित्यर्थः ॥ १८ ॥

( ६ ) **रामचन्द्रः** । तस्मिन्ब्रह्मावर्तैकदेशे पारंपर्यक्रमागतःयःआचारःसआचारःवर्णानांब्राह्मणादीनांतथाचान्तरालानांवर्णद्वयजातानांअनुलोमप्रतिलोमजातीनांसःसदाचारःईषदुच्यते ॥ १८ ॥

**कुरुक्षेत्रंच मत्स्याश्च पञ्चालाः शूरसेनकाः ॥ एषब्रह्मर्षिदेशोवै ब्रह्मावर्तादनन्तरः ॥ ॥ १९ ॥**

( १ ) **मेधातिथिः** । देशनामधेयान्येतानि कुरुक्षेत्रेसमन्ततंपञ्चकंप्रसिद्धंकुरवस्तत्रक्षयंगताःकुरुत वा सुकृतंक्षिप्रमत्रत्राणंभवतीति व्युत्पत्तिः मत्स्यादयः शब्दाबहुवचनान्ताएव देशवचनाः । ब्रह्मर्षिदेशइति समुदायसंज्ञा । देवनिर्मितोदेशोब्रह्मावर्तः देवेभ्यः किंचिन्न्यूनाब्रह्मर्षयइत्यतोऽयंदेशोब्रह्मर्षिसंबन्धाद्ब्रह्मावर्तान्न्यूनः । तथाचाहब्रह्मावर्तादन्तरईषद्भिन्नः तत्रेषदर्थोयथानुष्णांयवागूंपिबेदामयावीतीषदुष्णामुपदिशन्ति । अनन्तरशब्दोवभेदवचनः । नारीपुरुषतोयानमन्तरंमहदन्तरमितियथा ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । सूरसेनकाःसूरसेनाख्यनृपतिना निवासत्वेननिर्मिता नामसुरोपलक्षितदेशाः अनन्तरोनिर्विशेषः ॥ १९ ॥

( ३ ) **कुल्लूकः** । कुरुक्षेत्रमिति । मत्स्यादिशब्दाबहुवचनान्ताएव देशविशेषवाचकाः पञ्चालाःकान्यकुब्जदेशाः शूरसेनकामथुरादेशाः । एषब्रह्मर्षिदेशोब्रह्मावर्तात्किंचिदूनः ॥ १९ ॥

( ४ ) **राघवानन्दः** । ब्रह्मर्षिदेशइत्यपि समाख्या ॥ १९ ॥

( ५ ) **नन्दनः** । अत्रापि ब्रह्मर्षिसंबन्धवचनंप्रशंसार्थम् । अनन्तरःकिंचिन्न्यूनः ॥ १९ ॥

---

( १९ ) शूरसेनका=रसशूनजाः ( क, ख, च, )

( ६ ) **रामचन्द्रः** । ब्रह्मवर्तादनन्तरःइषन्न्यूनइत्यर्थः । कुरुक्षेत्रेति । एषःब्रह्मर्षिदेशःकुरुक्षेत्रादिदेशाःमहर्षिणांवासयोग्याभवन्तीत्यर्थः ॥ १९ ॥

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥ स्वंस्वंचरित्रंशिक्षेरन्पृथिव्यांसर्वमानवाः ॥ २० ॥**

( १ ) **मेधातिथिः** । एतेषु देशेषु कुरुक्षेत्रादिषु प्रसूतस्याग्रजन्मनोब्राह्मणस्य सकाशात्स्वंस्वंचरित्रमाचारंशिक्षेरञ्जिज्ञासेरन् । तस्मिन्देशइत्यनेनैतद्व्याख्यातम् ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । एतत्पदेन ब्रह्मावर्तस्यापि ग्रहणं चरित्रं चरणीयम् ॥ २० ॥

( ३ ) **कुल्लूकः** । एतद्देशइति । कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात्सर्वमनुष्याआत्मीयमात्मीयमाचारंशिक्षेरन् ॥ २० ॥

( ४ ) **राघवानन्दः** । अग्रजन्मनःब्राह्मणात्चरित्रंचरणमनुष्ठानंधर्मस्य येन तच्चरित्रंधर्मोपदेशमिति यावत् आचारं वा ॥ २० ॥

( ५ ) **नन्दनः** । अग्रजन्मनः ब्राह्मणस्य शिक्षन्तेअवगच्छन्ति ॥ २० ॥

( ६ ) **रामचन्द्रः** । एतद्देशप्रसूतस्य महर्षिदेशप्रसूतस्य अग्रजन्मनःसकाशात्पृथिव्यांसर्वमानवाःस्वंस्वंचरित्रमाचारं शिक्षेरनशिक्षयेयुः ॥ २० ॥

**हिमवद्विन्ध्ययोर्मध्यंयत्प्राग्विनशनादपि ॥ प्रत्यगेव प्रयागाच्च मध्यदेशःप्रकीर्तितः ॥ २१ ॥**

( १ ) **मेधातिथिः** । उत्तरस्यांदिशि हिमवान्पर्वतोदक्षिणस्यां विन्ध्यः विनशनंसरस्वत्याअन्तर्धानदेशः । प्रयागोगङ्गायमुनयोःसंगमः एतान्देशानवधीन्कृत्वा मध्यमध्यदेशनामानंदेशंविद्यात् । नात्युत्कृष्टोनातिनिकृष्टइत्यतोयमध्यदेशोननु पृथिवीमध्यभवत्वात् ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मप्रसंगेन ततोपकृष्टान्यपि देशान्तराणि निवासार्थंदर्शयति । हिमवदिति । विनशनं यत्र सरस्वती विनष्टा मध्यः पृथिव्याजघनस्थानीयोदेशः ॥ २१ ॥

( ३ ) **कुल्लूकः** । हिमवदिति उत्तरदक्षिणदिगवस्थितौ हिमवद्विन्ध्यौपर्वतौ तयोर्यन्मध्यंविनशनात्सरस्वत्यन्तर्धानदेशाद्यत्पूर्वंप्रयागाच्च यत्पश्चिमंसमध्यदेशनाम्ना देशःकथितः ॥ २१ ॥

( ४ ) **राघवानन्दः** । हिमवानुउत्तरत्यःपर्वतोदाक्षिणात्योविन्ध्यःविनशनात्कुरुक्षेत्रात्प्रयागात्प्रत्यगेव पश्चिमंइतिचतुःसीमावच्छिन्नंयदधिकृत्य श्रुतं यागनिर्योगयुक्तानांवाराणस्यांमृतस्य च । सागतिर्घटिकार्धेन मध्यदेशनिवासिनामिति ॥ २१ ॥

( ६ ) **रामचन्द्रः** । विनशनात्प्राक्कुरुक्षेत्रात्प्राक्प्रयागात्प्रत्यक्इयंभूमिःमध्यदेशः मध्यदेशसंज्ञःप्रकीर्तितः ॥ २१ ॥

**आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ॥ तयोरेवान्तरंगिर्योरार्यावर्तंविदुर्बुधाः ॥ २२ ॥**

( १ ) **मेधातिथिः** । आपूर्वसमुद्रादापश्चिमसमुद्राद्योऽन्तरालवर्ती देशस्तथा तयोरेव पूर्वश्लोकोपदिष्टयोर्गिर्योः पर्वतयोर्हिमवद्विन्ध्ययोर्यदन्तरंमध्यंसआर्यावर्तोदेशोबुधैः शिष्टैरुच्यते । आर्यावर्तन्तेतत्र पुनःपुनरुद्भवन्त्याक्रम्याक्रम्यापि न चिरंतत्र म्लेच्छाः स्थातारोभवन्ति । आङत्रमर्यादायां नाभिविधौ तेन समुद्रद्वीपानि नार्यावर्तः एते चतसृषु दिक्षु

देशावधयउपात्ताः । प्राच्यां पूर्वसमुद्रःप्रतीच्यांपश्चिमः । उदग्दक्षिणयोर्हिमवद्विन्ध्यौ एतौ ह्यवधित्वेनोपात्तौ । न तयोरार्यावर्तत्वमस्त्यतस्तत्र निवासाभावे प्रामइदमाह ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । तयोर्हिमवद्विन्ध्ययोःपर्वतयोर्मध्यं आरात् पापेभ्योगता आर्यास्तस्मिन्नावर्तन्ते भ्रमन्ति नतु मर्यादयावसन्तीत्यार्यावर्तः ॥ २२ ॥

( ३ ) **कुल्लूकः** । आसमुद्रात्त्विति । आपूर्वसमुद्रादापश्चिमसमुद्राद्धिमवद्विन्ध्ययोश्च यन्मध्यंतमार्यावर्तदेशंपण्डिताजानन्ति । मर्यादायामयमाङ्नाभिविधौ तेन समुद्रमध्यद्वीपानांनार्यावर्तता । आर्याअत्रावर्तन्ते पुनःपुनरुद्भवन्तीत्यार्यावर्तः ॥ २२ ॥

( ४ ) **राघवानन्दः** । एवंपूर्वपश्चिमसमुद्राभ्यन्तरयोर्विन्ध्यहिमवतोर्मध्यदेशः सआर्यावर्तइत्यर्थः । तयोर्हिमवद्विन्ध्ययोःगिर्योःपर्वतयोः । आङत्रमर्यादायाम् । तेन समुद्रद्वीपानांपर्वतयोश्चनार्यावर्तत्वम् । उक्तार्यावर्तव्याप्योमध्यदेशस्तद्व्याप्योब्रह्मर्षिदेशःतद्व्याप्योब्रह्मावर्तइत्यर्थः ॥ २२ ॥

( ५ ) **नन्दनः** । आर्याअस्मिन्वर्तन्तइत्यार्यावर्तः । हिमवद्विन्ध्ययोरित्यादिश्लोकद्वयेऽप्येतद्देशप्रसूतस्येति श्लोकस्यानुषङ्गः । एतेषुब्रह्मावर्तादिष्वाचारविप्रतिषेधपूर्वपूर्वदेशाचारोबलीयानित्यवगन्तव्यम् ॥ २२ ॥

( ६ ) **रामचन्द्रः** । पूर्वात्आसमुद्रात्पश्चिमात्आसमुद्रात्तयोःगिर्योःहिमवद्विन्ध्ययोः अनन्तरंआर्यावर्तंप्रचक्षतेकथयन्ति ॥ २२ ॥

**कृष्णसारस्तु चरति मृगोयत्र स्वभावतः ॥ सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतःपरः ॥ २३ ॥**

( १ ) **मेधातिथिः** । कृष्णश्वेतः कृष्णपीतोवा कृष्णसारङ्गोमृगोयत्र चरति निवसति । संभवउत्पत्तिर्यत्र देशे तस्य स्वभावतोन पुनर्देशान्तरात्प्राशस्त्योपायनादिना निमित्तेनानीतस्य कियन्तमपि कालंनिवासःसदेशोयज्ञियोयागार्होबोद्धव्यः । अतः कृष्णमृगचरणात्परोन्योम्लेच्छदेशः म्लेच्छाः प्रसिद्धाः । चातुर्वर्ण्यजात्यपेताः प्रतिलोमजातीयानधिकृतामेदान्ध्रशबरपुलिन्दादयः । नचानेन यागाधिकरणताऽस्यदेशस्य विधीयते । समेयजेतेतिवच्चरतीति वर्तमाननिर्देशात् । नहियत्रैव चरितुंप्रवृत्तस्तदैव तत्र यागःशक्यः कर्तुं यागस्य हिदेशोऽधिकरणंतत्साधनकर्त्रादिकारकाश्रितद्रव्यादिधारण द्वारेणच द्वयोर्मूर्तयोरेककाले एकदेशे स्थानसंभवः । नच कालान्तरलक्षणा न्याय्या विधौ लक्षणायाअन्याय्यत्वाद्यथोक्तंशूर्पाधिकरणे एतद्धिक्रियतइत्युच्यतइति ननु च नाभिव्यापकएवाधेयोयेन कृत्स्न धाराभिव्याप्त्यैवाधिकरणार्थनिवृत्तिः स्यात्तिलेषु तैलमितिवत् । किंतर्हि एकदेशसंबन्धिनाप्याधेयेन भवति कृत्स्नस्याधारभावः । प्रासादआस्ते रथमधितिष्ठतीति । एवमिह ग्रामनगरसमुदायस्य नदीपर्वतान्ताद्यवधिकस्य देशस्य प्रकृतत्वादेकदेशोऽपि पर्वतारण्यादौ चरन्सर्वमाधारी करोति । तेनायमदोषोमूर्तयोर्नैकदेशः संभवति । उच्यते । नैवात्र यष्टव्यमिति विधिरस्ति जानातेः परोविधायकश्रुतो न यजेः यागस्य तत्रार्हता श्रुता यागार्होऽसौ देशइति । सा च यागार्हता सत्यपि विधौ घटते । एतेषुदेशेषु यागाङ्गानि दर्भपलाशखदिरादीनि प्रायेण च भवन्ति । अधिकारिणश्च त्रैवर्णिकावैद्याश्च तेष्वेव देशेषु दृश्यन्ते । अतएतदवलम्बनोयागार्हतानुवादः । कृत्योपि ज्ञेयइत्यध्यारोपितविध्यर्थोजर्तिलयवाग्वाजुहुयादिति वद्विधिवन्निगदार्थवादएव । यच्चोक्तंम्लेच्छदेशस्त्वतःपरइत्येषोपिप्रायिकोऽनुवादएव । प्रायेण ह्येषु देशेषु म्लेच्छाभवन्ति । नत्वनेन देशसंबन्धेन म्लेच्छावक्ष्यन्ते । स्वतस्तेषांप्रसिद्धेर्ब्राह्मणादि जातिवत् । अथार्थद्वारेणायंशब्दः प्रवृत्तोम्लेच्छानांदेशइति तत्र यदि कथंचिद्ब्रह्मावर्तादि देशमपि म्लेच्छाआक्रमेयुः तत्रैवावस्थानंकुर्युर्भवेदेवासौम्लेच्छदेशः । तथा यदि कश्चित्क्षत्रियादि जा

तीयोराजा साध्वाचरणोम्लेच्छान्पराजयेतचातुर्वर्ण्यवासयेत् म्लेच्छांश्चार्यावर्तइव चाण्डालान्व्यवस्थापयेत्सोपि स्याद्यज्ञियः। यतोन भूमिः स्वतोदुष्टा संसर्गाद्धिसादुष्यत्यमेध्योपहतेव। अतउक्तदेशव्यतिरेकेणापि सतिसामग्र्ये त्रैवर्णिकेनाकृष्टमृगचरणेऽपि देशे यष्टव्यमेवतस्मादनुवादोयम्। सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतःपरइत्युत्तरविधिशेषः ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः**। स्वभावतोन त्वन्येननीतः सआर्यावर्तात् बहिर्भूतोपि याज्ञिकोयज्ञार्हः अतः परोयो म्लेच्छानांयज्ञानुष्ठानानर्हाणामेव निवासदेशः एतेनाचारशिक्षानिवास यज्ञानुष्ठानोचितादेशाःक्रमादुक्ताः ॥ २३ ॥

( ३ ) **कुल्लूकः**। कृष्णसारस्त्विति। कृष्णसारोमृगोयत्र स्वभावतोवसति न तु बलादानीतः सयज्ञार्होदेशोज्ञातव्यः। अन्योम्लेच्छदेशोन यज्ञार्हइत्यर्थः ॥ २३ ॥

( ४ ) **राघवानन्दः**। यथा यज्ञस्य दर्शादिकालोङ्गंतथा कृष्णसारविशिष्टदेशोपीत्याह कृष्णइति। स्वभावतःबलात्कारंविना ॥ २३ ॥

( ५ ) **नन्दनः**। अथ सर्वदेशेषु यज्ञार्हदेशमाह कृष्णेति। स्वभावतः स्वैरम्। अतःपरएभ्योब्रह्मावर्तादिभ्योऽन्योम्लेच्छदेशः। म्लेच्छाहियज्ञानधिकृताः ॥ २३ ॥

( ६ ) **रामचन्द्रः**। कृष्णसारःमृगःयत्रदेशेस्वभावतःस्वच्छन्दतःचरति विचरति। सदेशःयज्ञियःयष्टुंयोग्यः यज्ञार्होज्ञेयःजानीयात्। ततःपरःअन्यदेशःम्लेच्छदेशउच्यते ॥ २३ ॥

## एतान्द्विजातयोदेशान्संश्रयेरन्प्रयत्नतः ॥ शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः ॥ २४ ॥

( १ ) **मेधातिथिः**। यदर्थदेशसंज्ञाभेदकथंतमिदानींविधिमाह। एतान्ब्रह्मावर्तादीन्देशान्द्विजातयोदेशान्तरेऽपि जाताआश्रयेरञ्जन्मदेशंत्यक्त्वा ब्रह्मावर्तादिदेशसंश्रयणंप्रयत्नेन कर्तव्यम्। अत्र केचिदाहुरदृष्टार्थएवायमेतद्देशसंश्रयणविधिः सत्यपिदेशान्तरेप्यधिकारसंभवे एतेषु देशेषु निवासः कर्तव्यः। तत्र कल्पाधिकारत्वे यदि वा गङ्गादितीर्थस्नानवदेतद्देशनिवासविधिः पावनत्वेन कल्प्यते। यथैव काश्चिदापः पवित्रतराएवंभूमिभागाअपि केचिदेव पवित्राः। यथोक्तंपुराणेयदि वा संश्रयणादेव स्वतन्त्रात्स्वर्गोविश्वजिद्वत्तत्रैतौ द्वावपि पक्षावप्राप्तौ यद्यप्राप्तः संश्रयोविधीयते कल्प्येताप्यधिकारः। तत्रचिन्त्यते। कतरःपक्षोयुक्तइति। सत्त्वनित्यकाम्यानामुक्तस्तथानित्योद्देशएवानुष्ठानसंभवादधिकृतानांप्राप्तएव। नह्येतद्देशव्यतिरेकेण कृत्स्नधर्मानुष्ठानसम्भवः। तथाहि हिमवति तावत्काश्मीरादौ शीतेनार्दितान बहिः संध्योपासनेऽधिक्रियन्ते। नच यथा विधिस्वाध्यायसंभवः। प्राग्वोदग्वा ग्रामादुपनिष्क्रम्येति। नहि हेमन्तशिशिरयोरहरहर्नदीस्नानादि संभवः। इदमेव च द्विजातयइति वचनंलिङ्गंनकश्चिदेव देशोस्ति म्लेच्छसंबन्धेस्वतएव म्लेच्छदेशः। अन्यथा तद्देशसंबन्धान्म्लेच्छत्वे कथंद्विजातित्वम्। अथोच्यते न गमनमात्रान्म्लेच्छताऽपितु निवासात्सचानेन प्रतिषिध्यते। तच्च न। संश्रयोऽत्र श्रुयतेसच देशान्तरे भवतस्तत्त्यागेनान्यद्देशसंबन्धोन संश्रितस्यैव संश्रयणम्। अन्यथा एवमेवावक्ष्यदेतान्देशांस्त्यक्त्वा नान्यत्र निवसेत्। अथसिद्धेसंश्रयणे तद्वचनमन्यनिवृत्त्यर्थमिति परिसंख्यातथास्यात्तस्याश्च त्रयोदोषाः। अर्थहानिर्लक्ष्यते। एतान्देशानजह्यादिति नश्रुतार्थसंभवे लक्षणायुक्ता। अतएव न भूतपूर्वगतिस्तस्माल्लिङ्गमिदंन देशसंबन्धेन पुरुषाम्लेच्छाः किंतर्हि पुरुषसंबन्धेन म्लेच्छदेशता। शूद्रस्य द्विजाति शुश्रूषायाविहितत्वात्तद्देशनिवासे सर्वदाप्राप्ते तत्राजीवतोदेशान्तरनिवासोऽभ्यनुज्ञायते। यदा बहुकुटुम्बतया शुश्रुषा शक्त्या वा द्विजातीयमाश्रितः। सएनंबिभृयात्तदादेशान्तरेसंभवति धनार्जने निवसेत्तत्रापि न म्लेच्छभूयिष्ठे किंतर्ह्ययज्ञिये म्लेच्छावृते यानासनाशनादि क्रियानिमित्तस्य संसर्गस्यापरिहार्यत्वात्तद्भावापत्तिप्रसङ्गात्। वृत्तिकर्शितोवृत्त्यभावपीडितः वृत्तिरात्मकुटुम्बस्थितिसमर्थधनम्। तदभावे

यत्कर्शनंतत्संबन्धितयोच्यते । यथावर्षकृते सुभिक्षसुभिक्षे वर्षाभावकृतंदुर्भिक्षंवर्षकृतत्वेनव्यपदिश्यते ॥ २४॥

( २ ) **सर्वज्ञनारायणः**। सर्वे चैते निवासयोग्याइत्याह । एतानिति । म्लेच्छदेशादन्यान् प्रयत्नतोमहता-ऽप्यायासेन यस्मिन्कस्मिन्म्लेच्छदेशेपि वृत्तिकर्शितानतु स्वस्थः सोपि जीवनसंभवे सद्देशेष्वेव निवसेत् द्विजातिषु वृत्तिकर्शितोन म्लेच्छदेशे संवसेदित्यर्थः ॥ २४ ॥

( ३ ) **कुल्लूकः**। एतानिति । अन्यदेशोद्भवाअपि द्विजातयोयज्ञार्थत्वाददृष्टार्थत्वाच्चैतान्देशानप्रयत्नादाश्रयेरन् । शूद्रस्तु वृत्तिपीडितोवृत्त्यर्थमन्यदेशमप्याश्रयेत् ॥ २४ ॥

( ४ ) **राघवानन्दः**। आश्रयेरन्नित्यनेनान्यत्र वसतिरयोग्येतिभावः। शूद्रस्य वसतेर्ननियमइत्याह शूद्रस्त्विति । वृत्तिकर्शितःवृत्त्यर्थः ॥ २४ ॥

( ५ ) **नन्दनः**। एतान्ब्रह्मावर्तादीन्कृष्णसारस्वैरसंचरितदेशपर्यन्तान्प्रयत्नतआपद्यपि संश्रयेरन्नधिवसेयुः। एतेषु च पूर्वपूर्वदेशः । प्रशस्तइत्यवगन्तव्यम् ॥ २४ ॥

( ६ ) **रामचन्द्रः**। वृतिकर्शितःशूद्रःयस्मिन्कस्मिन्देशे निवसेत्द्विजाःएतान्संश्रयेयुः ॥ २४ ॥

**एषा धर्मस्य वोयोनिःसमासेन प्रकीर्तिता ॥ संभवश्चास्य सर्वस्य वर्णधर्मान्निबोधत ॥ २५ ॥**

( १ ) **मेधातिथिः**। यस्मिंस्तस्मिन्नित्यनियममाह अतिक्रान्तस्य सर्वस्य ग्रन्थार्थस्य पिण्डार्थकथनमविस्मरणार्थम्। योनिः कारणम्। समासेन संक्षेपेण संभवश्चेति प्रथमाध्यायार्थावमर्शः। अस्य सर्वस्येति जगन्निर्माणंबुद्ध्या प्रत्यक्षीकृत्य निर्दिशति । वर्णानुष्ठेयाधर्मावर्णधर्मास्तान्निबोधत विस्तरेणेति शेषः। इह पञ्चप्रकारोधर्मइति विवरणकाराः प्रपञ्चयन्ति। वर्णधर्मआश्रमधर्मोवर्णाश्रमधर्मोनैमित्तिकोगुणधर्मश्चेति । तत्र योजातिमात्रमपेक्ष्य प्रवृत्तोन वयोविभागेनाश्रमादिकमाश्रयति सवर्णधर्मोयथा ब्राह्मणोनहन्तव्यः। ब्राह्मणेन सुरानपेयेतिजातिमात्रस्यान्त्यादुच्छ्वासादेषधर्मः। आश्रमधर्मोयत्र जातिर्नापेक्ष्यते केवला तदाश्रमप्रतिपत्तिराश्रीयते। यथा ब्रह्मचारिणोग्नीन्धनभिक्षाचरणे वर्णाश्रमधर्मउभयापेक्षः यथा मौर्वीज्याक्षत्रियस्येत्यादिना श्रमान्तरे। नच जात्यन्तरस्य धारणमस्याउदाहरणम्। प्रथमोपादानन्तूपनयनधर्मोनाश्रमधर्मः। उपनयनंवाश्रमार्थंनाश्रमधर्मः। नैमित्तिकोद्रव्यशुद्ध्यादिः। गुणमाश्रितोगुणधर्मः षड्भिःपरिहार्यश्चेत्यादि बाहुश्रुत्येन गुणेनैतेधर्मा एवमभिषिक्तस्य क्षत्रियस्य येधर्मास्तदेतद्वर्णग्रहणेन सर्वगृहीतमितिदर्शितम् । अवान्तरभेदस्तुनेत्येवावतिष्ठते। पुरुषत्वमात्राश्रिताअवर्णधर्माअपि सन्तितेऽपि भेदेन वाच्याः स्युः। एवमन्योऽपि भेदोप्यूह्यः। वर्णग्रहणंचात्र प्रदर्शनार्थंनान्तरप्रभवव्युदासार्थंपूर्वप्रतिज्ञातत्वात्तदनुवादिनी ह्येषा प्रतिज्ञा ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** धर्मस्याचर्यमाणस्य धर्मसाधनस्य कर्मणोवा यो निरुत्पत्तिस्थानं अस्य सर्वस्य प्राणिजातस्य संभवउत्पत्तिः वर्णधर्मास्तत्तद्वर्णनियतान् धर्मान् उपलक्षणंचैतत् अन्तरप्रभवधर्ममाश्रमधर्मांश्चेत्यपि ॥ २५ ॥

( ३ ) **कुल्लूकः**। एषा धर्मस्येति। एषा युष्माकंधर्मस्य योनिः संक्षेपेणोक्ता । योनिर्ज्ञप्तिकारणं वेदोऽखिलोधर्ममूलमित्यादिनोक्तमित्यर्थः । गोविन्दराजस्त्विहधर्मशब्दोऽपूर्वाख्यात्मकधर्मेवर्ततइति विद्वद्भिः सेवितइत्यत्र तत्कारणेऽष्टकादौ वापूर्वाख्यस्य धर्मस्य योनिरितिव्याख्यातवान्। संभवश्चोत्पत्तिर्जगतइत्युक्ता। इदानींवर्णधर्माञ्छृणुत वर्णधर्म-

---

( २५ ) सर्वस्य=धर्मस्य ( थ )

शब्दश्च वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्मनैमित्तिकधर्माणामुपलक्षकः । ते च भविष्यपुराणोक्ताः । वर्णधर्मः स्मृतस्त्वेकआश्रमाणामतःपरम् । वर्णाश्रमस्तृतीयस्तु गौणोनैमित्तिकस्तथा । वर्णत्वमेकमाश्रित्य योधर्मः संप्रवर्तते । वर्णधर्मः सउक्तस्तु यथोपनयनंनृप । यस्त्वाश्रमंसमाश्रित्यअधिकारःप्रवर्तते । सखल्वाश्रमधर्मस्तु भिक्षादण्डादिकोयथा । वर्णत्वमाश्रमत्वंच योऽधिकृत्य प्रवर्तते । सवर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा । योगुणेन प्रवर्तेत गुणधर्मः सउच्यते । यथामूर्धाभिषिक्तस्यप्रजानांपरिपालनम् । निमित्तमेकमाश्रित्य योधर्मः संप्रवर्तते । नैमित्तिकः सविज्ञेयः प्रायश्चित्तविधिर्यथा ॥ २५ ॥

( ४ ) **राघवानन्दः** । वर्तिष्यमाणंवक्तुंवृत्तंनिगमयति एषेति । योनिःकारणम् । श्रुतिस्मृतिसदाचारब्राह्मणोपदेशैर्विना धर्मोन जायतइति भावः । संभवः प्रथमाध्यायोक्तःसर्गः । वर्णधर्मानिति तेन भविष्यपुराणोक्तानांवर्णमाश्रित्ययोधर्मोवर्णधर्मःसउच्यते । यथा विप्रेण हन्तव्यःसुरापेया न च द्विजैः । यस्त्वाश्रमंसमाश्रित्यअधिकारःप्रवर्तते ॥ सखल्वाश्रमधर्मस्तुर्भिक्षादण्डादिकोयथा । वर्णत्वमाश्रमत्वंच योधिकृत्य प्रवर्तते ॥ सवर्णाश्रमधर्नस्तुमौञ्जीयंमेखला यथा ॥ योगुणेन समुद्भूतोगुणधर्मःस उच्यते ॥ यथामूर्धाभिषिक्तस्य प्रजानांपरिपालनम् । निमित्तमेकमाश्रित्य योधर्मः संप्रवर्तते ॥ नैमित्तिकः सविज्ञेयः प्रायश्चित्तं विधीयते । इत्यादिवर्णाश्रमगुणनैमित्तिकधर्माणांपञ्चानांसंग्रहः ॥ २५ ॥

( ५ ) **नन्दनः** । योनिः कारणंपरिज्ञानोपायइति यावत् । संभवश्चास्यसर्वस्येति प्रथमार्धार्थानुभाषणम् ॥ २५ ॥

( ६ ) **रामचन्द्रः** । युष्माकंएषा धर्मस्य योनिःउत्पत्तिः ज्ञप्तिकारणंप्रकीर्तिता तथा अस्य सर्वस्य विश्वस्य सम्भवः उक्तः ॥ २५ ॥

**वैदिकैःकर्मभिःपुण्यैर्निषेकादिर्द्विजन्मनाम् ॥ कार्यःशरीरसंस्कारःपावनःप्रेत्य चेह च ॥ २६ ॥**

( १ ) **मेधातिथिः** । मन्त्रप्रयोगावैदिककर्माणि । वेदमन्त्राइहाभिप्रेतास्तेषांयान्युच्चारणानि तानि तत्रभवान्यतोऽध्यात्मादित्वाट्ठक् वेदमूलत्वाद्वोपचरितोवैदिकशब्दः । कर्मशब्देन च इतिकर्तव्यतारूपंकर्म गृह्यते । ततश्च कर्मभिर्निषेकादिः संस्कारःकार्यइति साध्यसाधनभेदोपपत्तिः । प्रधानंनिषेकोमन्त्रोच्चारणमितिकर्तव्यतानिषेकोयोनौ शुक्रनिक्षेपः सआदिर्यस्य संस्कारकलापस्य वक्ष्यमाणस्योपनयनपर्यन्तस्यैकवचनंशरीरसंस्कारइति समुदायापेक्षम् संस्कारशब्देन च सगुणशरीरनिर्वर्तकमुच्यते । तत्र निषेकाद्यानि विशेषजनकान्येतदेवाह पावनइति पावयति । अशुद्धतामपकर्षति पावनः । प्रेत्य चेह चेति। संस्कृतस्य सर्वत्रदृष्टादृष्टफलेषु कर्मसुकारीरीज्योतिष्टोमादिष्वधिकाराद् उभयलोकोपकारकत्वमाह। पुण्यैःशुभैर्मंगलैरितियावत् । सौभाग्यमावहन्तिदौर्भाग्यंचापनुदन्तीति पुण्यपावनशब्दयोरर्थभेदः द्विजन्मनामिति शूद्रपर्युदासार्थम् । संस्कार्यनिर्देशश्चायंलक्षणया च त्रैवर्णिकाः प्रतीयन्ते । नहि तदानींद्विजन्मानोभवन्ति ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । वेदोक्तैःक्रियाविशेषैः पुण्यैः पुण्यसाधनैर्गर्भाधानादिभिः शरीरसंस्कारः शरीरगतातिशयजननंकार्यं इहैहिकफलेषु कर्मसु कर्तव्येषु पावनोनधिकारहेतुःपापनाशकः एवंप्रेत्येत्यत्रापि तत्र निषेकः पित्रैव कार्यः ततोन्यानि कर्माण्यन्येनापि संस्कारश्रुतेर्नित्यत्वस्थितेरन्येनापि करणसंभवाच्च ॥ २६ ॥

( ३ ) **कुल्लूकः** । वैदिकैरिति । वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रयोगादिकर्मभिर्द्विजातीनांगर्भाधानादिशरीरसंस्कारःकर्तव्यः । पावनःपापक्षयहेतुः । प्रेत्य परलोके संस्कृतस्य यागादिफलसम्बन्धात् । इह लोके च वेदाध्ययनाद्यधिकारात् ॥ २६ ॥

( ४ ) **राघवानन्दः** । निषेकादिसंस्कारस्यैव खादिरादिवदधिकारार्थतास्वतन्त्रफलताचेत्याह वैदिकैरिति ।

वैदिकैः कर्मभिर्वेदमन्त्रप्रयोगैः भेत्यचेति संस्कृतस्यैव वैधकर्मद्वारा स्वर्गमोक्षौ इह च वेदाद्यधिकारिता ॥ २६ ॥

( ५ ) **नन्दनः**। वैदिकैः । श्रौतस्मार्तैः । नकेवलंयस्मिञ्छरीरे संस्कारःकृतस्तस्यैव पावनः किल भविष्यतोऽपीत्युक्तंमेत्यचपावनइति ॥ २६ ॥

( ६ ) **रामचन्द्रः**। द्विजन्मनांब्राह्मणक्षत्रियविशांनिषेकादिःशरीरस्य संस्कारःगर्भादिसंस्कारःमन्त्रैः पुण्यैः कर्मभिः कार्यः ॥ २६॥

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ॥ बैजिकंगार्भिकंचैनोद्विजानामपमृज्यते ॥ २७ ॥

( १ ) **मेधातिथिः**। उक्तंसंस्कारप्रयोजनंपावनः शरीरसंस्कारः पुण्यश्च तत्र पावनत्वमुच्यते दुष्टस्य दोषापकर्षणम् । कुतः पुनः शरीरस्य दुष्टतेत्याशङ्कायामाह । बैजिकंगार्भिकंचैनइति बीजे भवंबीजनिमित्तंवा बैजिकंएवंगार्भिकम् । एनः पापमदृष्टंदुःखकारणंतस्य बीजगर्भयोर्निमित्तभावादशुचित्वमात्रमिहोच्यते । शुक्रशोणिते पुरुषस्य बीजंतेच स्वभावादशुचिनी गर्भाधान्यपि दोषसंक्रान्त्या दुष्टैव । अतस्तन्निमित्तमशुचित्वंपुरुषस्य संस्कारैरपमृज्यतेऽपनुद्यते । तानीदानींकांश्चिन्नामधेयेन कांश्चित्संकार्यविशेषोपलक्षितान्कृत्वा निर्दिशति । गार्भैर्होमैः । गर्भेसंभूतेनार्याःक्रियन्ते । गर्भवाग्रहीतुंगर्भप्रयोजनकत्वाद्गार्भाः । नारी तत्र द्वारमात्रंप्रयोजकस्तु गर्भएवातस्तत्प्रयुक्तत्वाच्च तदर्थाहोमाःपुंसवनसीमन्तोन्नयनगर्भाधानानि । होमशब्दउपलक्षणार्थः कर्ममात्रस्य । नहिगर्भाधानंहोमएतेषांच कर्मणांद्रव्यदेवतादिरूपंगृह्यस्मृतिभ्योऽवसातव्यम् । यथैव गार्भैर्होमैरेवंजातकर्माख्येन संस्कारेण । एवंचौडेन चूडार्थः चौडः मौञ्जीनिबन्धनमुपनयनम् । तत्रहि मुञ्जविकारोमेखला बध्यते । अतस्तेनोपनयनकर्मोपलक्ष्यते । बन्धनमेवनिबन्धनंनिर्वृत्तेपूरणःजातकर्मादीनि संस्कारनामधेयानि कृतद्वन्द्वानि करणविभक्त्या एनोपमार्जनस्य निर्दिश्यन्ते । संस्कारश्च सर्वः संस्कार्यैकार्यान्तरशेषभूते कृतार्थे करिष्यमाणार्थे वा कंचिद्दृष्टमदृष्टंवाविशेषमादधातिव्रीहीनवहन्तीति । व्रीहिभिर्यजेतेति यागंनिवर्तयिष्यतांतुषकणविप्रमोक्षोदृष्टोविशेषआदधाति शिरसोऽवतार्य स्रजंशुचौ देशे निदधातीति । उपभुक्तायाआकीर्णाकारायाः प्रतिपत्तिनियमाददृष्टःस्रजोविशेषस्तत्रेमे संस्काराः शरीरशुद्ध्यर्थाः श्रुताः नच गन्धाद्यपकर्षणंमृद्वारिसंबन्धादिवशरीरे दृश्यते । तेनेयंजन्मादिकालशुद्धिवददृष्टविशेषा शुद्धिर्वेदितव्या । एतया च शुद्ध्या पूतः श्रौतस्मार्तेषु कर्मस्वधिक्रियते । यथा मन्त्रपूतमाज्यंहोमे लौकिके तुकार्ये द्रव्यशुद्ध्यैव शुद्धिर्यथाज्यस्य भोजनादौ । स्पृश्यताहि कुमारस्याद्भिर्गात्राणि शुध्यन्तीत्येतावतैव भवति । तथा चाह । न तदुपस्पर्शमादशौचमिति । कथंपुनः कर्मार्थत्वमेतेषांयुक्तमुत्पवनस्याद्यद्वारकंप्रकरणेन विनियोगात् अमीतु बाह्या न कस्यचित्कर्मणः प्रकरणे श्रुताः । अतः पुरुषद्वारिका कर्मार्थता दुर्भणा । नचासति कार्योपयोगे स्वरूपतः संस्कारएव निर्वर्त्यः । तथासति संस्कारतैव हीयेत प्रधानकर्मता स्यात् । अतश्च कार्यः शरीरसंस्कारइति कुमारे जाते पुरान्यैरालम्भादिति च द्वितीया श्रुतिर्बाध्येत । शक्तूञ्जुहोतीति वद्विनियोगभङ्गःस्यात्तत्रचाधिकारकल्पनेत्यादिबह्वसमंजसंप्राप्नोतीति । उच्यते न वयंश्रुत्या प्रामाण्यापेक्ष्यंतादर्थ्यमंगललक्षणंब्रूमः । अपितूपकारकत्वंतच्चानङ्गत्वेऽप्युपपद्यते । यथाधानविधिः स्वाध्यायाध्ययनविधिश्च । नह्यत्र श्रुत्यादयः सन्ति । यदाहवनीये जुहोतीत्याहवनीयादयोविनियुक्ताः । अलौकिकत्वाच्चतत्स्वरूपस्याधानविधिनैव सिद्धिर्वसन्ते ब्राह्मणोग्नीनादधीतेति । अतआहवनीयादि निर्वृत्तिद्वारेणाधानंक्रतुषूपयुज्यते नचाङ्गम् । अध्ययनविधिरप्यर्थावबोधद्वारेण क्रतूपकारकएव ममी संस्काराएतत्संस्कृतस्याध्ययनविधिनिष्पादितोध्ययनविध्यर्थस्य विवाहः कृतविवाहस्याधानमाहिताग्नेरधिकारइत्यस्ति संस्कारकार्योपयोगिता बाह्यपुरुषसंस्काराणाम् । निषेकग्रहाच्च सर्वत्रापि पितुरधिकारस्तथा च जातकर्मणि मन्त्रःआत्मावै पुत्रनामासीति । तस्य ह्यपत्यो-

त्पादनमपत्यानुशासनंच विहितम् । ऋणानि त्रीण्यपाकृत्येति । तस्मादनुशिष्टंपुत्रंलोक्यमाहुरिति अनुशासनंच स्वाधिकारप्रतिपादनंतच्च वेदाध्यापनेनार्थावबोधपर्यन्तेन भवतीति वक्ष्यामः । अतएवोभयोपकारकाःसंस्काराअपत्योत्पत्तिविधौ पितुर्माणवकस्य च संस्कृतसाध्यासु क्रियासु तस्मात्पितुरधिकारस्तदभावेतत्स्थानापन्नस्य तथा चाह असंस्कृतास्तु संस्कार्याभ्रातृभिः पूर्वसंस्कृतैरिति ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । गर्भे गर्भावस्थायांकर्तव्यैर्निषेकादिकर्मभिः तथा होमैरपि सीमन्तकर्मादिनामकैर्गार्भैरेत्र जातानन्तरकर्तव्यैश्चजातकर्मादिभिः तैश्च बैजिकंपितृगतंतत्तत्पापविशेषदूषितंशुक्रसंभवंपापं तथा गर्भोमातृरजस्तद्दोषसंभवंच पापंद्विजानामपनीयते अथोपनयनादिभिः संस्कारैरुपनीतस्य देहशोधनार्थानीत्यर्थः ॥ २७ ॥

( ३ ) **कुल्लूकः** । कुतःपापसंभवोयेनैषांपापक्षयहेतुत्वमतआह गार्भैरिति । ये गर्भशुद्धये क्रियन्ते ते गार्भाः । होमग्रहणमुपलक्षणंगर्भाधानादेरहोमरूपत्वात् । जातस्य यत्कर्ममन्त्रवत्सर्पिःप्राशनादिरूपंतज्जातकर्म । चौडंचूडाकरणकर्म । मौञ्जीनिबन्धनमुपनयनम् । एतैर्बैजिकंप्रतिषिद्धमैथुनसंकल्पादिनाच पैतृकरेतोदोषाद्यद्यत्पापंगार्भिकंचाशुचिमातृगर्भवासजंतद्द्विजातीनामपमृज्यते ॥ २७ ॥

( ४ ) **राघवानन्दः** । शरीरसंस्कारइत्युक्तंतत्र कथंकस्य संस्कारस्तत्राह गार्भैरिति द्वाभ्यां । गर्भंधेहि सिनीवालीत्यादिमन्त्रोक्तैः गर्भसंस्कारैः गार्भहोमैः सीमन्तोन्नयनादिप्रयुक्तैः जातकर्म जातस्य यत्कर्म समन्त्रकंसर्पिः प्राशनादिरूपंतत् । चौडंचूडाकर्म ।मौञ्जीनिबन्धनंमौञ्जीनिबध्यतेऽनेनेति मौञ्जीनिबन्धनंउपनयनं एतैरेनः पापमपमृज्यते नाश्यते नश्यतीति यावत् । बैजिकंमर्तिषिद्धमैथुनसंकल्पादिना पैतृकरेतोदोषेणोत्पन्नं । गार्भिकंअशुचिमातृगर्भवासजंमातुर्व्यभिचारसंकल्पजं च । यन्मे माता मलुलोभेत्यादिश्रुतेः ॥ २७ ॥

( ५ ) **नन्दनः** । पित्रादिना कार्यैः संस्कारैरपनेयंपापमाह गार्भैरिति । गार्भैर्निषेकपुंसवनविष्णुबलिसीमन्तोन्नयनसंबन्धिभिर्जातकर्मचौलमौञ्जीबन्धनैश्च । मौञ्जीबन्धनमुपनयनम् बैजिकंगार्भिकंपितुश्चमातुश्चापराधैःकृतमित्यर्थः ॥ २७ ॥

( ६ ) **रामचन्द्रः** । गार्भैः गर्भसंस्कारहोमैः शंडामर्कादीनांहोमैः जातकर्मभिः चौलमौञ्जीनिबन्धनैरेतैः संस्कारैर्द्विजानांबैजिकमेनः अपमृज्यते पापंनाशमेति बैजिकंशुक्रशोणितसम्बन्धजमित्यर्थः । गोत्रव्याधिसंक्रमननिमित्तम् ॥ २७ ॥

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्ययासुतैः ॥ महायज्ञैश्च यज्ञैश्च ब्राह्मीयंक्रियतेतनुः ॥ २८ ॥**

( १ ) **मेधातिथिः** । येषु कर्मसु माणवकस्य संस्काराउपकारकास्तानिदानीमुदाहरणमात्रेण दर्शयति । अध्ययनक्रिया स्वाध्यायशब्देनात्राभिप्रेता तस्याएष विषयनिर्देशस्त्रैविद्येनेति । व्यवधानेप्यर्थलक्षणः संबन्धोयस्य येनार्थसंबन्धइति न्यायेन । अतएव सामानाधिकरण्येऽपि श्रुते विषयविषयिभावोविभक्तिविपरिणामेन । त्रयाणांवेदानामध्ययनेनेत्यर्थः। त्रयएव वेदाः त्रैविद्यंचातुर्वर्ण्यादिवद्रूपसिद्धिः । अथवा स्वाध्यायेनेति । वेदाध्ययनंत्रैविद्येनेति तदर्थावबोधः । व्रतैः सावित्रादिभिर्ब्रह्मचारीकर्तृकैः होमैर्व्रतादेशनकाले ये क्रियन्ते । यदि वा सायंप्रातः समिद्भिरग्नीन्धनंब्रह्मचारिणोहोमशब्देनाग्न्याधारसंबन्धसामान्यादुच्यते । अथ किंसमिदाधानंन होमोयेनैवमुच्यतेसंबन्धसामान्यादिति न भवतीति ब्रुवन्ति अदनीयद्रव्यसाध्यत्वाद्यागहोमयोः । कथंतर्हि सायंप्रातश्च जुहुयात्ताभिरग्निमतंद्रितइत्युक्तम् । लक्षणया समिदाधानंहोमशब्देनोच्यते । यथैव हूयमानंद्रव्यमग्नौप्रक्षिप्यते । एवंसमिन्धनार्थाः समिधोऽप्यतएतेन सामान्येन समिन्धनमेव होमइत्युच्यते । उत्पत्तिवाक्ये हि समिधमादध्यादितिश्रुतम् । जुहुयात्ताभिरग्निमित्यनुवादोयमन्यार्थइति परस्ताद्वक्ष्यामः । नचानुवा-

दे लक्षणादोषः। इदंतु युक्तंयन्मेध्यमात्रद्रव्यसाध्यौ यागहोमौ। तथाच सति बह्व्यश्चोदनायथार्थाभवन्ति। यथा सूक्तवाकेन प्रस्तरंप्रहरतीति। तत्र हि प्रस्तरंद्रव्यमाहुर्हरतिंचयजतिं। अथ वचनादसौतादृशएव यागः। दर्भाश्चाप्यदनीयाः केषांचित्। कथंशाकलहोमे। तत्रापि द्विशकलान्यभ्यादधातीत्युत्पत्तिरितिचेद्गृहयज्ञे कागतिः। ग्रहेभ्यएकैकस्यैसमिधोजुहुयादर्कादीनां अतोयत्र जुहुयादिति देवतासंबन्धश्च काष्ठादेरपि श्रुतउत्पत्तिवाक्ये सोपि होमएव। इज्ययादेवर्षितर्पणेन। एषतावदुपनीतस्य ब्रह्मचर्येक्रियाकलापः। इदानींगृहस्थधर्माः। सुतैरपत्योत्पत्तिविधिना महायज्ञैः। पञ्चभिर्ब्रह्मयज्ञादिभिः। यज्ञैः श्रौतैर्ज्योतिष्टोमादिभिः ननु यद्येषांकर्मणांकिंचित्प्रयोजनंस्यात्तदा तदधिकारयोग्यतोत्पत्त्यर्थाबाह्याः संस्कारा अर्थवन्तः स्युः। अतआह ब्राह्मीयंक्रियते तनुः। ब्रह्म परमात्मा कारणपुरुषः तस्येयंसंबन्धिनी तनुः शरीरमेतैः श्रौतस्मार्तैः सर्वैः कर्मभिः क्रियते। ब्रह्मसंबन्धिता च तद्भावापत्तिलक्षणा सहि परः पुरुषार्थः। संबन्धान्तराणि सर्वस्य कस्यचित्कारणत्वेन सिद्धत्वान्नाभिलषितव्यानि। ततोमोक्षप्राप्तिरुक्ता भवति। ब्राह्मीत्यनेन तनुशब्देन च तदधिष्ठाता पुरुषोलक्ष्यते। तस्य ह्येते शरीरद्वारकाः संस्काराः तस्यैव च मोक्षप्राप्तिःशरीरस्य पञ्चतापत्तेः। अन्ये त्वाहुर्ब्रह्मत्वप्राप्तौ योग्या क्रियते। नहि कर्मभिरेव केवलैर्ब्रह्मत्वप्राप्तिः प्रज्ञानकर्मसमुच्चयात्किल मोक्षः एतैस्तु संस्कृतआत्मोपासनास्वधिक्रियते। तथा च श्रुतिः यएतदक्षरंगार्ग्यविदित्वा यजते जुहोति तपस्तप्यते अधीते ददात्यन्तवदेवास्य तद्भवतीति। ननु च नैतेषांकर्मणांब्रह्मप्राप्तिः फलंश्रुतम्। तथा हि नित्यानि तावदश्रुतफलान्येव कल्पनायां च पौरुषेयत्वंयावज्जीवादिपदैश्च नित्यतायाअवगमितत्वाद्विश्वजिन्न्यायोऽपि नास्त्यथास्मादेववचनादेतत्फलत्वमिति। यदुच्येतमोक्षार्थिनः तदाधिकारः स्यात्तथा च नित्यत्वहानिस्ततश्च श्रुतिविरोधः। निष्फलं न कश्चिदनुतिष्ठति तत्रानर्थक्यमिति चेत् कामनानुष्ठानात्प्रमाणस्य प्रमेयावगतिरर्थः साचेत्कृताजातमर्थवत्वम्। अस्तिचात्र कर्तव्यतावगतिःसत्यां च तस्यामकरणे शास्त्रार्थातिक्रमस्ततश्च प्रत्यवायईदृशएवार्थेलिङ्गादीनांवृद्धव्यवहारे व्युत्पत्तिः। योहि भृत्यादिः कर्तव्यंनकरोति कस्यचिदाज्ञातुः सवेतनार्थीवेतनं न लभते। यदिवा प्रत्यवायेन योज्यते। तत्र फलस्याश्रुतत्वान्न फलानुत्पत्तिः प्रत्यवायः। अपितु दुःखेन योजनंनित्येषु। एवंसर्वपुरुषाधिकारोनित्यः समर्थितोभवति। तस्मान्ननित्यानांकिंचित्फलम् काम्यानांत्वन्यदेव फलं न मोक्षः श्रुतत्वात्तत्र कथमेतत्सर्वकर्मानुष्ठानसाध्यः परः पुरुषार्थइति। अतएवकैश्चिदर्थवादोऽयमिति व्याख्यायते। संस्कारविधिः स्तुत्यर्थः। अत्र च ब्राह्मीयमिति यत्किंचिदालम्बनमाश्रित्य गुणवादेन नीयते। ब्रह्म वेदस्तदुच्चारणार्हा तत्कर्माधिकारिणी च। यत्तर्हि गौतमेनोक्तम्। चत्वारिंशत्संस्कारा इति। तत्कथंतत्र हि सोमसंस्थाऽपि संस्कारत्वेनोक्ता नच प्रधानकर्मणांसंस्कारत्वोपपत्तिः। नाप्येतदर्थवादतया शक्यंव्याख्यातुमविशेषत्वात्। तत्राप्यात्मगुणशेषसंस्कारत्वाध्यारोपेण स्तुतिः। एवमिहापि संस्कारैः संस्कारान् समानीकृत्यतुल्यफलताध्यारोपेण संस्काराणामवश्यकर्तव्यतामाचष्टे तथाच संस्कारप्रकरणान्नोत्कृष्यते स्तुतिः क्रियतइति च वर्तमानापदेशोनविधिविभक्तिस्तत्र कुतोब्रह्मप्राप्तेः फलत्वावगमः। नचात्र कर्माणि विधीयन्ते येनाधिकाराकाङ्क्षायां सत्यपि वर्तमाननिर्देशे रात्रिसत्रे प्रतिष्ठावत्फलनिर्देशः स्यात्। तस्मात्संस्कारस्तुत्यर्थमेवसर्वमेतदुच्यते। येऽपि विभागेन वर्णयन्ति नित्यानां ब्रह्मप्राप्तिफलंकाम्यानांतु यथा श्रुतमेव तदप्यप्रमाणंसर्वस्यार्थवादत्वात्तदन्तरेण च फलंनित्येष्वनुष्ठानसिद्धेः। प्रतिपादितत्वात्तदुक्तंकामात्मता नप्रशस्तेति ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः**। उपनयनानन्तरंक्रियमाणेन स्वाध्यायेन व्रतैः स्वाध्यायसमयमारभ्य कर्तव्यैः सायंप्रातरग्निसमिन्धनादिभिःस्नातकव्रतादिभिश्च होमैरुपाकरणोत्सर्जनहोमैः त्रैविद्येन षट्त्रिंशदब्दचर्यवेदत्रयाध्ययनार्थं गुरु-

कुलवासेन त्रैविद्येन स्वाध्यायेनेति व्यस्तपदसंबन्धः इज्यया पाकयज्ञेन हविर्यज्ञैः सुतैः पुत्रोत्पादनेन महायज्ञैः ब्रह्मयज्ञाद्यैः पञ्चभिर्यज्ञैरग्निष्टोमादिभिः सामयज्ञैः इयमेतस्मिन्लोके या तनुर्देहः सब्राह्मी ब्रह्मप्राप्तियोग्याक्रियते अपाकृतर्णत्रयस्य मोक्षोपायेधिकारात् ॥ २८ ॥

( ३ ) **कुल्लूकः**। वेदाध्ययनेन व्रतैर्मधुमांसवर्जनादिनियमैर्होमैःसावित्रचरुहोमादिभिःसायंप्रातर्होमैश्च त्रैविद्याख्येन च व्रतेष्वप्राधान्यादस्यपृथगुपन्यासः । इज्यया ब्रह्मचर्यावस्थायांदेवर्षिपितृतर्पणरूपया गृहस्थावस्थायांपुत्रोत्पादनेन महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः । यज्ञैर्ज्योतिष्टोमादिभिः । ब्राह्मी ब्रह्मप्राप्तियोग्येयंतनुस्तन्ववच्छिन्नआत्माक्रियते कर्मसहकृतब्रह्मज्ञानेन मोक्षावाप्तेः ॥ २८ ॥

( ४ ) **राघवानन्दः** । स्वाध्यायेन वेदाध्ययनेन व्रतैर्मधुमांसादिवर्जनात्मकैःहोमैः । सायंप्रातःसमिदाधानैः । त्रैविद्येन षट्त्रिंशदाब्दिकाख्यादिव्रतेन । इज्यया ब्रह्मचारिक्रियमाणदेवर्षिपितृतर्पणरूपया । सुतैःपुत्रोत्पादनैः । एकवाक्योपात्तत्वेनैषांत्वाष्ट्रंपात्नीवतंजुहोतीतिवत्समुच्चयः । महायज्ञैःवैश्वदेवादिपञ्चभिः । यज्ञैःज्योतिष्टोमादिभिः । ब्राह्मी ब्रह्मप्राप्तियोग्या तनुःक्रियतइत्यन्वयः ॥ २८ ॥

( ५ ) **नन्दनः** । अथोत्तरेषांसंस्काराणांफलविशेषमाह स्वाध्यायेनेति स्वाध्यायेन वेदाध्ययनेन । व्रतैः प्राजापत्यादिभिः । होमैःसमिदाधानादिभिर्नित्यनैमित्तिकैः । त्रिविद्यावेदेतित्रैविद्यस्तस्य भावस्त्रैविद्यंवेदत्रयार्थज्ञानमितियावत् । इज्यया स्मार्तेन पाकयज्ञेन सुतशब्देन समावर्तनंविवाहश्चोपचर्यते । महायज्ञैर्देवपितृमनुष्यभूतब्रह्मयज्ञैरग्न्याधानादिभिः । ब्राह्मीब्रह्मप्राप्त्यर्हा ॥ २८ ॥

( ६ ) **रामचन्द्रः**। वेदाध्ययनेनव्रतैःहोमैः त्रिविधेन वेदत्रयोक्तकर्मणा श्रुतैः पुत्रोत्पत्तिभिः एतैर्धर्मैः ब्राह्मीब्रह्मप्राप्तियोग्याइयंतनुः क्रियते ॥ २८ ॥

## प्राङ्नाभिवर्धनात्पुंसोजातकर्म विधीयते ॥ मन्त्रवत्प्राशनंचास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥

( १ ) **मेधातिथिः** । वर्धनंछेदनंजातकर्मेति कर्मनामधेयमेतत् । रूपंचास्य गृह्यस्मृतिभ्योज्ञातव्यंकस्य पुनः कर्मणोजातकर्मेति नाम तदर्थमुक्तंप्राशनंहिरण्यमधुसर्पिषाम् ।अस्येति दारकंव्यपदिशन्ति । कर्मवाऽस्य जातकर्मणइदंप्रधानम् । यन्मन्त्रवत्प्राशनमिति ।समन्त्रकंमन्त्रेण कर्तव्यमित्यर्थः मन्त्रस्यचेहानुक्तत्वात् । सर्वस्मृतीनांचैकार्थ्याद्यदन्यत्रोक्तंतदत्रापि प्रतीयते तेन गृह्यस्मृतिषु ये मन्त्राउपात्तास्तैर्मन्त्रवदिति द्रष्टव्यम् यदि गृह्यस्मृतयोऽपेक्षन्तेद्रष्टव्यनिर्देशोऽपि न कर्तव्यः । एवंहि तत्र पठ्यते । सार्पिर्मधुनी हिरण्यनिकाषंहिरण्येन प्राशयेत् । प्रातर्ददामि मधुनोघृतस्येति । किंच बह्व्योगृह्यस्मृतयोभिन्नाश्च प्रतिगृह्यंमन्त्राः । अन्यापि भिन्नेतिकर्तव्यतातत्र काऽऽश्रीयतामिति न विद्मः । अथ चरणसमाख्या नियामिकाभविष्यति व्यर्थस्तर्हि जातकर्माद्युपदेशस्ततएवसिद्धेः । कठानांगृह्यंबह्वृचमाश्वलायनानांच गृह्यमिति यद्येन समाख्यायते सतदुक्तमनुष्ठास्यतीति । उच्यते । दृष्टादिनिर्देशेन सुस्पष्टंकर्मैकत्वमिति प्रतीयते। तथा हिप्रत्यभिज्ञा सिद्धिः तदेवेतन्नामधेयकंचेदंकर्मातस्तदेवेदमिति भूयसा दृष्टंतद्गुणयोगेन प्रत्यभिज्ञायते। सति चैकत्वे यदङ्गंजातंकचिन्नोक्तंतदनिबद्धमन्यतआनेतव्यम् यथासर्वशाखाप्रत्ययमेकंकर्म एवंसर्वस्मृतिप्रत्ययमपि। यत्तु बहुत्वाद्गृह्यस्मृतीनांकाऽऽश्रीयतामित्यनध्यवसायः । सर्वासांप्रामाण्याविशेषादेकार्थानांचविकल्पः। भिन्नार्थानांसमुच्चयः। चरणसमाख्यातुनैव नियामिका यतो न समाख्यया पुरुषस्य नियतः संबन्धः गोत्रप्रवरवत् । यैव शाखायेनाधीता सएव तथा समाख्यायतेकठोबह्वृचइति । नचाध्ययने नियमोऽस्त्यनेनेयंशाखाऽध्येतव्येति । अनेकशाखाध्ययनमप्यस्ति वेदानधीत्येति तत्र त्रिवेदाध्यायिनः सर्वैर्व्यपदेशाः

प्रवर्तन्ते । केप्याहुःकठोबह्वृचइति तत्रावश्यंविकल्पआस्थेयएकशाखाध्यायिनस्तु यद्गृह्यंयया शाखयासमाख्यायते तदुक्तमेव तस्य युक्तंकर्तुम् । एषहि तदुक्तमेव शक्नोति कर्तुंतच्छाखामन्त्राएव तेनाधीताः शक्नोतितान्प्रयोक्तुं तमेववावृतंवेद वेदनेच कर्मानुष्ठानार्थं वेदाध्ययनं येनतावतो मन्त्रान्कर्मोपयोगिनोध्येष्यत इत्युच्यते । स्वाध्याय विधिवशेन वेदाध्ययनं अनधीतवेदस्यनाधिकारो न कर्मप्रयुक्तमध्ययनम् । अतइयंसमाख्या मन्त्रविशेषविनियोगनिमित्तैव कठानांगृह्यंवाजसने यिनांगृह्यमिति । यस्यांशाखायां ये मन्त्राअधीतास्ते यत्र बाहुल्येन विनियुक्तास्तद्गृह्यंतथा समाख्यायते । प्रमाणंगृह्यस्मृतिः साकठानामियमिति व्यपदिश्य माना बह्वृचानामपि स्वार्थावगमनंकरोत्येव कर्तव्यता वेदस्य स्वार्थस्मृतीनांच । अवगतायां च कर्तव्यतायां कर्तृविशेषश्रावणे स्वाधिकारोनस्याद्यथाच तनूनपाति प्रयाजे वसिष्ठानांनिषेधाद्वा पतितम् । नचेह द्वयमप्यस्ति । नच्च शक्यं कल्पयितुंनहि कठानांबाह्वृच्यं न प्रमाणंबह्वृचानांवा काठकंयतोयएव कठः सएवाकठोसति तच्छाखाध्यायेन । गोत्रंतु नियतमित्यसमानएवार्थः । स्वसूत्रंयःपरित्यज्य परसूत्रेण वर्ततइति । यद्येतदस्ति तदेव क्व तर्हि स्वकंयदधीतंतदर्थः शक्योनुष्ठातुं । तेन स्वाधीतांशाखामतिक्रम्यपित्राद्यधीतशाखया कर्माणि कुर्यात्तद्गृह्यंच समाश्रयेन्नतस्यशाखात्यागदोषः पित्रादीनांवाशाखात्यागः यैर्माणवकः क्रमाधीतांशाखांनाध्यापितः माणवकस्यात्रदोषोनास्तियदाभृतपितृकोजाबालवदयंबालः स्वयमाचार्यमाश्रयेत्तदायेनास्य पितरोयाताइत्यनेन शास्त्रेण सैवाध्येतुंयुक्तास्यात् । अथात्मशाखाध्ययनं न संभवति तदा स्वशाखात्यागः । अतःस्थितमिदंसर्वेसर्वासु स्मृतिषु जातकर्माद्युपदिश्यते तत्र भिन्नार्थं मङ्गजातंसमुच्चीयते विरुद्धंविकल्प्यतेसमानार्थंच । पुंसइति स्त्रीनपुंसकव्यावृत्त्यर्थम् । अन्ये त्वविवक्षितंपुमर्थंमन्यन्ते । द्विजन्मनामिति सामान्येन त्रैवर्णिकानांसंस्कार्यत्वेन प्रकृतत्वात्संस्कार्यश्च प्रधानमुद्देशोनच प्रधानेलिङ्गसंख्यादिविशेषणंविवक्ष्यते । ग्रहंसंमार्ष्टीति सत्यप्येकवचने सर्वे ग्रहाः संमृज्यन्ते । ज्वरितंज्वरमुक्तंचदिनान्तेभोजयेन्नरमिति नार्याअपि ज्वरितायाएषएव भोजनकालस्तथाच प्राप्तप्रतिषेधस्त्रीणाममन्त्रिकातुकार्या इयंस्त्रीणामावृदिति नपुंसकानांच पाणिग्रहणदर्शनंयद्यर्थितानुदारैः स्यात्क्लीबादीनामिति तत्रोच्यते । नायंपुंशब्दोमनुष्यजातिवचनोनरशब्दवद्येन विभक्तिवाच्यलिङ्गंनविवक्ष्येत एषहि सर्वस्वस्थावरमूर्तामूर्तगतंलिङ्गविशेषंप्रसवरूपमाचष्टे । प्रातिपदिकार्थोह्यत्र लिङ्गंविभक्तिवाच्यस्यह्यर्थस्य विवक्षाविवक्षे युज्येते यतो न विभक्तेर्वचनमेवैकंप्रयोजनंकर्माद्यर्थान्तराभिधानेनाप्यर्थवत्वात् । इहत्वविवक्षायामानर्थक्यमेव प्राप्नोति पुंस्पदस्य यथा तत्रैव ग्रहप्रातिपदिकार्थोविवक्ष्यते । वाक्यानर्थक्यपरिहाराय । अथोच्येत नप्रत्ययार्थमात्रस्य विवक्षा कृत्स्नोऽपि पदार्थउपदिश्यमानविशेषणं न विवक्ष्यते । यथा यस्योभयंहविरिति सत्यप्युभयपदश्रवणे दधिपयसोरन्यतरावृत्तावपि तदेव प्रायश्चित्तं नविवक्षितउभयशब्दः । अत्र केचित्परिहारमाहुः नैतत्तेन समानंनहि हविरर्थः । पञ्चशरावोहविर्विनाशे हि नैमित्तिकोधिकारः । इहतु माणवकार्थाएव संस्काराः । एषत्वप्रयोजकोविशेषः वाक्यभेदभयाद्विशेषणविवक्षा नेष्यते । तादर्थ्येपि वाक्यभेदोनैवापैति तस्मादयंपरिहारः एतदेवोत्पत्तिवाक्यंजातकर्मणोवैदिकैः कर्मभिरित्येतदुपक्रमंतत्र पुमानेव संस्कार्यतया निर्दिष्टस्तदविवक्षायांवाक्यानर्थक्यंयथा तत्रै व हविःपदंविवक्ष्यते । यद्येवंशूद्रस्यापि प्राप्तिर्जातिविशेषानिर्देशान्नप्राप्स्यति मन्त्रसाध्यत्वात् । अथवा द्विजन्मनामितिवाक्यशेषःकोभविष्यति नच तदानींविधेयार्थविषयत्वेन निर्दिष्टोयेनततएव संस्कार्यावगतौ पुंसइत्येतदुभयंपदविवक्षितमाशङ्क्येत स्त्रीणांत्वप्राप्तेऽपि विधानमुपपद्यते क्लीबस्यापि दारदर्शनंवातरेतायःक्लीबोभयव्यञ्जनोप्रवृत्तेन्द्रियोवा बहुप्रकारव्यावृत्तिकरंजातकर्मादिसंस्कारकालेऽपरिछेद्यत्वाच्छक्यप्रतीकारत्वाच्च नच योननियतोधर्मः सोधिकारंव्यावर्तयति यथाऽद्रव्यत्वंनह्यद्रव्यनियतंजातिवद्ययवाद्रव्यःसोपिद्रव्यवान्भवति । चिरमधनोभूत्वा भवत्यन्हामहाधनःईदृशस्यैवपंढस्यत्वेपलालभारकशुद्धिःस-

ह्यसंस्कृतोनुपनीतः शान्त्यैन कस्यचित्तिष्ठति। अतःस्थितंपुंसामेवैते संस्काराएभिर्विधीयन्ते। विध्यन्तरेण स्त्रीणाममन्त्रकाःनपुंसकस्य नैवसन्तीती ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । वर्धनं छेदनं जातकर्म तन्नामकंकर्म मन्त्रवन्मेध्यं तेदेव सवितेत्यादि मन्त्रयुक्तंयद्धिरण्यसंसृष्टानांमधुसर्पिषां अस्य शिशोःप्राशनंतदपि प्रागेव नाभिच्छेदात् एतच्च गृह्यसूत्रेषु जातकर्म जातसाक्षादिवएतदङ्गमनुर्मन्यते पुंसो न नपुंसकस्य स्त्रीणांतु वक्ष्यते ॥ २९ ॥

( ३ ) **कुल्लूकः** । नाभिच्छेदनात्प्राक्पुरुषस्य जातकर्माख्यःसंस्कारःक्रियते तदाचास्यस्वगृह्योक्तमन्त्रैःस्वर्णमधुघृतानांप्राशनम् ॥ २९ ॥

( ४ ) **राघवानन्दः** । जातकर्मान्नप्राशनचौडोपनयनानांयोग्यकालंदर्शयन्स्वरूपमाह। प्रागिति। दशभिः। नाभिवर्धनात्नाभिच्छेदात्। वृधुच्छेदनइत्यस्य धातोरूपम्। मन्त्रवत्प्राशनमेव सुवर्णादेरस्य जातस्य। द्विजातेःकर्म। जातकर्म ॥ २९ ॥

( ५ ) **नन्दनः** । अथ जातकर्मणः कालंस्वरूपंचाहप्रागिति। वर्धनंछेदनम् ॥ २९ ॥

( ६ ) **रामचन्द्रः** । नाभिवर्द्धनात्प्राक्नालच्छेदात्प्राक्पूर्वंजातकर्म विधीयते जातकर्मणि हिरण्यमधुसर्पिभिः अस्य कुमारस्य मन्त्रवत्मन्त्रपूर्वकंप्राशनंकार्यम् ॥ २९ ॥

**नामधेयंदशम्यांतु द्वादश्यांवास्य कारयेत् ॥ पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥**

( १ ) **मेधातिथिः** । दशम्यां तिथौ द्वादश्यां वास्य दारकस्य नामधेयंकुर्वीत। णिजर्थोनविवक्षितः तथाच गृह्यंदशम्यामुत्थाप्य पिता नामकरोतीति नामैव नामधेयंयेन शब्देन कार्येष्वाहूयते तन्नाम प्राङ्नाभिवर्धनादितिजातकर्मणःप्रकृतत्वाज्जन्मनःप्रभृतिदशमीद्वादश्यौ गृह्येते न चन्द्रतिथी। इह केचिद्दशमीग्रहणमाशौचनिवृत्तिरित्युपलक्षणार्थंवर्णयन्तिअतीतायामिति चाध्याहारः दशम्यामतीतायांब्राह्मणस्य द्वादश्यां क्षत्रियस्य पञ्चदश्यांवैश्यस्येति। तदयुक्तंलक्षणायां प्रमाणाभावाज्जातकर्मवदाशौचेऽपि करिष्यते यदितु ब्राह्मणभोजनंविहितंक्वचित्तदा युक्तालक्षणा। यदि दशमीद्वादश्यौ वक्ष्यमाणगुणयुक्ते भवतः तदा तयोः कर्तव्यमथन तदाऽन्यस्मिन्नपि पुण्येहनि पुण्यान्यहानि द्वितीयापञ्चम्यादीनि पुण्यंप्रशस्तंनवमीचतुर्दश्यादयोरिक्तास्तिथयअपुण्याः मुहूर्तोलग्नंकुंभादि तस्मिन्पुण्ये पापग्रहैरनधिष्ठिते गुरुभ्यांच दश्यमाने लग्नशुद्धिर्ज्योतिषादवगम्यते। नक्षत्रे च गुणयुक्ते। नक्षत्रंश्रविष्ठादि तद्यस्मिन्नहनिगुणयुक्तंभवतिनक्षत्रगुणाश्च क्रूरग्रहपापग्रहविष्टिपातविवर्जितंवा शब्दः समुच्चये। तेन प्रशस्तायांतिथौ नक्षत्रे च शुद्धे लग्नइत्युपदिष्टंभवति। समुच्चयश्च ज्योतिषावगम्यः। अयंच परमार्थः दशमीद्वादशीभ्यामर्वाङ् कर्तव्यम्। उत्तरकालंच यदहर्नक्षत्रलग्नंपरिशुद्धंतदहरेव कर्तव्यम् ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । नाम्नोव्यवस्थापनं दशम्यांतिथौ द्वादश्यांवाकारयेत्। स्वयंकरणाशक्तावन्येनापि इत्येतदर्थंकारयेदित्युक्तम्। मम नामप्रथमंजातवेदःपिता माताचदधतुरिति मन्त्रलिङ्गात्पित्रोरेव मुख्यत्वेनाधिकारात् तत्रच तिथिन्हासवृद्ध्योरपि दशमतिथावेव नामधेयं न दशमेह्न्येवेत्येतदर्थंस्त्रीलिङ्गनिर्देशः क्वचिद्रात्रिविशेषणतया स्त्रीलिङ्गत्वम्। तथा चाहोरात्रोपलक्षण मित्याहुः। पुण्ये मङ्गल्ययोग्ये वा यत्र क्वापि तिथौ तादृशेवा मुहूर्ते लग्ने नक्षत्र मात्रे वा ज्योतिषोक्तगुणवतीति पक्षत्रयं पूर्वोक्तपक्षद्वयासंभवे ॥ ३० ॥

( ३ ) **कुल्लूकः** । जातकर्मेतिपूर्वश्लोके जन्मनः प्रस्तुतत्वाज्जन्मापेक्षयैव दशमे द्वादशे वाऽहन्यस्य शिशोर्नामधेयंस्वयमसंभवे कारयेत्। अथवा ऽशौचे तु व्यतिक्रान्ते नामकर्मविधीयतइति शङ्खवचनाद्दशमेऽहन्यतीतेएकादशाहइति व्या-

व्येयम् । तत्राप्यकरणे प्रशस्ते तिथौ प्रशस्तएव मुहूर्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्तव्यम् । वा शब्दोऽवधारणे ॥ ३० ॥

( ४ ) **राघवानन्दः** । नामेति दशम्यामिति पूर्वाशौचनिवृत्तिपरम् । आशौचेतु व्यतिक्रान्तेनामकर्म विधीयतइति शङ्कोक्तेः । सामीप्येसममीवा । अहन्येकादशे नामेति याज्ञवल्क्यः । एकादशेहन्यपिनामकुर्यादिति श्रुतेः। द्वादशीपदंप्राशस्त्यपरमतएवाह । पुण्यमित्यादि ॥ ३० ॥

( ५ ) **नन्दनः** । दशम्यांद्वादश्यांतिथौ जन्मदिनाद्दशमे द्वादशे वादिनइत्यर्थः । पुण्येमुहूर्तइत्यन्वयः ॥ ३० ॥

( ६ ) **रामचन्द्रः** । रात्रौकर्माधिकारोनास्ति तेन कारणेन एकादशेऽहनि नामधेयंनामकर्मकारयेत् । दशमदिवसे वा द्वादशेन्हिवाकारयेत् कार्यव्यग्रतया द्वादशेन्हि नामकरणं यदा न जातंतदा सुमुहूर्ते पुण्येन्हिगुणान्विते नक्षत्रेज्योतिर्विदादिष्टे काले शुक्रास्तादिवर्जिते काले नामधेयंकार्यम् विष्णुपुराणवचनात् ततस्तु नामकुर्वीत पितैवदशमेहनीत्यादि वाक्यम् । शंङ्खः दशमेहनि सूतिकांपूर्वसव्यतः उत्थाप्य कुशरान्नस्य पिण्डवर्द्धनंनाम कर्म कार्यमितिवा ॥ ३० ॥

**मङ्गल्यंब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ॥ वैश्यस्य धनसंयुक्तंशूद्रस्यतु जुगुप्सितम् ॥ ३१॥**

( १ ) **मेधातिथिः** । इदानींयादृशंनामकर्तव्यंतन्नियमयतिस्वरूपतोर्थतश्च तत्र स्वरूपमवधारयिष्यन्नाहमङ्गलाय हितंतत्र वा साधुमाङ्गल्यमिति व्युत्पत्तिः । अभिमतस्यार्थस्य चिरजीवित्वबहुधनादेर्दृष्टादृष्टसुखफलस्य सिद्धिर्मङ्गलं । तदभिधानमेव शब्दाभ्यर्हितत्वंसाधुत्वंचेति तद्धितसिद्धिःनाभिप्रेतार्थसिद्धिंप्रतिपादनमेव विवक्षितं । किंतर्हि यआशास्यते तद्वचनेनैव सिद्धिसमासाद्यायुःसिद्धिर्धनसिद्धिःपुत्रलाभइत्यादेः प्रतीयते । तद्धिताद्वा हितनिमित्तप्रयोजनार्थीयात् तत्र गृह्लेतद्धितान्तंप्रतिषिद्धंकृतंकुर्यान्न तद्धितमिति । समासेपि पदद्वयैकार्थीभावस्तत्र बव्हक्षरप्रयोगप्रसंगोयतोवक्ष्यति शर्मवद्ब्राह्मणस्येत्युपपदनियमंतत्र चतुरक्षरे त्र्यक्षरे वा नाम्नि शर्मशब्दे चोपपदे पञ्चाक्षरंषडक्षरंनामभवति तच्च प्रतिषिद्धंद्व्यक्षरचतुरक्षरं वा कुर्यादिति तेन यत्किंचित्प्रायेण सर्वस्याभिलषणीयमर्माहितंपुत्रपशुग्रामकन्याधनादि तद्वचनाः शब्दानामधेयत्वेनविनियोक्तव्याः शर्मान्तास्तेन गोशर्मा धनशर्मा हिरण्यशर्मा कल्याणशर्मा मङ्गल्यशर्मेत्यादिशब्दपरिग्रहः सिद्धोभवति । अथवा मङ्गलंधर्मस्तत्साधनंमङ्गल्यंनामकतमत्पुनर्धर्मसाधनंनाम यएते देवताशब्दाः इन्द्रोग्निर्वायुः तथा ऋषिशब्दावसवोविश्वामित्रोमेधातिथिस्तेषामपि धर्मसाधनमस्ति ऋषींस्तर्पयेत्पुण्यकृतोमनसा ध्यायेदिति देवतानामृषीणांच द्विजानांपुण्यकर्मणांप्रातःप्रबुद्धःश्रीकामोनरोनामानि कीर्तयेदितिमङ्गल्यग्रहणाच्च यदप्रशस्तंयमोमृत्युरित्यादितन्निरस्यते यच्चानर्थकंडित्थादियदृच्छानिमित्तं क्षत्रियस्यबलान्वितं बलसंयुक्तं बलवाचि अन्वयः संबन्धशब्दःचार्थेन संबन्धः प्रतिपादकभावएव। सामर्थ्येतद्येन येन प्रतिपाद्यते तादृशंनाम क्षत्रियस्य कर्तव्यंशत्रुंतपः दुर्योधनः प्रजापालइत्यादिविभागेन च नामनिर्देशोजातिबलचिन्हंएवंवैश्यस्य धनसंयुक्तंनचात्र पर्यायाएव गृह्यन्तेधनंवित्तंस्वापतेयमिति किंतर्हियेन प्रकारेण प्रतिपत्तिः यदिवा धनादि शब्दप्रयोगादर्शसंबन्धाद्वा धनकर्मा महाधनः गोमान्धान्यग्रहइत्येवंसर्वत्र द्रष्टव्यं तथाचान्वितादिशब्दप्रयोगोबलान्वितंधनसंयुक्तमिति । इतरथा एवमेवावक्ष्यद्बलनामानि कुर्यादिति । स्वबलाद्बलार्थवाचिनामानन्त्याच्च पुरुषव्यक्तीनांदुःखधाने भेदे व्यवहारोच्छेदएवस्यात् । शूद्रस्य जुगुप्सितंकृपणकोदीनः शबरकइत्यादिस्वल्पत्वाद्बलाद्यर्थवाचिनामानन्त्याच्च ॥३१ ॥

---

( ३१ ) वैश्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितम् ॥ ( ख, ट, ठ )
————————शूद्रस्यप्रेष्यसंयुतम् ॥ ( क, त, थ, )
( च, ग, ) एतयोःपुस्तकयोःद्वावपि पाठौदृश्येते ॥

( २ ) **सर्वज्ञनारायणः** । मङ्गलवत् भद्रमित्यादि राज्ञः क्षत्रस्य बलसमन्वितं उदयवीरइत्यादि धनसंयुक्तं धन करंइत्यादि जुगुप्सितं पाण्डुरित्यादि ॥ ३१ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणादीनांयथाक्रमंमङ्गलबलधननिन्दावाचकानि शुभबलवसुदीनादीनि नामानि कर्तव्यानि॥३१॥

( ४ ) **राघवानन्दः** । मङ्गल्यंमङ्गलदं श्रवणेन बलान्वितंबलसूचकं धनसूचकंधनवत्वख्यापकं जुगुप्सितांद्विजदास-द्विजगुप्तरूपम् ॥ ३१ ॥

( ५ ) **नन्दनः** । मङ्गल्यंविष्णुमित्रादि । बलान्वितंपरंतपादि । धनसंयुक्तंनिधिपालादि । जुगुप्सितंपैलवकादि । अत्रनामधेयमित्यनुकर्षः । कारयेत्पिताऽन्योवा तत्स्थानीयः ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । मङ्गल्यमिति । नामकरणंत्रिभिराहब्राह्मणस्य नाम माङ्गल्यंशर्मान्तंस्यात्तद्यथा विष्णुशर्मेति नाम । क्षत्रियस्य नाम रक्षासमन्वितंबलान्वितंनाम तद्यथा नृसिंहवर्मेति । वैश्यस्य नाम पुष्टिवृद्धिसमन्वितंकुर्यात् धनपतिरिति नाम शूद्रस्य नाम प्रेष्यसंयुक्तंकुर्यात् तद्यथा कृष्णदासेति नाम ॥ ३१ । ३२ ॥

**शर्मवद्ब्राह्मणस्य स्याद्राज्ञोरक्षासमन्वितम् ॥ वैश्यस्य पुष्टिसंयुक्तंशूद्रस्य प्रेष्यसंयुतम् ॥ ३२ ॥**

( १ ) **मेधातिथिः** । अत्र स्वरूपग्रहणंपाठानुक्रमश्चादौ मङ्गल्यमेते शर्मशब्दाः । तथाचोदाहृतं । क्षत्रियादिनाम्नांतु नैतत्संभवति रक्षाशब्दस्य स्त्रीलिङ्गस्य श्रवणात्पुंसांसामानाधिकरण्यानुपपत्तेः तस्मादेकोपक्रमत्वात्समाचाराच्च सर्वत्रार्थ-ग्रहणंवाक्यभेदाच्च समुच्चयः यन्मङ्गल्यंतच्छर्मार्थवच्छर्मशरणमाश्रयः । सुखंचार्थग्रहणात्स्वामिदत्तभवभूत्यादिशब्दप-रिग्रहः इन्द्रस्वामीन्द्राश्रयः इन्द्रावतोपि तदाश्रयता प्रतीयतेएवंसर्वत्रोन्नेयम् । अथ कोयंहेतुर्वाक्यभेदात्समुच्चयइति । व्रीहिभिर्यजेत यवैर्यजेतेति किंन समुच्चयइति । उच्यते । लिङ्गदर्शनमात्रमेतत्पौरुषेयत्वात् । ग्रन्थस्य विकल्पेऽभि-प्रेतमङ्गल्यंशर्मवद्वेति लाघवादवक्ष्यत् । वाक्यभेदे हि द्विराख्यातोच्चारणंतद्गुरु भवति रक्षा परिपालनंपुष्टिर्वृद्धिर्गुप्तिश्च । गोवृ-द्धोधनगुप्तइति । प्रेष्योदासोब्राह्मणदासोदेवदासोब्राह्मणाश्रितोदेवताश्रितइति ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । एवंनामान्युक्त्वा तत्रेदमितिनित्यान्वितानि पदान्याह शर्मवदिति । अन्ते शर्मपदवत् रक्षासमन्वितंयतिरित्यादिवत् पुष्टिसंयुक्तं आप्योगोमीत्यादि धनबाहुल्यख्यातं प्रेष्यपदवत् प्रेष्यसंयुक्तं दासादि-पदवत् ॥ ३२ ॥

( ३ ) **कुल्लूकः** । इदानीमुपपदनियमार्थमाह शर्मवद्ब्राह्मणस्येति । एषांयथाक्रमंशर्मरक्षापुष्टिप्रेष्यवाचकानि कर्तव्या-निशर्मवर्मभूतिदासादीन्युपपदानि कार्याणि । उदाहरणानि तु शुभशर्मा बलवर्मा वसुभूतिः दीनदास इति । तथा च यमः शर्म देवश्च विप्रस्य वर्म त्राता च भूभुजः । भूतिदत्तश्च वैश्यस्य दासःशूद्रस्य कारयेत् । विष्णुपुराणेऽप्युक्तं शर्मवद्ब्राह्मणस्यो-क्तंवर्मेति क्षत्रसंयुतम् गुप्तदासात्मकंनाम प्रशस्तंवैश्यशूद्रयोः ॥ ३२ ॥

( ४ ) **राघवानन्दः** । एतान्येवोत्तरपदत्वेन वर्णानुरूपव्यवस्थित्या समाचारान्निगमयति शर्मवदिति यथाह यमः । शर्मदेवश्च विप्रस्य वर्मत्राता च भूभुजः । भूतिर्दत्तश्च वैश्यस्य दासःशूद्रस्य कारयेदिति भूतिपदंपुष्टेरुपलक्षणम् । एतेन पूर्वपदे नियमाभावः । द्व्यक्षरंचतुरक्षरंवा नामकुर्यादिति स्मृतेः । मङ्गलादिसूचकंदेवादीनांहर्षादिनामकार्यंशर्मादिपदंत्वर्थपरंतेन शर्मशरणमित्यादीति मेधातिथिः ॥ ३२ ॥

---

( ३२ ) प्रेष्यसंयुतम्=प्रैष्यसंयुतम् ( अ, द )
राज्ञोरक्षासमन्वितम्=राज्ञोवर्मसमन्वितम् ( ब )

( ५ ) **नन्दनः** । प्रकारान्तरमाहशर्मेति । शर्मवत्सुखवत्सुखप्रकाशनसमर्थमित्यर्थः । एवमुत्तरत्र । यथासुमतिःसुमन्तुरित्यादि । रक्षासमन्वितंधृतराष्ट्रादि । पुष्टिःसमृद्धिस्तेनसंयुक्तम् । तेनधनसंयुक्तमित्यनेनंनपुनरुक्तिः । यथासीरभद्रादि । प्रेष्यसंयुतंपशुसखादि । अन्ये तु शर्मादीनांशब्दपरत्वमेवमन्यन्ते । नत्वर्थपरत्वम् ॥ ३२ ॥

**स्त्रीणांसुखोद्यमक्रूरंविस्पष्टार्थंमनोहरम् ॥ मङ्गल्यंदीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ ३३ ॥**

( १ ) **मेधातिथिः** । पुंसइत्यधिकृतत्वात्स्त्रीणामप्राप्तौ नियम्यते । सुखेनोद्यते सुखोद्यंस्त्रीबालैरपि यत्सुखेनोच्चारयितुंशक्यते तत्स्त्रीणांनाम कर्तव्यं बाहुल्येन स्त्रीणांस्त्रिभिर्बालैश्च व्यवहारस्तेषांच स्वकारणसौष्ठवाभावान्न सर्वसंस्कृतशब्दमुच्चारयितुंशक्तिरस्ति । अतोविशेषेणोपदिश्यते तत्तुपुंसामसुखोद्यमभ्यनुज्ञायते । उदाहरणंमङ्गलदेवीचारुदती सुवदनेत्यादि प्रत्युदाहरणंशर्मिष्ठा सुश्लिष्टाङ्गीति । अक्रूरमक्रूरार्थवाची क्रूरार्थावाचिक्रूरार्थडाकिनीपरुषेति । विस्पष्टार्थंयस्यार्थोव्याख्यानगम्यो न भवति श्रुतएव विदुषामविदुषांवार्थप्रतीतिंकरोत्य विस्पष्टार्थंयथा कामनिधाकारीषगन्ध्येति । कामस्य निधेवनिधा तया कामस्तत्रैव तिष्ठतीति । एवंयावन्नव्याख्यातंतावन्नावगम्यते । एवंकारीषगन्धेर्दुहिताकारीषगन्ध्येति व्याख्यानमपेक्ष्यते मनोहरंचित्ताल्हादकरंश्रेयसीविपरीतंतु कालाक्षी शर्मवती रुद्रवतीतिमङ्गलंविपरीतमभागा मंदभागेति दीर्घोवर्णोन्तेयस्य विपरीतंशरत् आशिषंवदतीत्याशीर्वादमभिधानशब्दः तयोर्विशेषणसमासस्तद्यस्मिन्नास्ति विद्यते तदाशीर्वादाभिधानवत्सपुत्राबहुपुत्राकुलवाहिकेति एतेस्वर्थाआशीर्विषयाविपरीताअप्रशस्ता अलक्षणेति । अथमङ्गलस्याशीर्वादस्य च कोविशेषः । न कश्चिद्वृत्तपूरणार्थंतु भेदेनोपादानम् ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । सुखोद्यंदुरुच्चाराक्षररहितं अक्रूरंहिंसादितीक्ष्णार्थशून्यं विस्पष्टार्थंशीघ्रेणार्थप्रत्यायकं मनोहरंप्रीतिजनकार्थवत् मङ्गल्यंशुभहेतुत्वसूचकं दीर्घवर्णान्तमीकाराद्यन्तं आशीर्वादाभिधानवत् । आशीर्वादाभिधायिप्रत्ययादियुक्तं यशोदेत्यादि स्त्रीणां अत्रचनरूपसमुच्चये तात्पर्यं किंचैकद्विरुपवत्त्वे ॥ ३३ ॥

( ३ ) **कुल्लूकः** । स्त्रीणामिति । सुखोच्चार्यमक्रूरार्थवाचिव्यक्ताभिधेयंमनःप्रीतिजननंमङ्गलवाचिदीर्घस्वरान्तंआशीर्वाचकेनाभिधानेन शब्देनोपेतंस्त्रीणांनाम कर्तव्यंयथा यशोदादेवीति ॥ ३३ ॥

( ४ ) **राघवानन्दः** । सुखोद्यंअनायासोच्चार्यंअक्रूरंप्रीतिजनकंशर्मदायशोदेत्यादि ॥ ३३ ॥

( ५ ) **नन्दनः** । सुखोद्यंसुखेन वदितुमीरयितुंशक्यंयशोदादि । अक्रूरंसुमित्रादि । विस्पष्टार्थंचित्राङ्गदादि । मनोहरंचारुमत्यादि । मङ्गल्यंकल्याणादि । दीर्घवर्णान्तंसुमङ्गलादि । आशीर्वादाभिधानवत्आशीर्वाचकशब्दयुक्तंसुभद्रादि । अत्रापि नामधेयंस्यादित्यनुकर्षः ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । स्त्रीणामिति । स्त्रीणांकन्यानांनाम सुखोद्यमिति । सुखेनोच्चारणीयमित्यर्थः अक्रूरंक्रूरत्वरहितमिति ॥ ३३ ॥

**चतुर्थे मासि कर्त्तव्यंशिशोर्निष्क्रमणंगृहात् ॥ षष्ठेऽन्नप्राशनंमासि यद्वेष्टंमङ्गलंकुले ॥ ३४ ॥**

( १ ) **मेधातिथिः** । जन्मचतुर्थमासे ग्रहाद्बहिर्निष्क्रमणमादित्यदर्शनंशिशोर्बालस्य कर्तव्यम् । त्रीन्मासानुगर्भगृहएव वासयेत् । शिशुग्रहणंशूद्रस्यापि प्राप्त्यर्थं । एवंषष्ठे मास्यप्यन्नप्राशनंपञ्चमासान्क्षीराहारएव । यद्वा कुलेदारकस्य श्रेयस्यंमङ्गल्यंपूतना शकुनिकैकवृक्षोपहारादि प्रसिद्धंकालविशेषे वा तत्कर्तव्यमयंच संस्कार शेषः तेन नामधेयमुक्त-

लक्षणव्यतिरेकेणापि यथा कुलधर्मेलभ्यते । इन्द्रस्वामी इन्द्रशर्मा इन्द्रभूमि इन्द्रघोषइन्द्ररातइन्द्रविष्णुइन्द्रदेवइन्द्रज्योतिइन्द्रयशाइत्यादि कुलभेदेनोपपन्नंभवति ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । जन्मदिनाच्चतुर्थे गृहात् प्रसवगृहात् । जन्मदिनादेव षष्ठे मास्यन्नप्राशनंयच्च गृह्योक्तविधानवदन्नभक्षणम् । यद्वेष्टमिति । अयनमपि यत्कर्णवेधादिइष्टमपेक्षितमनिर्दिष्टकालंकर्म यच्च मङ्गलं शुभंकरंशिशूनां कुले तेषु तेषु कुलेष्वसाधारणंकर्म तदपिषष्ठएवेत्यर्थः ॥ ३४ ॥

( ३ ) **कुल्लूकः** । चतुर्थे मासीति । चतुर्थे मासे बालस्य जन्मगृहान्निष्क्रमणमादित्यदर्शनार्थंकार्यम् । अन्नप्राशनंच षष्ठे मासे ऽथवाकुलधर्मत्वेन यन्मङ्गलमिष्टंतत्कर्तव्यंतेनोक्तकालादन्यकालेपिनिष्क्रमणम् । तथा च यमः ततस्तृतीये कर्तव्यंमासि सूर्यस्य दर्शनम् । सकलसंस्कारशेषैश्चायंतेननाम्नांशर्मादिकमप्युपपदंकुलाचारेण कर्तव्यम् ॥ ३४ ॥

( ४ ) **राघवानन्दः** । निष्क्रमणंसूर्यावलोकनार्थम् । ततस्तृतीये कर्तव्यंमासि सूर्यस्य दर्शनमिति यमोक्तेःतृतीयं चतुर्थोपलक्षणं इष्टंकुलधर्मतया ॥ ३४ ॥

( ५ ) **नन्दनः** । निष्क्रमणं गृहाच्चन्द्रादित्यदर्शनम् । अयमपिकश्चित्संस्कारविशेषः । कुले कुलधर्मानुसारेणेत्यर्थः ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । कुले स्वकुले यद्वाइष्टंमङ्गलंचूडावत्तंकुलाचारमित्यर्थः ॥ ३४ ॥

**चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ॥ प्रथमेब्दे तृतीये वा कर्तव्यंश्रुतिचोदनात् ॥ ३५ ॥**

( १ ) **मेधातिथिः** । चूडा शिखा तदर्थंकर्म चूडाकर्म केषु चिन्मूर्द्धदेशेषु केशानांस्थापनंरचना विशेषश्चैतच्चूडाकर्मोच्यते । प्रथमवर्षेतृतीये वा ग्रहसौस्थित्याविकल्पः श्रुतिनोदनादित्यनुवादस्तन्मूलतयैव प्रामाण्यस्योक्तत्वात् । अथवा श्रुतिशब्देन नविध्यायकान्येव वाक्यान्युच्यन्ते । किंतर्हिमन्त्रास्ते च चूडाकर्मव्यञ्जनाइतिवदद्दष्टंप्रकाशयन्तियत्क्षुरेण मार्जयेतेत्यादि तेन समन्त्रकमेतत्कर्मेत्युक्तंभवति विशेषापेक्षायां गार्ह्योविधिरङ्गीक्रियते। अतः शूद्रस्य नायंसंस्कारः द्विजातिग्रहणाच्च अनियतकालंतु केशवपनंशूद्रस्यार्थप्राप्तं न निवार्यते ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वेषांद्विजातीनां न विप्रस्यैवधर्मतः कुलधर्मानुसारेण शिखाकरणात् प्रथमेब्देतृतीयेवाब्दे कर्तव्यं सुते मन्त्ररूपायाश्चोदनालिङ्गतायाःप्रवर्तत्वात् मन्त्रश्च यत्र बाणाःसंपतन्ति कुमाराविशिखाइवेति । बाणवत्संपतनयोग्यता तृतीयएव संभवतिइति कुमारपदेनाभिधाने ततःप्रागवस्थापि विज्ञायेतेति विशिष्टाविशिष्टशिखाइति विशेषेणकृतमिति ॥ ३५ ॥

( ३ ) **कुल्लूकः** । चूडाकर्मेति । चूडाकरणंप्रथमे वर्षे तृतीये वा द्विजातीनांधर्मतो धर्मार्थंकार्यंश्रुतिचोदनात् । यत्रबाणाः संपतन्तिकुमाराविशिखाइवेति मन्त्रलिङ्गात्कुलधर्मानुसारेणायंव्यवस्थितविकल्पः । अतएवाश्वलायनगृह्यम् । तृतीयेवर्षेचौलंयथाकुलधर्मेवा ॥ ३५ ॥

( ४ ) **राघवानन्दः** । चूडाकर्म केषुचिन्मूर्धदेशेषुकेशानांस्थापनविशेषः । तृतीये वर्षे चौलमित्याश्वलायनोक्तेः । श्रुतिचोदनात् । यत्रबाणाःसंपतन्ति कुमाराविशिखाइवेति श्रुतेः । सशिखंतेषांछेदनम् ॥ ३५ ॥

( ५ ) **नन्दनः** । चूडा शिखा । द्विजातिग्रहणेन शूद्रस्य पर्युदासः । धर्मतःकुलधर्मतः । चूडानिवेशदेशविशेषश्च गोत्र-

---

* शेष=विषय ( अ )

विशेषेण स्मर्यते दक्षिणतश्चूडा वसिष्ठानांवामतोभारद्वाजानामुभयतः काश्यपानामिति । चूडाकर्मण्यादरातिशयंप्रकाशयति श्रुतिचोदनादिति । श्रूयतेहि । कुमाराविशिखाइवेति ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । सर्वेषांद्विजातीनांधर्मतः चूडाकर्मप्रथमेब्दे कार्यंश्रुतिनोदनात् तृतीयवर्षेकुर्यात् ॥ ३५ ॥

**गर्भाष्टमेऽब्देकुर्वीत ब्राह्मणस्योपनायनम् ॥ गर्भादेकादशे राज्ञोगर्भात्तुद्वादशे विशः ॥ ३६ ॥**

( १ ) **मेधातिथिः** । गर्भस्थस्य यः संवत्सरस्ततआरभ्यते योष्टमोद्वः गर्भशब्देसाहचर्यात्संवत्सरोलक्ष्यते नहि मुख्यया वृत्या गर्भस्य संवत्सरोष्टमइति व्यपदेशंलभते तस्मिन्नौपनायनंब्राह्मणस्य कुर्वीत । उपनयनमेवौपनायनंस्वार्थिकोऽणअन्येषामपिदृश्यत इत्युत्तरपदस्य दीर्घः छांदसत्वाद्वोभयपदवृत्धिः उपनयनमिति हि एषसंस्कारोवेदविदांगृह्यस्मृतिषु प्रसिद्धोमौञ्जीबन्धनापरपर्यायः । उपनीयते समीपंप्राप्यते येनाचार्यस्य स्वाध्यायाध्ययनार्थंकुड्यंकटंवा कर्तुतदुपनयनं । विशिष्टस्य संस्कारकर्मणोनामधेयमेतत् । गर्भादकादशे राज्ञः । गर्भात्प्रभृति गर्भाद्वा परोयएकादशोद्वस्तत्र क्षत्रियस्य कर्तव्यम् । राजशब्दोयंक्षत्रियजातिवचनोनाभिषेकादिगुणयोगमपेक्षते ग्रन्थेषु तथा प्रयोगदर्शनाद्ब्राह्मणादिजातिशब्दसाहचर्याच्चगुणविधिषु च क्षत्रियशब्ददर्शनात्क्षत्रियस्य तुमौर्वीति यस्तु राजशब्दस्य क्षत्रियादन्यत्र जनपदेश्वरे वैश्यादौ प्रयोगः । सगौणइति वक्ष्यामः मुख्ये चासति गौणस्य ग्रहणम् । तथाच गृह्यकारः । अष्टमेवर्षेब्राह्मणमुपनयेदेकादशेक्षत्रियं द्वादशे वैश्यमिति । भगवांश्च पाणिनिः एवमेव प्रतिपन्नोराज्ञः कर्म राज्यंइति राज्यशब्दस्य राज्यशब्दंप्रतिप्रकृतित्वंब्रुवन्नेव जनपदैश्वर्येण राजशब्दार्थप्रसिद्धिमाह । एवंगर्भात्तु द्वादशेब्दे विशः वैश्यस्य ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । तन्मातुर्गर्भग्रहणदिनादष्टमे तत्रापि उपनयनंपित्राकार्यमसंभवेन्येनापि कारयितव्यमित्येतदर्थमुपनयनमिति प्रयोजनव्यापारः पित्रादीनांदर्शितः राज्ञः कर्तव्यः ॥ ३६ ॥

( ३ ) **कुल्लूकः** । गर्भाष्टमइति । गर्भवर्षादष्टमे वर्षे ब्राह्मणस्योपनायनंकर्तव्यम् । उपनयनमेवोपनायनमन्येषामपि दृश्यतइति दीर्घः । गर्भैकादशे क्षत्रियस्य गर्भद्वादशे वैश्यस्य ॥ ३६ ॥

( ५ ) **नन्दनः** । नामधेयादिषु जन्मारभ्यकालसंख्योक्ता उपनयनेसामाभूदितिगर्भग्रहणम् । गर्भशब्देनच गर्भसहचरितोब्दोऽपिविवक्षितः । गर्भाष्टमे गर्भादारभ्याष्टमे । उपनयनमेवोपनायनम् । उपनयनात्पूर्वमेव जन्मतएव ब्राह्मण्यमस्तीति सूचितम् ब्राह्मणस्येत्यब्दसंख्यानियमस्यायमभिप्रायः ब्रह्मक्षत्रविशांगायत्रत्रैष्टुभजागतैश्छन्दोभिः । सहजत्वंश्रूयते तैरेव तेषामुपनयनम तस्मादुपनयनाब्दाअपिस्वस्वच्छन्दोऽक्षरसमसंख्याभवितुमर्हन्तीति ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । अतः परंद्विजानांउपनयनकालमाहब्राह्मणस्योपनयनंगर्भाष्टमेऽब्दे गर्भाष्टमे वर्षे उपनयनंकार्यं राज्ञः गर्भात्एकादशे वर्षे वा कर्तव्यम् । वैश्यस्य गर्भात्द्वादशे वर्षे जन्मद्वादशे वा वर्ष इत्यर्थः ॥ ३६ ॥

**ब्रह्मवर्चसकामस्य कार्यंविप्रस्य पञ्चमे ॥ राज्ञोबलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ॥ ३७ ॥**

( १ ) **मेधातिथिः** । पितृधर्मेणापत्यंव्यादिशति ब्रह्मवर्चसी मे पुत्रः स्यादिति पुत्रकामनया पुत्रोव्यपदिष्टस्तत्कामस्येति पुत्रस्य बालत्वान्नैवंविधा कामना संभवति । न नुचैवमन्यकृतात्कर्मण अन्यस्य फलेऽभ्युपगम्यमानेऽकृताभ्यागमदोषापत्तिः । अकाम्यमानंच फलंभवत्येतदप्युक्तान्तशब्दप्रमाणन्यायमर्यादयोच्यते । नैषदोषः श्येनवदेतद्भविष्यति श्येनमभिचरन्करोत्यभिचर्यमाणश्च म्रियते । अथोच्यतेकामिनएवैतत्फलंशत्रुमरणंहि यजमानः कामयते तदेव

चाप्नोतीति नाकर्तृगामिता फलस्य । अत्रापि विशिष्टपुत्रवत्तालक्षणमुपनेतुरेवफलंयथा पुत्रस्यारोग्येण पितुः प्रीतिः एवंब्रह्मवर्चसेनाप्यतोऽधिकृतस्य कर्तुश्च पितुरेव तत्फल मन्वयानुसारीहि शास्त्रार्थावसायइहच पुत्रस्य फलकामेनैवकर्तव्यमित्यन्वयः प्रतीयते । नच यथाश्रुतान्वयापरोकिंचनप्रमाणमस्ति । एतेन पितुरौर्ध्वदेहिकः पुत्रकृतउपकारोव्याख्यात स्तत्रापिहि पुत्रः कर्ता पितृतृप्तिश्च फलंतथाच लिङ्गमात्मावै पुत्रनामासीति । पित्रैव हि तावत्श्राद्धमात्मसंप्रदान कंवस्तुतः कृतमेव येनाप्यन्त्योत्पादनमेवमर्थमेवकृतं । यथा सर्वस्वारे मृतस्यार्भकावमानाद्ये पराश्चपदार्थास्तेष्वपि यजमानस्यैव कर्तृत्वंब्राह्मणाः संस्थापयतयज्ञमिति प्रैषेण दक्षिणाभिर्वरणेन वा प्रयोगसमाप्तावृत्विजांविनियोक्तृत्वादेवमिहापि तादर्थ्येन पुत्रस्योत्पादनाद्यत्श्राद्धादिकंपित्रर्थंक्रियते पित्रैव तत्कृतंभवति अध्ययनविज्ञानसंपन्नब्रह्मवर्चसंबलंसामर्थ्यमाभ्यन्तरंबाह्यंचोत्साहशक्तिर्महाप्राणताचेतदाभ्यन्तरंबाह्यंच हस्त्यश्वरथपदातिकोशसंपत्तदुक्तंत्वांगाभ्युच्चयंसांयौगिकानांवार्थानामिति । ईहाचेष्टा बहुना धनेन कृषिवाणिज्यादिव्यवहारः सर्वत्र गर्भादिसंख्याच वर्षाणांगर्भादिति ह्यनुवर्तते ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । सुततपः प्रभृतिभिरुत्कर्षोब्रह्मवर्चसं पञ्चमेजन्मत आरभ्य बलार्थिनःसामर्थ्यातिशयार्थिनः ईहाकृष्यादावुद्यमःतदतिशयार्थिनः अत्र बालस्य तादृक्कामनायाअसंभवेपि तत्पित्रादिकामनायाएव तदीयत्वोपचारेणोपनयन सामानाधिकरण्यात् एतादृक्कामस्य पुत्रस्येत्यधिकरणेषष्ठीवा ॥ ३७॥

( ३ ) **कुल्लूकः** । ब्रह्मवर्चसकामस्येति । वेदाध्ययनतदर्थज्ञानादि प्रकर्षकृततेजोब्रह्मवर्चसंतत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्षे उपनयनंकार्यम् क्षत्रियस्य हस्त्यश्वादिराज्यबलार्थिनोगर्भषष्ठे वैश्यस्य बहुकृष्यादिचेष्टार्थिनोगर्भाष्टमे गर्भवर्षाणामेव प्रकृतत्वात् । यद्यपि बालस्य कामना न संभवति तथापि तत्पितुरेव तद्गतफलकामना तस्मिन्नुपचर्यते ॥ ३७ ॥

( ४ ) **राघवानन्दः** ब्रह्मवर्चसकामस्येति । ब्रह्मवर्चसंवृत्तस्वाध्यायनिमित्तंतेजः बलार्थिनःबलंहस्त्यश्वादि शारीरंवा । ईहार्थिनःईहाकृष्यादिचेष्टा । अत्र फलंएकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायेन । अस्यार्थःएकस्य कर्मणउभयार्थे वचनद्वयेन श्रुतेः । फलसाधनाभेदइत्यर्थः ॥ ३७ ॥

( ५ ) **नन्दनः** । ब्रह्मतेजोब्रह्मवर्चसंपञ्चमे गर्भात्पञ्चमेऽब्दे ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । विप्रस्य पञ्चमे वा वर्षे कार्यं राज्ञः षष्ठे वा वैश्यस्य अर्थार्थिनः अष्टमे वा वर्षेकार्यम् ॥ ३७ ॥

## आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ॥ आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ ३८ ॥

( १ ) **मेधातिथिः** । एवंतावन्मुख्यकाम्यावुपनयनकालावुक्तौ । इदानींपितुरभावे व्याध्यादिना वा कथंचिदनुपनीते माणवके कालातिपत्तावनुपनेयता प्राप्ता सत्यपि कालस्याङ्गत्वेतदभावेऽधिकारनिवृत्ते यथा सायंप्रातःकालातिपत्तावग्निहोत्रस्याकरणे । अतोविहितकालव्यतिरेकेण प्रतिप्रसवार्थमिदमारभ्यते यावत्षोडशंवर्षंगर्भादारभ्य तावद्ब्राह्मणस्योपनयनार्हता न निवर्तते । सावित्रीशब्देन तदनुवचनसाधनमुपनयनाख्यंकर्म लक्ष्यते नातिवर्तते नातिक्रान्तकालंभवतीत्यर्थः । एवमाद्वाविंशात्क्षत्रबन्धोः क्षत्रियजातियस्येत्यर्थः बन्धुशब्दोयंक्वचित्कुत्सायांप्रवर्तते । यत्त्वंकथंचेच्छ ब्रह्मबन्धाविति ज्ञातिवचनोयथा ग्रामताजनताचैवबन्धुताच सहायता महेंद्रस्याप्यगम्यासौ भूमिभागभुजांकृतः ।द्रव्यवचनोजात्यन्ताच्छबन्धुनीति तत्र पूर्वयोरर्थयोरसंभवात्तृतीयोर्थोगृह्यते । द्वाविंशतेःपूरणोद्वाविंशोब्दः तद्धितार्थः । आचतुर्विंशतेर्विशः प्राप्तोप्यत्र पूरणप्रत्य-

योवृत्तानुरोधान्नकृतः प्रतीयतेतुतदर्थः । नहि समुदायविषयायाश्चतुर्विंशतिसंख्यायाअवधित्वेन संभवःतदवयवस्तु चतुर्विंशोभवति संवत्सरोवधिः । आङमभिविधौ व्याचक्षते लिङ्गंदर्शनंचोदाहरन्ति गायत्र्या ब्रह्मणमुपनयीत त्रिष्टुभा राजन्यं जगत्या वैश्यमित्येतेषांच छंदसामियता कालेन द्वौ पादौ पूर्येते । तावन्तंकालंबलवन्ति नत्यजन्ति स्वाश्रयभूतान्वर्णान् । तृतीये तु पादेऽप्रक्रांतेगतरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति समाप्तिमुपयान्ति यथा पञ्चाशतास्थविरोमनुष्यइत्यतश्चनैतेन वयमुपासितानीति त्यजन्ति तंवर्णततो न गायत्रोब्राह्मणो न त्रैष्टुभोराजन्यो न जागतोवैश्यइति । सविता देवता यस्याऋचः सा सावित्री सा च गायत्रीद्रष्टव्या । प्रदर्शिता गृह्याच्चएवंक्षत्रियस्य त्रिष्टुप् सावित्री आकृष्णेनेति वैश्यस्य जगती ॥ विश्वारूपाणीति ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । यथोक्तसमयउपनयनाशक्तौ षोडशाब्द समाप्तिपर्यन्तं ब्राह्मणस्य सावित्री नातिवर्तते नातिक्रान्तकालाभवति । आङत्राभिविधौ तच्छब्दः पादाक्षरवदब्दसमवाय उपनयनमिति हारीतवचने गायत्री त्रिष्टुब्जगतीनां क्रमात् ब्राह्मणादिवर्णसंबन्धिनां छन्दसांपादाक्षरसङ्ख्यै रब्दैरुपनयनस्य विधेर्मुख्यासंभवे च तद्वैगुण्यस्य काले युक्तत्वे क्षत्रबन्धोःक्षत्रजातेः ॥ ३८ ॥

( ३ ) **कुल्लूकः** । आषोडशादिति । अभिविधावाङ् ब्राह्मणक्षत्रियविशामुक्ताष्टमैकादशद्वादशवर्षद्वैगुण्यस्य विवक्षितत्वात् । षोडशवर्षपर्यन्तंब्राह्मणस्य सावित्र्यर्थैवचनमुपनयनंनातिक्रान्तकालंभवति । क्षत्रियस्य द्वाविंशतिवर्षपर्यन्तं वैश्यस्य चतुर्विंशतिवर्षपर्यन्तम् । अत्र मर्यादायामाङ्केचिद्याख्यापयन्ति यमवचनदर्शनात् । तथा च यमः पतिता यस्य सावित्रीदशवर्षाणिपञ्च च । ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥ प्रायश्चित्तं भवेदेषांप्रोवाच वदतांवरः । विवस्वतः सुतःश्रीमान्यमोधर्मार्थतत्त्ववित् ॥ सशिखंवपनंकृत्वा व्रतंकुर्यात्समाहितः । हविष्यंभोजयेदन्नंब्राह्मणान्सप्त पञ्चवा ॥ ३८ ॥

( ४ ) **राघवानन्दः** । उपनयनस्योत्तरावधिद्योतयन्नूसार्थवादंतैःसह संसर्गनिषेधति आषोडशादितित्रिभिः । आङत्रमर्यादायां गर्भादित्यनुवर्तते नातिवर्तते अतिक्रान्तता सती प्रायश्चित्तंविनाऽधिकारित्वेन सावित्रीपतितान्प्रतिसावित्री नाधिगच्छति । पतिता यस्य सावित्री दशवर्षाणि पञ्चचेत्युपक्रम्य । सशिखंवपनंकृत्वा व्रतंकुर्यात्समाहितः । हविष्यंभोजयेदन्नंब्राह्मणान्सप्त पञ्च चेति । यमोक्तप्रायश्चित्तम् ॥ ३८ ॥

( ५ ) **नन्दनः** । आषोडशाब्दात्आकारोऽत्राभिविधिवचनः मुख्यकल्पसंख्याद्वैगुण्यात्सावित्रीप्रधानत्वादुपनयनस्य सावित्रीतितस्य भेदोपचारनिर्देशः । क्षत्रबन्धोः क्षत्रियस्येति । यावच्चतुर्विंशतेराचतुर्विंशात् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । उपनयनार्थकार्यव्यग्रतया स्वस्य स्वस्य कालातिक्रमोभवेच्चेत्तर्हि किंकर्तव्यंतत्राह । ब्राह्मणस्य षोडशवर्षपर्यन्तंऔपनायनिकः कालः क्षत्रियस्यद्वाविंशतिवर्षपर्यंतं विशश्चतुर्विंशतिवर्षपर्यन्त उपनयनकालः । अतः सावित्रीपतितोभवेत् ॥ ३८ ॥

## अतऊर्ध्वंत्रयोप्येते यथाकालमसंस्कृताः ॥ सावित्रीपतिताव्रात्याभवन्त्यार्यविगर्हिताः ॥ ३९ ॥

( १ ) **मेधातिथिः** । अस्मात्कालादूर्ध्वंपरेण त्रयोप्येते वर्णाः ब्राह्मणादयोयथाकालंयस्योपनयनकालसूत्रानुकल्पिकेप्यसंस्कृताअकृतोपनयनाः सावित्री पतिता । उपनयनभ्रष्टाभवन्तिव्रात्याश्च संज्ञयाऽऽर्यैः शिष्टैः विगर्हिताः निंदिताः व्रात्यसंज्ञाव्यवहारप्रसिद्ध्यर्थोयंश्लोकः । अनुपनेयत्वंतु पूर्वेण च सिद्धमुक्तमार्यैर्निन्दितइति ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । यथाकालंपोडशादर्वाक् सावित्री पतिता: कालातिक्रमेण सावित्र्याअपगताः व्रात्याव्रात्यसंज्ञाः संज्ञात्वोत्तरव्यवहारोपयुक्ताः आर्याः पापेभ्यः आराद्गताः ॥ ३९ ॥

( ३ ) **कुल्लूकः** । अतऊर्ध्वमिति । एतेब्राह्मणादयोयथाकालंयोयस्यानुकल्पिकोप्युपनयनकालउक्तः षोडशवर्षादिपर्यन्तंतत्रासंस्कृतास्तदूर्ध्वंसावित्रीपतिताउपनयनहीनाःशिष्टगर्हितात्रात्यसंज्ञाभवन्ति । संज्ञाप्रयोजनंच व्रात्यानां याजनंकृत्वेत्यादिनाव्यवहारसिद्धिः ॥ ३९ ॥

( ४ ) **राघवानन्दः** व्रात्याइत्यपूर्वसंज्ञा ॥ ३९ ॥

( ५ ) **नन्दनः** । अतः षोडशाब्दादिभ्यः असंस्कृताअनुपनीताः सावित्रीपतिताः । सावित्र्युपदेशहीनाः । व्रात्याः व्रात्यनामानः ॥ ३९ ॥

( ६ ) **रामचन्द्रः** । पितैवोपनयेत्पुत्रांस्तदभावे पितामहः । तदभावे पितृव्यः स्यात्तदभावे तु सोदरः ॥ कालातिक्रमेप्रायश्चित्तमाह अतऊर्ध्वंषोडशद्वाविंशवर्षादूर्ध्वंएते द्विजाः संस्कारहीनाः शूद्रप्रायाभवन्ति । अकृतप्रायश्चित्तमाह योगीश्वरः । व्रात्यस्तोमात्कृतोः व्रात्यस्तोमसंज्ञात्क्रतोर्यज्ञादित्यादिनाकृते तु । वात्यस्तोमयज्ञउपनयनाधिकारोभवत्येव॥ ३९॥

## नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ॥ ब्राह्मान्यौनांश्च सम्बन्धान्नाचरेद्ब्राह्मणैःसह ॥४०॥

( १ ) **मेधातिथिः** । कापुनरेषांनिन्देत्याह । एतैर्व्रात्यैरपूतैरकृतप्रायश्चित्तैर्विधिवद्यादृशोविधिः ।प्रायश्चित्ते शास्त्रेणोपदिष्टः तान्श्चारयित्वा त्रीन्कृच्छ्रानित्यापद्यपि हिकर्हिचित्कस्यांचिदप्यापदि नसंबन्धानाचरेत्कुर्यात्तैः सह किंसर्वसंबन्धनिषेधोनेत्याह । ब्राह्मान्यौनांश्च । ब्रह्मवेदः । तन्निमित्तान्संबन्धान्याजनाध्यापनप्रतिग्रहान् । नते याज्याः न याजकाः कर्तव्याः एवंनाध्याप्यानैतेभ्योध्येतव्यंवेदार्थविदुषः प्रतिग्रहाधिकारादेषोपि ब्राह्मसंबन्धोभवति । यौनः संबन्धः कन्यायादानादाने । ब्राह्मणग्रहणंप्रदर्शनार्थम् । अस्माच्च दोषदर्शनाद्व्रात्यता परिहारार्थे पितुरभावोपि व्युत्पन्नबुद्धिनामाणवकेनाप्यात्मनात्मोपनाययितव्यइति प्रतीयते । तथाच । श्रुतिः सत्यकामोजाबालः सहहारिद्रुमतंगौतममियाय ब्रह्मचर्यंभवति वक्ष्यामीति स्वयमाचार्यमभ्यर्थितवानुपनयनार्थम् ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । विधिवशं व्रात्याहोमादिनायेनपूतास्तैः ब्राह्मान्वैदिकानध्यापनादिसंबन्धान्यौनान्कन्यादानप्रतिग्रहरूपान् ब्राह्मणइति वचनं क्षत्रादेस्तत्संबन्धे तादृक्दोषाभावकथनार्थं ब्राह्मणैरित्यपिपाठे तद्दोषाधिक्योपदर्शनार्थं तदिति ग्राह्यम् ॥ ४० ॥

( ३ ) **कुल्लूकः** । नैतैरिति । एतैरपूतैर्व्रात्यैर्यथाविधि प्रायश्चित्तमकृतवद्भिःसहापत्कालेऽपिकदाचिदध्यापनकन्यादानादीन्संबन्धान्ब्राह्मणोनानुतिष्ठेत् ॥ ४० ॥

( ४ ) **राघवानन्दः** । ब्राह्मान्ब्रह्म वेदस्तन्निमित्तकान्अध्ययनाध्यापनादीन्यौनान्ब्राह्माद्यष्टौ विवाहान् ॥ ४० ॥

( ५ ) **नन्दनः** । अपूतैरकृतप्रायश्चित्तैः । ब्राह्मानध्ययनाध्यापनादीन्यौनान्कन्यादानप्रतिग्रहादीन् । अत्रब्राह्मणशब्दस्त्रैवर्णिकवचनएतच्छब्देन प्रकृतवर्णत्रयपरामर्शिनासामानाधिकरण्यावगमात् ॥ ४० ॥

( ६ ) **रामचन्द्रः** । आपद्यपिकर्हिचिदपूतैः अकृतप्रायश्चित्तैः एतैः त्रिभिर्वर्णैः सह ब्राह्मणः ब्राह्मान्संबन्धान्नाचरेत्वेदाध्ययनसंबन्धान् न कारयेत् च । पुनः यौनान्योनिसम्बन्धान्विवाहादीन्एतैः अकृतप्रायश्चित्तैः सह न आचरेत् न वर्तयेत् ॥ ४० ॥

**कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ॥ वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ ४१॥**

( १ ) **मेधातिथिः** । कृष्णशब्दोयद्यपि कृष्णगुणयुक्तवस्तमात्रे वर्तते कृष्णा गौः कृष्णः कम्बलइति तथापीह स्मृत्यन्तराद्रौरवसाहचर्याच्च मृगएव प्रतीयते रुरुर्मृगजातिविशेषः बस्तः छागः सर्वत्र विकारेऽवयवेवा तद्धितः । कृष्णाजिनं ब्राह्मणोरुरुचर्मक्षत्रियोवैश्यश्छागचर्म वसीरन्नाच्छादयेयुः शणक्षुमोर्णास्तत्र कृता नि च वस्त्राणि । च शब्दः समुच्चये । तत्रानुत्तरीयाणि शाणादीनि चर्माण्युत्तरीयाण्यौचित्यात्कौपीनाच्छादनानि च वस्त्राण्यानुपूर्व्येण नैकैकस्य सर्वैरभिसंबन्धोनापिव्युत्क्रमेण । प्रथमस्य ब्रह्मचारिणः प्रथमेन चर्मणा वस्त्रेणच संबन्धोद्वितीयस्य द्वितीयस्थानस्थेन । तथाच दर्शितं । ननु चान्तरेणापि वचनंलोकतएवैतत्सिद्धंचूर्णिताक्षिप्तदग्धानांवज्रानिलहुताशनैरिति यथाक्रमंसंबन्धप्रतिपत्तिःचूर्णिता वज्रेणाक्षिप्तानिलेनदग्धाऽग्निनेति । उच्यते भवेदेवंयदि भेदेन निर्देशस्यात्समसङ्ख्यात्वंच । इहतु ब्रह्मचारिणइत्येकशब्दोपादानात्तक्रमोवगम्यते त्रयश्च ब्रह्मचारिणः षडनुदेशिनः त्रीणि चर्माणि वस्त्राणि। आनुपूर्वग्रहणे तु सति वाक्यान्तरोपात्तः क्रमआश्रीयते । तथाच चर्मभिः संबध्यपुनर्ब्रह्मचारिपदमावर्त्यवासोभिः संबध्यते । ततः संख्यासाम्यसिद्धिः । ईदृशएव विषये भगवता पाणिनि ना यत्नः कृतोयथासंख्यमनुदेशः समानामिति ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । कृष्णः कृष्णोमृगः तस्य चर्माद्यैरुत्पादितं रौरवंरुरोः बास्तंछागस्य एतानि चर्माणि विप्रादयःक्रमाद्वसीरन्नुत्तरीयाणि कुर्युः अजिनंत्वेवोत्तरमित्यापस्तम्बवचनात् । तथाशणातसीमेषरोमसूत्र कृतानि वासांसि क्रमाद्वसीरन् अर्थादधः षण्णांविधेयानांत्रिषु यथाक्रमभावभ्रमनिरासार्थमानुपूर्व्येणेति त्रिषु त्रिषु क्रमइत्यर्थः ॥ ४१ ॥

( ३ ) **कुल्लूकः** । कार्ष्णइतिविशेषानभिधानेऽपि मृगविशेषोरुरुसाहचर्यात् हारिणमैणेयंवा कार्ष्णंवाब्राह्मणस्येत्यापस्तम्बवचनाच्च कृष्णमृगोगृह्यते । कृष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिणउत्तरीयाणि वसीरन् चर्माण्युत्तरीयाणीतिगृह्यवचनात् । तथाशणक्षुमामेषलोमभवान्यधोवसनानि ब्राह्मणादयः क्रमेण परिदधीरन् ॥ ४१ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणादीनांब्रह्मचारिनियतवस्त्रमेखलायज्ञोपवीतदण्डानुपादानपरिमाणसहितानाह कार्ष्णेति सप्तभिः । कार्ष्णंकृष्णंहरिणंसंबंधिहारिणंऐणेयं वा कृष्णंब्राह्मणस्येति आपस्तम्बस्मरणात् । रुरुर्व्याघ्रःरुरुर्नखबिलकृदिति क्रमदीपिकायाम् बस्तोऽजःएतान्युत्तरीयाणि शाणादीनि वसनानि तत्र शाणंशणसूत्रनिर्मितंक्षौमंक्षुमाएरण्डिपर्यायःआविकंअविर्मेषस्तल्लोमजं अत्र यथासङ्ख्यंविवक्षितम् ॥ ४१ ॥

( ५ ) **नन्दनः** । कृष्णः कृष्णमृगः रुरुः पृषतमृगः बस्तश्छागविशेषः । तत्संबन्धीनिकार्ष्णरौरवबास्तानि । शणविकारः शाणम् क्षुमाऽतसी । तद्विकारःक्षौमंअविश्छागविशेषोरक्तवर्णः तद्रोमकृतमाविकम् । चर्माण्युत्तरीयाणिशाणादीन्यन्तरीयाणीतिविवेकः ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्य कार्ष्णाजिनसंज्ञंचर्म धार्यं । क्षत्रस्य रौरवंरुरुजातीयमृगस्य चर्म रौरवाजिनंधार्यं । वैश्यस्य ब्रह्मचारिणःबास्तंअजाजिनंधार्यं आनुपूर्व्येण ब्राह्मणक्षत्रियवैश्यैःएतानि चर्माणि शणक्षौमाविकानि पक्षान्तरे पूर्वेषामलाभेवसीरन्आच्छादयेयुः । शणस्यइदंशाणंक्षुमाअतसी तस्यइदंक्षौमं ॥ ४१ ॥

**मौञ्जीत्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ॥ क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥**

( १ ) **मेधातिथिः** । मुञ्जस्तृणजातिस्तद्विकारोमौञ्जीसाब्राह्मणस्य मेखला रशना कर्तव्यामध्यबन्धनी त्रिवृत्त्रिगुणा

समा नक्वचित्सूक्ष्मा न क्वचित्सूक्ष्मतरा किंतर्हिसर्वतएव समा श्लक्ष्णा तनुत्वगुणयुक्ता परिघृष्टा च । क्षत्रियस्य पुनर्ज्या धनुर्गुणाः साकदाचिच्चर्ममयी भवति कदाचित्तृणमयी भङ्गोमादिरज्जुर्वा तदर्थमाह । मौर्वीति तया धनुषोवतारितया श्रोणी-बन्धः कर्तव्यः यद्यपि त्रिवृत्तादिर्गुणोमेखला मात्राश्रितोमौञ्ज्याएव तथापि ज्यायाः स्वरूपनाशप्रसंगान्न भवति । शणतन्तुविकारः शणतान्तवी छांदसत्वादुत्तरपदवृद्धिः अथवाकेवलात्तन्तुशब्दात्तद्धिते कृते तदन्तस्य शणैः संबन्धः । शणानांतान्तवीति । विकृतेर्विकारः शणतान्तवी ॥ प्रकृतिसंबन्धितयाव्यपदिश्यते । गव्यंघृतंदेवदत्तस्य पौत्रइति तंतुः सूत्रंशणमौञ्जीवत्कर्तव्या । गृह्यकारैर्वैश्यमेखलाया स्त्रिवृत्तादिधर्मः सुस्पष्टएवोक्तः ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । मौञ्जीमुञ्जत्वक्कृता त्रिवृत् त्रिगुणवलिता समामध्येनिम्नोन्नतशून्या श्लक्ष्णा मृदुस्पर्शा मौर्वीनामौषधिभेदकृतावाधनुषि गुणत्वेनार्पिता अतएवास्यां त्रिवृतेतिनान्वितं ज्यात्वापगमापत्तेः शणतन्तुकृतायांतु त्रिवृत्त्वमन्वीयतेऽविरोधात् ॥ ४२ ॥

( ३ ) **कुल्लूकः** । मौञ्जीति । मुञ्जमयी त्रिगुणासमगुणत्रयनिर्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्तव्या क्षत्रियस्य मुर्वामयी ज्याधनुर्गुणरूपा मेखला । अतोज्यात्वविनाशापत्तेस्त्रिवृत्त्वंनास्तीति मेधातिथिगोविन्दराजौ । वैश्यस्य शणसूत्रमयी। अत्रत्रैगुण्यमनुवर्ततएव त्रिगुणाः प्रदक्षिणामेखलाइति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् ॥ ४२ ॥

( ४ ) **राघवानन्दः** । मौञ्जीति मुञ्जः शरत्वक्त्रिवृत्त्रिगुणासमा गुणगतान्यूनातिरिक्तपरिमाणा श्लक्ष्णामृद्वीमौर्वी ज्या मूर्वातृणविशेषः तद्विकृतिः ज्याया धनुषः सैव त्रिगुणा प्रदक्षिणा मेखला भवतीति प्रचेतसोवचनात् मेखलात्रयं तुल्यंत्रयाणाम् ॥ ४२ ॥

( ५ ) **नन्दनः** । त्रिवृत् त्रिवृद्गुणासमा सगुणा श्लक्ष्णा परिघर्षणेन सुखस्पर्शा मूर्वायाविकारोमौर्वीतिज्याविशेषणम् ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । मुञ्जोद्भवामौञ्जीत्रिवृत्मेखला समा ग्रन्थिरहिता ब्राह्मणस्य कार्या । क्षत्रियस्य मौर्वीज्या मेखला कार्या । मुरस्तृणविशेषःमुरोद्भवामौर्वीज्या मेखला कार्या । वैश्यस्य शणतान्तवतृणस्य वा मेखलातन्तोःसूत्रस्य वा मेखला कार्या । शणतान्तवमिश्रिता वा कार्या ॥ ४२ ॥

**मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः ॥ त्रिवृता ग्रन्थिनैकेन त्रिभिःपञ्चभिरेव वा ॥४३॥**

( १ ) **मेधातिथिः** । आदिशब्द लोपमत्रस्मरन्ति । मुञ्जाद्यलाभइति कर्तव्याइति च बहुवचनमुपपन्नतरंभिन्नजाति-संबन्धितया सुव्यक्तोमेखलाभेदः एकजातिसंबन्धित्वेतुकेवलव्यक्तिभेदालम्बनंबहुवचनंस्यात् । विप्रस्येति च प्रकृतस्य बहुवचनेन परिणामः कर्तव्यः विकल्पश्चैकविषयत्वे स्यात् नच संभवत्यां गतौ विकल्पोयुक्तः तेन मुञ्जाभावेकौशी । कौश्याऽभावेऽश्मन्तकेनशाणानांबल्वजैस्तृणौषधिवचनात्कुशादयः प्रतिनिधिनियमश्चायंकुशाद्यभावेप्यन्यन्मुञ्जादिसदृशमुपादेयंत्रिवृता ग्रन्थिनैकेन । नायंग्रन्थिसंख्याभेदोवर्णभेदेन । अपि तु प्रत्येकंविकल्पः। कुशादिमेखलास्वप्ययंग्रन्थिभेदो-धर्मभेदश्चोद्यमानः स्मृत्यन्तरसमाचारस्यानित्यत्वेपि द्रष्टव्यः ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । अश्मन्तकाइतिउलपः मुञ्जालाभइति विशेषनिर्देशात् मौर्वीशाण्यलाभे क्षत्रियवैश्याभ्यां अन्यःतत्सदृशः प्रतिनिधिः वाचनिकएवोपादेयः केचित्तु प्रतिनिधौ त्रित्वदर्शनात् वर्णक्रमेणान्वयमाहुः । तथा च मुञ्जाद्यलाभइत्यादिपदंलुप्तंद्रष्टव्यं सा च मौञ्जी त्रिगुणवलिता त्रिवृता कटौ त्रिर्वेष्टनेन धार्यात्रिभिरपि च वेष्टनैरेकोग्रन्थिः त्रयो-वा पञ्च वा वाशब्दोविप्रादिक्रमेणान्वयनिरासार्थः । केचित्प्रवरसङ्ख्याव्यवस्थया ग्रन्थिविकल्प इत्याहुः एतच्च प्रति

निधिसंनिधिपाठेपि मुख्येनाप्यन्वितं तत्रापि ग्रन्थ्यादेरपेक्षितत्वात् वित्तस्य दैव्योग्रन्थिर्माविश्रसइति ग्रन्थिंकृत्वेति मौघामेव लौगाक्षिस्मरणाच्च ॥ ४३ ॥

( ३ ) **कुल्लूकः**। मुञ्जालाभेत्विति। कर्तव्याइति बहुवचननिर्देशाद्ब्रह्मचारित्रयस्य प्रकृतत्वान्मुख्यालाभेत्रिष्वप्यपेक्षायाः समत्वात्। कौशादीनांच तिसृणांविधानान्मुञ्जाद्यलाभइति बोद्धव्यम्। कर्तव्याइति बहुवचनमुपपन्नतरं भिन्नजातिसंबन्धितयेति ब्रुवाणस्य मेधातिथेरपिबहुवचनपाठः संमतः मुञ्जाद्यलाभे ब्राह्मणादीनांत्रयाणांयथाक्रमंकुशादिभिस्तृणविशेषैर्मेखलाःकार्याः। त्रिगुणेनैकग्रन्थिनायुक्तास्त्रिभिर्वापञ्चभिर्वा। अत्र च वाशब्दनिर्देशाद्ग्रन्थीनां न विप्रादिभिः क्रमेणसंबन्धः किंतु सर्वत्र यथाकुलाचारंविकल्पः। ग्रन्थिभेदश्चायंमुख्यामुख्यापेक्षासंभवाद्ग्रहीतव्यः ॥ ४३ ॥

( ४ ) **राघवानन्दः**। उक्तमुख्यालाभे यथासङ्ख्यं मतिनिधीनाह मुञ्जेति मुञ्जस्य मुञ्जाद्यस्य अलाभे मुञ्जादिवेषीकामिति श्रुतेः मुञ्जं अश्मन्तको मालवतृणमिति नारायणसर्वज्ञः बल्वजइति बगई इतिप्रसिद्धतृणं वा शब्दोत्र यादृच्छि कार्थः तेन खले चालनीन्यायात् ग्रन्थीनांविप्रादिषु न क्रमनियमः यथा कुलाचारंव्यवस्था ॥ ४३ ॥

( ५ ) **नन्दनः**। मुञ्जाग्रहणंमूर्वाशणतन्त्वोरप्युपलक्षणम्। कुशादयोविप्रादीनांयथासंख्यम्। अश्मन्तकंदारुविशेषः बल्वजस्तृणविशेषः। अत्रमेखलेत्यनुषज्यते। मेखलानांमुख्यानामनुकल्पोक्तानांचग्रन्थिविकल्पउत्तरार्धेनोक्तः। त्रिवृतात्रिगुणेन। एकेन ग्रन्थिना त्रिभिर्ग्रन्थिभिः पंचभिर्वोपलक्षिता। त्रयाणांवर्णानांनियमेन ग्रन्थिविकल्पोऽयमुक्तः। नात्रयथासंख्यंवाशब्देन सर्वेषामेकविषयत्वावगमात् ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। मुञ्जालाभे ब्राह्मणस्य कुशैःकार्या मेखला। क्षत्रियस्य अश्मन्तकःतृणविशेषस्तस्य वा मेखला कार्या। वैश्यस्य बल्वजैःवा मेखला कार्या। एकेन त्रिवृता मौञ्जी कार्या त्रिभिर्वाग्रन्थिभिःत्रिवृता कार्या पञ्चभिर्ग्रन्थिभिः त्रिवृता वा कार्या ॥ ४३ ॥

**कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत् ॥ शणसूत्रमयंराज्ञोवैश्यस्याविकसौत्रिकम् ॥ ४४ ॥**

( १ ) **मेधातिथिः**। उपवीतशब्देन वासोविन्यासविशेषउच्यते। वक्ष्यत्युद्धृते दक्षिणे पाणाविति तच्च धर्म मात्रंतस्य नकार्पासता संभवत्यतोधर्मेण धर्मी लक्ष्यतेयस्यासौविन्यासस्तत्कार्पासमुच्यते। अर्शआदित्वाद्वा मत्वर्थीयोकारः कर्तव्यःउपवीतवदुपवीतमिति। ऊर्ध्ववृत्तंऊर्ध्वादिशंप्रतिवर्त्यते वेष्ट्यते त्रिवृत्त्रिगुणंकर्तनिकाभ्योलब्धसूत्रभावस्यत्रिगुणीकृतवेदमूर्धनि वर्तनंविधीयते। संहृत्य तन्तुत्रयमूर्धवेष्टनेन रज्ज्वाकारंकृत्वातेनोपवीतंकुर्यात्साचरज्जुरेकैव धारयितव्यातिस्रःपञ्चसप्तवा यज्ञसंबन्धाद्धितयज्ञोपवीताख्यांलभते। यज्ञार्थोयमुद्यतइति भक्त्योपचर्यते तत्रेष्टिपशुसोमानांयज्ञरूपतयैकत्वादेकतन्तुकंक्रियते। अग्नित्रयसाध्यत्वादहीनैकाहसत्रभेदाद्वात्रितन्तुकंसोमसंस्थानांसप्तसंख्यत्वात्सप्तवा तन्तवः त्रीणिसवनानित्रिसंध्येनेति पञ्चसूत्राभावेपि पटादिनापि कर्तव्यम्। स्मृत्यन्तरएवमुक्तं। अविकौ मेषस्तस्य सूत्रंतेन कृतंआविकसूत्रिकंअध्यात्मादित्वाट्ठञ्कर्तव्यः। अविकसूत्रिकमिति वा पठितव्यंतत्र च मत्वर्थीयेठना रूपसिद्धिः ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। उपवीतं ब्रह्मसूत्रं त्रिवृत् त्रिसूत्रकं तच्चोर्ध्ववृतंप्रदक्षिणवलितं तान्यपि सूत्राणि त्रिभिः सूत्रैः कृतानीति स्मृत्यन्तरसिद्धं तानि चाप्रदक्षिणवलितानि सामर्थ्यात् आविकेन सूत्रेण कृतमाविकसूत्रम् ॥ ४४ ॥

( ३ ) **कुल्लूकः**। कार्पासमिति। यदीयविन्यासविशेषस्योपवीतसंज्ञांवक्ष्यति तद्धर्मिब्राह्मणस्य कार्पासंक्षत्रियस्य शणसूत्रमयंवैश्यस्य मेषलोमनिर्मितम्। त्रिवृदिति त्रिगुणंकृत्वा ऊर्ध्ववृतंदक्षिणावर्तितं एतच्चसर्वत्रसंबध्यते यद्यपि

गुणत्रयमेवोर्ध्ववृतंमनुनोक्तंतथापितत्त्रिगुणीकृत्य त्रिगुणंकार्यम् । तदुक्तंछन्दोगपरिशिष्टे । ऊर्ध्वंतुत्रिवृतंकार्यं तन्तुत्रयमधोवृतम् । त्रिवृतंचोपवीतंस्यात्तस्यैकोग्रन्थिरिष्यते । देवलोप्याह यज्ञोपवीतंकुर्वीत सूत्राणि नवतन्तवः ॥ ४४ ॥

( ४ ) **राघवानन्दः** । किंच कार्पासमिति ऊर्ध्ववृतंपूर्वंऊर्ध्वाकारेण वृतंत्रिगुणितंयत्सूत्रंअधोवृतंत्रिवृत्तदेव त्रिवृत्कार्यम् । तदुक्तंछन्दोगपरिशिष्टे ऊर्ध्वंतुत्रिवृतंकार्यंतंतुत्रयमधोवृतम् । त्रिवृतंचोपवीतंस्यात्तस्यैकोग्रन्थिरिष्यतइति ॥ अतो नवगुणंप्राप्तम् । तथा च देवलः यज्ञोपवीतं कुर्वित सूत्राणिनवतन्तवइति । कार्पासवत्शणसूत्रादावपि ज्ञेयम् ॥ ४४ ॥

( ५ ) **नन्दनः** । कार्पासंकार्पासविकारःकार्पाससूत्रमितियावत् । ऊर्ध्ववृतंसव्यहस्ततलेविन्यस्यदक्षिणहस्ततलेचोर्ध्वमावर्त्तितमूर्ध्ववृतंत्रिवृदितिच शणाविकसूत्रयोरपिप्रत्येकंविशेषणे । आविकसूत्रिकंअविभवंआविकंरोमेतियावत् । सूत्रिकंसूत्रनिर्मितमविरोमसूत्रनिर्मितमित्यर्थः ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । विप्रस्यउपवीतंकार्पासंस्यात् । कार्पाससूत्रस्येत्यर्थः । त्रिवृत्ऊर्ध्ववृतंकार्यंतत्त्रिवृत्जातंततअधःसकाशात् तत्नवगुणंऊर्ध्वंकार्यंउदीच्यानांमतम् । अथदाक्षिणात्यानांमतम् । पूर्वंतन्तुत्रयंअधोवृतंअधःसकाशात्उर्द्ध्वंकार्यंतत्त्रिवृतंऊर्ध्वंनवगुणंअधःकार्यम् ॥ ४४ ॥

**ब्राह्मणोबैल्वपालाशौ क्षत्रियोवाटखादिरौ ॥ पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ ४५॥**

( १ ) **मेधातिथिः** । सत्यपि द्वन्द्वनिर्देशे गुणविधिष्वेकत्वश्रवणात्केशान्तकइति प्रतिगृह्येप्सितंदण्डमिति च विकल्पितमेकदण्डधारणंप्रतीयते बैल्वः पालाशोब्राह्मणस्य दण्डइति गृह्ये गौतमीये चैकदण्डग्रहणमेवोक्तम् । इह केवला दण्डसत्ता श्रूयते ॥ दण्डानर्हन्तिदण्ड्याएते ब्रह्मचारिणांयोग्याःकस्यांक्रियायांइत्येतदत्र चोक्तंउत्तरत्र भविष्यति प्रतिगृह्येप्सितमिति । तस्मिंश्च ग्रहणेदण्डस्योपायत्वा द्विवक्षितमेकत्वमतइह द्विवचननिर्देशोदेवश्चेद्वर्षेद्वहवः कर्षिकुर्युरिति यथा प्राप्तानुवादः बिल्वपलाशवटखदिरपीलुदुम्बरवृक्षजातिविशेषनामधेयानि । बिल्वस्य विकारोवयवोवा बैल्वः । एवंसर्वत्रदर्शनार्थाश्चैते यज्ञियात्रा सर्वेषामिति वचनात् । एतान्दण्डान्वक्ष्यमाणे कार्ये अर्हन्ति । धर्मतः शास्त्रतः ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मतः कुलशीलानुरोधेन द्वयोर्द्वयोरन्यतरोबिल्वादिर्यस्य कुले यःपरिगृहीतइत्यर्थः । अतएवात्रन विकल्पोसवर्णेपि न द्विद्विदण्डसमुच्चयः शङ्क्यः प्रतिगृह्येप्सितं दण्डमिति वक्ष्यमाणत्वात् औदुम्बरःकाष्ठसाहचर्यान्न ताम्रमयः ॥ ४५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणइति । यद्यपि द्वन्द्वनिर्देशेन समुच्चयावगमाद्धारणमपि समुच्चितस्यैव प्राप्तंतथापि केशान्तिकोब्राह्मणस्यदण्डः कार्यइति तथा प्रतिगृह्येप्सितंदण्डमिति विधावेकत्वस्य विवक्षितत्वात् । बैल्वःपालाशोवादण्डइति वासिष्ठे विकल्पदर्शनात् । एकस्यैव दण्डस्य धारणंविकल्पितयोरेवैकब्राह्मणसंबन्धात् समुच्चयोद्वन्द्वेनानूद्यते ब्राह्मणादयोविकल्पेन द्वौ द्वौ दण्डौ वक्ष्यमाणकार्ये कर्तुमर्हन्ति ॥ ४५ ॥

( ४ ) **राघवानन्दः** । तेषांदण्डान्विधत्ते ब्राह्मणइति । बैल्वपालाशावित्यादिषु द्वन्द्वसाहित्यबोधनेपि विकल्पः । वक्ष्यति प्रतिगृह्येप्सितंदण्डमिति विधेयगतैकवचननिर्देशात् । बैल्वः पालाशोवाब्राह्मणदण्डः इति वासिष्ठेविकल्पदर्शनाच्च ॥ ४५ ॥

( ५ ) **नन्दनः** । अत्र द्वन्द्वनिर्देशेऽपिदण्डानांविकल्पएव विवक्षितः प्रतिगृह्येप्सितंदण्डमित्येकवचननिर्देशे न वक्ष्यमाणत्वात् । पैप्पलआश्वत्थः । धर्मतः समानधर्मयोगादित्यर्थः । ब्राह्मणोबैल्वदण्डंधर्मतोऽर्हत्युभयोरपि ब्रह्मवर्चससंबन्धसामान्यात् । ब्रह्मवर्चसाधिकरणंब्राह्मणः । बैल्वस्तुब्रह्मवर्चसविकारः असौवाऽऽदित्योयतोऽजायत ततोबिल्वउदष्ठित-

सयोन्येवब्रह्मवर्चसमवरुन्द्धेइतिश्रुतेः । ब्राह्मणः पालाशंचार्हत्युभयोर्गायत्रत्वात्गायत्रोवै ब्राह्मणः गायत्रः पर्णइति श्रूयते । वाटदण्डंक्षत्रियोधर्मतोऽर्हत्युभयोरेकवर्णत्वात् । तदुक्तमैतरेयब्राह्मणेक्षत्रंवाएतद्वनस्पतीनांयन्न्यग्रोधः क्षत्रंवैराजन्यइति। क्षत्रियः खादिरंचार्हति धर्मतउभयोर्बलिष्ठत्वसामान्यात् । वैश्यः पैप्पलंदण्डंधर्मतोऽर्हत्यश्वत्थवैश्ययोरोजःसंबन्धसामान्यात् मरुतोवाएतदोजोयदश्वत्थः । मरुतोवैदेवानांविशइतिहिश्रुतेः । वैश्यऔदुम्बरंचार्हतिधर्मतउभयोरपि पशुसंबन्धसामान्यात् पशुपालोवैश्यः प्रसिद्धः पशुविकारउदुम्बरः ऊर्क्पशवइतिश्रुतेः। पैलवेतिपाठे समानधर्मयोगोन्वेष्टव्यः पीलौगुडफलः स्रंसीत्यमरः ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । द्विजानांदण्डानाह । ब्राह्मणस्य बैल्वपालाशौ भवतः पालाशस्याभावेबिल्वःबिल्ववृक्षस्य दण्डःकार्यः । राज्ञःवाटखादिरौ वटवृक्षस्य वा खदिरवृक्षस्य वा दण्डः । वैश्यस्य पैलवः । पीलुवृक्षोद्भवोवा दण्डःउदुम्बरवृक्षजोवा दण्डः । एतान्धर्मतःधारयितुमर्हन्ति ॥ ४५ ॥

**केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ॥ ललाटसंमितोराज्ञः स्यात्तु नासान्तिको विशः ॥ ४६ ॥**

( १ ) **मेधातिथिः** । आकारविशेषवचनोदण्डशब्दः दीर्घकाण्डसम्मितायामंदण्डइत्युच्यते । कियत्तस्य दैर्घ्यमित्यपेक्षायामाह केशान्तंगच्छति प्राप्नोति केशान्तगोमूर्ध्वप्रमाणः पादाग्रादारभ्य मूर्द्धावधिः केशान्तगः केशावाऽन्तोऽस्येति केशान्तकः समासान्तःककारः प्रमाणतः प्रमाणेनानेन युक्तोदण्डः कार्यः कारयितव्योब्राह्मणस्याचार्येण ललाटसंमितः ललाटान्तमितः ललाटान्तप्रमाणः ललाटमात्रे चतुरङ्गुलेन मीयमानस्य दण्डशब्दवाच्यत्वाभावादेवंव्याख्यायते पादाग्रादारभ्य यावल्ललाटान्तंप्राप्तः । एवंविशोवैश्यस्य नासान्तगइति ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । केशाएवान्तोऽवच्छेदोयस्य ललाटोपरिस्थकेशपर्यन्तइत्यर्थः ललाटसंमितो ललाटादधोमितः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । केशललाटनासिकापर्यन्तपरिमाण क्रमेणब्राह्मणादीनांदण्डाः कर्तव्याः ॥ ४६ ॥

( ४ ) **राघवानन्दः** । दण्डानांपरिमाणमाह केशेति । केशान्तगइति मेधातिथिः । केशान्तश्च मूर्धावधिःब्रह्मरन्ध्रमिति यावत् । केशान्तिकइति पाठेपि सएवार्थः ॥ ४६ ॥

( ५ ) **नन्दनः** । ललाटसंमितः ललाटान्तिकः ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । दण्डस्य प्रमाणमाह । ब्राह्मणस्य दण्डःप्रमाणतःकेशान्तिकःकार्यः । राज्ञः दण्डःललाटसम्मितःललाटपर्यन्तउक्तः । विशःवैश्यस्यदण्डः नासान्तिकःनासिकापर्यन्तंस्यात् ॥ ४६ ॥

**ऋजवस्तेतु सर्वेस्युरव्रणाःसौम्यदर्शनाः ॥ अनुद्वेगकरानृणांसत्वचोनग्निदूषिताः ॥ ४७ ॥**

( १ ) **मेधातिथिः** । ऋजवः अवक्राः सर्वे इत्यनुवादः प्रकृतत्वाविशेषात् । अव्रणाअच्छिद्राः सौम्यंप्रियंकरं दर्शनमेषान्ते सौम्यदर्शनाः वर्णपरिशुद्धाः । अकण्टकिताश्च अनुद्वेगकराः नैतैःकश्चिदुद्वेजयितव्यः श्वा वा मनुष्योवा नृणामिति प्रदर्शनार्थं । सत्व च अतष्टाः अनग्निदूषिताः वैद्युतेन दावोत्थेन वाऽस्पृष्टाः ॥ ४७ ॥

---

( ४६ ) केशान्तिको=केशान्तगो ( मेधा ) । एवं नासान्तगइति ।

( २ ) **सर्वज्ञनारायणः**। अव्रणामध्ये काष्ठभागे छेदशून्याः सौम्यदर्शनाभयहेतवः अनुद्वेगकरानिम्निन्नतादिदोषेगाधृत्यहेतवः नाग्निदूषिता अग्निसंबन्धेन भ्रष्टपूर्वरूपाः ॥ ४७ ॥

( ३ ) **कुल्लूकः**। ते दण्डाअव्रणाअक्षताः शोभनदर्शनाः सवल्कला अग्निदाहरहिता भवेयुः ॥ ४७॥

( ४ ) **राघवानन्दः**। किंच ऋजवइति ऋजुताऽवक्रता अव्रणाः छिद्ररहिता अनुद्वेगकरा नातिस्थूलाः ॥ ४७ ॥

( ५ ) **नन्दनः**। ते दण्डाः ॥ ४७ ॥

( ६ ) **रामचन्द्रः**। अग्निदूषिता दण्डा न कार्याः न व्रणाः ॥ ४७॥

**प्रतिगृह्येप्सितंदण्डमुपस्थायच भास्करम् ॥ प्रदक्षिणंपरीत्याग्निंचरेद्भैक्षं यथाविधि ॥ ४८ ॥**

( १ ) **मेधातिथिः**। प्रावृतेषु चर्मसु मेखलाबन्धनंकर्तव्यम्। आबध्यमेखलामुपनयनंकर्तव्यंकृतेचोपवीते दण्डग्रहणंदण्डंगृहीत्वा भास्कर आदित्यउपस्थेयः अभिमुखंस्थित्वाऽऽदित्यदैवतैरभिधानमादित्यस्य कर्तव्यंगृह्यान्मन्त्रावगमः अन्या चेतिकर्तव्यता ततएव यत्सर्वसाधारणंतदिहोच्यते प्रदक्षिणंपरीत्यसर्वतोगत्वाग्निंचरेत्कुर्यात्। भैक्षंभिक्षाणां समूहोभैक्षंतच्चरेद्याचेत यथाविधीति वक्ष्यमाणविध्यनुवादः भिक्षाशब्देन स्वल्पपरिमाणंभक्तायुच्यते ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः**। ईप्सितं उपनयनकालएव नियतत्वेनपरिगृहीतजातीयं मध्ये विजातीयं ग्रहणनिषेधार्थमेतत् उपस्थाय सौरैर्मन्त्रैः परीत्य वेष्टयित्वा त्रयमप्येतत्भिक्षाङ्गंयथाविधिवक्ष्यमाणविधिना ॥ ४८ ॥

( ३ ) **कुल्लूकः**। न च तैःप्राणिजातमुद्वेजनीयमित्याह प्रतिगृह्येप्सितमिति । उक्तलक्षणं प्रागुमिष्टंदण्डंगृहीत्वाऽऽदित्याभिमुखंस्थित्वाग्निंप्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत् ॥ ४८ ॥

( ४ ) **राघवानन्दः**। भास्करोपस्थानंभिक्षायाः पूर्वकालेपीत्याह उपस्थायेति । परीत्याग्निंअग्निंपरिक्रम्य प्रदक्षिणंयथास्यात्तथा न सव्यापसव्येन भिक्षेत भैक्षंभिक्षासमूहः ॥ ४८ ॥

( ५ ) **नन्दनः**। वैकल्पिकयोरीप्सितम् । भिक्षैव भैक्षंभिक्षांयाञ्चांचरेत्कुर्यात् । ब्रह्मचारीतिशेषः । केचिदेतद्भैक्षाचरणमुपनयनाङ्गमाहुरन्येतु नित्यम्। नित्यपक्षे भास्करोपस्थानमग्निप्रदक्षिणंचाह्निककर्मोपलक्षणम् ॥ ४८ ॥

( ६ ) **रामचन्द्रः**। ईप्सितंदण्डंयथोक्तंदण्डंप्रगृह्य भास्करमुपस्थाय कस्य ब्रह्मचारिणइतिउपस्थायअग्निंप्रदक्षिणंपरीत्यकृत्वा यथा विधिवद्भैक्ष्यंचरेत् ॥ ४८ ॥

**भवत्पूर्वंचरेद्भैक्षमुपनीतोद्विजोत्तमः॥ भवन्मध्यंतु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥**

( १ ) **मेधातिथिः**। भिक्षा प्रार्थनावाक्यमत्र भैक्ष्यशब्देनोच्यते। तस्य हि भवच्छब्दपूर्वता संभवति। भक्तादेरन्नस्य स्त्रीणांच प्रथमंभिक्षणागतयोपदेशात्प्रार्थनायां च प्रार्थ्यमानस्य संबोध्यत्वात्संबुद्धिविभक्त्यन्तः स्त्रीलिङ्गोभवच्छब्दः प्रयोक्तव्यः क्रमएव चात्रादृष्टाऽर्थोनियम्यते यथार्थंतु शब्दप्रयोगो भवति भिक्षांदेहीति कुतः पुनः संस्कृतशब्दार्थलाभः यावतास्त्रियः संबोध्यन्तेताश्च संस्कृतंनावबुध्यन्ते । नित्यमुपनयनंतस्य च शब्दोच्चारणमङ्गत्वेनोक्तमितिनिन्याश्चापभ्रंशाः न तैर्नित्यस्य संयोगउपपद्यते। तथैव च शिष्टाअसाधुरूपश्रुत्यैकदेशसादृश्येन साधून्संस्मृत्यार्थंप्रतियन्त्यसाधुरनुमानेन वाचकइति दर्शनेन गाशब्दोहि सादृश्याद्गोशब्दमनुमापयति । ततोर्थप्रतिपत्तेरेवंस्त्रियः सादृश्यादसाधुभ्यःसाधूनुत्पन्नसंबन्धात्स्मृत्वातेभ्योर्थंप्रत्येष्यन्ति । स्वल्पाक्षरंचैतत्पदत्रयंसर्वत्रप्रसिद्धंस्त्रीभिरपि सुज्ञानं। एवंभवन्मध्यंक्षत्रियः भिक्षांभवति देहीति । तथा वैश्योभवच्छब्दउत्तरमस्येति भवदुत्तरंवाक्यंसमासार्थः। उपनीतइति भूतप्रत्ययनिर्देशादान्वहिके पितृन्यर्थे भैक्ष्यचरणेऽयमेव विधिरिति दर्शयति। एषप्रोक्तोहि द्विजातीनामौपनायनिकइत्यत्रोपनयनप्रकरणमुपसंहरन्नु-

पनयनाङ्गस्यापि भैक्ष्यस्यायमेव विधिरित्याह। अन्यथाकरणादुपनयनाङ्गमेवैतत्स्याद्यदिवा न प्रत्ययसामर्थ्यात्प्रकरणं- बाधित्वा वृत्यर्थएव भैक्ष्यउपनीयमानस्यतदङ्गंयद्भैक्षयच्चाहरहर्वृत्यर्थंतत्र सर्वत्रायंधर्मः ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः**। चरेदिति याच्ञांलक्षयति। अतःकर्मभिर्भैक्षमिति तेन भिक्षांदेहीति वाक्यरचनार्थसि- द्धा तस्य वाक्यस्यादिमध्यान्तेषु वर्णक्रमेण सगौरवसंबोधनार्थो भवत्पदंकार्यमिति विधियुते तच्च संबुध्यंते सामर्थ्यात् स्त्रीप्रत्ययवच्च तासामेव भिक्षाप्रार्थनविषयतया विधानात् तेन भवति भिक्षांदेहीत्यादि प्रार्थनावाक्यम् ॥ ४९ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणोभवति भिक्षांदेहीति भवच्छब्दपूर्वंभिक्षांयाचन्वाक्यमुच्चारयेत्। क्षत्रियोभिक्षांभवति देहीति भवन्मध्यं। वैश्योभिक्षांदेहि भवतीति भवदुत्तरम् ॥ ४९ ॥

( ४ ) **राघवानन्दः**। प्रार्थमिकभिक्षाङ्गभूतसंबोधनपदस्य स्थानंनियमयन्तद्धात्रीराहद्वाभ्यां। भवत्पूर्वमिति। भवति भिक्षांदेहि भिक्षां भवतिदेहि भिक्षादेहिभवतीत्येवंप्रयोगः ॥ ४९ ॥

( ५ ) **नन्दनः**। यथाविधीतियदुक्तंतदाहभवदिति। भवच्छब्दमुपनयनाङ्गत्वेनोक्तोप्ययंभिक्षाचरणविधिः सार्व- त्रिकः प्रत्येतव्यः ॥ ४९ ॥

( ६ ) **रामचन्द्रः**। उपवीतोद्विजोत्तमःकृतयज्ञोपवीतःभवत्पूर्वंभैक्ष्यंचरेत्। राजन्यःभवन्मध्यंचरेत्। वैश्यःभवदुत्त- रंभैक्ष्यंकार्यं। तद्यथा ब्राह्मणःॐभवतिभिक्षांदेहीति उच्चरेत्। क्षत्रियःभिक्षांभवति देहीतिउच्चरेत्। भिक्षांदेहिभवती त्येवंवर्णक्रमेण ज्ञेयम् ॥ ४९ ॥

**मातरंवा स्वसारंवा मातुर्वा भगिनींनिजाम् ॥ भिक्षेत भिक्षांप्रथमं याचैनं नावमानयेत् ॥ ५० ॥**

( १ ) **मेधातिथिः**। मात्रादयः शब्दाः प्रसिद्धार्थाः निजासोदर्यायाचैनंविमानयेत। विमानना अवज्ञानं नदीयतइति प्रत्याख्यानं। तथा च गृह्यं। अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनींवेति। तदेव हि मुख्यंप्राथम्यं यदुपनीयमानस्या हरहस्तु न विमानना भयमाश्रयणीयम् ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः**। एवंच गुरोःकुले नभिक्षेतेत्यादेर्वक्ष्यमाणनिषेधस्यापवादः अतस्तत्रापि गुरुपदमाचार्य परमेव तेन पितुराचार्यपरत्वेपि तद्गृहभिक्षणं न निषिद्धं निजांसोदरीं भिक्षेत याचेत प्रथमतोभिक्षारम्भेनित्यं याचैनमि- त्यवशिष्टेपि स्त्रीलिङ्गनिर्देशात् स्त्रीष्वेव भैक्षचरणम् ॥ ५० ॥

( ३ ) **कुल्लूकः**। उपनयनाङ्गभूतांभिक्षांप्रथमंमातरंभगिनींवा मातुर्वाभगिनींसहोदरांयाचेत्। या चैनं ब्रह्मचा- रिणंप्रत्याख्यानेन नावमन्येत पूर्वासंभवउत्तरापरिग्रहः ॥ ५० ॥

( ४ ) **राघवानन्दः**। अप्रत्याख्यायिनींचाग्रे भिक्षेतेति गृह्योक्तेः। अतोमातरंप्रथमंभिक्षेत निजांसोदरांयाचैनंन विमानयेत् नतिरस्कुर्यात्। विमानितोबालोब्रह्मचर्यव्रते क्षुब्धःस्यादिति भावः ॥ ५० ॥

( ५ ) **नन्दनः**। पूर्वंस्त्रियमेवानुमन्त्र्य भिक्षेत न पुमांसमित्याह मातरमिति। विमानना प्रत्याख्यानम् भिक्षानि- यमोऽयंप्रथमभिक्षाविषयः। देवयज्ञैरहीनानामित्यादिनाद्वितीयादौ नियमवंक्ष्यति ॥ ५० ॥

( ६ ) **रामचन्द्रः**। निजांभगिनींभिक्षांभिक्षेत याचेत् यएवंब्रह्मचारिणं न विमानयेत न अवमन्येत ॥ ५० ॥

**समाहृत्य तु तद्भैक्षंयावदन्नममायया ॥ निवेद्यगुरवेश्नीयादाचम्य प्राङ्मुखःशुचिः ॥ ५१ ॥**

( १ ) **मेधातिथिः**। समाहृत्येति शब्दोबह्वीभ्यआहरणंदर्शयति। नैकस्याः सकाशाद्बह्व्योग्रहीतव्याः। तदिति

( ५१ ) यावदन्नं=यावदर्थं ( मेधा० )

यस्यानन्तरंशब्दसंनिधिर्वृत्यर्थस्य नप्राकरणिकस्योपनयनाङ्गस्य । तस्यहिगृह्यकारै रनुप्रवचनीयं श्रपयेदिति विहितं न भोजनंतिष्ठेदहः शेषमितिच कृतप्रातराशस्य चोपनयनं अतोनोपनयनाङ्गंभैक्षभोजनं । यावदर्थं यावता भैक्ष्येण तृप्त्याख्यप्रयोजननिर्वृत्तिः न बहुभिक्षितव्यममाययानिवेद्य गुरवे न कदन्नेन संस्कृतमन्नंप्रच्छाद्य कदन्नंगुरोः प्रकाशयेत्। तदन्नंकिल एषनग्रहीष्यतीत्यनया बुद्ध्यानिवेदनमिदंप्राप्तमिति प्रकटीकरणम्। अगृहीते गुरुणानुज्ञातोनाश्नीयात्। कथंपुनर्निवेदनमदृष्टसंस्कारार्थमेव न भवतीतिहासप्रामाण्यात् तथाच भगवान्व्यासः । स्त्रितकूपाख्याने गुरुणा गृहीतमिति दर्शितवान्। अनुज्ञातोभुञ्जीतेति यत्कचिच्छ्रूयते। आचम्य प्राङ्मुखः आचमनेप्राङ्मुखतेयमानन्तर्यादिति केचित्तदयुक्तम्। प्रागुदङ्मुखइत्याचमनेदिङ्नियमोभविष्यति तस्माद्भोजने नैवसंबन्धः शुचिश्चाण्डालादि दर्शनमशुचिदेशाक्रमनिष्ठीवनादिकृताचमनस्य भोजनकालेऽनेन निषिध्यते ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । यावदर्थंयावत् स्वोपयुक्तांअमायया प्रतारणाद्यकृत्वा निवेद्य उपदर्श्यप्राङ्मुखआचम्येति भोजनाङ्गाचमनउदङ्मुखतानिवृत्तिः न तु प्राङ्मुखोश्नीयादित्यर्थः तद्यच्चात्राचमनंनित्यतःप्राङ्मुखत्वंच विधीयतइत्याहुः शुचिःकृतसम्यक्शौचो नाप्रयतः गृहस्थस्य भोजने प्राक्प्रत्यङ्मुखतारूपदिङ्नियमः स्मृत्यन्तरसिद्धोमनोरप्यभिमतएव तस्यापि श्रुतिमूलत्वात् तथा च तादृङ्नियमोब्रह्मचारिणो नास्तीत्येतदर्थः ॥ ५१ ॥

( ३ ) **कुल्लूकः** । तद्भैक्ष्यंबहुभ्यआहृत्य यावदन्नंतृप्तिमात्रोचितंगुरवे निवेद्य निवेदनंकृत्वा ऽमायया न कदन्नेन सदन्नंप्रच्छाद्यैवमेतद्गुरुर्ग्रहीष्यतीत्यादिमायाव्यतिरेकेण तदनुज्ञातआचमनंकृत्वा शुचिःसन्भुञ्जीत प्राङ्मुखः ॥ ५१ ॥

( ४ ) **राघवानन्दः** सायंतनादिसंचयपुरःसरंगुरवे निवेद्यैव भुञ्जीतेत्यादिनियममाह समाहृत्येति अमायया निवेद्य जुषदन्नेन सदलंमस्थायान्यत्र स्थापयित्वा वा किंचिन्निवेदयेदिति । अष्टौग्रासामुनेःप्रोक्ताःषोडशारण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य यथेष्टंब्रह्मचारिणइति ॥ ग्रासनियमाभावपरं नतु बहुवारपरंअतउक्तंयावदर्थंयावतोदरपरिपूर्तिस्तथाम्नायादन्नंतथान्तरेति वक्ष्यति तेन भोजनद्वयम् ॥ ५१ ॥

( ५ ) **नन्दनः** । भैक्षंभिक्षासमूहम्। यावदर्थंयावन्मृष्टाशनम्। अमायया रागद्वेषपरित्यागेन । गुरवे निवेद्य गुरुमनुज्ञाप्येत्यर्थः । गुरुनिवेदनंचभिक्षासंस्कारार्थम् ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । यावदर्थंयावत्अर्थंप्रयोजनंतत्भैक्ष्यंअन्नंसमाहृत्यआनीयअमायया गुरवे निवेद्य तदाज्ञया गुरोःआज्ञयाऽऽचम्य प्राङ्मुखःसन्नश्नीयात् ॥ ५१ ॥

**आयुष्यंप्राङ्मुखोभुङ्क्तेयशस्यंदक्षिणामुखः ॥ श्रियंप्रत्यङ्मुखोभुङ्क्तेऋतंभुङ्क्तेह्युदङ्मुखः ॥ ५२ ॥**
**[ सायंप्रातर्द्विजातीना मशनंस्मृतिनोदितम् ॥ नान्तरेभोजनंकुर्यादग्निहोत्रसमोविधिः ॥ १ ॥ † ]**

( १ ) **मेधातिथिः** । निष्कामस्य प्राङ्मुखस्य भोजनंविहितंनित्यतयेदानींकाम्याविधयउच्यन्ते । आयुषे हितंआयुष्यंप्राङ्मुखोभुंक्तइति । यदि तद्भोजनादायुः प्राप्यते ततआयुष्यंतद्भवति तेनायमर्थः संपद्यते । आयुष्कामः प्राङ्मुखो भुञ्जीतअधिकारद्वयंप्राच्यांनित्यंकाम्यंच। आयुष्कामः फलमभिसंदधीतइतरस्तु न तथेति यथा नित्यमग्निहोत्रंस्वर्गकामस्य चा सकृत्प्रयोगात्तन्त्रेण फलकामस्य नित्योप्यधिकारोनिवर्तते । एवंयशः कामोदक्षिणामुख इमे काम्याएवविधयः । श्रियमिच्छन्श्रियं नक्यजन्ताच्छता कृतः श्रियैहितंवा श्रियमिति मकारान्तः पाठः । आयुष्यादिवत्प्राण्यङ्गत्वात्स्वार्थे भुजिर्वर्तते यथार्तेभुङ्क्तइति श्रियंभोजनात्प्राप्नोतीति तथा च द्वितीयान्तः पाठः श्रियमिति । तादर्थ्ये वाचतुर्थी श्रियै प्रत्यगिति । ऋतं-

† ( ख, ट ) । परंतु ( ग ) पुस्तके स्मृतिनोदितंमित्यस्यस्थानेश्रुतिनोदितमिति वर्तते ।

सत्यंयज्ञश्च तत्फलंवा स्वर्गः स्वर्गकामउदङ्मुखोभुञ्जीत । अन्तरेणापि विधिप्रत्ययमप्राप्तत्वाद्विध्यर्थावगतिः पञ्चमल्कारादिकल्पनया । एवमेतद्दिग्विभागेन भोजनंफलविशेषार्थं । विदिग्भोजनंत्वर्थप्राप्तं नित्येन प्राङ्मुखतानियमेनोपपद्यते। अयंच काम्योविधिर्नब्रह्मचारिणएव भैक्ष्यभोजनविषयोऽपि तुगृहस्थादीनामपि भोजनमात्राश्रितः तथा चाश्नीयादिति।प्रकृते भुंक्तइत्याख्यातान्तरनिर्देशोलिङ्गमितरथाश्नीयादिति यतोनिःसंदिग्धा प्रकृतविषयता प्रतीयते। तदेवनिरदेक्ष्यत् । भुङ्क्तइति तु निर्देशे किंप्रकृतएवार्थःशब्दान्तरेण निर्दिष्टउतशब्दार्थतया भोजनमात्रमिति संदेहआख्याताद्वृत्तावर्थान्तरावगतिर्नप्रकृतप्रत्यभिज्ञानमेव । यत्तु विधिप्रत्ययाभावादर्थवादएवायंपूर्वशेषइति चोक्तः परिहारवचनानि त्वपूर्वत्वादिति नच पूर्वेकवाक्यता हेतुर्विभज्यमानसाकाङ्क्षत्वादिररिता। यद्यप्युत्तरेषांचैतदवरोधीत्यनेनातिदेशेन ब्रह्मचारिधर्मोपि पुरुषमात्रविषयः स्यात्फलंतु नस्याद्गुणकामनायां हि नातिदेशात्प्रवृत्तिमनुमन्यंते । गोदोहनेन पशुकामस्य प्रणयेत् । खादिरंवीर्यकामस्येति विकृतिषु नेष्यते कैश्चित् ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वासुदिक्षुफलानिदर्शयति आयुष्यमिति। यत्भुंक्ते तदायुष्यमायुषोहितमिति योज्यं यदुदङ्मुखोभुंक्ते तत्श्रियंभुक्तइत्यावर्तनीयं एवमृतमित्यत्रापि ऋतंयज्ञःसत्यंवा ॥ ५२ ॥

( ३ ) **कुल्लूकः** । इदानींकाम्यभोजनमाह आयुष्यमिति । आयुषे हितमन्नंप्राङ्मुखोभुङ्क्ते आयुःकामःप्राङ्मुखोभुङ्क्तइत्यर्थः । यशसे हितंदक्षिणामुखः श्रियमिच्छन्प्रत्यङ्मुखः ऋतंसत्यंतत्फलमिच्छन्नुदङ्मुखोभुञ्जीत ॥ ५२ ॥

( ४ ) **राघवानन्दः** । प्राङ्मुखइत्युक्तंतत्र गोदोहनन्यायेन गुणफलंविधास्यन्नाह । आयुष्यमिति । चमसेनापःप्रणयेद्गोदोहनेन पशुकामस्यइत्यत्र श्रुतौ यथा चमसमुपलक्षणीकृत्य गोदोहनप्रवेशेन पशुफलमेवंभोजनमाश्रित्य प्राङ्मुखत्वमुपलक्षणीकृत्य दक्षिणामुखादिप्रवेशोयथोक्तफलाय आयुष्यमायुषेहितंतेनायुःकामःप्राङ्मुखोश्नीयादिति । एवमन्यत्र श्रियं श्रियमिच्छन् ऋतंसत्यमिच्छन् विदिग्भोजनंतुप्राङ्मुखत्वनियमेन निरस्तम् ॥ ५२ ॥

( ५ ) **नन्दनः** । अथकाम्यभोजनविधिमाहआयुष्यमिति । प्राङ्मुखोयदन्नंभुङ्क्तेतदायुष्यंतदायुष्करमित्यर्थः । दक्षिणामुखोयद्भुङ्क्तेतद्यशस्यंयशस्करमित्यर्थः । पश्चान्मुखोयद्भुङ्क्तेतच्छ्रियंश्रीकरमित्यर्थः । उदङ्मुखोयद्भुङ्क्तेतदृतमृतनिमित्तंसत्यवादित्वनिमित्तमित्यर्थः ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । ऋतंसत्यंउदङ्मुखःसन्भुंक्ते । एतद्भोज्यंकाम्यपरम् ॥ ५२ ॥

[ **रामचन्द्रः** । सायमिति अन्तरेदिवसमध्येभोजनं न कुर्यात् अग्निहोत्रसमोविधिः ॥ १ ॥ ]

**उपस्पृश्य द्विजोनित्यमन्नमद्यात्समाहितः॥ भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत्॥५३॥**

( १ ) **मेधातिथिः** । आचमनोपस्पृशतिशब्दौ समानार्थौशुद्ध्यर्थसंस्कारविशेषवचनौ शिष्टव्यवहारादवगम्येते यद्युपस्पृशतिरर्थान्तरे पठितश्चमिरप्यदनमात्रे तथापि विशेषएव सोपसर्गयोः प्रयोगदर्शनात्तदर्थतैव प्रतीयते । स्पृशेः सामान्यविषयत्वेऽपि प्रयोगोनियामकोगडिर्वदनैकदेशे पठ्यते। सच कपोलएव गण्डइति प्रयुज्यते। नैकदेशान्तरे पुण्यसिद्ध्यौ नक्षत्रमात्रे पठ्येते विशेषे च वर्तेते। धाय्याशब्दः सामिधेनीमात्रे पठ्यते । आवापिकीषु च वर्तते। अतोपएवाचम्येत्यर्थः। सएवोपस्पृश्येतिसचपरस्ताद्विधायिष्यते। सामानाधिकरण्यंचानयोर्दृश्यते नित्यकालमुपस्पृशेदित्यभिधाय त्रिराचामेदित्याहातःसमानार्थउक्त्याचम्येति भोजनार्थतयाऽऽचमने पुनर्वचनमानन्तर्यार्थमनन्तरमेवभुञ्जीत न व्यापारान्तरेणव्यवदधीत। तथा च भगवान्व्यासः पञ्चार्द्रोभुञ्जतेनित्यंतेषु वत्स्याम्यहंहरेः॥ श्रीः किलैवमाह । द्वौ हस्तौ द्वौचपादावास्यंच एषापंचार्द्रतायाचोपस्पर्शनानन्तरंभुञ्जानस्य भवति न विलम्बमानस्य । इहापि वक्ष्यत्यार्द्रपादस्तु भुञ्जीतेति स्नातकव्रतेषु

तस्यापौनरुक्त्यंच वक्ष्यामः। नित्यग्रहणंप्रकरणाद्ब्रह्मचारीधर्मभोजनतामाविज्ञायि भोजनमात्रधर्मोयथास्यादुपदेशतएव। अत्र द्विजग्रहणंभोक्तृमात्रधर्मार्थंचाहुः नित्यग्रहणंचानुवादंनते सम्यग्मन्यन्ते। यदिद्विजशब्दः प्रकृते ब्रह्मचारिणि न समाविशेत्तदा स्यादपि। यदा तु तस्याप्येतदभिधानंतदा नान्तरेण नित्यग्रहणंप्रकरणबाधोपलभ्यते समाहितः भुज्यमानंद्रव्यंस्वात्मशक्तिंचावेक्षमाणोन्यचेतस्कस्यहि गुरुविरुद्धवादादिवर्जनं स्वात्म भोजनंच नस्याद्भुक्त्वा चोपस्पृशेत् स्नेहादिलेपापनयनंद्रव्यशुद्धावुक्तं कृते तस्मिन्भुक्तवतइदमाचमनंविधीयते। अत्र केचिन्मन्यन्तेशुत्ध्यर्थमेकमाचमनंसुप्त्वाक्षुत्वा च भुक्त्वा चेति। अनेनादृष्टार्थंद्वितीयंकर्तव्यम्। एवंच पठ्यतेआचान्तःपुनराचमेदिति। एतत्पश्चमे स्थापयिष्यामः सम्यगिति वैधतामाचनपदार्थस्यानुवदति यादृशोविधिरुक्तस्तंसर्वमनुतिष्ठेदद्भिः खानिचसंस्पृशेत् खानि छिद्राणि शीर्षण्यानि ननु चैनदुक्तमेव खानि चैव स्पृशेदद्भिरिति। आत्मशिरसोर्व्यावृत्त्यर्थमिति केचित्। यदा शुचिःसन्नभोजनार्थतयैवाचामति। येषांच भोजनोत्तरकालमेकंशुध्यर्थमाचमनमपरमदृष्टार्थंतत्रादृष्टार्थआत्मशिरसी नस्पृश्येते शुध्यर्थंतु तादृशमुत्पन्नंतस्य संपूर्णाङ्गस्यप्रयोगोवक्ष्यते शौचेप्सुःसर्वदाचामेदिति यदिवा विधिप्रत्यभिज्ञानार्थंशास्त्रीयमेतदाचमनं नलौकिकमिति। ज्ञानाङ्गविशेषसंबन्धस्यतदङ्गिनिर्देशेतदेवेदमिति प्रत्यभिज्ञानसिद्धिः। अतश्च यत्राचामेदिति श्रुतं तत्र नयस्य कस्यचिद्द्रव्यस्य भक्षणमात्रंप्रतीयते किंतर्हि शास्त्रीयस्यसंस्कारस्य सपरिकरस्येति यदुक्तंतद्दर्शितंभवति ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः**। समाहितः वैश्वानरोपासनादिरूपचित्तसमाधिमान् भुक्त्वाचोपस्पृशेदाचामेत् तथाप्राणादि क्रियाशक्त्यधिष्ठातृदेवतानामाप्यायनस्यप्राणाहुतिभिः कृतत्वात् बुद्धिशून्यात्मकबुद्धीन्द्रियाधिष्ठातृदेवतानां आप्यायनार्थं खानि बुद्धीन्द्रियाधिष्ठानछिद्राण्यद्भिः सहितेन हस्तेनोपस्पृशेदित्याचमनाङ्गं खस्पर्शनादन्यत् भोजनाङ्गमेतद्विहितं आचमनाङ्गंतु वक्ष्यति । एतच्चोपस्पृशेत्यादि गृहस्थादीनामपीति कथयितुं नित्यमित्युक्तं सर्वदायावज्जीवमित्यर्थः ॥ ५३ ॥

( ३ ) **कुल्लूकः**। निवेद्यगुरवेऽश्नीयादाचम्येति यद्यपि भोजनात्प्रागाचमनंविहितंतथाप्यद्भिःखानि च संस्पृशेदिति गुणविधानार्थोऽनुवादः। नित्यंब्रह्मचर्यानन्तरमपि द्विजआचम्यान्नंभुञ्जीत। समाहितोऽनन्यमनाः। भुक्त्वा चाचामेदिति सम्यग्यथाशास्त्रंतेन। प्रक्षाल्य हस्तौ पादौ च त्रिःपिबेदम्बुवीक्षितंइत्यादि दक्षाद्युक्तमपि संगृण्हाति। जलेन खानीन्द्रियाणि षट्छिद्राणिच स्पृशेत्। तानि च शिरःस्थानि घ्राणचक्षुःश्रोत्रादीनि ग्रहीतव्यानि। खानि चोपस्पृशेच्छीर्षण्यानीति गोतमवचनात्। उपस्पर्शनंकृत्वा खानि संस्पृशेदिति पृथग्विधानात् त्रिरब्भक्षणमात्रमाचमनंखस्पर्शनादिकमितिकर्त्तव्यता इति दर्शितम् ॥ ५३ ॥

( ४ ) **राघवानन्दः**। आचम्येत्युक्तंतदनुष्ठानंज्ञापयनतत्करणकालंभोजननियमंसार्थवादंचाह उपस्पृशेदिति दशभिः। उपस्पृशेदाचामेत् वामहस्तस्थाभिरद्भिःसम्यक्यथाशास्त्रंखानि शीर्षण्यानीन्द्रियाणि चकाराद्धृदयशिरसी ॥ ५३ ॥

( ५ ) **नन्दनः**। उपस्पृश्याचम्य नित्यमाश्रमान्तरेऽपि। समाहितोऽनन्यपरः। खानि नेत्रादीनि। अद्भिः सह ॥ ५३ ॥

( ६ ) **रामचन्द्रः**। द्विजः अपउपस्पृश्य आचम्य अन्नं अद्यात् भक्षयेत्। भुक्त्यनन्तरंअपउपस्पृशेत्आचामेत् अद्भिःजलैःखानि छिद्राणि मुखनासिकादीनि संस्पृशेत् ॥ ५३ ॥

**पूजयेदशनंनित्यमद्याच्चैतदकुत्सयन् ॥ दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ५४ ॥**

( १ ) **मेधातिथिः**। अश्यतइत्यशनंभक्तसक्तुपूपाद्युच्यते। तदशनार्थमानीतंदेवतारूपेण पश्येत्। एषा वै परमा-

देवता यदन्नन्तस्य सर्वेषां । भूतानांसृष्टत्वेन स्थितिहेतुतया च यद्दर्शनंसास्य पूजा । अथवा प्राणार्थत्वेन भावनंध्यानं-यजन्ममतदर्थत्वंसंपूजयतिमांसदेति नमस्कारादिना वा प्रणम्य ग्रहणंपूजा । अद्याच्चैतदकुत्सयन् । कदन्नतया दुःसंस्कारो-पग्रहणेन वा कुत्साहेतु संभवे नान्नंकुत्सयेत् । किमिदमश्यते । अरुचिकरंधातुवैषम्यजनकमित्येवमादिनाभिधानेन नाक्षिपेत् । यदि तु तद्रूपंभवति तदा नाद्यान्नकुत्सयन्नद्यादृष्ट्वैव तृप्येत् । पुत्ररूयादिसंदर्शनेन चिरप्रवासप्रत्यागतइव तुष्येत प्रीयेत प्रसीदेच्च निमित्तान्तरजमपि कालुष्यमन्नदर्शनेन हित्वा मनःप्रसादमाश्रयेत् । प्रतिनन्देच्च सम्यग्व्याशंसनंप्रतिनन्दनं नित्ययुक्ताएते नस्यामेत्यादरोपदर्शनमभिनंदनंसर्वशः सर्वदा । अन्यतरस्यामिति व्यवस्थितविभाषाविज्ञानात्समम्यर्थे शसूकर्तव्यः । सर्वदेति वा पठितव्यम् ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । पितृंनुस्तोषमित्यादिमन्त्रैरत्र स्तुतिः पूजाअकुत्सयन् विरसमेतदन्नमित्याद्यंनवदन् तृप्ये-त्सऽन्तोषंकुर्यात् प्रसीदेदुतान्न द्वेषोपि पूर्वंतदेतन्निवर्तयेत् प्रतिनन्देत् प्रीतिद्योतकवचनान्युच्चारयेत् ॥ ५४ ॥

( ३ ) **कुल्लूकः** । सर्वदाऽन्नंपूजयेत् प्राणार्थत्वेन ध्यायेत् । तदुक्तमादिपुराणे अन्नंविष्णुः स्वयंप्राहइत्यनुवृत्तौ । प्राणार्थं मांसदाध्यायेत्समांसंपूजयेत्सदा । अनिन्द्यश्चैतदद्यात्तुदृष्ट्वात्तृप्येत्प्रसीदेच्चेति ॥ हेत्वन्तरमपि खेदमन्नदर्शनेन त्यजेत् प्रतिनन्देत् । नित्यमस्माकमेतदस्त्वित्यभिधायवन्दनंप्रतिनन्दनम् । तदुक्तमादिपुराणे अन्नंदृष्ट्वाप्रणम्यादौ प्राञ्जलिःकथये-त्ततः । अस्माकंनित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ॥ सर्वशःसर्वमन्नम् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । किंचपूजयेदितिअश्यतइत्यशनमन्नंपूजयेद्ब्रह्मदृष्ट्यापश्येत्अकुत्सयन्अनिन्दयन्तृप्येत् अ-होप्राणतृप्तिर्भविष्यतीति प्रसीदेत् तत्काले प्रकारान्तरोपस्थितंखेदंत्यजेत्अभिनन्देत्नित्यंमेस्यादिति ॥ ५४ ॥

( ५ ) **नन्दनः** । नित्यमाश्रमान्तरेऽपिपूजयेद्देवतामिव सत्कुर्यात् । प्रसीदेदन्यस्मै कुपितोऽपि । सर्वदाअभोजनस-मयेऽपि ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । प्रथमंनित्यंअशनंअन्नंपूजयेत् । एतत् अन्नंअकुत्सयन् अद्याद्भक्षयेत् अन्नं । दृष्ट्वा तृप्येतप्रसीदेत् प्रसन्नोभवेत् ॥ ५४ ॥

**पूजितंह्यशनंनित्यंबलमूर्जं च यच्छति ॥ अपूजितंतु तद्भुक्तमुभयंनाशयेदिदम् ॥ ५५ ॥**

( १ ) **मेधातिथिः** । पूर्वविधिशेषोयमर्थवादोनतु फलविधिः फलविधौहिकाम्योयंविधिः स्यादूर्जकामस्य बलका-मस्य च ततश्चनित्यशब्दोनोपपद्येत पूजितंह्यशनं नित्यमिति अतोयंयावज्जीविकः प्राङ्मुखतावंनियमः । अपूजितंभुक्तंह्यु-भयंनाशये द्वलमूर्जंच बलंसामर्थ्यमनायासेन भारोद्यमनादिशक्तता कृशस्याप्यूर्जमहाप्राणताऽङ्गोपचयः महाकायोमहा-बलश्चभवति ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । बलंसामर्थ्यं ऊर्जं मुत्साहं ॥ ५५ ॥

( ३ ) **कुल्लूकः** । पूजितमिति । यस्मात्पूजितमन्नसामर्थ्यंवीर्यंच ददात्यपूजितंपुनरेतदुभयंनाशयति तस्मात्सर्वदा-ऽन्नंपूजयेदिति पूर्वेणैकवाक्यतापन्नमिदंफलश्रवणम् । सन्ध्यावन्दनादावुपात्तदुरितक्षयवन्नित्यंकामनाविषयत्वेनापि नित्यश्रुतिरविहतानित्यश्रुतिविरोधात् । फलश्रवणंस्तुत्यर्थमिति तु मेधातिथिगोविन्दराजौ ॥ ५५ ॥

( ४ ) **राघवानन्दः** । पूजिताशनेदृष्टफलमाह पूजितमिति । बलंदैहिकंऊर्जंअप्रयत्नोपस्थितान्नंव्यतिरेकेदोष-माह अपूजितमिति । भक्तंभुज्यतइतिअन्नंउभयंबलमूर्जंच ॥ ५५ ॥

( ५ ) **नन्दनः** । पूजाकुत्सनयोरर्थवादमाहपूजितमिति । तत्रापि भक्तमित्यपकृष्य संबध्यते । नित्यमचलंशाश्वतम् । बलमूर्जमुत्साहम् । उभयमिदंबलंचोर्जंच ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । पूजितंसंस्कृतंअन्नंबलंऊर्जंप्रभावंनियच्छति । अपूजितंअन्नंयद्भुक्तंइदंतुउभयंबलंओजःनाशयेत् ॥ ५५ ॥

## नोच्छिष्टंकस्य चिद्दद्यान्नाद्याच्चैव तथान्तरा॥नचैवात्यशनंकुर्यान्न चोच्छिष्टःक्वचिद्व्रजेत् ॥ ५६ ॥

( १ ) **मेधातिथिः** । पात्रीस्थमन्नमास्यस्पर्शदूषितमुच्छिष्टमुच्यते तन्न कस्यचिद्दद्यादनेनैव सिद्धे स्नातकव्रतेषु यः शूद्रविषयः प्रतिषेधः सतत्रैवनिरूपयिष्यते चतुर्थ्या प्राप्तायां षष्ठीसंबन्धमात्रनिषेधार्थायेऽपिदत्तमिदमस्मभ्यमिति न विदुस्तेषामपि भोजनाय प्रकल्पंश्वबिडालादीनाम् । नह्यत्र ददात्यर्थः परिपूर्णस्वत्वनिवृत्तिमात्रंदातुः परस्य सत्वापत्तिर्नास्ति। अन्तराशब्दोमध्यवचनः । द्वौ भोजनकालौ सायंप्रातश्चततोन्यस्मिन्काले न भुञ्जीत । अथवा व्यवधाने नान्तराशब्दः त्यक्तभोजनव्यापारः क्रियान्तरेण व्यवधीय पुनस्तदेव प्राक्पात्रगृहीतंन भुञ्जीत । स्मृत्यन्तरे तु विशेषः पठ्यते । उत्थानाचमनव्यापेतमिति केचित्तु विच्छेदमन्तरमाचक्षते । सव्येन पाणिना पात्रमन्वालभ्य दक्षिणेनावदाय प्राणायास्ये जुहोतीति श्रूयते । तत्र यः सव्येन पात्रस्यानुग्रहस्तदनन्तरंनचैवात्यशनमतिमात्रमशनंकुर्यात् एतच्चानारोग्यकारणंगुरुविरुद्धादीनांप्रदर्शनार्थंहेतूपदेशान्मात्राशितायाश्चायुर्वेदादतिमात्रता बोद्धव्या । यावदशितमन्नमुदरपूरंनकरोति सम्यग्जीर्यति तावदशितव्यम् । त्रयः कुक्षेर्भागाअध्यर्धमन्नस्य भागार्धपानस्य भागोदोषसंचाराय । अन्यथा नारोग्यंनचोच्छिष्टः क्वचिद्व्रजेदतश्चोच्छिष्टमपनीय शुचित्वमापादिते तस्मिन्नेव देशआचान्तव्यम् ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । नोच्छिष्टमिति । उच्छिष्टं पात्रोच्छेषणं एतदन्नमन्तरासायंप्रातरंतरातयोर्मध्येनाद्यात् ॥ अनशनंशक्तयजरणादन्नादधिकशासनं क्वचिदुच्छिष्टासन्निकर्षान्निकर्षादन्यत्र ॥ ५६ ॥

( ३ ) **कुल्लूकः** । भुक्तावशेषंकस्यचिन्नदद्यात् । चतुर्थ्यांप्राप्तायांसंबन्धमात्रविवक्षया षष्ठी । अनेनैव सामान्यनिषेधेन शूद्रस्याप्युच्छिष्टदान निषेधे सिद्धे नोच्छिष्टंन हविष्कृतमिति शूद्रगोचरनिषेधश्चातुर्थः स्नातकव्रतत्वार्थः । दिवासायंभोजनयोश्च मध्ये न भुञ्जीत वारद्वयेऽप्यतिभोजनं न कुर्यान्नातिसौहित्यमाचरेदिति चातुर्थंस्नातकव्रतार्थम् । उच्छिष्टःसनक्वचिन्न गच्छेत् ॥ ५६ ॥

( ४ ) **राघवानन्दः** । किंचनेति । उच्छिष्टंभुक्तावशिष्टंकस्यचिदिति संबन्धिसामान्यप्रयोगात्शूद्रादेरपि निषेधोब्रह्मचारिविषयः । यत्तु वक्ष्यति उच्छिष्टमन्नंदातव्यंजीर्णानिवसनानि चेति तत् स्वदासविषयं । चातुर्थिकंतु । नोच्छिष्टंन बहिष्कृतमिति शूद्रसामान्यविषयमिति भेदः । अन्तरामध्यान्हसायान्हकालीनयोर्भोजनयोर्मध्येनाद्याद्ब्रह्मचार्यपि सायंप्रातर्द्विजातीनामशनंदेवनिर्मितमिति भोजनद्वित्वप्राप्तेः ॥ ५६ ॥

( ५ ) **नन्दनः** । एतदुच्छिष्टमन्तरा भोजनमध्ये भोक्तव्योच्छिष्टमाचार्यपित्रादिभिर्दत्तंनाद्यात् ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । अथान्तरा भोजनमध्येएतदुच्छिष्टंनाद्यात्नभक्षयेत् । अत्यशनंबहुभोजनंन कुर्यात्शरीरस्यारोग्यार्थत्वात्उच्छिष्टःसनक्वचिन्न व्रजेत्न गच्छेदिति ॥५६ ॥

## अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ॥ अपुण्यंलोकविद्विष्टंतस्मात्तत्परिवर्जयेत् ॥ ५७॥

( १ ) **मेधातिथिः** । दृष्टमूलतानत्यशनप्रतिषेधस्याचष्टे । अनारोग्यंव्याध्युत्पत्तिर्ज्वरोदरादिपीडा विषूचिकादिना

जीवितनाश अनायुष्यंसर्वतएवात्मानंगोपायेदिति शरीरपरिरक्षादि व्यतिक्रमादस्वर्ग्यंनरकप्राप्तिः स्वर्गाभावेन प्रतिपद्यते। अपुण्यंदौर्भाग्यकरंलोकविद्विष्टंबहुभोजितया निन्द्यते तस्मात्कारणादत्यशनंपरिवर्जयेन्न कुर्यात् ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । रोगजनकत्वादनायुष्यं ततएव स्वविहितकर्माशक्तिस्तुत्वादस्वर्ग्यं अपुण्यंच अपुण्यं पापंतद्धेतुरपुण्यंलोकविद्विष्टं बव्हयमश्नातीति प्रसिद्धेर्लोकद्वेषकरत्वात् मृत्यूपरोधसंभवाच्च ॥ ५७ ॥

( ३ ) **कुल्लूकः** । अतिभोजने दोषमाह अनारोग्यमिति । अरोगोरोगाभावस्तस्मैहितमारोग्यं । आयुषेहितमायुष्यं-यस्मादतिभोजनमनारोग्यमनायुष्यंच भवत्यजीर्णजनकत्वेन रोगमरणहेतुत्वात् । अस्वर्ग्यंच स्वर्गहेतुयागादिविरोधित्वात् । अपुण्यमितरपुण्यप्रतिपक्षत्वात् । लोकविद्विष्टंबहुभोजितया लोकैर्निन्दनात् । तस्मात्तन्नकुर्यात् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । अत्यशनमतीव निन्दितमिति दृष्टादृष्टार्थतामाह अनारोग्यमिति । अनारोग्यंबव्हाशिनोविषूचिकादिरोगदर्शनात्अनायुष्यंअजीर्णेन धातुक्षयात्बहुतरभोजनउदरगरिम्णाकाम्यनित्यानधिकृतत्वेन स्वर्गपुण्ये न स्यातांलोकविद्विष्टमयंबहुभोजी लुब्धइत्यादिद्वेषविषयमितिभावः ॥ ५७॥

( ५ ) **नन्दनः** । अनारोग्यमनारोग्यकरंतस्मादनायुष्यंनियमादिक्रमहेतुत्वादपुण्यंतस्मादस्वर्ग्यम् ॥ ५७ ॥

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ॥ कायत्रैदशिकाभ्यांवा नपित्र्येण कदाचन॥ ५८ ॥**

( १ ) **मेधातिथिः** । तीर्थशब्देन पवित्रमुदकाधिकरणमुच्यते । तारणाय पापप्रमोचनाय च तिष्ठतीति तीर्थं । क्वचित्तुतरन्त्यनेनेति तीर्थमुदकावतरणमार्गः । इह तूदकाधारकरतलैकदेशउच्यते स्तुत्या वा तीर्थशब्दप्रयोगोनहि तत्र नित्यस्थाआपस्तेनोपस्पृशेदाचामेद्ब्राह्मेणेत्येतदपि स्तुत्यर्थमेव ब्रह्मा देवतास्येति नहि तीर्थस्यदेवताभवत्ययागरूपत्वाद मंत्रत्वाच्च यागरूपतांच केन चिद्धर्मेण शुद्धिहेतुत्वादिनाध्यारोप्य देवता तद्धितः नित्यकालंशौचार्थे कर्माङ्गेच कः प्रजापतिः सदेवतास्येति कायं एवंत्रिदशादेवताअस्येति त्रैदशिकंत्रिदशशब्दाद्देवताणिकृते स्वार्थेकः देवतात्वंच पूर्ववत् । एभिस्तीर्थैरुपस्पृशेद्विप्रग्रहणमविवक्षितं यतः क्षत्रियादीनांविशेषंवक्ष्यति । नचासत्यां सामान्यतः प्राप्तौ विशेषविधानमुपपद्यते कण्ठगाभिस्तु भूमिपइत्यादि नपित्र्येण पितृदैवत्येन कदाचिदपि स्फोटपिटकादिना ब्राह्मादितीर्थेष्वयोग्यतामायातेष्वपि ननु चाविधानवदेव पित्र्यस्याप्राप्तिरस्त्यत्राशंका पितृतीर्थज्ञापनार्थतावत्पित्र्यंतयोरवश्यंवक्तव्यं नच तस्येह कार्यनिर्दिश्यते कार्याकांक्षायां प्रकृतत्वात्तेन कार्येण संबन्धआशंक्येताद्यपुनः प्रतिषेधे सति पित्र्यमिति समाख्ययैव कार्यावगतिरुदकतर्पणादि पितृकर्म एतेन तीर्थेनकर्तव्यं । एवंस्तुतिरन्वयिनी भवति श्रुतिनोदितत्वाच्च ब्राह्मादीनांतदभावे प्राप्ताशंकानिवृत्यर्थंयुक्तमस्याभिधानम् ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वविहितस्याचमनस्य प्रकारमाह ब्राह्मेणेति । नित्यकालंगार्हस्थ्यादिकालेपि कथंचित्तत्रव्रणादिनाचमनासंभवे कायत्रैदशिकाभ्यांतयोरन्यतरेणेत्यर्थः। कायंप्राजापत्यं । तयोरपि व्रणादि दूषत्वे तीर्थेनैवाचमेन्न तु तीर्थसाम्यात् पित्र्येण तदर्थं न पित्र्येणेत्युक्तं विप्रइति प्राधान्यादुक्तं शूद्रवैश्ययोरप्याचमनविधिःतस्य चेति कर्तव्यतापेक्षत्वात् ॥ ५८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मेणेति । ब्राह्मादिसंज्ञेयंशास्त्रे संव्यवहारार्था स्तुत्यर्था च न तु मुख्यंब्रह्मदेवताकत्वंसंभवत्ययागरूपत्वात् । तीर्थशब्दोऽपि पावनगुणयोगाद्ब्राह्मेण तीर्थेन सर्वदाविप्रादिराचामेत् । कःप्रजापतिस्तदीयस्तस्येदमित्यण् इकारश्चान्तादेशः । त्रैदशिकोदेवस्ताभ्यांवा पित्र्येण तु तीर्थेन न कदाचिदाचामेदप्रसिद्धत्वात् ॥ ५८ ॥

( ४ ) **राघवानन्दः**। आचमनाङ्गतीर्थान्याह ब्राह्मेणेति । कायेतिकःप्रजापतिःतस्येदंतथा त्रैदशिकं त्रिदशादेवास्तेषामिदंउपस्पृशेदाचामेत् ॥ ५८ ॥

( ५ ) **नन्दनः** । भोजनस्याद्यन्तयोरुपस्पर्शनंविहितं तत्प्रकारोनोक्तस्तमिदानीमाहब्राह्मेणेति । ब्राह्मेण हिरण्यगर्भदैवत्यंनतदभावे कायेन कः प्रजापतिः दक्षः तद्दैवत्यंकायं तदभावेत्रैदशिकेन त्रिदशदैवत्येन । कुतोऽयंविकल्पनाभ्युपगमः देवतातारतम्यवत्तीर्थतारतम्यस्याप्रतीयमानत्वेनतुल्यविकल्पत्वसंभवात् । अत्र देवतासंबन्धेन तीर्थवचनंप्ररोचनार्थम् ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । विप्रःब्राह्मेणतीर्थेन नित्यकालंपादप्रक्षालनपूर्वकंअपस्पृशेत्आचामेत् । कायत्रैदशिकाभ्यांवा कायेनदैवेन तीर्थेन वा पित्र्येण कदाचन न पितृतीर्थेन कदाचिदपिनाचामेत् ॥ ५८ ॥

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ॥ कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ ५९ ॥**

( १ ) **मेधातिथिः**। अङ्गुष्ठस्य मूलमधोभागः । तस्यतलप्रदेशोब्राह्मंतीर्थं। हस्ताभ्यन्तरंतलमाह महारेखांतमभिमुखमात्मनोब्राह्मंहस्तमध्ये अङ्गुलीनांमूलेदण्डरेखायाऊर्ध्वंकायमग्रे अङ्गुलीनांदैवमुपसर्जनीभूतोपि मूले अङ्गुलिशब्दः सापेक्षत्वादग्रशब्दस्य संबध्यते पित्र्यंतयोरधः। अत्रापि गुणीभूतस्याङ्गुलीशब्दस्याङ्गुष्ठस्य च संबन्धः प्रदेशिनी चात्राङ्गुलिर्विवक्षिता । तयोरध अन्तरंपित्र्यंस्मृत्यन्तरशिष्टप्रसिद्धिसामर्थ्यादेवंव्याख्यायते यथा श्रुतान्वयासंभवात्तथा च शंखः अङ्गुष्ठस्याधरतः प्रागग्रायाश्चरेखायाब्राह्मंतीर्थंप्रदेशिन्यङ्गुष्ठयोरन्तरापित्र्यंकनिष्ठान्तरलयोः कायंपूर्वेणाग्रमङ्गुलीनांदैविकमिति॥५९॥

( २ ) **सर्वज्ञनारायणः** । एतच्च ब्राह्मणस्य दक्षिणहस्ते पञ्चतीर्थानिइति प्रचेतसस्मृतेर्दक्षिणएवाङ्गुष्ठमूलस्थलइति करस्याधोभागमध्यमभिप्रैति ब्राह्मं ब्रह्मदैवतं एवंकायादौ काये अङ्गुलिपदंकनिष्ठापरं कनिष्ठादेशिनीति याज्ञवल्क्यवचनात् । अग्रइत्यंङ्गुलीपदमन्वीयते तच्च सर्वांगुलिपरमग्रं करस्य वेति वचनात् तयोरित्यत्राङ्गुष्ठाङ्गुल्यौ प्रकृते तत्र चाङ्गुलीतर्जनींदेशिनी याज्ञवल्क्यवचनात् तथा च तयोरिवइति द्वयोरधोमूलं द्वयोर्मध्यभागे ग्राह्यम् ॥ ५९ ॥

( ३ ) **कुल्लूकः** । ब्राह्मादितीर्थान्याहअङ्गुष्ठमूलस्येति । अङ्गुष्ठमूलस्याधोभागे ब्राह्मं कनिष्ठाङ्गुलिमूले कायमङ्गुलीनामग्रे दैवमङ्गुष्ठप्रदेशिन्योर्मध्ये पित्र्यंतीर्थं मन्वादयआहुः । यद्यपि कायमङ्गुलिमूले तयोरधइत्यत्र चाङ्गुलिमात्रंश्रुतंतथापि स्मृत्यन्तराद्विशेषपरिग्रहः । तथा च याज्ञवल्क्यः । कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रंकरस्यच । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ ५९ ॥

( ४ ) **राघवानन्दः**। ब्राह्मेणेत्याद्युक्तंतल्लक्षणान्याह अङ्गुष्ठेत्यादिना । अङ्गुलिमूले कनिष्ठिकाङ्गुलिमूले । अग्रे साङ्गुष्ठानामङ्गुलीनांतयोरङ्गुष्ठदेशिन्योः । तथा च याज्ञवल्क्यः । कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रंकरस्य तु । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमादिति ॥ ५९ ॥

( ५ ) **नन्दनः**। तानि पुनस्तीर्थानि कुत्रत्यानीत्यपेक्षायामाह अङ्गुष्ठेति । अङ्गुष्ठमूलस्य तले हस्ततलमूलमध्ये या रेखा तस्यामूलेब्राह्मंतीर्थम् । अङ्गुलिमूलंनामतलमध्यप्रदेशः तत्रहि मूलमङ्गुलीनांचतसृणांतत्रकायमग्रे तलस्याग्रेऽङ्गुलीनांचतसृणांप्रथमपर्वणिदैवंतीर्थम् । तयोरङ्गुष्ठाङ्गुल्योरधःतर्जन्यङ्गुष्ठयोर्मध्यमित्यर्थः । तत्र पित्र्यंतीर्थमेवंव्याख्यातंस्मृत्यन्तरेसगच्छते ॥ ५९ ॥

( ६ ) **रामचन्द्रः**। तत्तीर्थमाह अङ्गुष्ठस्य तले ब्राह्मंब्राह्मसज्ञंतीर्थंप्रचक्षते । कनिष्ठिकायांमूलंकायंप्रजापतिसंज्ञंतीर्थमाहुः। अङ्गुल्यग्रे दैवसंज्ञंतीर्थंभवति तयोरधःपित्र्यंपितृसंज्ञंतीर्थंभवतीत्यर्थः ॥ ५९ ॥

त्रिराचामेदपःपूर्वंद्विःप्रमृज्यात्ततोमुखम् ॥ खानि चैव स्पृशेदद्भिरात्मानंशिरएव च ॥ ६० ॥

( १ ) **मेधातिथिः** । अन्यतमेन तीर्थेन त्रिरपउदकमाचामेदास्येन जठरंप्रवेशयेत्ततउदकभक्षणान्तरंद्विरभ्यासेन मुखमोष्ठद्वयंपरिमृज्यादोष्ठश्लिष्टानामुदकावयवानांसोदकेन हस्तेनापनयनंप्रमार्जनमत्र कुतः पुनर्हस्तेनेति समाचारात्तीर्थाधिकाराद्वातीर्थेनैवाद्भिरिति चोत्तरत्र श्रुतमत्राप्यपकृष्यते । दृष्टार्थत्वाच्च प्रमार्जनस्य मुखशब्दएकदेशे यथोक्ते वर्तते । खानि छिद्राणि चोपस्पृशेदद्भिर्हस्तगृहीताभिः स्पर्शनमेवोपस्पर्शनंमुखस्य च प्रकृतत्वान्मुख्यानामेव खानामेषस्पर्शनविधिः गौतमश्चाह । खानि चोपस्पृशेच्छीर्षण्यान्यात्मानमिति त्हृदयंनाभिवा निर्दिशति । उपनिषत्सुहिह्यन्तर्हृदयमात्मानंपश्येदिति कथ्यते । अतोत्हृदयस्यायंस्पर्शः क्षेत्रज्ञस्यात्मनोविभोः । अमूर्तस्य न स्पर्शसंभवः नाभिमालभेतेति क्वचित्स्मर्यते तेन नाभिमन्यामहे शिरःप्रसिद्धंस्मृतीनांचैकार्थ्यादामणिबन्धात्पाणीप्रक्षाल्येत्येवमादिलभ्यते तथाऽशब्दकरणंवाङ्नियमः पादाभ्युक्षणं महाभारते प्रक्षालनमपि पादयोर्दर्शितम् ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । आचमनप्रयोगस्वरूपमाह त्रिरिति । आचामेतपिबेदुक्ततीर्थेन मुखंमुखरन्ध्रंसलोमकोष्ठपरिद्विः प्रमृज्यात् । खानीन्द्रियाणि सजलेन पाणिनास्पृशेदद्भिरिति वचनादार्द्रत्वेपि पुनःपुनर्जलमुपादायस्पर्शःकार्य इत्युक्तं । आत्मानमिति तत्स्थानं त्हृदयम् ॥ ६० ॥

( ३ ) **कुल्लूकः** । सामान्येनोपदिष्टस्याचमनस्यानुष्ठानक्रममाह त्रिराचामेदिति । पूर्वंब्राह्मादितीर्थेन जलगण्डूषत्रयंपिबेत् । अनन्तरंसंवृत्त्यौष्ठाधरौ वारद्वयमङ्गुष्ठमूलेन संमृज्यात् संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततोमुखमितिदक्षेण विशेषाभिधानात् । खानि चेन्द्रियाणि जलेन स्पृशेन्मुखस्य सन्निधानान्मुखखान्येव । गौतमोऽप्याह । खानि चोपस्पृशेच्छीर्षण्यानि त्हृद्यन्तर्ज्योतिःपुरुषइत्युपनिषत्सु त्हृदयदेशत्वेनात्मनः श्रवणादात्मानंत्हृदयंशिरश्चाद्भिरेव स्पृशेत् ॥ ६० ॥

( ४ ) **राघवानन्दः** । तत्रसङ्ख्यामाह त्रिरिति । प्रमृज्यादितिओष्ठश्लिष्टानामुदकावयवानांसोदकेन हस्तेनापनयनमिति मेधातिथिः । खानि शीर्षण्यानि इंद्रियाणि चक्षुःश्रोत्रनासिकाःआत्मानंत्हृदयंउक्तानुवादप्रायोयम् ॥ ६० ॥

( ५ ) **नन्दनः** । मुखमास्यमोष्ठावितियावत् । अद्भिःसह । आत्मानंत्हृदयम ॥ ६० ॥

( ६ ) **रामचन्द्रः** । अपःपूर्वंत्रिवारंआचामेत् । ततआचमनानन्तरंमुखंद्विःप्रमृज्यअद्भिःखानि मुखादीनिछिद्राणि स्पृशेत् । च पुनःआत्मानंत्हृदयंशिरएव स्पृशेत् ॥ ६० ॥

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ॥ शौचेप्सुःसर्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥

( १ ) **मेधातिथिः** । उष्णशब्दः क्वाथोपलक्षणार्थः तथा हि पठ्यतअशृताभिरद्भिरिति । एवंच ग्रीष्मोष्मतप्ताः स्वभावोष्णाश्च न प्रतिषिध्यन्ते । फेनग्रहणंबुद्बुदानामपिप्रदर्शनार्थं । पठितंच हीनाभिः फेनबुद्बुदैरितितीर्थेन धर्मविदिति वृत्तपूरणमेवं शौचमाप्तुमिच्छुः शौचेप्सुः शुद्धिकामइत्यर्थः नान्यथा शुद्धोभवति सर्वदा न प्रकरणाद्भोजनएव किंतर्हि नेनरोविण्मूत्रादिशुद्धिष्वप्यपांभक्षणे कर्मत्वात्तृतीयानिर्देशोन भक्षमाणानामेवायंधर्मोऽपितु करणभूतानामपि पादाभ्युक्षणादौ । वयंतु ब्रूमोभक्षणेऽपि कर्णमेवापोनहि तासामाचमनंसंस्कारः । एकान्तेशुचौदेशएकान्तेहि जनैरनाकीर्णः प्रायेण शुचिर्भवति प्रागुदङ्मुखः । मुखशब्दः प्रत्येकमभिसंबध्यते । प्राङ्मुखउदङ्मुखोवा । एवंहि गौतमेन पठितम् । विग्रहश्चैवंकर्तव्यः प्रागुदङ्मुखमस्येति । नायंद्वंद्वगर्भोबहुव्रीहिरपि तु बहुव्रीहिरेव । द्वंद्वगर्भतायां समाहारे समासान्तेनाकारेण भवितव्यमितरेतरयोगेपि नैव । नहि युगपदुभयदिङ्मुखता संभवति तत्र कश्चिदाचमनभागः प्राङ्मुखेन कर्तव्यः कश्चिदुदङ्मुखेने-

त्यापतति । नचैकदेशआचमनं नच दिगर्थउपादेयोयेन परस्परापेक्षे संबध्येयातां नापि दक्षिणपूर्वादिवत्प्रागुदक्शब्दोपराजितायादिशोवाचकत्वेन प्रसिद्धोयेन दिक्समासबहुव्रीहिर्ज्ञायते । तस्मान्नायंवृत्यन्तरगर्भोबहुव्रीहिरतोविकल्पः। उदात्दतंच स्मृत्यन्तरे प्राङ्मुखउदङ्मुखोवा शौचमारभेतेति । यथाबृहद्रथन्तरसाम षडहइति केषु चिदहरहः सुबृहत् केषुचिद्रथन्तरंनत्वेकस्मिन्नहनि समस्तोभयसामत्वम् ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । अमृताभिरिति शङ्खस्मृतेराम्रे न मौल्यं निषिद्धं एकान्ते कंचिदस्पृशन् प्रागुदङ्मुखःप्राङ्मुखउदङ्मुखोवा ॥ ६१ ॥

( ३ ) **कुल्लूकः** । अनुष्णाभिरिति । अनुष्णीकृताभिः फेनवर्जिताभिर्ब्राह्मादितीर्थेन शौचमिच्छन्नेकान्तेजनैरनाकीर्णे शुचिदेशइत्यर्थः । प्राङ्मुखउदङ्मुखोवा सर्वदाचामेत् । आपस्तम्बेन तप्ताभिश्च कारणादित्यभिधानाद्याध्यादिकारणव्यतिरेकेण नाचामेत् । व्याध्यादौ तु उष्णीकृताभिरप्याचमने दोषाभावः । तीर्थव्यतिरेकेणाचमने शौचाभावइति दर्शयितुमुक्तस्यापितीर्थस्य पुनर्वचनम् ॥ ६१ ॥

( ४ ) **राघवानन्दः** । अपोविशिनष्टि । अनुष्णेति । तीर्थेन ब्राह्मेणेत्युक्तेन शौचेप्सुःशुचितामिच्छुःप्रागुदङ्मुखःप्रत्येकंविशिष्टंच तज्जलावधिंविधत्ते ह्दिदिति ॥ ६१ ॥

( ५ ) **नन्दनः** । अनुष्णाभिरनग्नितप्ताभिः । तीर्थेन मुख्यानुकल्पेषु यथासंभवमन्यतमेन । एकान्ते शुद्धे देशे । प्रागुदङ्मुखईशानदिङ्मुखः प्राङ्मुखोवा । अत्राचमनकल्पेनुक्तंसर्वधर्मशास्त्रान्तरेषु विद्यादित्यभिप्रायेणोक्तंधर्मविदिति ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । धर्मविद्ब्राह्मेनअद्भिःएकान्तेएकाग्रचित्तःसनसर्वदाआचामेत् । प्राङ्मुखोवाउदङ्मुखोवा ॥ ६१ ॥

**ह्दद्गाभिःपूयते विप्रःकण्ठगाभिस्तुभूमिपः ॥ वैश्योद्भिःप्राशिताभिस्तु शूद्रःस्पृष्टाभिरन्ततः ॥६२॥**

( १ ) **मेधातिथिः** । उक्तमाचमनं तीर्थेनापांभक्षणं परिमाणंतु नोक्तमतस्तदवधारणार्थमाह । ह्ददयंगच्छन्तिप्राप्नुवंतिन्हृद्गाः अन्येष्वपि दृश्यतइति गमेर्डः ह्दयस्यह्दिति योगविभागाद्धृदादेशः पूयते पवित्रतांप्राप्नोत्यशुचित्वंव्यावर्तते स्पर्शईषदूनचुलुकमात्रप्रमाणः । कण्ठगाभिस्ताभिः । कण्ठमात्रव्यापिनीभिः भूमिपः क्षत्रियः भूमेराधिपत्यंक्षत्रियस्य विहितंतेन प्रसिद्धेन कर्मणा क्षत्रियजातिर्लक्ष्यते । आधिपत्यविवक्षायां राजधर्मेष्वेवावक्ष्यत् । वैश्यः प्राशिताभिरन्तरास्य प्रवेशिताभिः कण्ठमप्राप्ताअपि शुद्धिहेतवोवैश्यस्य शूद्रः स्पृष्टाभिरन्तत अन्तेनेत्याद्यादित्वात्तृतीयार्थे तसिः । अन्तशब्दोयंसमीपवचनोस्त्युदकान्तेगतउदकसमीपमिति गम्यते । अस्त्यवयववचनोवस्त्रान्तोवसनान्तइत्युभयत्रापि वर्तमानः संबन्ध्यन्तरमपेक्ष्यते । अस्य समीपंकस्य वावयवइति तत्रेहयेन स्थानेन वर्णान्तराणामाचमनंविहितंतीर्थैर्जिव्होष्ठे नचतदन्तेनेति प्रतीयते समीपवचनस्तु नसंभाव्यः विधीयमानस्याचमनस्य तत्साध्यत्वासंभवात्स्पर्शेपि प्राशनमस्ति जिव्होष्ठे नहि स्पृश्यमानस्य रसास्वादनमवश्यंभावि तत्र वैश्यपरिमाणात्किञ्चिन्न्यूनतात्रविवक्षिता जिव्हामूलंयावद्वैश्यस्य जिव्हाग्रंशूद्रस्य द्रवत्वादुदकस्यापरिहार्योऽवध्यतिक्रम अवध्य प्राप्तौ त्वशुद्धिः सर्वश्चायंतीर्थविभागोदक्षिणहस्तस्योपस्पर्शने हस्तस्यौचित्याद्दक्षिणाचारतायाश्च पुरुषधर्मतया विहितत्वादेवमर्थमेव चास्मिन्नवधाविदमुच्यते ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । ह्दद्गाः ह्ददयप्राप्ताः यावत्य आपोह्ददयप्राप्तियोग्यास्ताभिः पीत्वा यावद्धृदयप्राप्तिस्तावत्प्रतिक्षणं गण्डूषांन्तरपातमित्यर्थात्सिद्धं प्राशिताभिर्वक्त्रविवरप्रवेशमात्रेण अन्ततोमुखप्रान्तभागेनोष्ठौ न स्पृष्टाभिः संबद्धाभिरित्यर्थः ॥ ६२ ॥

(३) **कुल्लूकः**। त्वद्गाभिरित्याचमनजलपरिमाणमाह । ब्राह्मणोत्हृदयगामिनीभिः। क्षत्रियःकण्ठगामिनीभिर्वैश्यो-न्तरास्यप्रविष्टाभिः। कण्ठमप्राप्ताभिरपिशूद्रोजिव्हौष्ठान्तेनापिस्पृष्टाभिरद्भिःपूतोभवति। अन्ततइति तृतीयार्थे तसिः ॥ ६२ ॥

(४) **राघवानन्दः**। प्राशिताभिः तालुगाभिः अन्ततोजिह्वाग्रेण शूद्रइति स्त्रीणामुपलक्षणम्। शुध्येरंस्त्रीचशूद्रश्च। सकृत्स्पृष्टाभि रन्ततइति याज्ञवल्क्यवचनात्। अनेनैव जलपरिमाणमपिप्राप्तम् ॥ ६२ ॥

(५) **नन्दनः**। प्राशिताभिर्जिह्वागताभिः। अन्ततो ऽन्तेनास्यान्तेनौष्ठेनेत्यर्थः ॥ ६२ ॥

(६) **रामचन्द्रः**। विप्रःत्वद्गाभिःअद्भिःपूयते। भूमिपःकण्ठगाभिःअद्भिःपूयते। प्राशिताभिःअद्भिःतालुगताभिःवैश्यःपूयते। स्त्री च शूद्रश्च अन्ततःवर्णान्ततः स्पृष्टाभिःअद्भिः पूयते ॥ ६२ ॥

## उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः॥ सव्ये प्राचीनआवीती निवीतीकण्ठसज्जने ॥६३॥

(१) **मेधातिथिः**। ननु च लोकतः सिद्धाः पदार्थाधर्मशास्त्रेप्याश्रीयन्ते न पदार्थसंविज्ञानार्थानि मन्वादिवाक्यानि व्याकरणाभिधानकाण्डस्मृतिवत्। उक्तमस्माभिर्योनातिप्रसिद्धोर्थस्तंचेल्लक्षयन्ति किमुपालम्भमर्हन्ति अस्ति चात्र किंचित्प्रयोजनमन्यदप्याचमनक्रममुच्यमानमुपसंव्यानादिकमाचमनाङ्गंयथा विज्ञायते। यद्यप्युपवीतधारणंव्रतार्थतया पुरुषार्थतया वा सर्वदाप्राप्तंतथापि तेन विनाचमनंपरिपूर्णमेव स्यात् असत्यस्मिन्वचने व्रते वैगुण्यंपुरुषदोषश्चस्यात्। अथ पुनरन्तरेणोपवीतमाचमनंकृतमप्यकृतसमंदोषश्च स्यादप्यशुचिना कृतमपांभक्षणमिति कथंपुनः केवलस्योपवीतस्यैवाचमनाङ्गता यावतान्यदप्यत्र निर्दिष्टंप्राचीनावीति च उच्यते। प्राचीनावीतंस्वशब्देनैव पित्र्ये कर्मणि विहितंतत्रार्थवत्तायामुपयातायां नाकृतार्थेनोपवीतेन विकल्पितुमर्हति निवीतमप्यभिचारेर्थवत्। यद्यप्यत्र निवीतस्य विनियोगोनास्ति तथापिस्मृतीनांचैकार्थादन्यत्रयोविनियोग स्तेनेहाप्यर्थवत्ता भवत्येव पाणिग्रहणंबाहूपलक्षणार्थमुद्धृतबाहुर्यतोलोकउपवीतीत्युच्यते। सार्वकालिकंचोपवीतंवक्ष्यामः। नच केवलपाणावुद्धृतउपवीतीसव्येउद्धृते प्राचीनावीती समासपदान्नामधेयम समासस्तु वृत्तानुरोधितया कण्ठसज्जने कण्ठेसज्जनंसङ्गःस्थापनं यदा वस्त्रस्य सूत्रस्य वान्यतरोपि बाहुरुद्ध्रियते तदा निवीती भवति॥६३॥

(२) **सर्वज्ञनारायणः**। उद्धृतइति। उद्धृते ब्रह्मसूत्रोपरिस्थिते अर्थात्सव्ये अधस्थे सव्येउद्धृते अर्थादन्यस्मिन्नधस्थे प्राचीनावीती प्राणावित्युभयत्र बाहुपरं कण्ठसद्भावे कण्ठमावेष्ट्य । बाहुद्वयोपरि उपवीतसङ्गे अर्थात् पुरतो लम्बमानेअत्र चोपवीति प्रदेशात् ततःस्मारितं कार्पासमुवीतमित्यत्र स्थितं उपवीतमुद्धरणादिप्रतियोगितया ग्राह्यम् ॥ ६३ ॥

(३) **कुल्लूकः**। उद्धृतेइत्याचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्षणंततःप्रसङ्गेनप्राचीनावीतीत्यादिलक्षणमाह। दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिणस्कन्धावलम्बे यज्ञसूत्रे वस्त्रेवोपवीती द्विजःकथ्यते। वामपाणावुद्धृते दक्षिणस्कन्धस्थिते वामस्कन्धावलम्बे प्राचीनावीती भण्यते। सव्ये प्राचीनआवीतीति छन्दोनुरोधादुक्तं। तथा च गोभिलः दक्षिणंबाहुमुद्धृत्य शिरोऽवधाय सव्येंसेप्रतिष्ठापयति दक्षिणस्कन्धमवलम्बनंभवत्येवंयज्ञोपवीती भवति सव्यंबाहुमुद्धृत्यशिरोऽवधायदक्षिणेंऽसे प्रतिष्ठापयति सव्यंकक्षमवलम्बनंभवत्येवंप्राचीनावीतीभवति निवीतीकण्ठसज्जनइति शिरोवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जनऋजुप्रालम्बे यज्ञसूत्रेवस्त्रेचनिवीती भवति ॥ ६३ ॥

(४) **राघवानन्दः**। अयज्ञोपवीती कथंब्राह्मणःस्यादिति श्रुतेः। यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात्।

* स्कन्ध=कक्ष (अ)

आयुष्यमग्र्यंप्रतिमुञ्च शुभ्रंयज्ञोपवीतंबलमस्तु ते जइति मन्त्रलिङ्गात्। यदुपव्ययते देवलक्ष्ममेवतत्कुरुते । त्रिवृत्सूत्रं-त्यजेद्विद्वान्बहिःसूत्रंत्यजेद्बुधइतिश्रुतेर्यज्ञोपवीतिनाआचान्तोदकेन कृत्यमिति गौभिलस्मरणात् । विशिखोऽप्युपवीतश्च यत्करोति न तत्कृतमित्यादिस्मृतेश्च । नित्यवत्प्रामयज्ञसूत्रानुवादेन तत्तत्कर्मनियतोपवीतत्वादेर्लक्षणमाह । उद्धृतेति । उपवीतंदेवानांनिवीतंमनुष्याणांप्राचीनावीतंपितॄणामितिश्रुतेर्दक्षिणंबाहुमुद्धृत्य सव्येंसेप्रतिष्ठापयति दक्षिणंकक्षमवलम्बं-भवति एवंयज्ञोपवीतीत्यादिस्मृतेश्च अतएवाभिधानं । उपवीतंयज्ञसूत्रंप्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन्निवीतं-कंठलंबितमिति ॥ यज्ञोपवीतमाश्रित्य त्रितयविधिरिति सदोपवीतिना भाव्यमिति बाधित्वानिवीतित्वादेः प्रवेशइति-केचित् ॥ ६३ ॥

( ५ ) **नन्दनः** । कथंसन्निवेशमुपवीतमित्यपेक्षायामाहउद्धृतइति । सूत्रस्य ग्रीवासञ्जने निवीतमितिसंज्ञा तद-दस्यास्तीतिनिवीती । निवीतस्यमध्येदक्षिणेपाणावुद्धृते यः संनिवेशविशेषः तदुपवीतंनाम तदस्यास्तीत्युपवीती । सव्ये पाणावुद्धृते तु यः संनिवेशविशेषस्तत्प्राचीनावीतंनाम । तदस्यास्तीतिप्राचीनावीती । अत्र प्राचीनावीतनिवीतयोरुपन्यासः प्रासङ्गिकः । इमंश्लोकमुपरिष्टाद्दश श्लोकानतीत्य पठन्ति तल्लेखकजनप्रमादादित्यवगंतव्यम् ॥ ६३ ॥

**मेखलामजिनंदण्डमुपवीतंकमण्डलुम् ॥ अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ ६४ ॥**

( १ ) **मेधातिथिः** । विनष्टानामप्सु प्रासनमन्येषांच ग्रहणमत्र विधीयते । प्रासनग्रहणयोः पौर्वापर्ययथा श्रुतमे-वास्माच्च पुनरुपादानान्नैषामुपनयनाङ्गतैव तदङ्गत्वे हि तत्प्रयोगापवर्गितैव स्यात् । किंतर्हि यावद्ब्रह्मचर्यधारणंचअथ किमु-पनयनकालएव प्राक्कर्मनिष्पत्तेः । दैवान्मानुषाद्वा प्रतिबलाद्विनष्टानांप्रतिपत्तिर्न संभवति प्रयोगसमाप्त्यर्थंच पुनरुपादानंयथा कपालस्य येनैवमुच्यतअस्मात्पुनरुपादानाद्धारणमनुमीयते । उच्यते । ग्रहणंतावद्दण्डस्य चोदितंमेखलायाबन्धनन्तत्र सूत्रस्यविन्यासस्तावदुपनयनाङ्गत्वेनावश्यंकर्तव्यं । कृते तस्मिन्कृतः शास्त्रार्थःउत्तरकालंकिंतैर्नष्टैरनष्टैर्वाऽङ्गनाशे च प्रतिपत्ति-विशेषःकर्मोपकारकोभवति।नच तेषांकिंच न कार्यमाम्नातंयेन तत्सिद्ध्यर्थंविशिष्टेकाले वाचनिकमुपादानमकृतत्वाच्च का-र्यस्य तत्प्रयुक्तंपुनरुपादानमर्थसिद्धमुच्यते । तस्मात्प्रतिपत्तिविधानादुपादानवचनाच्च धारणमङ्गं नच प्रयोगापवर्गि यतः कमण्डलुनोपनयनोत्तरकालानुवर्तिना तुल्यवन्निर्देशात्तेषामप्युत्तरत्रानुवृत्तिः प्रतीयते । सा च व्रताङ्गमतउभयार्थामेखलाद-यः प्रकरणादुपनयनार्था निवृत्ते चोपनयने दर्शनाद्यावद्ब्रह्मचर्यभाविनः कमण्डलुनाचोदकार्थः कर्तव्योस्मादेव प्रतिपत्तिविधा-नादन्यथा यदा कमण्डलुस्तदेयंप्रतिपत्तिरिति पाक्षिकत्वंस्यात्तत्रदण्डधारणंप्रतिगृह्य दण्डंभिक्षांचरेदिति क्रमाद्भैक्ष्यचर्याङ्ग-त्वमेव प्राप्तं समाचाराद्भैक्षेऽर्थेऽपि भ्रमणंभवत्येव । ननु सर्वदैव करतलधृतदण्डस्य स्थानासनशयनभोजनादीनि तथा च-स्वाध्याये ब्रह्मांजलिंवक्ष्यति मन्त्रवदित्युपनयनविधिना ग्रहणमनुवदति तत्र च मेखलायामन्त्रो न दण्डस्य ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रासनमादौ ततोन्यग्रहणंपूर्वपरिग्रहकालप्रयुक्त मन्त्रैःकमण्डलावपि बौधायनेन मन्त्रः पठितः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । मेखलामिति । मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्यान्यानि स्वस्वगृह्यो-क्तमन्त्रैर्गृह्णीयात् ॥ ६४ ॥

( ४ ) **राघवानन्दः** । जीर्णोपवीतमप्सुप्रास्यनूतनंग्राह्यमितिअप्सुप्रास्येति चात्वाले कृष्णविषाणांप्रास्यतीति वत् प्रतिपत्तिः मन्त्रवदिति क्रियाविशेषणंस्वगृह्योक्तेन मन्त्रेण गृह्णीयादित्यर्थः ॥ ६४ ॥

( ५ ) **नन्दनः** । पूर्वमजिनमेखलादीनिधार्यत्वेनोक्तानि इदानींतद्विनाशे किंकर्तव्यमित्याहमेखलामिति । अत्रसूत्रमेवोपवीतिशब्देनोच्यते न संनिवेशविशेषः । विनष्टानि जीर्णानिध्वस्तानिवा । कमण्डलुधारणस्य पूर्वमविहितत्वान्मेखलादिवदवश्यंभावोनाभिमेतइत्यवगन्तव्यम् ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । विनष्टानि । मेखलादीनिअप्सुप्रास्य विनिक्षिप्यअन्यानिनूतनानि मन्त्रवत्मन्त्रपूर्वकंमृण्हीयात् ॥ ६४ ॥

**केशान्तःषोडशे वर्षे ब्राह्मणस्य विधीयते ॥ राजन्यबंधोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ६५ ॥**

( १ ) **मेधातिथिः** । केशान्तोनाम संस्कारः सगर्भषोडशे वर्षे ब्राह्मणस्य कर्तव्यः । तस्य च स्वरूपपरिज्ञाने गृह्यमेव शरणं द्वे वर्षेऽधिके यस्य द्वाविंशस्तस्य तस्मिन्द्व्यधिके द्वाविंशेऽथवा कालमात्रमन्यपदार्थः ततोद्वाविंशाद्वर्षाद्व्यधिके काले वैश्यस्येति द्विशब्दस्य च वर्षाण्येव संख्येयानि प्रकृतानि हि तानि ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वान्केशानवापयन्तइति क्वचित् गृह्ये विकल्पेन गोदान कर्मणि सर्वकेशवपनविधेस्तेनोपलक्षणेन गोदानकर्मकेशान्त उच्यते केशानामन्तोत्रेति व्युत्पत्त्या ॥ ६५ ॥

( ३ ) **कुल्लूकः** । केशान्ताख्योगृह्योक्तसंस्कारोगर्भादिसंङ्ख्यावर्षाणामिति बौधायनवचनाद्गर्भषोडशे वर्षे ब्राह्मणस्य क्षत्रियस्य गर्भद्वाविंशे वैश्यस्य ततोद्व्यधिकेगर्भचतुर्विंशे कर्तव्यः ॥ ६५ ॥

( ४ ) **राघवानन्दः** । गृह्योक्तसंस्कारविशेषस्य कालमाह । केशान्तइति षोडशइत्यागर्भात् । तथा च बौधायनः । केशान्ताख्यःस्वगृह्योक्तःसंस्कारोगर्भादिसङ्ख्यावर्षाणामिति द्व्यधिके ततश्चतुर्विंशतिवर्षेएतदेव पुनर्गोदानाख्यंकर्म॥ ६५ ॥

( ५ ) **नन्दनः** । षोडशे जन्मनआरभ्य । ततोद्व्यधिके चतुर्विंशे ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । द्विजानांगोदानाख्यंकर्माह । ब्राह्मणस्य केशान्तःसंस्कारःगोदानाख्यंकर्मेत्यर्थः । षोडशे वर्षेविधीयते । क्षत्रियस्य द्वाविंशे वर्षे केशान्तसंस्कारःकार्यः । वैश्यस्य द्व्यधिके द्वाभ्यांअधिके चतुर्विंशे वर्षे केशान्तंकर्म ॥ ६५॥

**अमन्त्रिका तु कार्येयंस्त्रीणामावृदशेषतः॥ संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ६६ ॥**

( १ ) **मेधातिथिः** । इयमावृद्विशेषतस्त्रीणाममंत्रिका कार्या जातकर्मणआरभ्येयंसंस्काराणामावृत्परिपाटी सेतिकर्तव्यता कः संस्कारकलापइति यावत् । संस्कारार्थंशुद्ध्यर्थंशरीरस्य पौंस्नमेव स्त्रीणामपि प्रयोजनमाह । यथा कालंयस्मिन्काले यः संस्कारउक्तस्तंकालमनतिक्रम्य पदार्थानतिवृत्तौ यथासादृश्येऽव्ययीभावः । एवंक्रमेपि द्रष्टव्यम् । मन्त्रमात्ररहितायाआवृतोविहितत्वादयथाकालक्रमप्राप्तिरेवनास्तीत्यतोनिषेधोनित्यानुवादोवृत्तपूरणार्थः । एतावद्विवक्षितंस्त्रीणांचैतेअमन्त्रकाइति ॥ ६६ ॥

(२)**सर्वज्ञनारायणः** । प्राङ्नाभिवर्धनात्पुंसइत्यनुवर्ततेऽतःस्त्रीणामप्राप्तौ विधिः इयमावृज्जातकर्मादि क्रियापरिपाटी गर्भाधानादेस्तत्पूर्वकर्मणः स्त्रीत्वानिश्चयेनामन्त्रकत्वायोगात् अशेषतः सकलाङ्गवती संस्कारार्थं बैजिकगार्भिकदोषत्त्याकृत्वाद्यधिकारसिद्ध्यर्थं यथाकालंदशम्यांनामधेयमित्यादिकालेपि कार्या संभवेन्येनापि स्वकाले च कर्तुं शक्तानां कालान्तरेपि नामकरणादीनां यथोक्तक्रमेणैवानुष्ठानमित्येतदर्थं यथाक्रममित्युक्तम् । अत्र शूद्रस्य विशेषानभिधानात् नामकरणगुणविधेश्च स्त्रीणामेवामन्त्रकंसर्वकार्यमिति गम्यते ॥ ६६ ॥

( ३ ) **कुल्लूकः** । अमन्त्रिकेति । इयमावृदयंजातकर्मादि क्रियाकलापः समग्रउक्तकालक्रमेण शरीरसंस्कारार्थंस्त्रीणाममन्त्रकःकार्यः ॥ ६६ ॥

( ४ ) **राघवानन्दः**। तेषु स्त्रीणांविशेषमाह। अमन्त्रिकात्विति द्वाभ्याम्। आवृत्जातकर्मादिक्रियाकलापपरिपाटी-अमन्त्रिकाअत्रो पयुक्ताहोमास्तु समन्त्रकाएव॥ ६६॥

( ५ ) **नन्दनः**। एवंतावज्जातकर्मादयः संस्काराः पुंसामुक्ताः स्त्रीणामप्येतानमन्त्रकानतिदिशतिअमन्त्रकेति। आवृत्प्रयोगः क्रियेतियावत्॥ ६६॥

( ६ ) **रामचन्द्रः**। स्त्रीणांकन्यानां आवृत्जातकर्मादिक्रिया प्रधानक्रिया अमन्त्रिका कर्तव्या आविवाहंशरीरस्य संस्कारार्थं यथाकालंकालानुसारेण॥ ६६॥

**वैवाहिकोविधिःस्त्रीणांसंस्कारोवैदिकःस्मृतः॥ पतिसेवा गुरौ वासोगृहार्थोऽग्निपरिक्रिया॥ ६७॥**

**[ अग्निहोत्रस्य शुश्रूषा सायमुद्वासमेव च॥ कार्यं पत्न्या प्रतिदिनं इतिकर्मच वैदिकम्॥ १॥ ‡ ]**

( १ ) **मेधातिथिः**। पूर्वेणावृद्वचनेन जातकर्मादिवदुपनयनेप्यमन्त्रके प्राप्ते तदापत्तिवचनंविवाहस्य तन्निवृत्यर्थमारभ्यते। वेदग्रहणार्थोवैदिकः संस्कारउपनयनाख्योयः सस्त्रीणांवैवाहिकोविधिः। विवाहे भवोविवाहविषयोविवाहसाध्यःअतोविवाहस्योपनयनस्थाने विहितत्वात्तस्य निवृत्तिर्यदि विवाहस्तत्कार्यकरोहन्त प्राप्तंवेदाध्ययनंप्राप्ता च व्रतचर्योपनयनंनाम माभूद्वदुभयमपि निवर्तयति। पतिसेवा गुरौ वासः पतियत्सेवतउपचरत्याराधयति सएवास्या गुरौ वसतिः गुरौ वसत्याऽध्ययनंकर्तव्यंन चास्या गुरौवासोस्त्यतः कुतोध्ययनं. गृहार्थोगृहकृत्यानि रन्धनपारिणह्यप्रत्यवेक्षणादीनि यानि नवमेवक्ष्यन्तेऽर्थस्य संग्रहे चैनामित्यादि सायंप्रातर्ब्रह्मचारिणोयत्समिदाधानंतदेवास्या गृहकृत्यमग्निक्रियया च यावान्यम नियमसमूहोब्रह्मचारिणः ससर्वउपलक्ष्यते। एवंचैतदुक्तंविवाहस्योपनयनापत्यंयथैवमनुष्योयोपनयनात्प्रभृतिश्रौताःस्मार्ताआचारप्राप्ताश्च विधयोभवन्ति प्राकृतः कामचारवादभक्षत्वमेवंस्त्रीणांप्राग्विवाहात्कामचारः परस्मात्श्रौतस्मार्तेष्वधिकारएवंवा पदयोजना विवाहएव स्त्रीणांवैदिकः संस्कारउपनयनमनुपनयनेऽपि विवाहे भक्त्योपनयनत्वमुच्यते। किंतदुपनयनेन विवाहस्य साम्यंयेनास्य तद्यपदेशअतआहपतिसेवेत्यादि॥ ६७॥

( २ ) **सर्वज्ञनारायणः**। उपनयनंतु न कार्यतासां विवाहसंस्कारस्य तत्स्थानीयत्वादित्यर्थः। वैदिकोवेदाधिगमार्थउपनयनरूपः धर्मातिदेशार्थं तदङ्गसंपादनोक्तापतिसेवेति यथा गुरुशुश्रूषा व्रतिनस्तेनैव प्रकारेण स्त्रियापतिः शुश्रूष्यः। यथाचाप्रमादेनाग्न्युपचरणंतत्र यथागृहार्थेषु गृहप्रयोजनेषु पाकादिष्वप्रमत्तया भाव्यमित्यर्थः। परिष्क्रिया परिचर्या शूद्रस्य तु द्विजसेवैव गुरौ वासइति ग्राह्यम्॥ ६७॥

( ३ ) **कुल्लूकः**। अनेनोपनयनेऽपि प्राप्ते विशेषमाह वैवाहिकइति। विवाहविधिरेव स्त्रीणांवैदिकःसंस्कारउपनयनाख्योमन्वादिभिःस्मृतः। पतिसेवैव गुरुकुले वासोवेदाध्ययनरूपः। गृहकृत्यमेवसायंप्रातःसमिद्धोमरूपोऽग्निपरिचर्या। तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिरिति॥ ६७॥

( ४ ) **राघवानन्दः**। वैवाहिकोवक्ष्यमाणविवाहसंबन्धीसंस्कारःउपनयनसंस्कारस्थानीयः। तेन तन्निवृत्तिः वैदि-

---

( ६७ ) संस्कारो वैदिकःस्मृतः=औपनायनिकः स्मृतः ( ठ )

( ६७ ) गृहार्थोग्निपरिक्रिया=गृहार्थोग्निपरिग्रहः ( क )

=गृहार्थेग्निपरिक्रिया ( ख, ग )

‡ ( ख )

कः वेदमन्त्रकृतःविवाहस्तु समन्त्रकइत्युक्तेः । तासांपतिसेवैव गुरुकुलवासतया विधीयते । अकरणेप्रत्यवायस्मरणात् । करणे च स्तुतिस्मरणात् । एवंगृहार्थोगृहकृत्यमेव सायंप्रातःसमिद्धोमरूपाग्निपरिचर्या ॥ ६७ ॥

( ५ ) **नन्दनः** । उपनयनान्तंतासांसमन्त्रकं तच्चविवाहएवेत्याह वैवाहिकइति । संस्कारउपनयनम् । वैदिकः समन्त्रकः । तत्रगुरुकुलवासोऽग्निकार्यंचोत्तरार्धेनोक्तम् । गृहार्थः गृहकार्यम् । अग्निपरिक्रियाऽग्निपरिचर्या । विवाहस्योपनयनत्वप्रतिपादनंततऊर्ध्वंकामचारवादभक्षादिवर्जनार्थम् ॥ ६७ ॥

( ६ ) **रामचन्द्रः** । स्त्रीणांसंस्कारः वैवाहिकोविधिः वैदिकःवेदमन्त्रैःस्मृतः स्त्रीधर्मानाह पतिसेवा गुरौ वासः गुरोः आचार्यस्यसमीपेवासः । कार्यःअग्नेः परिक्रिया गृहार्थे पाकनिमित्तम् ॥ ६७ ॥

[ **रामचन्द्रः** । अग्निहोत्रस्येति स्त्रीभिः । अग्निहोत्रस्य शुश्रूषा कार्या सायंकालेउद्वासंवैदिकं अग्निकर्म प्रतिदिनं पत्न्या कार्यम् ॥ १ ॥ ]

## एषप्रोक्तोद्विजातीनामौपनायनिकोविधिः ॥ उत्पत्तिव्यञ्जकःपुण्यःकर्मयोगंनिबोधत ॥ ६८॥

( १ ) **मेधातिथिः** । प्रकरणोपसंहारः । एतावदुपनयनप्रकरणम् । अत्रयदुक्तंतत्सर्वमुपनयनार्थम् । ननु केशान्तोप्येवंप्राप्नोति नानिवृत्तउपनयने स्वकाले तस्य विधानात् प्रकरणेऽपि पठितस्य वाक्यादन्यार्थता भवति । तथा च केशान्तः समावृत्तस्यापि कैश्चिदिष्यते । उपनयने भवऔपनायनिकउत्तरपदस्य दीर्घत्वं । पूर्ववदुत्पत्तिस्तस्मातापित्रोः सकाशाज्जन्मतांव्यनक्ति प्रकाशयति । सगुणतां करोतीत्युत्पत्तिव्यञ्जकः जातोप्यजातसमोऽनुपनीतोधिकाराभावात् । अतोयंविधिरुत्पत्तिव्यञ्जकः पुण्यइत्युक्तार्थमुपनीतस्य येन कर्मणा योगः संबन्धोधिकारोयत्तेनोपनीतेन कर्तव्यंतदीदानींवक्ष्यमाणंनिबोधत ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । उपनयनसंबन्धःउत्पत्तेर्द्वितीयस्याद्विजत्वरूपायाव्यञ्जकोजनकः कर्मयोगमुपनेयस्य कर्मणासंबन्धम् ॥ ६८ ॥

( ३ ) **कुल्लूकः** । एषइति । औपनायनिकइत्यनुशतिकादित्वादुभयपदवृद्धिः । अयंद्विजातीनामुपनयनसम्बन्धी कर्मकलापउक्तः । उत्पत्तेर्द्वितीयजन्मनोव्यञ्जकः ॥ ६८ ॥

( ४ ) **राघवानन्दः** । वर्तिष्यमाणकर्मयोगंवक्तुंवृत्तंकीर्तयति एषइति । औपनायनिकउपनयनसंबन्धीउपनयनपर्यन्तोवाउपनीतस्य येन कर्मणा योगस्तंउत्पत्तिव्यञ्जकउत्पत्तेर्द्वितीयजन्मनो व्यञ्जकःपुण्यस्तत्प्रदः ॥ ६८ ॥

( ५ ) **नन्दनः** । उत्पत्तिव्यञ्जकोमातापितृजन्मविशेषकः उपनयनस्य संस्कारान्तरेभ्यः प्रधानसंस्कारत्वंप्रतिपादितं पुण्यइति कर्मयोगंकर्माभ्यासंशौचाचारादिषुकौशलम् अत्रापिद्विजातीनामित्यनुकर्षः कर्मयोग्यमितिचपठन्ति ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । अतः कर्मयोगंनिबोधत ॥ ६८ ॥

## उपनीय गुरुःशिष्यंशिक्षयेच्छौचमादितः ॥ आचारमग्निकार्यंच सन्ध्योपासनमेव च ॥ ६९ ॥

( १ ) **मेधातिथिः** । शिक्षयेद्युत्पादयेच्छौचमादितः । अदित इति वचनेनाचारादिभ्यः प्रागुपदेशः शौचस्येष्यते । किंतर्ह्यनियतक्रमकाः परस्परमेते केवलमुपनयनानन्तरंव्रतादेशनंवक्ष्यति । आदिष्टवेदव्रतस्य च वेदाध्ययनमतोग्नीन्धनसं-

ध्योपासनयोः समन्त्रकत्वादकृतेव्रतादेशे मन्त्रोच्चारणमप्राप्तंविधीयते शौचंचानियतकालंतदवश्यंतदहरेवोपदेष्टव्यमेवमाचारोपि । अतइदमादितइति वचनमादरार्थं न प्रथमोपदेश्यतांशौचस्य विधत्ते । शौचमेकालिङ्गेत्याद्याचमनान्तम् । आचारोगुर्वादीनांप्रत्युत्थानासनदानाभिवादनादिभिः । अग्निकार्यमग्न्याधानकार्यंसमित् समिन्धनं संध्यायामादित्यस्योपासनंतत्स्वरूपभावनंसंध्यायाउपासनंएवंवा पूर्वांसंध्यामित्यादि । एषव्रतधर्मः ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः** । शौचंमृज्जलपरिमाणनियमादिविशिष्टं आदितःपूर्वंआचारं अभिवादनादि अग्निकार्यं समिदाधानं सन्ध्योपासनं सन्ध्यात्रयस्याचरणम् ॥ ६९ ॥

( ३ ) **कुल्लूकः** । इदानीमुपनीतस्य येन कर्मणायोगस्तंशृणुतेत्याह उपनीय गुरुरिति । गुरुः शिष्यमुपनीय प्रथममेकालिङ्गेगुदेतिस्त्रइत्यादिवक्ष्यमाणंशौचंस्नानाचमनाद्याचारमग्नौसायंप्रातःसमिद्धोमानुष्ठानंसमन्त्रकसन्ध्योपासनविधिंचशिक्षयेत् ॥ ६९ ॥

( ४ ) **राघवानन्दः** । तत्रादौ गुरुशिक्षणीयमाह उपनीयेति । शिष्यमिति लिङ्गसङ्ख्येअविवक्षिते अष्टवर्षंब्राह्मणमुपनयीतेत्यादिश्रुतेर्जातिवत्पशुमालभेतेतिवत्विधेयगतत्वातपूर्वामामेरेकवाक्येपात्तत्वाच्च । अतोवक्ष्यति । अध्येष्यमाणइत्येकवचनान्तंशौचंवक्ष्यतेएकालिङ्गेत्यादिभिःअग्निकार्यंअग्नौ सायंप्रातःसमिद्धोमानुष्ठानम् ॥ ६९ ॥

( ५ ) **नन्दनः** । शौचंहस्तपादादिप्रक्षालनम् । आचारमाचमनादिकम् ॥ ६९ ॥

## अध्येष्यमाणस्त्वाचान्तोयथाशास्त्रमुदङ्मुखः॥ब्रह्माञ्जलिकृतोध्याप्योलघुवासाजितेन्द्रियः ॥७०॥

( १ ) **मेधातिथिः** । अध्ययनधर्मानिदानीमाह । प्रत्यासन्ने भविष्यति लृडयंद्रष्टव्यः। अध्ययने प्रवर्तमान अध्ययनमारभमाण अध्येतुमिच्छन्निति यावत् । उदङ्मुखोध्याप्यः गौतमीये तु प्राङ्मुखोवा शिष्यः प्रत्यङ्मुखआचार्यइति आचान्तोयथाशास्त्रमिति प्रागुक्तमाचमनविधिंस्मारयति ब्रह्माञ्जलिः कृतोयेनेति । आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य परनिपातः। ब्रह्माञ्जलिकृदिति वा पाठः।लघुवासाधौतवासाः प्रक्षालनेन लघुनी वाससी भवतः। अतोलघुत्वेन वाससः शुद्धिर्लक्ष्यते।अथवायंरोमादिस्थूलवसनः चित्तव्याक्षेपताड्यमानोन प्रहारंवेदयेत्ततश्च न युक्तः पठेत् । अपनीयमाने तु वाससि गुरोःखेदः स्यात् । निरावरणे च काये रज्वादिना ताड्यमानोमहतींबालोवेदनामनुभवेदतोदृष्टार्थंलघुवासस्त्वम् । जितानि नियमितानीन्द्रियाण्युभयान्यपि येन सजितेन्द्रियः नइततस्ततोवीक्षेत यत्किंचिन्नशृणुयादध्ययनेऽवहितोभवेदित्युक्तंभवति ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । यथाशास्त्रमाचान्तः उदङ्मुखःशिष्यः प्राङ्मुखेनाध्याप्यो ब्रह्माञ्जलिकृतः कृतब्रह्माञ्जलिः लघुवासाः स्वल्पवासाः जितेन्द्रियोनन्यमनाः ॥ ७० ॥

( ३ ) **कुल्लूकः** । अध्येष्यमाणइति । अध्ययनंकरिष्यमाणः शिष्योयथाशास्त्रंकृताचमनउत्तराभिमुखःकृताञ्जलिःपवित्रवस्त्रःकृतेन्द्रियसंयमोगुरुणा अध्याप्यः प्राङ्मुखोदक्षिणतःशिष्यउदङ्मुखोवेति गौतमवचनात्प्राङ्मुखस्याप्यध्ययनम् । ब्रह्माञ्जलिकृतइति वाहिताग्न्यादिष्वित्यनेन कृतशब्दस्य परनिपातः ॥ ७० ॥

( ४ ) **राघवानन्दः** । शिष्यस्य वेदग्रहणनियममाह अध्येष्यमाणइति त्रिभिः । लघुवासा गुरुतोलघुवासाःपवित्रवासावाएवंविधएवाध्याप्यः ॥ ७० ॥

( ५ ) **नन्दनः** । अथाध्ययननियमानाहअध्येष्यमाणमिति । यथाशास्त्रमाचान्तः प्राङ्मुखस्य गुरोर्दक्षिणतउदङ्मुखआसीनः । अध्याप्योगुरुणा ब्रह्मचारी लघुवासाअनुल्बणवस्त्रः । ब्रह्माञ्जलिकृतः कृतब्रह्माञ्जलिः ॥ ७० ॥

(६) **रामचन्द्रः** । पूर्वं आचान्तःयथाशास्त्रं. यथावेदंउदङ्मुखअध्येष्यमाणः शिष्यःब्रह्माञ्जलिकृतःसनअ-ध्याप्यः ॥ ७० ॥

**ब्रह्मारम्भेवसाने च पादौ ग्राह्यौ गुरोःसदा ॥ संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥७१॥**

(१) **मेधातिथिः** । ब्रह्मशब्दोयमनेकार्थोप्यध्ययनाधिकारादत्र वेदवचनः प्रतीयते । तस्यारम्भेनिमित्तसप्तम्येषा । अध्ययनाधिकारादेव च तद्विषयाऽध्ययनक्रिया तस्यायमारम्भः प्रथमावृत्तिः पुरुषस्य तत्रेदंपादग्रहणंवेदस्य तुयान्याद्यक्षराण्यग्निमीळेइषेत्वाअग्नआयाहीति न सोत्रारम्भउच्यते । नहि तस्य निमित्तभावः संभावितः नित्यत्वात् । कादाचित्कंहि निमित्तंभवति तेनैतदुक्तंभवति । वेदाध्ययनमारिप्समानोगुरोः पादसंग्रहणंकुर्यात्कृत्वा ततः स्वाध्यायाक्षराण्युच्चारयेन्न पुनः प्रवृत्ताध्ययनक्रियः पादौगृण्हीयात् । ननु चाद्य क्रियाक्षणआरम्भः सच निमित्तंविद्यमानस्य च निमित्तत्वं युक्तंजीवनस्येव । अत्र गेहदाहाद्यतीतमपि निमित्तंतत्र तथैव श्रवणम् । तस्मात्सहप्रयोगएवाध्ययनपादोपसंग्रहणयोर्युक्तः । उच्यते । अध्यापनाध्यवसायआरम्भउच्यते । नाद्यः क्रियाक्षणः यदैव गुरुरधीष्वेत्याह तदैवाध्यवस्यति माणवकः । अतस्तदनन्तरंपादोपग्रहउपकारप्रवृत्तस्य गुरोश्चित्तप्रसादनमेतत् यथा लोके कश्चिदुपकारप्रवृत्तंसभाजयतिवाचा ननुवयवमस्मात्पापान्मोचिताइति । अनक्षरा चेयमध्येषणोपसन्नाः स्माध्ययनायेति। नहि गुरुरुपरोध्योध्यापयति केवलमुपसदनमस्य कर्तव्यसंबोधार्थमवसरोध्ययनस्येति । अतः कृतोपसदनस्य वेदाक्षरोच्चारणमपि च संहत्य हस्तावध्येतव्यमित्युच्यते । तत्राधीयानः पादोपसंग्रहणविधिमतिक्रमेत । अवसानंसमाप्तिरध्ययनादुपरमः यद्यपि ब्रह्मशब्दआरम्भेगुणभूतस्तथाप्यवसानस्य सापेक्षत्वात्सन्निहितत्वाद्ब्रह्मपदेनैव संबन्धः प्रयते ऽन्यस्याश्रुतत्वात्सदाग्रहणमन्वहंभाविप्रयोगारम्भावसानयोरेषविधिर्यथास्यादितरथा यएव व्रतादेशानन्तरोमुख्यप्रारम्भः तत्रैव स्यात् । अथान्वारम्भणीयादर्शपूर्णमासारम्भे चोदितोयएवाधानानन्तरभावी दर्शपूर्णमासप्रयोगारम्भःतत्रैव भवति । न मासिकप्रयोगारम्भे । न मासिकप्रयोगारम्भेप्रातः प्रातरारभ्य यावदाह्निकंननिवृत्तंप्रपाठकद्वयमात्रपरिमाणंतावदेकैव साध्ययनक्रियेत्यंतरा कथंचिद्विच्छेदेपि पुनः प्रवृत्तानारम्भशब्दवाच्यतास्तीति न पुनः पादोपसदनंक्रियते । स्मृत्यन्तरे च पठ्यते पादोपग्रहणंगुरोःप्रातरन्वहमिति । संहत्य संलग्नौ संश्लिष्टौ परस्परंकृत्वाऽध्येयंकच्छपकर्णइति यःसंनिवेशोहस्तयोः प्रसिद्धस्तथा कर्तव्यःसहिब्रह्माञ्जलिः । पदार्थकथनमेतत् ॥ ७१ ॥

(२) **सर्वज्ञनारायणः** । सदाप्रत्यहंसंहत्य हस्तौ हस्ततले संमील्य ॥ ७१ ॥

(३) **कुल्लूकः** ।·ब्रह्मारम्भेवसानेचेति । वेदाध्ययनस्यारम्भेकर्तव्ये समापने च कृते गुरोःपादोपसंग्रहणंकर्तव्यं हस्तौ संहत्य संश्लिष्टौ कृत्वाऽध्येतव्यंसएव ब्रह्माञ्जलिःस्मृतइति पूर्वश्लोकोक्तब्रह्माञ्जलिशब्दार्थव्याकारः ॥ ७१ ॥

(४) **राघवानन्दः** । किंच ब्रह्मेति। ब्रह्मारम्भे वेदस्याध्ययनसमाप्त्योर्ब्रह्माञ्जलिकृतइत्युक्तं तल्लक्षणमाह संहत्येति । अञ्जलिरत्र कदलीपुष्पाकारः ॥ ७१ ॥

(५) **नन्दनः** । ब्रह्माञ्जलिंवक्ष्यतिब्रह्मारम्भइति । सदाअहरहः । ग्राह्यौब्रह्मचारिणा ॥ ७१ ॥

(६) **रामचन्द्रः** । ब्रह्मारम्भे वेदारम्भे तथा वेदावसाने गुरोः पादौ ग्राह्यौ भवतः । हस्तौ संहृत्य संयोज्य अध्येयं सहि ब्रह्माञ्जलिःस्मृतः ॥ ७१ ॥

**व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणंगुरोः ॥ सव्येन सव्यः स्प्रष्टव्योदक्षिणे न च दक्षिणः ॥७२॥**

( १ ) **मेधातिथिः** । यदुपसंग्रहणंपूर्वश्लोके गुरोरुक्तंतद्व्यस्तपाणिना कार्यं कीदृशः पुनः पाण्योर्व्यत्यासः कर्तव्यइत्यतआह । सव्येन हस्तेन सव्यः पादस्प्रष्टव्यः स्पर्शः कर्तव्योनतु चिरंनिपीडयासितव्यं । एषच व्यत्यासोयुगपदितरेतरदिक्संचारेण हस्तयोर्भवति अग्रतः स्थितेनसंमुखेन गुरोरुपसंग्रहणंकर्तव्यम् । तत्र वामोदक्षिणमार्गेनीयते दक्षिणे वाममित्येवंसव्येन सव्यः स्पृष्टोभवति दक्षिणे न च दक्षिणइत्येषपाणिव्यत्यासः अन्येतु विन्यस्तपाणिनेति पठन्ति । स्पर्शादेव च विन्यासेसिद्धे नाग्नितप्तायःपिण्डस्पर्शनवद्दाहभयादङ्गुल्यग्रमात्रेण स्पर्शनं न कर्तव्यमपितु हस्तौविन्यसितव्यौ निधातव्यौपीडनंतु पीडाकरंनिषिद्धमितिवर्णयन्ति ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । उपसंग्रहणप्रकारमाह व्यत्यस्तेति । व्यत्यस्तौ दक्षिणोत्तरौ स्वस्तिकाकारेण संहतौ पाणी यस्यएवंचार्थादाभिमुख्येनाभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शःप्राप्तः तथापि यत्र पर्यङ्कबन्धादिवशात् व्यत्यस्त पादएवास्ते गुरुः तत्र पाणि व्यत्यासो न कार्यः तथा सन्ध्यायामात्माभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः स्पर्शार्थत्वात् व्यत्यासस्यइत्येतदर्थंसव्येन सव्यइत्युक्तम् ॥ ७२ ॥

( ३ ) **कुल्लूकः** । व्यत्यस्तपाणिनेति । पादोपसंग्रहणंकार्यमित्यनन्तरमुक्तंतद्व्यत्यस्तपाणिना कार्यमिति विधीयते । कीदृशोव्यत्यासःकार्यइत्यतआह सव्येनपाणिनासव्यःपादोदक्षिणेनपाणिनादक्षिणःपादः गुरोः स्प्रष्टव्यः । उत्तानहस्ताभ्यांचैवंपादयोः स्पर्शनंकार्यम् । यदाह पैठीनसिः उत्तानाभ्यांहस्ताभ्यांदक्षिणेन दक्षिणं सव्यंसव्येन पादावभिवादयेत् । दक्षिणोपरिभावेन व्यत्यासोवायंशिष्टसमाचारात् ॥ ७२ ॥

( ४ ) **राघवानन्दः** । गुरोःपादौ ग्राह्यावित्युक्तं तत्प्रकारमाह व्यत्यस्तेति । उपसंग्रहणंपादयोरितिशेषः एतद्व्यनक्ति सव्येनेति सव्येन स्वस्य वामहस्तेन सव्योगुरोः पाद एवमुत्तरत्रनायंक्रमः तथा च पैठीनसिः । उत्तानाभ्यां दक्षिणंदक्षिणेन सव्यंसव्येन पादावभिवादयेदिति ॥ ७२ ॥

( ५ ) **नन्दनः** । कथंग्राह्यौ पादावित्यपेक्षायामाह व्यत्यस्तेति । उपसंग्रहणंगुरुपादस्पर्शः । अस्यव्याख्यानमुत्तरार्धम् । सव्येन पाणिना सव्यः पादः स्पृष्टव्यः ॥ ७२ ॥

**अध्येष्यमाणंतु गुरुर्नित्यकालमतन्द्रितः ॥ अधीष्व भोइतिब्रूयाद्विरामोस्त्विति चारमेत् ॥ ७३ ॥**

( १ ) **मेधातिथिः** । अध्येष्यमाणमित्यादीनि प्राग्व्याख्यातानि पदानि गुरोरयंनियोगः । गुरोर्यदा माणवकोध्यापयितुमभिलषितस्तदाधीष्वभोइत्यामन्त्रयितव्यः । अनामन्त्रितेन न गुरुः खेदयितव्य उपदिशानुवाकमिति । उक्तंच । आहूतश्चाप्यधीयीतेति विरामोस्त्वित्येतंशब्दंसमुच्चार्यारमेन्निवर्तेत । कः गुरुरेव । प्रथमान्त निर्देशात् । अथवा गुरुणोत्सृष्टोनिवर्तेत । न स्वेच्छया एवंच तदाख्यायते । यदा गुरुर्विरामोस्त्विति ब्रूयात्तदा विरमेद्ब्रह्मचारी । अन्ये त्वध्येतृमात्रस्य शिष्याणामुपाध्यायस्य च उपरमणकाले धर्ममिममिच्छन्ति । तथा च स्मृत्यन्तरम् । स्वाध्यायमधीत्य विरमणकाले प्रदेशिन्या पृथिवीमालभ्य स्वस्तीति ब्रूयाद्विस्पृष्टमिति सामसु विरामः परमास्वृक्षुआरमस्त्वथर्वसु । अतन्द्रितअनलसः । तन्द्राऽऽलस्यंतद्योगात्पुरुषस्तन्द्रितइत्युच्यते त्यक्तालस्यमतन्द्रितः । अनुवादश्चायंनात्र तन्द्राश्रमः नत्वियमाशङ्काकर्तव्या । यअतन्द्रितस्तस्यायंविधाः । आलस्यवतस्त्वन्यः ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । अध्ययनार्थंशिष्योगुरुमधीष्वेति ब्रूयात् स्वाध्यायान्ते विरामोस्त्विति ब्रूयात् । अत्र पाठे अधीष्वेत्यन्तर्भावितण्यर्थंशिष्येण गुरुंप्रति वाच्यम् । अध्येष्यमाणंतु गुरुरिति क्वचित्पाठः । तत्र गुरुणातद्वाच्यम् ॥ ७३ ॥

( ३ ) **कुल्लूकः** । अध्येष्यमाणमिति । अध्ययनंकरिष्यमाणंशिष्यंसर्वदाऽनलसोगुरुरधीष्व भो इतिप्रथमंवदेत् । शेषे विरामोऽस्त्वित्यभिधायविरमेन्निवर्तेत ॥ ७३ ॥

( ४ ) **राघवानन्दः** । गुरुशिष्ययोर्नियममाह अध्येष्यमाणंत्विति त्रिभिः । अध्येष्यमाणंशिष्यंअधीष्वभोइति ब्रूयात्तथा विरामोस्त्विति विरामोस्त्वित्युक्तेः आरमेत् निवर्तेताध्ययनात् शिष्यइति शेषः ॥ ७३ ॥

( ५ ) **नन्दनः** । अधीष्वेतिप्रार्थनायांलकारः विधेरत्रायुक्तत्वात् । ब्रूयात्ब्रह्मचारी ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । अतन्द्रितः गुरुः अध्येष्यमाणंशिष्यंभोशिष्यअधीष्वइति ब्रूयात् अन्यत्र क्रीडातःविरामःअस्तुइ-तिवारयेत् ॥ ७३ ॥

**ब्रह्मणःप्रणवंकुर्यादादावन्ते च सर्वदा ॥ स्रवत्यऽनोङ्कृतंपूर्वंपरस्ताच्च विशीर्यति ॥ ७४ ॥**

( १ ) **मेधातिथिः** । अत्रापि पूर्वोक्तेन न्यायेन ब्रह्मणआदावन्तेच प्रणवंकुर्यात् । ब्रह्मविषयायाअध्ययनक्रियाया-इति द्रष्टव्यम् । प्रणवशब्दओँकारविषयस्तथा वक्ष्यति स्रवत्यनोंकृतमिति । सर्वदाग्रहणमध्ययनविधिमात्रधर्मोयथास्यादि-तरथा प्रकरणाद्ग्रहणार्थएव ब्रह्मचारिणः स्यात् । अस्मिंस्तुसतियोऽप्यविस्मरणार्थोयच्चारहरहः स्वाध्यायमधीयीतेति गृह-स्थादीनांतत्र सर्वत्र सिद्धंभवति । संध्याजपादौतु स्वशब्देन विधास्यति । एतदक्षरमेनांचेति । नचायंवेदधर्मोयेन यत्र कुत्र-चिद्वैदिकवाक्योच्चारणमारभेत तत्रप्रामुयादतोहोममन्त्रजपशास्त्रानुवचनयाज्यादीनामारम्भेनास्तिप्रणवोन्यत्राप्युदाहरणार्थे वैदिकवाक्यव्याहारे तस्मात्स्थितंप्राकरणिकस्वाध्यायाध्ययनविधिधर्मार्थं सर्वदाग्रहणम् । प्रणवप्रयोगस्यान्वाहिकारम्भार्थ-ता तु नित्यकालग्रहणानुवृत्त्यैव सिद्धा । अस्यार्थवादःस्रवत्यनोंकृतंपूर्वंप्रारम्भअनोंकृतंब्रह्मस्रवति ओँमितिकृतंओँशब्देन संस्कृतं । साधनंकृतेति समासः । अथवा ओँकृतमित्युच्चारितोयस्मिन्ब्रह्मणि तदोंकृतंसुखादित्वात्परनिपातः परस्ताच्च समाप्तौ चकारेणानोंकृतमिति संबध्यते । स्रवति विशीर्यत इत्युभाभ्यामपि नैष्फल्यमध्ययनस्य प्रतिपाद्यते । अधीतंब्रह्म यस्मिन्कर्मणि विनियुज्येत तन्निष्फलंभवतीति निन्दार्थवादश्च पाकार्थंनिषिक्तस्याप्राप्तपाकक्षीरादेरवच्छिद्रिते भाजने यद्रत-स्ततोविक्षेपः मक्षरणंतत्स्रवतीत्युच्यते तच्च पाकस्य पिण्डीभूतस्य भोग्यतांप्राप्तस्य योविनाशः सविशरणम् ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । आदावन्ते च प्रणवंकुर्यादुपादद्यात् सर्वदा ब्रह्मयज्ञादावपि पूर्वंप्राग्गृहीतं स्रवतिनश्यति-परस्तात्गृहीष्यमाणंविशीर्यते ग्रहणकालेएव सम्यङ्नगृह्यते ॥ ७४ ॥

( ३ ) **कुल्लूकः** । ब्रह्मणः प्रणवमिति । ब्रह्मणोवेदस्याध्ययनारम्भेऽध्ययनसमाप्तौ चोङ्कारंकुर्यात् । यस्मात्पूर्वंयस्यो-ङ्कारोन कृतस्तत्स्रवति शनैःशनैर्नश्यति यस्य पुरस्तान्न कृतस्तद्विशीर्यत्यवस्थितिमेव न लभते ॥ ७४ ॥

( ४ ) **राघवानन्दः** । ओँकाराद्यन्तमध्ययनंनियमयति ब्रह्मणइति । ब्रह्मणोवेदस्य पूर्वमनोंकृतंब्रह्म स्रवति च्यवते स्वरवर्णतः विशीर्यते । यद्प्यधीतंतदपि विस्मृतंस्यादिति प्रणवोच्चारणेऽर्थवादः ॥ ७४ ॥

( ५ ) **नन्दनः** । ब्रह्मणोवेदस्याध्येतव्यप्रदेशस्यादावन्तेच सर्वदासदाआश्रमान्तरेऽपिआद्यन्तयोरनोङ्कृतंब्रह्म । ब्रह्म-गीतमदृष्टसाधनंपरम् ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मणः वेदस्यारम्भे अध्ययनारम्भे सदा प्रणवंकुर्यात् । अनोंकृतंपूर्ववेदः स्रवति ओँका-रंउच्चरति परस्तादध्ययनात् पश्चादध्ययनाद्वेदः विशीर्यते विस्मरणं यातीत्यर्थः ॥ ७४ ॥

**प्राक्कूलान्पर्युपासीनःपवित्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिःपूतस्ततॐकारमर्हति ॥ ७५ ॥**

( १ ) **मेधातिथिः** । कूलशब्दोदर्भाग्रवचनः तान्पर्युपासीनः तेषु प्रागग्रेषु दर्भेषूपविष्टइत्यर्थः । अधिशीङ्स्थासामिति स्थाआआसामित्याङ्प्रश्लेषात्कर्मत्वंपरि उपआआसीनइतीहाप्याङाश्लिष्टनिर्दिष्टोद्रष्टव्यः पर्युपशब्दावनर्थकौ। पवित्रैर्दर्भैरेवेमादितः शुचित्वमापादितः । अघमर्षणादिषु मन्त्रोनेह पवित्रशब्देनोच्यते । ब्रह्मचारिणस्तदानीमनधीतत्वात्तेषांन च दर्भाः स्वसत्तामात्रेण काश्चिच्क्रियामकुर्वतः पावने करणंभवन्तीति । अवान्तरव्यापारापेक्षया स्मृत्यन्तरे प्राणोपस्पर्शनंप्रतीयते । आह च गौतमः । प्राणोपस्पर्शनंदर्भैः प्राक्कूलेष्वासनंच प्राणायामैस्त्रिभिः पूतःमुखनासिकासंचारी वायुः प्राणस्तस्यायामोनिरोधः शरीरे धारणंबहिर्निष्क्रमणनिषेधः तस्यस्मृत्यन्तरे धारणकालस्य मानंसमाम्नातं । मन्त्रानुस्मरणंच प्रतिप्रणवसंयुक्तांगायत्रींशिरसा सह । त्रिर्जपेदायतप्राणःप्राणायामः सउच्यते ॥ वसिष्ठेन भगवता महाव्याहृतयोप्युक्ताः मन्त्रावसानएव निरोधावधिरन्यस्यानाम्नातत्वात्सर्वस्मृतीनांचासति विरोधएकार्थत्वादिहाप्येवमेवानुष्ठानम् । नन्वेवमितरेतराश्रयः स्यादकृतेषु प्राणायामेषुओंकारोनकर्तव्योन चोंकारेण विना प्राणायामोनिवर्तते । नैषदोषः । त्रिर्जपेदिति प्राणायामेषुमानसव्यापारेणोंकारस्य स्मरणमुच्यते । नहिनिरुद्धप्राणस्य शब्दोच्चारणंसंभवति । यद्यपि जपः कश्चिद्वाग्व्यापारसाध्योभवति । स्वाध्यायाध्ययनेतु पुनरुच्चारणंविवक्षितं । अध्ययनक्रियायाएवंरूपत्वाच्छब्दक्रियायां धातुः श्रोत्र ग्राह्यश्च शब्दोन केवलेन मनसा गृह्यते । न चायमोंकारधर्मोयेनान्यत्रापि तस्मिन्नुच्चार्यमाणेऽपि प्रसज्येत । उक्तंच स्वाध्यायारम्भेकर्तव्यइत्योंकारधर्मत्वे हि लौकिकेषु वाक्येष्वोमिति ब्रूमइत्यादिषु प्रसज्येत । गौतमेन तुपठितम् । प्राणायामास्त्रयः पञ्चदशमात्राइति मात्राशब्देन चाविकृतस्य स्वरस्याकारादेर्यावान्कालः सउच्यते तत्र विरोधात्स्मृत्यन्तरोक्तः कालोनास्ति नच मन्त्रस्मरणंतत्रानोंकाराअपिप्राणायामाः सन्तीति नेतरेतराश्रयदोषापत्तिः । ततॐकारमर्हतिकर्तुमिति शेषः यदा यंसमुदायएवरूढिरूपेण प्रणववचनः यदातुकरणंकारः ॐमित्येतस्यकारउच्चारणमोङ्कारस्तदानास्ति पदान्तरापेक्षा । प्रणवशब्देन कर्तव्यतामुक्त्वाऽत्रोंकारमित्यनुवदन्त्यतएतावेकार्थौ । तथा च दर्शितम् ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । प्राक्कूलानि कूलमग्रं प्रागग्रेषु दर्भेषूपरि वेष्टयित्वा स्थितेष्वासीनः पवित्रैर्दर्भैः पावितः । यथा गौतमः प्राणोपस्पर्शनंदर्भैरिति प्राणाइन्द्रियाणि प्राणदेशोत्हृदयं वा प्राणायामैरिति प्राणायामास्त्रयःपञ्च दशमात्राइति गौतमः । ॐकारंब्रह्मणआदिभूतम् ॥ ७५ ॥

( ३ ) **कुल्लूकः** । प्राक्कूलानिति । प्राक्कूलान्प्रागग्रान्दर्भानभ्यासीनः पवित्रैःकुशैः करद्वयस्थैः पवित्रीकृतः प्राणायामास्त्रयःपञ्चदशमात्राइति गौतमस्मरणात् पञ्चदशमात्रैस्त्रिभिः प्राणायामैः प्रयतोऽकारादिलघ्वक्षरकालश्च मात्रा ततोऽध्ययनार्थमोङ्कारमर्हति ॥ ७५ ॥

( ४ ) **राघवानन्दः** किंच प्रागिति । प्राक्कूलान्प्रागग्रान् कुशानिति शेषः । पवित्रैर्हस्तद्वयस्थैतकुशैः ॥ ७५ ॥

( ५ ) **नन्दनः** । प्राक्कूलान्कुशान्परि प्रागग्रेषु पवित्रैर्मन्त्रप्रोक्षणादिभिः । ओङ्कारमोङ्कारोच्चारमर्हति प्राप्नोति । एषविधिः प्रथमाध्ययनपरः सर्वदेतिवचनाभावात् ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । प्राक्कूलानकुशानगृहीत्वा गुरुंपर्युपासीत पवित्रैःकुशैःपावितः त्रिभिःप्राणायामैःपूतोभवेत् ओंकारोच्चारणार्थंसः अर्हति ॥ ॥ ७५ ॥

---

( ७५ ) उपासीनः=उदासीनः ( च )

**अकारंचाप्युकारंच मकारंच प्रजापतिः ॥ वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥ ७६ ॥**

( १ ) **मेधातिथिः** । पूर्वस्य विधेरर्थवादः । अक्षरत्रयसमाहाररूपॐकारस्तत्रैकैकस्य व्युत्पत्तिमाह । वेदत्रयात्रिभ्योवेदेभ्यः निरदुहदुद्धृतवान्यथा दध्नोघृतमुद्ध्रियते । नकेवलमक्षरत्रयंयावदिदमपरंभूर्भुवःस्वरिति ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रणवस्य प्रकृतस्तुतौ कार्यायांव्याहृतिगायत्र्योः स्तुतिस्तयोरप्यादौ जपार्थो ॐ कारमात्रजपस्तु प्रागुक्तस्तदसंभवे निरबृंहदुद्धृतवान् इतीति। इतीति द्वयेन प्रकारद्वयाभिधानेन भूर्भुवः स्वरित्येवं प्रकाराव्याहृतयः संगृहीताः ॥ ७६ ॥

( ३ ) **कुल्लूकः** । अकारंचेति । एतदक्षरमेतांचेति वक्ष्यति तस्यायंशेषः । अकारमुकारंमकारंच प्रणवावयवभूतं ब्रह्म वेदत्रयादृग्यजुःसामलक्षणाद्भूर्भुवःस्वरिति व्याहृतित्रयंच क्रमेण निरदुहदुद्धृतवान् ॥ ७६ ॥

( ४ ) **राघवानन्दः** । प्राणायामपूतस्यैव प्रणवोच्चारणाधिकारइत्युक्तेस्तदङ्गगायत्रीप्रणवव्याहृतिसंयुक्तंज्ञापयन् आदौ प्रणवस्य वेदत्रयसारतामाह अकारंचेति द्वाभ्यां । वेदत्रयात्ऋग्यजुःसामभ्यः निरदुहत्उत्धृतवान् दध्नइव नवनीतम् ॥ ७६ ॥

( ५ ) **नन्दनः** । वेदग्रहणारम्भे व्याहृतित्रयसावित्र्योरपि प्रयोज्यतांश्लोकद्वयेनाह अकारमिति । निरदुहन्निश्चकर्ष । अस्यानन्तरंद्वितीयस्येतिकरणस्यान्वयः पश्चात्भूर्भुवःस्वरितिचेत्यन्वयः । ततोऽयमर्थः इतिएवंयथाऽकारादीन्वर्णान्निरदुहदेवंभूर्भुवःस्वरितिचनिरदुहदिति ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । प्रजाप्रतिःअकारंऋग्वेदाददूदुहत् उकारंच यजुर्वेदाददूदुहत् । मकारंसामवेदाददूदुहत् । ऋग्वेदाद्भूःअदुहत् । यजुर्वेदात्भुवः । सामतः स्वरिति अदुहत् । तिस्रः व्याहृतयःभवन्ति ॥ ७६ ॥

**त्रिभ्यएव तु वेदेभ्यःपादंपादमदूदुहत् ॥ तदित्यृचोस्याःसावित्र्याःपरमेष्ठी प्रजापतिः ॥ ७७ ॥**

( १ ) **मेधातिथिः** । अयंतत्सवितुर्वरेण्यमित्येतस्याः गायत्र्याउत्पत्त्यर्थवादोविधानार्थः । पूर्वश्लोकेचार्थवादादेवव्याहृतीनामपि विधानम् । क्रमस्तु पाठावगम्यः वक्ष्यति च । एतदक्षरमेतांच जपन्व्याहृतिपूर्विकामिति । अदूदुहदुधृतवानिति । यद्यपि तदित्येतत्प्रतीकेन तत्सवितुर्वृणीमहइतिवा शक्यते लक्षयितुंनतुसा त्रिपदेति । त्रिपदैव ग्राह्या त्रिपदाचैव सावित्रीति कश्यपादयोपि प्रजापतयः सन्त्यतोविशिनष्टि । परमेष्ठीति हिरण्यगर्भः सहि परमे स्थानेऽनावृत्तिलक्षणे स्थित आदरातिशयार्थंचैतत्सावित्र्याः साक्षात्किलेयंसर्वमुख्येन प्रजापतिना वेदेभ्यः समुद्धृतेति ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । अदूदुहत्सारप्राप्त्यर्थमाकृष्टवान् सावित्र्याः सावित्रीति निरुपपदेन पठनरूढातत्सवितुर्वरेण्यमिति गृह्यते न तत्सवितुर्वृणीमहइत्यादयः ॥ ७७ ॥

( ३ ) **कुल्लूकः** । त्रिभ्यएवेति । तथात्रिभ्यएव वेदेभ्य ऋग्यजुःसामभ्यस्तदित्यृचइति प्रतीकेनानूदितायाः सावित्र्याः पादंपादमिति त्रीन्पादान् ब्रह्माचकर्ष । परमेस्थाने तिष्ठतीति परमेष्ठी ॥ ७७ ॥

( ४ ) **राघवानन्दः** । तेभ्योगायत्र्यास्त्रीन्पादानदूदुहदित्याह त्रिभ्यइति। तदित्यृचः तत्सवितुरित्याद्यायाऋचः परमेष्ठी हिरण्यगर्भः आपोज्योतिरित्यादिशिरोपि ज्ञेयं । सव्याहृतिंसप्रणवांगायत्रींशिरसासह । त्रिःपठेदायतप्राणः प्राणायामः सउच्यतेइति श्रुतेः । गायत्रींशिरसासार्धंजपेद्व्याहृतिपूर्विकां । प्रतिप्रणवसंयुक्तां त्रिरयंप्राणसंयमइति याज्ञवल्क्योक्तेश्च ॥ गायत्रीत्युपलक्षणंत्रिष्टुब्जगत्योः संवत्सरे षण्मास्येचतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यश्लेषगायत्रींब्राह्मणायानुब्रू-

यादाग्नेयोवै ब्राह्मणइति श्रुतेः। त्रिष्टुभंराजन्यस्य जगतींवैश्यस्य सर्वेषांवागायत्रीमिति त्रिष्टुभंक्षत्रियाय त्रिष्टुप्छंदस्कां तथावैश्याय प्रजापतिदृष्टांजगतीछन्दस्कांसवितृदेवत्यांरुक्मपाशविमोचनेउखासंभरणे विनियुक्तांविश्वरूपाणि प्रतिमुंञ्चते कविः प्रासावीद्भद्रंद्विपदे चतुष्पदे विनाकमख्यत्सविता वरेण्योनुप्रयाणमुषसोविराजति॥ इत्येतामृचंप्रब्रूयात् बृहस्पतिदृष्टसवितृदेवत्यांदेवसवितः प्रसुव यज्ञंप्रसुव यज्ञपतिंभगाय दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचमद्यः स्वदातिनः स्वाहाजंपेत्वाज्यविनियुक्ताम् ॥ ७७ ॥

( ५ ) **नन्दनः**। तदिदितित्सवितुरितिसाविव्याः सवितृदैवत्यायाऋचोऽदूदुहदंधुक्षत् । तस्माद्वेदत्रयसारत्वाद्व्याहृतित्रयसाविव्यौ वेदारम्भे प्रयोज्येति ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । तस्मात् कारणात् अस्याःसाविव्याःऋचःइति निश्चितं त्रिभ्यएव वेदेभ्यः पादं पादं अदुहत् ॥ ७७ ॥

## एतदक्षरमेतांच जपन्व्याहृतिपूर्विकाम् ॥ संध्ययोर्वेदविद्विप्रोवेदपुण्येन युज्यते ॥ ७८ ॥

( १ ) **मेधातिथिः**। सत्यपि स्वाध्यायविधिप्रकरणैकवाक्यात्संध्याजपविधिरयंतत्र गायत्र्याऽनुवादः प्रणवव्याहृतीनामप्राप्तविधिअत्र कश्चिदाह। नायंसंध्याविधिरप्रकरणात् विधिर्हिभवन्ब्रह्मचारिणः स्यात्तस्य प्रकृतत्वात्। नच तस्य संभवतीहहि वेदविदित्युच्यते। नच तस्य प्रथमोपनीतस्य वेदवित्त्वमस्त्यपिच फलमत्र श्रूयते। वेदपुण्येन युज्यते। नित्यस्य संध्योपासनविधिः न फलार्थः नचैतद्विद्मः किमिदंवेदपुण्यंनामफलंयेनयोगोयंजपउच्यते। यदि तावद्वेदाध्ययनत्वाद्यत्पुण्यमभिप्रेतंतदवाप्तिर्वेदपुण्येनयोगोभिप्रेतस्तत्रयस्तावदयंप्रकृतः स्वाध्यायविधिस्तस्य नार्थावबोधादृते किंचित्फलमस्त्यश्रुतत्वाद्दृष्टत्वाच्चार्थावबोधस्य कल्पनापि नास्ति। यश्च गृहास्थदीनांविधिरहरहः स्वाध्यायमधीयीतेति सोपि नित्यएव यत्तत्रफलश्रवणं पयोदधिघृतंमध्विति सोर्थवादएव तस्मान्नायंविधिः विधौ हि सर्वमेतद्विवक्षितव्यं यदात्वयमर्थवादस्तदा जपन्निति प्रकृतमध्ययनमुच्यते वेदपुण्येनेत्येतदपि यथाकथंचिन्नीयते । अत्रोच्यते वाक्येन प्रकरणंबाध्यतइत्युक्तमेव। यतएव वेदवित्पदं संध्यापदंचन प्रकृतविषयतयाभ्येति ततएवान्यत्रायंविधिः संध्ययोरेतत्त्रयंजपेदित्येतावान्विधिः वेदवित्पदमनुवक्ष्यते गृहस्थादीनांवेदवित्त्वस्यसंभवाद्ब्रह्मचारिणोवेदवित्त्वंन संभवतीति चेत्किंतदीयेन संभवेन यथा प्राप्तानुवादे हि सचाश्रमिणामधिकारः कर्तृविशेषणेहि वेदवित्पदे ब्रह्मचारिणोनाधिकारः स्यात्कथंपुनरस्यानुवादः वाक्यभेदप्रसङ्गात्। विधौ संध्याविधौ प्राप्ते प्रणवव्याहृतयस्तावदप्राप्तास्तत्रविधातव्या तत्रयद्यपरंवेदविदिविधीयते तदा वाक्यभेदः स्यात् प्राप्ते हि कर्मणि नानेकार्थविधानंसंभवति प्रणवव्याहृतिनांतु नानुवादः संभवति। तेनायमत्र वाक्यार्थः संध्ययोर्यत्सावित्रींजपेदित्युक्तं तत्रायमपरोगुणः प्रणवव्याहृतीपूर्विकांतांजपेत्। विप्रग्रहणंच तदा प्रदर्शनार्थमेव। यदप्युक्तं फलमत्रश्रूयते नित्यश्चायंविधिः संध्यायाः कोनामायंविरोधः नित्यएव तस्मिन्गुणे कामोभविष्यति। प्रणवव्याहृतीगुणकात्तस्मादिदंफलमिति। यथा गोदोहनप्रणयनकादग्निहोत्रात्पशवः फलं। गोदोहनेन पशुकामस्य प्रणयेदिति वाक्यसामर्थ्येन अभ्येतुश्चैतदुक्तं न त्वयंकाम्योविधिः स्मृत्यन्तरे हिनित्यएवायंविधिः स्पष्टएवोक्तोगायत्रींशिरसासार्धंजपेद्व्याहृतिपूर्विकामिति। फलानामवगमोभवतैवोक्तः। अयंह्यर्थोवेदपुण्येनेति वेदे यत्सन्ध्योपासनात्पुण्यमुक्तं तेनत्रिकमेतज्जपन्युज्यते न केवलंगायत्रीं । पुण्यंच धर्मः वेदमूलत्वात्स्मृतीनांस्मृत्युक्तमपि वेदपुण्यतया व्यपदिश्यते वेदस्य पुण्यंवेदपुण्यंकिंच वेदस्यपुण्यंयत्नेन प्रतिपाद्यते पठ्यमानाद्धिवेदाद्यज्जायते तदपि शक्यते तस्येति वक्तुम् किंत्वसाधारणत्वात्प्रतिपाद्यमेव युक्तंव्यपदेष्टुंनोत्पाद्यंयागादयोधर्ममुत्पादयन्ति। प्रतिपादकस्तु वेदएव येप्यन्त्यस्य पादस्य सामर्थ्यमाहुः। यदुक्तंनित्यस्वा-

ध्यायइति तत्र संध्यायां त्रिकजपादेव कृतार्थाभवन्तीति तदप्यसत्। एवंसति तेन विधिना विकल्पेत। तत्र च पाक्षिको नित्यस्वाध्यायतायाबाधःस्यात्। नचाबाधे संभवति बाधोभ्युपगंतव्यः। एतदक्षरमित्योंकारस्य प्रतिनिर्देशः। ननु च नैतदेकमक्षरंद्वे वा त्रीणिवा उच्यते। अक्षरशब्देन केवलंस्वरउच्यते। व्यञ्जनसंयोगश्च तत्रेह यादृशः प्रकृतः तादृशस्याभिधानम्। एतांच तत्सवितुर्वरेण्यमिति सावित्रीं व्याहृतयः पूर्वायस्यास्तांव्याहृतीपूर्विकांतिस्रः प्रकृताएव ताव्याहृतयोगृह्यन्ते प्रकृतपरत्वादस्य नसमसत्यानन्ताः ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः**। प्रसंगादन्यदप्यैतैः कार्यमाह एतदिति। वेदविदिति वेदाध्ययनवान् ननु गायत्रीमात्रसारोपीति श्रुतिदर्शनादनधीत वेदोपि वेदपुण्येन कृत्स्नवेदाध्ययनफलेन ॥ ७८ ॥

( ३ ) **कुल्लूकः**। यतएवमतएतदक्षरमिति। एतक्षरमोङ्काररूपमेतांच त्रिपदांसावित्रींव्याहृतित्रयपूर्विकांसन्ध्यावकाले जपन्वेदज्ञोविप्रादिर्वेदत्रयाध्ययनपुण्येन युक्तोभवति। अतःसन्ध्याकाले प्रणवव्याहृतित्रयोपेतांसावित्रींजपेदिति विधिः कल्प्यते ॥ ७८ ॥

( ४ ) **राघवानन्दः**। संमत्यस्याजपार्थमानुपूर्वींप्रदर्शयति एतदिति। एतदक्षरंओंकाराक्षरंएतांतत्सवितुरित्यादिप्रचोदयादित्यन्तांभूर्भुवःस्वरिति व्याहृतयः प्रणवात्परस्मिन्पूर्वे च व्याहृतयोयस्यातदित्यादिकायाः तामित्यर्थः वेदपुण्येन वेदत्रयाध्ययनजतुल्यपुण्येन ॥ ७८ ॥

( ५ ) **नन्दनः**। अथप्रणवव्याहृतिसावित्रीणांमाहात्म्यंप्रसङ्गादाह एतदिति। अक्षरंप्रणवम्। एतांसावित्रीम्। विप्रशब्दोऽत्रक्षत्रियवैश्ययोरप्युपलक्षणार्थः। वेदविद्वेदविदः पुण्येन युज्यते वेदत्रयार्थविदोवेदत्रयजापिनश्चयत्फलंतल्लभतइत्यर्थः ॥ ७८ ॥

( ६ ) **रामचन्द्रः**। एतदक्षरमोंकारंएतांत्रिपदींव्याहृतिपूर्विकांसन्ध्ययोर्जपन्तदा वेद पुण्येन वेदाध्ययनजन्यपुण्येन युज्यते ॥ ७८ ॥

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकंद्विजः ॥ महतोप्येनसोमासात्त्वचेवाऽहिर्विमुच्यते ॥ ७९ ॥**

( १ ) **मेधातिथिः**। बहिरित्यनावृतोदेशउच्यते तेनैतदुक्तंभवति। ग्रामनगराभ्यांबहिररण्ये नदीपुलिनादौ सहस्रवारानभ्यस्याऽऽवर्त्य नतु कृत्वसुचोप्यावृत्तिः प्रतिपाद्यते। अभ्यस्येत्यनेनापि तत्रपौनरुक्त्यं। सामान्यविशेषभावाददोषः। अभ्यस्येत्यनेन सामान्यतोभ्यासउक्तस्तत्र विशेषापेक्षायां सहस्रकृत्वेति नच कृत्वसुजंतादेवोभयाऽवगतिस्तस्य क्रिया विशेषापेक्षत्वात्। नहि देवदत्तः पञ्चकृत्वोन्हइत्युक्ते यावद्भुङ्क्तइति तेनोच्यते तावद्वाक्यार्थः समाप्यते। ननु चाभ्यस्येत्यनेनापि न काचिद्विशिष्टाक्रियोपात्ता सत्यं जपः प्रकृतस्तमभ्यस्येति प्रतीयते। आवृत्तिः पौनःपुन्येन सेवामहतोप्येनसः महत्पापंच ब्रह्महत्यादि। ततोपि मुच्यते किंपुनरुपपातकेभ्यःअपिः संभावने नसमुच्चये भेदोपादानेन समुच्चयावगमोयथा देवदत्तस्यात्र प्रभुत्वंयज्ञदत्तस्यापीह न तथा निर्देशः केभ्यः पुनरुपपातकेभ्योयंमोक्षउच्यते। गोवधादीन्युपपातकानि तानि च प्रतिपापमाम्नातप्रायश्चित्तानि सरहस्यानि यानि वा संवेत्ति नकृतान्यनुक्तपरिहाराण्यवश्यंभावितया च ज्ञायते। कृतानीति। तेषामपि नित्यानिसंध्योपासनादीन्यपनोदकानि। यदिचैतत्प्रायश्चित्तंस्यात्तदा तत्रैवावक्ष्यत्। जपेद्वै नियताहारः त्रिर्वेदस्य संहितामिति चेत्प्रायश्चित्ते चास्मिन्प्रायश्चित्तप्रकरणमेवानर्थकंस्यात्। कोहि देववशप्राप्तोजपमात्रसाध्यांनिष्कृतिंहित्वा कृच्छ्रेषुशरीरप्राणहरेष्वध्यवस्येत्। उक्तंच। अर्के चेन्मधुविन्देत किमर्थंपर्वतंव्रजेत्। इष्टस्यार्थस्य संप्राप्तौ कोविद्वान्यत्नमाचरेत् ॥ तथा पणलभ्यंहि न प्राज्ञः क्रीणाति दशभिःपणैरिति। नच प्रकृतेनै-

कवाक्यताबीजांकिंचिद्विभज्यमानसापेक्षत्वाद्यस्ति येनतच्छेषतयार्थवादउच्यते अत्रोच्यते । विधिरेवायंपापप्रमोचनार्थ-एवायंप्रयोगः । यत्तूक्तंविषमशिष्टैर्विकल्पोन सिध्यतीति जपप्रायश्चित्तएवास्मिन्विकल्पार्थोभविष्यति । अघमर्षणादि-भिः सर्वपापापनोदनमुक्तंतेनास्य विकल्पअघमर्षणे हि त्र्यहमुपवासउक्तः । इहाप्यन्नेव मासिकेन प्रयोगेण शुध्यति। ततो न दूरविप्रकृष्टे न तपसा समीयते येन विषमशिष्टता स्यात् । अथवा पूर्वकृतस्यैनसः शुद्धिरेषा ग्रहादौ स्थित्यादी-सूचिते दैवे दोषे तस्मान्मोक्षअनिष्टमेनउच्यते । तस्मान्मुच्यते तत्फलेननसंबध्यतइत्यर्थः । त्वचेवाहि जीर्णया त्वचा-मुक्तः सर्पोयथा भवति निरवशेषेण पापनाशएतेन प्रतिपाद्यते । यतुदौश्चर्यादिसूचितंपूर्वकृतमशुभंतत्र स्मृत्यन्तरे प्राय-श्चित्तमाम्नातंबहु तत्प्रायश्चित्तेष्वेव निदर्शयिष्यामः । एतदेवाभिप्रेत्योक्तं । जपतांजुव्हतांचैव विनिपातोन दृश्यतेइति ॥७९॥

( २ ) **सर्वज्ञनारायण** । बहिर्ग्रामात् त्रिकंप्रणवव्याहृतिगायत्रीरूपं महतोब्रह्महत्यादेरपि अबुद्धिपूर्वकृतव्रात्य ब्राह्मणवधादिरूपात् मासात्कालमात्रात् त्वचेत्यादिदृष्टान्तोदार्ष्टान्तिकदार्ढ्यार्थः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । सहस्रकृत्वइति सन्ध्यायामन्यत्र कालएतत्प्रकृतंप्रणवव्याहृति त्रयसावित्र्यात्मकंत्रिकंग्रामाद्बहिर्न-दीतीरारण्यादौ सहस्रावृत्तिंजपित्वामहतोऽपि पापात्सर्पइवकञ्चुकान्मुच्यते । तस्मात्पापक्षयार्थमिदंजपनीयमित्यप्रकर-णेऽपिलाघवार्थमुक्तम् । अन्यत्रैतत्त्रयोच्चारणमपि पुनः कर्तव्यंस्यात् ॥ ७९ ॥

( ४ ) **राघवानन्दः** । किंच तस्याजपविशेष फलविशेषमाह सहस्रेति । त्रिकंप्रणवादित्रयंबहिः ग्रामात् न धरण्या-दौ त्वचः कञ्चुकात्तवउपमानार्थः त्वचेवेति क्वचित्महतोब्रह्महत्यादेः तस्मात्सर्वपापक्षयकामेनैषाजपनीयेतिभावः ॥ ७९ ॥

( ५ ) **नन्दनः** । बहिः संध्याभ्यामन्यस्मिन्कालेऽपिग्रामाद्बहिरितिवा ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । तुपुनः जलाद्बहिर्गत्वाएतत्त्रिकंत्रिपदांसहस्रकृत्वःसहस्रसङ्ख्यांजपित्वामहतोपिएनसःपापात् मा-सातमासपर्यन्तात् विमुच्यते ॥ ७९ ॥

## एतयर्चाविसंयुक्तः काले च क्रियया स्वया ॥ ब्रह्मक्षत्रियविड्योनिर्गर्हणांयाति साधुषु ॥ ८० ॥

( १ ) **मेधातिथिः** । एतया सावित्र्या विसंयुक्तोहीनसंध्योपासनस्त्यक्तस्वाध्यायश्च गर्हणांनिन्दांसाधुषु विशिष्टेषु या-ति । प्राप्नोति । कीदृशींगर्हणांप्राप्नोत्यतआह । काले च क्रियया स्वया कालआषोडशादित्यस्मिन्वियुक्तेगतेनिन्द्यते । एवमुप-नीतोपि स्वाध्यायारम्भयोग्यः सावित्रीवर्जितोव्रात्यएव भवति त्रयाणांया साधारणी स्वक्रिया सह निर्दिष्टा साचोपनयनमेव कालशब्दश्चैव मर्थवान् । अध्ययनादिस्वकर्मविवक्षायामेतावदेववाच्यंस्यात् । यक्रिया या स्व येति योनिशब्दोजन्मपर्यायो जात्यर्थंगमयतिविप्रादिजातीयइत्यर्थः । अर्थवादोयंव्रात्यप्रायश्चित्तार्थः ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । विसंयुक्तोवियुक्तः स्वया कृतयाअग्निहोत्रादिकया गर्हणांनिन्दांग्रहणमितिपाठे ग्रहणं-परिग्रहं तत्रापिसंयुक्तइत्यकारप्रश्लेषेण पाठः ॥ ८० ॥

( ३ ) **कुल्लूकः** । एतयर्चेति । सन्ध्यायामन्यत्र समयऋचैतयासावित्र्यावियुक्तस्त्यक्त सावित्रीजपःस्वकीययाक्रि-ययासायंप्रातर्होमादिरूपया स्वकाले त्यक्तोब्राह्मणः क्षत्रियोवैश्योपि सज्जनेषु निन्दांगच्छति तस्मात्स्वकाले सावित्री-जपंस्वक्रियांच न त्यजेत् ॥ ८० ॥

( ४ ) **राघवानन्दः** । एतद्वैमुख्येदोषमाह एतयेति । एतयाऋचातत्सवितुरित्यादिकया विसंयुक्तः परित्यक्तः क्रिययासन्ध्याग्निहोत्रादिकया चगर्हणांनिन्द्यताम् ॥ ८० ॥

( ५ ) **नन्दनः** । एतयर्चा प्रणवव्याहृतिपूर्वया साविच्या विसंयुक्तः काले च क्रियया स्वयेत्युपन्यासोदृष्टान्तार्थः । यथासन्ध्योपासनादिस्वकर्मणावियुक्तस्तथेति । गर्हणांयाति साधुषु दोषभूयिष्ठत्वात्साधुभिस्त्याज्यइत्यर्थः । अपरेतु-मन्यन्तेएतयर्चा विसंयुक्तोऽनुपनीतअतएव तत्तत्कालविहितस्वकर्मरहितोविप्रक्षत्रियविड्योनिजातोऽपि सत्सु त्याज्यतां-यातीति ॥ ८० ॥

( ६ ) **रामचन्द्रः** । एतयाऋचा गायत्र्या विसंयुक्तः विरहितः काले जपकाले च पुनः स्वया क्रियया सायंप्रात-र्होमादिक्रियया विसंयुक्तःरहितःविप्रक्षत्रियविड्योनिः साधुषु गर्हणांयाति ॥ ८० ॥

## ओंकारपूर्विकास्तिस्रोमहाव्याहृतयोऽव्ययाः॥ त्रिपदा चैव सावित्री विज्ञेयंब्रह्मणोमुखम्॥८१॥

( १ ) **मेधातिथिः**। ॐकारःपूर्वोयासांताॐकारपूर्विकाः । महाव्याहृतयः प्रकृताएव भूर्भुवःस्वरित्येते शब्दाअभिधी-यन्ते । अव्ययाअविनाशिन्यः फलस्य दीर्घकालत्वादेवमुच्यते । अन्यथा सर्वएव शब्दानित्याइति विशेषणमनर्थकम् । त्रि-पदातत्सवितुरित्येषा सावित्री ब्रह्मणोमुखं । आद्यत्वान्मुखव्यपदेशअतश्चारम्भअध्येयमेतदित्यस्यैवार्थवादः । अथवा मुखं-द्वारमुपायोब्रह्मप्राप्तिरनेन भवतितदेवाह ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः**। । ब्रह्मणोवेदस्य मुखं ततस्तदारभ्य एतत्त्रयजपःकार्यइत्यर्थः ॥ ८१ ॥

( ३ ) **कुल्लूकः** । ॐकारपूर्विकेति ओङ्कारपूर्विकास्तिस्रोव्याहृतयोभूर्भुवःस्वरित्येताअक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः त्रिपदा च सावित्रीब्रह्मणोवेदस्य मुखमाद्यं तत्पूर्वकवेदाध्ययनारम्भात् । अथवा ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतद-ध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेः ॥ ८१ ॥

( ४ ) **राघवानन्दः** । मुमुक्षूणांतदेव शरणमित्याह ॐमिति । अव्ययां अव्ययफलदात्रीं ब्रह्मणःपरंब्रह्मणःमुखंप्रा-प्त्युपायंवेदस्य प्रधानभूतंवा ॥ ८१ ॥

( ५ ) **नन्दनः** ।ब्रह्मणोवेदस्य मुखंशरीरम् । तथा च सामुद्रिकवचनंमुखमर्धंशरीरस्येति । अथवाब्रह्मणोमुखंवे-दाधिगमनद्वारम् ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । त्रिपदा चैव सावित्री ब्रह्मणःवेदस्य मुखंआद्यंतत्पूर्वकंवेदाध्ययनंविज्ञेयं ओंकारपूर्विकामहा व्याहृतयःतिस्रःअव्ययाःतद्यथा ओंभूः ओंभुवः ओंस्वरितित्रयः व्याहृतयःअथवा ब्रह्मणःपरमात्मनःप्राप्तःमुखंद्वारंएतद-ध्ययनजपादिना ॥ ८१ ॥

## योऽधीतेऽहन्यहन्येतांत्रीणि वर्षाण्यतन्द्रितः ॥ सब्रह्मपरमभ्येति वायुभूतःखमूर्तिमान् ॥ ८२ ॥

( १ ) **मेधातिथिः** । आकाशइव सर्वव्यापीविभुः संपद्यते खमूर्तिः ख स्वभाववान् ननु मूर्तिःशरीरमाकाशस्य शरी-राभावात् । अथ किमिदंब्रह्म यद्रूपापत्तिरुच्यते । परमात्माऽऽनन्दरूपः यस्येमे क्षेत्रज्ञाः पवनजवोद्धतस्य वारिराशेरिवो-र्मयः । ते यथा प्रशान्तावस्थे तस्मिन्तद्रूपाभवन्ति । एवममीतद्रूपाआत्मानः संपद्यन्ते । विशेषतश्च सर्वमेतद्द्वादशे वक्ष्यते । अध्ययनमिदंगायत्र्याश्चोदितंन जपोन चावृत्तिगणनास्ति । अतन्द्रितइतिवचनाद्बहुकृत्वः करणंप्रतीयते । सकृत्प्रयोगे हि नास्ति तन्द्राशङ्कामोक्षार्थिनोयंविधिः ॥ ८२ ॥

---

( ८२ ) खमूर्तिमान्=स्वमूर्तिमान ( ज, झ, )

( २ ) **सर्वज्ञनारायणः** । वायुभूतोऽप्रतिहतगतिः खमूर्तिमानशुद्धः ॥ ८२ ॥

( ३ ) **कुल्लूकः** । अतएवाह योऽधीतइति । यःप्रत्यहमनलसः सन्सावित्रींप्रणवव्याहृतियुक्तांवर्षत्रयमधीते सपरंब्रह्मा-भिमुखेन गच्छति सवायुभूतोवायुरिवकामचारी जायते खंब्रह्मतदेवास्य मूर्तिरिति खमूर्तिमान्भवति शरीरस्यापिनाशात् ब्रह्मैवसंपद्यते ॥ ८२ ॥

( ४ ) **राघवानन्दः** । किंच यइति । अधीतेअभ्यस्यति संख्यापूर्वोक्तैव वायुभूतःवायुर्वैगौतमतत्सूत्रमित्यादिश्रुते-र्हिरण्यगर्भपदवींप्राप्य खमूर्तिमान् आकाशवद्देहाद्यनवच्छिन्नःब्रह्मभवेदिति क्रममुक्तिरित्यर्थः ॥ ८२ ॥

( ५ ) **नन्दनः** । एतांप्रणवव्याहृतिपूर्विकांसावित्रीम् । अतन्द्रितः शक्तौ सत्यां न कदाचिदप्यनन्यपरः । वायुभूतः सर्वव्यापी । खमूर्तिमान् लेपरहितः । परंब्रह्माप्येति परस्मिन्ब्रह्मणि लीयते ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । अहनिअहनि प्रत्यहंएतांत्रिपदींयःअधीते त्रीणि वर्षाणि त्रिवर्षपर्यन्तंसपुरुषःपरंब्रह्मअभ्येति ब्रह्मत्वंएति वायुभूतःवायुरूपःखमूर्तिमान् अमूर्तित्वात् ॥ ८२ ॥

**एकाक्षरंपरंब्रह्मप्राणायामाःपरंतपः ॥ सावित्र्यास्तु परंनास्ति मौनात्सत्यंविशिष्यते ॥ ८३ ॥**

( १ ) **मेधातिथिः** । ॐकारएकाक्षरंतत्परंब्रह्म । ब्रह्मप्राप्तिहेतुत्वात् । तज्जपतदर्थभावनयाब्रह्मप्राप्तेरेवमुच्यते । ॐमिति ब्रह्माभिधानम् । एवंह्याहुस्तस्य वाचकः प्रणवइति तत्परंप्रकृष्टंकुतोऽन्याभ्योब्रह्मोपासनाभ्योऽन्नंब्रह्मेत्युपासीता दित्योब्रह्मेत्यादेशइति एवमाद्याभ्यउपासनाभ्यः ॐकारोपासनाप्रकृष्यते । अध्ययनादेव तत्प्राप्त्यभिधानात् । शब्द स्यैव च ब्रह्मत्वेन श्रवणात् । शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छतीति । सर्वोह्यर्थोवाग्व्यवहारानतीतोवाचश्च सर्वस्या ॐकारोमूलं तथाच श्रुतिस्तद्यथाशङ्कुना सर्वाणि पत्राणि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णाॐकारएवेदंसर्वमिति । अन्तर्द्धानमनुस्मृतिः आश्रयभावापत्तिर्वाकथंपुनः सर्वावागोंकारेण संतृण्णा वैदिक्यास्तावदोंकारपूर्वकत्वमुक्तम् । लौकिक्या-अपि तदादीनि वाक्यानि स्युरित्यापस्तम्बवचनात् उपनिषद्भाष्ये चैतदन्यथा व्याख्यातंतत्त्विहानुपयोगान्नप्रदर्शितम् । प्राणायामशब्दआचमनवद्विशिष्टेतिकर्तव्यताके प्राणनिरोधे वर्तते । परंतपश्चांद्रायणादिभ्यः किंपुनस्तस्य श्रेष्ठ्यंभक्तिरे-षा सावित्र्याः परंमन्त्रज्ञानंनास्ति । एषामिति प्रशंसा मौनात्सत्यंविशिष्यते । मौनंवाङ्नियमउच्यते तस्य च नियमउच्यते । यत्फलंते नियमउच्यते । यत्फलंततोधिकंसत्यवचनात्प्राप्यते सत्यवचने विध्यर्थोपि तथानुष्ठितोभवति । मौने तु केवल-मनृतप्रतिषेधानुष्ठानमेव । अर्थवादोयंश्लोकः ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । परंब्रह्म परमोवेदः प्राणायामसत्ययोः प्रसङ्गात्श्रुतेःपरंजप्यंनास्ति सत्यंविशिष्यते । उभ-यत्रानृतानविधानसाम्येपि सत्याभिधाननियमाधिक्यात् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । एकाक्षरमिति । एकाक्षरमोङ्कारःपरंब्रह्म परब्रह्मावाप्तिहेतुत्वादोङ्कारस्य जपेन तदर्थस्य च परब्रह्मणोभावनया तदवाप्तेः । प्राणायामाः सप्रणवसव्याहृतिसशिरस्कगायत्रीभिस्त्रिरावृत्तिभिः कृताश्चान्द्रायणादिभ्यो-ऽपि परंतपः । प्राणायामाइति बहुवचननिर्देशात्त्रयोऽवश्यंकर्तव्या इत्युक्तम् । सावित्र्याःप्रकृष्टमन्यन्मन्त्रजातंनास्ति । मौनादपि सत्यंवाग्विशिष्यते । एषांचतुर्णांस्तुत्या चत्वार्येतान्युपासनीयानीति विधिः कल्प्यते । धरणीधरेण तु । एकाक्ष-रपरंब्रह्मप्राणायामपरंतपइति पठितंव्याख्यातंच एकाक्षरंपरंयस्यतदेकाक्षरपरंएवंप्राणायामपरमिति मेधातिथिप्रभृतिभि-र्वृद्धैरलिखितंयतः लिखनात्पाठान्तरंतत्र स्वतन्त्रोधरणीधरः ॥ ८३ ॥

( ४ ) **राघवानन्दः**। संप्रति मुमुक्षूणांसंनिपत्योपकारकाणि ब्रुवन्व्रीह्यादिसाध्यहिंसात्मकानि कर्माणि निन्दति एकाक्षरमितिद्वाभ्याम्। एकाक्षरंप्रणवःपरंब्रह्मतदभिधायकत्वात् तस्य वाचकःप्रणवइति पातञ्जलोक्तेः। परंतपःशरीरशोषणपापनाशकत्वसाम्यात्प्राणायामेन पातकमित्युक्तेः अतआह मौनात्सत्यमिति। मौनात् तूष्णींभावात्सत्यंप्रणवादिजपः उपक्रमोपसंहाराभ्यांजपएवतात्पर्यात् ॥ ८३ ॥

( ५ ) **नन्दनः**। शास्त्रान्तरेषु ब्रह्मप्राप्तेरुपायःसमाधिरित्युक्तंतस्मादपिप्रणवादित्रिकजपोविशिष्टतरइत्याह एकाक्षरमिति। एकाक्षरंप्रणवः परंब्रह्मब्रह्मस्वरूपत्वात्। तथाहि ब्रह्मनन्दिवाक्यंओमित्यात्मेति। प्रतीमइति। तथाचोपनिषद्युक्तंओनितिब्रह्मेति। प्राणायामशब्देन व्याहृतयो लक्ष्यन्ते। ताः खल्वातमितोः प्राणानायम्य रेचयतः प्रजापतेरास्याद्रेचकशब्दरूपानिर्गताः। तथाहि श्रुतिः सचतुर्होत्रातप्यतसोऽताम्यत्। सभूरितिव्याहरत् सद्वितीयमतप्यत। सोऽताम्यत् सभुवँइतिव्याहरत् सत्तृतीयमतप्यत सोऽताम्यत् ससुवरितिव्याहरदिति। परमतपःसाधनत्वात्परमंतपः। मौनंतूष्णींभावः समस्तेन्द्रियोपरतिः समाधिरितियावत्। सत्यंजपःसत्यरूपत्वात्। एतदुक्तंभवति प्रणवः परब्रह्मस्वरूपं व्याहृतयः परमतपःसाधनभूताः साविच्या विशिष्टंनकश्चिदस्ति तस्मात्तेषांजपः समाधेरपिविशिष्यतइति ॥ ८३ ॥

( ६ ) **रामचन्द्रः**। एकाक्षरंपरंब्रह्म ओंकाररूपंपरंब्रह्मप्राणायामाःप्राणसंयमाःपरंउत्कृष्टंतपः साविच्याःजपात्परंनास्ति। मौनात्सत्यंविशिष्यते। प्रलापरहितंमौनंप्रलापोनर्थकंवचः इत्यमरः ॥ ८३ ॥

**क्षरन्ति सर्ववैदिक्योजुहोति यजति क्रियाः ॥ अक्षरंदुष्करंज्ञेयंब्रह्म चैव प्रजापतिः ॥ ८४ ॥**

( १ ) **मेधातिथिः**। यावन्तः केचन वैदिकाहोमाअग्निहोत्रादयोये च यागाज्योतिष्टोमादयः ते सर्वे क्षरंतिन परिपूर्णफलाभवन्ति। फलंवा तदियंस्रवत्याशु विनश्यति अक्षरंत्वेतदोंकाराख्यमक्षरंज्ञेयमक्षयफलं। ब्रह्मीभूतस्य न पुनः संसारापत्तिः अतोक्षयफलत्वादक्षरमुच्यते। एकोक्षरशब्दउद्देश्यः। संज्ञाशब्दो द्वितीयोयौगिकः क्रियाशब्दः ब्रह्मैवतदेव प्रजापतिश्चोङ्कारएव। स्तुतिरेषा जुहोति यजतीति धातुनिर्देशस्तयोः क्रियाप्रतिपाद्यार्थायागहोमाः। व्यक्त्यपेक्षंबहुत्वं। अथवाधात्वर्थनिर्देशएवायंजुहोति यजतीति क्रियास्तद्व्यतिरिक्तादानाद्याद्वंद्वश्चायंजुहोति यजतीति च क्रियाश्च होमयागौ प्राधान्यात्पृथगुपादीयेते। अथ युक्ताओँकारस्य स्तुतिः। केवलस्यापि जपविधानार्थेति केचित् नहि प्रकृतविधिशेषत्वैवात्र पुनः परामर्शाभावात्। वैश्वानरे ह्यष्टत्वादीनांयदष्टाकपालोभवति। गायत्र्याचैनंब्रह्मवर्चसेन पुनाति यन्नव कपालस्त्रिवृतैवास्मिंस्तेजोदधातीति। सर्वत्र वैश्वानरपदापेक्षया तदेकवाक्यत्वे संभवति न वाक्यभेदकल्पनयाविध्यन्तरसंभव इह त्वक्षरंज्ञेयमिति। न पूर्वापेक्षानापि साविच्यादीनांपुनः परामर्शोस्ति। अतः स्वपदार्थैरेव वाक्यार्थपरिसमाप्तेर्नान्यशेषता। ज्ञेयमित्यत्र कृत्योविधायकः ब्रह्मपदेन च संबन्धाद्ब्रह्मरूपतया ज्ञेयमुपास्यंभावनीयं भाव्यमाने च तस्मिन्मानसजपउक्तो भवति ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः**। विनाशिफलाः श्तिप्धातुस्वरूपनिर्देशेविहितोपि शिष्टैरर्थनिर्देशेपि प्रयुज्यते। जुहोतिरुपविष्टहोमः। यजतिस्तिष्ठद्धोमः। अक्षरमोंकारोक्षरमविनाशिफलं ब्रह्मा परमात्मा निराकारोपासने साकारोपासनेतु तदीयरूपशक्तिः प्रजापतिरोंकारार्थभूतौअक्षरौ उपासकानामनाशिफलदौ ॥ ८४ ॥

( ३ ) **कुल्लूकः**। क्षरन्तीति। सर्ववेदविहिताहोमयागादिरूपाः क्रियाः स्वरूपतः फलतश्च विनश्यन्ति। अक्षरंतु

---

( ८४ ) दुष्करं=त्वक्षरं ( क, ख, ग, घ, च, मेधा० )

प्रणवरूपमक्षयंब्रह्मप्राप्तिहेतुत्वात् । फलद्वारेणाक्षरंब्रह्मीभावस्याविनाशात्कथमस्य ब्रह्मप्राप्तिहेतुत्वमतआह ब्रह्मचैवेति । चशब्दोहेतौ । यस्मात्प्रजानामधिपतिर्यद्ब्रह्म तदेवायमोङ्कारः स्वरूपतोब्रह्मप्रतिपादकत्वेन चास्य ब्रह्मत्वंउभयथापि ब्रह्मत्वेन प्रतिपादकत्वेन वायमुपासितोजपकाले मोक्षहेतुरनेन दर्शितम् ॥ ८४ ॥

( ४ ) **राघवानन्दः** । किंचान्यत्क्षरन्ति हिरण्यगर्भपदस्यासाधकत्वान्नतत्र दक्षिणायंतीति श्रुतेः । दक्षिणाअग्निहोत्रादिपराः अतएवाक्षरमित्यादि अक्षरंअविनाशि तदेवब्रह्मप्रजापतिर्हिरण्यगर्भश्च एतद्वै सत्यकामःपरंचापरंच यदोंकारइति श्रुतेः परापरब्रह्मप्राप्त्युपायत्वात् ॥ ८४ ॥

( ५ ) **नन्दनः** । क्षरन्तिस्वरूपतः फलतश्चनश्यन्ति । अक्षरंप्रणवादित्रिकंनक्षरंविनश्वरफलं भवति । ब्रह्मा परमात्मलक्षणः । प्रजापतिर्मुख्यः । चकारोऽत्रदृष्टान्तार्थः । प्रणवादित्रिकवाच्यपरमात्मायथा न क्षरति तद्वत्तद्वाचकंप्रणवादित्रिकमपीति । श्रौतस्मार्तानिकर्माणि न क्षरफलानि प्रणवादिकस्यस्वरूपतोर्थतश्चानश्वरत्वात् । तज्जपफलमप्यनश्वरमित्यभिप्रायः ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । सर्ववैदिक्यःजुहोति अग्निष्टोमादिना यजति वैश्वदेवादिकंजुहोतिइत्यादिक्रियाःक्षरन्तिस्रवन्ति अक्षरं ओंकारंअक्षरंअविनाशिरूपंज्ञेयंप्रजापतिःब्रह्मब्रह्मैव वेदस्वरूपमेव ज्ञेयम् ॥ ८४ ॥

**विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः ॥ उपांशुःस्याच्छतगुणःसाहस्रोमानसःस्मृतः ॥ ८५ ॥**

( १ ) **मेधातिथिः** । विधिविषयोयज्ञोविधियज्ञोज्योतिष्टोमादिर्यत्कर्म यजेतेति चोदितंब्राह्मेन व्यापारेण ऋत्विगादिसर्वाङ्गसंपत्त्याक्रियते सविधियज्ञइहोच्यते । जपस्तु न यज्ञः । प्रशंसया यज्ञउपचारेणोच्यते । अतोनासौ विधियज्ञः सविशिष्टः प्रकृष्टः श्रेष्ठोयज्ञोज्योतिष्टोमादिर्दशभिर्गुणैः महाफलत्वमेतेन जपस्योच्यते । यदेव यागात्फलंतदेव बहुतरजपात्प्राप्यते नच यागेभ्यः श्रौतेभ्योजपस्याधिकफलत्वंयुक्तंतथाहि सति कः शरीरधनपरिक्षयरूपेषु यागेष्वध्यवस्येत् । तस्मात्प्रशंसैषा पूर्णाहुत्या सर्वान्कामानवाप्नोतीतिवत् । एतावदस्यार्थस्तदेव स्वर्गादिफलमवाप्यते । किंतु लोकवत्प्रयत्नविशेषात् । फलपरिमाण विशेषोविशेषित्वात् । यज्ञस्य स्वर्गग्रामपुत्रपश्वादियस्य यज्ञस्ययत्फलंतत्तज्जपात्प्राप्यते । उपांशुः शतगुणः यदन्योनशृणोति समीपस्थोपि सहस्रगुणः साहस्रोमानसोव्यापारमात्रेण यश्चिन्त्यते जपमात्रविषयउपांशुत्वादिगुणः प्रकृतस्य योधीतेत्यनेन विच्छेदात्तेन यः प्रायश्चित्तादौ जपोयः शान्तिकोयश्चाभ्युदयिकः सर्वत्रैते गुणाः सहस्रमस्यास्तीति साहस्रः गुणानांप्रकृतत्वात्सहस्रगुणसद्भावः प्रतीयते । गुणशब्दश्चावयववचनः फलभूमा च संबन्धादवगम्यते ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । विधियज्ञोवेदोभूयसाग्रन्थेन विहितोयज्ञोग्निष्टोमादिर्दर्शपूर्णमासादिश्च जपयज्ञउच्चैरपि क्रियमाणोदशगुणफलः अक्षराणांव्यक्तत्वस्यान्योन्यसंश्लिष्टज्ञाने रूपस्यैवजपत्वात् । उपांशुःपराश्रवणीयशब्दोच्चारणंमानसः स्वस्यापि मनोमात्रग्राह्याक्षरः साहस्रःसहस्रगुणोविधियज्ञादेव ॥ ८५ ॥

( ३ ) **कुल्लूकः** । विधियज्ञादिति । विधिविषयोयज्ञोविधियज्ञोदर्शपौर्णमासादिस्तस्मात्प्रकृतानांप्रणवादीनांजपयज्ञोदशगुणाधिकः । सोप्युपांशुश्चेदनुष्ठितस्तदा शतगुणाधिकः । यत्समीपस्थोऽपि परोनशृणोति तदुपांशु । मानसस्तु जपः सहस्रगुणाधिकः यत्र जिव्हौष्ठमनागपिनचलति समानसः ॥ ८५ ॥

( ४ ) **राघवानन्दः** । जपस्यश्रेयस्त्वंप्रदर्शयन्तद्विशेषे फलभूमानमाह विधीति । विधियज्ञादग्निहोत्रादेःजपयज्ञो वाचिकःदशभिर्गुणैर्विशिष्टोदशगुणफलदःसएवोपांशुत्वेनानुष्ठितःशतगुणफलदः । उपांशुरिति यत्समीपस्थोजनोनशृणोति

सएवमानस ईषदपिजिव्होच्चारणरहितः । ननु । नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोश्नुतेइत्यादेः कागतिरितिचेत्तत्राह । कर्मजडानूप्रति ॥ ८५ ॥

( ५ ) **नन्दनः** । यतएवमतोयज्ञान्तरेभ्योजपयज्ञोविशिष्टतरइतिश्लोकद्वयेनाह विधियज्ञादिति । विधियज्ञादग्निहोत्रादेर्जपयज्ञोदशभिर्गुणैर्विशिष्टः साधनवैगुण्यदोषराहित्यात् । उपांशुजपयज्ञोविधियज्ञाच्छतगुणः । मनसोजपयज्ञोविधियज्ञात्साहस्रःसहस्रगुणः ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । जपयज्ञः जपरूपोयज्ञः विधियज्ञातअग्निष्टोमादियज्ञात्दशभिर्गुणैः विशिष्टउत्कृष्टः उपांशुःकिंचित्श्रवणयोग्यः उपांशुः जपः शतगुणः स्यात् मानसोजपः सहस्रगुणः स्मृतः ॥ ८५ ॥

## ये पाकयज्ञाश्चत्वारोविधियज्ञसमन्विताः ॥ सर्वेते जपयज्ञस्य कलांनार्हन्तिषोडशीम् ॥ ८६

( १ ) **मेधातिथिः** । महायज्ञाः पाकयज्ञाउच्यन्ते । ब्रह्मयज्ञंवर्जयित्वा चत्वारोयज्ञाभवन्ति । विधियज्ञाउक्तास्तैः समन्विताः । सहिताः कलामंशंषोडशींनार्हन्ति । षोडशेन भागेन न समाभवन्ति । अथवार्हतिः प्राप्त्यङ्गेमूल्यपणनेवर्तते ॥ अर्हशब्दात्किपंकृत्वाअर्हन्तिरूपम् ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । अस्तुतावद्विधियज्ञमात्रमान्यैरपि यज्ञैर्मिलितस्य जपयज्ञस्य साम्यमित्याह । यइति चत्वारोये देवभूतमनुष्यपितृयज्ञरूपाः ब्रह्मयज्ञस्य जपयज्ञप्रवेशादपाकयज्ञत्वाच्च विधियज्ञोग्निष्टोमादिः षोडशींकलांभागंनार्हन्तिमूल्यार्थं न लभन्ते ॥ ८६ ॥

( ३ ) **कुल्लूकः** । ये पाकयज्ञाइति । ब्रह्मयज्ञादन्ये ये पञ्च महायज्ञान्तर्गतावैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञा विधियज्ञादर्शपौर्णमासादयस्तैः सहिताजपयज्ञस्य षोडशीमपिकलांन प्राप्नुवन्ति जपयज्ञस्य षोडशांशेनापि न समाइत्यर्थः ॥ ८६ ॥

( ४ ) **राघवानन्दः** । तत्कार्यमंन्तःकरणशुद्धिरपि जपसाध्येत्याह यइति द्वाभ्याम् । पाकयज्ञावक्ष्यमाणाःविधियज्ञादर्शपौर्णमासादयः ॥ ८६ ॥

( ५ ) **नन्दनः** । पाकयज्ञशब्दोऽत्राल्पवचनः । चत्वारोदेवपितृमनुष्यभूतभेदात् ॥ ८६ ॥

( ६ ) **रामचन्द्रः** । ये चत्वारः पाकयज्ञाः वैश्वदेवादयः विधियज्ञसमन्विताः अग्निहोत्रादियज्ञसमन्विताः सर्वेजपयज्ञस्य षोडशींकलांनार्हन्ति ॥ ८६ ॥

## जप्येनैव तु संसिध्येद्ब्राह्मणोनात्र संशयः ॥ कुर्यादन्यन्न वाकुर्यान्मैत्रोब्राह्मणउच्यते ॥ ८७ ॥

( १ ) **मेधातिथिः** । जप्येनैव सिद्धिंकाम्यफलावाप्तिंब्रह्मप्राप्तिंवा प्राप्नुयात् नात्र त्वद्दिशङ्का कर्तव्या यज्ज्योतिष्टोमादिभ्योमहाप्रयासेभ्योभावनाभ्यश्च यल्लब्धव्यंतज्जपेन कथसिध्यतीति सिद्धयत्येव । कुर्यादन्यन्नित्यंज्योतिष्टोमादि । अथवा तदपि न कुर्याद्यतोमैत्रोब्राह्मणउच्यते । मित्रमेव मैत्रंसर्वभूतमैत्रीरतेन ब्राह्मणेन भवितव्यम् । अग्निषोमीयपशुहिंसायां च कुतोमैत्री । अयमर्थवादएव । न पुनः पश्वङ्गकर्मप्रतिषेधः पूर्वशेषत्वावगतेः प्रत्यक्षश्रुतिविहितत्वाच्च तेषामतिक्रान्तोजपविधिः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । संसिध्येन्मोक्षंलभेत । तद्विरोधेनान्यन्नकुर्यादित्युपक्रम्य स्वसिद्धान्तमाह न कुर्यादिति । मैत्रोहिंस्रोविधियज्ञानांबीजपश्वादिहिंसयैवावृत्तिरित्यर्थः ॥ ८७ ॥

( ३ ) **कुल्लूकः**। जप्येनैवेति। ब्राह्मणोजप्येनैव निःसन्देहांसिद्धिंलभते मोक्षप्राप्तियोग्योभवति। अन्यद्वैदिकंयागादिकंकरोतु न करोतु वा यस्मान्मैत्रोब्राह्मणोब्रह्मणःसंबन्धीब्रह्मणिलीयतइत्यागमेषूच्यते। मित्रमेव मैत्रः स्वार्थेऽण्। यागादिषु पशुबीजादिवधान्न सर्वप्राणिप्रियतासंभवति। तस्माद्यागादिना विनापि प्रणवादिजपनिष्ठोनिस्तरतीति जपप्रशंसा न तु यागादीनांनिषेधस्तेषामपिशास्त्रीयत्वात्॥ ८७॥

( ४ ) **राघवानन्दः**। जप्येन मन्त्राणांजपेन संसिध्येदंन्तःकरणशुद्धिंलभेत धर्मेण पापमपनुदतीति महतोप्येनसोमासात्वचेवाहिर्विमुच्यतइति। जपतोनास्ति पातकमिति श्रुतेः। स्मृतिःयांअन्यद्यागादिकंमैत्रःमित्रःसूर्यःतद्दैवत्यःगायत्र्युपासकः अथवा प्राणिमात्रप्रियःअणूस्वार्थिकःब्राह्मणोब्रह्मनिष्ठःकृतसाक्षात्कारउच्यते स्वमूर्तिमानित्युक्तम्। स ब्रह्मणः केनस्याद्येनस्यादित्यादिश्रुतेः॥ ८७॥

( ५ ) **नन्दनः**। ब्राह्मणस्य विशेषेण जपः परमोधर्मइत्याह जप्येनेति। संसिध्येन्मुक्तोभवति। अन्यत्कर्म कुर्यान्नवा कुर्यात्। अत्रहेतुर्मैत्रोब्राह्मणइति। सर्वानुकूल्यं मैत्री तद्वान् मैत्रः। अतोहिंसानुबन्धिनोविधियज्ञाद्ब्राह्मणस्य जपयज्ञोविशिष्टतरइति॥ ८७॥

( ६ ) **रामचन्द्रः**। ब्राह्मणःगायत्र्या जाप्येनैव संसिध्येत् अन्यजपादिकं कुर्याद्वा न वा कुर्यात् ब्राह्मणःमैत्रःअहिंस्रःउच्यते॥ ८७॥

**इन्द्रियाणांविचरतांविषयेष्वपहारिषु॥ संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम्॥ ८८॥**

( १ ) **मेधातिथिः**। इन्द्रियाणांसंयमे यत्नमातिष्ठेदित्येतावाञ्छास्त्रार्थःपरिशिष्टोर्थवादः। आसंध्योपासनविधेः संयमः प्रतिषिद्धेषुविषयेषु प्रवृत्तिपरिहारोप्रतिषिद्धेष्वप्यतिसक्तिर्वर्जनं तत्र प्रतिषिद्धपरिहारस्तैरेव प्रतिषेधैः सिद्धः। अप्रतिसिद्धेष्वप्यतिसक्तिनिषेधार्थोयंश्लोकसंघातःएतदेवाह विचरतांविषयेषु स्वातंन्त्र्येण वस्तुशक्त्या प्रवर्तमानानामपहारिषु विषयेष्वपहरन्त्याकर्षन्त्यात्मसात्कुर्वन्ति। पारतन्त्र्यमापादयन्ति। पुरुषानपहारिणोविषयामनोहरायउच्यन्ते तत्र विचरतांविविधंविशेषेणचरतांयदीन्द्रियाणि विशेषेण न चरेयुरपरिहारिणोपि तदा विषयाः किंकुर्युः भवन्तुवा निरङ्कुशानीन्द्रियाणि यदि विषयाः प्रत्याख्यायिकास्तथापि सुसंयमःपुरुषेणात्मा यतस्तूभयंसापराधमतोयत्नआस्थेयोदुर्नियमानि ह्येतानि नियन्तेव वाजिनांयन्तासारथिरश्वानां यथा रथयुक्तानांस्वभावतोविचलनशीलानांसंयमे नियमे यत्नंकरोति न तदानिच्छया उन्मार्गेण वहन्ति। विधेयतांतस्य भजन्तएवमिन्द्रियाणि विधेयीकर्तव्यानि॥ ८८॥

( २ ) **सर्वज्ञनारायणः**। जप्ये अवश्योपसंहार्यमङ्गंदर्शयति इन्द्रियाणामित्यादिना। अपहारिष्विन्द्रियावकर्षकेषु यन्तेवेत्येकाग्रतार्थं दृष्टान्तः॥ ८८॥

( ३ ) **कुल्लूकः**। इदानींसर्ववर्णानुष्ठेयंसकलपुरुषार्थोपयुक्तमिन्द्रियसंयममाह इन्द्रियाणामिति। इन्द्रियाणांविषयेष्वपहरणशीलेषु वर्तमानानांक्षयित्वादिविषयदोषाज्ञानन्संयमेयत्नंकुर्यात्सारथिरिवरथनियुक्तानामश्वानाम्॥ ८८॥

( ४ ) **राघवानन्दः**। अनुपसंह्वतेन्द्रियाणांजपोपिनफलायेति तदर्थंप्रत्याहारमाह। इन्द्रियाणामिति। अपहारिषुइंन्द्रियाणि स्वमवर्णकर्तुंशीलेषु यन्ताअश्वनियमनसारथिरिव संयमनंकुर्यात्॥ ८८॥

( ५ ) **नन्दनः**। एवंतावद्ब्रह्मचारिणोवेदाध्ययनधर्माउक्ताः प्रसङ्गात्प्रणवव्याहृतिसावित्रीमाहात्म्यंचोक्तं इदानीं तस्येन्द्रियसंयममाह इन्द्रियाणामिति। अपहारिष्विन्द्रियापहारिषु॥ ८८॥

( ६ ) **रामचन्द्रः** । अपहारिषु हरणशीलेषु विषयेषु विचरतांइन्द्रियाणांसंयमे यत्नंआतिष्ठेत्विद्वान् कइव वाजिनंयन्तेव ॥ ८८ ॥

**एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ॥ तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ८९ ॥**

( १ ) **मेधातिथिः** । संख्यानिर्देशोयंप्रमाणान्तरगम्योन पदार्थः सौहार्दैनतु व्युत्पाद्यते । तानि पूर्वैमनीषिणआहुः । परस्तान्नामतः कर्मतश्च वक्ष्यामि । आनुपूर्व्यमनाकुलता पूर्वग्रहणान्नेयंतार्किकैरेव व्यवस्था कल्पिता । किंतु पूर्वेषामप्याचार्याणांस्थितैव । एतामजानतोनागमिकइति लोकैरपि दृश्यते । इत्यतोयंवेदितव्याः प्रसिद्धाः पदार्थाव्याख्याताश्च प्राक् ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । नियमान्दर्शयति एकादशेति । यथावत् स्वस्वप्रकारवत्तया ॥ ८९ ॥

( ३ ) **कुल्लूकः** । एकादशेति । पूर्वपण्डितायान्येकादशेन्द्रियाण्याहुस्तान्यर्वाचांशिक्षार्थंसर्वाणि कर्मतोनामतश्च क्रमाद्वक्ष्यामि ॥ ८९ ॥

( ४ ) **राघवानन्दः** । तानि कतीत्यपेक्षायामाह एकेति । पूर्वे ब्रह्मादयः आनुपूर्वशःश्रोत्रादिक्रमेण ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । इन्द्रियाणामुत्पत्तिमाह । यानिएकादशेन्द्रियाणि पूर्वे मनीषिणःआहुः । तानि सम्यक् प्रवक्ष्यामिअनुपूर्वशः ॥८९॥

**श्रोत्रंत्वक्चक्षुषीजिव्हानासिकाचैव पञ्चमी ॥ पायूपस्थंहस्तपादंवाक्चैव दशमी स्मृता ॥ ९० ॥**

( १ ) **मेधातिथिः** । श्रोत्रादीनि प्रसिद्धान्यधिष्ठानभेदाच्चक्षुषीइति द्विवचनमन्यत्र तदाधारायाः शक्तेरेकत्वादेकवचनं । उपस्थःशुक्रोत्सर्जनः पुंसोजवस्तदाधारश्च स्त्रियाः । द्वन्द्वनिर्दिष्टयोः प्राण्यङ्गत्वादेकवद्भावः वाक्तात्वादि शब्दाभिव्यञ्जकः शरीरावयववचनः नाम निर्देशोयम् ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । जिव्हा रसना वागभिधानशक्तिरास्यगता त्वक्च चक्षुश्च त्वक्चक्षुषी आधारभेदेपीन्द्रियशक्ते रेकत्वात् ह्याधारत्वेपि चक्षुराद्येकैकमिन्द्रियम् करौपादावित्याधारापेक्षंद्वित्वम् ॥ ९० ॥

( ३ ) **कुल्लूकः** । श्रोत्रमिति । तेष्वेकादशसु श्रोत्रादीनि दशैतानि बहिरिन्द्रियाणि नामतोनिर्दिष्टानि । पायूपस्थंहस्तपादमिति द्वन्द्वश्चप्राणितूर्यसेनाङ्गानामिति । प्राण्यङ्गद्वन्द्वत्वादेकवद्भावः ॥ ९० ॥

( ४ ) **राघवानन्दः** । तेषांस्वरूपंसंख्यांकार्यंचाह श्रोत्रमिति त्रिभिः । स्वरूपंश्रोत्रमित्यादि सङ्ख्यांपञ्चेत्यादिः कार्यंधीकर्मजनकताएषांमध्ये स्वगुणेन संकल्पेनोभयात्मकमुभयगुणभेरके यस्मिन्मनसि जिते गणौधीन्द्रियकर्मेन्द्रियात्मकौ ॥ ९० ॥

( ५ ) **नन्दनः** । त्वक्चक्षुषीइतिद्वन्द्वसमासः ॥ ९० ॥

( ६ ) **रामचन्द्रः** । श्रोत्रंश्रवणंत्वक्चक्षुषी नेत्रे जिव्हा पञ्चमी नासिका पायुर्गुदंउपस्थंगुह्येन्द्रियं हस्तौ पादौ एते पञ्चएषांएकादशेन्द्रियाणांमध्ये पञ्चश्रोत्रादीनि पञ्चबुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि पाय्वादीनि पञ्चकर्मेन्द्रियाण्याहुः ॥९०॥

**बुद्धीन्द्रियाणि पञ्चैषांश्रोत्रादी न्यनुपूर्वशः ॥ कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥९१॥**

( १ ) **मेधातिथिः** । कार्यमिदानीमेषामाहस्वरूपाऽवधारणार्थं । न हितानि प्रत्यक्षानि बुद्धीन्द्रियाणिजनकानि कार्य-

कारणानि । कार्यकारणसंबन्धे षष्ठी श्रोत्रादीन्यनुपूर्वशआदिशब्दस्य प्रकारार्थतामाविज्ञायीति । अनुपूर्वशः क्रमेणेत्यर्थः । क्रमश्च सन्निवेशापेक्षोभवत्यतः पूर्वश्लोकोक्ता व्यवस्थाऽऽश्रीयते । कर्मेन्द्रियाणि परिस्पन्दात्मकमत्र कर्म विवक्षितम् ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः** । शब्दादिज्ञानजननरूपाणि बुद्धीन्द्रियाणि उत्सर्गादिक्रियारूपाणि कर्मेन्द्रियाणि ॥ ९१ ॥

( ३ ) **कुल्लूकः** । बुद्धीन्द्रियाणीति । एषांदशानांमध्ये श्रोत्रादीनिपञ्चक्रमोक्तानि बुद्धेः करणत्वात्बुद्धीन्द्रियाणि । पाय्वादीनि चोत्सर्गादिकर्मकरणत्वात्कर्मेन्द्रियाणि तद्विदोवदन्ति ॥ ९१ ॥

( ५ ) **नन्दनः** । बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि ॥ ९१ ॥

**एकादशंमनोज्ञेयंस्वगुणेनोभयात्मकं ॥ यस्मिन् जिते जितावेतौ भवतःपञ्चकौ गणौ ॥९२ ॥**

( १ ) **मेधातिथिः** । एकादशसंख्यापूरकंमनइन्द्रियाणांस्वोगुणोमनसः संकल्पः तेनोभयंशुभमशुभंवासंकल्प्यते। अथवाबुद्धीन्द्रियेषु कर्मेन्द्रियेषु स्वविषयप्रवृत्तौ संकल्पमूलत्वादुभयात्मकमुच्यते । तस्मिञ्जिते एतौ बुद्धीन्द्रियवर्गः कर्मेन्द्रियवर्गश्च पञ्चकौ प्राक्प्रदर्शितपरिमाणौजितौ भवतः॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । स्वगुणेन बुद्धिकर्मजनकत्वेन उभयात्मकं बुद्धीन्द्रियकर्मेन्द्रियरूपं यस्मिन्जितइति प्राधान्यकथनंपञ्चकौपञ्चभिःपरिमितौ बुद्धीन्द्रियकर्मेन्द्रियवर्गौ ॥ ९२ ॥

( ३ ) **कुल्लूकः** । एकादशमिति । एकादशसंख्यापूरकंच मनोरूपमंतरिन्द्रियंज्ञातव्यम् । स्वगुणेन संकल्परूपेणोभयरूपेन्द्रियगणप्रवर्तकस्वरूपम् । अतएव यस्मिन्मनसि जित उभावपिपञ्चकौबुद्धीन्द्रियकर्मेन्द्रियगणौजितौ भवतः पञ्चकाविति तदस्यपरिमाणमित्यनुवृत्तौ । सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वितिपञ्चसंख्यापरिमितसंघार्थेकः ॥ ९२ ॥

( ५ ) **नन्दनः** । बुद्धिकर्मोत्पादनसामर्थ्यलक्षणसंकल्पस्वगुणस्तेनोभयात्मकंकर्मेन्द्रियात्मकं च । यस्मिञ्जिते- उभयात्मके मनसि जिते । पञ्चकौ ज्ञानकर्मेन्द्रियात्मकौ ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । मनः एकादशेन्द्रियंज्ञेयंस्वगुणेन उभयात्मकंज्ञानेन्द्रियकर्मेन्द्रियरूपंयस्मिन्मनसि जितेएतौ पञ्चकौ भवतः ॥ ९२ ॥

**इन्द्रियाणांप्रसङ्गेन दोषमृच्छत्यसंशयम् ॥ सन्नियम्य तु तान्येव ततःसिद्धिंनियच्छति ॥ ९३ ॥**

( १ ) **मेधातिथिः** । प्रसङ्गस्तत्परता तेन हेतुभूतेन दृष्टमदृष्टंच ऋच्छति प्राप्नोति । नात्र संशयोनिश्चितमेतत् । संनियम्य तानीन्द्रियाणि ततः सिद्धिमभिप्रेतार्थावाप्तिश्रौतस्मार्तकर्मणामनुष्ठानफलंनिःशेषंगच्छतिप्राप्नोति ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसंगेन विषयेषु संगेन दोषंपापंऋच्छति प्राप्नोति तेषांनियमनात् सिद्धिंमोक्षंनियच्छति लभते ॥ ९३ ॥

( ३ ) **कुल्लूकः** । मनोधर्मसंकल्पमूलत्वादिन्द्रियाणांप्रायेण प्रवृत्तेःकिमर्थमिन्द्रियनिग्रहःकर्तव्यइत्यतआह इन्द्रियाणामिति । यस्मादिन्द्रियाणांविषयेषु प्रसक्त्या दृष्टादृष्टंच दोषंनिःसंदेहंप्राप्नोति तान्येव पुनरिन्द्रियाणि सम्यङ्नियम्य सिद्धिंमोक्षादिपुरुषार्थयोग्यतारूपां लभते । तस्मादिन्द्रियसंयमंकुर्यादिति शेषः ॥ ९३ ॥

( ४ ) **राघवानन्दः** । अनुपसंहारे दोषंकीर्तयनतत्करणे फलमाह इन्द्रियाणामिति । प्रसंगेनेन्द्रियार्थेऽभिषक्तयादोषं- संसाराख्यंसिद्धिंमनःशुद्धिद्वारा मोक्षाख्यांतथा च गीता सिद्धिंप्राप्तोयथा ब्रह्म तथाप्नोतिनिबोधमइति ॥ ९३ ॥

( ५ ) **नन्दनः** । प्रसङ्गेन विषयेषु निरङ्कुशया प्रवृत्त्या ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । पुरुषःइन्द्रियाणांप्रसङ्गेन संयोगेन दोषंऋच्छति प्राप्नोति। असंशयंतानिइन्द्रियाणि सन्नियम्यजित्वा सिद्धिंनियच्छति प्राप्नोति ॥९३ ॥

## न जातु कामःकामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते ॥ ९४ ॥

( १ ) **मेधातिथिः** । तिष्ठतुतावद्विषयाभिलाषः शास्त्रोपदेशान्नक्रियते । किंतु दृष्टमेव सुखंतावन्निवृत्तेर्भवति । तथाहि सेव्यमानाविषयाअपि अधिकंगर्द्धमुत्पादयन्त्युदरपूरंभुक्तवतस्तत्प्रस्यातिसौहित्यमपिगतवतोभवति । हृदयसमीहा किमिति न शक्नोमिअन्यद्भोक्तुमशक्त्या तु न प्रवर्तते । ततोनैषांभोगेन शक्यानिवृत्तिर्न कदाचित्कामोभिलाषः कामानांकाम्यमानानांस्पृहणीयानामर्थानामुपभोगेन सेवया शाम्यति निवर्तते । भूयोऽधिकतरंवर्धते । हविषा घृतेन कृष्णवर्त्माग्निरिव दुःखरूपश्चाभिलाषोऽनुपभुक्तरसस्यत्वभिलाषानुत्पत्तिस्तत्वप्रसंख्यानमेतत् । उक्तश्च यत्पृथिव्यां व्रीहियवंहिरण्यंपशवस्त्रियः। नालमेकस्य तत्सर्वमिति मत्वा शमंव्रजेत् ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसंगे जातेपि भुक्तभोग्यतया स्वयंनिवर्त्यंत इत्यपि नाशंक्यमित्याह नजात्विति । कामइच्छा कामानांभोगानां कृष्णवर्त्मेत्युचितपदन्यासः ॥ ९४ ॥

( ३ ) **कुल्लूकः** । किमिन्द्रियसंयमेन विषयोपभोगादेरलब्धकामोनिवर्त्स्यतीत्याशङ्क्याह न जात्विति । न कदाचित्कामोऽभिलाषः काम्यन्तइति । कामाविषयास्तेषामुपभोगेन निवर्तते किंतुघृतेनाग्निरिवाधिकाधिकतममेव वर्धते । प्राप्तभोगस्यापि प्रतिदिनंतदधिकभोगवाञ्छादर्शनात् । अतएव विष्णुपुराणे ययातिवाक्यम् यत्पृथिव्यांव्रीहियवंहिरण्यंपशवः स्त्रियः । एकस्यापि न पर्याप्तंतदित्यतितृषंत्यजेत् ॥ तथा पूर्णंवर्षसहस्रंमेविषयासक्तचेतसः । तथाप्यनुदिनंतृष्णायत्तेष्वेव हि जायते ॥ ९४ ॥

( ४ ) **राघवानन्दः** । ननुभोगे सति स्वयमेवउपरमेयुस्तानि किमुपसंहारेणेत्यतआह । नेति । कामोभिलाषःकामानांकाम्यंतेषामुपभोगःसाक्षात्करणंतेन शान्तिर्दूरे अपि तु वर्धतएवेत्याह । हविषेति । कृष्णवर्त्माग्निः । तथा च विष्णुपुराणे ययातिवाक्यम् । यत्पृथिव्यांव्रीहियवंहिरण्यंपशवः स्त्रियः ॥ एकस्यापि न पर्याप्तंतदित्यतितृषंत्यजेत ॥ अतितृषं अतितृष्णामित्यर्थः ॥ तथा पूर्णंवर्षसहस्रंमे विषयासक्तचेतसः । तथाप्यनुदिनंतृष्णा ममैतेष्वेव जायते ॥ इत्यादि ॥ ९४ ॥

( ५ ) **नन्दनः** । तत्पुनर्भोजनेनक्षुधइवविषयोपभोगेन कामस्य निवृत्तिर्नेष्यतइत्यत्राह नजात्विति । कामानांविषयाणां । हविषाआज्येन ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । काम्यन्तइतिकामाःतेषांकामानांउपभोगेन जातु कामःनशाम्यति ॥ ९४ ॥

## यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ॥ प्रापणात्सर्वकामानांपरित्यागोविशिष्यते ॥ ९५॥

( १ ) **मेधातिथिः** । पूर्वोक्तेहेतुत्वेनोपजीव्यायंनिगम श्लोकः पठितोयदा सेवया वर्धते कामःअतोयएतान्कामान्कामी सर्वान्प्राप्नुयात्सेवेतानेकमण्डलेश्वरेव तरुणोयश्चैनांस्त्यजति केवलानीषदपि न स्पृशति नैष्ठिकएव बालस्तयोर्यः प्रापकोभोक्ता तस्मात्सविशिष्यते । अतिशयेन श्रेष्ठोभवति । यः परित्यजेदिति । एतच्चात्मप्रत्यक्षम् ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । केवलान् कृत्स्नान् विशिष्यते विशिष्टफलत्वात् ॥ ९५ ॥

( ३ ) **कुल्लूकः** । यश्चैतानिति । यएतान्सर्वान्विषयान्प्राप्नुयाद्यश्चैतान्कामानुपेक्षते तयोर्विषयोपेक्षकःश्रेयांस्तस्मा-

त्सर्वकामप्राप्तेस्तदुपेक्षा प्रशंस्या । तथाहि विषयलोलुपस्य तत्साधनाद्युत्पादने कष्टसंभवोविपत्तौ च क्लेशातिशयोन तु विषयविरसस्य ॥ ९५ ॥

। ( ४ ) **राघवानन्दः** । कृतभोगादकृतभोगोजनःश्रेष्ठइत्याह यश्चैतानिति । प्राप्नुयात् भुञ्जीत केवलानिन्द्रियसम्बन्धान्सर्वकामानांविषयाणांप्रापणात्भोगात् ॥ ९५ ॥

( ५ ) **नन्दनः** । यतएवंततोविषयाणांभोगात्त्यागएव श्रेयानित्याह यश्चैतानिति । यद्दत्यसाधुः पाठः । एतान्कामान्प्राप्नुयाद्भुञ्जीत । केवलान्कृत्स्नान् । तयोः प्राप्तित्यागयोः प्रापणात्प्राप्तेस्त्यागोविशिष्यतेविषयत्यागेविनाशनिमित्तदुःखस्पर्शाभावात् ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषःएतान्सर्वान् प्राप्नुयात् यःपुरुषःएतान्कामान्केवलान्त्यजेत् सर्वकामानां प्रापणात् प्राप्ति कामानांसर्वकामनापरित्यागोविशिष्यते ॥ ९५ ॥

**न तथैतानि शक्यन्ते संनियंतुमसेवया ॥ विषयेषु प्रजुष्टानि यथाज्ञानेन नित्यशः ॥ ९६ ॥**

( १ ) **मेधातिथिः** । यद्येवमरण्यवासएव तर्हि प्राप्तोनहि तत्र विषयासंनिधीयन्ते । असंनिहिताश्च न सेविष्यन्ते तदर्थमाह न सेवया इन्द्रियाणि नियन्तव्यानीति । अथोच्यते । निःसुखः स्यादिति हि स्मरन्ति । असंनिहिताश्च न सेविष्यन्ते तदर्थमाह नासेवया इन्द्रियाणि नियन्तव्यानीति पूर्वाण्हमध्यंदिनापराण्हानफलान्कुर्याद्यथाशक्तिधर्मार्थकामेभ्यः नच शरीरधारणमसेवया भवति किंतु गर्द्धनिषेधोयमुच्यते । सच गर्द्धः सत्यापि सेवया ज्ञानेन विषयगतदोषज्ञानेन । अस्थिस्थूणास्नायुतमित्यादि शास्त्रोक्तेन स्वसंविदा च विपाकविरसतया किंविपाकफलमेवादिदोषभावनया वैराग्याभ्यासेन क्रमेण स्पृहा निवर्तते । ननु सहसैवत्यक्तुंशक्यते कर्तुंनित्यशः नित्यकालं ज्ञानविशेषणमेतत् । प्रदुष्टानि प्रवृत्तानि दोषत्वात् । प्रदुष्टान्येव प्रवृत्तान्युच्यन्ते। अयमंशस्तत्र तत्र नित्यःअनुपूर्वशः सर्वशः । पूर्वशइति व्यासमनुप्रभृतिभिर्महामुनिभिः प्रयुज्यते । तस्य साधुत्वे यत्नः कर्तव्यः तत्र शस्विधावेकवचनाच्च वीप्सायामिति पठ्यते तत्र वीप्सार्थः कथंचित्द्योतयितव्यः अन्येतु शसस्तिष्ठत्यर्थस्य किंपिरूपंवर्णयन्ति । क्रियाविशेषणंचैतत् नपुंसकंनित्यस्थितेन ज्ञानेनेत्यर्थः ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । न चैवमुपभोगमात्रेणेन्द्रियजयमिति ग्राह्यमित्याह न तथेति । एतानीन्द्रियाणि विषयेषु वर्तमानानि पूर्वपूर्वजन्मसंस्कारवशात् प्रदुष्टानि दोषजनकानि ज्ञानेनात्मनः शरीरादिव्यतिरिक्तस्य ज्ञानेन विषयदोषभावनेन च नित्यम् ॥ ९६ ॥

( ३ ) **कुल्लूकः** । इदानीमिन्द्रियसंयमोपायमाह न तथेति । एतानीन्द्रियाणि विषयेषु प्रसक्तानि तथा नासेवया विषयसन्निधिवर्जनरूपया नियन्तुं न शक्यन्तेदुर्निवारत्वात् । यथा सर्वदा विषयाणांक्षयित्वादिदोषज्ञानेन शरीरस्य चास्थिस्थूलमित्यादिवक्ष्यमाणदोषचिन्तनेन तस्माद्विषयदोषज्ञानादिना बहिरिन्द्रियाणि मनश्च नियच्छेत् ॥ ९६ ॥

( ४ ) **राघवानन्दः** । बलादिन्द्रियसंबन्धे कउपायस्तत्राह न तथेति । एतानीन्द्रियाणिअसेवया शुष्कवैराग्येण तत्रहेतुःप्रदुष्टानि प्रकर्षेणबहुकालसेवया प्रसक्तानि ज्ञानेन क्षयिष्णुत्वादिदोषदृष्ट्या तत्वज्ञानेन वा तदुक्तम् । विषयाविनिवर्तन्तेनिराहारस्यदेहिनः । रसवर्जरसोप्यस्यपरंदृष्ट्वा निवर्ततइति ॥ निराहारस्यइन्द्रियैर्विषयानसेविनः रसोरागः सोपि परंब्रह्मदृष्टवतोनिवर्ततइति गीतार्थः ॥ ९६ ॥

---

( ९६ ) प्रजुष्टानि=प्रदुष्टानि ( मेधा० )

( ५ ) **नन्दनः**। तर्हि विषयत्यागएवसंयमोपायोनान्यइत्यत्राह नतथेति ॥ ९६ ॥

( ६ ) **रामचन्द्रः**। कामानां असेवया तानिइंद्रियाणि विषयेषु संनियन्तुं तथा न शक्यन्ते कीदृशानि। प्रदुष्टानि प्रकर्षेण दुष्टानि यथा ज्ञानेन ज्ञानमार्गेण नित्यशः नियन्तुंशक्यन्ते ॥ ९६ ॥

**वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च॥न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥९७॥**

( १ ) **मेधातिथिः**। अयमत्रविधिरेव । वेदास्तद्विषयमध्ययनजपादित्यागोदानंलक्षणया अथवाऽप्रतिषिद्धस्यापि मधुमांसभक्षणादेर्निवृत्तिः फलदेत्यनेन वर्जनंविप्रदुष्टोभावश्चित्तंयस्य तस्य सिद्धिं न गच्छति फलसाधकानि न भवन्ति। कस्मिंश्चिदपि काले। अतोनुष्ठानकालेनाभिप्रेतादिगतमानसंभवितव्यम् । शक्यंतर्हि सर्वेतरविकल्पतिरस्कारेण कर्मणि मनआधेयं अगर्हित कर्मसु विषयचिन्तात्यागोनेन वाक्येन विहितस्तदभावे कर्मनैष्फल्यंस्यात्। एषहि भावदोषोयत्कर्मानुष्ठानेप्रवृत्तस्य तत्परतात्यागेनव्यसनेषु मनोवधानम् ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः**। वेदाः अध्ययनानि त्यागाः दानानि नियमाः स्नातकव्रतादीनि तपांसि कृच्छ्रादीनि विप्रदुष्टभावस्य विषयप्रसक्तौ ॥ ९७ ॥

( ३ ) **कुल्लूकः** । यस्मादनियमितंमनोविकारस्य हेतुःस्यादतआह वेदाइति । वेदाध्ययनदानयज्ञनियमतपांसि भोगादिविषयसेवासंकल्पशीलिनो न कदाचित्फलसिद्धये प्रभवन्ति ॥ ९७ ॥

( ४ ) **राघवानन्दः**। अतएवात्मानात्मविवेकशून्यस्य न केपि शोधकाइत्याह वेदाइति । वेदाअभ्यस्यमानाः त्यागाः संन्यासादानंवानियमः शौचसंतोषादयः तपांसि कृच्छ्रादीनि एतेअनुष्ठीयमानाअपि विप्रदुष्टभावस्य स्त्र्यादिष्वत्यासक्तस्य ॥ ९७ ॥

( ५ ) **नन्दनः**। ज्ञानेन विषयेषु दोषदर्शनेन न केवलब्रह्मचारिणामेवायमिन्द्रियसंयमोदोषावहः किंतु सर्वाश्रमिणामित्यभिप्रायेणाह वेदाइति। वेदाइत्यनेनब्रह्मचारिधर्मालक्ष्यन्तेयज्ञाइति। गार्हस्थ्यधर्माः। त्यागाइतिसंन्यासधर्माः। तपांसीति वानप्रस्थधर्माः । विप्रदुष्टभावस्य कामक्रोधादिदूषितचित्तस्य। भावदोषाणामिन्द्रियासंयमहेतुत्वादिन्द्रियसंयमः कर्तव्यइतिभावः ॥ ९७ ॥

( ६ ) **रामचन्द्रः**। दुष्टभावस्य वेदाः सिद्धिंकर्हिचित् न गच्छन्ति वेदावेदाध्ययनानि। त्यागाःदानानि ॥ ९७ ॥

**श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च योनरः॥ न हृष्यति ग्लायति वा सविज्ञेयोजितेन्द्रियः॥ ९८ ॥**

( १ ) **मेधातिथिः**। श्रुत्वावंशगीतादिध्वनिंत्वं बृहस्पतिरित्यादिवचनंश्रुत्वा न हृष्यति रूक्ष परुषा क्रोशवाचः श्रुत्वा न ग्लायति न मनोदुःखंभजति ग्लानिः खेदः स्पृष्ट्वाराङ्कवकौशेयादिवस्त्रं अजलोमकुतपश्चसमत्वेनानुभवति । एवं सुवेषतरुणीजननटप्रेक्षासु शत्रुदर्शने च समः बहुघृतंक्षीरषष्टिकान्कोद्रवांश्च समंभोजने देवदारुतैलंकर्पूरादि च तुल्यंजिघ्रतस्तथाकर्तव्यम्। यथा केवलैर्मानसैः सुखदुःखैर्न स्पृश्यते। एवंतेन जितानीन्द्रियाणि भवन्ति नत्वप्रवृत्त्यैवइयत्पर्यंतः संयमःआश्रयणीयः ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः**। ग्लायति दुःखितोभवति ॥ ९८ ॥

( ३ ) **कुल्लूकः** । जितेन्द्रियस्यस्वरूपमाह श्रुत्वेति । स्तुतिवाक्यंनिन्दावाक्यंच श्रुत्वासुखस्पर्शंदुकूलादि दुःख-

---

( ९८ ) चयोनरः=शुभाशुभं ( ठ )

स्पर्शमेषकम्बलादि स्पृष्ट्वा । सुरूपंकुरूपंच दृष्ट्वा । स्वाद्वस्वादु च भुक्त्वा । सुरभिमसुरभिंच घ्रात्वा । यस्य न हर्षविषादौ सजितेन्द्रियोज्ञातव्यः ॥ ९८ ॥

( ४ ) **राघवानन्दः** । तर्हि विषयाभोगे मृतिरेव तत्राह श्रुत्वेति । भोगो नप्रतिबन्धकः किंत्वासक्तिः तदुक्तम् पश्यन्शृण्वन्स्पृशन्इत्यादीन्द्रियार्थेषुवर्ततइति धारयन्नित्यन्तंभगवता कृष्णेन ॥ ९८ ॥

( ५ ) **नन्दनः** । इदानीमिन्द्रियसंयमंस्वरूपतोविविनक्ति श्रुत्वेति । श्रुत्वाइष्टमनिष्टंच । एवमुत्तरत्र । हृष्यतिमनसाग्लायति विषीदतीष्टानिष्टविषयसंसर्गे । मनोविकारराहित्यमिन्द्रियसंयमइत्यभिप्रायः ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । यःनरःविषयानश्रुत्वा न हृष्यति न ग्लापयति सः जितेन्द्रियः ग्लैहर्षे इत्यस्यधातोरूपम् ॥९८॥

## इन्द्रियाणांतुसर्वेषांयद्येकंक्षरतीन्द्रियम् ॥ तेनास्य क्षरति प्रज्ञा दृतेःपादा दिवोदकम् ॥ ९९॥

( १ ) **मेधातिथिः** । ननु च ब्रह्मचारिणास्त्रीसंबन्धोयत्नेन वर्ज्यः संस्कृतभिक्षालाभस्तु किमिति निषिध्यते अतआह निर्धारणे षष्ठी एकमेव यदीन्द्रियंक्षरति । स्वातन्त्र्येण स्वविषयेवर्तमानंननिवार्यते । ततोस्यक्षरति प्रज्ञाधैर्यमिन्द्रियान्तरविषयमपि दृति श्छागादिचर्मोदकाद्याहरणभाजनंतस्य संवृतेष्वपीतरेषु यद्येकस्मादुदकंपादात्स्रवति सर्वेरिच्यते । ज्ञानाभ्याससंभृतंधैर्यसम्यक्ज्ञानमेव वा विषयगृध्नुतयातद्गतमानसस्य न तत्वतोयुक्तिशास्त्रगम्याअर्थाः सम्यक् प्रतिभासन्ते ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । क्षरति विषये सज्यते क्षरति प्रजासर्वाबहिः संबध्यते दृतेर्जलसेकार्थंकृतस्य चर्मभाण्डस्य जलनिर्गमार्थंकृते अनेकसच्छिद्रधारारूपपादवतः एकेनापि पादेन यथासर्वजलसेकोभवतीत्यर्थः ॥ ९९ ॥

( ३ ) **कुल्लूकः** । एकेन्द्रियासंयमोऽपि निवार्यत इत्याह इन्द्रियाणांत्विति । सर्वेषामिन्द्रियाणांमध्ये यद्येकमपीन्द्रियंविषयप्रवणंभवति ततोऽस्य विषयपरस्येन्द्रियान्तरैरपि तत्त्वज्ञानंक्षरति न व्यवतिष्ठते चर्मनिर्मितोदकपात्रादिवैकेनापि छिद्रेण सर्वस्थानस्थमेवोदकं न व्यवतिष्ठते ॥ ९९ ॥

( ४ ) **राघवानन्दः** । संयतेन्द्रियस्य सिद्धिहेतुतोक्ता तत्र सर्वेषां अप्रवृत्तावप्येकस्यप्रवृत्तौ कोदोषस्तत्राह । इन्द्रियाणांत्विति । सर्वेषामिन्द्रियाणांमध्ये यत्किंचित्क्षरतिइन्द्रियविषयप्रवणंस्यात् प्रज्ञाधैर्यंतेनैव क्षरति दृतेश्चर्ममयोदकपात्रस्य पादात्छिद्रात्सर्वउदकंक्रमशोनश्यति तथा च विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा । अत्र गीता । इन्द्रियाणांहि चरतांयन्मनोनुविधीयते । तदस्य हरति प्रज्ञांवायुर्नावमिवाम्भसि इति ॥ मनः सहकृतंयदिन्द्रियंचक्षुरादि तद्धरतीति गीतार्थः । एवंप्रसक्तंइन्द्रियमात्रंप्रज्ञांहरतीतिभावः ॥ ९९ ॥

( ५ ) **नन्दनः** । सर्वेन्द्रियाणांयुगपदेव संयमः कार्यः एकस्यासंयमेतदितरसंयमवैयर्थ्यादित्याह इंद्रियाणामिति । प्रज्ञाक्षरति विषयपरा भवति ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । सर्वेषांइन्द्रियाणांमध्ये यद्येकं इन्द्रियंक्षरति स्रवति तेन कारणेन अस्य पुंसःप्रज्ञाक्षरति । दृतेःपादादुदकमिव दृतिःचर्मकोशः ॥ ९९ ॥

---

( ९९ ) पादा=पात्रा ( अ )
इन्द्रियाणांतुसर्वेषां=इद्रियाणांनुचरतां ( मेधा० )
तेनास्यक्षरति=ततोस्यक्षरति ( मेधा० )

**वशेकृत्वेन्द्रियग्रामंसंयम्य च मनस्तथा ॥ सर्वान्संसाधंये दर्थानक्षिण्वनूयोगतस्तनुं ॥ १०० ॥**

( १ ) **मेधातिथिः** । उपसंहरति सत्यपीन्द्रियत्वे मनसः प्राधान्यात्पृथगुपादानंग्रामः संघातः विधेहि कृत्येन्द्रियाणि तथा मनः सर्वानर्थाञ्श्रौतस्मार्तकर्मसाध्यान्संसाधयेन्निष्पादयेत्तनुंशरीरमक्षिण्वन्नपीडयन्युयोगतः । युक्त्या सहसाकस्यचित्कठिनासनकृष्णाजिनादिप्रावरणपीडा भवति सुकुमारत्वात्प्रकृतेस्तदर्थमिदमुच्यते । येषांसुशीलितंसुसंस्कृतंभोजनंमृदुशय्यादि नतैः सहसा तत्यक्तव्यमपितु क्रमेण साम्यमानेतव्यंतद्विपरीतंयोगः क्रमेण प्रवृत्तिरुच्यते । तत्र च योगतोवशी कृत्वेति संबन्धः यथा स्थानमेव वा योगतइति योजनीयम् । युक्त्या कुंचितातः शरीरंनाप नयेत् । यदुचितंशरीरस्य न तज्झटिति निवर्तयेत्तात्पर्यैवा योगस्तृतीयायोगस्तृतीयार्थे तसिः तात्पर्येण शरीरंरक्षेत् ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । इन्द्रियग्रामंबाह्यंसर्वानूअर्थानूस्वर्गादीनपि योगतोपेक्षितदेवतादि ध्यानतोन चेन्द्रिय संयममात्रात्ततनुंदेहमक्षिण्वन्नपीडयन्नपि ॥ १०० ॥

( ३ ) **कुल्लूकः** । इन्द्रियसंयमस्य सर्वपुरुषार्थहेतुतांदर्शयति वशेकृत्वेति । बहिरिन्द्रियगणमायत्तंकृत्वा मनश्च संयम्य सर्वान्पुरुषार्थान्सम्यक्साधयेत् योगतउपायेन स्वदेहमपीडयन्यः सहजसुखी संस्कृतान्नादिकंभुङ्क्ते सक्रमेण तंत्यजेत् ॥ १०० ॥

( ४ ) **राघवानन्दः** । प्रकरणार्थंनिगमयनूतस्य पुमर्थपर्यवसायितामाह वशीति । अर्थान्धर्मादीन् अक्षिण्वन् अपीडयनूयोगतः योगोपायेन अवर्जनीयविषयसेवयेतियावत् ॥ १०० ॥

( ५ ) **नन्दनः** । इन्द्रियसंयमफलमाह वशइति । योगतोयोगेनसमाधिलक्षणेन । अर्थान्पुरुषार्थान् । संसाधयेत्सम्यक्साधयितुंशक्नुयात् । तनुमक्षिण्वंस्तपोभिःशरीरमपीडयन् ॥ १०० ॥

( ६ ) **रामचन्द्रः** । इन्द्रियग्रामं वशेकृत्वातथा मनःसंनियम्यसर्वानूअर्थानूसाधयेत् । योगतः योगाभ्यासतः तनुं देहंअक्षिण्वनूक्षीणमकुर्वन्इति ॥ १०० ॥

**पूर्वांसंध्यांजपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ॥ पश्चिमांतुसमासीनःसम्यगृक्षविभावनात् ॥ १०१॥**

( १ ) **मेधातिथिः** । संमुखे प्रातः पूर्वासंध्याऽऽदित्यास्तमये पश्चिमा तांतिष्ठेत्पन्सावित्रीमासनादुत्थायनिवृत्तगतिरेकत्र देशे स्यात् । सावित्रीउक्तैव तत्सवितुर्वरेण्यमिति तस्याह्यनुवादाॐकारादिविधिश्लोके संध्याजपार्थमेतदक्षरमेतां चेति । आऽर्कदर्शनादिति यावद्भगवानादित्योदृष्टोजपस्थानयोरयमेव विनिर्देशः । ननु किमविधिनाऽर्कोदयएव संध्यानिवर्तते । तथाहि नसर्वतमः क्षीणंनापि परिपूर्णः प्रकाशएषा संध्याउक्तंच दिवि प्रकाशोभुवि चान्धकारः कालः ससावित्रइति प्रदिष्टः निरुक्तेप्युक्तमधोभागः सावित्रइति । पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादधस्ताद्रामोधस्तात्कृष्णइति । आदित्योदये च सर्वतस्तमोनिवर्तते । उभयधर्मानिवृत्तौ च संध्यारात्रिधर्मेऽहर्धर्मेच । अत्यन्तसंयोगे चैषा द्वितीया संध्यामिति । तेन यावत्संध्याकालंतिष्ठेदित्युक्तंभवति ततः परंस्वातंत्र्यंस्थितमेव । केचिदाहुर्नैवेयमत्यन्तसंयोगे द्वितीया किंतर्हि कालश्चाकर्मकाणांकर्मसंज्ञोभवतीति वार्तिककारस्तत्र कर्मणिद्वितीयेत्येव द्वितीया । यत्तु कालाध्वनोरत्यन्तसंयोगइति । तद्यत्र क्रियावाची शब्दोन प्रयुज्यते । क्रोशंकुटिला नदी सर्वरात्रंकल्याणीउभयत्र च सकर्मकोधातुर्मासमधीयतइतिसत्यंतस्य विषयइह पुनः संध्यांतिष्ठेदिति तिष्ठतिरकर्मकअतोविधिनिर्देशः कृत्स्नसंध्याप्राप्त्यर्थंस्थानासनयोः कर्तव्यः आरम्भकालस्त्विह नोक्तः संध्याशब्देनैव समर्पितत्वात् । यएव हि संध्याकालस्यारम्भः सएव तद्विधेः

श्रोत्रियस्यापि नहिपूर्णमास्यादि कालवद्दीर्घः संध्याकालोयदि विलम्बःस्याद्दुर्लक्षोह्यसावति सूक्ष्मत्वात्कलान्तरयोरिव नामोन्नासावलक्ष्यपौर्वापर्यावधिनिवासोन्हश्च अतिशीघ्रगतिर्भगवान्भास्करस्तस्य यथा निर्भुक्तेराशौ राश्यन्तरसंक्रमणंतु त्रुटिमात्रकालमिच्छन्तिज्यौतिषिकाः। एवंदिवसारम्भावसानयोरप्युदयास्तमयौ प्रागुदयाद्रात्रिरुदितेहअनेन च नास्ति संध्याऽऽदित्योदयेनैव रात्रिविरामात्। अतएवोदयास्तमयसमीपयोरनुष्ठानप्रवृत्तिः स्पष्टे च सूर्ये नक्षत्रेषु च निवृत्तिर्यतोयद्यन्तंकालमुपास्ते तेनावश्यंमुख्येकाले विधिनिर्वर्तितोभवति अतएव चयावान्सावित्रः कालःसेह संध्याभिप्रेता न ज्योतिःशास्त्रगणिता सा चोक्ता पुरस्ताद्यद्येवंयेषामयमेवाग्निहोत्रकालस्तेषांसंध्याविधेरभावः प्रसक्तः। केयंपरिनोदना श्रौतेन स्मार्तस्यबाधोयुक्तएवं गृह्याग्निहोमेन विकल्पितं नैव चात्रविरोधस्तिष्ठतापि शक्यंहोतुमासीनेन च ननु च न केवले स्थानासने संध्ययोर्विहिते किंतु त्रिकजपोपि तच्च सावित्रींजपन्कथंहोममन्त्रमुच्चारयेत्। अस्तु जपस्य बाधः प्रधाने तावत्स्थानासनेन विरुध्येते। गुणलोपे च मुख्यस्येत्यनेन न्यायेन जपस्याङ्गत्वाद्बाधोयुक्तस्तयोश्च प्रधानत्वंसाक्षाद्विधिसंबन्धात्तिष्ठेदासीतवेति च। जपस्य तु गुणत्वंशत्रन्तत्वाज्जपतेर्लक्षणत्वावगमात्। अधिकारसंबन्धश्च स्थानासनयोरेव। नतिष्ठतितुयः पूर्वातथातिष्ठन्नैशमे नोव्यपोहतीति यत्तु केनचिदुक्तंतिष्ठतिरत्र गुणः प्रधानंजपकर्म ततोहिफलमश्नोमेति। तत्रोच्यते नैवायंकामिनोधिकारः कुतःफलश्रवणंयत्तुप्रमाणवादवाक्ये वेदपुण्येन युज्यतइति फलानुवादभ्रमः सतत्रैव निर्णीतस्तस्मात्स्थानासने प्रधाने। अथवाग्निहोत्रिणः सकृत्सावित्रींजपिष्यन्तित्रिरावर्तयिष्यन्तिवा। न तावताग्निहोत्रस्य कालातिपत्तिः अश्नन् सायंविनिर्मुक्तइति नतावताविनिहन्यते। अश्नशब्दः चिरकालवचनस्तावता च कृतः संध्यार्थोभवति। अर्कदर्शनपर्यन्तताह्यङ्गमेवोदितहोमिनांकृतसंध्यानामेवाग्निहोत्रहोमः। गौतमेनतु सज्योतिषाज्योतिषोदर्शनादिति। सूत्रस्यार्थः एतावान्कालः संध्योच्यतेनवाप्यङ्गंतत्रैतावतिकाले नास्त्यावृत्तिः यथा पौर्णमास्यां यजेतेति न कालानुरोधेन। कर्मणआवृत्तिः तथा पूर्वासंध्यांसनक्षत्रांपश्चिमांसदिवाकरामिति। तदपि काललक्षणंएतावान्कालइहसंध्याशब्देनोच्यते। तत्र सांध्योविधिरनुष्ठेयस्तत्रेयतिसन्ध्याशब्दवाच्ये काले च मुहूर्तमात्रे यदि त्रिचतुरासु कालकलासु स्थानासनजपान्कुर्यात्। संपन्नएव विध्यर्थः न ह्यत्र कृत्स्नकालव्याप्तिः श्रुता मनोरिवसर्वथाग्निहोत्रसंध्याविधीसमानकालावपि शक्यावनुष्ठातुं सदाशब्दोनित्यतामाह। उभयसंध्याशेषः आसीतआसनमनूर्ध्वतावस्थानमुपविष्टोभवेत्। ऋक्षंनक्षत्रमातद्विभावनात्। आऽर्कदर्शनादिति यआकारःसइहानुषक्तव्यः सम्यक्शब्दोदर्शनविभावनयोर्विशेषणंसम्यग्यदा परिपूर्णमण्डलआदित्योभवति नक्षत्राणि च भान्ति स्वभासायुक्तानि नादित्यतेजोभिभूतानि ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः**। तिष्ठे दूर्ध्वस्तिष्ठेज्जपन्सन्ध्यांपूर्वामत्यन्तसंयोगेन समासीतोपविशेत्। असम्यकृक्षाणांविभावनादर्शनाद्विवेकेन बहूनांप्रकाशनात्। अत्र तिष्ठन्नासीनोजपेदिति प्रत्यस्य व्यत्ययोबोद्धव्यः। जपस्य प्राधान्यात्। तथाच यजुर्वेदब्राह्मणे अथातः सन्ध्योपासनविधिंव्याख्यास्यामइत्युपक्रम्य पूर्वांगायत्रींजपेदष्टकृत्वइत्यादि। अतएव जपस्य कर्मणि सावित्रीलभ्यते। एतदक्षरमेतांचेत्युक्तत्वाच्च ॥ १०१ ॥

( ३ ) **कुल्लूकः**। पूर्वांसंध्यामिति। पूर्वांसंध्यांपश्चिमामिति च कालाध्वनोरत्यन्तसंयोगेद्वितीया। प्रथमसंध्यांसूर्यदर्शनपर्यन्तंसावित्रींजपंस्तिष्ठेदासनादुत्थाय निवृत्तगत्तिरेकत्र देशे कुर्यात्। पश्चिमांतुसंध्यांसावित्रींजपन्सम्यङ्नक्षत्रदर्शनपर्यन्तमुपविष्टः स्यात्। अत्र च फलवत्त्वाज्जपःप्रधानम्। स्थानासनंत्वंगेफलवत्सन्निधावफलंतदङ्गमितिन्यायात्। संध्ययोर्वेदविद्विप्रोवेदपुण्येन युज्यते। सहस्रकृत्वस्त्वभ्यस्य इति च पूर्वजपात्फलमुक्तम्। मेधातिथिस्तु स्थानासनयोरेव प्राधान्यमाह। संध्याकालश्च मुहूर्त्तमात्रंतदाह योगी याज्ञवल्क्यः ह्रासवृद्धीतुसततंदिवसानांयथाक्रमम्। सन्ध्या मुहूर्त्तमात्रं तु ह्रासे वृद्धौ च सा स्मृता ॥ १०१ ॥

( ४ ) **राघवानन्दः** । संन्ध्ययोर्वेदविदित्युक्तं तच्च कियन्तंकालंव्याप्य कर्तव्यमिति प्रकारंलक्षणंचाह पूर्वामिति । सन्ध्यांव्याप्य जपनूऊर्ध्वंतिष्ठनूआसीनोभवेदितिविधिस्तत्रैवावधेरपेक्षणात् । जपे तु सङ्ख्यैव नियम्यते नतु कालः । सहस्रपरमांदेवींशतमध्यांदशावरामित्युक्तेरार्कदर्शनात् संपूर्णार्कदर्शनमभिव्याप्य तद्दर्शनंयावत्सम्यगर्क्षविभावनात्सम्यकृक्षंसम्यगृक्षं तस्य विभावनंप्रकाशः तावदध्यासीत उपविश्य जपेदित्यर्थः । ह्रासवृद्धौतु सततंदिवसानांयथाक्रमं । सन्ध्यामुहूर्तमात्रंतु ह्रासे वृद्धौ च संस्थितेति योगियाज्ञवल्क्योक्तेर्दण्डद्वयंसन्ध्या ॥ १०१ ॥

( ५ ) **नन्दनः** । अथकर्मान्तरमाह पूर्वामिति । आर्क्षविभावनात् आऋक्षविभावनादितिपदच्छेदः । आ नक्षत्रदर्शनात् ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । सन्ध्योपासनविधिमाह । पूर्वांसन्ध्यांसावित्रींजपन्नार्कदर्शनात्सूर्यदर्शनपर्यन्तंतिष्ठेत । पश्चिमांसन्ध्यांसमासीनः आर्क्षविभावनात् नक्षत्रदर्शनपर्यन्तं गायत्रींजपंस्तिष्ठेत् ॥ १०१ ॥

**पूर्वांसन्ध्यांजपंस्तिष्ठन्नैशमेनोव्यपोहति ॥ पश्चिमांतु समासीनोमलंहन्ति दिवाकृतम् ॥ १०२ ॥**

( १ ) **मेधातिथिः** । अयमत्राधिकारउच्यते । एनः प्रतिषिद्धसेवनाज्जातोदोषस्तंव्यपोहत्यपनुदति । निशिभवंनैशंरात्रौ कृतम् । एवंमलमेनः शब्देनसमानार्थम् । नच सर्वस्य दिवाकृतस्य नैशिकस्य चैतत्प्रायश्चित्तंतथा सति कृच्छ्राद्युपदेशः प्रायश्चित्तविशेषोऽनर्थकःस्यात् । अर्केचेन्मधुविन्देत किमर्थंपर्वतंव्रजेदिति लौकिकात्प्रवादात् । किंतर्हि यदसेवितंकृतमशक्यपरिहारमनाम्नातप्रायश्चित्तविशेषंलघीयएनस्तदपैति यदासुप्तस्य हस्तचारशय्यापरिवर्तनादिनासूक्ष्मप्राणिवधोगुह्याङ्गकण्डूकर्षणेनाकस्मात्स्पृशेदिति प्रतिषिद्धम् । लालाश्रवादिना चाशुचित्वमे तत्कालकृताशौचस्यावस्थाने प्रतिषिद्धसेवनादि । एतदभिप्रायमेवेदं सर्वदैवाशुचिर्ज्ञेयः संध्योपासनवर्जितइति । नचानित्यत्वापत्तिरेवंविधस्य दोषस्य सर्वदा भावात् । दिवा च पथि गच्छन्नन्यस्त्रीमुखसंधान संपन्नं तज्जन्यचित्तविकारोन्मीलने क्रुद्धाश्लीलसंभाषणे तत्संध्याविधी अपनुदतः ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः** । जपंस्तिष्ठन् तिष्ठञ्जपन् मलंपापंमलिनीकरणरूपं । एतच्च सायमर्कदर्शनकालं प्रातश्च नक्षत्रदर्शनकालं आरभ्य कार्यसज्योतिषोदर्शनादिति गोतमोक्तेः ॥ १०२ ॥

( ३ ) **कुल्लूकः** । पूर्वांसंध्यामिति । पूर्वसंध्यायांतिष्ठञ्जपंकुर्वाणोनिशासंचितंपापंनाशयति । पश्चिमसंध्यायांतूपविष्टोजपंकुर्वन्दिवार्जितंपापंनिहन्ति तत्रापि जपात्फलमुक्तम् । एतच्चाज्ञानादिकृतपापविषयम् । अतएव याज्ञवल्क्यः दिवावा यदि वा रात्रौ यदज्ञानकृतंभवेत् । त्रिकालसन्ध्याकरणात्तत्सर्वंविप्रणश्यति ॥ १०२ ॥

( ४ ) **राघवानन्द** । खादिरन्यायेनाह नैशमिति । निशाकृतंएनःपापंमलमपि पापंयथा खादिरंपशुंबध्नाति खादिरंवीर्यकामस्य यूपंकुर्वीतेति वचनद्वयेनैकएव खादिरोयूपउभयार्थःएवंसन्ध्यापीति न्यायार्थः ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । पूर्वांसन्ध्यांगायत्रींजपंस्तिष्ठन् निशायांभवंनैशं एनःपापंव्यपोहति नाशयति । सायंसन्ध्यांकुर्वाणःदिवा कृतंपापंमलंहन्ति ॥ १०२ ॥

**न तिष्ठति तु यःपूर्वांनोपास्ते यश्च पश्चिमाम् ॥ सशूद्रवद्बहिष्कार्यःसर्वस्माद्द्विजकर्मणः ॥ १०३ ॥**

---

( १०३ ) नतिष्ठतितुयःपूर्वां=नानुतिष्ठतियःपूर्वां ( क, ग )

( १ ) **मेधातिथिः** । अनेनाननुष्ठानप्रत्यवायंवदन्नित्यतामेव समर्थयति । यः प्रातः संध्यायां नोर्ध्वआस्ते नच पश्चिमायामुपविष्टोभवति सशूद्रतुल्योवेदितव्यः । सर्वस्माद्द्विजातिकर्मणः आतिथ्यादिसत्कारसंप्रदानादितोबहिष्कार्योऽपनोद्यः । अतः शूद्रसमानतानिरासार्थंनित्यमनुष्ठेया संध्या । इदमधिकारवाक्यम् । अत्र च स्थानासनएवोपपत्तेर्जपेयस्य चाधिकारसंबन्धस्तत्प्रधानमन्यत्तत्संबन्धमङ्गम् ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । न तिष्ठति तिष्ठन्नपतीत्यर्थः । एवमुपास्तइत्यत्रापि ॥ १०३ ॥

( ३ ) **कुल्लूकः** । न तिष्ठतीति । यःपुनःपूर्वसंध्यांनानुतिष्ठति पश्चिमांतु नोपास्ते तत्तत्कालविहितंजपादि न करोतीत्यर्थः । सशूद्रइव सर्वस्माद्द्विजातिकर्मणोऽतिथिसत्कारादेरपि बाह्यःकार्यः । अनेनैव प्रत्यवायेन संध्योपासनस्य नित्यतोक्ता । नित्यत्वेऽपिसर्वदापेक्षितपापक्षयस्य फलत्वमविरुद्धम् ॥ १०३ ॥

( ४ ) **राघवानन्दः** । सन्ध्याकरणे दोषमाहनेति । शूद्रवदिति तदकरणेऽनधिकारितैव तत्पूर्वकत्वात्सर्वकर्मणाम् ॥ १०३ ॥

( ५ ) **नन्दनः** । स्थानासनयोरकरणेप्रत्यवायमाह । नतिष्टतीति ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषःपूर्वांपश्चिमांसन्ध्यांनउपास्ते न करोति सःसर्वस्मात्द्विजकर्मणःसकाशाद्द्विजैर्बहिष्कार्यःनिष्काशनीयः ॥ १०३ ॥

**अपांसमीपे नियतोनैत्यकं विधिमास्थितः ॥ सावित्रीमप्यधीयीत गत्वारण्यंसमाहितः ॥ १०४ ॥**

( १ ) **मेधातिथिः** । अयमपरः स्वाध्यायविधिः प्रकरणान्तरे श्रुतत्वात्पूर्वस्मात्प्रकरणाद्भिद्यते । बहिर्ग्रामान्निर्जनोदेशअरण्यंतद्गत्वा प्राप्यापांसमीपे नदीवाप्यादिस्थाने तदभावे कमण्डल्वादिभाजनस्थानामपि नियतः शुचिर्यत्नवान्वा समाहितः परित्यक्तचित्तव्याक्षेपः सावित्रीमप्यधीयीत यदि बहुसूक्तानुवाकाध्यायादि कयाचित्कार्यातिपत्त्या नशक्यते । नैत्यकंविधिमास्थितः नित्यएवनैत्यकः नित्योयंविधिरित्येवंस्थितप्रज्ञः ग्रहणार्थश्च स्वाध्यायाध्ययनविधिः प्रकृतिरयंविकारः संस्तदीयाद्धर्मान्गृण्हाति तेन ब्रह्मणः प्रणवंप्राक्कूलानित्यादिधर्मोभवति । अन्येतु विधिर्विधाप्रकारइति कर्तव्यतेत्यादि चक्षते नित्येब्रह्मचारिणावश्यकर्तव्येसाध्यायाध्ययनविधेतिकर्तव्यता तामाश्रितः । अस्य तु विधेस्तदा नित्यत्वंब्रह्मसत्रंहि तत्स्मृतमित्यादिवाक्येभ्योवसातव्यम् । आद्यमेवव्याख्यानंयुक्तरूपंदृश्यते । नहि विधिशब्दः प्रकारवचनतया प्रसिद्धो। यदि च नैत्यकशब्देन ब्रह्मचारिणोविधिरुच्यते । तदा नैत्यकेनास्त्यनध्यायइत्यत्रापि नैत्यकशब्देन तस्यैवाभिधानं स्यात्ततश्चानध्यायनिषेधस्तत्रैव न प्रसज्येत ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । अथब्रह्मयज्ञविधिमाहअपामिति । नियतः शुचिः नैत्यकंविधिं ब्रह्मयज्ञविधिंब्रह्मयज्ञेनयक्ष्यमाणइत्यादिनाश्रुतावुक्तं । आरण्यंग्रामाद्बहिः सावित्रीमपीत्यन्याध्ययनाशक्तावुपाकरणाद्वा पूर्वमगृहीतवेदस्य ब्रह्मचारिणोनुकल्पः । आदिक्रमेण स्वशाखायांनित्यंपाठोमुख्योब्रह्मयज्ञः । समाहितोनन्यचेताः ॥ १०४ ॥

( ३ ) **कुल्लूकः** । अपांसमीपइति । ब्रह्मयज्ञरूपमिदंबहुवेदाध्ययनाशक्तो सावित्रीमात्राध्ययनमपि विधीयते । अरण्यादिनिर्जनदेशंगत्वानद्यादिजलसमीपेनियतेन्द्रियःसमाहितोऽनन्यमनानैत्यकंविधिंब्रह्मयज्ञरूपमास्थितोनुतिष्ठासुः सावित्रीमपि प्रणवव्याहृतित्रययुतांयथोक्तामधीयीत ॥ १०४ ॥

( ४ ) **राघवानन्दः** । तत्र प्रशस्तस्थानमाह अपामिति । नैत्यकंब्रह्मयज्ञरूपंसमाहितोऽनन्यमनाः सावित्रीमपीति अनधीतसूक्तान्तरस्य ब्रह्मयज्ञार्थं । विशिष्टोयमपरोविधिरिति मेधातिथिः ॥ १०४ ॥

( ५ ) **नन्दनः** । प्रथमंब्रह्मयज्ञमाह अपामिति । नियतसमाहितशब्दाभ्यांकर्मज्ञानेन्द्रियसंयमावुक्तौ । नित्यमेवनैमित्तिकं अनेनाहरहः कर्तव्यत्वमुक्तं विधिब्रह्मयज्ञेनयक्ष्यमाणःप्राच्यान्दिशीत्यनुवाकेनोक्तं । अधीयीत स्वाध्यायंनकेवलंस्वाध्यायिकमेवाधीयीत । किन्तुसावित्रीमपि । श्लोकस्यास्यब्रह्मयज्ञविषयत्वम् ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । युग्मं अपामिति । नैत्यकंविधिंआस्थितःसन्नपांनिकटे नियतःसावित्रीञ्जपेत् । गत्वारण्यंसमाहितःसन्पुरुषादिकृतःसन्सम्यगधीयीत अध्ययनं कुर्वीत ॥ १०४ ॥

**वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ॥ नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ १०५ ॥**

( १ ) **मेधातिथिः** । उपकरणमुपकारकंवेदाङ्गंकल्पसूत्रनिरुक्ताद्युच्यते। तस्मिन्पठ्यमानेऽनध्यायेप्यनुरोधआदरोनास्ति । अनध्याये होममन्त्रेषु चैव ह्यनध्यायानादरणीयाअनध्यायेष्वध्येतव्यम् । न निरोधइति वा पाठः। निवृत्तिरनध्यायेष्वध्ययनस्य नास्ति । यद्यप्यध्ययनविधिधर्मोनध्यायेष्वनध्ययनं अध्ययनविधिश्च स्वाध्यायविषयः स्वाध्यायश्च वेदोनच वेदशब्दवाच्यान्यङ्गानि तथापि वेदवाक्यमिश्रत्वबुद्धिः स्यादिति स्पष्टार्थमुच्यते । दृष्टान्तोवायंवेदाङ्गेष्विव वेदेप्यनध्यायोनास्ति । होममन्त्रेष्वग्निहोत्रहोमे ये मन्त्राअन्यस्मिन्वासावित्रादिशान्तिहोमे । एतच्च प्रदर्शनार्थम् शश्वज्जपप्रैषादिमन्त्राणांकर्माङ्गानांवैदिकंवाक्योच्चारणमात्रधर्मोनध्यायानध्ययनंस्वाध्यायनविधिप्रयुक्तइति मन्यमानोहोमादिमन्त्रेषु चतुर्दश्यादिष्वनुच्चारणंप्रपद्येत यःसन्न्यायसिद्धेनार्थेनानूद्यमानेन प्रतिबोध्यते । स्वाध्यायाध्ययनविधिप्रयुक्तमनध्यायानुक्रमणंन वेदधर्मस्ततोनास्तिकर्माङ्गमन्त्रेष्वनध्यायः । नैत्यके स्वाध्याये पूर्वेण वाक्येन सर्वाश्रमिणांविहिते नित्ये स्वाध्यायविधौ ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । वेदोपाकरणे व्याकरणाद्यङ्गे नैत्यके स्वाध्याये ब्रह्मयज्ञे होममन्त्रेषु काम्यकर्माङ्गेष्वपि अनध्यायेनध्ययनदिनेनानध्ययनानुरोधः । अन्यत्र भवत्वनध्यायाभावः ॥ १०५ ॥

( ३ ) **कुल्लूकः** । वेदोपकरणइति । वेदोपकरणे वेदाङ्गे शिक्षादौ नैत्यके नित्यानुष्ठेये च स्वाध्याये ब्रह्मयज्ञरूपे होममन्त्रेषु चानध्यायादरोनास्ति ॥ १०५ ॥

( ४ ) **राघवानन्दः** । अहन्यहनीत्युक्तंअष्टकापौर्णमास्यावित्यादौ कागतिरिति चेत्तत्र पर्युदासाधिकरणन्यायेनाह वेदोपकरणइति । वेदोपकरणे शिक्षादिवेदाङ्गे नैत्यके ब्रह्मयज्ञादिरूपे गुरुमुखात्प्रथमाध्ययने वा तएव स्नातकप्रकरणएवानध्याये गणितस्तस्याध्ययनस्य काम्यत्वातअनुरोधेअपेक्षाअङ्गादेर्नास्ति तथा च सूत्रम् । कामंवेदाङ्गानीति । काममिच्छा तद्वशात्वेदाङ्गाध्ययनमिति जैमिनिसूत्रार्थः । यजतिषु । ये यजामहे कुर्यान्नानुयाजेष्विति तत्र यथा-अनुयाजवर्जितेषु यागेषुयेयजामहकरणंतद्वदत्रापि अनध्यायेष्वङ्गादिपाठइति न्यायार्थः ॥ १०५ ॥

( ५ ) **नन्दनः** । सावित्रीग्रहणेनज्ञापितंनचात्रब्रह्मयज्ञेग्रहणाध्ययनइवानध्यायकालइत्याहवेदोपकरणइति । वेदोपकरणे वेदाङ्गेतत्रप्रतिषेधाभावात्होममन्त्रेषुविधिबलाच्चयथानध्यायानुरोधोनास्ति एवन्नैमित्तिकेपोत्यर्थः ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । वेदोपकरणे उपाकर्मकरणे ॥ १०५ ॥

**नैत्यके नास्त्यनध्यायोब्रह्मसत्रंहि तत्स्मृतं ॥ ब्रह्माहुतिहुतंपुण्यमनध्यायवषट्कृतम् ॥१०६॥**

( १ ) **मेधातिथिः** । पूर्वविधिशेषोयमर्थवादः । एतेन हेतुना नैत्यकेनास्त्यनध्यायोयतोब्रह्मसत्रंतत्स्मृतंसततप्रवृत्तं-सत्रंयथा सहस्रसंवत्सरादिसत्रंन कदाचिच्छिद्यतइत्यतः सत्रमेवमिदमपि ब्रह्माध्ययननिर्वर्त्यं ब्रह्मसत्रत्वाच्च नकदाचिच्छेत्तव्यम् । विच्छेदेहि सत्रत्वंनस्यात् । सत्रत्वमिदानींरूपकभङ्ग्यायोजयति । ब्रह्माध्ययनमाहुतिहुतमन्यत्रूत्रंसोमाहुत्या-

हूयते। जुहोतिरनिवृत्तौ वर्तते। अनेकार्थत्वाद्धातूनांब्रह्मशब्देन तद्विषयाध्ययनक्रिया लक्ष्यते। ब्रह्माध्ययनमाहुतिरिवोप मितंव्याघ्रादिभिरितिसमासः। अनध्याये यदध्ययनंतेन वषट्कृतंयथा याज्यान्तअविच्छेदोवषट्कारेण क्रियतएवंचतुर्दश्याद्यनध्यायाध्ययनंवषट्कारस्थानीयम्। वषट्शब्देन वौषट्शब्दोलक्ष्यते तेन कृतंयुक्तंसंस्कृतं साधनं कृतेति समासः॥१०६॥

( २ ) **सर्वज्ञनारायणः**। स्वाध्यायरूपे तु ब्रह्मयज्ञे कथमेवमध्ययनविरोधित्वादनध्यायस्येत्यतआह नैत्यकइति। ब्रह्मणा वेदेन सत्रं संतन्यमानाक्रियायतेतःक्रियासंतत्यविच्छेदार्थेनानध्यायानुरोधः किंत्वेकांवर्चमेकंवा यजुरेकवासामाहरेदित्यापस्तम्बवचनादनुसंधानमत्राल्पमणीयोनुष्ठेयं एतदर्थमपि चैतद्धोममन्त्रादेः पृथक्कृत्यंपुनरुक्तम्। अत्र चानध्यायानामनुरोधाभिधानात् स्नातकव्रतकरणेध्यापकंप्रति कथितानामनध्यायानामध्ययनकारिणं ब्रह्मचारिणं प्रत्यन्वयोपेक्षितः। तेन विधिलंघनेनाध्यापकस्याध्ययनप्रवृत्तावप्यध्येत्रा नाध्येतव्यमिति लभ्यते। ब्रह्मसत्रमित्यत्र गुणयोगेन सत्रशब्दस्य प्रवृत्त्यायोगेनतांवक्तुंगवामयनादिसत्रसाम्यमस्याह। ब्रह्माहुतीति। वेदरूपायाआहुतेर्होतव्यस्य हुतंहोमोयत्र तंपुण्यहेतुंस्वाध्यायंयथा च सत्रे वषट्कारो होममन्त्रस्तथात्रापि अनध्यायोनध्ययननिमित्तमेघनिर्घातशब्दादि वषट्कारस्थानीयम्। यदाहापस्तम्बः ब्रह्मयज्ञोहवाएषयःस्वाध्यायतस्यैते वषट्कारायत्स्तनयतीत्यादि॥ १०६॥

( ३ ) **कुल्लूकः**। नैत्यकइति पूर्वोक्तनैत्यकस्वाध्यायस्यायमनुवादः। नैत्यके जपयज्ञेऽनध्यायोनास्ति यतःसततभवत्वात्। ब्रह्मसत्रंतन्मन्वादिभिःस्मृतंब्रह्मैवाहुतिर्ब्रह्माहुतिर्हविस्तस्याहुतअनध्यायाध्यनमध्ययनरूपमनध्यायवषट्कृतमपि पुण्यमेव भवति॥ १०६॥

( ४ ) **राघवानन्दः**। अर्थवादेनोक्तमर्थंद्रढयति नैत्यकइति। ब्रह्मसत्रंसततभवत्वात्ब्रह्मैवाहुतिस्तस्याहुतंहोमरूपाध्ययनंसोमाहुतिस्थानीयंअनध्यायवषट्कृतेअनध्यायाध्ययनंवषडिति याज्यासमापकवौषट्स्थानीयंतेन कृतंसंस्कृतंब्रह्मसत्रमितिरूपकंपण्यं पुण्यदं। नापोहेदग्निषु क्रियाइति होमे नास्त्यनध्यायआवश्यकत्वात्। तथा मात्यहिकजपेपीति भावः॥ १०६॥

( ५ ) **नन्दनः**। उक्तमेवार्थंहेतुन्यासेनस्थिरीकरोति नैत्यकइति। नैत्तिकेस्वाध्यायेनास्त्यनध्यायः कुतः ब्रह्मैवाहुति ब्रह्माहुतिः वेदव्याहुतिरितियावत्। सायस्मिन्सत्रेहुताताद्ब्रह्माहुतिकृतंअनध्यायकालेएववषट्कृतंयसतदनध्यायवषट्कृतंश्रूयतेहितस्यवाएतस्ययज्ञस्यमेघोहविर्धानमित्यादिअधीयतइत्यध्यायोयाज्यापुरोनुवाक्यादिः। वषट्कृतमवषट्कारः। ताभ्यांरहितमनध्यायवषट्कृतं। ततब्रह्मसत्रंवेदसत्रंसत्रशब्देननैरंतर्येणदीर्घकालानुष्ठेयत्वाभिमेतास्सत्तानैत्यकेनास्त्यनध्यायइत्यर्थः। संवत्सरमपिब्रह्मयज्ञंकुर्वतसर्वपुरुषार्थलाभःयावज्जीवंकुर्वतःकिंपुनरित्यभिमायेणाह। यस्स्वाध्यायमिति। स्वाध्यायंब्रह्मयज्ञविषयमब्दमब्दमात्रमप्येषस्वाध्यायः। पयोधर्मशुचिसामान्यात्। मेदःअस्यपुष्टिहेतुत्वसामान्यात्। घृतसाम्यंस्नेहसारुप्यात्। मधुरसःनानारसैक्यात् क्षरति। दुग्धेकेचिदपांसमीपइत्यादिश्लोकचतुष्टयेनगृहीतस्वाध्यायस्यानित्याध्ययनमुक्तमितिव्याचक्षते॥ १०६॥

( ६ ) **रामचन्द्रः**। नित्यस्वाध्यायेअनध्यायःअध्ययनस्यअनुरोधेन भवेत् च पुनः होममन्त्रेषु मन्त्रोच्चारेषु अनध्यायो न भवेत् नित्यकर्मणिअनध्यायोनास्ति ततःअध्ययनं ब्रह्मसत्रं ब्रह्मयज्ञस्मृतःब्रह्माहुतिहुतंपुण्यंब्रह्मणआहुतिहुतंब्रह्माहुतिहुतंवेदाहुतिहुतमित्यर्थः ब्रह्मणास्रुवेणाहुतिहुतमितिवार्थः अनध्याये वषट्कृतंपुण्यं भवति॥ १०६॥

**यःस्वाध्यायमधीतेऽब्दंविधिना नियतःशुचिः॥ तस्य नित्यंक्षरत्येषपयोदधिघृतंमधु॥१०७॥**

( १ ) **मेधातिथिः**। प्रकृतविधिशेषोयम्। सच नित्यः समधिगतः नित्येच फलश्रवणमर्थवादोनच विधिविभक्तिर्वि-

द्यते येनैकस्य तूभयत्वेसंयोग पृथक्कमित्यनेन न्यायेनाधिकारान्तरहेतुः मयपभृतिः स्यात्। लब्धे च नित्येऽधिकारे रात्रिसत्रन्यायोपि नास्ति येन पयआदीनि निष्फलत्वेन कल्पेरन्। तस्मादर्थवादएवायम्। अधीयानस्य लोकपक्त्या प्रतिग्रहादिना गोलाभात्पयः प्रभृतेः प्रक्षरणानुवादस्यालम्बनम्। स्वाध्यायंवेदमधीतेव्दंसंवत्सरंविधिना प्राक्कूलाध्यासनेन नियतः संयन्तेन्द्रियः शुचिः स्नानादिना तस्य पुरुषस्य नित्यंयावज्जीवंक्षरति स्रवति ददाति । एषः स्वाध्यायः पयोदधीति। अन्येतु धर्मार्थकाममोक्षात्पयआदिभिः शब्दैरभिहितान्मन्यन्ते । पयः शुद्धि सामान्याद्धर्मः दधिपुष्टिहेतुत्वादर्थः। स्नेहसामान्याद्घृतंकामः सर्वरसैक्यान्मधुमोक्षः। यावान्कश्चन पुरुषार्थः ससर्वोवेदाध्ययनात्संवत्सरेणैव प्राप्यते किंपुनर्बहुना कालेनार्थवादत्वात्पयआदिशब्दानांकोर्थोयुक्तइति नाभिनिवेष्टव्यम् ॥१०७॥

( २ ) **सर्वज्ञनारायणः** । यावज्जीवाध्ययनेनियतेप्यब्दमात्रेणैवलभ्यं फलमाहयइति। नियतइन्द्रियप्रत्याहारवान पयःश्वेतवर्णसारूप्याद्धर्मःतद्भवत्वादर्थोदधि तदुभयप्रभवत्वात्घृतंकामः मध्विति परमात्मनार्तद्विषयतया ब्रह्मविद्यायांमधुशब्दप्रयोगः। अथातो सर्वांमधुप्रवोचदिति ॥ १०७ ॥

( ३ ) **कुल्लूकः** । यःस्वाध्यायमिति । अब्दमित्यत्यन्तसंयोगे द्वितीया। योवर्षमप्येकंस्वाध्यायमहरहर्विहिताङ्गयुक्तंनियतेन्द्रियःप्रयतोजपति तस्यैव स्वाध्यायोजपयज्ञः। क्षीरादीनि क्षरति क्षीरादिभिर्देवान्पितॄंश्च प्रीणाति ते च प्रीताःसर्वकामैर्जपयज्ञकारिणस्तर्पयन्तीत्यर्थः । अतएव याज्ञवल्क्यः मधुना पयसा चैव सदेवांस्तर्पयेद्द्विजः। पितॄन्मधुघृताभ्यांच ऋचोधीते हि योऽन्वहमित्युपक्रम्य चतुर्णामिव वेदानांपुराणानांच जपस्य देवपितृतृप्तिफलमुक्त्वा शेषे तेतृप्तास्तर्पयन्त्येनंसर्वकामफलैःशुभैरित्युक्तवान् ॥ १०७ ॥

( ४ ) **राघवानन्दः** । अध्ययनस्य गुणफलमाह । यइति । विधिना प्राक्कूलानिइत्युक्तेनक्षरन्तिपित्रादीनांतृप्तिमति। तदुक्तंयाज्ञवल्क्येन। मधुना पयसा चैव सदेवांस्तर्पयेद्द्विजः। पितॄन्मधुघृताभ्यांचऋचोधीते तु योन्वहम्॥ ईदशः स्वाध्यायः गोदोहनविशिष्टापः प्रणयनं यथापशुसाधनंतथायमुक्तफलसाधनमिति अर्थवादोयमिति मेधातिथिः। तन्न-अर्थवादत्वे परपदार्थापत्तिः स्वपदार्थत्यागइति मीमांसामुद्राभङ्गः अन्यथा गोदोहमप्यर्थवादः स्यात् ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषःअब्दपर्यन्तं स्वाधायंअधीते करोति तस्य नित्यंएषःस्वाध्यायःपयोदधिघृतंमधु क्षरति स्रवति ददातीत्यर्थः। धर्मार्थकाममोक्षाःपयोरूपोधर्मः। दधिरूपोअर्थः घृतरूपःकामः। मधुरूपोमोक्षः॥ १०७॥

## अग्नीन्धनंभैक्षचर्यामधःशय्यांगुरोर्हितम्॥ आसमावर्तनात्कुर्यात्कृतोपनयनोद्विजः॥१०८॥

**मेधातिथिः**। सायंप्रातः समिद्भिरग्नेरादीपनमग्नीन्धनम्। अपर्यङ्कारोहणमधः शय्या नतु स्थण्डिलशायित्वमेव। गुरवे हितमुदकुम्भाद्याहरणंशुश्रूषणलक्षणम्। यत्तुतदुपकारकरणंतद्यावज्जीविकम्। एतदाब्रह्मचर्यसमाप्तेर्गुरुकुलनिवृत्तिलक्षणात् स्नानात्कर्तव्यं स्वाध्यायाध्ययनविध्यर्थत्वात् । ब्रह्मचर्यस्य तद्धर्माणांच यावद्ग्रहणमनुवृत्तिस्तन्निवृत्त्या च निवृत्तिः सिद्धैवेति। अग्नीन्धनादीनांपुनर्वचनं तद्यतिरिक्तस्यातिक्रान्तस्य धर्मकलापस्योत्तरेषामप्याश्रमिणामनुष्ठानार्थम् । तथाच गौतमः उत्तरेषांचैतदविरोधादिति। अथैवंकस्मान्नभवत्येते यावद्ब्रह्मचर्यभाविनोन्ये पुनरर्वागपि निवर्तन्तइति स्मृत्यन्तरमात्रदर्शितप्रधानकालानुवर्तिनश्च नियमाइत्येषन्यायः सत्यां गतौ बाधितः स्यात्। गुरवे हितमिति हितयोगे चतुर्थी न्याय्यातद्वक्ष्यति ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । समिदाधानमिन्धनं अधःशय्या खट्वाद्युपरिशयनत्यागः गुरोर्हितंतत्परिचर्याएतश्चैतेषांब्रह्मयज्ञसन्ध्योपासनादिवत् समावर्तनादूर्ध्वमप्यनुष्ठानप्रसंगंवारयितुमुक्तम्। अतएव गौतमः उत्तरेषांचैतदविरोधीति॥१०८॥

( ३ ) **कुल्लूकः**। अग्नीन्धनमिति सायंप्रातःसमिद्धोमंभिक्षासमूहाहरणमखट्वाशयनरूपामधःशय्यां न तुस्थण्डिलशायित्वमेवगुरोरुदककुम्भाद्याहरणरूपंहितंकृतोपनयनोब्रह्मचारी समावर्तनपर्यन्तंकुर्यात् ॥ १०८ ॥

( ४ ) **राघवानन्दः**। ब्रह्मचारिणोऽवश्यकर्तव्यमाह अग्नीन्धनमिति अग्नीन्धनंसायंप्रातः समिद्धोमः अधःशय्यांखट्वाद्यनारूढतांकुर्यात्समावर्तनपर्यन्तमित्यन्वयः ॥ १०८ ॥

( ५ ) **नन्दनः**। अथब्रह्मचारिप्रकरणोक्तानांकेषांचिद्धर्म्माणामुत्तराश्रमेष्वप्यनुवृत्तिप्रदर्शनार्थंकेषांचिन्नियममाह अग्नीन्धनमिति। अग्नीन्धनादीनांयावत्ब्रह्मचर्यकालभावित्वंप्रधानवशवर्तित्वात् गुणानां सिद्धिं सिद्धेसत्यारम्भोनियमार्थः अग्नीन्धनादिभ्योन्येषांयावज्जीवकालप्रयोगइति। गुरोर्हितंउदकुम्भाहरणादि अन्यस्ययावज्जीवकालत्वात् ॥ १०८ ॥

( ६ ) **रामचन्द्रः**। ब्रह्मचारिधर्मानाह कृतोपनयनोद्विजः समावर्तनपर्यन्तंअग्निं अग्निशुश्रूषांकुर्यात्इन्धनंगुरोः इन्धनानयनं गुरोर्हितंकुर्यात् ॥ १०८ ॥

**आचार्यपुत्रःशुश्रूषुर्ज्ञानदोधार्मिकःशुचिः॥ आप्तःशक्तोऽर्थदःसाधुः स्वोऽध्याप्यादश धर्मतः॥१०९॥**

( १ ) **मेधातिथिः**। सर्वेषामेव दानानांब्रह्मदानंविशिष्यतइति तत्रकीदृशाय विद्यादातव्याइति पात्रलक्षणार्थः श्लोकः ब्रह्मचारिधर्मप्रसङ्गेनाध्यापनविधिरयमुच्यते। आचार्यस्य पुत्रः शुश्रूषा परिचर्या गृहोपयोगिशक्तितः कर्मकरणं शरीरसंवाहनं च ज्ञानादयःकश्चिद्ग्रन्थआचार्यस्य न विदितःशिष्येण कथंचिच्छिक्षितोऽर्थकामकलाविषयोधर्मविषयो वा विद्याविनिमयेनेदमध्यापनम्। धार्मिकः अग्निहोत्रादिकर्मानुष्ठानप्रधानः शुचिर्मृद्वारिशुद्धअर्थशुद्धश्च। गोबलीवर्दवत्पदत्रयस्य पुनरुक्तंधार्मिकः शुचिः साधुरिति। आप्तसुहृद्बान्धवादिः प्रत्यासन्नः शक्तः ग्रहणधारणसमर्थः स्वःपुत्रः उपनीतश्च पूर्वः अन्योपनीताअप्यध्याप्याः। ननु च धर्मतइत्युच्यते एतैरध्यापितैर्धर्मोभवति अर्थदश्च दृष्टेनोपकरोति तत्र कुतोऽदृष्टकल्पना केनोक्तंकल्पमिति श्रुते का कल्पना साक्षादिवहिश्रुतमध्याप्यादशधर्मतइति। उपाध्यायस्त्वाह धर्मशास्त्रव्यवस्थोच्यते। एतैरध्यापितैर्धर्मातिक्रमोन भवतिन पुनरर्थदअध्यापिते विद्यादानलक्षणे धर्मोभवति ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः**। शुश्रूषुः कृतचर्यः। धार्मिकोधर्मानुष्ठानशीलः। शुचिःशुद्धभावः। आप्तोबन्धुः। शक्तोग्रहणधारणादिशक्तिमान्। अर्थदः परिभाषंविना पूर्वधनेन कृतोपकारः। साधुरार्जवोपेतः। स्वोज्ञातिः। धर्मतोधर्मार्थमुद्दिश्यन तु भविष्यदर्थशुश्रूषादिना ॥ १०९ ॥

( ३ ) **कुल्लूकः**। कीदृशाःशिष्योऽध्याप्य इत्याहआचार्यपुत्रइति। आचार्यपुत्रःपरिचारकोज्ञानान्तरदाता धर्मविन्मृद्वार्यादिषु शुचिःबान्धवो ग्रहणधारणसमर्थः धनदाताहितेच्छुःज्ञातिः दशैते धर्मेणाध्याप्याः ॥ १०९ ॥

( ४ ) **राघवानन्दः**। विद्यादानपात्राण्याह आचार्यपुत्रइति। ज्ञानदः अथवा विद्यया विद्येत्युक्तत्वातधार्मिकः लाभाद्यनुपजीव्यधर्मार्थंयः पठति शुचिरलुब्धः आप्तोबन्धुः। शक्तोवेदतदर्थविचारणादौअर्थदउत्तरकाले स्वोज्ञातिः ॥ १०९ ॥

( ५ ) **नन्दनः**। इदानींगुरोरध्यापनयोग्यान्प्रसंगादाह आचार्येति। शक्तःग्रहणधारणादौगुरुकार्येषुवा समर्थः। स्वःज्ञातिः धर्म्मतःन्यायतः ॥ १०९ ॥

( ६ ) **रामचन्द्रः**। आचार्यपुत्रादि एते। दश धर्मतः स्वःपुत्रादिःस्वाध्याप्याः अध्ययनयोग्याभवन्ति ॥ १०९ ॥

**नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः॥ जानन्नपि हि मेधावी जडवल्लोकआचरेत्॥ ११०॥**

( १ ) **मेधातिथिः**। अधीयानेनानुपसन्नेन यदि नाशितमपाक्षरंविस्वरंवाऽधीतंतदाऽपृष्टेन न वक्तव्यम। नाशितंत्वयैवमेतत्पठितव्यमिति शिष्यस्य त्वपृच्छतोपि वक्तव्यम्। पृच्छमानोऽपि यद्यन्यायेन पृच्छति तथापि न वक्तव्यम। प्रश्रयपूर्वकमस्मिन्वस्तुनि मे संदेहस्तदुपदेष्टुमर्हसीति शिष्यधर्मेण प्रश्नोन्यायेन। अन्यथा तु जानन्नपि जडवन्मूकइव लोके वर्तेताऽऽचरेदज्ञइव तूष्णीमासीत । शास्त्रविषयोयमपृष्टसंदेहापनयननिषेधः। व्यवहारे तु वक्ष्यति नियुक्तोवा नियुक्तोवाधर्मज्ञोवक्तुमर्हतीति। अन्येत्वविशेषेणेच्छन्ति ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः**। एभ्यस्त्वन्यस्यापृष्टो न ब्रूयात् न चान्याये न परिहासादिना पृच्छतः ॥ ११० ॥

( ३ ) **कुल्लूकः**। नापृष्टइति यद्यन्येनाल्पाक्षरंविस्वरंचाधीतंतस्य तत्त्वंन वदेत् शिष्यस्यत्वपृच्छतोऽपि वक्तव्यम। भक्तिश्रद्धादिप्रश्नधर्मोल्लङ्घनमन्यायस्ते न पृच्छतोन ब्रूयात् जानन्नपि हि प्राज्ञोलोके मूकइव व्यवहरेत् ॥ ११० ॥

( ४ ) **राघवानन्दः**। सार्थवादानिपात्राण्याह नापृष्टइति षड्भिः। अन्यायेन यथाविधिनमस्कारादिरहितेन पृच्छतस्तंप्रति न ब्रूयादिति। जानन्नपि तत्र तत्र समर्थोपि लोकेअपात्रे जडवन्मूकवत्स्यात् ॥ ११० ॥

( ५ ) **नन्दनः**। पुनरत्रकःन्यायइत्यपेक्षायामाह नापृष्टइति। दशानामेतेषांमध्ये कस्यचिदप्रश्ने न्यायवर्जितप्रश्नेचजानन्नपिजडवत्भवेत् ॥ ११० ॥

( ६ ) **रामचन्द्रः**। अपृष्टः सन्कस्य चित्तुनब्रूयात् अन्यायेन पृच्छतः कस्य चित् न ब्रूयात् मेधावी जानन्नपि जडवल्लोकआचरेत् ॥ ११० ॥

**अधर्मेण च यःप्राह यश्चाधर्मेण पृच्छति॥ तयोरन्यतरःप्रैति विद्वेषंवाधिगच्छति॥ १११॥**

( १ ) **मेधातिथिः**। अस्य प्रतिषेधस्यातिक्रमे दोषमाह अधर्मेण पृष्टोन्यायपृष्टश्च यः प्रब्रवीति एवमेतद्युक्तमध्येतुमिति यश्च पृच्छतितावुभावपि म्रियेतेअप्राप्तकालौ। अथैकोव्यतिक्रमकारी सएव म्रियते। यद्यन्यायेन पृष्टोन वक्ति तदा प्रष्टैव वाऽथप्रतिवक्ति तदोभावपि। अनेनान्यायप्रश्ने दोषदर्शने न प्रष्टुर्न्याय्यः प्रश्नविधिः। विद्वेषंवा द्वेष्यतांलोके प्राप्नोति॥१११॥

( २ ) **सर्वज्ञनारायणः** । अधर्मेण यथोक्तस्वाध्यायनविधिविना। प्रैति म्रियते विद्वेषमन्यतरस्यान्यतरोधिगच्छति ॥ १११ ॥

( ३ ) **कुल्लूकः** । उक्तप्रतिषेधद्वयातिक्रमे दोषमाह अधर्मेणेति । अधर्मेण पृष्टोऽपि योयस्य वदति यश्चान्यायेन यंपृच्छति तयोरन्यतरोव्यतिक्रमकारी म्रियते विद्वेषंवा तेन सह गच्छति ॥ १११ ॥

( ४ ) **राघवानन्दः**। उक्तातिक्रमेऽनर्थमाह अधर्मेणेति। अधर्मेण पृष्टइति शेषः। प्राहअधर्मेण च पृच्छति यःतयोर्मध्येअन्यतरःव्यतिक्रमकारी प्रैति म्रियते फलाच्च्यवते ॥ १११ ॥

( ५ ) **नन्दनः**। न्यायवर्जितेप्रश्नेप्रवचनेचदोषमाह अधर्मेणेति । प्राह वचनंकरोति प्रैतिर्म्रियते ॥ १११ ॥

( ६ ) **रामचन्द्रः**। अधर्मेणेतिद्वाभ्यामाह। यःब्रह्मचारीअधर्मेण अनृतेन प्राह यः अधर्मेण पृच्छति तयोर्मध्ये अन्यतरः एकः प्रैति मृत्युंएति यदि जीवेत्तु विद्वेषं अधिगच्छति ॥ १११ ॥

---

( ११० ) लोकआचरेत्=लोकमाचरेत् ( न, ल, य, र, )

( १११ ) वाधि=चाधि ( न, ब, ल, भ, )

**धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ॥ तत्र विद्या न वक्तव्या शुभंबीजमिवोषरे ॥११२॥**

( १ ) **मेधातिथिः** । यदुक्तमध्याप्यादशधर्मतइति तस्यैवायंप्रकारान्तरेण संक्षेपतःप्रतिनिर्देशोनापूर्वार्थाऽभिधानम् । प्रकृतानुवादत्वादर्थशब्दउपकारमात्रलक्षणाऽपरोद्रष्टव्यः विद्याविनिमयेनापि पूर्वमध्ययनस्योक्तत्वात् । तद्विधाऽध्यापनाऽनुरूपामहति महती स्वल्पे स्वल्पेति तत्रविद्या विद्यतेज्ञायते यया सर्वोऽर्थइति साविद्यापाठोऽर्थावबोधश्च । अनुपकारी नाऽध्याप्योन चास्यार्थविवरणंकर्तव्यम् । उषरोभूमिभागउच्यते यस्मिन्नखिलेपिमृत्तिकादोषाद्बीजंन प्ररोहति शुभंश्रेष्ठंव्रीह्यादिकं लाङ्गलादिनोप्यते । एवंविधापि क्षेत्रे शुभा महाफला भवति । नचैतन्मन्तव्यम् । अर्थमादाय यदध्यापनंसा भृतिः नहि पणपरिमाणसंभाषणपूर्विका तत्र प्रवृत्तिः यदेयद्ददासि तदैतदध्यापयामीति । एतद्भृतेरूपम् । न पुनरर्थोपकार गन्धमात्रेण । यत्तु न पूर्वकिंचिद्गुरवे उपकुर्वीतेति नासौ पूर्वोपकारप्रतिषेधः किंतुस्नास्यतावश्यमाज्ञप्तेन गुर्वर्थोयथा शक्तिसंपाद्यः तच्छेषएव प्रतिषेधोन पृथग्वाच्यः ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मः उक्तेषु दशसु । अर्थःपरिभाषांविना भविष्यदर्थसंभावना । शुश्रूषा परिचर्या । सापि तद्विधाध्ययनस्य यादृशमभ्यर्हितत्वंतदनुरूपा ऊषरे लवणभूमौ ११२ ॥

( ३ ) **कुल्लूकः** । धर्मार्थाविति यस्मिञ्छिष्येऽध्यापिते धर्मार्थौ न भवतः परिचर्या वा ऽध्ययनानुरूपा तत्र विद्या नार्पणीयासुष्टुव्रीह्यादिबीजमिवोषरे यत्र बीजमुप्तंन प्ररोहति सउषरः । न चार्थग्रहणे भृतकाध्यापकत्वमाशङ्कनीयंयद्येताव-न्मह्यंदीयते तदैतावदध्यापयामीति नियमाभावात् ॥ ११२ ॥

( ४ ) **राघवानन्दः** । किंच धर्मार्थाविति । तद्विधा विद्यादानानुरूपाऊषरेक्षारभूमौ तत्रोप्तंयथानाङ्कुरयति तथा तादृशे धर्मार्थादयोन स्युरिति ॥ ११२ ॥

( ५ ) **नन्दनः** । तद्विधा गृह्यविद्यानुरूपा ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । यत्र ब्रह्मचारिणिधर्मार्थौ न स्यातांधर्मश्चअर्थश्च धर्मार्थौ न भवतः च पुनः तद्विधा शुश्रूषा गुरुयोग्या शुश्रूषा न स्यात् तत्र तस्मिन्ब्रह्मचारिणि विद्या न वक्तव्या ज्ञानं च न वक्तव्यमित्यर्थः । ऊषरे भूमौ शुभंबीजमिव निष्फलं भवतीत्यर्थः ॥ ११२ ॥

**विद्ययैव समंकामंमर्तव्यंब्रह्मवादिना ॥ आपद्यपि हि घोरायांनत्वेनामिरिणे वपेत् ॥ ११३ ॥**

( १ ) **मेधातिथिः** । समंशब्दः सहार्थे । अप्रतिपादितया स्वदेहएवजर्जरिततया युक्तंब्रह्मवादिनोवेदाध्यायिनोमरणंन पुनरपात्रे प्रतिपादनमनेन च ज्ञायते । अध्यापनमप्यधीतवेदेनावश्यंकर्तव्यं न केवलंवृत्त्यर्थम् । नापि वार्यादिदानवत्फलकामस्यैवाधिकारः । तथा च श्रुतिः योहिविद्यामधीत्यार्थिने न ब्रूयात्सकार्यहा स्यात् श्रेयसोद्वारमपावृणुयादध्यापयेन्महदेतद्यशस्यंवाचोधिकारंकवयोवदन्ति अस्मिन्योगेसर्वमिदंप्रतिष्ठितम् यएवंविदुरमृतास्तेभवन्ति । सकार्यहास्यादित्यनेनानध्यापनेदोषमनुवदन्तीतिश्रुतिरेवावश्यकर्तव्यतांज्ञापयति । इरिणे पूर्वोक्तप्रयोजनत्रयाभावोयत्राऽऽपद्यपि हि घोरायां कष्टायामपि कष्टाआपदुक्तशिष्याभावः । एतच्चावश्यकर्तव्ये सत्युपपद्यतेनित्यत्वे हि मुख्याभावे प्रतिनिधिशिष्योपादाने नाध्यापननिवृत्तिः शामा । व्रीह्यभाववन्नीवारैरतोस्यामवस्थायामध्यापनाधिकारनिवृत्तिरेव यथोक्तलक्षणातिथ्यभावेऽतिथिपूजानिवृत्तिः वपेदिति लक्षणयाबीजधर्मेणाध्यापनमुच्यते । बीजंकिलक्षेत्रोप्तंबहुफलंभवत्येवंविद्याऽपि । येतु धनाभावनिमित्तामापदमाचक्षते अत्यन्तदुर्गतेनापि नेरिणेवप्तव्येति वरंम्रियता । सर्वतएवात्मानंगोपायेदिति नैषविधिरतिक्रा-

न्तोभवति। सत्यपि तथाविधाध्यापने वृत्त्युपाये तदेतदयुक्तं अर्थदोनैवेरिणं पूर्वोक्तानुवादत्वादिरिणशब्दस्य । यदि वार्थदोपि न भवति कथमापदि तत्र प्रवृत्तिः संभाव्यते या निषिध्यते ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मवादिना वेदवादिना घोरायामापदि दुर्भिक्षादौ अर्थकामनया इरिणे ऊषरेविद्यासन्तानानुपालनासमर्थे ॥ ११३ ॥

( ३ ) **कुल्लूकः** । विद्ययेति। विद्ययैव सहवेदाध्यापकेन वरंमर्तव्यं नतु सर्वथाध्यापनयोग्यशिष्याभावेचापात्रायैव तांप्रतिपादयेत्। तथा छान्दोग्यब्राह्मणम् विद्यया सार्धम्रियेत नविद्यामूषरे वपेत् ॥११३ ॥

( ४ ) **राघवानन्दः** । अयोग्येअदानंश्रेयइत्याह विद्ययैवेति । ब्रह्मवादिना वेदानध्यापयितुमिच्छता घोरायांवृत्त्यभावेन मृत्युपर्यवसितायांफललोभात् कस्यचिदूषरेपि शुभबीजारोपणंभ्रामंतन्निरासायाह न त्वेनामिति । इरिणेउक्तोषरेएतांविद्याम् । अयमर्थः कङ्कुबीजादेरल्पतयाअन्यतोनुपकारकत्वंविद्याया स्वतएव पारायणादिनोपकारकत्वम् ॥ ११३॥

( ५ ) **नन्दनः** । इरिणेऊषरेधर्मार्थशुश्रूषाहीने पुरुषइतियावत्नवपेत् न ब्रूयात् ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मवादिना कामंअतिशयेन विद्ययैव सर्वविद्यासंयुक्तंमर्तव्यंमरणं कर्तव्यम् । आपद्यपि घोरायांएनांविद्यांइरिणेऊषरेनवपेत् न दध्यात् ॥ ११३ ॥

**विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम्॥असूयकाय मांमादास्तथा स्यांवीर्यवत्तमा॥ ११४॥**

( १ ) **मेधातिथिः** । अयमप्यर्थवादएव । विद्या मूर्तिमती कंचिदुपाध्यायमागत्याह प्रोक्तवतीशेवधिर्निधिस्तवास्मिरक्षमां । का पुनस्तेरक्षा । असूयकाय कुत्साकराय निन्दकाय मांमाऽदाःनिन्दकंमाध्यापय तथा चैवमहंवीर्यवत्तमाऽतिशयेन तव कार्यकरी भवामि । वीर्यंकार्यनिवृत्तौ सामर्थ्यातिशयः । शेवधिष्टेस्मीति कृतषत्वंपठितंतच्छान्दसप्रयोगाऽनुकरणम् ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । विद्याह वै ब्राह्मणमाजगाम गोपाय मांशेवधिष्टेहमस्मि । असूयकायानृजवेयताय नमाब्रूयावीर्यवती तथास्याम् । यमेव विद्याशुचिमप्रमत्तं मेधाविनंब्रह्मचर्योपपन्नम् यस्तेन द्रुह्येत्कतमच्चनाहतस्मै माब्रूयानिधिपाय ब्रह्मन्निति श्रुतिवाक्यद्वयंवाक्यान्तररचनयाप्रबध्यास्मिन्नर्थे प्रमाणमाह विद्येति । शेवधिर्निधिः ॥ ११४ ॥

( ३ ) **कुल्लूकः** । अस्यानुवादमाह विद्याब्राह्मणमिति । विद्याधिष्ठात्री देवता कंचिदध्यापकंब्राह्मणमागत्यैवमवदत् तवाहंनिधिरस्मिमांरक्षासूयकादिदोषवते नमांवदेः । तथा सत्यतिशयेन वीर्यवती भूयासम् । तथाच छान्दोग्यब्राह्मणम् विद्या हवै ब्राह्मणमाजगाम तवाहमस्मि त्वंमांपालयानर्हतेमानिने नैव मादागोपायमांश्रेयसी तथाऽहमस्मीति॥११४॥

( ४ ) **राघवानन्दः** । अत्रहेतुर्विद्येति । शेवधिर्निधिःतदसूययाविद्याकुण्ठिता स्यात् । अदाने वीर्यवत्तमा वीर्यातिशयवतीअपात्रदाने तु दुरदृष्टजनकतयाअध्ययनोक्तफलाजनिका । आदाने तु तज्जनिकेतिभावः ॥ ११४ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थमर्थवादेनस्थिरीकरोतिविद्येति । शेवधिरित्यादिउत्तरश्लोकश्चविद्यायावचनम् । शेवधिः निधिः । असूयकायअपात्रभूताय । तथा पात्रदत्ता ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । विद्या ब्राह्मणमित्याह । शेवधिःतेअस्मि शेवधिःनिधिःते तवास्मि यथा शेवधिः रक्षति तथा मांत्वंरक्ष मांअसूयकाय असूयायुक्तायमांमादामादेहीति । तथा वीर्यवती प्रभाववती अहंस्यामिति । निधिर्नाशेवधिरित्यमरः ॥ ११४ ॥

**यमेवतु शुचिंविद्यान्नियतंब्रह्मचारिणम् ॥ तस्मै मांब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥**

( १ ) **मेधातिथिः** । यंशिष्यंशुचिजानीयान्नियतंसंयतेन्द्रियंयत्न परंब्रह्मचारिणंतस्मैमांब्रूहि योहि निधिपाति रक्षति यतोसावप्रमादी न प्रमाद्यति न स्खलति । तत्परत्वाच्छक्तामार्थदादीनांसर्वशिष्याणामेतद्गुणसंयोगे देयेत्यस्मादर्थ-वादाद्गम्यते ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । नियतंनिश्चयवन्तम् । ब्रह्मचारिणमच्युतब्रह्मचर्यम् ॥ ११५ ॥

( ३ ) **कुल्लूकः** । यमिति । यमेव पुनःशिष्यंशुचिंनियतेन्द्रियंब्रह्मचारिणंजानासि तस्मै विद्यारूपनिधिरक्षकाय प्रमादरहिताय मांवद ॥ ११५ ॥

( ४ ) **राघवानन्दः** । दानपात्रमाह यमिति । यंनियतंउक्तनियमवन्तंतंविद्यात् जानीयात् । निधिपायनिधिविद्यांपातुं-शीलायाप्रमादिनेऽकुत्सिताय ब्रूहि ॥ ११५ ॥

( ५ ) **नन्दनः** । विद्यात्जानीयात् निधिपायविद्यानिधिपालाय पात्रे प्रदानं रक्षणमत्राभिप्रेतम् । विप्रशब्दोऽत्रक्ष-त्रियवैश्ययोरप्युपलक्षणार्थः ॥ ११५ ॥

( ६ ) **रामचन्द्रः** । यंब्रह्मचारिणंशुचिविद्यात् नियततंतस्मै ब्रह्मचारिणे मांब्रूहि कीदृशाय निधिपाय निधिंपातिइ-तिनिधिपःतस्मै अप्रमादिने प्रमादशून्याय । प्रमादोऽनवधानताइत्यमरः । यथा निधिंपाति तथा मांयःपाति रक्षति तस्मै ॥ ११५ ॥

**ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ॥ सब्रह्मस्तेयसंयुक्तोनरकंप्रतिपद्यते ॥ ११६ ॥**

( १ ) **मेधातिथिः** । योभ्यासार्थमधीयानस्यान्यंचोद्दिश्यैवंव्याचक्षाणस्य तत्संनिकर्षमन्यआगत्य तद्ब्रह्मापूर्वं-गृह्णीयात्संदेहंवापनुदेत्तस्यैषदोषउच्यते । यावदनुज्ञामसौ न दाप्यते यथैते त्वत्सकाशादधीयतएवमप्यहमप्यधीयीये-त्यनुज्ञातुमर्हसीति लब्धानुज्ञांशिक्षेत । अन्यथा तु यद्ब्रह्माध्ययनंनस्तेयमिव सोध्येतानेन ब्रह्मचौर्येण संयुक्तोनरकंमहाया-तनास्थानंप्राप्नोति । अधीयानादिति पञ्चमी आख्यातोपयोगइति । अपायस्य वा गम्यमानत्वाद्ब्रह्म ह्यध्येतुर्निष्क्रामतीव । ल्यब्लोपेवा कर्मणि । अधीयानंश्रुत्वाऽऽप्नोति शिक्ष्यते ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । अवाप्नुयात् अभ्यस्येत् ॥ ११६ ॥

( ३ ) **कुल्लूकः** । ब्रह्मेति । यः पुनरभ्यासार्थमधीयानादन्यंवा कंचिदध्यापयतस्तदनुमतिरहितंवेदंगृह्णाति सवेद-स्तेययुक्तोनरकंगच्छति तस्मादेतन्न कर्तव्यम् ॥ ११६ ॥

( ४ ) **राघवानन्दः** । गुरोरननुज्ञया विद्यानप्राह्येत्याह ब्रह्मेति । ब्रह्म वेदंअधीयानादन्यस्मात्तदर्थोच्चरितंनिय-तस्तत्रस्थोअवाप्नुयात् । स्वीकुर्यात्सब्रह्मस्तेयीति ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । यःब्रह्मचारीगुरोःअननुज्ञातं अनध्यापितं अधीयानात् ब्रह्मवेदंप्राप्नुयात् सः ब्रह्मस्तेयसंयुक्तः वेदस्तेयसंयुक्तः नरकंप्रतिपद्यते ॥ ११६ ॥

**लौकिकंवैदिकंवापि तथाध्यात्मिकमेव च ॥ आददीत यतोज्ञानंतंपूर्वमभिवादयेत् ॥ ११७ ॥**

**[जन्मप्रभृति यत्किञ्चिच्चेतसा धर्ममाचरेत् ॥ तत्सर्वंविफलंज्ञेयमेकहस्ताभिवादनात् * ॥ १ ॥]**

---

* ( ट )

( १ ) **मेधातिथिः**। अतिक्रान्तंप्रासङ्गिकम्। अभिवादनविधिरिदानींप्रक्रम्यते। लोके भवंलौकिकंलोकाचारशिक्षणमथवागीतवादित्रकलानांज्ञानंवात्स्यायनविशाखिकलाविषयग्रन्थज्ञानंवा। वैदिकंविधिनोदितं। वेदवेदाङ्गस्मृतिविषयाऽध्यात्मिकविद्याऽऽत्मोपनिषद्विद्याऽऽत्मोपचाराद्वा शरीरस्य वैदिकमेतज्ज्ञानंयतः शिक्षेत तंपूर्वमुपदेष्टारंपुरुषमभिवादयेत्। प्रथमसंगमे यदाशीःप्रयोगार्थवक्ष्यमाणस्वरूपेण प्रयोगेण शब्देन संमुखीकरणंसोऽभिवादयतेरर्थः। पूर्वमिति प्रथमंतेनासौ संबोध्योन पुनस्तदीयंवचनमपेक्षितव्यंतदाहि प्रत्यभिवादयिताऽभिवादयेदित्यनेनैव सिद्धत्वात्। पूर्वशब्दोऽनर्थकइति चेत्तन्न सति ह्यस्मिन्नयमर्थोलभ्यते धातूपसर्गार्थपर्यालोचनया ह्याभिमुख्येन वदनमात्रंप्रतीयते। अन्येनापि संबोधितस्य भवत्येव। ये तु पूर्वंत्वयोगिगुरुभ्यइति व्याचक्षते तदप्रकृतसंशब्दितमित्युपेक्ष्यम् ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः**। लौकिकमौषधनीत्यादिविषयम्। वैदिकंयज्ञादिकर्मकाण्डविषयम्। आध्यात्मिकमात्मविषयम्। तंपूर्वमभिवादयेदाचार्यादिष्वसत्सु। अत्रापि ज्ञानप्रकर्षाधिक्यापेक्षया प्राथम्यमूह्यम् यथा आद्यापेक्षया द्वितीयस्य तदपेक्षया तृतीयस्य अभिवादनादिरूपमं ॥ ११७ ॥

( ३ ) **कुल्लूकः**। लौकिकमिति । लौकिकमर्थशास्त्रादिज्ञानंवैदिकंवेदार्थज्ञानमाध्यात्मिकंब्रह्मज्ञानंयस्मात्तु गृण्हाति तंबहुमान्यमध्ये स्थितंप्रथममभिवादयेत्। लौकिकादिज्ञानदातॄणामेव त्रयाणांसमवाये यथोत्तरंमान्यत्वम् ॥ ११७ ॥

( ४ ) **राघवानन्दः**। नमस्कारस्य विद्याग्रहणे पूर्वाङ्गत्वंप्रासंपूर्वेनोक्तंतत्र बहुवक्तव्यत्वादिदानींतदाहलौकिकमिति समदशभिः । लौकिकंकृषिचित्रादिविषयं स्मार्तंवा वैदिकंअग्निहोत्रादिप्रतिपादकंआध्यात्मिकमात्मानात्मविवेकविषयकज्ञानंतद्धेतुशास्त्रादि ॥ ११७ ॥

( ५ ) **नन्दनः**। नियमान्तरमाहलौकिकमिति। लौकिकंअर्थशास्त्रादिविषयम्। वैदिकंकर्मविषयम्। आध्यात्मिकमात्मविषयम्। आध्यात्मिकविषयस्यज्ञानस्यवैदिकत्वेपिपृथगुपादानंगतस्यश्रद्धेयतरत्वप्रतिपत्त्यर्थम्। तस्यापिप्रयोजनंज्ञानप्रदान सन्निपातेह्याध्यात्मिकज्ञानप्रदस्यपूर्वाभिवादनीयत्वज्ञापनंपूर्वज्ञानग्रहणं । त्रयोनिगुरुभ्यःआशीर्वचनार्थोनमस्कारोभिवादनंविद्याहीनोपिवृत्तवानभिवाद्यः ॥ ११७ ॥

( ६ ) **रामचन्द्रः**। यतः सकाशात्लौकिकादिज्ञानं आददीत स्वीकुर्यात् तंज्ञानोपदेष्टारं पूर्वं अभिवादयेत् ॥११७॥

**सावित्रीमात्रसारोपि वरंविप्रःसुयन्त्रितः॥ नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥ ११८ ॥**

( १ ) **मेधातिथिः**। अभिवादनाद्याचारविधेः स्तुतिरियम्। सावित्रीमात्रंसारंप्रधानंयस्य सएवमुच्यते। सावित्रीमात्राध्ययनोवरंश्रेष्ठोविप्रोयदि सुयन्त्रितोभवति शास्त्रनिगृहीतात्माऽयन्त्रितस्त्रिवेदोपि बहुशास्त्रविदपि सर्वमश्नाति लोकाचारगर्हितंसाक्षादप्रतिषिद्धमपि। एवंसर्वविक्रयी। प्रदर्शनार्थावशनविक्रयवन्यस्यापि प्रतिषिद्धस्य । एतदुक्तंभवति। यथान्यनियमत्यागोनिन्द्यते एवंप्रत्युत्थानादित्यागादपि। अथ कथंवरंविप्रइति यावता वरोविप्रइति भवितव्यम् । केचिदाहुः सामान्योपक्रमस्य विशेषस्याभिधानात्। वरमेतत् किंतद्यत्सुयन्त्रितोविप्रइति । अन्ये त्वाहुराविष्टलिङ्गोवरशब्दोनपुंसकलिङ्गोप्यस्ति ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः**। अनेन वृत्तहीन बहुतरविद्यापेक्षयापि वृत्तवदल्पविद्यास्वीकार्येतिप्रसंगादाह। वेदस्यैकांशाखामधीत्य सावित्रीमात्रंसारत्वेनोपादायतज्जपादि मात्रपरोपि सुयन्त्रितोवृत्तस्थः श्रेयान् न त्रिवेदोपि वेदत्रयाध्ययनजपादिमानपि। अयन्त्रितः सर्वाशी सर्वविक्रयीति ॥ ११८ ॥

( ३ ) **कुल्लूकः** । सावित्रीति । सावित्रीमात्रवेत्ताऽपि वरंसुयन्त्रितः शास्त्रनियमितोविप्रादिर्मान्यः नायन्त्रितोवेदत्रयवेत्ताऽपि निषिद्धभोजनादिशीलः प्रतिषिद्धविक्रेता च । एतच्च प्रदर्शनमात्रं सुयन्त्रितशब्देन विधिनिषेधनिष्ठत्वस्य विवक्षितत्वात् ॥ ११८ ॥

( ४ ) **राघवानन्दः** । ननुतथाविधःअवेदविच्चेत्कथंनमस्यस्तत्राह सावित्रीति । सुयन्त्रितःअसत्प्रतिग्रहनिषिद्धरसादिविक्रयपराङ्मुखःअयन्त्रितोभिन्नमर्यादःसर्वाशीसर्वंअत्तुंशीलःसर्वविक्रेतुंशीलःसर्वविक्रयी त्रिवेदोवेदत्रयवेत्तापिनाभिवाद्यः प्रकरणात् ॥ ११८ ॥

( ५ ) **नन्दनः** । नतुविद्यावानपिवृत्तहीनइत्यभिप्रायेणाह सावित्रीति । सुयन्त्रितःअनुल्लङ्घितशास्त्रमार्गः । विप्रः द्विजः ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । सुयन्त्रितःवशीकृतचित्तः विप्रःसावित्रीमात्रसारोपिवरंउत्कृष्टोभवति । न यन्त्रितःअयन्त्रितः न वशीकृतचित्तःसन्त्रिवेदोपि त्रिवेदाध्यायी तु सर्वाशी सर्वविक्रयीवरंन उत्कृष्टोभवति ॥ ११८ ॥

**शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ॥ शय्यासनस्थश्चैवैनंप्रत्युत्थायाभिवादयेत् ॥ ११९ ॥**

( १ ) **मेधातिथिः** । शय्याचासनंचेति जातिरप्राणिनामिति द्वंद्वैकवद्भावस्तस्मिन्श्रेयसा विद्याद्यधिकेन गुर्वादिना च न समाविशेन्नसहासीत । किंसर्वस्मिन्नेव नेत्याह । अध्याचरितेकल्पिते शय्यात्वेनासनत्वेनच । यत्तुशिलाफलकादिस्तत्र न दोषः । वक्ष्यति च आसीद्गुरुणासार्धमिति तस्यैवायमनुवादः । अन्येव्याचक्षत अध्याचरिते अधिष्ठितइति । न समाविशेत्तत्रोत्तरकालमपि न केवलंसहासनप्रतिषेधः सहि वक्ष्यमाणेनैव सिद्धः । विधौ च संभवति नानुवादोयुक्तः । ततत्र केचिदाचारतोभेदंव्याचक्षते । यद्गुरोरसाधारण्येन शय्यात्वेनासनत्वेन च विज्ञातंतत्र गुरुः शेते । आस्ते च तत्र शिष्यः प्रत्यक्षंपरोक्षंच नोपविशेद्यत्र तु कथंचिदेते क्रिये गुरुणा कृते तत्र गुरोरप्रत्यक्षंप्रतिषेधः । ईदृशमेवाध्याचरितमुच्यते । न स्वस्वामिसंबन्धेन यदधिष्ठानं शय्यासनस्थस्यच यदिश्रेयानागच्छति तदा ततउत्थायाभिवादनंकर्तव्यम् । यत्तु यानासनस्थइति तद्गुरुविषयमवरोहणम् । शय्यासनत्यागएव भूमिष्ठेन कर्तव्य इति तस्यार्थः इदंत्वगुरोःश्रेयसःप्रत्युत्थानमासनस्थस्यैव संभवति ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । शय्यासनंयद्गुर्वादिनाध्याचरितंउपभुक्तं तत्र न समाविशेत् नोपवेशनादिकुर्यादित्यर्थः । एतंश्रेयांसंप्रत्युत्थाय तत्संमुखं उत्थाय ॥ ११९ ॥

( ३ ) **कुल्लूकः** । शय्येति । शय्याचासनंच शय्यासनम् । जातिरप्राणिनामिति द्वन्द्वैकवद्भावः । तस्मिञ्छ्रेयसा विद्याद्यधिकेन गुरुणा चाध्याचरिते साधारण्येन स्वीकृते च तत्कालमपि नासीत । स्वयंच शय्यासनस्थोगुरावागतउत्थायाभिवादनंकुर्यात् ॥ ११९ ॥

( ४ ) **राघवानन्दः** । किंच शय्येति । श्रेयसा गुरुणाअध्याचरिते स्वीकृते वक्ष्यमाणकाद्यादिचतुष्टयातिरिक्तेन समाविशेन्नाधितिष्ठेत्एनंगुरुंप्रत्युत्थायशय्यादेरित्यर्थः ॥ ११९ ॥

( ५ ) **नन्दनः** । श्रेयसा गुर्वादिनाआचरितेपरिगृहीतेपरिगृहीतयोःशय्यासनयोरधिउपरिनसमाचरेत् नोपविशेत् नसंविशेच्च ॥ ११९ ॥

---

( ११९ ) ऽध्याचरिते=ऽध्याचरितो ( ग, घ, च, ) ( परंतु क, ख ) चिन्हितेषु ते इति दृश्यते ॥

( ६ ) **रामचन्द्रः** । अध्याचरितेअधिष्ठिते शय्यायांआसने च श्रेयसा पुरुषेण सह न समाविशेत् नउपविशेत् स्वयंशय्यासनस्थश्चेत् प्रत्युत्थायआसनात् उत्थायएनंज्ञानदंअभिवादयेत् ॥ ११९ ॥

**ऊर्ध्वंप्राणाह्युत्क्रामन्ति यूनःस्थविरआयति ॥ प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते ॥ १२० ॥**

( १ ) **मेधातिथिः** । पूर्वस्यार्थवादः । स्थविरे वृद्धवयस्ययत्यागच्छति यूनस्तरुणस्योर्ध्वंप्राणाः जीवितहेतवोऽन्तर्मरुत ऊर्ध्वमास्याद्बहिर्निष्क्रामन्ति अपानवृत्तिंपरित्यज्य जीवविच्छेदंचिकीर्षन्ति । प्रत्युत्थाय यदभिवादनंक्रियतेतेन यथा पूर्वंजीवितस्थेम्ने कल्पते प्रतिपद्यते प्रत्युज्जीवति ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । अप्रत्युत्थानमनायुष्यमित्यर्थः । आयत्यागच्छत्यप्रत्युत्थिते । पुनःशब्दस्तुशब्दार्थे न त्वभ्यावृत्त्यर्थे । प्रतिपद्यते प्राप्नोति । सप्राणएव भवत्यनुत्क्रमणात् ॥१२० ॥

( ३ ) **कुल्लूकः** । अस्यार्थवादमाह ऊर्ध्वमिति । यस्माद्यूनोऽल्पवयसोवयोविद्यादिना स्थविरआयत्यागच्छति सति प्राणाऊर्ध्वमुत्क्रामन्ति देहाद्बहिर्निर्गन्तुमिच्छन्ति तान्वृद्धस्य प्रत्युत्थानाभिवादाभ्यांपुनःसुस्थान्करोति । तस्माद्वृद्धस्य प्रत्युत्थायाभिवादनंकुर्यात् ॥ १२० ॥

( ४ ) **राघवानन्दः** । यतोहिस्थविरे गुणाधिकेआयति सतिऊर्ध्वंनिष्क्रामन्तिदेहाद्बहिर्गताइवभवन्तिप्रत्युत्थानंसमंप्रतिगुरुंप्रत्यभिवादनंताभ्यांताननुत्क्रान्तानपि प्राणान्प्रतिपद्यते । पुनरित्यन्वयः ॥ १२० ॥

( ५ ) **नन्दनः** । अभिवादनविधेरर्थवादंश्लोकद्वयेनाह ऊर्ध्वमिति । यूनःबालस्यस्थविरेस्वस्माद्वयसागुणेनवाधिकेआयतिआगच्छति ॥ १२० ॥

( ६ ) **रामचन्द्रः** । पुनःप्राणाःस्थविरे आयतिसतिआगच्छतिसतिऊर्ध्वंहृदयात्तुऊर्ध्वंउत्क्रामन्तिऊर्ध्वंगच्छन्तियःप्रत्युत्थानाभिवादाभ्यांउत्थानंच अभिवादनंच कृत्वा तान् हृदयस्थान् च पुनःप्रतिपद्यते स्वस्थानस्थिताःप्राणाभवन्तीत्यर्थः ॥ १२० ॥

**अभिवादनशीलस्य नित्यंवृद्धोपसेविनः ॥ चत्वारि तस्य वर्धन्ते आयुर्विद्या यशोबलम् ॥ १२१ ॥**

( १ ) **मेधातिथिः** । सर्वानेव प्रति पूर्वाभिभाषिता यथार्हाभिवादनशीलता न पुनरभिवादनशब्दोच्चारणमेव शीलशब्देन प्रयोजनापेक्षाभावउच्यते । नित्यंवृद्धानुपसेवते प्रियवचनादिना यथाशक्त्या ह्युपकारेण चाराधयते तस्य चत्वारिसंप्रवर्धन्ते । आयुर्धर्मोऽमुत्र स्वर्गादिफलपादपः । यशोबले च प्रागुक्ते । अर्थवादोप्ययंफलावगमहेतुः ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः** । नित्यंवृद्धोपसेविनोवृद्धानांसमीपे स्थित्वा माननाद्यांतत्सेवांकुर्वतः ॥ १२१ ॥

( ३ ) **कुल्लूकः** । इतश्च फलमाह अभिवादनशीलस्येति । उत्थाय सर्वदावृद्धाभिवादनशीलस्यवृद्धसेविनश्चायुःप्रज्ञायशोबलानि चत्वारि सम्यक्प्रकर्षेण वर्धन्ते ॥ १२१ ॥

( ४ ) **राघवानन्दः** । न केवलमेवंअपितुअभीति । प्रज्ञाबुद्धिः । विद्येति क्वचित्पाठः ॥ १२१ ॥

( ५ ) **नन्दनः** । वृद्धोपसेविनःवृद्धानभिवादनेनसेवमानस्येत्यर्थः ॥ १२१ ॥

( ६ ) **रामचन्द्रः** । नित्यंवृद्धोपसेविनःतस्यचत्वारिवर्धन्ते । आयुःप्रज्ञायशोबलंकीदृशस्य तस्यअभिवादनशीलस्य ॥ १२१ ॥

---

( १२१ ) तस्य=सम्यक् ( ट, ठ, ल, म, र, ब )=नित्यं ( थ ). विद्या=प्रज्ञा ( राघवानन्द.

**अभिवादात्परंविप्रोज्यायांसमभिवादयन् ॥ असौ नामाहमस्मीति स्वंनाम परिकीर्तयेत् ॥१२२॥**

( १ ) **मेधातिथिः**। येन शब्देन परः संबोध्यते आशिषंप्रति प्रयोज्यते कुशलप्रश्नंवा कार्यते सोभिवादः। अस्मादभिवादादभिवादप्रतिपादकाच्छब्दात्परमव्यवहितमपूर्वंशब्दमुच्चारयेत्। असौ नामाहमस्मीत्यसाविति सर्वनाम सर्वविशेषप्रतिपादकमभिमुखीकरणार्थोयमीदृशः शब्दप्रयोगः मया त्वमभिवाद्यसआशीर्वादार्थमभिमुखीक्रियसे ततोऽध्येषणामवगम्य प्रत्यभिवादमाशीर्दानादिकर्तुमारभते। नच सामान्यवाचिना सर्वनाम्ना प्रयोज्यमानेनैतदुक्तंभवतीदंनामधेयेन मयाभिवाद्यसइत्यतोऽध्येषणामनवबुध्य कस्याशिषंप्रयुञ्जाम्। अपि च स्वनामपरिकीर्तयेदिति श्रुतम्। तत्रासौ देवदत्तनामाहमित्युक्तेनाभिवादनंप्रतिपद्येत। असावित्येतस्य पदस्यानर्थक्यादर्थानवसायः। स्मृत्यन्तरतन्त्रेणापि व्यवहरन्ति च सूत्रकाराः। यथा पाणिनिः कर्मणिद्वितीयादिशब्दैःइहाप्यसाविति स्वंनामातिदिशतेति यज्ञसूत्रेपि परिभाषितम्। यद्येवंस्वंनामेत्यनेनैव सिद्धेऽसौनामेत्यनर्थकम्। नाम शब्दप्रयोगार्थंकथंस्वंनामकीर्तयेदिदंनामाहमिति। अनेन स्वरूपेणाहमस्मीति समानार्थत्वाद्विकल्पंमन्यन्ते। अत्र श्लोकएतावदभिवादनवाक्यस्य रूपंसिद्धम् अभिवादये देवदत्तनामाहंभो। उत्तरेण श्लोकेनः भोरित्येतद्विधास्यते। ज्यायांसमिति वचनात्समहीनानामप्यभिवादनमस्ति नत्वयंप्रकारः ज्यायोविषयत्वादस्य ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** अभिवादनं आशीरभिवादनं करिष्यन्तंपादोपसंग्रहतदर्थवाक्योच्चारणाभ्यां प्रयोजनत्वाभिवादादभिवादनव्यापारप्रकाशकादभिवादयइति शब्दात्परंअनन्तरंस्वंनाम कीर्तयेदमुकशर्मनामाहस्मीति। असाविति सविभक्तिकनामनिर्देशादमुकशर्मेत्यपि सविभक्तिकंकार्यम्। ज्यायांसमिति वदन्ज्यायानेवाभिवाद्यइति कथयति। इह प्रत्यभिवादनश्लोके च विप्रपदंद्विजोपलक्षणम् ॥ १२२ ॥

( ३ ) **कुल्लूकः**। संप्रत्यभिवादनविधिमाह अभिवादात्परमिति। वृद्धमभिवादयन्विप्रादिरभिवादात्परमभिवादयइति शब्दोच्चारणानन्तरममुकनामाहमस्मीति स्वंनामपरिकीर्तयेत्। अतोनामशब्दस्यविशेषपरत्वात्स्वनामविशेषोच्चारणानन्तरमभिवादनवाक्ये नामशब्दोऽपि प्रयोज्यइति मेधातिथिगोविन्दराजयोरभिधानमप्रमाणम्। अतएव गौतमः स्वनामप्रोच्याहमभिवादयइत्यभिवदेत्। शाङ्ख्यायनोऽप्यसावहंभोइत्यात्मनोनामादिशेदित्युक्तवान्। यदि च नामशब्दश्रवणात्तस्य प्रयोगस्तदाऽकारश्चास्य नाम्नोन्तइत्यभिधानात्प्रत्यभिवादनवाक्येनामशब्दोच्चारणंस्यात्। न च तत्कस्य चित्संमतम् ॥ १२२ ॥

( ४ ) **राघवानन्दः**। अभिवादने पदनियममाह अभीति। येन शब्देन परःसंबोध्यनेआशिषंप्रतिप्रयोज्यते कुशलप्रश्नंवा कार्यते सोभिवादःएतदर्थकानअभिवादानअभिवादयेइत्यस्मात्परमसौ देवदत्तनामाहमस्मीति ज्यायांसंअभिवादयन्नमस्कुर्वन्ब्रूयात्। गौतमोप्याह स्वनामप्रयुक्तयाभिवादयेदिति ॥ १२२ ॥

( ५ ) **नन्दनः**। अभिवादनप्रकारमाह अभिवादादिति। ज्यायांसमभिवादयन्विप्रोद्विजः अभिवादात्परंअभिवादयइतिशब्दादुपरिअदःशब्देनतत्तन्नामवानुपादीयते अभिवादयेदेवदत्तोनामाहमस्मीतिब्रूयादित्यर्थः ॥ १२२ ॥

( ६ ) **रामचन्द्रः**। विप्रःज्यायांसंदृष्ट्वाअभिवादात्परंकेवलंअभिवादनात्परंऊर्ध्वंवा पूर्वंअभिवादयेत् असौ नामाहं अस्मिइति परिकीर्तयेत् ॥ १२२ ॥

**नामधेयस्य ये केचिदभिवादं न जानते ॥ तान्प्राज्ञोऽहमिति ब्रूयात् स्त्रियःसर्वास्तथैव च॥१२३॥**

( १ ) **मेधातिथिः**। वित्ताद्याधिक्येनाविदुषापि यथाविध्यभिवाद्यतायां प्राप्तायां तंनिवृत्त्यर्थमिदम्। ये केचिदविद्वांसोनामधेयस्य संस्कृतस्योच्चारितस्याभिवादमभिवादार्थमभिवादिता एतेन वयमित्यवैयाकरणान जानते संस्कृतनाव-

बुध्यन्ते तान्प्राज्ञोनारीश्चाभिवाद्याः। एतेन संस्कृतमुच्यमानंप्रतिपद्यते। तत्र विध्येकदेशंस्वनामग्रहणंहित्वाऽभिवादयेह-मित्येतावदेव ब्रूयात्तदपि चेन्नावबुध्यन्ते लौकिकेनापभ्रंशेनाप्यभिवाद्याइत्येवमर्थंप्राज्ञग्रहणम्। तदीयामबोधशक्तिंज्ञात्वो-हितव्योऽभिवादप्रयोगोनोपदेशएवादर्तव्यः। स्त्रियोप्येवमेव। सर्वग्रहणंगुरुपत्नीनांसंस्कृतप्रयोगज्ञानामपि। अन्येतु यउपना-मिकया प्रसिद्धोवनमालीवर्णइति। पितृकृतंयत्तस्यनामतन्न प्रसिद्धंयत्प्रसिद्धं न तन्नामेत्यतोऽसौस्वनामकीर्तयेत्। अन्ये-तु प्रत्यभिवादं न जानतइति वर्णयन्ति। प्रत्यभिवादे शूद्रइति नामान्तेप्लुतोविहितः। तंयेन विदुस्तेष्वहमित्येव वाच्यम्। व्याकरणप्रयोजनोपन्यासप्रसङ्गेन चैतन्महाभाष्यकारेण प्रदर्शितम्। अविद्वांसः प्रत्यभिवादे नाम्नोये न प्लुतिविदुः। कामंते-षु तु विप्रोष्य स्त्रीष्विवायमहंवदेत्। स्मृत्यन्तरसामर्थ्यादेवायमभिवादशब्दः प्रत्यभिवादे वर्ततइत्याहुः। यदिचैतदेवं व्याख्यायते तदा नाभिवाद्यः सविदुषेति सर्वेण सर्वमभिवादप्रतिषेधआश्रीयमाणे यमहंवदेदिति स्मृत्यन्तरविरोधः। अस्मिंस्त्वेवंव्याख्याते सप्रतिषेधः स्तुत्यालम्बनोन विधायकएतदर्थानुसारितया नीयते ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः**। नामधेयस्याभिवादनवाक्यार्थसंस्कृतानभिज्ञत्वादिवधर्मशास्त्राज्ञानेन च ये न जान ते प्र-त्यभिवादनत्वाद्यत्वंवक्ष्यति। तत्र नाभिवाद्यइति पादोपसंग्रहनिषेधपरम्। मात्रादिषुत्वहमिति ब्रूयादितिविधानादभिवा-दनवाक्यरूपशब्दमात्रस्यैव तत्सजातीयस्य निवृत्तिः पादोपसंग्रहणनिवृत्तिः ॥ १२३ ॥

( ३ ) **कुल्लूकः**। नामधेयस्येति। नामधेयस्योच्चारितस्य सतोयेकेचिदभिवाद्याः संस्कृतानभिज्ञतयाभिवादनम-भिवादार्थं न जानन्तितान्प्रत्यभिवादनेऽप्यसमर्थत्वात्प्राज्ञइत्यभिवाद्यशक्तिविज्ञोभिवादयिताऽभिवादयेहमित्येवंब्रूयात्। स्त्रियः सर्वास्तथैव ब्रूयात् ॥ १२३ ॥

( ४ ) **राघवानन्दः**। येनमस्यास्तेयदिनामधेयस्योक्ताभिवादस्यअभिवादंअभिवादार्थंनजानतेतान्नमस्येअह-मित्येवब्रूयान्नाधिकम् ॥ १२३ ॥

( ६ ) **रामचन्द्रः**। तथैव सर्वाःस्त्रियःअहंइति ब्रूयुः ॥ १२३ ॥

**भोःशब्दंकीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने॥नाम्नांस्वरूपभावोहि भोभावऋषिभिःस्मृतः॥१२४॥**

( १ ) **मेधातिथिः**। स्वस्य नाम्नोन्ते भोःशब्दंकीर्तयेत्। स्वग्रहणमभिवाद्यमानप्रतिषेधार्थम्। परिशिष्टोर्थवादः। न च नामाक्षराणामिवान्तेऽपितु ततः परेषामहमस्मीति। एषहि तत्रेति करणप्रयोगावधारणार्थमेवमेव प्रयोक्तव्यः। अपि च देवदत्तोभोअहमिति दुःशिष्टे प्रयोगे विलम्बितायां प्रतिपत्तौ सन्मुखीभावः चिरेण स्यात्तत्र कार्यविरोधः। व्यवहितसंब-न्धे कश्चिन्नैवावधानवान्स्यात्। स्वरूपभावः स्वरूपस्य सत्ताऽथवाभिवाद्यनाम्नांस्वरूपे भवति तत्स्थाने भवत्यतस्तन्नामनि-वृत्तिः। भावसाधनः कर्तृसाधनोवा भावशब्दः स्वरूपभावइति सप्तम्यन्तोवा पठितव्यः। भोभावो भोइत्येतस्य यद्भवनंय-त्स्वरूपंतन्नाम्नांस्वरूपम्। यथैव नामगृहीत्वा कस्यचित्संबोधनंक्रियते देवदत्तश्रूयतामित्येवं भोः शब्दोप्यामन्त्रितविभ-क्त्यन्तः संबोधनायैवंऋषिभिः स्मर्यते ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः**। अभिवादनवाक्यशेषमाह भोःशब्दमिति। स्वस्य नाम्नःस्वनामवद्वाक्यस्याभिवादये असौनामाहमस्मीत्यस्यान्ते भोःशब्दोनाम्नांस्त्रीयानां स्वरूपभावः स्वरूपस्य संबोध्यंप्रति प्राप्तिहेतुः भोः शब्देन हि बो-धितोसावस्य नामबुध्यतइत्यर्थः। भूधातुः प्राप्त्यर्थः। भो भावइति पाठे भोःशब्दस्य भावःसत्तेत्यर्थः ॥ १२४ ॥

( ३ ) **कुल्लूकः**। भोःशब्दमिति। अभिवादने यन्नाम प्रयुक्तंतस्यान्ते भोःशब्दंकीर्तयेदभिवाद्यसंबोधनार्थम्।

अतएवाह नाम्नामिति । भोइत्यस्य योभावः सत्ता सोऽभिवाद्यनाम्नांस्वरूपभावऋषिभिः स्मृतस्तस्मादेवमभिवादनवाक्यमभिवादये शुभशर्माहमस्मि भोः ॥ १२४ ॥

( ४ ) **राघवानन्दः** । अभिवादने कर्तव्ये यन्नाम प्रयुक्तंतस्यान्ते भोःशब्दंकीर्तयेदित्यन्वयः । भोःशब्दप्रयोगे हेतुः नाम्नामिति । अभिवाद्यस्य नाम्नांस्वरूपभावे भोभावो भोइत्यनुशिष्टस्तेन भोइत्यवश्यंप्रयुज्यते अभिमुखीकरणाय तथा-असौ नामाहमस्मि भोः । अतएव साङ्ख्यायनः असावहंभोः इत्यात्मनोनामादिब्रयादिति ॥ १२४ ॥

( ५ ) **नन्दनः** । ततःकिंब्रूयात् भोःशब्दमिति । अभिवादनेअभिवादयेत्यत्रशब्देनस्थितस्येत्यर्थः । देवदत्तोनामाहमस्मीतिप्रयुक्तस्यस्वनाम्नोन्तेभोःशब्दंकीर्तयेत् । अभिवाद्यस्यनाम्नासंबोधयितुंअयुक्तत्वात् भोःशब्देनसंबोधयेत् । पूज्यंहिभोः शब्दोनामधेयवत्संबोधयतीत्युक्तंनामस्वरूपभावोहिभोभावइति । भोभावः भोशब्दसत्तानाम्नःस्वरूपभावः नाम्नःस्वरूपसत्ता । समस्तनामधेयकार्यकारणशब्दोभोःशब्दइत्यर्थः । केचिदिमंश्लोकंनामधेयस्ययेकेचिदित्यस्यश्लोकस्यानन्तरंपठन्तितल्लेखकप्रमादकृतम् * ॥ १२४ ॥

( ६ ) **रामचन्द्रः** । अभिवादनंस्वस्य नाम्नःअन्ते भोःशब्दंकीर्तयेत् । भो भावःनाम्नांस्वरूपभावःऋषिभिःस्मृतःअमुकशर्माहमभिवादयेइत्यर्थः ॥ १२४ ॥

**आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ अकारश्चास्य नाम्नोऽन्ते वाच्यःपूर्वाक्षरःप्लुतः ॥ १२५॥**

( १ ) **मेधातिथिः** । अभिवादने कृते प्रत्यभिवादः पित्राऽभिवादयिता एवंवाच्य आयुष्मान्भवसौम्येति । इति शब्दः प्रकारे । आयुष्मानेधि दीर्घायुर्भूयाश्चिरञ्जीवेत्येवमादिशब्दपरिग्रहः शिष्टाचारप्रसिद्धोभवति । अकारश्चास्य प्रत्यभिवाद्यस्ययन्नाम तदन्तेयोऽकारः सप्लुतः कर्तव्यः । प्लुतइति त्रिमात्रस्य संज्ञा । अकारग्रहणमिकारादीनामपि प्रदर्शनार्थम् । अजपेक्षमेवचान्तत्वंद्रष्टव्यम् व्यञ्जनान्तस्यापि योन्यः स्वरस्तस्य भवति । पूर्वाक्षरएव प्लुत भाविनोऽकारस्य विशेषणमेतत् । अक्षरमत्रव्यञ्जनं तत्र पूर्वस्मिन्यस्मिन्श्लिष्टः सएवमुच्यते । एतदुक्तंभवति पूर्वएवनाङ्गन्तुरकारः प्लुतःकर्तव्यः किंतर्हि यएव नाम्नि विद्यते सएव प्लावयितव्यः । सर्वचैतदेवंव्याख्यानं भगवत पाणिनेः स्पृशति । सामर्थ्येन शब्दार्थप्रयोगे च मन्वादिभ्योऽधिकतरः प्रामाण्ये भगवान्पाणिनिः । सच्चप्रत्यभिवादे शूद्रे टेः प्लुतिंस्मरति टिशब्देनयोन्त्योचूतदादिशब्दरूपमुच्यते । विप्रग्रहणमविवक्षितंक्षत्रियादीनामप्येषएवविधिः स्मृत्यन्तरसमाचाराह्येवमेवस्थितो न चैषांविध्यन्तरमस्ति । अत्रोदाहरणमायुष्मान्देवदत्त व्यञ्जनान्तस्यायुष्मानेधि सोमशर्मन् ॥१२५ ॥

( २ ) **सर्वज्ञनारायणः** । अभिवादने कृते अभिवादयिता वाच्यइत्यर्थः । अकारइति आयुष्मानभव सौम्येति । वाक्यान्तेस्याभिवादकस्य नामवाच्यममुकशर्मन्निति । तस्य चान्ते अकारोवाच्यः तस्य च पूर्वाक्षरः पूर्वमक्षरम् । लिङ्गव्यत्ययश्छान्दसः । सप्लुतोवाच्यः । नकारस्य व्यवहितपूर्वत्वेभिव्यञ्जनस्य प्लुतत्वायोगात् । शर्मन्नित्यत्रान्त्योकारएव पूर्वपदेनोक्तइति । तस्यैव प्लुतताएवंक्षत्रियादेः शर्मस्थाने वर्मादिपदम् । पूर्वाक्षरप्लुतइति क्वचित्पाठः । तत्र पूर्वमक्षरंप्लुतमस्येति सुस्थमेव ॥ १२५ ॥

---

* भोः शब्दमितिश्लोकोऽभिवादात्परमित्यस्यानन्तरं नन्दनमते

( ३ ) **कुल्लूकः**। आयुष्मानिति अभिवादने कृते प्रत्यभिवादयित्राऽभिवादकोविप्रआयुष्मान्भव सौम्येति वाच्यः। अस्य चाभिवादकस्य यन्नाम तस्यान्ते योऽकारादिः स्वरोनाम्नामकारान्तत्वनियमाभावात्सप्लुतः कार्यः। स्वरापेक्षंचेदकारान्तत्वंव्यञ्जनान्तेऽपि नाम्नि संभवति। पूर्वंनामगतमक्षरंसंश्लिष्टंयस्य सपूर्वाक्षरस्तेननागन्तुरपकृष्य चाकारादिःस्वरः प्लुतः कार्यः। एतच्च वाक्यस्यटेः प्लुतउदात्तइत्यस्यानुवृत्तौ प्रत्यभिवादेऽशूद्रइति प्लुतंस्मरन्पाणिनिःस्फुटमुक्तवान्। व्याख्यातंच वृत्तिकृता वामनेन टेरिति किंव्यञ्जनान्तस्यैव टेःप्लुतो यथास्यादिति। तस्मादीदृशंप्रत्यभिवादनवाक्यमायुष्मान्भव सौम्य शुभशर्मन्। एवंक्षत्रियस्य बलवर्मन्एवंवैश्यस्य वसुभूते। प्लुतोराजन्याविशांवेति कात्यायनवचनात् क्षत्रियवैश्ययोःपक्षे प्लुतोन भवति। शूद्रस्य प्लुतोन कार्यःअशूद्रइतिपाणिनिवचनात्। स्त्रियामपि निषेधइति कात्यायनवचनात्स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः। गोविन्दराजस्तु ब्राह्मणस्य नाम्नि शर्मोपपदंनित्यंप्रागभिधाय प्रत्यभिवादनवाक्यआयुष्मन्भव सौम्य भद्रइति निरुपपदोदाहरणसोपपदोदाहरणानभिज्ञत्वमेव निजंज्ञापयति। धरणीधरोऽपि आयुष्मन्भव सौम्येति संबुद्धिविभक्त्यन्तंमनुवचनंपश्यन्नप्यसंबुद्धिप्रथमैकवचनान्तममुकशर्मेऽत्युदाहरन्विचक्षणैरुपेक्षणीयएव ॥ १२५ ॥

( ४ ) **राघवानन्दः**। विप्रकर्तृकेभिवादने सोभिवादयिता विप्रआयुष्मान्भव सौम्येति वाच्यः प्रत्यभिवादनीयोऽभिवाद्येनेति वाक्यार्थः। आयुष्मानिति चिरंजीवेत्यादेरुपलक्षणम्। अकारश्चेतिअकारादिस्वरःअस्याभिवादकस्य नाम्नोन्तेअमुकशर्मन्नित्यादेरन्ते वर्तमानोयःसप्लुतःप्रत्यभिवादकेन वाच्यः। वाक्यस्य टेःप्लुत उदात्तःइत्यनुवृत्ते प्रत्यभिवादेअशूद्रइति हि सूत्रम्।अस्यार्थः। वाक्ये वर्तमानष्टिरन्त्यस्वरःप्लुतःस्यात्त्रिमात्रःस्यादुदात्तश्च शूद्रंवर्जयित्वाइति। पूर्वाक्षरश्चनकारस्य पूर्वपूर्वमश्नुतइत्यक्षरः अक्षरंब्रह्मवर्णयोरित्यभिधानविरोधोऽन्यथाअकारादेर्देवभृत्योःपूर्वत्वाभावेपि राहोःशिरोवदुपचारातअन्तत्वंस्वरापेक्षमिति नव्यञ्जनान्तेपि स्यात्तथा च वसिष्ठः। आमन्त्रिते योन्त्यःस्वरःसप्लूयते सन्ध्यक्षरमप्रगृह्यं। अथभावंचापद्यतेपूर्वंनामगतमक्षरंसंश्लिष्टंयस्य सपूर्वाक्षरःतेनागन्तुरपकृष्यवाअकारादिस्वरःप्लुतोन कार्यइति मेधातिथिः। तथा चआयुष्मान्भव सौम्यअमुकशर्मन्निति प्रयोगः। अमुकवर्मन् अमुकभूपते भोराजन्यविशांवेति स्मरणात्क्षत्रियवैश्ययोस्तु वैकल्पिकः। तस्मादत्र विप्रइत्युपलक्षणम्। गोविन्दराजस्तु एवंप्रयुङ्क्ते। अमुकशर्मन्नायुष्मान्भवइति। धरणीधरस्त्वायुष्मान्भव सौम्यामुकशर्मेति। तत्सर्वमनूक्तायुष्मान् भव सौम्येति वाच्योविप्रइत्यानुपूर्व्याविरुद्धम्॥१२५॥

( ५ ) **नन्दनः**। आयुष्मानितिअभिवादनेकृतेसति विप्रोद्विजः वाच्यः ज्यायसा कनीयान्। अस्यकनीयसोनाम्नोन्तेपूर्वाक्षरः प्लुतः अत्राक्षरशब्देनस्वरोविवक्षितः व्यञ्जनस्यप्लुतासंभवात्। यस्मादकारात्पूर्वमक्षरंप्लुतंभवति सपूर्वाक्षरः प्लुतः अकारश्चवाच्यः आयुष्मान्भव सौम्यदेवदत्ताद्यइतिवाच्यः इतियावत्॥ १२५॥

( ६ ) **रामचन्द्रः**। अस्य नाम्नःअन्तेअकारःपूर्वाक्षरःप्लुतःवाच्यः। तद्यथा अमुकशर्माहं अमुकनामाहमित्यर्थः १२५

**योनवेत्त्यभिवादस्य विप्रःप्रत्यभिवादनम्॥ नाभिवाद्यःसविदुषा यथा शूद्रस्तथैव सः॥ १२६॥**

( १ ) **मेधातिथिः**। योन वेत्ति प्रत्यभिवादनमित्येव वाच्यमभिवादस्येत्यतिरिच्यते न संगच्छते नैवमभिवादस्यानुरूपंप्रत्यभिवादनमित्येवंयोजना क्रियते। येन सनामोच्चार्याभिवादनंकृतंतस्य नामान्ते प्लुतिः कर्तव्यायस्त्वहंभोइत्येवमभिवदेन्न तस्य नाम्नोच्चारणंनापि प्लुतिरिति नाभिवाद्यइत्यभिवादनशब्दोच्चारणप्रतिषेधः। यथा विहितमभिवादनंकर्तव्यम् न पुनरहंभोइत्यादि तस्यप्राग्दर्शितत्वात्। यथा शूद्रइति च दृष्टान्तेनैतदेवज्ञायते शूद्रस्यापि वृद्धवयसोभिवाद्यत्वंपूर्वाभिभाष्यत्वमिष्यते। विदुषेति पादपूरणार्थम्॥ १२६॥

( २ ) **सर्वज्ञनारायणः** । अभिवादनस्य कृतस्य यत्प्रत्यभिवादनंअभिवादनप्रतियोगिवाक्यम् ॥ १२६ ॥

( ३ ) **कुल्लूकः** । योनवेत्तीति । योविप्रोऽभिवादनस्यानुरूपंप्रत्यभिवादनंन जानात्यसावभिवादनविदुषाऽपि स्वनामोच्चारणाद्युक्तविधिना शूद्रइव नाभिवाद्यः । अभिवादयेहमिति शब्दोच्चारणमात्रंतु चरणग्रहणादिशून्यमनिषिद्धंप्रागुक्तत्वात् ॥ १२६ ॥

( ४ ) **राघवानन्दः** । प्रत्यभिवादनाज्ञाने कथमित्यत्राह । यइति । नाभिवाद्यइति यथाशास्त्रंन नमस्यःतत्र हेतुः यथाशूद्रइति । गायत्रीमात्रसारइत्यनेन तादृशांतदज्ञानामपि नमस्यतोक्तेःनिन्दार्थवादमात्रंवा ॥ १२६ ॥

( ५ ) **नन्दनः** । योनवेत्तीति विप्रः द्विजः अभिवादस्यअभिवादवाक्यस्य प्रत्यभिवादनवाक्यं यथाशूद्रइति । निन्दापरमेतत्नतत्त्वकथनं निषेधशेषत्वावगमात्बहुप्रमाणान्तरविरोधाच्चेति । प्रत्यभिवादनमजानन्सुकिंकर्तव्यमित्यपेक्षायामाह नामधेयस्येति । नामधेयस्यअभिवादनवाक्यस्य अभिवादनं प्रत्यभिवादनवाक्यंअहमितिब्रूयात् नत्वनामेति ॥ १२६ ॥

**ब्राह्मणंकुशलंपृच्छेत्क्षत्रबन्धुमनामयम् ॥ वैश्यंक्षेमंसमागम्य शूद्रमारोग्यमेव च ॥ १२७ ॥**

( १ ) **मेधातिथिः** । कृताभिवादनप्रत्यभिवादनयोः सौहार्दे प्राप्ते जिज्ञासाप्रश्ने जातिभेदाश्रयः शब्दनियमोऽयमिष्यते। प्रष्टव्यानांजातिनियमोऽयंन प्रष्टॄणाम् । नात्यन्तभिन्नार्थत्वाच्च एतेषांस्वरूपनियमोऽयंविधीयते । आरोग्यानामयशब्दौ समानार्थावेवंक्षेमकुशलशब्दावपि नात्यन्तभिन्नौ । कुशलशब्दोयद्यपि प्रावीण्यवचनस्तथापीहसंयोगिनामर्थानांशरीराणांचानपाये वर्तते । एतेऽवश्यंप्रयोक्तव्या अन्येषामपि यथाप्रतिभंविशेषे जिज्ञासयाऽप्रतिषेधः । तथा महाभारते कस्मिंश्चिदध्याये दर्शितम् । केचिदिहसमागम्येति लिङ्गान्न गुर्वादिविषयोयंप्रश्नः किंतर्हि सवयसामेव । अभिगमनंहि गुरौ विहितंन यदृच्छया समागमः । अभिगमनेऽपि समागमोस्तीति यत्किंचिदेतत् ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः** । अथयोनाभिवाद्यस्त्रिवर्षपूर्वत्वादिगुणरहितः । तत्र दृष्टे यत्कार्यं तदाह ब्राह्मणमिति । ब्राह्मणादीनांस्वस्वजातीये दृष्टे स्वस्व जात्युक्तं तथा स्वस्वावरजातीये तत्तज्जात्युक्तं न चेतदवरजातेरुत्तमंप्रति कुशलंपृच्छेत् । कुशलंकिं भवतोमुकस्येति पृच्छेदित्यर्थः । एवंसर्वत्र केचित्प्रत्यभिवादनाभिधानानन्तरमभिवादनेनैतत्प्रष्टव्यमित्याहुः १२७

( ३ ) **कुल्लूकः** । ब्राह्मणमिति । समागम्य समागमे कृतेऽभिवादकमवरवयस्कंसमानवयस्कमनभिवादकमपि ब्राह्मणंकुशलंक्षत्रियमनामयंवैश्यंक्षेमंशूद्रमारोग्यंपृच्छेत् । अतएवापस्तम्बः कुशलमवरवयसंसमानवयसंवाविप्रंपृच्छेदनामयंक्षत्रियंक्षेमंवैश्यमारोग्यंशूद्रम् । अवरवयसमभिवादकंवयस्यमनभिवादकमपीति मन्वर्थमेवापस्तम्बःस्फुटयतिस्म । गोविन्दराजस्तु प्रकरणात्प्रत्यभिवादकस्यैव कुशलादिप्रश्नमाह तन्नाभिवादकेन सह समागमस्यानुप्राप्तत्वात् समागम्येतिनिष्प्रयोजनानुवादप्रसङ्गात् । अतः कुशलक्षेमशब्दयोरनामयारोग्यपदयोश्च समानार्थत्वाच्छब्दविशेषोच्चारणमेव विवक्षितम् ॥ १२७ ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रासङ्गिकंप्रश्नप्रकारमाह ब्राह्मणमिति । ब्राह्मणादिदर्शनादौ किंचिद्वक्तव्यमिति प्राप्तंतत्रनियमाददृष्टार्थशब्दविशेषोच्चारणमर्थपौनरुक्त्येपि ॥ १२७ ॥

( ५ ) **नन्दनः** । अथसमानैरवरैश्वसमागमेवक्तव्यमित्याह ब्राह्मणमिति । समागम्येति ब्राह्मणादिभिः प्रत्येकंसंबध्यते । कुशलंस्वाध्यायादौक्षेमंक्षत्रबन्धुंक्षत्रियमितियावत् । अनामयंशरीरकुटुम्बराष्ट्रेषुसुखं क्षेमंकृष्यादिष्वनाशंआरोग्यंशुश्रूषायांशरीरपाटवम् ॥ १२७ ॥

**अवाच्योदीक्षितोनाम्ना यवीयानपि योभवेत्॥भो भवत्पूर्वकंत्वेन मभिभाषेत धर्मवित्॥ १२८॥**

( १ ) **मेधातिथिः** । प्रत्यभिवादनकालअन्यत्र च दीक्षितोज्योतिष्टोमादिषु दीक्षणीयातः प्रभृत्याऽऽवभृथान्नाम्ना न वाच्यस्तस्य यन्नामधेयंतन्नोच्चारयितव्यम् । यवीयान्कनीयानचिरकालजातः। अपिशब्दात्ज्येष्ठस्यादीक्षितस्यापि नामग्रहणनिषेधोऽनुमीयते। तथाच गौतमः नाम गोत्रे गुरोः समानतोनिर्दिशेत् । मानःपूजातत्पूर्वकनाम ग्रहीतव्यंतत्रेश्वरोजनार्दनमिश्रइति । कथंतर्हि दीक्षितेनकार्यार्थेसंभाषः कर्तव्यः भो भवत्पूर्वकंभोः शब्दंपूर्वंप्रयुज्यैनंदीक्षितमभिभाषेत दीक्षितयजमानादिशब्दैर्यौगिकैः । नतु भोः शब्दपूर्वकंनामग्रहणमभ्यनुज्ञायते । भोभवच्छब्दःपूर्वोयस्याभिभाषणस्य तदेवमुक्ते द्वयोश्चैतयोः शब्दयोरेकत्र वाक्ये प्रयोगाभावाद्यवस्थांव्याचक्षते । यदा तेन सह संभाषणंभवति तदाऽऽमन्त्रितविभक्तयन्तेन भोः शब्देन संबोध्यः । यदा तु तदीयगुणाख्यानंपरोक्षंकरोति तत्रभवता दीक्षितेनैवंकृतं तत्रभवानेवंकरोतीत्येवंप्रयोक्तव्यम् । भवदिति च प्रातिपदिकमात्रमुपात्तंयथा विभक्तयासंबन्धमुपैतितदन्तंप्रयोक्तव्यम् ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । कुशलप्रश्नादावपि यावद्दीक्षासमाप्तिस्तावन्नाम दीक्षितस्य न ग्राह्यम् । दीक्षितेत्येव संबोधनम् । तस्य तत्रापि भोःशब्दभवच्छब्दान्यतरपूर्वकमभिभाषेत संबोधयेत् ॥ १२८ ॥

( ३ ) **कुल्लूकः** । अवाच्यइति । प्रत्यभिवादनकालेऽन्यदा च दीक्षणीयातःप्रभृत्यावभृथस्नानात्कनिष्ठोऽपि दीक्षितोनाम्ना न वाच्यः । किंतु भोभवच्छब्दपूर्वकंदीक्षितादिशब्दैरुत्कर्षाभिधायिभिरेव धार्मिकोऽभिभाषेत । भोदीक्षितइदंकुरु-भवता यजमानेनइदंक्रियतामिति ॥ १२८ ॥

( ४ ) **राघवानन्दः** । दीक्षितादिषु विशेषमाह । दीक्षितःसोमयागादिषुअभिवादनादिके कार्ये निजनाम्नाऽवाच्यः किन्तुभोःदीक्षित किंकरोति भवान्कुत्र गच्छतीत्यादि ॥ १२८ ॥

( ५ ) **नन्दनः** । दीक्षितः सोमयाजी । भोःशब्दोभवच्छब्दश्चयस्याभिभाषणस्यपूर्वौ तत्भोभवत्पूर्वकम् । सन्निधौभोःशब्दः यथाभोयजमानेति । असन्निधौभवच्छब्दः यथातत्रभवान्यजमानइति ॥ १२८ ॥

( ६ ) **रामचन्द्रः** । यःयवीयानपि दीक्षितःनाम्नाअवाच्योभवेत् भोअमुकशर्मन्इति भवत्पूर्वकंएतंदीक्षितं धर्मवित् अभिभाषेत ॥ १२८ ॥

**परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः॥ तांब्रूयाद्भवती त्येवंसुभगे भगिनीति च ॥ १२९ ॥**

( १ ) **मेधातिथिः** । अर्थप्रयुक्तंसंभाषणंस्त्रियासह यदा भवति तदैवंकर्तव्यम् । यातावत्परस्य पत्नीसाभवति सुभगे अथवा भवति भगिनि। भवच्छब्दोयंस्त्रीप्रत्ययान्तः संबुद्धौ कृतन्ह्रस्वः । भवतीत्यत्रेतिकरणंपदार्थविपर्यासकृत्स्वरूपपरंबोधयति सुभगे भगिनीत्यत्र प्रकारे । ब्रूयादित्यधिकाराच्छब्दस्वरूपग्रहणंसिद्धम् । आकार्यतायांचमातर्यशस्विनि कनीयमीचद्दुहितरायुष्मतीत्येवमादिभिः शब्दैः संभाष्या । पत्नीग्रहणात्कन्यायानैषविधिः । असंबद्धाचयोनितः मातृपक्षपितृपक्षाभ्यां । यां ज्ञातित्वंनागता मातुलदुहित्रादिस्तासामन्यंविधिंवक्ष्यति ज्ञातिसंबन्धियोषितइति । ननु च नैवैतत्सिद्धमस्योत्सर्गस्यान्यत्र चरितार्थत्वात्किमसंबद्धाचेत्यनेन । नात्र पौनरुक्त्योद्भावने यतितव्यंपद्यग्रन्थोऽयम् ॥१२९ ॥

( २ ) **सर्वज्ञनारायणः** । असंबद्धयोनितः स्वोत्पत्तिस्थानेन मात्रापित्रा च समंब्रूयात् । अभिवाद्य तु भगिनी

---

( १२९ ) भगिनीतिच ( ग, ढ, ञ )

——वा ( क, ख, घ, च, ज, झ, )

त्यादिभिर्नामभिः। स्वपत्नीव्यवच्छेदस्य गार्हस्थ्यएव संभवादत्र प्रकरणे तदव्यवच्छेदंकुर्वन् गुर्वभिवन्दनादिविधयः स्नातकादिषु संभविनस्तै रनुष्ठेयाइति ज्ञापयति ॥ १२९ ॥

( ३ ) **कुल्लूकः**। परपत्नीत्विति। या स्त्री परपत्नीभवति असंबन्धा च योनितइति स्वस्रादिर्नभवतिता मनुपयुक्तसंभाषणकाले भवति सुभगे भगिनीति वा वदेत्। परपत्नीग्रहणात्कन्यायांनैषविधिः। स्वसुःकन्यादिस्त्वायुष्मत्यादिपदैरभिभाषणम् ॥ १२९ ॥

( ४ ) **राघवानन्दः**। अर्थप्रयुक्तपरस्त्रिया सह संभाषणमाह परेति। योनितोअसंबद्धाउभयलक्षणसंबन्धहीनाः सुभगेइत्यादि ब्रूयादित्यन्वयः। स्त्रीति वक्तव्ये परपत्नीया स्त्रीति स्वस्त्रीव्यतिरेकनिश्चयार्थम् ॥ १२९ ॥

( ५ ) **नन्दनः**। योनितोसम्बन्धामाता पितृसबन्धरहिता। व्यवस्थितविषयोयंविकल्पः। तांज्यायसींभवतीतिसमानां सुभगेइतियवीयसींभगिनीतिब्रूयात् ॥ १२९ ॥

( ६ ) **रामचन्द्रः**। या स्त्री परपत्नी स्यात्। तु पुनः। योनितःअसम्बन्धातांयस्याः संबन्धोनास्ति तांस्त्रियंभवति सुभगेइत्येवंवा भगिनीइति वा ब्रूयात् ॥ १२९ ॥

## मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजोगुरुन् ॥ असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥१३०॥

( १ ) **मेधातिथिः**। गुरूनिति वचननिर्देशान्नयएवात्र गुरुरुक्तः सएव गृह्यते किंतर्हि गौतमीयइव सामान्यशब्दोवित्तादिज्येष्ठवचनः। तान्यवीयसोभागिनेयादेःस्ववयोपेक्षया हीनवयसः। असावहमिति स्वंनामनिर्दिश्यते। तत्परश्चाहंशब्दोऽभ्य नुज्ञायते। एतच्च प्रत्युत्थायागतानांकर्तव्यम्। अभिवादने भोःशब्दप्रयोगो निषिध्यते। उक्तंच गौतमीये प्रत्युथानमभिवाद्यइति ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः**। गुरूनुपाध्यायान्। असावहमित्यत्रासौपदस्थाने स्वनाम प्रत्युत्थाय कीर्तयेत्। यवीयसस्तत्तद्वयःसमुचिताभिवादनेन ॥ १३० ॥

( ३ ) **कुल्लूकः**। मातुलांश्चेति। मातुलादीनागतान्कनिष्ठानासनादुत्थायासावहमितिवदेन्नाभिवादयेत्। असाविति स्वनामनिर्देशः। भूयिष्ठाःखलु गुरवइत्युपक्रम्य ज्ञानवृद्धतपोवृद्धयोरपि हारीतेन गुरुत्वकीर्तनात्तयोश्च कनिष्ठयोरपि संभवात्तद्विषयोऽयंगुरुशब्दः ॥ १३० ॥

( ४ ) **राघवानन्दः**। गुरूनिति ज्ञानवृद्धतपोवृद्धयोरुपलक्षणंयविष्ठाःखलु गुरवइत्यादिहारीतवचनात्। असावहमिति स्वनामनिर्देशःयवीयसोपि कनिष्ठान्मातुलादीनित्यर्थः ॥ १३० ॥

( ५ ) **नन्दनः**। श्वशुरानृत्विजइत्यनेनास्यप्रकरणस्यसर्वाश्रमसाधारणत्वंसूचितम्। गुरुन्आचार्यादीन्। असावहमितिब्रूयातदेवदत्तोहमितिब्रूयात् नाभिवादयेत् ॥ १३० ॥

( ६ ) **रामचन्द्रः**। यवीयसः कनिष्ठःमातुलादीन्प्रत्युत्थायअसौअहंनमस्करोमिइति ब्रूयात् ॥ १३० ॥

## मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ॥ संपूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ॥ १३१ ॥

( १ ) **मेधातिथिः**। एताश्च गुरुपत्नीवत्संपूज्याः प्रत्युत्थानाभिवादनासनदानादिभिः। गुरुपत्नीवदित्यनेनैव सिद्धेसमास्ताइति वचनमन्यदप्याज्ञादिगुरुपत्नीकार्यंकदाचिदनुजानाति। इतरथा प्रकरणात्संपूज्याइत्यभिवादनविषयमेव स्यात्। पलितवयसश्चस्त्रियः स्मर्यन्ते। कनीयसीनामप्येषएवाभिवादनविधिः ॥ १३१ ॥

( २ ) **सर्वज्ञनारायणः**। समास्ताइति । तदाक्रोशादिना गुरुभार्याक्रोशादिदोषार्थम् ॥ १३१ ॥

( ३ ) **कुल्लूकः** । मातृष्वसेति । मातृष्वस्रादयोगुरुपत्नीवत्प्रत्युत्थानाभिवादनासनदानादिभिःसंपूज्याः। अभिवादनप्रकरणादभिवादनमेव संपूजनंविज्ञायतइति । समास्ताइत्यवोचत् गुरुभार्यासमानत्वात्प्रत्युत्थानादिकमपि कार्यमित्यर्थः ॥ १३१ ॥

( ४ ) **राघवानन्दः** । संपूज्याःप्रत्युत्थानादिभिःगुरुपत्नीति । गुरुरत्र ब्रह्मदस्तस्य पत्नी तत्र हेतुःसमास्ताइति ॥ १३१ ॥

( ५ ) **नन्दनः** । भ्रातृभार्येतिभ्रातृभार्यासोदरज्येष्ठभ्रातृभार्याउपसंग्राह्या पादौस्पृष्ट्वा नमस्कार्य्या । विप्रोष्यप्रोषितागमनेसतीत्यर्थः । ज्ञातिसम्बन्धयोषितइत्यत्रापिसवर्णशब्दोनुषज्यते ॥ १३१ ॥

( ६ ) **रामचन्द्रः**। गुरुभार्यया सह गुरूणांज्येष्ठानांभार्या गुरुभार्या तया गुरुभार्यया सह। एताःसमास्तामातृष्वस्राद्या नमस्करणीयाभवन्ति गुरुपत्नीवत् विशेषेण संपूज्या भवन्ति ॥ १३१ ॥

## भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि ॥ विप्रोष्यतूपसंग्राह्या ज्ञातिसबन्धियोषितः॥ १३२॥

( १ ) **मेधातिथिः**। भ्रातुर्ज्येष्ठस्येति द्रष्टव्यम्। उपसंग्राह्या पादयोरभिवाद्या। सवर्णा समानजातीया। क्षत्रियादिस्त्रीणांतु ज्ञातिसंबन्धिधर्मो भ्रातुर्भार्याणामपि। विप्रोष्यज्ञातिसंबन्धियोषितः। विप्रोष्य प्रवासात्प्रत्यागतेन। नहि प्रोषितस्योपसंग्रहणसंभवः। ज्ञातयः पितृपक्षाः पितृव्यादयःसंबन्धिनोमातृपक्षाः श्वशुरादयश्च तेषां ज्येष्ठानांयाः स्त्रियः पूजारूपत्वादुपसंग्रहणस्य। न कनीयांसः पूजामर्हन्ति ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः**। भ्रातुर्भार्या ज्येष्ठाउपसंग्राह्याअभिवाद्या। विप्रोष्य प्रवासंकृत्वा। ज्ञातिस्त्रियः सपिण्डस्त्रियः संबन्धिस्त्रियः। एतास्त्वपिज्येष्ठास्त्वेवैतत् ॥ १३२ ॥

( ३ ) **कुल्लूकः**। भ्रातुर्भार्येति। भ्रातुःसजातीया भार्या ज्येष्ठा पूजाप्रकरणादुपसंग्राह्या पादयोरभिवाद्या। अहन्यहनि प्रत्यहमेव। अपिरेवार्थे । ज्ञातयःपितृपक्षाःपितृव्यादयः सबन्धिनोमातृपक्षाःश्वशुरादयश्च तेषांपत्न्यः पुनर्विप्रोष्य प्रवासात् प्रत्यागतेनैवाभिवाद्याः न तु प्रत्यहंनियमः ॥ १३२ ॥

( ४ ) **राघवानन्दः**। स्ववर्णाःस्वस्वजातयःविप्रोष्य प्रवासंकृत्वोपसंग्राह्याः । पादयोरिति शेषः। ज्ञातिसंबन्धीति ज्ञातीनांस्वगोत्रजानांसंबन्धिनांमातुलानांच ज्येष्ठानांयोषितः ॥ १३२ ॥

( ६ ) **रामचन्द्रः**। भ्रातुर्भार्याःसवर्णाअहनिअहनिनित्यं उपसङ्ग्राह्याः। तथा ज्ञातिसम्बन्धिन्योयोषितः विप्रोष्य प्रवासादागत्यउपसङ्ग्राह्याः ॥ १३२ ॥

## पितुर्भगिन्यांमातुश्च ज्यायस्यांच स्वसर्यपि ॥ मातृवद्वृत्तिमातिष्ठेन्माता ताभ्योगरीयसी ॥१३३॥

( १ ) **मेधातिथिः**। पितुश्च या भगिनी मातुश्च या भगिनी तस्यां स्वसरि चात्मीयायां ज्येष्ठायांभगिन्यां मातृवद्वृत्तिरतिदिश्यते। ननु च मातृष्वसुः पितृष्वसुश्चायमुक्तएव धर्मोमातृष्वसा मातुलानीत्यत्र। अथोच्यते तत्रगुरुपत्नीवदित्युक्तं इह तु मातृवद्वृत्तिरित्युच्यतइति नैषभेदः तुल्याहि गुरुपत्न्यां मातरि च वृत्तिः । केचिदाहुः माताताभ्योगरीयसीत्येतद्वक्तुमनूद्यते भगिन्योः पितुर्मातुश्च गरीयस्त्वम्। यदा माताज्ञांददाति श्वश्र्वादयश्च तदा मातुराज्ञाक्रियते नतासाम्। न चैतद्वाच्यमेतदपि सिद्धंमातागौरवेणातिरिच्यतइत्यर्थवादत्वात्तस्य। अन्येतु गुरुपत्न्यामातुश्च वृत्तिभेदमन्यन्ते। गुरुपत्न्याः पूजाज्ञाद्याव-

ष्यकम् । मातुस्तु शैशवात्वात्सल्येनान्यथात्वमपि । लालनात्तत्रोभयापदेशान्मातृष्वसुः पितृष्वसुश्च व्यवस्था । शैशवेलालनं-तुल्यमेव स्वस्यांस्वसरि । अतीतशैशवस्य तु गुरुपत्नीवत्संपूज्यत्वमिति । नचानेनैवैतत्सिध्यति असति हि वाक्यद्वये मातृवद्वृत्तिरित्येतावता प्राकरणिकीअभिवादननिवृत्तिरेव विज्ञायेत ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः** । स्वसरिस्वस्यांमातृवद्वृत्तिर्वर्तनं मातरि यथावृत्तंवर्तनमन्नदानादिना पोषणं आतिष्ठेत् अनुतिष्ठेत् । अत्रपितृमातृस्वसृसाहचर्यात् स्वज्येष्ठश्वशुराभिवादनमपि सिद्धम् । माताताभ्यइति तेन तासामुपकारे क्रियमाणे यदि मातुरनिष्टंस्यात् तदा न कार्यमित्युक्तंभवति ॥ १३३ ॥

( ३ ) **कुल्लूकः** । पितुर्भगिन्यामिति । पितुर्मातुश्च भगिन्यांज्येष्ठायांचात्मनोभगिन्यांमातृवद्वृत्तिमातिष्ठेत् । माता पुनस्ताभ्योगुरुतमा । ननु मातृष्वसा मातुलानीत्यनेनैव गुरुपत्नीवत्पूज्यत्वमुक्तं किमधिकमनेन बोध्यते । उच्यते इदमेव माता ताभ्योगरीयसीति । तेन पितृष्वस्रानुज्ञायांदत्तायांमात्रा च विरोधे मातुराज्ञाअनुष्ठेयेति । अथवा पूर्वंपितृष्वस्रादेर्मातृवत्पूज्यत्वमुक्तम् । अनेनतु स्नेहादिवृत्तिरप्यतिदिश्यतइत्यपुनरुक्तिः ॥ १३३ ॥

( ४ ) **राघवानन्दः** । ज्यायस्यांज्येष्ठायांस्वसरिभगिन्यांएतासांसमवाये तासांकनीयस्यपिमातैव पूर्वंनमस्येत्याहमातेत्यादि ॥ १३३ ॥

( ५ ) **नन्दनः** । पितुश्चमातुश्च । ज्यायस्यांभगिन्यामात्मनोज्यायस्यांस्वसर्यपिचमातृवत्तवृत्तिंपादोपसंग्रहणादिकांआतिष्ठेत् कुर्यात् । आज्ञाकरणादौमाताताभ्योगरीयसी । मातृष्वसामातुलानीत्यादिश्लोकेमातृष्वसृपितृष्वस्रोरुपादानंकनीयोविषयमितिविवेक्तव्यम ॥ १३३ ॥

( ६ ) **रामचन्द्रः** । पितुर्भगिन्यां मातुश्च भगिन्यां ज्यायस्यांजेष्ठायांस्वसर्यपि भगिन्यामपि ॥ १३३ ॥

**दशाब्दाख्यंपौरसख्यंपञ्चाब्दाख्यंकलाभृताम् ॥ त्र्याब्दपूर्वंश्रोत्रियाणांस्वल्पेनापि स्वयोनिषु॥ १३४ ॥**

( १ ) **मेधातिथिः** । अथ पुनः स्नेहवृत्तिरतिदिश्यते उक्तंपूर्वंप्राणाह्युत्क्रामन्ति यूनः स्थविरआयतीति तत्र कियद्भिर्वर्षैः स्थाविर्यंभवति । लोके हि शिरः पालित्ये स्थविरव्यवहारस्तन्निरूपणार्थमिदम् । दशभिर्वर्षैर्जन्मनोऽधिकैरपि पौराणांसख्यमाख्यायते । तेन दशवर्षाधिकोज्येष्ठोभवत्यपि तु मित्रवद्व्यवहर्तव्योयथोक्तंभो भवन्निति वयस्येति । दशभ्योवर्षेभ्यऊर्ध्वंज्येष्ठः । आख्यानमाख्यादशाब्दाआख्यायस्य सख्यस्यत्रिपदोबहुव्रीहिः । आख्यानिमित्तत्वाद्वर्षाणांसामानाधिकरण्यंनिमित्तनिमित्तिनोर्भेदस्याविवक्षितत्वात् । एतावांश्च समासान्तभूतोर्थोयः पूर्वजोदशवर्षाणांयावत्ससखैव भवति । पुरे भवाः पौराःतेषाम् । पुरग्रहणंप्रदर्शनार्थम् । ग्रामवासिनामपि एषएव न्यायः । ये केचिदेकस्मिन्ग्रामे सन्तितान्यः कश्चित्परस्परप्रत्यासत्तिहेतुर्विद्यते ते सखायः । ये तु कलांकांचन बिभ्रति शिल्पगीतवाद्यादिकांतेषांपञ्चवर्षाणि योधिकः ससखा ततऊर्ध्वंज्येष्ठः । त्रयोऽब्दाः पूर्वं यस्य तच्छ्रोत्रियाणांसख्यम् । अल्पेनापि कालेन स्वयोनिष्वेकवंश्येषु कतिचिदहानि योधिकः सज्येष्ठः । कियान्पुनः स्वल्पकालःन तावदब्दःत्र्यब्दपूर्वमिति निर्दिश्याल्पेनेत्युच्यमानस्ततोन्युनः प्रतीयते । एकवचननिर्देशाच्च न वर्षद्वयंनाप्येकोब्दः स्वल्पेनेति विशेषणानुपपत्तेः । परिच्छिन्नपरिमाणोह्यब्दवाच्योर्थस्तस्याहोरात्रमात्रेण न्यूनस्य नाब्दत्वमस्ति । तस्मादल्पेनेति कालसामान्यमपेक्षते । संवत्सरादवरश्च तस्य विशेषः । अपिशब्दश्चैवशब्दस्यार्थे द्रष्टव्यः । अल्पेनैव कालेन सख्यंबहुना तुज्येष्ठत्वमेव । एतच्च समानगुणानांसमानजातीयानांच

द्रष्टव्यम् । एतेन लौकिकंस्थविरलक्षणंनिवर्तितसापेक्षिकमाश्रितम् । अन्येतुव्याचक्षते नानेन स्थविरत्वंलक्ष्यते किंतर्हि सखित्वमेव यथा श्रुतार्थत्यागेन स्थविरलक्षणंस्यात् इयता कालेन सखापरतस्तुज्येष्ठइति अयंचश्लोकार्थः एकत्र पुरे-वसन्तिदशवर्षाणि यावत्तानिमित्राणि कलाश्चतुःषष्टिस्तद्विदांसंगत्या पञ्चभिर्वर्षैः स्वयोनिषु स्वल्पेनापि च कालेन सह वसतांमित्रत्वमेव अतश्च न सर्वोवयसा तुल्योवयस्यःकिंतर्हि एतदेव समानवयस्त्वैवैल्लक्षणम् । युक्तमेतत्किंतूत्तरश्लोको विरुध्यते । तत्रहि जातिः प्राधान्यंनवयसः । यदि चात्रेयता कालेन ज्यैष्ठ्यमुक्तंभवति तदा विजातीयानामप्याशङ्क्य-माननंनिवर्त्यतइति युक्तम् । पूर्वे च व्याख्यातारआद्यमेव व्याख्यानंमन्यन्ते ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः** । दशाब्दपर्यन्तमाख्यायते कथ्यते पौराणांसख्यं पौराणांपुरवासिनां अन्योन्यं दशाब्दादू-र्ध्वमेव ज्येष्ठापत्यतायामभिवादनमित्यर्थः । पञ्चाब्दपर्यन्तं कलाभृतां कलागीतादिकारिणां चारणानाम । त्र्यब्दपूर्वमित्यत्र त्रिवर्षपूर्वः श्रोत्रियोभिवादनमर्हतीति स्मृत्यन्तरात् । अभिवादनंव्यवहितमप्यन्वीयते । त्रिभ्योब्देभ्यःपूर्वमेव जातस्याभि-वाद्यत्वमित्यर्थः । त्र्यब्दपूर्वस्त्र्यब्दपूर्वकालोत्पन्नतया ज्येष्ठस्तद्विषयत्वादभिधानमपि त्र्यब्दपूर्वम् । एवंस्वयोनिषु स्वसमान-योनिषु ज्ञातिबन्धुष्वल्पेनापि कालेन दिनैकपूर्वकत्वेनापि ज्येष्ठतायामभिवादनमित्यर्थः । तदुक्तम् वयस्यः समानेहनि जातइति ॥ १३४ ॥

( ३ ) **कुल्लूकः** । दशाब्दाख्यमिति । दश अब्दाआख्यायस्य तद्दशाब्दाख्यंपौरसख्यम् । अयमर्थः एकपुरवासि-नांवक्ष्यमाणविद्यादिगुणरहितानामेकस्य दशभिरब्दैर्ज्यैष्ठत्वे सत्यपि सख्यमाख्यायते । पुरग्रहणंप्रदर्शनार्थम् । तेनैकग्रामा-दिनिवासिनामपिस्यात् । गीतादिकलाभिज्ञानांपञ्चवर्षपर्यन्तंसख्यम् । श्रोत्रियाणांत्र्यब्दपर्यन्तम् । सपिण्डेष्वत्यन्ताल्पेनैव कालेन सह सख्यम् । अपिरेवार्थे । सर्वत्रोक्तकालादूर्ध्वंज्येष्ठव्यवहारः ॥ १३४ ॥

( ४ ) **राघवानन्दः** । नमस्कारप्रसङ्गेन मान्यत्वे कारणमाह । दशाब्दाख्यमिति चतुर्भिः । एकपुरवासिनांविद्यागुण-हीनत्वेपि दशाब्दाख्यंवयसा स्थित्या वा दशवर्षाधिक्यंअभ्युत्थानाख्यमान्यत्वे कारणम् । पुरग्रहणंग्रामाद्युपलक्षणम् । तथापञ्चाब्दाख्यंगीतादिकलावतांकलाग्रहणापेक्षया स्वयोनिषु पितृव्यतत्पुत्रादिषु स्वल्पेन वयसा ॥ १३४ ॥

( ५ ) **नन्दनः** । अत्रपौरशब्देनसमानदेशवासिनोलक्ष्यन्ते । सख्यशब्देनाऽलिङ्गनादिकं । पौरैरन्योन्यंसख्यं दशा-ब्दाख्यंकर्तव्यंस्यात्दशभिः शब्दैराख्याव्यपदेशोयस्यतद्दशाब्दाख्यम् । ननुकिमुक्तंभवतीतिचेत्एकपुरवासिनः सवर्णलक्ष्य-माणलक्षणाह्निताद्दशवर्षान्तरालजन्मानश्चैतैस्समेत्यसख्यमेवकर्तव्यम् । अल्पेनापिस्वयोनिषुस्वल्पेनापिसख्यंस्यात् । ज्ञात-यएकवर्षान्तरालाइतियावत्कालभृतांशिल्पविद्यावेदिनांपञ्चवर्षान्तरालजन्मनांसख्यमेवकर्तव्यंतैरन्योन्यंसमेत्येत्यर्थः । श्रो त्रियाणांत्र्यब्दपूर्वंसख्यंस्यात् । त्र्यब्दपूर्वंत्र्यब्दनिमित्तम् । श्रोत्रियास्त्रिवर्षान्तरालजन्मानश्चेत् तैश्चापिसमेत्यसख्यमेव-कर्तव्यम् । एवमुक्तंभवति । दशपञ्चत्र्येकवर्षाधिक्येश्रैष्ठ्यमेवप्रतिपत्तव्यमिति ॥ १३४ ॥

( ६ ) **रामचन्द्रः** । पौरसख्यंपौराणांएकपुरनिवासिनांविद्यादिगुणरहितानांसख्यंदशाब्दाख्यंदशवार्षिकसख्यंविश्वा-सास्पदंकलाभृतां काव्यनाटकादिज्ञातॄणांपञ्चाब्दाख्य पञ्चवार्षिकंसख्यंश्रोत्रियाणांअब्दपूर्वकंसख्यम् । स्वयोनिषु स्वबन्धुषु-अल्पेनापि नमस्कारार्हत्वंसख्यंकार्यं व्यवहरणम् ॥ १३४ ॥

**ब्राह्मणंदशवर्षंतु शतवर्षंतु भूमिपं ॥ पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १३५ ॥**

( १ ) **मेधातिथिः** दशवर्षाणि । जातस्य यस्य सभवति दशवर्षः । परिच्छेदकः कालः तस्य परिच्छेद्योब्राह्मणः श्रु-तः । नच तस्योच्चनीचतादिकार्श्यादिवा कालेन परिमातुंशक्यम् । किंतर्हि तदीया काचित्क्रिया सा च जन्मनः प्रभृति नि-

त्यसमवायिनी प्राणधारणलक्षणैव । एवंशतवर्षमिति । पितापुत्रौ तौ द्रष्टव्यौ । तयोः संप्रधार्यमाणयोर्ब्राह्मणः पिता । चिरवृद्धेनापि क्षत्रियेण स्वल्पवर्षोपि ब्राह्मणः प्रत्युत्थायाभिवाद्यश्चेति प्रकरणार्थः ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । अतस्तादृशंब्राह्मणंतादृक् क्षत्रियोभिवादयेदित्यर्थः । एवंक्षत्रियाद्यपेक्षया वैश्यादीनामप्युन्नेयम् । तथा वैश्यस्य च शूद्रस्य च शतवर्षातिरिक्तज्येष्ठतायामपि विप्रापेक्षंपुत्रत्वमित्यर्थादुक्तम् ॥ १३५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणमिति । दशवर्षंब्राह्मणंशतवर्षंपुनः क्षत्रियंपितापुत्रौ जानीयात् । तयोर्मध्ये दशवर्षोऽपि ब्राह्मणएव क्षत्रियस्य शतवर्षस्यापि पिता तस्मात्पितृवदसौ तस्य मान्यः ॥ १३५ ॥

( ४ ) **राघवानन्दः** । पितेति । पितृवन्मानार्हः ॥ १३५ ॥

( ५ ) **नन्दनः** । वर्णज्यैष्ठ्यवयोज्यैष्ठ्ययोर्वर्णज्यैष्ठ्यंमान्यतानिमित्तमित्याहब्राह्मणमिति । अत्रब्राह्मणक्षत्रियशब्दावुत्कृष्टापकृष्टवर्णोपलक्षणार्थौ । अन्योन्यमपिमान्यतानिमित्तानि ॥ १३५ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणंदशवर्षंतु । दशवार्षिकःब्राह्मणः शतवर्षीयक्षत्रियःतस्यक्षत्रियस्य ब्राह्मणःपूज्यः । पितृरूपंब्राह्मणंपुत्ररूपंक्षत्रियंजानीयात् । तयोःक्षत्रियवैश्ययोःब्राह्मणःपिता पितृस्थानीयइत्यर्थः ॥ १३५ ॥

**वित्तंबन्धुर्वयःकर्मविद्या भवति पञ्चमी ॥ एतानि मान्यस्थानानि गरीयोयद्यदुत्तरम् ॥ १३६ ॥**

( १ ) **मेधातिथिः** । उक्तंजातेरुत्कर्षहेतुत्वं हीनजातीयेनोत्तमजातीयः पूज्यः । इदानींसमानजातीयानां य अभिवादनादिपूजाहेतवस्तेषांबलाबलमुच्यते । तत्र वयसः पुनरभिधानं बलाबलार्थम् । वित्तादिसंबन्धोत्र सर्वत्र पूजाहेतुः । वित्तवत्त्वंबन्धुमत्त्वंमानस्थानमित्ययमत्रार्थः । विशिष्टता बन्धुतैव पितृव्यमातुलादिरूपता मानकारणं बन्धुमान्योबहुबन्धुः सपूज्यः वयः प्रकृष्टमितिज्ञेयम् । ईदृशएव चार्थे प्रायेणायंप्रयुज्यते । पित्रा पुत्रोवयःस्थोपि सततंवाच्यएव सइति । यावच्च वयः पूजाहेतुः तदुक्तमेव दशाब्दाख्यमिति । कर्मश्रौतंस्मार्तं तदनुष्ठानपरता विद्या सान्ता सोपकरणवेदार्थज्ञानम् । ननु विद्वान्यजते विद्वान्याजयतीत्यविद्यस्य कर्मानुष्ठानानधिकाराद्विद्यया विना कथंकर्मणांमानहेतुता । नैषदोषः प्रकर्षोत्राभिप्रेतः । अतिशयवती विद्या मानहेतुः । स्वल्पविद्यस्याप्यनुष्ठानोपपत्तिः । योयावज्जानातिसतावत्यधिक्रियते । न विद्यायावाचनिकमधिकारहेतुत्वमपि तु सामर्थ्यलक्षणम । अविदितकर्म स्वरूपोह्यवैद्यस्तिर्यक्कर्माकाधिक्रियतां शक्यंह्यनेन कतिचित्स्मृतिवाक्यान्युपश्रुत्य जपतपस्यनुष्ठातुम् । अग्निहोत्रादिकर्मणांतु वेदवाक्यावबोधउपकरोति । तत्रापि योयावज्जानाति सतावत्यधिक्रियते । अग्निहोत्रवाक्यानांयोर्थंवेत्ति सतत्राधिक्रियते । क्रत्वन्तरज्ञानंन तत्रोपकारकम् । अथोच्यते वेदः कृत्स्नोधिगन्तव्यइति कृत्स्नवेदविषयोयंविधिरवबोधपर्यन्तस्तत्र कृत्स्नस्य वेदस्यावबोधे कर्तव्ये कुतोयंप्रतिभागावबोधसंभवो येनोच्यते योग्निहोत्रवाक्यस्यार्थंवेत्ति वाक्यान्तरार्थमविद्वानप्यधिक्रियतइति । अत्रोच्यते । एकशाखाध्ययनं तावदवश्यंकर्तव्यं तत्रयेनैकशाखाधीतातस्याश्चार्थोवधृतः सोऽनवधृतशाखान्तरार्थोऽधिक्रियते । ननु च सर्वत्रैकएव शास्त्रार्थोयदिनामपदवर्णानुपूर्वीभेदः शास्त्ररूपत्वंभिन्नं पदार्थन्यायव्युत्पत्त्यावावबोधः न च प्रतिशाखंपदार्थाभिद्यन्ते नापि न्यायस्तत्र येनैव हेतुनैकस्याः शाखायाअर्थोवधार्यते शाखान्तरेप्यसावस्ति न व्युत्पत्त्यन्तरमपेक्षते तत्र यद्येका शाखावगतासर्वाएवा वगताभवन्ति । सत्यम् । यान्येकस्यामग्निहोत्रादीन्युपदिष्टानि तेषांशाखान्तरेऽप्युपदिश्यमानानांमभूद्भेदः । किंतु कस्यांचिच्छाखायांकानि चित्कर्माणि नैवोपदिश्यन्ते यथा बाह्वृचे आश्वलायनके दर्शपूर्णमासौश्येनादिरेषएवाभिचारिकः । अन्येच सोमयाग वाजपेय बृहस्पतिसवादयः तत्र यत्तच्छाखाधीनमग्निहोत्रज्योतिष्टोमादि तत्राधिक्रियते शाखान्तरन्त्वनधीतमश्रुतकथंतद्विदितानि कर्माण्यतच्छाख्याखायीवेतु । नचैतेसोमयागानित्याः येनाननुष्ठानप्रत्यवायभयात्परिज्ञानाय शाखान्तरमन्विष्यते । आधानंतु यद्यपि

तत्र न पठितंतत्राप्युद्धराहवनीयमित्याहवनीयस्य विधानं लोकात्तदर्थमनवबुध्यमानः कोयमाहवनीयोयस्याधानमिति शाखान्तरमन्विष्यति । ततः शाखान्तरेपठ्यमानमाधानप्रकरणंसर्वंपर्यालोचयति । एवमामावास्येन वा हविषेष्ट्वापौर्णमासेन वेति श्रुत्वा कीदृशमनयोः कर्मणोरूपमिति तथैव शाखान्तरंगवेषयते । एवमन्यदपि यत्काम्यंनित्यंचानुष्ठेयं तस्य यत्किंचिदङ्गजातं तत्र नाम्नातं माध्वर्यवमौद्गात्रंवा तत्परिज्ञाय तथैव शाखान्तराद्गिह्यते । यत्तु शाखान्तराधीतमनुष्ठेयं तस्य न वेदनसंभवः । अनेकशाखाध्यायिनस्तु तदर्थपरस्य सर्वमेतत्प्रत्यक्षमिति । अस्तीदर्शीविद्यामन्तरेणापि कर्मानुष्ठानंअथवा ईषद्व्युत्पत्त्यापि संभवत्यनुष्ठानं यस्य तु निर्मला विद्या व्याख्येयानि विद्यास्थानानि तस्य विद्यामान्यतत्स्थानं गरीयइति द्वयोर्द्वयोःसंप्रधारणेऽयमियमुन्प्रत्ययः । चतुर्दशविद्यास्थानज्ञः पङ्ग्वन्धनिर्धनादिरनधिकृतोपि विद्ययैव पूज्यते । तेषांविरोधे बलाबलमाह गरीयोयद्यदुत्तरम् । एकस्य वित्तंमन्यस्य बहुबन्धुता तत्र वित्तवतो बन्धुमान्मान्यः यस्माच्च यत्परंतत्तस्मात्तरंगुरु । यथा बन्धोर्वयः ततः पूर्वस्मादपि वित्तात्तद्गुरुसिद्धम् । अतउपपन्नंश्रुतंतु सर्वेभ्योगरीयस्तन्मूलत्वाद्धर्मस्येति गौतमवचनम् । गरीयइति कथंप्रकर्षप्रत्यत्योयावता नैव पूर्वस्य गुरुत्वम् यदि हि द्वे रूपिणी तत्रोत्तरीयस्य गरीयस्त्वमस्ति तर्हि पूर्वापेक्षया वित्तस्य नास्तीति चेत्समुदाये सामान्येन गुरुत्वेपेक्षिते अपरस्य प्रकर्षविवक्षायांयुज्यतईयसुन् । मानः पूजा तस्य स्थानंकारणम । मानस्थानानीति वा पठिन्तर्भूतभावार्थोद्रष्टव्यः मान्यत्वस्थानानि मान्यत्वकारणानि ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । मान्यस्थानानि यदपेक्षया यत्र वित्ताद्युत्कर्षस्तत्र मान्यताकारणमिति यथाशतवित्तापेक्षया सहस्रवित्तोमान्यः । न तु देहदीर्घत्वादेरिवाधिक्येपि न मान्यत्वनिमित्तता । अर्थेषु पञ्चसु पूर्वापेक्षयाउत्तरोत्तरं गरीयोमाननाहेतुः । बन्धवःज्ञातयः । कर्म यागादिविधावेतदर्थज्ञानम् । एतच्च सवर्णेष्वन्योन्यम् । न तु वर्णापकर्षेषूत्कर्षहेतुत्वमेषाम् ॥ १३६ ॥

( ३ ) **कुल्लूकः** । वित्तंन्यायार्जितंधनं बन्धुः पितृव्यादिः वयोऽधिकवयस्कता कर्म श्रौतंस्मार्तंच विद्या वेदार्थतत्त्वज्ञानं एतानिपञ्च मान्यत्वकारणानि । एषांमध्ये यद्यदुत्तरंतत्तत्पूर्वस्माच्छ्रेष्ठमिति बहुमान्यमेलके बलाबलमुक्तम् ॥ १३६ ॥

( ४ ) **राघवानन्दः** । विजातीयानामुत्कर्षमुक्त्वा सजातीयानांतमाह वित्तमिति । वित्तंधनंन्यायार्जितम् । बन्धुःपितृव्यादिः । कर्मश्रौतंस्मार्तंच । विद्यावेदार्थतत्त्वज्ञानम् । यदुत्तरमिति । तादृशधनवतोबन्धुमान्मान्यःबन्धुमतोवयोधिकस्ततोपिकर्मीततोपिविद्यावानिति । एवंत्रिषु विप्रादिषु भूयांसि गुणवन्तीति बहवोगुणायत्रेत्यर्थः । तेनायमर्थःवित्तबन्धुयुक्तोवयोधिकान्मानार्हः एवंवित्तादित्रययुक्तकर्मवतःवित्तादिचतुष्टययुक्तविद्यावतइति ॥ १३६ ॥

( ५ ) **नन्दनः** । तेषांबलाबलंचाहवित्तमिति । बन्धुः कुलम् । कर्मयज्ञदानादि । मान्यस्थानानि मान्यंमानपूजास्थानानि पूजानिमित्तानि । एतेषुयद्यदुत्तरंतत्तत्पूर्वस्मात्पूर्वस्मात्गरीयोमान्यस्थानम् ॥ १३६ ॥

( ६ ) **रामचन्द्रः** । वित्तंवित्तवन्तंस्वबन्धुंवयःवयसाधिक्यंसुकर्मकर्तारंविद्यापञ्चमीभवति एतानि मान्यस्थानानि पूज्यस्थानानि । यत्यत्उत्तरंगरीयःपूज्यंभवतीत्यर्थः । पञ्चानांवित्तादीनांयत्र पूर्वमप्येकंभवति सउत्तरस्मादपि मान्यःतेन वित्तबन्धुयुक्तोवयोधिकात्मान्यः । एवंवित्तादिगुणत्रययुक्तःकर्मतःवित्तादिचतुष्टययुक्तःविदुषोमान्यः । गुणवतितद्वत् ॥१३६॥

**पञ्चानांत्रिषु वर्णेषु भूयांसि गुणवन्ति च ॥ यत्र स्युः सोत्र मानार्हःशूद्रोपि दशमींगतः ॥ १३७॥**

( १ ) **मेधातिथिः** । एकैकगुणसंबन्धे परस्य ज्यायस्त्वमुक्तम् । यत्रेदानींद्वौ पूर्वावेकस्य भवतोऽपरस्यैकः परइति तत्र कथमित्यतआह । पञ्चानामितेषांमान्यस्थानानांयत्र भूयांसि बहून्यसर्वाणि तत्र परत्वमादर्तव्यम् । एकस्य वित्त-

बन्धू द्वेऽन्यो वृद्धवयास्तत्रपूर्वं बाधके सत्यपि बहुत्वे यदि न श्रेष्ठानि भवन्ति। एकंचैकस्यात्युत्कृष्टंतदा साम्यं न पुनःपर-बाधकत्वंगरीयः एकापेक्षया चरितार्थत्वात् । यदितु भूयांसि गुणवन्त्यत्युत्कृष्टानि तदा साम्येऽपि संख्यया परेषां-पूर्वाणि परैश्च सम संख्यानि तदा न पूर्वतरतया बाध्यबाधकभावः किंतर्हि सामान्यमेव। ननु च यत्र गुणवन्ति स्युः सोऽत्र मानार्हइत्यभिधानेन समसंख्यस्यापि पूर्वस्यवा बाधकत्वमेव युक्तम् । नैवं तुल्यत्वे गुणानामेतस्य चरितार्थ त्वात्। यथैकोऽपि विद्यावानपरोऽपि तयोर्यस्य गुणवती प्रकृष्टा विद्या सप्रशस्यते। एवं सर्वत्र त्रिषुवर्णेषु ब्राह्मण क्षत्रिय वैश्येषु यद्येते गुणाभूयांसःप्रकृष्टाश्च क्षत्रियस्यापि भवन्ति तदा ही। न गुणेन ब्राह्मणेन जात्युत्कृष्टेनापि क्षत्रियः पूज्यः। एवंक्षत्रियेण वैश्यः। एवंत्रिभिरपि द्विजातिभिः शूद्रोऽपि दशमीमितः दशमी। अन्त्यावस्थोच्यते। अत्यन्तवार्धको-पलक्षणमेतत्। एवंच वित्तबन्धू शूद्रस्य माने हेतूत्रैवर्णिकान्प्रति दशमीग्रहणात्। न कर्मविद्येतुनैव तस्य संभवतोऽनधिका-रात्।भूयांसीत्याधिक्यमात्रंविवक्षितंन बहुत्वसंख्यैव । तेन द्विविषयतापि सिद्धा भवति । नह्ययंसंख्यावाच्येव बहुशब्दइ-त्यत्र प्रमाणमस्ति भूयः शब्दश्चायंन बहुशब्दः। आधिक्ये च तत्रतत्र दृष्टः प्रयोगः। भूयांश्चात्र परिहारोभूयसाऽभ्युदयेन योक्ष्यइति प्रत्ययार्थबहुत्वमपि न विवक्षितम्। जात्याख्यायां ह्येतद्बहुवचनम्। विवक्षायां हि एकस्य गुणवतोमानहे-तुत्वंन स्यात्ततश्चपूर्वाऽवगतिर्बाध्यते। शूद्रोपि दशमीमित्यत्र च केवलस्यैव वयसः प्रकर्षे मानहेतुत्वंब्रुवन्नविवक्षांदर्श-यति। समाचारश्चैवमेव ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः**। पञ्चानांमध्ये वित्तादीन्येकैकसजातीयानि ब्राह्मणादिवर्णत्रये यत्र गुणवन्ति भूत्वा भूयां-सि समानार्हः न तु निर्गुणःतद्भूयस्त्वे। यथाप्रतिग्रहार्जितात्पधनादपि न वृद्ध्यार्जितबहुधनःश्रेयानित्येवमन्यत्राप्युन्नेयम्। यथा शूद्रोपि दशमीमवस्थांगतोनवतिवर्षादूर्ध्वंवित्तादिचतुष्टयबाहुल्ये शूद्रान्तराणांद्विजातीयानांच मान्यः। चकारादिव-श्वनाभावएव चास्य द्विजैर्मान्यता। विद्या तु तस्य न संभवत्येवेति ॥ १३७ ॥

( ३ ) **कुल्लूकः**। त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानांवित्तादीनांमध्ये यत्र पुरुषे पूर्वमप्यनेकंभवति सएवोत्तरस्मादपि मान्यः। तेन वित्तबन्धुयुक्तोवयोधिकान्मान्यः। एवंवित्तादित्रययुक्तः कर्मवतोमान्यः। वित्तादिचतुष्टययुक्तोविदुषोमान्यः गुणवन्ति चेति प्रकर्षवन्ति तेन द्वयोरेवविद्यादि*सत्त्वे प्रकर्षोमानहेतुः। शूद्रोऽपि दशमीमवस्थांनवत्यधिकांगतोद्विजन्मनाम-पि मानार्हः। शतवर्षाणांदशधाविभागे दशम्यवस्था॰नवत्यधिका भवति ॥ १३७ ॥

( ४ ) **राघवानन्दः**। दशमींगतःनवत्यूर्ध्ववयोगतः ॥ १३७ ॥

( ५ ) **नन्दनः**। पञ्चानांवित्तादीनांमध्येत्रिषु वर्णेषु यस्मिन्भूयांसि वित्तबन्धुवयांसि स्युः यस्मिन्वा गुणवन्ति-गरीयांसि विद्याकर्मवयांसि स्युः सवित्तबन्धुवयोयुक्तोवित्तबन्धुवयोहीनादत्रलोकेमानार्हः । एवंविद्याकर्मवयोयुक्तोविद्या-कर्मवयोहीनाच्छूद्रोऽपिवित्तादिमांश्चतद्वन्मानार्हः सचेद्दशमीमवस्थांगतः। अनेनवयसानवत्याऊर्ध्वंशूद्रस्यवयोज्यैष्ठ्यमिति-सूचितम् ॥ १३७ ॥

( ६ ) **रामचन्द्रः**। वित्तबन्ध्वादीनांपञ्चानांमध्येत्रिषुवर्णेषुगुणवन्ति भूयांसिबहूनि यत्रस्युःतेचमानार्हाभवन्ति। तद्य-थात्रिषुवर्णेषुयदिब्राह्मणाबहवःसन्तितर्हियेगुणिनःभवन्तितेमानार्हा भवन्तीत्यर्थः। बहवःक्षत्रियाःसन्तिचैतेषांक्षत्रियाणांम-ध्येयेगुणिनःभवन्तितेमानार्हाभवन्तीत्यर्थः। बहवःवैश्याःसन्तितेषांमध्ये गुणिनःभवन्ति ते मानार्हाभवन्तीत्यर्थः। शूद्रोपिद शमींगतःवृद्धत्वंगतःसन्मानार्हःपूजार्हःस्यादित्यर्थः ॥ १३७ ॥

---

* विद्यादि=वित्तादि ( अ )

**चक्रिणोदशमीस्थस्य रोगिणो भारिणःस्त्रियाः॥स्नातकस्य च राज्ञश्च पंथादेयोवरस्य च॥ १३८॥**

( १ ) **मेधातिथिः** । अयमन्यः पूजाप्रकारः प्रासङ्गिकउच्यते । चक्री रथिकोगन्त्र्यादियानाधिरूढस्तस्यपन्था देयः। येन भूमिभागेन ग्रामादिदेशान्तरंगम्यते सपद्धतिः पन्थाउच्यते । तत्र यदि पृष्ठतः संमुखतोवा रथिकआगच्छेत्तदा तद्गमनोपरोधिनः पथि प्रदेशात्पदातिरपक्रामेत्। दशमीस्थोऽत्यन्तपरिणतवयाः। रोगीव्याधिनात्यन्तपीडितः। भारी गृहीतव्रीह्यादिगुरुद्रव्यः सोऽपियथोपसर्तुमशक्तोऽनुग्राह्यः स्त्रियाअनपेक्ष्य जातिगुणभर्तृसंबन्धान्स्त्रीत्वमात्रेणैव । राजा च विषयेश्वरोत्राभिप्रेतोन क्षत्रियएव। तथा चोत्तरत्र पार्थिवग्रहणेन निगमने पृथिव्याईश्वरः पार्थिवः। ननु चोपक्रमे राजशब्दश्रवणाद्वाक्यान्तरगतः पार्थिवशब्दस्तत्परएव युक्तः। राजशब्दोहि क्षत्रियजातिवचनोविज्ञातः सतावदनुपजातविरोधित्वादुपक्रमगतोमुख्यार्थोग्राह्यः। बलादिवाक्ये तु तत्सापेक्षक्षत्रियजातिविहितेन धर्मेण पृथिवीपालनाख्येन पार्थिवशब्दस्यप्रयोगसंभवेन जात्यन्तरविषयत्वमयुक्तम् । अत्रोच्यते। मान्यतात्र श्रुता स्नातकोनृपमानभागीति। तत्रक्षत्रियजातीयमात्रान्मान्यत्वंस्नातकस्य सिद्धमेव ब्राह्मणंदशवर्षमिति। तत्र हि भूमिपशब्दः क्षत्रियजातिमात्रोपलक्षणार्थइत्युक्तम्। उपलक्षणत्वाच्च राजजातेः क्षत्रियस्यापि प्रजेश्वरस्यायंधर्मोविज्ञायते। वरोविवाहाय। प्रवृत्तः एतेषांपन्थादेयः त्यागमात्रंच ददातीत्यर्थः। त्यागश्च पथोऽपसरणमतएव चतुर्थी न कृता॥ १३८॥

( २ ) **सर्वज्ञनारायणः**। चक्रिणः शाकटिकादेः। दशमीस्थस्य दशमभागायुः शेषस्य। रोगिणोऽत्यन्तार्त्तस्य। भारिणोभारंवहतः। स्नातकस्य विद्याव्रतस्नातस्य। राज्ञोभिषिक्तस्य। वरस्य विवाहार्थंगच्छतः। पन्थादेयोपसृत्य स्वयंगन्तव्यमित्यर्थः। केचिद्वरस्य श्रेष्ठस्यादरेण पन्थादेयइत्यस्यार्थः। तथाच योयदपेक्षया जातिगुणादिनोत्कृष्टस्तस्य वर्त्मदानमिति लभ्यते। अत्र च माननार्थं वर्त्मदानं स्नातकपार्थिववराणांवृद्धादीनांत्वपसाराशक्ततया करुणया तत्रापि। वरापेक्षयानृपतिस्नातकयोर्मान्यता॥ १३८॥

( ३ ) **कुल्लूकः**। अयमपि पूजाप्रकारः प्रसङ्गादुच्यते चक्रिणइति। चक्रयुक्तरथादियानारूढस्य नवत्यधिकवयसोरोगार्त्तस्य भारपीडितस्य स्त्रिया अचिरनिवृत्तसमावर्तनस्य देशाधिपस्य विवाहाय प्रस्थितस्य पन्थास्त्यक्तव्यः। त्यागार्थत्वाच्च ददातेर्न चतुर्थी॥ १३८॥

( ४ ) **राघवानन्दः**। ज्येष्ठःवरस्यमान्यत्वकारणप्रसङ्गेनान्यदप्याह चक्रिणइति द्वाभ्याम्। चक्रिणः रथकारारूढस्य। स्नातकस्य तद्व्रतधारिणः। भारिणोभाराक्रान्तस्य। वरस्य कन्यामुद्वोढुंप्रस्थितस्य। एतेभ्यः पन्थादेयइत्यन्वयः॥ १३८॥

( ५ ) **नन्दनः**। अथमार्गप्रदानार्हानाह चक्रिणइति। चक्रंरथाद्युपलक्षणम्। तेनयोगच्छतिसचक्री। तस्यनिर्गुणस्यापिपन्थादेयः। एवंदशमीस्थस्य वृद्धतरस्य। भारिणोभारवाहस्य। स्नातकस्य गृहस्थस्य ब्राह्मणस्य। वरस्य श्रेष्ठस्य॥ १३८॥

( ६ ) **रामचन्द्रः**। चक्रिणइति। दशमीस्थस्यचक्रिणः वृद्धस्य चक्रिणःतैलिकस्य पन्थादेयः। भारिणःभाराक्रान्तस्य। रोगिणःरोगाक्रान्तस्य स्त्रियाः स्नातकस्यच राज्ञश्च पुनःवरस्यच विद्यास्नातकःव्रतस्नातकोवातस्य। एतेषांपन्थादेयः। वरोविवाहयोग्यः॥ १३८॥

**तेषांतु समवेतानां मान्यौ स्नातकपार्थिवौ॥ राजस्नातकयोश्चैव स्नातकोनृपमानभाक्॥ १३९॥**

( १ ) **मेधातिथिः**। तेषांतु समवेतानामेकत्र संनिपतितानांमान्यौ स्नातकपार्थिवौ। प्रकृतेन पथोदानेन नृपमान-

भाक्नृपस्य सकाशान्मानंभजते लभते। षष्ठी निर्धारणे। चक्रयादीनांत्वन्योन्यंविकल्पः सच शक्त्यपेक्षः॥ १३९॥

( २ ) **सर्वज्ञनारायणः**। तयोरप्यन्यापेक्षया स्नातकोमान्यइत्याह तेषांत्विति। स्नातकएवेत्यन्वयः। तथाच वर्त्मदानसामर्थ्ये यस्य योमान्यस्तेन न तस्य वर्त्मदेय मिति लभ्यते॥ १३९॥

( ३ ) **कुल्लूकः**। तेषामेकत्रमिलितानांदेशाधिपस्नातकौ मान्यौ। राजस्नातकयोरपि स्नातकएवराजापेक्षया मान्यः। अतोराजशब्दोऽत्र पूर्वश्लोके न केवलजातिवचनः क्षत्रियजात्यपेक्षया ब्राह्मणंदशवर्षंत्वित्यनेन ब्राह्मणमात्रस्य मान्यत्वाभिधानात्स्नातकग्रहणवैयर्थ्यात्॥ १३९॥

( ४ ) **राघवानन्दः**। तेषांसमवायेत्वाह स्नातकोनृपमानभागिति। राजकर्तृमानभागिति पूर्वेपितापुत्रौ विप्रक्षत्रियावित्युक्तौ तेनात्र युगपदुपस्थित्यादिनिमित्तंपूजादि विप्रस्य॥ १३९॥

( ५ ) **नन्दनः**। समवेतानांमार्गेसंगतानाम्। मान्यौमार्गदानेन। नृपमानभाङ्नृपदत्तमानभाक्॥ १३९॥

( ६ ) **रामचन्द्रः**। समवेतानांतेषांचक्रयादीनांस्नातकपार्थिवौमान्यौ भवतः। राजस्नातकयोर्मध्ये नृपस्य मानभाक्स्नातकःभवत्येव। स्नातकःपूज्यइत्यर्थः॥ १३९॥

**उपनीय तु यःशिष्यंवेदमध्यापयेद्द्विजः॥ सकल्पंसरहस्यंच तमाचार्यंप्रचक्षते॥ १४०॥**

( १ ) **मेधातिथिः**। आचार्यादिशब्दानामेवार्थनिरूपणार्थमिदमारभ्यते। सोपचारोहिलोके एषांप्रयोगोनच शब्दार्थसंबन्धस्य स्मर्तृभिराचार्यपाणिनिप्रभृतिभिरेतन्निरूपितम्। इयंचाचार्यपदार्थस्मृतिर्व्यवहारमूलान वेदमूला पाणिन्यादिस्मृतिवत्। नह्यत्र किंचित्कर्तव्यमुपदिश्यते। अस्य शब्दस्यायमर्थइति सिद्धरूपोऽयमर्थोन साध्यरूपः। उपनीयोपनयनंकृत्वा योवेदमध्यापयति ग्राहयति सआचार्यः। ग्रहणंचात्राध्येत्रन्तरनिरपेक्षवाक्यानुपूर्वीस्मरणम्। कल्पशब्दः सर्वाङ्गप्रदर्शनार्थः। रहस्यमुपनिषदः। यद्यपि तेऽपि वेदशब्देनैव गृहीतास्तथापि द्वितीयरतेषांव्यपदेशोस्ति। वेदान्ताइत्यन्तशब्दंसमीपवचनंमन्यमानोनैते वेदाइति मन्येतास्ततदाशङ्कानिवृत्त्यर्थंरहस्य ग्रहणम्। अन्ये तु रहस्यंवेदार्थंवर्णयन्ति तेन न स्वरूपग्रहणमात्रादाचार्यकनिष्पत्तिः अपि तु तद्व्याख्यानसहितात्। तथा चाभिधानकोशेभिहितं विवृणोति च मन्त्रार्थानाचार्यः सोभिधीयतइति। मन्त्रग्रहणंवेदवाक्योपलक्षणार्थम्। अस्मिंश्च व्याख्यानेऽर्थावबोधोप्याचार्यकरणविधिप्रयुक्तः स्यान्नकेवलंसंपाठमात्रम्। ततश्चसर्वेण सर्वस्वाध्यायविधिरनुष्ठापकः स्यात्। अस्तु परप्रयुक्तेप्यनुष्ठानेस्वाध्यायविधेर्ब्रह्मचारिणः स्वार्थसिद्धिः यदा तर्हिकाम्यत्वादाचार्यकरणविधेराचार्योन प्रवर्तते तदा स्वाध्यायविध्यर्थानुष्ठानंनप्राप्नोति। ततश्च न नित्यस्वाध्याय विधिः स्यात्। नच रहस्यशब्दोवेदार्थवचनतया प्रसिद्धस्तस्मात्पूर्वमेव रहस्यग्रहणस्य प्रयोजनंप्राधान्याद्वा पृथगुपादानम्। यत्तु विवृणोति मन्त्रार्थानित्यस्मृतिरेवैषा मन्त्रशब्दस्योपलक्षणत्वे प्रमाणाभावात्तस्मात्पाठाभिप्रायमस्य विधेरप्रयोजकत्वम्। अतोवेदस्वरूपग्रहणे माणवकस्य जात आचार्यकरणविधिनिवृत्तिः॥ १४०॥

( २ ) **सर्वज्ञनारायणः**। संकल्पमित्येकदेशेन षडङ्गोपलक्षणम्। सरहस्यं अत्यन्तगुह्यतदर्थव्याख्यासहितं न तूपनिषद्भागोरहस्यंवेदपदादेव तल्लाभात्॥ १४०॥

( ३ ) **कुल्लूकः**। आचार्यादिशब्दार्थमाह उपनीयेति। तैः शब्दैरिह शास्त्रे प्रायोव्यवहारात्। योब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितांवेदशाखांसर्वामध्यापयति तमाचार्यंपूर्वे मुनयो वदन्ति। कल्पोयज्ञविद्या। रहस्यमुपनिषत्। वेदत्वेऽप्युपनिषदांप्राधान्यविवक्षया पृथङ्निर्देशः॥ १४०॥

( ४ ) **राघवानन्दः** । आचार्यपुत्रइत्युक्तंतत्र क आचार्यइत्यपेक्षायांतल्लक्षणंउपाध्यायादिसमतियोगिकंसार्थंवा-दंच ब्रूते उपनीयेति अष्टादशभिः । सकल्पंयज्ञविद्यासहितंसरहस्यमुपनिषदुक्तोपासनासहितम् ॥ १४० ॥

( ५ ) **नन्दनः** । अथगुणानांतारतम्यंवक्ष्यंस्तेषांक्रियाविशेषैः संज्ञाविशेषांश्चतुर्भिः श्लोकैराहउपनीयेति । सकल्पं-सकर्मविद्यम् । सरहस्यंसाध्यात्मविद्यम् ॥ १४० ॥

( ६ ) **रामचन्द्रः** । उपनीयेति। सद्विजःउपनीय शिष्यंवेदंअध्यापयेत् । च पुनः । सरहस्यंसकल्पं शिक्षा कल्प-व्याकरणादिसहितं अध्यापयेत् यस्तं आचार्यंप्रचक्षते सरहस्यंतदर्थवाक्यसहितमित्यर्थः ॥ १४० ॥

**एकदेशंतु वेदस्य वेदांङ्गान्यपि वा पुनः ॥ योध्यापयति वृत्त्यर्थमुपाध्यायः सउच्यते ॥१४१॥**

( १ ) **मेधातिथिः** । वेदस्यैकदेशोमन्त्रः ब्राह्मणंवा । वेदवर्जितानि वा केवलान्यङ्गान्येव योध्यापयति तथा सर्व-मपि वेदम् । वृत्त्यर्थजीविकार्थम् नाचार्यंकरणविधिवशेन सउपाध्यायोनाचार्यः । अन्येनोपनीतंयः कृत्स्नमपि वेदंध्यापय-ति नासावाचार्यः । उपनीयापि यःकृत्स्नंवेदंनाध्यापयति सोऽपि नाचार्यः । यद्येवमेकदेशग्रहणमुपाध्यायलक्षणेकृतमा-चार्यलक्षणउपनयनग्रहणंयस्तर्ह्यनुपनेता कृत्स्नवेदाध्यापकश्च तस्य किंलक्षणंनासावाचार्योनाप्युपाध्यायः ॥ न चापि नामान्तरंतस्य श्रुतम् । उच्यते। अल्पंवा बहुवा यस्य श्रुतस्येत्यनेनगुरुरसावाचार्यान्न्यूनउपाध्यायादप्यधिकः । अपिपुनः शब्दौ पादपूरणार्थौ ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । एकदेशंवेदस्य वेदाङ्गमात्रं वा धर्मार्थमध्यापयति अपरिभाषितवृत्त्यभिसंधानेन वा कृत्स्न-मपि वेदमध्यापयति स उपाध्यायइत्यर्थः । योध्यापयतीत्यावृत्त्या योज्यम् । तेन सामान्यतोवृत्त्यर्थं वेदाध्यापनंलभ्यते १४१

( ३ ) **कुल्लूकः** । वेदस्यैकदेशंमन्त्रंब्राह्मणंच वेदरहितानि व्याकरणादीन्यङ्गानि योवृत्त्यर्थमध्यापयति स उपा-ध्यायउच्यते ॥ १४१ ॥

( ४ ) **राघवानन्दः** । एकदेशंशाखामात्रंमन्त्रब्राह्मणंवा । वेदाङ्गानिशिक्षाकल्पोव्याकरणंनिरुक्तंछन्दोज्योतिषमिति । षट्एतानिवृत्त्यर्थंयोध्यापयति सउपाध्यायः ॥ १४१ ॥

( ५ ) **नन्दनः** । एकदेशंमन्त्रमात्रंब्राह्मणमात्रंवा । वृत्त्यर्थंधर्मार्थंजीवनार्थम् ॥ १४१ ॥

( ६ ) **रामचन्द्रः** । मन्त्रब्राह्मणयोःएकदेशः ॥ १४१ ॥

**निषेकादीनि कर्माणि यः करोति यथाविधि ॥ संभावयति चान्नेन सविप्रोगुरुरुच्यते ॥ १४२ ॥**

( १ ) **मेधातिथिः** । निषेकग्रहणात्पितुरयंगुरुत्वोपदेशः । निषेकोरेतःसेकः सआदिर्येषांकर्मणाम् । आदिग्रहणात्सर्वे संस्कारागृह्यन्ते । तानि यः करोत्यन्नेन च यःसंभावयति संवर्धयति । चैवेनमिति वा पाठः । अर्थस्तु सएव अन्नेनैव संभा-वनोपपत्तेः । अर्थान्तरनिर्देशः एनंकुमारं । ननुचान्वादेशः नचेह कुमारस्यपूर्वमुपदेशः । नैवंकस्यान्यस्य निषेकादीनिक्रियन्ते तानियत्करोति सामर्थ्यादपि निर्देशोन निर्देशतएव । एवमाभ्यां गुणाभ्यांहीनः केवलजनकत्वेपि नैव भवतिन गुरुः । नचै-वंमन्तव्यमसति गुरुत्वे नासौ मान्यः सर्वप्रथममसावेव मान्यः ।तथा च भगवान्व्यासः प्रभुः शरीरप्रभवः प्रियकृत्प्राणदोगुरुः । हितानामुपदेष्टा च प्रत्यक्षंदैवतंपितेति ॥ विप्रग्रहणं प्रदर्शनार्थम् ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः** । गर्भाधानादि कर्मउपनयनान्तंकरोत्यन्नेन च पुष्णाति यःसगुरुरिति पितैवोक्तः । तदे-कदेशमात्रकरणे तु पितृत्वमात्रम् ॥ १४२ ॥

( ३ ) **कुल्लूकः** । निषेकोगर्भाधानम् । तेन पितुरयंगुरुत्वोपदेशः । गर्भाधानादीनि संस्कारकर्माणि पितुरुपदिष्टानि यथाशास्त्रंयःकरोत्यन्नेन च संवर्धयति सविप्रोगुरुरुच्यते ॥ १४२ ॥

( ४ ) **राघवानन्दः** । गर्भाधानंयोनौ रेतोनिषेकइति । विप्रपदमुपलक्षणंसंस्कारस्य द्विजातिमात्रनियतत्वात् । संभावयति पुष्णाति निषेकातिरिक्तसंस्काराकर्तृत्वेपि पिता गुरुः । तथाच व्यासः प्रभुः शरीरप्रभवःप्रियकृत्प्राणदोगुरुः । हितानामुपदेष्टा च प्रत्यक्षंदैवतंपितेति ॥ प्रभुः कार्याकार्यनियोक्ता शरीरस्य प्रभवउत्पत्तिर्यस्मात्सइत्यर्थः ॥ १४२ ॥

( ५ ) **नन्दनः** । निषेकादीनि कर्माणि यः करोति नोपनयनाध्यापने । संभावयति पोषयति ॥ १४२ ॥

( ६ ) **रामचन्द्रः** । गर्भाधानादिनिषेकादीनि कर्माणि यथाविधियः करोतिसगुरुरुच्यते । अन्नेनअन्नप्राशनेन यःअन्नदानेन प्राशयति सउच्यते ॥ १४२ ॥

**अग्न्याधेयंपाकयज्ञानग्निष्टोमादिकान्मखान् ॥ यःकरोति वृतोयस्य सतस्य र्त्विगिहोच्यते ॥ १४३ ॥**

( १ ) **मेधातिथिः** । आहवनीयादीनामग्नीनामुत्पादककर्माग्न्याधेयमुच्यते । वसन्ते ब्राह्मणोग्नीनादधीतेति विहितम् । पाकयज्ञादर्शपूर्णमासादयः । अग्निष्टोमादयोमखाःसोमयागः । मखशब्दः क्रतुपर्यायः । एतानि कर्माणियस्ययः करोति स तस्यर्त्विगित्युच्यते । यस्यतस्येतिशब्दौसंबन्धितांदर्शयतः । यस्यैवैतानिकर्माणिकरोति तस्यैवासावृत्विगुच्यते नान्यस्य । सर्वएतआचार्यादयः सम्बन्धिशब्दाः । वृतः प्रार्थितः शास्त्रीयेण विधिना कृतवरणः । मान्यताप्रसङ्गादृत्विक्संज्ञोपदेशोत्र नहि ब्रह्मचारिधर्मेषु ऋत्विजामवसरः ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः** । पाकयज्ञानपक्वहविःसंपाद्यान्हविर्यज्ञान् दर्शपौर्णमासादीन् । एतच्चैकदेशकरणेपि । तथाच प्रयोगमध्येऋत्विगशक्तावनुप्रविष्टस्यापि ऋत्विक्त्वस्यात् अतउक्तंवृतइति ॥ १४३ ॥

( ३ ) **कुल्लूकः** । आहवनीयाद्यग्न्युत्पादकंकर्माग्न्याधेयमष्टकादीन्पाकयज्ञानग्निष्टोमादीन्यज्ञान्कृतवरणोयंस्य करोति सतस्यर्त्विगिह शास्त्रेऽभिधीयते । ब्रह्मचारिधर्मेष्वनुपयुक्तमप्यृत्विग्लक्षणमाचार्यादिवदृत्विजोऽपिमान्यत्वंदर्शयितुंप्रसङ्गादुक्तम् ॥ १४३ ॥

( ४ ) **राघवानन्दः** । अग्न्याधेयंआहवनीयाद्युत्पादकंकर्म । पाकयज्ञानष्टकादर्शादीनि । मखानित्यग्निष्टोमादेः विशेषणम् । यस्य वृतः वरणंगतः सन् । आचार्यादिऋत्विगन्ताः संबन्धिशब्दास्तेन यस्यैते संबन्धिनस्तस्यैवैतानि कुर्युर्नान्यस्येतिभावः ॥ १४३ ॥

( ६ ) **रामचन्द्रः** । अग्न्याधेयंअग्निहोत्रंपाकयज्ञान्बलिवैश्वदेवादीन्अग्निहोत्रसंज्ञकान्मखान्यस्य वृतःसन्यः करोति सतस्य ऋत्विक्इह गुरुरुच्यते ॥ १४३ ॥

**यआवृणोत्यवितथंब्रह्मणा श्रवणावुभौ ॥ समाता सपिता ज्ञेयस्तंन द्रुह्येत्कदाच न ॥ १४४ ॥**

( १ ) **मेधातिथिः** । आचार्यादिवत्पूज्यइत्यस्मिन्नवधौतल्लक्षणमुच्यते यउभौ श्रवणौ ब्रह्मणावेदाध्यापनेनावृणोति समाता सपिता ज्ञेयः । नेदमध्यापकस्य मातापितृशब्दवाच्यताविधानम् । आचार्यादिशब्दवत्प्रसिद्धार्थौहि पितृमातृशब्दौ जनकः पिता जननी माता उपचारेणाध्यापकस्तुत्यर्थंप्रयुज्येते यथा गौर्वाहीकइति । लोकेह्यत्यन्तोपकारकौ मातापितरौ प्रथितौ तौ हितंजनयतोभक्तादिनाचपुष्णीतः स्वशरीरानपेक्षमपि पुत्रहिते प्रवर्तेतेअतोमहोपकारकत्वात्ताभ्यामुपाध्यायःस्तूयते । योविद्यायामुपकरोति ससर्वोपकारकेभ्यः श्रेयान्अवितथं क्रियाविशेषणमेतत् । अवितथेन सत्येन ब्रह्मणा-

ऽनक्षरविस्वरवर्णितेन तन्न दुष्येत। अपकारोद्रोहस्तदुपरिअवज्ञानंच कदाचननिष्पन्नमपि ग्रन्थग्रहणेतदुत्तरकालमपिन द्रुह्येत। तथाच निरुक्तकारः अध्यापितायेगुरून्नाद्रियन्तेविप्रावाचा मनसा कर्मणा वा नाद्रियन्ते अवज्ञांकुर्वन्तियथैव ते शिष्यानगुरोर्भोजनीयाः न भोगाय कल्पन्ते तथैव तान्न भुनक्ति। श्रुतंतत्पाठान्तरमातृणत्तिति। अर्थकर्णौभिनत्ति विध्यतीत्युपमयाध्यापनमेवोच्यते। अविद्धकर्णः किल सस्मृतोनरः श्रुतंन यस्य श्रुतिगोचरंगतमिति। सर्वाध्यापकाना-माचार्योपाध्यायगुरूणामयंकृतविद्यस्यापि द्रोहप्रतिषेधः॥ १४४॥

( २ ) **सर्वज्ञनारायणः**। अत्रऋत्विगपेक्षयोपाध्यायापेक्षया च वेदोपाध्यायाचार्यौ मान्यतरावित्याह यआतृण-त्तीति। यआतृणत्त्यवितथेनकर्णावदुःखं कुर्वन्नमृतंसंप्रयच्छन्। तंमन्येत पितरंमातरंच तस्मै न द्रुह्येत्कतमच्च नाहेति श्रुतेरयमर्थोनिबद्धः। आतृणत्ति सूच्या सूत्रेणैव कुसुमंविध्यया श्रोत्रं संश्लेषयति ॐकारेण सर्ववाक्संतृणत्तीत्यादिश्रुति-षुतृदिधातोरेवमर्थत्वेन प्रसिद्धेः। अवितथममिथ्यात्वेन। ब्रह्मणा वेदेन। समाता पिता मातेव पितेवेत्यर्थः॥ १४४॥

( ३ ) **कुल्लूकः**। यउभौ कर्णाववितथमिति वर्णस्वरवैगुण्यरहितेन सत्यरूपेण वेदरूपेण वेदेनापूरयति समाता पिता च ज्ञेयः महोपकारकत्वगुणयोगात्। अयमध्यापकोमातापितृशब्दवाच्यस्तन्नामकुर्यात्। कदाचनेति गृहीते वेदे॥ १४४॥

( ४ ) **राघवानन्दः**। मुख्याचार्यस्य सर्वोत्कृष्टत्वात्तस्य मनसाप्यनिष्टंनाचरणीयमिति औत्सुक्यादाह यइति। अवितथंवर्णस्वरवैगुण्यरहितंब्रह्मणावेदेन श्रवणौ कर्णौआवृणोति सरहस्यादिवेदमध्यापयतीत्यर्थः॥ १४४॥

( ५ ) **नन्दनः**। तथ्येनवेदेनेत्यर्थः। आवृणोतिविविक्तीकरोति। कदाचनकृतार्थोपीत्यर्थः॥ १४४॥

( ६ ) **रामचन्द्रः**। ब्रह्मणा वेदेन उभौ श्रवणौ अवितथं सत्यंआवृणोतिआच्छादयतियः गायत्र्युपदेशंसमयेक-रोतीत्यर्थःसमातृतुल्योज्ञेयः सपितृतुल्योज्ञेयः। गायत्र्युपदेष्टारंकदा चन नद्रुह्यात्॥ १४४॥

## उपाध्यायान्दशाचार्यआचार्याणांशतंपिता॥ सहस्रंतु पितॄन्माता गौरवेणातिरिच्यते॥ १४५॥

( १ ) **मेधातिथिः**। स्तुत्यक्रमेण प्रकृष्टपूर्वविधानम्। उपाध्यायाच्छ्रेष्ठआचार्यस्तस्मात्पिता ततोऽपि मातेति दशादि-संख्यानिर्देशः स्तुतिमात्रम्। पूर्वस्मात् पूर्वस्मात्परस्यपरस्यातिशयोविवक्षित अतएव सहस्रंपितुरिति वचनम्।उपाध्यायान्द-शातिरिच्यते। दशभ्यउपाध्यायेभ्योऽधिकः। कथंपुनरत्र द्वितीया। अतिरयंकर्मप्रवचनीयः। उपाध्यायानतिक्रम्यातिक्र-म्यातिरिच्यते गौरवेण सातिशयेन युज्यते। अथवाऽऽधिक्यमतिरेकः तद्धेतुकेऽभिभवे धातुर्वर्तते। गौरवाधिक्येनोपा-ध्यायानभिभवति। अतिरिच्यतइति कर्मकर्तरिद्वितीया चाविरुद्धा दुहियाच्योर्बहुलंसकर्मकयोरिति बहुलग्रहणात्। ननु चानन्तरमेव वक्ष्यतिगरीयाम्ब्राह्मणःपितेति। इह चाचार्यात्पितुराधिक्यमुच्यते तदितरेतरव्याहतम्। नैषदोषः। इहाचार्यो-नैरुक्तदर्शनेनाध्यापकः संस्कारमात्रेणाचारोपदेशमात्रेण चाभिप्रेत आचार्यआचारंग्राहयतीति। नचैषनियमः स्वशास्त्रसिद्धा-भिरेव संज्ञाभिर्व्यवहारः। गुरुशब्दोह्यत्र पितरि परिभाषितः आचार्ये च तत्रतत्र प्रयुज्यते। तेन स्वल्पोपकारादुपनयन-मात्रकरादाचारग्राहकादध्यापनरहितादिदंपितुर्ज्यायस्त्वम्। अस्मिंश्च क्रमे विवक्षिते समवायएतेषांमाता प्रथमंवन्द्या ततः पिता ततआचार्यस्ततउपाध्यायः॥ १४५॥

( २ ) **सर्वज्ञनारायणः**। दशोपाध्यायानतिरिच्य तत्तद्दशकापेक्षयाउत्कृष्येत गौरवेण धर्मेण तत्तद्विषये कर्तव्ये

---

( १४५ ) न्द=द्द ( ल, भ, ब, न )

पितॄन्माता=पितुर्माता ( — " ——————— )

हेतुभूते न दशगुणंपूजादिगौरवंकुर्यादित्यर्थः । अतिरतिक्रमणइति कर्मप्रवचनीयत्वेनोपाध्यायानिति द्वितीया । एवमुत्तरेषु आचार्यशतात्पितोत्कृष्टोयद्युपनेता ब्रह्मणि सहस्रं सहस्रगुणं पितुः सकाशान्मातातिरिच्यते तदपेक्षया बहुदुःखानुभवात् ॥ १४५ ॥

( ३ ) **कुल्लूकः** । दशोपाध्यायानपेक्ष्याचार्य आचार्यशतमपेक्ष्य पिता सहस्रंपितॄनपेक्ष्य माता गौरवेणातिरिक्ता भवति । अत्रोपनयनपूर्वकसावित्रीमात्राध्यापयिताऽऽचार्योऽभिप्रेतस्तमपेक्ष्य पितुरुत्कर्षः । उत्पादकब्रह्मदात्रोरित्यनेन मुख्याचार्यस्य पितरमपेक्ष्यउत्कर्षंवक्ष्यतीत्यविरोधः ॥ १४५ ॥

( ४ ) **राघवानन्दः** । अत्र हेतुरुपाध्यायानिति । उपाध्यायानूदशापेक्ष्यदशसूपाध्यायेषुयावत्पूजादितत्सर्वमेकोप्याचार्योर्हतीत्येवमुत्तरत्र ॥ १४५ ॥

( ५ ) **नन्दनः** । अथगुरूणांतारतम्यमाह उपाध्यायानिति । सहस्रंतु पितुरितिपाठः । गौरवेणगुरुतरोपकारकारणेन ॥ १४५ ॥

( ६ ) **रामचन्द्रः** । उपाध्यायातदशगुणः आचार्यःश्रेष्ठःउच्यते आचार्याणांमध्ये शतंशतगुणःश्रेष्ठःपिताभवति । एवं पितुःसहस्रगुणितंमातापूजार्हा गौरवेण श्रेष्ठाउच्यते ॥ १४५ ॥

**उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदःपिता ॥ ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ १४६ ॥**

( १ ) **मेधातिथिः** । मुख्याचार्यसन्निधौ पितरिच संस्कर्तरिसन्निहिते तत्र क्रमः अतआह । उत्पादकोजनकः ब्रह्मदाताऽध्यापकः तौ द्वावपि पितरौ तयोः पित्रोर्गरीयान्पिता योब्रह्मदः । अतः पित्राचार्यसमवाये आचार्यः प्रथममभिवाद्यः । अत्र हेतुरूपमर्थवादमाह । ब्रह्मजन्म हि ब्रह्मग्रहणार्थंजन्म ब्रह्मजन्म शाकपार्थिवादित्वात्समासः । अस्मिन्समासे उपनयनंब्रह्मजन्म । अथवा ब्रह्मग्रहणमेव जन्म । तद्विप्रस्य शाश्वतं नित्यं प्रेत्योपकारकमिह चोपकारकम् ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । केवलोत्पत्तिमात्रकारिणः पितुर्ब्रह्मपिता सावित्र्यामुत्पादयिता गरीयान् प्रेत्यमोक्षसाधनपर्यन्तंयोग्यतापादकत्वादिह च सर्वकर्माधिकारापादकत्वात् । शाश्वतंचिरकालस्थायिफलम् क्वचित्ब्रह्मदात्रोरिति पाठः॥१४६॥

( ३ ) **कुल्लूकः** । जनकाचार्यौ द्वावपि पितरौ जन्मदातृत्वात् तयोराचार्यःपिता गुरुतरःयस्माद्विप्रस्य ब्रह्मग्रहणार्थंजन्मोपनयनजन्म संस्काररूपंपरलोकइहलोके च शाश्वतंनित्यं ब्रह्मप्राप्तिफलकत्वात् ॥ १४६ ॥

( ४ ) **राघवानन्दः** । आचार्याणांउपयनपूर्वकंसाङ्गवेदाध्यापयितॄणांगर्भाधानादिदृष्टोपकारकतया पित्रोर्गरीयस्त्वेपि दृष्टादृष्टार्थतयाआचार्यएव क्षेम्योगरीयानित्याह उत्पादकेति । गरीयान्ब्रह्मदः पितेत्यत्र हेतुः ब्रह्मजन्मेतिउपनीतस्यैव वेदस्वीकृतिद्वारेह कर्माधिकारिता तद्द्वारा च स्वर्गाद्यवाप्तिः । शश्वद्ब्रह्मावाप्तिहेतुत्वाच्छाश्वतमिति भावः ॥ १४६ ॥

( ५ ) **नन्दनः** । अथब्रह्मचारिणांपितुरप्याचार्योगरीयानित्याह उत्पादकेति । उत्पादकः जनयिता पिताब्रह्मपिता- आचार्यः । तयोर्ब्रह्मदः पितागरीयान् । अत्रहेतुरुत्तरार्धेनोक्तः । ब्रह्मजन्म उपनयनजन्योऽतिशयः । विप्रस्यद्विजस्य । शाश्वतंजन्मान्तरेष्वप्यनुवृत्तम् ॥ १४६ ॥

( ६ ) **रामचन्द्रः** । उत्पादकश्च ब्रह्मदाता च उत्पादकब्रह्मदातारौ तयोः उत्पादकब्रह्मदात्रोर्मध्ये ब्रह्मदःपिता वेदाध्यापकरूपःगायत्र्युपदेष्टा पिता गरीयान्श्रेष्ठोभवतीत्यर्थः । विप्रस्यब्रह्मजन्म प्रेत्य परलोकेइह च लोके शाश्वतंगायत्र्यु पदेशेन यज्जन्मतत्शाश्वतमित्यर्थः ॥ १४६ ॥

**कामान्माता पिता चैनं यदुत्पादयतोमिथः ॥ संभूतिंतस्य तांविद्याद्यद्योनावभिजायते ॥ १४७ ॥**

( १ ) **मेधातिथिः** । श्लोकद्वयमर्थवादः । मातापितरौ यदेनंदारकमुत्पादयतोजनयतो मिथोरहसि परस्परंतत्कामाद्धेतोर्मन्मथपरवशौ संभूतिंतस्य तांविद्यात् । तस्य दारकस्य संभवोत्पत्तिर्यद्योनौ मातृकुक्षावभिजायतेऽङ्गप्रत्यङ्गानि लभते ।संभवश्च येषांभावानांते तथैव विनश्यन्ति अतः किंतेन संभवेन यस्यानन्तरभाववीविनाशः ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । कामसिद्धेरपि तत्रोद्देशात् कामादित्युक्तम् । संभूतिंजन्ममात्रम् ॥ १४७ ॥

( ३ ) **कुल्लूकः** । मातापितरौ यदेनंबालकंकामवशेनान्योन्यमुत्पादयतः संभवमात्रंतत्तस्य पश्वादिसाधारणम् । यद्योनौ मातृकुक्षावभिजायतेऽङ्गप्रत्यङ्गानि लभते ॥ १४७ ॥

( ४ ) **राघवानन्दः** । पितुरुत्पादकत्वमन्यथा सिद्धमित्याह कामादिति त्रिभिः । कामान्मन्मथवशात्संभूतिंपश्वादिसाधारणींयद्यतोयोनिषुअभिजायतेअभितःपूर्वजातोप्युत्तरत्रापि जायते रतिसुखार्थप्रवृत्तयोर्मातापित्रोःदुःखैकहेतुजनिहेतुत्वाद्धिधिक्धिक्तज्जन्मेत्याशयः ॥ १४७ ॥

( ५ ) **नन्दनः** । मातापितरौ यदेनंद्विजमुत्पादयतस्तन्मिथः कामादन्योन्यरागात्प्रवृत्तंनास्योपकर्तुंकिंचिद्विजोयद्योनावभिजायते तस्यद्विजस्यतांसंभूतिंतदभिजननंविद्यात्विविच्यात् । विविच्यमानासासंभूतिरसत्याजरामरणयुक्तानिर्णीयतइत्यर्थः । उत्तरश्लोकानुगुण्यादेवंव्याख्यातम् ॥ १४७ ॥

( ६ ) **रामचन्द्रः** । यत्योनौअभिजायते तांसंभूतिंविद्यात्यतःयोनौअभिजायते ॥ १४७ ॥

**आचार्यस्त्वस्य यांजातिंविधिवद्वेदपारगः॥उत्पादयति साविव्या सा सत्या साजरामरा ॥ १४८॥**

( १ ) **मेधातिथिः** । आचार्यात्तुयत्तस्य जन्म तदविनाशि। गृहीते वेदेऽवगते च तदर्थैकर्मानुष्ठानात्स्वर्गापवर्गप्राप्तिरित्यस्य सर्वस्याचार्यमूलत्वात्सश्रेष्ठः । यांजातिमुत्पादयति यसंस्कारमुपनयनाख्यंद्वितीयंजन्मेतिजन्मसंस्तुतिंनिर्वर्तयति साविव्या तदनुवचनेन साजातिः सत्या साऽजरामरा । यद्यप्येते ऽभिन्नार्थाः शब्दास्तथापीहोपनयनाख्यस्य जन्मनोमातृजन्मनः सकाशाद्गुणातिशयविवक्षायां प्रयुक्ताः । नहि जरामृत्यूप्राणिनामिव जातेः संभवतः । अविनाशित्वंत्वेकेनैव शब्देन शक्यते प्रतिपादयितुम् । नच तत्प्रतिपाद्यते वेदपारगआचार्योयांजातिंविधिवत्साविव्या उपयनाङ्गकलापेन सावित्रीशब्दस्य तल्लक्षणत्वात् उत्पादयति सा श्रेयसीति पदयोजना । जातिर्जन्म ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । यज्जातीयजन्मगौरवेण धर्मेण तत्तद्विषये कर्तव्येन हेतुभूतेन विधिवदुपनयनविधिना साविव्या मातृभूतया सासत्या सत्यलोकप्राप्तिहेतुः अजराअजरत्वंदेवत्वं तत्प्राप्तिहेतुत्वात् अमराअमृतत्वस्य मोक्षत्वस्यहेतुः ॥ १४८ ॥

( ३ ) **कुल्लूकः** । आचार्यःपुनर्वेदज्ञोऽस्य माणवकस्य यांजातिंयज्जन्म विधिवत्साविव्येति साङ्गोपनयपूर्वकसाविव्यनुवचनेनोत्पादयति सा जातिःसत्याऽजराऽमरा ब्रह्मप्राप्तिफलत्वादुपनयनपूर्वकस्य वेदाध्ययनतदर्थज्ञानानुष्ठानैर्निष्कामस्य मोक्षलाभात् ॥ १४८ ॥

( ४ ) **राघवानन्दः** । ब्रह्मजन्मब्रह्मसावित्रीतद्ग्रहणमेव जन्म ब्रह्मग्रहणयोग्यंवा ब्रह्मजन्मनःपुनःप्रायेण न जायतएवेत्याह आचार्यइति । :अस्यमाणवकस्य साविव्या सकलरहस्यसाविव्युपदेशेन सासत्येत्यादितादृशस्य समानज-

न्मानुष्ठितकर्मजशुद्ध्याविरक्तस्य मुक्त्युपपत्तेरिति तमेतंवेदानुवचनेन ब्राह्मणा विविदिषन्तितथा परीक्ष्य लोकान्कर्मचिता-न्ब्राह्मणोनिर्वेदमायांनास्त्यकृतःकृतेन सत्यंज्ञानमनन्तंब्रह्म ब्रह्म वेदब्रह्मैव भवतितदात्मानमेवावेदअहंब्रह्मास्मीति श्रुतेः ॥ १४८ ॥

( ५ ) **नन्दनः** । आचार्याज्जन्म नैवंविधमित्याहआचार्यस्त्विति । जातिंजन्म । सत्याहितनियता । तस्मात्तुस्थि-रमेततद्गरीयान्ब्रह्मदः पितेति ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । आचार्यःसावित्र्युपदेशात् तस्यतां जातिंउत्पादयति साजातिःसत्या नित्यासा अजरा जातिः अमराजातिर्भवत्येव ॥ १४८ ॥

**अल्पंवा बहु वा यस्य श्रुतस्योपकरोति यः॥ तमपीह गुरुंविद्या च्छ्रुतोपक्रियया तया॥ १४९॥**

( १ ) **मेधातिथिः** । यउपाध्यायो यस्य माणवकस्योपकरोति श्रुतस्य श्रुतेनेत्यर्थः । अल्पंवा बहुवाक्रियाविशेष-णमेतत्।तमपि स्वल्पश्रुतोपकारिणंगुरुंविद्यात्। एवंतु योजना ज्यायसी। यस्य श्रुतस्य सामानाधिकरण्यवेदविषयस्य वेदाङ्ग विषयस्य वा शास्त्रन्तरविषयस्य तर्ककलाशास्त्रस्य यदल्पंबहुवा तेनोपकरोतीत्यध्याहारः। श्रुतंच तदुपक्रिया चासौ श्रुतो-पक्रिया तया उपकारक्रियया तद्धेतुत्वाच्छ्रुतमुपक्रियेति सामानाधिकरण्यम्। गुरुवृत्तिस्तत्रकर्तव्या तद्यपदेशोवा तत्राचार्या-दिशब्दवत्स्मर्यते ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । क्वचिद्गुरुराज्ञानीयो गुरुरनुगन्तव्यइत्यादौ गुरुपदमध्यापकमात्रवाचि श्रूयते । तदर्थंगुरुसं-ज्ञायानानार्थतामाह अल्पंवेति । यस्य श्रुतस्य शाब्दज्ञानस्यांशे यउपकरोति । अतिशयमापादयतीत्यर्थः ॥ १४९ ॥

( ३ ) **कुल्लूकः** । श्रुतस्य श्रुतेनेत्यर्थः । उपाध्यायोयस्य शिष्यस्याल्पंवा बहुवा कृत्वा श्रुतेनोपकरोति तमपीह शास्त्रे तस्य गुरुंजानीयात् । श्रुतमेवोपक्रिया तया श्रुतोपक्रियया ॥ १४९ ॥

( ४ ) **राघवानन्दः** । वेदार्थोपदेष्टृत्वंगुरुत्वे हेतुर्नतु वयोबाहुल्यादीत्याह सार्थवादंदशभिः । अल्पमितियस्ययं-प्रति श्रुतस्य वेदस्य श्रुतेन वेदशास्त्रतर्कव्याकरणकलादिकेन तदर्थेनाल्पमप्युपकरोति यस्तंगुरुंविद्यादित्यर्थः । श्रुतमेवोप-क्रियाउपकारस्तया ॥ १४९ ॥

( ५ ) **नन्दनः** । आचार्यगरीयस्त्वमेवोक्तंप्रकारान्तरेणप्रतिपादयति अल्पंवेति । अल्पविद्याप्रदमपिगुरुंविद्यात्बहु-विद्याप्रदंकिंपुनरित्यभिप्रायः ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । यःयस्य श्रुतस्य अध्ययनस्यअल्पंवा बहु वाउपकरोतिउपकारयेत् तमपिइह गुरुंविद्यात् । तया श्रुतोपक्रियया श्रुतंअध्यापनंतस्यउपकारेणेत्यर्थः ॥ १४९ ॥

**ब्राह्मस्य जन्मनः कर्त्ता स्वधर्मस्य च शासिता ॥ बालोपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥ १५० ॥**

( १ ) **मेधातिथिः** । ब्रह्मग्रहणार्थंजन्म ब्राह्ममुपनयनंतस्य कर्ता स्वधर्मस्य शासिता उपदेष्टा वेदार्थव्याख्यानेन सतादृशोबालोपि ब्राह्मणोवृद्धज्येष्ठस्य तर्ककलाशास्त्रस्यवायदल्पंवा बहुवा तेन पिता भवति पितृतुल्या तत्रवृत्तिः कर्तव्या ज्येष्ठेनापि । कथंपुनः कनीयाञ्ज्येष्ठमुपनयते अष्टमे त्वुपनयनंयावच्च नाधीतश्रुतवेदस्तावन्नाचार्यकरणविधावधिक्रियते एवंतर्हि नोपनयनमत्र ब्रह्म जन्म किंतर्हि स्वाध्यायग्रहणमेव तस्य कर्ताध्यापयिता । स्वधर्मस्य वेदार्थस्य शासिता

व्याख्याता पिता भवति धर्मतः पितृधर्मास्तत्र कर्तव्याः । धर्मतइति धर्मनिमित्तंतत्र पितृत्वम् । नच ते धर्माध्यापक व्याख्यांशैः पितृसंबन्धिनः सिद्धाःसन्ति । अतोविधीयते ब्राह्मणवत्क्षत्रिये वर्तितव्यमिति ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्म वेदस्तस्याध्ययनेन यस्तद्विशिष्टस्वरूपलाभः सब्राह्मंजन्म तस्य यःकर्ता । न त्वेते नोपनेतृत्वमिष्टं बालोपीत्यनेन विरोधात् कथायामध्यापयामासेत्यभिधानाच्च । योवास्वधर्मशासिता बालोल्पवयाः । वृद्धस्याधिकवयसः ॥ १५० ॥

( ३ ) **कुल्लूकः** । ब्रह्मश्रवणार्थंजन्म ब्राह्ममुपयनयनंस्वधर्मस्य शासिता वेदार्थव्याख्याता तादृशोऽपि बालोवृद्धस्य ज्येष्ठस्य पिता भवति धर्मतइति पितृधर्मास्तस्मिन्ननुष्ठातव्याः ॥ १५० ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्य ब्रह्मग्रहणयोग्यस्यउपनयनाभावेन पितृमातृतोजन्मसत्त्वेपि शूद्रादेरिवानधिकारात्धर्मस्य शासितोपदेष्टा च बालोपि पिता स्याद्धर्मतोधर्मशास्त्रप्रामाण्यात् ॥ १५० ॥

( ५ ) **नन्दनः** । ब्राह्मस्यवैदिकस्यजन्मनः उपनयनस्यकर्तापिता भवति पितृकल्पोभवति गुरुतरोभवतीत्यर्थः ॥ १५० ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्यजन्मनःकर्ता वेदाध्यापकःच पुनःस्वधर्मस्य शासिताउपदेष्टा बालोपि विप्रःवृद्धस्य शिष्यस्य धर्मतःपिता भवति ॥ १५० ॥

## अध्यापयामास पितॄन्शिशुरांगिरसः कविः ॥ पुत्रकाइति होवाच ज्ञानेन परिगृह्य तान् ॥१५१॥

( १ ) **मेधातिथिः** । पूर्वस्य पितृवद्वृत्तिविधेरर्थवादोयंपरकृतिनामा । अङ्गिरसः पुत्रः कविर्नाम शिशुर्बालःपितृतुल्यान्पितृव्यमातुलतत्पुत्रादीनधिकवयसोऽध्यापयाञ्चकाराध्यापितवान् । सचाव्हाननिमित्तेषु तान्पुत्रकाआगच्छतइत्याजुज्ञानेन परिगृह्यतान्स्वीकृत्य शिष्यान्कृत्वा ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । पितॄन् अग्निष्वात्तादीन् । कविःकविनामा । ज्ञानेनोपदेशेन । परिगृह्य शिष्यतांनीत्वा ॥ १५१ ॥

( ३ ) **कुल्लूकः** । प्रकृतानुरूपार्थवादमाह अध्यापयामासेति । अङ्गिरसः पुत्रोबालः कविर्विद्वान्पितॄन्गौणान्पितृव्यतत्पुत्रादीनधिकवयसोऽध्यापितवान् । तान्ज्ञानेन परिगृह्य शिष्यान्कृत्वा पुत्रकाइतिआजुहावइति । ह इत्यव्ययंपुरावृत्तसूचनार्थम् ॥ १५१ ॥

( ४ ) **राघवानन्दः** । अत्रेतिहासमाह अध्यापयामासेति । आङ्गिरसःअङ्गिरसःपुत्रःकविःक्रान्तदर्शी ज्ञानेन तद्धेतुना वेदाध्यापनेन परिगृह्यशिष्यतांनीत्वा ॥ १५१ ॥

( ५ ) **नन्दनः** । मन्त्रदस्यबालस्यापि पितृत्वमवस्थापयितुमितिहासंश्लोकत्रयेणोदाहरति अध्यापयामासेति । परिगृह्यआहूय ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । शिशुःआङ्गिरसःकविःपितॄन्अध्यापयामासतान्पितॄन्ज्ञानेन ज्ञानोपदेशेन परिगृह्य स्वीकृत्य हे पुत्रकाइत्युवाच ॥ १५१ ॥

## ते तमर्थमपृच्छन्त देवानागतमन्यवः ॥ देवाश्चैतान्समेत्योचुर्न्याय्यंवः शिशुरुक्तवान् ॥ १५२ ॥

( १ ) **मेधातिथिः** । ते पित्रादिस्थानीया पुत्रकाइत्याव्हानेनागतमन्यवउत्पन्नक्रोधास्तमर्थंपुत्रशब्दाव्हानंदेवान्पृष्ट-

वन्तअनेन बालेन वयमेवमाहूयामहे किमेतद्युक्तंतेदेवाः पृष्टाः सन्तः सर्वे समवायंकृतवन्तः समेत्य ऐकमत्यंस्थापयित्वै-तान्कवेः पितॄनूचुरुक्तवन्तोन्याय्यंयुक्तंवोयुष्मान् शिशुरुक्तवान् ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः** । तमर्थंकिमेतदस्य युक्तंन वेति ॥ १५२ ॥

( ३ ) **कुल्लूकः** । ते तमर्थमपृच्छन्तेति तेपितृतुल्याः पुत्रकाइत्युक्ताअनेन जातक्रोधाः पुत्रकशब्दार्थंदेवान्पृष्टवन्तः । देवाश्च पृष्टामिलित्वाएतानवोचन्युष्मान्यच्छिशुःपुत्रशब्देनोक्तवान्तद्युक्तम् ॥ १५२ ॥

( ४ ) **राघवानन्दः** । ते पितरस्तमर्थंपुत्रकाइति शब्दार्थंआगतमन्यवःपुत्रकाइत्याव्हानेन जातमन्यवोमन्युंप्राप्ताः एतान्पितॄन् ॥ १५२ ॥

( ६ ) **रामचन्द्रः** । ते पितरःआगतमन्यवःदेवान्प्रतिअर्थंपुत्रमित्यस्यार्थंअपृच्छन्त । देवास्तान्समेत्यइतिऊचुःवः-यष्माकंशिशुःउक्तवान्यत्तदपि योग्यमित्यर्थः ॥ १५२ ॥

**अज्ञोभवति वै बालः पिता भवति मन्त्रदः ॥ अज्ञंहि बालमित्याहुः पितेत्येव तु मन्त्रद॥१५३॥**

( १ ) **मेधातिथिः** । यस्मान्न च वयसास्वल्पेन बालोभवति किंतर्ह्यज्ञोमूर्खोवृद्धोपि यः । मन्त्रदउपलक्षणम् । मन्त्रान्वेदान्योददात्यध्यापयति विवृणोति च सपिता भवति । वै शब्दआगमान्तरसूचकः । देवानाप्यषआगमः पुराण-एव । तथा चैनिह्यसूचकःपरोपदेशआहुरिति । अज्ञंमूर्खंबालमित्याहुरस्मत्पूर्वेपि । पिते ति मन्त्रदम् । इतिकरणंस्वरूप-परतांबोधयति यतः परतः श्रूयते । बालइत्येतेन शब्देनाज्ञमात्रः । अतश्च बालशब्दाद्द्वितीयायाअभावः छान्दोग्ये शैशवब्राह्मणमेतद्वस्तुतः स्मृतिकारेण वर्णितम् ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः** । अज्ञंहीतिप्रसिद्धताभिधानंदार्ढ्यार्थम् ॥ १५३ ॥

( ३ ) **कुल्लूकः** । अज्ञइति । वैशब्दोऽवधारणे अज्ञएव बालोभवति न त्वल्पवयाः । मन्त्रदः पिता भवति । मन्त्रग्रहणंवेदोपलक्षणार्थम् । योवेदमध्यापयति व्याचष्टे सपिता ॥ १५३ ॥

( ४ ) **राघवानन्दः** । न्याय्यत्वेहेतुःअज्ञइत्यादि । बालःसंस्कार्यत्वात्पिता मन्त्रप्रदानेन संस्कारकत्वात् । पितेति नद्वितीया । इतिपरत्वाभावात् ॥ १५३ ॥

( ६ ) **रामचन्द्रः** । अज्ञःशुद्धापशब्दज्ञानरहितः वैअवधारणार्थः बालएव भवति । सएव बालःमन्त्रतःमन्त्रोपदेशात् ज्ञानोपदेशात्पिता भवति तथा हि निश्चयेन अज्ञंबालं आहुः । मन्त्रदउपदेष्टापितेत्येव ज्ञेयमिति ॥ १५३ ॥

**न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः॥ ऋषयश्चक्रिरे धर्मंयोनूचान सनोमहान्॥ १५४ ॥**

( १ ) **मेधातिथिः** । इयमपराध्यापकप्रशंसा । हायनशब्दः संवत्सरपर्यायः । न बहुभिर्वर्षैः परिणतवयामहान्पू-ज्योभवति न पलितैः केशश्मश्रुरोमभिः शुक्लैर्न वित्तेन बहुना न बन्धुभिः प्रागुक्तानि मान्यस्थानान्यापद्यन्ते । समुदि-तैर्न महान्भवति किंतर्हि एकयैव विद्यया । यस्मादृषयश्चक्रिरे ऋषिर्दर्शनान्निःशेषवेदार्थदर्शिनोनिश्चित्येमंधर्मंव्यवस्था-पितवन्तः । योनूचानः अनुवचनमध्यापनंकृत्स्नाङ्गस्य वेदस्य सनोस्माकंमहाञ्छ्रेष्ठः। करोति व्यवस्थापने वर्तते नाभूतज-नने ॥ १५४ ॥

---

( १५४ ) धर्मं=पूर्वं ( ड )

( २ ) **सर्वज्ञनारायणः** । हायनैर्वर्षैःबहुभिर्गतैरिति तद्वत्सरकर्तव्यसोमयागादिकमबाहुल्यमुक्तम् । पलितैरिति वयोबाहुल्यम् । अनूचानः साङ्गवेदाध्येता ॥ १५४ ॥

( ३ ) **कुल्लूकः** । अत्रैवहेतुमाह यस्मात्पूर्वेऽपि मुनयो ऽङ्गबालमित्यूचुः मन्त्रदंच पितेत्येवाब्रुवन्नित्याह न हायनैरिति । न.बहुभिर्वर्षैर्नकेशश्मश्रुलोमभिः शुक्लैर्न बहुना धनेन न पितृव्यत्वादिभिर्बन्धुभावैःसमुदितैरप्येतैर्नमहत्त्वंभवति किंत्वृषयइमंधर्मकृतवन्तः । यःसाङ्गवेदाध्येता सोऽस्माकंमहान्संमतः ॥ १५४ ॥

( ४ ) **राघवानन्दः** । तत्रार्थे ऋष्युक्तिःप्रमाणमित्याह नहायनैरिति । हायनैरब्दैर्वयोबाहुल्येन जराकृतकेशपालित्यैकेशधावल्यैर्वाबन्धुभिःपुत्रपौत्राद्यैर्वाएतैर्व्यस्तसमस्ततयावाधिक्ये न महत्त्वंकिंतर्हि यःअनूचानःसाङ्गवेदाध्येता तस्येव महत्त्वमित्याह ऋषयइत्यादिना । धर्ममयंधर्मइति निर्णयंस्तुतिमात्रंवा ॥ १५४ ॥

( ५ ) **नन्दनः** । श्रैष्ठ्यकारणंवैदुष्यमित्याह नहेति । हायनैः वयोभिः । पलितैः वार्द्धकैः । बन्धुभिः कुलेन । धर्मंश्रैष्ठ्यापादकंन्यायमनूचानः वेदवित् । नः अस्माकम् । ब्राह्मणानांमध्येमहान्विशिष्टः ॥ १५४ ॥

( ६ ) **रामचन्द्रः** । बहुभिःगतहायनैःपलितैःकेशैः न च सच्चरित्रैःन बन्धुभिःश्रेष्ठतांयाति । यःअनूचानःवेदपारगःसः-नःअस्माकंमते महान्श्रेष्ठःइति । धर्मंऋषयःचक्रिरेइत्यर्थः ॥ १५४ ॥

**विप्राणां ज्ञानतोज्यैष्ठ्यं क्षत्रियाणांतु वीर्यतः॥ वैश्यानांधान्यधनतः शूद्राणामेवजन्मतः॥१५५॥**

( १ ) **मेधातिथिः** । अयमप्यर्थवादएव । यदुक्तंवित्तादिभ्यः समुदितेभ्यःकेवलापि विद्या ज्यायसीति तदेव सप्रपञ्चमनेन निर्दिश्यते । ब्राह्मणानांज्ञानेन ज्यैष्ठ्यंन वित्तादिभिः क्षत्रियाणांवीर्यतः वीर्यंद्रव्यस्य कौशलंदृढप्राणता च वैश्यानांधान्यधनतः । धान्यस्य पृथगुपादानाद्धनशब्दोहिरण्यादिवचनः ब्राह्मणपरिव्राजकवत् । बहुधनोवैश्यःसज्येष्ठः । आद्यादित्वात्तृतीयार्थे तसिः । हेतौतृतीया ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञानतोज्ञानाधिक्येन ॥ १५५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणानांविद्यया क्षत्रियाणांपुनर्वीर्येण वैश्यानांधान्यवस्त्रादिधनेन शूद्राणामेव पूर्वजन्मना श्रेष्ठत्वम् । सर्वत्रतृतीयार्थेतसिः ॥ १५५ ॥

( ४ ) **राघवानन्दः** । विप्राणांज्ञानतोज्यैष्ठ्यमितिवदंस्तत्प्रतियोगितया ऽन्येषामपि तदाह विप्राणामिति । ज्ञानइत्यादिचतुर्ष्वपि तृतीयार्थे तसिः । वीर्यतःशस्त्रकौशलेन केनापि धनविद्यादिमत्त्वेपि शूद्रस्य जन्मनैवेत्यवधारणार्थः ॥ १५५ ॥

( ५ ) **नन्दनः** । ब्राह्मणानांज्ञानतएवश्रैष्ठ्यंक्षत्रियादीनांतु निमित्तान्तरादित्याह विप्राणामिति । जन्मतः वयस्तः । क्षत्रियादीनामुपन्यासोदृष्टान्तार्थः ॥ १५५ ॥

**न तेन वृद्धोभवति येनास्य पलितंशिरः ॥ योवै युवाप्यधीयास्तंदेवाः स्थविरंविदुः ॥ १५६ ॥**

( १ ) **मेधातिथिः** । न तेन वृद्धउच्यते येनास्य पलितंधवलंशिरः शिरःस्थाःकेशाः । कथंतर्हि योवैयुवापि तरुणोऽपि अथ चाधीते तंदेवाः स्थविरंविदुः ब्रुवते देवाः किल सर्वस्य वेदितारइति प्रशंसा ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः** । स्थविरंस्थविरपदवाच्यम् । येन वयोबाहुल्यादिना हेतुना ॥ १५६ ॥

( ३ ) **कुल्लूकः** । न तेन वृद्धोभवति येनास्य शुक्लकेशंशिरः किंतु युवाऽपि सन्विद्वांस्तंदेवाः स्थविरंजानन्ति॥१५६॥

( ४ ) **राघवानन्दः** । अत्रार्थेदेवसंमतिमप्याह न तेनेति । शिरसःपालित्यंपक्वकेशतात्वक्शैथिल्यंवा । अधीयानो-ऽध्ययनोद्यतोपि किमुताधीतवेदः ॥ १५६ ॥

( ५ ) **नन्दनः** । उक्तमर्थंनिगमयति नेति ॥ १५६ ॥

( ६ ) **रामचन्द्रः** । अस्य शिरःयेन वयसा पलितंभवेत्तेनवयसा वृद्धोन भवतीत्यर्थः ॥ १५६ ॥

**यथा काष्ठमयोहस्ती यथा चर्ममयोमृगः ॥ यश्च विप्रोनधीयानस्त्रयस्ते नाम बिभ्रति ॥१५७॥**

( १ ) **मेधातिथिः** । इयमध्ययनाध्येतृस्तुतिः । काष्ठमयोदारुण्यो यः क्रियते क्रकचादिना हस्त्याकृतिः सयथा निष्फलोन हस्तिकार्यंराज्ञांशत्रुवधादि करोतिएवंयोब्राह्मणोनाधीते सकाष्ठतुल्योन क्वचिदधिकारी । चर्ममयोमृगः चर्मविकारोन्योऽपि योमृगः सनिष्फलोनाखेटकादिकार्यंकरोति । त्रयएते नाममात्रंबिभ्रति न तस्यार्थम् ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । काष्ठमयोहस्तीति लेशतोपि तदन्वयाभावः चर्ममये मृगे लेशतोऽन्वयासंभवात् नाममात्रंबिभ्रति । अतोयद्विप्रेकार्यं तदनधीयानेन कुर्यादित्यर्थः ॥ १५७ ॥

( ३ ) **कुल्लूकः** । यथा काष्ठघटितोहस्ती यथा चर्मनिर्मितोमृगः यश्च विप्रोनाधीते त्रयएते नाममात्रंदधति । न तु हस्त्यादिकार्यंशत्रुवधादिकंकर्तुंक्षमन्ते ॥ १५७ ॥

( ४ ) **राघवानन्दः** । अनधीयानस्य दानापात्रत्वंवदंस्तंसदृष्टान्तंनिन्दति यथेति द्वाभ्याम् । काष्ठमयःकृत्रिमः नाम बिभ्रति मृगइत्यादि नामध्रियन्ते न तु ते मृगादयःतत्कार्याकारित्वात् ॥ १५७ ॥

( ५ ) **नन्दनः** । अनधीयाननिन्दामधीयानप्रशंसार्थंप्रसङ्गादाह येथति । नामबिभ्रति नामैव बिभ्रति ब्राह्मणशब्दमेवबिभ्रति न तस्य प्रवृत्तिनिमित्तमित्यर्थः ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । विप्रःयथा चर्ममयोमृगःतथाअनधीयानःनाम केवलंबिभर्तीत्यर्थः ॥ १५७ ॥

**यथा षण्ढोफलः स्त्रीषु यथा गौर्गवि चाफला ॥ यथा चाज्ञे ऽफलंदानं तथा विप्रोनृचो फलः ॥ १५८ ॥**

( १ ) **मेधातिथिः** । षण्ढोनपुंसकउभयव्यञ्जनोऽशक्तः स्त्रीगमनेयथा स्त्रीष्वफलः यथा गौर्गवि स्त्रीगौः स्त्रीगव्यांएवं तथा विप्रोऽनृचोऽनधीयानोऽफलः ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । षण्ढोनपुंसकं । गौरिति गवीतिच स्त्रीलिंगेपदे । अज्ञेस्थावरादौ अफलंदानं प्रत्युपकाराद्यभावात् । अनृचोअवेदः ऋक्पदंवेदोपलक्षणं अफलोदातुः फलाहेतुः ॥ १५८ ॥

( ३ ) **कुल्लूकः** । यथा नपुंसकंस्त्रीषु निष्फलं यथा चस्त्री गवी गव्यामेव निष्फला यथा चाज्ञे दानफलं तथा ब्राह्मणोऽप्यनधीयानोनिष्फलः श्रौतस्मार्तकर्मानर्हतया तत्फलरहितः ॥ १५८ ॥

( ४ ) **राघवानन्दः** । यथाषण्ढोनपुंसकःदृष्टादृष्टकार्यशून्यःगौःस्त्रीगवान्तरंगवि वत्सोत्पादनयोग्यायांफलमण्डकोशस्तच्छून्योवातथाअनृचःवेदशून्यःदेयद्रव्यादिफलाजनकत्वात् । ब्राह्मस्येत्यादिनवश्लोकाअध्ययनस्तुत्यर्थाः ॥१५८॥

( ५ ) **नन्दनः** । ब्राह्मण्येनावाप्यं फलमनधीयानस्यनसिध्यतीत्याह यथाषण्ढइति । गौरित्यपहृतपुंभावोबलीवर्दोऽभिमेतः । अफलइतिपाठः ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । षण्ढःस्त्रीषु यथाअफलः भवत्येवंयथागविगौःसंयोगे विफला भवति यथाअज्ञेमूर्खेदत्तंदानंअ-फलंभवति निष्फलमित्यर्थःतथा अनृचःविप्रःअफलःभवतिऋङ्मात्रमपि नाधीयानइत्यर्थः ॥ १५८ ॥

**अहिंसयैव भूतानांकार्यंश्रेयोनुशासनम्॥वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता॥१५९॥**

( १ ) **मेधातिथिः** । सप्ताष्टश्लोकाःअध्येतृवेदित्रोःप्रशंसार्थाअति क्रान्ताः । इदानीमश्रद्धस्य शिष्यस्याधीयानस्ये-तस्तत श्चित्तंव्याक्षिप्यते । अध्यापयितुः क्रोधोत्पत्तौ ताडनपरुषभाषणाद्यमत्यर्थंप्राप्तंनिषिध्यते । अहिंसयाअताडनेन भूतानांभार्यापुत्रदासशिष्यसोदर्याणांश्रेयोर्थमनुशासनंकार्यम् । भूतग्रहणान्माशिष्यस्यैव विज्ञायि । दृष्टादृष्टफलावाप्तिःश्रेयः तदर्थमनुशासनमग्रन्थकोवोपदेशः शास्त्राध्यापनव्याख्यानेवा । यथा संभव मतिताडनंक्रोशनंचात्र प्रतिषिध्यते । ईषत्ताडनंत्वभ्यनुज्ञातमेव रज्ज्वा वेणुदलेन वेति । कथंतर्हि मार्गेस्छाप्याः । वाक्चैव मधुरा सान्त्वपूर्विका प्रियया वाचा श्लक्ष्णया नोच्चैरुद्धतेनकाकरूक्षेण स्वरेण प्रियेणापि अधीष्वपुत्रक मा चित्तमन्यत्राबध्नाः श्रद्धया समापय शीघ्रंप्रपाठकंतत्क्षणंविहरिष्यसिशिशुभिः सवयोभिः । यस्तुन तथा श्रद्धामुपैति तस्योक्तोविधिः वेणुदलेनेति । प्रयो-ज्यावक्तव्याधर्ममिच्छता । एवंसातिशयोध्यापनधर्मोभवति ॥ १५९ ॥

( २ ) **सर्वज्ञनारायणः** । अहिंसयाताडनाद्यकुर्वतः उपदेशत्वेन मधुरार्थतः श्लक्ष्णामृदुः शब्दतः अतः शिष्यो-पि । नाकस्मात्ताड्योनाप्रियंवाच्यइत्यर्थः । रज्ज्वा वेणुदलेन वेति त्ववश्यानुशासनीयपुत्रादिविषयम् ॥ १५९ ॥

( ३ ) **कुल्लूकः** । भूतानांशिष्याणांप्रकरणाच्छ्रेयोऽर्थमनुशासनमनतिहिंसया कर्तव्यंरज्ज्वा वेणुदलेन वेत्यहिंसाया-* अभ्यनुज्ञानात् । वाणी मधुरा प्रीतिजननी श्लक्ष्णया नोच्चैरुच्यते सा शिष्यशिक्षायै धर्मबुद्धिमिच्छता प्रयोक्तव्या ॥१५९॥

( ४ ) **राघवानन्दः** । वाङ्मनसयोःशुद्धौ गुरोःशिष्यस्य वेदाध्ययनंसाधु तत्रादौ गुरुं शिक्षयति अहिंस-यैवेति त्रिभिः । भूतानांशिष्याणांप्रकरणातहिंसात्रोपकोसलवद्बहुकालव्यापि दुःखंउत्तंकादिवद्दक्षिणादानंवाअद्रोहस्यव-क्ष्यमाणत्वात् । श्रेयोनुशासनंश्रेयःपुमर्थचतुष्टयसाधनत्वात्वेदाध्यापनस्य तस्यानुशासनंदानंमधुराप्रीतिजननीअतएव श्लक्ष्णामृद्वीधर्ममिच्छता । अनुद्वेगकरंवाक्यंसत्यंप्रियहितंच यत् । स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यते ॥ इतिस्मृतेः । शिष्यानुग्रहोवाधर्मः । तमिच्छता ॥ १५९ ॥

( ५ ) **नन्दनः** । अथब्रह्मचारिणांनियमान्तरमाह अहिंसयेति । श्रेयोऽनुशासनमहिंसया सहैव धर्ममभीप्सताका-र्यमहिंसाश्रेयोऽनुशासनंकुर्यादितियावत् । अथवाहिंसायुक्तंश्रेयोऽनुशासनंनकुर्यादिति ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । भूतानांप्राणिनांअहिंसयैव श्रेयःकार्यंइति वा श्रेयोवेदःतस्य वेदस्यानुशासनंधर्ममिच्छता पुंसा वाक्मधुराश्लक्ष्णा प्रयोज्या ॥ १५९ ॥

**यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा ॥ स वै सर्वमवाप्नोति वेदान्तोपगतंफलम् ॥१६० ॥**

( १ ) **मेधातिथिः** ।यस्याध्यापयितुरन्यस्य वासंक्षोभहेतौ सति वाङ्मनसी शुद्धे न कालुष्यं गच्छतः सम्यग्गुप्ते चोत्प न्नेपि कालुष्ये न परद्रोहव्यवसायोन च तत्पीडार्थः कर्मारम्भएतत्सम्यग्गोपनंवाङ्मनसयोः । सर्वदा ग्रहणंपुरुषमात्रधर्मार्थे-नाध्यापयितुरेव । अध्यापनकाले सवै सर्वमवाप्नोति । वेदान्तावेदसिद्धान्ताः सिद्धशब्दस्यात्यन्तंसिद्धइति सिद्धे शब्दार्थसं बन्धइत्यत्रात्यन्तशब्दस्येव लोपः । वैदिकेषु वाक्येषु यः सिद्धान्तोव्यवस्थितार्थोऽस्य कर्मणइदंफलमित्युपगतअभ्यु-

---

* वेत्य=वेत्यल्प ( अ )

पगतोवेदविद्भिस्तत्फलंसर्वंप्रामोति । एवंच वदता वाङ्मनस संयमस्यानेन वाक्येन क्रतुषु पुरुषोभयधर्मतोक्ता भवति । केवलपुरुषधर्मातिक्रमे ह्यसति क्रतुवैगुण्येऽसंयतोपि वाङ्मनसाभ्यांकिमिति कृत्स्नंफलंनप्रामोति येनोच्यते संयमी सर्वमामोतीति । अन्ये तु वेदान्तात्रहस्यब्राह्मणान्व्याचक्षते तेषु यदभ्युपगतंफलं नित्यानांकर्मणांनिष्फलानांच यमनियमानां तत्फलंब्रह्मप्राप्तिलक्षणं सर्वमामोति । कथंपुनर्नित्यानि ब्रह्मप्राप्त्यर्थानीति चेदस्ति केषांचिद्दर्शनम् । अथवा वेदस्यान्तोऽध्यापनसमाप्तिस्ततोयत्फलमाचार्यकरणविधिस्तत्प्रामोति । एवंतुव्याख्यानेऽध्यापनविध्यर्थतैव स्यात् ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । वक्ष्यमाणपूर्वोक्तवाङ्माधुर्यादिस्तुतिः यस्येति । वाक्शुद्धिर्माधुर्यादि । मनः शुद्धिरक्रोधादि । वाचोगुप्ततारक्षा अनृतादिनिवर्तनात् मनसोनिष्टध्यानादिनिवर्तनात् । वेदान्तादुपगतं अधिगतंमोक्षाख्यम् ॥१६०॥

( ३ ) **कुल्लूकः** । इदानींपुरुषमात्रस्य फलंधर्मंवाङ्मनःसंयममाह नाध्यापयितुरेव । यस्य वाङ्मनश्चोभयंशुद्धंभवति । वागनृतादिभिरदुष्टा मनश्च रागद्वेषादिभिरदूषितंभवति एते वाङ्मनसी निषिद्धविषयप्रकरणे सर्वदा यस्य पुंसः सुरक्षिते भवतःसवेदान्तेऽवगतंसर्वंफलंसर्वज्ञत्वंसर्वेशानादिरूपंमोक्षलाभादवामोति ॥ १६० ॥

( ४ ) **राघवानन्दः** । यन्मनसाध्यायति तद्वाचा विलपतीति श्रुतेः तत्कारणस्य मनसोपि शुद्धिःकार्येत्याह । यस्येति यस्य गुरोःसंक्षोभहेतौसति क्रोधरागद्वेषानभिभवत्वंमनसःशुद्धिःवाचःशुद्धिरुक्तागुप्तेअसत्यादितोरक्षिते प्रकर्षेण सर्वात्मकंवेदान्तोपगतंब्रह्म वागिति दृष्टान्ततया वाचइव मनसःशुद्धिःकार्येति भावः ॥ १६० ॥

( ५ ) **नन्दनः** । वाचः शुद्धिरसत्यादिवर्जनंमनसोरागादिवर्जनम् । सम्यग्गुप्ति स्तत्राप्रमत्तत्वम् । सर्वदाऽऽश्रमान्तरेपिवेदांतोपगतंवेदान्तोवेदाध्ययनसमाप्तिःतेनोपगतंपरिपूर्णवेदाध्ययनोपलभ्यमित्यर्थः ॥ १६० ॥

( ६ ) **रामचन्द्रः** । यस्य पुंसःवाङ्मनसे शुद्धे भवतः । च पुनः । सम्यक्गुप्ते रक्षिते व्यर्थालापरहितेइत्यर्थः सःवेदान्तोपगतंफलंवेदेउक्तंफलंसर्वमामोति ॥ १६० ॥

**नारुन्तुदःस्यादार्त्तोपि न परद्रोहकर्मधीः॥ ययास्योद्विजते वाचा नालोक्यांतामुदीरयेत्॥ १६१ ॥**

( १ ) **मेधातिथिः** । अयमपरः पुरुषार्थमात्रधर्मः । अरूंषि मर्माणि तुदति व्यथयतीत्यरुंतुदोमर्मस्पर्शीनीर्वाचोऽत्यन्तोद्वेजनकरीराक्रोशवाचोयोवदति । आर्त्तः पीडितोऽपिपरेण नतादृशमप्रियंभाषेत । तथा परद्रोहः परापकारः तदर्थंकर्म तद्धीश्च न कर्तव्या । अथवा परद्रोहश्चासौ कर्म च तत्र धीः बुद्धिरपि न कर्तव्या । यया वाचा नर्मप्रयुक्तयापि परउद्विजते अथ च तांवाचंनोदीरयेत् वाक्यैकदेशमपि तादृशंनोच्चारयेद्यतएकदेशादर्थप्रकरणादिनार्थान्तरसूचनंप्रतीयते । यतः सावागलोक्यास्वर्गादिलोकप्राप्तिप्रतिबन्धिनी ॥ १६१ ॥

( २ ) **सर्वज्ञनारायणः** । वाङ्मनसयोः शुद्धतांविवृणोति नारुन्तुदइति । अरुंतुदोदोषरूपव्रणस्य वाचा प्रकाशनेन तोदकः । परद्रोहोहिंसातत्कर्ममनसाध्यायतीति परद्रोहकर्मधीः । दोषप्रकाशकत्वाभावेपि यत् श्रुत्वा परस्योद्वेगो यथावर्षशतान्ते अवश्यंभवतोमृत्यादितथालोक्याम ऽलोकहितां तांवाचंनोदीरयेत् ॥ १६१ ॥

( ३ ) **कुल्लूकः** । अयमपि पुरुषमात्रस्यैव धर्मोनाध्यापकस्य आर्तः पीडितोऽपि नारुंतुदःस्यान्न । मर्मपीडाकरं तत्त्वदूषणमुदाहरेत् । तथा परस्य द्रोहोऽपकारस्तदर्थंकर्मबुद्धिश्चनकर्तव्या । तथा यया वाचास्य परोव्यथते तांमर्मस्पृशमथालोक्यांस्वर्गादिप्राप्तिविरोधिनींन वदेत् ॥ १६१ ॥

( ४ ) **राघवानन्दः** । तत्रैव हेतुतया व्यतिरेकमाह नारुन्तुदइति । आर्तोरोगादिना शिष्यकृतापराधेन वा न परद्रोहकर्मधीःपरस्य द्रोहःपीडातस्यै यत्कर्मअभिशापादिस्तत्रधीर्मतिर्यस्यसःतथा न स्यात् । अलोक्यांस्वर्गादिलोकानर्हां-तांतादृशींनोदीरयेन्नोच्चारयेत् ॥ १६१ ॥

( ५ ) **नन्दनः** । यतएवमतः नारुन्तुदइति । अरुन्तुदः परमर्मप्रकाशनः अलोक्यांअस्वर्ग्याम् ॥ १६१ ॥

( ६ ) **रामचन्द्रः** । आर्त्तोऽपि सन्नरुंतुदोनस्यात् । अरुंतुदःस्याद्व्यथकइत्यमरः । परद्रोही नभवेत् । यया वाचाउ-द्विजतेअलोक्यांलोककर्मरहितां न उदीरयेत् न वदेदिति ॥ १६१ ॥

**संमानाद्ब्राह्मणोनित्यमुद्विजेत विषादिव ॥ अमृतस्येव चाकांक्षेदवमानस्य सर्वदा ॥ १६२ ॥**

( १ ) **मेधातिथिः** । भिक्षमाणस्य ब्रह्मचारिणोगृहे वोपाध्यायस्य जीविकयाऽध्यापयतो यत्र संमानं न स्यान्नतेन चित्तसंक्षोभमाददीतापि तु संमानादेवोद्विजेत पूजयैव दीयमानंन बहु मन्येत । अमृतमिवाकाङ्क्षेदभिलषेदवमानमवज्ञांसर्व-दा उत्कण्ठा सामान्यात् । अधीता त्वर्थमाकाङ्क्षेत् । आरोप्य षष्ठी कृता । ननु चानर्चितमभोज्यं सत्यं चित्तसंक्षोभप्रतिषे-धार्थमेतत् नतु तादृशस्य भोज्यतोच्यते । संमानावमानयोः समेन भवितव्यंन पुनरवमानंप्रार्थनीयम् । ब्रह्मचारिणस्त्ववमत-मपि भिक्षाऽऽदानम् न चायंप्रतिग्रहोयोऽर्चितंप्रतिगृण्हातीत्येतस्य येन विषयः स्यात् ॥ १६२ ॥

( २ ) **सर्वज्ञनारायणः** । एतच्च सर्वमत्यन्तावमतेनापि न कार्यमित्याह संमानादिति । अवमानस्यअमृतस्येवाल्प-मप्यंशमित्यर्थः ॥ १६२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः संमानाद्विषादिव सर्वदोद्विजेत संमाने प्रीतिंन कुर्यात् । अमृतस्येवसर्वस्माल्लोकादवमाना-स्याकाङ्क्षेत् । अवमाने परेण कृतेऽपि क्षमवांस्तत्र खेदंन कुर्यात् । मानावमानद्वन्द्वसहिष्णुत्वमनेन विधीयते ॥ १६२ ॥

( ४ ) **राघवानन्दः** । दैवाद्गुरोर्वाङ्मानसस्खलने शिष्यंशिक्षयति संमानादिति । विषादिवविषवदुद्वेगहेतुत्वाल्लोकाव-र्जनस्यअमृतंयथाअमरत्वहेतुत्वादाकांक्षितंअवमानोपि श्रेयोहेतुत्वात्तथाअनेन गुरोरत्यागेदोषानध्ययनाद्यनर्थः ॥ १६२ ॥

( ५ ) **नन्दनः** । सर्वदाआश्रमान्तरेऽपि ॥ १६२ ॥

( ६ ) **रामचन्द्रः** । सर्वदाआवमानस्य प्राप्तिं आकाङ्क्षेतअमृतस्येव प्राप्तियथाआकाङ्क्षन्तितथा ॥ १६२ ॥

**सुखंह्यवमतः शेते सुखं च प्रतिबुध्यते ॥ सुखं चरति लोकेस्मिन्नवमन्ता विनश्यति ॥ १६३ ॥**

( १ ) **मेधातिथिः** । पूर्वस्य विधेरर्थवादोयंफलदर्शनार्थः । योऽवमानान्नक्षुभ्यति ससुखंशेते अन्यथा द्वेषेण दह्यमा-नोन कथंचिन्निद्रांलभते प्रतिबुद्धश्च तच्चिन्तापरोन सुखंविन्दति । उत्थितश्च शयनात्कार्येषु सुखंचरति ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः** । सुखंशेते तत्कृतसंमानज्ञानाहितप्रत्युपकारचिन्ताविधुरत्वाभावात् । नत्वेवंस्वयमपि परस्याभ्युदयातिसंबन्धिना अवमानं कुर्यादित्याह अवमन्तेति ॥ १६३ ॥

( ३ ) **कुल्लूकः** । अवमानसहिष्णुत्वे हेतुमाह । यस्मादवमाने परेण कृते तत्रखेदमकुर्वाणः सुखंनिद्राति । अन्य-थावमानदुःखेनदह्यमानः कथंनिद्रांलभतेकथंचसुखंप्रतिबुध्यते प्रतिबुद्धश्चकथंसुखंकार्येषुचरति । अवमानकर्ता तेन पापेन विनश्यति ॥ १६३ ॥

---

( १६२ ) सन्मानाद्ब्राह्मणोविद्वानुद्विजेतविषादिव । ( मेधा० )

( ४ ) **राघवानन्दः** । देवादपि तदुत्पत्तौ गुणमेवाह । सुखंह्यवमतइति । अवमतःतिरस्कृतःसंमाननाभावाज्ज्ञनना-रहितःअथवाअवमतःखण्डितमानःस्वविवेकबुद्ध्यासुखंशेते निद्रातिअन्यथाअवमानदुःखैर्दह्यमानोननिद्राति अतएव सुखंनप्रतिबुध्यते सम्यगनिद्रितत्वात्सुखंचरति स्वेष्टसाधनेषु प्रवर्ततेअवमतस्त्ववमानासहिष्णुःकिंचित्कर्तुंनक्षमतइत्यनुभवसिद्धम् ॥ १६३ ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह सुखमिति । क्षममाणोऽवमतोदृष्टादृष्टभयाभावात्सुखंशेते । अवमन्ता विनश्यति राजदण्डेन यमदण्डेन वा ॥ १६३ ॥

( ६ ) **रामचन्द्रः** । अवमतःतिरस्कृतःसःब्राह्मणःसुखंशेते । यः अवमन्तातिरस्कारंकर्ता सःपुरुषःविनश्यति ॥१६३॥

**अनेन क्रमयोगेन संस्कृतात्मा द्विजःशनैः ॥ गुरौ वसन्सञ्चिनुयाद्ब्रह्माधिगमिकंतपः ॥१६४॥**

( १ ) **मेधातिथिः** । संस्कृतात्मोपनीतोद्विजोऽनेन क्रमयोगेन तपः संचिनुयात् । अध्येष्यमाणइत्यतआरभ्य यद्ब्रह्मचारिणः कर्तव्यमुक्तंतस्य तेनेति प्रत्यवमर्शः । अनेन विधिसंघातेन क्रमयोगेन क्रमेणानुष्ठीयमानेन तपआत्मसंस्कारं-निष्कल्मषत्वलक्षणं यथा तपसा चान्द्रायणादिना निष्कल्मषत्वंभवत्येवमनेनापि वेदग्रहणार्थेन यमनियमसमूहेन अतः संचिनुयात् शनैरत्वरयार्जयेच्च वर्धयेच्च । क्रमः परिपाटीदंकृत्वेदंकर्तव्यमोंऽकारपूर्विकाइत्यादिस्तेनयोगः संबन्धोयस्यानुष्ठानस्येति यावत् । ब्रह्मणः आधिगमिकमधिगमार्थम् । अध्ययनबोधावधिगमः ॥१६४॥

( २ ) **सर्वज्ञनारायणः** । धर्मानुक्त्वोपसंहरति अनेनेति । क्रमयोगेन क्रमिकेणोद्योगेन यत्नेन संस्कृतात्मा शोधितात्मा शनैरत्वरितः संचिनुयात्वेदाधिगमरूपंतपः ॥ १६४ ॥

( ३ ) **कुल्लूकः** । अनेनक्रमकथितोपायेन जातकर्मादिनोपनयनपर्यन्तेन संस्कृतोद्विजोगुरुकुले वसञ्छनैरत्वरया वेदग्रहणार्थंतपोऽभिहिताभिधास्यमाननियमकलापरूपमनुतिष्ठेत् । विध्यन्तरसिद्धस्याप्ययमनुवादोऽध्ययनाङ्गत्वबोधनाय ॥ १६४ ॥

( ४ ) **राघवानन्दः** । एवंसशिक्षितःशिष्यःकिंकुर्यात्तत्राह अनेनेति । संस्कृतात्मोपनीतःअनेनाव्यवहितोक्तेन क्रमयोगेन तपःसंचिनुयात् द्विजस्त्रैवर्णिकः। तपोब्रह्मचर्यादि ब्रह्माधिगमिकंवेदप्राप्त्युपायम् ॥ १६४ ॥

( ५ ) **नन्दनः** । उक्तानांब्रह्मचारिधर्माणामध्ययनाङ्गतामाह अनेनेति । अनेनोक्तेनब्रह्माधिगमिकंवेदाधिगमिकम् । स्वार्थेतद्धितः । वेदाधिगमस्यतपस्त्ववचनंप्रशंसार्थम् ॥ १६४ ॥

( ६ ) **रामचन्द्रः** । अनेन क्रमयोगेन अनेन प्रकारेण संस्कृतात्माद्विजःगुरौ वसन्तपःसञ्चिनुयात् सङ्ग्रहंकुर्यादित्यर्थः । कीदृशंतपःब्रह्माधिगमिकंब्रह्मणःवेदस्यअधिगमिकंप्राप्तिसाधन मित्यर्थः ॥ १६४ ॥

**तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ॥ वेदःकृत्स्नोधिगन्तव्यःसरहस्योद्विजन्मना ॥ १६५॥**

( १ ) **मेधातिथिः**। तपोविशेषैः कृच्छ्रचान्द्रायणादिभिर्विविधैर्बहुप्रकारैरेकाहारचतुर्थकालाहारादिभिरभिक्षिण्वता शरीरं व्रतैश्चोपनिषदमहानाम्निकादिभिर्विधिनोदितैर्गृह्यस्मृतिष्वाम्नातैरनुष्ठीयमानैर्वेदः कृत्स्नोधिगन्तव्यः। ये तु पूर्वश्लोके तपः शब्दोब्रह्मचारिधर्मे प्रयुक्तइहापि तपोविशेषास्तएवाभिप्रेताइत्याहुर्नते सम्यङ्मन्यन्ते व्रतशब्देनैव तेषां संगृहीतत्वात् । व्रतमिति हि शास्त्रतोनियमउच्यते। सामान्यशब्दत्वाच्च व्रतशब्दस्य महानाम्निकादीनामपि ग्रहणसिद्धिः । तस्मात्तपांस्युपवा-

( १६५ ) विधिचोदितैः= श्रुतिचोदितैः ( र )

सादीन्यभिप्रेतानि । इह केचिद्वेदइत्यत्रैकवचनंविवक्षितंमन्यन्ते । यद्यपि तव्यप्रत्ययनिर्देशाद्विनियोगतोवेदस्य प्राधान्यंसंस्कार्यतया प्रतीयते तथापि विधितोवस्तुतश्चार्थावबोधे गुणभावएवं । गुणे चसंविवक्षितेऽर्थावबोधपर्यन्तोह्ययंवेदविषयोमाणवकस्य व्यापारोविधिवृत्तपर्यालोचनयाऽवसीयते । अयंह्यत्र विध्यर्थोधीतेन वेदेनार्थावबोधंकुर्यान्न संस्कार्यत्वमन्यथा निर्वहति । सर्वोहि कार्यान्तरे शेषभूतः संस्क्रियते । वेदस्य च दृष्टमेव कार्यमधीतस्य स्वार्थबोधजनकत्वमन्यथा सक्तून् जुहोतीति वत्प्राधान्यंश्रुतमप्युत्सृज्येत । धातुरप्यवबोधार्थएव । अधिगमनंहि ज्ञानमुच्यते । सर्वे गत्यर्थाज्ञानार्थाइति स्मृतम् । स्वरूपग्रहणंच वेदस्य प्रागेव विहितं संहत्य हस्तावध्येयमित्यादिना । तस्यैवार्थग्रहणपर्यन्ततानेन प्रतिपाद्यते । विवक्षामेव मत्वाऽनेकवेदाध्ययनमप्राप्तंप्रतिप्रसविष्यते वेदानधीत्येति । यद्यप्यनेक वेदाध्ययनमस्ति क्वैकत्वविवक्षोपयुज्यते । बाढमुपयुज्यते । एकस्यामेवशाखायामधीतायां स्वाध्यायोध्येतव्यइति विध्यर्थनिवृत्तिः । इच्छा तस्त्वनेकवेदाध्ययनंयदि न विधिचोदितंक उन्मत्तोदन्तकलशिकयाऽऽत्मानंक्लेशयिष्यति । अस्त्येवात्रविध्यन्तरं वेदानधीत्येति तच्च फलकामस्य फलं च स्वर्गः । अथास्य विधेर्वाक्यशेषे किंचिदाम्नायते । घृतकुल्यादयोऽन्यद्वा ततस्तदेव भवितुमर्हति ब्रह्मचारिणोहि विधिरर्थावबोधविषयोदृष्टप्रयोजनश्च । अवबोधस्य कर्मानुष्ठानोपयोगादर्थादर्शनाद्विदुषः कर्मण्यधिकारादेकैकवेदाध्ययनमदृष्टायैव अन्यैथकेवदाध्ययनेनैव स्वाध्यायविधिनिर्वृत्तेरसति धर्माय विधौ वेदानधीत्येत्यादिवचनमनर्थकमेवस्यात् । तत्रोच्यते । कथमयंपक्षः संगच्छेत यावतैकोयंविधिर्वेदोऽधिगन्तव्यइति । सचेत्संस्कारविधित्वाद्दृष्टकर्मानुष्ठानोपयोगाच्च नादृष्टार्थः कल्प्यते तदनेकवेदाध्ययनेऽपि तुल्यम् । तत्रापिह्ययंप्रकारोस्त्येव वैरूप्यंच स्यात् । क्वचिदाधानविधिवदवबोधद्वारेण नित्यकाम्यकर्मसंबन्धः क्वचित्साक्षात्फलार्थतेति । अथ मतंवेदानधीत्येति विध्यन्तरमेतन्न वाचार्यकरणविधिप्रयोज्यतत्फलकामएवात्राधिक्रियतइति तदसत् । नचैतद्विध्यन्तरंप्रकृतस्यैव विधेरसत्यांसंख्याविवक्षायां पञ्चषट्सप्तादिशाखाध्ययनंयावच्छक्तिप्राप्तंत्रयंनियमयति । न चाधीयीतेति विधिरत्र श्रूयते अपितु गृहस्थाश्रममावसेदित्ययमत्रविधिः । यदपि संख्यायाविवक्षितत्वमुक्तंतदत्यन्तासंबद्धम् । विनियोगतोहिसंख्याविवक्षानोपपादनतः । सच विनियोगः स्वाध्यायार्थमध्ययनमाह नार्थेन गुणभावेन द्वितीयान्ताभ्यामवगतंप्राधान्यमपैति । एवंह्याश्रीयमाणे ग्रहेप्येकत्वंविवक्ष्येतग्रहंसमार्ष्टीति । प्रधानभूतस्यापि हितस्य संमार्गप्रत्ययस्त्येव साधनभावोनत्वसौ शब्देनाभिधीयते । तथा ग्रहैर्जुहोतीति होमेपि गुणभावः । तस्मादभिधानविनियोगाभ्यां प्राधान्यंस्वाध्यायस्य । सति च प्राधान्ये नविवक्षितमेकत्वम् । हन्त तर्हि यथैकेनापि वेदेन गृहीतेन निवर्तेत स्वाध्यायविध्यर्थोवक्तव्यमनेकवेदाध्ययनप्रयोजनम् । तृतीये वक्ष्यामः । ननु यद्यवबोधपर्यन्तोयंविधिस्तदा गृहीतेऽपि स्वरूपतोवेदे यावदर्थावबोधोन जातस्तावदन्तरा मधुमांसादियमनियमानुष्ठानमव्यावृत्तंस्यात् तत्र कोदोषः । शिष्टसमाचारविरोधः । नहि शिष्टाअधीते वेदे तदर्थमुपशृण्वन्तोपि मधुमांसादिवर्जयन्ति । नैषदोषः । अस्तिहि स्मृत्यन्तरंवेदमधीत्य स्नायादिति । तत्राधीत्येति पाठमात्रमुच्यते । स्नायादिति च स्वकालस्वाध्यायविध्यङ्गयमनियमनिवृत्तिर्लक्ष्यते यथैवमधुमांसे प्रतिषिद्धे एवंस्नानमपि तत्र स्नानमनुज्ञाय मानंसाहचर्यान्मधुमांसादीन्यपि तुल्यप्रकरणत्वादनुजानाति । स्त्रीसंप्रयोगस्तु वचनान्तरेणाविप्लुतब्रह्मचर्यइति प्रतिषिद्धः । तद्व्यतिक्रमे च न स्वाध्यायविधेरर्थावबोधकाले किंचित्परिहीणम् । नहि तस्यामवस्थायां तदङ्गंसर्वेषांयमनियमानांग्रहणान्तत्वात् । पुरुषार्थस्त्वयंप्रतिषेधः । अतएव कथंचिद्विप्लवे नावकीर्णिप्रायश्चित्तम् । अथव्रतस्थस्य हिरेतः सेकोविकारो नचव्रतस्थश्चान्द्रायणादिनानेनोपपातक प्रायश्चित्तेनाधिक्रियते । किंपुनः स्नायादिति लक्षणत्वे कारणमुच्यते । न तावदिदंस्नानमद्भिः शरीरक्षालनरूपमदृष्टार्थत्वप्रसङ्गात् ब्रह्मचारिनियमानांचावध्यपेक्षत्वादस्य चावधिसमर्पकत्वेनापेक्षितार्थविधिनोपपत्तेः । न पुनरेवंनेषामवध्यन्तरापे-

क्षा। स्वाध्यायविध्यर्थाहितेऽतस्तन्निवृत्तिरेव तेषामवधिः। तस्य चनिवृत्तिर्विषयनिवृत्त्या। अध्ययनंच तस्य विषयस्तन्निवृत्तिः प्रत्यक्षैव। सत्यं यद्यस्य श्रुतविषयनिष्ठतैव स्यात्। अश्रुतोप्यस्य विषयः फलभूतोर्थाधिगमोपि संस्कारविधित्वान्यथाऽनुपपत्त्या विषयतामापन्नोयतः श्रुताध्ययननिष्ठत्वे विधित्वमेवास्य व्याहन्येत। विधेर्हि स्वार्थानुष्ठापकत्वंरूपम् स्वार्थश्च कार्यकारणेतिकर्तव्यतात्मकः तच्च विध्यर्थव्यतिरेकेण नान्यत्किंचिन्नकार्यकरणंविषयएकपदोपादानोः। अधीयीतेत्यध्ययनादिधात्वर्थावच्छिन्नोभावार्थः यमनियमानुष्ठानमिति कर्तव्यता। न तत्र तावदस्यविधेः स्वार्थानुष्ठापकत्वसंभवः यतोविषयानुष्ठानद्वारिकासर्वाविधीनांस्वार्थानुष्ठानसंपत्तिः। तस्यास्य विषयानुष्ठानंविध्यन्तरवशादेवसिद्धम्। आचार्यस्यहि विधिरस्ति उपनीय शिष्यंवेदमध्यापयेदिति। नचाध्यापनमन्तरेणाध्ययनसिद्धिः। अतआचार्यः स्वविधिसंपत्त्यर्थमध्ययने माणवकंप्रवर्तयति स्वयंच ज्ञात्वानाचार्येणाप्रवर्तितस्यानुष्ठानसंभवः। अतोऽवश्यमाचार्यविधिप्रयुक्तता एषितव्या। तत्प्रयुक्तत्वे संति सिद्धमनुष्ठानमिति न स्वाध्यायाध्ययने माणवकस्याविधिना कश्चिदर्थः। अतः प्रयोक्तृत्वासंभवात्कीदृशी विधिरूपतास्य विधेः स्वरूपनाशे प्रसक्ते सप्रकारोन्विष्यते। यथास्य प्रयोक्तृत्वंलभ्यते तत्रनिश्चितस्तावदयंसंस्कारविधिः। नच निष्फलः संस्कारोऽध्ययने सतियादृशस्य तादृशस्यार्थबन्धस्य दर्शनात्तस्य च सकलतत्कर्मानुष्ठानोपयोगित्वात्। अतः श्रुताध्ययनविषयसंबद्धावबोधकर्तव्यतातोविधिः प्रतीयते यद्यपि चवस्तुस्वाभाव्येन वाक्यग्रहणसमनन्तरमवबोधोजायते नतु निश्चितरूपोभवति। अतोयेन प्रकारेण निश्चयोभवति तस्मिन्नंशे विधेः प्रयोक्तृत्वनिश्चयविचार्यसंशयादिव्युदासेन भवति। नच विचारोऽन्यतः प्राप्तोनाचार्यविधेः तस्याध्ययनमात्रेण निवृत्तेः। नापि दृष्टकार्यप्रयुक्तः किंविचारमन्तरेण पुरुषस्य नसिध्येद्यदर्थंप्रवर्तेतयदृच्छया ग्रामादिकामस्येव विचारोऽपि प्राप्तइति चेत्। एवं तर्ह्यनियतत्वात्पुरुषेच्छायाः कश्चिन्नविचारयेत्। यदिविचारयेद्वाध्ययनसमनन्तरमतोस्यांशस्याप्राप्तत्वाद्यावदप्राप्तंविधेर्विषयइत्यस्ति विधेर्व्यापारःतस्मादध्ययनस्यान्यतः प्राप्तत्वात्तत्संबन्धस्यावबोधस्यानिश्चितरूपस्य वस्तुस्वाभाव्येनोत्पत्तेस्तादृशस्य न क्वचिदर्थवत्त्वात्सत्यपि तस्मिन्संस्कारकत्वान्निर्व्यूढे निश्चितस्यैव फलवत्कर्माऽनुष्ठानोपयोगित्वान्निश्चयस्य विचारसाध्यत्वात्तस्य च नियतकालावश्यकर्तव्यताप्राप्तेस्तन्निवृत्त्यर्थंविचारपर्यवसायी विधिरयमवतिष्ठते। अतोभवत्याकाङ्क्षानियमानांकिंश्रुताध्ययनपर्यवसानावधिरुताक्षिप्तनिश्चितावबोधजननार्थविचारपर्यवसानः। अतोस्यामपेक्षायां वेदमधीत्य स्नायादित्यनेनावधिसमर्पणंक्रियते। तत्र प्रकृतस्यापेक्षायाश्चाविशेषाद्युक्तालक्षणा। ननु किमिदमुच्यतेऽश्रुतोवबोधः यावताधिगन्तव्यइति श्रूयतएव वेदे स्मृतिषु चान्यासु वेदमधीते स्वाध्यायोऽध्येतव्यइति च पठ्यते मानव्याअपि स्मृतेरेतत्स्मृतिमूलत्वादभिन्नार्थतैवा आक्षिप्तावबोधाभिप्रायोयमधिगमोयदि वा स्वरूपग्रहणमेवाधिगमः अवबोधपयन्तता तु तेनैवं न्यायेन लभ्यते नच विसमञ्जसमेकोयंविधिस्तस्य च विषयांशः कश्चिदाचार्यविधिना प्रयुज्यतेकस्य चिदंशस्य सएव प्रयोजकइति वैरूप्यम्। किमत्रानुपन्नमर्थभूतस्यैवावगमात्। यत्तूक्तमनेकवेदाध्ययनमदृष्टार्थंयुक्तमिति तस्य षट्त्रिंशदाब्दिकमित्यत्र परिहारंवक्ष्यामः। वेदशब्दो मन्त्रब्राह्मणवाक्यसमुदायात्मिकांशाखामाचष्टे। तदवयवेऽपि वाक्ये वेदशब्दस्य प्रयोगदर्शनात् तदाशङ्कानिवृत्त्यर्थः कृत्स्नशब्दः। यद्यप्येकस्मिन्वाक्येधीते वाक्यान्तरस्यापि वेदशब्दवाच्यत्वादेवनिवृत्तमध्ययनंसंस्कारकर्मत्वाद्ग्रहणवत्तथापिविस्पष्टार्थंकृत्स्नग्रहणम्। अन्येत्वङ्गविषयंकृत्स्नशब्दंवर्णयन्ति। वेदशब्दोह्युक्तपरिमाणस्य वाक्यसमुदायस्य वाचकस्तत्र ऋङ्मात्रेणापि न्यूनेन स्वाध्यायोऽधीतोभवति। तस्मात्कृत्स्नशब्दोङ्गाध्ययनप्राप्त्यर्थः। तथाच स्मृत्यन्तरंब्राह्मणेननिष्कारणोधर्मः षडङ्गोवेदोध्येयइति। ननु योवेदः सकृत्स्नइत्येतदत्र प्रतीयते नचाङ्गानि वेदशब्दवाच्यानि तत्र कुतोङ्गैः साहित्यंयात्वेषा स्मृतिः षडङ्गैः वेदोध्येयइति तत्र स्वशब्देनाङ्गान्युपात्तानि। इहतु वेदविशेषणत्वात्कृत्स्नशब्द-

स्यकर्थमिवाङ्गानि गृह्येरन् । उच्यते । स्वाध्यायोध्येतव्यइति मूलैवैषा स्मृतिः सा चा वबोधपर्यन्ता व्यवस्थापिता अवबोधश्च नान्तरेणाङ्गानि कल्पतइत्यर्थसिद्धमङ्गानामुपादानम् अतोनिगमनिरुक्तव्याकरणमीमांसाविदनमपि विध्याक्षिप्तम् । एवमर्थमङ्गानामुपादानमङ्गीकृत्य कृत्स्नशब्दोद्योतकत्वेन युक्तउपादातुम् । तत्र यथाऽऽरम्भकाणि पुरुषस्य हस्तपादादीन्यगाङ्गान्युच्यन्ते । नैवंवेदस्य निरुक्तादीन्यारम्भकाणि । अथ च भक्त्याङ्गत्वेन वेदस्योच्यन्ते न किल तैर्विना वेदःस्वार्थाय प्रभवत्यतोङ्गानीवाध्यासोऽत्र । एवमध्यारोपितवेदत्वेन कृत्स्नशब्दोनोपपद्यते । सरहस्य इति रहस्यमुपनिषदः सत्यपि वेदत्वे प्राधान्यात्पृथगुपादानम् ॥ १६५ ॥

( २ ) **सर्वज्ञनारायणः** । तपोविशेषैः प्राणायामादिभिर्व्रतैःसावित्र्यादिभिः तत्तच्छाखाभागाध्ययनाङ्गभूतैः वेदएकशाखासूत्रभूतमन्त्रब्राह्मणसमुदायः सकृत्स्नः षडङ्गसहितोध्येतव्यइत्यर्थः । सरहस्योनिगूढवेदार्थसहितः ॥ १६५ ॥

( ३ ) **कुल्लूकः** । अध्ययनाङ्गत्वमेव स्पष्टयति तपोविशेषैरिति । तपोविशेषैर्नियमकलापैर्विविधैर्बहुप्रकारैश्च अध्येष्यमाणस्त्वाचान्तइत्यादिनोक्तैः सेवेत । इमांस्तु नियमानित्यादिभिर्वक्ष्यमाणैरपि व्रतैश्चोपनिषन्महानाम्निकादिभिर्विधिदेशितैः स्वगृह्यविहितैःसमग्रवेदोमन्त्रब्राह्मणात्मकः सोपनिषत्कोप्यध्येतव्यः । रहस्यमुपनिषदः । प्राधान्यख्यापनाय पृथङ्निर्देशः ॥ १६५ ॥

( ४ ) **राघवानन्दः** । तत्रैव नैतदचीर्णव्रतोधीतेइत्यादिश्रुतिंप्रमाणयति तपइति । तथाहि मुण्डकमधीयानःशिरस्यगारपात्रंबिभर्ति कश्चित्तथा कारीरीमधीयानोभूमिभोजनंकरोति अश्वमेधमधीयानोअश्वस्य घासं प्रयच्छति । तपोविशेषैर्विधिचोदितैःस्वस्वगृह्योक्तैः । सरहस्यःरहस्यंनामोपासनादि तद्युक्तः ॥१६५॥

( ५ ) **नन्दनः** । अङ्गान्तराण्याह तपइति । व्रतैः प्राजापत्यादिभिः कर्माधिकृत्यप्रवृत्तः शब्दराशिविशेषोवेदः ज्ञानमधिकृत्यतुरहस्यम् कृत्स्नःसाङ्गः अध्येतुरेकवेदाध्ययनेन कृतार्थता स्यादित्येकवचनेनसूचितम् ॥ १६५ ॥

( ६ ) **रामचन्द्रः** । द्विजन्मना सरहस्यःवेदःकृत्स्नः अधिगन्तव्यःतपसःविशेषैर्व्रतैर्विविधैःविविधशास्त्रोदितैः ॥ १६५॥

**वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ॥ वेदाभ्यासोहि विप्रस्य तपः परमिहोच्यते ॥ १६६॥**

( १ ) **मेधातिथिः** । प्रकृतशेषतया प्राप्तएव ग्रहणार्थोभ्यासोनूद्यते स्तुत्यर्थंन पुनर्विध्यन्तरम् । सदा शब्दोग्रहणकालापेक्षएव । तपःशब्दः शरीरक्लेशजननेष्वाहारनिरोधादिषु वर्तते । इहतु तज्जन्यात्मसंस्कारोवराभिशापादिसामर्थ्यलक्षणयोच्यते । ततस्तपस्तप्स्यंस्तपसाऽर्जयितुमिच्छन्नर्जनाङ्गे संतापे धातुर्वर्तते । कर्मकर्तृत्वस्याविवक्षितत्वात्परस्मैपदम् । हेतुरूपोद्वितीयश्लोकार्थवादः वेदाभ्यासोहि यावत्किंचित्प्रकृष्टंतपः ततः परंश्रेष्ठंवेदाभ्यास स्तत्तुल्यफलतामारोप्य स्तूयते ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः** । सदा आश्रमान्तरेपि वेदमेव तपःस्थानेभ्यस्येद्ब्राह्मणः न तु तद्विरोधि तपोपि कुर्यात् । पुनर्विप्रस्येति पदंद्विजोत्तमपदस्योपलक्षणार्थं शङ्कानिवृत्यर्थम् ॥ १६६ ॥

( ३ ) **कुल्लूकः** । यत्र नियमानामङ्गत्वमुक्तंतत्कृत्स्नस्वाध्यायाध्ययनमनेन विधत्ते । तपस्तप्स्यंश्चरिष्यन्द्विजोवेदमेव ग्रहणार्थमावर्तयेत् । तस्माद्वेदाभ्यासएव विप्रादेरिहलोके प्रकृष्टंतपोमुनिभिरभिधीयते ॥ १६६ ॥

( ४ ) **राघवानन्दः** । सत्यंवद धर्मंचर स्वाध्यायान्माप्रमदः इत्यादिश्रुतिंब्रह्मचारिप्रकरणगतांप्रमाणयति वेदेति । अभ्यसेच्छब्दतोऽर्थतश्चावर्तयेत् तप्स्यन्तपमिच्छन् तपःस्थाने वेदाध्ययनमेवकुर्यादिति ॥ १६६ ॥

( ५ ) **नन्दनः** । ब्राह्मणस्य वेदजपएवतपोनान्यदितिप्रसङ्गादाहवेदमिति । तपस्तप्यंस्तपएवपरमनिःश्रेयसकरमितिपश्यन् । सदाआश्रमान्तरेऽपि । इहवेदेउच्यते । तपोहिस्वाध्यायइतिश्रूयते । हिहेतौ ॥ १६६ ॥

**आहैव सनखाग्रेभ्यःपरमंतप्यते तपः॥ यःस्रग्व्यपि द्विजोधीते स्वाध्यायंशक्तितोऽन्वहम्॥१६७॥**

( १ ) **मेधातिथिः** । अयमपरोवाजसनेयकस्वाध्यायविधिर्ब्राह्मणेऽर्थवादानुवादः । आनखाग्रेभ्यएवेति संबन्धः । हशब्दऐतिह्यसूचकः । परमशब्दात्तपसः प्रकर्षे प्रतिपन्ने नखाग्रग्रहणंप्रकृष्टस्यापि प्रकर्षमाह । नखाग्राणि निर्जीवानि तान्यपि तपसाऽनेन व्याप्यन्ते । तपोहि कृच्छ्रादिकंनखाग्राणामव्यापकत्वान्ननिःशेषफलप्रदम् । इदंतु तान्यपि व्याप्नोतीति प्रशंसा । तप्यतेतपइति । तपस्तपःसकर्मकस्यैवेति यगात्मनेपदे । यः स्रग्व्यपि । स्रगस्यास्तीति स्रग्वी कृतकुसुमदामा पुरुषउच्यते । अनेन च ब्रह्मचारिनियमत्यागंदर्शयति । परित्यज्यापि ब्रह्मचारिधर्मान् यदि शक्तितोयावच्छक्नोति स्वल्पमप्यन्वहंप्रत्यहंवेदमधीते सोपि प्रकृष्टेन पुरुषार्थेन युज्यते । स्तुतिरियंन पुनर्नियमत्यागेऽध्ययनमुच्यते ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः** । हेति प्रसिद्धौ । आङभिविधौ । आनखाग्रेभ्योऽपि नखाग्रैस्तपश्चरतीत्यर्थः । स्रग्व्यपीति अलंकृतोपि रागवानपीत्यर्थः ॥ १६७ ॥

( ३ ) **कुल्लूकः** । स्वाध्यायाध्ययनस्तुतिरियम् । हशब्दः परमशब्दविहितस्यापि प्रकर्षस्य सूचकः सद्विजआनखाग्रेभ्यएव चरणनखपर्यन्तंसर्वदेहव्यापकमेव प्रकृष्टतमंतपस्तप्यते । यःस्रग्व्यपि कुसुममालाधार्यपि प्रत्यहंयथाशक्तिस्वाध्यायमधीते । स्रग्व्यपीत्यनेन वेदाध्ययनाय ब्रह्मचारिनियमत्यागमपिस्तुत्यर्थंदर्शयति । तप्यतइति तपस्तपःकर्मकस्यैवेति यणात्मनेपदे भवतः ॥ १६७ ॥

( ४ ) **राघवानन्दः** । तत्रैवैतिह्यंप्रमाणयति आहैवेति । छन्दसि व्यवहिताश्चेतिसूत्रादाङानखेनसंबन्धादानखाग्रेभ्योदेहव्यापि तपः । हशब्दऐतिह्यद्योती । स्रग्वीमाली विषयासक्तोपीति यावत् तपोविधाने स्रग्वीत्याद्यसमञ्जसमतोवेदाभ्यासेतात्पर्यम् ॥ १६७ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थवादेन स्थिरीकरोति आहैवेति । आहइतिपदच्छेदः । मूर्ध्नआरभ्य पदनखाग्रेभ्यः कृत्स्नेनशरीरेणेतियावत् ॥ १६७ ॥

( ६ ) **रामचन्द्रः** । समनुः । नखाअग्रामुख्यायेषांते नखाग्राःतेभ्यःनखाग्रेभ्यः ऋषिभ्यआहऋषिस्वाध्यायमन्वहंशक्तितःअधीतेयःपरमंतपःतप्यते कर्म कर्तरि ॥ १६७ ॥

**योनधीत्य द्विजोवेदमन्यत्र कुरुते श्रमम् ॥ सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १६८ ॥**

( १ ) **मेधातिथिः** । येषांतावत्कृत्स्नशब्दोङ्गपरिग्रहार्थस्तेषामनियतक्रमेऽध्ययने प्राप्ते क्रमोनियम्यते । प्रथमंवेदोध्येतव्यस्ततोङ्गानि । येषांतु वेदस्यैवार्थं कल्प्याशङ्कानिवृत्त्यर्थंतेषांत्रैविद्यव्रतानन्तरंवेदस्यैव प्राप्तमध्ययनमगृहीतेपि तस्मिन्नध्ययनमभ्यनुज्ञायते । योद्विजोवेदमधीत्यान्यत्र शास्त्रेङ्गेषु तर्कशास्त्रग्रन्थेषु वा श्रममभियोगातिशयंकुरुते सजीवन्नेव शूद्रत्वमाप्नोति । आशु क्षिप्रम् । सान्वयः पुत्रपौत्रादिसंतत्यासह । श्रमोयत्नातिशयस्तन्निषेधा योगात्तत्समाप्तौ यथावसरमन्यान्यपि विद्यास्थानानि पठ्यन्ते । शूद्रत्वप्राप्तिवचनंनिन्दातिशयः । द्विजइति वचनादुपनीतस्यायंक्रमनियमः । प्राक्चोपनयनादङ्गाध्ययनमनिषिद्धं शिक्षाव्याकरणादियद्वेदवाक्यैर्मिश्रितम् । ननुच स्वाध्यायविधिनाङ्गान्याक्षिप्यन्ते तंच विधिमाचार्यप्रयुक्तोमाणवकोऽनुतिष्ठति प्रागुपनयनादसत्याचार्ये कुतोङ्गाध्ययनसंभवः । नैषदोषः । तस्मादनुशिष्टंपुत्रंलोक्यमाहुरिति पित्रा यः संस्कर्तव्यः सएनंप्रागुपनयनाद्याकरणाद्यध्यापयिष्यति ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । अनधीत्यानभ्यस्य । अन्यत्र शास्त्रे ॥ १६८ ॥

( ३ ) **कुल्लूकः** । योद्विजोवेदमनधीत्यान्यत्रार्थशास्त्रादौ श्रमंयत्नातिशयंकरोति सजीवन्नेव पुत्रपौत्रादिसहितः शीघ्रंशूद्रत्वंगच्छति । वेदमनधीत्यापि स्मृतिवेदाङ्गाध्ययने विरोधाभावः । अतएव शङ्खलिखितौ । न वेदमनधीत्यान्यां-विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥ १६८ ॥

( ४ ) **राघवानन्दः** । अध्ययनस्यावश्यकत्वेऽर्थवादमाह यइति । अन्यत्र तर्कव्याकरणादौ गुरुमुखादनधीतस्य वेदस्य कर्मानधिकाराच्छूद्रत्वम् । सान्वयःपुत्राद्यन्वितः । मेधातिथिस्तु द्विजस्याद्ये शूद्रापरिणयनंउपनीतस्य प्रथमतो-व्याकरणाद्यध्ययने शूद्रत्वमिति अर्थावबोधकमस्य वेदाध्ययनमिति श्रुतेः । अयमर्थवादो नित्यकर्माकरणे पर्यव-सित : ॥ १६८ ॥

( ५ ) **नन्दनः** । आर्यपक्षपरोऽपिवदमनेधीत्यविद्यान्तरमभ्यस्यतोब्रह्मचारिणोदोषमाह यइति । अन्यत्र विद्यान्तरे शूद्रतांयाति वेदानध्ययनसामान्यात्द्विजातिशयोयमध्ययनस्तुत्यर्थः ॥ १६८ ॥

**मातुरग्रेऽधिजननं द्वितीयंमौञ्जिबन्धने ॥ तृतीयंयज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९ ॥**

( १ ) **मेधातिथिः** । द्विजातीनांतत्र तत्राधिकारः श्रुतस्तत्राचार्यादिशब्दवत्सुत्वत्त्वात्तदर्थनिरूपणार्थमाह । मातुः सकाशादग्रे आदावधिजननंजन्मपुरुषस्य द्वितीयंमौञ्जीबन्धने उपनयने । ङ्यापोर्बहुलमिति ह्रस्वः । तृतीयंज्योतिष्टोमादिय-ज्ञदीक्षायम् । दीक्षापिजन्मत्वेन श्रूयते पुनर्वारंतदृत्विजोगर्भंकुर्वन्ति यद्दीक्षयन्तीति । त्रीणि जन्मानि द्विजस्य श्रुतिनोदि-तानि । नन्वेवंसति त्रिजः प्राप्नोति ।अस्तु । द्विजव्यपदेशे तावदुपनयनंनिमित्तं तद्यपदेनिबन्धनश्च श्रौतस्मार्तसामयिकाचा-रिक कर्माधिकारः । प्रथमतृतीयजन्माभिधानंद्वितीयजन्म स्तुत्यर्थं सर्वजन्म श्रेष्ठंतत । अदीक्षितोहि यज्ञएव नाधिक्रियते अनुपनीतस्तु न क्वचिदेव । अन्येत्वाद्यत्वसामान्यादाधानंयज्ञदीक्षांमन्यन्ते । तस्यापि जन्मसंभवोस्ति अजातएवासौयो-ऽग्नीन्नाधत्तइति ॥ १६९॥

( २ ) **सर्वज्ञनारायणः** । मातुः अधिमातर्याधारभूतायां मौञ्जीबन्धने सावित्र्याः यज्ञदीक्षायांदीक्षातः द्विजस्य द्विजतांप्राप्तस्य तत्तृतीयंजन्म ॥ १६९ ॥

( ३ ) **कुल्लूकः** । द्विजानांतत्र तत्राधिकारश्रुतेर्द्विजत्वनिरूपणार्थमाह मातुरग्रेइति । मातुः सकाशादादौ पुरुषस्य जन्म द्वितीयंमौञ्जिबन्धनेउपनयने । ङ्यापोःसंज्ञाछंदसोर्बहुलमितिह्रस्वः । तृतीयंज्योतिष्टोमादि यज्ञदीक्षायांवेदश्रवणात् । तथा च श्रुतिः पुनर्वायदृत्विजोयज्ञियंकुर्वन्ति यद्दीक्षयंन्तीति । प्रथमद्वितीयतृतीयजन्मकथनंचेदंद्वितीयजन्मस्तुत्यर्थं द्विजस्यैव यज्ञदीक्षायामप्यधिकारात् ॥ १६९ ॥

( ४ ) **राघवानन्दः** । अधीतवेदस्य जन्मद्वयमनुवदन्ज्योतिष्टोमादियज्ञस्यावश्यकत्वंतृतीयजन्मत्वेनाह मातु-रिति । मातुरधिजननंजन्ममौञ्जीबन्धने द्वितीयंतन्निमित्तंयावज्जीवमग्निहोत्रंजुहुयादिति श्रुतेः । वसन्तेवसन्ते ज्योतिषा य-जेतेति । प्रतिसंवत्सरंसोमइतिस्मृतेश्च । तेषामावश्यकत्वेन दीक्षायाअप्यावश्यकत्वात् पुनर्जायेरन्नृत्विजोगर्भंकुर्वन्तिदी क्षयन्ति इत्यादिश्रुतेर्दीक्षाया जन्मान्तरहेतुत्वश्रवणात्अतएवाह श्रुतिचोदनात् ॥ १६९ ॥

( ५ ) **नन्दनः** । इदानीमुपनीतस्यैव वेदाध्ययनेऽधिकारोनान्यस्येतिविवक्षन्नुपनयनस्यजननकल्पतांतावदाह मातुरिति । मौञ्जीबन्धनेउपनयने । ह्रस्वोऽत्रवृत्तिभङ्गपरिहारार्थः । प्रथमतृतीययोर्जन्मनोरुपन्यासोदृष्टान्तार्थः ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । द्विजत्वमाह मातुरिति । मातुःसकाशात्अग्रेअधिजननंजन्म द्वितीयंजन्म मौञ्जीबन्धने भवति । यज्ञदीक्षायांतृतीयंजन्म द्विजस्य विधिनोदनाद्भवतीत्यर्थः ॥ १६९ ॥

**तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिन्हितम्।तत्रास्य माता सावित्रीपितात्वाचार्यउच्यते॥१७०॥**

( १ ) **मेधातिथिः**। तत्रैतेषु द्विजन्मसु संदेतद्ब्रह्मजन्म उपनयनंमौञ्जीबन्धनचिन्हितंमेखलाबन्धनेनोपलक्षितम्। तत्रस्य माता सावित्रीतया ह्यनूक्तया तन्निष्पन्नंभवति। अनेन च सावित्र्यनुवचन मुपनयने प्रधानंदर्शयति। तदर्थंह्यसौ समीपमानीयतेपिताऽऽचार्यः। मातापितृनिवर्त्यंजन्म। अतोरूपकभङ्ग्या तत्राप्याचार्यसावित्र्यौ मातापितरावुक्तौ ॥१७०॥

( २ ) **सर्वज्ञनारायणः**। यद्ब्राह्मणे वेदात्सावित्रीरूपाज्जन्ममौञ्जीबन्धनेनोपनयनकर्मणा चिन्हितमुन्नेयम् ॥ १७० ॥

( ३ ) **कुल्लूकः**। तत्रेति तेषु त्रिषु जन्मसु मध्ये यदेतद्ब्रह्मग्रहणार्थंजन्मउपनयनसंस्काररूपंमेखलाबन्धनोपलक्षितं तत्रास्य माणवकस्य सावित्री माताऽऽचार्यश्चपिता मातृपितृसंपाद्यत्वाज्जन्मनः ॥ १७० ॥

( ४ ) **राघवानन्दः**। ब्रह्मदस्य पितुःजनयितव्ये परत्वापेक्षांपूरयन्मौञ्जीबन्धनदीक्षालक्षणजन्मद्वयकारणत्वादेव पितृतःश्रैष्ठ्यमाह तत्रेति त्रिभिः। तत्रद्वितीये जन्मन्युपनयनाख्ये तृतीये यज्ञजन्मनि दीक्षाप्रसूःऋत्विक्पितेत्युक्तः ॥१७०॥

( ५ ) **नन्दनः**। तेषुत्रिषु जन्मसु मध्ये ब्रह्मजन्मोपनयनम् ॥ १७० ॥

( ६ ) **रामचन्द्रः**। यत्र द्विजानांमध्येअस्य द्विजस्य ब्रह्मजन्मब्राह्मणंवेदस्य सकाशातजन्मबन्धनचिन्हितंतत्र जन्मनिअस्य सावित्री माता पिताआचार्यउच्यते ॥ १७० ॥

**वेदप्रदानादाचार्यं पितरंपरिचक्षते॥ नह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ॥ १७१ ॥**

( १ ) **मेधातिथिः**। मौञ्जीबन्धनचिन्हितमित्युक्तम्। तत्र रज्वासञ्जनादाचार्यः पितृवन्मान्यः स्यात्तदर्थमुच्यते वेदप्रधानादाचार्यंपितरंपरिचक्षते कृत्स्नवेदाध्यापनान्नोपनयनाङ्गभूतसावित्र्यनुवाचनमात्रादेव। प्रदानंस्वीकारोत्पादनंवेदाक्षरोच्चारणे माणवकस्य। यद्येवंयावन्नाचार्येण पितृत्वंप्राप्तंतावन्न माणवकोद्वितीयंजन्म समश्नुते। अप्राप्तद्विजभावश्च प्रागिवोपनयनात्कामचारः स्यादतआह नह्यस्मिन्प्राङ्मौञ्जीबन्धनादस्य माणवकस्य किंचित्कर्म श्रौतस्मार्तमाचारप्रतिष्ठंवाऽदृष्टार्थंप्रयुज्यते न तत्राधिक्रियते। उपनयनसमनन्तरमेव सर्वैर्हि जातिपुरुषधर्मैरधिक्रियते। नन्ववैद्यत्वात्तस्यामवस्थायां कथमधिक्रियतां एतदर्थमेवोक्तंगुरौ शिष्यश्च याज्यश्चेति। आचार्येणासौ शिक्षयितव्यः। तदुक्तं शौचाचारांश्च शिक्षयेत्। यथा च गौतमः उपयनादिनियमइति। आचार्यस्य तु वेदसमापनान्तोव्यापारः ॥ १७१ ॥

( २ ) **सर्वज्ञनारायणः**। पितामातेतितिनिरुक्तं तत्कथमाचार्यस्तथेत्यतआह वेदप्रदानादिति। प्रत्यवायनिवर्तनंहि रक्षणं तच्चाचार्येणापि वेदानधिगमजन्यप्रत्यवायरक्षणात् कृतमिति भवत्यसौपितेत्यर्थः। प्रत्यवायमाह न ह्यस्मिन्निति। अस्मिन्बाले ॥ १७१ ॥

( ३ ) **कुल्लूकः**। वेदाध्यापनादाचार्यंपितरंमन्वादयोवदन्ति। पितृवन्महोपकारफलात्गौणंपितृत्वम्। महोपकारमेव दर्शयति नह्यस्मिन्निति। यस्मादस्मिन्माणवके प्रागुपनयनात्किंचित्कर्म श्रौतंस्मार्तंच न संबध्यते न तत्राधिक्रियतइत्यर्थः ॥ १७१ ॥

( ४ ) **राघवानन्दः**। अस्मिन्ननुपनीते बाले न युज्यतेअदृष्टार्थकर्तृत्वेनेति शेषः ॥ १७१ ॥

( ५ ) **नन्दनः**। अथआचार्यस्य पितृत्वे हेतुमाहवेदेति। वेदप्रदानात्सावित्रीप्रदानात्। सर्वेहिवेदाःसावित्री। उपनयनाख्यजन्मप्रदानादितियावत्। उपनयनस्योत्पादनसाधर्म्यकथनंतत्कर्तुराचार्यस्य पितृत्वोपपादनार्थमुत्तरार्धेनोपपादितम्। तत्रायमर्थः। अजातस्य यथा न किंचिदस्ति कर्म कर्मणः शारीरसापेक्षत्वादेवमनुपनीतस्यापि विहितंकर्मनास्ति।

जातस्यतु यथास्तिकर्मैवमुपनीतस्यापिविहितंकर्मास्ति । तेनैवमुपनयनस्योत्पादनसाधर्म्यात्तत्कर्तुराचार्यस्य पितृत्वमुपपन्नमिति ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । वेदप्रदानात्वेदस्यअध्यापनात् आचार्यपितरंपितृतुल्यंप्रचक्षते । अस्यद्विजस्य आमौञ्जीबन्धनात्किंचित्कर्म कर्तव्यंन विद्यते विना यज्ञोपवीतंकर्माहान भवन्तीत्यर्थः ॥ १७१ ॥

**नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥**

( १ ) **मेधातिथि** । आमौञ्जीबन्धनादित्यनुवर्तते । यदि वा यावद्वेदे न जायतइत्यर्थवादतोऽवधिपरिनिश्चयःब्रह्म वेदस्तन्नोच्चारयेत् । पितुरयमुपदेशः यथामद्यपानादिभ्योरक्षेत्तथा वेदाक्षरोच्चारणात् । केचित्त्विममेव ब्रह्माभिव्याहार निषेधंप्रागुपनयनाद्याकरणाद्यङ्गाध्ययने ज्ञापकंवर्णयन्ति । णिजर्थंव्याचक्षते पित्रा न वाचनीयः बाल्या तु कानिचिद्व्यक्तानि वेदवाक्यानि स्वयंपठतोन दोषः । एतत्तुनयुक्तं स्मृत्यन्तरे हिपठ्यते न ब्रह्माभिव्याहरेदिति । अर्थवादे च श्रुतंशुद्रेण हि समस्तावदिति । यथा शूद्रोदुष्यति तद्वदयमपीत्युक्तंभवति । स्वधाशब्देन पितृभ्यः कल्पितमन्नमिहोच्यते । अथवा पित्र्यंकर्म स्वधाशब्देनोच्यते । तन्निनीयते त्यज्यते प्राप्यते येन मन्त्रेण सस्वधानिनयनः । शुन्धन्तांपितरइत्यादिस्तंवर्जयित्वान्यमन्त्रोनोच्चारयितव्यः । अनुपनीतेनोदकदाननवश्राद्धादिपितुः कर्तव्यमित्यस्मादेव प्रतीयते । पार्वणश्राद्धादौ त्वग्निमत्त्वाभावादनधिकारः पिण्डान्वाहार्यकंहि तद्वक्ष्यते । तृतीये चैतन्निपुणमुपपादयिष्यामः ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मकर्मसाधनंतपः प्रभृतितदेवकुतइत्याह । नाभिव्याहारयेदिति । ब्रह्म वेदम् । स्वधाशब्देनापोनिनीयन्तेत्रेति स्वधानिनयनंश्राद्धं तत्र मन्त्रोच्चारणमनुपनीतेनापि कार्यमेव ततोन्यविषये वेदोच्चारणंन कारयेदिति । श्राद्धेनवश्राद्धादौ वेदोच्चारणमनुज्ञातम् । एतच्च कर्त्रन्तरासंभवे शूद्रेण हीत्यन्य विषये वेदोच्चारणे तादृशप्रायश्चित्तलाभार्थम् । वेदे साविच्याम् ॥ १७२ ॥

( ३ ) **कुल्लूकः** । आमौञ्जीबन्धनादित्यनु वर्तते प्रागुपनयनाद्वेदंनोच्चारयेत् । स्वधाशब्देन श्राद्धमुच्यते निनीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्जयित्वा मृतपितृकोनवश्राद्धादौ मन्त्रंनोच्चारयेत् । तद्यतिरिक्तंवेदंनोदाहरेत् यस्माद्यावद्वेदे न जायते तावदसौ शूद्रेण तुल्यः ॥१७२ ॥

( ४ ) **राघवानन्दः** । किंच वेदग्रहणयोग्यतासंपादकजन्मयावन्न जायते तावन्नाभिव्याहारयेत् नअध्यापयेत् ब्रह्म वेदम् । स्वधाश्राद्धंतन्नीयतेनिष्पाद्यते येन मन्त्रजातेन तद्वर्जयित्वा । तेनानुपनीतस्यपितुरौर्ध्वदेहिकेअस्त्यधिकारइति । शूद्रेण हि समःवेदंयथाशूद्रंन वाचयति किंतु तूष्णींकर्ताकरोति शूद्रोऽमन्त्रेण गृह्यतइति स्मृतेः एवमस्य तदतिरिक्तवेदावाचकत्वात् ॥ १७२ ॥

( ५ ) **नन्दनः** । यतएवंतस्मादनुपनीतंतन्नाभिव्याहारयेद्ब्रह्म पिता तत्समोवा । स्वधा निनयनात्स्वधानिनयनमन्त्रवत् पितृकर्ममन्त्रादिति यावत् । हि हेतौ । वेदे साविच्याम् ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । ब्रह्म वेदं नअभिव्याहरेत् न वेदस्यउच्चारणंकुर्यात् । प्रेतकर्मणःस्वधानिनयनादृतेअकृतोपनयन-

( १७२ ) स्वधानिनयनादृते ( ग, च )
——निर्वपनादृते ( ख )

स्य द्विजस्य पित्रोर्मरणंभवेत् चेत्तर्हित्स्वधोच्चारणंकर्तव्यंप्रेतकर्म करणीयम् । यावद्वेदेन जायते वेदस्य सकाशात्जन्म न भवेत्तावत्शूद्रप्रायोभवेत् ॥ १७२ ॥

**कृतोपनयनस्यास्य व्रतादेशनमिष्यते ॥ ब्रह्मणोग्रहणंचैव क्रमेण विधिपूर्वकम् ॥ १७३ ॥**

( १ ) **मेधातिथिः** । उपनीय गुरुः शिष्यमित्यनेन शौचाचाराध्ययनानांक्रमउक्तः । अतश्च तेनैव क्रमेण पठेत् । उपनयनानन्तरमध्ययने प्राप्ते क्रमान्तरार्थमिदमारभ्यते । उपनीतस्य त्रैविद्यादिव्रतंच कर्तव्यम् । ततः स्वाध्यायोध्येतव्यः । कृतोपनयनस्य ब्रह्मचारिणोव्रतादेशनमिष्यते क्रियतेचाचार्यैः । शास्त्रवशेनैव मिष्यते । अतश्च कर्तव्यतैवैषणा प्रतिपाद्यते । ततोब्रह्मणोवेदस्य ग्रहणंक्रमेणानेन विधिपूर्वकमित्यर्थवादः श्लोकपूरणार्थः ॥ १७३ ॥

( २ ) **सर्वज्ञनारायणः** । व्रतादेशनंमधुमांसभक्षणादिनियमोपदेशः । यद्वा व्रतंयच्च भक्षणादि आदेशनंचान्द्रायणादिप्रायश्चित्तोपदेशइति विभज्य व्याख्येयम् । क्रमेणनत्वन्त्यभागस्य पूर्वमध्ययनेन ॥ १७३ ॥

( ३ ) **कुल्लूकः** । यस्मादस्य माणवकस्य समिधमाधेहि दिवा मा स्वाप्सीरित्यादि व्रतादेशनंवेदस्याध्ययनंमन्त्रब्राह्मणक्रमेणाध्येष्यमाणस्त्वाचान्तइत्यादि विधिपूर्वकमुपनीतस्योपदिश्यते तस्मादुपनयनात्पूर्वं न वेदमुदाहरेत् ॥ १७३ ॥

( ४ ) **राघवानन्दः** । संप्रति ब्राह्मणादिब्रह्मचारिणःप्रजापत्युक्तव्रताद्यनुवादेन नियमानाह कृतोपनयनस्येति सप्तदशभिः । व्रतादेशनंत्रैविद्यकादिव्रतोपदेशोगुरुणाकार्यःततोवेदाध्ययनंततश्चोपनीयगुरुरित्युक्तक्रमोबाध्यतेइति मेधातिथिः । उपनीयेत्येववेदशब्दोत्र गायत्रीपरइति न क्रमविरोधः ॥ १७३ ॥

( ५ ) **नन्दनः** । उपनयमानन्तरमध्ययनेप्राप्तेक्रमोविधीयते कृतेति । व्रतादेशनंव्रतानांप्राजापत्यादीनामुपदेशक्रमेण वेदाध्यायिनामाचारेण ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । अस्य द्विजस्य कृतोपनयनस्य व्रतादेशनंव्रताचरणंइष्यते । ब्रह्मणःवेदस्यग्रहणंक्रमेणऋक्यजुःसामक्रमेण विधिपूर्वकंग्राह्यम् ॥ १७३ ॥

**यद्यस्य विहितंचर्म यत्सूत्रंया च मेखला ॥ योदण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४ ॥**

( १ ) **मेधातिथिः** । गृह्यकारैर्व्रतनामधेयकानि कर्माण्युपदिष्टानि संवत्सरंवेदभागंवाकिंचिज्जिघृक्षतइयंव्रतचर्यायोयमनियमसमूह स्तत्र पूर्वव्रतसमाप्तौ व्रतान्तरारम्भे उपनयने ये विधयस्तादृशएव व्रतादेशेषु । अथ प्रागुपात्तानांका प्रतिपत्तिः । अप्सु प्रासनम् । ननुच तदुक्तंप्रागुपात्तानां विनष्टानां का प्रतिपत्तिः । विनाशे शास्त्रनोदितंचैषांकार्यमन्योपादानाच्च तेषांनिवृत्तिः । यच्चर्मयस्य ब्रह्मचारिणोविहितंयथा कार्ष्णंब्राह्मणस्य रौरवंक्षत्रियस्येति । एवंदण्डादिष्वपि द्रष्टव्यम् तस्य व्रतेष्वपि कृतत्वात् । व्रतशब्दोव्रतादेशे वर्तते ॥ १७४ ॥

( २ ) **सर्वज्ञनारायणः** । व्रतेषु चान्द्रायणेषु गार्हस्थ्येपि चान्द्रायणादिव्रतेषु एतत्पञ्चकं स्वस्ववर्णोक्तं ग्राह्यमित्यर्थः । कचिद्वेदाध्ययनाङ्गव्रतेषुसाविच्यादिष्वविनष्टान्यपिपूर्वाणिजले त्यक्तातज्जातीयान्यन्यान्युपादेयानीत्यस्यार्थमाहुः ॥ १७४ ॥

( ३ ) **कुल्लूकः** । यस्य ब्रह्मचारिणोयानि चर्मसूत्रमेखलादण्डवस्त्राण्युपनयकाले गृह्येण विहितानि गोदानादिव्रतेष्वपि तान्येव नवानि कर्तव्यानि ॥ १७४ ॥

( ४ ) **राघवानन्दः** । व्रतेषु षट्त्रिंशदाब्दिकादिवेदव्रतेषुकाम्येषु वेदग्रहणतात्पर्यन्ते षुवा ॥ १७४ ॥

( ५ ) **नन्दनः** । अथ कानिचिद्व्रतानि व्रतप्रसङ्गादाह यद्यस्येति । यस्य ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा यच्चर्मकार्ष्णरौरवबास्तादि । एतेनयत्सूत्रमित्यादिव्याख्यातम् । पुराणानि चर्मादीनि समुत्सृज्यान्यानि नवानि चर्मादीनि व्रतेषु धार्याणीत्यर्थः ॥ १७४ ॥

( ६ ) **रामचन्द्रः** । यस्य ब्राह्मणस्य वा क्षत्रियस्य वा वैश्यस्य वा यत्सूत्रंयज्ञोपवीतंच चर्म विहितं या च मेखला स्थितायःदण्डः यत्तु वसनं तत्तत्अस्येद्विजव्रतेष्वपि ॥ १७४ ॥

**सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ॥ सन्नियम्येन्द्रियग्रामंतपोवृद्ध्यर्थमात्मनः॥ १७५ ॥**

( १ ) **मेधातिथिः** । वक्ष्यमाणस्य यमनियमसमूहस्य पृथक्प्रकरणत्वेन श्लोकोयंगौरवख्यापनार्थः । एवंतु यत्पूर्वमुक्तंतदवश्यकर्तव्यमिदंतु ततोगुरुतरमनुष्ठीयमानंमहते फलाय । ब्रह्मचारिग्रहणं प्रकरणान्तरत्वेनातद्धर्माशङ्कयाऽनुसंधानार्थम् । यदि ब्रह्मचारिधर्मएवाऽऽसीत्किंतर्हीदमुच्यते प्रकरणान्तरमिति । पूर्वेभ्यएतेषामतिशयात्समानधर्मत्वादेतावता वैलक्षण्येन प्रकरणान्तरत्वव्यवहारः । परिशिष्टानि पदानि श्लोकपूरणार्थतयानूद्यन्ते । सेवेत अनुतिष्ठेत । इमान्वक्ष्यमाणान् । बुद्धौ संनिहितत्वादिदमानिर्दिश्यन्ते । गुरौ वसन्गुरुसमीपे विद्याध्ययनार्थंवसन् । नियमानाह । संनियम्येन्द्रियग्रामंप्रागुक्तेन मार्गेण तपोवृद्ध्यर्थमभ्यायविध्यनुष्ठानजन्यात्मसंस्कारार्थम् ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । इमान्वक्ष्यमाणान् ॥ १७५ ॥

( ३ ) **कुल्लूकः** । ब्रह्मचारी गुरुसमीपे वसन्निन्द्रियसंयमंकृत्वात्मगतादृष्टवृद्ध्यर्थमिमान्नियमाननुतिष्ठेत् ॥ १७५ ॥

( ४ ) **राघवानन्दः** । इमान्वक्ष्यमाणान् ॥ १७५ ॥

( ५ ) **नन्दनः** । इमान्वक्ष्यमाणान् ॥ १७५ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मचारी गुरौ वसन्गुरोःसमीपे वसन् इमाननियमान्सेवेत कुर्यात् ॥ १७५ ॥

**नित्यंस्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ॥ देवताभ्यर्चनंचैव समिदाधानमेव च ॥१७६ ॥**

( १ ) **मेधातिथिः** । तानीदानींप्रतिज्ञातान्पूर्वेण नियमानाह । प्रत्यहंस्नात्वा शुचिः स्नानेनापनीताशुचिभावोदेवर्षिपितृतर्पणंकुर्यात् । यदि पुनर्न शुचिः तदावश्यंस्नायात् । शुचिग्रहणेन शुद्धिहेतुतयात्रस्नानस्योपदिष्टत्वान्न स्नातकव्रतवत्तदनुष्ठेयम् । अतएव स्मृत्यन्तरे च स्नानंप्रतिषिद्धंसप्रतिषेधोमृदा स्नानस्य प्रसाधनलक्षणस्य । गौतमेनतु स्नानमेवंविहितंदण्डइवाप्सु परिप्लवते । मलापकर्षणंकरनिघर्षणादिना न कर्तव्यम् । अस्यामेध्यादिसंसर्गेण य त्स्वेद जंवस्त्ररेणुसंयोगादिसहजंमलंतदशुचित्वमापादयति तद्धिनियतरूपमेव । तथा च ब्राह्मणं किंनुमलंकिमजिनंकिमुश्मश्रूणि किंतपइति । धर्मसाधनतामेवंविधस्य मलधारणस्य दर्शयति । कथंपुनः स्नानस्य शौचार्थता प्रतीयते । न पुनः स्नातः शुचिश्चोभयविशिष्टेदेवकार्ये विनियुज्यते । स्नातस्याशुचित्वाभावात्कृतशौचाचमनादेः स्नानविधानात्स्नात्वाचाचान्तः पुनराचामेदिति च स्नातस्यापि शुचिरित्येतावता यादृशी शुद्धिस्तस्यां विज्ञायमानायां स्नानमपि सति निमित्ते प्राप्तंपुनरुच्यते । स्मृत्यन्तरंचेदंसत्यशुचित्वे निमित्ते प्रतिषेधार्थम् । तथाच वेदमधीत्य स्नायादिति समाप्ते स्वाध्यायविधौ प्रतिप्रसविष्यति । कुर्याद्देवर्षिपितृतर्पणम् उदकदानंदेवादिभ्योगृहस्थधर्मेषु यदुक्तंतादृशमेव प्रतीयते तर्पणशब्दसाहचर्यात् । यदेवतर्पयत्यद्भिरिति तथादेवताभ्यर्चयतीति गृह्यकारैरुदकसाधनोयंविधिरुक्तः । उदकतर्पणमिति चैतत्संविज्ञायते । तेदेवागृह्यकारैः पठिता अग्निप्रजापतिब्रह्मेत्यादयः । तेषांचतर्पणं न सौहित्योत्पादनं किंतर्हि तदुद्देशेनोदकाञ्जलिप्रक्षेपः । अतोयमुदकद्रव्यकोयागएवोक्तोभवति । नह्यन्यथा देवतात्वंभवति ।

यागसंप्रदानंहिंसेति स्मर्यते न तृप्तेः कर्त्री । एतावद्धि देवतालक्षणम् । सूक्तभाजोहविर्भाजश्चदेवताः तत्रसूक्तैस्स्तुत्यतयाभ जन्ते हविः संप्रदानतया । तर्प्यत्वेन चोदकदानसंप्रदानतामेव गुणवृत्त्या वक्ति । गुर्वादिसंप्रदानंगवादिना तदुद्दिश्यमानंस्वाम्येन प्रतीयते । देवताऽपि संप्रदानमतः संप्रदानत्वसाम्यात्तृप्यन्तीत्युच्यते । यदि देवतातृप्त्यर्थमेतत्स्यात्तदा संस्कारकर्मोदकतर्पणंस्यात् । नच देवतानांसंस्कार्यत्वोपपत्तिः नहि ताः क्वचिदुपयुक्ताउपयोक्ष्यन्तेवा नवा कृताः करिष्यमाणकार्यस्य संस्कारतोपपत्तिः । ऋषयोयेयस्यार्षेयाः यथा पराशराणांवाशिष्ठशाक्त्यपाराशर्येति । गृह्यकारैस्तु मन्त्रदृशऋषयस्तर्पणीयत्वेनोक्ताः मधुच्छन्दोगृत्समदोविश्वामित्रइति । अविशेषाभिधानादृषिशब्दस्योभयेऽपि प्राप्ताः विशेषस्मृतित्वात्गृह्यस्मृतेस्तएव ग्रहीतुंन्याय्याः । पितरः पूर्वप्रेताः पितृपितामहाः सपिण्डाः समानोदकाश्च । पितॄणांतर्पणंतर्पणमेव । एतच्च श्राद्धविधौ प्रत्यक्षेण वक्ष्यते । देवताभ्यर्च्चनं अत्र केचिच्चिरन्तनाविचारयांचक्रुः काएतादेवतानाम यासामिदमभ्यर्चनमुच्यते यदि तावच्चित्रपुस्तकन्यस्तः चतुर्भुजोवज्रहस्तइत्याद्याःप्रतिकृतयइति लौकिकाव्यवहरन्ति अतोगौणस्तत्र देवताव्यवहारः अथ याःसूक्तहविःसंबन्धिन्योवैदिकीभ्यश्चोदनाभ्योमन्त्रवाक्येभ्यश्चावगम्यन्ते शब्दार्थसंबन्धविदश्च स्मरन्ति अग्निः अग्नीषोमौ मित्रावरुणौ इन्द्रोविष्णुरिति यद्येवंतत्क्रियासंबन्धितयैव तेषांदेवतात्वंनार्थसंबन्धितया तत्रापि यस्यैव हविषोया देवता तेन चोदिता तस्यैव सा भवति तथा ह्याग्नेयोऽष्टाकपालइत्याग्नेये देवतापुरोडाशे न सौर्ये चरौ अयंच तेषांनिर्णयः मुख्यासंभवाद्गौणस्यैव ग्रहणं न्याय्यंसमाचाराच्च अतः प्रतिमानामेवैतत्पूजाविधानम् । यच्चात्र तत्त्वंतद्व्रतवद्देवदैवत्यइत्यत्र वक्ष्यामः । समिदाधानंसायंप्रातरग्नौ दारुशकलप्रक्षेपणम् ॥ १७६ ॥

( २ ) **सर्वज्ञनारायणः** । अवगाहनेन स्नात्वा मार्जनादिना वा शुचिर्भूत्वा । आदिष्टीनोदकं कुर्यादिति तु प्रेततर्पणपरम् । देवतानामर्चनंपुष्पाद्यैः ॥ १७६ ॥

( ३ ) **कुल्लूकः** । प्रत्यहंस्नात्वा देवर्षिपितृभ्यउदकदानंप्रतिमादिषु हरिहरादिदेवपूजनंसायंप्रातश्च समिद्धोमंकुर्यात् । यस्तु गौतमीये स्नाननिषेधोब्रह्मचारिणः ससुखस्नानविषयः । अतएव बौधायनः नाप्सु श्लाघमानःस्नायात् । विष्णुनात्रकालद्वयमभिषेकाग्निकार्यकरणमप्सु दण्डवन्मज्जनमिति ब्रुवाणेन वारद्वयंस्नानमुपदिष्टम् ॥ १७६ ॥

( ४ ) **राघवानन्दः** । नित्यंस्नात्वेत्यादिकान् । समिदाधानमग्नाविति शेषः ॥ १७६ ॥

( ५ ) **नन्दनः** । तानेवनियमानाह नित्यमिति । आश्रमान्तरेऽपि तर्पणार्चनयोः करणार्थंनित्यग्रहणम् । समिदाधानस्यपुनर्ग्रहणमादरातिशयार्थम् ॥ १७६ ॥

( ६ ) **रामचन्द्रः** । समिदाधानंअग्नौआधानंस्थापनंकर्तव्यम् ॥ १७६ ॥

**वर्जयेन्मधुमांसंच गन्धंमाल्यंरसान्स्त्रियः ॥ शुक्तानि यानि सर्वाणि प्राणिनांचैव हिंसनम् ॥ १७७ ॥**

(१) **मेधातिथिः** । मधुसारघम् । माध्वीकस्य तु मद्यत्वात्प्रागप्युपनयनात्प्रतिषेधोनित्यंमद्यंब्राह्मणोवर्जयेदिति । मांसंप्रोक्षिताद्यपि । गन्धशब्देन सुरभित्वातिशययुक्तानि कर्पूरागरुप्रभृतीनि द्रव्याणि सबन्धिलक्षणया प्रतिषिध्यन्ते । तेषामनुलेपनाद्युपभोगप्रतिषेधः । गन्धस्तुस्वदेशान्निर्गतआगच्छतीत्यशक्योनिषेद्धुंतत्राप्याकस्मिकस्याप्यप्रतीषेधात् । भोगेच्छया त्वगरुधूपादौ दोषएव । अतउपाध्यायेन चन्दनवृक्षादिच्छेदने नियुक्तस्य तद्गन्धस्याघ्राणे वस्तुस्वभावतउत्पद्यमाने न दोषः । माल्यसाहचर्याच्चेदृशोगन्धः प्रतीयते । यस्तु नेदृशोहृदयोन्मादकरः कुष्टघृतपूतिदार्वादिगन्धस्तस्य प्रतिषेधः । माल्यंकुसुमग्रथि-

---

( १७७ ) शुक्तानि= ( च, ख, ग, घ, मेधा० )

तम् । रसामधुराम्लादयः। ननु च नीरसस्य भोज्यत्वासंभवात्प्राणवृत्तिरेवनस्यात्। सत्यम् उद्रिक्तरसाः केवलागुडादयोनिषिध्यन्ते । संस्कारकरणे द्रव्यान्तर्गतानामपि प्रतिषेधः । अथचात्यन्तमसंस्कृतस्यान्नस्य उक्तिप्रतिषेधोयम् । यथोक्तम् योहेरिव धनाद्भीतोमिष्टान्नाच्च विषादिव । राक्षसीभ्यव स्त्रीभ्यः सविद्यामधिगच्छतीति । अन्येतु शृङ्गारादीन्मन्यन्ते । नाटकादिप्रेक्षणेन काव्यश्रवणेन वा रसपुष्टिर्न वक्तव्या । अन्येषांतु दर्शनमिक्ष्वामलकादीनांयोन्तर्द्रवरूपोदकवत्सरसस्तस्य निष्पीडितस्य प्रतिषेधोन पुनस्तदन्तर्गतस्य । तच्चैतदयुक्तं नहि रसशब्दोद्रवपर्यायः प्रसिद्धः । यत्र च यस्योचितमुपभोगान्तत्वंतदेव तस्य निषिध्यते । तेन मधुमांसयोर्भोजने प्रतिषेधोन दर्शनस्पर्शनयोः । गन्धमाल्यस्यापि शरीरमण्डनाभिमानतयोपादानंनिषिध्यते नतुकथंचिद्धस्तादिना ग्रहणम् । एवंस्त्रियोमैथुनसंबन्धेन । तदाशङ्कयैव च प्रेक्षणालम्भौनिषेत्स्यति । तथाचगौतमः स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायामिति । शुक्तानि प्रामास्वरसानि केवलात्परिवासाद्द्रव्यान्तरसंसर्गाद्वाऽम्लतामापन्नानि । तेषांच द्विजातिधर्मत्वादेव सिद्धः प्रतिषेधः पुनर्ग्रहणंगौणशुक्तपरिग्रहणार्थम् । तेन रूक्षपरुषावाचोनिषिद्धाभवन्ति । यदुक्तंगौतमेन शुक्तावाचइति । तदिदंसर्वग्रहणंचास्यैवार्थस्याविष्करणार्थम् । रसशुक्तान्यनूद्य सर्वाणीति विधीयते । ततोगौणपरिग्रहः सिद्धोभवति येत्वेवंव्याचक्षते । शुक्तशब्देन रसप्रतिषेधः सर्वशब्देन मानसानि वचांसि तद्वद्द्रष्टव्याः अर्थप्रतिषिद्धानांप्रतिषेधार्थंसर्वग्रहणंकस्मान्नभवति । तथा सति च दध्यादेःशुक्तीभूतस्य प्रतिषेधः प्राप्नोति । यदितु प्राप्तिमाश्रित्य पुनः प्रतिषेधउक्तार्थोव्याख्यायते तथा सति नकश्चिद्दोषः । प्राणिनां मशकमक्षिकादीनांबाल्याद्धिंसने प्राप्ते यत्नतः परिहारार्थंपुनः प्रतिषेधः । स्वाध्यायविध्यङ्गत्वार्थोवा । न केवलंहिंसायांपुरुषार्थः प्रतिषेधातिक्रमोयावत्स्वाध्यायविध्यर्थातिक्रमोपि । शुक्तादिष्वप्येवंकस्मान्न कल्प्यतइति चेदस्ति तत्र विषयान्तरेसावकाशत्वमेकरूपस्य विषयस्य व्यर्थत्वंसति गत्यन्तरे गरीयः ॥ १७७ ॥

( २ ) **सर्वज्ञनारायणः** । वर्जयेन्नोपयुञ्जीत । माल्यंपुष्पं । रसाउत्कटरसाः गुणादयः शृङ्गारादयइत्यन्ये । सर्वाणिशुक्तानिदध्यादीन्यपि । शुक्तमिति शुक्तमनम्लं कालवशेन द्रव्यान्तरयोगेन वाऽम्लतांगतम् । न त्वत्र शुक्तवागपि ग्राह्याप्रवृत्तिनिमित्त भेदात् ॥ १७७ ॥

( ३ ) **कुल्लूकः** । क्षौद्रंमांसंच न खादेत्गन्धंच कर्पूरचन्दनकस्तूरिकादिवर्जयेत् । एषांच गन्धानांयथा संभवंभक्षणमनुलेपनंच निषिद्धंमाल्यंच न धारयेत् । उद्रिक्तरसांश्च गुडादीन्न खादेत् । स्त्रियश्च नोपेयात् । यानि स्वभावतोमधुरादिरसानि कालवशेनोदकवासादिनाचाम्लयन्ति तानिशुक्तानि न खादेत् । प्राणिनांहिंसांन कुर्यात् ॥ १७७ ॥

( ४ ) **राघवानन्दः** । मधुसारघम् । रसान् रेतोवृद्धिहेतुदुग्धादीन्स्त्रियःभोगविषयत्वेन । शुक्तानीति स्वरसतोमधुराणि कालवशेनअम्लतांयान्ति यानि तानीति ॥ १७७ ॥

( ५ ) **नन्दनः** । रसान्घृततैलादीन् । कालातिपत्या स्वरसंपरित्यज्य रसान्तरमापन्नानि शुक्तानि ॥ १७७ ॥

( ६ ) **रामचन्द्रः** । मध्वादि वर्जयेत् स्त्रियःभोगार्थंवर्जयेत् सर्वप्राणिनांहिंसनंवर्जयेत् । शुक्तंद्रव्यान्तरसंयोमात् अमृतामापन्नानि निष्ठुरवचनानि वा ॥ १७७ ॥

**अभ्यङ्गमञ्जनंचाक्ष्णोरुपानच्छत्रधारणम् ॥ कामंक्रोधंच लोभंच नर्तनंगीतवादनम् ॥ १७८ ॥**

( १ ) **मेधातिथिः** । घृततैलादिना स्नेहेन शिरः शरीरम्रक्षणमभ्यङ्गः । अञ्जनंचाक्ष्णोः । अक्षिग्रहणंवृत्तपूरणार्थम् । अनयोश्चापिदेहमण्डनार्थतया प्रतिषेधोनौषधार्थतया गन्धमाल्यादिसाहचर्यात् । उपानहौ चर्मपादुके नकेवलेछत्रधारणंचस्वहस्तेन परहस्तेन वोभयस्यापि निषेधः । कामोमन्मथस्य स्त्रीप्रतिषेधादेव सिद्धः । क्रोधोरोषः । लोभोमोहः । अहंकार

ममकारौ चित्तधर्मावेते । नर्तनंप्राकृतपुरुषाणां हर्षाय गात्रविक्षेपोभरतादिदृष्टाभिनयप्रयोगश्च । गीतंषड्जादिस्वरप्रदर्शनंवादित्रंवीणावंशादिभिः स्वरवच्छब्दकरणंपणवमृदङ्गाद्यभिघातश्च तालानुवृत्त्या ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः** । अभ्यङ्गंतैलादिम्रक्षणम् । स्त्रियइति स्त्रीसंबन्धोनिषिद्धः । कामशब्देन त्वत्र तदभिलाषोनिषिध्यते ॥ १७८ ॥

( ३ ) **कुल्लूकः** । तैलादिना शिरःसहितदेहमर्दनलक्षणंकज्जलादिभिश्च चक्षुषोरञ्जनंपादुकायाश्छत्रस्य च धारणं कामंमैथुनातिरिक्तविषयाभिलाषातिशयं मैथुनस्य स्त्रियइत्यनेनैवनिषिद्धत्वात् क्रोधलोभनृत्यगीतवीणापणवादिवर्जयेत् ॥ १७८ ॥

( ४ ) **राघवानन्दः** । अभ्यङ्गंतैलादिनोन्मर्दनम् । कामोधनाभिलाषः ॥ १७८ ॥

( ५ ) **नन्दनः** । अत्र वर्जयेदित्यनुवर्तते ॥ १७८ ॥

( ६ ) **रामचन्द्रः** । अभ्यङ्गंतैलादिना अक्ष्णोरञ्जनंकज्जलादिना वर्जयेत् । उपानच्छत्रधारणं कामादि वर्जयेत् ॥ १७८ ॥

**द्यूतंच जनवादंच परिवादंतथानृतम् ॥ स्त्रीणांच प्रेक्षणालम्भमुपघातंपरस्य च ॥ १७९ ॥**

( १ ) **मेधातिथिः** । द्यूतमक्षक्रीडा । समाह्वयः कुक्कुटादिभिः प्रतिषिद्धोद्यूतशब्दस्यसामान्यशब्दत्वात् । जनैर्वादः अकारणेन लौकिकेष्वर्थेषु वाक्कलहः । देशवार्ताद्यन्वेषणंप्रश्नोवा परिवादः । असूयया परदोषकथनमनृतमन्यथा दृष्टमन्यथा च श्रुतं यदन्यथोच्यते । सर्वत्र वर्जयेदित्यनुषङ्गाद्द्वितीया । स्त्रीणांच प्रेक्षणालम्भौ अवयवसंस्थाननिरूपणंप्रेक्षणमिदमस्याः शोभतेङ्गमिदंनेति आलम्भआलिङ्गनंमैथुनशङ्कायां चैतौ प्रतिषिध्येते बालस्य यथातथम् । परस्योपघातोपकारः कस्यांचिदर्थसिद्धौ प्रतिबन्धः कन्यालाभादौ पृच्छयमानेन प्रयोगस्याप्ययोगत्वंनवक्तव्यम् । तूष्णीमासितव्यम नृतप्रतिषेधात् ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । जनवादंवार्तादिकथनं स्त्रीणांमातृतुल्याभ्योऽन्यासामकामतोपि प्रेक्षणमालम्भंच उपघातंमनोदुःखकरणम् ॥ १७९ ॥

( ३ ) **कुल्लूकः** । अक्षक्रीडां जनैःसह निरर्थकवाक्कलहंपरस्य दोषवादंमृषाभिधानंस्त्रीणांच मैथुनेच्छयासानुरागेणप्रेक्षणालिङ्गनंपरस्य चापकारंवर्जयेत् ॥ १७९ ॥

( ४ ) **राघवानन्दः** । जनवादंनिरर्थकवाक्कलहम् । स्त्रीणामितिइदमस्याःसौकुमार्यमित्यादिसरागेक्षणस्पर्शने । उपघातं अपकारंमनोवचोभिः हिंसातुकार्येनेति भेदः ॥ १७९ ॥

( ५ ) **नन्दनः** । प्रेक्षणालम्भंरागयुक्ते दर्शनस्पर्शने । उपघातंद्रोहम् ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । द्यूतादि स्त्रीणांप्रेक्षणं तथाभ्यङ्गं आलिङ्गनं परस्यअन्यस्यअपघातं मनोदुःखकारणं वर्जयेत् ॥ १७९ ॥

**एकः शयीत सर्वत्र न रेतःस्कन्दयेत्क्वचित् ॥ कामाद्धि स्कन्दयन्रेतोहिनस्ति व्रतमात्मनः ॥ १८० ॥**

( १ ) **मेधातिथिः** । एकः शयीतसर्वत्र नरेतः स्कन्दयेत्कचित् । अयोनावपि योनौ स्त्रीप्रतिषेधादेव सिद्धत्वादत्रार्थवादः । कामाद्धिस्कन्दयन् इच्छातकामः हस्तव्यापारादिनाऽयोनौ मैथुनेन च रेतः शुक्रंस्कन्दयन्क्षरयन्हिनस्ति नाशयति ब्रह्मचर्यव्रतमात्मनः ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः**। एकोन द्वितीयेन सहैकशय्यायाम्। सर्वत्र जनाकीर्णेपि क्वचिद्भूम्यादावपि न स्कन्दयेन्। कामतः स्कन्दयन् कामतस्तु स्त्रियंदृष्ट्वापि स्कन्दनेन व्रतहानिः। व्रतंहिनस्त्यतःपुनरुपनयनंतस्येत्यर्थः॥ १८०॥

( ३ ) **कुल्लूकः**। सर्वत्र नीचशय्यादावेकाकी शयनंकुर्यात्। इच्छया न स्वशुक्रंपातयेद्यस्मादिच्छया स्वमेहनाच्छुक्रंपातयन्स्वकीयव्रतंनाशयति व्रतलोपे चावकीर्णिप्रायश्चित्तंकुर्यात॥ १८०॥

( ४ ) **राघवानन्दः**। न स्कन्दयेत्स्वेच्छया न पातयेत्। क्वचिदयोनावपि। कामादिति प्रायश्चित्तार्थमनुवादः अवकीर्णी नैर्ऋतगर्दभालम्भनंकुर्यादितिस्मृतेः॥ १८०॥

( ५ ) **नन्दनः**। सर्वत्र मातृपितृसमीपे। हिहेतौ। व्रतंब्रह्मचर्यम्। हिनस्तिहन्त्येव॥ १८०॥

( ६ ) **रामचन्द्रः**। एकःशयीत स्त्रिया सह न शयीत रेतः क्वचित् न स्कंदयेत् न पातयेत्। तद्यथा अयोनौ च वियोनौ च पशुयोनौ तथाविधः॥ १८०॥

**स्वप्ने सिक्त्वा ब्रह्मचारी द्विजःशुक्रमकामतः॥स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचंजपेत्॥ १८१॥**

( १ ) **मेधातिथिः**। कामाद्व्रतलोपोनावकीर्णिप्रायश्चित्तमकामात्त्विदमाह। स्वप्नग्रहणमविवक्षितमकामतइत्येतदेवदेव निमित्तम्। नहि स्वप्ने कामसंभवः अतोयद्यसुप्तस्यापि कथंचिदनिच्छया स्वमलासृगवयववत्प्रक्षरति शुक्रंतत्राप्येतदेव प्रायश्चित्तम्। अकामतोरेतः सिक्त्वेदंप्रायश्चित्तंकुर्यादित्येतत्तृचंजपेत्॥ १८१॥

( २ ) **सर्वज्ञनारायणः**। अकामतःस्त्रियमनुध्यायापि सुप्तः सकृद्गन्धपुष्पादिनार्चयित्वा त्रिर्जपेत्। अत्र प्रायश्चित्तोक्तिःप्रसङ्गात्। एतच्चान्येषामपि वनस्थादीनांब्रह्मचर्यनियमप्रवृत्तानाम्॥ १८१॥

( ३ ) **कुल्लूकः**। ब्रह्मचारी स्वप्नादावनिच्छया रेतःसिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्यमभ्यर्च्य पुनर्मामैत्विन्द्रियमित्येतामृचंवारत्रयंपठेत्। इदमत्र प्रायश्चित्तम्॥ १८१॥

( ४ ) **राघवानन्दः**। ऋचंपुनर्मामैत्विन्द्रियमित्येताम्॥ १८१॥

( ५ ) **नन्दनः**। अकामतोहि रेतः स्कन्दने प्रायश्चित्तप्रकरणउक्तमप्यत्रादरातिशयार्थमाह स्वप्नइति॥ १८१॥

( ६ ) **रामचन्द्रः**। ब्रह्मचारी द्विजःस्वप्ने शुक्रंअकामतःसिक्त्वा शुक्रंपातयेत्चेत्पूर्वंस्नात्वाअर्केअर्घ्यंदत्वा त्रिःत्रिवारंपुनर्मामित्यृचंजपेत्॥ १८१॥

**उदकुम्भंसुमनसोगोशकृन्मृत्तिकाकुशान्॥आहरेद्यावदर्थानि भैक्षंचाहरहश्चरेत्॥ १८२॥**

( १ ) **मेधातिथिः**। यावद्भिरर्थः प्रयोजनमुपाध्यायस्य सिध्यति तावदुदकुम्भादिआहरेत्। प्रदर्शनार्थंचैतत्। अन्यदपिगृहोपयोगि यदगर्हितंकर्म तत्कुर्यादगर्हितंगुरुव्यतिरेकेणोच्छिष्टापमार्जनादिन कारयितव्यइत्येवमर्थोयंश्लोकःयतः सामान्येन शुश्रूषागुरौ विहिता। यावानर्थएषामिति विग्रहः। भैक्ष्यंचाहरहश्चरेत्सिद्धमन्नमत्यन्तात्पंयात्राविषयंभैक्षमत्रोच्यते। नैकान्नादि प्रतिषेधेऽन्नशब्दोपादानादन्नंप्रतीयते। समाहृत्य भैक्षंनिवेद्याश्नीयादिति सामाधिकरण्यात्सिद्धान्नप्रतिपत्तिः। शुष्केह्यन्ने भिक्षिते कुतस्तस्याशनम्। समाहृतस्य गुरुगृहे पच्यमानस्य भैक्षप्रकृतिता स्यान्नभैक्षता। प्रसिद्ध्याचेदृशमेव भैक्षमुच्यते। अहरहः ननु भैक्षेण वर्तयेन्नित्यमित्येतस्मादेव सिद्धमहरहश्चरणंसिध्यति। वृत्तिविधानार्थंनित्यग्रहणम्। पर्युषितेनापि घृतादिस्नेहसंयुक्तेन स्याद्वृत्तिस्तदर्थमिदमहरहर्भिक्षित्वाशितव्यम्। न पुनरेकस्मिन्नहनि भिक्षितमपरेद्युः परिवास्य यत्किंचित्स्नेहयुक्तमिति प्रतिप्रसवेन भुञ्जीत॥ १८२॥

( २ ) **सर्वज्ञनारायणः** । गोशकृद्गोमयम् । यावदर्थानि यावता तद्विनासाध्यसिद्धिः । अहरहर्नदिनद्वयार्थम्॥१८२॥

( ३ ) **कुल्लूकः** । जलकलशपुष्पगोमयमृत्तिकाकुशान्यावदर्थानि यावद्भिः प्रयोजनान्याचार्यस्य तावन्त्याचार्यार्थमाहरेत् । अतएव उदकुम्भमित्यत्रएकत्वमप्यविवक्षितंप्रदर्शनंचैतत् । अन्यदप्याचार्योपयुक्तमुपहरेद्भैक्षंच प्रत्यहमर्जयेत् ॥ १८२ ॥

( ४ ) **राघवानन्दः** । गोशकृत्गोमयम् । यावदर्थानि प्रयोजनोपयुक्तानि नाधिकानीति ॥ १८२ ॥

( ५ ) **नन्दनः** । यावदर्थानि यावत्प्रयोजनानि । अहरहर्भैक्षंचरेत्नापरेद्युरर्थपूर्वेद्युः ॥ १८२ ॥

( ६ ) **रामचन्द्रः** । गोशकृत्गवांशकृत्गोमयं यावदर्थंयावत्प्रयोजनंचाहरेत् आनयेत् । अहरहः भैक्ष्यंचरेत् ॥ १८२ ॥

## वेदयज्ञैरहीनानांप्रशस्तनांस्वकर्मसु॥ब्रह्मचार्याहरेद्भैक्षंगृहेभ्यःप्रयतोऽन्वहम्॥ १८३ ॥

( १ ) **मेधातिथिः** । येभ्योभैक्षमासादयितव्यंतान्वक्ति । वेदयज्ञैश्च यअहीना वेदाध्ययनेन संयुक्ताः यज्ञानांच सत्यधिकारे कर्तारअहीनाऽवर्जितास्तदुपेताइति यावत् । स्वकर्मसु च प्रशस्ताः येषांयज्ञेधिकारोनास्त्यन्यस्मिन्शस्ते कर्मणि तत्पराः । अथ वा स्वकर्मप्रशस्तास्तउच्यन्ते ये स्ववृत्ताविव संतुष्टानवार्द्धुषिकारिवृत्त्युपजीविनस्तेषांगृहेभ्योभैक्षमाहरेद्याचित्वागृह्णीयात्प्रयतः शुचिः । अन्वहमित्यनुवादः ॥ १८३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रशस्तानांलब्धोत्कर्षाणां स्वकर्मसु ब्रह्मचारिकर्मसु ॥ १८३ ॥

( ३ ) **कुल्लूकः** । वेदयज्ञैश्चात्यक्तानां स्वकर्मसुदक्षणांगृहेभ्यः प्रत्यहंब्रह्मचारी सिद्धान्नभिक्षासमूहमाहरेत् ॥ १८३ ॥

( ४ ) **राघवानन्दः** । येभ्योभैक्ष्यमाहार्यंतानाह वेदेति । प्रशस्तानांदक्षाणांस्वकर्मसु ॥ १८३ ॥

( ५ ) **नन्दनः** । अथ भैक्षेऽप्यादाननियममाह वेदयज्ञैरिति । प्रयतोवाङ्मनश्चक्षुर्भिः ॥ १८३ ॥

( ६ ) **रामचन्द्रः** । वेदयज्ञैः अहीनानांन हीनानांपूर्णानांस्वकर्मसु स्वस्वकर्मसु प्रसक्तानांगृहेभ्यःअन्वहंप्रत्यहंप्रत्यक्षःसन्ब्रह्मचारी भैक्ष्यंआहरेत् ॥ १८३ ॥

## गुरोःकुले न भिक्षेत न ज्ञातिकुलबन्धुषु ॥ अलाभे त्वन्यगेहानांपूर्वंपूर्वंविवर्जयेत् ॥ १८४ ॥

(१) **मेधातिथिः** । सत्यप्येतद्गुणयोगे गुरुगृहे न भिक्षेत । पूर्वकुलंवंशस्ततोगुरोर्ये पितृव्यादयस्तेभ्योपि न ग्रहीतव्यम् । ज्ञातयोब्रह्मचारिणः पितृपक्षास्तेषांकुलेबन्धुषु च मातृपक्षेषु मातुलादिषु नैवमभिसं बन्धः कर्तव्योगुरुज्ञात्यादिष्विति यतोगुरोः कुलइति कुलशब्देनैव तेषांसंगृहीतत्वात् । कुतस्तर्हि भिक्षेत । एतव्द्यतिरेकेणान्यगेहेभ्यअलाभेऽसंभवेऽन्यगेहानां सर्वएवयदि ग्रामेगुरुज्ञातिबन्धुभिर्व्याप्तोभवत्यन्ये नैवसंतो वान्नंनददति । एतेष्वपि गृहेषु भिक्षितव्यमन्याभावेप्रथमंबन्धुं भिक्षेत तदभावे ज्ञातिं तदभावे गुरुकुलम् ॥ १८४ ॥

( २ ) **सर्वज्ञनारायणः** । गुरोराचार्यस्य पितुःकुलस्य मातरंचेत्यत्रानुज्ञानात् अतएव स्वस्रादिभ्योन्येषामेव बन्धूनांनिवासः ज्ञाति सपिण्डस्तस्य कुले तथा बन्धुषु तदन्यसमानयोनिषु अन्यगेहानांनिषिद्धान्यगृहाणांपूर्वंपूर्वमुक्तेषु त्रिषु ॥ १८४ ॥

( ३ ) **कुल्लूकः** । आचार्यस्य सपिण्डेषु बन्धुषु च मातुलादिषु न भिक्षेत । तद्गृहव्यतिरिक्तभिक्षायोग्यगृहाभावे चोक्तेभ्यः पूर्वंपूर्वंवर्जयेत् । ततश्च प्रथमंबन्धुंभिक्षेत तत्रालाभे ज्ञातींस्तत्रालाभेगुरोरपिज्ञातीन्भिक्षेत ॥ १८४ ॥

---

( १८३ ) प्रशस्तानां=प्रसक्तानां ( ठ )

( ४ ) **राघवानन्दः** । भिक्षाहरणे प्रतिषिद्धानाहगुरोरिति । तस्योद्वेगहेतुत्वाद्दूरदृष्टाशङ्कयायस्मै देयंततोग्राह्यमिति न्यायविरोधात्तज्ज्ञातिकुलबन्धुषु स्नेहाद्रसादिदानहेतोःबन्धुषु मातुलादिषु । अलाभइत्यादेःगुरुत्यागेतात्पर्यम् ॥ १८४ ॥

( ५ ) **नन्दनः** । बन्धुषु मातृष्वसृपितृष्वसृबन्धुषु । अन्यगेहानामलाभेभिक्षाऽलाभेगेहानामलाभेवापूर्वंपूर्वंवर्जयेत् । अयमर्थः अन्यगेहालाभेबन्धुषु भिक्षेत तदलाभेज्ञातिकुले तदलाभे गुरुकुलइति । अत्रपूर्वार्धेन मुख्यकल्पउक्तउत्तरार्धेनापत्कल्पइति विवेकः ॥ १८४ ॥

( ६ ) **रामचन्द्रः** । अन्यगृहाणांअलाभे पूर्वंविवर्जयेत् ॥ १८४ ॥

**सर्वंवापि चरेद्ग्रामंपूर्वोक्तानामसंभवे ॥ नियम्य प्रयतोवाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥**

( १ ) **मेधातिथिः** । पूर्वोक्तानांवेदयज्ञैरहीनानामसंभवे सर्वग्राममनपेक्षवर्णविभागंविचरेत् ग्राम्येज्जीवनार्थंकेवलमभिशस्तान्कृतपाकत्वेन प्रसिद्धानदृष्टपातकानपि वर्जयित्वा । तथा च गौतमः सार्ववर्णिकंभैक्षचरणमभिशस्तपतितवर्जम् । नियम्य वाचंभिक्षावाक्यंवर्जयित्वाऽऽभैक्षलाभादन्यां वाचंनोच्चरेत् ॥ १८५ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वोक्तानांदेवयज्ञादीनांसंपूर्णभिक्षादातृत्वासंभवे नियम्य वाग्यमपरांतदर्थभाषां प्रयतोऽशुच्याद्यस्पर्शी । अभिशस्तानिति पतितशूद्रयोरप्युपलक्षणम् ॥ १८५ ॥

( ३ ) **कुल्लूकः** । पूर्ववेदयज्ञैरहीनानामित्यनेनोक्तानामसंभवे सर्ववा ग्राममुक्तगुणरहितमपि शुचिर्मौनी भिक्षेत् । महापातकाद्यभिशस्तांस्त्यजेत् ॥ १८५ ॥

( ४ ) **राघवानन्दः** । पूर्वोक्तानांवेदयज्ञैरहीनानांअसंभवःस्वरूपतोद्रव्यतश्च । अभिशस्तान्महापातकित्वादिनासंदिग्धान् ॥ १८५ ॥

( ५ ) **नन्दनः** । आपद्यप्यभिशस्तानांप्रतिषेधः कृतः पतितानांदण्डापूपिकया ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । पूर्वोक्तानामसम्भवे सर्वग्रामंभिक्षार्थंविचरेत् । मौनपूर्वकं वर्जनमाह । अभिशस्तान्पतितान्वर्जयेत् ॥ १८५ ॥

**दूरादाहृत्य समिधःसंनिदध्याद्विहायसि ॥ सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥**

( १ ) **मेधातिथिः** । दूरग्रहणमपरिगृहीतदेशोपलक्षणार्थम् । ग्रामात्किलदूरमरण्यं नच तत्र कस्यचित्परिग्रहः । अनुपलक्षणे हि दूरार्थे कियद्दूरमित्यनवस्थितः शास्त्रार्थः स्यात् । आहृत्याऽऽनीय संनिदध्यात्स्थापयेत् । विहायसि गृहस्योपरि नहि निरालम्बनेन्तरिक्षे निधानंसंभवति । ताभिः सायंप्रातर्जुहुयात् । आहरणंतु तात्कालिकमन्यदा वेलया विहायसनिधानमदृष्टार्थमित्याहुः । अन्येतु ब्रुवते संप्रत्यानीयमानंवृक्षाद्दारुआर्द्रंभवतीति गृहस्योपरि अन्यस्य वा प्रकारादेस्ततएवाव गन्तव्यम् ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः** । दूरात्ग्राम्याशुचिशङ्काशून्याद्देशात् । विहायसि मठादौ ॥ १८६ ॥

( ३ ) **कुल्लूकः** । दूराद्दिग्भ्यः परिगृहीतवृक्षेभ्यःसमिधआनीयाकाशे धारणाऽशक्तःपटलादौ स्थापयेत् । ताभिश्च समिद्भिः सायंप्रातरनले होमंकुर्यात् ॥ १८६ ॥

( ४ ) **राघवानन्दः** । दूराद्वनादेः । विहायसि भूम्यतिरिक्तशुचिदेशे । ताभिःसमिद्भिः ॥ १८६ ॥

( ५ ) नन्दनः । नियमान्तरमाह दूरादिति । दूराद्विप्रकृष्टप्रदेशात् । रजस्वलादिस्पर्शोभूमिष्ठजन्तुसंक्रान्तिश्चमाभुदित्युक्तंसन्निदध्याद्विहायसीति । विहायस्याकाशेसन्निदध्यात्रज्ज्वादिष्ववलम्बयेत् ॥ १८६ ॥

( ६ ) रामचन्द्रः । समिधःदूरात्आहृत्यआनीय विहायसिआकाशे गृहादिकेउच्चप्रदेशे मण्डपादौ संनिदध्यात्स्थापयेत् । पुंस्याकाशविहायसीत्यमरः । ताभिःसमिद्भिः अग्निसायंसंध्याकाले प्रातःप्रातःकाले जुहुयात् ॥ १८६ ॥

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ॥ अनातुरः सप्तरात्रमवकीर्णिव्रतंचरेत् ॥ १८७ ॥

( १ ) मेधातिथिः । अग्नीन्धनभैक्षचरणे नैरन्तर्येण सप्तरात्रंसप्ताहमकृत्वानियम्यविच्छिद्यते कालोनियतस्तुतयोरपि । अनातुरस्याव्याधितस्य सतोऽवकीर्णिव्रतंनाम प्रायश्चित्तमेकादशे वक्ष्यमाणस्वरूपंचरेत्कुर्यात् । देषगुरुत्वख्यापनार्थंत्वेतदत्र प्रायश्चित्तमेव । स्मृत्यन्तरे ह्यत्राल्पमन्यत्प्रायश्चित्तमुक्तमाज्यहोमःसवितुर्वारेतस्यास्यामिति । इहापि च लिङ्गं-यदि प्रायश्चित्तमिदमभविष्यत्तदा स्त्रीगमनमिवावकीर्णिप्रायश्चित्तप्रकरणे निमित्तत्वेनापठिष्यत् । येतु व्याचक्षते सप्तरात्रमेतदुभयमवश्यकर्तव्यमकरणात्तत्र दोषः कृतसप्तरात्रस्य तु परलोकक्रियायां न दोषस्तानि च सप्ताहानि प्राथम्यादुपनयनात्प्रभृतिगृह्यन्ते तदेतदयुक्तं आसमावर्तनात्कुर्यादिति विरोधात् । उपरितनानन्तरश्लोकविरोधाच्च ॥ १८७ ॥

( २ ) सर्वज्ञनारायणः । भैक्षातिरिक्तानांनोपयोगः । समिदाधानाकरणेनेत्यर्थः । एतच्चउभयोःसमुच्चितयोः सप्तरात्रमकरणे अवकीर्णिव्रतमेकादशे वक्ष्यमाणम् अनातुरइत्यमापदुलक्षणम् । आपदितुरोगादावदोषः । अन्यतरातिक्रमैकाहाद्यतिक्रमयोस्तु गौतमोक्तःक्रमादाज्यहोमः समिद्व्यहोमश्च ॥ १८७ ॥

( ३ ) कुल्लूकः । भिक्षाहारसायंप्रातःसमिद्धोममरोगीनैरन्तर्येणसप्तरात्रमकृत्वा लुप्तव्रतोभवति । ततश्चावकीर्णिप्रायश्चित्तंकुर्यात् ॥ १८७ ॥

( ४ ) राघवानन्दः । उपदिष्टाकरणे दोषमाहअकृत्वेति । असमिध्यअप्रज्वाल्य होमार्थम् । अवकीर्णिव्रतंनैर्ऋतंगर्दभालम्भनम् ॥ १८७ ॥

( ५ ) नन्दनः । अथभिक्षाकरणाग्निकार्ययोरवश्यकर्तव्यतांतदकरणे प्रायश्चित्तोपदेशेन प्रकाशयति अकृत्वेति । उभयोः समुदितयोरकरणे प्रायश्चित्तमेतत् । चकारेण समुच्चयावगमात् । सप्तरात्रमिति निमित्तयोर्नैमित्तिकस्य च कालोपदेशः स्मृत्यन्तरानुगुण्यात् । तथाच गौतमः अग्नीन्धनभैक्षचरणेसप्तरात्रमकृत्वाऽऽज्यहोमइति । अस्मिन्नधिकारेबृहस्पतिः अवकीर्णिव्रतंकुर्यात्सप्तरात्रमसंशयमिति ॥ १८७ ॥

( ६ ) रामचन्द्रः । पावकंअसमिध्यअग्निअनुपास्य भैक्ष्यचरणंअकृत्वाएकस्य गृहे भुक्त्वासप्तरात्रपर्यन्तंअनातुरः सन्सःअवकीर्णी भवेत् । अवकीर्णीक्षतव्रतइत्यमरः । तदा प्रायःपवित्रतार्थंयदुक्तंव्रतंतच्चरेत् ॥ १८७ ॥

भैक्षेण वर्त्तयेन्नित्यंनैकान्नादी भवेद्व्रती ॥ भैक्षेण व्रतिनोवृत्तिरुपवाससमा स्मृता ॥ १८८ ॥

[ न भैक्ष्यं परपाकःस्यात् न च भैक्ष्यंप्रतिग्रहः ॥ सोमपान समंभैक्ष्यं तस्माद्भैक्षेणवर्त येत् ॥ १ ॥

भैक्ष्यस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च ॥ यांस्तस्य ग्रसते ग्रासांस्ते तस्य क्रतुभिः समाः* ॥ २॥ ]

---

* ( क, ख, ञ, ड, ठ, ढ, ल, ) । ( च ) चिन्हित पुस्तके इमौ श्लोकौ टीकायांस्तः । परंतु तेषां स्थानं मूलमेवेति भाति ।

( १ ) **मेधातिथि** । ननु च भैक्षमहरहश्चरेदिति श्रुतमेवैतत् । एवंहि भैक्षचर्या दृष्टार्था भवति उक्तंच निवेद्य गुरवेश्नीयादिति । नच तदशनंभैक्षसंस्कारः येन वृत्त्यर्थः स्यात् । केचिदाहुरनूद्यते नैकान्नादीभवेद्व्रतीति वक्तुमेतदप्यसत् भैक्षशब्देनैवैकान्नादनस्य निषेधात् । भिक्षाणांसमूहोभैक्षमुच्यते । ततः कुतएकान्नादनमाप्तिस्तस्यपित्र्येभ्यनुज्ञानार्थंसर्वमेतदनूद्यते । भैक्षेण वर्तयेदात्मानं भैक्षभोजनेन पालयेत्जीवितस्थितिंकुर्यान्नैकस्य संबन्धिअन्नमद्यान्नैकभिक्षान्नंभुञ्जीत । न पुनरियमाशङ्काकर्तव्यानैकस्वामिकंभुञ्जीत पि तु बहुस्वामिकमविभक्तभ्रातृसंबन्ध्येकस्यान्नमेकंवाऽन्नमेकान्नंतदत्ति भुङ्क्तेएकान्नादी । व्रतीब्रह्मचारीप्रकरणादेव लब्धःश्लोक पूरणार्थोव्रतिशब्दोर्थवादः । भैक्षेणैव केवलेन व्रतिनोयावृत्तिः शरीरेधारणमुपवासतुल्यफला सा वृत्तिः स्मर्यते ॥ १८८ ॥

( २ ) **सर्वज्ञनारायणः** । वर्तयेत्जीवेत् । नैकान्नादीएकस्यान्नेनैकदिनक्षपणकृतभैक्षेणेति नित्यत्वेपि भैक्षस्य नित्योपवासफलहेतुरित्यर्थः । प्रोषितस्य प्रवासादागतस्य ॥ १८८ ॥

( ३ ) **कुल्लूकः** । ब्रह्मचारी नैकान्नमद्यात्किंतु बहुगृहाहृतभिक्षासमूहेन प्रत्यहंजीवेत् यस्माद्भिक्षासमूहेन ब्रह्मचारिणोवृत्तिरुपवासतुल्या मुनिभिः स्मृता ॥ १८८ ॥

( ४ ) **राघवानन्दः** । नैकान्नादीनैकमात्रस्यान्नंगृह्णीयात् । उपवाससमाइति परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृतइति यत्परपक्वान्नाशने पापंतन्न स्यात्संन्यासी ब्रह्मचारी च पक्वान्नस्वामिनात्भोइत्युक्तेः । स्तुतिरिति मेधातिथिः ॥ १८८ ॥

( ५ ) **नन्दनः** । एकान्नाशनंप्रतिषेधति भैक्षेणेति ॥ १८८ ॥

( ६ ) **रामचन्द्रः** । भैक्ष्येणान्येन नित्यंवर्तयेत् व्रती ब्रह्मचारी नैकान्नादी भवेत् । एकस्यान्नंन भक्षयेदिति एकंचान्नंन भक्षयेत्इत्यर्थः । व्रतिनःब्रह्मचारिणःवृत्तिःभैक्षेण भैक्षान्नेन वृत्तिःप्राणधृतिःउपवाससमास्मृता ॥ १८८ ॥

[ **रामचन्द्रः** । न भैक्ष्यमिति । परपाकरुचिर्न स्यात्इति याज्ञवल्क्यः । भैक्षंभिक्षान्नंपरपाकः न स्यात् । भैक्ष्यंभिक्षान्नंप्रतिग्रहोन भवतिप्रतिग्रहस्तु निषेध्यः आगमशुद्धस्य प्रतिग्रहशुद्धस्य प्रोक्षितस्य हुतस्य च हुतशेषस्य च भैक्षस्य यान्ग्रासान् ग्रसते ते ग्रासाक्रतुभिःसमाभवन्ति ॥ १-२ ॥ ]

## व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ॥ काममभ्यर्थितोश्नीयाद्व्रतमस्य न लुप्यते ॥ १८९ ॥

( १ ) **मेधातिथिः** । अयमपवादोनिमित्तविशेषे भैक्षवृत्त्युपदेशस्य । देवदैवत्ये देवोद्देशेन ब्राह्मणभोजने क्रियमाणे पित्र्ये च पितृनुद्दिश्याभ्यर्थितोभ्येषितः काममेकान्नमश्नीयात् नतु स्वयंयाचेत । तस्य व्रतवद्व्रतविरुद्धमधुमांसंवर्जितमित्यर्थः । व्रतवदृषिवदिति च शब्दद्वयेनैकएवार्थोच्यते न पुनर्ग्रामारण्ययोः कर्मभेदेन व्यवस्था । वृत्तानुरोधात्तु द्विरभिधानम् । ऋषिर्वैखानसस्तदशनाभ्यनुज्ञाने मांसमपि ब्रह्मचारिणोनुज्ञातंस्यात्तस्य हि वैष्णवमप्युपभुञ्जीतेति मांसाशनमप्यस्ति । देवादेवतायस्य तद्देवदेवत्यंतच्चाग्निहोत्रदर्शपूर्णमासादिषु दैवेषु कर्मसु ब्राह्मणभोजनमाम्नातम् । आग्रहायण्यादिषुत्वाम्नातं ब्राह्मणान्भोजयित्वा स्वस्त्ययनंवाचयेदिति । तत्रेयमनुज्ञा । अन्येतु सप्तम्यादावादित्यादिदेवोद्देशेन यत्क्रियते ब्राह्मणभोजनंतद्देवदेवत्यंमन्यन्ते तदसत् । नहि भुजेर्देवतासंबन्धोस्त्ययागसाधनत्वात्तस्य । नतूद्देशमात्रंदेवता । उपाध्यायाय गांददाति गृहंसंमार्ष्टीत्युपाध्याये गृहेपि प्रसङ्गात् । भुजेर्हि प्रत्यक्षोभोक्त्रासंबन्धःआदित्यस्तु न कारकं नचोद्देश्योगृहवत् नतदर्थंभोजनम् । द्वितीयाहि भोक्त्रर्थतांज्ञापयति नादित्यार्थतम् । न चैतत्क्वचिन्नोदितमादित्याद्युद्देशेन ब्राह्मणान्भोजयेदिति । समाचाराद्विधिः कल्प्यतइति चेन्न तस्योपलभ्यमानमूलत्वादस्ति हि मूलंबाह्याःस्मृतयः । तत्रतर्हि ब्राह्मणभोजनेन देवताः प्रीणयेदिति शास्त्रार्थः । न चायमर्थः शक्यः कल्पयितुं नहि देवताप्रीतिप्रधानः शास्त्रार्थः किंतर्हि विध्यर्थप्रधानः। नचास्मिन्विध्यर्थआदि-

त्यादीनांदेवताभिमतानांविषयद्वारकः संबन्धोनाप्यधिकारद्वारकः। नहि भेदनादिवन्निमित्तंनापि पश्वादिवत्स्वसंबन्धितया काम्यते। अभोग्यरूपत्वात्। अथ तद्गतातुष्टिः काम्यते साप्यात्मसिद्धौप्रमाणान्तरमपेक्षते नच तदस्ति न ह्यादित्यादितुष्टिः प्रत्यक्षादिसिद्धा पश्वादिवद्येन काम्येन परेष्टिविधिनायुज्येत। अथतु मन्त्रभुरिति स्वाभिप्रेतेन फलेन योजयिष्यतीति। एतदपि प्रमाणाभावादुपेक्षणीयम्। नचास्मिन्नर्थेविधिः प्रमाणं सहि ज्ञातस्यानुष्ठातृविशेषणस्य स्वसंबन्धितया पुरुषंनियुङ्क्ते न पुनः काम्यमानस्य सद्भावमवगमयति। प्रमाणान्तरावगतंहि काम्यमनुष्ठातृविशेषणमनुष्ठातृसंबन्धीति विधिः प्रमाणंमिमीते। अथायंयागस्तस्य च भोजनंप्रतिपत्तिर्भवतुयदिशिष्ट समाचारः। भोजनंतावन्न देवतासंबन्धिसाक्षादिति न साध्यम्। यागव्यवहितस्तु संबन्धोन निवार्यते। नचात्र यागबुध्या प्रवर्तते किंतर्हि ब्राह्मणेषु भोजितेषु देवता तुष्यतीति। अत्यतोन देवता भोजनकारकंन कारकविशेषणम्। ततोनविषयोनहि संबन्धः। उद्देश्यत्वमप्यादित्यादीनांनास्ति। भोजने हि सउद्दिश्यते यस्मै भोजनंदीयते तच्च ब्राह्मणेभ्यः। नचोद्देश्यमात्रंदेवता उपाध्यायाय गांददाति ग्रहंसंमार्ष्टीति ग्रहोपाध्याययोरपि प्रसङ्गात्। ननु चपित्र्ये कथंब्राह्मणभोजनं तत्रापिहि न पितरौ देवताःस्युः नच होमस्य पित्र्यंदेवतान्तरश्रवणात् आदित्यादिप्रीतेरिव पितृप्रीतेः प्रमाणान्तरासिद्धत्वान्नविधेः संबन्धः साध्यतया। अत्र वदन्ति सिद्धा ह्यत्रापितृप्रीतिरात्मनामविनाशित्वात्पितरः सिद्धास्तेषांचशरीरसंबन्धः क्रियते। कर्माख्येप्राधान्यमुपाध्यायायगांददाति तद्भोजनंह्यत्र प्रधानम्। तस्य हि फलंश्रुतंभो जयन्पुष्कलंफलमाप्नोति। तच्च फलंपितृणांतस्य तृप्तिः स्यादिति तृप्तिश्च प्रीतिमात्रंनमनुष्याणामिव भुजिक्रियाफलंसौहित्यलक्षणमुत्पद्यते। काचित्पितृणां प्रीतिः स्वकर्मवशतोयत्र तत्र जातावुत्पन्नानाम्। प्रीतिमात्रवचनोयंधातुः सौहित्यंतु विशेषः सप्रमाणान्तरावसेयः। न चात्रेतच्चोदनीयपुत्रः कर्ताकथंकर्तृगामिफलंन हीमानि कर्माणि वैदिकानि परस्परकर्मादीनीतिन्यायविदोवदन्ति। यतः पितरएवात्राधिकारिणः कर्तारश्च। अपत्योत्पादनेनैव सर्वमेतत्पितृभिः कृतंएवमर्थमेवासावुत्पादितोदृष्टादृष्टमुपकारं करिष्यतीति। ततश्च यथा सर्वस्वारेऽभावादौत्तरकालिकेष्वङ्गेषु ब्राह्मणाः संस्थापयतमे यज्ञमिति प्रैष्यं मृतस्य कर्तृत्वमेवमत्रापि द्रष्टव्यम्। एतावान्विशेषः सूत्राधिकारान्तरप्रयुक्ता जीविकार्थिनोभृतिपरिक्रीताऋत्विजः कर्तारः। इह तु तद्विधिप्रयुक्तएव पुत्रः यथैवापत्यत्तिविधिप्रयुक्तस्य पुत्रार्थेषु पितुः संस्कारेष्वधिकारानुशासनपर्यन्तत्वात्तस्य विधेः एवंपित्रर्थे श्राद्धादौ पुत्रस्य तथैव जीविनः पितुर्वृद्धौतु मातापितरावित्यवश्यंकर्तव्यम्। एवंदृष्टान्तगतिस्तस्यापि। न चायंवैश्वानरवत्काम्योधिकारः वैश्वानरंद्वादशकपालंनिर्वपेत् पुत्रे जाते तस्मिन्जातएतामिष्टिंनिर्वपति पूतएव सतेजस्व्यन्नादइन्द्रियवानह्भवतीति। एवमादिपुत्रफलार्थिनोधिकारः पितुर्वैश्वानरे नचूडादिष्विवावश्यकः। इहतु पित्र्यमानिधनात्कार्यमितिं यावज्जीविकालात्कर्तुर्वैदिकंफलमित्येतदन्यथा परिक्रियते। यथैव वैश्वानरविशिष्टपुत्रवत्ता लक्षणंपितुरेव फलंनाकर्तृगामिता फलस्य एवमिहापि पुत्रस्यैवतत्फलंया पितुः प्रीतिरुभयथा पितृकर्तृगामिता फलस्य न विरुध्यते। अपत्योत्पादनेनैवैनतादृस्य फलस्येष्टत्वात्। पितृणामपि नाकामितफलावृत्तिः यदि न श्राद्धेन पितरोदेवताः कथंतर्हि पित्र्यमेतत्कर्मेति देवतातद्धितः। अनुद्देश्यत्वसामान्यादिति वदामः। युष्मदुपकारार्थमिदंब्राह्मणभोजनमिति पितरउपदिश्यन्ते। पिण्डपितृयज्ञे तु पितरोदेवताएव नश्राद्धे पितृणांदेवतात्वंमन्यन्ते। यत्तु ब्राह्मणाभोज्यन्तेतद्यथाग्नौ होमाज्यपुरोडाशादीनांद्रव्यदानस्य। तादृशमे तत्। तथा च ब्राह्मणाःपितृत्वमापद्यन्तअतोऽन्नपरिवेषणकाले पितरएवोद्देश्यायुष्मभ्य मिदंनममेति। ब्राह्मणा स्त्वावनीयस्थानीयाः एतावान्विशेषोयदाहवनीये हविःप्रक्षिप्यते ब्राह्मणानांतु सन्निधाप्यते ते तुस्वयमुपाददंतइति। नच यागोनदेवतार्थः स्वाहाकार स्विष्टकृदादिषु दर्शनात्। अतोयागोपि सन्श्राद्धकर्मपित्र्यर्थंभविष्यति पितृणांदेवतात्वंफलभाविल्वंन निरोत्स्यते। तृतीये किंचिदनुक्तमेव तत्संबद्धंवक्ष्यामः। तस्मान्नादित्यादयोब्राह्मणभोजने। देवताइति स्थितम्।

ननुचाव्यापकमेतदपि लक्षणम् यागउद्देश्यदवेतेत्यन्तरेणापि यागसंबन्धे देवताव्यवहारदर्शनात्। देवतानांच पूजनंदेवतान्यभिगच्छेदिति न यागोनाप्याभिमुख्येन गगनंपादविहारात्मकंदेवताः प्रतिसंभवति । नैषदोषः । यत्र देवताचोदना तत्रैतत्पूजाविधानंभविष्यति वैश्वदेवदेवतात्वग्निहोत्रादिसंबन्धिनी ध्रुवा । ननु चैवमपि नोपपद्यते नहि देवतायाः पूज्यत्वंसंभवति स्वरूपहानिप्रसङ्गात् । पूजाकर्मत्वेपि यागसंप्रदानता स्यात् । उक्तंन क्रियान्तरस्य किंचिद्भवतीति शक्तिर्हि कारकंसाच प्रतिक्रियंविभिद्यते । कार्यावगम्यत्वाच्च तस्यायावत्कार्यभेदोन्याय्यः । अतोयत्संप्रदानमेव न तस्यकर्मापत्तिः । कथं तर्हि पाचकाय देहि पचेः कर्ता ददातेः संप्रदानम् । शरैःक्षताङ्गः प्रियया कटाक्षैर्निरीक्ष्यमाणोविवशोजगाम । उक्तोत्र परिहारः । शक्तिशक्तिमतोर्भेदस्यौपचारिकत्वात्सिद्धंव्रजति भुक्त्वेति । तस्माद्यदि पूजाविषयमेतन्न देवतालाभः अथदेवताआदित्यादयोन पूजाविधिः । नहि देवतायांसिद्धायामुद्दिश्य पूजाविधीयते न ह्यादित्यादीनांदेवतासामान्यशब्दोगोशब्दवच्छागमेषायादीनाम् । अत्रोच्यते । सत्यं नादित्यादयः स्वरूपतोदेवताः संबन्धिशब्दोयंविधितएव नार्थोवगन्तव्योयस्य हविषश्चोद्यते सा तस्य देवतेति सएवाग्निराग्नेयादन्यत्रनदेवतेत्युक्तम् । किंतुन पूजाविधिः पूज्यमानमन्तरेण संभवति । देवताश्च पूज्यत्वेन श्रुतास्तत्र यदि देवतार्थे मुख्येन पूजा संभवति तदा यागएव पूजाविज्ञेया । तस्यचारूपत्वादसति द्रव्यदेवताश्रवणे पूर्वाण्ह कालविध्यर्थोयमनुवादोविज्ञेयः । अतः पूर्वाण्हे दैवतानि कर्तव्यानीत्युक्तंभवति । किमुच्यते । देवता न श्रूयते यावता न साक्षाद्देवताशब्दोस्ति नायंसामान्यवचनोदेवतार्थः यासामन्यत्र देवतात्वंदृष्टंतासामेतत्पूजाविधानम् । तेनाग्निरादित्योरुद्रइन्द्रोविष्णुः सरस्वतीत्येवमादयः पूज्याः । पूजार्थेच धूपदीपमाल्योपहारादीनांनिवेदनम् । तत्राग्नेस्तावत्साक्षात्संबन्धस्तच्चादित्यस्य दूरदेशवर्तित्वाच्छुचावकाशेतदुद्देशेन गन्धादिप्रक्षेपः । इन्द्रादीनांस्वरूपस्याप्रत्यक्षत्वादिन्द्रादिशब्दोद्देशेनैव तथा विधानम् । यद्यपि पूज्यमानप्रधाना पूजा तथापि हि पूज्यमानानांकार्यान्तरशेषाभावेपूजैव कर्तव्यतया विज्ञायते । द्रव्यप्रधानेहि न विधिविषयत्वसंभवः स्तानि द्वैधंगुणप्रधानभूतानि यैस्तु द्रव्यंचिकीर्ष्यतइति न्यायात्स्तुतिशास्त्रादिवत् । यथानस्तुतिःस्तुत्यार्थाएवमियमपि पूज्यान पूज्यार्था । स्तौति शंसत्योर्निर्देशानास्तीतिचेत् अत्रोक्तंद्वितीया सक्तुषु दर्शनात् । एवमृदंगांदैवतंप्रदक्षिणानि कुर्वीतेति दक्षिणाचारताविधीयते । दक्षिणेन दैवानि कर्माणि कर्तव्यानि । नहि मृदादितद्देवतायादक्षिणेन मार्गेण स्थानम मूर्तत्वात् । युज्यते एवंदैवतान्यभिगच्छेदिति । पादविहारव्यापारेण देवतासमीपप्राप्त्यसंभवाद्गमेश्च ज्ञानार्थत्वादभिगमनंस्मरणार्तिकविशिष्यते । देवताअभिगच्छेत्कर्मकाले मनसा ध्यायेच्चित्तव्याक्षेपतामाकुलताख्यांपरिहरेदित्यर्थः । तथा चोपलभ्यमानमूलैवेयंस्मृतिर्भवति । यस्यैदेवतायै हविर्गृहीतंस्यात्तांमनसा ध्यायेदिति । ननु चैतदप्युद्देश्यत्वान्यथानुपपत्तेः प्राप्तमेव सव्याक्षेपस्याकुलस्य च संभवाददोषः । एवंदेवस्वंदेवपशवोदेवद्रव्यमित्यादयोव्यवहारास्तादर्थ्येनोपकल्पितेषु पश्वादिषु द्रष्टव्याः । दण्डाधिकारे तु प्रतिकृतिविषयमेवदेवताव्यवहारमिच्छन्ति । अन्यथा व्यवस्थाभङ्गःस्यात् । कल्पितदेवतारूपाणांप्रतिकृतीनांकल्पिते नैव स्वस्वामिभावेन यत्संबधिदेवब्राह्मणराज्ञांतु द्रव्यंविज्ञेयमुत्तममित्यादिषु देवद्रव्यंनहि देवतानांस्वस्वामिभावोस्ति मुख्यार्थासंभवाद्गौणएवार्थोग्राह्यः । कः पुनरत्र गौणोर्थः कार्यप्रसाधयेयएवाग्निर्माणवकइत्यादिषु नैवंशुक्लोमाणवके तद्गुणदर्शनात् । सर्वत्र हि साधारणगुणयोगाद्गौणार्थावगतिस्ते च गुणाः प्रत्यक्षाद्यवसेयाः। इह तु देवतार्थस्य कार्यावगम्यत्वात्कार्यतः स्वरूपविशेषानवगमात्कुतः प्रकृतिषु साधारणगुणावसायः । अत्रोच्यते । मन्त्रार्थवादेषु तथाविधरूपश्रवणात्तेषांच गुणवादेन व्याख्यानम् । तन्मूलमपश्यन्तोयथाश्रुतार्थग्राहिणस्ताद्रूप्यमिन्द्रादिषु प्रतिपाद्यमानाः प्रकृतिषु सादृश्यमपश्यन्तीति युक्तैवगौणता । यत्तु श्राद्धएववैश्वदेवब्राह्मणभोजनंदेवदेवत्यमाचक्षते तेषांपित्र्याङ्गत्वात् । तस्य पित्र्यग्रहणेन गृहीतत्वा-

दनर्थकं पुनर्वचनम्। सामान्यशब्दत्वाच्च क्रतोर्विशेषावगतिसाहचर्यादिति वद्यदि चपिञ्यशब्देन ग्रहणंभवेद्गोबलीवर्दन्यायोपिसतिविषयभेदेभवति ॥ १८९॥

(२) **सर्वज्ञनारायणः** । व्रतंमधुमांसाद्यभक्षणनियमस्तद्युक्तमृषिवत् वानप्रस्थवदिति मुन्यन्नाशनम भिप्रैति। देवदैवत्ये विश्वेदेवदेवता यत्र तत्रपिञ्येवाअत्यन्ताभ्यर्थनयोपरुद्धोश्नीयात् अकामानुमतौ । कामंअतएवोक्तम्। व्रतमस्य न लुप्यते न प्रत्यावर्तते। प्रत्यवायस्तुस्यादेव तदर्थंप्राणायामादि कुर्यात्। पिञ्यस्य समभिव्याहारेणदैवकर्मप्रतीतिरितरदैवव्यवच्छेदः। अथ पिञ्ये कर्मणीत्यन्वयः। अथेति च पिञ्यकर्मणोदैवापेक्षया विशेषद्योतनार्थम्। तेन दैविकान्नभोजनात् पिञ्यान्नभोजनस्याधिकंपापहेतुता सूच्यते। देवदैवत्यपदसमभिव्याहाराच्च वैश्वदेविकश्राद्धाशने व्रतलोपएव। एतदपि निरन्तरंसमरात्रंक्रियमाणं गौतमोक्तप्रायश्चित्तेनैवशोध्यते ॥ १८९ ॥

(३) **कुल्लूकः** । पूर्वनिषिद्धस्यैकान्नभोजनस्यायंप्रतिप्रसवः । देवदैवत्येकर्मणि देवतोद्देशेनाभ्यर्थितोब्रह्मचारीव्रतवदिति व्रतविरुद्धमधुमांसादिवर्जितमेकस्याप्यन्नंयथेप्सितंभुञ्जीत। अथपित्रुद्देशेनाभ्यर्थितोभवति तदर्षिर्यतिः सम्यग्दर्शनसंपन्नत्वात्सइव मधुमांसवर्जितमेकस्याप्यन्नंयथेप्सितंभुञ्जीतेतिसएवार्थोवैदग्ध्येनोक्तः।तथापि भैक्षवृत्तिनियमरूपंव्रतमस्य लुप्तं न भवति। याज्ञवल्क्योऽपि श्राद्धेभ्यर्थितस्यैकान्नभोजनमाह ब्रह्मचर्ये स्थितोनैकमन्नमद्यादनापदि । ब्राह्मणः काममश्नीयाच्छ्राद्धेव्रतमपीडयन्निति । विश्वरूपेण तु व्रतमस्य न लुप्यतइति पश्यता ब्रह्मचारिणोमांसभक्षणमनेन मनुवचनेन विधीयतइति व्याख्यातम् ॥ १८९ ॥

(४) **राघवानन्दः**। देवदैवत्येआग्रयण्यादिषु तत्र ब्राह्मणंभोजयित्वा स्वस्त्ययनंवाचयीतेत्युक्तेरिति मेधातिथिस्तन्न कर्माङ्गत्वात्तस्य किंतुमार्कण्डेयोक्तविष्ण्वादिश्राद्धे तत्र श्राद्धभेदाः नित्यंनैमित्तिकंकाम्यंयद्धिश्राद्धंसपिण्डनम्। पार्वणंचेति विज्ञेयंगोष्ठ्यांशुद्ध्यर्थमष्टकम् ॥ कर्माङ्गंनवमंप्रोक्तंदैविकंदशमंस्मृतमितिविश्वामित्रोक्तेः ॥ नैमित्तिकमेवोद्दिष्टम्। तत्रैकान्नमद्यात्व्रतवन्मधुमांसवर्जमश्नीयात्तथापित्रेऋषिवदर्षे सम्यग्दर्शनसंपन्नत्वेपि मधुमांसयोर्वर्जनात् अथवा ऋषिर्मुनिः संन्यासीति तद्वदास्वादनासक्तऔषधवदशनमाचरेदिति संन्यासप्रकरण श्रुतेः। एवंदेवाद्यर्थेभ्यर्थितोव्रतलोपनंन प्राप्नोतीत्याह काममिति। तदुक्तंयाज्ञवल्क्येन ब्रह्मचर्येस्थितोनैकमन्नमद्यादनापदि। ब्राह्मणःकाममश्नीयाच्छ्राद्धंव्रतमपीडयन्निति॥१८९॥

(५) **नन्दनः** । प्रतिषिद्धमेकान्नाशनंप्रतिप्रस्तौति व्रतइति मधुमांसादिवर्जनमभिप्रेतम्। ऋषिवदित्यल्पवन्याशनम् ॥ १८९ ॥

(६) **रामचन्द्रः** । देवदैवत्ये कर्मणि विश्वेदैवकर्मणिअभ्यर्थितःसन्निमन्त्रितःसकामंअश्नीयात्भोजनंकुर्यात् । व्रतिवत्ब्रह्मचारीव्रतंपिञ्ये कर्मणिऋषिवत्अश्नीयात्। अस्यब्रह्मचारिणःव्रतंनलुप्यते लोपंनयातीत्यर्थः ॥ १८९ ॥

**ब्राह्मणस्यैव कर्मैतदुपदिष्टंमनीषिभिः ॥ राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥ १९० ॥**

(१) **मेधातिथिः**। यदेतदेकान्नभोजनकर्मादिष्टमेतद्ब्राह्मणस्यैव मनीषिभिर्विद्वद्भिर्वेदादुपलभ्योपदिष्टं क्षत्रियवैश्ययोस्तुनैतदिच्छन्ति न कदाचित्तयोरभैक्षभोजनम्। ननु चश्राद्धभोजने ब्राह्मणानामेवाधिकारोये तत्र भोजनीयाःस्युर्ये च वर्ज्याद्विजोत्तमाःअर्हत्तमाय विप्रायेतिवचनाद्ब्राह्मणस्यैव प्रतिग्रहाधिकारस्तत्र कुतोयंप्रतिषेधोराजन्यवैश्ययोरिति प्रतिप्रसवश्चायंनापूर्वविधेः प्राप्तिसव्यपेक्षाश्च प्रतिषेधाभवन्ति। उच्यते। भुक्तवतांब्राह्मणानामेव शिष्टस्यान्नस्य प्रतिपत्तिराम्नाता ज्ञातिप्रायंप्रकल्पयेदिति। नच तत्र जात्यपेक्षायस्य ज्ञातिः सतेन भोजयितव्यः। नच तत्र क्षत्रियादयः प्रतिगृहीततया संबध्यन्ते अपितु ज्ञातयः। अतोस्या; प्राप्तेः प्रतिषेधः ॥ १९० ॥

( २ ) **सर्वज्ञनारायणः** । एतत्कर्मश्राद्धान्नाशनम् । केचित्त्वेतत्पदेनैकान्नाशनमात्रपरामर्शइत्याहुः ॥ १९० ॥

( ३ ) **कुल्लूकः** । ब्राह्मणक्षत्रियविशांत्रयाणामेव ब्रह्मचारिणांभैक्षाचरणविधानाद्व्रतवदित्यनेन तदपवादरूपमेकान्नभोजनमुपदिष्टम् । क्षत्रियवैश्ययोरपि पुनरुक्तेन पर्युदस्यते । तदेकान्नभोजनरूपंकर्म तद्ब्राह्मणस्यैव वेदार्थविद्भिर्विहितम् । क्षत्रियवैश्ययोःपुनर्नचैतत्कर्मेति ब्रूते ॥ १९० ॥

( ४ ) **राघवानन्दः** । एतत्कर्मनिमन्त्रितभोजनंराजन्यवैश्ययोर्ब्रह्मचारित्वेपि श्राद्धादिषु माश्नीयादित्याहुःराजन्येति ॥ १९० ॥

( ५ ) **नन्दनः** । ब्रह्मचारिप्रकरणविषयत्वात्क्षत्रियवैश्ययोरयंविधिः प्राप्तः प्रतिषिध्यते ब्राह्मणस्यैवेति । कर्म पूर्वश्लोकोक्तम् ॥ १९० ॥

( ६ ) **रामचन्द्रः** । एतत्कर्म दैवपितृरूपंकर्म नियन्त्रणंब्राह्मणस्यैवमनीषिभिःउपदिष्टम् । एवंराजन्यवैश्ययोर्व्रतिनोः एतद्दैवे कर्मणि पित्र्ये कर्मण्यनिमन्त्रणंन विधीयते ॥ १९० ॥

**चोदितो गुरुणा नित्यमप्रचोदितएव वा ॥ कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ १९१॥**

( १ ) **मेधातिथिः** । नोदितोगुरुणाऽ नियुक्तोऽपिकुर्यादध्ययनेयोगंयत्नम् । ननु चाहूतोधीतइत्युक्तंकथमप्रनोदितस्य योगउच्यते । गृहीतवेदैकदेशस्य परिशेषकगुणार्थमेतदुच्यते । न तत्राचार्यनियोगोपेक्षितव्यः । एवमाचार्यायहितंयदुदकुम्भाहरणादिश्रान्तसंवाहनादितदप्यनियुक्तेन कर्तव्यम् ॥ १९१ ॥

( २ ) **सर्वज्ञनारायणः** । योगमुद्यमम् । यत्नमिति क्वचित्पाठः । अचोदितोपि गृहीतवेदभागाभ्यासंकर्तुंस्वतएव शक्नोतीति न तत्र गुर्वपेक्षा ॥ १९१ ॥

( ३ ) **कुल्लूकः** । आचार्येण प्रेरितोनप्रेरितोवास्वयमेव प्रत्यहमध्ययने गुरुहितेषु चोद्योगंकुर्यात् ॥ १९१ ॥

( ४ ) **राघवानन्दः** । किंच चोदितइति । कुर्यात्योगंउपायम् ॥ १९१ ॥

( ५ ) **नन्दनः** । योगमभ्यासम् ॥ १९१ ॥

**शरीरंचैव वाचंच बुद्धीन्द्रियमनांसि च ॥ नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणोगुरोर्मुखम् ॥ १९२॥**

( १ ) **मेधातिथिः** । कुतश्चिदागतोगुरोर्मुखंवीक्षमाणस्तिष्ठेन्नोपविशेन्नियम्य च शरीरंपादहस्तचालनहसितानि न कुर्यान्नकिंचिद्वदेत् । अनुपयोगिबुद्धीन्द्रियाणि नियच्छेत् । यदाश्चर्यरूपंकिंचिद्गुरुसकाशे नतत्पुनःपुनर्भावयेत् श्रोत्रादीन्यपि । चक्षुर्नियमस्तु गुरुवक्त्रप्रेक्षणादेव सिद्धः । मनश्च नियच्छेच्छास्त्रीयान्विकल्पान्गृहकुशूलाद्यारम्भान्मनसा वर्जयेत् । उक्तस्तु संयमेयत्नमिति शक्तिप्रतिषेधार्थः । सप्रतिषेधः गुरुसन्निधौ स्वल्पोपीन्द्रियाणामप्रतिषिद्धेपि विषये प्रसरोन देयः । प्राञ्जलिरूर्ध्वकृतकरकपोलः ॥ १९२ ॥

( २ ) **सर्वज्ञनारायणः** । शरीरनियमोवृथा चेष्टा बुद्धीन्द्रियाणिपञ्च मनश्चनियम्य स्वस्वविषयव्यावृत्तानि कृत्वा गुरुसमीपावस्थाने सर्वदैतद्विधेयं विशेषतःस्वाध्यायकाले ॥ १९२ ॥

( ३ ) **कुल्लूकः** । देहवाग्बुद्धीन्द्रियमनांसि नियम्य कृताञ्जलिर्गुरुमुखंपश्यंस्तिष्ठेन्नोपविशेत् ॥ १९२ ॥

( ४ ) **राघवानन्दः** । किंच शरीरमिति । प्राप्ते गुरौ तथा भूतस्तिष्ठन्मुखंनिरीक्षमाणइत्यध्ययनकालइति शेषः॥१९२॥

( ५ ) **नन्दनः** । बुद्धिरध्यवसायात्मिका मनःसंशयात्मकम् ॥ १९२ ॥

**नित्यमुद्धृतपाणिःस्यात्साध्वाचारःसुसंयतः॥आस्यतामिति चोक्तःसन्नासीताभिमुखंगुरोः ॥१९३॥**

( १ ) **मेधातिथिः** । न केवलंमूत्रकात्पाणिरुद्धर्तव्योऽपितुर्वाससोऽपि । नित्यग्रहणंनतिष्ठतएवायंपाग्युद्धारोनाप्यध्ययनवेलायम् । किंतर्हि ततोऽन्यत्रापि । साध्वाचारः साध्वनिन्द्यः आचारोवाग्व्यवहारादिः कार्यः । अश्लीलादिभाषणमसंनिधानेपि गुरोर्नित्यग्रहणान्नकर्तव्यम् । सुसंवृतः वाङ्मनश्चक्षुर्भिः नियतात्मास्वल्पोपि दोषस्तंपरिहरेत् । अनावृतोलोकउच्यते योयथा कामी तद्विपरीतः सुसंवृतः । अन्येतु मन्यन्ते वस्त्रेणाच्छादितशरीरोगुरुसंनिधौ भवेत् नोत्तरीयमवतारयेदेवंतिष्ठेत् । यदा तु गुरुणाऽस्यतामित्युक्त एतेन शब्देन भ्रूविक्षेपादिना वाविधेः प्रतिपादनार्थत्वात् प्रतिपादनंच न शब्दव्यापारएव तदाऽऽसीतोपविशेत् । अभिमुखः संमुखः ॥ १९३ ॥

( २ ) **सर्वज्ञनारायणः** । उद्धृतपाणिः उत्तरीयबहिरुपरिस्थदक्षिणबाहुः साध्वाचारोगुर्वनुगमनादिविशिष्टाचारकारी सुसंयतोचपलचित्तःउक्तोगुरुणा अभिमुखंदर्शनविषये ॥ १९३ ॥

( ३ ) **कुल्लूकः** । सततमुत्तरीयाद्बहिष्कृतदक्षिणबाहुः शोभनाचारोवस्त्रावृतदेहआस्यतामिति गुरुणोक्तः सन्गुरोरभिमुखंयथा भवति तथाऽऽसीत ॥ १९३ ॥

( ४ ) **राघवानन्दः** । किंच नित्यमिति । उद्धृतपाणिःवस्त्रादिभ्योविकासितदक्षिणपाणिःसुसंवृतःवस्त्रावृतदेहःप्रोक्तोगुरुणेति शेषः ॥ १९३ ॥

( ५ ) **नन्दनः** । नित्यमाश्रमान्तरेऽप्युद्धृतपाणिःस्यात् वस्त्रादिभिराच्छादितदक्षिणपाणिःस्यात् ॥ १९३ ॥

( ६ ) **रामचन्द्रः** । नित्यंउद्धृतपाणिःस्यात् पठनसमयेउद्धृतपाणिःस्यात्साध्वाचारःसाधुयथा स्यात्तथाआचारवान्भवेत् । सुसंयतःयतचित्तःसन्व्रतमपीडयन्नित्यर्थः । आस्यतांउपविश्यतामिति गुरुणा चोदितः सन्गुरोरभिमुखंआसीत उपविशेदित्यर्थः ॥ १९३ ॥

**हीनान्नवस्त्रवेषःस्यात्सर्वदा गुरुसन्निधौ ॥ उत्तिष्ठेत्प्रथमंचास्य चरमंचैव संविशेत् ॥ १९४ ॥**

( १ ) **मेधातिथिः** । हीनंन्यूनमन्नंभुञ्जीत गुरुसंनिधौ । न्यूनता च परिमाणतः क्वचित्क्वचित्संस्कारतः । यदि संस्कृतमाज्यघटितक्षीरादिव्यञ्जनंभिक्षातोलब्धंस्यात्तदा यदि गुरुणाताद्दशमन्नंन भुक्तंस्यादिककाले चगुरुणा सह भोजने यदि गुरोस्ताद्दशमन्नंगृहे न सिद्धंस्यात्तदा तत्तेन नाशितव्यम् । अथ गुरोरपि ताद्दशमन्नंस्यात्तदा ऽपचयः कर्तव्यः । वस्त्रंयदि गुरोरौर्णस्यात्तदा न कार्पासादिशिष्येण प्रावरीतव्यं । वेषआभरणमण्डनादिः सोपि हीनः । सर्वदा ब्रह्मचर्यात्परोऽपि । अतएव वेषग्रहणम् । नच ब्रह्मचारिणोमण्डनमिष्यते । उत्तिष्ठन्प्रथमंचास्य शय्यायाराभ्युपरमे आसनाद्वा उत्थानावसरंबुद्ध्वाप्रथमंपूर्वंगुरोरुत्तिष्ठेत् । चरमंपश्चात्स्वापकाले सुप्ते गुरौ संविशेच्छय्यांसमाश्रयेदासने चोपविशेत् ॥ १९४ ॥

( २ ) **सर्वज्ञनारायणः** । हीनमपकृष्टंगुरुभोग्यान्नवस्त्रःगुरुवेषेभ्यःस्वस्य वस्त्रादेर्हीनत्वम् । उत्तिष्ठेत्शयनात् । संविशेत्शयीत ॥ १९४ ॥

( ३ ) **कुल्लूकः** । सर्वदा गुरुसमीपे गुर्वपेक्षया त्ववकृष्टान्नवस्त्रप्रसाधनोभवेत् । गुरोश्च प्रथमंरात्रिशेषेशयनादुत्तिष्ठेत्प्रदोषे च गुरौ सुप्ते पश्चाच्छयीत ॥ १९४ ॥

( ४ ) **राघवानन्दः** । हीनान्नवस्त्रवेषःअपकृष्टान्नादिर्गुरुतःप्रथमंगुरूत्थानात्पूर्वंचरमंगुरुसंवेशनादुत्तरंसंविशेत्शयीत ॥ १९४ ॥

( ५ ) **नन्दनः** । सर्वदाआश्रमान्तरेऽपिसन्निधावितिविशेषणादसन्निधावदोषः ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । सर्वदा गुरुसंनिधौ हीनान्नवस्त्रवेषःस्यात्गुरोःस्वरूपात्हीनः अन्नवस्त्रवेषोयस्य सःहीनान्नवस्त्रवेषःअस्य गुरोःप्रबोधनात्पूर्वंउत्तिष्ठेत्चरमंतस्मात्संविशेत् सुप्यात् ॥ १९४ ॥

**प्रतिश्रवणसम्भाषे शयानोन समाचरेत् ॥ नासीनोन च भुञ्जानोन तिष्ठन्न पराङ्मुखः ॥ १९५ ॥**

( १ ) **मेधातिथिः** । प्रतिश्रवणमाहूयमानस्य कार्ये नियुज्यमानस्य गुरुसंबन्धिवचनाकर्णनम् । संभाषा गुरुणा सहोक्तिप्रत्युक्तिकरणम् । तेप्रतिश्रवणसंभाषे । शयानः स्वेस्रस्तरेनिक्षिप्तगात्रोन समाचरेन्नकुर्यात् । नासीन आसने चोपविष्टः न भुञ्जानः न तिष्ठन्नेकस्मिन्नेव देशेऽविचलन्नूर्ध्वस्थितः न पुनः पराङ्मुखः यस्यां गुरुर्दृश्यते ततः परावृत्य स्थितोन कुर्यात् ॥ १९५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रतिश्रवणमाज्ञास्वीकारः ॥ १९५ ॥

( ३ ) **कुल्लूकः** । प्रतिश्रवणमाज्ञाङ्गीकरणंसंभाषणंच गुरोःशय्यायांसुप्त आसनोपविष्टोभुञ्जानस्तिष्ठन्विमुखश्च न कुर्यात् ॥ १९५ ॥

( ४ ) **राघवानन्दः** । प्रतिश्रवणसंभाषेआज्ञाङ्गीकरणसंभाषणे नासीनःपीठादिषु न तिष्ठन्दूरतइतिशेषःन पराङ्मुखः गुरुंपृष्ठतःकृत्वा ॥ १९५ ॥

( ५ ) **नन्दनः** । प्रतिश्रवणमात्मानंप्रति गुरुणा प्रयुज्यमानस्य वाक्यस्याश्रवणम् । प्रतिसंभाषा गुरुंप्रतिवाक्यम् ॥ १९५ ॥

( ६ ) **रामचन्द्रः** । शयानःशिष्यःप्रतिश्रयणसमभाषे न समाचरेत्प्रतिश्रयणं च समभाषा च प्रतिश्रयणसमभाषे प्रतिश्रयणंविनयंसंभाषा वचनं न गुरुंसमाचरेत् ॥ १९५ ॥

**आसीनस्य स्थितःकुर्यादभिगच्छंस्तु तिष्ठतः ॥ प्रत्युद्गम्य त्वाव्रजतःपश्चाद्धावंस्तु धावतः ॥१९६॥**

( १ ) **मेधातिथिः** । कथंतर्हि । आसीनोयदाज्ञांददाति तदास्थितआसनादुत्थाय प्रतिश्रवणसंभाषे कुर्यात् । अभिगच्छंस्तु तिष्ठतः तिष्ठन्गुरुर्यदादिशति तदाभिगच्छंस्तदभिमुखः कतिचित्पदानि गत्वाआ व्रजत आगच्छतः प्रत्युद्गम्याभिमुखमेव गत्वा प्रतिराभिमुख्ये धावतोवेगेन गच्छतः पश्चाद्धावन् ॥ १९६ ॥

( २ ) **सर्वज्ञनारायणः** । यथा समाचरेत्तदाह आसीनस्येति । अभिगच्छन्संमुखमागच्छन् ॥ १९६ ॥

( ३ ) **कुल्लूकः** । कथंतर्हिकुर्यात्तदाह आसीनस्येति । आसनोपविष्टस्य गुरोराज्ञांददतः स्वयमासनादुत्थितस्तिष्ठतोगुरोरादिशतस्तदभिमुखंकतिचित्पदानि गत्वा यथा † गुरुरागच्छति * तथाप्यभिमुखंगत्वा यदा तु गुरुर्धावन्नादिशति तदा तस्य पश्चाद्धावन्प्रतिश्रवणसंभाषे कुर्यात् ॥ १९६ ॥

( ४ ) **राघवानन्दः** । आसीनोयदा जातस्तदा स्थितआसनादुत्थितःअभिगच्छन्कतिचित्पदानि प्रत्युद्गम्यआसनादेरुत्थितःतत्तत्क्रियांकुर्वन्प्रतिश्रवणसंभाषणे कुर्यात्गुरोरित्यन्वयः ॥ १९६ ॥

---

† यथा=यदा ( अ )

* तथा=तदा ( अ )

( ५ ) **नन्दनः** । प्रतिश्रवणसंभाषेकथंकुर्यादित्यपेक्षायामाह आसीनस्येति । कुर्यात्प्रतिश्रवणसंभाषेइत्येव । अभिगच्छंस्तुगच्छतइतिपाठः ॥ १९६ ॥

( ६ ) **रामचन्द्रः** । आसीनस्य गुरोःस्थितःशिष्यःअभिवादंकुर्यात्तिष्ठतःगुरोःअभिगच्छन्सन्मुखःसन्नमःस्कुर्यात् । आव्रजतःआगच्छतःप्रत्युद्गम्य नमस्कारंकुर्यात् । गुरोर्धावतः पश्चाद्धावेत् ॥ १९६ ॥

**पराङ्मुखस्याभिमुखोदूरस्थस्यैत्य चान्तिकम् ॥ प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः॥१९७॥**

( १ ) **मेधातिथिः** । तथा पराङ्मुखस्य गुरोः संमुखोपविष्टः शिष्योयदि गुरुःपरावृत्य कथंचित्स्थितः प्रेष्यति तांदिशंगत्वाऽभिमुखीभूय पूर्वोक्तकर्तव्यम् । दूरस्थस्य समीपंअन्तिकंएत्याऽऽगत्य प्राप्यासीनस्यापि शयानस्य प्रणम्य प्रह्वीभूत्वा गात्राण्यवनमय्य निदेशे निकटे तिष्ठतोऽपि प्रणम्यैव यत्प्रागुक्तमभिगछन्निति ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः** । निदेशेधः स्थानान्नीचे निम्नेदेशे गर्तादौ तिष्ठतः प्रणम्य कुर्यादित्यन्वयः । निदेशे निकटे देशेइत्यन्ये ॥ १९७ ॥

( ३ ) **कुल्लूकः** । तथा पराङ्मुखस्येति । पराङ्मुखस्य वा दिशतः संमुखस्थोदूरस्थस्य गुरोः समीपमागत्य शयानस्य गुरोःप्रणम्य प्रह्वोभूत्वा निदेशे निकटे ऽवतिष्ठतोगुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसंभाषेकुर्यात् ॥ १९७ ॥

( ४ ) **राघवानन्दः** । किंच पराङिति । पराङ्मुखस्यगुरोःअभिमुखःसन्दूरस्थस्य गुरोरन्तिकमेत्यगत्वा निर्देशेनिकटदेशे तिष्ठतोगुरोःप्रणम्यशयानस्य । गुरोःनिदेशे समीपेप्रतिश्रवणादिकंकुर्यादित्यनुषज्यते । उक्तपदार्थजातमतिशयविनयसूचनार्थम् ॥ १९७ ॥

( ५ ) **नन्दनः** । प्रणम्य प्रवणीभूत्वा । विदेशे विनते देशे श्वभ्रादौ ॥ १९७ ॥

( ६ ) **रामचन्द्रः** । पराङ्मुखस्य गुरोःअभिमुखस्तिष्ठेत् । दूरस्थस्य गुरोःअन्तिकंसमीपंएत्यआगत्य तिष्ठेत् । शयानस्य गुरोःपृष्ठतःचरणौप्रणम्य निदेशेचैव तिष्ठति गुरोर्निदेशे तिष्ठेदित्यर्थः ॥ १९७ ॥

**नीचंशय्यासनंचास्य सर्वदा गुरुसन्निधौ ॥ गुरोस्तु चक्षुर्विषये न यथेष्टासनोभवेत् ॥ १९८ ॥**

( १ ) **मेधातिथिः** । नीचमनुन्नतं गुरुशय्याद्यपेक्षया च नीचत्वम् । नित्यग्रहणाद्ब्रह्मचर्यादुत्तरकालमपि गुरोश्च दृष्टिगोचरेनास्थातव्यम् । गुरुः पश्यति तत्र न यथेष्टमासीत पादप्रसारणाङ्गनिषङ्गादिना । आसनग्रहणंचेष्टामात्रोपलक्षणार्थम् । यथेष्टचेष्टोन भवेत् ॥ १९८ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र शय्यानीचत्वाभिधानात् अधःशय्यामिति प्रागुक्तंखट्वाद्यूर्ध्वशय्यानिषेधपरंन तु भूशयनपरम् । यथेष्टासनः पर्यङ्कबन्धादिना केवलंचरणाद्युपपदशून्यम् ॥ १९८ ॥

( ३ ) **कुल्लूकः** । गुरुसमीपेचास्य गुरुशय्यासनापेक्षयानीचे एव शय्यासने नित्यं स्याताम् । यत्र च देशे समासीनंगुरुः पश्यति न तत्र यथेष्टचेष्टां चरणप्रसारादिकांकुर्यात् ॥ १९८ ॥

( ४ ) **राघवानन्दः** । किंच नीचमिति । अस्य शिष्यस्यनीचमित्यादिनिषेधार्थः न यथेष्टासनःकृतपर्यङ्कबन्धः ॥ १९८ ॥

( ५ ) **नन्दनः** । सर्वदानित्यमुत्तराश्रमेष्वपि ॥ १९८ ॥

( ६ ) **रामचन्द्रः** । नीचंशय्यासनंनित्यंस्यात् अस्य शिष्यस्य गुरुसन्निधौ ॥१९८॥

**नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥ न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥**

**[ परोक्षंसत्कृपापूर्वंप्रत्यक्षंनकथंचन ॥ दुष्टानुचारीच गुरोरिहवामुत्रचेत्यधः ॥ + १ ॥ ]**

( १ ) **मेधातिथिः** । नोदाहरेन्नोच्चारयेदस्य गुरोर्नाम केवलमुपाध्यायाचार्यभट्टाद्युपपदरहितंपरोक्षमपि । न चैवास्यानुकुर्वीत सदृशंनकुर्यान्नाट्यकारइव गतिः एवमस्मद्गुरुरपक्रामति भाषितंद्रुतविलम्बितमध्यमत्वादिचेष्टितंएवंभुंक्तेएव मुष्णीषंबध्नाति एवंपरिवर्ततइत्यादि । उपहासबुद्ध्या यमनुकरणप्रतिषेधः ॥ १९९ ॥

( २ ) **सर्वज्ञनारायणः** । नोदाहरेत् परोक्षमपि प्रत्यक्षं तुतद्युक्तमपि नोदाहरेदित्यर्थः । गतिभाषिते चेष्टितंच हस्तचालनादिना नानु कुर्वीत परिहासबुद्ध्या तत्सदृशंगत्यादि न कुर्यात् ॥ १९९ ॥

( ३ ) **कुल्लूकः** । अस्य गुरोःपरोक्षमप्युपाध्यायाचायादिपूजावचनोपपदशून्यंनाम नोच्चारयेत् । न तु गुरोर्गमनभाषितचेष्टितान्यनुकुर्वीत गुरुगमनादिसदृशान्यात्मनोगमनादीन्युपहासबुद्ध्या न कुर्वीत ॥ १९९ ॥

( ४ ) **राघवानन्दः** । केवलंभगवच्छब्दादिशून्यंनानुकुर्वीतेति अनुकरणंतादृशगत्यादिकरणंचेष्टितंकरचालनादि तत्करणे परिहासादिप्रतीत्या क्रोधादिसंभावना स्यात् ॥ १९९ ॥

( ५ ) **नन्दनः** । केवलंतत्रभवदादिशब्दरहितम् । चेष्टितंहस्तमुद्रादिकम् ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । अस्य गुरोःगतिभाषितचेष्टितं नानु कुर्वीत न कुर्यात् ॥ १९९ ॥

**गुरोर्यत्र परीवादोनिन्दावापि प्रवर्तते ॥ कर्णौ तत्र पिधातव्यौ गन्तव्यंवा ततोन्यनः ॥ २०० ॥**

( १ ) **मेधातिथि** । यत्र देशे दुर्जनसंपाते गुरोः परीवादः संभूतदोषानुकथनंनिन्दा अविद्यमानानांदोषाणामभिधानंप्रवर्तते तत्र कर्णौ पिधातव्यावङ्गुल्यादिना संवरीतव्यौ ततः प्रदेशाद्वाऽन्यत्र गन्तव्यम् ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः** । परिवादोवास्तवदोषोक्तिः । निन्दा त्व सद्दोषोक्तिः ॥ २०० ॥

( ३ ) **कुल्लूकः** । विद्यमानदोषस्याभिधानंपरीवादःअविद्यमानदोषाभिधानंनिन्दा । यत्र देशेगुरोःपरी वादोनिन्दाच वर्तते तत्र स्थितेन शिष्येण कर्णौहस्तादिना तिरोधातव्यौ तस्माद्वा देशाद्देशान्तरंगन्तव्यम् ॥ २०० ॥

( ४ ) **राघवानन्दः** किंच गुरोरिति । परीवादोअविद्यमानदोषाभिधानेपिधातव्यावाच्छादितव्यौ ॥ २०० ॥

( ५ ) **नन्दनः** । परीवादोबुद्धिपूर्वदोषः । निन्दाव्यङ्गतादिः ॥ २०० ॥

**परीवादात्खरोभवति श्वा वै भवति निन्दकः॥परिभोक्ता कृमिर्भवति कीटोभवति मत्सरी२०१॥**

( १ ) **मेधातिथिः** । पूर्वप्रतिषेधे शेषोयमर्थवादः । अतएवंव्याख्येयंपरीवादाञ्छ्रुत्वा खरोभवति हेतौल्यपूलोपे वाकर्मणि पञ्चमी। परीवादंश्रुत्वा निन्दकोनिन्दाश्रावीउपचारान्निन्दकउच्यते । तथा संस्कर्तावधातकः श्रवणनिषेधादेव साक्षात्करणनिषेधसिद्धिपरिभोक्ता योगुरुमुपजीवतिकुसृत्यानुवर्तते । मत्सरीगुरुसमृद्धिमभ्युच्चयन्नसहतेऽन्तर्दह्यते । अनयोरप्राप्तत्वादपूर्वोविधिः । परिवादपरीवादयोर्घञमनुष्ये बहुलमिति दीर्घत्वादीर्घत्वे ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः** । परिवादात्स्वयंक्रियमाणात् । एवमुत्तरेषु । परिभोक्ता उत्तमवस्तूनांलब्धानां तदननुज्ञया भोक्ता । मत्सरी तद्गुणासहिष्णुः । कीटःकृमिरीषदुपचितः ॥ २०१ ॥

---

+ अयंश्लोकः ( च ) चिन्हित पुस्तके १९९ श्लोकस्य पूर्वार्द्धात् पश्चाद्दृश्यते ॥

( ३ ) कुल्लूकः । इदानींशिष्यकर्तृकपरीवादकृतफलमाह परीवादादिति । गुरोःपरीवादाच्छिष्योमृतः खरोभवति । गुरोर्निन्दकः कुक्कुरोभवति । परिभोक्ताऽनुचितेन गुरुधनेनोपजीवकः कृमिर्भवति । मत्सरी गुरोरुत्कर्षासहनः कीटोभवति । कीटःकृमिभ्यः किंचित् स्थूलोभवति ॥ २०१ ॥

( ४ ) राघवानन्दः । किंच परिवादादेःशिष्यकर्तृकत्वे प्रत्यवायमाह परिवादादिति । परकृतपरिवादश्रवणे वा परिभोक्ताअनुचितगुरुधनाद्युपजीवी कृमिरपदः । सपदःकीटः । मत्सरी गुरुगुणासहिष्णुः ॥ २०१ ॥

( ५ ) नन्दनः । परिवादी परिवादप्रयोगी । परिभोक्ता गुरोर्भोगादधिकभोगभोगी ॥ २०१ ॥

( ६ ) रामचन्द्रः । गुरोःपरिवादात्खरोगर्दभोभवेत् । श्वाभवति निन्दकःगुरोःपरिभोक्ता गुरुधनोपभोगी कृमिःस्यात् । गुरोर्मत्सरकारी कीटोभवेदिति ॥ २०१ ॥

**दूरस्थोनार्चयेदेनं क्रुद्धोनान्तिके स्त्रियाः ॥ यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥२०२॥**

( १ ) मेधातिथिः । अत्र परप्रेषणेन गन्धमाल्यादेरर्पणंप्रतिषिध्यते । स्वयंकृते परेण च कारितेतुल्यंकर्तृत्वंप्रयोजकेपि कर्तृत्वस्मरणादित्येतयाबुद्ध्या प्राप्ते परमुखेनार्चने प्रतिषेधः । अशक्तौ ग्रामान्तरस्थस्य न दोषः ग्रामान्तरंगच्छत्युपाध्यायेभवानभिवादयतांसगत्वा मातुलमभिवादयतइत्यादिव्यवहारदर्शनात् । नक्रुद्धः गुरौ क्रोधासंभवादन्यनिमित्तेपि क्रोधे पूजाकाले तत्त्यागेनायंप्रसादोभिधीयते । क्रुद्धमित्यन्ये पठन्ति । नान्तिके समीपे स्त्रियाः कामिन्याःस्थितंगुर्वाराधनपरत्वाच्छुश्रूषाकलापस्ययेन चित्तखेदआशङ्क्यते सनिषिध्यतेअतस्त्रियाइत्येवंव्याख्यातम् । यानंगन्त्र्यादि आसनंपीठिकामञ्चादि ततोवरुह्यावतीर्याभिवादयेत् । शय्यासनस्थइत्यत्रासनादुत्थानमुक्तमनेनावरोहणंविधीयते मञ्चाद्यासनादुत्थानमनवरोहतोपि संभवति अवरोहणंतर्हि अनुत्थितस्यचनसंभवत्यतोनेनैव सिद्धेशय्यासनेत्यत्रासनग्रहणमनर्थकम् । नानर्थकंयदि शिष्यः पराङ्मुखः प्रत्यग्देशादागतंगुरुंमन्येत तदासनस्थएव संभ्रमपरावृत्तस्तदभिमुखीभूतउत्तिष्ठेन्नतूत्थायाभिपरावर्तेत तथाह्युत्थानक्रियया संमुखीभवनंव्यवधीयेत ततः कुप्येद्गुरुः । पराङ्मुखस्योत्तिष्ठतोगुरुरेवमपि मन्येत नायंममाभ्युत्थितोनिमित्तान्तरकृतमेवास्याभ्युत्थानंतस्मादर्थवदुभयत्राप्यासनग्रहणम् ॥ २०२ ॥

( २ ) सर्वज्ञनारायणः । दूरस्थःपरहस्तप्रेषितप्रणामबुद्ध्यादिना नार्चयेत् । क्रुद्धःक्रोधनिषेधाप्रतिसंधाने दैवादुत्पन्नक्रोधः न स्त्रियाः अन्तिके स्त्रिया सहैकान्त आसीनमभिवादनादिना नार्चयेत् । पूर्वयानासनस्थेन प्रत्युत्थानाभिवादनमुक्तम् । विशेषोविधीयत इत्यत्र यानस्थेनैव प्रत्युत्थानमभिवादनं च कार्यमिति प्रसंङ्गेन विशेषमाह यानासनस्थइति । ते प्रत्युत्थानाभिवादनेअवरुह्यैव कार्येइत्यत्र विशेषइत्यर्थः ॥ २०२ ॥

( ३ ) कुल्लूकः । दूरस्थः शिष्योऽन्यंनियुज्य माल्यवस्त्रादिना गुरुंनार्चयेत् । स्वयंगमनाशक्तौ त्वदोषः । क्रुद्धः कामिनीसमीपेच स्थितं स्वयमपिनार्चयेत् । यानासनस्थश्च शिष्योयानासनादवतीर्यगुरुमभिवादयेत् । यानासनस्थश्चैवैनंप्रत्युत्थायेत्यनेन यानासनादुत्थानंविहितमनेन तु यानासनत्यागइत्यपुनरुक्तिः ॥ २०२ ॥

( ४ ) राघवानन्दः । एनंगुरुन् । क्रुद्धःस्वयम् । स्त्रिया गुरोः । अवरुह्यभूमौ ॥ २०२ ॥

( ५ ) नन्दनः । दूरस्थोनार्चयेदेनंगन्धमाल्यादिप्रेषणेननार्चयेत्किंतुस्वयमेवार्चयेदित्यर्थः । क्रुद्धोऽन्यस्मै । स्त्रियागुरुपत्न्याअन्तिके रहसि पत्न्यासहितमित्यर्थः ॥ २०२ ॥

( ६ ) रामचन्द्रः । एनंगुरुंदूरस्थःसन्वस्त्रादिनानार्चयेत् । तथा क्रुद्धःसन्न पुजयेदित्यर्थः । तथा स्त्रियाःअन्तिके समीपे नार्चयेत् । यानासनस्थःसन्भूमौअवरुह्यएनंगुरुंअभिवादयेत् ॥ २०२ ॥

**प्रतिवातेऽनुवाते च नासीत गुरुणा सह ॥ असंश्रवे चैव गुरोर्न किंचिदपि कीर्तयेत् ॥ २०३ ॥**

(१) **मेधातिथिः** । यस्यांदिशि गुरुर्व्यवस्थितस्ततोदेशाद्यदावायुः शिष्यदेशमागच्छति शिष्यदेशाद्गुरुदेशं ते प्रतिवातानुवाते। एकंप्रतिवातमपरमनुवातम्। तदपेक्षया गुरुणा सह नासीत अपितु तिर्यग्वातसेवी गुरोर्भवेत्। अविद्यमानः संश्रवोयत्र तस्मिन्नसंश्रवेन किंचिदपि गुरुगतमन्यगतंवा कीर्तयेत् । यत्र गुरुर्व्यक्तंनशृणोति ओष्ठसंचलनादिनाशिष्यसंम्बन्धिनाजानाति किंचिदयमेतेन संभाषते तन्न कीर्तयेत् ॥ २०३ ॥

(२) **सर्वज्ञनारायणः**। गुरुणा सहासीनोगुरोरभिमुखवातवहनस्थाने नासीतद्रप्सादिनिर्गमसंभवात् । नानुवाते तत्पृष्ठभागगतवातवहनस्थानेएतदुदीरितशब्दस्य तेनाश्रवणात् । एवमन्यत्राप्येतादृशि देशे न किंचिद्वाच्यमित्याह असंश्रवइति। संश्रवस्तदुक्तश्रवणार्हो देशः ॥ २०३ ॥

(३) **कुल्लूकः**। प्रतिगतोभिमुखीभूतः शिष्यस्तदा गुरुदेशाच्छिष्यदेशमागच्छति सप्रतिवातः। यः शिष्यदेशाद्गुरुदेशमागच्छति । सोऽनुवातः। तत्र गुरुणा समंनासीत । तथा ऽविद्यमानःसंश्रवो तस्मिन्संश्रवे गुरुर्यत्र न शृणोतीत्यर्थः। तत्रः गुरुगतमन्यगतंवा न किंचित्कथयेत् ॥ २०३ ॥

(४) **राघवानन्दः**। गुरुदेशाच्छिष्यंअनुगच्छन्वायुःप्रतिवातः। अनुवातःशिष्यदेशाद्गुरुमनुगच्छन्। तस्मिन्असंश्रवे यत्रगुरुर्न शृणोतीत्यर्थः ॥ २०३ ॥

(५) **नन्दनः**। प्रतिवातेपुरतोनासीत अनुवातेपृष्ठतः । पार्श्ववातयोरप्युपलक्षणमेतत् । यथा स्वशरीरस्पृष्टोवातोनंनस्पृशेत्तथासीतेति। असंश्रवेअश्रवणायोग्ये देशे ॥ २०३ ॥

(६) **रामचन्द्रः**। गुरोःप्रतिवातेअभिमुखे च पुनःअनुवाते गुरुणासहनासीतनउपविशेत्। गुरोःसंश्रवे निकटेचैव किंचिदपि न कीर्तयेत् ॥ २०३ ॥

**गोश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ॥ आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥ २०४ ॥**

(१) **मेधातिथिः** । यानशब्दः प्रत्येकमभिसंबध्यते । गोश्वोष्ट्रैर्युक्तंयानंगोश्वोष्ट्रयानम् । दधिघटादिवत्समासे युक्तशब्दस्य लोपः । केवलेषु तु अश्वपृष्ठादिष्वारोहणंनास्ति । यदि स्वतन्त्रोयानशब्दोविज्ञायेत तदा स्यादप्यनुज्ञा। समाचारात्तु कादाचित्कमनुज्ञानंदृश्यते। प्रासादउपरिगृहादीनांया भूमिस्तस्यांगृहादिभूमिवत्सिद्धंसहासनंप्रस्तरः । दर्भादितृणाकीर्णआस्तरः कटःनतुशरवीरणादिकृतः प्रसिद्धः। शिलागिरिशिखरादावन्यत्र वा फलकंदारुमयमासनंपोतवर्तादि। नौर्जलतरणसंप्लवः। तेन पोतादावपि सिद्धंभवति ॥ २०४ ॥

(२) **सर्वज्ञनारायणः**। गोश्वोष्ट्रयुक्ते याने रथादौ स्रस्तरे तृणसंचये कटेषु तृणादिनिर्मितेषु बृहदासनेषु फलकेकाष्ठपट्टे एतद्धस्त्यादेरपि प्रकीर्णयानस्योपलक्षणम्। अत्रासीतेति वचनमन्यत्र शय्यादौ सहासननिषेधार्थम् ॥ २०४ ॥

(३) **कुल्लूकः** । यानशब्दः प्रत्येकमभिसंबध्यते । बलीवर्दयाने घोटकप्रयुक्तेयानउष्ट्रयुक्तयाने रथंकाष्ठादौप्रासादोपरिस्रस्तरे कटे च तृणादिनिर्मिते शिलायांफलकेच दारुघटितदीर्घासने नौकायांच गुरुणासहासीत ॥ २०४ ॥

(४) **राघवानन्दः** । तेषांत्वयासने न प्रश्वसितव्यमितिश्रुतेः पर्युदासमाहगोश्वेति। गवादियुक्तेषु शकटेषु तद्रूपेषु वाप्रासादेदेवभूभुजांगृहे संस्तरे ऊर्णान्तत्वादिकृतेषु कटेषु तृणलतादिनिर्मितेषुफलकंदारुघटितविस्तीर्णासनम् ॥ २०४ ॥

---

(२०४) स्रस्तरेषु=संस्तरेषु (ञ)। प्रस्तरेषुच (ज, झ, ढ,)

( ५ ) **नन्दनः** । प्रतिषिद्धस्य गुरुसहासनस्य प्रत्युद्धारः क्रियते गोश्वेति। गोश्वोष्ट्रैर्युक्तंयानंगोश्वोष्ट्रयानम् । स्रस्तरस्तृणादिसमूहः ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । स्रस्तरेषु तृणसञ्चयेषु । शिलाफलके शिलामण्डले ॥ २०४ ॥

**गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ॥ न चानिसृष्टोगुरुणा स्वान्गुरूनभिवादयेत् ॥ २०५ ॥**

( १ ) **मेधातिथिः** । उक्ता गुरुवृत्तिरिदानीमन्यत्रातिदिश्यते । अध्ययनधर्मत्वात्सर्वस्यास्यगुरुरत्राचार्योविज्ञेयः । तस्य योगुरुस्तस्मिन्संनिहिते गुरुवद्वर्तितव्यम् । संनिहितइति न तद्गृहगमनमभिवादनाद्यर्थंकर्तव्यम् । गुरुगृहे वसन्गुरुणाऽनिसृष्टोऽननुज्ञातः स्वान्गुरून्मातापितृप्रभृतीन्नाभिवादयितुंगच्छेन्नपुनर्गुरुगृहे थितस्य यदि स्वे गुरवआगच्छन्ति तदा तदभिवादने गुर्वज्ञाऽपेक्षितव्या । कुतएतत् मातापित्रोरत्यन्तमान्यत्वात्पितृव्यमातुलादीनामप्यभिवादनप्रवृत्तस्य न कश्चिद्गुरुवृत्तेर्विघ्नः । आराधनार्थएवायंसर्वः प्रयासः । मातापितृगुरुसंनिपाते कः क्रमोभिवादनस्येत्युक्तंसर्वमहतीमाता । पित्राचार्ययोस्तु विकल्पः यतः पितृत्वाध्यारोपेणाचार्यस्य गौरवंविहितमतः पिताश्रेष्ठः यतश्चोक्तंगरीयान्ब्रह्मदः पितेति ततआचार्यः अतोऽयंविकल्पः ॥ २०५ ॥

( २० ) **सर्वज्ञनारायणः** । गुरुवत् गुरुतुल्यांवृत्तिम् । अत्र गुरुशब्दोगौरवविषययावदुपाध्यायादिपरः । नचेति । आचार्यगृहे वसन्गुरुणाआचार्येणानिसृष्टोननुज्ञातो नस्वानगुरून्मान्यानुपाध्यायादीन् अभिवादयेत् ॥ २०५ ॥

( ३ ) **कुल्लूकः** । आचार्यस्याचार्येसन्निहित आचार्यइव तस्मिन्नप्य भिवादनादिकांवृत्तिमनुतिष्ठेत् । तथा गुरुगृहे वसञ्छिष्यआचार्येणानियुक्तो न स्वान्गुरून्मातृपितृव्यादीनभिवादयेत् ॥ २०५ ॥

( ४ ) **राघवानन्दः** । वृत्तिमभिवादनादि । गुरोः गुरौ गुरोराचार्ये कुर्यात् । गुरुणा ब्रह्मदात्रा । स्वान्गुरून्पित्रादीन् ॥ २०५ ॥

( ५ ) **नन्दनः** । गुरोराचार्यस्य । अनिसृष्टोननुज्ञातः । स्वान्गुरून्पित्र्यादीन्मातापितृभ्यामन्यत्रपितृव्यादीनित्यन्ये२०५

( ६ ) **रामचन्द्रः** । गुरुणाअनिसृष्टःअनाज्ञप्तःस्वान् । गुरून्पितृभ्रात्रादीन्नअभिवादयेत् ॥ २०५ ॥

**विद्यागुरुष्वेतदेव नित्या वृत्तिःस्वयोनिषु ॥ प्रतिषेधत्सु चाधर्मान्हितंचोपदिशत्स्वपि ॥ २०६ ॥**

( १ ) **मेधातिथिः** । अयमप्यतिदेशः । आचार्यादन्ये उपाध्यायादयोविद्यागुरवः तेष्वेवमेववर्तितव्यंशरीरंचैवेत्यादिकत्या । स्वयोनिषु ज्येष्ठभ्रातृपितृव्यादिषु । नित्यावृत्तिर्गुरुवृत्तिः । विद्यागुरूणांत्वाचार्यव्यतिरेकेण यावद्विद्याग्रहणम् । अधर्मादकार्यात्परदारगमनादेः प्रतिषेधत्सु वयस्येष्वपि अभ्यन्तरगत्यारूढतयाऽकार्यचिकीर्षन्यःसुहृदादिस्तमाकेशग्रहणान्मित्रमकार्येभ्योनिवर्तयेदिति । तस्मिन्समहीनवयस्केपि गुरुवद्वर्तितव्यम् । हितंचविधिरूपमग्रंथकमुपदिशत्सु अथवा हितस्योपदेष्टारोभिजनाउच्यन्ते ॥ २०६ ॥

( २ ) **सर्वज्ञनारायणः** । विद्याग्रहणंनिमित्तगुरुष्वेवैतत् अनुमतिप्रतीक्षणम् ।.स्वयोनिषु तु पितृमातुलादिषु गुरुषु नित्या वृत्तिरनुज्ञांविनाप्यभिवादनादिप्रवृत्तिः । तथा अधर्मेष्वेनसि क्रियमाणे अयमधर्मोन कार्य इदंधर्मसाधनंहितंकार्यमित्यादिपारलौकिकोपदेशकारिष्वप्येतत् । एवमेतदनुमत्यैवाभिवादनादीति व्यवहितान्वयः ॥ २०६ ॥

( ३ ) **कुल्लूकः** । । आचार्यव्यतिरिक्ताउपाध्यायाविद्यागुरवः । तेष्वेतदेवेति । सामान्योपक्रमः । किंतदाचार्यइव नित्या सार्वकालिकी वृत्तिर्विधेया । तथा स्वयोनिष्वपि पितृव्यादिषु तद्वृत्तिः । अधर्मान्निषेधत्सु धर्मतत्त्वंचोपदिशत्सु गुरुवद्वर्तितव्यम् ॥ २०६ ॥

( ४ ) **राघवानन्दः** । अतिदेशार्थमुपदेशमुपसंहरतिविद्येति । विद्यागुरुष्वतिरिक्तेषुस्वयोनिषु पितृव्यादिषु । नित्यावृत्तिरभ्यासः । प्रतिषेधत्सुअधर्मान्निवर्तकेषु हितंचोपदिशत्सुहितंदृष्टोपकारम् ॥ २०६ ॥

( ५ ) **नन्दनः** । विद्यागुरुष्वाचार्यव्यतिरिक्तेषु । स्वयोनिषु मातापितृव्यतिरिक्तेषु । उपकारसंनिकर्षविप्रकर्षापेक्षया तेषु तारतम्यंकल्पनीयम् ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । विद्यागुरुषुएषैव वृत्तिः नित्या कार्या विद्याध्यापकेषुगुरुषुइत्यर्थः । स्वयोनिषु स्वसम्बन्धिषुएषैव वृत्तिःकार्या अधर्मात्प्रतिषेधत्सु सत्सुएतदेव वृत्तिः । हितंचोपदिशत्सुअपिएषैववृत्तिःकार्या ॥ २०६ ॥

**श्रेयस्सु गुरुवद्वृत्तिंनित्यमेव समाचरेत् ॥ गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७ ॥**

( १ ) **मेधातिथिः** । श्रेयांसआत्मापेक्षया वित्तवयोविद्याद्यतिशययुक्ताः तेषुगुरुवद्वृत्तिंयथासंभवमभिवादनप्रत्युत्थानादि सर्वदैव समाचरेत् । बहवोत्र शब्दागतार्थाः प्रयुज्यन्ते । तेषांवृत्तवशात्प्रयोगोनदुष्यति । श्रेयस्स्वित्येतावद्वक्तव्यंगुरुवदित्याक्षिप्यते वृत्तिमित्यादिप्राप्तमेव तदेतत्सर्वस्मिन्नेवास्मिन्ग्रन्थे स्वयमुत्प्रेक्ष्यम् । गुरुपुत्रे तथाचार्ये । आचार्यग्रहणेनाध्यापकत्वंलक्षते यद्यसन्निहिते गुरौ तत्पुत्रोध्यापयति कतिचिदहानि तदा तस्मिन्गुरुवद्वृत्तिः । पाठान्तरम् गुरुपुत्रेष्वथाचार्ये । आचार्यशब्दोगुणवद्ब्राह्मणजातिवचनः शूद्राचार्यौ चर्मणिव्यायच्छेतेतयोराचार्यवर्णजापयन्तीतिप्रयोगदर्शनात् । नच सर्वस्मिन्गुरुपुत्रेवृत्तिरेषा विधीयते । गुरोश्चैव स्वबन्धुषु स्वग्रहणंगुरुवंश्यार्थं गुरुवंशसंबन्धितैवात्रनिमित्तंन वयोविद्याद्यपेक्ष्यते ॥ २०७ ॥

( २ ) **सर्वज्ञनारायणः** । अतिशयविद्यादिप्रकर्षवत्स्वगुरुष्वपि गुरुवद्वृत्तिमभिवादनादि गुरुपुत्रेषु ज्येष्ठेषु आर्येषु अपापेषु । आरात्पापेभ्योगता आर्याः । एतच्च सवर्णाधिकवर्णेष्वेव । गुरोः स्वेषुजातिषु बन्धुषु चैवंवृत्तिः । सयोनिषु चैवंवृत्तिः ॥ २०७ ॥

( ३ ) **कुल्लूकः** । श्रेयस्सु विद्यातपःसमद्धेषु । आर्येष्विति गुरुपुत्रविशेषणम् । समानजातिगुरुपुत्रेषु गुरोश्च ज्ञातिष्वपि पितृव्यादिषु सर्वदा गुरुवद्वृत्तिमनुतिष्ठेत् । गुरुपुत्रश्चात्र शिष्याधिकवयाश्च बोद्धव्यः शिष्यबालसमानवयसामनन्तरंशिष्यस्य वक्ष्यमाणत्वात् ॥ २०७ ॥

( ४ ) **राघवानन्दः** । श्रेयस्सु विद्यातपःसमृद्धेषु । गुरुवन्नमस्कारोत्थानादि ॥ २०७ ॥

( ५ ) **नन्दनः** । श्रेयस्सुअवदातयोनिविद्याकर्मसु । आर्येषु सद्वृत्तेषु निर्दोषेषु । गुरुपुत्रविशेषणमेतत् । स्वबन्धुषुज्ञातिसंबन्धिषु ॥ २०७ ॥

( ६ ) **रामचन्द्रः** । श्रेयस्सुज्येष्ठेषुविद्यां प्रकाशयत्सुवा गुरुपुत्रे तथाचार्ये गुरोर्बन्धुषु च एतेषु गुरुवद्वृत्तिंनित्यमेव समाचरेत् ॥ २०७ ॥

**बालःसमानजन्मा वा शिष्योवा यज्ञकर्मणि ॥ अध्यापयन्गुरुसुतोगुरुवन्मानमर्हति ॥ २०८ ॥**

( १ ) **मेधातिथिः** । ये न पठन्ति गुरुपुत्रविशेषणार्थंपूर्वत्राचार्यग्रहणंतेषामध्यापयितरि गुणवति समानजातीयेसर्वगुरुवृत्तिः प्राप्ताऽनेन विशेषेणावस्थाप्यते । अध्यापयन्गुरुसुतोगुरुवन्मानंपूजामर्हति नानाध्यापयन् । ननु च विद्याग्रहणनिमित्तत्वाद्गुरुवृत्तिरध्यापयद्गुरुवद्गुरुपुत्रेऽप्यध्यापयितरि प्राप्तैव शैशवब्राह्मणनिदर्शनात्कनीयसोपि सिद्धेत्यतोबालः समानजन्मवेत्येवमर्थमपि न वक्तव्यम् । सत्यम् । योवेदंवेदैकदेशंवाध्यापयति तस्यानाचार्यस्याप्येषा वृत्तिरुक्ता । अयंतु न ग्राहकः केवलंकतिचिदहान्यहर्भागंवाध्यापयति अतोनाचार्योनोपाध्यायइत्यप्राप्तौ विधिरयम् । अस्मादेव वचना-

दन्यस्य भग्नमन्त्रादे रध्यापकस्य न सर्वा गुरुवृत्तिः कर्तव्येति विज्ञायते । ये च पूर्वत्राचार्यशब्दंपठन्ति तेषामुत्तरार्थमिदमनूद्यते । उत्सादनंचेति वक्ष्यति । शिष्योवा यज्ञकर्मणि यज्ञकर्मग्रहणंप्रदर्शनार्थंकचिदङ्गेवेदैकदेशे मन्त्रभागे कस्मिंश्चिद्ब्राह्मणभागे वा तथापि गुरुवत्पूज्यः यदितु गुरुपुत्रः । तस्मादनेन प्रकारेण कांचिद्विद्यांशिक्षेत तदा तेन तस्मिन्गुरुवद्वर्तितव्यमित्युक्तमेएवमर्थवादत्वादस्यारम्भस्य । येतुव्याचक्षते अध्यापयन्नित्यनेनाध्यापनसामर्थ्यंलक्ष्यते अध्यापनसमर्थश्चेदध्यापयतुमावाध्यापयेत् गृहीतवेदश्चेद्गुरुवद्द्रष्टव्यः तेषांशाब्दमेतद्व्याख्यानंसत्यंभवति । शतालक्षणार्थः तत्तु क्रियायाः लक्षणहेत्वोः क्रियायाइति । क्रियाचात्र श्रुता । गुरुवन्मानमर्हति ॥ २०८ ॥

( २ ) **सर्वज्ञनारायणः** । बालोल्पवयाः । समानजन्मा सवयाः । यज्ञकर्मविषयकग्रन्थकल्पोपदर्शनेनाङ्गोपलक्षणम् । तत्राङ्गजाते पुर्वयद्यप्यस्य गुरुसुतः शिष्यस्तथापि गुरुसुते गुरोः कार्यान्तरादिव्यासक्तौ वेदमध्यापयन् तत्काले गुरुवन्मान्यः । यदितु सोपि एतदधीतवेदएवास्य शिष्योन तदैवम् ॥ २०८ ॥

( ३ ) **कुल्लूकः** । कनिष्ठःसवयावा ज्येष्ठोपि वा शिष्योऽध्यापयन्नध्यापनसमर्थोगृहीतवेदइत्यर्थः । सयज्ञकर्मण्यृत्विगनृत्विग्वा यज्ञदर्शनार्थमागतोगुरुवत्पूजामर्हति ॥ २०८ ॥

( ४ ) **राघवानन्दः** । अध्यापयन्गृहीतवेदत्वेन तत्र समर्थःयज्ञकर्मणि शिष्योपि ब्रह्मचारिण;ततोध्येतायज्ञकर्मदर्शनार्थमागतः । द्वितीयोवाशब्दोगुणानादरे । सर्वदानमानार्हःसः ॥ २०८ ॥

( ५ ) **नन्दनः** । यज्ञकर्मणि यज्ञादिषु कार्यान्तरेषु आचार्येयज्ञादिकर्मपरवशे आचार्यस्थानीयोऽध्यापयन्बालोऽवरवयः स्थोवा समानजन्मा समानवयस्थोवा विद्यान्तरेषुशिष्योवा गुरुसुतोगुरुवन्मानमर्हति ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । यज्ञकर्मणि ऋत्विजःबालाःगुरुवत्मानंअर्हन्ति । समानजन्मावाव्रते गुरुवन्मानमर्हति । गुरुसुतः गुरुवन्मानमर्हति । यःअध्यापयन्सःगुरुवन्मानमर्हतीत्यर्थः ॥ २०८ ॥

## उत्सादनंच गात्राणांस्नापनोच्छिष्टभोजने ॥ न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ २०९ ॥

( १ ) **मेधातिथिः** । अभ्यक्तस्योद्वर्तनमुत्सादनंन कुर्यात् गुरुपुत्रस्य पादयोश्चावनेजनंप्रक्षालनम् । अस्मादेव प्रतिषेधाद्गुरावेतदनुक्तमपि कर्तव्यतया प्रतीयते । यदा तु गुरुपुत्रएव गुरुः संपद्यते कृत्स्नवेदाध्यापनोपयोगितया तदा स्वनिमित्तंतत्रोच्छिष्टभोजनाद्यस्तितदनेन प्रतिषिध्यते । आतिदेशिकस्यानेन निषेधोनौपदेशिकस्य ॥ २०९ ॥

( २ ) **सर्वज्ञनारायणः**। उत्सादनमुद्वर्तनम् । गुरुपुत्रस्य पूर्वश्लोकोक्तलक्षणवतः । अवनेजनंक्षालनम् । अर्थादभिवादनमपिनिषिद्धमेव ॥ २०९ ॥

( ३ ) **कुल्लूकः**। आचार्यवदित्यविशेषेण पूजायांप्राप्तायांविशेषमाह । उत्सादनमिति । गात्राणामुत्सादनमुद्वर्त्तनमुच्छिष्टस्य भक्षणंपादयोश्च प्रक्षालनंगुरुपुत्रस्य न कुर्यात् ॥ २०९ ॥

( ४ ) **राघवानन्दः** । पूजाङ्गत्वेन प्राप्तंपरिचष्टेउदिति । उत्सादनं गात्रमलानांत्याजनम् । अवनेजनंपादक्षालनम् । एतेन गुरोरुच्छिष्टंभोज्यम् ॥ २०९ ॥

( ५ ) **नन्दनः** । अथगुणवतिगुरुपुत्रेगुरुवृत्तीनांप्राप्तानामपवादमाह उत्सादनमिति । अनेनैवज्ञापितंगुरोरुत्सादनादीनिकार्याणीति ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । गात्राणांउत्सादनं अङ्गवस्त्रादिना न कुर्यात् स्नापनोच्छिष्टभोजने पादयोःअवनेजनंगुरुपुत्रस्य न कुर्यात् कोर्थः गुरुपुत्रात् एतानि वस्तूनि न कारयेत् । हेत्वर्थेपञ्चमीज्ञेया । गुरुपुत्राच्चइति वा पाठः ॥ २०९ ॥

**गुरुवत्प्रतिपूज्याःस्युःसवर्णागुरुयोषितः ॥ असवर्णास्तु संपूज्याः प्रत्युत्थानभिवादनैः ॥ २१० ॥**

(१) **मेधातिथिः** । गुरुयोषितोगुरुपत्न्यः सवर्णाः समानजातीयाः गुरुवत्प्रतिपूज्याआज्ञाकरणादिना । असवर्णास्तु केवलैः प्रत्युत्थानाभिवादनैः । बहुवचनादाद्यर्थोत्रान्तर्भवति तेन हि प्रियहितादिगत्याद्यननुकरणाद्यप्यतिदिश्यते ॥२१० ॥

(२) **सर्वज्ञनारायणः** । सवर्णाः शिष्यस्य गुरुयोषितआचार्योपाध्यायपितृपितृव्यादिपत्न्यः । अभिवादनमसावह-मित्युक्त्वा ॥ २१० ॥

(३) **कुल्लूकः** । सवर्णागुरुपत्न्योगुरुवदाज्ञाकरणादिना पूज्याभवेयुः । असवर्णाः पुनः केवलप्रत्युत्थानाभिवाद-नैः ॥ २१० ॥

(४) **राघवानन्दः** । किंच गुरुवदिति । सवर्णाःसमानजातीयाः ॥ २१० ॥

(५) **नन्दनः** । गुरौया वृत्तिरुक्ता तया सवर्णागुरुयोषितः प्रतिपूज्याः । असवर्णास्तु प्रत्युत्थानाभिवादनादिभिः पूज्याः । एतदुक्तंभवति । ब्राह्मणेन क्षत्रियवैश्यशूद्राश्च गुरुपत्न्यः प्रत्युत्थानेन पूज्याः नाभिवादनेन एवंक्षत्रियेणवैश्या-शूद्रे वैश्येनशूद्राच । किंच क्षत्रियेणब्राह्मणी वैश्येन क्षत्रियाब्राह्मण्यौच प्रत्युत्थानाभिवादनैः पूज्याइति ॥ २१० ॥

(६) **रामचन्द्रः** । तथा असवर्णायोषितःप्रत्युत्थानाभिवादनैः संपूज्याः ॥ २१० ॥

**अभ्यञ्जनंस्नापनंच गात्रोत्सादनमेव च ॥ गुरुपत्न्या न कार्याणि केशानांच प्रसाधनम् ॥ २११॥**

(१) **मेधातिथिः** । घृततैलादिनाकेशकायोपदेहनमभ्यञ्जनम् । गात्राणामुत्सादनमुद्वर्तनंकार्यसामान्यात्पादधावन-मपि । सर्वथा शरीरस्पर्शसाध्या या काचिदनुवृत्तिः सा सर्वा प्रतिषिध्यते । वक्ष्यति यंहेतुंस्वभावएषनारीणामिति । केशा-नांच प्रसाधनंविन्यासरचनादिकरणंकुंकुमसिंदूरादिनासीमन्तोत्थापनम् । प्रदर्शनार्थंचैतदुक्तंतेन देहप्रसाधनमपि चन्दनानु-लेपनानि निषिध्यन्ते ॥ २११ ॥

(२) **सर्वज्ञनारायणः** । अभ्यञ्जनंस्नेहम्रक्षणम् ॥ २११ ॥

(३) **कुल्लूकः** । तैलादिना देहाभ्यङ्गं स्नापनंगात्राणांचोद्वर्तनंकेशानांच माल्यादिनाप्रसाधनमेतानि गुरुपत्न्या न कर्तव्यानि । केशानामिति प्रदर्शनमात्रार्थम् । देहस्यापि चन्दनादिना प्रसाधनं न कुर्यात् ॥ २११ ॥

(४) **राघवानन्दः** । गुरुवत्तासामभ्यञ्जनादिप्राप्ते निराकरणमाहअभ्यञ्जनमिति । प्रसाधनंकेशसंस्कारः ॥ २११ ॥

(६) **रामचन्द्रः** । गुरुपत्नी शरीरस्यअभ्यञ्जनतैलाभ्यङ्गादीनि संस्कारादीनि न कुर्यात् ॥ २११ ॥

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ॥ पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥**

(१) **मेधातिथिः** । पूर्णविंशतिवर्षेण तरुणेनेत्यर्थः । बालस्या षोडशाद्वर्षाददोषः । पूर्णानिविंशतिवर्षाणि यस्य सएव मुच्यते । अयंन्यायोयौवनोद्भेदोपलक्षणार्थः । अतएवाह गुणदोषौ विजानता कामजे सुखदुःखे गुणदोषावभिप्रेतौ स्त्रीगतौ च स्वाकृतिदुराकृतिलक्षणौ धैर्यचापले वा । सर्वथाऽतन्त्राविंशतिसंख्या ॥ २१२ ॥

(२) **सर्वज्ञनारायणः** । पूर्णविंशतिवर्षेणेति यौवनोपलक्षणमिति ज्ञापयितुमुक्तम् । गुणदोषाविति स्त्रीणांस्प-र्शनाद्रागोत्पत्तिदोषं व्यवधाने तद्ब्रह्मचर्यादच्युतिगुणंजानता । पादयोरिति निषेधात्पादस्पर्शनमात्रंन कार्यम् भूमावेव-त्वभिवादनमिति वक्ष्यति ॥ २१२ ॥

( ३ ) **कुल्लूकः** । युवती गुरुपत्नी पादयोरुपसंगृह्याभिवादनदोषगुणज्ञेन यूना ना भिवाद्या । पूर्णविंशतिवर्षत्वंयौवनप्रदर्शनार्थम् । बालस्य पादयोरभिवादनमनिषिद्धम् । यूनस्तुभूमावभिवादनंवक्ष्यति ॥ २१२ ॥

( ४ ) **राघवानन्दः** । किंच पूर्णविंशतिवर्षेण ब्रह्मचारिणा गुणदोषौ गुणश्च शुश्रूषयादोषश्च स्पर्शनेतौ विजानता गुणबुद्ध्या प्रवर्तमानस्य स्पर्शदर्शनादिना वा गुरुद्रोहेदोषइति भावः ॥ २१२ ॥

( ५ ) **नन्दनः** । पादयोर्नाभिवाद्या ॥ २१२ ॥

( ६ ) **रामचन्द्रः** । गुरुपत्नी युवती पादयोःस्पृष्टा नाभिवाद्या पूर्णविंशतिवर्षेण शिष्येण गुणदोषौ विजानता॥२१२ ॥

**स्वभावएषनारीणांनराणामिह दूषणम् ॥ अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥**

( १ ) **मेधातिथिः** । एषा प्रकृतिः स्त्रीणांयन्नराणांधैर्यव्यावर्तसङ्गान्हिस्त्रियः पुरुषान्व्रताच्चावयेयुः । अतोर्थात्त्वस्माद्धेतोर्न प्रमाद्यन्ति दूरतएवस्त्रियः परिहरन्ति । प्रमादः स्पर्शादिकरणंवस्तुस्वभावोयंयत्तरुणीस्पृष्टा कामकृतंचित्तसंक्षोभंजनयति । तत्र चित्तसंक्षोभोऽपि प्रतिषिद्धः तिष्ठतु तावदपरोग्राम्यधर्मसंरम्भः । प्रमदाःस्त्रियः ॥२१३ ॥

( २ ) **सर्वज्ञनारायणः** । दोषंस्फुटयतिस्वभावइति । स्वभावएषस्त्रीणामनिच्छन्तीनामपि दर्शनेन रागेण दुष्यन्तीति नराणांदूषणंपुरुषेषु दोषापादकत्वंनारीणांस्वभावः । न प्रमाद्यन्ति तदनीक्षणादौ कार्येणाप्रमत्ताभवन्ति ॥ २१३ ॥

( ३ ) **कुल्लूकः** । स्त्रीणामयंस्वभावःयदिह शृंगारचेष्टया व्यामोह्य पुरुषणांदूषणम् । अतोऽर्थादस्माद्धेतोः पण्डिताःस्त्रीषु न प्रमत्ता भवन्ति ॥ २१३ ॥

( ४ ) **राघवानन्दः** । दूषणंशृङ्गारचेष्टयाव्यामोहनम् यतःअतोर्थादपरिहार्यकार्यवशादपि साक्षान्न प्रमाद्यन्ति स्पर्शालापादिना प्रमत्तान भवन्ति ॥ २१३ ॥

( ५ ) **नन्दनः** । अभ्यञ्जनादिप्रतिषेधकारणंश्लोकद्वयेनाह स्वभावइति । यन्नराणांदूषणंएषनारीणांस्वभावः । अतोऽर्थंएतदर्थम् ॥ २१३ ॥

( ६ ) **रामचन्द्रः** । नारीणां एषः स्वभावःइह दूषणं । अतोर्थात् अतः कारणात् प्रमदासु विपश्चितःन प्रमाद्यन्ति नप्रमादं गच्छन्तीत्यर्थः ॥ २१३॥

**अविद्वांसमलंलोके विद्वांसमपि वा पुनः ॥ प्रमदाह्युत्पथंनेतुंकामक्रोधवशानुगम् ॥ २१४ ॥**

( १ ) **मेधातिथिः** । नचैतन्मन्तव्यंनियमितानि येन चिरमिन्द्रियाण्यतिगुरुपातकंगुरुदारेषु दुष्टेन भावेन प्रेक्षणमपीति यएवंवेद तस्य न दोषः पादस्पर्शादाविति । यतएवंविधानपि दोषान्योजानीते यो वा न किंचिज्जानीते तौ स्त्रीविषये समानौ यतोनात्रविद्वत्ता प्रभवति । शक्नुवन्ति स्त्रियः सर्वमुख्यममार्गेलौकिकशास्त्रविरुद्धंविषयंनेतुंप्रापयितुंकामक्रोधवशानुगंसन्तम् । कामक्रोधाभ्यांयः संबध्यतइत्यर्थः । अवस्थाविशेषोपलक्षणार्थंचैतत् । अत्यन्तबालंअत्यन्तवृद्धंच प्राप्तयोगप्रकर्षणंच वर्जयित्वा येन निरन्वयमुत्थिताः संसारपुरुषधर्मास्तद्यतिरेकेण न कश्चित्पुरुषोस्ति य स्त्रीभिर्नाकृष्यते । अयः कान्तेनेवलोहः । न चात्र स्त्रीणांप्रभविष्णुता वस्तुस्वाभाव्यात्तरुणीजनदर्शने पुंसामुन्मथ्यते चित्तंविशेषतोब्रह्मचारिणाम् ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । अलंसमर्थाः । उत्पथनयने तु अविद्वांसंविद्वांसंतु कामक्रोधवशानुगमेव मान्यम् ॥ २१४॥

( ३ ) **कुल्लूकः** । विद्वानहंजितेन्द्रियइति बुद्ध्या न स्त्रीसन्निधिर्विधेयः । यस्मादविद्वांसंविद्वांसमपि वा पुनःपुरुषंदेहधर्मात्कामक्रोधवशानुयायिनंस्त्रियउत्पथंनेतुंसमर्थाः ॥ २१४ ॥

( ५ ) **राघवानन्दः** । अलंसमर्थाउत्पथंनेतुंप्रमदाइत्यन्वयः । तत्र हेतुःकामक्रोधवशानुगमिति क्रोधेन वशीभूत मिव जनाःकामेन वशीभूतंप्रमदाइति वार्थः । तदुक्तंज्ञानवासिष्ठे । रोगार्त्तिरङ्गना तृष्णा गम्भीरमपि मानवम् । उत्तानतांनयन्त्याशुसूर्यांशवइवाम्बुजमिति ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । अविद्वांसंमूर्खं पुनः विद्वांसमपिप्रमदाउत्पथंनेतुंसमर्था भवन्तीत्यर्थः । कीदृशंपुरुषंकामक्रोधवशानुगं परवशमित्यर्थः ॥ २१४ ॥

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनोभवेत् ॥ बलवानिन्द्रियग्रामोविद्वांसमपि कर्षति॥२१५॥**

( १ ) **मेधातिथिः** । अतो विविक्तासनः निर्जनेशून्ये गृहादौ नासीत नापि निः शङ्कमङ्गस्पर्शादिति कुर्यात् । अतिचपलोहीन्द्रियसंघातोविद्वांसमपि शास्त्रनिगृहीतात्मानमपि कर्षति हरति परतन्त्रीकरोति ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । मात्रेत्यादौसहेत्यध्याहार्यम् । विविक्तासनएकान्तआसीनः ॥ २१५ ॥

( ३ ) **कुल्लूकः** । अतआह मात्रेति । मात्रा भगिन्या दुहित्रा निर्जनगृहादौ नासीत । यतोऽतिबलइन्द्रियगणः शास्त्रनियमितात्मानमपि पुरुषं परवशं करोति ॥ २१५ ॥

( ४ ) **राघवानन्दः** । तासांदोषमनुस्मरन्नाहमात्रेति । विविक्तंविगतान्यजनंतत्रैनाभिर्नासीतेति तत्र हेतुर्बलवानिति । अहोबलवानिन्द्रियग्रामोयतोमातृदुहित्रोस्त्रिशद्वत्सरान्तरेपिपुत्रादेर्मैथुनादिसंभावना तत्रान्यासुकाकथेति ॥ २१५ ॥

( ५ ) **नन्दनः** । यतएवंततो याभिः स्त्रीभिरुत्पथंनीतोनिरतिशयदोषयुक्तोभवति तासांसंनिकर्षोवर्जनीयइत्याह मात्रेति । जितेन्द्रियस्यमेमात्रादिभिः विविक्तासनंकिंदूषणंकरिष्यतीतिन मन्तव्यंयेनबलवानिन्द्रियग्रामोविद्वांसमपिकर्षति॥२१५

( ६ ) **रामचन्द्रः** । नविविक्तासनोभवेत् । विविक्तःपूतविजनइत्यर्थः ॥ २१५ ॥

**कामंतु गुरुपत्नीनांयुवतीनांयुवा भुवि ॥ विधिवद्वन्दनंकुर्यादसावहमिति ब्रुवन् ॥ २१६ ॥**

( १ ) **मेधातिथिः** । काममित्यरुचिंसूचयति । उत्तरेण चैतत्संबध्यते विप्रोष्यपादग्रहणमिति । भुवि तु पादवन्दनमिष्यतएव युवतीनांयुवा द्वयोर्यूनोरयंविधिः यदिबालोब्रह्मचारी वृद्धा वा गुरुपत्नी तदा पादोपसंग्रहणमविरुद्धम् । असावहमिति प्रागुक्तस्यविभेधेरनुवादः । विधिवदिति व्यस्तपाणिना ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । भुवि नपादयोः । विधिवत्पाणिभ्यांव्यस्ताभ्यां तथाचोक्तंसव्येनसव्यइति ॥ २१६ ॥

( ३ ) **कुल्लूकः** । कामंतुगुरुपत्नीनांयुवतीनांत्वयमपि युवा यथोक्तविधिनाभिवादयेऽमुकर्माहंभोरितिब्रुवन्पादग्रहणंविना यथेष्टमभिवादनंकुर्यात् ॥ २१६ ॥

( ४ ) **राघवानन्दः** । एवंचेद्गुरुपत्न्यवन्दनंप्राप्तंतत्राहकाममिति । भुवि तदग्रभूमौ विधिवत्बाहुभ्यांसह जानुभ्यांशिरसा वचसाधियेति विनापादग्रहणमित्यर्थः ॥ २१६ ॥

( ५ ) **नन्दनः** । युवतिषु गुरुपत्नीषु पूजार्थंपादग्रहणं नकुर्वीत कथंतर्हि पूजा कर्तव्येत्याह कामंत्विति। भुविवन्दनंकुर्यान्नपादौस्पृष्ट्वा । असावहंदेवदत्तोहम् । काममितिवचनादकरणेपि नदोषइतिसूचितम् ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । कामंअतिशयेन युवतीनाम् गुरुपत्नीनांयुवतीनां युवासन् भुवि स्पृष्ट्वा विधिवद्वन्दनंकुर्यात् । असौ अहमिति ब्रुवन् ॥ २१६ ॥

---

( १ ) भोरि=भवति ( अ )

**विप्रोष्य पादग्रहणमन्वहंचाभिवादनम् ॥ गुरुदारेषु कुर्वीत सतांधर्ममनुस्मरन् ॥ २१७ ॥**

( १ ) **मेधातिथिः** । प्रवासादेत्य पादयोर्ग्रहणंसव्येन सव्यइति । अन्वहमहन्यहनि । अभिवादनंभूमौ । सतांशिष्टानां-एषधर्मआचारइत्यनुस्मरन् ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र विप्रोष्य प्रवासादेत्य पादग्रहणं तत्पूर्वकमभिवादनम् । अन्वहंत्वभिवादनमात्रं वृद्धानामपि न पादग्रहणम् । गुरुदारेष्वाचार्यादिभार्यासु न तु मातरि । सतांवृत्तमिति । रागोत्पत्त्यसंभावनायामप्येषएव आचारइत्यर्थः ॥ २१७ ॥

( ३ ) **कुल्लूकः** । प्रवासादागत्य सव्येन सव्यंदक्षिणेन दक्षिणमित्युक्तविधिना पादग्रहणंप्रत्यहंच भूमावभिवादनंच गुरुपत्नीषु युवाकुर्यात् । शिष्टानामयममाचारइति जानन्तु ॥ २१७ ॥

( ४ ) **राघवानन्दः** । विप्रोष्य प्रवासंकृत्वा । अन्यदाअभिवादनमात्रम् । सतांशिष्टानामयमाचारइतिस्मरन् ॥२१७ ॥

( ५ ) **नन्दनः** । प्रोषितः प्रत्यागतः । अन्वहंभुव्यभिवादनम् । सतांधर्ममनुस्मरन्एषसतामाचारइत्यर्थः ॥ २१७ ॥

( ६ ) **रामचन्द्रः** । विप्रोष्य प्रवासादागत्य गुरुपादेषु पादग्रहणंकुर्यात् किंकुर्वन्सतां धर्मंस्मरन् ॥ २१७ ॥

**यथा खनन्खनित्रेण नरोवार्यधिगच्छति ॥ तथा गुरुगतांविद्यांशुश्रूषुरधिगच्छति ॥ २१८ ॥**

( १ ) **मेधातिथिः** । सर्वस्य शुश्रूषाविधेः फलमिदंगुर्वाराधनद्वारेण स्वाध्यायविध्यर्थता । यथा कश्चिन्मनुष्यः खनित्रेण कुद्दालादिना भूमिखनन्वारिप्राप्नोति नाक्लेशेन एवमयंविद्यांगुरुगतांशुश्रूषुः गुरुसेवापरोधिगच्छति ॥ २१८ ॥

( २ ) **सर्वज्ञनारायणः** । यथावारि प्राप्नोति कुद्दालादिना खनन् अक्लेशेन तथा विद्यांशुश्रूषुः क्रमेणाधिगच्छतीति दृष्टान्तार्थः ॥ २१८ ॥

( ३ ) **कुल्लूकः** । उक्तस्य शुश्रूषाविधेः फलमाह । यथा कश्चिन्मनुष्यः खनित्रेण भूमिखनञ्जलंप्राप्नोत्येवंगुरुस्थितां-विद्यांगुरुसेवापरः शिष्यः प्राप्नोति ॥ २१८ ॥

( ४ ) **राघवानन्दः** । गुरुशुश्रूषैव विद्याप्राप्तौ कारणमाहयथेति । खनन्छिद्रार्थंदारयन् । वारिकूपादिजम् ॥ २१८ ॥

( ५ ) **नन्दनः** । एवंप्रतिपादितांगुरुवृत्तिंफलोपपादनेन निगमयति यथाखनन्निति ॥ २१८ ॥

( ६ ) **रामचन्द्रः** । वारिजलंयथाअधिगच्छति तथा गुरुगतांविद्यां शुश्रूषुरित्यर्थः । अधिगच्छति ॥ २१८ ॥

**मुण्डोवा जटिलोवा स्यादथवा स्याच्छिखाजटः ॥ नैनंग्रामेऽभिनिम्लोचेत्सूर्योनाभ्युदियात् क्वचित् ॥ २१९ ॥**

( १ ) **मेधातिथिः** । मुण्डः सर्वतः केशवपनंकारयेत् । जटिलोवा जटाः परस्परमत्यन्तमितरेतरसंलग्नकेशाः तद्वाञ्जटिलः । शिखैव वा जटा यस्य जटाकारांशिखांधारयेत् परिशिष्टे मुण्डःतथा च कुर्याद्यथा ग्रामे स्थितस्य सूर्योनाभिनिम्लोचेन्नास्तंगच्छेत् । ग्रामग्रहणंनगरस्यापि प्रदर्शनार्थम् । अस्तमयसमयमरण्ये संभावयेत् । एवंग्रामे नाभ्युदियादुदियोपि सूर्यस्य यथारण्यस्थस्य ब्रह्मचारिणोभवति तथा कुर्यात् । एनंप्रकृतंब्रह्मचारिणम् । अन्येतु ग्रामशब्दंग्राम्येषु धर्मेषु स्वापादिषु वर्तमानंननिम्लोचेदित्येवमर्थंवर्णयन्ति तथा च उत्तरत्र शयानमित्याह ततोयंसंध्ययोः स्वप्नप्रतिषेधो नारण्ये तत्कालावस्थानंबालोहि ब्रह्मचारी बिभीयात् गौतमेन तु बहिः संध्यत्वंपरतोगोदानादुक्तंगोदानव्रतंच षोडशवर्षे तदा च प्राप्तःशक्तोत्यरण्ये संध्यामुपासितुम् ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः** । मुण्डःमुण्डितसर्वकेशः । जटिलोजटीकृतसर्वकेशः । शिखाजटः शिखामात्रंजटीकृतमन्यन्मुण्डितमित्यर्थः। एवंब्रह्मचारिणं अभिमुखीकृत्यग्रामे न निम्लोचेदस्तमियात् सन्ध्यार्थमरण्यंगतएवास्मिन्नस्तमियादित्यर्थः। एवंनाभ्युदियादित्यपि ॥ २१९ ॥

( ३ ) **कुल्लूकः** । ब्रह्मचारिणः प्रकारत्रयमाह । मुण्डितमस्तकःशिरःकेशोजटावान्वाशिखैव वा जटा जाता यस्य वापरे शिरःकेशामुण्डिताःतथा वा भवेत् । एवंब्रह्मचारिणंकचिद्ग्रामे निद्राणमुत्तरत्र शयनमिति दर्शनात्सूर्योनाभिनिम्लोचेन्नास्तमियात् ॥ २१९ ॥

( ४ ) **राघवानन्दः** । किंचान्यतमुण्डइति । मुण्डःकेशरहितमस्तकः यत्र बाणाःसंपतन्ति कुमाराद्विशिखाइवेत्युक्तेः । जटिलःजटायुक्तः । शिखाजटःशिखामात्रंजटायस्यसइति । शाखाभेदेन नैनमिति । ग्रामइत्युपलक्षणंनगरादेर्वसत्यनुकूलत्वात् । एनंब्रह्मचारिणंशयानमभिलक्षीकृत्य निम्लोचेदस्तंगच्छेत्तथा नोदियादुदयंनासादयेत्सूर्यः ॥ २१९ ॥

( ५ ) **नन्दनः** । नियमान्तरमाह मुण्डोवेति । ग्रामशब्देनलौकिककर्मलक्ष्यते । तत्रसक्तमेनंतत्रसक्तेऽस्मिन्ब्रह्मचारिणि निम्लोचेदस्तमियात् । कचिदाश्रमान्तरेऽपि ॥ २१९ ॥

( ६ ) **रामचन्द्रः** । युग्मं मुण्डइति । ग्रामे ग्राममध्ये एनंब्रह्मचारिणं अभिलक्ष्यसूर्यःन निम्लोचेत् नास्तंगच्छेदित्यर्थः । कचित् न अभ्युदयात् नोत्तिष्ठेत् ॥ २१९ ॥

**तंचेदभ्युदियात्सूर्यःशयानंकामचारतः ॥ निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥**

( १ ) **मेधातिथिः** । अत्रेदंप्रायश्चित्तंचरेत् । ब्रह्मचारिणंशयानंनिद्रावगतमभ्युदियात्तेनोदयेनाभिध्यामदोषंकुर्यात् । प्रातरतिक्रमे दिनंजपोपवासौ रात्रौ तु भोजनं पश्चिमातिक्रमे तु रात्रौ जपोपवासौ प्रातर्भोजनमिति । दिनशब्दः प्रदर्शनार्थः । गौतमवचनंचाप्युदाहरन्ति तिष्ठेदहरभुञ्जानोभ्यस्तमितश्च रात्रिंजपन्सावित्रीमिति तदयुक्तम् । उभयत्रापि दिवैव प्रायश्चित्तंयुक्तंदिनशब्दस्य प्रदर्शनार्थत्वे प्रमाणाभावात् । नह्यस्य तत्सापेक्षस्य स्वार्थप्रतिपादनं निरपेक्षंचैतत्तरमाह्निकल्पोयुक्तः । तत्र यस्य सर्वारात्रिंजाग्रतोन व्याधिः प्रवर्तते सरात्रौ जपिष्यति अन्यस्तु दिवैव । जपश्च गौतमवचनात्साविञ्या एव । नन्वत्र कथंगौतमः प्रमाणीक्रियते । उच्यते सापेक्षमिदंवाक्यंजपेदिति । जपनीयस्यानिर्देशात्सत्यामपेक्षायां श्रुत्यन्तराद्युक्ताविशेषावगतिः । इहतु कालस्य निर्देशोनास्ति कालान्तरंप्रत्यपेक्षेति न गौतमोपेक्षते अथवा संध्यातिक्रमे प्रायश्चिताभिधानात्सावित्रीजपःसिद्धएव । युक्तंच साविञ्यास्तु परंनास्तीति कामकारतःज्ञात्वैव संध्याकाले यः स्वपित्यज्ञानाच्चिरसुप्तस्य संध्याकालोयंवर्ततइत्यनयबोधोऽविज्ञानम् । एतदुक्तंभवति इच्छया प्रमादकृते चातिक्रमेण तदेव प्रायश्चित्तंयः पुनरभ्युदितानस्तमितसंध्यामतिक्रामति तस्य प्रायश्चित्तमभोजनंनित्यानांकर्मणांसमतिक्रमइति । अथवा यः कामकारेण शास्त्रातिक्रमणंकरोति तस्य तदविज्ञानमेव ॥२२० ॥

( २ ) **सर्वज्ञनारायणः** । शयानमित्यकृतसन्ध्यतामुपलक्षयति । कामकारतोज्ञानेन कामनया वा अविज्ञानादकामतश्चेत्यपि तेन ज्ञानतोऽज्ञानतोवा एतदेव प्रायश्चित्तमित्यर्थः । जपन्नित्यत्रानादेशे तु सावित्रीतिसाविञ्येव जप्या । अभ्युदितोदिनमभिनिर्मुक्तोरात्रिमिति विवेकः । अभ्युदितोहरभुञ्जानो अभ्यस्तमितश्चरात्रिं जपन्सावित्रीमिति स्मृतेः ॥ २२० ॥

( ३ ) **कुल्लूकः** । अत्र प्रायश्चित्तमाह तंचेदिति । तंचेत्कामतोनिद्राणंनिद्रोपवशत्वेन सूर्योऽभ्युदियादस्तमियात्तदा सावित्रींजपन्नुभयत्रापि दिनमुपवसन्रात्रौ भुञ्जीत । अभिनिर्मुक्तस्योत्तरेऽहन्युपवासजपौ । अभिरभागइति कर्मप्रवच-

नीयसंज्ञा। ततःकर्मप्रवचनीययुक्तेद्वितीया । सावित्रीजपंतु गौतमवचनात्। तदाह गौतमः सूर्याभ्युदितोब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमितश्च रात्रिंजपन्सावित्रीम्। ननु गौतमवचनात्सूर्याभ्युदितस्यैवदिनाभोजनजपावुक्तौअभ्यस्तमितस्य तु राज्यभोजनजपौ। नैतत् अपेक्षायांव्याख्यासंदेहे वा मुन्यन्तरविवृतमन्वर्थमन्वयमाह । ननु स्फुटंमन्वर्थंस्मृत्यन्तरदर्शनादन्यथाकुर्मः। अतएव जपापेक्षायांगौतमवचनात्सावित्रींजपोभ्युपेयएव। ननूभयत्र स्फुटमनुक्तंदिनोपवासजपावपाकुर्मः। तस्मादभ्यस्तमितस्य मानवगौतमीयप्रायश्चित्तविकल्पः॥ २२०॥

( ४ ) **राघवानन्दः**। दैवाद्यद्येवंस्यात्तत्राह। तंचेति। कामकारतोअनातुरत्वात् इच्छया शयानं जपन्सावित्रीमितिशेषः। उपवसेद्दिनमिति अभ्युदितेअहरभोजनंरात्रौ भुक्तिः अस्तमिते तु रात्रौ जपःसूर्योदयपर्यंतंसूर्याभ्युदितोब्रह्मचारीतिष्ठेत्तदहरभुञ्जानोऽस्तमितश्च रात्रिंजपन्सावित्रीमिति गौतमवचनात् । उपोषणं सज्योतिःपरं नासायमुपवसेदितिविधिस्मरणात्॥ २२०॥

( ५ ) **नन्दनः**। अवज्ञानाज्ज्ञात्वोपेक्षणात्। एवंवचनादशक्त्यज्ञानादिषुप्रायश्चिताभावः सूचितः॥ २२० ॥

( ६ ) **रामचन्द्रः**। तत्राहतमिति। तंब्रह्मचारिणंशयानं कामकारतः इच्छातःसूर्यश्चेदभ्युदियात् उदयेत तंशयानंसूर्यः निम्लोचेद् स्तंगच्छेत् अविज्ञानात् जपन् गायत्रींजपन् दिनंदिवसं उपवसेत्॥ २२०॥

**सूर्येण ह्यभिनिर्मुक्तः शयानोभ्युदितश्च यः॥ प्रायश्चित्तमकुर्वाणोयुक्तः स्यान्महतैनसा॥ २२१॥**

( १ ) **मेधातिथिः**। पूर्वप्रायश्चित्तविधेरयमर्थवादः । निम्लोचनेनाभिदुष्टः अभिनिम्लुक्तः। एवमभ्युदितः प्रायश्चित्तंपूर्वोक्तंनकरोति तदा महता पापेन संबध्यते न स्वल्पेन। नरकादिदुःखोपभोगनिमित्तमदृष्टपापमुच्यते॥ २२१॥

( २ ) **सर्वज्ञनारायणः**। महतैनसाव्रतवैगुण्यकारिणा॥ २२१ ॥

( ३ ) **कुल्लूकः**। अस्य तु प्रायश्चित्तविधेरर्थवाद माह सूर्येणेति। यस्मात्सूर्येणाभिनिर्मुक्तोऽभ्युदितश्च निद्राणः प्रायश्चित्तमकुर्वन्महता पापेन युक्तोनरकंगच्छति । तस्माद्यथोक्तप्रायश्चित्तंकुर्यात्॥ २२१॥

( ४ ) **राघवानन्दः**। तदकरणे दोषमाह। सूर्येणेति । हि यतोब्रह्मचारी भूत्वा शयानएव सूर्येणाभिनिर्मुक्तस्तंविहाय सूर्योस्तंगतइति तथासूर्येणोदयतअभिनःशयानंउदितःउदयेन व्याप्तः ब्रह्मचारीशयानस्य यस्य सूर्यरश्मिनासंयोगवियोगौ स्तइति भावः। सचेदुक्तप्रायश्चित्तमकुर्वाणएवंतिष्ठेदेनसा पापेन महतायुक्तःस्यादिति पूर्वपापस्यावश्यफलभागिति॥ २२१॥

( ५ ) **नन्दनः**। अवश्यकर्तव्यतामस्यप्रायश्चित्तस्याह सूर्येणेति॥ २२१॥

( ६ ) **रामचन्द्रः** । सूर्येण सह शयानःअभिनिर्मुक्तः सूर्यः अस्तंगतःशयानःसन् अभ्युदितःउदितःभवेत्तदाप्रायश्चित्तंअकुर्वाणः महतैनसा पापेन युक्तःस्यात्॥ २२१॥

**आचम्य प्रयतोनित्यमुभे संध्ये समाहितः॥ शुचौ देशे जपञ्जप्यमुपासीत यथाविधि॥ २२२॥**

( १ ) **मेधातिथिः** । एवंमहान्दोषोऽभ्युदयनिम्लोचनयोस्तस्मादाचम्य प्रयतस्तत्परः समाहितः परिह्तचित्तस्तत्कर्माविज्ञेयः शुचौ देशे जपञ्जप्यंप्रणवव्याहृतिसाविञ्याख्यमुपासीत। उभे संध्येसंध्ययोरेवात्रोपास्यत्वमुपासनंच तत्र भावविशेषः। अथवोभे संध्ये प्रत्युपासीत भगवन्तंसवितारंमन्त्रोहितदेवत्योऽतस्तमेवोपासीत। संहृतसकलविकल्पस्तद्गतैकमनाभवेत्। प्रागुक्तस्यविधेः शेषोऽनुवादः उपासनंकेवलंविधेयम्। अन्ये तु शुचौ देशइत्येतद्विध्यर्थोयंश्लोकइत्याहुस्तेषांपौनरुक्त्यम्। सर्वस्यैव कर्तव्यस्य शुचिना कर्मकर्तव्यमिति विहितमशुचिदेशसंबन्धेच का शुचिता॥ २२२॥

( २ ) **सर्वज्ञनारायणः** । प्रयतः शुचिः सन्ध्येउपासीत सेवेत । प्रयतत्वंशुचिदेशवित्थ्यर्थं विहितसन्ध्योपासनानुवादः ॥ २२२ ॥

( ३ ) **कुल्लूकः** । यस्मादुक्तप्रकारेण संध्यातिक्रमे महत्पापमतः आचम्येति । आचम्य पवित्रोनित्यमनन्यमनाः शुचिदेशे सावित्रींजपन्नुभे सन्ध्ये विधिवदुपासीत ॥ २२२ ॥

( ४ ) **राघवानन्दः** । यतःशयानस्य महत्पापवत्वे संध्याकरणमेव हेतुरतआह आचम्येति । जप्यंगायत्र्याख्यं-विधिवदुपासीत । तद्देवतामित्यर्थः ॥ २२२ ॥

( ५ ) **नन्दनः** । अथोक्तमपिसंध्याकृत्यमादरार्थप्रसङ्गादाह आचम्येति । नित्यमाश्रमान्तरेऽपि । यथाविधिप्रातस्तिष्ठेत्सायमासीतेति ॥ २२२ ॥

**यदि स्त्री यद्यवरजः श्रेयःकिंचित्समाचरेत् ॥ तत्सर्वमाचरेद्युक्तोयत्र वास्य रमेन्मनः ॥ २२३ ॥**

( १ ) **मेधातिथिः** । यदि स्त्रीआचार्यानी अवरजः कनीयानाचार्यादुपलभ्य श्रेयोकर्मादिना त्रिवर्गसमाचरेत्तत्सर्वमाचरेत् । संभवति हि तयोरस्तदाचार्यसंपर्कात्परिज्ञानम् । शूद्रोवाऽऽचारजनक अवरजः सयद्युपदिशेदेवं पायुलिङ्गौमृद्वारिणा प्रक्षाल्येते निपुणो हस्तौ प्रक्षालय विस्मृतस्ते मृद्वारिक्रमः स्त्वदीयआचार्योसकृन्मया पायुप्रक्षालने जलंददता दृष्टपूर्वः मृद्भिः शौचंकरोति ततोमृद्भिरित्यैवमादिसमाचरेत्समाचाराद्युत्पाद्योपदिशेत् । तथा चाचार्यानी आचमनंशिक्षयेत्तत्सर्वमाचरेद्युक्तः श्रद्धया न स्त्रीशूद्राचरितमित्यवजानीतः । समाचरेदिति च समाचारपूर्वकंउपदेशएवात्राभिप्रेतः । वक्ष्यति च धर्मशौचंसमयानि सर्वतइति । आचार्येणैव कदाचिदादिष्टंभवति ब्राह्मणि आचमय पुत्रस्थानीयमेतंतथा विधिपूर्वंच ब्रूयादस्य मूत्रपुरीषशुध्यर्थंमृद्वारिणी देये इति तत्र तदीय वचनमनुष्ठेयमेवंमृदोगृहाणएवमद्भिः प्रक्षालयेदिति । अथवा गुरुगृहाल्लोहोपलजलशुद्ध्यादिः स्त्रीशूद्राभ्यां समाचार्यमाणः प्रमाणीकर्तव्यः एतावदाचारस्य स्त्रीशूद्रसंबन्धिनः प्रामाण्यार्थोयंश्लोकोयुज्यते । ननु सर्वस्याचारस्यावेदवित्संबन्धिनः प्रामाण्यंघटते अयुक्तमेतन्नहि स्वल्पोप्याचार अवेदविदांप्रमाणीभवति । अथास्ति मूलंवेदवित्संबन्धः एवंतर्हि प्रमाणंशूद्रग्रहणे न । नचैवंविधे विषये स्त्रीशूद्राचारस्य प्रामाण्यमभिप्रेतम् । तथा हि सतिप्रामाण्याभिधानप्रकरणएवावक्ष्यत् । तस्माच्छ्रेयः पदार्थनिरूपणार्थोयमुपोद्घातइति परमार्थः । यद्वाचार्यवचसांप्रामाण्यानुवादोयम । स्त्रीशूद्रावपि ब्रूयातांतदप्यनुष्ठातुंयुक्तं किंपुनराचार्योपदिष्टम् । यत्र चास्यरमेत्परितुष्येन्मन एतदप्यात्मनस्तुष्टिरित्यत्र व्याख्यातम् । सर्वथा नास्य श्लोकस्यातीव प्रयोजनमस्ति ॥ २२३ ॥

( २ ) **सर्वज्ञनारायणः** । अवरजःशूद्रः । श्रेयः साधनं श्रुतिस्मृत्यविरुद्धंयदाचरेत् तत्स्वयंप्रयत्नवानाचरेत् । तथा धर्मसाधनत्वेन पौरुषेयवाक्यादवगते यात्राविरुद्धस्य कर्तुमनोरतिः ॥ २२३ ॥

( ३ ) **कुल्लूकः** । यदि स्त्रीशूद्रोवा किंचिच्छ्रेयोऽनुतिष्ठति तत्सर्वयुक्तोऽनुतिष्ठेत् । यत्र च शास्त्रानिषिद्धे मनोऽस्य तुष्यति तदपि कुर्यात् ॥ २२३ ॥

( ४ ) **राघवानन्दः** । शास्त्राविरुद्धस्त्रीबालाद्याचरितंदृष्टादृष्टश्रेयःसाधनमप्याचरणीयमित्याह यदीति । अवरजःकनीयानिति मेधातिथिः । तत्र स्त्रीसमभिव्याहारात् शूद्रःशास्त्राविरुद्धे कर्मणि रमेत्तोषमागच्छेत् ॥ २२३ ॥

( ५ ) **नन्दनः** । शास्त्राविरुद्धमनुपदिष्टम पिश्रेयोलोकप्रसिद्धमाचरितव्यमित्याह यदिस्त्रीति । अवरजः शूद्रः । यत्र वास्य रमेन्मनः सर्वमाचरितुमशक्तोयत्रास्यमनसोरतिरस्तितदाचरेत् ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । यदि स्त्री श्रेयःधर्मं किंचित्समाचरेत् तद्धर्मसर्वेयुक्तःसन् आचरेत् त्वयंयदि । अवरजः लघुः किंचित् श्रेयः धर्मसमाचरेत् तत् आचरेत् यत्रयस्मिन्धर्मे मनः रमेततं धर्मं समाचरेद्वा ॥ २२३ ॥

**धर्मार्थावुच्यते श्रेयः कामार्थौ धर्मएव च ॥ अर्थएवेह वा श्रेयस्त्रिवर्गइति तु स्थितिः ॥ २२४ ॥**

( १ ) **मेधातिथिः** । यत्प्रशस्यंयदाचर्यमाणंदृष्टादृष्टे नोपहन्ति यच्छ्रेयोलोकउच्यते किंपुनस्तदिति सुहृद्भूत्वान्वाचष्टे । नायंवेदमूलोर्थो नाचार्यादिशब्दवत्पदार्थ कथनम् । किंतर्हि श्रेयोर्थी सर्वःपुरुषः प्रवर्तते । तत्रेदमुच्यते । इदंश्रेयः-एतदर्थयत्नः कर्तव्यः । तत्रमतान्तराणि तावदुपन्यस्यति । केषांचिन्मतं धर्मार्थौश्रेयः । धर्मःशास्त्रविहितौ विधिप्रतिषेधौ । अर्थोगोभूमिहिरण्यादिः । एतदेवश्रेयः एतदधीनत्वात्पुरुषप्रीतेः । अपरंमतं कामार्थाविति । कामस्तावन्मुख्यएव पुरुषार्थः प्रीतिरूपत्वात् । पुरुषप्रीतिर्हि श्रेयः अर्थोपि तत्साधनत्वात् । एवंहि चार्वाकाआहुः कामएवैकः पुरुषार्थस्तस्य साधनमर्थः धर्मोपि यद्यस्ति धर्मएव सर्वेभ्यः श्रेयान्सर्वस्य तन्मूलत्वाच्च । उक्तंच धर्मादर्थश्चकामश्चेति । अर्थतएव वणिजः प्रयोगजीविनः । सिद्धान्तस्तु त्रिवर्गइति तुस्थितिः । अतोधर्माविरोधिनावर्थकामावपि सेवितव्यौ न तद्विरोधिनौ । तथाचगौतमः । न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् यथा शक्तिधर्मार्थकामैरिति । त्र्यात्मकोवर्गस्त्रिवर्गः त्रिषु समुदितेष्वयंरूढः ॥ २२४ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र प्रसंगेन पुरुषार्थंनिरूपयति धर्मार्थाविति । धर्मार्थयोरेव प्रयत्नसंभवात् । धर्मस्याप्यर्थद्वारा कामहेतुत्वेनैवोपादेयत्वं । तेन कामस्ततः साक्षात् न हेतुरर्थश्च हेतुरित्यन्ये धर्मस्य सर्वमूलत्वात् धर्मएवेत्यन्ये । इह लोकेर्थएव कामहेतुतया श्रेयानित्यन्ये स्वमतमाह । त्रिवर्गइति । अन्योन्यवादिकथितयुक्तिभिस्त्रयाणांपुरुषार्थां नांवर्गः समूहः श्रेयः मोक्षार्थिनोविरलप्रचारत्वेनात्रमोक्षोनगणितः ॥ २२४ ॥

( ३ ) **कुल्लूकः** । श्रेयएवहि धर्मार्थौ* तद्दर्शयति धर्मार्थाविति । धर्मार्थौ श्रेयोऽभिधीयते कामहेतुत्वादिति केचिदाचार्यामन्यन्ते अन्ये त्वर्थकामौ सुखहेतुत्वाच्छ्रेयोऽभिधीयते । धर्मएवेत्यपरे अर्थकामयोरप्युपायत्वात् । अर्थएवेहलोके श्रेयइत्यन्ये धर्मकामयोरपि साधनत्वात् । संप्रतिस्वमतमाह । धर्मार्थकामात्मकः परस्पराविरुद्धस्त्रिवर्गएव पुरुषार्थतया श्रेयइति विनिश्चयः । एवंच बुभुक्षून्प्रत्युपदेशोन मुमुक्षून्मुमुक्षूणांतु मोक्षएव श्रेयइति षष्ठे वक्ष्यते ॥ २२४ ॥

( ४ ) **राघवानन्दः** । तत्र किंश्रेयइत्यपेक्षायांमतभेदेन पूरयति धर्मेति । स्थितिःशास्त्रमर्यादा मोक्षरूपश्रेयसोवक्ष्यमाणत्वात् । श्रेयःसोपाधिकसुखं तदुपायौधर्मार्थाविति केचित् । कामार्थावित्यपरे कामःशब्दादिविषयोः अर्थोधनमिति तन्द्वयंश्रेयइति केचित् धर्मःपारत्रिकसुखोपायः ऐहिकसुखोपायोऽर्थःश्रेयःस्वमतंतु श्रेयोधर्मार्थकामात्मकस्त्रिवर्गइति ॥ २२४॥

( ५ ) **नन्दनः** । पुनरत्र श्रेयः शब्देनविवक्षितोऽर्थइत्यत्राह धर्मार्थाविति । कैश्चिद्धर्मार्थौश्रेयउच्येते कैश्चित्कामार्थौ कैश्चिधर्मएव कैश्चिदर्थएव । परस्पराविरुद्धस्त्रिवर्गः । स्थितिः सिद्धान्तः । विरोधेतुल्यबलाबलंवक्ष्यति । कामएवश्रेयो-धर्मकामौवाश्रेयइतिसंभवतोरपि पक्षयोर्हेयत्वमनुपन्यासादेवसूचितम् ॥ २२४ ॥

( ६ ) **रामचन्द्रः** । धर्मार्थौ श्रेयःउच्यते । कस्यचिन्मते यदा कामार्थौ धर्मएव वा कस्य चिन्मते अर्थ इव इह भवेत् श्रेयः इति त्रिवर्गस्थितिः ॥ २२४ ॥

---

* हिधर्मार्थौ=किम् ( अ )

आचार्यश्च पिताचैव माता भ्राता च पूर्वजः ॥ नार्त्तेनाप्यवमन्तव्याब्राह्मणेन विशेषतः ॥२२५॥

( १ ) **मेधातिथिः** । अन्योपि न कश्चिदवमन्तव्यः एते पुनर्विशेषतः प्रायश्चिताधिक्यमत्रेत्यर्थः । आर्त्तेनतैः पीडितेनाप्यवमानमवज्ञा प्राभायाः पूजायाअकरणंन्यकारश्चानादराख्यः । ब्राह्मणग्रहणंपूरणार्थम् ॥ २२५ ॥

( २ ) **सर्वज्ञनारायणः** आर्तेन तैःपीडितेन ॥ २२५ ॥

( ३ ) **कुल्लूकः** । आचार्योजनकोजननी च भ्राता च सगर्भोज्येष्ठः पीडितेनाप्यमी नावमाननीयाःविशेषतोब्राह्मणेन यस्मात् ॥ २२५ ॥

( ४ ) **राघवानन्दः** । आचार्यादीनामनवज्ञाशुश्रूषयोरावश्यकत्वंविदधत्तानब्रह्मदृष्टिरुत्कर्षादितिन्यायेन देवतालोकाश्रिदष्मामहीकर्तुमनुवदति । आचार्यश्चेत्यष्टभिः । आचार्यादिषु ब्रह्मदृष्टिःकार्या तेषामुत्कर्षावास्यैइति न्यायार्थः ॥२२५॥

( ५ ) **नन्दनः** । अत्रहेतुमाह आचार्यइति । ब्रह्मणोवेदस्य मूर्तिराधाराधेययोरपिनाभावसामान्यात् ॥ २२५ ॥

( ६ ) **रामचन्द्रः** । एते आचार्यादयःआर्तेनापि पुंसा नावमन्तव्याः न तिरस्कारणीयाः ब्राह्मणेन विशेषतः नावमन्तव्याः ॥ २२५ ॥

आचार्योब्रह्मणोमूर्तिःपितामूर्तिःप्रजापतेः॥ माता पृथिव्यामूर्तिस्तुभ्रातास्वोमूर्तिरात्मनः ॥ २२६ ॥

( १ ) **मेधातिथिः** । पूर्वस्यायमर्थवादः । यत्परब्रह्मवेदान्तोपनिषत्प्रसिद्धंतस्याचार्योमूर्तिः शरीरंमूर्तिरिव मूर्तिः प्रजापतेर्हिरण्यगर्भस्य पिता येयंपृथिवीसैव माता भारसहत्वसामान्यात् । भ्राता च स्वः सोदर्यः । आत्मनः क्षेत्रज्ञस्येति प्रशंसा । एते सर्वदेवतारूपाः महत्त्वयुक्ताअवमताघ्नन्ति प्रसादिताअभिप्रेतैः कामैर्योजयन्ति । एवंतत्समाआचार्यादयइति स्तुतिः ॥ २२६ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मणः हिरण्यगर्भस्य मूर्तिर्देहान्तरम् । वेदोपदेशकत्वसाम्यात् । प्रजापतेर्मनोःसृष्टिकर्तृत्वसाम्यात् । पृथिव्यामूर्तिः आधारत्वसाम्यात् । भ्राता स्वःसोदरः आत्मनोमूर्तिरेकसृष्टत्वात् ॥ २२६ ॥

( ३ ) **कुल्लूकः** । आचार्योवेदान्तोदितस्य ब्रह्मणः परमात्मनोमूर्तिः शरीरं पिता हिरण्यगर्भस्य माता च धारणात्पृथिवी मूर्ति भ्राता च स्वः सगर्भः क्षेत्रज्ञस्य तस्माद्देवतारूपाएतानावमन्तव्याः ॥ २२६ ॥

( ४ ) **राघवानन्दः** । तत्र कःकस्य मूर्तिरित्यपेक्षांपूरयति । आचार्यइति । ब्रह्मणःपरमात्मनोमूर्तिर्मूर्च्छितावयवतयाशरीरंप्रजापतेर्हिरण्यगर्भस्य । अथवा ब्रह्मणोहिरण्यगर्भस्य प्रजापतेर्विराजः । मातुरिवपृथिव्याधारकत्वादात्मनःक्षेत्रज्ञस्य स्वासमार्गेभषु ॥ २२६ ॥

( ५ ) **नन्दनः** । नियमान्तरमाह आचार्यश्चेति ॥ २२६ ॥

( ६ ) **रामचन्द्रः** । आचार्यःब्राह्मणःपरमात्मनःमूर्तिर्वावेदस्य मूर्तिर्वा ज्ञेयःप्रजापतेःहिरण्यगर्भस्य परमेष्ठिनःमूर्तिः भ्राता स्वमूर्तिः आत्मनःमूर्तिःज्ञेया ॥ २२६ ॥

यंमातापितरौ क्लेशंसहेते संभवे नृणाम् ॥ न तस्य निष्कृतिःशक्या कर्तुंवर्षशतैरपि ॥ २२७ ॥

( १ ) **मेधातिथिः** । भूतार्थानुवादेनेयमपराप्रशंसा । क्लेशंदुःखंमाता च पिता च नृणामपत्यानांसंभवे गर्भात्प्रभृति यावद्दशमाद्वर्षात् । मातुः क्लेशः गर्भधारणंप्रसवः प्राणहरःस्त्रीणां जातस्य च संवरणयोगःक्लेशः ससर्वस्य स्वयंसंवेद्यः

पितुरप्युपनयनात्प्रभृत्यावेदार्थव्याख्यानात् । संभवशब्देनात्र गर्भाधानमुच्यते तद्दिनक्लेशावहंकिंतर्हि तदुत्तरकालभाविन्यएताः क्रियास्ताहि क्लेशसाध्याः । न तस्य क्लेशस्य निष्कृतिरानृण्यंप्रत्युपकारसमत्वंशक्यंकर्तुंवर्षशतैर्जन्मभिर्बहुभिः किंपुनरेकेन जन्मना । असंख्यधनदानेन महत्या वापदउद्धरणेन मातापित्रोर्निष्कृतिरिति ॥ २२७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्युपकारार्थंबुध्यापि मातापित्रोरतिशयेन. हितंकार्यमित्याह यमिति । संभवे जन्मनिसति । तत्पोषणादिना निष्कृतिः कृतप्रकृतिः ॥ २२७ ॥

( ३ ) **कुल्लूकः** । नृणामपत्यानांसंभवे गर्भाधाने सत्यनन्तरंयंक्लेशंमातापितरौ सहेते तस्य वर्षशतैरप्यनेकैरपि जन्मभिरानृण्यंकर्तुमशक्यम् । मातुस्तावत्कुक्षौ धारणदुःखंप्रसववेदनातिशयोजातस्य रक्षणवर्धनकष्टंच पितुरधिकान्येवरक्षासंवर्धनदुःखमुपनयनात्प्रभृतिवेदतदङ्गध्यापनादि क्लेशातिशयइति सर्वसिद्धंतस्मात् ॥ २२७ ॥

( ४ ) **राघवानन्दः** । मातापित्रोःक्लेशंस्मारयन्तयोःशुश्रूषादरमाह । यमिति पितुरपिगर्भाधानसंस्कृतिपोषणाद्यैः क्लेशोस्तीति वभावनीयम् । सम्यक्लोक्यतापर्यंत पुत्रमनुशिष्टंलोक्यमिति श्रुतेःनिष्कृतिरानृण्यं ॥ २२७ ॥

( ५ ) **नन्दनः** । मातापित्रोर्विशेषमाह यंमातेति । संभवेवृद्धौ । नृणांपुत्राणाम् । निष्कृतिः प्रत्युपकारः ॥ २२७ ॥

( ६ ) **रामचन्द्रः** । सम्भवे उत्पत्तौ ॥ २२७ ॥

**तयोर्नित्यंप्रियंकुर्यादाचार्यस्य च सर्वदा ॥ तेष्वेव त्रिषु तुष्टेषु तपःसर्वंसमाप्यते ॥ २२८ ॥**

( १ ) **मेधातिथिः** । तस्मात्तयोर्मातापित्रोराचार्यस्य च सर्वदा यावज्जीवंयत्प्रियंतेषांतत्कुर्यान्नसकृद्द्विस्त्रिर्वा कृत्वा कृती भवेत् । तेष्वेवाचार्यादिषुत्रिषु पुरुषेषु भक्त्याराधितेषु तपः सर्वंबहून्वर्षगणांश्चान्द्रायणादितपस्तप्त्वा यत्फलंप्राप्यते तत्तत्परितोषादेव लभ्यतइति ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्तुकर्तव्यमित्याह तयोरिति । आचार्यस्य चाध्यापनोपकारनिष्कृत्यर्थम् । चकाराद्भ्रातुरपि ज्येष्ठस्यात्मतुल्यत्वात् । तेषुहि त्रिष्विति । त्रयाणामवश्याराध्यत्वात्तपः सम्यक्प्राप्यते तच्छुश्रूषायाएव सर्वातिशायिरूपत्वात् ॥ २२८ ॥

( ३ ) **कुल्लूकः** । तयोर्मातापित्रोः प्रत्यहमाचार्यस्य च सर्वदाप्रीतिमुत्पादयेत् । यस्मात्तेष्वेव त्रिषु प्रीतेषु सर्वंतपश्चान्द्रायणादिकं फलद्वारेण सम्यक्प्राप्यते । मात्रादित्रयतुष्ट्यैव सर्वस्य तपसःफलंप्राप्यतइत्यादि ॥ २२८ ॥

( ४ ) **राघवानन्दः** । आचार्यस्यानन्यशरणत्वे तयोरिव तद्वरणीयतामाह आचार्यस्येति । त्रिषु मातृपित्राचार्येषु । तपःसर्वमिति तपःकृच्छ्रचान्द्रायणादि क्लेशाय योवा शुश्रूषुरिति शेषः तस्य सर्वंतपःसाध्यत्वात् ॥ २२८ ॥

( ५ ) **नन्दनः** । यतएवंतस्मात्तयोर्नित्यंप्रियंकुर्यादिति । नित्यंयावज्जीवम् । सर्वदाऽऽपद्यपि । हिहेतौ । सर्वंसर्वाश्रमसाध्यम् ॥ २२८ ॥

( ६ ) **रामचन्द्रः** । तयोः पित्रोः प्रियं नित्यं कुर्यात् । चकारात् ज्येष्ठमातुःच पुनःआचार्यस्य प्रियंसर्वदा । तेष्वेव त्रिषु मातृपित्राचार्येषु त्रिषु तुष्टेषु सत्सु सर्वंपूर्णं । तपःसमाप्यते ॥ २२८ ॥

**तेषांत्रयाणांशुश्रूषा परमंतपउच्यते ॥ न तैरभ्यननुज्ञातोधर्ममन्यंसमाचरेत् ॥ २२९ ॥**

( १ ) **मेधातिथिः** । कथंपुनस्तपः फलमतपसा मात्रादिशुश्रूषया एतच्च सर्वोत्तमंतपोयत्तेषांपादसेवनंतैरननुज्ञातो-

---

( २२९ ) नतैरभ्यननुज्ञातो=नैतंरनभ्यनुज्ञातो ( न, ब, भ, य, र, ल )।

माणवकःधर्ममन्यंतत्सेवाविरोधिनंतीर्थस्नानादिरूपंव्रतोपवासादिव शरीरशोषणया तेषांचित्तखेदकरम् । ज्योतिष्टोमानुष्ठानेप्यनुज्ञा ग्रहीतव्या । यत्तेमनःप्रतिषेधकृतो ( ? ) महारम्भेषु चकर्मसु बहुधनव्ययायाससाध्येषु व्यापृच्छय माताच मतंमत्या भवेयुः ( ? ) नित्यकर्माऽनुष्ठानेत्वाज्ञानोकारिणी ॥ २२९ ॥

( २ ) **सर्वज्ञनारायणः** । यतस्तच्छुश्रूषया परमंतपस्तेषांशुश्रूषाया असंभवएव तैरनुज्ञातोन्यंधर्मंकुर्यात् ॥ २२९ ॥

( ३ ) **कुल्लूकः** । तेषांमातापित्राचार्याणांपरिचर्या सर्वतपोमयंश्रेष्ठमितएवसर्वतपःफलप्राप्तेर्यद्यन्यमपि धर्मंकथंचित्करोति तदप्येतत्त्रयानुमतिव्यतिरेकेण न कुर्यात् ॥ २२९ ॥

( ४ ) **राघवानन्दः** । अननुज्ञातःप्रतिषिद्धः अप्रतिषिद्धंकृत्वा निवेदयेदिति वक्ष्यति ॥ २२९ ॥

( ६ ) **रामचन्द्रः** । तेषांत्रयाणां आचार्यपितृमातॄणांतैस्त्रिभिःअनभ्यनुज्ञातःअन्यंधर्मं न समाचरेत् ॥ २२९ ॥

## तएव हि त्रयोलोकास्तएव त्रयआश्रमाः ॥ तएव हि त्रयोवेदास्तएवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

( १ ) **मेधातिथिः** । कार्यकारणयोरभेदादेवमुच्यते त्रयाणांलोकानांप्राप्तिहेतुत्वात्तएव त्रयोलोकाउच्यन्ते । तएव च त्रयः प्रथमाद्ब्रह्मचर्यादन्ये त्रयआश्रमाः गार्हस्थ्यादिभिस्त्रिभिराश्रमैर्यत्फलंप्राप्यते तत्तैस्त्रिभिस्तुष्टैःतएव त्रयोवेदावेदत्रयजपतुल्यफलत्वात् । तएव त्रयोऽग्नय अग्निसाध्यकर्मानुष्ठानफलावाप्तेस्तच्छुश्रूषातः । एषापि प्रशंसैव ॥ २३० ॥

( २ ) **सर्वज्ञनारायणः** । त्रयोलोकाः पृथिव्यंतरिक्षब्रह्मलोकाः आश्रमाः ब्रह्मचर्यगार्हस्थ्यवानप्रस्थाख्याः । तत्पालनतुल्यफलत्वात् तच्छुश्रूषायाः एवंवेदत्वाग्नित्वोपचारस्तदध्ययन तदाधानलभ्यकर्मफलस्यैतच्छुश्रूषयासिद्धेः ॥ २३० ॥

( ३ ) **कुल्लूकः** ।। यस्मात्तएवमातापित्राचार्यास्त्रयोलोकालोकत्रयप्राप्तिहेतुत्वात्कारणेकार्योपचारः । तएव ब्रह्मचर्यादिभावत्रयरूपाआश्रमागार्हस्थ्याद्याश्रमत्रयप्रदायकत्वात् । तएव त्रयोवेदावेदत्रयजपफलोपायत्वात् । तएव हित्रयोऽग्नयोऽभिहितास्त्रेतासंपाद्ययज्ञादिफलदातृत्वात् ॥ २३० ॥

( ४ ) **राघवानन्दः** । किंच तएवेति । लोकास्तत्र लोकावाप्तिहेतुत्वात् ॥ २३० ॥

( ५ ) **नन्दनः** । तएवत्रयोलोकाअयंलोकोमाताजन्मभूमित्वसामान्यात् । अन्तरिक्षलोकः पिता सेककर्तृत्वसामान्यात् । स्वर्गलोकआचार्यस्तत्प्राप्त्युपायोपदेशकत्वात् । तएव त्रयआश्रमाः । ब्रह्मचर्याश्रमोमातातत्रहिद्वितीयंजन्म । गार्हस्थ्याश्रमः पिता भोगप्रदत्वसामान्यात् । सन्यासाश्रमआचार्योब्रह्मलोकप्रापकत्वसामान्यात् । वानप्रस्थाश्रमस्यतुसदारत्वपक्षेपूर्वाश्रमसाधर्म्याददारत्वपक्षउत्तराश्रमसाधर्म्याच्चोभयोरन्यतरत्रान्तर्भावः । तएवहित्रयोवेदाः । ऋग्वेदोमाताऋचोहि स्त्रियः ताभ्योहिशरीराण्यजायन्तेऋग्भ्योजातांसर्वशोमूर्त्तिमाहुरितिश्रुतेः । यजुर्वेदः पिता विधायकत्वसामान्यात् । सामवेदआचार्योब्रह्मयोनित्वसामान्यात् । तथाहि श्रूयतेसामवेदोब्राह्मणानांप्रसूतिरिति ॥ २३० ॥

( ६ ) **रामचन्द्रः** । तएव हिआचार्यादयःत्रयोलोकाःत्रिलोकस्वरूपाःपूज्याइत्यर्थः । एवं अग्रेप्यूह्यम् ॥ २३० ॥

## पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणःस्मृतः ॥ गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥

( १ ) **मेधातिथिः** । केनचित्सामान्येनायंपित्रादीनांगार्हपत्यादिव्यपदेशः । साग्नित्रेताआधानाग्नित्रेतायागरीयसो महाफला । त्राणंत्राणार्थमिताप्राप्तात्रेताइति शब्दव्युत्पत्तिः ॥ २३१ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र त्रयोग्नयइत्येतत्प्रपञ्चयति पितेति । गार्हपत्यः प्राथमिकत्वात् दक्षिणाग्निः पित्राचार्यापेक्षयाल्पोपयोगात् आहवनीयो बहूपयोगत्वात् सैषाग्नित्रेता अन्यस्यास्त्रेतायागरीयसीमान्यतमा ॥ २३१ ॥

( ३ ) **कुल्लूकः** । वैशब्दोऽवधारणे । पितैव गार्हपत्योऽग्निः मातादक्षिणाग्निः आचार्यआहवनीयः सेयमग्नित्रेता श्रेष्ठतरास्तुत्यर्थत्वाच्चास्य न वस्तुविरोधोऽत्रभावनीयः ॥ २३१ ॥

( ४ ) **राघवानन्दः** । अग्नयइत्युक्तंतद्व्यनक्ति पितेति । स्तुतिःनिरग्नि कस्या होत्रफलावाप्त्यर्थंवा । सेयमग्नित्रेतागार्हपत्यादित्रितयंगरीयः एवंपिताऋग्वेदो माता यजुर्वेदः आचार्यःसामवेदः ऋग्वेदोगार्हपत्यः पृथिवी ब्रह्मवेत्यादिश्रुतौऋग्वेदगार्हपन्ययोःसाहचर्यात् । ऋग्वेदगार्हपत्याग्न्योर्दृष्टिःपितरिविधीयते । एवंमातरि यजुर्वेददक्षिणाग्न्योः । आचार्ये सामवेदाहवनीययोः ॥ २३१ ॥

( ५ ) **नन्दनः** । तएवोक्तास्त्रयोऽग्नयइतियदुक्तंतत्रायंविभागक्रमइत्यत्राह पितावाइति । गार्हपत्योऽग्निः पितास्मिंल्लोके भोगप्रदत्वसामान्यात् तथाहिब्राह्मणं स्वदितंतोकायतनयायपितुंपचेति । दक्षिणोऽग्निर्माताअन्नमेवास्मै श्रद्दधतीतिश्रुतेः । आहवनीयआचार्येऽमुष्मिंल्लोकेभोगप्रदत्वसामान्यात् । तथाहिश्रुतिः अमुष्मिन्नाहवनीयइति ॥ २३१ ॥

( ६ ) **रामचन्द्रः** । पिता गार्हपत्याग्निरूपः । माता दक्षिणाग्निरूपा । गुरुः आहवनीयाग्निरूपः । सोऽग्निः अग्नित्रेता त्रयाणांसमूहःत्रेता । गरीयसी पूज्या ॥ २३१ ॥

**त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकान्विजयेद्गृही ॥ दीप्यमानःस्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥**

( १ ) **मेधातिथिः** । एतेष्वप्रमाद्यन्नाराधनेऽस्खलन् । तथा च तदाराधनात्त्रींल्लोकाञ्जयेत्स्वीकुर्यादाधिपत्यमाप्नुयात् गृही । गृहस्थावस्थस्य हि पुत्रस्यपित्रादीनांतत्कृतमाराधनमुपयुज्यते । तदा हि तौ वृद्धौ भवतः । दीप्यमानःशोभमानः प्रकाशमानोवा स्वेन वपुषा स्वेनैव तेजसा देववदादित्यवद्दिवि लोके मोदते ॥ २३२ ॥

( २ ) **सर्वज्ञनारायणः** । अप्रमाद्यन्नप्रमत्तः शुश्रूषमाणः । गृही गृहस्थः । अपीत्यध्याहार्यम् ॥ २३२ ॥

( ३ ) **कुल्लूकः** । त्रिष्विति । एतेषु त्रिषु प्रमादमकुर्वन्ब्रह्मचारीतावज्जयत्येव । गृहस्थोऽपि त्रींल्लोकान्विजयते । संज्ञापूर्वकस्यात्मनेपदविधेरनित्यत्वान्न विपराभ्यांजेरित्यात्मनेपदम् । त्रींल्लोकान्विजयेदिति त्रिष्वाधिपत्यंप्राप्नोति । तथा स्ववपुषा प्रकाशमानःसूर्यादिदेववद्दिवि हृष्टोभवति ॥ २३२ ॥

( ४ ) **राघवानन्दः** । अप्रमाद्यन्निति च्छेदः । दीप्यमानःपरान्द्योतयन्निति स्वर्गे ॥ २३२ ॥

( ५ ) **नन्दनः** । नकेवलंब्रह्मचारिणामयंधर्मः किंतूत्तरषोमपीतिप्रदर्शितं गृहीति ॥ २३२ ॥

( ६ ) **रामचन्द्रः** । त्रिषुएतेषु अप्रमाद्यन् सावधानतया तिष्ठन् त्रीन् लोकान् गृही सञ्जयेत् ॥ २३२ ॥

**इमंलोकंमातृभक्त्या पितृभक्त्या तु मध्यमम् ॥ गुरुशुश्रूषया त्वेवंब्रह्मलोकंसमश्नुते ॥ २३३ ॥**

( १ ) **मेधातिथिः** । अयंलोकः पृथिवी भारसहत्वात्तुल्यामातापृथिव्या । पितृभक्त्या । मध्यमोलोकोन्तरिक्षंप्रजापतिः पितोक्तः मध्यमस्थानश्च प्रजापतिर्निरुक्तानाम् सहि वर्षकर्मणांप्रजानांपाता वा पालयिता वा । ब्रह्मलोकमादित्यलोकम् आदित्योब्रह्मेत्यादेशः लोकः स्थानविशेषस्तमश्नुते प्राप्नोति । अर्थवादाएते तत्र नाभिनिवेष्टव्यम् । नच लोकाधिपत्यकामस्य तदाराधनाधिकारः । नायंकाम्योविधिः । पितृत्वमेवात्र निमित्तमकरणे शास्त्रातिक्रमः ॥ २३३ ॥

( २ ) **सर्वज्ञनारायणः** । मध्यमं भूलोकादूर्ध्वं ब्रह्मलोकादधः ॥ २३३ ॥

---

( २३२ ) वि=स ( ल, र )

( ३ ) **कुल्लूकः** इमंभूर्लोकंमातृभक्त्या पितृभक्त्या मध्यममन्तरिक्षमाचार्यभक्त्या तु हिरण्यगर्भलोकमेव प्रा-प्नोति ॥ २३३ ॥

( ४ ) **राघवानन्दः** । त्रीन्लोकान्विजयेदित्युक्तंकेन कंजयतीत्यपेक्षायामाह इममिति । इमंभूर्लोकंमध्यमंभुवर्लोकं-आचार्योब्रह्मलोकेशइत्युक्तेर्ब्रह्मलोकम् ॥ २३३ ॥

( ६ ) **रामचन्द्रः** । इममिति इमंलोकंभूर्लोकं मध्यमं स्वर्लोकं गुरुशुश्रूषया ब्रह्मलोकं एवममुना प्रकारेण त्रीन् लो-कान्समश्नुते प्राप्नोति ॥ २३३ ॥

## सर्वे तस्यादृताधर्मायस्यैते त्रयआदृताः ॥ अनादृतास्तु यस्यैते सर्वास्तस्याफलाःक्रियाः ॥ २३४ ॥

( १ ) **मेधातिथिः** । आदृताः सत्कृताः । आदृतवचनेन प्रत्युपकारपरत्वंलक्ष्यते योह्यादृतोभवति सपरितुष्टःप्रत्यु-पकाराय यतते । अथवादृतः परितुष्टउच्यते । धर्मस्य चानन्त्यात्परितोषाऽनुपपत्तेः फलदानोत्सुकत्वंलक्ष्यते । सर्वाणि त-स्यकर्माण्याशु फलदायीनि भवन्ति । यस्यैते त्रयआदृताः शुश्रूषया परितुष्टाःएतैस्त्वनाराधितैर्यत्फलकामेनकिंचित्क्रियते शुभंकर्म तत्सर्वंनिष्फलम् । सर्वाः क्रियाः सर्वाणि श्रौतस्मार्तानि कर्माणि । अर्थवादोयंपुरुषार्थोह्याराधनविधिस्तदतिक्रमे पुरुषः प्रत्यवयन्महता पापेन कर्मोपार्जितेपीष्टफलभोगे प्रतिबध्यते । अतउच्यते सर्वास्तस्या फलाः क्रियाइति ॥ २३४ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वेधर्मा यागाद्याः । आदृताः आदरेण कृताः । अफला अल्पफलाः ॥ २३४ ॥

( ३ ) **कुल्लूकः** । यस्यैते त्रयोमातृपित्राचार्यआदृताः सत्कृतास्तस्य सर्वे धर्माः फलदाभवन्ति । यस्यैते त्रयोऽना-दृतास्तस्य सर्वाणि श्रौतस्मार्तकर्माणि निष्फलानि भवन्ति ॥ २३४ ॥

( ४ ) **राघवानन्दः** । पुनरपि त्रयाणांशुश्रूषांस्तुतिनिन्दाभ्यांविधत्ते सर्वइति द्वाभ्यां । आदृता आदरेणवृताःस्युः अफलाःक्रियाःतदा चरितंपुण्यमात्रंनिष्फलमित्यर्थः ॥ २३४ ॥

( ६ ) **रामचन्द्रः** । एतेत्रय आचार्यादयःयस्य पुंसः आदृताः मानार्हा भवन्ति तस्य सर्वे धर्माः आदृताभवन्ति तद्यथा तेन पुंसा सर्वे धर्माआदृता इत्यर्थः । यस्य एते त्रयः अनादृताः भवन्ति तस्य सर्वाःक्रियाःअफलाभवन्ति इत्यर्थः ॥ २३४ ॥

## यावत्त्रयस्ते जीवेयुस्तावन्नान्यंसमाचरेत् ॥ तेष्वेव नित्यंशुश्रूषांकुर्यात्प्रियहिते रतः ॥ २३५ ॥

( १ ) **मेधातिथिः** । उक्तार्थोयंश्लोकः । नान्यंसमाचरेद्दृष्टमदृष्टंवा तदनुज्ञानमन्तरेणेत्युक्तम् । तेष्वेव नित्यंशुश्रूषां-कुर्यात् । प्रियहिते रतः प्रियंच हितंच तदा यत्प्रीतिकरंतत्प्रियंयत्पालनंतद्धितम् ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः** । नान्यत् तच्छुश्रूषाविरोध्याचरेत् । हितमप्रियमप्युदर्कं शुद्धं ॥ २३५ ॥

( ३ ) **कुल्लूकः** । ते त्रयोयावज्जीवन्ति तावदन्यंधर्मंस्वातंत्र्येण नानुतिष्ठेत् । तदनुज्ञया तु धर्मानुष्ठानंप्राग्विहितमेव किंतु तेष्वेव प्रत्यहंप्रियहितपरः शुश्रूषांतदर्थंप्रीतिसाधनं । प्रियंभेषजपानादिवत् । आयत्यामिष्टसाधनंहितम् ॥ २३५ ॥

( ४ ) **राघवानन्दः** । प्रियहिते इहप्रीतिसाधनंप्रियं । आयत्यामिष्टसाधनंहितमिति ॥ २३५ ॥

( ५ ) **नन्दनः** । नित्यं यावज्जीवम् ॥ २३५ ॥

---

( २३५ ) नान्यं=नान्यत् ( ल, र ) । ( क, ग, घ, च, ख, ) एतेषु पुस्तकेषु नान्यं एवोहिपाटः । परंतु नान्यं गृहीत्वा नान्यंसमाश्रयेत् ईदृशःश्लोकः अपेक्षितः । नान्यंसमाचरेत् इत्थं असंगतं इतिभाति ।

( ६ ) **रामचन्द्रः** । त्रयः यावज्जीवेयुस्तावदन्यधर्मान्न समाचरेत् ॥ २३५ ॥

**तेषामनुपरोधेन पारत्र्यंयद्यदाचरेत् ॥ तत्तन्निवेदयेत्तेभ्योमनोवचनकर्मभिः ॥ २३६ ॥**

( १ ) **मेधातिथिः** । परत्र जन्मान्तरे यस्य फलंभुज्यते तत्पारत्र्यम् । छान्दसंरूपमेतत् । शुश्रूषायाअविरोधेनान्यंयं-यंधर्मंसमाचरेत्तत्तंनिवेदयेत्तेभ्यस्तानज्ञापयेत् । अनुपरोधग्रहणमेवमर्थंकृतम् । यत्तेषांविरोधि तत्तैर्नाज्ञापयितव्यम् । कश्चि-दृजुप्रकृतिरभ्यर्थमानआत्मपरोऽधर्ममवगणय्यानुजानाति तन्निवृत्त्यर्थमेतत् । मनोवचनकर्मभिर्ननिवेदनमदृष्टार्थमपितु यादृ-शमनुज्ञानंतादृशमेव कर्मणा दर्शयेत् । अथाचैवंसंबन्धः कर्तव्यः मनोवचनकर्मभिः पारत्र्यंयद्यदाचरेत्तत्तन्निवेदयेत्तेभ्य-इति ॥ २३६ ॥

( २ ) **सर्वज्ञनारायणः** । तेषा मनुपरोधेन दुःखाजननेन पारत्र्यंपरलोकार्थंनिवेदयेत् तेभ्यःएतत्फलं तेषामस्त्विति मनसा वचनेन च कर्मणा हस्तोदकादिदानेन निवेदयेत् । यद्वा मनोवचनकर्मभिर्यदाचरेदित्यन्वयः । परसंबन्धस्य तथैव सिद्धेः । न त्वत्र निवेदनं ज्ञापनमात्रम् । यत्किंचिद्धर्मसंयुक्तमाचरामि युधिष्ठिर । मातापित्रोर्गुरोश्चैव तत्सर्वंविसृजाम्यह-म् ॥ इतीतिहासे दर्शनात् ॥ २३६ ॥

( ३ ) **कुल्लूकः** । तेषांशुश्रूषायाअविरोधेन तदनुज्ञातोयद्यन्मनोवचनकर्मभिःपरलोकफलंकर्मानुष्ठितंतन्मयैतदनुष्ठि-तमिति पश्चात्तेभ्योनिवेदयेत् ॥ २३६ ॥

( ४ ) **राघवानन्दः** । धर्ममाचरेदित्युक्तं अप्रतिषिद्धःसंसन्यदाचरेत् तन्निवेदयेदेवेत्याह तेषामिति । अनुपरोधे-नापीडया पारक्यंपरलोकफलकंमनोवचनकर्मभिरित्युभयत्राचरणे निवेदने च संबध्यते ॥ २३६ ॥

( ५ ) **नन्दनः** । पारत्र्यं परलोकहितम् ॥ २३६ ॥

( ६ ) **रामचन्द्रः** । तेषांत्रयाणामनुपरोधेन यत्पारत्र्यंपारलौकिकं धर्मं तेभ्यःत्रिभ्यः मनोवाक्कायकर्मभिः नि-वेदयेत् ॥ २३६ ॥

**त्रिष्वेतेष्वितिकृत्यंहि पुरुषस्य समाप्यते ॥ एषधर्मःपरःसाक्षादुपधर्मोऽन्यउच्यते ॥ २३७ ॥**

( १ ) **मेधातिथिः** । इतिशब्दः समाप्तिवचनः कात्स्न्र्यंगमयति । यत्किंचन पुरुषस्य कर्तव्यंयावान्कश्चन पुरुषार्थः सएतेष्वाराधितेषु समाप्यते परिपूर्णमनुष्ठितोभवति । एषधर्मः परः श्रेष्ठः साक्षात्त्वेन । अन्यश्चाग्निहोत्रादिरूपधर्मः प्रतिहा-रस्थानीयोन साक्षाद्राजवदिति प्रशंसा । अवमान प्रतिषेधः । प्रियहितकरणंतद्विरोधिनः कर्तव्यस्याननुष्ठानमविरोधिनोप्य-ननुज्ञातस्यच परिशिष्टः श्लोकसंघातोऽर्थवादः ॥ २३७ ॥

( २ ) **सर्वज्ञनारायणः** । कृत्यंकृत्यप्रकारः । साक्षादभिलषितफलः । अन्योयज्ञादिस्तेषु जीवत्सुउपधर्मः ॥ २३७ ॥

( ३ ) **कुल्लूकः** । इतिशब्दःकात्स्न्र्ये । हिशब्दोहेतौ । यस्मादेतेषु त्रिषु शुश्रूषितेषुपुरुषस्य सर्वश्रौतस्मार्तकर्तव्य-संपूर्णमनुष्ठितंभवति । तत्फलावाप्तेस्तस्मादेवश्रेष्ठोधर्मःसाक्षात्सर्वपुरुषार्थसाधनः । अन्यस्त्वग्निहोत्रादि प्रतिनियतस्वर्गा-दिहेतुरूपधर्मोजघन्यधर्मइति शुश्रूषास्तुतिः ॥ २३७ ॥

( ४ ) **राघवानन्दः** । एतदाचरणेनैव कृतकृत्योभवतीत्याह त्रिष्विति । अन्यस्तद्भिन्नोयःसउपधर्मोऽन्यधर्मोऽधर्मः पाखण्डधर्मोवा ॥ २३७ ॥

( ६ ) **रामचन्द्रः** । एतेषु त्रिषु पुरुषस्यइतिकृत्यंहि समाप्यते । अन्यतःउपधर्मः पाषण्डधर्म इत्यर्थः ॥ २३७ ॥

**श्रद्दधानःशुभांविद्यामाददीतावरादपि ॥ अन्त्यादपि परंधर्मंस्त्रीरत्नंदुष्कुलादपि ॥ २३८ ॥**

( १ ) **मेधातिथिः** । श्रद्दधानआस्तिक्योपगृहीतान्तरात्माऽभियुक्तोयः शिष्यः सशुभांविद्यांन्यायशास्त्रादिनर्कविद्यामथवा या शोभते केवलंसाविशदकाव्यभरतादिविद्याविभूषिता मन्त्रविद्यावा नधर्मोपयोगिनी तामवरादपि हीनजातीयादप्याददीत शिक्षेत। नत्वत्र शुभा वेदविद्या वेदितव्या आपदि विधिर्भविष्यति अनापदि तु नैवेष्यते । या च शुभा शाश्वती माया कुहकादिवातांन क्वचित्। अन्त्यश्चाण्डालस्तस्मादपियः परोधर्मः श्रुतिरस्मृत्यपेक्षया परोन्योलौकिकः । धर्मशब्दोव्यवस्थायामपि प्रयुज्यते। एषोत्र धर्मइति यदि चण्डालोपि ब्रूते । अत्रप्रदेशे माचिरंस्थाःमावास्मिन्नम्भसि स्नासीरेषोत्र ग्रामीणानांधर्मोराज्ञाकृतावा मर्यादेति । नचैवंमन्तव्यमुपाध्यायवचनंमया कर्तव्यंधिक्चाण्डालंयोमांनियुङ्क्तइति । न पुनरियंबुद्धिःकर्तव्या परोधर्मोब्रह्मतत्वज्ञानंनहि चण्डालादेस्तत्परिज्ञानसंभवोवेदार्थवित्त्वाभावात् । न चान्यतस्तत्संभवोनहि वृश्चिकमन्त्राक्षरवद्ब्रह्मोपदेशोस्ति । स्त्रीरत्नमिव स्त्रीचासौ रत्नंच तदिति वा उपमितंव्याघ्रादिभिः विशेषणंविशेष्येणेति वा । यदा यत्किंचिदुत्कृष्टंवस्तु तद्रत्नमुच्यते तदाविशेषणमिति । अथतु मरकतपद्मरागादीन्येव रत्नशब्दवाच्यान्युत्कर्षसामान्यादन्यत्र प्रयोगस्तदोपमितमिति । या स्त्रीसंस्थानलावण्यातिशयवती अथ धान्यबहुधनसुतादिशुभलक्षणा सा दुष्कुलाद्धीनक्रियादेरप्यानेया । अत्राह्मणादित्यस्य विधेरयमपवादोऽलाभेनतु प्रदर्शितः ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । शुभांवैदिकीं अवरात्बलात् अद्दधानो बाल्यादिना तत्राश्रद्धानकार्येत्यर्थः । अन्त्यात् शूद्रादपि परंधर्ममाचरतोधिगम्य गृह्णीयात् । अत्रानेकान्दृष्टान्तान् लोकव्यवहारसिद्धानाह स्त्रीरत्नमित्यादि । लुमोपमार्थमेतत् सर्वं ॥ २३८ ॥

( ३ ) **कुल्लूकः** । श्रद्धायुक्तःशुभांदृष्टशक्तिंगारुडादिविद्यामवराच्छूद्रादपि गृह्णीयात् । अन्त्यश्चाण्डालस्तस्मादपि जातिस्मरादेर्विहितयोगप्रकर्षात् । दुष्कृतशेषोपभोगार्थमवाप्तचाण्डालजन्मतः परंधर्मंमोक्षोपायमात्मज्ञानमाददीत । तथा ऽज्ञानमेवोपक्रम्य मोक्षधर्मे प्राप्य ज्ञानंब्राह्मणात्क्षत्रियाद्वैश्याच्छूद्रादपि नीचादभीक्ष्णंश्रद्धातव्यं । श्रद्दधानेन नित्यंनश्रद्धिनंप्रति जन्ममृत्युविशेषता । मेधातिथिस्तु श्रुतिस्मृत्यपेक्षयापरोधर्मोलौकिकोधर्मशब्दोव्यवस्थायामपि युज्यते । यदि चाण्डालोप्यत्र प्रदेशे माचिरंस्थामाचास्मिन्नंभसि स्नायाइतिवदति तमपि धर्ममनुतिष्ठेत् । प्रागल्भ्याल्लौकिकंवस्तु परंधर्ममिति ब्रुवन् । चित्रंतथापिसर्वत्रश्लाघ्योमेधातिथिःसताम् । स्त्रीरत्नंआत्मापेक्षयानिकृष्टकुलादपि परिणेतुंस्वीकुर्यात् ॥ २३८ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणगुर्वभावे क्षत्रियादपि वेदोग्राह्यइति वदन्नदाने दोषमाह । श्रद्दधानइति चतुर्भिः । शुभांदृष्टशक्तिंगारुडादिविद्यांधर्मंलौकिकंसद्यौषधात् ॥ २३८ ॥

( ५ ) **नन्दनः** । विद्याधर्मस्त्रियोविशिष्टाश्चेदविशिष्टादप्युपादानादवश्यंउपादेयाइत्याह श्रद्दधानइति ॥ २३८ ॥

( ६ ) **रामचन्द्रः** । श्रद्दधानः पुरुषःअधमादपि प्रातिलोम्यादपि परांउत्कृष्टांविद्यांअधीयीत स्वीकुर्यात् परंधर्मं अन्त्यादपि शूद्रादपि गृह्णीयात् ॥ २३८ ॥

**विषादप्यमृतंग्राह्यंबालादपि सुभाषितम् ॥ अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २३९ ॥**

( १ ) **मेधातिथिः** । पूर्वइमौ चापद्यब्राह्मणादप्यध्येतव्यमित्यस्य विधेः शेषः । अनेन लोकप्रवादोदृष्टंन क्रियते । एवंहि लौकिकाआहुः असतस्तदुपादेयंविषेपि यदमृतंतद्ग्राह्यमेव यथा हंसउदकात्क्षीरंगृह्णाति रसायनेषु केषु चिद्विषंइत्ये-

तदभिप्रत्योक्तम् । बालोपि यत्किंचिदकस्मात्सुभाषितंमाङ्गलिकंप्रस्थानादौ वक्ति तद्ग्राह्यम् । अमित्रादेरपि सतां यद्वृत्तं- शिष्टाचारः । न द्वेषस्तेनैतदाचरितमितिन्यायात्सिद्धतरोयंदृष्टान्तः । अमेध्याऽपि काञ्चनंसुवर्णमसदाश्रयात्प्राग्यंतेतथा गृह्य- ते तद्वद्ब्राह्मणादध्ययनमिति ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः** । अमृतममरणहेतुरसायनसाधनं सत्वं । सुभाषितं यात्रादौ शकुनत्वेन । शौचंवृत्तम् ॥ ॥ २३९ ॥

( ३ ) **कुल्लूकः** । विषंयद्यमृतसंयुक्तंभवति तदा विषमपसार्य तस्मादमृतंग्राह्यम् । बालादपि हितवचनंग्राह्यम् । शत्रुतोऽपि सज्जनवृत्तम् । अमेध्यादपि सुवर्णादिकंग्रहीतव्यम् ॥ २३९ ॥

( ४ ) **राघवानन्दः** । किंच विषाद्विषव्यापादमृतमिति दृष्टान्तार्थोविधेयार्थोवा । सुभाषितंमागच्छाग्रेकूपइति हितो- पदेशंसद्वृत्तंसुचरितंधर्मंवा ॥ २३९ ॥

( ५ ) **नन्दनः** । एतदेव दृष्टान्तेनोपपादयति विषादिति ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । अमृतंजीवनं अमेध्यात्कांचनम् ॥ २३९ ॥

**स्त्रियोरत्नान्यथो विद्या धर्मःशौचंसुभाषितम्॥विविधानि च शिल्पानि समादेयानि सर्वतः२४०**

( १ ) **मेधातिथिः** । रत्नानि मणयः शम्बरपुलिन्दादिभ्योप्युपात्ताः शुद्धास्तद्वद्विद्याद्यपीति । शिल्पानि च वि- चित्रपत्रच्छेद्यादीन्यदुष्टान्यगर्हितानि चैलनिर्णेजनपटजनकबन्धनादीनि सर्वतोजातिविशेषमनपेक्ष्य समादेयानि स्वीकर्त- व्यानि निश्चितातिधैर्यभावैः । विषादप्यमृतमित्येवमादिभिरनेकवाक्याद्वा समानप्रक्रमत्वेन सर्वएतेर्थवादाः ॥ २४० ॥

( २ ) **सर्वज्ञनारायणः** । अदुष्टानि शिल्पानि लिप्यादीनि तु शस्त्रनिर्माणादीनि एषपूर्वेषामेव किंचिदधिको- न्त्योपसंहारः ॥ २४० ॥

( ३ ) **कुल्लूकः** । अत्रस्त्र्यादीनामुक्तानामपि दृष्टान्तत्वेनोपादानंयथा स्त्र्यादयोनिकृष्टकुलादिभ्योगृह्यन्ते । तथा न्यान्यपि हितानि चित्रलिखनादीनि सर्वतः प्रतिग्रहीतव्यानि ॥ २४० ॥

( ४ ) **राघवानन्दः** । स्त्र्यादिसमस्तस्वभावशुद्धानि नोपादानतोदुष्टानीत्याहस्त्रियइति । सोमःशौचंददौतासांगन्धर्वा- श्चशुभांगिरं । पावकः सर्वमेध्यत्वंमेध्यावैयोषितःसदा इत्युक्तेः ॥ स्त्रीरत्नंसर्वदाशुद्धमेवकूटकार्षापणादिव्यावृत्त्यर्थमाह अ- दुष्टानीति तेषामुदर्केप्राप्तप्रकृतित्वेन स्तेयादिरूपत्वात् ॥ २४० ॥

( ५ ) **नन्दनः** । उक्तमेवार्थपुनः प्रकारान्तरेणस्थिरीकरो तिस्त्रियइति ॥ २४० ॥

**अब्राह्मणादध्ययनमापत्काले विधीयते ॥ अनुव्रज्या च शुश्रूषा यावदध्ययनंगुरोः ॥ २४१ ॥**

( १ ) **मेधातिथिः** । अयंतत्रविधिः । आपन्नब्राह्मणाध्यापकभावः । आपदः काल आपत्कालः । आपदित्येव सिद्धेकालग्रहणंवृत्तपूरणार्थम् । पाठान्तरमापत्कल्पइति कल्पनंकल्प आपद्येषांकल्पना विधीयते उपदिश्यते । यदाचार्यः प्रारब्धाध्यापनः प्रायश्चित्तेनान्येनवा निमित्तेन शिष्यंहित्वा देशान्तरंव्रजेत् नच ब्राह्मणोन्योध्यापकस्तस्मिन्देशे लभ्यते बालत्वाद्दूरदेशगमनमशक्यंतदा ब्राह्मणः क्षत्रियात्तदभावे वैश्यादध्ययनंप्रकृतत्वात् । वेदः कृत्स्नइति वेदग्रहणंविधीयते ।

---

( २४० ) विविधानि=अदुष्टानि ( मे० )

( २४० ) विविधानिच शिल्पानि=शिल्पानिचाप्यदुष्टानि ( न, ब, भ, य, र, ल )

यद्यप्यत्राब्राह्मणशब्दोब्राह्मणजातेरन्यत्र जातित्रये वर्तमानंपुरुषत्वमाचष्टे तथापि नेहशूद्रस्य ग्रहणं तस्याध्यापनाधिकाराभावात्। सत्यध्ययनेऽध्यापकत्वम्। अथशास्त्रातिक्रमेण शूद्रस्याप्यधीतवेदत्वस्य संभवः क्षत्रियवैश्ययोरध्यापकत्वस्येव। तदपि न यतोधारणे शरीरभेदस्तस्याम्नातः नचेदंमहत्वान्महदेतदाचार्यकमनुमीयते निन्दितकर्माभ्यासे पतनात्तत्संसर्गाच्च ब्रह्मचारिणाम् किंतु दुष्टतास्यान्निषेधात् तुल्यदोषइति चेदस्त्यत्र विशेषः। यत्र दण्डप्रायश्चित्ते गुरुणी तत्र महादोषता। स्वल्पयोस्तु स्वल्पदोषता। नच क्षत्रियवैश्ययोरध्यापने महती दण्डप्रायश्चित्ते शूद्रस्येव। किंच द्वे निन्दिते कर्मण्यध्ययनमध्यापनंच। क्षत्रियवैश्ययोस्त्वेकमेव। निषिद्धाध्यापनसंसर्गस्त्वनेनैवानुज्ञातोनासौदोषकरः। निषिद्धाध्ययनेन तु शूद्रेण संसर्गे न किंचित्प्रमाणमस्ति। अनुव्रज्या च शुश्रूषा न वन्दनपादप्रक्षालनादि शुश्रूषाप्रतिषेधार्थमनुव्रज्यैव शुश्रूषा नान्येति। यावदध्ययनंयावद्ग्रहणम्॥ २४१॥

( २ ) **सर्वज्ञनारायणः**। अब्राह्मणात् क्षत्रियाद्वैश्याद्वा आपत्कल्पे आपदः प्रक्रमौ ब्राह्मणाभावे तस्य च यावदध्ययनमनुगमएव शुश्रूषणाभिवादनादि। अतएवंविधेर्ब्राह्मणशिष्यशुश्रूषाङ्गीकाराध्यापनाभ्यां न क्षत्रियवैश्ययोरापदि दोषः। एतच्चोपकुर्वाणस्या नैष्ठिकस्यापि तस्याप्यध्ययनार्थित्वाविशेषात्॥ २४१॥

( ३ ) **कुल्लूकः**। अब्राह्मणादिति। ब्राह्मणादन्योयोद्विजः क्षत्रियस्तदभावे वैश्यो वा तस्मादध्ययनमापत्काले ब्राह्मणाध्यापकासम्भवे ब्रह्मचारिणोविधीयते। अनुव्रज्यादिरूपा गुरोः शुश्रूषा यावदध्ययनंतावत्कार्या। गुरुपादप्रक्षालनोच्छिष्टप्राशनादिरूपा शुश्रूषा प्रशस्ता सा न कार्या। तदर्थमनुव्रज्याचेति विशेषितम्। गुरुत्वमपि यावदध्ययनमेवक्षत्रियस्याह व्यासः। मन्त्रदः क्षत्रियोविप्रैःशुश्रूषानुगमादिना। मानवियोब्राह्मणस्तु पुनस्तस्य गुरुःस्मृतः॥ ब्रह्मचारित्वे नैष्ठिकस्याप्यब्राह्मणादध्ययनंप्रसक्तंप्रतिषेधयति॥ २४१॥

( ४ ) **राघवानन्दः**। अब्राह्मणाद्यधीतवेदस्योत्तरकालंतच्छुश्रूषाद्यभावमाह अब्राह्मणादितिद्वाभ्यां। न ब्राह्मणाद्वैश्यात्क्षत्रियाद्वा आपदि इत्युपलक्षणं यतःब्राह्मणेष्वसंभाव्यमानाराजन्याद्वै वानरविद्यागृहीतामूर्धातेव्यपतिष्यद्यन्मानागमिष्यइति तथापंचाग्निविद्याचेत्यस्ति श्रुत्याख्यायिका॥ २४१॥

( ५ ) **नन्दनः**। अब्राह्मणात् क्षत्रियवैश्याभ्यामपि॥ २४१॥

( ६ ) **रामचन्द्रः**। आपत्काले अब्राह्मणात् क्षत्रियादेःसकाशादध्ययनं विधीयते। यावद्गुरोःसमीपेअध्ययनंक्षत्रियादेःगुरोःअनुव्रज्यतावत्शुश्रूषाकार्या॥ २४१॥

## नाब्राह्मणे गुरौ शिष्योवासमात्यन्तिकंवसेत्॥ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्॥२४२॥

( १ ) **मेधातिथिः**। अब्राह्मणे गुरौ वासोऽध्ययनाय पूर्वेणोक्तोनैष्ठिकस्यापि प्राप्तोविशेषे निषिध्यते। आत्यन्तिकंवासंयावज्जीविकंन वसेन्नकुर्यात्। वासंवसेदिति सामान्यविशेषभावाद्वासंवसेदिति संबन्धः कल्प्यः गुरुविषयोवासस्तंवसेत्। समाप्ताध्ययनोऽन्यत्र गच्छेत्। ननु चाध्ययनमात्रमनुज्ञातमात्यन्तिकस्य वासस्य कुतः प्राप्तिः। नैषदोषः। गुरौ तस्य वासउक्तः अध्यापयिता च गुरुरुक्तः अतोभवत्याशङ्काब्राह्मणे वाननूचाने। अवाशब्दोऽप्यर्थः। ब्राह्मणोपि यद्यनूचानोवृत्ताभिजनसंपन्नोन भवति नच व्याख्यानाध्ययनशीलोऽनुवचनेनैतेपि गुणालक्ष्यन्ते यतोननुवक्तर्यर्थाभावादेवावासः सिद्धः गतिरत्रसुखातिशयप्राप्तिर्विवक्षिता अनुत्तमा यस्याअन्योत्तमानास्ति तांकाङ्क्षन्परमात्मानन्दरूपंमोक्षम्॥ २४२॥

( २ ) **सर्वज्ञनारायणः**। तथाच क्षत्रियादावपि गुरौ यावज्जीवनिवासप्रसक्तौ इदमाह न ब्राह्मणइति। नात्य-

न्तिकंनैष्ठिकाश्रमोक्तम्। ब्राह्मणेपि साङ्गवेदपाठानध्येतरि न नैष्ठिकवासंवसेत्। किंतुयावदध्ययनं अधीत्य वैश्वानरपरिचर्यया क्षपयेदिति स्मृत्यन्तरात्सिद्धम् ॥ २४२ ॥

( ३ ) **कुल्लूकः**। आत्यन्तिकंवासंयावज्जीविकंब्रह्मचर्यंक्षत्रियादिके गुरौ ब्राह्मणे साङ्गवेदानध्येतर्यनुत्तमांगतिंमोक्षलक्षणामिच्छञ्छिष्योनावतिष्ठेत ॥ २४२ ॥

( ४ ) **राघवानन्दः**। अननूचाने सांगवेदानध्येतरि आत्यन्तिकंयावज्जीवं न वसेत् किंतु यावदध्ययनंतावद्वसेत्-इत्यन्वयः ॥ २४२ ॥

( ५ ) **नन्दनः**। आत्यन्तिकंवासंनैष्ठिकंब्रह्मचर्यंवसेत्कुर्यात् ॥ २४२ ॥

( ६ ) **रामचन्द्रः**। शिष्यःअब्राह्मणे गुरौ आत्यन्तिकं वासंनवसेत् यावज्जीवंनवसेदित्यर्थः। नैष्ठिकंब्रह्मचर्यं न वसेदित्यर्थःनानूचाने उत्तमांगतिकांक्षन्न वसेदित्यर्थः ॥ २४२ ॥

## यदि त्वात्यन्तिकंवासंरोचयेत गुरोःकुले ॥ युक्तःपरिचरेदेनमाशरीरविमोक्षणात् ॥ २४३ ॥

( १ ) **मेधातिथिः**। अत्यन्तंभवमात्यन्तिकंवासंगुरोः कुले नैष्ठिकंब्रह्मचर्यंयदि रोचयेत्तदायुक्तस्तत्परः परिचरेदेनंगुरुमाशरीरस्य विमोक्षणात्पाताद्यावच्छरीरंभियतइत्यर्थः ॥ २४३ ॥

( २ ) **सर्वज्ञनारायणः**। नैष्ठिकस्याधिकंकर्तव्यमाह यदित्विति। यदिआत्यन्तिकंतत्र जन्मनि तत्र गृहवासात्यागेन युक्तः प्रयत्नवान् परिचरेत् शुश्रूषेत् एवंगुरुंब्रह्मचारीआचार्यकुलवासी तृतीयोत्यन्तगतिमिच्छन् आचार्यकुले समासादयेदित्येतत् श्रुतिमूलत्वाच्चास्य नऋणादिस्मृतिभिर्विरोधः ॥ २४३ ॥

( ३ ) **कुल्लूकः**। यदि तु गुरोः कुले नैष्ठिकब्रह्मचर्यात्मकमात्यन्तिकंवासमिच्छेत्तदा यावज्जीवनमुद्युक्तोगुरुंशुश्रूषयेत् ॥ २४३ ॥

( ४ ) **राघवानन्दः**। संप्रति नैष्ठिकब्रह्मचारिणोधर्मसार्थवादमाह यदीति द्वाभ्यां। युक्तोजितेन्द्रियः आशरीरविमोक्षणात् ॥ २४३ ॥

( ५ ) **नन्दनः**। गुरोर्ब्राह्मणस्यानूचानस्य ॥ २४३ ॥

( ६ ) **रामचन्द्रः**। गुरोःकुले यदिआत्यन्तिकंवासंरोचयेत् एनं गुरुं आशरीरविमोक्षणात् शरीरत्यागपर्यन्तं परिचरेत् ॥ २४३ ॥

## आसमाप्तेःशरीरस्य यस्तु शुश्रूषते गुरुम् ॥ सगच्छत्यञ्जसा विप्रोब्रह्मणःसद्म शाश्वतम् ॥ २४४ ॥

( १ ) **मेधातिथिः**। नैष्ठिकब्रह्मचर्यस्य फलविधिरयम्। शरीरस्यम् समाप्तिर्जीवितत्यागः। आततः कालाद्यो गुरुंशुश्रूषते परिचरति सगच्छति विप्रोब्रह्मणः सद्मसदनंस्थानंशाश्वतंन पुनः संसारंप्रतिपद्यतइतियावत्। अञ्जसाऽक्लिष्टेन मार्गेण नगत्यन्तरेण तिर्यक्त्वेन मनुष्यादिजन्मना व्यवधीयते। ब्रह्मशब्देन चेति सहादर्शने देवविशेषश्च चतुर्वक्त्रस्तस्य सद्मस्थानविशेषोदिवि विद्यते वेदान्तवादिनांतु ब्रह्म परमात्मा तस्य सद्मस्वरूपमेव तद्भावापत्तिः ॥ २४४ ॥

( २ ) **सर्वज्ञनारायणः**। फलमाह आसमाप्तेरिति। अञ्जसाशीघ्रं ब्राह्मणोहिरण्यगर्भस्य शाश्वतमविच्युतम्॥२४४॥

( ३ ) **कुल्लूकः**। अस्य फलमाह आसमाप्तेरिति। समाप्तिः शरीरस्यजीवनत्यागः। तत्पर्यन्तंयोगुरुंपरिचरति सतत्त्वतोब्रह्मणः सद्मरूपमविनाशिप्राप्नोति ब्रह्मणि लीयतइत्यर्थः ॥ २४४ ॥

( ४ ) **राघवानन्दः** । शुश्रूषोस्तस्यएवमेवअनूचानंविप्रंसद्मस्थानंशाश्वतंद्विपरार्धकालस्थायित्वात्। अञ्जसा तत्वतोन स्तुतिमात्रं ब्रह्मचर्येण विन्देदिति श्रुतेः विन्देत्प्राप्नुयात्ब्रह्मलोकमिति शेषः ॥ २४४ ॥

**न पूर्वंगुरवे किंचिदुपकुर्वीत धर्मवित् ॥ स्नास्यंस्तु गुरुणाज्ञप्तःशक्त्या गुर्वर्थमाहरेत् ॥ २४५॥**

( १ ) **मेधातिथिः** । नैष्ठिकस्यायंगुरवेऽर्घदानंप्रतिषिध्यते । स्नास्यतोगुर्वर्थविधानात् नच नैष्ठिकस्य स्नानमस्ति प्रकृतश्च। नैष्ठिकएव उपकुर्वाणस्य तु उपनयनात्प्रभृति यावत्स्नानमस्त्येव सति संभवे यथा शक्त्या दानंपूर्वंस्नानाद्गुरवे किंचिदुपकुर्वीत दद्याद्ददात्यर्थे धातुः सोपसर्गोऽतश्च स्वसाध्याचतुर्थी । अथवा क्रियाग्रहणमपि कर्तव्यमिति । ततः संप्रदानत्वंधर्मवित्पदमनुवादः । स्नास्यंस्तु स्नानकाले प्राप्ते गुरुणाआदिष्टममुमर्थमाहरेतितिः शक्त्या यावन्तंशक्नोति तावन्तंगुर्वर्थंगुरोरिदंगुर्वर्थंगुरोर्येन प्रयोजनंतमाहरेदुपनयेत् । नन्वयंनैष्ठिकस्य गुर्वर्थकरणप्रतिषेधः । नह्येते द्वे वाक्ये एकेन प्रतिषेधः अपरेण गुर्वर्थविधिः। स्नाने गुर्वर्थोऽवश्यंकर्तव्यमित्ययंविधिः प्रतिषेध उपकारप्रतिषेधे च सर्वशुश्रूषाविधिरनर्थकः स्यात् । नच दानमेवोपकारोयेन धनोपकारएव निषिध्येत नान्यः प्रियहितादिः । अर्थवादत्वेत्वयथार्थता न दोषः । गम्यते चात्रैकवाक्यता ॥ २४५ ॥

( २ ) **सर्वज्ञनारायणः** । अध्ययनात्प्राक्गुरवे नोपकुर्वीताध्ययनाभिसंबन्धिना न किंचिद्दद्यात् । एतत्तुनैष्ठिकोपकुर्वाणकयोस्तुल्यम् । अन्यथा भृतकाध्ययनप्राप्तिप्रसंगात् । अत्रप्रसंगादुपकुर्वाणस्य दक्षिणादानकालउक्तः स्नास्यंस्त्विति गुरुणाज्ञप्तःस्नास्यन्शक्तया गुरुवेर्थमाहरेत् ॥ २४५ ॥

( ३ ) **कुल्लूकः** । उपकुर्वाणस्यायंविधिः नैष्ठिकस्य स्नानासंभवात् । गुरुदक्षिणादानंधर्मज्ञोब्रह्मचारी स्नानात्पूर्वं किंचिद्गोवस्त्रादिधनंगुरवेनावश्यंदद्यात् । यदि तु यदृच्छातोलभते तदा गुरवे दद्यादेव अतएव स्नानात्पूर्वं गुरवे दानमाहापस्तम्बः । यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणाएवताः सएव ब्रह्मचारिणोयज्ञोनित्यव्रतमिति । स्नास्यन्पुनर्गुरुणादत्ताज्ञोयथाशक्तिधनिनंयाचित्वापि प्रतिग्रहादिनापि गुरवेऽर्थमाहृत्यावश्यंदद्यात् ॥ २४५ ॥

( ४ ) **राघवानन्दः** । स्नास्यन्समावर्तमाख्यस्नानंकरिष्यन् । उपकुर्वाणस्य दक्षिणादानेनैव समाप्तिंब्रुवन् तस्याःकालमाह नेति द्वाभ्यां । नोपकुर्वीत धनेनेति शेषः ॥ २४५ ॥

( ५ ) **नन्दनः** । उपकुर्वाणंप्रत्याह नपूर्वमिति । स्नास्यन्समावर्तिष्यमाणः ॥ २४५ ॥

( ६ ) **रामचन्द्रः** । धर्मवित गुरवे किंचित्पूर्वंन कुर्वीत दक्षिणा न दातव्या गुरुणाज्ञप्तःदत्ताज्ञः स्नास्यन् ब्रह्मचर्यान्तं स्नानंकुर्वन् शक्त्या गुर्वर्थे दक्षिणां दद्यात् ॥ २४५ ॥

**क्षेत्रंहिरण्यंगामश्वंछत्रोपानहमासनम् ॥ धान्यंशाकंच वासांसि गुरवे प्रीतिमावहेत् ॥२४६॥**

( १ ) **मेधातिथिः** । उक्तमुद्दिष्टंगुर्वर्थंकुर्यात्तत्र न सर्वंकर्तव्यमित्येवमर्थोयंश्लोकः । यदि गुरुर्विरुद्धमादिशेत् अमुष्य स्त्रियमाहरेति सर्वस्वंवा देहीति तन्न कर्तव्यम् । किंतर्हि क्षेत्रंधान्यानांभवनभूमिः क्षेत्रमुच्यते । हिरण्यंसुवर्णम् वा शब्दो विकल्पार्थोन समुदितानि देयानि । अन्ततः अन्याभावे छत्रोपानहमपि । द्वन्द्वनिर्देशात्साहित्यदानम् । वासांसीति सर्वत्र संख्यानविवक्षिता । प्रीतिमाहरन्निति एतदाहरेदिति पूर्वसंबन्धः । प्रीतिमाहरेदिति वा पाठे अत्रैव क्रियापरिसमाप्तिः ।

---

( २४५ ) आवहेत्=आहरेत् आहरन्वा ( मे० )

( २४६ ) मासनम्=मन्ततः ( मे० )

प्रीतिमावहेदिति वा प्रीतिमुत्पादयेद्धान्याद्याहरेत् । स्वतन्त्रैव वा प्रीतिराहार्यतयोच्यते । ततश्चद्रव्योपदेशस्य दर्शनार्थता सिद्धा भवति । अन्यदपि यदेवंविधंप्रीतिजनकंमणिमुक्ताप्रवालहस्त्यश्वगन्त्रीरथादि तदपि देयमिति गम्यते । तथा च गौतमो विद्यान्तेगुरुमर्थं ननिमन्त्र्याहरेद्यदि स्यादात्मीयंशक्त्यागतंतदा दद्यान्नावेद्यान्नादिनार्जयेत् ॥ २४६ ॥

( २ ) **सर्वज्ञनारायणः** । तदेवाह । क्षेत्रमिति । अन्ततः पूर्वालाभे प्रीतिंप्रीतिहेतुं धान्यादावप्यन्ततइति यथायोगमनुषञ्जनीयम् ॥ २४६ ॥

( ३ ) **कुल्लूकः** । किंतत्तदाहक्षेत्रमिति । शक्त्या गुर्वर्थमाहरेदित्युक्तत्वात्क्षेत्रहिरण्यादिकंयथासामर्थ्यंविकल्पितंसमुदितंवा गुरवे दत्वा तत्प्रीतिमर्जयेत् । विकल्पपक्षेचांततोऽन्यासंभवे छत्रोपानहमपि दद्यात्द्वन्द्वनिर्देशात् । समुदितदानंप्रदर्शनार्थंचैतत्सम्भवेऽन्यदपि दद्यात् । अतएव लघुहारीतः एकमप्यक्षरंयस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यांनास्ति तद्द्रव्यंयद्दत्वाचानृणीभवेत् ॥ असंभवेशाकमपिदद्यात् ॥ २४६ ॥

( ४ ) **राघवानन्दः** । अंततःपूर्वेषामशक्तौ धान्याद्युत्तराहरणमित्यर्थः दक्षिणायाअदृष्टार्थत्वंमीमांसास्तबकेस्थापितम् । अतआह प्रीतिमितिप्रीत्यर्थमित्यर्थः ॥ २४६ ॥

( ६ ) **रामचन्द्रः** । अन्ततः व्रतान्ततः गुरवे प्रीतिंआवहन् छत्रादिकंदद्यात् ॥ २४६ ॥

## आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ॥ गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७ ॥

( १ ) **मेधातिथिः** । नैष्ठिकस्यायमुपदेशः । असत्याचार्ये तत्पुत्रे श्रोत्रियत्वादिगुणयुक्ते गुरुपत्न्यामाचार्यान्यां वा सपिण्डे वा गुरोरेव वसेत्तत्र च गुरुवद्वृत्तिमाचरेद्भैक्षनिवेदनादि सर्वंकुर्यात् । दारशब्दोबहुवचनान्तोभार्यावचनोवैयाकरणैः स्मर्यते । स्मृतिकारास्त्वेकवचनान्तमपि प्रयुञ्जते । धर्मप्रयासयत्ने दारे नान्यांकुर्वीतेति ॥ २४७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतनैष्ठिकधर्ममाह आचार्यइति । गुरुपुत्रे गुणान्विते अनूचाने गुरुसपिण्डे वा तादृशएव गुरुदारेतु गुणान्विते प्रमीतपतिकाधर्मचारिणि गुरुवत्वृत्तिमाचरेत् । तच्छुश्रूषयातद्गृहेवसेत् ॥ २४७ ॥

( ३ ) **कुल्लूकः** । नैष्ठिकस्यायममुपदेशः । आचार्ये मृते तत्सुते विद्यादिगुणयुक्ते तदभावे गुरुपत्न्यांतदभावे गुरोः सपिण्डे पितृव्यादौ गुरुवच्छुश्रूषामनुतिष्ठेत् ॥ २४७ ॥

( ४ ) **राघवानन्दः** । यस्तु शुश्रूषते गुरुमित्युक्तं तस्यासत्वे कागतिस्तत्राह आचार्येत्विति द्वाभ्यां । गुरुवद्गुरुतुल्यांवृत्तिंसुखादिकां ॥ २४७ ॥

( ५ ) **नन्दनः** । अथनैष्ठिकंप्रत्याह आचार्यइति । सपिण्डे गुरुसपिण्डे ॥ २४७ ॥

( ६ ) **रामचन्द्रः** । खलुइति निश्चयेन आचार्ये प्रेतेमृते सति गुणान्विते गुरुपुत्रे गुरुवत् वृत्तिं आचरेत् । यद्वा गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७ ॥

## एतेष्वविद्यमानेषु स्थानासनविहारवान् ॥ प्रयुञ्जानोऽग्निशुश्रूषांसाधयेद्देहमात्मनः ॥ २४८ ॥

( १ ) **मेधातिथिः** । अविद्यमानता सर्वेषामभावः यदिवा गुणहीनता । एतेष्वसत्स्वग्निशुश्रूषांप्रयुञ्जीताग्निशरणोपलेपनमग्नीन्धनमाचार्यवत्सन्निधान नियमाद्वृत्तवदहोरात्रासनमेषाऽग्नेः शुश्रूषैतांकुर्वन्देहंसाधयेत् शरीरंक्षपयेद्यथान्धश्रक्षुष्मानुच्यतएवंसाधयेदिति । स्थानासनएवविहारः तद्वान्नकदाचिदासीत एवंविहरेत् । अन्येतु मन्यन्ते स्थानाय स्वस्तिकादिना यदासनंध्यानकाले तत्स्थानासनंविहारोऽन्योभिक्षाचरणादिः ॥ २४८ ॥

( २ ) **सर्वज्ञनारायणः** । स्थानंऊर्ध्वावस्थानंनियतं । आसनमुपवेशनं नियमेन विहारोभ्रमणमित्येतैस्तपोविशेषग्रहणमभिप्रैति साधयेत्तपःसिद्धिंकुर्यात् ॥ २४८ ॥

( ३ ) **कुल्लूकः** । एतेषु त्रिष्वविद्यमानेषु सततमाचार्यस्यैवाग्नेः समीपे स्नानासनविहारैः सायंप्रातरादौ समिद्धोमादिना चाग्नेः शुश्रूषां कुर्वन्नात्मनोदेहमात्मदेहावच्छिन्नंजीवंब्रह्मप्राप्तियोग्यंसाधयेत् ॥ २४८ ॥

( ४ ) **राघवानन्दः** । स्थानासनविहारवान्अग्नेःगुरोरितिवाशेषः । स्थानासनादिसमीपगमनादिनामहीकुर्यात् । देहंब्रह्मलोकगमनपर्यन्तम् ॥ २४८ ॥

( ५ ) **नन्दनः** । स्थानासनाभ्यांविहारः कालयापनं तदस्यास्तीतिस्थानासनविहारवान् ॥ २४८ ॥

( ६ ) **रामचन्द्रः** । एतेषु गुरुपुत्रेषु अविद्यमानेषु स्थानासनविहारंवान्भवेत् तद्यथा गुरो स्थाने आसने उपविश्य वसेत् अग्निशुश्रूषांगुरोर्वा प्रयुंजानः कुर्यात् आत्मनःस्वस्य देहं साधयेदित्यर्थः ॥ २४८ ॥

**एवंचरति योविप्रोब्रह्मचर्यमविप्लुतः ॥ सगच्छत्युत्तमस्थानंन चेहाजायते पुनः ॥ २४९ ॥**

## इति मनुस्मृतौ द्वितीयोऽध्यायः ॥ २ ॥

( १ ) **मेधातिथिः** । एवमिति नैष्ठिकवृत्तिंप्रत्यवमृशति । एवंयोब्रह्मचर्यंचरत्यविप्लुतः अस्खलः सप्राप्नोत्युत्तमंस्थानंधाम परमात्मप्राप्तिलक्षणम् । नचेह पुनर्जायते न संसारमापद्यते ब्रह्मरूपंसंपद्यतइति ॥ २४९ ॥

मान्याकापि मनुस्मृतिस्तदुचिता व्याख्या हि मेधातिथेः सालुप्तैवविधेर्वशात्क्वचिदपि प्राप्यंन यत्पुस्तकम् । क्षोणीन्द्रोमदनः सहारणसुतो देशान्तरादाहृतैर्जीर्णोद्धारमचीकरत्ततइतस्तत्पुस्तकैर्लेखितैः ॥ इतिमनुभाष्येमेधातिथीयेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

( २ ) **सर्वज्ञनारायणः** । एवंनैष्ठिकधर्मेण । विप्रपदंविप्रस्यैव नैष्ठिकधर्मोनान्येषामित्येतदर्थम् । अविप्लुतः अभग्नव्रतः । ब्रह्मलोकंप्रागुक्तं प्राप्योत्तमंस्थानं मोक्षास्पदंगच्छत्यतएव नेह संसारे पुनराजायतइति ॥२४९॥

सर्वज्ञश्रीनारायणकृतौ मन्वर्थविवृतौ ब्रह्मचर्याश्रमविधानंनाम द्वितीयोध्यायः २

( ३ ) **कुल्लूकः** । आसमाप्तेः शरीरस्येत्यनेन याज्जीवमाचार्यशुश्रूषायामोक्षलक्षणंफलम् । इदानीमाचार्ये मृतेऽपिएवमित्यनेनानन्तरोक्तविधिनाचार्यपुत्रादीनामप्यग्निपर्यन्तानांशुश्रूषकोयोनैष्ठिकब्रह्मचर्यमखण्डितव्रतोऽनुतिष्ठति सउत्तमंस्थानंब्रह्मण्यांतकसलक्षणंप्राप्नोति नचेहसंसारेकर्मवशादुत्पत्तिंलभते ॥ २४९ ॥

इतिमन्वर्थमुक्तावल्यांमनुवृत्तौद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥

( ४ ) **राघवानन्दः** । एतेष्वाचार्यादिषु नैष्ठिकस्य ब्रह्मसद्मप्राप्तिरित्युपसंहरति एवमिति । अविप्लुतब्रह्मचर्यःअप्रच्युतव्रतः । इहेति विशेषणात्मानवान्तरे जायते यदि तत्र श्रवणादिकृत्तंतदामुच्यते । तथा च स्मृतिः ब्रह्मणासहते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानःप्रविशन्ति परंपदमिति । प्रतिसंचरे प्रलये कृतात्मानःकृतसाक्षात्काराः ॥ २४९ ॥

इति श्रीराघवानन्दविरचितायांमन्वर्थचन्द्रिकायांद्वितीयोध्यायः ॥ २॥

( ५ ) **नन्दनः** । अथोपकुर्वाणंप्रत्याह एवमिति । अविप्लुतः अस्कन्नरेतस्कः ॥ २४९ ॥

इतिवीरमल्लप्रियसखेन श्रीनन्दनेन विरचिते मानवव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥ छ छ छ

( ६ ) **रामचन्द्रः** । विप्रः अविप्लुतः अस्खलितब्रह्मचर्यः यएवंचरति सउत्तमस्थानं गच्छति पुनः इह न जायते ॥ २४९ ॥

॥ इति मनुस्मृतिभाष्ये द्वितीयोऽध्यायः ॥

॥ श्री ॥

# अथ तृतीयाध्यायः

**षट्त्रिंशदाब्दिकंचर्यंगुरौ त्रैवेदिकंव्रतम् ॥ तदर्धिकंपादिकंवा ग्रहणान्तिकमेव वा ॥ १ ॥**

( १ ) **मेधातिथिः** । द्विविधोब्रह्मचारी पूर्वत्र प्रतिपादितोनैष्ठिकउपकुर्वाणश्चेति । आसमाप्तेः शरीरस्य यस्तु शुश्रूषने गुरुमित्यनेननैष्ठिकब्रह्मचर्यमुक्तम् । आसमावर्तनादिति पक्षान्तरमपि सूचितम् । तत्र नैष्ठिकस्य नामधेयप्रतिलम्भेनैव निमित्तवतावधिशेषः सुगमितः । निष्ठांसमाप्तिंगच्छति नैष्ठिकः । श्रुत्यैव कालोविहित आसमाप्तेरिति । उपकुर्वाणस्यानेन क्रमयोगेन तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः वेदः कृत्स्नोऽधिगन्तव्यइति संख्यायाअविवक्षोक्ता । अविवक्षायांचैकद्वित्रिचतुःपञ्चषट्सप्तादिशाखाध्ययनंयथाशक्तिप्राप्तंनियम्यते । त्रैवेदिकंव्रतंचर्यं त्रयाणांवेदानांसमाहारस्त्रिवेदी तद्ग्रहणप्रयोजनंत्रैवेदिकं । ग्रहणक्रिया वृत्तावन्तर्भवति वेदाधिगमस्य प्राग्विहितत्वात् । व्रतंब्रह्मचारिधर्मकलापः । चर्यंचरितव्यम् । कृत्योविधौ । एवमाहरणादीनां ग्रहणान्ततायांप्राप्तायामाह षट्त्रिंशदाब्दिकमिति । गृहीतेऽपि वेदे कालः पूरयितव्यः । यदिस्वाध्यायाध्ययनविध्यर्थोधर्मस्तस्य च स्वाध्यायविधेर्ग्रहणे निवृत्तिः किमर्थार्तर्हिद्वादशवार्षिकी ग्रहणोक्तकालंव्रतचर्यानुवृत्तिः । अत्यल्पमिदमुच्यते । दर्शपूर्णमासादिष्वप्याग्नेयादियागेभ्यः पराञ्चि यान्यङ्गानि तत्राप्येतद्वक्तव्यं समस्ताङ्गानुष्ठानएवमत्राराद्उपकारकाङ्गयुक्ताद्विशिष्टक्रमकाद्विध्यर्थसंपद्यवगतायांपरिचोदनाशब्दादेवविधिसंबन्धोपगमोयतः । अथ महतोलघीयांसस्तदर्धिकपादिकग्रहणावधयः पक्षाः सन्ति तेषु सत्सुकः खलुमहाप्रयासमतिचिरकालंतावद्द्वादशवार्षिकंव्रतचरणमाद्रियेतेतिचेत्फलभूमार्थिनोङ्गभूयस्त्वमनुष्ठास्यन्ति । तदुक्तंप्रयत्नविशेषात्फलविशेषेणभवितव्यमिति । ननु च नार्थावबोधादृते ग्रहणद्वारेण स्वाध्यायाध्ययनस्य किंचिदपरंफलमस्ति । एवंह्याहुः नतस्याध्ययनमात्रंतत्रभवन्तोयाज्ञिकाः फलंसमामनन्तीति । तथा दृष्टोहि तस्यार्थः कर्मावबोधनंनामेति । तस्यनचकश्चिद्विशेषोदृश्यते । यद्येवंग्रहणकालेप्यन्तरेण व्रतधर्मानुष्ठानंग्रहणदर्शनानुष्ठानप्रसङ्गः । कश्चैवमाह अर्थावबोधार्थः स्वाध्यायविधिरिति । स्वाध्यायविधिः स्वार्थएव । नान्यस्यान्यार्थतायांप्रमाणमस्ति । अर्थावबोधोहि ग्रहणे सति वस्तुस्वतोवृत्तउत्पद्यते न विधितः । स्वर्गादिफलार्थिनोऽयंविधिः । एतदपिकथंभविष्यति । कातर्हीयंवाचोयुक्तिः फलविशेषेणेति । एषावाचोयुक्तिः संस्कारविधिस्तावदयंस्वाध्यायप्रधानस्तस्य स्वाध्यायेकर्मण्युत्पन्नत्वात् । संस्कारविधयश्च न साक्षादधिकारमर्हन्ति किंतुसंस्कार्यद्वारेण साधिकारविध्यन्तरमनुप्रविशन्ति । यथाव्रीहिमवहन्तीतिदर्शपूर्णमासाधिकारविषयाग्नेयादियागसाधनभूतपुरोडाशप्रकृतिव्रीहितुषकणविप्रमोचनादिसंस्कारद्वारेण दर्शपूर्णमासापूर्वसंबन्धमनुभवति । अवघातोनतन्निरपेक्षः । सएवकर्तव्यतयाप्रतीयते । एवमिह वेदस्य संस्कार्यत्वमन्यत्राशेषभूतस्य निर्वहति । दृष्टस्वाध्यायाध्ययनानन्तरमर्थावबोधः । अतइदमध्ययनामर्थावबोधपर्यन्तमवघातइवतण्डुलनिष्पत्तिपर्यन्तम् । एतावांस्तुविशेषःप्रकरणेऽधीतत्वादवघातोझटितिलब्धाधिकारविध्यन्तरसंबन्धः । अयंत्वनारभ्याधीतत्वादवबोधपर्यवसायी सकलफलकर्मानुष्ठानोपयोगितयागम्यमानोऽधिकारः । तत्रविध्यर्थनिवृत्तिरेवफलविशेषोऽभिप्रेतः । विधेर्हिपुरुषार्थत्वंव्युत्पन्नावगमंतत्साक्षाद्भवतु वा परम्परया वेतिनविशेषः । गम्यमानाधिकारत्वाच्च स्व-

तन्त्रएवायंविधिः । स्वात्मानमनुष्ठापयति यद्यपि नित्यकामश्रुतिष्वर्थावबोध उपयुज्यते । येत्वर्थावबोधद्वारेण ज्योतिष्टोमादिविध्येककार्यत्वमिछन्ति तत्फलस्यैव च प्रयत्नविशेषादतिशयमाहुस्तेषामाचार्यकरणविधिना किमपराद्धंयेन महता यत्ने न तदेककार्यता निषिध्यते । अप्रमाण्यंवेदस्यभवतीतिचेदस्तु नप्रयोजनवशेन युक्तिसामर्थ्यायातोऽर्थोहातुंशक्यते । युक्तिस्तुयुक्त्यन्तरेण बलीयसा बाध्यते । आचार्यकरणविध्येककार्यत्वे त्वस्यविधिरूपतैवहीयते स्वार्थस्याविवक्षितत्वात् । तत्तुल्यंज्योतिष्टोमाद्यनुप्रवेशेपि । यदा तु स्वतन्त्रोऽयंविधिः स्वार्थानुष्ठापकस्तत्समानस्कन्धस्तदालयमेवेतिकर्तव्यतया युक्तोऽनुष्ठीयते । तत्र ये विकल्पिताः कल्पालघीयांसोगरीयांसश्च तेषांलघोयसा सिद्धे गरीयसामनुष्ठानंविध्यर्थएव विशेषमावहति यथाधाने एकादेयातिस्रोदेयाद्वादशदद्यवेत्यादि । अनुष्ठिते चास्मिन्विधौ स्वसामर्थ्याच्छ्रुतौवाभवतु प्रतीयमानो वा कल्पोवा प्रमाणभेदोऽयं न संबन्धभेदः सर्वथोभयतः स्पर्शतोन मुच्यामहे यद्यस्य विधिः स्वार्थानुष्ठापकोज्योतिष्टोमाद्युपकारकत्वम् । ननुकिमिदंपूर्वापरविरुद्धंप्रलप्यते प्रागुक्तंनसाक्षात्संस्कारविधयोऽधिकारसंबन्धिनः इदानींतु स्वतन्त्रएवायंविधिः स्वार्थानुष्ठापकइति । अथवा विशेषश्रुतेनान्वयिनानसंबध्यते गम्यमानस्त्वधिकारःसंस्कारविधीनामप्यविरुद्धइतिनायंविशेषोयस्य विधिप्रयुक्तमनुष्ठानमर्थावबोधांशइष्यते । पाठमात्रस्याचार्यविधिप्रयुक्तत्वात्संस्कारविधीनामधिकारसंबन्धोऽभ्युपगतः स्यात् । अथविध्यन्तरोपकारकत्वात्तत्प्रयुक्तमनुष्ठानं तथासत्यधिकृतस्याध्ययनस्यानधीतवेदस्याधिकारः । तदा च शूद्रस्याधिकारोदुर्निवारः । नचाध्ययनानन्तरंवेदार्थश्रवणंप्राप्नोति । यदैव हि यदृच्छया कुतश्चिदधिगतंभवति ज्योतिष्टोमनामकर्मवैदिकंस्वर्गफलमिति तदैव तदितिकर्तव्यतांशिक्षेत् । तत्कालएवच तदुपयोगिनोमन्त्रान्याजमानानधीयीत अत्रकेचिदाश्रयिन्यायेन परिहरन्तियथैव हिस्विष्टकृदादयउभयरूपाः संस्कारार्थकर्मतया एवंस्वाध्यायाध्ययनमप्यभिधानविनियोगानुसारितया क्रियाफलावबोधदर्शनेनचसंस्कारकर्मफलवत्कर्मार्थकर्म । अतःसाधिकारत्वसिद्धिः । कःपुनरधिकारी । उपनीतस्त्रैवर्णिकोमाणवकइतिब्रूमः । ब्रह्मचारिधर्मेषु ह्येतदाम्नायते लिङादयोह्यविनाभूतनियोज्यार्थविध्यर्थप्रतिपादकास्तत्रविशेषाकाङ्क्षायांकचिच्छब्दसमर्पितोविशेषोभवति । स्वर्गकामोयावज्जीवमग्निहोत्रंजुहोति । कचिदश्रुतोऽप्यन्विताभिधानसामर्थ्यबलेन कल्प्योविश्वजिदादिषु कचित्प्रकरणाद्वस्तुसामर्थ्याद्विध्यन्तरपर्यालोचनयापिच प्रतीयते । तदेतदिहसर्वमस्ति । प्रकृतोब्रह्मचारी वस्तुसामर्थ्येन चार्थावबोधउपजायते सचसर्वविधिषूपयुज्यतेविदुषोऽधिकारात् । तदिदमपरे न मृश्यन्ति । संस्कारविधित्वेनैवास्य प्रतीयमानाधिकारता । यतः संस्कारकर्माणि संस्कार्यार्थतयानुष्ठीयन्ते । यदिच संस्कार्ये न दृश्येत विशेषस्ततःसक्तुवत्संस्काररूपता हीयेत । अस्ति चात्रफलवत्कर्मावबोधलक्षणोविशेषः । यत्तु स्विष्टकृदादिवदिति तत्प्रकृतिप्रत्ययविज्ञानागम्यत्वरूपहानितया युक्तोभयरूपता । तस्मात्स्थितंस्वतन्त्रोयंविधिर्माणवकस्येति । अतश्च स्वतएवानुष्ठेयोनावघातादिवद्दर्शपूर्णमासाद्यधिकारनियोगाक्षेपेण ·एवमनेकवेदाध्ययनमपिद्रष्टव्यम् । तत्रापि ह्येकेन वेदेन निर्वृत्ते विध्यर्थे किमित्यनेकवेदाध्ययनं फलभूम्नातुयुज्यते । फलंचपूर्ववन्नतु वाक्यशेषाधीतंपयोदध्यादि । एवंस्थितएकवेदाध्यायिनःस्वशाखानधीतानांमन्त्राणांकर्मोपयोगिनांकर्मानुष्ठानकालेसामर्थ्यात्तदाक्षिप्तमध्ययनमनुज्ञातंभवति । यद्यप्यधीतवेदस्याधिकारेऽधीतइति । अन्ये तु ब्राह्मणेन निष्कारणोधर्मःषडङ्गोवेदोध्येयइति निष्कारणइत्येतस्याधिकारपदतांमन्यन्ते । निष्कारणः कारणंप्रयोजनमनुद्दिश्यनित्यकर्मवत्कर्तव्यं न ह्यस्याधिकारसमर्पकत्वमन्तरेण विषयद्वारेण क्रियाकारकतद्विशेषणत्वादिनान्वयः संभवति तस्मात्सत्यपिसंस्कारविधित्वे गम्यमानाधिकारत्वंश्रूयमाणाधिकारत्वंवाऽविरुद्धम् । अपरे तु संस्कारविधित्वादनधिकारतामेव ज्यायसींमन्यन्ते । अनुष्ठानविशेषलाभार्थोह्यधिकारउपास्यते । सचेह संस्कार्यविशेषदर्शनादेव सिद्धः । संस्कारविधयः प्रयोजनापेक्षया । क्रियाफलमेवात्रविधिसाध्यं तच्चकर्मस्थंग्रहणलक्षणं-

दृश्यतएवाविरुद्धम्। अश्रुते विभागे स्मृत्यन्तराद्विभागावगतिः प्रतिवेदंब्रह्मचर्यंद्वादशाब्दानीति। केपुनरत्र त्रयोवेदाअभिप्रेताः ऋग्वेदोयजुर्वेदःसामवेदइति । अथ किंनाथर्वणोवेदइतियद्येतत् पृथग्वाक्यम् । अथतुग्रहणान्तिकमेवेचेत्येतन्नैकंवाक्यंतन्नास्ति गृहीते वेदे व्रतनिवृत्तिः । कएवमाहकिंत्वत्रयथाश्रुतं संस्कार्यत्वनिबर्हणायांअर्थावबोधनिष्ठतयातस्यविधेरनुष्ठानलाभः । अवबोधोहिसकलकर्मानुष्ठानोपयोगीति । आथर्वणश्चाभिचाराद्युपदेशबहुलः। तस्मान्नज्योतिष्टोमादिकर्माणि विधीयन्ते । नापि तेषांकिंचिदङ्गंत्रय्यैवहौत्राध्वर्यवौद्गात्रादिसकलतदङ्गपरिसमाप्तिः। प्रधानोत्पत्तिविधयश्च त्रयाणामेव ज्योतिष्टोमादीनांसंति। ब्रह्मत्वमपि त्रयाणामेव विद्यते । त्रिशब्दश्चसंख्यावचनः। नचसंख्याशब्दाःकंचिद्धर्ममेकमनपेक्ष्यप्रवर्तन्ते ।अतोयेषामेवेह कार्योपदेशपरता तएव त्रिशब्देनाभिगदितुंशक्यन्ते । न चाथर्वणस्यतत्कार्यानुप्रवेशः। नतत्र प्रधानविधयोज्योतिष्टोमादीनांनाङ्गविधयः। श्येनादिष्वभिचारयज्ञेषु तएवार्त्विजः सैवान्यापीतिकर्तव्यता। विशेषोऽपियः सोऽपि त्रय्यामेवोपदिष्टः । अतऋग्यजुषामृक्सामाभ्यांचैकत्रकर्मणि समावेशाभावात्त्रिवेदीव्यपदेशानुपपत्तेराथर्वणस्येहग्रहणंस्वाध्यायशब्दवाच्यत्वात्त्वध्ययनविधेस्तद्विषयत्वमविरुद्धम् । तदर्धिकंषट्त्रिंशत्संख्याप्रत्यवमृश्यते ततोऽर्धमष्टादशवर्षाणि। अत्रापिविभागकल्पनाषड्वर्षाणि अत्रापि पादिकं पादश्चतुर्भागभागिनी सैव संख्यानववर्षाणिचतुर्थोभागः। प्रतिवेदंत्रीणि। कथंपुनस्त्रिभिर्वर्षैर्वेदः शक्यो ग्रहीतुं असमाप्तग्रहणस्य च व्रतनिवृत्तौ व्रतस्नातकव्यपदेशो भवतिकश्चिन्मेधावितमः । अपर आह न ग्रहणस्वरूपप्रयुक्ताधर्माःकिंतर्हितद्विषयेण विधिनाप्रयुज्यन्ते तत्रापि निवृत्ते ग्रहणे यदि कानिचिदहानि नियमानुपालनमध्ययनकाले क्रियते तावत्सम्पाद्यतएवशास्त्रार्थःभवेत्स्वाध्यायविध्यर्थं तावतैवाङ्गकलापानुष्ठानम् । असमाप्तग्रहणस्य तद्व्रतनिवृत्तौ व्रतस्नातकव्यपदेशः । अतः कालविशेषविधानंयुक्तम्। त्रिभिर्वर्षैः विना न व्रतस्नातकोभवति तद्यद्यपि स्नानंवेदसमाप्ताविति केचित्स्मरन्ति तथापि तदर्थव्रतसमाप्तावपि प्रयोगउपचाराद्युक्तएव। तदयुक्तम्। सत्यपि विधिप्रयुक्तयावदध्ययनभावितैव व्रतानां युक्ता । अध्ययनसंयोगेनर्हि तानि चोद्यन्ते यावदध्ययनंभवति वचनादेव हित्रिसांवत्सरी व्रतचर्या प्रागपिग्रहणाद्यद्येतत्पृथग्वाक्यम् अथतु ग्रहणान्तिकमेवे त्येकंवाक्यंततो नास्त्यगृहीते वेदे व्रतनिवृत्तिः। एवकारेणैवमेव पक्षमनुमन्यन्ते। यदिनास्त्यगृहीते वेदे तन्निवृत्तिःकथं तर्हि व्रतस्नातकोवेदस्नातकइति भेदेन व्यपदेशः। चतुर्थेवक्ष्यामः। षट्त्रिंशदब्दाःसमाहृताः षट्त्रिंशदब्दंतत्रभवंषाट्त्रिंशदब्दिकम्। एवंत्रैवेदिकम्। तदर्थपरिमाणंतदर्धिकम् ।एवं पादिकं ग्रहणान्तिकमितिसर्वत्र अतइनिठनाविति मत्वर्थीयः। नतु यस्ययत्परिमाणंतत्तस्यास्तीति शक्यतेऽपदेष्टुम्॥ १ ॥

( २ ) **सर्वज्ञनारायणः**। क्रमप्राप्तंगार्हस्थ्याश्रमधर्मंप्रक्रमते। षट्त्रिंशदाब्दिकमिति। षट्त्रिंशद्वर्षनिर्वर्त्यं वेदत्रयाध्ययनार्थंव्रतंब्रह्मचर्याश्रमनियतधर्मरूपं चर्यंचरणीयम्। नियमेनाधीतंवीर्यवत्तरंभवतीतिश्रुतेः एकदेशस्यापि व्रतेनाध्ययने प्राशस्त्यात्। अशक्तस्य तदर्धिकंअष्टादशाब्दिकंवा नवाब्दिकमिति त्रिःप्रकारं व्रतंस्नानं केवलविद्यास्नानंकर्तुमिच्छतोग्रहणान्तिकम्। अर्थादुभयनिष्पत्तौ विद्याव्रतस्नानसिद्धिरिति स्फुटत्वान्नोक्तम्। आथर्वणिकस्य तु त्रयीनिष्कर्षत्वात् एतद्व्रतेनैवव्रतसिद्धिरिति मन्तव्यम्॥ १ ॥

( ३ ) **कुल्लूकः**। पूर्वत्रासमाप्तेः शरीरस्येत्यनेन नैष्ठिकब्रह्मचर्यमुक्तम्। नतत्रावध्यपेक्षा आसमावर्तनादित्यनेनचोपकुर्वाणकस्य सावधिब्रह्मचर्यमुक्तम्। अतस्तस्यैवगार्हस्थ्याधिकारः। तत्र कियदवधिविधौ ब्रह्मचर्ये तस्य गार्हस्थ्यमित्यपेक्षायामाह षट्त्रिंशदाब्दिकमिति। त्रयोवेदाऋग्यजुःसामाख्यास्तेषांसमाहारःत्रिवेदी तद्विषयंव्रतंस्वगृह्योक्तनियमसमूहरूपं-

षट्त्रिंशद्वर्षयावद्गुरुकुले चरितव्यं षट्त्रिंशदाब्दिकमितिषट्त्रिंशदब्दशब्दात्कालाट्ठञ् । अस्मिश्चपक्षेसमंस्यादश्रुतत्वादिति-न्यायेनप्रतिवेदशाखंद्वादशवर्षाणिव्रतचरणम् । तदर्धिकमष्टादशवर्षाणि तत्रप्रतिवेदशाखंषट् । पादिकंनववर्षाणि तत्रप्रतिवेदशाखंत्रीणि यावताकालेनोक्तावधेरूर्ध्वमधीवा वेदान्गृह्णाति तावत्कालंवाव्रताचरणम् । विषमशिष्टत्वेपिपक्षाणामेकादेयास्तिस्रो-देयाःषड्देयाइतिवन्नियमफलेन्यूनापेक्षोविकल्पः । तथाचश्रुतिः नियमेनाधीतंवीर्यवत्तरंभवतीति । ग्रहणान्तिकपक्षसंदर्शना-त्पूर्वोक्तपक्षत्रये ग्रहणादूर्ध्वमपि व्रतानुष्ठानमवगम्यते । अथर्ववेदस्यर्ग्वेदांशत्वेप्यृग्वेदंयजुर्वेदंसामवेदमथर्वाणंचतुर्थमितिछा-न्दोग्योपनिषदिचतुर्थवेदत्वेनकीर्तनात् अङ्गानि वेदाश्चत्वारइतिविष्णुपुराणादिवाक्येषु च पृथङ्निर्देशाच्चतुर्थवेदत्वेपिप्राये-णाभिचाराद्यर्थत्वात्यज्ञविद्यायामनुपयोगाच्चानिर्देशः । तथाहिऋग्वेदेनैवहौत्रंकुर्वन्यजुर्वेदेनाध्वर्यवंसामवेदेनौद्गात्रंयदेवत्रय्यै विद्यायै सूक्तंतेन ब्रह्मत्वमितिश्रुतेस्त्रयीसंपाद्यत्वंयज्ञानांज्ञायते । अयंचमानवस्त्रैवेदिकव्रतचर्याविधिर्नाथर्ववेदव्रतचर्यानिषेध-यति तत्परत्वेवाक्यभेदप्रसङ्गाच्छ्रुत्यन्तरेवेदमात्रेव्रतश्रवणाच्च । यदाहयोगियाज्ञवल्क्यः प्रतिवेदंब्रह्मचर्यंद्वादशाब्दानि पञ्चवा ॥ १ ॥

( ४ ) **राघवानन्दः** । ब्रह्मचर्येणैव निष्ठांसमाप्निमरणं गतोनैष्ठिकइति समाख्ययैव गार्हस्थ्यनिवृत्तिःसिद्धा । उप-कुर्वाणस्य गार्हस्थ्यं तद्ब्रह्मचर्यस्य कालविकल्पंचाह षट्त्रिंशदितिद्वाभ्यां । वेदार्थानुष्ठाने सएव मुख्याधिकारीति । मानं-पूर्ववेदादीत्युक्तमधुना मेयंवक्तव्यमिति मानमेययोःसंगतिः । त्रैवेदिकं त्रयाणांवेदानांसमाहारस्त्रिवेदी तद्ग्रहणप्रयोजनं त्रैवेदि-कं व्रतं विशेष्यं । षट्त्रिंशत्संवत्सरैरदृष्टार्थैर्वेदत्रयस्य सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात् शाखात्रयस्याध्ययनमवश्यं-भावीति मेधागतवैजात्यात्तदर्धिकमष्टादशवर्षसाध्यं पादिकं नववर्षसाध्यं समंस्यादश्रुतत्वादित्यादिन्यायेनवा प्रतिशाखं-स्वतन्त्रमदृष्टार्थंगृहीतेपि वेदे व्रतमिति विशेषणम् । तथाच द्वादशषट्त्रीणि वर्षाणि वेदव्रताचरणं अतएवोक्तम् । तपोवि-शेषैर्विविधैर्व्रतैश्च विधिचोदितैरिति । दुर्मेधसोनियमव्यावृत्तिमाह ग्रहणान्तिकमेववेति एतद्व्रतजातंनिर्विघ्नताध्ययनसमा-प्त्यर्थमिति भट्टपादाः ॥ १ ॥

( ५ ) **नन्दनः** । एवंप्रतिपादितस्य ब्रह्मचर्यस्याध्येतृसामर्थ्यानुरूपान्कालविकल्पानाह षट्त्रिंशदिति । षट्त्रिंशदब्दानां-समाहारः षट्त्रिंशदब्दं तत्रभवंषट्त्रिंशदाब्दिकम् । त्रैवेदिकमितिपदमप्येवम् । कृत्स्नवेदसंग्रहणार्थंत्रिशब्दः । पञ्चपाण्डवाइ-त्यत्रपञ्चशब्दवत् । मन्त्रत्रैविध्यनिबन्धनंहिवेदानांत्रित्वम् । तेनचतुर्थोऽपिवेदमन्त्रोमन्त्रात्मात्रिशब्देनसंगृह्यते । व्रतंचर्यंचरि-तव्यम् । तदर्धिकमष्टादशाब्दाः । एवंपादिकंग्रहणान्तिकम् ॥ १ ॥

( ६ ) **रामचन्द्रः** । अतःपरंगृहस्थाश्रममारभते । गुरौ समीपे षट्त्रिंशदाब्दिकं षट्त्रिंशद्वर्षपर्यन्तंकुर्याच्च यत्त्रयाणां वेदानांसमाहारस्त्रिवेदी तद्ग्रहणंप्रयोजनं त्रैवेदिकंव्रतंचरित्रं द्वादशाब्दिकं षट्षट्पर्यन्तंवा व्रतंब्रह्मचर्यंचरेत् । ग्रहणादिमेव वा व्रतंचरेत् । गृहणक्रिया व्रतेन्तर्भवति वेदाधिगमस्य प्राग्विहितत्वात् ॥ १ ॥

**वेदानधीत्य वेदौ वा वेदंवापि यथाक्रमम् ॥ अविप्लुतब्रह्मचर्योगृहस्थाश्रममावसेत् ॥ २ ॥**

( १ ) **मेधातिथिः** । त्रैवेदिकमध्ययनमुक्तम् । एकद्विवेदाध्ययनमप्राप्तंविकल्प्यते । वेदशब्दः शाखावचनोव्याख्या-तः । तिस्रःशाखाअधीयीत द्वेएकांवैकैकस्माद्वेदान्नवेकस्मादेव । त्रयी त्रिविद्येति पठ्यते । अधीत्य गृहीत्वा वेदमुक्त-या व्रतचर्यया गृहस्थाश्रममावसेत् । गृहस्थाश्रमस्य स्वरूपंवक्ष्यति उद्वहेतद्विजोभार्यामित्यादि । आवसेदनुतिष्ठेत् । अने-

( २ ) आवसेत्=आविशेत् ( मेधा० )

कार्थाधातवः। कृतदारपरिग्रहोरूढ्या गृहस्थउच्यते । गृहशब्दोदारवचनस्तत्रतिष्ठति । आङ्मर्यादायांवर्तते तस्य योविहितपदार्थसमूहोविधिनिषेधात्मकः सआश्रमशब्देनोच्यते यथोपनीतस्य ब्रह्मचर्याश्रम आसमावर्तनात्कृतविवाहस्य गार्हस्थ्यमिति । अविप्लुतमखण्डितंब्रह्मचर्यंस्त्रीसंप्रयोगनिवृत्तिर्यस्य सएवमुच्यते । वाक्यभेदश्चात्रद्रष्टव्यः । आख्यातव्यवहारेणाविप्लुतब्रह्मचर्योभवेद्गृहस्थाश्रमंचप्रतिपद्यते । एकवाक्यतायां कदाचनविप्लवे गार्हस्थ्याधिकारएवहीयेत अथ पुनः पुरुषार्थतया विधानेन तदतिक्रमे प्रायश्चित्तेन युज्यते नत्वधिकारी भवति अधीत्यावसेदिति च पौर्वापर्यमात्रंविवक्षितम् । नाध्ययनसमनंतरभाविता विवाहस्य यत्कार्यात्पौर्वापर्यविधानादानन्तर्यंन शब्दार्थः । अतश्चस्वाध्यायाध्ययनविवाहयोरन्तराले व्याकरणादिशास्त्रश्रवणंवेदार्थज्ञानार्थंलभ्यते विद्वानेवहिगार्हस्थ्येऽधिक्रियते । यथानाध्ययनविधौ मूर्खोयद्यपिबाल्यावस्थायांतिर्यक्समानधर्मा स्वमधिकारंप्रतिपत्तुमसमर्थस्तथापि पित्राचार्येण वाऽनुष्ठाप्यते । वस्तुतस्तयोरेवाधिकारोऽपत्यानुशासने पितुरधिकारोऽपत्योत्पत्तिविधौ तावताभिनिर्वर्त्यत्वात् । अनुशासनंच विधिनिषेधाधिकारद्वयप्रतिपादनम् । तत्र यत्प्रतिपाद्यमानोऽपिनावबुध्यते तदन्धइव हस्तग्राहिकया कार्यते । यथाग्निसंस्पर्शकूपादिपाताद्बालहस्तावष्टम्भोधार्यतएवमदृष्टादपि मद्यपानादेर्यथावानिच्छन्नौषधदानादौ प्रवर्तते एवंशास्त्रीयेष्वपि पदार्थेषु यदा त्वीषद्युत्पन्नस्तदैवंनियुज्यतइदमिदंकर्तुमर्हसीति । एवंसत्यधीतवेदोमाणवकः पित्राचार्येणैवंमबोधयितव्योगृहीतवानसिवेदंत्वमिदानींतदर्थजिज्ञासायामधिक्रियसे ततस्तदङ्गानि श्रोतुमर्हसीति । एतावता पितुरपत्योत्पादनाधिकारनिवृत्तिः । तदुक्तं कियतापुनरुत्पादितोभवतियावतात्वयमधिगतकृत्योभवतीति । अतःस्थितमेतत् नाधीत्यैवविवाहोयावद्वेदार्थोनाधिगतः । एवंच पदयोजना कर्तव्या अधीत्याध्ययने निवृत्तेऽप्यविप्लुतब्रह्मचर्यःस्यात् । प्राप्तायांच निवृत्तौ पुनर्वचनंनियमान्तराणांमधुमांसवर्जनादीनांनिवृत्तिपरम् । तेन यावदध्ययनंतावत्सर्वे नियमाअनुष्ठातव्याः । समाप्तेत्वध्ययनेऽर्थावबोधकाले स्त्रीनिवृत्तिरेव । ब्रह्मचर्यशब्दोयद्यपिब्रह्मग्रहणार्थयद्व्रतग्रहणंतत्र व्युत्पाद्यते तथापि स्त्रीनिवृत्तिपरएवास्य तत्रप्रयोगइति दर्शयिष्यामः । यथाक्रमं यएवाध्येतॄणांपाठक्रमः प्रसिद्धस्तेनैव प्रथमंचतुःषष्टिस्ततोब्राह्मणंपितृपितामहाद्यभिजनप्रबन्धोपक्रमंभवति । नहीदृशेऽर्थेवक्तारो न कुलेन न शीलेन न क्रमेणेति । एतेनचैतत्प्रतिपादितंभवति याएव पित्रादिभिः शाखाधीतासापि नत्याज्येति ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । विद्यास्नानपक्षे शक्त्यपेक्षोविकल्पः । यथाक्रमंवेदत्रयाध्ययनपक्षेऋग्वेदादिक्रमेणैवा वेदाध्ययने तु यच्छाखीयसंस्कारैः संस्कृतस्तस्याएवादावध्ययनमित्यर्थः ॥ २ ॥

( ३ ) **कुल्लूकः** । वेदशब्दोऽयंभिन्नवेदशाखापरः । स्वशाखाध्ययनपूर्वकवेदशाखात्रयंद्वयमेकांवा शाखांमन्त्रब्राह्मणक्रमेणाधीत्य । गृहस्थाश्रमंगृहस्थविहितकर्मकलापरूपमनुतिष्ठेत् । कृतदारपरिग्रहोगृहस्थः गृहशब्दस्य दारवचनत्वात् । अविप्लुतब्रह्मचर्यइति पूर्वविहितस्त्रीसंयोगमधुमांसभक्षणवर्जनरूपब्रह्मचर्यानुवादोऽयं प्रकृष्टाध्ययनाङ्गत्वख्यापनार्थः । पुरुषशक्त्यपेक्षश्चायमेकद्वित्रिशाखाध्ययनविकल्पः । यद्यपि व्रतानि वेदाध्ययनंच नित्यवदुपदिशता मनुनोभयस्नातकएव श्रेष्ठत्वादभिहितस्तथापि स्मृत्यन्तरादन्यस्नातकोपि बोद्धव्यः । तदाह हारीतः त्रयःस्नातकाभवन्ति विद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति । यः समाप्य वेदमसमाप्य व्रतानि समावर्ततेसविद्यास्नातकः । यः समाप्य व्रतान्यसमाप्यवेदंसमावर्तते सव्रतस्नातकः । उभयंसमाप्य समावर्तते यः सविद्याव्रतस्नातकः । याज्ञवल्क्योऽप्याह वेदंव्रतानि वा पारंनीत्वा ह्युभयमेव वेति ॥ २ ॥

( ४ ) **राघवानन्दः** । शाखामन्त्राध्ययनमवश्यंभावीति त्रिंशदधिकैकादशशतशाखानांवेदचतुष्टयपरिमाणत्वात् पु-

रुषायुषमध्येप्यध्येतुमशक्यत्वाद्वेदशब्दः शाखापरः। सर्वशाखाप्रत्ययमेकंकर्मेति न्यायात् सर्वशाखाविधित्वंचसिद्धमध्येतृभेदतइति भट्टस्वरसात्। अन्यथैकैकस्य संपूर्णवेदाध्ययने पुनरनुवादएव। वेदाध्ययनविधिरध्यापनाङ्गमिति गुरुः। अर्थावबोधाङ्गमिति भट्टाः। अक्षरावाप्तिपरमिति वेदान्तिप्रभृतयः। एतन्मतमेवसाधु। योनधीत्येत्यादिनिन्दार्थवादेनाध्ययनस्य नित्यतावगमात्तत्र ऋग्वेदेन हौत्रं कुर्यात्। यजुर्वेदेनाध्वर्यवम्। सामवेदेनौद्गात्रम्। सदैवतंतथैव विद्यया सूक्तमप्याऋग्येवेति स्मृतेः। तेन ब्रह्मत्वमित्यतोवेदत्रयसाध्यत्वात्सर्वकर्मणामतोन प्रवेशोथर्ववेदस्य अतएव वेदोनधीत्येति यथाक्रमं स्वशाखानुक्रमेण। अविप्लुतब्रह्मचर्यः अक्षतब्रह्मचर्यः॥ २॥

( ६ ) **रामचन्द्रः** । तद्यथा वेदेति। गृहस्थः अविप्लुतब्रह्मचर्योस्खलितब्रह्मचर्यो गृहस्थाश्रममावसेत्। किंकृत्वा वेदशब्दःशाखावयवेव्याख्यातः। वेदान्वेदौ वा वेदंवा यथाक्रमंशाखाक्रमेणाधीत्य॥ २॥

**तंप्रतीतंस्वधर्मेण ब्रह्मदायहरंपितुः॥ स्रग्विणंतल्पआसीनमर्हयेत्प्रथमंगवा॥ ३॥**

( १ ) **मेधातिथिः** । तंब्रह्मदायहरंप्रथमंगवार्हयेत् ब्रह्मच दायश्च ते उभे हरति स्वीकरोतीति ब्रह्मदायहरः। दीयतइतिदायोधनंब्रह्मवेदोहरणमधिगमः। गृहीतवेदःपित्रा कृतविभागोगार्हस्थ्यंप्रतिपद्यते निर्धनस्यानधिकारात्। यदितु पिता निर्धनस्तदासांतानिकतया धनमर्जयित्वा विवाहयेत्। अन्येतुब्रह्मैवदायोब्रह्मदायइतिपूर्वोक्तविध्यनुवादंमन्यन्ते पितुरिति। ननुचाचार्यस्य माणवकाध्यापनेऽधिकारउक्तःकिमिदमुच्यतेपितुर्ब्रह्मदायहरमिति। उच्यते यस्य पिता विद्यते तस्य सएवाचार्यः। अभावे पितुरशक्तौवान्यस्याधिकारः। आचार्यान्तरोपादानेन पितुरधिकारोनिवर्ततएव स्वयंवाध्यापयत्यन्योपादाने न वेति न विशेषः। यदप्याहुर्वरोदक्षिणेत्युपनयने नित्यवद्दक्षिणाम्नानात्परकर्तृकत्वमेवेति तदसत्। उपनयस्य ह्ययंविधिःवरोदक्षिणेति। उपनेता चपिता वाचार्योवा तौ द्वावपि स्वाधिकारप्रवृत्तौ नात्यन्तरमपेक्षेते आनमनार्थंहिदक्षिणादानम्। नचाधिकारान्तरतः प्रवृत्तस्यानतिरुपयुज्यते। तेनायंदक्षिणाशब्दआनमनार्थाभावादर्थाद्धिरण्यदानवददृष्टार्थदानोपलक्षणार्थोविज्ञेयः। पित्रैव चासौ तावता धनेन स्वामी कर्तव्योयेन वरदानमस्य संपद्यते। अथायमाग्रहो नानत्यर्थाद्दानाद्दतेदक्षिणाशब्दस्योपपत्तिः। नवा मुख्येसतिलक्षणान्याय्येति। एवंतर्हि यस्यपिता न तत्स्थानीयोनाचार्यःसयदात्मानमुपनयेत्सत्यकामवत्तद्विषयोदक्षिणाविधिर्भविष्यति। तस्यापि चेषदपेतशैशवस्यात्मसंस्कारायास्त्येवाधिकारइतिप्रतिपादितम्। तस्मादुभयथा पितुरधिकारः। स्वयमुपनयमानस्यान्यमाचार्यमुपाददानस्य वा प्रतीतमभिमुखीभूतंगृहाश्रमप्रतिपत्तौ नतु नैष्ठिकंसमाप्ताध्ययनविध्यर्थमपि ग्रामप्रतिपत्तौ। स्रग्विणं यावन्तः केचन गृह्यकारैर्मधुपर्ककर्मणि धर्माआम्नातास्तेषांप्रदर्शनार्थमेतत्। तल्पआसीनं महार्हपर्यङ्कशयनोपविष्टम्। गवा मधुपर्केण। मधुपर्केऽसौ विधिः पाक्षिकआम्नातः। अतोगोशब्देन तत्साधनकर्मशेषोलक्ष्यते अर्हयेत् पूजयेत्। अधिकारात्पिताचार्योवा। प्रथमंपूर्वविवाहात्। पूजाधिकारार्हशयानंप्रतीतंस्वधर्मेणेत्यनुवादः। स्वधर्मेण ब्रह्मदायहरंस्वधर्मेणचार्हयेदितिसंबन्धे न विशेषः॥ ३॥

( २ ) **सर्वज्ञनारायणः**। ब्रह्मवेदं प्रतीतं प्राप्तवन्तं अधिगतवन्तमिति यावत्। दायहरंवित्तहरं पितुःपितृऋक्थग्रहणार्हम्। अनैष्ठिकमिति यावत्। प्रथमंयस्य गृहेऽसावुपस्थितः सान्तानिकत्वेनार्थार्थितया सगवार्हयेत् इतिगोशब्दस्तत्सहचरितमधुपर्कपरः। स्रग्विणं तल्पआसीनमिति। माल्यासनविशेषाभ्यामर्चाभिप्रेता। तल्पे तूलिकादिमति शय्यारूप आसने॥ ३॥

( ३ ) **कुल्लूकः**। तंब्रह्मचारिधर्मानुष्ठानेन ख्यातम्। दीयतइति दायः ब्रह्मैव दायोब्रह्मदायः तंहरतीति ब्रह्मदायह-

रंपितुः । पितृतोगृहीतवेदमित्यर्थः । पितृतोऽध्ययनंमुख्यमुक्तंपितुरभावआचार्यादेरप्यधीतवेदंमालयालङ्कृतमुत्कृष्टशयनोपविष्टंगोसाधनमधुपर्केण पिताऽऽचार्योवा विवाहात्प्रथमंपूजयेत् ॥ ३ ॥

( ४ ) **राघवानन्दः** । तंब्रह्मचारिणं प्रतीतंस्वधर्मानुष्ठानेन ख्यातं । ब्रह्मदायहरंपितुः पितृतोगृहीतवेदम् । अथवा स्वधर्मेणैव ब्रह्म वेदं प्रतीतंप्राप्तवन्तम् । पितुर्दायहरं नैष्ठिकव्यावृत्त्यर्थंपितुर्दायहरमित्युक्तं पितृतोऽध्ययनस्यानावश्यकत्वात् । स्रग्विणंसमलङ्कृतं । तल्पे शय्यायांगवा गोमता मधुपर्केण पिता आचार्योवा अर्हयेत् पूजयेत् ॥ ३ ॥

( ५ ) **नन्दनः** । पितुःसकाशाद्ब्रह्मदायहरं ब्रह्म वेदस्तदर्थंदायोदानंदक्षिणा ब्रह्मदायस्तंहरतीतिब्रह्मदायहरंपितुः सकाशाद्गुरुदक्षिणांगृहीत्वागुरवे दत्तवन्तमित्यर्थः । प्रतीतंप्रतिगतंब्रह्मचर्यान्निवृत्तमितियावत् । स्रक्शब्दःसर्वालंकाराणामुपलक्षणम् । गोशब्दोऽश्वादीनाम् । अर्हयेत्कन्याप्रदोगृहीवा ॥ ३ ॥

( ६ ) **रामचन्द्रः** । तंप्रथमंपूजयेत् कीदृशंगुरुंस्वधर्मेण ख्यातं । पुनः कीदृशंब्रह्मदायहरंब्रह्मैव वेदएव धनंयस्य तस्य दाय अंशःतस्य हरं हरति स्वीकरोति तं । पुनः कीदृशंस्रग्विणं । पुनः कीदृशं तल्पमासीनमासनस्थम् ॥ ३ ॥

**गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ॥ उद्वहेत द्विजोभार्यांसवर्णांलक्षणान्विताम् ॥ ४ ॥**

( १ ) **मेधातिथिः** । सत्यामपि वेदव्रतसमाप्तौ गुरुणानुज्ञातः स्नायात् । स्नानशब्देन गृह्योक्तसंस्कारविशेषोलक्ष्यते ब्रह्मचारिधर्मावधिः । यथा चात्र लक्षणा तथाप्राग्व्याख्यातम् । तदहरेव गृह्यकारोक्तंकश्चिन्मधुपर्कपूजाविहितसंस्कारंप्राप्य समावृत्तोगुरुकुलात्पितृगृहंप्रत्यागतइत्यनुवादः । उद्वहेतेत्येतद्विधिशेषमेतत्सर्वंप्राप्तमेव । नतु समावर्तनंविवाहाङ्गम् । तेनयः पितृगृहएवाधीतवेदस्तस्यसमावृत्तस्य संभवत्येव विवाहः । केचित्समावर्तनंविवाहाङ्गंस्नानंमन्यन्ते । क्त्वाश्रुत्या भेदप्रतिपत्तिरितिचेदेवंतर्हि समावर्तनं विवाहाङ्गंस्नानसंस्कारंवक्ष्यति सविशेषंहि तत्र स्नानमाम्नातमेव स्नातकेनेत्यादि । अथवायमनियमत्यागाभिप्रायंसमावृत्तिवचनम् । समावृत्तः प्राक्तनीमेवावस्थांनियमरहितांप्रतिपन्नइत्यर्थः । विशेषाभिप्रायंचनियमत्यागवचनम् । ब्रह्मचारिणोहि सातिशयायमनियमानतथोत्तरेषाम् । यथाविधीतिस्वधर्मेणेतिवत् । उद्वहेत द्विजोभार्या उद्वहेतेतिविवाहविधिःसंस्कारकर्मविवाहोभार्यामितिद्वितीयानिर्देशात् । नच प्राग्विवाहाद्भार्या सिद्धास्तियस्याविवाहसंस्कारःक्रियते न चक्षुषइवाञ्जनसंस्कारः । किंतर्हि निवर्त्यते विवाहेन । यथा यूपंछिनत्तीतिछेदनादयः संस्कारायस्य क्रियन्ते सयूपः एवंविवाहेनैव भार्या भवतीति विवाहशब्देन पाणिग्रहणमुच्यते तच्चात्रप्रधानम् । एवंहि स्मरन्तिविवाहनं दारकर्म पाणिग्रहणमिति । इहापिवक्ष्यति पाणिग्रहणसंस्कारइति लाजहोमाद्यङ्गम् । तच्चगृह्यादखिलं ज्ञातव्यम् । नोद्वहेत्कपिलांकन्यामितिकन्याग्रहणात्कन्यायाअयंसंस्कारोनस्त्रीमात्रस्य । कन्याशब्दश्चात्रप्रकरणेऽप्रवृत्तपुंसंप्रयोगायांयोषिति वर्ततइतिवक्ष्यामः । सवर्णांसमानजातीयाम् । लक्षणान्विताम् । लक्षणानिअवैधव्यप्रजाधनसूचकानिवर्णरेखातिलकादिचिन्हानि ज्योतिःशास्त्रावगम्यानि तैरन्वितांयुक्तांशुभलक्षणान्वितामित्यर्थः । यद्यप्यनिष्टसूचकमपिलक्षणंभवति किंतु सूचकैरेवशास्त्रैस्तादृशींविवाहयेत् अतःप्रशस्तलक्षणालक्षणवतीद्रष्टव्या । अभिप्रेतसूचकएव लक्षणशब्दोलोकेप्रयुज्यते । सलक्षणोऽयंपुरुषः सलक्षणा स्त्रीति याशुभलक्षणासैवमुच्यते तत्राधिकारचिन्ता कर्तव्या संस्कारविधित्वादेवाधानवदनुष्ठानलाभात् यथैवह्याधानमाहवनीयादिद्वारेण नित्यकाम्यकर्मोपयोगि तदङ्गाहवनीयादिनिर्वृत्त्यर्थमनुष्ठीयते एवंविवाहोऽपि भार्यानिर्वर्तकत्वेन दृष्टादृष्टपुरुषार्थोपयोगित्वात् । तथाहि खेदात्पुंसः स्त्रीमात्रविषयार्थंप्रवृत्तौप्रसक्तायांकन्यापरदारनिषेधात्स्वदारेषु कामिनः खेदनिवृत्तिःसहधर्मश्चरितव्यःइति तया सह सर्वधर्मेष्वधिकाराददृष्टपुरुषार्थसिद्धिस्तदधीना अत्र केचिन्मीमांसन्तेरागिणः । पूर्वोक्तेन प्रकारेण दृष्टसिद्ध्यर्थंविवाहंस्वतः कुर्वन्ति तेषांच कृतविवाहानांसंभवेत्सद्द्विजातिकर्मविधित्वेन

कर्मानुष्ठानसिद्ध्यर्थोविवाहः । यस्य कथंचित्स्त्रीनिष्ठानिवृत्तान तस्यविवाहः । असति विवाहेकर्मानधिकारादनधिकृतस्य-चाननुष्ठाने दोषाभावात्पुरुषार्थानुष्ठानान्यनुतिष्ठतो नाश्रमिणोप्यवस्थानमविरुद्धम् । तदेतदसत् यथैव कामः पुरुषार्थस्तथैव धर्मोऽपिपुरुषार्थत्वेप्रयोजकः । सर्वोऽपि पुरुषार्थसिध्यर्थंप्रवर्तते । यदि चैतदेवंस्यात्संवत्सरमनाश्रमीभूत्वेत्यादि नोपपद्येते-ति । निपुणंचैतदाश्रमविकल्पावसरे षष्ठे निर्णेष्यामः ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । गुरुणेत्यादिना व्रतंतत्कर्तव्यंसंक्षिप्योक्तम् । स्नात्वा व्रतविद्यासमापननिमित्तवैधर्म्य-स्नानं गुरुकुलएव कृत्वा समावृत्तः गुरुगृहात्पितृगृहानागतः । यथाविधि स्वगृह्योक्तहोमादिकर्मपूर्वकं स्नात्वेत्यन्वयः । लक्ष-णमत्रेधव्यादिचिन्हम् ॥ ४ ॥

( ३ ) **कुल्लूकः** । गुरुणा दत्तानुज्ञः स्वगृह्योक्तविधिना कृतस्नानसमावर्तनःसमानवर्णांशुभलक्षणांकन्यांविवहेत् ॥ ४ ॥

( ४ ) **राघवानन्दः** । प्रकृतमुपसंहरति गुरुणेतिद्वाभ्यां । समावृत्तः समावर्तनंमौञ्ज्यीत्यागप्रक्रिया गृह्योक्ता तया युक्तः । द्विजस्त्रैवर्णिकः सवर्णा समानजातिं । लक्षणान्वितां वक्ष्यमाणगुणां दुर्लक्षणहीनांच ॥ ४ ॥

( ६ ) **रामचन्द्रः** । द्विजः सवर्णा लक्षणान्वितां भार्या मुद्वहेत् । कीदृशोद्विजः समावृत्तो गुरुकुलादागतः किंकृत्वा गुरुणाऽनुमत आज्ञप्तःसन् स्नात्वा ॥ ४ ॥

**असपिण्डा च या मातुरसगोत्रा च या पितुः ॥ सा प्रशस्ता द्विजातीनांदारकर्मणि मैथुने ॥ ५ ॥**

( १ ) **मेधातिथिः** । यादृशी कन्या वोढव्या तामिदानींदर्शयति । मातुर्याऽसपिण्डा पितुश्च याऽसगोत्रा सा दारकर्मणि प्रशस्ता । सपिण्डग्रहणंमातृबन्धूपलक्षणार्थम् । मातुर्हिसापिण्ड्यंस्त्रीणांस्मृत्यन्तरे तृतीयपुरुषावधि । नतुत्रिभ्यऊर्ध्वंमातृब-न्धुभ्योविवाहइष्यते । किंतर्हिपञ्चमादूर्ध्वम् । एवंहि गौतमः पठति । ऊर्ध्वंसप्तमात्पितृबन्धुभ्योमातृबन्धुभ्यःपञ्चमादिति । ते-नयथाश्रुति समन्वयाभावात्सापिण्ड्याभावः स्मृत्यन्तरवशेन मातृसंबन्धितया व्याकरणीयः । तेनैवमुक्तंस्यात् मातुरन्वयजा या न भवति अवधिश्च गौतमीयएव तेन मातामहीमातामहयोर्यान्वयेजातासा पुत्रसंततेर्बान्धवसामीप्यात्पञ्चमींयावन्नविवा-हयितव्या । अतोमातृष्वसृतद्दुहितॄणांप्रमातामहोसततिजानांच सर्वासांप्रतिषेधोबन्धुत्वाविशेषात् । असगोत्राचयापितुः गोत्रं-वसिष्ठभृगुगर्गादिवंशः स्मर्यते । समानगोत्रावसिष्ठान वसिष्ठैर्विवहन्ते न गर्गागर्गैः । वासिष्ठे तु मातृसगोत्रांयाअपि प्रतिषेधः । परिणीय सगोत्रांतु समानप्रवरांतथा । कृत्वा तस्याः समुत्सर्गंद्विजश्चान्द्रायणंचरेत् ॥ मातुलस्य सुतांचैव मातृगोत्रांतथैव च ॥ गौतमेन तु पठ्यते असमानप्रवरैर्विवाहइति । तत्र गोत्रसमत्वे ऽसत्यपि प्रवरभेदश्चेद्युज्यते विवाहः । यतःस्मृत्यन्तरेह्यु-भयंनिषिध्यतेअसमानार्षगोत्रजामिति । आर्षप्रवरइत्येकोर्थः कथंपुनर्गोत्रभेदे समानार्षेयत्वम् । किमिति नभवतियदि-स्मर्यते श्रुतिस्मृतिप्रमाणकोऽयमर्थोनप्रत्यक्षगोचरोयेन विरोधः स्यात् । पुनरमी प्रवरानाम । अत्यल्पमिदमुच्यतेइदमपिव-क्तव्यंकिंपुनरेतद्ब्राह्मणत्वंनाम तथा कतरदेतद्गोत्रंनाम । यथैवसमाने पुरुषत्वे ब्राह्मणत्वादिविशेषः एवंसमाने ब्राह्मणत्वे वसिष्ठादिगोत्रभेदः प्रतिगोत्रंच समानार्षेयाणि । यस्यैतद्गोत्रंतस्यतैःशब्दैः प्रवराश्रयणंकर्तव्यम् । एवंविवाहनिषेधेऽपि । स्मरन्ति चसूत्रकारागोत्रभेदसंबन्धेनप्रवरान्यस्यैतद्गोत्रतस्येमेप्रवराइति । गोत्रभेदस्तु तद्गोत्रजैरेवस्मर्यते वयंपराशरावय-मुपमन्यवइति । यद्यपि गोत्रवत्प्रवरानपिस्मरन्तितथापिबहुत्वात्कदाचिद्विस्मरेयुरितिगोत्रमुपलक्षणीकृत्यप्रवरस्मृतिरूपनि-बद्धा । गोत्रंनुस्मरन्ति । नच तस्य किंचिदुपलक्षणमस्ति यएवंरूपस्तस्येदंगोत्रमिति । एतावत्तत्स्मरणम् । यावद्गोत्रंसंततिः-समानजातीयत्वम् । एषच गोत्रप्रवरभेदःब्राह्मणराजन्यविशाम् । तथाहि कल्पसूत्रकारः पौरोहित्याद्राजन्यवैश्ययोरिति । यद्यपि गोत्रविशेषव्यपदेशे सति ग्रामप्रतिषेधेनापि प्रवराधिकारे वचनमिदमुपपद्यते किंतु न तेषांगोत्रस्मरणमस्ति । कस्त-

( ५ ) णिमैथुने=ण्यमैथुनी ( मे० )

हिं क्षत्रियवैश्ययोर्विवाहेपि बन्धूनामवधेर्नियमः । उच्यते । सर्ववर्णविषयमेतत् ऊर्ध्वंसप्तमात्पितृबंधुभ्यइति । इहाप्य- सगोत्राचशब्दादसपिण्डा । तथाचानुवर्त्यमानः सपिण्डशब्दःपूर्ववद्बन्धुसंबन्धोपलक्षणार्थः । तेन पितृष्वसुरन्वयस्त्रीणाम न्यासांच प्रपितामहसंततिस्त्रीणामासप्तमात्पुरुषात्प्रतिषेधःसिद्धोभवति । सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते । अन्येतुगोत्रंवं- शमाहुः । नतत्रावध्यपेक्षा यावदेतज्ज्ञायते वयमेकवंशाइति तावदविवाहः । अस्मिन्नपि पक्षे असपिण्डाचेत्यनुवर्तते तेनपू- र्ववत्पितृष्वस्रादिदुहितॄणांप्रतिषेधः । अस्मिंस्तु पक्षे समानार्षगोत्राणां प्रतिषेधोदुर्लभः । नहितत्रैतःस्ति वयमेकवंश्याइति । उच्यते । ऐतिहासिकेन तद्दर्शनेनसमर्थयन्ते । तत्रहि वर्णयन्ति ऋषिर्वसिष्ठादिराद्योवंशस्य कर्ता तद्गोत्रास्ततःप्रसूताः प्रवराइति तत्पुत्रपौत्रास्तपोविद्याद्यतिशयगुणयोगेन प्रख्याततमाः स्मृत्यन्तरादेषएवनियमः । इदंत्वत्रनिरूप्यं यदेतत्स- मानप्रवरैरितितत्रनामधेयतस्तावत्समानत्वंनसंख्यातः । नामधेयसमानत्वे च कियत्र सर्वाण्येवसमानानि तत्र प्रतिषेधउतै- कस्मिन्नपि समाने तत्र यदि समुदितानांप्रवरत्वं तत्र समानेकस्मिंश्चिद्भिन्नेऽन्यस्मिन्नन्यः समुदायःसंजातइत्यसमानप्रव- रत्वाच्चप्रतिषेधः । एवंचोपमन्यूनांपराशराणांचरयाद्विवाहःभिन्नंतयोर्गोत्रम । एकउपमन्यवः अपरेपराशराः पूर्वेण च न्यायेन प्रवरभेदः । उपमन्यूनांवासिष्ठभारद्वाजैकपादिति प्रवराः । पराशराणांवासिष्ठगार्ग्यपाराशर्येति अथैकैकस्य प्रवरत्वमेकस्मिन्नपि समानप्रतिषेधः । तद्यथा माषानभोक्तव्यामिश्राअपि न भुज्यन्ते किंपुनरत्रयुक्तम् एकैकस्यप्रवर- त्वम् । तथाहिसामानाधिकरण्यंदृश्यते एकंवृणीते द्वौ वृणीतेत्रीन्वृणीतइति प्रतिपन्नएकः । तत्साम्येप्याहैषामविवाहइति । द्विजातिग्रहणमुपलक्षणार्थम् । शूद्रस्यापि आसप्तमात्पितृतःइत्याद्यस्ति । दारकरणंदारक्रिया दारकर्म तत्र प्रशस्ताप्रशंसया- विहितेत्यर्थः । मैथुनी मिथुनभवा मैथुनी न मैथुनी अमैथुनी । पितुरिति संबध्यते । पितृबीजादेवोत्पन्ना जातमात्रा । नियोगोविहितस्ततउत्पन्नायानास्ति पूर्वोक्तविशेषणैर्निषेधः । अतःपृथङ्निषिध्यते अमैथुनीतिततोनियोगोत्पन्ना कामतोन विवाह्या मैथुनीत्वात् । अन्येतु अमैथुने इतिपठन्ति । धर्मार्थे दारकर्मणिप्रशस्ता न मैथुने स्तुतिश्चेयंनप्रतिषेधः । ईदृशी योढासा सत्यपि मैथुने धर्मार्थैव भवति ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । समानएकःपिण्डोजनकोयेषांते सपिण्डशब्देनात्र ग्राह्याः । तथाच साक्षात्परंपरया वा योमातृजनकपिण्डोदेहस्ततोयेषांजन्म ते मातुःसपिण्डाइति । मातुःपञ्चमात् परतोर्वाक्षष्ठादिष्वपि विवाहनिषेधप्रसक्तौ स्मृत्यन्तरान्नियमः । यथा याज्ञवल्क्यः । पञ्चमात्सप्तमादूर्ध्वंमातृतःपितृतस्तथेति । अस्यार्थः । मातृतः परस्यामवरस्यांच मातृसहिततत्सपिण्डधारायांपञ्चमादूर्ध्वंपरतः स्त्रियमुद्वहेदिति । एवंच मातुःपूर्वे ये चत्वारउत्तरोत्तरक्रमेण सपिण्डास्तथा तत्सन्तानेष्वर्वाचीनाः प्रत्येकंचत्वारश्चत्वारस्तथा मातृतोर्वागपि चत्वारस्तत्सन्तानभूताश्च प्रत्येकंचत्वारः सपिण्डास्तद- न्तर्भूता कन्या न विवाह्येति सिध्यति । एवंपितृतःसप्तमादित्यत्रापि व्याख्येयम् । मनुना ह्यसगोत्रा च यापितुरिति चका- रात् असपिण्डाचेत्यनुकृष्टम् । तथा च तत्रापि अवध्यपेक्षायां याज्ञवल्क्यवचनादेव नियमः । तेन यथा मातृसपिण्डेषु पञ्चसङ्ख्यावधेस्तथा पितृसपिण्डेषु सप्तसङ्ख्येति । यत्तु स्मृत्यन्तरे मातृतःपञ्चमींपितृतःसप्तमीमुद्वहेदित्युक्तं तन्मातापितरौ विहाय गणनयेति ग्राह्यम् । एतच्च याज्ञवल्क्यवचनार्थेन मातुःपञ्चमादूर्ध्वंपितुश्चसप्तमादूर्ध्वंविवाह्यत्वंमातृसगोत्रत्वाभाव- एवेत्यसगोत्रेत्यनेन दर्शितम् । अतएव च सपिण्डपदस्यैकपिण्डप्रभवपरतानतुज्ञातिपरता ज्ञातीनांसगोत्रपदेनैवलाभात् तथाचसपिण्डपदेन मातापित्रोर्येमातुलादयस्तेपिलभ्यन्ते । अत्र च पितृसगोत्रमात्रे विवाहनिषेधार्थमसगोत्रा च या पितुरिति श्रुतितः पित्रासहागोत्रपदस्य पितुरन्वयोदर्शितः । मातृपक्षे तु यद्यप्यसपिण्डाच यामातुरिति चकारेणासगोत्रत्वा- कर्षणात्पितृपक्षइव सामान्यतो मातुःसगोत्रमात्रे विवाहनिषेधःप्राप्तस्तथापि स्मृत्यन्तरे । मातुःसगोत्रामप्येक नेच्छन्त्युद्वा-

हकर्मणि । जन्मनाम्नोरविज्ञानउद्वहेदविशङ्कित इत्यभिधानात् ॥ यावदस्मिन्मातृकुलजादेस्तन्नाम्नोस्यां जन्मेति ज्ञायते । तावन्मातृसमोत्राणामविवाह्यत्वम् । तदूर्ध्वंतु न दोषइति । अत्र हि स्मृतिवाक्ये पूर्वार्धेन सामान्यतो मातृसगोत्राया अविवाह्यत्वंमतान्तरमाशङ्क्य जन्मनाम्नोरित्युत्तरार्धेस्वमतमुक्तमिति मातुःकन्यात्वसमये सगोत्रांमातामहसगोत्रामित्यर्थः । दारकर्मणि भार्यासाध्ययज्ञादिकर्मणिनिमित्ते विवाहंकर्तुमशस्ता । अनिन्दिता तथा मैथुने स्त्रीपुंससाधारणसाध्ये सुरतकर्मण्यपि सैव प्रशस्ताऽनिन्दिता । यद्यप्येतदपि दारकर्मैव तथा पृथक्ग्रहणं विधिलङ्घनेन परदारप्रवृत्तस्यापि मातृसपिण्डादिगमने ऽधिकप्रायश्चित्तार्थं । द्विजातीनामिति तत्रप्राधान्यादुक्तं शूद्रस्यापि तत्परित्यागेनैवोद्वाहः । वरस्य कन्यकायाश्च यस्मात्सन्तानभेदस्तेन सह यत्र न सपिण्डता तत्रैव विवाह्यमिति दर्शयितुं मातापित्रोर्गोत्रसपिण्डवर्णनमिति नैकत्र निवृत्तौ विवोढुमाशङ्केत्येवं दर्शयितुम् ॥ ५ ॥

( ३ ) **कुल्लूकः** । मातुर्या सपिण्डा न भवति । सप्तमपुरुषपर्यन्तंसपिण्डतांवक्ष्यति सपिण्डता तु पुरुषे सप्तमे विनिवर्ततइति । तेन मातामहादिवंशजा जाया न भवतीत्यर्थः । च शब्दान्मातृसगोत्रापि मातृवंशपरंपराजन्मनाम्नोःप्रत्यभिज्ञाने सति न विवाह्या तदितरा तु मातृसगोत्रा विवाह्येति संगृहीतम् । तथा च व्यासः सगोत्रांमातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञानउद्वहेदविशङ्कितः ॥ यत्तु मेधातिथिनावशिष्टनाम्ना मातृसगोत्रानिषेधवचनंलिखितम् । परिणीय सगोत्रांतु समानप्रवरांतथा । तस्यांकृत्वा समुत्सर्गंद्विजश्चान्द्रायणंचरेत् ॥ मातुलस्य सुतांचैव मातृगोत्रांतथैव चेति । तदपि मातृवंशजन्मनामपरिज्ञानविषयमेव । असगोत्रा च यापितुरिति पितुर्या सगोत्रा न भवति चकारात् पितृसपिण्डापि पितृव्यादिसन्ततिभवा या न भवती त्यर्थः । सा द्विजातीनांदारत्वसंपादके विवाहे प्रशस्ता मैथुनसाध्ये अग्न्याधानकर्मपुत्रोत्पादनादौचेति ॥ ५ ॥

( ४ ) **राघवानन्दः** । किंच असपिण्डेति । असपिण्डा । सपिण्डता तु पुरुषे सप्तमे निवर्ततइति । तेन मातामहकुलजा न स्यात् । चकारान्मातृसगोत्रा च । जन्मनाम्नोर्विज्ञानेत्याज्यानान्यथा । तथाच । व्यासः । सगोत्रांमातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञानेउद्वहेदविशङ्कितइति । वसिष्ठादिस्मृतिरपि एतदनुरोधेन नेया । ऊरुविजहीतामित्यादिश्रुत्युक्तापत्योत्पादकर्मणि मैथुने मिथुनसाध्येअग्न्याधानादौ च ॥ ५ ॥

( ५ ) **नन्दनः** । सवर्णास्वपि नियममाह असपिण्डेति । सपिण्डतांवक्ष्यतिसाप्तपौरुषी सपिण्डतातुपुरुषेसप्तमेविनिवर्ततइति । अमैथुनीअक्षतयोनिः ॥ ५ ॥

( ६ ) **रामचन्द्रः** । अथ विवाहार्हामाह पञ्चमादिति युग्मेन । मातृतःमातुःसन्ताने पञ्चमादूर्ध्वंतथापितृतःपितुःसन्ताने सप्तमादूर्ध्वंमातुःसंताने असपिण्डाचशब्दान्मातुरसगोत्रा पितुःसन्ताने असगोत्रा ॥ ५ ॥

**महान्त्यपि समृद्धानि गोजाविधनधान्यतः ॥ स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥ ६ ॥**

( १ ) **मेधातिथिः** । वक्ष्यमाणस्यप्रतिषेधस्यनिन्दार्थवादोऽयम् । समृद्धिः संपत्तिः । धनंविभवः । महान्त्यपिप्रकृष्टान्यपि । धनविशेषणार्थमाह गोजाविधनधान्यतः तृतीयार्थे तसिः । गोजाविधनेनचधान्येनच धनग्रहणंगोजादीनांविशेषणार्थम् । धनरूपाये गोजादयः कूटसंपन्नताहि धान्यम् । स्त्रीसंबन्धोविवाहः स्त्रीप्रास्यर्थसंबन्धः स्त्रीसंबन्धः ॥६॥

( २ ) **सर्वज्ञनारायणः** । धनंसुवर्णादि । एतेन गुणान्तरवद्वित्तवत्त्यापि विवाह्येति दर्शनम् ॥ ६ ॥

---

( १ ) पितृव्यादि=पितृष्वस्रादि ( अ )

( ३ ) **कुल्लूकः** । उत्कृष्टान्यपि गवादिभिः समृद्धान्यपीमानि दशकुलानि विवाहे त्यजेत् ॥ ६ ॥

( ४ ) **राघवानन्दः** । किंच भार्यामित्यनेन प्राप्तानि कन्योत्पादककुलानि वर्जनीयतयाह महान्तीतिद्वाभ्यां । धान्यतः धान्यादिभिः समृद्धानियुक्तानि । अविशेषः । स्त्रीसंबन्धे स्त्रीकर्मकविवाहे ॥ ६ ॥

( ५ ) **नन्दनः** । एतानिवक्ष्यमाणानि ॥ ६ ॥

( ६ ) **रामचन्द्रः** । साद्विजातीनांब्राह्मणक्षत्रियविशांमैथुने दारकर्मणि अग्न्याधानादिधर्मपुत्रार्थं दारकर्मणि च प्रशस्ता सापिण्ड्येन रहिता एकःपिण्डोदेहोयस्याःसासपिण्डा न सपिण्डा असपिण्डा । पञ्चमात्सप्तमादूर्ध्वंसापिण्ड्यं निवर्तत इत्यर्थः । चतुर्थी मुद्वहेत्कन्यां पञ्चमोन तु पञ्चमीं चतुर्थः पञ्चमींनोद्वहेदित्यर्थः । वर्ज्यान्याह महान्तीति मोजाविधनधान्यतःसमृद्धानि महान्त्यपि अग्न्याधान सहितान्यपि स्त्रीसंबन्धे दशैतानि वर्जयेत् ॥ ६ ॥

## हीनक्रियंनिष्पुरुषंनिश्छन्दोरोमशार्शसम् ॥ क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ ७ ॥

( १ ) **मेधातिथिः** । हीनास्त्यक्ताःक्रियायस्मिन् कुले जातकर्मादयः । संस्कारानक्रियन्ते नित्याश्च पञ्चयज्ञादयः । निष्पुरुष स्त्रीप्रसु यत्र प्रायेण कन्याजायन्ते न पुमांसः । निश्छन्दः वेदाध्ययनवर्जितम । रोमशार्शसम् द्वन्द्वैकवद्भावेन कुलद्वयंनिर्दिष्टम् बहुदीर्घैर्बाव्हादिषु लोमभिर्युतम् अर्शांसि गुदेन्द्रियगतान्यधिमांसनिबद्धानि तानिहिरोगरूपत्वात्पीडाकराणि । क्षयोराजयक्ष्माव्याधिः । आमयावीमंदाग्निर्यस्यभुक्तमन्नंसम्यग्नजीर्यति । अपस्मारःस्मृतिभ्रंशाद्युपघातकृत् । श्वित्रं शरीरगता च्छेदवती श्वेतता कुष्ठंप्रसिद्धम् । सर्वएते व्याधिविशेषवचनाः शब्दारोमशादारभ्य मत्वर्थीयप्रत्ययान्तानिर्दिष्टाः । पूर्वैर्व्याख्यातृभिर्दृष्टमूलतास्य प्रतिषेधस्य वर्णिता । मातुः कुलेद्विपदोनुहरन्ति । ततोहीनक्रियादीनांया प्रजा साऽपि तच्छीला स्यात् । व्याधयश्चसंक्रामन्ति । एवंहि वैद्यके पठ्यते सर्वेसंक्रामिणोरोगावर्जयित्वा प्रवाहिकाम् ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । निश्छन्दोनिर्वेदं । आमयोग्निमान्द्यं कुष्ठंमांसादिक्लेदं कायौदुम्बरादि । हीनक्रियंकुलं यत्र प्रायस्तादृशाएव । एवमुत्तरत्र हीनक्रियमित्यादीनि कुलानि पञ्चविगृह्योक्तानि । यथा कुष्ठादिकुलानि पञ्चेत्येवंदशकुलानीति योजनीम् ॥ ७ ॥

( ३ ) **कुल्लूकः** । तानिकानीत्याह हीनक्रियमिति । जातकर्मादिक्रियारहितंस्त्रीजनकंवेदाध्यापनशून्यंबहुदीर्घरोमान्वितमर्शोनामव्याधियुक्तम् क्षयोराजयक्ष्मामन्दानलापस्मारश्वित्रकुष्ठयुक्तानांच कुलानि वर्जयेदिति पूर्वक्रियासंबन्धः । दृष्टमूलताचास्य प्रतिषेधस्य मातुलवदुत्पन्नाअनुवहन्ते । तेन हीनक्रियादिकुलात्परिणीतायांसंततिरपि तादृशी स्यात् । व्याधय सञ्चारिणइति वैद्यकाःपठन्ति । सर्वेसङ्क्रामिणोरोगावर्जयित्वा प्रवाहिकामिति । अवेदमूला कथमियंप्रमाणमितिचेन्न । दृष्टार्थतयैव प्रामाण्यसंभवात् । तदुक्तं भविष्यपुराणे । सर्वाएतावेदमूलादृष्टार्थाः परिहृत्य तु । मीमांसाभाष्यकारेणापि स्मृत्यधिकरणेऽभिहितम् येदृष्टार्थास्तेतत्प्रमाणं ये त्वदृष्टार्थास्तेषुवैदिकशब्दानुमानमिति ॥ ७ ॥

( ४ ) **राघवानन्दः** । हीनक्रियंपित्रादेर्जातकर्मादिराहित्यं यत्र । निष्पुरुषं स्त्रीजननप्रधानं । निश्छन्दोवेदाध्ययनशून्यं । रोमशं बहुदीर्घरोमयुक्तं । अर्शसं अर्शोरोगयुक्तं । क्षयोराजयक्ष्मा कासः तद्युक्तं । आमयावि नित्यमन्दानलयुक्तं । अपस्मारोवायुविशेषस्तद्युक्तं । श्वित्रि श्वेतत्वग्विशेषयुक्तम् ॥ ७ ॥

( ५ ) **नन्दनः** । हीनक्रियंश्रौतस्मार्ताचारहीनम् । निष्पुरुषंस्त्रीशेषम् । तद्वर्जयेत् । कुतः संतत्यभावानुसारात् । निश्छन्दोनिरध्ययनम् । रोमशंरोमबहुलम् । तद्वर्जयेत् । कुतःनिर्ऋतिरूपत्वात् । तथाहिश्रुतिःनिर्ऋत्यै विकृतदेहरूपरोम-

शपशुमालभेत सा ह्यस्याःस्वातनुरितिअर्शोस्यास्तीत्यर्शसंतद्वर्जयेत्। कुतः व्याधिसंक्रान्तिभयात् एतेन क्षयादीनि व्याख्यातानि। क्षयि क्षयरोगयुक्तं। आमयामहोदरादयः। तद्युक्तमामयावि। कुलानीतिव्यस्तम्। चकारः प्रत्येकंसंबध्यते॥ ७॥

( ६ ) **रामचन्द्रः**। तानि दश कुलान्याह हीनक्रियमिति जातकर्मादिसंस्कार पञ्चयज्ञरहितं कुलंनिष्पुरुषं निश्छंदोनिर्गतश्छन्दोवेदोयस्मात्तन्निच्छन्दः। रोमशार्शसंअर्शोरोगोवर्ततेयत्रतदर्शसंकुलं। गुह्ये रोमरूपत्वात् रोमसहितं। यत्र क्षय आमयोवा कुलमपस्मारिश्चित्रकुष्ठि एतानि कुलानि वर्जयेत्॥ ७॥

**नोद्वहेत्कपिलांकन्यांनाधिकाङ्गींनरोगिणीम्॥ नालोमिकांनातिलोमां न वाचाटांनपिङ्गलाम्॥८॥**

( १ ) **मेधातिथिः**। पूर्वः कुलाश्रयः प्रतिषेधः। अयंतु स्वरूपाश्रयः। यस्या असुवर्णाः कनकवर्णावा केशाः सा कपिला। अधिकाङ्गीषडङ्गुलिः। रोगिणीबहुरोगा दुष्प्रतिकारव्याधिगृहीताच। भूम्नीणिर्मत्वर्थीयोनित्ययोगेवा। अलोमिका अकेशा। लोमानिकेशाअप्युच्यन्ते। बाहुमध्येजङ्घाद्वयेवासर्वलोम्नामभावः। वाचाला स्वल्पएव वक्तव्ये बहुलंपरुषंच भाषते। पिङ्गला अक्षिरोगेण मण्डलाक्षीकपिलपिङ्गलाक्षीवा॥ ८॥

( २ ) **सर्वज्ञनारायणः**। न रोगिणींस्वतःक्षयादिव्याधिमतीं। पूर्वंकुले तेषांप्रायिकत्वेन कन्यानांसंभावनामात्रेणाविवाहतोक्ता। अत्र तु तस्यांतन्निश्चयेनेति विशेषः। पिङ्गलाभामरक्तगौरवर्णाम्॥ ८॥

( ३ ) **कुल्लूकः**। कुलाश्रयंप्रतिषेधमभिधाय कन्यास्वरूपाश्रयप्रतिषेधमाह नोद्वहेदिति। कपिलकेशांनित्यव्याधितामविद्यमानलोमांप्रचुरलोमांबहुपरुषभाषिणीं पिङ्गलाक्षींकन्यांनोपयच्छेत्॥ ८॥

( ४ ) **राघवानन्दः**। वर्जनार्थं कन्यां विशिनष्टि नेति द्वाभ्यां। कपिलांकपिलकेशां वर्णतोवा। नाधिकाङ्गीं षडङ्गुलादिकां। न्यूनाङ्गींचतुरङ्गुलादिकां। न वाचाटां न बहुभाषिणीं। न पिङ्गलां चक्षुषोः मार्जारचक्षुषीमित्यर्थः॥ ८॥

( ५ ) **नन्दनः**। कपिलांकेशाक्षिभिःत्वचाचपिङ्गलाम्॥ ८॥॥

( ६ ) **रामचन्द्रः**। कनकवर्णाः केशायस्याः सातां। कपिलांच कन्यां नोद्वहेत् एतादृश्यःनोद्वाह्याः कपिलादिपिङ्गलान्ताः। वाचाटां परुषभाषिणीम्॥ ८॥

**नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्॥ न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्॥ ९॥**

**[ नातिस्थूलां नातिकृशां न दीर्घां नातिवामनाम्॥ वयोऽधिकां नाङ्गहीनां न सेवेत्कलहप्रियाम्॥ ]+**

( १ ) **मेधातिथिः**। ऋक्षंनक्षत्रंतन्नामिकाआर्द्राज्येष्ठाइत्यादि। वृक्षनाम्नींशिंशपाआमलकीति। नदीगङ्गायमुनातन्नाम्नी। ऋक्षाणि च वृक्षाश्च नद्यश्चेतिद्वन्द्वःतासांनामानीति षष्ठीसमासः। ततोद्वितीयेन नामशब्देनोत्तरपदलोपोसमासः। अन्त्यनामिकाबर्बरीशबरीत्यादि। पर्वताविन्ध्यमलयादयःपूर्ववत्समासात्कप्रत्ययः। पक्षिनाम्नीशुकीसारिका। अहिः सर्पस्तन्नाम्नी व्यालीभुजङ्गी। प्रेष्या दासी चेटी वाली। बिभीषणंनाम भयजनकंडाकिनीराक्षसी॥ ९॥

( २ ) **सर्वज्ञनारायणः**। अन्त्यश्चाण्डालादिः तज्जातिनाम्नीं चाण्डालीत्यादिनाम्नीं। पर्वतनामिकांविन्ध्याहिमेत्यादिनाम्नीं। प्रेष्यनाम्नीं दासीत्यादिनाम्नीं। भीषणंनाम चामुण्डेत्यादि॥ ९॥

---

+अयं ( क, ग, ञ, ल, ) चिन्हितेषुमूले। ( च ) चिन्हितपुस्तके टीकायां वर्तते।

( ३ ) **कुल्लूकः** । ऋक्षंनक्षत्रंतन्नामिकामार्द्रारेवतीत्यादिकामेवंतरुनदीम्लेच्छपर्वतपक्षिसर्पदासभयानकनामिकांकन्यांनोद्वहेत् ॥ ९ ॥

( ४ ) **राघवानन्दः** । नर्क्षवृक्षेति । तारा अश्विनी आमलकी हरीतकी नदीदृषद्वतीत्यादिनाम्नीम् । अन्त्योम्लेच्छःतेन यवनी म्लेच्छेति । पर्वतनामिकां शिलामयीं । पक्षिगरुडा । अहिः पन्नगी । प्रेष्याअमुकदासी । भीषणनामिकां उग्रेत्यादिकाम् । ॥ ९ ॥

( ५ ) **नन्दनः** । ऋक्षनाम्नी आर्द्रेत्यादि । वृक्षनाम्नीशिंशपेत्यादि । नदीनाम्नी गङ्गेत्यादि । अन्त्यनाम्नी मातङ्गीत्यादि । पर्वतनाम्नी विन्ध्येत्यादि । पक्षिनाम्नी शुकीत्यादि । अहिनाम्नीनागीत्यादि । प्रेष्यनाम्नी दासीत्यादि । भीषणनाम्नी हिडिम्बेत्यादि । अदृष्टार्थोऽयंनिषेधः ॥ ९ ॥

( ६ ) **रामचन्द्रः** । ऋक्षनाम्नीं नक्षत्रनाम्नींन विवाहयेत् । अन्त्यजनाम्नीं पर्वतनाम्नींचनो द्वहेत् । विभीषणनाम्नींभयानकनाम्नींनविवाहयेत ॥ ९ ॥

**अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ॥ तनुलोमकेशदशनांमृद्वंगीमुद्वहेत्स्त्रियम् ॥ १० ॥**

( १ ) **मेधातिथिः** । अव्यङ्गान्यङ्गानि यस्या सैवमुच्यते । अव्यङ्गशब्दोऽवैकल्यवचनःप्रवीणोदारादिशब्दवद्यद्यपि व्युत्पाद्यते विकलान्यङ्गानि यस्येति अतश्चाङ्गशब्दस्य द्वितीयस्यावयविनिशक्तौचित्येन संस्थानस्य परिपूर्णता साऽव्यङ्गशब्देनोच्यते । सौम्यंमधुरंनामस्त्रीणांसुखोद्यमत्रदर्शितम् । हंसइववारणइवगच्छति यादृशी हंसानांहस्तिनांच विलासवती मन्थरागतिर्यस्याः । तनुशब्दोनाल्पवचनः किंतर्ह्यनुपरिभावे वर्तततेतन्वङ्गीसोच्यते नातिस्थूला नातिकृशेनि मृदूनि सुस्पर्शाकठिनापरुषाण्यङ्गानि यस्याः सा तामुद्वहेत्स्त्रियंकन्याधिकारात्कन्याम् । यद्येवंनालोमिकामित्यादिप्रतिषेधोऽनर्थकोऽस्मादेवविधानात्पूयानैवंरूपा तस्याअविवाह्यता सिद्धा सत्यमेवंएकएवार्थोद्वाभ्यांविधिमुखेन प्रतिषेधमुखेन चोद्यमानस्तुस्पष्टोबुध्यते । कन्याशब्दश्चात्रप्रकरणादननुभूतसंभोगासु स्त्रीषु प्रवर्तते । तथाचवसिष्ठः अस्पृष्टमैथुनांसदृशीं भार्यांविन्देतेति । नचान्येन संस्कृतान्येनपुनः संस्कर्तुंशक्या कृतस्यकरणाभावात् । अतश्चोढायाअप्रवृत्तभर्तृसंयोगायाः कथंचित्स्वैरिणीत्वे भर्तृप्रवासादिनानान्येन विवाहोऽस्तिसत्यपिकन्यात्वे । तथाचेदृशीवसिष्ठोक्तिर्मध्येपठिता । अन्यत्राप्युक्तमनन्यपूर्वांयवीयसींभ्रातृमतींस्त्रियमुद्वहेतेति ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । अव्यङ्गाङ्गीं अङ्गेष्वपि यस्यानव्यङ्गत्वं अङ्गाङ्गेष्वपि नखादिषु यस्यावैकल्यंनास्तीत्यर्थः । तथा विभीषणनामत्वाभावेपि सौम्यशांतंनाम यस्याःसाविवाह्याः । तथा विभीषणनामनिषेधःप्रत्यवायाधिक्यार्थः । तनवःसूक्ष्माः केशाःशिरोरुहाः । अत्र येषु दृष्टविरोधित्वंदोषाणांतेषु सत्स्वपि विवाहे भार्यात्वसिद्धिर्यत्र दृष्ट विरोधादर्शनं तद्दोषवत्याविवाहे भार्यात्वमेव न सिद्ध्यतीति कश्चित् तत्तु प्रमाणाभावात् नक्षत्रनामत्वादावपि भार्यात्वासिद्धिप्रसंगेन व्यवहारविरोधाच्चायुक्तम् । केवलंनिषेधादृष्टे विरोधशून्ये दोषेषु परिणेतुः पापोत्पत्तिमात्रमनुमन्तुंयुक्तमिति ॥ १० ॥

( ३ ) **कुल्लूकः** । अविकलाङ्गींमधुरसुखोद्यनाम्नींहंसगजरुचिरगमनामनतिस्थूललोमकेशदशनांकोमलाङ्गींकन्यामुद्वहेत् ॥ १० ॥

( ४ ) **राघवानन्दः** । उद्वहनयोग्यामाह । अव्यङ्गेति । न्यूनाधिककुब्जाद्यङ्गरहितां । सौम्यनाम्नीं शशिनीचन्द्रि-

---

( १० ) तनुलोम=तन्वोष्ठ ( मेधा० )

केत्यादिनाम्नीं । हंसवारणगामिनीं हंसवत् वारणोहस्ती तद्वद्गमनशीलां । अत्र विधिनिषेधौ अभ्युदयानभ्युदयफलौ ॥ १० ॥

( ५ ) **नन्दनः** । अङ्गशब्दोवयवेशरीरेच ॥ १० ॥

( ६ ) **रामचन्द्रः** । एतादृशींउद्वहेत् । अव्यङ्गाङ्गीं अव्यङ्गमङ्गंयस्याःसा तां । सौम्यनाम्नींसौम्यंनाम यस्याःसा तां अछिन्नाङ्गीमित्यर्थः ॥ १० ॥

## यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ॥ नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥११॥

( १ ) **मेधातिथिः** । यस्याभ्रातानास्ति तां न विवहेत्पुत्रिकाधर्मशङ्कया पुत्रिकात्वशङ्कया पुत्रिकाधर्मःकदाचिदस्याः कृतोभवेत्पित्रेत्यनयाशङ्कया । अनेन संदेहेन कथंचेयंशङ्काभवति यदिन विज्ञायेतपितादेशान्तरेप्रोषितोमृतोवा सा च मात्रा पितृसपिण्डैर्वादीयते । प्राप्तकालापि पितर्यसंनिहितएतैरपि दातव्येति स्मर्यते । स्मृतिंचोत्तरतोदर्शयिष्यामः । पितरि तुसंविज्ञायमाने नास्ति पुत्रिकात्वशङ्का सहि स्वयमेवाह कृता वा न कृतावेति । वाशब्दश्चेच्छब्दार्थे द्रष्टव्यः । यदिपिता नविज्ञायेत तदा कन्यका न वोढव्या । अन्येतुस्वतन्त्रमेतत्प्रतिषेधद्वयमाचक्षते । यद्यपि पिता न विज्ञायते अनेनेयंजातेति गूढोत्पन्नायाः प्रतिषेधः । एवंचसंबन्धः यस्याभ्राता नास्ति तांपुत्रिकात्वशङ्कया नोपयच्छेत । नविज्ञायत इत्यत्र पुत्रिकाशङ्कयेत्येतन्न संबध्यते । अस्मिन्प्रकरणे यत्र नास्तिदृष्टगतःप्रतिषेधः यथाअसपिण्डाचेत्यत्रश्लोके । तदतिक्रमे विवाहस्वरूपानिर्वृत्तिरेव । अतः सगोत्रादिविवाहः कृतोऽप्यकृतएवविध्यवगमरूपत्वादाधानवद्विवाहस्य विध्यतिक्रमरूपादवगमात् । यथाधानविधौयत्किंचिदङ्गंनज्ञातं तदभावे नाहवनीयादिनिर्वृत्तिः एवमसगोत्रादिकायान भार्यात्वम् तस्मात्त्याज्यैव कृता तादृशसंस्कारप्रतिरूपिकापि । तत्रभवन्तोवसिष्ठादयः प्रायश्चित्तमपिस्मरन्ति तादृशविवाहे यद्यपि कर्मणएवतदङ्गप्रतिषेधातिक्रमे वैगुण्यंन साक्षात्पुरुषस्य दोषः । तथापि वाचनिकंप्रायश्चित्तम् । अथवा सगोत्रागमनंनिषिद्धम् । तदर्थेव्यापारेप्रवर्तमाने यदुक्तंतत्प्रायश्चित्तंभवेत् । यस्तुहीनक्रियादिप्रतिषेधस्तस्यदृष्टदर्शनमूलत्वान्निवर्ततेविवाहः भवत्यसौ भार्या नास्ति तस्यास्त्यागः । एवमर्थएवमहान्त्यपीतिपूर्वस्मात्प्रतिषेधाद्भेदः स्तवनार्थपठितः । एवमेवच शिष्टसमाचारः । कदाचित्कपिलादिरूपामुपयच्छति न सगोत्राम् ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । न भवेन्नोत्पद्येत न विज्ञायेत कुलप्रवृत्तादिना प्रसिद्धिः सन्तत्यन्तराभावेनापरिभाषितपुत्रिकाशङ्कयाआद्यायान विवाहः । द्वितीयस्याअधर्मशङ्कया व्रात्यकन्यादिपरिणयकृतपापशङ्कयेति क्रमादन्वयः । अत्र पितेति विशेषोक्तेर्मातुरविज्ञानेपि न तादृशोदोषइत्युपदर्शितम् ॥ ११ ॥

( ३ ) **कुल्लूकः** । अत्रविधिनिषेधयोरभिधानमनिषिद्धविहितकन्यापरिणयनमभ्युदयार्थमितिदर्शयितुमाह यस्या इति । यस्याः पुनर्भ्राता नास्ति तांपुत्रिकाशङ्कया नोद्वहेत् । यदपत्यंभवेदस्यास्तन्मम स्यात्स्वधाकरमित्यभिसंधानमात्रादपि पुत्रिका भवति अभिसंधिमात्रात्पुत्रिकेत्येकइति गौतमस्मरणात् । यस्यावाविशेषेण पिता न ज्ञायतेऽनेनेयमुत्पन्नेति तामपि नोद्वहेत् । अत्र च पुत्रिकाधर्मशङ्कयेतिन योजनीयमिति केचित् । गोविन्दराजस्त्वाह भिन्नपितृकयोरप्येकमातृकयोर्भ्रातृत्वप्रसिद्धेः सभ्रातृकत्वेपि यस्याविशेषेणपिता न ज्ञायते तामपि पुत्रिकाशङ्कयैव नोद्वहेदिति । मेधातिथिस्तु एकमेवेमंपक्षमाह । यस्यास्तु भ्राता नास्ति तांपुत्रिकाशङ्कया नोपयच्छेत् पिताचेन्नज्ञायते प्रोषितोमृतोवा वा शब्दश्चेदर्थे पितरि तु विद्यमाने तदीयवाक्यादेव पुत्रिकात्वाभावमवगम्या भ्रातृकापि वोढव्येति । अस्माकंतु विकल्पस्वरसादिदंप्रतिभाति यस्याविशेषेणपिता न ज्ञायते तामभिजारजत्वेनाधर्मशङ्कया नोद्वहेत् । अत्र च पक्षे पुत्रिकाधर्मशङ्कयेति पुत्रिकाचाधर्मश्च

तयोः शङ्का पुत्रिकाधर्मशङ्कातयेति यथासंख्यंयोजनीयम् । अत्र च प्रकरणे सगोत्रापरिणयने सगोत्रांचेदमत्योपयच्छे-न्मातृवदेनांबिभृयादितिपरित्यागश्रवणात्परिणीय सगोत्रांचेति प्रायश्चित्तश्रवणाच्च तत्र तत्समभिव्याहृते च मातृसपिण्डा-परिणयनादौ भार्यात्वमेव न भवति भार्याशब्दस्याहवनीयादिवत्संस्कारवचनत्वात् । येषांपुनर्दृष्टगुणदोषमूलके विधिनिषे-धाभिधाने यथाहीनक्रियमितिन तदतिक्रमे भार्यात्वाभावः । अतएव मनुना महान्त्यपि समृद्धानीत्यादि पृथक्करणंकृतम एतन्मध्यपतितश्च नर्क्षवृक्षनदीनाम्नीमित्यादिप्रतिषेधोपि न भार्यात्वाभावफलकः किंत्वत्र शास्त्रातिक्रमात्प्रायश्चित्तमा-त्रम् ॥ ११ ॥

( ४ ) **राघवानन्दः** । पुनरयोग्यांतामाह यस्यास्त्विति । न ज्ञायते पिता प्रसिद्धितोत्दयतोवा तत्र हेतुःपुत्रिकेति । पुत्रिकात्वेन मनसानियुक्ताअथवानिःशङ्काप्राज्ञातपितृकत्वेन जारजमद्यपजाद्यधर्मशङ्कयेति । पुत्रिका च अधर्मश्च तयोः-शङ्कयावा ॥ ११ ॥

( ५ ) **नन्दनः** । अपुत्रेणपित्रा जनिष्यमाणानांदुहितृपुत्राणांस्वसंतानसंकल्पः पुत्रिकाधर्मः । भ्रातुरभावएवपुत्रिका-धर्मशङ्का भवति सति पुत्रे पुत्रिकाधर्मस्य शास्त्रैरननुमतत्वेनाकिंचित्करत्वात् । ज्ञाते पितरि तु जातापिपुत्रिकाधर्मशङ्का कथंचिन्निवर्तयितुंशक्यते । नपुनरज्ञाते । तेनोक्तंनविज्ञायेत वा पितेति ॥ ११ ॥

( ६ ) **रामचन्द्रः** । यस्याः कन्यायाः भ्राता न भवेत् पितावा न विज्ञायते तांकन्यांप्राज्ञःपुत्रिकाधर्मशङ्कया नोपयच्छेन्नोद्वहेत् ॥ ११ ॥

**सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ॥ कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥१२॥**

( १ ) **मेधातिथिः** । उद्वहेत द्विजोभार्यामिति सत्यपि द्वितीयानिर्देशे भार्यायाः प्रधानत्वे च गुणकर्मत्वे विवाहस्य विवक्षितमेकत्वम् अनुद्देश्यगतत्वात् । यथायूपंछिनत्तीति । यस्यान्यतः स्वरूपमवगतंतस्यान्यत्रकार्यान्तरविधानार्थमनूद्य-मानस्य यथावगतस्वरूपस्यैवानुवादोभवतियथाग्रहंसंमार्ष्टीति । पूर्वावगतिसापेक्षत्वादनुवादस्य । निर्ज्ञातसंख्याकाहिग्रहाद-शएतानध्वर्युः प्रातः सवने ग्रहान्गृण्हातीत्यादिवाक्यैः कार्यंचावगतंग्रहैर्जुहोतीति । अतोवगत्यन्तरापेक्षत्वाद्ग्रहशब्दस्य न विवक्ष्यते संख्या । इहतु भार्यालक्षणोऽर्थोनान्यतः सिद्धोऽस्मादेव वाक्यादवगन्तव्योऽतोयथाश्रुति प्रतीयते प्रातिपदिकार्थ-वत्संख्यापि विवक्षितेति । पञ्चमे चैतद्विस्तरस्तर्केण वक्ष्यते । स्थितायांसंख्याविवक्षायांद्वितीयस्याः कृतेऽपि पाणिग्रहणे न भार्यात्वं यथासत्यावहनीये न द्वितीयआहवनीयः। इष्यते च क्वचिन्निमित्ते भार्यान्तरपरिग्रहस्तदर्थमिदमारभ्यते । एत-देवाभिप्रेत्य गौतमीयेपठितम् प्रजासंपन्नेदारेनान्यांकुर्वीत अन्यतरापायेतु कुर्वीतेति । सवर्णा समानजातीया सातावदग्रे प्र-थमतोऽकृतविजातीयदारपरिग्रहस्य प्रशस्ता । कृते सवर्णाविवाहे यदितस्यांकथंचित्प्रीतिर्नभवतिकृतावपत्यार्थोव्यापारोन निष्पद्यते । तदाकामहेतुकायांप्रवृत्ताविमावक्ष्यमाणाः सवर्णावराः श्रेष्ठाः शास्त्रात्तु ज्ञातव्याः। अतएकत्वस्य सवर्णनियमस्य चायमपवादः । ननुच सवर्णाविवाहे पारतन्त्र्यंप्रतीयते नसवर्णायाबहुत्वं एकत्वसंख्यातिक्रमस्तावत्प्रतीयते । असवर्णा-भ्यनुज्ञानेनाप्यतिक्रान्तंचेत्कः सवर्णायानिषेधकः । तथा गौतमेनाविशेषेणैव पठितम् अन्यतरापायेतुकुर्वीतेति । उत्तर-श्लोके साचस्वाचेतिसवर्णाविवाहेऽस्ति ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । अग्रे प्रथमं सवर्णैवदारकर्मणि प्रशस्ता श्रेयोहेतुः । नासवर्णा तादृक् श्रेयोर्थित्वाभावेन तु कामतःप्रवृत्तौ क्रमशोयथा पूर्वं इमाःवराः श्रेष्ठाः ॥ १२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणक्षत्रियवश्यानांप्रथमे विवाहे कर्तव्ये सवर्णा श्रेष्ठा भवति । कामतः पुनर्विवाहे प्रवृत्ताना-मेतावक्ष्यमाणाआनुलोम्येन श्रेष्ठाभवेयुः ॥ १२ ॥

( ४ ) **राघवानन्दः** । त्रैवर्णिकस्य सवर्णावर्णभेदेनोद्वाहस्यानेकत्वात्क्रमाकाङ्क्षायांतमाह सवर्णेति । दारकर्मणिदारसाध्ये अपत्योत्पत्तौ धर्मादौ च । इमाः सा चेत्यादिना वक्ष्यमाणास्तिस्रः । अवरानिकृष्टाः अग्रेकृतसवर्णाया-मरुचावाह कामतइति न क्रमवैपरीत्यपरम् ॥ १२ ॥

( ५ ) **नन्दनः** । सवर्णोद्वाहनियमेन प्रतिषिद्धमसवर्णोद्वाहमधिकारिविशेषेण प्रतिजानाति सवर्णेति । क्रमशः अग्रे सवर्णा प्रशस्ता तदन्वनन्तरा तदन्वेकान्तरा तदनुद्व्यन्तरेत्यर्थः । अवराःहीनवर्णाः । इमावक्ष्यमाणाः ॥ १२ ॥

( ६ ) **रामचन्द्रः** । अग्रे प्रथमतः द्विजातीनांसवर्णा दारकर्मणि प्रशस्ता । कामतःप्रवृत्तानांक्रमशः अवराःहीनाः-इमाःवक्ष्यमाणलक्षणाःस्युः ॥१२ ॥

**शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते॥ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः॥१३**

( १ ) **मेधातिथिः** । वर्णभेदेसतिसवर्णानियमोयथैवब्राह्मणस्य क्षत्रियादिस्त्रियोभवन्तिएवंशूद्रस्य जातिन्यूना-रजकतक्षकादिस्त्रियः प्राप्ताः । अतः सवर्णेयमुच्यते । उत्कृष्टजातीयातु पूर्वत्र क्रमग्रहणादप्राप्ता । साचशूद्रास्वाचवैश्या वैश्यस्यतेचवैश्याशूद्रेस्वाचराजन्यस्य एवमग्रजन्मनोब्राह्मणस्यक्रमेण निर्देशे कर्तव्ये शूद्रप्रक्रमेण निर्देशः पूर्वोक्तमेवार्थ-उपोद्बलयतियदुक्तंविकल्पआनुपूर्व्येण नावश्यंसमुच्चयः ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । तदाह शूद्रैवेति । स्वा स्वजातीया ॥ १३ ॥

( ३ ) **कुल्लूकः** । शूद्रस्य शूद्रैव भार्याभवति । नतूत्कृष्टावैश्यादयस्तिस्रः । वैश्यस्य च शूद्रा वैश्याच भार्यामन्वादि-भिः स्मृता । क्षत्रियस्य वैश्या शूद्रेक्षत्रियाच । ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा ब्राह्मणी च । वसिष्ठोऽपि शूद्रामप्येके-मन्त्रवर्जमिति द्विजातीनांमन्त्रवर्जितंशूद्राविवाहमाह ॥ १३ ॥

( ४ ) **राघवानन्दः** शूद्रस्यापि तथात्वे रागतः प्राप्ते परिचष्टे । शूद्रैवेति । सा शूद्रा स्वा वैश्या । तेचशूद्रावैश्येच स्वा क्षत्रियाचतिस्रोराज्ञः । ताश्च शूद्रावैश्याक्षत्रियाः स्वाच ब्राह्मणी अग्रजन्मनो ब्राह्मणस्य ॥ १३ ॥

( ५ ) **नन्दनः** । एवकारेण केवलशूद्रभार्यत्वं शूद्रस्यैव नान्यस्येतिसूचितम् । स्वशब्दग्रहणेन सवर्णायामूढायामेवास-वर्णावोढव्येतिप्रत्येकंनिर्देशेननोत्तरा वोढव्येति ॥ १३ ॥

( ६ ) **रामचन्द्रः** । शूद्रस्य शूद्रैव भार्या । विशःवैश्यस्य सा शूद्री स्वा वैश्या स्मृतेउक्ते । राज्ञः क्षत्रिया वैश्या शूद्राच । अग्रजन्मनो ब्राह्मणस्य तास्तिस्रः क्षत्रिया वैश्या शूद्रा च एतास्तिस्रः स्वाच ब्राह्मणी ज्ञेया ॥ १३ ॥

**न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः॥ कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते॥ १४ ॥**

( १ ) **मेधातिथिः** । यद्यप्यत्यन्तरूपवती शूद्रा विप्रराजन्यौचवीरप्रकृती दशमीमपि दशामभ्युपेयातांतथापि शूद्रां-नाधिवोढारौ अत्रार्थवादः । कस्मिंश्चिदपिवृत्तान्ते न कचिदितिहासोपाख्यानेऽप्युपदिश्यते वर्ण्यते । आपदि गरीयस्याम-धिकायामापदि पूर्वत्रानुज्ञाताऽनेनप्रतिषिद्धा अतोविकल्पः । ननु च शास्त्रलक्षणयोरेकविषयसंनिपाते षोडशिग्रहणाग्रहणव-द्विकल्पोयुक्तोनतुरागलक्षणायाः प्रवृत्तेर्निषेधेन । नच शूद्रा शास्त्रलक्षणा केवलंरागतस्तत्रप्रवृत्तिरप्रतिषिद्धेति पूर्वशास्त्रस्या-र्थः । निषेधस्तु शास्त्रलक्षणइत्यविवाह्यैव शूद्रा । एतदेवाभिप्रेत्य याज्ञवल्क्येन पठितं यदुच्यतेद्विजातीनांशूद्रादारोपसंग्रहः।

नतन्ममर्तामिति । अत्रोच्यते । सर्वत्रोपदेशानर्थकतयैवविकल्पआश्रीयते यदिचात्यन्तमेव शूद्राप्रतिषेधः स्यात्तदा क्षत्रियवैश्ये एवप्रतिप्रसूयेयाताम् । आपद्यप्यनुज्ञाने प्रतिप्रसवशास्त्रमयंच प्रतिषेधोद्वयमपि व्यर्थंस्यात्सवर्णायानियमेन सिद्धत्वात् । तदिदमनुज्ञातं प्रतिषेधश्चास्त्वविरुध्यमाने विकल्पते ननु च विकल्पे कामचारस्तस्य च प्रतिप्रसवतएव सिद्धः प्रतिषेधोवक्तव्योनैव । न यथाकामतःक्षत्रियावैश्ययोर्विवाहएवंशूद्रायाअन्यत्रापदोगरीयःस्यात् । इदंतु प्रतिपत्तुंयुक्तंयत्सवर्णानियमेनासवर्णानिवृत्तेरर्थतःकृतायाः पुनःशूद्रानिवृत्तिरसवर्णानिवृत्तेरनित्यत्वंज्ञापयति । अनित्यत्वेचापदि सवर्णाया अलाभे वा भवति चायमवगमः शूद्रानवोढव्या इतरे तु वोढव्ये ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र शूद्राविवाहेनकेवलमसवर्णविवाहदोषः । किंतु दोषान्तरमपीत्याह न ब्राह्मणेति । आपद्यपि दुर्भिक्षादौ शूद्राविवाहेन धनलाभान्निस्तारसंभवेपीत्यर्थः । वृत्तान्ते प्रस्तावे यथा भार्यान्तरोद्वाहासंभवेनसंतानविच्छेदस्तदापीत्यर्थः । उपदिश्यते अनुज्ञायते ॥ १४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्यक्षत्रिययोर्गार्हस्थ्यमिच्छतोः सर्वथा सवर्णालाभे कस्मिंश्चिदपिवृत्तान्तइतिहासाख्यानेऽपि शूद्रभार्या नाभिधीयते । पूर्वंसवर्णानुक्रमेणानुलोम्येन विवाहाद्यनुज्ञानादयंनिषेधः प्रातिलोम्येन विवाहविषयोबोद्धव्यः । ब्राह्मणक्षत्रियग्रहणंचेदंदोषभूयस्त्वार्थमनन्तरंद्विजातयइतिबहुवचनाद्वैश्यगोचरनिषेधस्यापि वक्ष्यमाणत्वात् ॥ १४ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणादित्रयाणांरागतःशूद्रोद्वाहमनूद्य ब्राह्मणक्षत्रिययोर्निषेधति नेतिद्वाभ्यां । वृत्तान्ते इतिहासादौ ॥ १४ ॥

( ५ ) **नन्दनः** । अथ ब्रह्मक्षत्रियाभ्यांसवर्णायांप्रथममुद्वोढुमशक्यायामसवर्णापिवोढव्या न कदाचिदपि प्रथमंशूद्रेत्याह न ब्राह्मणेति । आपत्सवर्णायाअनन्तरायावाप्यलाभः । वृत्तान्तेवृत्तमाचारोधर्मइतियावत् अन्तःनिर्णयः धर्मशास्त्रइत्यर्थः । भार्या नोपदिश्यते भार्यात्वेन नोपदिश्यते । किन्तुकाम्यत्वेनेत्यर्थः ॥ १४ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणक्षत्रिययोः तिष्ठतोः । आपद्यपि सवर्णाया अलाभेपि शूद्रा भार्या नोपदिश्यतइत्यर्थः ॥ १४ ॥

**हीनजातिस्त्रियं मोहादुद्वहन्तोद्विजातयः ॥ कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ १५ ॥**

( १ ) **मेधातिथिः** । पूर्वस्य प्रतिषेधस्य शेषोऽयंनिन्दार्थवादः । हीनजातिःशूद्रैव तस्याएवप्रकृतत्वात् । ससंतानानिशूद्रतामितिनिगमनात्तएते द्विजातयः मोहाद्धनलोभजादविवेकात्कामनिमित्तत्वाद्वाकुलानि शूद्रतांगमयन्ति । तस्यांजाताः पुत्राः शूद्राभवन्त्येवंतत्पुत्रपौत्राइति । अतउच्यते ससंतानानीति । संतानोऽपत्योत्पत्तिप्रबन्धःपुत्रपौत्रादिः॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । हीनजातिंशूद्रां । कुलानि पित्रादिरूपाणि ससन्तानानि ब्राह्मणीजातस्वपुत्रादीनि वृषलतांनयन्तीति सर्वसाधरणोदोषउक्तः ॥ १५ ॥

( ३ ) **कुल्लूकः** । सवर्णामपि परिणीय हीनजातिंशूद्रांशास्त्राविवेकात्परिणयन्तोब्रह्मक्षत्रियवैश्यास्तत्रोत्पन्नपुत्रपौत्रादिक्रमेण कुलान्येव ससंततिकानि शूद्रतांगमयन्ति अत्र द्विजातयइति बहुवचननिर्देशान्निन्द्यावैश्यस्यापिनिषेधः कल्प्यते । ब्राह्मणक्षत्रिययोस्तु पूर्वत्रैवनिषेधकल्पनात्तन्निन्दामात्रार्थतैव ॥ १५ ॥

( ४ ) **राघवानन्दः** । हीनजातिंशूद्रां । तदुत्पन्नपुत्रपौत्रादिना शूद्रतांनयन्तीतिकुल्लूकः । मेधातिथिस्तु सर्वत्रोपदेशानर्थक्याद्विकल्पइति । केचिदिमंनिषेधंक्रमवैपरीत्यमिति व्याचक्षते तन्न वक्ष्यमाणमतभेदेनोपपत्तेः ॥ १५ ॥

( ५ ) **नन्दनः** । न केवलंब्राह्मणक्षत्रिययोरेवनिषेधःकिन्तुवैश्यस्यापीतिसूचयितुमर्थवादमाह हीनेति । हीनजातिसंस्कारहीनोत्पत्तिशूद्रांद्विजातयोमन्त्रसंस्कारयुक्ताः स्त्रियमुद्वहन्तः प्रथमभार्यात्वेनोद्वहन्तस्तस्यामुत्पन्नेनापत्येनकुलंसंततिंशूद्रतांजातकर्मादिसंस्कारहीनतामाशुनयन्ति ॥ १५ ॥

( ६ ) **रामचन्द्रः** । द्विजातयोहीनजातिस्त्रियंमोहादज्ञानादुद्वहन्तःकुलानि सन्तानानि शूद्रत्वरूपतामाशुशीघ्रंनयन्ति ॥ १५ ॥

**शूद्रावेदीपतत्यत्रे रुतथ्यतनयस्य च ॥ शौनकस्य सुतोत्पत्त्या तदपत्यतयाभृगोः ॥ १६ ॥**

( १ ) **मेधातिथिः** । शूद्रांविन्दति परिणयति शूद्रावेदी सपतति पतितइव । अत्रिरुतथ्यस्य तनयःपुत्रस्तयोरेतन्मतमित्युपस्करः अयंतावदर्धश्लोकः पूर्वप्रतिषेधशेषः । शौनकस्यसुतोत्पत्त्याशास्त्रान्तरमिदम् । अभ्यनुज्ञायशूद्रायामृतावुपगमनंनिषेधतिसुतोत्पत्तिर्हृतौयुग्मासु रात्रिषु भवतिऋतौशूद्रांनगच्छेदित्यर्थः । तदपत्यतयाभृगोः इदमपिस्मृत्यन्तरम् तान्येव शूद्रोत्पन्नान्यपत्यानि यस्य सतदपत्यःतद्भावस्तदपत्यता । भृगोरेतन्मतंऋतावप्युपपन्नतरासु जातापत्यउपेयात् । पतितत्ववचनंचात्रनिन्दैव नत्वस्य पतितधर्मता पतितस्योदकमित्यादि । एतच्चवक्ष्यामः ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । अथ गोत्रविशेषनियतंदोषमाह शूद्रावेदीति । शूद्रावेदी शूद्रापरिणेता अत्रेःसंज्ञकस्य मुनेर्मते सन्तत्यनुत्पत्यापि पतति द्विजातिकर्मभ्योहानिःपतनमिति । गौतमोक्तपातित्ययोगी भवति । उतथ्यतनयोगौतमस्तद्गोत्रजस्येति सुतोत्पत्त्येत्यनेन व्यवहितेनान्वितम् । शौनकस्येत्यपि तदपत्यतयेत्यनेनान्वितम् । तेन गौतमगोत्रस्य पुत्रोत्पत्त्यां शौनकभृग्वादीनांतु पौत्रोत्पत्त्या शूद्रतुल्यत्वहेतुर्द्विजातिधर्महानिरूपंपातित्यमित्यर्थः । एतच्च तत्तद्गोत्रकर्तॄणांतेन तेन प्रकारेण पूर्वपातित्यस्योत्पन्नत्वात्तैरेव नियमितम् । अएतव भविष्ये शूद्रामारोप्यशय्यांतुपतितोत्रिर्बभूवह । उतथ्यःपुत्रजननात्पतितत्वमवाप्तवान् ॥ पुत्रस्य पुत्रमासाद्य शौनकःशूद्रतांगतः । भृग्वादयोप्येवमेव पतितत्वमवाप्नुयुः ॥ अत्र च भृग्वादयइत्यादिपदादत्रिगौतमव्यतिरिक्तानांसर्वेषांग्रहणं केचित्त्वात्रेस्तनयस्येति षष्ठ्यर्थेव्याचक्षते । एवमुत्तरेष्वपि तत्तु व्याख्यानंव्यवस्थितार्थानभिधानेन शूद्राविदनस्यादोषत्वमापादयन्निषेधविध्यानर्थक्यस्य प्रसंजकतया हेयमेव ॥१६॥

( ३ ) **कुल्लूकः** । शूद्रांविन्दति परिणयतीति शूद्रावेदी सपतति पतितइव भवतीदमत्रेर्मतमुतथ्यतनयस्य गौतमस्यच । अत्र्यादिग्रहणमादरार्थम् । एतद्ब्राह्मणविषयम् । शूद्रायांसुतोत्पत्त्या पततीति शौनकस्य मतमेतत्क्षत्रियविषयम् । शूद्रातत्सुतोत्पत्त्या पततीति भृगोर्मतमेतद्वैश्यविषयम् । एतस्य महर्षिमतत्रयस्य व्यवस्थासंभवे विसदृशपतनविकल्पायोगात् । मेधातिथिगोविन्दराजयोस्तु मतं शूद्रावेदी पततीति पूर्वोक्तशूद्राविवाहनिषेधविशेषः सुतोत्पत्त्या पततीति दैवाज्जातशूद्राविवाह ऋतौनोपेयादितिविधानार्थमृतुकालगमने सुतोत्पत्तेः । तदपत्यतयेति तु तान्येव शूद्रोत्पन्नान्यपत्यानि यस्य सतदपत्यस्तस्य भावस्तदपत्यता तया पतति एतेनेदमुक्तंऋतावुपयन्नितरासु जातापत्यउपेयात् ॥१६॥

( ४ ) **राघवानन्दः** । तदेवमतभेदेनाह शूद्रावेदीति । शूद्रांविन्दते परिणयते इति शूद्रावेदी अत्रेः उतथ्यतनयस्य गौतमस्य च मते विवाहमात्रेण पतति । शौनकस्य तु मते सुतोत्पत्त्या । अतएव दैवाज्जातशूद्राविवाहे ऋतौ नोपेयादिति वचनं संगतं । ततएवर्तुतः शूद्रायांजातमपत्य सामान्यंचास्य अतइदमपि वक्ष्यमाणंसंगच्छते । जनयित्वा सुतंतस्यां ब्राह्मण्यादेवहीयतइति । तदपत्यतया शूद्रापत्यापत्यत्वेनेति भृगोर्मतं । उदितानुदितहोमवत् विप्रराजन्यविशांयथाक्रमंव्यवस्थितसंबन्धइति केचित् । तन्न उत्तरत्र विप्रविषयएव निन्दार्थवादानांदृष्टेः ॥ १६ ॥

( ५ ) **नन्दनः** । अत्रमतान्तराण्युपन्यस्य स्वमतंसिद्धान्तयति शूद्रावेदीति शूद्रांभार्यात्वेनविन्दतीति शूद्रावेदी तेनप-

ततीत्यत्रेरुतथ्यतनयस्यचमतम्। शूद्रामूढ्वानप्युतथ्यतनयोगौतमः। शूद्रायांसुतोत्पादनेनपतति न पुनस्तस्याउद्वहनेनेति शौनकस्यमतम्। शूद्रामूढवानपितस्यांसुतोत्पत्तिभयादृतौतांनोपेयादित्यर्थः। तदपत्यतयाभृगोरित्येतत्स्वमतम् कुतः भृगुमुखेनशास्त्रस्यास्यमोच्यमानत्वात्। तदपत्यतया तस्यांशूद्रायामेवापत्यंयस्य सतदपत्यः तस्य भावः तदपत्यता। तयापततीतिभृगोर्ममतम्। शूद्रापत्यैश्चकेवलैरिति वक्ष्यति। रामोद्विर्नाभिभाषतइत्युक्तिवदत्रास्मच्छब्दरहितापिस्वमतप्रकाशनपरेयंभृगोरित्युक्तिः॥ १६॥

( ६ ) **रामचन्द्रः**। शूद्रांविन्दति परिणयति शूद्रावेदी पतति पतितइव भवति। चपुनः उतथ्यतनयस्य दीर्घतमसः मते शूद्रावेदीशूद्रायाः परिणेता द्विजः पतति। एतद्ब्राह्मणविषयंअर्धश्लोकःपूर्वप्रतिषेधः। शेषःशौनकशास्त्रान्तरमिति ज्ञायते। शौनकस्यमते सुतोत्पत्त्या पतति शूद्रएव केवलमपत्यम्। यद्वा सएवापत्यंतदपत्यंसएव मुख्यः पुत्रएव तत्क्षत्रियविषयम्। भृगोर्मते तदपत्यतया पौत्रोत्पत्त्या ब्राह्मण्यादिपुत्रस्याभावात्पूर्वोक्तशूद्रस्य विवाहनिषेधशेषः। सुतोत्पत्त्या पतति दैवात्शूद्राविवाहे ऋतौ नोपेयादिति विधानार्थंऋतुकालगमने सुतोत्पत्तिंशूद्रेकेवलमपत्यं। एतद्वैश्यविषयम्॥ १६॥

**शूद्रांशयनमारोप्य ब्राह्मणोयात्यधोगतिम्॥ जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते॥ १७॥**

( १ ) **मेधातिथिः**। अर्थवादोऽयम् यदि पुत्रमुत्पादयति तस्यांततोब्राह्मण्यादेव हीयते। अपत्यस्याब्राह्मणत्वमिति निन्दैव। सुतमितिच पुल्लिङ्गनिर्देशात्सुतोत्पत्तेरित्यत्रसमानसंहितत्वेपि पुत्रोत्पत्तिरेवाभिप्रेता तथाचदर्शितंयुग्मारात्रयो वर्ज्याइति॥ १७॥

( २ ) **सर्वज्ञनारायणः**। प्रसंगादधिविन्नायामपि शूद्रायांमैथुने दोषमाह शूद्रामिति। आरोप्येति कारणेन कार्यमैथुनमुक्तम्। अधोगतिं नरकं। ब्राह्मण्यात् ब्राह्मणकर्मणः॥ १७॥

( ३ ) **कुल्लूकः**। सवर्णामपरिणीय दैवात्स्नेहाद्वा शूद्रापरिणेतुर्ब्राह्मणस्य शयननिषेधोयंनिन्दया निषेधस्मृत्यनुमानात् शूद्रांगत्वा ब्राह्मणोनरकंगच्छति। जनयित्वा सुतंतस्यामित्यृतुकालगमननिषेधपरम्। ब्राह्मण्यादेव हीयतइति दोषभूयस्त्वार्थम्॥ १७॥

( ४ ) **राघवानन्दः**। तानेवाह शूद्रामिति त्रिभिः॥ १७॥

( ५ ) **नन्दनः**। केवलशूद्रभार्यत्वंतदपत्यत्वंच ब्राह्मणस्यदोषातिशयावहमित्याह शूद्रामिति। शयनमारोप्यकेवलशूद्रामूढ्वेत्यर्थः। तस्यांकेवलशूद्रायाम्॥ १७॥

**दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु॥ नाश्नन्ति पितृदेवास्तन्न च स्वर्गं सगच्छति॥ १८॥**

( १ ) **मेधातिथिः**। सार्वकालिकोऽयंनिषेधः। यदि कथंचिच्छूद्रापिव्युह्यतेतदैतानि कर्माणि तत्प्रधानानि नकर्तव्यानि। नच तया सह त्रैवर्णिकस्त्रीवद्धर्मेऽधिकारोऽस्तीत्यर्थः। भार्यात्वादधिकारे प्राप्ते निषेधोऽयम्। अतःस्वधर्मे धनंविनियुञ्जानस्य न तदीयानुज्ञोपयुज्यते यथा द्विजातिस्त्रीणाम्। अन्यत्र त्वर्थकामयोः साप्यनतिचरणीयैव प्रेष्यावत्तत्कर्मोपयोगोननिषिध्यते श्राद्धादाववहननादिकार्ये तत्र न दोषः स्यात्। परिवेषणादि न कारयितव्या। तत्रदैवं कर्म दर्शपूर्णमासादि देवतोद्देशेन च ब्राह्मणभोजनंव्रतवदित्यत्रयथाव्याख्यातम्। पित्र्यंश्राद्धोदकतर्पणादि। आतिथेयमतिथेराराधनंभोजनपाद्यादि ननु च सजात्या स्थितयाऽत्यये नास्त्येव प्रतिषेधः। नैव स्थितयेति तत्र श्रूयते। ऋतुमत्यां सवर्णायां

कथंचिद्वाऽसंनिहितायांप्राप्नोति क्षत्रियावैश्यवत्। अपिच नासावधिकारेप्रतिषेधः। किंतर्हि आज्याविक्षणादौ। पत्न्यावेक्षितमाज्यं भवतीत्यङ्गत्वेनोपादीयते। पत्नीत्यत्र क्रत्वर्थेषु यया कयाचिदुपात्तया सिद्धिरनियमेन प्राप्ता। यथा बह्वीषु सवर्णासु ययाकयाचित्सवर्णया क्रियते एवमसवर्णयापि माकारीत्येवमर्थोऽसौ प्रतिषेधः। प्राधान्यमधिकारित्वात्। नाश्नन्ति पितृदेवास्तमिति कर्मनैष्फल्यमाह। नच स्वर्गंसगच्छति यद्यप्यतिथिरश्नाति तत्फलंस्वर्गादि नभवतीतिस्वर्गग्रहणमतिथिपूजाफलोपलक्षणार्थम्। अनुवादश्चधन्यं यशस्यमित्यादि ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः**। यदुक्तंकस्मिंश्चिदपि वृत्तान्तइतिदोषकथनेन स्पष्टयितुमाह देवेति। तत्प्रधानानि भार्यान्तराभावात्। न च स्वर्गमित्यातिथेयविषये दोषउक्तः। तत्र नादन्त्यतिथयइत्यभिधानयोगात् ॥ १८ ॥

( ३ ) **कुल्लूकः**। यदि कथंचित्सवर्णानुक्रमेणाक्रमेणवाशूद्रापि परिणीयते तदा भार्यात्वेन प्रसक्तानि तत्कर्तृकानि दैवेत्यनेननिषिध्यन्ते। दैवंहोमादि पित्र्यंश्राद्धादि आतिथेयमतिथिभोजनादि एतानि यस्य शूद्रासम्पाद्यानि तद्धव्यंकव्यंपितृदेवानाश्नन्ति न च तेनातिथ्येन सगृही स्वर्गंयाति। यस्तु तत्कारयेन्मोहात्सजात्यास्थितयान्ययेति सवर्णायांसन्निहितायांनिषेधंवक्ष्यति अयंत्वसन्निहितायामपीत्यपुनरुक्तिः ॥ १८ ॥

( ४ ) **राघवानन्दः**। दैवंहोमादि। पित्र्यंश्राद्धादि। शूद्रास्तत्सुताश्च प्रधानतया येषुतानीति नच स्वर्गं ब्राह्मण्याभावेन स्वर्गसाधनकर्माभावात् ॥ १८ ॥

( ५ ) **नन्दनः**। एतमेवार्थंविशदयतिदैवेति। यस्यद्विजस्यततप्रधानानि शूद्राप्रधानानि तस्यतत्प्रदेयंपित्र्यमातिथेयंच देयम्। पितृदेवानादन्तिनाश्नन्ति। आतिथेयस्यापि देवपित्रर्थत्वादुक्तंपितृदेवाइति। ततश्चस्वर्गंनगच्छति। नब्राह्मणक्षत्रिययोरित्यारभ्य यदिदंशूद्राभार्यत्वंनिषिध्यते तत्केवलशूद्राभार्यत्वविषयमिति तत्प्रधानानीत्यनेनस्पष्टीकृतम्। नहि त्रैवर्णिकस्य तत्स्त्रीभार्यस्यदैवपित्र्यातिथेयानि शूद्राप्रधानानिभवन्तीतिच ॥ १८ ॥

( ६ ) **रामचन्द्रः**। यस्य पुंसस्तस्यामुख्यतया प्रधानानि कृतानि दैवपित्र्यातिथेयादीन्येतानि पितरोदेवाश्च नादन्ति न भक्षयन्ति च पुनः सोपि पुमान्स्वर्गं न गच्छति ॥ १८ ॥

## वृषलीफेनपीतस्य निःश्वासोपहतस्य च ॥ तस्यांचैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ १९ ॥

( १ ) **मेधातिथिः**। अर्थवादोऽयम्। वृषल्याः फेनोवृषलीफेनोवक्त्रासवः सपीतोयेन पलाण्डुभक्षितादिवत्परनिपातः। पाठान्तरे वृषलीपीतफेनस्यपीतः फेनोयस्येतिविग्रहः वृषल्या पीतफेनः तृतीयेतियोगविभागात्समासः पीतःफेनोवाऽनेनेतिविग्रहेवृषल्याइति षष्ठीसमासः। अर्थस्तुसर्ववृत्तिष्वेकएव। संप्रयुज्यमानयोरधरपरिचुम्बनाद्यवश्यंभावि तेनच सहचारिणा धर्मेण मैथुनसंबन्धोलक्ष्यते। प्रकरणाच्च विवाहप्रतिषेधशेषोऽयं न पृथग्वाक्यम्। तत्त्वेहिचुम्बनादिवर्जनियोगधर्मोबहुमतः स्यात्। तस्माद्गच्छञ्छूद्रांचुम्बनादिपरिफेनेन न किंचिच्छास्त्रार्थमनुतिष्ठति। तस्यांचैवप्रसूतस्य कृतौतुगच्छतइत्यर्थः। निष्कृतिःशुद्धिर्नास्तिइतिनिन्दातिशयोयम्।

यत्तःसंभवएवात्रकैश्चित्सप्तमीपञ्चम्यौनानुज्ञातेसप्तमीपञ्चमीचैव मातृतः पितृतस्तथेति अन्यैस्तुऊर्ध्वंसप्तमात्पञ्चमाच्च तत्र विकल्पलभ्यमाना पञ्चमी न विवाह्या असंभवे तु न दोषः ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः**। वृषलीफेनपीतस्य पीतवृषलीमुखफेनस्य। निःश्वासोवृषल्याएव। एतेन प्रधानमैथुनाभावेपि

( २ ) दैवेत्यनेन=दैवादीनि ( अ )

प्राप्याङ्गमात्रेण दोषउक्तः। प्रसूतस्योत्पन्नापत्यस्य निष्कृतिर्निस्तारः। पापात् न विधीयते नानुमतोविना प्रायश्चित्तमित्यर्थः ॥ १९ ॥

( ३ ) **कुल्लूकः**। वृषलीफेनोऽधररसःसपीतोयेन सवृषलीफेनपीतः। वाहिताग्न्यादिष्वित्यनेनसमासः। अनेन शूद्रायाअधररसपानंनिषिध्यते। निःश्वासोपहतस्य चेति तया सहैकशय्यादौ शयननिषेधः तस्यांजातापत्यस्य शुद्धिर्नोपदिश्यतइत्यृतुकालगमननिषेधानुवादः ॥ १९ ॥

( ४ ) **राघवानन्दः** किंच वृषलीफेनपीतस्य शूद्राधरसुधापायिनः चुम्बनेन भोगकाले। तन्निःश्वासेनोपहतं स्पृष्टंशरीरंयस्य तस्य। प्रसूतस्य स्वयमेवापत्यतया जातस्य। निष्कृतिः शुद्धिः। ऐहिकामुष्मिकयोःकर्मणोर्नाधिकारइति भावः ॥ १९ ॥

( ५ ) **नन्दनः**। उक्तंनिगमयति वृषलीति। वृषलीफेनपीतस्यपीतवृषलीलालाजलस्य। वृषलीभोगोपलक्षणमेतत्। प्रसूतस्यजातापत्यस्यद्विजस्य। निष्कृतिः प्रायश्चित्तम्। एवकारेणत्रैवर्णिकस्त्रियामप्रसूतस्य शूद्रायामेव प्रसूतस्य प्रायश्चित्ताभावइतिसूचितम् ॥ १९ ॥

( ६ ) **रामचन्द्रः**। वृषलीफेनपीतस्य रतिसमये शूद्रायाअधरपानस्य च पुनर्निःश्वासोपहतस्य तया सहैकशय्यानिषेधः। तस्यांवृषल्यांप्रसूतस्य जातस्य निष्कृतिर्न विद्यते। सवर्णामपरिणीय दैवाच्छूद्रापरिणेतुर्ब्राह्मणस्य निषेधः। ऋतुकालगमननिषेधानुवादः। आत्मा वै जायते पुत्रइति श्रुतेः ॥ १९ ॥

**चतुर्णामपि वर्णानांप्रेत्य चेह हिताहितान् ॥ अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥ २० ॥**

( १ ) **मेधातिथिः**। वक्ष्यमाणस्य संक्षेपोपन्यासः। हिताश्चाहिताश्च केचिद्धिताः केचिन्न। अष्टावितिसंख्यानिर्देशः। समासःसंक्षेपः। स्त्रीसंस्कारार्थाविवाहाः स्त्रीविवाहाः। कःपुनरेवंविवाहोनाम उपायतः प्राप्ताया दारकरणार्थः संस्कारःसेतिकर्तव्यतांङ्गःसप्तर्षिदर्शनपर्यन्तो पाणिग्रहणलक्षणः ॥ २० ॥

( २ ) **सर्वज्ञनारायणः**। हिताहितान् हितानहितांश्च। तत्र केचित्सर्वेभ्यो वर्णेभ्योहिताः केचिदहिताः। केचित् कस्मैचिदेव तादृशाइतिवक्ष्यति ॥ २० ॥

( ३ ) **कुल्लूकः**। चतुर्णामपिवर्णानांब्राह्मणादीनांपरलोकइहलोके च कांश्चिद्धितान्कांश्चिदहितानिमानभिधास्यमानानष्टौ संक्षेपेण भार्याप्राप्तिहेतून्विवाहाञ्छृणुत ॥ २० ॥

( ४ ) **राघवानन्दः**। विप्रादीनां तानेवोद्वाहानष्टसङ्ख्याकान् ब्राह्मादीनाह चतुर्णामपीति द्वाभ्यां। हिताहितान्स्वर्गनरकसाधनात् स्त्रीविवाहान् स्त्रीकर्मकान्। अनेन स्वयंवरविवाहोनाष्टसु गण्यतइतिभावः ॥ २० ॥

( ५ ) **नन्दनः**। अथविवाहभेदानाह चतुर्णामिति। यथाविवाहइह प्रेत्य च हितानत्रहितान्विपरीते ॥ २० ॥

( ६ ) **रामचन्द्रः**। चतुर्णांवर्णानांप्रेत्य इहलोकेचहिताहितानिमांस्त्रीविवाहानष्टौ निबोधत ॥ २० ॥

**ब्राह्मोदैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ गान्धर्वोराक्षसश्चैव पैशाचश्चाष्टमोधमः ॥ २१ ॥**

( १ ) **मेधातिथिः**। संख्यायाष्टौव्युद्दिष्टानांनामधेयानीमानि। अधमग्रहणंपैशाचस्यनिन्दार्थम् ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः**। येन विवाहेनोत्पन्नया संतत्या ब्रह्मलोकप्राप्तिः सब्राह्मः। एवंदैवोपि ॥ २१ ॥

( ३ ) **कुल्लूकः** । तएते नामतोनिर्दिश्यन्ते । ब्राह्मराक्षसादिसंज्ञाचेयंशास्त्रसंव्यवहारार्था स्तुतिनिन्दाप्रदर्शनार्था-च । ब्रह्मणइवायंब्राह्मः । रक्षसइवायंराक्षसः । नतु ब्रह्मादिदेवतात्वंविवाहानांसंभवति । पैशाचस्याधमत्वाभिधानं-निन्दातिशयार्थम् ॥ २१ ॥

( ४ ) **राघवानन्दः** । तेषांसंज्ञामाह ब्राह्मइत्यादि ॥ २१ ॥

( ५ ) **नन्दनः** । आर्षात्प्राजापत्यस्यश्रैष्ठ्यंफलतोवक्ष्यति । वृत्तभङ्गभयात्क्रमभङ्गः ॥ २१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मसंज्ञः १ दैवसंज्ञः २ आर्षसंज्ञः ३ प्रजापतिसंज्ञः ४ आसुरसंज्ञः ५ गान्धर्वसंज्ञः ६ राक्षससंज्ञः ७ पैशाचसंज्ञः ८ उक्तेष्वेतेष्वष्टमोऽधमः ॥ २१ ॥

## योयस्य धर्म्योवर्णस्य गुणदोषौ च यस्य यौ ॥ तद्वः सर्वंप्रवक्ष्यामि प्रसवे च गुणागुणान् ॥२२॥

( १ ) **मेधातिथिः** । धर्मादनपेतोधर्म्यःशास्त्रविहितइत्यर्थः । यस्य च विवाहस्य यौगुणदोषौइष्टानिष्टफलहेतुत्वा-द्गुणदोषौ । प्रसवेऽपत्यजन्मनि । गुणागुणाःअगुणोदोषः । वोढुरेव स्वर्गनरकादिलक्षणौ गुणदोषौतत्प्रयोजनमर्थात्स्वर्गा-दिकम् ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । धर्म्याः धर्मादनपेताः । गुणदोषौविवाहमात्रेण प्रसूतिंविनापि तच्च प्रशस्तत्वाप्रशस्तत्वा-भिधानादर्थादभिहितमिति विशेषतोनोक्तम् । प्रसवे सन्ततौ ॥ २२ ॥

( ३ ) **कुल्लूकः** । धर्मादनपेतोधर्म्यः । योविवाहोधर्म्योयस्य विवाहस्ययौगुणदोषाविष्टानिष्टफले तत्तद्विवाहोत्पन्ना-पत्येषु ये गुणागुणास्तत्सर्वंयुष्माकंप्रकर्षेणाभिधास्यामि । वक्ष्यमाणानुकीर्तनमिदंशिष्याणांसुखग्रहणार्थम् ॥ २२ ॥

( ४ ) **राघवानन्दः** । यस्य वर्णस्य विप्रादेर्यो विवाहो यावत्संज्ञ्योविहितोयस्मिंश्च योदोषस्तंब्रूते यइति पञ्चभिः । यस्य विवाहस्य प्रसवेतदुदितापत्ये ॥ २२ ॥

( ५ ) **नन्दनः** । योविवाहोयस्य वर्णस्य धर्म्यो यस्यविवाहस्य यौ च गुणदोषौ । प्रसवेपुत्रे ॥ २२ ॥

( ६ ) **रामचन्द्रः** । योयस्य वर्णस्य विवाहो धर्म्योधर्मार्हः यस्य वर्णस्य यौ गुणदोषौ भवतस्तद्युष्माकमृषीणां-संततौ प्रसवे गुणागुणौवक्ष्यामि पुत्रोत्पादनइत्यर्थः ॥ २२ ॥

## षडानुपूर्व्याविप्रस्य क्षत्रस्य चतुरोऽवरान् ॥ विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥ २३॥

( १ ) **मेधातिथिः** । गतार्थमपि भूयः प्रतिपत्तये कथयन्ति । षड्विवाहाब्राह्मणस्यानुपूर्व्योद्देशक्रमेण । क्षत्रस्य । क्ष-त्रियबचनः क्षत्रशब्दः । तस्य चतुरोऽवरानुपरितनानासुरगान्धर्वराक्षसपैशाचान्विद्यात् । वैश्यशूद्रयो स्तानेवा रा-क्षसान्राक्षसंवर्जयित्वा ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । गान्धर्वान्ताविप्रस्य षट् धर्म्याधर्मादनपेताः । प्रशस्तस्त्वाद्याश्चत्वारइति वक्ष्यति । अ-वरानन्त्याश्चतुरः । तत्र पैशाचस्य शूद्रेष्वपि निन्दितत्वात्प्राजापत्यादयश्चत्वारोग्राह्याः । तानेवचतुरस्तेषु तु मध्ये न राक्षसमिति व्युदासात् । त्रयः प्राजापत्यासुरगान्धर्वाःशिष्यन्ते ॥ २३ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य ब्राह्मादिक्रमेण षट् । क्षत्रियस्यावरानुपरितनानासुरादींश्चतुरः । विट्शूद्रयोस्तु तानेव-राक्षसवर्जितानासुरगान्धर्वपैशाचान्धर्मादनपेताञ्जानीयात् ॥ २३ ॥

( ४ ) **राघवानन्दः** । षडिति गान्धर्वपर्यन्तान् । अवरानासुरादिपिशाचान्तान् चतुरःतानेवासुरादीन् राक्षसंवर्जयित्वा तानासुरगन्धर्वपैशाचान् । तेन विट्शूद्रयोस्त्रीन् ॥ २३ ॥

( ५ ) **नन्दनः** । ब्राह्मादीन्षड्विवाहान्विप्रस्यधर्म्यान्विद्यात्अपरानपाश्चात्यानासुरादीन्क्षत्रियस्यतानेवपाश्चात्यानेव राक्षसवर्जंविट्शूद्रयोः ॥ २३ ॥

( ६ ) **रामचन्द्रः** । विप्रस्य षट्विवाहाआनुपूर्व्येण क्रमेणोक्ताः । क्षत्रस्यावरानासुरादींश्चतुरोविवाहान्विट्शूद्रयोस्तानेव चतुरोऽवरानासुरादीन्धर्म्यान् विद्यात् । न राक्षसान् तद्यथा ब्राह्मयः १ दैवः २ आर्षः ३ प्राजापत्यः ४ आसुरः ५ गान्धर्वः ६ षट्विप्रस्य विवाहाः ७ क्षत्रस्य चतुरःआसुरः १ गान्धर्वः २ राक्षसः ३ पैशाचः ४ ॥ २३ ॥

**चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः ॥ राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥ २४ ॥**

( १ ) **मेधातिथिः** । आसुरगान्धर्वयोरयंनिषेधोब्राह्मणस्य पुनर्ब्राह्मादिविधानेन । एवंक्षत्रियस्य राक्षसएवैकोनगान्धर्वासुरौ । आसुरएव वैश्यशूद्रयोः । विहितप्रतिषिद्धानांविकल्पः । ततश्च नित्यवद्विहितभावे विकल्पितेप्रवृत्तिः । यस्य च योविहितःसतद्विवाहाभावमनपेक्ष्य प्रथमत एव यदिविहितप्रतिषिद्धेषुप्रवर्तेत तत्र पुरुषोदुष्येदपत्यंचानभिप्रेतमुत्पद्येतेतिशास्त्रकारेण दर्शितंप्रसवे च गुणागुणानित्यादिना नतु सपिण्डादिपरिणयनविवाहस्वरूपा निवृत्तिः ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रशस्तानुत्तमसन्ततिहेतुतया । अत्र ब्राह्मणस्य चत्वारइति प्रथमःकल्पः । षडित्यनुकल्पः । एकंक्षत्रियस्य राक्षसएकइति कल्पः । सप्राजापत्याद्याश्चत्वारइत्यनुकल्पः । एवंवैश्यशूद्रयोर्ज्ञेयम् ॥ २४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य प्रथमंपठितान्ब्राह्मादींश्चतुरः । क्षत्रियस्य राक्षसमेकमेव । वैश्यशूद्रयोरासुरं । एताञ्श्रेष्ठाञ्ज्ञातारोजानन्ति । अतएव ब्राह्मणादिष्वासुरादीनां पूर्वविहितानामप्यत्राप्युपादानंजघन्यत्वज्ञापनार्थम् । तेन प्रशस्तविवाहासंभवे जघन्यस्यापि परिग्रहइतिदर्शितम् । एवमुत्तरत्रापि विगर्हितपरित्यागोबोद्धव्यः ॥ २४ ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रशस्तानाह चतुर इति । चतुरः प्राजापत्यान्तान् । कवयः क्रान्तदर्शिनः । एकं प्रधानंप्रशस्तम् । एवमासुरंवैश्यशूद्रयोः प्रशस्तमित्यर्थः ॥ २४ ॥

( ५ ) **नन्दनः** । चतुरइति । मतान्तरमिति ॥ २४ ॥

( ६ ) **रामचन्द्रः** । तत्र विशेषमाह चतुरइति । ब्राह्मणस्य चतुरआद्यान्विवाहान्कवयो विदुः । ब्राह्मदैवार्षप्राजापत्यसंज्ञाइति । क्षत्रस्यैकंराक्षससंज्ञं वैश्यशूद्रयोरासुरमेकमिति ॥ २४ ॥

**पञ्चानांतु त्रयोधर्म्याद्वावधर्म्यौ स्मृताविह ॥ पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन ॥ २५ ॥**

( १ ) **मेधातिथिः** । क्षत्रियादिविषयेयंस्मृतिर्नब्राह्मणविषयाराक्षसेविरोधात् । नहि वधभेदने ब्राह्मणः कर्तुमर्हतिअस्याचरणस्यक्षत्रियादिविषयतयोपपत्तेः । पञ्चानांतु विवाहानांप्राजापत्यात्प्रभृति तयोर्विवाहौधर्म्यौ । द्वौ न कर्तव्यौ पैशाचश्चासुरश्चप्राजापत्यः क्षत्रियादीनामप्राप्तोऽपि विधीयते । राक्षसोऽपि वैश्यशूद्रयोः आसुरपैशाचयोःप्रतिषेधः इयमत्रव्यवस्थाब्राह्मणस्यषड्विवाहास्तत्र ब्राह्मःसर्वतः श्रेष्ठस्ततोन्यूनौ दैवप्राजापत्यौ ताभ्यामप्यार्षस्ततोपिगान्धर्वस्ततोप्यासुरः । येषामयंश्लोकोब्राह्मणविषयोपि तेषांराक्षसोपि ब्राह्मणस्य क्षत्रियवृत्ताववस्थितस्य भवति विकर्मस्थस्यापि वधभेदनाभ्यांप्रायश्चित्तीयतोराक्षसोनविवाहइति ते मन्यन्ते । तद्ब्राह्मस्य श्रैष्ठ्यंफलेनैवदर्शितम् । निषेधाभावेन चेतरेषांत्रयाणांन्यूनता फलापचयवचनादेव । आसुरस्य पुनर्वैश्यशूद्रयोर्विधानेनपरिसंख्याब्राह्मणक्षत्रिययोःप्रतीयते । षडितिचविधानम् । अतोविकल्पःसचव्य-

वस्थयाइतरासंभवेन तस्याश्रयणंतुल्यम् । विकल्पोहिव्रीहियववदनेकविवाहविधानेन च समुच्चयासंभवादेवसिद्धः। सति वा संभवेक्रियेत चेत्तथापि धर्मापत्ययोर्न्यूनफलोऽसौ अथ क्षत्रियस्य राक्षसोमुख्यश्चतुर्भिःश्लोकैरविकल्पेन विधानात्। चतुरइत्यनेनासुरगान्धर्वपैशाचाअपिराक्षसंक्षत्रियस्यैकमित्यनेनते प्रतिषिद्धाः । अतोविकल्पितानमुख्याः । प्रकृतापेक्षत्वाच्चराक्षसैकविधिः। प्राजापत्ये नास्ति परिसंख्यानम्। अतः प्राजापत्योऽपि क्षत्रियस्य राक्षसतुल्यः। एवंवैश्यशूद्रयोरपि प्राजापत्योनित्यवदाम्नातोनप्रतिषिद्धः । आसुरपैशाचौ तु तयोर्विहितप्रतिषिद्धौ । राक्षसोऽप्यराक्षसानित्यनेन प्रतिषिद्धः त्रयोधर्म्या इत्येनन विहितः। ब्राह्मणस्य पैशाचोनैवास्ति । क्षत्रियादीनांब्राह्मदैवार्षाइतिस्थितम् ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः**। आपत्कल्पं ब्राह्मणस्याह पञ्चानामिति । क्षत्रस्य चतुरोवरानित्युपक्रान्ताः प्राजापत्यादयः पञ्च तेषामपि मध्ये त्रयोधर्म्याविप्रस्य । अत्र ह्यासुरस्य वैश्यशूद्रयोरेव मुख्यत्वात्। पैशाचस्य च सर्वेषांनिन्दितत्वात् । आपद्यनन्तरंक्षत्रवर्णमुख्यधर्माश्रयणस्य युक्तत्वाद्राक्षसोयुक्तोनासुरपैशाचाविति तात्पर्यम् ॥ २५ ॥

( ३ ) **कुल्लूकः**। इह पैशाचप्रतिषेधादुपरितनानांपञ्चानांप्राजापत्यादीनांग्रहणम् । तेषु मध्ये प्राजापत्यगान्धर्व राक्षसास्त्रयोधर्मादनपेतास्तत्र प्राजापत्यः क्षत्रियादीनामप्राप्तोविधीयते। ब्राह्मणस्य विहितत्वादनूद्यते। गान्धर्वस्य च चतुर्णामेव प्राप्तत्वादनुवादः। राक्षसोपि वैश्यशूद्रयोर्विधीयते । ब्राह्मणस्य क्षत्रियवृत्त्यवस्थितस्याप्यासुरपैशाचौ न कर्तव्यौ। कदाचनेत्यविशेषाच्चतुर्णामेवनिषिध्यते। अत्रयंवर्णंप्रति यस्य विवाहस्य विधिनिषेधौ तस्य तंप्रति विकल्पःसच विहितासंभवे बोद्धव्यः ॥ २५ ॥

( ४ ) **राघवानन्दः**। पञ्चानांप्राजापत्यादीनांमध्ये त्रयोधर्म्याधर्मादनपेताः। प्राजापत्यगान्धर्वराक्षसायथोक्तालाभे विप्रक्षत्रिययोरपि द्वावधर्म्यौ धर्मादपेतौ पैशाचासुरौ न कार्याविति तात्पर्यम्। तत्र क्षत्रियवृत्तिस्थस्य विप्रस्य राक्षसः। आसुरपैशाचौ शूद्रविशोर्विकल्पितौ। ब्राह्मस्तुब्राह्मणस्यैवेति भावः ॥ २५ ॥

( ५ ) **नन्दनः**। मतान्तरमाह पञ्चानामिति । पाश्चात्यानांग्रहणंपैशाचश्चासुरश्चैवेतिलिङ्गात् । पञ्चानांप्राजापत्यादीनांमध्येत्रयः प्राजापत्यगान्धर्वराक्षसाधर्म्याः। पिशाचाश्चासुरश्चैवद्वावधर्म्यौ। ततश्चतौनकर्तव्यौ कथञ्चनआपद्यपिनकर्तव्याविति। अत्र कर्तृविशेषानिर्देशादस्य मतस्य सर्ववर्णसाधारणत्वम् गम्यते। इहकविषुमध्ये ॥ २५ ॥

( ६ ) **रामचन्द्रः**। पञ्चानांविवाहानांमध्ये त्रयोधर्मार्हाः प्राजापत्यासुरगान्धर्वराक्षसपैशाचाः ५ एतेषु पञ्चसु मध्ये त्रयोधर्म्याः। प्राजापत्यासुरगान्धर्वसंज्ञास्त्रयोधर्मार्हाः३ द्वावधर्म्यौराक्षसपैशाचसंज्ञौ। वर्णक्रममाह। प्राजापत्यं क्षत्रियादीनामप्राप्तौ विधीयते ब्राह्मणस्याभिहतत्वादनूद्यते गान्धर्वस्य तु चतुर्णामेव प्राप्तानुवादः । राक्षसोपि वैश्यशूद्रयोर्विधीयते ब्राह्मणस्य तु क्षत्रियवृत्त्यवस्थितस्यासुरपैशाचौ न कर्तव्यौ ॥ २५ ॥

**पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ॥गान्धर्वोराक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥२६॥**

( १ ) **मेधातिथिः**। पृथक्पृथगित्यनुवादः पूर्वेणैव सिद्धत्वात्। मिश्राविति विधीयते निरपेक्षायाइतरेषांगान्धर्वराक्षसयोर्विहितत्वात्। व्रीहियववदप्राप्ते मिश्रणवचनमिदम्। व्रीहिभिर्यजेत यवैर्वेत्येकयागप्रयोगविषयत्वेनेतरेतरानपेक्षद्रव्यविधानाद्विकल्पोनमिश्रीभावः। मिश्रीभावे हि नव्रीहिशास्त्रार्थोऽनुष्ठितः स्यान्नच यवशास्त्रार्थः। एवमिहैकस्यांकन्यायांस्वीकर्तव्यायांयुगपदुपायद्वयमप्राप्तंविधीयते। तस्य विषयोयदा पितृगेहे कन्या तत्रस्थेन कुमारेण कथंचिद्दृष्टिगोचरापन्नेनदूतीसंस्तुतेन इतरापि तथैव परवती नच संयोगंलभते तदा वरेणसंविदंकृत्वा नयमामितोयेन केनचिदुपायेनेत्यात्मानंनाययति सच शक्त्यतिशयाद्धत्वा छित्त्वाचेत्येवंहरति तदेच्छयान्योन्यसंयोगइत्येतदप्यस्तिगान्धर्वैरूपं हत्वाछित्त्वे-

ति च राक्षसरूपम् । तावेतौ विवाहौ क्षत्रियस्यैव भवतः । धर्म्यौ क्षत्रियस्यतौपूर्वचोदितावित्यनुवादः । अन्येत्वाहुः यः क्षत्रियोबहुविवाहान्कुरुते सकांचिद्गान्धर्वेण विवाहेन परिणयते कांचिद्राक्षसेनेत्येषमिश्रपक्षः अथवा सर्वाएवान्यतरेणेति पृथक्पृथक् अनेनचैतज्ज्ञायते । क्षत्रियस्यानयोरेवानियमेन प्रवृत्तिः प्राजापत्यादीनांतुयएवप्रथमंकृतस्तेनैवान्यापि विवाह्या ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । क्षत्रियस्य कल्पानुकल्पावुक्त्वाऽधुनापत्कल्पमाहपृथगिति । पृथगसंकीर्णौ मिश्रौ संकीर्णौ । यथा प्रथमंगान्धर्वेण परिगृह्य तद्बन्धुषुविरोधप्रवृत्तेषु युद्धेन हरणम् । अत्र मिश्रावित्यापत्कल्पः । पृथगितित्वनुकल्पानुवादमात्रमसंकीर्णात्संकीर्णस्य निन्दितत्वप्रदर्शनार्थम् । तेन वर्णान्तराणामप्यसंकीर्णविवाहासंभवे आपदि संकीर्णस्यापि करणमिति दर्शितम् । पैशाचस्य तु कैश्चिदप्यकरणीयस्य विवाहगणमध्ये गणनम् वैश्यशूद्रयोरापदि तस्यापि प्राप्त्यर्थमिति ग्राह्यम् । मातृतः पितृतो वोभयोरेकस्य कूटस्थेन सह सपिण्डतासद्भावे विवाहासंभव एवेत्येतत्प्रदर्शयितुंवा ॥ २६ ॥

( ३ ) **कुल्लूकः** । पृथक्पृथगिति प्राप्तत्वादनूद्यते । मिश्राविति विधीयते । पृथक्पृथग्विमिश्रौ वा पूर्वविहितौ गान्धर्वराक्षसौ क्षत्रस्य धर्मौ मन्वादिभिःस्मृतौ । यदा स्त्रीपुंसयोरन्योन्यानुरागपूर्वकसंवादेन परिणेता युद्धादिना विजित्यतामुद्वहेत्तदा गान्धर्वराक्षसौ मिश्रौ भवतः ॥ २६ ॥

( ४ ) **राघवानन्दः** । राक्षसंक्षत्रियस्येत्युक्तत्वादनुवादोमिश्राविति । वरकन्ययोः पूर्वंपरस्परसंवादे सति परिपन्थिनोविजित्योद्वहनात्तौगान्धर्वराक्षसौ मिश्रौ भवतः । यथारुक्मिण्याविवाहः ॥ २६ ॥

( ५ ) **नन्दनः** । पृथक्पृथग्वाकेवलोवागान्धर्वः केवलोवाराक्षसइत्यर्थः । केवलोगान्धर्वोयथा दुष्यन्तशकुन्तलयोः । केवलोराक्षसोयथाविचित्रवीर्याम्बिकयोः । मिश्रोयथा फाल्गुनसुभद्रयोः । पूर्वचोदितौपूर्वोविहितौ । अनेनमतान्तरमिदमित्यवगम्यते ॥ २६ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियस्य विवाहमाह पृथगिति । विवाहौ पूर्वनोदितौ कार्यौ पृथक् २ गान्धर्वोवाविवाहः मिश्रौ वा गान्धर्वराक्षसौक्षत्रस्य धर्म्यौ तौस्मृतौ । आसुरोद्रविणादानात् गान्धर्वःसमयान्मिथः । राक्षसोयुद्धहरणात्पैशाचःकन्यकाच्छलादिति याज्ञवल्क्यः ॥ २६ ॥

**आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्॥आहूय दानं कन्याया ब्राह्मोधर्मः प्रकीर्तितः॥२७॥**

( १ ) **मेधातिथिः** । इदानींस्वरूपमेतेषामाह । आच्छाद्येतिआच्छादनविशेषोऽभिप्रेतः अन्यस्यौचित्येनैव प्राप्तत्वात् । उत्कृष्टेनाच्छादनेन यथादेशंयथासंभवंयथायोग्येन वाससा परिधाप्य । अर्हयित्वा अनेनालंकरणकटककर्णिकादिना प्रीतिविशेषसत्कारविशेषैरर्चनंकृत्वा । एतेनाच्छादनार्हणेन कन्यायावरस्य चान्यतरसंबन्धे प्रमाणाभावादुभयोपयोगःकार्यः। श्रुतशीलवते अन्येपिस्मृत्यन्तरोक्तावरगुणाद्रष्टव्याः युवा धीमाञ्जनप्रियः यत्नात्परीक्षितःपुंस्त्वइति । स्वयंप्रागयाचितः स्वपुरुषप्रेषणैराहूयान्तिकदेशमानाय्यवरं यद्दानं सब्राह्मोधर्मोविवाहः । अविशेषवचनोऽपि धर्मशब्दः पूर्वापेक्षितत्वादस्यतत्परएवद्रष्टव्यः । अयाचितलाभोऽभ्यर्हणापूर्वकोब्राह्मोविवाह इतिलक्षणार्थः । ननुचेदमयुक्तंस्त्रीस्वीकारार्थोविवाहइति यावद्विवाहपर्यन्तंचैतद्दानम् । नाकृते विवाहे दानार्थनिवृत्तिः । सहि तस्याःप्रतिग्रहकालः । नचासति परिग्रहे दानंपरिसमाप्यते न स्वत्वनिवृत्तिमात्रंदानंपरस्वत्वापत्तिपर्यन्तंहिततत् । तथाच वक्ष्यति तेषांतु निष्ठा विज्ञेया विद्वद्भिः सप्तमेपदेइति । एवंविवाहकालएव कन्यादातव्या तथाच गृह्यकारस्तस्मिन्नेव काले ब्राह्मविवाहेकाण्डिकधर्मन्दर्शयति ।

यत्तु प्राग्विवाहाद्दानंतदुपसंवादनवाचनमात्रम् । नहि तस्मिन्नक्रियमाणेऽभिमेतकालेऽवश्यंविवाहनिर्वृत्तिः कश्चित्प्रागनिरूपिते नदद्यादपिइतरोवा कदाचिन्न प्रतिगृह्णीयात् तस्मात्प्राग्विवाहादुपसंवादः कर्तव्यः । तदा त्वयेयंदेया मया चेयं वोढव्येति यथैवान्तःक्रतुः सोऽपक्रियोऽचोदिततत्सिद्धार्थोऽर्थाद्बहिष्क्रियते । येतु मन्यन्ते यथैवगवादेर्द्रव्यस्यादृष्टार्थतया दीयमानस्य मन्त्रपूर्वकेण प्रतिग्रहेण दानमपिनिर्वर्तते तेनैवेदमुक्तं ददातिषुचैवंधर्मेष्विति । एवंचेह प्रतिग्रहमन्त्रस्थानीयोविवाहइति । तथाचउपयमनंविवाहइत्येकोर्थः । उपयमनंच स्वकरणम् । एवंहस्म भगवान्पाणिनिः स्मरति उपाद्यमःस्वकरणइति । अतोविवाहः कन्यास्वीकारार्थः । तदयुक्तम् । स्वीकृतायाविवाहो भार्याकरणार्थः । नानेनकर्मणा प्रतिगृह्णीयादितिविधिरस्ति । नचवैवाहिकामन्त्राप्रतिग्रहप्रकारकाः यथादेवस्यत्वाप्रतिगृह्णामीतिमन्त्राः । यत्तुस्वकरणइति तन्नविरुद्धम् । विवाहस्याप्यस्ति स्वकरणरूपता । दानेन स्वत्वमात्रे प्रतिपन्ने विवाहेन विशिष्टं स्वत्वंक्रियते । नेयंगवादिद्रव्यवत्स्वंयथेष्टविनियोज्यतया अपितुजायात्वेन । विशिष्टएवहि स्वस्वामिभावोजायापतिलक्षणसंबन्धः । तथाचदर्शयिष्यति । मङ्गलार्थं स्वस्त्ययनं····· विवाहेषु प्रदानंस्वाम्यकारणमिति ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । आच्छाद्य वाससाकन्यां । एतेन यथाशक्त्यलंकरणमुपलक्षितम् । अर्चयित्वा वरं मधुपर्केण स्वयमर्हयित्वा महाप्रयुक्तिमात्रेण । शीलमविपरीतचेष्टा । आहूयनतु वराभ्यर्थनया ॥ २७ ॥

( ३ ) **कुल्लूकः** । आच्छादनमात्रस्यैवौचित्यप्राप्तत्वात्सविशेषवाससा कन्या वरावाच्छाद्यालंकारादिना च पूजयित्वा विद्याचारवन्तमप्रार्थकवरमानीय तस्मै कन्यादानंब्राह्मोविवाहोमन्वादिभिरुक्तः ॥ २७ ॥

( ४ ) **राघवानन्दः** । उक्तविवाहानां लक्षणान्याह आच्छाद्येति । वासोलङ्काराभ्यांकन्यामाच्छाद्य अर्चयित्वा च वरमिति ब्राह्मे च धनादिभिरभिसन्धित्वाद्ब्राह्मः धर्मोधर्मैकहेतुत्वात् एवमुत्तरत्र ॥ २७ ॥

( ५ ) **नन्दनः** । अथब्राह्मादीनांलक्षणान्यष्टभिःश्लोकैराह आच्छाद्येति । आच्छाद्य कन्यांपरिधाप्य भूषणादिभिश्चार्हयित्वा श्रुतशीलवते श्रुतंवेदशास्त्रपरिज्ञानंशीलंतदर्थानुष्ठानंतद्वतेवरायकन्या पित्रा स्वयमेववरमाहूय तस्मै वरायकन्यायायद्दानंसब्राह्मोधर्मः । धर्मसाधनत्वाद्विवाहएवधर्मशब्देनात्रोच्यते । ब्रह्मशब्दोऽत्र धर्मवचनः । धर्मातिशययुक्तत्वाद्ब्राह्मत्वम् ॥ २७ ॥

( ६ ) **रामचन्द्रः** । अष्टानांविवाहानांस्वरूपमाह आच्छाद्येति । वस्त्रैराच्छाद्य परिधाय अर्हयित्वा आभरणाद्यलङ्कृतांकृत्वा श्रुतिशीलवते वराय स्वयमाहूय कन्याया दानंदीयतेसब्राह्मसंज्ञोविवाहोधर्म्यः प्रकीर्तितः । ब्राह्मोविवाह आहूयदीयतेशक्त्यलंकृता । तज्जःपुनात्युभयतः पुरुषानेकविंशतिमिति याज्ञवल्क्यः ॥ उभयतः मातृतः पितृतः ॥ २७ ॥

**यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ॥ अलंकृत्य सुतादानंदैवंधर्मंप्रचक्षते ॥ २८ ॥**

( १ ) **मेधातिथिः** । वितते प्रारब्धे तन्त्रे ज्योतिष्टोमादौ यज्ञे तत्कर्मकारिणऋत्विजेऽध्वर्यवेसुतायादुहितुर्दानम् । अलंकृत्येत्यनुवादःकन्यादानस्यसर्वस्यैवंरूपत्वात् । आच्छाद्यालंकृतांविवाहयेदितिसामान्योऽयंविधिः । ननु गौश्चाश्वश्चाश्वतरश्चेत्याद्यृत्विग्भ्योदक्षिणात्वेनश्रुतम् न कचित्कन्यादानंक्रत्वर्थतयाचोदितम् । किमत्र क्रत्वर्थतयाप्रवृत्तेयज्ञऋत्विजेयांददाति सदैवोविवाहः । अस्तिचोपकारगन्धस्तदीयकरणम् । अकर्मोद्देशेनापि दीयमानंतत्कर्मकरणप्रवृत्तस्यजनयत्येवानुमानविशेषम् । एतावतोपकारसंबन्धेनब्राह्माद्दैवोन्यूनः ॥ २८ ॥

( ५ ) **सर्वज्ञनारायणः** । यज्ञे यज्ञमध्ये ऋत्विजे दानंस्वयज्ञस्य सम्यक्क्लृप्त्यभिसंधानेन सुतादानमुभयस्यापि

लक्षणस्य पितापुत्रीमनुक्रमेदित्यादिविधिनो ब्राह्मइव दानवाक्यमुच्चार्यम्। एवंदीक्षितोनददातीति दाननिषेधः। एतदन्यदानविषयइति ग्राह्यम् ॥ २८ ॥

( ३ ) कुल्लूकः । ज्योतिष्टोमादियज्ञे प्रारब्धे यथाविध्यृत्विजे कर्मकर्त्रेऽलंकृत्य कन्यादानंदैवंविवाहंमुनयोब्रुवते ॥ २८ ॥

( ४ ) राघवानन्दः । वितते कर्तव्यतया प्रारब्धे । अलङ्कृत्येत्यनुवादः । अलङ्कृतांविवाहयेदिति सामान्योक्तेः । दैवंदेवकर्मसंबन्धित्वात् देवोद्देश्यत्वाद्वा ॥ २८ ॥

( ५ ) नन्दनः । सुतामलंकृत्ययद्दानंतद्दैवंधर्मविदुः । देवकार्याधिकृतायदानात्तस्यदैवत्वम् ॥ २८ ॥

( ६ ) रामचन्द्रः । विततेविस्तीर्णेयज्ञेऋत्विजे सम्यक्कर्म कुर्वते अलङ्कृत्य सुतादानंकन्यादानंक्रियते तंदैवंदैवसंज्ञंविवाहंधर्म्यंप्रचक्षते ॥ २८ ॥

## एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ॥ कन्याप्रदानंविधिवदार्षोधर्मः सउच्यते ॥ २९ ॥

( १ ) मेधातिथिः । स्त्रीगवीपुङ्गवश्चमिथुनम् । एकं द्वे वा वराद्गृहीत्वा कन्यायादानमार्षोधर्मः। धर्मतइतिधर्मएवायंनात्रविक्रयबुद्धिः कर्तव्या उच्चनीचर्णापाकरणाभावादित्यभिप्रायः॥ २९ ॥

( २ ) सर्वज्ञनारायणः । गोमिथुनंस्त्रीपुंसौ द्वे वा मिथुने धर्मत आदाय । आर्षोयंधर्मइति बुद्ध्यानतुलोभेनादानं वेतनकल्पार्थमेव नतु स्वार्थे। तच्च कुलधर्मबुत्ध्यैवविधिवदितिवाक्यमुच्चार्येत्यर्थः । अलंकरणंतु कन्यायानात्रास्ति तत्र विशेषविधेरेव लाभात् ॥ २९ ॥

( ३ ) कुल्लूकः । स्त्री गवी पुंगौश्च गोमिथुनंतदेकं द्वे वा वराद्धर्मतो धर्मार्थंयागादिसिद्धये कन्यायैवादातुं न तु शुल्कबुद्ध्या गृहीत्वा यद्यथाशास्त्रंकन्यादानंसआर्षोविवाहोविधीयते ॥ २९ ॥

( ४ ) राघवानन्दः । आर्षंलक्षयति एकमिति । गोयुगंस्त्रीपुंसौमिथुनंद्वेइति स्त्रीपुंगोचतुष्टयं वराद्वरगृहादादाय कन्यायाः सौन्दर्यादिगुणदोषानपेक्ष्यनियतपणत्वेन गृहीत्वा । पूर्वमृषिभिराचरितत्वादार्षम् । ऋषिगताविति धातोरेवंगतागतिकत्वाद्वा । धर्मएवायंनात्र व्यतिक्रमइति मेधोक्तेः । तत्राल्पंवा बहुवेति विक्रयस्तावदेवत्विति मनूक्तेः ॥ २९ ॥

( ५ ) नन्दनः । धर्मतआदायधर्मार्थमादायनार्थार्थंयत्कन्याप्रदानमार्षोधर्मः विक्रयदोषभयादृषिभिरनुक्तवेतनैरेव विद्यादीयते शुश्रूषादिकं शिष्यात् किञ्चिदादीयतेच । आर्षेपिकन्यादीयते। वरात्किञ्चिदादीयतेच । तेनदानादानसामान्येनास्यार्षत्वम् ॥ २९ ॥

( ६ ) रामचन्द्रः । वरादेकंगोमिथुनमादाय स्वीकृत्य द्वे वा गृहीत्वा । धर्मतः धर्मार्थंयागादिसिध्यर्थंविधिवत्कन्याप्रदानंक्रियते सआर्षसंज्ञः धर्म्योधर्मार्होविवाहउच्यते । आदायार्षस्तु गोद्वयमिति याज्ञवल्क्यः ॥ २९ ॥

## सहोभौ चरतांधर्ममितिवाचानुभाष्य च ॥ कन्याप्रदानमभ्यर्च्य प्राजापत्योविधिः स्मृतः ॥ ३० ॥

( १ ) मेधातिथिः । सहधर्मोयुवाभ्यांकर्तव्यइतिवचनेनपरिभाषांकृत्वा नियम्ययद्दानंसप्राजापत्यः । धर्मग्रहणमुपलक्षणार्थम्। धर्मेचार्थेच कामेच तुल्ययोगक्षेमतेति मिथोऽस्यपरिभाषाबचनस्यार्थः । धर्मशब्दाएवोच्चार्यतेसहधर्मश्चर्यतामिति नतु धर्मार्थकामाः सहेति सतुधर्मशब्दःस्मृत्यन्तरवशादर्थकामयोरुपलक्षणार्थोव्याख्यातः । यद्येनांनातिचरसि

धर्मार्थकामेषु तदातुभ्यमियंदीयतइति कृतसंवित्कायाभ्युपगततदर्थायविवाहकाले । यद्दानंतत्रैवंसमुच्चारयितव्यंसहधर्मंचरतामिति अर्थकामयोरभिप्रेतेपिसहत्वेतदप्रकृतत्वादनुच्चारणम् । तथाचगौतमः प्राजापत्ये सहधर्मंचरतामितिमन्त्रः मन्त्रग्रहणेनचैतद्दर्शयत्यधिकृतरूपमेवप्रयोक्तव्यंमन्त्रवत् । नहि महासत्वानामर्थकामविषयेसहितत्वंपरिभाषितुंयुक्तम् गम्यतेतुस्मृत्यन्तरेभ्यः । अनयैव संविदा दोषेणास्य न्यूनता अस्तिह्यत्रदातुर्वराद्उपकारलिप्सा । शब्देनैतद्वचनंवाच्यते । नपुनरयंदातुरेव वचननियमः । अनुभाष्येत्यनेनैवसिद्धत्वाद्वाचेत्यनर्थकंस्यात् अनुभाषणेवागिन्द्रियस्य साधनत्वात् । तथाचगृह्यकारः । एतद्वः सत्यमित्युक्त्वा वरंवाचयेदेतन्नः सत्यमिति । अनुशब्दश्चप्राप्तार्थस्यैव वाचा निश्चयमाह ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । उभावेव न तुभार्यान्तरेणापि सहेति । अनुभाष्य नियम्य । अभ्यर्च्य मधुपर्केण । एतच्चैतादृक्परिभाषणेन दृष्टस्वार्थाभिसंधिनिमित्ततया कन्यालंकाररहिततया च ब्राह्मदैवाभ्यांहीनमार्षाच्चोत्कृष्टमत्रार्थग्रहणाभावात्कन्यानुकंपामात्रकत्वाच्च परिभाषणस्य । अतएव । आर्षोढाजःसुतइतिफलेप्याधिक्यंवक्ष्यते । दैवे तु यद्यपि यज्ञसिद्ध्यभिसन्धिरस्त्येव । तथापि धर्मसिद्ध्यर्थंप्रवृत्तस्यास्य धर्महेतुतयाआर्षप्राजापत्याभ्यामुत्तमत्वम् । प्राजापत्ये कन्यासुखाभिसंधिना परिणयनान्तरनिषेधे तात्पर्यादभिसंधेर्धर्मार्थतैवेति ॥ ३० ॥

( ३ ) **कुल्लूकः** । सहयुवांधर्मंकुरुतमिति सुताप्रदानकाले वचसा पूर्वंनियम्यार्चयित्वा यत्कन्यादानंसप्राजापत्योविवाहः स्मृतः ॥ ३० ॥

( ४ ) **राघवानन्दः** । प्रदानकाले वचसा धर्मंचरतामिति पूर्वंनियम्य अभ्यर्च्य सत्कृत्य गन्धादिना कन्यावराविशेषः । वस्त्रादिरनावश्यकत्वाद्ब्राह्मादेर्भेदः । प्रजामात्रोद्देश्यत्वात् प्रजापतिदैवत्याद्वा प्राजापत्यः ॥ ३० ॥

( ५ ) **नन्दनः** । उभौयुवांसहधर्मंचरतं । नपृथगितिवाचानुभाष्यअहंगृहस्थाश्रमस्थएवधर्मंचरिष्यामि । नान्याश्रमस्थइति वरंप्रतिश्राव्येत्यर्थः । यदिसहधर्मचरणानुभाषणमात्रमेवात्र विवक्ष्यते । ततोदैवविवाहात्प्राजापत्यस्यन्यूनतावक्ष्यमाणानोपपद्येत । अभ्यर्च्यवरमितिशेषः । यत्कन्याप्रदानं । सप्राजापत्योविधिःविधीयतइतिविधिः विवाहउच्यतेगार्हस्थ्यप्राधान्य निबन्धनंप्राजापत्यत्वंगार्हस्थ्यप्रधानोहिप्रजापतिः ॥ ३० ॥

( ६ ) **रामचन्द्रः** । उभौ स्त्रीपुरुषौ सहधर्मंचरतइति वाचा । अनुभाष्योक्त्वा अभ्यर्च्यालङ्कृत्य कन्याप्रदानंक्रियतेप्राजापत्यविधिःस्मृतः प्राजापत्यसंज्ञःविवाहउक्तः ॥ ३० ॥

**ज्ञातिभ्योद्रविणं दत्त्वा कन्यायै चैव शक्तितः ॥ कन्याप्रदानंस्वाच्छन्द्यादासुरोधर्मउच्यते ॥ ३१ ॥**

( १ ) **मेधातिथिः** । ज्ञातिभ्यः कन्यायाएवपित्रादिभ्यः कन्यायैस्त्रीधनंदत्त्वाकन्यायाआप्रदानमानयनमासुरोविवाहः । स्वाच्छंद्यात्स्वेछातोनशास्त्रतोइत्यर्थाद्धेदमाह । तत्रहिशास्त्रंनियामकमस्ति । एकंगोमिथुनमिति । इह तुकन्यायारूपसौभाग्यादिगुणापेक्षंच्छन्दः ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । शक्तितः नतु एकगोमिथुनादिनियतंद्रविणम् । कन्यायाआप्रदानंआदानं स्वाच्छन्द्यान्नत्वा र्षवद्वाक्यादिना विधितः । अत्र ज्ञातिभ्यइति वचनात् माता पित्रन्यज्ञातिभ्योऽर्थदाने नासुरत्वम् । तथा कन्यायैचैवेति समुच्चितंव्युच्चितंवाग्राह्यं तदर्थमेवैवकारः । तेन कन्यायाएव च यद्दत्वा परिणयनंसोप्यासुरइत्यर्थः ॥ ३१ ॥

( ३ ) **कुल्लूकः** । कन्यायाज्ञातिभ्यः पित्रादिभ्यः कन्यायै यथाशक्ति धनंदत्वा कन्यायाआप्रदानमादानंस्वीकारःस्वाच्छन्द्यात्स्वेच्छया न त्वार्षइवशास्त्रीयधनजातिपरिमाणनियमेन सआसुरोविवाहउच्यते ॥ ३१ ॥

( ४ ) **राघवानन्दः** । आसुरंलक्षयति ज्ञातिभ्यइति । ज्ञातिभ्यः कन्यायाःपित्रादिभ्यः द्रविणंधनं । पणसङ्ख्या-

नियमंव्यवच्छिनत्तिशक्तितइति । कन्याप्रदानंतत्स्वीकारः स्वाच्छन्द्यात् स्वेषामिच्छया । असुःप्राणस्तं राति रमयति वा असुरं धनं व्ययितव्यत्वेन यस्यास्तीत्यासुरः । धर्मशब्दोत्र विरोधिलक्षणया ॥ ३१ ॥

( ५ ) **नन्दनः** । कन्यायाज्ञातिभ्यः स्वशक्तितोऽभ्यार्थितवतेवरायस्वाच्छन्द्याल्लोकशास्त्रमर्यादातिलङ्घनेन कन्याप्रदानंसआसुरोऽधर्म्यः । परवित्तापहारस्वाच्छन्द्यनिबन्धनमासुरत्वम् । असुराहिस्वाच्छन्द्येनपरवित्तमपहरन्ति ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । द्रविणं द्रव्यं ज्ञातिभ्योदत्वा कन्यायै वा दत्वा शक्तितः । एतादृश्याः कन्यायाः प्रदानं स्वछन्दात्स्वेच्छातः आसुरसंज्ञो विवाहः अधर्म उच्यते । आसुरो द्रविणादानादिति याज्ञवल्क्यः ॥ ३१ ॥

## इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ॥ गान्धर्वः सतु विज्ञेयोमैथुन्यः कामसंभवः॥३२॥

( १ ) **मेधातिथिः** । इच्छयाच वरस्य कुमार्याश्चप्रीत्या परस्परसंयोगएकप्रदेशेसंगमनम् । तस्येयंनिन्दामैथुन्यःकामसंभवः मिथुनप्रयोजनोमैथुनः । तस्मैहितोमैथुन्यः । एषएवार्थोविस्पष्टीकृतः कामसंभवइति । संभवत्यस्मादितिसंभवःकामः संभवोऽस्येति ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । मैथुन्योमैथुनमात्रोद्देशप्रवृत्तः प्रथमंयतः कामसंभवः पश्चात्तु होमादिना भार्यात्वसिद्धौ धर्मार्थतापि तस्य भवति । तथाहि सर्वेष्वेव द्विजातिविवाहेषु होमादिनैव भार्यात्वसिद्धिः । यद्वक्ष्यति पाणिग्रहणिकामन्त्रानियतंदारलक्षणम् । तेषांनिष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदइति ॥ तथाच देवलः । गान्धर्वादि विवाहेषु पुनर्वैवाहिकोविधिः । कर्तव्यस्तु त्रिभिर्वर्णैः समयेनाग्निसाक्षिकइति ॥ तथा शौनकपरिशिष्टेविशेषोऽप्युक्तः । गान्धर्वासुरपैशाचाविवाहाराक्षसश्चयः । पूर्वंपरिणयस्तेषांपश्चाद्धोमोविधीयतइति ॥ ३२ ॥

( ३ ) **कुल्लूकः** । कन्याया वरस्य चान्योन्यानुरागेण यः परस्परसंयोगआलिङ्गनादिरूपः सगान्धर्वोज्ञातव्यः । संभवत्यस्मादितिसंभवः । यस्मात्कन्यावरयोरभिलाषादसौसंभवत्यतएव मैथुन्योमैथुनाय हितः । सर्वविवाहानामेव मैथुनत्वेन यदस्य मैथुनत्वाभिधानंतत्सत्यपि मैथुने न विरोधइतिप्रदर्शनार्थम् ॥ ३२ ॥

( ४ ) **राघवानन्दः** । गान्धर्वलक्षयति । मैथुन्यः मिथुनाय हितः । कामसंभवः तयोः कामइच्छा ततएव भवति । नान्तरीयिका पुत्रोत्पत्तिःगान्धर्वः गन्धर्वैराचरितत्वात् ॥ ३२ ॥

( ५ ) **नन्दनः** । मिथुनेसाधुर्हितोवामैथुन्यःमैथुनपर्यन्तइत्यर्थः । कामसंभवःभोगसंभवःनार्थलोभादिसंभवः । कन्यायावरस्यचेच्छयान्योन्यसंयोगःसगान्धर्वोविधिःगान्धर्वत्वमस्यविधेः । कामपरत्वनिबन्धनं गंधर्वाहिकामपराः । स्त्रीकामावै गन्धर्वाइतिश्रुतेः । स्मरतिच भगवान्वाल्मीकिः तीक्ष्णकामास्तुगन्धर्वाइति ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । कन्याया वरस्य च द्वयोरिछया अन्योन्यसंयोगःसंभोगः भवेत्सविवाहोगान्धर्वसंज्ञोविज्ञेयः । मैथुन्योमैथुनार्हः कामसंभवः अन्योन्यंकामात्संभवोयस्य सःगान्धर्वःसमयान्मिथ इति योगी ॥ ३२ ॥

## हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ॥प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते॥३३॥

( १ ) **मेधातिथिः** । प्रसह्याभिभूय कन्यापक्षाद्बलात्कारेण कन्यायाहरणं राक्षसोविवाहइत्येतावदत्रविवक्षितम् । हत्वेत्याद्यनुवादः प्रसह्यापजिहीर्षतोयदि कश्चित्प्रतिबन्धोवर्तते तदा प्राप्तमेव हननादि हन्तुःशक्त्यतिशयंज्ञात्वास्वात्मभयादुपेक्षेरंस्तदाभवत्येव राक्षसो न वधाद्यवश्यंकर्तव्यम् । हत्वादण्डकाष्ठादिना ताडयित्वा । छित्त्वाखड्गादिप्रहारेणाङ्गानि खण्डशःकृत्वा । भित्वा प्राकारपुरदुर्गादि । क्रोशन्तीं रुदतीं कन्यामनिच्छाम् । अयंगान्धर्वाद्विशेषः । अनाथाऽपन्हियेपरित्रायध्वमित्याद्युच्चैः शब्दकरणंक्रोशनम् । रोदनमश्रुकणमोक्षः । उद्विजितायाः स्त्रिया धर्मोयम् ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । हत्वा विरोधिनः। छित्वा तेषांबाहुपदादि। भित्वा प्राकारादि। एतत्कन्याबन्धुविरोधस्योपलक्षणम्। क्रोशन्तींरुदन्तीमिति कन्यानिच्छोपलक्षणम्। गृहादिति प्रायिकं। प्रसह्य बलादिति। चोरिकानयनव्युदासः। चौरिकायांतुवधादिकरणेपि पैशाचत्वम्॥ ३३ ॥

( ३ ) **कुल्लूकः** । प्रसह्य बलात्कारेण कन्यायाहरणंराक्षसोविवाहइत्येव लक्षणम्। यदा तु हर्तुः शक्त्यतिशयं ज्ञात्वा पित्रादिभिरुपेक्ष्यतेतदानावश्यकंहननादि। यदि कन्यापक्षः प्रतिपक्षतांयाति तदा हननादिकमपि कर्तव्यमित्यर्थप्राप्तमनूद्यते। कन्यापक्षान्विनाश्यतेषामङ्गच्छेदंकृत्वा प्राकारादीन्भित्त्वा हापितर्भ्रातरनाथाहंह्रियइति वदन्तीमश्रूणिमुञ्चन्तींयत्कन्यांगृहादपहरत्यनेन कन्याया अनिच्छोक्ता गान्धर्वाद्विवेकार्थम्॥ ३३ ॥

( ४ ) **राघवानन्दः** । राक्षसमाह हत्वेति। प्रसह्य बलात्कारेण कन्याहरणं राक्षसः। रक्षसामयंस्वभावोविधिः प्रकारोवा। हत्वेत्याद्युपलक्षणं तदभावे बलाद्धरणेपि स्यात्। तत्र हत्वेति दण्डपातेन। छित्वेति खड्गेन। भित्वेति शरेण॥ ३३ ॥

( ५ ) **नन्दनः** । विवाहनिरोधकान्हत्वाच्छित्त्वा भित्वा च कन्यांप्रसह्य परिभूययद्धरणं सराक्षसोविधिः। हिंसाप्राधान्यात्राक्षसत्वं हिंसाप्रधानाहिराक्षसाः॥ ३३ ॥

( ६ ) **रामचन्द्रः** । हत्वा ज्ञातिप्रतिबन्धकान्। छित्वा कपाटादीन्। भित्वा गृहादीनि। क्रोशन्तीं रुदतीं गृहात्प्रसह्य कन्याहरणंक्रियते यत्र तत्र राक्षसोविधिरुच्यते राक्षससंज्ञोविवाहउच्यते। राक्षसोयुद्धहरणादिति योगीश्वरः॥ ३३ ॥

**सुप्तां मत्तां प्रमत्तां वा रहोयत्रोपगच्छति॥ सपापिष्ठोविवाहानां पैशाचःप्रथितोधमः॥ ३४॥**

( १ ) **मेधातिथिः** । राक्षसपैशाचयोरनिच्छा तुल्या। राक्षसे। हननं। पैशाचे वञ्चनम्। सुप्तां निद्रयाभिभूताम्। मत्तां क्षीबांमद्यपरवशाम्। प्रमत्तां वातसंक्षोभेण नष्टचेतनाम्। रहोऽप्रकाशमुपगच्छति मैथुन धर्मे प्रवर्तते सपैशाचोविवाहःसर्वविवाहानांपापिष्ठः पापहेतुर्धर्मापत्यंन ततः संपद्यते। इहगान्धर्वराक्षसपैशाचानांप्रकृतविवाहसामानाधिकरण्यात्संयोगहरणोपगमाएवपाणिग्रहणसंस्कारनिरपेक्षाविवाहाइति मन्यन्ते। तेषांब्राह्मादिष्वपि दानविवाहयोः सामानाधिकरण्यात्संस्कारोविनिवर्तते। यथाच न निवर्तते तथादर्शितम्। लक्षणया विवाहप्रयोजनदाने विवाहशब्दः। गान्धर्वे तुभगवता कृष्णद्वैपायनेन दुष्यन्तशकुन्तलासंगमने वर्णितमनग्निकममन्त्रकमिति। तद्दर्शनेन पाणिग्रहणसंस्कारोस्ति वर्जितस्तुपैशाचे। पुनर्विवदन्ते मुख्यंचोपगमनंन च कन्यात्वमपैतिसंस्कारैस्तद्विनिवर्तनात्। अतश्च पाणिग्रहणकामन्त्राः कन्यास्वेवप्रतिष्ठिताः इतिप्रतिषेधस्याप्रवृत्तेरस्त्येवमन्त्रवत्संस्कारसंबन्धः। सचप्रतिषेधः कुतः संस्कारप्रतिषेधार्थः। सा हि मन्त्रैः संस्कृतत्वाद्यपगतकन्याभावे। अतएवभवतु प्रथममुपगमस्ततोऽकन्यादोषोनास्ति। तथाचकानीनः कर्णइतिदर्शनम्। यदितु पुरुषप्रयोगेण कन्यात्वमपेयात्कथमियंवाचोयुक्तिःकन्यायाःपुत्रःकानीनइति। अथत्वसंस्कृता कन्योच्यतेततोयुक्तं कर्णादयोह्यनूढायाः पुत्राइतिमुखेऽभ्युपगमने कन्यायाअपत्योत्पत्तेः संभवः। वर्ण्यते चेतिहासादिषु तथाभूतायाविवाहः। अथमद्यमदादिनानिर्वृत्तेरतिसंबन्धे किमर्थः संस्कारइति। अत्रोच्यते यद्यपिस्त्रीपुंसधर्मोनिवृत्तोऽतिक्रान्तश्चकन्यागमनप्रतिषेधस्तथापि तया सहाधिकारार्थंपुनश्च गमने कन्यागमनंमाभूदितितदर्थसंस्कारकरणम्। कन्यागमनप्रतिषेधातिक्रमसंबन्धेन पुरुषार्थतयाऽपि निन्द्यते विवाहोऽयं तदयुक्तम् यतोऽयंलोके कन्याशब्दः पुंसाऽसंप्रयुक्तांस्त्रियमाचष्टेनसंस्कारभावसापेक्षाम्। अकृतसंस्काराअपिपुरुषैःक्षतयोनयोनकन्याइति व्यवह्रियन्ते। तासांचवेशश्रितानांगमने न कन्यागमनदोषः।

---

( ३४ ) पैशाचः प्रथितोधमः=पैशाचश्चाष्टमोधमइति बहुषु पुस्तकेषु पठितम्।

यद्यपिकुमारीकन्याशब्दौप्रथमवयोवचनाविष्येते तथापि विवाहविधावनुपभुक्तपूर्वामेवस्त्रियमाचक्षते। तथाच कुमारवे शधारिणीनातिप्रकाशप्रवृत्तपुंसंप्रयोगांभार्यात्वेनार्थयमानोन्यैरवबोध्यते नैषाकुमारीनष्टोऽस्याः कौमारोभावः संस्कारपरिलो-पश्च स्यात्गर्भाधानंहि मन्त्रवत्कर्तव्यंविष्णुर्योनिंकल्पयत्विति कुमार्याश्चाकल्पनमशक्यम्। तत्रायथार्थोमन्त्रप्रयोगः स्यात्। न चानूढायाः पैशाचधर्मेमन्त्रप्रयोगः उढायास्तच्छ्रवणात्। पैशाचवर्जमन्येषु विवाहेषु तत्कल्पयितुंयुक्तमविशे-षश्रवणात्। तस्मान्मुख्योपगमपक्षएवमादयोबहवोदोषा प्राप्नुवन्ति। अतआलिङ्गनोपगूहनपरिचुम्बनादिषूपगमनार्थेषु व्या-पारेषु साहचर्यात्तादर्थ्याच्चोपपूर्वोगमिर्द्रष्टव्यः। यत्तु कानीनः पुत्रइति तत्रमुख्यार्थासंभवाल्लक्षणया संस्कारभावप्रतिप-त्तिः। यत्तु। संस्कारदर्शनंतत्तु क्वचिदेव। यद्यपि या गर्भिणी संस्क्रियतेज्ञाताऽपि चेति तत्र यएवोपगन्ता सएव संस्कर्ता। नत्वसौ पैशाचोविवाहःपैशाचे हि येनैव समुपभुक्ता यस्माएवदीयते। सएवैनांसंस्करोतीति। गर्भिण्यास्तु-संस्कारोवाचनिकः। एतच्च सर्वनिपुणतरंपुनर्नवमे वक्ष्यते। अपरेमन्यन्तेसत्यमुख्यमुपगमनममुख्यत्वे तु गमनप्रतिषे-धानुपपत्तिरितियदि हि मुख्य मुपगमस्तदा सएव विवाहोऽन्यस्यानन्तरोक्तेनन्यायेनाभावात्। ततश्च नास्ति तस्य प्र-तिषेधस्य विषयोयतइच्छया गान्धर्वोहठाद्राक्षसोऽन्यथापैशाचः। नचान्यः प्रकारोऽस्ति येन सर्वविषयप्रतिषेधः स्यात्। अस्ति त्वस्य विषयःयत्र हठाद्रहसिगमनंया वा पितृभ्यांदीयते न चोपसंस्क्रियते। न चासौ तेषामपिगान्धर्वःकन्येच्छा-याअभावात्। अतएव भर्तुरपि नकन्यागामित्वं विषयान्तरस्य संभवात्। तस्मात्क्षतयोन्याःसंस्कारनिषेधाद्ब्राह्मादिवदु-पायत्वात्तद्वच्च विवाहशब्दोपपत्तेःप्रकरणसामर्थ्याद्गौणएवोपगमार्थः। एषांचभेदःअप्रार्थितोपनतोर्भूमिहिरण्यादिवद्ब्राह्मः। ऋत्विक्त्वेन विशेषेण दैवः गोमिथुनेनार्षः। याच्ञयाऽयाच्ञया वा सहोभौ चरतांधर्ममितिवचनव्यवस्थया प्राजापत्यः। शेषाःसुबोधभेदाः। ब्राह्मादीनामिदमर्थेतद्धितः। ब्रह्मादिसम्बंधिताचस्तुत्यारोप्यते। एवंसर्वेषु। पैशाचःपिशाचानामयं युक्तइतिनिन्दा ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः**। सुप्तामित्यादिकन्यानिच्छोपलक्षणम्। मत्तांमद्येन। प्रमत्तां अन्यचित्तांक्रीडादिना। उपग-च्छति नयति वा प्रथितः पापिष्ठः पापिष्ठतया प्रसिद्धः। अत्र च पुत्रिकाविधिविवाहोनवमोन्यएव। एष्वनन्तर्भावात्। अत्र तु तदपरिगणनं तत्संवोढुः प्रयोजनाभावात् एकापत्यादौ नियमेन तु दाने द्वितीयाद्यपत्यं वोढुरेव भवति। तदाच तस्य धर्माभिसन्धिकृतत्वसाम्यादार्षत्वमेवेति ॥ ३४ ॥

( ३ ) **कुल्लूकः**। निद्राभिभूतांमद्यमदविह्वलांशीलसंरक्षणेन रहितांविजनदेशे यत्र विवाहेमैथुनधर्मेण प्रवर्तते सपापहेतुर्विवाहानांमध्ये ऽधमः पैशाचः ख्यातः ॥ ३४ ॥

( ४ ) **राघवानन्दः**। पैशाचमाह सुप्तामिति। मत्तां मद्यमदविह्वलाम्। प्रमत्तां शीलरक्षणे अनवहिताम्। मात्रा-द्यशिक्षितत्वेन। रहसि विजने देशउपगच्छति मैथुनमाचरति सपापिष्ठः। पापहेतुत्वात्तद्विवाहस्य पैशाचः पिशाचःप्रेतस्त-दाचरितत्वात् ॥ ३४ ॥

( ५ ) **नन्दनः**। सुप्तांकन्याम्। यत्रयदितियावत्। सपैशाचोविवाहः। सुप्तमत्तप्रमत्तकन्याभोगिनिबन्धनंपिशाच-त्वम्। पिशाचाहिसुप्तमत्तप्रमत्तानाविशन्ति ॥ ३४ ॥

( ६ ) **रामचन्द्रः**। पैशाचविवाहमाह सुप्तामिति। यत्र रहःयस्मिन्रहसि एकान्तस्थाने मत्तांमद्यादिना प्रमत्तां-वा अनवहितांसुप्तांकन्या मुपगच्छति भोगेन प्राप्नोति विवाहानांमध्ये स पैशाचो विवाहः। पापिष्ठः पापजनकः प्रथितः प्रसिद्धः अष्टमः। पैशाचःकन्यकाच्छलादिति योगीश्वरः ॥ ३४ ॥

**अद्भिरेव द्विजाग्र्याणांकन्यादानंविशिष्यते ॥ इतरेषांतु वर्णानामितरेतरकाम्यया ॥ ३५ ॥**

( १ ) **मेधातिथिः** । द्विजाग्र्याणांब्राह्मणानांकन्यादानंकन्यांददतामद्भिरेव दानंशस्यते । ब्राह्मणाय यदा कन्यांददाति तदाद्भिरेवदद्यात् । कथंपुनरापोदानकरणम् । नहि ताभिर्विनादानमस्ति अद्भिर्वाच्यंनमेपूर्वंभिक्षादानंददातिवै एवंधर्मेष्वितिनियमात् । अथवा अद्भिरेवेत्यवधारणेनार्षासुरप्राजापत्यानपवदति । तत्र हि न केवलाआपः कारणं गोमिथुनादिद्रव्यग्रहणमपिसंविद्यवस्थाच । तेनैतदुक्तंभवति यथागोहिरण्यादिद्रव्यंदीयतेनाकिंचित्परिभाष्यते इयंगौस्त्वयैवंसंवाहनीयेदृशानि तृणान्यपि देयानिएवंकन्यापिदेयानदुहितृस्नेहेन जामाता परिभाषणंकारयितव्यः । नच तस्माद्धनंग्रहीतव्यमिति । क्षत्रियादीनांतुयदिकन्यावरयोः परस्परमभिलाषोभवतितदादानंकर्तव्यंनेतरथाब्राह्मविवाहवत् । अन्ये तु व्याचक्षते धनंवा गृहीत्वाद्भिरेवेत्येषइतरेतरकाम्यार्थः । अस्मिन्पक्षे ब्राह्मणस्य सर्वविषयता ज्ञापिता भवति ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रदानं स्वाम्यकारकमितिवचनात् क्षत्रियादिभ्योपि दानप्रसक्तौविशेषमाह अद्भिरेवेति । अद्भिर्यत्कन्यादानंतत् द्विजाग्र्याणांविप्राणामेव तेषामेव प्रतिग्रहसंभवात् इतरेषांत्वप्रतिग्राहकत्वात् । कन्याज्ञातिभिः कन्ययावा सहान्योन्येच्छामात्रेणविनापिदानाद्विवाहसिद्धिरित्यर्थः । काम्या कामना एतच्च लक्षणं यथोक्तविध्यर्थनिष्पत्तिमात्रेणेति तु ग्राह्यम् । राक्षसेऽन्योन्येच्छाभावात् ॥ ३५ ॥

( ३ ) **कुल्लूकः** । उदकदानपूर्वकमेव ब्राह्मणानांकन्यादानंप्रशस्तंक्षत्रियादीनांपुनर्विनाप्युदकंपरस्परेच्छया वाङ्मात्रेणापि कन्यादानंभवति । उदकपूर्वकमपीत्यनियमः ॥ ३५ ॥

( ४ ) **राघवानन्दः** । संप्रति तत्तद्दानप्रकारमाह अद्भिरिति । अद्भिरेवेत्यवधारणंनार्षादिव्यावृत्त्यर्थं । न तत्र केवलमापः गवादेरपि प्रवेशात् । विनाप्युदकंवाङ्मात्रेणापि ॥ ३५ ॥

( ५ ) **नन्दनः** । अथकन्याप्रदानमाह अद्भिरिति । इतरेतरकाम्यया परस्परेच्छया । गान्धर्वादिषुनायंविधिः प्रदानाभावात् ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । द्विजाग्र्याणां ब्राह्मणक्षत्रियविशां कन्याप्रदानमद्भिरेव जलैरेव जल पूर्वं प्रशस्यते । इतरेषांवर्णानामनुलोमप्रतिलोमजातीनां इतरेतरकाम्यया परस्परेच्छया कन्याप्रदानम् ॥ ३५ ॥

**योयस्यैषांविवाहानां मनुना कीर्तितोगुणः ॥ सर्वंशृणुत तं विप्राः सर्वं कीर्तयतोमम ॥ ३६ ॥**

( १ ) **मेधातिथिः** । यदुक्तंगुणदोषौच यस्ययाविवितितत्स्मारयति । बहवोवक्तव्यतया प्रतिज्ञातास्तत्रवक्ष्यमाणैः श्लोकैरयमर्थउच्यतइतिविशेषज्ञानार्थयुक्तः पुनरुपन्यासः । एषांविवाहानामिति निर्धारणे षष्ठी । एवंविवाहानांयस्य विवाहस्य योगुणः कीर्तितआचार्येण मनुना सर्वंशृणुत तंगुणंविप्राभृगुर्महर्षीनामन्त्रयते । सम्यगवैपरीत्येनानाकुलंकीर्तयतः कथयतः ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । गुणः पुत्रोत्पत्तिद्वारा ॥ ३६ ॥

( ३ ) **कुल्लूकः** । यद्यपिगुणदोषौ च यस्य याविति गुणाभिधानमपि प्रतिज्ञातमेव तथापि बहूनामर्थानांतत्र वक्तव्यतया प्रतिज्ञातत्वाद्विशेषज्ञापनार्थः पुनरुपन्यासः । एषांविवाहानामिति निर्धारणेषष्ठी एषांमध्ये यस्य विवाहस्य योगुणोमनुना कथितस्तत्सर्वं हे विप्राः मम कथयतः शृणुत ॥ ३६ ॥

( ४ ) **राघवानन्दः** । प्रसवे च गुणागुणानित्युक्तंतद्गुणानाह यइतित्रिभिः । मम मत्तः ॥ ३६ ॥

( ५ ) **नन्दनः** । एषांविवाहानांमध्ये यस्य विवाहस्ययोगुणः फलम् ॥ ३६ ॥

( ६ ) **रामचन्द्रः**। यस्य वर्णस्य येषां विवाहानांयो गुणः कीर्तितः हेविप्रास्तं सर्वगुणंमम कीर्तयतः सम्यक्शृणुत ॥ ३६ ॥

**दश पूर्वान्परान्वंश्यानात्मानंचैकविंशकम् ॥ ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसःपितॄन् ॥ ३७ ॥**

( १ ) **मेधातिथिः**। पूर्वे वंश्याः पितृपितामहादयः। अपरे पुत्रपौत्रादयः। तान्मोचयत्येनसोनरकादियातनाभ्यउद्धरति। ब्राह्मेन विवाहेनऊढातस्यांयोजातः पुत्रः ससुकृतकृत्पुण्यकृद्यदि भवति। पितॄन्परलोकगतान् पितृशब्दोऽयंप्रेतपर्यायः नहि पुत्रादिसंततेरन्यथा पितृव्यपदेशसंभवः। दशशब्दः प्रत्येकमभिसंबध्यते पूर्वापरशब्दाभ्यां एकविंशकमितिनिर्देशात्। अर्थवादश्चायम्। तेनागताननुत्पन्नान्कथंमोचयतीति नवाच्यम्। पूर्वेषांत्वपत्यकृतेन शुभेन श्राद्धादिना भवत्येव पापान्मोक्षइतिश्राद्धाधिकारे कथयिष्यते। अतोदशापरानेनसोमोचयतीत्येतदुक्तंभवति। दशपुरुषायस्मिन्कुलेऽपापाजायन्तइत्यालम्बनम् ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः**। अत्र ब्राह्मीपदेन कन्यायाबुद्धिस्थत्वात्तस्याः पित्रादयःप्रथमसंबन्धितया पूर्वपदेनोच्यन्ते। अपरपदेन तु पश्चात्संबन्धितया कन्यायाभर्तृश्वशुरादयः। तेन मातामहप्रभृतीन्दशदश च पितृप्रभृतीनात्मानंच ब्राह्मीपुत्रः पूर्वजन्मकृतदुर्ब्राह्मणत्वहेतोरेनसस्तारयतीत्यर्थः। यथा देवलः। दातुःप्रतिग्रहीतुश्च पुनात्यासप्तमंकुलमिति। याज्ञवल्क्योपि तज्जःपुनात्युभयइत्याह। ब्राह्मी ब्रह्मविवाहोढा। सुकृतकृदिति दुष्कृतकारित्वे तस्यनैतत्फलमस्तीत्यर्थः त्रिधाच पुत्रः। औरसः पुत्रिकापुत्रः क्षेत्रजइति। तत्र औरसपुत्रमधिकृत्यैतत्फलमुक्तं। पुत्रिकायांततोन्यूनं। ततोपि क्षेत्रजे पुत्रे फलमित्येवमन्यत्राप्युन्नेयम् ॥ ३७ ॥

( ३ ) **कुल्लूकः**। दशपूर्वान्पित्रादीन्वंश्यान्परान्पुत्रादीन्दशात्मानंचैकविंशकंब्राह्मविवाहोढापुत्रोयदि सुकृतकृद्भवति तदापापान्मोचयति पित्रादीन्नरकादुद्धरति। पुत्रादयश्च तस्य कुले निष्पापाजायन्तइति मोचनार्थस्तेषामनुत्पत्तेः पापध्वंसस्याशक्यत्वात् ॥ ३७ ॥

( ४ ) **राघवानन्दः**। वंश्यान् स्ववंशजातान्। परान् पुत्रादीन्। तद्वंश्यानांपापायोगित्वंसूचितम्। सुकृतकृत् श्राद्धादिकर्ता चेन् प्रजातमात्रेणेति ध्वनिः ॥ ३७ ॥

( ५ ) **नन्दनः**। ब्राह्मी बाह्मविवाहोढा ॥ ३७ ॥

( ६ ) **रामचन्द्रः**। पितृतः दशपूर्वान्वंश्यान्दशापरानेकविंशकमात्मानं ब्राह्मणीपुत्रःब्राह्मविवाहोत्पन्नः पुत्रः सुकृतकृत् सुकृतं करोतीति सुकृतकृत् सुकृतोत्पादकः सन्पितॄनेनसःपापान्मोचयेत् ॥ ३७ ॥

**दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ॥ आर्षोढाजःसुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः ॥ ३८ ॥**

( १ ) **मेधातिथिः**। दैवेन विधिनोढा दैवोढा तस्यांजातोदैवोढाजः। सुतःपुत्रः कः प्रजापतिः सदेवता यस्यविवाहस्यसयः संस्कार कर्मणि ग्रहणलक्षणेऽसत्येव देवतासंबन्धे प्रजापतेर्देवतात्वमध्यारोप्यते भक्त्या। यदपितत्रप्राजापत्ययोगोस्ति सतुविवाहादिसाधारण्येनकायव्यपदेशे कारणम्। आसुरादिषु च न काचिद्गतिः स्यात्। न ह्यासुरेभ्योविवाहेभ्योयोगोऽस्ति। कायोढजइतिन्ह्रस्वत्वं ङ्यापोःसंज्ञाछन्दसोर्बहुलमिति। ननुच यद्यन्न्यूनफलंतत्तत्पश्चान्निर्दिष्टंतत्रार्षस्य प्राजापत्यात्पश्चादभिधानंयुक्तम्। अस्त्यत्र कारणंयेनाधिकफलस्य प्राजापत्यस्य। पश्चान्निर्देशः पश्चानांतु त्रयोधर्म्याइत्यत्र प्राजापत्यस्य ग्रहणमिष्यतेइतरथार्षस्य स्यात् ॥ ३८ ॥

---

( ३७ ) मोचयत्येनसः=मोचये देनस इति बहुषु प्राचीन पुस्तकेषु मुद्रितपुस्तकेषुच पठितम्।

( २ ) **सर्वज्ञनारायणः**। दैवादिषु तु तादृग्विवाहोढस्त्री जातपुत्रिका पुत्रानादाय फलमुक्तं दैवोढजासुतइत्यादिना दैवविवाहेन याऊढा तस्यांया पुत्रिका जाता तस्याःपुत्रइत्यर्थः। अर्थाच्च तत्राप्यौरसे ततोधिकंफलं क्षेत्रजेत्वल्पमित्युन्नेयम्। कायःप्राजापत्यः अत्र च स्मृत्यन्तरेष्वधिकपुरुषपावनोक्तिरभिसन्धिशुत्ध्यादिनोपपाद्या। आसुरादिषु तु विवाहेषु जाताःपितृमात्रस्य पुन्नामनरकतारकहेतवोनान्येषांपावयितारइत्यर्थसिद्धित्वान्नोक्तम् ॥ ३८ ॥

( ३ ) **कुल्लूकः**। दैवविवाहोढायाः पुत्रः सपरान्पित्रादीन्सप्तावरान्पुत्रादींश्च। आर्षविवाहोढायाः पुत्रस्त्रीन्पित्रादींस्त्रींश्च- पुत्रादीन्। प्राजापत्यविवाहोढायाः पुत्रः षट्पित्रादीन्षट्पुत्रादीन्। आत्मानंचैनसोमोचयतीति पूर्वस्यैव सर्वत्रानुषङ्गः। कायोढजइति। ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वम्। ब्राह्माद्यष्टविवाहोद्देशक्रमानुसारेणमन्त्रफलस्यार्षस्येह बहुफलप्राजापत्यात्पूर्वाभिधानम्। ब्राह्मादिविवाहोद्देशश्लोकएव कथमयंक्रमइतिचेत्पश्चानांतु त्रयोधर्म्याइत्यत्र प्राजापत्यग्रहणार्थम्। अन्यथात्वार्षस्यैव ग्रहणंस्यात् ॥ ३८ ॥ ॥

( ४ ) **राघवानन्दः**। दैवोढाजः दैवविवाहाज्जातः। त्रीनिति। गोशुल्कग्रहणापराधात्। कायोढजः कस्यप्रजापतेरयंविवाहः। कायोढस्तस्माज्जातः प्राजापत्यजइत्यर्थः ॥ ३८ ॥

( ५ ) **नन्दनः**। कायोढजः प्राजापत्येनोढायाः सुतः। ह्रस्वोवृत्तभङ्गपरिहारार्थः ॥ ३८ ॥

( ६ ) **रामचन्द्रः**। दैवोढाजःसुतः दैवविवाहोत्पन्नःसुतः सप्तावरान् पूर्वांश्चेत्यर्थः। चतुर्दशपुरुषान्पवित्रयतीत्यर्थः। आर्षोढाजःसुतः आर्षविवाहोत्पन्नःसुतस्त्रीन्पूर्वान्वंश्यांस्त्रीन्परान्वंश्यान्पुनाति। कायोढजःसुतःप्राजापत्यविवाहोत्पन्नःसुतःषट्पूर्वान्वंश्यान्सहात्मनेति योगीश्वरः ॥ ३८ ॥

**ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ॥ ब्रह्मवर्चसिनःपुत्राजायन्ते शिष्टसंमताः ॥ ३९ ॥**

( १ ) **मेधातिथिः**। प्रसवेचगुणागुणानित्युक्तंतदिदमनुपूर्वशआनुपूर्व्येणेत्यस्मिन्नर्थेस्मृतिकारैः प्रयुज्यते। श्रुताध्ययनविज्ञानसंपत्तिनिमित्तेच पूजाख्याति ब्रह्मवर्चसंतद्वन्तोब्रह्मवर्चसिनः। इन्नन्तोऽयम्। शिष्टानांसंमता अनुमताअगर्ह्या- अद्विष्टाःप्रियाइतियावद्यतश्चामन्यर्थत्वान्मतिबुद्धीत्यस्याविषयत्वेन क्तेनच पूजायामित्येतेन नास्ति समासप्रतिषेधः। संबन्धसामान्यविवक्षायांच षष्ठी ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः**। ब्राह्मणस्य चत्वार आद्याः प्रशस्ताउक्तास्तदुपपादयति ब्राह्मादिष्विति। अनुपूर्वशः तत्तद्विवाहा पकर्षक्रमेणापकृष्यमाणगुणाः ॥ ३९ ॥

( ३ ) **कुल्लूकः**। प्रसवेचगुणागुणानिति यदुक्तंतदुच्यते। ब्राह्मादिषु चतुर्षु विवाहेषु क्रमावस्थितेषु श्रुताध्ययनसम्पत्तिकतेजोयुक्ताः पुत्राः शिष्टप्रियाजायन्ते। प्रियार्थत्वाच्च संमतशब्दस्य क्तेन च पूजायामिति न षष्ठीसमासप्रतिषेधः। सम्बन्धसामान्यविषयाषष्ठीयंसमस्यते ॥ ३९ ॥

( ४ ) **राघवानन्दः**। तेष्वेव गुणान्तरमाहब्राह्मादिष्विति द्वाभ्यां। ब्रह्मवर्चसिनः वेदाध्ययनजवीर्ययुक्ताः ॥ ३९ ॥

( ६ ) **रामचन्द्रः**। चतुर्षु ब्राह्मादिषु विवाहेषु अनुपूर्वशः ब्राह्म दैवार्षप्राजापत्येषु चतुर्ष्वेव विवाहेषु पुत्राब्रह्मवर्चसिनो जायन्ते ॥ ३९ ॥

**रूपसत्त्वगुणोपेताधनवन्तोयशस्विनः ॥ पर्याप्तभोगाधर्मिष्ठाजीवन्ति च शतंसमाः ॥ ४० ॥**

( १ ) **मेधातिथिः**। रूपंमनोहराकृतिःसत्वंनाम गुणोद्वादशे वक्ष्यते ताभ्यामुपेतायुक्ताः। आढ्याधनवन्तः।

श्रुतशौर्यादिगुणयुक्ततया ख्याताःयशस्विनः। पर्याप्तभोगाः स्रगनुलेपनगीतवाद्यादिभिः सुखसाधनैरविकलैर्नित्ययुक्ताः। सुखसाधनैः पूर्वोक्तैरवियोगोभोगः सपर्याप्तोऽक्षतः समग्रोयेषांते पर्याप्तभोगाः। धर्मानुष्ठानतत्पराधर्मिष्ठाः। धर्मशब्दः केषांचिद्गुणवचनः। अतो गुणवचनादित्यातिशायिकः। शतंवर्षाणिजीवन्ति ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः**। सत्वगुणाः सात्विकाधर्माज्ञानादयः। पर्याप्तभोगाः प्राप्तकृत्स्नभोगाः ॥ ४८ ॥

( ३ ) **कुल्लूकः**। रूपंमनोहराकृतिः सत्त्वंद्वादशाध्याये वक्ष्यमाणंगुणादयादयः। तैर्युक्ताधनिनः। ख्यातिमन्तोयथेप्सितवस्त्रस्रग्गन्धलेपनादि भोगशालिनोधार्मिकाश्चपुत्रा जायन्तइति पूर्वमनुवर्तते शतंच वर्षाणि जीवन्ति ॥ ४० ॥

( ४ ) **राघवानन्दः**। सत्वगुणाद्वादशाध्याये वक्ष्यमाणाः। रूपंसौन्दर्यं सत्वंबलं वा पर्याप्तभोगाइति भोगिनः। भोग्योपस्थितावपि दुष्कृतिनां न भोगसिद्धिः ॥ ४० ॥

( ५ ) **नन्दनः**। ब्राह्मादिषु चतुर्षु विवाहेष्वामुष्मिकंफलंप्रत्येकमुक्तम् इदानीमैहिकं च समुदायेफलंश्लोकद्वयेनाह ब्राह्मादिष्विति। सत्त्वगुणोपेताः सात्त्विकाः। पर्याप्तभोगाः पूर्वसुखभोगाः ॥ ४० ॥

( ६ ) **रामचन्द्रः**। एतादृशाः भवन्ति पर्याप्तभोगधर्मिष्ठाः ॥ ४० ॥

**इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ॥ जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥ ४१ ॥**

( १ ) **मेधातिथिः**। ब्राह्मादिव्यतिरिक्तेषु गान्धर्वादिविवाहेषु नृशंसमनृतंचवदन्ति नृशंसानृतवादिनः। नृशंसंमातृभगिन्यादावश्लीलाक्रोशवचनम्। अनृतंप्रसिद्धम्। नृशंसंचानृतंचनृशंसानृते तद्वदितुंशीलमेषामिति शब्दव्युत्पत्तिः। ब्रह्मधर्मोवेदधर्मोवेदार्थस्तं द्विषन्ति निन्दति वा न श्रद्दधते वा। अतएव दुर्विवाहेष्विति निन्दा ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः**। शिष्टेष्वनुशिष्टेषु। अपदिष्टेष्विति यावत्। नृशंसोहिंस्रः ॥ ४१ ॥

( ३ ) **कुल्लूकः**। ब्राह्मादिभ्यश्चतुर्भ्योऽन्येष्वासुरादिषु चतुर्षु विवाहेषु क्रूरकर्माणोमृषावादिनोवेदद्वेषिणोयागादिधर्मद्वेषिणः पुत्राजायन्ते ॥ ४१ ॥

( ४ ) **राघवानन्दः**। ब्राह्मदैवतार्षप्राजापत्यभिन्नेषु दोषानाह इतरेष्विति। शिष्टेष्ववशिष्टेषु। नृशंसाः क्रूराः। तत्कर्माणो वा। ब्रह्म वेदः। ब्राह्मणजातिर्वा। धर्मश्चाग्निहोत्रादिस्तद्विषयः ॥ ४१ ॥

( ५ ) **नन्दनः**। इतरेष्ववशिष्टेष्वप्रशस्तेषूपविवाहेषु। नृशंसानृतवादिनःपरुषवादिनः। ब्रह्मद्विषः ब्राह्मणद्विषः। अननुज्ञातविवाहविषये निन्दा। इतरथाहिक्षत्रियादिषुगान्धर्वराक्षसाद्युपशासनानर्थक्यप्रसङ्गः ॥ ४१ ॥

( ६ ) **रामचन्द्रः**। शिष्टेष्वितरेषु चतुर्षु विवाहेषु नृशंसानृतवादिनः। ब्रह्मधर्मद्विषः। सुताजायन्ते आसुरगान्धर्वराक्षसपैशाचेषु चतुर्ष्विति ॥ ४१ ॥

**अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा॥निन्दितैर्निन्दिता नृणांतस्मान्निन्द्यान्विवर्जयेत् ॥ ४२**

( १ ) **मेधातिथिः**। समासतोविवाहानांफलप्रदर्शनमेतत्। येयस्य विवाहाविहितास्तेऽनिन्दितास्तैरूढानांयाप्रजा पुत्रादिलक्षणा साऽनिन्द्याभवति प्रशस्येत्यर्थः। निन्दितैः प्रतिषिद्धैः। निन्दितागर्हिता। तस्माद्दुःखभागिनीप्रजामाभूदिति- निन्द्यान्विवर्जयेत् ॥ ४२ ॥

---

( ४२ ) नृणाम्=स्त्रीणाम् ( ज, ढ )

( २ ) **सर्वज्ञनारायणः**। यद्वर्णस्य योविवाहोविहितःसोनिन्दितः। निन्दितोन्यः। एवंसवर्णाविहितविवाहे केवलंप्रजानिन्द्याभवति। भार्यात्वंतु सिध्यत्येवेति कथितम् ॥ ४२ ॥

( ३ ) **कुल्लूकः**। संक्षेपेणविवाहानांफलकथनमिदम्। अगर्हितैर्भार्याप्राप्तिहेतुभिर्विवाहैरगर्हिता मनुष्याणांसंततिर्भवति। गर्हितैस्तु गर्हिता तस्माद्गर्हितविवाहान्न कुर्यात् ॥ ४२ ॥

( ४ ) **राघवानन्दः**। नगिरागिरेति न्यायेन निन्दितविवाहान्निषेधति अनिन्दितैरिति। ऐरंकृत्वोद्गायतीति विधौ यआत्मानंगिलेदित्याद्यर्थवादस्तथाऽनिन्दितविवाहःकार्यइत्यत्र निन्दितविवाहनिषेधोर्थवादः ॥ ४२ ॥

( ५ ) **नन्दनः**। उक्तमेवार्थंसंक्षिप्य दर्शयति अनिन्दितैरिति ॥ ४२ ॥

( ६ ) **रामचन्द्रः**। अनिन्दितैःस्त्रीविवाहैः अनिन्द्या स्तुत्या प्रजा भवति पुत्राभवन्तीत्यर्थः। आसुरादिनिन्दितैर्विवाहैर्निन्दिताप्रजा भवति नृणां तस्मान्निन्द्यान्विवाहान्वर्जयेत् ॥ ४२ ॥

**पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ॥ असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्मणि ॥ ४३ ॥**

( १ ) **मेधातिथिः**। पाणिग्रहणंनाम गृह्यकारोक्तः संस्कारः सवर्णासु समानजातीयासूह्यमानासूपदिश्यते शास्त्रेण विधीयते कर्तव्यतया प्रतिपाद्यते। असवर्णासु यदुद्वाहकर्म तत्रायंवक्ष्यमाणोविधिर्ज्ञेयः ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः**। सवर्णास्विति सामान्योक्त्या शूद्राणामप्यग्निसाक्षिकममंत्रकंपाणिग्रहणमात्रं कर्तव्यत्वेनाभिमतम् ॥ ४३ ॥

( ३ ) **कुल्लूकः**। समानजातीयासु गृह्यमाणासु हस्तग्रहणलक्षणः संस्कारोगृह्यादिशास्त्रेणविधीयते। विजातीयासु पुनरुह्यमानासु विवाहकर्मणि पाणिग्रहणस्थानेऽयमनन्तरश्लोके वक्ष्यमाणोविधिर्ज्ञेयः ॥ ४३ ॥

( ४ ) **राघवानन्दः**। असवर्णासु पाणिग्रहणाभावेन प्रकारान्तरंवक्तुंसवर्णास्वेव गृभ्णामि ते सौभगत्वायेति पाणिग्रहणंविधत्ते पाणीति द्वाभ्यां। अयंवक्ष्यमाणः शरइत्यादिः ॥ ४३ ॥

( ५ ) **नन्दनः**। अथविवाहाङ्गविशेषमाह पाणिग्रहणेति। करेण करस्य ग्रहणंपाणिग्रहणम्। पाणिग्रहणमेवसंस्कारः पाणिग्रहणसंस्कारः। अयंवक्ष्यमाणः ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। पाणीति। सवर्णासु स्त्रीषु पाणिग्रहणसंस्कारउपदेक्ष्यते। तद्यथा ब्राह्मणस्य ब्राह्मण्याः पाणिग्रहणमितिस्ववर्णास्वित्यर्थः। असवर्णासु स्त्रीषु विवाहेषु ब्राह्मणस्यऽयंविधिरुद्वाहकर्मणि ज्ञेयः ॥ ४३ ॥

**शरः क्षत्रियया ग्राह्यः प्रतोदोवैश्यकन्यया ॥ वसनस्य दशाग्राह्या शूद्रयोत्कृष्टवेदने ॥ ४४ ॥**

( १ ) **मेधातिथिः**। ब्राह्मणेनोह्यमानया क्षत्रियया शरोब्राह्मणपाणिपरिगृहीतोग्राह्यः पाणिग्रहणस्थाने शरस्य विधानात्। प्रतोदोबलीवर्दानामायासः क्रियते येन वाह्यमानाः पीडयन्ते हस्तिनामिवाङ्कुशः। वसनस्य वस्त्रस्य दशा ग्राह्या शूद्रयाउत्कृष्टजातीयैर्ब्राह्मणादिवर्णैर्वेदनेविवाहे ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। क्षत्रियाधृतंशरं वैश्यया च धृतंप्रतोदं पाणिग्रहणमन्त्रैर्वरोगृण्हीयात्। शूद्राविवाहे तु शूद्रा वरस्य वसनाञ्चलममन्त्रिकंगृण्हीयात्। शूद्रामप्येके मन्त्रवर्जमितिस्मृतेः। उत्कृष्टः स्ववर्णोत्कृष्टवर्णः। एतेन क्षत्रियेण वैश्यायाः शूद्रायाश्च वैश्येन च शूद्राविवाहेऽयमेव क्रमइति कथितम् ॥ ४४ ॥

( ३ ) **कुल्लूकः**। क्षत्रियया पाणिग्रहणस्थाने ब्राह्मणविवाहे ब्राह्मणहस्तपरिगृहीतकाण्डैकदेशोग्राह्यः। वैश्यया-

ब्राह्मणक्षत्रियविवाहे ब्राह्मणक्षत्रियावधृतप्रतोदैकदेशोग्राह्यः। शूद्रया पुनर्द्विजातित्रयविवाहे प्रावृतवसनदशाग्राह्या ॥४४॥

( ४ ) **राघवानन्दः**। शरः पाणिना क्षत्रियया गृहितोयस्तंपाणिस्थानीयंविप्रोगृह्णीयान्न तु विप्रहस्तस्थः शरः। क्षत्रियविषयइतिकन्यापाणिस्थाने शरस्य विधानात्। अन्यथामन्त्रलिङ्गविरोधः। अतः क्षत्रियया शरोब्राह्मण्या पाणिः परिगृहीतोग्राह्यः इतिमेधातिथेःप्रलापः एवंप्रतोदादिषु प्रतोदोबलीवर्दादिचालनसाधनः। उत्कृष्टवेदने द्विजादिकर्तृक विवाहे ॥ ४४ ॥

( ५ ) **नन्दनः**। वर्णोत्कृष्टस्यवेदनेसवर्णादुत्तरोत्तरस्यवर्णस्यलाभेविवाहइतियावत् ॥ ४४ ॥

( ६ ) **रामचन्द्रः**। तद्यथा उत्कृष्टवेदने विप्रस्य वेदनेविवाहे क्षत्रिययाशरोग्राह्यः। विप्रस्य वेदने वैश्यया प्रतोदोग्राह्यः। विप्रस्य वेदने शूद्रया वसनस्य वस्त्रस्य दशा ग्राह्या। वेदने त्वग्रजन्मनइति योगीश्वरः। एवंक्षत्रस्य वेदने वैश्ययाप्रतोदोग्राह्यः। पुनरेवंवैश्यस्य वेदने शूद्रया वसनस्य दशा ग्राह्या ॥ ४४ ॥

## ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ॥ पर्ववर्जं व्रजेच्चैनां तद्व्रतोरतिकाम्यया ॥ ४५ ॥

( १ ) **मेधातिथिः**। उक्तोविवाहः तस्मिन्निर्वृत्तेसमुपयाते दारत्वे तदहरेवेच्छयोपगमे प्राप्ते तन्निवृत्त्यर्थमिदमारभ्यते। न विवाहसमनन्तरंतदहरेव गच्छेत् किंतर्हि ऋतुकालंप्रतीक्षेत। गृह्यकारैस्तु अतऊर्ध्वमक्षारलवणाशिनौ ब्रह्मचारिणावधःशायिनौस्यातां त्रिरात्रंद्वादशरात्रं संवत्सरंवेतिपठितम्। तत्र सत्यपिसंवत्सरस्यान्तरापतितऋतौ गमनंनास्ति। एवमस्मात्कालादूर्ध्वं मसत्यृतौ गमनंनास्ति। एवमेते स्मृतीअविरोधिन्यौ भवतः। त्रिरात्रादीनांतुविकल्पः अत्यन्तरागपीडितयोर्गमनं धैर्यवतोस्तुब्रह्मचर्यम्। ऋतुर्नाम स्त्रीणांशोणितदर्शनोपलक्षितः शरीरावस्थाविशेषोगर्भग्रहणसमर्थः कालउच्यते। उपलक्षणत्वाच्च दर्शनस्य निवृत्तेऽस्मिन्वक्ष्यमाणकालानुवर्तीभवत्येव तस्यकालऋतुकालः साहचर्याद्वा कालएवऋतुः। तथाच समानाधिकरणसमासः। ऋतुकालेऽभिगन्तुंव्रतमस्येत्यृतुकालाभिगामी। व्रतेइतिणिनिः यथा स्थण्डिलशायी अश्राद्धभोजीति। स्याद्भवेदित्यर्थः। यद्यप्यस्तिपराविधिविभक्तिस्तथाप्युपगमव्यापारंविदधाति। अभिगामी स्यादभिगच्छेदित्यर्थः। नह्यनुपगच्छन्नभिगामी भवति। कीदृशंपुनरेतद्व्रतंकिमृतावभिगन्तव्यमेवाथर्तावेवगन्तव्यमिति। एतदुक्तंभवति किमयंनियमउत परिसंख्येति। ननुच व्रतमिति शास्त्रतोनियमउच्यते तत्रैवचायंणिनिः अतः परिसंख्या कथमाशङ्क्यते उच्यते। परिसंख्यायामपिशास्त्रीयत्वंनियमरूपताच विद्यतइति दर्शयिष्यामः। कस्तर्ह्यनयोर्विशेषः। विधिविशेषोनियमः। अथविधिःकः यःशब्दःकर्तव्यताबोधकःअग्निहोत्रंजुहुयात्स्वर्गकामइति। नह्यग्निहोत्रस्यैतद्वचनमन्तरेणान्यतः कुतश्चित्कर्तव्यतावगमः। नियमःपुनर्यत्रादृष्टसिद्ध्यर्थस्यवचनमन्तरेणपाक्षिकीप्राप्तिःयथासमे यजेतेति। दर्शपौर्णमासादियागविधानाद्देशमात्रमाक्षिप्तम्। नहि कश्चिद्देशमनाश्रित्य यागप्रयोगः संभवति। द्विविधश्च देशः समोविषमश्च। तत्रयदा तावत्समे यजेततदैतद्वचनमनुवादएव। यदात्विच्छायानिरङ्कुशत्वाद्विषमे यियक्षतितदैतद्वचनंसमदेशंविदधदर्थवत्। विहिते समे विषमस्यानाश्रयणमविधानात्। एतत्सामर्थ्यात्तन्निवृत्तिः। विधिनिबन्धनेह्यनुष्ठाने किमित्यविहितंक्रियेतेतत्करणेहि न यथाचोदितानुष्ठानसिद्धिः। इदंचात्र स्मार्तमुदाहरणम्। प्राङ्मुखोऽन्नानि भुञ्जीत भुञ्जानस्य यदृच्छया यांकांचिद्दिशमाश्रित्य भोजनंप्राप्तंतत्र कदाचित्प्राची कदाचिदितरायाकाचित्प्राप्तातत्र यदाप्राची न तदेतरा यदेतरा न तदा प्राचीति। तत्राप्राप्तिपक्षे विध्यर्थवचनंप्राङ्मुखोऽन्नानि भुञ्जीतेति तत्रातिक्रमाच्छास्त्रार्थंजहाति। एवमिह यदृच्छयोपगमनमृतावनुपगमनंपक्षे विधीयमानमुपगमनमनुष्ठीयमानंशास्त्रातिक्रमकारितांजनयेत्। यथाऽन्येशास्त्रविहितार्थाअति-

क्रम्यमाणाःप्रायश्चित्तहेतवोभवन्ति तथानुगमनम् । अथर्तावनृतौ च गमने रागतःप्राप्तेवचनमृतावुपेयादिति । तदेवं-वचनंमृग्यते ऋताविवोपेयादनृतौ न गच्छेत् । अथपञ्चपञ्चनखाभक्ष्याइति क्षुत्प्रतिघातेनार्थेनशशकादिष्वपि पञ्चनखेषु भक्ष्यता प्रसक्ता तद्व्यतिरिक्तेष्वपिवानरादिषु । नचतत्र पर्यायेणैव प्रवृत्तिः । युगपत्तत्रचान्यत्रच प्रसक्तौ पञ्चपञ्चनखाभक्ष्याइति वचनमितरपरिसंख्यानार्थंपरिसंपद्यते । एवमिहपरिसंख्येति । ननु च परिसंख्यांदोषत्रयवतीमाचक्षते । त्रयोहि तत्रदोषाःप्रादुःष्युः स्वार्थत्यागःपरार्थकल्पनाप्राप्तबाधश्च । पञ्चपञ्चनखाभक्ष्याइति यदान्वयतः पञ्चनखविषयंभक्षणंप्रतीयते तदा तत्त्यक्तंभवतितद्व्यतिरिक्तनिषेधपरत्वाद्वाक्यस्य । अश्रुतश्च निषेधोऽतःपरार्थकल्पना । अर्थित्वाच्च सर्वविषयं भक्षणंयत्प्राप्तंतस्यबाधः । एवमेतेनपरिसंख्यायांत्रयोदोषाः नैतत्सारम् । सत्यर्थित्वेश्रुत्यर्थासंभवे वाक्यस्यानर्थक्यंमाभूदित्येतत्परता नविरुद्धा । विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ । परिसंख्या नखिष्विव ॥ किंपुनरत्रयुक्तंतत्र चान्यत्र च प्राप्तौ परिसंख्यालक्षणस्य विद्यमानत्वात्परिसंख्येति । ऋतावपिगमनंप्राप्तमनृतावपि नतुयदर्तौ तदानृताविति । यथासत्यर्थित्वेभोजनंतत्रनियमोऽश्राद्धम् नपुनराहारत्यागेनश्राद्धमेवभुञ्जानआस्ते । एवमिह सतिखेदे यद्गमनंतत्रनियमोऽनृतौ नगच्छेदित्यवगच्छति । अर्थित्वाच्च गमने प्रसक्ते कालविधानपरतैव युक्ता वाक्यस्य । अन्यथाऽनारब्धोऽर्थउपदिष्टः स्यात् । किंचापत्योत्पत्तिविधेः कृतविवाहस्यानुष्ठेयत्वादृतौ च तत्संभवात्प्राप्तमेवगमनम् । उत्पन्नपुत्रस्यचनद्वितीयपुत्रोत्पादनंवैधम् । अपत्यमुत्पादयेदित्येकत्वविवक्षायांविध्यर्थनिवृत्तेः । नच गमनमेवादृष्टार्थतयाशक्यंविधातुम् संस्कारविधित्वादधिकारग्रहणात्कल्पनायाश्च शक्यत्वादपत्योत्पत्तिविध्याक्षेपादृतौगमनस्य । यदि चात्रर्तावुपेयादितितदनृतुप्रतिषेधार्थम् । तत्रानुवादःपरंपरिसंख्या । तत्रह्यर्थान्तरलक्षणयाप्यर्थवत्ता भवति । एवंकृत्वागौतमीयेनाविप्रतिपत्तिः । एवंतत्रोक्तं ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जमिति । सर्वत्र वेत्येषविकल्पः कामचारानुज्ञानार्थः । न पुनः सर्वदर्तावनृतौचनियमोपपत्तिः ॥ यदि च पूर्वत्रर्तावुपेयादितिनियमःसर्वत्रवेत्यत्रापि सएवोपेयादित्यनुप्रयुज्यमानशब्दोनियमार्थः प्राप्नोति एकप्रक्रमत्वात्तर्हि सएव शब्दः पुनरनुच्चार्यमाणोभिन्नार्थोभवितुंयुक्तः । नचर्तोरन्यत्रनियमार्थतोपपद्यते । तस्मादृतौ गमनवचनमनृतौप्रतिषेधार्थम् । तत्रानुत्पन्नपुत्रस्य विध्यन्तरान्नियमएव । उत्पन्नपुत्रस्तुयथाकामी । अनृतौ प्रतिषिद्धे गमने भार्येच्छया पुनः प्रतिप्रसूयतेपर्ववर्जंव्रजेच्चैनांतद्व्रतइति तदितिभार्यायाः प्रत्यवमर्शः । तच्चित्तग्रहणंव्रतमस्येति तद्व्रतः । रतिकाम्यया विनाप्यपत्यार्थेनोत्पन्नपुत्रऋतावनुत्पन्नपुत्रोवानृतौ सुरतसंभोगेच्छया तद्व्रतएनांव्रजेन्नात्मेच्छयेत्यर्थः । अथवा तच्छब्दोरतिकाम्ययेत्यत्रापेक्ष्यते । स्मृतिशास्त्रत्वादस्य । तद्रतिकाम्यया पर्ववर्जमन्यत्रापि व्रजेत्-तत्रैवाकारश्लेषोद्रष्टव्यः । अरतिकाम्ययाआत्मनइतिशेषः । यथातुव्याख्यातंतथा नांकिचिदत्राप्रश्लेषेणापि तच्छब्दस्य समासोपसर्जनस्यासंबन्धेन । पर्वाणि वक्ष्यति । अमावास्यामष्टमींच पौर्णमासींचतुर्दशीमिति । स्वदारेषु निरतः स्यात्तत्प्रीतिभावनापरः । अथवा स्वदारेष्वेवरमते न परदारान्रमयेदिति परदारप्रतिषेधः । सदा यावज्जीवमेतद्व्रतंपरिपालनीयम् । अतः स्थितमेतत्त्रीणिवाक्यान्यत्र ऋतुकालाभिगामी स्यादित्येतदेकम् अनुत्पन्नपुत्रस्य नियमानुवादरूपंद्वितीयम् भार्याप्रयुक्तस्यपर्ववर्जमृतावनृतौ च न सुरतेच्छया स्वदारनिरतइतितृतीयम् । एषांचपदयोजना ऋतुकालाभिगामीस्यादपत्यार्थम् रतिकाम्ययातुतद्व्रतएनांव्रजेत् स्वदारनिरतश्चस्यात् ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । ऋतुकालमात्राभिगमने चेत्यसंपत्तौ स्वदारनिरतइति पक्षान्तरम् । तत्र च पर्ववर्जमिति विशेषउक्तः । तद्व्रतः पर्ववर्जंस्वदारगमनमात्रगृहीतव्रतः रतिकाम्यया स्वस्य भोगार्थितया नतु तादृग्धर्मलाभस्तत्रेत्यर्थः ॥ ४५ ॥

( ३ ) **कुल्लूकः**। ऋतुर्नामशोणितदर्शनोपलक्षितोगर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः। तत्कालाभिगामी स्यादित्ययंनियमविधिः न तु परिसंख्या स्वार्थहानिपरार्थकल्पनाप्राप्तबाधात्मकदोषत्रयदुष्टत्वात्। ऋतुकालेऽपि रागतः पक्षेगमनप्राप्तौ यस्मिन्पक्षे प्राप्तिस्तत्रविधिः समेयजेतेतिवत्। अतएव ऋतावगमनेदोषमाह पराशरः ऋतुस्नातांतु योभार्यासन्निधौ नोपगच्छति। घोरायांब्रह्महत्यायांपतते नात्र संशयः। अनुत्पन्नपुत्रस्य चायंनियमः। ब्राह्मणोह वै जायमानस्त्रिभिर्ऋणैर्ऋणवा जायते यज्ञेन देवेभ्यः प्रजयापितृभ्यः स्वाध्यायेनार्षिभ्यइत्येतत्प्रत्यक्षश्रुतिमूलत्वेऽस्य संभवति। मूलान्तरकल्पनस्यायुक्तत्वात्। तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवेस्त्रियमिति च वक्ष्यति ततोप्येतच्छ्रुतिमूलत्वमवगम्यते। पुत्रोत्पादनशास्त्रस्य चैकपुत्रोत्पादनेनैव चरितार्थत्वात्कामजानितरान्विदुरिति दर्शनादजातपुत्रस्यैव नियमः। दशास्यांपुत्रानाधेहीति मन्त्रस्तु बहुपुत्रप्रशंसापरः जातपुत्रस्याप्यृतुकालगमननियमेन दशस्वेवावतिष्ठते स्वदारनिरतः सदेति नित्यंस्वदारसंतुष्टः स्यान्नान्यभार्यामुपगच्छेदिति विधानात्परिसंख्यैव वाक्यानर्थक्यात्स्वदारगमनस्य प्रशस्तत्वात्[१]। ऋतावगमने दोषाश्रवणाच्च न नियमविधिः। पर्ववर्जं व्रजेच्चैनामिति। पर्वाण्यमावास्यादीनि वक्ष्यन्ते। तानि वर्जयित्वा भार्या प्रीतिर्व्रतंयस्य सतद्व्रतोऽनृतावप्युपेयात्। अतएव रतिकाम्यया न तु. पुत्रोत्पादनशास्त्रबुद्ध्या तस्माद्विधित्रयमिदम्। ऋतावुपेयादेव। अन्यभार्यांनोपगच्छेत्। अनृतावपिभार्याप्रीतये गच्छेदिति। अत्र च गौतमः ऋतावुपेयादनृतौच पर्ववर्जम्। याज्ञवल्क्योऽप्याह। यथाकामी भवेद्वापिस्त्रीणांवरमनुस्मरन्। पर्ववर्जमित्यृतावनृतौचोभयत्रसंबध्यते ॥ ४५ ॥

( ४ ) **राघवानन्दः**। तस्यैव कृतदारस्य नियमंवदन्नादौ स्त्रीविषयंतमाह। ऋतुकालेति षड्भिः। तद्व्रतः भार्याप्रीतिर्व्रतंयस्य अतएवाह रतिकाम्यया ॥ ४५ ॥

( ५ ) **नन्दनः**। कृतोद्वाहस्यस्त्रियंप्रति नियममाह ऋतुकालेति। ऋतुर्नामगर्भग्रहणक्षमः स्त्रीणामवस्थाविशेषः। सदेतिसर्वत्रसंबध्यते। तस्यायमर्थः। सदर्तुकालाभिगामी स्यान्नकदाचिदप्यृतुकालंलङ्घयेत्। व्रतेणिनिप्रत्ययः। सदास्वदारनिरतः स्यात्नकदाचित्स्त्र्यन्तरंगच्छेत्। अनृतुकालेऽपिरतिकाम्ययाभोगेच्छया तद्व्रतस्तयाभार्ययाप्रार्थितश्चेत्। पर्ववर्जंसदागच्छेत्। न कदाचिद्रतिप्रार्थनांलङ्घयेदिति ॥ ४५ ॥

( ६ ) **रामचन्द्रः**। सदा स्वदारान्निरतःसन्नृतुकालाभिगामी स्यादिति वचनात्परदारनिषेधः। एनांस्त्रियंपर्ववर्जंव्रजेद्गच्छेत्। ततस्तस्यास्तच्चित्तग्रहणं व्रतमस्येति तद्व्रतः। रतिकाम्यया नित्यंगच्छेदित्यर्थः। यथाकामी भवेद्वापिस्त्रीणांवरमनुस्मरन्निति योगीश्वरः। इन्द्रदत्तवरमित्यर्थः ॥ ४५ ॥

**ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ॥ चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥४६॥**

( १ ) **मेधातिथिः**। ऋतुलक्षणार्थश्लोकोऽयम्। वैद्यकादिशास्त्रावगम्योऽयमर्थोन विधिमूलएव। एवंयुग्मासुपुत्राइत्येतावपि श्लोकौ। षोडशरात्रयस्ताः स्त्रीणांमासिमासि। स्वाभाविकऋतुः। प्रमाणान्तरमूलत्वाच्चाश्रुतमपि मासिमासीति गम्यते। स्वभावे भवः स्वाभाविकः स्वस्थप्रकृतीनांयोभवति व्याध्यादिना कस्याश्चित्प्राप्तकालोऽपि निवर्तते घृततिलाद्यौषधोपयोगेन रतिवशेनचाकालेऽपि संवर्तते। अतःस्वाभाविकऋतुस्तारात्रयउच्यन्ते। चतुर्भिरितरैः चत्वार्यहानि यानि सद्भिर्विगर्हितानि प्रतिषिद्धस्त्रीस्पर्शसंभाषणादीनि तानि च प्रथमशोणितदर्शनात्प्रभृतिअहर्ग्रहणंचसर्वाहोरात्रोपलक्षणार्थम् तैःसह ॥ ४६ ॥

---

( १ ) प्रशस्तत्वात्=प्राप्तत्वात् ( अ )

( २ ) **सर्वज्ञनारायणः** । स्वाभाविकः स्त्रीस्वभावनियतः कस्याश्चित्त्वाधिक्यमपि व्याध्यादिना शोणिताधिक्येन भवतीत्यर्थः । इतरैरजःकालीनैश्चतुर्भिः सहेति वदन्नवशिष्टान्यहानि द्वादशेति दर्शयति रात्रयइति वचनमुपगमयोग्यद्वादशाहोरात्रेषु रात्रावेव गमनंन दिवेति कथयितुं । अहोभिरिति त्वहोरात्रोपलक्षणम् ॥ ४६ ॥

( ३ ) **कुल्लूकः** । अत्र रात्र्यहः शब्दावहोरात्रपरौ शोणितदर्शनात्प्रभृतिस्त्रीसंपर्कगमनादौ शिष्टनिन्दितैश्चतुर्भिरन्यैरहोरात्रैः सह षोडशाहोरात्रा मासिमासि स्त्रीणामृतुः स्वभावे भवः स्वाभाविकः । व्याध्यादिनातु न्यूनाधिककालोऽपि भवति ॥ ४६ ॥

( ४ ) **राघवानन्दः** । ऋतोरवधिमाह ऋतुरिति । स्वाभाविकः औत्सर्गिकः रोगभोगादिना न्यूनाधिकसंभवात् । शोणितोपलक्षितशरीरावस्थाविशेषोगर्भग्रहणसमर्थ ऋतुस्तद्दर्शनात् । सद्भिर्गर्हितैश्चतुर्भिरहोरात्रैः सहअविगर्हिता द्वादशरात्रयइति षोडश । स्वीकृतभार्यस्य तदहस्तस्यांगमनप्रसक्तौ ऋत्ववधिकरणंत्रिरात्रादिपालनार्थम् । तथाचाश्वलायनसूत्रम् । अतऊर्ध्वमक्षारालवणाशिनौ स्यातांत्रिरात्रंद्वादशरात्रंसंवत्सरंवेति ॥ ४६ ॥

( ५ ) **नन्दनः** । कःपुनः स्त्रीणामृतुकालइत्यपेक्षायामाह ऋतुरिति । सद्भिर्गर्हितैरितरैश्चतुर्भिरहोभिः सार्धगमनेप्रतिषिद्धैः प्रथमैश्चतुर्भिः रात्रैः सहप्रथमाश्चतस्रः पञ्चम्यादयोद्वादशइत्येवंषोडशरात्रयः । षोडशाहोरात्राः । स्वाभाविकोनव्याध्यादिनिमित्तादुत्पन्नः स्त्रीणामृतुर्भवति ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । तत्रविशेषमाह ऋतुस्त्विति । स्त्रीणांगर्भाधानयोग्यावस्थोपलक्षितः कालऋतुः स्वाभाविकः षोडशरात्रयः स्मृतारजोदर्शनदिवसादारभ्य षोडशाहोरात्रयः सद्भिर्विगर्हितैः चतुर्भिःसार्द्धइतरैर्द्वादशभिरहोभिःसार्द्धमित्यर्थः॥४६॥

## तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ॥ त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः ॥४७॥

( १ ) **मेधातिथिः** । तासांरात्रीणांयाआद्याः प्रथमशोणितदर्शनाच्चतस्रस्तानिन्दिताः नतत्रगमनमस्ति । तिसृषु तावत्स्पर्शोऽपि नास्त्यशुचित्वात् । चतुर्थ्यांतु स्नातायावशिष्टवचनात्सत्यपि शुचित्वेरतिसंभोगोनास्ति चतसृणांगर्हितत्ववचनात् । याचैकादशी या च त्रयोदशी साऽपि निन्दिता । एवंप्रतिषिद्धगमने ऋतुदर्शनात्प्रभृत्येकादशीत्रयोदश्यौ गृह्येते। नचन्द्रतिथी । तासामितिनिर्धारणविषयत्वेन रात्रीणांसंबन्धात्समानजातीयश्च निर्धार्यतया प्रतीयते कृष्णा गवांसंपन्नक्षीरेति । षड्रात्रगमनप्रतिषेधोऽयमदृष्टार्थः । शेषाःप्रशस्तादशरात्रयः । षण्णांप्रतिषेधाद्दशसु प्राशस्त्यंसिद्धमेवानूद्यते ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । एकादशीत्रयोदशीति षोडशदिनसमुदायापेक्षया । प्रशस्ताअनिन्दिताः ॥ ४७ ॥

( ३ ) **कुल्लूकः** । तासांपुनः षोडशानांरात्रीणांशोणितदर्शनात्प्रभृत्याद्याश्चतस्रोरात्रय एकादशी त्रयोदशी च रात्रिर्गमनेनिन्दिता । अवशिष्टा दशरात्रयः प्रशस्ता भवेयुः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । वर्ज्यमाह तासामिति । सन्धिरार्षः ॥ एकादशी तु दशदिनापेक्षया तथात्रयोदशीच दशदिनान्यवशिष्टानि ॥ ४७ ॥

( ५ ) **नन्दनः** । तासु षोडशसु प्रशस्तारात्रीराह तासामिति । तासांषोडशानांरात्रीणांमध्येआद्याश्चतस्रोरात्रय एकादशीत्रयोदशीचरात्रिर्निन्दिताइति । शेषादशरात्रयप्रशस्ताः ॥४७ ॥

( ६ ) **रामचन्द्रः** । तासांषोडशरात्रीणांमध्ये आद्याश्चतस्रःनिन्दितापुनरेकादशरात्रिर्निन्दिता एकादशदिवसस्येत्यर्थः । तथा त्रयोदशीरात्रिर्निन्दिता शेषा दशरात्रयः प्रशस्ताउक्ताः ॥ ४७ ॥

**युग्मासु पुत्राजायन्ते स्त्रियोऽयुग्मासु रात्रिषु॥तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्॥४८॥**

( १ ) **मेधातिथिः**। तासु दशसु यायुग्मारात्रयः षष्ठ्यष्टमी दशमीद्वादशीचतुर्दशी षोडशी तासूपगच्छतः पुत्राजायन्ते। युग्मासु पुत्रार्थीसंविशेदार्तवेस्त्रियम्। अयुग्मासु स्त्रियोदुहितरस्तस्मात्पुत्रोत्पत्तिसिध्यर्थयुग्मासु संविशेद्व्रजेत मैथुनधर्मेणस्त्रियमार्तवे। अनुवादोयम्। अयमपि नियमएवानुत्पन्नपुत्रस्यायुग्मास्वगमनम्॥ ४८॥

( २ ) **सर्वज्ञनारायणः**। युग्मासु षष्ठ्यादिरात्रिषु पुत्राजायन्ते। संविशेदुपगच्छेत्॥ ४८॥

( ३ ) **कुल्लूकः**। पूर्वोक्तास्वपि दशसु षष्ठ्यष्टम्याद्यासु रात्रिषु गमने पुत्राउत्पद्यन्ते। अयुग्मासुपञ्चमीसप्तम्यादिषु दुहितरः। अतः पुत्रार्थीयुग्मास्वृतुकालेभार्यागच्छेत्॥ ४८॥

( ४ ) **राघवानन्दः**। तत्रैव प्रासंगिकंदृष्टंफलमाह युग्मास्विति। स्त्रियोऽयुग्मास्वितिच्छेदः। विशेन्निविष्टमनागच्छेत्। अन्यथाङ्गवैकल्यादिस्यादपत्यस्य॥ ४८॥

( ५ ) **नन्दनः**। प्रशस्तासुरात्रिषु दशसु संवेशनेफलमाह युग्मास्विति। संविशेत्संगच्छेत्॥ ४८॥

( ६ ) **रामचन्द्रः**। दशरात्रीणांमध्ये युग्मासु रात्रिषु गच्छेतःपुत्राजायन्ते। अयुग्मासु रात्रिषु गच्छतःस्त्रियःकन्याभवन्ति। तस्मात्कारणात्पुत्रार्थी आर्तवेकालेयुग्मासु स्त्रियंसंविशेद्गच्छेत् रात्रिग्रहणंदिवसप्रतिषेधार्थम्॥ ४८॥

**पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः॥समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पेच विपर्ययः॥४९॥**

( १ ) **मेधातिथिः**। शुक्रंवीर्यंपुरुषस्यरेतः स्त्रियाःशोणितम्। उक्तंभगवता वसिष्ठेन। शुक्रशोणितसंभवः पुरुषइति। स्त्रीबीजादधिकेपुम्बीजेऽयुग्मास्वपि पुत्रोजायते युग्मास्वपि स्त्रीबीजस्याधिक्येकन्यैव। अयुग्मास्वपि रात्रिषु पुत्रार्थिनो गमनानुष्ठानार्थमेतत्। यदा परिपुष्टमात्मानंवृष्याहारयोगेनमधिकवीर्यमन्येत स्त्रियाश्च कथंचिदपचयंतदापुत्रार्थीगच्छेदित्युपदिष्टं भवति। आधिक्यंचात्र न परिमाणतः किंतर्हि सारतः। समेऽपुमानमिश्रीकृते पुंस्त्रियौ। अपुमान्नपुंसकमिति केचित्साम्यइतिपठन्ति। उभयोःसाम्ये पुमानेव पुंस्त्रियौ वा गर्भधान्यांयदा वायुर्द्रवरूपत्वात्संसृष्टेशुक्रशोणितेसमंविभजतएकत्र भागमन्यत्र तावदेव तदा यमौ जायेते तत्र समेविभागेऽपि स्त्रीबीजाधिक्येस्त्री पुम्बीजाधिक्ये पुमान्। क्षीणे बीजेसारतःविपर्ययोऽग्रहणंगर्भस्यनपुंसकोत्पत्तिर्वा॥ ४९॥

( २ ) **सर्वज्ञनारायणः**। अत्र व्यभिचारोदृश्यतेतेन तत्र कारणमाह पुमानिति। स्त्रियाः शुक्रे शोणिततांगते। समेऽपुमान्नपुंसकम्। पुंस्त्रियौ यमौ। एतच्चोभयोरतिवृद्धबहुशुक्रत्वेपि तदपेक्षया पुंसोधिकशुक्रत्वेपुमांसौ। स्त्रियाअधिकशुक्रत्वे स्त्रियावित्यपि ग्राह्यम्। क्षीणेनयोः शुक्रेरोगादिना क्षीणे स्वभावतोवाल्पे विपर्ययोऽपत्यानुपपत्तिः॥ ४९॥

( ३ ) **कुल्लूकः**। पुमानिति। पुंसोबीजेऽधिकेऽयुग्मास्वपि पुत्रोजायते स्त्रीबीजेऽधिकेयुग्मास्वपि दुहितैव। अतोवृष्याहारादिना निजबीजाधिक्यंभार्यायाश्चाहारलाघवादिना बीजाल्पत्वमवगम्य युग्मास्वपि पुत्रार्थिनागन्तव्यमिति दर्शितम्। स्त्रीपुंसयोस्तु बीजसाम्येऽपुमान्नपुंसकंजायते पुंस्त्रियाविति यमौच। निःसारेऽल्पेचोभयोरेवबीजे गर्भस्यासंभवः॥ ४९॥

( ४ ) **राघवानन्दः**। पुमानिति युग्मास्वपि भवत्यधिके रजसिस्त्रीभवेदधिके स्त्रियाइति रजसीतिशेषः। अपुमान्नपुंसकं पुंस्त्रियौ पुमांसौ स्त्रियौ स्त्रिपुमांसौ चेति स्वरसतोदृष्टत्वात्। क्षीणे निःसारे अल्पे च विपर्ययोऽपत्याभावः॥ ४९॥

( ५ ) **नन्दनः** । समेअपुमानितिपदच्छेदः । अपुमान्नपुंसकः । पुमांश्चस्त्रीचपुंस्त्रियौ । क्षीणेसारतः । अल्पेपरिमाणतः विपर्य्ययः अनुत्पत्तिः । यतएवमतः पुत्रार्थिनातामुपवासयता स्वयंसौहित्ययुक्तेनस्वशुक्राधिक्येयत्नः कार्यइत्यभिप्रायः ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । पुंसः पुरुषस्याधिके शुक्रे पुमान्पुत्रोभवति । स्त्रियारजोधिके स्त्री कन्या भवति रजःशुक्रसमेपुमान्नपुंसकःषण्डोभवति वा पुंस्त्रियौ भवतः । यमौ कन्यापुत्रौ । पुमानेवरूयाकारः । क्षीणे वा शुक्रे अल्पेवारजसि विपर्ययःगर्भस्यासंभवअनुत्पत्तिः ॥ ४९ ॥

**निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषु वर्जयन् ॥ ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन् ॥ ५० ॥**

( १ ) **मेधातिथिः** । निन्द्यासु षट्स्वन्यासुचानिन्द्यास्वप्यष्टासु रात्रिषु स्त्रियोवर्जयन्परिहरन्द्वे रात्रीअवशिष्टे यदि गच्छति पर्ववर्जंतदा ब्रह्मचार्येव भवति ब्रह्मचर्यफलंप्राप्नोति । यत्रतत्राश्रमेवसन् अर्थवादोऽयम् । नतुवानप्रस्थाद्याश्रमेषुरात्र्यभ्यनुज्ञा जितेन्द्रियत्वविधानात्सर्वाश्रमेषु गार्हस्थादन्येषु वीप्सायाश्चार्थवादतयाप्युपपत्तेः । एताश्च रात्रयोवर्ज्यान क्रमेणैव किर्तार्हि यथेच्छया पर्ववर्जंगमनं यथा न भवति तथा रात्रिद्वयमभ्यनुज्ञायते । किंपुनर्ब्रह्मचर्यस्यफलंविशेषाश्रवणात्स्वर्गः । क्वचित्तु श्रूयते । न ब्रह्मचारी प्रत्यवैतीति । स्वल्पैरतिक्रमैर्नदुष्यतीति ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । प्राक् निन्दितत्वेनोक्तासु षट्सु रात्रिषु तथान्यासु प्रशस्ततयोक्तानामपि दशानांमध्येअष्टासु स्त्रियोवर्जयन्नस्मिन्नृतुषोडशकमध्ये रात्रिद्वयमेवोपगच्छन्नित्यर्थः । यत्र तत्रेति वचनात् । गार्हस्थ्यइव सपत्नीकवानप्रस्थेपि ऋतुगमनमस्तीति गम्यते । अन्यथा गार्हस्थ्येपीत्येवावक्ष्यत् ॥ ५० ॥

( ३ ) **कुल्लूकः** । निन्द्यासुपूर्वोक्तासु षट्सु रात्रिष्वन्यासु च निन्द्यास्वपि यासु कासुचिदष्टासु स्त्रियोवर्जयन्द्वे रात्री अवशिष्टे । पर्ववर्जिते व्रजन्नखण्डितब्रह्मचार्येव भवति । यत्रतत्राश्रमे वसन्नितिवानप्रस्थापेक्षया । तस्य हि भार्ययासहगमनपक्षऋतुगमनंप्रसक्तम् । न च वनस्थभार्यायाऋतुर्नभवतीति वाच्यम् । वनंपश्चाशतोव्रजेदितिवर्षैरेकगुणांभार्यामुद्वहेत्त्रिगुणः पुमानित्यादि शास्त्रपर्यालोचनया तत्संभवात् । मेधातिथिस्तु यत्र तत्राश्रमे वसन्नित्यनुवादमात्रंगृहस्थेतराश्रमत्रयेजितेन्द्रियत्वविधानाद्रात्रिद्वयाभ्यनुज्ञानासंभवादित्याह गोविन्दराजस्तूत्पन्नविनष्टपुत्रस्याश्रमान्तरस्थस्यापीच्छया पुत्रार्थंरात्रिद्वयगमने दोषाभावप्रतिपादनार्थमेतत् । यत्र तत्राश्रमेवसन्नितिवचनात्पुत्रार्थी संविशेदिति च प्रस्तुतत्वात्पुत्रस्य च महोपकारकत्वादित्याह हन्तगोविन्दराजे न विशेषमविवृण्वता । व्यक्तमङ्गीकृतमृतौस्वदारसुरतंयतेः ॥ ५० ॥

( ४ ) **राघवानन्दः** । निन्दिताएकादशी त्रयोदशी आद्याश्चतस्रइति षट्सु अष्टासु च अनिन्दितासु निशासुएवंरात्रिद्वयमवशिष्यते तयोर्गच्छन्नब्रह्मचार्येव भवतीत्यर्थवादइति मेधातिथिः । गोविन्दराजस्तु ऋतावुपेयादेव अन्यभार्यांन व्रजेत् अनृतावपि भार्याप्रीतये व्रजेदिति । पर्ववर्जमित्युभयत्र संबध्यते । अतएव गौतमः । ऋतावुपेयादनृतौ च प्रतिषिद्धवर्जे । याज्ञवल्क्योपि । यथाकामीभवेद्वापि स्त्रीणांवरमनुस्मरन् । सन्तत्यभावेआश्रमान्तरयोः कुटीचकवानप्रस्थयोरपि यत्र तत्राश्रमे वसन्निति स्वरसात्तादृशदिनद्वये गमनंयुक्तम् । तद्दिनद्वयमष्टमीं वा चतुर्दशीमित्याद्यपर्वोक्तेरिति पञ्चाशदुत्तरंवनंप्रतिभार्ययासह गमनविधानेन स्त्रियाःपुत्रोत्पादनयोग्यकालत्वात्पुत्रार्थी संविशेदार्तवे स्त्रियमिति साधारण्याच्च यत्तु गृहस्थएवैषांयोनिरिति गोतमसूत्रंव्याख्यातंच हरदत्तेनेत्येषामपत्यंचण्डालइति तदप्राप्तपत्नीविषयम् । स्वपत्न्यांन दोषोऽन्यथायत्र तत्रेति मनुवचनविरोधः । कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाइति श्रीकृष्णोक्तेः । नाप्यर्थवादोद्रव्यसंस्काराङ्ग

कर्मस्वेव सङ्गति । गृहस्थानांतु । दिनषट्कंप्रशस्तम् । तदुक्तंयाज्ञवल्क्येन । षोडशर्तुनिशास्त्रीणां तासु युग्मासु संविशेत् । ब्रह्मचार्यैव पर्वाण्याद्याश्चतस्रश्च वर्जयेदिति ॥ ५० ॥

( ५ ) **नन्दनः** । निन्द्याःप्रथमाश्चतस्रएकादशीत्रयोदशीचतासुअष्टासुचान्यासुस्त्रीजननिमित्तप्रतिनिषिद्धास्वयुग्मासु-पञ्चमीसप्तमीनवमीपञ्चदशीप्रभृतिषुप्रजाफलरहितासुचतसृषुचेत्यर्थः । एकविंशीप्रभृतीनामृतोरकालत्वादष्टास्वित्युक्तम् । यत्र-तत्राश्रमेगृहस्थाश्रमे वसन्नपि । एवमुद्वोढुर्नयमउक्तः ॥ ५० ॥

( ६ ) **रामचन्द्रः** । निन्द्यास्वन्यासु अयुग्मासु रात्रिषु स्त्रियोवर्जयेदित्यर्थः । अवशिष्टासु गच्छन्ब्रह्मचारी भवति । यत्रतत्राश्रमे वसन्ब्रह्मचार्यैवभवति भवेदित्यर्थः । अयमर्थवादो न तु वानप्रस्थाद्याश्रमेषु गार्हस्थ्यादन्येषु स्त्रियागमनम् ॥ ५० ॥

**न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि॥गृह्णंश्छुल्कंहि लोभेन स्यान्नरोपत्यविक्रयी ५१**

( १ ) **मेधातिथिः** । आसुरे शुल्कप्रतिषेधोऽयंउत्तरत्र कन्यार्थसंग्रहोपादानात् । विद्वान्ग्रहणदोषज्ञः । कन्यापिता स्वल्पमप्यर्थंधनंन गृण्हीयात् । गृण्हानोऽपत्यविक्रयदोषेण युज्यते । कः पुनरेषःशुल्कोनाम आभाषणपूर्ववराद्गृहीतम् । यत्रतूच्चनीचपणोभवति कन्यागुणापेक्षमूल्यव्यवस्थासक्रयएव । इहतुमहागुणायाअपि कन्यायाः स्वल्पंधनमनाभाषणपूर्ववा ग्रहणम् । नविक्रयस्यैषधर्मइत्यतोविक्रयाध्यारोपेणनिन्द्यते ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । लोभेन लोभात् । नत्वार्षधर्मबुद्ध्या ॥ ५१ ॥

( ३ ) **कुल्लूकः** । कन्यायाः पिता धनग्रहणदोषज्ञोऽल्पमपि धनं कन्यादाननिमित्तकं न गृह्णीयात् । यस्माल्लोभेन-तद्गृह्णन्नपत्यविक्रयीभवति ॥ ५१ ॥

( ४ ) **राघवानन्दः** । आर्षासुरोद्वाहयोःशुल्कदानमुक्तंतत्स्वमतेन दूषयति नेतित्रिभिः । शुल्कं कन्यामूल्यम् । लोभेन तत्कुर्वन्नपत्यविक्रयी उपपातकी स्यात् । गोवधइत्यपत्यविक्रयस्यउपपातकत्वेनआम्नानात् ॥ ५१ ॥

( ५ ) **नन्दनः** । अथकन्याप्रदातुर्नियममाह न कन्यायाइति ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । लोभेन शुल्कंगृण्हन्नरो ऽपत्यविक्रयी स्यात् । अपत्यविक्रयपापभुग्भवतीत्यर्थः ॥ ५१ ॥

**स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः॥नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम्॥५२॥**

( १ ) **मेधातिथिः** । स्त्रीनिमित्तानिधनानि कन्यादाने वराद्यानि गृह्यन्ते । पूर्वस्यैव शेषः । येबान्धवाः पित्रादयः मोहादुपजीवन्ति यथोक्तंज्ञातिभ्योद्रविणंदत्वेति । सुवर्णरजतादिधनम् । नारीयानानियानमश्वादि वस्त्रंवैतावन्मात्रमपि न जातूपजीवनीयंवासोयानादिकिंपुनर्बहु । उपजीवतांफलमाचष्टे तेतेपापाः शास्त्रप्रतिषिद्धसमाचरणादधोगतिंनरकं यान्ति । अथवा स्त्रीधनानीति नवमे दर्शयिष्यति । तानिये मोहादुपजीवन्तिबान्धवाःपिता तत्पक्षाश्च भर्ता भर्तृपक्षाश्च । एवंयाना-चेवंवस्त्रं स्त्रीणाम् बुद्धौसंनिधानाच्छाब्दःसंनिधिः कल्प्यते यथा राजपुरुषः कस्यराज्ञइति ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । स्त्रीधनानि स्त्रीदाननिमित्तेन प्राप्तानि धनानि । एवंनारीयानानीत्यत्रापि ॥ ५२ ॥

( ३ ) **कुल्लूकः** कन्यादाननिमित्तकशुल्कग्रहणनिषेधप्रसङ्गान्नवमाध्यायाभिधेयस्त्रीधनग्रहणनिषेधोयम् । ये बा-

न्धवाः पतिपित्रादयः कलत्रदुहित्रादिधनानि गृह्णन्ति नारीस्त्रीयानान्यश्वादीनि वस्त्रंचेतिप्रदर्शनार्थम् सर्वमेवधनंन ग्राह्यम् तेगृह्णानाः पापकारिणोनरकंगच्छन्ति ॥ ५२ ॥

( ४ ) **राघवानन्दः** । किंच स्त्रीति । स्त्रीधनानीति कैमुत्यन्यायेन प्रासंगिकं । बान्धवाः पतिपुत्रादयः । नारीयानानीतिकन्यायै चैव शक्तितइत्युक्तत्वात् विभवेसतीति शेषः ॥ ५२ ॥

( ५ ) **नन्दनः** । नकेवलंकन्यायाः पितुरेवायंशुल्कग्रहणप्रतिषेधः किन्तु बान्धवानामपीत्याह स्त्रीधनानीति । स्त्रीनिमित्तानि धनानि स्त्रीधनानि कन्यादानलब्धानीति यावत् । नारी शुल्करूपेण गृहीता दासी ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । नार्याः कन्याया यानानिनारीयानानि सुवर्णरजतादिधनं मोहात् सेवन्ते नार्या वस्त्रंवा ते पापा-अधोगतिंयान्ति ॥ ५२ ॥

## आर्षे गोमिथुनंशुल्कंकेचिदाहुर्मृषैव तत् ॥ अल्पोप्येवंमहान्वापि विक्रयस्तावदेव सः ॥ ५३ ॥

( १ ) **मेधातिथिः** । स्त्रीगवी च पुंगवश्च गोमिथुनम् । केचिदाहुरेतदादेयमिति मनोस्तु मतंमृषैव तत् मिथ्या नादेयमित्यर्थः । अल्पोऽप्येवम् अल्पसाधनोऽल्पः एवंमहान्भवति तावानेव विक्रयः ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** शुल्कंशुल्कत्वेन पित्रैव ग्राह्यम् । न कन्यया तेन लोभादपितस्य ग्रहणे दोषाभावइति केचिदाहुः । तन्मृषाऽसत्यम् । यावताऽल्पस्यापि मूल्यस्य लोभेन ग्रहणे विक्रयएव स्यान्न च विनालोभंवैधंतद्ग्रहणंसंभवति । विधेरभावादित्यर्थः ॥ ५३ ॥

( ३ ) **कुल्लूकः** । आर्षे विवाहे गोमिथुनंशुल्कंवराद्ग्राह्यमिति केचिदाचार्यावदन्ति तत्पुनरसत्यंयस्मादल्पमूल्यसाध्यत्वादल्पोवा भवतु बहुमूल्यसाध्यत्वान्महान्वाभवतु सतावद्विक्रयोभवत्येव । यत्पुनरेकंगोमिथुनमितिपूर्वमुक्तंतत्परमतमितिगोविन्दराजः तदयुक्तम् । मनुमते लक्षणमार्षस्य न स्यादेव वराद्गोमिथुनग्रहणपूर्वककन्यादानस्यैवार्षविवाहलक्षणत्वात् । मन्वभिमतमन्यदेवार्षलक्षणमेकंगोमिथुनमिति परमतमिति चेत् एकंगोमिथुनंद्वेचेत्येतत्परमतंयदि तदामनुमतेनार्षलक्षणंकिंतदुच्यताम् । अष्टौविवाहान्कथयन्नार्षोढासंततेर्गुणान् मनुः किंत्वमतेनार्षलक्षणंवक्तुमक्षमः मेधातिथिस्तु पूर्वापरविरोधोपन्यासनिरासमेव न कृतवान् । तस्मादस्माभिरित्थंव्याख्यायते आर्षेविवाहे गोमिथुनंशुल्कमुक्तोचरूपमिति केचिदाचार्यावदन्ति मनोस्तु मतनेदं शास्त्रनियमितजातिसंख्याकंग्रहणं न शुल्करूपंशुल्कत्वेमूल्याल्पत्वमहत्वेऽनुपयोगिनीविक्रयएव तदास्यात् । किंत्वार्षविवाहसंपत्त्याअवश्यकर्तव्ययागादिसिद्धये कन्यायै वा दातुंशास्त्रीयंधर्मार्थमेवगृह्यते । अतएवार्षलक्षणश्लोकेवरादादायधर्मतइतिधर्मतोधर्मार्थमिति तस्यार्थः । भोगलोभेन तु धनग्रहणं शुल्करूपमशास्त्रीयम् । अतएव गृण्हञ्छुल्कंहि लोभेनेति निन्दामुक्तवान् । तस्मात्पौर्वापर्यपर्यालोचनादार्षे धर्मार्थंगोमिथुनंग्राह्यं न तु भोगार्थमिति मनुना स्वमतमनुवर्णितम् ॥ ५३॥

( ४ ) **राघवानन्दः** । आर्षे गोमिथुनंयच्छुल्कं । अल्पत्वमहत्वयोरप्रयोजकत्वेन तावतैव विक्रयादिति केचिदाचार्याआहुस्तन्मृषैव । आर्षलक्षणे धर्मतइत्युक्तेरिति शास्त्रोक्तं विरुद्धं न भवतीत्यर्थः । मेधातिथिस्तु । पूर्वापरविरुद्धएवेत्याह । अतोगोमिथुनद्वयस्य धर्मार्थतैव । ततोतिरेके विक्रयः । इच्छाविक्रये न्यूनाधिक्यं प्रयोजकं अन्यथोद्वाहानामपृथात्वविरोधः । नियमविधौ च दुरदृष्टादृष्टेरिति तदयम् ॥ ५३ ॥

( ५ ) **नन्दनः** । गोमिथुनंशुल्कमाहुरनुजानते तन्मृषा तदयुक्तम् । अल्पोवा महान्वा द्रव्यलोभादादाने शुल्कस्य विक्रयएव तस्मादयुक्तमिति ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । आर्षसंज्ञे विवाहे गोमिथुनशुल्कंकेचिदाहुस्तन्मृषैव मिथ्यैव अल्पोवा शुल्को महान्वा शुल्कस्तावानेव सविक्रयसंज्ञः ॥ ५३ ॥

**यासांनाददते शुल्कंज्ञातयोन सविक्रयः ॥ अर्हणंतत्कुमारीणामानृशंस्यंच केवलम् ॥ ५४ ॥**

( १ ) **मेधातिथिः** । किंवराद्धनाधिगमोविक्रयोभवति नेति ब्रूमः । ज्ञातयः कन्यायामधिकृताः स्वार्थमाददते गृह्णन्ति तदा सविक्रयः । अर्हणंकन्यार्थेधनग्रहणं कन्यानांतदर्हणंपूजनंभवति । बहुमानः कन्यानामात्मनि भवति । ईदृश्योवयंयद्धनंदत्वा विवाह्यामहे । अन्यत्रापि पूज्याभवन्ति सुभगाएताइति । आभरणादि वा तेन धनेन कर्तव्यमतोऽभ्यर्हिताः शोभावत्योभवन्ति । आनृशंस्यमपापत्वंकेवलंन स्वल्पोऽप्यधर्मगन्धोऽस्ति । अतोऽनेनार्थवादेन कन्यार्थधनग्रहणंविधीयते ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । यदात्वार्षे कन्यायै गोमिथुनंतथाअनुरागोत्पत्त्यर्थंकन्यायै भूषणादि स्वेच्छया विवाहात्प्रागेव वरोददाति ज्ञातयस्तु वित्तंन गृण्हन्ति तदा ज्ञातीनांविक्रयदोषोनास्ति । यावता कुमारीणांपूजार्थंतद्दानंतथाआनृशंस्यंकरुणारूपंतद्वित्तदानंवरेण स्वेच्छया कृतमतोज्ञातीनांनदोषकरमित्यर्थः । यद्वा यत्राददतेतत्कुमारीणां पूजनमानृशंस्यं करुणाप्रवृत्तिजन्यपुण्यहेतुश्चेति व्याख्यातं । आसुरस्तु विवाहः कन्यायाअलंकारस्य विवाहात्पूर्वदाने भवत्येव तल्लक्षणयोगादितिग्राह्यम् ॥ ५४ ॥

( ३ ) **कुल्लूकः** । आर्षे गोमिथुनंशुल्कमित्युक्तम् इदानींकन्यार्थमपि धनस्य दानंन शुल्कमित्याह यासामिति । यासांकन्यानांप्रीत्यावरेणदीयमानंधनं पित्रादयोन गृण्हन्ति किंतु कन्यायै समर्पयन्ति सोऽपि न विक्रयः । यस्मात्कुमारीणांपूजनंतदानृशंस्यमहिंसकत्वंकेवलंतदनुकम्पारूपम् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । तत्रैव व्यतिरेकमाह यासामिति । यच्च कन्यायै चैव शक्तितइत्युक्तं तदपि न शुल्कमित्याह अर्हणमिति । आनृशंस्यं वक्ष्यमाणस्त्री क्रूरत्वनिवृत्त्यर्थम् ॥ ५४ ॥

( ५ ) **नन्दनः** । कन्यायाभूषणाच्छादनार्थंवराद्धनादानंन दोषावहमित्याह यासामिति । यासांकन्यानाम् । आददते उपजीवन्ति । केवलंनिश्चितम् ॥ ५४॥

( ६ ) **रामचन्द्रः** । यासांनारीणां ज्ञातयःशुल्कंनाददते विक्रयसंज्ञो न भवति । आनृशंस्यमपापत्वंकरुणारूपम् ॥ ५४ ॥

**पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ॥ पूज्याभूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ५५ ॥**

( १ ) **मेधातिथिः** । न केवलंवराय दातव्यंकन्याबन्धुभिरपि तु तैरपिदातव्यम् । पितृभिः साहचर्यात्पितृशब्दः पितामहपितृव्यादिषु वर्तते । ततोबहुवचनंव्यक्त्यपेक्षंवा बहुवचनम् । एवंपतिभिः श्वशुरादिभिर्व्यक्त्यपेक्षंवा । देवराः पत्युर्भ्रातरः । पूज्याःपुत्रजन्माद्युत्सवेषु निमन्त्रणपूर्वकमानाश्रयबहुमानमादरेण भोजनादिना पूज्याः । भूषयितव्यावस्त्राद्यलंकारेणाङ्गलेपनादिभिर्मण्डयितव्याः । अत्रफलं बहुकल्याणमीप्सुभिःकल्याणंकमनीयंपुत्रधनादिसंपदरोगताऽपरिभवइत्यादिबहुशब्दात्सर्वमीप्सुभिराप्तुमिच्छुभिः प्राप्तुकामैः । फलार्थोविधिरयम् ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । अर्हणस्यकर्तव्यतांप्रपञ्चयति पितृभिरिति । कन्याव्यक्तिभेदापेक्षयाबहुवचनम् । पूज्याः सन्मानादिना ॥ ५५ ॥

( ३ ) **कुल्लूकः**। नकेवलंविवाहकाले वरेण दत्तं धनं समर्पणीयं किंतु तदुत्तरकालमपि पित्रादिभिरप्येताभोजनादिना पूजयितव्याः वस्त्रालंकारादिना भूषयितव्याश्च बहुधनादिसंपदंप्राप्तुकामैः ॥ ५५ ॥

( ४ ) **राघवानन्दः**। प्रसंगात्प्रकारान्तरेण तासामर्हणमाह पितृभिरिति । पूज्याःसत्कर्तव्यावाचा । भूषयितव्या वस्त्रालङ्कारादिभिः । भर्त्रा भार्यापि संतोषिता कल्याणदा भवति । बहुकल्याणमीप्सुभिरपर्याप्तमङ्गलाकाङ्क्षिभिः ॥ ५५ ॥

( ५ ) **नन्दनः**। उक्तंचैतत्पञ्चभिः श्लोकैः समर्थयति पितृभिरिति ॥ ५५ ॥

( ६ ) **रामचन्द्रः**। पितृभिरुभयत्र पूज्याः भोजनादिना ॥ ५५ ॥

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ॥ यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥५६॥**

( १ ) **मेधातिथिः**। देवतारमन्ते तुष्यन्ति प्रसीदन्ति । प्रसन्नाश्च स्वामिनएवाभिप्रेतेन फलेन योजयन्ति । यत्र तु न पूज्यन्ते तत्र सर्वाः क्रियाः यागहोमदानाद्यादेवताराधनबुद्ध्या चोपहारादयोयाः क्रियन्तेऽफलास्ताइत्यर्थवादः ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः**। अफलाः मन्दफलाः ॥ ५६ ॥

( ३ ) **कुल्लूकः** । यत्र कुले पित्रादिभिः स्त्रियः पूज्यन्ते तत्र देवताः प्रसीदन्ति । यत्र पुनरेतानपूज्यन्ते तत्र देवताप्रसादाभावाद्यागादिक्रियाःसर्वा निष्फलाभवन्तीति निन्दार्थवादः ॥ ५६ ॥

( ४ ) **राघवानन्दः** । तासांपूजनमेवाह यत्रेतिपञ्चभिः । देवतालक्ष्म्यादयः कलहशून्यत्वात् अफलाः क्रियाः । यत्कर्तव्यं तदनयासहेति वचनात् तासांसाहित्यबोधनेन नित्यमपरितोषादश्रद्धाकृतत्वेन फलराहित्यमिति ॥ ५६ ॥

**शोचन्ति जामयोयत्र विनश्यत्याशु तत्कुलम् ॥ न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा ॥५७॥**

( २ ) **सर्वज्ञनारायणः**। जामयः कुलस्त्रियः । तत्कुलंकुटुम्बसमुदायः ॥ ५७ ॥

( ३ ) **कुल्लूकः**। जामिःस्वसृकुलस्त्रियोरित्याभिंत्याभिधानिकाः। यस्मिन्कुले भगिनी गृहपतिसंवर्धनीयसन्निहितसपिण्डस्त्रियश्च पत्नीदुहितृस्नुषाद्याः परितापादिनादुःखिन्योभवंति तत्कुलंशीघ्रंनिर्धनीभवति दैवराजादिना च पीड्यते। यत्रैतान शोचन्ति तद्धनादिना नित्यंवृद्धिमेति । मेधातिथिगोविन्दराजौ तु न वोढादुहितृस्नुषाद्याजामयइत्याहतुः ॥ ५७ ॥

( ४ ) **राघवानन्दः**। जामयः भ्रातृपत्नीस्वसृपत्नीदुहितृस्नुषाद्याः सभर्तृकाःपरिभवादिना दुःखिताःशोचन्ति अश्रूणि मुञ्चन्ति । व्यतिरेके गुणमाह नेति तत्कुलम् ॥ ५७ ॥

( ५ ) **नन्दनः**। जामयःस्वसारः ॥ ५७ ॥

( ६ ) **रामचन्द्रः**। यत्र यस्मिन्कुलएता जामयोन शोचन्ति तत्कुलं हिनिश्चयेन सर्वदा वर्द्धते ॥ ५७ ॥

**जामयोयानि गेहानि शपन्त्यप्रतिपूजिताः ॥ तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ ५८॥**

( २ ) **सर्वज्ञनारायणः**। गेहानि स्थानानि ॥ ५८ ॥

( ३ ) **कुल्लूकः**। यानि गेहानि भगिनीपत्नीदुहितृस्नुषाद्याअपूजिताःसत्योऽभिशपन्तीदमनिष्टमेषामस्त्विति तान्यभिचारहतानि धनपश्वादिसहितानि नश्यन्ति ॥ ५८ ॥

( ४ ) **राघवानन्दः**। किंच जामयइतिकृत्याअभिचारास्ताभिर्हतानीव ॥ ५८ ॥

( ५ ) **नन्दनः**। कृत्याऽभिचारक्रिया ॥ ५८ ॥

**तस्मादेताः सदा पूज्याभूषणाच्छादनाशनैः ॥ भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषु च ॥ ५९ ॥**

( २ ) **सर्वज्ञनारायणः** । उत्सवेषु विवाहादिषु । सत्कारेण वाचिकप्रशंसया । सत्कारेष्विति पाठे इतरेषां संमाने प्रकृतइत्यर्थः ॥ ५९ ॥

( ३ ) **कुल्लूकः** । यस्मादेवंतस्मात्कारणादेताभूषणाच्छादनाशनैर्नित्यंसत्कारेषु कौमुद्यादिषूत्सवेषूपनयनादिषु समृद्धिकामैर्नृभिः सदा पूजनीयाः ॥ ५९ ॥

( ४ ) **राघवानन्दः** । तस्मादेताजामयोभूतिकामैरैश्वर्यकाङ्क्षिभिः । सत्कारेषु बान्धवादीनांपूजासूत्सवेषु विवाहादिषु ॥ ५९ ॥

( ५ ) **नन्दनः** । उक्तमर्थंनिगमयतितस्मादिति । यतएवमतःकन्यायाभूषणाद्यर्थंवराद्धनादानमविरुद्धम् ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । सत्कारेषुत्सवसुकुलस्त्रीणां उत्सवेषु कौमुद्यादिषु विवाहादिषु ॥ ५९ ॥

**सन्तुष्टोभार्यया भर्ता भर्त्रा भार्या तथैव च ॥ यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ६० ॥**

( २ ) **सर्वज्ञनारायणः** । कुले गृहे ॥ ६० ॥

( ३ ) **कुल्लूकः** । भार्यया भर्त्राइति हेतौ तृतीया यत्र कुले भार्यया भर्ता प्रीतोभवति स्त्र्यन्तराभिलाषादिकंन करोति भार्याच स्वामिना प्रीता भवति तस्मिन्कुले चिरंश्रेयोभवति । कुलग्रहणान्न केवलंभार्यापतीएवंपुत्रपौत्रादिसंततिः श्रेयोभागिनी भवति ॥ ६० ॥

( ४ ) **राघवानन्दः** । संप्रति दम्पत्योःस्नेहमलङ्करोति । संतुष्टइति त्रिभिः । भर्त्रा भार्या संतोषिता यस्मिन् तत्र कुले एतत्तयोःसंतोषरूपम् ॥ ६० ॥

( ५ ) **नन्दनः**। भूषणाच्छादनादिभिः स्त्रीणांपूज्यत्वे हेत्वन्तरंश्लोकत्रयेणाह संतुष्टइति ॥ ६० ॥

( ६ ) **रामचन्द्रः** । संतुष्टोभार्ययाभर्ता स्त्र्यन्तराभिलाषी न । हेतौ तृतीया । यस्मिन्कुलएतदानुकूल्यं तत्र तस्मिन्कुले कल्याणंवर्धते ॥ ६० ॥

**यदिहि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ॥ अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥ ६१ ॥**

**[ यदाभर्ताच भार्याच परस्परवशानुगौ ॥ तदाधर्मार्थकामानां त्रयाणामपि संगतम्× ॥ ]**

( २ ) **सर्वज्ञनारायणः** । नरोचेत पुरुषस्य नाभिलाषं जनयति । प्रजननं संततिः ॥ ६१ ॥

( ३ ) **कुल्लूकः** । दीप्त्यर्थोत्ररुचिः । यदिस्त्रीवस्त्राभरणादिना शोभाजनकेन दीप्तिमती न स्यात्तदास्वामिनंपुनर्न हर्षयेदेव हिशब्दोऽवधारणे अप्रहर्षात्पुनः स्वामिनः प्रजननंगर्भधारणंन संपद्यते ॥ ६१ ॥

( ४ ) **राघवानन्दः** । स्त्री न रोचेत भर्त्रेइति शेषः । प्रजनः पुत्रः । अरुच्या तस्यामगमनात् ॥ ६१ ॥

( ५ ) **नन्दनः** । न रोचेत पुंसे ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । हिनिश्चये स्त्री यदि न रोचेत स्त्री पुमांसंन प्रमोदयेत् पुंसोऽप्रमोदात्प्रजनं जननंनप्रवर्तते ॥ ६१ ॥

---

× अयं ( ट ) चिन्हित पुस्तके ।

**स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् ॥ तस्यांत्वरोचमानायां सर्वमेव न रोचते ॥६२॥**

( २ ) **सर्वज्ञनारायणः** । रोचमानायांभूषणादिना दीप्यमानायाम् । रोचते शोभते ॥ ६२ ॥

( ३ ) **कुल्लूकः** । स्त्रियांमण्डनादिना कान्तिमत्यांभर्तृस्नेहविषयतया परपुरुषसंपर्कविरहात्तत्कुलंदीप्तंभवति । तस्यांपुनररोचमानायांभर्तृविद्विष्टतया नरान्तरसंपर्कात्सकलमेव कुलंमलिनंभवति ॥ ६२ ॥

( ४ ) **राघवानन्दः** । अत्रार्थवादः स्त्रियामिति । सर्वप्रजनप्रमोदादि ॥ ६२ ॥

( ५ ) **नन्दनः** । स्त्रियांपुंसे रोचमानायांसर्वंतत्कुलंजगते रोचते । यतएवंतस्मादपि कन्या भूषयितव्या । भूषणार्थंज्ञातिभिर्वराद्धनादानंनदोषावहमितिस्थितम् ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । स्त्रियांरोचमानायांसक्तायां भूषणादिना दीप्यमानायांकुलंरोचते उज्वलं भवति ॥ ६२ ॥

**कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ॥ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ६३ ॥**

( २ ) **सर्वज्ञनारायणः** । कुत्सितैर्विवाहैः स्ववर्णनिषिद्धैः क्रियालोपैःकर्तव्यतानाचरणैः । ब्राह्मणानामतिक्रमेणाधिक्षेपादिना एतैर्विनश्यन्ति कुलतांत्यजन्ति ॥ ६३ ॥

( ३ ) **कुल्लूकः** । आसुरादिविवाहैर्यथावर्णनिषिद्धैर्जातकर्मादिक्रियालोपैर्वेदापाठेन ब्राह्मणापूजनेन प्रख्यातकुलान्यपकर्षंगच्छन्ति ॥ ६३ ॥

( ४ ) **राघवानन्दः** । शुल्कदानेन उद्वाहनिन्दनं प्रकृतं तत्रैव प्रासंगिकमाह कुविवाहैरितित्रिभिः । आसुरराक्षसादिविवाहैः । क्रियालोपैश्च क्रिया जातकर्मादि । ब्राह्मणानामतिक्रमेण तिरस्कारादिना । अकुलतां अप्रशस्त कुलताम् ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । त्रिभिः कुविवाहैरासुरादिभिः ॥ ६३ ॥

**शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ॥ गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥ ६४ ॥**

( २ ) **सर्वज्ञनारायणः** । शिल्पादिभिस्तु कुलान्यकुलतामल्पकुलतांयान्ति । यानिचमन्त्रतोवेदतोहीनान्यल्पवेदाध्येतृणि । शिल्पेन शिल्पजीवनेन व्यवहारेण ऋणदानादिजीविकया । शूद्रापत्यैः केवलैः कृत्स्नैःसवर्णविवाहेसत्यपि शूद्रापत्यमात्रोत्पत्त्या । गोभिर्गोरूपैरश्वैरश्वरूपैर्यानैः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । चित्रकर्मादिशिल्पेन कलया धनप्रयोगात्मकव्यवहारेण केवलशूद्रापत्येन गवाश्वरथक्रयविक्रयादिना कृषिराजसेवाभ्यांकुलानि विनश्यन्तीत्युत्तरेणसंबन्धः ॥ ६४ ॥

( ४ ) **राघवानन्दः** । शिल्पेन चित्रकर्मादिना । व्यवहारेण क्रयविक्रयऋणादिदानेन । शूद्रापत्यैरितिपूर्वनिषेधानुवादः । स्वपुत्राभावाद्दासदासीपुत्रैर्वा । केवलशब्दप्रयोगात् गोभिरित्यादिभिर्विक्रीतैः अनुपयुक्तैर्वा । कृष्या केवलया । राजोपसेवया सततमिति शेषः ॥ ६४ ॥

( ५ ) **नन्दनः** । प्रशस्तानिन्दिताश्चविवाहाउक्ताः । तेषु निन्द्यान केवलंमुद्वोढुरेव दोषावहाः किंतु तत्कुलविनाशहेतवश्चेत्याह कुविवाहैरिति । क्रियालोपादयोदृष्टान्तार्थाः वेदानध्ययनमेषु दुष्टकरमितिप्रसङ्गाच्छ्लोकद्वयेनाह शिल्पेनेति । शिल्पेन छत्रादिनिर्माणेन । व्यवहारेण वाणिज्येन । केवलैस्सैवर्णकस्त्रीपुत्ररहितैः । यानैर्यानभूतैर्गवामुष्ट्राणांचयानभूतानामारोहणेनेत्यर्थः ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । शिल्पेन व्यवहारेण धनप्रयोगेण शूद्रापत्यैश्च शूद्रायामपत्योत्पादनैः गोभिर्गवांविक्रयणादिभिः ॥ ६४ ॥

**अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम्॥कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः६५**

( ३ ) **कुल्लूकः** । अयाज्यव्रात्यादियाजनैः कर्मणांश्रौतस्मार्तादीनांनास्तिक्येन शास्त्रीयफलवत्कर्मसु फलाभावबुद्धिर्नास्तिक्यम् वेदाध्ययनशून्यानि कुलानि क्षिप्रमपकर्षंगच्छन्ति । अत्र च विवाहप्रकरणे विवाहनिन्दाप्रसङ्गेन क्रियालोपादयोनिन्दिताः । निन्दया चैतन्न कर्तव्यमिति सर्वत्रनिषेधः कल्प्यते ॥ ६५ ॥

( ४ ) **राघवानन्दः** । नास्तिक्येनाश्रद्धया । कर्मणां श्रौतस्मार्तानां त्यागेन । मन्त्रत आवश्यककर्मोपयुक्तगायत्र्यादि मन्त्रैर्हीनानि ॥ ६५ ॥

( ५ ) **नन्दनः** । कर्मणांनास्तिक्येन पुण्यपापफलाभावनिश्चयेन । एतैः शिल्पादिभिः । कुलानि मन्त्रातोहीनानि चेद् कुलतांयान्ति नतुमन्त्रयुक्तानीति ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । यानि कुलानि मन्त्रतो वेदतः । हीनानि ॥ ६५ ॥

**मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ॥ कुलसंख्यांच गच्छन्ति कर्षन्ति च महद्यशः॥६६॥**

( २ ) **सर्वज्ञनारायणः** । अत्रमन्त्रपाठसमृद्धौ दोषान्तराणामपि मन्दताभवतीत्याह मन्त्रतस्त्विति । कुलसंख्यां कुलगणनांयान्ति कर्षन्ति आकर्षन्ति ॥ ६६ ॥

( ३ ) **कुल्लूकः** । इदानींक्रियालोपादिगतप्रासङ्गिककुलनिन्दानुप्रसक्तया कुलोत्कर्षमाह मन्त्रेति । यद्यपि धनेन कुलमिति लोकेप्रसिद्धं तथाप्यल्पधनान्यपि कुलानि वेदाध्ययनतदर्थज्ञानानुष्ठानप्रसक्तान्युत्कृष्टकुलगणनायांगण्यन्ते महतींनुख्यातिमर्जयन्ति ॥ ६६ ॥

( ४ ) **राघवानन्दः** । उक्तवैपरीत्ये गुणमाह मन्त्रतस्त्विति । समृद्धानिमन्त्रतदर्थज्ञानादियुक्तानि । कुलसङ्ख्यांमहत्कुलत्वेन सङ्ख्यायन्ते । अनियत्तां कर्षन्तिअर्जयन्ति ॥ ६६ ॥

( ५ ) **नन्दनः** । यतएवंततोमन्त्रसमृद्धावादरः कर्तव्यइत्यभिप्रायेणाह मन्त्रतस्त्विति ॥ ६६ ॥

**वैवाहिकेऽग्नौ कुर्वीत गृह्यंकर्म यथाविधि ॥ पञ्चयज्ञविधानं च पंक्तिं चान्वाहिकीं गृही ॥६७॥**

( १ ) **मेधातिथिः** । कृतोविवाहोयस्मिन्नग्नौ तत्र कुर्वीत गृह्यंकर्म । अग्निसाध्यमष्टकापार्वणश्राद्धहोमादि गृह्यस्मृतिकारैरुक्तम् । पञ्चयज्ञावक्ष्यमाणास्तेषांविधानमनुष्ठानम् । तस्मिन्नेवाग्नौ यद्यप्यविशेषेण पञ्चयज्ञविधानमित्युक्तंतथापि वैश्वदेवहोमोऽग्निसाध्यः । उदकतर्पणादौ तु न किंचिदग्निना कार्यम् । कथंतर्हि निर्देशोऽग्नौपञ्चयज्ञविधानंकार्यमिति । केचिदाहुरेकापिसप्तमी विषयभेदाद्भिद्यते । तस्मात्पञ्चयज्ञैकदेशेपञ्चयज्ञशब्दः प्रयुक्तः । अथवा पञ्चयज्ञविधानमित्यत्राग्नाविति न संबध्यते । वैश्वदेवहोमस्य पूर्वंगेवाग्न्यधिकरणस्य सिद्धत्वात् । एवंसंबन्धः क्रियते गृही तु पञ्चयज्ञविधानंकुर्यात् अग्नौ तु वैवाहिके गृहधर्मपंक्तिचान्वाहिकीमग्नावित्यपेक्ष्यते । गृहशब्दोदारवचनः गृही तु सत्कृतदारपरिग्रहेभार्याद्वितीयइदमिदंकुर्यादिति । विवाहेचाग्निः कैश्चिद्गृह्यकारैररणिनिर्मन्थनादाधातव्य इत्युक्तम् अपरैर्यतःकुतश्चिद्दीप्यमानमानीयहोतव्यमिति । अनेन तस्मिन्गृह्यमिति वचनेन धारणमग्नेरर्थादुक्तंभवति । अत्र केचिदाहुः शूद्रस्यापि वैवाहिकाग्निधारणमस्ति तस्यापि पाकयज्ञाधिकारात् । न चात्र जातिविशेषउपात्तः केवलंगृहीति श्रुतम् शूद्रोऽपिगृही

तस्यापिदारपरिग्रहस्योक्तत्वात्। एतदेवान्यत्रपठितं कर्म स्मार्तविवाहाग्नौकुर्वीत प्रत्यहंगृहीति । अत्रोच्यते। गृह्यंकर्म वैवाहिकेग्नाविति श्रुतम्। नच गृह्यंनाम किंचित्कर्मास्ति। तत्र गृह्यस्मृतिकारोक्तंगृह्यमितिलक्षणया मन्तव्यम्। गृह्यकारैश्च त्रैवर्णिकानामेवकर्माम्नातं नशूद्रस्य उक्तानि वैतानिकानि गृह्याणि वक्ष्यामइति। उक्तानुकीर्तनस्यएतदेवप्रयोजनं येषामेव वैतानिकेष्वधिकारस्तेषामेव गृह्येष्विति ।न पुनर्यथान्यैर्व्याख्यातं तद्धर्मप्राप्त्यर्थं । तादर्थ्ये हि विवक्षिते तस्याग्निहोत्रेण प्रादुष्करणहोमकालौव्याख्यातावविति नावक्ष्यत्। न च गृहेभवंगृह्यमितियुक्तम् । शालावचनोगृहशब्दोदारवचनोवा। न तावत्कस्यचित्कर्मणः शालाऽधिकरणत्वेन विशेषतः समाम्नाता यद्गृहमित्यनूद्य गृहिणोविधीयते। यदपि गृहसंस्कारकंवास्तुपरीक्षादि तदपित्रैवर्णिकानामेव नशूद्रस्य अथ दारवचनस्तत्रापि गृहीत्यनेनैवगतत्वान्नकिंचित्। यद्यपि स्मृत्यन्तरं कर्म स्मार्तविवाहाग्नौ कुर्वीत प्रत्यहंगृही दायकालाहृते वापि श्रौतंवैतानिकाग्निष्विति। अत्रापिकिंचित्स्मार्तमितिविशेषानुपादानादन्यसापेक्षतैव नहि सर्वमग्नौस्मार्तंकर्मसंभवति । न च होमविषयत्वे प्रमाणमस्ति नह्यवश्यमग्न्यधिकरणएव होमः। तस्माद्गृह्यकारोक्तंगृह्यमितिवक्तव्यम्। एते हि स्मृती गृह्यकारविहितंकर्मानुवदतः। तथा च कुतः शूद्रस्याग्निपरिग्रहः । किंच श्रौतंवैतानिकाग्निष्विति अपरंतत्राम्नायतेतत्रअवश्यमयंत्रैवर्णिकविषयएषितव्यः। सएवपूर्वत्र चातुर्वर्ण्यपरउत्तरत्र त्रैवर्णिकपरइत्येकस्य शब्दस्य तात्पर्यभेदोऽभ्युपगतः स्यात् । नचाऽभेदे संभवति भेदोन्याय्यः। अन्वहंभवाऽऽन्वहिकी। प्रतिदिवसंयः पाकोभुक्त्यर्थःसतस्मिन्नेवाग्नौ कर्तव्यः ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः**। वैवाहिके यत्राग्नौ लाजहोमः कृतस्तस्मिन् गार्ह्यगृह्योक्तंविवाहोत्तरकालीनंस्वकीयंकर्म नित्यनैमित्तिकशान्तिकपौष्टिकरूपम्। पञ्चयज्ञविधानं गार्ह्यत्वेपि पृथगुक्तं। प्रवसताऋत्विगादिभिर्गृह्याग्नावेव तत्कर्तव्यमित्येतदर्थं। पञ्चयज्ञपदंवैश्वदेवमात्रपरम्। पांक्ति स्वान्नपाकं। गृही गृहे निवसन् ॥ ६७ ॥

( ३ ) **कुल्लूकः**। विवाहप्रकरणमतिक्रान्तम्। इदानींवैवाहिकाग्नौसंपाद्यमहायज्ञविधानंचेतिवक्तव्यतया प्रतिज्ञातंमहायज्ञाद्यनुष्ठानमाह वैवाहिकइति। विवाहेभवोवैवाहिकः। आध्यात्मिकादित्वाट्ठञ्। तस्मिन्नग्नौ गृह्योक्तंकर्म सायंप्रातर्होमाष्टकादि यथाशास्त्रमग्निसंपाद्यंच पञ्चमहायज्ञान्तर्गतवैश्वदेवाद्यनुष्ठानंप्रतिदिनसंपाद्यंच पाकंगृहस्थःकुर्यात् ॥ ६७ ॥

( ४ ) **राघवानन्दः**। विवाहस्य प्रासंगिकमुक्त्वा यदुद्दिश्य कृतंतदाह वैवाहिकइति । विवाहकालेभवोवैवाहिकः आवसथ्याख्यः तस्मिन् । गृह्यं सायंप्रातर्होमाष्टकापार्वणश्राद्धादिहोमंच । विवाहोत्तरकालीनोभिन्नः श्रौतः जातपुत्रः कृष्णकेशोग्नीनादधीतेति श्रुतेः। पञ्चयज्ञानांतर्पणादीनां यदेकदेशोवैश्वदेवाख्यस्तस्यैवविधानमनुष्ठानाख्यं तदग्नौ कुर्वीत। पांक्ति पाकं। अन्वाहिकीं प्रतिदिननिष्पाद्याम् ॥ ६७ ॥

( ५ ) **नन्दनः**। अथगृहस्थधर्मः प्रस्तूयते वैवाहिकइति । विवाहोयस्मिन्कृतः सवैवाहिकोऽग्निरौपासनाग्निःगार्ह्यकर्माक्षतहोमपाकयज्ञादिकम्। भूतमनुष्यब्रह्मयज्ञानामग्नौकरणमग्निसमीपे करणम् ॥ ६७ ॥

( ६ ) **रामचन्द्रः**। अथ वैश्वदेवविधिः। वैवाहिकेऽग्नौ गाह्यंगार्ह्यसंज्ञंकर्म यथा विधि कुर्वीत कुर्यात्। पञ्चयज्ञविधानंच वैश्वदेवसंज्ञंकुर्यात् पंक्तिस्वान्नपाकंगृहधर्मपंक्ति। अन्वाहिकींप्रतिदिवसंगृही कुर्यात् ॥ ६७ ॥

**पञ्चसूनागृहस्थस्य चुल्ली पेषण्युपस्करः॥ कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ ६८॥**

( १ ) **मेधातिथिः**। पञ्चयज्ञविधेरधिकारनिर्देशोऽयम्। सूनाइवसूनाः। मांसविक्रयार्थपशुवधस्थानमापणादयोवा मांसस्योत्पादकतयानुष्ठीयमानाः पापहेतवएवंचुल्यादयोऽपि पापहेतुत्वादध्यारोपेण सूनासमाः। नहि तेषांशास्त्रप्रतिषेधः

---

( ६८ ) बध्यते=वध्यते ( मे० )

साक्षात् नापि सामान्यः कश्चित्प्रतिषेधोऽस्ति । नहि तापघाताय कस्यचिन्न स्पृहास्यात् । न काचित्तत्साध्यक्रिया दृश्यते या वचनान्तरेण निषिद्धा । नचास्मादेव वचनात्प्रतिषेधानुमानंउत्तरेणैकवाक्यतावगमात् । प्रतिषेधपरत्वे वाक्यभेदः स्यात् । किंचैतत्पदार्थस्याध्यामर्थक्रियांपदार्थान्तरेण साधयेत्तस्याःप्राप्तिम् । पञ्चयज्ञानां न च लक्षणान्युक्तानि । येन तत्समानकार्यस्यान्यस्यापि प्रतिषेधउच्यते योवा परकीयमन्नमद्यान्नद्यादावुदकार्थंकुर्यान्नतस्यैते यज्ञाःस्युः । यदिच चुल्ल्यादीनांनिषेधोभिप्रेतः स्यात्तदाप्रतिषेधार्थीयमेवपदमधीयीत किमनुमानेन । स्वशब्दाद्बलीयसी प्रतिपत्तिः । प्रायश्चित्तार्थत्वे त्वेकादशेऽभिधानंन युक्तंनिषेधैरेवाननुष्ठानमेवस्यात् । अपरिहार्यत्वाच्च चुल्ल्यादीनामशक्योनिषेधः । असति चनिषेधे कुतः प्रायश्चित्तम् । तस्मान्न दोषविघातार्थंपञ्चमहायज्ञाः । किंतर्हिनित्यसंबन्धेषु चुल्ल्यादिधारणेऽपि तद्दोषः तन्निष्कृत्यर्थतया नित्यार्थतयानित्यत्वंयज्ञानामाह वध्यते आदिवर्णंवेत्येतद्दन्तोष्ठ्यंपठ्यते । हन्यते दुष्कृतेन शरीरधनादिना नाश्यते । संबध्यते वा पापेन । परतन्त्रीकरणंवा बध्नातेरर्थः । वाहयन् स्वकार्ये व्यापरणंवाहनम् यस्य चुल्ल्यादेर्यदौचित्यप्राप्तंस्वसाध्यंकार्यंतत्ताभिः कुर्वन्वाहयन्नित्युच्यते । चुल्ली पाकस्थानंभ्राष्ट्रादि । पेषणी दृषदुपलोवा । उपस्करो-गृहोपयोगिभाण्डंकुण्डकटाहादि । कण्डनी ययाव्रीह्यादि कण्ड्यते । कुम्भोजलाधारः ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । सूनाः प्राणिघातस्थानानि । चुल्ली पाकेन । माषादिबीजानां, प्ररोहशक्तिप्रतिबद्धजीवनत्यागहेतुत्वात् । एवं पेषणी पेषणशिला पेषणेन । उपकिरत्यशुद्धानीति उपस्करोवस्करहेतुः । संमार्जनी भूयिष्ठपिपीलिकादिहिंसाहेतुः । कण्डन्युलूखलं वितुषीकरणात् । उदकुम्भोजलाशयस्थजन्तूनामुद्धरणेन घातनात् । बध्यतेपापेन निबध्यतेवाहयन्प्रवर्तयन् ॥ ६८ ॥

( ३ ) **कुल्लूकः** । पशुवधस्थानंसूना । सूना इव सूना हिंसास्थानगुणयोगाच्चुल्ल्यादयःपञ्च गृहस्थस्य हिंसाबीजानि हिंसास्थानानि चुल्ल्युद्वाहनी पेषणी दृषदुपलात्मिकोपस्करोगृहोपकरणकुण्डसंमार्जन्यादिः । कण्डन्युलूखलमुसले । उदकुम्भोजलाधारकलशः याः स्वकार्ये योजयन्पापेनसंबध्यते ॥ ६८ ॥

( ४ ) **राघवानन्दः** । यदुद्दिश्य पञ्चयज्ञास्तन्नामसङ्ख्यामाह पञ्चसूनेति द्वाभ्यां । सूना हिंसा तद्योगाच्चुल्ल्यादयः । तत्रोखा चुल्ली तथा पेषणी सपुत्राशिला । उपस्करः संमार्जन्यादिः । कण्डनी उलूखलमुसलादि । उदकुम्भोजलपूर्णकलशादिः । वाहयन्स्वकार्येणैतायोजयन् बध्यते संबध्यते । प्राणिवधेनेति शेषः । बध्यते जन्तुरिति वा ॥ ६८ ॥

( ५ ) **नन्दनः** । होमाभावात्पञ्चमहायज्ञानामवश्यकर्तव्यत्वे कारणंश्लोकद्वयेनाह पञ्चेति । सूयन्तेऽस्मिन्प्राणिनइति सूना हिंसास्थानमिति यावत् । वाहयन्प्रवर्तयन्बध्यतेपाशेन ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । गृहस्थस्य पञ्चसूनाः प्रत्यहं चुल्लीचुल्लिः पेषणी पिष्टपेषणी कण्डनी मुसलोलूखलस्थानं । उदकुम्भंकुम्भस्थानं । उपस्करः शूर्पादिः । याः सूनावाहयन्प्रवर्तयन् । बध्यते । एतानि वाहयन्विप्रोबध्यतेतुमुहुर्मुहुरितियमः ॥ ६८ ॥

**तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः॥ पञ्च क्लृप्तामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ ६९॥**

( १ ) **मेधातिथिः** । तासांचुल्ल्यादीनांसूनानांनिष्कृत्यर्थंतदुत्पन्नदोषनिर्यातनार्थं क्रमेणाधिलेपनंचुल्ल्यास्तक्षणंपेष-

( ६९ ) चुल्ल्यादिस्थानानाम्=चुल्ल्यादिसूनानाम् ( अ )

ण्याइत्येवमादिक्रमः। महर्षिभिः क्लृप्ताः कर्तव्यतया स्मृताः पञ्चमहायज्ञाः प्रत्यहंगृहमेधिनांगृहस्थानाम्। गृहमेधिशब्दोगृहस्थाश्रमे वर्तते। प्रत्यहमिति। अनुपादानात्कालविशेषस्य यावज्जीवमिति प्रतीयते। अतश्च नित्यत्वसिद्धिः। महायज्ञाइतिकर्मनामधेयमेतत्॥ ६९॥

( २ ) **सर्वज्ञनारायणः**। क्रमेण चुल्ल्यादिसूनानामध्यापनादीनि निष्कृत्यर्थानि॥ ६९॥

( ३ ) **कुल्लूकः**। तासांचुल्ल्यादिस्थानानांयथाक्रमंनिष्कृत्यर्थमुत्पन्नपापनाशार्थंगृहस्थानांपञ्चमहायज्ञाः प्रतिदिनंमन्वादिभिरनुष्ठेयतया स्मृताः। एवंच निष्कृत्यर्थमित्यभिधानाद्धिंसास्थानत्वेन च कीर्तनात्सूनादोषैर्न लिप्यतइति वक्ष्यमाणत्वात्पञ्चसूनानां पापहेतुकत्वंपञ्चयज्ञानांच तत्पापनाशकत्वमवगम्यते। प्रत्यहमित्यभिधानात्प्रतिदिनंतत्पापक्षयस्यापेक्षितत्वात्सन्ध्यावन्दनादिवन्नित्यत्वमपिनविरुध्यते॥ ६९॥

( ४ ) **राघवानन्दः**। क्रमेण यथासंख्यं संख्यानतिक्रमेण। निष्कृत्यर्थं तत्तदुत्पन्नपापनाशार्थं। गृहमेधिनां मेधा गृहोत्पन्ना हिंसा तया युक्तानां क्लृप्ताः कर्तव्यतयेति शेषः॥ ६९॥

( ५ ) **नन्दनः**। तासांसूनानांहिंसानामित्यर्थः॥ ६९॥

( ६ ) **रामचन्द्रः**। तासांपञ्चसूनानांसर्वासांक्रमेण महर्षिभिर्निष्कृत्यर्थं प्रायश्चित्तार्थंपञ्चयज्ञाःक्लृप्ताः कथिताः गृहमेधिनां प्रत्यहं अहरहः कुर्यादित्यर्थः॥ ६९॥

## अध्यापनंब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्॥ होमोदैवोबलिर्भौतोनृयज्ञोऽतिथिपूजनम्॥ ७०॥

( १ ) **मेधातिथिः**। एषामयंस्वरूपविधिः। अध्यापनशब्देनाध्ययनमपि गृह्यते येन जपोहुतइत्यत्र वक्ष्यति। नच जपोपिशिष्यानपेक्षते सामान्येन श्रुतंस्वाध्यायेनर्षिभ्यइत्यृणावेदनश्रुतौ। अतउभेअध्यापनाध्ययनेयथासंभवंब्रह्मयज्ञः। तर्पणमन्नाद्येनोदकेनवेति वक्ष्यति। होमोवक्ष्यमाणाभ्योदेवताभ्योग्नौ बलिः शिष्टउलूखलादौच सभौतः। भूतादिदेवतास्येतिभौतः नामधेयमेतत्कर्मविशेषस्य दिवाचारिभ्योभूतेभ्यइति हि तत्र बलिहरणंभूतशब्देनविहितम्। साहचर्यात्सर्वएषकर्मगणोभूतयज्ञशब्देनोच्यते। यथाचातुर्मास्येष्वेकंहविर्वैश्वदेवमामिक्षा कृत्स्नमेव च पर्ववैश्वदेवेन यजेतेति। बलिशब्दोनग्निहोमे वर्तते। देवेज्याबलिरितिस्मरन्ति। अतिथीनांपूजनमाराधनंनृयज्ञः। ननु च स्वाध्यायः कथंयज्ञोनहि तत्र देवताइज्यन्ते नापि श्रूयन्ते। केवलंवेदाक्षराण्यविवक्षितार्थान्युच्चार्यन्ते। उक्तंचाम्नायशब्दाभ्यासेकेचिदाहुरनर्थकानीति। संत्यम्। स्तुत्यां यज्ञशब्दोमहच्छब्दश्च। अतिथिपूजायामितिचोक्तोयज्ञशब्दः। यद्यप्यतिथेर्दैवतात्वंसंभवति। तथाप्युत्पत्तौ भोजयेत्पूजयेदितिचश्रुतं नातिथिभ्योयजेतेति। यथापुरुषराजायत्कर्म वाइति। एतेपञ्चयज्ञा न युगपत्प्रयोज्याः एकाधिकारासंबन्धात्पृथगधिकारश्रवणात्। एकाधिकारसंबन्धत्वे त्रिषु चतुर्षु वा कृतेषु न किंचित्कृतंस्याद्यावत्कृतम्। न च यथाग्नेयाग्नीषोमीयोपांशुयाजानांदर्शपूर्णमासयागानामेकद्यनुष्ठानेनाधिकारसिद्धिर्यथात्रैव वैश्वदेवहोमेस्विष्टकृदन्तानांदेवतानांकस्यांश्चिदन्तराये न होमाधिकारनिर्वृत्तिः। एकैकस्यचात्राधिकारः श्रुतः। स्वाध्यायेन नित्ययुक्तःस्यात्। दैवे च नित्ययुक्तः स्यादित्यधिकारपदानुषङ्गेण पृथक्प्रयोगः। आतिथ्येचाधिकारान्तरंश्रुतं धन्यंयशस्यमिति। तत्रचत्वारःस्वाधीनाः। आतिथ्यंतु संनिहितेऽतिथौ। न चातिथिर्निमन्त्रयितव्यः। आतिथ्यभावात्स्वयमुपस्थितोह्यतिथिर्भवतीति वक्ष्यामः। तस्मात्पञ्चानामन्यतमानुष्ठानेइतरेषामननुष्ठानाद्यदिनाम प्रत्यवेयान्नतु कृतमकृतंभवति। अतोऽनग्निकत्वाद्वैश्वदेवेऽनधिकृतस्य स्वाध्यायोदकतर्पणादौ भवत्येवाधिकारः। अग्निपरिग्रहस्य च स्मृत्यन्तरे कालान्तरस्यापि श्रुतत्वान्नावश्यंविवाहएव परिग्रहः। एवंहिस्मृतिः भार्यादिरग्निर्दायादिर्वेति। ननु चाकृतविवाहस्य दायकालमाधानंभविष्यति। भ-

वतिह्येतदेवम् यथाऽऽधानविधिः स्वार्थःस्यात् अग्न्यर्थत्वाधानम् अग्निश्च कर्मार्थः कर्माणिच भार्याद्वितीयस्य न केवलस्य श्रुतानि। यद्यपि कैश्चिद्गृह्यकारैः परमेष्ठिप्राणाग्निमाधाय श्राद्धंकुर्यादित्युक्तंभवति तदपि सभार्यस्यैव सएवास्य दायकालः। न चानग्निकस्य श्राद्धंनास्ति अनुपनीतस्यापि ह्येतद्विहितमन्यत्रस्वधानिनयनादिति। न च तस्याधानमस्ति विदुषोऽधिकारादिदानींचाविद्यत्वात्। श्राद्धंतु वचनान्निषादस्थपतिवद्यथाशक्तिकार्यमिति। पितृव्यादिनाग्निपरिग्रहे तु विदुषांसंभवान्नाविद्यस्याधिकारः। अथ श्राद्धप्रकरणएवाग्न्याधानंविहितंतदातदङ्गत्वेनाधायनिष्पन्ने श्राद्धेपरित्यागोभविष्यति। केचित्तु स्मृत्यन्तरमुदाहरन्ति लौकिकेऽप्यग्नौ वैश्वदेवहोमः कर्तव्यः शुष्कान्नैरपरे ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः**। अध्ययनस्य ब्रह्मचारिप्रकरणे विहितत्वादध्यापनमपि ब्रह्मयज्ञस्तत्रापि त्वध्ययनस्य संभवादिति दर्शयितुमुक्तम्। तर्पणंपितॄणांजलेनान्नेनवा। होमोदैवोयज्ञः ॥ ७०॥

( ३ ) **कुल्लूकः**। अध्यापनशब्देनाध्ययनमपि गृह्यते जपोऽहुतमितिवक्ष्यमाणत्वात्। अतोऽध्यापनमध्ययनंच ब्रह्मयज्ञः। अन्नाद्येनोदकेन वेतितर्पणंवक्ष्यति सपितृयज्ञः। अग्नौ होमोवक्ष्यमाणोदेवयज्ञः। भूतबलिर्भूतयज्ञः। अतिथिपूजनंमनुष्ययज्ञः। अध्यापनादिषु यज्ञशब्दोमहच्छब्दश्च स्तुत्यर्थंगौणः ॥ ७० ॥

( ४ ) **राघवानन्दः**। तान्सलक्षणान् महायज्ञानाह। अध्यापनं अध्ययनं च लक्षणया वेदाभ्यासस्यैव नित्यत्वात्। होमोगृह्याग्नौ बलिःभूतोद्देशेन उलूखलादौ होमइति मेधातिथिः ॥ ७० ॥

( ५ ) **नन्दनः**। के पुनस्ते महायज्ञाइत्यपेक्षायामाह अध्यापनमिति। अध्ययनमेवाध्यापनम्। तर्पणंश्राद्धादीनामप्युपलक्षणम् ॥ ७० ॥

( ६ ) **रामचन्द्रः**। पञ्चयज्ञानाह अध्यापनमिति। अध्यापनं ब्रह्मयज्ञसंज्ञं। तर्पणंजलान्नैः। पितृयज्ञसंज्ञः। होमः अन्वहंदैवः। लोकबलिः भौतयज्ञः। अतिथिपूजनंनृयज्ञसंज्ञः ॥ ७० ॥

**पञ्चैतान्योमहायज्ञान्न हापयति शक्तितः॥ सगृहेऽपि वसन्नित्यंसूनादोषैर्न लिप्यते ॥ ७१ ॥**

( १ ) **मेधातिथिः**। नित्यत्वमत्राभिधीयते। अन्यदनूद्यते। विगुणाअप्येते यथाशक्तिकर्तव्याः। एतदपि नित्यत्वात्प्राप्तमेव तस्माद्यथासंभवंशक्तितइति। आद्यादित्वात्तसिः। हापयतीति प्रकृत्यर्थएव णिजर्थस्याविवक्षितत्वात्। अथवा हननंहा संपदादित्वात्क्विप तामापयतीतिण्यदाप्नोतेः कर्तरि क्विप् तदन्तात्प्रातिपदिकाद्धात्वर्थे णिच। न हापयति नत्यजेदित्यर्थः ॥ स्वगृहे वसन्नवश्यभाविनीषु सूनासु न तत्पापेनसंबध्यतइतिप्रशंसा ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः**। नहापयति न त्यजति ॥ ७१ ॥

( ३ ) **कुल्लूकः**। शक्तितइत्येतद्विधानार्थोयमनुवादः। अनुकल्पेनापि यथासम्भवमेते कर्तव्याः। हापयतीति प्रकृत्यर्थएवच्छान्दसत्वाण्णिच्। जहातीत्यर्थः ॥ ७१ ॥

( ४ ) **राघवानन्दः**। उक्तानांस्तुतिनिन्दाभ्यांनित्यत्वख्यापनार्थमाह पञ्चैतानिति द्वाभ्यां। न हापयति नत्यजति ॥ ७१ ॥

( ५ ) **नन्दनः**। उक्तार्थोपसंहारार्थः श्लोकः पञ्चैतानिति। नहापयति न परित्यजति। नित्यंगृहेवसन्नप्यवर्जनीयाः ॥ ७१ ॥

( ६ ) **रामचन्द्रः**। एतान्पञ्चमहायज्ञान्योगृही न हापयति न त्यजति सःगृहेपि वसन्नित्यंपञ्चसूनादोषैर्न लिप्यते ॥ ७१ ॥

**देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ॥ न निर्वपति पञ्चानामुच्छ्वसन्न सजीवति ॥ ७२॥**

( १ ) **मेधातिथिः**। अननुष्ठाननिन्दया प्रकृतविधिस्तुतिः। केचिच्चतुर्थ्या पठन्ति देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मने तथा। न निर्वपति पञ्चभ्यइति। निर्वापोऽत्र दानंन तादर्थ्योपकल्पनमात्रम्। तत्संबन्धेन प्रधानत्वाच्चतुर्थीयुक्ता। एतेभ्योयः प्रत्यहंन ददात्युच्छ्वसन्नपि प्राणन्नपि श्वासप्रश्वासवानपि न जीवति मृतएव जीवितफलाभावात्। भृत्याश्चात्र वृद्धौतु मातापितराविति श्लोकनिर्दिष्टावेदितव्याः न दासाः कर्मनिमित्तत्वात्तेभ्योदानस्य। अथवा गर्भदासादयोवार्द्धके कर्मस्वशक्ता अपि नियमतोलक्ष्यन्ते। भरणंजीर्णगवादीनामवश्यमिति विभागे वक्ष्यामः उक्तंच गौतमेन भर्तव्यस्तेन क्षीणवृत्तिः। देवताभ्यश्च निर्वापोग्नौहोमः स्थण्डिले च बलिहरणंतु वैश्वदेवेभ्योदर्शपूर्णमासदेवताभ्यइतिच वाग्नयेत्वाजुष्टंनिर्वपामीतिसंबन्धादन्यःकोवाऽस्ति निर्वापः। अतोदेवताग्रहणेनगृहीतत्वाद्भृत्यानांपृथगुपादानम्। आत्मग्रहणंदृष्टान्तः यथात्मनोभोजनेन विना नास्ति जीवितंतदर्थमन्नोपयोगोऽवश्यं भावी · जीवितस्येष्टविषयत्वात्सर्वतएवात्मानंगोपायेदितिविधेश्च। एवंदेवतादिभ्योपीति ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः**। देवतानांदेवयज्ञेन न निर्वपति न ददाति । भृत्यानांभूतानां । आत्मनोब्रह्मयज्ञेननिर्वपति न ददाति। नात्मानं तत्फल बंधिनंकरोति तस्य स्वाभ्युदयसाधनत्वादिति एवंपञ्चयज्ञाउक्ताः ॥ ७२ ॥

( ३ ) **कुल्लूकः**। देवताशब्देन भूतानामपि ग्रहणं। तेषामपि बलिहरणे देवतारूपत्वात्। भृत्यावृद्धमातापित्रादयोऽवश्यंसंवर्धनीयाः सर्वतएवात्मानंगोपायेदिति श्रुत्यात्मपोषणमप्यवश्यंकर्तव्यम्। देवतादीनांपञ्चानांयोऽन्नं न ददाति सश्वसन्नपि जीवितकार्याकरणान्न जीवतीति निन्दयावश्यकर्तव्यता बोध्यते ॥ ७२ ॥

( ४ ) **राघवानन्दः**। भृत्यानां भूतानां बलिं। आत्मनश्चाध्ययनमिति शेषः। न निर्वपति नैतेभ्योददाति। भस्त्रादिवत् श्वसञ्जीवन्नपि न जीवति जीवनोचितकार्याभावात् ॥ ७२ ॥

( ५ ) **नन्दनः**। अर्थप्राप्ताः पञ्चसूनाअकुर्वन्नपि पञ्चमहायज्ञानामवश्यकर्तव्यत्वे कारणान्तरमाह देवतेति। देवतातिथिभूतानामितिपाठः। आत्माब्रह्मेति पर्यायस्तस्य निर्वापः पृथक्करणंप्रदानंयजनमिति यावत्। आत्मयज्ञोहि ब्रह्मयज्ञः तथाहिब्राह्मणं तस्यवा एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मनउपभृच्चक्षुर्ध्रुवामेधास्रुवः सत्यमवभृथःस्वर्गलोकउदयनीयइति ॥ ७२ ॥

( ६ ) **रामचन्द्रः**। देवताशब्देनात्र ग्रहणं भूतानां एतेषांपञ्चानांयो न निर्वपति सउच्छ्वसन्न जीवति मृतकइत्यर्थः ॥ ७२ ॥

**अहुतंच हुतंचैव तथा प्रहुतमेव च ॥ ब्राह्म्यंहुतंप्राशितंच पञ्चयज्ञान्प्रचक्षते ॥ ७३ ॥**

( १ ) **मेधातिथिः**। एतैः शब्दैः कस्यांचिद्देशशाखायामेतेषांविधानम्। अतः श्रुतिमूलतांपञ्चयज्ञविधानस्य दर्शयितुंतत्प्रसिद्ध्या पुनर्निर्दिशति। यश्चाहुतादिशब्दैरुद्दिश्य तत्प्रकरणेवा कश्चिद्धर्मोविहितइति नोक्तः सोऽपि ग्रहीतव्यइति संज्ञान्तरनिर्देशे द्वितीयंप्रयोजनम्। यथा ब्रह्मयज्ञश्राद्धोद्वाहपरिक्रियेत्यादि ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । अहुतंचेत्यादि पञ्चयज्ञानांश्रौतंसंज्ञान्तरम् ॥ ७३ ॥

( ३ ) **कुल्लूकः**। नामभेदेऽपि वाक्यभेदइति दर्शयितुंपञ्चमहायज्ञानांमुन्यन्तरकृतान्यहुतादीनि संज्ञान्तराण्यभिधेयानि तानि स्वयंव्याचष्टे ॥ ७३ ॥

(४) **राघवानन्दः**। एतानेव शास्त्रान्तरप्रणीतनामभेदेन कीर्तयति अहुतंचेति। संज्ञाभेदेपि न पदार्थभेदइत्याह पञ्चयज्ञानिति ॥ ७३ ॥

(५) **नन्दनः**। शास्त्रान्तरेषु विहितान्यहुतादीनि पञ्चमहायज्ञानामेव नामान्तराणि न कर्मान्तराणामित्यभिप्रायेणाह अहुतमिति ॥ ७३ ॥

(६) **रामचन्द्रः**। द्वाभ्यामाह अहुतमिति। अहुतं प्रहुतं ब्राह्म्यं हुतं प्राशितंच युक्तान्पञ्चयज्ञान्प्रचक्षते ॥ ७३ ॥

**जपोऽहुतोहुतोहोमःप्रहुतोभौतिकोबलिः ॥ ब्राह्म्यंहुतंद्विजाग्र्यार्चा प्राशितंपितृतर्पणम् ॥ ७४ ॥**

(१) **मेधातिथिः**। योऽयमहुतोनाम यज्ञउक्तःसजपोवेदितव्यः। स्वाध्यायेनार्चयेदृषीनितिश्रवणाद्वेदाध्ययनंजपार्थः। यद्वा मानसे व्यापारे स्मरणम्। उभयत्रापि जपतिःपठ्यते व्यक्तायांवाचि मानसेचेति। अग्नौ होमोहुतम्। भूतबलिः प्रहुतम्। यद्ययंहोमस्तथाप्यग्नौ बाहुल्येन होमानांप्रसिद्धेर्भूतयज्ञोनहोमइत्याशङ्कायांप्रहुतइत्युक्तम्। प्रकर्षेणासौहोमइतिस्तुत्या.। द्विजानांब्राह्मणानामर्चाब्राह्मंहुतम्। आतिथ्यकर्मद्विजाग्र्यार्चा ॥ ७४ ॥

(२) **सर्वज्ञनारायणः**। जपोऽहुतोहोमाभावात्। हुतो होमात् प्रहुतःप्रगतहुतःप्रेतिप्रगतार्थे। ब्रह्मणि ब्राह्मणे हुतं ब्राह्मं। प्रकर्षेण विप्रैरश्यतेत्रेति प्राशितम् ॥ ७४ ॥

(३) **कुल्लूकः**। अहुतशब्देन ब्रह्मयज्ञाख्योजपउच्यते हुतशब्देन देवयज्ञाख्योहोमः। प्रहुतशब्देन भूतयज्ञाख्योभूतबलिः। ब्राह्म्यहुतशब्देन मनुष्ययज्ञाख्योब्राह्मणश्रेष्ठस्यार्चा। प्राशितशब्देन पितृयज्ञाख्यंनित्यश्राद्धम् ॥ ७४ ॥

(४) **राघवानन्दः**। एतद्व्यनक्ति जपइति। अहुतइति च्छेदः। योयंपूर्वमहुतमित्युक्तः सजपः स्वाध्यायोवेदितव्य इत्यन्वयः। एवमुत्तरत्र। ब्राह्मं ब्रह्म ब्राह्मणज्ञातिस्तस्येदं तस्यैवातिथित्वात् ब्राह्मं हुतं तच्च द्विजाग्र्यार्चेत्यन्वयः। पितृतर्पणं नित्यश्राद्धस्याप्युपलक्षणम् ॥ ७४ ॥

(५) **नन्दनः**। तेषांतथात्वंदर्शयति जपोऽहुतइति। जपोब्रह्मयज्ञःसोऽहुतसंज्ञः। होमोहुतसंज्ञः। भौतिकोबलिर्भूतयज्ञः। द्विजाग्र्यार्चा मनुष्ययज्ञः सब्रह्महुतसंज्ञः। पितृतर्पणंपितृयज्ञः सप्राशितसंज्ञः ॥ ७४ ॥

(६) **रामचन्द्रः**। गायत्रीजपः अहुतसंज्ञः। हुतंदैवः होमः। भूतबलिःप्रहुतसंज्ञः। विप्रार्चा ब्रह्महुतं। पितृतर्पणं नित्यश्राद्धं प्राशितसंज्ञम् ॥ ७४ ॥

**स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्मणि ॥ दैवकर्मणि युक्तोहि बिभर्तीदंचराचरम् ॥ ७५ ॥**

(१) **मेधातिथिः**। यदुक्तंपञ्चसु महायज्ञेष्वेकैकस्मिन्पृथगधिकारोनसमुदायएकोधिकारइति तदनेन प्रकटीकरोति। यदा दारिद्र्यादिदोषादन्यतोवा कारणात्कथंचिदसंपत्तौ नातिथ्यादिपूजाघटेत ततः स्वाध्याये नियुक्तेन भवितव्यम्। दैवकर्मणि वैश्वदेवदेवताभ्योग्नौहोमोदैवंकर्म। भूतयज्ञपितृयज्ञयोः सत्यपि दैवत्वे प्रकरणादग्नावेव होमोदैवमुच्यते। अत्रअर्थवादमाह। दैवेकर्मणि युक्तःतत्परोबिभर्तिधारयति चराचरंस्थावरंजङ्गमंच सर्वस्य जगतः स्थितेर्हेतुर्भवतीत्यर्थः ॥ ७५ ॥

(२) **सर्वज्ञनारायणः**। पंचयज्ञाशक्तावाह स्वाध्यायइति। दैवे होमेकर्मणि बिभर्ति ॥ ७५ ॥

(३) **कुल्लूकः**। यदि दारिद्र्यादिदोषेणातिथिभोजनादिकंकर्तुं न क्षमते तदाब्रह्मयज्ञे नित्ययुक्तोभवेद्दैवेकर्मण्यग्नौहोमेच। होमस्य स्तुतिमाह। यतोदैवकर्मपरइदंस्थावरजङ्गमंधारयति ॥ ७५ ॥

( ४ ) **राघवानन्दः** । दारिद्र्यवशात् पञ्चानामशक्तौ द्वयमावश्यकमित्याह स्वाध्यायइति । दैवे होमे देवकर्मणः फलातिशयार्थं तत्स्तौति । देवइति ॥ ७५ ॥

( ५ ) **नन्दनः** । एतेषु महायज्ञेषु ब्रह्मदेवयज्ञयोरप्रमत्ततरेण भवितव्यमित्याह स्वाध्यायइति । स्वाध्याये ब्रह्मयज्ञे । पञ्चमहायज्ञेषु मध्ये ब्रह्मयज्ञदेवयज्ञयोरवश्यकर्तव्ययोर्द्वयोरपि देवयज्ञविशेषउत्तरार्धेनोक्तः ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । स्वाध्याये वेदाध्ययने नित्ययुक्तःस्याद्दैवे पञ्चसु यज्ञेषुइह कर्मणि युक्तःस्यात्दैवे कर्मणि युक्तः स्यात् । दैवे कर्मणि युक्तःसन्निदंचराचरंबिभर्ति ॥ ७५ ॥

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नंततः प्रजाः ॥ ७६ ॥**

( १ ) **मेधातिथिः** । कथंपुनरग्न्याहुत्यासर्वस्य जगतः स्थितिर्भवतीत्यतआह । अग्नौ यजमानेन प्रास्ताक्षिप्ता-ऽऽहुतिर्हूयमानंचरुपुरोडाशाद्युच्यते । आदित्यमदृश्येन रूपेण प्राप्नोति । सर्वरसानामाहर्तादित्योऽत आहुतिरसस्यादित्य-प्राप्तिरुच्यते । अतःसरसआदित्यरश्मिषुकालेन परिपक्वोवृष्टिरूपेण जायते । ततोऽन्नंव्रीह्यादि ततः प्रजाः सर्वप्राणिनः । एवमग्नौजुह्वत्सर्वजगदनुग्रहे वर्तते यजमानः । पूर्वस्य विधेः शेषोऽय न पुनर्यथाश्रुतार्थनिष्ठः । तत्त्वेहि । वृष्टिकामस्या-धिकारः स्यात् न च तच्छ्रुतस्यप्रकृतशेषतयान्वयसंभवेन कल्पनायाअवसरः ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । अग्नौ प्रास्ताहुतिरिति वक्ष्यमाणक्रमेणाग्न्यादित्ययोरन्योन्यतेजः संबन्धादग्निगताहु-त्या आदित्याप्यायनंतस्माच्चाप्यायितावृष्टिः ॥ ७६ ॥

( ३ ) **कुल्लूकः** । कुतएतदित्याह अग्नाविति । यजमानेनाग्नावाहुतिः सम्यक्क्षिप्तारसाहरणकारित्वादादित्यस्यादि-त्यंप्राप्नोति । सचाहुतिरसआदित्याद्वृष्टिरूपेण जायते । ततोऽन्नं तदुपभोगेन जायन्तेप्रजाः ॥ ७६ ॥

( ४ ) **राघवानन्दः** । बिभर्तीदमित्युक्तं तदेव कुतस्तत्राह अग्नाविति । अधिकारिणा अग्नौहुताहुतिः सूक्ष्मा-त्मना आदित्यमुपतिष्ठते इत्याहुत्यपूर्वसाध्यंजगदितिभावः ॥ ७६ ॥

( ५ ) **नन्दनः** । कथंबिभर्तीत्यपेक्षायामाह अग्नाविति । प्रास्ता प्रक्षिप्ता ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । सम्यगग्नौ प्रास्ताप्रक्षिप्ता आहुतिरादित्यमुपतिष्ठते संतुष्टादादित्यात् वृष्टिर्जायते । वृष्टेरन्नंभवति । ततअन्नादन्नभक्षणात्प्रजाजायन्ते ॥ ७६ ॥

**यथा वायुंसमाश्रित्य वर्तन्ते सर्वजन्तवः ॥ तथा गृहस्थमाश्रित्य वर्तन्ते सर्वआश्रमाः ॥ ७७ ॥**
**[ यथानदीनदाःसर्वे समुद्रे यान्ति संस्थितिम् ॥ एवमाश्रमिणःसर्वे गृहस्थे यान्ति संस्थितिम् ॥ † ]**

( १ ) **मेधातिथिः** । अपरेण प्रकारेण महायज्ञानामवश्यकर्तव्यतांदर्शयति । वायुः प्राणस्तमाश्रित्य सर्वे जीवन्ति न ह्यप्राणस्य जीवितमस्ति प्राणधारणमेवजीवनम् । जन्तुशब्दः प्राणिमात्रवचनः । सर्वग्रहणंदेवर्षीणामप्यतिशययुक्तानां-वाय्वायत्तमेव जीवनं एवंगृहस्थः प्राणतुल्यः सर्वाश्रमिणाम् । अतः सर्वोपजीवनीयेन भवितव्यमितिविध्यर्थः । इतरग्र-हणाद्यद्यपि गृहस्थादन्यआश्रमिणः प्रतीयन्ते तथापि न गृहस्थप्रतिषेधार्थमेतत् स्नातकस्य हि विशेषेणातिथ्यादिदानं-विहितम् । तस्मादितरग्रहणंगृहस्थाश्रमतुल्यतार्थम् । नच श्रूयते नात्मनात्मनि वर्तन्ते शरीरकुटुम्बस्थितिंप्राप्नुवन्ति इतरे चतआश्रमाइतराश्रमाइति समासः ॥ ७७ ॥

† ( ट )

( २ ) **सर्वज्ञनारायणः** । वायुंप्राणमन्नादिपाकविहरणादिहेतुम् ॥ ७७ ॥

( ३ ) **कुल्लूकः** । यथा प्राणाख्यवाय्वाश्रयेण सर्वप्राणिनोजीवन्ति तथा गृहस्थाश्रयेण सर्वाश्रमिणोनिर्वहन्ति॥७७॥

( ४ ) **राघवानन्दः** । यथा वै क्षुधिताबालामातरं पर्युपासते । एवंसर्वाणि भूतानि अग्निहोत्रमुपासतइति श्रुत्या अत्राग्निहोत्रोपलक्षितं गृहस्थाश्रमंप्राकरणिकत्वात्स्तौति यथेति । वायुं प्राणं । तद्दत्तभिक्षोपजीवित्वात् ब्रह्मचारिसंन्यासिनाम् । वानप्रस्थस्याविरक्तस्य पूर्वगृहस्थविद्याद्युपयोगित्वात् विरक्तस्यतु गृहमेधिषु चेत्यादि वक्ष्यमाणरीत्या गृहस्थोपजीवित्वाच्च ॥ ७७ ॥

( ५ ) **नन्दनः** । अधिकारिप्रशंसाद्वारेण पञ्चमहायज्ञानामेव प्रशंसांश्लोकाभ्यामाह यथेति । वर्तन्ते जीवन्ति ॥७७॥

( ६ ) **रामचन्द्रः** । यथासर्वजन्तवः इतरआश्रमा आश्रित्य वर्तन्ते ॥ ७७ ॥

**यस्मात्त्रयोऽप्याश्रमिणोज्ञानेनान्नेन चान्वहम् ॥ गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमोगृही॥७८॥**

( १ ) **मेधातिथिः** । यस्मात्त्रयोऽप्याश्रमिणोज्ञानेन वेदार्थव्याख्यानंजन्येनान्नेन च धार्यन्तउपरिक्रियन्तेगृहस्थेन तस्माज्ज्येष्ठःश्रेष्ठआश्रमोगृहम् । गृहीतिपाठे बहुव्रीहिः । गृहमिति पाठेविशेषणसमासोज्येष्ठाश्रमइति । अत्रापि गृहस्थैरेवेत्यौचित्यानुवादोनवानप्रस्थादीनामध्यापनादिप्रतिषेधः । वानप्रस्थस्य तावद्विहितमेतत् तानेवमहायज्ञान्निर्वपेदिति । प्रव्रजितस्य यद्यपि हिंसानुग्रहयोनारम्भइत्यनुग्रहः प्रतिषिद्धस्तथापिवेदार्थव्याख्यानंभिक्षुशास्त्रे विहितम् । ज्ञानवैराग्यभावताभ्यासातिशयविधानाच्च तयोर्नातिप्रयत्नोवेदार्थव्याख्याने । ब्रह्मचारिणस्त्वार्थलोपान्नाध्यापकत्वंभैक्षवृत्त्युपदेशाच्चकुतोऽन्नदानम् । अतोगृहस्थानामेव प्रायेणतत्संभवादेवमुक्तंगृहस्थैरेव ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । एतदेव व्युत्पादयति यस्मादिति । गृहस्थस्यैवाध्यापनाधिकारात्त्रयोपिज्ञानेन । वनस्थस्यापि भिक्षाभ्रमणोपदेशात् । त्रयोप्यन्नेनच धार्यन्तइत्यर्थः । ज्येष्ठोगुरुतया पोषकतयाच ॥७८ ॥

( ३ ) **कुल्लूकः** । गृहस्थः प्राणतुल्यःसर्वाश्रमिणामित्युक्तंतदेवोपपादयति यस्मादिति । यस्माद्गृहस्थव्यतिरिक्तास्त्रयोप्याश्रमिणोवेदार्थव्याख्यानान्नदानाभ्यांनित्यंगृहस्थैरेवोपक्रियते तस्माज्ज्येष्ठाश्रमोगृहस्थः ज्येष्ठआश्रमोयस्य सतथेति बहुव्रीहिः ॥ ७८ ॥

( ४ ) **राघवानन्दः** । तमेव पुनः श्रेष्ठत्वेन स्तौति यस्मादिति । ज्ञानेन वेदविद्योपादानेन । त्रयोपि ब्रह्मचारिवानप्रस्थसंन्यासिनः । श्रेष्ठइतिज्येष्ठइतिवाऽतिशयोक्तिः सर्वान्नाधिकारार्थाअत्रैषांपरस्परोपकारकता निरस्ता ॥ ७८ ॥

( ५ ) **नन्दनः** । ज्ञानेन ज्ञानप्रदानेनाध्यापनेनेति यावत् । अनेन ज्ञाप्यते गृहस्थादेवानापद्यध्येतव्यमिति ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । अन्नेन ज्ञानेन वेदार्थव्याख्यानेन यस्मात्कारणात्त्रयोप्याश्रमिणः अन्वहंगृहस्थैरेव धार्यन्ते तस्मात्कारणाद्गृही गृहस्थाश्रमो ज्येष्ठाश्रम उच्यते ॥ ७८ ॥

**ससंधार्यःप्रयत्नेन स्वर्गमक्षयमिच्छता ॥ सुखंचेहेच्छतानित्यं योऽधार्योदुर्बलेन्द्रियैः ॥ ७९ ॥**

( १ ) **मेधातिथिः** । सगृहाश्रमः । प्रयत्नेन सत्कार्योऽनुष्ठेयोऽक्षयस्वर्गकामेनेह च सुखमिच्छता । अत्यन्तशब्दोनित्यतांगमयति । यआश्रमोऽधार्योशक्यं धारयितुंदुर्बलेन्द्रियैः । एतदुक्तंभवति यतः स्त्रीसंभोगसुसंस्कृतभोजनादि गृहस्थस्यावश्यंभावि ततश्चेन्द्रियाणांविषयसक्तौ दोषेण किमुच्यते । प्रयत्नेन आश्रमान्तरेभ्योधारयितव्यः । अत्रापिमहानिन्द्रि-

---

( ७८ ॥ ज्येष्ठाश्रमोगृही=ज्येष्ठाश्रमोगृहम् ( मे० ॥ ( ७९ ) चेच्छतानित्यं=चेच्छतात्यन्तं ( मे० )

यसंयमः । अनृतौ न गन्तव्यं परदारान गन्तव्याः शेषान्नं भोक्तव्यं विषयसंनिधाने योनियमः सदुष्करः । स्वर्गमक्षयमिति नानेनसर्वेषांगृहस्थकर्मणांस्वर्गफलतोच्यते केषांचिन्नित्यत्वात्केषांचित्फलान्तरश्रवणात् । येऽप्यश्रुतफलाः स्वर्गफलतया कल्प्यन्ते तेषामपि केवलानामनुवादे न कश्चिद्विशेषणे हेतुः । तस्माद्विहिताभिप्रेतफलानुवादोऽयम् । नचाधिकारान्तरमिदं-तेषामेव यावज्जीविकंस्वर्गकामस्येतिच शक्यंवक्तुं सुखंचेहेच्छतेत्यविधेयेन तुल्यत्वावगमात् । नहीहसुखकामेनेतरच्छक्यं-कर्मफलतया ज्ञातुंविशेषस्यानिर्देशात् । सर्वा हि प्रीतिर्ग्रामपुत्रादिलाभैर्विशेषैरवच्छिन्नाप्रतीयते । अनवच्छेदेनप्रीतिमात्रं-चेत्स्वर्गएव । नच तस्यैहिकत्वम् । तस्माद्दृष्टसुखाभिकामानुवादोऽयम् । अनिकेताह्यन्यआश्रमिणोवृक्षमूलनिकेतनाः परगृहवासिनोदुःखमासते । तस्मादयमनुवादः ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । अक्षयंचिरभोग्यं । अधार्योधारयितुमशक्यः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । यतएवमतः सगृहस्थाश्रमः स्वर्गसुखमिच्छता अनन्तमिव चिरस्थायित्वादिहलोके च स्त्रीसंभो-गत्वाद्द्वन्नादिभोजनसुखंसन्ततमिच्छता प्रयत्नेनानुष्ठेयः । योऽसंयतेन्द्रियैर्धारयितुं न शक्यते ॥ ७९ ॥

( ४ ) **राघवानन्दः** । अतएव गार्हस्थ्याश्रमे यत्न आस्थेयइत्याह सइति । संगार्हस्थ्यधर्मः संधार्योऽनुष्ठेयः । अक्ष-य्यमिच्छता यत्कर्तव्यं तदनया सहेत्युक्तेः इहच सुखंस्त्र्यधीनमित्यनुभवसिद्धम् । अधार्यइतिच्छेदः । दुर्बलेन्द्रियैः असंय-तेन्द्रियैः ॥ ७९ ॥

( ५ ) **नन्दनः** । यत एवंतस्माद्गृहस्थाश्रमएवधार्योनाश्रमान्तराणि पञ्चयज्ञरहितानीत्यभिप्रायेणाह सइति । प्रयत्नेना-पद्यपि ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । सगृहस्थाश्रमःप्रयत्नेनाक्षयंस्वर्गमिच्छता संधार्यः अत्यन्तसुखमिहेच्छता संधार्यः यो गृहस्था-श्रमोदुर्बलेन्द्रियैरधार्यः धारयितुं न योग्य इत्यर्थः ॥ ७९ ॥

**ऋषयः पितरोदेवाभूतान्यतिथयस्तथा ॥ आशासते कुटुम्बिभ्यस्तेभ्यः कार्यंविजानता ॥ ८० ॥**

( १ ) **मेधातिथिः** । तत्तुल्ययाऽयमप्यनुवादएव । एतेकुटुम्बिभ्योगृहिभ्यः सकाशादर्थयन्ते । आदित्सतआत्मोपका-रलिप्साऽऽशासनमाकाङ्क्षाम् । अतस्तेभ्योदेवादिभ्यःकार्यंकर्तव्यंविहितहोमादि । विजानता शास्त्रस्थितिम् । कुटुम्बंदाराः। प्राकृतपुरुषेणापियामहायासोपनिबद्धा सान युक्ता विफलीकर्तुंकिंपुनर्दैवतास्तुतिः ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । कुटुम्बिभ्योगृहिभ्यःआशासते । तत्र ऋषयः स्वस्वदृष्टवेदभागस्वाध्यायेनात्मनः सुखोत्प-त्तिंकाङ्क्षन्ते । तेभ्यस्तानुद्दिश्य ॥ ८० ॥

( ३ ) **कुल्लूकः** । एते गृहस्थेभ्यःसकाशात्प्रार्थयन्ते अतः शास्त्रज्ञेनतेभ्यः कर्तव्यम् ॥ ८० ॥

( ४) **राघवानन्दः** । उक्तानर्थवादपुरःसरंपञ्चयज्ञोपजीवकानाह ऋषयइतित्रिभिः । आशासते वेदाध्ययनश्राद्धा-दिकमाकांक्षन्ते । कुटुम्बिभ्यः गृहस्थेभ्यः । आशासानेभ्यस्तेभ्योविजानता गृहस्थेन कार्यंकर्तव्यं । यत्तूत्तरश्लोकेवक्ष्य-माणवेदाध्ययनादि ॥ ८० ॥

( ५ ) **नन्दनः** । अथ पञ्चमहायज्ञानामेवावश्यकर्तव्यत्वे कारणान्तरमाह ऋषयइति । विजानता कुटुम्बिना । ते-भ्यऋष्यादिभ्यः । कार्यं कर्तव्यमिति ॥ ८० ॥

( ६ ) **रामचन्द्रः** । ऋषयः पितरः देवाः । भूतानि अतिथयः तथा तेभ्यः कुटुम्बिभ्यःगृहिभ्यः । सकाशादा-शासते सुखमभिलषन्ति विजानता पुंसा शास्त्रस्थितिं तेभ्यः कार्यं कारणीयमित्यर्थः ॥ ८० ॥

**स्वाध्यायेनार्चयेतर्षीन्होमैर्देवान्यथाविधि ॥ पितॄञ्छ्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ॥ ८१॥**

( १ ) **मेधातिथिः**। स्वाध्यायमधीयीतेति यएवार्थः । सएव स्वाध्यायेनार्चयेदृषीनिति भवति श्राद्धादरेण पाद्यार्घमाल्यानुलेपनेन । अत्रोच्यते स्तुतिवचनं चेदम् नचोभयोरपि स्वाध्याय ऋषिपूजयोःकरणम् । अग्न्यादिदेवतास्तावकामन्त्राऋषीनभिष्टुवन्ति । तस्मात्प्रशंसामात्रमृषीन्स्वाध्यायेनार्चयेदिति ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । भूतानिबलिहोमभागित्वेन देवताभूतानामपिबलिभागितया भूतपदाभिधेयत्वात् बलिकर्मणि देवतोद्देशेनकर्तव्यम् ॥ ८१ ॥

( ३ ) **कुल्लूकः** । किंतत्तदाह स्वाध्यायेनेति । नानाप्रकारत्वादर्चनस्य स्वाध्यायादेरर्चनार्थत्वमुचितम् । महायज्ञान्तर्गतैः स्वाध्यायादिभिर्ऋषिदेवपित्रतिथिभूतानियथाशास्त्रंपूजयेत् ॥ ८१ ॥

( ४ ) **राघवानन्दः** । तदेवससंप्रदानकमाहस्वाध्यायेनेति । अर्चयेत्प्रीणयेत् । श्राद्धेनेति तर्पणस्याप्युपलक्षणम् । बलिकर्मणा भूतेभ्योदत्तेनान्नेन ॥ ८१ ॥

( ५ ) **नन्दनः** । किंकर्तव्यमित्यपेक्षायामाह स्वाध्यायेनेति ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । श्राद्धेनपितॄन्नॄनन्नै स्तर्पयेत् बलिकर्मणाभूतानि प्रीणयेदित्यर्थः ॥ ८१ ॥

**कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥ पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥ ८२ ॥**

( १ ) **मेधातिथिः** । दद्यात्कुर्यात् । अहरहः प्रतिदिवसम् । श्राद्धंनाम्नाधर्मातिदेशः । श्राद्धंनाम पित्र्यंकर्मामावास्यायांविहितम् । तदीयेतिकर्तव्यताश्राद्धमित्यनेन नाम्नाऽतिदिश्यते । अन्नाद्येनेति तिलैर्व्रीहियवैरित्यादेरनुवादोऽयम् । उत्तरत्रविवक्षितार्थउदकेनेति पयःक्षीरम् ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । श्राद्धंश्रद्धयापितृकर्म अन्नाद्येन श्रद्धयोत्सृष्टेन तथोदकेनअन्नाद्यवददुष्टेनेति मुख्यकल्पानुकल्पौ । परेत्वनुकल्पाः पयसा जलेन तर्पणकाले दत्तेन संपादनं । तथा अन्नाभावे मूलैः फलैर्वा श्राद्धदत्तैरिति । केचित्तु अन्नाद्याभावे उदकफलमूलक्षीराणामन्यतमेन नित्यश्राद्धंकर्तव्यमित्यस्यार्थमाहुः । पितृभ्यः प्रीति मिति तत्प्रीतिहेतोर्विहितस्यैव मूलस्य फलस्य वाग्रहणार्थम् ॥ ८२ ॥

( ३ ) **कुल्लूकः** । तत्र पितृयज्ञंतावदाह कुर्यादिति । प्रत्यहंयथासंभवंश्राद्धंकुर्यात् । श्राद्धशब्दोऽयंकर्मविधिवाक्यवर्ती । कौण्डपायिनामयनीयाग्निहोत्रशब्दवद्वक्ष्यमाणपार्वणश्राद्धधर्मातिदेशार्थः । अन्नाद्येनेति तिलैर्व्रीहिभिर्यवैरित्यादेरुपादानम् । पयःक्षीरम् ॥ ८२ ॥

( ४ ) **राघवानन्दः** । अहरहः श्राद्धं नित्यश्राद्धम् । यदन्नः पुरुषोराजन् तदन्नाः पितृदेवताइति न्यायमाश्रित्याह उदकेनेत्यादि । पयोदुग्धं प्रीतिं श्रद्धामावहन् ॥ ८२ ॥

( ५ ) **नन्दनः** । पितॄञ्छ्राद्धेनेत्येतत्प्रपञ्चयति कुर्यादिति । अन्नाद्येन मुख्यकल्पउक्तः उदकेनाधमः पयोमूलफलैर्मध्यमइति विवेकः ॥ ८२ ॥

---

( ८२ ) कुर्यादहं=दद्यादहं ( मे० )

( ६ ) **रामचन्द्रः** । अथ नित्यश्राद्धमारभ्यते दद्यादिति । अहरहःश्राद्धं अन्नाद्येन उदकेन च अन्नाभावे पयसा वा मूलफलैर्वापि किंकुर्वन्प्रीतिमावहन् ॥ ८२ ॥

**एकमप्याशयेद्विप्रंपित्रर्थे पाञ्चयज्ञिके ॥ नचैवात्राशयेत्कंचिद्वैश्वदेवंप्रति द्विजम् ॥ ८३ ॥**

( १ ) **मेधातिथिः** । श्राद्धशब्देन विधानात्सर्वस्मिंस्तद्विधाने प्राप्ते कश्चिदितिकर्तव्यताभागोनिवर्त्यते । नचैवात्राशयेत्किंचित् नात्रान्वाहिकेश्राद्धे वैश्वदेवंप्रति विश्वान्देवानुद्दिश्यद्विजभोजनम् । अत्र केचिदाहुः प्राप्ते भोजनआशयेदितिपुनर्वचनमपूर्वत्वमस्य दर्शयति । तेनैतावदेवैतच्छ्राद्धंयत्पितॄनुद्दिश्य ब्राह्मणएकोभोज्यते नत्वदन्या काचिदर्घपात्रादिहोमाद्येतिकर्तव्यताऽस्ति । ब्रह्मचर्यस्वाध्यायनिषेधइत्येवमादि न भवति । एकमप्याशयेद्विप्रम् त्रयाणांनियमादेकैकमुभयत्रेत्यस्या विधित्वादप्राप्तएकोविधीयते । एकमपि भोजयेत्सति संभवे बहूनपि पित्रर्थेपितृतृप्त्यर्थम् । पाञ्चयज्ञिकंपञ्चयज्ञभवं पाञ्चयज्ञिकं तदन्तर्गतम् । पाञ्चयज्ञिकशब्दः श्राद्धे प्रयुक्तः । पाञ्चयज्ञिकंतर्पणम् । तेन तर्पणभोजनयोः समुच्चयः । अस्यतु विकल्पो भविष्यति यदेव तर्पयत्यद्भिरिति ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । एकमपीति पित्राद्येकैकोद्देशेनैकैकंब्राह्मणंभोजयेदिति पार्वणवत्प्राप्तमेव । तावता ब्राह्मणभोजनासंभवेपित्रर्थेपित्राद्यर्थपाञ्चयज्ञिये पञ्चयज्ञिके संबन्धिश्राद्धेन चैवेति । अत्र नित्यश्राद्धे ब्राह्मणासंभवेपि वैश्वदेवस्थाने द्विजंनाशयेदिति विश्वेषांदेवानांनित्यश्राद्धप्रीणनंनास्तीति दर्शितम् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । पितृप्रयोजने पञ्चयज्ञान्तर्गत एकमपि ब्राह्मणंभोजयेत् । अपिशब्दात्संभवे बहूनपि । पार्वणधर्मग्रहणाच्चवैश्वदेवब्राह्मणभोजनप्राप्तावाह न कंचिद्वैश्वदेवार्थंब्राह्मणमत्र भोजयेत् ॥ ८३ ॥

( ४ ) **राघवानन्दः** । श्राद्धंहि ब्राह्मणभोजनात्मकं तत्र कति ब्राह्मणाभोजनीयाइत्यपेक्षायामाह एकमिति । पाञ्चयज्ञिके पञ्चयज्ञान्तर्गते नित्ये श्राद्धे । आशयेत् भोजयेत् पार्वणधर्मत्वादस्य देवब्राह्मणप्रसक्तौ निषेधति न चेति ॥ ८३ ॥

( ५ ) **नन्दनः** । अत्र पितृयज्ञाद्युक्तेषु मध्येवैश्वदेवंप्रति वैश्वदेवहोमः स्यात् । द्विजंकिंचिदप्यन्नंभोजयेत् । अन्यद्धविरुत्पाद्य भोजयेदित्यर्थः ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । पाञ्चयज्ञिये कर्मणि चैकंविप्रंपितृतृप्त्यर्थमाशयेत् भोजयेत् । अथ वैश्वदेविकंचद्विजंवैश्वदेवं नाशयेन्नभोजयेत् । एकंन भोजयेदित्यर्थः । किंतु युग्मम् ॥ ८३ ॥

**वैश्वदेवस्य सिद्धस्य गृह्येग्नौ विधिपूर्वकम् ॥ आभ्यः कुर्याद्देवताभ्यो ब्राह्मणोहोममन्वहम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । विश्वेदेवार्थं वैश्वदेवः पाकउच्यते । सर्वार्थोवैश्वदेवेशब्दाऽपि संप्रदानमात्रोपलक्षणार्थः । तेनातिथ्याद्यर्थता युक्ता भवति । सिद्धस्य होममाभ्योवक्ष्यमाणाभ्योदेवताभ्यः कुर्यात् । सिद्धशब्देन देवतोद्देशेन देवस्यत्वेतिमन्त्रवन्निर्वापेन कर्तव्यइति दर्शयति । केवलंसर्वार्थंनिष्पन्नपाकेन होमादि कर्तव्यमिति विध्यर्थः । गृह्येवा विधिहोमादिकरणनिर्देशविधिपूर्वकंसमाचारप्राप्तांपरिसमूहनपर्युक्षणादिरूपामितिकर्तव्यतामाह । ब्राह्मणशब्दस्त्रैवर्णिकाधिकारप्रदर्शनार्थः । अन्वहं नित्यमित्यर्थः । देवताग्रहणंस्वाहाकारप्राप्त्यर्थम् । षष्ठीनिर्देशादग्नेरिदमिति प्रयोगः स्यात् । देवताशब्देन तु स्वाहाकारेण वा देवेभ्योहविः संप्रदीयतइति याज्यान्तेपुनर्वषट्कारस्य विधानात् । स्मार्तहोमेत्वभावः । स्वाहाकारस्तु सर्वत्र । तस्मिंश्चसत्यग्नये स्वाहेतिप्रयोगः ॥ ८४ ॥

---

( ८३ ) पित्रर्थेपाञ्चयाज्ञिके=पित्रर्थंपाञ्चयज्ञिकं ( मे० )

( २ ) **सर्वज्ञनारायणः** । नित्यश्राद्धमुक्का वैश्वदेवाभिधानादयमेव क्रियाक्रमोमनोरपेक्षितइति लक्ष्यते । वैश्वदेवस्य विश्वदेवयोग्यस्य क्षारलवणादिव्यतिरिक्तस्यान्नस्य । गृह्ये वैवाहिकेऽग्नौसिद्धस्येत्यन्वयः । तत्र होमस्य पूर्वमेव विहितत्वात् ॥ ८४ ॥

( ३ ) **कुल्लूकः** । विश्वदेवार्थः सर्वदेवतार्थोवैश्वदेवस्तस्य पक्वस्यान्नस्यावसथ्याग्नौ स्वगृह्यविहितपर्युक्षणादीति कर्तव्यतापूर्वकमाभ्योवक्ष्यमाणदेवताभ्योब्राह्मणः प्रत्यहंहोमंकुर्यात् ब्राह्मणग्रहणंद्विजातिप्रदर्शनार्थं त्रयाणांप्रकृतत्वात् ॥ ॥ ८४ ॥

( ४ ) **राघवानन्दः** । सम्प्रति वैश्वदेवविधिमाहवैश्वदेवेतिनवभिः । **सिद्धस्यपक्वस्य** । हविष्यस्येति शेषः । आभ्यो वक्ष्यमाणाभ्यः । ब्राह्मणोद्विजातिः ॥ ८४ ॥

( ५ ) **नन्दनः** । कथंपुनर्वैश्वदेवः कर्तव्यइत्यपेक्षायामाह वैश्वदेवस्येति । वैश्वदेवस्य सिद्धस्य सर्वदेवार्थपक्वस्यान्नस्य ब्राह्मणः द्विजः ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । सिद्धस्यान्नस्य वैश्वदेवस्य वैश्वदेवार्थस्य गृह्येग्नौ विधिपूर्वकं आभ्यो देवताभ्यः । ब्राह्मणो होमंकुर्यात् ॥ ८४ ॥

**अग्नेः सोमस्य चैवादौतयोश्चैव समस्तयोः ॥ विश्वेभ्यश्चैव देवेभ्योधन्वन्तरयएव च ॥ ८५ ॥**

( १ ) **मेधातिथिः** । आदावित्यनुवादः । पाठक्रमेणैवाग्नेरादौसिद्धत्वात्से पृथगाहुती । तयोश्च समस्तयोरग्नीषोमाभ्यामितिविश्वेभ्योदेवेभ्यइतिप्रयोगः । एकैवाहुतिर्धन्वन्तरये स्वाहा ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । समस्तयोरग्नीषोमयोः । अत्र च सर्वत्र चतुर्थ्यर्थेषष्ठ्यीनिर्देशे तु चतुर्थ्येव कार्या ॥ ८५ ॥

( ३ ) **कुल्लूकः** । वचनद्वयंस्वाहाकारप्रदानहोमइति कात्यायनस्मरणादादावग्नये स्वाहा सोमाय स्वाहेति निरपेक्षदेवताकंहोमद्वयं कृत्वाग्नीषोमाभ्यांस्वाहेति समस्तदेवताकंहोमंकुर्यात्ततोविश्वेभ्योदेवेभ्योधन्वन्तरये ॥ ८५ ॥

( ४ ) **राघवानन्दः** । अग्नेरित्यादिषष्ठी चतुर्थ्यर्थे । तयोरग्नीषोमयोः । स्वाहाकारप्रधानोहोमइति कात्यायनोक्तेरयंप्रयोगः । अग्नये स्वाहा एवं सोमायाग्नीषोमाभ्यांविश्वेभ्योदेवेभ्यःधन्वन्तरये ॥ ८५ ॥

( ५ ) **नन्दनः** । अग्नेरग्नये सोमस्य सोमाय तयो स्समस्तयोरग्नीषोमाभ्यांविश्वेषांदेवानांविश्वेभ्योदेवेभ्यः ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । आदौ प्रथमतः । अग्नेः सोमस्याहुति जुहुयात् । अग्नयेस्वाहा १ सोमायस्वाहा २ अग्नीषोमाभ्यांस्वाहा ३ विश्वेषांचैवदेवानां विश्वेभ्योदेवेभ्यःस्वाहा ४ धन्वन्तरयएव च धन्वन्तरये स्वाहा ५ ॥ ८५ ॥

**कुह्वै चैवानुमत्यै च प्रजापतयएव च ॥ सहद्यावापृथिव्योश्च तथा स्विष्टकृतेन्ततः ॥ ८६ ॥**

( १ ) **मेधातिथिः** । सहद्यावापृथिव्योः द्यावापृथिवीभ्यांस्वाहेति । तथा स्विष्टकृतेऽन्ततः स्विष्टकृदितिगुणपदमग्निश्च गुणीस्मृत्यन्तरेऽग्नये स्विष्टकृतइतिवचनात्सर्वहोमेष्वेव चाम्नानात् । अन्ततइति पाठात्सिद्धे वचनंस्मृत्यन्तरेधिकारमाहुतीनामाम्नानात्सति समुच्चये प्राक्स्विष्टकृतआवापः कर्तव्यइतिदर्शयितुम् । ननु चैकत्वाद्धोमस्य देवताविकल्पोयुक्तः। कुतः पुनरेकत्वंहोमस्य । इयमेव होमानामुत्पत्तिः अग्नेःसोमस्यचेत्यादि । तत्र चोत्पत्तावेव देवताविशेषेणावरुद्धत्वाद्भिन्नाएव होमाः प्रतीयन्ते ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । सहएकाहुतिर्द्यावापृथिव्योः । स्विष्टकृतइत्यत्राग्नयइति प्रथमंविशेष्यपदंप्रक्षेप्यम् ॥ ८६ ॥

( ३ ) **कुल्लूकः** । कुह्वा अनुमत्यै प्रजापतये द्यावापृथिवीभ्यामग्नये स्विष्टकृतइत्येवंस्वाहाकारान्तान्होमान्कुर्यात् । श्रुत्यन्तरेष्वग्निविशेषणत्वेन स्विष्टकृतोविधानात्केवलंस्विष्टकृन्निर्देशेऽप्यग्निविशेषणत्वेनैव प्रयोगः । पाठादेवान्तत्वे सिद्धे स्विष्टकृतेऽन्ततइत्यभिधानंस्मृत्यन्तरीयहोमसमुच्चयेऽप्यन्तत्वज्ञापनार्थम् ॥ ८६ ॥

( ४ ) **राघवानन्दः** । कुह्वै अनुमत्यै प्रजापतये द्यावापृथिवीभ्यामग्नये स्विष्टकृते इतिपाठक्रमादेवान्तत्वेप्राप्ते अन्तपदंस्मृत्यन्तरहोमसमुच्चयेनस्विष्टकृतोन्तत्वख्यापनार्थम् । सहेति द्यावापृथिवीभ्यामेकप्रयोगसूचनार्थंबह्वृचेगृह्ये इन्द्रायेत्यादिप्रयोग दर्शनात् ॥ ८६ ॥

( ५ ) **नन्दनः** । सह द्यावापृथिव्योः समस्ताभ्यांद्यावापृथिवीभ्याम् ॥ ८६ ॥

( ६ ) **रामचन्द्रः** । कुह्वै अमायै । स्वाहा ६। पौर्णमास्यैअनुमत्यै स्वाहा ७ । प्रजापतयेस्वाहा ८ । द्यावापृथिवीभ्यां स्वाहा ९। ततःस्विष्टकृते स्वाहा १०॥ ८६ ॥

**एवंसम्यग्घविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् ॥ इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्योबलिंहरेत् ॥ ८७॥**

( १ ) **मेधातिथिः** । सम्यगनन्यचित्ततया देवताध्यानपरएवमेताभ्योदेवताभ्योऽग्नौ हुत्वा ततः सर्वासु दिक्षुयथासंख्यंप्रदक्षिणं प्रथमं प्राच्यांततोदक्षिणस्यांइत्येषप्रदक्षिणावर्तमिन्द्रःअन्तकः अप्पतिःइन्दुःप्रतिदिवसम् । अपरश्चाह अहर्विभागिन्दुरितियदि नैतेन शब्देन बलिहरणंस्यात्कथमिन्दोर्हविर्भाक्त्वम् बलिहरणंच होमएवेतिव्याख्यातम् । वृत्तभङ्गभयाच्चात्रन शब्दस्य रूप विवक्षेति स्मृत्यन्तरोपात्तैरेव शब्दैरुद्देशः कर्तव्यः । सानुगेभ्यः अनुगाअनुचरास्तत्पुरुषास्तथाचेन्द्रपुरुषेभ्यइत्या दिप्रयोगः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । हविर्हविष्यम् । इन्द्रादीनांचतुर्णांमध्येएकैकस्मै प्रदक्षिणं पूर्वाद्येकैकदिशि सानुगेभ्यः ॥ ८७ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण सम्यगनन्यचित्तोदेवताध्यानपरएव होमान्कृत्वा सर्वासु प्राच्यादिषु दिक्षु प्रदक्षिणमिन्द्रादिभ्यः सपुरुषेभ्योबलिंहरेत् । तथा प्राच्यामिन्द्रायनमः इन्द्रापुरुषेभ्योनमः । दक्षिणस्यां यमाय नमः यमपुरुषेभ्योनमः । पश्चिमायां वरुणाय नमः वरुणपुरुषेभ्योनमः । उत्तरस्यां सोमाय नमः सोमपुरुषेभ्योनमः । यद्यपि शब्दावगम्यत्वाद्देवतात्वस्यान्तकाप्पतीन्दुशब्दैरेवोद्देशोयुक्तस्तथापि बह्वृचानुष्ठानसंवादाद्बह्वृचगृह्ये च यमाय यमपुरुषेभ्यः वरुणायवरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्यइति प्रतिदिशमिति पाठाद्यथोक्तएव प्रयोगः ॥ ८७ ॥

( ४ ) **राघवानन्दः** । किंच इन्द्रेति । इन्द्राय इन्द्रपुरुषेभ्यः प्राच्याम् । अन्तकोत्र यमः यमाय यमपुरुषेभ्यइति दक्षिणस्याम् । अप्पतिर्वरुणः । एवं वरुणाय वरुणपुरुषेभ्यइति पश्चिमायाम् । उत्तरस्यां सोमाय सोमपुरुषेभ्यइति पञ्चदशाहुतयः । शूद्रपक्षे नमोन्ताः । नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति स्मरणात् ॥ ८७ ॥

( ५ ) **नन्दनः** । इन्द्राय सानुगाय स्वाहेति पूर्वस्यांदिशि । अन्तकायसानुगायेतिदक्षिणस्याम् । अप्पतये सानुगायेतिप्रतीच्याम् । इन्दवेसानुगायेत्युत्तरस्यामिति । सर्वदिक्षु प्रदक्षिणक्रमेण बलिंहरेत्कुर्यात् ॥ ८७ ॥

( ६ ) **रामचन्द्रः** । एवंप्रकारेण सम्यक् हुत्वा बहिर्मण्डलात्बहिरेतन्मण्डलंसर्वदिक्षु प्रदक्षिणंमण्डलंकुर्यात् । इन्द्राय स्वाहा इन्द्रपुरुषाय स्वाहा इतिपूर्वे । अन्तकाय स्वाहा यमपुरुषाय स्वाहा इतिदक्षिणे । अप्पतये वरुणाय स्वाहा वरुणपुरुषाय स्वाहा इतिपश्चिमे । इन्दवे स्वाहा इन्दुपुरुषाय स्वाहा इतिउत्तरे । बलिंहरेत्दद्यात् ॥ ८७ ॥

**मरुद्भ्यइति तु द्वारि क्षिपेदप्स्वद्भ्यइत्यपि ॥ वनस्पतिभ्यइत्येवंमुसलोलूखले हरेत् ॥ ८८ ॥**

( १ ) **मेधातिथिः** । अत्रेतिकरणःस्वरूपविवक्षार्थः । अप्स्वित्यधिकरणम् । अद्भ्यइतिदेवतानिर्देशः । वनस्पतिभ्यइतिमुसलोलूखले । द्वन्द्वैकवद्भावेन विकल्पितमाधारद्वयम् । निर्देशगुणवृत्त्या प्रधानभूततायाआहुतेरावृत्तिर्युक्ता । न च मुसलोलूखलस्यैकीकृतस्याहुतिसंबन्धः शक्यःकर्तुंपृथक्त्वस्य तत्राप्युपलम्भात् । नहिक्षीरोदकवदनयोर्व्यामिश्रणसंभवः । तत्र यद्युलूखले क्रियते न तत्र होमः कृतः । अथोलूखलेन मुसलेन च भागशआहुतिः संभवति नियतपरिमाणत्वात् । द्वन्द्वनिर्देशोऽत्रसंयुक्तयोरन्यतरत्र होमोयुक्तः ॥ ८८ ॥

( २ )**सर्वज्ञनारायणः** । द्वारि गृहद्वारि । अप्स्वपस्थापनस्थाने मुसलोलूखले मुसलउलूखलंनिधाय तत्रेत्यर्थः॥ ८८॥

( ३ ) **कुल्लूकः** । इतिशब्दःस्वरूपविवक्षार्थः । मरुद्भ्योनमइति द्वारे बलिंदद्याज्जलेऽद्भ्यइति । मुसलोलूखलइति । द्वन्द्वनिर्देशात्सहयुक्तयोरन्यतरत्र वनस्पतिभ्यइति बलिंदद्यात् गुणानुरोधेन प्रधानबलिकर्मावृत्तेरन्याय्यात्वात् ॥ ८८ ॥

( ४ ) **राघवानन्दः** । मुसलोलूखलइति द्वन्द्वनिर्देशाद्वनस्पतीनामेकंस्थानम् ॥ ८८ ॥

( ५ ) **नन्दनः** । द्वारि गृहद्वारे । अप्सूदधानीसमीपे । मुसलोलूखले । मुसलोलूखलस्थानइत्यर्थः ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । द्वारिमण्डलद्वारि मरुद्भ्यःस्वाहाइति । करणंशब्दरूपविवक्षार्थं । अप्सुउदकस्थापनस्थाने अद्भ्यःस्वाहावनस्पतिभ्यःस्वाहा मुसलोलूखलेहरेत् । स्थापयेदितिकेचित् ॥ ८८ ॥

**उच्छीर्षके श्रियै कुर्याद्भद्रकाल्यै च पादतः ॥ ब्रह्मवास्तोष्पतिभ्यां तु वास्तुमध्ये बलिंहरेत् ॥ ८९ ॥**

( १ ) **मेधातिथिः** । उच्छीर्षकंप्रसिद्धदेवताशरणंशीर्षस्थानंतत्र श्रियै बलिंकुर्यात् । पादतः अधोभागे । गृहस्यभद्रकाल्यै । तस्याअपि स्थानंद्वारस्य पूर्वभागे । अन्यउच्छीर्षकंगृहशयनस्य शिरोभागमाहुः पादौचास्याधोभागम् । तेन खट्वादावयंहोमोभूप्रदेशे वा । गृहस्थशयनस्थाने ब्रह्मवास्तोष्पतिभ्यांसत्यपि द्वन्द्वनिर्देशे पृथगेतेआहुतीब्रह्मणेवास्तोष्पतयइति । यत्र तूभयदेवतात्वमग्नीषोमवत्तत्र सहग्रहणंसमस्तग्रहणंवाकरोति । तयोश्चैव समस्तयोः सहद्यावापृथिव्योश्चेतिअप्रसिद्धसाहचर्यात् । वास्तुगृहंतन्मध्ये ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । उच्छीर्षके शय्यादेशस्य शिरस्थाने । एवंपादतः । ब्रह्मवास्तोष्पतिभ्यांमिलिताभ्याम् ॥ ८९ ॥

( ३ ) **कुल्लूकः** वास्तुपुरुषस्य शिरःप्रदेशउत्तरपूर्वस्यांदिशि श्रियैबलिंदद्यात् । तस्यैव पाददेशे दक्षिणपश्चिमायांदिशि भद्रकाल्यै । अन्येतु उच्छीर्षकंगृहस्थशयनस्य शिरः स्थानभूभागंपादतइति तस्यैव चरणभूप्रदेशमाहुः । ब्रह्मणे वास्तोष्पतयइतिगृहमध्ये । द्वन्द्वनिर्देशेपिब्रह्म वास्तोष्पत्योः पृथगेवदेवतात्वम् । यत्र द्वन्द्वे मिलितस्य देवतात्वमपेक्षितंतत्र सहादिशब्दंकरोति यथा सहद्यावापृथव्योश्चेति ॥ ८९ ॥

( ४ ) **राघवानन्दः** । उच्छीर्षके वास्तुपुरुषस्य शिरःप्रदेशे उत्तरपूर्वस्यांदिशि । पादतइति नैर्ऋत्यां । गृहस्थशयनस्य शिरःपादयोरित्यपरे तत्तुच्छं । शयनस्यानियतत्वात् उत्तरत्रवास्तुश्रवणात् । ब्रह्मणे वास्तोष्पतये च ॥ ८९ ॥

( ५ ) **नन्दनः** । उच्छीर्षकेशिरउपधानस्थाने । पादतः पादोपधानस्थाने । ब्रह्मवास्तोष्पतिभ्यांब्रह्मणेवास्तोष्पतयइति सहेतिवचनाभावात् । वास्तुमध्ये गृहमध्ये ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । उच्छीर्षके शय्याप्रदेशमस्तकस्थाने पूर्वे श्रियै स्वाहाकुर्यात् । तु पुनःपादतःपश्चिमतो

भद्रकाल्यै जुहुयात् । ब्रह्मवास्तोष्पतिभ्यांब्रह्मजज्ञानमिति वास्तोष्पतेरिति द्वाभ्यांवास्तुमण्डलमध्ये स्वाहाबलिंहरेद्यात् ॥ ८९ ॥

**विश्वेभ्यश्चैव देवेभ्योबलिमाकाशउत्क्षिपेत् ॥ दिवाचरेभ्योभूतेभ्योनक्तंचारिभ्यएव च ॥ ९० ॥**

( १ ) **मेधातिथिः** । चशब्दादेकैवेयमाहुतिः । विश्वेभ्योदेवेभ्यइतिगृहाकाशे गृहान्निष्क्रम्य वा । दिवादिवाचारिभ्योनक्तंनक्तंचारिभ्यः । भूतेभ्यइत्यनुषज्यते । केचिदेतेआहुती सायंप्रातर्विभागेनाहुर्दिवाचारिभ्यइतितदयुक्तम् । सायममन्त्रहोमंवक्ष्यति । एतेन मन्त्रप्रतिषेधेन शब्दोद्देश्यता माभून्मानसस्तूद्देशः केननिवार्यते । नच तेन विना होमासिद्धिः । एतदेव तु वक्तव्यंकुतोऽयंविभागावगमोगृह्यकारैरेवेतिचेदस्तु ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । विश्वेषांदेवानांभूमावेव । दिवाचारिभ्योदिवा नक्तंचारिभ्योनक्तं बलिमाकाशमुत्क्षिपेदित्यन्वयः ॥ ९० ॥

( ३ ) **कुल्लूकः** । विश्वेभ्यश्चैव देवेभ्यइति शब्दादेकेयमाहुतिः । विश्वेभ्योदेवेभ्योनमइति गृहाकाशेबलिंदद्यात् । दिवाचरेभ्योभूतेभ्यइति दिवा नक्तंचारिभ्यइति नक्तम् । बह्वृचगृह्यदर्शनादियंव्यवस्था ॥ ९० ॥

( ४ ) **राघवानन्दः** । आकाशे अन्तरिक्षे । क्षिपेदूर्ध्वंक्षिपेत् ॥ ९० ॥

( ५ ) **नन्दनः** । दिवाचरेभ्योदिवा नक्तंचारिभ्योनक्तम् ॥ ९० ॥

( ६ ) **रामचन्द्रः** । विश्वेभ्योदेवेभ्यआकाशऊर्ध्वंबलिंक्षिपेत् । तथादिवाचरादीनामूर्ध्वंबलिंक्षिपेत् ॥ ९० ॥

**पृष्ठवास्तुनि कुर्वीत बलिंसर्वात्मभूतये ॥ पितृभ्योबलिशेषंतु सर्वंदक्षिणतोहरेत् ॥ ९१ ॥**

( १ ) **मेधातिथिः** । पूर्वयोराहुत्योःशेषोऽयम् । आधारविधानार्थमाद्योऽर्धश्लोकः आवासकस्योपरिय आवासस्तत्पृष्ठवास्तु एकशालायाअप्युपरिभागः । तत्रबलिंकुर्वीत दिवाचारिभ्योनक्तंचारिभ्यश्च । सर्वान्न भूतये तादर्थ्येचतुर्थी न संप्रदाने होमाद्यश्रुतत्वाद्बलिशब्दस्य पूर्वशेषत्वादाधारापेक्षत्वाच्च पूर्वयोराहुत्योः । नक्कचिदपि वैश्वदेवे सर्वान्नभूतिर्देवतात्वेन स्मृत्यन्तरेश्रुतातस्मादयमस्यार्थः । सर्वेषामन्नानांऋध्यर्थमेतच्चकर्तव्यमेतस्मिन्बलिहरणे कृते सर्वाण्यन्नानि भवन्ति । अवयवप्रसिद्ध्यात्वर्थावगमउपपद्यमाने समुदायार्थकल्पनमयुक्तम् । देवतापेक्षया वा दृष्टः कश्चिदर्थः कल्पयितव्यः । बलिशेषं शेषग्रहणात्पात्रे समुद्धृत्य ततोहोमः कर्तव्यः । नतुस्थालीस्थादेव बलिदानानि ग्रहीतव्यानि । दक्षिणतः दक्षिणस्यांदिशि तदभिमुखइतियावत् । सर्वं यावन्मन्त्रगृहीतम् ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वानुभूतिरुपश्रुतिस्तस्यै पृष्ठेवास्तुनि गृहवास्तुपृष्ठभागे । सर्वान्नभूतय इति क्कचित्पाठस्तत्र तत्पदवाच्यैव देवता ॥ ९१ ॥

( ३ ) **कुल्लूकः** । गृहस्योपरियद्गृहंतत्पृष्ठवास्तुबलिंदातुः पृष्ठदेशे भूभागे वा तत्र सर्वात्मभूतये नमइत्येवबलिंदद्यात् । उक्तबलिदानावशिष्टंसर्वमन्नंदक्षिणस्यांदिशि दक्षिणामुखःस्वधापितृभ्यइति बलिंहरेत् । प्राचीनावीतिना चायंबलिर्देयः स्वधापितृभ्यइति प्राचीनावीतीशेषंदक्षिणामुखोनिनयेदिति बह्वृचगृह्यवचनात् ॥ ९१ ॥

( ४ ) **राघवानन्दः** । पृष्ठवास्तुनि वायव्यकोणे सएव वास्तोःपृष्ठदेशः । गृहस्योपरि यदुच्चंतस्मिन्निति केचित् ।

---

( ९१ ) बलिंसर्वात्मभूतये=बलिंसर्वान्नभूतये ( ज, झ, ढ मेधा० )

सर्वात्मभूतयेस्वाहेति शेषंसर्वमन्नंपितृभ्यःस्वधेति प्राचीनावीती हरेत् दद्यात्। शेषंदक्षिणानिनयेदिति बह्वृचगृह्योक्तेः। तथैव दिशि दक्षिणस्याम् ॥ ९१ ॥

( ५ ) नन्दनः। पृष्ठवास्तुनि बहिर्वास्त्वित्यर्थः। सर्वात्मभूतये सर्वभूततृप्त्यर्थम् ॥ ९१ ॥

( ६ ) रामचन्द्रः। पृष्ठे गृहपृष्ठेभागे। तादर्थ्येचतुर्थी न संप्रदाने। सर्वान्नभूतयेऐश्वर्याय बलिंकुर्वीत। बलिशेषंपितृभ्यःसर्वंदक्षिणतोहरेत् कुर्यात् ॥ ९१ ॥

**शुनांच पतितानांच श्वपचां पापरोगिणाम् ॥ वायसानांकृमीणांच शनकैर्निर्वपेद्भुवि ॥ ९२॥**

( १ ) मेधातिथिः। अन्नंपात्रे समुद्धृत्य। श्वादीनामुपकाराय भुवि निःक्षिपेत्। पापरोगिणः कुष्ठिक्षय्यामयाव्यादयः। वयांसि पक्षिणः। शनकैर्भूम्युत्थितरजसायथा नसंसृज्यते। भूग्रहणंन पात्रप्रतिषेधाय किंतर्हि श्वपचपतितकुष्ठिभ्योन हस्ते दातव्यम्। उपकारविधानंचेदम्। अतएव षष्ठ्याऽयंश्लोकः। पठ्यते म चतुर्थ्यन्तेन पक्षिणांतादृग्देशे विधातव्यंयत्राबिभ्यतः श्वादयः खादन्ति। कृमीणामितितादृशे यत्र तेषांसंभवः ॥ ९२ ॥

( २ ) सर्वज्ञनारायणः। एतच्चवैश्वदेवार्थोद्धृतादन्नादन्येन तच्छेषस्य सर्वस्य पितृभ्यःप्रतिपादितत्वात्। तत्कालेच श्वादीनामन्नार्थिनामागमनएवशनैर्भुविदानम्। पतिताः पातकिनः प्रायश्चित्तीयभैक्षाचरणकर्तारः। श्वपचामिति चाण्डालादिसंकरजात्युपलक्षणम् ॥ पापरोगिणः कुष्ठ्यादयः। कृमीणां पिपीलिकादीनां शनकैर्यथानोपघातोभवेत् ॥ ९२ ॥

( ३ ) कुल्लूकः। अन्यदन्नंपात्रेसमुद्धृत्य श्वपतितादिभ्यः शनकैर्यथा रजसा नसंगृह्यते तथा भुवि दद्यात्। पापरोगीकुष्ठीक्षयरोगीवा ॥ ९२ ॥

( ४ ) राघवानन्दः। अन्नान्तरमादाय पापरोगिणां कुष्ठक्षयादियुक्तानां। निर्वपेत् दद्यात्। ग्रन्थान्तरस्वरसाच्चतुर्दशबलीनामेव नित्यत्वम् ॥ ९२ ॥

( ५ ) नन्दनः। शुनांश्वभ्यः। एवमुत्तरत्रापि। शनकैरशिथिलमित्यर्थः ॥ ९२ ॥

( ६ ) रामचन्द्रः। श्वादीनांशनकैर्भुवि निक्षिपेत् ॥ ९२ ॥

**एवं यः सर्वभूतानि ब्राह्मणोनित्यमर्चति ॥ सगच्छति परंस्थानंतेजोमूर्तिपथर्जुना ॥ ९३ ॥**

( १ ) मेधातिथिः। पूर्वस्योपसंहारः। सर्वग्रहणादन्येषामपिमृगकुक्कुटमार्जारादीनांग्रामेसंभवतामन्नेनोपकर्तव्यम्। अर्चतिरनुग्रहे न पूजायां श्वादीनां तदसंभवात्। अवज्ञानप्रतिषेधार्थंचैव मुपात्तंनानुगृण्हातीति पठितम्। परंस्थानंधाम ब्रह्मप्राप्तिः। पथर्जुना न संसारयोनीर्बह्वीर्भ्राम्यति। किंपुनरेतत्फलविधानं नेतिब्रूमः। नित्योऽयंविधिरित्युक्तम्। नित्येचफलश्रवणमर्थवादः। नह्यत्रविधिःश्रूयते। गच्छतीतिवर्तमानापदेशोऽयम्। तेजोमूर्तिः केवलतेजःशरीरः न पाञ्चभौतिकंशरीरमभिसंबध्यते बोधस्वभावएव भवति निष्कल्मषता वानेन लक्ष्यते शुद्धप्रकृतिर्भवतीत्यर्थः। भूतानुकम्पनंचेदम्। असति शास्त्रातिक्रमे पापसंबन्धस्याभावाच्छुद्धता युक्ता। इतरथा पापस्य मलरूपत्वान्न तेजोमूर्तिः। असति च पापे परंधामश्रेष्ठमदुःखरूपंप्राप्नोतीत्येवंयुक्तमेव ॥ ९३ ॥

( २ ) सर्वज्ञनारायणः। परस्थानं ब्रह्मलोकं। तेजोमूर्तिर्हिरण्यगर्भदेहः। ऋजुना पथा अर्चिरादिमार्गेण ॥ ९३ ॥

( ३ ) कुल्लूकः। एवमुक्तप्रकारेण यः सर्वभूतान्यन्नदानादिना नित्यंपूजयति सपरंस्थानंब्रह्मात्मकंतेजोमूर्तिप्रका-

---

(९३) तजोमूर्ति=तेजोमूर्तिः (मे०)

शमवक्रेण वर्त्मनार्चिरादिमार्गेण प्राप्नोति ब्रह्मणि लीयते इत्यर्थः । ज्ञानकर्मभ्यांमोक्षप्राप्तेः । तेजोमूर्तिरिति सविसर्गपाठे प्रकृष्टब्रह्मबोधस्वभावोभूत्वेतिव्याख्या ॥ ९३ ॥

( ४ ) **राघवानन्दः** । सार्थवादंबलिमुपसंहरति एवमिति । परंभुवर्लोकात् ऋजुना अवक्रेण । उत्तरमार्गेणेति केचित् । तन्न विद्याकर्मसाध्यत्वात्तस्य । किंतुधूममार्गेणात्र संवत्सराप्रवेशादजुत्वंस्तुतिः । अथयइमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति । तथाकर्मणा पितृलोके न तत्र दक्षिणायनिनो विद्वांसस्तपस्विनइत्यादि श्रुतेर्विरोधः । ब्राह्मणइत्युपलक्षणमन्येषाम् । यद्वा ब्राह्मणो ब्रह्मबुभूषुःनित्यकर्मणा शुद्धिद्वारा चातुर्वर्ण्यमोक्षहेतुत्वात् । तथाऋजुनेति भूतार्थवादः ॥ ९३ ॥

( ५ ) **नन्दनः** । बलिहरणफलमाह एवमिति । ब्राह्मणःद्विजः ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । एवंयो ब्राह्मणःसर्वभूतानि नित्यमर्चयति पूजयति सतेजोमूर्तिःसन् ऋजुना यथा अर्चिरादिमार्गेण परंस्थानंधाम गच्छति ॥ ९३ ॥

**कृत्वैतद्बलिकर्मैवमतिथिंपूर्वमाशयेत् ॥ भिक्षांच भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ ९४ ॥**

( १ ) **मेधातिथिः** । अतिथिलक्षणंवक्ष्यति । तमभ्यागतंसन्तंपूर्वमाशयेद्भोजयेत् । सर्वभोक्तृभ्योगृहसंनिहितेभ्यःभिक्षांभिक्षवे च याचमानाय दद्यात् । भिक्षाशब्देन स्वल्पपरिमाणमन्नदानमुच्यते । उक्तंहि प्रसृतिर्भिक्षा अन्तःपुरप्रसिद्धंचैतत् । ब्रह्मचारिणे विधिवत् अन्यस्माअपि पाखण्डादिरूपाय भिक्षवेनविधिवद्दातव्या । ब्रह्मचारिणे तु विधिवत्स्वस्तिवाचनपूर्वंभिक्षादानमित्येषविधिः। अथवा भिक्षुः परिव्राड्ब्रह्मचारी प्रथमाश्रमी चशब्दश्चास्थाने वृत्तानुरोधात् ब्रह्मचारिणेचेति पठितव्यम् । एवंतु वानप्रस्थाय न दानंस्यात् । तस्माद्भिक्षइतिभिक्षुस्तस्यैवविशेषणंब्रह्मचारिग्रहणम् । तेन त्रिभ्योऽप्याश्रमिभ्योभिक्षादानंनियमतोऽनुज्ञातंभवति । पाखण्डादीनांतु पतितादिवत्सर्वग्रहणेन भिक्षोपकारोयथाशक्तिविहितएव ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वमात्मनः । भिक्षवेयतये ॥ ९४ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेणै तद्बलिकर्म कृत्वा गृहभोक्तृभ्यः पूर्वमतिथिंभोजयेत् । भिक्षवे परिव्राजे ब्रह्मचारिणे प्रथमाश्रमिणे च विधिवत्स्वस्तिवाच्यभिक्षादानमप्पूर्ध्वमिति गौतमाद्युक्तविधिना भिक्षांदद्यात् । ग्रासप्रमाणा च भिक्षा भवति ग्रासमात्रा भवेद्भिक्षेति शातातपवचनात् । सम्भवेत्वधिकमपि देयम् ॥ ९४ ॥

( ४ ) **राघवानन्दः** । अधुना बलिमनुवदन् नृयज्ञविधेः कालमाह कृत्वेति । पूर्वंस्वभोजनात् ब्रह्मचारी गृही वानप्रस्थोभिक्षुरिति स्मरणात् भिक्षुः सन्यासी तस्मै ब्रह्मचारिणे च विधिवत् ग्रासमात्राभवेद्भिक्षेति शातातपोक्ते स्तत्परिमाणदानस्यावश्यकत्वात् ॥ ९४ ॥

( ५ ) **नन्दनः** । अथ मनुष्ययज्ञंप्रपञ्चयति कृत्वैतदिति । विधिवत्स्वस्तिवाचयित्वेत्यर्थः ॥ ९४ ॥

**यत्पुण्यफलमाप्नोति गांदत्वा विधिवद्गुरोः ॥ तत्पुण्यफलमाप्नोति भिक्षांदत्वा द्विजोगृही ॥ ९५ ॥**

( १ ) **मेधातिथिः** । नित्यंभक्तदानमर्थिने शक्तितोदातव्यम् । इदंत्वधिकारान्तरम् । यद्गुरवे गांदत्त्वा फलमाप्नोति तद्भिक्षांदत्त्वा गोव्रतस्याविशिष्टमिति । स्मृत्यन्तरे सर्वफलता पापप्रमोचनार्थताऽपि गोदानस्य श्रुता यावतामल्पोपकाराणां

---

( ९५ ) वद्गुरो=वदगोः ( नंदनः )

महोपकारैः फलसाम्यमुच्यते तेषांलोकवत्परिमाणतः फलविशेषोऽवगन्तव्यःप्राप्यतेतेदेवफलम् । नतुचिरकालमावाच्यो-ह्ययंन्यायः । पणलभ्यंहि तत्प्राज्ञः क्रीणाति दशभिः पणैरितिसमानफलत्वेमहाप्रयासानर्थक्यंप्राप्नोति । अगुर्यथाविधी-तिकेचित्पठन्ति । तत्रनअल्पवचनोद्रष्टव्योऽल्पगुरिति पुण्यंधर्मस्तस्यफलम् ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । पुण्यरूपफलंपुण्यफलं ॥ ९५ ॥

( ३ ) **कुल्लूकः** । गुरवे गांदत्वा विधिवत्स्वर्णशृङ्गिकादिविधानेन यत्फलंप्राप्नोति तद्गृहस्थोविधिना भिक्षादानात्प्रा-प्नोति ॥ ९५ ॥

( ४ ) **राघवानन्दः** । भिक्षादाने अतिशयफलमाह यदिति । द्विजइति त्रैवर्णिकः । तेषां पक्कान्नस्य ग्राह्यत्वात् ।९५

( ५ ) **नन्दनः** । अगोः गोहीनाय ॥ ९५ ॥

**भिक्षामप्युदपात्रंवा सत्कृत्य विधिपूर्वकम् ॥ वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥ ९६॥**

( १ ) **मेधातिथिः** । अथविधिवदित्युक्तंसोऽयंविधिरुच्यते । अप्रकृतस्योदपात्रस्यश्रवणंसर्वदानृणांन भिक्षादान-स्यैवेतिदर्शयितुम् । सत्कृत्य पूजयित्वा । विधिः पूर्वोयस्य दानस्य तद्विधिपूर्वकम् । पूर्वशब्दः कारणवचनः । शास्त्रनि-मित्तकमेतदित्यर्थः । इतिकर्तव्यतावाविधिःसापूर्वकर्तव्या । वेदस्यतत्त्वार्थः पारमार्थिकोनिःसंशयोऽर्थस्तंवेत्ति तस्मै ब्रा-ह्मणायोपपादयेद्दद्यात् । ब्राह्मणायेतिजातिनियमः । विदुषइतिगुणनियमः । तेन यत्किंचिद्दातव्यंतद्ब्राह्मणाय तस्मै च वेदार्थविदे पूजापूर्वकमित्यर्थः ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । वेदस्य तत्वार्थोवास्तवार्थोब्रह्म तद्विदुषे ॥ ९६ ॥

( ३ ) **कुल्लूकः** । प्रचुरान्नाभावे ग्रासप्रमाणांभिक्षामपिव्यञ्जनादिना सत्कृत्य तदभावे जलपूर्णपात्रमपि फलपुष्पा-दिना सत्कृत्य तत्त्वतोवेदतदर्थज्ञानवते ब्राह्मणाय स्वस्तिवाच्येत्यादिविधिपूर्वकंदद्यात् ॥ ९६ ॥

( ४ ) **राघवानन्दः** । विशिष्टपात्रे तस्यावश्यकत्वमाह भिक्षामिति । सत्कृत्य पञ्चग्रासाभावे ग्रासमात्रमपि व्यञ्जनैः संस्कृत्य देयम् । तदभावे उदकमात्रंवा फलादिभिः सत्कृत्य वेदतत्वार्थविदुषे वेदस्य तत्वार्थोबाधाप्रतियोगि ब्रह्म तद्विदे । तदुक्तम् । एकोपि ब्रह्मविद्भुङ्क्ते जगत्तर्पयतेखिलम् । तस्माद्ब्रह्मविदे देयंयदस्ति वसु किंचनेति ॥ ९६ ॥

( ५ ) **नन्दनः** । अनुकल्पमाह भिक्षामिति ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । उपपादयेत् अयाचितंदद्यात् ॥ ९६ ॥

**नश्यन्ति हव्यकव्यानि नराणामविजानताम् ॥ भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः॥ ९७॥**

( १ ) **मेधातिथिः** । पूर्वेण यादृशे देयंतत्पात्रमुक्तम् । अनेनापात्रे ददतः प्रतिषेधः । नश्यन्ति निष्फलानि भव-न्ति हव्यानि देवतोद्देशेन यानि ब्राह्मणभोजनादीनि क्रियन्ते । पित्र्यकर्माङ्गभूतान्यन्यानि कव्यानि श्राद्धानि भस्मभूतेषु-भस्मतांप्राप्ताभस्मभूता । उपमाने वा भूतशब्दः भस्मानीव यथाकाष्ठभूतइति । किंपुनर्भस्मनासाम्यंयथा तन्नक्वचिदुपयु-ज्यतेऽवकररूपमपोह्यमेवमीदृशोब्राह्मणः क्रियाभ्योऽपोहितव्यइति तात्पर्यार्थः । नराणामविजानतांनश्यन्तीतिसंबन्धः । मोहाद्दत्तानि दातृभिः । अविजानतांमोहादितिचानुवादः । यच्छास्त्रेणापोहितंतन्मोहादेव क्रियते ॥ ९७ ॥

---

( ९७ ) भस्मीभूते=भस्मभूते ( मे० )

( २ ) **सर्वज्ञनारायणः** । हव्यं देवार्थमन्नं कव्यं पित्रर्थं । अविजानतां पात्रगुणदोषौ । भस्मभूतेषु प्रकाशगुणशक्तिशून्येषु । मोहात् भ्रमात् ॥ ९७ ॥

( ३ ) **कुल्लूकः** । मोहाद्यत्पात्रानभिज्ञतया देवपित्रुद्देशेनान्नानि वेदाध्ययनतदर्थज्ञानानुष्ठानतेजःशून्यतया भस्मरूपेष्विव पात्रेषु दत्तानि दातृभिर्निष्फलानि भवन्ति ॥ ९७ ॥

( ४ ) **राघवानन्दः** । विद्वत्प्रशंसार्थमन्यनिन्दामाह नश्यन्तीति । फलमदत्वा नश्यन्ति । अविजानतां पात्रमिति शेषः । भस्मीभूतेषु वेदतदर्थज्ञानशून्यतया तादृशफलाजनकत्वान्निन्दामात्रम् । अतादृशेष्वपिदेयम् अन्यथा अन्नस्य क्षुधितंपात्रमिति वचनविरोधः ॥ ९७ ॥

( ५ ) **नन्दनः** । अविजानतांदातृणांहव्यकव्यानि नश्यन्ति । भस्मीभूतेषु निस्तेजस्केषु ॥ ९७ ॥

( ६ ) **रामचन्द्रः** । अविजानतांमूर्खाणांमराणां मोहात् दातृभिर्दानशीलैर्दत्तानि भस्मीभूतेषु विप्रेषु वेदाध्ययनतदर्थज्ञानरहितेषु भस्मतुल्येषु विप्रेषु दत्तानि हव्यकव्यानि विनश्यन्ति ॥ ९७ ॥

**विद्यातपःसमृद्धेषु हुतंविप्रमुखाग्निषु ॥ निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात् ॥ ९८ ॥**

**[ अनर्हते यद्ददाति न ददाति यदर्हते ॥ अर्हानर्हापरिज्ञानाद्धनी धर्मान्निहीयते * ॥ १ ॥**

**काले न्यायागतंपात्रे विधिवत्प्रतिपादितम् ॥ ददाति परमंसौख्यमिहलोके परत्र च ॥ २ ॥**

**प्रतिग्रहेण शुद्धेन शस्त्रेण क्रयविक्रयात्॥ यथाक्रमंद्विजातीनांधनंन्यायादुपागतम् ॥३॥ ऽऽ ]**

( १ ) **मेधातिथिः** । कीदृशाः पुनरभस्मभूतास्तानाह । विद्यातपोभ्यांसमृद्धास्तद्व्यतिरिक्ता भस्मभूताः । समृद्धिरतिशयिनी संपत्तिः । बहुविद्यया महता च तपसा युक्ताएवमुच्यन्ते । समुदायसंबन्धिनी अपि विद्यातपसी संबन्धिसंबन्धादवयवभूतमुखैः सामानाधिकरण्यंप्रतिपद्येते । विप्राणांमुखान्यग्नयइत्यत्र व्याघ्रादेराकृतिगणत्वात्समासः । यथाग्नौहुतंफलवद्भस्मनिहुतंनिष्फलमेवमीदृशंभोजनंब्राह्मणमुखनिक्षिप्तंहुतमिति भोजनमेव स्तुत्योच्यते । यागहोमादि महाफलतयाप्रसिद्धम् । अतः प्रख्याततमगुणेनाप्रख्यातमुपमीयते । निस्तारयतिदुर्गात् दुर्गंव्याधिशत्रुराजपीडादि ततोनिस्तारयति रक्षति न तेन संसृश्यते । महतश्च पापात्परलोकेऽपि नरकादिगतेस्त्रायते । न केवलमाभ्युदयिककर्मेदृक्पात्रविषयम् । प्रायश्चित्तार्थमपितद्गुणायैव दातव्यम् ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । विप्रेषु मुखानिविप्रमुख्यानितद्रूपेष्वग्निषु मुखशब्दोयंमुख्यार्थेपि पठ्यते । वक्त्रार्थत्वंतुतपःसमृद्धेष्वित्ययोगाद्धेयं । दुर्गात् इहलौकिकदुःखहेतोःपापात् । महतःकिल्बिषात् पारलौकिकदुःखहेतोः ॥ ९८ ॥

( ३ ) **कुल्लूकः** । विद्यातपस्तेजःसंपन्नविप्राणांमुखानि होमाधिकरणत्वेनाग्नितया निरूपितानि हव्यकव्यादिप्रक्षिप्तमिहलोके दुस्तराद्व्याधिशत्रुराजपीडादिभयान्महतश्च पापादमुत्र नरकात्त्रायते ॥ ९८ ॥

( ४ ) **राघवानन्दः** । तस्माद्विद्वत्सुदेयमिति निगमयति विद्येति विप्राणांमुखान्येवाहवनीयाद्यग्नयः । तेषु विप्रमुखाग्निषु परंपरया विद्यादियुक्तेषु हुतंतदुद्दिश्य दत्तमन्नादि तारयतीत्यन्वयः । दुर्गादापद्गणात् महतः । अन्नादेर्भ्रूणहा मार्ष्टीति वक्ष्यमाणत्वात् ॥ ९८ ॥

---

* धनी धर्मान्न=बलाद्धर्माच्च ( ल ) ( ऽऽ ) ( क, ल )

( ६ ) **रामचन्द्रः** । विप्रस्य मुखमेवाग्निस्तेषु विप्रमुखाग्निषु । कीदृशेषु मुखेषु विद्यातपोभिःसमृद्धेषु ॥ ९८ ॥

**संप्राप्ताय त्वतिथये प्रदद्यादासनोदके ॥ अन्नंचैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ ९९ ॥**

( १ ) **मेधातिथिः** । संप्राप्ताय स्वयमुपस्थिताय नतुनिमन्त्रिताय । नहिनिमन्त्रितोतिथिर्भवति । प्राप्तिदेशंच वक्ष्यति । भार्यायत्राग्नयोऽपिवेति । आसनोदके दद्यात् पादधावनोपयोगिप्रथममुदकंततआसनंभोजनंच । यथा शक्तिसंस्कृत्येत्यन्नविशेषगम् । सविशेषमन्नंसंस्कृत्य दद्याद्भोजयेत् । विधिपूर्वकं विधिः पूर्वोयस्मिन्दाने तदेव मुच्यते । विधिः शास्त्रंतत्पूर्वंनिमित्तंप्रमाणमित्यर्थः ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । उदकं पादप्रक्षालनार्थं । विधिपूर्वकं आपस्तम्बोक्तातिथ्यधर्मेण । तत्र ह्यग्निरिव ज्वलन्नतिथिरभ्यागच्छतीत्यादिना व्रीहियवान्यतरनिर्वापपाकादिरूपमातिथ्यमुक्तम् ॥ ९९ ॥

( ३ ) **कुल्लूकः** । स्वयमागतायत्वतिथये आसनंपादप्रक्षालनाद्युदकंयथासम्भवंव्यञ्जनादिभिःसत्कृतंचान्नमासनावसथावित्यादिवक्ष्यमाणविधिपूर्वकंदद्यात् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । आतिथ्यस्य नित्यत्वमनुवदंस्तदकरणे प्रत्यवायमाह संप्राप्तायेति । संप्राप्ताय गृहमागताय ॥ ९९ ॥

( ५ ) **नन्दनः** । अतिथिपूजाप्रकारमाह संप्राप्तायेति ॥ ९९ ॥

**शिलानप्युञ्छतोनित्यंपञ्चाग्नीनपि जुह्वतः ॥ सर्वंसुकृतमादत्ते ब्राह्मणोनर्चितोवसन् ॥ १०० ॥**

( १ ) **मेधातिथिः** । अत्यन्तदरिद्रस्याप्यतिथिपूजाव्यतिक्रमोन युक्तः । शिलान्केदारलवनशेषानुञ्छतउच्चिन्वतः एतच्चवृत्तिसंकोचोपलक्षणार्थम् । पञ्चाग्नीनपि जुह्वतः अनेनशास्त्रानुष्ठानसंपन्नोऽत्यन्तदरिद्रश्च यद्यतिथिमागतंन पूजयत्यन्नदानादिना तदातदनुष्ठानंसवृत्तिसंयमोनिष्फलतामेति । ततश्चसर्वंसुकृतंपुण्यमादत्तेअतिथिर्गृह्णाति निष्फलीकुरुते । अनर्चितोवसन् तस्मादर्चयेदितिविध्यर्थः । वसन्नितिलिङ्गात्सायमागतेविधिरयम् । पञ्चाग्नयस्त्रेता गृह्यःसभ्यश्च । अथ कोऽयंसभ्योनामाग्निः । एवंहस्माहुः ग्रामान्तरे प्रोषितस्य यत्र लौकिकपाकः क्रियते महासाधनस्य बहुवेश्मसु योगृहागारादेव शीतापनोदार्थंविन्हियते ससभ्यः । होमस्तर्हि तत्र कः यावता तस्मिंगृह्यानीतिनियमः । अस्मादेव वचनात् वैश्वदेवहोमः प्रोषितस्य लौकिकेऽप्यस्तीति मन्यन्ते । व्रीहियवैः शुष्कधान्यैर्यत्रलेलिहानं सुसमिद्धंपश्येत्तत्राभिजुहुयादितिस्मृतिवचनमुदाहरन्ति । इहभवन्तस्त्वाहुः उपनिषत्सु पञ्चाग्निविद्योक्ता तत्र तेषांकल्पिताग्निरूपाणितद्रूपेण यदुपासनंयच्चवेदनंसहोमइति कल्प्यते सा हि सर्वश्रौतेभ्यः कर्मभ्योऽतिशयफलेष्यते एवंहि तत्राम्नायते स्तेनोहिरण्यस्य सुरांपिबंश्चगुरोस्तल्पमावसनब्रह्महाच तेपतन्ति चत्वारः संसर्गीच । पञ्चानामपि यत्फलं तदतिथावाराधितेऽविमुखीकृते नश्यतीतिप्रशंसातिशयेनावश्यकर्तव्यतांदर्शयति । यद्यपि प्रातराशेप्यतिथिभोजननियमः सायंतु तद्व्यतिक्रमेप्रायश्चित्ताधिक्यम् । यथाशक्तीतिपूर्वश्लोकेऽन्नविषयं येमन्यन्ते तएवमाहुर्यथाशक्त्यतिथयःपूजयितव्याएकोद्वौ बहवइति ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । शिलान्सस्यमञ्जरीरुञ्छत आकृष्यगृण्हतइतिहि वृत्तिसंकोचेन तपश्चर्योक्ता । अतिथित्वेनागतोऽनर्चितोवसनन्यत्रापि ॥ १०० ॥

---

( ९९ ) सत्कृत्य=संस्कृत्य ( मे० ) ( १०० ) वसन्=व्रजन् ( क, भ, ब, )

( ३ ) **कुल्लूकः** । लूनकेदारशेषधान्यानि शिलस्तानपि उञ्छन्वतोवृत्तिसंयमान्वितस्य त्रेतावसथ्यःसभ्यश्चेतिपञ्चाग्नयःसभ्योनामाग्निःशीतापनोदाद्यर्थंयस्तत्र प्रणीयते पञ्चस्वग्निषु होमंकुर्वाणस्य सर्ववृत्तिसंकोचै*नपञ्चाग्निहोमार्जितपुण्यमनर्चितोऽतिथिर्वसन्गृह्णाति । अनया च निन्दयातिथ्यनर्चनस्यनित्यतागम्यते ॥ १०० ॥

( ४ ) **राघवानन्दः** । तत्रैवार्थवादमाह शिलामिति । केदारे अवशिष्टधान्यं शिला तान्युञ्छतः आधानं कुर्वतः । सभ्यावसथ्याहवनीयगार्हपत्यदक्षिणाग्निसंज्ञकान् पञ्चाग्नीन् जुव्हतस्तस्यसुकृतंयदुत्पन्नं तत्सर्वमादत्ते आत्मसात्करोति अनर्चितो वक्ष्यमाणतृणाद्यैरपि ॥ १०० ॥

( ५ ) **नन्दनः** । अतिथिपूजामकुर्वतोनिन्दामाह शिलानपीति । व्रीहिकणिशानि शिलास्तानुञ्छत उपाददतः शिलेन जीवतइत्यर्थः । अनेनैवं ज्ञायते शिलवृत्तित्वंपञ्चाग्नित्वंचप्रशस्ततरमिति ॥ १०० ॥

( ६ ) **रामचन्द्रः** । शिलांशिलावृत्तिं उञ्छतःकुर्वतः । नित्यंपञ्चाग्नीन्जुह्वतःबलिवैश्वदेवादीन्कुर्वतः एतादृशस्य गृहे-अनर्चितःविप्रःरात्रौ वसन्सर्वंसुकृतं आदत्ते स्वीकुर्यात् ॥ १०० ॥

**तृणानि भूमिरुदकंवाक्चतुर्थी च सूनृता ॥ एतान्यपि सतांगेहे नोच्छिद्यन्ते कदाचन ॥ १०१ ॥**

( १ ) **मेधातिथिः** । यदि दारिद्र्यात्सायमन्नदानंन घटते तदा नैवंमन्तव्यंप्रधानमतिथेर्भोजनंतच्चमेनास्तीतिकिमनेन मद्गृहेप्रविष्टेनेति । यतोऽशक्तस्यतृणादिदानेनाप्यतिथिपूजाविधिः समुच्यते । अथवानायंविधिर्भोजनएवपर्यवस्यति । किंतर्हि निवसतः शयनादि दातव्यम् । तृणग्रहणंस्रस्तरोपलक्षणार्थम् । भूमिरासनशयनविहारस्थानम् । सूनृतवाक्-प्रियहितवचनंकथाप्रस्तावादि वा । एतान्यप्यन्नाभावे सतामागतस्यातिथेर्नोच्छिद्यन्ते किंतु दीयन्ते सर्वकालम् ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः** । तृणानि शयनार्थानि भूमिस्तदास्तरणार्था । सूनृता प्रिया वाक् । नोच्छिद्यन्ते ननदीयन्ते ॥ १०१ ॥

( ३ ) **कुल्लूकः** । अन्नासंभवे पुनस्तृणविश्रामभूमिपादप्रक्षालनाद्यर्थजलप्रियवचनान्यपि धार्मिकगृहेष्वतिथ्यर्थंन कदाचिदुच्छिद्यन्ते । अवश्यदेयानीति विधीयते । तृणग्रहणंशयनीयोपलक्षणार्थम् ॥ १०१ ॥

( ४ ) **राघवानन्दः** । अन्नदानाशक्तौ प्रतिनिधितया प्रकारान्तरमाह तृणानीति । सूनृतेतिविशेषणादन्नसंपत्तौ मिथ्या विनयोन कार्यः । नोच्छिद्यन्ते प्रायशोगृहे नविनाभावीनीत्यर्थः ॥ १०१ ॥

( ५ ) **नन्दनः** । मुख्यकल्पाभावेऽतिथिरनुकल्पेनाप्यर्चनीयइत्यभिप्रायेणाह तृणानीति । तृणान्यासनाभावे भूमिः शयनाभावे । उदकंपादाभ्यञ्जनाभावे । सूनृता कल्याणी वागन्नाभावे ॥ १०१ ॥

**एकरात्रंतु निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥ अनित्यंहि स्थितोयस्मात्तस्मादतिथिरुच्यते ॥ १०२ ॥**

( १ ) **मेधातिथिः** । नातिप्रसिद्धोलोकेतिथिशब्दार्थइति तदर्थलक्षणमाह । एकरात्रंवसतःपरगृहेऽतिथित्वम् । तच्च ब्राह्मणस्य नजात्यन्तरेद्वितीयेन्हि पूजाविधौ कामचारोऽभ्युदयविशेषार्थिनस्तदधिकारोननैयमिकः । तथाचापस्तम्बः एकरात्रिंवासयेत्पार्थिवांल्लोकानभिजयतिद्वितीयामान्तरिक्षांस्तृतीयांदिव्यानितिफलकामस्य द्वितीयादिरात्रिष्वधिकारंदर्शयति । अत्रैव निर्वचनंदार्ढ्यार्थमाह । अनित्यंहि स्थितिःतिष्ठतेरतिपूर्वस्यायंशब्दः । औणादिकैःकथंचिद्व्युत्पत्तिः ॥ १०२ ॥

* चोन=च ( अ )

( २ ) **सर्वज्ञनारायणः** । तद्ग्रामे द्वितीयदिनवासे तस्य नातिथित्वमित्यर्थः । अनित्यंस्थितइत्यत्रार्थेऽतिथिपदंनिपात्यतइत्यर्थः ॥ १०२ ॥

( ३ ) **कुल्लूकः** । अप्रसिद्धत्वादतिथिलक्षणमाह एकेति । एकरात्रमेव परगृहे निवसन्ब्राह्मणोतिथिर्भवति । अनित्यावस्थानान्नविद्यते द्वितीयातिथिरस्येतिअतिथिरुच्यते ॥ १०२ ॥

( ४ ) **राघवानन्दः** । उक्तातिथेर्लक्षणमाह एकरात्रमिति । एकरात्रिमभिव्याप्य वसन्ब्राह्मणएवातिथिः वासायन विद्यते द्वितीया तिथिर्यस्येति सोऽतिथिः । सर्वत्र ब्राह्मणपदग्रहणात् क्षत्रियादयो नातिथयः ॥ १०२ ॥

( ५ ) **नन्दनः** । कालतोऽतिथिनियममाह एकेति । एकरात्रंवसन्नपि ब्राह्मणश्चेदतिथिर्न क्षत्रियादिः । अत्रहेतुमतिथिशब्दनिर्वचनेनाह । अनित्यशब्दादकारमिकारंतकारंचादायस्थितशब्दात्थकारमिकारंचादायसन्निवेश्यातिथिरित्युच्यते ॥ १०२ ॥

**नैकग्रामीणमतिथिंविप्रंसांगतिकंतथा ॥ उपस्थितंगृहे विद्याद्भार्या यत्राग्नयोऽपि वा॥ १०३॥**

( १ ) **मेधातिथिः** । एकस्मिन्ग्रामे योवसतिवैश्वदेवकालोपस्थितोनातिथिः सांगतिकःसहाध्यायी । सख्युरन्यस्तस्यह्युत्तरत्र विधिर्भविष्यति वैश्यशूद्रौसखाचेति । योऽपि सर्वेण संगच्छते विचित्रपरिहासकथादिभिः सांगतिकशब्देनयुक्तः प्रतिषेद्धुंप्रागदृष्टपूर्वोऽपि नच गृहस्थस्य प्रोषितस्यास्य सर्वलक्षणलक्षितोऽप्यतिथिः । किंतर्हिउपस्थितंगृहे विद्यात् यत्तस्यानित्यंस्थानम् । यदुच्यते प्रोषितस्यापि भार्यायत्राग्नयश्च । तत्रासंनिहितस्यापि गृहस्थस्य भवत्येवातिथिः । अतोयथासंविधायाग्निहोत्रदर्शपूर्णमासादिषु प्रवसति तद्वदतिथयेऽपिसंविधातव्यम् । वाशब्दात्त्वेवंप्रतीयते भार्याग्निभिःसह यदा प्रवासस्तदा भवत्येव ग्रामान्तरस्थस्याप्यतिथिः । असंनिहितस्यापि गृहे भार्याग्निषु सत्सु ततश्च यदि भार्यया सह प्रवसेदग्नयश्च गृहएवभवेयुस्तदा नातिथिपूजानियमइति । वाशब्दउपस्थितंगृहेविद्यादित्येतदपेक्षया न परस्परापेक्षयाभार्यामाग्नीनाम् ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । एकग्रामीणमेकग्रामे चिरनिवासिनम् । सांगतिकं संगतिः संबन्धः तत्पुरस्कारेणागतम् । तथा यत्र यस्य प्रवासिनोपि भार्या अग्नयोवा सह गच्छन्ति तदन्यतमं स्वे गृहउपस्थितमागतमप्यतिथिं न विद्यान्नातिथिधर्मेणार्चयेत् । अग्नयोपिवेति वचनादभार्यस्याप्यग्नयः संभवन्तीति गम्यते । श्रूयते च श्रुतावपत्नीकोप्यग्निहोत्रमाहरेदिति ॥ १०३ ॥

( ३ ) **कुल्लूकः** । एकग्रामनिवासिनंलोकेषु विचित्रपरिहासकथादिभिःसंगत्या वृत्त्यर्थिनंभार्याग्नियुक्तोगृहे वैश्वदेवकालोपस्थितमपि नातिथिंविद्यात् । एतेन भार्याग्निरहितस्य प्रवासिनोनातिथित्वमिति बोधितम् ॥ १०३ ॥

( ४ ) **राघवानन्दः** । तत्रैव व्यतिरेकमाह नैकेति । विप्रमप्येकग्रामवासिनं । सांगतिकं विचित्रविद्येतिहासकथाभिः संगत्या प्रत्यर्थिनं । भार्याग्नियुक्ते गृहेउपस्थितमतिथिंविद्यात् । अतएव भार्याग्निविरहितस्य नातिथ्यकार्यतावश्यकेति गतिस्थानकल्पोवा तेन भार्यायाःसत्वमावश्यकम् ॥ १०३ ॥

---

१ युक्तो=युक्त ( अ )
२ मिति=रि ( अ )

( ५ ) **नन्दनः** । देशतोऽतिथिनियममाह नैकेति । अतिथिलक्षणयुक्तमप्येकग्रामवासिनंतथासांगतिकंसंगतेन चरन्तं कचिदतिथित्वेन संगतपूर्वमितियावत्तंनातिथिंविद्यात् । यत्र स्वकीयेपरकीयेवा गृहे भार्याग्नयोऽपि सन्ति तत्रोपस्थितमतिथिंविद्यात् नान्यंविप्रोषिताग्निभार्यस्याभ्याशमागतम् ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । एकग्रामीणंविप्रंगृहउपस्थितंवैश्वदेवसमये प्राप्तमतिथिं न विद्यात्तथा सांगतिकंसहाध्यायीच चित्रकथाभिःसहसंगच्छते तमतिथिं न विद्यात् । गृहमागतमपीत्यर्थः यत्र भार्या वाऽग्नयोऽपिवा वर्तन्ते तत्रागतम् ॥ १०३ ॥

**उपासते ये गृहस्थाः परपाकमबुद्धयः ॥ तेन ते प्रेत्य पशुतांव्रजन्त्यन्नादिदायिनाम् ॥ १०४ ॥**

**[ परपाकान्नपुष्टस्य सततंगृहमेधिनः ॥ दत्तमिष्टंतपोऽधीतंयस्यान्नंतस्य तद्भवेत् ॥ १ ॥ ] ऽऽ**

( १ ) **मेधातिथिः** । उपासनंतदभ्यासः । योब्राह्मणोऽनयैव बुद्ध्या तत्रतत्रोपतिष्ठेत यथातिथिरवश्यंभोजनंलभेत तस्येयंनिन्दा । यस्तच्छीलः परस्यसंबन्धिनंपाकमन्नमुपास्ते न तु कदाचित्तेन कर्मणा प्रेत्य पशुतांबलीवर्दादिजातिंव्रजति प्राप्नोति । अन्नादिदायिनस्तद्गृहे दन्तितांगर्दभतामश्वतांवाप्राप्नोति । गृहस्थस्यैषदोषोत्पन्नस्थालीपाकस्य ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । उपासते आमन्त्रणं विनाऽतिथिधर्मेण ॥ १०४ ॥

( ३ ) **कुल्लूकः** । अतिथिप्रकरणादातिथ्यलोभेन ये गृहस्थाःग्रामान्तराणिगत्वा परान्नंसेवन्ते ते निषिद्धपरान्नदोषानभिज्ञाः । तेन परान्नभोजनेन जन्मान्तरेअन्नादिदायिनांपशुतांव्रजन्ति । तस्मादिदंन कुर्यादिति निषेधःकल्प्यते॥१०४

( ४ ) **राघवानन्दः** । गृहस्थोभूत्वा आतिथ्यलोभेनातिथिर्न स्यादित्याह उपासतइति । उपासनं तात्पर्येण प्रवृत्तिः । अबुद्धयः पशुत्वप्राप्तिमविद्वांसः । दातारः श्लाघ्याइत्याह पशुतामित्यादि । तेनातिथ्यलोभमात्रेण ॥ १०४ ॥

( ५ ) **नन्दनः** । इदानीमतिथिप्रसङ्गाद्गृहस्थानामतिथिरूपेण परपाकभोजनप्रतिषेधार्थंनिन्दार्थवादमाह उपासतइति । उपासते परपाकंपरेषांपक्कान्नम् । तेन परपाकोपासनेन । तस्मात्परपाकभोजनप्रसक्तिर्न कार्येति ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । उपासते तेन कारणेन अन्नाद्यदातॄणां ते प्रेत्य पशुतांगर्दभतांव्रजन्ति ॥ १०४ ॥

[ परपाकेति । इष्टंयागादि दत्तंदानं अधीतंवेदाध्यनं । एतज्जन्यपुण्यंयस्यान्नंभक्षयति ]

**अप्रणोद्योतिथिः सायं सूर्योढोगृहमेधिना ॥ काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ॥ १०५ ॥**

( १ ) **मेधातिथिः** । सायंकालोऽस्तमयादिप्रदोषांतस्तस्यांवेलायामतिथिरागतोऽप्रणोद्यःअप्रत्याख्येयोभोजनशयनासनादिभिःप्रतिपूज्यः । केन गृहमेधिना मेधोयज्ञः गृहमेधोमहायज्ञानामियमाख्या तत्राधिकारी गृहमेधी गृहस्थइति यावत् । सूर्योढइत्यर्थवादः । सूर्येणोढः प्रापितः दैवोपनीतत्वादवश्यंपूजार्हकाले द्वितीयेवैश्वदेवकालेवा सायंभोजने निवृत्तेऽपि नास्य गृहस्थस्यानश्नन्गृहे वसेत् । यदि शेषमस्तितन्निवेदनीयं न चेद्धि पाकः कर्तव्यः ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । अप्रणोद्योऽनिराकार्यः । सूर्येणोढोयद्देहमधिष्ठाय सूर्यश्चरति ससूर्योढः । सच सायंयआगच्छति सभवति । अतएव श्रुतविषहवै सएकातिथिरित्येकशब्देन सूर्यपरामृश्यैकातिथित्वं तस्योक्त्का तस्मादाहुर्न

( ऽऽ ) अ, ख, ञ, ट, ड, ढ, ल ) रामचन्द्रेणव्याख्यातश्च

सायमतिथिमपनुद्येत्युपसंहृतं। तत्काले अतिथिबाहुल्याभावादेकातिथित्वम्। गृहधर्मएव मेधोयज्ञोस्येति गृहमेधी गृहस्थः। काले वैश्वदेवान्ते ॥ १०५ ॥

( ३ ) **कुल्लूकः**। सूर्येऽस्तमिते गृहस्थेनातिथिर्न प्रत्याख्येयः। सूर्येणोढः प्रापितोरात्रौ स्वगृहगमनाशक्तेः। द्वितीयवैश्वदेवकाले प्राप्तोऽकाले वा सायंभोजने निवृत्तेऽपि नास्य गृहेऽतिथिरनश्नन्वसेदवश्यमस्मै भोजनंदेयम्। प्रत्याख्यानेप्रायश्चित्तगौरवार्थोऽयमारम्भः। अतएव विष्णुपुराणे दिवा तिथौ तु विमुखे गते यत्पातकंनृप। तदेवाष्टगुणंप्रोक्तंसूर्योढे विमुखे गते। गोविन्दराजस्तुप्रतिषिद्धातिथिप्रतिप्रसवार्थत्वमस्याह ॥ १०५ ॥

( ४ ) **राघवानन्दः**। अतिथिमनुवदंस्तस्यापरिहार्यकालमाह अप्रणोद्यइति। अप्रणोद्यः अप्रत्याख्येयः। यतः सूर्योढः। अस्तंगच्छता सूर्येण प्रापितः। अतोविप्रकृष्टस्वगृहे गमनाशक्तोनानदन्वसेदित्याह कालेति। अकाले सायंभोजननिवृत्तौ। कालइवाकालेपि नानदन्वसेदिति वा ॥ १०५ ॥

( ५ ) **नन्दनः**। सायन्तनातिथिर्विशेषेण नोपेक्षणीयइत्याह अप्रणोद्यइति। सूर्योढः सूर्येण प्रापितोऽस्तंगच्छतासूर्येण देशान्तरगमनाशक्तिमापाद्य प्रापितइत्यर्थः। गृहमेधाः पञ्चमहायज्ञास्तद्वान्गृहमेधी तेन। अप्रणोद्योऽप्रेषणीयः। काले वैश्वदेवानन्तरकाले। अकाले। वैश्वदेवात्पूर्वस्मिन्काले स्वभोजनादुत्तरस्मिंश्च काले ॥१०५॥

( ६ ) **रामचन्द्रः**। कीदृशोतिथिः। सूर्योढः देहमधिष्ठायसूर्यश्चरति ससूर्योढः। सूर्येणानीतइत्यर्थः। गृहमेधिना गृहस्थेन गृहमेधोमहायज्ञःतेन गृहस्थेन कालेद्वितीयवैश्वदेवकाले प्राप्तः। अकाले वा सायंभोजनाभावे प्राप्तः। अनश्नन्नसन्नस्य गृहस्थस्य गृहे न वसेत् ॥ १०५ ॥

**न वै स्वयंतदश्नीयादतिथिंयन्न भोजयेत् ॥ धन्यं यशस्यमायुष्यंस्वर्ग्यंवातिथिपूजनम् ॥१०६॥**

( १ ) **मेधातिथिः**। सूपघृतदधिशर्करादियदुत्कृष्टमन्नंतत्स्वयंनाश्नीयादतिथौसंनिहितेयावत्तस्मैनदत्तम्। यत्तुयवागूरसकटुकादितदनिच्छते नदेयम्। तादृशमदत्तमश्नतोन दोषः। सर्वथा न संस्कृतमन्नंस्वयंभोक्तव्यं कदन्नमतिथिर्न भोजनीयइत्येवंपरमेतत्। धनाय हितंधनस्य निमित्तंचेतिधन्यम्। एवंयशस्यादयः शब्दाः। अर्थवादोऽयंनित्यत्वादतिथिभोजनस्य सति संनिधानेऽतिथेः पूर्वशेषत्वाच्च। स्तुतित्वेनान्वये संभवति नाधिकरणान्तरकल्पना युक्ता ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः**। धन्यंधनहेतुः ॥ १०६ ॥

( ३ ) **कुल्लूकः**। यद्घृतदध्याद्युत्कृष्टमतिथिर्न प्रत्याचष्टेतत्तस्माअदत्वा न स्वयंभोक्तव्यम्। धनाय हितं धनस्य निमित्तंवा धन्यम्। एवंयशस्यादयोऽपि शब्दाः। अतिथिभोजनफलकथनमिदम्। न चानावश्यकतापत्तिः। सर्वंसुकृतमादत्तइत्यादिदोषश्रवणात् ॥ १०६ ॥

( ४ ) **राघवानन्दः**। आतिथ्यस्य फलवादमनुवदंस्तत्कर्तुर्नियमंसार्थवादमाह नेति। तन्मधुरादि। धन्यं धनाय हितं। एवमुत्तरत्र धन्यादि चतुष्टयस्य महाफलत्वेनाव्याजेनातिथ्यंकार्यमिति भावः ॥ १०६ ॥

( ५ ) **नन्दनः**। नियमान्तरमाह वाइति। अतिथिपूजनंस्वभोज्येन कृतम् ॥ १०६ ॥

---

( १०६ ) वा=चा ( अ )

पूजनम्=भोजनम् ( ल, ब, न, म, र )

( ६ ) **रामचन्द्रः** । तदैश्वर्ये स्वयंनाश्नीयात् । ततःकिंयदन्नमतिथिंन भोजयेत् । आतिथिभोजनस्य फलमाह । अतिथिभोजनं यशस्यं आयुष्यं स्वर्ग्यं भवति ॥ १०६ ॥

**आसनावसथौ शय्यामनुव्रज्यामुपासनम् ॥ उत्तमेषूत्तमंकुर्याद्धीने हीनं समे समम् ॥ १०७ ॥**

( १ ) **मेधातिथिः** । बहुष्वतिथिषुयुगपदुपस्थितेष्वितरेतरंसमहीनज्यायस्त्वासनादिप्रकल्पनंगुणापेक्षंन विशेषेण । आसनंबृस्यादि । आवसथंविश्रामभूमिः । शय्याखट्वादि । अनुव्रज्या गच्छतोऽनुगमनम् । उपासनंतत्समीपे कथाप्रस्तावेन संनिधानम् एतदुत्तमेषूत्तमम् । दूरमनुव्रज्यतउत्तमःनातिदूरंमध्यमः कतिचिदित्पदानि हीनः ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । उपासनं तत्समीपउपवेशनम् । हीनेति मन्दगुणे । समे नात्युत्कृष्टापकृष्टगुणे समंनात्युत्कृष्टापकृष्टम् ॥ १०७ ॥

( ३ ) **कुल्लूकः** । आसनंपीठंचर्म वा । आवसथोविश्रामस्थानम् । शय्या खट्वादि । अनुव्रज्या गच्छतोऽनुगमनम् । उपासना परिचर्या । एतत्सर्वंबहुष्वतिथिषु युगपदुपस्थितेष्वितरेतरापेक्षयोत्कृष्टापकृष्टमध्यमंकुर्यात् । न पुनः सर्वेषां समम् ॥ १०७ ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रकारभेदमाह आसनेति । आवसथोत्र गृहं । आतिथ्यस्य ब्राह्मणेष्वेव नियमनात् गुणादिनोत्तमादि नियमः ॥ १०७ ॥

( ५ ) **नन्दनः** । अतिथीनांतारतम्येन पूजातारतम्यंकर्तव्यमित्याह आसनेति । उत्तमेऽतिथावुत्तमंहीनत्वंत्वापेक्षया ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । अतिथिसेवामाह आसनेति। आसनावसथौ आसनंचआवसथंगृहंच शय्यांच पुनरनुव्रजनं । एतदतिथेः उपासनंपूजनंकुर्यात् । हीनेहीनंकुर्यात् । समे समंकुर्यात् ॥ १०७ ॥

**वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ॥ तस्याप्यन्नंयथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ १०८ ॥**

( १ ) **मेधातिथिः** । सर्वार्थमन्नंवैश्वदेवशब्देनोच्यते । तस्मिन्निष्पन्ने भुक्तवत्सु सर्वेषु निःशेषितेऽन्ने यद्यन्योऽतिथिरागच्छेत्तस्मैदद्यात्पुनःपक्वान्नंनतुतस्मात्पाकबलिं हरेत् । अत्रावपि होमोनेष्यते न केवलं बलिहरणम् यतः सायंप्रातःपाकेहोमोबलिहरणम् । नचान्तरालिके । तथाचवक्ष्यति सायंत्वन्नस्येति । एवंच यद्यप्यसकृदन्नः पच्येत्तथापि न प्रतिपाकंवैश्वदेवमावर्तेत । यथाशक्ति संस्कारविशेषेणेतरथा वा ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । वैश्वदेवे होममात्रे । अन्योद्वितीयोपि । अन्नंबल्यर्थोपक्लृप्तमपिन बलिंहरेदन्नान्तराभावे एतेन मनुष्ययज्ञस्य भूतयज्ञापेक्षयाऽभ्यर्हिततोक्ता ॥ १०८ ॥

( ३ ) **कुल्लूकः** ।अन्यशब्दनिर्देशादतिथिभोजनपर्यन्तंवैश्वदेवे कृते यद्यपरो तिथिरागच्छेत्तदा तदर्थंपुनः पाकंकृत्वा तस्यान्नंदद्यात् । बलिहरणंततोनात्रकुर्यात् । बलिनिषेधादन्नसंस्काराभावोवैश्वदेवस्यावगम्यते । अन्नसंस्कारपक्षे कथमसंस्कृतान्नभोजनमनुजानीयात् ॥ १०८ ॥

( ४ ) **राघवानन्दः** । अकालइत्युक्तंतत्र कथंतन्नोपवासस्तत्राह वैश्यदेवेत्विति । वैश्वदेवपूर्वकंदम्पत्योर्भोजने निवृत्तेइति ज्ञेयम् । अन्यथा तदन्नेनातिथिभोजने स्वार्थएव पाकःस्यादतएव स्वपाकसंस्कारार्थोवैश्वदेवोनात्ममात्रसंस्कारार्थः । यथाशक्ति पक्त्वा ॥ १०८ ॥

( ५ ) **नन्दनः** । वैश्वदेवे निर्वृत्ते सिद्धेऽग्नौ यस्मिन्नन्नेवैश्वदेवहोमादिकंकृतं तस्मिन्निःशेषंभुक्तइत्यर्थः । अन्नंपुनःसाधितम् । पुनः साधितस्यान्नस्य संस्कारार्थं नर्बलिंहरेत् ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । पाकंकृत्वान्नंदद्यात् । पुनर्बलिंहरेत् । वैश्वदेवं न कुर्यात् ॥ १०८ ॥

**न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्॥भोजनार्थंहि ते शंसन्वान्ताशीत्युच्यते बुधैः॥१०९॥**

( १ ) **मेधातिथिः** । प्रासङ्गिकोऽतिथेरयमुपदेशः । भोजनार्थ्येतत्कुलीनोऽमुष्य पुत्रोऽस्मीतिननिवेदयेन्नकथयेत् । स्वे कुलगोत्रे आत्मीयंकुलंपितृपितामहाद्यभिजनोगोत्रंगर्गभार्गवादिनामधेयंवा । गोत्रस्खलितंनामान्तरविवक्षायांयन्नामान्तरमुदाह्रियते तदुच्यते । अध्ययनमपि स्मृत्यन्तरप्रतिषिद्धंतदपि न निवेद्यम् । अस्यार्थवादः भोजनार्थंभोजनं लिप्से प्रख्यातकुलजातित्वादित्यनेनार्थेन हेतुना कुलगोत्रेशंसन्वान्ताशी वान्तमुद्गीर्णमश्नातिनिगिरतीत्येवमुच्यते बुधैः ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । कुलंतद्विशिष्टदेशस्थानोत्पन्नत्वं । भोजनार्थइति पुनरभिधानं धनार्थमभिधाने दोषाभावज्ञापनार्थम् वान्ताशी वान्ताशन प्रायश्चित्तार्हत्वात् ॥ १०९ ॥

( ३ ) **कुल्लूकः** । भोजनलाभार्थंब्राह्मणः स्वकुलगोत्रे न निवेदयेत् । यस्माद्भोजनार्थंतेकथयन्नुद्गीर्णाशीति पण्डितैः कथ्यते ॥ १०९ ॥

( ४ ) **राघवानन्दः** । आतिथ्यभोक्तुर्नियममाह नेति । स्वे स्वकीये । तत्कृतौ निन्दामाह भोजनार्थमिति । ते कुलगोत्रे निवेदयित्वा वान्तभक्षणतुल्यपापीस्यादिति भावः ॥ १०९ ॥

( ५ ) **नन्दनः** । अतिथिंप्रत्याह नभोजनार्थमिति । विप्रोऽतिथिभूतः । वान्ताशी सहि कुलगोत्रे । उद्गीयन्निमश्नाति ॥ १०९ ॥

( ६ ) **रामचन्द्रः** । विप्रःस्वे स्वकीये कुलगोत्रे भोजनार्थंवा स्वप्रशंसांन निवेदयेत् । ते कुलगोत्रे भोजनार्थंप्रशंसन्बुधैर्वान्ताशीत्युच्यते ॥ १०९ ॥

**न ब्राह्मणस्य त्वतिथिर्गृहे राजन्यउच्यते ॥ वैश्यशूद्रौ सखा चैव ज्ञातयोगुरुरेव च ॥ ११० ॥**

( १ ) **मेधातिथिः** । क्षत्रियोब्राह्मणस्याध्वनीनोऽपि प्रथमभोजनकालउपस्थितोऽपि नातिथिः । अतोन तस्मै नियमतोदेयम् । एवंवैश्यशूद्राभ्यामपि । सखिज्ञातीआत्मसमे नातिथी । गुरुः प्रभुवदुपचर्यः निवेद्य वचनक्रियत्युक्तम् ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणस्यनातिथिः । सवर्णानांतु भवत्येव सखामित्रं । ज्ञातयः संबंधिनः । गुरुः पिता ॥ ११० ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य क्षत्रियादयोऽतिथयोन भवन्ति । क्षत्रियादीनांब्राह्मणस्योत्कृष्टजातित्वान्मित्रज्ञातोनामात्मसंबन्धाद्गुरोःप्रभुत्वात् । अनेनैव न्यायेन क्षत्रियस्योत्कृष्टोब्राह्मणः सजातीयश्च क्षत्रियोऽतिथिःस्यान्नापकृष्टौ वैश्यशूद्रौ । एवंवैश्यस्यापि द्विजातयोऽतिथयोन शूद्रः ॥ ११० ॥

( ४ ) **राघवानन्दः** । अतिथिर्ब्राह्मणइत्युक्तं तद्व्यतिरेकं प्रासङ्गिकमनुवदति नब्राह्मणस्येति । गृहइति विशेषणादरण्ये सर्वे अतिथयः अनन्यशरणत्वात् ॥ ११० ॥

( ५ ) **नन्दनः** । इदानीमतिथ्यपवादमाह नब्राह्मणस्येति । तुशब्दोऽत्रावधारणार्थः । ब्राह्मणस्यैवातिथयोराजन्यवैश्यशूद्राः । क्षत्रियादीनांतु वर्णोत्कृष्टाः सवर्णश्चातिथयोभवन्त्येव । सखाचातिथिर्ज्ञातयोगुरुश्च ॥ ११० ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्य गृहे राजन्योऽतिथिर्नोच्यते च पुनर्वैश्यशूद्रौ सखा च गुरुरपि एते अतिथयो-न ॥ ११० ॥

**यदि त्वतिथिधर्मेण क्षत्रियोगृहमाव्रजेत् ॥ भुक्तवत्सुच विप्रेषु कामंतमपि भोजयेत् ॥ १११ ॥**

( १ ) **मेधातिथिः** । तत्रातिथेर्धर्मःक्षीणपथ्योदनत्वंपरग्रामवासोभोजनकालोपस्थानम् । तादृशेन रूपेण यदि क्षत्रियोगृहमागतोभवति तदा तमपि भोजयेत् । भोजनवचनादन्या परिचर्या निवर्तते । प्रियहितवचनंत्वविशेषेण गृहाभ्यागतस्यविहितम् । अयंच तस्य भोजनकालः भुक्तवत्सु विप्रेषु ब्राह्मणेष्वतिथिषु वा गृहसंनिहितेषु प्रथमंभोजिषु ततःसभोजयितव्यः । काममिति नियमाभावमाह । काम्योऽयंविधिर्न नित्यइत्यर्थः । कामश्चानिर्दिष्टः विशेषफलेषु स्वर्गः । यदिवा-धन्यंयशस्यमित्याद्यत्र संबन्धनीयम् ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । अतिथिधर्मेण वैश्वदेवान्ते । काममिच्छया न त्ववश्यम् ॥ १११ ॥

( ३ ) **कुल्लूकः** । यदि ग्रामान्तरागतत्वादतिथिकालोपस्थितत्वादतिथिधर्मेण क्षत्रियोविप्रगृहमागच्छेत्तदा विप्रगृहोपस्थितविप्रेषु कृतभोजनेषु स्थितेष्विच्छातस्तमपि भोजयेत् ॥ १११ ॥

( ४ ) **राघवानन्दः** । तद्धर्मेण क्षत्रियाद्युपस्थितौ का गतिस्तेषु संभवप्रकारमाह यदीतित्रिभिः । अतिथिधर्मेणेति युक्तार्थे तृतीया । एकरात्रमित्यादिविशेषणविशिष्टः । कामं यथेष्टम् ॥ १११ ॥

( ५ ) **नन्दनः** । राजन्यादिष्वतिथिधर्मेणागतेषु कर्तव्यंश्लोकद्वयेनाह यदित्विति । अतिथिधर्मोऽदृष्टपूर्वत्वम् । काममितिवचनादनावश्यकता सूचिता ॥ १११ ॥

( ६ ) **रामचन्द्रः** । अतिथित्वेनातिथिलक्षणधर्मेण यदा क्षत्रियःक्षीणवृत्तिःपरग्रामवासः गृहआव्रजेदागच्छेत् । विप्रेषु भुक्तवत्सु कामंतंक्षत्रियमपि पश्चाद्भोजयेत ॥ १११ ॥

**वैश्यशूद्रावपि प्राप्तौ कुटुम्बेतिथिधर्मिणौ ॥ भोजयेत्सह भृत्यैस्तावानृशंस्यंप्रयोजयन् ॥ ११२ ॥**

( १ ) **मेधातिथिः** । अतिथेर्धर्मोतिथिधर्मः । सययोरस्ति तावतिथिधर्मिणौ । अतिथिधर्मश्च प्राग्व्याख्यातः । कुटुम्बंगृहंतत्र प्राप्तावागतौ वैश्यशूद्रावपि भोजयेत् । क्षत्रियवत्तयोस्तु भोजनकालःक्षत्रियकालात्परेण यतआह भोजयेत्सहभृत्यैस्तौ । भृत्याअत्र दासाउच्यन्ते । तेषांच भोजनकालोभुक्तवत्स्वतिथिज्ञातिबान्धवेषु सर्वेष्ववांग्दम्पतिभ्याम् । सहशब्दएककालतामात्रलक्षणार्थः । आनृशस्यंकारुण्यमनुकम्पांप्रयोजयन्प्रमाणीकुर्वन्नाश्रयन्नितियावत् । अनेन पूज्यतांवारयति अनुग्राह्योह्यनुकम्प्योन पूज्यः । अनुकम्प्येषु यदि च शक्यतेऽनुग्रहःकर्तुंततः क्रियतेऽभ्युदयार्थिना नत्वकरणादतिथेरतिक्रमः । एतदुक्तंभवति यादृशोऽतिथिभोजनादुत्कृष्टोधर्मोऽनुकम्पानुग्रहान्न तादृशस्ततोनिकृष्टः ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । कुटुम्बे कुटुम्बवतिगृहे न तु प्रवासे । भृत्यैर्भृत्यद्वारा भोजयेत् सह तुल्योपचारौ । क्षत्रियेत्वधिकोपचारार्थंपृथगुक्तिः । आनृशंस्यमहिंस्रतां । करुणांप्रयोजनं चातिथ्यतिक्रमदोषभयात् ॥ ११२ ॥

---

( १११ ) भुक्तवत्सुच=भुक्तवत्सूक्त ( अ )

( ३ ) **कुल्लूकः** । यदि वै-यशूद्रावपि ब्राह्मणस्य कुटुम्बे गृहे ग्रामाग्रामान्तरादागतत्वाद्यतिथिधर्मशालिनौ तदा-तावपि क्षत्रियभोजनकालात्परतोदम्पतीभोजनात्पूर्वंदासभोजनकालेऽनुकम्पामाश्रयन्भोजयेत् ॥ ११२ ॥

( ४ ) **राघवानन्दः** । कुटुम्बे गृहे । आनृशंस्यं दीयतामिति कार्पण्यं प्रकटयन् ॥ ११२ ॥

( ५ ) **नन्दनः** । कुटुम्बेभार्यायाम् । सहभृत्यैःस्वभृत्यैःसह भोजनकालइत्यर्थः । आनृशंस्यंप्रकल्पयन् अनृशं स्यार्थ मनुकम्पार्थमितियावत् ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । अपि निश्चयेन वैश्यशूद्रौ चेत्प्राप्तौ कुटुम्बे गृहे अतिथिधर्मिणौ तौ वैश्यशूद्रौ भोजनकाले स्वभृत्यैःसह भोजयेत् ॥ ११२ ॥

**इतरानपि सख्यादीन्संप्रीत्या गृहमागतान् ॥ प्रकृत्यान्नंयथाशक्ति भोजयेत्सह भार्यया ॥ ११३ ॥**

( १ ) **मेधातिथिः** । सखामित्रंसआदिर्येषाम् । आदिशब्दः प्रकारे ज्ञातिबन्धुसंगतसहाध्यायिप्रभृतीन्गृण्हातिगुरु-वर्जम् संप्रीत्यागतान् अतिथेर्धर्मस्य प्रकृतत्वान्निषेधार्थंसंप्रीतिग्रहणम् । तान्भोजयेत् । प्रकृत्य प्रकर्षेणान्नंकृत्वासंस्कृ-त्य । यथाशक्तीतिउपलक्षणार्थःशक्तिशब्दः । यावतीशक्तिर्यादृशंचयोऽर्हति तमुद्दिश्य तादृशएवसंस्कारः कर्तव्यः । भार्यया सह योभोक्तृभोजनकालःसएव भार्यायाअपि पृथक्तस्याभोजनकालस्याभावात् । एवंह्युक्तम्अवशिष्टंतुदम्पती-इति । महाभारते पत्युरूर्ध्वंभार्यायाभोजनंदर्शितंद्रौपदीसत्यभामासंवादे द्रौपद्या स्त्रीधर्मान्कथयन्त्योक्तं सर्वेषु पतिषु भुक्त-वत्सु शेषान्नमश्नामि । पतिशेषान्नभोजनंस्त्रीणांधर्मः । तस्मान्न भार्याभोजनकाले सख्यादीनांभोजनंविधीयते । नाप्येक-पात्राशनंसहार्थः किंतर्हि नैकाकिनस्तेभोजयितव्याः अपितु भार्याऽपि तत्र भुञ्जीत । ततश्चावशिष्टंतुदम्पतीतितदत्र बाध्यते । यदि कश्चिदभ्यर्हितः प्रतीक्षकःस्यादन्योवा न भुञ्जीत तदाभार्यातद्देशेभुञ्जीत । एवंसौहार्दंप्रकाशितंभविष्यति ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । सख्यादीन्पूर्वोक्तांत्सत्कृत्य संस्कृत्य भार्यया परिवेषणकर्त्र्या ॥ ११३ ॥

( ३ ) **कुल्लूकः** । उक्तभोजनकाले क्षत्रियादिव्यतिरिक्तान्सखिसहाध्यायिप्रभृतीन्संप्रीत्या गृहमागतान् नत्वतिथि-भावेन तस्य प्रतिषेधात् यथाशक्ति प्रकृष्टमन्नंकृत्वा भार्याभोजनकाले भोजयेत् । गृहस्थस्यापि सएव भोजनकालः अवशिष्टंतुदम्पतीति वक्ष्यमाणत्वात् । आत्मनासहेति वक्तव्ये वचनवैचित्रीयमाचार्यस्य गुरोस्तु भोजनकालानभिधानंप्र-भुत्वेन स्वाधीनकालत्वात् ॥ ११३ ॥

( ४ ) **राघवानन्दः** । किंच गृहदारादिषु भुक्तवत्सु प्रकृत्य संपाद्य अन्नं अत्रसहभार्ययेति भार्याभोजनंप्रतिप-त्तिकर्म ॥ ११३ ॥

( ५ ) **नन्दनः** । प्रकृत्य तत्प्राधान्यं प्रकाश्येति यावत् । सहभार्ययाभार्यासहितः स्वयंभोजयेत् । नान्यंनियु-ञ्जीत ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । इतरानप्यागतान्सख्यादीन्भोजयेत् । तस्मात्प्रकृत्यान्नंप्रकर्षेणान्नंकृत्वा भार्यया सह सहेतिस-मानोपचारे सहशब्दः । तैःसह स्वयंभार्ययासह दम्पत्योःशेषभोजनम् ॥ ११३ ॥

**सुवासिनीः कुमारीश्च रोगिणोगर्भिणीः स्त्रियः॥अतिथिभ्योग्रएवैतान्भोजयेदविचारयन् ॥११४॥**

---

( ११४ ) कुमारीश्च=कुमारांश्च ( ज, झ, ढ, ) ( ११४ ) भ्योग्रएवैन्तन्=भ्योन्वगेवैतान् ( मे० )

( १ ) **मेधातिथिः** । सुवासिन्योवध्वोनवोढास्त्रियःस्नुषादुहितरश्च । अन्येतु जीवच्छ्वशुराजीवत्पितृकाश्च प्रसूताअपि सुवासिन्यउच्यन्तेइत्याहुः । अतिथिभ्योन्वगेवैतानननुगतानेव भोजयेत्प्रारब्धभोजनेष्वेवातिथिषु तत्समकालंभोजयेत् । अन्येन्वग्रइतिपठन्ति अविचारयन् कथमतिथिष्वभोजितेषु बालाभुञ्जतइत्येवंविचिकित्सा न कर्तव्या ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । स्ववासिनी दत्ता वा स्त्री पितृगृहस्थास्तेषु ज्ञातिषु वसतीति । कुमाराः पञ्चवर्षन्यूनाः । अन्वगग्रे । याज्ञवल्क्ये बालादीन्भोजयित्वातिथिभोजनोक्तेः । क्वचिदग्रइत्येव पाठः ॥ ११४ ॥

( ३ ) **कुल्लूकः** । सुवासिन्योनवोढाः स्त्रियः स्नुषादुहितरश्चताः कुमारीर्गर्भिणीश्चातिथिभ्योग्रे पूर्वमेवातिथिभ्योभोजयेत् कथमतिथिष्वभोजितेषु भोजनमेषामिति विचारमकुर्वन् । मेधातिथिस्त्वन्वगेवेति पठित्वानुगतानैवैतान्भोजयेदतिथिसमकालमिति व्याख्यायान्येतुअग्रइति पठन्तीत्युक्तवान् ॥ ११४ ॥

( ४ ) **राघवानन्दः** । न वै स्वयं तदश्नीयादित्यत्रातिथिभोजनपूर्वप्राप्तं तत्र प्रतिप्रसवमाह सुवासिनीमिति । सुवासिनीं नवोढांस्नुषां तादृशींदुहितरंवा । तदर्थमतिथौ प्रश्नोपि नास्तीत्याह अविचारयन्निति ॥ ११४ ॥

( ५ ) **नन्दनः** । सख्यादिभ्यः पूर्वभोजनीयानाह सुवासिनीरिति । सुवासिनीः स्वसॄः ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । स्ववासिन्यादीनेताननतिथ्यादिभ्योग्रएवाविचारयन्भोजयेत् ॥ ११४ ॥

## अदत्वा तु यएतेभ्यः पूर्वंभुङ्क्तेऽविचक्षणः ॥ सभुञ्जानोन जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ ११५ ॥

( १ ) **मेधातिथिः** । एतेभ्योतिथ्यादिभ्योभृत्यपर्यन्तेभ्योयोभोजनमदत्वा पूर्वंप्रथममविचक्षणः शास्त्रार्थमजानानोभुङ्क्तेसश्वगृध्रैरद्यते प्रेतः । तांजग्धिमात्मनस्तैः खादनंन जानाति । एवंहिसमन्यतेमूढमतिरत्राहमेवभुञ्जे एवंतु न बुध्यते यदिदंश्मशानगतस्वशरीरस्य श्वगृध्रैरदनम् । तत्फलत्वादेवमुच्यते ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । एतेभ्यः स्ववासिन्यादिभ्योतिथिभ्यश्च । श्वगृध्रैर्जग्धिभक्षणं । एतद्दोषकृतंपरलोके ॥ ११५ ॥

( ३ ) **कुल्लूकः** । एतेभ्योऽतिथ्यादिभृत्यपर्यन्तेभ्योऽन्नमदत्वा व्यतिक्रमभोजनदोषमजानन्यःपूर्वंभुङ्क्ते । समरणानन्तरंश्वगृध्रैरात्मनोभक्षणंन जानाति । व्यतिक्रमस्येदंफलमिति वचनवैदग्ध्येनोक्तम् ॥ ११५ ॥

( ) **राघवानन्दः** । उक्तवैपरीत्ये निग्रहंचाह अदत्वेति । अदत्वा अदापयित्वा भुङ्क्ते । अविचक्षणइतिच्छेदः । जग्धि भोजनं । सइत्यतिथिविशेषणं तस्यैव प्रथमंभोजनस्य प्राप्तेः ॥ ११५ ॥

( ५ ) **नन्दनः** । एतेभ्योऽतिथिसखिसुवासिन्यादिभ्यः । अविचक्षणइतिपदसन्धिःजग्धिंभक्षणम् । भुञ्जानोभोजनादित्यर्थः ॥ ११५ ॥

( ६ ) **रामचन्द्रः** । एतेभ्योऽतिथिभ्यअदत्वा पूर्वयः भुङ्क्ते भुञ्जानःसन्नात्मनःशरीरंप्रेततःश्वगृध्रैर्जग्धिभोजनंन जानाति । अविचक्षणः स्वार्थमजानानः ॥ ११५ ॥

## भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ॥ भुञ्जीयातां ततः पश्चादवशिष्टंतु दम्पती ॥ ११६ ॥

( १ ) **मेधातिथिः** । विप्राअतिथयः स्वाजात्यादयः । तेषु कृतभोजनेषु तदवशिष्टंदम्पती जायापती अश्नीयाताम् । पश्चात्कदाचित्तेभ्यः कल्पयित्वा शिष्टव्यपदेशे सत्यादौ भोजनंस्यात्तदर्थमुक्तंपश्चादिति । दम्पत्योर्भोजनकालविधानार्थमर्धश्लोकोऽनुवादः ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । विप्रेष्वतिथिषु । स्वेषु ज्ञात्यादिषु स्वसंबन्धिषु । भृत्येषु पोष्येषु ॥ ११६ ॥

( ३ ) **कुल्लूकः** । विप्रेष्वतिथिषु स्वेषु ज्ञातिषु भृत्येषु दासादिषु कृतभोजनेषु ततोऽन्नादवशिष्टंभार्यापती पश्चादश्नीयाताम् ॥ ११६ ॥

( ४ ) **राघवानन्दः** । भोजनस्य रागतः प्राप्तत्वात् तत्कालविधिमाश्रित्य दम्पत्योस्तद्विशेषमाह भुक्तवत्स्विति । विप्रेषु अतिथिपर्यन्तेषु । स्वेषु ज्ञातिषु । भृत्येषु गर्भदासादिष्विति मेधातिथिः । नात्रोच्छिष्टाशङ्केत्याह पश्चादिति ॥ ११६ ॥

( ५ ) **नन्दनः** । अथदम्पत्योर्भोजनकालमाह भुक्तवत्स्विति । स्वेषु गर्भदासादिषु भृत्येषु वैतनिकेषु ॥ ११६॥

**देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः ॥ पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥ ११७॥**

( १ ) **मेधातिथिः** । अनुवादमात्रमिदंपूर्वस्य पञ्चयज्ञानुष्ठानविधेर्गृहस्थभोजनकालस्य च अन्येत्वर्थान्तरविधानमपि वर्णयन्ति । पूर्वत्र जायापत्योरेककालमवशिष्टंभोजनंविहितम् । अनेन स्त्रिया अपोह्य पुंसएव विधीयते । ततश्च पूर्वभृत्येभ्यः प्राक्पत्युभार्या भुञ्जीत । एवंच कृत्वा भोजयेत् । एतदप्युपपन्नंभविष्यति इतरथा तैः सह भार्या न भुञ्जीतेत्यर्थकल्पनायांतथाश्रुतपदान्वयभङ्गःस्यात् । यत्तु महाभारते दर्शनंतद्दर्शनमेव विधानं विकल्पयिष्यते तदयुक्तमनुवादत्वादस्य नच गृहस्थइत्येकवचनविरोधः सहाधिकाराज्जायापत्योः तत्र च सहार्थस्य प्राधान्यान्नद्विवचनापत्तिः यथा ब्राह्मणोऽग्नीनादधीतेति सत्यपि भार्यया सहाधिकारे नैकवचनंविरुध्यते । तत्कस्यहेतोः एकोहि तत्रप्रधानमपरोगुणभूतः नच गुणः संख्यामुपजनयितुंशक्नोति अतः प्रधानस्यैकसंख्यत्वात्सत्यपि पत्यर्थानुप्रवेशएकवचनमेवयुक्तम । एकएवगृहस्थशब्दः पत्न्यांवर्तते । सच सह विवक्षायाम् । साचैकबुद्धिविषयत्वेन प्रधानयोर्गुणयो र्वा । तस्मान्नपत्न्याः प्राक्पुंसोभोजनम् । अतःस्थितमनुवादोयंप्रतिपत्तिदार्ढ्याय । येऽपिगृह्याश्च देवताः पूजयेदित्यर्थवादवचनंदेवतापदंमत्वा पूजयेदितिसंबन्धाद्गौणमेवार्चाविधित्वंसमर्थयन्ते नहि मुख्यस्य देवतार्थस्य पूज्यत्वसंभवोयजिस्तुतिसम्बन्धेनैव देवतात्वस्य मुख्यत्वात् तथाच गृह्याइत्याह गृहे भवागृह्यास्ताश्च प्रतिकृतयएव नहि यागसंप्रदानभूतानांगृहसंबन्धितासिद्धिः तेषामपि देवतार्थोगौणोन पूजार्थः । कुतएतद्गृहस्थस्य यायष्टव्यास्तागृह्याइत्युपपद्यते ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । गृह्यादेवताः भूतानि ॥ ११७ ॥

( ३ ) **कुल्लूकः** । गृह्याश्चदेवताइत्यनेन भूतयज्ञउक्तः पञ्चयज्ञानुष्ठानस्यावशिष्टंतुदम्पतीत्यनेन शेषभोजनस्य च विहितत्वात् । वक्ष्यमाणदोषकथनार्थोयमनुवादः । अथवा देवानित्यनेनैव भूतयज्ञस्यापिसंग्रहः । गृहे भवागृह्यादेवताः पूजयित्वेति वासुदेवादिप्रतिकृतिपूजाविधानार्थत्वमस्य ॥ ११७ ॥

( ४ ) **राघवानन्दः** । एतदेव सार्थवादं प्रमाणयति देवानिति द्वाभ्यां । गृहे भवागृह्यादेवाः श्रीवास्तुदेवादयः भूतानि वा । एतेन वास्तुभूतबलिरुक्तः ॥ ११७ ॥

( ५ ) **नन्दनः** । गृहस्थेन यज्ञशिष्टाशनंभोक्तव्यमित्याह । देवानृषीनिति ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । गृह्याश्चदेवताःपूर्वंगृहस्थएवदेवादीन्पूजयित्वा गृहस्थःपश्चाच्छेषभुग्भवति ॥ ११७ ॥

**अघंसकेवलंभुङ्क्ते यः पचत्यात्मकारणात् ॥ यज्ञशिष्टाशनंह्येतत्सतामन्नंविधीयते ॥ ११८ ॥**

**[ यद्यदिष्टतमंलोके यच्चास्य दयितंगृहे ॥ तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥१॥ ]**

( १ ) **मेधातिथिः** । पापंकेवलंसभुङ्क्तेह्वदये निधत्ते गृह्णाति नान्नस्य मात्रामपि यःपचेत्पाकंकारयेदात्मकारणादात्मा-

नमुद्दिश्य क्षुधितोऽहमिदंवामह्यंरोचतइति तदेवपच्यताम् । तस्मादनातुरेण नात्मार्थमन्नंमृषापचनीयम् । आतुरस्य तु शरीरधारणंयेनोपायेन भवति विध्यन्तरेणातिक्रमेणापि तस्याश्रयणं युक्तम् सर्वतएवात्मानंगोपायेदितिवचनात् एवं केचिदस्यार्थमाहुः एतदयुक्तंस्मृतिविरोधात् ॥ ११८ ॥

[ ( १ ) **मेधातिथिः** । एवंह्याह । दयितमिष्टंस्पृहणीयम् । यदि च न पच्येत कुतस्तादृशस्य दानसंभवस्तस्मादयमस्यार्थः। तदुद्देशस्तावन्नित्यस्य पाकस्य नैव विद्यते सुहृत्स्वजनादिष्वागतेषु तदुद्देशः। अन्यथात्वनुद्दिष्टविशेषपाकअतिथ्यादिभ्योदानंविधीयते । तेनैतदुक्तंभवति यएतेभ्योऽदत्त्वा भुङ्क्ते तस्यायंदोषः । अथवा सर्वस्मिन्नतिथ्यादिभिर्भुक्तेनात्मार्थंपुनः पाकः कर्तव्यः । तथाच वसिष्ठः शेषंदम्पती भुञ्जीयाताम् सर्वोपयोगे न पुनः पाकः । यज्ञशिष्टाशनंपूर्वस्य शेषभोजनस्य प्रशंसैव । यज्ञोज्योतिष्टोमादिः । शिष्टमुपयुक्तशेषंतस्यचैतद्दर्शनम् । तत्तुल्यफलंयत्सतांशास्त्रानुष्ठानपराणांगृहस्थानामतिथ्यादिभुक्तशिष्टंविधीयते ॥ १ ॥ ]

( २ ) **सर्वज्ञनारायणः** । अघंपापहेतुं । आत्मकारणादात्ममात्रकारणात् । एतदन्नं सतां यज्ञशिष्टाशनं पञ्चमहायज्ञावशिष्टत्वेनाशनीयं विधीयते वेदे ॥ ११८ ॥

( ३ ) **कुल्लूकः** । यस्त्वात्मार्थमेवान्नंपक्त्वाभुङ्क्ते देवादिभ्योन ददाति सपापहेतुत्वात्पापमेव केवलं भुङ्क्तेनान्नम् । तथाच श्रुतिः । केवलाघोभवति केवलादीति यस्माद्यदेव पाकयज्ञावशिष्टमशनमन्नमन्यत् एतदेव साधूनामन्नमुपदिश्यते इति ॥ ११८ ॥

( ४ ) **राघवानन्दः** । आत्मकारणात् स्वभोगहेतोः इज्यतेअयमिति देवातिथ्यादिर्यज्ञः । सतां साधूनां । अन्नंअदनीयं विधीयते अन्नस्य रागविषयत्वेपि एवंप्रकारकं विधेर्विषयः ॥ ११८ ॥

( ५ ) **नन्दनः** । अयज्ञशिष्टाशनंदोषाशनमशास्त्रविहितत्वादित्याह अघमिति । यज्ञशिष्टंपञ्चमहायज्ञशिष्टम् ॥११८॥

( ६ ) **रामचन्द्रः** । यःपचत्यात्मकारणात्सकेवलमघंभुङ्क्ते । यज्ञशिष्टाशनंपाकयज्ञज्योतिष्टोमादिशिष्टान्नं सतामेतदन्नं अशनाय योग्यंविधीयते ॥ ११८ ॥

## राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् ॥ अर्हयेन्मधुपर्केण परिसंवत्सरात्पुनः ॥ ११९ ॥

( १ ) **मेधातिथिः** । अतिथिपूजाप्रसङ्गेनान्येषामपि केषांचित्पूज्यानांगृहागतानांपूजाविशेषोविधीयते । राजाऽभिषिक्तोन क्षत्रियमात्रम् अतिमहतीह्येषापूजा न तांसर्वः क्षत्रियोऽर्हतिनहि स्नातकगुरुभ्यांतस्यसहोपदेशोयुक्तः । पूजासाम्यंगुरुणा न तस्ययुक्तंलिङ्गदर्शनाच्च । तद्यथैवान्यो मनुष्यराजआगतइत्यातिथ्येष्टिब्राह्मणंगोवधोमधुपर्कविधावुक्तोगोघ्नोऽतिथिरितिपुरुषराजविषयंदर्शयति । तेन क्षत्रियेऽक्षत्रिये वा जनपदेश्वरे पूजेयं प्रयोक्तव्या । शूद्रे तु नास्ति । मन्त्रवत्त्वम् । ननु च शूद्रस्य मन्त्रोच्चारणंनिषिद्धं न पुनः शूद्रसंप्रदानके कर्मणि ब्राह्मणादीनाम् । नैषदोषः । अर्घाणामपिभूतेभ्यस्त्वेत्यादिमन्त्रोच्चारणमस्ति । ननु च महाभारते शूद्रकर्तृकमपिमधुपर्ककर्म श्रूयते तदर्हमासनंचैवयथावत्प्रत्यवेदयत् । मधुपर्कंचगांचैवतस्मैभगवते भगवतेत्स्वयम्भगवते वासुदेवाय विदुरइति तत्साधने दधनि भक्त्या मधुपर्कशब्दः प्रयुक्तः । तादर्थ्यात्तच्छब्दोभवति । आयुष्यमिति राजशब्दस्तावज्जानपदेश्वरवचनोन क्षत्रियमात्रे वर्तते । प्रियोजामातेत्याहुः । स्नातकोविद्याव्रताभ्यामुभाभ्यां अन्यथार्त्विगुरवः । सर्वेस्नातकाएव । आश्रमान्तरस्थानांभैक्षचर्या विहिता नत्वतिथिधर्मेणभो-

---

( ११९ ) परिसंवत्सरात्=परिसंवत्सरान् ( मे० ) = परिसंवत्सरागतान् ( नं० )

जनम्। अथवाऽचिरनिर्वृत्तवेदाध्ययनः स्नातकोगृह्यते। एतानर्हयेत्पूजयेत्। मधुपर्कशब्दः कर्मनामधेयम्। गृह्यान्तस्य स्वरूपावगमः। परिसंवत्सरानितिराजादिपूज्यविशेषणम् परिगतोऽतिक्रान्तः। संवत्सरोयेषांतान्। यदिसंवत्सरेऽतीतआगच्छन्ति तदामधुपर्कार्हाअर्वाक्केचिदेवंव्याचक्षते। यदिसंवत्सरादर्वागागच्छन्ति। तदातीतेऽपि संवत्सरे प्रथमपूजायाः। पुनर्लभतेपूजाम्। अन्येत्वाहुः। सांवत्सरिकी तेषांपूजा नयावदागमनम्। अस्मिन्पक्षेऽर्वागागमनंन पूजाप्रतिबन्धकम्। पाठान्तरंपरिसंवत्सरादिति। यावदेवसंवत्सरंतावत्परिसंवत्सरात्ततऊर्ध्वंपुनः पूज्याइत्यर्थः॥ ११९॥

२ ) **सर्वज्ञनारायणः**। राजा स्वदेशनृपतिः क्षत्रियः स्नातकोविद्याव्रतस्नातकः गुरुराचार्यः उपाध्यायोवा प्रियोमित्रं। परिसंवत्सरात्संवत्सरंविहायातिवाह्य संवत्सरादूर्ध्वंस्वगृहागमने पुनर्मधुपर्केणार्हयेत्। संवत्सरमध्ये तु नावृत्त्यामधुपर्कः॥ ११९॥

( ३ ) **कुल्लूकः**। अतिथिपूजाप्रसङ्गेन राजादीनामपि गृहागतानांपूजाविशेषमाह राजेति। राज्याभिषिक्तः क्षत्रियोराजा। ऋत्विग्यज्ञेयेन यस्यार्त्विज्यंकृतम्। स्नातकोविद्याव्रताभ्याम्। प्रियोजामाता। राजादीनेतान्गृहागतान्सम्म गृह्योक्तेन मधुपर्काख्येन कर्मणा पूजयेत्। परिसंवत्सरादितिसंवत्सरंवर्जयित्वा तदूर्ध्वंगृहागतान्पुनर्मधुपर्केण पूजयेत्। पञ्चम्यपाङ्परिभिरिति सूत्रेण वर्जनार्थपरियोगेनेयंपञ्चमी। अतएवैतत्सूत्रव्याख्याने जयादित्येनोक्तं अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणमिति। मेधातिथिस्तु परिसंवत्सरानिति पठित्वा परिगतोनिष्क्रान्तः संवत्सरोयेषांतान्पूजयेदिति व्याख्यातवान् उभयत्रापि पाठे संवत्सरमध्यागमनेन मधुपर्कार्हता॥ ११९॥

( ४ ) **राघवानन्दः**। गृहागतानां पूजाप्रकारं कथयंस्तत्कालविशेषमाह राजेति। स्नातकोनवोढापतिः। प्रियोजामाता। परिवत्सरान्मधुपर्केण पूजयेदित्यन्वयः। तदभ्यन्तरे मधुपर्केण नार्हणम्॥ ११९॥

( ५ ) **नन्दनः**। अथमधुपर्कार्हानाह राजर्त्विगिति। स्नातको गृहस्थः। प्रियः सखा। परिगतःसंवत्सरोयेषांतेपरिसंवत्सराः परिसंवत्सराश्चतआगताश्चेतिपरिसंवत्सरागताः॥ ११९॥

( ६ ) **रामचन्द्रः**। प्रियःजामाता स्नातकोविद्यास्नातकः व्रतस्नातकोवा तान्प्रति संवत्सरात्पुनःपुनर्मधुपर्केणार्हयेत्। संवत्सरमध्यागमने नमधुपर्कार्हा भवन्तीत्यर्थः। परिसंवत्सरेतिपाठे परिशब्दोवर्जनार्थइति॥ ११९॥

**राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ॥ मधुपर्केण संपूज्यौ न त्वयज्ञइतिस्थितिः॥ १२०॥**

( १ ) **मेधातिथिः**। यज्ञनिमित्तेऽर्वागपि संवत्सरात्प्राप्त्यर्थोयमिति केचित् अन्ये तु पूर्वस्यैवराजश्रोत्रिययोरुपसंहारमाहुः। अनुपसंहारे हि नत्वयज्ञइतिनोपपद्यते। अत्र श्रोत्रियोयः स्नातकः प्रागुक्तो यदिवाऋत्विगेव तस्य हि यज्ञकर्मणिप्रारिप्स्यमानेगोर्मधुपर्कदानंविहितम्। यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्याएवैनंयाजयेयुः एवंक्रमभूलैषा स्मृतिर्भविष्यति। इतरथा कल्प्येतमूलम्। अन्ये तु सर्वानृत्विगादीञ्छ्रोत्रियशब्देन दृष्टान्मन्यन्ते। तथा चाविशेषेण गौतमेन पठितम् ऋत्विक्श्वशुरपितृमातुलानामुपस्थाने मधुपर्कइत्युक्त्वायज्ञविवाहयोरर्वागिति पठितवान्। अतश्च सर्वेषामेवार्घ्याणांयज्ञे निर्मितेऽर्वागपि संवत्सरादर्घार्हता स्यात्। न त्वयज्ञइतिच प्रतिषेधोऽर्वाक्संवत्सरान्नोर्ध्वमित्येवंनेयः इह द्वितीये पदेऽनेकधापाठप्रतिपत्तिः। केचित्पठन्ति। तते यज्ञउपस्थिताविति तेषामयमर्थः तते प्रारब्धे यज्ञे यदि प्राप्तौ भवतो निमन्त्र्यानीतौ तदेयंमधुपर्कक्रियातयोर्नपुनः प्रारभ्यमाणे एषपक्षः कैश्चिद्दूष्यते दीक्षितस्य सर्वदानप्रतिषेधान्मधुपर्कदानमनुज्ञायमानंतद्विरुद्धंस्यात् नच शक्यंवक्तुं दानमेतन्नभवत्यर्हयेदिनोदनात्। पूजैषा विधीयते यतोस्तिमधुपर्केदधिदानंमांसभोजनादिदानंच। अथोच्यते स्वयमेवतत्परकीयंभुज्यतइति एवंसति स्तेयदोषः स्याद्वचनान्ने-

तिचेदस्त्येव तर्हिददात्यर्थः चोदितंचददिति मधुपर्कंचदद्यादिति तस्माद्विरुद्धंदीक्षितोनददात्यनेन स्याद्विरोधोयदि यज्ञशब्दः सोमयागेष्वेव वर्तते। दर्शपूर्णमासादयोपि यागास्तद्विषयोयंविधिर्भविष्यति नैतद्युक्तम्। एवंसति समाचारविरोधः। नहि शिष्टाः सोमयागेभ्योऽन्यत्र क्वचिदर्घ्यायमुधुपर्कमाहरन्ति। आचारोवेदादरः। अतोऽयमेवपाठोयुक्तः यज्ञकर्मण्युपस्थितइति। प्रारभ्यमाणयज्ञआगतंशिष्टामधुपर्केणपूयजन्ति न प्रवृत्तयज्ञाः। अतश्चैतदपि न विचारयामः सामान्यतः। प्राप्तस्य दानस्य भवतु निवृत्तिर्न पुनस्तद्विषयतयैव श्रुतस्य। यज्ञश्चासौकर्मचतद्यज्ञकर्म तस्मिन्नुपस्थिते प्राप्ते॥ १२०॥

( २ ) **सर्वज्ञनारायणः**। अत्र राजान्यदेशनृपतिः क्षत्रियएव श्रोत्रियोविद्यामात्रस्नातः। एतौ संवत्सरादूर्ध्वमपि यज्ञकर्मण्येवोपस्थितौ मधुपर्कार्हौ न त्वेवमेवेति स्थितिर्नियमः॥ १२०॥

( ३ ) **कुल्लूकः**। राजस्नातकयोःपूजासंकोचार्थमाह राजेति। राजस्नातकौ संवत्सरादूर्ध्वमपि यज्ञकर्मण्येव प्राप्तौ मधुपर्केण पूजनीयौ नतु यज्ञव्यतिरेकेण जामात्रादयस्तुसंवत्सरादूर्ध्वं यज्ञंविनापि मधुपर्कार्हाःसंवत्सरमध्ये तु सर्वेषां यज्ञविवाहयोरेव मधुपर्कः। तदाह गौतमः ऋत्विगाचार्यश्वशुरपितृव्यमातुलादीनामुपस्थाने मधुपर्कः संवत्सरे पुनर्यज्ञविवाहयोरर्वाग्राज्ञः श्रोत्रियस्यच॥ १२०॥

( ४ ) **राघवानन्दः**। तेष्वेव विशेषमाह राजाचेति। अनयोर्यज्ञकर्मण्यागमनेसंवत्सरेपि मधुपर्कः। तथा च गौतमः ऋत्विगाचार्यश्वशुरमातुलादीनामुपस्थाने मधुपर्कःसंवत्सरे पुनर्यज्ञविवाहयोरर्वाक्राज्ञः श्रोत्रियस्य चेति। अर्वाक् संवत्सरात्। श्रोत्रियोत्र पूर्वोक्तःस्नातकः॥ १२०॥

( ५ ) **नन्दनः**। स्थितिः सिद्धान्तः॥ १२०॥

( ६ ) **रामचन्द्रः**। च पुनः राजा ग्रामादागतःसन् श्रोत्रियः यज्ञकर्मणि दर्शपौर्णमासस्यापि वा संवत्सरादूर्ध्वमुपस्थितौ प्राप्तौ मधुपर्केण संपूज्यो भवतः। अयज्ञकाले अनिमन्त्रितौ नपूज्यौ। इति स्थितिर्मर्यादा॥ १२०॥

मा० **सायंत्वन्नस्य सिद्धस्य पत्न्यमंत्रंबलिंहरेत्॥ वैश्वदेवंहि नामैतत्सायंप्रातर्विधीयते॥ १२१॥**

( १ ) **मेधातिथिः**। उक्तःप्रथमः इदानींद्वितीयः पाकउच्यते। सायंदिनान्तः प्रदोषस्तत्र सिद्धस्यान्नस्य सर्वः पाकयज्ञियोविधिरावर्तनीयोब्रह्मयज्ञपितृयज्ञवर्जम्। ननु च बलिंहरेदित्येतावच्छ्रुतम्। बलिहरणंच प्रसिद्ध्या भूतयज्ञएव तत्र कुतोऽग्नौ होमोऽतिथ्यादिदानंच। अथ वैश्वदेवंहि नामैतदिति वैश्वदेवशब्दः सर्वार्थतांप्रतिपादयति विश्वेषांदेवानामिदंविधीयते सायंप्रातर्यादशंप्रातस्तादशमेवसायमेतदर्थमेव प्रातःशब्दः अन्यथाप्रातर्विहितमेव किमनेनसायंप्रातर्विधीयते। एवंतर्हि ब्रह्मयज्ञपितृयज्ञावपिकर्तव्यौ। उच्यते अन्नस्य सिद्धस्येतिवचनाद्यदन्नसाध्यंतदेवकर्तव्यम् नत्वध्ययनसाध्योब्रह्मयज्ञोनाप्युदकसाध्यंतर्पणम्। एवंच संबन्धः क्रियते सिद्धस्यान्नस्य बलिंहरेत्। एतद्वैश्वदेवाख्यंकर्मान्नस्य सिद्धस्योभयोः कालयोर्विधीयते। अन्नशब्दाद्वैश्वदेवशब्दाच्चैवंव्याख्यायते। अमन्त्रंमन्त्रशब्देन देवतोद्देशशब्दवान् स्वाहाकारान्तोऽग्नये-स्वाहेत्येवमादि निषिध्यते। न ह्यन्ये मन्त्रावैश्वदेवेविनियुक्तास्तेषु मन्त्रत्वंप्रशंसयोच्यते। ननु स्वाध्याये पठितानांमन्त्रत्वमस्ति स्वाध्यायैकदेशःकश्चिदृग्यजुः सामात्मकोवेदाध्यायिभिर्मन्त्रइति व्यवन्हियते व्यवहारतश्चपदार्थावगमनयैः शब्दैर्बलिहरणादि क्रियते ते कुत्रचित्पठ्यन्ते केवलमग्न्यादिभ्योदेवेभ्योहोमंकुर्यादितिश्रुतेः स्वाहाकारेण वा वषट्कारेण वादेवेभ्योहविः संप्रदीयतइति वाक्यान्तरेण सर्वहोमेषु स्वाहाकारोविहितोयाज्यान्ते वषट्कारोनियमितोयाज्यायांवषट्करोतीति।

स्वाहाकारशब्दयोगे चतुर्थी स्मर्यते अतोयागोदेवता याउद्देश्यत्वात् उद्देश्यत्वंच देवतायाः शब्दावगम्यरूपत्वात् शब्देनैवोचि-तत्वादियंघटना क्रियतेअग्नयेस्वाहेत्यादि यद्येवंतेषांनिषेधः कथंतर्हि यागनिर्वृत्तिः नहि तुभ्यमिदं न मदीयमिति यावदु द्दे शोनकृतस्तावद्यागस्वरूपनिर्वृत्तिः। नहि त्यागः केवलोयागउद्देशशून्यः। सत्यम् शब्दैर्निषिद्धेमनसोद्देशंदेवतायाः पत्नीकरिष्यति यथाशूद्रोनमस्कारमुच्चारयति। नमस्कारेणप्रत्याम्नातः शूद्रस्यमंत्रइतिनमस्कारोऽनुज्ञातोस्यनदेवतापदम्। नच देवतायाविनियोगसिद्धिरित्युक्तम्। इहभवन्तस्त्वाहुः स्वाहाकारोनमस्कारेण प्रत्याम्नातः शूद्रस्य देवतापदंत्वनिषिद्धम्। अथ सायंवैश्वदेवहोमे कः कर्ता उक्तंपत्न्येव संनिधानाद्बलिहरणवदमन्त्रकंकरिष्यतीति ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः**। अत्र वैश्वदेवहोमेपत्याकृते नक्तंचरेभ्यइतिवैकस्मिन्बलौ दत्ते दैवसिकबल्यन्तरस्थाने पत्न्याअमन्त्रकैकबलिदानमुक्तम्। वैश्वदेवंहीति। वैश्वदेवं विश्वेदेवाः सर्वे देवाइन्द्रादयोविश्वेदेवान्तास्तेभ्यःकार्यं बलिकर्म सायंप्रातर्विधीयते न तु ब्रह्मयज्ञपितृयज्ञयोरिवास्यापि दिवैव क्रियाऽतःसायं पत्न्यैव नक्तंचरव्यतिरिक्तभूतयज्ञस्थाने देवतामनसोद्दिश्य कार्यमेतदित्यर्थः ॥ १२१ ॥

( ३ ) **कुल्लूकः**। दिनान्तेसिद्धस्यान्नस्यपत्न्यमन्त्रंबलिहरणंकुर्यात्। इन्द्राय नमइति मन्त्रपाठवर्जम्। मानसस्तुदेवतोद्देशोन निषिध्यते। यतएतद्वैश्वदेवंनामान्नसाध्यंहोमबलिदानातिथिभोजनात्मकंतत्सायंप्रातर्गृहस्थस्योपदिश्यते ॥ १२१ ॥

( ४ ) **राघवानन्दः**। वैश्वदेवस्य सिद्धस्येत्यत्र बलिकर्मत्वावच्छेदेऽधिकारित्वेन प्राप्तंपातिपर्युदस्यति सायमिति। तथाच देवतामनसैवोद्दिश्येत्याह पत्न्यमन्त्रमिति। सायंबलिर्मास्त्विति चेन्नेत्याह। वैश्वदेवइति ॥ १२१ ॥

( ६ ) **रामचन्द्रः**। सिद्धस्यान्नस्य सायंसंध्याकाले पत्नी अमन्त्रवद्बलिंहरेद्द्यात्। बलिहरणंभूतयज्ञः। विश्वेषांदेवानामिदंकर्म वैश्वदेवंनामैतत्सायंकाले प्रातःकालेपिविधीयते। इति नित्यश्राद्धम् ॥ १२१ ॥

**पितृयज्ञंतु निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान्॥पिण्डान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकम्॥१२२॥**

( १ ) **मेधातिथिः**। वैश्वदेविकाद्वैकल्पिकाच्छ्राद्धान्नित्यमिदंश्राद्धान्तरमुच्यते। तस्यायंकालनिर्देशः। चन्द्रक्षयेऽमावास्यायां तत्रापि नयस्यांकस्यांचन वेलायां किंतर्हि पितृयज्ञंनिर्वर्त्य श्रुतोयः पिण्डपितृयज्ञस्तंकृत्वा। एवंच यस्तस्यकालः सएवास्यापि लभ्यते। तदुक्तममावास्यायामपराण्हे पिण्डपितृयज्ञइति अनाहिताग्नेरप्यौपासनयोगोऽस्त्येव। तथाचाह एवमनाहिताग्निर्नित्ये श्रपयित्वेत्यादि अग्निमान् वैवाहिकेनाग्निना तद्दान्दायकालाद्दतेन वा विप्रग्रहणमविवक्षितम्। क्षत्रियवैश्ययोरपीष्यते। एवंस्मृत्यन्तरेषु इदंविशेषणोक्तंपिण्डान्वाहार्यकमिति। नामधेयमिदमस्य श्राद्धस्य पिण्डानामनुपश्चादाह्रियतेऽनुष्ठीयते। तत्पिण्डान्वाहार्यकंभवति। मासश्चानुमासश्च तयोर्भवंमासानुमासिकम्। मासानुमासशब्दसमुदायोमासगतांवीप्सामाचष्टे। मासि मासि कर्तव्यमित्युक्तंभवति। अतश्च नित्यतासिद्धिः। यद्यप्यनुमासशब्दाद्वीप्सावगतिर्भवति मासशब्दोऽतिरिच्यते तथापि पद्यग्रन्थेगौरवंनाद्रियते। श्राद्धमित्येतदपिनामैव। कुर्यादिति विधिः ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः**। पितृयज्ञंपिण्डपितृयज्ञं अग्निमान्। स्मार्तेन श्रौतेन वा। पिण्डेभ्योलिपकांमात्रा मन्वाहृत्य ब्राह्मणाअत्र श्राद्धे भोज्यन्तइति पिण्डान्वाहार्यकं मासानुमासात्तु कर्तव्यात्पिण्डपितृयज्ञादनुमासिकं मासि मासि कार्यंपितृकृत्यंमासानुमासिकमितिप्रसंगाद्यवहारानुगुणंनामद्वयमुक्तम्। विप्रइति क्षत्रियवैश्यकार्यस्य पिण्डपितृयज्ञात्प्रागपि क-

रणे न दोषइत्येतदर्थम् । अतएव उत्तरश्लोके तदामिषेणेति आमिषनियमोक्तिरपि क्षत्रियवैश्यविषयैव । अतएव हि श्लोकान्तरप्रयत्नोविप्रपदस्य तत्रान्वयोमाभूदिति । अतएव च पुलस्त्यः मुन्यन्नंब्राह्मणस्योक्तंमांसंक्षत्रियवैश्ययोरित्याह ॥१२२॥

( ३ ) **कुल्लूकः** । श्राद्धकल्पंच शाश्वतमित्यनुक्रमणिकायांप्रतिज्ञातंश्राद्धकल्पमुपक्रमते पितृयज्ञमिति । साग्निरमावास्यायांपिण्डपितृयज्ञाख्यंकर्मकृत्वा श्राद्धंकुर्यात् । पितृयज्ञपिण्डानामनु पश्चादाह्रियतइति । पिण्डान्वाहार्यकंश्राद्धंमासानुमासिकंमासश्चानुमासश्चतयोर्भवंप्रतिमासंकर्तव्यमित्यर्थः । अनेनास्य नित्यत्वमुक्तम् । विप्रग्रहणंद्विजातिपरं । त्रयाणांप्रकृतत्वात् ॥ १२२ ॥

( ४ ) **राघवानन्दः** । श्राद्धकल्पंच शाश्वतमित्युक्तम् । तत्र साग्निकस्य कृत्यान्तरमाह पितृयज्ञंत्विति । पितृयज्ञं सायान्हे पिण्डपितृयज्ञैश्चरन्तीति श्रुत्युक्तंकर्म । चन्द्रक्षये चन्द्रारम्भककलानांक्षयाक्रान्तान्त्यकलायाममावास्यायां निर्वर्त्य कृत्वा । सर्वश्राद्धप्रकृतिपार्वणश्राद्धस्य पिण्डपितृयज्ञानन्तरभावित्वंनाम्ना प्रथयति पिण्डान्वाहार्यकमिति । पिण्डं पिण्डपितृयज्ञं तदनु आहार्यं कर्तव्यता यस्य तत् । मासानुमासिकं मासंमासंप्रति साध्यम् ॥ १२२ ॥

( ५ ) **नन्दनः** । एवमहरहः कर्तव्यत्वेन पञ्चमहायज्ञाउक्ताः । इदानींप्रतिमासममावास्यायांकर्तव्यस्य मासिकाख्यस्य श्राद्धस्य विधिमुपदिदिक्षन्नाहिताग्नेस्तत्र विशेषंतावदाह पितृयज्ञमिति । अग्निमानाहिताग्निः । विप्रोद्विजः । चन्द्रक्षयेऽमावास्यायाम् । पितृयज्ञं श्रौतंपितृपिण्डपितृयज्ञंनिर्वर्त्य । पिण्डान्वाहार्यकम् । पितृयज्ञदत्तानांपिण्डानामनुपश्चादाहार्यंप्रयोज्यम् आहार्यमेवाहार्यकम् । मासानुमासिकम् । प्रतिमासिकंकुर्यात् ॥ १२२ ॥

(६) **रामचन्द्रः** । अथ श्राद्धप्रकरणम् । अग्निमान् विप्रःचन्द्रक्षये अमायां पितृयज्ञपिण्डान्निर्वर्त्य समाप्य मासानुमासिकं पिण्डान्वाहार्यकंस्वपिण्डानां पश्चात् आह्रीयतेऽनुष्ठीयते तत्पिण्डान्वाहार्यकं श्राद्धंकुर्यात् । मासानुमासिकंच ॥१२२॥

**पितॄणांमासिकंश्राद्धमन्वाहार्यंविदुर्बुधाः ॥ तच्चामिषेण कर्तव्यंप्रशस्तेन प्रयत्नतः ॥ १२३ ॥**

**[ ननिर्वपतियःश्राद्धंप्रमीतपितृकोद्विजः ॥ इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः § ]**

( १ ) **मेधातिथिः** । अन्वाहार्यंदर्शपौर्णमासयोः श्रौतयोर्दक्षिणर्त्विजाम् । यदेतन्मासिकंश्राद्धममावास्यायामेतत्पितॄणामन्वाहार्यम् । यथान्वाहार्येणर्त्विजः प्रीयन्ते तद्वत्पितरः श्राद्धेन । एतेन पित्रर्थतांश्राद्धस्याह । यथाग्न्यादिदेवतार्थोदर्शादियाग एवंन श्राद्धे पितरः किंतर्हि तदुपकारार्थमेवश्राद्धम् । तथाच पितॄणामितिषष्ठी । केवले हि देवतात्वे चतुर्थ्याविरहायोगः । पक्षे पाठान्तरमर्थान्तरंच पिण्डानांमासिकमिति । अन्वाहार्यंविदुर्बुधाः अनेनापि पितृयज्ञवदस्यकर्तव्यतोच्यते । नत्विदमङ्गम् । तदेतदामिषेण मांसेन कर्तव्यम् । प्रशस्तेनाप्रतिषिद्धेन विशेषविहितेन वा द्वौ मासौ मत्स्यमांसेनेति यद्वक्ष्यति । अयंच मुख्यः कल्पः तदभावे दधिघृतपयोऽपूपादि विधायिष्यते । मांसंचव्यञ्जनंभक्तादिभोज्यस्य । न पुनरेतदेव केवलंभोज्यं येनवक्ष्यति गुणांश्चसूपशाकाद्यांस्तथायावन्तश्चैव यैश्चान्नैरिति । किंपुनःश्राद्धेहोमब्राह्मणभोजनपिण्डनिर्वपणादीनि कर्माणि सर्वाण्येव समप्रधानानि श्राद्धशब्दवाच्यान्युत किंचिदङ्गमत्र किंचित्प्रधानम् । उच्यते श्राद्धंभोजयेच्छ्राद्धंभुक्तमनेनेति सामानाधिकरण्याद्ब्राह्मणभोजनंमुख्यंप्रतीयते ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । पिण्डानामिति । पिण्डपितृयज्ञियपिण्डानामनुपश्चादाहार्यंयच्छ्राद्धंतन्मासिकम् । मासि

---

( १२३ ) प्रयत्नः=समतन्ततःइति केषुचित्पुस्तकेषु । ( १२३ ) पितॄणां=पिण्डानां ( नं )

§ ( ख, ) रामचन्द्रेण व्याख्यातः

मासि कर्तव्यत्वान्मासिकसंज्ञमपि विदुः। प्रशस्तेन श्राद्धयोग्येन। एवं च श्राद्धान्तरेषु नामिषनियमइति दर्शितम् ॥१२३॥

( ३ ) **कुल्लूकः**। इदानींनामनिर्वचनेनोक्तमेव पितृयज्ञानन्तर्यंद्रढयति पितॄणामिति। इदंमासिकंमतिमासभवंश्राद्धं-यस्मात्पितृयज्ञपिण्डानामनुपश्चादाह्रियते तेन पिण्डान्वाहार्यकमिदंपण्डिताजानन्ति। ततोयुक्तंपितृयज्ञानन्तर्यमस्य। तच्चा-मिषेण वक्ष्यमाणमांसेन प्रशस्तेन मनोहरेण पूतिगन्धादिरहितेन प्रयत्नतःकर्तव्यम्। पिण्डानांमासिकंश्राद्धमितिवा पाठःपि-ण्डानांपितृयज्ञपिण्डानाम्। शेषंतुल्यम् ॥ १२३ ॥

( ४ ) **राघवानन्दः**। अत्रादौ वक्ष्यमाणपिण्डकल्पस्तदनु विप्रभोजनकल्पः इदंत्वग्निमतोजीवत्पितृकस्यापि तेन स्वक्तंपितर माशयेदिति वक्ष्यमाणंसंगच्छते। पार्वणे तु विप्रभोजनानन्तरंपिण्डकल्पउच्छिष्टसंनिधौ चैतत्परस्तात्पिण्ड-मिष्यतइति। मेधातिथिस्तएतदेवानुवदन् तत्र कर्तव्यंविधत्ते पितॄणामिति। प्रशस्तेन पाठीनरोहितावाद्यावित्यादिवक्ष्यमा-णेन ॥ १२३ ॥

( ५ ) **नन्दनः**। मासिकाख्यस्य श्राद्धस्यैवाऽयंप्रयोगविधिर्नान्यस्येत्याह पिण्डानामिति। मासिकमेवश्राद्धंपिण्डा-नामन्वाहार्यपश्चात्प्रयोज्यंविदुर्बुधानापरम्। तस्यद्रव्यविशेषउत्तरार्धेनोक्तः। आमिषेण मांसेन। प्रशस्तेन भक्ष्यतया-विहितेन ॥ १२३ ॥

( ६ ) **रामचन्द्रः**। पितॄणांपितृपक्षपिण्डानांमासिकं श्राद्धं बुधाः अन्वाहार्यसंज्ञंविदुः। अन्वाहार्यंपितृयज्ञपिण्डानाम-नुपश्चादाह्रियते तत्पिण्डान्वाहार्यकं। तत्श्राद्धंप्रशस्तेनामिषेणाप्रतिषेधेनकर्तव्यं। द्वौ मासौ मत्स्यमांसेनेति वचनात्॥१२३

[ **रामचन्द्रः**। नेति। प्रमीतपितृःमातृकोयःश्राद्धं न निर्वपति न करोति। मासिमासि इन्दुक्षये अमायां स प्रायश्चित्ती भवेत् ॥ १ ॥]

**तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः॥ यावन्तश्चैव यैश्चान्नैस्तान्प्रवक्ष्याम्यशेषतः ॥ १२४ ॥**

( १ ) **मेधातिथिः**। तथाचाहतत्र तस्मिञ्छ्राद्धे ये द्विजोत्तमा ब्राह्मणाभोजनीया ये च परिहर्तव्या यावन्तो-यत्संख्याकाद्वौ दैवइत्यादि यैश्चान्नैस्तिलैर्व्रीहियवैरित्यादि तदेतत्सर्वमिदानींवक्ष्यामि तच्छृणुत। एतदत्र प्राधान्येन संपाद्यम् एतेन विना श्राद्धंन कृतंभवति। अन्यच्चयच्चाङ्गजातमारादुपकारकंसंनिपत्योपकारकंवा तस्मिन्नसंपन्ने श्राद्धं-न कृतंभवति। सगुणंतन्नस्यात्। अतएतेषांप्राधान्यख्यापनार्थंपुनरुपन्यासः ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः**। द्विजसत्तमाइति भृगुणा मुनीनांसंबोधनम्। प्रयत्नतइति क्वचित्पाठः। द्विजोत्तमाः। द्विजेषूत्तमवर्णाब्राह्मणाइति यावत् ॥ १२४ ॥

( ३ ) **कुल्लूकः**। तस्मिञ्छ्राद्धे ये भोजनीया ये च त्याज्या यत्संख्याकायैश्चान्नैस्तत्सर्वंप्रवक्ष्यामि ॥ १२४ ॥

( ४ ) **राघवानन्दः**। एकमप्याशयेद्विप्रमित्यत्रैकत्वविशिष्टब्राह्मणमात्रंप्राप्तं। श्राद्धविशेषे तत्प्रत्याचक्षाणः प्रतिजा-नीते तत्रेति। तत्र पिण्डपितृयज्ञे पार्वणश्राद्धे च। ये यत्स्वरूपाः। यावन्तः सङ्ख्यया यैर्मुन्यन्नाद्यैरित्यर्थः ॥ १२४॥

( ६ ) **रामचन्द्रः**। तत्र श्राद्धे ये भोजनीया भोजनार्हाः स्युः यावन्तोयत्सङ्ख्याकाब्राह्मणाः यैरन्नैःसंस्कार्यास्ता-नशेषतःप्रवक्ष्यामि ॥ १२४ ॥

**द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा॥ भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ १२५॥**

( १ ) **मेधातिथिः**। यद्यपि प्रतिज्ञातस्य वस्तुनस्तेनैव क्रमेण विशेषकथनंयुक्तं तथापीह स्वल्पवक्तव्य-

त्वाद्भोजनीयाइतिप्राप्तंपरित्यज्यसंख्यानिर्देशोऽने न क्रियते। देवानुद्दिश्य द्वौब्राह्मणौ भोजयेत्। पितॄणांकृत्ये त्रीनुभयत्र वा दैवएकंपित्र्येचैकं यद्यपिपित्र्यइत्यत्रपितुरिदमितिपितृशब्देन देवताचोदना तथापि पितृपितामहप्रपितामहा उद्देश्याः। तत्रैकैकस्यैकैकं भोजयेत्। नत्वेवैकं सर्वेभ्यः पृथक्पृथग्देवतात्वात्। उक्तंच गृह्यकारेण नत्वेवैकंसर्वेषांपिण्डैर्व्याख्यातमिति। यथैकः पिण्डः सर्वेभ्योननिरूप्यते तथैव ब्राह्मणोऽपिनभोज्यतइत्यर्थः। इहापिवक्ष्यति। निमन्त्रयेत्त्र्यवरानिति। भोजनार्थमेव तन्निमन्त्रणंनादृष्टार्थम्। अतश्च पितृकृत्ये त्रींस्त्रीनितिद्रष्टव्यम्। तथाचाह नचावरान्भोजयेदिति एवंच कृत्वैकैकमपिविद्वांसमित्येतदप्येवमेवद्रष्टव्यमेकैकस्यैकैकमिति। अपिच नैवात्रैकैकमुभयत्रेत्येतद्विधीयते। विस्तरप्रतिषेधार्थोऽयमनुवादः। यथा विषंभक्षय माचास्य गृहे भुङ्क्षेति यद्येवंद्वौदैवइत्येषोऽपि विधिर्नस्यादस्याप्यन्यार्थतयोपपत्तेः। अथायंविधिरप्राप्तत्वादेकैकमित्येषोऽपि कस्मान्नभवति। अत्राह माभूद्वयोरेकोऽपि विधिः। कुतस्तर्हि संख्यावगमोनिमन्त्रयेत त्र्यवरानिति। ननु तत्रदैवग्रहणंनास्ति स्मृत्यन्तरात्तर्हि संख्यावगमः अयुजोवायथोत्साहमितियुग्मान्दैवइति। यदि वायंसंख्याविधिः स्याद्विस्तरप्राप्त्यभावात्प्रतिषेधोऽनर्थकः। तस्माद्यावद्भिर्ब्राह्मणैर्भोजितैर्विस्तरे येदोषास्ते न भवन्ति। अत्राह माभूद्वयोरेकोपि तावन्तोभोजनीयाः। पित्र्येऽयुग्माः दैवेतुद्वावेव अतिसमृद्धोऽप्यत्यर्थमाढ्योऽपि। न प्रवर्तेत विस्तरे। नचायमदृष्टार्थोविस्तरप्रतिषेधः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः**। त्रीनपित्रादित्रयार्थंक्रमात्एकैकमिति पित्रादित्रयोद्देशेनैकः वैश्वदेवार्थंचैकमिति। एवंयदा त्रयःपित्रर्थं तदा वैश्वदेवेऽपि द्वावेवेति नियतम्। विस्तरे स्मृत्यन्तरोक्ते एकैकार्थंत्रयस्त्रयइत्यादौ ॥ १२५ ॥

( ३ ) **कुल्लूकः**। अत्र यद्यप्युद्देशक्रमेण ये भोजनीयाइति* वक्तुमुचितंतथाप्यल्पवक्तव्यत्वाद्ब्राह्मणसंख्यामाह द्वाविति। देवश्राद्धेद्वौ ब्राह्मणौ पितृपितामहप्रपितामहानांत्रीन्ब्राह्मणानथवा दैवएकंपित्रादित्रिके चैकंब्राह्मणंभोजयेत्। उक्तातिरिक्तभोजनसमर्थोऽपि नाधिकभोजनेषु प्रवर्तेत। मेधातिथिस्त्वाह। पितृकृत्ये त्रीनिति पितुस्त्रीन्ब्राह्मणान्पितामहस्य त्रीन्ब्राह्मणान्प्रपितामहस्य त्रीन्ब्राह्मणान्भोजयेत्। एकैकमुभयत्रेति दैवएकंपित्रादित्रयस्य चैकैकम्। नत्वेकंपित्रादित्रयस्य नत्वेवैकंसर्वेषांपिण्डैर्व्याख्यातमित्याश्वलायनगृह्यविरोधात्। यथैकः पिण्डः पित्रादित्रयस्य न निरूप्यते तथैकोब्राह्मणो न भोजयितव्यइत्यर्थः। तस्मान्नपित्रादित्रयस्यैकब्राह्मणभोजनं तदसत्। गृह्यकारेणैव नत्वेवैकं सर्वेषांपिण्डैर्व्याख्यातमिति पठित्वा काममनाद्येइत्यभिहितम्। अस्यार्थः बहुपित्रादिदेवताकश्राद्धानामाद्यंसपिण्डीकरणमभिमतंतद्व्यतिरिक्तश्राद्धे काममेकः पित्रादीनांब्राह्मणइत्यर्थः। अथवाऽनाद्येऽदनीयद्रव्याभावएकोऽहि भोजयितव्यः। उभयत्रापि व्याख्याने पार्वणादौ पित्रादित्रयस्यैकब्राह्मणभोजनं गृह्यकृतैवोक्तम्। वसिष्ठोपि यद्येकंभोजयेच्छ्राद्धे दैवतन्त्रंकथंभवेत्। अन्नंपात्रे समुद्धृत्य सर्वस्य प्रकृतस्यचदेवतायतने कृत्वायथाविधि प्रवर्तयेत्। प्रास्येदन्नंतदग्नौवादद्याद्वाब्रह्मचारिणइति। सर्वेभ्यएकब्राह्मणभोजनमाह। तस्माद्यथोक्तैवव्याख्या प्रथमे वावशब्दइत्यनेन विस्तारइति प्राप्ते छन्दःसमानत्वात्स्मृतीनांसर्वे विधयश्छन्दसिविकल्पन्ते इति विस्तरइतिरूपम् ॥ १२५ ॥

( ४ ) **राघवानन्दः**। प्रतिज्ञांव्याकरोति द्वाविति। पितृकृत्ये पित्रुद्देश्यककृत्ये। त्रीन् पितृपितामहप्रपितामहान्। प्रत्येकंतान्प्रतित्रींस्त्रीनिति मेधातिथिः। तेन नव। अथवा पितृकृत्यावच्छेदे त्रीन्। तदुक्तम्। यथैकःपिण्डः सर्वेभ्योन निरूप्यते। तथैवैकब्राह्मणोपि न भोजनीयः। मातामहानामप्येवं श्राद्धंकुर्याद्विचक्षणइत्युक्तेः। एवंमातामहपक्षे दैवे पि-

---

* भोजनीया=योजनीया ( अ )

ध्ये च श्रद्धया पितृद्देशेन द्रव्यत्यागंब्राह्मणस्वीकारपर्यन्तंश्राद्धं । अन्यत्र भाक्तमतःआमावासिकश्राद्धं सर्वश्राद्धप्रकृतिः बहुद्रव्यसंपत्तिमानपि बहुब्राह्मणादि न कुर्यादित्याह । नेति ॥ १२५ ॥

( ५ ) **नन्दनः** । यावन्तइत्येतद्विवृणोति द्वौदैवइति । विस्तरेसंख्याभूयस्त्वे ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणसङ्ख्यामाह द्वाविति दैवे विश्वेदेवनिमित्तंद्वौ विप्रौ पितृकृत्ये त्रीन् पित्रादिस्थाने त्रयस्त्रयः विप्राज्ञेयाः । एकैकंमुभयत्र वा पितॄणां एकमेकंवा । विश्वेषांदेवानांवा एकंएकंब्राह्मणंभोजयेत् । विस्तरे नग्नसज्येतये च द्विजावर्ज्यास्युर्वर्जयेत्तान् उक्तान्भोजयेद्विप्रदोषास्ते न भवन्ति ॥ १२५ ॥

**सत्क्रियांदेशकालौ च शौचंब्राह्मणसंपदः ॥ पञ्चैतान्विस्तरोहन्ति तस्मान्नेहेत विस्तरम् ॥ १२६॥**

( १ ) **मेधातिथिः** । किंतर्हि एतान्दोषानापादयति । विस्तारोनेष्यते । यदि तु शक्यन्ते सक्रियादयउपपादयितुंतदा यथोत्साहंसक्रियाऽन्नसंस्कारविशेषः । देशोदक्षिणप्रवणादिरवकाशेषुचोक्षेष्विवितिवक्ष्यमाणः । कालः अपराह्णो मध्यान्हाच्चलिते सूर्यइति । शौचमात्मब्राह्मणप्रेष्यगतम् । ब्राह्मणानांसंपत् गुणवद्ब्राह्मणलाभः । एतेगुणाअव यंसंपाद्याः । तेच विस्तरेण नश्यन्ति । विस्तारोवैगुण्यम् । ब्राह्मण बहुत्वे चासौ प्रसज्जति । तस्मान्नेहेत न कुर्यात् ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः** । सक्रियांपूजांब्राह्मणानां देशःशुचिः । कालोऽमावास्यादिः । शौचंदातृग्रहीत्रोः । ब्राह्मणसंपदंब्राह्मणगुणान् । तदुपवेशमानादेशप्राप्तेस्तावद्ब्राह्मणार्चानुरोधेन कालप्राप्तेःश्राद्धासंभवाद्देशकालौ हन्तीत्युक्तं । तस्मान्नेहेतेऽतिवदत्सत्क्रियादिसंभवे बहुत्वंप्रशस्तमितिदर्शयति । अतएव नवावरान्भोजयेदिति गौतमः ॥ १२६ ॥

( ३ ) **कुल्लूकः** । सत्क्रियांब्राह्मणस्य पूजांदेशंदक्षिणप्रवणत्वादिवक्ष्यमाणंकालमपराह्णंशौचंश्राद्धकर्तृभोक्तृब्राह्मणप्रैष्यगतंगुणवद्ब्राह्मणालाभंच ब्राह्मणविस्तारोनाशयति । तस्माद्ब्राह्मणविस्तारंन कुर्यादिति सक्रियादिविरोधतोब्राह्मणविस्तारनिषेधात्सक्रियादिसंभवे पित्रादेरेकैकस्यापि ब्राह्मणत्रयाभ्यनुज्ञानम् । अतएव गौतमः नचावरान्भोजयेदयुजोवायथोत्साहम् । बह्वृचगृह्यकारोऽपि अथातः पार्वणश्राद्धे काम्य आभ्युदयिकएकोद्दिष्टे ब्राह्मणानित्युपक्रम्य एकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन्वा वृद्धौ फलभूयस्त्वमित्याह द्वौद्वावित्याभ्युदयिकश्राद्धविषयंस्मृत्यन्तरेषु तथाविधानादत्राप्याभ्युदयिकमित्युपक्रमाच्च ॥ १२६ ॥

( ४ ) **राघवानन्दः** । तत्रैव निन्दार्थवादमाह सक्रियामिति । सक्रियां ब्राह्मणपूजां । देशं दक्षिणप्रवणादि । कालं अपराण्हादि । शौचं तत्कर्तृभोक्त्रोः स्नानादि । ब्राह्मणसंपत् गुणवद्विप्रलाभः । एतान्पञ्च विस्तरः उक्तानांबाहुल्यं हन्तीति योजना ॥ १२६ ॥

( ६ ) **रामचन्द्रः** । सक्रियाअन्नसंस्कारविशेषः। देशोदक्षिणाप्रवणं । कालःकुतुपादिः । शौचंआत्मब्राह्मणगतं । यद्वामृत्तिकागोमयभस्मादिगृहोपस्करशुद्धिः । ब्राह्मणसंपदंब्राह्मणसमूहं । श्राद्धे विस्तरोबाहुल्यं एतांसक्रियादिपञ्च हन्ति नाशयति तस्य विस्तरंनेहेत न कुर्यात् । विस्तरंब्राह्मणानांबाहुल्यम् ॥ १२६॥

**प्रथिता प्रेतकृत्यैषा पित्र्यंनाम विधुक्षये ॥ तस्मिन्युक्तस्यैति नित्यंप्रेतकृत्यैव लौकिकी ॥ १२७॥**

( १ ) **मेधातिथिः** । न यथा दैवानि कर्माण्यदेवतार्थान्येवंपित्र्यंनामतत्कर्मैतत् । विधुक्षये तस्मिनयुक्तस्यैतिनित्यंप्रेतकृत्यैवलौकिकी न यथा दैवानि कर्माणि किंतर्हि प्रथिता ख्याता वेदविदाम् । प्रेतकृत्या प्रेतोपक्रिया । विधुक्षये विधुश्चन्द्रस्तस्यक्षये । अमावास्यातिथिक्षयइतिपाठान्तरम् । विधुक्षयइति तु पाठोनिर्दुष्टः । एवंहि तत्र योजनम् । पित्र्यंनामवि-

( १२७ ) प्रेतकृत्यैव=प्रेतकृत्योहि ( नं० )

धिचोदितंकर्म क्षये गृहेतस्मिन् कर्मणि। पित्र्येयुक्तस्य तत्परस्य नित्यंकर्तुरुपतिष्ठते। प्रेतकृत्यैव तस्यापि प्रेतस्य कृत्योपकारः श्राद्धादि पुत्रैः क्रियते। पुत्रपौत्रादिसंतत्यविच्छेदः श्राद्धफलमनेन प्रकारेण प्रतिपद्यते। न च तत्फलकामस्याधिकारोनित्यत्वस्य प्रतिपादितत्वात्। अन्ये त्वधिकारान्तरमिदं संतत्यविच्छेदकामस्येच्छन्ति। लौकिकीयंकर्तव्यतास्मार्तेत्यर्थः॥ १२७॥

( २ ) **सर्वज्ञनारायणः**। एषा या प्रेतमुद्दिश्य क्रिया प्रेतक्रिया क्षये चन्द्रस्यविधोःविहिता कार्यत्वेनपित्र्यंनाम पितृसंज्ञया प्रसिद्धं तस्मिन्युक्तस्यैव पुंसोनित्यमिह कर्मभूमौ लौकिकी विशिष्टलोकप्राप्तिनिमित्तप्रेतकृत्यानित्यश्राद्धरूपाएतिआगच्छति तदधिकारे सति तत्कर्तुरेवनित्यश्राद्धेऽधिकारोनान्यस्येत्यर्थः। क्वचित्प्रेतकृत्यैव लौकिकीऽति पाठः। तत्र तस्मिन्युक्तस्यैवेत्यन्वयः। केचिदत्र श्राद्धउद्युक्तस्य लौकिकी प्रेतकृत्या परायांति निवर्ततेतदकरणेऽपि प्रत्यवायाभावइत्यस्यार्थमाहुः॥ १२७॥

( ३ ) **कुल्लूकः**। यदेतत्पित्र्यंकर्म श्राद्धरूपंप्रथममियंप्रख्याताप्रेतकृत्यापित्रुपकारार्था क्रिया। प्रकर्षेणइतःप्रेतःपितृलोकस्थएवोच्यते। विधुक्षयेऽमावास्यायांतस्मिन्पित्र्येकर्मणि युक्तस्येतत्परस्य लौकिकी स्मार्तिकी प्रेतकृत्या पित्रुपकारार्थाक्रिया गुणवत्पुत्रपौत्रधनादिफलप्रबन्धरूपेण कर्तारमुपतिष्ठते तस्मादिदंकर्तव्यम्। गोविन्दराजेन तु विधिःक्षयइति पठितंव्याख्यातंच। योऽयंनामविधिःपित्र्यंकर्मेति। क्षये चन्द्रक्षये गृहे वातदसांप्रदायिकम्। मेधातिथिप्रभृतिभिर्गोविन्दराजादपि वृद्धतरैरनभ्युपेतत्वात्क्षयइति संबन्धक्लेशाच्च॥ १२७॥

(४) **राघवानन्दः**। श्राद्धस्य संज्ञान्तरंकुर्वंस्तत्कर्तुरानृण्यमाह प्रथितेति। प्रथिता प्रख्याता प्रेतकृत्या पित्रुपकारार्था क्रिया। विधुक्षये अमावास्यायां लौकिकी स्मार्ता। तस्मिन्युक्तस्य श्रद्धानस्य नित्यं पुत्रपौत्रादिफलप्रबन्धेन श्रद्धानं कर्तारंप्रत्येतीत्यर्थः॥ १२७॥

( ५ ) **नन्दनः**। विस्तरवर्जने कारणान्तरमप्यस्तीत्यभिप्रायेणाह प्रथितेति। विधुक्षये चन्द्रक्षये। यत्पित्र्यंनामकर्मक्रियते साह्येषाप्रेतकृत्येति प्रथिता लोके प्रसिद्धा। प्रेताःपितृपितामहादयस्तदर्थाक्रिया प्रेतकृत्या प्रेतनिःश्रेयसकरीक्रियेतियावत्। लौकिकी लोकविदितासैषाप्रेतकृत्या। तस्मिन्विस्तरेसति। युक्तस्य सावधानस्य श्रद्धानस्येति यावत्। इह विधुक्षये नित्यंप्रतिमासमेत्यागच्छति कर्तव्यत्वेनोपतिष्ठते हियस्मात्। किमुक्तंभवति अमावास्यायांश्राद्धंप्रेततृप्तिहेतुरिति प्रसिद्धम्। तच्च यदाकदाचिन्नक्रियते किंतु प्रतिमासमनतिपातनीयमेव प्रतिमासंविस्तरेणप्रसक्तिरतिर्पातकदाचिदापादयेत्। तस्माद्विस्तरेण नप्रसज्जेतेति॥ १२७॥

( ६ ) **रामचन्द्रः**। एषा प्रेतकृतिः पितृक्रियाकर्म विधुक्षयेअमायांप्रथिता प्रसिद्धा तस्मिन्नन्वाहार्यके पित्र्ये कर्मणि नित्यंयुक्तस्य पुंसःइष्टश्राद्धे कर्मणि लौकिकक्रिया प्रेतकृत्या मृतस्यसत्कारःश्राद्धंपुत्रादिभिर्दत्तात्कृतकृत्यतामेति प्राप्नोति। प्रेतकृत्यैषेति वा पाठः॥ १२७॥

## श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः॥ अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्॥१२८॥

( १ ) **मेधातिथिः**। श्रोत्रियःछांदसः कृत्स्नमंत्रब्राह्मणिकांशाखांअधीतेयस्तस्मैहव्यानिश्राद्धांगभोजनानिर्विश्वान्देवानुद्दिश्ययानिविहितानितानिदेयानि। कव्यानिपितृभ्यउद्दिश्ययानिभोजनानि। अर्हत्तमायअर्हतापूज्यतायोग्यताच। महाकुलीनःपूज्यतेमहाकुलेजातोविद्यावृत्तसंपन्नश्चतस्मैदत्तंश्राद्धादन्यदपिमहाफलं। एवंचाश्रोत्रियायदानंनिष्फलं। अश्रोत्रियायअभिजनविद्यादिगुणरहितायस्वल्पफलमर्हत्तमायमहाफलं॥ १२८॥

( २ ) **सर्वज्ञनारायणः** । हव्यं वैश्वदेविकमन्नं । कव्यं पित्र्यं । अर्हत्तमाय वृत्तसंपन्नादपि पूज्याय श्रोत्रियाय ॥ १२८ ॥

( ३ ) **कुल्लूकः** । छन्दोमात्राध्यायी श्रोत्रियस्तस्मैदैवपित्र्यान्नानि यत्नतोदेयानि । अर्हत्तमायश्रुताचाराभिजनादिभिः पूज्यतमाय तस्मै दत्तमहाफलंभवति ॥ १२८ ॥

( ४ ) **राघवानन्दः** । यावन्तइत्युक्ता ये भोजनीया इत्युक्तं तानाह श्रोत्रियायेति । वेदाध्यायी श्रोत्रियः । हव्यं होमउत्तराप्रतिपत्तिर्यस्य तदुपलक्षितं देवदेयं । कव्यं कवेःपुत्राहविष्मन्तःश्राद्धदेवास्तदुपलक्षितं पितृदेयं । श्रोत्रियएव श्रुताचारादिसंपन्नोर्हत्तमः ॥ १२८ ॥

( ५ ) **नन्दनः** । येभोजनीया स्युर्येवर्ज्याइतियदुक्तंतच्छ्लोकद्वयेन विवृणोति श्रोत्रियायेति । तत्र हव्यग्रहणंप्रासङ्गिकं श्राद्धाङ्गवैश्वदेवविषयंवा । अर्हत्तमायपूज्यतमाय ॥ १२८ ॥

## एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ॥ पुष्कलंफलमाप्नोति नामंत्रज्ञान्बहूनपि ॥ १२९ ॥

( १ ) **मेधातिथिः** । यदुक्तमर्हत्तमायेतितद्दर्शयति । विद्वांसमेकमपिभोजयेत् । पुष्कलंफलमाप्नोति । विद्वत्ताचव्याख्याता । वेदार्थवेदनंयतआह नामंत्रज्ञान्बहूनपि मंत्रग्रहणंवेदोपलक्षणार्थं असंभवेपंचानांवेदविदुषामेकैकमपिविद्वांसंभोजयेदितिविध्यर्थः । पुष्कलंपुष्टंविपुलं ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । विद्वांसंवेदज्ञम् ॥ १२९ ॥

( ३ ) **कुल्लूकः** । दैवपित्र्ययोरेकैकमपि वेदतत्त्वविदंब्राह्मणंभोजयेत् । तदापि विशिष्टंश्राद्धफलंप्राप्नोति नत्वविदुषोबहूनपि एवंच फलश्रवणाद्ब्राह्मणभोजनमेवप्रधानंपिण्डदानादिकंत्वङ्गमितिगोविन्दराजः । वयंतुपित्रुद्देशेनद्रव्यत्यागंब्राह्मणस्वीकारपर्यन्तं श्राद्धशब्दवाच्यंप्रधानंब्रूमः । तदेव मनुना पिण्डान्वाहार्यकंश्राद्धंकुर्यादिति विहितं । आपस्तम्बेनतु मन्वर्थस्यैव व्याख्यातत्वात् । तदाहआपस्तम्बः तथैतन्मनुःश्राद्धशब्दंकर्मप्रोवाच प्रजानिःश्रेयसार्थंतत्र पितरोदेवता ब्राह्मणस्त्वाहवनीयार्थे मासिमास्यपरपक्षस्यापराह्णः श्रेयानिति । श्राद्धशब्दं श्राद्धमिति शब्दोवाचकोयस्यतत्तथा ब्राह्मणस्त्वाहवनीयार्थेआहवनीयवत्त्यक्तद्रव्यप्रतिपत्तिस्थानत्वात्पितरोदेवताइति नियतपितृदेवताकत्वाच्च श्राद्धस्य । देवताश्राद्धादौश्राद्धशब्दस्तु तद्धर्मप्राप्त्यर्थोगौणः कौण्डपायिनामयनइवाग्निहोत्रशब्दः । पुष्कलंफलंप्राप्नोति इति तु पुष्टतरफलार्थिनोगुणफलविधिः । सभोजनस्याङ्गत्वेऽपि तदाश्रयोनविरुद्धः आपस्तम्बोभ्यधाच्छ्राद्धंकर्मैतत्पितृदैवतम् । मन्वर्थंकथयंस्तस्मान्नेदंब्राह्मणभोजनम् ॥ १२९ ॥

( ४ ) **राघवानन्दः** । एवंविधानामसंपत्तावेकोपि महाफलदइत्याह एकैकमिति । विद्वांसं गायत्र्यर्थविदमित्युक्तं । विदुषअलाभे प्रतिनिक्तं व्यावर्तयति नत्वेकैकमिति भावः । अमन्त्रज्ञानविदुषः ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । बहूनपि । अमन्त्रज्ञान् वेदाध्ययनरहितानइत्यर्थः ॥ १२९ ॥

## दूरादेव परीक्षेत ब्राह्मणंवेदपारगम् ॥ तीर्थं तद्धव्यकव्यानां प्रदाने सोतिथिः स्मृतः॥ १३०॥

( १ ) **मेधातिथिः** । नवेदपारगइत्येवभोजयितव्यः । किंतर्हिदूरात्परीक्षेत निपुणंतोमातापितृवंशद्वयपरिशुद्धिज्ञानं यथोक्तं येमातृतः पितृतश्चदशपूरुषं समनुष्ठितविद्यातपोभ्यांपुण्यैश्चकर्मभिः येषामुभयतो ब्राह्मण्यंनिर्णयेयुरित्येषादूरात्परीक्षा । तथातत्त्वतोध्ययनविज्ञानकर्मानुष्ठानवेदनंच । वेदस्यपारगः समाप्तिगःवेदपारगः नवेदसंहितांब्राह्मणमात्रंवापठन्नर्हो-

भवति । अस्मादेवदर्शनात्श्रोत्रियशब्देन वेदैकदेशमप्यधीयानउच्यतइतिगम्यते । तीर्थंतद्धव्यकव्यानांतीर्थमिवतीर्थं येनोदकंग्रहीतुमवतरंतितत्तीर्थं तेनयथामार्गेणोदकार्थिनोगच्छंतउदकंलभंते एवंतादृशेनब्राह्मणेनहव्यकव्यानिपितॄन्गच्छंतीतिप्रशंसा । अन्यस्मिन्नपि इष्टापूर्तदानेनब्राह्मणोयथातिथिर्यथातिथयेत्वयमुपस्थितायनिर्विचिकित्संदीयते दत्तंमहाफलं। एवमीदृशायब्राह्मणायहव्यकव्येनिर्विचिकित्संदातव्ये महाफलेभवतः ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः**। दूराद्दूरग्रामस्थमपि परीक्षेतानुसंदध्यात्। तीर्थमवतरणवर्त्म सोतिथिःस्मृतइति प्रसंगादवेदज्ञस्य वैश्वदेवान्तागतस्यापि अतिथित्वाभावउक्तः। यत्तुनपृच्छेद्गोत्रचरणमिति स्मृत्यन्तरउक्तम् तत्साक्षात्प्रश्ननिषेधार्थं। नतुप्रकारान्तरेणापि तदज्ञाननिषेधे तात्पर्यम् ॥ १३० ॥

( ३ ) **कुल्लूकः**। दूरादेव पितृपितामहाद्यभिजनशुद्धिनिरूपणेन कृत्स्नशाखाध्यायिनंब्राह्मणंपरीक्षेत। यस्मात्तथाविधोब्राह्मणोहव्यादीनांतीर्थंपात्रंप्रदाने। सोतिथिरेवंमहाफलप्राप्तेर्हेतुत्वात् ॥ १३० ॥

( ४ ) **राघवानन्दः**। छन्दोमात्राध्यायी पितृपितामहतः संभावित दोषोन ग्राह्यइत्याह। दूरादितिपरीक्षेत परीक्षणं दोषाभावोपलक्षिताचारादेरीक्षणम्। तीर्थं पात्रं तत्र हव्यंचतुरवत्तंजुहोतीति। कव्यं कविर्नाम पितॄणां जनकस्तस्मै। अर्हति कविरुपलक्षणं। मरीच्यादीनाम्। तस्यैव कार्यान्तरार्थं। धर्मान्तरमाह सइति प्रदाने श्राद्धस्येति शेषःएतेनातिथ्यर्चाफलमप्यसूचि ॥ १३० ॥

( ५ ) **नन्दनः**। यतएवंतस्माद्विद्वानेवान्वेक्ष्यइत्याह दूरादिति। दूरादेव पात्रपरिग्रहकालात्पूर्वमेवविद्यादिभिः परीक्षेतेत्यर्थः। तीर्थंउत्तमपात्रम्। सोऽतिथिरतिथितुल्यः भोजनस्य पात्रंह्यतिथिः । तेनायमपिभोजनस्यपात्रमित्यर्थः। अथवाऽतिथिशब्देन कालोलक्ष्यते। यस्यतिथिर्नविद्यते सोऽतिथिः। तस्यार्हत्तमस्य पात्रस्य हव्यकव्यप्रदानकालः प्रतिपालयितव्योनास्तीत्यर्थः। तथाचमहाभारते श्राद्धस्य ब्राह्मणः कालइति ॥ १३० ॥

( ६ ) **रामचन्द्रः**। दूरादेव ब्राह्मणं वेदपारगंपरीक्षेत पितृपितामहपूर्वकं। देवलः पुरुषत्रयविख्यातंश्राद्धे विप्रंनियोजयेत्। कीदृशं ब्राह्मणं तस्य श्राद्धस्य संबन्धीनि हव्यकव्यानि तेषां तद्धव्यानांप्रदानेतीर्थम्। तीर्थमुदकावतरणमार्गः। यथातीर्थेनोदकंप्राप्यते तथा तादृशैर्ब्राह्मणैर्हव्यकव्यानि पितॄन्गच्छन्तीति प्रशंसा। स ब्राह्मणअतिथिः स्मृतः अतिथितुल्यः ॥ १३० ॥

**सहस्रं हि सहस्राणामनृचां यत्र भुंजते ॥ एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति धर्मतः ॥१३१॥**

( १ ) **मेधातिथिः** । अनृचांअनृगर्थविदांउपलक्षणंऋचोयतोनृचानांप्राप्तिरेवनास्तिश्रोत्रियायैवेतिनियमात् । समासांतःछांदसत्वान्नकृतःवृत्तानुरोधाच्चएवंहिपठंति । अपिमाषंमषंकुर्यान्नतुछंदोविचालयेदिति । अथवाअनृचाइतिप्रथमाबहुवचनं । अनृचाःसहस्रंयथाभुञ्जतइतिसंबन्धः । यथासहस्रंगावइति । एकःप्रीतस्तर्पितोभोजितोमन्त्रविद्वेदार्थवित्सर्वांस्तान्अनृचानर्हति स्वीकरोति। तैरभेदमापद्यते अभेदेच यत्तेषुसहस्रेषुभोजितेषुफलंतदेकस्मिन्नवाप्य पतेइत्यवगतिरुत्पद्यते । निन्देयमविदुषोविद्वद्विध्यर्था नपुनःसहस्रसंख्यातानामेकस्यचसमफलत्वमुच्यते । विदुषांविधानादविदुषांप्राप्तिरेवनास्ति अथाप्यसतिविदुषिश्रोत्रियायैवेत्यनेनपाक्षिकीअविदुषोपिप्राप्तिराशंक्यते तथापिविस्तरस्यप्रतिषेधोमाभूदित्यतोयथाश्रुतार्थसंभवः ॥ १३१ ॥

---

( १ ) रेव=रिव ( अ )

( १३१ ) सहस्रंहि=संहस्राणि ( ब, र )

( २ ) **सर्वज्ञनारायणः**। आनृचाममन्त्राणांयत्र येषु हव्यकव्येषु तान् तानि हव्यकव्यानि लिङ्गव्यत्ययश्छान्दसः। युक्तोनियुक्तः। धर्मत औचित्येन ॥ १३१ ॥

( ३ ) **कुल्लूकः**। यत्र श्राद्धेब्राह्मणानामवेदविदांदशलक्षाणिभुञ्जते तत्रैकोवेदविद्भोजनेन परितुष्टोधर्मतोधर्मोत्पादनेन तान्सर्वानर्हति स्वीकर्तुंयोग्योभवति। तद्भोजनजन्यंफलंजनयतीत्यर्थः। छान्दसत्वादेकवचनम्। अथवा बहुवचनानांस्थाने सहस्रमिति मनोरभिमतम्। गोविन्दराजस्त्वाह सहस्रंगच्छन्तुभूतानीति वेदे ॥ १३१ ॥

( ४ ) **राघवानन्दः**। श्राद्धे वेदपारगं विदधत्फलतः अनृचांदशलक्षतस्तस्याधिक्यमाह सहस्रमिति। अर्हति दशलक्ष ब्राह्मणभोजनजन्यफलदइत्यर्थः। धर्मतः अदृष्टबलतः प्रीतःश्राद्धेन तुष्टः ॥ १३१ ॥

( ५ ) **नन्दनः**। इदानीमविद्वद्विदुषोर्वैषम्यमुक्तार्थवादस्थापनमाह सहस्राणीति। यत्र हव्यकव्यदानकर्मणि। अनृचाममन्त्रविदाम्। सहस्राणांसहस्राणिभुञ्जते। मन्त्रविद्वेदार्थवित्। भुङ्क्तेचेतिविपरिणामः। सत्रतान्भुक्तवतः सर्वानृचः समन्त्रविद्धर्मतोऽर्हति। तस्य तेषाञ्चभोजनं फलतस्तुल्यमित्यर्थः। पात्रे खलु दात्रास्तमलंमृज्यते तच्च शुद्धे तस्मिंल्लक्ष्यते प्रमार्ष्टुंनत्वशुद्धइति १३१ ॥

( ६ ) **रामचन्द्रः**। अनृचांअनृचपाठानां यत्सहस्रेषु भोजितेषु फलंतदेकस्मिन्नवाप्यते ॥ १३१ ॥

**ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ॥ न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः॥१३२**

( १ ) **मेधातिथिः**। ज्ञानेनविद्ययाउत्कृष्टा अधिकास्तेभ्योदेयानि कव्यानि। तैर्यदर्थंश्राद्धमारब्धंसंदीमान् तमायः पिण्डान्यमपुरुषैराश्यते। अयमसौ हस्तरुधिरदिग्धोपमार्थःरुधिरदिग्धौरुधिरेणोपमृज्यमानावधिकतरंरज्येते। ननिर्मलौभवतः। एवमविद्वान्ब्राह्मणःभोज्यमानःपितॄनधोनयतितरां पाठान्तरंप्रेत्येति भोक्तुरेवप्रेत्यता। नाविदुषादैवपित्र्ययोर्भोक्तव्यम् ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः**। नहिश्राद्धाकरणजन्यप्रत्यवायित्वमवेदज्ञताप्रत्यवाययुक्तविप्रभोजनेन शुध्यतीत्यर्थः १३२

( ३ ) **कुल्लूकः**। विद्ययोत्कृष्टेभ्योहव्यानि कव्यानि च देयानि न मूर्खेभ्यः। अर्थान्तरन्यासोनामालङ्कारः। नहि रक्ताक्तौ हस्तौ रक्तेनैव विशुद्धौ भवतः किंतु विमलजलेन एवंमूर्खभोजनेन जनितंदोषं न मूर्खएवभोजितोपहन्ति किंतु विद्वान् ॥ १३२ ॥

( ४ ) **राघवानन्दः**। अनृचांफलराहित्यंदृष्टान्तेन वदन्वेदज्ञमनुवदति ज्ञानेति। ज्ञानंवेदार्थज्ञानमुत्कृष्टंयस्य तस्मै। कव्यानि पितृदेयानि हवींषि देवदेयानि असृग्दिग्धौ रुधिरलिप्तौ रुधिरेण न शुध्यतएवमज्ञोऽफलदइति भावः ॥ १३२ ॥

( ५ ) **नन्दनः**। दृष्टान्तेन सूचयन्नाह ज्ञानेति ॥ १३२ ॥

( ६ ) **रामचन्द्रः**। ज्ञानोत्कृष्टाय विप्राय कव्यानि पितॄणांदेयानि हवींषिदेवानां देयानि। असृग्दिग्धौअसृक्स्पृष्टौ हस्तौ रुधिरेण नैव शुध्यतः। रुधिरेणैव प्रक्षालितंन शुध्यतीत्यर्थः ॥ १३२ ॥

**यावतोग्रसते ग्रासान्हव्यकव्येष्वमन्त्रवित् ॥ तावतोग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् ॥ १३३ ॥**

---

( १३३ ) दीप्तशूलर्ष्ट्ययोगुडान्=दीप्ताञ्छूलर्ष्ट्ययोगुडान् ( क, घ, च, ज, झ, ढ )

=दीप्तान्स्थूलानयोगुडान् ( ख, ग, ञ )

( १ ) **मेधातिथिः** । सत्यपिपकरणेवाक्याद्भोक्तुरयंदोषानुवादः । तथाचोक्तं तस्मादविद्वान्बिभियात् यस्मात्तस्मात्प्रतिग्रहादिति । शूलर्ष्टयोआयुधविशेषेअयोलगुडःआयसःपिण्डः व्यासदर्शनात्तुभोजयितुरयंदोषोनभोक्तुः नपितृणांनतावन्मृतानामन्यकृतेनप्रतिषेधातिक्रमेणदोषसंबन्धोयुक्तः कृताभ्यागमादिदोषापत्तेः यदिहिपुत्रेणतादृशोब्राह्मणोभोजितःकोपराधोमृतानांननुचोपकारोपिपुत्रकृतःपितॄणांअनेनन्यायेनेनप्रामोति । नप्रामुयाद्यदितादर्थ्येनश्राद्धादिनोदितंस्यात् । इहतुनास्तिचोदना पितुरुपकारकामेनैवकर्तव्यंस्यात् श्येनवत् । यत्तुतावतोग्रसतेप्रेतइतितद्भोजयितृसंबन्धेप्युपपद्यते । यस्यब्राह्मणईदृशःश्राद्धंभुङ्क्तेसइदंफलमाप्नोतिइतियुक्तःसंबन्धः । प्राकरणिकश्चायंअविद्वद्भोजनप्रतिषेधस्तदतिक्रमणेकर्मवैगुण्यंतद्वैगुण्येचश्राद्धाधिकारान्निवृत्तिरेवदोषः । पितॄणांश्राद्धोपकाराल्लाभःततोपिविध्यतिक्रमेपुत्रस्ययुक्तःप्रत्यवायः किंतर्हितद्भगवतोव्यासस्यवचनं । ग्रसतेयावतःपिंडानयस्यवैहविषोविदः । ग्रसतेतावतःशूलान्गत्वावैवस्वतक्षयं ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः** । एतेनामन्त्रज्ञस्य भोक्तुरपि प्रत्यवायितोक्ता । ऋष्टिः खड्गः अयोगुडोलोहगुडकः ॥ १३३ ॥

( ३ ) **कुल्लूकः** । अविद्वन्निन्दया विद्वद्दानमेवोक्तंवक्रोक्त्यास्तौति यावतइति । यत्सङ्ख्याकान्ग्रासान्हव्यकव्येष्ववेदविद्भुङ्क्ते तत्सङ्ख्याकानेव प्रकृतश्राद्धकर्ता ज्वलितशूलर्ष्ट्याख्यायुधलोहपिण्डान्ग्रसते । श्राद्धकर्तुरेवेदमविद्वद्दानफलकथनम् । तथाच व्यासः । ग्रसते यावतः पिण्डान् यस्यवै हविषोऽनृचः । ग्रसते तावतः शूलान्गत्वा वैवस्वतक्षयम् ॥ १३३ ॥

( ४ ) **राघवानन्दः** । न केवल मेवं प्रत्यवायोपि स्यादित्याह यावतइति । यावतोयावत्सङ्ख्याकान् पिण्डाकारान् ग्रासान् । अमन्त्रविदवेदाध्यायी भुङ्क्ते तावतः शूलर्ष्ट्ययोगुडान् शूलाकारा ऋष्टिरस्त्रं तया युक्तान् लोहमयान् गुडान् गुडपिण्डाकारान् ग्रासान् तावतः तावत्सङ्ख्याकान् प्रेत्य श्राद्धकर्तेति शेषः । तथा व्यासः ग्रसते यावतः पिण्डान् यस्य वै हविषोऽनृचः । ग्रसते तावतः शूलान् गत्वा वैवस्वतक्षयमिति ॥ यत्तदोर्नित्यसंबन्धात् ॥ १३३ ॥

( ५ ) **नन्दनः** । न केवलंभोजयितैव भोजने ज्ञानहीनो वर्जनीयःकिन्तुज्ञानहीनेनापिस्वयमेव सुतरांभोजनंवर्जनीयमित्याह । यावतइति । दीप्तानग्निमयान् । अयोगुडानगुडोद्दिमुखंफलंशराग्रम् ॥ १३३ ॥

( ६ ) **रामचन्द्रः** । अमन्त्रविद्विप्रःवेदाध्ययनरहितः । हव्यकव्येषु यावतःपिण्डान्ग्रसते ग्रासान् यावतोग्रसते । तावतःदीप्तान्स्थूलान् अयोगुडान् अयोलगुडानग्रसते । यस्य ब्राह्मणईदृशः श्राद्धोभुङ्क्ते सइदंफलंप्राप्नोतीतिवा । अविद्वान्भोजने प्रतिषिद्धः ॥ १३३ ॥

## ज्ञाननिष्ठाद्विजाः केचित्तपोनिष्ठास्तथापरे ॥ तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथापरे ॥ १३४ ॥

( १ ) **मेधातिथिः** । सर्वगुणेभ्योविद्यांप्रशंसितुंगुणविभागकथनप्रशंसाचविदुषेदानार्था । ज्ञानेविद्यायांनिष्ठा । प्रकर्षोयेषांतेज्ञाननिष्ठाः ज्ञानाधिकारिणः गमकत्वाद्यधिकरणानामपिबहुव्रीहिःभृशमभ्यस्तवेदार्थास्तत्पराएवमुच्यन्ते । एवंसर्वत्रनिष्ठान्तेषुद्रष्टव्यं । तपश्चस्वाध्यायश्चेतिद्वन्द्वगर्भोबहुव्रीहिः तपांसिचान्द्रायणादीनिस्वाध्यायोवेदाध्ययनं कर्माण्यग्निहोत्रादीनि । सर्वएतेगुणाःसर्वेषुसमुच्चिताइतिद्रष्टव्याः । नहिएकगुणःसद्भावइतरगुणहीनस्यपात्रतामापादयति किंतुकस्यचित्कोपिप्रकर्षउच्यते । यथाचनिष्ठाशब्दःसमाप्तिवचनःप्रकर्षंलक्षयति तस्मिन्निष्ठस्तत्परउच्यते सर्वगुणसद्भावेपियदितत्रप्रकर्षोस्त्येवगुणाःमध्यमाःतथाचभवत्येवपात्रंअप्रकृष्टेत्वेकस्मिन्सर्वगुणसद्भावेपिनपात्रतांलभंते । समुच्चयश्चव्याख्यायते तेनज्ञानरहितस्यकर्मानुष्ठानसद्भावइत्युक्तंद्वितीये । अन्यैस्तुज्ञाननिष्ठपरिव्राजकोव्याख्यायते । तस्यहिआत्मज्ञानाभ्यासः कर्मन्यासेनविशेषतोविहितः तपोनिष्ठोवानप्रस्थःसहितापसइत्याख्यायते । ग्रीष्मेपञ्चतपास्तुस्यादिति । तपःस्वाध्यायनि-

ष्ठाःब्रह्मचारिणःकर्मनिष्ठागृहस्थाःअतश्चनाश्रमिणोनिषिध्यन्ते । तथाचपौराणिकाः चातुराश्रम्यबाह्येभ्यःश्राद्धंनैवप्रयोजयेत् ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञानमात्मज्ञानं तन्निष्ठा यतयः । तपश्चान्द्रायणादि तन्निष्ठा वनस्थाः । तपोगुरुशुश्रूषादि स्वाध्यायोवेदाध्ययनं तन्निष्ठाब्रह्मचारिणः । कर्म यज्ञादि तन्निष्ठा गृहस्थाः । अत्राश्रमिवाचि यतयइतिपदत्यागेन ज्ञाननिष्ठादिपदेन तदभिधानमाश्रमान्तरवर्तिनां ज्ञाननिष्ठत्वादिगुणवतांप्राप्त्यर्थम् । एतेन वानप्रस्थानांश्राद्धभोजनं गम्यते ॥ १३४ ॥

( ३ ) **कुल्लूकः** । केचिदात्मज्ञानपराब्राह्मणाभवन्ति । अन्ये प्राजापत्यादितपः प्रधानाः । अपरे तपोध्ययननिरताः । इतरे यागादिपराः ॥ १३४ ॥

( ४ ) **राघवानन्दः** । ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि चेत्युक्तम् । तत्रैव व्यवस्थितविषयार्थंतत्पात्राण्यनुवदन्व्यवस्थितिमाह ज्ञाननिष्ठाइतिद्वाभ्यां । ज्ञानमध्यात्मं तपश्चान्द्रायणादि स्वाध्यायोवेदाभ्यासः । कर्माग्निहोत्रादि तन्निष्ठास्तदेकशरणाः ॥ १३४ ॥

( ५ ) **नन्दनः** । हव्यकव्ययोः पात्रविशेषे नियमंवक्तुंपात्रवैविध्यंतावदाह ज्ञानेति । ज्ञाननिष्ठाःअध्यात्मज्ञानिनः । तपोनिष्ठाःकृच्छ्रचान्द्रायणादिप्रधानाः । स्वाध्यायज्ञाननिष्ठा मन्त्रब्राह्मणार्थविदः कर्मनिष्ठायाज्ञिकाः ॥ १३४ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह ज्ञाननिष्ठाःइति । ज्ञाननिष्ठाः संन्यासिनः । तपोनिष्ठाः वानप्रस्थाः । तपःस्वाध्यायनिष्ठा ब्रह्मचारिणः । कर्मनिष्ठाः गृहस्थाः ॥ १३४ ॥

**ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ॥ हव्यानि तु यथान्यायंसर्वेष्वेव चतुर्ष्वपि॥१३५॥**

( १ ) **मेधातिथिः** । गुणविभागेप्रयोजनमाह । कव्यानिपितॄनुद्दिश्ययद्दीयतेतत्कव्यं । तानिज्ञाननिष्ठेषुप्रतिष्ठाप्यानिप्रदेयानीत्यर्थः । यत्नवचनात्तदभावेचतुर्ष्वपिहव्यवत् पित्र्ये ज्ञाननिष्ठाः पात्रतमाः । उक्तंहिपात्राणामपितत्पात्रंइति । अन्नदानमविशेषेणचतुर्भ्योपिइति श्लोकार्थः । न्यायः शास्त्रीयोविधिः ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । किंतुवन्याहारेणैव तत्कर्तव्यमिति यत्नतइत्यसंभवेऽपीत्यर्थः ॥ १३५ ॥

( ३ ) **कुल्लूकः** । ततः किमतआह ज्ञानेति । ज्ञानप्रधानेभ्योपित्र्यर्थान्नानि यत्नाद्दातव्यानि । देवान्नानि पुनर्न्यायावधृतार्थशास्त्रानुसारेण चतुर्भ्योऽपि ॥ १३५ ॥

( ४ ) **राघवानन्दः** । प्रतिष्ठाप्यानि देयानि । यथान्यायं पूर्वपूर्वालाभे उत्तरोत्तरस्य ग्राह्यतेति ॥ १३५ ॥

( ६ ) **रामचन्द्रः** । ज्ञाननिष्ठेषु ज्ञाननिष्ठादिषु सर्वेषु चतुर्षु यत्नतः कव्यानि हव्यानिच यथान्याययंयथाक्रमंप्रतिष्ठाप्यानि देयानीत्यर्थः ॥ १३५ ॥

**अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः॥अश्रोत्रियोवा पुत्रः स्यात्पिता स्याद्वेदपारगः॥१३६॥**

( १ ) **मेधातिथिः** । संशयोपन्यासार्थः श्लोकः ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । अश्रोत्रियोऽनधीतवेदः ॥ १३६ ॥

( ३ ) **कुल्लूकः** । योऽश्रोत्रियपितृकः स्वयंचश्रोत्रियः यः श्रोत्रियपितृकः स्वयंवाऽश्रोत्रियः ॥ १३६ ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रासङ्गिकंविशेषमाह अश्रोत्रियइतिद्वाभ्यां । वेदपारगः शाखाध्यायी ॥ १३६ ॥

( ५ ) **नन्दनः** । एवंतावद्गुणवान्पात्रमित्युक्तम् इदानींगुणवतोनिर्गुणपितृकादगुणोऽपिगुणवत्पितृकःपात्रमित्यर्धाधिकश्लोकेनाह अश्रोत्रियइति । पुत्रोऽश्रोत्रियस्य ॥ १३६ ॥

( ६ ) **रामचन्द्रः** । यस्य पिताअश्रोत्रियः मूर्खःस्यात् पुत्रःवेदपारगःस्यात् । यद्वा पुत्रअश्रोत्रियः पिता वेदपारगः स्यात् । अनयोस्तयोर्मध्ये यस्य श्रोत्रियःपिता स्याद्वेदपारगः स्यात् । तस्यपुत्रंज्यायांसंपूज्यंजानीयादित्यर्थः। आत्मा वै जायते पुत्रइति श्रुतेः । इतरः पुत्रोवेदपारगोमन्त्रपूजनार्थंसत्कारमर्हति ॥ १३६ ॥ १३७ ॥

**ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता ॥ मन्त्रसंपूजनार्थंतु सत्कारमितरोर्हति ॥१३७॥**

( १ ) **मेधातिथिः** । यस्यपिताअपाठः स्वयंतुवेदपारगः सांगवेदाध्यायी । इतरस्यतुपितावेदपारगः स्वयंतुमूर्खः । तयोः कः श्रेयानितिसंशयंकृत्वासिद्धान्तमाह । अनयोः स्वयंश्रोत्रियपितृमूर्खः स्वयंमूर्खःपितृश्रोत्रिययोः स्वयंमूर्खःपितृश्रोत्रियंज्यायांसंप्रशस्यंश्राद्धेयोग्यंजानीयात् । यद्यस्यश्रोत्रियः पिताइतरोमन्त्रपूजनार्थंनब्राह्मणबुद्ध्याकिंतुमन्त्रास्तेनयेधीतास्तेतत्रपूज्यंते नमन्त्राणांश्राद्धेपूजाविहिता तस्मान्नासौभोजयितव्यः । श्लोकद्वयेनसंशयसिद्धान्तरूपोपन्यासेनार्थवादभंग्या पितृश्रोत्रियत्वंच श्राद्धभोजनेकारणमित्येतदुच्यते नकेवलमात्मश्रोत्रियत्वं नतुस्वयंअनधीयानस्यपितृश्रोत्रियत्वेनभोज्यताविधियते तदुक्तंदूरादेवपरीक्षेतेति । अत्राध्ययनपरीक्षापुरुषद्वयविषयानेन नियम्यते । जातिगुणपरीक्षातुततोधिकपुरुषविषयापि । यथाअतस्तस्यैवविशेषाभिधानार्थत्वादपौनरुक्त्यं ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः** । मन्त्रसंमानना वेदपूजासत्कारं पूजामात्रम् हव्यकव्यानि श्रोत्रियायैव देयानीत्युक्तत्वात् पितृश्रोत्रियत्वंश्रुतिमात्रपरं ॥ १३७ ॥

( ३ ) **कुल्लूकः** । तयोः कः श्रेष्ठइत्युपन्यस्य विशेषमाह ज्यायांसमिति । अनयोः पूर्वश्लोकनिर्दिष्टयोर्मध्ये श्रोत्रियपुत्रंस्वयमश्रोत्रियमपि ज्येष्ठंजानीयात् । पितृविद्यादरपरमिदम् । यःपुनरश्रोत्रियस्य पुत्रःस्वयंच श्रोत्रियः सतदधीतवेदपूजनार्थंपूजामर्हति वेदएवतद्द्वारेण पूज्यतइति पुत्रविद्यादरपरमिदम् । तस्माद्वचनभङ्ग्या श्रोत्रियपुत्रः स्वयंच श्रोत्रियः श्राद्धे भोजयितव्यइत्युक्तम् । नतु श्रोत्रियपुत्रस्य स्वयमश्रोत्रियस्यैवाभ्यनुज्ञानंश्रोत्रियायैव देयानीति विरोधात् । एवंच दूरादेव परीक्षेतेति विद्याव्यतिरिक्ताचारादिपरीक्षार्थत्वेनावतिष्ठते ॥ १३७ ॥

( ४ ) **राघवानन्दः** । अनयोरश्रोत्रियश्रोत्रियपुत्रयोः । मन्त्रोवेदस्तस्य संपूजनमेव अश्रोत्रियपुत्रपूजा । अतःश्रोत्रियपुत्रस्यैव पात्रता । एतस्यैव विशिष्टसंस्कारवत्वादित्यर्थः ॥ १३७ ॥

( ५ ) **नन्दनः** । श्रोत्रियपुत्रंज्यायांसंविद्यात् । पात्रतायामिदंनपूज्यतायामित्युत्तरार्धेनोक्तम् । इतरोऽश्रोत्रियः॥१३७॥

**नश्राद्धे भोजयेन्मित्रंधनैः कार्योऽस्य सङ्ग्रहः॥नारिंन मित्रंयंविद्यात्तंश्राद्धे भोजयेद्द्विजम्॥१३८॥**

( १ ) **मेधातिथिः** । सत्यामेवश्रोत्रियत्वादिपूर्वगुणसंपदि मैत्र्यादिनिमित्तेन प्रतिषेधोयं । मित्रंसमानसुखदुःखंआत्मनिर्विशेषं नश्राद्धेभोजयेत् । धनैरन्यैरस्यमित्रस्यस्वीकारोमैत्रीकरणं । अविच्छेदोवा मैत्र्यंउपकारइतियावत् । नकेवलंनमित्रंभोजयेत् । यावदरिंशत्रुमपि । नारिंनमित्रंयंविद्याद्यत्रनरागोनद्वेषोनचान्यःकश्चित्संबंधोयत्रप्रीतिनिमित्ताकार्यार्थताशंक्यते अरिमित्रयोःप्रदर्शनार्थत्वात्तथासंबंधाशंकयैवमातामहादयोऽनुकल्पपक्षोक्ताः । शत्रावपिमैत्रीकरणार्थदानसंभवायनापदिमैत्रीकरणमितिसंग्रहः । अरिग्रहणंनकर्तव्यंविस्पष्टार्थंभविष्यति ॥ १३८ ॥

( २ ) **सर्वज्ञनारायणः** । मित्रमिति सौजन्यरूपमैत्रसिद्ध्यर्थमित्यर्थः । नारिमित्यनेनवैरिणोश्राद्धभोजनीयतानिषिद्धा नमित्रमितिमैत्रीनिमित्तकत्वाभावोप्यग्निसाक्षिककृतवैधमैत्री कर्मणोमित्रस्य ॥ १३८ ॥

( ३ ) **कुल्लूकः** । श्राद्धे न मित्रंभोजयेत् । धनान्तरैरस्य मैत्री संपादनीया न शत्रुं न च मित्रं यज्जानीयात्तंब्राह्मणंश्राद्धे भोजयेत् ॥ १३८ ॥

( ४ ) **राघवानन्दः** । तत्प्रतियोगिनं निवेदयन्नाह नेति । अस्य मित्रस्यधनैः श्राद्धद्रव्यव्यतिरिक्तैः संग्रहोमित्रतासंपादनम् । व्यतिरेकमुक्त्वान्वयमाह यमिति द्विजं विप्रं ब्राह्मणाश्चाहवनीयार्थइत्युक्तेः ॥ १३८ ॥

( ५ ) **नन्दनः** । धनैःकार्योऽस्यसंग्रहः । धनैस्ततसंग्रहणीयंमित्रंन श्राद्धेन । एवंवचनादसंग्रहीतार्थस्य गुणवत्तामात्रहेतुकस्य मित्रभोजनस्यानुज्ञानमर्थात्सिद्धम् ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । वर्ज्यानाह नेति । मित्रंश्राद्धे न भोजयेत् । यस्यधनैःसंग्रहः कार्यः वार्द्धुषिकः तस्य श्राद्धेऽधिकारोनास्ति । अरिंशत्रुंमित्रंवायंविद्यात्तंद्विजंश्राद्धे न भोजयेत् ॥ १३८ ॥

**यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च॥तस्य प्रेत्य फलंनास्ति श्राद्धेषु च हविःषु च॥१३९॥**

( १ ) **मेधातिथिः** । पूर्वस्यप्रतिषेधस्यार्थवादोयं । मित्रशब्दोयंभावप्रधानः । मित्रप्रधानानिमैत्रीप्रधानानितेनोभयोरपिमित्रयोऽशेषः देवतोद्देशेनदानमदृष्टार्थंवा केवलयोर्ब्राह्मणयोर्भोजनंहवींषिइतिलक्ष्यते । प्रेत्यफलंनास्ति ननुचासमानकर्तृत्वात्कार्यानुत्पत्तिःप्रायेणकर्तापुरुषःश्राद्धकृत्तायानअर्थोपहितायाःफलंकेचिदाहुः प्रेत्येतिशब्दान्तरंपरलोकवचनंनियतसंज्ञं । अथप्रायेणापिफलंकर्तृतस्यफलंप्रेत्यप्रकर्षेणनिकटं आप्राप्निभवति न भोग्यतांयाति ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । मित्रप्रधानानि सन्त्युद्देशप्रवृत्तानि । हवींषि यज्ञाः ॥ १३९ ॥

( ३ ) **कुल्लूकः** । मित्रशब्दोऽयंभावप्रधानः । यस्य मैत्री प्रधानानि हव्यकव्यानि तस्य पारलौकिलंफलं नभवतीति फलाभावकथनपरमिदम् । प्रेत्येति परलोकइत्यर्थे शब्दान्तरमव्ययमिदं नतु क्त्वान्तम् । तेनासमानकर्तृकत्वे कथंक्त्वेति नाशङ्कनीयम् ॥ १३९ ॥

( ४ ) **राघवानन्दः** । मित्रभोजने निन्दामाह यस्येति । हवींषि देवतायै देयानि ननु श्राद्धस्य फलमेव नास्ति कथंतदभावोक्तिरिति चेत् । आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानि च । प्रयच्छन्ति तथा राज्यं प्रीतानृणां पितामहाइति ॥ याज्ञवल्क्योक्तेरायुरादिकंफलमस्तीत्यर्थः ॥ १३९ ॥

( ५ ) **नन्दनः** । नकेवलंश्राद्धएवमित्रंवर्जनीयंकिंतुदैवेऽपीत्याह यस्येति । मित्रप्रधानानि मैत्रफलप्रधानानि । गुणवत्ताप्रधानानि । हवींषि दैवानिकर्माणि ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । यस्य पुंसः श्राद्धानि मित्रप्रधानानि तस्य पुंसःप्रेत्य श्राद्धेषु हवनीयेषु च फलंनास्ति ॥ १३९ ॥

**यः संगतानि कुरुते मोहाच्छ्राद्धेन मानवः॥ सस्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रोद्विजाधमः॥१४०॥**

( १ ) **मेधातिथिः** । संगतानि मित्रभावान्यःकुरुते श्राद्धेनमोहात् श्राद्धार्थमजानतः सस्वर्गात्च्यवते नप्राप्नोतिस्वर्गमित्यर्थः । असंबन्धसामान्यात्च्यवतइत्युच्यते यथाप्राप्तःस्वर्गतश्च्युतःस्वर्गेणनसंबध्यतेएवमयमपि । अनेनचश्राद्धफलाप्राप्तिरेवकथ्यते सर्वशेषताहितथाभवति । श्राद्धमित्रःश्राद्धंमित्रमस्येतिमित्रलाभहेतुत्वात् । श्राद्धमेवमित्रमतोबहुव्रीहिःद्विजा-

---

( १४० ) द्वेषुमानवः ( क, ख, ग, च )

नामधमः द्विजग्रहणंप्रदर्शनार्थं शूद्रेणापिनमित्राणिभोजनीयानि । ननुचाब्राह्मण्यादेवशूद्रस्य मित्रत्वप्राप्तिर्नास्ति केनैषापरिभाषाकृता । शूद्रस्यब्राह्मणैर्मित्रैर्नभवितव्यं । समान जातीयानामेवमित्रव्यवहारोनोत्तमजातीयानांहीनजातीयैःसहेतिचेत् । एतदपिन एवंह्याह श्वेतकेतुर्हवाआरुणेयः । अस्तिमेपञ्चालेषुक्षत्रियोमित्रमिति किंचसंबन्धोपलक्षणार्थंचमित्रप्रतिषेधोन्याख्यातः । भवंतिचशूद्रस्यब्राह्मणाअर्थसंबन्धिनः पारशवस्यज्ञातयोपि ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । श्राद्धमित्रः श्राद्धोत्पादित मैत्रः ॥ १४० ॥

( ३ ) **कुल्लूकः** । स्वर्गफलंश्राद्धस्यदर्शयितुंपूर्वोक्तफलाभावमेव विशेषेण कथयति यइति । योमनुष्यः संगतानि मित्रभावंशास्त्रानभिज्ञया । श्राद्धेन कुरुते श्राद्धमेवमित्रलाभहेतुत्वान्मित्रंयस्य सश्राद्धमित्रोद्विजापसदः । सस्वर्गलोकाच्च्यवते तं न प्राप्नोतीत्यर्थः । श्राद्धस्यापि स्वर्गफलत्वमाह याज्ञवल्क्यः । आयुः प्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच । प्रयच्छन्ति तथा राज्यंप्रीतानृणांपितामहाः ॥ १४० ॥

( ४ ) **राघवानन्दः** । न केवलंफलं नाप्नोति प्रत्युतानर्थंचर्च्छेदित्याह यइति । संगतानि मित्रभावं कुरुते संपादयति । श्राद्धेन श्राद्धीयद्रव्येणैव मित्राणांलाभोयस्य सश्राद्धमित्रः । द्विजाधमश्चातुर्वर्ण्यः ॥ १४० ॥

( ५ ) **नन्दनः** । मित्रस्य हव्येषु परिग्रहोदोषवत्तरइत्याह यइति । संगतानि संश्लेषान् । स्वर्गाद्धर्मान्तरार्जितादपि ॥ १४० ॥

( ६ ) **रामचन्द्रः** । यःमानवःश्राद्धेन मोहात्संगतानि मित्रभावंगतानि कुरुते सः स्वर्गलोकाच्च्यवते । श्राद्धे मित्रंयस्य सःश्राद्धमित्रःसद्विजाधमः ॥ १४० ॥

**संभोजनी साभिहिता पैशाची दक्षिणा द्विजैः॥इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि॥१४१॥**

( १ ) **मेधातिथिः** । संशब्दः सहार्थेवर्तते सहभुज्यतेययासासंभोजनी मैत्र्याहिसहभोजनंप्रवर्तते । गोष्ठीभोजनंवासंभोजनमिष्यते । पिशाचानामयंधर्मोयत्श्राद्धेमित्रसङ्ग्रहः । रथ्याः पुरुषाः पिशाचाः सादक्षिणाइहैवलोकेआस्ते नामुत्रफलंदातुंसमर्था गौर्यथान्धैकस्मिन्नेवगृहेतिष्ठति । एवमियंदक्षिणाइहैवास्ते मित्रजनार्थैवभवति । नपितृभ्यउपकारार्थायप्रभवति दानंदक्षिणा ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । संभोजनीयसंगत्यर्थभोजनसंबन्धिनी दक्षिणा दानं । पैशाची पिशाचगामिनी । इहैव न पितृलोकंयाति ॥ १४१ ॥

( ३ **कुल्लूकः** । सा दक्षिणा दानक्रिया संभोजनी सह भुज्यते यया सा संभोजनी गोष्ठी बहुपुरुषभोजनात्मिका । पिशाचधर्मत्वात्पैशाची मन्वादिभिरुक्ता । सा च मैत्रीप्रयोजनकत्वान्नपरलोकफलेहलोक एवास्ते यथाऽन्धा गौरेकस्मिन्नेव गृहे तिष्ठति न गृहान्तरगमनक्षमा ॥ १४१ ॥

( ४ ) **राघवानन्दः** । न प्रसज्जेत विस्तर इत्युक्तस्तत्रैव परिषदि दत्तमदत्तमिति श्रुतिमाश्रित्याह संभोजनीति । सह बहुभिर्भोज्यतया सा संभोजनी । पिशाचानांबहुभिः सहभोजनस्य प्रसिद्धत्वादस्यापि तथात्वमित्याह । पैशाची दक्षिणा दक्षिणाप्रवणादिसाध्यतया श्राद्धक्रिया श्राद्धस्य प्रकृतत्वात् इह लोके स्थितौ दृष्टान्तः । गौरन्धेति एषा यथा एकवेश्मन्येवावस्थिता गृहान्तरं न याति तद्वत्पारलौकिकं फलमददती इहैव यशोर्थे तिष्ठतीति भावः ॥ १४१ ॥

( ५ ) **नन्दनः** । सादक्षिणा तन्मित्रश्राद्धम् । सम्भोजनीसम्भोजनरूपा । बहूनामेकत्रभोजनंसंभोजनम् । पैशाची-

पिशाचैरुपभोग्येतिद्विजैरभिहिता। इहैवास्ते इहलोकेमित्रमेव सासंगृह्णाति नामुत्र पितॄन्। अन्यत्र गमनाशक्तौ दृष्टान्त-उक्तः गौरन्धेवैकवेश्मनीति ॥ १४१ ॥

( ६ ) **रामचन्द्रः**। सह भुज्यते यया सा संभोजनी मित्रद्विजे पैशाची दक्षिणाअभिहिताउक्ता। पिशाचानुपतिष्ठतीत्यर्थः। केवलंएकवेश्मनिअन्धागौरिव सा दक्षिणा भोजनी दक्षिणा इहलोकेअत्रार्थेआस्ते। परत्र पितृभ्योनोपतिष्ठतइत्यर्थः। पिशाचानामयंधर्मोयःश्राद्धेमित्रसंग्रहः ॥ १४१ ॥

**यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम्॥ तथाऽनृचे हविर्दत्वा न दाता लभते फलम् ॥१४२॥**

( १ ) **मेधातिथिः**। ईरिणंऊषरं। यस्मिन्क्षेत्रेभूमिदोषात्बीजमुप्तंनचोद्गच्छति तदिरिणं यत्रवप्तानकर्षकोलभतेफलम्। एवमनृचे वेदाध्ययनरहिते हविर्दैवंपित्र्यंचदत्वानलभतेफलं। अनृचइतिसप्तम्यंतंऋचोवेदोपलक्षणार्थम् ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः**। इरिणऊषरे हविर्दैवंपित्र्यंवा ॥ १४२ ॥

( ३ ) **कुल्लूकः**। ईरिणमूषरदेशोयत्र बीजमुप्तं प्ररोहति तत्र यथा बीजमुप्त्वा कर्षकोन फलंप्राप्नोत्येवमविदुषे श्राद्धदानफलंदातान प्राप्नोतीति ॥ १४२ ॥

( ४ ) **राघवानन्दः**। अविदुषे दानं न देयमिति सदृष्टान्तमाह यथेति। ईरिणेऊषरे देशे वप्ता क्षेत्रे बीजक्षेप्ता अनृचे वेदशून्ये हविरितिकव्यस्याप्युपलक्षणम् ॥ १४२ ॥

( ५ ) **नन्दनः**। इदानींहव्येषु मित्रश्रोत्रिययोरश्रोत्रियोंवर्जनीयोनमित्रमित्याह यथेरिणइति ॥ १४२ ॥

( ६ ) **रामचन्द्रः**। यथेरिणऊषरेउप्त्वाफलंबीजंन लभते तथा अनृचेअनधीयानाय हविर्दत्वा दाता फलंन लभते ॥ १४२ ॥

**दातॄन्प्रतिग्रहीतॄंश्च कुरुते फलभागिनः ॥ विदुषे दक्षिणांदत्वा विधिवत्प्रेत्य चेह च ॥१४३॥**

( १ ) **मेधातिथिः**। विदुषेयादक्षिणादीयते सादातॄनफलभागिनःकुरुते इति युक्तं प्रतिग्रहीतारस्तुकतरत्फलंभुञ्जते यदिनावददृष्टंतदयुक्तंअनोदितत्वात्प्रतिग्रहस्यदृष्टफललाभेनप्रवृत्तेः। अथदृष्टंतदविदुषोपिदृश्यते। सत्यंप्रशंसैषाईदृशमेतद्विदुषेदानंयत्प्रतिग्रहीताप्यदृष्टफलभाग्भवेत्। सत्यपिदृष्टे। किंपुनर्दातेतिमेत्यस्वर्गइहकीर्तिर्यथाशास्त्रमनुतिष्ठतीति जनैःसाधुवादीयते विधिवदित्यनुवादोददातिचैवधर्म्यैष्विति ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः**। दातॄन्प्रेत्य फलभागिनः। इह प्रतिग्रहीतॄन्। अनृचांतु इह भोगसंभावेपि प्रत्यवायोदर्कत्वात्फलंसदप्यसदेवेति तात्पर्यम् ॥ १४३ ॥

( ३ ) **कुल्लूकः**। वेदतत्त्वविदे यथाशास्त्रंदत्तमैहिकामुष्मिकफलभागिनोदातॄन्करोति। ऐहिकंफलंयथाशास्त्रानुष्ठानेन लोकेख्यातिरूपमानुषङ्गिकमिति मेधातिथिगोविन्दराजौ। वयंत्वायुरादिकमेवैहिकफलंब्रूमः। आयुः प्रजांधनंविद्यामित्याद्यैहिकामुष्मिकादिफलत्वेनापि श्राद्धस्य याज्ञवल्क्यादिभिरुक्तत्वात्। प्रतिग्रहीतॄंश्च श्राद्धलब्धधनानुष्ठितयागादिफलेन परलोके सफलान्कुरुते अन्यायार्जितधनानुष्ठितयागादेरफलप्रदत्वात्। इह लोके न्यायार्जितधनारब्धकृष्यादिफलातिशयलाभात्सफलान्कुरुते ॥ १४३ ॥

( ४ ) **राघवानन्दः**। विदुषेतु देयमित्याह दातॄनिति। विदुषे वेदार्थविदे दक्षिणाश्राद्धेदीयमाना दातॄन् श्राद्धकर्तॄन् प्रतिग्रहीतॄन् श्राद्धादेश्यान्। उक्तफलेन फलभागिनःकुरुतइत्यन्वयः। वाक्यार्थानुरोधेन पदार्थत्यागस्योचितत्वात् दक्षिणाशब्देन श्राद्धान्नभोजनं। दृष्टफलत्वादिति भावः ॥ १४३ ॥

( ५ ) **नन्दनः** । यतएवं तस्मान्मित्रायापि विदुषेहव्यानिदातव्यानि नकदाचिदप्यविदुषइत्याह दातॄनिति । तस्मान्मित्रेभ्योऽश्रोत्रियोवर्जनीयइत्यभिप्रायः ॥ १४३ ॥

( ६ ) **रामचन्द्रः** । विधिवद्विदुषे दत्ता दक्षिणा प्रेत्य परलोके इह चेहलोके दातॄन्प्रतिग्रहीतॄंश्च फलभागिनः कुरुते ॥ १४३ ॥

**कामंश्राद्धेऽर्चयेन्मित्रंनाभिरूपमपि त्वरिं॥ द्विषता हि हविर्भुक्तंभवति प्रेत्य निष्फलम् ॥१४४॥**

( २ ) **सर्वज्ञनारायणः** । मित्रंसोपकारं इहैव लाभसंभवात् अकामानुमतोकामं तेनान्यासंभवेपिमित्रस्य कथंचिदनुज्ञोक्ता । अभिरूपमुक्ताभिमतरूपशालिनम् ॥ १४४ ॥

( ३ ) **कुल्लूकः** । वरंविद्वद्ब्राह्मणाभावे गुणवान्मित्रंभोजयेन्नतु विद्वांसमपि शत्रुं । यतःशत्रुणा श्राद्धंभुक्तंपरलोके निष्फलंभवति । यथोक्तपात्रासंभवे मित्रप्रतिप्रसवार्थमिदम् ॥ १४४ ॥

( ४ ) **राघवानन्दः** । पात्रान्तरालाभे प्रतिप्रसवमाह काममिति । अभिरूपंगुणवन्तम् । रिपोः पात्रत्वाभावेहेतुः । द्विषतेति । अरिणा भुक्तंन केवलंनिष्फलं अपित्वयशस्करमित्याह हीति मित्रभोजने यशोदृश्यते ॥ १४४ ॥

( ५ ) **नन्दनः** । श्राद्धेऽप्यरिमित्रयोररिरेवर्जनीयतरइत्याह काममिति । अभिरूपंविद्वांसम् । हविःशब्दोऽयंसामर्थ्यात्कव्यवचनः ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । कामंऐच्छिकं श्राद्धे मित्रमर्चयेत् । अपिनिश्चयेन अभिरूपंयोग्यंगुणसंपन्नमरिंशत्रुंनार्चयेत् हिनिश्चयेन । द्विषता शत्रुणा भुक्तंहविः दातुःप्रेत्य निष्फलंभवति ॥ १४४ ॥

**यत्नेन भोजयेच्छ्राद्धे बह्वृचंवेदपारगम् ॥ शाखान्तगमथाध्वर्युंछन्दोगंतु समाप्तिकम् ॥ १४५ ॥**

( १ ) **मेधातिथिः** । वेदपारगशाखांतगसमाप्तिकाः शब्दाएकार्थाः । समन्त्रब्राह्मणिकायाः कृत्स्नायाः शाखायाअध्येतॄनाचक्षते । नमन्त्रसहितायामपिब्राह्मणस्य । तदेकदेशस्यचवेदैकशाखाध्यायिनोपि श्रोत्रियाउच्यन्ते । अतस्तन्निवृत्त्यर्थमुक्तं । श्रोत्रियायदेयमिति । श्रोत्रियश्चवेदाध्यायीवेदशब्दश्चसमन्त्रब्राह्मणिकांशाखामाचष्टे । तदेकदेशमपि याकृत्स्नशाखातत्रध्यायीकथंगृहेतेत्येवमर्थमिदं । ननुचाश्रमिणोभोजयितव्याइत्युक्तंतत्रानधीतसकलस्वाध्यायानांनैवागार्हस्थ्याद्याश्रमसंभवः। एवंह्युक्त वेदःकृत्स्नोधिगंतव्यइति ब्रह्मचारिणस्तर्हिप्रक्रांतवेदाध्ययनस्य असमाप्तिगस्यापिस्यात् वेदपारगशाखांतगसमाप्तिकशब्दैरेकार्थैःकार्त्स्न्यंसर्वैरेवप्रतिपाद्यते । एकेनैवसिद्धेवृत्तानुरोधान्नानारूपैकार्थानेकशब्दोच्चारणं । वेदानांपारंगच्छति । शाखाअंतःसमाप्तिरस्यास्तीतिसमाप्तिकः । अध्वर्युर्यजुर्वेदशाखाध्यायीनायमृत्विग्विशेषवचनोध्वर्युशब्दःआध्वर्यवः प्रवचनमुच्यते तदध्ययनसंबन्धात पुरुषोध्वर्युः छन्दोगःसामवेदाध्यायीस्मृत्यन्तरेत्रिसाहस्रविद्यःसमाप्तिकउक्तस्तत्रसहस्रशब्दः सहस्रगतिसंबंधात् सामवेदे वर्तते तस्याइमाः साहस्र्यस्तिस्रसाहस्र्यःविद्यायस्यत्रिसाहस्रः ताण्डवमौक्तिक्यंसामगानमिति सहस्रवर्त्मनःसामवेदस्यतस्यतिस्रोविधाःदाशतयीचतुःषष्टिर्ब्राह्मणंचबाह्वृच्यं अन्यैस्त्वाथर्वणिकनिषेधार्थमिमंश्लोकंमन्यंते कार्त्स्न्यांतुविवक्षायामेतदेवावक्ष्यत् अधीतेवेदशाखांयःकृत्स्नांतंभोजयेद्द्विजमिति । ननुचाथर्वणिकनिषेधेप्येतत्समानं तत्रापिशक्यमेवंवक्तुंतन्निषेधेप्रायेणनभोज्यआथर्वणिकइत्येवमेवावक्ष्यत् । स्वशब्देननिषेधप्रतिपत्तिर्लाघवंचनैतदेवंकिमन्यविधानेनान्यनिषेधोवगम्यते स्वशब्देनवानिषेधोविचित्राद्धर्मोपदेशस्यकृतिर्मनोः ॥ १४५ ॥

---

( १४५ ) समाप्तिकम्=समाप्तिगम् ( नं० )

( २ ) **सर्वज्ञनारायणः** । वेदपारगमेकवेदसंबन्धिपूर्णैकशाखाध्यायिनम् । शाखान्तगमित्यस्याप्ययमर्थः । अध्वर्युं-यजुर्वेदिनं समाप्तिकं शाखापारगं । समाप्तिगमिति क्वचित्पाठः ॥ १४५ ॥

( ३ ) **कुल्लूकः** । श्रोत्रियायैवदेयानीत्यनेनछन्दोमात्राध्यायिनि श्रोत्रियशब्दप्रयोगात्तदाश्रयणमावश्यकमुक्तम् । इदानींत्वधिकफलार्थमन्त्रब्राह्मणात्मककृत्स्नशाखाध्यायिनिश्रोत्रियेदानमाह यत्नेनेति । ऋग्वेदिनंमन्त्रब्राह्मणात्मकशाखाध्यायिनंयत्नतोभोजयेत् तथाविधमेवयजुर्वेदिनम् । वेदस्यपारंगच्छतीतिवेदपारगः । शाखायाअन्तंगच्छतीति शाखान्तगः । समाप्तिरस्यास्तीति समाप्तिकः । सर्वैरेव शब्दैर्मन्त्रब्राह्मणात्मककृत्स्नशाखाध्येताऽभिहितः ॥ १४५ ॥

( ४ ) **राघवानन्दः** । श्राद्धभोक्तृषु नियममाह यत्नेनेति । बह्वृचं ऋग्वेदमन्त्राध्यायिनं । शाखातिगं शाखाध्यायिनं तमेवअध्वर्युं यजुर्वेदिनं । सामगं छन्दोगं समाप्तिगं मन्त्रब्राह्मणोपनिषदन्तगं अथर्ववेदविन्निवृत्त्यर्थंविशेषणानीति केचित् ॥ १४५ ॥

( ५ ) **नन्दनः** । पूर्वंश्रोत्रियाएवपात्रमित्युक्तम् इदानींतेषुविशेषमाह यत्नेनेति । वेदपारगं एकस्याऋग्वेदशाखायाःपारगम् । एतेनशाखान्तगंसमाप्तिगमितिपदद्वयमिह व्याख्यातम् । अध्वर्युर्यजुर्वेदाध्यायी ॥ १४५ ॥

( ६ ) **रामचन्द्रः** । बह्वृचंऋग्वेदाध्यायिनं वेदपारगं यत्नेन भोजयेत् । शाखान्तगंस्वशाखापारगंवा । अथाध्वर्युंयजुर्वेदाध्यापकंवा । छन्दोगंसामशाखाध्यायिनंवा । समाप्तिगंस्वशाखापारगमित्यर्थः ॥ १४५ ॥

**एषामन्यतमोयस्य भुञ्जीत श्राद्धमर्चितः ॥ पितॄणांतस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी॥१४६॥**

( १ ) **मेधातिथिः** । कश्चिन्मन्येतपितृकृत्येत्रीनित्युक्तम् । पूर्वश्लोकेचनानाशाखाध्यायिनउपात्ताः । तत्रसत्रब्रह्मचारिणांनास्तिप्राप्तिरिति तदाशङ्काविवृत्त्यर्थंइदमेषांत्रयाणांत्रैविद्यानामन्यतमोभोजनीयः । एतदुक्तंभवति । समानशाखाध्यायिनोनानाशाखाध्यायिनोवाभोजनीयाः । अर्चितः पूजितः प्रार्थितअर्घादिनासाप्तपौरुषीअनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः । कालमहत्वोपलक्षणार्थंचैतत् दीर्घकालापितॄणांतृप्तिर्भवति । यावत्सप्तपुरुषाआगामिनः पुत्रपौत्रादयोजाताजनिष्यन्तेवा तावत्तथाविधब्राह्मणादानात्पितरस्तृप्यन्ति । शाश्वतीनान्तराविच्छिद्यपुनरुद्भवति । किंपुनः सर्वदास्थितैव ॥१४६॥

( २ ) **सर्वज्ञनारायणः** । शाश्वती चिरस्थायिनी साप्तपौरुषी पिण्डतत्तल्लेपभागितया सप्तमपुरुषपर्यन्तगामिनी ॥ १४६ ॥

( ३ ) **कुल्लूकः** । तद्भोजनेऽधिकंफलमाह एषामिति । एषांसंपूर्णशाखाध्यायिनांबह्वृचादीनांमध्यादन्यतमोयस्यसम्यक्पूजितः । सञ्छ्राद्धेभुङ्क्तेतस्यपुत्रादिसप्तपुरुषाणांशाश्वऽत्यविच्छिन्नापितॄणांतृप्तिः स्यात् । साप्तपौरुषीत्यनुशतिकादित्वादुभयपदवृद्धिः तस्यचाकृतिगणत्वात् ॥ १४६ ॥

( ४ ) **राघवानन्दः** । एतत्त्रयाणांभोजने पितृतृप्तिविशेषमाह एषामिति । अर्चितःश्राद्धादौशाश्वतं अनवच्छिन्नंशतायुर्वै पुरुषइति श्रुतेः । काललक्षणासप्तशतंवर्षपर्यन्ता साप्तपौरुषीत्येवंसर्वत्र । आगामिसप्तपुरुषपर्यन्तेति मेधातिथिः ॥१४६॥

( ५ ) **नन्दनः** । एषांबह्वृचादीनाम् । साप्तपौरुषी शाश्वती तृप्तिः स्यात् सप्तपुरुषाणांसदातन्नी तृप्तिःस्यादित्यर्थः । सप्तपुरुषायमेनोक्ताः त्रयः पूर्वेपराश्चै व ह्यात्मा तत्रैव सप्तमः । तेसप्तपुरुषाः सर्वेतदन्नमुपभुञ्जतइति ॥ १४६ ॥

( ६ ) **रामचन्द्रः** । यस्य श्राद्धएषांश्रोत्रियाणामन्यतमोभुञ्जीत तस्य पितॄणांशाश्वतीतृप्तिःस्यात् । साप्तपौरुषी सप्तपुरुषपर्यन्तेत्यर्थः ॥ १४६ ॥

**एषवै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ॥ अनुकल्पस्त्वयंज्ञेयः सदा सद्भिरनुष्ठितः ॥ १४७ ॥**

( १ ) **मेधातिथिः** । पितृयज्ञमित्यारभ्याविंशतिमात्राश्लोकाअतिक्रान्तास्तत्रैवनार्थोभिहितअमावास्यायांश्राद्धंकर्तव्यं । श्रोत्रियोविद्वान्साधुचरणः प्रत्याख्याताभिजनश्रोत्रियापत्यंअसंबन्धीभोजनीयः परिशिष्टंसर्वमर्थवादार्थं । एषोनन्तरोक्तः प्रथमोमुख्यः कल्पोविधिः श्राद्धेयदसंबन्धिनेदीयते । अयंतुवक्ष्यमाणोनुकल्पोज्ञेयः । मुख्याभावेयोनुष्ठीयते प्रतिनिधिन्यायेन सोनुकल्पउच्यते । सदेत्यादिस्तुत्यर्थः ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रथमः कल्पोमुख्यःपक्षः ॥ १४७ ॥

( ३ ) **कुल्लूकः** । हव्यकव्ययोरुभयोरेव प्रदाने यदसंबन्धिश्रोत्रियादिभ्योदीयतइत्ययंमुख्यः कल्पउक्तः । अयंतु मुख्याभावे वक्ष्यमाणोऽनुकल्पोज्ञातव्यः सर्वदा साधुभिरनुष्ठितः ॥ १४७ ॥

( ४ ) **राघवानन्दः** । कल्पान्तरंवदन्नुक्तमनुवदति एषइति । प्रथमोमुख्यः । अनुकल्पएषामभावप्रयुक्तः प्रतिनिधिः ॥ १४७ ॥

( ५ ) **नन्दनः** । एषइत्युक्तस्यपरामर्शः अयमिति वक्ष्यमाणस्य । अनुकल्पोऽपि प्रशस्तएवेत्युक्तम् । यः सदा सद्भिरनुष्ठितइति ॥ १४७ ॥

( ६ ) **रामचन्द्रः** । हव्यकव्ययोःप्रदाने एषःप्रथमःकल्पःउक्तः । अयंअनुकल्पो वक्ष्यमाणलक्षणः । सदा सद्भिरनुष्ठितः ॥ १४७ ॥

**मातामहंमातुलंच स्वस्रीयं श्वशुरं गुरुम् ॥ दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ १४८ ॥**

( १ ) **मेधातिथिः** । स्वस्रीयोभगिन्याःपुत्रो विट्पतिर्जामाता प्रजावचनत्वात्विट्शब्दस्य । अतिथिरन्यःसहिसर्वविशांपतिः गृहाभ्यागतोलोकेविट्शब्देनोच्यते । बन्धुःशालसगोत्रादिः ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । गुरुमाचार्यं । विट्पतिं जामातरं । बन्धुं मातुलपुत्रादिम् ॥ १४८ ॥

( ३ ) **कुल्लूकः** । स्वस्रीयोभागिनेयः । गुरुर्विद्यागुरुराचार्यादिः । विड्दुहिता तस्याः पतिर्विट्पतिर्जामाता । बन्धुर्मातृष्वसृपितृष्वसृपुत्रादिः । एतान्मातामहादीन्दशमुख्यश्रोत्रियाद्यसंभवे भोजयेत् ॥ १४८ ॥

( ४ ) **राघवानन्दः** तमेवाह मातामहमिति स्वस्रीयं भागिनेयं । दौहित्रं दुहितुरपत्यं । विट्पतिंजामातरं । बन्धुं मातृष्वसुःपुत्रादिकम् ॥ १४८ ॥

( ५ ) **नन्दनः** । विशः प्रजायाः पतिरितिविट्पतिर्जामाता ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । यमातामहादयःप्रसिद्धाः विट्पतिं पितृगृहे कन्या तस्याःपतिंविट्पतिं भगिनीपतिमित्यर्थः । ऋत्विक्प्रसिद्धः । याज्यःशिष्यः बन्धुःशालसगोत्रादिः । एतान्भोजयेत् ॥ १४८ ॥

**न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ॥ पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥ १४९ ॥**

**[तेषामन्ये पङ्क्तिदूष्यास्तथान्ये पङ्क्तिपावनाः ॥ अपाङ्क्तेयान्प्रवक्ष्यामि कव्यानर्हान्द्विजाधमान् ॥ १ ॥*]**

---

* ( क ) ( ख ) चिन्हितपुस्तकयोर्दृष्टोरामचन्द्रेण व्याख्यातश्च ।

( १ ) **मेधातिथिः** । नायंदैवेकर्मणिब्राह्मणपरीक्षाप्रतिषेधः किंतर्हि काणश्लीपद्यादीनांकदाचिद्दैवेभ्यनुज्ञानार्थः । पित्र्येकर्मणिश्राद्धकालेप्राप्तेपरीक्षांयत्नेनकुर्यात् । नदैवेकदाचिद्वक्ष्यमाणानपिभोजयेत् । येचाभ्यनुज्ञायन्ते तान्दर्शयिष्यामः । अग्रेतुवक्ष्यमाणस्यप्रतिषेधप्रकरणस्ययत्नतोवर्जनार्थं काणादिवर्जनार्थं उपक्रममात्रंश्लोको नतुकाणादीनांदैवेभ्यनुज्ञानार्थः ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । न परीक्षेत दोषगुणौ सूक्ष्मेक्षिकया नावश्यमन्वेष्यौ । दैवे वैश्वदेविके तत्रापि स्तेनवृत्तित्वादिकंवक्ष्यमाणमवश्यंपरीक्ष्यं । हव्यकव्ययोरित्यभिधानात् ॥ १४९ ॥

( ३ ) **कुल्लूकः** । धर्मज्ञोदैवश्राद्धे भोजनार्थं न ब्राह्मणंयत्नतःपरीक्षेत लोकप्रसिद्धिमात्रेणासौ साधुतया भोजयितव्यः । पित्र्ये पुनः कर्मण्युपस्थिते पितृपितामहाद्यभिजनपरीक्षाकर्तव्येति प्रयत्नतः* शब्दस्यार्थः ॥ १४९ ॥

( ४ ) **राघवानन्दः** । पैत्रे ब्राह्मणपरीक्षामनुवदन्दैवे तदभावमाह नेति । दैवेदेवपक्षे देवतादेये श्राद्धे वा ॥ १४९ ॥

( ५ ) **नन्दनः** । प्रयत्नतइति दैवेऽप्यवकृष्ययोजनीयम् । दैवे कर्मणि प्रयत्नतोनपरीक्षेत अनेन किंचित्परीक्षणमप्रतिषिद्धमित्यवगन्तव्यम् ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । पितृकर्मणि प्राप्ते ब्राह्मणान्प्रयत्नतःपरीक्षेत् ॥ १४९ ॥

[ **रामचन्द्रः** । यथेति । ये पङ्क्तिसन्दूष्याःपङ्क्तिसन्दूषणकर्तारः ॥ १ ॥ ]

**ये स्तेनपतितक्लीबाये च नास्तिकवृत्तयः ॥ तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥ १५० ॥**

( १ ) **मेधातिथिः** । स्तेनःचौरः पतितःपञ्चानांमहापातकानांअन्यतमस्यकर्ता । क्लीबोनपुंसकः उभयव्यञ्जनोगतरेताः षंडश्च । नास्तिकालोकायतिकादयः नास्तिदत्तंनास्तिहुतंनास्तिपरलोकइतियेस्थितप्रज्ञास्तेषांवृत्तिराचारः । अश्रद्धानानास्तिकवृत्तिर्येषांतेनास्तिकवृत्तयः उत्तरपदलोपीसमासः नास्तिकाइत्येवसिद्धेवृत्तिद्वयसमाश्रयणंश्लोकपूरणार्थं । अथवा नास्तिकोवृत्तिर्जीवनंयेषांतएवमुच्यन्ते तान्हव्यकव्ययोर्दैवपित्र्येचअनर्हान्मनुरब्रवीत् । मनुप्रतिषेधादरार्थं मनुग्रहणम् सर्वधर्माणांमनुनोक्तत्वात् ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । स्तेनाअल्पस्तेयवृत्तयः । पतितास्त्यक्तस्ववर्णधर्मतया पतिततुल्याः । क्लीबाःषण्ढाः । नास्तिकवृत्तयोनास्तिकर्मफलमित्यभिमानिनः ॥ १५० ॥

( ३ ) **कुल्लूकः** । स्तेनश्चौरः । सच सुवर्णचोरादन्यःतस्य पतितशब्देनैव ग्रहणात् । पतितोमहापातकी । क्लीबोनपुंसकः । नास्तिकवृत्तिर्नास्ति परलोकइत्येवंवृत्तिः प्रवर्तनंयस्य । एतान्दैवपितृकृत्ययोरुभयोरेवायोग्यान्मनुरब्रवीदिति । मनुग्रहणंनिषेधादरार्थं । सर्वधर्माणामेव मनुनोक्तत्वात् ॥ १५० ॥

( ४ ) **राघवानन्दः** । परीक्षामाह यइति सप्तदशभिः । स्तेनाश्चौराः । पतिताः पातित्यहेतवोवक्ष्यन्ते क्लीबानपुंसकाः । कृत्रिमाकृत्रिमभेदेन द्विधा नास्तिकवृत्तयः । नास्ति कं परलोकसुखं इति वृत्तिर्वाङ्मानसयोर्येषांते हव्यकव्ययोरिति विषयसप्तमी । अनर्हान् नपात्रभूतान् । हव्यं देवदेयं कव्यं पितृदेयमित्युक्तम् ॥ १५० ॥

( ५ ) **नन्दनः** । स्तेनाअत्र । स्वर्णादन्यस्य द्रव्यस्यापहर्तारः । क्लीबाः षण्ढाः । स्वयमास्तिकाअपि नास्तिकेभ्योवृत्तिर्जीवनंयेषामिति तथोक्ताअश्रद्दधानावा ॥ १५० ॥

( ६ ) **रामचन्द्रः** । हव्यकव्ययोःये स्तेनादयस्ताननर्हान्मनुरब्रवीत् । स्तेनाःसुवर्णव्यतिरिक्तचौराः ॥ १५० ॥

---

* प्रयत्नतः=परीक्षा ( अ )

**जटिलंचानधीयानंदुर्बलंकितवंतथा ॥ याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥ १५१॥**

( १ ) **मेधातिथिः** । जटिलोब्रह्मचारीतस्यह्ययंकेशविशेषः पाक्षिकविहितोमुण्डोवाजटिलोवास्यादिति उपलक्षणं-जटाब्रह्मचारिणस्ततोमुण्डोपिप्रतिषिध्यते । तस्यचानधीयानस्यप्राप्तिरेवनास्ति प्रक्रान्ताध्ययनः । अनधीतवेदः अगृहीतवेदश्चेत्प्रामुयात् । ननुचवेदपारगइतिवचनात्कुतः प्रक्रान्ताध्ययनस्यप्राप्तिः । एवंतर्हिअधीतवेदोप्यस्वीकृतवेदोनधीयानोभिप्रेतः । व्रतस्थमित्यनेनवादौहितत्रैवात्रतत्रनाध्ययनमितिकश्चिन्मन्येतदर्थमिदंअनधीयानस्य प्रतिषेधाद्विदुषस्तस्याधिकारोस्तीत्यवगम्यते । दुर्बलः स्खलितः लोहितकेशोवा विकेशेन्द्रियोवा तस्यचहि निर्वचनंकुर्वन्ति दूर्वाशाद्वलेनाप्यलंतस्यावासोभवतीति सहिदूर्वयैवप्रावियते लज्जयाचवाससानाभावे तावन्मात्रेणापिदधातिशेफं । कितवोद्यूतकारः । याजयंतिचयेपूगान् संघान् व्रात्यस्तोमादिभिर्व्रात्यानांहि संहितानां यागोविधिप्रतिषित्धंचतद्याजनं व्रात्यानांयाजनेक्त्वेतिक्रमशः प्रत्येकमपिबहून्याजयति बहुकृत्वआर्त्विज्यंकरोति सोपिनभोज्यः । तथाचवसिष्ठः यश्चापिबहुयाज्यः स्यात्यश्चोपनयतेबहूनिति । केचिदाहुः श्राद्धग्रहणात्पित्र्यएवैषांप्रतिषेधो नतुदैवे तदयुक्तं तदपिश्राद्धांगमेवाश्राद्धशब्देनयुक्तंवक्तुं ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । जटिलंब्रह्मचारिणं । मन्त्रमनधीयानमध्ययनाद्विरतं । दुर्बलोदुश्चर्मा शिपिविष्टइति यावत् । कितवोद्यूतरसिकः । पूगान्समूहान् याजयन्तीत्यनेन याजकाविवक्षिताः । तत्र ह्यनेके यजमानाभवन्ति सत्रे तु यजमानत्वादृत्विजामदोषः ॥ १५१ ॥

( ३ ) **कुल्लूकः** । जटिलोब्रह्मचारी । मुण्डोवा जटिलोवास्यादित्युक्तब्रह्मचार्युपलक्षणत्वाज्जटिलत्वस्यमुण्डोऽपि निषिध्यते । अनधीयानंवेदाध्ययनरहितंयस्योपनयनमात्रंकृतं न वेदादेशः । तेनास्वीकृतवेदस्यापि ब्रह्मचारिणोवेदाध्ययनकर्तुरभ्यनुज्ञानार्थोऽयंनिषेधः । अतः श्रोत्रियायैव देयानीति ब्रह्मचारीतरविषयम् । दुर्बलोदुश्चर्मा । मेधातिथिस्तु दुर्बालमिति पठित्वा स्खलतिर्लोहितकेशोवा दुश्चर्मावेत्यर्थत्रयमुक्तवान् । कितवोद्युतकृत् पूगयाजकाबहुयाजकाः । पूगः क्रमुकवृन्दयोरित्याभिधानिकाः । अतएव वसिष्ठः । यश्चापि बहुयाज्यः स्याद्यश्चोपनयते बहूनिति । ताञ्छ्राद्धेन भोजयेदिति न दैवेनिषेधः । यत्रोभयत्रनिषेधोमनोरभिमतः तत्र हव्यकव्यग्रहणमुभयत्रेति वा करोति ॥ १५१ ॥

( ४ ) **राघवानन्दः** । जटिलं ब्रह्मचारिणं अनधीयानं वेदाध्ययनरहितं । दुर्बलं दुश्चर्माणं दुर्वालं कपिलकेशमिति मेधातिथिः । कितवंद्यूतरतं । पूगान्बहून् श्रेणीर्वा ॥ १५१ ॥

( ५ ) **नन्दनः** । जटिलंब्रह्मचारिणम् । तस्य विशेषणमनधीयानमिति । दुर्वालंदुश्चर्माणम् । कितवंद्यूतकारकम् । पूगान् गणान् श्राद्धेनिषेधाद्दैवेऽनुज्ञानमर्थात्सिद्धम् ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । जटिलो ब्रह्मचारी । सभोजने प्रतिषिध्यते । दुर्बलंदुःखेन बलिनमिति । दुर्वर्णमिति पाठे दुर्वर्णंदुश्चर्माणमित्यर्थः । पूगाःश्रेणयः । एतान्श्राद्धे न भोजयेत् ॥ १५१ ॥

**चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा॥विपणेन च जीवन्तोवर्ज्याः स्युर्हव्यकव्ययोः॥१५२॥**

( १ ) **मेधातिथिः** । भिषजः चिकित्सकाः देवलकाः प्रतिमापरिचारकाः । आजीवनसंबन्धेनैतौप्रतिषिध्येते धर्मार्थत्वेतुचिकित्सकदेवलकत्वयोरदोषः । मांसविक्रयिणः सौनिकाः द्वितीयान्तपाठेपूर्वश्लोकादाख्यातानुषङ्गः । विपणेनजीवन्तः प्रतिषिद्धेनपणेन । दशमाध्यायेवक्ष्यन्ते तेनजीवन्ति तेवर्ज्या उभयत्र मांसविक्रयिणस्तुधर्मार्थमपि निषिध्यन्ते । यस्यकेनचिन्मांसमुपहृतं । अन्यस्यनतेनार्थः । उपहृतमांसस्यघृतेनहोमोपयोगिनासमांसंघृतेनविनिर्मिमीते भवत्यसौ

---

( १५१ ) दुर्बलं= दुर्बालं ( नं० )

धमार्थौविनिमयोविक्रयशब्दवाच्यता विनिमयस्यापिभवतीत्यतईदशाधर्मार्थमांसविक्रयिणोपिप्रतिषिध्यन्ते ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः**। चिकित्सकान्भिषग्वृत्तीन्। देवलकान्धनार्थंदेवार्चकान् । विपणेन पण्यवीथ्यां विक्रयप्रसारणेन जीवन्तः ॥ १५२ ॥

( ३ ) **कुल्लूकः**। चिकित्सकोभिषक्। देवलः प्रतिमापरिचारकः। वर्तनार्थत्वेनैतत्कर्मकुर्वतोऽयंनिषेधो नतु धर्मार्थम् देवकोशोपभोजी च नाम्ना देवलकोभवेदिति देवलवचनात्। मांसविक्रयिणः सकृदपि। सद्यःपतति मांसेनेतिलिङ्गात्। विपणेनेति। विपणोवणिज्या तया जीवन्तः। हव्यकव्ययोरित्यभिधानाद्दैवे पित्र्ये चैते त्याज्याः ॥ १५२ ॥

( ४ ) **राघवानन्दः**। देवलकाः देवकोशोपजीवीच नाम्नादेवलकोभवेदिति देवलवचननिर्णीताः । मांसविक्रयिणः सकृदपि सद्यःपतति मांसेनेति वचनात्। विपणेन वाणिज्येन। वर्ज्याःपात्रत्वेनेतिशेषः ॥ १५२ ॥

( ५ ) **नन्दनः**। देवकोशोपजीवीतु नाम्नादेवलकोभवेदिति स्मृत्यन्तरवचनम् । मांसविक्रयादन्येनापिजीविनो वर्ज्याः प्रतिषिद्धाः। क्षीरादिद्रव्यं तद्विक्रयोविपणस्तेनजीवन्तः ॥ १५२ ॥

( ६ ) **रामचन्द्रः**। चिकित्सकादयोहव्यकव्ययोःप्रदाने वर्ज्याःस्युः। धर्मार्थे तु चिकित्सकदेवलयोर्दोषाभावः । विपणेन जीवन्तः निन्द्यपण्येन जीवन्तः ॥ १५२ ॥

## प्रेष्योग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः॥प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥१५३॥

( १ ) **मेधातिथिः**। प्रेष्यआज्ञाकरः ग्रामेणयोयत्रकुत्रचित्कार्येणप्रेष्यते एवंराजप्रेष्यः। कुनखीश्यावदन्तकः। प्रतिरोद्धागुरोर्वाक्व्यवहारेऽन्यत्रचयोगुरोः प्रतिबन्धेप्रातिकूल्येचवर्तते । त्यक्ताग्निस्त्रेतावसथ्ययोरन्यतरस्यापि। वार्धुषिःसत्यन्यस्मिन्जीविकोपायेवृद्धिजीविकः। वृद्धिस्तुयोक्ताधान्यानांवार्धुषित्वंतदुच्यतइति यत्स्मरणंतत्स्वपरिक्रियायामेव। वैयाकरणाहि वृद्धिजीविनो धान्यादन्यत्रवार्धुषिशब्दंस्मरन्ति तेच शब्दार्थस्मरणे प्रमाणान्तराभियोगवशात् ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः**। प्रेष्योधनार्थमादिष्टकारी। श्यावदन्तकःकपिशवर्णदन्तः। प्रतिरोद्धा विरोधी। त्यक्ताग्निस्त्यक्ताहितत्रेताग्निः। वार्धुषिर्वृद्धिजीवी ॥ १५३ ॥

( ३ ) **कुल्लूकः**। भृतिग्रहणपूर्वकंग्रामाणांराज्ञश्चाज्ञाकारी। कुत्सितनखकृष्णदन्तगुरुप्रतिकूलाचरणशीलत्यक्तश्रौतस्मार्ताग्निकलोपजीविनश्चहव्यकव्ययोर्वर्ज्याइति पूर्वस्यैवात्रानुषङ्गउत्तरत्रच ॥ १५३ ॥

( ४ ) **राघवानन्दः**। प्रेष्यइति। ग्रामस्य राज्ञोवा। श्यावदन्तकः श्यामाः स्वतएवैकद्वित्रादन्तायस्य सः । प्रतिरोद्धागुरोः प्रतिकूलाचरणः। त्यक्ताग्निः विधितः स्वीकृताग्निः अविधितस्त्यक्ता। वार्धुषिर्वृद्धिमात्रोपजीवी ॥ १५३ ॥

( ५ ) **नन्दनः**। पूर्वजन्मनि स्वर्णचोरत्वात्कुनखिनः प्रतिषेधः। सुरापानाच्छ्यावदन्तस्य प्रतिषेधः । प्रतिरोद्धा प्रतिकूलकः। समर्घं पण्यमादाय महार्घयः प्रयच्छति। सवैवार्द्धुषिकोनामयश्चवृद्ध्या प्रयोजयेत् ॥ यश्चनिन्द्यतरंजीवन्प्रशंसत्यात्मनोगुणान्। सचवार्द्धुषिकोनाम ब्रह्मवादिषुगर्हितइति यमवचनम् ॥ वर्जनीयाइतिवक्ष्यति ॥ १५३ ॥

( ६ ) **रामचन्द्रः**। वर्ज्यानाह प्रेष्यइति । ग्रामस्य प्रेष्यःप्रेषकःराज्ञः । गुरोःप्रतिरोद्धा गुरोःप्रतिकूलः। त्यक्ताग्निःअग्नित्यागी त्रेतावसथ्ययोः त्यागी। वृध्योपजीवी वार्धुषिः। वृध्याजीवी तु वार्धुषिरित्यमरः ॥ १५३ ॥

## यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः॥ ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तरएव च ॥१५४॥

( १ ) **मेधातिथिः** । यक्ष्मीव्याधितःराजयक्ष्मगृहीतइत्यन्ये । पशुपालःयष्टिहस्तस्तद्वृत्तिजीवनः । निराकृतिःसत्यधिकारेमहायज्ञानुष्ठानरहितः। अग्रत्वेप्यनुपजीव्यः। अनद्धानिराकृतिरुच्यते। एवंहिशतपथे योनदेवानर्चतिनपितॄन्-

मनुष्यानिति। यैस्तुपठ्यते अस्वाध्यायश्रुतधनैर्निराकृतिरुदाहृतइति नतेशब्दार्थसंबन्धविदस्ततस्तस्येहाप्राप्तिरेवश्रोत्रियनियमात्। निराकर्तादेवादीनांनिराकृतिरितिधात्वर्थानुगमोस्ति। धर्मधर्मिणोश्चाभेदविवक्षायांकिनापिप्रयोगउपपन्नइतिपूर्वोयंधातुरपवर्जनेवर्तते। निराकृताअपवर्जिताउच्यन्ते। भोजनान्निराकृताअधिकारान्निराकृताइति। अवर्जनंचाकृतिः। सानिर्गतास्मोदितिनिराकृतिः। संस्थानंचाकृतिस्तथाचकुत्सायांनिर्दिष्टव्योदुराकृतिर्निषिध्यते। आह चावायूपवयःशीलसंपन्नोवाकृसंपन्नोवाङ्घ्री पटुवागिन्द्रियश्चबहुजिह्वोनभोज्याः। रूपसंपन्नमनोहरावयवसंपन्नयुवश्योदानं प्रथमंप्रतिवयसइत्येकइतिसंज्ञाशब्दोवायंकिन्नंतः। ब्रह्मद्विट्ब्राह्मणानांवेदस्यवाद्वेष्टा ब्रह्मशब्दस्योभयार्थवाचित्वात् ब्रह्मज्ञोब्राह्मणःस्मृतइति। गणः- सङ्घःसहैकयाक्रिययाजीवन्ति ये ते गणशब्दवाच्यास्तदन्तर्गताश्चातुर्विद्यब्राह्मणाः परिवेतृपरिवित्तीवक्ष्यमाणस्वरूपौ ॥ १५४ ॥

( २ ) **सर्वज्ञनारायणः**। पशुपालोवृत्त्यर्थं। निराकृतिरस्वाध्यायः। ब्रह्मब्राह्मणस्तद्विट्। गणाभ्यन्तरोगणानांनेताग्रामणीरितियावत्। गणानामाधिपत्येन देशान्तरप्रापयितार्थलोभेनेतिवा ॥ १५४ ॥

( ३ ) **कुल्लूकः**। यक्ष्मी क्षयरोगी। पशुपालोवृत्त्यर्थतया च्छागमेषादिपोषकः। परिवेत्तृपरिवित्ती वक्ष्यमाणलक्षणौ। निराकृतिः पञ्चमहायज्ञानुष्ठानरहितः। तथाच च्छन्दोगपरिशिष्टं। निराकर्ताऽमरादीनांसविज्ञेयोनिराकृतिः। ब्रह्मद्विड्ब्राह्मणादीनांद्वेष्टा। गणाभ्यन्तरोगणार्थोपसृष्टसंबन्धि*धनाद्युपजीवी ॥ १५४ ॥

( ४ ) **राघवानन्दः**। यक्ष्मी कासविशेषयुक्तः। पशुपालस्तदेकजीवी। परिवित्तिः वक्ष्यते। निराकृतिः पञ्चयज्ञानुष्ठानहीनः। ब्रह्मद्विट् वेदविप्रयोर्द्वेष्टा। गणाभ्यन्तरः गणार्थोत्सृष्टधनाद्युपजीवी ॥ १५४ ॥

( ५ **नन्दनः**। यक्ष्मी क्षयरोगीतस्य पूर्वजन्मनिब्रह्महत्वात्प्रतिषेधः। वृत्त्यर्थंयः पशून्पालयतिसपशुपालः। परिवेत्तारंवक्ष्यति। अधीत्यविस्मृतेवेदे भवेद्विप्रोनिराकृतिरितिदेवलः॥ आधाय योऽग्निमालस्याद्देवादीन्नैभिरिष्टवान्। निराकर्तामरादीनांसविज्ञेयो निराकृतिरिति कात्यायनः॥ ब्रह्मद्विट् ब्राह्मणद्वेषी परिवित्तिंवक्ष्यति गणाभ्यन्तरोगणप्रधानोगणस्यनेतेतियावत् ॥ १५४ ॥

( ६ ) **रामचन्द्रः**। यक्ष्मरोगी। परिवेत्ता ज्येष्ठेअकृतदारे सति कनीयान्दारानग्नीन्गृह्णाति सपरिवेत्ता। ज्येष्ठस्तु परिवित्तिः। निराकृतिः महायज्ञानुष्ठानरहितः देवादीनांनिराकर्ताच। ब्रह्मद्विट्ब्राह्मणानां वेदस्य वा द्वेष्टा वेदविस्मरणशीलोवा। गणाभ्यन्तरःगणवाहः। क्रियया जीवन्ति एते गणशब्दवाच्याः। तदभ्यन्तरगताः ॥ १५४ ॥

## कुशीलवोऽवकीर्णी च वृषलीपतिरेव च॥ पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥ १५५ ॥

( १ ) **मेधातिथिः**। चारणनटनर्तकगायनादयः कुशीलवाः। अवकीर्णीविप्लुतब्रह्मचर्योवृषलीशूद्रातस्याः पतिः अप्रत्यक्षन्यायंचमन्यन्ते। वृषल्याएवचयः यस्यद्विजातिभार्यानास्ति कुतएतत्प्रकरणान्तरेविगर्हिताचारसंग्रहंश्रूयते एनान्विगर्हिताचारानितिशूद्राविवाहश्चसर्वेषामनुज्ञातत्वात् नगर्हितः सचकृतसजातीयापरिणयनस्यानुज्ञातः। अतोसत्यांसजातीयायांवृषल्याभर्ताप्रतिषिध्यते। तत्रपौनर्भवः पुनर्भूः। पुनरूढांवक्ष्यति नवमेध्याये पत्यावापरित्यक्तेति। काणएकेनाक्ष्णाविकलः। यस्यचउपपतिर्जायाजारोवस्थितायांभार्यायामस्तिउपेक्षयानिन्द्यते। तदुक्तं अन्नादेभ्रूणहामार्ष्टिपत्यौभार्यापचारिणीति ॥ १५५ ॥

---

* संबन्धि= मठ ( अ )

( २ ) **सर्वज्ञनारायणः**। कुशीलवोनटवृत्तिः । अवकीर्णीव्रतमध्ये स्खलितब्रह्मचर्यः । पुनर्भूपुत्रःपौनर्भवः। गृहे-भार्यायाम् ॥ १५५ ॥

( ३ ) **कुल्लूकः**। कुशीलवोनर्तनवृत्तिः । अवकीर्णी स्त्रीसंपर्काद्विप्लुतब्रह्मचर्यः प्रथमाश्रमी यतिश्च । वृषलीपतिः सवर्णामपरिणीयकृतशूद्राविवाहः । पौनर्भवः पुनर्भूपुत्रोवक्ष्यमाणः । उपपतिर्यस्य जायाजारोगृहेस्ति ॥ १५५ ॥

( ४ ) **राघवानन्दः**। कुशीलवोनर्तकवृत्तिः । अवकीर्णी स्त्रीसंपर्काद्रुपप्लुतब्रह्मचर्यः । वृषलीपतिः सवर्णामपरिणीय कृतशूद्राविवाहः । पौनर्भवः पूनर्भूपुत्रः । यस्योपपतिः स्वजायाजारः । गृहइत्यनेननान्यत्र तथा दूषणमितिभावः ॥१५५॥

( ५ ) **नन्दनः**। कुशीलवोगायकः । गूढलिङ्ग्यवकीर्णीस्याद्यश्च भग्नव्रतस्तथेतिदेवलः ॥ वृषलीपतिः अनूढत्रैवर्णिक-स्त्रीकः केवलशूद्रापतिः । काणस्य पूर्वजन्मनि परनेत्रोत्पाटकत्वात्प्रतिषेधः । परदाराभिसंयोगात्पुरुषोजारउच्यते । सएवो-पपतिर्ज्ञेयोयः सदासंवसेद्गृह इतिदेवलः ॥ १५५॥

( ६ ) **रामचन्द्रः** । कुशीलवो नटनर्तकः । अवकीर्णी क्षतव्रतः । पौनर्भवः पुनर्भ्वांजातः । परपूर्वापतिः पुनर्भूः । काणःएकाक्षी । यस्य गृहे चोपपतिः जारः । एते वर्ज्याः ॥ १५५ ॥

**भृतकाध्यापकोयश्च भृतकाध्यापितस्तथा॥ शूद्रशिष्योगुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥ १५६॥**

( १ ) **मेधातिथिः**। भृतकाध्यापकः भृतकः सन्योस्थितो ध्यापकः भृतकइतियदीयद्दासिवेदमध्यापयामीति यः प्रवर्तते पणेन सभृतकाध्यापकः। एषाहिभृतिः प्रसिद्धा कायवाहादिषुयस्त्वियताधनेनेयदध्यापयामीतिननिश्चित्यवचनव्यव-स्थयापूर्वमध्यापयति लभतेचाध्यापनार्थं नासौभृतकाध्यापकः । अनिरूपितपरिमाणपूर्वेचार्थवादेविहितमध्यापनं । एवं-भृतकाध्यापितः योव्युत्पन्नाबुद्धिःसत्यकामवत्स्वयंभृतिंदत्वाधीतेसएवमुच्यते यस्तुपित्रादिनाभृतिंदत्वा उपाध्यायन्तराभा-वेध्याप्यते । नतस्यविगर्हिताचारत्वं बालोहिपित्राप्रतिषिद्धेभ्योनिवर्तनीयः । एतदुक्तंगुरौशिष्यश्चयाज्यश्चेति । शूद्रस्यशि-ष्योव्याकरणादिविद्यासुगुरुश्चशूद्रस्यैव । उपसर्जनीभूतस्यापिसंबन्धस्मृतिशास्त्रत्वात्गर्हिताचारत्वस्यसर्वशेषत्वात्गुरुत्वंच-गर्हितंनान्यत् । वाचादुष्टः परुषानृतभाषी । अभिशस्तइत्यन्ये कुण्डगोलकौ ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः**। भृतकोभृत्यापरिक्रीतः। सएवाध्यापकोयस्य सभृतकाध्यापकः । एवमध्यापितोपि । गुरुश्चैव शूद्रस्येत्यनुषङ्गः । वाग्दुष्टः परुषवादी । १५६ ॥

( ३ ) **कुल्लूकः**। भृतिर्वेतनं तद्ग्राही भृतकःसन्योध्यापकः सतथाएवंभृतकाध्यापितः । शूद्रशिष्योव्याकरणादौ गुरुश्च तस्यैव । वाग्दुष्टःपरुषभाषीअभिशस्तइत्यन्ये । कुण्डगोलकौ वक्ष्यमाणौ ॥ १५६ ॥

( ४ ) **राघवानन्दः** । भृतकाध्यापकः भृतिंगृहीत्वैव योध्यापयति सभृतकाध्यापकः। भृतेन शिष्यपुष्टेनगुरुणा योध्यापितः सभृतकाध्यापितः । कःकुत्सितार्थे शूद्रशिष्यः शूद्रस्य शिष्यः । गुरुः शूद्रस्येति शेषः । वाग्दुष्टः परुषभाषी । कुण्डगोलकौ वक्ष्यमाणौ ॥ १५६ ॥

( ५ ) **नन्दनः**। भृतकः भृतिभुक् । अत्र देवलः भृतकाध्यापितोयश्चभृतकाध्यापकश्चयः । तावुभौ पतितौ ज्ञेयौ-स्वाध्यायक्रयविक्रयादिति ॥ गुरुः शूद्रगुरुः । कुण्डगोलकौवक्ष्यति ॥ १५६ ॥

( ६ ) **रामचन्द्रः**। भृतकाध्यापकः वेतनादानेन योऽध्यापयते सः । यःभृतकाध्यापितः अध्येता । शूद्रःशिष्योय-स्य सःवाएतादृशोगुरुः । कुण्डगोलकौ । पत्यौजीवति कुण्डस्तु मृते भर्तरि गोलकः ॥ १५६ ॥

**अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ॥ ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः॥१५७॥**

( १ ) **मेधातिथिः** । असतिकारणेयःपरित्यजतिमातरंपितरंआचार्यंच । गुरुशब्दःसामान्यशब्दत्वादुपाध्यायेपिवर्तते। यत्तुनथासतिपितापितृग्रहणंनकर्तव्यंस्यात्गुरुत्वादेवसिद्धेरतआचार्यएवेहगुरुरितिव्याचक्षते तदयुक्तं । असतिमातापितृग्रहणेगुरुशब्दःपितर्येवकर्त्रिमाकृत्रिमन्यायेनप्रवर्तते । पृथगुपादानेतुशास्त्रान्तरवदाचार्यश्रेष्ठोगुरूणामितिसामान्यशब्दतासिद्धा भवति । परित्यागकारणंचत्यजेत् पितरंराजघातकमित्यादि मातापित्रोःपरित्यागस्तत्पादसेवायाःशुश्रूषादेःअकरणं तदाराधनेअतत्परत्वं गुरोरेवमेव । अध्यापनसमर्थेध्यापयितरिचतत्त्यागेनान्यत्राध्ययनं पतितैःसंयोगंगतःसंबन्धंकृतवान्ब्राह्मैर्याजनाध्यापनादिभिर्यौनैःकन्यादानादिभिः । ननुचपतितत्वादेवासौवर्ज्यः । केचिदाहुः संवत्सरेणपततिपतितेनसहाचरन् । नार्वागयंप्रतिषेधः । अथकेयंवाचोयुक्तिः संयोगंगतइति । नात्रसंबन्धशब्दोवैशेषिकादिप्रसिध्यासंयोगादिवचनः किंतर्हिक्रियैवात्रसंबन्धहेतुत्वात्संबन्धशब्देनोच्यते याजनादिलक्षणेसंयोगशब्दश्चसंबन्धमात्रमुपलक्षयति ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । अकारणात्पातित्यंविना । गुरोराचार्यस्य ब्राह्मैरध्ययनाध्यापनैः । यौनैर्योनिसम्बन्धैर्वैवाहिकैः । पतितैः सावित्रीपतितैः व्रात्यैः ॥ १५७ ॥

( ३ ) **कुल्लूकः** । मातुःपितुर्गुरूणांच परित्यागकारणंविना त्यक्ता शुश्रूषादेरकर्ता । पतितैश्चाध्ययनकन्यादानादिभिःसंबन्धैःसंपर्कंगतः । पतितत्वादेवास्य निषेधइति चेन्न संवत्सरात्प्रागिदंभविष्यति संवत्सरेण पततीति वक्ष्यमाणत्वात् ॥ १५७ ॥

( ४ ) **राघवानन्दः** । अकारणंपतितादिप्रयोजकजात्यन्तरादीन्विनागुर्वादीनांपरित्यक्तासंयोगंपतितैर्गतः संयोगं विद्याग्रहणकन्याग्रहणंरूपं । तदुत्तरत्र संवत्सरेण पतितइतिस्वयमेव वक्ष्यमाणत्वात्पूर्वपतितापेक्षया अन्यः भाविपातित्ययुक्तः । अतोनपुनरुक्तिः ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मैःसंबन्धैः संयोगंगतः । वेदाध्ययनसंबन्धैः संयोगंगतः । तथा यौनैर्विवाहसंबन्धैः संयोगंगतः ॥ १५७ ॥

**अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥ समुद्रयायी बन्दी च तैलिकः कूटकारकः ॥१५८॥**

( १ ) **मेधातिथिः** अगारस्यगृहस्यदग्ध्वागरंददातीति दर्शनार्थंचगरग्रहणंविषादीनामपि । कुण्डस्यअन्नमश्नाति एवंगोलकस्य प्रदर्शनार्थत्वात् कुण्डस्य । सोमंविक्रीणीतेओषधिः सोमस्तंयोविक्रीणीतेयागार्थमौषधार्थंवा । अन्येतुसोमसाधनान्ज्योतिष्टोमादियागानाहुः । तेषांचविक्रयोयद्यपिनसंभवतिअमूर्तत्वात् । क्रियायास्तथाप्यविदुषामेवंविधस्याचारस्यदर्शनादयंप्रतिषेधः । दृश्यन्तेह्यविद्वांसएवंवदन्तोयन्मयासुकृतंकृतंतत्तेस्त्विति शपथेनविहितं सुकृतेनसाधितान्स्वैरिति तथाचयांचरात्री मजायेथायांचप्रेतासि तदुभयमन्तरेणेष्टापूर्तंतेलोकंसुकृतमायुःप्रजांवृञ्जियंयदिमेद्रुह्युरिति । यथैवशपथाएवंदानविक्रयादावपि वाचायः करोतिसवर्ज्यते। अकार्यंतादृशानांशपथदानविक्रयादीनांचाक्रियमाणानामनुमीयते। समुद्रउदधिस्तंयोयाति । बन्दीस्तुतिपाठकः । तैलिकःतिलादीनांपेष्टा । कूटकारकःसाक्ष्येष्वनृतवादी ॥१५८॥

( २ ) **सर्वज्ञनारायणः** । गरदोविषदोविप्रव्यतिरिक्तानाम् । कुण्डाशीकुण्डंषष्टिःपलानि तावत्परिमाणतण्डुलान्नभोजी । समुद्रयायी नौकया समुद्रसंचारी । बन्दीस्तुतिपाठकः । तैलिकः तिलयन्त्रप्रवर्तकः । कूटंछद्मतत्कारकः ॥ १५८ ॥

---

( १५८ ) समुद्रयायी= शूद्रयाजी ( ख )

( ३ ) **कुल्लूकः** । गृहदाहकःमरणहेतुद्रव्यस्यदाता । कुण्डस्य वक्ष्यमाणस्ययोन्नमश्नाति प्रदर्शनार्थत्वात्कुण्डस्य गोलकस्यापि ग्रहणम् । अतएवदेवलः । अमृते जारजःकुण्डो मृते भर्तरि गोलकः । यस्तयोरन्नमश्नाति सकुण्डाशीति कथ्यते ॥ सोमलताविक्रेता । समुद्रे योवहित्रादिना द्वीपान्तरंगच्छति । बन्दी स्तुतिपाठकः । तैलार्थंतिलादिबीजानांपेष्टा । साक्षिवादे कूटस्य मृषावादस्य कर्ता ॥ १५८ ॥

( ४ ) **राघवानन्दः** । अगारदाही अगारोगृहं । कुण्डाशी कुण्डस्यान्नभोजी बव्हाशीवा । भीमः कुण्डाशीति स्मरणात् । सोमविक्रयी सोमोत्र लताविशेषः । समुद्रयायी वहित्रादिना द्वीपान्तरगन्ता । बन्दी स्तुतिवृत्तिः । तैलिकः तैलार्थे तिलादीनांपेष्टा । कूटकारकः कूटसाक्षी भूम्यर्थमिथ्याभाषी ॥ १५८ ॥

( ५ ) **नन्दनः** । अगारदाही सज्ञेयः प्रेतंदग्ध्वा धनेनयः । सचाप्यगारदाहीस्याद्विद्वेषाद्वेश्मदाहकः ॥ अमृते जारजः कुण्डो मृते भर्तरि गोलकः । यस्तयोरन्नमश्नाति सकुण्डाशीति कीर्त्यत इतिदेवलः ॥ कूटकारकः तुलामानलेखादिषुवञ्चनाकरः ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । कुण्डाशी यस्त्रिपलतण्डुलान्नभोक्ता । बन्दी कारागृहस्थितः स्तुतिपाठकोवा अनृतपाठकः । तलिकःतैलविक्रयी । कूटकारकः । अगारदाही गृहदाहकारी । सोमलताविक्रयी शूद्रयाजी शूद्रंयोयाजयति ॥ १५८ ॥

**पित्रा विवदमानश्च कितवोमद्यपस्तथा ॥ पापरोग्यभिशस्तश्च दाम्भिकोरसविक्रयी ॥ १५९ ॥**

( १ ) **मेधातिथिः** । पित्रायोविवदतेपरुषंभाषते । राजकुलेव्यवहरतीतिपूर्वपक्षोत्तरपक्षभंग्याभागादिनिमित्तं । तथाचगौतमः । पित्राकामेनविरक्तानिति । प्रतिरोद्धागुरोरित्यनेनैतत्कथंपुनरुक्तमुच्यते । अन्यःप्रतिरोधःअन्यश्चविवादःयत्किंचित्गुरोरभिप्रेतंवस्तुकथमिदंसिध्येदितितत्रसंबन्धकथनंप्रतिरोधःन्याय्येपिवस्तुनितदिच्छाप्रतिघातः । प्रतिरोधृत्वं प्रतिरोद्धेति । तत्रपाठान्तरम् । आभिमुख्येनहिंसिताहस्तादिनागुरोःप्रीतिरोद्धाचपेटादिदानेनअन्यस्मिन्पक्षेस्थितमन्त्रत्वंविवादस्य । कितवोद्यूतस्यकारयितासभिकःयस्तुस्वयंदेवितासप्रागेवनिषिद्धः । केकरमन्येपठन्ति । केकरोमद्यपइतिसचवलितप्रेक्षीअभ्यर्धदृष्टिःकातरमन्येसचशुकपक्षतारकः । मद्यपःसुरायाअन्यस्यारिष्टादेर्मद्यस्यपातासुरापः । पतितत्वेनैवनिरस्तः पापरोगीकुष्ठी सहिलोकेऽत्यन्तनिन्द्यःपापरोगीत्यभिधातुंयुक्तः । अस्मादेवचप्रतिषेधातयक्ष्मीत्यत्रनसर्वोव्याधिर्गृहीतोगृह्यते । कस्तर्हिक्षयीयदिहिसर्वोगृह्येततेनैवसिद्धत्वात्पापरोगीतिनाकरिष्यत्अभिशस्तःपातकेपपातकयोःकर्तेतिलोकेप्रसिद्धः । असत्यपिकर्तृकत्वनिश्चये । दाम्भिकःछद्मनाधर्मंवदतिलोकपङ्क्त्यर्थेनकर्तव्यमितिकृत्वाकरोति रसविक्रयीविषस्यविक्रेता । तस्यह्येतदभिधानं । उपांशुर्विधिरसदः सत्रीत्यादि विषदोरसदउच्यते ॥ १५९ ॥

( २ ) **सर्वज्ञनारायणः** । पित्रा धनार्थंविवदमानः । कितवः वृत्त्युद्देशविनाद्यूतकारी । केकरइति क्वचित्पाठे वक्रदृष्टिरित्यर्थः । मद्यं द्राक्षादिमद्यं । पापरोगः कुष्ठभगन्दरादिनिन्दितरोगः । अभिशस्तोवचनीयेन युक्तः । दाम्भिकोदम्भेन कर्मचारी । रसागुडादयः एतेनाविक्रय्यमुपलक्षितम् ॥ १५९ ॥

( ३ ) **कुल्लूकः** । पित्रा सह शास्त्रार्थे लौकिके वा वस्तुनि निरर्थयोविवदते । कितवोयः स्वयंदेवितुमनभिज्ञः स्वार्थंपरान्देवयति न स्वयंदेविता तस्योक्तत्वात् । न च सभिकः तस्य द्यूतवृत्तिपदेनाभिधास्यमानत्वात् । केकरइति पाठे तिर्यग्दृष्टिः । सुराव्यतिरिक्तमद्यपाता । कुष्ठी । अनिर्णीतेऽपि तस्मिन्महापातकादौजाताभिशापः । छद्मनाऽधर्मकारी । रसविक्रेता ॥ १५९ ॥

---

( १५९ ) कितवः=केकरः ( च )

( ४ ) **राघवानन्दः** । पित्रांविवदमानस्तद्विवादे शास्त्रीये लौकिके वा रतः । कितवोयःस्वार्थेन परान्देवयते । यः सुरातिरिक्तपायी मद्यपः. सुरापस्य पतितत्वात् विप्रप्रकरणात् । पापरोगी कुष्ठादियुक्तः । अभिशस्तः आशङ्कितमहापातकः । दाम्भिकोत्र छद्मना धर्माचरणंयस्य । रसविक्रयी रसोगोरसादिः ॥ १५९ ॥

( ५ ) **नन्दनः** । अयंकितवोवञ्चकः । केचित्पुनरुक्तिभयात् । केकरोमद्यपस्तथैति पठन्ति केकरः आकेकरतारनेत्रः । ह्रस्वक्रूरनेत्रत्वात्प्रतिषेधः । मद्यपीमदकरद्रव्याणांतालासवादीनांपाता । सुरापस्तु पतितप्रतिषेधेनोक्तः । मधुमेहभगन्दरादयः पापरोगस्थाः । दाम्भिको धर्मध्वजः । रसविक्रयी विषविक्रयी ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । पापरोगी दीर्घरोगी । अभिशस्तः कलङ्कीत्यर्थः ॥ १५९ ॥

**धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः ॥ मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥ १६० ॥**

( १ ) **मेधातिथिः** । धनुः शरांश्चयः शिल्पीवकरोतियंश्चाग्रेदिधिषूपतिः । दिधिषूशब्दःकाकाक्षिवदुभयेनसंबध्यते । स्मृतिशास्त्रत्वाचेदशःसंबन्धोलभ्यते । लेखालोष्ठादयोपिस्मृत्यर्थसंकल्पतोभवन्तिचार्थकाराः । अतएतन्नवाच्यंकथमेकशब्दः समासान्तर्गतोद्वाभ्यांभिन्नप्रस्थानाभ्यांअभिसंबध्येतइति । गौतमेनह्रिद्वयंप्रतिषिद्धं इहापिसंबन्धभेदेलिङ्गं । द्विपदः समासोनह्यग्रेदिधिषूपतिर्नामकश्चिदस्ति एतौचवक्ष्यमाणलक्षणौ मित्रध्रुक्मित्रंयोद्रुह्यतिमित्रस्ययः क्रार्योपघातेवर्तते । द्यूतज्ञःद्यूतवृत्तिर्जीविकायस्य । ननुकितवोमद्यपइत्यत्रोक्तमेव नावश्यंद्यूतवृत्तिरेवद्यूतस्यप्रयोजकः । कितर्हियःस्वयंदेवितुंनजानाति । गुरुभयाद्वा न दीव्यति व्यसनीतु दैवैःशप्तयान्यंदेवयति तदर्थोद्वितीयःकितवशब्दःअथवानृतस्त्रीकद्यूतसभास्थाणवोद्यूतवृत्तयः । पुत्रआचार्योध्यापकोयस्यामुख्यमाचार्यत्वंनपुत्रेसंभवति ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । द्यूतवृत्तिर्जीविकार्थंद्यूतकृत् । पुत्रएव यस्याचार्योधर्मोपदेष्टा सपुत्राचार्यः ॥ १६० ॥

( ३ ) **कुल्लूकः** । धनूंषिशरांश्चयः करोति । ज्येष्ठायांसोदरभगिन्यामनूढायांया कनिष्ठा विवाहेन दीयते साग्रेदिधिषूस्तस्याःपतिः । तथाच लौकाक्षिः* । ज्येष्ठायांयद्यनूढायांकन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वातु दिधिषूः स्मृता ॥ गोविन्दराजस्तु भ्रातुर्मृतस्य भार्यायामित्यनेनाग्रे दिधिषूपतिरेव वृत्तिवशादग्रेपदलोपेन दिधिषूपतिरिति मनुना वक्ष्यते सइहगृह्यतइत्याह । मित्रध्रुग्योमित्रस्यापकारे वर्तते । द्यूतवृत्तिःसभिकः । पुत्रेणाध्यापितःपिता मुख्येन पुत्राचार्यत्वासंभवात् ॥ १६० ॥

( ४ ) **राघवानन्दः** । धनुःशराणां धनुषःशराणांच । अग्रे दिधिषूपतिः दिधिषूर्लक्षिष्यते तस्याः पतिः । द्यूतमुपजीव्यं यस्य सद्यूतवृत्तिः । केकरइति पाठेतिर्यक्दृष्टिः । पुत्राचार्यः पुत्रेणाध्यापितः ॥ १६० ॥

( ५ ) **नन्दनः** । ज्येष्ठायांस्यादनूढायामूढाग्रेदिधिषूःस्मृता । द्यूतेनजीवनंयस्यसःद्यूतवृत्तिः ॥ १६० ॥

( ६ ) **रामचन्द्रः** । धनुःशराणां कर्ता चकाराद्विक्रयी च । य अग्रेदिधिषूपतिः पुनर्भ्वाःपतिः । द्विस्तस्याः दिधिषू पतिरित्यमरः । पुत्र आचार्योयस्य सपुत्राचार्यः ॥ १६० ॥

**भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा॥उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दकएव च॥१६१॥**

( १ ) **मेधातिथिः** । व्याधिविशेषवचनाएतेभ्रामरी अपस्मारी । गण्डमालीकपोलेकण्ठेपिमालाकाराजायन्ते । श्वित्रीश्वेतकुष्ठः । पिशुनःपरमर्मप्रकाशकःकर्णेजपः । उन्मत्तःअनवस्थितचित्तोधातुःसंक्षोभेणपिशाचगृहीतः । यत्किंचनवादीयत्किं-

---

* लौगाक्षिः इति कस्मिंश्चित्पुस्तके ( १६१ ) वृक्षरोपकः=वृक्षारोहकः ( नं )

चित्कारी। अन्धःचक्षुर्विकलः। वेदनिन्दकःननुचब्रह्मद्विट्शब्देनैवब्रह्मशब्दस्यानर्थकत्वात्वेदनिन्दकोगृहीतएव। नैवमन्यनिन्दाअन्येद्विषःचित्तधर्मोद्वेषःतदुपर्यप्रीतिशब्देनकुत्सनंनिन्दा ॥ १६१ ॥

( २ ) सर्वज्ञनारायणः। भ्रामरी अपस्मारी। गण्डमालाव्याधिभेदः ॥ १६१ ॥

( ३ ) कुल्लूकः। अपस्मारी। गण्डमालाख्यव्याध्युपेतः। श्वेतकुष्ठयुक्तः। दुर्जनः। उन्मादवान्। अचक्षुः। वेदनिन्दाकरः ॥ १६१ ॥

( ४ ) राघवानन्दः। भ्रामरी अपस्मारी। गण्डमालीगले गण्डयुतः। श्वित्री श्वेतकुष्ठयुक्तः। पिशुनः प्रच्छन्नदोषाख्यायी। वेदनिन्दकः धिक्शब्दादिवादेन वेदकुत्सकः ॥ १६१ ॥

( ५ ) नन्दनः। भ्रामरीअपस्मारी। गण्डमाली उपचितउद्भूतोमांसपिण्डोगण्डशब्देनोच्यते। तस्य मालेव लम्बमानत्वान्मालात्वम् तद्वान्गण्डमाली ॥ १६१ ॥

( ६ ) रामचन्द्रः। भ्रामरी अपस्मारी गण्डमाला कपोलकण्ठेपिटकमालाकारा जायते ॥ १६१ ॥

## हस्तिगोश्वोष्ट्रदमकोनक्षत्रैर्यश्च जीवति ॥ पक्षिणां पोषकोयश्च युद्धाचार्यस्तथैव च ॥ १६२ ॥

( १ ) मेधातिथिः। हस्त्यादीनांनेतादमकः। गतिशिक्षयितानक्षत्रैर्यश्चजीवति नक्षत्रशब्देनज्योतिःशास्त्रंलक्ष्यतेतेनजीवतिज्योतिषिकः। पक्षिणांश्येनादीनामाखेटार्थेपोषयिता। युद्धाचार्योधनुर्वेदोपदेशकः ॥ १६२ ॥

( २ ) सर्वज्ञनारायणः। हस्त्यादीनांदमकस्तद्दमनेन जीवनः। नक्षत्रैर्ज्योतिषवृत्त्या। युद्धाचार्यः शस्त्रनियुद्धाद्युपायोपदेष्टा ॥ १६२ ॥

( ३ ) कुल्लूकः। हस्तिगवाश्वोष्ट्राणांविनेता। नक्षत्रशब्देन ज्योतिःशास्त्रमुपलक्ष्यते तेन योवर्तते। पक्षिणांपञ्जरसंजातानांक्रीडाद्यर्थेपोषिता। युद्धार्थमायुधविद्योपदेशकः ॥ १६२ ॥

( ४ ) राघवानन्दः। वृत्त्यर्थेहस्त्यादीनांदमनकः शिक्षकः। नक्षत्रैर्ज्योतिःशास्त्रैरेव। पक्षिणां पञ्जरस्थानांक्रीडार्थे विक्रयार्थेवा पोषकः। युद्धाचार्यः युद्धार्थमायुधविद्योपदेशकः तद्वारा विप्रवधादिसंभवात् ॥ १६२ ॥

( ५ ) नन्दनः। दमकः शिक्षकः। पक्षिणः पोषयति सपक्षिणांपोषकः ॥ १६२ ॥

( ६ ) रामचन्द्रः। हस्तिगोश्वोष्ट्रादीन् दमयतीति दमकः ॥ १६२ ॥

## स्रोतसांभेदकोयश्च तेषांचावरणे रतः ॥ गृहसंवेशकोदूतो वृक्षारोपक एव च ॥ १६३ ॥

( १ ) मेधातिथिः। स्रोतांसिउदकागमाः तेषांभेदकः सेतुंभित्वादेशान्तरेव्रीह्यादिसेकार्थेनयति। तेषांचस्रोतसामावरणेरतः आवरणआच्छादनंयतः प्रदेशादुदकमुद्भवतितत् स्थगयति। गृहाणांसंनिवेशोपदेशकः वास्तुविद्याजीवी स्थपतिः सूत्रधारादिः। नत्वात्मनोगृहाणांसन्निवेशयिता। दूतोराज्ञाप्रेष्योदासवद्विनियोज्यः दूतस्तुसन्धिविग्रहादावेवप्रेष्यते। वृक्षानूरोपयतिमूल्यनं धर्मार्थेतुनदोषः। अविगर्हिताचारत्वाद्विहितंवृक्षारोपणंदशाश्रवापीनरकंनयाति ॥ १६३ ॥

( २ ) सर्वज्ञनारायणः। स्रोतसांभेदकः स्रोतोनिरोधकः। सेतुभेदकृत् देशिकइतिपाठे जलशिरायाःश्रोतसउपदेष्टेत्यर्थः। तेषांस्रोतसांप्रवर्तमानानां। गृहसंवेशको वृत्त्यर्थेगृहनिर्माता। दूतोदूत्यवृत्तिः। वृक्षारोपकोवृत्त्यर्थम् ॥ १६३ ॥

( ३ ) कुल्लूकः। प्रवहज्जलानांसेतुभेदादिना देशान्तरनेता। तेषामेवावरणकर्ता निजगतिप्रतिबन्धकः। गृहसन्निवेशो-

---

( १६३ ) वृक्षारोपकः=वृक्षारोहकः ( नं० )

पदेशकोवास्तुविद्योपजीवी । दूतोराजग्रामप्रेष्यव्यतिरिक्तोऽपि । वृक्षरोपयिता वेतनग्रहणेन । न तु धर्मार्थी पश्चाम्ररोपी नरकंनयातीति विधानात् ॥ १६३ ॥

( ४ ) **राघवानन्दः** । स्रोतसां नद्यादीनांविमार्गप्रापयिता । आवरणेरतः निजगति प्रतिबन्धकश्च । गृहसंवेशकोवास्तुविद्योपजीवी । दूतोराजैकनियतप्रेष्यः । वृक्षारोपकःभृतिमादाय न तु धर्मार्थं पश्चाम्रवापी नरकं न पश्येदित्युक्तेः॥१६३॥

( ५ ) **नन्दनः** । स्रोतसांभेदकः स्रोतसांभञ्जकः । तेषामावरणेरतः प्रजोपयोगार्हमार्गगमननिरोधतत्परः । स्रोतसांदर्शकस्तथेतिवा पठन्ति । स्रोतसांजलोद्भवस्थानानामुपदेष्टा । गृहसंनिवेशकोवृत्त्यर्थं गृहाणांनिर्माता । वृक्षारोहको वृक्षाणामारोढा ॥ १६३ ॥

( ६ ) **रामचन्द्रः** । तेषांवा आचरणे रतः । गृहसंवेशकः । वृक्षानारोपयति मूल्येन वृक्षारोपकः ॥ १६३ ॥

**श्वक्रीडी श्येनजीवी च कन्यादूषकएव च ॥ हिंस्रोवृषलवृत्तिश्च गणानांचैव याजकः ॥१६४॥**

( १ ) **मेधातिथिः** । श्वभिःक्रीडतिश्वक्रीडी क्रीडार्थंशुनोबिभर्तिश्येनैर्जीवतिक्रयविक्रयादिना प्रागुक्तपक्षिणांपोषकः पञ्जरादिसंस्थितानांधारयिता । कन्यामकन्यांयःकरोति सकन्यादूषकः । हिंस्रः स्वभावक्रूरःवधरतः । वृषलवृत्तिः शूद्रेभ्यः सेवादिनायोजीवति । वृषलपुत्रइतिपाठान्तरंकेवलाएववृषलाःपुत्रायस्यशूद्रापत्यैश्चकेवलैरितिगर्हिताचारः । गणानांदेवानांच याजकः गणयागाः प्रसिद्धाः ॥ १६४ ॥

( २ ) **सर्वज्ञनारायणः** । श्वक्रीडी श्वभिः क्रीडन् । कन्यादूषकः कन्यायाअङ्गुल्यादिनाऽकन्यात्वापादकः । वृषलएव पुत्रोस्य सतु वृषलपुत्रः । गणानामनेकेषांक्रमेण ॥ १६४ ॥

( ३ ) **कुल्लूकः** । क्रीडार्थंशुनःपोषयति श्येनैर्जीवति क्रयविक्रयादिना । कन्याभिगन्ता । हिंसारतः । शूद्रोपक्रमवृत्तिः । वृषलपुत्रइति पाठान्तरम् । वृषला एव केवलाः पुत्रायस्येत्यर्थः । विनायकादि गणयागकृत् ॥ १६४ ॥

( ४ ) **राघवानन्दः** । श्वक्रीडी क्रीडार्थंशुनःपोष्टा । श्येनजीवी श्येनेनान्यपक्षिणोघातयित्वा व्यवहारी । पक्षिपोषकस्य निन्दितत्वेपि अधिकदूषणार्थंवा । कन्यादूषकः । अङ्गुल्यादिना योनिविदारकः अथवा तस्याःपरिवादीकुमारीगन्तुरुपपातकित्वोक्तेर्दण्डप्रायश्चित्तापाङ्क्त्यादिभेदेनकुमार्यादूषकाणांपुनरुक्ताद्यभावोध्येयः । वृषलवृत्तिः वृषलावक्रमवृत्तिः वृषलोपजीवी वा वृषलपुत्रइति पाठान्तरं वृषलाएव केवलाः पुत्राः पुत्रस्थानीया वायस्य सतथा । गणानां विनायकानां बहुयाजकस्योक्तत्वात् । बहूनामुपनेता वा यश्चोपनयते बहूनिति निन्दितत्वात् ॥ १६४ ॥

( ५ ) **नन्दनः** । श्वभिः क्रीडतीतिश्वक्रीडी । वृषलएव पुत्रोयस्य सवृषलपुत्रः । गणानाञ्चैवयाजकः नानाजातीयाअनियतवृत्तयः संहतागणास्तेषांयाजकोयाजयिता ॥ १६४ ॥

( ६ ) **रामचन्द्रः** । वृषलपुत्रः । निर्धर्मोवृषलोज्ञेयस्तत्सुतोवृषलात्मजः ॥ च पुनःगणानांयाजकएवंविनायकादिगणयाजकः सर्वेषांयाजकोवा ॥ १६४ ॥

**आचारहीनः क्लीबश्च नित्यंयाचनकस्तथा॥कृषिजीवी श्लीपदी च सद्भिर्निन्दितएव च॥१६५॥**

( १ ) **मेधातिथिः** । आचारो गृहाभ्यागतानांपूजादिप्रयुक्तोलौकिकसमाचारः तेनवर्जितः । क्लीबोऽल्पसत्वः भग्नोत्साहः कर्तव्येषु । याचनकः सदैवयोयाचतेयश्चापरानुद्वेजयति । वस्तुस्वभावोयंयाच्ययाच्यमानोद्वेजनं । नन्यादिभ्योयुः

---

( १६४ ) वृषलवृत्तिः=वृषलपुत्रः ( नं )

स्वार्थेकः । कृषिजीवीस्वयंकृतयाकृष्याजीवति सतिचोपायान्तरे अस्वयंकृतयापि । श्लीपदी एकःपादोमहान्यस्य । सद्भिर्निन्दितः दुर्भगः विनापिदोषेणसतांद्वेष्यः ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । क्लीबोधर्मोद्यमशून्यः । नित्यंयाचनको याचकः । सद्भिर्विनिन्दितोऽकारणेपि ॥ १६५ ॥

( ३ ) **कुल्लूकः** । गुर्वतिथिप्रत्युत्थानाद्याचारवर्जितः । क्लीबोधर्मकृत्यादौ निरुत्साहः नपुंसकस्योक्तत्वात् । नित्यंयाचनेन परोद्वेजकः । स्वयंकृतया कृष्या योजीवति वृत्त्यन्तरेपि वा संभवत्यस्वयंकृतयापि । श्लीपदीव्याधिनास्थूलचरणः । केनापिनिमित्तेन साधूनांनिन्दाविषयः ॥ १६५ ॥

( ४ ) **राघवानन्द** । क्लीबोधर्माद्यनुत्साही नपुंसकस्योक्तत्वात् । नित्यंयाचनकः स्ववस्तनादिषु सत्स्वपि । कृषिजीवी स्वयंकृतकृष्या जीवति । श्लीपदी व्याधिकृतस्थूलपदः । अशिष्टोयमितिनिन्दितः ॥ १६५ ॥

( ५ ) **नन्दनः** । क्लीबउपहतशुक्रः पुरुषः ॥ १६५ ॥

( ६ ) **रामचन्द्रः** । क्लीबःधर्मोत्साहरहितः । कृषिजीवी कृषिकृत् । श्लीपदीपदे महती यस्य सहि । सद्भिर्निन्दितोदुर्भगः ॥ १६५ ॥

**औरभ्रिकोमाहिषिकः परपूर्वापतिस्तथा ॥ प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥ १६६ ॥**

( १ ) **मेधातिथिः** । उरभ्रामेषास्तैश्चरतिक्रयविक्रयादिनाव्यवहरति तद्धनप्रधानोवाएवंमाहिषिकः । परःपूर्वोयस्याः तस्याःपतिःभर्ता । याअन्यस्मैदत्ता अन्येनवाऊढा तांपुनः यःसंस्करोति पुनर्भवतिभर्त्तापौनर्भवोनरोभर्त्तासावितिशास्त्रेण । प्रेतान्योनिर्यापयतिवहति एते यत्नतोवर्जनीयाः ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः** । औरभ्रिकोमेषपोषकः । माहिषिकोमहिषपोषकः । परपूर्वाप्रागन्यस्मैदत्ता तस्याः पतिः परिणेता । प्रेतनिर्यातकोवृत्त्यर्थं प्रेतवाहः ॥ १६६ ॥

( ३ ) **कुल्लूकः** । मेषमहिषजीवनः । परपूर्वापुनर्भूस्तस्याःपतिः । प्रेतनिर्हारकोधनग्रहणेन न तु धर्मार्थं । एतद्वैपरमंतपोयत्प्रेतमरण्यहरन्तीति अवश्यश्रु*त्या विहितत्वात् ॥ १६६ ॥

( ४ ) **राघवानन्दः** । औरभ्रिकोमेषजीवी । माहिषिकोपि तथा । परपूर्वा पुनर्भूः तस्याःपतिः अस्याःपुत्रःपौनर्भवउक्तः । प्रेतनिर्यातकः धनग्रहणेन मृतनिर्हारकः ॥ १६६ ॥

( ५ ) **नन्दनः** । उरभ्रामेषास्तैर्योजीवति सऔरभ्रिकः । एतेन माहिषिकोव्याख्यातः । प्रेतनिर्यातकोवृत्त्यर्थंशवनिर्हारकः । प्रयत्नतः आपद्यपि ॥ १६६ ॥

( ६ ) **रामचन्द्रः** । औरभ्रिक मेषपालकः महिषपालकोवा । परपूर्वापतिः परपूर्वापुनर्भूस्तस्याः पतिः । प्रेतनिर्यातकःप्रेतंलोभेन निर्यातयतिप्रेतवाहकइत्यर्थः ॥ १६६ ॥

**एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान् ॥ द्विजातिप्रवरोविद्वानुभयत्र विवर्जयेत् ॥ १६७ ॥**

( १ ) **मेधातिथिः** । विगर्हितोनिन्दितः आचारःकर्मानुष्ठानमेषामिति । काणादयःपूर्वदोषलिङ्गेन स्तेनादयोनुभूयमानदोषाःप्रत्यक्षादिना । उभयत्रदैवे पित्र्येचवर्जयेत् परिहरेत् । अपाङ्क्ते याः पङ्क्तिंनार्हन्ति । भवार्थेढक्कर्तव्यः । अनर्ह-

---

( १६६ ) औरिभ्रिको=औरभ्रिकः ( ख, ग, घ, च )

* हरन्तीतिअवश्यश्रुत्या=हरन्तीतिश्रुत्या ( अ )

त्वमेवपङ्क्तावभवनंप्रतीयते । अन्यैर्ब्राह्मणैःसहभोजनंनार्हन्ति । अतएवपङ्क्तिदूषकाउच्यन्ते तैःसहोपविष्टाअन्येपिदूषिताभवन्ति ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः** । एतानन्यांश्च विगर्हिताचारान् । अपाङ्क्तेयानित्येषांपङ्क्तावपि न भोक्तव्यमित्यर्थः उभयत्र दैवे पित्र्ये च ॥ १६७ ॥

( ३ ) **कुल्लूकः** । एतान्स्तेनादीनिन्दिताचारान्काणादींश्चपूर्वजन्मार्जितनिन्दितकर्मशेषलब्धकाणादिभावान्साधुभिः । सहैकत्रभोजनाद्यनर्हान्ब्राह्मणापसदान्ब्राह्मणश्रेष्ठः शास्त्रज्ञोदैवेपित्र्ये च त्यजेत् ॥ १६७ ॥

( ४ ) **राघवानन्दः** । उपसंहरतिएतानिति । उभयत्र दैवे पित्र्ये च । प्रवरःद्विजातिश्रेष्ठोविप्रः ॥ १६७ ॥

( ५ ) **नन्दनः** । द्विजातिप्रवरविद्वच्छब्दौवर्जयितृप्रशंसापरौ । उभयत्रदैवपित्र्योः ॥ १६७ ॥

( ६ ) **रामचन्द्रः** । उभयत्रदैवे पित्र्ये हव्यकव्यादिषुअपीतिनिश्चये ॥ १६७ ॥

**ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति ॥ तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥ १६८॥**

( १ ) **मेधातिथिः** । यथैतेस्तेनादयःपङ्क्तिदूषकाः एवमनधीयानस्तत्तुल्यदोषइत्येवमर्थंपुनर्वचनं । अन्येतुव्याचक्षते अधीयानानांकाणादीनामसतिवर्तमानेविगर्हिताचारत्वेदैवेकदाचित्प्राप्त्यर्थमनधीयानोब्राह्मणोवर्ज्यः । यस्तुअधीतेतस्मैहव्यंकिमितिनदीयतेएवमर्थमेवात्रहव्यग्रहणं । अनधीयानःकेवलोवर्ज्योयेचदृश्यमानगर्हिताचारा अतस्तेउभयत्रप्रतिषिद्धास्तेदैवेपित्र्येचवर्ज्याः । अन्येतुपित्र्यएव तथाचवसिष्ठः । अथचेन्मंत्रविद्युक्तःशारीरैःपङ्क्तिदूषणैः । अदूष्यंतंयमःप्राहपङ्क्तिपावनएवसइति ॥ तृणाग्निरिवशाम्यतीति । तृणाग्निर्यथानशक्नोतिहवींषिपक्तुंहुतमात्रेणहविषाशाम्यति तद्वत् । नचयस्मिन्नग्नौहुतंनभस्मीभवतिनतत्रहोमात्फलं । एवंहिश्रूयते असमिद्धेनहोतव्यमग्निर्वैसर्वादेवताइति । एवमनधीयानोब्राह्मणस्तृणाग्नितुल्यः एतदेवाह नहिभस्मनिहूयतइति यथातृणाग्निः प्रायोभस्मीभवतिनतत्रहूयते एवंतादृशोब्राह्मणोनभोज्यते ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । तृणाग्नि रिवेत्यल्पफलहेतुतोक्ता । भस्मनितृणाग्निभस्मनि ॥ १६८ ॥

( ३ ) **कुल्लूकः** । तृणाग्निर्यथा न हविर्दहनसमर्थोहविषि प्रक्षिप्ते शाम्यति निष्फलस्तत्र होमः एवंवेदाग्निशून्योब्राह्मणस्तृणाग्निसमस्तस्मै देवोद्देशेन त्यक्तंहविर्न दातव्यं यतोभस्मनि न हूयते । श्रोत्रियायैव देयानीत्यनेनैवानधीयानस्यापि प्रतिषेधसिद्धौ स्तेनादिवत्पङ्क्तिदूषकत्वज्ञापनार्थंपुनर्वचनम् । अन्येतु दैवे अनधीयानएव वर्जनीयः । अधीयानस्तु काणादिरपि शारीरदोषयुक्तोग्राह्यइति एतदर्थंपुनर्वचनम् । अतएव वसिष्ठः । अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । अदूष्यंतंयमः प्राह पङ्क्तिपावनएवसः ॥ शारीरैः काणत्वादिभिर्न तुस्वयमुत्पाद्यैस्तेनत्वादिभिः ॥ १६८ ॥

( ४ ) **राघवानन्दः** । दैवे तु ब्राह्मणपरोक्षाभावेपि वेदविद्यापेक्षितेत्याह ब्राह्मणइति । अनधीयानोवेदरहितः । शाम्यति वेदतेजोरहितत्वात् । हव्यं कव्योपलक्षणम् ॥ १६८ ॥

( ५ ) **नन्दनः** । उभयत्र श्रोत्रियत्वमादरणीयमित्याह ब्राह्मणइति । हव्यमिति कव्यस्याप्युपलक्षणम् ॥ १६८ ॥

( ६ ) **रामचन्द्रः** । तृणस्याग्निर्यथा शाम्यति तथा ऽनधीयानो द्विजःशाम्यति । तस्मै द्विजायान्नं दातव्यं । नहि भस्मनि हूयते तृणाग्निर्यथाहविर्दग्धुंन शक्नोति हुतमात्रेण शाम्यति तथाअस्मिन्नग्नौ हुतंन भस्मीभवति । वेदाध्यनरहितोभस्मतुल्योद्विजोभवतीत्यर्थः ॥ १६८ ॥

* वेदाग्नि=वेदाध्ययन ( अ )

**अपाङ्क्तदाने योदातुर्भवत्यूर्ध्वंफलोदयः ॥ दैवे हविषि पित्र्ये वा तत्प्रवक्ष्याम्यशेषतः ॥ १६९ ॥**

( १ ) **मेधातिथिः** । अस्यप्रतिषेधविधेःफलमाह । पङ्क्त्यामर्हन्तीतिपङ्क्त्याः नपङ्क्त्याःअपङ्क्त्याःदण्डादिदर्शनाद्रूपसिद्धिः तेभ्योदानेयःफलोदयःफलोत्पत्तिर्भवति । दातुस्तंसर्वमिदानींब्रवीम्यवहिताभवथेति ॥ १६९ ॥

( २ ) **सर्वज्ञनारायणः** । अपाङ्क्तदानेऽपाङ्क्तेभ्योदानेकृते ॥ १६९ ॥

( ३ ) **कुल्लूकः** । पङ्क्तिभोजनानर्हब्राह्मणाय दैवे हविषि पित्र्ये वा दत्ते दातुर्योदानादूर्ध्वंफलोदयस्तमशेषमभिधास्यामि ॥ १६९ ॥

( ४ ) **राघवानन्दः** । प्रतिज्ञान्तरंप्रतिजानीते अपाङ्क्त्येति । अपाङ्क्त्याः विप्रभोजनपङ्क्तौ प्रवेशानर्हाः ऊर्ध्वंपरलोके । फलोदयोविरुद्धफलप्राप्तिः ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । अपाङ्क्तदाने अपाङ्क्तेयानांपुंसांदाने दातुर्यः फलोदय ऊर्ध्वंपरेलोक भवेत्तत्दशेषतःफलंवक्ष्यामि दैवे पित्र्ये वा कर्मणि ॥ १६९ ॥

**अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्रादिभिस्तथा ॥ अपाङ्क्तेयैर्यदन्यैश्च तद्वैरक्षांसि भुञ्जते ॥ १७० ॥**

( १ ) **मेधातिथिः** । अव्रताःअसंयताः शास्त्राचारवर्जिताः । परिवेतृप्रभृतयोयद्यपिशास्त्रबाह्यास्तथापिभेदेनस्मरणार्थंदोषगुरुत्वार्थंवाकथ्यन्ते । अन्येचापाङ्क्तेयाः काणश्लीपदादयः तैर्यदन्नंभुक्तंश्राद्धेभवतितद्रक्षांसिदेवद्विषोभुञ्जते । नपितरःप्रेताःअतोनिष्फलंतच्छ्राद्धंभवतीत्युक्तंभवति । रक्षोग्रहणमर्थवादः ॥ १७० ॥

( २ ) **सर्वज्ञनारायणः** । अव्रतैरकृतस्नातकादिव्रतैःअन्यैरपाङ्क्तेयैः । स्मृत्यन्तरोक्तैः ॥ १७० ॥

( ३ ) **कुल्लूकः** । वेदग्रहणार्थंव्रतरहितैस्तथा परिवेत्त्रादिभिरन्यैश्चापाङ्क्तेयैः स्तेनादिभिर्यद्द्रव्यंभुक्तंतद्रक्षांसि भुञ्जते । निष्फलंतच्छ्राद्धंभवतीत्यर्थः ॥ १७० ॥

( ४ ) **राघवानन्दः** । तदेवाह । अव्रतैः वेदार्थव्रतरहितैः । अपाङ्क्तेयैः परिवेत्रादिभिः । यदन्यैस्तत्सदृशैः काणाद्यैः । तस्मात्पाङ्क्तेयारक्षोघ्नाइति भावः । अतएव वसिष्ठः । अथचेन्मन्त्रविद्युक्तःशारीरैःपङ्क्तिदूषणैः । अदूष्यस्तंयमःप्राहपङ्क्तिपावनएवसइति ॥ १७० ॥

( ५ ) **नन्दनः** । रक्षांसि भुञ्जते न देवानापिपितरः । तेन तन्निष्फलमित्यभिप्रायः ॥ १७० ॥

( ६ ) **रामचन्द्रः** । अन्यैरपाङ्क्तेयैः ॥ १७० ॥

**दाराग्निहोत्रसंयोगंकुरुते योऽग्रजे स्थिते ॥ परिवेत्ता सविज्ञेयः परिवित्तिस्तु पूर्वजः ॥ १७१ ॥**

( १ ) **मेधातिथिः** । अग्रेआदौजातःअग्रजःसोदर्योभ्रातोच्यते । एवंहिपठ्यते ॥ पितृव्यपुत्रान्सापत्नान्परनारीसुतांस्तथा । दाराग्निहोत्रसंयोगेनदोषःपरिवेदनेइति । अत्रसोदर्योग्रजःतस्मिन्स्थितेऽकृतदाराग्निसंयोगेतिष्ठति प्रकृतव्यापारनिवृत्तौप्रयुक्तःअग्निहोत्रशब्दःकर्मशब्दोपि तदर्थस्याधानेवर्ततेस्मृत्यन्तरेविशेषःपठ्यते । उन्मत्तःकिल्बिषीकुष्ठीपतितः क्लीबएवच । राजयक्ष्मामयावीचनयोग्यः स्यात्प्रतीक्षितुं ॥ एतदप्यनधिकारोपलक्षणार्थं । अतश्चपङ्क्तावपिगृह्येते कालविशेषोधिकोव्यपेक्षते । तथाचस्मृतिः । अष्टौवर्षाण्युदीक्षेतषड्डित्येकइति एषाचवर्षसंख्यायदाकनीयान्प्राप्तविवाहकालइतः

---

( १६९ ) अपाङ्क्तदाने=अपाङ्क्तेयप्रदाने ( ख )
=अपाङ्क्त्यदाने ( क, ग, घ, ब, भ, र, ल )

प्रभृतिपृष्ट्व्याविवाहकालश्चस्वाध्यायविधिनिवृत्तिः । ननुचप्रोषिताधिकारेतत्पठितं भर्तरिप्रोषितेयःस्त्रीणांप्रवासकालस्तमुपक्रम्यभ्रातरीत्यादिपठितं । सत्यंवाक्यान्तरेप्रोषितशब्दस्यप्रत्यक्षःसंबन्धोवगतःवाक्यान्तरेतुसंबन्धेप्रमाणंवक्तव्यं नचतदस्ति यथास्वरितेनाधिकारइति नचात्रतच्छब्दोस्ति । नचतदपेक्षयाविनैवतस्यवाक्यस्यापरिपूर्णत्वंवसिष्ठेनचाविशेषेणाग्निशब्देनस्मार्तस्याप्यग्नेर्ग्रहणंकृतं । केचित्पितर्यप्यकृताधानेविधिमिच्छन्ति । अग्रजशब्दस्ययौगिकत्वात् पिताप्यग्रजोभवतीति । यद्यप्येवमन्योपियोग्रजस्तत्राप्येवंप्राप्नोति । नचायमग्रजानुजव्यवहारः पितापुत्रयोर्विद्यते । स्मृत्यन्तरेतुपठ्यते । भ्रातरिचैवंज्यायसीति । परिवित्तिः पूर्वजोज्येष्ठः ॥ १७१ ॥

( २ ) **सर्वज्ञनारायणः** । परिवेत्रादिपदानि व्याचष्टे दाराग्निहोत्रेति । दाराग्निहोत्रयोरन्यतरस्य संयोगं संबन्धम् । स्थिते अकृते अग्निहोत्रपदं लक्षणयात्रेताग्निपरम् । आधाने च ज्येष्ठानुमतिंविना कृतेपरिवेतृता नतदनुमत्या ॥ १७१ ॥

( ३ ) **कुल्लूकः** । अप्रसिद्धत्वात्परिवेत्त्रादिलक्षणमाह दारेति । अग्निहोत्रशब्दोऽयमग्निहोत्राद्याधानपरःयःसहोदरे ज्येष्ठे भ्रातर्यनूढेऽनग्निके च दारपरिग्रहंश्रौतस्मार्ताग्निहरणंच कुरुते सपरिवेत्ता ज्येष्ठश्च परिवित्तिर्भवति ॥ १७१ ॥

( ४ ) **राघवानन्दः** । परिवेत्तृपरिवित्योर्लक्षणमाह दारेति । परिवेत्ता परि ज्येष्ठंत्यक्त्वा आदौ वेत्ता कन्याग्न्योर्लब्धा । यः पूर्वजोज्येष्ठः सपरिवित्तिः ॥ १७१ ॥

( ५ ) **नन्दनः** । अथ परिवेत्तादिशब्दानामपाङ्क्त्यानुक्रमेणोद्दिष्टानांलोकविषयतांपरिजिहीर्षुस्तेषामर्थमाह । दारेति ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । यअग्रजे स्थिते सति दाराग्निहोत्रंकुरुते स्वीकुर्यात्सपरिवेत्ता विज्ञेयः । पूर्वजो ज्येष्ठःपरिवित्तिसंज्ञोभवति ॥ १७१ ॥

**परिवित्तिः परीवेत्ता यया च परिविद्यते ॥ सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥ १७२ ॥**

( १ ) **मेधातिथिः** । प्रसंगात्परिवेदनसंबन्धिनामन्येषामपिदोषदर्शनद्वारेणनिषेधंकरोति । निषेधपरिवर्जितःपरिभूतोवा वेदनेनपरिवित्तिः परिवर्ज्यश्रेष्ठंकरोतिवेदनंपरिवेत्ता । ययाकन्ययापरिविद्यते सर्वेतेनरकंयान्ति । दातायाजकश्चयेषांनरकगामिनांपञ्चमोदाताकन्यायापकृतत्वात्पित्रादिः । याजकोविवाहेयः करोतिहोमं योवातत्रोपदेष्टा अथवातेषामेवपरिवेतृपरिवित्तितत्कन्यादातॄणां ज्योतिष्टोमादीनामपि यज्ञानामृत्विक्तस्माज्ज्येष्ठेन तथा कर्तव्यं यथास्यकनीयसो भ्रातुर्विवाहे विघ्नकर्तृत्वंनभवति । कनीयसापिकालप्रतीक्षाद्वादशाष्टषड्वर्षादिविषयाकर्तव्या । कन्ययापितादशायन्मांदातुंनदेयं । दातृयाजकौपञ्चमौयेषामितिद्वन्द्वगर्भोबहुव्रीहिः ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । यया कन्यया दाता कन्यायाः याजकस्तत्र ब्रह्मत्वेनार्त्विज्यकारी दातृसहितो याजकः पञ्चमोयेषांते दातृयाजकपञ्चमाः । याजकोऽत्रपरिवेत्तुर्दर्शपूर्णमासयागेष्वृत्विगित्येके ॥ १७२ ॥

( ३ ) **कुल्लूकः** । प्रसङ्गात्परिवेदनसंबन्धिनांपञ्चानामप्यनिष्टफलमाह परीति । परिवित्तिःपरिवेत्ता च यया च कन्यया परिवेदनंक्रियते कन्याप्रदाता याजकश्च तद्विवाहहोमकर्ता सपञ्चमोयेषांते सर्वे नरकंव्रजन्ति ॥ १७२ ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रासंगिकंदोषमाह परिवित्तिरिति । यया स्त्रिया । परिवेदनं विवाहः ॥ १७२ ॥

( ५ ) **नन्दनः** । परिवेदनसम्बन्धिनोऽपि वर्जनीयाइत्यभिप्रायेणाह परिवित्तिरिति । दातृसहितोयाजकः पञ्चमोयेषांतेदातृयाजकपञ्चमाः ॥ १७२ ॥

(६) **रामचन्द्रः** । परिवित्तिःलघुपरिवेत्ता यया स्त्रिया सह परिविद्यते । याजकोविवाहकर्ताआचार्यःपञ्चमः । ते सर्वे नरकंयान्ति गच्छन्तीत्यर्थः ॥ १७२ ॥

**भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः॥धर्मेणापि नियुक्तायां सज्ञेयोदिधिषूपतिः ॥ १७३ ॥**

(१) **मेधातिथिः** । नियोगधर्मेणप्रवृत्तोभ्रातुर्मृतस्यतद्भार्यायांगमने योनुरागतःप्रीतिभावात्कामतःनियोगधर्मातिक्रमेण सकृत्सकृदृतावित्येवं विधिं हित्वा इच्छानुरागंगाढालिङ्गनंपरिचुंम्बनादिकुर्यादसकृद्वाप्रवर्तेत चेतसाविक्रियेत कामिनीप्रेमदृष्टिबन्धवचनादिलिङ्गेनानुरागित्वेन विभावितोदिधिषूपतिर्वेद्यः । अग्रेदिधिषूपलक्षणंतु स्मृत्यन्तरात्ज्ञेयं । जीवत्यग्रे दिधिषूपतिरिति केचित्तु नैवायंसमाम्नायेश्लोकोस्तीत्याहुः अपरिपूर्णलिङ्गंब्रुवते । द्वयस्यलक्षणेकर्तव्ये न पूर्वकारिणामेकस्योपपद्यते । स्मृत्यन्तरे चैतदुभयंलक्ष्यते । परपूर्वापतिंधीरावदन्तिदिधिषूपतिं । यस्त्वग्रेदिधिषूर्विप्रःसैवयस्यकुटुम्बिनी ॥ नत्विहसम्भवति परपूर्वापतेःपृथगेवनिषिद्धत्वात् । तस्मादन्योदिधिषूपतिः ॥ १७३ ॥

(२) **सर्वज्ञनारायणः** । धर्मेण प्रथमंनियुक्तायांपश्चाद्योऽनुरज्येत अपिशब्दाद्रागमात्रेणाऽपि दिधिषूपतिरग्रेदिधिषूपतिः । एवंच तस्या अपि स्त्रिया दिधिषूरग्रेदिधिषूर्वेतिनामोक्तंभवति ॥ १७३ ॥

(३) **कुल्लूकः** । मृतस्य भ्रातुर्वक्ष्यमाणनियोगधर्मेणापि नियुक्तायांभार्यायांसकृत्सकृदृतावृतावित्यादिविधिंहित्वा कामेनानुरागंभावयेदाश्लेषचुम्बनादि कुर्यादसकृद्वा प्रवर्तेत सदिधिषूपतिर्ज्ञातव्यः । अतः श्राद्धनिषिद्धपात्रमध्यपाठादस्यापि हव्यकव्यपात्रयोर्निषेधः कल्पनीयः ॥ १७३ ॥

(४) **राघवानन्दः** । दिधिषूपतिरित्युक्तस्य लक्षणमाह भ्रातुरिति । अनुरज्जेत स्तनालिङ्गनादिना । नियुक्तायां पुत्रार्थमपि । ज्येष्ठायांयद्यनूढायांकन्या योद्वाह्यते नुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृतेति ॥ तयोःपतिर्वा । गोविन्दराजस्तु वृत्तवशादग्रे पदलोपादयमेवाग्रे दिधिषूपतिरिति ॥ १७३ ॥

(५) **नन्दनः** । अनिर्दिष्टस्य दिधिषूपतिशब्दस्यार्थकथनेन दिधिषूपतेरप्यपाङ्क्तेयत्वंगम्यते ॥ १७३ ॥

(६) **रामचन्द्रः** । मृतस्य भ्रातुर्भार्यायांकामतोयोनुरज्येतअनुरक्तोभवेत् । धर्मेणापि नियुक्तायामाज्ञप्तायां सदिधिषूपतिर्ज्ञेयः । यथा व्यासंधृतराष्ट्रपाण्डुजनकत्वात् परपूर्वापतिंधीरावदन्तिदिधिषूपतिरिति ज्ञेयः ॥ १७३ ॥

**परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ॥ पत्यौ जीवति कुण्डःस्यान्मृते भर्तरि गोलकः॥१७४॥**

**[ उत्पन्नयो रधर्मेण हव्यकव्ये च नैत्यके ॥ यस्तयोरन्नमश्नाति सकुण्डाशी द्विजः स्मृतः ॥१॥ § ]**

(१) **मेधातिथिः** । पत्यौजीवतितद्गृहेस्थितायांतद्भार्यायांगूढोत्पन्नःभङ्ग्या उपपतित्वेनवा पत्युःक्षमयाजायते सोन्यजातः कुण्डउच्यते । मृतेतुगोलकः । एतावनियुक्तासुतावितिकेचित् । तदयुक्तं । तयोरब्राह्मण्यादेवाप्राप्तिस्तस्मान्नियोगोत्पन्नौकुण्डगोलकौ कथंपुनरनियुक्तासुतयोरब्राह्मण्यमितरयोस्तुब्राह्मण्यं जातिलक्षणेपत्नीग्रहणात् । संबन्धिशब्दश्चपत्नीशब्दोभर्तृशब्दवत् । यज्ञसंयोगेनपत्नीशब्दोव्युत्पाद्यते नचान्यदीययाभार्ययासहान्यस्ययज्ञाधिकारः यद्येवंनियोगोत्पन्नयोरपि समानन्यायत्वान्नैवंब्राह्मण्यं दशमएतन्निर्णेष्यामः । माभूद्वानियुक्तानियुक्तासुतयोःकस्यचिदपिब्राह्मण्यं । ननूक्तमस-

§ (ञ) चिन्हितपुस्तके ।

तिब्राह्मण्येप्राप्त्यभावात्प्रतिषेधानुपपत्तिः । पतितेप्रतिषेधादेवंएतद्भविष्यति द्विजातिकर्मभ्योहानिःपतनं द्विजातिकर्मत्वेसतिश्राद्धभोजनस्य कुतःपतितेप्राप्तिराम्नायतेचप्रतिषेधोयेस्तेनपतिताइति ॥ १७४ ॥

( ३ ) **कुल्लूकः** । परदारेषु कुण्डगोलकाख्यौ द्वौ सुतावुत्पद्येते । तत्र जीवत्पतिकायामुत्पन्नः कुण्डोमृतपतिकायांच गोलकः ॥ १७४ ॥

( ४ ) **राघवानन्दः** । कुण्डगोलकौ लक्षयति परदारेष्विति । परजातत्वेन व्यक्तः गर्भः कुण्डः । अनियुक्तयोःस्त्रियोः अयमेव गूढोत्पन्नइति वा ॥ १७४ ॥

( ५ ) **नन्दनः** । सवर्णोत्पत्ताविमेसंज्ञे ॥ १७४ ॥

**तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च॥दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्॥१७५॥**

( १ ) **मेधातिथिः** । जात्याख्यायामितिबहुवचनंप्राणिनइति ब्राह्मण्यादिव्यपदेशमवजानतेप्राणिनइत्येवंव्यपदेशान्तरमर्हन्ति अतस्ते नाशयन्ति हव्यकव्यानि निष्फलीकुर्वन्ति प्रदायिनांदातॄणांपरिवेत्रादीनांलोकेनातिप्रसिद्धत्वात् शब्दैश्चास्यस्मृतत्वाद्यवस्थार्थंलक्षणप्रणयनम् ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । द्वौसुतौ जीविनौप्रेत्य परलोके भोग्यानि हव्यकव्यानिहव्यकव्यफलानि नाशयेते । इह लोके भोग्यानि शान्त्यादिफलानि । यद्यपियाज्ञवल्क्येन सवर्णेभ्यः सवर्णासु जायन्ते हि सजातइत्युक्त्वा विन्नास्वेषविधिः स्मृतइति विवाहितसवर्णस्त्रीजातानामेव सजातितोक्ता । तथापि कुण्डगोलकयोरविन्नस्त्रीजनितत्वेऽपि ब्राह्मणब्राह्मणीजन्मनोरेतयोः श्राद्धपात्रतानिषेधाद्ब्राह्मण्यंगम्यतइत्येके नेत्यपरे ॥ १७५ ॥

( ३ ) **कुल्लूकः** । तेपरभार्यायांजाताःकुण्डाद्यादृष्टानुपयोगात्प्राणिनइति व्यपदिष्टाः । प्राणिनौ ब्राह्मणत्वेपि तत्कार्याभावात्प्रेत्य फलाभावात्परलोके चानुषङ्गिककीर्त्यादिफलाभावाद्दत्तानि हव्यकव्यानि प्रेत्य फलाभावादिह कीर्तेरभावान्नाशयेते नाशयतः । प्रदायिभिर्दत्तानि हव्यकव्यानि निष्फलानिकुर्वन्ति ॥ १७५ ॥

( ४ ) **राघवानन्दः** । अनयोः प्रासङ्गिकंदोषमाह तेत्विति । अत्र बहुत्वपूरणार्थंदिधिषूपतेः पुत्रस्य ग्रहणं । द्विवचनपाठस्तु क्वचित्ताविति ॥ १७५ ॥

( ६ ) **रामचन्द्रः** । तौ तु कुण्डगोलकौ परक्षेत्रे जातौ प्राणिनाविहलोके प्रेत्यपरलोके प्रदायिनांदातॄणांदत्तानि हव्यकव्यानि नाशयेते ॥ १७५ ॥

**अपाङ्क्त्योयावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति॥तावतांन फलंतत्र दाता प्राप्नोति बालिशः॥१७६॥**

( १ ) **मेधातिथिः** । पङ्क्तिमर्हतीतिपङ्क्त्यः सद्भिरेकत्रासनभोजनाद्यर्हतापङ्क्त्यानां तदभावादपङ्क्त्योयावतः पङ्क्त्यान्विद्वत्तपस्विश्रोत्रियान्भुञ्जानाननुपश्यति तावतां नतत्रपितृतृप्त्याख्यंफलंभवति । अतस्तेनादयः श्राद्धंकुर्वतातत: प्रदेशादपसारणीयाः बालिशोमूर्खः ॥ १७६ ॥

( २ ) **सर्वज्ञनारायणः** । अपाङ्क्त्योन्धादिभ्योऽन्यस्तेषु संख्याविशेषस्योक्तत्वात् ॥ १७६ ॥

( ३ ) **कुल्लूकः** । सद्भिःसहैकपङ्क्त्याभोजनानर्हः स्तेनादिर्यत्संख्यान्भोजनार्हान्पश्यति तावत्संख्यानांभोजनस्य फलंतत्र श्राद्धे दाता न प्राप्नोति बालिशोऽज्ञः । अतस्तेनादिर्यथा न पश्यति तथाकर्तव्यम् ॥ १७६ ॥

( ४ ) **राघवानन्दः** । अपाङ्क्त्यैरित्युक्तं तत्र केऽपाङ्क्त्याः कियत्फलंनाशयन्तीत्यपेक्षायामाह अपाङ्क्त्यइति त्रिभिः । बालिशः पङ्क्त्यामपाङ्क्त्यप्रवेशात् ॥ १७६ ॥

( ६ ) **रामचन्द्रः** । अपाङ्क्तःद्विजःयावतःसंख्याकान्पाङ्क्त्यान्भुञ्जानाननुपश्यति दाता तत्र तावतांतावत्संख्याकानां-भुञ्जतांफलंन प्राप्नोति बालिशोमूर्खः ॥ १७६ ॥

**वीक्ष्यान्धोनवतेः काणः षष्टेः श्वित्री शतस्य तु ॥ पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥ १७७ ॥**

( १ ) **मेधातिथिः** । ननुचान्धस्यकुतोदर्शनंतदुच्यतेवीक्ष्यान्धोनवतेरिति सत्यं तत्प्रदेशसंनिधानमनेनलक्ष्यते । यावान्देशश्चक्षुष्मतोदृष्टिगोचरस्तावतोदेशादनावृतादन्धो विवासनीयः । काणःषष्टेर्नात्रायमर्थोऽतऊर्ध्वंभोज्याइति केवलंस-ङ्ख्यापचयेन दोषलाघवंप्रायश्चित्तविशेषार्थंज्ञाप्यते । श्वित्रीकुष्ठीभण्यते । पापरोगीप्रसिद्धः ॥ १७७ ॥

( २ ) **सर्वज्ञनारायणः** । अन्धोनवते र्ब्राह्मणानां तत्पङ्क्तिस्थितानाम् । चतुर्थ्यर्थे षष्ठी तेभ्योदानस्ययत्फलंदातु-स्तन्नाशयति । काणादयस्तु षष्टिप्रभृतीन्वीक्ष्यतद्दानफलंदातुर्नाशयन्ति वीक्ष्येति वीक्षणार्हदेशस्थत्वमुपलक्षितम् । अत-एवान्धोऽपि वीक्ष्येत्यस्यान्वयोन विरुद्धइति केचित् । एवंसंस्पृशतीत्यत्रापि संस्पर्शयोग्यदेशस्थितता लक्ष्यते भोजनस-मये संस्पर्शाभावात् । अन्यदापि स्पर्शस्यानियतत्वान्नियतदोषत्वानुपपत्तेः ॥ १७७ ॥

( ३ ) **कुल्लूकः** । अन्धस्य वीक्षणासंभवाद्वीक्षणयोग्यदेशसन्निहितोऽसौ पाङ्क्त्यानांनवतेर्भोजनफलंनाशयति एवं-काणःषष्टेः श्वेतकुष्ठी शतस्य पापरोगी रोगराजोपहतः सहस्रस्य इत्यन्धादिसन्निधिनिरासार्थंवचनंगुरुलघुसंख्याभिधानं-चेहसंख्योपचये दोषगौरवंतत्र च प्रायश्चित्तगौरवमिति दर्शयितुम् ॥ १७७ ॥

( ४ ) **राघवानन्दः** । कथंनाशयतीत्यपेक्षायामाह वीक्ष्येति । वीक्षणयोग्यदेशसन्निहितोसौ नवतेः पाङ्क्त्यानामपि भोजनजं फलंदातुः प्राप्तियोग्यमन्धोनाशयतीत्येवमुत्तरत्र ॥ १७७ ॥

( ५ ) **नन्दनः** । न केवलमपाङ्क्त्योदानएव वर्जनीयः किंतुभुञ्जानानांदर्शनेऽपीत्याह अपाङ्क्त्यइति । तत्र भोजने । भोजयितुरपरीक्षणदोषेणबालिशत्वम् । वीक्ष्यअन्येन वीक्ष्यमाणइत्यर्थः नवतेर्भुञ्जानानांदातुर्दानफलम् ॥ १७७ ॥

( ६ ) **रामचन्द्रः** । तत्र हि वीक्ष्येति । अन्धोदर्शनयोग्यस्थलेन वीक्ष्य दृष्ट्वा भुञ्जतांनवतिसङ्ख्याकानांद्विजानांफलं-नाशयेत् । काणः वीक्ष्य दृष्ट्वा भुञ्जतांद्विजानांषष्टिसङ्ख्याकानांफलंनाशयते । श्वित्री कुष्ठी भुञ्जतांशतसङ्ख्याकानांद्विजानां-फलंनाशयते । पापरोगी वीक्ष्य भुञ्जतांद्विजानांसहस्रसङ्ख्याकानांफलंनाशयते ॥ १७७ ॥

**यावतः संस्पृशेदङ्गैर्ब्राह्मणाञ्छूद्रयाजकः ॥ तावतांन भवेद्दातुः फलं दानस्य पौर्तिकम् ॥ १७८ ॥**

( १ ) **मेधातिथिः** । याबतोब्राह्मणान्स्पृशत्यङ्गैः पङ्क्तिगतः अत्राप्यङ्गस्यस्पर्शनंनविवक्षितं किंतर्हिपूर्ववत्तद्देशसं-निधिः । पौर्तिकंफलं पूर्तेभवंपौर्तिकं बहिर्वेदिदानाद्यत्फलंतत्पौर्तिकम् ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः** । तावतस्तावद्भ्योदानस्य फलं पौर्तिकमित्यैष्टिकस्याप्युपलक्षणम् । शूद्रयाजकस्य श्राद्धासनसोमयाजनकन्यादानमतीवनिरस्तमिति ॥ १७८ ॥

( ३ ) **कुल्लूकः** । शूद्रस्य यज्ञादावृत्विग्यावत्संख्यान्ब्राह्मणान्स्पृशत्यासनेषूपक्लृप्तेष्वित्यासनभेदस्य वक्ष्यमाणत्वा-न्मुख्यस्पर्शासंभवे यावतांश्राद्धभोजिनांपङ्क्तावुपविशति तावतांसंबन्धिपौर्तिकंफलंश्राद्धीयंद तुर्न भवति । तावतांपौर्तिकं-फलंबहिर्वेदिदानाच्च यत्फलंतन्न भवतीति मेधातिथिगोविन्दराजौ । अतस्तयैव निन्दया निषिद्धगणापठितस्यापिशू-द्रयाजकस्यभोजननिषेधःकल्प्यते ॥ १७८ ॥

( ४ ) **राघवानन्दः** । किंच यावतइति । श्राद्धभोजनकाले परस्परंस्पर्शाभावात् शूद्रयाजकस्य पङ्क्तौ प्रवेशाभावप-रंशूद्रयाजकस्पर्शयोग्यदेशपरंवा । पौर्तिकं श्राद्धीयम् ॥ १७८ ॥

( ५ ) **नन्दनः** । ब्राह्मणानपङ्क्तिस्थान् । पूर्तेश्राद्धादि तत्र भवंपौर्तिकम् ॥ १७८ ॥

( ६ ) **रामचन्द्रः** । शूद्रयाजकोशूद्रयज्ञकर्ता यावतोब्राह्मणानङ्गैःसंस्पृशति। तावतांदातुर्दानस्य फलंन भवेत् ॥१७८॥

**वेदविद्वापि विप्रोऽस्य लोभात्कृत्वा प्रतिग्रहम्॥ विनाशंव्रजति क्षिप्रमामपात्रमिवाम्भसि॥१७९॥**

( १ ) **मेधातिथिः** । प्रसङ्गाच्छूद्रयाजकस्याप्रतिग्राह्यतानेनकथ्यते । वेदविदपियदितस्यशूद्रयाजकस्यसंबन्धिनोद्रव्यस्यप्रतिग्रहंकरोति । लोभादित्यनुवादः । सोपिविनाशंव्रजति । अभिलषितेनार्थेनवियुज्यते धनपुत्रपशुशरीरादिना किंपुनरवेदवित् । वेदविदःकिलप्रतिग्रहेनातीवदोषइतिवक्ष्यति । आमपात्रमपक्वंशरावादिभाजनं । अम्भसिजलेक्षिप्तम् ॥१७९॥

( २ ) **सर्वज्ञनारायणः** । वेदविद्वापीतिप्रसङ्गादुक्तम् । वेदविदपि किमुतान्यः । अस्य शूद्रयाजकस्य । केचिदस्येति शूद्रस्य परामर्शइत्याहुः । तदसमञ्जसम् । शूद्रस्य तत्राधिकाराभावप्रयोगात्पौनरुक्त्यंस्यात् । तस्मात्तयाजकस्येत्यस्येति पदम् । आमपात्रमामंमृत्पात्रम् ॥ १७९ ॥

( ३ ) **कुल्लूकः** । प्रसङ्गाच्च शूद्रयाजकप्रतिग्रहंनिषेधयति । लाघवार्थमन्यत्र निषेधकरणे शूद्रयाजकशब्दोच्चारणंकर्तव्यंस्यात् वेदेति । वेदज्ञोऽपि ब्राह्मणः शूद्रयाजकस्य लोभात्प्रतिग्रहंकृत्वा शीघ्रंशरीरादिना विनाशंगच्छति । सुतरामवेदवित् अपक्वमृन्मयशरावादिकमिवोदके ॥ १७९ ॥

( ४ ) **राघवानन्दः** । प्रासङ्गिकंशूद्रयाजकप्रतिग्रहंनिषेधति वेदविदिति कैमुत्यर्थः । आमपात्रमपक्वघटादि ॥१७९ ॥

( ५ ) **नन्दनः** । नकेवलंशूद्रयाजकः प्रदाने वर्जनीयःकिंतु प्रतिग्रहेऽपीति प्रसङ्गादाह वेदेति ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । अस्य शूद्रयाजकस्य वेदविद्विप्रः लोभात्प्रतिग्रहंकृत्वा सःवेदविद्विप्रःक्षिप्रंविनाशंव्रजति अम्भसि जले आमपात्रमिवेत्यर्थः ॥ १७९ ॥

**सोमविक्रयिणे विष्ठा भिषजे पूयशोणितं ॥ नष्टंदेवलके दत्तमप्रतिष्ठंतु वार्धुषौ ॥ १८० ॥**

( १ ) **मेधातिथिः** । तस्यांजातौजायते यत्रविष्ठास्वभोजनंभवत्येवंभिषजेनष्टंनिष्फलंउद्वेगकरंवा । नष्टंहिद्रव्यंउद्वेगंजनयति । अविद्यमानाप्रतिष्ठास्थितिर्यस्यतदप्रतिष्ठं नानारूपैःशब्दैरेवंविधस्यदानस्यनैष्फल्यंकर्तुश्चदोषसंबन्धःप्रतिपाद्यते नष्टमप्रतिष्ठमितिनानयोरर्थभेदशङ्काकार्या कार्यविभेदात् ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । सोमविक्रयिणे यद्दत्तं तद्विष्ठावद्देवैः पितृभिश्च त्यज्यतइत्यर्थः । एवमुत्तरेषु । अप्रतिष्ठं देवादिसमीपानवस्थायि वार्धुषौ वार्धुषये । नष्टं देवादिभिरदृश्यम् ॥ १८० ॥

( ३ ) **कुल्लूकः** । सोमविक्रयिणेयद्दत्तंतद्दातुर्भोजनार्थंविष्ठा संपद्यते । जन्मान्तरे विष्ठाभोजिनांजातौ जायतइत्यर्थः । इतरेएवंपूयशोणितेपि व्याख्येयम् । नष्टंनाशभागितया निष्फलंविवक्षितम् । अप्रतिष्ठमनाश्रयतया निष्फलमेव॥१८०॥

( ४ ) **राघवानन्दः** । सोमविक्रयादिना भुक्तश्राद्धीयस्य विरुद्धफलं वाचनिकमाह सोमविक्रयिणइति त्रिभिः । दातुरुपक्रमात्तस्यैव जन्मान्तरे भोजनार्थंविष्ठाद्युपस्थापकम् । सोमविक्रय्यादिभ्योदत्तमन्नादि अप्रतिष्ठंउक्तवक्ष्यमाण कालास्थायि । देवलके वार्धुषिकइत्यत्रचतुर्थ्यर्थेसप्तमी ॥ १८० ॥

( ५ ) **नन्दनः** । प्रकृतमेवानुसरति सोमेति । अप्रतिष्ठमविद्यमानं भवति ॥ १८० ॥

( ६ ) **रामचन्द्रः** । सोमविक्रयिणे द्विजाय दत्तंपूयशोणितंभवति । देवलके द्विजे दत्तंनष्टंभवति । वार्द्धुषिर्वृध्योपजीवीतस्मिन्दत्तमप्रतिष्ठंभवति । नोपतिष्ठेत् ॥ १८० ॥

**यत्तु वाणिजके दत्तंनेह नामुत्र तद्भवेत् ॥ भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥ १८१ ॥**

(१) **मेधातिथिः** । अयमपिपूर्ववत्व्याख्येयः । वाणिजकस्यभोजनंनिषिद्धं । नतद्देशसंनिधिः । नहियथापूर्वत्र-वीक्ष्येतिदृष्टिगोचरेदेशेलक्षणयासंनिधिस्तद्वदिहतादृशंकिंचिन्निबन्धनमस्ति । पौनर्भवोनवमेवक्ष्यते ॥ १८१ ॥

(२) **सर्वज्ञनारायणः** । नेह तद्भवेत् कीर्त्यादिहेतुरपि ॥ १८१ ॥

(३) **कुल्लूकः** । वाणिजकाय यद्दत्तंश्राद्धे तन्नेहानुषङ्गिककीर्त्यादिफलाय नापि पारलौकिकफलाय भवति । पुनर्भूपुत्राय यद्दत्तंतद्भस्महुतहविःसमंनिष्फलमित्यर्थः ॥ १८१ ॥

(४) **राघवानन्दः** । वणिक्पौनर्भवयोरपि न देयमित्याह यत्विति । नेह निन्दास्पदत्वाद्यशोपि नेतिभावः । एतेषु न देयमिति तात्पर्यार्थः ॥ १८१

(५) **नन्दनः** । वाणिजके वणिग्वृत्तौ ॥ १८१ ॥

(६) **रामचन्द्रः** । वाणिजके वणिक्वृत्तिस्थिते द्विजे यत्तुदत्तं इहलोके अमुत्रपरलोके तन्नभवेत् नफलतीत्यर्थः । पुनर्भुवःसकाशाद्भवति पौनर्भवस्तस्मिन्द्विजे दत्तंहुतं कारितंहव्यंभस्मनीव भवति । हुतंहव्यंभस्मनि यथा निष्फलंभवति तथा ॥ १८१ ॥

**इतरेषु त्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु ॥ मेदोसृङ्मांसमज्जास्थि वदन्त्यन्नंमनीषिणः ॥ १८२ ॥**

(१) **मेधातिथिः** । यस्मिन्नपाङ्क्त्यदानफलप्रदर्शनप्रकरणेपठिताःअन्धादयस्तेभ्योन्येस्तेनादयःप्रतिकाण्डोद्दिष्टास्तेषु यथोद्दिष्टेषुभोजितेषुदातुरिमान्युपतिष्ठन्ते । मेदोसृङ्मांसादीनितादृशजातौ जायते यत्रैतदाहारोभवति कृमिक्रव्यातगृध्रादिजातावितिमनीषिणोवेदविदोवदन्ति । सर्वस्यायमर्थः अपाङ्क्तेषुभोजितेषुश्राद्धाधिकारोनकृतोभवत्यकरणेचविध्यतिक्रमदोषोऽवश्यंभावी नित्यत्वादस्यविधेः ॥ १८२ ॥

(२) **सर्वज्ञनारायणः** । यथोद्दिष्टेष्वसाधुषु तत्तत्स्थानोक्तेष्वपाङ्क्त्यव्यतिरिक्तेष्वपि निन्दितकर्मसुदत्तम् । अन्नमित्युपलक्षण मन्यस्यापि ॥ १८२ ॥

(३) **कुल्लूकः** । इतरेभ्योविशेषेणानुक्तफलेभ्यःपङ्क्तिभोजनानर्हेभ्यःस्तेनादिभ्योयथाकीर्तितेभ्योयद्दत्तमन्नंतद्दातुर्भोजनार्थंमेदोरुधिरमांसमज्जास्थिभवतीति पण्डितावदन्ति । अत्रापि जन्मान्तरे मेदशोणितादिभुजांजातिषु जायन्तइत्यर्थः ॥ १८२ ॥

(४) **राघवानन्दः** । मेदोवसा । अस्थिगोरसः । मज्जांनाश्नीयादिति श्रुतेः ॥ १८२ ॥

(५) **नन्दनः** । अत्रापि दत्तमित्यनुषज्यते ॥ १८२ ॥

(६) **रामचन्द्रः** । इतरेष्वनुलोमप्रतिलोमजेषु दत्तंहव्यंकव्यमन्नंमेदोरूपंभवति । अपाङ्क्त्येष्व सृङ्मांसरूपं भवति । यथोद्दिष्टेषु वर्जितेषु यद्दत्तंतन्मज्जारूपंभवति । असाधुषु यद्दत्तंतदस्थिवद्भवति । एवंमनीषिणोवदन्ति मेदोसृङ्मांसादीनिति । तादृशजातौजायते यत्रैतदाहारोभवति ॥ १८२ ॥

**अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ॥ तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान् ॥ १८३ ॥**

(१) **मेधातिथिः** । अपाङ्क्त्यैः पूर्वोक्तैःउपहतादूषितापङ्क्तिः परिषद्यैर्ब्राह्मणैःपाव्यते निर्दोषाक्रियते । तान्वक्ष्यमाणै-

श्लोकैः श्र . नेःशेषेणब्रवीमि। अर्थवादरूपाण्यन्यानिपदानि। यथैवैकत्रभुञ्जानोदुष्टोदूषयति। अदुष्टाःपङ्क्तिपावनागुणातिशयादन्यषामपिदोषानपनुदन्तीत्यस्यार्थः । नचानेनापाङ्क्त्यानांभोजनमनुज्ञाप्यते । किंतर्हिपङ्क्तिपावनोऽवश्यमन्वेषितव्यः। तस्मिन्नलब्धेयद्यत्नेनअतिनिपुणतःपरीक्षितास्त्रिपुरुषंयावत्। तथापिनचेदुपलभ्यमानदोषावृथापिभोजयितव्याइत्येवमर्थःपङ्क्तिपावनोपदेशः ॥ १८३ ॥

( २ ) **सर्वज्ञनारायणः**। अपाङ्क्त्योपहता अज्ञायमानदोषाऽपाङ्क्त्योपहता द्विजोत्तमैर्ब्राह्मणैः द्विजाग्र्यान्विप्रमुख्यान्पङ्क्तिपावनसंज्ञान् ॥ १८३ ॥

( ३ ) **कुल्लूकः**। एकपङ्क्त्युपविष्टस्तेनादिदूषिता पङ्क्तिर्यैर्ब्राह्मणैः पवित्रीक्रियते। तान्पवित्रीकारकान्ब्राह्मणानशेषेण शृणुत। निषेधादेकपङ्क्तिभोजनासंभवेऽपि स्तेनादीनांरहस्यकृताज्ञातदोषविषयत्वेन साधकताऽस्य वचनस्य ॥ १८३ ॥

( ४ ) **राघवानन्दः**। उक्तदोषेषुप्रायश्चित्तं पङ्क्तिपावनाएवेति प्रतिजानीते अपाङ्क्त्येति। यैः पाव्यतेतान् अतएव समाख्यापङ्क्तिपावनानिति। तान्निबोधतेत्यन्वयः ॥ १८३ ॥

( ५ ) **नन्दनः**। अपाङ्क्त्योपहता अज्ञानादापद्विषयाद्वापरिगृहीतेनापाङ्क्त्येनोपहता ॥ १८३ ॥

( ६ ) **रामचन्द्रः** । अपाङ्क्तैर्द्विजैरुपहतादूषिता पङ्क्तिर्यैर्द्विजैः पाव्यते निर्दोषीक्रियते तान्द्विजाग्र्यान्पङ्क्तिपावनान्कात्स्न्र्येन निबोधत ॥ १८३ ॥

## अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ॥ श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥ १८४ ॥

( १ ) **मेधातिथिः** । अग्र्याःउत्तमाःसर्वसंशयप्रभेदननिपुणाः । स्वीकृतवेदाः। सर्वेषुचप्रवचनेषुअग्र्याः। इत्येवंप्रोच्यते व्याख्यायते यैर्वेदार्थप्रवचनान्यङ्गानिषडङ्गोवेदोयैरभ्यस्तोभ्यस्यतेवा श्रोत्रियान्वयेजाताःपितृपितामहादयोयेषांतादृशाएव। ननुचेदृशाएवभोज्यतयाविहितास्तत्रकोतिशयोनेदानींपङ्क्तिपावनत्वमुच्यते। किंचिद्विद्वद्भ्योदानं सतिश्रोत्रियत्वेविहितं। नचेहविद्वत्तोपात्ता। नचतयापङ्क्तिपावनत्वोपपत्तिः । गुणविशेषापेक्षंहिपङ्क्तिपावनत्वं नगुणापचययुक्तम्। तस्माद्विद्वद्भावे केवलश्रोत्रियायदानार्थमेतत्। असतिविदुषिश्रोत्रियाय दानंमुख्यमेव नगौणमित्युक्तंभवति नबहुवचनंव्यक्त्यपेक्षं। चकारः समुच्चये ॥ १८४ ॥

( २ ) **सर्वज्ञनारायणः**। अग्र्याः मुख्याः अध्यापकानां मध्ये सर्वेषु वेदेषु नयत्र क्वचिदेकस्मिन्वेदइत्यर्थः। एवं सर्वप्रवचनेषु। सर्ववेदार्थनिर्वचनेषु श्रोत्रियान्वयजावेदाध्येतृकुलजाः ॥ १८४ ॥

( ३ ) **कुल्लूकः**। सर्वेषु वेदेषु चतुर्ष्वपिअग्र्याःश्रेष्ठाःसम्यग्गृहीतवेदाःब्राह्मणाःपङ्क्तिपावनाः। अतएव यमः। पङ्क्तिपावनगणनायांचतुर्वेदविदेचैवेति पठितवान्। तथा प्रकर्षेणैवउच्यते वेदार्थएभिरिति प्रवचनान्यङ्गानि तेष्वप्यग्र्याःषडङ्गविदस्तेच चतुर्वेदिनोपि पङ्क्तिपावनाः। न्यायविच्च षडङ्गविदिति पङ्क्तिपावनमध्ये यमेन पृथक्पठितत्वात्। तथा छन्दसांशुद्धदशपुरुषइत्युशनोवचनाद्दशपुरुषपर्यन्तमविच्छिन्नवेदसंप्रदायवंशजाःपङ्क्तिपावनाः १८४ ॥

( ४ ) **राघवानन्दः**। पङ्क्तिपावनाल्लक्षयति अग्र्याइति त्रिभिः। अग्र्याः सर्वसंशयव्युदासेन वेदाध्यायिनः। सर्वप्रवचनेष्विति प्रवचनंनाम वेदार्थव्याख्यानं षडङ्गानि तत्रापि कुशलाःतथा श्रोत्रियान्वयजाः छन्दसांशुद्धदशपुरुषपर्यन्तान्वयजाः ॥ १८४ ॥

( ५ ) **नन्दनः**। पूर्वेषांपात्रत्वमुक्तम्। इदानींपङ्क्तिपावनत्वमित्यपुनरुक्तिः ॥ १८४ ॥

( ६ ) **रामचन्द्रः** । पङ्क्तिपावनानाह अग्र्याइति । सर्वेषु वेदेषुऋग्वेदादिषु अस्खलिताध्ययनक्षमाअग्र्याः । च पुनःसर्वप्रवचनेषु षडङ्गाध्यापनेषु शिक्षाकल्पोव्याकरणंनिरुक्तिश्छन्दोज्योतिरिति षडङ्गानि एषांअध्यापनेषु अर्थनिर्वचनेष्वितिपाठः । वेदार्थविचारज्ञेषु अग्र्यामुख्याज्ञेयाःच पुनःश्रोत्रियान्वयजाः श्रोत्रियाणामन्वये वंशे जाताः । एते पङ्क्तिपावनाज्ञेयाः ॥ १८४ ॥

**त्रिणाचिकेतःपञ्चाग्निस्त्रिसुपर्णःषडङ्गवित् ॥ ब्रह्मदेयात्मसन्तानोज्येष्ठसामगएव च ॥ १८५ ॥**

( १ ) **मेधातिथिः** । त्रिणाचिकेताख्योवेदभागोध्वर्यूणां । पीतोदका जग्धतृणा इत्यादिस्तदध्ययनसंबन्धात्पुरुषोत्रत्रिणाचिकेतउच्यते । अन्येचत्रिणाचिकेतमधीयानानयेनाधीतंनाचिकेतचरितंसत्रिणाचिकेतः । अत्रापिलक्षणयैवपुरुषउच्यतेनचैवंमन्तव्यंतावन्मात्रेणपङ्क्तिपावनत्वं किंतर्हिसतिश्रोत्रियत्वादिगुणयोगेऽधिकोयंगुणोद्रष्टव्यःपङ्क्तिपावनहेतुतया । पञ्चाग्निविद्यानामाथर्ववेदस्योपनिषद्याम्नायते । स्तेनोहिरण्यस्येत्यादियस्याःफलंतदध्ययनसंबन्धात्पुरुषोपिपञ्चाग्निःपूर्ववत् । अन्येतुपञ्चाग्नयोयस्यत्रयस्त्रेताग्नयःसभ्यावसथ्यौचद्वौ पञ्चाग्निस्तत्रसभ्योनामयोमहासाधनस्यशीतापनोदार्थमेवबहुषुदेशेषुव्यवह्रियते । त्रिसुपर्णोमन्त्रस्तैत्तिरीयकेबाह्वृच्ये च येब्राह्मणास्त्रिसुपर्णंपठन्तीत्यादिः । षडङ्गंवेदस्तंवेत्तीतिषडङ्गवित् । ब्राह्मधर्मेणआहूयदानेनयादत्तातस्याऽनुसन्तानस्ततोजातः ।ज्येष्ठसामगश्चज्येष्ठदोहानिआरण्यकेसामानि तानिगायति सएवमुच्यते । अत्रापिसामगानेनतद्व्रतचरणेनवापुरुषइत्युच्यते ॥ १८५ ॥

( २ ) **सर्वज्ञनारायणः** । उशनह्वै वाजश्रवसः सर्ववेदसंददावित्यादिः योऽनुवाकः कठश्रुतौ पठ्यमानः नचिकेतोर्नाम्नोमुनिपुत्रस्य प्रश्नत्रयविषये प्रोच्यतइति व्युत्पत्त्या त्रिणाचिकेतस्तत्पाठतदर्थज्ञानाभ्यांब्राह्मणोपि त्रिणाचिकेतः। पञ्चाग्निरुपनिषत्पठ्यमानपञ्चाग्निविद्यावित् । केचित्तु तैत्तिरीयशाखोक्तगार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्यरूपश्रौताग्निपञ्चकवान्पञ्चाग्निरित्याहुः । त्रिसुपर्णः तैत्तिरीयशाखापठितस्य ब्रह्ममेतुमामित्यादिः येब्राह्मणास्त्रिसुपर्णंपठन्ति तेसोमंप्राप्नुवन्ति आसहस्रात्पङ्क्तिंपुनन्तीत्यन्तस्यानुवाकत्रयस्यार्थतोग्रन्थतश्चाध्येता । षडङ्गवित् शिक्षाकल्पादिवेदाङ्गषट्कस्यार्थवित् । ब्रह्मदेया ब्राह्मविवाहेन दत्तातस्याअनुसन्तानस्तत्सन्ततिः । अनुपदं ब्रह्मदेयैव यत्परंपरायां भार्येत्येतदर्थम् । ज्येष्ठसामगो ज्येष्ठसाम्नः सततगाता ॥ १८५ ॥

( ३ ) **कुल्लूकः**। त्रिणाचिकेतःअध्वर्युवेदभागःतद्व्रतंच तद्योगात्पुरुषोपि त्रिणाचिकेतः।पञ्चाग्निरग्निहोत्री। तथाच हारीतः। पवनःपावनस्त्रेता यस्य पञ्चाग्नयोगृहे।सायंप्रातःप्रदीप्यन्ते सविप्रःपङ्क्तिपावनः॥ पवनआवसथ्याग्निः पावनःसभ्योग्निः शीतापनोदाद्यर्थंबहुषुदेशेष्वपिविधीयते । त्रिसुपर्णोबह्वृचांवेदभागः तद्व्रतंच तद्योगात्पुरुषोपि त्रिसुपर्णः । षडङ्गानि शिक्षादीनि योव्याचष्टे सषडङ्गवित् सर्वप्रवचनेन षडङ्गाध्येतोक्तः । ब्रह्मदेया ब्राह्मविवाहोढा तस्याआत्मसन्तानःपुत्रः । ज्येष्ठसामानि आरण्यके गीयन्ते तेषांगाता एते षट्विज्ञेयाःपङ्क्तिपावनाइत्युत्तरश्लोकेन संबन्धः ॥ १८५ ॥

( ४ ) **राघवानन्दः** । ब्रह्मपुराणे आचिकेतीति योविश्वंतृणवत्सर्वनिःस्पृहः । त्रिणाचकेतःसगृही रागद्वेषविमत्सरइति ॥ अथवा त्रिणाचिकेतःत्रिणाचिकेतोवेदभागःतद्योगात्तत्वैव नाम्ना भवितायमग्निरिति नाचिकेतसंप्रत्युक्तेः । सोग्निश्चितोयेन सवा त्रिणाचिकेतः । पञ्चाग्निःपचनःपावनस्त्रेता यस्य पञ्चाग्नयोगृहे । सायंप्रातः प्रदीप्यन्तेसविप्रःपङ्क्तिपावनइति हारीतोक्तेः ॥ तत्र पचनोग्निरावसथ्याख्यः । पावनः सभ्यः । त्रेता गार्हपत्योदक्षिणाग्निराहवनीयश्चेति । पञ्चाग्निरसौवावलोकोगौतमाग्निरित्यादिपञ्चाग्निविद्याविदितिमेधातिथिः । त्रिसुपर्णः पितरःसप्तपूर्वेचयज्वानोभूरिदक्षिणाः । यस्येदशोमा-

तृत्वंशस्त्रिसुपर्णात सःस्मृतइति ॥ बह्वृचांवेदभागविद्वा । षडङ्गवित् शिक्षादीनांवेत्ता । ब्रह्मदेयात्मसन्तानोब्रह्मविवाहोढात्मजः । ज्येष्ठ सामगः आरण्यकेगीयमानज्येष्ठसामगाता । आज्यदोहानि गायतियःसज्येष्ठसामगइति मेधातिथिः ॥ १८५ ॥

( ५ ) **नन्दनः** । उशन्ह वै वाजश्रवसः सर्ववेदसन्ददावित्यादिभिस्त्रिभिरनुवाकैर्विहितानांनाचिकेतःसंज्ञानामग्नीनांचेता वेदिता वा त्रिणाचिकेतः । पञ्चाग्निर्गार्हपत्याद्यग्नित्रयस्य सभ्यावसथ्ययोश्चाधाता । ब्रह्ममेतुमामित्यादयस्त्रयोनुवाकाः प्रत्येकंत्रिसुपर्णसंज्ञाः तांस्त्रीनेकंवा योऽधीते सत्रिसुपर्णः । ब्रह्मदेयात्मसन्तानोब्रह्मविवाहोढायाःसुतः । ज्येष्ठसामेतितलवकाराणांप्रसिद्धिः । उदुत्यंचित्रमित्येतयोर्गीतं तद्गायी ज्येष्ठसामगः ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । त्रिणाचिकेतः यजुर्वेदैकदेशे तद्व्रताचरणेन तदध्यायी त्रिणाचिकेतः । तैत्तिरीयशाखायांप्रसिद्धः । पञ्चाग्निः सभ्यावसथ्यौ दक्षिणाग्नयस्त्रयोयस्य सन्ति स पञ्चाग्निः । त्रिसुपर्णोगरुत्मानिति श्रुतिः त्रिसुपर्णानुवाकत्रयस्याध्येता तदुपासनाभिज्ञश्च । तैत्तिरीयशाखायांषडङ्गवेत्ता । षडङ्गोवेदउच्यत इत्यमरः । ब्रह्मदेयात्मसन्तानः ब्रह्म विदउत्पन्नः च पुनःज्येष्ठसामगः सामविशेषः तद्व्रताचरणेन यस्तदधीते सःज्येष्ठसामगउच्यते ॥ १८५ ॥

**वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ॥ शतायुश्चैव विज्ञेयाब्राह्मणाःपङ्क्तिपावनाः ॥ १८६ ॥**

( १ ) **मेधातिथिः** । वेदस्यार्थंजानाति ननुचषडङ्गविदुक्तएव । अङ्गैर्विनास्वयमप्यूहतिप्रज्ञया यःसइहवेदार्थविदभिप्रेतःअथवातस्यैवायमनुवादः । पुनःपुनःक्रियते तावदर्थ ज्ञानेनविनासत्यप्यन्यगुणयोगेश्राद्धानर्हाः । प्रवक्ताव्याख्याता वेदार्थस्यैव । ब्रह्मचारी । सहस्रदः । अविशेषाद्दानेगवांसहस्रंयोदत्तवान् इदंचयुक्तं सहस्रशब्दस्यबहुनामत्वात् बहुयोददाति उदारोवेत्यर्थः । नहिगवांसंख्येयत्वेप्रमाणमस्ति । वेदेप्युक्तं गावोवैयज्ञस्यमातरइति । अविशेषनोदनायां गावःप्रतीयन्ते । शतायुर्वृद्धवयाः । सहिपरिपक्वकषायतया पावनत्वमश्नुते शतमायुरस्येतिशतायुः । केभ्योदानंप्रथमंपितृभ्यइत्येकइति । एवमर्थमेवचब्रह्मचारिग्रहणमिहव्याचक्षते । सहिपूर्ववयाभवति ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः** । वेदार्थवित् प्रागुक्तेभ्योन्यस्यापि वेदस्यैकदेशस्यार्थवित् प्रवक्ता तदर्थव्याख्याता । सहस्रं गोसहस्रं तस्य दाता । शतायुः पूर्णशतवर्षः ॥ १८६ ॥

( ३ ) **कुल्लूकः** । अनधीत्यापिवेदाङ्गानिगुरूपदेशाधिगतवेदार्थः । प्रवक्तावेदार्थस्यैव । ब्रह्मचारीप्रथमाश्रमी । सहस्रदइतिदेयविशेषानुपादानेपिगावोवैयज्ञस्यमातरइत्यादिविशेषप्रवृत्तश्रुतिदर्शनात् गोसहस्रदाता बहुप्रदोवा । शतायुःशतवर्षवयाः । श्रोत्रियायैव देयानीति नियमात्सति श्रोत्रियत्वे उक्तगुणयोगात्पङ्क्तिपावनत्वम् ॥ १८६ ॥

( ४ ) **राघवानन्दः** । वेदार्थवित् अङ्गाध्ययनंविना गुरूपदेशतइति केचित् । वस्तुतस्तु उपक्रमादिषड्भिर्लिङ्गैर्वेदार्थज्ञाता ब्रह्मवित् । एकोपि ब्रह्मविद्भुङ्क्ते जगत्तर्पयतेखिलम् । तस्माद्ब्रह्मविदे देयंयदस्ति वसु किंचनेत्युक्तत्वात् ॥ प्रवक्ता वेदार्थस्य । सहस्रदः गोसहस्रदाता शतायुः विप्रत्वे सति शतवर्षजीवी ॥ १८६ ॥

( ५ ) **नन्दनः** । प्रवक्ताऽध्यापकः । ब्रह्मचार्यृतुकालाभिगामी । निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषुवर्जयन् ब्रह्मचार्येवभवतीत्युक्तत्वात् । ऊर्ध्वरेता ऋतुकालगामीतत्त्वविच्च पङ्क्तिपावनाइतिस्मृत्यन्तरम् । सहस्रदः सहस्रस्यब्राह्मणानांभोजनदाता सहस्रसुवर्णानां वा ॥ १८६ ॥

( ६ ) **रामचन्द्रः** । वेदार्थवित् । च पुनःप्रवक्तावेदशास्त्रार्थवक्ता । ब्रह्मचारी प्रसिद्धः । सहस्रदःगोसहस्रदः । सहस्राणामन्नदोवा । च पुनः शतायुरेव चिरंजीवीत्यर्थः । एते पङ्क्तिपावनाविज्ञेयाः ॥ १८६ ॥

**पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ॥ निमन्त्रयेत त्र्यवरान्सम्यग्विप्रान्यथोदितान् ॥ १८७ ॥**

( १ ) **मेधातिथिः** । उक्तायादृशाब्राह्मणाभोजनीया इदानीमन्येतिकर्तव्यतोच्यते । पूर्वेद्युर्यदहःश्राद्धंकर्तव्यममायां-त्रयोदश्यांवा ततःपूर्वस्मिन्नहनिचतुर्दश्यांद्वादश्यांवाश्वःश्राद्धेकर्तव्ये ब्राह्मणान्निमन्त्रयेत् । अपरेद्युस्तदहरेववा । विकल्पश्चावधिनियमापेक्षः यःशक्नोतिनियमान्पालयितुंसपूर्वेद्युःअशक्तस्तदहरेवअधिकनियमानुपालनाच्चमहाफलं निमन्त्रणेकर्तव्येअध्येषणपूर्वकंव्यापारणमभ्युपगमनंवा । त्रयोऽवरायेषांतेत्र्यवराः । यद्यत्यन्तन्यूनास्तदात्रयः । शक्तौत्वयुजोयथोत्साहमित्युक्तं । अवशिष्टःपदसंघातःश्लोकपूरणार्थः । उपस्थितेप्राप्ते यथोदितान्यथोक्तान् ॥ १८७ ॥

( २ ) **सर्वज्ञनारायणः** । अपरेद्युरपरस्मिन्नहनि पूर्वेद्युरनिमन्त्रणे निश्चितपूर्वदिनब्रह्मचर्यस्य निमन्त्रणं एकोदैवएकःपित्र्यएकोमातामहस्थानइति पक्षस्त्रिपक्षः सोवरोनूचानोयेषांते त्र्यवराः अशक्तावयं कल्पः । शक्तौ त्वतोधिकाग्राह्या-इत्यर्थः । सम्यक्विधिना ॥ १८७ ॥

( ३ ) **कुल्लूकः** । श्राद्धकर्मणि प्राप्ते श्राद्धाहात्पूर्वदिने तदसंभवे श्राद्धदिनएवोक्तलक्षणान्ब्राह्मणान्सम्यगतिसत्कृत्यनिमन्त्रयेत् । त्रयोवराग्न्यूनायेषांते त्र्यवराः न तु तानेव एकैकभोजनस्याप्युक्तत्वात् ॥ १८७ ॥

( ४ ) **राघवानन्दः** । श्राद्धप्रकारत्वान्निमन्त्रितस्य नियमान्वक्तुंनिमन्त्रणाङ्गकालमाह पूर्वेद्युरिति । पूर्वेद्युः श्राद्धदिनात्पूर्वदिनेअपरेद्युः श्राद्धदिने । त्र्यवरान् त्रयोअवरानिकृष्टायत्र तान् । न तु तानेव एकैकमपीत्युक्तेः । यथोदितान-ग्र्याइत्यादिनोक्तान् ॥ १८७ ॥

( ५ ) **नन्दनः** । अथ पात्रत्वेन परिगृहीतानांनिमन्त्रणकालमाह पूर्वेद्युरिति । पूर्वेद्युः श्राद्धदिनात्पूर्वस्मिन्नहनि अपरेद्युः श्राद्धदिने ॥ १८७ ॥

( ६ ) । **रामचन्द्रः** । श्राद्धे कर्मणि उपस्थितेसति प्राप्तेसति पूर्वेद्युःरात्रौ वा अपरेद्युस्तद्दिने वा यथोदितांत्र्यवरान् त्रयोवरान्यूनाएषांत्र्यवरा एतान् निमन्त्रयेत् ॥ १८७ ॥

**निमन्त्रितोद्विजः पित्र्ये नियतात्मा भवेत्सदा॥न च छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत्॥१८८॥**

( १ ) **मेधातिथिः** । पित्र्येश्राद्धेनिमन्त्रितोनियतात्माभवेत् । संयतात्मा ब्रह्मचर्यपरिरक्षन् अन्यांश्चयमनियमानातिष्ठेत् । स्नातकव्रतादीन्पुरुषव्रतानांनृत्यगीतादिप्रतिषेधानांकर्माङ्गताविधीयते । तथाकर्तव्यं श्राद्धकृता यथासौब्राह्मणनिमन्त्रणात् प्रभृतिसंयतेन्द्रियोभवति अन्यथाश्राद्धंदुष्येत नचछन्दांसिवेदान्नाधीयीतनचवेदाक्षरोच्चारणमध्ययनंनिषिध्यते । जपस्तुसन्ध्योपासनादावप्रतिषिद्धः । यस्यतत्कर्तव्यंश्राद्धंभवेत् । पित्र्येश्राद्धेनिमन्त्रितवन्नियतात्माभवेत् । संयतात्माचसोपिनियतात्माभवेदितिपदयोजना । अतोभोक्तुः कर्तुश्चनिमन्त्रणात्प्रभृतितुल्योनियमोनध्ययनंच ॥१८८ ॥

( २ ) **सर्वज्ञनारायणः** । पित्र्यइत्युपलक्षणं दैवेपि । नियतात्मा क्रोधकामाशुचित्वशून्यः । छन्दांसि वेदान् । यस्य कर्तुः श्राद्धकार्ये ॥ १८८ ॥

( ३ ) **कुल्लूकः** । श्राद्धे निमन्त्रितोब्राह्मणोनिमन्त्रणादारभ्य श्राद्धाहोरात्रंयावन्मैथुननिवृत्तिसंयमनियमवान्स्यात् अवश्यकर्तव्यजपादिवर्जंवेदाध्ययनंच न कुर्यात् श्राद्धकर्तापि तथैव स्यात् ॥ १८८॥

( ४ ) **राघवानन्दः** । नियममाह निमन्त्रितइति चतुर्भिः । नियतात्मा मैथुनादिनिवृत्तिमान् । अक्रोधनैःशौचपरैः

सततंब्रह्मचारिभिः । भवितव्यंभवद्भिश्च मया च श्राद्धकारिणेति मन्त्रलिङ्गात्श्राद्धकर्तापि तथा स्यात् । तदहरध्ययनफलंश्राद्धोद्देश्यगामीत्याह यस्येति ॥ १८८ ॥

( ५ ) नन्दनः । नियतात्मा नियतेन्द्रियः । यःश्राद्धेनिमन्त्रितोभवेद्यःश्राद्धंकरोति सचनियतात्मा भवेत् नचाधीयीत च्छन्दांसि ॥ १८८ ॥

( ६ ) रामचन्द्रः । पित्र्ये कर्मणि निमन्त्रितःसदा द्विजोनियतात्मा भवेत् । च पुनश्छन्दांसि नाधीयीत । च पुनः यस्य गृहे श्राद्धंसतद्व्रताचरणोभवेत् । जितेन्द्रिय अध्ययनरहितः ॥ १८८ ॥

**निमन्त्रितान् हि पितरउपतिष्ठन्ति तान् द्विजान् ॥ वायुवच्चानुगच्छन्ति तथासीनानुपासते॥१८९॥**

मेधातिथिः । निमन्त्रितेन नियतात्मनाभवितव्यमित्यस्यविधेरर्थवादोयं । यस्मान्निमंत्रितान् ब्राह्मणान् अदृश्येनरूपेणपितरउपतिष्ठन्ति तच्छरीरमनुप्रविशन्ति । यथाभूतग्रहाविष्टंवायवोऽनुगच्छन्ति । यथावायुप्रमाणःपुरुषोगच्छत्यनुगच्छति तंगच्छन्तंप्राणोजहाति । एवंपितरोवायुभूताभवन्ति । तथासीनान्ब्राह्मणानुपासते । गच्छत्स्वनुगच्छन्ति उपविष्टेषूपविशन्ति निमन्त्रिताद्विजा पितृरूपाभवन्तीत्यर्थः । तस्मान्नस्वतन्त्रैर्निमन्त्रितैर्भवितव्यम् ॥ १८९ ॥

( २ ) सर्वज्ञनारायणः । निमन्त्रितान् । हीत्युक्तविधिशेषः । उपतिष्ठन्ति तिष्ठत्सु तत्समीपे तिष्ठन्ति । अनुगच्छन्ति निमन्त्रितेन साकम् ॥ १८९ ॥

( ३ ) कुल्लूकः । पूर्वनियमविधेरयमनुवादः यस्मात्तान्ब्राह्मणान्निमन्त्रितानदृश्यरूपेण पितरोधितिष्ठन्ति । प्राणवायुवद्गच्छतोऽनुगच्छन्ति तथोपविष्टेषु तेषु समीपउपविशन्ति । तस्मान्नियताभवेयुः ॥ १८९ ॥

( ४ ) राघवानन्दः । अनुगच्छन्ति निमन्त्रितान्द्विजान् आसीनांस्तानुपासते समीपेतिष्ठन्ति ॥ १८९ ॥

( ५ ) नन्दनः । निमन्त्रितानांनियतात्मत्वानध्ययनयोः कारणमाह निमन्त्रितानिति । वायुभूता वायुवद्व्यापिनोनिमन्त्रितान्ब्राह्मणान्पितरउपतिष्ठन्ति तेषांसमीपे तिष्ठन्ति गच्छतोऽनुगच्छन्ति तथासीनानुपासते । यत्कर्मनिमन्त्रिताः कुर्वन्ति तत्पितरोऽपि कुर्वन्ति तस्मादनियतात्मत्वमध्ययनायासित्वंचवर्जनीयमित्यभिप्रायः ॥ १८९ ॥

( ६ ) रामचन्द्रः । वायुभूताःपितरः द्विजाननुगच्छन्ति ॥ १८९ ॥

**केतितस्तु यथान्यायंहव्यकव्ये द्विजोत्तमः ॥कथंचिदप्यतिक्रामन् पापः सूकरतांव्रजेत् ॥१९०॥**

( १ ) मेधातिथिः केतितउपनिमन्त्रितः । हव्येकव्येदैवेपित्र्येच । अङ्गीकृत्यनिमन्त्रण मभ्युपगम्यश्राद्धभोजनं । यदिकथंचिदतिक्रामतिभोजनकाले नसंविधीयते ब्रह्मचर्यंचनरक्षति तदासूकरतांगच्छति । सब्राह्मणःकथंचित्कामाद्विस्मृत्यवा । यथान्यायमितिवृत्तपूरणं । अन्येत्वाहुः प्रार्थ्यमानस्यानभ्युपगमएवातिक्रमः । तथाचश्राद्धकल्पेउक्तं । अनिन्दितेनामन्त्रितोनातिक्रामेदिति तच्चायुक्तं । लिप्सयाप्रवृत्तिःश्राद्धे नपुनःशास्त्रतः । तत्रसत्यांलिप्सायांयदिनाङ्गीकरोति तदाकोदोषः । १९० ॥

( २ ) सर्वज्ञनारायणः । केतितोनिमन्त्रितः । कथंचिदन्यनिमन्त्रणादिनापि अतिक्रामन् तस्य गृहेनश्नन् ॥ १९० ॥

( ३ ) कुल्लूकः । हव्यकव्ये यथाशास्त्रंनिमन्त्रितोब्राह्मणःस्वीकृत्य केनापि प्रकारेण भोजनमकुर्वाणः तेन पापेन जन्मान्तरे सूकरोभवति ॥ १९० ॥

( ४ ) राघवानन्दः । अतआह केतितइति । केतितोनिमन्त्रितः। अतिक्रामन् मैथुनादिनिषिद्धाचरणेन निमन्त्रणंस्वीकृत्य परित्यजन्वेति केतितइत्युपलक्षणंनिमन्त्रयितुः । केतनंकारयित्वातुयोतिपातयतेद्विजः । ब्रह्महत्यामवाप्नोति

शूद्रयोनौ च जायते ॥ एतस्मिन्नेनसि प्राप्ते नियतंशंसितव्रतः । यतिचान्द्रायणंचीर्त्वा ततःपापात्प्रमुच्यतइति यमोक्तेः ॥ १९० ॥

( ५ ) **नन्दनः** केतितोनिमन्त्रितः । कथंचिद्धेतुनाऽहेतुनेत्यर्थः । हव्यकव्येऽतिक्रामञ्छ्राद्धपरित्यागंकुर्वन्नित्यर्थः ॥ १९० ॥

( ६ ) **रामचन्द्रः** । निमन्त्रितोद्विजःकथंचिदपि विषयानतिक्रामन्विषयैराक्रान्तःस पापःशूकरतांव्रजेत् ॥ १९० ॥

**आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते ॥ दातुर्यद्दुष्कृतं किंचित्तत्सर्वंप्रतिपद्यते ॥१९१॥**

( १ ) **मेधातिथिः** । वृषलीशब्दःस्त्रीमात्रोपलक्षणार्थः सामान्येनब्रह्मचर्यस्यविधानात् । अतोब्राह्मण्यपिवृषल्येव । वृषस्यन्तीचालयतिभर्तारमितियौगिकत्वंदर्शयति अतोयमर्थः । भोजनमङ्गीकृत्य तदाहर्यात्स्त्रियासहमोदते रमते तयासह सुरतसंभोगेच्छयासंलापालिङ्गनाद्यपियोजनयति तस्यायंदोषः । दातुःश्राद्धस्यकर्तुः यद्दुष्कृतंपापंकिंचित्तत्सर्वंतस्मिन्सङ्क्रामति । अदृष्टफलयोगमात्रमनेननिर्दिश्यते । अन्यथायत्रदातापुण्यकृत्तत्रनकश्चिद्दोषःस्यात् । मोदनंहर्षोत्पत्तिः तेन संलापालिङ्गनाद्यपिनकर्तव्यम् ॥ १९१ ॥

( २ ) **सर्वज्ञनारायणः** । वृषल्या शूद्रया मोदतेरत्यनुगुणं चुम्बनादिकर्माणि कुरुते । ब्राह्मण्यातु सह न तादृशोदोषइति तात्पर्यम् । दातुर्यावद्दुष्कृतं तावत् नतु तदेवान्यकृतस्यान्यत्राप्रतिसंक्रमात् ॥ १९१ ॥

( ३ **कुल्लूकः** । नियतात्मा भवेत्सदेत्यनेन मैथुननिषेधे कृतेपि वृषलीगमनस्याधिकदोषज्ञापनायाह आमन्त्रितस्त्विति । वृषली शूद्रा तत्रमूढत्वात्[1]श्राद्धेनिमन्त्रितःसन्योवृषल्यासार्धंस्त्रीपुंसधर्मेण सुरतादिना रमते सदातुर्यत्पापंतत्प्राप्नोति पापोत्पत्तिमात्रंविवक्षितम् । अन्यथा दातरिअपापे पापंन जायते । नचेदंदातुःप्रायश्चित्ततया विहितंयेनासौ पापान्मुच्यते । मेधातिथिगोविन्दराजौ तु सामान्येन ब्रह्मचर्यस्य विधानात्वृषस्यन्ती चपलयतिभर्त्तारमिति योगाश्रयणेन श्राद्धभोक्तुरूढा ब्राह्मण्यपि वृषल्यभिमतात्रेत्याहतुः ॥ १९१ ॥

( ४ ) **राघवानन्दः** । किंच आमन्त्रितइति वृषस्यन्तीभर्तारंवृषली ब्राह्मण्यपीति ॥ १९१ ॥

( ५ ) **नन्दनः** । वृषल्या स्वभार्यया शूद्रया वृषलीगमनमुत्तरासामप्युपलक्षणम् ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । द्विजः श्राद्धे आमन्त्रितःसन्वृषल्या सह रात्रौ मोदते दातुःश्राद्धकर्तुःयद्दुष्कृतंपापंतत्सर्वंप्रतिपद्यते ॥ १९१ ॥

**अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ न्यस्तशस्त्रामहाभागाः पितरः पूर्वदेवताः ॥ १९२ ॥**

( १ ) **मेधातिथिः** । अक्रोधनाःक्रोधवर्जिताः शौचपराः शौचंशुद्धतामृद्वारिभ्यां प्रायश्चित्तेनान्तःशुध्यावा । सततंशुद्धेर्विशेषणं । तेननिष्ठीवनादावाचमनादितत्क्षणमेवकर्तव्यं । ब्रह्मचारिणःस्त्रीसंभोगंपरिहरति । न्यस्तशस्त्राःन्यस्तंत्यक्तंशस्त्रंयैः शस्त्रग्रहणंदण्डपारुष्योपलक्षणार्थं महाभागाःऔदार्यधनित्वादिगुणयोगोमहाभागता । यत्एवंविधंपितॄणांरूपंब्राह्मणानाविशन्ति अतस्तैस्तद्रूपधारिभिर्भवितव्यमित्यर्थवादेनायमर्थोविधीयते । पूर्वंपूर्वदेवताःपितरोनाम कल्पान्तरे तेप्येते देवताएवेतिस्तुतिः । पूर्वकालंपितॄणामर्चनीयत्वात्पूर्वग्रहणम् ॥ १९२ ॥

( २ ) **सर्वज्ञनारायणः** । अक्रोधनाइत्यादिना यादृशाःपितरस्तादृशैर्ब्राह्मणैर्दात्रा च भवितव्यमिति दर्शितम् । पूर्वदेवताः देवताभ्योपि पूर्वभूताः ॥ १९२ ॥

---

[1] मूढत्वात्=ऊढत्वात् ( अ )

( ३ ) **कुल्लूकः** । क्रोधरहिताबहिःशौचंमृद्वारिभ्यामंन्तःशौचंरागद्वेषादित्यागस्तद्युक्ताःसर्वदास्त्रीसंयोगादिशून्याः त्यक्तयुद्धाःदयाद्यष्टगुणयोगोमहाभागता तद्वन्तःअनादिदेवतारूपाः पितरस्तस्माक्रोधादिरहितेन भोक्त्राकर्त्रा च भवितव्यम् ॥ १९२ ॥

( ४ ) **राघवानन्दः** । पितॄणांविशिष्टजन्मख्यापनार्थंतान्विशिषन्नुपचारनियमेन सहोत्पत्तिंप्रतिजानीते । अक्रोधनाइति द्वाभ्यां । शौचपराः शुद्धमानसाः । न्यस्तशस्त्राः त्यक्तयुद्धाः । महानर्घ्योभागोयेषांते । पूर्वदेवतादेवतानांपूर्वतनाः ॥ १९२ ॥

( ५ ) **नन्दनः** । पितरोनाम केचिद्देवताविशेषा न प्रेताः पितृपितामहादयइत्याह अक्रोधनाइति । न्यस्तशस्त्रास्त्यक्तहिंसाः । महाभागाः महात्मानः । पूर्वदेवताः देवताभ्यःपूर्वे ॥ १९२ ॥

( ६ ) **रामचन्द्रः** । पितॄणांस्वरूपमाह अक्रोधनाइति । अक्रोधनादयः पितरःपूर्वदेवताः ॥ १९२ ॥

**यस्मादुत्पत्तिरेतेषां सर्वेषामप्यशेषतः ॥ ये च यैरुपचर्याः स्युर्नियमैस्तान्निबोधत ॥ १९३ ॥**

( १ ) **मेधातिथिः** । यएतेषांपितॄणामुत्पत्तिर्येचपितरोयैरुपचर्याब्राह्मणेनसोमपाः क्षत्रियेणहविष्मन्तः इत्यादितत्सर्वमप्यशेषतंइदानीमुच्यमानंनिबोधत बुध्यध्वं । नियमैरित्यनुवादः । पूर्वमेवविहितत्वात्नियतात्माभवेदिति । बहुवचनंबहुत्वान्नियमानाम् ॥ १९३ ॥

( २ ) **सर्वज्ञनारायणः** । यस्माद्येभ्यउत्पत्तिः । यैः साध्यादिभिः । यैश्च नियमैरुपचर्याः ॥ १९३ ॥

( ३ ) **कुल्लूकः** । एषांसर्वेषांपितॄणांयस्मादुत्पत्तिर्ये च पितरोयैर्ब्राह्मणादिभिर्यैर्नियमैःशास्त्रोक्तकर्मभिरुपचरणीयाभवेयुःतान्साकल्येन शृणुत ॥ १९३ ॥

( ४ ) **राघवानन्दः** । ये यत्प्रभावाये यत्स्वरूपाः सोमसदइत्याद्यायैः साध्यादिभिरर्च्यायैरजतपात्रमुन्यन्नकालशाकाद्यैर्नियमैःदेवपूर्वत्वव्रतचर्यादिभिर्वा उपचर्याः पूज्याःस्युस्तान्निबोधतेत्यन्वयः ॥ १९३ ॥

( ५ ) **नन्दनः** । ये पितरोयैर्यज्ञविशेषैर्यैः नियमैः करणैः उपचर्याः पूज्यास्तान्नियमविशेषान्पितॄंश्च निबोधत ॥१९३॥

( ६ ) **रामचन्द्रः** । यस्मात्कारणादेतेषांसर्वेषांपितॄणामुत्पत्तिः । अशेषतो निबोधत । च पुनः ये पितरो यैर्देवादिभिर्नियमैरुपचर्याःसेव्याःस्युस्तान्निबोधत ॥ १९३ ॥

**मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ॥ तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥१९४॥**

**मेधातिथिः** । हिरण्यगर्भःप्रजापतिः तस्यपुत्रोहैरण्यगर्भोमनुः । तथाचोक्तंप्रथमाध्याये । एवंसर्वंससृष्ट्वेदंमांचेति । तस्यमनोर्येमरीच्यादयःपुत्राः अभ्यङ्गिरसावित्यादयस्तेषामृषीणांयेपुत्रास्तएतेपितृगणाः । ननुचपित्रादयःसर्वस्यात्मीयपितरः एवंहिचोदितःपित्रेपितामहायप्रपितामहायपिण्डान्निर्वपेत् । तथाअतऊर्ध्वंपुत्रास्त्रिभ्योदद्युरिति । तत्रकिमिदमुच्यते ऋषीणांपुत्राःपितरः सोमपानामविप्राणामितिनचवचनविकल्पःशक्यःप्रतिपत्तुं सोमपेभ्योदद्यात्पितृपितामहेभ्योवेति । यतउत्पत्तौपुत्रेणकर्तव्यमितिश्रूयते । संबन्धिशब्दश्चपुत्रशब्दः । तथापितायस्यतुवृत्तःस्यादिति । तस्माद्वक्तव्योस्यप्रकरणस्यार्थउच्यते । स्तुतिरियंपूर्वविधिशेषभूता । नात्रतेषांसंप्रदानताश्रुता । ननुचोपचर्याइतिविधिरस्ति । नायंचरतिः सामान्यक्रियारूपोविधिविषयोभवितुमर्हति । उपचारोनामकश्चिद्दानयागादिवद्भेदेनप्रतीयते । प्रायेणान्वयंकरोति । यत्संनिहितक्रियापरतयाप्रयुज्यते संन्निहितंचश्राद्धं तत्रवसिष्ठसंप्रदानकंविहितंनशक्यंपुनर्विधातुं विधेयत्वेननसन्धिरस्ति । असंनि-

हितस्यनचरतिर्वाचकः योपिलोकेगुरवउपचर्याइतिप्रयोगस्तत्रापिशुश्रूषालक्षणार्थः पादधावनादिःप्रतीयते सोपियथोदितानांपितॄणांनसंभवति प्रकृत्यैकवाक्यतयावार्थवच्चोपपत्तेर्नार्थान्तरकल्पनापिसंभवति । यदिचसोमपादयोयथावर्णश्राद्धेदेवतात्वेनाभिप्रेताःस्युस्ततोभिजनवर्णनमनुपयोगिस्तावकत्वेतुसर्वमुत्पद्यते । यःकश्चित्पितृद्वेषात्पित्र्येकर्मण्युपहतबुद्धिरनादरवान्स्यात्तस्यप्रवृत्त्यर्थमिदमारभ्यते । मैवंमंस्थाःमृतमनुष्यरूपाःपितरोयेननतर्पिताःश्राद्धेकंदोषंकरिष्यन्ति । तर्पितावाकंगुणमिति । यतएतेमहाप्रभावाःसर्वस्यजगतःप्रभुर्हिरण्यगर्भस्तस्यपुत्रोमनुः तस्यैतेपौत्राअतएवऋषीणांचेत्युच्यते । नमनोर्येकेचिदन्येपुत्राः किंतर्हिऋषयस्तेचप्रथितप्रभावा ऋषयश्चप्रथितप्रभावामरीच्यादयः तेषांपुत्राःपितरोबहुविधाश्चप्रतिपत्तारोयएतादृशेभ्योर्थवादवाक्येभ्यःप्रवर्तन्तेतराम् येचव्याचक्षते । सोमपादिदृष्टिः पितृषुकर्तव्येति तेप्रमाणाभावादुपेक्षणीयाः नहियथादित्येब्रह्मदृष्टिः समुद्दिश्यते एवमिहतादृशंकिंचनास्ति । येप्याहुः गृहीत्वागोत्रनामनीपितृभ्योदद्यादिति तच्चैतद्गोत्रंसोमपाःइत्यादिवर्णभेदेन । तदप्ययुक्तं । नामनिर्देशोयंनगोत्रनिर्देशः सोमपानामितिश्रवणात् गोत्रनामधेयत्वेतिनामशब्दउत्पद्यतएवेतिचेत् । एवंतर्हिगोत्रनिर्देशोवैयधिकरण्यंस्यात् । पितॄणांसोमपागोत्रमिति नतुपितरः सोमपाइति । अथाभेदोपचारेणगोत्रसन्तानव्यपदेशोदृष्टइत्युच्यते । यथाबभ्रुर्मन्दुरिति । अत्रोच्यते । इदमिहनिरूप्यंकिमेतद्गोत्रंनामआदिपुरुषःसंज्ञाकारी विद्यावित्तशौर्यौदार्यादिगुणयोगेनख्याततमो येनकुलंव्यपदिश्यते पुत्रिकानुलिङ्गाइति एवंतर्हिसर्वेषामेवब्राह्मणादीनामवान्तरगोत्रभेदाःसन्तीतिस्मरन्तिच । यादृशंपुरुषंतत्सन्तानजाःपुरुषावयममुष्यकुलेजाताइत्येतत्त्वेनैवव्यपदेशोयुक्तः । नहिसोमपावयमितिकश्चिद्गोत्रत्वेनसोमपान्स्मरतियथाभृगुर्गर्गगालवान्ब्राह्मणानांचतैरेवगोत्रव्यपदेशोयुक्तः । तानिहिमुख्यानिगोत्राणिरूढिरूपेणतत्रगोत्रशब्दःप्रवर्तते । नहितेषांगोत्रत्वेएतल्लक्षणमस्ति । आदिपुरुषःसंज्ञाकारीगोत्रमिति अनादित्वादेतद्गोत्राणांब्राह्मणादिजातिवत् । नहिपराशरजन्मतऊर्ध्वंपाराशरव्यपदेशः । केषांचिद्ब्राह्मणानामेवंसतिआदिमत्तावेदस्यप्रसज्यते । नित्यत्वादत्रव्यपदेशस्योदकतर्पणादौतदेवगोत्रंश्रयितव्यं येतुसंज्ञाकारिणस्तेननित्याःइदानींतनानित्याइत्येवंभवत्यनित्यानांसोमपानामुपादानंवैदिकेकर्मणियुक्तं । अतोब्राह्मणैर्यथागोत्रंगार्ग्यायगर्गगोत्रायवात्स्वधाइदंवोनमोस्त्विवति एवमादिशब्देनोद्देशंकृत्वा ततोनामोच्चार्यदानादिकर्तव्यं । क्षत्रियादीनांनैतादृशोगोत्रव्यवहारोविद्यते । नहियथाब्राह्मणोगोत्रंनियतंस्मरति एवंक्षत्रियादयः तस्मात्तेषांलौकिकमेवगोत्रंआदिपुरुषः संज्ञाकारीख्याततमइति । अतस्तेनगोत्रेणश्राद्धादौव्यपदिश्यन्ते । आदिमत्तापिनामधेयेनैव नतुतेषांक्षत्रियाणांहविर्भुगित्यादिगोत्रतयाश्राद्धादौव्यपदेशमर्हन्ति । येप्याहुरज्ञातपित्रादिनामकास्तेषामेतैःशब्दैःश्राद्धादिबोधनेसोमपानाह्वयामिसोमपेभ्यःस्वधेतिएतदपिनसम्यक् उक्ताहिनामान्यविद्वांस्ततःपितामहप्रपितामहेतियथाचार्थवादतयानप्रकृतशेषत्वेनार्थवत्तालभ्येततएवकल्पाआश्रियेरन् नत्वेकवाक्यतयान्वयेसंभवति वाक्यभेदकल्पनेनार्थोन्याय्यः ॥ १९४ ॥

( २ ) **सर्वज्ञनारायणः** । मनोर्विराजस्तथा तस्यैव मनोर्ये मरीच्यादयः सुतास्तेषांऋषीणांच पुत्राः पितृगणाः पितृशब्दवाच्याः सङ्घाः ॥ १९४ ॥

( ३ ) **कुल्लूकः** । हिरण्यगर्भापत्यस्य मनोर्ये मरीच्यादयःपुत्राःपूर्वमुक्ताःमरीचिरत्र्यङ्गिरसावित्यादिना तेषामृषीणांसर्वेषांसोमपादयःपितृगणाःपुत्रामन्वादिभिःस्मृताः ॥ १९४ ॥

( ४ ) **राघवानन्दः** । तत्रादौ विशिष्टाद्युत्पत्तिप्रकारमाह मनोरिति । हिरण्यगर्भापत्यस्य मनोः । पितृगणाः सोमसदादयः । अहंप्रजाःसिसृक्षुस्त्वित्यत्रोक्तामरीच्यादयऋषयः ॥ १९४ ॥

( ५ ) **नन्दनः** । हैरण्यगर्भस्यहिरण्यगर्भगोत्रापत्यस्य । ऋषीणांपुत्राइति प्राचुर्याभिप्रायमेतत् । तेन विराट्सुताइत्यनेन न विरोधः ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । हिरण्यगर्भःप्रजापतिस्तस्य पुत्रो हैरण्यगर्भोमनुस्तस्य पुत्रायेमरीच्यादयऋषयस्तेषांमरीच्यादीनामृषीणांपुत्राःपितृगणाःस्मृताउक्ताः ॥ १९४ ॥

**विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः ॥ अग्निष्वात्ताश्च देवानां मारीचालोकविश्रुताः ॥ १९५ ॥**

( १ ) **मेधातिथिः** । श्राद्धार्थवादाअमीश्लोकाः अशेषेणैकवाक्यत्वात् नहिसाध्यानांपितरः श्राद्धसंप्रदानंशिष्यन्ते। देवतात्वात्साध्यानांचदेवतानांकर्मस्वधिकारोन नियोज्यत्वाभावात् । नहिदेवतानियोक्तुंशक्यते देवतात्वहानिप्रसंगात् अधिकारेसतिप्रतिपत्तव्यंकर्तृत्वं । कर्तृत्वेचकुतः संप्रदानभावः नचान्यद्देवतारूपं । विराजःसुताः विराट्सुताः सोमसदोनामतेसाध्यानांपितरः ईदृशमेवपित्र्यंकर्मावश्यंकर्तव्यं । यत्साध्याःसर्वेदेवाः कृतकरणीयाःअपि पितॄनर्चयन्ति । अग्नौपक्वंचरुपुरोडाशादिकंअदन्त्यतः अग्निष्वात्तदेवतानामिन्द्राग्न्यादीनांपितरः मरीचेर्जातामारीचाः लोकविश्रुताः प्रसिद्धाः ॥१९५॥

( २ ) **सर्वज्ञनारायणः** । अत्र सोमसदोमनोर्विराजः पुत्राः साध्यैः श्राद्धे पूज्याः । इतरे तु वक्ष्यमाणामनुपुत्रपुत्राः ॥ १९५ ॥

( ३ ) **कुल्लूकः** । विराट्सुताःसोमसदोनाम साध्यानांपितरःअग्निष्वात्तामरीचेःपुत्रालोकविख्यातादेवानांपितरः ॥१९५

( ४ ) **राघवानन्दः** । तत्र के किंनामानः के कस्माज्जाताः केषांच के पितरः कैर्वा केअर्च्याइत्यपेक्षायामाह विराडितिपञ्चभिः । विराट्सुताइति जन्मसोमसद्इति नामानि साध्यानांपितरइतितेषामाराध्याःएवमग्निष्वात्तानामतः मरीचेरपत्यानि जन्मतः देवानांपितरः आराध्याइति शेषः ॥ १९५ ॥

( ५ ) **नन्दनः** । प्रसूतौ विशेषंश्लोकत्रयेणाह विराट्सुताइति । हैरण्यगर्भस्यमनोःपिता विराट् । साध्यानांपितरः साध्यैर्यष्टव्याः पितरः ॥ १९५ ॥

( ६ ) **रामचन्द्रः** । विराट्सुताःसोमपुत्राःसोमलोकनिवासिनः । साध्यानांपूर्वकल्पाधिकारिणांदेवानांपितरःस्मृताः । मरीच्योत्पन्नःमारीच्यः । अग्निष्वात्तसंज्ञाःपितरः । लोकविश्रुताःप्रसिद्धाः ॥ १९५ ॥

**दैत्यदानवयक्षाणांगन्धर्वोरगरक्षसाम् ॥ सुपर्णकिन्नराणां च स्मृताबर्हिषदोत्रिजाः ॥ १९६ ॥**

( १ ) **मेधातिथिः** । सर्वएतेदैत्यादयः शास्त्रानधिकृताःअर्थवादार्थं संकीर्त्यन्ते तेषांचस्वरूपमितिहासप्रसिद्धं । सुपर्णापक्षिविशेषाः किंनराअश्वमुखास्तिर्यञ्चः एवंविधमेतत्पित्र्यंकर्म । यद्दैत्यदानवरक्षांसियज्ञविध्वंसकराण्यपिनातिवर्तन्ते तथा तिर्यञ्चोप्यसंज्ञास्मृतिकाः । अत्रेर्जाताबर्हिषदोनाम ॥ १९६ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रिजाअत्रिपुत्राः ॥ १९६ ॥

( ३ ) **कुल्लूकः** । दैत्यादीनांप्रथमाध्यायोदितभेदानामत्रिपुत्राबर्हिषदोनाम पितरः स्मृताः ॥ १९६ ॥

( ४ ) **राघवानन्दः** । एवंदैत्याद्यष्टानां । बर्हिषदः मनोः पुत्राः ॥ १९६ ॥

( ६ ) **रामचन्द्रः** । अत्रिजाबर्हिषदसंज्ञाःपितरो दैत्यादीनांपूज्याःस्मृताः ॥ १९६ ॥

**सोमपानाम विप्राणां क्षत्रियाणां हविर्भुजः॥वैश्यानामाज्यपानाम शूद्राणां तु सुकालिनः॥१९७॥**

।( १ ) **मेधातिथिः** । उक्तार्थः प्रागेवायंश्लोकः सोमंपिबन्तिज्योतिष्टोमादिदेवतास्त्विन्द्रादयः हविर्भुजश्चरुपुरोडाशादिदेवताआज्यपाआघारावाज्यभागप्रयाजादिदेवताः सुकालिनः । कालयंति अपवर्जयन्तिकर्मेतिसुकालिनः । कर्मापवर्गहोमदेवताअयाश्चाग्नेस्यनभिशस्तीश्चेत्यादिविहिताः ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः** । विप्राणांपितरइत्यन्वयः ॥ १९७ ॥

( ३ ) **कुल्लूकः** । सोमेति । ब्राह्मणप्रभृतीनांचतुर्णांवर्णानांसोमपाप्रभृतयश्चत्वारः पितरः स्मृताः ॥ १९७ ॥

( ४ ) **राघवानन्दः** । सोमपाः नामतः विप्राणां पितरः आराध्याः । हविर्भुजनामानःक्षत्रियाणांपितरः आराध्याइतिशेषः । तथा वैश्यानां पितरआज्यपाः नामतः । वसिष्ठपुत्राःशूद्राणांपितरइति संक्षेपः ॥ १९७ ॥

( ६ ) **रामचन्द्रः** । सोमपानाम पितरःलोकेविप्राणांपूज्याःस्मृताः । हविर्भुजसंज्ञाःपितरःक्षत्रियाणांपूज्याःस्मृताः । आज्यपानाम पितरोवैश्यानांसुकालिनसंज्ञाःशूद्राणांपूज्याःस्मृताः ॥ १९७ ॥

**सोमपास्तु कवेः पुत्राहविष्मन्तोङ्गिरःसुताः॥ पुलस्त्यस्याज्यपाः पुत्रावसिष्ठस्य सुकालिनः॥१९८॥**

( १ ) **मेधातिथिः** । हविर्भुजएवहविष्मन्तः । कविर्भृगुःकाव्यंवदन्त्युशनसमितिस्मरन्तिभार्गवंचयथैतादेवताऋषीणांपुत्राएवंत्वदीयाश्चापिपितरोदेवतारूपाएवेतिमावमंस्थाः ॥ १९८ ॥

( २ ) **सर्वज्ञनारायणः** । हविष्मन्तोहविर्भुजः । कवेर्भृगोः ॥ १९८ ॥

( ३ ) **कुल्लूकः** । कवेर्भृगोः सोमपाः पुत्राहविर्भुजएव हविष्मन्तः । अङ्गिरसःपुत्राः आज्यपाःपुलस्त्यसुताः । सुकालिनोवसिष्ठसुताः ॥ १९८ ॥

( ४ ) **राघवानन्दः** । सोमपादिचतुर्णांजनकानाह सोमेति । हविष्मन्तोहविर्भुजः ॥ १९८ ॥

( ५ ) **नन्दनः** । सोमपादयः केषांपुत्राइत्यपेक्षायामाह सोमपास्त्विति । कवेर्भृगोः । हविष्मन्तइतिहविर्भुजांनामान्तरम् ॥ १९८ ॥

( ६ ) **रामचन्द्रः** । सोमपानाम कवेर्भृगोःपुत्राः । हविष्मन्तसंज्ञाःपितरअङ्गिरःसुताः । पुलहस्य पुत्राआज्यपानामसंज्ञाःपितरः । वसिष्ठस्य पुत्राःकालिनसंज्ञाःपितरोभवन्ति ॥ १९८ ॥

**अग्निदग्धानग्निदग्धान्काव्यान्बर्हिषदस्तथा ॥ अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दिशेत् ॥ १९९ ॥**

**[ अग्निष्वात्ताहुतैस्तृप्ताः सोमपास्तुतिभिस्तथा ॥ पिण्डैर्बर्हिषदः प्रीताः प्रेतसुद्विजभोजने॥१॥* ]**

( १ ) **मेधातिथिः** । अनग्निदग्धःसोमःनह्यग्निनातस्यपाकोस्ति तेनयादेवताइज्यन्तेताअप्यनग्निदग्धाः समृद्धास्तद्गुणतउच्यन्ते । एवमग्निदग्धानिचरुपुरोडाशादीनिहर्वीषि अग्निनापच्यन्ते । तैर्यादेवताइज्यन्तेताअग्निदग्धाः पूर्ववदेवमभिसंबन्धः क्रियते येअग्निदग्धाउच्यन्ते तानग्निदग्धान्निर्दिशेत् । येअनग्निदग्धास्तान्सोमपानेवनिर्दिशेत् । एवंकाव्यान्बर्हिषदइतिकवेः-

---

( १९८ ) पुलस्त्यस्य=पुलहस्य ( मेधा० )

( १९९ ) बर्हिषदस्तथा=बर्हिषदोत्रिजान् ( मेधा० )

पुत्राः काव्यास्तेचसोमपास्तुकवेः पुत्राइत्युक्ताबर्हिषदोऽत्रिजा उक्ताः। मायमेवकारोयथादेशंद्रष्टव्यः तथाह्ययमर्थःस्यात्।विप्राणामेवेतिपितरोनक्षत्रियादीनां। तच्चप्रागुक्तेनविरुध्यते नह्येतेवर्णभेदेनपितृत्वेनोक्ताः। येनतस्मादाच्छिद्यब्राह्मणादिसंबन्धिनः-पितृत्वेनोक्ता येनतेषामुच्यन्ते तस्मादपकृष्यएवकारोऽग्निष्वात्तास्तेचसोम्यानेवनिर्दिशेदित्येवंसंबन्धनीयः । विप्रग्रहणमनुवादत्वात्क्षत्रियादिप्रदर्शनार्थं । एवंनामानश्चैतेपितरोवेदेश्रूयन्ते । अग्निष्वात्ताःपितरोयेऽग्निदग्धायेअनग्निदग्धाइतितान्मन्त्रानुदाहृत्यविवृणोति। अथचैवंसंबन्धःक्रियते यएतैःशब्दैःपितरउच्यन्ते तान्विप्राणामेवनिर्दिशेत् स्वपितॄन्। नचशब्दभेदेनार्थभेदशङ्काकर्तव्याविप्रग्रहणमधिकार्युपलक्षणार्थंप्राधान्यात् प्रधानेनह्युपलक्षणंभवति राजागच्छतीति ॥ १९९ ॥

( २ ) **सर्वज्ञनारायणः** । अग्निदग्धादीनपि विप्राणामेव पितॄन्निर्दिशेत्। अत्र काव्यपदंदृष्टान्तोपदर्शकम्। यथा कवेर्भृगोःपुत्राविप्राणांतथाबर्हिषदोगन्धर्वादिपितरस्तथा सोम्याः सोमसदः साध्यपितरोअग्निष्वात्ताश्च देवपितरोन्येचाग्निदग्धाऽनग्निदग्धवत् काव्यनामानस्त्रयःपितरोनिर्दिष्टसंबन्धिनोविप्राणामेवार्चनीयाः। न तु क्षत्रियादीनामिति। सदृशानांवर्णान्तराणामेव कारणव्यवच्छेदोन तु गन्धर्वादीनांयेषांवात्राग्निदग्धादीनां त्रयाणांजनकानोक्तास्ते मरीच्यत्रिभृग्वङ्गिरः पुलस्त्यवसिष्ठव्यतिरिक्तानांपुलहादीनांमनुसुतानां पुत्राइति ग्राह्यम्। अत्र सोमपाइतिं सोमपानकारिणइत्युच्यन्ते ते च ऊमावैपितरःप्रातः सवनऊर्वामाध्यन्दिने काव्यास्तृतीयसवनइति श्रुतावुक्ताः सोमसदः। सोम्याइति स्तुतेभ्योन्येपि सोमयागे शस्त्रमभ्यशंसनीयपित्र्यमिवोभयभागिनः। एवंबर्हिषदोदर्शादीष्टिषुतत्तद्भागवन्तः । एवमन्येष्वपि निरुक्तिः पुराणादिदर्शनेनोन्नेया ॥ १९९ ॥

( ३ ) **कुल्लूकः** । अग्निदग्धानग्निदग्धकाव्यबर्हिषदग्निष्वात्तसौम्याख्यान्परान्पितॄन्विप्राणामेव जानीयात् ॥ १९९ ॥

( ४ ) **राघवानन्दः** । तत्रैव विशेषान्तरमाह अग्निदग्धेति। कविपुत्रानग्निदग्धादीन अपरान्बर्हिषदः। अग्निष्वात्ताः। सोमपाः पितरोविप्राणामेवजानीयात् सोमपानामेव नामभेदाअग्निदग्धेत्यादीनीतिमेधातिथिः ॥ १९९ ॥

( ५ ) **नन्दनः** नकेवलंसोमपाएव ब्राह्मणैर्यष्टव्याः । किंतु सर्वेऽपिते। सोमसदादयइत्याह अग्नीति। अग्निदग्धाइत्यादीनि समानांपितृगणानांनामान्तराणि । तत्र काव्याइति सोमपानामुपादानंतेषांकविपुत्रत्वात्। बर्हिषदोऽग्निष्वात्ताश्च स्वनाम्नैवोपात्ताः ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । अनग्निदग्धान्काव्यान्काव्यनाम्नःपितॄन्बर्हिषदसंज्ञान्अग्निष्वात्तसंज्ञान्सौम्यान्सोमसंज्ञान्एतान्पितृगणान्विप्राणामेव निर्दिशेत् ॥ १९९ ॥

**यएते तु गणामुख्याः पितॄणां परिकीर्तिताः ॥ तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम् ॥२००॥**

( १ ) **मेधातिथिः** । एतेतुमुख्यागणाःसोमपादयःपितॄणां तेषामपिपुत्रपौत्राःअनन्ताविद्यन्ते तेपिपितरएव। अस्मान्नियमवचनादेतद्गम्यते । नसोमपादयउद्देश्या यदिह्येतेषामपिपुत्रपौत्राःपितरस्तेह्युद्देश्यास्युर्नचतेषांकिंचिन्नामधेयमाम्नातं तस्मादर्थवादतैवावसीयते। गवाश्वप्रभृतित्वात्पुत्रपौत्रमित्येकवद्भावः। अनन्तकमपरिमितं स्वार्थेकः ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः** । तेषांपुत्रपौत्रमनन्तकंतस्य च स्वस्वपित्रर्थकाएवार्चकाः ॥ २०० ॥

( ३ ) **कुल्लूकः** । यएते प्रधानभूताःपितृगणाउक्तास्तेषामपीह जगति पितरएव पुत्रपौत्राअनन्ताविज्ञेयाः। पुत्रपौत्रमिति गवाश्वप्रभृतीनिचेत्येकवद्भावः। एतच्छ्लोकसूचिताएव वरोवरेण्यइत्यादयोऽन्येऽपि पितृगणामार्कण्डेयादिपुराणादिषु श्रूयन्ते ॥ २०० ॥

( ४ ) **राघवानन्दः** । पूर्वदेवताइत्युक्तंतत्तुसाधुवादमात्रमित्याह यइतिद्वाभ्यां ॥ २०० ॥

( ५ ) **नन्दनः** । इदानींतेषांपितृत्वमुपपादयति यएतेत्विति । इहजगति अनन्तकमपर्यन्तं सर्वमित्यर्थः । यत्प्राणिजातंतत्तेषांपितृगणानांपुत्रपौत्रिकंविज्ञेयम् । तेनोपपन्नंतेषांपितृत्वमित्यभिप्रायः ॥ २०० ॥

**ऋषिभ्यः पितरोजाताः पितृभ्योदेवमानवाः ॥ देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥२०१॥**

( १ ) **मेधातिथिः** । नपित्र्यंकर्मदैवात्कर्मणोन्यूनंद्रष्टव्यं अपितुतदेवप्रधानतमं । यतोजन्मज्येष्ठाः पितरोदेवानां । तथाहि ऋषिभ्यःपितरउत्पन्नाः पितृभ्योदेवाइत्येषःसृष्टिक्रमः । देवेभ्योन्यत्सर्वं जगत्चरं जंगमंस्थाणुस्थावरं अनुपूर्वशः प्रथमेध्यायेउक्तःक्रमः । अतिक्रान्तोर्थवादसंपातः ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः** । चरं जङ्गमम् । स्थाणु स्थावरम् ॥ २०१ ॥

( ३ ) **कुल्लूकः** । ऋषिभ्योमरीच्यादिभ्यउक्तक्रमेण पितरोजाताः पितृभ्योदेवमानवाजाताः देवेभ्यश्च जङ्गमस्थावरंजगत्क्रमेण जातं तस्मात्सोमपादिप्रभवत्वात्त्वपितृपितामहप्रपितामहानामेषांश्राद्धे पूजनीयाः । सोमपादयोऽपि पूजिताः सन्तःश्राद्धफलदानाय कल्पन्तइति प्रकृतश्च पित्रादिश्राद्धस्तुत्यर्थोयंसोमपादिपितृगणोपन्यासः । अथवाऽऽवाहनकाले निजपित्रादयोब्राह्मणादिभिः सोमपादिरूपेण ध्येयाएवंव्यवस्थाज्ञानमनुष्ठानपरता च स्यात् ॥ २०१ ॥

( ४ ) **राघवानन्दः** । ऋषिभ्योहिरण्यगर्भमरीच्यत्रिकव्याङ्गिरः पुलस्त्यवसिष्ठेभ्यः । पितरः सोमसत्प्रभृतयः । स्थाणुस्थावरम् ॥ २०१ ॥

( ५ ) **नन्दनः** । एतदेव विशदयतिऋषिभ्यइति । ऋषिभ्योमरीच्यादिभ्यः । ननु प्रेताःपितृपितामहादयः श्राद्धैस्तर्प्यन्तइतिलोकशास्त्रप्रसिद्धम् । अत्र सोमपाइत्युक्तम् तस्माद्विरुद्धमिदम् । न विरुद्धमिदम् यथा ब्राह्मणतृप्त्या पितृतृप्तिरेवंपितृतृप्त्याप्रेतपितृपितामहादितृप्त्युपपत्तेरिति ॥ २०१ ॥

**राजतैर्भाजनैरेषामथो वा राजतान्वितैः ॥ वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते ॥२०२॥**

( १ ) **मेधातिथिः** । राजतानिचभाजनानि रूप्यमयानिपात्राणि तदभावेरजतान्वितैःदारुमयानिताम्रमयानि सौवर्णेनवारौप्येणैकदेशयुक्तानिकर्तव्यानि । एतच्चपात्रंदेयं घृतमध्वादिव्यञ्जनसोहित्याक्षिप्तंपात्रं तत्रेयंरूप्यमयताविधीयते पात्रेयच्चपिण्डनिर्वपणादितद्धस्ताभ्यामेवकर्तव्यं । यदप्युदकनिनयनंपिण्डेष्ववनेजनादिच तदपिहस्ताभ्यामेवाऽपसव्येन हस्तेनेतिवचनात् । तत्तूदकतर्पणमान्वहिकं तदपिहस्तेनापसव्येनसव्येनवाकर्तव्यं । इदंहिश्राद्धप्रकरणेपठितं तंनाप्राकरणिकस्यकर्मणोंगमप्यनारभ्याधीतम् । तत्रैववचनमस्ति भवतुवादस्यादर्ष्टयेवृष्टयेद्ब्राह्मणानिति । तथाकश्चिन्मधुररसप्रियोऽपरोक्षाररसप्रियस्तत्र भक्ष्यंभोज्यंचविविधंपानानिसुरभीणिचेति बहुषुपानकेषुसत्सुयद्यन्यानुरोधेन । वार्यपि । अपिशब्दः पात्रप्रशंसांसूचयति । तिष्ठतुवातत्संस्कृतभोजनदानं वारिमात्रमपियदिरूप्यपात्रेणदीयते तद्रूप्यगुणसंबन्धादक्षयंभवति अक्षयायोपलक्ष्यते । अक्षयतृप्तिहेतुर्भवतीत्यर्थः । श्रद्धयेति सर्वदानेषुविहितत्वादनुवादः ॥ २०२ ॥

( २ ) **सर्वज्ञनारायणः** । रजतान्वितैः रजतलेपरञ्जितैः । अक्षय्यमक्षीणता ॥ २०२ ॥

( ३ ) **कुल्लूकः** । एषांपितॄणांरूप्यमयपात्रैरूप्ययुक्तैर्वा ताम्रादिपात्रैर्जलमपि श्रद्धया दत्तमक्षयसुखहेतुःसंपद्यते। किंपुनःप्रशस्तपायसादीति ॥ २०२ ॥

---

( २०१ ) पितृभ्योदेवमानवाः=पितृभ्योदेवदानवाः ( क, ख, ग, घ, च, ज, झ, ञ, ट ठ, ड, ढ, त, थ, मेधा० )

( ४ ) **राघवानन्दः** । उपचारैरित्युक्तंतत्रार्थवादमाह राजतैरिति । रजतान्वितैः रजतयुक्तैः पात्रान्तरैः ॥ २०२ ॥

( ५ ) **नन्दनः** । राजतान्वितैः राजतमिश्रैः ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । पितॄणांपात्राण्याह राजतैरिति । एषांपितॄणांराजतैरजतैर्भाजनैः पात्रैः रजतान्वितैर्वा । क्रियाः कार्याःकर्तव्याः । श्राद्धसमयेदत्तं वारि अक्षय्यायानन्त्यायोपकल्पते उपतिष्ठतइत्यर्थः ॥ २०२ ॥

**देवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते ॥ दैवंहि पितृकार्यस्य पूर्वमाप्यायनंस्मृतम् ॥२०३॥**

(१) **मेधातिथिः** । देवानुद्दिश्ययत्क्रियतेतद्दैवंकार्यंततःपितृकार्यंविशिष्यते विशेषेणकर्तव्यमुपदिश्यते । अनेनपित्र्यस्यप्राधान्यमाह । दैवंतत्राङ्गंकर्मेत्युक्तंभवति । अङ्गकर्मतामेवस्पष्टयति । दैवंहियद्ब्राह्मणभोजनं । तत्पितृकार्यस्याप्यायनं वृद्धिकरं नस्वतःप्रधानं पित्र्यस्यैवपोषकम् ॥ २०३ ॥

( २ ) **सर्वज्ञनारायणः** । देवकार्याद्वैश्वदेविककर्मणः । द्विजातीनां विशिष्यते तैर्यज्ञादिभिर्देवताप्यायनसंभवात् । शूद्राणांतु श्राद्धे दैवमपि तद्वदभ्यर्हितं । प्रकारान्तरेण तदाप्यायनस्य तेष्वसंभवात् । पितृकार्यस्याप्यायनं तस्य संवर्धनकारितया पूर्वमङ्गत्वेन स्मृतमतोदैवात्पित्र्यभागएव शौचविप्रगुणाद्यनुसंधानाधिक्यंविधेयमित्यर्थः ॥ २०३ ॥

( ३ ) **कुल्लूकः** । देवानुद्दिश्य यत्क्रियते तद्देवकार्यम् । ततःपितृकार्यंद्विजातीनांविशेषेण कर्तव्यमुपदिश्यते । अनेन पितृश्राद्धस्य प्राधान्यंदैवंतत्राङ्गमित्याह । एतदेव स्पष्टयति । यतोदैवंकर्म पितृकृत्यस्य पूर्वंसदाप्यायनंपरिपूरकंस्मृतम् ॥ २०३ ॥

( ४ ) **राघवानन्दः** । तत्रपितृकार्यस्य प्रासङ्गिकस्यअङ्गित्वमनुवदन्दैवस्य तत्प्रति पूर्वोत्तराङ्गत्वंनियमयन्नाह देवकार्यादिति । दैवं देवसंबन्धि । आप्यायनं पर्युक्षणादि ॥ २०३ ॥

( ५ ) **नन्दनः** । अथ पित्र्यस्याङ्गत्वेन दैवंविधित्सन्दैवात्पित्र्यस्य वैशिष्ट्यमाह देवेति । आप्यायनंप्राबल्यकरणम् । हि हेतौ ॥ २०३ ॥

( ६ ) **रामचन्द्रः** । वीरसिंहप्रकाशे अर्घपात्राण्याह बाष्कलः । सौवर्णरौप्यताम्राणांतदभावेथ तर्पणं । अष्टाङ्गुलं भवेत्पात्रंपितॄणांरजतंशुभं । दशाङ्गुलंतु देवानांसौवर्णताम्रमेव च ॥ २०३ ॥

**तेषामारक्षभूतन्तु पूर्वं दैवं नियोजयेत् ॥ रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् ॥ २०४ ॥**

( १ ) **मेधातिथिः** । रक्षैवआरक्षंतत्प्राप्तंआरक्षभूतं आरक्षार्थमित्युक्तंभवति । उपमायांवाभूतशब्दः यदातुरक्षार्थंअतःपूर्वंदैवंब्राह्मणंनियोजयेत् निमन्त्रयेतआसनेचोपवेशयेत् । अपरोर्थवादः रक्षांसिअदृश्यानिकानिचित्सत्वानि इतिहासे । क्रियाविप्रलुम्पन्ति आच्छिन्दन्ति पितृभ्यःश्राद्धं । केपुनर्देवाउद्देश्यागृह्येतावद्विश्वान्देवान्हवामहइतिमन्त्रस्यविनियोगाद्विश्वेदेवाःप्रतीयन्ते । पुराणेत्युक्तं विश्वेदेवाइति श्रुतिरिति ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । तेषांपितॄणामारक्षः । समन्ततोरक्षाहेतुः ॥ २०४ ॥

( ३ ) **कुल्लूकः** । आरक्षोरक्षातेषांपितॄणांरक्षाभूतंदैवंविश्वेदेवब्राह्मणंपूर्वंनिमन्त्रयेत् यस्माद्रक्षावर्जितंश्राद्धंराक्षसाआछिन्दन्ति ॥ २०४ ॥

---

( २०३ ) श्रुतम्=स्मृतम् ( मेधा० ) ।

( २०४ ) रक्षांसिहिविलुम्पन्ति= रक्षांसिविप्रलुम्पन्ति ( क, ख, ग, घ, च )

( ४ ) **राघवानन्दः** । एतत्पूर्वकरणे दृष्टफलमाह । तेषामिति आरक्षंदेवकृतं तद्वर्जितंश्राद्धंरक्षांसिलुम्पन्ति । न्यस्तशस्त्रत्वात्स्वरक्षणेऽप्यसमर्थत्वात् ॥ २०४ ॥

( ५ ) **नन्दनः** । यतएवंदैवंपूर्वंकुर्यादित्याह तेषामिति । तेषांपितृणाम् । हिहेतौ । आरक्षभूतं रक्षाकरम् ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । तेषांपितृणां दैवपूर्वमारक्षभूतंसर्वत्र रक्षायुक्तंश्राद्धंयोजयेत् । रक्षैव रक्षस्तमाक्षंश्राद्धंनियोजयेत् आरक्षवर्जितंदेववर्जितं श्राद्धं रक्षांसि विप्रलुम्पन्ति अपहताअसुरारक्षाँसीति मन्त्रेण तिलयवान्गृहीत्वा रक्षांकुर्यात्॥२०४॥

**दैवाद्यन्तंतदीहेत पित्राद्यन्तंन तद्भवेत् ॥ पित्राद्यन्तंत्वीहमानः क्षिप्रं नश्यति सान्वयः ॥ २०५॥**

( १ ) **मेधातिथिः** । आदिश्च अन्तश्च आन्द्यतौ देवौआद्यन्तावस्येति दैवाद्यन्तम् दैवेनकर्मणाआदिरुपक्रमःश्राद्धस्यकर्तव्यः । अतश्चनिमन्त्रणंदेवानांपूर्वंकर्तव्यं अंतःसमाप्तिः । विसर्जितेषुपित्र्येषुब्राह्मणेषुपश्चाद्देवानांविसर्जनंकर्तव्यं । गन्धादिदानेपिदैवोपक्रमतांमन्यन्ते । ननुतेषांपदार्थानांदैवेनोपक्रमसमाप्तीसंभवतःआवृत्तिप्रसङ्गात् प्रयोगधर्मश्चायंदैवाद्यन्तता । दैवपूर्वंकर्तव्यं यतएषपदार्थधर्मः पदार्थानांतुगन्धमाल्यादीनांदैवोपक्रमताप्रावृत्तिकेनैवक्रमेणसिध्यति । निमन्त्रणंतावद्दैवपूर्वंकर्तव्यं । यतएवप्रथमंपदार्थआरब्धस्ततएवान्येषामारंभोयुक्तः पदार्थःपदार्थान्तरारम्भंनियच्छति । यतस्तदुक्तं प्रकृत्याकृतकालानांगुणानांतदुपक्रमादिति पदार्थधर्मः । तच्छ्राद्धकर्मीहेतत्कुर्यात् परिशिष्टोर्थवादः । पित्रान्द्यतंनतद्भवेत् । दैवाद्यन्तत्वस्यविहितत्वात् नपित्राद्यन्तप्रतिषेधोऽर्थवादतयालौकिकवाक्यवन्नेयः । लोकेहिकिंचिद्विधायतद्विपरीतमप्राप्तमपि निषेधति । क्रियाहिद्रव्यंविनयति नाद्रव्यमिति । क्षिप्रंनश्यतिसान्वयः संतानाफलप्रदर्शनरूपोयंनिन्दार्थवादः । अतश्चसर्वपरिवेषणादिदैवपूर्वकं यत्त्वंतराभक्ताद्युपनयनं पिपासतांचपानादिदानं तदस्यैवेच्छाप्रथममुपजातातस्माएवोपनेतव्यंअनर्थिनस्तदनुरोधेनोपनीयमानेप्रधानविधिबाधःस्याद्धर्षयेत्ब्राह्मणानिति तथाकश्चिन्मधुररसप्रियोपरोम्लरससात्म्यस्तत्रभक्ष्यंभोज्यंचविविधंपानानिसुरभीणिचेति बहुषुपानकेषुसत्सुयद्यन्यानुरोधेनअन्यत्ररससात्म्यमापादयेत्ततोव्याधिरस्यजनितःस्यात् ॥ तस्मादुपक्रमःसमानोदेवादिः ॥ २०५ ॥

( २ ) **सर्वज्ञनारायणः** । देवतानामादौ निमन्त्रणं तथावत्सर्वपदार्थेषु दैवपूर्वेषु दैवादिता । दैवान्तता तु पितॄन्विसृज्य देवानांविसर्जनात् । ईहमानश्चेष्टमानः । नश्यति रक्षोभिःश्राद्धविघातिन पितृशापात् ॥ २०५॥

( ३ ) **कुल्लूकः** । यतएवमतस्तच्छ्राद्धंदैवाद्यन्तंदैवे कर्मणिआद्यन्तावारम्भावसाने यस्य तत्तथा एतेनेदमुक्तं । निमन्त्रणादिसर्वंदैवपूर्वंविसर्जनं तुदेवानांशेषे । अतएव देवलः । यत्तत्र क्रियते कर्म पैतृके ब्राह्मणान्मति । तत्सर्वंतत्र कर्तव्यंवैश्वदेविकपूर्वकम् । न तु तच्छ्राद्धंपित्रुपक्रमावसानम् पित्राद्यन्तंतदनुतिष्ठन्ससन्तानःशीघ्रंविनश्यति ॥ २०५ ॥

( ४ ) **राघवानन्दः** । तत्पित्र्यंईहेत कुर्यात् तु तद्दैवं पित्र्याद्यन्तम् । क्षिप्रं प्रणश्यतीति भूतार्थवादः ॥ २०५ ॥

( ५ ) **नन्दनः** । न केवलंश्राद्धस्यदैवमादौकार्यंकिन्त्वन्तेऽपीत्याह । दैवेति । ततःश्राद्धम् । ईहेत कुर्वीत ॥ २०५॥

( ६ ) **रामचन्द्रः** । तच्छ्राद्धंदैवाद्यन्तमीहेत कुर्यात् । तद्यथादैवादिपूर्वंदेवानां आव्हानंविश्वेदेवाआगच्छन्त्विति वाचयेत् ।अन्ते श्राद्धान्ते उपतिष्ठन्तु पितरः सव्येन विश्वेदेवैःसहेति एवंदैवाद्यन्तंतच्छ्राद्धंपित्राद्यन्तं न भवेन्नकुर्यात्॥२०५॥

**शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् ॥ दक्षिणाप्रवणंचैव प्रयत्नेनोपपादयेत् ॥ २०६ ॥**

( १ ) **मेधातिथिः** । शुचिर्भस्मास्थिकपालकाद्यनुपहतः । विविक्तोविस्तीर्णोबहुभिर्जनैरनाकीर्णः दक्षिणाप्रवणो दक्षिणस्यांदिश्यवनतस्तादृशंदेशंयत्नेनसंपादयेत् । स्वभावतश्चेत्तादृशोनलभ्यते तथाकर्तव्यं यथात्नव्यापारेणसंपाद्यते । तंचगोशकृतोपलेपयेत् । मृदादयोनिवर्तन्ते । गोमयेनोपलेपनियमात् ॥ २०६ ॥

( २ ) **सर्वज्ञनारायणः** । विविक्तमेकान्तम् । उपलेपयेत् मृद्गोमयादिना दक्षिणाप्रवणमुपपादयेत् संपादयेत् ॥२०६॥

( ३ ) **कुल्लूकः** । अस्थ्यङ्गाराद्यनुपहतंदेशंनिर्जनंच गोमयेनोपलेपयेत् । दक्षिणादिगवनतंच प्रयत्नतःसंपादयेत् ॥ २०६ ॥

( ६ ) **राघवान्दः** । देशनियमंसार्थवादमाह शुचीति द्वाभ्यां । दक्षिणाप्रवणंदक्षिणनिम्नताम् ॥ २०६ ॥

( ५ ) **नन्दनः** । अथ श्राद्धस्य देशमाह शुचिमिति । विविक्तं विजनम् ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । भूमिशुद्धिमाह शुचिमिति तत्रगोमयादिना लिप्ते दक्षिणाप्रवणे दक्षिणतोऽवनते निम्नप्रदेशे आव्हानंकार्यम् ॥ २०६ ॥

## अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ॥ विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥२०७॥

( १ ) **मेधातिथिः** । अवकाशोदेशःचोक्षाः स्वभावशुचयोमनःप्रसादजनकाअरण्यादयः । जलतीराणि सरित्समीपपुलिनादीनि विविक्तेषुविजनेषु तीर्थेषुच । विध्यन्तरमिदमतश्चगोमयोपलेपनमितिनियमोनास्ति । उपपादयेदितिवचनात् । यत्रसंपाद्यंशुचित्वंतत्रासौनियमःस्वभावतःशुचिषुदृष्टमद्भिर्निर्णिक्तमित्येतावतैवयोग्यता । एतेषुदेशेषुदत्तेनकृतेनश्राद्धेनातितुष्टाःपितरोभवन्तीति ॥ २०७ ॥

( २ ) **सर्वज्ञनारायणः** । अवकाशेषु स्तम्भाद्यसंकीर्णदेशेषु चोक्षेषु शुद्धेषु ॥ २०७ ॥

( ३ ) **कुल्लूकः** । चोक्षाःस्वभावशुचयोऽरण्यादिप्रदेशास्तेषु नद्यादितीरेषु तथानिर्जनप्रदेशेषु दत्तेन श्राद्धादिना सर्वदापितरस्तुष्यन्ति ॥ २०७ ॥

( ४ ) **राघवान्दः** । अवकाशेषु स्वभावेन जनता वर्जितेषु चोक्षेषु मनोहरेषु तथान्यत्राहचोक्षःशुचौ तथा दक्षइति ॥ २०७ ॥

( ५ ) **नन्दनः** । चोक्षेषु रमणीयेषु ॥ २०७ ॥

( ६ ) **रामचन्द्रः** । अवकाशेषु असंकीर्णस्थानेषु उक्षेषुउच्चस्थानेषु विविक्तेषु विजनेषु अरण्यादिषु जलतीरेषुएतादृशेषु ते पिण्डेन पितरः सदा तुष्यन्ति सन्तुष्टाभवन्तीत्यर्थः ॥ २०७ ॥

## आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् ॥ उपस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् ॥२०८ ॥

( १ ) **मेधातिथिः** । उपक्लृप्तेषुकल्पितेषुविन्यस्तेषुपृथक्पृथक् । विभागेनैवमासनंदीर्घधौतफलकादिसर्वेभ्योदद्यात् परस्परंयथानस्पृशन्ति । तथोपवेशनीयाइति । पृथग्ग्रहणं। बर्हिष्मत्सु दर्भविष्टरास्तीर्णेषु उपस्पृष्टोदकान्स्नातान्कृताचमनविधींश्च तान्पूर्वनिमन्त्रितानुपवेशयेत् ॥ २०८ ॥

( २ ) **सर्वज्ञनारायणः** । बर्हिष्मत्सु कुशवत्सु उपस्पृष्टोदकान् स्नातान् ॥ २०८ ॥

( ३ ) **कुल्लूकः** । तत्र च देशेआसनेषु पृथक्पृथक्विन्यस्तेषु सकुशेषु प्रागामन्त्रितब्राह्मणान्सम्यक्कृतस्नानाचमनानुपवेशयेत् अत्र देवब्राह्मणासने कुशद्वयंपित्रासनेषु च प्रत्येकंदक्षिणाग्रएकः कुशोदेयः । तदाह देवलः । ये चात्र विश्वेदेवानांविप्राःपूर्वनिमन्त्रिताः । प्राङ्मुखान्यासनान्येषांद्विदर्भोपहतानि च ॥ दक्षिणामुखयुक्तानि पितॄणामासनानि च । दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥ दक्षिणामुखयुक्तानि दक्षिणाग्राणि अग्रंकाण्ड*मूलापेक्षया ॥ २०८ ॥

---

( २०७ ) नदी= जल ( ब, प्र, र, ल ) * काण्ड=कुश ( अ )

( ४ ) **राघवानन्दः** । एवं वर्णक्रमइव वेदक्रमोप्यपेक्षणीयइति ज्ञापयन् ऋग्वेदिनमधिकृत्य श्राद्धानुष्ठानमाह । आसनेष्विति त्रिंशता श्लोकैः । उपक्लृप्तेषु विन्यस्तेषु बर्हिष्मत्सुकुशयुक्तेषु पृथक्पृथगितिनैकासनंकुर्यादिति । दैवे कुशद्वयं पित्र्ये एकैकंदेयमिति । तथाच देवलः । ये चात्रविश्वेदेवानां विप्राः पूर्वनिमन्त्रिताः । प्राङ्मुखान्यासनान्येषांद्विदर्भोपहितानि च ॥ दक्षिणामुखयुक्तानि पितॄणामासनानिच । दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥ इति पित्रादिषट्पात्रेषु षडेव ब्राह्मणाइत्यर्थात् । उपस्पृष्टोदकान् सम्यक्कृताचमनान् ॥ २०८ ॥

( ५ ) **नन्दनः** । इदंपित्रइदंपितामहायेति पृथक्पृथक् । बर्हिष्मत्सु दर्भवत्सु । उपस्पृष्टोदकान् स्नातान् । सम्यक्सोपचारम् ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । उपक्लृप्तेषुरचितेषुआसनेषुबर्हिष्मत्सु सकुशेषु पृथक्पृथगुपस्पृष्टोदकान्कृताचमनान्निमन्त्रितान्विप्रानुपवेशयेत् ॥ २०८ ॥

## उपवेश्य तु तान्विप्रानासनेष्वजुगुप्सितान् ॥ गन्धमाल्यैः सुरभिभिरर्चयेद्देवपूर्वकम् ॥२०९॥

( १ ) **मेधातिथिः** । उपवेशनानन्तरंगन्धमाल्यैरर्चयेत् । गन्धान्कुङ्कुमकर्पूरादीन्दद्यात् । माल्यानिकुसुमस्रजः । सुरभिग्रहणं । माल्यविशेषणं । निर्गन्धानिपुष्पाणिनदद्यात् । गन्धेष्वपियुक्तंविशेषणं सन्तिगन्धाअसुरभयस्तन्निवृत्यर्थं । अथवासुरभिभिर्धूपैः स्वतन्त्रंसुरभिग्रहणं । दैवेभ्योब्राह्मणेभ्यः पूर्वदत्वा ततःपितृदेभ्योदातव्यं । इदंतुदैवपूर्वग्रहणं प्राग्भोजनप्रवृत्तेःपदार्थानांतदादिनियमार्थं प्रवृत्तभोजनानांतुपानव्यञ्जनादिषुननियमइत्येवमर्थमाहुः । अन्यथाकोर्थःपुनरभिधानेस्यात् । अजुगुप्सितान् अनिन्दितान् विप्रान् अनुवादोयं तादृशानामेवविधानं । अथवासत्यपिभूतप्रत्ययनिर्देशेप्रकृत्यर्थकर्तव्यतानिषेधएवायं उपविष्टान्नजुगुप्सेत ननिन्देतेत्युक्तंभवति । प्रत्ययार्थमात्रत्यागोवरं नसर्वपदार्थत्यागइतिमन्यन्ते । अनुवादेहिकृत्स्नमेवपदमनर्थकम् ॥ २०९ ॥

( २ ) **सर्वज्ञनारायणः** । गन्धमाल्यैरिति बहुवचनंधूपदीपाच्छादनप्राप्त्यर्थं गन्धमाल्यादिभिरित्यर्थः ॥ २०९ ॥

( ३ ) **कुल्लूकः** । तान्विप्रानामन्त्रितानासनेषूपवेश्य कुङ्कुमादिगन्धमाल्यधूपादिभिः स्पृहणीयगन्धैर्देवपूर्वकमर्चयेत् ॥ २०९ ॥

( ४ ) **राघवानन्दः** । अजुगुप्सितानुउक्तनिन्दारहितान् ॥ २०९ ॥

( ५ ) **नन्दनः** । अजुगुप्सितानिन्दितवेषान् ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । देवपूर्वकंविश्वेदेवानुपूर्वकं तान्विप्रानर्चयेत् ॥ २०९ ॥

## तेषामुदकमानीय सपवित्रांस्तिलानपि ॥ अग्नौकुर्यादनुज्ञातो ब्राह्मणोब्राह्मणैःसह ॥ २१०॥

( १ ) **मेधातिथिः** । अनुलिप्तेषुस्रग्विषु सुरभिधूपाघ्रिग्रत्सु अर्घोदकमुपनेतव्यं । तेनहितेप्रार्थिताअनुजानीरन् । ततश्चाग्नौकरवाणिकरिष्ये । इतिचेत्येवमादीनिप्रश्नवाक्यानिलभ्यन्ते । अनुज्ञावाक्यमपि तेनैवसहपवित्रांस्तिलानपि पवित्रशब्दोदर्भेषूवर्तते तेषांब्राह्मणानामुदकमानीयदत्वा तैरनुज्ञातोऽग्नौहोमंकुर्यात् । ब्राह्मणैरनुज्ञातःकुर्यादितिसंबन्धः । सहसर्वेयुगपदनुज्ञांदद्युः । अनुज्ञापनवाक्यमपिसामर्थ्यप्राप्तं । सर्वंचैतत्साधुभिःशब्दैःकर्तव्यं । प्रदर्शितंचैतत्गृह्यकारैरग्नौकरवाणिकरिष्यइतिचानुज्ञापयेदोंकुर्वित्येवंब्रूयुः ॥ २१० ॥

( २ ) **सर्वज्ञनारायणः** । तेषांयद्गन्धादिदानात्प्रागर्घ्यदत्तंतच्छेषंजलं । तिलांस्तत्रत्यान् । पवित्राणि च कुशान्द्विदलान्यानिचैकत्र स्थाने कृत्वा संस्रवान्समत्रनीयं न्युब्जंपात्रंकृत्वेत्यर्थः । ब्राह्मणैश्च सह सहितैरनुतज्ञातः ॥ २१० ॥

( ३ ) **कुल्लूकः** । तेषांब्राह्मणानामर्घोदकपवित्रतिलान्संमिश्रान्कृत्वा तैर्ब्राह्मणैः सहानुज्ञातोऽग्नौ वक्ष्यमाणंहोमंकुर्यात् । अनुज्ञासामर्थ्याच्च प्रार्थनापि पूर्वंकर्त्तव्या । साच स्वगृह्यानुसारेण करवाणि करिष्यइत्यादिका । अनुज्ञापि ओमित्येवंरूपा कुरुष्वेति वा ॥ २१० ॥

( ४ ) **राघवानन्दः** । आनीय दत्वा उदकं अर्घ्यार्थंपवित्रंस्यात्कुशद्वयं तद्युक्तांस्तिलान् । ब्राह्मणैः कुरुष्वेत्यनुज्ञातः ॥ २१० ॥

( ५ ) **नन्दनः** । उदकंशुद्धोदकम् । आनीय दत्त्वा तिलोदकंचानीय । ब्राह्मणोद्विजः । सहाग्न्यनुज्ञातोऽग्नौ कुर्याज्जुहुयात् ॥ २१० ॥

( ६ ) **रामचन्द्रः** । अग्नौकरणंद्वाभ्यामाह तेषामिति । तेषांपितॄणांअर्थे विप्राणांसमीपे उदकं शिष्टोदकंआनीय सपवित्रान् पवित्रसहितान् तिलानादाय ब्राह्मणानपीच्छेत् ॥ २१० ॥

**अग्नेः सोमयमाभ्यांच कृत्वाप्यायनमादितः ॥ हविर्दानेन विधिवत्पश्चात्संतर्पयेत्पितॄन् ॥ २११॥**

( १ ) **मेधातिथिः** । यदग्नौकर्तव्यं तदुच्यते । अग्नेःचतुर्थ्यर्थेषष्ठी अग्निरेकादेवता । सोमयमाभ्यामितिद्वन्द्वस्यदेवतात्वं अग्नीषोमवत् । अनयोर्देवतयोरादितआप्यायनं हविर्दानेनकृत्वा पश्चात्सन्तर्पयेत्पितॄन् । पिण्डनिर्वपणंब्राह्मणभोजनंचकुर्यादित्यर्थः । गृह्येत्वन्यादेवताःयेषांगृह्यंनास्तितेषामिदंदेवतावचनं । आप्यायनंपोषणंहविषादेवतापुष्यन्तीत्यर्थवादः ॥ २११ ॥

( २ ) **सर्वज्ञनारायणः** । अग्नेः अग्नये कव्यवाहनाय सोमाय पितृमते यमायाङ्गिरस्वतइति तिस्रआहुतयः । हविर्दानेन होमरूपेण कृत्वाऽप्यायनमित्यन्वयः ॥ २११ ॥

( ३ ) **कुल्लूकः** । अग्नेः सोमयमयोश्च विधिवत्पर्युक्षणादिपूर्वंहविर्दानेन प्रीणनमादौ कृत्वा पश्चादन्नादिना पितॄंस्तर्पयेत् । सोमयमयोः द्वन्द्वनिर्देशेपि पृथगेव देवतात्वं सहादिशब्दप्रयोगाभावात् । यत्र साहित्यंविवक्षितंतत्र सहादिशब्दंकरोतीत्युक्तंप्राक् ॥ २११ ॥

( ४ ) **राघवानन्दः** । आदितः आदौ । सोमयमाभ्यामिति द्वन्द्वेनैवदेवतात्वं अग्नीषोमवत् । हविर्दानेन । पर्युक्षणादिना ॥ २११ ॥

( ५ ) **नन्दनः** । आप्यायनंतृप्तिहोममितियावत् । हविर्दानेनान्नहोमेन ॥ २११ ॥

( ६ ) **रामचन्द्रः** । अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा सोमयमाभ्यांएवमादितःप्रथमतःआप्यायनंकृत्वा । तत्राह । मार्कण्डेयः । आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः । अनाहिताग्निस्त्वौपासने अग्न्यभावेआवसथ्याग्न्यभावे द्विजेऽप्सुवा ततःपश्चात् अग्नौकरणानन्तरंपितॄन्पितृपितामहप्रपितामहस्थानेषु उपविष्टान्द्विजान् हविर्दानेनहविष्यान्नदानेन विधिवत्संतर्पयेत् । भोजयेदित्यर्थः । पवित्रलक्षणमाह । अनन्तर्गर्भकंसाग्रंकौशंद्विदलमेव च । प्रादेशमात्रंविज्ञेयंपवित्रंयत्र कुत्र चित् ॥ २११ ॥ २१२ ॥

**अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ॥ योह्यग्निः सद्विजोविप्रैर्मन्त्रदर्शिभिरुच्यते ॥ २१२॥**

( १ ) **मेधातिथिः** । स्मार्तस्यवैवाहिकस्यदायादेर्वाअग्नेरभावेविधिरयमुच्यते । लौकिकस्यतु पितृयज्ञनिषेधात्भावाभावावचिन्त्यौ नपैतृयज्ञियोहोमोलौकिकेग्नावितिवक्ष्यति । कथंपुनस्तस्याग्नेरभावः प्रोषितस्याग्निनाविनाद्रव्यब्राह्मणदेशसंपत्तौच श्राद्धकालउक्तोनामावास्यैव । तत्रप्रोषितेनसपङ्क्तिपावनः प्राप्तोद्रव्यंवाकालशाकादितत्रायंविधिरुच्यते । ननुचप्रोषितस्यकथंश्राद्धाधिकारः यदितावद्भार्याप्रवसतीअग्निनापितत्रैवसन्निधातव्यं । यतोनोभाभ्यामग्नेर्विरहइष्यते । भार्ययायजमानेनच । एवंहिश्रूयते नाग्निरन्तरितव्यः प्रवसतामिति । अथकेवलएवगृहस्थः प्रवसेत्तदाभवेदग्न्यभावः किन्तुमध्यकत्वादेतस्यसहाधिकारस्यभार्यायामसंनिहितायां तदिच्छायाअभावात् । कथंसाधारणस्यश्राद्धेविनियोगः । साधारणेहिद्रव्येअन्यतरानिच्छायांत्यागएवनसंवर्तते । अथोच्यते तीर्थेष्वपिश्राद्धकरणमनेनन्यायेनप्राप्नोति । तत्रेमानिवचनानिविरुध्यन्ते । पुष्करेष्वक्षयंश्राद्धंतपश्चैवमहाफलं । महोदधौप्रभासेचतद्वदेवविनिर्दिशेत् ॥ इतिनैषदोषः । भार्ययासहतीर्थयात्रांगच्छतः साग्निकस्योपपत्स्यन्ते । इहतुभार्ययासहप्रवासस्तदानास्त्यग्नेरभावः । अथकेवलस्यतदाभार्येच्छायाअपरिज्ञानादनधिकाराउच्यन्ते । प्रवसन्भार्यामनुज्ञापयति धर्मायविनियोगंद्रव्यस्यकरिष्यामीति तत्प्राप्तानुज्ञोधिकरिष्यते । प्राक्चोपनयादसत्यग्निपरिग्रहेविधिरयंभविष्यति । अस्तिचानुपनीतस्यश्राद्धाधिकारः स्वधानिनयनादितिदर्शितं । स्नातस्यचप्राग्विवाहात् पितृमरणादावग्न्यभावः । ननुचपरमेष्ठिमरणेग्निपरिग्रहः काठकेपठ्यते । कृतदारस्यासौद्रष्टव्योन स्नातकमात्रस्य द्वौहिकालौस्मार्तकस्याग्नेर्विहितौ भार्याविवाहे । तत्रयेनविवाहकालेनपरिगृहीतोग्निः पित्राविभक्तत्वात् । ज्येष्ठेनवासहवसता । भ्रातॄणामविभक्ता नामेकोधर्मः प्रवर्ततइति । अनेनतस्यासौद्वितीयःकालः । दायकालाद्दतेवापीति । एषएवदायकालोयदापिताम्रियतेतदपेक्षमेवैतत् । शुचिर्भूतःपितृभ्योदद्यात् । आहृत्योहाग्निमानीयप्रतिजागृयादिति । नचेदग्न्याधानंश्राद्धाङ्गं तदासतितदर्वाग्यस्योत्पत्तिःश्राद्धंवावर्तते । नचाप्यत्यागोस्त्येषऔपसदोग्निस्तस्मिन्पाकयज्ञइतिपठ्यते । नचपाकयज्ञेप्यभार्यस्याधिकारः । पत्न्यवेक्षितमाज्यंभवति । व्रतंचपत्न्युपेयादितिदर्शपूर्णमासयोःश्रूयते । नचयदापत्नीतदैतत्व्रतोपायनाज्यावेक्षणेपत्नीकर्तृकेभविष्यतइतिशक्यमवकल्पयितुं नित्यवदाम्नानात् । तत्रौपसदोग्निरित्येषविधिर्होतव्यःप्राप्नोति ननुचनपितृमरणमेवदायकालः । एवंहिपठ्यते । सपिण्डीकरणंकृत्वाविभजेरन् ततःसुताइतिविभागस्यायंकालो नदायस्याविभागेपिनायंनियमोयतोधर्मात्पृथक्क्रियेते पठ्यते । तस्याश्चधर्मत्वंविभक्तानांपृथक्पृथक्श्राद्धकरणेनातिथ्यादिपूजयाच । ततश्चनवश्राद्धंसहदद्युरित्यादीनिवाक्यानिसमाप्तविद्याविषयाणि । ईषद्विप्रोरागोद्रेकात्स्वदारनियमातिक्रमिषमितिकृतविवाहः प्रक्रान्तवेदार्थप्रवणस्तस्यसंवत्सरमात्रेणविद्यासमाप्ताविदमुच्यते सपिण्डीकरणंकृत्वाविभजेरन्निति। तदामृतभार्यस्यपुनर्दारांश्चिकीर्षतआदारप्राप्तेर्भवत्यग्नेरभावः । सर्वथापत्न्यासहयष्टव्यमित्यस्तित्ववचनेसति नाकृतविवाहस्याग्निपरिग्रहः । एवंस्थितेग्नेरभावे आहुतीर्ब्राह्मणस्यहस्तेप्रक्षिपेत् । कस्यब्राह्मणस्ययएवनिमन्त्रितास्तेषामन्यतमस्य दैवउपवेशितस्यान्यस्यवानिमन्त्रितस्यार्थवादोयोह्यग्निरिदमिमन्त्रर्शितः संमतश्चेदर्थविद्भिः ॥ २१२ ॥

( २ ) **सर्वज्ञनारायणः** । अग्न्यभावऔपासनाभावे पाणावग्नितीर्थे हस्तमध्यस्थउपपादयेदाहुतीःसंपादयेत् ॥२१२॥

( ३ ) **कुल्लूकः** । अग्न्यभावे पुनर्ब्राह्मणहस्तएवोक्ताहुतित्रयंदद्यात् । यस्माद्यएवाग्निः सएव ब्राह्मणइति वेदविद्भिर्ब्राह्मणैरुक्तः । अग्न्यभावश्चानुपनीतस्य संभवति । उपनीतस्य समावृत्तस्य च पाणिग्रहणात्पूर्वं मृतभार्यस्य वा ॥ २१२ ॥

( ४ ) **राघवानन्दः** । पाणावेवाहुतित्रयंदद्यात् । पाण्यास्योहिद्विजःस्मृतइत्युक्तिमाश्रित्याह यइति ॥ २१२ ॥

( ५ ) **नन्दनः** । उपपादयेद्दद्यात् । एषवाअग्निर्वैश्वानरोयद्ब्राह्मणइतिमन्त्रदर्शिभिरुच्यते ॥ २१२ ॥

**अक्रोधनान्सुप्रसादान्वदन्त्येतान् पुरातनान् ॥ लोकस्याप्यायने युक्तान् श्राद्धदेवान् द्विजोत्तमान् ॥ २१३ ॥**

( १ ) **मेधातिथिः** । अयमर्थवादएव । ब्राह्मणानांदेवतारूपत्वंसंपादयति अग्निर्देवतातत्रहुतंतन्मुखेनदेवताअश्नन्तिब्राह्मणोप्येवंरूपतद्धस्तेपिक्षिप्तंदेवताअश्नन्त्येव किंपुनर्देवतानांरूपंयेनब्राह्मणोपिदेवतारूपउच्यते । अतआह अक्रोधनानिति वेदंब्रुवते तदर्थंदर्शयति यएवंस्वभावाब्राह्मणास्तेआज्याहुतीप्रक्षेप्तव्ये । अन्येत्वाहुः पूर्वत्राक्रोधनाइत्यादिनापितॄनुद्दिश्यनिमन्त्रितानांस्तुत्यानामक्रोधनादिधर्मोविहितः । अनेनदेवनिमन्त्रितानामितिविशेषः तथाचाहश्राद्धेदेवानिति । पुरातनामुनयएवंवदन्ति द्वितीयान्तोवापठितव्यः । पुरातनानेतान्देवान्त्साध्यदेवानस्मिन्कल्पेसमुत्पन्नान्लोकस्याप्यायनेयुक्तानएवंश्राद्धंभुञ्जते तत्रनैवंमन्तव्यं । दृष्टसुखार्थिनोलोभात्स्वार्थेप्रवर्तन्तेतश्चकिमित्येषांपूजाक्रियते । यतआप्याययन्तिलोकं । पृथिवीमन्तरिक्षंदिवंचातोनैषामवज्ञाकर्तव्या ॥ २१३ ॥

( २ ) **सर्वज्ञनारायणः** । अक्रोधनत्वादिगुणवत्वे सत्ये ते श्राद्धे देवताभवन्तीत्यर्थः । सुप्रसादानल्पायासेन प्रसाद्यान् पुरातनान् सर्वेभ्योग्रजान् । यज्ञादिना लोकाप्यायने युक्तान् । श्राद्धदेवान् श्राद्धसंबन्धिनोन्नस्य पितॄन्प्रति नेतॄन् अतोऽग्निर्यथाहव्यंवहति तथा ब्राह्मणाअपीत्यर्थः । गत्यर्थाद्दीव्यतेर्ण्यन्तात् देव शब्दव्युत्पत्तिरत्र ॥ २१३ ॥

( ३ ) **कुल्लूकः** । क्रोधशून्यान्सुप्रसादान्प्रसन्नमुखान्प्रवाहानादितया पुरातनान् अग्नौ प्रास्ताहुतिरिति न्यायेन लोकवृद्धयउद्युक्तान्श्राद्धपात्रभूतान्मन्वादयोवदन्ति । तस्माद्देवतुल्यत्वाच्छ्राद्धब्राह्मणस्य तद्धस्तेदातव्यमिति पूर्वविध्यनुवादः ॥ २१३ ॥.

( ४ ) **राघवानन्दः** । पुरातनान् चिरन्तनान् प्रवाहानादितया पुरापूर्वंतन्यते दीयते येभ्यस्तान्वा । आप्यायने दातारोवोभिवर्धन्तामित्याद्याशिषा । श्राद्धदेवान् श्राद्धोद्देश्यपात्रभूतान् ॥ २१३ ॥

( ५ ) **नन्दनः** । यस्मिन्हूयते सोऽग्निरेव न केवलंब्राह्मणः किंतु येभ्यो हूयते ते पितरोऽपि ब्राह्मणाइत्याह अक्रोधनाइति । श्राद्धदेवान्पितॄन् । द्विजोत्तमान् पुरातनान्वदन्ति । तेन च ब्राह्मणस्य पाणावेवोपपादनंयुक्तमित्यभिप्रायः ॥ २१३ ॥

( ६ ) **रामचन्द्रः** । एतादृशान्पुरातनान्पितृरूपान्द्विजोत्तमान् श्राद्धदेवान्श्राद्धमापकान् । एवंवदन्ति ॥ १२३॥

**अपसव्यमग्नौ कृत्वा सर्वमावृत्त्य विक्रमम् ॥ अपसव्येन हस्तेन निर्वपेदुदकं भुवि ॥ २१४ ॥**

( १ ) **मेधातिथिः** । अग्नौयत्कर्तव्यंअग्नयेस्वधानमइतिआहुतिप्रक्षेपलक्षणंकार्यं तदपसव्यं । दक्षिणेनहस्तेनकर्तव्यं न सव्येन नोभाभ्यां उभयोर्हस्तयोर्मुक्तमितिनिषेधात् हस्तद्वयसंयोगेनकर्तव्यताशङ्कायामपसव्येनेत्युक्तमितिकेचित् । इदंत्वयुक्तं याअग्नावाहुतयोहूयन्ते । तासांचयाऽवृत्परिक्रमस्तस्यापसव्यताविधियते । दक्षिणासंस्थाआहुतीःकुर्यात् नोदक्संस्थाः । यथादैवे दर्व्यावा हविर्भिस्तुकारयितव्यं नोदीच्यां किंतर्हिदक्षिणाभिमुखंयथोदकंपित्र्येणतीर्थेनकार्यते । सर्वग्रहणादन्यदपि परिवेषणाद्यपसव्यमेवकर्तव्यमपसव्येनहस्तेनोदकंनिर्वपेत् । शनैरितिवापाठः । अत्रार्थः अन्यथाराजतैर्भाजनैरित्यनेनराजतभाजनप्राप्तयेसव्यहस्तविधिः । आवृत्तिरावृत् ॥ २१४ ॥

---

( २१४ ) सर्वमावृत्यविक्रमम्=सर्वमावृत्परिक्रमम् ( क, ख, ग, घ, च, ज, झ, ञ, ठ, ड, ढ, त, थ, ब, भ, य, र, ळ, मेधा० ) ।

( २ ) **सर्वज्ञनारायणः** । अपसव्यं प्राचीनावीतेन एतच्चाग्न्यादीनांदेवताभूतत्वाद्यज्ञोपवीतमग्नौ प्राचीनावीतविधानम् । आवृत्परिक्रमंकर्मक्रमं अपसव्येन पितृतीर्थेन उदकंपिण्डदानस्थाने ॥ २१४ ॥

( ३ ) **कुल्लूकः** । अग्नौ पर्युक्षणाद्यग्नमुक्तं अग्नौकरणहोमानुष्ठानक्रममपसव्यंदक्षिणसंस्थंकृत्वा ततोपसव्येन दक्षिणहस्तेन पिण्डाधारभूतायां भुव्युदकंक्षिपेत् ॥ २१४ ॥

( ४ ) **राघवानन्दः** । अग्नौ पर्युक्षणाद्यङ्गयुक्तमग्नौकरणहोमानुष्ठानक्रमं सर्वमावृत्परिक्रमं परिपाटीक्रमं । अपसव्यंदक्षिणसंस्थंतत्कृत्वाअपसव्येन दक्षिणहस्तेन भुवि पिण्डाधारभूतायाम् । उदकं निर्वपेत् निःक्षिपेत् ॥ २१४ ॥

( ५ ) **नन्दनः** । पितृकार्ये हस्तमुद्रायालक्षणमाह अपसव्यमिति । हस्ताभिमुखंदक्षिणहस्ततलमपसव्यम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । अग्नौ अपसव्यंकृत्वा यज्ञोपवीतंप्राचीनावीतं कृत्वा सर्वमावृत्परिक्रमंदक्षिणंपरिक्रम्यअपसव्येन हस्तेन भुवि उदकंनिर्वपेत् । वामहस्तंतु सव्यंस्यादपसव्यंतु दक्षिणम् ॥ २१४ ॥

**त्रींस्तु तस्माद्धविःशेषात्पिण्डान्कृत्वा समाहितः ॥ औदकेनैव विधिना निर्वपेद्दक्षिणामुखः ॥ २१५ ॥**

( १ ) **मेधातिथिः** । यत्तद्धोमार्थंपात्रेगृहीतमन्नं तस्माद्धुतशिष्टात् त्रीन् पिण्डान् कृत्वा दक्षिणस्यांदिशिमुखंकृत्वानिर्वपेत् । दर्भेषुपितॄनुद्दिश्यप्रक्षिपेत् । संहतंद्रव्यंपिण्डशब्देनोचते । तेनविशदमन्नंनदातव्यं । औदकेन औदकोविधिर्यःसमनन्तरमेवोक्तः अपसव्येनेत्यादि । अत्रेदंसंदिह्यते किंयत्तदन्नंब्राह्मणभोजनार्थंसाधितं ततोप्युद्धृत्यहविःसंस्कारःकर्तव्यः । ततःपृथक्चरुसाधनायइति । किंपरिमाणंचतद्धविरिति । नह्यत्रचतुरोमुष्टीनित्यादिपरिमाणसंभवःविचारितमेतत् विशेषाश्रवणात् । कामचारःपरिमाणं यावताअर्थसिध्दिर्भवति । औदकविध्यतिदेशाच्चहस्तेनापसव्येनपिण्डनिर्वपणंनराजतैःपात्रैः । समाहितग्रहणंवृत्तपूरणंवृत्तपूरणार्थम् ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । हविःशेषात् हुतशेषादुद्धरणपात्रस्थादन्नस्थालीस्थाच्च औदकेन विधिना यथोदकं पितृतीर्थेन नीतं तथेत्यर्थः । अत्रचउदकनिनयनंभूमौ कृत्वा तदुपरि कुशानास्तीर्य तेषु दर्भेषु पिण्डदानमिति ग्राह्यम् । तेषु दर्भेष्विति वक्ष्यमाणत्वात् ॥ २१५ ॥

( ३ ) **कुल्लूकः** । तस्मादग्न्यादिहोमादुद्धृतादन्नादुद्धृतावशिष्टान्त्रीनपिडान्कृत्वा औदकेनैव विधिना दक्षिणहस्तेन समाहितोऽनन्यमनादक्षिणमुखस्तेषु दर्भेष्वितिवक्ष्यमाणत्वाद्दर्भेषु दद्यात् ॥ २१५ ॥

( ४ ) **राघवानन्दः** । तस्मादग्नौकृताद्धविःशेषात्त्रीन्पिण्डान् कृत्वा समाहितोनन्यमनाः । औदकेनैव विधिना दक्षिणहस्तेन ॥ २१५ ॥

( ५ ) **नन्दनः** । हविःशेषादन्नात् । औदकेनैवविधिना अपसव्येन हस्तेनेत्यर्थः ॥ २१५ ॥

( ६ ) **रामचन्द्रः** । तस्मात्हविःशेषादन्नात्समाहितःसन्पितृपिण्डान्कृत्वा दक्षिणामुखःसः औदकेन विधिनाअपसव्येन जलदानविधिना अपसव्येन पितृतीर्थेननिर्वपेत्दद्यात् । हविष्याण्याह । तद्यथा । व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकंएलाशुण्ठिमरीचिहिङ्गुशर्कराकर्पूरसैन्धवंसामभरंनालिकेरएकदाबदरगव्यपयोदधिघृतपायसप्रभृतिस्मृत्यन्तरप्रसिद्धंवेदितव्यम् ॥ २१५ ॥

**न्युप्य पिण्डांस्ततस्तांस्तु प्रयतोविधिपूर्वकम् ॥ तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम् ॥२१६॥**

( १ ) **मेधातिथिः** । न्युप्यदत्वा दर्भेषुतान्पिण्डान्तंहस्तंनिमृज्याद्दर्भेषुतेषुयेष्वेवपिण्डनिर्वपणंकृतं स्मृत्यन्तरदर्शनात् दर्भमूलेषुमार्जनम् । अपरेचनहस्तसंलग्नस्यान्नस्योदकस्यवादर्भेषुसंश्लेषणं यदिनाकिंचिदपिहस्तेसंश्लिष्येत्तथापिहस्तंदर्भेषुनिमृज्यादेव । नह्येतत्प्रतिपत्तिकर्मैव । येनासत्तिवचनप्रयोजनेनक्रियते । नेहश्रूयते हस्तलग्नंनिर्मृज्यते किंतर्हिहस्तमेव । ननुचलेपभागिनामितिश्रूयते तत्रासतिलेपेनप्राप्नोति अतःकिमुच्यतेयदिनाकिंचिदपिहस्तेसंश्लिष्येत्तथापिकर्तव्यमिति । उच्यतेसाक्षात्मूर्तमन्नंकदाचिन्नश्लिष्यति पिण्डेष्वनुवर्त्यमानेषुअन्नरसऊष्मावसंपर्कात्हस्तेसएवलेपउच्यते । लेपभागिनामितिषष्ठी । निमार्जनस्यतत्संबन्धितामाह । नचलेपभागिनःप्रत्यक्षदृश्याःसन्तियेषांस्वस्वाम्यादिसंबन्धोलेपस्यक्रियेत । तस्माल्लेपभागिनामयंभागोस्त्वितिमनसाध्यायेत् । शब्देनवोद्दिशेत् अन्येतुप्रपितामहात्पूर्वेयेपितरस्तान्लेपभागिनआहुः । अस्मिन्दर्शनेप्रपितामहपित्रेप्रपितामहपितामहायेत्यादिभिःशब्दैरुद्देशःकर्तव्योऽसतितन्नामवेदने । हस्तमित्येकवचननिर्देशादेकेनापसव्येनहस्तेनपिण्डनिर्वपणंदर्शयति । प्रयतइत्याद्यनुवादोविहितत्वात् । विधिपूर्वकमितिशास्त्रान्तरदृष्टंविधिंपरिगृण्हाति । गन्धमाल्यधूपाच्छादनसिद्धोपहारैःपिण्डंनिर्वपेदितिशङ्कः । यस्त्विहविधिःश्रुतःसस्वमतेनैवोक्तइतिविधिपूर्वकमित्येतदनर्थकं तस्माच्छास्त्रान्तरविध्युपसंहारार्थंविधिपूर्वकमितिवचनम् ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । लेपभागिनां लेपभागिनोवृद्धप्रपितामहादीनुद्दिश्येत्यर्थः ॥ २१६ ॥

( ३ ) **कुल्लूकः** । विधिपूर्वकंस्वगृह्योक्तविधिना दर्भेषु तान्पिडान्दत्वा दर्भमूलेषु करावघर्षणमिति विष्णुवचनाच्च तेषु दर्भेषु मूलदेशे हस्तंनिर्लेपंकुर्यात्प्रपितामहपित्रादीनांत्रयाणांलेपभुजांतृप्तये ॥ २१६ ॥

( ४ ) **राघवानन्दः** । न्युप्य दत्वा । विधिपूर्वकंस्वगृह्योक्तेन विधानेन । लेपभागिनांपित्रादित्रयाणां तृप्तये । दर्भमूलेषु करघर्षणमिति विष्णुवचनाद्धस्तंनिमृज्यात् ॥ २१६ ॥

( ५ ) **नन्दनः** । तेषु दर्भेषु येषु पिण्डान्युप्ताः अनेनैव ज्ञाप्यते दर्भेषूदकनिनयनंपिण्डनिवपनंच कार्यमिति । लेपभागिनांपितामहात्परेषांत्रयाणाम् ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । न्युप्यनितरां उप्यस्थापयित्वातान् । ततःस्थापनानन्तरंहस्तंनिर्मृज्यादङ्गुल्यादिना प्रक्षालयेत् । लेपभागिनां तेषु दर्भेषु दर्भमूलेषु तत्प्रक्षालयान्नंदद्यात् । चतुर्थाल्लेपभागिनइतिवचनात् ॥ २१६ ॥

**आचम्योदक्परावृत्य त्रिरायम्य शनैरसून् ॥ षड्ऋतूंश्च नमस्कुर्यात्पितॄनेव च मन्त्रवित् ॥२१७॥**

( १ ) **मेधातिथिः** । दर्भेषुपिण्डान्दत्वोदीचींदिशंपरावर्तेत । सव्येनमार्गेण स्मृत्यन्तरेहिसव्यावृदुदक्परावृत्येतिपठ्यते । उत्तराभिमुखःस्थित्वाआचामेत् । आचम्यत्रीन्प्राणायामान्कुर्यात् । असून्प्राणानायम्य सन्निरुध्यइत्येव । गायत्रींशिरसाइत्यादिविधिर्नास्ति । शनैर्यथानातिपीडाभवति तथाचाह । यथावाक्यंप्राणानासिकातदभिमुखएवसकृन्नमस्कुर्यात् । वसन्तायनमइत्यादिपितॄंश्चनमस्कुर्यात् । मन्त्रवत्नमोवःपितरइत्यादिनामन्त्रेण । पितॄणांनमस्कारःपिण्डाभिमुखेनकर्तव्यः । अभिपर्यावृत्येतिहिस्मृत्यन्तरम् ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । उदगुदङ्मुखः परावृत्यावृत्य त्रिस्तूष्णींप्राणानायम्य । नमोवः पितरोरसायेत्यादिमन्त्रेण रसादिसंज्ञान् वर्षादीनृतून्नमस्कुर्यात् पितॄनेवेति नमोवःपितरोरसायेत्यादौ पितॄणामप्युद्दिष्टत्वात्तेऽपि नमस्कार्या इत्युक्तम् ॥ २१७ ॥

( ३ ) **कुल्लूकः** । अनन्तरमुपस्पृश्योदङ्मुखोभूत्वा यथाशक्ति प्राणायामत्रयंकृत्वा वसन्तायनमस्तुभ्यमित्यादिना

षड्ऋतून्नमस्कुर्यात्पितृंश्च नमोवःपितरइत्यादिमन्त्रमुक्तमद्भिःपर्यावृत्त्येति गृह्यदर्शनाद्दक्षिणामुखोनमस्कुर्यात् ॥ २१७॥

( ४ ) **राघवानन्दः**। उदक्परावृत्य उदङ्मुखोभूत्वा । त्रिराचम्य असून् प्राणान् प्राणायामत्रयंकृत्वा । षड्ऋतून् मन्त्रवित् । वसन्तेति मन्त्रेणपितॄन् नमोवइति मन्त्रेण ॥ २१७ ॥

( ५ ) **नन्दनः**। असूनायम्य प्राणायामंकृत्वा । मन्त्रवत् नमोवःपितरइत्यादिमन्त्रयुक्तम् । पितॄनेव पित्रात्मकानेव ॥ २१७ ॥

( ६ ) **रामचन्द्रः**। ततोदर्भेषुपिण्डंदत्वा उदक्परावृत्यउदगुदीचींदिशंपरावर्तेत । तत्प्रदक्षिणावृत्योदङ्मुखःस्थित्वा आचम्यासून्प्राणान् शनैःत्रिरायम्य प्राणानायम्य त्रिःप्राणायामान्कृत्वा षट्ऋतून्नमस्कृत्य मन्त्रविद्ब्राह्मणःकर्ता पितॄन्पितृब्राह्मणान्नमस्कुर्यात् । नमोवःपितरइति ॥२१७ ॥

**उदकंनिनयेच्छेषंशनैः पिण्डान्तिके पुनः ॥ अवजिघ्रेच्च तान्पिण्डान्यथान्युप्तान्समाहितः ॥२१८॥**

( १ ) **मेधातिथिः**। यतएवपात्रादुदकेनप्राक्पिण्डदानाद्दर्भेषूदकनिनयनंकृतं ततएवपुनर्निनयनं पिण्डान्तिकेपिण्डसमीपेकर्तव्यमिति । शेषग्रहणंप्रतिपत्त्यर्थं तस्योदकस्य । तथाहि शेषशब्दउपपन्नोभवति । अतश्चकथंचित्तस्याभावेनास्तिपुनर्निनयनं । गृह्येतुनित्यंनिनयनमित्युक्तं । अवजिघ्रेच्चतान् पिण्डान् अवघ्राणंगन्धोपलब्धिः । गृह्येतु चरोःप्राणभक्षणंभक्षयेदित्युक्तम् । यथान्युप्तान्नियतक्रमेणनिरुप्तान् पित्रेपितामहायप्रपितामहायेति । समाहितइतिश्लोकपूरणम् ॥२१८ ॥

( २ ) **सर्वज्ञनारायणः**। शेषंपूर्वनिनीतोदकशेषंतद्वत्पिण्डान्तिकेदर्भेषु स्थानत्रये पुनर्निनयेत् । एवंब्राह्मणभोजनात्प्राक्पिण्डनिर्वपणमुक्तम् । अत्र पक्षे होमपिण्डदाने प्रधाने विप्रभोजनेनतुशेषप्रतिपत्तिः । यदात्रवक्ष्यमाणक्रमेण भोजनानन्तरंपिण्डदानं तदाहोमब्राह्मणभोजनयोः प्राधान्यं । पिण्डदानंतु शेष प्रतिपत्तिरिति ॥ २१८ ॥

( ३ ) **कुल्लूकः**। पिण्डदानात्पूर्वंपिण्डाधारदेशदत्तोदकशेषमुदकपात्रस्थंप्रतिपिण्डसमीपे देशे क्रमेण पुनरुत्सृजेत् । तांश्च पिण्डान्यथान्युप्तान्येनैव क्रमेण दत्तांस्तेनैव क्रमेणावजिघ्रेत्समाहितोऽनन्यमनाः ॥ २१८ ॥

( ४ ) **राघवानन्दः**। शेषं पिण्डभूमिक्षिप्तावशेषं । निनयेद्दद्यात् यथान्युप्तान् येन क्रमेण दत्तान् ॥ २१८ ॥

( ५ ) **नन्दनः**। शनैरत्वरया । यथान्युप्तान्निवपनानुक्रमेणेत्यर्थः ॥ २१८ ॥

( ६ ) **रामचन्द्रः**। पुनः पिण्डान्तिके पिण्डसमीपे उदकंशनैःनिर्वपेत् दद्यात् । अक्षयोदकमिति उपतिष्ठतां यथान्युप्तान्दत्तान्पिण्डान् समाहितःसन् उत्थाप्यावजिघ्रेत् ॥ २१८ ॥

**पिण्डेभ्यस्त्वल्पिकांमात्रांसमादायानुपूर्वशः ॥ तानेव विप्रानासीनान्विधिवत्पूर्वमाशयेत् ॥२१९॥**

( १ ) **मेधातिथिः**। अत्यन्ताल्पिकामात्राअवयवो भागस्तमेवयोब्राह्मणोयंपितरमुद्दिश्य उपवेशितः तदीयात्पिण्डात् किंचिन्मात्रंसएवाशयितव्यः । अनुपूर्वशइत्युक्तार्थं इहतच्छब्दात्प्रकृतपरामर्शकादन्यभावइत्यत्र न प्रकृतवचनैरेवापूर्वमन्यस्मादादनीयात् ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः**। अत्राद्यपक्षे कर्तव्यान्तरमाह पिण्डेभ्यइति । पिण्डेभ्यःसकाशात् मात्रामवयवं अनुपूर्वशः पित्रादिक्रमात् । तानेव पित्र्यान्तु वैश्वदेविकान् विधिवदाचमनादिपूर्वकं । पूर्वभोजनात् म्रियमाणे जीवति पूर्वेषां ततः पूर्वेषांत्रयाणां एतच्च सुतस्य साग्नित्वेपिण्डपितृयज्ञस्य तदनन्तरंच पार्वणस्यावश्यकंकर्तव्यत्वात् । तस्यपितरि जीवति क्रियाप्रकारउक्तः ॥ २१९ ॥

( ३ ) **कुल्लूकः** । अल्पिकेत्यन्नाल्पमात्राअवयवभागाः पिण्डेभ्यूत्पन्नानल्पभागान्पिण्डक्रमेणैव गृहीत्वा तेनैव पित्रादिब्राह्मणानभोजनकाले भोजनात्पूर्वभोजयेत् । विधिवत्पिण्डानुष्ठानवत्पितरमुद्दिश्य यः पिण्डोदत्तस्तदवयवंपितृब्राह्मणंभोजयेत् । एवंपितामहप्रपितामहपिण्डयोरपि ॥ २१९ ॥

( ४ ) **राघवानन्दः** । किंच पिण्डेभ्यस्तेभ्यः । अल्पिकांमात्रां किंचित् । आशयेत् भोजयेत् ॥ २१९ ॥

( ५ ) **नन्दनः** । मात्रामंशान् ॥ २१९ ॥

( ६ ) **रामचन्द्रः** । पिण्डेभ्यः पिण्डसकाशेभ्योल्पिकांमात्रामन्नंसमादाय यथानुपूर्वशः तानेवाभ्यर्चितानेव विप्रान् विधिवत्पूर्वमाशयेत् । भोजयेत् इत्यर्थः ॥ २१९ ॥

**ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ॥ विप्रवद्वापि तंश्राद्धे स्वकंपितरमाशयेत् ॥ २२० ॥**

( १ ) **मेधातिथिः** । उक्तंपितृभ्यःपिण्डान्निर्वपेदिति कएतेपितरोनामअनेकार्थोहिपितृशब्दोजनयितरिवर्तते जनकः पितेतिसंबन्धिशब्दोदृश्यते । पूर्वप्रमीताःपित्रादयोन्येचसंबन्धिनःप्रेताःपितरउच्यन्ते । तथाच नमोवः पितरइत्यादिमन्त्राबहुवचनान्ताः समर्थनिगदाभवन्ति । अतएवस्त्रीश्राद्धेनोह्यन्ते । नमस्तेमातर्नमस्तेपितामहीत्यादिनक्रियते । अतएकोद्दिष्टेसंख्योहःक्रियते नप्रातिपदिकोहः । तथाचसूत्रकारः । एकवन्मन्त्रानूहेतेत्यादि । नमस्तेपितरित्येवमूहः क्रियते । योभ्रातुः पितामहादेर्वाएकोद्दिष्टंकरोति सचैवमूहति । नमस्तेपितामह नमस्तेपितृव्येत्यादि । पितृव्यादीनामनपत्यानांश्राद्धंविहितं । योयतआददीत संतस्मैदद्यादितिदेवताविशेषवचनोप्यस्तिपितृशब्दः । कूटस्थनित्यार्थेवर्तते निरुक्तकारोहिदैवतमध्यस्थानपितॄन्समामनति । मरुतःरुद्राक्षभृतःपितरइति । एवमनेकार्थेपितृशब्देविशेषावधारणार्थमाह ध्रियमाणेजीवति पितरिसति पूर्वेषांपितामहप्रपितामहतत्पितॄणांनिर्वपेत्त्रयाणां बहुवचननिर्देशात् । तथाचगृह्ये येभ्यःपितादद्यात्तेभ्यः पुत्रोदद्यात्पितापुत्रौचेदाहिताग्नीस्यातामिति । ननुच न चतुर्थेपिण्डोगच्छतीत्याहुः सत्यंनैवाचतुर्थः पिण्डोदीयते । पक्षान्तरमाह विप्रवद्वायथाब्राह्मणनिमन्त्रणापूर्वकंब्रह्मचारिणोनियमवंतश्चपूज्यन्तेतथैवजीवत्पितृकेणपिताभोजनीयःश्राद्धं श्राद्धार्थमन्नंश्राद्धं । अत्रचपितृत्वमेवभोज्यत्वेकारणं नजातिगुणावपेक्ष्यौ । एवंह्याहुः पितृप्रीत्यर्थंश्राद्धं । तत्रमृतस्यप्रीतौकर्तव्यायांकोजीवतिपितरिभावोयेनासौनभोज्येत् । स्वकमित्यनुवादः संबन्धिशब्दत्वादेर्वासिद्धेः । भोजनमत्रपितृभ्योहितंपिण्डनिर्वपणंतुदर्भेषुपितॄणांकर्तव्यमेतत्तइतिविरोधात् । यदिहिपात्रस्थानीयादर्भास्तदाजीवतःपितुःस्वाम्योत्पत्तौअल्पिकांमात्रामाशयेदितिनयुज्यते । जीवतोहिस्वमिच्छाविनियोज्यं नच तस्मिन्पिण्डेअन्नादिदानमुपपद्यते अर्धजरतीयप्रसङ्गात् । नह्यत्राञ्जनादिसंस्कृतेन पितुःकिंचित्प्रयोजनमस्ति तस्माददृष्टार्थमञ्जनादिदानं । अञ्जनादिरहितंतु कदाचिदात्मनःपितुःपरस्यवा भोजनयोग्यंभवतीत्येवमर्धजरतीयं । तस्मादस्मिन्पक्षेपिण्डनिर्वपणंद्वयोः पितामहप्रपितामहयोः । गृह्यकारास्तुस्मरन्ति जीवत्पितृकस्यनपिण्डपितृयज्ञोनश्राद्धंकितर्हिअनारम्भएवतस्यकर्मणोहोमान्ततावा ॥ २२० ॥

( ४ ) **सर्वज्ञनारायणः** । विप्रवदिति । अत्र पक्षे पितृस्थाने पितृपितरमुपवेश्येतरयोरर्थे द्वौ विप्रावुपवेशयेत् । तयोरेव पितर्यपि सर्वमर्घ्यादि विदध्यादित्यर्थः ॥ २२० ॥

( ३ ) **कुल्लूकः** । ध्रियमाणे जीवति पितरि मृतानांपितामहादित्रयाणांश्राद्धंकर्तव्यम् । अथवा पितृविप्रस्थाने तमेव स्वपितरंभोजयेत् । पितामहप्रपितामहयोश्च ब्राह्मणौ भोजयेत्पिण्डद्वयंच दद्यात् ॥ २२० ॥

( ४ ) **राघवानन्दः** । ध्रियमाणे जीवति । पूर्वेषां वृद्धप्रपितामहस्य पितामहप्रपितामहयोःब्राह्मणद्वयंचकुर्यात् । पितृस्थाने स्वकंपितरमित्यन्वयः ॥ २२० ॥

( ५ ) **नन्दनः** । जीवति पितरि पिण्डनिवापः कथंकर्तव्यइत्यपेक्षायामाह । म्रियमाणइति म्रियमाणे जीवति । पितृशब्दः पितामहप्रपितामहयोरप्युपलक्षणम् । पूर्वेषामेव येभ्यःपितादद्यात्तेषामेवेत्यर्थः । निर्वपेत्पिण्डान् । कल्पान्तरमुत्तरार्धेनोक्तम् । विप्रवन्निमन्त्रितविप्रवत् ॥ २२० ॥

( ६ ) **रामचन्द्रः** जीवत्पितृकं प्रत्याह म्रियमाणइति । पितरि म्रियमाणे जीवति सति पूर्वेषां पितॄणां पिण्डान्निर्वपेत् दद्यात् । आभ्युदयिकश्राद्धे तंस्वकंपितरंविप्रवद्भोजयेद्वा । येभ्यएवपिता दद्यात्तेभ्योदद्यात्स्वयं सुतइति न्यायात् २२०

**पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः ॥ पितुः सनाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ॥ २२१ ॥**

( १ ) **मेधातिथिः** । पितुर्नामसंकीर्तनेन तदीयावाहनपिण्डदानब्राह्मणभोजनानिलक्ष्यन्ते । कीर्तयेत्प्रपितामहं । जीवतेपितामहायनदद्यात् । किंतर्हिततःपूर्वाभ्यांपितुःपितृभ्योनिपृणीयादिति स्मरन्ति ॥ २२१ ॥

( २ ) **सर्वज्ञनारायणः** । निवृत्तोमृतः । जीवेद्वापीति वाशब्दश्चार्थे कीर्तयेत् । प्रपितामहंप्रपितामहनाम कीर्तयेत् । नामकीर्तनेन श्राद्धंप्रवर्तयेदित्युक्तंभवति ॥ २२१ ॥

( ३ ) **कुल्लूकः** । नामकीर्तनमत्रश्राद्धोपलक्षणार्थं । पितृजीवनापेक्षोयंवाशब्दः । यस्य पुनः पिता मृतःस्यात्पितामहे जीवति सपितृप्रपितामहयोः श्राद्धंकुर्यात् । गोविन्दराजस्तु । यस्य पितृप्रपितामहौमेतौ स्यातांसपित्रेपिण्डंनिधाय पितामहात्परंद्वाभ्यांदद्यादिति विष्णुवचनात् प्रपितामहतत्पितृभ्यांदद्यादिति व्याख्यातवान् ॥ २२१ ॥

( ४ ) **राघवानन्दः** । यस्यपिता वृत्तोमृतः पितामहश्चजीवति सपितृप्रपितामहयोःश्राद्धंकुर्यात् ॥ २२१ ॥

( ५ ) **नन्दनः** । वृत्तोमृतः ॥ २२१ ॥

( ६ ) **रामचन्द्रः** । यस्य पिता वृत्तः स्यात् मृतः स्यात । पितामहोजीवेद्वा ॥ २२१ ॥

**पितामहोवा तच्छ्राद्धंभुञ्जीतेत्यब्रवीन्मनुः ॥ कामंवा समनुज्ञातः स्वयमेव समाचरेत् ॥ २२२ ॥**

( १ ) **मेधातिथिः** । यथाजीवत्पिताभोज्यते तद्वत्पितामहोपिअनुज्ञांपितामहात्प्राप्यसमाचरेत् । स्वयं च परतोद्वयोर्दद्यात् प्रपितामहायएकस्माएववा एषकामंस्वयमित्यनयोरर्थः ॥ २२२ ॥

( २ ) **सर्वज्ञनारायणः** । जीवत्पितुःपितृभोजनवत् । तच्छ्राद्धं पितामहश्राद्धार्थमन्नादि । कामंवेति पितामहानुज्ञया स्वयंपौत्रःसमाचरेत् त्रिपुरुषंश्राद्धमाचरेत् । तेन पितुःप्रपितामहवृद्धप्रपितामहयोश्च श्राद्धंकुर्यादिति लभ्यते ॥ २२२ ॥

( ३ ) **कुल्लूकः** । यथा जीवत्पिता भोज्यस्तथा पितामहोपि पितामहब्राह्मणस्थाने भोज्यः । पितृप्रपितामहयोश्च ब्राह्मणभोजनंपिण्डदानंच कुर्यात् । यथा वा जीवता पितामहेन त्वमेव यथारुचिकुर्विति दत्तानुज्ञः स्वरुच्या पितामहंवा भोजयेत् । पितृप्रपितामहयोर्वा श्राद्धद्वयंकुर्यादिति विष्णुवचनात्पितृप्रपितामहवृद्धप्रपितामहानांश्राद्धत्रयंकुर्यात् ॥ २२२ ॥

( ४ ) **राघवानन्दः** । श्राद्धंपितामहोद्देश्यकं । पितामहएवभुञ्जीत । समनुज्ञातः पितामहेन दत्तानुज्ञः स्वयंवृद्धप्रपितामहान्तानांदद्यात् । यस्य पितृप्रपितामहौ मृतौ सपित्रेपिण्डंनिधाय पितामहात्परंद्वाभ्यांदद्यादिति विष्णुवचनात् प्रपितामहतत्पितृभ्यांदद्यात् ॥ २२२ ॥

---

( २२२ ) समनुज्ञातः=तदनुज्ञातः ( ल, ब, )

( ५ ) **ननन्दः** । पितुः पितामहस्य वा भोजनपक्षेद्वयोरेव पिण्डदानंपिण्डदानस्थाने भोजनविधानात् । पितुःस्वनामसंकीर्त्यकीर्तयेत्प्रपितामहमित्यस्मिन्पक्षे तु प्रपितामहपित्रेपिण्डंदद्यात् कुतः त्रिषुपिण्डः प्रवर्ततइतिनियमात् । पक्षान्तरमुत्तरार्धेनोक्तम् । तदनुज्ञातः पितामहानुज्ञातः । युक्तसमाचरणंचात्र पितामहस्यापि पिण्डदानंसमस्तपिण्डविलोपोवा कुतः पक्षान्तरस्यासंभवात् ॥ २२२ ॥

( ६ ) **रामचन्द्रः** । तत्श्राद्धे पितामहोवा भुञ्जीत इति मनुरब्रवीत् । वापक्षान्तरे । तदनुज्ञातः पितृपितामहाभ्यामनुज्ञातः कामंस्वयमेव समाचरेत् ॥ २२२ ॥

## तेषांदत्वा तु हस्तेषु सपवित्रं तिलोदकम् ॥ तत्पिण्डाग्रंप्रयच्छेत स्वधैषामस्त्विति ब्रुवन् ॥ २२३ ॥

( १ ) **मेधातिथिः** । यदुक्तंपिण्डेभ्यःस्वल्पिकांमात्रामाशयेदितितस्यायंकालविधिर्देशविधिश्च । अग्रदेशात्पिण्डस्यमात्राआदातव्या । दर्भान्तिलोदकंचदत्वा तदनन्तरंपिण्डभागंप्रयच्छेत्स्वधैषामितिब्रुवन् । एषामपिसर्वनाम्नाविशेषनामानिगृह्यन्ते एवंचसंबन्धःक्रियते येषांयानिनामानितान्युच्चार्यस्वधास्त्वितिंब्रूयादतःस्वधाशब्दयोगे चतुर्थ्यानिर्देशःकर्तव्यः स्वधादेवदत्तायास्तु स्वधायज्ञदत्तायास्त्विति । एवंव्याख्यायमानेशास्त्रान्तरविरोधोनभवति ॥ २२३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतंकर्मक्रममाह तेषांदत्वेति । सपवित्रं सकुशंतिलोदकंदत्वेति पिण्डदानइव तदवयवप्रतिपादनाङ्कपाणाववनेजनंविहितम् । पिण्डाग्रं पिण्डेभ्योल्पमात्रा । एषामिति संक्षिप्योक्तम् । पितुःपितामहस्येत्यादितु पृथगेव कार्यम् । वचनाच्च स्वधायोगेपि षष्ठी २२३ ॥

( ३ ) **कुल्लूकः** । पिण्डेभ्यस्त्वल्पिकांमात्रामिति यदुक्तंतस्यायंकालविधिः प्रदेय*विधिश्च तेषांब्राह्मणानांहस्तेषु सदर्भतिलोदकंदत्वा तदिति पूर्वनिर्दिष्टंपिण्डाग्रंपित्रे स्वधास्त्वित्येवमादि ब्रुवन्पित्रादिब्राह्मणेभ्यस्त्रिभ्यःक्रमेण दद्यात् ॥ २२३ ॥

( ५ ) **राघवानन्दः** । पिण्डेभ्यःस्वल्पिकांमात्रामिति यदुक्तंतस्य कालविधिस्तत्पिण्डाग्रमिति । स्वधैषां पित्रेस्वधास्तु । पितामहाय स्वधास्त्वित्यादि ॥ २२३ ॥

( ५ ) **नन्दनः** । विधिवदाशयेदित्युक्तम् कः पुनरस्यविधिरित्याह तेषामिति । तेषाम् एतेषांपितॄणाम् ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । तेषां ब्राह्मणानां हस्तेषु सपवित्रंतिलोदकंदत्वा पिण्डाग्रंपिण्डशेषं एषांपितॄणांस्वधास्त्विति ब्रुवन्प्रक्षिपेत् दद्यात् ॥ २२३ ॥

## पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ॥ विप्रान्तिके पितॄन्ध्यायन्शनकैरुपनिक्षिपेत् ॥ २२४ ॥

( १ ) **मेधातिथिः** । उभाभ्यांहस्ताभ्यांस्वयंगृहीत्वाअन्नस्यवर्धितंअन्नेनपूर्णंभाजनं विप्रान्तिकेरसवत्यगारादीनांयत्रब्राह्मणाभोज्यन्ते तस्मिन्देशेउपनिक्षिपेत् । ब्राह्मणानांसमीपेस्थापयेत् । अन्येतुव्याचक्षते वर्धितंपरिवर्तुलमन्नमुच्यते तद्विप्रान्तिकेपितॄन् ध्यायन् तुभ्यमिदमिति ध्यात्वानिक्षिपेद्यथाविकिरं तदयुक्तं उपनीयसर्वंपरिवेषयेदितिवक्ष्यति अतःपरिवेषणार्थंप्रदेशान्तरादानीय तस्योपनिक्षेपोयम् ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । वर्धितं पात्रान्तरे कृत्वा पत्न्यादिभिरानीतम् । विप्रान्तिके तत्पात्रसमीपे उपरि निक्षिपेत्स्थापयेत् ॥ २२४ ॥

---

* प्रदेय=प्रदेश ( अ )

( ३ ) **कुल्लूकः**। अन्नस्येति तृतीयार्थेषष्ठी। वर्धितंपूर्णपिठरादिपात्रंस्वयंपाणिभ्यांगृहीत्वा पितृंश्च चिन्तयन्नरसवत्यगारादानीय ब्राह्मणानांसमीपे परिवेषणार्थमत्वरया स्थापयेत्॥ २२४ ॥

( ४ ) **राघवानन्दः**। किंच पाणिभ्यामिति। अन्नस्य च वर्धितं अन्नपूर्णपात्रंपिठरादि। पाकगृहादानीय परिवेषणार्थंस्थापयेत्॥ २२४ ॥

( ५ ) **नन्दनः**। अथपरिवेषणप्रकारमाह पाणिभ्यामिति। वर्धितंराशीकृतम्। शनकैरत्वरया॥ २२४ ॥

( ६ ) **रामचन्द्रः**। स्वयं अन्नस्य वर्धितं। अन्नपूर्णं भाजनं स्वयंपाणिभ्यामुपसंगृह्य विप्रान्तिके समीपे पितॄन् ध्यायन् शनकैरुपनिक्षिपेत् स्थापयेत्। यथाऽविकृतम्॥ २२४ ॥

## उभयोर्हस्तयोर्मुक्तंयदन्नमुपनीयते॥ तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः॥ २२५॥

( १ ) **मेधातिथिः**। द्वाभ्यांहस्ताभ्यामन्नमुपनेतव्यंपरिवेष्टव्यं नचैकेनेति। परिवेषणमुपनयनमेव। ततस्तत्राप्ययमेवधर्मः पूर्वोक्तःतस्यार्थवादः। उभाभ्यांहस्ताभ्यां मुक्तंवर्जितमपरिगृहीतं यदन्नमुपनीयते परिवेषणार्थं तद्विप्रलुम्पन्ति विनाशयंत्यसुराः। सहसाबलेनदुष्टचेतसःपापात्मानःअसुरादेवद्विषः। उभयोरित्यधिकरणेसप्तमी। मुक्तमाकृष्टमस्थितं भवन्तिचप्रतिषेधोपसन्धानेपिकारकविभक्तयः। ग्रामानागच्छत्यासनेनोपविशति त्रिरात्रमुपवसति वसेरर्थस्येति॥ २२५ ॥

( २ ) **सर्वज्ञनारायणः**। उभयोर्हस्तयोरुभाभ्यांहस्ताभ्यां। तस्मान्नैकेन पाणिनोपनेयमित्यर्थः॥ २२५ ॥

( ३ ) **कुल्लूकः**। अधिकरणसप्तमीयं। उभयोः करयोर्मुक्तमस्थितंयदन्नंब्राह्मणान्तिकमानीयते तदसुरादुष्टबुद्धय आच्छिन्दन्ति। तस्मान्नैकहस्तेनानीय परिवेष्टव्यम्॥ २२५ ॥

( ४ ) **राघवानन्दः**। तत्परिवेषणंनैकहस्तेनेत्याह उभयोरिति। हस्तयोर्मुक्तं हस्ताभ्यांवियुक्तं एकेन हस्तेन दीयमानम् विलुम्पन्ति हरन्ति॥ २२५ ॥

( ५ ) **नन्दनः**। यतएवंतस्मादेकहस्तेनान्नंनोपनेयमिति॥ २२५॥

( ६ ) **रामचन्द्रः**। उभयोर्द्वाभ्यांहस्ताभ्यांमुक्तं वर्जितमपरिगृहीतं यदन्नमुपनीयते परिवेषणान्तं तदन्नमसुरा विप्रलुम्पन्ति सहसा दुष्टचेतसः॥ २२५॥

## गुणांश्च सूपशाकाद्यान् पयोदधिघृतंमधु॥ विन्यसेत्प्रयतः पूर्वं भूमावेव समाहितः॥२२६॥

( १ ) **मेधातिथिः**। गुणाव्यञ्जनानि एषामेतत्प्रदर्शनार्थमुत्तरःप्रपञ्चः। सूपशाकाद्यान् विन्यसेद्भूमावेवोपयच्छेत न दारुमयेफलकादौ॥ २२६ ॥

( २ ) **सर्वज्ञनारायणः**। गुणान् व्यञ्जनानि। सूपशब्दः शाकेतरव्यञ्जनपरोत्र॥ २२६ ॥

( ३ ) **कुल्लूकः**। गुणान्व्यञ्जनानि अन्नापेक्षयाऽप्राधान्याद्गुणयुक्तान् वा। सूपशाकाद्यान्प्रयतः शुचिः समाहितोऽनन्यमनाः सम्यग्यथा न विशीर्यन्ति तथा भूमावेव स्वपात्रस्थाने स्थापयेन्न दारुफलकादौ॥ २२६ ॥

( ४ ) **राघवानन्दः**। किंचउपकरणानि पात्रान्तरे शनैर्भूमावेव देयानीत्याह गुणांश्चेतित्रिभिः। अन्नेरुचिसाधनंगुणानुपकरणादीनि कालशाकमांसादीनि॥ २२६ ॥

( ५ ) **नन्दनः**। गुणान्व्यञ्जनानि॥ २२६ ॥

---

( २२६ ) पूर्वं=सम्हक् ( अ )

( ६ ) **रामचन्द्रः** । गुणान्व्यञ्जनानि च पुनः शाकाद्यान् दारुमयफलकादौ भूमावेव समाहितः सन्विन्यसेत् स्थापयेत् । भूमौ स्थापयित्वा परिवेषयेदित्यर्थः ॥ २२६ ॥

**भक्ष्यंभोज्यंच विविधं मूलानि च फलानि च । हृद्यानि चैव मांसानि पानानि सुरभीणि च॥२२७॥**

( १ ) **मेधातिथिः** । धानाशष्कुल्यादयोभक्ष्याः खरविशदमभ्यवहरणीयंहि भक्ष्यमित्युच्यते । भोज्यं घृतपूपादि ॥ २२७ ॥

( २ ) **सर्वज्ञनारायणः** । भक्ष्यंलड्डुकादि । भोज्यमोदनादि । पानानि पेयानि ॥ २२७ ॥

( ३ ) **कुल्लूकः** । भक्ष्यंखरविशदमभ्यवहरणीयंमोदकादि । भोज्यंपायसादि । नानाप्रकारफलमूलानि हृदयस्य प्रियाणि मांसानि पानानि सुगन्धीनि भूमावेव विन्यसेदिति पूर्वेण संबन्धः ॥ २२७ ॥

( ४ ) **राघवानन्दः** । भक्ष्यं धानाशष्कुल्यादि भोज्यंघृतपूपादि । हृद्यानि मनोज्ञानि दृष्ट्या । सुरभीणि सुगन्धीनि ॥ २२७ ॥

( ५ ) **नन्दनः** । भक्ष्यादीन्येतानि स्वातन्त्र्येण भोज्यानि नोपदंशत्वेन ॥ २२७ ॥

( ६ ) **रामचन्द्रः** । हृद्यानि प्रियाणि पानानि सुरभीणि कर्पूरादिसंयुतानि ॥ २२७ ॥

**उपनीय तु तत्सर्वंशनकैः सुसमाहितः ॥ परिवेषयेत प्रयतोगुणान्सर्वान्प्रचोदयन् ॥ २२८ ॥**

( १ ) **मेधातिथिः** । उपनीयविप्रान्तिके सर्वमेतड्ढौकयित्वा ततःपरिवेषयेत् । भुज्यधिकरणोपादानमावर्जनं । भुञ्जानस्यपरिवेषणं यद्यप्यन्तिकदेशआपेक्षिकः तथापितेषामन्तिकेनिधातव्यं । यथाभुञ्जानानामुच्छेषणेननसंसृज्यते । गुणान्भक्ष्यभोज्यादेर्द्रव्यस्य येगुणाअम्लत्वादयस्तान्प्रणोदयमानइदमम्लमिदंमधुरमिदंखाण्डवमित्येवमावेदिते तेषांयद्रोचते तत्तद्द्यादितिवक्ष्यमाणेनसंबन्धः । शनकैरित्याद्यनुवादः श्लोकपूरणार्थः ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः** । उपनीयैकत्र समीपेवस्थाप्य परिवेषयेत् भोजनपात्रे दद्यात् । गुणान्व्यञ्जनानि प्रचोदयन् । भोक्तुंद्विजान्प्रेरयन् ॥ २२८ ॥

( ३ ) **कुल्लूकः** । एतत्सर्वमन्नादिकंब्राह्मणसमीपमानीय प्रयतःशुचिःअनन्यमनाः क्रमेण परिवेषयेत् इदंमधुरमिदमम्लमित्येवंमाधुर्यादिगुणान्कथयन् ॥ २२८ ॥

( ४ ) **राघवानन्दः** । प्रचोदयन् इदंमधुरमिदंकीदृगिति ख्यापयन् प्रयतोऽप्रमत्तः ॥ २२८ ॥

( ५ ) **नन्दनः** । प्रचोदयन्भुञ्जानेषु सूपशाकादीन्गुणान् प्रेरयन्प्रयच्छन्निति यावत् । परिवेषयेत् भोजयेत् ॥ २२८ ॥

( ६ ) **रामचन्द्रः** । तत्सर्वं भक्ष्यंभोज्यं उपनीयआनीय समाहितःसन्परिवेषयेत् । प्रयतः सर्वान्ब्राह्मणान् गुणान्व्यञ्जनानि द्रव्यस्यये गुणाअल्पत्वादयस्तान्वचनेन प्रणोदयन्प्रेरयन् ॥ २२८ ॥

**नास्रमापातयेज्जातु न कुप्येन्नानृतं वदेत् ॥ न पादेन स्पृशेदन्नं न चैतदवधूनयेत् ॥२२९॥**

( १ ) **मेधातिथिः** । अस्रंअश्रुरोदनं तन्नपातयेन्नकुर्यात् । प्रायेणप्रेतश्राद्धादाविष्टवियोगजेन दुःखानुस्मरणेनाश्रुपातोजायते तस्यनिषेधः । आनन्दाश्रुणस्त्वकस्मात्पततो न दोषः । नजातुकदाचिदप्यश्रुविमोचनंकुर्यात् । नकुप्येत्क्रोधंनगृण्हीयात् । अनृतवदनस्य पुरुषार्थतयानिषिद्धस्य कर्मार्थोयंप्रतिषेधः । नपादेनस्पृशेदन्नमुच्छिष्टमनुच्छिष्टंच । नचैतदन्नमवधूनयेदवकम्पयेत् । हस्तादिनोत्क्षिप्यपुनर्नविक्षिपेत् । अन्येतुव्याचक्षते वाससाधूल्याद्यपनयनार्थं यदवधूननं न तदन्नस्योपरिकर्तव्यम् ॥ २२९ ॥

( २ ) **सर्वज्ञनारायणः** । नास्रमापातयेदित्यादयोभोक्तुर्नियमाः । अस्रमश्रु । नचैतदवधूनयेत् पात्रस्थंहस्तेनोत्धृत्य तत्र न पुनःपुनः क्षिपेत् ॥ २२९ ॥

( ३ ) **कुल्लूकः** । रोदनक्रोधमृषाभाषणानि न कुर्यात् । पादेन चान्नं न स्पृशेत् । न चोत्क्षिप्योत्क्षिप्यान्नंपात्रे क्षिपेत् । पुरुषार्थतया प्रतिषिद्धयोरपि क्रोधानृतयोः श्राद्धाङ्गत्वज्ञापनार्थोयंनिषेधः ॥ २२९ ॥

( ४ ) **राघवानन्दः** । किंचैतत्पश्चकंन कुर्यादित्याह नेति । तदन्नं । अवधूनयेत् । उत्क्षिप्योत्क्षिप्य न स्थापयेत् ॥ २२९ ॥

( ५ ) **नन्दनः** । पित्रादिस्मरणेन नास्रमापातयेत् । परिवेषयिताऽन्नंनात्र धूनयेन्नावजानीयान्नावकिरेद्वा ॥ २२९ ॥

( ६ ) **रामचन्द्रः** । श्राद्धकर्ता जातुकदाचित् अश्रुनपातयेत् रोदनं नकुर्यात् । तथा न कुप्येन क्रोधंकुर्यात् अनृतंन वदेत् अन्नंपादेन नस्पृशेत् । एवमन्नंनावधूनयेत् तत्र हस्तंवा न कम्पयेत् ॥ २२९ ॥

**अस्रंगमयति प्रेतान्कोपोरीननृतंशुनः ॥ पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम् ॥ २३० ॥**

( १ ) **मेधातिथिः** । अस्यार्थवादः। अश्रुविमोचनंक्रियमाणंप्रेतान्गमयति प्रापयति श्राद्धं । नपितॄणामुपकारकंभवति प्रेताश्चात्रपिशाचवद्भूतविशेषाविवक्षिताः नत्वसपिण्डीकृताःसम्प्रतिमृताः । रक्षांसिभूतमेतवत्अवगन्तव्यानि । अरयः प्रसिद्धाः तथादुष्कृतीन्दुष्कृताचरणान्पातकिनः ॥ २३० ॥

( २ ) **सर्वज्ञनारायणः** । प्रेतान्पिशाचान् । अरीन्यजमानस्य मृतान्शत्रून् । दुष्कृतीन्दुष्टाकृतीन्नारकिणः ॥ २३० ॥

( ३ ) **कुल्लूकः** । अश्रुक्रियमाणंप्रेतान्भूतवेषान्श्राद्धान्नानि प्रापयति न पितॄणामुपकारकंभवति । क्रोधः शत्रून् । मृषावादः कुक्कुरान् । पादस्पर्शोन्नस्य राक्षसान् । अवधूननंपापकारिणः । तस्मान्न रोदनादि कुर्यात् ॥ २३० ॥

( ४ ) **राघवानन्दः** । न चाश्रिवित्युक्तं तत्करणेदोषमाह अस्रमिति । अस्रंचक्षुर्जलं क्रियमाणमिति शेषः । गमयति श्राद्धीयद्रव्यं प्रेतादिभ्यःप्रापयति । एवमुत्तरत्र । अरीन् शत्रून् दुष्कृतीन्नरकस्थलोकान् । श्राद्धीयद्रव्यंपितॄणामनुपकारकमितिवार्थः । तस्माद्धर्षाश्रूणि न कुर्यादिति भावः ॥ २३० ॥

( ५ ) **नन्दनः** । अस्रंबाष्पः । तदन्नंप्रेतान्पिशाचान्गमयति न पितॄन् ॥ २३० ॥

( ६ ) **रामचन्द्रः** । तत्र दोषमाह गमयतीति । अश्रु प्रेतान्प्रत्यन्नंगमयति प्रापयति कोपोरीन्प्रत्यन्नंगमयति प्रापयति । अवधूननंतिरस्करणंवाअवधूननं वस्त्रव्यञ्जनेन वा अवधूननंदुष्कृतीन्प्रति गमयति प्रापयति ॥ २३० ॥

**यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ॥ ब्रह्मोद्याश्च कथाः कुर्यात्पितॄणामेतदीप्सितम् ॥ २३१ ॥**

( १ ) **मेधातिथिः** । यद्यदन्नंव्यञ्जनंपानंचाभिलषेयुस्तत्तदमत्सरः अलुब्धोदद्यात् मत्सरइतिलोभनाम । रोचेत प्रीतिंजनयेत् । ब्रह्मोद्याब्रह्मणिवेदे याउद्यन्ते कथ्यन्ते ताब्रह्मोद्या देवासुरयुद्धं वृत्रवधःसरमादूत्यमित्याद्याः अथवा कःस्विदेकाकीचरतीत्यादि । ब्रह्मोद्यंचकथाइतिवापाठः तत्प्रधानमन्त्रार्थनिरूपणाद्याःकथाःसंलापालैकिकैः शब्दैः पितॄणामेतदीप्सितमभिलषितमित्यर्थवादः ॥ २३१ ॥

( १ ) **सर्वज्ञनारायणः** । अमत्सरोऽक्रोधः । ब्रह्मोद्या । आध्यात्मिकीः कथादातैव कुर्यात ॥ २३१ ॥

( ३ ) **कुल्लूकः** । यद्यद्विप्राणामीप्सितंअन्नंव्यञ्जनादि तत्तदमत्सरोदद्यात् । परमात्मनिरूपणपराःकथाश्च कुर्यात्। यतः पितॄणामेतदपेक्षितम् ॥ २३१ ॥

( ४ ) **राघवानन्दः** । प्रकृतमनुस्मरति यदिति । यच्छाकादिकं । अमत्सरः अयंबहुभोजीत्यादिमात्सर्यरहितः । ब्रह्मोद्याःपरमात्मनिरूपिकाः कथाः । भृगुर्वै वारुणिः । वरुणंपितरं इत्यादिकाः ॥ २३१ ॥

( ५ ) **नन्दनः** । अमत्सरोऽकृपणइति यावत् । ब्रह्मोद्यावेदप्रतिपाद्याः कथाः । कःस्विदेकाकीचरति सूर्यएकाकीचरतीत्याद्याः ॥ २३१ ॥

( ६ ) **रामचन्द्रः** । यद्यत् अन्नंवा रसोवा रोचेत तत्तदमत्सरः सन्दद्यात् । ब्राह्मणाविदेयाःउच्यन्तेता ब्रह्मोद्याः कथाःकुर्याच्छुभाःदेवासुरादियुद्धादि ब्रह्मेष्टंवदन्ति । कश्चिदेकाकी चरति कउस्विज्जायते पुनः । किंस्विद्धिमस्य भेषजं । किंस्विदावपनंमहदिति । प्रत्याह । सूर्यएकाकी चरति । चन्द्रमाजायते पुनः अग्निर्हिमस्य भेषजं । भूमिरावपनंमहदित्याद्याः कथाःपितृसूक्तानीत्यर्थः ॥ २३१ ॥

**स्वाध्यायंश्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ॥ आख्यानानीतिहासांश्च पुराणानि-खिलानि च ॥ २३२ ॥**

( १ ) **मेधातिथिः** । स्वाध्यायोवेदः । मन्वादिग्रन्था धर्मशास्त्राणि । आख्यानानि सौपर्णमैत्रावरुणादीनि । बाह्वृच्येपठ्यन्ते । इतिहासामहाभारतादयः । पुराणानि व्यासादिप्रणीतानि सृष्ट्यादिवर्णनरूपाणि । खिलानि श्रीसूक्तमहानाम्निकादीनि ॥ २३२

( २ ) **सर्वज्ञनारायणः** । स्वाध्यायंवेदभागंपावमान्यादिमन्त्रान् । आख्यानानि ब्राह्मणभागस्थाःकथाः । इतिहासोमहाभारतं । खिलानि तत्कालपठ्यमानशाखास्थवेदभागान् ॥ २३२ ॥

( ३ ) **कुल्लूकः** । स्वाध्यायंवेदं । मानवादीनि धर्मशास्त्राणि । आख्यानानि सौपर्णमैत्रावरुणादीनि । इतिहासान्महाभारतादीन् । पुराणानि ब्रह्मपुराणादीनि । खिलानि श्रीसूक्तशिवसङ्कल्पादीनि । श्राद्धे ब्राह्मणाञ्छ्रावयेत् ॥ २३२ ॥

( ४ ) **राघवानन्दः** । स्वाध्यायं उशन्हवै वाजश्रवसइत्यादिकठवल्यादिकम् । धर्मशास्त्राणि मन्वादीनि । आख्यानानि सौपर्णमैत्रावरुणानि । इतिहासान् महाभारतादीन् । खिलानि श्रीसूक्तशिवसङ्कल्पादीनि ॥ २३२ ॥

( ५ ) **नन्दनः** । आख्यानानि कंसवधादीनि । इतिहासा महाभारतादयः । खिलानि हरिवंशादीनि ॥ २३२ ॥

( ६ ) **रामचन्द्रः** । पित्र्यं स्वाध्यायं पित्र्यसूक्तं ब्राह्मणान् श्रावयेत् पितृसूक्तमाह । पितृभ्यःस्वधाविभ्यःस्वधानमः । पितामहेभ्यइत्यादि च पुनः धर्मशास्त्राणि श्रावयेत् ॥ २३२ ॥

**हर्षयेद्ब्राह्मणांस्तुष्टोभोजयेच्च शनैः शनैः ॥ अन्नाद्येनासकृच्चैतान्गुणैश्च परिचोदयेत् ॥ २३३ ॥**

( १ ) **मेधातिथिः** । सत्यपिनिमित्ते नस्वंदुःखंकेनचित्प्रकारेण दीर्घेणोच्छ्वासादिना प्रकटयेदपि त्वष्टवत्स्यात ब्राह्मणानहर्षयेत् । गीतादिनापरियुक्तेन अविरुद्धेनवा प्रसंगागतेनपरिहासेन स्वाध्यायेपठ्यमानेचिरंकश्चिदुद्वेजयेत । तदाततोविरम्याख्यानकगीतादिनाचरमयेत् । शनैर्भोजयेत् । कतिचिद्ग्रासाग्रहीतव्याश्चेतत्सम्यक्भोजनमित्येवमादिभिः प्रियवचनैर्भोजयेत् । शनैर्नसंरंभेणब्रूयात् । अन्नाद्येनपायसादिना । गुणैश्चव्यञ्जनैर्दानार्थमुद्यतै रसवत्तयायोजयन्भोजना-

( २३२ ) पित्र्ये=पित्र्यं ( ट, ठ, त, य )=विप्रान् ( ड )

र्थमुत्साहयेत् । स्वाद्यइमाःशष्कुल्यःसुरसेयंक्षीरिणीति पात्रस्थमेवमादिहस्तगृहीतंकृत्वा पुरस्थितःपुनःपुनर्ब्रूयादित्येषाप-रिनोदना ॥ २३३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नाद्येनोदनेनाद्येन भक्तादिना । गुणैर्व्यञ्जकैः कथितैः प्रेरयेद्भोक्तुम् ॥ २३३ ॥

( ३ ) **कुल्लूकः** । स्वयंहृष्टोभूत्वा प्रियवचनादिभिर्ब्राह्मणान् परितोषयेत् । अन्नंचात्वरया भोजयेत् । मिष्टान्नेन पाय-सादिभिः पायसमिदंस्वादुमोदकोयंहृद्योगृह्यतामित्यादिगुणाभिधानैःपुनर्ब्राह्मणान्प्रेरयेत् ॥ २३३ ॥

( ३ ) **राघवानन्दः** । अन्नाद्येन उक्तपायसाद्येन । गुणैरप्रधानैः परिकीर्तयेत् । मधुरादिगुणानितिशेषः ॥ २३३ ॥

( ५ ) **नन्दनः** । परिचोदयेत् इदमन्नमयमुपदंशश्च । पुनरपि भवद्भिर्भोक्तव्यमितिवदेदित्यर्थः ॥ २३३ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणान्हर्षयन् तुष्टःसन् । शनैःशनैर्भोजयेत् । अन्नाद्येनैतान्ब्राह्मणान् गुणैर्व्यञ्जनैःपरिवेषये-त् ॥ २३३ ॥

## व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ॥ कुतपंचासने दद्यात्तिलैश्च विकिरेन्महीम् ॥ २३४ ॥

( १ ) **मेधातिथिः** । अनुकल्पपक्षेदौहित्रस्ययत्नेनभोज्यतोच्यते । कुतपोऽजलोमसूत्रैःकम्बलाकारःपटः । उदीच्ये-षुकम्बलइतिप्रसिद्धः । तंआसनंदद्यात नदौहित्रपक्षे किंतर्हिअन्यदापियतोवक्ष्यति त्रीणिश्राद्धेपवित्राणीति श्राद्धमात्र-विषयत्वात् । तिलैश्चावकिरेत् । तिलांश्चमह्यांभुविनिक्षिपेत् ॥ २३४ ॥

( २ ) **सर्वज्ञनारायणः** । व्रतस्थं ब्रह्मचारिणं । एतेनानुकल्पमध्ये दौहित्रस्य श्रेष्ठतोक्ता । अपीत्यरुचौ । तेन गृहस्थसंभवे ब्रह्मचारिणाममुख्यता दर्शिता । कुतपोनेपालकम्बलः ॥ २३४ ॥

( ३ ) **कुल्लूकः** । ब्रह्मचारिणमपि दौहित्रंश्राद्धे प्रयत्नतोभोजयेत् । अपिशब्दादब्रह्मचारिणमपिआनुकल्पिकमध्यप-ठितस्यापि ब्रह्मचारिणोयत्नवचनाच्छ्रैष्ठत्वंकथयति । नेपालकबलंचासने दद्यात् दौहित्रमन्तरेणापि तिलांश्चश्राद्धभूमौवि-किरेत् ॥ २३४ ॥

( ४ ) **राघवानन्दः** । किंच व्रतस्थमिति । व्रतस्थं ब्रह्मचारिणं अपिशब्दोन्यसंग्रहार्थः तेन स्वस्रीयर्त्विक्जामातृ-श्वशुरमातुलाः । त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवा इतियाज्ञवल्क्येनोक्तेः । कुतपंनेपालकम्बलं । विकिरेत् दिक्षु विक्षिपेत् ॥ २३४ ॥

( ६ ) **रामचन्द्रः** । कुतपं नेपालकमासनंदद्यात तिलैश्च महींविकिरेत् ॥ २३४ ॥

## त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥ त्रीणि चात्र प्रशंसन्ति शौचमक्रोधम-त्वराम् ॥ २३५ ॥

( १ ) **मेधातिथिः** । पवित्राणिपावनानिसाधुत्वसंपादकानि आद्यश्लोकार्धानुवादः । उत्तरस्तुविधेयार्थः । शौच-मशुचिसंसर्गपरिहारः । प्रमादाद्वाजातस्याशुचित्वस्यमृद्वार्यादिना यथाशास्त्रंशुद्धिः । अत्वरांविश्रब्धंभोजनाद्यनुष्ठानम् ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः** । उक्तस्यप्रपञ्चःत्रीणीति । प्रशंसन्ति अङ्गतया प्रशस्तानीति वदन्ति शौचं शुचित्वं कर्तृ-भोक्तृद्रव्याणाम् ॥ २३५ ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तान्येव त्रीणि दौहित्रादीनि श्राद्धे पवित्राणीति ज्ञाप्यन्ते त्रीणि च शौचादीनि प्रशंस-न्ति ॥ २३५ ॥

(४) **राघवानन्दः**। तत्रैव प्रशस्तान्याह त्रीणीति। अत्र श्राद्धे अत्वरा विशेषतःकर्तुम् ॥ २३५ ॥

(५) **नन्दनः**। कर्तव्यान्तरमाह व्रतस्थमिति। व्रतस्थंब्रह्मचारिणम्। नायंत्रिणाचिकेतादीनामिव दौहित्रस्य भोजने विधिः किंतु श्राद्धाङ्गत्वेन कुतः पात्रनियमप्रकरणे दौहित्रस्यानुकल्पत्ववचनादुत्तरयोर्विध्योः श्राद्धाङ्गत्वावगमाच्च। कुतपंदर्भम् ॥ २३५ ॥

(६) **रामचन्द्रः**। कुतपः कुतुपकालोवा। दौहित्रःखङ्गपात्रः दौहित्रोवा। दौहित्रमितिपाठः। दौहित्रंतोषयेत् त्रीण्यत्र श्राद्धे प्रशंसन्ति। शौचंमृद्वारिणा। अक्रोधनं। अत्वरामशीघ्रं त्वराराहित्यमित्यर्थः ॥ २३५ ॥

## अत्युष्णंसर्वमन्नंस्याद्भुञ्जीरंस्ते च वाग्यताः ॥ न च द्विजातयोब्रूयुर्दात्रा पृष्टाहविर्गुणान् ॥२३६॥

(१) **मेधातिथिः**। उष्णमेवात्युष्णंअतिगतउष्णमिति प्रपतितपर्णःप्रपर्णइति यथासर्वमन्नंगुणाश्च। यस्यौष्ण्यस्यभोजनमुचितं तत्रैवेदमुष्णताविधानं नतुदध्योदनादियत्तदुष्णंअप्रीतिकरंव्याधिजनकंच। तत्रहर्षयेद्ब्राह्मणानितिविरुध्येत। उष्णभोजनविधानाच्च न सकृत्सर्वमन्नंपरिवेष्टव्यं। तथाहिबहुभोजिनःशीतंभवेदन्नं तस्माद्भुक्तेपुनर्दद्यान्नचभुञ्जानेभ्यउच्छिष्टदानत्वात् दानमयुक्तमितिवाच्यं। भोजनविधिरेवंरूपएव। आतृप्तेर्भोजयितुर्व्यापारोनह्यत्रौदनादिप्रतिग्राह्यतयासंबध्यते। अतएवनतत्रप्रतिग्रहमन्त्रओदनादिषुप्रयुज्यते। वाग्यताः वाक् यता नियमितायैः छान्दसःपरनिपातः वाचावायताःसाधनंकृतेतिसमासः। कर्तृवचनश्चतदायतशब्दः व्यापारनिषेधोनियमनं वाचश्चव्यापारः शब्दोच्चारणं तत्प्रतिषेधःक्रियते व्यक्ताव्यक्तशब्दोच्चारणंनकर्तव्यं हविषोगुणानचवक्तव्याः। इष्टैःसद्भिर्भुञ्जानैर्दात्रेनविवक्षितमितिरमरन्ति। ननुवाङ्नियमादेवैतत्सिद्धंसत्यमपि भयादिनापि नकर्तव्यंब्रूविः प्रतिपादनेवर्त्तते। ब्रूयुरिति नशब्दोच्चारणमेव ॥ २३६ ॥

(२) **सर्वज्ञनारायणः**। अत्युष्णमभिमतोष्णं हविषोगुणान मिष्टत्वादीन् दात्रादृष्टाअपि ॥ २३६ ॥

(३) **कुल्लूकः**। उष्णमेवात्युष्णं यस्योष्णस्यान्नादेर्भोजनमुचितंतदुष्णंदद्यात् न तु फलाद्यपि अतएव शङ्खः। उष्णमन्नंद्विजातिभ्यःश्रद्धया विनिवेदयेत् अन्यत्र फलमूलेभ्यःपानकेभ्यश्चपण्डितः॥ संयतवाचश्च ब्राह्मणाअश्नीयुः। किमिदंस्वादुस्वादुर्वेति दात्राऽन्नादिगुणान्पृष्टावक्राद्यभिनयेनापि न ब्रूयुः। वाग्यतस्याचैव विधानात् ॥ २३६ ॥

(४) **राघवानन्दः**। किंच अत्युष्णमिति। सर्वमन्नमुपकरणंचेति न ब्रूयुः। अभिनयेनापि न ज्ञापयेयुः वाग्यताइति मौनस्य प्राप्तत्वात् ॥ २३६ ॥

(६) **रामचन्द्रः**। अत्युष्णं कोष्णं सर्वमन्नंस्यात्। वाग्यताः भुञ्जीरन् दात्रा पृष्टान्हविर्गुणान् हविष्यान्नस्य गुणान् द्विजातयो न ब्रूयुः ॥ २३६ ॥

## यावदुष्णंभवत्यन्नंयावदश्नन्ति वाग्यताः ॥ पितरस्तावदश्नन्ति यावन्नोक्ताहविर्गुणाः ॥ २३७ ॥

(१) **मेधातिथिः**। पूर्वस्यविधेरर्थवादोयं। ऊष्माऔष्ण्यम् ॥ २३७ ॥

(२) **सर्वज्ञनारायणः**। अस्यप्रपंचः। यावदुष्णेति। यावदुष्णमन्नमित्यर्थः ॥ २३७ ॥

(३) **कुल्लूकः**। यावदन्नेउष्णता भवति यावच्च मौनिनोभुञ्जते यावच्च हविर्गुणानोच्यन्ते तावत्पितरोऽश्नन्तीति पूर्वोक्तस्यैवार्थस्य प्रशंसा ॥ २३७ ॥

(४) **राघवानन्दः**। उत्कृष्टोत्कृष्टहविर्गुणानभिधानयोरर्थवादमाह यावदिति। नोक्ताःश्राद्धंभुञ्जानैः ॥ २३७ ॥

(६) **रामचन्द्रः**। अन्नेयावदूष्माभवति यावद्वाग्यता अश्नन्ति तावत्पितरोश्नन्ति यावत्हविर्गुणानोक्ताः ॥ २३७ ॥

**यद्वेष्टितशिराभुङ्क्ते यद्भुङ्क्तेदक्षिणामुखः ॥ सोपानत्कश्च यद्भुङ्क्तेतद्वै रक्षांसि भुञ्जते ॥ २३८ ॥**

( १ ) **मेधातिथिः** । वेष्टितमुष्णीषादिना । उदीच्याहि शाटकैःशिरोवेष्टयन्ति । यत्तुव्याचक्षते चूडाकारैरपिकेशैर्वेष्टितशिराभवतीति नतेयुक्तिवादिनः । केशास्तेवेष्ट्यन्तेनशिरोनचकेशाएवशिरः शिरस्थाहिते नहितत्रवेष्टनव्यवहारोलोके । दक्षिणाभिमुखस्यदोषवचनात् स्वल्पेप्रदेशेदक्षिणेतरदिगभिमुखस्यापि भोजनमनुजानाति । अतउदङ्मुखानांविधानेकृतेदक्षिणस्याःप्राप्तिः प्राक्पित्रादेस्तुननिषेधः । उपानहौचर्ममय्यौपादत्राणं अन्येतुचर्मपादुकेउपानहाविवितिव्याचक्षते । रक्षांसिभुञ्जते नपितरइतिनिन्दा ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । वेष्टितशिराः सोष्णीषः ॥ २३८ ॥

( ३ ) **कुल्लूकः** । वस्त्रादिवेष्टितशिरायदन्नंभुङ्क्ते तथा दक्षिणामुखः सपादुकश्च तद्राक्षसाभुञ्जते । न पितरस्तस्मादेवंरूपंन कर्त्तव्यम् ॥ २३८ ॥

( ४ ) **राघवानन्दः** । अथेदानीं भोजनकाले वर्ज्यं प्रदर्शयंस्तत्करणे दोषमाह यदिति । वेष्टितशिराः वस्त्रादिना उपानत्काष्ठपादुका यस्य दक्षिणामुख इति स्वनियमप्रशात् यद्भुङ्क्तेतादृशोन पात्रमिति भावः ॥ २३८ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह यद्वेष्टितशिराइति । वेष्टितशिराःचूडाकारैः केशैर्वेष्टितशिराभवति । चर्मपादुके उपानहादिसामीप्ये निषिद्धम् ॥ २३८ ॥

**चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ॥ रजस्वला च षण्ढश्च नेक्षेरन्नश्नतोद्विजान्॥२३९॥**

( १ ) **मेधातिथिः** । वराहःशूकरःसचग्राम्यःश्वसन्निधानतोनेक्षेरन्नितियद्यपिश्रुतम् । तथापितत्प्रदेशसन्निधिमेवशिष्टानानुमन्यन्ते तथाचघ्राणेनशूकरइत्यादिक्रियान्तरमर्थवादेनश्रूयते । नचानीक्षमाणस्यघ्राणंसंभवति । सन्निहितानांतु स्वरूपानुवादोयं । सूकरोविजिघ्रति । कुक्कुटःपक्षानुद्धुनोति । तस्मात्परिश्रितेदद्यादिति विधिप्रयोजनमेतद्दोषाभावेऽपरिश्रितेपिदद्यात् । षण्ढोनपुंसकम् ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः**। वराहोग्राम्यः षण्ढःक्लीबः ॥ २३९ ॥

(३) **कुल्लूकः** । चाडालग्राम्यसूकरकुक्कुटकुक्कुरोदक्यानपुंसकायथाब्राह्मणान्भोजनकाले न पश्येयुस्तथा कार्यम् २३९

( ४ ) **राघवानन्दः** । श्राद्धभोजिनंप्रति चण्डालादिदर्शनं निषेधति चण्डालश्चेति । वराहः सूकरः । रजस्वलारजोरक्तं योनिमिश्रितं तद्वती । षण्ढः नपुंसकः । अश्नतोभुञ्जानान् ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । अश्नतोद्विजान् चाण्डालादयोनेक्षेरन्नपश्येयुः ॥ २३९ ॥

**होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते ॥ दैवे कर्मणि पित्र्ये वा तद्गच्छत्ययथातथम्॥२४०॥**

( १ ) **मेधातिथिः** । होमे अग्निहोत्रादौ शान्त्यादिहोमेवा । प्रदाने गोहिरण्यादिद्रव्यविषये । अभ्युदयार्थेभोज्ये ब्राह्मणायत्रधर्मायभोज्यन्ते । दैवे हविषि दर्शपौर्णमासादौ । पित्र्येश्राद्धे यदभिवीक्ष्यते क्रियमाणमात्रंकर्म तद्गच्छत्ययथातथं । यदर्थंक्रियतेतद्विपरीतंभावयति । यद्यपिश्राद्धप्रकरणंतथापिवाक्यादन्यत्रापिहोमादावयंप्रतिषेधः ॥ २४० ॥

( २ ) **सर्वज्ञनारायणः** । प्रदाने सुवर्णादिदाने । दैवे हविषि पित्र्ये च हविषि । यदभिवीक्ष्यते अयथातथंयेभ्योदत्तंतेभ्योन्यत्र गच्छति ॥ २४० ॥

---

( २४० ) कर्मणि=हविषि ( न, ब, भ, य, र, ल )

( ३ ) **कुल्लूकः** । यस्मात् होमेऽग्निहोत्रादौ प्रदाने गोहिरण्यादौ भोज्ये स्वाभ्युदयार्थब्राह्मणभोजने दैवे हविषि दर्शपौर्णमासादौ पित्र्ये श्राद्धादौ यदेभिर्वीक्ष्यते क्रियमाणंकर्मतदर्थक्रियते तन्न साधयति ॥ २४० ॥

( ४ ) **राघवानन्दः** । तत्रैव प्रासङ्गिकंक्षिपन्नर्थवादमाह होमइति । प्रदाने ब्राह्मणोद्देश्यकान्नदाने भोज्ये स्वयंकृते एभिश्चण्डालादिषड्भिः । हविषिदैवे पित्र्ये श्राद्धादौ यथादत्तं तदनुरूपं फलतीति यथातथं तद्भिन्नमयथातथं । विफलम् ॥ २४० ॥

( ५ ) **नन्दनः** । अयथातथं व्यर्थम् ॥ २४० ॥

( ६ ) **रामचन्द्रः** । होमे शान्त्यादिहोमे । गोहिरण्यादिप्रदाने भोज्येअभ्युदयार्थभोजने होमंदानंभोज्यंयदेभिः चण्डालादिभि र्वीक्ष्यते । दैवे वैश्वदेवे हविषि दर्शपूर्णमासादौ पित्र्ये कर्मणिवाअयथातथा गच्छति वृथागच्छतीत्यर्थः ॥ २४० ॥

**घ्राणेन सूकरोहन्ति पक्षवातेन कुक्कुटः ॥ श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः ॥ २४१ ॥**

( १ ) **मेधातिथिः** । पक्षकृतेनवायुना कुक्कुटोहन्ति व्याख्यानमेतत् । तावतिदेशेनिवारणीयमेषांसंनिधानं यावन्निस्थिताःपश्यन्ति । अवरवर्णजश्चाण्डालः जडप्रकृतित्वात् । स्पर्शादयश्चप्रकृतक्रियापरानव्यत्रक्षितत्वरूपाइतिव्याख्यातं । अतोवद्यमेतच्चण्डालस्यसामान्यतःस्पर्शप्रतिषेधादसत्यांप्राप्तौप्रतिषेधानर्थक्यम् । अतःशूद्रोवरवर्णजस्तस्यचद्विजातिश्राद्धस्पर्शनिषेधोनात्मीयेइतिविवक्षितेपिनान्नपानादिस्पर्शदोषोयमुच्यते किंतर्हियोदेशःपरिगृहीतोनदीपुलिनादिरपरिश्रितस्तस्यस्पर्शे तस्यहिवाय्वादित्यादिना शुद्धिरुक्ता । अतःसत्यांप्राप्तौ युक्तःप्रतिषेधः ॥ २४१ ॥

( २ ) **सर्वज्ञनारायणः** । घ्राणेन तदन्नगन्धोपलब्ध्या । पक्षवातेन तद्देशमुक्तेन । दृष्टिनिपातेन कर्तृद्विजानांवाशूद्रस्पर्शेन अपक्वानामपि श्राद्धद्रव्याणाम् । अवरवर्णजःशूद्रः ॥ २४१ ॥

( ३ ) **कुल्लूकः** । सूकरस्तदन्नादेर्गन्धंघ्रात्वा कर्मनिष्फलंकरोति । तस्मादन्नघ्राणयोग्यदेशान्निरसनीयः । कुक्कुटः पक्षवातेन सोपि पक्षपवनयोग्यदेशादपगमनीयः । श्वा दर्शनेन शुनोन्नादिदर्शनंनिषिद्धमतिदोषभूयस्त्वज्ञापनार्थंपुनरभिहितम् । अथवा दृष्टिनिपातेनेति श्राद्धकर्तृभोक्तॄणांदृष्टिनिपातविषयत्वेन अवरवर्णःशूद्रस्तस्माज्जातोऽवरवर्णजः शूद्रएव असावन्नादिस्पर्शेन द्विजातिश्राद्धंनिष्फलयतिऽऽ ॥ २४१ ॥

( ४ ) **राघवानन्दः** । कोवा केन किंफलंविफलयतीत्याकांक्षायामाह घ्राणेति । घ्राणेनेति त्रयं देशलक्षकं तेन तावत्तद्देशात्तानपसारयेत् । अवरवर्णजश्चण्डालः । ब्राह्मण्यामवरवर्णात् शूद्रात्जातः पूर्वोक्तपरिशेषाच्च ॥ २४१ ॥

( ५ ) **नन्दनः** । अवरवर्णः शूद्रः । तेन ब्राह्मण्यांजातइत्यवरवर्णजश्चण्डालः ॥ २४१ ॥

( ६ ) **रामचन्द्रः** । श्राद्धदूषकान्याह घ्राणेनेति द्वाभ्यम् । शूकरः हव्यंकव्यंचघ्राणेन हन्ति नाशयति । अवरवर्णजः शूद्रःस्पर्शेन दूषयति । द्विजातिश्राद्धविषये ॥ २४१ ॥

**खञ्जोवा यदि वा काणोदातुः प्रेष्योपि वा भवेत्॥हीनातिरिक्तगात्रोवा तमप्यपनयेत्पुनः॥२४२॥**

---

( ऽऽ ) ( नात्मीयमावश्यकत्वात् ) ( अ ) चिन्हितपुस्तके अधिकंवर्तते ।

( २४२ ) खञ्जः=षण्ढः ( ग, न, भ )

( १ ) **मेधातिथिः** । प्रेष्योभृतकः । अपिशब्दादन्योपियदृच्छयासंनिहितोबान्धवादिरपनेयस्तस्मात्प्रदेशादपसारयेत । खंजोगतिविकलःअजङ्गमादिहीनातिरिक्तगात्रः षण्डःकुणिखण्डीकश्लीपद्यादिः ॥ २४२ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वश्लोके च श्ववराहकुक्कुटानांदृष्टिपातादिभिरपिदूषकत्वमुक्तं प्रेष्योपि श्राद्धार्थप्रेषणकार्यपि । हीनातिरिक्तगात्रश्चक्षुःपादाभ्यामन्यत्रापि ॥ २४२ ॥

( ३ ) **कुल्लूकः** । यदि गतिविकलः काणोवा दातुर्दासःशूद्रस्तस्यैव प्रेष्यत्वविधानात् अपिशब्दादन्योपि शूद्रोन्यूनाधिकाङ्गुल्यादिर्वा स्यात्तदा तमपि ततः श्राद्धदेशादपसारयेत् ॥ २४२ ॥

( ४ ) **राघवानन्दः** । किंच खञ्जइति । प्रैष्यो विप्रोपि खञ्जादिपश्चानांरजस्वलाषण्ढयोश्च स्पर्शदृष्टिसाधारणो दोषोऽतः श्राद्धस्थलादङ्गहीनादीन्निःसारयेदिति भावः । अपिशब्दादन्योपिशूद्रः ॥ २४२ ॥

( ५ ) **नन्दनः** । खञ्जोविकलपादः । दातुः श्राद्धकर्तुः । हीनगात्रो वामनः अतिरिक्तगात्रोऽत्यन्तदीर्घगात्रः । अत्रयवोवागात्रम् । ततः श्राद्धक्रियास्थानात् ॥ २४२ ॥

( ६ ) **रामचन्द्रः** । दातुःप्रेष्योवा हीनगात्रः अतिरिक्तगात्रःगात्राधिकोवा तमपि पुरुषंततः श्राद्धादपनयेत् दूरीकुर्यादित्यर्थः । खञ्जतीति खञ्जः । काणोनेत्रविकलः ॥ २४२ ॥

**ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम् ॥ ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् ॥ २४३ ॥**

( १ ) **मेधातिथिः** । अतिथित्वेनागतंब्राह्मणंभिक्षुकंभिक्षार्थिनंब्राह्मणमपिभोजनप्रवृत्तैर्ब्राह्मणैरनुज्ञातः शक्त्यापूजयेत् । भोजनेनभिक्षादानेनवायुक्तार्थतयार्चयेत् यतःसपाकस्तदर्हस्तदर्थएव ॥ २४३ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणं गृहिणं । भिक्षुकं यतिं व्रतिनंवा । अन्नार्थमुपस्थितम् ॥ २४३ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणमतिथिरूपंअन्यंवा भक्षणशीलंभोजनार्थंतत्कालोपस्थितंश्राद्धपात्रब्राह्मणैरनुज्ञातोयथाशक्त्यन्नभोजनेन भिक्षादानेन चार्हयेत् ॥ २४३ ॥

( ४ ) **राघवानन्दः** । प्रासङ्गिकमाह ब्राह्मणमिति । भिक्षुकं संन्यासिनं । ब्राह्मणैः श्राद्धनिमन्त्रितैः ॥ २४३ ॥

( ५ ) **नन्दनः** । ब्राह्मणैः श्राद्धभोक्तृभिः ॥ २४३ ॥

( ६ ) **रामचन्द्रः** । श्राद्धकाले ब्राह्मणंवा गृहस्थंवा भिक्षुकंवा भोजनार्थमुपस्थितं तैःनिमन्त्रितैर्द्विजैरनुज्ञातःसन् शक्तितः पूजयेत्भोजयेत् ॥ २४३ ॥

**सार्ववर्णिकमन्नाद्यंसन्नीयाप्लाव्य वारिणा ॥ समुत्सृजेद्भुक्तवतामग्रतोविकिरन् भुवि ॥ २४४ ॥**

( १ ) **मेधातिथिः** । वर्णशब्दःप्रकारेद्रष्टव्यः । सर्वप्रकारैर्व्यञ्जनैरुपेतमन्नाद्यं । सन्नीयएकीकृत्य वारिणाआप्लाव्य भुक्तवतांतृप्तानांतृप्ताःस्थइतिवचनानन्तरंअग्रतःसमुत्सृजेत् विकिरेत् नैकस्मिन्नेवदेशे किंतर्हिविशीर्णंभुवि । नपात्रेषु भूमावपिनशुद्धायांकिंतर्हिवक्ष्यति दर्भेषुविकिरइति सर्वत्रैर्वाविकिरंकुर्यादितिशङ्कः । असंस्कृतप्रमीतानांत्यागिनांकुलयोषितां । उच्छिष्टंभागधेयंस्याद्दर्भेषुविकिरश्चयः ॥ नास्यकार्योग्निसंस्कारइत्यत्रिवर्षाअसंस्कृतास्तेषांप्रमीतानां पात्रस्थंउच्छिष्टंदर्भेषुविकिरश्चतेषांभागधेयम् । भागधेयशब्देनोच्यते। नहितेषांश्राद्धोपकारोनास्ति त्यागिनांगुर्वादीनांअथवाकुलयोषितांकु-

---

( २४४ ) विकिरन्=विचरन् ( मेधा० )

लस्त्रीणामदृष्टदोषाणांभार्याणांत्यक्तारः स्वतन्त्राः अन्येतुकुलयोषितामित्यस्मिन्ननूढाःकन्याःकुलयोषितइतिव्याचक्षते । अत-उच्छिष्टंतेभ्यउद्देष्टव्यं । नचवाच्यमपवित्रमुच्छिष्टंकथंभागधेयेनकल्पतामिति वचनान्नास्त्यपवित्रता सोमोच्छिष्टवत्॥२४४॥

( २ ) **सर्वज्ञनारायणः** । सार्ववर्णिकंसर्वव्यञ्जनसहितं । वर्णोव्यञ्जनं । अन्नमोदनमाद्यंफलादि सन्नीयैकीकृत्य विकिरन्विक्षिपंकुर्वन् समुत्सृजेत् भुव्यास्तीर्णकुशायांदर्भेषु विकिरश्चयइत्युत्तरत्र दर्शनात् ॥ २४४ ॥

( ३ ) **कुल्लूकः** । वर्णशब्दः प्रकारवाची । सर्वप्रकारकमन्नादिकंव्यञ्जनादिभिरेकीकृत्योदकेनाप्लावयित्वा कृत-भोजनानांब्राह्मणानांपुरतोभूमौ दर्भेषु विकिरश्च यइति वक्ष्यमाणत्वाद्दर्भोपरि निक्षिपेत्त्यजेत् ॥ २४४ ॥

( ४ ) **राघवानन्दः** । श्राद्धस्योत्तराङ्गमाह सार्ववर्णिकमिति त्रिभिः । वर्णशब्दःप्रकारे तेनाघ्र्यादिसर्वप्रकारमन्न-मिति । सन्नीयव्यञ्जनादिभिरुपकृत्य विकिरन् बहुदेशव्यापि यथास्यात्तथोत्सृजेत् ॥ २४४ ॥

( ५ ) **नन्दनः** । अथभुक्तवत्सुब्राह्मणेषु कर्तव्यमाह सार्वेति । संनीय व्यञ्जनैःसंयोज्य । सार्ववर्णिकंसर्ववर्णविहित-मन्नोत्सर्गस्येदंप्रयोजनमुक्तम् । सर्ववर्णहितार्थमुत्सृजेदित्यर्थः ॥ २४४ ॥

( ६ ) **रामचन्द्रः** । अन्नाद्यंवस्तु सार्ववर्णिकं सर्वव्यञ्जनसहितंवारिणा आप्लाव्यप्रोक्ष्य सन्नीय मिश्रयित्वा भुक्तव-तामग्रतो भुवि विकिरान्नंसमुत्सृजेत् एकस्मिन्देशे विकिरान्भुवि न पात्रेषु ॥ ४४ ॥

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ॥ उच्छिष्टंभागधेयंस्याद्दर्भेषु विकिरश्च यः॥२४५॥**

( २ ) **सर्वज्ञनारायणः** । त्यागिनां प्राणत्यागिनामविधिना कुलयोषितामपत्यादिशून्यानां । उच्छिष्टं विप्रैर्भाण्डेषु त्यक्तंभागधेयं भागः ॥ २४५ ॥

( ३ ) **कुल्लूकः** । नास्य कार्योग्निसंस्कारइति निषेधात्संस्कारानर्हबालानांतथा कुलस्त्रीणामदृष्टदोषाणांये त्यक्तार-स्तेषांपात्रस्थमुच्छिष्टंदर्भेषु च योविकिरः सभागःस्यात् । अन्ये तु त्यागिनामिति गुर्वादित्यागिनांकुलयोषितामिति स्वात-न्त्र्येण तु कुलयोषितामनूढकन्यानामिति व्याचक्षते । गोविन्दराजस्तु त्यागिनांकुलयोषितामिति सामान्योपक्रमादिदंविशे-षाभिधानं संस्कृतंभक्षाइतिवत्ततःस्वकुलंत्यक्त्वा गतानांकुलस्त्रीणामित्याह ॥ २४५ ॥

( ४ ) **राघवानन्दः** । तदुद्देश्यानाह असंस्कृतेति । असंस्कृतप्रमीतानां मृतत्वेन संस्काररहितानां अत्रिवर्षाणां निरपराधंगुर्वादित्यागिनां । एतेनैषांसंस्काराभावोध्वनितः । कुलयोषितां अनूढकन्यकानां कुलटानामिति गोविन्दराजः। उच्छिष्टंपात्रस्थं भागधेयंभागः । विकिरोविक्षिप्तान्नानि तान्यपि भागस्तेषामिति ॥ २४५ ॥

( ५ ) **नन्दनः** । असंस्कृतप्रमीतानामनुपनीतमृतानाम् । त्यागिनांसन्यासिनाम् । भागधेयंभागः । दर्भेषु विकिरे-च्चयत्तद्भागधेयंस्यात् । यतएवंतस्मात्किञ्चिदुच्छेषयेद्दर्भेषुविकिरेदिति ॥ २४५ ॥

( ६ ) **रामचन्द्रः** । त्रिवर्षन्यूनानामसंस्कृतादीनां उच्छिष्टंभागधेयंस्यात् यःदर्भेषु विकिरः भागधेयंस्यात् । अ-स्मिन्दग्धाश्च येऽन्नादाये सदायाःकुले मम । भूमौ दत्तेन तृप्यन्तु तृप्तायान्तु परांगतिम् ॥ त्यागिनांअविधिना प्राणत्यागिनां स्वकुलत्यक्तानांवा योविकिर एतादृशानांपुंसांभागधेयंस्यात् । च पुनरुच्छिष्टंभागधेयंस्यात् । कुलयोषितांपत्यादिरहितानां संबन्धे षष्ठी । दर्भेषु विकिरःभागधेयंस्यात् ॥ २४५ ॥

**उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ॥ दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ २४६ ॥**

( १ ) **मेधातिथिः** । पात्रस्थस्यपूर्वेणप्रतिपत्तिरुक्ता । भूमौनिपतितस्योच्छिष्टस्यदासवर्गार्थतानेनकथ्यते ।

अजिह्मोकुटिलः । अशठःअनलसः । तादृशस्यदासवर्गस्य सभागः तस्मात् प्रभूतंदातव्यं येनभूमौभुञ्जानस्यपततीति॥२४६॥

( २ ) **सर्वज्ञनारायणः** । यत्तूच्छिष्टंतैरेवभूमौत्यक्तंतत्राह उच्छेषणमिति । जिह्मोऽलसः । शठोवक्रगतिः ॥ २४६ ॥

( ३ ) **कुल्लूकः** । उच्छिष्टंयद्भूमिगतंतद्दाससमूहस्यावक्रस्यानलसस्याकुटिलस्य च पित्र्येश्राद्धकर्मणि भागधेयंमन्वादयोवदन्ति ॥ २४६ ॥

( ४ ) **राघवानन्दः** । भूमिगतस्य प्रतिपत्तिमाह । उच्छेषणमिति । उच्छेषणं उच्छिष्टं अजिह्मस्याकुटिलस्येति विशेषणात् कुटिलस्य न किंचित् । दासवर्गस्य गर्भदासादिसमूहस्य पित्र्ये श्राद्धकर्मणि प्रचक्षते वदन्ति मन्वादयः ॥ २४६ ॥

( ५ ) **नन्दनः** । उच्छेषणंयदितिशेषः । अजिह्मस्यर्जोः । अशठस्यानृशंसस्य । यतएवंतस्मात्किञ्चिदुच्छिष्टं भूमिगतंकुर्यादिति ॥ २४६ ॥

( ६ ) **रामचन्द्रः** । उच्छेषणमुच्छिष्टं सारशेषंभूमिगतमन्नंदासवर्गस्य । पित्र्ये पितृकार्ये तंतु भागधेयं प्रचक्षते । कीदृशस्य दासवर्गस्य अजिह्मस्य च पुनरशठस्य अनलसस्य ॥ २४६ ॥

**आसपिण्डक्रियाकर्म द्विजातेः संस्थितस्य तु ॥ अदैवं भोजयेच्छ्राद्धं पिण्डमेकंतु निर्वपेत् ॥ २४७ ॥**

( १ ) **मेधातिथिः** । संस्थितस्यद्विजातेरसपिण्डक्रियाकर्म प्रथममृतस्यासहपिण्डकरणाख्यंकर्मकर्तव्यं । सहपिण्डदानंपूर्वाभ्यांनकर्तव्यं कथंतर्हिकर्तव्यं पिण्डमेकंचनिर्वपेदिति । चशब्दएवशब्दस्यार्थे तस्माएवप्रेतायैकंपिण्डंनिर्वपेत् । ब्राह्मणोहितस्माएवभोजयितव्यः । स्मृत्यन्तरेअन्यापीतिकर्तव्यता वैशेषीस्मर्यते । आवाहनाग्नौकरणरहितमिति । अग्नौकरणशब्देनचात्राग्नौकरिष्येइत्यनुज्ञापनंप्रतिषिध्यते न पुनर्होमः । तथाहिगृह्ये प्रेतश्राद्धमेवाधिकृत्यहोमआम्नायते । यस्मिंश्चकालेकर्मकर्तव्यं यावन्तंचकालंस्मृत्यन्तरादन्वेष्टव्यं । आद्यमेकादशेऽहनि । मृताहेपिचकर्तव्यं प्रतिमासंतुवत्सरं । प्रतिसंवत्सरंचैवश्राद्धंवैमासिकार्थवदिति । तथाचकाठके । एवंसांवत्सरिकमिति एकादशग्रहणंचाशौचनिवृत्त्युपलक्षणार्थं । यतः शुचिर्भूतः पितृभ्योदद्यादितिश्रूयते । संवत्सरान्तेहिसपिण्डीकरणंगृह्यकाराःस्मरन्ति । एतच्चश्राद्धमेकोद्दिष्टंतदङ्गभूतंचनिर्वपणं । यत्तुश्रौतेपितृभ्योदद्यादितिवचनात् । पितृपितामहायप्रपितामहायचेति अकृतेसपिण्डीकरणेनेहदानंयुक्तं नहिस्मृत्याश्रुतिर्बाधितुंशक्यतइति ॥ २४७ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रान्तरेएकोद्दिष्टश्राद्धेविशेषमाह असपिण्डेति । असपिण्डक्रियाकर्मक्रीतसपिण्डीकरणक्रियायांदशायांश्राद्धकर्मद्विजातेः संस्थितस्यानुष्ठेयं तत्र चादैवं वैश्वदेवहीनं विप्रमेकं भोजयेत् । इतराङ्गानुष्ठानक्रमः कालश्च स्मृत्यन्तरसिद्धोग्राह्यः ॥ २४७ ॥

( ३ ) **कुल्लूकः** । मर्यादायामाङ् नाभिविधौ सपिण्डीकरणश्राद्धपर्यन्तमचिरमृतस्य द्विजातेश्च वैश्वदेवब्राह्मणभोजनरहितंश्राद्धार्थमन्नंब्राह्मणंभोजयेदेकंच पिण्डंदद्यात् । अस्य च श्राद्धस्यानुष्ठानं एकोद्दिष्टंदैवहीनमेकार्घैकपवित्रकम् । आवाहनाग्नौकरणरहितंह्यपसव्यवदिति याज्ञवल्क्यादिस्मृतिष्ववगन्तव्यम ॥ २४७ ॥

---

( २४७ ) आसपिण्ड=असपिण्ड ( क, ख, ग, च )

( ४ ) **राघवानन्दः**। एकोद्दिष्टस्य पार्वणविकृततया सर्वधर्मप्राप्तौ यथागृह्यमेधीये दर्शविकृतावपि आज्यभागौ यजेतेति तयोरेवानुष्ठानं नान्यस्येति वचनात् तन्न्यायेनाह आसपिण्डेतिद्वाभ्यां। सपिण्डीकरणपर्यन्तम् मर्यादायामाङ्। संस्थितस्यासन्नमृतस्य एकंपिण्डं एकब्राह्मणभोजनंदैवहीनं एकार्घ्यैकपवित्रं आवाहनाग्नौकरणरहितं स्मृत्यन्तरादवगन्तव्यम्। तच्च यावज्जीवं। मृतेहनि तु कर्तव्यं प्रतिमासं तुवत्सरं। प्रतिसंवत्सरे चैव माद्यमेकादशेहनीति स्मृतेः॥ २४७॥

( ५ ) **नन्दनः**। असपिण्डीकृतपितृकस्य श्राद्धे विशेषमाह आसपिण्डेति। आसपिण्डक्रियाकर्मआसपिण्डक्रियाया-मनुष्ठानंसपिण्डीकरणात्प्राक्कर्तव्यं श्राद्धकर्मेति यावत्। उच्यतइतिशेषः॥ २४७॥

( ६ ) **रामचन्द्रः**। संस्थितस्य मृतस्य द्विजाते असपिण्डक्रिया सपिण्डकरणव्यतिरिक्तं कर्म। अदैवंवैश्वदेवर-हितंश्राद्धंभोजयेत् च पुनः एकं पिण्डंनिर्वपेत्। एकोद्दिष्टमित्यर्थः॥ २४७॥

**सहपिण्डक्रियायां तु कृतायामस्य धर्मतः॥ अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः॥ २४८॥**

( १ ) **मेधातिथिः**। यदातुसपिण्डीकरणंकृतंभवति तदाअनयैवावृतापार्वणश्राद्धविधिनात्रिभ्योदद्यात् आवृदितिकर्तव्यता नसपिण्डीकरणश्राद्धंदैवपूर्वंनियोजयेत्। पितृनावाहयेत्। अत्रपुनःप्रेतं पितरश्चात्र प्राक्सपिण्डीकृताः पितृवर्गमनुप्रवेशिताःपितामहादयउच्यन्ते। तानाशयेत्। तत्रपुनःशब्दस्तेष्वेवब्राह्मणेषु प्रेतआवाहयितव्यः। तत्रहिसर्वैस्तैःसहसंसर्गस्तस्यसंसृजनायचतत्कर्म। यदपिविष्णुनापठितं। प्रेतायब्राह्मणान्भोजयेत् प्रेतपित्रे प्रेतपितामहाय प्रेतप्रपितामहायेति। अत्रापिनैवंश्रूयते पृथक्भोजयेदिति। तत्रयथाबहुदैवत्यंहविर्बह्वीर्देवताउद्दिश्यसकृदेकंहूयते एवंब्राह्मणोपिविद्वानुद्दिश्यभोज्येतेति नाकिंचिदनुपपन्नं। तथाहिसहवचनगृहीतंभवति पित्र्येचनयुग्माभोजिताभवन्ति। यथाएकैकमुभयत्रवेति येषांविधिस्तन्मतेएकःसर्वोद्देशेनभोज्यते। एवमेतद्द्रष्टव्यं। नन्वेवंसतिपितृकृत्ये त्रीनिति सर्वदेवसहोद्देशःप्राप्नोति एकैकस्मिन्ब्राह्मणेसर्वउद्देश्येरन्तत्रापिनपृथक्ग्रहणमस्ति कथंनास्ति गृह्येहिपठ्यते नत्वेवैकं सर्वेषांपिण्डैर्व्याख्यातं। किंच प्रेतपात्रंपितृपात्रेषुसेचयेदर्घार्थमित्याह तत्रकृतासन्नपात्राभावेप्रेतपात्रोदकस्यकुतःपात्रादर्घदानं यदितावत्संमीलितास्तदयुक्तं पितामहादेस्तत्कल्पितंनपितुर्नचान्यार्थंकल्पितादित्यन्यार्थतायुक्ता। अथकृत्वार्घदानंपश्चात्संनयनंकुर्यात्। तदाकृत्वार्घदानंतदर्थसन्नयनस्यत्वतंत्रार्घार्थंप्रसेचयेदितिविरुध्येतवचनं। उक्तेनात्रप्रकारेण नकश्चनविरोधः। अथकोयंप्रेतोनाम प्रपितामहायपिण्डःसपिण्डीकारणादूर्ध्वंनदीयते यतस्तेष्वेवानुप्रविष्टः। तथाचस्मृतिः। यःसपिण्डीकृतंप्रेतंपृथक्पिण्डेनयोजयेत्। विधिघ्नस्तेनभवतिपितृहाचोपजायते॥ इति पृथगेवहितस्मैनिरूप्यते। नत्वेकःसर्वेभ्यइति। मन्त्राश्चएतमेवार्थमभिवदन्तियेसमानाइत्यादयः। अत्रोच्यते। नायंप्रेतशब्दोयतःक्रियायोगेनवर्तते। रूढिरियंमृतःप्रेतइदानींप्रेतउच्यते नहिदूरमध्वानंगतःप्रेतउच्यते। अस्तिचक्रियायोगः अविशेषेणपूर्वप्रेतइदानींप्रेतेच। तथाचश्रुतिः। प्रयन्नेवास्माल्लोकाद्येसमानाइति। अचिरमरणेप्रेतप्रयोगंदर्शयति। प्रेतायान्नंदिनत्रयमितिसद्यःसंस्थितमधिकृत्य। यत्तुपृथक्पिण्डेनेति अस्यायमर्थः सपिण्डीकरणादूर्ध्वमेकोद्दिष्टंनकर्तव्यं यदायदाश्राद्धंनदातदात्रिभ्यःमृताहनिपितृभ्यस्त्रिभ्यएवकर्तव्यं नैकस्माएवपित्रे तथाअनयैवावृताकार्यमितिपार्वणश्राद्धेकर्तव्यतावातिदिश्यते ननुचानयैवेतिप्रकृतपरामर्शाःप्रतीयन्ते सन्निहितवचनत्वात्सर्वनाम्नां सन्निहितश्चैकोद्दिष्टविधिः। नैवं यदिहिकृतेपिसपिण्डीकरणे एकस्यै-

---

( २४८ ) सहपिण्डक्रियायान्तु=सपिण्डस्यक्रियायान्तु ( च )

वक्रियेत तदाभेदनिर्देशएवनोपपद्यते तुशब्दश्चप्रकृतायामितिकर्तव्यतायांभेदंसूचयति । असपिण्डक्रियायामेषविधिः । सहपिण्डक्रियायां पुनःकृतायां नायंमन्तव्यइति । अतोव्यवहिताऽपिबुद्धिस्थत्वात्पार्वणतातिदिश्यते । किंचकृतेसपिण्डीकरणे यदैकोद्दिष्टंस्यात्कर्तव्यं तदात्रिभ्योनमितिअमावास्यायामितिकेचित् । कोविशेषस्तत्रापिसहपिण्डक्रियामित्येवमर्थःकिंनास्ति । नचमानवशास्त्रे कालान्तरमृताहे प्रतिसंवत्सरंचेत्यादि प्रतीतं येनतद्विषयमेतद्व्याख्यायते अतोविशेषात्सर्वत्रैकोद्दिष्टानिप्रामुवन्ति । तत्रमहाभारतवचनंविरुध्येत । तीर्थानिप्रकृत्योक्तं । श्राद्धेनतर्पयामाससवैपूर्वपितामहानिति । यदपिस्मृत्यन्तरंप्रतिसंवत्सरंचैवश्राद्धंवैमासिकार्थवत् । तत्रापिमासिकशब्देनामावास्यमेवश्राद्धमुच्यते सर्वश्राद्धानांतस्यप्रकृतित्वात् । तत्रहिधर्माःसमाम्नाताः । नतुप्रतिमासंतुसंवत्सरमिति । एतन्मासिकशब्देनाभिधातुंयुक्तं नहितस्यविशिष्टाःकेचिद्धर्माःसमाम्नाता यैर्भिद्येत । एकोद्दिष्टंत्वाद्यमेकादशे क्षत्रियस्यत्रयोदशे इत्याद्यत्रापिविद्यते । अतोनैकोद्दिष्टंमासिकशब्देनाभिधातुंयुक्तं । मासकालसंबन्धाद्धितन्मासिकमुच्यते । नचतस्यमासेनैवसंबन्धः । कालान्तरेणापिसंबन्धस्यदर्शितत्वात् । शुचिर्भूतःपितृभ्योदद्यादितिमासादूर्ध्वमपिकरणान्मासेचाकरणान्नात्रमासिकशब्देनतस्याभिधानं । अमावास्यायास्तत्रामौमासिकशब्दश्रवणात्पिण्डानांमासिकश्राद्धमिति नियतत्वात्कालान्तरसंयोगस्याभावाद्धर्मवत्वाच्च युक्तस्तदीयधर्मातिदेशःआमश्राद्धमपि पार्वणप्रकृतिकमेव तत्प्रकृतित्वेचत्रिभ्योदानेप्राप्ते एकोद्दिष्टताविधीयते। यदपि याज्ञवल्क्यवचनं । मृताहनितुकर्तव्यंप्रतिमासंतुवत्सरं । प्रतिसंवत्सरंचैवमाद्यमेकादशेहनि ॥ तत्राप्येवमेतादशीतिकर्तव्यताउच्यते । तत्रापिह्यमावास्यमेवप्रकृतत्वेनावगतं अतोनमासकालयोगेपिएकोद्दिष्टेतदीयधर्मातिदेशोअन्यत्रयुक्तः । भिक्षुकोभिक्षुकाद्याचते सोपियतोन्यस्यविकारः । किंच एकमेवश्राद्धंतस्मान्नमासिकमेवश्राद्धं तस्मान्नमासिकशब्दस्यैकोद्दिष्टविशेषविषयतायांप्रमाणमस्ति । याज्ञवल्क्येप्येवमिति । यद्यनन्तरावमर्शःतदासपिण्डीकरणेतिकर्तव्यतातिदेशःप्राप्नोति । तदनन्तरंह्येतच्छ्रुतं । एतत्सपिण्डीकरणमितिपठित्वार्वाक्सपिण्डीकरणादितिच ततोनन्तरमुक्तंमृताहनीत्यादितस्मात्सन्निधानमकारणीकृत्यधर्मवत्वेनामावास्यस्यैवमितिनिर्देशः । मन्त्राश्चास्मत्पक्षमेवसुतरामवद्योतयन्ति । संसृज्यध्वं पूर्वैः पितृभिःसहेति पूर्वैःपितृभिःसहवर्तमानाउच्यन्ते । संसृज्यध्वमितिबहुवचनंपूजायां । तथाचनिरुक्तकारः । एताउत्याउषसइति । एतास्ताउषासइत्येकस्याएवपूजनार्थंबहुवचनमिति । अथसंसृज्यध्वमितियेषुपिण्डेषुनिक्षिप्यन्ते तउच्यन्तेयश्चनिक्षिप्यतेबहुवचनेनपूर्ववत्पूर्वैभिःपितृभिरिति। एवंचपूर्वैभिरित्येवमेवबहुवचनंप्रायोगिकंभविष्यति। इतरथासंसृज्यध्वमितिनिक्षिप्यमाणपिण्डाभिधानेउभयत्रबहुवचनमयथार्थंकल्प्यमितितदेतदपिनाकिंचिद्यतएकैकेनपिण्डेनपिण्डांशःसंसृज्यते चतुर्थंपिण्डमुत्सृज्य त्रैधंकृत्वा पिण्डेषुनिदध्यादिति अतोनैवात्रयुगपदधिकरणवचनतास्ति येनबहुवचनमवकल्पेत । एकैकाभिधानेनकुतआन्वयिकंसंसृज्यध्वमितिबहुवचनं परोक्षाभिधानंनकल्प्यते । पूर्वैभिरितिनिक्षिप्यमाणपिण्डवचनाच्चनएभिरितिनिर्देशोयुक्तस्यात् । नचायंमन्त्रोविधायकोयेनतदर्थनिर्णयेप्रयतामहेअभिधायकोयं अभिधानंचगुणविनियोगतोविनियोगश्चसंसर्जनंनप्रकाशयति । संख्यात्रनविनियुक्ता नप्रकाशामा संभवमात्रेणान्वीयते तस्मान्नमन्त्रात्पूर्वप्रतिपत्तिः । येप्याहुश्चतुर्थःशब्दः पूर्वतरउपपद्यते पिताहिप्रथमः तदपेक्षयाप्रपितामहात्पूर्वश्चतुर्थइति। एतदपिचसम्यक्पूर्वेषांपिण्डान्निधाय चतुर्णांपूर्णश्चतुर्थःप्रेतपिण्डएवभवति । पित्रुपक्रमंचेदंश्राद्धंनप्रेतोपक्रमं । एवंह्युच्यतेपितॄनावाहयेत्पुनःप्रेतंननिर्दिशेदितियथायंप्रेतायप्रथमःपिण्डस्ततस्तत्पित्रेइत्यादिक्रमः । तस्यापिकृतोयन्नियमः। यएवासौचतुर्थस्तस्यैवेदंत्रैधंकरणंपिण्डेषुनिधानंविधीयते । एतावद्धितद्वाच्यंचतुर्थंपिण्डमुत्सृजेत्त्रैधंकृत्वेति । तत्रानन्तर्यादुत्सृजतिनासंबन्धश्चतुर्थंपिण्डमित्यनयोःप्रतीयते त्रैधंकृत्वेत्यत्रतुकस्येदंत्रैधंकरणमित्यपेक्षायां सन्निहितःपिण्डःसंबध्यते।तावतैवनिराकांक्षीकृतेवाक्येचतुर्थमित्यस्यसंबन्धेनाकिं-

चिन्नमाणमस्ति। तत्रयस्यकस्यविभागेप्रामेस्मृत्यन्तरान्निर्णयः। निरूप्यचतुरःपिण्डान्पिण्डदःप्रतिनामतः। येसमानाइति-द्वाभ्यामाद्यंतुविभजेत्त्रिधेति॥ आद्यत्वंदानाभिप्रायेण नपुनरादिपुरुषसंबन्धात्। तथाहिप्रपितामहादिःस्यात्पितामहात्पूर्वःपि-तामहोपिपितुःपूर्वइत्यनवस्थानादप्रतिपत्तिः। दातुंनियतक्रमतोव्यवस्थितमादित्वं। एवंच चतुर्थमितिपदेनविशिष्टेपिण्डेक्रि-यात्रयेपिस्मृत्यन्तरवशाद्दानक्रमेणैवाद्यस्यविभागोयुक्तः। अतोयदुक्तंकाठके। पूर्वप्रेतस्येष्टोविभागःप्रतीयतइतिकासावस्ये-ष्टता। यच्चोक्तं। अतएवतस्मैअदानंयतएववासावन्तर्भावितः तत्रकिंचिद्वचनान्नदीयते। नचतुर्थपिण्डोगच्छतीति तथात्रि-षुपिण्डःप्रवर्तते। इतियत्त्वयंस्वकृतःपाठः। पुनःप्रेतंननिर्दिशेदिति व्याख्यातंच। अन्तर्भाविते पूर्वप्रेतेपुनर्दानंनिषेधति नै-वायंपाठोस्ति प्रतिषेधार्थयोनपठ्यते समुच्चयार्थोयश्चकारःपठ्यते। सत्यपिवातत्रपाठेचसपिण्डीकृतमित्यत्रपृथक्पिण्डप्रति-षेधस्ययागतिरुक्तासैवात्रवेदितव्या। यानितु वाक्यानि। सपिण्डीकरणादूर्ध्वंप्रतिसंवत्सरंसुतः। एकोद्दिष्टंतुकुर्वीतपित्रोरन्य-त्रपार्वणं॥ पार्वणमित्यादीनि यद्यनंतानिवाक्यानिसन्ति तदाकिममावास्यायांनामघोषणिकया। नचैतानिवाक्यानिशिष्टप-रिगृहीतासुप्रसिद्धासुस्मृतिषुकासुचिदुपलभ्यन्ते तस्मान्नकिंचिद्विशेषेलिङ्गमस्ति येनपूर्वप्रेतपिण्डान्निधीयतइतिप्रतिपद्येमहि। तस्मात्समाचारोनत्याज्यः। अयमेवपक्षोयुक्तियुक्तइतिदर्शितः। तस्मान्मतभेदेनापच्छेदतःपूर्वप्रेतनिधानपक्षोपन्यासःकेषां-चित्। असपिण्डक्रियाकर्म द्विजातेःसंस्थितस्य॥ अदैवंभोजयेच्छ्राद्धंपिण्डमेकंच निर्वपेत्॥ सपिण्डीकरणंमृते पितरि जी-वति पितामहे पाक्षिकंज्ञेयम्। यदा न जीवन्तमतिक्रम्य ददातीत्येवंनाश्रीयते। यदा तु सएषाग्रतास्यादिति पक्षस्तदा पितामहमतिक्रम्य पूर्वैः संसर्जनीयः। एवन्तुपुत्रस्यापि मृतस्यपित्रा विकल्पेनैव कर्तव्यमेवमनपत्यभार्यामरणे जीवन्मा-तृकस्यैषएव विधिः प्रमतानामितरे कुर्वीरंस्ताश्च तेषामिति सुतैरपत्यैरित्यर्थः। यद्यपि सुतग्रहणंतत्स्थानापन्नानामन्ये-षामपि ग्रहणं। यदि त्वशब्देन नास्ति निषेधः॥ २४८॥

( २ ) **सर्वज्ञनारायणः**। धर्मतोधर्मैरङ्गैःसह अनयावृता पार्वणप्रयोगेण सुतैरौरसक्षेत्रजपुत्रिकापुत्रैः॥ २४८॥

( ३ ) **कुल्लूकः**। अस्येति यस्येदमेकोद्दिष्टंविहितंतस्य धर्मतःस्वगृह्यादिविधिना सपिण्डीकरणश्राद्धे कृते अनयैवावृ-ताउक्तामावास्याश्राद्धेतिकर्त्तव्यतया पिण्डनिर्वपणंपार्वणविधिना श्राद्धंपुत्रैःसर्वत्रमृताहादौ कर्तव्यम्। नन्वनयैवावृताइ-त्यनेन प्रकृतमेकोद्दिष्टमेव हि किमिति न परामृश्यते। उच्यते। तर्हि सपिण्डीकरणात्पूर्वमेकोदिष्टं सपिण्डीकरणे कृते पुनः अनयैवावृताइति भेदनिर्देशोनस्यात् ततोमावास्येतिकर्त्तव्यतैव प्रतीयते॥ २४८॥

( ४ ) **राघवानन्दः**। तस्यैव विशेषमाहसहेति। धर्मतःस्वगृह्यविधिना सहपिण्डक्रियायांकृतायामिति। सातुगन्धो-दकतिलैर्विमिश्रकुर्यात् पात्रचतुष्टयं अर्घ्यार्थंपितृपात्रेषु प्रेतपात्रंप्रसेचयेत्। ये समानाइति द्वाभ्यां। शेषंपूर्ववदाचरेत्। एतत् सपिण्डीकरणमिति याज्ञवल्क्यः। अनयैकोर्घ्य इत्यादिकया आवृता परिपाल्या। तदुक्तम्। सपिण्डीकरणादूर्ध्वं-प्रतिसंवत्सरंपुनः। एकोद्दिष्टंतु कुर्वीत पित्रोरन्यत्र पार्वणमिति॥ पार्वणे तु पार्वणपरिपाटीति॥ २४८॥

( ५ ) **नन्दनः**। सहपिण्डक्रियायां सपिण्डीकरणे। आवृता क्रियया। अनयोक्तेन मासिश्राद्धप्रयोगेणेत्यर्थः॥ २४८॥

( ६ ) **रामचन्द्रः**। सहपिण्डक्रियायांकृतायांतु अस्य द्विजस्य धर्मतः अनयैव पार्वणरूपयाआवृता परिपाल्या सुतैरौरसादिभिःपिण्डनिर्वपणंकार्यम्॥ २४८॥

**श्राद्धं भुक्त्वा यउच्छिष्टं वृषलाय प्रयच्छति॥ समूढोनरकं याति कालसूत्रमवाक्शिराः॥२४९॥**

( १ ) **मेधातिथिः**। यद्यपि श्राद्धभुजोदोषग्रहणंतथापि कर्तुरयमुपदेशः। तेन तथाकर्तव्यंयथा न प्रयच्छति क्र-त्विक्प्रमवत्। वृषलःशूद्रः। अर्वाक्शिराऊर्ध्वपादः। प्रकृतएव सपिण्डीकरणमाविज्ञायीति श्राद्धग्रहणम्॥ २४९॥

( २ ) सर्वज्ञनारायणः । श्राद्धंभुक्त्वेत्यादिश्लोकद्वयं सर्वं श्राद्धसङ्कीर्तौनिषेधविधिः । उच्छिष्टं पात्रस्थम् ॥ २४९॥

( ३ ) कुल्लूकः । आश्रितशूद्रायउच्छिष्टदानप्रसक्तावयंनिषेधः । श्राद्धभोजनोच्छिष्टंयःशूद्राय ददाति समूर्खः कालसूत्रंनाम नरकमधोमुखंगच्छति ॥ २४९ ॥

( ४ ) राघवानन्दः । श्राद्धभुजउत्तरकालीननियममाह श्राद्धमिति । सश्राद्धभोक्ता । अवाक्शिराअधोमुखः॥२४९॥

( ५ ) नन्दनः । अथभुक्तवतांवर्जनीयंश्लोकद्वयेनाह ॥ २४९ ॥

( ६ ) रामचन्द्रः । यःश्राद्धंभुक्त्वा वृषलाय शूद्रायोच्छिष्टंप्रयच्छति सकालसूत्रंनरकम् अवाक्शिराअधोमुखःसन्याति ॥ २४९ ॥

**श्राद्धभुग्वृषलीतल्पं तदहर्योधिगच्छति ॥ तस्याः पुरीषे तंमासं पितरस्तस्य शेरते ॥ २५० ॥**

( १ ) मेधातिथिः । वृषली स्त्रीमात्रोपलक्षणार्थमेतदित्याहुः निरुक्तंकुर्वन्ति वृषस्यन्ती चलयति भर्तारमितिवृषली । सा च ब्राह्मणी अन्यावा सर्वानिषिध्यते । तथा च स्मृत्यन्तरं तदहर्ब्रह्मचारी स्यान्नियतइति । तल्पशब्देन मैथुनयोगोभण्यते । न शयनारोहणप्रतिषेधएव । अहर्ग्रहणमहोरात्रलक्षणापरम् । रात्रावपि निषेधः स्यात् । पुरीषइति निन्दार्थवादोनिवृत्त्यर्थः । पितरस्तस्य श्राद्धभुजः । अयमपि पूर्ववद्वचनीयः । इदन्तु युक्तं यदुभयोर्नियमइति । नैमित्तिकोयंभोक्तृधर्मः । श्राद्धभोजने निमित्ते विधीयते । प्रकरणार्थश्च कर्मार्थोपि ॥ २५० ॥

( २ ) सर्वज्ञनारायणः । वृषलीतल्पं शूद्रयाधिष्ठितांशय्यांतदहस्तदहोरात्रे ॥ २५० ॥

( ३ ) कुल्लूकः । वृषलीशब्दोत्र स्त्रीपरइत्याहुः । निरुक्तंचकुर्वन्ति । वृषस्यन्ती चपलयति भर्तारमिति वृषली । ब्राह्मणस्य परिणीता ब्राह्मण्यपि वृषलीति । श्राद्धंभुक्त्वा तदहोरात्रेयः स्त्रीसंप्रयोगंकरोतितस्य पितरस्तस्याः पुरीषे मासं शेरतइति निवृत्त्यर्था निन्दा ॥ २५० ॥

( ४ ) राघवानन्दः । वृषलीतिपदंस्त्रीमात्रपरं । वृषस्यन्ती या पतिभर्तारमिति व्युत्पत्तेः । तंमासमिति कालकर्मासादनमासाख्यं तस्यावृषल्याः पुरीषेपितरः तस्य श्राद्धभोक्तुरिति शेषः ॥२५०॥

( ६ ) रामचन्द्रः । तस्याः पुरीषे च वृषल्यापुरीषे । तंमासं तस्य श्राद्धभोक्तुःपितरःशेरते ॥ २५० ॥

**पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः ॥ आचान्तांश्चानुजानीयादभितोरम्यतामिति ॥ २५१॥**

( १ ) मेधातिथिः । आचमनिकमन्नंपानंदत्वा प्रष्टव्याः । स्वदितमित्यनेन शब्देन स्मृत्यन्तराच्चान्नंपरिगृह्य प्रश्नोयंकर्तव्यः । भवतिहि कस्यचिदयंस्वभावोयद्यसंनिहितमन्नंसत्यपि तदभिलाषे यत्नेनयात्रंमृग्यते । संनिहितंगृण्हाति । ज्ञात्वा च तृप्ताः स्वदितमित्यनेन शब्देन बृंहणीयाः । वक्ष्यति च पित्र्ये स्वदितमिति ॥ २५१ ॥

( २ ) सर्वज्ञनारायणः । पृष्ट्वास्वदितमित्याद्येकोद्दिष्टविषये विशेषाभिधानम् तृप्ताःस्थेति । स्मृत्यन्तरप्रसिद्धश्राद्धान्तरीयप्रश्नस्थानेस्वदितमिति प्रश्नः । विसर्जनेचाभिरम्यतामिति । अभितइति छन्दोनुरोधात् ॥ २५१ ॥

( ३ ) कुल्लूकः । तृप्तानब्राह्मणानबुध्वा स्वदितमिति पृष्ट्वा तेषामाचमनंकारयेत् । कृताचमनांश्च भो इति संबोध्याभिरम्यतामिति ब्रूयादभितइतिपाठेभितउभयतइह वा स्वगृहे वास्यतामित्यर्थः ॥ २५१ ॥

( ४ ) राघवानन्दः । प्रकृतंश्राद्धसमापनाङ्गमाह पृष्ट्वेतिद्वाभ्यां । तृप्तान् भूरिभोजनेन । स्वदितमिति पृष्ट्वानुजानीया-

---

( २५१ ) अभित इतिपाठान्तरम् ॥

दित्यन्वयः। तैरपि सुस्वदितमित्यभिधेयम्। अभिरम्यतां यत्र कापिसुखेनास्यतांभोः ब्राह्मणाः पात्रभोजिनः इत्यनुजानीयादनुज्ञांदद्यात्॥ २५१॥

(५) **नन्दनः**। स्वदतेऽपि भवद्भ्योभोज्यजातमिदमितिपृष्ट्वा। अभितोरम्यतामस्मिन्स्थानआस्यतांसुखमिति॥२५१॥

(६) **रामचन्द्रः**। तृप्तास्थइति पृच्छति तृप्तास्मइति तंब्रूयुः। स्वदितमिति पृच्छति सुस्वदितमितिब्रूयुः। ततआचामयेत् आचान्तांस्ताननुजानीयात् अनुज्ञांदद्यात्। अभिरम्यतांस्वेच्छया। अभिरतास्मइति॥ २५१॥

**स्वधास्त्वित्येव तं ब्रूयुर्ब्राह्मणास्तदनन्तरम्॥ स्वधाकारः परा ह्याशीः सर्वेषु पितृकर्मसु॥२५२॥**

(१) **मेधातिथिः**। भुक्तवद्भिर्गृहगमनाभ्यनुज्ञातैरनन्तरंस्वधेति वाच्यं। स्वधाकारः स्वधाशब्दोच्चारणम्। प्रकृष्टाआशीः पितृकार्येषु सर्वेषु पक्वान्नापक्वान्नश्राद्धेषु॥ २५२॥

(२) **सर्वज्ञनारायणः**। तत्रस्वधास्त्विति तैः प्रतिवक्तव्यम्। स्वधाकारः स्वधोच्चारणं पराह्याशीः पितॄणामिष्टार्थोक्तिः। अत्रसर्वेष्वित्यभिधानात्। एतत्स्मृतिविहितं पार्वणेऽप्येतदेव तृप्तिप्रश्नादि कार्यमित्येके॥ २५२॥

(३) **कुल्लूकः**। अनुज्ञानानन्तरंब्राह्मणाः श्राद्धकर्तारंस्वधास्तुइति ब्रूयुः। यस्मात्सर्वेषुश्राद्धतर्पणादिपितृकर्मसु स्वधाशब्दोच्चारणंप्रकृष्टाआशीः॥ २५२॥

(४) **राघवानन्दः**। किंच स्वधेति तं श्राद्धकर्तारं ब्राह्मणाः स्वधेतिब्रूयुः। किमिति स्वधेति ब्रूयुस्तत्राह स्वधाकारइति। स्वधोच्चारणं प्रकृष्टाशीर्यतः॥ २५२॥

(६) **रामचन्द्रः**। ते स्वधाइति ब्रूयुः। स्वधोच्यतां अस्तु स्वधा। स्वधाकारः पितृकर्मसु परा ह्याशीः॥ २५२॥

**ततोभुक्तवतां तेषामन्नशेषं निवेदयेत्॥ यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्ततोद्विजैः॥ २५३॥**

(१) **मेधातिथिः**। भुक्तमन्नंतेभ्योनिवेदयितव्यं। प्रष्टव्यास्तेदमस्तीति यथा ब्रूयुस्तथा कुर्यादनुज्ञातोऽननुज्ञातेन नान्यत्र विनियोक्तव्यम्॥ २५३॥

(२) **सर्वज्ञनारायणः**। ततोभुक्तवतामित्यादि प्रकृतपार्वणविषयम्॥ २५३॥

(३) **कुल्लूकः**। स्वधाशब्दोच्चारणानन्तरंकृतभोजनानांब्राह्मणानांशेषमन्नमप्यस्तीत्यवशिष्टमन्नंनिवेदयेत् तैर्ब्राह्मणैरिदमनेनान्नेन क्रियतामित्यनुज्ञातोयथा ते ब्रूयुस्तथान्नशेषविनियोगंकुर्यात्॥ २५३॥

(४) **राघवानन्दः**। तेषांचाज्ञापालनीयेत्याह ततइति। तैः श्राद्धभोजिभिः। इष्टेभ्योविनियुज्यतामित्यनुज्ञातः॥ २५३॥

(६) **रामचन्द्रः**। ततः तेषां भुक्तवतामन्नशेषंनिवेदयेत्। तैर्द्विजैर्यदनुज्ञातं यथा ब्रूयुस्तथा कुर्यात् तद्यथा अन्नशेषः किंक्रियतां तदाज्ञायथा इष्टैः सह भुज्यतां इति॥ २५३॥

**पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुश्रुतम्॥ संपन्नमित्यभ्युदये दैवे रुचितमित्यपि॥२५४॥**

(१) **मेधातिथिः**। अन्येनापि तत्कालोचितोपस्थितेनैवमेभिः शब्दैः मोदयितव्यः। अन्यस्त्वाह। अनुज्ञापनमेतैः शब्दैर्भोजनादिप्रवृत्तैः कर्तव्यम्। गोष्ठेगोषुतिष्ठन्तीष्वेकत्रदेशे सुश्रितमिति वाच्यम्। अस्त्विति सर्वत्र प्रतीयते। दैवेरुचिरंरोचितमिति वा॥ २५४॥

(२) **सर्वज्ञनारायणः**। पित्र्ये एकोद्दिष्टे पार्वणेऽपिवा। स्वदतइति क्वचित्पाठः। तत्प्रागुक्तेन स्वदितमित्यनेन विकल्पितंज्ञेयं। गोष्ठे गोमङ्गलार्थं। गोष्ठे ब्राह्मणभोजने तृप्तेषु विप्रेषु शुश्रुतमिति वाच्यम्। शुश्रुतमिति शोभनं श्रवणं। गवा-

मस्त्वितितस्यार्थः। सुश्रितमिति कचित्पाठः। अभ्युदयेविवाहादौविप्रभोजने। दैवेवैश्वदेविकेरोचितमिति। रुचितमितिकचित्पाठः ॥ २५४ ॥

( ३ ) कुल्लूकः। इदानींप्रसंगाच्छ्राद्धान्तरेषु विशेषविधिमाह पित्र्यइति। पित्र्ये निरपेक्षपितृमातृदेवताकएकोद्दिष्टश्राद्धे तृप्तिप्रश्नार्थंस्वदितमिति वाच्यम्। तथा च गोभिलसाङ्ख्यायनौ। स्वदितमिति तृप्तिप्रश्नः। मेधातिथिगोविन्दराजौ तु श्राद्धकालागतेनान्येनापि स्वदितमित्येव कर्त्तव्यमिति व्याचक्षतुः। श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित्। नानरुद्धमिदंविद्वद्वृद्धैर्नश्रद्दधीमहि॥ गोष्ठे गोष्ठिश्राद्धे सुश्रुतमिति वाच्यम्। गोष्ठ्यांशुल्यर्थमष्टममिति द्वादशविधश्राद्धगणनायां गोष्ठीश्राद्धमपिविश्वामित्रेण पठितम्। अभ्युदये वृद्धिश्राद्धेसंपन्नमिति वाच्यम्। दैवे देवतोद्देशेन श्राद्धे रुचितमिति वचनीयम्। दैवश्राद्धंतु भविष्यपुराणोक्तम्। देवानुद्दिश्य यच्छ्राद्धंतत्तु दैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः॥ २५४ ॥

( ४ ) राघवानन्दः। स्वदितमित्यादेः पदस्य व्यवस्थित्यर्थमाह पित्र्यइति। पित्र्ये पार्वणे तस्यैव प्रकृतत्वात्। गोष्ठे विश्वामित्रपठितगणकृतश्राद्धे गोष्ठ्यांयत्क्रियते श्राद्धंगोष्ठीश्राद्धंतदुच्यते। तस्य सत्रस्येव फलं प्रत्येकगामि गणस्याचेतनत्वेन गणिनिष्ठत्वात्फलस्य। अभ्युदये वृद्धिश्राद्धे दैवे॥ देवानुद्दिश्ययच्छ्राद्धंतत्तुदैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यद्भवेदिति॥ भविष्योक्तं। गोमयशुद्धिवत्स्वदितमित्यादौ वाचनिकंतेन न कवितादर इति ॥ २५४ ॥

( ५ ) नन्दनः। स्वदितइति पृष्ट्वाऽऽचामयेदित्युक्तम्। अयमेव प्रश्नादिर्युक्तइत्युपपादयति। पित्र्यइति ॥ २५४ ॥

( ६ ) रामचन्द्रः। पित्र्ये एकोद्दिष्टे स्वदितमित्येवंवाच्यं गोष्ठेषु सुश्रुतंअन्नादि अधिकं शुद्धिसंपन्नंवा अभ्युदये दैवे रोचितं यथा रोचितम् ॥ २५४ ॥

**अपराह्णस्तथा दर्भावास्तुसंपादनं तिलाः॥ सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु सम्पदः॥२५५॥**

( १ ) मेधातिथिः। अपराह्णेश्राद्धंकर्तव्यंश्राद्धकर्मसुसंपदःसंपादयितव्याः। अन्यानि वस्तूनि। अविशेषाविधानेत्यपराह्णेअतः सर्वश्राद्धेषु। एवंहि स्मृत्यन्तरं। पूर्वाह्णे दैविकंकार्यमपराह्णेतुपैतृकं। एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकमिति॥ वास्तु वेश्म तथासंपादनं यन्मार्जनंसुधादिनाभित्तीनां। गोमयेनभूमेरुपलेपनं। दक्षिणाप्रवणतान्च सृष्टिर्विसर्गः अकार्पण्येनान्नव्यञ्जनदानं मृष्टिर्मार्जनं। अन्नसंस्कारविशेषः। अन्येतुव्याचक्षते संपदेषाविभवशक्तिर्नत्वेतैर्विनाअकरणम् ॥ २५५ ॥

( २ ) सर्वज्ञनारायणः। अपराह्णोन्होद्विभागस्य द्वितीयोभागः। वास्तुसंपादनं दक्षिणाप्रवणत्वादिना। सृष्टिः स्वादुबहुतरान्नोत्पादनं। मृष्टिरन्नादीनांशुद्धत्वं। संपदः फलोत्कर्षहेतवः ॥ २५५॥

( ३ ) कुल्लूकः। अमावास्याश्राद्धस्य प्रकृतत्वात्तद्विषयोयमपराह्णकालः। प्रातर्वृद्धिनिमित्तकमित्यादिना वृद्धिश्राद्धादौ स्मृत्यन्तरे प्रातःकालादिविधानात्। विष्टराद्यर्थादर्भाः। गोमयादिना श्राद्धदेशसंशोधनम्। तिलाश्च विकिरणाद्यर्थाः। सृष्टिरकार्पण्येनान्नादिविसर्गः। मृष्टिरन्नादेश्च संस्कारविशेषः। पङ्क्तिपावनादयश्च ब्राह्मणाः। एताःश्राद्धेसंपत्तयइत्यभिधानादङ्गान्तरापेक्षंप्रकृष्टत्वमेषांबोधितम् ॥ २५५ ॥

( ४ ) राघवानन्दः। पार्वणस्य कालंविदधदुक्तचोक्षादिधर्मांत्स्मारयति अपराह्णइति। पूर्वाह्णोवै देवानामपराह्णः

---

( २५५ ) मृष्टिः=तुष्टिः ( ल )

पितॄणां । तथा प्रातर्हि मातृकंश्राद्धंपूर्वाह्णे दैविकंस्मृतं । एकोद्दिष्टंतु मध्याह्ने सायाह्ने पार्वणंस्मृतम् ॥ इत्यादि श्रवणात् मातृकमन्वष्टकाश्राद्धं वास्तुसंपादनं । गोमयादिना स्थललेपनं । सृष्टिरकार्पण्येनान्नादेस्त्यागः । मृष्टिरन्नादेः संस्कारः । अग्र्याः पङ्क्तिपावनाः । संपदः साधनानि ॥ २५५ ॥

( ५ ) **नन्दनः** । अथश्राद्धसम्पदोऽपि प्रसङ्गादाह अमेति । वास्तुसम्पादनंरमणीयप्रदेशस्वीकारः । सृष्टिःसर्जनम् दानमित्यर्थः । मृष्टिः शुद्धिः ॥ २५५ ॥

( ६ ) **रामचन्द्रः** । श्राद्धकर्मसु संपदआह अपराह्णइति । अपराह्णः । तथा दर्भाः । वास्तुसंपादनं गोमयेनोपलेपनं दक्षिणाप्रवणं । तिलाः सृष्टिर्विसर्गः अकार्पण्येनान्नव्यञ्जनदानं । मृष्टिःपात्राणां शुद्धिः । अग्र्याःद्विजाः ब्राह्मणाः सर्ववेदेषु श्रेष्ठाः ॥ २५५ ॥

**दर्भाः पवित्रं पूर्वाह्णोहविष्याणि च सर्वशः ॥ पवित्रं यच्च पूर्वोक्तं विज्ञेयाहव्यसंपदः ॥ २५६ ॥**

( १ ) **मेधातिथिः** । दर्भाःप्रसिद्धाः । पवित्रंमन्त्राः । हविषेहितानि योग्यानि हविष्याण्युत्तरश्लोके तानि वक्ष्यन्ते । पवित्रंपावनंशुच्याचारता यच्चोक्तंपूर्वोक्तंवावास्तुसंपादनं सृष्टिर्मृष्टिर्ब्राह्मणाश्च श्रेष्ठाः श्रुतशीलसंपन्नाःहव्यसंपदः हव्यंदेवतोद्देशेन यागादि ब्राह्मणभोजनंच । हव्यशब्दःकर्मदैविकमुपलक्षयति ॥ २५६ ॥

( २ ) **सर्वज्ञनारायणः** । पवित्रं पावनान्तरं यवजलादि । पूर्वाण्होन्होद्विभागस्य प्रथमभागः । हविष्याणि मुन्यन्नादीनि । यच्च पूर्वोक्तं पित्र्यकर्मण्युक्तं । पवित्रं पावनं । मृष्टिर्द्विजाग्र्याश्च । हव्यं वैश्वदेविकं कर्मलक्षणया । एवंच श्राद्धे दैवकर्मणोनुरोधार्थं कुतपे प्रारम्भः । पित्र्यस्य च प्रधानत्वात् । अपराह्णेनुष्ठानसमाप्तिरितिगम्यते । तदादायैवच श्राद्धेकुतप प्रशंसा । तत्रापि पितृयज्ञंतुनिर्वर्त्यैत्यभिधानादपराण्हप्राप्तौ श्राद्धप्रयोगमध्यएव प्रधानकर्मणः प्राक्पिण्डपितृयज्ञा नुष्ठानम् ॥ २५६ ॥

( ३ ) **कुल्लूकः** । पवित्रंमन्त्राः पूर्वाह्णः कालः हविष्याणि मुन्यन्नादीनि सर्वाणि च यच्च पवित्रंपावनंवास्तुसंपादनादि पूर्वमुक्तम् । एताश्च देवार्थस्य कर्मणः समृद्धयः । हव्यशब्दोदैवकर्मोपलक्षणार्थः ॥ २५६ ॥

( ४ ) **राघवानन्दः** । तत्प्रतियोगितया दैवंकालंविदधदपूर्वधर्मान् विधत्ते दर्भाइति । उदगयने पूर्वपक्षे प्रागावर्तनादन्हः कालंविद्यादिति गोभिलसूत्रात् । पवित्रंमन्त्रं । पुनःपवित्रपदं अविगीतब्राह्मणविषयम् ॥ २५६ ॥

( ५ ) **नन्दनः** । हव्यसम्पदोऽपि प्रसङ्गादाह दर्भाइति । शक्तितः पवित्राणि सूक्तानि जप्यानि । पूर्वोक्तंपवित्रंदेशादयः ॥ २५६ ॥

( ६ ) **रामचन्द्रः** । पवित्रंमन्त्राः यच्च पवित्रंपूर्वोक्तं सृष्ट्यादिद्रव्यसंपदः हव्यकव्यकर्मणिसंपदः एताउक्ताःदर्भादयः ॥ २५६ ॥

**मुन्यन्नानि पयः सोमोमांसं यच्चानुपस्कृतम् ॥ अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥ २५७ ॥**

( १ ) **मेधातिथिः** । मुनिर्वानप्रस्थस्तस्यान्नानिआरण्यानि नीवारादीनि । एतच्चप्रदर्शनं ग्राम्याणामपि व्रीह्यादीनां । तथार्वाचीने श्लोके सर्वग्रहणं । उत्तरत्रच । हविर्यच्चिररात्रायेतिप्रक्रम्यतिलैर्व्रीहियवैर्माषैरिति ग्राम्याणामप्यनुक्रमणं । पयः क्षीरं तद्विकाराअपि दध्यादयोगृह्यन्ते स्मृतिसमाचाराभ्यां । सोमओषधिविशेषः । अनुपस्कृतमधिकृतमप्रतिषिद्धम् । सूना मांसाद्यनुपस्कृतम् । अक्षारलवणम् । अत्रसंदिह्यते । किंद्वन्द्वगर्भेहि वृत्तिद्वयमाश्रयणीयम् । प्रतिपदंच नञःसंबन्धोभेद-

स्तद्गुरु भवति प्रकृत्या हविरनाश्रितविशेषेण तद्धविर्ज्ञेयं हविष्येण वर्तते । हविष्यात्मातराशाद्धुक्ष्वित्यादि सामान्यचोदनासु तद्धविष्यंज्ञेयम् ॥ २५७ ॥

( २ ) **सर्वज्ञनारायणः** । मुन्यन्नान्यकृष्टपच्यानि श्यामाकनीवारादीनि । पयइति सविकारग्रहणात् दुग्धदधिघृतानांग्रहणम् । सोमःसोमलता अनुपस्कृतं मरीचादिना स्वादान्तरमप्रापितम् । अक्षारलवणं बिडादेः क्षारादन्यल्लवणं सामुद्रं सैन्धवंवा । प्रकृत्या स्वभावेन स्थितं । वस्त्वन्तरामिश्रितं । सर्वमेतद्धविर्हव्यम् ॥ २५७ ॥

( ३ ) **कुल्लूकः** । मुनेर्वानप्रस्थस्यान्नानि नीवारादीनि । पयःक्षीरं । सोमलतारसः । अनुपस्कृतमविकृतंपूतिगन्धादिरहितंमांसम् । अक्षारलवणमकृत्रिमलवणंसैन्धवादि एतत्स्वभावतोहविर्मन्वादिभिरभिधीयते ॥ २५७॥

( ४ ) **राघवानन्दः** । हविष्याणीत्युक्तं व्याचष्टे मुन्यन्नानीति । नीवारादीनि । गव्यंपयः । सोमः सोमलतारसः । मांसंवार्ध्रीणसादेः । अनुपस्कृतमविकृतं पूतिगन्धादिरहितमिति यावत् । प्रकृत्या स्वभावतः अनुक्ते विशेषे ॥ २५७ ॥

( ५ ) **नन्दनः** । अनुपस्कृतं लौकिकसंस्कारसंस्कृतम् । प्रकृत्या हविःस्वभावरसेन युक्तंहविरुच्यते विद्वद्भिः ॥ २५७ ॥

( ६ ) **रामचन्द्रः** । पयः क्षीरं सोमलतारसः मांसं अनुपस्कृतमप्रतिषिद्धं हविष्यादिसंस्कृतं अक्षारलवणं सैन्धवादि एते प्रकृत्या स्वभावेन हविर्हविष्यान्नमुच्यन्ते ॥ २५७ ॥

**विसृज्य ब्राह्मणांस्तांस्तु नियतोवाग्यतः शुचिः ॥ दक्षिणां दिशमाकांक्षन्याचेतेमान्वरान्पितॄन् ॥ २५८ ॥**

( १ ) **मेधातिथिः** । प्रासङ्गिकः पूर्वश्लोकः । इदानींप्रकृतशेषमेवाह विसृज्यानुज्ञाय यथा सुखविहारे ब्राह्मणांस्तान्प्रभुक्तवतः । अनन्तरंदक्षिणांदिशमीक्षमाणइमानूवरानभिलषितार्थाम्पितॄम्प्रार्थयेत् स्वपितॄन्ध्यायेत् युष्मासु प्रसन्नेष्विदंनःसंपाद्यतामित्येवंयाचितव्यम् ॥ २५८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रयतोनन्यमनाः । आकांक्षन् साभिलाषंपश्यन् । इमान्वक्ष्यमाणान् । वरानभीष्टार्थान् । पितॄनयाचेत ॥ २५८ ॥

( ३ ) **कुल्लूकः** । तान्ब्राह्मणान्विसृज्यानन्यमनाःमौनी पवित्रोदक्षिणांदिशंवीक्षमाणएतान्वक्ष्यमाणानभिलषितानर्थान्पितॄन्प्रार्थयेत् ॥ २५८ ॥

( ४ ) **राघवानन्दः** । श्राद्धस्योत्तराङ्गमाशीरिति ख्यापयन् तत्क्रममाह विसृज्येति । नियतोऽनन्यमनाः । आकाङ्क्षन्नवलोकयन् । इमान् दात्रादिपञ्चकान् पितॄन्प्रति ॥ २५८ ॥

( ५ ) **नन्दनः** । आकाङ्क्षणमाभिमुख्यम् । इमान्वक्ष्यमाणान् ॥ २५८ ॥

( ६ ) **रामचन्द्रः** । विसृज्यतान्ब्राह्मणान् नियतःशुचिःवाग्यतःसन्दक्षिणांदिशं आकांक्षन्साभिलाषंपश्यन्पितॄनिमान्वरान्प्रमाणलक्षणान्याचेत ॥ २५८ ॥

दातारोनोभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नोमाव्यगमद्बहुधेयं च नोस्त्विति ॥ २५९॥

[ अन्नंचनोबहुभवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु माचयाचिष्म कंचन ॥१॥ *
श्राद्धभुक् पुनरश्नाति तदहर्योद्विजाधमः॥ प्रयाति शूकरीं योनिं कृमिर्वा नात्र संशयः ॥२॥ ऽऽ ]

( १ ) मेधातिथिः । केपुनस्तेवरायाचितव्याइत्यत आह मन्त्रवदयंश्लोकः पठितव्यः ॥ २५९ ॥

( २ ) सर्वज्ञनारायणः । देयंबहु भवतु दानप्रधानाःस्यामित्यर्थः ॥ २५९ ॥

( ३ ) कुल्लूकः । अस्मत्कुले दातारःपुरुषावर्द्धन्ताम् । वेदाश्चाध्ययनाध्यापनतदर्थबोधतदर्थयागाद्यनुष्ठानैर्वृद्धिमाप्नुवन्तुपुत्रपौत्रादिकंच वर्द्धताम् । वेदार्थश्रद्धाचास्मत्कुले न व्यपैतु । दातव्यंच धनादिकंबहु भवतु ॥ २५९ ॥

( ४ ) राघवानन्दः । नः अस्मत्कुले वेदाः स्वाध्यायेनानवच्छिन्नाभवन्तु । सन्ततिः पुत्रपौत्रादिः वर्धतामित्यनुषङ्गःकिंच श्रद्धा माव्यगमत् माऽपैतु ॥ २५९ ॥

[ राघवानन्दः । किंच अन्नमिति नः अस्मान्प्रति याचितारोयाचकाः सन्तु आयान्तु । माचयाचिष्मकंचन न कंचनप्रति याचनांनामकुर्मः ॥१॥ ]

( ६ ) रामचन्द्रः । अस्माकं दातारः अभिवर्द्धन्तां वेदावर्द्धन्ताम् सन्ततिरेवच पुनः सन्तत्यःवर्द्धन्तां नः अस्माकं श्राद्ध मा व्यगमत् अस्माकं बहुदेयम् अस्तु इति ॥ २५९ ॥

[ रामचन्द्रः । अन्नमिति । कंचन मास्म याचिष्मकंचन न याचेमइत्यर्थः ॥१॥ ]

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ॥ गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥२६०॥

( १ ) मेधातिथिः । तदनन्तरं वरयाचनानन्तरं पिण्डान्पितृभ्योनिरुप्तान्गवादीन्प्राशयेत् । अग्नौ प्रक्षेपएव । प्राशनं प्रापयेदितिपाठान्तरम् ॥ २६० ॥

( २ ) सर्वज्ञनारायणः । एवं पूर्वोक्तविधिना वरान्याचित्वातदनन्तरंप्रार्थनानन्तरं पिण्डानांनिर्वपणंकृत्वा तान्पिण्डान्गवाद्यन्यतरमाशयेदप्सु वा निक्षिपेदिति वैशिष्टकालिकंपिण्डनिर्वपणंप्रतिपत्तिविशेषसहितंदर्शितम् । विप्रंश्राद्धिभ्योन्यम् ॥ २६० ॥

( ३ ) कुल्लूकः । एवमुक्तप्रकारेण पिण्डानांप्रदानंकृत्वा प्रकृतवरयाचनानन्तरंतान्पिण्डान्गांब्राह्मणंछागंवा भोजयेत् । अग्नौ जले वा क्षिपेत् ॥ २६० ॥

( ४ ) राघवानन्दः । प्रकृतंश्राद्धमुपसंहरन्पिण्डस्योत्तरप्रतिपत्तिस्थानान्याह एवमिति । अजं छागं अग्निं गार्हपत्यादिम् ॥ २६० ॥

( ५ ) नन्दनः । एवमिति पिण्डनिर्वपणप्रकारस्य पूर्वोक्तस्यपरामर्शः । पूर्वोक्तेन प्रयोगेण ब्राह्मणभोजनानन्तरंपिण्डनिर्वापणंकृत्वेत्यर्थः ॥ २६० ॥

( ६ ) रामचन्द्रः । एवंपिण्डनिर्वपणंकृत्वा तदनन्तरंतान्पिण्डान् गांप्राशयेद्भक्षणं कारयेत् । विप्रंवा अजंवा प्राशयेत् अग्निंवाअग्निमध्येवा प्रक्षिपेत् । अप्सु वा क्षिपेत् ॥ २६० ॥

---

* ( क, ख, ग, ज, झ, ञ, ण )
ऽऽ ( ग ) चिन्हितपुस्तके ।

**पिण्डनिर्वपणं केचित्पुरस्तादेव कुर्वते ॥ वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु वा ॥ २६१॥**

( १ ) **मेधातिथिः** । ब्राह्मणभोजनात्पुरस्तात्केचित्कुर्वन्ति वयोभिःखादयन्त्यन्येऽधिकेयंपूर्वस्मात्प्रतिपत्तिः । अनलेऽग्निः । पूर्वोक्तमेवानुदितं । उच्छिष्टसन्निधौचैतत्पुरस्तात्पिण्डदानमिष्यते ॥ २६१ ॥

( २ ) **सर्वज्ञनारायणः** । नन्वेवंभोजनात् प्राक्पिण्डनिर्वपणंपूर्वोक्तंविरुध्यत इत्यतआह पिण्डनिर्वपणमिति । ये पुरस्तात् ब्राह्मणभोजनात् कुर्वते ते वयोभिरित्यादिप्रतिपत्तित्रयस्यान्यतरंकुर्वन्ति ॥ २६१ ॥

( ३ ) **कुल्लूकः** । पिण्डप्रदानंकेचिदाचार्याःब्राह्मणभोजनानन्तरंकुर्वते । अन्ये पक्षिभिःपिण्डान्खादयन्ति । इयंच पक्षिभोजनरूपा प्रतिपत्तिरग्न्युदकप्रक्षेपयोर्वैकल्पिकीति दर्शयितुमुक्तयोरप्यभिधानम् ॥ २६१ ॥

( ४ ) **राघवानन्दः** । पार्वणविषये स्वमते पिण्डदानमादाविति स्पष्टयन्मतान्तरमाह केचिदिति । परस्ताद्विप्रभोजनानन्तरं । तस्य मतभेदेन प्रतिपत्तिस्थानान्याह वयोभिरित्यधिकंप्रतिपत्तिस्थलम् । मेधातिथिस्तु । पुरस्तादिति पठित्वा व्याख्याति भोजनात्पुरस्तात्कृते ब्राह्मणभोजने हविःकुर्वन्तीति उच्छिष्टसंनिधावेतत्पिण्डदानमिष्यतइति हेतुंचष्टे अतोवयोभिः खादयन्ति केचिदिति संबन्धःसाधीयान् । प्रक्षेपेविकल्पोन तु पिण्डदानइति सुष्ठूक्तम् ॥ २६१ ॥

( ५ ) **नन्दनः** । पक्षान्तरमाह पिण्डेति । पुरस्तादेव कुर्वते न पश्चादिति । प्रतिपत्तावपिपिण्डानांप्रकारान्तरमुत्तरार्धेनोक्तम् ॥ २६१ ॥

( ६ ) **रामचन्द्रः** । केचित् पिण्डनिर्वपणं पुरस्तादेव कुर्वते वयोभिः पक्षिभिः खादयन्ति । अन्ये अनलेवा प्रक्षिपन्ति ॥ २६१ ॥

**पतिव्रता धर्मपत्नी पितृपूजनतत्परा ॥ मध्यमं तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी ॥२६२॥**

( १ ) **मेधातिथिः** । आद्यन्तयोःपिण्डयोरेषाप्रतिपत्तिः । मध्यमन्तुततस्तेषांपिण्डानांयोमध्यमः तंधर्मपत्नीपुत्रार्थिनी अद्यात् । या न कामार्थामूढा पतिरेव मया परिचरणीयोमनसापि व्यभिचारो न कर्तव्यइति यस्यानियमः सा पतिव्रता । पितृभक्तिःपितृपूजने श्राद्धादिकर्मणितत्परा श्रद्धावती प्रयत्नेनतदाराधनादौ प्रवर्तते । सम्यगद्यादाचमनादिविधिना नियमेन च ॥ २६२ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मपत्नी सवर्णा सम्यक् मन्त्रवत् यदि सुतार्थिनीतदाऽद्यात् ॥ २६२ ॥

( ३ ) **कुल्लूकः** । धर्मार्थकामेषु मनोवाक्कायकर्मभिःपतिरेव मया परिचरणीयइति व्रतंयस्याःसा पतिव्रता । धर्मपत्नी सवर्णा प्रथमोढा श्राद्धक्रियाणांश्रद्धाशालिनी पुत्रार्थिनी तेषांपिण्डानांमध्यमंपितामहपिण्डंभक्षयेत् । सम्यगाधत्त पितरोगर्भमित्यादिगृह्योक्तमन्त्रेण ॥२६२ ॥

( ४ ) **राघवानन्दः** । गोदोहन्यायेन पिण्डमाश्रित्य दृष्टफलंकिंचिद्विधत्ते पतिव्रतेतिद्वाभ्यां । पतिव्रता धर्मार्थकामेषु मनोवाक्कायकर्मभिः पतिरेव परिचरणीयइति व्रतंयस्याः सा मध्यमंपितामहपिण्डं । सम्यगितिसम्यक् । आधत्तपितरोगर्भमित्यादिमन्त्रोपलक्षणार्थम् ॥ २६२ ॥

( ६ ) **रामचन्द्रः** । पतिव्रता धर्मपत्नी मध्यमं पिण्डंसुतार्थिनी अद्यात् । सम्यक् मन्त्रवत् ॥ २६२ ॥

**आयुष्मन्तंसुतं सूते यशोमेधासमन्वितम् ॥ धनवन्तं प्रजावन्तं सात्विकं धार्मिकं तथा ॥ २६३॥**

( १ ) **मेधातिथिः** । भक्षयित्वातु तंपिण्डंसुतंपुत्रंसूतेजनयति । मेधाग्रहणशक्तता तयासमन्वितंयुक्तम् । सत्वंनाम गुणःसाङ्ख्येषु प्रसिद्धः । धैर्योत्साहादिद्योत्यस्तद्युक्तम् ॥ २६३ ॥

( २ ) **सर्वज्ञनारायणः** । सात्विकं सत्वगुणसंपन्नम् ॥ २६३ ॥

( ३ ) **कुल्लूकः** । तेन पिण्डभक्षणेन दीर्घायुषंकीर्तिधारणात्मकबुद्धियुक्तंधनपुत्रादिसन्ततिधर्मानुष्ठानसत्वाख्यगुणान्वितंपुत्रंजनयति ॥ २६३ ॥

( ४ ) **राघवानन्दः** । सात्विकमिति धार्मिकत्वेपि कामनानिवृत्त्यर्थंसात्विकधर्मरतंवा ॥ २६३ ॥

( ६ ) **रामचन्द्रः** । आयुर्यशोमेधासमन्वितं । एतादृशं सुतंसूते ॥ २६३ ॥

**प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ॥ ज्ञातिभ्यः सत्कृतं दत्वा बान्धवानपि भोजयेत् ॥ २६४ ॥**

( १ ) **मेधातिथिः** । पिण्डेषु प्रतिपादितेषु तौहस्तौ प्रक्षाल्येत् । ततःआचमनविधिंकुर्यात् । ज्ञातिभ्योदद्यात् । तेभ्यः सत्कृतंदत्वाबान्धवेभ्योपि दद्यात् । ज्ञातीन् प्रैति गच्छति प्राप्नोतीति ज्ञातिप्रायं कुर्यात् । ज्ञातयः सगोत्रामातृश्वशुरपक्षाबान्धवाः । अत्रचोच्यते यदुक्तंयथाब्रूयुस्तथाकुर्यादितियदितैरुक्तंगृहानस्मदीयानेतदन्नंप्राप्यतामिति तदा वैश्वदेवहोमादीनां कागतिः । पाकान्तरंकर्तव्यम् अथवाऽदृष्टार्थमेवान्नशेषनिवेदनंनित्यवदाम्नायते । शेषमन्नमित्युक्तेऽअदृष्टेभ्य इतिब्रूयुरितिपाक्षिकंचैतत्स्याद्यदितेगृह्णीयुः ॥ २६४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञातिप्रायं ज्ञातिभिः सपिण्डैर्बहुभिर्भुक्तमन्नंयथा भवति तथा प्रकल्पयेत् कुर्यात् । बान्धवान्मातुलादीन् संबन्धिनः ॥ २६४ ॥

( ३ ) **कुल्लूकः** । तदनु हस्तौ प्रक्षाल्य ज्ञातिप्रायमन्नंकुर्यात् । ज्ञातीन्प्रैति गच्छतीति ज्ञातिप्रायम् । कर्मण्यण् । ज्ञातीन्भोजयेदित्यर्थः । तेभ्यः पूजापूर्वकमन्नंदत्त्वा मातृपक्षानपि सार्हणंभोजयेत् ॥ २६४ ॥

( ४ ) **राघवानन्दः** । शूद्रादिव्यावृत्त्यर्थमुक्तसृष्टेःपात्रमाह प्रक्षाल्येति । ज्ञातिप्रायं ज्ञातीन् प्रैति प्रीणाति गच्छतीति वाज्ञातिभ्योदेयमिति । राक्षसंतद्भवेच्छ्राद्धंदशयत्रन भुञ्जतइति स्मृतेः । बान्धवान् मातृपक्षान् ॥ २६४ ॥

( ५ ) **नन्दनः** । पिण्डप्रतिपत्त्यनन्तरंकर्तव्यमाह प्रक्षाल्येति । ज्ञातिप्रायंज्ञातिबाहुल्यम् । प्रकल्पयेदापादयेत् ज्ञातीन्संघातयेदित्यर्थः । ज्ञातिबान्धवान् सम्बन्ध्यादीन् ॥ २६४ ॥

( ६ ) **रामचन्द्रः** । ज्ञातिभ्यःभोज्यं सत्कृतं प्रकल्पयेत् । ज्ञातिंप्रैति गच्छति प्राप्नोतीति प्रायंकुर्वीत ततज्ञातिभ्योदद्यात् । ज्ञातिभ्योदत्वा पश्चाद्बान्धवानपि पूजयेत् ॥ २६४ ॥

**उच्छेषणं तु तत्तिष्ठेद्यावद्विप्राविसर्जिताः ॥ ततोगृहबलिं कुर्यादिति धर्मोव्यवस्थितः ॥ २६५ ॥**

( १ ) **मेधातिथिः** । भुञ्जानानांयत्किञ्चिद्भुज्यधिकरणपात्रसंलग्नंभूमिपतितंच तत्रतस्माद्देशादवमार्ष्टव्यं यावद्ब्राह्मणानिष्क्रान्ताः । ततोगृहबलिंनिष्पन्नेश्राद्धकर्मण्यनन्तरंवैश्वदेवहोमान्वाहिकातिथ्यादिभोजनंकर्तव्यम् । बलिशब्दस्य प्रदर्शनार्थत्वात् । अन्येतु भूतस्य यज्ञएवबलिशब्देन प्रसिद्धतरस्ततश्चाग्नौ होमोनप्राप्विरुध्यतइत्याहुः । नचैतद्वाच्यं पित्र्ये कर्मणिप्रारब्धेकथंकर्मान्तरस्यतदन्तः करणम् । यथैवपूर्वेद्युर्निमन्त्रितेषुब्राह्मणेषुसायंप्रातर्होमकरणंतद्वत्कालेश्राद्धस्यवि-

एवमेवं वैश्वदेवहोमोऽप्यौपसदाग्निकः तेन भूतयज्ञात्पराञ्चः पदार्थाउत्कृष्यन्ते नार्वाञ्चः अत्रोच्यते यदि प्रागग्नौवैश्वदेवहोमः क्रियते ततःश्राद्धानन्तरंबलिहरणं तथासति देवयज्ञभूतयज्ञौव्यवधीयेतां । ततश्च क्रमोपरोधो नच वैश्वदेवस्य कालबाधः क्रियते । पितृश्राद्धकालहानेः । तस्मात्सर्वमहायज्ञानुष्ठानंश्राद्धादौत्तरकालिकम् ॥ २६५ ॥

( २ ) सर्वज्ञनारायणः । विसर्जितास्तत्र यावत्तिष्ठन्तीति तिष्ठेदित्येतस्य वचनपरिणामेनानुषङ्गः । गृहबलिमिति वैश्वदेवस्याप्युपलक्षणम् ॥ २६५ ॥

( ३ ) कुल्लूकः । तद्ब्राह्मणोच्छिष्टंतावत्कालंतिष्ठेद्यावद्ब्राह्मणानांविसर्जनं ब्राह्मणेषु तु निर्गतेषु मार्ष्टव्यमित्यर्थः । ततः संपन्ने श्राद्धकर्मणि वैश्वदेवबलिहोमकर्मनित्यश्राद्धातिथिभोजनानि कर्तव्यानि बलिशब्दस्य प्रदर्शनार्थत्वात् । अतएव मत्स्यपुराणे । निवृत्त्यप्रतिपत्त्यर्थंपर्युक्ष्याग्निंच मन्त्रवित् ॥ वैश्वदेवंप्रकुर्वीत नैत्यकंविधिमेवचेति ॥ २६५ ॥

( ४ ) राघवानन्दः । उच्छिष्टस्थितिकालविशेषंविदधद्वैश्वदेवादेः श्राद्धोत्तरत्वमाह उच्छेषणमिति । तथाचमात्स्यम् । निर्वर्त्यप्रतिपत्त्यर्थंपर्युक्ष्याग्निंसमन्त्रवित् । वैश्वदेवंप्रकुर्वीत नैत्यकंबलिकर्म चेति ॥ अतोमेधातिथिः तस्मात्सर्वमहायज्ञानुष्ठानंश्राद्धादुत्तरकालिकमिति । उच्छेषणं ब्राह्मणोच्छिष्टम् ॥ २६५ ॥

( ५ ) नन्दनः । गृहबलिंवैश्वदेवहोमभूतबल्यात्मकम् ॥ २६५ ॥

( ६ ) रामचन्द्रः । तावदुच्छेषणमुच्छिष्टंतिष्ठेत् यावद्विप्राविवर्जिताः । विसर्जयेदित्यर्थः ॥ २६५ ॥

**हविर्यच्चिररात्राय यच्चानन्त्याय कल्प्यते ॥ पितृभ्योविधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥ २६६ ॥**

( १ ) मेधातिथिः । चिररात्रशब्दोदीर्घकालवचनः । यच्चानन्त्यायकेनचिद्वचनेनैवैतदुभयंब्रवीमीतिप्रणिधानार्थमुच्यते कल्पते प्रेतइत्यध्याहार्यम् ॥ २६६ ॥

( २ ) सर्वज्ञनारायणः । चिररात्राय मासादिद्वादशवर्षपर्यन्तानेककालतृप्तये । आनन्त्यायानन्ताय कालाय तदूर्ध्वमपितृप्तये ॥ २६६ ॥

( ३ ) कुल्लूकः । यैश्चान्नैरिति पूर्वमुक्तमपि व्यवधानादबुद्धिस्थंशिष्यसुखप्रतिपत्तये पुनर्वक्तव्यतया प्रतिजानीते हविरिति । चिररात्रायपदमव्ययं चिरकालवाचि । अतएव चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाइत्याभिधानिकाः । यच्चहविःपितृभ्योयथाविधिदत्तंचिरकालतृप्तये अनन्ततृप्तये च संपद्यते । तन्निःशेषेणाभिधास्यामि ॥ २६६ ॥

( ४ ) राघवानन्दः । खादिरन्यायेन श्राद्धाङ्गद्रव्यं विदधत्फलं प्रतिजानीते हविरिति । चिररात्रिव्याप्यातीव सुखायेति वाक्यार्थः ॥ २६६ ॥

( ५ ) नन्दनः । चिररात्रायेति कालदैर्घ्यम् । आनन्त्यायेति हविषोऽक्षय्यत्वम् ॥ २६६ ॥

( ६ ) रामचन्द्रः । यत्हविः चिररात्राय बहुकालपर्यन्ताय तदानन्त्याय कल्पते भवति पितृभ्यो यद्विधिवद्दत्तं तदशेषतः प्रवक्ष्यामि ॥ २६६ ॥

**तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ॥ दत्तेन मासं तृप्यन्ति विधिवत्पितरोनृणाम् ॥ २६७ ॥**

( १ ) मेधातिथिः । तिलादिग्रहणंनेतरधान्यपरिसंख्यानार्थमपितृप्तिकालविशेषप्रदर्शनार्थम् । एतैर्विविधदत्तैरपिमासंप्रीयन्ते । विधिवत्पितरोनृणामित्याद्यनुवादपदानि वृत्तपूरणार्थानि ॥ २६७ ॥

( २ ) सर्वज्ञनारायणः । मूलफलेन स्मृत्यन्तरे श्राद्धीयत्वेनोक्तेन ॥ २६७ ॥

( ३ ) **कुल्लूकः** । तिलधान्ययवमाषजलमूलफलानामन्यतमेन यथाशास्त्रंश्रद्धयादत्तेन मनुष्याणांमासंपितरस्तृप्यन्ति। कृष्णामाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयइति ॥ वायुपुराणवचनान्माषैरिति कृष्णमाषाबोद्धव्याः ॥ २६७ ॥

( ४ ) **राघवानन्दः** । तदेवाह तिलैरितिनवभिः तिलमाषयोः कृष्णत्वंविवक्षितम् । कृष्णामाषास्तिलाश्चैव श्रेष्ठाःस्यु-र्यवशालयइति वराहपुराणोक्तेः ॥ अद्भिः नवोदकैः । विधिवद्दत्तै रित्यन्वयः । मासमित्यादि कालकर्म ॥ २६७ ॥

( ५ ) **नन्दनः** । दत्तेन श्राद्धेनेतिशेषः ॥ २६७ ॥

**द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ॥ औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥२६८॥**

( १ ) **मेधातिथिः** । उरभ्रामेषाः । शकुनयआरण्याः कुक्कुटाद्याः । मत्स्याः पाठीनाद्याः ॥ २६८ ॥

( २ ) **सर्वज्ञनारायणः** । मत्स्यः पाठीनादिः । उरभ्रोमेषः । शाकुनेन भक्ष्यपक्षिमांसेन ॥ २६८ ॥

( ३ ) **कुल्लूकः** । पाठीनादिमत्स्यानांमांसेन द्वौ मासौ पितरःप्रीयन्तइति पूर्वेण संबन्धः। त्रीन्मासान्हारिणेन मांसेन । चतुरोमेषमांसेन पञ्चद्विजातिभक्ष्यपक्षिमांसेन ॥ २६८ ॥

( ४ ) **राघवानन्दः** । मत्स्यमांसेन पाठीनादिमत्स्यानांमांसेन मांसपदं शल्ककण्टकदग्धादिव्यावृत्त्यर्थं । हारिणेन हरिणमांसेन औरभ्रेण मेषमांसेन शाकुनेन निषिद्धेतरपक्षिमांसेन इह श्राद्धे दत्तेनेत्यन्वयः ॥ २६८ ॥

( ५ ) **नन्दनः** । हारिणेन हरिणमांसेन । हरिणः कृष्णमृगः । औरभ्रेणोरभ्रमांसेन उरभ्रोमेषः ॥ २६८ ॥

( ६ ) **रामचन्द्रः** । औरभ्रेण मांसेन मेषस्य मांसेन चतुरोमासान् तृप्तिर्भवति ॥ २६८ ॥

**षण्मासांश्छागमांसेन पार्षतेन च सप्त वै ॥ अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥ २६९ ॥**

**[ अष्टावैणेयमांसेन पार्षतेनाथ सप्त वै ॥ अष्टावैणेयमांसेनरौरवेणनवैवतु ॥ १ ॥ ] ( मेधा० )**

( १ ) **मेधातिथिः** । रुरुपृषतैणामृगजातिविशेषवचनाः । रौरवेण पार्षतेन । ऐणेयेतिविकारेतद्धितः ॥ २६९ ॥

( २ ) **सर्वज्ञनारायणः** । पृषतोबिन्दुमान्मृगः । एणोहरिणभेदः । रुरुर्मृगभेदः ॥ २६९ ॥

( ३ ) **कुल्लूकः** । षण्मासाञ्छागमांसेन । प्रियन्तेपृषतश्चित्रमृगस्तन्मांसेन सप्त । एणमांसेनाष्टौ । रुरुमांसेननव । एणरुरुहरिणजातिविशेषौ ॥ २६९ ॥

( ४ ) **राघवानन्दः** । पार्षतेन चित्रमृगमांसेन एणोरुरुश्च मृगजातिविशेषौ ॥ २६९ ॥

( ५ ) **नन्दनः** । रुरुःकृष्णसारः ॥ २६९ ॥

( ६ ) **रामचन्द्रः** । पार्षतेन चित्रकेन मृगेण पृषत्संज्ञस्य मृगस्य मांसेन एणसंज्ञस्य मांसेन । रौरवेण रुरोर्मांसेन२६९

**दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ॥ शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥ २७० ॥**

( १ ) **मेधातिथिः** । वराहश्चारण्यसूकरः ॥ २७० ॥

( २ ) **सर्वज्ञनारायणः** । कूर्मः कच्छपः ॥ २७० ॥

( ३ ) **कुल्लूकः** । दशेति । दशमासानारण्यसूकरमहिषमांसैस्तृप्यन्ति । एकादशशशकच्छपमांसेन ॥ २७० ॥

( ५ ) **नन्दनः** । वराहमहिषौ वन्यौ ॥ २७० ॥

**संवत्सरे तु गव्येन पयसा पायसेन च ॥ वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ २७१ ॥**

**[ त्रिपिबं त्विन्द्रिय क्षीणमजापूर्वानुगामिनम्॥तंवैवार्ध्रीणसंविद्यात् वृद्धं शुक्लमजापतिम्॥१॥]***

( १ ) **मेधातिथिः** । श्रुतानुमितयोः श्रुतसंबन्धस्य बलीयस्त्वाद्गव्येन पयसेति संबन्धोनमांसेन प्राकरणिकेन । अन्येतु चशब्दंसमुच्चयार्थीयं पठित्वा व्याख्यानयन्ति मांसेन गव्येन पयसापायसेन वा । पयोविकारःपायसंदध्यादि पयःसंस्कृतओदनःप्रसिद्धः वार्ध्रीणसोजरच्छागः । एवंहिनिगमेषुपठ्यते त्रिपिबंत्विन्द्रियक्षीणंश्वेतंवृद्धमजापतिं । वार्ध्रीणसंतुतंप्राहुर्याज्ञिकाःपितृकर्मणि ॥ पिबतोयस्य त्रीणिजलंस्पृशन्ति कर्णौजिव्हाच सत्रिभिःपिबतीति त्रिपिबः । यत्तुशब्देन गोमांसभक्षणेप्रायश्चित्तमाम्नातंतन्मधुपर्काष्टकाश्राद्धेभ्योन्यत्रज्ञेयम् ॥ २७१ ॥

( २ ) **सर्वज्ञनारायणः** । गव्येन गोसंबन्धिना पयसा न समांसेन गोपयसा सिद्धेनौदनेन । वार्ध्रीणसोनिगमउक्तः । कृष्णग्रीवोरक्तशिराः श्वेतपक्षोविहङ्गमः ॥ २७१ ॥

( ३ ) **कुल्लूकः** । वर्षपुनर्गोभवक्षीरेण तत्साधितौदनेन च तुष्यन्ति । तत्रैव पायसशब्दप्रसिद्धेः । वार्ध्रीणसस्य मांसे नद्वादशवर्षपर्यन्तंपितृतृप्तिर्भवति । वार्ध्रीणसश्च निगमे व्याख्यातः । त्रिपिबंत्विन्द्रियक्षीणंश्वेतंवृद्धमजापतिम् । वार्ध्रीणसंतु तंप्राहुर्याज्ञिकाःपितृकर्मणि॥ नद्यादौ पयःपिबतोयस्यत्रीणि जलंस्पृशन्ति कर्णौ जिह्वा च त्रिभिःपिबतीति त्रिपिबः२७१

( ४ ) **राघवानन्दः** । गव्येन मांसेन पयसा गोदुग्धेन तत्साध्येनौदनेन वार्ध्रीणसेनेति । त्रिपिबंत्विन्द्रियक्षीणं श्वेतंवृद्धमजापतिं । वार्ध्रीणसंतु तंप्राहुर्याज्ञिकायज्ञकर्मणीति ॥ जिव्हया कर्णाभ्यामपः पिबतीतित्रिपिबः लम्बकर्णवृद्धछागोवार्ध्रीणसइति स्मृतः ॥ २७१ ॥

( ५ ) **नन्दनः** । वार्ध्रीणसोमहान्खड्गमृगः ॥ २७१ ॥

( ६ ) **रामचन्द्रः** । वार्ध्रीणसस्य वृषस्य छागस्य पक्षिविशेषस्य मांसेन द्वादश वार्षिकी तृप्तिःस्यात् ॥ २७१ ॥

**कालशाकंमहाशल्काःखड्गलोहामिषंमधु ॥ आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः॥२७२॥**

( १ ) **मेधातिथिः** । कालशाकंविशिष्टशाकंप्रसिद्धम् । कृष्णेवास्तुकभेदेवा यथा महाशल्काउच्यन्ते । अन्येतु मत्स्यान्सशल्कानाहुः । खड्गोगण्डकः लोहःकृष्णश्छागः सर्वरक्तश्च । तथापुराणं । कृष्णश्छागस्तथारक्तआनन्त्यायैवकल्पते । लोहशब्दोलक्षणयुक्ते छागे वर्तते । अतः कृष्णंताम्रंलोहितउभयत्रापिलोहशब्दःप्रयुज्यते । यद्यपि चैषवर्णोमिषादिष्वपि संभवति तथापि स्मृत्यन्तरप्रसिध्याच्छागएवगृह्यतइति व्याचक्षते । अन्येतु शकुनिर्लोहितपृष्ठः नामैकदेशेनदेवदत्तोदत्तइतिवत्प्रतिपद्येतेत्याहुः । समाचारश्चोभयत्रान्यन्वेष्यः मधुमाक्षिकं सर्वत्रात्रमीत्यतिशयोत्पत्तिर्विवक्षिता नतु यथाश्रुतएव कालः तथाहि द्वादशवर्षाण्यकरणंस्यात्तन्नविरुध्येत । पिच्यमानिधनात्कार्यमिति ॥ २७२ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वशः सर्वाणि ॥ २७२ ॥

( ३ ) **कुल्लूकः** । कालशाकाख्यंशाकंमहाशल्काःसशल्काइति मेधातिथिः । मत्स्यविशेषाइति युज्यन्ते महाशल्कलिनोमत्स्याइति वचनात् । खड्गोगण्डकः लोहोलोहितवर्णः छागएवछागेनसर्वलोहेनानन्त्यमिति पैठीनसिवचनात्तयोरामिषंमधुमाक्षिकं मुन्यन्नानि नीवारादीनि आरण्यानि सर्वाणि एतान्यनन्ततृप्तये संपद्यन्ते ॥२७२ ॥

---

* ( ल ) । ( ब ) चिन्हितपुस्तकेसएवश्लोकःटीकायां दृश्यते

( ४ ) **राघवानन्दः** । महाशल्का । महाशल्किनो मत्स्याइति यमवचनात् ज्ञेयाइति केचित् शल्यकादिति मेधातिथिः । खड्गोगण्डइति ख्यातः । लोहोलोहितच्छागः । सर्वलोहेनानन्त्यमिति पैठीनसिवचनात् ॥ २७२ ॥

( ५ ) **नन्दनः** । कालशाकः कृष्णनिम्बः । महाशल्कोमत्स्यविशेषः ॥ २७२ ॥

( ६ ) **रामचन्द्रः** । चेवकःचिञ्चुकश्चैव कालशाकःप्रकीर्तितः । महाशल्यंमत्स्यखण्डंखड्गमांसं लोहामिषंरक्तछागभवंवालोहशब्दोरक्तवर्णतः ॥ २७२ ॥

**यत्किञ्चिन्मधुनामिश्रं प्रदद्यात्तु त्रयोदशीम् ॥ तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥ २७३॥**

( १ ) **मेधातिथिः** । यत्किंचिदन्नंमधुनासंयुक्तम् । त्रयोदश्यांवर्षासुचमघासुचाधिकमिति । तदाचतदक्षयमेव ऋतुनक्षत्रतिथीनांचसमुच्चयः । आपस्तम्बवचनात्तुवर्षासुत्रयोदश्यष्टमीदशमीष्वपि । मघासुचान्तरेणाविवक्षा । एवंहस्माहमघासुचाधिकमिति ॥ २७३ ॥

( २ ) **सर्वज्ञनारायणः** । यत्किंचित्पायसादन्यदपि चतुर्मासऋतुव्यवस्थया । वर्षासु मघासु मघानक्षत्रे त्रयोदशीं त्रयोदश्यामितिसमुच्चिते तात्पर्यं । चकारद्वयस्यान्योन्यंसमुच्चयार्थत्वात् ॥ २७३ ॥

( ३ ) **कुल्लूकः** । ऋतुनक्षत्रतिथीनामयंसमुच्चयः । यत्किंचिदित्यप्रसिद्ध । मधुसंयुक्तंवर्षाकाले मघात्रयोदश्यांदीयते तदप्यक्षयमेव भवति । त्रयोदश्याअधिकरणत्वेपीप्सितत्वविवक्षया प्राप्येत्यध्याहाराद्वा द्वितीया ॥ २७३ ॥

( ४ ) **राघवानन्दः** । द्रव्यानुवादेन कालंविधत्ते यदितिद्वाभ्यां । संदिग्धेषु वाक्यशेषादितिन्यायेनाअन्नंद्रव्यंघृतमिति यावत् अपि न इत्यादिवाक्यशेषबलाज्जर्तिलन्यायाच्च त्रयोदशीविधिः अन्यथा वाक्यभेदात् वर्षास्वित्यादेरतद्गुणत्वं न च वैपरीत्यं तिथेरेव प्राधान्यात् । अरुणन्यायाद्वा विशिष्टविधिः । वर्षावच्छिन्नमघानक्षत्राद्यन्वयादविरुद्धसाधनानांसमुच्चयएव युक्तः । अतएव मेधातिथिः । प्रकृतांत्रयोदशीं वर्षादि गुणयुक्तामधिकृत्योच्यते इति बहुवचनंप्रात्याब्दिकसूचनार्थमनपेक्षत्वात् यथापयसाग्निहोत्रंजुहोतीति पयोहोमपरे वाक्येजर्तिलयवाग्वाजुहोतीत्याद्यर्थवादः एवं त्रयोदशीश्राद्धप्रशंसापरमन्यत्सर्वमितिन्यायार्थः ॥ २७३ ॥

( ५ ) **नन्दनः** । सर्वस्मिन्नपिकालेभवत्यक्षयम् । वर्षासु भाद्रपदेमासे मघासु माघमासे । अनयोर्मासयोर्यत्किंचिद्बहुलत्रयोदश्यांदत्तंतदप्यक्षयम् ॥ २७३ ॥

**अपि नः सकुले जायाद्योनोदद्यात्त्रयोदशीं॥ पायसंमधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च॥२७४॥**

( १ ) **मेधातिथिः** । प्रकृतांत्रयोदशींवर्षादिगुणयुक्तामधिकृत्येदमुच्यते । एवंपितरआशासते । अस्माकंकुलेभूयात्सतादृशोजायतांउत्कृष्टगुणःयःप्रागुक्तायांत्रयोदश्यामन्नम्यंदद्यात्पायसंमधुसर्पिःसंयुक्तं । तथाकुञ्जरस्यहस्तिनः प्राक्छायेप्राच्यांदिशिगतायांछायायां अपराण्हेतरे कालइत्यर्थः शेषेऽह्निहिहस्तिनोदीर्घाप्राचीच्छायाभवति । प्राक्च्छायांइतिवापाठः । छायायांहिब्राह्मणाभोज्यन्ते । अग्निमंकर्मतुयद्यल्पत्वाछायायांनसंभवति तद्देशान्तरे । तत्समीपेकर्तव्यम् । अङ्गत्वात्सतिसंभवेतत्सर्वांगोपेतंप्रधानंहस्तिछायायामेव । यत्तुव्याचक्षते राहूपरागोहस्तिछायोच्यतेहस्तीवैभूत्वास्वर्भानुरासुरिरादित्यंतमसाविध्यदिति । तदयुक्तं तत्रहिगौणोहस्तिशब्दप्रयोगः स्मृत्यन्तरेच पृथगेव हस्तिछाया ग्रहोपरागादाम्नाता हस्तिछाया ग्रहणंचन्द्रसूर्ययोरिति ॥ २७४ ॥

---

( २७४ ) अपिनःसकुलेजायात्=अपिनःसकुलेभूयात् ( ञ, झ, ञ, ट, ठ, ढ )

( २ ) **सर्वज्ञनारायणः**। अपिन इति पितृगाथानुकीर्तनम्। पायसे फलबाहुल्यार्थं। त्रयोदशीं त्रयोदश्यांवर्षासु मघासु मघानक्षत्रेचेत्यपि। तथाकुञ्जरस्य हस्तिनः प्राक्छाये प्राग्गामिन्यां छायायां अपराण्हे गजस्य छायायामित्यर्थः ॥ २७४ ॥

( ३ ) **कुल्लूकः**। वर्षासु मघायुक्तत्रयोदशी पूर्वोक्ता विवक्षिता। तत्रापि प्रौष्ठपद्यामतीतायांमघायुक्तांत्रयोदशीम्। प्राप्य श्राद्धंहि कर्तव्यंमधुना पायसेनच ॥ इति शङ्खवचनात्। भाद्रकृष्णत्रयोदशी पूर्वत्रेह च गृह्यते। पितरःकिलैवमाशासते- अपि नामतथाविधःकश्चिदस्माकंकुले भूयात्। योऽस्मभ्यंप्रकृतायांत्रयोदश्यांतथातिथ्यन्तरेऽपिहस्तिनः पूर्वांदिशंगतायां- छायायांमधुघृतसंयुक्तंपायसंदद्यात्। न तु त्रयोदशीहस्तिच्छाययोःसमुच्चयः। यथाह विष्णुः। अपि जायेत सोऽस्माकं- कुले कश्चिन्नरोत्तमः। प्रावृट्कालेसिते पक्षे त्रयोदश्यांसमाहितः ॥ मधुप्लुतेन यःश्राद्धंपायसेन समाचरेत्। कार्तिकंसकलं- वापि प्राक्छायेकुञ्जरस्य च ॥ २७४ ॥

( ४ ) **राघवानन्दः**। किंच अपीति पितर आशासते अपि संभाव्यते। सोस्माकं कुले जायाद्योनोऽस्मभ्यं दद्यादिति अपि जायेत सोस्माकं कुले कश्चिन्नरोत्तमः। प्रावृट्कालेसिते पक्षे त्रयोदश्यां समाहितः ॥ मधूत्कृष्टेन यःश्राद्धं पायसेन समाचरेदिति विष्णूक्तेः ॥ प्राक्छाये कुञ्जरस्येति विध्यन्तरं प्रागिति निर्देशात्। कुञ्जरस्यैव छाया विवक्षिता नतु योगविशेषः। कर्णव्यजनवीजितमिति वाक्यान्तराच्चेति। अपराण्हे तस्य प्राच्यां छाया स्यात् ॥ २७४ ॥

( ५ ) **नन्दनः**। अयंश्लोकः पितृगीतः ॥ २७४ ॥

( ६ ) **रामचन्द्रः**। पितरऊचुः नःअस्माकंकुले शंभूयात्। त्रयोदशींत्रयोदश्यांनःअस्माकंमधुसंमिश्रंकिंचिद्दद्यात्। पायसंमधुसर्पिर्भ्यांमिश्रंकुञ्जरस्यप्राक्छाये आशासते। अस्माकंकुले भूयादिति वदन्ति। दद्यात्प्राक्पूर्वस्यांदिशि गतायां- छायायांअपराण्हे। तत्र श्रीपतिराह। कृष्णे पक्षे त्रयोदश्यांमघासिन्धुकरेरविः। यदा तदा गजच्छायाश्राद्धंपुण्यैरवाप्यते ॥ २७४ ॥

**यद्यद्ददाति विधिवत्सम्यक्श्रद्धासमन्वितः ॥ तत्तत्पितॄणां भवति परत्रानन्तमक्षयम् ॥ २७५ ॥**

( १ ) **मेधातिथिः**। यद्यदितिवीप्सायां अप्रतिषिद्धं सर्वमन्नमनुजानाति विधिवत्सम्यक्शब्दावनुवादः श्रद्धासमन्वितइत्येतदत्रविधीयते। श्रद्धयादातव्यं तथादत्तमनन्तमक्षयंभवति पितॄणांपरलोके। अनन्तमितिवा कालावधिनिषेधः। अक्षयमितिमात्रयाल्पयाभावमाह। सर्वकालंभवतिप्रभूतंच ॥ २७५ ॥

( २ ) **सर्वज्ञनारायणः**। यद्यद्धेमवस्त्राद्यपि ददाति मघात्रयोदश्यामेव। विधिवत् सम्यग्विधिना आनन्त्यमतिकालस्थायि अक्षयमनल्पतांगतम् ॥ २७५ ॥

( ३ ) **कुल्लूकः**। यद्यदितिवीप्सायाम्। सर्वमन्नमप्रतिषिद्धंयथाशास्त्रंसम्यग्रूपश्रद्धायुक्तःपितृभ्योददाति तदनन्तकं- सर्वकालमक्षयमनपचितंपरलोके पितृतृप्तये भवति। अतस्तत्फलार्थिना श्रद्धया देयमिति विधीयते ॥ २७५ ॥

( ४ ) **राघवानन्दः**। श्राद्धाच्च प्रत्ययविशेषोपि श्राद्धाङ्गमित्याह यदिति। श्रद्धा हि पितरः सन्ति अस्ति च तेषां श्राद्धेन तृप्तिरितिज्ञानं तयान्वितस्तद्युक्तः आनन्त्यंनानाप्रकारं अक्षयमविनाशि कल्पस्थायीति यावत् ॥ २७५ ॥

( ६ ) **रामचन्द्रः**। यद्यत् विधिवत्पितॄणांददाति तत्तत्पितॄणां आनन्त्यमक्षयंभवति ॥ २७५ ॥

**कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ॥ श्राद्धे प्रशस्तास्तिथयोयथैतान तथेतराः ॥ २७६॥**

( १ ) **मेधातिथिः** । दशम्यादीनांवचनात्फलातिशयोत्पत्तिःअन्यास्वपितु सत्यांश्रद्धायांकर्तव्यंचतुर्दश्यांतुनिषेधएव ॥ २७६ ॥

( २ ) **सर्वज्ञनारायणः** । अमावास्याश्राद्धमवश्यंपितृतृप्तिबाहुल्यार्थतायां तुकृष्णपक्षे दिनान्तरेऽपि कार्यं तत्रापि दशम्यादिदिनचतुष्टयमधिकफलमित्यर्थः । चतुर्दशीवर्जनमशस्त्रहतानां । यथाचेति विशिष्यतइति वचनात् । अपरपक्षेऽपराण्हेचा संभवे पूर्वपक्षे पूर्वाण्हे च कार्यमिति लभ्यते ॥ २७६ ॥

( ३ ) **कुल्लूकः** । कृष्णपक्षे दशमीमारभ्यचतुर्दशींत्यक्त्वा श्राद्धे यथा तिथयः श्रेष्ठामहाफलान तथैतदन्याः प्रतिपदादयः ॥ २७६ ॥

( ४ ) **राघवानन्दः** । श्राद्धस्य प्रशस्तान्तिथीनाह कृष्णपक्षइति । एकांचतुर्दशीं वर्जयित्वा अमान्ताः पञ्चेतराः प्रतिपदादिनवम्यन्तानव प्रशस्ताःतास्वपि श्राद्धंकार्यं । तदुक्तं याज्ञवल्क्येन । कन्यांकन्यावेदिनश्च पशून्मुख्यान्सुतानपि । द्यूतंकृषिंच वाणिज्यंद्विशफैकशफांस्तथा ॥ ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्येसकुप्यके । ज्ञातिश्रैष्ठ्यंसर्वकामा नाप्नोति श्राद्धदः सदा ॥ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीं । शस्त्रेणतु हताये वै तेभ्यस्तत्र प्रदीयते इति ॥ २७६ ॥

( ५ ) **नन्दनः** । अनेन पूर्वपक्षपूर्वाह्णयोरपि श्राद्धंकर्तव्यमिति सूचितम् ॥ २७६ ॥

( ६ ) **रामचन्द्रः** । श्राद्धे प्रशस्तास्तिथयएताः । तथैतरान ॥ २७६ ॥

**युक्षु कुर्वन्दिनर्क्षेषु सर्वान्कामान्समश्नुते ॥ अयुक्षु तु पितॄन्सर्वान्प्रजां प्राप्नोति पुष्कलाम्॥२७७॥**

( १ ) **मेधातिथिः** । युञ्जिदिनानिद्वितीयाचतुर्थ्यादीनि । ऋक्षंनक्षत्रं तानिभरण्यादीनियुञ्जिभवन्ति । प्रतिपत्तृतीयापञ्चमीसप्तमीनवम्यास्तिथयोऽयुजउच्यन्ते द्वितीयाचतुर्थीषष्ठ्यष्टमीदशम्योयुजः एवमेकादश्ययुक्प्रभृतौद्रष्टव्यंनक्षत्रेष्वपि । सर्वान्कामान् तेचकामाइतिहासपुराणयोर्भेदेनोपात्ताः पुष्कलांप्रजां । धनविद्याबलपुरुषैःपुष्टापुष्कला ॥ २७७ ॥

( २ ) **सर्वज्ञनारायणः** । युक्षु युग्मेषु दिनेषु तिथिषु द्वितीयाचतुर्थ्यादिषु ऋक्षेषु युक्षुरोहिण्यार्द्रादिषु अयुक्षु प्रतिपदादिषु कृत्तिकादिषुच ॥ २७७ ॥

( ३ ) **कुल्लूकः** । दिनशब्दोऽत्र तिथिपरः । युक्षुयुग्मासु तिथिषु द्वितीयाचतुर्थ्यादिषु युग्मनक्षत्रेषु भरणीरोहिण्यादिषु श्राद्धंकुर्वन्सर्वाभिलषितान्प्राप्नोति । अयुग्मासु तिथिषु प्रतिपत्तृतीयाप्रभृतिष्वयुग्मेषु च नक्षत्रेष्वश्विनीकृत्तिकादिषु श्राद्धेन पितॄन्पूजयन्पुत्रादिसन्ततिंलभते पुष्कलांधनविद्यापरिपुष्टाम् ॥ २७७ ॥

( ४ ) **राघवानन्दः** । तत्रैव युग्मायुग्म भेदेन फलमाह युक्ष्विति । युक्षु युग्मेषु दिनपदंतिथिपरंतेन द्वितीयाचतुर्थ्यादयः । नक्षत्राणि भरणीरोहिण्यादीनि युग्मानि तेष्वित्यर्थः । पुष्कलां प्रशस्तांसर्वान्कामानिति पूर्वधृतयाज्ञवल्क्यवचनात्ज्ञेयम् ॥ २७७ ॥

( ५ ) **नन्दनः** । युक्षु युग्मेषु । दिनशब्देन सूर्यवारादीनांग्रहणम् । ऋक्षशब्देन च कृत्तिकादीनाम् । कुर्वञ्छ्राद्धमितिशेषः ॥ २७७ ॥

---

( २७७ ) सर्वान्=अर्चन् ( ज, झ, ञ, ढ )

( ६ ) **रामचन्द्रः** । युक्षु युग्मासुद्वितीयादितिथिषु दिनर्क्षेषु भरण्यादिषु यःश्राद्धंकुर्वन्सःसर्वान्कामान् अश्नुते प्राप्नोति । अयुक्षुअयुग्मासु प्रतिपदश्विन्यादिषु नक्षत्रेषु यःपितॄनर्चयन्सपुष्कलांबह्वीप्रजांसन्ततिंप्राप्नोति ॥ २७७ ॥

**यथाचैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ॥ तथा श्राद्धस्य पूर्वाह्णादपराह्णोविशिष्यते ॥ २७८ ॥**

( १ ) **मेधातिथिः** । पूर्वपक्षःशुक्लपक्षः अपरःकृष्णपक्षः चैत्रसिताद्यामासाइति । यथा श्राद्धस्यशुक्लपक्षात् कृष्णपक्षोविशिष्यते प्रकृष्टफलदोभवति । तथापूर्वाण्हादपराण्होविशेषवचनात् । पूर्वाण्हेपिकदाचित्कर्तव्यमेवेतिप्रतीयते । ननुचप्रसिद्धेनदृष्टान्तेन भवितव्यं । नचापरपक्षस्यपूर्वपक्षाच्छ्राद्धंप्रतिविशेषउक्तः । केचिदाहुः कृष्णपक्षेदशम्यादावित्येतस्मात्प्रतीयते । एवंतुब्रूमः वचनानित्वपूर्वत्वादित्यनेनन्यायेनाप्रसिद्धस्यदृष्टान्ततास्तीति विधिरपिदृष्टान्तवचनादेवशक्योवगन्तुम् ॥ २७८ ॥

( ३ ) **कुल्लूकः** । चैत्रसिताद्यामासाइति ज्योतिःशास्त्रविधानाच्छुक्लपक्षोपक्रमत्वान्मासानामपरःपक्षःकृष्णपक्षःसयथा शुक्लपक्षाच्छ्राद्धस्य संबन्धी विशिष्टफलदोभवति एवंपूर्वार्धदिवसादुत्तरार्धदिवसःप्रकृष्टफलोविशिष्यतइति वचनात्पूर्वाह्णेपि श्राद्धकर्तव्यतांबोधयति । ननु शुक्लपक्षादनुक्तोत्कर्षस्यापरपक्षस्य कथंदृष्टान्तता प्रसिद्धोहि दृष्टान्तोभवति । उच्यते । कृष्णपक्षे दशम्यादावित्यत्रैव विशिष्टविधावुत्कर्षाभिधानात् ॥ २७८ ॥

( ४ ) **राघवानन्दः** । कृष्णपक्षइत्युक्तं तत्रैवार्थवादमाह यथेति । अपरपक्षइति दृष्टान्तार्थं । पूर्वपक्षात् शुक्लपक्षात् ॥ २७८ ॥

( ६ ) **रामचन्द्रः** । पूर्वपक्षात्शुक्लपक्षात् यथाऽपरपक्षो विशिष्यते तथा श्राद्धस्य पूर्वाह्णकालादपराह्णकालोविशिष्यते । अपराह्णःपितॄणामिति श्रुतेः । आषाढ्याःपञ्चमःपक्षःआषाढीमवधिंकृत्वा परःपक्षःकृष्णपक्षस्यआश्विनस्य ॥ २७८ ॥

**प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ॥ पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥२७९॥**

( १ ) **मेधातिथिः** । यत्किंचित्पित्र्यं तत्रकर्मण्ययंविधिः । पदार्थाःप्राग्व्याख्याताः । अतन्द्रिणाअनलसेन श्रद्दधानेनेतियावत् । आनिधनादामरणाद्यावज्जीविकोयं विधिरित्यर्थः । दर्भपाणिना । तदुक्तं दर्भाःपवित्रमिति तद्ग्रथितशीर्षकंदर्भमयंपवित्रमुच्यते ॥ २७९ ॥

( २ ) **सर्वज्ञनारायणः** । अपसव्यमप्रादक्षिण्येन तेन पित्रादिविप्राणांप्रागपवर्गोपवेशनमप्रदक्षिणकर्मकरणार्थमित्यादिलभ्यते । आनिधनादासमाप्तेः । पित्र्यंप्राचीनावीत्यादिना कार्यं । न तु तन्मध्यपतितं दैवमपि विधिवदन्यूनानधिकाङ्गम् ॥ २७९ ॥

( ३ ) **कुल्लूकः** । दक्षिणसंस्थितयज्ञोपवीतेनानलसेन दर्भहस्तेनापसव्यंपितृतीर्थेन यथाशास्त्रंसर्वंपितृसंबन्धिकर्मानिधनादासमाप्तेः कर्तव्यम् । आनिधनाद्यावज्जीवमिति मेधातिथिगोविन्दराजौ ॥ २७९ ॥

( ४ ) **राघवानन्दः** । श्राद्धाङ्गतया कार्यान्तरंविधत्ते प्राचीनावीतीति । अपसव्यं पितृतीर्थंतर्जन्यङ्गुष्ठयोर्मध्यं । अतन्द्रिणा अनलसेन । आनिधनादासमाप्तेर्विधिवद्यथाशास्त्रं ॥ २७९ ॥

( ५ ) **नन्दनः** । नियमान्तराण्याह प्राचीति । आनिधनादासमाप्तेः ॥ २७९ ॥

---

( २७७।८ ) [ राघवानन्दमते यथाचैवेत्यनन्तरं युक्ष्वितिश्लोकः ]

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ॥ संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥२८०॥

[कुर्वन् प्रतिपदि श्राद्धंस्वरूपां लभते प्रजाम् ॥ कन्यकाश्च द्वितीयायां तृतीयायांतु वाजिनः+ ॥ १॥

पशून् क्षुद्रांश्चतुर्थ्यांतु पञ्चम्यां शोभनान्सुतान् ॥ षष्ठ्यांद्यूतमवाप्नोति सप्तम्यांलभते कृषिम् ॥२॥

अष्टम्यामपिवाणिज्यंलभते श्राद्धदोनरः ॥ नवम्यां वै चैकशफान् दशम्यां द्वि ऽऽ खुरान्बहून् ॥३॥

एकादश्यांतथा रौप्यंब्रह्मवर्चस्विनः सुतान् ॥ द्वादश्यांजातरूपंच रजतं कुप्यमेव च ॥ ४ ॥

ज्ञातिश्रैष्ठ्यंत्रयोदश्यां चतुर्दश्यांतु कुप्रजाः ॥ प्रीयन्ते पितरश्चास्य ये च शस्त्रहता रणे ॥ ५ ॥ §

पक्षाद्यादिषु निर्दिष्टा न्विपुला न्मनसः प्रियान् ॥ श्राद्धदः पञ्चदश्यांच सर्वान्कामान्समश्नुते॥६॥ ]

( १ ) **मेधातिथिः** । ननुचापराण्हविधानात्कुतोराभ्यादिषुप्राप्तिः । अथमतंविशेषवचनेनान्यत्राप्यस्तीतिज्ञापितं । सत्यं । पूर्वाण्हादपराण्होविशिष्यतइति यदपेक्षंविशेषवचनं तत्रैवास्तीतिसामान्यज्ञानं प्रवर्तते तेनपूर्वाण्हएवकदाचित्तस्यान्यउत्तरकालइतिकेचिदाहुः । ग्रहणंचन्द्रसूर्ययोरिति चन्द्रग्रहादिषुरात्र्यादावपिप्राप्तस्तन्निषेधार्थं । अतश्चसन्ध्यायांचन्द्रसूर्ययोरुपरागेणरात्रौचन्द्रग्रहणेप्रतिषेधाविधानाद्विकल्पः । अन्येत्वाहुः मध्यान्हकालः पूर्वाह्णापराह्णाभ्यामन्यस्तत्राप्येतेनप्रतिषेधेन कर्तव्यमितिज्ञाप्यते । सूर्येचैवपूर्वाह्णकालत्वात्प्रथमोदिते सूर्येप्रतिषेधः । राक्षसीत्यर्थवादः ॥ २८० ॥

( २ ) **सर्वज्ञनारायणः** । रात्रौ श्राद्धमितिनिषेधात्पार्वणादेर्नित्यस्यापराह्णेऽसंभवे पूर्वाण्हेऽपि करणमनुमतम् । अतएवापराह्णोविशिष्यतइत्युक्तम् । एवंच दिवा नित्यश्राद्धस्यदैवादकरणे लोपएवेति दर्शितम् । सूर्येचिरोदिते सद्भवास्यषण्मुहूर्तमध्ये ॥ २८० ॥

( ३ ) **कुल्लूकः** । रात्रौ श्राद्धं न कर्त्तव्यम् यस्माच्छ्राद्धविनाशनगुणयोगाद्राक्षसी मन्वादिभिरसौ कथिता । सन्ध्ययोश्च न कुर्यादादित्येचाचिरोदिते । अचिरोदितादित्यकालश्चापेक्षायांत्रिमुहूर्तःप्रातःकालोग्राह्यः । यथोक्तंविष्णुपुराणे । रेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तगतेरवौ । प्रातस्ततःस्मृतःकालोभागःसोह्नस्तु पञ्चमः ॥ अपराह्णस्य श्राद्धाङ्गतया विधानात्कथमयमप्रसक्तप्रतिषेधइति चेत् । नायंप्रतिषेधः । सहि रागप्राप्तस्य वा स्याद्विधिप्राप्तस्य वा नाद्यः । नात्ररागतोनित्यस्य दर्शश्राद्धस्य प्राप्तत्वाद्विधिप्राप्तस्य निषेधे षोडशिग्रहणाग्रहणवद्विकल्पःस्यात् तस्मात्पर्युदासोयम् रात्र्यादिपर्युदस्तेतरकाले श्राद्धंकुर्यात् अनुयाजेतरयजतिषु ये यजामहइति मन्त्रवत् । अपराह्णविधिश्च प्राशस्त्यार्थः। अतएवोक्तम् । यथा श्राद्धस्य पूर्वाह्णादपराह्णोविशिष्यतइति ॥ २८० ॥

( ४ ) **राघवानन्दः** । श्राद्धस्यसंपदः स्युरित्युक्तंतस्य प्राशस्त्यंद्योतयन् पर्युदासन्यायेन रात्र्यादिचतुष्टयातिरिक्तकाले कुर्यादनुयाजव्यतिरिक्तयजतिवत् यजतिषुयेयजामहं करोति नानुयाजेषु इत्यादिवदित्याह रात्राविति । अचिरोदिते प्रथमोदिते । अपराण्हे विशिष्यतइति प्राशस्त्यस्मृतेः । षष्टिदण्डात्मिकायांतिथौ प्राप्तायां निषेधःसार्थकइतिभावः ॥ २८० ॥

---

+ वाजिनः=बन्दिनः ( ढ ) पुस्तके । अन्येषु वाजिन इत्येव ।

ऽऽद्विखुरान्=द्विशफान् ( ढ ) पुस्तके । अन्येषु द्विखरान् इत्येव ।

§ ( क, ख, ण, ढ )

( ६ ) **रामचन्द्रः** । सूर्ये अचिरोदिते प्रथमोदिते संङ्गवे काले वा ॥ २८० ॥

[ **रामचन्द्रः** । शाकलः युवानस्तु म्रियन्ते त्रकामोद्रेकेणवै द्विजाः । तेषांश्राद्धंचतुर्दश्यांनान्येषांतु कदाचन । अस्यार्थःअन्येषांज्वरादिना मृतानांचतुर्दश्यांश्राद्धंन कार्यं किंतु तत्त्रिधा । वाष्कलः । कामाग्निना च दह्यन्ते ये युवानःकदाचन । तेषांहिपितृपिण्डश्च भूतायामपि निर्वपेत् । स्त्रीणामप्येवमेकंस्यात्कामासक्तागतासवाः । तासांश्राद्धंहि भूतायांप्रसूत्या मरणंयदि ॥ ५ ॥ ]

[ **रामचन्द्रः** । पक्षेति । पक्षाद्यादिषु पक्षादिःआदिर्यासांताःपक्षाद्यादयः तासु पक्षाद्यादिषु प्रतिपदाद्यासु पञ्चदश्यां अमायां श्राद्धदःसर्वान्कामानवाप्नोति ॥ ६ ॥ ]

## अनेन विधिना श्राद्धंत्रिरब्दस्येह निर्वपेत् ॥ हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम् ॥२८१॥

( १ ) **मेधातिथिः** । पूर्वोक्तेनविधिनाइतिकर्तव्यताकलापेन पूर्वेद्युर्निमन्त्रणादिभिः संवत्सरस्यत्रिः श्राद्धंकुर्वीत । केषुमासेष्वित्यतआह हेमन्तग्रीष्मवर्षासु मासानुमासिकमित्यस्यत्रिः संवत्सरविधिर्वैकल्पिकः । पाञ्चयाज्ञिकः पञ्चमहायज्ञमध्येयःपठितःसोन्वहंकर्तव्यः । अस्यचप्राचीनावीत्यपसव्योदङ्मुखब्राह्मणभोजनमित्येतावत्येवेतिकर्तव्यता । एवमर्थमेव पुनरुपन्यासः । एवंत्रिः संवत्सरविधिरनाहिताग्नेरित्येवंपूर्वेव्याचक्षते प्रमाणंतुतएवविदंति ॥ २८१ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिरितित्रिरपीत्यर्थः । एतच्च प्रतिमासमसंभवे । संभवेतु प्रतिमासमेव मासिमासि पितृभ्यः क्रियतइतिश्रुतेः । हेमन्तग्रीष्मवर्षास्विति चतुर्मासर्तुपक्षमाश्रित्योक्तम् । एवंच मत्स्यपुराणे । अनेन विधिना श्राद्धंत्रिरब्दस्येह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षेषु सर्वदेत्युक्तत्वात् ॥ त्रिःकरणेएतेष्वेव मासेष्वमास्यायां तत्करणमितिलभ्यते । त्रिसंवत्सरविधिरनाहिताग्नेरित्येवंपूर्वे व्याचक्षते प्रमाणंतु तएव विदन्तीति । अग्निविरहिणामेवेत्यपरे । पाञ्चयज्ञिकं पञ्चमहायज्ञपतितं तदन्वहमेव कार्यमशक्तावुदकादिनापि इहेति हेमन्तादिषु त्रिःसंवत्सरविधिःपूर्वैःकल्पितः । पाञ्चयज्ञिकोनित्यइति ॥ २८१ ॥

( ३ ) **कुल्लूकः** । कुर्यान्मासानुमासिकमिति प्रतिमासंश्राद्धंविहितंतदसंभवे विधिरयंचतुर्भिर्मासैर्ऋतुरेकः एकस्त्वृतुःसंवत्सरइतीमंपक्षमाश्रित्योच्यते । अनेनोक्तविधानेन संवत्सरमध्ये त्रीनूवारान्हेमन्तग्रीष्मवर्षासु श्राद्धंकर्त्तव्यम् । तच्च समयाचारात्कुंभवृषकन्यास्थेऽर्केपञ्चमहायज्ञान्तर्गतंचएकमप्याशयेद्विप्रमित्यनेन विहितंप्रत्यहंतुकुर्यादिति पूर्वोक्तदार्ढ्यार्थम् ॥ २८१ ॥

( ४ ) **राघवानन्दः** । कुर्यान्मासानुमासिकमिति प्रतिमासं प्रत्यब्दंच प्राप्तंश्राद्धमशक्तौ संकुचति अनेनेति । अब्दस्य हेमन्तादित्रिष्ववश्यं कुर्यादिति त्रिषु संवत्सरमाश्रित्यैतत् पाञ्चयज्ञिकं एकमप्याशयेद्विप्रमित्यादि विहितं पञ्चयज्ञान्तर्गतंश्राद्धं । अन्वहंप्रतिदिनं निर्वपेदित्यन्वयः ॥ २८१ ॥

( ५ ) **नन्दनः** । इहामावास्यायांत्रिरवश्यंनिर्वपेत् न न्यूनम् ॥ २८१॥

( ६ ) **रामचन्द्रः** । अब्दस्य मध्ये त्रिवारंहेमन्तग्रीष्मवर्षासु श्राद्धंनिर्वपेत् । पञ्चयज्ञीयंश्राद्धं अन्वहंप्रत्यहं कुर्यात् । अयनेसंवत्सरस्य विधिरमाहिताग्नेः ॥ २८१ ॥

## न पैतृयज्ञियोहोमोलौकिकेऽग्नौ विधीयते ॥ न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥ २८२ ॥

( १ ) **मेधातिथिः** । पितृयज्ञाङ्गभूतोहोमःपैतृयज्ञिकःसलौकिकेस्मार्तेग्नौनविधीयते । शास्त्रेणकर्तव्यतयानचोद्यते । तस्मात्त्रिःसंवत्सरस्यानाहिताग्निनाकर्तव्यं । यद्यपित्रिःकृतमपिभवत्येवकृतंलौकिकेग्नौ । तथापिसंवत्सरापेक्षया अकृतमे-

वतद्भवति। प्रस्थभोजनोहिन्यूनेभुक्तेऽभुक्तइत्यर्थवादतया पूर्वशेषमिदंपूर्वेव्याचक्षते । इदंत्वयुक्तं। यदिलौकिकोग्निर्विवाहादावपरिगृहीतस्तस्मिन्श्राद्धाङ्गभूतोहोमोनकर्तव्यइत्युच्यते होमप्रतिषेधेनचतद्व्यतिरिक्तमन्यत्कर्मकर्तव्यमित्युक्तंभवति। इतरथापरिगृहीताऽन्यपिपार्वणश्राद्धाङ्गत्वेनविधानादनग्निकस्यश्राद्धानधिकारएवस्यात् । यथान्धस्याऽज्याऽवेक्षणाशक्त्या-नदर्शपौर्णमासयोरधिकारः। अस्मिंस्तुसतिसाग्निकस्यहोमवत्श्राद्धमनग्निकस्य तद्वर्जितमपिज्ञापितंभवति। तथाचाग्न्यभाव-इत्यस्यायमेवविषयः। येपिव्याचक्षते पिण्डपितृयज्ञःपितृयज्ञोभिप्रेतः तत्रयोहोमःसलौकिकेस्मार्तेऽग्नौनास्ति तेपिनयुक्तमाहुः। अस्त्वेवमनाहिताग्नेर्नित्यत्वेश्रपयित्वाजुहुयादित्यादि । नदर्शेनविनाश्राद्धंग्रहोपरागादावाहिताग्नेःप्रतिषेधइत्याहुः। एतत्तुसमाचारविरुद्धं । अन्येतुपठन्तिनविनादर्शइत्यस्यानाहिताग्निनामासानुमासिकंकर्तव्यं। नास्यत्रिःसंवत्सरविधिः। नैवायंपाठोस्तीत्यन्ये । कस्तर्ह्यस्यार्थः । दार्शात्श्राद्धादन्यदाहिताग्नेर्मघाश्राद्धादि ननियमेन भवतीतिदार्शमेवतस्यनियतं। अनाहिताग्नेस्तुहेमन्तादिविहितान्यपिनियतानीति॥ २८२ ॥

( २ ) **सर्वज्ञनारायणः**। निरग्नीनांविशिनष्टयपिच नपितृयज्ञिकइति। पितृयज्ञश्राद्धसंबन्धि होमोलौकिके ग्राम्ये न किंतु वैवाहिकएव। तदभावे ब्राह्मणकरादौ। आहिताग्नेर्यच्छ्राद्धमाहिताग्निकर्तृकंतन्न दर्शेनविनाऽस्ति। अतोदशम्यादिष्वपि यत्करणमुक्तंतदनाहितत्रेताग्निमपेक्ष्यश्राद्धं पार्वणंप्रकृतत्वात्। प्रतिसांवत्सरिकादित्वन्यदपि कार्यमेव ॥ २८२ ॥

( ३ ) **कुल्लूकः** । अग्नेःसोमयमाभ्यांचेत्यनेन विहितपितृयज्ञाङ्गभूतोहोमोन लौकिके श्रौतस्मार्तव्यतिरिक्ताग्नौ शास्त्रेण विधीयते। तस्मान्न लौकिकाग्नावग्नौकरणहोमःकर्तव्यः । निरग्निना तु अग्न्यभावे तु विप्रस्य पाणावित्यभिधानाद्विप्रपाण्यादौ करणीयः। आहिताग्नेर्द्विजस्य नामावास्याव्यतिरेकेण कृष्णपक्षे दशम्यादौ श्राद्धंविधीयते। मृताहश्राद्धंतु नियतत्वात्कृष्णपक्षेऽपि तिथ्यन्तरे न निषिध्यते ॥ २८२ ॥

( ४ ) **राघवानन्दः**। तत्र विशेषान्तरमाह नेति । लौकिके विवाहादौ। अपरिगृहीते श्राद्धाङ्गहोमोनकर्तव्यइति निषेधादन्यत्कर्तव्यमिति मेधातिथिः। स्मार्ताग्नौ आवसथ्याख्ये श्रौते च कर्तव्यः अग्नीशानयमाभ्यांस्वाहेत्यादिकोहोमः न दर्शेनेति आहिताग्नेः अमावासिकैकोद्दिष्टद्वयमितिभावः॥ २८२ ॥

( ५ ) **नन्दनः**। अथ पित्र्येषु गृह्याग्नौ होमः कार्योन लौकिकाग्नावित्याह नेति। अत्र पितृयज्ञशब्देन मासिकश्राद्धमुच्यते। अधिकाराल्लौकिकाग्नौ न विधीयते । किंतु गृह्याग्नावेव विधीयतइत्यर्थः । केचित्तु पितृयज्ञशब्दस्य पिण्डपितृयज्ञएव निरूढत्वात्तस्यैव लौकिकाग्नौ निषेधइतिमन्यन्ते। अनाहिताग्नेरयंमासि श्राद्धकल्पः न पुनराहिताग्ने रपीत्युक्तम उत्तरार्द्धेन। आहिताग्नेः पितृयज्ञंतुनिर्वर्त्येत्यादिना श्लोकद्वयेनोक्तएव मासिकश्राद्धकल्पः कर्तव्यः नाधिकइत्यर्थः॥ २८२ ॥

( ६ ) **रामचन्द्रः**। लौकिकाग्नौ अस्मार्तेग्नौ पैतृयज्ञियःअग्नौकरणहोमःविधीयते आहिताग्नेरग्निहोत्रिणःद्विजन्मनःदर्शेन विनाश्राद्धंन। दर्शेचाधिकारोनान्यतिथौ ॥ २८२ ॥

**यदेव तर्पयत्यद्भिः पितॄन्स्नात्वा द्विजोत्तमः॥ तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम्॥ २८३॥**

( १ ) **मेधातिथिः**। पाञ्चयाज्ञिकंयच्छ्राद्धं अहरहरित्युक्तं तस्यवैकल्पिकत्वमनेनोच्यते। उदकतर्पणंयत्क्रियतेस्नात्वातेनैवपितृयज्ञक्रियाफलंमाप्नोति । यदुक्तमेकमप्याशयेदितितस्यनास्तिनियमेनकर्तव्यता उदकतर्पणमवश्यंकर्तव्यम् ॥ २८३ ॥

( २ ) **सर्वज्ञनारायणः**। अब्दस्य त्रिरपिपार्वणश्राद्धकरणेऽशक्तस्यानुकल्पमाह यदेवेति । पितृयज्ञः पार्वणाख्यः ॥ २८३ ॥

( ३ ) **कुल्लूकः**। पाञ्चयज्ञिकश्राद्धासंभवे विधिरयम् । यत्र स्नानानन्तरमुदकतर्पणंद्विजः करोति तेनैव सर्वनित्यश्राद्धफलंप्राप्नोति । द्विजोत्तमपदंद्विजपरम् ॥ २८३ ॥

( ४ ) **राघवानन्दः**। सर्वाशक्तौ तर्पणस्य सर्वार्थकत्वमावश्यकत्वंच गृहमेधीये आज्यभागौ यजतीतिवदित्याह यदेवेति । मेधातिथिस्तूदकतर्पणं नित्यश्राद्धस्य वैकल्पिकमित्याह ॥ २८३ ॥

( ५ ) **नन्दनः**। अथ ब्राह्मणभोजनात्मकमपि श्राद्धमाहिताग्निनावश्यंकार्यं तत्फलस्यान्यतः सिद्धत्वादित्याह यदेति । तेनाहिताग्नेः कल्पनीया व्यवस्था । पिण्डपितृयज्ञेन वापितृपूजाब्राह्मणभोजनान्तेन विधिनावेति ॥ २८३ ॥

## वसून्वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान् ॥ प्रपितामहांस्तथादित्यान् श्रुतिरेषासनातनी ॥२८४॥

( १ ) **मेधातिथिः**। पितृद्वेषादप्रवर्तमानस्यप्रवृत्त्यर्थमिदं । त्रिस्थानावस्थाद्यादेवताःपितरोपियएवपिण्डभाजः अतोदेवतात्वेनैतद्द्रष्टव्याः श्रुतिरेषाश्रूयते एतद्वेदेतु अतःपुरातनीनित्यत्वाद्वेदस्य ॥ २८४ ॥

( २ ) **सर्वज्ञनारायणः**। पित्रादीनांनरकादिषु स्थितौ श्राद्धफलदायित्वासंभवात् कथंकाम्यश्राद्धीयफलसिद्धिरित्याशंक्याह वसून्वदन्तीति । पुरातनो इदानीमपठ्यमाना एतेन स्वपित्रादीनुद्दिश्यापि कृतंश्राद्धंवस्वादीनपि देवांस्तर्पयति तेच तृप्ताःफलंददतीत्युक्तम् ॥ २८४ ॥

( ३ **कुल्लूकः**। यस्मात्पित्रादयोवस्वादयइति । एषामनादिभूताश्रुतिरस्तिअतःपितॄन्वस्वाख्यदेवान्पितामहान्रुद्रान्प्रपितामहानादित्यान्मन्वादयोवदन्ति ततश्च सिद्धबोधनवैयर्थ्याच्छ्राद्धे पित्रादयोवस्वादिरूपेण ध्येयाइति विधिःकल्प्यते । अतएव पैठीनसिः । यएवंविद्वान्पितॄन्यजते वसवोरुद्राआदित्याश्चास्य प्रीताभवन्ति । मेधातिथिगोविन्दराजौतु । पितृद्वेषान्नास्तिक्याद्वायःपितृकर्मणि न प्रवर्तते तंप्रत्येतत्प्रवर्तनार्थंदेवतात्वाध्यारोपेण पितॄणांस्तुतिवचनम् ॥ २८४ ॥

( ४ ) **राघवानन्दः** । तर्पणेनैव सर्वमाप्नोतीत्यस्यार्थवादः वसूनिति । पित्रादित्रयतर्पणेन वसुरुद्रादित्यास्तर्पिताभवन्तीतिभावः ॥ २८४ ॥

( ५ ) **नन्दनः**। अथ पित्रादिषु देवताविशेषात्मकत्वप्रतिपत्तिश्राद्धफलातिशयमाह वसूनिति ॥ २८४ ॥

( ६ ) **रामचन्द्रः**। पितृपितामहप्रपितामहान् वसुरुद्रादित्यस्वरूपान् वदन्ति । एषाश्रुतिः सनातनी । तद्यथा हेपितःवसुरूप हे पितामह रुद्ररूप हेप्रपितामह आदित्यरूप ॥ २८४ ॥

## विघसाशी भवेन्नित्यं नित्यंवामृतभोजनः ॥ विघसोभुक्तशेषं तु यज्ञशेषं तथामृतम् ॥ २८५ ॥

( १ ) **मेधातिथिः** । आद्येनश्लोकपादेनातिथ्यादिभुक्तशिष्टस्यान्नस्ययद्भोजनंविहितंतदनूद्यते माङ्गलिकतयामङ्गलावसथानिशास्त्राणिप्रथन्ते । पित्र्याद्दैवंकर्मशस्ततरं । यज्ञशेषं । अनेनज्योतिष्टोमादिहविःशेषस्यभोजनंविघसस्यतुल्यतयोच्यते । उत्तरेणार्धश्लोकेनसौहार्दमेव । तस्यवेदार्थव्याख्यानं । कस्यांचिच्छाखायामाभ्यांशब्दाभ्यांविधानदृष्टमतोव्यामोहंनिवर्तयति । विघसमश्नातीतिविघसाशी । अमृतंभोजनमस्येत्यमृतभोजनः । भृत्यशेषं भृत्यभुक्तशिष्टमितिद्रष्टव्यं । भुक्तशेषमितिपाठसामर्थ्यादतिथ्यादिभुक्तमितिद्रष्टव्यं । अन्यत्तु प्रकृतत्वाच्छ्राद्धभुक्तशेषमितिद्रष्टव्यं । तथाचस्मृत्यन्तरं भुञ्जीतपितृसेवितमिति । श्राद्धाङ्गंचैतद्भोजनंकेचिदाहुः । अन्येतु पुरुषार्थोभोजननियमोयमित्याहुः । वसून्वदन्तीत्यनेनैवश्राद्धप्रकरणस्यापवृत्तत्वात् । यज्ञशेषं यज्ञोपयुक्तद्रव्यशेषमितिद्रष्टव्यम् ॥ २८५ ॥

( २ ) **सर्वज्ञनारायणः** । भुक्तशेषमतिथ्यादिभुक्तशेषं । यज्ञशेषंवैश्वदेवाख्ययज्ञशिष्टम् ॥ २८५ ॥

( ३ ) **कुल्लूकः** । सर्वदा विघसभोजनःस्यात्सर्वदा चामृतभोजनोभवेत् । विघसामृतपदयोरप्रसिद्धत्वादर्थंव्याकुरुते । विप्रादिभुक्तशेषंविघसउच्यते । दर्शपौर्णमासादियज्ञशिष्टंपुरोडाशाद्यमृतम् सामान्याभिधानेपि प्रकृतत्वाच्छ्राद्धे विप्रभुक्तशेषभोजनार्थोयंविधिः । अतएव भुञ्जीतातिथिसंयुक्तःसर्वपितृनिषेवितमिति स्मृत्यन्तरम् । अतिथ्यादिविशेषभोजनंत्ववशिष्टंतु दम्पतीइत्यनेनैव विहितं तस्यैव यज्ञशेषतुल्यत्वापादनेन स्तुत्यर्थंपुनर्वचनमिति तु गोविन्दराजव्याख्यानमनुष्ठानविशेषानर्हमप्राकरणिकंच ॥ २८५ ॥

( ४ ) **राघवानन्दः** । देवानतिथींश्च पूजयित्वैव भोक्तव्यमिति नियमयति विघसाशीति । विघसामृतयोर्लक्षणमाहविघसंत्विति । भुक्तशेषमतिथ्यादिभुक्तावशिष्टं । गृहस्थःशेषभुग्भवेदित्युक्तेः ॥ २८५ ॥

( ५ ) **नन्दनः** । उक्तेन प्रकारेण देवतातिथिभृत्यशेषंगृहस्थेन भोक्तव्यमित्याह विघसाशीति । यज्ञशेषंपञ्चमहायज्ञशेषम् ॥ २८५ ॥

( ६ ) **रामचन्द्रः** । विघसंभुक्तशेषंश्राद्धभुक्तावशेषं पञ्चयज्ञशेषं अमृतंभवतीत्यर्थः ॥ २८५ ॥

**एतद्वोऽभिहितंसर्वंविधानंपाञ्चयज्ञिकम् ॥ द्विजातिमुख्यवृत्तीनांविधानंश्रूयतामिति ॥ २८६ ॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायांसंहितायांतृतीयोऽध्यायः ॥ ॥ ३ ॥ ॥ ७ ॥**

( १ ) **मेधातिथिः** । पूर्वंहिव्यवहितस्यपाञ्चयज्ञिकमिति महायज्ञविधेरुपसंहारोमाङ्गलिकतयैवउत्तरेणश्लोकार्धेनवक्ष्यमाणाध्यायार्थैकदेशोपन्यासोपगतेचोक्तप्रयोजनानि । द्विजातिमुख्याब्राह्मणास्तेषांवृत्तयोजीविकाः कर्माणि द्विजातीनांवामुख्यवृत्तयइति । उत्तरत्रैवदर्शयिष्यामइतिप्रसिद्धम् ॥ २८६ ॥ मान्याकापिमनुस्मृतिस्तदुचिताव्याख्याहिमेधातिथेः सालुप्तैवविधेर्वशात्क्वचिदपिप्राप्यंनयत्पुस्तकम् ॥क्षोणीन्द्रोमदनःसहारणसुतोदेशान्तरादाहृतैर्जीर्णोद्धारमचीकरत्ततइतस्तत्पुस्तकैर्लेखितैः ॥ १ ॥ शुभंभवतु ॥ इतिश्रीभट्टवीरस्वामिसूनोर्भट्टमेधातिथिस्वामिनःकृतौमनुभाष्येतृतीयोध्यायःसमाप्तः ॥३॥

( २ ) **सर्वज्ञनारायणः** । पाञ्चयज्ञिकं तत्र प्रसंगात्पार्वणस्य चेत्यपिद्रष्टव्यम् । द्विजाति मुख्याः ब्राह्मणाः । तेषांयावृत्तयो जीवनोपायास्तेषांविधानम् ॥ २८६ ॥ श्रीनारायणसर्वज्ञवृत्तिसंदर्शितान्वयाः । मनुस्मृतिगिरांचार्थमधिगच्छन्तुसूरयः । इति सर्वज्ञश्रीनारायणकृतौ मन्वर्थविवृतौ विवाहश्राद्धाधिकारोनाम तृतीयोध्यायः ॥ ३ ॥ ॥ ७ ॥

( ३ ) **कुल्लूकः** । इदंपञ्चयज्ञभवमनुष्ठानंसर्वंयुष्माकमुक्तम् पार्वणश्राद्धव्यवहितैरपि पञ्चयज्ञैरुपसंहारस्तेषामभ्यर्हितत्वज्ञापनार्थः मङ्गलार्थइति तु मेधातिथिगोविन्दराजौ । इदानींद्विजानांमुख्योब्राह्मणस्तस्य वृत्तीनामृतादीनामनुष्ठानंश्रूयतामिति वक्ष्यमाणाध्यायैकदेशोपन्यासः ॥ २८६ ॥ ॥ इति वारेन्द्रनन्दनवासीयभट्टदिवाकरात्मजश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥

( ४ ) **राघवानन्दः** । वृत्तमुपसंहरन्वर्तिष्यमाणंप्रतिजानीते एतदिति । द्विजातिषु मुख्याब्राह्मणश्रेष्ठास्तेषांवृत्तयो जीविकास्तासामनुष्ठानम् ॥ २८६ ॥ ॥ इति मनुस्मृतौ तृतीयोध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥

( ५ ) **नन्दनः** । द्विजातिमुख्याः ब्राह्मणास्तेषांवृत्तयोर्थप्राप्त्युपायाः । इतिशब्दोवाक्यसमाप्तौ ॥ २८६ ॥ ॥ इतिमानवव्याख्याने तृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥

( ६ ) **रामचन्द्रः** । यत्तदिति । द्विजातीनांब्राह्मणक्षत्रियविशां एतेषांपृथक् पृथक् मुख्यवृत्तीनांविधानंलक्षणंश्रूयतामिति ॥ २८६ ॥ ॥ श्राद्धप्रकरणंतृतीयम् ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ श्री ॥

॥श्रीगणेशायनमः॥

# ॥ अथ चतुर्थाध्यायप्रारम्भः ॥

चतुर्थमायुषोभागमुषित्वाद्यं गुरौ द्विजः ॥ द्वितीयमायुषोभागं कृतदारोगृहे वसेत् ॥ १ ॥

( १ ) **मेधातिथिः** । संक्षपेणातिक्रान्तस्याध्यायद्वयस्यार्थकथयत्यनुस्मरणाय । गार्हस्थ्यधर्मस्यायंवृत्तिविधिरिति-द्वितीयंश्लोकप्रयोजनं । अनियतपरिमाणत्वादायुषश्चतुर्थभागव्यवस्थाविधानमाश्रमिणामनुपपन्नमतःश्लोकोयंविहिताश्रमकालानुवादार्थः। यद्यपिच शतायुर्वैपुरुषइत्येतदपेक्षया कथंचिदुपपद्येतापि तथापि स्वप्रकरणे ग्रहणान्तिकमिति अवध्यन्तरस्य ब्रह्मचर्यविहितत्वात्। गृहस्थस्तु यदापश्येदिति गार्हस्थ्येपि कालान्तरप्रतिपत्तेरनुवादतैवानुमीयते। चतुर्थमाद्यमायुषोभागं जन्मापेक्षमाद्यत्वंगुरौ उषित्वा ब्रह्मचर्यंकृत्वा ततोद्वितीयं चतुर्थमायुषोभागं कृतविवाहो गृहेवसेत्। गृहस्थाश्रममनुतिष्ठेत्। तत्रवसेत् ॥ १ ॥

( २ ) **सर्वज्ञनारायणः**। ॐ नमोमहागणपतये नमः। चतुर्थमायुषोभागमिति। यावदायुःपुंसस्तस्य चतुर्थभागः आद्योयावत्समाप्यते तावदित्यर्थः। एतच्च षट्त्रिंशदाब्दिकाद्युक्तपक्षैः सह वैकल्पिकम्। गुराविति। ब्रह्मचर्याश्रमइत्यर्थः। द्वितीयं आद्यचतुर्थभागानन्तरचतुर्थभागम् ॥ १ ॥

( ३ ) **कुल्लूकः**। श्राद्धकल्पानन्तरंवृत्तीनांरक्षणंचैवेति वृत्तिषु व्यक्ततया प्रतिज्ञातासु वृत्त्यधीनत्वाद्गार्हस्थ्यस्यानन्तरंवक्तव्यासु ब्रह्मचर्यपूर्वकमेव गार्हस्थ्यंतत्रैव वक्ष्यमाणावृत्तयइति दर्शयितुंब्रह्मचर्यकालंगार्हस्थ्यकालं चात्र वदति। चतुर्थमिति। चतुर्थमायुषोभागमाद्यमित्युक्तं* ब्रह्मचर्यकालोपलक्षणार्थम्। अनियतपरिमाणत्वादायुषश्चतुर्थभागस्य दुर्ज्ञानत्वात् न च शतायुर्वैपुरुषइतिश्रुतेः पञ्चविंशतिवर्षपरत्वम्। षट्त्रिंशदाब्दिकंब्रह्मचर्यमित्यादिविरोधात्। आश्रमसमुच्चयपक्षमाश्रितोब्राह्मणउक्तब्रह्मचर्यकालंजन्मापेक्ष्याद्यंयथाशक्ति गुरुकुले स्थित्वा द्वितीयमायुषश्चतुर्थभागंगृहस्थाश्रममनुतिष्ठेत्। गृहस्थस्तुयदापश्येदित्यनियतत्वाद्द्वितीयमायुषोभागमित्यपिगार्हस्थ्यकालमेव ॥ १ ॥

( ४ ) **राघवानन्दः**। चतुर्थभागं पञ्चविंशतिवत्सरान् शतायुर्वै पुरुषइति श्रुतेः। ब्रह्मचर्यमुषित्वा समाप्येति ब्रह्मचर्यसमाप्य गृहीभवेत्गृहीभूत्वा वनीभवेदिति श्रुतेः तत्र शाब्दीसङ्गतिः ॥ १ ॥

( ५ ) **नन्दनः**। एवंपञ्चमहायज्ञविधानमुक्तम्। इदानींपूर्वाध्यायान्ते प्रतिज्ञातंगृहस्थस्य ब्राह्मणस्य वृत्त्युपायंविवक्षंस्तस्यगार्हस्थस्य कालंतावत्वयसा विभजन्नाह चतुर्थमिति। आयुषोवर्षशतपरिमाणस्याद्यश्चतुर्भागउपनयनात्प्राक्सप्तवर्षाणि पश्चादष्टादश इत्येवंपञ्चविंशतिवर्षकंपूर्वोक्तेषु षट्त्रिंशदाब्दिकादिषु कल्पेष्वाश्रमसमुच्चयानुष्ठाने समीचीनस्तदधि-

* भागमाद्यमित्युक्तं=भागमित्युक्त ( अ )

काराख्योऽयंकल्पः सामर्थ्याद्गम्यते । नह्यनुपनीतस्य गुरुकुलवासोभवति । गुरावुषित्वा द्वितीयमायुषश्चतुर्थभागंकृतदारो-गृहे वसेत् । ब्रह्मचर्यकालस्य पुनरुपन्यासोगार्हस्थ्यस्य कालविवक्षार्थः ॥ १ ॥

( ६ ) **रामचन्द्रः** । अथ गृहस्थधर्मानाह । आयुषः आद्यं चतुर्भागं पञ्चविंशति वर्षपर्यन्तं गुरौ गुरुसमीपे उ-षित्वा वासं कृत्वा वेदाध्ययनं कृत्वा । आयुषो द्वितीयभागं प्राप्य कृतदारःसन् वसेत् ॥ १ ॥

## अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ॥ या वृत्तिस्तां समास्थाय विप्रोजीवेदनापदि ॥२ ॥

( १ ) **मेधातिथिः** । देहिंदेहीति याच्यमानस्य यःपरस्यचित्तविकारः खेदात्मकोजायते सद्रोहोभिमेतो नपुनर्हिंसैव तस्याःसर्वसामान्येनैवप्रतिषेधात् । अल्पद्रोहेणेति । याञ्चयाविना यदिनवर्त्यते तदास्वल्पं याचितव्यं एषोल्पद्रोहो-यावृत्तिर्जीवनोपायः कृषिसेवादि । यस्यांवृत्तौ परस्यपीडा नभवति साआश्रयितव्या । सामान्योपदेशोयं समास्थाय आश्रित्यजीवेत् । आपदि दशमेविधिर्भविष्यति । अस्माच्चोपदेशाद्वक्ष्यमाणाभ्यइत्यादिवृत्तिर्भवतीतिगम्यते । अन्यथा-वक्ष्यमाणविशेषनिष्ठत्वसामान्यैरस्योपदेशस्यानर्थक्यमेवस्यात् । तेनच याजनाध्यापने कुसीदंअमृतादिमध्येअपठितम-पिलभ्यते । अल्पीयसी याउञ्छवृत्तिर्गृहीताअसौह्यल्पद्रोहः । तथाचगौतमः कृषिवाणिज्येवास्वयंकृतेकुसीदंच । जीवन मात्रोयंविधिर्धनसंचयस्तुवक्ष्यमाणैरेवनियतैःकर्मभिः ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । अद्रोहेण दुःखानुत्पादनेन अल्पद्रोहेण अद्रोहेण वृत्यसंभवे जीवेदनापदीत्यापदि बहु-द्रोहामपि वृत्तिंकुर्यादित्यर्थः ॥ २ ॥

( ३ ) **कुल्लूकः** । परस्यापीडाशिलोञ्छायाचितादिरद्रोहः । ईषत्पीडायाचितादिरल्पद्रोहः । नतुर्हिंसैवद्रोहस्तस्यानि-षिद्धत्वात् । अद्रोहेण तदसंभवेऽल्पद्रोहेण यावृत्तिर्जीवनोपायस्तदाश्रयणेन भार्यादिभृत्यपञ्चयज्ञानुष्ठानयुक्तोब्राह्मणो न तु क्षत्रियादिरनापदि जीवेत् । आपदि दशमे विधिर्भविष्यति । अयंच सामान्योपदेशोयाजनाध्यापनविशुद्धप्रतिग्रहादिसङ्ग्र-हार्थः । वक्ष्यमाणर्तादिविशेषमात्रनिष्ठत्वे संकुचितस्वरसत्वहानिरनधिकारार्थत्वंयाजनादेर्वृत्तिप्रकरणानिवेशश्च स्यात्तया-पि जीवेत् ॥ २ ॥

( ४ ) **राघवानन्दः** । तद्धर्मानाह अद्रोहेण शिलोञ्छाभ्यां । अल्पद्रोहेण अल्पयाचितेन देहिदेहीतियाचने चित्त-क्षोभोद्रोहः । अनापदि सुभिक्षादौ ॥ २ ॥

( ५ ) **नन्दनः** वृत्त्युपायेषु वक्ष्यमाणेषु नियमंश्लोकद्वयेनाह अद्रोहेणेति । विहितयाऽपि वृत्त्या हिंसारहितया जी-वेत्तदशक्तौहिंसाबाहुल्यरहितया वेति ॥ २ ॥

( ६ ) **रामचन्द्रः** । भूतानां अद्रोहेणैव दुःखानुत्पादनेन या वृत्तिस्तांवृत्तिंसमास्थाय अनापदि जीवेत् विप्रः अल्पद्रोहेण स्वल्पं याचितव्यं अल्पद्रोहेण या वृत्तिर्वा ॥ २ ॥

## यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ॥ अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥ ३ ॥

( १ ) **मेधातिथिः** । पूर्वेणान्वाहिकजीवनविधावुपायउक्तोनेनधनसञ्चयेनियमउपदिश्यते । स्वैःकर्मभिः धनसंचयं-कुर्यात् । तानिचकर्माण्युत्तरत्रवक्ष्यन्ते । संचयप्रयोजनमाह । यात्रामात्रप्रसिध्यर्थं नभोगायधनसंचयक्लेशः कर्तव्यः । किंतर्हियात्रामात्रप्रसिध्यर्थं । आत्मकुटुंबस्थितिर्यात्रातत्परिमाणंयात्रामात्रं तस्यप्रसिद्धिर्निष्पत्तिः तदर्थस्तत्प्रयोजनं नि-त्यकर्मनिवृत्तिरात्मस्थितावेवान्तर्भूतानिनह्यकुर्वतआत्मस्थितिः । आहच ननिर्वपतिपञ्चानामुच्छ्वसन्नसजीवति । अथवास-

स्यपिशास्त्रीयत्वेयत्रलोकेगर्हते तद्वर्ज्यमेव । यथानरस्य महाकुलीनस्य भुक्तविभवस्य निकृष्टकुलात्ग्रामश्रोकात्समानजातीयादपि प्रतिग्रहादिना केनचिदुपायेन जीवनम् अक्लेशेनशरीरस्य सेवावाणिज्येमहाक्लेशो दूराध्वगमनादिना तादृशे नकर्तव्ये संचयो राशीकृतपरिरक्षणम् ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । प्राणयात्रा प्राणधारणंस्वैःप्रतिग्रहादिभिरगर्हितैरसत्प्रतिग्रहादिरहितैः । अक्लेशेनायासानुत्पादनेन शरीरस्य स्वदेहस्य धनस्य संचयंसंग्रहम् ॥ ३ ॥

( ३ ) **कुल्लूकः** । यात्रा प्राणस्थितिः । शास्त्रीयकुटुंबसंवर्धननित्यकर्मानुष्ठानपूर्वकप्राणस्थितिमात्रार्थं न भोगार्थं स्वसंबन्धितया शास्त्रविहितार्जनरूपैः कर्मभिर्ऋतादिवक्ष्यमाणैः कायक्लेशंविनाऽर्थसंग्रहंकुर्यात् ॥ ३ ॥

( ४ ) **राघवानन्दः** । स्वकुटुम्बवर्धननित्यकर्मानुष्ठानपुरःसरंप्राणस्थितिर्यात्रा तत्परिमाणं तावत्पर्यन्तमात्रं तस्याः प्रसिद्ध्यर्थं नतु भोगार्थम् न निर्वपति पञ्चानामुच्छ्वसन्नसजीवतीत्युक्तेः । पञ्चानामपि योभर्ता न सप्रकृतिमानुषइत्युक्तेः ॥ ३ ॥

( ५ ) **नन्दनः** । लौकिकवैदिकानामवश्यकर्तव्यानांकर्मणांनिर्वृत्तिर्यात्रा तावन्मात्रलाभार्थेन ततोधिकम् । परपीडावदात्मपीडाप्यविहिता वर्जनीयेति ज्ञापितमक्लेशेनशरीरस्येति ॥ ३ ॥

( ६ ) **रामचन्द्रः** । अगर्हितैः स्वैः कर्मभिः । शरीरस्याक्लेशेन धनसंचयं धनसंग्रहं कुर्वीत । प्राणयात्रा प्राणधारणमात्रं यथा भवे त्तथा कुर्यात् ॥ ३ ॥

**ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥ ४ ॥**

( १ ) **मेधातिथिः** । तानिकर्माणि नामतस्तावदाह । नाम्नैवकेषांचित् स्थितिःप्रतीयते प्रयोजनंवाप्रशस्ताभावेनिन्दितेषुप्रवृत्तिः । तत्र मृतप्रमृते अत्यन्तनिन्दिते । ततोपि सत्यानृतं यतआह तेनैववापि जीव्यतइति । अपिशब्दोऽरुचिस्तवनार्थः । नामतोनिर्दिश्यस्वरूपतोव्याचष्टे ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । ऋतामृताभ्यामित्यृतेनामृतेन वेत्यर्थः । सत्यानृताभ्यांतद्द्वयोपलक्षितेन वाणिज्येनेत्यर्थः ॥ ४ ॥

( ३ ) **कुल्लूकः** । कैः कर्मभिरित्यत्राह ऋतामृताभ्यामिति । अनापदीत्यनुवर्तते । ऋतादिभिरनापदि जीवेत् । सेवया त्वनापदि कदापि न वर्तेत ॥ ४ ॥

( ४ ) **राघवानन्दः** । अद्रोहाल्पद्रोहौ नाम्नैव स्पष्टयन्नगर्हितानि कर्माणि स्वयंव्याचष्टे ऋतेति ॥ ४ ॥

( ५ ) **नन्दनः** । अथ वृत्त्युपायान्नियमयति ऋतेति । पूर्वपूर्वालाभे परःपरआस्थेयइति ॥ ४ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह ऋतेति । ऋतामृताभ्यां वा जीवेत् अमृतवृत्त्यावा मृतेन वृत्त्या वा प्रमृतवृत्त्या वा सत्यानृताभ्यांवा श्ववृत्त्या कथंचन नजीवेत् ॥ ४ ॥

**ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ॥ मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ ५ ॥**

( १ ) **मेधातिथिः** । उञ्छश्च शिलश्च उञ्छशिलं तदृतंज्ञेयं । सत्यव्रततुल्यं क्षेत्राल्लूनस्यव्रीह्यादेर्गृहं खलंवा नीयमानस्य यःपुलाकःपतितःस्वामिनोऽनपेक्षितस्तस्योच्चयनमुञ्छस्तदृतम् । नतत्रेयंबुद्धिराधेया । परकीयमेतन्नगृण्हामीति । एवंच स्वत्वात्परिभ्रष्टस्यलूनस्याल्लूनस्यवानेकप्ररोहवतोग्रहणंशिलः अमृतंस्यादयाचितं । अत्यन्तप्रीतिकरत्वात् । मृतमिवयाचितं भैक्षितमिति । याचितमित्येवसिद्धे भैक्षशब्देन सामूहिकतद्धितान्तेन बहवोयाचितव्याइत्युच्यते । नैकः-

कदर्थनीयस्तदुक्तमल्पद्रोहेणेति प्रायेणच भैक्षशब्दस्य भैक्ष्यस्यात्मविशुद्ध्यर्थमित्येवमादौसिद्धान्नविषयेप्रयोगसिद्धेःसामान्यविषयार्थयाचितशब्दोपादानं। तेन नेदंसिद्धान्नभिक्षणमेव। अग्निमतः पराग्निपक्केन वैश्वदेवादिविरोधात्। नचेदंभोजनार्थमेवभिक्षणं किंतर्हि स्थित्यर्थं स्थितिश्चनभोजनमात्रसाध्या गृहस्थस्य किंतर्हि यत्किंचिद्गृहोपयोगि अतएवोदकपरिधानाद्यपिभिक्षितव्यं। गृहोपकरणंच स्थाल्यपिधानादि। ब्रह्मचारिणस्तु भोजनकाले विधिनापाकासंभवान्नियमतःसिद्धान्नविषयंभैक्ष्यंप्रतीयते। भिक्षाशब्दश्चायंभिक्ष्यमाणद्रव्यगतंपरिमाणमप्याचष्टे। भिक्षामात्रंनददाति याचितः। प्रसृतिमात्रं भिक्षेति तेनगोहिरण्यादिभिक्षणं नप्रसृतशब्देनाभ्यनुज्ञायते। प्रतिग्रहाद्यर्थायाश्चेति। ननुभैक्षग्रहणमपि प्रतिग्रहएव। नैवंग्रहणमात्रंप्रतिग्रहः। विशिष्टएवस्वीकारे प्रतिपूर्वोगृण्हातिर्वर्तते। तेन नस्वीकारमात्रे प्रतिग्रहसमर्थोपि प्रतिग्रहप्रत्यवरइति। अदृष्टबुध्यादीयमानं मन्त्रपूर्वगृण्हतःप्रतिग्रहोभवति। नचभैक्षे देवस्यत्वादिमन्त्रोच्चारणमस्ति। नच प्रीत्यादिना दानग्रहणेन च तत्र प्रतिग्रहव्यवहारः। अतः प्रतिग्रहादर्थान्तरमेवेदमृतामृतशब्दाभिधेयं। अतश्च नात्रयाच्यमानस्य अयाच्यमानस्यवा महासत्वतया उपकारान्तरापेक्षा जायते येनवा ददतोजात्याद्यपेक्षा युक्तिमताप्रतिग्राह्यस्यैव करुणया च प्रदीयमानंगृण्हतो न प्रतिग्रहः। ननुच करुणया दानमदृष्टायैव नेतिब्रूमः नचतत्रदानधर्मःकिंतर्हि करुणाभ्यासात्परोपकाराद्वा। तत्रयथाहितोपदेशादावनुग्राह्यस्य यथाविधिर्जात्यादिनापेक्षते। तद्वत्करुणयादाने। तथाच शिष्टानैवंविधेदाने वेदतत्वार्थविदुषे ब्राह्मणायेत्येतदनुरुध्यन्ते। अतएवाब्राह्मणाअपि दैन्यमापन्नाः परेणदत्तं गृण्हानानब्राह्मणवृत्तंप्रतिग्रहमाश्रिताभवन्ति। स्थितमेतत्। प्रतिग्रहे यद्यपि याचितायाचितपूर्वकत्वंविद्यते। तथापि नतेनैवामृतामृतशब्दार्थः। विषयान्तरस्यदर्शितत्वात्। याजनाध्यापनयोरप्येतद्रूपमस्ति। कश्चिद्याजित्वायाजकत्वंलभते। कश्चित्प्रार्थ्यते। एवमध्यापनेयोज्यं। अतोयावताकाचिद्वृत्तिर्याञ्चायासादैन्यावहत्वात्मरणमिवेति मृतशब्देनाभिधीयते। कर्षणंतु मरणादपिपापीयः। लाङ्गलाकर्षणंहि भारवाहत्वं तच्चखलजनपदकर्म॥५॥

( २ ) **सर्वज्ञनारायणः**। उञ्छोवा शिलोवा उञ्छशिलं तत्रोञ्छोरथ्यादिपतितैकैकबीजग्रहणं। शिलंसस्यमञ्जरी तदुपलक्षितंशिलंक्षेत्रभूपरित्यक्तैकैकसस्यमञ्जरीग्रहणं। उभयमृतंसम्यलोकप्राप्तिहेतुत्वात्। अयाचितंयाञ्चांविनाऽन्यतोलब्धं। अमृतमन्याहिंसनात्। याचितस्य भैक्षमिति नामान्तरं तन्मृतंपरदुःखोत्पादनेन हिंसाहेतुत्वात्। कृषिःप्रमृतंप्रकर्षेण प्राणिनांमारकत्वात्। सत्यानृतं एकदेशमिथ्याभिधाननियमात्। अत्र याजनाध्यापनप्रतिग्रहैर्लाभोपि याचितोऽयाचितोवा भवतीति मृतामृतयोरेवान्तर्भूतत्वान्नपृथगुक्तः। तथात्र द्विजातिमुख्यवृत्तीनामित्युपक्रम्य कृषिवाणिज्ययोरभिधानान्नानयोरापदि वर्णान्तरावृत्तितया ब्राह्मणैरनुष्ठानं किंतुस्ववृत्तितयैव। तथाच क्षत्रियवृत्त्यपेक्षयानानयोरुत्कृष्टत्वम्। कुसीदपाशुपाल्ये तु वैश्यवृत्तितया क्षत्रवृत्तेरप्यपकृष्टइति ग्राह्यम्। क्वचित्तत्रापि शब्दात्कुसीदमपि ग्राह्यमतएव गौतमः। कृषिवाणिज्ये वा स्वयंकृते कुसीदंवेति ब्राह्मणमधिकृत्याह। सूत्रेविभागपूर्ववृत्तिद्वयासंभवेत्यन्तापदि कुसीदाश्रयणमित्येतदर्थमित्याहुः॥५॥

( ३ ) **कुल्लूकः**। अप्रसिद्धत्वादृतादीनि व्याचष्टे ऋतमिति। अबाधितस्थानेषु पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु यत्रयत्रौषधयोविद्यन्ते तत्रतत्राङ्गुलिभ्यामेकैकंकणंसमुच्चयित्वेतिबौधायनदर्शनादेकैकधान्यादिगुडकोच्चयनमुञ्छः। मञ्जर्यात्मकानेकधान्योच्चयनंशिलः उञ्छश्चशिलश्चेत्येकवद्भावः। तत्सत्यसमानफलत्वादृतमित्युच्यते। अयाचितोपस्थितममृतमिव सुखहेतुत्वादमृतम्। प्रार्थितंपुनर्भैक्षंभिक्षासमूहरूपंमरणसमपीडाजननान्मृतं। एतच्चसाग्नेर्गृहस्थस्यभैक्षमपक्वतण्डुलादिरूपंन तु सिद्धान्नंपराग्निपक्केन स्वाग्नौ होमाभावात्। कर्षणंच भूमिगतप्रचुरप्राणिमरणनिमित्तत्वाद्बहुदुःखफलकंप्रकर्षेणमृतमिवप्रमृतम्॥५॥

( ४ ) **राघवानन्दः** । ऋतादीनामप्रसिद्धत्वात्तत्कथंज्ञेयंतत्राह ऋतेति द्वाभ्यां । आपणादेर्धान्यादीनामेकैकशोग्रहणमुञ्छं शिलं लूनक्षेत्रादेरनेकधान्यादिकमअर्थ्यग्रहणमितिद्वयं ऋतंचसूनृतावाणीत्युक्तेस्तद्वदनुद्वेजकत्वात्तद्वयम् । अमृतं अयाचितस्यामृतवदयत्नोपस्थित्या तृप्तिहेतुत्वात् । भैक्ष्यं देहिदेहीति चित्तभेत्तृत्वान्मृतम् ॥ ५ ॥

( ५ ) **नन्दनः** । ऋतादीनांस्वरूपंश्लोकद्वयेन व्याचष्टे ऋतमिति । उञ्छश्चशीलश्चोञ्छशिलम् । उञ्छोधान्यस्यआदानम् । कणिशाद्यर्जनंशिलमितिस्मृत्यन्तरम् ॥ ५ ॥

( ६ ) **रामचन्द्रः** । एतद्वृत्तीनांलक्षणमाह । ऋतमिति । ऋतसंज्ञम् ॥ ५ ॥

**सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ॥ सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ ६ ॥**

( १ ) **मेधातिथिः** । नैवंमतव्यं सत्यानृतोभयरूपता शास्त्रेण वाणिज्येभ्यनुज्ञायेतइति किंतर्हि वस्तुस्वभाववादोयं लोभग्रहणमेवानृतंजीव्यतइविवचनाद्वाणिज्याजीवनायैव नधनसंचयाय सेवाश्ववृत्तिर्यथाहिश्वाप्रेर्यते । कृच्छ्रेणचलभते तथा च सेवकः सेवाप्रेष्यत्वं यत्रकुत्रचित्कर्मणि प्रेष्यते उचितेनुचितेवा ससेवकः । अतउत्कृष्टेनायुधकर्मादिना येराजानमुपसर्पन्ति तेनश्ववृत्तयः ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । श्ववृत्तिः शुनइव वृत्तिः तांपरिवर्जयेत् । प्राणरक्षामात्रस्यान्यतः संभवे तदभावे तु तामपि ब्राह्मणः कुर्यादित्येतदर्थं ब्राह्मणवृत्ते र्मध्येभिधानम् । अत्र चोत्तरोत्तरापेक्षया पूर्वापूर्वा वृत्तिःश्रेष्ठेति वक्ष्यति ॥ ६ ॥

( ३ ) **कुल्लूकः** । प्रायेण सत्यानृतव्यवहारसाध्यत्वात्सत्यानृतंवाणिज्यम् । नतुवाणिज्ये शास्त्रेण सत्यानृताभ्यनुज्ञानं तेनचैवापिजीव्यत इतिच शब्देन वाणिज्यसमशिष्टत्वात्कुसीदमपिगृह्यते । पूर्वश्लोकोक्ताकृषिरेतच्छ्लोकेच वाणिज्यकुसीदे अनापदीत्यनुवृत्तेरस्वयंकृतान्येतानि बोद्धव्यानि । यथाहगौतमः । कृषिवाणिज्ये स्वयंचाकृतेकुसीदंच सेवा तु दीनदृष्टिसंदर्शनस्वामितर्जननीचक्रियादिधर्मयोगाच्छुनइव वृत्तिरतःश्ववृत्तिरुक्ता । तस्मात्तांप्रकृतो ब्राह्मणस्त्यजेत् ॥ ६ ॥

( ४ ) **राघवानन्दः** । सत्यानृतं सत्यं स्वीयंद्रव्यं परकीयमनृतं तदात्मकत्वाद्वाणिज्यस्य । सेवा श्ववृत्तिः उन्निद्रादिसमगुणः सारमेयस्तद्वृत्तिः दुःखात्मिकामनुष्यसेवेत्यनुभवसिद्धम् । आपदनापद्भेदेन ऋतादिव्यवस्था ॥ ६ ॥

( ५ ) **नन्दनः** । उञ्छशिलादीनामृतादिसंज्ञाव्यवहारोवृत्तीनांतत्तत्संज्ञानुरूपगुणदोषतारतम्यप्रतिपत्त्यर्थः ॥ ६ ॥

( ६ ) **रामचन्द्रः** । सत्यानृतं सत्यंच अनृतंच सत्यानृतं वाणिज्यं श्ववृत्तिःसेवा कष्टेन युद्धादिना आख्याता तस्मात्तांसेवांपरिवर्जयेत् ॥ ६ ॥

**कुसूलधान्यकोवा स्यात्कुम्भीधान्यकएव वा ॥ त्र्यहैहिकोवापि भवेदश्वस्तनिकएव वा ॥ ७ ॥**

**[ सद्यः प्रक्षालिको वा स्यात् माससञ्चयिकोपि वा ॥ षण्मासनिचयोवापि समानिचय एववा ॥ १ ॥+**

( १ ) **मेधातिथिः** । उक्तआत्मकुटुम्बस्थित्यै धनसंचयः कार्योनभोगायक्लेशआश्रयणीयः । तत्तु किमन्वहमर्जनीयं उतैकदैवचिरकालपर्याप्तमितिनोक्तं । तत्रकालविलंबार्थमिदमारभ्यते कुसूलेधान्यमस्येतिगमकत्वाद्व्यधिकरणोबहुव्रीहिः ।

---

( ७ ) कुसूलधान्यको= कुसूलधान्यिको ( मे० )

( + ) ( ट )

पाठान्तरं कुशूलधान्यकइति । कुसूलपरिमितंधान्यं कुसूलधान्यं तदस्यास्तीति मत्वर्थायइकशब्दः धान्याधिकरणमिष्टकादिकृतंकुसूलः कोष्ठइतिचोच्यते । तेनचात्रापरिमाणंलक्ष्यते । तत्रयावन्मातितावत्संचेतव्यम् । न पुनराधारनियमोऽस्ति । कुसूलेचमहापरिग्रहणस्यापिबहुभृत्यबन्धुदारदासपुत्रगवाश्वादिमतोऽपियावता सांवत्सरीस्थितिर्भवति । तावदनुज्ञायते । यतोवक्ष्यति । यस्यत्रैवार्षिकंभक्तमिति धान्यग्रहणमप्यविवक्षितम् । सुवर्णरूप्याद्यपि तावत्याः स्थितेः पर्याप्तमर्जयतोनदोषः । सर्वथाधिकंततोनार्जनीयमितिवाक्यार्थः । कुम्भीउष्ट्रिका । षण्मासिकोनिचयएतेनप्रतिपाद्यतइतिस्मरन्ति । त्र्यहमैहिकमस्येतित्र्यहैहिकःकुटुम्बस्य नित्यकर्मार्थंच भक्तचयंकरोति यः सत्र्यहैहिकः श्वोभवंश्वस्तनंभक्तंतदस्यास्तीतिपूर्ववत् । मत्वर्थीयंकृत्वा नञ् समासः कर्तव्यः सद्यस्तात्कालिकोभवेत्तदहराजितव्ययीकर्तव्यम् ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । तत्र ऋतामृतेषु तत्तद्वृत्त्याश्रितातिरिक्तफलार्थिनांसंचयनियममाह कुशूलेति । कुशूलधान्योवर्षषण्मासत्रिमासमासानामन्यतरकालतः कुटुम्बभोजनपर्याप्तधान्यवान्कुशूलधान्यवान् । कुम्भीधान्यःषडहःपर्याप्तधान्यवान्कुम्भस्थधान्यवान् । त्र्यहार्थमीहा चेष्टा यस्य सत्र्यहैहिकः । श्वस्तनजीवनपर्याप्ता यस्य वृत्तिर्न भवति सोऽश्वस्तनिकः । एकदिनमात्रपर्याप्तधान्यवान् ॥ ७ ॥

( ३ ) **कुल्लूकः** । कुसूलोव्रीह्यगारंस्यादित्याभिधानिकाः । इष्टकादिनिर्मितागारधान्यसंचयोभवेत् । अत्रकालविशेषापेक्षायां यस्यत्रैवार्षिकंभक्तंपर्याप्तंभृत्यवृत्तये । अधिकंवापि विद्येत ससोमंपातुमर्हतीति ॥ मनूक्तएवकालोग्राह्यः । तेन नित्यनैमित्तिकधर्मकृत्यपोष्यवर्गसहितस्य गृहिणोयावता धान्यादिधनेन वर्षत्रयंसमधिकंवा निर्वाहोभवति तावद्धनः कुसूलधान्यकउच्यते । वर्षनिर्वाहोचितधान्यादिधनः कुम्भीधान्यः । प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नंवार्षिकंभवेदिति याज्ञवल्क्येन गृहस्थस्य वार्षिकसंचयाभ्यनुज्ञानात् । मनुरपि यदा वानप्रस्थस्यैवसमानिचयएववेत्यनेनसमानिचयंवक्ष्यति । तदपेक्षयाबहुपोष्यवर्गस्य गृहिणः समुचितः संवत्सरसंचयः । मेधातिथिस्तु यावता धान्यादिधनेन बहुभृत्यदारादिमतस्त्रिसंवत्सरस्थितिर्भवति तावत्सुवर्णादिधनवानपि कुसूलधान्यइत्यभिधाय कुम्भीउष्ट्रिकाषाण्मासिकधान्यादिनिचयः कुम्भीधान्यकइति व्याख्यातवान् । गोविन्दराजस्तुकुसूलधान्यकइत्येतद्याचक्ष्यकोष्ठप्रमाणधान्यसंचयोवास्याद्द्वादशाहमात्रपर्याप्तधनःकुम्भीधान्यकइत्येतद्याचष्टे । उष्ट्रिकाप्रमाणधान्यादिसंचयोवाषडहमात्रपर्याप्तधनः । द्वादशाहंकुसूलेन वृत्तिःकुम्भ्या दिनानि षट् । इमाममूलांगोविन्दराजोक्तिनानुरुन्ध्महे । ईहा चेष्टा तस्यांभवमैहिकंत्र्यहपर्याप्तमैहिकंधनंयस्य सत्र्यहैहिकः तथावास्यात् । दिनत्रयनिर्वाहोचितधनमित्यर्थः । श्वोभवंश्वस्तनंभक्तंतदस्यातीति मत्वर्थीयमिकंकृत्वा नञ्समासः तथावाभवेत् ॥ ७ ॥

( ४ ) **राघवानन्दः** । तेष्वेव यदि कुटुम्बाद्यर्थं संचयी स्यात्तत्कथं तत्राह कुसूलेति । कुसूलोव्रीह्यागारंस्यादित्यभिधानादिष्टकादिनिर्मितागारम् । कुम्भीधान्यकः कुम्भी उष्ट्रिका तया परिमितं धान्यंयस्य सः । षाण्मासिकधान्यसंचयइति मेधातिथिः भार्यासहितमात्रत्वेन द्विजस्य वानप्रस्थस्य समानिचयएव वेति वक्ष्यमाणत्वात्समानिचयेपि न दोषइति । त्र्यहैहिकइतिईहा चेष्टा तया पर्याप्तंयत्तदैहिकं तादृशदिनत्रयं व्याप्य भोज्यंयस्येत्यर्थः । त्र्यहैहिकींकुटुम्बार्थमीहांकरोति यःसत्र्यहैहिक इति मेधातिथिः । श्वस्तनंपरदिनभोज्यं तेनापि न जीवती त्यश्वस्तनिकः । द्वादशदिनभोज्यं कुसूलं षटदिनभोज्यंकुम्भीति गोविन्दः ॥ ७ ॥

( ५ ) **मन्दनः** । एवंतावद्वृत्तेरुपायानियमिताः । इदानीमुपेयमपि नियमयति कुसूलेति । कुसूलात्किंचिन्यूना धानी

कुम्भीति कल्पनीयम् । द्वयोरह्नोरैहिकमिहभोग्यंवस्तु यस्यास्तिसद्यहैहिकः । श्वोभोग्यंवस्तु श्वस्तनंतद्वान् श्वस्तनिकः ॥ ७ ॥

( ६ ) **रामचन्द्रः** । कुशूलं मृत्तिकाकोष्ठकं कुम्भी उष्ट्रिका । कुशूलधान्यकोवा स्यात् । कुम्भीधान्योवा स्यात् । स्वकुटुम्बपोषणे द्वादशाहमात्रपर्याप्तान्नः कुशब्दो धान्याधिकरणं शूलः कोष्ठः कुशूलधान्यः । स्वकुटुम्बपोषणे पर्याप्तान्नोवर्षपर्यन्तं सकुम्भीधान्यः उष्ट्रिका प्रमाणसञ्चयपरःत्र्यहपर्याप्तान्नमस्यास्तीति त्र्यहैहिकःश्वोभवंधान्यादि श्वस्तनं न विद्यते श्वस्तनंयस्यासौ अश्वस्तनिकएववा भवेत् ॥ ७ ॥

**चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम् ॥ ज्यायान्परः परोज्ञेयोधर्मतोलोकजित्तमः ॥ ८ ॥**

( १ ) **मेधातिथिः** । अस्यविकल्पस्यव्यवस्थामाह । योयःस्वल्पकालसंचयःसधर्मैर्ज्यायानधिकः । धर्माधिक्याच्चफलाधिक्यंभवति । लोकजित्तमः । लोकाञ्जयत्याधिपत्येनावतिष्ठते । भोग्यतया स्वीकरोति । प्रकर्षविवक्षायांतमः । अविशेषोपादानाल्लोकः स्वर्गः प्रतीयते । तेनेयमत्रव्यवस्थामहापरिग्रहोयोबह्वपत्योऽप्राप्तपुत्रोऽसंविभक्तपुत्रःअकृतकन्याविवाहश्चसकुसूलधान्यकः । यस्तु परिणतवयाःप्राप्तपुत्रःकृतकरणःसयावच्छममेति तावदितरान्कल्पानाश्रयेत् ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । चतुर्णामपीत्यपिशब्देन पूर्वोक्तानांषण्णां वृत्तीनामपि मध्ये संकुचितांवृत्तिमपेक्ष्य संकुचिता ज्यायसीति परशब्दोत्र संकोचलब्धोत्कर्षवृत्तिपरः । तेनात्र चतुष्के परःपरः षट्सु तत्पूर्वइतिग्राह्यम् ॥ ८ ॥

( ३ ) **कुल्लूकः** । एषांचतुर्णामपि कुसूलधान्यकादीनां ब्राह्मणानांगृहस्थानांमध्ये योयःशेषे पठितःसश्रेष्ठोज्ञातव्यः । यतोऽसौ वृत्तिसंकोचधर्मेण स्वर्गादिलोकजित्तमोभवति ॥ ८ ॥

( ४ ) **राघवानन्दः** । अत्र ऋतादयः षडुपायाः तैन जीवन्नित्युक्तत्वात् कुसूलादयश्चत्वारउपायास्तेष्वेव श्रेष्ठत्वनिर्धारणमाह चतुर्णामिति । कुसूलादिचतुष्टयसंचयिनामेषांकुटुम्बाल्पबहुत्वाद्यपेक्षया कुसूलधान्यकादीनामर्थवादः श्रेयानित्यादि ॥ ८ ॥

( ५ ) **नन्दनः** । चतुर्णांकुसूलधान्यादीनाम् ॥ ८ ॥

( ६ ) **रामचन्द्रः** । तेषांचतुर्णां कुशूलधान्यकादीनांमध्ये परःपरः ज्यायान् उत्कृष्टः ज्ञेयः ॥ ८ ॥

**षट्कर्मैकोभवत्येषां त्रिभिरन्यः प्रवर्तते ॥ द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥ ९ ॥**

( १ ) **मेधातिथिः** । एषांकुशूलधान्यकादीनांगृहस्थानामेकःषट्कर्मा भवति । योमहापरिग्रहःप्रागुक्तस्तस्यषड्वृत्तिकर्माणि भवन्ति । कानिपुनस्तानिउञ्छशिलायाचितयाचितलाभकृषिवाणिज्याध्यापनयाजनप्रतिग्रहाःयाचितायाचितग्रहणादन्तर्भवन्ति । बहुकुटुम्बकोनित्यकर्मसंपत्त्यर्थंच सर्वावृत्तीःसमुच्चिताःकुर्यात् । कृषिवाणिज्येअपि येऽप्यध्यापनमध्ययनमित्यादीनि प्रथमाध्यायपठितानि षट्कर्माणि व्याचक्षते तेषांप्रकरणविरोधोनिष्प्रयोजनंवाऽध्ययनादीनामुपादानमन्यत्रैवतेषांविहितत्वात् । अन्योद्वितीयःकुम्भीधान्यस्त्रिभिःप्रवर्तते । सोऽनर्थकोयावद्वर्ततेतावत्प्रवर्ततइति वर्तनंचस्थितिसंपत्तिः प्रकृतानांचयानिकानिचित्क्कचित्कृषिवाणिज्ये विहायप्रशस्ततरोहि पूर्वस्मात्कुम्भीधान्यकोयतोवक्ष्यति सावृत्तिःसद्भिर्गर्हिता । गोरक्षकान्वाणिजिकानिति । यदप्युक्तंगौतमेनकृषिवाणिज्ये वाऽस्वयंकृतेकुसीदंचेत्यनापद्येव तत्राप्यस्वयंकरणपक्षेदोषोऽस्त्येव लघीयांस्तुभविष्यति । द्वाभ्यामेकः अत्रापि याचितलाभंवर्जयित्वा त्रयाणांयथासंभवं द्वे गृह्येते अयाचितमपितावद्गृह्यते यावत्त्र्यहपर्याप्तम् । चतुर्थस्तु ब्रह्मसत्रेण जीवति । ब्रह्मसत्रंशिलोञ्छयोरन्यतरावृत्तिः । सततभवत्वात्सत्रमिवनतदहःपरिसमापनीयावृत्तिरतः सत्रमित्युच्यतेअहरहर्नित्यमनुष्ठानात् । ब्रह्मशब्दोब्राह्मणपर्यायस्तेषामिदंसत्रम् ।

अस्माद्ब्रह्मशब्दात्पूर्वोऽयंवृत्तिप्रपञ्चोब्राह्मणविषयएव विज्ञेयः । क्षत्रियादीनांतु तत्रवक्ष्यति । कथंपुनःशिलोञ्छवृत्त्याजीवनं-संभवति यावता शरद्ग्रीष्मयोरेव क्षेत्रे खले वा शिलपुलाकपातसंभवः । अथोच्यते ग्रीष्मेभ्योग्रैष्माणि शारदानि शारदेभ्यो ऽर्जयिष्यतीति षण्मासिकवृत्तिरेवस्यान्नाश्वस्तनिकः । अथान्यथापिसंभवतियावतस्तावतोव्रीह्यादेः कथंचित्पतितस्यो-पादानम् । सत्यम् न तद्भोजनायपर्याप्तम् । संचिन्वानोयदा पर्याप्तंप्राप्स्यतिचेदशिष्यतिपञ्चाहाद्यसंभवात् तथा च महाभार-ते शिलोञ्छवृत्तिः पक्षान्ताशनोवर्ण्यते । सोऽयमस्यामवस्थायांगृहस्थस्तापसः संवृत्तइतिचेत् । किंत्वेवमप्यश्वस्तनिकत्वंविरु ध्यते । यथोपपादस्थितिकस्तदा स्यान्नाश्वस्तनिकः । अश्वस्तनिकोह्युच्यतेअहन्यहन्यर्जयतियात्रिकंतदहरेव च व्ययी-करोति । नद्वितीयेन्हि स्थापयति । यदि च न प्रत्यहंशिलोञ्छवृत्तेर्भोजनंनिवर्तते । कुतोश्वस्तनिकोभवेत् । कथंच तथावि धस्यजीवनंपुत्रदारभरणंच । अतएव केचित्त्रिभिरन्यः प्रवर्ततइत्यतआरभ्यान्यथा व्याचक्षते। त्रिभिर्याजनाध्यापनप्रतिग्रहैः-द्वाभ्यांप्रतिग्रहःप्रत्यवरइतिप्रतिग्रहव्युदासेनयाजनाध्यापनेप्रतिगृह्णेतेब्रह्मसत्रमध्यापनंतद्धिवृत्तयेपर्याप्तम् यत्तुवर्तयंश्चशिलो-ञ्छाभ्यामितिसचतुष्टयव्यतिरिक्तोऽन्यएव । अत्रोच्यते । यःशिलपरिमाणान्दशद्वादशान्यवान्व्रीहीन्वाबहुभ्यआदत्ते याव-देकाहयात्रिकंसशिलवृत्तिः । यस्त्वेकैकंयात्रार्थमाहरति । सउञ्छवृत्तिः स्मृत्यन्तरेऽयंज्यायान्वरवृत्तिरुक्तः । अतश्च सार्व-कालिकमप्युपपद्यते । न च वैश्वदेवादिक्रियाविरोधस्तत्र पुत्रदाराणामभरणभेदश्चयाचितभैक्षादत्यन्ताल्पग्रहणात् ॥ ९ ॥

( २ ) सर्वज्ञनारायणः । पूर्वंहि ऋतामृतमृताख्यंवृत्तित्रयमनापदि । अन्यत्तु त्रयमापदीति दर्शितम् । यत्तु सेवारूपं नृपे भैक्ष्यमापत्तौ जीवनानि त्विति याज्ञवल्क्येनोक्तं तत्सिद्धान्नभैक्ष्यविषयम् । तेषु कुशूलधान्यादिचतुष्टयमध्यएकः कुशूलधान्यः । षट्कर्मा याजनाध्यापनप्रतिग्रहाहि मृतामृतभेदेन द्विविधाःसन्तःषट्भवन्ति तैःसमुदितैर्वर्तते । अन्यः कुम्भी-धान्यः । त्रिभिरमृतभेदभूतैः याजनादिभिस्त्रिभिः । अन्यस्त्र्यहैहिकोद्वाभ्यांशिलोञ्छाभ्यां । चतुर्थोश्वस्तनवृत्तिः ब्रह्मसत्रेण ब्रह्मलोकप्राप्तिहेतुना सत्रंयागस्तत्तुल्यफलतया सत्रेणोञ्छग्रहणेन जीवति ॥ ९ ॥

( ३ ) कुल्लूकः । एषांगृहस्थानांमध्ये कश्चिद्गृहस्थोयोबहुपोष्यवर्गःसप्रकृतैर्ऋतायाचितभैक्षकृषिवाणिज्यैःपञ्चभिस्ते-न चैवेत्यनेनैव च शब्दसमुच्चितेन कुसीदेनेत्येवंषड्भिः कर्मभिः षट्कर्मा भवति षड्भिरेतैर्जीवति । कृषिवाणिज्यकुसीदान्ये-तान्यस्वयंकृतानिगौतमोक्तानीत्युक्तम् । अन्यःपुनस्ततोऽल्पपरिकरः । त्रिभिर्याजनाध्यापनप्रतिग्रहैरन्नैर्हेणेत्येतच्छ्लोकसंगृही-हीतैःप्रवर्त्तते । प्रशब्दोऽनर्थकोवर्त्ततइत्यर्थः । अपरःपुनःप्रतिग्रहःप्रत्यवरइति वक्ष्यमाणत्वात्तत्परित्यागेन द्वाभ्यांयाज-नाध्यापनाभ्यांप्रवर्त्तते । उक्तत्रयापेक्षयाचतुर्थः पुनर्ब्रह्मसत्रेणाध्यापनेन जीवति । मेधातिथिस्तु । एषांकुसूलधान्यका-दीनांमध्यादेकः कुसूलधान्यकःप्रकृतैरुञ्छशिलायाचितकृषिवाणिज्यैःषट्कर्माभवति षड्भिर्जीवति अन्योद्वितीयःकुम्भीधा-न्यकः कृषिवाणिज्ययोर्निन्दितत्वात्तत्त्यागउञ्छशिलयाचितायाचितानांमध्यादिच्छातस्त्रिभिर्वर्त्तेत । एकस्त्र्यहैहिकोयाचि-तलाभंविहायोञ्छोशिलायाचितानांमध्यादिच्छया द्वाभ्यांवर्त्तेत । चतुर्थःपुनरश्वस्तनिकोब्रह्मसत्रेण जीवति । ब्रह्मसत्रंशि-लोञ्छयोरन्यतरा वृत्तिः । ब्रह्मणोब्राह्मणस्य सततभवत्वात्सत्रमित्याह ॥ ९ ॥

( ४ ) राघवानन्दः । एषांकुसूलधान्यकादीनांमध्ये बहुपरिकरः कुसूलधान्यकः षडुञ्छादिकर्मास्यादित्याह षट्-कर्मैकइति । कुम्भीधान्यकस्तु मध्यमपरिकरः कृषिवाणिज्ये याच्ञांविहायान्यैस्त्रिभिर्जीवेत् श्रेष्ठत्वात् । त्र्यहैहिकोद्वाभ्यां शिलोञ्छाभ्यां श्रेष्ठतरत्वात । अश्वस्तनिकस्त्वयाचितेनैकेन श्रेष्ठतमत्वात् । ऋतामृताभ्यांजीवेदिति जीविकोपक्रमाद्वृत्तय-स्तु शिलोञ्छाभ्यामित्युपसंहाराच्चेति जीविकालिङ्गात्प्रकरणाच्चेतिकेचित् । परेत्वाहुःषडिति यजनयाजनाध्ययनाध्यापनदा-नप्रतिग्रहाःषडस्यसन्तीति षट्कर्मेति कर्मशब्दप्रयोगात् । त्रिभिर्याजनाध्यापनप्रतिग्रहैः । द्वाभ्यां याजनाध्यापनाभ्यां ।

प्रतिग्रहप्रसङ्गेन दोषमृच्छत्यसंशयइति प्रतिग्रहस्य निन्दितत्वाच्चतुर्थोध्यापनशीलः साम्नस्य कृतकृत्यतेति वक्ष्यमाणत्वादिति। चतुर्थस्त्वध्यापनरतः एतेषु प्रकृष्टः ब्रह्मवेदस्तदेव सत्रं स्वाध्यायप्रवचनाभ्यांन प्रमदितव्यमिति श्रुतेः। सत्रवदावश्यकत्वबहुकालव्यापित्वाभ्यांसएवस्तूयते ॥ ९ ॥

( ५ ) **नन्दनः**। एवंतावदुपेयपरिमाणतश्चातुर्विध्यंगृहमेधिनामुक्तम् इदानीमुपायपरिमाणतोऽप्याह षडिति। एषांचतुर्णामध्यएकः षट्कर्माभवति । षड्भिर्ब्राह्मणनियतैर्याजनाध्यापनप्रतिग्रहैस्त्रैवर्णिकनियतैः प्रमृतसत्यानृतकुसीदैश्चार्थसञ्चये प्रवृत्तइत्यर्थः। त्रिभिर्याजनाध्यापनप्रतिग्रहैः । द्वाभ्यांयाजनाध्यापनाभ्याम्। प्रतिग्रहः प्रत्यवरइति निन्दितत्वात्प्रतिग्रहोवर्जनीयइत्यर्थः । ब्रह्मसत्रेणाध्यापनेन चतुर्थोजीवति। तस्यषट्कर्माद्यपेक्षयाचतुर्थशब्देन ग्रहणम् नतु पूर्वश्लोकेनिर्दिष्टस्याश्वस्तनिकस्य ॥ ९ ॥

( ६ ) **रामचन्द्रः**। वर्णानांवृत्तिमाह। एषांकुशूलधान्यकादीनांमध्ये एकः ब्राह्मणः षट्कर्मा उञ्छशिलायाचित याचितकर्षण-वाणिज्य सेवावृत्तिभिर्भवेत् । प्रतिग्रहादीनिवा षट्कर्माणि क्षत्रियस्त्रिभिरध्ययनदानयजनादिभिः। वैश्यः द्वाभ्यांवृत्तिभ्यांगोरक्षावाणिज्याभ्यां जीवेत्। चतुर्थः शूद्रः स्वस्य ब्रह्मसत्रेण ब्राह्मणानांवा त्रैवर्णिकानांवा सेवारूपवृत्त्या जीवति। शूद्रस्तु द्विजसेवया इति योगी। षट्कर्माणीज्याध्ययनंदानं याजन मध्यापनं प्रतिग्रहश्चेति ॥ ९ ॥

**वर्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः॥ इष्टीः पार्वायनान्तीयाः केवलानिर्वपेत्सदा ॥१० ॥**

( १ ) **मेधातिथिः**। पर्वचायनान्तश्च तयोर्भवाः पार्वायनान्तीयाः। स्वार्थिकमणंकृत्वावृद्धाच्छःकर्तव्यः। पर्वेष्टिर्दर्शपूर्णमासौ अयनांतेचयज्ञआग्रयणाख्यः । केवलग्रहणात्काम्याइष्टयोनिषिध्यन्ते। वैश्वदेवहोमबलिहरणेऽपि तस्यनान्वहंभवतः। नहि तस्य सर्वदा तावद्धनंभवति । अतः केवलग्रहान्महायज्ञनिवृत्तिः। ननुचाग्निहोत्रमपि तत्तस्य नैव भवति। तदपिद्रव्यसाध्यमेव। पक्षहोमान्होष्यति। भार्याभरणंकथमितिचेत्सापितांवृत्तिमाश्रयिष्यति । यदाचभार्याव्रतमेतद्धारयितुमशक्तातदाभर्तुरपिनास्त्यधिकारः। अथचान्द्रायणादिषुप्रवृत्तस्यकथंभार्यायाजीवनमितिचेद्चोद्यमेतद्विद्यमानत्वात्। अतिथ्यादिशिष्टमशिष्यतइतितु वैश्वदेवहोमाभावात्। विद्यमानेऽपि स्त्रीधने नभोजनंयुक्तमुभयोर्विघसाशित्वविधानात् । अतस्त्रीधनेनवैश्वदेवंकरिष्यति धर्मकार्येनुज्ञानात्स्त्रीधनग्रहणस्य। नैवम् अस्यामवस्थायामग्निहोत्रमात्रंधर्मोनवैश्वदेवहोमः भवतुवा। यस्यास्तर्हि धनंनास्ति कथंजीवतु तस्माद्यस्यासमर्था भार्या नासौ शिलोञ्छवृत्तावधिक्रियते। वर्तयन्नात्मानंजीवयन् ॥ १० ॥

( २ ) **सर्वज्ञनारायणः**। इष्टीःकेवलाइष्टीरेव दर्शपूर्णमास्योपर्वणोरन्ते समीपे प्रतिपदि कार्येपर्वान्ते येइष्टी दर्शपूर्णमासाख्ये तथाऽयनान्ताया अयनान्तकार्या आग्रयणेष्टयः। अन्तशब्दोत्र सामीप्यार्थः। आग्रयणेष्टिर्हि यवैरुत्तरायणे श्यामाकैर्व्रीहिभिश्च दक्षिणायने क्रियतइत्ययनान्तीयाभवन्ति एताएव कुर्यान्नतु चातुर्मास्यपशुसोमादि। अत्राऽग्निहोत्रपरायणइति निर्वपेत्सदेति वचनात्। त्रेताग्निमतएव शिलोञ्छयोरधिकारोगम्यते शिलानप्युञ्छतइत्यत्र तूभयाभिधानंवृत्तिसंकोचधर्मान्तरसंभवयोरुपदर्शनार्थम् ॥ १० ॥

( ३ ) **कुल्लूकः**। शिलोञ्छाभ्यांजीवन्धनसाध्यकर्मान्तरानुष्ठानासामर्थ्यादग्निहोत्रनिष्ठएवस्यात। पार्वायनान्तीयाश्च इष्टीः केवलाअनुतिष्ठेत्। पर्वच अयनंच पर्वायने तयोरन्तस्तत्र भवादर्शपौर्णमासाग्रयणात्मिकाः ॥ १० ॥

( ४ ) **राघवानन्दः** । प्रकृतमाह वर्तयन्निति चतुर्भिः । पार्वायनान्तीयाः पर्वणोः दर्शपूर्णमासयोर्भवाः तथा अयनान्ते भवाश्चइष्टीः केवलाः पशुसोमादिवर्जिताः ॥ १० ॥

( ५ ) **नन्दनः** । अथ शिलोञ्छवृत्तेराहिताग्नेर्नियममाह वर्तयंस्त्विति । शिलोञ्छेन चोभाभ्यांवर्तयन् जीवन्नग्निहोत्रपरायणः सदासायंप्रातरग्निहोत्रंजुहुयात् पर्वचायनंच पर्वायने तयोरन्तः पर्वायनान्तः तत्रभवाः पार्वायनान्तीयाः दर्शपूर्णमासाग्रयणलक्षणाः केवलाफलरहिता इष्टीर्निर्वपेत्कुर्यान्नततोऽधिकंश्रौतंकर्म कुर्यात् । तावन्मात्रसिद्धये द्रव्यमर्जयितव्यंनाधिकमित्यभिप्रायः ॥ १० ॥

( ६ ) **रामचन्द्रः** । शिलोञ्छाभ्यांवर्तयन् शाल्यादिक्षेत्रे नियते पशुयाग प्रतिपदिष्टी रित्यर्थः ॥ १०॥

**न लोकवृत्तंवर्तेत वृत्तिहेतोः कथंचन ॥ अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम् ॥ ११ ॥**

**मेधातिथिः** । लोकवृत्तंनामोच्यते येन प्राकृतजनोऽल्पसत्त्वोवर्तते दम्भेनासत्प्रियाख्यानेन च त्वंविष्णुस्त्वंब्रह्माजयजीवेति तथाविचित्रपरिहासकथाभिः । वृत्तिहेतोर्जीविकार्थतया न कर्तव्यमेतत् । यस्तुनर्मशीलस्तस्य न दोषः । अजिह्माम् यस्यान्यच्च हृदयेऽन्यच्च बहिः सजिह्मउच्यते द्वेषमत्सरात्मा दर्शयत्यप्रियंवदताम् । अशठाम् । अग्निहोत्रकर्मानुष्ठानंलोकावर्जनेनप्रतिग्रहादिलाभार्थनशास्त्रार्थश्रद्दधानतयाकुर्यात्सशठः । आत्मधर्मत्वेपि जैह्म्यशाठ्ययोर्जीविकाप्यभेदोपचाराद्यपदिश्यते अजिह्मामशठांशुद्धामिति । शुद्धिर्वृत्त्यन्तरेणामिश्रीकरणंपूर्वदोषद्वयेनचएकपदलभ्योऽप्ययमर्थोवृत्तानुरोधाद्गोबलीवर्दवद्बहुपदैः प्रतिपाद्यते । अथ कथंब्राह्मणजीविकांजीवेदितिद्वितीया यावताजीवतिरकर्मकः । कथंचैकस्यैवधातोरेकत्रद्विप्रयोगः नहिभवति गमनंगच्छेदिति । साध्यसाधनभावउच्यते । सामान्यविशेषभावात्साध्यसाधनभावोनविरुद्धः यथाश्वपोषंपुष्टइति । अनुष्ठानाङ्गेवर्तनार्थेजीवतिर्वर्तते । तेनसकर्मकत्वमितिन दोषः । जीवेज्जीवनार्थमनुतिष्ठेत् ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । लोकवृत्तंवृत्यर्थितया प्रायशोयदाचरति स्वगुणानुख्यापनानुरूपवेषधारणादिकंलोकस्तत्र वर्तेत न वर्तयेत् । अजिह्मामवक्राशयतयालभ्यां । अशठांपरवञ्चनरहितां शुद्धांपतितादिसंबन्धशून्यां ब्राह्मणजीविकांन क्षत्रियवैश्यजीविकाम् ॥ ११ ॥

( ३ ) **कुल्लूकः** । लोकवृत्तमसत्प्रियाख्यानंविचित्रपरिहासकथादिकंजीविकार्थं न कुर्यात् । अजिह्मांमृषात्मगुणार्थाभिधानादिपापरहिताम् । अशठांदम्भादिव्याजशून्याम् । शुद्धांवैश्यादिवृत्तेरसंकीर्णांब्राह्मणजीविकामनुतिष्ठेत् । अनेकार्थत्वाद्धातूनामनुष्ठानार्थोयंजीवतिरिति सकर्मकता ॥ ११ ॥

( ४ ) **राघवानन्दः** । किंच न लोकेति । लोकवृत्तं मिथ्यालापादि । अजिह्मां दम्भव्याजादिशून्यां । अशठां अवैश्यादिवृत्तिम् ॥ ११ ॥

( ५ ) **नन्दनः** । अज्ञोजनोलोकस्तस्यवृत्तंजैह्मयशाठ्यान्वितं । तन्नवर्तेत न कुर्यात् । कथञ्चन आपद्यपि । अजिह्मामृजुम् । अशठामनृशंसां अतएवशुद्धांब्राह्मणजीविकांब्राह्मणस्यविहितां वृत्तिंजीवेत्कुर्यात् ॥ ११ ॥

( ६ ) **रामचन्द्रः** । लोकवृत्तं न वर्तेत लोकानुकरणं न वर्तेत अजिह्मांअवक्राशयां अशठां परवञ्चनरहितां पतितादिसंबन्धशून्यां । एतादृशींजीविकां ब्राह्मणःजीवेत् ॥ ११ ॥

**संतोषं परमास्थाय सुखार्थी संयतोभवेत् ॥ संतोषमूलं हिसुखं दुःखमूलं विपर्ययः ॥ १२ ॥**

( १ ) **मेधातिथिः** । ऐहिकाश्वस्तनवृत्तिदार्ढ्यार्थं प्रसंख्यानमिदमाह । सन्तोषआश्रयितव्यो नबहूनामुपजीव्यः-

स्यामिति। याञ्चादिक्लेशआस्थेयःसुखार्थीसंयतोभवेत्। संयमोयात्रिकाद्धनादधिकेनाभिलाषः। सन्तोषोमनस्विनांसुखमूलं दुःखस्यमूलंविपर्ययः। असन्तोषो महद्भिर्दुषांदैन्यंअभिलषितेवस्तुन्यसंपत्तिस्तस्मात्सन्तोषमाश्रयेत्॥ १२ ॥

( २ ) **सर्वज्ञनारायणः**। संयतोऽसद्वृत्तिनिवृत्तः। सुखं संतोषोमूलंयस्य सतथा दुःखस्यमूलं विपर्ययोऽसंतोषः। शिलोञ्छादावसंतुष्टस्य तद्वृत्तित्यागसंभवादत्र वृत्तिनियमनिर्वाहहेतुः संतोषः कार्यतया दर्शितः॥ १२ ॥

( ३ ) **कुल्लूकः**। यथा संभवभृत्यात्मप्राणधारणावश्यकपञ्चयज्ञाद्यनुष्ठानमात्रोचितधनानधिकास्पृहा संतोषः तमतिशयितमालम्ब्य प्रचुरधनार्जने संयमंकुर्यात्। यतःसंतोषहेतुकमिति सुखंपरत्र चाव्यग्रस्य विहितानुष्ठानात्स्वर्गादिसुखम्। विपर्ययस्त्वसंतोषोदुःखमूलंबहुधनार्जनप्रयासेन प्रचुरदुःखादसंपत्तौ विपत्तौ च क्लेशात्॥ १२ ॥

( ४ ) **राघवानन्दः**। दुःखमूलं दुःखस्य मूलं। विपर्ययोऽसंतोषः॥ १२ ॥

( ५ ) **नन्दनः**। संकुचितवृत्तित्वं सुखहेतुरित्यभिप्रायेणाह संतोषमिति। एतावताऽलमिति बुद्धिःसंतोषः। संयतः भोगविस्तारप्रसङ्गोपरतः। संतोषमूलमितिबहुव्रीहिः। दुःखमूलमिति तत्पुरुषः। विपर्ययोऽसंतोषः॥ १२ ॥

( ६ ) **रामचन्द्रः**। श्यहैहिका श्वस्तनदार्ढ्यार्थप्रसङ्ख्यानमिदमाह संतोषेति। विपर्ययः असंतोषः दुःखमूल॥ १२॥

## अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातकोद्विजः॥ स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत्॥ १३ ॥

( १ ) **मेधातिथिः**। वृत्तिविषयोविधिर्वृत्तिशब्देनोक्तः। तेनान्यतमयेति तदपेक्षमेकजीवितं अन्यतमेन निवृत्तिविधानात्। अतोवृत्तिसमुच्चयजीवनः। पितृधनंप्राप्तवतश्च व्रताधिकारोनयुज्यते। अन्यथा एकवृत्तिजीवनएवस्यात्। व्रतानीमानि मानसःसङ्कल्पोव्रतमुच्यते। शास्त्रविहितमिदंमयाकर्तव्यमिदंवानकर्तव्यमित्येवंस्वर्गायुष्ययशस्यानि व्रतधारणफलानि केचिदाहुः। अतश्चैतत्फलार्थिनोव्रतेष्वधिकारस्तदयुक्तं अनित्यत्वमेवंसतिप्रसज्येत तत्रोत्तरश्लोकेनित्यग्रहणंबाध्यते। श्रुतौचैषांनित्यताज्ञापिता यावत् हि न सा युक्ता भवतीति। नचस्वर्गादीनांकाम्यत्वे नान्वये नाधिकृतविशेषणत्वं प्रतिपद्येरन्॥ १३ ॥

( २ ) **सर्वज्ञनारायणः**। वृत्येत्यत्रैकत्वंविवक्षितं। तेन ऋतामृतादिवृत्तिषु यदायांपरिगृह्णाति तदा तयैव जीवेदिति निर्दर्शितम्। प्रतिग्रहाध्यापनयाजनानि तु तेन रूपेणात्र न निर्दिष्टानीति तेषांसांकर्येऽप्यदोषः। व्रतानि नियमान्। इमानि वक्ष्यमाणानि॥ १३ ॥

( ३ ) **कुल्लूकः**। अबहुभृत्यैकवृत्त्या निर्वाहसंभवे सत्यन्यतमयेति विधीयते बहुभृत्यस्यान्संभवे षट्कर्मैकोभवत्येषामिति विहितत्वात्। अथवैकवाक्यतावगमाद्व्रतविधायकत्वाच्चान्यतमया वृत्त्येत्यनुवादकत्वादेकत्वमविवक्षितम्। उक्तवृत्तीनामन्यतमया वृत्त्या जीवन् स्नातकोब्राह्मणइमानि वक्ष्यमाणानि यथासंभवंस्वर्गायुर्यशसांहितानि व्रतानि कुर्यात्। इदंमयाकर्तव्यमिदंनकर्तव्यमित्येवंविधिसंकल्पविशेषाद्व्रतम्॥ १३ ॥

( ४ ) **राघवानन्दः**। अन्यतमया शिलादीनांमध्येएकया। स्नातको नवोढापतिः वोढुकामोवा। इमानि वक्ष्यमाणानि। स्वर्गाय हितं स्वर्ग्यम्। एवमायुष्यादि॥ १३ ॥

( ५ ) **नन्दनः**। उक्तमुपसंहृत्यार्थान्तरंप्रस्तौति अतइति। अतआसांवृत्तीनांमध्ये। इमानिवक्ष्यमाणानि॥ १३ ॥

( ६ ) **रामचन्द्रः** । अन्यतमया वृत्त्या इयं मयाकर्तव्येति एकया वृत्त्या द्विजः जीवेत् । तथा एतानि व्रतानि नियमान् धारयेत् वक्ष्यमाणलक्षणानि ॥ १३ ॥

**वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः॥ तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥१४॥**

( १ ) **मेधातिथिः** । वेदमूलत्वात्स्मृतीनांवेदोदितमितिश्रूयते । स्वकंकर्मवक्ष्यमाणोव्रतसमूहः । विहितत्वात्स्वकमित्युच्यते । नित्यंकुर्यात् । यावज्जीवंअतन्द्रितोऽनलसः एतद्व्रतधारणंकुर्वन्यथाशक्ति अनेनसत्यांशक्तौ यथासंभवमनुष्ठानमाह तदुक्तंमनसावातत्समग्रमाचारमनुपालयन् । परमांगतिं ब्रह्मत्वप्राप्तिरूपाम् ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । स्वकंस्वाश्रमवर्णोक्तं । कुर्याद्यथाशक्ति ॥ १४ ॥

( ३ ) **कुल्लूकः** । वेदोक्तंस्मार्तमपि वेदमूलत्वाद्वेदोक्तमेव । स्वकंस्वाश्रमोक्तंयावज्जीवमतन्द्रितोऽनलसःकुर्यात् । हि हेतौ । यस्मात्तत्कुर्वन्यथासामर्थ्यंपरमांगतिंमोक्षलक्षणांप्राप्नोति । नित्यकर्मानुष्ठानात्पापक्षये सतिनिष्पापान्तःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तेः । तदुक्तंमोक्षधर्मे । ज्ञानमुत्पद्यते पुंसांक्षयात्पापस्य कर्मणः । तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ आत्मन्यन्तःकरणे ॥ १४ ॥

( ४ ) **राघवानन्दः** । किंच वेदेति । वेदोदितं स्वशाखोक्तं स्मार्तंच । परमांगतिं सत्वशुद्धिद्वारा ॥१४ ॥

( ५ ) **नन्दनः** । व्रतविधेर्वक्ष्यमाणस्यवैदिकत्वंवक्ष्यमाणफलंचाह । वेदेति । वेदोदितंवेदमूलतया स्मृत्युदितम्॥१४॥

( ६ ) **रामचन्द्रः** । वेदोदितं स्वकंकर्म स्वाश्रमोचितं कर्म कुर्यात् ॥ १४ ॥

**नेहेतार्थान्प्रसङ्गेन न विरुद्धेन कर्मणा ॥ न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततः ॥ १५ ॥**

( १ ) **मेधातिथिः** । प्रसज्येतयत्रपुरुषः सहिप्रसङ्गोभिप्रेतोगीतवादित्रादिस्तत्रहिरागिणः सज्जतीव अतोगीतवादित्रादिभिरर्थान्धनानिनेहेत नार्जयेत् । विरुद्धंकर्मप्रतिषिद्धंशास्त्रेण अकुलोचितच नचपित्राद्यागतेषुधनेषु कल्प्यमानेषु स्थितिसमर्थेषु अन्यानिनेच्छेत् । नार्त्यांआपद्यपि यतस्ततःप्रसह्यसत्प्रतिग्रहेणप्रवर्तितव्यमेकस्यापद्यप्यनुज्ञास्यति ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसङ्गेन प्रकृष्टप्रसङ्गेनात्यन्ततत्परतया नेहेतोद्यमेन न साधयेत् । अर्थान् धनानि विरुद्धेन धर्मविरुद्धेन कल्पमानेषु सत्सु आर्त्यामापदि यतस्ततःपतितादेः ॥ १५ ॥

( ३ ) **कुल्लूकः** । प्रसज्यते यत्र पुरुषःसप्रसंगोगीतवादित्रादिःतेनार्थान्नार्जयेत् नापि शास्त्रनिषिद्धेन कर्मणाऽयाज्ययाजनादिना च । नच विद्यमानेषु धनेषु न चाप्यविद्यमानेष्वपि प्रकारान्तरसंभवे यतस्ततःपतितादिभ्योऽपि ॥ १५॥

( ४ ) **राघवानन्दः** । किंच नेति । प्रसङ्गोत्र गीतनृत्यादिः प्रसज्यतेऽत्रेति व्युत्पत्त्या । न कल्पमानेषु धनेषु विद्यमानेषु विरुद्धेन कर्मणा नेहेत अविद्यमानेष्वपि प्रकारान्तरसंभवे वा । आर्तौ अन्नकष्टादौ वा यतस्ततः पतितादिभ्यो न गृह्णीयात् ॥ १५ ॥

( ५ ) **नन्दनः** । प्रसङ्गेनातिप्रवृत्त्या । विरुद्धेन कर्मणा निषिद्धेन नृत्यगीतादिना । नकल्प्यमानेष्यर्थेषुवृत्तिहेतौसत्युपायान्तरंनाश्रयेदित्यर्थः । आर्त्यामपिआपद्यपि । यतस्ततः पुरुषादप्रतिग्राह्यात् ॥ १५ ॥

( ६ ) **रामचन्द्रः** । प्रसङ्गेन अतिप्रसङ्गेन । अर्थान्नेहेत नेच्छेत् । विरुद्धेन कर्मणा अयाज्ययाजनादिना ।

---

( १५ ) नविद्यमानेष्वर्थेषुनार्त्यामपियतस्ततः=नकल्प्यमानेष्वर्थेषुनार्त्यादपियतस्ततः ॥ ( क, च, द, न, ब, भ, य, र, ल )

अर्थान्नेहेत अन्यमपि अर्थं नेहेत इतस्ततः अविहिताचारात् पतितात् नेहेत कल्प्यमानेषु विद्यमानेषु अर्थेषु नेहेत ॥ १५ ॥

**इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ॥ अतिप्रसक्तिं चैतेषां मनसा सन्निवर्त्तयेत् ॥ १६ ॥**

( १ ) **मेधातिथिः** । इन्द्रियाणामर्थाविषयारूपरसादयः एतेषुनप्रसज्येत सक्तिमत्यंतासेवांकुर्यात । मनोहरायुवतयः वंशगीतंस्वादवद्रसः कर्पूरादिगन्धः रागवत्स्पर्शः एतेविषयास्तान्नात्यन्तंसेवेत । कामतः कामप्रधानतया सर्वेषु अयाचितोपमं तेष्वपि नित्यसेवी स्यात् । अतिप्रसक्तिश्चैवैषांनिवृत्त्युपायोनेनकथ्यते । नहिवस्तुप्रसक्तिर्निवर्तितुं शक्या मनसातुप्रतिपक्षभावनयानिवर्त्य आदौतावद्दुरुपपादकत्वं उपस्थितेष्वपि भुक्तपूर्वेषु क्षणविरसता स्वभावश्च विनाशित्वं शास्त्रनिषेधाच्च सङ्गस्यनरकापातइत्येवमादिचिन्तयेत् । यथोक्तंनतथैतानिशक्यंतइति ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसज्येत सातिशयेन प्रवर्तेत न कामतोधर्मतस्त्वृतुगमनादौ प्रवर्तेतैव अतिप्रसक्तिनियन्तुमशक्यांप्रवृत्तिम् ॥ १६ ॥

( ३ ) **कुल्लूकः** । इन्द्रियाणामर्थारूपरसगन्धस्पर्शादयस्तेषु निषिद्धेष्वपि स्वदारसुरतादिषु न प्रसज्येत । नातिप्रसक्तिमत्यन्तसेवनात्मिकांकुर्यात् । कामतउपभोगार्थम् । अतिप्रसक्तिनिवृत्त्युपायमाह । अतिप्रसक्तिंचैतेषामिति । विषयाणामस्थिरत्वस्वर्गापवर्गात्मकश्रेयोविरोधित्वादिभावनया मनसा सम्यङ्निवर्त्तयेत् ॥ १६ ॥

( ४ ) **राघवानन्दः** । किंच इन्द्रियार्थेष्विति । शब्दाद्यानन्दान्तेषु सर्वेषु दशसु नात्यासक्तिंकुर्यात् ॥ १६ ॥

( ५ ) **नन्दनः** । स्वदारविषयेष्वप्यतिप्रसक्तिंसंनिवर्तयेत् ॥ १६ ॥

( ६ ) **रामचन्द्रः** । इन्द्रियार्थेषु शब्दादिषु एतेषां इन्द्रियाणांप्रसक्तिंसन्निवर्तयेत् ॥ १६ ॥

**सर्वान्परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ॥ यथातथा यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ १७ ॥**

( १ ) **मेधातिथिः** । येवैद्यभ्यासविरोधिनोर्थास्तेसर्वेत्यक्तव्याः । राजामात्यगृहोपस्थानादयः येप्यनया लोकयात्रया सक्तस्य कृषिकुसीदाद्यधिकलाभाभवन्ति तेनचपोषयिष्यते । तदाकुटुम्बविभवतश्चदासीदासंबहुभविष्यतीतिसाह्यस्य स्नातकस्यकृतकृत्यताकृतार्थता । यंनित्यस्वाध्यायीयथाकथंचित्कुटुम्बकंजीवयतीति ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । यापयन् क्षपयन् स्वाध्यायंकुर्यादिति शेषः । सास्वाध्यायक्रिया कृतान्यन्यानि कृत्यान्यनुभवन्तीति कृतकृत्यता ॥ १७ ॥

( ३ ) **कुल्लूकः** । वेदार्थविरोधिनोऽर्थानत्यन्तेश्वरगृहोपसर्पणकृषिलोकयात्रादयस्तान्सर्वान्परित्यजेत् । कथंतर्हि भृत्यात्मपोषणमित्याशङ्क्याह । यथा तथा केनाप्युपायेन स्वाध्यायाविरोधिना भृत्यात्मानौ जीवयन् यस्मात्सास्य स्नातकस्य कृतकृत्यताकृतार्थता यन्नित्यंस्वाध्यायपरता ॥ १७ ॥

( ४ ) **राघवानन्दः** । किंच सर्वानिति । शिलादीन्याजनादींश्च अध्यापयंत्स्वाध्यायविरोधिनस्त्यजेदित्यन्वयः। यथा तथा येन तेन जीवनंसाधयन्वेदाध्ययनंकुर्यात् । सावेदाध्ययनस्ययाकाचिज्जीविका कृतकृत्यताकृतंसमापितमावश्यकंयया ॥ १७ ॥

---

( १६ ) संनिवर्तयेत्=संनिवेशयेत् ( मेधा० )

( ५ ) **नन्दनः**। कस्मात्पुनरेतदेवमुच्यतइत्यतआह सर्वानिति । यथातथा यापयन्यथाकथञ्चित्प्राणयात्रांकुर्वन् । अस्यपुरुषस्यसा हि कृतकृत्यता । यन्नित्यस्वाध्यायत्वम् ॥ १७ ॥

( ६ ) **रामचन्द्रः**। स्वाध्यायविरोधिनः वेदाध्ययनविरोधिनः । यथा तथा आपदि अध्यापयन ॥ १७ ॥

**वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ॥ वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥ १८ ॥**

( १ ) **मेधातिथिः** । वयसइतिसारूप्यापेक्षाषष्ठी वेषवाक्बुद्धीतिसमाहारेद्वन्द्वः । सारूप्यमितिस्वार्थेष्यञ्तेनायमर्थोभवति । वयंआद्युचितावेषादयःकर्तव्याः । सारूप्यमौचित्यमन्यस्याकृत्यादेःसादृश्यासंभवात् । वेषःकेशाभरणादिविन्यासः । तत्रप्रथमेवयसिशिखण्डकः । यौवनेकौन्तलादिधारणं । वार्धकेजटामुण्डनादि वयोनुरूपावाक् । एवंबुद्धिस्त्रिवर्गानुष्ठानधारणं प्रथमंनीयते केवलंधर्मप्रधानकर्मानुरूपोवेषः अर्थानुरूपतः। तेनहिभवितव्यंकुलानुरूपेण दशनरागधम्मिल्लादि उद्धतमपि नउद्धत्यमावहति । तदुक्तं अस्यलोकव्यवहारोविषयइति । एतदुक्तंभवति । नायंविध्यर्थः अपरैर्निश्चितार्थत्वात् । लोकव्यवहारमूलस्त्वयमनुवादः । एवंवर्तमानोलोकवृत्तानुवर्तीभवति । नलोकद्वेष्यतामेति ॥१८ ॥

( २ ) **सर्वज्ञनारायणः**। वयसोबाल्यादेः । कर्मणोयागादेः। अर्थस्य धनस्य ।श्रुतस्य शास्त्रज्ञानस्य । अभिजनस्य कुलस्य । वेषः सारूप्यतत्प्रकर्षनिकर्षोचितवेषधारणं । वाक्सारूप्यंतदनुरूपभाषणं । बुद्धिसारूप्यं तदनुरूपआत्मन्युत्कर्षप्रत्ययः। विचरेच्चेष्टेत इहलोके वयः कर्माद्यननुरूपं वेषादि न कार्यमित्यत्र तात्पर्यम् ॥ १८ ॥

( ३ ) **कुल्लूकः**। वयसः क्रियायाधनस्य श्रुतस्य कुलस्यानुरूपेण वेषवाग्बुद्धीराचरँल्लोके प्रवर्तेत । यथा यौवने स्रग्गन्धलेपनादिधारणंत्रिवर्गानुसारीवाग्बुद्धिश्च एवंकर्मादिष्वप्युन्नेयम् ॥ १८ ॥

( ४ ) **राघवानन्दः**। वेषवाग्बुद्धीति समाहारैकवचनम् । वयआदेःस्वानुरूप्यं वयआद्युचितावेषादयः कर्तव्याः । तेन यौवनादिमान्कामी धर्मीच । तथासत्कर्मा विनीतः । धनीदानशीलः । विद्वान् सदुपदेष्टा । कुलीनः सलज्ज इत्यादि । वयसइत्यादिपञ्चकस्य कामाद्यूह्यम्। अथवा वयोबाल्यादि । कर्म क्रिया ।अर्थःधनं । श्रुतं विद्या। अभिजनः कुलं । तदनुरूपंव्यवहारमात्रं न विधिः तेन बाल्ये शिखण्डकं यौवने कुन्तलादि वार्धके जटादि तथा कलभाषणं परिहासः सदुपदेशः बुद्धेरचाञ्चल्यं बुद्धिपरिपाकश्चेति ॥ १८ ॥

( ५ ) **नन्दनः**। वेषवाग्बुद्धिसारूप्यंवेषवयःप्रभृतीनामानुरूप्यम् ॥ १८ ॥

( ६ ) **रामचन्द्रः**। यथाविषयं कर्मआचरन् विचरेत्श्रुतस्य शास्त्रस्य यथा अभिजनस्य च यथा कौलीनस्य विषयं यथा वेषवाक् बुद्धिसारूप्यं आचरन् विचरेत् ॥ १८ ॥

**बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ॥ नित्यंशास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्॥१९॥**

( १ ) **मेधातिथिः**। बुद्धिवृद्धिकराणीतिहासपुराणानितर्कशास्त्राणिबार्हस्पत्योशनसादीनि हितानिउपकारकाणिदृष्टार्थानिवैद्यकज्योतिषादीनि अर्थशास्त्रस्यपृथगुपदेशात् । वैदिकानिगमावेदार्थज्ञानहेतवोनिगमनिरुक्तव्याकरणमीमांसारूढिग्रहणेत्वदृष्टार्थतास्यात् ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः**। धन्यानि धनकारणानि हितानि दुःखनिवर्तकानि शास्त्राणि विद्यास्थानानि निगमान्व्याख्यानानि निगम्यतेऽभिरर्थइति व्युत्पत्त्या । वैदिकान्वेदस्य सम्बन्धिनः ॥ १९ ॥

( ३ ) **कुल्लूकः**। वेदाविरुद्धानि शीघ्रंबुद्धिवृद्धिजनकानि व्याकरणमीमांसास्मृतिपुराणन्यायादीनि शास्त्राणि तथा

धन्यानि धनाय हितान्यर्थशास्त्राणि बार्हस्पत्यौशनसादीनि तथाहितानि दृष्टोपकारकाणि वैद्यकज्योतिषादीनि तथा पर्यायकथनेन वेदार्थावबोधकान्निगमाख्यांश्च ग्रन्थान्नित्यंपर्यालोचयेत् ॥ १९ ॥

( ४ ) **राघवानन्दः** । किंच बुद्धीति त्रिवर्गेषु बुद्धिवृद्धिकराणि नीतिशास्त्राणि । धन्यानि धनोपायान् । निगमान् पुराणादीन् निगमनिघण्टुव्याकरणादींश्च । वैदिकान्वेदार्थबोधानुकूलान् ॥ १९ ॥

( ५ ) **नन्दनः** । शास्त्राणि धर्मशास्त्रादीनि । शास्त्रापेक्षणप्रयोजनत्वेनोक्तानिबुद्धिवृद्धिकराणीत्यादीनि । निगम्यन्ते निश्चीयन्त एभिर्वेदार्थाइतिनिगमावेदाङ्गानि ॥ १९ ॥

( ६ ) **रामचन्द्रः** । नित्यंशास्त्राणि अवेक्षेत कीदृशानि शास्त्राणि धन्यानि दुःखनिवर्तकानि विचारयेत् च पुनः वैदिकान् निगमान् व्याख्यानानि ॥ १९ ॥

## यथायथा हि पुरुषः शास्त्रं समधिगच्छति ॥ तथातथा विजानाति विज्ञानं चास्य रोचते ॥२०॥

## [ शास्त्रस्य पारंगत्वा तु भूयोभूयस्तदभ्यसेत् ॥ तच्छास्त्रंशबलंकुर्यान्न चाधीत्य त्यजेत्पुनः ॥१॥ † ]

( १ ) **मेधातिथिः** । समधिगमो विनिवेशः । अभ्यासइति यावद्विजानाति विशेषेणजानाति । प्रत्यक्षंचैतदभ्यस्यमानेग्रन्थेपियद्विद्यतइति । तदाविज्ञानंचास्यरोचते । उज्वलंभवतीत्यर्थः । पूर्वस्याःस्मृतेर्मूलकथनमेतत् । रुचेरनभिलाषार्थत्वाद्रुच्यर्थानामितिसंप्रदानत्वाभावः ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । विजानाति विविच्य जानाति यानि तु प्रागेव विज्ञातानि तेषु विज्ञानं विवेकज्ञानमस्य रोचते दीप्यते स्वोत्कर्षप्रकाशकं भवति ॥ २० ॥

( ३ ) **कुल्लूकः** । यस्माद्यथा पुरुषः शास्त्रंसम्यगभ्यस्यति तथा तथा विशेषेण जानाति शास्त्रान्तरविषयमपि चास्यविज्ञानंरोचतउज्वलंभवति । दीप्त्यर्थत्वाद्रुचेरभिलाषार्थत्वाभावाद्रुच्यर्थानांप्रीयमाणइति न संप्रदानसंज्ञा ॥ २० ॥

( ४ ) **राघवानन्दः** । रोचते उज्वलंस्यात् ब्रह्मपक्षपातिन : ॥ २० ॥

( ५ ) **नन्दनः** । शास्त्रावेक्षणस्य प्रयोजनान्तरमप्याह । यथेति । विजानाति विशिष्टज्ञानयुक्तोभवति । अस्य रोचते अस्मै स्वदते ॥ २० ॥

( ६ ) **रामचन्द्रः** । विज्ञानं विवेकज्ञानम् ॥ २० ॥

## ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ॥ नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥ २१ ॥

( १ ) **मेधातिथिः** । तृतीयाध्यायेविहितानांमहायज्ञानामनुवादोविशेषाभिधानार्थः । सचविशेषउत्तरत्रवक्ष्यते अनीहमानाइति । अन्येतुमन्यन्ते । व्रताधिकारेपुनर्वचनंनियमसिध्यर्थं । तेनेदृशःसङ्कल्पःकर्तव्यो यावद्गार्हस्थ्यंमयामहायज्ञानहापयितव्याः । नत्वियमाशंकाकर्तव्याद्विर्वचनंद्विर्विधानार्थं । नह्यत्रविधिःश्रूयते । केवलंनहापयेदित्युच्यते । नित्यत्वाच्चहानिःप्राप्तैव अतो विहितप्रत्यभिज्ञानतःकश्चित्कर्मभेदहेतुरस्ति । यथाशक्तिपक्वान्नेनग्रासेनवामूलफलैर्वा ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । ऋषियज्ञंब्रह्मयज्ञम् । एषांवेदोदितत्वेन प्राप्तावपि पुनर्वचनमवतारणार्थं । तच्चोत्तरश्लोकैः प्रकारान्तरेणापि तत्संपादनकथनार्थम् ॥ २१ ॥

---

(†) (ञ)

( ३ ) **कुल्लूकः** । स्वाध्यायादीन्पञ्चयज्ञान्यथाशक्ति न त्यजेत् । तृतीयाध्यायविहितानामपि पञ्चयज्ञानामिह निर्देशउत्तरत्र विशेषविधानार्थः स्नातकव्रतत्वबोधनार्थश्च ॥ २१ ॥

( ४ ) **राघवानन्दः** । वेदाध्ययनहोमबल्यतिथितर्पणानि ऋषियज्ञादिपदवाच्यानि तृतीयाध्यायोक्तानि । पुनर्वचनमेतेषामादरार्थं । न हापयेत् न त्यजेत् ॥ २१ ॥

( ५ ) **नन्दनः** । उक्तानपि महायज्ञान्पुनरादरातिशयार्थमाह ऋषीति । ऋषियज्ञंब्रह्मयज्ञम् ॥ २१ ॥

( ६ ) **रामचन्द्रः** । ऋषियज्ञं वेदाध्ययनम् । देवयज्ञं होमं । भूतयज्ञं भूतेभ्योबलिं । नृयज्ञं अतिथिसत्कारं । पितृयज्ञं श्राद्धं । यथाशक्ति नहापयेत् ॥ २१ ॥

## एतानेके महायज्ञान्यज्ञशास्त्रविदोजनाः ॥ अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥ २२ ॥

( १ ) **मेधातिथिः** । एतान्महायज्ञान् एके यज्ञशास्त्रविदोगृहस्थाइन्द्रियेष्वेवजुह्वति । संपादयन्ति । कतमेपुनस्तेअनीहमाना ये न चेच्छन्तिधनं त्यक्तगृहव्यापारादेहसान्यासिकादयः । शिलोञ्छवृत्तेरप्येवंविधिमिच्छन्ति पङ्ग्वादीनांच । तेषांहिदारकरणंवक्ष्यति । यर्थ्यर्थितातदारैःस्यादिति । नचैतेषांपञ्चयज्ञाधिकारः । अद्रव्यत्वाद्भरणमात्रंतेलभन्ते । नाधिकं कर्मानुष्ठानार्थमपि । जुहोतिःकरोत्यर्थनिर्वर्त्यतां लक्षयति । नहिक्रियाविशेषोयागः क्रियाविशेषस्यहोमस्यकर्मतांप्रतिपद्येत । नहिभवतिपचतिपाकमिति भवतितुपाकंकरोतियागंकरोतीति सामान्यविषयाकांक्षास्तुक्रियाद्रव्यकर्माणिसाधनीकुर्वन्ति । इच्छतिभोक्तुं शक्रोतिभोक्तुं जानातिभोक्तुं दृष्टश्चविशेषःसामान्यलक्षणार्थः । अयंगौःपदाद्रष्टव्यइति । एवंचहोमंकेचिदिन्द्रियेषु तत्सङ्गमेवव्याचक्षते अपरेषांप्राणसंवादोपनिषदियद्भक्तंप्रथममागच्छेतद्धोमीयंसायं प्रथमाहुतिंजुहुयात्प्राणायस्वाहेत्यादिना । अन्येतु यएवोत्तरश्लोकेउपासनाविधिरुक्तःसएवायंहोमः । तथाचतयोरेकवाक्यताप्रयीयते । ननुचोत्तरत्रवाचिप्राणानेन्द्रियं नैषदोषः । आध्यात्मिकत्वोपलक्षणार्थमिन्द्रियग्रहणं । बाह्यसाधनसाध्यतानास्तीत्येतदत्रविवक्षितं ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । यज्ञशास्त्रविदइति प्रशस्तमहायज्ञेभ्यः एषामुत्कर्षकथनार्थम् । अनीहमाना अचेष्टमानाः । इन्द्रियेष्विति पञ्चानांबुद्धीन्द्रियाणां विषयेभ्यः प्रत्याहारान्कुर्वन्तोविषयाणामिन्द्रियेषु प्रवेशनात्पञ्चमहायज्ञान्संपादयन्तीत्यर्थः ॥ २२ ॥

( ३ ) **कुल्लूकः** । कइति एके गृहस्थाबाह्यान्तरयज्ञानुष्ठानशास्त्रज्ञाएतान्पञ्चमहायज्ञान्ब्रह्मज्ञानप्रकर्षाद्बहिरचेष्टमानापञ्चसु बुद्धीन्द्रियेष्वेवंपञ्चरूपज्ञानादिसंयमंकुर्वन्तःसंपादयन्ति । यज्ञानांहोमत्वानुपपत्तेः संपादनार्थोजुहोतिः ॥ २२ ॥

( ४ ) **राघवानन्दः** । एतान्महायज्ञान्वैश्वदेवादिपञ्चयज्ञान् इन्द्रियव्यापाररूपत्वादेव तेषांतान्येवेन्द्रियेषु जुह्वति । कथंभूताः अनीहमानाः बाह्येन्द्रियव्यापाररहिताः । एके मुख्याः । शब्दादीन्विषयानन्यइन्द्रियाग्निषु जुह्वतीत्युक्तेः । इन्द्रियग्राह्याण्येतानि नात्मग्राह्याणीति कृत्वा तिष्ठन्तीत्यर्थः । इन्द्रियाणीन्द्रियार्थेषु वर्तन्तइत्युक्तेश्च ॥ २२ ॥

( ५ ) **नन्दनः** । अथाकर्मकृतामात्मरतीनामपि यज्ञाः कर्तव्याभवन्ति । किंपुनरन्येषामित्यभिप्रायेण श्लोकत्रयमारभ्यते एतानिति । यज्ञशास्त्रविदःशास्त्रेषु यजमानावश्यकर्तव्यत्वंविदन्तः । अनीहमाना अकर्मकृतः । एतान्महायज्ञानिन्द्रियेष्वेवसततंयावज्जीवंजुह्वतिकुर्वन्ति इन्द्रियाण्यग्नीन्परिकल्प्य तैरात्ततान्विषयान्हविष्ट्वेन कल्पयन्तीत्यर्थः ॥ २२ ॥

( ६ ) **रामचन्द्रः** । एतान् महायज्ञान् । एके जनाः अनीहमानाः योगिनः । सततं इन्द्रियेषु जुह्वति ॥ २२ ॥

**वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा ॥ वाचि प्राणे च पश्यन्तोयज्ञनिर्वृत्तिमक्षयाम् ॥२३॥**

( १ ) **मेधातिथिः** । यदायं पुरुषउच्छ्वसिति तदैवमनेनध्यातव्यं । वाचंप्राणेजुहोमीति । भाषणेनचवाचिप्राणंजुहोति । एतावतैवपञ्चयज्ञानिर्वृत्ताभवन्ति । यदिनित्याः फलायतेनवक्तव्याः आत्मयज्ञाश्चात्राधिक्रियन्ते विहितोऽयमर्थः । पञ्चाग्न्युपासनासु उपनिषत्सु कौषीतकी ब्राह्मणेविस्तरेण । अक्षयंफलतःअपुनरावृत्तिफलत्वात् ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । एकेतु प्राणायामंस्वाध्यायंच कुर्वन्तस्तान्संपादयंन्तीत्याह वाच्येकइति । वाचि प्राणंजुह्वतीतिस्वाध्यायोदर्शितः। स्वाध्यायकाले प्राणवृत्तेर्वाचि विलयात् । प्राणे वाचमिति प्राणायामः । तत्रवाग्वृत्तेः प्राणे विलयात् तथा तैत्तिरीयोपनिषत् । तद्यत्रैतदधीते वा भाषतेवावाचि तदा प्राणोभवतीति तथाच अथ यत्तूष्णींवा भवति स्वपिति वा प्राणे तदा वाग्भवतीति तथाएतद्धस्मवै तद्विद्वांस आहुर्ऋषयः कावयेषाकिमर्थावयमध्येष्यामहे किमर्थावयंवैवक्ष्यामहे वाचिहि प्राणंजुहुमः प्राणे वाचमिति । अध्येष्यामहे यज्ञसंबन्धिशस्त्रस्तोत्रपाठानकरिष्यामइत्यर्थः । तथा कौषीतकिब्राह्मणम् । यावद्वै पुरुषःप्राणिति न तदाभाषते वाचंतदा प्राणे जुहोति यदा भाषते न तदा प्राणिति प्राणंतदा वाचि जुहोति तएते अनन्ते आहुती जाग्रत्स्वपंश्चजुहोत्यथवा अन्याआहुतयोन्नवत्यस्ताः कर्ममय्योहि भवन्ति एवंहस्मवैसन्तःपूर्वेविद्वांसोग्निहोत्रंजुहवाञ्चक्रुरिति । वाचि प्राणे चान्योन्यं होमाभ्यांपञ्चयज्ञनिर्वृत्तिपश्यन्तः । अक्षयामनाशिफलाम् ॥ २३ ॥

( ३ ) **कुल्लूकः** । एके गृहस्थाब्रह्मविदोवाचि प्राणवायौ च यज्ञनिर्वृत्तिमक्षयफलांजानन्तः सततंवाचि प्राणंच जुह्वति । वाचंच प्राणे । भाषमाणेन चवाचि प्राणंजुहोतीति । अभाषमाणेनोच्छ्वसता प्राणे वाचंजुहोमीति व्याख्यातव्यमित्यनेन विधीयते । यथाकौषीतकिरहस्यब्राह्मणम् यावद्वैपुरुषोभाषते न तावत्प्राणितुंशक्नोति प्राणंतदा वाचि जुहोति यावद्धि पुरुषःप्राणिति न तावद्भाषितुंशक्नोति वाचंतदा प्राणे जुहोति एतेऽनन्तेअमृते आहुती जाग्रत्स्वपंश्चसततंजुहोति । अथवाऽन्याआहुतयोऽनन्तरन्यस्ताः कर्ममय्योहि भवन्त्येवंहि तस्यैतत्पूर्वे विद्वांसोऽग्निहोत्रंजुहवांचक्रुरिति ॥ २३ ॥

( ४ ) **राघवानन्दः** वाचि वाक्कारणे अपाने प्राणं वाचं तत्कारणमपानं प्राणे । अपाने जुह्वतिप्राणंप्राणेपानं तथापरइत्युक्तेः । तयोर्निरोधनेन पापक्षयलक्षणसर्वकर्मफलनिर्वृत्तेः । अथवा हवनप्रकारमाह वाचीति । तथाच कौषीतकी श्रुतिः । अथातः सायंप्रातर्दर्शनमांतरमग्निहोत्रमितिव्याचक्षते यावद्वै पुरुषोभासते न तावत्प्राणितुं शक्नोति प्राणंतदा वाचि जुहोति यावद्वै पुरुषः प्राणिति न तावद्भाषितुंशक्नोति वाचंतदा प्राणे जुहोति एतेअमृतेअनन्ते वाहुतीजाग्रत्स्वपंश्चसततंजुहोति अथवा अन्या आहुतयोतेवत्यस्ताः कर्ममय्यइति । अक्षयमपुनरावृत्तिफलत्वात् ॥२३ ॥

( ५ ) **नन्दनः** । लोके खलु वाक्प्राणयोरेकतरस्मिन्प्रवृत्ते निलीनमन्यतरं पश्यामः । तत्रप्रवृत्तमग्निनिलीनंहविः कल्पयन्तीत्यर्थः । प्रवृत्तस्याग्नित्वकल्पनं निलीनस्य हविष्ट्वकल्पनंच हविष्यग्निःप्रवर्ततेऽग्नौहविर्लीयतइति । अत्रकौषीतकिब्राह्मणं यावद्वैपुरुषोभाषते । नतावत्प्राणितुंशक्नोति । प्राणंतदा वाचि जुहोति । यावद्वै पुरुषः प्राणितिनतावद्भाषितुंशक्नोति । वाचंतदा प्राणे जुहोति । एतेअनन्तेअमृते जाग्रत्स्वपंश्चसततंजुहोतीति । उत्तरार्धेन कारणमुच्यते । वाचि प्राणे च मन्त्रे चेष्टायांच । यज्ञनिर्वृत्तिं यज्ञानांनिष्पत्तिम् । अक्षयामक्षयफलाम् । ये श्रौतस्मार्तायज्ञाः प्रसिद्धास्ते खल्वपिवाक्प्राणानिर्वर्त्याइतिते पश्यन्तीत्यर्थः । तथाच मन्त्रवर्णः वाचिस्वाहावातेधास्वाहेति ॥ २३ ॥

( ६ ) **रामचन्द्रः** । वाच्येके स्वाध्यायसमये प्राणं प्राणवायुं । प्राणे प्राणायामसमये वाचंवागिन्द्रियं भाषमाणे

जुव्हति । नववर्षाणि माणं जुहोमीति । एतावतैव पञ्चयज्ञानिर्वृत्ता भवन्ति । पञ्चाग्न्युपासना गौणी । च पुनः वाचि प्राणे यज्ञनिर्वृत्तिसामग्रीं अक्षयां सदा पश्यन्तः ॥ २३ ॥

## ज्ञानेनैवापरे विप्रायजन्त्यैतैर्मखैः सदा ॥ ज्ञानमूलां क्रियामेषां पश्यन्तोज्ञानचक्षुषा ॥ २४ ॥

( १ ) **मेधातिथिः** । तैर्मखैःप्रकृतैर्महायज्ञैर्यजन्ते तद्विषयमधिकारंनिष्पादयन्ति अतोर्थभेदाद्यजन्ते यज्ञैरितिसाध्यसाधकभावोपपत्तिः । यथाग्निष्टोमयाजीति कथंपुनर्ज्ञानेनयागनिर्वृत्तिदेवतोद्देशेन द्रव्यत्यागात्मकोयागोनचज्ञानमेवंरूपं । उच्यते यजन्तइति यागकार्यनिवृत्तिरत्राभिप्रेता । यदिज्ञानात्कार्यनिवृत्तिः किमर्थंतर्हिकर्मणामनुष्ठानं नह्यविषयकर्मानुष्ठानसंभवः । अथेयंबुद्धिर्यउचैनमेवंवेदेति । ज्ञानस्यापिफलसाधनत्वेनआश्रयणात् । कृतंकर्मानुष्ठानेनेति तदसत् अन्यशेषतया तस्यार्थवादत्वात् । अत्रोच्यते उक्तमस्माभिरनीहमाना आत्मज्ञानेऽधिक्रियन्ते तएवज्ञानिनोप्रभितानकर्मानुष्ठानवेदिनः तेषांवेदसंन्यासिकतयागृहे अवतिष्ठमानानां महायज्ञानांभावनेयमुच्यते । हव्यसाध्यानांच महायज्ञानांआत्मज्ञानसंपादनमेवमुच्यते । स्वाध्यायोदकतर्पणयोस्तु कर्मसाध्यतामेवषष्ठेवक्ष्यति । अत्रकारणरूपमर्थवादमाह । ज्ञानमूलात् ज्ञानंमूलंयस्याःक्रियायाःसर्वस्यकर्मानुष्ठानस्यज्ञानंमूलं नह्यविद्वान्किंचिदनुष्ठातुंशक्नोति तदुक्तंविद्वान्याजयेदिति । पश्यन्तोज्ञानचक्षुषा । ज्ञानंचक्षुरिव यथाचक्षुषारूपंगृह्यते एवंज्ञानात्ज्ञायते नतत्ज्ञानंवेदएवाभिमतः ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञानेन धारणाध्यानसमाधानान्यतमेन ज्ञानमूलांज्ञानकारणिकांज्ञानचक्षुषावेदार्थज्ञानमयेन चक्षुषा पश्यन्तः ॥ २४ ॥

( ३ ) **कुल्लूकः** । अपरे विप्राब्रह्मनिष्ठाः सर्वथा ब्रह्मज्ञानेनैवैतैर्मखैर्यजन्ति एतांश्च यज्ञाननुतिष्ठन्ति । कथमेतदित्याह । ज्ञानंब्रह्म सत्यंज्ञानमनन्तेत्यादिश्रुतिषु प्रसिद्धं ज्ञानमूलामेषांज्ञानानांक्रियामुत्पत्तिंजानन्तःज्ञायतेऽनेनेतिज्ञानंचक्षुरिव चक्षुः ज्ञानचक्षुषोपनिषदासर्वंखल्विदंब्रह्म तज्जलानित्यादिकयापञ्चयज्ञानपि ब्रह्मोत्पत्तिकाले ब्रह्मात्मकान्ध्यायन्तःसंपादयन्तिपञ्चयज्ञफलमश्नुवतइत्यर्थः । श्लोकत्रयेण ब्रह्मनिष्ठानांवेदसंन्यासिनांगृहस्थानाममीविधयः ॥ २४ ॥

( ४ ) **राघवानन्दः** । सविषयाणीन्द्रियाणि नात्मातिरिक्तानीति विज्ञानेन । द्रव्यसाध्यानांमहायज्ञानांसंपादनमात्मनि । सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुव्हति ज्ञानदीपित इत्युक्तेः । मखैः पञ्चयज्ञैः । ज्ञानयज्ञं प्रशंसति ज्ञानमूलामिति । श्रेयान्द्रव्यमयाद्यज्ञात्ज्ञानयज्ञः परंतपेत्युक्तेः ॥ एषामिन्द्रियाणां क्रिया व्यापारः ज्ञानंचैतन्यंमूलंप्रकृतिर्हेतुर्यस्याः अचेतनानांचेतनाधिष्ठानमृते प्रवृत्त्यनुपपत्तेरिति । ज्ञायतेनेनेति ज्ञानं वेदनंतेन नाविद्वानधिक्रियतेज्ञानचक्षुषा । सर्वे मखावेदसाध्याइति मेधातिथिः ॥ २४ ॥

( ५ ) **नन्दनः** । ज्ञानेन संकल्पमयेन । सदा यावज्जीवम् । उत्तरार्धेन कारणमुच्यते । याक्रिया यज्ञात्मिकाऽनुमीयते तस्याज्ञानमेव मूलम् । ज्ञानाभावेऽननुष्ठानप्रसङ्गादिति । ज्ञानचक्षुषा बुद्ध्यापश्यन्तीत्यर्थः ॥ २४ ॥

( ६ ) **रामचन्द्रः** । ज्ञानेनैवापरे विप्राः तैःमखैःपञ्चमहा यज्ञैः यजन्ते । एषांयोगिनां । ज्ञानमूलां क्रियांज्ञानचक्षुषा पश्यन्तः ज्ञानं मूलं यस्याःक्रियायाःसर्वस्य कर्मानुष्ठानस्य ॥ २४ ॥

## अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ॥ दर्शेन चार्धमासान्ते पौर्णमासेन चैव हि ॥ २५ ॥

( १ ) **मेधातिथिः** । अग्निहोत्रादयःशब्दाः श्रुतौगृह्यस्मृतिषुचकर्मविशेषवचनतयाप्रसिद्धाःसेतिकर्तव्यताकाःतत्रविहिताःतेषामयमनुवादोनत्वत्रापूर्वविधिः रूपवचनात् केवलंहोमविषयाकर्तव्यताश्रुता । नद्रव्यं नदेवता । अग्निहोत्रादिना-

मधेयंच विशेषाकांक्षंअतःशास्त्रान्तरावगतविशेषवचनतैवप्रतीयते । यद्येवं तत एवकर्तव्यतावगमादनर्थकमिदं वेदसंन्यासिकानां अकृतोपासनानां संवादनार्थं । यथैव वाच्येकेजुव्हतिप्राणंज्ञानेनैवेतिचपञ्चमहायज्ञाःसंपाद्यन्ते । तद्वदेतदपीति कश्चायमुपालम्भः किमर्थंपुनर्वचनमिति । सर्वश्रुतीनांस्मृतीनांच यदेकदेशेभिहितं तस्यैवान्यत्रपुनर्वचनस्यचोद्यस्यापत्तेः । उक्तश्चसामान्यतःपरिहारः प्रतिपत्तिभेदान्नपौनरुक्त्यमिति । यथाप्रतिपत्तिभेदादिन्द्रियभेदोनैकेनचक्षुषा सर्वेद्रष्टुंशक्नुवन्ति बहूनीन्द्रियाणि प्रयोजनवन्ति । एवंशाखाभेदःस्मृतिभेदश्च । अथोच्यते कस्माद्रूपाद्वचनमिति एषोपिनदोषः प्रतिशाखमितिकर्तव्यतायाभेदः कस्याभिधानंक्रियतां । सर्वाभिधानेगौरवंएकतराभिधाने अन्यतरपरित्यागः तदपिचोद्यमेव । उक्तंचानुवादोयं नविधिः । विधौहिचोद्यमेतत्स्यात् अन्यत्रविहितं किमर्थंपुनर्विधानमिति । आद्यन्तेद्युनिशोर्नात्रयथासंख्यं किंतर्हि दिवआदौनिशायाश्चादौ एवंदिवोन्तेनिशायाश्चान्तइति । सायंप्रातःकालावेतेन परिगृह्येते तत्रोदितहोमिनांअहरादौअनुदितहोमिनांनिशान्ते । द्विशब्दोदिवसपर्यायः । सदायावज्जीवं सायंप्रातर्होमःकर्तव्यः । दर्शेन यजेतेत्यत्राध्याहर्तव्यं दर्शेनयजेत् । नहितत्रोत्पत्तौजुहुयादित्यस्ति किंतर्हिदर्शेनयजेतेति तदनुवादश्चायंअतएवाध्याहारःक्रियते । अतएवअविशेषश्रमणेपि अर्धमासान्तइति कृष्णपक्षान्तेदर्शः । शुक्लान्तेपौर्णमासः । तथाचश्रुतिः । दर्शेचदर्शेनयजेत् पूर्णमास्यांपूर्णमासेनयजेतेति ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । आद्यन्तेद्युनिशोर्दिवसस्यादावन्ते च तथा रात्रेरादावन्तेचेत्यर्थः । तथाचोद्धरणादिहोमात्तत्प्रयोगेणोभयोर्दिनरात्रयोराद्यन्तव्याप्तिरित्युदितहोममादाय कालोदर्शितः ॥ २५ ॥

( ३ ) **कुल्लूकः** । उदितहोमपक्षे दिनस्यादौ निशायाश्चादौ अनुदितहोमपक्षे दिनस्यान्ते निशायाश्चान्ते यद्वोदितहोमपक्षे दिनस्यादौ दिनान्तेच अनुदितहोमपक्षे निशादौ निशान्तेचाग्निहोत्रंकुर्यात् कृष्णपक्षार्धमासान्ते दर्शाख्येन कर्मणा शुक्लपक्षार्धेच पौर्णमासाख्येन यजेत् ॥ २५ ॥

( ४ ) **राघवानन्दः** । प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति अग्नीति । आद्यन्ते सन्ध्याद्वयेद्युनिशोर्दिवसस्यादौ दिनस्यान्तेउदितहोमिनामाश्वलायनादीनाम् । निशायाआदौ निशायाअन्ते च साङ्ख्यायनादीनामनुदितहोमिनाम् । दर्शेनार्धमासान्तेअमायां पौर्णमास्यांपौर्णमासेनदर्शपूर्णमासाभ्यांयजेतेतिश्रुतेः ॥ २५ ॥

( ५ ) **नन्दनः** । अथाहिताग्नेरसंकुचितवृत्तेर्वृत्तान्याह अग्निहोत्रमिति । द्युनिशोःअहोरात्रयोः । आद्यन्ते सायंप्रातश्च । सदा विहितकालानतिक्रमेणअर्धमासान्ते पक्षयोरन्तेपर्वणोरितियावत् । अत्रयजेतेत्यध्याहार्यम् ॥ २५ ॥

( ६ ) **रामचन्द्रः** । द्युनिशोः आद्यन्ते प्रातःसायंकाले । अग्निहोत्रं जुहुयात् ॥ दर्शेन दर्शसंज्ञेन कालेन । मासान्ते अमायां । पौर्णिमास्येन कालेन ॥ २५ ॥

## सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ॥ पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः ॥ २६ ॥

( १ ) **मेधातिथिः** । सस्यशब्दोव्रीह्यादिधान्यवचनः । तस्यान्तःक्षयः । पूर्वसस्येषुक्षीणेषुनवसस्येष्ट्यायजेत आग्रयणेनेत्यर्थः । नचात्रपूर्वसस्यक्षयआग्रयणनिमित्तं । नापिनवसस्यागमः किंतर्हि अकृताग्रयणस्य नवान्नाशनंप्रतिषिद्धं येनाहनानिष्ट्वानवान्नमद्यादिति अतोनवसस्यभक्षणमाग्रयणेनेत्यर्थः । तेनयजेतेतिव्याचक्षते । अस्मिंस्तुपक्षेपूर्वसस्याभावात् । नवसस्यस्यभावादन्यतोवा असत्यांचाशिशिक्षायांननियमतआग्रयणंप्राप्नोति । अथेदंसस्यांतइतिनवोत्पत्त्युपलक्ष-

---

( २६ ) पशुनात्वयनस्यादौ=पशुना ह्ययनान्ते तु ( मेधा० )

णं तदानिष्ट्वाभक्षणंप्राप्नोति । तस्माद्द्वेएतेवाक्ये । नानिष्ट्वाश्नीयादित्येकं सस्यान्तइतिद्वितीयं सस्यान्तग्रहणेनचसस्योत्पत्तिरेवाभिप्रेतानियतत्वात्तस्यानिमित्तस्योपपत्तिः । क्षयस्त्वनियतोधनिनांहित्रैवार्षिकान्यपिधान्यान्यत्रप्रवर्तन्ते । अतएवसूत्रकारः सस्यंनाश्नीयादग्निहोत्रमहुत्वेति । तथायदावर्षस्यतृप्तस्यादथाग्रयणेनयजेतेति । तथेदमपरंशरदिनवान्नमितिकालविशेषविधायकं तत्रयस्यपूर्वसस्यक्षयोनास्ति सशरदमाद्रियते । इतरस्तुन । एवमुभयोरर्थवत्ताचभवति इतरथाएवमेवाचक्षते । नवसस्योत्पत्तौनवसस्येष्ट्यायजेतेति । यतस्त्वाह । नानिष्ट्वानवसस्येष्ट्यानचान्नमश्नीयादिति । तेनउत्पन्नेष्वपिनवसस्येषु विद्यमानस्यअस्तिशरत्प्रतिपालनं । नवसस्योत्पत्तिनिमित्तत्वाच्चअसत्यामपिनवान्नाशनेच्छायांनियमतः । आग्रयणंऋत्वन्ते ऋतुः संवत्सरइतिदर्शनेनचातुर्मास्यानामेतत्करणमुच्यते । अध्वरशब्देन तान्येवाभिप्रेतानि । अयनयोरादीअनायनान्ते तेचेद्वेअयने दक्षिणमुत्तरंच तत्रपशुयागःकर्तव्योद्विःसंवत्सरस्य । सूत्रकारस्त्वाह । षण्मास्यःसांवत्सरोवेति । समान्ते समाशब्दःसंवत्सरपर्यायस्तस्यचान्तःसमाप्तिःशिशिरे । नचतत्रेदंसौमिकयागविधानं किंतर्हिगतेतस्मिन्वसन्तआगते । तथाचश्रुतिः वसन्तेवसन्तेज्योतिषायजेतेति । एतावंतिनित्यानिकर्माणि तानियथाकथंचिद्वेदसन्यासिकेनापि सपाद्यानीतिसर्वस्यतात्पर्यम् ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । सस्यान्ते व्रीहियवश्यामाकसस्यसमीपकाले शरदादौ नवसस्येष्ट्याग्रयणेष्ट्याऋत्वन्ते शीतोष्णवर्षत्वन्ते अध्वरैःचातुर्मास्यैः । अयनयोरादावादिदिनयोः अपरान्तइति क्वचित्पाठः । समान्ते वर्षसमाप्त्यनन्तरंवसन्तेशिशिरान्तत्वाद्वर्षस्य ॥ २६ ॥

( ३ ) **कुल्लूकः** । पूर्वार्जितधान्यादिसस्ये समाप्ते शरदि नवानामितिसूत्रकारवचनादसमाप्तेपि पूर्वसस्ये नवसस्योत्पत्तावाग्रयणेन यजेत । सस्यक्षयस्यानियतत्वाद्धनिनांबहुहायनजीवनोचितधान्यसंभवाच्च सस्यान्तग्रहणाच्चनवसस्योत्पत्तिरेवाभिप्रेतानियतत्वात्तस्याःप्रत्यब्दंनिमित्तत्वोत्पत्तेः । ऋतुसंवत्सरइत्येतन्मताश्रयणेन चत्वारश्चत्वारोमासाऋतवस्तदन्तेऽध्वरैश्चातुर्मासाख्यैर्यागैर्यजेतअयनयोरुत्तरदक्षिणयोरादौपशुनायजेतपशुबन्धाख्यंयागमनुतिष्ठेत् ज्योतिःशास्त्रे चैत्रशुक्लप्रतिपदादिवर्षगणनाच्छिशिरेण समाप्ते वर्षे वसन्ते सोमरससाध्यैरग्निष्टोमादियागैर्यजेत ॥ २६ ॥

( ४ ) **राघवानन्दः** । किंच सस्यान्तइति । नवसस्येष्टिरिति असमाप्तेपि पूर्वसस्ये नवोत्पत्तौआग्रयणेनयजेत । ऋत्वन्तेऋतोरन्तेअध्वरैश्चातुर्मास्याख्यैर्वैश्वदेववरुणप्रघाससाकमेधशुनासीरसंज्ञैर्यागैः । पशुना पशुबन्धेन यागेन । सौमिकैः सोमरससाध्यैर्ज्योतिष्टोमाख्यैः ॥ २६ ॥

( ५ ) **नन्दनः** । सस्यान्ते सस्यानां श्यामाकादीनामन्ते पाककाले नवसस्येष्ट्याआग्रयणेन । अध्वरैः सोमचातुर्मास्यैः । पशुना निरूढपशुबन्धेन । समान्तेसंवत्सरान्ते । सौमिकैःसोमवद्भिः । अत्रापियजेतेतिशेषः ॥ २६ ॥

( ६ ) **रामचन्द्रः** । सस्यान्ते सस्यच्छेदेसस्यादौसस्योत्पत्तौ अध्वरैश्चातुर्मास्यैः । अन्ते चातुर्मास्यान्ते उदगयने दक्षिणायनस्यान्ते पशुनापशुयागः कर्तव्यः । समान्ते संवत्सरान्ते सौमिकैर्मखैः सोमयागसंज्ञैः । यस्मिन्यज्ञे सोमपानंक्रियते सः ॥ २६ ॥

**नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान्द्विजः ॥ नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥ २७ ॥**

( १ ) **मेधातिथिः** । अग्निमानाहिताग्निरत्राभिप्रेतोव्रताधिकारात् तस्यहोमस्ययाजुर्वैदिकंव्रतं । नानिष्ट्वापशुना-

मांसंसमश्नीयान्नाग्रयणेननवान्नमिति । नियमानुपालनेफलमाह । दीर्घमायुर्जिजीविषुः । आयुःशब्देनप्रबन्धवत्यः प्राणापानवृत्तयउच्यन्ते । द्वितीयाचसत्यपिजीवतेरकर्मकत्वेपिइषिक्रियापेक्षयासन्नन्तोपिधातुरिच्छायांवर्तते यद्यपिदर्शनइषेः कर्मप्रकृत्यर्थोनबाह्यमिच्छावेक्ष्यमाणंप्रतिगुणभूताप्रकृतिप्रत्ययौप्रत्ययार्थंसहब्रूवतइति सन्नंतादन्यत्रापि । अस्मिन्नपिदर्शने-आयुःशब्देनकालोलक्षयिष्यते । दीर्घकालंजीवनमिच्छन् । तत्रकालभावावध्वतव्या कर्मसंज्ञाह्यकर्मणामितिकर्मत्वं । एषचाहिताग्नेःपशुबन्धेनियमः आग्रयणेपि । गृह्याग्निमतोपि गृह्यस्मृतिषुनियमतआग्रयणंविहितं । यच्चेदंशरदिनवान्नमितितत् व्रीहिश्यामाकयोर्नयवानां । नवसस्यमात्रेणसस्येष्टियागोनचमाषमुद्गादिना यतइदंशास्त्रान्तरसापेक्षंनस्वतोविधायकमित्युक्तं । शास्त्रान्तरेषुचव्रीहिश्यामाकयवैराग्रयणेष्टिर्विहिता । किंत्वन्यदपिसस्यंनाशितव्यमकृतायामाग्रयणेष्टौ । यदुक्तमविशेषेणसस्यंनाश्नीयादिति तन्निषेधेह्यभिप्रेते इयदेवावश्यदाग्रयणंव्रीहिश्यामाकयवानांनाश्नीयादग्निहोत्रमहुत्वेति । एवंसूत्रकारेणपठितं । आग्रयणंव्रीहिश्यामाकयवानांसस्यंनाश्नीयादग्निहोत्रमहुत्वेति । अतोयंसस्यशब्दोनप्रतिनियतविषयएव ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । नानिष्ट्वेति एतेन एवश्यामाकव्रीहिभक्षणाभावे आग्रयणस्य मांसभक्षणे च पशुयागस्याकरणेपि न दोषइतिदर्शितं । तद्भक्षणनिमित्तकत्वोपदर्शनात् ॥ २७ ॥

( ३ ) **कुल्लूकः** । आहिताग्निर्द्विजोदीर्घमायुर्जीवितुमिच्छन्नाग्रयणमकृत्वा नवान्नं भक्षयेत् । न च पशुयागमकृत्वा मांसमश्नीयात् ॥ २७ ॥

( ४ ) **राघवानन्दः** । नवसस्येष्टिपशुबन्धयोरर्थवादेन तयोरावश्यकत्वमाह नेतिद्वाभ्यां । नवान्नं मांसंच नाद्यात् ॥ २७ ॥

( ५ ) **नन्दनः** । आग्रयणपशुबन्धयोरवश्यकर्तव्यतांप्रसङ्गादाह नानिष्ट्वेति । अग्निमानाहिताग्निः ॥ २७ ॥

( ६ ) **रामचन्द्रः** । नादिष्टेति नवसस्ये सति अग्निमान् द्विजः पशुना पशुयागेनानिष्ट्वापशून् अकृत्वा नवान्नंनाद्यात् तथा मांसंनाद्यात् दीर्घमायुर्जिजीविषुः अकृत्वा नाद्यात् ॥ २७ ॥

**नवेनानर्चिताह्यस्य पशुहव्येन चाग्नयः ॥ प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्धिनः ॥ २८ ॥**

( १ ) **मेधातिथिः** । नित्यतामेवसमर्थयते । अकरणदोषदर्शनं नवेनसस्येनअनर्चिताअकृतहोमाअग्नयोस्याहिताग्नेः प्राणानेवात्तुमिच्छन्ति । भक्षयितुंगर्धिनःगर्धअभिलाषातिशयः तदस्यास्तीतिमत्वर्थीयइति ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । नवेन चान्नेनअस्याआग्रयणपशुयागावकृत्वा नवान्नमांसभक्षिणः पशुहव्येन पशुरूपहविषागर्धोभिलाषः ॥ २८ ॥

( ३ ) **कुल्लूकः** । दोषंकथयन्ननित्यतामनयोराह । यस्मान्नवेन पशुवदामेनानर्चिताअकृतयागाअग्नयोनवान्नमांसाभिलाषिणोऽस्याहिताग्नेःप्राणानेवाग्निहोत्रिणःखादितुमिच्छन्ति । गर्धोऽभिलाषातिशयः । गृधेर्घञन्तस्यरूपम् । सोऽस्यास्तीतिगर्धी । मत्वर्थीयइनिः ॥ २८ ॥

( ४ ) **राघवानन्दः** । नवेन नवसस्येष्ट्या नार्चिताः नवान्नामिषगर्द्धिनोग्नयः । अत्तुमिच्छन्तीत्यर्थः ॥ २८ ॥

( ५ ) **नन्दनः** । अयजमानस्य दोषमाह नवेनेति ॥ २८ ॥

**आसनाशनशय्याभिरद्भिर्मूलफलेन वा ॥ नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्चितोऽतिथिः ॥ २९ ॥**

( १ ) **मेधातिथिः** । उक्तमिदमुत्तरार्थमनूद्यते । नकश्चिदतिथिरनर्चितोगृहेवसेत् । सर्वोतिथिरर्चितोगृहेवसनीयः । शक्तितएकोद्वौबहवोयावन्तःशक्यन्तेर्चयितुं सर्वेआसनादिभिरर्चनीयाः । अर्चापूर्वकमेतदेभ्योवसतांप्रकल्पनाय नतुसर्वेणसर्वमासनाशनशय्यानांसत्वनिवृत्तिरुच्यते । भक्तयूषमांसान्नाज्याशनासंभवेपृथगुपादानान्मूलफलंदातव्यम् ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । अशनमशनीयम ॥ २९ ॥

( ३ ) **कुल्लूकः** । यथाशक्त्यासनभोजनादिभिरनार्चितोऽतिथिरस्य गृहस्थस्य गृहे नवसेत् । अनेन शक्तितोऽतिथिं पूजयेदित्युक्तमप्युत्तरार्धमनूद्यते ॥ २९ ॥

४ ) **राघवानन्दः** । उक्तापि अतिथेः पूजाआवश्यकत्वात्पुनरपितामाह आसनेति। यथाशक्त्या । आसनभोजनशय्यादिभिरनर्चितः अतिथिः अस्यगृहस्थस्य गृहेनवसेत् । अनेन शक्तितोतिथिमर्चयेदिततूक्तमपि उत्तरार्धेनानूद्यते ॥ २९ ॥

( ५ ) **नन्दनः** । उक्तमप्यातिथ्यमादरातिशयार्थमाह आसनेति ॥ २९ ॥

( ६ ) **रामचन्द्रः** । आसनादिभिरनर्चितः । अतिथिः कस्य चिद्गेहे न वसेत् ॥ २९ ॥

**पाषण्डिनोविकर्मस्थान्बैडालव्रतिकाञ्छठान् ॥ हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ ३० ॥**

( १ ) **मेधातिथिः** । अत्रवसेदितिलिङ्गात्सायमातिथ्यप्रतिषेधोयंपाखण्ड्यादीनामित्याहुः । तदयुक्तंअर्चनीयतात्रनिवार्यते । नतुसर्वेणसर्वभक्तावदानमेवोच्यते । दिवापिभुञ्जानानांकतिचित्क्षणावासउपपद्यतएव अतोनलिङ्गंसायंकालस्यवसेदिति । तत्रपाखण्डिनोबाह्यलिङ्गिनोरक्तपटनग्नचरकादयः । विकर्मस्थाअत्रानापदियेवर्णान्तरवृत्त्याजीवन्तियथाब्राह्मणःक्षत्रवृत्त्याक्षत्रियोवैश्यवृत्त्येत्यादि बैडालव्रतिका दाम्भिका येचलोकावर्जनार्थं अग्निहोत्राद्यनुतिष्ठन्ति । इतिगृहादिलिप्सामर्हइति । नशास्त्रचोदितत्वेन स्वधर्मतया शठायेषामन्यत्हृदयेन्यद्वाचिउपकारंकस्यचित्प्रतिज्ञाय कर्तव्यतया अवधीरयन्ति नकुर्वन्ति हैतुकानास्तिका नास्तिपरलोको नास्तिदत्तंनास्तिहुतं इत्येवंस्थितप्रज्ञाः बकवृत्तयःदाम्भिकाएवईषद्भेदभिन्नाः भेदःपरस्परंदर्शयिष्यते । वाङ्मात्रेणापितिष्ठतुतावदासनादिदानं पूजापूर्वकं स्वागतमास्यतामत्रेत्येवमाद्यपिनवक्तव्याः । अन्नदानं श्वपचादिवदिष्यते तथाचभगवान्कृष्णद्वैपायनोन्नदानमेवाधिकृत्यस्मरतिस्म । नपृच्छेज्जन्मनश्रुतमिति । नात्रपात्रगवेषणाकर्तव्येत्यर्थः ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । पाषण्डिनोबौद्धादीन् । पाषण्डदर्शनान्तःपातिनः । विकर्मस्थाना श्रमस्थानप्याश्रमधर्महीनान् । शठान्वक्रहृदयान् । हैतुकानाश्रमिणोपि हेतुमात्रेण वेदविरुद्धेन परलोकसाधनोन्नायकान् नार्चयेत् । क्षुधितेभ्यस्त्वन्नंशक्तौ दद्यादेव ॥ ३० ॥

( ३ ) **कुल्लूकः** । पाषण्डिनोवेदबाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुकक्षपणकादयः । विकर्मस्थाः प्रतिषिद्धवृत्तिजीविनः । बैडालव्रतिकबकवृत्तीवक्ष्यमाणलक्षणौ । शठावेदेष्वश्रद्दधानाः । हैतुकावेदविरोधितर्कव्यवहारिणः । एतानतिथिकालोपस्थितान् वाङ्मात्रेणापि न पूजयेत् । पूजारहितेऽन्नदानमात्रंतु शक्तितोऽपचमानेभ्यइत्यनुज्ञातमेव ॥ ३० ॥

( ४ ) **राघवानन्दः**। आतिथ्यादिलक्षणमुक्तं एतेषु विशेष्वपि आतिथ्यंनास्तीत्याह पाषण्डिनइति। वेदबाह्यव्रतलिङ्ग-धारिणःपाषण्डिनः। ते चभिक्षुक्षपणकादयः। प्रतिषिद्धवृत्तिजीविनः विकर्मस्थाः। वेदार्थेष्वश्रद्दधानाः। शठाःप्रसिद्धाः। अत्रैव करिष्यमाणलक्षणावैडालव्रतिकादयस्त्रयः। हैतुकोवेदविरुद्धतर्की ॥ ३० ॥

( ५ ) **नन्दनः**। अवैदिकाः पाषण्डिनः। विकर्मस्थानिन्दिताचाराः । बैडालव्रतिकान्बकवृत्तींश्चवक्ष्यति । हैतुकाः वेदशास्त्रविरुद्धतर्कशास्त्रपराः ॥ ३० ॥

( ६ ) **रामचन्द्रः**। पाषण्डादीन् वाङ्मात्रेणापि नार्चयेत् । युक्तिबलेन सर्वत्र संशयकरोहैतुकः तान्। बकवत् वृत्तिर्वर्तनंयस्य सः ॥ ३० ॥

## वेदविद्याव्रतस्नाताञ्छ्रोत्रियान्गृहमेधिनः॥ पूजयेद्धव्यकव्येन विपरीतांश्च वर्जयेत्॥ ३१ ॥

( १ ) **मेधातिथिः**। वेदश्च विद्याच व्रतानिच तैःस्नातास्तत्रपरिसमाप्तिंगताः विविधास्नातकागृह्यन्ते। तत्रवेदस्नातकाअधीतवेदाः विद्यास्नातकाविद्यार्थजिज्ञासितवन्तः। विद्यासन्निधानाद्वेदविषयैवगृह्यते। तस्याएववस्तुतोविद्यात्वं। व्रतानिषट्त्रिंशदाब्दिकमित्यादीनि। सत्यामपिवेदतदर्थजिज्ञासासमाप्तौ नतावत्येवस्नानं किंतर्हिषट्त्रिंशदब्दादिकालःपूरयितव्यः इतिपक्षोप्यस्ति। अन्येतु येनधीत्यैववेदंवर्षत्रयात्स्नान्ति तेव्रतस्नातकाइत्याचक्षते । अनधीतवेदस्यकुतःस्नानमित्यपेक्षायां ननुचश्रोत्रियग्रहणंकिमर्थं स्नातकत्वेनैवसिद्धत्वात्। अतिशयार्थंतेनवेदाभ्यासरतागृह्यन्ते। श्रोत्रियागृहमेधिनोगृहस्थानानेनभिक्षुतापसब्रह्मचारिणामपूजनीयत्वमुच्यते। किंतर्हिभैक्ष्यभोजित्वात्तेषांनातिथित्वसंभवः। ब्रह्मचारिणोगुरुगृहात्तापसस्यचवनान्नान्यत्रवासः प्रव्रजितस्यापिभैक्षार्थीग्राममियादिति नग्रामेवासः । अतोन्येषामाश्रमिणांगृहादन्यत्रवासात्कथंचित्सम्भवेपिप्रायिकमेतद्गृहमेधिनइति । हव्येनकव्येनदैवकर्मणिशान्त्यादौ पित्र्येवाश्राद्धे तएवपूज्याः विपरीताः अस्नातकाःवर्ज्याःपूर्वोक्तदोषाभावेपि ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः**। वेदविद्यायांप्रसमाप्तायां व्रते च कृतेऽनन्तरंस्नातांत्समावृत्तान्तांस्तदनन्तरमेव स्वगृहमागतान्पूजयेत्। तथा गृहे वसतोपि श्रोत्रियान्वेदविदो हव्यकव्येन हव्यकव्यसंबन्धिकर्मणा विपरीतान्विद्याव्रतंविना स्नातान् गृहिणश्चाश्रोत्रियान्॥ ३१ ॥

( ३ ) **कुल्लूकः**। वेदविद्याव्रतस्नातानिति विद्यास्नातकव्रतस्नातकोभयस्नातकास्त्रयोऽपि गृह्यन्ते यथाह हारीतः। यः समाप्य वेदानसमाप्यव्रतानि समावर्तते सविद्यास्नातकः। यः समाप्य व्रतान्यसमाप्य वेदान्समावर्तते सव्रतस्नातकः। उभयंसमाप्य यः समावर्तते सविद्याव्रतस्नातकः। यद्यपि स्नातकधर्मत्वेनैव स्नातकमात्रप्राप्तिस्तथापि श्रोत्रियत्वंविवक्षितम् तान्स्नातकाञ्छ्रोत्रियान्हव्यकव्येन पूजयेद्विपरीतान्पुनर्वर्जयेत्॥ ३१ ॥

( ४ ) **राघवानन्दः**। एतांस्त्वर्चयेदेवेत्याह वेदेति। वेदः स्वशाखा। विद्या तर्कव्याकरणादि । व्रतं षट्त्रिंशद्वर्षादिब्रह्मचर्यं तेषु स्नातान् पारगान्। विपरीतान् पाखण्डादीन् ॥ ३१ ॥

## शक्तितोऽपचमानेभ्योदातव्यंगृहमेधिना॥ संविभागश्च भूतेभ्यः कर्तव्योऽनुपरोधतः॥ ३२ ॥

( १ ) **मेधातिथिः**। अपचमानाब्रह्मचारिपरिव्राजकाइत्याहुः। तदुक्तं मृतायनित्यवद्दानंविहितमेव । भिक्षांचभिक्षवेदद्यादिति। तस्माद्येदरिद्राभैक्षजीवनाश्चपाखण्ड्यादयःतेभ्यःशक्तितोदातव्यं । यावद्दत्तुःशक्यते यावच्चपच्यते पचिक्रियाविरहनिमित्तत्वाच्चसिद्धान्नदानमेवेदं। संविभागश्चअन्येनापिधनेनपरिधानौषधाद्युपयोगिना संविभागःकर्तव्यः।

कश्चिदंशोदातव्यः सर्वभूतेभ्यः । भूतशब्दोयंचेतनात्मकंजगदाचष्टे । यथागायत्रीवाइदंसर्वभूतमिति । अचेतनानांचेतनवदुपकारार्थतया संविभागानुपपत्तेः चेतनावत्स्वेवावतिष्ठते । अतश्चप्ररोहधर्मकाश्चेतनावन्तइतिदर्शने वृक्षादीनामपिजलसेकाद्यर्थोधनसंविभागःकर्तव्यः । बव्हर्थोयंभूतशब्दः । कश्चित्प्राधान्येवर्तते भूतमियंब्राह्मण्यस्मिन्गृहे । क्वचित्पैशाचवचनोभूतोपसृष्टइति । क्वचिद्विपरीतेर्थेवर्तते भूतमाहेति । क्वचिदतिक्रान्तकालवचनोभूतोधात्वर्थइति । क्वचिद्देवताविशेषेभूतेभ्योबलिरिति । क्वचिच्चेतनावन्मात्रवचनोनाहिंस्याद्भूतानीति । क्वचित्प्राप्तिवचनोमहद्भूतश्चन्द्रमाइति । क्वचिदुपमायांवर्तते यथाकाव्यभूतइति । क्वचिदुत्पत्तिवचनो यथादेवदत्तस्यपुत्रोभूतइति । इहतुयःपदार्थस्तद्व्याख्यानं भूतेभ्यइति तादर्थ्येचतुर्थी । अनुपरोधतः आत्मकुटुम्बपीडायथानभवति तत्पर्याप्तंस्थापयित्वा अधिकेनसंविभागःकर्तव्यः । तदुक्तं भृत्यानामनुपरोधेनेति ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । अपचमानेभ्योब्रह्मचार्यादिभ्यः प्राण्यन्तरेभ्यः एवेत्यर्थः । षष्ठ्यर्थे चतुर्थी । अनुपरोधतःकुटुम्बोपरोधंविना ॥ ३२ ॥

( ३ ) **कुल्लूकः** । अपचमानाब्रह्मचारिपरिव्राजकाः पाषण्डादयः । ब्रह्मचारिपरिव्राजकानामुक्तमप्यन्नदानंपचमानापेक्षयातिशयार्थं स्नातकव्रतत्वार्थंच पुनरुच्यते । मेधातिथिगोविन्दराजौतु भिक्षां च भिक्षवेदद्याद्विधिवद्ब्रह्मचारिणइति ब्रह्मचारिपरिव्राजकयोरुक्तत्वात्पाषण्ड्यादिविषयत्वमेवास्य वचनस्येत्यूचतुः । स्वकुटुम्बानुरोधेन वृक्षादिपर्यन्तप्राणिभ्योऽपि जलादिनापि विभागः कर्तव्यः ॥ ३२ ॥

( ४ ) **राघवानन्दः** । सन्यास्यादिभ्यः स्वाऽपीडयैव दातव्यमित्याह शक्तितइति । सन्यासिब्रह्मचारिविरक्तवानप्रस्थेभ्योऽपचमानेभ्यः । यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणंचरेदित्युक्तेः ॥ जलादिना संतोषः संविभागःभूतानामनुपरोधतः अपीडया ॥ ३२ ॥

( ५ ) **नन्दनः** । अपचमानेभ्योब्रह्मचारिसंन्यासिभ्यः भूतानांश्वचाण्डालादीनामनुपरोधतः स्वकुटुम्बाविरोधेन॥३२॥

( ६ ) **रामचन्द्रः** । अयाचमानेभ्यःब्रह्मचारिसन्यासिभ्यःभूतेभ्यः प्राणिभ्यःशक्तितोयावत्सिद्धान्नादितत्संविभागस्तावत्कर्तव्यः । अनुपरोधतः कुटुम्बस्य पीडा यथा न भवेत् गृहमेधिना तथा दातव्यम् ॥ ३२ ॥

**राजतोधनमन्विच्छेत्संसीदन्स्नातकः क्षुधा ॥ याज्यान्तेवासिनोर्वापि न त्वन्यतइति स्थितिः ॥ ३३ ॥**

( १ ) **मेधातिथिः** । राजग्रहणमाढ्यवर्णोपलक्षणार्थम् । तथाचवक्ष्यति । सीदद्भिः । कुप्यमिच्छद्भिर्धनंवापृथिवीपतिः । याच्यस्यादिति । तेनराजशब्दःक्षत्रियजातौमुख्यः तथापिशास्त्रान्तरपर्यालोचनया जनपदेश्वरवचनइतिगम्यते । जनपदेश्वराहिबहुधनाभवन्तितेनैतदुक्तंभवतियेत्यन्तसम्पन्नागोजाविधनधान्यैस्तेभ्यःप्रतिग्रहीतव्यम् । तथासत्यद्रोहेणेत्येतदादत्तंभवति आढ्याहिददतोनातीवपीड्यन्ते । स्वल्पधनेभ्यस्तुपरिगृह्णतो दोषःस्यात् । मुख्यार्थवृत्तौचराजशब्देब्राह्मणादिभ्यःप्रतिग्रहःप्रतिषिध्यते । तत्रसर्वस्मृतिविरोधःस्यात् । स्मृत्यन्तरेहिपठ्यते । आददीतप्रशस्तद्विजातिभ्यःशुश्रूषोःशूद्रादपक्वान्नमितिप्रतिषेधेपि नराज्ञःप्रतीगृह्णीयादितिराजशब्दोजनपदेश्वरवचनएव । किंचनक्षत्रियस्यतत्रप्रतिषेधः अराजन्यप्रसूतितइतिवचनात् । अतएवनक्षत्रियजातीयात्तत्रतन्निषेधस्तथासत्यराजन्यप्रसूतितइतिनवक्तव्यंस्यात् । नह्यराजन्यप्रसूतितःक्षत्रियाभवन्ति । तेनेयमत्रव्यवस्था क्षत्रियाद्राज्ञोयथाशास्त्रवर्तिनःप्रतिग्रहःकर्तव्यः । अन्यस्मात्पुनर्नरकैकविंशत्यायोगः । याज्यान्तेवासिनोःधनापेक्षाषष्ठी । तसंतोवापठितव्यः क्रियानिमित्तत्वादेतयोःशब्दयोर्याजनाध्यापनाभ्यांजीवेदित्युक्तंभवति । अन्येत्वाहुरन्येषांउपपातकप्राप्तिश्चौर्यादीनांचोपायानांनिषिद्धत्वात् । ईश्वरमाराध्यजीवेत्प्रीतिदायेन

स्वस्तिवाचनकेनवा नचायंसेवकः सावृत्तिर्निषिद्धा । एवंकृतोपकारादयाजयन्नपियाज्याद्याददीत वृत्तेपिसंबन्धेकृत्योवर्ततइति संसीदन्निति । पित्रादिधनेसति नकर्तव्यं । तदुक्तं नकल्पमानेष्वर्थेषुतस्यैवायमनुवादः । नचायमापद्धर्मः नह्यवसादआपत्किंतर्हिअर्जितधनाभावः । आपत्तुविहितोपायाभावोधनक्षयश्च । सत्यपिधान्यधनवत्वेअन्नपरिक्षयेदुर्भिक्षादावातिथ्यसन्निहितान्नता । नक्षुत्पीडितस्यापत् । अक्षुधितस्यापिधनाभावादवसादइत्येषएतयोर्विशेषः । नत्वन्यतःस्वल्पधनादनुपकार्यान्नगृह्णीयात् ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्विच्छेदनुगम्येच्छेत् । स्नातकोगृहस्थः । एतेनात्यन्ताभ्यर्थनया धनार्जनमेभ्यस्त्रिभ्यएवेत्यर्थः ॥ ३३ ॥

( ३ ) **कुल्लूकः** । न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितइतिनिषेधाद्राजशब्दोऽत्र क्षत्रियनृपतिपरः । स्नातकःक्षुधाऽवसीदन्द्विजातिप्रतिग्रहस्य संभवेऽपि यथाशास्त्रवर्तिनः क्षत्रियाद्राज्ञोयाज्यशिष्याभ्यांवा प्रथमंधनमभिलषेत् । राज्ञोमहाधनत्वेन पीडाविरहात् । याज्यशिष्ययोश्च कृतोपकारतया प्रत्युपकारप्रवणत्वात् । तदसंभवे त्वन्यस्मादपि द्विजाद्धनमाददीत । तदभावे तु सर्वतःप्रतिगृण्हीयादित्यापद्धर्मंवक्ष्यति । एवंचानापदि प्रथमंक्षत्रियनृपयाज्यशिष्येभ्यःप्रतिग्रहनियमार्थवचनम् । अतएवाह न त्वन्यतइति । स्थितिःशास्त्रमर्यादा । न च संसीदन्नित्यभिधानादापद्धर्मविषयत्वमस्यवाच्यम् अव्यभिचारादनापत्प्रकरणात् । संसीदन्नित्यस्य चोपात्तधनाभावपरत्वात् । नच धनाभावमात्रमापत् किंतु तस्मिन्नसति विहितोपायासंभवात् । अन्यथा सद्यःप्रक्षालकोऽप्यापद्वृत्तिःस्यात् । यदि चापद्विषयत्वमस्य भवेत्तदा नत्वन्यतइत्यनेन सर्वतःप्रतिगृह्णीयादिति विरुध्येत । यच्चापत्प्रकरणे सीदद्भिःकुप्यमिच्छद्भिर्धनंवा पृथिवीपतिः । याच्यःस्यादित्युक्तं तच्छूद्रनृपविषयमेवंराजादिप्रतिग्रहासंभवे ॥ ३३ ॥

( ४ ) **राघवानन्दः** । स्नातकस्य धनोपायानाह राजतइति । अन्तेवासिनः शिष्याः अन्यतःशूद्रादेः ॥ ३३ ॥

( ५ ) **नन्दनः** । राजतोऽभिजाताच्छास्त्रानुसारिणोगुणवतोराज्ञः क्षुधा संसीदन्स्नातकोन्नमन्विच्छेत्प्रतिगृह्णीयात् । याज्यान्तेवासिभ्यामन्यतः प्रतिग्राह्यात् ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । स्नातकः वेदस्नातकः विद्यास्नातकः व्रतस्नातकोवा । क्षुधा संसीदन् राजतः कृताभिषेकात् राज्ञः अन्विच्छेत् धनं इच्छेत् प्रतिग्रहंकुर्यात् क्षत्रियस्य प्रतिषेधः याज्यः यस्य यज्ञंकारितवान् तस्मात् । अन्तेवासी शिष्यस्तस्मात् । अन्यतःसकाशात् धनंनेच्छेत् ॥ ३३ ॥

**न सीदेत्स्नातकोविप्रः क्षुधा शक्तः कथंचन ॥ न जीर्णमलवद्वासाभवेच्च विभवे सति ॥ ३४ ॥**

( १ ) **मेधातिथिः** । यदिनकुतश्चिद्धनार्थाद्व्यापाराद्याहन्येत तथापिनतदैवापद्धर्मानाश्रयेत् । किंतर्हिपुनरुत्पद्यते । तदुक्तमामृत्योःश्रियमन्विच्छेदिति । अतश्चयदिकथंचित्कृषतोवर्षाद्यभावेनसस्यनाशोभवेन्नेयतात्यागेनसहसैवपरपिण्डोपजीवनायाश्चापरेणभवितव्यं सत्यांयुक्तौजीर्णेमलिनेचवाससी धनविभवेसतिनेष्यते ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । क्षुधा न सीदेत् । शक्तोर्जनसमर्थः । जीर्णंत्रुटितम् ॥ ३४ ॥

( ३ ) **कुल्लूकः** । विद्यादियोगात्प्रतिग्रहशक्तोऽपि स्नातकोब्राह्मणउक्तराजप्रतिग्रहादिलाभे सति न क्षुधावसन्नोभवेत् । नच धनेसंभवति जीर्णेमलिने च वाससी बिभृयात् ॥ ३४ ॥

---

( ३४ ) क्षुधाशक्तः=क्षुधासक्तः ( मेधा० )

( ४ ) **राघवानन्दः** । तेन नातीव कष्टेन वर्तितव्यमित्याह नसीदेदिति । क्षुधासक्तः तादृशस्य धर्मे अविश्वा सप्रसङ्गात् । विभवे सति अजीर्णशुक्लाम्बरःस्यात् ॥ ३४ ॥

( ५ ) **नन्दनः** । नसीदेद्विभवे सति शक्तोभोजनसमर्थोलोभात्क्षुधा नावसीदेत् मृष्टमश्नीयादेव ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । स्नातकोविप्रः क्षुधा न सीदेत् । कीदृशोविप्रः शक्तःविद्यया परिपूर्णः ॥ ३४ ॥

**कॢप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ॥ स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च॥३५॥**

( १ ) **मेधातिथिः** । कल्पनंछेदनंदन्तवाससइत्येतदपेक्षंचैतत्कल्पनंनियमतः । अतएवशुचिरित्याह । दीर्घकेशस्यहि स्नानादिषुक्लेशसाध्यत्वात् । अलसःस्यात्तथाशुचित्वप्रसङ्गः । यदितुकेशादिप्रसृतोऽपिस्नानपरःस्यान्नैवधारणंदुष्येत् । दान्तःदर्पवर्जितः । शुचिःअर्थेषुश्रुतिनिमित्तैर्मृद्वार्याचमनादिभिश्च । वेदाध्ययनेचनित्याभियुक्तः । उक्तोप्ययमर्थआदरार्थःपुनःपुनरुच्यते । आत्महितानिव्याधेःप्रतीकारादिनाअजीर्णातिवेलगुरुविदाहिभोजनवर्जनादीनि ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । कृत्तं कर्तर्यादिकर्तनेन ह्स्वतांनीतं तेन स्नातकस्य क्षुरेण मुण्डनमवैधमित्युक्तम् । अतएवापस्तम्बः । न समावृत्तावपेरन्नन्यत्र विहारादिति । विहारस्त्रेताग्निविहारसंपाद्योदर्शादिः उपलक्षणंचैतत् । पितृमरणादेरिति । केशाशिरोरुहाः । दान्तस्तपःक्लेशसहिष्णुः नित्यंयुक्तोनित्योद्युक्तः । आत्महितेष्वाहारलाघवादिषु ॥ ३५ ॥

( ३ ) **कुल्लूकः** । कल्पनंछेदनंलूनकेशनखश्मश्रुस्तपःक्लेशसहोदान्तः शुक्लवासाबाह्याभ्यन्तरशौचसंपन्नोवेदाभ्यासयुक्तऔषधोपयोगादिना चात्महितपरःस्यात् ॥ ३५ ॥

( ४ ) **राघवानन्दः** । अस्य सार्थवादानि व्रतान्याह आध्यायपरिसमाप्तेः कॢप्तेत्यादिना । कॢप्ताश्छिन्नाःशिखांवर्जयित्वा केशादयोयस्य सः । आत्महितेषु औषधादिषु ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । कॢप्ताः कृत्ताः केशानखानि श्मश्रूणि यस्य सः कॢप्तकेशनखश्मश्रुः तथा योगीश्वरः नीचकेशश्मश्रुनखः शुचिरिति । शुचिरन्तर्बहिश्च आत्महितेषु लघ्वाहारादिषु ॥ ३५ ॥

**वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥ ३६ ॥**

( १ ) **मेधातिथिः** । यज्ञोपवीतकुण्डलयोर्धारणं शरीरसंयोगः । अस्यचयस्मिन्नङ्गेसमुचितःसन्निवेशःसतत्रैवविनियोजनीयः । यथाकुण्डलंकर्णयोरुपवीतंकायइतिकर्णाभरणस्यकुण्डलाख्यत्वात् । कण्ठसक्तस्यसूत्रस्यदक्षिणबाहूद्धारणेनोपवीतत्वात् । दृष्टप्रयोजनत्वाच्चयष्ट्यादिनासर्वदाद्गसङ्गः । तथाहियष्टिधारणंश्रान्तस्यावलंबनार्थंसंमुखागतघातकगवादिनिवारणार्थंच । उद्धृतोदकेनशौचस्यविहितत्वात् । आचारापेक्षयाकमण्डलुर्नियम्यते । सचतुल्यकार्यत्वात् कलशादीननिवर्तयति नकुण्डलकटकादीन् । अतश्चपुरीषनिमित्तस्योदकशोध्याशुचित्वापनोदार्थं सोदकत्वंकमण्डलोः उक्तंच । मुहूर्तमपिशक्तिविषयेनाशुचितिष्ठेदिति । शक्तिविषयइति । यदिपूर्वंगृहीतमुदकमुपयुक्तमन्यथाप्राप्तमशुचित्वनिमित्तंच श्लेष्मनिष्ठीवनाद्युत्पन्नं तत्रोदकालाभादशुचिस्वस्थानेनदोषः । तथाचमूत्रपुरीषविस्रंसनेस्नानंवक्ष्यति । विनाद्भिरप्सुतर्पेतशारीरंसंनिषेव्यतु । सचैलोवहिराप्लुत्येति शुचिश्चस्मृत्यन्तरे प्रतिपदमाम्नातः । एवंहस्माह भगवान्वसिष्ठः अप्सुपाणौचकाष्ठेचकथितःपावकःशुचिः । तस्मादुदकपाणिभ्यांपरिमृज्यकमण्डलुं ॥ पर्यग्निकरणंहोमंमनुराहप्रजापतिः । कृत्वाचावश्यकार्याणिआचामेच्छौचवित्तमः ॥ बौधायनेनोक्तं । अथकमण्डलुंधार्यमित्युपक्रम्य । तस्माच्छौचंततःकृत्वापरिमृज्यकमण्डलुं । पर्यग्निकरणंह्येतद्यद्धस्तुपरिमार्जनं ॥ तथा कमण्डलुंपरिहरेत्पूर्वावस्थोप्यशौचतः । नचैनंकुत्सयेद्विद्वान्नशङ्केन्नचदूषयेत् ॥ आकार-

विशेषनिमित्तश्चायंशब्दोनजातिमाद्रियते । अतोमृन्मयस्यसौवर्णस्यराजतस्यवाएषैवशुद्धिर्नप्रकृतिजातिसंबन्धिनी । मूत्रादिस्पर्शेतुप्रकृतिजातिशुद्धिरवधेया हस्तमार्जनंतूच्छिष्टपुरुषसंस्पर्शाद्यशुचित्वात् । तथाचगौतमः क्वचिच्छौचार्थसंनिधायेत्याह । अतइहापिसंनिधानमेवाभिमतं नत्वात्मनाग्रहणं वेदोदर्भमुष्टिस्तस्यचप्राणोपस्पर्शनंदर्भैरित्यादिप्रयोजनं । अतश्चादृष्टार्थानांसार्वकालिकशरीरसंबन्धोदृष्टार्थानांतु संनिधिर्नित्यंप्रयोजनंवस्तुग्रहणमिति । शुभेदर्शनीयेआकारतःताप्छेदकषैश्चसुवर्णशुध्या ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । यष्टिंदण्डं । सोदकं नरिक्तं । यज्ञोपवीतमित्येकत्वमविवक्षितं । स्नातकंप्रति यज्ञोपवीते द्वे यष्टिरिति विधानात् । वेदमैष्टिकवेदप्रतिकृतिंकुशमयींयष्टिस्थां । शुभे निर्मले ॥ ३६ ॥

( ३ ) **कुल्लूकः** । वेणुदण्डमुदकसहितंच कमण्डलुम् । यज्ञोपवीतंकुशमुष्टिंशोभनेचसौवर्णकुण्डले धारयेत् ॥ ३६ ॥

( ४ ) **राघवानन्दः** । किंच वैणवीमिति । वैणवीमित्यादिपञ्चकंयथायोगंदृष्टादृष्टार्थे । कमण्डलुं काष्ठभवंजलपात्रं । वेदोत्र कुशमुष्टिः वेदंकृत्वा वेदिंकरोतीतिश्रुतेः । रुक्मं सुवर्णं शुभे दर्शनीये ॥ ३६ ॥

( ५ ) **नन्दनः** । वेदंदर्भपुञ्जम् ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । यज्ञोपवीतंधारयेत् वेदं दर्भमुष्टिं धारयेत् च पुनः शुभेरौक्मे कुण्डले धारयेत् ॥ ३६ ॥

**नेक्षेतोद्यन्तमादित्यं नास्तंयान्तंकदाचन ॥ नोपसृष्टं न वारिस्थं न मध्यंनभसोगतम् ॥ ३७ ॥**

( १ ) **मेधातिथिः** । उपसृष्टोग्रहोपरक्तः । उदकेप्रतिबिम्बितोवारिस्थः । नभःअन्तरिक्षंतस्यमध्यगतंपश्येन्नमध्यान्हकाले ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । उपसृष्टंराहुणा गृहीतं । स्नानार्थे तद्दर्शने तुसकृन्न दोषः दृष्ट्वा स्नायादितिविधानात् । वारिस्थंजलप्रतिबिम्बितं मध्यगतंमध्यान्हकाले ॥ ३७ ॥

( ३ ) **कुल्लूकः** । उद्यन्तमस्तंयन्तंच सूर्यबिम्बंसंपूर्णंनेक्षेत । उपसृष्टंग्रहोपरक्तम् वक्का*द्युपसर्गयुक्तंच वारिस्थंजलप्रतिबिम्बितम् नभोमध्यगतंमध्यंदिनसमये ॥ ३७ ॥

( ४ ) **राघवानन्दः** । किंच नेति । आदित्येक्षणमुदयादिपञ्चस्थलेषु समावर्तनपर्यन्तंनकार्यमिति संकल्पंब्रह्मचारीकुर्यादित्यर्थः । अथब्रह्मचारिणोव्रतमिति कल्पसूत्रकारेण धृतत्वात् । पर्युदासविधिरेवायंअतएव दर्शादग्नीषोमीयमन्त्रस्येवस्नातकप्रकरणात्उत्कर्षइति । उपसृष्टंराहुणा न मध्यंनभसोगतं अभिजिदाख्यम् । स्नातकस्य निषेधमात्रं तेषु दर्शनेमुख्यब्रह्मचारिणोव्रतच्युति रिति भेदः । भास्करालोकनाऽश्लीलेति ब्रह्मचारिप्रकरणे याज्ञवल्क्योक्तेः ॥ ३७ ॥

( ५ ) **नन्दनः** । उपस्पृष्टंराहुग्रस्तम् ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । उदयंप्राप्तं आदित्यं नेक्षेत नपश्येत् । उपसृष्टं राहुग्रस्तं वारिस्थंच पुनः नभसो मध्ये गतं आदित्यं नेक्षेत ॥ ३७ ॥

**न लङ्घयेद्वत्सतन्त्रीम् न प्रधावेच्च वर्षति ॥ न चोदके निरीक्षेत स्वंरूपमिति धारणा ॥ ३८ ॥**

( १ ) **मेधातिथिः** । वत्सबन्धनार्थारज्जुर्वत्सतन्त्री वत्सपङ्क्तिर्वा तांनलङ्घयेन्नापक्रामेत् । तथाचगौतमः । नोपरिवत्सतन्त्रींगच्छेत् । स्वरूपंशरीरसंस्थानं स्वग्रहणात्परस्यरूपप्रेक्षणं नपर्युदस्यते । इतिधारणा । एषनिश्चयःशास्त्रेषु ॥ ३८ ॥

---

* वक्का=रन्ध्रा ( अ )

( २ ) **सर्वज्ञनारायणः** । वत्सतन्त्रींगोवत्सबन्धनदाम वर्षति स्वोपरि मेघे । धारणानिश्चयः ॥ ३८ ॥

( ३ ) **कुल्लूकः** । वत्सबन्धनरज्जुंन लङ्घयेत् वर्षति मेघे न धावेत् नच स्वदेहप्रतिबिम्बंजले निरीक्षेतेतिशास्त्रे निश्चयः ॥ ३८ ॥

( ४ ) **राघवानन्दः** । वत्सतन्त्रीं तद्बन्धनरज्जुं । स्वरूपंस्वदेहम् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । वत्सतन्त्रीं वत्सबन्धनरज्जुं न लङ्घयेत् च पुनः वर्षति सति न प्रधावेत् । च पुनः उदके स्वरूपंप्रतिबिम्बं न निरीक्षेत । इति धारणा मर्यादा ॥ ३८ ॥

**मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ॥ प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥ ३९ ॥**

( १ ) **मेधातिथिः** । प्रस्थितस्याभिमुखागतान्मृदादीन्प्रत्ययंविधिः । मृदादयोयेनदक्षिणोहस्तःतेनकर्तव्याः । उद्धृताचमृदेवंकर्तव्या । एवंहिशास्त्रान्तरं प्रस्थानाधिकारेपठति । प्रदक्षिणमावर्तेतिदैवतंपयादिलिखितं अर्चा । गौतमस्तु देवतायतनानि सप्रदक्षिणमनुवर्तेतेनिपठति । लोकप्रसिध्याचतुर्भुजमार्तण्डागारादिदेवतायतनंविज्ञेयं । यज्ञगृहाणिचेतिवक्ष्यति । मधुघृतमहावर्यानुसारधंमङ्गल्यमध्यपाठाच्च । प्रज्ञातावनस्पतयोमहाप्रमाणाःप्रसिद्धा वनस्पतयोमहावृक्षाःप्रमाणतःपुष्पफलातिशयतोवाप्रसिद्धा उदुम्बरादयः । ऊर्वाउदुम्बरइत्यर्थवादः । येतुगुणाधिकान्प्रज्ञातानाचक्षते तेनिर्मूलप्रसिद्धिमात्रप्रमाणकाउपेक्षणीयाः ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । मृदमुद्धृत्य स्थापितां दैवतंदेवतार्चनं । प्रदक्षिणानि कुर्वीत तान् दक्षिणपार्श्वे कृत्वा गच्छेत् । प्रज्ञातान्प्रसिद्धान् । ग्रामादिषु प्रधानवृक्षान् ॥ ३९ ॥

( ३ ) **कुल्लूकः** । प्रस्थितःसन् संमुखावस्थितानुद्धृतमृत्तिकागोपाषाणादिदेवताब्राह्मणघृतक्षौद्रचतुष्पथमहाप्रमाणज्ञातवृक्षान्दक्षिणहस्तमार्गेण कुर्यात् । प्रदक्षिणानीति नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामितिनंपुंसकत्वम् ॥ ३९ ॥

( ४ ) **राघवानन्दः** । मृदं पुञ्जीकृत्य स्थापिताम् । दैवतं ग्रामाध्यक्षादेवतां । प्रज्ञातान् प्रमाणसिद्धान् प्रदक्षिणानि कुर्वीत पथि प्रस्थितइति शेषः ॥ ३९ ॥

( ५ ) **नन्दनः** । मृदंपरैणानीयमानां मृत्कूटंवा । दैवतंदेवताप्रतिमाम् । प्रज्ञातान्प्रसिद्धान् ॥ ३९ ॥

( ६ ) **रामचन्द्रः** । मृदङ्गादीनि प्रदक्षिणानिकुर्वीत कुर्यात् ॥ ३९ ॥

**नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्तवदर्शने ॥ समानशयने चैव न शयीत तया सह ॥ ४० ॥**

( १ ) **मेधातिथिः** । प्रमत्तःकामशरैःपीडितोपि । आर्तवंस्त्रीलिङ्गशोणितं मासिमासिप्रसिद्धं तद्दर्शने न गच्छेत् । एकस्यांचशय्यायां तयासहनशयीतस्पर्शप्रतिषेधादेवतत्सिद्धमितिचेन्नायंप्रतिषेधः । व्रतमिदंप्रायश्चित्तभेदश्च ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । प्रमत्तोतिकामार्तोपि ॥ ४० ॥

( ३ ) **कुल्लूकः** । प्रमत्तःकामार्तोऽपि रजोदर्शने निषिद्धस्पर्शदिनत्रये स्त्रियंनोपगच्छेत् । स्पर्शनिषेधेनैव तासामाद्याश्वतस्रइतिनिषेधसिद्धौ प्रायश्चित्तगौरवार्थंस्नातकव्रतत्वार्थंच पुनरारम्भः । न चागच्छन्नपि तया सहैकशय्यायांसुप्यात् ॥ ४० ॥

( ४ ) **राघवानन्दः** । उदक्यागमनंहि लोकद्वयविनाशकमित्याह नोपगच्छेदिति । स्त्रीभिर्गमनेच्छाभावेपि न शयीत स्पर्शाशङ्कया । पात्रेचोदकीतितिस्रोरात्रीर्व्रतंचरेत्अञ्जलिना वापिबेदिति श्रुतेः । अञ्जलिनोदकसंबन्धादिति ॥ ४० ॥

( ५ ) **नन्दनः** । प्रमत्तः प्रकर्षेण कामपीडितः ॥ ४० ॥

( ६ ) **रामचन्द्रः** । प्रमत्तोपि आर्तवदर्शने ऋतुमतींस्त्रियंनोपगच्छेत् तयाऋतुमत्या सह समानशयने एकशय्यायांन शयीत ॥ ४० ॥

**रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः ॥ प्रज्ञा तेजोबलं चक्षुरायुश्चैव प्रहीयते ॥ ४१ ॥**

( १ ) **मेधातिथिः** । रजःपूर्वोक्तमार्तवं अभिप्लुतांतेनसंबद्धां । पूर्वस्यार्थवादः ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । तेजोब्रह्मवर्चसम् ॥ ४१ ॥

( ३ ) **कुल्लूकः** । यस्माद्रजस्वलांस्त्रियंपुरुषस्योपगच्छतः प्रज्ञावीर्यबलचक्षुरायूंषि नश्यन्ति तस्मात्तांनोपगच्छेत् ॥४१॥

( ४ ) **राघवानन्दः** । यस्मात्तेजोवेदजंप्रहीयते ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । रजसाभिप्लुतां नारीं ऋतुमतीं । तेजःप्रज्ञादि प्रहीयते ॥ ४१ ॥

**तां विवर्जयतस्तस्य रजसा समभिप्लुताम् ॥ प्रज्ञा तेजोबलं चक्षुरायुश्चैव प्रवर्धते ॥ ४२ ॥**

( १ ) **मेधातिथिः** । वृद्धिवचनंस्तुतिरेव ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । तांविवर्जयतइति मांसाद्यभक्षणइव निवृत्तिरत्रापि फलवतीति दर्शितम् ॥ ४२ ॥

( ३ ) **कुल्लूकः** । तांतु रजस्वलामगच्छतस्तस्य प्रज्ञादयोवर्धन्ते तस्मात्तांनोपेयात् ॥ ४२ ॥

( ४ ) **राघवानन्दः** । श्रुतेपि निषेधे तात्पर्यतदकुर्वतः प्रजावृत्ध्याद्यदर्शनात् । रजसा ऋतुकालजयोनिरक्तेनआप्लुतां युक्ताम् ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । तां रजसाभिप्लुतां वर्जयतस्तस्य प्रज्ञादिकंवर्धते ॥ ४२ ॥

**नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ॥ क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम् ॥ ४३ ॥**

( १ ) **मेधातिथिः** । नित्यमास्यंशुचिस्त्रीणामितिशुचित्ववचनंस्त्रीशूद्रोच्छिष्टमितिचप्रतिषेधद्वयमपिविषयविभागेनव्यवस्थितं । तत्रशुचित्ववचनं स्त्रियश्चरतिसंसर्गइतिस्मृत्यन्तरदर्शनेनरतिस्त्रीविषयंविज्ञायते । अतःप्रतिषेधोपिपरिशेष्यादरतिस्त्रीषु मातृभगिन्यादिषुद्रष्टव्यः । यतोरतिर्नेहप्रीतिमात्रंकिंतर्हिमन्मथनिमित्तोभावविशेषइतिशृङ्गारपूर्वकोभिलाषादिरूपः । अतस्तद्युक्तासुशुचित्वं विपरीतासुप्रतिषेधः । रतिनिमित्तार्थतयाभार्ययासहभोजनेप्राप्तेवचनमिदमारभ्यते । नाश्नीयाद्भार्ययासार्धमिति । अथसंसर्गग्रहणेनवृषस्यतोसंप्रयोगविशेषःकथ्यते । तदानींपरिचुम्बनादिवशुचित्वमितिनास्तिभार्ययासहभोजनप्राप्तिः । तत्रेदंपुनर्वचनंव्रतज्ञापनार्थम् । ततश्चयावज्जीविकःसंकल्पःकर्तव्योयथाभार्ययासहभोजनंनभवति । एतच्चसहभोजनमेकाधिकरणमेककालदेशं नञर्थविषयतयाचोद्यतइतिगत्वोच्छिष्टप्रतिषेधगतार्थशङ्केति । सपुनरयमीदृशःसहार्थविशेषःप्रमाणान्तरतःस्मृत्यन्तरमाचारादेरशेषशब्दार्थोह्यन्यापेक्षितमात्रं । तथाचेतरानपि सख्यादीन्भोजयेत्सहभार्ययेति । नात्रैकाधिकरणताभुजेरवगम्यते । किंतर्हिभार्ययासमानदेशताभोक्तुःसमानकालतावा अन्येत्वन्यदुच्छिष्टमितिव्याचक्षते भुक्तोज्झितमुच्छिष्टमेकस्यांतुपत्न्यांएकस्मिन्कार्येसहभोजनं । एवंतुव्याख्यायमानेशूद्रेणसहभोजनंप्रतिषिद्धंस्यात् । प्रतिषिद्धिश्चत्यक्ताभवेत् । अस्यसंस्पर्शादुच्छिष्टव्यवहारःसहभोजनेनापितेष्वस्ति । केचित्तुसमानदेशकालमे-

---

( ४२ ) प्रज्ञातेजोबलंचक्षु=प्रज्ञालक्ष्मीर्यशश्चक्षु ( ञ, ट, ठ, य )

वभोजनंप्रतिषिद्धं दृष्टार्थत्वादुपदेशस्येति। पुंसांत्वभावभेदात्कश्चिद्बहुभोजिन्यानतुष्येत् अन्यःस्वल्पभोजिन्यामपिविश्रं-भवतीतिछद्मनावर्तते। ममपुरतःस्वल्पमश्नातिइति। तथासदृशाएवमन्येपिनियमाः। नैनामीक्षेतचाश्नतींपश्यतांहिभुञ्जाना-विवृतास्यतयारूपविकारेणभर्त्रेनरोचेत। क्षवथुःशिरस्थेनवायुनापूर्यमाणायानासिकायाःशब्दस्तत्रापिवक्त्रवैकृत्यात्प्रीति-र्नस्यात्। जृम्भमाणास्येनविलम्बितंवायोरुच्छ्वसनसङ्गप्रत्यङ्गप्रसारणंवातदप्येवमेवयथासुखंचासीनाअनवग्रथितकेशीभमौ-निपतितगात्रीवा ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः**। सार्धमेकपात्रे क्षुवतींक्षुतंकुर्वतीं आसीनांयथासुखंदेहसंवरणादिशून्याम् ॥ ४३ ॥

( ३ ) **कुल्लूकः**। भार्यया सहैकपात्रे नाश्नीयात्। एनांच भुञ्जानांक्षुतंजृम्भांच कुर्वतींयथासुखंनिर्यन्त्रणप्रदेशाव-स्थितांच नेक्षेत ॥ ४३ ॥

( ४ ) **राघवानन्दः**। स्वभार्याविषयेपि नाश्नीयादित्यादि नवकंनिषेधति नेतिद्वाभ्यां। क्षुवतीं क्षुतंकुर्वतीम्। रहस्य-देशेआसीनाम् ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। भार्यया सार्धं नाश्नीयात् स्त्रियंअश्नन्तीम् भोजनंकुर्वतीं नेक्षेत क्षुतंकुर्वतीं यथासुखंआसीनांने-क्षेत ॥ ४३ ॥

**नाञ्जयतीं स्वके नेत्रे न चाभ्यक्तामनावृताम् ॥ न पश्येत्प्रसवन्तीं च तेजस्कामोद्विजोत्तमः ॥ ४४॥**

**[ उपेत्य स्नातकोविद्वान्नेक्षेन्नग्नां परस्त्रियम्। सरहस्यंच संवादं परस्त्रीषु विवर्जयेत् ॥ १॥ ‡ ]**

( १ ) **मेधातिथिः**। परस्याञ्जयन्तींशोभतएवअनावृतांअपावृतवसनांअवगुण्ठितामेवहि विशेषेणस्पृहयंतींनिर्वसना-ङ्गीं निपुणतरंवक्ष्यमाणांन सर्वतःसर्वासुसंस्थानाभवतीति निरम्बरावेक्षणीया। तेजस्कामःतेजःवर्णोज्वलताउत्साहप्रयो-गश्च ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। तैलाद्यभ्यक्तामनावृतांन पश्येदावृतायांत्वदोषः। प्रस्रुवन्तींपुत्रंपाययन्तीम् ॥ ४४ ॥

( ३ ) **कुल्लूकः**। तथा स्वनेत्रयोरञ्जनंकुर्वतींतैलाद्यभ्यक्तांअनावृतांस्तनावरणरहितांनतु नग्नाम्। नग्नांनेक्षेत च स्त्रि-यमितिवक्ष्यमाणत्वात्। अपत्यंच प्रसवन्तींब्राह्मणो न निरीक्षेत ॥ ४४ ॥

( ४ ) **राघवानन्दः**। अभ्यक्तांतैलादिना अनावृतां अदर्शनीयदेशान्मुक्तवस्त्रां। निषेधस्य दृष्टंफलं एतेषु वैरूप्यदर्श-नेन वैराग्यसंभावनयानिवृत्तिः ॥ ४४ ॥

( ६ ) **रामचन्द्रः**। नेति तेजस्कामो द्विजः अञ्जयन्तींस्वके नेत्रे नेक्षेत। अभ्यक्तां तैलाभ्यक्तां अनावृतां वस्त्रैः प्रस्रवन्तीं पुत्रंस्तनंपाययन्तीं नेक्षेत ॥ ४४ ॥

[ **रामचन्द्रः**। उपेत्येति उपेत्य स्नातकः विद्वान्नग्नां परस्त्रियं नेक्षेत ॥ ]

**नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ॥ न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ॥ ४५ ॥**

( १ ) **मेधातिथिः**। सत्यपियज्ञोपवीतेनित्यानुगतत्वात्तस्यअनाच्छादकत्वादुपनयनविभेदेनोपदेशात् एकवासाअ-न्योन्यच्छादकाद्वितीयंवासोभोजनकालेस्यात्। नमूत्रंमूत्रग्रहणमत्रोत्सर्गस्योपलक्षणार्थं। पथिरथ्यायांगोव्रजे। येनयत्रवागा-वश्चरितुंव्रजन्ति ॥ ४५ ॥

‡ ( क, ख, ग, त )

( २ ) **सर्वज्ञनारायणः** । एकवासानग्नोवा नान्नमद्यान्न च स्नायादित्यर्थः । नमूत्रमितिविष्ठाविसर्गस्यापि निषेधः न्यायसामान्यात् । एवंमेहतइत्यत्रापि ॥ ४५ ॥

( ३ ) **कुल्लूकः** । एकवस्त्रोनान्नंभुञ्जीत । उपस्थाच्छादनवासोरहितोन स्नायात् । मूत्रग्रहणमधःकायमलविसर्गोप-लक्षणार्थम् । तेन मूत्रपुरीषे वर्त्मनि भस्मनि गोष्ठे च न कुर्यात् ॥ ४५ ॥

( ४ ) **राघवानन्दः** । किंच नेति । मूत्रपदं पुरीषस्याप्युपलक्षणं अमेध्यत्वाविशेषात् ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । एकवासा अन्नं नाद्यात् नभक्षयेत् ॥ ४५ ॥

**न फालकृष्टे न जले न चित्यां न च पर्वते ॥ न जीर्णदेवायतने न वल्मीके कदाचन ॥ ४६ ॥**

( १ ) **मेधातिथिः** । चित्यां अग्न्यर्थइष्टकाकूटेपर्वतग्रहणं अरण्योद्यानोपलक्षणार्थं तथाहिविशेषप्रतिषेधोभविष्यति। पर्वतमस्तकइतिसामान्येनचइतिप्रतिषेधः । पर्वतवासिनाममेहनप्रसङ्गः । वल्मीकः कृमिकृतोमृत्तिकासञ्चयः ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । नपर्वतेपर्वतोपत्यकायां न जीर्णदेवायतनइति जीर्णे शीर्णप्राकारादौ तथा देवतायतने-चेत्यर्थः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । तथा फालकृष्टे क्षेत्रादावुदकेऽग्न्यर्थकृतेष्टकाचये पर्वते चिरंतनदेवतागारे कृमिकृतमृत्तिकाचये च विण्मूत्रोत्सर्गंन कदाचन कुर्यात् ॥ ४६ ॥

( ४ ) **राघवानन्दः** । चित्यां अग्निदग्धेष्टकाचये श्मशाननिषेधेन शवदाहचितेर्निषेधात् । वल्मीकस्य सदासत्वेनक-दाचनेत्युक्तम् ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । फालकृष्टे हलोत्कृष्टे क्षेत्रेमूत्रपुरीषे न कुर्यात् ॥ ४६ ॥

**न ससत्वेषु गर्तेषु न गच्छन्नापि च स्थितः ॥ न नदीतीरमासाद्य न च पर्वतमस्तके ॥ ४७ ॥**

( १ ) **मेधातिथिः** । नगच्छन्नापिसंस्थितः । गच्छतस्तिष्ठतश्चप्रतिषेधादासीनस्याभ्यनुज्ञानं । नचासनेनद्यास्तीरे-नदीजलेनसंसर्गशङ्कायत्रभवति तथासन्नपर्वतस्यमस्तकशृङ्गम् ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । स्थितउत्थितः । आसाद्यात्यन्तासन्नंकृत्वा पर्वतमस्तके अधित्यकायां । अफालकृष्ट-इत्यादिश्लोकद्वयं कैश्चिन्नलिखितम् ॥४७॥

( ३ ) **कुल्लूकः** । तथा सप्राणिषुबिलेषु न व्रजन्न चोत्थितोन नदीतटमाश्रित्य नापि पर्वतशृङ्गे मूत्रपुरीषे कुर्यात् पर्वतनिषेधादेव तच्छृङ्गनिषेधे सिद्धे पुनःपर्वतशृङ्गनिषेधस्तदितरपर्वते विकल्पार्थः तत्रेच्छाविकल्पस्यान्यथापि प्राप्तौ सामान्यनिषेधवैयर्थ्याद्यवस्थितोऽत्र विकल्पःअत्यन्तार्तस्य पर्वते न दोषः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । न ससत्वेषु प्राणियुक्तेषु । स्थितः । ऊर्ध्वमिति शेषः । पर्वतवासिनांतत्त्यागासंभवेन पर्वतम-स्तकग्रहणमत्यन्तनिषेधार्थम् ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह नेति ससत्वेषु सजीवेषु गर्तेषु विण्मूत्रस्य विसर्जनं न कुर्यात् ॥ ४७ ॥

**वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाः ॥ न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥ ४८ ॥**

( १ ) **मेधातिथिः** । संमुखीनत्वाद्वाय्वादीनामङ्गविप्रेक्षितेनापिनमूत्रयन्पश्येत् । वायोश्चारूपत्वाद्दर्शनंतत्प्रेरितवर्णलो-

( ४६ ) कदाचन=नशाद्वले ( ड, ढ, )

ष्टादिभ्रमणादवसेयं । वाक्यचक्रेत्वयंप्रतिषेधोविप्रयुक्तः । सर्वतोहिवायुर्वाति ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । वाय्वग्निविप्रमित्यादिना तत्संमुखतयाऽवश्यकर्मनिषेधः । वायुंपश्यन्प्रत्यक्षीकुर्वन् संमुखागच्छद्वातत्स्थानइत्यर्थः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । वायुमग्निंब्राह्मणंसूर्यंजलंगांच पश्यन्न कदापि मूत्रपुरीषोत्सर्गंकुर्यात् । वायोररूपत्वेनदर्शनासंभवे वात्या प्रेरिततृणकाष्ठादिनिषेधोऽयम् ॥ ४८ ॥

( ४ ) **राघवानन्दः** । वाय्वादिगवान्तान्षट्पश्यन्न मेहेतेत्यन्वयः ॥ ४८ ॥

**तिरस्कृत्योच्चरेत्काष्ठलोष्ठपत्रतृणादिना ॥ नियम्य प्रयतोवाचं संवीताङ्गोऽवगुण्ठितः ॥ ४९ ॥**

( १ ) **मेधातिथिः** । अस्यार्थवादः । तिरस्कृत्यांतर्धायकाष्ठादितदुपरिमूत्रयेत् । आवरणंतिरस्कारः काष्ठादिभिर्भूमिंछादयित्वोच्चरेत् । तृतीयान्तपाठस्तदास्पष्टपरः काष्ठैःपत्रेणतृणेनवाभ्युच्चरेत् । मूत्रंपुरीषंचोत्सृजेत् । नियमोविधानं । प्रयतःअनुच्छिष्टःसंवीताङ्गःआच्छादितशरीरःअवगुण्ठितःशिरःप्रावृत्य । अन्यत्रोक्तं कर्णस्थब्रह्मसूत्रेतिमूत्रोच्चारमुत्सर्गत्यागम् ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । तिरस्कृत्य भूम्याच्छादनंकृत्वा नियम्यवाचं मौनी प्रयतःशुचिःसंवीताङ्गोवस्त्रावृताङ्गः । अवगुण्ठितः प्रच्छादितशिराः ॥ ४९ ॥

( ३ ) **कुल्लूकः** । अन्तर्धाय काष्ठादिना भूमिमवागनुच्छिष्टःप्रच्छादिताङ्गोऽवगुण्ठितशिरामूत्रपुरीषोत्सर्गंकुर्यात् । शुष्कैस्तृणैर्वा काष्ठैर्वा पर्णैर्वेणुदलेन वा । मृन्मयैर्भाजनैर्वापि अन्तर्द्धाय वसुंधरामितिवायुपुराणवचनात् । शुष्कानि काष्ठपत्रतृणानि ज्ञेयानि ॥ ४९ ॥

( ४ ) **राघवानन्दः** । विण्मूत्रयोस्त्यागस्यरागतः प्राप्तिमनूद्य तत्रेतिकर्तव्यतामाह । तिरस्कृत्येतित्रिभिः तिरस्कृत्य काष्ठादिभिरन्तधार्य । संविताङ्गसंवृतकरचरणः । अवगुण्ठितोवस्त्राद्याच्छादितः ॥ ४९ ॥

( ५ ) **नन्दनः** । तिरःशब्देनात्र तिरोधानसाधनंविवक्षितम् । काष्ठंतिरस्कृत्यकाष्ठंभूमेस्तिरोधानसाधनंकृत्वेत्यर्थः । उच्चारः पुरीषोत्सर्जनं । मूत्रस्याप्युपलक्षणमेतत् ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । पुरीषोत्सर्गमाह तिरस्कृत्येति । काष्ठंवा पत्रं लोष्टं तृणानि वा तिरस्कृत्य प्रसार्य उच्चरेत् पुरीषंकुर्यात् वाचंनियम्य संप्रवीताङ्गः अवगुण्ठिताङ्गः शिरोवेष्टनंकुर्यात् ॥ ४९ ॥

**मूत्रोच्चारसमुत्सर्गंदिवा कुर्यादुदङ्मुखः ॥ दक्षिणाभिमुखोरात्रौ सन्ध्ययोश्च यथा दिवा ॥ ५० ॥**

( २ ) **सर्वज्ञनारायणः** । अतःसन्ध्ययोश्च यथादिवेतिचतुर्थपादस्थाने स्वस्थोऽनाशायचेतसइतिक्वचित्पाठः । चेतसोबुद्धेरनाशाय ॥ ५० ॥

( ३ ) **कुल्लूकः** । मूत्रपुरीषोत्सर्गमहनि सन्ध्ययोश्चोत्तराभिमुखोरात्रौ चेद्दक्षिणामुखःकुर्यात् । धरणीधरस्तु स्वस्थोऽनाशाय चेतसइति चतुर्थपादंपठित्वा चेतसोबुद्धेरनाशायेतिव्याख्यातवान् । परंपरीयमाम्नायंहित्वा विद्वद्भिरादृतम् । पाठान्तरंव्यरचयन्मुधेह धरणीधरः ॥ ५० ॥

( ४ ) **राघवानन्दः** । उत्सर्गमलत्यागः ॥ ५० ॥

( ५ ) **नन्दनः** । अनेन दिङ्नियमेन सूर्यादिज्योतिषामाभिमुख्यमस्मिन्कर्मणि निवार्यते ॥ ५० ॥

( ६ ) **रामचन्द्रः** । सन्ध्ययोर्यथा दिवा उदङ्मुखः कुर्यात् ॥ ५० ॥

छायायामन्धकारे वा रात्रावहनि वा द्विजः ॥ यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥ ५१ ॥

( १ ) **मेधातिथिः** । छायाकुड्यकपाटादिभिः । सूर्यरश्मीनामावरणं । अन्धकारःमेघधूमिकास्वभानुरात्रिभूतोज्योतिरन्तरायोयथासुखमुखमस्येति ययाहि प्राङ्मुखंभवति तस्यामेवोच्चरेत् । यत्रदिग्भागोनज्ञायते अन्धकारेतत्रायंविधिः प्राणाबाधःप्राणपूजा भयंचौरादिकृतं केचिदिमंश्लोकमस्मिन्नध्याये नाधीयते ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । छायायांगृहमेघादिछायायांअन्धकारे महान्धकारे प्राणाबाधे तदकरणे व्याध्युत्पत्तौ मुखनियमस्य वासंभवे एवंभये चौरादिभये एषु चतुर्षु रात्रावहनि च न मुखनियमोस्तीत्यर्थः ॥ ५१ ॥

( ३ ) **कुल्लूकः** । रात्रौ छायायामन्धकारे वाऽहनि च्छायायांनीहाराद्यन्धकारेवा दिग्विशेषाज्ञाने सति चौरव्याघ्रादिकृतप्राणविनाशभयेषु च यथेप्सितमुखोमूत्रपुरीषे कुर्यात् ॥ ५१ ॥

( ४ ) **राघवानन्दः** । छायायां छायोपजीववृक्षस्य । प्राणबाधे व्याघ्रादिकृतभये ॥ ५१ ॥

( ५ ) **नन्दनः** । यतइदमाह च्छायायामिति । छायायांमूत्रपुरीषयोः कर्मवर्जयेदिति स्मृत्यन्तरेदर्शनात् । छायाशब्देन वर्जनीयोदुर्दिनपर्वतादिना महता व्यवधाने सूर्यस्य दिवातिरोभावोविवक्षितः । अन्धकारशब्देन रात्रौ ज्योतिषाम् । कुर्यान्मूत्रोच्चारसमुत्सर्गमित्येव ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । छायायां गृहमेध्यादिछायायां प्राणबाधभयेषु च यथासुखंकुर्यात् ॥ ५१ ॥

प्रत्यग्निंप्रतिसूर्यंच प्रतिसोमोदकद्विजान् ॥ प्रतिगांप्रतिवातंच प्रज्ञा नश्यति मेहतः ॥ ५२ ॥

( १ ) **मेधातिथिः** । अस्यार्थवादः । ननुचोदङ्मुखस्यमेहनविधानात्पूर्वस्यामुदयाच्चसूर्यस्यकुतस्तदाभिमुख्यंभवेद्येनप्रतिसूर्यंनिषिध्यते । अर्थवादोयं । नान्तरिक्षेनदिवीतिवत् । अथवोदगयनेऽदीचींदिशमाक्रमेत् । स्यात्संभवः प्रकृतविषयोवाप्रतिषेधः । प्रतिसन्ध्यमितिपठन्ति तदयुक्तं सन्ध्ययोश्चयथादिवेत्यनुज्ञानाद्वेगधारणस्यात्यन्तनिषिद्धत्वात् । तस्मात्प्रतिवातमितिपठितव्यं । पूर्वशेषोयंमेहतःशत्रंतस्तसन्तोवामेहतःपुरुषस्यमेहनाद्वा ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्यग्नीत्यादिना अग्न्यादीनपृष्ठभागे कृत्वा मेहनंनिषिद्धम् प्रत्यग्निअग्निप्रातिकूल्येन एवमुत्तरेषु । द्विजोब्राह्मणः । प्रतिगु गांपृष्ठे कृत्वा । क्वचित्प्रतिसन्ध्यमितिपाठः । तत्र सन्ध्योदये पूर्वतोस्तमये पश्चिमे भवतीतिव्यवस्थयाव्याख्या ॥ ५२ ॥

( ३ ) **कुल्लूकः** । वाय्वग्निविप्रमित्यनेन मेहतोऽग्न्यादीनांदर्शनंनिषिद्धम् । अनेन त्वपश्यतोऽपि संमुखीनत्वंनिषिध्यते । अग्निसूर्यचन्द्रजलब्राह्मणगोवाताभिमुखंमूत्रपुरीषे कुर्वतः प्रज्ञा नश्यति तस्मादेतन्नकर्तव्यम् । प्रतिवातमित्यस्य स्थाने प्रतिसंध्यमित्यन्ये पठन्ति ॥ ५२ ॥

( ४ ) **राघवानन्दः** । वाय्वग्निविप्रेत्युक्तंवाय्वादिदर्शननिषेधानुवादेन तत्करणे दोषमाह प्रत्यग्निमिति । प्रतिरत्र लक्षणे । वातं तृणादिसहितं वात्यारूपं तस्यैव दृष्टियोग्यत्वात् एतानभिमुखंकृत्वा मेहतोमूत्रपुरीषे समुत्सृजतः प्रज्ञानश्यतीत्यन्वयः । सोमोत्र लता ॥ ५२ ॥

( ५ ) **नन्दनः** । एतदेव व्यतिरेकेणोपपादयति प्रत्यग्निमिति । अग्न्यादीनामाभिमुख्ये कथितोदोषोनतेषांतिरोभावइत्यभिप्रायः । मेहनमुच्चारस्याप्युपलक्षणम् ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । प्रतिगुं गोः अभिमुखं । प्रतिवातं वायोरभिमुखं । मेहतः मूत्रादि कुर्वतः । प्रज्ञा बुद्धिर्नश्यति॥५२॥

**नाग्निंमुखेनोपधमेन्नग्नांनेक्षेत च स्त्रियम् ॥ नामेध्यंप्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ ५३ ॥**

( १ ) **मेधातिथिः** । धवित्रादिनाग्निर्ध्मातव्यः । नग्नांनेक्षेतस्त्रियम् अन्यत्रमैथुनादितिस्मृत्यन्तरं । नामेध्यंमेध्यो- यज्ञस्तदर्थमेध्यं अमेध्यंयदयज्ञीयं पलाण्डुमूत्रपुरीषादि तन्नाग्नौक्षिपेत् । उत्क्षिप्यसाक्षादग्नौनतापयेत् अवच्छाद्यतापयि- त्वास्वेदाद्यर्थमग्नितापनमदोषः ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । मुख्येन नलिकाद्यनन्तरितेन । ननग्नांस्त्रियमीक्षेतान्यत्र मैथुनादितिगृह्यम् । अमेध्यंमललशु- नादि ॥ ५३ ॥

( ३ ) **कुल्लूकः** । नाग्निर्मुखेन ध्मातव्यः किंतर्हि व्यजनादिना । न नग्नांस्त्रियमीक्षेत मैथुनादन्यत्रेतिसांख्यायनदर्श- नान्मैथुनव्यतिरेकेण नग्नांस्त्रियंन पश्येत् । अमेध्यंमूत्रपुरीषादिकंनाग्नौ क्षिपेत् । नच पादौ प्रतापयेत् । प्रशब्दादग्नौ पादावु- त्क्षिप्य साक्षान्न प्रतापयेत् । वस्त्रादितापस्वेदेऽविरोधः ॥ ५३ ॥

( ४ ) **राघवानन्दः** । प्रत्यग्निमितिप्रसंगेनाग्निविषये नियमान्तराण्याह नाग्निमितिद्वाभ्यां । व्यजनादिनाध्मातव्योलौ- किकाग्निः वैदिकाग्निस्तु मुखेनैवेत्यर्थः । स्त्रियमिति । तत्रापि मैथुनादन्यत्रेतिसाङ्ख्यायनगृह्यदर्शनात्तदतिरिक्तकाले ॥५३ ॥

( ५ ) **नन्दनः** । अग्निर्लौकिकाग्निश्रौताग्निंचोपधमेत् । मुखाद्ध्येषोऽभिजायतइतिवचनात् । स्त्रियंस्वभार्यांपरभार्यांच । अमेध्यमशुद्धंवस्तु ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । अथाग्निविधिमाह नाग्निमिति । मुखेन नलिकाद्यमृते अग्निं न धमेत् अग्नौ पादौ न प्रतापयेत् ॥ ५३ ॥

**अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् ॥ न चैनंपादतः कुर्यान्न प्राणाबाधमाचरेत् ॥ ५४ ॥**

( १ ) **मेधातिथिः** । खट्वास्थः अधस्तावद्वन्हिंधानीनकुर्यात् । उपधानंस्थानं अवलङ्घनमुत्प्लुत्यगमनं । पादतः- अप्लुतस्यपादौयेनकुर्यात्प्राणाबाधंप्राणपीडाकरमतिश्रमवेगागमनादिनाचरेत् ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । अधस्तात्स्वारूढखट्वादेः नोपदध्यादग्निं अवलङ्घयेदधःकृत्वा लङ्घयेत् । प्राणाबाधंरोगादि हेतुमत्यन्तायासादि ॥ ५४ ॥

( ३ ) **कुल्लूकः** । खट्वादिभ्योऽधस्तादङ्गारशकट्यादिकंन कुर्यात् । न चाग्निमुत्प्लुत्य गच्छेत् । नच सुप्तःपाददेशेऽग्निं- स्थापयेत् नच प्राणपीडाकरंकर्म कुर्यात् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । अधः खट्वादेः नोपदध्यान्न स्थापयेत् । पादतः पाददेशे । प्राणाबाधं प्राणिहिंसां न कुर्यात्। न हिंस्यात्सर्वाभूतान्यन्यत्रतीर्थेभ्यइति श्रुतेः अग्निसाध्यंप्राणिवधंवा प्रकरणात् ॥ ५४ ॥

( ५ ) **नन्दनः** । पादतः पादप्रसारणापदेशेन । न प्राणाबाधमाचरेदात्मनः परस्य च पीडांनकुर्यात् ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । अधस्तान्नोपदध्यात् पृष्ठस्याधस्तान्नाग्निंदध्यात् । एनं अग्निं न लङ्घयेत् । अग्निं पादतः पा- दस्याधस्तान्न कुर्यात् न प्राणबाधमाचरेत् रोगादिहेतुभूतप्राणबाधं नाचरेत् ॥ ५४ ॥

**नाश्नीयात्संधिवेलायां न गच्छेन्नापि संविशेत् ॥ न चैव प्रलिखेद्भूमिं नात्मनोपहरेत्स्रजम् ॥५५॥**

( १ ) **मेधातिथिः** । सन्ध्याकालः सन्धिवेला संवेशनंस्वापः स्वाध्यायंनिषेत्स्यति स्मृत्यन्तरेस्त्रीसंबन्धोपिप्रतिषि-

द्धः । चत्वार्येवतुकर्माणिसन्ध्याकालेतुवर्जयेत् । आहारंमैथुनंनिद्रांतथासंपाठमेवच ॥ नचैवप्रलिखेत्प्रकर्षेणलेखनंविदारणं-भूमेर्निषिध्यते । नतुवर्तिकादिनाक्षरविन्यासः नात्मनोपहरेत्स्रजं ग्रथितानिपुष्पाणिस्रक् तां स्वयंकण्ठेशिरसिवा प्रधृतां म्लानतयागुरुत्वेनवात्मनोनव्यपनयेत् । अर्थादन्येनापनयेदित्युक्तंभवति । सर्वएवायंसन्ध्यायांविधिरितिकेचित् ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । सन्धिःसन्ध्या । गच्छेदध्वानं । संविशेत् शयीत सन्ध्यायां । प्रलिखेदुत्किरेत् नान्यदपि अपहरेत्अपनयेत् आत्मनःशिरस्तःस्रजम् ॥ ५५ ॥

( ३ ) **कुल्लूकः** । सन्ध्याकाले भोजनंग्रामान्तरगमनंनिद्रांच न कुर्यात् । नच रेखादिना भूमिमुल्लिखेत् । नच मालां-धृतांस्वयमेवापनयेत् अर्थादन्येनापनयेदित्युक्तम् ॥ ५५ ॥

( ४ ) **राघवानन्दः** । भोजनादिनिषिद्धकालमाह । सन्धिवेलायां त्रिसन्ध्यादौ न गच्छेत् स्त्रियमपि नसंविशेन्नस्वपे-न्नोपहरेत् स्वयमितिशेषः ॥ ५५ ॥

( ५ ) **नन्दनः** । नात्मनोपहरेत्स्रजमात्मार्थेस्रजंमालांस्वयंनहरेत् ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । सन्धिवेलायां सन्ध्यायां नाश्नीयात् । न भोजनं कुर्यात् सन्ध्यायां न गच्छेत् संध्यायांन सं-विशेत् । भूमिं पादनखेन नालिखेत् । आत्मनाशिरसः स्रजंनोपहरेत् ॥ ५५॥

**नाप्सु मूत्रं पुरीषंवा ष्ठीवनं वा समुत्सृजेत् ॥ अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥५६॥**

( १ ) **मेधातिथिः** । लोहितंरुधिरं विषाणीतिबहुवचनं कृत्रिमाकृत्रिमभेदेनस्थावरजङ्गमभेदेनरागादिप्रकारभेदेन वा ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । अमेध्यैर्विष्ठादिभिर्लिप्तं काष्ठादि अन्यद्वालशुनादि । लोहितपदंमलान्तरलक्षणम् । विषा-णि परैर्जलस्योदपानार्थम् ॥ ५६ ॥

( ३ ) **कुल्लूकः** । मूत्रंपुरीषंश्लेष्माणंमूत्राद्यमेध्यलिप्तवस्त्रमन्यद्वा भुक्तोच्छिष्टाद्यमेध्यंरुधिरंविषाणि च कृत्रिमाकृत्रिम-भेदभिन्नानि न जले प्रक्षिपेत् ॥ ५६ ॥

( ४ ) **राघवानन्दः** । आपो वै सर्वादेवताइतिश्रुतेस्तामाश्रित्याप्सुमूत्रादिसमकंनकार्यमित्याह नेति । निष्ठीवनं मुखरसं श्लेष्माणंवा अमेध्यलिप्तं वस्त्रादि अन्यत् भुक्तोच्छिष्टादि ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । अप्सु जलमध्ये मूत्रादिकंन समुत्सृजेत् । अमेध्यंविष्ठादिलिप्तंलोहितं रुधिरं विषाणि वा अप्सु नक्षिपेत् ॥ ५६ ॥

**नैकः सुप्याच्छून्यगेहे श्रेयांसं न प्रबोधयेत् ॥ नोदक्ययाभिभाषेत यज्ञं गच्छेन्न चावृतः ॥ ५७॥**

**[एकः स्वादु न भुञ्जीत स्वार्थमेकोन चिन्तयेत् ॥ एकोन गच्छेदध्वानं नैकः सुप्तेषु जागृयात्॥१॥]+**

( १ ) **मेधातिथिः** । शून्यंगृहंयत्रनकश्चित्प्रतिवसति । नश्रेयांसंकनीयान्वृत्तादिभिर्ज्येष्ठमिदंतेयुक्तमिदमयुक्तमितिहेतू-पदेशादिना नप्रेबाधयेत् । उदक्यारजस्वलातयासहसंभाषणंनकुर्यात् । यज्ञंगच्छेन्नचावृतः यज्ञभूमिमनिमन्त्रितोनगच्छेद्द-र्शनायतुकाममितिगौतमः । अतोयज्ञभोजनादिप्रतिषेधोऽयमवृतस्य ॥ ५७ ॥

---

+ ( ट, ड, ढ )

( २ ) **सर्वज्ञनारायणः** । श्रेयांसंव्रतोज्येष्ठंनिद्राणंन बोधयेत् । शयानमितिक्वचित्पाठः । तत्र यंकंचिन्निद्राणमित्यर्थः । अवृतोयजमानेनानामन्त्रितः प्रसर्पकदक्षिणादिलोभेन न गच्छेत् अत्र धर्मदर्शनाय तु कामंगच्छेदिति गौतमः ॥५७॥

( ३ ) **कुल्लूकः** । उत्सन्नजनवासगेहे नैकः शयीत वित्तविद्यादिभिरधिकंच सुप्तं न प्रबोधयेत् । रजस्वलया संभाषणंन कुर्यात् । यज्ञंचाकृतवरणोऽनृत्विङ्ग गच्छेत् दर्शनायेच्छयागच्छेत् । दर्शनार्थेकाममितिगौतमवचनात् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । दुर्भिषज्यंहास्मैभवतियमेषनप्रतिपद्यतइतिश्रुतेः यमिति यमिन्द्रियदेशंनप्रतिपद्यत आत्मातद्दुश्चिकित्संभवतीतिश्रुतेरर्थोतः शयानंन प्रबोधयेत् मलवद्वाससा नसंवदेदिति श्रुतिमाश्रित्याह नोदक्ययेति उदक्यया रजस्वलया ऋत्विक् सन् अवृतो ऽनाहूतः अध्वरंनगच्छेत् ॥ ५७ ॥

( ५ ) **नन्दनः** । श्रेयांसंपूज्यंसुप्तमनापदि नं प्रबोधयेत् । न यज्ञमप्रयतोव्रजेत् आर्त्विज्यमकरिष्यन्नवृतोयज्ञशालां न गच्छेत् ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । शयानं श्रेयांसं श्रेष्ठं वयोधिकं न प्रबोधयेत् उदक्यया रजस्वलया नाभिभाषेत । आवृतः बहुवस्त्राणि परिधाय यज्ञंन गच्छेत् ॥ ५७ ॥

**अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च सन्निधौ ॥ स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥५८॥**

( १ ) **मेधातिथिः** । गोष्ठशब्दोयंनिवासवचनः समासप्रतिरूपकाल; शब्दान्तरंब्राह्मणानामितिबहुवचनंविवक्षितं । पाणिग्रहणं बाहूपलक्षणार्थं । भोजनेआत्मकर्तृके ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । गवांगोष्ठइति गोष्ठपदस्य समुदायमात्रार्थतामभिप्रेत्य गवामितिविशेषणम् । उद्धरेत् उत्तरीयाद्वहिः पाणिहस्तं कुर्यात् ॥ ५८ ॥

( ३ ) **कुल्लूकः** । अग्निगृहे गवांनिवासे ब्राह्मणानांगवांसमीपे स्वाध्यायभोजनकालयोश्च दक्षिणपाणिंसबाहुंवाससउद्धरेद्बहिष्कुर्यात् ॥ ५८ ॥

( ४ ) **राघवानन्दः** । किंचाग्नीति । अग्न्यागारादिपञ्चसुपाणिमुद्धरेत् वस्त्रादेर्बहिष्कुर्यात् ॥ ५८ ॥

( ५ ) **नन्दनः** । दक्षिणंबाहुमुद्धरेद्यज्ञोपवीती स्यादित्यर्थः । दक्षिणंबाहुमुद्धरतेवधत्ते सव्यमिति यज्ञोपवीतमिति हि श्रूयते ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । अग्न्यागारादिस्थाने दक्षिणपाणिं उत्तरीयाद्वहिः उद्धरेत् ॥ ५८ ॥

**न वारयेद्गां धयन्तीं न चाचक्षीत कस्यचित् ॥ न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः ॥ ५९ ॥**

( १ ) **मेधातिथिः** । गामात्मीयांपरकीयांवापिबन्तींमपःपयोवानवारयेत् । नचान्यस्मैकथयेत् । प्राग्दोहकालादयंविधिः । दोहकालेतुप्रस्नवर्णविहितं । स्त्रीलिङ्गनिर्देशात् पुंवत्सनिवारणेननिषेधः । इन्द्रायुधंशक्रधनुर्विज्ञानच्छायेतियाकाश्मीरेषुकथ्यते । दिवोत्यनुवादः । केचित्तुपर्वतादिस्थस्यदर्शनेनदोषइत्याहुस्तदर्थेदिवीति ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । गां धयन्तीं जलंपिबन्तीम् ॥ ५९ ॥

( ३ ) **कुल्लूकः** । गांजलंक्षीरंवा पिबन्तींन निवारयेत् दोहनार्थवारणादन्यत्र निषेधः । नापि परकीयक्षीरादि पिबन्तींतस्य कथयेत् । न चेन्द्रधनुराकाशे दृष्ट्वा निषिद्धदर्शनदोषज्ञः कस्यचिद्दर्शयेत् ॥ ५९ ॥

( ४ ) **राघवानन्दः** । किंच नेति । धयन्तीं वत्संपाययन्तीं नाचक्षीत न कथयेत् । इन्द्रायुधं शक्रधनुः दिवीति स्पष्टम् ॥ ५९ ॥

( ५ ) **नन्दनः** । धयन्तींपिबन्तींजलंस्तन्यंच दिवीतिविशेषणाज्जले न दोषइतिसूचितम् ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । धयन्तींपिबन्तींगां न निवारयेत् न चाचक्षीत न प्रकथयेत् ॥ ५९ ॥

**नाधार्मिके वसेद्ग्रामे न व्याधिबहुले भृशम् ॥ नैकः प्रपद्येताध्वानं न चिरं पर्वते वसेत् ॥ ६० ॥**

( १ ) **मेधातिथिः** । अधार्मिकाः पातकोपपातकिनोयत्रबाहुल्येन वसन्ति सग्रामस्तत्संबन्धादधार्मिकइत्युच्यते तत्रनवसेत् । ग्रामग्रहणंनिवासदेशोपलक्षणार्थं । तेननगरेपिप्रतिषेधः । व्याधिबहुलोऽनूपोदेशो व्याधिबहुलेजाङ्गलदेशे नवसेत् । यत्रदैवदोषाद्व्याधयः प्रवृत्तास्तंदेशंत्यजेत् । एकः असहायोनाध्वानंप्रपद्येत ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । अधार्मिके धर्मविरोधिनि कलिङ्गादिदेशमध्ये । प्रपद्येत संचरेत् ॥ ६० ॥

( ३ ) **कुल्लूकः** । अधार्मिकइत्यनेन यत्राधार्मिकावसन्ति न तत्र वासोयुक्तः । यत्रवा निन्दितदुश्चिकित्सितव्याधिपीडिताबहवोजनास्तत्र भृशमत्यर्थंवासोन युक्तः । पन्थानमेकः कदापि न गच्छेत् पर्वतेच दीर्घकालं नवसेत् ॥ ६० ॥

( ४ ) **राघवानन्दः** । नजनमियान्नान्तमियादिति श्रुतिमाश्रित्याह नाधार्मिकइतिद्वाभ्यां । ग्रामइति वसतियोग्यपरं कार्यवशाद्व्याधिबहुले भृशं बहुकालम् ॥ ६० ॥

( ६ ) **रामचन्द्रः** । अधार्मिके देशेअङ्गवङ्गादिदेशे न वसेत् ॥ ६० ॥

**न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते ॥ न पाषण्डिगणाक्रान्ते नोपसृष्टेन्त्यजैर्नृभिः ॥ ६१ ॥**

( १ ) **मेधातिथिः** । नृपतिजनपदैश्वर्यंराज्यं । योजनपदः शूद्रवशवर्तीतत्रनवसेत् । मन्त्रिसेनापतिदण्डकारिकाद्याः समप्रकृतयोराज्यं यत्रसर्वाःशूद्रजातीयाः तत्रनिवासनिषेधोयं । ननुचनाधार्मिकेवसेदित्यनेनैवतत्सिद्धमधार्मिकजनावृतइति नैषदोषःपूर्वप्रतिषेधोयत्रतेनिवसन्ति । अयंपुनरन्यत्रापिनिवसतोन्यत्रसन्निहितायदिभवन्तितथापितत्रप्रदेशेनवसितव्यं । तथाचावृतग्रहणमत्रयःप्रदेशएतैरावृतोनतत्रस्थातव्यं । एवंपाखण्डिजनैर्यआक्रान्तोदेशः यद्यप्यधर्मिकास्तेवेदबाह्यत्वात्तथापितेषांधर्मबुद्धिरितिभेदेननिर्देशः । अन्त्यैरुपसृष्टेसंबद्धे अथवा उपतप्तउपसृष्टेयथावाह्लीकाम्लेच्छैः ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । अधार्मिकजनैःपतितादिभिरावृते । उपसृष्टेसंमिश्रिते ॥ ६१ ॥

( ३ ) **कुल्लूकः** । यत्र देशे शूद्रोराजा तत्र न वसेत् । अधार्मिकजनैश्च बाह्यतः परिवृते ग्रामादौ न वसेदित्यपुनरुक्तिः । पाषण्डिभिश्च वेदबाह्यलिङ्गधारिभिर्वशीकृते चाण्डालादिभिश्चान्त्यजैरुपद्रुते न वसेत् ॥ ६१ ॥

( ४ ) **राघवानन्दः** । अधार्मिकाश्चण्डालाद्यास्तैर्बाह्याभ्यन्तरतः सर्वदावृते । पाखण्डाअवैदिकव्रतस्थास्तैराक्रान्ते तत्रधर्मस्यकर्तुमशक्यत्वात् । उपसृष्टमन्तरान्तरा प्रवेशोऽन्त्यजकृतोयत्र तस्मिन् न जनमधार्मिकमियात् नान्तंतैराक्रान्तं देशंच नेयान्नगच्छेदिति श्रुतेरर्थः ॥ ६१ ॥

( ५ ) **नन्दनः** । क्षत्रियराज्येऽपिनाधार्मिकजनावृते । उपसृष्टे आवासिते उपद्रुते वा ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । पाषण्डिजनैराक्रान्ते आकीर्णे न वसेत् । अन्त्यजैर्नृभिः सह उपसृष्टे मिलिते न वसेत् ॥ ६१ ॥

**न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ॥ नातिप्रगे नातिसायं न सायं प्रातराशितः ॥ ६२ ॥**

( १ ) **मेधातिथिः** । उपनीतःस्नेहोयस्यसनाशितव्यः पिण्याकयूषमांसानिनस्यक्रतुपर्युषितानांपयोविकाराणांप्रतिप्र-

---

( ६२ ) नसायंप्रातराशितः=नातिमध्यंदिनेस्थिते ( ख )

सर्वंकरिष्यति । तक्रकिलाटाद्यपेक्षयैवबहुवचनं साक्षाद्विकारोहिदध्येव । तन्मात्रप्रसवेभिप्रेतेदधिग्रहणमेवाकरिष्यत् । तेनाविधानार्थः नहिदध्नः पर्युषितत्वमस्तितस्मादुदश्वित्तक्रकिलाटादिकानांपयोविकाराणांनायंप्रतिषेधः। नातिसौहित्यंतृप्तिंनकुर्यात् । तत्रकुक्षेर्भागः । एकोह्यन्नस्यअपरोहिद्रुतस्योदकादेः अपरोदोषसंचरणार्थइत्येवंभोक्तव्यर्मितिनतत्कार्यं । अतिप्रगेप्राण्हेप्रथमोदितएवसूर्येनभुञ्जीत । प्रहरेअतीतेकुशानांपूर्वाह्णेइतरेषांमध्यान्हे । नातिसायं अस्तमयसमयेभुञ्जीत । नसायंभुञ्जन्प्रातराशितस्तृप्तस्तस्मात्साकांक्षमशितव्यंकालद्वयेपि । तदुक्तं सायंप्रातर्मनुष्याणामशनदेवनिर्मितमिति । यदितुप्रातास्तृप्तःस्यात्सायंनभुञ्जीत अथवैवंव्याख्यायते नसायंप्रातराशितःस्यात्उभयोरन्नकालयोर्नतृप्येत् । तथाचयाज्ञवल्क्यः सायमीषद्भोजनमाह ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । उद्धृतस्नेहंपिण्याकादि तक्रेतु वचनाददोषः । अतिसौहित्यमत्यशनं । नातिप्रगेनातिप्रातः सङ्गवे नातिसायमस्तमयानन्तरं । यदि प्रातराशितोभुक्तवांस्तदा नासायं सायमेव भुञ्जीत ॥ ६२ ॥

( ३ ) **कुल्लूकः** । उद्धृतस्नेहंपिण्याकादि न भुञ्जीत । अतितृप्तिंवारद्वयेऽपि न कुर्यात् । जठरंपूरयेदर्धमन्नैर्भागंजलेन च । वायोः संचरणार्थंतु चतुर्थमवशेषयेदित्यादिविष्णुपुराणवचनात् । सूर्योदयकाले सूर्यास्तमये भोजनंन कुर्यात् । प्रातराशितोऽतितृप्तःसायंन भुञ्जीत ॥ ६२ ॥

( ४ ) **राघवानन्दः** । भोजनस्यापि रागप्राप्तत्वेन तदाश्रित्य तद्विशेषंनिषेधति न भुञ्जीतेति । उद्धृतस्नेहं तिलपिण्याकादि । सौहित्यं सुहिततामतीवस्निग्धताम् । जठरंपूरयेदर्धमन्नैर्भागंजलेनतु । वायोःसंचरणार्थाय चतुर्थमवशेषयेदितिपुराणोक्तेः । प्रगे प्रातः प्रातराशितः अतितृप्तः सायंन भुञ्जीत ॥ ६२ ॥

( ५ ) **नन्दनः** । उद्धृतस्नेहंपिण्याकादि । अतिसौहित्यमत्यन्तसंपन्नभोजनम् । अतिप्रगेऽपररात्रे । अतिसायंअर्धरात्रे । नसायंप्रातराशितोरात्रावन्हि वा द्विर्न भुञ्जीतेत्यर्थः ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । उद्धृतस्नेहंउद्धृतसारंन भुञ्जीत । अतिसौहित्यं अत्यशनं नाचरेत् । अतिप्रगे सङ्गवे न भुञ्जीत नातिसायं नक्षत्रदर्शनपर्यन्तं न भुञ्जीत । प्रातर्भुक्त्वानसायं भुञ्जीत । सायंकालादनन्तरं भुञ्जीतेत्यर्थः ॥ ६२ ॥

**न कुर्वीत वृथाचेष्टां न वार्यञ्जलिना पिबेत् ॥ नोत्सङ्गे भक्षयेद्भक्ष्यान्न जातु स्यात्कुतूहली ॥ ६३ ॥**

( १ ) **मेधातिथिः** । वृथाचेष्टादृष्टादृष्टयोर्व्यापारयोरनुपकारः । यथाइतरदेशादिवार्तापरत्वं । संहतौपाणीअञ्जलिः तेनोदकंनपिबेत् । वारिग्रहणातक्षीरादीनामप्रतिषेधः । न उत्सङ्गेभक्ष्याधानाशष्कुल्यादयस्तानुत्सङ्गउर्वोरुपरिनभक्षयेत् । भक्ष्यग्रहणात्फलानामपिप्रतिषेधः । सक्तोदनादेस्तुनिरुपसेचनीयस्यानदनीयत्वादुत्सङ्गेप्राप्तिरेवनास्ति । कुतूहलं असतिप्रयोजनेकिमेतत्स्यादितिनिश्चयेअत्यर्थमुत्कलिका नजातु कदाचित् ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः** । वृथाचेष्टांवृथाटनादि । उत्सङ्गेउत्सङ्गस्थान् । कुतूहली सर्वत्राश्चर्य प्रत्ययवान् ॥ ६३ ॥

( ३ ) **कुल्लूकः** । दृष्टादृष्टार्थशून्यंव्यापारंन कुर्यात् । अञ्जलिना च जलंन पिबेत् ऊर्वोरुपरि विन्यस्य मोदकादीन्न भक्षयेत् । असति प्रयोजने किमेतदितिजिज्ञासा कुतूहलं तन्नकदाचित् कुर्यात् ॥ ६३ ॥

( ४ ) **राघवानन्दः** । किंच नेति । वृथा दृष्टादृष्टादिशून्यां सरटदन्तान्वेषणादिवद्राजादिजिज्ञासया कुतूहली न स्यात् । उत्सङ्गे क्रोडे स्थापयित्वेति ॥ ६३ ॥

( ५ ) **नन्दनः** । उत्सङ्गे निधायेतिशेषः । ६३ ॥

( ६ ) **रामचन्द्रः** । वृथाचेष्टादृष्टादृष्टयोःव्यापारयोरनुपकारः न कुर्वीत । जातु कदाचिदपि कुतूहली परिहासी न भवेत् ॥ ६३ ॥

## न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ॥ नास्फोटयेन्न च क्ष्वेडेन्न च रक्तोविरावयेत् ॥६४॥

( १ ) **मेधातिथिः** । नर्तनंगात्रविक्षेपविशेषःलोकप्रसिद्धएव गायनंषड्जादिस्वरतःशब्दस्यकरणं । लौकिकस्यचायंप्रतिषेधोनवैदिकस्य विहितत्वात् । वादित्राणिवीणावंशमृदङ्गादीनितेषांस्वयंकर्तृकंवादनंप्रतिषिध्यते । वादकैस्तुवाद्यमानानामयंप्रतिषेधोन । नहिण्यन्तादयंणिजन्तइतिप्रमाणमस्ति । आस्फोटनंकरमर्दास्फोटनादिपाणिनाभूमौबहुनिर्घातःसशब्दःक्ष्वेडेति । अव्यक्तंदन्तैःशब्दकरणं क्ष्वेडनिकेतिप्रसिद्धा । वल्गनं अन्योरागीपरितुष्टोनविरोधयेत् । विरोधंनकुर्यात् । पीडिते ननिषेधःघञन्ताण्णिच्कर्तव्यः ॥ ६४॥

( २ ) **सर्वज्ञनारायणः** । आस्फोटयेदंसताडनेन शब्दंकुर्यात् । क्ष्वेडेत् सिंहनादंन कुर्यात् । रक्तोरागोद्रेकात् विरावयेत् विकृतंशब्दंकुर्यात् । स्वार्थेणिच् । रक्तोपि रागयेदिति क्वचित्पाठः । तत्र स्वयंयत्र रक्तस्तत्रान्यमपि रागिणंन कुर्यादित्यर्थः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । अशास्त्रीयाणि नृत्यगीतवाद्यानि नाचरेत् । पाणिना बाहौ ध्वनिरूपमास्फोटनंन कुर्यात् अव्यक्तदन्तशब्दात्मकंक्ष्वेडनंन कुर्यात् । नच सानुरागोरासभादिरावंकुर्यात् ॥ ६४ ॥

( ४ ) **राघवानन्दः** । किंच शास्त्राप्रतिपादितानि नृत्यादीनि नाचरेदित्याह ननृत्येदिति । पाणिना बाहुपर्वणि स्फोटनं क्ष्वेडनंअव्यक्तदन्तशब्दात्मकं विषादिभिर्वाक्रीडातन्न कुर्यादित्यर्थः । विरावोत्र रासभादिशब्दस्तंनकुर्यादित्यर्थः॥६४॥

( ५ ) **नन्दनः** । स्फोटोऽङ्गुलिपर्वभङ्गजातः शब्दः । क्ष्वेडोऽङ्गुल्यास्यसंयोगजातः । संरक्तोपिकामपरवशोऽपि मैथुनादिषु नरावयेन्न कपोतकूजितादिशब्दंकुर्यात् ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । च पुनः न क्ष्वेडेत् अव्यक्त शब्दकरणंन क्रीडेत् । च पुनः रक्तः स्त्रिया सह विकृतशब्दंन रावयेत् ॥ ६४ ॥

## न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ॥ न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ॥६५॥

( १ ) **मेधातिथिः**। कांस्येभाजनेपादौनप्रक्षालयेत् । भिन्नभाण्डेएकदेशभिन्नेपि सर्वभिन्नेष्वर्थतएवप्रतिषेधः पत्रपुटकादीनांतुभिन्नभाण्डाव्यवहारात्छिद्रितानामपिनदोषः । भावः अन्तर्हृदयाभिप्रायः यत्रमनोनपरितुष्यति । शब्ददुष्टेवाएतद्दृहादौतत्रापिनैवंभावप्रसादोभवति ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । कांस्ये कांस्यमये पात्रे भिन्नेभाण्डे कांस्ये मार्तिके दारवे वा । भावतोदूषिते दुष्टत्वशङ्कास्पदे ॥ ६५ ॥

( ३ ) **कुल्लूकः** । कांस्यपात्रे कदाचित्पादौ न प्रक्षालयेत् ताम्ररजतसुवर्णानांभिन्नमभिन्नंवेति न दोषइति पैठीनसिवचनादेतद्व्यतिरिक्तभिन्नभाण्डे न भोजनंकुर्यात् । यत्र मनोविचिकित्सति तद्भावदुष्टं न तत्र भुञ्जीत ॥६५ ॥

( ४ ) **राघवानन्दः** । धावयेत्प्रक्षालयेत् भाजनेभोजनपात्रइति स्वतन्त्रंवा । ताम्ररजतसुवर्णानांभिन्नमभिन्नंवेति न दोषइतिपैठीनसिवचनात्तदतिरिक्तपरंभिन्नभाण्डइति । यत्र मनोविचिकित्सति तद्भावदुष्टं तत्रापिनाद्यात् ॥ ६५ ॥

---

( ६४ ) विरावयेत्=विरोधयेत् ( मे० )

( ५ ) **नन्दनः** । भावप्रतिदूषितेअहृद्ये भाण्डे ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । भिन्नभाण्डे स्फुटितकांस्यभाजने न भुञ्जीत । भावप्रतिदूषिते भाण्डे न भुञ्जीत ॥ ६५ ॥

**उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ॥ उपवीतमलङ्कारं स्रजं करकमेव च ॥६६॥**

( १ ) **मेधातिथिः** । पित्रादिभ्योऽन्यैर्धृतंनधारयेत् । निर्णिज्याशक्तावितिगौतमः । करकःकमण्डलुस्तस्यपित्रादिधृतस्यापिधारणंसमाचारविरुद्धंसंबन्धिरूपोसाविष्यते । यस्यैवसंबन्धितस्यैवशुचिर्नान्यस्य । अलङ्कारोदन्तवलयादिःकरकादिभिरल्पार्थैःसाहचर्यात् । मणिमुक्तादेस्तुननिषेधइतिकेचित् ॥ ६६ ॥

( २ ) **सर्वज्ञनारायणः** । करकंमृत्कमण्डलुं । धृतंपरिगृहीतम् ॥ ६६ ॥

( ३ ) **कुल्लूकः** । उपानद्वस्त्रयज्ञोपवीतालङ्कारपुष्पमालाकमण्डलून्परोपभुक्तान्न धारयेत् ॥ ६६ ॥

( ४ ) **राघवानन्दः** । किंचोपेति । करकं कमण्डलुं जायापत्यंकमण्डलुरिति स्मृतेः । उपवीतादिषट्कमन्यैः धृतमुपभुक्तं न धारयेदित्यर्थः ॥ ६६ ॥

( ५ ) **नन्दनः** । करकंकमण्डलुम् ॥ ६६ ॥

( ६ ) **रामचन्द्रः** । च पुनः करकमेव अन्यस्य जलपात्रंन धारयेत् ॥ ६६ ॥

**नाविनीतैर्व्रजेद्धुर्यैर्न च क्षुद्व्याधिपीडितैः ॥ न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥ ६७ ॥**

( १ ) **मेधातिथिः** । अविनीताअदान्तागावोश्वाश्वतरादयः । धुर्याधुरंवहन्तियुज्यन्ते । गन्त्र्यादेरुपलक्षणंच ग्रहणं-अनियुक्तैरपिधुरिकेवलैरदान्तैः। अविनीताअदान्ताः गमनंनेष्यते । भिन्नंभग्नंशृङ्गंअनडुहः तस्यैवशृङ्गसंभवोनाश्वादेर्वालधिः पुच्छस्तेनविरूपिताः छिन्नपुच्छादयः तादृशेननयायात् । आरोहणमेवस्मृत्यन्तरेप्रसिद्धम् ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः** । धुर्यैःशकटादिवाहकैः । गवादिभिरविनीतैःरदान्तैः क्षुत्पीडितैर्व्याधिपीडितैश्च वालधिभिः-पुच्छैः विरूपितैश्छेदादिना ॥ ६७ ॥

( ३ ) **कुल्लूकः** । अश्वगजादिभिर्वाहनैरदमितैःक्षुधा व्याधिना च पीडितैर्भिन्नशृङ्गाक्षिखुरैश्छिन्नवालधिभिश्च न यायात् ॥ ६७ ॥

( ४ ) **राघवानन्दः**। किंचान्यत् । धुर्यैरश्वादिभिरदमितैर्नगच्छेत् । वालधिविरूपितैः वालधिः पुच्छं तच्छून्यैः॥६७॥

( ५ ) **नन्दनः** । धुर्यैर्बलीवर्दादिभिस्तद्युक्तैर्वा यानैः क्षुद्व्याधिपीडितैः क्षुत्पीडितैर्व्याधिपीडितैर्वा । वालधिविरूपितैश्छिन्नवालधिभिरित्यर्थः ॥ ६७ ॥

( ६ ) **रामचन्द्रः** । अविनीतैः धुर्यैः अश्वैर्वा वृषैर्वा न व्रजेत् । च पुनः क्षुद्व्याधिपीडितैः न व्रजेत् ॥ ६७ ॥

**विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ॥ वर्णरूपोपसंपन्नैः प्रतोदेनातुदन्भृशम् ॥ ६८ ॥**

( १ ) **मेधातिथिः** । दम्यमानाअपिकेचिद्विनयंनसंगृण्हन्ति तदर्थमाह विनीतैरिति । सशिक्षितैराशुगैः क्षिप्रगामिभिर्लक्षणान्वितैः प्रशस्तावर्तादियुक्तैर्नशून्यमस्तकादिभिर्वर्णरूपयुक्तैः शोभनेनवर्णेनकर्णशोभादिनारूपेणसंस्थानविशेषेण शोभनत्वंचलक्षणविद्यातोज्ञातव्यं । भृशमक्षिपन् अपीडयन् पुनःपुनःप्रतोदेनअङ्कुशादिनाअत्यन्तंउद्वेक्ष्यमाणाविघटयन्ति ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । वर्णोश्वादिशास्त्रेकथितः शुक्लादिः । एवंरूपमाकारभेदः । भृशमतिशयेनातुदन्व्यथयन् ॥ ६८ ॥

( ३ ) **कुल्लूकः** । दमितैः शीघ्रगामिभिः शुभसूचकलक्षणोपेतैः शोभनवर्णैर्मनोज्ञाकृतिभिःप्रतोदेनात्यर्थमपीडयन्गच्छेत् ॥ ६८ ॥

( ४ ) **राघवानन्दः** । योग्यानाह विनीतैरिति । लक्षणान्वितैः लक्षणानि वाहगुणाः । शीघ्रगैः । प्रतोदेन सूक्ष्मलोहाग्रदण्डेन तुदन् व्यथयन् ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । प्रतोदेन प्रतुदन् आशुगैः । शीघ्रगैरित्यर्थः ॥ ६८ ॥

**बालातपः प्रेतधूमोवर्ज्यं भिन्नं तथासनम् ॥ न च्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान् ॥६९॥**

**[ श्रीकामोवर्जये न्नित्यं मृन्मये चैव भोजनम् ॥[‡] ]**

( १ ) **मेधातिथिः** । प्रथमोदितेसवितरिमुहूर्तत्रयंबालातपव्यपदेशः । प्रेतधूमोदह्यमानस्यशवस्ययः । आसनंछिन्नंछिद्रितंभग्नं एतद्वर्ज्यं । नखानिरोमाणिचनच्छिन्द्यात्स्वयंव्यसनेन अतिप्रवृद्धानितुर्नापितेनकारयेत् । दन्तैश्चनखान्नोत्पाटयेत्प्रवृद्धानपि । अन्येत्वेवमभिसंबध्नन्ति । नछिन्द्यान्नखरोमाणिदन्तैरिति । नखांश्चदन्तेनापिनपातयेत् । नखभङ्गेयोजनासुहिकामिन्योनानानखान्दारयन्ति ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः** । बालातपः सद्यवकालातपः । शरदि पुनःसंधुक्षणादादित्यस्य बाल्यं तदातपोबालातपइत्यन्ये । न छिन्द्यात्स्वयम् ॥ ६९ ॥

( ३ ) **कुल्लूकः** । प्रथमोदितादित्यतापोबालातपःसच मुहूर्तत्रयंयावदितिमेधातिथिः कन्यार्कातपइत्यन्ये । प्रेतधूमोदह्यमानशवधूमः । भग्नासनंच एतानि वर्जनीयानि । नखानि च रोमाणि च प्रवृद्धानि न छिन्द्याद्दन्तैश्च नखान्नोत्पाटयेत् ॥ ६९ ॥

( ४ ) **राघवानन्दः** । किंचैतान्वर्जयेदित्याह बालेति । बाला कन्याराशिः तत्रत्यातपः । शरद्रौद्रंनगृह्णीयादिति स्मृतेः । मुहूर्तत्रयव्यापिप्रातःकालीनसूर्यातपोवा बालातपः वर्ज्यइत्यनुषङ्गः । न च्छिन्द्यात्स्वयमितिशेषः ॥ ६९ ॥

( ५ ) **नन्दनः** । नछिन्द्याद्वपनकालादन्यत्र ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । नखरोमाणि दन्तैर्न छिन्द्यात् ॥ ६९ ॥

**न मृल्लोष्ठं च मृद्नीयान्न च्छिन्द्यात्करजैस्तृणम् ॥ न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ॥७०॥**

( १ ) **मेधातिथिः** । विमर्दनंखण्डशःकरणं लोष्ठस्यमृत्संबन्धिनःकेचित्तुमृदोलोष्ठस्यसुधादिसंबन्धिनोपिमृदश्चमर्दनं । उत्क्षिप्योत्क्षिप्यपातनं हस्तेनसंहननं वा एतच्चमर्दनंयत्किंचनकारितयाप्राप्तंनिषिध्यते । ननुशौचाद्यर्थेप्रयोजनेनिष्फलग्रहणात्पुरस्तादपकर्षात् । तेनैवसिद्धेप्रायश्चित्तविशेषार्थःपुनरारम्भः । करजानखाः नकर्म । ननुचनकुर्वीतवृथाचेष्टामित्यनेनैवनिष्फलंकर्म । अत्राहुः । चेष्टाभौतिकोव्यापारः । इहतुसामान्यस्यपर्युदासः । तेनमनोराज्यादिकल्पाःपरिहरणीयाः ।

‡ ( ख, ग ) चिन्हितपुस्तकद्वये श्लोकमध्ये अयंपाठोदृश्यते । व्यवहारेपिईदृशआचारः ॥

आयतिरागामीकालः । यस्मात्कर्मणागामिनिकालेअसुखंदुःखमुत्पद्यते । यथाअजीर्णभोजनंकुटुम्बभृतिमचिन्तयित्वांमहतो-धनस्यव्ययश्चतंनकुर्यात् ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । मृदंकर्दमादि लोष्टंच मृल्लोष्टं । करजैर्नखैः । कर्मफलवत्तयाश्रुतं कारीषादि निष्फलंफलसं कल्पशून्यंन कुर्यात् । वृथाचेष्टा तु प्रागेव निषिद्धा । आयत्यामुत्तरकालेऽसुखोदयं दृष्टतोपि ॥ ७० ॥

( ३ ) **कुल्लूकः** । नाकारणंमृल्लोष्टंमृद्नीयात्तृणानि च न छिन्द्यादितिआपस्तम्बवचनान्निष्प्रयोजनंमृल्लोष्टमर्दनं नखैश्च तृणच्छेदनंन कुर्यात् । ननु न कुर्वीत वृथाचेष्टामित्यनेनैवास्यापि प्रतिषेधसिद्धौ दोषभूयस्त्वंप्रायश्चित्तगौरवंच दर्शयितुंवि-शेषेण निषेधः अतएवात्रानन्तरंलोष्टमर्दीतिनिन्दिष्यति । दृष्टादृष्टफलशून्यंच कर्म न कुर्यात् । ननु न कुर्वीत वृथाचेष्टामित्य-नेन पुनरुक्तिः । उच्यतेदेहव्यापारश्चेष्टा सवृथाचेष्टाशब्देन निषिद्धः अनेन तु निष्फलंमनोग्राह्यादिसंकल्पात्मकंकर्ममानसं-निषिध्यते । यच्चायत्यामागामिकाले कर्मासुखावहम् । यथाऽजीर्णे भोजनादि तदपि न कुर्यात् ॥ ७० ॥

( ४ ) **राघवानन्दः** । वृथा लोष्टमर्दी नस्यादित्याह नेति । करजैर्नखैः । कर्म निष्फलं मानासिद्धं न कुर्वीत । आय-त्यांउत्तरकालेऽसुखोदयं सुखफलशून्यं प्रारम्भेकर्ममात्रस्य दुःखफलत्वात् ॥ ७० ॥

( ५ ) **नन्दनः** । मृद्नीयाद्धस्तेन । निष्फलमितिनिश्चितम् । आयत्यांकालान्तरे । असुखोदयमितिनिश्चितंचकर्म न कुर्यात् ॥ ७० ॥

( ६ ) **रामचन्द्रः** । आयत्यांउत्तरकाले यदसुखंकर्म तन्न कुर्यात् ॥ ७० ॥

## लोष्टमर्दी तृणच्छेदी नखखादी च योनरः ॥ सविनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥ ७१ ॥

( १ ) **मेधातिथिः** । अत्रार्थवादः अस्मादेवकेवलाल्लोष्टग्रहणात् पूर्वोक्तमृल्लोष्टमितिषष्ठीसमासोविज्ञायते उभयप्राधान्ये-हिमृद्ग्रहणं लोष्टइवअत्राकरिष्यततास्यैवहस्तेनसुमर्दत्वात्प्राप्तःपर्युदासः । सुधायास्तुकाठिन्याद्यत्नसाध्यंमर्दनंतत्रैवासतिप्रयो-जनेप्राप्तंमृल्लोष्टमर्दनंतुहस्तेनपुरुषाणांस्वभावतः केषांचित्प्राप्नोति तस्यपर्युदासः । तृणछेदीप्रकृतोदन्तैर्नखान्खादति सूचकः पिशुनःकर्णेजपः यःपरस्यदोषानसतःसतोवापरोक्षंव्याख्यापयति । अशुचिरुक्तार्थः । विनाशमाशुव्रजति । नयथान्या-निवैदिकान्यनियतकालानिफलानि एवमेतत् । किंतर्हिइहैवजन्मनिअचिराद्धनादिनावियोगोविनाशः ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । लोष्टमर्दनादेः प्राङ्निषिद्धस्य दृष्टदोषात्सिद्धफलतामाह लोष्टमर्दीति । नखखादीदन्तैर्नखो-त्पाटकः । बहुदुःखकारी सूचकः परापकारहेतुवाक्यप्रयोक्ता । अशुचिर्बाह्याभ्यन्तरशौचशून्यः ॥ ७१ ॥

( ३ ) **कुल्लूकः** । लोष्टमर्दयितातृणच्छेत्ता नखखादिता च योमनुष्यःतथा सूचकःखलोयःपरस्य दोषानसतःसतोवा ख्यापयति बाह्याभ्यन्तरशौचरहितः शीघ्रमेते देहधनाद्विना विनश्यन्ति ॥ ७१ ॥

( ४ ) **राघवानन्दः** । लोष्टमर्दादीननूद्य दृष्टफलमाह लोष्टमर्दीति । सूचकः खलः ॥ ७१ ॥

( ५ ) **नन्दनः** । सूचकः पिशुनः ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । सूचकः परापकारहेतुवाक्यप्रयोक्ता ॥ ७१ ॥

## न विगृह्य कथां कुर्याद्बहिर्माल्यं न धारयेत् ॥ गवां च यानं पृष्ठेन सर्वथैव विगर्हितम् ॥७२॥

( १ ) **मेधातिथिः** । अभिनिवेशेनपणबन्धादिनायल्लौकिकेषुशास्त्रेषुवार्थेष्वितरेतरंजल्पनमहोपुरुषिकायासाविगृह्यक-था । बहिर्माल्यंवाससोबहिःकण्ठस्थांस्रजंवासस्छादयेत् । तथाचसमाचारः । अपरेबहिरित्यनोवृतादर्शउच्यत । तत्रनगररथ्या-

दौनप्रकटमाल्योभ्राम्येदित्याहुः । अथवाबहिर्गन्धंबहिर्माल्यंयस्यगन्धोनातिसवेद्यते । एवंस्मृत्यन्तरं । नागन्धांस्रजंधारयेदन्यत्रहिरण्मय्याइति । गवांचपृष्ठेयानपर्याणंविनासाक्षाद्गवारोहणंप्रतिषिध्यते । सर्वथेतिपर्याणादान्तरायेपिगन्त्र्यादियुक्तेऽपृष्ठयानत्वादप्रतिषेधः ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । विगृह्यनैवदेयमिति परकथामाच्छिद्य । बहिर्माल्यंशिखावेष्टनेन । गवांपृष्ठेन सर्वथातिगर्हितं रथादियोजनेन तु गोभिर्यानंगर्हितमात्रंनत्वत्यन्तम् ॥ ७२ ॥

( ३ ) **कुल्लूकः** । नचाभिनिवेशेन कथांशास्त्रीयेष्वर्थेषु लौकिकेषु वा कुर्यात् । केशकलापाद्बहिर्माल्यंन धारयेत् । गवांच पृष्ठेनयानसर्वथेतिप्रवेण्यादिव्यवधानेनाप्यधर्मावहम् । पृष्ठेनेत्यभिधानादाकृष्टशकटादिना न दोषः ॥ ७२ ॥

( ४ ) **राघवानन्दः** । विगृह्य विग्रहंकृत्वापरकथांप्रच्छाद्यच । बहिर्माल्यंकेशकलापाद्बहिर्मालार्हंपुष्पम् । गवांपृष्ठेन केवलेनेत्यन्वयः ॥ ७२ ॥

( ५ ) **नन्दनः** । विगृह्य कथांविरोधपूर्वकवाक्यम् । गवांपृष्ठेन यानं गोपृष्ठमारुह्य यानम् ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । विगृह्य प्राणबन्धादिवालौकिकेषु शास्त्रेषु कथांन कुर्यात् विध्यन्ते गवांपृष्ठे वृषभानांपृष्ठे सर्वपुण्यानांविनाशात् गवांरोहणंप्रविगर्हितं । तथैवबहिर्माल्यंन धारयेत् ॥ ७२ ॥

**अद्वारेण च नातीयाद्ग्रामं वा वेश्म वा वृतम् ॥ रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ॥ ७३ ॥**

( १ ) **मेधातिथिः** । आवृतस्यवाटपरिक्षेपादिना ग्रामस्यअद्वारप्रवेशप्रतिषेधः । अनावृतस्यतुद्वारवतोपियथाकामम् ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । अद्वारेण सर्वसाधारणद्वारव्यतिरेकेण गुप्तद्वारादिना नातीयान्न प्रविशेच्च । वृतंसंवृतंत्वयंन हरेतहस्तेन ॥ ७३ ॥

( ३ ) **कुल्लूकः** । प्राकाराद्यावृतंगृहंच द्वारव्यतिरिक्तप्रदेशेन प्राकारादिलङ्घनंकृत्वा न विशेत् । रात्रौ च वृक्षमूलावस्थानंदूरतस्त्यजेत् ॥ ७३ ॥

( ४ ) **राघवानन्दः** । नातीयात् न गच्छेत् प्राकाराद्युल्लङ्घनेन ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । ग्रामंवा वेश्म वा वृतंवेष्टितंअद्वारेण नातीयात् नविशेदित्यर्थः ॥ ७३ ॥

**नाक्षैः क्रीडेत्कदाचित्तु स्वयं नोपानहौ हरेत् ॥ शयनस्थोन भुञ्जीत न पाणिस्थं न चासने ॥ ७४ ॥**

( १ ) **मेधातिथिः** । अन्तरेणापिग्लहंपरिहासेननाक्षैर्दीव्येदिति । कदाचिद्ग्रहणंशलाकादीनामपिदर्शनार्थं । तेनसर्वस्य द्यूतस्यप्रतिषेधः । स्वयंचर्मपादत्राणमुपानहौ तेआत्मनाहरतेनदण्डादिनावागृहीत्वा देशान्तरंनानयेत् । आत्मीययोश्चायंप्रतिषेधः । स्वयमितिप्रकृतत्वात्तेनगुर्वादिसंबन्धिन्योरनिषेधः । शयनेखट्वादौ उपविश्यनभुञ्जीत पाणौचकवलंस्थापयित्वा भाजनाद्यनन्तरितेनआसने अन्नंस्थापयित्वाआनन्तर्याद्भोज्यस्यप्रतिनिर्देशेनभोक्तुः ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । न पाणिस्थं वामपाणिस्थं पाणिनिहितभाण्डादिस्थितंच । आसने पीठादौ स्थितम् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । ग्लहंविनाकदाचिदपि परिहासेनापि नाक्षादिभिः क्रीडयेत् । स्वयमित्यभिधानादात्मोपानहौ पादव्यतिरिक्तेन हस्तादिना देशान्तरंन नयेत् । शय्याद्यवस्थितश्च न भुञ्जीत । हस्ते च प्रभूतमन्नंकृत्वा क्रमेण न खादयेत् । आसने भोजनपात्रंनिधाय न भुञ्जीत ॥ ७४ ॥

( ४ ) **राघवानन्दः** । कदाचिदिति ब्राह्मणादेर्द्यूतंप्रतिपदादावपि प्रसक्तिवारणार्थम् । ग्लहंविनाप्यक्षैर्न क्रीडेतेतिमेधातिथिः । नउपानहाविति द्वित्वंविवक्षितम् । आसने स्थापितमपि ॥ ७४ ॥

( ५ ) **नन्दनः** । पाणिस्थमन्नं पाण्यन्तरेण न भुञ्जीत ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । नाक्षैःक्रीडेत् । अक्षग्रहणं शलाकादिना विभवे सति क्रीडेदिति । स्वयंउपानहौ न हरेत् । हस्तेन नानयेदित्यर्थः । दण्डादिना आनयेत् ॥ ७४ ॥

**सर्वं च तिलसंबद्धं नाद्यादस्तमिते रवौ ॥ न च नग्नः शयीतेह न चोच्छिष्टः क्वचिद्व्रजेत् ॥ ७५ ॥**

( १ ) **मेधातिथिः** । अस्तमितेआदित्ये प्रतिर्लक्षणेकर्मप्रवचनीयत्वात्द्वितीया । नचोच्छिष्टः ननुचब्रह्मचर्यधर्मेष्वेत्प्रतिषिद्धं । पुरुषधर्मताचतस्यज्ञापिता नतादर्थ्यमेव सत्यं व्रतरूपताज्ञापनार्थउपदेशोयं । तेनयावज्जीविकःसङ्कल्पःकर्तव्यः ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । तिलसंबद्धंतिलप्रकृतिकं तैलाद्यपि अस्तमयं प्रति तदनन्तरं उच्छिष्टो मूत्रादिकरणेनाशनेनवा न शयीतेत्यर्थः ॥ ७५ ॥

( ३ ) **कुल्लूकः** । यत्किंचित्तिलसंमिश्रंकृसरमोदकादि तदस्तमितेऽर्के नाद्यात् । उपस्थाच्छादनवासोरहितोनेहलोकेसुप्यात् । उच्छिष्टस्तु नान्यतोगच्छेत् ॥ ७५ ॥

( ४ ) **राघवानन्दः** । तिलसंबद्धं कृसरमोदकादि । अस्तमितेऽस्तंगते सवितरि इह भूमावपि न संविशेत् न शयीत उच्छिष्टः कृतभोजनोनाचान्तः ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । सर्वंतिलसंबद्धंअस्तमितेसति व्रती नाद्यात् न भक्षयेत ॥ ७५ ॥

**आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥ आर्द्रपादस्तु भुञ्जानो दीर्घमायुरवाप्नुयात् ॥ ७६ ॥**

( १ ) **मेधातिथिः** । आदिकर्मणिविधिमिमंसमाचरेत् । आर्द्रपादोभोजनमाचरेत् । नत्वार्द्रैःपादैःसिंचन्नासीत संविशेत् शयनेगात्राणिनावक्षिपेत् । संवेशनंशयनेगात्रसंयोजनं । अस्यफलमाह दीर्घमायुरिति । नायमायुष्कामस्यविधिः । किंतर्हिपूर्ववन्नित्यः । आयुरनुवादस्त्वर्थवादएव ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । संविशेत् शयीत ॥ ७६ ॥

( ३ ) **कुल्लूकः** । जलार्द्रपादोभोजनमाचरेत् । नार्द्रपादःसुप्यात् । यस्मादार्द्रपादोभुञ्जानःशतायुर्भवति ॥ ७६ ॥

( ४ ) **राघवानन्दः** । दृष्टार्थविधिनिषेधावाह आर्द्रेति । न संविशेन्न शयीत ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । आर्द्रपादस्तु भुञ्जीत भोजनंकुर्यात् । आर्द्रपादः कदाचन न शयीत शयनं न कुर्यात् । पश्चाद्भोजनंचरेत् ॥ ७६ ॥

**अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित् ॥ न विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत् ॥ ७७ ॥**

( १ ) **मेधातिथिः** । दुर्गंदुर्गारोहंपर्वतादितरुगुल्मलतागहनंचारण्यंतन्नप्रपद्येत । नाक्रामेन्नगच्छेदचक्षुर्विषयं सर्पचौरादेरन्तर्हितस्य भावाशङ्कया । चक्षुर्ग्रहणमागमादेरपिप्रमाणस्यलक्षणं । नविण्मूत्रंउदीक्षणंवर्णादिनानिरूपणंच चिरकालप्रेक्षणानिभवन्तिइति । अतएवतन्नकर्तव्यं दैवात्क्वचिद्दृश्यमाने नदोषः । नदीबाहुतरणंचस्वस्थस्यनिषिध्यते । नवृकभये ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । दुर्गंदुर्गत्वेन श्रुतमचक्षुर्विषयंस्वयमदृष्टं प्रपद्येत न गच्छेत् । विण्मूत्रंपरकीयं । बाहुभ्यांनदीमितिविवक्षितं बाहुना जलान्तरेपितरणस्य दृष्टविरोधित्वात् ॥ ७७ ॥

( ३ ) **कुल्लूकः** । तरुगुल्मलतागहनत्वेनाचक्षुर्गोचरमरण्यादिदेशंदुर्गनाक्रमेत् सर्पचौरादेस्तत्राहितस्य संभवात् । पुरीषंमूत्रंच न निरीक्षेत् । बाहुभ्यांच नदीं न तरेत् ॥ ७७ ॥

( ४ ) **राघवानन्दः** । दुर्गं तृणाद्याच्छिन्नंकूपतडागादि अतएवाहाचक्षुर्विषयं । विण्मूत्रं स्वकीयं तत्पर्यालोचनबुद्ध्या नेक्षेत ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । अचक्षुर्विषयं देशं दुर्गंवा दुर्गारोहणं न प्रपद्येत ॥ ७७ ॥

**अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः ॥ न कार्पासास्थि न तुषान्दीर्घमायुर्जिजीविषुः ॥ ७८ ॥**

( १ ) **मेधातिथिः** । कपालिकाःभग्नस्यशकलानिदीर्घमायुः व्याख्याताद्वितीया ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । कपालिकाघटाद्यंशः । कार्पासस्यास्थिबीजम् ॥ ७८ ॥

( ३ ) **कुल्लूकः** । दीर्घमायुर्जीवितुमिच्छुःकेशादीन्नाधिरोहेत् । भग्नमृण्मयभाजनशकलानिकपालिकाः ॥ ७८ ॥

( ४ ) **राघवानन्दः** । कपालिकाभग्नघटादेः । कार्पासास्थि तद्बीजंनाधितिष्ठेत् तेषु अधिशीङ्स्थासांकर्मेति सप्तम्यर्थे द्वितीया ॥ ७८ ॥

( ५ ) **नन्दनः** । अधितिष्ठेत्पदा । कपालिका भिन्नमृद्भाण्डशकलान् ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । केशमध्ये दीर्घमायुर्जिजीविषुःर्नाधितिष्ठेदित्यपि ज्ञेयम् ॥ ७८ ॥

**न संवसेच्च पतितैर्न चाण्डालैर्न पुल्कसैः ॥ न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥ ७९ ॥**

**[ न कृतघ्नैरनुद्युक्तैर्न महापातकान्वितैः । न दस्युभिर्नाशुचिभिर्नामित्रैश्च कदाचन ‡ ]**

( १ ) **मेधातिथिः** । ननुच नाधार्मिकजनावृतेनोपसृष्टेन्त्यजैरितिचोक्तमेवैतत् । नेतिब्रूमः तत्रनिवासःप्रतिषिद्धः इहतुसंवासः । यत्रग्रामेतेवसन्तिनतत्रवस्तव्यं गृहस्थित्येति । तत्रोक्तंसंवासस्तुतैःसहसंव्यवहारोदानग्रहणादिभिर्मैत्रीकरणं तद्गृहसमीपेचवासोपि एकतःछायोपजीवनमित्यादि । आवृतग्रहणाच्चतत्रबाहुल्यंगम्यते । यस्मिन्ग्रामेभूयांसस्तेतंथासमीपेपिनवस्तव्यमितितस्यार्थइहत्वबाहुल्येपि समीपवासादिप्रतिषिध्यतइत्येषविवेकः । पुल्कसानिषादाःशूद्रायांजाताअन्त्यामेदप्रभृतयोम्लेच्छाअन्त्यावसायीति निषादस्त्रियांचण्डालाज्जातोवक्ष्यते । निषादस्त्रीचण्डालादित्यादि । अवलिप्तामदोद्धताः धनादिनागर्विताः ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । संवसेदेकगृहे अवलिप्तैर्गर्वितैः । अन्त्यैः कैवर्ताद्यैः । अन्त्यावसायिभिः सूतमागधाद्यैः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । पतितादिभिर्ग्रामान्तरवासिभिरपि सह न संवसेत् । एकतरुच्छायादौ न समीपे वसेत् । अतोनाधार्मिके वसेद्ग्रामइत्यतोभेदः । निषादाच्छूद्रायांजातःपुल्कसः । वक्ष्यतिच । जातोनिषादाच्छूद्रायांजात्याभवतिपुल्कसइति । अवलिप्ताधनादिमदगर्विताः । अन्त्याअन्त्यजारजकादयः । अन्त्यावसायिनोनिषादास्त्रीयांचाण्डालाज्जाताः वक्ष्यति च निषादस्त्री तु चाण्डालात्पुत्रमन्त्यावसायिनम् ॥ ७९ ॥

---

‡ ( ट )

( ४ ) **राघवानन्दः** । ग्रामवासनिषेधस्योक्तत्वादेकसभैकवृक्षछायादौ न वसेदित्यर्थः । पुल्कसैः निषादाच्छूद्रायां-जातैः । अवलिप्तैः । धनादिगर्वितैः । अन्त्यैरजकादिभिः । अन्त्यावसायिभिः निषाद्यांचण्डालाज्जातैः सह वार्ताकलहादि-संभावनयाअधर्मोत्पत्तेरितिभावः ॥ ७९ ॥

( ५ ) **नन्दनः** । पुल्कसःशूद्रेण क्षत्रियायांजातः । अन्त्यादर्शनस्पर्शनायोग्याः प्रतिलोमजाः । अन्त्यावसायिनः श्वपाकादयः ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । पतितैः सह न संविशेत् । चाण्डालैः ब्राह्मण्यांशूद्राज्जाताः चाण्डालास्तैः सह न संविशेत् अ-न्त्यैः कैवर्तादिभिः । अन्त्यावसायिभिः सूतमागधादिभिः । एतैर्जातिभेदैः सह न संवसेत् अन्त्यभेदाः । रजकश्चर्मकारश्च नटोबुरुडएवच । कैवर्तमेदभिल्लाश्चसप्तैतेअन्त्यजाःस्मृताः । अस्यार्थः । बुरुडःशूर्पकारः इति जातिसंज्ञा ॥ ७९ ॥

**न शूद्राय मतिंदद्यान्नोच्छिष्टं न हविष्कृतम् ॥ न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥८०॥**

**[ अन्तरा ब्राह्मणं कृत्वा प्रायश्चित्तं समादिशेत् ॥ ] +**

( १ ) **मेधातिथिः** । शूद्रस्यदृष्टादृष्टविषये हिताहितोपदेशोन कर्तव्यः । शूद्रस्यमन्त्रित्वंन कर्तव्यमितियावत् । वृत्यर्थश्चायंनिषेधः । सौहार्दादिनातुनदोषः । भवन्ति हि शूद्राः कुलमित्राणि मैत्र्याचावश्यंहितमुपदिश्यते । अनुज्ञाता-च सर्ववर्णे ब्राह्मणस्य मैत्री मैत्रोब्राह्मणउच्यते । ये तु व्याचक्षतेऽपृच्छतोनब्रूयादित्युपन्यस्य युक्तंशास्त्रान्तरसि-द्धत्वात् । नापृष्टः कस्यचिद्ब्रूयादिति तदयुक्तम् । तत्र हि स्वाध्यायविषयंस्वरवर्णगतमन्यत्वमसंगतंवाकुर्वतोविनाशितं-त्वयेत्यादावपृष्टेन नवक्तव्यम् । यथाचामी नाध्याप्याइत्यस्मिन्प्रसङ्गइदमुक्तंनापृष्टोब्रूयादिति । अशिष्यस्यापृच्छतो-विस्वरंव्यक्षरंवापठतोनाकिंचिद्वक्तव्यमिति तस्यार्थः । नोच्छिष्टमिति उच्छिष्टशब्दोऽयंभुजिनिमित्तेऽप्राशस्त्येवर्ततेकृतमूत्रपु-रीषोप्यनाचान्तउच्छिष्टउच्यते । यथा वक्ष्यामोन स्पृशेत्पाणिनोच्छिष्टः । बाहुल्येनोच्छिष्टमयोगोभुजिसंबन्धेनभुञ्जानस्य ह्यन्तरास्यसंस्पर्शेन बहिरन्तःस्थितस्योच्छिष्टत्वंभवति । तथा च श्मश्रूणि गतान्यास्यमितिश्मश्रुभ्योन्यदास्यानुप्रवि-ष्टमुच्छिष्टंकरोतीति ज्ञापयति । अतश्च भोक्तुर्भुज्यमानस्य पात्रादेरधिकरणस्यचोच्छिष्टव्यवहारः । क्वचिच्चायंउपयुक्ते-तरवचनोऽपि । हविरुच्छिष्टंदक्षिणेति । तत्र समाचारात्पात्रगृहीतमुच्छिष्टपुरुषसंबन्धमीषद्भुक्तमुच्छिष्टमुच्यते । यदपि-विशदमोदनादिपात्रस्थमस्पृष्टमपि भोक्ता तदपिसंबन्धात्समाचारतःपरिह्रियते । तत्रोच्छिष्टमपिदातव्यम् । नोच्छिष्टमिति-विधिप्रतिषेधावेकविषयावृतामृतशूद्रव्यवस्थया हविःशेषभेदेन वा विकल्पेते । अथवास्थालीस्थमतिथ्यादिभुक्तशिष्टं-तन्न शूद्रायदातव्यम् । तत्रोच्यते । जीर्णवसनसाहचर्याच्चैतदेवप्रतिपत्तुंयुक्तम् । उपयुक्तेतरवचनत्वाच्चशिषेरुपसर्गस्य तद-र्थानुगुण्येन वर्तनाद्धविरुच्छिष्टंदक्षिणेतिवत्प्रयोगोप्यविरुद्धएव । तयोःस्मृत्योरविरोधोभविष्यति । यद्यपि रूढ्याऽऽच-मनार्हाःप्रायोऽत्र वचने दृश्यन्ते । यत्तु वैश्यवच्छौचकल्पश्चेतितद्दासशूद्रविषयम् ॥ भुक्तोज्झितमेव प्रतीयतइति दर्श-यिष्यामः । नहविष्कृतम् हविषे कृतंहविरर्थंकल्पितंबहुवचनःसमासस्तादर्थ्येनोपकल्पितप्रतिषेधात् । दण्डापूपिकया यत्र हविर्गन्धोऽस्ति तत्सर्वंप्रतिषिध्यते । तेन हविरर्थितया संकल्पितस्य हविषः प्रवृत्तस्य हविःशेषस्याभुक्तोज्झित-स्य हविषः प्रतिषेधः सिद्धोभवेत् । तथाच कृतमिति करोतिः क्रियासामान्यवचनःप्रयुक्तःहविरर्थंयत्कृतंसंकल्पितंव-चनंतेनोच्छिष्टस्यापि यावत्प्राकृतेन संकल्पेन हविष्कृतव्यपदेशोन यथावत्सर्वावस्थस्य प्रतिषेधोविज्ञायते । अन्यैस्तु-

+ ( ज )

हविर्मिश्रंहविष्कृतमितिव्याख्यातम्। संसृष्टप्रतिषेधाच्च केवलस्यापि प्रतिषेधः। विप्रसंसृष्टप्रतिषेधेविप्रस्यैवेत्युक्तम्। कथं-पुनःसंसृष्टप्रतिषेधे केवलप्रतिषेधः। केवलप्रतिषेधेनाप्रधानः कदाचित्संसृष्टप्रतिषेधः शक्यतेवक्तुम्। यत्र संसृष्टावपि पृथक्त्वेन प्रतिभासेते यत्र वा चक्षुषः प्रतिभासमाने रूपे रसादिना तत्प्रयोगोभवति तत्रापि भवत्येव तदाश्रयोऽभ्यवहारः। यथासुरादिसंपृक्तासु सुपक्वपिण्डीष्वन्तर्हितेऽपि सुरादिरूपे रसे तत्प्रत्ययादस्त्येवसुरापानप्रायश्चित्तम्। ननु चैवमप्यद्रव-रूपत्वात्पिण्डीभिरेकतांपन्नायाः सुरापानपानोपपत्तिः। नैषदोषः। प्रायिकेणौचित्यानुवादेनपानमुपादीयते। अभ्यवहा-रएवतुनिषिध्यते। यथाचभक्ष्याभक्ष्यप्रकरणमेतत्। भक्षणंचाभ्यवहारमात्रंतस्यविशेषाःपानखादनचर्वणादयः। गन्धस्य पुनरनाश्रयस्याप्युपलब्धेर्नततोद्रव्यसद्भावावगमः दूरस्थेऽपि कर्पूरादौ गन्धउपलभ्यते। सूक्ष्मद्रव्यावयवावगमकल्पनायां द्रव्यस्य परिमाणावयवःस्यात्। यत्रतु संसृष्टयोरेकीभावोनचान्यस्तत्प्रत्ययोन नतत्रकेवलाश्रयौविधिप्रतिषेधौप्रवर्तितुमर्हतः। यथाक्षीरंपातव्यमितिसंमिश्रितयोः क्षीरोदकयोःपीतयोर्नक्षीरंभवतिनोदकं द्रव्यान्तरत्वात्। अन्यद्धि तत्र रूपमन्यश्च रसो-संस्थानादितत्प्रत्ययहेतुरस्तीतिद्रव्यान्तरंतत्। यद्येवंमद्योदके सहपीते यदि भवेतांतदा मद्यपानप्रायश्चित्तंन प्राप्नोति। द्रव्या न्तरत्वात्। नैषदोषःअभिभवतिरसान्तरागिमद्यंतिक्तरसवत्। ततोरसप्रत्यभिज्ञानाद्भवत्येवतत्प्रायश्चित्तम्। यत्र तु बहूदकं-स्वल्पंमद्यादि तत्र संसर्गप्रायश्चित्तमपि निपुणमेकादशेनिरूपयिष्यामः। तस्मात्केवलाश्रयःप्रतिषेध आस्कन्देदपिसंसर्गम् यथामाषानभोक्तव्याइतिमिश्राअपि न युज्यन्ते। संसर्गाश्रयस्तु केनहेतुनाऽसंसृष्टेवर्तेत। गङ्गायमुनयोः संगमाज्जलमानये-त्युक्ते न केवलायागङ्गायाआनयति न यमुनायाः। समाचारएवेतिचेत्समाचारएवोदाहर्तव्यः। न चास्योपदिशेद्धर्मम्। ननु चं न शूद्रायेत्यविशेषेणदृष्टादृष्टविषयमतिदानप्रतिषेधाद्धर्मोपदेशनिषेधोऽपिसिद्धएव। सत्यम् पुनर्वचनंशेषार्थम्। ततः प्राय-श्चित्तोपदेशोऽनुज्ञातोभवति। शरणागतंपरित्यज्येत्यत्रचैतद्दर्शयिष्यामः। अन्येतुपार्वणश्राद्धपाकयज्ञादिष्वितिकर्तव्यतांन-शिक्षयेत् पाचकत्वादिरूपेणेत्याहुः। अत्र चोदयन्ति यदि धर्मोपदेशः शूद्रस्य निषिध्यते कुतस्तर्हि धर्मवित्त्वम्। अ-विदुषश्च नानुष्ठानसंभवस्ततःशूद्रानुष्ठानृकधर्मशास्त्रानर्थक्यम्। अचोद्यमेतत्। अतिक्रान्तनिषेधस्यलिप्सयाब्राह्मणस्य-चोपदेष्टृत्वसंभवात्। नहि ब्रह्महत्या सर्वस्वदानचोदनाप्रतिग्रहंप्रयुङ्क्तेसंभवति लिप्सा प्रयोक्त्री नचास्तिवचनंप्रब्रूयादित-रेभ्यश्चेति वृत्त्युपायप्राप्तौअतएवंप्रकृतं सर्वेषांब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि। प्रब्रूयादितरेभ्यश्चेति। यस्त्वाश्रित-शूद्रस्तस्यावश्यमुपदेशःकर्तव्यः। अविदुषा विधिप्रतिषेधाधिकृतत्वात्संवासोनिषिद्धः नमूर्खैर्नावलिप्तैश्चेति। यत्तु व्याचक्षते धर्मशास्त्रोपदेशस्तदर्थव्याख्यानंवानेनेनिषिध्यते शास्त्रद्वयेन न वास्योपदिशेदिति एकेन शास्त्राध्ययनपरेणा-र्थव्याख्यानम्। अग्रन्थकस्तूपदेशोन केनचिन्निषिद्धः तेषामेवंवदतांतस्यशास्त्रविचारइतिसिद्धत्वात्पुनरुक्तम्। इदंतु बहुयुक्तंव्याकरणादौ धर्मावबोधार्थशास्त्रेधर्मशब्दः। तद्धि न धर्मशास्त्रमतीन्द्रियार्थमितिप्रतिषेधानुपदेशाद्भवतितुधर्मशा-स्त्रावबोधार्थम्। शक्नोति हि वैयाकरणः पदार्थानुसारेणन गहनंवाक्यार्थमुन्नेतुम्। धर्मशास्त्रत्वाच्च तस्य शास्त्रइत्यने-नागतत्वात्पृथगुच्यते। युक्तमेतत् यदि कश्चिन्न ब्रूयात्प्रधानेऽनधिकृतस्य कुतोऽङ्गेषु प्राप्तिरिति। वेदस्मृतिशास्त्रेचप्रधा-ने न चतत्र शूद्रस्याधिकारः। नचास्यव्रतमादिशेत् व्रतशब्देन कृच्छ्राण्युच्यन्ते एतैर्व्रतैरितिप्रयोगदर्शनात्। तान्यभ्युदय-कामस्यनोपदिशेत्। प्रायश्चित्तार्थतयान्विष्यतएवोपदेशः। स्नातकव्रतानांप्राप्तिरेवनास्ति अस्नातकत्वात्। एवंसावित्रादी-नामप्यध्ययनाभावादध्ययनंचोपनयनाभावादुपनयनंचतद्विधौ जातित्रयश्रवणात्॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । मतिदण्डनीतिशास्त्रादिविषयां। उच्छिष्टंभाण्डत्यक्तं। अहविष्कृतंयतआकृष्यहुतं-हविस्तंपुरोडाशादिहविःशेषं। धर्मंधर्मसाधनंव्रतंप्रायश्चित्तम्॥ ८० ॥

( ३ ) **कुल्लूकः**। शूद्राय मतिंदृष्टार्थोपदेशंन दद्यात् धर्मोपदेशस्य पृथङ्निर्देशात् । अदासशूद्रायोच्छिष्टंन दद्यात् दासगोचरतयोच्छिष्टमन्नंदातव्यमितिवक्ष्यमाणत्वाददोषः । द्विजोच्छिष्टंचभोजनमितिभोक्तुर्विधिर्दातुरुच्छिष्टदाननिषेधेपि यथासंभवलब्धविषयः । हविष्कृतमिति यस्यैकदेशोहुतःसहविःशेषोन दातव्यः । धर्मोपदेशोन शूद्रस्य कर्तव्यः व्रतंचास्य प्रायश्चित्तरूपंसाक्षान्नोपदिशेत् किंतु ब्राह्मणंमध्ये कृत्वा तदुपदेशव्यवधानात् । यथाहाङ्गिराः तथा शूद्रंसमासाद्य सदाधर्मपुरःसरम् । अन्तरा ब्राह्मणंकृत्वा प्रायश्चित्तंसमादिशेत् ॥ प्रायश्चित्तमितिसकलधर्मोपदेशस्योपलक्षणार्थम् ॥ ८० ॥

( ४ ) **राघवानन्दः**। मतिं दृष्टार्थबुद्धिं । हविष्कृतं हुतावशिष्टं । व्रतं प्रायश्चित्तं । एतद्ब्राह्मणमन्तरावधिकृत्वोपदिशेत् । श्रावयेच्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रतइत्युक्तेः । अन्यथातेषांधर्माद्यननुष्ठानापत्तिः । अस्य शूद्रस्यसाक्षादिति शेषः ॥ ८० ॥

( ५ ) **नन्दनः**। मतिंपरेणाविज्ञातमुपायम् । भोजनपात्रस्थमुच्छिष्टमन्नंनतुस्थाल्यादिस्थितम् । हविष्कृतंहविष्ट्वेन कल्पितमृत्विग्भिर्भक्षितशिष्टंपुरोडाशादिकम् । धर्मंश्रौतस्मार्तादिकम् । व्रतंस्नातकव्रतादि न मतिंदद्यादित्येव सिद्धेधर्मनोपदिशेदितिपुनर्निषेधोदोषातिशयप्रकाशनार्थः ॥ ८० ॥

( ६ ) **रामचन्द्रः**। शूद्राय मतिं सन्मतिं नीतिशास्त्रादि विषयां न दद्यात् । उच्छिष्टं अतिथेःभुक्तोच्छिष्टं हविष्कृतं देवनिमित्तं पुरोडाशादि शूद्राय न । च पुनः अस्य शूद्रस्य व्रतं प्रायश्चित्तमापदि ॥ ८० ॥

**योह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् ॥ सोऽसंवृतं नाम तमः सह तेनैव मज्जति ॥ ८१ ॥**

( १ ) **मेधातिथिः**। पूर्वस्य प्रतिषेधस्यनिन्दार्थवादः । तेनैवसहेति । उभयोर्दोषमाह । शृण्वतःश्रावयतश्चमज्जत्यवगाहते तत्प्राप्नोतीति यावत् ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । तमोनरकंसह तेनैव गच्छति यदि शूद्रोपि पापान्तरेण तल्लोकगामी । अन्यथा तूपदेष्टैव याति ॥ ८१ ॥

( ३ ) **कुल्लूकः**। यस्माद्योऽस्य शूद्रस्य धर्मंब्रूते यश्च प्रायश्चित्तमुपदिशति सतेन शूद्रेणैव सहासंवृताख्यंतमोगहनंनरकंप्रविशति । पञ्चसु पूर्वोक्तेषु द्वयोर्दोषकथनंप्रायश्चित्तगौरवार्थम् ॥ ८१ ॥

( ४ ) **राघवानन्दः**। विपक्षे दण्डमाह यइति । असंवृतंनामतमोनरकंतेन शूद्रेण सह मज्जत्येवेत्यन्वयः ॥ ८१ ॥

( ५ ) **नन्दनः**। अत्र निन्दार्थवादमाह यइति । अस्य शूद्रस्य । तेन शूद्रेण ॥ ८१ ॥

( ६ ) **रामचन्द्रः**। यः अस्य शूद्रस्य धर्मंसमाचष्टे यःव्रतंदिशति सअसंवृतंनाम तमः नरकं तेनैव सहमज्जति॥८१॥

**न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥ न स्पृशेच्चैनदुच्छिष्टोन च स्नायाद्विना ततः ॥८२॥**

( १ ) **मेधातिथिः**। संहताभ्यांसंश्लिष्टाभ्यामितरेतरसंसृष्टाभ्यांयुगपद्वाभ्यांप्रतिषेधः । पाणिभ्यामितिबाहू संहतौ निषेधति । आत्मनइति न परस्य । अतश्चान्येन संहताभ्यांकण्डूयतोनदोषः । शिरोग्रहणात्पृष्ठादावदोषः । न स्पृशेच्चैवशिरोहस्तेनात्मनोऽन्यहस्तेन वाऽवयवेनेतिकेचित् । तत्र पाणिभ्यामितिप्रकृतत्वात् । न च स्नायाच्छिरसा विना । नित्यनैमित्तकयोः स्नानयोरयंविधिः । ननु स्विन्नस्य लौकिकेस्नानेकुतएतत् । स्नानविधिनैकवाक्यत्वात् । विहितस्नानापेक्षा प्रत्यासत्त्या युक्तिमतिलोके तुविधेरभावादप्राप्तिः । स्नातिश्चायंसर्वाङ्गसंबन्धिनिसलिलगोमूत्रादिप्रक्षालने वर्तते शिरोवर्जिते च तत्र चण्डालादिस्पर्शनेशिरोवर्जितमपियदृच्छाप्रसक्तंनिवार्यते । न च स्नायाद्विना ततः अस्ति च लौकिकमशिरस्कमपिस्नानंयेनशिरःस्नानं शिरः स्नातस्तुतैलेनेति ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । संहताभ्यांसंयुक्ताभ्यां एतच्छिरः । ततःशिरसोविना शिरोवर्जितांगैर्न स्नायादित्यर्थः । अशिरस्कंभवेत्स्नानैस्नानाशक्तौ तु कर्मिणामित्यन्यत्रोक्तं ॥ तेनायंसशिरःस्नानशक्तविषयोनिषेधः ॥ ८२ ॥

( ३ ) **कुल्लूकः** । संश्लिष्टाभ्यांपाणिभ्यांन कण्डूयेदात्मनःशिरः । उच्छिष्टःस्वशिरोन स्पृशेत् । शिरसा विनोन्मज्जनव्यतिरेकेण नित्यनैमित्तिकस्नाने न कुर्यात् दृष्टार्थे शिरोव्यतिरिक्तगात्रप्रक्षालने न दोषः । स्नानशक्तस्य चायंनिषेधः अशक्तस्यतु । अशिरस्कंभवेत्स्नानंस्नानांशक्तौ तु कर्मिणामिति जाबालिना विहितमेव ॥ ८२ ॥

( ४ ) **राघवानन्दः** । किंचनेति एतच्छिरः । ततः शिरसःशिरोवर्जं न स्नायात् शक्तस्यायंनिषेधः । न त्वशक्तस्य । अशिरस्कंभवेत्स्नानंस्नानाशक्तौतु कर्मिणां । आर्द्रेण वाससा वापिंदेहिकंमार्जनंविदुरिति याज्ञवल्क्योक्तेः ॥ ८२ ॥

( ५ ) **नन्दनः** । आत्मग्रहणात्परस्याप्रतिषेधः शिरोग्रहणादवयवान्तराणाम् । एतच्छिरः । असंहताभ्यामप्युच्छिष्टेन स्पृशेत् । ततःशिरसोविनान च स स्नायात् । नित्यनैमित्तिकयोःकर्मणोरदृष्टार्थस्नानविषयमेतत् ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । उच्छिष्टः सन् एतत् शिरः न स्पृशेदित्यर्थः ॥ ८२ ॥

**केशग्रहान्प्रहारांश्च शिरस्येतान्विवर्जयेत् ॥ शिरःस्नातश्च तैलेन नाङ्गंकिंचिदपि स्पृशेत् ॥ ८३ ॥**

( १ ) **मेधातिथिः** । आत्मनःपरस्यवेत्यविशेषेणकेचिदिच्छन्ति । अन्येत्वात्मनइतिप्रकृतमभिसंबध्नन्ति । क्रोधनिमित्तश्चायंप्रतिषेधः । सुरतसंभोगे तु कामिन्याः केशग्रहः सननिषिध्यते । शिरःस्नानंक्षालितमनेनेतिराजदन्तादेराकृतिगणत्वात्परनिपातः । शिरःस्नातइतिबाहुलकनसमासः । नाङ्गमात्मीयम् ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । केशग्रहान्परेण स्वशिरःकेशग्रहणप्रहारान् शिरसि स्वयमपि शिरःस्नातःसन्स्वाङ्गमन्यदपि तैलेन न स्पृशेत् । न भ्रक्षयेत् । एतच्च तद्दिवसएव न रात्राविति शिष्टाचारात् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । कोपेन केशग्रहप्रहारौ शिरसि वर्जयेत् । कोपनिमित्तत्वाच्चात्मनःपरस्य च प्रतिषेधः । अतएव सुरतसमये कामिनीकेशग्रहस्यानिषेधः । सशिरस्कस्नातश्चतैलेन न किंचिदप्यङ्गंस्पृशेत् । अथवा तैलेनेति काकाक्षिवदुभयत्र संबध्यते तैलेन शिरःस्नातःतैलेन पुनःकिंचिदप्यङ्गंन स्पृशेत् अतोरात्रौ शिष्टानामतैलशिरःस्नातानांतैलेन पादाभ्यङ्गसमाचरणमविरुद्धम् ॥ ८३ ॥

( ४ ) **राघवानन्दः** । केशग्रहानितिशिरस्येवकेशपदमुत्कटधम्मिल्लपरं क्रुद्धःसन्निति शेषः। अतःसुरतसमयेकामिनीकेशप्रदेशग्रहे न दोषः । शिरःस्नातस्तुशिरसितैलंदत्वा नान्येष्वङ्गेषुतद्दद्यादिति केचित् । वस्तुतस्तु कृतशिरस्नानस्तैलाभ्यक्तो न स्यात् । तैलस्नाने स्नानशब्दस्य भाक्तत्वात् । युगपत्सर्वाङ्गीणजलसंबन्धस्य तत्वात्स्पर्शनस्य करणापेक्षत्वाच्च । दाक्षिणात्यानांमातुलकन्यापरिणयवत् रात्रौ गौडीयानांपादाभ्यङ्गोदेशाचारः ॥ ८३ ॥

( ५ ) **नन्दनः** । शिरःस्नातः कृतकेशवापनः ॥ ८३ ॥

**न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ॥ सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । उक्तंराजतोधनमन्विच्छेदिति । राजशब्दश्चायंक्षत्रियजातावक्षत्रियेऽपिजनपदेश्वरे दृष्टप्रयोगो ब्राह्मणानांराज्यमिति । तत्र प्रतिग्रहविधौ तन्निषेधेचजनपदेश्वरवचनोगृह्यतेयेनाह अराजन्यप्रसूतितइति । जनपदैश्वर्येहि सर्ववर्णसंभवि लिप्सया । अतोविशेष्यते । राजन्यात्क्षत्रियाद्यस्यप्रसूतिरुत्पत्तिर्नास्ति । तस्माद्राज्ञोजनपदेश्वरान्न

गृह्णीयात् । क्षत्रियादपि लुब्धादुच्छास्त्रवर्तिनोवक्ष्यमाणेन प्रतिषेधेन । सूनापशुमारणसंज्ञकपूर्वकेणमांसक्रयेणयोजीवतिससूनावान् । खट्टिकइतिलोके प्रसिद्धः । ध्वजी मद्यपण्यस्तत्क्रयविक्रयजीवी । वेशःपण्यवृत्तिस्तयायोजीवतिस्त्रीवापुमान्वा ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । राज्ञोजनपदपालकस्य अराजन्यप्रसूतेर्विप्रादेः । सूनेतिदशमहाप्राणिवधस्थानंसूना तत्प्रवर्तकःसूनावान् तिलनिष्पीडकश्चक्रवान् शौण्डिकःसुराध्वजवत्तया ध्वजवान् वेशेनाङ्गोपस्कारेण जीवन्वेश्याजनः । एषामपि न ग्राह्यमापद्यपि ॥ ८४ ॥

( ३ ) **कुल्लूकः** । राजन्यशब्दःक्षत्रियवचनः । अक्षत्रियप्रसूतस्य राज्ञोधनंनप्रतिगृह्णीयात् राजतोधनमन्विच्छेदित्युक्तंतस्यायंविशेषउक्तः । सूनाचक्रध्वजवतामिति सूनावतांचक्रवतांध्वजवतांच । सूना प्राणिवधस्थानंतद्यस्यास्तीति ससूनावान्पशुमारणपूर्वकमांसविक्रयजीवी । चक्रवान्बीजवधविक्रयजीवी तैलिकः । ध्वजवान्मद्यविक्रयजीवी शौण्डिकः । वेशःपण्यस्त्रियाभृतिस्तयायोजीवति स्त्रीपुमान्वा सवेशवान् । एतेषांच न प्रतिगृह्णीयात् ॥ ८४ ॥

( ४ ) **राघवानन्दः** । राजतोधनमन्विच्छेदिति सीदत्कुटुम्बस्य राजप्रतिग्रहस्योक्तत्वात् प्रजापालनकर्तरिअतज्जातौ राजपदंभाक्तमिति मीमांसास्तबके स्थापितं अतोतज्जातेःप्रतिग्रहोनिषिद्धइतिसार्थवादमाहनेतिअष्टभिः । सूना स्वयंनिहत्य मांसविक्रयः । चक्रंतिलादिपेषणं । ध्वजोमद्यंएतद्वतां । वेशः संभोगार्थंस्त्रीपुंसयोर्भृतिः ॥ ८४ ॥

( ५ ) **नन्दनः** । राजतोधनमन्विच्छेदिति यदुक्तंतत्र नियममाह नेति । राज्ञोऽपत्यंराजन्यः क्षत्रियइतियावत् । तस्मात्प्रसूतिर्यस्यसराजन्यप्रसूतिः । अराजन्यप्रसूतितोऽराजन्यप्रसूतेः । षष्ठ्यर्थेतसिर्द्रष्टव्यः । तस्यद्रव्यंनप्रतिगृह्णीयात् । सूनाचक्रध्वजवताम् सूना हिंसातद्वान्सूनावान् चक्रंतैलयन्त्रं तद्वांश्चक्रवान् । सुरायाउत्पादकःसुराध्वजस्तद्वान्ध्वजवान् सुराकारीत्यर्थः । वेशोवेश्याकर्म ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । अराजन्यप्रसूतितः न राजवंशोद्भवः तस्य अक्षत्रवंशप्रसूतितः राज्ञः सकाशात् प्रतिग्रहं न गृह्णीयात् । सूनी हिंसकः । चक्री तैलिकः । ध्वजी मद्यकर्ता । एतेषां वेशेनैवजीवतांप्रतिग्रहं न च गृह्णीयात् ॥ ८४ ॥

**दशसूनासमं चक्रं दशचक्रसमोध्वजः ॥ दशध्वजसमोवेशो दशवेशसमोनृपः ॥ ८५॥**

( १ ) **मेधातिथिः** । उत्तरस्योत्तरस्य दोषगुरुत्वज्ञापनार्थमेतत् । आपद्युपायोवक्ष्यते ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । दशसूनासमं तावत्पापयुक्तं । सूनादिपदानि तद्वल्लक्षकानि वेश्यातु स्वपदेनैवोपात्ता तत्रापि वेशइति पठन्ति । नृपोऽराजन्यप्रसूतिस्तत्प्रक्रमात् । एवंराजेत्यत्रापि ॥ ८५ ॥

( ३ ) **कुल्लूकः** । गोविन्दराजस्तु दशवेश्यासमोनृपइतिपठति । मेधातिथिप्रभृतयःप्राञ्चोदशवेशसमोनृपइतिपठन्ति । सूनादिशब्दैस्तद्वानुपलक्ष्यते । दशसूनावत्सु यावान्दोषस्तावानेकस्मिश्चक्रवति तैलिके । यावान्दशसु तैलिकेषु दोषःतावानेकध्वजवति शौण्डिके । यावान्दशसु ध्वजवत्सु दोषस्तावानेकत्र वेशवति । यावान्दशसु वेशवत्सु दोषस्तावानेकत्र राजनि उत्तरोत्तरनिन्दाचेयंपूर्वदातृसंभवे सत्युत्तरवर्जनार्थमपेक्षया योज्यते ॥ ८५ ॥

( ४ ) **राघवनन्दः** । एतेषांसौनिकादिचतुर्णामपि प्रतिग्रहोन कार्यः दोषवत्वेप्येतेषांनाराजन्यनृपतुल्यतेत्याह दशेति । सूनायादोषप्रायश्चित्तार्थंसंकरीकरणंखरोष्ट्रमृगेभाणामित्युक्तं । तद्दशगुणश्चक्रिणि तद्दशगुणःशौण्डिके तद्दशगुणोवेश्यायां ।

---

( ८५ ) दशध्वजसमोवेशोदशवेशसमोनृपः=दशध्वजसमा वेश्यादश वेश्यासमोनृपः ( ज, झ, ट, ठ, ड, ढ )

तद्दशगुणोनृपइति आपदिपूर्वपूर्वालाभउत्तरोत्तरस्य धनंग्राह्यमितितात्पर्यं उत्तरोत्तरस्य दोषाधिक्यात्। गोविन्दराजस्तु दशवेश्यासमइति पठति ॥ ८५ ॥

( ५ ) **नन्दनः**। एतेषांतारतम्यमाह दशेति । नृपः अराजन्यप्रसूतिरिति विभक्तिपरिणमय्यानुषज्यते। राजनिन्दार्थोदशसूनादीनामुपन्यासइतिकेचित् ॥ ८५ ॥

( ६ ) **रामचन्द्रः**। चक्री तैलिकः दशसूनासमः ॥ ८५ ॥

**दशसूनासहस्राणि योवाहयति सौनिकः ॥ तेन तुल्यः स्मृतोराजा घोरस्तस्य प्रतिग्रहः ॥ ८६ ॥**

( १ ) **मेधातिथिः**। सूनया चरति सौनिकः। वाहयति स्वार्थसाधने व्यापारयति। घोरः भीषणोयंनरकादिहेतुत्वात् अवयुत्यवादेनराजप्रतिग्रहेनिन्दा ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः**। दशसूनासहस्राणीत्युक्तार्थसङ्क्षेपः ॥ ८६ ॥

( ३ ) **कुल्लूकः**। सूनया चरतीति सौनिकः एवंसंकलनया यत्सौनिकोदशसहस्राणि स्वार्थे व्यापादयति तेन तुल्योराजा मन्वादिभिःस्मृतः। तस्मात्तस्य प्रतिग्रहोनरकहेतुत्वाद्भयानकः क्षत्रियस्यापि च ॥ ८६ ॥

( ४ ) **राघवानन्दः**। सूनया चरति सौनिकः एवंसंकलनया यानि सूनादशसहस्राणि वाहयति स्वार्थेव्यापारयति यःससौनिकः तेन तुल्योराजा अराजन्यस्तस्य प्रतिग्रहोघोरोभीषणः ॥ ८६ ॥

( ५ ) **नन्दनः**। वाहयति प्रवर्तयति राजाअराजन्यप्रसूतिरित्येव ॥ ८६ ॥

( ६ ) **रामचन्द्रः**। दशेति। दश सूनासहस्राणि यः वाहयति तेन तुल्यःस्मृतोराजा सौनिकः। सूना प्राणिहिंसा अराजन्यप्रसूतितः राज्ञः प्रतिग्रहोघोरः ॥ ८६ ॥

**योराज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः ॥ सपर्यायेण यातीमान्नरकानेकविंशतिम् ॥ ८७ ॥**

( १ ) **मेधातिथिः**। लुब्धआदानशीलः सामन्तकादिभ्यः श्रुतशीलंचविज्ञायेत्यादि । उच्छास्त्रवर्तीशास्त्रमतिक्रम्य व्यवहरति। असद्दण्डपरस्त्रीहरणादिना पर्यायेणैकत्र फलमनुभूयान्यत्र गच्छति । नरकशब्दोनिरतिशयदुःखवचनः। केवलदुःखश्रवणार्थापत्त्या वादेशविशेषवचनः। एकविंशतिसंख्याऽर्थवादः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । राज्ञोराजन्यजातीयस्यापि लुब्धस्यवा शास्त्रविरुद्धाचरणशीलस्यवा योगृण्हाति तस्य वक्ष्यमाणोदोषः। पर्यायेण क्रमेण ॥ ८७ ॥

( ३ ) **कुल्लूकः** । योराज्ञःकृपणस्य शास्त्रोल्लङ्घनेन प्रवर्त्तमानस्य प्रतिग्रहंकरोति सक्रमेणैतान्वक्ष्यमाणैकाविंशतिनरकान्गच्छति ॥ ८७ ॥

( ४ ) **राघवानन्दः**। उक्तंदूषणमाह योराज्ञइत्यनुवादमात्रं घोरनरकसंबन्धाय। लुब्धस्य परधनगर्धिनः कृपणस्यवा। एकविंशतिनरकलक्षणंमार्कण्डेयपुराणोक्तंज्ञेयम् । याति भोगाय गच्छतीत्यर्थः ॥ ८७ ॥

( ५ ) **नन्दनः**। राजन्यप्रसूतेरपि लुब्धस्योच्छास्त्रवर्तिनोधनप्रतिग्रहे दोषमाह यइति। इमान्वक्ष्यमाणान् ॥ ८७ ॥

( ६ ) **रामचन्द्रः**। एतादृशस्य राज्ञः यः प्रतिग्रहंगृह्णाति सः पर्यायेण क्रमेणइमान् एकविंशतिनरकान् याति॥८७॥

**तामिस्रमन्धतामिस्रंमहारौरवरौरवौ ॥ नरकं कालसूत्रंच महानरकमेव च ॥ ८८ ॥**

( २ ) **सर्वज्ञनारायणः**। नरकमितिकालसूत्रविशेषणम् ॥ ८८ ॥

( ३ ) कुल्लूकः । पूर्वश्लोके सामान्यतोनरकानिमानेकविंशतिमित्युक्तमिदानींतानेव नामतोनिर्दिशति तामिस्रमिति त्रिभिः । एतेषांनरकाणांस्वरूपंमार्कण्डेयपुराणादिषु विस्तरेणोक्तंतत्रैवावगन्तव्यम् ॥ ८८ ॥ ८९ ॥ ९० ॥

( ५ ) नन्दनः । नरकानाह तामिस्रमिति ॥ ८८ ॥

( ६ ) रामचन्द्रः । नरकाणांनामान्याह तामिस्रमितित्रिभिः ॥ ८८ ॥

**संजीवनं महावीचिं तपनं संप्रतापनम् ॥ संहातं च सकाकोलं कुड्मलं प्रतिमूर्तिकम् ॥ ८९ ॥**

**लोहशङ्कुं मृजीषं च पन्थानं शाल्मलींनदीम् ॥ असिपत्रवनं चैव लोहदारकमेव च ॥ ९० ॥**

( २ ) सर्वज्ञनारायणः । पन्थानंसदा वर्त्मवहनेनश्रमहेतुं नदींवैतरणीं । लोहचारकं यत्र तप्तलोहोपरि-गम्यते' । तामिस्रादयोन्धःसंज्ञानरकभेदाः ॥ ९० ॥

**एतद्विदन्तोविद्वांसोब्राह्मणाब्रह्मवादिनः ॥ न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोऽभिकांक्षिणः ॥ ९१ ॥**

( १ ) मेधातिथिः । पूर्वस्यप्रतिग्रहनिषेधविधेरुपसंहारएषः । राज्ञःप्रतिग्रहोविविधदुःखनरकादिहेतुरितिजानन्तो-विद्वांसोब्राह्मणान राज्ञः प्रतिगृह्णीयुः । प्रेत्यभवान्तरे । श्रेयः कल्याणम् । येकांक्षन्ति कामयन्ते । प्रेत्येति तु ल्यबन्तप्रति रूपकंशब्दान्तरम् । ब्रह्मवेदस्तवदन्ति पठन्ति । विद्वद्ग्रहणंब्रह्मवादिग्रहणंचदुःखातिशयदर्शनार्थम् । तेषांचातीव प्रतिग्रहाद्दोषः । वक्ष्यति तस्मादपि विद्वान्बिभीयादिति ॥ ९१ ॥

( २ ) सर्वज्ञनारायणः । विद्वांसोवेदार्थज्ञाः ब्रह्मवादिनोवेदाध्येतारः राज्ञोराजमात्रस्य लुब्धत्वादिदोषा-शङ्कया ॥ ९१ ॥

( ३ ) कुल्लूकः । प्रतिग्रहोविविधनरकहेतुरितिजानन्तोब्राह्मणाधर्मशास्त्रपुराणादिविदोवेदाध्यायिनोजन्मान्तरेश्रेयः कामयन्तोन राज्ञः प्रतिगृह्णीयुःविदुषोहि प्रतिग्रहेनातीव दोषः । यतोवक्ष्यति तस्मादविद्वान्बिभीयादिति । तेषामपि नि-षिद्धोराजप्रतिग्रहःप्रचुरप्रत्यवायफलकइतिदर्शयितुंविद्वद्ग्रहणंब्रह्मवादिग्रहणंच ॥ ९१ ॥

( ४ ) राघवानन्दः । एतदुक्तंनरकसाधनत्वं । विद्वांसोधर्मशास्त्रपुराणादिविदः । ब्रह्मवादिनोवेदार्थनिपुणाअपि प्रेत्य श्रेयोभिकाङ्क्षिणः अराजन्यप्रसूतेराज्ञोन प्रतिगृह्णन्तीत्यर्थः ॥ ९१ ॥

( ५ ) नन्दनः । उक्तंनिगमयति एतदिति । एतदेकविंशतिनरकपतनम् । राज्ञः क्षत्रियस्याक्षत्रियस्यचलुब्धस्यो-च्छास्त्रवर्तिनः ॥ ९१ ॥

( ६ ) रामचन्द्रः । ब्रह्म वेदं वदन्ति ते ब्रह्मवादिनः एतत् नरकस्वरूपं विदन्तः जानन्तः । राज्ञः प्रतिगृह्णन्ति । कीदृशा ब्राह्मणाः प्रेत्य परलोके श्रेयोभिकाङ्क्षिणः ॥ ९१ ॥

**ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ॥ कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ ९२ ॥**

( १ ) मेधातिथिः । त्रियामा रात्रिस्तस्याः पश्चिमोब्राह्मोमुहूर्तस्तत्र निद्रांत्यजेत् । विबुद्धश्च तस्मिन्कालेधर्मार्था-वनुचिन्तयेत् । यस्मिंश्चधर्मआसेव्यमाने यादृशः शरीरक्लेशोभवतितमपि चिन्तयेत् । स्वल्पश्चेद्धर्मोमहान्तंकायक्लेशंजनयति

---

( ८९ ) कुड्मलंप्रतिमूर्तिकम्=कुड्मलंपूतिमृत्तिकम् ( क, ख, ग, घ, च, ण, अ, द )
संहातम्=संघातम् ( ल, न, ब, य, र, भ )

योधर्मान्तरविरोधी तंपरिहरेत् । अर्थोऽपि सेवादिरतिक्लेशकरः । सोऽपि वर्ज्यः । सर्वतएवात्मानंगोपायेदिति । अनिश्चित्य न किंचित्कुर्यात् । न च मनोराज्यादिविकल्पान्कुर्यात् । स्वभावो ह्ययंपुरुषाणामसति बाह्ये व्यापारे मनसोविकल्पाः परद्रव्याभिलाषादिरूपाः समुद्भवन्ति । तन्निवृत्यर्थमिदंपुरुषार्थम् । तस्यांवेलायांसाध्यसाधनभावेन चिन्त्योवेदस्य तत्त्वार्थः । रहस्यमात्मज्ञानंचिन्तयेद्वेदान्तविधिनाऽभ्यस्येत् । अथवा कर्मकाण्डेऽपियोवेदस्तस्यार्थस्तंनिरूपयेत् । अयंविधिरयमर्थइदंकर्मैवंरूपमियमत्रदेवतेदंद्रव्यमयमत्राधिकारीयमितिकर्तव्यतेत्यादिस्वबुद्ध्यानिश्चिनुयात् । व्याख्यातृणांमतभेदाद्धेतून्निरूपयेदस्य सम्यग्ज्ञानमस्यभ्रान्तिरिति ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मोमुहूर्तउषःकालः । धर्मार्थौ धर्मार्थसाधने अनुचिन्तयेदूहापोहाभ्यांविविच्य निर्धारयेत् । एतद्रागिणःकार्यमुक्तं । विरक्तस्यचाह कायक्लेशानिति तन्मूलांस्तथा वेदस्य तत्वतात्पर्यविषयमर्थंब्रह्म ॥ ९२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मोमुहूर्तोरात्रेःपश्चिमोयामः ब्राह्मी भारती तत्प्रबोधहेतुत्वात् । मुहूर्तशब्दोऽत्र कालमात्रवचनः । तत्र बुध्येत । दक्षेणापि प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयंशयानोहि ब्रह्मभूयाय कल्पतइतिब्रुवता ॥ तत्र प्रबोधोऽभ्यनुज्ञातः । गोविन्दराजस्तु रात्रेःपश्चिमे मुहूर्ते बुध्येतेत्याह । धर्मार्थौ च परस्पराविरोधेनानुष्ठानार्थमवधारयेत् । तथा धर्मार्थार्जनहेतून्कायक्लेशान्निरूपयेत् । यदि महान्कायक्लेशोऽल्पौ च धर्मार्थौ वा तदा तंपरिहरेत् । वेदस्य तत्त्वार्थंब्रह्मकर्मात्मकंनिश्चिनुयात्तस्मिन्समये बुद्धिप्रकाशात् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । स्नातकस्य कृत्यंप्रतिजानीतेब्राह्मेति रात्रेःपश्चिमोयामोब्राह्ममुहूर्तः ब्राह्मी भारती तत्प्रबोधहेतुत्वात् । मुहूर्तशब्दोत्र कालमात्रवचनः तत्र बुध्येत । दक्षेणापि प्रदोषपश्चिमौ यामौवेदाभ्यासेन तौ नयेत् । यामद्वयंशयानोहि ब्रह्मभूयाय कल्पतइति ब्रुवता तत्र बोधोभ्यनुज्ञातः । गोविन्दराजस्तुरात्रेःपश्चिमे मुहूर्ते बुध्येतेति तन्मूलान् धर्मार्थाश्रयहेतून् । तत्रापि स्वल्पफलबव्ह्यायासांस्त्यजेदित्यर्थः । वेदतत्वार्थं ब्रह्म चिन्तयेदिति भावः ॥ ९२ ॥

( ५ ) **नन्दनः** । अथसंक्षेपतोनित्यकर्तव्यमाह ब्राह्मइति । ब्राह्मोमुहूर्तो रात्रेः पश्चिमोयामः ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । तन्मूलान्धर्मार्थमूलान् कायक्लेशान् चिन्तयेत् । तत्वार्थमेव चिन्तयेत् ॥ ९२ ॥

**उत्थायावश्यकं कृत्वा कृतशौचः समाहितः ॥ पूर्वां सन्ध्यां जपंस्तिष्ठेत्स्वकाले चापरां चिरम् ॥९३॥**

( १ ) **मेधातिथिः** । अनन्तरंप्रभातायांशयनंरात्रौ जह्यात् । आवश्यकंमूत्रविट्त्यागः । प्रायेणतस्यांवेलायांपुरुषस्तंकुर्वीत । तत्र आवश्यकस्त्यागउच्यते मुखदन्तधावनादिश्च तंकृत्वाकृतशौचः एकालिङ्गेत्यादिविधिनाऽऽचान्तः । समाहितोविकल्पान्तरतिरस्कारेण सन्ध्यांतिष्ठेत् । जपन्सावित्रींभगवतिसवितरि मनोदध्याच्चिरं । अर्कदर्शनावधिः कालउक्तः सन्ध्यासमयः । ततोऽप्यधिकंकालंजपेदायुःकामइत्येवमर्थमयंप्रागुक्तः सान्ध्योविधिरन्तर्हितः । अपरांचसन्ध्यांस्वेकालेअस्तमयसमयादारभ्यतारकोदयादूर्ध्वमपि ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । आवश्यकंमूत्रत्यागादि । जपंस्तिष्ठेदितिष्ठञ्जपेदित्यर्थः । स्वकाले स्वीये अपरांसायन्तनींचिरमितिपूर्वसन्ध्यातोधिकजपकरणमुक्तं । एतच्चासीनेनेति ब्रह्मचारिप्रकरण उक्तमेव ॥ ९३ ॥

( ३ ) **कुल्लूकः** । ततउषःकाले शय्यायाउत्थाय सति वेगे मूत्रपुरीषोत्सर्गंकृत्वाअत्रकृतवक्ष्यमाणशौचोऽनन्यमनाः पूर्वांसन्ध्यांचिरगायत्रीजपंकुर्वन्वर्तेतार्कदर्शनात् । अयंविधिःप्रातःसन्ध्यायामुक्तः । उदयादूर्ध्वमपिजपेदायुरादिकामइतिविधानार्थोयमारम्भः । अपरामपि सन्ध्यांस्वकाले प्रारभ्य तारकोदयादूर्ध्वमपि जपन्नासीत ॥ ९३ ॥

( ४ ) **राघवानन्दः** । उत्थाय शय्यातः । विण्मूत्रोत्सर्गादिकमाचरेदित्यावश्यकम् । कृतशौचः एकालिङ्गेत्यादिना । समाहितआचान्तःपूर्वामासूर्योदयाज्जपंस्तिष्ठेत् । अपरां सायन्तनीं स्वकाले तारकोदयादूर्ध्वमपि जपन्नासीतेति चिरं सम्यगृक्षविभावनादित्यत्रोक्तम् ॥ ९३ ॥

( ५ ) **नन्दनः** । स्वकालेऽर्धास्तमितभास्करे । चिरमासीतेत्यध्याहार्यम् ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । उत्थाय आवश्यकं मूत्रपुरीषादि कृत्वा । कृतशौचः पूर्वासन्ध्यां गायत्रीं जपन् स्वे काले सूर्योदयपर्यन्तं तिष्ठेत् । अपरां सायंकाले चिरंतिष्ठेत् । नक्षत्रदर्शनपर्यन्तं जपंस्तिष्ठेत् । आतारकोदयात् ॥ ९३ ॥

**ऋषयोदीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ॥ प्रज्ञां यशश्च कीर्तिंच ब्रह्मवर्चसमेव च ॥ ९४ ॥**

( १ ) **मेधातिथिः** । यदर्थोऽयंपुनर्विधिस्तद्दर्शयति । आयुरादिफलकामोदीर्घकालसन्ध्याजपंकुर्यात् । सत्यपि नित्यत्वे दैर्घ्याद्गुणात्फलमिदंअनग्निकस्यप्रोषितस्यैतत्संभवति । अन्यस्य त्वग्निहोत्रकालोपरोधोदीर्घसन्ध्याविधिसंपादनात् । दीर्घसन्ध्यागुणतउच्यते । सन्ध्यासहचरितेजपादिविधौ सन्ध्याशब्दोवर्तते । दीर्घासन्ध्यैषामितिबहुव्रीहिः । ऋषिग्रहणमर्थवादः ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । अवाप्नुयुरवाप्नुवन् । यशः परैःस्वगुणानांज्ञानं कीर्तिस्तेषांपरैःकीर्तनम् ॥ ९४ ॥

( ३ ) **कुल्लूकः** । आयुरादिकामाधिकारोऽयमितिदर्शयन्नाह ऋषयइति । सन्ध्याशब्दोऽत्र सन्ध्यानुष्ठेयजपादिपरः यस्मादृषयोदीर्घसन्ध्यानुष्ठानाद्दीर्घमायुर्जीवन्तःप्रज्ञांयशोऽमृतांच कीर्तिमध्ययनादिसंपन्नंयशश्च प्रापुः तस्मादायुरादिकामश्चिरंसन्ध्यामुपासीत ॥ ९४ ॥

( ४ ) **राघवानन्दः** । तत्रार्थवादमाह ऋषयइति । दीर्घसन्ध्यत्वात्सन्ध्याशब्दोत्रानुष्ठितजपसङ्ख्यापरःसहस्रपरमामित्युक्तेः ॥ ९४ ॥

( ५ ) **नन्दनः** । सन्ध्योपासनं प्रशंसति ऋषयइति । दानधर्मकृताख्यातिर्यशः । त्यागकृताकीर्तिः ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । प्रज्ञादिसर्वं अवापुः ॥ ९४ ॥

**श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि॥युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥९५॥**

( १ ) **मेधातिथिः** । श्रवणयुक्ता पौर्णमासी श्रावणी । एवंप्रौष्ठपदी । तत्रोपाकृत्योपाकर्माख्यंकर्मकृत्वा यथाविध्यधीयीत । प्राक्कूलानित्यादिप्रागुक्तोविधिः स्मर्यते । युक्तस्तत्परः । छन्दांसिवेदान् । छन्दः शब्दोऽयंवेदवचनोन गायत्र्यादिवचनस्तेनब्राह्मणादीनप्यधीयानस्यैषपरमविधिः । उभयत्रापि चायंयुक्तएवप्रत्ययाविशेषात् । अयंविकल्पोव्यवस्थितः । छन्दोगाः प्रौष्ठपद्यामुपाकुर्वन्ति बह्वृचाअध्वर्यवः श्रावण्याम् ॥९५॥

( २ ) **सर्वज्ञनारायणः** । श्रावणस्य पूर्णिमाश्रावणी । भाद्रपदस्य प्रौष्ठपदी उपाकृत्य वेदमारभ्य यथाविधि गृह्योक्तविधिना युक्तःसर्वदा युक्तः । अध्यापयेदितिवाच्ये अधीयीतेति अध्येतुर्ब्रह्मचारिणोप्ययमेवाध्ययनकालइतिदर्शयितुमुक्तम् । अध्ययनपदेन वाच्याध्यापनमपिगृह्यते न त्वध्यापनपदेनाध्ययनमिति स्नातकप्रकरणे त्वस्याभिधानं । उपाकर्मोत्सर्गहोमयोराचार्यस्यौपासने करणार्थम् । अर्धपञ्चमान्पञ्चमस्यार्धेन सहितांश्चतुरोमासान् । श्रावण्यांचेत् ॥ ९५॥

( ३ ) **कुल्लूकः** । श्रावणस्य पौर्णमास्यांभाद्रपदस्य वा स्वगृह्यानुसारेणोपाकर्माख्यंकर्म कृत्वा सार्धांश्चतुरोमासान्ब्राह्मणउद्युक्तोवेदानधीयीत ॥ ९५ ॥

( ४ ) **राघवानन्दः** । श्रावण्यां भाद्रपदपौर्णमास्यांवा स्वगृह्यानुसारेण उपाकर्म कृत्वा छन्दांसिमन्त्रब्राह्मणादीनि छन्दःशब्दस्यात्र वेदवचनत्वात् सार्धचतुरोमासानधीयीत ॥ ९५ ॥

( ५ ) **नन्दनः** । इदानीमुपाकरणविधिमाह श्रावण्यामिति । श्रवणेनयुक्तापौर्णमासीश्रावणी । तथाप्रोष्ठपदनक्षत्रयुक्तापौष्ठपदी । अथछन्दांसिमन्त्रान्गायत्रीजगत्यादिरूपान् उभयत्रार्धपञ्चमान् ॥ व्यवस्थितविषयोऽयंविकल्पः ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह श्रावण्यामिति । यथाविधि स्वगृह्योक्तविधिना उपाकृत्य वेदमारभ्य उपाकरणसंज्ञं कर्म कृत्वा श्रावण्यां प्रौष्ठपद्यांवा छन्दोगाःप्रौष्ठपद्यांबह्वृचा अध्वर्यवः श्रावण्यां कुर्युः विप्रःअर्धपञ्चमोमासोंग्रे येषांसार्धचतुष्टयानित्यर्थः अधीयीत पठेत् ॥ ९५ ॥

## पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ॥ माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥९६ ॥

( १ ) **मेधातिथिः** । अर्धपञ्चमेषु मासेषु गतेषु यः पुष्योनक्षत्रंतत्रोत्सर्जनंकर्तव्यम् । उत्सर्गोक्तंकर्म गृह्यकारैराम्नातम् । बहिरित्यनावृतेदेशे । अनयोरुपाकर्मोत्सर्गयोर्गृह्यात्स्वरूपंज्ञातव्यम् ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । तिष्ये पौषमासे पुष्यर्क्षे भाद्र्यांचेन्माघस्य शुक्लप्रतिपदिशुक्लः शुक्लःपक्षः । प्रथमेहनि प्रतिपदि एवंचदर्शान्तोमासोमनोरपेक्षितइतिगम्यते । उत्सर्जनंनिरन्तरवेदाध्ययनत्यागार्थंकर्म ॥ ९६ ॥

( ३ ) **कुल्लूकः** । ततःपक्षाधिकेषु चतुर्षुमासेषुयःपुष्यस्तत्र ग्रामाद्बहिर्गत्वा स्वगृह्यानुसारेणोत्सर्गाख्यंकर्म कुर्यात् । अथवा माघशुक्लस्य प्रथमेहनि पूर्वाह्णे कुर्यात् । माघशुक्लेच विधिःप्रौष्ठपद्यांयेनोपाकर्म न कृतंतद्विषयः ॥ ९६ ॥

( ४ ) **राघवानन्दः** । तत्र मासे यःपुष्यो नक्षत्रंतत्र स्वगृह्यानुसारेण ग्रामाद्बहिर्गत्वा उत्सर्गाख्यंकर्म कुर्यात् शुक्लस्यपक्षस्येति शेषः । प्रथमेहनि प्रतिपदि ॥ ९६ ॥

( ५ ) **नन्दनः** । बहिर्ग्रामाच्छन्दसामुपाकृतानामुत्सर्जनमुत्सर्जनाख्यंकर्म । प्रथमेऽहनि प्रथमायांतिथौ । पुष्येऽध्वर्यूणां माघेच्छन्दोगानाम् ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । बहिः ग्रामाद्बहिः । अर्धपञ्चमेषु गतेषु पुष्ये नक्षत्रे पौर्णिमायां छन्दसां वेदानां उत्सर्जनं वेदसमाप्तिं द्विजःकुर्यात् ॥ ९६ ॥

## यथाशास्त्रं तु कृत्वैवमुत्सर्गंछन्दसांबहिः ॥ विरमेत्पक्षिणीं रात्रिं तदेवैकमहर्निशम् ॥ ९७ ॥

( १ ) **मेधातिथिः** । उत्सर्गंकृत्वा द्वेअहनीरात्रिरियन्तंनाधीयीततदहर्निशंद्वितीयंचाहरेव न रात्रिरित्येतावन्तंकालंविरमेन्नाधीयीत । उभयतोहःपक्षारात्रिःपक्षिणी । तद्वा यस्मिन्नहन्युत्सर्गःकृतस्तदहःसैवचरात्रिः । अनध्याये द्वितीयस्मिन्नहन्यध्येतव्यम् । आद्ये तु पक्षे द्वितीयमहरनध्यायोरात्रौ त्वध्ययनमुच्यते ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । आगामिवर्तमानाहर्युक्तायांनिशिपक्षिणीत्यमरः ॥ पक्षिणींरात्रिमुत्तरदिवसास्तपर्यन्तं विरमेदध्यापनात् । तदेकमहर्निशंयस्मिन्नहनि उत्सर्गकृतः तिष्यमाघोत्सर्गयोः क्रमादध्ययनपक्षद्वयान्वयः ॥ ९७ ॥

( ३ ) **कुल्लूकः** । एवमुक्तशास्त्रानुसारेण ग्रामाद्बहिश्छंन्दसामुत्सर्गाख्यंकर्म कृत्वा पक्षिणींरात्रिंविरमेन्नाधीयीत । द्वे दिने पूर्वापरे पक्षाविव यस्यामध्यवर्तिन्यारात्रेःसा पक्षिणी रात्रिः । अस्मिन्पक्षे तूत्सर्गाहो रात्रे द्वितीयदिने चाह्नि नाध्ये-

---

( ९७ ) तदेवैकमहर्निशम्=तद्वाप्येकमहर्निशम् ( क, ख, ग, घ, च, म )

तव्यंद्वितीयरात्रौ त्वध्येतव्यम् । अथवा तमेवैकमुत्सर्गाहोरात्रमनध्यायंकुर्यात् । विद्यानैपुण्यकामंप्रत्ययमहोरात्रानध्याय-विधिः ॥ ९७ ॥

( ४ ) **राघवानन्दः** । विरमेत् नाधीयीत पक्षिणी अहर्द्वययुतारात्रिः। तथाचामरः। आगामिवर्तमानहर्युक्तायां-निशि पक्षिणीति । यद्वा यस्मिन्नहनि उत्सर्गःकृतस्तदहस्तांरात्रिंच विरमेदित्यनुषज्यते ॥ ९७ ॥

( ५ ) **नन्दनः** । आगामिवर्तमानाहर्युक्तायांनिशि पक्षिणीत्यमरः । विरमेद्वेदाध्ययनात् ॥ ९७ ॥

( ६ ) **रामचन्द्रः** । यथाशास्त्रं यथाविधि छन्दसां वेदानां उत्सर्गंबहिःकृत्वा पक्षिणींरात्रिं विरमेत् ॥ ९७ ॥

**अतऊर्ध्वंतु छन्दांसि शुक्लेषु नियतः पठेत् ॥ वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् ॥ ९८ ॥**

( १ ) **मेधातिथिः** । अतोऽस्मादुत्सर्गकर्मणःकृतादूर्ध्वंपरतः शुक्लपक्षेषु छन्दांसि मन्त्रब्राह्मणसमुदायात्मकान्वेदा-न्पठेत् । अङ्गानि शिक्षयेत्सूत्रव्याकरणादीनि कृष्णपक्षेषु संपठेत् ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । छन्दांसि वेदान् ॥ ९८ ॥

( ३ ) **कुल्लूकः** । उत्सर्गानध्ययनादूर्ध्वंमन्त्रब्राह्मणात्मकंवेदंशुक्लपक्षेषु संयतःपठेत् । सर्वाणि तु वेदाङ्गादीनि शि-क्षाव्याकरणादीनि कृष्णपक्षेषु पठेत् ॥ ९८ ॥

( ४ ) **राघवानन्दः** । शुक्लेषु द्वितीयादित्रयोदश्यन्तासु शुक्लपक्षतिथिषुवेदावेदाङ्गानीतिवेदाङ्गानि शिक्षाकल्पोव्या-करणंनिरुक्तंछन्दोज्योतिषमितिषट् । तदुक्तं छन्दःपादौतु वेदस्य हस्तौ कल्पोथपठ्यते । ज्योतिषामयनंचक्षुर्निरुक्तंश्रोत्रमु-च्यते । शिक्षाघ्राणंतु वेदस्य मुखंव्याकरणंस्मृतम् ॥ ९८ ॥

( ५ ) **नन्दनः** । अतऊर्ध्वमुत्सर्गादूर्ध्वम् ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । अत ऊर्ध्वं उत्सर्गानन्तरं । शुक्लेषु पक्षेषु छन्दांसि पठेत् वेदाङ्गानि कृष्णपक्षेषु पठेत् शिक्षा-कल्पादीनि ॥ ९८ ॥

**नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ॥ न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥ ९९ ॥**

( १ ) **मेधातिथिः** । यत्रवर्णस्वराभिव्यक्तिः स्फुटा नभवति तदविस्पष्टम् । तच्चद्रुतायांवृत्तौ प्रायेण भवति । निशान्ते पश्चिमरात्रिभागे । सुप्तोत्थितोयदाधीयीत पुनःश्राम्येत्तदा न शयीत न निशान्ते । परिश्रान्तोब्रह्माधीत्य शयीततु एवंयुक्तःपाठः ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । शूद्रसंनिधौ न च जनानां बहूनांसंनिधौ निशान्ते ब्रह्माधीत्य परिश्रान्तोपि न स्वपेदि-त्यन्वयः ॥ ९९ ॥

( ३ ) **कुल्लूकः** । स्वरवर्णाद्यभिव्यक्तिशून्यंशूद्रसन्निधौ च नाधीयीत । तथा रात्रेःपश्चिमे यामे सुप्तोत्थितोवेदमधी-त्य श्रान्तोन पुनःस्वप्यात् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । किंच नेति निशान्ते पश्चिमे यामे ब्रह्माधीत्य अन्ते श्रान्तःपुनर्न स्वपेत् ॥ ९९ ॥

( ५ ) **नन्दनः** । ब्रह्माधीत्यपरिश्रान्तः परिश्रान्तात्माऽपि ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । शूद्रजनसमूहसंनिधौ नाधीयीत । अविस्पष्टं वेदं नाधीयीतनिशान्ते निशाप्रान्ते ब्रह्म वेदं अधीत्य पठित्वा परिश्रान्तःसन् पुनः न स्वपेत् ॥ ९९ ॥

यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत् ॥ ब्रह्मच्छन्दस्कृतं चैव द्विजोयुक्तोह्यनापदि ॥१००॥

( १ ) **मेधातिथिः** । छन्दांसि गायत्र्यादीन्यभिप्रेतानि तैःकृतंयुक्तंब्रह्मर्क्साम । अनेकार्थत्वात्करोतेरयमत्रार्थो-व्याख्यायते । यथागोमयान्कुर्वितिसंहारेपृष्ठंकुर्वित्युन्मर्दने एवमत्र युजेरर्थे वर्तते । ब्रह्मचछन्दश्चब्रह्मच्छन्दसी ताभ्यां युक्तंब्रह्मछन्दस्कृतम् । यजूंषि गायत्र्यादियुक्ताश्चमन्त्राः । एकस्मिन्नेवावस्थानके पठन्ति । न यथाबाह्वृच्येछान्दोग्ये-चविभागेनैकस्मिन्ग्रन्थेमन्त्राअन्यत्र ब्राह्मणम् । एवंप्रकारभेदाद्वेदानामेवंयुक्तमितिपूर्वे व्याख्यातवन्तः । यथोदितेन पूर्वो-विधिरनापद्युपसंन्हियते । आपदि अध्यापकस्यासंनिधानंबहुदेवताविभागमपेक्षमाणस्य तत्रागुणवतः । सहविस्मृत्य-स्यात् । तस्मान्नापद्ययंविभागोनादरणीयः ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्म ब्राह्मणं तत्र वेदत्वाविशेषेप्यापत्कालएकदेशमात्राध्ययने कर्तव्ये छन्दस्कृतमेव विधिना गुरुकुलवासादिपूर्वकंपठेत् । न तु ब्राह्मणभागं । मन्त्राणांसाक्षात्कर्माङ्गतयान्तरङ्गत्वात् । यथा विधिगृहीतानामेव च विनियोगार्हत्वात् । ब्राह्मणंतूपदेशमात्रार्थत्वाद्बहिरङ्गम् । अतोनियमेनाधीतादप्यर्थप्रतिपत्तिविरोधः । अनापदितुकृत्स्न-स्यवेदस्य नियमेनाध्येतव्यत्वात् । ब्रह्मछन्दस्कृतंयुक्तउद्युक्तोनियमेनैव पठेदित्यर्थः । यदप्यनध्ययनादिकमध्ये तु ब्रह्मचा-रिणःप्रकरणे वक्तुंयुक्तं । कथंचित्सन्ध्यादिवत्स्नातकव्रतत्वमप्याविष्कर्तुमत्रसंक्षेपतःपुनरुच्यते । तथापि गहनत्वादस्यार्थ-स्य ब्रह्मचारिणश्चाव्युत्पन्नत्वात्स्नातकएव ज्ञातुमेतच्छक्नोतीतिदर्शयितुमत्रैवोक्तं । सन्ध्याशौचादिकंत्वस्यापि तत्कालएव वेद्यमित्याशयेन तत्रोक्तम् ॥ १०० ॥

( ३ ) **कुल्लूकः** । यथोक्तविधिना नित्यंछन्दस्कृतंगायत्र्यादिछन्दोयुक्तंमन्त्रमात्रंपठेत् मन्त्राणामेव कर्मान्तरङ्गत्वात् । अनापदि सम्यक्करणादौ सति ब्रह्म ब्राह्मणंमन्त्रजातंच यथोक्तविधिना युक्तःसन्द्विजः पठेत ॥ १०० ॥

( ४ ) **राघवानन्दः** । ब्रह्मात्र वेदः । कृतंगायत्र्यादिछन्दोयुक्तं मन्त्रजातं । अनापदि धारणशक्तौ ॥ १०० ॥

( ५ ) **नन्दनः** । उपसंहरति यथेति । यथोदितेन विधिनाऽर्धपञ्चमासान्पठेदित्युक्तेन विधिना । छन्दस्कृतंगायत्र्या-दिछन्दोनुगतं मन्त्रभागम् । नित्यमापद्यनापदि च । अनापदि ब्राह्मणभागंछन्दस्कृतं चोभयंपठेत् । एतदुपाकृत्याध्ययनं स्नातानामेवेति प्रकरणसामर्थ्याद्विज्ञेयं ब्रह्मचारिणमित्यभिधानाच्च ॥ १०० ॥

( ६ ) **रामचन्द्रः** । छन्दस्कृतं मन्त्रभागं पठेत् ब्रह्मब्राह्मणंछन्दस्कृतंमन्त्रभागसहितं पठेत् ब्राह्मछन्दस्कृतं ब्रा-ह्मणभागं पठेत् ब्रह्मछन्दसी ताभ्यांयुक्तं अनापदि युक्तः नियमवान् द्विजः ॥ १०० ॥

इमान्नित्यमनध्यायानधीयानोविवर्जयेत् ॥ अध्यापनं च कुर्वाणः शिष्याणां विधिपूर्व-कम् ॥ १०१ ॥

( १ ) **मेधातिथिः** । इमान्वक्ष्यमाणाननध्यायानधीयानोविवर्जयेत् । अध्यापनंचकुर्वाणः अध्यापनग्रहणमनधीय-तोग्रहणार्थमभ्यासार्थंच । नित्यम् नोत्सर्गादेवप्रभृति किंतर्ह्यर्धपञ्चमेष्वपिमासेषूपाकर्मणःप्रभृति । शिष्याणाम् अनुवादः॥१०१

( २ ) **सर्वज्ञनारायणः** । अधीयानोगुरोः । स्वतोवा पठन् ॥ १०१ ॥

( ३ ) **कुल्लूकः** । इमान्वक्ष्यमाणाननध्यायान्सर्वथा यथोक्तविधिनाऽधीयानः शिष्याध्यापनंच कुर्वाणोगुरुर्वर्जयेत्१०१

( ४ ) **राघवानन्दः** । इमान्वक्ष्यमाणान् ॥ १०१ ॥

( ५ ) **नन्दनः** । इमान्वक्ष्यमाणान् । नित्यंब्रह्मचर्याश्रमेऽपीत्यर्थः ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । अथ अनध्यायानाह इमानिति । इमान् वक्ष्यमाणलक्षणान् अनध्यायान् । द्विजः । विसर्जयेत् कीदृशः विधिपूर्वकंशिष्याणामध्यापनंकुर्वाणः ॥ १०१ ॥

**कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने ॥ एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते ॥ १०२ ॥**

( १ ) **मेधातिथिः** । अनिलोवायुः । वेगेन वाति वायौ वाय्वन्तरसंघर्षाद्ध्वनिःश्रूयते यत्र सकर्णश्रवोवायुः । कर्णाभ्यांश्रूयते यः सकर्णश्रवः । साधनंकृतेतिसमासः । अवस्थाविशेषोपलक्षणार्थंकर्णग्रहणम् । श्रूयतेकर्णाभ्यामेव । तेन यदेवंवायुशब्दः श्रूयते । तदानाध्येतव्यम् । पांसून्समूहति पांसून्समाहरति पांसुसमूहनः । पांसुर्धूलिः । उपलक्षणंचैतत् । तथाभूतस्य वायोर्वा यतस्ततश्चवृष्टे देवे यदि वायुरीदृशोवाति तावत्कालेऽनध्यायः । अध्यायज्ञाअध्यापनविधिज्ञाः॥१०२॥

( २ ) **सर्वज्ञनारायणः** । रात्रौ श्रवणोद्वेजकशब्दकारिणि दिवा च पांसुसमूहनसमर्थवेगवति वायौ वात्यनध्यायः सच वक्ष्यमाणा ऽकालिकरूपः। एतावेताविव नतु वक्ष्यमाणानि विद्युत्स्तनितादीनि । अध्यायज्ञाः अध्ययनधर्मज्ञाः॥१०२॥

( ३ ) **कुल्लूकः** । रात्रौ कर्णश्रवणयोग्यशब्दजनके वायौ वाति । गोविन्दराजस्तु कर्णाभ्यामेव श्रवणोपपत्तेरतिशयविवक्षया कर्णश्रवइत्युक्तम् तेनातिशब्दवति वायौ वातीत्यभिहितवान् । दिवाच धूलिपटलोत्सारणसमर्थे वायौ वहति एतौ वर्षाकालेऽनध्यायौ तात्कालिकावध्यापनविधिज्ञामुनयःकथयन्ति ॥ १०२ ॥

( ४ ) **राघवानन्दः** । कर्णश्रवणयोग्यशब्दजनके वायाविति केचित् । कर्णाच्छब्दंश्रावयति व्यावर्तयतीति प्रतिकूले महावायाविति रात्रौ नाधीयीत । तथादिवापि पांसुसमूहने पांसूनसमूहयति वर्तुलीकुर्वति वायौचन ग्रीष्मादिषु तत्र वायुकृतपांसूनां सातत्यात् । अध्यायज्ञाः अध्यापनविधिज्ञाः मन्वादयइति ॥ १०२ ॥

( ५ ) **नन्दनः** । कर्णश्रवेसशब्दे । पांसुसमूहने पांसुसमुत्थापने ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । दिवा पांशुसमूहने पांशूत्कर्षे । रात्रौअनिले कर्णश्रवे श्रवणोद्वेगशब्दकारिणि काले वर्षासु एतौ अनध्यायौ । अध्यायज्ञाः अध्यापनधर्मज्ञाः ॥ १०२ ॥

**विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ॥ आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥१०३॥**

( १ ) **मेधातिथिः** । विद्युत्तडित् । स्तनितंगर्जितम् । द्वन्द्वनिर्देशाद्युगपदेतेषु समुच्चितेष्वनध्यायः । महोल्का दिवः पततांज्योतिषांप्रभास्तासांसंप्लवोऽमुत्र च पतनम् । आकालिकशब्दोनिमित्तकालादारभ्यान्येद्युर्यावत्सएवकालःसउच्यते । मनुग्रहणंश्लोकपूरणार्थम् विकल्पार्थमन्ये ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । विद्युदादित्रयस्य सन्ध्याकालादन्यदासंप्लवे मिलितानांत्रयाणामुत्पत्तौ तथा महोल्कानांसंप्लवे विद्युदाद्यन्यतरेण सह युगपत्पाते आकालिकं यत्र काले निमित्तमुत्पन्नं दिनान्तरेतत्कालोत्पत्तिपर्यन्तम् । एतच्च वर्षाव्यतिरिक्तकालएव ॥ १०३ ॥

( ३ ) **कुल्लूकः** । विद्युद्गर्जितवर्षेषु द्वन्द्वनिर्देशाद्युगपदुपस्थितेषु महतीनांचोल्कानांसंप्लवइतस्ततःपाते सति । आकालिकमितितु निमित्तकालादारभ्यापरेद्युर्यावत्सएव कालस्तावत्पर्यन्तमनध्यायमेतेषु मनुरवोचत् ॥ १०३ ॥

( ४ ) **राघवानन्दः** । किंचनैमित्तिकमनध्यायमाह । विद्युदितिद्वाभ्यां द्वन्द्वनिर्देशाद्युगपत्संपातेषु विद्युदादिषु आकालिकं निमित्तकालादारभ्य परेद्युस्तावन्तंकालंवर्षास्वपि ॥ १०३ ॥

( ५ ) **नन्दनः** । वर्षास्वित्यनुषज्यते । विद्युदादिप्रादुर्भावकालादारभ्यनाडिकाषष्टिरकालः । तत्र भवमाकालिकमनध्यायंविद्यात् । येयमुक्ताविद्युदादिप्रवृत्तिः सासन्ध्ययोश्चेदाकालिकानध्यायनिमित्तंभवति ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । एतेषु आकालिकं कालं मर्यादीकृत्येत्याकालिकं तावत्कालपर्यन्तं अनध्यायः ॥ १०३ ॥

**एतांस्त्वभ्युदितान्विद्याद्यदा प्रादुष्कृताग्निषु ॥ तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ १०४ ॥**

( १ ) **मेधातिथिः** । नायमनध्यायोयस्यांकस्यांचन वेलायामुपजातेष्वेतेषु किंतर्हि प्रादुष्कृताग्निषु सन्ध्याकालइत्यर्थः । तदा ह्यग्नयोजुहूषयानियमतः प्रादुष्क्रियन्ते । प्रादुःशब्दः प्राकाश्ये । अनृतौऋतुर्वर्षास्ताभ्योन्यःशरदादिः । तत्रवाभ्रदर्शने प्रादुष्कृताग्निष्वित्यपेक्ष्यते ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । यउक्तकालिकोनध्यायस्तं तदैव विद्याद्यानेतानविद्युदादीनत्रीन् संप्लुतानमहोल्काअसंप्लुताः । प्रादुष्कृताग्निषु उद्धृताग्निहोत्रेषु कालेष्वभ्युदितानुत्पन्नान् विद्यादुपलभेत। तथानृतौ वर्षातोनृतावभ्रदर्शने वृष्टिहेतुमेघदर्शने आकालिकोनध्यायः सोपि प्रादुष्कृताग्निकालएव ॥ १०४ ॥

( ३ ) **कुल्लूकः** । एतान्विद्युदादीन्यदाहोमार्थंप्रकटीकृताग्निकालेषु सन्ध्याक्षणेषु युगपदुत्पन्नाञ्जानीयात्। तदानध्यायंवर्षासु कुर्यान्न सर्वदा तथाऽनृतौ प्रादुष्कृताग्निकालेषु मेघदर्शनमात्रे सत्यनध्यायोन वर्षासु ॥ १०४ ॥

( ४ ) **राघवानन्दः** । एतान्विद्युदादीन्सन्ध्याकालेष्वेव विजानीयाद्यदातदापरेद्युरपि तावत्कालपर्यन्तमनध्ययनंकुर्यान्न यदाकदाचिद्विद्युदादीनांसमुच्चयइत्याह एतानिति । प्रादुष्कृताग्निषु प्रादुष्कृतःप्रकटीकृतोहोमार्थमग्निर्येषु सन्ध्याकालेष्वित्यर्थः । अनृतौ वर्षाभ्योन्यत्राभ्रदर्शनेच ॥ १०४ ॥

( ५ ) **नन्दनः** । अन्यदा चेन्नेत्याह एतांस्त्विवति। प्रादुष्कृताग्निषु विहृतेष्वग्निषु सन्ध्ययोरितियावत् । एतान्विद्युदादीन्यदाप्रादुष्कृतान्विद्यात्पश्येत्तदाऽऽकालिकमनध्यायंविद्यात् । अनृतौवर्षर्तुव्यतिरिक्तेचर्तौ । अभ्रसंप्लव आकालिकमनध्यायंविद्यात् ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । एताननध्यायान् अभ्युदितसंज्ञान् यदा प्रादुष्कृताग्निषु उद्धृताग्निहोत्रकालेषु प्रजागरिताग्निषु तदा अनध्यायंविद्यात् । अनृतौ अकाले अभ्रदर्शने अनध्यायम् ॥ १०४ ॥

**निर्घाते भूमिचलने ज्योतिषां चोपसर्जने ॥ एतानाकालिकान्विद्यादनध्यायानृतावपि ॥ १०५ ॥**

( १ ) **मेधातिथिः** । निर्घातआन्तरिक्षउत्पातध्वनिः । ज्योतिषांचन्द्रादित्यगुरुप्रभृतीनांउपसर्जनंपरिवेषणमितरेतरपीडनंच । ऋतावपि अपिग्रहणंवर्षासु किल नोत्पातागण्यन्तइत्यभिप्रायेण ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । उपसर्जनेउपसर्जनहेतौ विकारे युद्धच्छिद्रादौ एताननिर्घातादीन् ऋतौ वर्षास्वपि एतच्चाप्रादुष्कृतेष्वप्यग्निषु वाक्यान्तरोपात्तत्वात् ॥ १०५ ॥

( ३ ) **कुल्लूकः** । अन्तरिक्षभवोत्पातध्वनौ भूकम्पे सूर्यचन्द्रतारागणानांचोपसर्गेसत्यनध्यायानिमानाकालिकाञ्जानीयात् । आकालिकशब्दार्थोव्याकृतएव । ऋतावपिवर्षासु किलभूकम्पादयोन दोषावहाइत्यभिप्रायेणर्तावपीत्युक्तम् । अपिशब्दादन्यत्रापि ॥ १०५ ॥

( ४ ) **राघवानन्दः** । किंचान्यदित्याह निर्घातइति त्रिभिः । निर्घाते अनभ्रगर्जिते । उपसर्जनेसूर्याद्युपरागे । एतान् निर्घातादित्रीन् आकालिकान् तेषांकालानियमात् । इदमपि निर्घातादिघटितमाकालिकंऋतावपिवर्षास्वपि । ऋतावपीत्यनुवादमात्रम् ॥१०५ ॥

( ५ ) **नन्दनः** । उपसर्जनउपप्लवे । वैवर्ण्यचलनादावपिशब्दादनृतावपीति गम्यते ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । ज्योतिषां चन्द्रादित्यगुरुप्रभृतीनां उपसर्जने उपसर्गहेतुभूते ग्रहयुद्धे । परिवेषणे अन्योन्यपीडनेन ॥ १०५ ॥

**प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ॥ सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा॥१०६॥**

( १ ) **मेधातिथिः** । त्रिसंनिपाते पूर्वेणाकालिकमुक्तम् । अनेनद्वयोः । सन्निपातेऽपिसज्योतिरुच्यते । स्तनितंच तन्निःस्वनश्चासौस्तनितनिःस्वनः । विद्युच्चस्तनितनिःस्वनश्चविद्युत्स्तनितनिस्वनम् । समाहारद्वन्द्वः । तस्मिन्सन्ध्यायामुपजाते द्वये सज्योतिरनध्यायः । सूर्योज्योतिः दिवा । नक्तमग्निर्ज्योतिः । प्रातःसन्ध्यायामुत्पन्नेदिवैवानध्यायोरात्रौ तु नास्ति । एवंपश्चिमसन्ध्यायांरात्रावनध्यायोनप्रातरध्ययनदोषः । विद्युत्स्तनितवर्षाणांत्रयाणांप्रकृतानांविद्युत्स्तनितयोर्विभज्य निर्देशोभवति । वर्षाः शेषस्तस्मिंस्तृतीये दृश्यमाने पूर्वोक्तआकालिकोऽनध्यायः । प्रसिद्धतरंज्योतिष्टोमादि तदपेक्षयोक्तंयथादिवातथारात्रावपि । शेषमितिपाठः । शेषंहूयमानमहरनध्यायहेतुर्भवतीति । अथकस्मान्नैवमुक्तंशेषंत्वाकालिकंस्मृतमिति विचित्राश्लोकानांकृतिर्मनोः ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रादुष्कृताग्निकाले च विद्युत्सहिते स्तनितनिःस्वने वृष्टिशून्ये सज्योतिर्यदि प्रातस्तदायावदादित्यदर्शनं । यदि सायंतदा यावन्नक्षत्रस्थितिः शेषे प्रागुक्ते वक्ष्यमाणे चानध्यायनिमित्ते सति यथा दिवाआकालिकादिनियतोनध्यायस्तथा रात्रावपिनिमित्तपाते ग्राह्यः । एतच्च दिवसस्यवाध्ययनमुख्यकालत्वात् रात्रौनिमित्तपातेऽपि नाध्ययनशङ्कानिरासार्थमुक्तं शेषमिति क्वचित्पाठः । तत्राप्येवंज्ञेयम् ॥ १०६ ॥

( ३ ) **कुल्लूकः** । होमार्थप्रकाशितेष्वग्निषु सन्ध्यायांयदा विद्युद्गर्जितशब्दाविव भवतोनतु वर्षंतदा सज्योतिरनध्यायः स्यात् नाकालिकः तत्र यदिप्रातः सन्ध्यायांविद्युद्गर्जितशब्दौ तदा यावत्सूर्यज्योतिस्तावदनध्यायोदिनमात्रमेव यदि सायंसन्ध्यायांतौ स्यातांतदायावन्नक्षत्रज्योतिस्तावदनध्यायोरात्रिमात्रमिति रात्रौ स्तनितविद्युद्वर्षेष्वितित्रयाणांपूर्वोक्तानांशेषे वर्षाख्येत्रितये+जाते यथादिवानध्यायस्तथा रात्रावप्यहोरात्रएवेत्यर्थः ॥ १०६ ॥

( ४ ) **राघवानन्दः** । सन्ध्यायांविद्युच्छब्दयोरेव सन्निपातोनिमित्तान्तरमित्या हप्रादुरिति । सज्योतिः । यदि प्रातः सन्ध्यायांविद्युत्स्तनितशब्दौ तदा यावत्सूर्यस्तिष्ठति तावदनध्यायः । शेषे सायंतदा रात्रौ यथादिवासज्योतिस्तथेत्यर्थः ॥ १०६ ॥

( ५ ) **नन्दनः** । प्रादुष्कृतेष्वग्निषु सन्ध्याकालयोरित्यर्थः। विद्युत्स्तनितनिःस्वने रात्रौ तथा दिवाच सज्योतिर्नक्षत्रसूर्यसहितंरात्र्यह्नोः शेषमनध्यायःस्यात् । सन्ध्याकालाभ्यामुत्तरंमेघतिरोधानाभावेऽपि यथाऽनध्यायः स्यादित्युक्तं सज्योतिरिति । विद्युत्स्तनितवर्षेष्वित्यादिश्लोकोक्तस्तनितशब्दोमन्दगर्जितविषयः । अस्मिञ्श्लोकेस्तनितग्रहणं महागर्जितविषयमित्यपुनरुक्तिः ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । सज्योतिः तावत्कालपर्यन्तंअनध्यायः स्यात् । प्रातरारभ्यानध्यायः यथा दिवा तथा रात्रौ सायंसन्ध्यामारभ्य रात्रावनध्यायः । शेषेतात्कालिकः ॥ १०६ ॥

---

+ त्रितये=तृतीयं ( अ )

**नित्यानध्यायएव स्याद्ग्रामेषु नगरेषु च ॥ धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा ॥ १०७॥**

( १ ) **मेधातिथिः** । निपुणंधर्मंयेकामयन्तेते ग्रामनगरयोर्नाधीयीरन् । धर्मशब्दश्च स्वर्गादौ धर्मफले वर्तते । यदिवाऽधर्मेणाननुवेधोधर्मस्यनैपुण्यंतेन सुपरिपूर्णोविध्यर्थोऽनुष्ठितो भवति । अतश्चाशक्तस्यानुज्ञानं भवति । पूतिगन्धः कुत्सितगन्धस्तस्मिंनासिकापथंगच्छत्यनध्यायः । सर्वशः सर्वस्मिन्शवगन्धेऽपि ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । व्रतपारणमात्रेण विद्यामसमाप्यैव यःस्नास्यति सधर्मनैपुणकामः । विद्यानिरपेक्षब्रह्मचारिधर्ममात्रानुरोधकत्वात् । यस्तु विद्यांसमाप्यैव व्रतमसमाप्यैव स्नास्यति सविद्यानैपुणकामः । तत्राद्यस्य ग्रामादिमध्येऽनध्यायोनित्यमत्राध्ययनसंभवेऽपि यस्तु द्वितीयस्तस्य न तत्रानध्यायः तत्परित्यागे तस्य विद्याधिगमनियमानिष्पत्तेः । नगरेषु चेतिखेटखर्वटादिसंग्रहार्थश्चाकारः । पूतिगन्धेतूपलभ्यमाने सर्वशः सर्वेषांविद्यानैपुणकामानामपीत्यर्थः ॥ १०७ ॥

( ३ ) **कुल्लूकः** । नैपुण्यविषयोधर्मातिशयार्थिनोग्रामनगरयोः सर्वदानध्यायः स्यात् । कुत्सितगन्धे च सर्वस्मिन्नपि गम्यमाने धर्मनैपुण्यकामंप्रत्ययं विद्यानध्यायोपदेशोविद्यानैपुण्यकामस्य कदाचिदध्ययनमनुजानाति ये शिष्याः केचिद्गृहीतवेदाध्ययनजन्मादृष्टेच्छवस्तेधर्मनैपुण्यकामाः केचित्प्रथमाध्येतारोविद्यातिशयमात्रार्थिनस्ते विद्यानैपुण्यकामाः ॥ १०७ ॥

( ४ ) **राघवानन्दः** । अध्यापनंहि प्रत्यवायपरिहारार्थकर्माङ्गबोधनार्थंधर्मार्थंवेदरक्षार्थंच तत्राद्यमुपनीतमात्रकृत्यं द्वितीयमुपकुर्वाणस्य विद्यानिपुणकामानामस्वाध्यायीन विद्यतइति उक्तेःकामंवेदाङ्गानीति न्यायाच्चतृतीयंस्नातकस्य । चतुर्थंतु त्रयाणामेवब्राह्मोऽझतेति निन्दाश्रवणात् स्वाध्याये चैव नित्यकइतिचतत्र धर्मकामानांविशेषमाहनित्यानध्यायइतित्रिभिः । ग्रामनगरयोःपूतिगन्धेवानध्यायः एवमग्रामेऋचोधीते इत्यादिप्रयोगात्फलार्थिनामेतेषु नाध्ययनमित्यन्वयः ॥ १०७ ॥

( ५ ) **नन्दनः** । धर्मनैपुण्यकामानामित्यनेनात्राध्ययनेदोषमात्रंसूचितं ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । धर्मनैपुण्यकामानां धर्मराद्धस्वर्गादौ धर्मकालेच नैपुण्यं कामयन्ते तेषां धर्मनैपुण्यकामानां निपुणंधर्मंज्ञात्वा तत्र स्थितानां ग्रामेषु च पुनः नगरेषुनित्यमनध्यायएव स्यात् । एतद्व्रतस्नातकविषयम् ॥ १०७ ॥

**अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ ॥ अनध्यायोरुद्यमाने समवाये जनस्य च ॥ १०८ ॥**

( १ ) **मेधातिथिः** । अन्तर्गतः शवोयस्मिन्ग्राममध्येस्थितोयावन्न निर्हृतः । वृषलस्य नात्र शूद्रोवृषलस्तस्यप्रागेव निषिद्धत्वात् । नशूद्रजनसंनिधाविति किंतर्हि तत्मायिकेणाधर्मेणाधार्मिकत्वंलक्ष्यते । तेन यः पापाचारस्तत्संनिधानाच्च तेन निषेधः । रुद्यमाने रुदनशब्दे सति । भावमात्रेरुद्यमानशब्दः । समवायोजनस्य यत्रबहवोजनाःकार्यार्थमेकत्रसंघटिताभवन्ति तादृशे देशे नाध्येयम् । अथवा जनस्य समवाये रुद्यमाने रुदतीत्यर्थः । बहुषुरुदत्सुप्रतिषेधः । छान्दसंकर्तर्यात्मनेपदम् ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । अन्तः स्थितेन्तस्थानगते भूम्युपरिभागसंयुक्ते ग्रामे गतपदंग्राममध्ये निवातस्य नानध्यायहेतुत्वेत्येतदर्थम् । एतद्येषांग्रामेध्ययनप्राप्तिस्तद्विषयम् । वृषलस्याचारशून्यस्य न शूद्रमात्रस्य शूद्रसंनिधौ पुरा निषेधोक्तेस्तत्संनिधौ श्रवणयोग्यदेशे रुद्यमाने जनैः रोदनश्रवणइत्यर्थः । समवाये बहुतरसंपाद्यमेलके ॥ १०८ ॥

---

( १०७ ) सर्वदा = सर्वशः ( मे ) ०

( १०८ ) रुद्यमाने = रुध्यमाने ( नन्दनः )

( ३ ) **कुल्लूकः** । अन्तर्गतः शवोयस्मिन्ग्रामे ज्ञायते तत्र । वृषलोऽधार्मिकस्तस्य सन्निधौनतु शूद्रः तस्यन शूद्रजनसन्निधाविति निषेधात् । रुद्यमाने रोदनध्वनौ । भावेल्कारः । कार्यान्तरार्थंबहुजनमेलके सत्यनध्यायः ॥ १०८ ॥

( ४ ) **राघवानन्दः** । अन्तर्गतशवेअन्तर्गतत्वेन ज्ञातःशवोयस्मिन् वृषलोत्राधार्मिकःन शूद्रजनसन्निधाविति निषेधो-क्तेः।रुद्यमानइति भावसाधनंरोदनेसति क्रियमाणे वा। जनानांसमवाये निमित्तान्तरवशाज्जनानांमेलनंसमवायस्तस्मिन्॥१०८

( ५ ) **नन्दनः** । अन्तर्गतशवेऽन्तर्मनुष्यशवयुक्ते । पूर्वेणग्रामानध्याये सिद्धेपुनरन्तर्गतशवे ग्रामइतिनिषेधोदोषाति-शयख्यापनार्थः । वृषलस्याधर्मिष्ठस्य । रुध्यमानेराजपुरुषलुण्टाकादिभिर्ग्रामे समवायेसंमर्दे ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । अन्तःशवे ग्रामे अनध्यायः स्यात् च पुनः वृषलस्य धर्मच्छेदकस्य सन्निधौ अनध्यायः । च पुनः जनस्य समवाये रुद्यमाने अनध्यायः ॥१०८ ॥

**उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने ॥ उच्छिष्टः श्राद्धभुक्चैव मनसापि न चिन्तयेत्**

**॥ १०९ ॥**

( १ ) **मेधातिथिः** । चतुर्मुहूर्तोऽर्धरात्रःसैव महानिशा प्रथमादर्धरात्राद्द्वौमुहूर्तावुत्तराद्द्वौउदके नदीतडागादिस्थः । अन्तर्जलेजपस्त्वनध्यायरूपत्वादघमर्षणादिर्न निषिध्यते । उदयइत्यन्ये पठन्ति । प्रथमोदयकाले सूर्यस्यानध्यायः । उ-च्छिष्टोभुजिसंबन्धेनाकृताचमनोयावत् । कृतमूत्रपुरीषोऽपि प्रागाचमनादुच्छिष्टउच्यतएव । आचमनार्हप्रत्ययमात्रवचनइ-त्यन्ये । तेन कृतनिष्ठीवनादिरपि गृह्यते । मनसाऽपि नान्यत्राध्याये मनसाचिन्तनमभ्यनुज्ञायते । किंतर्हि दोषगौ-रवार्थमेतेषांनिमित्तानाम् ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । उदके जलमध्ये मध्यरात्रे रात्रेर्मध्यमदण्डदशकमध्ये विण्मूत्रे विष्ठायांमूत्रे वा विषये विसर्जने त्यागे चकाराद्रेतसि उच्छिष्टभक्षणात् श्राद्धभुक्तदन्नभुक् । अत्र मनसा चिन्तनस्य निषेधात् अन्यत्र मानसो-च्चारणे दोषाभावोगम्यते ॥ १०९ ॥

( ३ ) **कुल्लूकः** । उदकमध्ये मध्यरात्रे च मुहूर्तचतुष्टये च निशायांच चतुर्मुहूर्तमितिगौतमस्मरणात् । गोविन्दराज-स्तु रात्रिमध्यप्रहरद्वयइत्युक्तवान् । तथा मूत्रपुरीषोत्सर्गकालेऽन्नभोजनादिना चोच्छिष्टोनिमन्त्रणसमयादारभ्य श्राद्ध-भोजनाहोरात्रंयावन्मनसापि वेदं चिन्तयेत् ॥ १०९ ॥

( ४ ) **राघवानन्दः** । निषेधादरार्थंपुनःश्राद्धभुग्ग्रहणं न चिन्तयेद्वेदमिति शेषः ॥ १०९ ॥

( ५ ) **नन्दनः** । पूर्वार्धेऽनध्यायइत्यनुषज्यते । चिन्तयेदित्यत्र ब्रह्मेति परस्मादपकृष्यते । मनसेत्यत्रवचनादन्यस्य मनसाचिन्तनमभ्यनुज्ञातमितिगम्यते ॥ १०९ ॥

**प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनम् ॥ त्र्यहं न कीर्तयेद्ब्रह्म राज्ञोराहोश्च सूतके ॥ ११० ॥**

( १ ) **मेधातिथिः** । एकउद्दिश्यतेयस्मिंस्तदेकोद्दिष्टंनवश्राद्धम् । तत्रनिकेतनंनिमन्त्रणंप्रतिगृह्यअङ्गीकृत्य त्र्यहम-नध्यायआमन्त्रणात्प्रभृति एवंराजाचन्द्रमास्तस्यसूतकंराहुंप्रत्यमृतस्रवणं चशब्दात्सूर्यस्यच । अथवा जनपदेश्वरस्य राज्ञःसूतकंपुत्रजन्मोत्सवः । राहोः सूतकंचन्द्रसूर्ययोरुपरागःग्रहणमितिप्रसिद्धम् ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । एकोद्दिष्टनिकेतनंप्रेतश्राद्धामन्त्रणंप्रतिगृह्य तदा मन्त्रणादि त्र्यहंराज्ञश्चन्द्रस्य राहोःसका-शात् । सूतके प्रसवेराहुच्छायाभिभूतस्य पुनरुद्भवे राहोश्चेति चकारोभिन्नक्रमोराज्ञश्चेत्यर्थः । तेन यदितरराहुसूतक-

स्य सूर्यग्रहाभिधानस्य सङ्ग्रहार्थः । न तु राज्ञःसूतकइत्यत्र नृपमरणइत्युच्यते तन्मरणे श्रोत्रिये त्वहः कृत्स्नमित्याशौचस्य वक्ष्यमाणत्वात् ॥ ११० ॥

( ३ ) कुल्लूकः । एकएवोद्दिश्यते यत्र श्राद्धे तदेकोद्दिष्टंनवश्राद्धंतत्केतनंनिमन्त्रणंगृहीत्वा निमन्त्रणादारभ्य क्षत्रियस्य जनपदेश्वरस्य पुत्रजन्मादिसूतके । राहोश्च सूतकंचन्द्रसूर्योपरागःतत्र त्रिरात्रंवेदंनाधीयीत ॥ ११० ॥

( ४ ) राघवानन्दः । कालसङ्ख्यार्थमाह प्रतिगृह्येति । केतनं निमन्त्रणं । नवश्राद्धमत्रैकोद्दिष्टं । राज्ञःसूतकेपुत्राद्युत्पत्तौराज्ञोराहोश्चसूतके चकारात्समुच्चयइतिकेचित् ॥ ११० ॥

( ५ ) नन्दनः । विद्वानविद्वानप्येकोद्दिष्टस्य नवश्राद्धस्य केत्यते निमन्त्र्यते ऽनेनेति केतनंद्रव्यंप्रतिगृह्यत्र्यहंब्रह्म न कीर्तयेत् । राज्ञःसूतके पुत्रजन्मनिराहोःसूतकेग्रहणमुक्तौ च ब्रह्म त्र्यहंनकीर्तयेदिति ॥ ११० ॥

( ६ ) रामचन्द्रः । एकोद्दिष्टस्य केतनं नवश्राद्धनिमन्त्रणंप्रतिगृह्य त्र्यहं ब्रह्म न कीर्तयेत् । अनध्यायः स्यात् ॥ ११० ॥

**यावदेकानुदिष्टस्य गन्धोलेपश्च तिष्ठति ॥ विप्रस्य विदुषोदेहे तावद्ब्रह्म न कीर्तयेत् ॥ १११ ॥**

( १ ) मेधातिथिः । एकमनुदिश्यआमश्राद्धंतस्ययावच्छ्राद्धकृतोगन्धलेपौतिष्ठतस्तावदनध्यायः । पूर्वस्माद्विधौविध्यन्तरम् । द्वितीयस्मिन्नहनि कृतस्नानोऽपनीततद्गन्धोऽध्ययनार्हः । उपलक्षणंचैतदसतोरपि गन्धलेपयोर्यावद्भुक्तमन्नंन जीर्णंतावन्नाधीयीत । विदुषइति तस्यैव श्राद्धभोजनाधिकारमनुवदति ॥ १११ ॥

( २ ) सर्वज्ञनारायणः । एकानुद्दिष्टस्यैकोद्दिष्टगन्धोलेपश्च तत्र दत्तस्यचन्दनादेस्तिष्ठति तत्त्र्यहादूर्ध्वमपि विदुषइतिज्ञानेन काममभिप्रैति अकामेत्वदोषइत्यर्थः ॥ १११ ॥

( ३ ) कुल्लूकः । यावदेकस्यानुद्दिष्टस्यउच्छिष्टस्य सकुंकुमादेर्गन्धोलेपश्च ब्राह्मणस्य शास्त्रविदोदेहे तिष्ठति तावन्त्यहोरात्राण्यूर्ध्वमपिवेदंनाधीयीत ॥ १११ ॥

( ४ ) राघवानन्दः । निमित्तान्तरमाह यावदिति । एकस्माअनुदिष्टस्योच्छिष्टस्यैकानुदिष्टस्य । तावत्त्र्यहादूर्ध्वमपिवेदंनाधीयीत ॥ १११ ॥

( ५ ) नन्दनः । एकानुदिष्टस्यैकोद्दिष्टस्य स्नेहस्तैलादिकः । गन्धश्चन्दनादिकः । विदुषः विदुषोपि ॥ १११ ॥

( ६ ) रामचन्द्रः । तावद्ब्रह्म वेदं न कीर्तयेत् अनध्यायः स्यात् ॥ १११ ॥

**शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ॥ नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥ ११२ ॥**

( १ ) मेधातिथिः । प्रसारितपादः पादारोपितपादोवा खट्वासनादौ वा संहतपादः । अवसक्थिकावस्त्रादिना जान्वोर्मध्यस्यचबन्धः । आमिषंमांसम् । सूतकग्रहणंशावाशौचादेरपि प्रदर्शनार्थम् ॥ ११२ ॥

( २ ) सर्वज्ञनारायणः । प्रौढपादआसनारूढपादः । अवसक्थिकापर्यङ्कबन्धनम् । आमिषंजग्ध्वातद्दिने सूतकान्नाद्यं सूतकिसंबन्ध्यन्नम् । एतच्चानध्ययनमप्रायश्चित्तकरणात् ॥ ११२ ॥

( ३ ) कुल्लूकः । शय्यायांपतिताङ्गआसनारूढपादःकृतावसक्थिकोवा मांसंजग्ध्वा जननमरणाशौचिनांचान्नंभुक्त्वा नाधीयीत ॥ ११२ ॥

---

* स्या = मुद्दिश्यां ( अ )       ( १११ ) गन्धोलेपश्च=स्नेहोगन्धश्च ( नन्दनः ).

( ४ ) **राघवानन्दः** । तत्पश्चकमध्ययनविरोधीत्याह शयानइति पृष्ठजानुद्वयव्यापीबन्धः । आवसक्थिका । सूतकपदं मृतकोपलक्षकंअशुचित्वाविशेषात् ॥ ११२ ॥

( ५ ) **नन्दनः** । पादस्योपरिनिहितः पादोयस्यसप्रौढपादः । वस्त्रादिनाकृतपादबन्धोऽवसक्थिकः ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । अवसक्थिकं कृत्वा न ब्राह्मणः अधीयीत ॥ ११२ ॥

**नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः ॥ अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च॥११३॥**

( १ ) **मेधातिथिः** । नीहारोदिग्ध्रोहोधूमिकेत्यनर्थान्तरम् । बाष्परजोवृताइवयेन दिशः क्रियन्ते । बाणशब्दःशरनिर्घोषः । दन्त्योष्ठ्यमन्येपठन्ति व्याचक्षते च वीणावाणइति महाव्रतेोह प्रयोगोदृश्यते । शततन्त्रीकोभवतिवीणावितन्त्रीतिच । चतुर्दश्यांउभयोरपि पक्षयोः । अष्टकाश्च सर्वाअष्टम्यः स्मृत्यन्तरसमाचाराभ्याम् । अन्येत्वष्टमीष्वित्येवंपठन्ति ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । नीहारे सर्वतोधूम्रिकावृते । बाणशब्दे बाणमोक्षशिक्षादेशाद्युत्पन्ने अमावास्यादिशब्दास्तत्तिथिकालमात्रपराः । तत्र शुक्लकृष्णप्रतिपदोरपि दर्शपूर्णमासमेलकत्वाचन्द्रस्यामावास्यापौर्णमासी पदाभ्यांग्रहणम् । अष्टकाष्टमी ॥ ११३ ॥

( ३ ) **कुल्लूकः** । नीहारे धूलिकायाम् बाणशब्दे शरध्वनौ । बाणोवीणाविशेषइत्यन्ये प्रातःसायंसन्ध्ययोरमावास्याचतुर्दशीपौर्णमास्यष्टमीषु नाधीयीत । अष्टकासूत्तरत्र निषेधात्पौर्णमास्यादिसाहचर्यादष्टकाशब्दोऽष्टमीतिथिपरः ॥ ११३ ॥

( ४ ) **राघवानन्दः** । किंच नीति । नीहारे व्यापिनि । बाणशब्दे शरादिध्वनौबाणोवीणेति वा ॥ ११३ ॥

( ५ ) **नन्दनः** । अष्टकास्वष्टमीषु । अत्र नाधीयीतेत्यनुषङ्गः ११३ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह बाणशब्दे वंशशब्दे अनध्यायः अष्टकाश्चतस्रः ॥ ११३ ॥

**अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी॥ब्रह्माष्टकापौर्णमास्यौ तस्मात्ताः परिवर्जयेत्॥११४॥**

( १ ) **मेधातिथिः** । पूर्वस्यार्थवादोनित्यार्थः । तेन यत्र नित्यत्वज्ञापकंन किंचित्सविकल्पतेऽनध्यायः । वक्ष्यति च द्वावेववर्जयेन्नित्यमिति । ताः परिवर्जयेत् अध्ययनक्रियातः ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । अमावास्या तत्र पाठेन ब्रह्म वेदं घ्नन्ति ॥ ११४ ॥

( ३ ) **कुल्लूकः** । विशेषदोषमाह अमावास्येति । यस्मादमावास्या गुरुंहन्ति शिष्यंहन्ति चतुर्दशी वेदंचाष्टमीपौर्णमास्यौ विस्मारयतस्तस्मात्ताअध्ययनाध्यापनयोःपरित्यजेत् ॥ ११४ ॥

( ४ ) **राघवानन्दः** । तिथौ निषेधति अमेति । अष्टकासु चतसृषु तत्ररूढेस्तिथिसंनिधेर्दुर्बलत्वेन न तिथिपरता अतोअमाष्टकासुनाधीयीतेत्यनुषज्यते । तत्रार्थवादमाहअष्टेति । ब्रह्मात्र वेदस्तदधीतंनश्यतीतिभावः ॥ ११४ ॥

( ५ ) **नन्दनः** । ब्रह्म वेदवीर्यंहन्ति ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । वेदंहन्ति विस्मरणं प्रापयति ॥ ११४ ॥

**पांसुवर्षे दिशां दाहे गोमायुविरुते तथा ॥ श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद्द्विजः ॥ ११५ ॥**

( १ ) **मेधातिथिः** । गोमायुः शृगालःतस्यविरुतंशब्दकरणंश्वखरोष्ट्राणांपङ्क्त्यवस्थितानांशब्दंकुर्वतामनध्यायः । एकैकस्यसमानजातीयपङ्क्तौ ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । गोमायुःसृगालः । पङ्क्तौ श्वखरादिपङ्क्तिमध्ये केचिदपाङ्क्त्यपङ्क्तावित्याहुः । केचित्तु पङ्क्तीभूय नाध्येतव्यमित्यस्यार्थमित्याहुः ॥ ११५ ॥

( ३ ) **कुल्लूकः** । धूलीवर्षे दिशांदाहे सृगालकुक्कुरगर्दभोष्ट्रेषु च रुवत्सु पङ्क्तौ चोपविश्य प्रकृतत्वात्सृगालश्वखरादीनामेव ब्राह्मणोन पठेत् ॥ ११५ ॥

( ४ ) **राघवानन्दः** । किंचपांसुवर्षे रजसापूर्णे पूर्वपांसुसमूहनइतिचक्रवातोक्तेः । दिशांदाहे दिग्दाहइति प्रसिद्धे । गोमायुरुदितेगोमायोःशृगालविशेषस्य विरुद्धरुतौ । स्वाभाविकविरुद्धारावेखरादीनांतेषांपङ्क्तौ प्रविश्यचजनसमूहे निषेधस्योक्तत्वात् ॥ ११५ ॥

( ५ ) **नन्दनः** । ब्रह्मेतिशेषः । ११५ ॥

**नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेपि वा ॥ वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥११६॥**

( १ ) **मेधातिथिः** । अन्तः शब्दः सामीप्यवचनःश्मशानसमीपे ग्रामसमीपेच । गोव्रजेगावोयत्रचरितुंव्रजन्तिगोष्ठोवा-गोव्रजः । स्त्रीसंप्रयोगकाले यत्प्रावृतंवासस्तदेव प्रावृत्य नाधीयीत । मैथुनशब्दः साहचर्यात्तत्कालप्रवृत्ते वाससि वर्तते । श्राद्धिकंश्राद्धनिमितंशुष्कान्नाद्यमपि गृहीत्वा नाधीयीत ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । श्मशानान्तेश्मशानमीपे ग्रामान्ते ग्रामस्यान्ते समीपे तत्र विष्ठाद्यशुचिलेपसंभवात् । गोव्रजे गवांमध्ये । मैथुनंवासोयत्परिधाय मैथुनंकृतम् । एतेषु यावन्निमित्तानुवृत्त्यनध्यायइत्यर्थसिद्धत्वान्नोक्तम् । श्राद्धिकं प्रेतश्राद्धव्यतिरिक्तश्राद्धसंबन्ध्यन्नदक्षिणादि प्रतिगृह्य तद्दिनेऽनध्यायः ॥ ११६ ॥

( ३ ) **कुल्लूकः** । श्मशानसमीपे ग्रामसमीपे गोष्ठे च मैथुनसमयधृतवासः परिधाय श्राद्धीयंच सिद्धान्नादिप्रतिगृह्य नाधीयीत ॥ ११६ ॥

( ४ ) **राघवानन्दः** । श्मशानान्तइत्याहअन्तपदंसामीप्ये । मैथुनसमये धृतवस्त्रंमैथुनंवासः । श्राद्धिकं सिद्धान्नादिकमेकोद्दिष्टातिरिक्तम् ॥ ११६ ॥

( ५ ) **नन्दनः** । श्मशानान्ते श्मशानसमीपे । गोव्रजे घोषे मैथुनंमैथुनसंबन्धि । प्रतिगृह्य स्वीकृत्य ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । मैथुनंवासः मैथुनसंबन्धिवासः वस्त्रं परिधाय । श्राद्धिकं वस्तु प्रतिगृह्य अनध्यायःस्यात् ॥ ११६ ॥

**प्राणि वा यदिवाऽप्राणि यत्किंचिच्छ्राद्धिकं भवेत् ॥ तदालभ्याप्यनध्यायः पाण्यास्योहि द्विजः स्मृतः ॥ ११७ ॥**

( १ ) **मेधातिथिः** । श्राद्धनिमित्तंदीयमानंभक्तादिश्राद्धिकमितिप्रसिद्धंतन्निवृत्त्यर्थमिदमुच्यते । न केवलंव्रीहितण्डुलादिप्रतिग्रहएवश्राद्धेऽनध्यायहेतुः । यावदन्यदपिप्राणि वा गवादि तथाऽप्राणिवासोयुगादि तदप्यालभ्य प्रतिग्रहकाले हस्तेन स्पृष्ट्वा नाधीयीत यतस्तदेवतस्यभोजनम् । पाणिरेवास्यमस्येतिपाण्यास्यः । श्राद्धभोजनंतन्निमित्तंच द्रव्यग्रहणंतुल्यमितिदर्शयति ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । प्राणि पश्वादि । अप्राण्यन्नादि । आद्धिकं श्राद्धसंबन्धि । आलभ्य प्रतिग्रहार्थंस्पृष्ट्वापि । एतेनापदि सामान्यतउत्सृज्य प्रतिपादनमात्रं श्राद्धिकद्रव्यस्य कृतं । तद्ग्रहणेऽपि तद्दिनेऽनध्यायइत्युक्तम् । पाण्यास्य-इति यथा भुक्त्वा दुष्यति तथा हस्तेन गृहीत्वापि । यथाह्यस्य मुखेऽग्निस्तथा पाणावपीति तयोः साम्यम् ॥ ११७ ॥

( ३ ) **कुल्लूकः** । श्राद्धिकमन्नादिभुक्त्वा तावदनध्यायोभवतीत्युक्तम् । प्राणि वा गवाश्वाद्यप्राणि वा वस्त्रमाल्यादि प्रतिग्रहकाले हस्तेन गृहीत्वाऽनध्यायोभवति यस्मात्पाणिरेवास्यमस्येतिपाण्यास्योहि ब्राह्मणःस्मृतः ॥ ११७ ॥

( ४ ) **राघवानन्दः** । अतएवाहप्राणीति । प्राणिगवाश्वादिअप्राणिहिरण्यवस्त्रादिकंतत्प्रतिग्रहकाले आलभ्यपृष्ट्वा स्थितस्यानध्यायः तत्र हेतुःपाण्यास्यः तेनास्य दुष्टत्वाद्वेदोच्चारणमयुक्तम् एकाहमितिशेषः ॥ ११७ ॥

( ५ ) **नन्दनः** । श्राद्धिकं । प्रतिगृह्यचेत्येतत्प्रपञ्चयति प्राणिनेति । आलभ्यदत्तंपाणिना स्पृष्ट्वा । प्रतिग्रहएवभोज-नमित्युक्तं पाण्यास्योहीति ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । प्राणी पश्वादिः । अप्राणि वस्त्रादि यत्किंचित् श्राद्धादिकं भवेत् तत्श्राद्धिकं आलभ्य प्रा-प्य अनध्यायः । पाणिरेव आस्यंयस्य सः पाण्यास्यः द्विजः । अग्निमान्स्मृतः ॥ ११७ ॥

**चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते ॥ आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च ॥ ११८ ॥**

( १ ) **मेधातिथिः** । उपप्लुतउपद्रुतः यत्र बहवश्चौराग्रामेघातार्थंपतन्ति तत्र नाध्येयम् । संभ्रमे यत्राग्निना संभ्रमोभयंजन्यते गेहदाहादिप्रवृत्तेनादग्धेऽपि गेहादावाकालिकोनऽध्यायः । प्रवृत्तिकालादारभ्य यावदन्येद्युःसएव का-लः । अन्येषुचाद्भुतेषूत्पातेषु दिव्यभौमान्तरिक्षेषु शिलाप्लवादिषु दिवाऽदर्शनादिषु ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । उपप्लुते आकुलिते अग्निकारितेग्निदाहशङ्कया । संभ्रमे भये एषु श्राद्धिकप्रतिग्रहादिषु पञ्चस्वाकालिकं यावद्दिनान्तरीयतत्कालप्राप्तिः । सर्वाद्भुतेषु तन्दुलोत्पतनाद्युत्पातेषु दण्डलोष्ठताडनाद्युत्पातेषु ॥ ११८ ॥

( ३ ) **कुल्लूकः** । चौरैरुपप्लुते ग्रामे गृहादिदाहादिकृते भये दिव्यान्तरिक्षभौमेषु चाद्भुतेषूत्पातेष्वाकालिकमनध्यायं-जानीयात् ॥ ११८ ॥

( ४ ) **राघवानन्दः** । किंचचोरेत्यादि त्रिष्वप्याकालिकं निमित्तकालादारभ्य परेद्युस्तावत्कालपर्यन्तम् । सर्वाद्भुते-षूत्पातेषुः ॥ ११८ ॥

( ५ ) **नन्दनः** । सर्वाद्भुतेषु दिव्यान्तरिक्षभौमेषूत्पातेषु ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । आकालिकं दिनान्तरे तावत्कालपर्यन्तं अनध्यायः स्यात् ॥ १८ ॥

**उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम् ॥ अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥ ११९ ॥**

( १ ) **मेधातिथिः** । उत्सर्गेपक्षिण्यहोरात्रंच पूर्वमुक्तम् । अनेनत्रिरात्रेण विकल्प्यते । उपाकर्मण्यपूर्वोविधिः । अष्ट-काऊर्ध्वमाग्रहायण्यास्तमिस्रपक्षेष्टम्यस्तिस्रश्चतस्रोवा । यद्यपि सर्वास्वष्टमीष्वहोरात्रमुक्तंतथापि नित्यार्थोयमारम्भोयुक्त-एव । विकल्पश्च सर्वत्रास्मिन्प्रकरणेकृतार्थत्वापेक्षः । ऋत्वन्तासुअहोरात्रमित्यनुषज्यते षड्तवः । तेषांयत्रपूर्वोनिवर्तते-परश्च प्रवर्तते तत्रानध्यायः । रात्रिग्रहणमुपलक्षणार्थम् ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिरात्रक्षपणमिति मुख्यः कल्पः । तावद्विलम्बेनाध्ययनविरोधसंभवे चोत्सर्गेविरमेत्पक्षि-

---

( ११९ ) क्षेपणम्=क्षपणम् ( ल, ब, भ, न, र य )

णीमहोरात्रंचेतिपक्षद्वयमुक्तम्। अष्टकासु अष्टकाश्राद्धतिथिषु हेमन्तशिशिरकृष्णपक्षाष्टमीनवमीषु श्राद्धकरणतदन्नभोजनयोरभावेप्यहोरात्रम्। अष्टमीषु प्रागनध्ययनमुक्तमेव इदंतु नवम्यामप्यन्वष्टकातिथावहोरात्रानध्ययनार्थम्। तथाल्पकालिकतत्तिथिसंबन्धेप्यन्वष्टकाकर्मयोग्याहोरात्रेकृत्स्नएवानध्यायइत्येतदर्थमष्टकापदम्। ऋत्वन्तासु हेमन्तादीनां षण्णामृतूनामन्त्यायाः षड्रात्रयस्तासु। एतच्चान्द्रमासकृतर्त्वन्तरात्रिषु दशरात्रित्वादेवानध्ययनसिद्धौ वचनंसौरमासद्वयकृतर्त्वन्तदिनेऽनध्ययनसिद्ध्यर्थम्॥ ११९॥

(३) **कुल्लूकः**। उपाकर्मणि चोत्सर्गे त्रिरात्रमध्ययनक्षेपणम्। उत्सर्गे पक्षिण्यहोरात्रावनध्यायावुक्तौ। तत्रायंधर्मनैपुण्यकामंप्रति त्रिरात्रोपदेशः। तथाग्रहायण्याऊर्ध्वंकृष्णपक्षाष्टमीषु तिसृषु चतसृषु चाहोरात्रमनध्यायः। दिवाकात्स्मात्रसद्भावेऽपि पौर्णमास्यष्टकासु चेत्यनेन यावदष्टम्येवानध्यायइतराष्टमीषूक्तइत्यपुनरुक्तिः। ऋत्वन्ताहोरात्रेषु चानध्यायः॥ ११९॥

(४) **राघवानन्दः**। किंच उपेति। क्षपणंत्यागोऽध्ययनस्य उत्सर्गे पक्षिण्यादेरुक्तत्वात्तुउपाकर्मणि उत्सर्गइव कालाकांक्षायामाहत्रिरात्रमित्यपूर्वविधिःधर्मकामानामुभयत्र त्रिरात्रमितिवा। पक्षिण्यासह विकल्प इतिमेधातिथिः। निषिद्धकालमाहअष्टकास्विति। अष्टकाश्चतस्रोन तु सर्वाष्टम्यः। ऋत्वान्तासु प्रतिपत्सु तिसृष्वेव आद्याःप्रतिपदस्तिस्रोवाइतिहारीतोक्तेः। एतासु समाहोरात्रमनध्यायःएकवाक्यनिर्दिष्टानाममावास्यदीनामपि तथा॥ ११९॥

(५) **नन्दनः**। त्रिरात्रंक्षपणंत्रिरात्रमनध्यायः। प्रथमप्रयोगे त्रिरात्रमन्यत्रपक्षिण्यहर्वा पूर्वोक्तंद्रष्टव्यम्। अष्टकाः श्राद्धकालत्वेन विहिताश्चतस्रस्तिस्रोवाप्रसिद्धास्तासुअहोरात्रंक्षपणमिति॥ ११९॥

(६) **रामचन्द्रः**। त्रिरात्रंक्षपणं अनध्यायःस्मृतः ऋत्वन्तासु रात्रिषु ऋतुसन्धिगतासु। श्राद्धिकंभुक्त्वा तत्प्रतिग्रहदिने अनध्यायः। द्वितीया माघमासस्य ज्येष्ठश्रावणयोस्तथा। मार्गस्य चैत्राश्विनयोर्ऋतुसन्धिःसउच्यते॥ ११९॥

**नाधीयीताश्वमारूढोन वृक्षं न च हस्तिनम्॥ न नावं न खरं नोष्ट्रं नेरिणस्थोन यानगः॥ १२०॥**

(१) **मेधातिथिः**। इरिणंबहिर्ग्रामंजलतृणवर्जितोदेशऊषरपर्यायः। यानंगन्त्रीशकटशिबिकादि तेनगच्छतोनिषेधः॥ १२०॥

(२) **सर्वज्ञनारायणः**। नखरंनोष्ट्रमिति तद्युक्तयानपरं साक्षात्तदारोहणस्य निषिद्धत्वात्। इरिणमूषरंभूः। यानमुक्तेभ्योन्यत् दोलारथादि तद्गतः॥ १२०॥

(३) **कुल्लूकः**। तुरगतरुकरिनौकाखरोष्ट्रारूढस्तथोषरदेशस्थः शकटादियानेन गच्छन्नाधीयीत॥ १२०॥

(४) **राघवानन्दः**। अश्वाद्यारूढोनाधीयीतेत्याह नेति। नेरिणस्थोनोषरस्थः। यानमत्र शकटादि परिशेषात्॥ १२०॥

(५) **नन्दनः**। इरिणमूषरंस्थलम्। यानमुक्ताश्वादिव्यतिरिक्तम्॥ १२०॥

(६) **रामचन्द्रः**। अश्वादिमारूढः नाधीयीत इरिणस्थः ऊषरभूमिस्थःसन्वेदं नाधीयीत॥ १२०॥

**न विवादे न कलहे न सेनायां न सङ्गरे॥ न भुक्तमात्रे नाजीर्णे न वमित्वा न शुक्तके॥ १२१॥**

(१) **मेधातिथिः**। विवादः क्रोशपूर्वकोव्याक्रोशः। कलहोदण्डादिनेतरेतरताडनम्। सेना हस्त्यश्वरथपादातम्। सङ्गरःसङ्ग्रामः। असङ्गरेऽपि सेनास्थस्य निषेधः। भुक्तमात्रंयावदार्द्रपाणिरितिस्मृत्यन्तरम्। अजीर्णंपूर्वेद्युर्भुक्तमपरेद्युरपरिणतमुच्यते। वमनंप्रसिद्धम्। शुक्तकउद्गारेऽसत्यप्यजीर्णे तदहरपरेद्युर्वा॥ १२१॥

( २ ) **सर्वज्ञनारायणः** । विवादे ऋणदानादिविप्रतिपत्तिशब्दश्रवणे । कलहेऽन्योन्यापेक्षशब्दश्रवणे । सेनायांमध्ये । सङ्गरेयुद्धमध्ये । भुक्तमात्रे यावदार्द्रपाणिः । अजीर्णेजीर्णताकालेप्यन्नस्याजीर्तौ शुक्तके जीर्णेप्यन्नेर्चितादिनाम्लोद्गारे ॥ १२१ ॥

( ३ ) **कुल्लूकः** । विवादे वाक्कलहे कलहेदण्डादण्डयादौ सेनायामप्रवृत्तयुद्धायां सङ्गरे युद्धे भोजनानन्तरंच यावदार्द्रहस्तो यावदार्द्रपाणिरितिवसिष्ठस्मरणात् तथाऽजीर्णेऽन्ने वमनंच कृत्वाऽम्लोद्गारे च न पठेत् ॥ १२१ ॥

( ४ ) **राघवानन्दः** । किंच विवादाद्यष्टसु नाधीयीतेत्यनुषज्यतइत्याह नेति । विवादे वाकृते । कलहे दण्डादिजे । सङ्गरे युद्धे । वमित्वा उदीर्य च भुक्तान्न । शुक्तके अम्लोद्गारे ॥ १२१ ॥

( ५ ) **नन्दनः** । वाग्युद्धंविवादः । अङ्गयुद्धंकलहः । शस्त्रयुद्धंसङ्गरः । समवायेजनस्यचेतिसिद्धेजनसंमर्देदोषातिशयप्रकाशनार्थंसेनाग्रहणम् । सेनायामित्येव सिद्धेयुद्धे द्वयोरपियुद्धंसंभवेदिति सङ्गरग्रहणम् । शुक्तकेशूक्तस्यान्नस्य यातयामस्य गन्धरसाविर्भावे । नाधीयीतेत्यनुवर्तते ॥ १२१ ॥

( ६ ) **रामचन्द्रः** । वमित्वा छर्दिंकृत्वा नाधीयीत ॥ १२१ ॥

## अतिथिं चाननुज्ञाप्य मारुते वाति वा भृशम् ॥ रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते॥१२२॥

( १ ) **मेधातिथिः** । अतिथिग्रहणंशिष्टोपलक्षणार्थम् । अनित्यागमनःशिष्टश्चातिथिस्तस्मिन्गृहआगतेऽसावध्येतव्यमधीमहइतिनानुज्ञातोऽधीयीत । तथा च स्मृत्यन्तरं शिष्टेचगृहमागतइति । मारुते वायौ वाति वेगेन । ननुकर्णश्रवइत्याद्युक्तमेव । सत्यम् ततोऽधिकतरे ततोवर्षाभ्योन्यत्र वाति प्रतिषेधः । अथवाति परिशुष्यति वातस्यशोषणार्थत्वात् । मारुतग्रहणंचवातमात्रोपलक्षणार्थम् । अध्ययनश्रमेणधातुषुक्षीयमाणेष्वप्यनध्यायः । मारुते वर्धमाने विधायिन्यध्येतरीतिभिन्नसंबन्धे व्यधिकरणसप्तम्यौ । रुधिरे जलौकादिना परिस्रुतेऽथवा शस्त्रेणचपरिक्षते शरीरेरुधिरेस्रुते । गात्रादिवाक्येनैकवाक्यता ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** । अतिथिमभ्यर्हितमभ्यागतं । अतिवायति गृहादिभङ्गकारिणि घातिवाति वर्षाभ्योन्यत्रापि । शस्त्रेणक्षते । तथा गण्डादावपि रुधिरे स्रुते यावत्तद्विरामता तावदनध्यायकालः ॥ १२२ ॥

( ३ ) **कुल्लूकः** । अध्ययनंकरोमीतियावदतिथिरनुज्ञापितोन भवति मारुते चात्यर्थंवाति रुधिरे च गात्रात्स्रुते रुधिरस्रावंविनाऽपि शस्त्रेण क्षतमात्रेऽपि नाऽधीयीत ॥ १२२ ॥

( ४ ) **राघवानन्दः** । भृशमत्यर्थं वाति मारुतइत्यन्वयः । रुधिरदर्शनाभावेपि शस्त्रेण परिक्षते । एतच्चतुर्ष्वपि नाधीयीतेत्यनुषज्यते ॥ १२२ ॥

( ५ ) **नन्दनः** । परिक्षते गात्रइतिशेषः । नाधीयीतेत्येव ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । अतिथीन् अनुज्ञाप्य अधीयीत । च पुनः शस्त्रेण परिक्षते अशुद्धे शुष्के ॥ १२२ ॥

## सामध्वनावृग्यजुषी नाधीयीत कदाचन ॥ वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च ॥ १२३॥

( १ ) **मेधातिथिः** । ऋचोयजूंषि सामध्वनौ श्रूयमाणे नाधीयीत । ऋग्वेदयजुर्वेदब्राह्मणयोरप्रतिषेधः । पञ्चविंशेच श्रूयमाणऋग्यजुषयोरप्ययंप्रतिषेधः । वेदस्यान्तोयत्र वेदः समाप्तिमुपैतिमन्त्रान्तोब्राह्मणान्तश्च । आरण्यकोनामवेदैकदेशस्तमधीत्यान्योग्रन्थोनाध्येतव्यः ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । सामध्वनौ श्रूयमाणे । वेदस्यान्तषड्वाक्यमधीत्य सर्ववेदानध्यायः आरण्यकमरण्येऽध्येतव्यं वेदभागमधीत्याग्रतोन्यत्राध्येतव्येऽनध्यायः ॥ १२३ ॥

( ३ ) **कुल्लूकः** । सामध्वनौ च श्रूयमाणेऋग्यजुषोःकदाचिदध्ययनंन कुर्यात् । वेदंच समाप्य चारण्यकाख्यंच वेदैकदेशमधीत्य तदहोरात्रे वेदान्तरंनाधीयीत ॥ १२३ ॥

( ४ ) **राघवानन्दः** । सामध्वनौ श्रूयमाणे सति । अधीत्य चान्तं अध्यायंसमाप्य । आरण्यकमधीत्यग्रन्थान्तरंनाध्येतव्यमितिशेषः ॥ १२३ ॥

( ५ ) **नन्दनः** । सामध्वनौ सामगाने । सामाधीत्यतत्क्षणएवर्ग्यजुषीनाधीयीत । कदाचनआपद्यपि । अध्यायकालेऽपि वेदस्यान्तमुपनिषदमारण्यकमाश्वकेतुकंचाधीत्य तत् क्षणएवर्ग्यजुषीनाधीयीत ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । सामध्वनौसति ऋग्यजुषी नाधीयीत च पुनः वेदस्य अन्तं अधीत्य च पुनः आरण्यकं अधीत्यआरण्यकाध्यायंअधीत्य अनध्यायः ॥ १२३ ॥

**ऋग्वेदोदेवदैवत्यो यजुर्वेदस्तु मानुषः ॥ सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥ १२४ ॥**

( १ ) **मेधातिथिः** । सामगीतध्वनावृग्यजुषस्यानध्यायउक्तः । तत्रायमर्थवादः । देवादेवताअस्यदेवदैवत्योदेवतास्तुतिपरइत्यर्थः । ऋचःप्रायेण स्तुतिप्रधानाः । अतउक्तंदेवदैवत्यइति । मनुष्याणांकर्मप्रधानत्वाद्यजुर्वेदे च कर्मणांबाहुल्योपदेशादेतेनसाम्येनयजुर्वेदोमानुषइत्युच्यते । मानुषशब्दोमनुष्यजातिवचनः । अभेदाध्यासाद्यजुर्वेदोमानुषइत्युक्तम् । पित्र्यःपितृभ्योहितः । पितरोवा देवताअस्येति यथाकथंचित्पितृशब्दसंबन्धेन श्रूयते । त्रयोलोकास्तेषांत्रयएवाधिष्ठातारः दिवोदेवताभूमेर्मनुष्याअन्तरिक्षस्य पितर एवंत्रयोवेदाः । द्वयोर्देवमनुष्यसंबन्धोक्तत्वात्पारिशेष्यात्पित्र्यःसामवेदः। तस्याशुचिर्ध्वनिः । नात्रतदीयस्यध्वनेरशुचित्वंपरमार्थतोविज्ञेयम् । किंतर्हि यथाऽशुचिसंनिधाने नाध्येतव्यम् । एवंतत्सन्निधानइतिसामान्यमशुचित्वालम्बनम् । अयंचाध्ययनविधौ प्रकरणात्साम्निगीयमानऋग्यजुषप्रतिषेधोनयज्ञप्रयोगे ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । सामध्वनावित्युक्तस्यास्योपादनमृग्वेदोदेवदैवत्यइति । देवाअधिष्ठात्री देवता अस्येतिदेवदेवत्यः । तस्मात्पितृसंबन्धिनां देवसंबन्धिनांचापेक्षया अशुचित्वस्यकर्मादिषु दृष्टत्वात् ॥ १२४ ॥

( ३ ) **कुल्लूकः** । सामगानश्रुतावृग्यजुषोरनध्यायउक्तस्तस्यायमनुवादः । ऋग्वेदोदेवएव देवताअस्येतिदेवदैवत्यः । यजुर्वेदोमानुषोमानुषदेवताकत्वात्प्रायेण मानुषकर्मोपदेशाद्वामानुषः। सामवेदःपितृदेवताकत्वात् पित्र्यःपितृकर्मकत्वाजलोपस्पर्शनंस्मरन्ति । तस्मात्तस्याशुचिरिव ध्वनिःनत्वशुचिरेव । अतस्तस्मिञ्छ्रूयमाणऋग्यजुषी नाधीयीत ॥ १२४ ॥

( ४ ) **राघवानन्दः** । सामध्वनेरशुचित्वमाह ऋगिति । देवादेवताअस्येति देवदेवत्यः । अशुचिरिति अशुचिरिवपितृपक्षपातित्वात्नत्वशुचिरेव वेदध्वनेरशुचित्वाभावात् वचनात् पितृदेवताकत्वाच्चऋग्यजुषीनाध्येतव्यइतिभावः॥१२४॥

( ५ ) **नन्दनः** । सामध्वनावृग्यजुषोरनध्यायेऽर्थवादमाह ऋग्वेदइति । पितृकर्मानुष्ठायिनोऽपामुपस्पर्शनस्मरणात् । श्राद्धकर्तृप्रतिग्रहीत्रोरध्ययननिषेधाच्चपित्र्यस्याशुचित्वमुपपन्नम् । सामवेदश्चापि पित्र्यस्तस्मात्तस्य ध्वनिरशुचिः । तेन सामाधीत्य तत्क्षणमेवर्ग्यजुषीनाधीयीतेति ॥ १२४ ॥

**एतद्विदन्तोविद्वांसस्त्रयीनिष्कर्षमन्वहम् ॥ क्रमतः पूर्वमभ्यस्य पश्चाद्वेदमधीयते ॥ १२५ ॥**

---

( १२५ ) एतद्विदन्तः=एतंविदित्वा ( नन्दनः )

(१) **मेधातिथिः** । एतत्त्रिलोक्याधिष्ठातृसंबन्धित्वमृग्वेदोदेवदैवत्यइत्यादिविदन्तोविद्वांसः प्राज्ञास्त्रय्यानिष्कर्षसारभूतंपूर्वमभ्यस्य प्रणवव्याहृतिसावित्र्याख्यमुक्तेन क्रमेण पश्चाद्वेदमधीयतेपठन्ति । तेन त्रयोलोकास्तिस्रोदेवताएतत्त्रिकाध्ययनेन परिगृहीताभवन्ति । उक्तोऽप्ययमर्थोद्वितीयेऽध्यायेपुनरुच्यते । यथाऽनध्यायेषु पठ्यते । तथा त्रयीनिष्कर्षे प्रागनधीते ॥ १२५ ॥

(२) **सर्वज्ञनारायणः** । त्रयीनिष्कर्षं त्रय्यास्तत्त्वंवेदत्रयउत्तरापेक्षया पूर्वस्य श्रेष्ठताम् । ऋगादिषुयत्पूर्वं तदभ्यस्यक्रमशः उत्तरोत्तरक्रमेण पश्चाद्वेदंतदनन्तरंवेदम् । एवंच यजुर्वेदीयसामवेदीयविधिना संस्कृतेनापिऋग्वेदाध्ययनपूर्वकं ऋग्यजुषामध्ययनपूर्वकंच स्ववेदाध्ययनंकार्यमित्यत्रापेक्षितम् । एतच्चानेकशाखाध्ययनपक्षेएकशाखाध्ययनपक्षेतु स्वशाखाध्ययनमात्रमिति ग्राह्यम् ॥ १२५ ॥

(३) **कुल्लूकः** । एतद्वेदत्रयस्य देवमनुष्यपितृदेवताकत्वंजानन्तः शास्त्रज्ञास्त्रयीनिष्कर्षसारोद्धृतंप्रणवव्याहृतिसावित्र्यात्मकंप्रणवव्याहृतिसावित्रीः क्रमेण पूर्वमधीत्य पश्चाद्वेदाध्ययनंकुर्युः । द्वितीयाध्यायोक्तोप्ययमर्थः पुनरनध्यायप्रकरणेऽभिहितः यथैते यथोक्तानध्यायाएवंप्रणवव्याहृतिसावित्रीष्वपठितास्वनध्यायइतिदर्शयितुंशिष्यस्याध्यापनमेवंकर्तव्यमितिस्नातकव्रतत्वावगमार्थंच ॥ १२५ ॥

(४) **राघवानन्दः** । एतत्पठनमाह एतदिति । त्रय्यानिष्कर्षसारभूतंबीजभूतंवा प्रणवव्याहृतिसावित्रीः॥१२५॥

(५) **नन्दनः** । एवंचसति कथमध्येतव्यमित्यपेक्षायामाह एतमिति । एतत्त्रयीनिष्कर्षदेवमानुषपित्र्यात्मकंपृथक्भावं विदित्वा विद्वांसः पूर्ववेदविदः पूर्वमादावृग्वेदमभ्यस्याधीत्य पश्चात्क्रमशोऽन्वहमधीयते । एकस्मिन्दिनऋचोऽधीत्यपरस्मिन्यजूंषिपरस्मिन्सामान्यधीयीतेत्यर्थः । विद्वद्भिः कृतमन्यैरपिकर्तव्यमित्यभिप्रायः ॥ १२५ ॥

(६) **रामचन्द्रः** । त्रयी वेदत्रयी निष्कर्षअन्वेषणंमत्यहंकुर्यात् एतद्विद्वांसः विदन्तः जानन्तः पश्चात् अनन्तरं वेदंस्वकीयं अधीते ॥ १२५ ॥

**पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः॥ अन्तरागमने विद्यादनध्यायमहर्निशम् ॥ १२६ ॥**

(१) **मेधातिथिः** । अन्तरागमनेऽध्याप्याध्यापकयोर्मध्येनाधीयानानांवा । अहर्निशमहोरात्रम् । गौतमे तु त्र्यहमुपवासोविप्रवासश्चोक्तः । श्मशानाध्ययने च एतदेव । अत्रविकल्पोविज्ञेयः ॥ १२६ ॥

(२) **सर्वज्ञनारायणः** । पशुः छागः । अन्तराध्यापकाध्येत्रोः ॥१२६ ॥

(३) **कुल्लूकः** । पशुर्गवादिःमण्डूकबिडालकुक्कुरसर्पनकुलमूषिकैः शिष्योपाध्याययोर्मध्यागमनेऽनध्यायमहोरात्रंजानीयात् ॥ १२६ ॥

(४) **राघवानन्दः** । किंच पश्वादिभिःसप्तभिरन्तरागमनेप्यनध्यायइत्याह पश्विति । पशुर्गवादिः ॥ १२६ ॥

(५) **नन्दनः** । पशुशब्देनात्र ग्राम्याश्चारण्याश्च पशवउच्यन्ते । पशुना यजेतेत्यत्रापि नित्यवदुपादानाच्छागएवेत्यपरे ॥ १२६ ॥

(६) **रामचन्द्रः** । पशुः छागः । गुरुशिष्ययोः पश्वादीनामन्तरागमने अहर्निशं अनध्यायः ॥ १२६ ॥

**द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः॥ स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः॥१२७॥**

(१) **मेधातिथिः** । नित्यग्रहणात्पूर्वत्रानध्यायानांविकल्पः । तत्रापि येषांनित्यत्वमात्रंतत्प्रदर्शितमेव । यत्र नित्यग्रहणमर्थवादोवायथाअमावास्यागुरुंहन्तीति भूमेश्चाशुद्धिरस्थिभगलिङ्गादिकामिष्यादिसंसर्गः । आत्मनस्तुपञ्चमेव-

क्ष्यते। यद्यप्यध्ययनविधिप्रकरणएतावनध्यायौ तथापिनैत्यके भवतः। नह्यशुचिरधिक्रियते तथाचब्राह्मणं तस्य-वा एतस्ययज्ञस्य द्वावनध्यायौयदात्माशुचिर्यद्देशइति ब्रह्मयज्ञश्च नित्योजपः ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः**। वक्ष्यमाणौद्वावेववर्जयेत्नित्यंनित्यकर्तव्ये ब्रह्मयज्ञे। अतएव श्रुतौ तस्यवाएतस्य ब्रह्मयज्ञस्यद्वावनध्यायौयदात्माअशुचिर्यद्देशइत्युक्तम्। अत्र नाधीयीतेतिनिषेधे अध्यापनमपि निषिद्धं तत्रापि वेदोच्चारणरूपाध्ययनसंभवात् ॥१२७॥

( ३ ) **कुल्लूकः**। संप्रतिविद्यानैपुण्यकामंप्रतिपूर्वोक्तानध्यायविकल्पार्थमाह द्वावेवेति। स्वाध्यायभूमिंचोच्छिष्टाद्यमेध्योपहतां। आत्मानंच यथोक्तशौचरहितमिति द्वावेवानध्यायौनित्यंप्रयत्नतोवर्जयेत् नतु पूर्वोक्तान्। तेषामपि यत्र नित्यग्रहणमनुवादोवा नित्यत्वख्यापकोवाऽस्ति तानपि नित्यंवर्जयेत्। अन्यत्र विकल्पः ॥ १२७ ॥

( ४ ) **राघवानन्दः**। पर्युदासाधिकरणन्यायेनभूम्यात्माशुद्धिव्यतिरिक्तेषु निषिद्धेषु नित्याध्ययनंकर्तव्यमिति प्रदर्शनार्थम् द्वावेवेति। वेदरक्षाहेतुत्वात्तस्य वेदोपकरणेचैव स्वाध्यायेचैव नैत्यकइत्युक्तत्वात्। अष्टकासु त्वहोरात्रमिति यद्यप्यत्रस्वाध्यायविचारःप्रकरणात्स्नातकस्यतथापि अधीयानइति लिङ्गात्प्रथमाध्यायनेप्यङ्गमतःप्राथमिकाध्ययनमपि मनूक्तसर्ववर्जनपुरःसरमितिभावः। इत्यनध्यायप्रकरणम् ॥ १२७ ॥

( ५ ) **नन्दनः** नित्यमापद्यपि। अनेनान्येषामनध्यायनिमित्तानामापद्यनुज्ञासूचिता ॥ १२७ ॥

( ६ ) **रामचन्द्रः**। द्विजः द्वावेव विवर्जयेत्। अशुद्धां भूमिं। च पुनः आत्मानमशुचिम् ॥ १२७ ॥

## अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्॥ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातकोद्विजः॥१२८॥

## [ षष्ठ्यष्टम्यौ त्वमावास्या मुभयत्र चतुर्दशीम्॥ वर्जयेत्पौर्णमासींच तैले मांसे भगे क्षुरे॥१॥ ]

( १ ) **मेधातिथिः**। ब्रह्मचारी भवेद्ब्रह्मचारिधर्मोमैथुननिवृत्तिरतिदिश्यते नपुनर्भिक्षाचरणादिः। अप्यृताववितिसंबन्धात्तदेवप्रथमंत्हृदयमागच्छति। अन्ये तु मधुमांसनिवृत्तिमपीच्छन्त्येतेष्वहःसु। तत्र स्मृत्यन्तरमुदाहार्यम्। षष्ठ्यष्टमीममावास्यामुभयत्र चतुर्दशीम्। वर्जयेत्पौर्णमासींचतैलेमांसेभगे क्षुरे ॥ अन्येत्वाहुर्ब्रह्मचारीतिविशिष्टाश्रमिणोनामधेयमेतत्। अतआश्रमान्तरवर्तिनिगृहस्थादौ प्रयुज्यमानेवेदग्रहणार्थधर्मलक्षणयाऽतिदेशार्थोभवति। ब्रह्मचारीभवेत् परशब्दोहि परत्र प्रयुज्यमानोवत्यर्थंगमयति। सर्वेषु ब्रह्मचारिधर्मेषु प्राप्तेष्वग्नीन्धनभैक्ष्यचरणादयः। आसमावर्तनात्कुर्यादितिवचनात्। गृहस्थः शेषभुग्गितिचप्रत्यक्षे विनिवर्तन्ते। केवलंमधुमांसमैथुनप्रतिषेधमात्रमतिदिश्यतइति। प्रसिद्धस्तु ब्रह्मचारिशब्दोमैथुननिवृत्तावेवेतियत्किंचिदेतत् ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः**। ब्रह्मचारीमैथुनरहितः ॥ १२८॥

( ३ ) **कुल्लूकः**। अमावास्यादिष्वृतावपि स्नातकोद्विजोन स्त्रियमुपगच्छेत्। पर्ववर्जंव्रजेच्चैनामित्यनेनैव निषेधसिद्धौ स्नातकव्रतलोपप्रायश्चित्तार्थमिहपुनर्वर्जनम् ॥ १२८ ॥

( ४ ) **राघवानन्दः**। अमावास्यामित्यत्र कालकर्म तेनैतेषु स्त्रियमृतावपि न गच्छेत् पर्ववर्जंव्रजेच्चैनामित्यादिना निषेधस्य प्राप्तत्वेपि स्नातकव्रतलोपार्थंपुनर्ग्रहणं। ऋताविति लिङ्गात् ब्रह्मचारीति पदंमैथुननिवृत्तिमात्रपरम् ॥ १२८॥

( ५ ) **नन्दनः**। अथस्नातकस्यव्रतान्तराण्याह अमेति ॥ १२८ ॥

( ६ ) **रामचन्द्रः**। स्नातकोद्विजः अमावास्यादिषु नित्यंऋतावपि ब्रह्मचारी भवेत् ॥ १२८ ॥

[ **रामचन्द्रः**। षष्ठीति तैले तैलाभ्यङ्गे मांसभक्षणे भगे सुरते क्षुरे श्मश्र्वादिक्रियायां वर्जयेत् ॥१॥ ]

**न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ॥ न वासोभिःसहाजस्रंनाविज्ञाते जलाशये ॥ १२९॥**

( १ ) **मेधातिथिः** । नित्यस्य स्नानस्य भुक्तवतः प्राप्त्यभावान्नायंप्रतिषेधः । स्मृत्यन्तरे हि स्नानंमहायज्ञाःशेषभोजनमित्यर्थक्रमःश्रुतः । न चण्डालस्पर्शनादिनिमित्तकस्यापि नाशुचिक्षणमपितिष्ठेदितिविरोधात् । अतइच्छालक्षणस्य धर्माद्यपनोदहेतोरयंप्रतिषेधः । आतुरोव्याधिगृहीतः तस्यसर्वप्रकारस्नानप्रतिषेधोऽशुचित्वेऽपिसर्वतएवात्मानंगोपायेदिति । का तर्हि तस्य शुद्धिर्मार्जनंमन्त्रवत्प्रोक्षणंवस्त्रत्यागएवमादिकर्तव्यंमहानिशामुन्युक्तउभयतोऽर्धरात्रिकः । ये तु महती निशा यस्मिन्काले हेमन्तादावितिव्याचक्षते तेषांमाघफाल्गुनयोः प्रातःस्नानविधिविरोधादपव्याख्यानम् । नापि हैमन्तिकीषु रात्रिषु निषेधइतिप्रमाणमस्ति द्वितीयस्य निशाशब्दस्याभावात्। वासोभिरतिसामर्थ्यलक्षणे शीतादौवाससांबहुत्वे सति प्रतिषेधः । एकेन विहितमेव ननग्नःस्नायादितिद्वाभ्यामनियमोबहूनांप्रतिषेधः । जलाशयोजलाधारोऽविज्ञातः गाधागाधतया ग्राहादिभयेनच । अजस्रंसर्वदेत्यर्थः ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । आतुरोरोगी । महानिशातुविज्ञेयामध्यमंप्रहरद्वयमितिस्मृतिः । न वासोभिर्बहुभिः सह सचैलस्नानादन्यत्र । नाजस्रंपुनःपुनरेकस्मिन्दिने निमित्तान्तरपातंविना । अविज्ञातेविशेषतोंत्यजाद्यखातत्वादिनाऽज्ञाते ॥ १२९ ॥

( ३ ) **कुल्लूकः** । नित्यस्नानस्य भोजनानन्तरमप्रसक्तेश्चाण्डालादिस्पर्शनिमित्तकस्य मुहूर्तमपि शक्तिविषयेनाप्रयतःस्यादित्यापस्तबस्मरणान्निषेद्धुमयोग्यत्वाद्यदृच्छास्नानमिदंभोजनानन्तरंनिषिध्यते तथा रोगी नैमित्तिकमपि स्नानंन कुर्यात् किंतु यथासामर्थ्यं अशिरस्कंभवेत्स्नानंस्नानाशक्तौ तु कार्मिणाम् । आर्द्रेण वाससा वा स्यान्मार्जनंदैहिकंविदुरित्यादिजाबालाद्युक्तमनुसंधेयम् । तथा महानिशातुविज्ञेया मध्यस्थंप्रहरद्वयम् । तस्मिन्स्नानंन कुर्वीत काम्यनैमित्तिकादृतइतिदेवलवचनात्तत्र न स्नायात् । बहुवासाश्चनित्यं न स्नायात् । नैमित्तिकचाण्डालादिस्पर्शे सति तु स्नानंबहुवाससोऽप्यनिषिद्धम् । ग्राहाद्याक्रान्तागाधरूपतयाचविशेषेणाज्ञाते जलाशये च ॥ १२९ ॥

( ४ ) **राघवानन्दः** । महानिशीति महानिशा तु सा ज्ञेया मध्यमंप्रहरद्वयम् । तस्यांस्नानं न कुर्वीत काम्यनैमित्तिकादृतइति हारीतोक्तेः ॥ मुहूर्तमपि शक्तिविषयेनाप्रयतःस्यादित्यापस्तम्बस्मरणात् ॥ चण्डालादिस्पर्शेवश्यंस्नानमिति याद्दच्छिकस्नानविषयोनिषेधः । वासोभिर्विशिष्टइति कपिञ्जलाधिकरणन्यायेन त्रित्वंविवक्षितम् । अविज्ञाते नक्राद्याक्रान्तेगाधाद्ये ॥ १२९॥

( ५ ) **नन्दनः** । नस्नानमाचरेत् भुक्त्वेति दृष्टार्थस्नानस्य प्रतिषेधः नातुरइत्याद्यदृष्टार्थस्नानस्यच । अन्तर्वासउत्तरवासोबहिर्वासइति त्रीणि वासांसिधार्याणि । तेषु बहिरुत्तरवाससोराप्लवननिषेधोबहुवचनग्रहणाद्गम्यते । अजस्रग्रहणादत्यन्तोपहतयोराप्लावनानुज्ञाच ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । निमित्तंविना वासोभिः सह स्नानं नसमाचरेत् । अविज्ञाते अन्त्यजादिना खानितत्वा ज्ञाते ॥ १२९ ॥

**देवतानां गुरोराज्ञः स्नातकाचार्ययोस्तथा ॥ नाक्रामेत्कामतश्छायां बभ्रुणोदीक्षितस्य च ॥१३०॥**

( १ ) **मेधातिथिः** । प्रतिकृतयोऽत्रदेवतास्तासांछायासंभवात् । गुरुः पिता । आचार्यउपनेता । भेदोपादानमातिदेशिकगौरवनिवृत्त्यर्थम् । तेन मातुलादिषु नायंविधिरिति । केचित्समाचारविरोधान्नैतद्युक्तम् गोबलीवर्दवद्भेदोविज्ञेयइति

वदन्ति । बभ्रुः कपिलोवर्णः । तद्गुणयुक्तंद्रव्यंबभ्रुत्र गौः कपिला सोमलतावा । उभयोर्बभ्रुशब्देन वेदे प्रयोगदर्शनात । कामतइत्यबुद्धिपूर्वमदोषः ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः** । देवतानां देवतार्चानाम् । बभ्रुणः कपिलस्य प्राणिनश्छायाम् । दीक्षितस्य दीक्षाकाले ॥ १३० ॥

( ३ ) **कुल्लूकः** । देवतानांपाषाणादिमयीनां गुरोःपित्रादेर्नृपतेःस्नातकस्याचार्यस्य च गुरुत्वेप्याचार्यस्य प्राधान्यविवक्षया पृथङ्निर्देशः । बभ्रुणः कपिलस्य यज्ञे दीक्षितस्यावभृथस्नानात्पूर्वमिच्छया छायांनाक्रामेत् चशब्दाचांडालादीनामपि । कामतइत्यभिधानादबुद्धिपूर्वके न दोषः ॥ १३० ॥

( ४ ) **राघवानन्दः** । किंच देवतानामिति । आक्रमणंतदुपर्युपवेशनंउल्लङ्घनंचङ्क्रमणंअबुद्धिपूर्वे न दोषः नापि स्पर्शे बभ्रुणःकपिलस्य दीक्षितस्यकृतयज्ञस्य ॥ १३० ॥

( ५ ) **नन्दनः** । देवतानांदेवताप्रतिमानाम् । स्नातकोब्राह्मणः । आचार्यउपनेता । बभ्रुः कपिलागौः ॥ १३० ॥

( ६ ) **रामचन्द्रः** । देवतादीनां छायां कामतः नाक्रामेत् बभ्रूणां गवां कपिलां छायाम् । च पुनः दीक्षितस्य छायांनाक्रामेत् ॥ १३० ॥

**मध्यंदिनेऽर्धरात्रे च श्राद्धं भुक्त्वा च सामिषम् ॥ सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥१३१॥**

( १ ) **मेधातिथिः** । मध्यान्हेऽर्धरात्रे महानिशायांसमांसंचश्राद्धंभुक्त्वानसेवेत चिरंन तत्रासीत । यदिकथंचिद्ग्रामादिगच्छतोनान्तरेण चतुष्पथंमार्गान्तरमस्ति तदा तावन्मात्रसंबन्धोन निषिध्यते । केचित्तुचकारमेवंयोजयन्तिश्राद्धंभुक्त्वासामिषंचान्यदपिभोजनम् । अस्मिंश्च सबन्धे समाचारोऽन्वेष्यः । नान्यथाव्यवहितः संबन्धोलभ्यते ॥ १३१ ॥

( २ ) **सर्वज्ञनारायणः** । श्राद्धंभुक्त्वा तथामिषंभुक्त्वापि । मध्यन्दिनार्धरात्रयोः । सन्ध्ययोश्च । न सेवेत चिरंन तत्रतिष्ठेत् ॥ १३१ ॥

( ३ ) **कुल्लूकः** । दिवारात्रे च संपूर्णे प्रहरद्वये समांसंच श्राद्धंभुक्त्वा प्रातःसायंसन्ध्ययोश्च चिरंचतुष्पथंनाधितिष्ठेत् ॥ १३१ ॥

( ४ ) **राघवानन्दः** । सामिषमामिषमित्यसकन्निषेधाच्छ्राद्धे तद्दानंभक्षणंचावश्यकम ॥ १३१॥

( ५ ) **नन्दनः** । सामिषंश्राद्धंभुक्त्वामध्यन्दिनादिषुच चतुष्पथंनसेवेत ॥ १३१ ॥

( ६ ) **रामचन्द्रः** । चतुष्पथं मध्यंदिने मध्यान्हकाले न सेवेत ॥ १३१ ॥

**उद्वर्तनमपस्नानं विण्मूत्रे रक्तमेव च ॥ श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः ॥ १३२ ॥**

( १ ) **मेधातिथिः** । उद्वर्तनमभ्यङ्गमलापकर्षणंपिष्टादि । अपस्नानमुपयुक्तमुदकम् । निष्ठ्यूतमश्लेष्मरूपमपि भुक्त्वा त्यक्तंताम्बूलवीटिकादि । अधिष्ठानंतदुपरिस्थानम् । कामतःअज्ञानपूर्वमदोषः ॥ १३२ ॥

२ ) **सर्वज्ञनारायणः** । उद्वर्तनगात्रोद्वर्तनमलम् । अपस्नानंमृतनिमित्तस्नानजलं मृतज्ञात्यादीनाम् । नाऽधितिष्ठेन्नोपरि तेषांतिष्ठेत् ॥ १३२ ॥

( ३ ) **कुल्लूकः** । उद्वर्तनमभ्यङ्गमलापकर्षणपिष्टकादि । अपस्नानंस्नानोदकं मूत्रपुरीषे रुधिरंच श्लेष्माणंनिष्ठ्यूतमश्लेष्मरूपमपि चर्वितपरित्यक्तरूपताम्बूलादि वान्तंभुक्तोद्गीर्णभक्तादि एतानि कामतोनाधितिष्ठेत् । अधिष्ठानंतदुपर्यवस्थानम् ॥ १३२ ॥

( ४ ) **राघवानन्दः** । उद्वर्तनं गात्रान्निःसारितंमलं । अपस्नानं स्नानोदकं । निष्ठ्यूतं मुखनिःसृतं । कफं नाधितिष्ठेत्तदुपरीतिशेषः ॥ १३२ ॥

( ५ ) **नन्दनः** । उद्वर्तनंशरीरत्यक्तंमलं । अपस्नानंमृतस्नानजलम् ॥ १३२ ॥

( ६ ) **रामचन्द्रः** । उद्वर्तनादिषु कामतः नाधितिष्ठेत् उद्वर्तनं अभ्यङ्गंमलापकर्षणं विण्मूत्रेच रक्तमेव श्लेष्मनिष्ठ्यूतवान्तानि एतेषु स्थानेषु कामतः नाधितिष्ठेत् ॥ १३२ ॥

## वैरिणं नोपसेवेत सहायं चैव वैरिणः ॥ अधार्मिकं तस्करं च परस्यैव च योषितम् ॥ १३३ ॥

( १ ) **मेधातिथिः** । वैरी शत्रुस्तस्यसदैवउपायनप्रेषणान्येकत्रस्थानासने गृहमानादिकथाप्रवृत्तिरित्येवमादि न कार्यम् । अधार्मिकः पातकी यश्च कुसृत्या वर्तते । तस्करश्चौरः । अस्मादेवचभेदोपादानादधार्मिकोनसर्वःकिंतर्हियथाव्याख्यातम् । परस्ययोषितम् । योषिद्ग्रहणान्नपत्न्येवकिंतर्ह्यवरुद्धापिवैरकरणत्वादुभयोर्दृष्टदोषनिमित्तैश्च प्रतिषेधःसाहचर्यात् । उत्तरत्र च दारग्रहणमदृष्टदोषातिशयदर्शनार्थम् । पुनरेवंवक्तव्यंयोषितमितिसामान्यनिर्देशे दारशब्दार्थवादाद्विशेषावगतिः । नायमस्यार्थवादोभिन्नमेवैतद्वाक्यम् ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः** । अरिंन सेवेत चिरंन तत्समीपे तिष्ठेत् ॥ ३३ ॥

( ३ ) **कुल्लूकः** । शत्रुंतन्मन्त्रिणमधर्मशीलंचौरंपरदारांश्चनसेवेत । चौरस्याधार्मिकत्वेऽप्यत्यन्तगर्हितत्वात्पृथङ्निर्देशः ॥ १३३ ॥

( ४ ) **राघवानन्दः** । वैरिणःसहायमित्यन्वयोतस्तन्मित्रंवर्जयेत् ॥ १३३ ॥

( ५ ) **नन्दनः** । योषितोदारान् ॥ १३३ ॥

( ६ ) **रामचन्द्रः** । परस्य योषितं न सेवेत ॥ १३३ ॥

## न हीदृशमनायुष्यं लोके किंचन विद्यते ॥ यादृशं पुरुषस्येह परदारोपसेवनम् ॥ १३४ ॥

( १ ) **मेधातिथिः** । अजीर्णकारभोजनादि सुवर्णापहरणादिचेदृशमनायुष्यमायुष्यक्षयकरंयादृशंपरदारगमनम् । अदृष्टेन दृष्टेन च दोषः ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः** । अनायुष्यं । लोके इहलोके ॥ १३४ ॥

( ३ ) **कुल्लूकः** । यस्मादीदृशमनायुष्यमिह लोके पुरुषस्य न किंचिदस्ति यादृशंपरदारगमनम् तस्मादेतन्न कर्तव्यम् ॥ १३४ ॥

( ४ ) **राघवानन्दः** । तेषु परस्त्रीगमनमत्यर्थंनिराकर्तव्यमित्याह नहीति । सेवनं संभोगः ॥ १३४ ॥

( ६ ) **रामचन्द्रः** । परदारोपसेवनं यादृशंअनायुष्यकरं ततो न्यतरम् ॥ १३४ ॥

## क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ॥ नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ १३५ ॥

( १ ) **मेधातिथिः** । अवमानअनादरोगौरवाभावस्तिरस्कारश्च । कृशानपि तदात्वे प्रीतिकर्तुमसमर्थानपि ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । नावमन्येताधिक्षेपादिनाऽवमतान्कुर्यात् भूष्णुर्भूतिशीलइतिभूतिकामिताऽभिप्रेता ॥१३५॥

( ३ ) **कुल्लूकः** । वृद्ध्यर्थे भूधातुः । भूष्णुःवर्धिष्णुर्धनगवादिना* वर्धनशीलः क्षत्रियंसर्पंबहुश्रुतंच ब्राह्मणंनावजानीयात् । कृशानपितत्काले प्रतीकाराक्षमान् ॥ १३५ ॥

( ४ ) **राघवानन्दः** । किंच क्षत्रियमिति द्वाभ्यां । बहुश्रुतंविद्वांसं । भूष्णुरायुरादिना वर्धनशीलः ॥ १३५ ॥

( ५ ) **नन्दनः** । क्षत्रियमभिषिक्तम् ॥ १३५ ॥

( ६ ) **रामचन्द्रः** । भूष्णुः वर्धिष्णुः क्षत्रियादिकं नावमन्येत न तिरस्कुर्यात् ॥ १३५ ॥

**एतत्त्रयं हि पुरुषं निर्दहेदवमानितम् ॥ तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥ १३६ ॥**

( १ ) **मेधातिथिः** । अवमन्तारंपुरुषम् त्रयमवमानितम् क्षत्रियः सर्पोऽदृष्टया शक्त्या ब्राह्मणोजपहोमैरदृष्टेन च दोषेण तस्मादेतत्त्रयंनित्यमित्युपसंहारः । विधाय दोषदर्शनंपुनरुपसंहारोयत्नेन परिहारार्थः । यत्नातिशयाच्च प्रायश्चित्ते गौरवमप्यनुमीयते ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । तस्मादित्युक्तोपसंहारोदोषाधिक्यज्ञापनार्थः ॥ १३६ ॥

( ३ ) **कुल्लूकः** । एतत्त्रयमवमानितंसदवमन्तारंविनाशयति । क्षत्रियसर्पौ दृष्टशक्त्या ब्राह्मणश्चाभिचारादिना दृष्टेन तस्मात्कल्याणबुद्धिरेतत्त्रयंसर्वदा नावजानीयात् ॥ १३६ ॥

( ४ ) **राघवानन्दः** । तत्काले अनपकारित्वेपि उदर्केअनर्थावहमित्याह एतदिति । त्रयंक्षत्रियादि । अवमानितंसत्पुरुषमवमन्तारंदृष्टादृष्टाभ्यांदहति ॥ १३६ ॥

( ५ ) **नन्दनः** । उक्तमर्थंनिगमयति एतदिति ॥ १३६ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियः ब्राह्मणः सर्पः एतत्त्रयमवमानितं तिरस्कृतं निर्दहति ॥ १३६ ॥

**नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ॥ आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥१३७॥**

( १ ) **मेधातिथिः** । असमृद्धिर्धनाद्यसंपत्तिःकृष्यादिना धनार्जनावसरे । तत्र नात्माऽवमन्तव्योदुर्भगोऽहमकृतपुण्योनास्मिन्नवसरेधनंमयालब्धंकुतोऽन्यदा प्राप्स्यामीति नावसादोभावनीयः । आमृत्योः श्रियमन्विच्छेत् आन्त्यादुच्छ्वासाद्धनार्जनकामोन त्यक्तव्यः । न चैनांश्रियंदुर्लभांमन्येत । अवश्यंममसंपद्यतेमद्व्यवसायइतिगृहदौःस्थित्याद्यपरिगणय्य तदर्जने प्रवर्तितव्यम् । अस्ति कस्यचित्सुभाषितम् । हीनाःपुरुषकारेणगणयन्तिगृहस्थितिम् । सत्त्वोद्यमसमर्थानांनासाध्यंव्यवसायिनाम् ॥ अनेन चैतद्दर्शयति नाहंदुर्गतःक्लेशप्राप्यधनआधानादौ नाधिक्रिये ततोऽग्निहोत्रहोमक्लेशादुत्तीर्णोऽस्मीति यस्यबुद्धिःसन सम्यग्ज्ञन्यतइति । अतस्तदर्थंप्रयतेत ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वाभिः पित्रादिक्रमागताभिः । अन्विच्छेत् प्रयत्नेनानुसंदध्यात् ॥ १३७ ॥

( ३ ) **कुल्लूकः** । प्रथमंधनार्थमुद्यमे कृते तत्र धनानामसंपत्तिभिर्मन्दभाग्योऽहमितिनात्मानमवजानीयात् । किंतु मरणपर्यन्तंश्रीसिद्ध्यर्थमुद्यमंकुर्यात् न त्विमांदुर्लभांबुध्येत् ॥ १३७ ॥

( ४ ) **राघवानन्दः** । अवमाननप्रसङ्गेनाह नेति । पूर्वसंपन्नः सांप्रतंन्ष्टधनःकृतोद्यमस्तदशक्त्या मन्दभाग्योहमि-

---

* धनगवादिना=धनायुरादिना ( अ )

त्यात्माननावजानीयादिति । उक्तनिषेधातिक्रमिणंस्वावमानेनावसन्नंप्रत्याह आमृत्योरिति । एनां श्रियंपुरुषकारस्यासाध्यत्वाभावात् ॥ १३७ ॥

( ६ ) **रामचन्द्रः** । एनां श्रियं दुर्लभांनमन्येत् नासाध्यंव्यवसायिनः पूर्वापरसमृद्धिभिः पित्रादिक्रमादागताभिः ॥ १३७ ॥

**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ॥ प्रियं च नानृतं ब्रूयादेषधर्मः सनातनः ॥ १३८ ॥**

( १ ) **मेधातिथिः** । अर्थप्रयुक्तवचनं सत्येनियम्यते । यथादृष्टश्रुतंचसत्यंप्रियंब्रूयात् । द्वितीयोऽयंविधिः । औदार्यादिगुणानुकथनंपरस्यादृष्टेनापि केनचिदवसरेण । तथा पुत्रजन्मादि ब्राह्मणपुत्रस्तेजातइत्यसत्यपि स्वप्रयोजने यदि सत्यंतद्वक्तव्यं । यदितस्य तन्नविदितंसत्यंप्रियमप्रियंवास्ति । प्रियंदर्शितंब्राह्मणपुत्रइत्यादि । अप्रियंयथाब्राह्मण कन्याते गर्भिणी तदसत्यंन ब्रूयात्सत्यमपि कन्यागर्भग्रहणमप्रियत्वादप्रकाश्यम् । सत्यांगतौतूष्णीमासितव्यम् । ननुगर्भिण्यागर्भिणीति वक्तव्यंप्रियत्वादतआहप्रियंचनानृतंब्रूयादिति । एवच यस्यप्रथमःसाक्षात्कारस्तेन तत्रतूष्णीमासितुंन लभ्यते । एषसनातनोधर्मः । सनातनोनित्योवेदस्तेन विहितत्वाद्धर्मोऽपि सनातनः ॥ १३८ ॥

( २ ) **सर्वज्ञनारायणः** । सत्यंब्रूयात् प्रियंब्रूयादिति समुच्चितंवाक्यमिति स्फुटयितुम् न ब्रूयादिति व्यतिरेकोपदर्शनम् ॥ १३८ ॥

( ३ ) **कुल्लूकः** । यथादृष्टश्रुतंतत्त्वंब्रूयात् तथा प्रीतिसाधनंब्रूयात् पुत्रस्तेजातइति । यथादृष्टश्रुतमप्यप्रियंपुत्रस्तेमृत इत्यादि न वदेत् प्रियमपि मिथ्या न वदेत् । एषवेदमूलतया नित्योधर्मः ॥ १३८ ॥

( ४ ) **राघवानन्दः** । किंचसत्यमिति । विप्रंक्षत्रियंवैश्यंवा न । भोभोक्षत्रियदायाद न क्षत्रियाधमेति । क्षत्रियंब्राह्मणंन ब्रूयात् ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । प्रियमपि अनृतं न ब्रूयात् ॥ १३८ ॥

**भद्रंभद्रमितिब्रूयाद्भद्रमित्येव वा वदेत् ॥ शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ १३९ ॥**

( १ ) **मेधातिथिः** । अत्र प्रथमस्य भद्रशब्दस्यनञ्लोपंव्याचक्षते । यदभद्रंतद्भद्रमितिब्रूयात् । इतिकरणः प्रदर्शनार्थः । कल्याणंमङ्गलंसिद्धंश्रेयइत्यादयः सिद्धाः शब्दाः प्रयोक्तव्याः । पूर्वपदस्यापि प्रदर्शनार्थत्वेऽन्धे चक्षुष्मान्मूर्खेप्राज्ञइत्यादिवचनंलभ्यते । अथवाभद्रमित्येषएवशब्दएवमादिषु वक्तव्यः । शुष्कवैरंअसत्यर्थादिप्रयोजनआहोपुरुषिकंवाक्यंनकर्तव्यम् । एवंराजाधिकरणेविवादंशुष्कमेवेत्यादिसंपद्यते । केनचिदसमर्थेनापि ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । भद्रंवस्तुतोयच्छोभनं भद्रमित्येववाऽभद्रमपि । शुष्कंवैरंनिर्निमित्तंद्वेषं विवादंविरुद्धवादम् ॥ १३९ ॥

( ३ ) **कुल्लूकः** । प्रथमंभद्रपदमभद्रपदपरं द्वितीयंभद्रशब्दपर्यायपरं अभद्रंयत्तद्भद्रशब्दपर्यायपरप्रशस्तादिशब्देन प्रब्रूयात् । तथाचापस्तम्बः । नाभद्रमभद्रंब्रूयात्पुण्यंप्रशस्तमितिब्रूयात्भद्रमित्येवेति भद्रपदमेव वा तत्र योज्यं । शुष्कंनिष्प्रयोजनंवैरंविवादंन केनचित्सह कुर्यात् ॥ १३९ ॥

( ४ ) **राघवानन्दः** । किंचभद्रमिति । भद्रंभद्रमितिवीप्सा । शुष्कवैरमितिफलरहितंवैरम् ॥ १३९ ॥

( ५ ) **नन्दनः** । शुभाशुभेषु सर्वत्र भद्रंभद्रमितिब्रूयात् । भद्रमितिब्रूयादितियावत् । भद्रमित्येव वा वदेत् । सकृद्भद्रमित्येव वा ब्रूयात् । शुष्कंनिरर्थकम् ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । अभद्रमपि वस्तु भद्रंभद्रमिति ब्रूयात् शुष्कवैरं निष्प्रयोजनं वैरं न कुर्यात् ॥ १३९ ॥

**नातिकल्यं नातिसायं नातिमध्यंदिने स्थिते ॥ नाज्ञातेन समं गच्छेन्नैकोन वृषलैः सह ॥ १४० ॥**

( १ ) **मेधातिथिः** । अतिकल्यशब्दश्चाहर्मुखे वर्तते । उषःकाले नगन्तव्यम् । अतिसायंपश्चिमसन्ध्यासमयेऽज्ञाने-न पुरुषेण सह न गच्छेत् । असहायश्च वृषलैः शूद्रैश्च सह ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । अतिकल्यमुदयसमये न गच्छेत् पन्थानं । स्थिते वर्तमाने । न वृषलैरेव सह ॥१४०॥

( ३ ) **कुल्लूकः** । उषःसमये प्रदोषे च दिवा संपूर्णप्रहरद्वये चअज्ञातकुलशीलेन पुरुषेण शूद्रैश्च सह न गच्छेत् । नैकःप्रपद्येताध्वानमित्युक्ते प्रतिषेधेऽपि पुनर्नैकइतिप्रतिषेधःस्नातकव्रतलोपप्रायश्चित्तगौरवार्थः ॥ १४० ॥

( ४ ) **राघवानन्दः** । षडेतान्वर्जयेदित्याह नेति । अतिकल्यंउषसिस्थितेसूर्यइति शेषः । अज्ञातेन कुलशीलादिना वृषलैर्वेष्टितोनैकोविप्रः १४०

( ५ ) **नन्दनः** । अज्ञातेनाविदितस्वभावेन ॥ १४० ॥

( ६ ) **रामचन्द्रः** । अतिकल्यं प्रातः अज्ञातेन पुरुषेण समं नाधिगच्छेत् । प्रत्यूषोहर्मुखं कल्यमित्यमरः । अति-सायंकालं अतिमध्यंदिने स्थिते तथा वृषलैःसह न गच्छेत् ॥१४० ॥

**हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ॥ रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ १४१ ॥**

( १ ) **मेधातिथिः** । हीनाङ्गाःकाणकुष्ठिकुब्जादयः । अतिरिक्तमधिकंअङ्गंयेषांश्लीपद्यादयः । विद्याहीनामूर्खाः । वयोतिगाअत्यन्तवृद्धाः । रूपहीनादुःसंस्थानाश्चिपिटकेकरादयः । द्रविणहीनाःदरिद्राःद्रविणंधनंतेन हीनावर्जिताः । जा-त्याहीनानिकृष्टजातयः कुण्डगोलकाद्यास्तान्नाक्षिपेत् । आक्षेपःकुत्सा एतेषांएतैः शब्दैराव्हानमेव कुत्सा ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । वयोतिगानतिवृद्धान । द्रविणंधनं । जातिर्विशिष्टकुलजन्म नाऽऽक्षिपेद्धीनाङ्गत्वाद्यन्तर्भा-वेनाक्षेपंन कुर्यात् ॥ १४१ ॥

( ३ ) **कुल्लूकः** । हीनाङ्गाधिकाङ्गमूर्खवृद्धकुरूपार्थहीनहीनजातीन्काणशब्दाव्हानादिना न निन्देत् ॥ १४१ ॥

( ४ ) **राघवानन्दः** । खञ्जपादइतिवा अङ्गहीनान्षट्नाधिक्षिपेदित्याहहीनाङ्गानिति ॥ १४१ ॥

( ५ ) **नन्दनः** । द्रव्यंधनम् । जातिराभिजात्यं ॥ १४१ ॥

( ६ ) **रामचन्द्रः** । हीनाङ्गादींश्च न क्षिपेत् न तिरस्कुर्यात् ॥ १४१ ॥

**न स्पृशेत्पाणिनोच्छिष्टोविप्रोगोब्राह्मणानलान् ॥ न चापि पश्येदशुचिःसुस्थोज्योतिर्गणा-न्दिवि ॥ १४२ ॥**

( १ ) **मेधातिथिः** । उच्छिष्टोभुक्तवाननाचान्तःकृतमूत्रपुरीषश्च । अशुचिमात्रमिहोच्छिष्टशब्देनोच्यते । तथाचोच्छि-ष्टस्य गवादिस्पर्शः प्रतिषिध्यतेऽशुचिशब्देन । प्रायश्चित्तंवक्ष्यति पाणिग्रहणमतन्त्रम् । अन्येनाप्यङ्गेन स्पर्शोने-

---

( १४१ ) वयोऽधिकान्=वयोऽतिगान् ( मे० )

ष्यते। वस्त्राद्यन्तरिते न निषेधः॥ दिविज्योतिर्गणंनपश्येत् । स्वस्थोनातुरः । दिवीतिवचनाद्भूमौ ज्योतिषोऽग्ने चाप्रतिषेधः॥ १४२॥

( २ ) **सर्वज्ञनारायणः**। पाणिना न स्पृशेदिति गात्रान्तरेण स्पर्शे तादृशदोषाभावार्थः। उच्छिष्टइत्यशुचिमात्रोपलक्षणम्॥ १४२॥

( ३ ) **कुल्लूकः**। कृतभोजनःकृतमूत्रपुरीषादिश्चाकृतशौचाचमनोब्राह्मणोहस्तादिना गोब्राह्मणाग्नीन्न स्पृशेत्। नचाशुचिःसन्नानातुरोदिविस्थाँत्सूर्यचन्द्रग्रहादिज्योतिर्गणान्न पश्येत्॥ १४२॥

( ४ ) **राघवानन्दः**। किंच नेति। स्वयमुच्छिष्टोविप्रः पाणिना गोब्राह्मणादीन् न स्पृशेदित्यन्वयः । तथा स्वयंसुस्थोअशुचिःसन्॥ १४२॥

( ५ ) **नन्दनः**। उच्छिष्टः स्नानाचमनशोध्याशौचयुक्तः। स्वस्थःसावधानः । अत्र दिवीतिविशेषणाज्जलेनुज्ञातंदर्शनमितिगम्यते॥ १४२॥

( ६ ) **रामचन्द्रः**। युग्मं। न स्पृशेदिति। अशुचिःसज्ज्योतिर्गणंन पश्येत्॥ १४२॥

**स्पृष्ट्वैतानशुचिर्नित्यमद्भिःप्राणानुपस्पृशेत्॥ गात्राणि चैव सर्वाणि नाभिंपाणितलेन तु॥ १४३॥**

( १ ) **मेधातिथिः**। अविशेषवचनेऽपि प्राणाश्चक्षुरादयएवमूर्धन्याउच्यन्ते । प्राणशब्दश्चक्षुरादिवचनोवेदे प्राणसंभवोपनिषदि दृश्यते। गात्राणिअंसंजानुपादादीनि । पाणितलेनापोगृहीत्वा स्पृशेत्॥ १४३॥

( २ ) **सर्वज्ञनारायणः**। एतान्गोब्राह्मणानलान् स्पृष्ट्वा ज्योतिर्गणंच दृष्ट्वेत्यपि । अद्भिःप्राणानिति आचमनंकृत्वा जलसहितेन हस्तेन मूर्धन्येन्द्रियस्थानानिसप्तहस्ततलेन सर्वगात्रंनाभिंच स्पृशेदिति तस्यप्रायश्चित्तमित्यर्थः॥ १४३॥

( ३ ) **कुल्लूकः**। एतान्गवादीनशुचिःसन्स्पृष्ट्वा कृताचमनःपाणिना गृहीताभिरद्भिःप्राणांश्चक्षुरादीनीन्द्रियाणि शिरःस्कन्धजानुपादान्नाभिंच स्पृशेत् । अप्रकरणे चेदंप्रायश्चित्ताभिधानंलाघवार्थम्। तत्रप्रकरणे गवादिग्रहणमपि कर्तव्यंस्यात्॥ १४३॥

( ४ ) **राघवानन्दः**। दैवाच्चेत्तत्राहस्पृष्ट्वेति । प्राणान्चक्षुरादीन्द्रियाणिजलपूर्वमुपस्पृशेदिति। नाभिंचपाणितलेनकरणेन॥ १४३॥

( ५ ) **नन्दनः**। अत्र प्रायश्चितमाह स्पृष्ट्वेति। एतानि गोब्राह्मणानलान्पाणिना ज्योतिर्गणांश्चक्षुषा स्पृष्ट्वाअद्भिःसहपाणितलेन प्राणांश्चक्षुरादीनि प्राणस्थानानीति। गात्राण्यवयवांश्चनाभिंचोपस्पृशेत्॥ १४३॥

( ६ ) **रामचन्द्रः**। एतान् विप्रादीन् अशुचिःसन् स्पृष्ट्वा अद्भिःप्राणान्प्राणेन्द्रियादीन् उपस्पृशेत् । सर्वाणि गात्राणि नाभिंच पाणितलेन स्पृशेत्॥ १४३॥

**अनातुरःस्वानि खानि न स्पृशेदनिमित्ततः॥ रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत्॥ १४४॥**

( १ ) **मेधातिथिः**। अनिमित्ततःकण्डूयनादिनिमित्तंविना। स्वानि खानि चक्षुरादीनि छिद्राणि न स्पृशेत् । रह-

---

* स्थान्=द्यान् ( अ )

स्थानि कक्षोपस्थगतानि विवर्जयेत्प्रकृतेन स्पर्शेन । श्लोकपूरणार्थमाख्यातान्तरोपादानम् । अन्येत्वाहुः आख्याता- न्तरनिर्देशाद्दर्शनंप्रतिषिध्यते ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः** । अनातुरः कण्डूत्यादिपीडाभावे । तथा ऽनिमित्ततआचमनादिनिमित्तव्यतिरेकेण । खानि इन्द्रियस्थानानि नाभ्यूर्ध्वस्थान्यपि न स्पृशेत् । रहस्यान्युपस्थादिस्थितानि वर्जयेत् । स्पृशेन्नित्यमेवातुरत्वेपि ॥१४४ ॥

( ३ ) **कुल्लूकः** । अनातुरःसन् खानि खानीन्द्रियछिद्राणिरोमाणि च गोप्यान्युपस्थकक्षादिगतानि निर्निमित्तंन स्पृ- शेत् ॥ १४४ ॥

( ४ ) **राघवानन्दः** । अनिमित्ततः । आचमनादिनिमित्तंविना । रहस्थानि कक्षोपस्थगतानिविवर्जयेन्नस्पृशेत् ॥ १४४ ॥

( ५ ) **नन्दनः** । अनातुरः श्रोत्रादिषु पीडारहितः । खानि श्रोत्रादीनि । वर्जयेत् स्पर्शनइतिशेषः ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । खानि खानि । छिद्राणि अनिमित्ततः न स्पृशेत् । सरहस्यानिगुह्यस्थानि यानि रोमाणि तानि वर्जयेत् ॥ १४४ ॥

## मङ्गलाचारयुक्तःस्यात्प्रयतात्मा जितेन्द्रियः ॥ जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥ १४५ ॥

( १ ) **मेधातिथिः** । अभिलषितायुर्धनादिसिद्धिर्मङ्गलम् । तदर्थमाचारोमङ्गलाचारोगोरोचनातिलकशुभफलादिस्प- र्शस्तेन युक्तोनित्यंतत्सेवापरः स्यात् । ननु चाचारस्य प्रामाण्यमुक्तमेव । सत्यम् । अदृष्टस्यार्थस्यानेनोच्यते । दृष्टबुद्ध्याहि क्रियमाणस्य व्यभिचारदर्शनेनकश्चिदनादरपरः स्यात् । तदर्थंपुनरुच्यते यथाप्रस्थानकाले संनिहिते पुनः कथनं दध्यादौवन्दनंशुक्लनिवसनदर्शनंदक्षिणतःकपिञ्जलवासितं फलिते वृक्षे दक्षिणतएव वायसस्य । एवमादिमङ्गलार्थमा- दरणीयंविपरीतंविपरीतंवर्जनीयम् । जितेन्द्रियोविषयेष्वलालसः । पुरुषार्थतयैतदसकृदुक्तमपि विनिपातनिवृत्त्यर्थमु- मुच्यते । अग्नेरन्यत्रापिहोमसंभवाज्जुहुयादग्निमित्याह । अतन्द्रितइत्युक्तानुवादः ॥ १४५ ॥

( २ ) **सर्वज्ञनारायणः** । मङ्गलाचारः । पापालक्ष्मीनाशहेतुराचारः । नियतात्मा शुचिः । जितेन्द्रियो नियतेन्द्रि- यः । जपेत्गायत्र्यादि जुहुयात्तेनैव पापशान्त्यर्थम् ॥ १४५ ॥

( ३ ) **कुल्लूकः** । अभिप्रेतार्थसिद्धिर्मङ्गलंतद्धेतुत्वेन गोरोचनादिधारणमपि मङ्गलम् । गुरुसेवादिकमाचारस्तत्रोद्युक्तः स्यात् । बाह्याभ्यन्तरशौचोपेतोजितेन्द्रियश्च भवेत् । गायत्र्यादिजपंविहितहोमंचनित्यंकुर्यात् । अतन्द्रितोऽनलसः । अत्रा- चारादीनामुक्तानामपि विनिपातनिवृत्त्यर्थत्वात्पुनरभिधानम् ॥ १४५ ॥

( ४ ) **राघवानन्दः** । किंचमङ्गलेति । मङ्गल्यं स्वर्णदूर्वादि । प्रयतात्मा शुचिः । जपेद्गायत्रीमिति शेषः ॥ १४५ ॥

( ५ ) **नन्दनः** । नैमित्तिकानाचारानाह मङ्गलेति । मङ्गलानि सुवर्णचन्दनंरत्नंपञ्चगव्यानिरोचनां । प्रियङ्गुंसर्षप- क्षौद्रंमङ्गलानि प्रचक्षते ॥ आचारोव्याख्यातः ॥ १४५ ॥

( ६ ) **रामचन्द्रः** । मङ्गलाचारयुक्तः स्याद्वस्त्रालंकारयुक्तःस्याद्गायत्रींजपेत् ॥ १४५ ॥

## मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ॥ जपतां जुह्वतां चैव विनिपातोन विद्यते ॥१४६ ॥

( १ ) **मेधातिथिः** । विनिपातः प्राकृताशुभनिमित्तकोदैवोपद्रवोव्याधिर्धननाशइष्टवियोगादिः । सएवमाचाराणां- माङ्गल्यकान्निवर्तते । अनेनापि नित्यतैवोक्ता भवति सत्यपि फलार्थत्वे । नहि कश्चिद्दैवोपद्रवानिवृत्तिमर्थयते । अतो-

नित्यग्रहणमनुवादः । अथापि कश्चिदनर्थोस्यात्तथापि नित्यएवायंविधिः । एवंचोभयार्थतातस्य नित्याधिकारवृत्ति-विनिपातनिवृत्तिश्च ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । विनिपातइहलोकेपरलोके च ॥ १४६ ॥

( ३ ) **कुल्लूकः** । अतआहमङ्गलाचारयुक्तानामिति । मङ्गलाचाराभ्यांयुक्तानांनित्यंशुचीनांजपहोमरतानांदैवमानुषोपद्रवोन जायते ॥ १४६ ॥

( ४ ) **राघवानन्दः** । उक्तानामनुष्ठानेअर्थवादमाह मङ्गलेति । विनिपातोदैवमानुषोपद्रवः जपादिफलराहित्यंवा । मङ्गलाचारयुक्तानामित्याद्यनुवादः ॥ १४६ ॥

( ६ ) **रामचन्द्रः** । मङ्गलेति । मङ्गलाचारयुक्तादीनांविनिपातोव्याध्यादीभिःचरणादेरनिष्टप्राप्तिर्नविद्यते ॥ १४६ ॥

**वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः ॥ तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्यउच्यते ॥ १४७ ॥**

( १ ) **मेधातिथिः** । जपेच्चजुहुयाच्चैवेत्युक्तम् । तत्र तावज्जपस्य साधनमाह वेदमेवजपेदिति । अवशिष्टोऽर्थवादः । यथाकालंयस्मिन्यस्मिन्काले वीप्सायामव्ययीभावः । यदैव ह्यैहिकी चेष्टा नातिपद्यते । तदैव जपेत् । अन्यान्यग्निहोत्रादिकर्माणि नियतकालानि । जपस्यतुशुचित्वमेवकालः । अयंमुख्योधर्मः । उपधर्मोधर्मस्यसमीपेउपधर्मः । समीपप्रधानस्तत्पुरुषोनाव्ययीभावः । उपमानानिसामान्यवचनैरिति यथा । धर्मान्तरनिन्दा वेदजपस्तुत्यर्था न तन्निषेधार्था ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । वेदमेव यथाकालंस्वाध्यायकाले जपेत वेदजपमेव कुर्यात् । नतु तद्विरोधि कर्मान्तरमिति । अभ्युदयसाधनं नियतेनास्य स्नातकस्य उपधर्मोऽल्पधर्मः ॥ १४७ ॥

( ३ ) **कुल्लूकः** । नित्यकृत्यावसरे श्रेयोहेततया प्रणवगायत्र्यादिकंवेदमेवानलसोजपेत् । यस्मात्तंब्राह्मणस्य श्रेष्ठंधर्ममन्वादयोवदन्ति । अन्यः पुनस्ततोऽपकृष्टोधर्मोमुनिभिरुच्यते । उक्तस्यैव वेदाभ्यासादेः पूर्वजातिस्मरणद्वारेण मोक्षहेतुत्वंवदितुंपुनरभिधानम् ॥ १४७ ॥

( ४ ) **राघवानन्दः** । तंवेदजपं उपधर्मः । अपकृष्टधर्मः विधर्मोवा ॥ १४७ ॥

( ५ ) **नन्दनः** । जपेच्चेत्युक्तम् किंजप्यमित्यपेक्षायामाह वेदमिति । तंवेदजपम् । अन्योऽवेदजपः ॥ १४७ ॥

( ६ ) **रामचन्द्रः** । तंपरंधर्मआहुः । अन्योधर्मउपधर्म उच्यते ॥ १४७ ॥

**वेदाभ्यासेन सततं शौचेन तपसैव च ॥ अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥ १४८ ॥**

( १ ) **मेधातिथिः** । अद्रोहोऽहिंसा । भूतानिस्थावरजङ्गमानि । जातिस्मरफलान्येतानि कर्माणिचत्वारियावज्जीवमनुष्ठीयमानानिभवन्ति । जातिर्जन्मान्तरम् । पूर्वंभवापौर्विकी ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । एषच वेदाभ्यासः शौचादिभिर्यमैस्तपःप्रभृतिभिर्नियमैश्च सहितएवाभ्युदयहेतुरित्याह वेदाभ्यासेनेति । तपसाप्राणायामादिना शौचादिकं यमस्य तपश्च नियमस्योपलक्षणम् । जातिंजन्म ॥ १४८ ॥

( ३ ) **कुल्लूकः** । सततवेदाभ्यासशौचतपोऽहिंसाभिःपूर्वभवस्य जातिंस्मरति ॥ १४८ ॥

( ४ ) **राघवानन्दः** । वेदाभ्यासादिचतुष्टयंजातिस्मृतेरपि हेतुरित्याह वेदेति ॥ १४८ ॥

( ५ ) **नन्दनः** । योयंवेदजपः सशौचसत्यतपोऽहिंसायुक्तश्चेत्परमोधर्मोभवति नान्यथेत्याह वेदेति ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । भूतानामद्रोहेणैव पौर्विकींजातिंस्मरति ॥ १४८ ॥

**पौर्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः ॥ ब्रह्माभ्यासेन चाजस्रमनन्तंसुखमश्नुते ॥ १४९ ॥**

( १ ) **मेधातिथिः** । ननुचेष्टफलकामः सर्वसमीहते जन्मान्तरानुस्मरणमेकतरसुखंयेन फलत्वेन वेदाभ्यासादिचतुष्टयस्य वर्ण्यते । ततआह पौर्विकींजातिंस्मरन्पुनस्तदभ्यासे वर्तते । तस्माच्चानेकजन्माभ्यासादनन्तरंब्रह्मप्राप्तिलक्षणं सुखम् । अजस्रमपुनरावृत्ति अश्नुतेप्राप्नोति । अनन्तशब्देन सुखविशेषोलक्ष्यतोअसाधना परितृप्तिरात्मनस्तस्याजस्रपदेन शाश्वतंप्रतिपाद्यते तादृशंसुखंप्राप्यते नचैतत्क्षीयते । समानार्थावथपुनरुक्तौ यथावृत्तकंवहतः पुरीषमिति । वृत्तकमुदकं-पुरीषंच तत्रैकोरूढोऽपरः क्रियाशब्दः । पुरीषंपूरणसमर्थंवृत्तकमुदकम् ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । अजस्रंसर्वदा ब्रह्मणोवेदस्याभ्यासेन आनन्त्यमनन्तकालस्थायि ॥ १४९ ॥

( ३ ) **कुल्लूकः** । ततःकिमतआह पौर्विकीमिति । पूर्वजातिंस्मरन् जातिमित्येकत्वमनाकाङ्क्षितत्वादविवक्षितम् । बहूनि जन्मानि स्मरंस्तेषु च गर्भजन्मजरामरणदुःखान्यपि स्मरन्संसारे विरज्यन्ब्रह्मैवाजस्रमभ्यसति श्रवणमननध्यानैः साक्षात्करोति तेन चानन्तमविनाशिपरमानन्दाविर्भावलक्षणंमोक्षसुखंप्राप्नोति ॥ १४९ ॥

( ४ ) **राघवानन्दः** । पूर्वजातिस्मृतौकिंस्यादित्यत्राह पौर्विकीमिति । वेदाभ्यासेनैवंमम जातिस्मरता जातेतिकृत्वा-ब्रह्मैवाभ्यस्यतेततोऽनन्तमविनाशि मोक्षरूपम् ॥ १४९ ॥

( ५ ) **नन्दनः** । जातिस्मरणेन किंप्रयोजनमित्यपेक्षायामाह पौर्विकामिति । ब्रह्मवेदमनन्तरं सुखंमुक्तिम् ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मैव वेदमेव । पुनरभ्यसेत्ब्रह्माभ्यासेन अजस्रं निरन्तरं आनन्त्यंफलंअश्नुते ॥ १४९ ॥

**सावित्रान् शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः ॥ पितॄंश्चैवाष्टकास्वर्चेन्नित्यमन्वष्टका-सुच ॥ १५० ॥**

( १ ) **मेधातिथिः** । पूर्वोक्तानांहोमानांस्वरूपमुच्यते । सावित्राः सवितृदेवताकाः । पर्वसुच पौर्णमास्यमावास्ययोः कर्तव्याः शान्त्यर्थंहोमाअनिष्टनिवृत्तिप्रयोजनाः द्रव्यंचात्राज्यमेवानुपात्तद्रव्यविशेषेषु सर्वहोमेषुश्रूयते । सर्वस्मैवाएत-द्यज्ञायगृह्यतेयत्ध्रुवायामाज्यमिति । पर्वस्विति च सप्तमीद्वितीयार्थे द्रष्टव्या । अधिकरणमग्निर्होमस्य न कर्मक्वचित् । होतव्यानि पल्यन्तेलाजाज्यमांससक्तुदधिपयोधानाः पिष्टमित्यादि । एतेचहोमाअपूर्वाः । यावतीच समाचारादितिकर्तव्यता सा प्राग्दर्शिता । अष्टकाऊर्ध्वमाग्रहायण्यास्तमिस्रपक्षाणांतिस्रोऽष्टम्यः केषांचिद्धेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामितिवचनम् । तत्र पितॄनर्चयेच्छ्राद्धेन । पितृशब्दः पूर्वममोतपित्रादिवचनः । अन्वष्टकास्ताएवनवम्यः ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** सावित्रान् सावित्रीमन्त्रनिष्पाद्यान् । शान्तिहोमान् पापशान्त्यर्थंहोमान् । पर्वस्वमावास्या-पौर्णमास्योः । नित्यशः सर्वदा अष्टकासु हेमन्तशिशिरकृष्णाष्टमीषु । अन्वष्टकासु तन्नवमीषु ॥ १५० ॥

( ३ ) **कुल्लूकः** । सावित्रीदेवताकान्होमाननिष्टनिवृत्त्यर्थंचशान्तिहोमान्पौर्णमास्यमावास्ययोः सर्वदा कुर्यात् । तथा-आग्रहायण्याऊर्ध्वंकृष्णाष्टमीषु तिसृषु चाष्टकाख्येन कर्मणाश्राद्धेन च तदन्तरितकृष्णनवमीषु चान्वष्टकाख्येन परलोकगतान्पितॄन्यजेत् ॥ १५० ॥

---

( १५० ) सावित्रान्=सावित्र्या ( नन्दनः )

( ४ ) **राघवानन्दः** । सावित्रान् सवितृदेवताकान् । शान्त्यर्थहोमान् शान्तिहोमान् । सूर्योज्योतिर्ज्योतिःसूर्याय-स्वाहेति मन्त्रलिङ्गादाज्यद्रव्यकान् । सर्वस्मैवाएतद्यज्ञायगृह्यतेयत्ध्रुवायामाज्यमिति । अतस्तेषांरूपसमर्पणमात्रमनेन । पर्वस्विति दर्शादिकालविधिस्तेषां अष्टकान्वष्टकासु च पितृंश्चार्चयेदित्यन्वयः । आग्रहायण्याऊर्ध्वंचतसृष्वष्टकासु अष्टकाख्येन कर्मणाअन्वष्टकासुअन्वष्टकाख्येनच ॥ १५० ॥

( ५ ) **नन्दनः** । जुहुयाच्चैवेत्युक्तम् तत्केन मन्त्रेणेत्यपेक्षायामाह साविञ्येति । साविञ्याआज्येन शान्तिहोमान्कुर्यात् । अष्टकासु हेमन्ताद्यष्टमीषु । अन्वष्टकासु नवमीषु ॥ १५० ॥

( ६ ) **रामचन्द्रः** । सावित्रान्सवितृदेवताकान् गायत्र्यादिमन्त्रान् शान्तिहोमांश्च कुर्यात् । अष्टकासु हेमन्तशिशिर-कृष्णनवमीषु अन्वकाष्टकासु पितृनर्चयेत् ॥ १५० ॥

**दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ॥ उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत् ॥ १५१ ॥**

( १ ) **मेधातिथिः** । पादाववसिच्येते येनोदकादिना तत्पादावसेचनंतद्दूरात्क्षिपेत् । अथवा पादप्रक्षालनमेव दूरात्कुर्यात् । निषेकःपरिषेकः । तैलादिकृतस्नानोदकमपिशक्यते निषेकशब्देनाभिधातुम् । उपयुक्तशेषस्य त्याज्य-स्यायंदूरतोनिक्षेपउच्यते । तद्धि निषेकशब्देन प्रसिद्धतरम् ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । उच्छिष्टान्नस्य निषेकंत्यागम् ॥ १५१ ॥

( ३ ) **कुल्लूकः** । नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवइतिविष्णुपुराणवचनादेवंविधादग्निगृहस्य दूरान्मूत्रपुरी-षपादप्रक्षालनसकैलोच्छिष्टान्नानि । निषिच्यतइतिनिषेकंरेतश्चोत्सृजेत् ॥ १५१ ॥

( ४ ) **राघवानन्दः** । किंच दूरादिति । निषेकंरेतः समाचरेद्दूरे कुर्यात् ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । उच्छिष्टान्नं निषेकं रेतः दूरादेव समाचरेत् ॥ १५१ ॥

**मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ॥ पूर्वाह्णएव कुर्वीत देवतानां च पूजनम् ॥ १५२ ॥**

( १ ) **मेधातिथिः** । अर्थवादेषु पश्वङ्गसंस्तवे मैत्रःपायुरितिश्रूयते । तदिहाप्यभेदोपचारान्मित्रःपायुस्तत्रभवंशौ-चंमैत्रम् । प्रसाधनंकेशरचनामुपलेपनादि । अथवाविशेषणविशेष्येपदेमैत्रंप्रसाधनम् । अकृतशकृतापि प्रातः पायुप्रक्षाल-नंकर्तव्यम् । यथाहि सुप्तस्य लालास्रावादेरवश्यंभावित्वान्मुखधावनंविहितम् । एवमेतदपि विनैव वा निमित्तेन मुखस्य जघन्ययोरङ्गयोः प्रक्षालनमवश्यंकर्तव्यम् । अन्येत्वाहुर्मित्रकार्यंमैत्रंतत्सर्वकार्येभ्योन्तरङ्गेभ्योऽपिपूर्वंकर्तव्यम् । तत्रा-प्यशुचेः क्षणमप्यवस्थाभावात्स्वकार्यापेक्षया पूर्वत्वंद्रष्टव्यम् । तदाच पूर्वाह्णशब्दः कार्यान्तरेभ्यः पूर्वतामात्रोपलक्ष-णार्थोनपुनरपराह्णप्रतिषेधार्थः । अथवामित्रआदित्यस्तदुपस्थानंमैत्रम् । नचायमेषविद्वत्तादिगुणसंपन्नःसाध्यते । प्रजाया-याह्येते गुणाः प्रार्थ्यन्ते । तदुक्तम् ॥ तया गवा किंक्रियते या न धेनुर्नगर्भिणी । कोऽर्थः पुत्रेण जातेन योन विद्वान्न धार्मिकः ॥ अक्षय्यमपि प्रभूतंयदसद्यसनैरप्यलक्षणस्कन्धोपरितिलकादिदारिद्र्यादिदौर्भाग्यसूचकं तदप्याचारोहन्ति । तेनह्यधर्मआचारपरत्वेन नश्यति ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः** । मैत्रं विष्ठोत्सर्गं मित्रदैवततया प्रसाध्यत्वात् । वक्ष्यतिच मित्रमुत्सर्गइति । प्रसाधनपदेनै-व चक्षुरंजनस्य प्राप्तत्वात् । अञ्जनं तैलाभ्यङ्गम् । पूर्वाह्णएव संभवे असंभवेत्वन्यदापि ॥ १५२ ॥

---

+ क=ज ( अ )

( ३ ) **कुल्लूकः** । मित्रदेवताकत्वान्मैत्रःपायुस्तद्भवत्वान्मैत्रंपुरीषोत्सर्गम् । तथादेहप्रसाधनमातःस्नानदन्तधावनाञ्जनदेवार्चनादि पूर्वाह्णएव कुर्यात् । पूर्वाह्णशब्देन रात्रिशेषदिनपूर्वभागाविह विवक्षितौ । पदार्थमात्रविधिपरत्वाच्चास्य पाठक्रमोऽपि नादरणीयः । नहि स्नानानन्तरंदन्तधावनम् ॥ १५२ ॥

( ४ ) **राघवानन्दः** । किंचैतांत्सप्तारुणोदयमारभ्य कुर्यादित्याह मैत्रमिति मित्रदेवताकत्वात् मैत्रःपायुःतदुद्भवत्वान्मैत्रं पुरीषोत्सर्गं । प्रसाधनं केशानां । पूर्वाह्णशब्देन जहल्लक्षणया रात्रिशेषोग्राह्यःतेनानुदितहोमनिर्वाहः । अत्र पाठक्रमंबाधित्वा अर्थाच्चेति न्यायेन दन्तधावनमादौ बोद्धव्यम् । उदिते पद्मिनीनाथे यःकुर्याद्दन्तधावनम् । सनिर्लज्जः कथंब्रूयात्पूजयामि जनार्दनमिति निन्दास्मरणात् ॥ १५२ ॥

( ५ ) **नन्दनः** । मैत्रमुच्चारः ॥ १५२ ॥

( ६ ) **रामचन्द्रः** । मैत्रं मूत्रपुरीषोत्सर्गः । अंजनं प्रसाधनं केशानांकर्मपूर्वाह्णएव कुर्वीत ॥ १५२ ॥

**दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान् ॥ ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ॥ १५३ ॥**

( २ ) **सर्वज्ञनारायणः** । दैवतानि । धार्मिकद्विजांश्च नमस्कारार्थम् । ईश्वरंच रक्षार्थंनित्यमभिगच्छेत् । गुरूंस्तु पर्वसु नमस्क्रियार्थम् ॥ १५३ ॥

( ३ ) **कुल्लूकः** । पाषाणादिमयानि धर्मप्रधानांश्च ब्राह्मणान्रक्षार्थंराजादिकं गुरूंश्च पित्रादीनमावास्यादिपर्वसु द्रष्टुमभिमुखोगच्छेत् ॥ १५३ ॥

( ४ ) **राघवानन्दः** । दैवतानि पाषाणादिप्रतिमाः । धार्मिकान् धर्मोपदेष्टॄन् । पर्वस्वमादिषु ॥ १५३ ॥

( ५ ) **नन्दनः** । दैवतानि देवताप्रतिमाः । ईश्वरंराजानमन्यंवाप्रभुम् ॥ १५३ ॥

( ६ ) **रामचन्द्रः** । ईश्वरं ग्रामाधिपं योगक्षेमार्थंगच्छेत् । अलब्धलाभोयोगः लब्धस्य परिपालनं क्षेमःतं कुर्वीत । गुरून् आचार्यान् ॥ १५३ ॥

**अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम् ॥ कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ १५४ ॥**

( २ ) **सर्वज्ञनारायणः** । वृद्धान् विद्यादिवृद्धान् । पृष्ठतोन्वियात् न त्वग्रतः ॥ १५४ ॥

( ३ ) **कुल्लूकः** । गृहागतान्गुरूनभिवादयेत्तेषांच स्वीयमासनमुपवेष्टुंच दद्यात् । बद्धाञ्जलिश्च गुरुसमीपआसीत । गच्छतश्च पृष्ठदेशेऽनुगच्छेत् । उक्तोऽप्ययमभिवादनाद्याचारःफलाभिधानाय पुनरुच्यते ॥ १५४ ॥

( ४ ) **राघवानन्दः** । संभ्रमेणासनंदद्यादिति भावः । उपासीत आसीनानिति शेषः । गच्छतस्तस्य पृष्ठतः ॥ १५४ ॥

( ६ ) **रामचन्द्रः** । स्वं स्वकीयं आसनंदद्यात् ॥ १५४ ॥

**श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु ॥ धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥ १५५ ॥**

( २ ) **सर्वज्ञनारायणः** । श्रुतिस्मृत्युदितं सदाचारंच धर्ममूलंधर्मसाधनं स्वेषु स्ववर्णाश्रमकर्मसु निबद्धंसंबद्धं तत्कर्मानुगुणंसेवेत ॥ १५५ ॥

( ३ ) **कुल्लूकः** । वेदस्मृतिभ्यांसम्यगुक्तंस्वेषु कर्मस्वध्ययनादिष्वङ्गत्वेन संबन्धंधर्मस्य हेतुंसाधूनामाचारमनलसः सन्नितान्तंसेवेतेतिसामान्येनाचारानुष्ठानोपदेशःफलकथनाय ॥ १५५ ॥

( ४ ) **राघवानन्दः** । निबद्धं कर्माङ्गत्वेन । सदाचारं त्वद्भाभिःपूयतेविप्रइत्यादिनाआचमनाद्यनुष्ठानं । धर्ममूलं अङ्गारपात्रादिधारणलक्षणशिरोव्रतादिधर्महेतुः ॥ १५५ ॥

( ५ ) **नन्दनः** । स्वेषु कर्मसु निबद्धंस्वानि कर्माणि वर्णाश्रमप्रयुक्तानि कुर्वन्धर्ममूलंधर्मस्य मूलम् । धर्ममूलत्वंचाचारप्रभवोधर्मः श्रुत्युक्तःस्मार्तएवचेत्यत्रप्रतिपादितम् ॥ १५५ ॥

**आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ॥ आचाराद्धनमक्षय्यमाचारोहन्त्यलक्षणम्॥१५६॥**

( २ ) **सर्वज्ञनारायणः** । आचाराद्धर्माचरणात् अलक्षणमलक्ष्मीम् ॥ १५६ ॥

( ३ ) **कुल्लूकः** । आचाराद्वेदोक्तमायुर्लभतेऽभिमताश्च प्रजाः पुत्रपौत्रदुहित्रात्मिकाः प्रभूतंचधनम् । अशुभफलसूचकंच देहस्थमलक्षणमाचारोनिष्फलयति आचाराख्यधर्मेणालक्षणसूचितारिष्टनाशात् ॥ १५६ ॥

( ४ ) **राघवानन्दः** । आचारानुष्ठानंस्तौति आचारादिति । आचारः स्मार्ताचमनादिः । अक्षय्यं पुत्रपौत्रादि । अलक्षणं निन्दितरोगपरदारादिसेवनम् ॥ १५६ ॥

( ६ ) **रामचन्द्रः** । अलक्षणं अलक्ष्मीम् ॥ १५६ ॥

**दुराचारोहि पुरुषोलोके भवति निन्दितः ॥ दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥१५७॥**

( २ ) **सर्वज्ञनारायणः** । दुराचारोदुष्टाचरणशीलः ॥ १५७ ॥

( ३ ) **कुल्लूकः** । यस्माद्दुराचारः पुरुषोलोके गर्हितःस्यात्सर्वदा दुःखान्वितोरोगवानल्पायुश्च भवति तस्मात्सदाचारयुक्तःस्यात् ॥ १५७ ॥

(४ ) **राघवानन्दः** । विपक्षेत्वाह दुराचारइति ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । दुराचारः अश्रद्दधानः ॥ १५७ ॥

**सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ॥ श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ १५८ ॥**

( २ ) **सर्वज्ञनारायणः** । लक्षणं एतज्जन्मशुभसूचकं कुलरेखादि । सदाचारः समीचीनाचारः तत्राचारे श्रद्दधानः। अनसूयः परगुणसहनः ॥ १५८ ॥

( ३ ) **कुल्लूकः** । यःसदाचारवाञ्छ्रद्धान्वितः परदोषानभिधाता स*शुभसूचकलक्षणशून्योऽपि शतायुर्भवति॥ १५८॥

( ४ ) **राघवानन्दः** । सदाचारः सतामाचारे श्रद्दधानः ॥ १५८ ॥

**यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ॥ यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ १५९ ॥**

( १ ) **मेधातिथिः** । यत्परप्रार्थनया स्वपरहितादि क्रियते तत्परवशंवर्ज्यतेनतुयद्वृत्तिसाध्यमार्त्विज्यादि । तद्विषयकमेवभृत्यादिःस्वीक्रियते । यत्त्वात्मनोऽवश्यंस्वल्पयाधनमात्रयापरोपकारःस्वल्पोऽपितंस्वयमेवकुर्यात् । नचानेनपरवशमपि दीक्षितस्य निषिध्यते । स्मृत्या श्रुतिंबाधितुमन्याय्यत्वात् उक्तेचविषयेसावकाशत्वात्स्मृतेर्नित्यकर्मासंपत्तौ कुटुम्बोपयोगिनिधनेऽसति कर्तव्यैव याञ्चोपायान्तराभावे । किंतुविशेषतोदास्यइति सत्यांकस्यांचिद्धनमात्रायांसंतोषपरेणभवितव्यमित्येवमस्यतात्पर्यम् ॥ १५९ ॥

---

* स=स्व ( अ )

( २ ) **सर्वज्ञनारायणः** । परवशं नित्यंपराधीनं कर्म दृष्टार्थम् ॥ १५९ ॥

( ३ ) **कुल्लूक-** । यद्यत्कर्म पराधीनंपरप्रार्थनादिसाध्यंतत्तद्यत्नतोवर्जयेत् । यद्यत्स्वाधीनदेहव्यापारसाध्यंपरमात्मग्रहादि तत्तद्यत्नतोऽनुतिष्ठेत् ॥ १५९ ॥

( ४ ) **राघवानन्दः** । नैतादृशंदुःखहेतुरित्यनुभवाधिरूढमाह यदितित्रिभिः । अध्यापनादित्रितयंपरित्यज्य यथालाभेन संतुष्टोवेदानभ्यसेदिति तात्पर्यार्थः ॥ १५९ ॥

( ५ ) **नन्दनः** । परवशंपराधीनम् । अनावश्यकंयत्कर्म तत्फलवदपि वर्जनीयमित्यर्थः ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । यद्यत् परतरं कर्म पराधीनंकर्म तत्यत्नेन वर्जयेत् । यद्यत् आत्मवशंकर्म तद्यत्नेन स सेवेत ॥ १५९ ॥

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥ एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ १६० ॥**

( १ ) **मेधातिथिः** । याच्ञांनिन्दति । यत्परवशंतत्सर्वंदुःखम् । तिष्ठतु तावत्परस्य गृहद्वार्युपस्थानमनुवृत्तिरत्रचामुत्रचभ्रमणम् । यत्तु संकल्पएवयाच्ञायांत्दयंनप्रसह्यते नूनंमायामसंदिग्धांसृष्टिर्नासौस्वयंभुवः । समासेन संक्षेपेणैतद्दुदुःखस्यलक्षणंयायाच्ञा । सुखंचैतद्याऽस्पृहा ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । लक्षणंकारणम् ॥ १६० ॥

( ३ ) **कुल्लूकः** । अत्रहेतुमाह सर्वंपरवशमिति । सर्वंपरप्रार्थनादिसाध्यंदुःखहेतुः सर्वमात्माधीनंसुखहेतुः । एतत्सुखदुःखयोःकारणंजानीयात् ॥ १६० ॥

( ४ ) **राघवानन्दः** । आत्मवशंदेहमात्रनिर्वाह्यं । शारीरंकेवलंकर्म कुर्वन्नाप्नोति किल्बिषमिति गीतोक्तेः । समासेन संक्षेपेण लक्षणंगमकम् ॥ १६० ॥

( ५ ) **नन्दनः** । यस्मादेवं तस्मादिदंमनसि कर्तव्यमित्याह सर्वमिति ॥ १६० ॥

( ६ ) **रामचन्द्रः** । सुखदुःखयोः लक्षणं कारणं एतद्विद्यात् ॥ १६० ॥

**यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ॥ तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ १६१॥**

( १ ) **मेधातिथिः** । आत्मतुष्टेःप्रागुक्तायाः पुनर्वचनंस्मरणार्थम् । विषयश्चतस्यादर्शनएव । यत्र कर्मणि क्रियमाणे किंकथिका न भवति तत्कर्तव्यम् । यत्र तु हृदयंन तुष्यति तद्वर्जनीयम् ॥ १६१ ॥

( २ ) **सर्वज्ञनारायणः** । परितोषोधर्मसाधनं ममैतदिति बुद्ध्याप्रीतिः । एतच्च बहुषु धर्मप्रकारेषु मध्ये द्रष्टव्यं एतदेव स्वस्यच प्रियमात्मनइति । प्रागुक्तविपरीतं यत्र न कदाचित्परितोषः ॥ १६१ ॥

( ३ ) **कुल्लूकः** । यत्कर्मकुर्वतोऽस्यानुष्ठातुःपुरुषस्यान्तरात्मनस्तुष्टिःस्यात्तत्प्रयत्नतोऽनुष्ठेयमतुष्टिकरंवर्जयेत् । एतच्चाविहितानिषिद्धगोचरंवैकल्पिकविषयंच ॥ १६१ ॥

( ४ ) **राघवानन्दः** । किंच परवशमपिपुत्रोत्पादनादिकार्यमन्तरात्मनोमनसः संतोषहेतुत्वात्तद्विपरीतंपारदार्यादि नकार्यं । तस्योदर्केऽसंतोषहेतुत्वात् ॥ १६१ ॥

( ५ ) **नन्दनः** । एवंवर्जनीयंचकार्यंचयत्तल्लक्षणउक्तम् इदानींलक्षणान्तरमाह यत्कर्मेति । सतामयमुपदेशोनासताम् ॥ १६१ ॥

( ६ ) **रामचन्द्रः** । अस्य द्विजस्य यत्कर्म कुर्वतः अन्तरात्मनः परितोषः स्यात् तत्कर्म कुर्वीत कुर्यात् ॥१६१॥

**आचार्यं च प्रवक्तारं पितरं मातरं गुरुम् ॥ न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥१६२॥**

( १ ) **मेधातिथिः** । प्रायश्चित्तप्रवृत्तान्पातकिनोऽपिसर्वग्रहणमविशेषेण सर्वभूतानांतत्र तत्र हिंसानिषिद्धापुनर्वचनमाचार्यादीनामाततायिनामपि निषेधार्थमितिकेचित् । यस्तुगुरुंवाबालवृद्धौवेत्यादिरर्थवादोऽस्यैवप्रतिप्रसवः । उपाध्यायस्त्वाह नायंप्रतिषेधः पर्युदासोऽयंसंकल्पविधानार्थोनोद्यन्तमादित्यमीक्षेतेतिवत् । अतः प्रयत्नेनातिक्रान्तंभवति संकल्पप्रतिषेधश्चेति । अथवादुरुक्तभाषणंहिंसावाग्भिस्तैस्तैर्जघानतामितिप्रयोगदर्शनात् । अथवाप्रतिकूलाचरणे हन्तिःप्रयुक्तः ॥ १६२ ॥

( २ ) **सर्वज्ञनारायणः** । आचार्यमुपनीयाध्यापकम् । प्रवक्तारंउपाध्यायं व्याख्यातारंच । गुरुमुपनयनकारिणमन्नदंच । तपस्विनस्तपःशीलाः । नहिंस्यात् प्रतिकूलंतेषांनाचरेत् ॥ १६२ ॥

( ३ ) **कुल्लूकः** । आचार्यमुपनयनपूर्वकवेदाध्यापकंप्रवक्तारंवेदार्थव्याख्यातारंगुरुमल्पंवा बहुवा यस्येत्युक्तं । आचार्यादींस्तु न हिंस्यात् प्रतिकूलाचरणेऽत्र हिंसाशब्दः । गोविन्दराजस्तु । सामान्येन हिंसानिषेधादाततायिनोप्येतान्न हिंस्यादितिव्याख्यातवांस्तदयुक्तम् । गुरुंवा बालवृद्धौ वेत्यनेनविरोधात् ॥ १६२ ॥

( ४ ) **राघवानन्दः** । किंच एतानष्टौ कदाचिदपि न पीडयेदित्याह आचार्येति । आचार्यमुपनेतारं । प्रवक्तारमध्यापकं । गुरुं हितोपदेष्टारम् ॥ १६२ ॥

( ५ ) **नन्दनः** । न हिंस्यान्न प्रतिकूलंकुर्यात् ॥ १६२ ॥

( ६ ) **रामचन्द्रः** । आचार्यं उपनेतारं । प्रवक्तारं उपाध्यायं व्याख्यातारं । पितरं । मातरं । गुरुं । ब्राह्मणान् । गाश्च । सर्वांश्चैव तपस्विनः । प्रायश्चित्तप्रवृत्तान्एतान् आचार्यादीन् न हिंस्यात् । न साक्षाद्धननेनापितु वचनेनापि दुःखंनोत्पादयेत् । प्रतिकूलाचरणं हननंन कार्यम् ॥ १६२ ॥

**नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ॥ द्वेषं दम्भं च मानंच क्रोधंतैक्ष्ण्यं च वर्जयेत् ॥ १६३ ॥**

( १ **मेधातिथिः** । वेदप्रमाणकानामर्थानांमिथ्यात्वाध्यवसायस्यनास्तिक्यशब्देनप्रतिपादनम् । निन्दापुनरुक्तौ । वेदोन्योन्यव्याहतोनात्रसत्यमस्तीतिभावदोषेण नपूर्वपक्षभङ्ग्या । अग्न्यादयोदेवतास्तासांकुत्सनंनिन्दैव यथा दग्धदैवेन हताः स्मइतिदैवेभवन्ति वक्तारः । द्वेषोमात्सर्यादिहेतुकाऽप्रीतिः । स्तम्भोऽहंकारादनम्रता । मानोऽहंकारआत्माभिमानः पण्डितोऽहमाढ्योऽहमिति । अमर्षः क्रोधस्तैक्ष्ण्यंपारुष्यंद्वेषपूर्वकः क्रोधः ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः** । नास्तिक्यं परलोकनास्तितोपपादनम् । द्वेषोऽपचिकीर्षा । स्तम्भोविनयाभावः । आत्मन्युत्कर्षप्रत्ययोमानम् । द्वेषहेतुरात्मगुणविशेषः क्रोधः । तैक्ष्ण्यंहिंसापरता ॥ १६३ ॥

( ३ ) **कुल्लूकः** । नास्ति परलोकइतिबुद्धिर्वेदस्य देवतानांच निन्दांमात्सर्यंधर्मानुत्साहाभिमानकोपक्रौर्याणित्यजेत् ॥ १६३ ॥

( ४ ) **राघवानन्दः** । किंच नास्तिक्याद्यष्टवर्जनमतीव सुखहेतुरित्याह नेति । कुत्सनं धिगित्यादितिरस्करणं । मानं पूजाकांक्षां । तैक्ष्ण्यं क्रौर्यम् ॥ १६३ ॥

( ५ ) **नन्दनः**। नास्तिक्यंपरलोकाभावनिश्चयः । वेदनिन्दावेदाप्रामाण्यनिर्णयव्यवहारः । देवताकुत्सनंदेवतानिकर्षवादः । द्वेषोमानसोविकारः । दम्भः परसत्कारेऽनुद्यमः । अलभ्यलाभेपिप्रभुत्वंमानः । क्रोधोबहिर्विकारः । तैक्ष्ण्यंक्रूरता ॥ १६३ ॥

( ६ ) **रामचन्द्रः**। च पुनः वेदविदांमिथ्यात्वाध्यवसायश्च अन्यत्प्रसिद्धं तैक्ष्ण्यं हिंसाभिरतिः इत्यादि वर्जयेत् ॥ १६३ ॥

**परस्य दण्डं नोद्यच्छेत्क्रुद्धोनैव निपातयेत् ॥ अन्यत्र पुत्राच्छिष्याद्वा शिष्ट्यर्थं ताडयेत्तु तौ ॥१६४॥**

( १ ) **मेधातिथिः**। येनदम्यतेसदण्डः करलगुडशिफारज्जुविदलादिस्तंपरस्यक्रुद्धः सन्नोद्यच्छेन्नोत्क्षिपेत् । प्रहारार्थंतिर्यगपि न निपातयेत् । निपातनंवेगेनतदङ्गसंयोगः। पुत्रशिष्यावनुताडयेच्छिफावेणुदलचपेटाभिर्यथाष्टमे वक्ष्यति न दण्डेन तौच न क्रोधेन तर्हिशिष्ट्यर्थमनुशासनार्थंबाल्याद्यदिचापलमाचरतः । तथा । पृष्ठतस्तुशरीरस्येतोषत्ताड्यौ । शिष्यग्रहणंदासीदासस्यापिप्रदर्शनार्थम् । समानकार्यत्वात् ॥ १६४ ॥

( २ ) **सर्वज्ञनारायणः**। दण्डं ताडनार्थंलगुडादि । नोद्यच्छेन्न व्यापारयेत् न निपातयेत् ताडनफलंन निष्पादयेत् । शिष्ट्यर्थं शिक्षार्थं नतु द्वेषमात्रेण शिष्यपदंशासनीयपरम् । तथाच भार्यादिप्राप्तिरित्येके ॥ १६४ ॥

( ३ ) **कुल्लूकः**। परस्य हननार्थंक्रुद्धःसन्दण्डादि नोत्क्षिपेन्नच परगात्रे निपातयेत्पुत्रशिष्येभार्यादासादेरन्यत्र कृतापराधानेताननुशासनार्थंरज्ज्वा वेणुदलेन वेत्यादिवक्ष्यमाणप्रकारेण ताडयेत् ॥ १६४ ॥

( ४ ) **राघवानन्दः**। नोपयच्छेत्परस्य हननार्थंनादद्यात् । नएनंदण्डंनिपातयेत् शिष्ट्यर्थंशिष्टिरनुशासनंतदर्थम् ॥ १६४ ॥

( ५ ) **नन्दनः**। एनंदण्डंनिपातयेत् । परस्योपरीतिशेषः ॥ १६४ ॥

( ६ ) **रामचन्द्रः**। परस्येति । परस्य अन्यस्य दण्डंनउद्यच्छेत् न कुर्यात् । क्रुद्धःसन्पुत्रात् शिष्यात् अन्यत्रएवंदण्डंननिपातयेत् । शिक्षार्थंतु निश्चयेन तौ पुत्र शिष्यौ ताडयेत् ॥ १६४ ॥

**ब्राह्मणायावगुर्यैव द्विजातिर्वधकाम्यया ॥ शतं वर्षाणि तामिस्रे नरके परिवर्तते ॥१६५॥**

( १ ) **मेधातिथिः**। अविशेषेण सर्वविषये ताडने निषिद्धेब्राह्मणेतत्क्रियायादोषातिशयदर्शनार्थपञ्चश्लोकी । अवगूर्यउद्यम्यचदण्डादि वधकाम्यया ताडनेच्छयाविनैव निपातेन शतंवर्षाणि नरके पच्यते परिवर्तते तत्फलमुभुपङ्क्ते ॥ १६५ ॥

( २ ) **सर्वज्ञनारायणः**। वधकाम्यया ताडनार्थतया ॥ १६५ ॥

( ३ ) **कुल्लूकः**। द्विजातिरपि ब्राह्मणस्य हननार्थंदण्डादिकमुद्यम्यैव नतु निपात्य वर्षशतंतामिस्रादिनरके परिभ्रमति ॥ १६५ ॥

( ४ ) **राघवानन्दः**। तत्राप्यहोकष्टंब्राह्मणताडनमित्याह ब्राह्मणायेति । अवगूर्य वधकाम्यया दण्डाद्युद्यम्य । एतञ्चयंकदापि न कुर्यात् द्विजातिश्चातुर्वर्ण्यम् ॥ १६५ ॥

( ५ ) **नन्दनः**। दण्डोद्यमने ब्राह्मणविषये दोषविशेषमाह ब्राह्मणायेति । अवगुर्य दण्डमुद्यम्य ॥ १६५ ॥

( ६ ) **रामचन्द्रः**। द्विजातिःवधकाम्यया ब्राह्मणान् अवगूर्यैव दण्डंउत्थाप्यैव ॥ १६५ ॥

**ताडयित्वा तृणेनापि संरम्भान्मतिपूर्वकम् ॥ एकविंशतिमाजातीः पापयोनिषु जायते ॥ १६६ ॥**

( १ ) **मेधातिथिः** । संरंभः क्रोधावेशो न तु कर्मणा बुद्धिपूर्वम् । एकविंशतिमाजातीः जातिर्जन्म । आकारोऽनर्थकः-प्रलम्बतइतिवत् । तृणेनापि ताडने दीर्घकालीनरकानुभवः ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः** । संरम्भात्क्रोधात् नतु कर्मणा । आजातीर्जन्मान्येकविंशतिं पापयोनिषु श्वादिषु । एत-च्चतामिस्रेदुःखमनुभूय पश्चात् ॥ १६६ ॥

( ३ ) **कुल्लूकः** । तृणेनापि क्रोधाद्बुद्धिपूर्वकंब्राह्मणंताडयित्वा* एकविंशतिजन्मानि पापयोनिषु कुक्कुरादियोनिषु जायते ॥ १६६ ॥

( ४ ) **राघवानन्दः** । संरम्भात्क्रोधात् । आजातीः जन्मानि । पापयोनिषु शूकरादिषु ॥ १६६ ॥

( ५ ) **नन्दनः** । ब्राह्मणविषये दण्डपातने दोषविशेषमाह ताडयित्वेति । आजातेराजननात् । जायतेः सकर्मत्वमृ-षितिपातनात् ॥ १६६ ॥

( ६ ) **रामचन्द्रः** । तृणेनापि ताडयित्वा एकविंशतिजन्मानि प्राप्नोति ॥ १६६ ॥

**अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः ॥ दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः ॥ १६७ ॥**

( १ ) **मेधातिथिः** । असृग्लोहितम् । तदङ्गतोऽङ्गाद्यत्रोत्पादयति ब्राह्मणस्य खड्गप्रहारादिनाऽयुध्यमानस्य न तुद्रोणा-चार्यवत्क्षात्रेण धर्मेण युयुत्सोःसुमहद्दुःखंनरकादि प्रेत्य मृतोजन्मान्तरे । अप्राज्ञतयेत्यनुवादः । प्राज्ञोहिशास्त्रार्थज्ञानान्न-कथमेवंकुर्यात् ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः** । अयुध्यमानस्येति युध्यमानस्य क्षतकरणे दोषाल्पता दर्शिता । अतएव तद्वधेपि प्राय-श्चित्तात्पत्वमुन्नेयम् । सामान्योक्तदुःखपरिमाणाभिधानं । शोणितम् ॥ १६७ ॥

( ३ ) **कुल्लूकः** । अयुध्यमानस्य ब्राह्मणस्याङ्गे शास्त्रानभिज्ञतया शोणितमुत्पाद्य परलोके महद्दुःखमाप्नोति ॥१६७॥

( ४ ) **राघवानन्दः** । असृग्रक्तं । अङ्गतोदेहात् । युद्धे तु न दोषः नतुदृश्यते दुःखमिति चेत्तत्राह प्रेत्येति । अ-प्राज्ञतया अदोषज्ञत्वेन ॥ १६७ ॥

( ६ ) **रामचन्द्रः** । अयुध्यमानस्य शास्त्रेण धर्मेण युयुत्सोःब्राह्मणस्यअन्ततःमध्यतःअसृक् उत्पाद्य प्रेत्य परलो-के अप्राज्ञतया नरः सुमहद्दुःखं प्राप्नोति ॥ १६७ ॥

**शोणितं यावतः पांसूत्संगृह्णाति महीतलात् ॥ तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते ॥ १६८ ॥**

( १ ) **मेधातिथिः** । ईषत्प्रहारेपूर्वफलम् । अधिके तु पांसवोरजांसिधूल्यवयवास्तान्यावतोयत्परिमाणान्गृह्णाति सं-हन्ति । ब्राह्मणाङ्गच्युतंभूमिपतितंलोहितंतावतोऽब्दांस्तावन्ति वर्षाण्यमुत्र परलोके द्यतेश्वशृगालैर्यःशोणितस्योत्पादकः-प्रहर्ता ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । संगृह्णाति संगृहीतुंशक्नोति । अमुत्र नरके । अद्यते भक्ष्यते ॥ १६८ ॥

( ३ ) **कुल्लूकः** । खड्गादिहतब्राह्मणाङ्गनिर्गतंरुधिरंभूमिपतितंयावतोधूलिद्व्यणुकान्पिण्डीकरोति तावत्संख्यानि वर्षा-णि परलोके शोणितोत्पादकः प्रहर्त्ताअन्यैः श्वशृगालादिभिर्भक्ष्यते ॥ १६८ ॥

---

* एकविंशतिमाजातीः=एकविंशतिमाजातेः ( नन्दनः )

( ४ ) **राघवानन्दः** । संगृण्हाति पिण्डंकरोति पांशुः त्रसरेणुः । तावतस्तत्सङ्ख्याकान् । अन्यैः गृध्रादिभिः॥१६८॥

( ५ ) **नन्दनः** । अन्यैरिहलोकगतैः ॥ १६८ ॥

( ६ ) **रामचन्द्रः** । तावतः अब्दान् वर्षान् अमुत्र परलोके अद्यैः अदनीयैःसह शोणितोत्पादकः अद्यते भक्ष्यते ॥ १६८ ॥

**न कदाचिद्द्विजे तस्माद्विद्वानवगुरेदपि ॥ न ताडयेत्तृणेनापि न गात्रात्स्रावयेदसृक् ॥ १६९ ॥**

( १ ) **मेधातिथिः** । पूर्वस्य क्रियात्रयप्रतिषेधविधेरुद्यमननिपातनविषयस्योपसंहारः । नकदाचिदापद्यपीत्यर्थः१६९

( २ ) **सर्वज्ञनारायणः** । द्विजे विप्रे । अवगुरेदप्युद्यच्छेदपि ॥ १६९ ॥

( ३ ) **कुल्लूकः** । तस्मादवगोरणादिदोषाभिज्ञोब्राह्मणे दण्डाद्युद्यमननिपातरुधिरस्रवणानि नापद्यपि कुर्यादिति पूर्वोक्तक्रियात्रयस्योपसंहारः ॥ १६९ ॥

( ४ ) **राघवानन्दः** । हिंसाप्रकरणमुपसंहरति नेति । असृगिति द्वितीयान्तम् ॥ १६९ ॥

( ५ ) **नन्दनः** । उपसंहरति नेति ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । द्विजे तस्मात्कदाचिदपि विद्वान्नावगुरेत् नदण्डमुत्थापयेदित्यर्थः ॥ १६९ ॥

**अधार्मिकोनरोयोहि यस्य चाप्यनृतं धनम् ॥ हिंसारतश्च योनित्यं नेहासौ सुखमेधते ॥१७०॥**

( १ ) **मेधातिथिः** । सामान्यतः सर्वहिंसाप्रतिषेधशेषोयम् ।अधर्मःशास्त्रप्रतिषिद्धोऽगम्यागमनादिस्तंचरत्यधार्मिकः । यस्यचानृतमेवधनंसाक्ष्ये व्यवहारनिर्णयादौचासत्यमुत्कोचधनंसाधयति यश्च हिंसारतिर्हिंसायांअभिरतोवैरानुबन्धादर्थहेतोर्वापरान्हिनस्ति नासौसुखमेधतेनरकंप्राप्नोति । इहास्मिंल्लोके ॥ १७० ॥

( २ ) **सर्वज्ञनारायणः** । अधार्मिकोऽधर्मवृत्तिः । अनृतं मिथ्यावचनंधनमिवोपादेयम् ॥ १७० ॥

( ३ ) **कुल्लूकः** । अधर्मेण व्यवहरतीत्यधार्मिकः शास्त्रप्रतिषिद्धागम्यागमनाद्यनुष्ठाता योमानुषोयस्य च साक्ष्ये व्यवहारनिर्णयादौ च मिथ्याभिधानमेव धनोपायअसत्यमभिधायोत्कोचधनंगृह्णाति यश्च परहिंसाभिरतः नासाविहलोके सुखयुक्तोवर्त्तते तस्मादेतन्न कर्त्तव्यमितिनिन्दयानिषेधःकल्प्यते ॥ १७० ॥

( ४ ) **राघवानन्दः** । अधार्मिकः परदारादिरतः । अनृतंधनं मिथ्याभिधानमेव धनोपायः । असावितिपरोक्षनिर्देशादमुत्रापि ॥ १७० ॥

( ५ ) **नन्दनः** । एवमधर्मस्य वर्जनीयत्वमुक्तम् । इदानीं केवलामुत्रिकाद्भयादधर्मोवर्जनीयः किंत्वैहिकादपीत्याह अधार्मिकइति । अधार्मिकमानसदोषयुक्तस्योपलक्षणम् । अनृतंधनमिति वाचिकदोषयुक्तस्य । हिंसारतइति कायिकदोषयुक्तस्य । इहास्मिन्नेव लोकेनसुखमेधते । अधार्मिकंवर्जयन्ति सन्तोऽनृतबहुलंवर्जयन्ति द्विषन्ति च.हिंसारतंवर्जयन्ति द्विषन्ति हिंसन्ति च । तस्मादैहिकादपि भयादधर्मोवर्जनीयइत्यभिप्रायः ॥ १७० ॥

( ६ ) **रामचन्द्रः** । अधार्मिकादीनांमध्ये च पुनः हिंसारतिः असौनेहलोके सुखं वर्धते ॥ १७० ॥

**न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ॥ अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥१७१॥**

( १ ) **मेधातिथिः** । धर्मःशास्त्रमर्यादा तेन वर्तमानःसीदन्नप्यवसादमपि प्राप्नुवन्नाधर्मे मनोनिवेशयेत् । यतअधा-

मिकायद्यपि चौर्योत्कोचदम्भादिभिर्धनसमृद्धादृश्यन्ते तथापि तेषामाशु विपर्ययोदृश्यते धननाशादि । अतोन धर्माद्विचलेन्मुत्वद्भूत्वादृष्टमर्थंदर्शितवान् ॥ १७१ ॥

( २ **सर्वज्ञनारायणः** । धर्मेण धर्मे क्रियमाणेसीदन्नवसीदन्नपि । अधार्मिकाणामधर्महेतुर्हिंसादिकारिणां पापानामकृतप्रायश्चित्ततया तज्जन्यपापवतां आशु परलोके परलोकगमनमात्रेण विपर्ययंदुःखम् ॥ १७१ ॥

( ३ ) **कुल्लूकः** । शास्त्रविहितमनुतिष्ठन्धनाद्यभावेनाऽवसीदन्नपि कदाचिन्नाधर्मे बुद्धिंकुर्यात् । यस्मादधर्मव्यवहारिणोवद्यप्यापाततोधनादिसंपद्भागिनोपि दृश्यन्ते तथापि तेषामधार्मिकाणामधर्मचौरादिव्यवहारिणांपापिनांतज्जनितदुरितशालिनांशीघ्रंधनादिविपर्ययोपि दृश्यते । तंपश्यन्नाधर्मे धियंदद्यादितिशिष्यहितायदृष्टमर्थंदर्शितवान् ॥ १७१ ॥

( ४ ) **राघवानन्दः** । किंचनेति । धर्मेण सीदन्नपि मनोऽधर्मे न निवेशयेदित्यन्वयः ॥ १७१ ॥

( ५ ) **नन्दनः** । न केवलमधर्मप्रकर्षोलोकोपक्रोशभयाद्वर्जनीयः किंतु प्रत्यक्षतोऽनर्थबहुत्वादपीत्याह नेति । प्रभुखदुःखेन परिणामसुखेन भेषजेनेव सेव्यमानेनधर्मेण शास्त्रव्यवस्थारूपेणात्मसंकोचाख्येनसीदन्नपि तद्विपरीतरूपेविषमिश्रेमधुनीवाधर्मेमनोननिवेशयेत् । अत्रहेतुरुत्तरार्धेनोक्तः । अधार्मिकाणांधर्मानुष्ठानरहितानां पापानांपापकारिणांचोरादीनामाशुसद्योविपर्ययमनर्थंराजदण्डादिकंपश्यन्निति । न हि पापानांपापाचरणानन्तरमेवानर्थउपलभ्यते ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । धर्मेण धर्मशास्त्रमर्यादया सीदन्नपि नरः मनः अधर्मे न निवेशयेत् । अधार्मिकाणांआशु विपर्ययंपश्यन् । यद्यपि चौर्योत्कोचादिना धनसमृद्धिः तथापि तस्याः समृद्धेरपिआशुविनाशः ॥ १७१ ॥

**नाधर्मश्चरितोलोके सद्यः फलति गौरिव ॥ शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥ १७२ ॥**

( १ ) **मेधातिथिः** । इदानींशास्त्रार्थमाह । अनियतकालत्वाद्वैदिकानांशुभाशुभफलानांकर्मणामेवमुच्यते । नाधर्मश्चरितोऽनुष्ठितः सद्यः फलति फलंददाति । वेदेहि केवलंकर्मणांविहितप्रतिषिद्धानांसुखदुःखफलत्वंश्रुतम् कालविशेषस्तु नावगमितः । वाक्यव्यापारोहि कर्तव्यतावगमपरत्वेऽपि कर्मफलसंबन्धबोधमात्रे पर्यवस्यति नकालविशेषमाक्षिपति । फलवतांकर्मणांनित्यानांतु फलतः कर्तव्यताप्रतिषिद्धपरिहारेऽपि नैवनरकादिदुःखनिवृत्तिकामस्याधिकारः किंतु शास्त्रप्रतिषेधसामर्थ्यात् । सतु प्रतिषेधोदुःखफलत्वंप्रतिषिद्धानुष्ठानस्य बोधयति । निपुणवएतदुच्यमानमतिग्रन्थविस्तरमाक्षिपतीत्युपरम्यते । गौरिव साधर्म्यवैधर्माभ्यामयंदृष्टान्तः । यथा गौः पृथिवीव्युप्तबीजान तदैवानेकसस्यशालिनीभवति किंतर्हिपरिपाकमपेक्षते तादृशंवैदिकंकर्मेतिसाधर्म्यम् । वैधर्म्येणापि यथागौःपशुर्वा दोहाभ्यांसद्यः फलति नैवंधर्माधर्मौ । अधर्मग्रहणंधर्मस्यापिफलदानंप्रतिकालानियमप्रदर्शनार्थम् । आवर्त्यमानःकालेनोपचीयमानः कर्तुः प्रतिषिद्धानुष्ठातुःमूलानिकृन्तति च्छिनत्ति । मूलकर्तनेन सर्वेण सर्वविनाशउपलक्ष्यते । यथामूलच्छेदाद्वृक्षादिस्थावराणामपुनर्भवस्तद्वदधर्मकारिणाम् ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । सद्यस्तत्क्षणादेव यथागौर्दुग्धंफलति न तथा अधर्मः आवर्त्यमानः पुनः पुनः क्रियमाणः मूलानिभोगस्य साधनानि कर्माणि कृन्तति छिनत्ति तच्छेदानन्तरंतु स्वफलंदुःखंकरोतीत्यपि द्रष्टव्यम् ॥ १७२ ॥

( ३ ) **कुल्लूकः** । शास्त्रेणानियमितकालपरिपाकत्वात्शुभाशुभकर्मणांनाधर्मोऽनुतिष्ठतस्तत्कालएव फलति गौरिवेह भूमिपक्षे साधर्म्यदृष्टान्तः । यथाभूमिरुप्तबीजमात्रा तदैव प्रचुरपचेलिमफलव्रीहिस्तबकसंवलिता न भवति किंतु नियमफलपाकसमयमासाद्य पशुपक्षे वैधर्म्यदृष्टान्तः यथा गौःपशुर्वाहदोहाभ्यांसद्यःफलति नैवमधर्मः किंतु क्रमेणावर्तमानःफलोन्मुखीभवन्नधर्मकर्तुर्मूलानिछिनत्तिमूलछेदेन सर्वनाशोलक्ष्यतेदेहधनाद्यन्वितोनश्यति ॥ १७२ ॥

( ४ ) **राघवानन्दः** । विपर्ययंविवृणोति नेति । चरितोऽनुष्ठितः । गौः पृथिवी सा यथाविलम्बेनसस्यवती । व्यतिरेके वा धेनुरिव दृष्टान्तः आवर्त्यमानोभ्यस्यमानः मूलानि देहधनादीनिकृन्तति छिनत्ति ॥ १७२ ॥

( ५ ) **नन्दनः** । तदिष्टविरुद्धमिदमुक्तमित्याशङ्क्यपरिहरति नेति । गौरिवेतिवैधर्म्यदृष्टान्तः । लोकेऽस्मिल्लोके । कर्तुर्मूलानि कर्तुरपेक्षितार्थमूलानि गृहक्षेत्रादीनि । तस्मात्कालान्तरेऽपि फलोपलम्भान्नदृष्टविरोधइत्यभिप्रायः ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । चरितः अधर्मः सद्यः गौरिव न फलतिसाधर्म्येण दृष्टान्तः । पृथिवी साधर्म्ये पशुवैधर्म्येशनैः-आवर्तमानस्तु प्रवर्तमानःअधर्मकर्तुर्मूलानिभोगसाधनानि कृन्तति छिनत्ति ॥ १७२ ॥

**यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ॥ नत्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥ १७३ ॥**

( १ ) **मेधातिथिः** । इदमयुक्तंयदन्यकृतस्यकर्मणोऽन्यगामिता फलस्योच्यते । कर्तुः फलदानिवैदिकानि कर्माणि । नवैश्वानरन्यायोस्ति श्रवणाभावात् । नहि पुत्राद्यर्थतात्रश्रुता । सत्यम् । पुत्रे पीड्यमानेपीडितस्यपितुरधिकतरंदुःखंभवति अतः कर्तुरेवदुःखम् । पुत्रस्यापि स्वकृतात्पौर्वदेहिकात्कर्मणस्तत्फलमित्यविरुद्धम् । एवंनप्तृष्वपि द्रष्टव्यम् । नप्तारः पौत्राः । कृतोधर्मइतिसंहितायास्तुल्यत्वाद्धर्माधर्मौ द्वावप्युपात्तौ ॥ १७३ ॥

( २ ) **सर्वज्ञनारायणः** । अस्मिन्नेव तावद्रोगादिदुःखंजनयतिकथंचिदुत्कटधर्मप्रतिरोधेन साक्षाद्दुःखजननाशक्तौ पुत्रपौत्रादिद्वारेण रोगाद्युत्पादनद्वारापि दुःखंजनयतीत्यर्थः ॥ १७३ ॥

( ३ ) **कुल्लूकः** । यदि स्वयंकर्तुर्देहधनादिनाशंफलंन जनयति तदा तत्पुत्रेषु नोचेत्पौत्रेषु जनयति ननु निष्फलएव भवति । ननुअन्यकृतस्य कर्मणःकथमन्यत्र फलजनकत्वं उच्यते । पुत्रादिनाशस्य पितुःक्लेशहेतुत्वात् । शास्त्रीयत्वाच्चास्यार्थस्य नाविश्वासः ॥ १७३ ॥

( ४ ) **राघवानन्दः** । कर्तर्यदृश्यमानमपि कृतं पुत्रादिषु फलतीत्याह यदीति अवश्यमेव भोक्तव्यंकृतंकर्म शुभाशुभमितिस्मरणात्नात्मनि तच्छरीरावच्छेदेन फलति चेत्पुत्रपौत्रादिरूपशरीरप्रामावपि फलति । वाचनिकातिरिक्तफलस्यान्यत्रासंभवात् । न चैतद्वचनंव्यर्थंअर्थवादेनाप्युपपत्तेःअतएव प्रियेषुस्वेषु सुकृतमप्रियेषु तु दुष्कृतमित्याद्यपि स्तुतिवादोहानौतूपायनमित्यादिसूत्रेनिरटङ्कि ॥ १७३ ॥

( ५ ) **नन्दनः** । यदातुकर्तारंप्रबलधर्मसहितमधर्मः साक्षात्पीडयितुंन शक्नोति तदा सन्तानपीडाद्वारेणापि तंपीडयतीत्याह यदीति । अधर्मः कृतआत्मनि कर्तरि यदि न फलति ततः पुत्रेषु फलति न चेत्पुत्रेषु ततोनप्तृषु पौत्रेषु फलतीति । पुत्राद्यनर्थकरणस्य कर्तृफलत्वं कर्तुस्तथाभिमानात् तत्पीडया पीडोपलम्भाच्चेति ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । यदि आत्मनि पापः अधर्मः न फलति तदा पुत्रेषु फलेत् यदि पुत्रेषु न तर्हि नप्तृषु फलेदिति । कर्तुःकृतंकर्म निष्फलं नभवति ॥ १७३ ॥

**अधर्मेणैधते तावत्ततोभद्राणि पश्यति ॥ ततः सपत्नान् जयति समूलस्तु विनश्यति ॥ १७४ ॥**

( १ ) **मेधातिथिः** । अधर्मेण प्रभुद्रोहादिनैधते वृद्धिंलभते तावत्तस्मिन्नेव काले ततोधनंग्रामंवाप्राप्य ततोभद्राणि बहुभृत्यगवाश्वादिसंपत्तिलक्षणानि पश्यत्यनुभवति । ततः सपत्नानरीन्दरिद्राञ्जयति परिभवति । तर्हि धर्मे स्थितान्कुतश्चन कुसृतिहीनालभन्ते । अतस्तेषांदारिद्र्यशब्दऐश्वर्ये परिभवः । समूलंचकियन्तंकालमेवंभूत्वा सपुत्रज्ञातिधनबान्धवाउच्छिद्यन्ते । तस्माद्धर्मोन हातव्यः ॥ १७४ ॥

( २ ) **सर्वज्ञनारायणः** । अधर्मेणापि क्रियमाणेनोपलक्षितोधनादिभिर्वर्धतएव तावद्यावदुत्कटोधर्मोस्ति । तदन्तरं च भद्राणि सुखानि पश्यति । ततः शत्रूनभिभवति ततस्तेन फलदानोपक्षीणेन धर्मेण भोगमूलेन सह नश्यति ॥१७४ ॥

( ३ ) **कुल्लूकः** । अधर्मेण परद्रोहादिना तावदापाततोग्रामधनादिना वर्धते । ततोभद्राणि बहुभृत्यगवाश्वादीनि लभते । ततःशत्रून्स्वस्मादपकृष्टाञ्जयति पश्चात्कियता कालेनाधर्मपरिपाकवशाद्देहधनतनयादिसहितोविनश्यति ॥ १७४ ॥

( ४ ) **राघवानन्दः** । किंच प्रभुद्रोहादिनाऽधर्मेण तावद्वर्धते पुत्रपौत्रादिना । भद्राणि गवाश्वादीनिपश्यति च लभतइति । इदमत्राकूतंचित्रायागादिरिवेहामुत्रानियतफलतया कदाचिदपिकुत्रचित्फलंनिन्दाभाविअथवा सर्वधर्मस्य-ज्ञानमेव फलंप्रसिद्धम् । धर्मात्सुखं ज्ञानंचेति श्रुतेः । प्राक्तनकर्मफलंभुञ्जानःऐहिकंमन्यते ॥ १७४ ॥

( ५ ) **नन्दनः** । नन्वधर्मंकुर्वन्कश्चित्क्षेमीदृश्यते तेनाभ्युदयहेतुत्वमप्यधर्मस्याभ्युपगन्तुंशक्यते ततः कथंतस्यै-कान्ततोऽनर्थहेतुत्वमित्याशङ्क्यपरिहरति अधर्मेणेति । १७४ ॥

( ६ ) **रामचन्द्रः** । तावत्अधर्मेणअधर्माचरणेन पूर्वपुण्येनएधते वर्धते । यावदुत्कृष्टोधर्मः ततः तस्माद्भद्राणि पश्यति । च पुनः सपत्नान् जयति । धर्मसर्वस्य दानं ततः धर्मक्षयात्समूलंसपुत्रज्ञातिधनबान्धवादिरूपशर्मसहितो विनश्यति ॥ १७४ ॥

## सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा ॥ शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ॥१७५ ॥

( १ ) **मेधातिथिः** । सत्यंयथादृष्टार्थवादिता । धर्मः श्रुतिविषयौ विधिप्रतिषेधौ । सत्यस्य तादूप्येऽपिभेदेन निर्दे-शोऽतिशयार्थः । अनृतंपुरुषाणांस्वभावभूतम् अतोयत्नेन पुनः पुनः प्रतिषिध्यते । आर्यवृत्तंसदाचारः। आर्याः शिष्टास्तेषां-वृत्तमाचरितंतत्रारमेत् । रतिः परितोषः । एतेष्वर्थेषु परितोषोऽनेन विधीयते । अन्यानप्येवमाचारान्दृष्ट्वा मनःप्रसादंकु र्यात् । शिष्याश्च भार्यापुत्रदासच्छात्राधर्मेणानुशासनीयाः । पृष्ठतः शरीरस्येत्यादिधर्माः। वाग्बाहूदरसंयतः सत्यसतिचप्रयो-जने । अबहुभाषितावाक्संयमः । बाह्वोः संयमोबाहुबलाश्रयणेन कस्यचिदप्यपीडनम् । उदरस्यसंयमोऽनौदरिकता औदरिकताभोजित्वंभोज्यविशेषोगर्धयापरगृहे बाहुल्येन भोजनम् । उक्तोप्यर्थः पुनरुच्यतेबहुकृत्वोऽपि पथ्यंवदितव्य-मितिसर्वत्र पौनरुक्त्यपरिहारः ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मोधर्मसाधनं सत्यस्य शौचस्यच धर्मत्वेपि अभ्यर्हिततया पृथगुक्तिः । आर्याः आरा-दूरंपापेभ्योगता : तेषांवृत्तमाचारोधर्मेणभोगहेतुरपि तत्रैव शौचंबाह्याभ्यन्तरं । आरमेत् सर्वदा रतः स्यात् । धर्मेण धर्मोप-देशेन वागादिसंयतश्च स्यात् । वाक्संयमः परुषावचनादिः बाहुसंयमोऽहिंसादिः उदरसंयमः अनदनीयाभक्षणादिः ॥१७५॥

( ३ ) **कुल्लूकः** । सत्यधर्मसदाचारशौचेषुसर्वदारतिंकुर्यात् शिष्यांश्चानुशासनीयान्भार्यापुत्रदासछात्रान्रज्ज्वावेणुद-लेनवेतिप्रकारेणशासयेत् उक्तानामप्यभिधानादादरार्थंवाग्बाहूदरसंयतश्च स्यात् वाक्संयमःसत्यभाषिता बाहुसंयमो-बाहुबलेन कस्याप्यपीडनम् उदरसंयमोयथालब्धाल्पभोजनम् ॥ १७५ ॥

( ४ ) **राघवानन्दः** । प्राक्तनजपुण्यफलंभुञ्जानोपि वा लोकप्रतीत्याअधर्मेण वर्धतइवेत्यनूद्य धर्मक्षये समूलोनं-क्ष्यतीत्याह सत्येत्यादि । सत्यंयथाश्रुतस्य यथादृष्टस्य भाषणं । धर्मोबलवद्दुःखाजनकत्वे सति विधिबोध्यः । आर्यवृत्तिःसदाचारः । वाक्संयमः सत्यंब्रूयादितिश्लोकोक्तः । बाहुसंयमोन पाणिपादचपलइत्यादिना वक्ष्यते । उदरसं-यमोगर्हितंचातिभोजनमित्याद्युक्तः । संयतस्तेषांनिग्रहयुक्तः ॥ १७५ ॥

( ५ ) **नन्दनः** । एवंदृष्टविरुद्धत्वेनाप्यधर्मस्यवर्जनीयत्वमुक्तम् इदानींव्रतान्तराण्येवाह सत्येति ॥ १७५ ॥

( ६ ) रामचन्द्रः । सत्यं यथार्थभाषणं । धर्मः श्रुतिस्मृत्यभिहितः । आर्यवृत्तं सद्वृत्ताचरणं । तेषु सदा रमेत च पुनः शौचे अन्तर्बाह्यशौचे सदारमेत । वाग्बाहूदरसंयतः नियतगात्रः । वाक्मौनं व्यर्थालापरहितं । बाह्वोः संयमः बाहुबलाश्रयः । उदरं बहुभोजितं भवेत् ॥ १७५ ॥

**परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ॥ धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥१७६ ॥**

( १ ) मेधातिथिः । उक्तस्त्रिवर्गः पुरुषार्थः । कश्चित्तुल्यतांमन्यमाऽनोर्थकामपरिहारेणयथा धर्मः सेव्यते तद्विरोधी ज्योतिष्टोमादिः । सह्यर्थविरोधीदक्षिणादिदानेन कामविरोधी दीक्षितस्य ब्रह्मचर्यविधानात् । एवमर्थकामावपि धर्मपरिहारेण न सेवेत । तत्र नाहिंस्याद्भूतानीतियत्रकामोहिंसायावैरानुबन्धाद्यः कश्चिद्वक्तुमिष्यतेतत्रसविषयप्रतिषेधाय यत्र तु कस्यचिद्धिंसयार्थकामावाप्येते तत्र नास्तिहिंसादोषइतिप्रवर्ततेतद्भ्रान्तिनिवृत्यर्थमिदमुच्यते । परित्यजेत्परिहरेत्तादृशार्थकामौ यत्र धर्मविरोधः । एवंसर्वतोधर्मस्यबलीयस्त्वमुक्त्वा कस्मिंश्चिद्विषये तस्यापि परिहर्तव्यतामाह धर्मंचाप्यसुखोदर्कम् । उदर्कउत्तरकालः सोऽसुखोयस्य । यथासर्वस्वदानंवाददातिधर्मकोयंमहापुण्यइति। यथानदीतीरेष्वेकान्तेष्वपि प्राकृतजनाबहवःपश्यन्ति तत्रस्नानंभवतीत्यर्थस्नानंधर्माजनसमक्षतापेक्षातु साधुवादाय यथाच तीर्थकाकेभ्योदानंभवतिदानंधर्मोदातृत्वप्रसिध्युत्पादनार्थत्वात्तेभ्योनिन्द्यते । अथवायद्दृष्टतयालोकः संक्रोशतियथागोरवध्यस्यवधोमांसस्यभक्षणंचतद्विगर्हिततरंपश्वन्तरेभ्योलोके । दृष्टमूलश्चायमहिस्पर्शवत्प्रतिषेधः । विहितोऽयमर्थइत्यवैधतया प्राकृतजनाअजानानाधार्मिकत्वंयष्टुः प्रख्यापयेयुस्तेषांचबहुत्वतः प्रसिद्ध्याशिष्टाअपियेनाप्रसिद्धमूलमनवगच्छन्तः परिवर्जयेयुस्तदुक्तंधार्मिके सतिराजनीति एतदुक्तंपूर्वैर्व्याख्यातमित्यनुगतम् । नहि प्रत्यक्षश्रुतिविहितस्य स्मृत्या बाधोन्याय्यः । इदंतु युक्ततरमुदाहरणम् नियोगधर्मः स्मृत्याविहितोलोकसंक्रुष्टत्वान्न क्रियते । तथा यःकश्चिदनाथतरुणींस्त्रियंकारुण्याद्बिभर्ति तत्र यदि लोकसंक्रोशआशङ्क्यते स्त्रीत्वेनैवास्माएषा रोचते सलोकक्रुष्टधर्मः ॥ १७६ ॥

( २ ) सर्वज्ञनारायणः । धर्मवर्जितौ धर्मविरोधिनौ । असुखोदर्कंयावान्धर्मस्तदधिकप्रत्यवायाविनाकृतं यथावातरोगिणउपवासादितीक्ष्णव्रतानुष्ठानमित्यादि । लोकविक्रुष्टंलोकनिन्दितं । कलियुगेसुरायहादि ॥ १७६ ॥

( ३ ) कुल्लूकः । यावर्थकामौ धर्मविरोधिनौ भवेतांतौ परिहरेत् । यथा चौर्यादिनार्थोपपादनं दीक्षादिने यजमानस्य पत्न्युपगमः उदर्कउत्तरकालस्तत्रासुखंयत्र धर्मे तद्धर्ममपि परित्यजेत् यथा पुत्रादिवर्गपोष्ययुक्तस्य सर्वस्वदानं लोक विक्रुष्टं यत्र लोकानांविक्रोशःयथा कलौ मध्यमाष्टकादिषु गोवधादिः ॥ १७६ ॥

( ४ ) राघवानन्दः । किंचपरीति । धर्मवर्जितौ धर्मविरोधिनौ । असुखोदर्कं आयत्यामनुतापजननंस्येनादि पुत्राद्यर्थपरस्वादानंवा । लोकविक्रुष्टं यत्र लोकानांविक्रोशः । यथा कलौ मध्यमाष्टकासु गोवधादि ॥ १७६ ॥

( ६ ) रामचन्द्रः । धर्मं सर्वस्वदानं उत्तरकाले असुखोदर्कं । च पुनः लोकसंक्रुष्टंधर्मं लोकनिन्दितं परित्यजेत्॥१७६॥

**न पाणिपादचपलो न नेत्रचपलोऽनृजुः ॥ न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः ॥ १७७ ॥**

( १ ) मेधातिथिः । पाणिपादाभ्यांचपलः । तृतीयेति योगविभागात्समासः । चापलंचहस्तेनानुपयुज्यमानस्यापि वस्तुनोग्रहणापसारणे । परस्त्रीप्रेक्षणचित्रसंदर्शनादि नेत्रचापलम् । परद्रोहार्थकर्मबुद्धिश्च नकर्तव्या ॥ १७७ ॥

( २ ) सर्वज्ञनारायणः । पाणिपादनेत्रवाक्चापलानि वृथाहस्तकरणोत्प्लवनकुतूहलित्वासंबद्धप्रापाः । अनृजुर्वक्रमतिः । परद्रोहार्थयत्कर्म तद्धीस्तत्परः ॥ १७७ ॥

( ३ ) **कुल्लूकः**। पाण्यादिचापलंत्यजेत् अनुपयुक्तवस्तूपादानादि पाणिचापलं निष्प्रयोजनंभ्रमणादि पादचापलं। परस्त्रीप्रेक्षणादि नेत्रचापलं बहुगर्ह्यवादिता वाक्चापलं । अनृजुःकुटिलोन स्यात् परद्रोहोहिंसा तदर्थंचेष्टांधियंच न कुर्यात् ॥ १७७ ॥

( ४ ) **राघवानन्दः**। किंच नेति । अनृजुः ऋजुभिन्नः कुटिलोनस्यात् । परद्रोहकर्मणि धियोनिषेधोभ्यासस्तस्या तिनिन्दितत्वसूचनार्थः । इदमत्राकूतंशतकृत्वःपथ्यंरोचयन्तेस्मवृद्धाइतिन्यायेननिषिद्धाचरणस्य कायिकादिभेदेनानेकत्वा- त्तस्य दृष्टफलतयाच तदभ्यासस्य प्रबलत्वाच्छतधा निषेधोपि निवर्तयितुमशक्यत्वान्नैतेषु पुनरुक्तिरिति ॥ १७७ ॥

( ५ ) **नन्दनः**। पाणिपादचपलः पाणिभ्यांपादाभ्यांच कर्तव्यकरणेचागम्यागमने च निरतः। एतेनोत्तरमपिचाप- लंव्याख्यातम् ॥ १७७ ॥

( ६ ) **रामचन्द्रः**। पाणिपादचपलोन भवेत्। अनियुक्तचरस्तु न ग्रहणाय । नेत्रे चले परस्त्रीषु । परद्रोहार्थं कर्म न कुर्यात् अनृजुः न स्यात् किंतु ऋजुरेवस्यात् ॥ १७७ ॥

## येनास्य पितरोयाता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन्नरिष्यते ॥ १७८॥

( १ ) **मेधातिथिः**। योधर्मः पित्रादिभिरनुष्ठितो यैश्च सह प्रीतिर्भाविता यैःसहकन्याविवाहादिःकृतोयैश्चशाखाअ- धीताःसएव पन्थाआश्रयणीयः । तथा कुर्वन्न रिष्यति न बाध्यते लोके न निन्द्यते । अन्येत्वविदुषधर्मेष्वहिंसादिषु प्रत्युपायोयंराजपटहइवम्लेच्छादीनाम् अग्निहोत्रादयस्तु स्वप्रत्ययापेक्षाएव । अत्रचोदयन्ति । यदि निर्मूलः पित्रादिभि रनुष्ठितोऽर्थः कथंतस्याधर्मत्वम् अथास्ति मूलंतत्पुत्रस्यापि भविष्यति किंपित्रादिग्रहणेन तदेतत्परिहृतमविदुषां- मूलमजानानामुपदेशोऽयमिति । अन्येतुयत्र निपुणतोऽपिनिरूप्यमाणे संदेहोन निवर्तत उभयथा वाक्यार्थमतिप- त्तिस्तत्रपित्राद्याचरितः पन्थाआश्रयणीयइत्याहुः एतदपिचिन्त्यम् । नहि नित्यसंदिग्धंनाम प्रमाणमस्ति । अवश्यं- ह्येकार्थनिष्ठेन वाक्येन भवितव्यम् । विकल्पितेषु वापदार्थेषु पित्राद्याचरितंकर्मानुचरणीयम् यतोन्यदाचरितवन्तः। सतांमार्गमिति यदिपितृपितामहादिभिः कैश्चित्कथंचिदधर्मआचरितपूर्वःसनआश्रयणीयइतिसतांमार्गमित्याह ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः**। येनास्येति यत्रश्रुत्यर्थे अयमर्थोयंवेतिसंदेहे व्याख्यातृविप्रतिपत्त्या विवादस्तदेकपक्ष- विषयमेतत्। अतएव सतांमार्गंसदाचारविषयं यायादित्युक्तम्। नरिष्यते नहिंस्यते ॥ १७८ ॥

( ३ ) **कुल्लूकः**। बहुविधशास्त्रार्थसंभवे पितृपितामहाद्यनुष्ठितएव शास्त्रार्थोऽनुष्ठातव्यःतेन गच्छन्नरिष्यते नाधर्मेण- हिंस्यते ॥ १७८॥

( ४ ) **राघवानन्दः**। बहुशास्त्रानभिज्ञस्य शास्त्रवर्त्मानुसारित्वमाह येनेति । सतांमार्गं सद्भिराचरितंपन्थानं। तेन पित्रादिकृतमद्यपानमातुलकन्यापरिणयनादिषुनातिप्रसङ्गः। नरिष्यति अधर्मेण न हिंस्यते ॥ १७८ ॥

( ५ ) **नन्दनः**। न रिष्यति न हिंस्यते ॥ १७८ ॥

( ६ ) **रामचन्द्रः**। येन धर्ममार्गेणास्य पितरोयाताः येन धर्ममार्गेण पितामहाःयाताः। अस्यार्थःये धर्माःपित्रा- दिभिःकृताःयैस्तेयेचपितामहादिभिःकृताःप्रीतिंगताःतानाचरंस्तेन मार्गेण गच्छन् नरिष्यति न नश्यति । तेन सतां- मार्गमाश्रयेदित्यर्थः ॥ १७८ ॥

**ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ॥ बालवृद्धातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ॥ १७९ ॥**

( १ ) **मेधातिथिः** । नसमाचरेदित्येकैकेनसंबध्यते । संश्रिताआश्रयागताउपजीविनः । वैद्याविद्वांसोभिषजोवा- ज्ञातयः पितृपक्षाः । संबधिनोवैवाह्याः । बान्धवामातृपक्षामातृष्वस्रीयप्रभृतयः ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । संश्रितैरनुगतैः । आतुरोत्र व्याधितः । कुशश्चान्नाभावादिना । वैद्यैर्विद्यावद्भिः । ज्ञातयः सपिण्डाः । संबन्धिनः आगन्तुसंबन्धाः स्यालाद्याः । बान्धवाः आत्ममातृपितृबान्धवाः ॥ १७९ ॥

( ३ ) **कुल्लूकः** । ऋत्विगितिवचनद्वयम् ऋत्विगादिभिर्वाक्कलहंन कुर्यात् । शान्त्यादिकर्ता पुरोहितः । संश्रिता- अनुजीविनः ज्ञातयःपितृपक्षाः संबन्धिनोजामातृश्यालकादयः बान्धवामातृपक्षाः । जामयोभगिनीस्नुषाद्याः ॥ १७९ ॥ ॥ १८० ॥

( ४ ) **राघवानन्दः** । सार्थवादमृत्विगादिभिर्विवादपरिहारमाह ऋत्विगितिसप्तभिः । संश्रितैः शरण्यैःअनुजीवि- भिर्वा । संबन्धिनः श्वशुराद्याः । बान्धवामातुलेयाद्याः ॥ १७९ ॥

( ५ ) **नन्दनः** । वैद्यैर्विद्वद्भिः ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । त्रिभिराह ऋत्विजइति । ऋत्विगादिभिः संविवादंन कुर्यात् । वेदविद्भिः भिषजैर्वा । ज्ञातिसंब- न्धिबान्धवैःसह विवादंन कुर्यात् । ज्ञातयःपितृपक्षीयाः । संबन्धिनःवैवाह्याः । बान्धवाः मातृपक्षीयाः ॥ १७९ ॥

**मातापितृभ्यांजामीभिर्भ्रात्रा पुत्रेण भार्यया ॥ दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ १८० ॥**

( १ ) **मेधातिथिः** । जामयोभगिन्यः स्ववासिनश्च । विवादोविरोधःप्रतिकूलाचरणंवाक्कलहश्च तैर्नकुर्यात् ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । जामी स्वसा । विवादंविरुद्धभाषणम् ॥ १८० ॥

( ४ ) **राघवानन्दः** । यामयोभ्रातृपत्नीभगिनीस्नुषाद्याः । दुहिता कन्या ॥ १८० ॥

( ५ ) **नन्दनः** । जामिभिर्भगिनीभिः ॥ १८० ॥

( ६ ) **रामचन्द्रः** । जामिभिः भगिनीभिः ॥ १८० ॥

**एतैर्विवादान्संत्यज्य सर्वपापैः प्रमुच्यते ॥ एभिर्जितैश्च जयति सर्वाँल्लोकानिमान्गृही ॥ १८१ ॥**

( १ ) **मेधातिथिः** । एतैर्विवादैः क्रियमाणैर्यः पापयोगोभवत्यकर्तुस्तेन न संबन्धः । सर्वपापैःप्रमुच्यतइत्युच्य- ते । एतैश्चजितैरुपेक्षितैःक्षमया सर्वाँल्लोकाञ्जयति स्वीकरोतीत्यर्थवादः ॥ १८१ ॥

( २ ) **सर्वज्ञनारायणः** । जितोविवादे तैरधिक्षिप्तः सहमानः एतान्जित्वा जयतीतिक्वचित्पाठः ॥ १८१ ॥

( ३ ) **कुल्लूकः** । एतैःऋत्विगादिभिःसह विवादान्परित्यज्यऽज्ञातपापैःप्रमुच्यते तथैतैर्विवादैरुपेक्षितैरिमान्वक्ष्यमा- णान् सर्वलोकान्गृहस्थोजयति ॥ १८१ ॥

( ४ ) **राघवानन्दः** । विवादान् विवादविषयीभूतान् । एतैर्जितोवशीकृतः ॥ १८१ ॥

( ५ ) **नन्दनः** । इमान्वक्ष्यमाणान् ॥ १८१ ॥

( ६ ) **रामचन्द्रः** । एतैः ऋत्विगादिदासान्तैः विवादरहितैः उपेक्षितैः इमान् लोकान् जयति स्वीकरोति ॥ १८१ ॥

---

१८० यामीभिः=जामीभिः ( मे० )

आचार्योब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः॥ अतिथिस्त्विन्द्रलोकेशोदेवलोकस्य चर्त्विजः॥१८२॥

( १ ) मेधातिथिः । आचार्योब्रह्मलोकस्येशःप्रभुस्तस्मिन्परितुष्टे ब्रह्मलोकः प्राप्यते । अतोगुणतोब्रह्मलोकेशइत्युच्यते । प्राजापत्येलोके पिता प्रभुः ॥ १८२ ॥

( २ ) सर्वज्ञनारायणः । जेतव्यलोकान्दर्शयतिआचार्यइति । आचार्यपदंवैद्यानामुपलक्षणम् ॥ १८२ ॥

( ३ ) कुल्लूकः । आचार्योब्रह्मलोकस्य प्रभुःतेन सह विवादपरित्यागेन तत्संतुष्ट्या तु ब्रह्मलोकमभिगौणं ब्रह्मलोकेशत्वम् एवंप्रजापत्यलोकेशः प्राजापत्ये पिताच प्रभुः अतिथिरिन्द्रलोके देवलोकस्य चर्त्विजः । एवमुत्तरत्रापितत्तल्लोकेशत्वंबोद्धव्यम् ॥ १८२ ॥

( ४ ) राघवानन्दः । सर्वलोकजयंविवृणोति आचार्यइति । आचार्यदत्तविद्यया ब्रह्मलोकाद्यापत्तेः । पितृभक्तस्य प्राजापत्यत्वं । दातारोनोभिवर्धन्तामितिमन्त्रलिङ्गात् । अतिथेरतिपुण्यदत्वेनेन्द्रत्वावाप्तिहेतुत्वादृत्विजोयज्ञद्वारा देवत्वहेतुत्वादित्याद्यूहनीयम् ॥ १८२ ॥

( ५ ) नन्दनः । प्राजापत्योदक्षादीनांलोकः ॥ १८२ ॥

( ६ ) रामचन्द्रः । पूजिताआचार्यादयोब्रह्मलोकादीन्प्रापयन्ति ॥ १८२ ॥

जामयोऽप्सरसांलोके वैश्वदेवस्य बान्धवाः ॥ संबन्धिनोह्यपांलोके पृथिव्यांमातृमातुलौ॥१८३॥

( २ )सर्वज्ञनारायणः । अप्सरसां लोके लोकस्य वैश्वदेवस्य विश्वेषांदेवानांलोकस्य संबन्धिपदंज्ञातीनामप्युपलक्षणम् ॥ १८३ ॥

( ३ ) कुल्लूकः । अप्सरसांलोके जामयःप्रभवन्ति वैश्वदेवलोके बान्धवाः वरुणलोके संबन्धिनः भूर्लोके मातृमातुलौ ॥ १८३ ॥

( ४ ) राघवानन्दः । जामयः यामयइतिवाक्वचित्पाठः ॥ १८३ ॥

( ६ ) रामचन्द्रः । जामयः भगिन्यः विवासिन्यः ॥ १८३ ॥

आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः ॥ भ्राता ज्येष्ठःसमःपित्रा भार्या पुत्रः स्वका तनुः॥१८४॥

( १ ) मेधातिथिः । भार्यापुत्रःस्वकीयातनुरात्मीयमेवशरीरम् ॥ १८४ ॥

( २ ) सर्वज्ञनारायणः । आकाशमन्तरिक्षलोकः । कृशोऽभोजनादिना । समःपित्राप्राजापत्यलोकेशः । स्वकातनुरतः स्वप्राप्यलोकेशः ॥ १८४ ॥

( ३ ) कुल्लूकः । कृशःकृशधनःसंश्रितोविवक्षितःबालवृद्धसंश्रितातुराअन्तरिक्षे प्रभवन्ति । भ्राता च ज्येष्ठःपितृतुल्यस्तस्मात्सोपि प्रजापतिलोकप्रभुः । भार्यापुत्रौ च स्वशरीरमेवातःकथमात्मनैव सह विवादःसंभवति ॥ १८४ ॥

( ४ ) राघवानन्दः । आकाशेशाअन्तरिक्षलोकहेतवः । कृशः संश्रितःभ्राता प्राजापत्येशः पित्रा समत्वात् । स्वका तनुः अर्धवाएषआत्मनःयत्पत्नीनाम आत्मावै जायते पुत्रइति श्रुतेः ॥ १८४ ॥

छाया स्वोदासवर्गश्च दुहिता कृपणंपरम् ॥ तस्मादेतैरधिक्षिप्तःसहेतासज्वरः सदा ॥ १८५ ॥

( १ ) मेधातिथिः । योभृत्यवर्गःसआत्मीयाच्छाया यथा छाया नित्यानुगताऽन क्रोधविषयएवंभृत्यवर्गोऽपि ।

---

१८३ जामयो=यामयो ( मे० )

दुहिता कृपणमनुकम्पा द्या। एतैः पूर्वोक्तैरधिक्षिप्तःपरुषवचनैराकृष्टःकोपितःसहेत क्षमेत। असञ्ज्वरोऽविद्यमानज्वरःज्वराभावेन च चित्तस्यासंक्षोभोलक्ष्यते। ज्वरितस्य हि चित्तसंक्षोभोभवति तद्वत्क्रुद्धस्य। अथवापाठान्तरं। असंज्वरः। संतापःसंज्वरःसोऽनेनाप्रतिषिध्यते ॥ १८५ ॥

( २ ) **सर्वज्ञनारायणः**। स्वच्छायातुल्यः। एतेन यत्र स्वयंगच्छति तत्र यथा छाया तथा दासवर्गोपीति स्वलोकेशतैवोक्ता। कृपणंकृपाविषयः। तेन परकरुणया योऽप्येकोजीयते सदुहित्रासहाविवादेनेत्यर्थः। असंज्वरोमानसाभिनिवेशेनापि शून्यः ॥ १८५ ॥

( ३ ) **कुल्लूकः**। स्वदासवर्गश्च नित्यानुगतत्वादात्मच्छायेव न विवादार्हादुहिता च परंकृपापात्रंतस्मादेतैरधिक्षिप्तःसन्न संतापःसहेत नतु विवदेत ॥ १८५ ॥

( ४ ) **राघवानन्दः**। छायास्वदासवर्गःस्वच्छायावदव्यभिचारित्वात्। दुहिता कृपणं कृपापात्रम्। असंज्वरउदर्कसंतापरहितः ॥ १८५ ॥

( ६ ) **रामचन्द्रः**। योदासवर्गः सः स्वा स्वकीया छायानुगता भवति। दुहिता परंकृपास्थानंतस्मात्कारणादेतैराचार्यादिभिः अधिक्षिप्तस्तिरस्कृतः असञ्ज्वरः क्लेशरहितः सन् सहेत ॥ १८५ ॥

**प्रतिग्रहसमर्थोपि प्रसङ्गंतत्र वर्जयेत् ॥ प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति ॥ १८६ ॥**

( १ ) **मेधातिथिः**। परस्माददृष्टः प्रयुक्तायल्लभ्यते सप्रतिग्रहः। तत्र समर्थःशक्तोऽपिप्रसङ्गंपुनः प्रवृत्तिं वर्जयेत्। श्रुताध्ययनशीलसंपत्तिर्द्रव्यविधिज्ञताचसामर्थ्यम्। तस्मादविद्वान्न बिभीयादित्यत्रोक्तमप्येतदुत्तरार्थंपुनरनूद्यते ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः**। प्रसङ्गं पुनःपुनःकरणम्। ब्राह्मंवेदाध्ययनकृतम् ॥ १८६ ॥

( ३ ) **कुल्लूकः**। विद्यातपोवृत्तसंपन्नतया प्रतिग्रहेऽधिकार्यपि तत्र पुनःपुनःप्रवृत्तिंत्यजेत् यस्मात्प्रतिग्रहेणाऽस्यवेदाध्ययनादिनिमित्तप्रभावःशीघ्रमेव विनश्यति। यात्रामात्रप्रसिद्ध्यर्थमित्युक्तेऽपि सामान्येनार्जनसंकोचे विशेषेण प्रतिग्रहस्य ब्राह्मप्रभावप्रशमनफलत्वकथनार्थंवचनम् ॥ १८६ ॥

( ४ ) **राघवानन्दः**। प्रकारान्तरेण जीवन्प्रतिग्रहंन कुर्यादित्याह प्रतीति। समर्थोविद्यातपोभिः। प्रसंगं प्रसक्तिं। ब्राह्मं वेदाध्ययनजम् ॥ १८६ ॥

( ५ ) **नन्दनः**। प्रतिग्रहविधिज्ञोविद्यादियुक्तश्चप्रतिग्रहसमर्थः। अयावदर्थापुनः पुनः प्रवृत्तिः प्रसङ्गः। ब्राह्मंतेजः ब्राह्मीशक्तिः। समर्थोऽपीतिवचनादर्थस्य दोषातिशयः सूचितः ॥ १८६ ॥

( ६ ) **रामचन्द्रः**। प्रतिग्रहं ग्रहीतुं समर्थोपि तत्र प्रसङ्गंवर्जयेत्। प्रतिग्रहस्वीकारेणाशुब्राह्मंतेजःशाम्यति ॥ १८६ ॥

**न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे ॥ प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥ १८७ ॥**

( १ ) **मेधातिथिः**। तद्दर्शयति। अविज्ञायकामोपभोगाद्यर्थंनप्रतिग्रहः कर्तव्यः। एतदुक्तंभवति। आत्मनः कुटुम्बस्थित्यै नित्यकर्मसंपत्त्यैच प्रतिग्रहः कर्तव्योनान्यथा अवसीदन्नपिक्षुधा। अप्रतिगृह्णन्यद्यप्यवसादंगच्छति। अवसादः शरीरस्यानभिवृद्धिः। अथवा द्रव्याणांविधिंधर्म्यंप्रतिग्रहइत्येवंसंबन्धः क्रियते। कोऽसौधर्म्योविधिः। धर्मप्रयोजनविज्ञायप्रतिग्रहमन्त्रद्रव्याणांचदेवताग्नयेहिरण्यंरुद्रायगामित्यादिः ॥ १८७ ॥

( २ ) **सर्वज्ञनारायणः**। द्रव्याणांप्रतिग्रहे धर्म्यंविधिं द्रव्यदेवताज्ञानमन्त्रपाठादिकम् ॥ १८७ ॥

( ३ ) **कुल्लूकः** । द्रव्याणांप्रतिग्रहंधर्माय हितंविधानंग्राह्यदेवताप्रतिग्रहमन्त्रादिकमज्ञात्वा क्षुधावसानंगच्छन्नपि प्राज्ञोन प्रतिगृह्णीयात्किंपुनरनापदि ॥ १८७ ॥

( ४ ) **राघवानन्दः** । तेन विना जीवन्तंप्रति द्रव्याद्यविज्ञाय प्रतिग्रहोन कार्यइत्याह नेतिपञ्चभिः । धर्मं अग्नये हिरण्यंरुद्रायगामित्यादिप्रतिग्रहमन्त्रादिकम् ॥ १८७ ॥

( ५ ) **नन्दनः** । तंव्यक्तीकरोति नेति ।यत्किंचप्रतिगृह्णीयात्तत्सर्वमुत्तानस्त्वाङ्गिरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयादित्ययंविधिर्द्रव्यप्रतिग्रहेविधिः ॥ १८७ ॥

( ६ ) **रामचन्द्रः** । द्रव्याणांविधिंद्रव्यदेवताप्रतिग्रहमन्त्रादिंअविज्ञाय । द्रव्यंहिरण्यादि । प्राज्ञः पण्डितः । क्षुधाअवसीदन् अवसादंगच्छन् प्रतिग्रहंकुर्यात् ॥ १८७ ॥

**हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान्घृतं ॥ प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत् ॥१८८॥**

( १ ) **मेधातिथिः** । अविदुषोद्रव्यविशेषप्रतिग्रहे दोषातिशयमाह । भस्मीभवतिदारुवत् । यथा । दार्वग्निना दग्धंभस्मीभवति तथा योब्राह्मणोविद्यासंपन्नोन भवति सएतानिहिरण्यादीनि द्रव्याणि प्रतिगृह्णन्भस्मीभवति ॥ १८८ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नंपक्वान्नम् । अविद्वान्धर्म्यविधिमजानन् । भस्मीभवति फलशून्योभवति ॥ १८८ ॥

( ३ ) **कुल्लूकः** । स्वर्णादीञ्छ्रुतस्वाध्यायहीनः प्रतिगृह्णन्नग्निसंयोगेन दारुवद्भस्मीभूतोभवति पुनरुत्पत्तिंन लभते ॥ १८८ ॥

( ४ ) **राघवानन्दः** । अज्ञायापि कृते दोषमाहहिरण्यमिति । भस्मीभवतिअविद्वान् तपोविद्यादिरहितःप्रतिग्रहाग्निना ॥ १८८ ॥

( ५ ) **नन्दनः** । विशेषतोहिरण्यादिकंविदुषा न प्रतिग्राह्यमित्याह हिरण्यमिति ॥ १८८ ॥

( ६ ) **रामचन्द्रः** । अविद्वान्मूर्खः हिरण्यादि प्रतिगृह्णानोदारुवद्भस्मीभवति ॥ १८८ ॥

**हिरण्यमायुरन्नं च भूर्गौश्चाप्योषतस्तनुम् ॥ अश्वश्चक्षुस्त्वचं वासो घृतंतेजस्तिलाः प्रजाः ॥१८९॥**

( १ ) **मेधातिथिः** । भूर्गौश्च तनुंशरीरमोषतोदहतः । हिरण्यमायुर्विभक्तिपरिणामःओषतीतिकर्तव्यः । एवंअश्वश्चक्षुरित्यादिषु क्रियापदानुषङ्गःकर्तव्यः ॥ १८९ ॥

( २ ) **सर्वज्ञनारायणः** । तस्यैव प्रपञ्चोहिरण्यमायुरित्यादि । उषतोदहतः त्वचोदाहः । कुष्ठाद्युपहत्या ॥ १८९ ॥

( ३ ) **कुल्लूकः** । अविदुषः प्रतिग्रहीतुर्भूर्गौश्च शरीरमोषतोदहतः । उषदाहे भौवादिकस्तस्येदंरूपम् । भूगवोर्द्वित्वविवक्षायांद्विवचनम् । एवंहिरण्यमन्नंचायुरोषतः । अश्वश्चक्षुरित्यादिषु विभक्तिविपरिणामादोषतीत्येकवचनान्तस्यानुषङ्गः ॥ १८९ ॥

( ४ ) **राघवानन्दः** । किंकिंनाशयतीत्याहहिरण्याद्यष्टद्रव्याणि प्रतिगृहीतानि आयुरादीनि षट्नाशयन्तीत्यर्थः । ओषतः भूगावौ ॥ १८९ ॥

( ५ ) **नन्दनः** । अथहिरण्यादीनांप्रतिग्रहेषु दोषविशेषानाह हिरण्यमिति । ओषतोदहतः । दाहश्चात्र रोगः ॥१८९॥

( ६ ) **रामचन्द्रः** । हिरण्यं हिरण्यप्रतिग्रहः आयुर्हरति । च पुनः रत्नंआयुर्हरति भुवःगोश्च प्रतिग्रहः तनुं देहं उषतः दहतः । अश्वः अश्वप्रतिग्रहः चक्षुर्हरति । वासः वस्त्रप्रतिग्रहः त्वचंहरति । घृतंघृतप्रतिग्रहः तेजःहरति । तिलप्रतिग्रहः प्रजांहरति ॥ १८९ ॥

**अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ॥ अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥ १९० ॥**

( १ ) **मेधातिथिः** । यस्य तपोनास्त्यनधीयानोनचाधीते । अध्ययनेन प्रकृता विद्वत्ता लक्ष्यते । समुदितेचैते विद्यातपसीप्रतिग्रहाधिकारनिमित्तम् । उभयगुणभ्रष्टःप्रतिग्रहेचाभिलाषी सतेन सह मज्जत्यधोगच्छति । केनसह अन्यस्यानिर्देशाद्दातुश्च संनिधानात्तेन सहेतिगम्यते । प्रतिग्रहीतारंप्लवमिवात्मोत्तारणायाश्रयते । यस्त्वीदृशोऽपात्रभूतःस दातारमात्मानमुभावप्यधोनयति यथाऽम्भस्यश्मप्लवोऽश्मप्लवः । पारंतरतियेन सप्लवोनावादिः । तत्रयथाश्मन्यारूढोनदीतरणार्थमम्भसि मज्जत्यश्मप्लवेनसहदाता हि ब्राह्मणायददावनक्षरश्चतादृशो ब्राह्मणउभावपिनरकंगच्छतः ॥ १९० ॥

( २ ) **सर्वज्ञनारायणः** । अनधीयानोपि अतिशयिततया न मज्जतीत्येतदर्थमतपस्वीति । प्लवोभेडः तेनदात्रासह मज्जति । दातुरपि तादृक्फलाभावान्मज्जनोक्तिः ॥ १९० ॥

( ३ ) **कुल्लूकः** । यस्तपोविद्याशून्यःप्रतिग्रहेच्छुःब्राह्मणोभवति सप्रतिग्रहाधिकाराभावाद्बुद्धिस्थेन तेनइतिपरामृष्टेनैव दात्रैवानर्हप्रतिग्रहादानपापयुक्तेन सह नरके मज्जति यथा पाषाणमयेनोडुपेनाम्भस्तरंस्तेनैव सहाम्भसि मग्नोभवति ॥ १९० ॥

( ४ ) **राघवानन्दः** । किंच अतपाइतिद्वाभ्यां । अश्मप्लवेन पाषाणनावा । सह तेन दात्रा ॥ १९० ॥

( ५ ) **नन्दनः** । न केवलमविद्वान्प्रतिगृह्णन्नात्मानमेव पातयति किंतु दातारमपीत्याह अतपास्त्विति । अनधीयानोऽविद्वानतपाश्च सन्नम्भस्यश्मप्लवेनेव तेन दात्रा सहैव मज्जति । यथा जले स्वयमेव मज्जन्नश्मा स्वाश्रितमप्यधोनयति एवंस्वयमेव नरके पतन्नविद्वान्स्वाश्रितंदातारमप्यधोनयतीत्यभिप्रायः । अतपाइतिविशेषणात्सतपसोदोषमात्रत्वंगम्यते ॥ १९० ॥

( ६ ) **रामचन्द्रः** । अतपस्वी तपोरहितः । अनधीयानः मूर्खः । एतादृशः प्रतिग्रहरुचिर्द्विजः यथा अम्भसि अश्मप्लवेन तरति कश्चित्समज्जति तथा तेन दात्रा सह प्रतिग्रहीता द्विजःमज्जति ॥ १९० ॥

**तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् ॥ स्वल्पकेनाप्यविद्वान्हि पङ्के गौरिव सीदति ॥ १९१ ॥**

( २ ) **सर्वज्ञनारायणः** । यस्मात्तस्माद्धिरण्यादिव्यतिरिक्तप्रतिग्रहादपि ॥ १९१ ॥

( ३ ) **कुल्लूकः** । यस्मादसावल्पद्रव्यप्रतिग्रहेणापि मूर्खः पङ्के गौरिव नरकेऽसमर्थोभवति तस्माद्यतःकुतश्चित्सुवर्णादिव्यतिरिक्तसीसकाद्यसारप्रतिग्रहादपि त्रस्येत् ॥ १९१ ॥

( ४ ) **राघवानन्दः** । अतोऽविद्वान्प्रतिग्रहीता बिभियात् अल्पकेन हिरण्याद्यन्यतमेन सीदत्येव । अविद्वन्निषेधाभ्यासोनिन्दातात्पर्यकःनविद्वत्प्रतिग्रहतात्पर्यकः प्रतिग्रहसमर्थोपीत्यत्र तन्निषेधोक्तेः ॥ १९१ ॥

( ५ ) **नन्दनः** । उपसंहरति तस्मादिति । न केवलमश्वादिप्रतिग्रहादविद्वान्बिभीयात् किंतु यस्मात्कस्मात्प्रतिग्रहादपि बिभीयात् ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । तस्मात् विद्वान् बिभीयात् स्वल्पकेनापि प्रतिग्रहेण । अविद्वांस्तु सीदति ॥ १९१ ॥

**न वार्यपि प्रयच्छेत्तु बैडालव्रतिके द्विजे ॥ न बकव्रतिके विप्रे नावेदविदि धर्मवित् ॥ १९२ ॥**

( १ ) **मेधातिथिः** । प्रतिग्रहीतुर्धर्मउक्तः । इदानींदातुरुच्यते । अपिशब्दात्सर्वंदेयंनिवार्यते । यत्र वारि न कस्मैचिद्दीयते तदपि नैभ्योदातव्यंकुतोन्यद्द्रव्यंदीयते । अतिशयोक्त्या द्रव्यान्तरदाननिषेधोऽयम् । वारिणस्तुसर्वार्थत्वाद-

निषेधः । ननु च बैडालव्रतिकान्वाङ्मात्रेणापि नार्चयेदित्युक्तमेव । सत्यम् तत्रार्चा निषिद्धा इहतु दानंतच्च धनस्य नान्यस्य । एवंद्विःप्रतिषेधोऽर्थवान्भवति । तथाचोत्तरत्र वक्ष्यति विधिनाप्यर्जितंधनमिति ।अतःपाखण्ड्यादिभ्यः सावज्ञमन्नदानंतन्निषिध्यते । अत्र कश्चिदाह यद्यवेदविदीतिश्रुतंतथाप्यनधीयानइत्यपि द्रष्टव्यम् तथाहिकेवलवेदाध्यायिभ्योदानमुक्तम् । नच दाम्भिकेभ्यःकाम्ययुक्तम् । सइदंप्रष्टव्यःपुनर्वेदाध्यायिमात्राय विद्यारहिताय दानमुक्तम् श्रोत्रियायैव देयानीतिचेत्तत्त्वर्हत्तमायेत्यप्रामिकत्वादत्रविद्यया विना वाक्यान्तराणि चविदुषे दक्षिणेत्यादीन्येकप्रकारगतानि सन्त्येव । अतस्तत्पर्यालोचनयोभयविशेषणचेष्टया देयमितिगम्यते । अतः श्रौत्रार्थपरित्यागे न किंचित्कारणंपश्यामोयस्य तु साम्यमयुक्तमिति । वचनगम्येऽर्थे का नामायुक्तता । बिडालव्रतेन चरति बैडालव्रतिकः । बकानांव्रतंतदस्यास्तीति बकव्रतिकः । अधिकरणविवक्षायांसप्तमी । संप्रदानविवक्षायांचतुर्थी युक्ता ॥ १९२ ॥

( २ ) **सर्वज्ञनारायणः** । वार्यपि प्रतिग्रहरूपेण न देयम् । करुणयातु देयमित्यर्थः ॥ १९२ ॥

( ३ ) **कुल्लूकः** । प्रतिग्रहीतुर्धर्ममभिधायाऽधुना दातुराह नवार्यपीति । वायसादिभ्योयद्दीयते तदपि बैडालव्रतिकेभ्योधर्मज्ञोन दद्यादित्यतिशयोक्त्या द्रव्यान्तरदानंनिषिध्यते नतु वारिदानमेव पाषण्डिनोविकर्मस्थानित्यनेन बैडालव्रतिकायाऽतिथित्वेन सत्कृतार्थदानादि निषिद्धम् । इहतु धनदानंनिषिद्धयते । अतएव विधिनाप्यर्जितंधनमितिवक्ष्यति । नावेदविदीति वेदार्थानभिज्ञे एतच्च विद्वत्संभवे नावेदविदीतिनिषिध्यते ॥ १९२ ॥

( ४ ) **राघवानन्दः** । निन्दार्थवादसहितंदानपात्रंनिन्दति नवार्यपीतिनवभिः । अवेदविदि वेदानभिज्ञे ॥ १९२ ॥

( ५ ) **नन्दनः** । दातृप्रतिग्रहीतृप्रसङ्गाद्दातारंप्रत्याह नेति । बैडालबकवृत्तिकौवक्ष्यति । धर्मवित्प्रतिषेधशास्त्रज्ञः ॥ १९२ ॥

( ६ ) **रामचन्द्रः** । वार्यपि जलमपि अवेदविदि ॥ १९२ ॥

**त्रिष्वप्येतेषु दत्तंहि विधिनाप्यर्जितं धनम् ॥ दातुर्भवत्यनर्थाय परत्राऽऽदातुरेव च ॥ १९३ ॥**

( १ ) **मेधातिथिः** । धनग्रहणादन्नदानंन निषिध्यतइत्युक्तम्भवति । विधिनाप्यर्जितंसत्प्रतिग्रहक्रयादिना शास्त्राभ्यनुज्ञातेन प्रकारेण दातुरादातुश्च तादृशंदानंपरत्रोभयोरनर्थाय ॥ १९३ ॥

( २ ) **सर्वज्ञनारायणः** । अनर्थाय । दोषाय ॥ १९३ ॥

( ३ ) **कुल्लूकः** । एतेषु त्रिष्वपि बैडालव्रतिकादिषु न्यायार्जितमपि धनंदत्तंदातुःप्रतिग्रहीतुश्च परलोके नरकहेतुत्वादनर्थाय भवति ॥ १९३ ॥

( ४ ) **राघवानन्दः** । त्रिषु बैडालव्रतिकादिषु । विधिनोपार्जितं न्यायोपार्जितमपि अनर्थाय नरकाय ॥ १९३ ॥

( ५ ) **नन्दनः** । न केवलमेतेभ्योदानेन दृष्टे धनहानिरदृष्टे फलहानिश्चभवतः किंतु प्रतिषिद्धाचरणात् पापमप्यस्तीति व्यक्तमुक्तमनर्थायेति । आदातुः प्रतिग्रहीतुः ॥ १९३ ॥

( ६ ) **रामचन्द्रः** । एतेषु त्रिषु बैडालवृत्तिबकवृत्त्यवेदवित्सु दत्तं दातुः आदातुः उभयोः अनर्थाय भवति ॥ १९३ ॥

**यथा प्लवेनौपलेन निमज्जत्युदके तरन् ॥ तथा निमज्जतोधस्तादज्ञौ दातृप्रतीच्छकौ ॥ १९४ ॥**

( १ ) **मेधातिथिः** । औपलआश्मनः। जलसंतरणाय नावादिः प्लवस्तेन यस्तरति तरितुंप्रवर्तते । सोऽधस्ताज्जलस्यमज्जत्यन्तर्धीयते । एवमज्ञौ दातृप्रतीच्छकौ । प्रतीच्छकः प्रतीच्छांकरोतीति णिचंकृत्वा ण्वुल्कर्तव्यः प्रतीप्सकइतिपाठान्तरम् । तत्र सन्नन्तादाप्नोतेर्ण्वुल् । अर्थस्तूभयोरेकएव ॥ १९४ ॥

( २ ) **सर्वज्ञनारायणः** । दातुरज्ञत्वं पात्राज्ञानात् दानफलाज्ञानाच्च ॥ १९४ ॥

( ३ ) **कुल्लूकः** । यथा पाषाणमयेनोडुपादिना जले तरस्तेनैव सहाधोगच्छत्येवंदानप्रतिग्रहशास्त्रानभिज्ञौ दातृग्राहकौ नरकंगच्छतः । अतपास्त्वनधीयानइतिप्रतिग्रहीतृप्राधान्येन निन्दोक्ता । इहतु दातृप्राधान्येनेत्यपुनरुक्तिः ॥ १९४ ॥

( ४ ) **राघवानन्दः** । औपलेनाश्मनिर्मितेन । प्रतीच्छकोधनंप्रति लुब्धोग्रहीता ॥ १९४ ॥

( ५ ) **नन्दनः** । उक्तेऽर्थे दृष्टान्तंप्रपञ्चयति यथेति । अज्ञौअपात्रदानेदोषमविदुषः प्रतिग्रहदोषंचाजानन्तौ । प्रतीच्छकः प्रतिग्राहकः ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । यथा औपलेन प्लवेन पाषाणप्लवेन उदके तरन् निमज्जति तथा अज्ञौ । दातृप्रतीच्छकौ दातृग्रहीतारौ अधस्तान्निमज्जतः ॥ १९४ ॥

**धर्मध्वजी सदालुब्धश्छाद्मिकोलोकदम्भकः ॥ बैडालव्रतिकोज्ञेयोहिंस्रः सर्वाभिसन्धकः ॥ १९५ ॥**

**[ यस्य धर्मध्वजोनित्यंसुरध्वजइवोच्छ्रितः । प्रच्छन्नानि च पापानि बैडालंनाम तद्व्रतम् ॥ १* ॥ ]**

( १ ) **मेधातिथिः** । उपचारेणैतौ शब्दौ प्रयुज्येते । अनेकस्मिंश्चोपचारहेतौ सएवसंभवति । यन्निमित्तंप्रयोगस्तदवधारणप्रतिषेधविषयप्रकृत्यर्थम् । धर्मोध्वजमिवव्याघ्रादेराकृतिगणत्वात्समासः । कदाचित्कर्मधारयः सर्वधनाद्यर्थइति । ततःसोऽस्यास्तीति मत्वर्थीयः । ख्यात्यर्थमेव धर्मंकरोति न शास्त्रपरतया सएवमुच्यते । यस्तत्रैव धर्मंकरोति यत्र जनाः पश्यन्ति स्वपुरुषैश्च ख्यापयन्ति धार्मिकत्वप्रसिद्ध्याप्रतिग्रहादिलप्स्यइति लुब्धोमत्सरीकृपणश्च । लोकंदम्भोतिवञ्चयति लोकदम्भकः । छद्मना चरति छाद्मिकः । छद्म व्याजः । प्रकाशधार्मिकोरहसिनिक्षिप्तमपहरत्यप्रकाश्यंप्रकाशयति । धार्मिकोऽयमेतस्ययत्समक्षंकथितंनान्यत्र यातीति । केन चिद्विश्वस्य कथितंदश्यते यावद्यतएव गोप्यंतस्यैवमुखाज्जातमितिपरद्रोहः । सर्वेषांचाभिसंधानाक्षेपकःपरगुणान्न सहते । ईदृशोबैडालव्रतिकोज्ञेयः । अभिसंधकःअभिसंधत्तइति । आतश्चोपसर्गइतिकः । ततःस्वार्थे कः । सर्वेषामभिसंधकइतिषष्ठीसमासः । केचिदत्रश्लोकंपठन्ति । यस्यधर्मध्वजोनित्यंसुरध्वजइवोच्छ्रितः । प्रच्छन्नानि च पापानि बैडालंनाम तद्व्रतमिति ॥ एषएवार्थः संक्षेपेण कथ्यते । एकैकगुणसंबन्धेबैडालव्रतिकोज्ञेयः । अस्मादेवश्लोकादेवमनुमीयते प्रच्छन्नानि च पापानीतिविशेषाश्रवणात्सर्वेषांचैषांपापत्वादुभयथाचार्येण शिष्याःपाठिताः । केचिदिमंश्लोकमध्यापिताःकेचित्पूर्वम् । उभयंच प्रमाणम् । तेन यद्यपिअङ्गदी कुण्डली पीनस्कन्धःपृथुवक्षादेवदत्तइतिसमुदितानांलक्षणत्वंप्रतीयते तथापीह प्रत्येकमेतानिलक्षणानि ॥ १९५ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मध्वजी धर्मप्रकाशनशीलः । सदाअतिधनत्वेपि लुब्धः । लोकानांदम्भकोहिंस्रोधनग्रहणेन हिंस्रोवधादिहिंसारतिः । सर्वाभिसंधकः सर्वेषु पित्रादिष्वपि स्वोपकाराभिसंधिनैवोपकर्ता ॥ १९५ ॥

( ३ ) **कुल्लूकः** । योबहुजनसमक्षंधर्ममाचरति स्वतःपरतश्च लोके ख्यापयति तस्य धर्मोध्वजचिन्हमिवेतिधर्मध्वजी । लुब्धः परधनाभिलाषुकः । छद्मना व्याजेन चरतीति छाद्मिकः । लोकदम्भकोनिक्षेपापहारादिना जनवञ्चकः । हिंस्रःपरहिंसाशीलः । सर्वाभिसन्धकः परगुणासहनतया सर्वाक्षेपकः । बिडालव्रतेन चरतीतिबैडालव्रतिकः बिडालोहि प्रायेण मूषिकादिहिंसार्थचितया ध्याननिष्ठइव विनीतः सन्नवतिष्ठतइत्युपचाराद्बिडालव्रतशब्दः ॥ १९५ ॥

( ४ ) **राघवानन्दः** । तत्र द्वाभ्यामुक्तबैडालबकव्रतिनोर्लक्षणमाह धर्मेति । धर्मध्वजी बहुजनेषु धर्मएव ध्वजवत्प्र-

* ( ट, ड, ढ, त )

काश्यतया यस्यसः। छाद्मिकः सर्वत्र छद्मना व्यवहरति सर्वाभिसन्धकः परगुणासहनतया सर्वाक्षेपकः ॥ १९५ ॥

( ५ ) **नन्दनः**। बैडालवृत्तिकमाह धर्मेति। धर्मध्वजीधर्मलिङ्गधारी। छाद्मिको व्याजवृत्तिः। दाम्भिकोविशिष्टवेषेण स्वदोषतिरस्कारी। अभिसन्धको वञ्चकः ॥ १९५ ॥

( ६ ) **रामचन्द्रः**। धर्मध्वजी धर्मस्थापकः पुरुषेभ्यः ख्यापयन्। छद्मिकः कृतव्याजःप्रकाशंधार्मिकः रहसि निक्षिप्तमपिअपहरति। लुब्धः कृपणः प्रसिद्धः। प्रतिग्रहादिलभ्यइत्येतादृशोबैडालव्रतिकसंज्ञः। हिंस्रः हिंसारुचिः। सर्वाभिसन्धिकः परगुणासहनतया सर्वेषु निन्दाकरः ॥ १९५ ॥

**अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः॥ शठोमिथ्याविनीतश्च बकव्रतचरोद्विजः॥ १९६ ॥**

( १ ) **मेधातिथिः**। बकव्रतलक्षणमधोनिरीक्षणम् अथवा नीचदृष्टिः नीचोदीनःसर्वदैवव्यापारयतिकथंचित्कुतश्चन लभतेऽधमादपि गृह्णाति। निष्कृतिर्निष्ठुरता तया चरति तत्प्रधानोनैष्कृतिकोऽसम्यग्भाषी। अलीकविनीतःश्रयतिप्रश्रयंनम्रतांकार्ये तु व्याघातकःबिडालोऽलीकनिद्रांकरोत्यामिषंलिप्सन्। एवंसोपाधेर्धर्मचरणोबैडालव्रतिकउक्तः। तथैव बकव्रतचरोपि। बकाहिमत्स्यान्गृण्हन्तोजलचरेष्ववज्ञांदर्शयन्ति। अथचमत्स्यग्रहणबुद्ध्यएव। व्रतानि शीलितंकर्मोच्यते। प्रदर्शितंपदानामपौनरुक्तम्। अथापि स्याल्लक्षणत्वाददोषः। अविज्ञातंहि लक्षणंभवति। पौनःपुन्याभिधानेनसुग्रहोऽर्थोभवति। कःपुनः। बैडालव्रतिकबकव्रतिकयोर्भेदः। उच्यते। अयंस्वार्थसाधनपरोनान्यस्यकार्यंविहन्ति पूर्वस्तुमात्सर्यात्स्वार्थसिद्धावसत्यामपि परस्य नाशयति ॥ १९६ ॥

( २ ) **सर्वज्ञनारायणः**। अधोदृष्टिरुपरोधभयान्मुखानिरीक्षकः। नैकृतिकश्छद्मवृत्तिः। शठोवक्रमतिः। मिथ्याविनीतोवाचादेहे नचविनयंकुर्वन् मनसाविपरीतः। बकव्रतधरोबकवृत्तिः ॥ १९६ ॥

( ३ ) **कुल्लूकः**। अधोदृष्टिर्निजविनयख्यापनाय सततमधएव निरीक्षते। निष्कृतिर्निष्ठुरता तया चरतीतिनैष्कृ*तिकःस्वार्थसाधनतत्परःपदार्थखण्डनेन। शठोवक्रः मिथ्याविनीतः कपटविनयवान्। बकव्रतंचरतीतिबकव्रतचरः। बकोहि प्रायेण मीनहननरुचितया मिथ्याविनीतः सन्नेवंशीलोभवतीतिगौणोबकव्रतशब्दः ॥ १९६ ॥

( ४ ) **राघवानन्दः**। निजविनयख्यापनाय सततमधोदृष्टिःनिकृत्या। निष्ठुरतया चरति नैकृतिकःनिष्ठुरोनिराकृतिः। शठोवञ्चकः। मिथ्याविनीतः। धनाद्यर्थंमिथ्याविनयी ॥ १९६ ॥

( ५ ) **नन्दनः**। अधोदृष्टिः परलोकानवेक्षकः। वैकृतिकोगूढैरुपायैः परानर्थकारी। शठोनृशंसः ॥ १९६ ॥

( ६ ) **रामचन्द्रः**। अधोदृष्टिः उपरोधभयान्मुखानिरीक्षकः। नैकृतिकः छद्मवृत्तिः। स्वार्थसाधनतत्परः स्वकार्यसाधकः। शठः वक्रमतिः ॥ १९६ ॥

**ये बकव्रतिनोविप्राये च मार्जारलिङ्गिनः॥ तेपतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥ १९७ ॥**

( १ ) **मेधातिथिः**। स्वशब्दैश्च व्याख्यातःश्लोकः ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः**। येविप्राइति विप्राणांहिंसाछद्मप्रधानतयैतद्विधमतिर्दुष्टेत्यर्थः ॥ १९७ ॥

( ३ ) **कुल्लूकः**। ये बकव्रतंबिडालव्रतंचरन्ति ते ब्राह्मणास्तेन पापहेतुना कर्मणाअन्धतामिस्रनाम्नि नरकेपतन्ति ॥ १९७ ॥

---

* नैष्कृतिकः=नैकृतिकः ( अ )

( ४ ) **राघवानन्दः** । तेन बकादिवृत्त्या पापकर्मणा ॥ १९७ ॥

( ५ ) **नन्दनः** । अन्धतामिस्रेऽन्धतामिस्राख्ये नरके ॥ १९७ ॥

**न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ॥ व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम् ॥ १९८ ॥**

( १ ) **मेधातिथिः** । पापंकृत्वाव्रतं प्रायश्चित्तंन कुर्यात् । धर्मस्यापदेशेन धर्ममपदिश्यलोके ख्यापयति धर्मार्थमहंव्रतं-करोमि न मे प्रायश्चित्तनिमित्तमस्तीति परमार्थतस्तु प्रायश्चितार्थमेव करोति एवंन कर्तव्यम् । पापंप्रच्छाद्यापन्हुत्य तेनव्रतेन स्त्रीशूद्रदम्भनंन कुर्यात् । प्रकटंप्रायश्चित्तंकर्तव्यमन्यत्ररहस्यात् ॥ १९८ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मध्वजित्वं केवलमपि दुष्टमित्याह नधर्मस्येति । अपदेशेन धर्मसाधयितुमेतत्करोमीति व्यपदेशेन व्रतंचान्द्रायणादिप्रायश्चित्तं न चरेत् । पापंकृतंप्रच्छाद्य निन्हुतंकृत्वातदपगमार्थंकुर्वन्नपि । व्रतेन स्त्रीशूद्रदम्भनं स्त्रीशूद्राद्यज्ञानाद्दम्भनं विप्रलम्भनं कुर्वन् ॥ १९८ ॥

( ३ ) **कुल्लूकः** । पापंकृत्वा प्रायश्चित्तरूपंप्राजापत्यादिव्रतंपापमपनयति तन्नेदंप्रायश्चित्तं किंतु धर्मार्थमहमनुतिष्ठामीति स्त्रीशूद्रमूर्खादिजनमोहनंकुर्वन्नानुतिष्ठेत् ॥ १९८ ॥

( ४ ) **राघवानन्दः** । पापनुत्यै व्रतमनुतिष्ठतोधर्मंकरोमीति ख्यापनशीलस्य न शुद्धिःकिंतुदम्भमात्रमित्याह नधर्मस्येति । स्त्रीशूद्रदम्भनं स्त्रीशूद्रौदम्भयतिदम्भेन व्यामोहयतीति ॥ १९८ ॥

( ५ ) **नन्दनः** । धर्मध्वजित्वादीनांवृत्तान्तमाह नेति । पापंकृत्वा तत्प्रायश्चित्तरूपंव्रतंधर्मव्याजेन न कुर्यात् । पापंप्रच्छाद्य व्रतेन स्त्रीशूद्रदम्भनंकुर्वन् । स्त्रीशूद्रग्रहणमविद्वदुपलक्षणम् । दम्भनंवञ्चनम् ॥ १९८ ॥

( ६ ) **रामचन्द्रः** । धर्मस्य अपदेशेन व्याजेन व्रतंन चरेत् । स्त्रीशूद्रदम्भनं स्त्रीशूद्रयोर्वंचनं कुर्वन् ॥ १९८ ॥

**प्रेत्येह चेदृशाविप्रागर्ह्यन्ते ब्रह्मवादिभिः ॥ छद्मनाचरितं यच्च व्रतं रक्षांसि गच्छति ॥ १९९ ॥**

( १ ) **मेधातिथिः** । इह पदार्थस्वाभाव्येनान्योद्देशेनापि कृतंयत्फलंततोभवत्येव । तथाहि गुरुनियोगे प्रवृत्तोधर्मोद्देशेन गुरुवचनंकरोमीति नकामहेतोः । अर्थं स्वाभाव्यात्तु कर्मप्रतिजनयति । एवंकश्चिन्मन्यते व्रतानि पापापनोदार्थानि तानिपरोद्देशेनापि क्रियमाणानि न स्वभावंजहति एवमेतन्ममप्रायश्चित्तमुभयार्थंभविष्यतिलोकेतपस्वीतिख्यातोभविष्यामिपापंचापनोत्स्यते । तस्यैवंबुद्धिमतोनिवृत्त्यर्थमिदमारभ्यते । तदेतद्व्रतंछद्मनाचरितमनुष्ठितंरक्षांसि गच्छतिनिष्फलंभवति न पापमपनुदतीत्यर्थः । न केवलंकार्याकरणंभवति यावदीदृशोविप्राव्रतचारिणोगर्ह्यन्ते निन्द्यन्ते ब्रह्मवादिभिर्वेदप्रमाणज्ञैःशिष्टैः ॥ १९९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रेत्य पारलौकिककर्मणि । इहैव लौकिककर्मणि । तच्च व्रतंधर्मध्वजिनाम् ॥ १९९ ॥

( ३ ) **कुल्लूकः** । प्रेत्येहइतिश्लोकद्वयम् । प्रथमंसुबोधम् ॥ १९९ ॥

( ४ ) **राघवानन्दः** । किंचैतादृशाअतीव पापिष्ठाइत्याह प्रेत्येति । तत्फलंरक्षोगामीति भावः ॥ १९९ ॥

( ५ ) **नन्दनः** । अत्र कारणमाह । प्रेत्येति ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । ईदृशा विप्रा गर्ह्यन्ते । छद्मना धारितंव्रतंरक्षांसि प्रतिगच्छति निष्फलं भवति ॥ १९९ ॥

**अलिङ्गी लिङ्गिवेषेण योवृत्तिमुपजीवति ॥ सलिङ्गिनांहरत्येनस्तिर्यग्योनौ च जायते ॥२००॥**

( १ ) **मेधातिथिः** । प्रत्याश्रमंलिङ्गधारणंयथाब्रह्मचारिणोमेखलादिधारणं गृहस्थस्य वैणवदण्डकुण्डलकमण्डल्वादि

वानप्रस्थस्य चर्मचीरजटादि परिव्राजकस्य कषायवसनदण्डादि। एतेन वेषेणानाश्रमी योभिक्षाहेतोर्लोके चरति-वृत्तिमुपजीवतिसलिङ्गिनामेनःपापंहरति। तिर्यग्योनौ तिरश्चांश्वशृगालादीनांयोनौ जायते । नचात्रैतदाशङ्कनीयंलिङ्गिनां-यत्पापंतत्तेभ्योऽपसृत्य तस्मिन्संचरतीत्यसंभाव्यम् । अकर्तव्यतापरंलिङ्गाधारणात्प्रतीयते। अश्रुतेऽपि प्रतिषेधे निन्दा-र्थवादादेव तदवगतिः ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः**। अलिङ्गी तत्तदीक्षितस्नातकादिलिङ्गानर्हः।.वृत्तिंप्रतिग्रहादिना धनोत्पत्तिम् ॥ २०० ॥

( ३ ) **कुल्लूकः**। अब्रह्मचारी योब्राह्मणोब्रह्मचर्यादिलिङ्गंमेखलाजिनदण्डादिवेषोपलक्षितस्तद्वृत्त्या भिक्षाभ्रमणादि-ना जीवति सब्रह्मचार्यादीनांयत्पापंतदात्मन्याहरति कुक्कुरादितिर्यग्योनौचोत्पद्यते । तस्मादेतन्न कर्तव्यमितिनिषेधः कल्प्यते ॥ २०० ॥

( ४ ) **राघवान्दः**। किंचस्वयमलिङ्गीलिङ्गिनांसन्यास्यादीनाम् ॥ २०० ॥

( ६ ) **रामचन्द्रः**। यःअलिङ्गीअनाश्रमी भूत्वा लिङ्गिवेषेणआश्रमिवेषेण वृत्तिंउपजीवतिसः लिङ्गिनां आश्रमिणां एनः पापं हरति आनृण्यंतर्पयति स्वयंतिर्यग्योनौ शृगालयोनौ। प्रजायते ॥ २०० ॥

**परकीयनिपानेषु न स्नायाच्च कदाचन ॥ निपानकर्त्तुःस्नात्वा तु दुष्कृतांशेन लिप्यते ॥ २०१ ॥**

**[ सप्तोद्धृत्य ततः पिण्डान्कामंस्नायाच्च पञ्चवा ॥ उदपानात्स्वयंग्राहाद्बहिः स्नात्वा न दुष्यति ॥ १ ॥×]**

( १ ) **मेधातिथिः**। निपिबंत्यस्मिन्नतोवेतिनिपानंजलाशयः। सच वापीकूपतडागादि तस्मिन्परकीये परेणयदा-त्मार्थंकृतंसर्वार्थेनोत्सृष्टंतत्र न कदाचित्स्नायात् । नित्यंचण्डालादिस्पर्शने च नैमित्तिकधर्मस्वेदापनोदार्थंचसर्वंस्नानंप्रतिषि-ध्यते। अत्रव्यतिक्रमे दोषमाह। निपानस्य यः कर्ता तस्य यत्किंचिद्दुष्कृतंतस्य केनचिदंशेन लिप्यते संबध्यते। नि-न्दार्थवादोऽयंप्रतिषेधः ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः**। जलंनिपीयते येषु निपानेषु पुष्करिण्यादिषु परकीयेषु परेण खातिषु सर्वार्थमनुत्सृष्टेषु। अंशेन चतुर्थेन ॥ २०१ ॥

( ३ ) **कुल्लूकः** । निपानंजलाधारःपरकृतपुष्करिण्यादिषु न कदाचित्स्नायात्तत्रस्नात्वा पुष्करिण्यादिकर्तुर्यत्पापं-तस्यांशेन वक्ष्यमाणचतुर्थभागरूपेणसंबध्यते अकृत्रिमनद्याद्यसंभवे परकृतेऽपि पुष्करिण्यादौ प्राक्प्रदानात्पञ्चपिण्डा-नुद्धृत्य स्नातव्यम्। तदाह याज्ञवल्क्यः। पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु। उद्धृत्य चतुरः पिण्डान्पारक्ये स्नान-माचरेत् ॥ स्नात्वा च तर्पयेद्देवान्पितॄंश्चैव विशेषतः ॥ २०१ ॥

( ४ ) **रघवानन्दः**। तत्र। नित्यंनैमित्तिकंकाम्यंक्रियाङ्गंमलकर्षणम्। क्रियास्नानंतथा षष्ठंषोढास्नानंप्रकीर्तितम् ॥ अस्नातःपुनरानर्होजप्याग्न्यहवनादिषु । प्रातःस्नानंतदर्थंतु नित्यस्नानंप्रकीर्तितम् ॥ नित्यस्नानंग्रहवैगुण्यशमं। का-म्यंदेवतार्चाद्यर्थं। क्रियाङ्गंअपूर्वनद्यादिषु स्नानंक्रियास्नानं। तत्रापि ॥ तीर्थं प्राप्यानुमार्गेण स्नानंतीर्थसमाचरेत्।-स्नानजंफलमाप्नोति तीर्थयात्राफलंन चेति शङ्खोक्तेः ॥ स्नानाधिकरणविधिनिषेधावाहपरेतित्रिभिः । परकीयत्वंतत्कृति साध्यत्वे सति तदनुत्सृष्टत्वंकूपतडागादिष्वदत्तेषुअदत्तानीत्युत्तरलिङ्गात्। अंशेन चतुर्थांशेन तुरीयभागितिवक्ष्यमाणत्वात्।

---

× ( क, ख, च, ड, ढ, ल, र. )

पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणीति ॥ वाचनिकंसर्वसत्वोद्देशेनोत्सृष्टत्वात् । अतएवाह । यदात्मार्थंकृतंसर्वार्थेनोत्सृष्टमितिमेधातिथिः ॥ २०१ ॥

( ५ ) **नन्दनः** । अत्रांशशब्दश्चतुर्थभागवचनः उत्तरत्र तुरीयग्रहणात् ॥ २०१ ॥

( ६ ) **रामचन्द्रः** । स्नानविधिमाह परकीयेति । परकीयनिपानेषु कदाचन न स्नायात् । स्नात्वा निपानकर्तुःदुष्कृतांशेन लिप्यते । कूपसमीपंनिबद्धंपशुपानाय निपानसंज्ञम् ॥ २०१ ॥

**यानशय्यासनान्यस्य कूपोद्यानगृहाणि च ॥ अदत्तान्युपभुञ्जानएनसःस्यात्तुरीयभाक् ॥२०२॥**

( १ ) **मेधातिथिः** । यानादीनिपरकीयान्यदत्तान्युपयुञ्जानएनसस्तदीयस्य तुरीयभाक्चतुर्थभागंप्राप्नुयात् । अत्रकश्चिदाह । अदत्तानीतिवचनात्सर्वार्थतयाप्यपकल्पितानि नोपयोज्यानितदयुक्तं । परकीयाधिकारात् । नच तानि परकीयानि । त्यक्तंहि तत्सम्यक् । तुरीयग्रहणमविवक्षितमितिप्रागेवव्याख्यातम् ॥ २०२ ॥

( २ ) **सर्वज्ञनारायणः** । एवं परयानाद्युपभोगेपि दोषइत्याह यानशय्येति । अस्य परस्य ॥ २०२ ॥

( ३ ) **कुल्लूकः** । अस्येतिप्रकृतः पुनः परामृष्यते । परस्य यानादीन्यदत्तान्युपयुञ्जानस्तदीयपापचतुर्थभागभागी भवति । अदत्तानीतिपरस्यानुमत्यभावश्च विवक्षितस्तेन सर्वार्थोत्सृष्टमठकूपादावुपयोगार्थात्मस्नानादौ न विरोधः ॥२०२॥

( ४ ) **राघवानन्दः** । मनुरप्याह । पानेत्यादिअदत्तान्यनुत्सृष्टानीति स्वखातःसागरोपमइत्युक्तेःखातकृदुत्सृष्टे । विश्वस्याधिकारोवाचनिकः ॥ २०२ ॥

( ५ ) **नन्दनः** । अस्य परस्य । तुरीयभाक्तुरीयांशभाक् ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । यानादीनि अदत्तानि भुञ्जानः । अस्य एतेषांप्रभोः एनसः । तुरीयभाक् चतुर्थांशभाक् स्यात् ॥ २०२ ॥

**नदीषु देवखातेषु तडागेषु सरःसु च ॥ स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥ २०३॥**

( १ ) **मेधातिथिः** । सर्वानद्योदेवखाताअतस्तासामुभयथासंभवादेवखातग्रहणवाच्यत्वेन तल्लिङ्गंपठितव्यम् । तडागादीनि हि देवखातानि मनुष्यखातान्यपि सन्ति । नचदेवैःखन्यन्ते । केवलं महत्त्वं स्मर्यमाणकर्तृकत्वेन लक्ष्यते॥२०३॥

( २ ) **सर्वज्ञनारायणः** । देवखातेषु पुष्करादिषुतडागेषु । अन्येन खातेषु उत्सृष्टेषु गर्तेषु नद्यादिकृतन्ह्रदेषु । प्रस्रवणेषु निर्झरेषु ॥ २०३ ॥

( ३ ) **कुल्लूकः** । नद्यादिषु सर्वदा स्नानमाचरेत् । देवखातेष्वितितडागविशेषणम् । देवसंबन्धित्वेन प्रसिद्धेषु सरःसु गर्तेषु अष्टधनुःसहस्रेभ्योन्यूनगतिषु तदुक्तंछन्दोगपरिशिष्टे । धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न तानदीशब्दवहागर्तास्ताः परिकीर्तिताः । चतुर्हस्तप्रमाणंधनुः । प्रस्रवणेषु निर्झरेषु चानेनैव परकीयनिपानव्यावृत्तिसिद्धौयत्पृथग्वचनंतदात्मीयोत्सृष्टतडागादिषु स्नानाद्यनुज्ञानार्थंतदपि नद्याद्यसंभवे द्रष्टव्यम् ॥ २०३ ॥

( ४ ) **राघवानन्दः** । किंच देवखातेषु तत्कृतत्वेन प्रसिद्धेषु सरःसुसमंतात्समेषुतटाकेषुविन्ध्यादिगतेषु । अष्टधनुःसहस्रेभ्योन्यूनगतिषु । तदुक्तंछन्दोगपरिशिष्टे । धनुःसहस्राण्यष्टौतुगतिर्यासांनविद्यते । नतानदीशब्दवहागर्तास्ताःपरिकीर्तिताः धनुर्हस्तचतुष्टयम् । प्रस्रवणेषु निर्झरेषु अत्रपञ्चपिण्डानुद्धरणेऽप्यदोषः । अदत्तेअन्त्यजकृतेऽपि न दोषः । अन्त्यजेनकृते

कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तंनविद्यते ॥ जानुदघ्नमदूष्यंस्यादधःस्थमशुचिस्मृतम् । एतेन परकीयवारिनिषेधोऽर्थवादइति मेधातिथिमतम् । यानादिपङ्कंप्रासङ्गिकंजलाशये दर्शितत्वात् ॥ २०३ ॥

( ५ ) **नन्दनः** । मनुष्यैरखातोजलाशयोदेवखातः । मनुष्यैः खातस्तडागः ऋषिसेवितंसरः । गतान्हृदः । प्रस्रवणंनिर्झरः ॥ २०३ ॥

**यमान्सेवेत सततं न नित्यं नियमान्बुधः ॥ यमान्पतत्यकुर्वाणोनियमान्केवलान् भजन् ॥२०४॥**

**[ आनृशस्यं क्षमा सत्यमहिंसा दममस्पृहा ॥ ध्यानं प्रसादोमाधुर्यमार्जवं च यमादश॥१॥* ]**

**[ अहिंसा सत्यवचनं ब्रह्मचर्यमकल्पता ॥ अस्तेयमितिपञ्चैते यमाश्चोपव्रतानि च ॥२॥ऽऽ ]**

**[ शौचमिज्या तपोदानं स्वाध्यायोपस्थनिग्रहौ ॥ व्रतोपवासौ मौनं च स्नानं च नियमादशः॥३॥§]**

**[ अक्रोधोगुरुशुश्रूषा शौचमाहारलाघवम् ॥ अप्रमादश्चनियमाः पञ्चैवोपव्रतानि च ॥४॥‡ ]**

( १ ) **मेधातिथिः** । प्रतिषेधरूपायमाब्राह्मणोन हन्तव्यः सुरा न पेयेत्यादयः । अनुष्ठेयरूपानियमाः । वेदमेवजपेन्नित्यमित्यादयः । न नित्यंनियमान् नाने न नियमानामसेवोच्यते किंतु यमानांनियमेभ्योनित्यत्वम् । तथाचाह यमान्पतत्यकुर्वाणः । ब्रह्महादिर्यमलोपे सति । पतितत्वात्सन्ध्योपासनादिभिर्नाधिक्रियते ननु तथा नियमलोपे । तथाच शिष्टस्मरणम् । पतति नियमवान्यमेष्वसक्तोन तुयमवान्नियमालसोऽवसीदेदिति । ननियमानसमीक्ष्यबुद्ध्यायमबहुलेष्वतिसंदधीत बुद्धिम् । येषामपि पारिभाषिकायमनियमाः॥ अहिंसासत्यवचनंब्रह्मचर्यमकल्कता । अस्तेयमपिपञ्चैते यमा श्चैवव्रतानिच ॥ अक्रोधोगुरुशुश्रूषाशौचमाचारलाघवम् । अप्रमादश्चनियमाः पञ्चैवोपव्रतानिच॥ तेषामपि गुरुलाघवमनेन श्लोकेन प्रतिपाद्यते । अतोनानेन यमानां सेवोच्यते नापि नियमानामसेवा उभयेषांतैःशास्त्रैर्विहितत्वात् ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । यमान्नित्यकर्माणि । नियमान् कामनानियतानि काम्यकर्माणि नित्यंनसेवेतेति । किंतु कामनोदयएव । केवलान्कृत्स्नानपि भजन् । अहिंसासत्यास्तेयापरिग्रहेन्द्रियनिग्रहादयः शरीरमात्रापेक्षानियतकर्तव्यायमाः । तपःस्वाध्यायादयोधिकसाधनापेक्षा नियमाअत्रेत्येके ॥ २०४ ॥

( ३ ) **कुल्लूकः** । नियमापेक्षया यमानुष्ठानगौरवज्ञापनार्थमिदम् । नतु नियमनिषेधार्थं द्वयोरेव शास्त्रार्थत्वात् । यमनियमविवेकश्च मुनिभिरेव कृतः । तदाहयाज्ञवल्क्यः । ब्रह्मचर्यंदया क्षान्तिर्ध्यानंसत्यमकल्कता । अहिंसास्तेयमाधुर्ये दमश्चेति यमाःस्मृताः ॥ स्नानंमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः । नियमोगुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ यमनियमस्वरूपज्ञःसमस्तस्नानादिनियमत्यागेनाप्यहिंसादिरूपंयममनुतिष्ठेत् । नियमाननुतिष्ठन्नपि यमानुष्ठानरहितःपततीत्ययंयमस्तुत्यर्थमारंभइति मेधातिथिगोविन्दराजौ । हिंसादिप्रतिषेधार्थकायमाः । वेदमेव जपेन्नित्यमित्यादयोऽनुष्ठेयरूपानियमाइतिव्याचक्षते । अहिंसासत्यवचनंब्रह्मचर्यमकल्कता । अस्तेयमितिपञ्चैते यमावै परिकीर्त्तिताः । अक्रोधोगुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्च सततंपञ्चैते नियमाःस्मृताः ॥ २०४ ॥

---

* ( क, ख, ग, घ, च, ट, ठ, ड, ढ, ण, त, थ, ल, र. )

ऽऽ ( ख, ड, ढ, त )

§ ( क, ख, घ, च, ट, ठ, ड, ण, त, र, ल )

‡ ( ख, ढ, ण, त. )

( ४ ) **राघवानन्दः** । स्नातकस्यापि नित्यंयमस्यावश्यकत्वमाहयमानिति । अत्र ॥ ब्रह्मचर्यंदयाक्षान्तिर्ध्यानंसत्यमवक्रता । अहिंसास्तेयमाधुर्येदमश्चेतियमादश ॥ स्नानंमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः । नियमोगुरुशुश्रूषा शौचाक्रोधाप्रमादितेति याज्ञवल्क्योक्तयमनियमग्रहइतिकेचित् । यःस्वशाखांपरित्यज्येति न्यायात् । अत्रैवोक्ताहिंसानिषेधकोपायसाध्या वेदमेवजपेन्नित्यमित्यादिरूपनियमाग्राह्याइति तु मेधातिथिगोविन्दराजमतम् । यमानांनित्यत्वे पततीत्येव हेतुः ॥ २०४ ॥

( ५ ) **नन्दनः** । व्रतान्तरमाह यमानिति । अत्र व्यासः । अहिंसासत्यवचनंब्रह्मचर्यमकल्कता । अस्तेयमिति पञ्चैते यमाश्चैव व्रतानिच ॥ अक्रोधोगुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्चनियमाः पञ्चैवोपव्रतानिचेति ॥ उभयेषांयमेष्वादरः कर्तव्यइत्युक्तं ननित्यंनियमानबुधइति । उक्तमर्थमुपपादयत्युत्तरार्धेन । केवलान्यमहीनान् । पतति दोषयुक्तोभवतीतियावत् ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । यमान्नित्यकर्माणि सततंसेवेत अनुतिष्ठेत् ॥ २०४ ॥

[ **रामचन्द्रः** । यमनियममाह चतुर्भिः । प्रसादःईश्वरप्रसन्नता ( १ ) ]

[ व्रतंस्नातकव्रतादि । उपवासोमासोपवासादिः ( ३ ) ]

**नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा ॥ स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥२०५॥**

( १ ) **मेधातिथिः** । पूर्वेण श्लोकेन व्रताधिकारोविच्छिन्नः । इदानींप्रतिषेधप्रकरणमारभ्यते । तत्रभोजनमेव तावद्दर्शितत्वाद्यत्रकुत्रचित्प्राप्तंनिषिध्यते । अश्रोत्रियोऽनधीयानस्तेन ततेप्रारब्धे यज्ञऋत्विग्भिर्वाऽश्रोत्रियैस्तते न भुञ्जीतब्राह्मणः ग्रामयाजीग्रामयाजकस्तेन यत्र हूयते यत्र च स्त्री होमंकरोति । छान्दोग्ये हि स्त्रीणांगृह्यस्मृतिकारैरग्निहोत्रहोउक्तोऽतस्तंपश्यन्प्रतिषेधति । अथवा यत्र यज्ञेस्त्रीप्रधानंभर्तादारिद्र्यादिदोषैरुपहतः स्त्रीचासौदायिकेन धनेन ज्ञातिबलेन च दर्पितातत्रायंप्रतिषेधः । क्लीबोनपुंसकम् ॥ २०५ ॥

( २ ) **सर्वज्ञनारायणः** । अश्रोत्रियैर्धर्मतोऽनधीतवेदैर्ऋत्विग्भिस्तादृशा यजमानेन तते प्रारब्धे यज्ञे प्रक्रान्ते दर्शपूर्णमासादौसोमेवाग्नीषोमीयवपाहोमानन्तरमपि यज्ञनिमित्तभोजने न भुञ्जीत । ग्रामयाजीबहूनां क्रोशतामुपदेष्टा । स्त्रिया हुते हाविते स्त्रीमात्रयजमानकव्रतादिहोमे निमित्ते । एवंक्लीबेन हुतइत्यत्रापि । स्त्रिया शूद्रेणवेति क्वचित्पाठः ॥ २०५ ॥

( ३ ) **कुल्लूकः** । अनधीतवेदेनोपक्रान्ते यज्ञेऽग्नीषोमीयादूर्ध्वमपि भोजनयोग्यसमये ब्राह्मणोन भुञ्जीत तथा बहूनांयाजकेनर्त्विजा स्त्रिया नपुंसकेन च यत्र यज्ञे हूयते तत्र कदाचिन्नभुञ्जीत ॥ २०५ ॥

( ४ ) **राघवानन्दः** । पूर्वश्लोके व्रताधिकारोविच्छिन्नइदानींनिषेधोधिक्रियते नाश्रोत्रियइतित्रयोदशभिः । एतैर्हुते यज्ञादिकृतेन ब्राह्मणोभुञ्जीत ॥ २०५ ॥

( ५ ) **नन्दनः** । अश्रोत्रियततेऽनधीतवेदबहुले । श्रोत्रियततेऽपि ग्रामयाज्यादिहुते । ग्रामयाजी बहुनांयाजकः । क्वचित्कर्मण्यभ्युदयश्राद्धादावपि ॥ २०५ ॥

( ६ ) **रामचन्द्रः** । अश्रोत्रिययज्ञे तते विस्तृते ब्राह्मणःक्वचिन्नभुञ्जीत । ग्रामयाजिना पुरोहितेन । स्त्रीप्रधानंस्त्रिया हुते होमे तत्र न भुञ्जीत क्लीबेन हुते होमे तत्र न भुञ्जीत ॥२०५॥

**अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः ॥ प्रतीपमेतद्देवानां तस्मात्तत्परिवर्जयेत् ॥ २०६ ॥**

( १ ) **मेधातिथिः** । पूर्वस्यप्रतिषेधविधेरर्थवादोऽयम् । अश्लीलमश्लाघ्यंसाधूनाम् । यत्रह्येतेहविर्जुव्हतियज्ञंकुर्वन्ति देवानांप्रतीपंप्रतिकूलंतस्मादीदृशेयज्ञेगमनंपरिवर्जयेत् ॥ २०६ ॥

( २ ) **सर्वज्ञनारायणः** । आश्लीलं पापकरम् । जुव्हति हावयन्तिवा । अमीअश्रोत्रियाद्याः । प्रतीपं विपरीतं अनिष्टमितियावत् ॥ २०६ ॥

( ३ ) **कुल्लूकः** । पूर्वोक्ताबहुयाजकादयोयत्र होमंकुर्वन्ति तत्कर्म शिष्टानामश्लीकमश्रीकंश्रीघ्नं रेफस्य स्थानेलकारः । देवानांप्रतिकूलं तस्मादेतद्धोमंन कारयेत् ॥ २०६ ॥

( ४ ) **राघवानन्दः** । तद्भक्षणेदोषमाह । अश्रीकं श्रीघ्नंसाधूनामश्लाघ्यमिति वा । अमी अश्रोत्रियादयः । प्रतीपं प्रतिकूलंअभक्ष्यमित्यर्थः ॥ २०६ ॥

( ५ ) **नन्दनः** । तत्र कारणमाह अश्रीकमिति । अमीयत्र यज्ञे कर्मणि वा जुह्वति तत्रैतद्भोजनंसाधुनामश्रीकममङ्गलंप्रतीपंप्रतिकूलम् ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । अमीचत्वारअश्रोत्रियादयः हविर्यत्र जुव्हति तत्राश्लीलंदेवानांप्रतीपंविपरीतंभवति ॥ २०६ ॥

**मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ॥ केशकीटावपन्नं च पदास्पृष्टं च कामतः ॥ २०७ ॥**

( १ ) **मेधातिथिः** । यावन्मदादियोगएतेषांतावदभोज्यता । अन्येबाहुल्यंमन्यन्ते । बाहुल्येन यः क्षीबोभवति मद्यशौण्डस्तदन्नंन भोक्तव्यम् । एवंक्रोधप्रधानस्य भृशंकोपनस्य च प्रायेण चातुरस्य रोगमयव्याधेः । केशकीटैरवपन्नंसंसर्गेणदूषितम् । कीटाश्च केचिन्मृतादूषयन्ति न जीवन्तोयथामक्षिकागृहगोधाश्च । अन्ये तु जीवन्तएव । कीटग्रहणंक्षुद्रजन्तूनांक्रमिपतङ्गानामपिप्रदर्शनार्थम् । केशग्रहणंनखरोम्णांदूषिकादीनांमलानांसमाचारात् । पादेनबुद्धिपूर्वंकामकारेणस्पृष्टम् । प्रमादतस्तुनदोषः ॥ २०७ ॥

( २ ) **सर्वज्ञनारायणः** । मत्तोमद्यादिना क्रुद्धोभोक्तारंप्रति । आतुरोरोगी । केशकीटाभ्यामवपन्नं मिश्रम् ॥ २०७ ॥

( ३ ) **कुल्लूकः** । क्षीबक्रुद्धव्याधितानामन्नं तथा केशकीटसंसर्गदुष्टं पादेन चेच्छातःसंस्पृष्टमन्नंन भुञ्जीत ॥ २०७ ॥

( ४ ) **राघवानन्दः** । किंचमत्तेतिताच्छील्यपरं । कामतइति गुर्वाद्यनुज्ञया भुञ्जानोपि प्रक्षेपेण शोधयित्वा भुञ्जीतेति भावः ॥ २०७ ॥

( ५ ) **नन्दनः** । मत्तक्रुद्धातुराणामन्नमितिशेषः । कामतइतिविशेषणादकामतः पादस्पृष्टमनुज्ञातंगम्यते ॥ २०७ ॥

( ६ ) **रामचन्द्रः** । मत्तानां क्रुद्धानां रोगिणां एतेषां च पुनः केशकीटादिभिःसह अवपन्नं पक्वं । कामतः पदा स्पृष्टंअन्नं न भुञ्जीत । कदाचन ॥ २०७ ॥

**भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ॥ पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥ २०८ ॥**

( १ ) **मेधातिथिः** । भ्रूणहा ब्रह्मघस्तेनावेक्षितंनिपुणतोदृष्टम् । प्रदर्शनंचैतदन्येषामपि । पातकिना स्पृष्टस्य तु प्रतिषेधः स्नानविधानादेवसिद्धः । उदक्या रजस्वला तया स्पृष्टस्य प्रतिषेधोनावेक्षितस्य । ननु च तत्स्पर्शिनोऽपि यावत्स्नानंवक्ष्यत्यतस्तेनैवाशुचित्वे सिद्धे कुतस्तत्स्पृष्टस्य भोजनप्राप्तिः । उच्यते प्रक्षाल्यतदन्नंभोज्यमथवा भ्रूणहग्रहणंप्रदर्शनार्थमित्युक्तंतत्र कश्चिन्मन्येत दिवाकीर्तिश्लोकपठितानांप्रदर्शनार्थमिति । तथाचोदक्यावेक्षितस्यापि प्रतिषेधः स्यात् ।

एतेन शुना संस्पृष्टंव्याख्यातम । अतउक्तंपतितानामेवान्येषांप्रदर्शनार्थम् । तदत्रयुक्तःपतितसूतिकेत्यादीनाम् । उदक्या-ग्रहणंसूतिकायानिदर्शनार्थम् । पतत्रिणा पतत्री पक्षी सचक्रव्यादोगृध्रवायसादिःसमाचारान्नतु हंसादिः ॥ २०८ ॥

( २ ) **सर्वज्ञनारायणः** । भ्रूणहपदंमहापातकिपरम् । पतितेक्षितमिति याज्ञवल्क्येनोक्तत्वात् । संस्पृष्टंचापीतिच-काराद्दृष्टंच । पतत्रिणा अनिन्दितेनापि पक्षिणा अवलीढं चञ्च्वास्पृष्टम् । संस्पृष्टमेवचेति अवलीढंचेत्यपीति ॥ २०८ ॥

( ३ ) **कुल्लूकः** । भ्रूणघ्नेत्युपलक्षणाद्ब्रह्मघ्नेत्यादिपतितावेक्षितंरजस्वलया च स्पृष्टं पक्षिणा च काकादिना स्वादितं कुक्कुरेण च स्पृष्टमन्नं भुञ्जीत ॥ २०८ ॥

( ४ ) **राघवानन्दः** । किंचैतान्यतुष्टिकरपर्यन्तानि द्विषष्टिप्रकारान्यन्नानि न भुञ्जीतेत्याह भ्रूणघ्नेत्यादि । उदक्यया रजस्वलया । पत्रिणा काकादिना अवलीढं भक्षितम् ॥ २०८ ॥

( ५ ) **नन्दनः** । अन्नं भुञ्जीतेत्यनुवर्तते ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । भ्रूणघ्नावेक्षितंदष्टं पतत्रिणाअवलीढम् ॥ २०८ ॥

**गवा चान्नमुपाघ्रातं घुष्टान्नं च विशेषतः ॥ गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ॥ २०९ ॥**

( १ ) **मेधातिथिः** । घुष्टान्नंयद्दुद्घुष्यदीयतेऽनामन्त्रिताय कस्मैचिदर्थिनेमठसत्रभक्तादि विशेषानुद्देशेन यद्वान्यस्मै प्रतिश्रुत्यान्यस्मै दीयते । प्रतिपत्तिज्ञाने ह्ययंधातुः पठ्यते तदभावे बाधितंस्मरन्ति यज्ञविवाहादिष्वनामन्त्रितभोजनम् । अयंच गणसंघातस्तस्माद्भ्रातॄणांत्वविभक्तनांन गणव्यपदेशः । भ्रातॄणामविभक्तानामेकोधर्मः प्रवर्ततइति वचनादेकश्च धर्मस्तेषामातिथ्यादिक्रियैवेति नवमेदर्शितम् । ज्येष्ठएव तु गृह्णीयात्पित्र्यंधनमशेषतइति । तस्यच ग्रहणमवश्यकर्तव्येष्वधि-कारइति दर्शयति साधारणस्यापि । अन्यस्यातन्मध्यगतस्य प्रतिषेधः । गणिकावेश्या । जुगुप्सितंनिन्दितम् । विदुषा वेदार्थविदा भक्ष्यमपिबिसखल्यादि ॥ २०९ ॥

( २ ) **सर्वज्ञनारायणः** । उद्घुष्टान्नंकोभुङ्क्तेइत्युद्घुष्य दत्तम् । गवा अन्नमुपघ्रातं गन्धमुपादाय विमुक्तम् । गणान्न-मनेकेषामामान्नमेकत्रपक्वम् । गणिका वेश्या । विदुषांतद्दोषज्ञानां जुगुप्सितंस्वयमदृष्टदोषमपि ॥ २०९ ॥

( ३ ) **कुल्लूकः** । यदन्नंगवाघ्रातं घुष्टान्नंकोभोक्तेत्युपहूद्घुष्टान्नंसत्रादौ यद्दीयते । विशेषतइतिभूरिदोषतया प्रायश्चित्तगौ-रवार्थम् । गणान्नंशठब्राह्मणसंघान्नम् । गणिकावेश्यातस्याअन्नं शास्त्रविदा चयद्दृष्टमितिनिन्दितम् तच्च न भुञ्जीत ॥२०९

( ४ ) **राघवानन्दः** । घुष्टान्नं कोभोक्तास्तीत्याद्युद्घुष्ययद्दीयते । गणान्नं मठब्राह्मणसङ्घातान्नं । गणिकान्नं गणिका वेश्या । विदुषा अलौकिकादिज्ञेनजुगुप्सितं निन्दितम् ॥ २०९ ॥

( ५ ) **नन्दनः** । घुष्टंबहुभ्यः ख्यापितम् । विदुषांजुगुप्सितंनिषेधशास्त्राभावेऽपि वर्जनीयम् ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । कैश्चिदर्थिने कःकोभोक्तेतिउद्घुष्ययत्दत्तंतत्घुष्टान्नंयज्ञविवाहादौ अनिमन्त्रितभोक्तुरन्नम् ॥२०९॥

**स्तेनगायनयोश्चान्नं तक्ष्णोवार्धुषिकस्य च ॥ दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ २१० ॥**

( १ ) **मेधातिथिः** । गायनोयोगीतेन जीवति । अन्यस्यत्वपरान्तकादिगानंविहितमेव । कदर्यःकृपणः । बद्धनिगड योर्विशेषः । एकोवाङ्मात्रेणावरुद्धःअपरोरज्ज्वायसनिगडैर्यन्त्रितः । विशदस्यचेत्यन्ये पठन्ति । कष्टंचविशदमाचक्षते ॥२१०॥

( २ **सर्वज्ञनारायणः** । स्तेनोऽल्पस्तेयवृत्तिः । गायनोगानवृत्तिः । एवं तक्ष्णः काष्ठादितक्षणवृत्तेः । वार्धुषि-कस्य धनवर्धनेन जीवतः । दीक्षितस्य अग्नीषोमीयवपायागात्प्राक् । कदर्यस्य क्षपणस्य । बद्धस्य रज्ज्वादिना । निग-डस्य निगडबद्धस्य ॥ २१० ॥

( ३ ) **कुल्लूकः**। चौरगायनजीविनोस्तथा तक्षवृत्तिजीवनस्य वृद्ध्युपजीविनश्चान्नं भुञ्जीत। तथा यज्ञे दीक्षितस्य प्रागग्नीषोमीयात्। कदर्यस्य कृपणस्य निगडस्येतितृतीयार्थेषष्ठी। निगडेनबद्धस्य। गोविन्दराजस्तु बद्धशब्दस्य बन्धनैर्विना प्ययोनिगडैर्निगडितस्य दत्तायोनिगडस्येतिव्याख्यातवान्॥ २१०॥

( ४ ) **राघवानन्दः**। जात्या तक्ष्णः। वार्धुषिकस्य वृद्धिमात्रोपजीविनः। यज्ञे दीक्षितस्य प्रागग्नीषोमीयात्। कदर्यस्य कृपणस्य। आत्मनोधर्मकृत्यंच पुत्रदारांश्च वर्जयन्नित्याद्युक्तलक्षणस्य वा। बद्धस्य दण्डाद्यर्थमवरुद्धस्य। निगडस्य निगडैर्बद्धस्य। शरैः शातितपत्रवत्॥ २१०॥

( ५ ) **नन्दनः**। बद्धस्य रज्ज्वादिना। निगडस्य निगडवतो निगडितस्येति यावत्। निगडेनेतिसाधुःपाठः॥ २१०॥

( ६ ) **रामचन्द्रः**। दीक्षितस्य असंस्कृताग्निषोमीयपशोः। कदर्यस्य बद्धस्य वासमात्रेण विरुद्धस्य निगडादिना॥ २१०॥

**अभिशस्तस्य षण्ढस्य पुंश्चल्यादाम्भिकस्य च॥ शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च॥२११॥**

( १ ) **मेधातिथिः**। पुंश्चली यस्य कस्यचिन्मैथुनसंबन्धेन घटते। ननु च गणिकान्नंप्रतिषिद्धमेव नैतदेवम्। अन्या गणिकाऽन्या पुंश्चलीगणिका वेश्यावेशेनजीवतिपुंश्चलीत्विन्द्रियचपला दाम्भिकोबैडालव्रतिकादिःसोपधियोगधर्मचरणः। प्रायश्चित्तविशेषार्थंशूद्रोच्छिष्टंप्रतिषिध्यते सर्वस्यैवोच्छिष्टभोजनप्रतिषेधात्। अन्ये तु शूद्रोच्छिष्टंस्थालीस्थंभोज्यान्नंशूद्रभुक्तशिष्टमुच्छिष्टमुच्यतइत्याहुः। पाठान्तरंतु उच्छिष्टमगुरोस्तथेति। उच्छिष्टमुच्यते यत्परस्यस्पर्शनादशुद्धंभुक्तोज्झितंच। आत्मीये ह्यभुक्तोज्झितएकग्रासाशनमेव स्यात्। नचैषशिष्टानांसमाचारोयत्सकृदन्नंदत्तंभुक्त्वापुनराचम्यपात्रान्तरेगृहीतंभुज्यते। तथा नाद्यादन्नम्। तथान्तरेऽभ्युत्थानादिक्रियान्तरस्य प्रतिषेधः। अतआतृप्तेःप्रागाचमनात्पश्चात्स्पर्शनदोषः। सहभोजनंतु सत्यपि परस्य स्पर्शे पदार्थान्तरत्वान्नोच्छिष्टभोजनम्। अत्रपित्रा पुत्रादिभिःशिष्टंसहभुज्यते। तथा चापस्तम्बादयोदेशग्रहणात्प्रसङ्गेनानुपनीतेन सह भोजनंनिन्दन्ति। नोपनीतेन। अस्मिंस्तुपक्षे विजातीयैः सह भोजनप्रतिषेधः। व्यवधानान्तरमाश्रयणीयम्। भुक्तोज्झितंतु धात्वर्थयोगादुच्छिष्टमन्यदीयमपि॥ २११॥

( २ ) **सर्वज्ञनारायणः**। अभिशस्तस्य दोषवत्तया शङ्कितस्य। षण्ढस्य क्लीबस्य। पुंश्चल्याः स्वपतिव्यभिचारिण्याः। शुक्तमनम्लमम्लतांकालवशाद्गतम्। पर्युषितं स्वाभाविकरसगन्धादिविपरिवर्तनकालपर्यन्तंस्थितम्। एवंच शुक्तस्य पृथक्ग्रहणंदोषातिशयप्रदर्शनार्थं निगडस्येतिवत्। तथा शूद्रस्य यदन्नंतदभक्ष्यम्। उच्छिष्टंचसर्वेषाम्॥ २११॥

(३) **कुल्लूकः**। महापातकित्वेन संजातलोकविक्रोशस्य नपुंसकस्य नपुंश्चल्याव्यभिचारिण्याअगणिकायाअपि दाम्भिकस्य छद्मना धर्मचारिणोबैडालव्रतिकादेरन्नं भुञ्जीत। शुक्तंयत्स्वभावतोमधुरंदध्यादिसंपर्कवशेनोदकादीनांचाम्लादिभावंगतम्। पर्युषितंराज्यन्तरितं शूद्रस्यान्नं न भुञ्जीतेतिसंबन्धः।उच्छिष्टंच भुक्तावशिष्टान्नमविशेषात्कस्यापि न भुञ्जीत। गुरूच्छिष्टंच विहितत्वाद्भोज्यम्। गोविन्दराजस्तु। शूद्रस्योच्छिष्टंतद्भुक्तावशिष्टंच स्थालीस्थमपि न भुञ्जीतेत्याह॥२११॥

( ४ ) **राघवानन्दः**। महापातकित्वेनाभिशस्तस्य संजातलोकविक्रोशस्य। षण्ढस्य नपुंसकस्य। पुंश्चल्याः वेश्याभिन्नव्यभिचारिण्याः। शुक्तस्य स्वाभाविकमधुरत्वेपि कालवशादुदकादिरसवशाद्वा यदाम्लीभवति तदपि वर्ज्यं। पर्युषितं राज्यन्तरितं प्रतिप्रसवशास्त्रबोधिताद्यतिरिक्तं। शूद्रोच्छिष्टं शूद्रपक्वान्नाशनेतुदोषोक्तेःशूद्रभुक्तावशिष्टंस्थालीस्थमपि। ब्रह्मचर्यादिप्रकरणादौ यच्छुक्तादिनिषेधःसप्रायश्चित्तगौरवार्थः॥ २११॥

( ५ ) **नन्दनः** । कालातिक्रमेणरसान्तरंप्राप्तंशुक्तम् । पर्युषितमेकाहान्तरितम् । शूद्रस्योच्छिष्टंशूद्रेणभुक्तान्नंस्थाल्यादिस्थम् ॥ २११॥

( ६ ) **रामचन्द्रः** । योऽभिशस्तस्तस्य कलङ्कवतः पुंश्चली परपुरुषरता । स्वयमेव अथवा कालपरिपाकेन अम्लंभवति तत्शुक्तं । राम्यन्तरितं पर्युषितम् ॥ २११ ॥

**चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः॥ उग्रान्नंसूतिकान्नंच पर्याचान्तमनिर्दशम् ॥ २१२ ॥**

( १ ) **मेधातिथिः** । स्मृत्यन्तरे विशेषः श्रूयते । शल्यान्तर्तकजीविनः । मृगयुर्मृगव्याधः । आखेटकार्थंमांसविक्रयार्थंवा योमृगान्हन्ति । क्रूरअनृजुप्रकृतिःदुष्प्रसादउच्छिष्टभोजीनिषिद्धोच्छिष्टभोजी । उग्रोजातिविशेषः । राजेत्येतस्यवेदे प्रयोगोदृश्यते । उग्रोमध्यमशीरि वेति वचनस्यान्यःप्रतिषेधोऽस्तिदोषप्रदर्शनप्रकरणेचनश्रूयते । राजान्नंतेजआदत्तइत्यर्थवादाच्च प्रतिषेधः । सूतिकान्नंसूतिकामुद्दिश्य यत्कृतंतत्कुलीनैरपि तदनाद्यमनिर्दशदशाहानि यावत् । तेन यद्यपि क्षत्रियादीनांदशाहादूर्ध्वमाशौचंतथापि दशाहानि न भोज्यम् । पाठान्तरंसूतकान्नमिति । सूतकशब्देन च तद्वन्तःपुरुषालक्ष्यन्ते । येषांकुले सूतकंतेदशाहंन भोज्यान्नाइति । यस्मिन्पक्षे सर्वेषांदशाहंसूतकाशौचंतत्रायंप्रतिषेधः । यदातुमातापित्रोःसूतकंमातुर्वेतिपक्षस्तदायावदाशौचंनभोज्यम् । अनिर्दशग्रहणमाशौचनिवृत्त्युपलक्षणार्थम् । तेन क्षत्रियादीनांयस्य यावदाशौचकालःसतावत्कालमभोज्यान्नः । सूतकान्नमनिर्दशमितिपठितव्ये वृत्तानुरोधात्पर्याचान्तपदेनव्यवधानम् । अन्यैस्तुस्वतन्त्रमनिर्दशग्रहणंव्याख्यातम् । सूतकशब्देनाशौचकालोत्रोच्यते । अनिर्दशंगवादीनांपयःपर्याचान्तंशौचाचमनव्यपेतमर्धभुक्ते केनचित्कारणेन यद्याचामति तदापुनर्भुक्तोज्झितंनाशितव्यम् ॥ २१२ ॥

( २ ) **सर्वज्ञनारायणः** । चिकित्सकस्य भिषग्वृत्तेः । मृगयोर्मृगबन्धजीविनः । क्रूरस्य हिंसारुचेः । उच्छिष्टभोजिनः उच्छिष्टभोजनशीलस्य । उग्रः क्षत्रियात् शूद्रायां जातः । सूतिकान्नंसूतिकाभोजनार्थपक्वमन्नम् । पर्याचान्तं तत्पङ्क्तिभोजिना यत्राचमनंकृतम् । अनिर्दशं सूतकिना सूतकमध्ये दत्तम् ॥ २१२ ॥

( ३ ) **कुल्लूकः** । चिकित्साजीविनः । मृगयोर्मांसविक्रयार्थंमृगादिपशुहन्तुः । क्रूरस्यानृजुप्रकृतेः । निषिद्धोच्छिष्टभोक्तुरन्नंन भुञ्जीत । उग्रादारुणकर्मा तस्यान्नम् । गोविन्दराजोमन्त्रार्थामुग्रंराजानमुक्तवान् । मनुवृत्तौ च शूद्रायां क्षत्रियोत्पन्नमप्यधात् । भेदोक्तेर्याज्ञवल्कीयेनोग्रोराजेतिवावदत् । आश्चर्यमिदमेतस्यस्वकीयद्वदिभूषणम् ॥ सूतिकान्नंसूतिकामुद्दिश्य यत्क्रियतेतदन्नंतत्कुलजैरपि न भोक्तव्यम् । एकपङ्क्तिस्थानन्यानवमन्य यत्रान्ने भुज्यमाने केनचिदाचमनंक्रियते तत्पर्याचान्तम् । अनिर्दशंसूतिकान्नंवक्ष्यमाणत्वान्न भुञ्जीत ॥ २१२ ॥

( ४ ) **राघवानन्दः** । किंचचिकित्सकस्य भिषजः । मृगयोर्व्याधस्यजातितःकर्मतोवा । उच्छिष्टभोजिनः निषिद्धोच्छिष्टभोजिनोन तु गुर्वाद्युच्छिष्टभोजिनः ताच्छील्यार्थोवा । उग्रान्नंउग्रोजातिविशेषोदारुणकर्मावा । सूतिकान्नं सूतिकामुद्दिश्य यत्क्रियतेतदन्नं तत्कुलजैरपि नभोक्तव्यम् । एकपङ्क्तिस्थानवलम्बिनामन्यस्मिन्भुज्यमाने तंपरित्यज्यकेनाप्याचमनंक्रियते तत्पर्याचान्तम् । अनिर्दशं सूतकाद्याशौचान्तर्गतम् ॥ २१२ ॥

( ५ ) **नन्दनः** । उग्रोवैश्येन शूद्रायांजातः । पर्याचान्तंप्रतिदानपरम्परयाग्रामवारम् । अनिर्दशंसूतिकान्नमित्यन्वयः ॥ २१२ ॥

( ६ ) **रामचन्द्रः** । क्रूरस्य हिंसारुचेः । उग्रान्नं क्षत्रियाच्छूद्रायामुत्पन्नउग्रसंज्ञस्तस्यान्नं । यद्वा वाक्काय-व्यापारेणोद्वेजकउग्रः । पङ्क्तिभोजने यत्र एकेनाचमनंकृतं तत्पर्याचान्तं । अनिर्दशं अनतिक्रान्तदशाहं अनिर्गताशौचम् ॥ २१२ ॥

## अनर्चितंवृथामांसमवीरायाश्च योषितः ॥ द्विषदन्नंनगर्यन्नंपतितान्नमवक्षुतम् ॥ २१३ ॥

( १ ) **मेधातिथिः** । अर्चार्हस्य यदवज्ञया दीयते तदनर्चितमननुसुहृदादेः । वृथामांसंदेवाद्यर्चनशिष्टंयन्नभवत्यात्मार्थंयत्साधितम् । अवीरा स्त्री यस्या न भर्ता नापिपुत्रः । द्विषञ्छत्रुः । नगरीनगरस्वाम्यराजापि । अवक्षुतमुपरियस्मिन्क्षवथुःकृतः ॥ २१३

( २ ) **सर्वज्ञनारायणः** । अनर्चितंसंमानेनादत्तम् । वृथामांसं पशुबन्धव्यतिरेकेण मांसम् । अवीरायाः पुत्रपतिहीनायाः । द्विषतः शत्रोः । नगरी नगरवान् नगराधिपतिस्तदन्नम् । पतितः कृतपापोकृतप्रायश्चित्त. । अवक्षुतं यदुपरिक्षुतंकृतम् ॥ २१३ ॥

( ३ ) **कुल्लूकः** । अर्चार्हस्य यदवज्ञयादीयते । वृथामांसंदेवतादिमुद्दिश्ययन्नकृतं । अवीरायाःपतिपुत्ररहितायाः । शत्रुनगरपतितानांच उपरिकृतक्षुतंचान्नं भुञ्जीत ॥ २१३ ॥

( ४ ) **राघवानन्दः** । योग्येष्ववज्ञयादत्तमनर्चितं । वृथामांसं देवपित्राद्युद्देशरहितम् । अवीरायाः पतिपुत्ररहितायाः योषितोरूपयौवनशालिन्याःअन्नमिति शेषः । नगर्यन्नं नगरस्थस्यान्नं । कर्मतोजातितोवा पतितस्यान्नं । अवक्षुतं यदुपरिक्षुतंकृतम् ॥ २१३ ॥

( ५ ) **नन्दनः** । अनर्चितमवज्ञया दत्तम् । वृथामांसंआत्मार्थसंस्कृतंमांसम् । अवीरायाः पतिपुत्रहीनायाः नगर्यन्नं देशसंबन्धेनायमन्नस्यनिषेधः । यस्योपरिक्षुतंतदवक्षुतं ॥ २१३ ॥

( ६ ) **रामचन्द्रः** । अहरहर्यदवज्ञया दत्तंतदनर्चितम् । अविहितफलसाधनमांसंतद्वृथामांसम् । च पुनः अवीराया योषितः अवीरा पतिपुत्ररहिता । द्विषतः अन्नं । नगराधिपतेस्तस्य राज्ञोन्नं । पतितान्नंच महापातकिनोन्नम् । अवक्षुतंयस्याज्ञातस्य उपरिक्षुतं तदवक्षुतम् ॥ २१३ ॥

## पिशुनानृतिनोश्चान्नंक्रतुविक्रयिणस्तथा ॥ शैलूषतुन्नवायान्नंकृतघ्नस्यान्नमेव च ॥ २१४ ॥

( १ ) **मेधातिथिः** । पिशुनोयोविश्रब्धमर्थंकथितंभिनत्तिपरच्छिद्रवादीयश्चपरोक्षम् । अनृती कृतकौटसाक्ष्यः । क्रतुर्यज्ञस्तंकृत्वाविक्रीणीतेक्रतुफलंमदीयंतवास्त्वितिमूल्येन ददाति यद्यपि परमार्थतः क्रतोर्विक्रयोनास्ति तथापि यस्यैवंविषयात्रान्यविप्रलम्भेन वा प्रवृत्तिस्तस्य प्रतिषेधः । शैलूषोनटः भार्यापण्यइत्यपरे । तुन्नवायः सौचिकः । कृतघ्नःकृतमुपकारंयोनाशयति । प्रत्युतोपकर्तुरपकारे वर्तते नचशक्तःसन्प्रत्युपकारेऽपि ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । पिशुनः परगुणासहनः । क्रतुविक्रयिकः परगतंफलमुद्दिश्य क्रतुकारी । शैलूषोनटवृत्तिः । तुन्नवायः सूचीसीवनवृत्तिः ॥ २१४ ॥

( ३ ) **कुल्लूकः** । पिशुनःपरोक्षे परापवादभाषणपरः अनृतीत्यतिशयेनानृतवादीकूटसाक्ष्यादिः । क्रतुविक्रयिकः

---

( २१३ ) नगर्यन्नम्=कदर्यन्न ( ट, ठ, त )

मदीययागस्य फलंतव भवन्वित्यभिधाय योधनंगृह्णाति । शैलूषोनटः । तुन्नवायःसौचिकः । कृतघ्नोयःकृतोपकारस्याप-कारे प्रवतते तस्यान्नंन भुञ्जीत ॥ २१४ ॥

( ४ ) **राघवानन्दः** । विरुद्धमर्थंकथयतीति पिशुनः । अनृती कूटसाक्षी । मत्क्रतुफलंतवैवेतिवदन्धनंगृह्णातियः सक्रतुविक्रयीतस्य । शैलूषोनटः भार्यापण्यः । सौचिकस्तन्तुवायः कर्मतोज्ञातितोवा । कृतोपकारिणि अपकारी कृतघ्नः ॥ २१४ ॥

( ५ ) **नन्दनः** । परेभ्योभार्यांदत्त्वा योजीवति सशैलूषः । नटइत्येके ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । पिशुनः सूचकः । अनृतीपरछिद्रवादी । च पुनः क्रतुविक्रयी यागविक्रयी यागफलविक्र-यी । शैलूषोनटवृत्तिः । तुन्नवायः सौचिकः च पुनः कृतघ्नस्य अन्नमेव ॥ २१४ ॥

**कर्मारस्य निषादस्य रङ्गावतारकस्य च ॥ सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥ २१५ ॥**

( १ ) **मेधातिथिः** । कर्मारोऽयस्कारः । निषादोदशमे वक्ष्यते । रङ्गावतरकोनटगायनकेभ्योऽन्योमल्लादिः । अथ-वाप्रतिरङ्गमुपतिष्ठते कुतूहली । वेणुवादित्रजीवितः । शस्त्रविक्रयी कृतस्य खड्गादेरकृतस्य वायसोविक्रेता ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । कर्मारोलोहकारवृत्तिः । निषादोजालवृत्तिः । रङ्गावतारकोवाद्यादिप्रदर्शनवृत्तिः । वैणो-वेणुपिटकादिकरणवृत्तिः । शस्त्रं खड्गादि ॥ २१५ ॥

( ३ ) **कुल्लूकः** । कर्मारस्य लोहकारस्य निषादस्य दशमाध्यायोक्तस्य । नटगायनव्यतिरिक्तस्य रङ्गावतरणजीवि-नः सुवर्णकारस्य वेणोर्भेदनेन योजीवति बुरुडइतिविश्वरुपः । शस्त्रंलोहः तद्विक्रयिणश्चान्नंन भुञ्जीत ॥ २१५ ॥

( ४ ) **राघवानन्दः** । कर्मारोऽयस्कारः । रङ्गावतारकोदशमेवक्ष्यमाणः । वेणः वाद्योपजीवी । बरुडःलोहादिनिर्मि-तशस्त्रविक्रयी ॥ २१५ ॥

( ५ ) **नन्दनः** । कर्मारोऽयस्कारः । वैदेहकादम्बष्ठायामुत्पन्नोवेनः ॥ २१५ ॥

( ६ ) **रामचन्द्रः** । कर्मारस्य लोहकारस्य । च पुनः रङ्गावतरकस्य वाद्योपजीविनः । वैण्यस्य वेणुछेदनजी-विनः वेणुवादनजीविनोवा ॥ २१५ ॥

**श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ॥ रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥२१६॥**

( १ ) **मेधातिथिः** । आखेटकाद्यर्थंयेशुनोबिभ्रति ते श्ववन्तः । शौण्डिकामद्यव्यसनिनस्तत्पण्यजीविनोवा । चैलंवस्त्रंतन्निर्णेक्ति प्रक्षालय ति । कारुकनामधेयमेतत् । रजकोवाससांनीलादिरागकारकः । नृशंसोनॄन्मनुष्याञ्छंसति स्तौति योलोके बन्दीतिप्रसिद्धः । अथवा निर्दयोनृशंसः । उपपतिर्जारोभार्यायागृहेजारोवर्तते ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । श्ववतां श्वपोषकाणाम् । शौण्डिकानां मद्यसंधायकानाम् । चैलनिर्णेजकस्य वस्त्रक्षाल-नवृत्तेः । रञ्जकस्य वस्त्ररञ्जनकर्तुः । नृशंसस्य वृत्त्यर्थंनरस्तोत्रकर्तुः । यस्य गृहे भार्यायामुपपतिः ॥ २१६ ॥

( ३ ) **कुल्लूकः** । आखेटकाद्यर्थंशुनःपोषकाणां । मद्यविक्रयिणां वस्त्रधावकस्य कुसुम्भादिना वस्त्ररागकृतः निर्द-यस्य यस्य चोपपतिर्गृहे जारश्च यस्याज्ञानतोगृहे स्थितस्तस्य गेहे नाद्यात् ॥ २१६ ॥

( ४ ) **राघवानन्दः** । श्ववतां शुनःपोषकाणां । चैलनिर्णेजकस्य वृत्त्यर्थंमलिनवस्त्रक्षालकस्य । रञ्जकस्य वस्त्ररागकृतः । नृशंसस्य निर्दयस्य यस्य चोपपतिर्गृहेतस्याप्यन्नंनाद्यात् । सततंदुष्टभार्यत्वात् ॥ २१६ ॥

( ५ ) **नन्दनः** । श्ववतांश्वपोषकारिणाम् । शौण्डिकानांसुराविक्रयिणाम् । चैलनिर्णेजकस्यवस्त्रशोधकस्य । रञ्जकस्य वस्त्रादीनांनीलादिरागकारस्य । नृशंसस्यनिर्दयस्य । यस्यगृहउपपतिर्जारोवर्तते तस्य चान्नंन भुञ्जीतेति ॥ २१६॥

( ६ ) **रामचन्द्रः** । श्वपचां श्वपोषकाणां । श्ववतांवेति पाठः श्ववतां सारमेयवतां मृगयार्थम् । शौण्डिकानां मद्यकर्तॄणां । च पुनः चैलनिर्णेजकस्य वस्त्रप्रक्षालकस्य । रञ्जकस्य वस्त्रादीनांनीलादिरङ्गकारस्य । नृशंसस्य वृत्त्यर्थंनरस्तुतिकर्तुः । च पुनः यस्यगृहेउपपति र्जारः ॥ २१६ ॥

**मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ॥ अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥२१७॥**

( १ ) **मेधातिथिः** । पूर्वोऽविदितभार्याजारः । अयंतु विदित्वा क्षमते न भार्याया नियहंकरोति । नापितस्यअविदितान्यगृहजारस्यभोज्यान्नंनैव । स्त्रीजिताः । एषांभार्यैवगृहेकर्त्रीहर्त्रीचस्वयंपरिजनस्यच नेशस्तेन सर्वत्र तद्वशवर्तिनः । प्रेतान्नंमरणाशौचेतत्कुलीनाअभोज्यान्नाः । अनिर्दशग्रहणंकालोपलक्षणार्थम् । यदाऽनिर्दशग्रहणंपूर्वत्रस्वतन्त्रमाशौचसंबन्धिनामविशेषेणान्नंप्रतिषेधतितदिह प्रेतान्नंकृतंयस्याप्याशौचंनास्ति सुहृद्बान्धवादेः कारुण्याच्चतुर्थीश्राद्धादिप्रवृत्तस्य यदन्नंतन्न भोज्यम् । दशाहिकंनावमिकंचतुर्थीश्राद्धमष्टमीत्यादिरामायणेवर्णितमन्यैरपि गृह्यकारैः । अतुष्टिकरंयस्मिन्भुज्यमाने चित्ततुष्टिर्नभवेत् ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । मृष्यन्ति न तान्भञ्ज्यन्तीत्यर्थः । प्रेतान्नं शवान्नमनिर्दशमनिर्गताशौचम् । अतुष्टिकरंसविचिकित्सया ॥ २१७ ॥

( ३ ) **कुल्लूकः** । गृहइत्यनुषज्यते गेहे ज्ञातंभार्याजारंये सहन्ते तेषामन्नंन भुञ्जीत । तेन गृहान्निःसारितायाजारसहनएषदोषः । तथा सर्वकर्मसु स्त्रीपरतन्त्राणां । अनिर्गताशौचंच सूतकान्नं । अतुष्टिकरमेव च न भुञ्जीत ॥ २१७ ॥

( ४ ) **राघवानन्दः** । मृष्यन्ति ज्ञात्वोपपतिंतस्करइति कृत्वा अथवा गृहसत्वासत्वभेदेन व्यवस्था । अनिर्दशं मृतकान्नं दशाहाद्यन्तरे दत्तं । अतुष्टिकरं तथैव प्रयच्छति यथा तोषोन जायते तस्यान्नम् ॥ २१७ ॥

( ५ ) **नन्दनः** । येस्वभार्यायांवर्तमानमुपपतिं मृष्यन्ति सहन्ते तेषांचान्नम् । सर्वशः सर्वावस्थायाम् । प्रेतान्नंशावाशौचवतामन्नम् । अतुष्टिकरममनः सन्तोषकरम् ॥ २१७ ॥

( ६ ) **रामचन्द्रः** । येउपपतिंजारंमृष्यन्ति न त्यजन्ति विदित्वादमतः । अनिर्दशं अनिर्गताशौचं । च पुनः प्रेतान्नं एकादशाहस्यान्नम् । च पुनः अतुष्टिकरमेव ॥ २१७ ॥

**राजान्नं तेजआदत्ते शूद्रान्नं ब्रह्मवर्चसम् ॥ आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः ॥ २१८ ॥**

( १ ) **मेधातिथिः** । अथेदानीमतिक्रमफलंदर्शयति । राजान्नभोजिनस्तेजोनाशः । एवंसर्वत्रद्रष्टव्यम् । सुवर्णकारादयःशब्दाःशिल्पिविशेषजीविनांवाचकाः । येसुवर्णंजीविकार्थंघटयन्ति सुवर्णकाराउच्यन्ते । एवंरजकादिष्वपिद्रष्टव्यम् । चर्मावकृत्तंछिन्दति चर्मावकर्तिनः । तेनकर्मणायेजीवन्ति तेषामेषारूढिः । इह येषांपूर्वत्र प्रतिषेधोनास्ति केवलंदोषः श्रूयते तेषांततएव प्रतिषेधोऽनुमेयः ॥ २१८ ॥

( २ ) **सर्वज्ञनारायणः** । इदानीं शूद्रादीनां प्रक्रान्तानामप्रक्रान्तस्यच राज्ञोऽन्नाशने दृष्टंफलमाहराजान्नमिति । तेजस्तपोबलं ब्रह्मवर्चसं वेदबलम् । चर्मावकर्तिनश्चर्मकारवृत्तेः ॥ २१८ ॥

( ३ ) **कुल्लूकः** । राज्ञान्नंतेजोनाशयति इतएव दोषदर्शनात्तदन्नभक्षणनिषेधःकल्प्यते । एवमुत्तरत्रापि पूर्वमनि-

षिद्धस्य दोषदर्शनादेव निषेधकल्पनम्। नाद्याच्छूद्रस्य पक्कान्नमितिनिषेधिष्यति तदतिक्रमणफलकथनमिदम्। शूद्रस्य पक्कान्नमध्ययनादिनिमित्ततेजोनाशयति। सुवर्णकारस्यान्नमायुः। चर्मकारान्नंख्यातिंनाशयति ॥ २१८ ॥

( ४ ) **राघवानन्दः**। एतेषु फलवादेन निषेधोन्मुखव्यावर्तयति राजेतिचतुर्भिः। अत्र येषांराजादीनामन्नभक्षणनिषेधोनोक्तस्तेषामपि फलवादेन निषेधःकल्पनीयः। तेजःप्रागल्भ्यं सौन्दर्यंवा। ब्रह्मवर्चसं वृत्तस्वाध्यायजंतेजः। चर्मावकर्तिनःचर्मकारस्य यशआदत्तइत्यनुषङ्गः ॥ २१८ ॥

( ५ ) **नन्दनः**। अत्रोक्तोपादानंनिन्दातिशयार्थम्। अनुक्तोपादानंवर्जनार्थम् ॥ २१८ ॥

( ६ ) **रामचन्द्रः**। एतेषांअन्नभक्षणे दोषमाह। राजान्नं तेजः तपोबलं आदत्ते ॥ २१८ ॥

**कारुकान्नं प्रजांहन्ति बलं निर्णेजकस्य च॥ गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥२१९॥**

( १ ) **मेधातिथिः**। कारुकाः सूपकारानातिगर्हितकर्माणः। एषएतेषांशिल्पिभ्योभेदः। प्रजायाविघातोऽनुत्पत्तिः ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः**। कारुकः सूपकारादिवृत्तिः। बलंदेहबलं। लोकेभ्यः स्वर्गात्परिकृन्तति छिनत्ति ततः पातयतीत्यर्थः ॥२१९ ॥

( ३ ) **कुल्लूकः**। कारुकस्य सूपकारादेरन्नंप्रजामपत्यंनिहन्ति। चर्मकारादेःकारुकत्वेऽपि गोबलीवर्दन्यायेन पृथङ्निर्देशः। निर्णेजकस्यान्नंबलंहन्ति। गणगणिकयोरन्नंच कर्मान्तरार्जितेभ्यःस्वर्गादिलोकेभ्यआच्छिनत्ति ॥ २१९॥

( ४ ) **राघवानन्दः**। कारुकः शिल्पी। निर्णेजकोवस्त्रधावकः। लोकेभ्यस्तज्जन्मनि तद्भक्षणादूर्ध्वंपुण्यसाध्यस्वर्गादिभ्यःतत्फलंनभवतीत्यर्थोन्यथानवस्थितिः ॥ २१९ ॥

( ५ ) **नन्दनः**। कारुकान्नंकर्मकारान्नम्। लोकेभ्यःस्वर्गादिभ्यः ॥ २१९ ॥

( ६ ) **रामचन्द्रः**। कारुकान्नंसूपकारान्नंप्रजांहन्ति। असंतोषकरमेव। च पुनः लोकेभ्यः स्वर्गादि। लोकेभ्यः परिकृन्तति ॥ २१९ ॥

**पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्॥ विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणोमलम्॥ २२० ॥**

( १ ) **मेधातिथिः**। पूयतुल्यंचिकित्सकस्यान्नंभोजनम्। इन्द्रियंशुक्रम्। विष्ठामलमेकमेव ॥ २२० ॥

( २ ) **सर्वज्ञनारायणः**। इन्द्रियं शुक्रम्। मलंगात्रमलम् ॥ २२० ॥

( ३ ) **कुल्लूकः**। चिकित्सकस्यान्नंपूयंपूयभक्षणसमदोषम्। एवंपुंश्चल्याअन्नंइन्द्रियंशुक्रम्। वार्धुषिकस्यान्नंपुरीषम्। लोहविक्रयिणोऽन्नंविष्ठाव्यतिरिक्तश्लेष्मादि। गोविन्दराजस्तु। चिकित्सकान्नभक्षणेन तथा विधायांजातौ जायते यत्र पूयभुग्भवतीत्याह ॥ २२० ॥

( ४ ) **राघवानन्दः**। इन्द्रियं तन्निसृतंरेतः। इन्द्रियं पुंस्त्वंनिकृन्ततीति वा। मलं विष्ठा। चिकित्सकान्नादनेन तथाविधायांजातावुत्पद्यते यत्र पूयभुग्भवति गोविन्दराजः। पूयादिभक्षणप्रायश्चित्तार्थमेवेतितुतत्त्वम् ॥ २२० ॥

( ५ ) **नन्दनः**। पूयंपूयवदभक्ष्यमित्यर्थः। एवमुत्तरत्रापि। इन्द्रियंरेतः ॥ २२० ॥

( ६ ) **रामचन्द्रः**। पूयतुल्यं। पुंश्चल्याअन्नं इन्द्रियं गुह्येन्द्रियसमं शुक्रसमंवा वार्धुषिकस्य परनिन्दकः आत्मप्रशंसी तस्यान्नं विष्ठासमम् ॥ २२० ॥

यएतेन्ये त्वभोज्यान्नाः क्रमशः परिकीर्तिताः ॥ तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥ २२१ ॥

[ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतं । वैश्यान्नमन्नमित्याहुः शूद्रस्य रुधिरं स्मृतम् ॥१॥[1] ]

( १ ) मेधातिथिः । प्रतिपदनिर्दिष्टेभ्योयेऽन्येप्यभोज्यान्नाअस्मिन्प्रकरणे पठितास्तेषांयदन्नंतत्त्वगस्थिरोमादि । यस्तदीयायास्त्वचोभुक्तायादोषः सएवान्नस्यापि ॥ २२१ ॥

( २ ) सर्वज्ञनारायणः । यएतेक्रमशः कीर्तिताः येचान्येस्मृत्यन्तरसिद्धाः । अत्र पूयत्वाद्यभिधानं तद्भक्षणे कृतप्रायश्चित्तार्थम् । तथाच वक्ष्यमाणप्रायश्चित्तेन तस्य विकल्पः ॥ २२१ ॥

( ३ ) कुल्लूकः । प्रतिपदनिर्दिष्टेभ्योयेऽन्ये क्रमेणाभोज्यान्नाअस्मिन्प्रकरणे पठितास्तेषांयदन्नंत्वगस्थिरोमाणि यास्तदीयास्त्वचःकीकशस्य रोम्णांच भुक्तानांयोदोषः सएव तदन्नस्यापि भुक्तस्य बोद्धव्यः ॥ २२१ ॥

( ६ ) रामचन्द्रः । एते अन्ये त्वभोज्यान्नाः । मया भृगुणावा मनुनावा पक्षान्तरम् ॥ २२१ ॥

भुक्त्वाऽतोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ॥ मत्या भुक्त्वाचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥२२२॥

( १ ) मेधातिथिः । त्र्यहंक्षपणमभोजनं । अमत्याबुद्धिपूर्वम् । बुद्धिपूर्वे तु कृच्छ्रंचरेत् । तच्चकृच्छ्रंस्मृत्यन्तरैकवाक्यत्वात्तप्तकृच्छ्रम् । तत्ररेतोविण्मूत्रप्राशनेतप्तकृच्छ्रमाम्नातम् । मत्यापानेपयोघृतमुदकंवायुःप्रतित्र्यहंतप्तातिकृच्छ्रः । ततोऽस्यसंस्कारइति । अप्रकरणेच प्रायश्चित्तवचनंदोषातिशयदर्शनार्थम् । अन्यतमस्येतिषष्ठीनिर्देशात्परिग्रहदुष्टएवेदंप्रायश्चित्तंमन्यते न कालत्वभावसंसर्गदुष्टे । शुक्तपर्युषितादौ चतुर्विधंह्यभोज्यम् । कालदुष्टंशुक्तपर्युषितादि । संसर्गदुष्टंमद्यानुगतादि । स्वभावदुष्टंलशुनादि । परिग्रहदुष्टंप्रकृताभोज्यान्नानांयत् । अत्रोच्यते । सत्यम् चतुर्विधमभोज्यंभवति । षष्ठीनिर्देशोऽप्यस्ति । किंतु यदिशुक्तादेर्नेदंप्रायश्चित्तंस्यात्तदिह प्रकरणे तेषामुपादानमनर्थकमेवापद्येत । पञ्चमे हि तयोः प्रतिषेधोनास्ति तस्मादिह प्रायश्चित्तार्थमेवैवमादीनामुपादानम् । तत्रतर्हिकिमर्थंतत्रैववक्ष्यामः । यद्यपिगर्हितानाद्ययोर्जग्धः अभोज्यानांतुभुक्त्वान्नमितिच तत्सर्वमेकादशेविभागतोनिर्णेष्यते ॥ २२२ ॥

( २ ) सर्वज्ञनारायणः । अतएषुमध्ये क्षपणमुपवासेन कृच्छ्रं प्राजापत्यम् । अत्रच स्मृत्यन्तरदर्शनेन गुरुत्वलघुत्वावधारणेन यथोक्तप्रायश्चित्तद्वयंयथायथं द्वैगुण्यत्रैगुण्यादिना व्यवस्थाप्यम् । रेतोविण्मूत्रं नरस्य ॥ २२२ ॥

( ३ ) कुल्लूकः । एषांमध्येऽन्यतमसंबन्धान्नमज्ञानतोभुक्त्वा त्र्यहमुपवासः । ज्ञानतस्तु कृच्छ्रम् । एवंरेतोविण्मूत्रभोजनेऽपि एतच्चान्यतमस्येतिषष्ठीनिर्देशान्मत्तादिसंबन्धिनःपरिग्रहदुष्टान्नस्यैव प्रायश्चित्तं न संसर्गदुष्टस्य केशकीटावपन्नादेः । नाऽपिकालदुष्टस्य पर्युषितान्नादेः नाऽपि निमित्तदुष्टस्य घुष्टादेः । एकप्रकरणोपदेशश्चैषांलातकत्वज्ञापनार्थम् । प्रायश्चित्तंचैतेष्वेकादशे वक्ष्यति । यदितु सर्वेष्वेवंप्रायश्चित्तंस्यात्तदा भुक्त्वातोन्यतमस्यान्नंदुष्टमित्यभ्यधास्यत् । न त्वन्यतमस्य तु भुक्तेति ॥ तस्मादेकप्रकरणाद्यन्मेधातिथिरभ्यधात् । प्रायश्चित्तमिदंयुक्तंशुक्तादौ तदसुन्दरम् ॥ अप्रकरणे च प्रायश्चित्तस्याभिधानंलाघवार्थंतत्र क्रियमाणे मत्तादिग्रहणमपि कर्तव्यंस्यात् ॥ २२ ॥

---

[1] ( ड, ढ )

( ४ ) **राघवानन्दः** । अतएव प्रायश्चित्तभेदमाह भुक्केति । भुक्कातोन्यतमस्यअमत्या अज्ञानेन क्षपणमुपोषणं । कृच्छ्रंवक्ष्यमाणलक्षणम् ॥ २२२ ॥

( ५ ) **नन्दनः** । एषामन्यतमस्य । अमत्याऽज्ञानेन । क्षपणमभोजनं तुल्यप्रायश्चित्तत्वात् । तदुक्तं रेतोविण्मूत्रमेवेति । अत्रप्रकरणे प्रायश्चित्तोपदेशोनिन्दातिशयार्थः ॥ २२२ ॥

( ६ ) **रामचन्द्रः** । अन्यतमस्यान्नं अनुक्तस्यान्नं अमत्या अज्ञानेन भुक्त्वा त्र्यहं त्रिदिनपर्यन्तं क्षपणं अन्नपरित्यागः उपोषणमित्यर्थः मत्या ज्ञानेन चेत् भुक्त्वा कृच्छ्रसंज्ञंव्रतं चरेत् कुर्यात् । च पुनः रेतोविण्मूत्रमेव मत्या भुक्त्वाकृच्छ्रंचरेत् ॥ २२२ ॥

**नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनोद्विजः ॥ आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥२२३॥**

**[ चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा तु मुक्तयोः ॥ अमुक्तयोरगतयोरद्याद्दृष्ट्वा परेहनि ॥ १ ॥ + ]**

( १ ) **मेधातिथिः** अविशेषेण शूद्रान्नंप्रतिषिद्धंतस्येदानींविशिष्टविषयतोच्यते । अश्राद्धिनः क्व पुनः शूद्रान्नंप्रतिषिद्धम् शूद्रस्योच्छिष्टमेवचेत्यत्र । ननु च तत्रशूद्रस्योच्छिष्टंप्रतिषिद्धंनान्यदन्नम् । नेतिब्रूमः । एवंतत्रसंबन्धः । शूद्रस्यान्नंनाद्यादुच्छिष्टमन्यस्यापि । यत्तु प्राग्व्याख्यातंतत्पूर्वेषांदर्शनमित्यस्माभिरपिसंवर्णितम् । अश्राद्धिनः श्राद्धशब्देन पाकयज्ञादिक्रिया शूद्रस्य विहिता लक्ष्यते ततस्तत्क्रियाननुष्ठायिनः । सच्छूद्रादन्यस्य यत्पक्वमन्नंतन्नाद्यात् । अश्रद्धिनइतिवा पाठः ।अश्रद्धावानित्यर्थः । तथाचोत्तरश्लोकेश्रद्धायाः प्राधान्यमेवाह । आमंशुष्कंधान्यंतण्डुलादितथैकरात्रिकमेकस्मिन्नहनिपर्याप्तंनबहु ॥ २२३ ॥

( २ ) **सर्वज्ञनारायणः** । अश्राद्धिनः श्रद्धारहितस्य एकरात्रिकमेकाहपर्याप्तम् । एवं श्राद्धिनः पायसादिपक्वमाममपि बहुदिवसवृत्तियोग्यंग्राह्यमितिलभ्यते । केचित्तु श्राद्धकर्मशीलोत्र श्राद्धीत्याहुः । तत्राग्रे श्रद्धास्तुतिरसंगतिरिति हेयमेवैतत् ॥ २२३ ॥

( ३ ) **कुल्लूकः** । अविशेषेण शूद्रान्नंप्रतिषिद्धंतस्येदानींविशिष्टविषयतोच्यते अश्राद्धिनःश्राद्धादिपञ्चयज्ञशून्यस्य शूद्रस्य शास्त्रविद्द्विजःपक्वान्नं न भुञ्जीत किंत्वन्नान्तराभावे सत्येकरात्रनिर्वाहोचितमाममेवान्नमस्माद्गृह्णीयात् नतुपक्वान्नम् ॥ २२३ ॥

( ४ ) **राघवानन्दः** । शूद्रोच्छिष्टंनिषिद्धमिति चेदन्यदन्नमश्नीयात्तत्राह नाद्यादिति । अश्राद्धिनः श्राद्धं पञ्चयज्ञाः तच्छून्यस्य अवृत्तौ अन्नान्तराभावेसति तेनाश्राद्धिनोघृतपक्वादिकंग्राह्यम् । तदुक्तं ॥ कन्दुपक्वं स्नेहपक्वं पायसंदधिसक्तवः । एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीदिति ॥ २२३ ॥

( ५ ) **नन्दनः** । अश्रद्धिनः श्रद्धाहीनस्य । अश्रद्धिनइतिविशेषणाच्छ्रद्धायुक्तस्य पक्वान्नमनुज्ञातमितिगम्यते । आमस्याभ्यनुज्ञानात्पूर्वोक्तेषु मत्तक्रुद्धादिष्ववचनात्पक्वामयोरुभयोरपि वर्जनीयत्वम् ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । विद्वान् शूद्रस्य पक्वान्नंनाद्यात् । अश्राद्धिनः श्रद्धाहीनस्य यद्वानित्यश्राद्धरहितस्यवा । अस्मात् शूद्रात् आममेव आमान्नं अवृत्तौभोजनाभावे एकरात्रिकं एकदिनपर्याप्तम् ॥ २२३ ॥

---

+ ( ख )

( २२३ ) विद्वानश्राद्धिन=विद्वानश्रद्धिनः ( नन्दनः )

[ रामचन्द्रः । चन्द्रेति । चन्द्रसूर्ययोः मुक्तयोः स्नात्वा अद्यात् । अमुक्तयोः परेहनि अद्यात् ]

**श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ॥ मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥२२४॥**

( १ ) **मेधातिथिः** । योब्राह्मणः सर्वगुणोपेतः श्रोत्रियग्रहणस्य प्रदर्शनार्थत्वात् । श्रोत्रियोविद्वान्विहितधर्मानुष्ठानपरः । किंतु कदर्यःकृपणोमित्रंज्ञातिमतिथिमर्थिनंनाभिन्दतिन कस्मै किंचिदपि दातुमीहते इतरोवार्धुषिर्दुष्टकर्मा वृद्धिजीवो । अथ वदान्यउदारः श्रद्धधानोगृहागतेषुपरितुष्यतिश्रद्धया भोजनादिना पूजयति । तयोरन्नंदेवाःसमंतुल्यमकल्पयन्व्यवस्थापितवन्तःयदिनामैकोगुणवान्साधुचरणस्तथापि कर्मदोषादप्रशस्तएवंमीमांसित्वा विचार्य देवैर्व्यवस्था कृतातुल्यमेतदिति ॥ २२४ ॥

( २ ) **सर्वज्ञनारायणः** । श्रोत्रियस्येति भोज्यान्नोपलक्षणम् कदर्यस्य कृपणस्यवार्धुषेरिति अभोज्यान्नोपलक्षणम् वदान्यस्यदानशीलस्य । सममकल्पयन् क्रमातद्वयोरेकैकगुणैकैकदोषसाम्यात ॥ २२४ ॥

( ३ ) **कुल्लूकः** । एकोऽधीतवेदःकृपणश्च परोदाता वृद्धिजीवी च तयोरुभयोरपि गुणदोषवत्त्वंविचार्य देवास्तुल्यमन्नमनयोरितिनिरूपितवन्तः उभयोरपि गुणदोषसाम्यात् ॥ २२४ ॥

( ४ ) **राघवानन्दः** । वार्धुषिकस्यान्नशुध्यर्थमितिहासमाह श्रोत्रियस्येतिद्वाभ्यां । मीमांसित्वा विचार्य ॥ २२४ ॥

( ५ ) **नन्दनः** । बलाबलपरीक्षारूपपुराकल्पोपन्यासद्वारेण श्रद्धाप्रशंसांप्रसङ्गादाह श्रोत्रियस्येति । श्रोत्रियशब्दः श्रेष्ठस्योपलक्षणम् । कदर्यशब्दः श्रद्धाहीनस्य । वदान्यशब्दः श्रद्धायुक्तस्य वार्द्धुषिकशब्दोऽधर्मस्य ॥ २२४ ॥

( ६ ) **रामचन्द्रः** । कदर्यस्य कदर्यरूपस्य च श्रोत्रियस्य च पुनः वार्धुषेर्वदान्यस्य उदारस्य एतदुभयंदेवा मीमांसित्वा विचारयित्वा उभयोरन्नं सममकल्पयन् व्यवस्थापितवंतः ॥ २२४ ॥

**तान् प्रजापतिराहैत्य माकृध्वं विषमं समम् ॥ श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ २२५ ॥**

( १ ) **मेधातिथिः** । देवान्प्रजापतिरागत्याचष्ट माकुद्ध्वमेवम् विषमसमीकरणमन्याय्यम् कःपुनरनयोरधिकइतिदेवाऊचुः । पुनःप्रजापतिराह वदान्यस्य श्रद्धावतोयदन्नंतत्पूतंपवित्रंश्रद्धया वार्धुषेः । इतरयदन्नंश्रोत्रियस्य तत्कर्मणोपहतमप्रशस्तम् । देवप्रजापतिसंवादोऽर्थवादः । अश्रद्दधानस्यगुणवतोऽपि न भोक्तव्यमादरेण शूद्रस्यापि भोक्तव्यम् ॥ २२५ ॥

( २ ) **सर्वज्ञनारायणः** । कृध्वं कुरुध्वम् । विकरणलोपश्छान्दसः । वैषम्ये हेतुः श्रद्धापूतमिति । श्रद्धापूतं दानश्रद्धापूतम् । वदान्यत्वस्य श्रद्धानियतत्वात् । तेन श्राद्धिनः शूद्रस्यापि पायसादिपक्कान्नं भोज्यमितितात्पर्यम् यथा स्मृत्यन्तरे । कन्दुपक्कंशूलपक्कंपायसंदधिसक्तवः । एतानि शूद्रातग्राह्याणि भोज्यानिमनुरब्रवीदिति ॥ २२५ ॥

( ३ ) **कुल्लूकः** । तान्देवानागत्य ब्रह्मा प्रोवाच विषममन्नंमासमंकुरुत । विषमसमीकरणमनुचितंकःपुनरनयोर्विशेषइत्यपेक्षायांसएवावोचत् । दानशीलवार्धुषिकस्यापि श्रद्धयान्नंपवित्रंभवति कृपणान्नंपुनरश्रद्धया हतंदूषितमधमं प्रागुभयप्रतिषेधेऽपि श्रद्धादत्तविद्वद्वार्धुषिकान्नविशुद्धिबोधनपरमिदम् ॥ २२५ ॥

( ४ ) **राघवानन्दः** । तान्देवानेत्य प्रजापतिराह । विषमंयततत्समंमाकृद्धंमाकुरुतेति । विषमेप्रवाहश्रद्धापूतमिति ज्ञानपूतमिति यावतइतरत् कदर्यान्नं हतंदुष्टम् ॥ २२५ ॥

( ५ ) **नन्दनः** । विषममुभयोरन्नंसमंमाकृध्वमिति प्रजापतिराह । उत्तरार्धेन वैषम्यमुपपादयति ॥ २२५ ॥

( ६ ) **रामचन्द्रः** । तान्देवान्प्रति प्रजापतिरित्याह विषममन्नं समंमाकुरुध्वं वदान्यस्य श्रद्धापूतमन्नंग्राह्यं अश्रद्धयादत्तं इतरत् श्रोत्रियस्यान्नं हतं नष्टंभवति ॥ २२५ ॥

**श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः ॥ श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥२२६॥**

( १ ) **मेधातिथिः**। इष्टमन्तर्वेदि यत्क्रियते । यज्ञादिकर्म । पूर्तंततोऽन्यत्रसंमानाद्यदृष्टार्थम् । ते श्रद्धया कर्तव्ये । तथास्वागतैश्च धनैः शोभनेनागच्छन्ति यानि धनानिश्रुतशौर्यतपःकन्यादीनि । एवमक्षयेऽक्षयफले भवतः । यानि तुन स्वागतानि नाक्षयफलानि न पुनर्निष्फलानि । तथाहि तैरपि स्वाम्यमुत्पद्यते । तेन च यागादयःकर्तव्याः । नचयागदानादि प्रकरणेकुसीदादिप्रतिषेधः श्रुतोयेन तदङ्गंस्यात् । तस्माद्यावन्न स्वर्गोत्पत्तिहेतवःतैरर्जितेन धनेन यागादयः कर्तव्याः । फलस्य तु प्रकर्षाप्रकर्षौ भवतः । के पुनस्ते प्रशस्तधनोपायाअतउच्यते ॥ श्रुतशौर्यतपःकन्यायाज्यशिष्यान्वयागतम् । धनंसप्तविधंशुद्धंउभयोऽप्यस्य तद्विधः ॥ तत्र श्रुततपसी प्रतिग्रहनिमित्तएकोपिप्रतिग्रहोनिर्मित्तभेदाद्भेदेनोक्तः । प्रतिग्राह्यगुणाअपि सामर्थ्यात्तत्र द्रष्टव्यायदि नात्यन्तदुष्टोदाताभवति दायागतंशुद्धंभवति । याज्यशिष्यशब्दाभ्यांयाजनाध्यापने गृह्येते । अन्वयागतंपितृपैतामहादि । कन्यादानकालेश्वशुरगृहाल्लब्धम् । शौर्येण क्षत्रियस्य । कन्यान्वयौ सर्वसाधारणौ । कुसीदकृषिवाणिज्यशिल्पसेवानुवृत्तितः । कृतोपकारादाप्तंचशबलंसमुदाहृतं ॥ सेवा प्रेष्यकरत्वं । यथेच्छविनियोन्यताऽनुवृत्तिःप्रियतानुकूला । तत्र कुसीदकृषिवाणिज्यान्यवैश्यस्यवैश्यस्यप्रशस्तान्येव । सेवाद्विजातीनांशुश्रूषा शूद्रस्य प्रशस्तैव । अन्या तु तस्य निन्दिता शबलग्रहणेनाचिरस्थायिता फलस्योच्यते । यावज्जीवंतत्फलंभवति । पार्श्विकद्यूतशौर्यार्त्तिप्रतिरूपकसाहसैः । व्याजेनोपार्जितंयच्चतत्कृष्णंसमुदाहृतम् ॥ पार्श्वस्थः उत्कोचादिना धनमर्जयति । ज्ञात्वाधनागमंकस्यचिदहंते दापयामि मह्यंत्वयाकिंचिद्दातव्यमितियोगृह्णाति सपार्श्विकः । न कर्ता कारयिता तटस्थो न चाज्ञतया गृह्णाति । यथाच गृहीत्वाऽधमर्णाय प्रतिभूत्वेनावतिष्ठते । प्रतिरूपकोदाम्भिकःकुङ्कुमाद्युपहितकुङ्कुमादिविक्रयोव्याजः । आर्तिःपरपीडा । प्रच्छन्नहरणंचौर्यम् । प्रसभंसाहसम् । ननुचौर्यसाहसाभ्यांस्वाम्यमेव नास्ति तन्निमित्तेष्वपठितत्वात् । स्वामीरिक्थक्रयसंविभागपरिग्रहाधिगमेष्विति । तथाविद्याशिल्पंभृतिमेवेत्यादि । तथासमवित्तागमाधर्म्याइतिच । अथास्मादेव बचनात्स्वाम्यकारणत्वमनयोरिति । कथंतर्हिबलाद्भुक्तंनजीर्यतीति । केचित्तावदाहुः नैवायंपाठोऽस्तिद्यूतशौर्यार्त्तीत्यपितु चौर्यार्त्तीतिवैरिणः सकाशादागते संधानकाले यद्येतावद्ददासि तदा त्वया संधिंकरोमि शक्तिविहीनतया ददाति । साहसमपि नप्रसह्यहरणं किंतर्हि यत्प्राणसंदेहेनार्ज्यतेपोतयात्रया रहसि राजप्रतिषिद्धप्रतिक्रयेणाच । अन्येतुमन्यन्ते । नैवबलादपहरणेस्वाम्यंभोगेन वा जरणंविरुध्यतेयतोबलंप्रथममपहारकाले त्वसत्यपि बलउपेक्षया भोगस्तत्रस्वाम्यम् । यत्र त्वारम्भात्प्रभृतिसर्वकालिकोबलोपभोगस्तत्रजीर्यतीति कथ्यते । तस्मादुभयमविरुद्धम् । इदंयुक्तंयच्चौर्यसाहसाभ्यांस्वत्वानुत्पत्तिः पाठविभागकृतां । अन्यैश्च स्मृतिकारैः स्वत्वहेतुष्वपरिगणनात् ॥ २२६ ॥

( २ ) **सर्वज्ञनारायणः** । इष्टं यागः । पूर्तं पुष्करिण्यादि । अक्षयेचिरस्थायिफले । एतेनाश्रद्धाकृतयोरपि फलमस्तीतिगम्यते । स्वागतैर्धनैर्निषिद्धवृत्त्यनुपात्तैः ॥ २२६ ॥

( ३ ) **कुल्लूकः** । अतएवाह श्रद्धयेति इष्टमन्तर्वेदियज्ञादि कर्म पूर्तंततोन्यत्पुष्करिणीकूपप्रपारामादि । तदेवमनलसः सन्नित्यंकाम्यस्वर्गादिफलरहितंश्रद्धया कुर्यात् यस्मात्तेइष्टापूर्ते न्यायार्जितधनेन श्रद्धया कृतेऽक्षये मोक्षफले भवतः॥२२६

( ४ ) **राघवानन्दः** । तस्मात्श्रद्धयैव सर्वकार्यमित्याह श्रद्धयेतिद्वाभ्यां । इष्टापूर्ते स्वागतैः स्ववृत्त्योपार्जितैः । तत्रेष्टं यागादि । पूर्तं खातादि ॥ २२६ ॥

( ५ ) **नन्दनः** । यतएवमतः सर्वेधर्माःश्रद्धयाकर्तव्याइत्याह श्रद्धयेति । इष्टंदैवम् । पूर्तंपित्र्यम् स्वागतैर्विहितोपार्जितैः ॥ २२६ ॥

( ६ ) **रामचन्द्रः** । श्रद्धया इष्टंयागादि पूर्तंकूपादि नित्यंकुर्यात् । इष्टापूर्ते श्रद्धाकृते श्रद्धया कृते स्वागतैर्धनैः स्वकर्मोपार्जितैर्धनैः श्रुतशौर्यकन्यादिनाप्राप्तैः अक्षये भवतः । श्रुतशौर्यतपःकन्यायाज्यशिष्टान्वयागतं । धनंसप्तविधं शुद्धमुदयोयस्य तद्विधः ॥ श्रुतं अध्ययनं । शौर्यं क्षात्रधर्मेण लब्धम् ॥ २२६ ॥

**दानधर्मंनिषेवेत नित्यमैष्टिकपौर्तिकं ॥ परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ २२७ ॥**

**[ पात्रभूतोहि योविप्रः प्रतिगृह्य प्रतिग्रहम् । असत्सु विनियुञ्जीत तस्मै देयं न किंचन ॥ १ ॥ * ]**

**[ संचयं कुरुते यस्तु प्रतिगृह्य समंततः । धर्मार्थंनोपयुङ्क्ते च न तं तस्करमर्चयेत् ॥ २ ॥ ]**

( १ ) **मेधातिथिः** । दानधर्मश्चतडागादिः । समाहारद्वन्द्वः । अथवादानंचतद्धर्मश्चासाविति । धर्मग्रहणेन प्रीत्या विना नियमभावमाह । भावे तुष्टेन प्रसन्नेन चित्तेन पात्रमासाद्य व्रतादिदानंच । एवंपौर्तिकंबहिर्वेदिकम् ॥ २२७ ॥

( २ ) **सर्वज्ञनारायणः** । दानधर्मंदानरूपंधर्मसाधनम् । ऐष्टिकंयागदक्षिणारूपम् । पौर्तिकं पूर्तसंगतम् । परितुष्टेन नोपरोधेन ॥ २२७ ॥

( ३ ) **कुल्लूकः** । दानाख्यंधर्ममैष्टिकंपौर्तिकमन्तर्वेदिकंबहिर्वेदिकंच सर्वदा विद्यातपोयुक्तंब्राह्मणमासाद्य परितोषाख्येनान्तःकरणयुक्तंयथाशक्ति कुर्यात् ॥ २२७ ॥

( ४ ) **राघवानन्दः** । किंच दानेति दानधर्मं दानं यथाशक्तिअर्थिभ्योद्रव्यविभागः तद्रूपंधर्मम् । ऐष्टिकं इष्टिस्वरूपं । पौर्तं पूर्तस्वरूपंवाप्यादि । योग्यंपात्रमिति भावेन भावनाश्रयेणमनसा प्रसन्नेन ॥ २२७ ॥

( ५ ) **नन्दनः** । इष्टे भवमैष्टिकम् । परितुष्टेन भावेन श्रद्धायुक्तेनत्हृदयेन ॥ २२७ ॥

( ६ ) **रामचन्द्रः** । सार्धेनाह दानेति । नित्यं ऐष्टिकपौर्तिकं कुर्यात् । प्रतिपदेष्टिपूर्तास्पदं पौर्तिकं पात्रं आसाद्य प्राप्य शक्तितः ॥ २२७ ॥

**यत्किंचिदपि दातव्यं याचितेनानसूयया ॥ उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥ २२८ ॥**

( १ ) **मेधातिथिः** । यत्किंचित्स्वल्पमपि याचितेनाभ्यर्थितेन दातव्यम् । पात्रापात्रसंदेहेअसतिनिश्चयेकिंचिद्दातव्यं नातिबहु । वचनाच्च संदेहेनदातव्यम् । उत्पत्स्यते कदाचित्पात्रमसौभविष्यतिकिंभूतंयत्पात्रंतारयति रक्षति सर्वतोनरकपातहेतोःसर्वस्मादेनसः । यदुक्तंवेदतत्वार्थविदुषेब्राह्मणायेति तत्रायंसंदेहाश्रयईषद्द्रव्यविषयोऽपवादः ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः** । अनसूयया अद्वेषेण । सर्वतः पापात् बहुषु दीयमानेषु हि तादृक्पात्रं मिलतीत्यर्थः ॥२२८॥

( ३ ) **कुल्लूकः** । प्रार्थितेन परगुणामत्सरेणान्नमपि यथाशक्ति दातव्यंयस्मात्सर्वदा दानशीलस्य कदाचित्तादृशंपात्रमागमिष्यति तत्सर्वस्मान्नरकहेतोर्मोचयिष्यति ॥ २२८ ॥

( ४ ) **राघवानन्दः** । तत्रापि दानमत्यर्थमुररीकरोति यदितितथाच श्रुतिः ह्रियादेयंभियादेयंश्रद्धयादेयं अश्रद्धयादेयं-

+ ( ट )

इति याचितेन याच्ञाविषयेणापि हियस्मात्सर्वदा दानशीलस्य तादृशपात्रमुत्पत्स्यतेआगमिष्यति। वार्धुषिकमपि सर्वस्माद्दोषात्तारयतीत्याहसर्वतइति ॥ २२८ ॥

( ५ ) नन्दनः। अनसूयया श्रद्धया। अत्रहेतुरुत्तरार्धेनोक्तः। उत्पत्स्यतेसेत्स्यति। सर्वतोदुःखादितिशेषः ॥२२८॥

( ६ ) रामचन्द्रः। यत्किंचिदपि दातव्यं। हि निश्चयेन यत्पात्रंउत्पत्स्यते संमिलति तत्पात्रं सर्वतः पापात्तारयति उद्धरति ॥ २२८ ॥

**वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः॥ तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥ २२९॥**

( १ ) मेधातिथिः। तृप्तिः क्षुत्पिपासाभ्यामपीडनम्। तच्चाढ्यस्यारोगस्यच भवति तेन बहुधनत्वमरोगताच फलमुक्तंभवति। अक्षय्यंसुखम्। अविशेषितत्वान्नोपकरणंसुखंप्रतीयते। अक्षय्यंयावज्जीविकमित्यर्थः। अन्नदःसक्त्वोदनादि सिद्धमन्नमामंचतण्डुलादि। दीपस्यदानंचतुष्पथे ब्राह्मणसभायांच ॥ २२९ ॥

( २ ) सर्वज्ञनारायणः। तृप्तिं पिपासादुःखाभावम् ॥२२९॥

( ३ ) कुल्लूकः। जलदःक्षुत्पिपासविगमात्तृप्तिम्। अन्नदोऽत्यन्तसुखं। तिलप्रदईप्सितान्यपत्यादीनि। दीपदोविप्रवेश्मादौ निर्दोषंचक्षुःप्राप्नोति ॥ २२९ ॥

( ४ ) राघवानन्दः। प्रसङ्गाद्देयद्रव्यभेदेन तत्फलभेदमाह वारिदइतिचतुर्भिः। तृप्तिं क्षुत्पिपासाद्यपीडनं। तेन बहुधनत्वारोग्येइति मेधातिथिः। अक्षय्यं यावज्जीवंप्राप्नोतीत्येवंसर्वत्रानुषङ्गः ॥ २२९ ॥

( ५ ) नन्दनः। द्रव्यविशेषात्फलविशेषमाह वारिदइति ॥ २२९ ॥

( ६ ) रामचन्द्रः। तिलप्रदः प्रजां संततिं इष्टां आप्नोति ॥ २२९ ॥

**भूमिदोभूमिमाप्नोति दीर्घमायुर्हिरण्यदः॥ गृहदोऽग्र्याणि वेश्मानि रूप्यदोरूपमुत्तमम्॥ २३०॥**

( १ ) मेधातिथिः। भूमेराधिपत्यंप्राप्नोति। हिरण्यंसुवर्णम्। रूप्यदउत्तमंरूपंलभते ॥ २३० ॥

( २ ) सर्वज्ञनारायणः। भूमिं भूमिपतित्वम् ॥ २३० ॥

( ३ ) कुल्लूकः। भूमिदोभूमेराधिपत्यं सुवर्णदःचिरजीवित्वं गृहदःश्रेष्ठानि वेश्मानि। रूप्यदःसकलजननयनमनोहरं रूपंलभते ॥ २३० ॥

( ४ ) राघवानन्दः। रूप्यं रजतम् ॥ २३० ॥

( ६ ) रामचन्द्रः। भूमिदः भूमिं आप्नोति राज्यं आप्नोति। गृहदः अग्र्याणि श्रेष्ठानि वेश्मानि प्राप्नोति ॥ २३० ॥

**वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः॥ अनडुहःश्रियं पुष्टां गोदोब्रध्नस्य विष्टपम्॥२३१॥**

( १ ) मेधातिथिः। चन्द्रइवलोक्यतेसर्वस्यप्रियदर्शनोभवति। इतिहासदर्शने चन्द्रलोकोनामस्वर्गस्थानविशेषस्तमाप्नोति। अश्विनामश्ववतां सालोक्यंबह्वश्वतांप्राप्नोति। दर्शने पुनरश्विनोर्लोकमाप्नोति। अनड्वान्पुङ्गवः शकटवहनसमर्थस्तंददतः पुष्टा महती श्रीर्गोजाविधनधान्यादिसंपद्भवति। ब्रध्नआदित्यस्तस्यविष्टपंस्थानमाप्नोति। महातेजाः सर्व-

---

( २३० ) भूमिमाप्नोति=सर्वमाप्नोति ( ठ )

( २३१ ) अश्विसालोक्यम्=सूर्यसालोक्यम् ( ञ )

स्योपरि भवति । स्वर्गोवा ब्रध्नविष्टपंस्मृत्यन्तरेऽनसोविशेषाश्रयः फलविशेषः श्रूयते । हेमशृङ्गीरूप्यखुरासुशीलावस्त्रसंवृता । सकांस्यपात्रा दातव्याक्षीरिणी गौः सदक्षिणा ॥ सुदक्षिणेतिपाठेऽन्यदपि सुवर्णादि तत्र दातव्यम् । शोभनार्थे वा सुशब्दःपठितव्यः । सागौः शोभनादक्षिणादीनाम् । कांस्योपदोहेतिपाठान्तरम् । कांस्यंनामपरिमाणविशेषः । तत्रोपदुह्यते बहुक्षीरेत्यर्थः । लाङ्गलभूषितांभूमिंतुरूपसंछन्नांकृत्वेत्यादिस्मृत्यन्तरदृष्टोविधिः फलविशेषार्थिनाश्रयणीयः । तथा । कपिला चेत्तारयति भूयआसप्तमात्कुलात् । वत्सवत्याः कपिलायादानएतत्फलंरोमतुल्यानि युगानि उभयतोमुखी दीयमाना रोमतुल्यानि वर्षसहस्राणि स्वर्गः प्राप्यते तारयति पापान्मोचयति । भारते सर्वफलंगोदानमुक्तम् । वार्यादीन्यपि स्वर्गफलानिश्रूयन्ते । भूमिपश्वन्नवस्त्राम्भस्तिलसर्पिष्प्रतिश्रयान् । नैवेशिकस्वर्णपुर्यादग्वा स्वर्गेमहीयते । नैवेशिकंवेश्म ॥ २३१ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रध्नस्य सूर्यस्य विष्टपं लोकम् ॥ २३१ ॥

( ३ ) **कुल्लूकः** । वस्त्रदश्चन्द्रसमानलोकान्प्राप्नोति । चन्द्रलोके चन्द्रसमविभूतिर्वसतीति एवमेवाश्विलोकंघोटकदः । बलीवर्दस्य दाता प्रचुरांश्रियं स्त्रीगवीप्रदःसूर्यलोकंप्राप्नोति ॥ २३१ ॥

( ४ ) **राघवानन्दः** । तावत्पर्यन्तंऐहिकामुष्मिकंफलं । तदुत्तरेषामामुष्मिकमेव । अनडुत् बलीवर्दः । पुष्टिंमहतीं ऐश्वर्यंप्रभुत्वं महतोश्रीयुक्तस्यापि नियम्यत्वदृष्टेः । ब्रध्नस्य सूर्यस्य विष्टपं लोकम् ॥ २३१ ॥

( ६ ) **रामचन्द्रः** । गोदः गवांदाता ब्रध्नस्य विष्टपं सूर्यलोकम् भास्कराहस्करब्रध्नइत्यमरः ॥ २३१ ॥

## यानशय्याप्रदोभार्यामैश्वर्यमभयप्रदः ॥ धान्यदः शाश्वतं सौख्यं ब्रह्मदोब्रह्मसार्ष्टिताम् ॥२३२॥

( १ ) **मेधातिथिः** । ऐश्वर्यमीश्वरत्वंप्रभुत्वम् । सुखित्वंसौख्यम् । धान्यानिव्रीहिमाषमुद्गादीनि । तिलानांफलान्तरमुक्तम् । ब्रह्म वेदः तद्ददाति योऽध्यापयति । व्याख्यातिच । ब्रह्मसार्ष्टिताअर्षणमृष्टिः । समाऋष्टिर्यस्य असौसार्ष्टिः । छान्दसत्वात्समानस्यसभावः । ऋषिगतौ । अर्षणंवा सार्ष्टिः । तद्भावसार्ष्टिता । उभयथापि ब्रह्मणःसमानगतित्वमेतत्तुल्यत्वमित्युक्तंभवति ॥ २३२ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मदोवेदाध्यापकः ब्रह्मणा हिरण्यगर्भेण सहसार्ष्टितांसमानायुधत्वं तुल्याकारतामितियावत् । ऋष्टिशब्दआयुधपर्यायः ॥ २३२ ॥

( ३ ) **कुल्लूकः** । रथादियानस्य शय्यायाश्च दाता भार्यां । अभयप्रदःप्राणिनामहिंसकःप्रभुत्वं । धान्यदोव्रीहियवमाषमुद्गादिसस्यानांदाता चिरस्थायि सुखित्वं । ब्रह्मवेदस्तत्प्रदोवेदस्याध्यापकोव्याख्याता च ब्रह्मणःसार्ष्टितांसमानगतितांतत्तुल्यतांप्राप्नोति ॥ २३२ ॥

( ४ ) **राघवानन्दः** । भार्यांप्रकृष्टां । अभयप्रदोऽहिंसकः । ब्रह्मदोवेददः । ब्रह्मसार्ष्टितां ब्रह्मसमानगतिं तत्तुल्यतांप्राप्नोतीत्यनुषज्यते । ऋषिर्गतिः । ऋषीगतौ समाना ऋष्टिः सार्ष्टिः ॥ २३२ ॥

( ५ ) **नन्दनः** । ब्रह्मदोवेददः ब्रह्मसार्ष्टितांपरमात्मसायुज्यम् ॥ २३२ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मदः वेदस्याध्यापकः ब्रह्मसाम्यं तादात्म्यं प्राप्नोति ॥ २३२ ॥

## सर्वेषामेव दानानांब्रह्मदानं विशिष्यते ॥ वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥ २३३॥

( १ ) **मेधातिथिः** । पूर्वस्यविधेरर्थवादः । दीयन्तइति दानानि देयद्रव्याणि । दानक्रियैव वा दानम् । ब्रह्मदानंवेदाध्ययनव्याख्याने । वार्यादीनांसर्वदानोत्तमत्वाद्ग्रहणम् ॥ २३३ ॥

( २ ) **सर्वज्ञनारायणः**। दीयतइति दानं। वार्यादीनि यानि यानि दानानि तेषांदानानांमध्ये ब्रह्मवेदस्तद्रूपम् ॥ २३३ ॥

( ३ ) **कुल्लूकः**। उदकान्नधेनुभूमिवस्त्रतिलसुवर्णघृतादीनांसर्वेषामेव यानि दानानि तेषांमध्यात्वेददानंविशिष्यते प्रकृष्टफलदंभवति ॥ २३३ ॥

( ४ ) **राघवानन्दः**। वार्याद्यष्टादशदानानांमध्ये वेददानंश्रेष्ठमित्याहसर्वेषामिति। वारीत्यादि दिक्प्रदर्शनं। अष्टादशानां सर्वदायेनगृहीतं उभयनाकसाधनत्वाद्वेदस्य ॥ २३३ ॥

( ५ ) **नन्दनः**। सर्वेषांवार्यादीनांप्रदानानांप्रदेयानांमध्ये ॥ २३३ ॥

( ६ ) **रामचन्द्रः**। ब्रह्मदानं वेदाध्ययनं विशिष्यते ॥ २३३ ॥

**येन येन तु भावेन यद्यद्दानं प्रयच्छति ॥ तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥ २३४ ॥**

( १ ) **मेधातिथिः**। भावशब्दोऽयंचित्तधर्मे वर्तते। यादृशेन भावेन प्रसन्नेनचित्तेनश्रद्धयाऽऽदरेणददाति तादृशेनैव लभते। अथाऽश्रद्धयाऽवज्ञयाक्लिष्टंपरिभूय ददाति सोऽपि तथैव प्राप्नोति। यद्यदपि न द्रव्यजात्यभिप्रायम्। किंतर्हिफलएतदुच्यते। तांतांप्रीतिंतत्तद्द्रव्यसाध्यांप्राप्नोति। जात्यभिप्राये ह्यातुराद्यौषधवत्। औषधएव लभ्यतेतत्तद्वाच्या तस्यानुपयोगीतिसोऽप्याक्षिपेत्। तथायादृश्युल्लासाद्यस्य प्रीतिस्तादृशींचैव प्राप्नोति। अतश्चसर्वदैवौषधदानअरोगित्वमुक्तंभवति। अथवाइदंमेस्यादिति या फलकामना सभावःयत्फलमभिसंधाय यद्यद्द्रव्यंददाति तत्तत्प्राप्नोति। तेनैव भावेन तयैवेच्छया यदैवेच्छतितदैवलभतइत्युक्तंभवति। सर्वफलत्वंसर्वद्रव्याणांप्रदर्शितंभवति ॥ २३४ ॥

( २ ) **सर्वज्ञनारायणः**। येनयेन भावन सात्विकराजसादिना तेन भावेन तादृक्भावयोग्येन देवादिदेहेन प्रतिपूजितस्तत्तल्लोके ॥ २३४ ॥

( ३ ) **कुल्लूकः**। अवधारणे तु शब्दः। येन येनैव भावेनाभिप्रायेण फलाभिसन्धिकःस्वर्गोमेस्यादितिमुमुक्षुर्मोक्षाभिप्रायेण निष्कामोयद्यद्दानंददाति तेनैव भावेनोपलक्षितस्तत्तद्दानफलद्वारेण जन्मान्तरे पूजितःसन्प्राप्नोति ॥ २३४ ॥

( ४ ) **राघवानन्दः**। श्रद्धयैव देयमित्युपसंहरन्विपर्यये दोषमाह येनेतिद्वाभ्यां। भावेन सात्विकादिना ॥ २३४ ॥

( ५ ) **नन्दनः**। न केवलंवार्यादिप्रदाने तृप्त्यादिर्लाभः। किंतु सर्वस्याप्यभिलषितस्येत्याह येनेति ॥ २३४ ॥

**योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च। तावुभौ गच्छतःस्वर्गं नरकं तु विपर्यये ॥ २३५ ॥**

( १ ) **मेधातिथिः**। पूजापूर्वकंदातव्यंतादृशमेवचप्रतिग्रहीतव्यंनावज्ञयादातव्यमितिश्लोकस्यतात्पर्यम्। अर्चितमितिक्रियाविशेषणम् ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः**। अर्चितंयथाभवति तथा यद्दीयते पात्रपूजापूर्वकमित्यर्थः। अत्र दातुरर्चितानर्चितदानयोः स्वर्गनरकौ प्रतिग्रहीतुस्तु अर्चितमेव मयाग्राह्यमितिनियमे फलम्। अनर्चितग्रहणेतु दोषोस्त्येव ॥ २३५ ॥

( ३ ) **कुल्लूकः**। योर्चापूर्वकमेव दाता ददाति यश्च प्रतिग्रहीताऽर्चापूर्वकमेव दत्तंप्रतिगृह्णाति तावुभौ स्वर्गंगच्छतोऽनर्चितदानप्रतिग्रहणे नरकं। पुरुषार्थे तु प्रतिग्रहेऽनर्चितमेव मयागृहीतव्यंनान्यथेतिनियमात्फललाभोन विरुद्धः ॥२३५॥

( ४ ) **राघवानन्दः**। भावमेव व्यनक्ति यइति। अर्चितादिद्वयंद्रव्यविशेषणंक्रियाविशेषणंच तेन सत्कृत्य दत्तंसत्कारपुरःसरमवाप्नोति। तदुक्तं। दातव्यमितियद्दानंदीयतेनुपकारिणे। देशे काले च पात्रेच तद्दानंसात्विकंस्मृतम् ॥ यत्तुप्रत्यु-

पकारार्थफलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टंतद्राजसमुदाहृतम् ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते॥ असत्कृत-मवज्ञातंतत्तामसमुदाहृतमिति ॥ २३५ ॥

( ५ ) नन्दनः । अर्चितंद्रव्यमितिशेषः ॥ २३५ ॥

( ६ ) रामचन्द्रः । अर्चितं विधिना विध्युक्तप्रकारेण संकल्पितं गृह्णाति ददातिच ॥ २३५ ॥

## न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम् ॥ नार्तोप्यपवदेद्विप्रान्नदत्वा परिकीर्तयेत् ॥ २३६ ॥

( १ ) मेधातिथिः । तपसाऽनुष्ठितेन विस्मयंन कुर्यादति तीव्रंतपोमयाकृतंसुदुश्चरमित्येवंमनसिनकर्तव्यम् । इष्ट्वा-यागंकृत्वाऽनृतंन वदेत् । अविशेषेणप्रतिषिद्धस्यापि पुरुषार्थतया पुनः प्रतिषेधोयागाङ्गत्वज्ञापनार्थः । प्रतिषेधातिक्रमे हि ज्योतिष्टोमादेरङ्गहीनता भवति । आर्त्तः पीडितोऽपि ब्राह्मणैर्नतानपवदेन्ननिन्देत । दत्त्वागवादिद्रव्यंन कस्यचिदग्रतः प-रिकीर्तयेदिदंमयादत्तम् ॥ २३६ ॥

( २ ) सर्वज्ञनारायणः । नविस्मयेतअभिमानंन कुर्यात् । इष्ट्वा सोमयागंकृत्वा नानृतंवदेत् । आर्तोप्यतिपीडितो-पि अपवदेत् निन्देत् ॥ २३६ ॥

( ३ ) कुल्लूकः । चान्द्रायणादितपसा कृतेन कथंमयेदंदुष्करमनुष्ठितमितिविस्मयंन कुर्यात् । यागंच कृत्वा नास-त्यंवदेत् कृतेपि पुरुषार्थतयाऽनृतवदननिषेधे क्रत्वर्थोयंपुनर्निषेधः ब्राह्मणैःपीडितोपि न तान्निन्दयेत् । गवादिकंच दत्वा मयेदंदत्तमितिपरस्य न कथयेत् ॥ २३६ ॥

( ४ ) राघवानन्दः । विस्मयादिचतुष्टयकर्तव्यतांसार्थवादंनिषेधति नविस्मयेतिद्वाभ्यां । विस्मयेत कथंमयेदं-दुष्करंकृतंतपइति । यद्वा । अहंतपस्वीति गर्वी न स्यात् । व्रीहिभिर्यागंकरोमीति संकल्प्य यवैर्न कुर्यात् नानृतंवदेदिति श्रुतेरयमर्थोनिर्णीतः । नानिष्ट्वा वाइष्टंमयेति न ब्रूयात् । स्वरसतोयज्वाअनृतवादी न स्यात् । आर्तः विप्रैःपरिपीडितोपि तान्न निन्देत् रोगार्तोवा ॥ २३६ ॥

( ५ ) नन्दनः । बहुभ्यः कीर्तनंस्ववाचा परिकीर्तनम् ॥ २३६ ॥

( ६ ) रामचन्द्रः । तपसा न विस्मयेदभिमानं न कुर्यात् । इष्ट्वायागंकृत्वा अनृतं मृषा न वदेत् । आर्तोब्राह्मणैः पीडितोपि विद्वान्पंडितः । नापवदेत् अपवादं न कुर्यात् न वदेत् विप्रान्दत्वा दानंन कीर्तयेत् ॥ २३६ ॥

## यज्ञोऽनृतेन क्षरति तपःक्षरति विस्मयात् ॥ आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥ २३७ ॥

१ ) मेधातिथिः । पूर्वस्य प्रतिषेधस्यार्थवादोऽयम् । अनृतेन हेतुनायज्ञः क्षरतिस्रवति निष्फलोभवति यदर्थंकृतं-तन्न संपद्यते । एवंसर्वत्र ॥२३७ ॥

( २ ) सर्वज्ञनारायणः । क्षरति तादृशफलशून्योभवति ॥ २३७ ॥

( ३ ) कुल्लूकः । अनृतेन हेतुना यज्ञः क्षरति सत्येनैव सफलं साधयति एवंतपसि दानेच योज्यम् । विप्रनिन्दया चायुःक्षीयते ॥ २३७ ॥

( ४ ) राघवानन्दः । कृते किंस्यात्तत्राह यइति । क्षरति फलमदत्वैव नश्यति तच्चतुष्टयमित्यर्थः ॥ २३७ ॥

( ६ ) रामचन्द्रः । यज्ञो ऽनृतेन क्षरति नश्यति निष्फलोभवति ॥ २३७ ॥

**धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ॥ परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २३८ ॥**

( १ ) **मेधातिथिः** । महति दाने महति च तपसि महति च यज्ञे ज्योतिष्टोमादौ यद्यसमर्थस्तदा नोदासीनेन भवितव्यम् । किंतर्हि शनैः शनैः स्वल्पेन दानेन स्वल्पेन तपसा यथाशक्तिपरोपकारेण जपहोमाभ्यांस्मार्ताभ्यांधर्मः संचेतव्यो- यथामृत्संघातंपुत्तिकाः पिपीलिकाः संचिन्वन्ति । परलोकसहायार्थमितिधर्मफलानुवादः । सर्वभूतान्यपीडयन् याञ्चया धर्मार्थयाभूतानांपीडा न कर्तव्या ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । वल्मीकंमृद्रूपम् । वल्मीकामृत्करकीटः । पुत्रिकेतिकचित्पाठः । सहायः सहगामी । भूतान्यपीडयन्नितिहिंसाद्यधर्मेषु नात्यन्तं प्रसज्येतेत्यर्थः ॥ २३८ ॥

( ३ ) **कुल्लूकः** । सर्वप्राणिनांपीडांपरिहरन्परलोकसहायार्थंयथाशक्ति शनैःशनैर्धर्ममनुतिष्ठेत् । यथा पुत्तिकाःपिपीलिकाप्रभेदाःशनैःशनैर्महान्तंमृत्तिकाकूटंसंचिन्वन्ति ॥ २३८ ॥

( ४ ) **राघवानन्दः** । धर्मस्यावश्यकर्तव्यतामाहधर्ममितिषड्भिः । पुत्तिकाः स्वमूत्रेण भूमिमार्द्रीकृत्य सच्छिद्रंमृत्पुञ्जं- संचिन्वन्तियाःपिपीलिकाविशेषास्ताः । वल्मीकं प्रसिद्धं । तत्किमर्थंतत्राहपरेति । अपीडयन् वैधेतरहिंसामकुर्वाणःअहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यइतिश्रुतेः ॥ २३८ ॥

( ६ ) **रामचन्द्रः** । पुत्तिकाः कृमयः पिपीलिकाः । वल्मीकमिव संचिनुयात् ॥ २३८ ॥

**नामुत्र हि सहायार्थं पिता माता च तिष्ठतः॥ न पुत्रदारान ज्ञातिर्धर्मस्तिष्ठति केवलः॥२३९॥**

( १ ) **मेधातिथिः** । भूतानुवादोऽयम् । अमुत्र जन्मान्तरे सहायार्थंनरकादिदुःखादुद्धरणार्थंन कस्यचित्सुहृद्बान्धवादेः शक्तिरस्ति । केवलएव जीवता योधर्मः कृतः सतमुद्धरति ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मस्तिष्ठतिकेवलः कृत्स्नः ॥ २३९ ॥

( ३ ) **कुल्लूकः** । यस्मात्परलोके सहायकार्यसिद्ध्यर्थंन पितृमातृपत्नीज्ञातयस्तिष्ठन्ति । किंतु धर्मएवैकोद्वितीयभावेनोपकारार्थमवतिष्ठते । तस्मात्पुत्रादिभ्योपि महोपकारकंधर्ममनुतिष्ठेत् ॥ २३९ ॥

( ४ ) **राघवानन्दः** । अमुत्र परलोके । अतोन धर्मतुल्यः कश्चित् । पुत्राश्च दाराश्च तत्पुत्रदारम् ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । अमुत्र परलोके सहायार्थं पित्रादयोन तिष्ठन्ति केवलः एकः धर्मः साहाय्यार्थंतिष्ठति ॥२३९॥

**एकःप्रजायते जन्तुरेकएव प्रलीयते ॥ एकोऽनुभुङ्क्ते सुकृतमेकएव च दुष्कृतम् ॥ २४० ॥**

( १ ) **मेधातिथिः** । यथा जन्तुः प्राण्येकएवजायते न सुहृद्बान्धवादिना सहैकएवप्रलीयते न सुहृदोबान्धवाः सहमरणमनुभवन्ति । यदिनामभार्याऽन्योवा भक्तोजनस्तन्मरणकालआत्मानंहन्यात्तथापि पृथगेवासौ मरणक्रिया । अनयानगर्भैक्यमत्रिवदनुभवन्ति एवंसुकृतदुष्कृतेअपि पृथगेवानुभवन्ति । ननु च नपुत्रदारमित्युक्तंयावता पुत्रःश्राद्धादिक्रियया पितुरुपकरोत्येवमृतस्यैवं भार्यापि । सत्यम् । धार्मिकस्यैव तादृशः पुत्रोभवतीति तत्परमेतत् । यथाजीवतः कस्यचिद्धस्तग्राहिकया कश्चित्सहायोभवत्येवंमृतस्य पुत्रोधर्मद्वारेणैवोपकरोति ॥ २४० ॥

( २ ) **सर्वज्ञनारायणः** । प्रसूयते जायते । प्रलीयतेम्रियते ॥ २४० ॥

( ३ ) **कुल्लूकः** । एकएव प्राण्युत्पद्यते न बान्धवैःसहितः । एकएव च म्रियते । सुकृतफलमपि स्वर्गादिकंच दुरितफलंच नरकादिकमेकएव भुङ्क्ते न मात्रादिभिःसह तस्मान्मात्राद्यपेक्षयाऽपि धर्मंन त्यजेत् ॥ २४० ॥

(४)राघवानन्दः। एकोऽसहायी। प्रमीयतेम्रियते। सुकृतभोगेपि सहायोनास्तिकिंदुष्कृतभोगइत्याहएकइति ॥२४०॥

**मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ॥ विमुखाबान्धवायान्ति धर्मस्तमनुगच्छति ॥२४१॥**

( १ ) **मेधातिथिः**। सह गच्छति । इदंप्रत्यक्षसिद्धप्रसंख्यानार्थमुच्यते। मृतस्य शरीरंक्षितावुत्सृज्य काष्ठमिव निष्प्रयोजनंविमुखाबान्धवाः प्रतिगच्छन्ति। धर्मस्तु केवलस्तंपुरुषमनुगच्छति ॥ २४१ ॥

( २ ) **सर्वज्ञनारायणः**। काष्ठसमं दाहपक्षे। लोष्ठसमं भूमिप्रापणपक्षे ॥ २४१ ॥

( ३ ) **कुल्लूकः**। मृतंशरीरंमनःप्राणादित्यक्तंकाष्ठलोष्ठवदचेतनंभूमौ त्यक्का पराङ्मुखाबान्धवायान्ति न मृतंजीवमनुयान्ति। धर्मस्तु तमनुगच्छति ॥ २४१ ॥

( ४ ) **राघवानन्दः**। क्षितौ प्रक्षेपाधारे। यान्ति स्वगृहंप्रति । तत्रापि विमुखाःअहोकष्टंवर्तते ॥ २४१ ॥

( ६ ) **रामचन्द्रः**। तं मृतं धर्मः अनुगच्छति ॥ २४१ ॥

**तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ॥ धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ २४२॥**

( १ ) **मेधातिथिः**। उपसंहारोऽयम्। दुस्तरंतमः कृच्छ्रेण यत्तीर्यते तमोदुःखंतदपि धर्मेण सहायेन सुतरंभवति। नहितादृशो तमसि मज्जतीत्यर्थः ॥ २४२ ॥

( २ ) **सर्वज्ञनारायणः**। शनैरितिनात्यन्तमात्मानमवसादयेदित्यर्थः ॥ २४२ ॥

( ३ ) **कुल्लूकः**। यस्माद्धर्मेण सहायेन दुस्तरंतमोनरकादिदुःखंतरति तस्माद्धर्मसहायभावेन सततंशनैरनुतिष्ठेत् ॥ २४२ ॥

( ४ ) **राघवानन्दः**। स्वौत्सुक्यमाह तस्मादिति। तमः नरकं अविद्यां। अन्तःकरणशुद्धिद्वाराज्ञानावाप्त्या ॥१४२॥

( ६ ) **रामचन्द्रः**। तमः नरकं तरति ॥ २४२ ॥

**धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ॥ परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥२४३॥**

( १ ) **मेधातिथिः**। धर्मः प्रधानंयस्यासौ धर्मप्रधानो धर्मपरायणोयथाविहितकर्मानुष्ठायी। तपसाहतकिल्बिषंकथंचित्प्रमादकृतव्यतिक्रमे तपसा प्रायश्चित्तेन हतकिल्बिषः शास्त्रव्यतिक्रमे जातोसौदोषस्तस्मिंस्तत्प्रायश्चित्तेन नष्टे परलोकंनयति भास्वन्तंपरलोकंदेवस्थानंस्वर्गादि नयति प्रापयतिकः प्रकृतत्वाद्धर्मएव । शरीरिणंपुरुषंखेन शरीरेणशरीरी। नयथाऽन्येषांपुरुषाणांपाञ्चभौतिकंशरीरमेवंतस्य। किंतर्हि खमेवशरीरंब्रह्मविभुत्वमनेनोच्यते ॥ २४३ ॥

( २ ) **सर्वज्ञनारायणः**। तपसा चान्द्रायणादिना । नयति धर्मः खशरीरिणं आकाशवत्क्वचिदप्यप्रतिहतदेहम् ॥ २४३ ॥

( ३ ) **कुल्लूकः**। धर्मपरंपुरुषंदैवादुपजाते पापे प्राजापत्यादितपोरूपप्रायश्चित्तेन हतपापंदीप्तिमन्तंप्रकृतोधर्मएवशीघ्रंब्रह्मस्वर्गादिरूपंपरलोकंनयति । खंब्रह्मेत्याद्युपनिषत्सुखशब्दस्य ब्रह्मणि प्रयोगः खरशरीरिणंब्रह्मस्वरूपमित्यर्थः। यद्यपि लिङ्गशरीरावच्छिन्नोजीवएव गच्छति तथापि ब्रह्मांशत्वाद्ब्रह्मस्वरूपमुपपन्नंधर्मएव चेत्परलोकंनयति ततोधर्ममनुतिष्ठेत्। नहि वेदाःस्वधीतास्तु शास्त्राणि विविधानि च। तत्र गच्छन्ति यत्रास्य धर्मएकोनुच्छति ॥ २४३ ॥

( ४ ) **राघवानन्दः**। अहोधर्मस्यासाध्यंनास्तीत्याह धर्ममिति। धर्मप्रधानं फलप्रधानंपरलोकंपरंब्रह्मैव लोकंआत्मा येषांनोयमात्मायंलोकइति श्रुतेः। खशरीरिणं आकाशशरीरं ब्रह्मभूतंआकाशोवै नामरूपयोर्निर्वहितेत्यादौ ब्रह्मण्याकाशशब्दप्रयोगात्। नयति प्रापयति धर्मएव परंपरयेति शेषः ॥ २४३ ॥

( ६ ) **रामचन्द्रः** । कीदृशं पुरुषं खशरीरिणं आकाशवदप्रतिहतगतिम् ॥ २४३ ॥

**उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह ॥ निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ २४४ ॥**

( १ ) **मेधातिथिः** । बहुप्रकारत्वादुत्तमस्य तदपेक्षावीप्सा । कश्चिज्जात्योत्कृष्टः कश्चिद्विद्यया कश्चिच्छीलेनाथवा-संबन्धिभेदाद्यः कश्चित्संबधः केनचिदुत्तमेन योग्यः । उत्तमैरुत्तमैर्जात्यादिभिरुत्कृष्टैः कन्यादानादिलक्षणांन्संबन्धानाचरेत्कुर्यान्निनीषुर्नेतुंप्रापयितुमिच्छुः कुलमुत्कर्षंश्रैष्ठ्यमधमानधमांस्त्यजेत् । उत्तमैश्चविधानादधमानांत्यागे सिद्धउत्तमासंभवे मध्यमानुज्ञानार्थं त्यागवचनम् । अधमानिकृष्टाः ॥ २४४ ॥

( २ ) **सर्वज्ञनारायणः** । सबन्धान्विवाहयाजनमैत्र्यात्रीन् ॥ २४४ ॥

( ३ ) **कुल्लूकः** । कुलमुत्कर्षंनेतुमिच्छन्विद्याचारजन्मादिभिरुत्कृष्टैःसह सर्वदा कन्यादानादिसंबन्धानाचरेत् । अपकृष्टांस्तु संबन्धांस्त्यजेत् । उत्तमविधानादेवाधमपरित्यागे सिद्धे यत्पुनरधमांस्त्यजेदित्यभिधानंतदुत्तमासंभवे स्वतुल्याद्यनुज्ञानार्थम् ॥ २४४ ॥

( ४ ) **राघवानन्दः** । कुलस्योत्कर्षोपायमाह उत्तमैरितिद्वाभ्याम् । वेदाचारनिष्ठैः । संबन्धान्ब्राह्मान् । यौनांश्च निनीषुः प्रापयितुमिच्छुः । वीप्सात्र जात्युत्कर्षविद्योत्कर्षधर्मोत्कर्षाद्यपेक्षया । त्यजेदित्यन्यत्यागस्यार्थिकत्वेऽप्युत्तमालाभेऽधमोऽपि ग्राह्यइत्यर्थम् ॥ २४४ ॥

( ६ ) **रामचन्द्रः** । उत्तमैःकुलैःसह संबन्धान्कुर्वन् आचरेतकुलं उत्कर्षं निनीषुः प्रापयिषुः अधमांस्त्यजेत् ॥२४४

**उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयन् ॥ ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेनशूद्रताम् ॥ २४५ ॥**

( १ ) **मेधातिथिः** । उत्तमान्गच्छंस्तैः सहसंबन्धंकुर्वन्ब्राह्मणः श्रेष्ठतामेति । ब्राह्मणग्रहणंक्षत्रियवैश्ययोरपिप्रदर्शनार्थम् । प्रत्यवायेन विपरीताचरणेन हीनैः सह संबन्धिनः प्रातिलोम्येन शूद्रतांगच्छति । जातेरनपायस्तांतुल्यतांप्राप्नोतीत्युक्तंभवति ॥ २४५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्यवायेन प्रतिकूलगमनेनाधर्म्यसंबन्धेनेतियावत् ॥ २४५ ॥

( ३ ) **कुल्लूकः** । उत्तमान्गच्छंस्तैःसह संबन्धंकुर्वन्ब्राह्मणःश्रेष्ठतांगच्छति । प्रत्यवायेन विपरीताचारेण हीनैः सह संबन्धे जातेरपकर्षतया शूद्रतुल्यतामेति ॥ २४५ ॥

( ४ ) **राघवानन्दः** । धर्मानुष्ठानेन ब्राह्मणोब्रह्मबन्धुः श्रेष्ठतामेति । हीनानवरान् । हीनस्त्रीपाखण्डादिगमनंप्रत्यवायस्तेनावरसंबन्धेनः ॥ २४५ ॥

( ५ ) **नन्दनः** । प्रत्यवायेनोक्तविपर्ययेणक्रियायाम् । शूद्रतांशूद्रसमताम् ॥ २४५ ॥

( ६ ) **रामचन्द्रः** । उत्तमैः सहसंबन्धान्कुर्वन्ब्राह्मणः श्रेष्ठतामेति । एवंक्षत्रियवैश्ययोरपि प्रत्यवायेन प्रतिकूलाचरणेनशूद्रतां ब्राह्मणएति । स्वधर्मेण श्रेष्ठतांएति ॥ २४५ ॥

**दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन् ॥ अहिंस्रोदमदानाभ्यांजयेत्स्वर्गंतथाव्रतः ॥ २४६ ॥**

( १ ) **मेधातिथिः** । कर्तव्येषु दृढनिश्चयोदृढकारी । यत्करोति तदवश्यंसमापयति न पुनःकार्यमारभ्यासमाप्य निवर्तते नानवस्थितइत्यर्थः । तदुक्तंप्रारब्धस्यान्तगमनम् । मृदुरनिष्ठुरः क्रूराचारैस्तेनादिभिर्नसंबन्धः । तैः सह संबन्धंनकुर्वन्यथादमदानाभ्यांस्वर्गंजयेत्प्राप्नुयात् । तथाव्रतःएतद्व्रतंनियमंधारयन् । दमस्य पृथगुपादानाद्दान्तोद्वन्द्वसहिष्णुर्द्रष्टव्यः ॥ २४६ ॥

( २ ) **सर्वज्ञनारायणः** । दृढकारी यद्धर्मसाधनंकर्तुंप्रवृत्तस्ततोनविरतः मृदुर्मृदुवाक् दान्तः क्लेशसहः । असंवसन्-सहावसन्दमदानाभ्यामिति दमशब्देन तपःक्लेशसहत्वाभिधायिना तपोलक्ष्यते । व्रतैर्निषिद्धानाचरणनियमैः। कचित्तथाव्रत-इतिपाठस्तत्रतादृक्गृहीतनियमइत्यर्थः ॥ २४६ ॥

( ३ ) **कुल्लूकः** । प्रारब्धसंपादयितादृढकारी मृदुरनिष्ठुरः । दमस्य पृथगुपादानाद्दान्तइनिशीतातपादिद्वन्द्वसहिष्णु-र्गृहीतव्यः । क्रूराचारैःपुरुषैःसंसर्गपरिहरन्परहिंसानिवृत्तः । तथाव्रतएवनियमदमेन्द्रियसंयमाख्येन च दानेन स्वर्गंप्राप्नो-ति ॥ २४५ ॥

( ४ ) **राघवानन्दः** । किंचदृढकारीति । प्रारब्धकर्मसमापयिता । क्रूराचारैः क्रूरआचारोविप्रहिंसादिर्येषां तथा-व्रतः उक्तसाधननिष्ठः । जयेत् प्राप्नुयात् । केन दमदानाभ्यां दमोबाह्येन्द्रियनियमः । दानम् प्रसिद्धम् ॥ २४६ ॥

( ५ ) **नन्दनः** । धर्मसमुच्चयमाह दृढेति ॥ २४६ ॥

( ६ ) **रामचन्द्रः** । क्रूराचारैःपुरुषैःस्तेनादिभिः असंवसन् वसेत् । दमः इन्द्रियनिग्रहः । समाहितः । तथाव्रत-इतिपाठः ॥ २४६ ॥

**एधोदकंमूलफलमन्नमभ्युद्यतंच यत् ॥ सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥ २४७ ॥**

( १ ) **मेधातिथिः** । एधइन्धनंकाष्ठादि । अन्नंपक्वमामंवा । अभ्युद्यतमभिमुखमुपनीतम् । एतत्सर्वतः प्रतिग्रहीतव्यं-पतिताभिशस्तचण्डालादिप्रतिलोमवर्जंशूद्रादन्यस्माद्वैक्षापकर्मणः।मधु माक्षिकं।अभयंदक्षिणेव दृष्टान्तार्थमेतत्। प्रतिग्रहोहि परकीयस्यद्रव्यस्य तदिच्छया स्वीकारोन चान्नरूपता । न ह्यत्र कस्यचित्स्वाम्यंनिवर्तते नच कस्यचिदुपजायते । अतः स्तुत्यादक्षिणाशब्दप्रयोगः । यथाचण्डालादिभ्योऽप्यरण्ये कान्तारे वा रक्षा चौरादिभ्योङ्गीक्रियमाणान्नदोषायैवमेतदे-धादिगृह्यमाणंन दोषाय । अनापदि चायंविधिः । आपदितुचण्डालादिभ्योऽपि वक्ष्यति । अभ्युद्यतशब्दश्चान्नेनैव सह सं-बध्यतेप्रत्यासत्त्या नैधादिभिः । अतएधादिषुयाच्ञाऽविरुद्धा । धार्मिकेभ्योद्विजातिभ्यःकर्तव्यस्तुपरिग्रहइत्यधार्मिकेभ्यो-द्विजेभ्यःशूद्राच्चाप्राप्तः । इष्यतेचद्रव्यविशेषोपयाञ्चा । तदर्थमिदम् ॥ २४७ ॥

( २ ) **सर्वज्ञनारायणः** । अत्राभयदक्षिणाव्यतिरिक्तेष्वभ्युद्यतमिति सर्वत्र संबध्यते । अभ्युद्यतमभ्यर्थ्य दत्तम् । सर्वऽतोप्रतिग्राह्यवित्तादपि प्रतिगृह्णीयात् प्रतिग्रहीतृवृत्तौ नतु तन्निवृत्तोपि याचित्वा ग्रहणेतु दोषः । अभयरूपांदक्षि-णाम् ॥ २४७ ॥

( ३ ) **कुल्लूकः** । काष्ठजलफलमूलमधूनि अन्नंचाभ्युद्यतमयाचितोपनीतम् । अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा-द्विषइति याज्ञवल्क्यवचनात्कुलटादिवर्जंसर्वतः शूद्रादिभ्योपि प्रतिगृह्णीयात् । आममेवाददीतास्मादित्युक्तत्वादामान्नमेव शूद्रात्प्रतिग्राह्यं अभयंचात्मत्राणात्मकंप्रीतिहेतुत्वाद्दक्षिणातुल्यंचण्डालादिभ्योपि स्वीकुर्यात् ॥ २४७ ॥

( ४ ) **राघवानन्दः** । द्रव्याभावे कथंदानमिति चेत्तत्रेदशींभिक्षांसार्थवादांसर्वतोग्राह्यामाह एधेतिचतुर्भिः । अभ्यु-द्यतंअयाचितोपपन्नं । एधआदिषण्णांविशेषणं । अन्यत्रकुलटाषण्डपतितेभ्यस्तथाद्विषइतियाज्ञवल्क्यवचनात्तदन्येभ्यः । शूद्रादिभ्योपिगृह्णीयात् । अभयं स्वात्मत्राणं तदेव दक्षिणा प्रीतिहेतुत्वात् ॥ २४७ ॥

( ५ ) **नन्दनः** । अथानापद्यपि प्रतिग्राह्याण्याह एधइति । अभयदक्षिणामभयदानम् ॥ २४७ ॥

( ६ ) **रामचन्द्रः** । ग्राह्यवस्तून्याह गन्धेति गन्धं सुगन्धं कर्पूरादिकं । मदभ्युदितं अभ्यर्थ्यदत्तम् । च पुनः उदकादिकं सर्वं प्रतिगृह्णीयात् ॥ २४७ ॥

**आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम् ॥ मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः ॥ २४८॥**

( १ ) **मेधातिथिः** । एधादतिरेकेण यदन्यद्द्रव्यंतस्याप्यनेन विशेषेण ग्राह्यतोच्यते । भिक्षाशब्दश्च प्रशंसायांप्रयुक्तोन भिक्षैवं विवक्षिता यद्यप्ययंसिद्धान्नालपतावचनः । भिक्षा किल स्वल्पत्वान्नातीव दोषावहा । ब्रह्मचारिणश्च सार्ववर्णिकी विहिता । एवमन्यदप्यनेनविशेषेण तत्तुल्यंदृष्टम् । भिक्षाशब्दस्यैवंविधार्थविवक्षया प्रयोगः । तथाहि महाभारते । गत्वाह्युभौभार्गवकर्मशालांपार्थौपृथाप्राप्यमहानुभावौ । तौयाज्ञसेनींपरमप्रतीतौ भिक्षेयथावेदयतांनराग्र्याविति । आहृतोपहृता तंदेशमानीता यत्र प्रतिग्राहीस्थितः । अभ्युद्यताऽग्रेस्थापिता वचनेनेङ्गितेन वा गृह्यतामितिनिवेदिता । पुरस्तात्पूर्वमप्रचोदिताऽयाचिता प्रतिग्रहीत्रा । स्वयंपरमुखेन वा दात्रा पूर्वेनोक्तमिदंमेद्रव्यमस्ति तत्प्रसादमाश्रित्य गृह्यतामिति केवलमतर्कितोपपादिता तत्कालएवदर्शिताभिप्राया तादृशींभिक्षांप्रजापतिर्हिरण्यगर्भोमेनेमन्यतेस्म । किमितिदुष्कृतकर्मणोऽपिसकाशाद्ग्राह्येति । दुष्कृतंपापंकर्मयस्यासौ दुःष्कृतकर्मा ॥ २४८ ॥

( २ ) **सर्वज्ञनारायणः** । भिक्षां आहृतांस्वंगृहं अभ्युद्यतांप्रयत्नोपहृतां पुरस्तात्पूर्वमप्रचोदितां दास्यामीत्यनिवेदिताम् ॥ २४८ ॥

( ३ ) **कुल्लूकः** । आहृतांसंप्रदानदेशमानीताम् । अभ्युद्यतामाभिमुख्येन स्थापिताम् । अप्रचोदितांप्रतिग्रहीत्रास्वयमन्यमुखेनवा पूर्वमयाचितांदात्राच तुभ्यमिदंददानीतिपूर्वमकथितांहिरण्यादिभिक्षां । नतु सिद्धान्नरूपां अन्नमभ्युद्यतंचेत्युक्तत्वात्पापकारिणोपि पतितादिवर्जंग्राह्याइतिविरिञ्चिरमन्यत ॥ २४८ ॥

( ४ ) **राघवानन्दः** । किंच आहृतां संप्रदानदेशमानीतांअभ्युदितां आभिमुख्येन स्थापितांअप्रचोदितां प्रतिग्रहीत्रा स्वयमन्यमुखेन वाऽयाचितांदात्रा तुभ्यंददामीति पूर्वमकथितांचगोहिरण्यादिरूपाम् ॥ २४८ ॥

( ५ ) **नन्दनः** । न केवलमभ्युद्यतमन्नंप्रतिग्राह्यमेव किंतुभोज्यमपीत्याह आहृतेति । आहृतांदात्राप्रतिग्रहीत्रेदातुमानीताम् । उद्यतांदेयत्वेनोत्क्षिप्ताम् । भिक्षामन्नम् ॥ २४८ ॥

( ६ ) **रामचन्द्रः** । आनीतां अभ्युदितां अभ्यर्थ्य प्रार्थ्य दत्तां भिक्षां नोदितां ग्राह्यां प्रजापतिः मेने अपि दुष्कृतकर्मणः सकाशात् ॥ २४८ ॥

**नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च ॥ न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ २४९ ॥**

**[ चिकित्सककृतघ्नानां शिल्पकर्तुश्च वार्धुषेः ॥ षण्ढस्य कुलटायाश्च उद्यतामपि वर्जयेत् ॥१॥‡ ]**

**[ न विद्यमानमेवंवै प्रतिग्राह्यं विजानता ॥ विकल्प्याविद्यमाने तु धर्महीनः प्रकीर्तितः ॥ २॥ § ]**

( १ ) **मेधातिथिः** । अथाग्रहणनिन्दार्थवादः । अभयोयत्रैतामवधीरयति तस्य पितरःश्राद्धंनाश्नन्ति नप्रतीच्छन्तीति । अग्निश्च देवेभ्योहव्यंन वहति पित्र्याद्दैवाच्चकर्मणोनफलंलभ्यतइत्यर्थः । अत्र कश्चिदाह अनुपयुज्यमानमपिदातुरनु-

---

‡ ( क, ख, ग, घ, ञ, ठ, ढ, ण, त, य, ल. ) । ( ट, ड. ) चिन्हितपुस्तकयोः सएव श्लोकोवर्तते परंतु तन्मध्ये केचनशब्दाभिन्नाःसन्ति अर्थस्तु एकएव ।

§ ( ल )

ग्रहार्थमवश्यमीदृशंग्रहीतव्यं तत्त्वयुक्तम् । निर्दोषताऽस्यायाचितप्रतिग्रहस्योच्यते । प्रतिप्रसवोह्ययम् प्रतिषिद्धस्यचप्रतिप्रसवोभवति । लौकिक्याचार्थितया प्राप्तिःप्रतिषिद्धा सैवप्रतिप्रसूयते ॥ २४९ ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चदशवर्षाणि पित्र्यं दैवंच तस्य वृथा भवति यस्तामवमन्यतेप्रतिक्षिपतीति निन्दार्थवादः । पूर्वविधिविशेषोदोषानांदृढीकरणार्थः ॥ २४९ ॥

( ३ ) **कुल्लूकः** । तेनोपकल्पितंश्राद्धेषु कव्यंपञ्चदशवर्षाणि पितरोन भुञ्जते । नच यज्ञेषु तेन दत्तंपुरोडाशादिहव्यमग्निर्वहति देवान्प्रापयति यस्तांभिक्षांन स्वीकरोति ॥ २४९ ॥

( ४ ) **राघवानन्दः** । ईदृशींपरित्यजन्हव्यकव्ययोःफलंनप्रामोतीत्याह नेति । अभ्यवमन्येत न स्वीकरोति ॥२४९॥

( ५ ) **नन्दनः** । तस्यदीयमानांभिक्षामभ्यवमन्यते प्रत्याख्याति ॥ २४९ ॥

( ६ ) **रामचन्द्रः** । यः पुरुषः एतादृशींभिक्षां अवमन्यते तस्य पुरुषस्य पितरः नाश्नन्ति अग्निः हव्यंन वहति न स्वीकरोतीत्युच्यते । भिक्षाशब्दः प्रशंसायांप्रयुक्तोन भिक्षैव भिक्षैव चेद्ब्रह्मचारिणः सार्ववार्णिकी अभिहिता तस्मादर्थविशेषे भिक्षाशब्दः अपरत्रच ॥ २४९ ॥

[ ( ६ ) **रामचन्द्रः** । चिकित्सकेति । चिकित्सकादिभिः उद्यतांभिक्षांवर्जयेत् ॥ १ ॥ ]

[ ( ६ ) **रामचन्द्रः** । नविद्येति । गन्धादिव्यतिरेकेण यदन्यद्द्रव्यंतस्याप्यनेन विशेषेण न ग्राह्यत्वम् ॥ २ ॥ ]

**शय्यांगृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि ॥ धानामत्स्यान्पयोमांसं शाकं चैव न निर्नुदेत् ॥ २५० ॥**

( १ ) **मेधातिथिः** । शय्यादीन्यनाहृतान्यपि न निर्णुदेन्न प्रत्याचक्षीत यदि गृहेऽवस्थितानि द्रव्याणि कश्चिदुच्यतेचेदमिदमाहराम्येतत्प्रमृष्यतां तदान प्रत्याख्येयानि ॥ २५० ॥

( २ ) **सर्वज्ञनारायणः** । पयोदुग्धं न निर्णुदेन्नपरिहरेत् । एतत्सर्वंप्रतिग्राह्यद्रव्यादागतं प्रयोजनाभावादिप्रतिसंधानेन न त्याज्यं त्यागेतु दोषइत्यर्थः ॥ २५०

( ३ ) **कुल्लूकः** । गन्धान्गन्धवन्ति कर्पूरादीनि । धानाभृष्टयवतन्डुलान् । पयःक्षीरं । पूर्वमाहरणोपायनिबन्धेन गवादीनामप्रत्याख्यानमुक्तं शय्यादीनि त्वयाचिताहृतान्यपि दात्रा स्वगृहस्थितान्ययाचितोपकल्पितानि न प्रत्याचक्षीत ॥ २५० ॥

( ४ ) **राघवानन्दः** किंच गुर्वादीनांपीष्टा नैतान्परित्यजेदित्याह शय्यामिति । मणीन् मरकतादीन् । धानाभृष्टयवान्एतान्ननिर्णुदेत् न त्यजेत् । गुर्वाद्युपजीवनार्थंसर्वमादेयम् ॥ २५० ॥

( ५ ) **नन्दनः** । अन्यदप्यभ्युद्यतं प्रतिग्राह्यमाह शय्यामिति । निर्णुदेन्निराकुर्यात् । निर्णुदेदितिवचनाद्दातुमभ्युद्यतमितिगम्यते ॥ २५० ॥

( ६ ) **रामचन्द्रः** । ग्राह्याण्याह शय्यामिति । शय्यागृहादीन्ननिर्नुदेत् न त्यजेदित्यर्थः ॥ २५० ॥

**गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवतातिथीन् ॥ सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥२५१॥**

( १ ) **मेधातिथिः** । गुरवउपदेशातिदेशैर्बहवः । भृत्याआश्रिताः स्मृत्यन्तरे तु संख्याताः । वृद्धौ तु मातापितरौ भा-

---

( २५० ) मणीन्दधि=फलंदधि ( ज, झ, ढ )

र्या साध्वी सुतः शिशुः । तानुद्धर्तुमिच्छुःक्षुधावसन्नान्देवतातिथींश्चार्चिष्यन्नित्यकर्मसंपत्त्यर्थंसर्वतः प्रतिगृह्णीया-त्साधुभ्योऽसाधुभ्यश्च । नतु तृप्येत्स्वयंततः तृप्तिःक्षुन्निवृत्तिरुपभोगश्च तन्न कुर्यात् । गुर्वादिप्रयोजनमेवतद्गृहीतव्यंनत्वात्मार्थम् ॥ २५१ ॥

( २ ) **सर्वज्ञनारायणः** । गुरून् मातृपित्राचार्योपाध्यायादीन् । उज्जिहीर्षन्नवृत्त्या नश्यतउत्तरिष्यन् । देवताअतिथींश्चार्चिष्यन्निति प्राक्संकल्पिकत्वे सत्यर्चनस्य सर्वतोनिन्दितादपि । तृप्येदुपयुञ्जीत तस्यांशेन ॥ २५१ ॥

( ३ ) **कुल्लूकः** । मातापित्रादिगुरून्भृत्यांश्च भार्यादीन् क्षुधावसन्नानुद्धर्तुमिच्छन्पतितादिवर्जंसर्वतःशूद्रादेरसाधुभ्यश्च प्रतिगृह्णीयात् । नतु तेन धनेन स्वयंवर्त्तेत ॥ २५१ ॥

( ४ ) **राघवानन्दः** । अतः कुलटादिभ्योऽपि प्रतिगृह्णीयादित्याह गुरूनिति । गुरूनुपदेष्टॄन् भृत्यानाश्रितान् भार्यादींश्चोज्जिहीर्षन् क्षुद्व्याधिभ्यउद्धर्तुमिच्छन् अदृष्टार्थमर्चिष्यन् न तु तृप्येत्तद्धनंस्वभोगाय नादद्यात् ॥ २५१ ॥

( ५ ) **नन्दनः** । एवंद्रव्यविशेषतः सर्वात्माप्रतिग्रहउक्तः इदानीमुपयोगविशेषतोऽप्याह गुरूनिति । गुरवः पित्रादयः । भृत्याःपुत्रदारादयः । उद्धरिष्यन्नापदइतिशेषः । ततःस्वयंन तृप्येत्तेनप्रतिगृहीतेन द्रव्येण स्वशरीरंन पोषयेत् ॥ २५१ ॥

( ६ ) **रामचन्द्रः** । गुरून्भृत्यंश्च उज्जिहीर्षन्अवृत्त्या नश्यतः उद्धरिष्यन्सर्वतः प्रतिगृह्णीयात् ततःप्रतिग्रहात्स्वयंन तृप्येत् ॥ २५१ ॥

**गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन् ॥ आत्मनोवृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा ॥२५२॥**

( १ ) **मेधातिथिः** । कथंतर्ह्यात्मायापयितव्योऽतआह । अभ्यतीतेष्वतीतेषुविना वा तैर्जीवन्तोऽपि यदि पृथग्वसन्ति । गुरुग्रहणंसर्वेषांचभृत्यानामपि प्रदर्शनार्थम् । आत्मनोवृत्तिंजीवनंप्रतीच्छन्नर्थयमानः साधुभ्योधार्मिकेभ्यःप्रतिगृह्णीयात् । जातेरत्रानुपादाच्छूद्रादपिधार्मिकादस्ति प्रतिग्रहः । तदुक्तं नाद्याच्छूद्रस्येत्यादि ॥ २५२ ॥

( २ ) **सर्वज्ञनारायणः** । अत्यतीतेषु मृतेषु विनातैस्तेषु जीवत्स्वपि । वृत्तिंजीवनं साधुतः प्रतिग्राह्यतएव ॥ २५२॥

( ३ ) **कुल्लूकः** । मातापित्रादिषु मृतेषु तैर्वा जीवद्भिरपि स्वयोगावस्थितैर्विना गृहान्तरे वसन्नात्मनोवृत्तिमन्विच्छन्सर्वदा साधुभ्योगृह्णीयादेव ॥ २५२ ॥

( ४ ) **राघवानन्दः** । गुर्वाद्युपरते तु न तथा कुर्यादित्याह गुरुष्विति । पितृमात्राचार्येष्वभ्यतीतेषु प्रव्रज्यामरणमहापातकाद्यैरसंबद्धेषु ॥ २५२ ॥

( ५ ) **नन्दनः** । आत्मार्थंसाधुभ्यएव प्रतिगृह्णीयान्नासाधुभ्यइत्याह गुरुषुत्विति । तैर्विनागुरुभिर्विना स्वप्रतिगृहीतन्द्रव्यनिरपेक्षेषु गुरुष्वित्यर्थः । सदाआपद्यपि ॥ २५२ ॥

( ६ ) **रामचन्द्रः** । गुरुषु अभ्यतीतेषु नष्टेषु सत्सु तैर्गुर्वादिभिर्विना गृहे वसन्साधुतः सकाशात् आत्मनो वृत्ति मन्विच्छन् सदा गृह्णीयात् ॥ २५२ ॥

**आर्धिकः कुलमित्रं च गोपालोदासनापितौ ॥ एते शूद्रेषु भोज्यान्नायश्चात्मानं निवेदयेत् ॥ २५३ ॥**

( १ ) **मेधातिथिः** । अर्धसीरी आर्धिकः कुटुम्बीभूमिकर्षकइतियउच्यते । गोपालदासौ संबन्धिशब्दौ योयस्यगाः पा-

लयति स तस्य भोज्यान्नः। यश्चात्मानंनिवेदयेत् । अहंत्वच्छरणःत्वयिविश्रब्धोवत्स्यामीत्येवंयआत्मानमर्पयति सोऽपि भोज्यान्नः ॥ २५३ ॥

( २ ) **सर्वज्ञनारायणः**। आर्धिकोर्धभागेनतस्यभूमौकृषिंकुर्वन्। कुलमित्रं कुलपरंपरमित्रसंततिः। गोपालः स्वीयगवांपालकः। दासोगर्भदासः। नापितोपिमुण्डनादिकर्मकारी। आत्मानंनिवेदयेत्तवाहमिति। भोज्यान्नाएषां कन्दुपक्वशूलपक्वपायसदधिसक्तवः स्मृत्यन्तरोक्ताभोज्याः ॥ २५३ ॥

( ३ ) **कुल्लूकः**। आर्द्धिकःकार्षिकःसंबन्धिशब्दाश्चैते योयस्य कृषिंकरोति सतस्य भोज्यान्नः। एवंस्वकुलस्य मित्रंयोयस्य गोपालोयोयस्यदासोयोयस्य नापितःकर्म करोति योयस्मिन्नात्मानंनिवेदयति दुर्गतिरहंत्वदीयसेवांकुर्वन्नितिच त्वत्समीपे वसामीतियःशूद्रस्तस्य भोज्यान्नः ॥ २५३ ॥

( ४ ) **राघवानन्दः**। स्वार्थंशूद्रेभ्योयदि गृह्णीयात्तदा एभ्यः षड्भ्यएवेत्याह आर्धिकइति । आर्धिकः कर्षकः। कुलमित्रं कुलपरंपरया मित्रतांगतं। दासः क्रीतः। यआत्मानमतिदुर्गतिरहंत्वदीयसेवामेव कुर्वंस्त्वत्समीपे वत्स्यामीति निवेदयेत्तस्मादपि ग्राह्यम् ॥ २५३ ॥

( ५ ) **नन्दनः**। शूद्रेष्वपि च कानिचिद्भोज्यान्नान्याह आर्धिकइति। परस्य क्षेत्रधनादिकमाश्रित्य कृषिवाणिज्यादिना धनमुत्पाद्य तदर्धंक्षेत्रादिस्वामिने दत्त्वा योऽर्धेन जीवति सःआर्धिकः । यश्चात्मानंनिवेदयेत् आत्मनिवेदकोनामस्ववशः कर्मकरः सोऽपि भोज्यान्नः ॥ २५३ ॥

( ६ ) **रामचन्द्रः** । भोज्यानाह आर्धिकइति । आर्धिकः स्वकृषिफलभागी । कुलमित्रंपितृपितामहादिक्रमागतं। दासः गर्भदासः। नापितः एते शूद्रेषु भोज्यान्नाः। यःपुरुषः आत्मानंनिवेदयति प्रयच्छति वाङ्मनःकायकर्मभिः। गृहस्थाश्रमप्रकरणम् ॥ २५३ ॥

**यादृशोस्य भवेदात्मा यादृशं च चिकीर्षितम् ॥ यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥२५४॥**

( १ ) **मेधातिथिः**। आत्मनिवेदनमेव व्यक्तीकरोति । अस्य शूद्रस्य यादृशआत्मा भवेत्यत्कुलीनोयद्देशोयच्छिल्पंयच्चिकीर्षितं। अनेन कार्येण त्वामहमाश्रितोधर्मेणअन्येनवाप्रयोजनेनराजकुलरक्षादिना । यथावोपचरेच्छिल्पेनानेन त्वांसेवे पादवन्दनादिगृहकृत्यकरत्वे सर्वस्मिन्निवेदितआत्मानिवेदितोभवति । अन्येतु आत्मावैपुत्रनामासीत्यपत्यवचनमात्मशब्दंमन्यमानाः यस्य शूद्रस्य कामतः प्रवृत्तादुहिता विवाह्यते तस्यानेन भोज्यान्नतोच्यत इत्याहुःतदयुक्तम्। न तावदयमात्मशब्दोदुहितरि विस्पष्टंप्रयुक्तः। पुत्रशब्दोहिपुंस्येवप्रसिद्धतरः। नचपरोक्षशब्दोपदेशेनकिंचित्प्रयोजनम्। एतावदेववक्तुंयुक्तंदद्याद्दुहितरंचयइति । अन्येत्वार्धिकादिग्रहणंशूद्रोपलक्षणार्थंवर्णयन्ति। तेन पारशवस्य श्वशुरस्य च भोज्यान्नता सिद्धाभवति ॥ २५४ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनिवेदनप्रकारमाह यादृशइति । आत्मदेहोजनितः कुलतः धर्मतश्च। चिकीर्षितं तदीयंकर्म। यथायावद्वृत्तिलाभेन निवेदयेन्मांपरिगृहाणेति ॥ २५४ ॥

( ३ ) **कुल्लूकः**। यथात्मनिवेदनंशूद्रेण कर्त्तव्यंतदाह यादृशइति। अस्य शूद्रस्य कुलशीलादिभिर्यादृशआत्मास्वरूपंयच्चास्य कर्मकर्तुरीप्सितंयथाचानेन सेवा कर्त्तव्या तेन प्रकारेणात्मानंकथयेत् ॥ २५४ ॥

( ४ ) **राघवानन्दः**। निवेदनप्रकारमाह यादृशइति । आत्मा कुलशीलादिः । तथा चोपचरेत् कार्षं करिष्यामि गृहादिपरिचर्यांवेति ॥ २५४ ॥

( ५ ) **नन्दनः** । शूद्रस्यात्मनिवेदनप्रकारंप्रसङ्गादाह यादृशइति । अस्य शूद्रस्य । आत्मायादृशः कुलीनोऽकुलीनो दक्षोऽदक्षोऽपि वा भवेत् । यादृशमस्यचिकीर्षितमात्मनोरक्षणादिप्रयोजनंदृष्टमदृष्टंवा । एनंस्वामिनंयथोपचरेद्देधोदकाहरणादिना यथा सेवेत तथाऽऽत्मानंनिवेदयेत् ॥ २५४ ॥

( ६ ) **रामचन्द्रः** । आत्मनिवेदनमित्याह यादृशेति । अस्य शूद्रस्य यादृशः यज्जातिविशिष्टः कुलतः कर्मतः आत्मा मनः । आत्मा पुत्रोवा यस्य भवेत् यादृशंचिकीर्षितं । तदीयं कर्म वाञ्छितं यथा एनंद्विजं उपचरेत् तथात्मानंनिवेदयेत् ॥ २५४ ॥

**योन्यथासन्तमात्मानमन्यथा सत्सु भाषते ॥ सपापकृत्तमोलोके स्तेनआत्मापहारकः ॥२५५॥**

( १ ) **मेधातिथिः** । अन्यथाभूतमधार्मिकंसन्तंसत्सुशिष्टेष्वन्यथाभाषते धार्मिकोऽहमिति । अन्येन वा प्रयोजनेन चाश्रितोऽन्यद्दर्शयति ससर्वेषांपापकृतामधिकतमः पापकृत् । स्तेनश्चौरः । आत्मापहारकोन्यश्चौरोद्रव्यमपहरत्ययंपुनरात्मानमेवेतिनिन्दाशयः ॥ २५५ ॥

( २ ) **सर्वज्ञनारायणः** । यस्तु जातिमपन्हुते तस्यदोषमाह योन्यथेति । आत्मापहारकः स्वजातेरात्मन्यपन्हवकर्ता अतस्तेनः अतः पापकृत्तमः ॥ २५५ ॥

( ३ ) **कुल्लूकः** । यइतिसामान्यनिर्देशात्प्रकृतशूद्रादन्योपि यःकश्चित्कुलादिभिरन्यथाभूतमात्मानमन्यथा साधुषु कथयति सलोकेऽतिशयेन पापकारीचौरः । यस्मादात्मापहारकः । अन्यःस्तेनोद्रव्यान्तरमपहरत्ययंतु सर्वप्रधानमात्मानमेवापहरेत् ॥ २५५ ॥

( ४ ) **राघवानन्दः** । अहोअन्यथाभाषणान्नाधिकंपापमस्तीति मिथ्योक्तौ साक्रोशंदोषमाह यइति द्वाभ्यां । अन्यथासंन्तकुलादिभिः । सत्स्वितिविशेषणाद्राजदण्डादौ मिथ्यापि कुर्यात् । आत्मापहारकः । तदुक्तम् । किंतेन न कृतंपापंचोरेणात्मापहारिणा । योन्यथासन्तमात्मानमन्यथा प्रतिपद्यतइति ॥ २५५ ॥

( ५ ) **नन्दनः** । आत्मनिवेदने शूद्रेण यथार्थमेव वक्तव्यं नान्यथेत्याह यइति ॥ २५५ ॥

( ६ ) **रामचन्द्रः** । यःअन्यथासन्तमात्मानम् स्वयंसत्सु साधुष्वन्यथा भाषते सःस्तेन आत्मापहारकः ॥ २५५ ॥

**वाच्यर्थानियताः सर्वे वाङ्मूलावाग्विनिःसृताः ॥ तांस्तु यःस्तेनयेद्वाचं ससर्वस्तेयकृन्नरः ॥२५६॥**

( १ ) **मेधातिथिः** । शब्दार्थयोर्नित्यसंबन्धाद्वाचिशब्देऽर्थानियताउच्यन्ते । वाङ्मूलावक्तुः स्वाभिप्रायप्रकाशनस्य तदधीनत्वात्तन्मूलाउच्यन्ते । वाचोविनिःसृताः संभूताः श्रोतुरपि प्रतिपत्तेस्तत्तुल्यत्वाद्वाग्विनिःसृताउच्यन्ते । न चात्र पौनरुक्त्याशङ्कापरिहारे प्रयतितव्यम् । अनुवादत्वादस्ययथाकथंचिद्वस्तुपरिहारत्वात् । तांवाचंयश्चोरयति मुष्णात्यन्यदुक्त्वाऽन्यदनुतिष्ठत्यन्येनाभिप्रायेण संगच्छतेऽन्यच्चदर्शयति ससर्वस्तेयकृत् । नास्तितद्द्रव्यंसुवर्णादियत्तेन नापह्रतंभवतीतिनिन्दार्थवादोनृतवचनस्य ॥ २५६ ॥

( २ ) **सर्वज्ञनारायणः** । वाचि नियताअविनाभूताः । सर्वेषांशब्दानुविद्धतयैव प्रतीतेः । वाङ्मूलवाचा सूक्ष्मशब्दब्रह्मणा जनिताः वाग्विनिसृताः । वाक्सहकृतैः स्वकारणैर्जन्याः वागधीनत्वात्सर्वव्यवहाराणाम् । स्तेनयेन्मिथ्याभिधानेनान्यरूपांकृत्वोपादद्यात् ॥ २५६ ॥

( ३ ) **कुल्लूकः**। सर्वेऽर्थाःशब्देषु नियतावाच्यत्वेन नियताः वाङ्मूलाश्च शब्दास्तेषांप्रतिपत्तौ शब्देभ्यएवप्रतीयन्ते। प्रतीतिद्वारेण शब्दमूलत्वंशब्देभ्यएवावगम्य चानुष्ठीयन्तइतिवाग्विनिर्गताइत्युच्यन्ते। अतएव वेदशब्देभ्यएवादावितिब्रह्मणोपि सृष्टिर्वेदशब्दमूलैवोक्ता। अतोयस्तांवाचंस्तेनयेत्स्वार्थव्यभिचारिणींवाचयति सनरःसर्वार्थस्तेयकृद्भवति ॥ २५६ ॥

( ४ ) **राघवानन्दः**। किंच वाचीति। वागर्थयोर्नित्यसंबन्धात्तंविना तैस्तत्प्रयोगायोगाद्वाङ्मूलाः। तदधीनत्वंवक्तुरभिप्रायादेःतएवार्थावाग्विनिःसृताःपरबुद्धौ संक्रान्ताभवन्ति। अतस्तांयस्तेनयेत्ससर्वस्तेनएवेति भावः ॥ २५६ ॥

( ५ ) **नन्दनः**। पापकृत्तमत्वमेवोपपादयति वाच्यर्थाइति। वाचि शब्देसर्वेऽर्थानियता अभिधेयतयासंबद्धाः। वाङ्मूलावाक्परिणामभूताः। वाग्विनिःसृताः वाचा प्रतिपादिताः। एतैर्हेतुभिः सर्वार्थावाङ्मयाइत्यर्थः। तांसर्वार्थमयींवाचंयः स्तेनयेत्तत्त्ववचनंतिरस्कृत्यान्यथंब्रूयात्ससर्वस्तेयकृत्सर्वार्थचोरः ॥ २५६ ॥

( ६ ) **रामचन्द्रः**। वाग्विनिसृतावागिन्द्रियाद्विनिसृतामुखान्निर्गताः वाचःवाच्यार्थाः। वाच्याश्च तेअर्थाश्च वाच्यार्थाः। वाङ्मूलाः वचनमूलाः नियताः तद्यथायः वाच्यार्थः सएव मुखान्निःसरतीति भावः। तुपुनः यः पुरुषः तांवाचंस्तेनयेत् विपरीतं वदेत् अन्यदुक्त्वा अन्यदनुतिष्ठति सःसर्वस्तेयकृच्चौर्यकृत् ॥ २५६ ॥

**महर्षिपितृदेवानांगत्वानृण्यंयथाविधि ॥ पुत्रे सर्वं समासज्य वसेन्माध्यस्थमाश्रितः ॥ २५७ ॥**

( १ **मेधातिथिः**। गृहस्थस्यैवेदंप्रकारान्तरमुच्यते। महर्षीणामानृण्यंस्वाध्यायेन पितृणामपत्योत्पादनेन देवानांयज्ञैर्यथोक्तैस्त्रिभिर्ऋणैर्ऋणवानितिमत्वा कृत्वैतत्त्रयंपुत्रे प्राप्तव्यहारेसर्वगृहकुटुम्बव्यवहारंसमासज्य सन्यस्य वसेद्गृहएवमाध्यस्थ्येनास्थितस्त्यक्ताहंकारइदंमेधनमिदंमेपुत्रदारमिदंमेदासीदासमितिस्वबुद्धिंसंत्यज्यासीत। नाहंकस्यचिन्न कश्चिन्ममेतित्यक्तस्वतृष्णतामाध्यस्थ्यम्। अयंचसन्यासःकामानांचदृष्टानांचकर्मणांनसर्वेषामुत्तरत्रदर्शयिष्यामः ॥ २५७ ॥

( २ ) **सर्वज्ञनारायणः**। महर्षीणामध्ययनेन पितॄणांशुद्धसंतानोत्पादनेन देवानांयज्ञेन माध्यस्थंप्रवत्यौंदासीन्यमास्थितोवेदसन्यासिकोभूत्वेत्यर्थः ॥ २५७ ॥

( ३ ) **कुल्लूकः**। गृहस्थस्यैव संन्यासप्रकारोयमुच्यते। महर्षीणांस्वाध्यायेन पितॄणांपुत्रोत्पादनेन देवतानांयज्ञैर्यथाशास्त्रमानृण्यंगत्वा योग्यपुत्रे सर्वकुटुम्बचिन्ताभारमारोप्य माध्यस्थमाश्रितःपुत्रदारधनादौ त्यक्तममत्वोब्रह्मबुद्ध्या सर्वत्र समदर्शनोगृहएव वसेत् ॥ २५७ ॥

( ४ ) **राघवानन्दः**। सर्वाश्रमसाधारणंभक्ष्याभक्ष्यंवक्तुंगृहस्थस्य हितमुपदिशन्कृतकृत्यतामाह महर्षीति चतुर्भिः। आनृण्यमुक्तेन वेदाध्ययनेन ऋषीणां। पुत्रोत्पादनेनश्राद्धेनपितॄणां। यज्ञेनदेवानामितिसमासज्यत्वंब्रह्मात्वंयज्ञस्त्वंलोकइत्यादिसंभाष्यमाध्यस्थमुदासीनताम् ॥ २५७ ॥

( ५ ) **नन्दनः**। पुत्रवतोगृहस्थस्याश्रमान्तरासमर्थस्योत्तरे वयसि कर्तव्यमाह महर्षीति। माध्यस्थ्यंशोकहर्षादिराहित्यम् ॥ २५७ ॥

( ६ ) **रामचन्द्रः**। माध्यस्थं प्रवृत्यौदासीन्यं आस्थितो वसेत्। वेदाध्ययनेन सुतोत्पादनेन यज्ञैः आनृण्यंगत्वा वनंमविशेदित्यर्थः ॥ २५७ ॥

**एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः॥ एकाकी चिन्तयानोहि परं श्रेयोधिगच्छति॥२५८॥**

( १ ) **मेधातिथिः**। कृते सर्वकर्मसन्यासइदंतस्य विशेषतः कर्तव्यम्। एकाक्यसहायःसन्नविद्यमानसंभाषणोऽनाकुले विविक्तेनिर्जने रहसि चिन्तयेद्ध्यायेद्धितमात्मन्युपनिषत्सु या ब्रह्मोपासना विहितास्ताअभ्यसेत्। तच्चिन्तया तदभ्यासे परंश्रेयोमोक्षाख्यमधिगच्छति प्राप्नोति॥ २५८॥

( २ ) **सर्वज्ञनारायणः**। विविक्ते शुद्धस्थाने। आत्मनोहितं आत्मनोहितसाधनम्। श्रेयोब्रह्म॥ २५८॥

( ३ ) **कुल्लूकः**। काम्यकर्मणांधनार्जनस्य च कृतसंन्यासः षष्ठाध्याये वक्ष्यमाणः पुत्रोपकल्पितवृत्तिरेकाकी निर्जनदेशआत्महितंजीवस्य ब्रह्मभावंवेदान्तोक्तंसर्वदा ध्यायेत्। यस्मात्तद्ध्यायन्ब्रह्मसाक्षात्कारेण परंश्रेयोमोक्षलक्षणं प्राप्नोति॥ २५८॥

( ४ ) **राघवानन्दः**। ततःकिंतत्राह एकाकीति। आत्मनेहितं यत्त्वंहिततमंमन्यसइति श्रुतेर्हितंमोक्षःतदुपायमित्यर्थः॥ २५८॥

( ५ ) **नन्दनः**। एकाकीइन्द्रियमनःप्रभृतिबाह्यसहायनिरपेक्षः। चिन्तयानः परमात्मानमितिशेषः। परंश्रेयः मोक्षम्॥ २५८॥

( ६ ) **रामचन्द्रः**। एकाकी चिन्तयेदित्यर्थः। आत्मनः हितं हितरूपं। ऐश्वर्यं चिन्तयेद्यतिरित्यर्थः॥ २५८॥

**एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती॥ स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः॥ २५९॥**

( १ ) **मेधातिथिः**। अध्यायार्थोपसंहारएषावृत्तिर्विप्रस्य गृहस्योक्ता। शाश्वती नित्या। अनित्याह्यापदिवक्ष्यते। विप्रग्रहणाद्ब्राह्मणस्यैव स्नातकव्रतानांकल्पोविधिः। सत्वंनामात्मगुणस्तस्यवृद्धिकरः। शुभः प्रशस्तः। प्रशंसैषा॥२५९॥

( २ ) **सर्वज्ञनारायणः**। वृत्तिर्जीवनोपायः। स्नातकव्रतस्य कल्पः प्रकारः। सच प्रकाशः॥ २५९॥

( ३ ) **कुल्लूकः**। अयमध्यायार्थोपसंहारः। एषाकृतादिवृत्तिर्गृहस्थस्य ब्राह्मणस्योक्ता शाश्वती नित्या आपदि त्वनित्या वक्ष्यते। स्नातकव्रतविधिश्चसत्त्वगुणस्य वृद्धिकरणप्रशस्तउक्तः॥ २५९॥

( ४ ) **राघवानन्दः**। विप्रस्येतिश्रुतेरुक्तस्नातकव्रतकलापोब्राह्मणस्यैवासाधारणः॥ २५९॥

( ५ ) **नन्दनः**। विप्रस्य वृत्तिरद्रोहेणैव भूतानामित्यादिनोक्ता। स्नातकव्रतकल्पश्चवेदोदितंस्वकंकर्मइत्यादिनोक्तः॥ २५९॥

**अनेन विप्रोवृत्तेन वर्तयन् वेदशास्त्रवित्॥ व्यपेतकल्मषोनित्यं ब्रह्मलोके महीयते॥ २६०॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायांसंहितायांचतुर्थोध्यायः॥ ४॥ ॥ ५ ५॥**

( १ ) **मेधातिथिः**। सर्वस्यास्य फलकथनमेतत्। अनेनविप्रोवर्तयन्वर्तमानोवेदशास्त्रविद्व्यपेतकल्मषः प्रतिषेधापराधजंपापकल्मषंतद्व्यपेतंव्यपनीतंप्रायश्चित्तैः। तेनैतदुक्तंभवति विहितकरणात्प्रतिषिद्धस्यानासेवनात्कथंचित्कृतस्य प्रायश्चित्तैर्निष्क्रीतत्वात्। ब्रह्मलोके महीयते स्थानविशेषेमहिमानंप्राप्नोति। दर्शनान्तरंब्रह्मरूपः संपद्यतइतिसिद्धम्॥ २६०॥

॥ इति भट्टवीरस्वामिसूनोर्भट्टमेधातिथिविरचिते मनुभाष्ये चतुर्थोध्यायः॥ ४॥ ॥ ५॥ ॥ ५॥

( २ ) **सर्वज्ञनारायणः** । वृत्तेनाचरणेन । विप्रइतितस्य प्राधान्यादुक्तम् । वेदः श्रुतिः शास्त्रंधर्मशास्त्रम् । अत्र-स्नातकव्रतमध्ये केषांचिदन्यत्रोक्तानामपि पुनरभिधानं स्नातकव्रतलोपनिमित्तैकाहत्र्यहभोजनप्रायश्चित्तप्राप्त्यर्थमिति द्रष्टव्यम् ॥ २६० ॥

व्यात्द्दतमनुतात्पर्यप्रतिहतकुनिबन्धदर्शितव्याख्याम् । नारायणस्यसूक्तिंसर्वज्ञस्यानुसंधत्ते ॥ १ ॥

॥ इति सर्वज्ञनारायणकृतौ मन्वर्थविवृतौ चतुर्थोध्यायः ॥ ४ ॥ ॥छ॥

( ३ ) **कुल्लूकः** । सर्वस्योक्तस्य फलकथनमिदं । अनेन शास्त्रोक्ताचारेण वेदविद्ब्राह्मणोवर्तमानोनित्यकर्मानुष्ठा-नात्क्षीणपापःसन्ब्रह्मज्ञानप्रकर्षेण ब्रह्मैव लोकःतस्मिन्लीनोमहिमानंसर्वोत्कर्षंप्राप्नोति ॥ २६० ॥

इति कुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ छ ॥

( ४ ) **राघवानन्दः** । अनेन क्रमेण मोक्षोपायचिन्तनपर्यन्तेन वृत्तेन कृतेनानुष्ठितेन व्यपेतकल्मषःविगतंनिषेका-पराधजंकल्मषंपापंयस्य सः । महीयते पूज्यतया व्यवतिष्ठतइतिभावः ॥ २६० ॥

॥ इति श्रीराघवानन्दविरचितायां मन्वर्थचन्द्रिकायां चतुर्थोध्यायः ॥ ४ ॥

( ५ ) **नन्दनः** । अनेनोक्तेन चरितेन । वर्तयन्देहयात्रांयापयन् । व्यपेतकल्मषः विमुक्तपुण्यपापः । ब्रह्मलोके प-रब्रह्मसाक्षात्कारे सति । महीयतेआध्यात्मिकैरितिशेषः ॥ इति श्रीनन्दनविरचितेमानवव्याख्याने चतुर्थोऽध्यायः ॥ ४ ॥

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ पञ्चमाध्यायप्रारम्भः ॥

श्रुत्वैतानृषयोधर्मान् स्नातकस्य यथोदितान् ॥ इदमूचुर्महात्मानमनलप्रभवं भृगुम् ॥ १ ॥

( १ ) **मेधातिथिः** । ब्रह्मचारिगृहस्थयोरध्यायत्रयेयेधर्माविहितास्ताञ्छ्रुत्वा ऋषयोमरीच्यादयोभृगुमाचार्यमिदं-वक्ष्यमाणंवस्त्वब्रुवन् पृष्टवन्तः । ननु चात्र स्नातकस्येति श्रूयते तत्र ब्रह्मचारिग्रहणंकिमर्थम् । उच्यते । वृत्तसंकीर्तनमेतत् । ब्रह्मचारिणोधर्माउक्ताएव । महात्मानमनलप्रभवमिति च भृगुविशेषणम् । अनलादग्नेःप्रभवउत्पत्तिस्तस्य । ननु प्रथमेऽध्याये अहंप्रजाःसिसृक्षुरित्यत्र मनोरपत्यंभृगुरुक्तः । सत्यमर्थवादः । अमुत्र अग्नेःसकाशाद्भृगोर्जन्मश्रुतं तद्दर्शने नैवमुक्तम् । तथाच नामनिर्वचनम् । भृष्टाद्रेतसःप्रथममुददीप्यत तदसावादित्योऽभवत् यद्द्वितीयमासीत्तद्भृगुरिति । उपचारतोवैतदुच्यते । तेजस्वितासामान्यादग्नेरिव प्रसवइति । नचात्राभिनिवेष्टव्यं कतरःपक्षो युक्तइति । अनिदंपरत्वादस्य शास्त्रस्य सर्वएवायंप्रश्नप्रतिवचनसंदर्भोवक्ष्यमाणस्यान्नदोषस्यगौरवज्ञापनार्थंपरिग्रहदुष्टादन्नस्वभावदुष्टंगुरुतरमिति । संबन्धिदोषात्स्वरूपदोषोबलवानन्तरङ्गत्वात् । ननुच पूर्वबहुतरंप्रायश्चित्तंश्रूयते अमत्याक्षपणंच्यहमिति इदंतु शेषेषूपवसेद-हरितितत्कथमस्यगुरुतरत्वमुच्यते । लशुनाद्यपेक्षमेतत् । तेषु हि मत्या जग्ध्वापतेदिति पतितप्रायश्चित्तंभवति ॥ १ ॥

( २ ) **सर्वज्ञनारायणः** । अथ भक्ष्याभक्ष्यविवेकंप्रस्तौति श्रुत्वैतानिति । अनलभवमिति द्वितीयसृष्टौ तस्यानल-रूपाद्ब्रह्मशुक्राडुद्भूतत्वात् यथा यद्द्वितीयमासीत्तद्भृगुरभवदित्यैतरेयब्राह्मणे ॥ १ ॥

( ३ ) **कुल्लूकः** । ऋषयःस्नातकस्यैतान्यथोदितधर्मान्श्रुत्वा महात्मानंपरमार्थपरंभृगुमिदंवचनमब्रुवन् । यद्यपि प्रथमाध्याये दशप्रजापतिमध्ये भृगुंनारदमेव चेति भृगुसृष्टिरपि मनुतएवोक्ता तथापि कल्पभेदेनाग्निप्रभवत्वमुच्यते । तथाच श्रुतिः तस्य यद्रेतसःप्रथमंदेदीप्यते तदसावादित्योऽभवत् यद्द्वितीयमासीद्भृगुरिति । अतएव भ्रष्टाद्रेतसउत्पन्न-त्वाद्भृगुः ॥ १ ॥

( ४ ) **राघवानन्दः** । वर्तिष्यमाणार्थंवृत्तंकीर्तयति श्रुत्वेति । श्रोतॄणांमेधावित्वेवक्तुःशास्त्रकथनेश्रद्धास्यादितिसूच-नार्थमध्यायत्रयेणब्रह्मचारिगृहस्थयोर्विदितान्धर्मान्मरीच्यादयोऽनुवदन्ति श्रुत्वेत्यादिना । अनलप्रभवंभृगुमिति तदुक्तंशा-न्तिपर्वणि ॥ शुक्रेहुतेऽग्नौतस्मिंस्तुप्रादुरासुस्त्रयःप्रभो ॥ पुरुषावपुषायुक्ताः स्वैःस्वैःप्रसवजैर्गुणैः ॥ भृगुत्वेनभृगुःपूर्वमङ्गारेभ्यो-ङ्गिराभवदित्यादि ॥ १ ॥

( ५ ) **नन्दनः** । मनुपुत्रस्यैव भृगोर्वरुणयज्ञेऽनलप्रभवत्वंपुराणे श्रूयते । तस्मान्नपूर्वापरविरोधः ॥ १ ॥

( ६ ) **रामचन्द्रः** । अथ भक्ष्याभक्ष्यप्रकरणमाह श्रुत्वेति कांचित्पतिव्रतांदृष्ट्वा ब्रह्मणः शुक्रमपतत् ब्रह्मातदातच्छु-क्रमग्निकुण्डेऽक्षिपत् तदग्निकुण्डाज्जातो भृगुः । अनलप्रभवंभृगुमृषयइदमूचुः द्वितीयसृष्टावनलरूपत्वात् ॥ १ ॥

**एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम् ॥ कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ॥ २ ॥**

( १ ) **मेधातिथिः** । यन्महर्षिभिः पृष्टंतदिदानींदर्शयति । एवमिति शास्त्रव्यापारपरामर्शः । यथोक्तमिति शास्त्रार्थं परामृशति । एतेन शास्त्रसंदर्भेण यादृशोधर्मउक्तस्तत्पुनस्तमनुतिष्ठतांद्विजातीनां । विप्रग्रहणस्य दर्शनार्थत्वाद्वक्ष्यत्येतदुक्तं-द्विजातीनामिति । कथंमृत्युः प्रभवति स्नातकावस्थायांब्रह्मचर्यावस्थायांवा यतःपरिपूर्णायुर्भिस्तैर्भवितुंयुक्तं पुरुषायुषजीविभिः शतवर्षं पुरुषाणामायुस्ततः पुरा मृत्युर्मरणमेषांन युक्तं यतउक्तमाचाराल्लभतेह्यायुर्जपतांजुव्हतामिति ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । कथंमृत्युरिति कस्मिन्स्नातकव्रते त्यक्ते मृत्युभयमित्यर्थः । वेदशास्त्रविदामिति स्वधर्मज्ञानसाधनोपदर्शनेन तज्ज्ञानंदर्शितम् ॥ २ ॥

( ३ ) **कुल्लूकः** । एवंयथोक्तंस्वधर्मंकुर्वतांब्राह्मणानांश्रुतिशास्त्रज्ञानांवेदोदितायुषः पूर्वंकथंमृत्युःप्रभवति । आयुरल्पत्वहेतोरधर्माचरणस्याभावात् । सकलसंशयोच्छेदनसमर्थत्वात्प्रभोइतिसंबोधनम् ॥ २ ॥

( ४ ) **राघवानन्दः** । आश्रमचतुष्टयसाधारणत्वादस्याध्यायस्य चातुर्वर्ण्यचातुराश्रम्यसाधारणधर्मप्रतिपादकत्वमाह एवमिति । शास्त्रोक्तंस्वधर्ममनुतिष्ठतां । कथमिति प्रकारे विप्रपदमुपलक्षणम् । चातुर्वर्ण्यस्य वेदशास्त्रविदामपीति भावः ॥ २ ॥

( ५ ) **नन्दनः** । आचारवान्पुरुषःशतंवर्षाणिजीवतीति भवता पूर्वमुक्तम् । तेनस्वधर्ममनुतिष्ठतामकालमृत्युर्नोपपद्यतइति ॥ २ ॥

( ६ ) **रामचन्द्रः** । विप्राणां यथोक्तमेवमनुतिष्ठतांमृत्युःकथंप्रभवति ॥ २॥

**सतानुवाच धर्मात्मा महार्षीन्मानवोभृगुः ॥ श्रूयतां येन दोषेण मृत्युर्विप्रान् जिघांसति ॥ ३॥**

( १ ) **मेधातिथिः** । ननुच स्वधर्ममनुतिष्ठतामिति प्रश्नेन युक्तं येन दोषेणेति उत्तरश्च ग्रन्थोनैवोपपद्यते ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । मानवः प्रथमजन्मनि मनुसुतत्वात् ॥ ३ ॥

( ३ ) **कुल्लूकः** । समनोःपुत्रोभृगुर्धर्मस्वभावोयेन दोषेणाल्पकाले विप्रान् हन्तुमिच्छति मृत्युः श्रूयतामित्येवंतान्महर्षीञ्जगाद ॥ ३ ॥

( ४ ) **राघवानन्दः** । तत्रापि चतुरःप्रकारानाह सतानिति द्वाभ्यां । जिघांसति नरकाय्पै ॥ ३ ॥

( ६ ) **रामचन्द्रः** । भृगुस्तान्महर्षीनुवाच येन दोषेण विप्रान्मृत्युर्जिघांसतीति श्रूयताम् ॥ ३ ॥

**अनभ्यासेन वेदानामाचारस्य च वर्जनात् ॥ आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥४ ॥**

( १ ) **मेधातिथिः** । उच्यते । अनभ्यासेनेत्यादिदृष्टान्तत्वेनोच्यते । यथा भवद्भिः प्रतिपन्नंवेदानभ्यासादयः पुरायुषोमरणहेतवः । एवंवक्ष्यमाणोऽन्नदोषः । सत्स्वपि वेदाभ्यासादिषु नतावत्स्वधर्मोयःपूर्वत्रकथितः किंत्वयमन्नदोषोगरीयस्तरः पृथक्प्रकरणाच्चैतदभिधीयते । नास्नातकस्यविज्ञानलेपमात्रमधर्मोयम् ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । अनभ्यासेनेति एतैनैते प्रतिनियताः स्नातकधर्माः सर्वथा नातिक्रमणीयाइतिदर्शितम् । अनभ्यासेनानध्ययनेनाधीतानांच त्यागेन । आचारस्य च शिष्टाचरितस्य मङ्गल्यालम्भनादेः । आलस्यात् अलसतया क्रियमाणेषु कर्मसु शक्त्याङ्गानुपसंहारात् । अन्नदोषाद्दुष्टान्नाशनात् । तत्र केचित्संसर्गदुष्टान्नदोषागणान्नमित्यादिना पूर्वाध्याये उक्ताः ॥ ४ ॥

( ३ ) **कुल्लूकः** वेदानामनभ्यासात्स्वीयाचारपरित्यागात् । सामर्थ्ये सत्यवश्यकर्तव्यकरणानुत्साहलक्षणादालस्यात् । अदनीयदोषाच्च मृत्युर्विप्रान् हन्तुमिच्छति । एतेषामधर्मोत्पादनद्वारेणायुःक्षयहेतुत्वात् ॥ ४ ॥

( ४ ) **राघवानन्दः** । तानाह अनभ्यासेनेति । अनधीतेन अधीतविस्मरणेन च । आलस्यात्तत्पूर्वकस्वधर्माननुष्ठानात् ॥ ४ ॥

( ५ ) **नन्दनः** । अन्नदोषाद्भक्ष्यदोषात् । अन्नदोषस्यैवाकालमृत्युहेतुत्वमत्रप्रतिपाद्यम् । वेदानभ्यासादीनामुपन्यासोदृष्टान्तार्थः ॥ ४ ॥

( ६ ) **रामचन्द्रः** । अन्नदोषाद्भक्ष्याभक्ष्यान्नदोषान्मृत्युर्विप्राञ्जिघांसति ॥ ४ ॥

**लशुनंगृञ्जनं चैव पलाण्डुं कवकानि च ॥ अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥ ५॥**

( १ ) **मेधातिथिः** । लशुनादयःपदार्थालोके प्रसिद्धाएव । कवकशब्दोजातिशब्दः । क्वचित्कुयाकुरितिप्रसिद्धेर्थेमन्यते । छत्राकानि कवकान्येव तथाहि कवकशब्देन प्रतिषिद्धं छत्राकशब्देन प्रायश्चित्तंवक्ष्यति छत्राकंविड्वराहंचेति । नच छत्राकंनाम पदार्थान्तरंप्रसिद्धम् । नचाक्षरवर्णसामान्येन योयश्छत्राकारस्तंतंछत्राकमिति युक्तं प्रतिपत्तुम् । तथासति सुवर्चलादीनांसमाचारविरोधी प्रतिषेधः प्राप्नोति । तस्माद्यान्येव कवकानि तान्येव छत्राकाणि । तथाच निरुक्तकारः क्षुण्णमहिछत्रकंभवति यत् क्षुद्यतइति । तेन पादप्रहारेण यान्येतानि भूमावकृष्टायामनुपूर्वजायांचसितवर्णानि जायन्ते तानि च कवकानि । वक्ष्यतिच भौमानिकवकानीति । दर्शितंचपदाक्षुण्णमिवेति । पादप्रहारेण यानि क्षुद्यन्ते । यतोयानि वृक्षाद्गुल्माज्जायन्ते तेषांतदाकाराणामप्रतिषेधः । कुकुण्डानि कवकानि वैद्यके व्याख्यातानि । एतच्च व्याख्यानं न गवादिशब्दवत् । कवकशब्दोलोके च प्रयुज्यते अतोस्य समाचाराद्वैद्यकादिशास्त्रार्थैनिश्चयः । प्रदर्शितश्चासौ लशुनादीनांतु समानवर्णगन्धाअपि विष्णुना प्रतिषिद्धाः । पाराशरिकायांतु शब्देनैव निषेधः प्रायश्चितविशेषार्थउक्तःचान्द्रायणमिति । तेन लवतककर्णिकारादीनांप्रतिषेधः । अमेध्यप्रभवान्यमेध्यजातानि च संसर्गजातानि । अन्येत्वाहुर्मूलवास्तूकवल्केवलामेध्यप्रभवानांयुक्तः प्रतिषेधः ततश्च यान्यधिकपुष्ट्यर्थंधान्यशाकादीन्यमेध्यक्षेत्रजातानि संसृज्यन्ते तानि न दुष्यन्तीति । तदयुक्तं । अस्तिहि तत्र पुनः श्रुतेनवृत्तौसर्वस्याप्यभक्ष्यत्वादिहापिच । यद्यमेध्यसंसर्गमन्तरेण न किंचिद्वस्तूत्पद्यते ततः स्यादपि यतस्तु किंचिन्मेध्याज्जायते किंचित्संसृष्टात्ततोयंप्रतिषेधः । केवलेऽमेध्यप्रभवे न संसृष्टेऽवतिष्ठते मांसस्य सत्यपि शुक्रशोणितामेध्यप्रभवत्वे नायंप्रतिषेधः । पृथक्प्रकरणारम्भात्तस्य ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । अधुनाऽवशिष्टान्नजातिदुष्टान्नदोषानाह लशुनमिति । श्वेतकन्दोबृहत्पत्रोलशुनं । गृञ्जनं क्षुद्रपत्रः । क्लीबलिङ्गता छान्दसी । पलाण्डूरक्तकन्दः कवकं छत्राकं । अमेध्यप्रभवाणि विष्ठादिषुजातानिकन्दादीनि ॥५ ॥

( ३ ) **कुल्लूकः** । वेदानभ्यासादेरुक्तत्वादनुक्तमन्नदोषमाह लशुनमिति । लशुनगृञ्जनपलाण्ड्वाख्यानि त्रीणिस्थूलकन्दशाकानि । कवकंछत्राकममेध्यप्रभवानि विष्ठादिजातानि तण्डुलीयादीनि । द्विजातीनामितियाज्ञवल्क्यवचनादेतानि द्विजातीनामभक्ष्याणि । द्विजातिग्रहणंशूद्रपर्युदासार्थम् ॥ ५ ॥

( ४ ) **राघवानन्दः** । अन्नदोषादित्याद्युक्तंतत्रादौ दुष्टान्नान्याह लशुनमित्येकादशभिः । लशुनादीनि त्रीणि स्थूलकन्दशालीनि तत्रापि लशुनं शुद्धमूलं गृञ्जनं रक्तमूलकं पलाण्डुं रक्तवर्तुलमूलं । कवकं छत्राकं भूमिजं वार्क्षभूजंच । अमेध्यं मूत्रपुरीषादि तज्जातानि ॥ ५ ॥

---

* द्विजातीनामिति = विड्जातानीति ( अ )

( ५ ) **नन्दनः**। अन्नदोषस्यैवोपरिष्टाद्दुष्टान्नान्याह लशुनमिति । लशुनंसूक्ष्मरक्तकन्दनालंरसोनं । गृञ्जनंशाकविशेषः। पलाण्डुःस्थूलश्वेतकन्दनालोलशुनानुकारी । कवकंकुरवण्डकम् । अमेध्यप्रभवानिमाषवराकादीनि । द्विजातिग्रहणंशूद्रपर्युदासार्थम् ॥ ५ ॥

( ६ ) **रामचन्द्रः** । लशुनं श्वेतकन्दोबृहत्पत्रः । गृञ्जनं क्षुद्रपत्रोलोहितसूक्ष्मकन्दः । पलाण्डुः स्थूलरक्तकन्दः । कवकानिछत्राकसर्पछत्रशिलीन्ध्राणि । एतानि द्विजानामभक्ष्याणि । च पुनः अमेध्यस्थानप्रभवानि ॥ ५ ॥

**लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ॥ शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत् ॥ ६ ॥**

( १ ) **मेधातिथिः** । वृक्षकोटरस्रावेण हेत्वन्तरेण वा बहिर्यन्मूलस्कन्धफलपलाशशाखाकुसुमव्यतिरिक्तंवृक्षलग्नं जायते सवृक्षनिर्यासः । लोहितग्रहणात्कर्पूरादीनामप्रतिषेधः । व्रश्चनाच्छेदनाद्येषांप्रभवोजन्म एवंवृक्षादेर्वल्कलप्रदेशस्तत्रैव जायन्ते तेषामलोहितानामप्रतिषेधः । शेलुः श्लेष्मातकः प्रसिद्धोवैद्यकादिशास्त्रेभ्यः । नतु सूतस्य क्षीरस्य संतानिकाअप्रसिद्धत्वात् यत्तु पियूषसाहचर्यात्संतानिकायुक्तेति भवति साहचर्यविशेषहेतुरुभयत्र प्रयोगे सति न पुनः साहचर्यमदृष्टप्रयोगाणांप्रयोगज्ञापकम् । गव्यंच गव्यग्रहणान्माहिषादेरप्रतिषेधः अनाद्यंयदि तदग्निमात्रसंयोगात्पिण्डीभूतमनासक्तंच । सद्यः प्रसूतायागोः क्षीरंपीयूषशब्देनोच्यते । ननुच क्षीरस्य सविकारस्य दशाहंचाभक्ष्यतांवक्ष्यति । त्रिचतुराणिवाहानि तादृशंक्षीरंभवति । सत्यं यदि कथंचित्कस्यापिदशाहात्परेण भवति तदिदमर्थवत् । प्रयत्नेनेत्यादिपदद्वयं श्लोकपूरणार्थम् अभक्ष्याणीत्यनुवर्तते ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । लोहितान् व्रश्चनजानपि क्रथनादिनाकृष्टान् । व्रश्चनप्रभवान् वृक्षक्षतजानलोहितानपि निर्यासान् । शेलुः श्लेष्मातकफलं । गव्यं गोसंबन्धिपेयुषंनवप्रसूतायागोर्मासपर्यन्तंपयः । महिष्यादिक्षीराणांतु दशाहोर्ध्वमेव भक्ष्यत्वम् ॥ ६ ॥

( ३ ) **कुल्लूकः** । लोहितवर्णान्वृक्षनिर्यासान्वृक्षान्निर्गतरसान्कठिनतांयातान् । व्रश्चनंछेदनंतत्प्रभवानलोहितानपि । तथाच तैत्तिरीश्रुतिः अथोखलु यएवलोहितोयोवाव्रश्चनान्निर्येषतितस्यनाश्यंकाममन्यस्येति । शेलुं बहुवारकफलं । गोभवंपेयूषन्नवप्रसूतायागोः क्षीरमग्निसंयोगात्कठिनंभवत्येतान्यत्नतस्त्यजेत् । अनिर्दशायागोः क्षीरमित्यनेनैव पेयूषस्यापि निषेधसिद्धावधिकदोषत्वात्प्रायश्चित्तगौरवज्ञापनार्थंपृथङ्निर्देशः अतएव यत्नतइत्युक्तम् ॥६ ॥

( ४ ) **राघवानन्दः** । वृक्षनिर्यासान् वृक्षकोटरेभ्योजातान् लोहितानितिकर्पूरवारणार्थम् । व्रश्चनंछेदनंतत्प्रभवम् । तथाच तैत्तिरीयकश्रुतिः । अथो खलु यएवलोहितोयोवा व्रश्चनान्निर्येषति तस्यनाश्यंकाममन्यस्येति । अयमेव लोहितोयोव्रश्चनान्निसृतस्तस्यनाश्यंकाममन्यस्येतितस्यनाश्यमभक्ष्यमन्यस्यानिषिद्धस्यकामंभक्षणमितिश्रुतेरर्थः । व्रश्चनप्रभवानामलोहितोपि निषिद्धः । शेलुं बहुवारकं । पेयूषं नवप्रसूतायागोःक्षीरं अनिर्दशायाइत्यनेनैव प्राप्तत्वेप्यत्यन्तनिषेधार्थम् । गर्भादारभ्य स्तनस्थकठिनतरदुग्धंवा ॥ ६ ॥

( ५ ) **नन्दनः** । व्रश्चनप्रभवान्हिङ्गुप्रभृतीन् । शेलुःश्लेष्मातकः । गव्यंपेयूषंतत्क्षणप्रसूताया गोःप्रथमदुग्धम् । पीयूषोऽभिनवंपयःइत्यमरः ॥ ६ ॥

( ६ ) **रामचन्द्रः** । लोहितान् आरक्तान्वृक्षनिर्यासादीन्विवर्जयेत् । व्रश्चनप्रभवान् वृक्षछेदजातान् । लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः । शेलुं श्लेष्मातकफलं । गव्यं गोरिदं गव्यं । नवप्रसूताया दुग्धविकारंपेयूषंपेयूषीति संज्ञं । एतानि प्रयत्नेन वर्जयेत् ॥ ६ ॥

वृथाकृसरसंयावं पायसापूपमेव च ॥ अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ ७ ॥

( १ ) **मेधातिथिः** । अत्र कृसरसंयावमिति समाहारेद्वन्द्वः । तिलैः सह सिद्ध ओदनः कृसरशब्देनोच्यते । संयावो भोज्यविशेषः सर्पिर्गुडतिलादिकृतः पुरेषु प्रसिद्धः । येतु यौतेर्मिश्रणार्थत्वाद्यानि मिश्रीकृत्यान्नानि साध्यन्ते मुद्गमकुष्ठकादिभिस्तानि संयावशब्देनोच्यन्तइति तेषांकृसरग्रहणमनर्थकम् । सोपि ह्यनेन प्रकारेण संयावएव । वृथाशब्दःसर्वत्रानुषज्यते । यदात्मार्थंक्रियते न देवपित्रतिथ्यर्थंतदाकृसरादीनामुपदेशइति । तदुक्तम् । नहिगृहस्थाः केनार्थतः पठन्ति हविषइवा वापात्प्रभृति तादर्थ्येनोद्देशः । अत्रहि कस्य पाकःस्यात् । किंतर्हि अनुद्दिष्टविशेषस्यसामान्यतः कृतस्यान्नस्य पञ्चयज्ञानुष्ठानंविहितम् । तत्राकृतवैश्वदेवस्य भोजने विहितातिक्रमोनपुनः प्रतिषेधः समस्ति तथाहि द्वेप्रायश्चित्ते भवतः विहितातिक्रमात्प्रतिषिद्धसेवनाच्च । कृसरादयस्तु देवताविशेषंवास्तुयज्ञादिविषयमनुदिश्य कृताकृतत्वादाह्निकविधयोपि प्रतिषिध्यन्ते । यच्चापि नात्मार्थंपचेदितितन्न सोप्यवश्यकर्तव्यत्वात् । कृताक्रमस्य भोजनप्राप्त्यनुवादोन पुनः प्रतिषेधः । तथासति द्विमूलकल्पनाप्रायश्चित्तंस्यादित्युक्तम् । न चान्यार्थत्वेनापि कृतस्यात्मार्थता पाकस्य निषेद्धुंशक्यते । पच्यमानार्थोहिपाकस्तस्य तद्वारिका नशक्या आत्मार्थता निषेद्धुं तेनैव वृत्तिविधानात् नहि वृत्यादिशिष्टभोजनंगृहस्थस्य शेषसंस्कारोन चात्र संकल्पःश्रुतोयेन मदर्थंपच्यतामिति पाककाले संकल्पमात्रंनिषिध्यते । आत्मार्थंचोत्तरकालम विचार्येत्युच्यते । मिथ्यासंकल्पदोषश्च स्यात् । देवतार्थतया संकल्पितस्यात्मार्थतयायोगइति । तस्मादयमनुवादोयत्पचेन्नात्मार्थमेवोपयोज्यंप्राग्विधेर्वैश्वदेविकादिति । तथाच पक्वान्नभोजनेपि विधिमेतंस्मरन्ति । यदन्नः पुरुषोराजंस्तदन्नास्तस्य देवताइति । नच बुभुक्षमाणस्यैवाधिकारोगार्हस्थ्यप्रतिपत्तिनिमित्तत्वात् । तेन यदहर्नभुञ्जीत तदहरप्यकुर्वन्प्रत्यवैति । एतदुक्तंभवति । स्वार्थंवा पचतु परार्थंवा पाक्षीदिति सर्वथा कृतवैश्वदेवातिक्रमणव्रताअपि न प्रवर्तन्तेइति नित्यतामनुवदति । यच्चापि पठति ॥ लौकिके वैदिके वापि हुतोत्सृष्टे जले क्षितौ । वैश्वदेवस्तु कर्तव्यः पञ्चसूनापनुत्तयइति ॥ अनेनापि नित्यतैवोच्यते । नहि वैदिके वैश्वदेवसंभवः । नच स्मार्तवचने प्रमाणमस्ति । पायसापूपमिति पयसा सिद्धओदनः पायसोन दध्यादिपयोविकारः । अपूपाः पुरोडाशाः । देवान्नानि समाचारप्रमाणकानि । हवींषि श्रुतिविहितानिहोतव्यानि प्राग्ग्रहहोमाद्यतोहविःशेषस्य भक्ष्यतांवक्ष्यति । अनुपाकृतस्य अयज्ञहुतस्य पशोर्मांसानि उपाकरणं पशोः संस्कारविशेषः सपशुयागेषु विहितः । एतेन च यज्ञोपयुक्तशेषभक्ष्यता मांसस्य लक्ष्यते । वृथाशब्दाधिकारेप्यनुपाकृतग्रहणमतिथ्यादिशिष्टस्यापि गोव्यजमांसस्य प्रतिषेधार्थं गोव्यजमांसमेव वानुपाकृतशब्देन विवक्षितम् । गोव्यजस्यैव तत्रालम्भश्चोदितो यतः । शिष्टंप्रोक्तम् ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । वृथा विप्रेभ्योदेवेभ्यश्चादत्वा । कृसरस्तिलमुद्गमाषसहसिद्धओदनः। संयावोगुडक्षीरघृतादिसाधितः पेयविशेषस्तत्करिकेतिप्रसिद्धः । अनुपाकृतानि पशुबन्धाङ्गभूतमन्त्रवद्दर्भस्पर्शरूपसंस्कारेणासंस्कृतानि । एतत्पूर्वाध्यायस्थवृथामांसपदव्याख्यानम् । तथाच श्राद्धादावपि मांसभक्षणे दोषइतिगम्यते । देवान्नानि देवेभ्योनिवेदितान्नानि । हवींषि हविः शेषाः । ऋत्विग्यजमानव्यतिरिक्तानामभक्ष्याः ॥ ७॥

( ३ ) **कुल्लूकः** । देवताद्यनुद्देशेनात्मार्थंयत्पच्यते तद्वृथाकृसरस्तिलेन सह सिद्धओदनः । तथाच छन्दोगपरिशिष्टम् तिलतण्डुलसंपक्वः कृसरः सोभिधीयते । संयावोघृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्करिकेतिप्रसिद्धः । क्षीरतण्डुलमिश्रः पाय-

---

( ७ ) पूपमेवच= पूपशष्कुली ( ठ )

सः । अपूपः पिष्टकः एतान्वृथापक्कान्विवर्जयेत् । पशुयागादौमन्त्रबहुलेन पशोः स्पर्शनमुपाकरणंतद्रहितः पशुरनुपाकृतस्तस्यमांसानि देवान्नानिनैवेद्यार्थमन्नानि प्राङ्निवेदनात् । हवींषि च पुरोडाशादीनिहोमात्प्राग्वर्जयेत् । अनुपाकृतमांसानीत्येतद्विशेषनिषेधदर्शनादनर्चितंवृथामांसमितिसामान्यनिषेधोबलीवर्दन्यायेनानुपाकृतमांसेतरश्राद्धाद्यनुद्देश्यमांसभक्षणेपर्यवस्यति ॥ ७ ॥

( ४ ) **राघवानन्दः** । कृसरस्तिलेन सह सिद्धओदनः । संयावः घृतक्षीरगुडगोधूमचूर्णसिद्धः । एतच्चतुष्टयंदेवान्नंतेभ्योदत्त्वैव भोज्यम् । अनुपाकृतमांसानि पशुयागादौ मन्त्रेण पशोः स्पर्शनमुपाकरणंतद्रहितपशोर्मांसानि । देवान्नानिदेवपूजार्थं संचितानि । हवींषि होमार्थंपित्रर्थंवा संचितानि ॥ ७ ॥

( ५ ) **नन्दनः** । आत्मार्थमुपादानंवृथात्वम् । तिलमिश्रमोदनंकृसरः । संयावंपिष्टविकारोऽपूपादि । उपाकृतंयज्ञविशिष्टम् । देवस्वामिकमन्नंदेवान्नम् । हविस्तु देवतायै निवेदयिष्यमाणंस्थापितद्रव्यम् । विवर्जयेदित्यनुवर्तते ॥ ७ ॥

( ६ ) **रामचन्द्रः** । वृथाकृसरः देवताद्युद्देशमन्तरेण साधितःकृसरः तिलमुद्गतण्डुलमिश्रितान्नसिद्धःकृसरसंज्ञः । संयावः गुडक्षीरघृतादिगोधूमचूर्णविकारः । पायसं अपूपमेव अनुपाकृतमांसानि यज्ञेसंस्कृतस्य पशोर्मांसानि । देवान्नानि देवतोद्देशेन संकल्पितान्नानि हविर्हवनीयद्रव्यं ऋत्विक्यजमानव्यतिरिक्तानाम् ॥ ७ ॥

**अनिर्दशायागोः क्षीरमौष्ट्रमैकशफं तथा ॥ आविकं सन्धिनीक्षीरंविवत्सायाश्च गोः पयः ॥ ८ ॥**

**[ क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ॥ सप्तरात्रव्रतंकुर्यात्प्रयत्नेन समाहितः ॥ १ ]+**

( १ ) **मेधातिथिः** । यदीहानिर्दशाहंगोः क्षीरमितिपाठः उष्ट्रादीनामपि दाशाहादिकःप्रतिषेधआशङ्क्यते । अनिर्दशाग्रहणानुवृत्त्या तत्र समाचारआत्यन्तिकप्रतिषेधार्थआश्रयणीयः । अनिर्दशायाइति तु स्त्रीलिङ्गपाठेआशङ्कैव नास्ति नहि तद्धितान्तैरनिर्दशायाउष्ट्रमित्यादिभिः संबन्धोपपत्तिरुत्तरत्र । चपुनः क्षीरग्रहणात्समाचाराच्च उष्ट्रैकशफाविकानिर्दशगवीक्षीराणि सविकाराणि प्रतिषिध्यन्ते । सन्धिनीविवत्सयोस्तु क्षीरमेव । अनिर्दशाच गौरुच्यते यस्याः प्रसूतायादशाहान्यनतिक्रान्तानि । सन्धिनी याउभयोः प्राप्तदोहा कथंचिदन्यतरस्मिन्दुह्यते । सायमप्रदुग्धासायंदुह्यते । सातु स्वल्पक्षीरत्वादेकस्मिन्नेव काले सासौसंधिनी कश्चिदाह । यां मृतस्ववत्सा परकीयंवत्सं संचार्यदुह्यते सा सन्धिनी । विवत्सातु या सत्येववत्से विनाकृतवत्सा वत्सप्रस्नवणमनपेक्ष्य मकुष्टकयवशालितुषादिना भोजनविशेषेण दुह्यात् । विवत्सायाइति तेनैव वत्सग्रहणे नावत्साधेनुरानीयतामितिवद्गोरितिलब्धे गोग्रहणमजामहिष्योरप्रतिषेधार्थं । नपुनरनिर्दशायाइत्यत्र अतश्चगोग्रहणंतत्राजाद्युपलक्षणार्थम् । तथाच गौतमः । गोश्चक्षीरमनिर्दशायाः सूतकेऽजामहिष्योश्चेत्याह । पयोग्रहणंसन्धिनीक्षीरमिति समासान्तर्वर्तिनः क्षीरपदस्य नातिसुकरः संबन्धोयतः ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । अनिर्दशायाइति पेयूषान्तराद्दोषाधिक्यप्रदर्शनार्थम् । गोरित्यजामहिष्योरप्युपलक्षणम् । उष्ट्रैकशफाविकपदैरुष्ट्रादिपयांस्युच्यन्ते । सन्धिनी वृषाक्रान्ता गौः ॥ ८ ॥

( ३ ) **कुल्लूकः** । प्रसूतायाअनिर्दशायागोर्दुग्धम् । गोरितिपेयक्षीरपशूपलक्षणार्थं तेनाजामहिष्योरपि दशाहमध्ये प्रतिषेधः । तथाच यमः अनिर्दशाहंगोक्षीरमाजंमाहिषमेवच । तथोष्ट्रभवं । अश्वाद्येकखुरसंबन्धि । मेषभवं । सन्धिनी याऋतुमती वृषमिच्छती तस्याः क्षीरम् । तथाच हारीतः । सन्धिनी वृषस्यन्तीतस्याः पयोन पिबेत् ऋतुमत्तद्भवति । वि-

+ ( णं )

वत्साग्रामृतवत्सायाः । असन्निहितवत्सायाश्च क्षीरंवर्जयेत् । धेन्वधिकरणन्यायेन वत्सग्रहणादेव गविलब्धायांपुनर्गोग्रहणंगोरेव नत्वजामहिष्योरितिज्ञापनार्थम् ॥ ८ ॥

( ४ ) **राघवानन्दः** । ऐकशफं एकशफागर्दभाश्वादयस्तेषामिदं दुग्धादि । आविकं अविर्मेषस्तस्येदं । सन्धिनी-ऋतुमती ॥ ८ ॥

( ५ ) **नन्दनः** । अनिर्दशायाःअनिर्गतदशाहायाः । एकशफाः अश्वादयः । सन्धिनी गर्भिणी ॥ ८ ॥

( ६ ) **रामचन्द्रः** । अनतिक्रान्तदशाहमस्या अनिर्दशया गोःक्षीरं । औष्ट्रंपयः ऐकशफं वडवादीनांपयः । अवेः आविकंपयः । सन्धिनीक्षीरं वृषेण सन्धीयते या सासन्धिनी । मृतवत्सायाःपयः ॥ ८ ॥

**आरण्यानां च सर्वेषां मृगाणां माहिषं विना ॥ स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥ ९॥**

( १ ) **मेधातिथिः** । आरण्यागोहस्तिमर्कटादयः पुंसांक्षीराभावः सर्वेषांमृगाणामिति जातिमात्रविवक्षायांपुल्लिङ्गनिर्देशसामर्थ्यात्स्त्रीभिः संबन्धः मृगक्षीरंकुक्कुटाण्डमितिवत् । दर्शितंचैतत्पुम्भावविधौ महाभाष्यकारेण । माहिषंविना पयोऽपेक्षया नपुंसकनिर्देशः । स्त्री मानुषी । यद्यपि स्त्री गौः सोमक्रयणीत्यादौ सास्नादिमत्यर्थेप्रयोगदर्शनं तथापि जात्यन्तरस्याप्रकृतत्वात् प्रसिद्धतरत्वात् तत्रप्रयोगःस्यात् । स्त्रियोमधुरमिछन्ति स्त्रियोरत्नमनुत्तममिति नार्येव प्रतीयते । एवकारमञ्जनादिप्रतिषेधे व्याचक्षते । न केवलंस्त्रीक्षीरंभक्षणे वर्ज्यंकिंतर्ह्यन्यास्वप्येवंविधासु क्रियासु । एषतु स्मृत्यन्तरसमाचारसापेक्षएव शब्दः सूचको युक्तोनत्वस्यार्थस्य वाचकः ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । आरण्यानां मृगव्यतिरिक्तानामप्यरण्यजानाम् । तथा मृगाणां मृगजातीनां गवयादीनां संबन्धि पयः । स्त्रीक्षीरं मानुषीक्षीरम् । अत्र क्षीरप्रक्रमे पुनःक्षीरग्रहणमस्याः क्षीरमेवाभक्ष्यं न तु घृतादीतिदर्शयितुमिति-केचित् । शुक्तस्य पुनरत्राध्याये निषेधोदध्यादिप्रतिप्रसवार्थः ॥ ९ ॥

( ३ ) **कुल्लूकः** । मृगशब्दोत्र महिषपर्युदासात्पशुमात्रपरः माहिषंक्षीरंवर्जयित्वा सर्वेषामारण्यप्रभवपशूनांहस्त्यादीनांक्षीरंस्त्रीक्षीरंच सर्वाणि शुक्तानिवर्जनीयानि । स्वभावतोमधुररसानियानिकालवशेनोदकादिनाचाम्लीभवन्तितानि शुक्तशब्दवाच्यानि । शुक्तंपर्युषितंचैवेतिचतुर्थे कृतेपि शुक्तप्रतिषेधे दध्यादिप्रतिप्रसवार्थंपुनरिहोच्यते ॥ ९ ॥

( ४ ) **राघवानन्दः** । माहिषं दुग्धादि विनारण्यानां । स्त्रीक्षीरं स्वभार्यायाअन्यस्त्रियोवा । एतानि त्रीणि वर्ज्यान्येव ॥ ९ ॥

( ५ ) **नन्दनः** । सर्वासांमृगीणां महिषींविनेतिपाठः । कालातिपत्त्या स्वरसंविहाय रसान्तरगतंशुक्तम् ॥ ९ ॥

( ६ ) **रामचन्द्रः** । स्त्रीक्षीरं द्विस्तनीनाम् ॥ ९ ॥

**दधिभक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् ॥ यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥ १० ॥**

( १ ) **मेधातिथिः**। अविशेषेण सर्वशुक्तेषु प्रतिषिद्धेषु केषुचिदयमर्थवादः । शुक्तान्युच्यन्ते यानि प्राप्तस्वरसावस्थानिकालात्ययेन द्रव्यान्तरसंसर्गेण वाम्लतामापद्यन्ते । यथाम्रातकादीनि मधुराणि चिरकालअतिरसत्वाच्छुक्तानिभवंन्ति निष्पीडितोमधुररसः कालतोम्लतामेतीत्यादिना एवंविधानि तु यानि तु स्वभावतोम्लानि दाडिमामलकजम्बीरादीनि तानि नैव शुक्तानि यानि च प्राप्तकालोत्पत्यादीनि । नह्ययमाम्लपर्यायः शुक्तशब्दस्तत्र केवलानि पाकतःशुक्तानि प्रतिषिध्यन्ते । द्रव्यान्तरैश्चपुष्पमूलकादिभिर्योजितान्यत्र ज्ञायन्ते । तथाच गौतमः । शुक्तंकेवलमदधि । अभिषूयन्ते अभिषवउदकेन संसृज्य परिवासनम् । यद्येवं कालएव तत्राम्लताहेतुः। सत्यम् । एतान्यपि द्रव्याणि। तृतीयाच करणे सहयोगे वा।

पुष्पादिभिरुदकेन सह अभिषूयन्ते सन्धीयन्ते । केचित्वाहुः यत्र पुष्पमूलान्यम्लतांजनयन्ति । यानि दाडिमामलकादीनि शुक्तानि तानि भक्ष्याणि यानि द्राक्षादिभिर्मधुरैरभिषूयन्ते सन्धीयन्ते तानि न भक्ष्यन्ते । अभिषवोह्युच्यते शुक्तताजननं यानि पुष्पादिभिः शुक्तीक्रियन्ते नच द्राक्षादीनि शुक्ततापादकानि किंतर्हिकेवलएव कालः । एतत्तुन सम्यक् । अशब्दार्थत्वान्नहि सोममभिषुणोतीतिशुक्तंकरोतीतिप्रतिपत्तिः । किंतर्हि यएवप्राग्व्याख्यातोर्थः । दधिसंभवं उदश्विन्मस्तुकिलाटकूर्चिकादि ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । दधिसंभवं तक्रनवनीतादि । यानि काञ्जिकादीनि अभिषूयन्ते मिश्रीक्रियन्ते । शुभैरनिषिद्धैः ॥ १० ॥

( ३ ) **कुल्लूकः** । शुक्तेषु मध्ये दधिभक्ष्यं दधिसंभवंचसर्वतक्रादि । यानितु पुष्पमूलफलैरुदकेन संधीयन्ते तानिभक्षणीयानि । शुभैरितिविशेषणोपादानान्मोहादिविकारकारिभिः कृतसंधानस्य प्रतिषेधः । तथाच बृहस्पतिः ॥ कन्दमूलफलैः पुष्पैःशस्तैः शुक्तान्न वर्जयेत् । अविकारि भवेद्भक्ष्यमभक्ष्यंतद्विकारकृत् ॥ १० ॥

( ४ ) **राघवानन्दः** । दधिसंभवं दध्युपादानकं दधिमिश्रं च तेनामिक्षादिग्रहः । शुभैरिति विशेषणान्निषिद्धेतरैरभिषूयन्ते रसगन्धादीनि तान्यपि भक्ष्याणीत्यन्वयः ॥ कन्दमूलफलैःपुष्पैःशस्तैर्युक्तंतुवस्तुयत् । अविकारिभवेद्भक्ष्यमभक्ष्यं तद्विकारकृत् ॥ इतिबृहस्पतिः ॥ १० ॥

( ५ ) **नन्दनः** । शुक्तेषु वस्तुषु कानिचित्प्रतिप्रसूते दधीति ॥ १० ॥

( ६ ) **रामचन्द्रः** । भक्ष्यमाह दधीति । पुष्पमूलफलैः शुभैरसैर्यान्यभिषूयन्ते मिश्रीक्रियन्ते तानि मेध्यानि ॥ १०॥

## क्रव्यादान् शकुनीन् सर्वान् तथा ग्रामनिवासिनः ॥ अनिर्दिष्टांश्चैकशफांष्टिट्टिभं च विवर्जयेत् ॥ ११ ॥

( १ ) **मेधातिथिः** । क्रव्याद आममांसभक्षकाः कङ्कगृध्रादयः । अभक्ष्यवत्केवलाममांसभक्षकागृह्यन्ते । तत्रोभय रक्तामयूरादयः । ग्रामनिवासिनः अक्रव्यादाअपि । एकशफाअश्वाश्वतरगर्दभादयः । अनिर्दिष्टास्तुनाभक्ष्यत्वेनोक्तास्ते न भक्ष्याइति । ये तूक्ता स्तेनैव भक्ष्या ये त्वौष्ट्रवडवऋक्षगोवानरगर्दभाःप्रजाकामस्तेषांचमांसंनाश्नीयादिति । ननुच श्रुतितएव तत्र भक्ष्यावाप्तिः प्रत्युत निर्दिष्टग्रहणे सति श्रुतौ चोदितानामन्यत्र भक्ष्यताशङ्का अनिर्दिष्टान्वर्जयेन्न निर्दिष्टानिति वाक्यार्थप्रतिपत्तेः । नच स्मृतौ केचिद्भक्ष्यत्वेननिर्दिष्टाः येन तद्यतिरिक्तविषयमनिर्दिष्टग्रहणंव्याख्यायेत । अतः श्रुतौ ये निर्दिष्टास्ते न भक्ष्या इति प्राप्नोति । उच्यते । आचाराविरोधी सस्मृत्यर्थः । अनिर्दिष्टग्रहणमनुवादः । टिट्टिभः शकुनिरेव टिटीतियोवाशते । प्रायेण शब्दानुकरणनिमित्तंशकुनीनांनामधेयप्रतिलम्भस्तदुक्तंनिरुक्तकारेण काकइतिशब्दानुकृतिस्तदिदंशकुनिषु बहुलमिति ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । क्रव्यं मांसं तन्मात्रादः क्रव्यादः । ग्रामनिवासिनोग्राममात्रचरान् । अनिर्दिष्टान् भक्ष्यत्वेनानुक्तान् । तथैकशफानश्वादीन् ॥ ११ ॥

( ३ ) **कुल्लूकः** । आममांसंये भक्षयन्ति ते क्रव्यादास्तान्स्सर्वान्गृध्रादीन्पक्षिणोवर्जयेत् । तथा ग्रामनिवासिनश्च पक्षिणः पारावतादीन् । तथाश्रुतौ केचिदेकशफाभक्ष्यत्वेन निर्दिष्टाः तथाचोष्ट्रंवाडवमालभेत तस्य चमांसमश्नीयादिति ।

---

* शस्तैः शुक्तान्नवर्जयेत् = शस्तैर्युक्तंतुवस्तुयत् ( अ )

केचिच्चानिर्दिष्टारासभादयस्तेषांमांसंवर्जयेत् । येपि यज्ञाङ्गत्वेन विहितास्तेषामपि यज्ञएव मांसभक्षणंन सर्वदा । टिट्टिभाख्यंच पक्षिणंवर्जयेत् ॥ ११ ॥

( ४ ) **राघवानन्दः** । किंचैतानेकोनत्रिंशतोनाद्यादित्याह । क्रव्यादानाम मांसभोजिनः । शकुनीन् पक्षिणः । ग्रामनिवासिनः पारावतादीन् । अनिर्दिष्टेतिविशेषणात् त्वाष्ट्रंवाडवमालभेतेति तन्मांसंभक्ष्यमिति । एकशफानिति पक्षिविशेषणम् ॥ ११ ॥

( ५ ) **नन्दनः** । अथ भक्ष्येष्वभक्ष्यानाह क्रव्यादानिति । क्रव्यंमांसंतदत्तिभक्षयतीतिक्रव्यात् गृध्रादयः क्रव्यादः । ग्रामनिवासिनः पारावतादयः । अनिर्दिष्टाननुपदिष्टान् ॥ ११ ॥

( ६ ) **रामचन्द्रः** । वर्ज्यानाह क्रव्यादानिति । क्रव्यंमांसंतद्भक्षयन्ति ये क्रव्यादास्तान्गृध्रादीन् । तथा सर्वान्ग्रामनिवासिनः पारावतप्रभृतीन् नर्निर्दिष्टाननिर्दिष्टान् भक्ष्यत्वेनाकथितानेकशफादीन् । टिट्टिभः शब्दानुकारी एतादृशान्वर्जयेत् ॥ ११ ॥

**कलविङ्कं प्लवं हंसं चक्राव्हं ग्रामकुक्कुटम् ॥ सारसं रज्जुवालं च दात्यूहं शुकसारिके ॥ १२ ॥**

( १ ) **मेधातिथिः** । कलविङ्कोग्रामचटकोनिगमेषूक्तः ग्रामवासित्वात्तस्य सिद्धे प्रतिषेधे पुनः प्रतिषेधः स्त्रियाश्चटकायाअभ्यनुज्ञानार्थः । पुंशब्दोह्ययंवृषभवत् । अन्येत्वारण्यस्य निवृत्त्यर्थमन्यन्ते । तेहि वर्षासु वनवासिनोभवन्ति । बाहुल्यव्यपदेशाच्च ग्रामचटकाउच्यन्ते । यथामहिषाआरण्याः । प्लवहंसचक्रवाकानां वक्ष्यमाणजालपादप्रतिषेधात्सिद्धे प्रतिषेधे नित्यार्थंग्रहणम् । अतआट्यादीनांविकल्पेन भक्षणंगम्यते । ग्रामकुक्कुटं । ग्रामग्रहणादारण्याभ्यनुज्ञानम् । कुतः पुनरारण्यस्याभक्ष्यताशङ्का । स्मृत्यन्तरेहि कुक्कुटोविकिराणामितिपठ्यते अतश्चाविशेषेणाभक्ष्यताप्राप्ता वचनेन तस्य सामान्यप्रतिषेधस्यविशिष्टविषयताप्रज्ञायते । ननुविकल्पःकस्माद्भवत्यनेनशास्त्रेणास्याभ्यनुज्ञानाच्छास्त्रान्तरेण चाविशेषेणतस्यापि प्रतिषेधात् । नायंविकल्पस्य विषयः विरोधेहि तुल्यबलानांविकल्पोन चात्र विरोधोस्ति । नह्यनयोःस्मृत्योःशास्त्रभेदोपि । सामान्यस्य विशेषउपसंहर्तुंन्याय्यत्वात् । शाखान्तरतस्तृतीयस्याप्येकशास्त्रस्य दर्शितत्वात् । यद्येवंजालपादप्रतिषेधस्यापि हंसादिविशेषएवोपसंहारोयुक्तोनाविशेषेणकाकजालपादानांसर्वेषांप्रतिषेधोभवेदेवंयद्यपौरुषेयोयंग्रन्थःस्यात् भिन्नकर्तृकेत्वपौरुषेयत्वेनसामान्यस्यनकिंचित्प्रयोजनम् । हंसादिविशेषमात्रपर्यवसाने भिन्नकर्तृकश्च पौरुषेयत्वे सति सामान्यदर्शिनोविशेषविषयमज्ञानंसंभवति विशेषदर्शिनोपि सामान्यविषयः उभयोश्चमूलकल्पनायामेकस्य सामान्यवेदनंवचनमूलंकल्प्यते । अन्यस्य विशेषवचनं तयोश्च वैदिकयोर्भिन्नशाखाधीतयोरसति शास्त्रभेदे एकवाक्यतैव न्याय्या । न च वेदे पर्यनुयोगोस्ति । किंसामान्येन यदि विशेषनिष्ठता तस्य कर्तुरभावात् । श्रुताद्धितत्र प्रतिपत्तिःकेवलशब्दशक्तिसमाश्रिता । न प्रयोजनवशेनार्थान्तरकल्पनं । रज्जुदालादयः शाकुनिकेभ्यउपलब्धव्याः ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । कलविङ्कोवन्योग्राम्यश्चेति वन्यनिषेधार्थंपृथङ्गिषेधः । प्लवोजलकाकः । चक्राव्हश्चक्रवाकः । रज्जुवालोजलचरपक्षिभेदः ॥ १२ ॥

( ३ ) **कुल्लूकः** । कलविङ्कंचटकंतस्य ग्रामारण्योभयवासित्वादेवनिषेधः इत्यारण्यस्याप्यभक्षत्वार्थंजातिशब्देन निषेधः । प्लवाख्यंपक्षिणं तथा हंसचक्रवाकग्रामकुक्कुटसारसरज्जुवालदात्यूहशुकसारिकाख्यान्पक्षिणोवर्जयेत् । वक्ष्यमाणजालपादनिषेधेनैव हंसचक्रवाकयोरपि निषेधसिद्धौ पृथङ्निषेधोऽन्येषामापदि जालपादानांविकल्पार्थः सच व्यवस्थितोविज्ञेयः।

आपदिभक्ष्यानत्वनापदि इच्छाविकल्पस्यरागतएव प्राप्तेः। ग्रामकुक्कुटेतु ग्रामग्रहणमारण्यकुक्कुटाभ्यनुज्ञानार्थं न त्वेतद्यति-रिक्तग्रामवासिविकल्पार्थम्। आपदर्थे गतं*प्रयोजनंभवति । वाक्यान्तरगतविशेषावधारणपरत्वस्यान्याय्यत्वात् ॥ १२ ॥

( ४ ) **राघवानन्दः**। कलविङ्कोग्रामचटकः। ग्रामवासित्वात्तस्य प्रतिषेधे सिद्धे पुनर्ग्रहणमष्टकासु स्त्रीणामारण्या-नांचानुमत्यर्थम् ॥ १२ ॥

( ५ ) **नन्दनः**। कलविङ्कोग्रामचटकः। प्लवोहंसविशेषः ॥ १२ ॥

( ६ ) **रामचन्द्रः**। कलविङ्कं ग्रामचटकं । प्लवंजलकुक्कुटं । हंसं चक्रवाकं ग्रामकुक्कुटं सारसं रज्जुदालंवृक्षकुक्कुटं दात्यूहं। दात्यूहः कालकण्ठकइत्यमरः। एतादृशांश्च वर्जयेत् ॥ १२ ॥

**प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् ॥ निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ॥१३॥**

( १ ) **मेधातिथिः**। प्रतुद्य प्रहृत्य चञ्च्वा ये भक्षयन्ति । स्वभावएषएषांपक्षिणां। प्रतुदाः शतपत्रादयः। जाल-पादाआत्यादयः। तेषांविकल्पउक्तौननुच यत्र विकल्पउच्यते तत्रेच्छातः प्रवृत्तिः। साचाप्रतिषिद्धेष्वपि स्थितैव लौकिकंहि भक्षणं तत्सत्येवार्थित्वे न शास्त्रीयं येन नियमतः स्यात्। तत्र विकल्पितस्य प्रतिषेधस्य न किंचित्प्रयोजनंपश्यामः। उच्यते । दत्तोत्तरमेतत्। यत्राबुद्धिपूर्वप्रयोगाच्छब्दादेवार्थावगतिः। पौरुषेयः स्वयंग्रन्थः समाहितचेतसा प्रयत्नवता शत-साहस्रिकंसंक्षिप्तमाचार्येण प्रणीतोयत्राशक्यमनर्थकंप्रयोक्तुं अतआचार्याभिधानंउन्नीयते नूनं जालपादे प्रति षेधेत्वसति येन तद्विशेषंहंसंस्वशब्देन निषेधयति। यतएतदपिस्मरणमेव अन्येत्वन्येनजालपादस्त्विवतिप्रमादपाठः स्यात् उक्तंचैतदिङ्गितेन चेष्टितेन महतावासूत्रप्रणयनेनाचार्याणामभिप्रायालक्ष्यन्ते विशेषश्चात्रानुमीयते । अनापदिनभक्षये दितिवक्ष्यति सामान्यप्रतिषेधउभयोरर्थवत्वाय। यत्रमांसविक्रयार्थाः पशवोहन्यन्ते सासूना आपणोमांसस्येत्येके। वल्लू रं मांसंसंशोष्य चिरस्थापितं । नखैर्विकीर्य भक्षयन्ति ते नखविष्किराः। मयूरबलाकादयः। आपत्स्विति वचनात्तु तेषांपाक्षिकी भक्ष्यताप्यस्ति सहि पठति कुक्कुटोविष्किराणामिति नचास्य मानवस्य वचनस्य कुक्कुटोपसंहारः शक्योव-क्तुं कुक्कुटनामग्रहणस्यानर्थक्यप्रसंगात् ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः**। प्रतुदान् चञ्च्वाप्रतुद्यकृमीन्भक्षयतः। जालपादानुक्तहंसादिव्यतिरिक्तानपि तेषांतु पृथग्व-चनंदोषाधिक्यार्थम्। नखविष्किरान् नखैर्भूमिंविकीर्य कृमीनुत्पाट्य भक्षयतः। निमज्जतोनिमज्यनिमज्य मत्स्यादान् मत्स्यान्भक्षयतः। सूना अनेकप्राणिप्राणवियोजनस्थानं ततोगृहीतंसौनं। वल्लूरं शुष्कमांसम् ॥ १३ ॥

( ३ ) **कुल्लूकः**। प्रतुद्य चञ्च्वा ये भक्षयन्ति तान्दार्वाघाटादीन्। जालपादानिति जालाकारपादान् शरारिप्रभृतीन्। कोयष्ट्याख्यंपक्षिणं नखविष्किरान्नखैर्विकीर्य ये भक्षयन्ति तानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान्श्येनादीन्। तथा निमज्य ये मत्स्यान्खादन्ति तान्मद्गुप्रभृतीन्। सूना मारणस्थानं तत्र स्थितंयन्मांसं भक्ष्यमपि। वल्लूरंशुष्कमांसं एतानि वर्जयेत् ॥ १३ ॥

( ४ ) **राघवानन्दः**। प्रतुदान् दार्वाघाटादीन्। जालपादान् शरारिप्रभृतीन्। हंसचक्रवाकयोर्जालपादत्वेपि पृथग्-ग्रहणमतिनिन्दार्थम्। नखविष्किरान् कुक्कुटाद्यतिरिक्तत्वे सति नखैर्विकीर्य ये भक्षयन्ति तान्। मत्स्यादान् मद्गुप्रभृतीन्। सौनं वधस्थलस्थितमज्ञातमांसम्। वल्लूरं शुष्कमांसम् ॥ १३ ॥

---

* आपदर्थेगतप्रयोजनंभवति=त्वपदानुगतेप्रयोजनसंभवेसति ( अ )

( ५ ) **नन्दनः** कोयष्टिष्टिट्टिभकः। नखैर्विकीर्य ये भक्षयन्ति ते नखविष्किराः। निमज्जन्तोमत्स्यादाजलव्यालादयः। सौनंसूनास्थानम्। वल्लूरंशुष्कमांसम्। उत्तमंशुष्कमांसंस्यात्तद्वल्लूरंत्रिलिङ्गकमित्यमरः ॥ १३ ॥

( ६ ) **रामचन्द्रः**। प्रतुदशब्दंकुर्वाणांस्तित्तिरादीन्। जालपादांश्च जालाकारपादांश्च। नखैर्विकीर्ययेभक्षयन्तितान्न-खविष्किरान् श्येनादीन्। तथा निमज्जतः मत्स्यादीन्पक्षिणः। सूनास्थाने मांसंसौनं। वल्लूरं शुष्कमांसम् ॥१३॥

**बकं चैव बलाकां च काकोलं खञ्जरीटकम् ॥ मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः ॥१४॥**

( १ ) **मेधातिथिः**। बकबलाकाकाकोलादीनांमत्स्यादग्रहणात्सिद्धे प्रतिषेधेतदन्येषांविकल्पार्थंपुनर्वचनम्। मत्स्या-दाअपक्षिणोपिमत्स्यादग्रहणादभक्ष्याविज्ञेयाःनक्रादयः क्रियानिमित्तत्वान्मत्स्यादशब्दस्य। काकोलश्च श्येनोदेशान्तर-प्रसिद्धेरयंबाह्लीकेष्वेवमुच्यतइतिप्रसिद्धम्। विड्वराहप्रतिषेधाच्चारण्याभ्यनुज्ञायामप्रतिषेधश्च पूर्वसूत्रे प्रकरणाच्छकुनिविशेष-णार्थोविज्ञेयः। एवंहि चेह विड्वराहग्रहणमर्थवद्भवति ग्रामवासी शूकरोविड्वराहः। ननुच यदितत्र प्रकरणाद्ग्रामवासिनः पक्षिणोगृह्यन्ते। इहापि मत्स्यादाःपक्षिणएव गृहीतुंन्याय्याः। नैवं नचात्र शकुनीनांप्रकरणमस्ति विड्वराहमत्स्यानामितिप-क्षिणामपि निर्देशार्थम्। सर्वशः सर्वदा। उत्सर्गोयं अस्यापवादंवक्ष्यामः ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः**। बलाका बिसकण्ठी। काकोलोद्रोणकाकः तेन काकमात्रोपलक्षणम्। मत्स्यादान् मत्स्य-भक्षिणोवन्यानपिवराहान् तथा विड्वराहान् विष्ठाभक्षकान्। मत्स्यानेवच सर्वशः सर्वे मत्स्यानभक्ष्याइत्यर्थः ॥ १४ ॥

( ३ ) **कुल्लूकः**। बकबलाकाद्रोणकाकखञ्जनांस्तथा मत्स्यादान्पक्षिव्यतिरिक्तानपि नक्रादीन्विड्वराहांश्च। विडिति-विशेषणमारण्यसूकराभ्यनुज्ञानार्थम्। मत्स्यांश्च सर्वान्वर्जयेत् ॥ १४ ॥

( ४ ) **राघवानन्दः**। काकोलं द्रोणकाकं। खञ्जरीटं खञ्जनइति प्रसिद्धम्। मत्स्यादान् नक्रादीन्। बकबलाकयो-र्मत्स्यादत्वेन प्रतिषिद्धत्वेपि पुनर्ग्रहणमेषांविकल्पार्थमितिमेधातिथिः ॥ १४ ॥

( ५ ) **नन्दनः**। बलाका बकविशेषः। काकोलोद्रोणकाकः। मत्स्यादानक्रादयः। मत्स्यादनिषेधे सामान्यतःसिद्धे-ऽपि विशेषेणकेषांचिदुपादानंदोषातिशयसूचनार्थम् ॥ १४ ॥

( ६ ) **रामचन्द्रः**। द्रोणकाको काकोलः। विड्वराहं ग्रामशूकरं। सर्वशः मत्स्यानेव वर्जयेत् ॥ १४ ॥

**योयस्य मांसमश्नाति सतन्मांसादउच्यते ॥ मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्ज-येत् ॥ १५ ॥**

( १ ) **मेधातिथिः**। पूर्वस्य मत्स्यप्रतिषेधविधेरर्थवादोयम्। यत्संबन्धिमांसंयोश्नाति सतन्मांससंबन्धिन्याशन-क्रियया व्यपदिश्यते। यथा सर्पादोनकुलोमार्जारोमूषकादइत्यादि। यस्तु मत्स्यादः ससर्वमांसाशी भवति। गोमांसादइ-त्यपि व्यपदेष्टुंयुक्तः। अतोनिन्दातिशयान्मत्स्यान्विवर्जयेत् ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः**। एतदुपपादयति योयस्येति। यस्य मांसंछागादेः योनरोऽश्नाति सतन्मांसादइत्येवोच्यते लोकैः। यस्तु मत्स्यादः ससर्वमांसादइति। मत्स्यानांसर्वमांसाशित्वेन तदशने सर्वमांसाशनदोषात् ॥ १५ ॥

( ३ ) **कुल्लूकः**। मत्स्यभक्षणानिन्दामाह योयस्येति। योयदीयंमांसंखादति सतन्मांसादएव परंव्यपदिश्यते यथा मार्जारोमूषिकादः। मत्स्यादः पुनः सर्वमांसभक्षकत्वेन व्यपदेष्टुंयोग्यस्तस्मान्मत्स्यान्न खादेत् ॥ १५ ॥

( ४ ) **राघवानन्दः**। मत्स्यस्य सर्वप्राणिभक्षणयोग्यत्वात्तद्भक्षकस्यापि सर्वमांसादत्वमित्याह यइति ॥ १५ ॥

( ६ ) **रामचन्द्रः** । योयस्य जीवस्य मांसमश्नाति सतन्मांसादउच्यते मत्स्यान्वर्जयेत् ॥ १५ ॥

**पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ॥ राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः॥१६॥**

( १ ) **मेधातिथिः** । पाठीनरोहितौ मत्स्यजातिविशेषौ तयोर्हव्यकव्यनियोगेन श्राद्धादौ भक्ष्यताऽभ्यनुज्ञायते । नान्वाहिके भोजने । राजीवसिंहतुण्डसशल्कानां सर्वशः हव्यकव्याभ्यामन्यत्राप्यनिवृत्तिर्भोजने । राजीवाः । पद्मवर्णाःकैश्चिदिष्यन्ते । अपरैस्तु राजयोरेषायेषांसन्ति । सिंहतुण्डाः सिंहाकृतिमुखाः । सशल्काः शकलिनः ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रविशेषमाह पाठीनेति । पाठीनोववालः । आद्यावदनार्हौ । हव्यकव्ययोः श्राद्धस्य देवपित्र्यभागयोर्नियुक्तौ । नियोगेसति तेन श्राद्धे पाठीनरोहितयोराजीवादीनांच वक्ष्यमाणानांचभक्षणे न मत्स्यभक्षणदोषः । ततोन्यत्रतु भक्षणे मत्स्यांश्च कामतोजग्ध्वा सोपवासस्त्र्यहंवसेदिति स्मृत्यन्तरोक्तंप्रायश्चित्तमित्यर्थः । एतेनैतएव मत्स्याः श्राद्धेयाइत्यपिदर्शितम् । नियुक्तैरितिक्वचित्पाठः । राजीवोराजग्रीवाख्योमत्स्यः । सिंहतुण्डाः सिंहसदृशवक्त्रामत्स्यभेदामद्गुरादयोशल्काअपि । सशल्कानखण्डत्वग्युक्तान् रोहितादिभ्योन्यानपि सर्वान् । सर्वत्र चात्र नियुक्तावित्यनुवर्तते पूर्वमत्स्यानेवचसर्वशइति सर्वमत्स्यानांरागप्राप्तभक्षणनिषेधात् ॥ १६॥

( ३ ) **कुल्लूकः** ।इदानींभक्ष्यमत्स्यानाह पाठीनरोहिताविति । पाठीनरोहितौ मत्स्यभेदौ भक्षणीयौ । हव्यकव्ययोर्नियुक्तावितिसमस्तवक्ष्यमाणभक्षणनिषिद्धोपलक्षणार्थं तेन प्राणात्ययादावदोषः । तथा राजीवाख्यान्सिंहतुण्डांश्चसशल्कांश्च सर्वान्वक्ष्यमाणलक्षणोपेतानद्यात् । मेधातिथिगोविन्दराजौतु पाठीनरोहितौदैवपैत्रादिकर्मणि नियुक्ताविवादनीयौ नत्वन्यदा राजीवसिंहतुण्डसशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्राऽपि भक्षणीयाइत्याचक्षतुः । न तन्मनोहरं । पाठीनरोहितौ श्राद्धेनियुक्तौ श्राद्धभोक्त्रैव भक्षणीयौ नतु श्राद्धकर्त्रापि राजीवादयोहव्यकव्याभ्यामन्यत्राऽपि भक्ष्याइत्यस्याप्रमाणत्वात् । मुन्यन्तरैश्च रोहितपाठीनराजीवादीनांतुल्यत्वेनाभिधानात् । तथाच शङ्खः ॥ राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च । पाठीनरोहितौ चाऽपि भक्ष्यामत्स्येषु कीर्तिताः ॥ याज्ञवल्क्यः ॥ भक्ष्याः पञ्चनखाः श्वाविद्गोधाः कच्छपशल्यकाः । शशश्च मत्स्येष्वपितु सिंहतुण्डकरोहिताः ॥ तथापाठीनराजीवसशल्काश्च द्विजातिभिः ॥ हारीतः सशल्कान्मत्स्यान्न्यायोपपन्नान्भक्षयेत् । एवंच ॥ भोक्त्रैवाद्यौ न कर्त्रापि श्राद्धे पाठीनरोहितौ । राजीवाद्यास्तथा नेति व्याख्या न मुनिसंमता ॥ १६ ॥

( ४ ) **राघवानन्दः** । उक्तेषु प्रतिप्रसवमाह पाठीनेत्यादि । हव्यकव्ययोर्नियुक्तौ विनियुक्तौ सन्तावाद्यौ भक्ष्यौ । राजीवादिष्वप्येवंयोजना । मेधातिथिगोविन्दराजौ तु राजीवादयोऽन्यदापि भोक्तव्याइत्याहतुः ॥ राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च ॥ पाठीनरोहितौ चापि भक्ष्यामत्स्येषु कीर्तिताः इति शङ्खवचनात् ॥ तत्रसहस्रदंष्ट्रः पाठीनः राजीवः शकुलः सिंहतुण्डः सिंहस्येव मुखंयस्य सप्राणिप्रभेदः । सशल्काः सवल्काः । रोहितराजीवयोः सशल्कत्वेपि पुनर्ग्रहणमत्यादरार्थम् ॥ १६ ॥

( ५ ) **नन्दनः** । अत्रापवादमाह पाठीनेति । पाठीनश्चक्राख्योमत्स्यविशेषः । आद्यौ भक्ष्यौ । सर्वावस्थंनभक्ष्यावित्युक्तं नियुक्तौहव्यकव्ययोरिति । राजीवान्पद्मवर्णान् । सिंहतुण्डान् सिंहमुखान् । सहशल्कैर्वल्कलैर्वर्तन्तइतिसशल्काः । एतान्राजीवादीन्मत्स्यविशेषानाद्यादितिशेषः । सर्वशोहव्यकव्ययोरनियुक्तानपीत्यर्थः ॥ १६ ॥

( ६ ) **रामचन्द्रः** । पाठीनादीन्भक्ष्यानाह पाठीनेति । पाठीनरोहितौ रोहितसंज्ञोलोहितवर्णः । हव्यकव्ययोः कार्ये

आद्यौ भक्ष्यौ। राजीवान् पद्मवर्णान् सिंहतुण्डांश्च सिंहमुखान्मत्स्यान् सशल्कान् शल्कैः सह वर्तन्ते सशल्कास्तान् भक्षयेत् ॥ १६ ॥

**न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् ॥ भक्ष्येष्वपि समुद्दिष्टान् सर्वान् पञ्चनखांस्तथा ॥ १७ ॥**

( १ ) **मेधातिथिः**। एकचराः सर्पोलूकादय एकाकिनश्चरन्ति । अज्ञातान्नामतोजातिविशेषतश्च । मृगद्विजान् मृगाःपक्षिणश्च न भक्ष्याः। भक्ष्येष्वपि समुद्दिष्टान् ये प्रतिषिद्धास्ते ताद्रूप्ये असति भक्ष्यतांप्राप्ताः समुद्दिष्टाइव भवन्ति। नतु भक्ष्याणांसमुद्देशोस्ति। परिहर्तव्यतया विशेषतोऽविज्ञातान् भक्ष्यपक्षपतितान् भक्षेष्वपि समुद्दिष्टाइत्येवमुच्यन्ते। पञ्चनखाश्च वानरशृगालादयः। सर्व ग्रहणं पादपूरणार्थम् ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः**। एकचरान् संघचारिजातीयान्दैवादेकाकिनश्चरतः भक्ष्येषु समुद्दिष्टान् गणितानपि। अज्ञातांश्चाप्रसिद्धान्मृगद्विजान् द्विजाः पक्षिणः। सर्वान् पञ्चनखान् वक्ष्यमाणव्यतिरिक्तान् ॥ १७ ॥

( ३ ) **कुल्लूकः**। यएकाकिनःप्रायेण चरन्ति सर्पादयस्तानेकचरान् तथा यअभियुक्तैरपि नामजातिभेदेनावधार्य विभागतश्च मृगपक्षिणोन ज्ञायन्तेतान् भक्ष्येष्वपि समुद्दिष्टानितिसामान्यविशेषनिषेधाभावेन भक्ष्यपक्ष*निक्षिप्तान्भक्ष्यत्वेन समुद्दिष्टांश्च तथा सर्वान्पञ्चनखान्वानरादीन्न भक्षयेत् ॥ १७ ॥

( ४ ) **राघवानन्दः**। प्रकृतमनुसरति नेति। एकचरान् सर्पादीन् भक्ष्येष्वपि समुद्दिष्टान् समुद्दिश्यमानान् एकचरान् स्वतन्त्रानिति वा न भक्षयेत्। मृगाश्च द्विजाः पक्षिणश्च तान् अज्ञातान् जातितोनामतश्च पञ्चनखान्वानरादींश्च न भक्षयेदित्यनुषङ्गः। श्वाविधादीन्पञ्चनखान्पञ्च वर्जयित्वाऽन्यान्न भक्षयेदित्यर्थः ॥ १७ ॥

( ५ ) **नन्दनः**। एकचरान् सर्पादीन्। अज्ञातान्मनुष्यैर्नामतोजातितश्च। भक्ष्येषु सामान्यतोऽभक्ष्यतया न ज्ञातेष्वपि समुद्दिष्टान्विशेषतः। शास्त्रान्तरेण भक्ष्यतया निर्दिष्टान्नभक्षयेत् ॥ १७ ॥

( ६ ) **रामचन्द्रः**। एकचरान्न भक्षयेत्। अज्ञातांश्च मृगद्विजान् जातितोये अज्ञातामृगाः पक्षिणश्च तान्नभक्षयेत्। सर्वान्पञ्चनखान्भक्ष्येषु समुद्दिष्टानपि नभक्षयेत् ॥ १७ ॥

**श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ॥ भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥ १८ ॥**

( १ ) **मेधातिथिः**। पञ्चनखानांमध्याच्छ्वावित्कादयोभक्ष्याः। स्मृत्यन्तरे तु खड्गे विकल्पः। तथाच वसिष्ठः। खड्गे तु विवदन्तइति। उष्ट्रवर्जिताएकतोदतोगोव्यजमृगाभक्ष्याः। ननुच श्वावित्प्रभृतीनांपञ्चनखानांभक्ष्यत्ववचनादन्येषामभक्ष्यतासिद्धेःसर्वान्पञ्चनखानिति प्रतिषेधवचनमनर्थकम्। नैषदोषः। सर्वशब्देन प्रतिषेधे स्पष्टा प्रतिपत्तिर्भवति। भक्ष्यविशेषनिर्देशेन तदन्येषांयाअभक्ष्यताप्रतिपत्तिः साआनुमानिकीप्रतिपत्तिः। गौरवंहितथास्यात् ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः**। श्वावित् कण्टकी प्राणिभेदः यः श्वानंस्वगात्रकण्टकैर्विध्यति। शल्यकस्तत्सदृशोपरः। एकतोदतः एकदन्तपङ्क्तियुक्तान् ॥ १८ ॥

( ३ ) **कुल्लूकः**। अत्रप्रतिप्रसवमाह श्वाविधमिति। श्वाविधसेधाख्यंप्राणिभेदं शल्यकं तत्सदृशंस्थूललोमानम्। तथा गोधागण्डककच्छपशशान्पञ्चनखेषु भक्ष्यान्मन्वादयः प्राहुः। तथा उष्ट्रवर्जितानेकदन्तपङ्क्त्युपेतान् ॥ १८ ॥

( ४ ) **राघवानन्दः**। पञ्चनखानांमध्ये पञ्चानामेव हव्यकव्यार्थत्वम्। तत्र श्वाविधः शुनोविध्यतीति दन्तुरः।

---

* पक्ष=कुक्षि ( अ )

शल्यकं शल्यानिकण्टकाकाराणि रोमाणि सन्ति यस्यतं । गोधा कृकलासाकारा । देवान्पितॄंत्समभ्यर्च्य खादन्मांसंन दुष्यतीत्युक्तेः । अनुष्ट्रान् उष्ट्रभिन्नान् । एकतोदतः एकपङ्क्तिदन्तयुक्तान्गवादीन् ॥ १८ ॥

( ५ ) **नन्दनः** । पञ्चनखेष्वपि केषांचिद्भक्षणंप्रतिप्रसौति श्वाविधमिति । शल्यकः शल्ली । गोधा कृकलासानुकारिणी । खड्गः पित्र्येप्रशस्तोमृगविशेषः । अनुष्ट्रानुष्ट्रवर्जितान् । एकतोदतोऽजप्रभृतीन् ॥ १८ ॥

( ६ ) **रामचन्द्रः** । श्वाविधं सेधाख्यं । गोधा कृकलासानुकारिणी । खड्गकूर्मशशांस्तथा भक्ष्यानाह । अनुष्ट्रान् उष्ट्रव्यतिरिक्तान् ॥ १८॥

## छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ॥ पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥ १९॥

( १ ) **मेधातिथिः** । छत्राकं कवकानि । विड्वराहः ग्रामशूकरः स्वतन्त्रविहारः एतानिभक्षयित्वापतितोभवेत् पतितप्रायश्चित्तंकुर्यात् । वक्ष्यति च । गर्हितान्नाद्ययोर्जग्धिःसुरापानसमानि षट् ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । जग्ध्वा एकैकं प्रत्येकमेव स्मृत्यन्तरे निषेधात् । पतेत् द्विजातिकर्मभ्योहानिः पतनमिति-गौतमोक्तपातित्यवान्भवति । तेन प्रायश्चित्तचरणात्प्राक् संध्यादावनधिकारउक्तः । एवंयत्रयत्रान्यदोषे पातोक्तिस्तत्र द्रष्टव्यम् ॥ १९ ॥

( ३ ) **कुल्लूकः** । कवकग्रामसूकरलशुनादीनामन्यतमंबुद्धिपूर्वकं गुरुप्रायश्चित्तोपदेशादभ्यासतोभक्षयित्वा द्विजातिः पतति । ततश्च पतितप्रायश्चित्तंकुर्यात् । गर्हितानांतथा जग्धिः सुरापानसमानिषडिति ॥ १९॥

( ४ ) **राघवानन्दः** । प्रायश्चितार्थंपुनश्छत्राकादिग्रहणम् । मत्या ज्ञानेन जग्ध्वा भक्षयित्वा पतेदतःपतितस्यैव प्रायश्चित्तंकुर्यादिति ॥ १९ ॥

( ५ ) **नन्दनः** । प्रतिषिद्धेष्वपिकेषांचिद्वर्जनीयतामन्वाह छत्राकमिति । छत्राकंद्विविधं भूजंवृक्षजंचेति ॥ १९॥

( ६ ) **रामचन्द्रः**। भक्षणे प्रत्यवायमाह छत्राकमिति । मत्या ज्ञात्वा जग्ध्वा भक्षयित्वा द्विजः पतति पतितोभवेत् । पुनर्लशुनादिग्रहणंप्रायश्चितातिशयार्थम् ॥ १९ ॥

## अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ॥ यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ २० ॥

( १ ) **मेधातिथिः** । अमत्याअबुद्धिपूर्वंषटजग्ध्वाषण्णामन्यतममपि भक्षणस्यअविधेयत्वनिमित्ततया साहित्यस्याविवक्षा । शेषेषु अभक्ष्येषु भक्षणे लोहितवृक्षनिर्यासादिषु एकमहोरात्रंनभुञ्जीत । अहःशब्दोरात्रावपि दृष्टप्रयोगः । अहश्च कृष्णमहरर्जुनंचेति । येषु चात्र प्रकरणे प्रतिषिद्धेषु प्रायश्चित्ताधिकारे प्रतिपदंप्रायश्चित्तमन्यद्वक्ष्यते क्रव्यादशूकरेत्यादि तत्र तदेव द्रष्टव्यं प्रतिपदविहितत्वात् । अस्य चोपवासस्याऽन्यत्र चरितार्थत्वात् ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । मतिरिच्छा तदभावोऽमतिः । षट् षण्णांमध्ये यत्किंचिदेकम् । अत्रत्वमत्या भक्षणेविहितंयदकामानांकामात्तद्विगुणमितिवचनात् मतिभक्षणप्रायश्चित्तंद्विगुणमूह्यम् । सांतपनं द्यहसाध्यं वक्त्रमात्रप्रवेशे । सम्यग्भक्षणेतु यतिचान्द्रायणम् । शेषेषु अभक्ष्येष्वमेध्यप्रभवकन्दादिष्वमत्याभक्षितेषु । मत्या द्यहोपवासः । एतच्च तन्मध्यपतिताल्पप्रत्यवायहेतुभक्षणे पेयूषपानमत्स्यभक्षणादौ स्मृत्यन्तरे प्रायश्चित्ताधिक्यविधानात् ॥२० ॥

( ३ ) **कुल्लूकः** । एतानि छत्राकादीनि षट् बुद्धिपूर्वकमेव भक्षयित्वाऽभिधेयभक्षणस्यनिमित्तत्वेन साहित्यस्याविवक्षितत्वात् । एकादशाध्यायवक्ष्यमाणस्वरूपंसप्ताहसाध्यंसान्तपनं यतिचान्द्रायणं वाचरेत् । एतद्व्यतिरिक्तेषु लोहित-

वृक्षनिर्यासादिषु प्रत्येकंभक्षणादहोरात्रोपवासंकुर्यात्। छत्राकादीनांच प्रायश्चित्तापकर्षोवर्जनादरार्थः । शेषेषूपवसेदहरिति लाघवार्थं तत्र हि क्रियमाणे लोहितनिर्यासग्रहणमपि कर्तव्यंस्यात्॥ २० ॥

( ४ ) **राघवानन्दः** । शेषेषु छत्राकादिषड्वर्जितेष्वमेध्यप्रभवादिपञ्चनखान्तेषूपवासमात्रम् । कामतोभक्षणे प्रायश्चितम्॥ २० ॥

( ६ ) **रामचन्द्रः** । एतानि छत्राकादीनि षड्मत्याऽज्ञानेन जग्ध्वा भक्षयित्वा कृच्छ्रं कृच्छ्रसंज्ञं व्रतं चरेत् । यतीनांयश्चान्द्रायणंतच्चरेत्। शेषेषु छत्राकादिव्यतिरिक्तेषु वस्तुषु भुक्तेषु सत्सु अहः उपवसेत्॥ २० ॥

**संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः॥ अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः॥ २१॥**

( १ ) **मेधातिथिः** । भोज्यशूद्रगृहभोजिनोब्राह्मणस्येदमुच्यते। यस्य शूद्रस्य गृहे यानि ब्राह्मणानामभोज्यान्यन्नानि संभवन्ति नदूरतःपरिन्हियन्ते तादृशस्य गृहेयोब्राह्मणोऽन्नंभुङ्क्ते तस्य प्रतिषिद्धान्नभोजनाशङ्कायांप्राजापत्यकृच्छ्रचरणमुपदिश्यते । अविशेषनोदनायांप्राजापत्यंकृच्छ्रंप्रतीयतइति वक्ष्यामः । अज्ञातभुक्तशुद्ध्यर्थमज्ञातदोषशङ्कायामाह। दोषोयदिभुङ्क्ते तस्यशुद्ध्यर्थं। ननुच ईदृशस्य शुद्धिंवक्ष्यति अदृष्टमद्भिर्निर्णिक्तमिति तस्य विषयंतत्रैव दर्शयिष्यामः । ज्ञातस्यतुदोषस्यविशेषतः वैशेषिकंप्रायश्चित्तंकर्तव्यम् । यस्य यद्विहितंप्रतिपदम्॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । संवत्सरस्येतिषष्ठ्या तन्मध्यइतिविवक्षितम्। कृच्छ्रं प्राजापत्यं। द्विजोत्तमोविप्रः। अपिशब्देन शक्तस्याधिककरणमुक्तम्। अज्ञातभुक्तशुद्ध्यर्थं अज्ञायमानदुष्टसंसर्गभुक्तान्नदोषनिवृत्त्यर्थम्। ज्ञातस्यतु विशेषतोयत्र यथोक्तंतदेव॥ २१ ॥

( ३ ) **कुल्लूकः** । द्विजोत्तमपदंद्विजातिपरं त्रयाणांप्रकृतत्वात् एतदुक्तंद्विजानामित्युपसंहाराच्च। द्विजातिःसंवत्सरमध्य-एकमपि कृच्छ्रंप्रथमाम्नानात्प्राजापत्याख्यमज्ञातभक्षणदोषोपशमनार्थमनुतिष्ठेत् । ज्ञातस्य पुनरभक्ष्यभक्षणदोषस्यविशेषतोयत्र यद्विहितंतदेव प्रायश्चित्तंकुर्यात् । यत्तु । त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तंयच्च वाचा प्रशस्यतइति॥ तद्द्रव्यशुद्धिप्रकरणपठितप्रायश्चित्तव्यतिरिक्तद्रव्यशुद्धिविशेषेऽवतिष्ठते॥ २१ ॥

( ४ ) **राघवानन्दः** । तेषामज्ञानतोभक्षणे त्वाह समिति। अज्ञातभुक्तिशुद्ध्यर्थमिदंकृच्छ्रमात्रमिति शेषः । विशेषतः विशेषाकारेण छत्राकादीनामुक्तत्वात्॥ २१ ॥

( ६ ) **रामचन्द्रः** । अज्ञातभुक्तशुद्ध्यर्थमेकंकृच्छ्रं संवत्सरस्य संवत्सरपर्यन्तंचरेद्द्विजोत्तमः । ज्ञातस्य ज्ञानपूर्वंभक्षितस्य विशेषतः॥ २१ ॥

**यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्तामृगपक्षिणः॥ भृत्यानांचैव वृत्त्यर्थमगस्त्योह्याचरत्पुरा॥ २२ ॥**

(१ ) **मेधातिथिः** । भक्ष्यप्रसंगेन हिंसाभ्यनुज्ञायते। अत्यर्थंक्षुत्पीडायांभृत्यादेर्भोजनान्तरासंभवे भक्ष्यमृगपक्षिवधःकर्तव्यः। भृत्याःप्राग्व्याख्याताः । अगस्त्यस्तथाकृतवानित्यगस्त्यग्रहणंप्रशंसार्थम् । यज्ञार्थमित्याद्यर्धश्लोकोऽर्थवादएव । तत्रहि वधः प्रत्यक्षश्रुतिविहितत्वादेव प्रसिद्धः । प्रशस्तायेभक्ष्यतयाऽनुज्ञाताः । एषएवार्थउत्तरश्लोके विस्तरतः कर्मार्थवादतया कथ्यते॥ २२ ॥

।( २ ) **सर्वज्ञनारायणः** । अत्र मांसेषु भक्ष्याणि कानिचिदुक्तानि मांसोत्पादनंच प्राणिनोहत्वा हतानांवा मांस-

---

* शेषे=षये ( अ )

ग्रहणेनेति द्विधा तत्रैमेत्राब्राह्मणउच्यतइत्यादिषु प्राणिवधस्यातिपापहेतुत्वंप्रतीयते तथाच स्वयंप्राणिवधाचरणेऽपि यत्र ब्राह्मणानांन तादृशोहिंसादोषस्तत्प्रसंगात्कथयति यज्ञार्थमिति । यज्ञार्थं पाकयज्ञहविर्यज्ञसोमयज्ञासित्यर्थं वध्याः। स्वयं भृत्यानां भरणीयानांमातापितृभार्यादीनां दुर्भिक्षाद्यापदि वृत्तिर्जीवनमात्रं तदर्थम् । अगस्त्योह्याचरद्भयार्थम् । अगस्त्यग्रहणं ब्राह्मणकार्यतांदर्शयितुम् ॥ २२ ॥

( ३ ) **कुल्लूकः** । इदानींभक्षणप्रसंगेन यागाद्यर्थंहिंसामप्यनुजानाति यज्ञार्थमिति । ब्राह्मणादिभिर्यागार्थप्रशस्ताः शास्त्रविहितामृगपक्षिणोवध्याः । भृत्यानांचावश्यभरणीयानांवृद्धमातापित्रादीनांसंवर्धनार्थम् । यस्मादगस्त्योमुनिः पूर्वं तथाकृतवान् । परकृतिरूपोयमनुवादः ॥ २२ ॥

( ४ ) **राघवानन्दः** । किंच भक्ष्यप्रसङ्गेन हिंसांकुर्वित्यनुजानाति यज्ञार्थमिति । भृत्यानां भरणीयानां । सदाचारंप्रमाणयति अगस्त्यइति ॥ २२ ॥

( ५ ) **नन्दनः** । भक्ष्यत्वेनानुज्ञातानांमृगपक्षिणांयज्ञार्थंभृत्यार्थंच वधोब्राह्मणानामपि निर्दोषइत्याह यज्ञार्थमिति ॥ २२ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह यज्ञार्थमिति । मृगपक्षिणः वध्याहिंस्यायज्ञार्थंब्राह्मणैः प्रशस्ताउक्ताः । अगस्त्यः भृत्यानांपित्रादीनांतृप्त्यर्थं पुरा आचरत् ॥ २२ ॥

**बभूवुर्हि पुरोडाशाभक्ष्याणांमृगपक्षिणाम् ॥ पुराणेष्वृषियज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ २३ ॥**

( १ ) **मेधातिथिः** । षट्त्रिंशत्संवत्सरंनाम सत्रं तत्र मृगपक्षिवधआम्नातः सोनेनानूद्यते। इदंतत्रब्राह्मणं संस्थितेऽह्नि गृहपतिर्मृगयांयाति सतत्रयान्यान्मृगान्हन्ति तेषांतरसाःपुरोडाशाभवन्ति । अर्थवादत्वाद्बभूवुरितिभूतप्रत्ययेन विवक्षा तेनाद्यत्वेपिभवन्ति । एवंपुराणेष्वपि न केवलंकश्चिदद्यत्वे सत्राणांव्यवहारइतिदर्शनाभिप्रायमेतत्पुराणेष्विति। न पुनरद्यत्वे यदि केचित्सर्वाण्येव हरेयुस्तेषामेषविधिर्नभवतीतिमन्तव्यम् । अथवा यःस्वयंशास्त्रार्थंवेदितुमसमर्थः केवलंपरप्रसिद्ध्या महाजनोयेन गतःसपन्थाइतिन्यायेन प्रवर्तते तत्रत्वेतदुच्यते । पुराणेष्विति नायमिदंप्रथमकोधर्मः किंतर्हि अनादिः । पौराणाऋषयोब्राह्मणाःकेवलतपःसिद्धाः जात्यन्तरंवा यथामहाभारतादौ वर्णितम् । नचात्र निर्बन्धः कर्तव्यः । ऋषीणांजात्यन्तरत्वे गन्धर्वादिवत्कथंयागेष्वधिकारइति यतोयमर्थवादोयेन केन चिदालम्बनेनप्रतीयते । ब्रह्मक्षत्रसवाः ब्रह्मक्षत्रिययज्ञाः ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । तथाह्यन्येष्वृषीणां यज्ञेषु सत्रेषु पुराणेषु अतिपूर्वकालेषु मृगपक्षिमांसेन पुरोडाशाबभूवुः । तानितु ब्रह्मक्षत्रसवेषु ब्राह्मणक्षत्रियजातीयैर्मिलितैः कृतेषु सवेषु यज्ञेषु सत्ररूपेषु वा बभूवुः । भवतिहि ब्राह्मणक्षत्रियौ गृहपती कृत्वा ब्राह्मणैर्ऋत्विग्भूतैः सत्रं तत्र तरसाःपुरोडाशाभवन्तीति श्रुतावुक्तम् । तरसामांसमयाः । तदुत्पादनप्रकारश्च संस्थितेगृहपतिर्मृगयामेतीत्यादिनोक्तः तत्रमृगयाप्रकारस्य ब्राह्मणैरज्ञानात्क्षत्रियस्यापि गृहपतित्वेनान्तर्भावनंक्रियतइतिब्रह्मक्षत्रसवेष्वितिविशेषितम् ॥ २३ ॥

( ३ ) **कुल्लूकः** । यस्मात्पुरातनेष्वपि ऋषिकर्तृकयज्ञेषु च भक्ष्याणांमृगपक्षिणांमांसेन पुरोडाशाअभवंस्तस्माद्यज्ञार्थमधुनातनैरपि मृगपक्षिणोवध्याः ॥ २३ ॥

( ४ ) **राघवानन्दः** । संस्थितेहनि गृहपतिर्मृगयांयाति सयांस्तत्र मृगान्हिनस्ति तेषांतरसाःसवनीयाःपुरोडाशा

भवन्तीति वसन्तायकपिञ्जलानालभेतेत्यादिश्रुतेर्यज्ञार्थंतेषांपुरोडाशाइत्याह बभूवुरिति। ऋषीणां यज्ञेषु ब्रह्म ब्राह्मणजातिः तथा क्षत्रं तयोः सर्वेषु यागेषु मृगाणांपक्ष्यादीनांपुरोडाशादयोबभूवुरिति पुराणेषु श्रूयतइतिशेषः ॥ २३ ॥

( ५ ) **नन्दनः**। मृगपक्षिणां मांसानीतिशेषः। ब्रह्मक्षत्रसवेषु ब्राह्मणानांक्षत्रियाणांच यज्ञेषु ॥ २३ ॥

( ३ ) **रामचन्द्रः**। भक्ष्याणांमृगपक्षिणामगस्त्येन प्रोक्षितानांमांसैः पुरोडाशाबभूवुः। ब्रह्मक्षत्रसवेषु ब्राह्मणक्षत्रियैर्मिलित्वा कृतेषु। तद्यथा ब्राह्मणक्षत्रियौ गृहपती कृत्वा ब्राह्मणैर्ऋत्विग्भूतैः सत्रंभवति तत्रतरसाःपुरोडाशाभवन्तीति श्रुतावुक्तं। तरसामांसमयाः। तत्प्रकारश्च संस्थिते गृहपतिर्मृगयामेतीत्यादिनोक्तः। ब्राह्मणस्य मृगयाप्रकाराज्ञानात्क्षत्रियस्यब्राह्मणमिलितस्याधिकारः ॥ २३ ॥

**यत्किंचित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् ॥ तत्पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ॥२४॥**

( १ ) **मेधातिथिः**। भक्ष्यंयत्किंचित्स्नेहसंयुक्तं। भोज्यमोदनादि। भुक्तिभुज्योरेकार्थत्वेपि पृथगुपादानाद्विषयभेदोयंप्रतीयते अगर्हितं शुक्ततामनापन्नं तत्पर्युषितमप्याद्यम्। रात्र्यन्तरे पर्युषितमुच्यते। पूर्वेद्युःसिद्धमप्यपरेद्युः पर्युषितंभवति। स्नेहसंयुक्तमिति एवंसंदिह्यते कियत्स्नेहसंयुक्तंसत्पर्युषितंरसमिश्रशाकादितत्पर्युषितमशितव्यम्। उक्तशुक्तस्यापि पर्युषितस्यभक्षणम्। कालेस्नेहसंयोगःकर्तव्यः। भक्षापूपाद्यपि पर्युषितंभोजनकाले स्नेहेन संयोज्य भक्षयितव्यमिति। अतःसंदिह्य यावता यत्स्नेहयुक्तानांभक्ष्यतोच्यते तत्पर्युषितमाद्यमिति। उद्दिश्यमानंस्नेहसंयुक्तमिदमितिन पुनर्विधेयार्थे नहितच्छब्दसंबन्धोस्य श्रुतोयत्पर्युषितंस्नेहासंयुक्तमाद्यमिति। उच्यते। हविःशेषाणांपर्युषितानामस्नेहसंयुक्तानांतेषांवचनमनर्थम्। नच तेषांस्नेहसंयुक्तानांपरिवासःसंभवति। एवंच तेषांवचनमर्थवद्भवति यदि भोजनकाले तेषांस्नेहसंयोगोनापेक्ष्यते। अतस्तेषांतावद्भोजनकालएव स्नेहसंयोगनिरपेक्षतया वचनस्यार्थवत्वम्। यद्येवंतथापि न संदेहोर्थवत्वाद्विशेषपदस्य विधेयार्थता स्नेहसंयुक्ताशब्दस्यन्याय्या। उच्यते एतावदत्रसन्देहेबीजं यथाश्रुतसंबन्धस्यबलीयस्त्वात्किं हविःशेषपदमनुवादोस्तु उतानर्थनकत्वंमाप्रापदितियत्पर्युषितं तेन स्नेहसंबन्धः क्रियताम्। तत्रानर्थक्याद्व्यवहितकल्पना ज्यायसी। समाचारान्निर्णयः। सर्पिस्तैलवसामज्जानःस्नेहाः ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः**। पर्युषितेविशेषमाह यत्किंचिदिति। यत्किंचित्स्नेहसंयुक्तं येनकेनचित्स्नेहेन संयुक्तं सर्वतोव्याप्तंनत्वेकदेशस्नेहसंबन्धादपि हविः शेषस्य पर्युषितस्य पृथग्भक्ष्यत्वाभिधानात्। एवंहि हविषोभिघारणादवश्यंस्नेहेनैकदेशसंबन्धोव्याप्तिस्तन्नास्तीतितस्यपृथगभिधानंयुज्यते। भक्ष्यंलड्डुकादि। भोज्यमोदनादि ॥ २४ ॥

( ३ ) **कुल्लूकः**। इदानींपर्युषितप्रतिप्रसवार्थमाह यत्किंचिदिति। यत्किंचित्खरविशदमभ्यवहार्यं मोदकादि भोज्यंपायसादि अगर्हितमुपघातान्तररहितंतत्पर्युषितंरात्र्यन्तरितमपि घृततैलदध्यादिसंयुक्तंकृत्वा भक्षणीयम्। ननु प्रागेव यत्स्नेहसंयुक्तंतत्पर्युषितंभक्षणीयमितिव्याख्येयं तथाच सति हविःशेषस्य स्नेहसंयोगावश्यंभावाद्यत्किंचित्स्नेहसंयुक्तमित्यनेनैव भक्षणे सिद्धे हविःशेषंच यद्भवेदित्यनर्थकंस्यात्। स्मृत्यन्तरेऽपि भक्षणकालएवाभिघारणमुपदिश्यते। तथाच यमः। मसूरमाषसंयुक्तंतथा पर्युषितंचयत्। तत्तु प्रक्षालितंकृत्वा भुञ्जीत ह्यभिघारितम् ॥ हविःशेषंतु चरुपुरोडाशादि पर्युषितमपि भोजनकाले स्नेहसंयोगशून्यमेव भक्षणीयं पृथगुपदेशात् ॥ २४ ॥

( ४ ) **राघवानन्दः**। एतानि पर्युषितान्यप्यदनीयानीत्याह यदितिद्वाभ्यां। आद्यं भक्षणीयं अस्निग्धंभक्ष्यंभोज्यंस्नेहसंयुक्तंकृत्वा। तथाच यमः॥ मसूरमाषसंयुक्तंतथापर्युषितंचयत्। तच्च प्रक्षालितंकृत्वा भुञ्जीताज्याभिघारितमिति ॥२४॥

( ५ ) **नन्दनः** । पर्युषितमभक्ष्यमित्युक्तंतस्यापवादंश्लोकद्वयेनाह यदिति । अगर्हितमनिषिद्धंयत्किंचिद्भक्ष्यमपूपादि । भोज्यमन्नादि । तदुभयंस्नेहसंयुक्तंघृतादिना संयुक्तंचेत्पर्युषितमप्याद्यमदनीयम् । स्नेहयुक्तंहविःशेषंयत्तदप्यदनीयम् ॥ २४ ॥

( ६ ) **रामचन्द्रः** । भक्ष्यं मोदकादि भोज्यं ओदनादि तत्पर्युषितमप्याद्यंभक्ष्यम् । यत् हविःशेषं तदाद्यंभक्ष्यंभवेत् ॥ २४ ॥

**चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ॥ यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥ २५॥**

( १ ) **मेधातिथिः** । चिरस्थितं द्विरात्राद्यन्तरितं अपिशब्दादाक्तमित्यत्रापिसंबन्धयितव्यम् । स्नेहाक्तमपि यवगोधूमजं सक्तुपूपादि । पयसोविक्रियाविकारादधिमथितादयः ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । चिरस्थितंपर्युषितमस्नेहाक्तमप्याद्यं भोज्यं यवगोधूमयोर्विकारजातमित्यर्थः ॥ २५॥

( ३ ) **कुल्लूकः** । अनेकरात्र्यन्तरिताअपि यवगोधूमदुग्धविकाराः स्नेहसंयोगरहिताअपि द्विजातिभिर्भक्षणीयाः ॥ २५ ॥

( ४ ) **राघवानन्दः** । पयसश्चैव विक्रियाः पर्युषिताभक्ष्याइत्यन्वयः । अगर्हितंचेद्भक्ष्यमिति स्वतोगर्हितंस्नेहसंयुक्तमपि न भोक्तव्यम् ॥ २५ ॥

( ५ ) **नन्दनः** । अस्नेहाक्तमसंयुक्तंघृतादिभिः ॥ २५ ॥

( ६ ) **रामचन्द्रः** । द्विजातिभिः अस्नेहाक्तंयवगोधूमजंचिरस्थितमपि आद्यं भक्ष्यंभवति । च पुनः दुग्धस्य विक्रियाः ॥ २५ ॥

**एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः ॥ मांसस्यातः प्रवक्ष्यामि विधिंभक्षणवर्जने ॥ २६ ॥**

( १ **मेधातिथिः** । आद्येन श्लोकार्धेन पूर्वप्रकरणमवछिनत्ति । तदेतदनन्तरमनुक्रान्तंप्रकरणमेतद्द्विजातीनां न शूद्राणाम् । इत्युत्तरंतु यद्वक्ष्यते त च्छूद्राणामपीति प्रकरणव्यवच्छेदप्रयोजनम् । अतश्च मांसभक्षणे प्रकारोवक्ष्यते । यच्च तद्वर्जनेन फलं तच्छूद्रस्यापि भवतीत्यन्यथा अभक्ष्याणिद्विजातीनामित्यधिकाराल्लशुनादिष्वश शूद्रस्य मांसभक्षणेपि कामचारःस्यात् । यद्येवंदेवाद्यर्चने शिष्टस्य मांसस्य भक्ष्यता वक्ष्यते । देवान्पितॄंश्चार्चयित्वा खादन्मांसंन दुष्यतीति देवाद्यर्चनंमेध्येन मांसेन । येच द्विजातीनांप्रतिषिद्धामृगशकुन्तास्तेऽमेध्याः अतश्च तेषांमांसेन देवार्चनासंभवादतच्छेष स्य भक्ष्यत्वादन्येपि प्रकरणभेदायथाब्राह्मणादीनांमृगपक्षिणः प्रतिषिद्धास्ते शूद्रस्यापि प्रकारान्तरेण प्रतिषिद्धाभवन्ति । तत्र प्रकरणभेदेन केनचिदुच्यते । लशुनादिप्रतिषेधः शूद्रस्य न भवति । अस्तितावत्प्रकरणभेदेन प्रयोजनंलशुनादिप्र तषेधे शूद्रस्याधिकारोमाभूदिति मांसेपि देवाद्यर्चने गृहस्थस्याधिकारादगृहस्थस्य शूद्रस्य यथाकाम्यम् । ननुच पाकयज्ञे शूद्र स्याधिकारतःस्थितस्य भोजनंगृहस्थानां च विहितम् । नच लशुनादिभिः पाकयज्ञाःक्रियन्ते । ततश्च नापि शूद्रस्य यथाकाम्यं । लशुनादयोभक्ष्याःस्युः । कोदोषः । द्विजातिग्रहणमनर्थकम् ।परित्वतमेतदगृहस्थस्य प्रोषितस्य वा कामचारः नचगृहस्थेन यदहुतंतन्न भोक्तव्यं शेषभुग्भवेदित्यस्यायमर्थः। अकृतवैश्वदेवक्रियेण नभोक्तव्यम्।तत्र यस्यैव यागसाध नता द्रव्यस्य तदेव मेध्यंहोतव्यम् ।अन्येतु भोजनकाले कुतश्चिदाहृत्यमध्यगेहेवाभुञ्जते तच्च हुतशेषमपि न प्रतिषिद्धं मांसेतु पुनर्वचनान्नियमः । न कदाचिद्देवानुपयुक्तंभोज्यमिति । यदि चातुर्वर्ण्यस्यात्राधिकारस्तदा यद्वक्ष्यति

परस्तात्तु शुद्धविधौ चतुर्णामपि वर्णानामिति तदनर्थकम् । तत्रैव तस्य प्रयोजनंवक्ष्यामः । अथ श्वमांसाद्यपि शूद्रस्य भक्ष्यं प्राप्नोति द्विजातिग्रहणात्पूर्वत्र । किन्त्वेकादशे विड्वराहखरोष्ट्राणामित्यादिश्लोकत्रयनिर्दिष्टाःशूद्रस्यापि न भक्ष्याइतिज्ञापकंदर्शयिष्यामः ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । इहखलु मांसेषु सर्ववर्णाविशेषेण भक्ष्याभक्ष्यविवेकोदर्शितः तत्र द्विजातीनांत्रयाणांयादृशेन नियमेन भक्ष्यमांसानामपि भक्षणं तत्कथयितुमवतारयति एतदुक्तमिति । द्विजातीनांत्रयाणांसामान्यात्तदुक्तम् । भक्षणे वर्जने च विधिं प्रकारं द्विजातीनामेव ॥ २६ ॥

( ३ ) **कुल्लूकः** । एतद्विजातीनांभक्ष्याभक्ष्यमुक्तम् । अतऊर्ध्वंमांसस्य भक्षणेवर्जने च विधानंनिःशेषंवक्ष्यामि ॥ २६ ॥

( ४ ) **राघवानन्दः** । अशेषतःशेषःप्रायश्चितंसोपि परिशिष्टोविद्यते न यत्र तेन प्रायश्चित्तसहितंभक्ष्यमुक्तमिति सूचीकटाहन्यायेन प्रायश्चित्ताभिधानमेकादशोक्तम् । द्विजस्यैवात्र प्रायश्चित्तमुक्तं न तुशूद्राणामिति मेधातिथिः । तत्रशूद्राणांमांसभक्षणे दोषएव नास्तीति जग्ध्वा मांसमित्युपक्रम्योपसंहारेऽसकृद्विजइति तत्रोक्तेः । स्थानभ्रष्टाएते भवन्तीति भावः । प्रतिज्ञान्तरमाह मांसस्येति । भक्षणवर्जने यथा भक्षितव्यंयथा वा नेति ॥ २६ ॥

( ५ ) **नन्दनः** । विधिं प्रकारम् ॥ २६ ॥

## प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया॥यथाविधि नियुक्तस्तु प्राणानामेव चात्यये॥२७॥

( १ ) **मेधातिथिः** । अग्नीषोमीये पशौ हुतशिष्टंमांसं लक्षणया प्रोक्षितमुच्यते । ननु प्रोक्षितशब्दोयौगिकउक्षसेचनइत्यस्यधातोःप्रक्षालनक्रियानिमित्तकः तथाच प्रोक्षणीरासादय घृतंप्रोक्षणीयमिति प्रोक्षणीभिरुद्वेजितास्थइति रुर्वत्र क्रियायोगात्प्रयुज्यते । यद्यासेचनसाधनं तत्र कुतोवैदिकसंस्कारनिमित्तकानांस्वसंबन्धे पशुलक्षणाद्वारेणमांसे प्रवर्तते । मुख्यंच शब्दार्थमतिक्रम्यकिमितिलक्षणाश्रीयते अतःप्रक्षालितमुदकादिना मांसंक्रियादिना युक्तम् । सत्यं यद्यत्र वाक्यान्तराण्यर्थवादाश्चेति निःशेषंभुञ्जाने स्युः अनुपाकृतमांसानि असंस्कृतान्पशून्मन्त्रैरिति । अतस्तत्पर्यालोचनयायमेवार्थोवतिष्ठते । यद्येवंततएव सिद्धत्वात्किमनेन केचिदाहुः अनुवादोयम् । मांसेच्छया भक्षणस्य विधिस्तावदयंन भवति क्षुत्प्रतिघातार्थिनोलिप्सया प्रवृत्युपपत्तेः । सहि विधिरुच्यते । यःपुरुषस्यदृष्टेन प्रयोजनेन प्रवृत्तावसत्यांप्रवृत्त्यवबोधकोयावज्जीवमग्निहोत्रंजुहुयादिति । शास्त्रमेवात्र प्रमाणं । तत्राग्निन्कृते इदमभिमतमभिनिवर्तते अकृतेवायमनर्थआपतत्येवमन्वयव्यतिरेकाभ्यामवगम्यते तत्र शास्त्रमेव मृग्यते । यत्रतु नायमन्यतोवगतःकेवलागमैकगोचरैर्यःसविधिरितिचोच्यते । इहतु भोजने कृते पुष्टिरुपजायते यद्दुःखंतन्निवर्ततइति । बालाअपि स्तनपायिनोनुपदिष्टमवयन्ति । नियमोपि भवति तद्रूपानवधारणात् । यदितावत्प्रोक्षितंच भक्षयेदेवेति नियमस्तदा कालविशेषावच्छेदाभावादाहारविहारकालाअप्यवसीदेयुरनवरतमश्नन्नेवासीत अशक्यश्चार्थउद्दिष्टःस्यात् यथोक्तमश्राद्धभोजीति । यदहरेव प्रत्यवेयादिति महाभाष्यकारेण विधिविशेषएव च नियमउक्तः । असंभवति च विधौ कुतोनियमः न चान्येन प्रोक्षितमन्येन लभ्येत तस्मादयमर्थः । अथप्रोक्षितमेवेति अप्रोक्षितंनेतिपरिसंख्या । नहि प्रोक्षिताप्रोक्षितोभयभक्षणस्य त्यागादशनाया निवृत्तौ युगपत्पर्यायेणवा प्रवृत्या परिसंख्यालक्षणस्य विद्यमानत्वात् । तथाप्यनुपाकृतमांसानीत्येव सिद्धम् । अन्येत्वस्य पक्षस्यैवंदोषमुपपादयन्ते । विशेषेण सर्वाप्रोक्षितप्रतिषेधःशकुनीनामप्रतिषेधःप्राप्नोति । नच येषामेव प्रोक्षणंविहितंतेषांतु प्रतिविधानाद्यभावादितिनविशेषपरिग्रहेप्रमाणमस्ति तदयुक्तंमन्यन्ते एवंसति भेदेन शकुनीनांप्रतिषेधानुक्रमेण गमक-

त्वात् । तस्माच्छ्रुतकर्माङ्गत्वेन नियमस्य प्रोक्षितमांसभक्षणस्यायमनुवादइति युक्तं दृष्टान्ततया । यथा यज्ञेवश्यंभक्षणमभक्षणा च्छास्त्रातिक्रमः । एवमुत्तरेष्वपि निमित्तेषु अनुवादश्चेत्परिसंख्यापेक्षा॑ऽयस्तु गोव्यजमांसमप्रोक्षितंभक्षयेदित्यनेनैतदनुपाकृतानामेवासद्रूपमनूद्यते । अप्रोक्षितस्यापि ब्राह्मणकाम्यानिमित्तेष्वनुज्ञापनार्थः । अन्यच्चानर्चितंवृथामांसमपि । चातुर्थिकेन वृथामांसशब्देन एतदनुपरिज्ञानार्थमितरथा विज्ञायेत किंतद्वृथामांसमिति । अथवा एकत्र भोक्तुरुपदेशोऽन्यत्रकल्पयित्वा येन देवाद्यर्चनंकृतंतदीयंमांसमन्येनाप्यतिथ्यादिना न भोक्तव्यम् । अनधिकृतेनापि देवाद्यर्चनेन ह्यतिथ्यादयेपरगृहे न दीयेत मांसेन देवार्चनेधिक्रियते । अथ कल्पयित्वा यदि कृतं तदार्हत्यशितुं । द्वितीयस्तु प्रतिषेधोदेवान्पितॄनिति । स्वगृहेधिकृतानामकृतवतांभक्षणादयस्तर्हि असंस्कृतान्पशून्मन्त्रैरिति उक्तःप्रोक्षणशब्दार्थः । एवंपञ्चापि निषेधवाक्यानि पृथगर्थानि दर्शितानि । ब्राह्मणानांच काम्यया कामना इच्छा काम्या शब्दः छान्दसः। यदाब्राह्मणादीनामप्रोक्षितानामिदमनुज्ञानं तदाकिंपुनरयंनियमः। अभक्षणे शास्त्रातिक्रमः । उत प्रतिप्रसवमात्रं प्रतिप्रसवे भोक्तव्यं विवाहेपुनर्भोक्तव्यमिति वचनादपि प्रतिषेधाप्रवृत्तिर्विवाहे गम्यते । न भोजनार्थमावश्यकं किंतु ब्राह्मणा यदि गरीयांसस्तदा तद्वचनातिक्रमोन युक्तः । अन्येतु क्रीत्वादिश्लोके ब्राह्मणानामित्यनुवर्त्य शशादिमांसस्यापि विधिमिच्छन्ति । यज्ञविवाहयोरन्यत्र चगोष्ठीभोजनादौ यदि ब्राह्मणाअर्थयन्तेतदा तेषांमांसंस्वरूपेण दैवौद्देशिकया न प्रतिषिद्धमवस्थाविशेषेण प्रोक्षणं देवाद्यर्चनादीनि कर्तव्यानि विशेषःप्रतिषिद्धः तस्य ब्राह्मणकामनानिमित्ते अभ्यनुज्ञाते । ननु क्रव्यादान्शकुनानित्यादेरत्र प्रतिषेधस्यापिनिवृत्तिरस्तु महाफलेतिकृतसंकल्पस्तस्याप्यनुज्ञानमिष्यते प्रोक्षितेऽप्रोक्षितेच कृतार्चनेऽकृतार्चने वा । यथाविधिनियुक्तस्तु प्राणानामेवचात्यये । मधुपर्केच श्राद्धेच नियुक्तोऽप्रोक्षणेनापि भक्षयेत् । एषहि यथाशास्त्रंनियोगस्तत्र श्राद्धेनियमा उक्ता एव केतितस्तु यथान्यायं कथंचिदप्यतिक्रामन्निति । श्राद्धंभोक्ष्यइत्यभ्युपत्येदमहंनाश्नामीति न लभ्यते । वक्तुम् । अभक्ष्यमशुचिकरंव्याधिजननंच वर्जयित्वा हविष्यविधानान्नभक्ष्यं यद्यद्रोचतेतत्तन्नाप्रीतिकरंदीयते । अतइदंवचनंमधुपर्कएव । ननु मधुपर्के नास्ति नियोगः । अशितव्यंमधुपर्कार्हेणच नियमोनासौमधुपर्कस्य वधिः । सहितत्राधिकृतोनधन्योराजादिः । यथैव नास्यानश्नन्गृहेवसेदिति गृहस्थस्य नियमोदृश्यते । एतेनावगम्यते अप्रतिके न दातव्यमिति । यैस्तु कामचारएवंपूजितसमादानेन पूज्यस्याशनेन नहितत्तदर्थं कर्म । ननुचातिथ्यमेवानित्यं । सत्यं दृष्टंप्रात्युत्पादनेन धर्मार्थमनुष्ठानं । तस्य नियमोक्तधर्मार्थमेवदातुस्तस्य हिगोरुत्सर्गपक्षे विहितोनामांसोमधुपर्कःस्यादिति । नार्त्विज्येवचनस्यापिविषयइतिचेत् । अस्त्वयमपिपूर्ववदनुवादः श्राद्धेआर्त्विज्ये च । ननुचार्त्विज्येउक्तमेव । इडादिभक्षणंयजमानस्य तत्र शास्त्रनिबन्धनोनियमोनार्त्विजां । सत्यं । किंतु ऋत्विजोयदि न भक्षयन्ति ते प्रवाद्यन्ते । अविदितेनअदृष्टेनापि दोषेण युज्यन्ते । ननु तेषांभक्षणमधिकृतानांभासतां नहि ते कर्मफलेन युज्यन्ते । भृत्यादिर्हि परिक्रीतानविहितान्पदार्थाननुतिष्ठति । विहितश्च यजमानपञ्चमाइडांभक्षयन्तीति । तेषांभक्षणतोस्याभ्युपगत्यार्त्विज्यानांनियतंभक्षणं तदा तेनानूद्यतइति युक्तं । नहि श्राद्धभुजामृत्विजांच भक्षणे शास्त्रीययोगोयजमानस्यैवाऽनुवादःकिमर्थइतिचेन्नानुवादःप्रयोजनमपेक्षते । किंतर्हि प्राप्तमस्तिचात्र उच्यते । अत्रापि यदागोपेनगोवधपूजाभ्युपगता तदावश्यमशितव्यं । तदनुग्रहार्थमसौ मधुपर्कपूजांप्रतीच्छति । अतःपूर्वा तेन क्रिया संपादनीया । अन्यथा प्राक्रमिकःस्याच्च परिपूर्णेन मधुपर्केण तदनुग्रहासंपत्तेस्तस्मिन्प्रतिषिद्धमांसाशने मधुपर्कपूजार्त्विज्यंच प्रथममेवाभ्युपगन्तव्यम् । ब्राह्मणभोजने च । ब्रह्मचारिणस्तुव्रतवदित्यनुज्ञादानमेव ग्राह्यं मांसस्य प्राणानामेवचात्यये प्रकृतत्वाद्देवाद्यर्चनमन्तरेण । अभक्ष्यमाणे व्याधिना क्षुधा भोजनान्तरासंभवे जीवनाशशङ्कायांगोजाविमक्षयितव्यम् । सर्वतएवात्मानंगोपायेदित्येतच्छ्रुतिमूलो-

र्यनियमः। अतश्चेद्देशेनिमित्ते मांसमभक्षन्नात्महा संपद्यते। आत्मवधश्च सर्वतएवात्मानंगोपायेत्तस्मादु ह नपुरायुषःस्वःका मीप्रेयादलोक्यंतद्भवतीत्यादिश्रुतिभिर्मन्त्रार्थवादैश्चतैर्दोषवान्नेतिज्ञापितः । तथाहि मन्त्रः। असूर्यानाम ते लोकाअन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति येकेचात्महनोजनाइति ब्रह्मचारिणोपि प्राणात्यये भक्षणमिष्यते। तस्यैबाल्याद्य-वस्थानिमित्तंवाचनिकंप्रायश्चित्तंभविष्यतीति । ब्रह्मचारीतु योश्नीयान्मधुमांसंकदाचनेति । क्षुधातु प्राणात्ययाशङ्कायां-प्रतिषिद्धमांसाशनमपीतिव्यासः। जानातीतिदर्शनेनैकाहिकंचेष्यते। एतावता कान्तारं अतीतव्याधौ तु न शक्यमेतत् ज्ञा-तु मवश्यमशितेनानेन जीवतीति। तत्रतु प्रतिषिद्धग्राम्यकुक्कुटादिमांसभक्षणमिष्यते। प्रोक्षणंदेवाभ्यर्चनसहितस्य तु प्रकृत-त्वादस्त्यनुज्ञानं । व्याधेश्च न केवलमुत्पन्नस्य निवृत्त्यर्थंयावत्कुशक्षय्यातुरदुर्बालादीनांसर्वकालंमांसाशनं नियमतइ-ष्यते। स्त्रीमद्यनित्याःक्षयिणःश्रमव्याध्याचकर्शिताः। नित्यमांसरसाहाराआतुराश्चापिदुर्बलाः॥ अप्रोक्षितस्यापि छागमां-सस्य देवताद्यर्चनंतु तैरवश्यंकर्तव्यम्। असंभवेतु कास्मिंश्चिदहनि न दोषः॥ २७॥

( २ ) **सर्वज्ञनारायणः**। प्रोक्षितमुपाकृतं भक्षयेत् यजमानः। तथा बहूनांब्राह्मणानां यत्र मांसभक्षणे संतोषस्तत्र ब्राह्मणानां काम्यया इच्छया भक्षयेत्। यथाविधि वरणादिना नियुक्तः ऋत्विक् श्राद्धीच। प्राणानामत्यये तदभक्षणे म-रणनिश्चये। अत्रच भक्षयेदिति न विधीयते किंतु रागप्राप्तंभक्षणमनूद्य परिसंख्यायते। यथा मन्वर्थानुवादी बृहस्पतिः॥ रोगी नियुक्तोविधिना हुतं विप्रवृतस्तथा। मांसमद्याच्चतुर्द्धैषा परिसंख्या प्रकीर्तिता॥ अतोन्यथा तु योश्नीयाद्विधिंहित्वा पिशाचवत्। यावन्ति पशुरोमाणि तावत्प्राप्नोति मारणमिति॥ अतएवात्र परिसंख्यादोषोपि न दोषाय स्मृत्यैव स्मृतेस्तथा व्याख्यातत्वात्॥ २७॥

( ३ ) **कुल्लूकः** । प्रोक्षितंभक्षयेदिति परिसंख्या वा स्यात् नियमविधिर्वा। तत्र परिसंख्यात्वे प्रोक्षितादन्यन्न भ-क्षणीयमितिवाक्यार्थः स्यात्। सचानुपाकृतमांसानीत्यनेनैव निषेधात्प्राप्तस्तस्मान्मन्त्रकृतप्रोक्षणाख्यसंस्कारयुक्तयज्ञहु-तपशुमांसभक्षणमिदंयज्ञाङ्गंविधीयते। अतएवासंस्कृतान्पशून्मन्त्रैरित्यस्यानुवादंवक्ष्यति। ब्राह्मणानांच यदा कामना भ-वति तदावश्यंमांसंभोक्तव्यमिति तदापि नियमतएकवारंभक्षयेत्सकृद्ब्राह्मणकाम्ययेतियमवचनात्। तथा श्राद्धे मधुपर्केच समांसोमधुपर्कइतिगृह्यवचनात्। नियुक्तेन नियमान्मांसंभक्षणीयमिति। अतएव नियुक्तस्तु यथान्यायमित्यतिक्रमदोष-वक्ष्यति। प्राणात्यये चाहारान्तराभावनिमित्तके व्याधिहेतुके वा नियमतोमांसंभक्षयेत्॥ २७॥

( ४ ) **राघवानन्दः**। प्रोक्षितमग्नीषोमीयादिपश्ववशिष्टम्। यथाविधिनियुक्तः श्राद्धादौ। अत्यये मांसैकनिर्वर्त्यरो गेइतिचतुष्टये नियमविधिः॥ २७॥

( ५ ) **नन्दनः**। अभक्ष्यमपि मांसंप्रोक्ष्यैव भक्षयेत्। काम्यया प्रार्थनया । यथाविधिनियुक्तोदैवपित्र्ययोर्निम-न्त्रितः। प्राणानामत्यये क्षुधादिपीडायाम्। एवंचतुर्धा मांसभक्षणे विधिरुक्तः॥२७॥

( ६ ) **रामचन्द्रः**। मांसंभक्षयेत्प्रोक्षितादन्यन्न भक्षयेदित्यन्यनिषेधपरम्। च पुनः नियुक्तःसन् निमन्त्रितः सन्ब्रा-ह्मणानांकाम्यया भक्षयेत्। च पुनः प्राणानामत्यये नाशे उपस्थिते मांसंभक्षयेत् औषधार्थमित्यर्थः॥ २७॥

**प्राणस्यान्नमिदं सर्वंप्रजापतिरकल्पयत्॥ स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम्॥ २८॥**

( १ ) **मेधातिथिः**। प्राणःकौष्ठोवायुः जीवबीजभूतः पञ्चवृत्तस्योदानादिकस्यशरीरस्थित्यर्थं । इदंसर्वंजगत्प्र-जापतिरकर्त्त्वेनाकल्पयत्। इदमितिसामान्यतोनिर्दिश्य विशेषेणनिर्दिशति स्थावरंजङ्गममिति । अतोहेतोःसर्वंप्राणस्य भोजनम्। तिर्यक्पक्षिमनुष्यसरीसृपावस्थाहेतुमद्भेदनिर्देशात् । द्वितीयंसर्वग्रहणमपुनरुक्तम्। यतःप्रजापतिना सर्व-

मापदिप्राणस्य कल्पितम्। अतःसर्वमेतस्य भोजनम्। तथाच प्राणसंवादोपनिषदि श्रूयते। सहोवाच किंमेत्वंभविष्यसीति। यदिदंकिंचित् आश्वभ्यआकीटपतङ्गेभ्यइति ॥ २८॥

( २ ) **सर्वज्ञनारायणः**। अत्रापरेषांमतमुत्थापयति प्राणस्यान्नमिति। प्राणस्य जीवात्मनः। यतोकल्पयदतस्तस्य भोजनं भोज्यम् ॥ २८ ॥

( ३ ) **कुल्लूकः**। प्राणात्यये मांसभक्षणानुवादमाह प्राणस्यान्नमिति। प्राणितीति प्राणोजीवः शरीरान्तर्गतोभोक्ता तस्यादनीयंसर्वमिदंब्रह्मा कल्पितवान्। किंतदाह जङ्गमं पश्वादि स्थावरं व्रीहियवादि सर्वंतस्य भोजनं तस्मात्प्राणधारणार्थंजीवोमांसंभक्षयेत् ॥ २८ ॥

( ४ ) **राघवानन्दः**। अत्रार्थे भूतार्थवादमाह प्राणस्येति। भोजनं भक्ष्यम् ॥ २८ ॥

( ५ ) **नन्दनः**। प्राणानामेव चात्ययइत्यस्यार्थवादंश्लोकत्रयेणाह प्राणेति। प्राणस्य प्राणिनः ॥ २८॥

( ६ ) **रामचन्द्रः**। प्राणस्यान्नमित्यारभ्य यज्ञायेति पर्यन्तंचार्वाकपूर्वपक्षोनिरूप्यते प्राणस्येति। प्राणस्य क्षुत्पिपासे इति श्रुतिः। प्रजापतिरिदंसर्वमन्नंप्राणस्याकल्पयत्। सर्वस्थावरंजङ्गमंप्राणस्य भोजनंस्मृतम् ॥ २८ ॥

**चराणामन्नमचरादंष्ट्रिणामप्यदंष्ट्रिणः॥ अहस्ताश्च सहस्तानां शूराणांचैव भीरवः ॥ २९ ॥**

( १ ) **मेधातिथिः**। चराश्चरणपतनरणोत्साहयोगिनःश्येननकुलादयः तेषामचराः सर्पकपोतादयः अन्नम्। एवं दंष्ट्रिणां सिंहव्याघ्रादीनां अदंष्ट्रिणः रुरुपृषतादयोमृगाः। अहस्ताःसर्पमत्स्यादयः सहस्तानां नकुलनिषादादीनाम्। शूराणां महोत्साहयुक्तानांजीवितनिरपेक्षाणांभीरवः प्रियजीविताः। अल्पसत्वाअन्नत्वेन हन्यन्ते ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः**। शूराणां सिंहादीनां भीरवोमृगाद्याः ॥ २९ ॥

( ३ ) **कुल्लूकः**। प्राणस्यान्नमिदंसर्वमित्येव प्रपञ्चयति चराणामिति। जङ्गमानांहरिणादीनां अजङ्गमास्तृणादयः। दंष्ट्रिणां व्याघ्रादीनामदंष्ट्रिणोहरिणादयः। सहस्तानांमनुष्यादीनामहस्तामत्स्यादयः। शूराणांसिंहादीनां भीरवोहस्त्यादयोऽदनीयाएतादृश्यांविधातुरेव सृष्टौ ॥ २९ ॥

( ४ ) **राघवानन्दः**। एतमेवानुभवशास्त्राभ्यांस्पष्टयति चराणामित्यादिना। चराणांजङ्गमानां अचराः स्थावराः। शूराणां सिंहादीनां भीरवोहस्त्यादयः ॥ २९ ॥

( ५ ) **नन्दनः**। सर्वंप्राणस्यभोजनमित्येतद्विवृणोति चराणामिति। चराणांमनुष्यादीनामचरंवृक्षौषध्यादि। दंष्ट्रिणांव्याघ्रादीनामदंष्ट्रिणोमृगादयः। सहस्तानां मृगनकुलादीनां अहस्ताःसर्पादयः। शूराणांशक्तिमत्तराणांभीरवोऽशक्ताअन्नम् ॥ २९ ॥

( ६ ) **रामचन्द्रः**। अचराः भक्ष्यागोधूमादयः चराणांप्राणिनामन्नम्। दंष्ट्रिणां व्याघ्रादीनां अदंष्ट्रिणोमृगादयः अन्नंभोज्यम्। अहस्तामत्स्यादयः सहस्तानांमनुष्याणामन्नम्। शूराणां सिंहादीनां भीरवोमृगादयःअन्नम् ॥ २९॥

**नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोहन्यहन्यपि ॥ धात्रैव सृष्टाह्याद्याश्च प्राणिनोऽत्तारएव च ॥३०॥**

( १ ) **मेधातिथिः**। अत्ताभक्षयिता। आद्यान्प्राणिनः अत्तुंशक्यान् प्रतिदिवसंभक्षयन्नदुष्यति धात्रैव प्रजापतिना अत्तारआद्याउभयेपि सृष्टास्तस्मात्प्राणात्ययेमांसमवश्यंभक्षणीयमिति त्रिश्लोकी विधेरस्यार्थवादः ॥ ३०॥

( २ ) **सर्वज्ञनारायणः** । अहन्यहन्याहारबुध्याऽदन्नपि न दुष्यति न पापंलभते। इति तन्मतोपसंहारः ॥ ३० ॥

( ३ ) **कुल्लूकः** । भक्षयिताभक्षणार्हान्प्राणिनः प्रत्यहमपि भक्षयन् दोषंप्राप्नोति । यस्माद्विधात्रैव भक्षणार्हाभक्षयितारश्च निर्मिताइति । त्रिभिः श्लोकैः प्राणात्यये मांसभक्षणस्तुतिरियम् ॥ ३० ॥

( ४ ) **राघवानन्दः** । किंच नेति । अत्ता भक्षयिता । आद्यान् भक्षणार्हान् । आद्यात्तृसृष्टेर्ब्रह्मकृतत्वेन स्वाभाविकत्वात् सापेक्षत्वाच्च न दोषइति भावः ॥ ३० ॥

( ६ ) **रामचन्द्रः** । अहन्यहनि आद्यान् भक्ष्यान् प्राणिनः अत्ता भोक्ता न दुष्यति । धात्रैव आद्याः भक्ष्याः प्राणिनः च पुनः अत्तारएव भक्षकाएव सृष्टाः ॥ ३० ॥

**यज्ञाय जग्धिर्मांसस्येत्येषदैवोविधिः स्मृतः ॥ अतोन्यथाप्रवृत्तिस्तु राक्षसोविधिरुच्यते ॥ ३१॥**

( १ ) **मेधातिथिः** । यज्ञार्थंमांसस्य पिण्डप्राशित्रादि जग्धिरशनं । एषदैवोविधिर्देवैरेतद्विहितम् । अन्यथातु मांसाशी यतः शरीरपुष्ट्यर्थकमांसाशने प्रवृत्तिः सराक्षसोविधिःपिशाचानांमांसभक्षणेस्थितिरितिनिन्दा ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । स्वमतमाह यज्ञायेति । यज्ञाय यज्ञाङ्गशेषप्रतिपत्तिसिद्धये । जग्धिर्भक्षणं दैवोविधिः देवतार्थप्रवृत्तत्वात् । अतोन्यथा उपाकृतमांसव्यतिरेकेण । राक्षसोराक्षसान्नाशनरूपत्वात् अतएवाग्रे वक्ष्यति॥ यक्षरक्षःपिशाचान्नंमद्यंमांसंसुरासवम् । तद्ब्राह्मणेन नात्तव्यंदेवानामश्नता हविरिति॥ देवानांहविर्दैवतार्थमुपात्तंमांसहविरश्नतान्यमांसंन भक्ष्यमित्यर्थः । अत्रच वचने ब्राह्मणेनेतिवचनाद्ब्राह्मणस्यानुपाकृतमांसाशने क्षत्रियाद्यपेक्षया दोषभूयस्त्वंप्रतीयते । एवं च ब्राह्मणैर्मांसभक्षणंयज्ञएव कार्यं तत्राप्यल्पः प्रत्यवायोनतु प्रत्यवायाभावएव तथाच महाभारते ॥ प्रोक्षिताभ्युक्षितंमांसं तथा ब्राह्मणकाम्यया । अल्पदोषमितिज्ञेयंविपरीते तु लिप्यतइत्युक्तम्॥प्रोक्षितं पशुबन्धार्थं । अभ्युक्षितं श्राद्धार्थं । ब्राह्मणानांकाम्ययेति व्याख्यातमेव । अत्रच प्रोक्षितव्यतिरिक्तोपादानं प्रोक्षितापेक्षयाधिकपापहेतुत्वेपि वृथामांसाशनापेक्षयाऽल्पदोषत्वोपवर्णनार्थम् । अतएवानुपाकृतमांसानीत्यभक्ष्यगणे श्राद्धादावपि मांसस्याभक्ष्यत्वाभिधानम् । तथा प्रोक्षितंभक्षयेदित्यादिनान्येषामपि प्रकाराणांभक्षणाभ्यनुज्ञानंच न विरुध्यते । लिप्यते संपूर्णपापेन युज्यते । यत्तु पुराणादिषु पितृकल्पे सप्तानांद्विजानांभक्षणोद्देशेन गांहत्वा श्राद्धकरणंतेन च जन्मान्तरे जातिस्मरत्वमुक्तम् तत्र प्राचीनभाग्यसहितश्राद्धप्रभावाज्जातिस्मरत्वं मांसभक्षणात्त्वनेकतिर्यग्योनिगमनमिति न काचिदनुपपत्तिः । अतएवयत्स्वार्थंपक्वमपि पितृकार्यादि कृत्वा भुज्यते तद्ब्राह्मणानामतिगर्हितं क्षत्रियादीनांतु न तादृग्दोषकरंदेवपित्रादिकार्यमकृत्वा तु भक्षणं सर्वेषांगर्हितमिति व्यवस्था द्रष्टव्या ॥ ३१ ॥

( ३ ) **कुल्लूकः** । अथ प्रोक्षितभक्षणनियमार्थवादमाह यज्ञायेति । यज्ञसंपत्त्यर्थंतदङ्गभूतमांसस्य जग्धिर्भक्षणमेतद्दैवमनुष्ठानं । उक्तव्यतिरिक्तप्रकारेण पुनरात्मार्थमेव पशुंव्यापाद्य तन्मांसभक्षणेषु प्रवृत्तीराक्षसोचितमनुष्ठानमित्युत्तरार्धंवृथामांसभक्षणनिवृत्त्यनुवादः ॥ ३१ ॥

( ४ ) **राघवानन्दः** । जग्धिर्भक्षणं । यज्ञाय यज्ञार्थम् । मांसस्य तद्विना रागतोभक्षणे दोषमाह अतइति। अन्यथा उक्तविधिंविना । राक्षसआसुरोनरकायैव ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । मांसस्य जग्धिर्भक्षणं यज्ञाय यज्ञविषयएव पुरोडाशमात्रमित्येषदैवोविधिः । अतः अन्यथा अविधिना प्रवृत्तिःमांसभक्षणे राक्षसोविधिरुच्यते । तद्यथा प्रोक्षितंभक्षयेन्मांसंतथा ब्राह्मणकाम्यया । अल्पदोषमिति ज्ञेयंविपरीते तु लिप्यतइति महाभारतवचनेन । यज्ञाङ्गशेषप्रतिपत्तिसिद्धयेऽपि मांसभक्षणं स्वल्पप्रत्यवायहेतुः ॥ ३१ ॥

**क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ॥ देवान्पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति ॥३२॥**

( १ ) **मेधातिथिः**। मृगपक्षिमांसविषयमिदंशास्त्रम् । रुरुपृषतादीनां शशकपिञ्जलादीनांमांसंदेवानांपितॄणांचार्चनंकृत्वा खादतोन दोषः । यथा गृहे वैश्वदेवाद्यर्थंकृते संविधानं विनापिवैश्वदेवेनोदनादिभोजनमस्ति न तथा मांसस्याएवमर्थमेतत्पुनर्वचनं देवान्पितॄंश्चार्चयित्वेति । अन्यथा गृहस्थस्य पूर्वमेव भोजनमेवंरूपंदेवेभ्यइति । तेन शब्देनोद्दिश्य शुचौ देशे मांसस्य प्रक्षेपः । यदिवा अग्नये वायवे सूर्यायजातवेदसइति देवार्चनंकर्तव्यम् । फलैर्वावर्तयन्नग्नौ जुहुयादाहुतयःकृत्वाअग्निमतोन्यत्रनभवन्ति । नचाग्नौ होमेन विना बलिहरणं कर्तव्यम् । कर्मान्तरस्य प्रयोगान्तरस्यच प्रतिपादितत्वात् । आ स्तांतावदेतत् । अन्येतु श्राद्धंच पितॄणामर्चनमाहुः । दृष्टश्च श्राद्धेऽर्चनप्रयोगः । पितॄंश्चैवाष्टकान्वदन्ति ततश्च सर्वस्मृतिकारैःश्राद्धमेव विहितं न पुनरन्या काचिदेवक्रिया । कथंपुनर्मांसस्य क्रयसंभवः यावता आपणभूमेर्मांसंक्रियमाणंसौनमापद्यते । अथोच्यते । सौनिकैरहतस्य स्वयंमृतस्य पशोर्मांसमभक्ष्यमनारोग्यकरत्वात् । उच्यते । व्याधशाकुनिकादिभिराहृतं क्रेष्यते नच ते सौनिकाइतिप्रसिद्धास्तैश्च विक्रयार्थंभ्राम्यद्भिर्गृहआनीतंभवति तदा संभवति क्रयः नहि तत्सौनमुच्यते । स्वयंवाप्युत्पाद्य ब्राह्मणोयाञ्चयाक्षत्रियोमृगयाकर्मणा ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः**। तत्र क्षत्रियादीन्प्रत्यनिषिद्धमांसभक्षणप्रकारमाह क्रीत्वेति । स्वयमुत्पाद्य मृगयादिना हत्वा । परोपकृतं लब्धं । स्वयमुत्पादनसाहचर्याच्च क्षत्रादिपरमेवैतत् ब्राह्मणस्य यज्ञोद्देशंविना पशुहिंसायाःपूर्वमेव निषेधात् ॥ ३२ ॥

( ३ ) **कुल्लूकः**। क्रीत्वा आत्मना चोत्पाद्य अन्येन वा केनाप्यानीय दत्तंमांसं देवपितृभ्योदत्वा शेषंभक्षयन्न पापंप्राप्नोति । अतः प्रोक्षितादिचतुष्टयभक्षणवन्नेदंनियतंभक्षणं नदुष्यतीत्यभिधानात् । वर्षेवर्षेऽश्वमेधेनेत्यादिवक्ष्यमाणमांसवर्जनविधिरप्येतद्विषयएवाविरोधात् ॥ ३२ ॥

( ४ ) **राघवानन्दः**। उपकृतं दत्तम् ॥ ३२ ॥

( ५ ) **नन्दनः**। एवंविधात्विहितत्वात्तल्लक्षणत्वाच्च धर्मस्य प्राणापेक्षेमांसभक्षणे नदोषइत्याह नात्तेतिपञ्चभिः । यज्ञायजग्धिरेषदैवोविधिः । इतरमपिविधिमाह क्रीत्वेति । अर्चयित्वा मांसेन । मांसं दैवपित्र्यशिष्टम् ॥ ३२॥

( ६ ) **रामचन्द्रः**। क्रीत्वा स्वयमुत्पाद्य मृगयादिना परोपहृतमेव च परेणान्येनोपहृतमानीतंमांसं देवान्पितॄनर्चयित्वा खादन्नदुष्यति । एतत्क्षत्रियविषयम् ॥ ३२ ॥

**नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः॥ जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥३३॥**

( १ ) **मेधातिथिः**। पूर्वोक्ताद्देवाद्यर्चनशिष्टात् ब्राह्मणकामनादिनिमित्तान्तरंयद्भक्षणंयोविधिस्तेननाश्नीयात् मांसं । उक्तानुवादोयं।आपदि प्राणात्यये देवाद्यर्चनमपि नापेक्ष्यम् । ननुचैतदपि निमित्ततयोक्तमेव ततश्चविधिरेवायंनाविधिः।सत्यं प्रोक्षितसंबन्धाद्द्रोण्यजस्यैव तत्र संनिधानमाशङ्कायांशशादिविषयेऽभ्यनुज्ञानार्थमनापदीत्युच्यते । किंतर्हि विध्यर्थानुष्ठानपरोविधिज्ञउच्यते तथालौकिकानुष्ठानेपि जानातिरुपचारात्प्रयुज्यते । एषसतज्जानातीति अनुष्ठानपरे प्रयुञ्जते अत्रफलकथायांजग्ध्वा अशास्त्रीयेणनिमित्तेन प्रेतोमृतस्तैःप्राणिभिरवशोद्यते येनविषयेणयोयेषांमांसमश्नाति तस्य विविधा पीडा भवति ।

---

( ३२ ) परोपकृतं = परोपहृतं ( ज, झ, ञ, ढ )

एतावन्मात्रपरमेतत् । अन्यथा प्रायेण छागादिमांसमश्नन्ति लोकानचछागादयोमांसाशिनः । अथवा तत्कृतेनापायेनक्रव्याद्भिरप्यद्यमानस्तैरद्यतइत्युच्यते ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतंब्राह्मणविषयमुपसंहरति नाद्यादिति । अविधिना उपाकरणव्यतिरेकेण । विधिज्ञोमांसाशनविधिज्ञः द्विजोब्राह्मणः ॥ ३३ ॥

( ३ ) **कुल्लूकः** । मांसभक्षणानुष्ठानदोषज्ञोद्विजातिरनापदि तत्तद्देवाद्यर्चनविधानंविना न मांसंभक्षयेत् । यस्मादविधानेन योमांसंखादति सम्रृतःसन्यम्मांसंतेन भक्षितंतैः प्राणिभिः परलोके स्वरक्षणाक्षमःखाद्यतइति सर्वश्लोकानुवादः ॥३३ ॥

( ४ ) **राघवानन्दः** । अनापदि रोगाद्यसंपत्तौ । तैर्भक्षितैः अवशोरक्षणाक्षमः प्रेत्य मृतः अत्ताद्यते ॥ ३३ ॥

( ५ ) **नन्दनः** । योऽयंमांसभक्षणेषोढाविऽधिरुक्तस्तद्विपर्ययेण भक्षणे दोषमाह नाद्यादिति ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । तैःपशुभिः द्विजः ब्राह्मणः अद्यते भक्ष्यते अवशः पराधीनःसन् ॥ ३३ ॥

**न तादृशं भवत्येनोमृगहन्तुर्धनार्थिनः ॥ यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥ ३४ ॥**

( १ ) **मेधातिथिः** । प्रसिद्धार्थःश्लोकः ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । आहारबुद्ध्या तु भक्षणमतिनिन्दितंतस्येत्याह नतादृशमिति । धनार्थिनइतिवदंस्तस्य मांसविक्रयजीविनस्तदेकवृत्तितया नातिशयितदोषतेतिच दर्शयति ॥ ३४ ॥

( ३ ) **कुल्लूकः** । मृगवधजीविनोव्याधादेर्धननिमित्तंमृगाणांहन्तुर्न तथाविधंपापंभवति यादृशमदेवपितृशेषभूतमांसानि खादतःपरलोके भवतीति पूर्वानुवादएव ॥ ३४ ॥

( ४ ) **राघवानन्दः** । अहोकष्टंवर्ततइत्याह नेति । एनोदुःखं । मृगहन्ता देहयात्राद्यर्थंप्रवर्तते अयंतु भोगार्थमित्यस्ति विशेषः ॥ ३४ ॥

( ५ ) **नन्दनः** । वृथाऽविधिना ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । धनार्थिनः क्रेतुः मृगहर्तुः तादृशं एनः पापं न भवति वृथामांसानि खादतः प्रेत्य यादृशमेनोभवति ॥ ३४ ॥

**नियुक्तस्तु यथान्यायं योमांसं नात्ति मानवः ॥ सप्रेत्य पशुतां याति संभवानेकविंशतिम् ॥ ३५ ॥**

( १ ) **मेधातिथिः** । जन्मानि अवश्यंप्राणात्ययसंभवे देवार्चनंयोनकरोति अथच मांसमश्नाति सदुष्यत्येव ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । न चार्त्विज्यश्राद्धभोजनादौ प्रवृत्तोमांसभक्षणदोषदर्शनात्ततोनिवर्तेततत्कालमांसाभक्षणस्यैवातिदोषहेतुत्वात् । अतआदावेव याजनादेर्निवर्तेतेत्याह नियुक्तस्त्विति । यथान्यायं वरणादिना ॥ ३५ ॥

( ३ ) **कुल्लूकः** । श्राद्धे मधुपर्के च यथाशास्त्रंनियुक्तःसन्योमनुष्योमांसंन खादति सम्रृतःसन्नेकविंशतिजन्मानि पशुर्भवति । यथा विधिनियुक्तस्त्वित्येतन्नियमातिक्रमफलविधानमिदम् ॥ ३५ ॥

( ४ ) **राघवानन्दः** । यथाविधि नियुक्तइत्युक्तंतत्रार्थवादमाह नेति । नियुक्तः श्राद्धादौ । संभवान् जन्मानि उपरतब्रह्मधारणंविना ॥ ३५ ॥

( ५ ) **नन्दनः** । दैवे पित्र्ये च नियुक्तस्य मांसाभक्षणे दोषमाह नियुक्तइति ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । प्रतिप्रसवमाह नियुक्तइति यथान्यायं विधिना नियुक्तः आर्त्विज्यादौ निमन्त्रितः मानवः ब्राह्मणः मांसंनात्ति न भक्षयति सः प्रेत्य भवे जन्मनिएकविंशतिपर्यन्तंपशुतांयाति । एतद्ब्राह्मणविषयम् ॥ ३५ ॥

**असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः कदाचन ॥ मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ ३६ ॥**

( १ ) **मेधातिथिः** । प्रोक्षणादयःपशुबन्धेमन्त्रवन्तः संस्काराविहितास्ते येषांक्रियन्ते पशूनांवैदिकयागशेषाणांमांसमद्यात् । सीतायज्ञादिषु च सत्यपि सामयाचारिकयागशेषत्वे मन्त्रसंस्काराभावादभक्ष्यता । शाश्वतंशाश्वतोनित्योवैदिकइत्यर्थः । आस्थित आश्रितः ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । नाद्यादविधिनेतियत्प्रागुक्तंतत्र विधिशब्दार्थनिरुक्त्या तदेव स्पष्टयति असंस्कृतानिति । मन्त्रैरुपाकरणनियोजनप्रोक्षणादिमन्त्रैः । एतेनोपाकरणादिसंस्कारसंस्कृतस्यैव पशोर्मांसंविप्रेण भक्ष्यम् । सचान्वष्टकायां पशुकल्पे मधुपर्के सोमे हविर्यज्ञविशेषेचास्तीति तत्रैव मांसाशनंविप्रेण कार्यम् । तदपि पूर्वैर्मुनिभिः कृतत्वात्क्रियते नतु सर्वथादोषाभावादिति दर्शयितुंशाश्वतंविधिमास्थितइत्युक्तम् । शाश्वतंविधिं प्रवृत्तिप्रकारंपूर्वर्षीणाम् । आस्थितआश्रितः । एवंचतदामिषेण कर्तव्यमितिपार्वणप्रकरणोक्तमपि क्षत्रियादिपरमेव ॥ ३६ ॥

( ३ ) **कुल्लूकः** । वेदविहितमन्त्रवत्प्रोक्षणादिसंस्कारशून्यान्पशून्विप्रादिः कदाचिन्नाश्नीयात् । शाश्वतंप्रवाहानादितया नित्यंपशुयागादिविधिमास्थितोमन्त्रसंस्कृतानेवाश्नीयादिति । प्रोक्षितंभक्षयेन्मांसमित्येतस्यानुवादार्थमेतत् ॥ ३६ ॥

( ४ ) **राघवानन्दः** । विधिनिषेधप्रकारौ निगमयति असंस्कृतानिति । शाश्वतं शास्त्रोक्तम् ॥ ३६ ॥

( ५ ) **नन्दनः** । सप्तममपिविधिमाह असंस्कृतानिति । असंस्कृतान्याजुषैरुपाकरणपर्यग्निकरणादिप्रयुक्तैर्मन्त्रैरसंयुक्तान् । मन्त्रैस्तु संस्कृतानद्यात् । अभक्षणार्हानपिपशून्मन्त्रैःसंस्कृतान्कृत्वाऽद्यादिति ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । मन्त्रैः उपाकरणप्रयोजनप्रोक्षणादिभिः असंस्कृतान्पशून् । विप्रइत्युपलक्षणमात्रं अन्योपि कथंचननाद्यात् न भक्षयेत् । मन्त्रैः संस्कृतान्पशूनद्यात् । शाश्वतंविधिमास्थितः शाश्वतमित्यनेन मुनिकृतत्वमुक्तम् । तेनान्यैः कृतमिति तेन तु सर्वथा दोषाभावः ॥ ३६ ॥

**कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा ॥ नत्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥ ३७ ॥**

( १ ) **मेधातिथिः** । यद्येषांबुद्धिःस्यात्सीतायज्ञखञ्जिकायज्ञखण्डिकायागादिषु समाचारप्रमाणेषु पशुवधःफलकामस्य त्याज्यः दृष्टाहि पशुवधोपयाचितकेनातिशयवती सस्यसंपत्तिरिति तन्निषेधार्थमाह । सङ्गे प्रस्तावात्पशुवधप्रसङ्गे घृतपशुंकुर्याद्घृतपशुमेव कुर्यात् । पशुना यष्टव्ये तत्स्थाने घृतेन यजेत देवताः । तद्धि सामान्येनयागद्रव्यम् अथवा पिष्टपशुं पिष्टमयपशुमतिकृतिंकृत्वा देवताभ्यउपहरेत्पिष्टेन वा पुरोडाशादि कृत्वा । कथमयंवृथा पशुवधः । उच्यते । शिष्टानांसमाचारःप्रमाणम् । ननु स्त्रीशूद्रजनानामवैद्यत्वान्नात्रवेदमूलता शक्या कल्पयितुम् । देवताराधनार्थंनह्येतदाचरन्ति नच देवताराधनार्थानि वैदिकानि कर्माणि गुणत्वेन देवताश्रुतेः । अन्वयव्यतिरेकमूलतांचात्रेच्छन्ति । दृश्यते पशुवधोपयाचितकेन फलसंपत्तिरितिमन्यमानाः । अतोनवेदमूलता अन्वयव्यतिरेकावपि भ्रान्तिमात्रमसकृद्व्यभिचारात् । अतोऽयंश्लोकोन्यायप्राप्तार्थानुवादएव सौहार्दादाचार्येण पठितः ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । यदातु सर्वथात्यन्तोत्कटरागता पशुभक्षणे भवति तदापि प्रकारेण तदाकांक्षा निवर्तनीया नतु पशुहिंसा युक्तेत्याह कुर्यादिति । घृतपशुर्घृतविकारः पशुमांसतुल्यरूपत्वात्पशुः । एवंपिष्टपशुः । संगेऽत्यन्तेच्छायां । भूताद्यभिभवः संगइतितु केचित् तत्तु न लोकप्रसिद्धमितिहेयमेव ॥ ३७ ॥

( ३ ) **कुल्लूकः** । सङ्गआसक्तौ पशुभक्षणानुरागेण घृतमयींपिष्टमयींवा पशुप्रतिकृतिंकृत्वा खादयेत् न पुनर्देवताद्युद्देशंविनैवपशून्कदाचिदपि हन्तुमिच्छेत् ॥ ३७ ॥

( ४ ) **राघवानन्दः** । घृतपशुं घृतमयींपशुप्रतिकृतिं । संगे पशुबलिप्रसक्तौ आसक्त्या भोजनेरागप्रसक्तौवा आवश्यकेस्मार्तकर्मणिवा नतु वैदिकेकर्मणि घृतपश्वादावेकादशावदानबाधापत्तेः । तस्माद्यज्ञेवधोऽवधइत्युक्तम् ॥ ३७ ॥

( ५ ) **नन्दनः** । हिंसामविधिना न कुर्यादित्याह कुर्यादिति । सङ्गेसंगतउत्सवादिनिमित्तेज्ञात्यादिसमवायइतियावद्घृतपशुमुपाकुर्यात् । पशुस्थानेप्रभूतंघृतंपिष्टमपूपादिकंचदद्यादिति ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । घृतपशुं सङ्गे आसक्तौ कुर्यात् । पिष्टपशुं तथा कुर्यात् । वृथा पशुंहन्तुंकदाचन नेच्छेत् ॥ ३७ ॥

**यावन्ति पशुरोमाणि तावत्कृत्वोह मारणम् ॥ वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥ ३८ ॥**

( १ ) **मेधातिथिः** । तावतीर्जन्मना मावृत्तोर्मारणंप्राप्नोति । वृथापशुघ्नःश्रुतिस्मृत्योरचोदितंपशुवधंयःकरोति । तच्च प्रकरणान्महानवम्यादिषु लौकिकैर्यत्क्रियते । पशुघ्नइतिकप्रत्ययेछान्दसंरूपम् ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । तावत्कृत्वस्तावत्संख्यान्वारान् । वृथा उपाकरणादन्यत्र पशुघ्नः ॥ ३८ ॥

( ३ ) **कुल्लूकः** । देवताद्युद्देशमन्तरेणात्मार्थंयः पशून्हन्ति सवृथापशुघ्नोमृतःसन्यावत्संख्यानि पशुरोमाणि तावत्संख्याभूतंजन्मनि जन्मनि मारणंप्राप्नोति तस्माद्वृथापशुंन हन्यात् । तावत्कृत्वइति वस्त्वंतात् क्रियाभ्यावृत्तिगणने कृत्वसुच्प्रत्ययः । इह हशब्दआगमप्रसिद्धिसूचनार्थः ॥ ३८ ॥

( ४ ) **राघवानन्दः** । विपक्षेदण्डमाह यावन्तीति । अत्रहशब्दःप्रसिद्धार्थद्योती॥ ३८ ॥

( ५ ) **नन्दनः** । तावत्कृत्वः स्तावतोवारान् । हशब्दोनुकम्पायाम् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । वृथापशुघ्नःपुरुषः इहलोके अधर्मान्मारणंकृत्वा यावन्ति पशुरोमाणि अष्टकोटिरोमाणि तावन्ति पशुप्रायतांप्रेत्यसंप्राप्नोति जन्मनिजन्मनि ॥ ३८ ॥

**यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ॥ यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥ ३९ ॥**

( १ ) **मेधातिथिः** । नायमनन्तरोक्तोदोषः । श्रुतिस्मृतिचोदिते वधे यज्ञाङ्गभूते याभूतिस्तन्निवृत्त्यर्थमेव । स्वयंभुवा प्रजापतिना पशवः सृष्टाउत्पादिताः । स्वयमेवेत्यर्थवादः । अस्य जगतोविश्वस्य यज्ञोज्योतिष्टोमादिः । भत्यै भूतिर्विभवः पुष्टिःस्फीतिः तस्मात्तत्र योवधः सोऽवधोविज्ञेयः । हिंसाजन्यस्यपापस्यनिवृत्तेरेवमुच्यते ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र यज्ञार्थहनने कथंतादृग्दोषाभावइत्याशंकामपनयति यज्ञार्थमिति । लोकस्य भूत्यै जन्मने आहुत्या सूर्याप्यायनवृष्टिबीजपरंपरया शुक्रोत्पत्तौ प्राण्युत्पादात् । एतेनैकपशुहिंसयाऽनेकप्राणिनिस्तारात्तादृशदोषाभावउक्तः ॥ ३९ ॥

---

( ३८ ) तावत्कृत्वोह=कृत्वेह ( क, ख, ग, ण, च )

( ३ ) **कुल्लूकः** । यज्ञार्थेतु पशुवधे न दोषइत्याह यज्ञार्थपशवइति । यज्ञसिद्ध्यर्थंप्रजापतिनाऽऽत्मनैवादरेण पशवः सृष्टाः । यज्ञश्चाग्नौ प्रास्ताहुतिन्यायात्सर्वस्यास्य जगतोविवृद्ध्यर्थः । तस्माद्यज्ञे वधोऽवधएव । वधजन्यदोषाभावात् ॥३९॥

( ४ ) **राघवानन्दः** । अस्य जगतोभूत्यैउद्भूत्यै । तथाचगीता यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः । अन्नाद्भवन्तिभूतानीत्यादि ॥ ३९ ॥

( ५ ) **नन्दनः** । यज्ञार्थे पशुवधे न दोषोऽस्तीत्याह यज्ञार्थमिति । यज्ञेऽवधोवधकार्याभावादवधः ॥ ३९ ॥

( ६ ) **रामचन्द्रः** । यज्ञः अस्य द्विजस्य सर्वस्य क्षत्रियादेः भूत्यै ऐश्वर्याय भवति तस्माद्यज्ञे वधोऽवधएव । पशोर्वधइति पाठः ॥ ३९ ॥

**ओषध्यः पशवोवृक्षास्तिर्यञ्चः पक्षिणस्तथा ॥ यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ ४० ॥**

( १ ) **मेधातिथिः** । कथंपुनर्यज्ञे हिंसादोषोनास्ति । उच्यते । हिंसा हिंस्यमानस्य महानपकारः । प्राणवियोगेन पुत्रदारधनविभवादिवियोगेन सर्वानर्थोत्पत्तेर्दुष्कृतस्यच समनन्तरंनरकादिफलविपाकस्य प्रत्यासत्तेः । यज्ञेतुहतानामुपकारोनापकारः नरकादिफलानुत्पत्तेः । यतोयज्ञे निधनंविनाशंगताउच्छ्रितीरुत्कर्षंजातितोदेवगन्धर्वयोनित्वंद्वीपान्तरेषूत्तरकुरुप्रभृतिषु वर्षसहस्रादिजीविषु वर्षान्तरे वा जन्मप्राप्नुवन्ति । अर्थवादश्चायम् । नह्यत्र विधिः श्रूयते प्राप्नुवन्तीतिवर्तमानोपदेशात् । न चार्थवादात्प्रतितिष्ठन्तीतिवद्विधिप्रतिपत्तिर्युक्ता । विध्यन्तरस्याभावादसंभवाच्च सर्वोयमविधिमांसभक्षणप्रतिषेधशेषः । ऐहलौकसंपाद्यतयाप्ययंप्रतिषेधोनत्वेवतुवृथाहन्तुंपशुमिच्छेदिति । यच्चाभ्यनुज्ञानं यज्ञार्थंपशवः सृष्टाइति तत्सर्वभक्षणप्रतिषेधतया प्रतीयते । तथाच वक्ष्यति नाकृत्वा प्राणिनांहिंसामित्यादि । नचात्रविधेरस्ति संभवः । नतिरश्चामधिकारः संभवति विशेषविज्ञानाभावात् । न चानधिकृतस्यकर्तृत्वम् । नाप्यकर्तृत्वे शास्त्रीयात्कर्मणः फलोत्पत्तिः । नह्यत्र दृष्टवस्तुस्वाभाव्येन फलोत्पत्तिः यथा विषमविदुषोऽपि पीतवतोजनयत्येवस्वफलम् । नैवंवैदिकार्थाः । अचैतन्याच्चौषधादीनामृत्विङ्न्यायोऽपि नास्ति । दृष्टंकिल कुतश्चन कर्मणः परप्रयुक्तादप्यृत्विजांफलम् यः कामयेत पापीयान्स्यादित्यादि तत्र विध्यन्तरशेषत्वाभावात्स्पृष्टत्वाच्च विधिप्रतिपत्तेर्मनुष्याधिकारत्वाच्च । शास्त्रस्य युक्ताङ्गव्यापारसमाश्रितोवाचनिकस्तावन्मात्रोधिकारः । यथा परकीयाश्वमेधावभृथे ब्राह्मणस्य प्रायश्चितमुक्तम् इहत्वधिकारएव नास्तीत्युक्तम् । ओषध्योदर्भादयः । पशवश्छागादयः वृक्षाः यूप्याः । तिर्यञ्चोऽपशवोऽपिपशवोयेषांहविष्येन चोदना कपिञ्जलानालभतइति । भीमप्रवहणादनड्वाहस्तिर्यञ्चोवाजपेयादौ तिर्यञ्चइति व्यपदिश्यन्ते । यद्यपि तेषांतत्र निधनंनास्ति तथापि यावती च पीडा विद्यतइति सा निधनशब्देन लक्ष्यते । पक्षिणः कपिञ्जलादयोयद्यपि ते पशुत्वेन चोच्यन्ते । अप्रसिद्धतरप्रयोगास्तु समग्राम्याः पशवः समारण्याइति । गवादयोपक्षिणश्चतुष्पाज्जातिवचनः पशुशब्दः । गोबलीवर्दवद्वाभेदोद्रष्टव्यः ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । तथाचवध्यस्याप्युपकारोभवेदित्याह ओषध्यइति । पशवश्छागाः । तिर्यञ्चस्ततोन्ये चतुष्पदाः । उच्छ्रितीरुत्तमजातीः ॥ ४० ॥

( ३ ) **कुल्लूकः** । किंच ओषध्यइति । ओषध्योव्रीहियवाद्याःपशवश्छागाद्याः वृक्षायूपाद्यर्थाःतिर्यञ्चःकूर्मादयः । पक्षिणःकपिञ्जलाद्याः । यज्ञार्थंविनाशंगताः पुनर्जात्युत्कर्षंप्राप्नुवन्ति ॥ ४० ॥

---

( ३९ ) यज्ञस्य=यज्ञोऽस्य ( क, ख, ग, घ, च, ञ, ढ, ण ) .

( ४ ) **राघवानन्दः** । ननु कथमवधस्तत्राह ओषध्यइति। तिर्यञ्चोगोकूर्मादयः । उछ्रितीर्जात्युत्कर्षं । नवधोह्यनुपकारयषश्वादेरयमुपकारक इत्यवधइतिभावः ॥ ४० ॥

( ५ ) **नन्दनः** । यज्ञार्थे वधे न केवलंयजमानस्यैवाभ्युदयः किंतु पश्वादीनामपीत्याह ओषध्यइति । उच्छ्रितीः उच्छ्रयानभ्युदयानितियावत् ॥ ४० ॥

( ६ ) **रामचन्द्रः** । तिर्यञ्चः तिर्यग्योनय यज्ञार्थंनिधनंप्राप्ताः उच्छ्रितीः उत्कृष्टजातीः उत्कृष्टजातित्वं प्राप्नुवन्ति ॥ ४० ॥

**मधुपर्के च यज्ञे च पितृदैवतकर्मणि ॥ अत्रैव पशवोहिंस्यानान्यत्रेत्यब्रवीन्मनुः ॥ ४१ ॥**

( १ ) **मेधातिथिः** । यावत्यः काश्चिच्छास्त्रचोदितहिंसास्ताः संक्षिप्य दर्शयति । मधुपर्कोव्याख्यातः तत्र गोवधोविहितः । यज्ञोज्योतिष्टोमादिस्तत्र संस्थैकादशिन्यादि । पशुवधोनिरूढपशुवधादिः स्वतन्त्रएवच । पितृदैवतं पितरोदेवतायस्मिन्कर्मण्यष्टकादौ नतु श्राद्धम् । तद्धि सिद्धेन मांसेन विहितम् नच पशुवधश्चोदितः । नचेदमेवविधायकंयुक्तम् उत्पत्तौ श्राद्धस्य हिंसायाअचोदितत्वात् । अस्यच विस्पष्टविधानादष्टकापशुवधेनापि नेतुंशक्यत्वाद्विधित्वेचास्य मूलकल्पनाप्रसङ्गाद्विध्यन्तरशेषतायाश्च वक्ष्यमाणत्वात् । येषांतु मतं पितॄणांदेवतानांच कर्म महायज्ञादि। ब्राह्मणैर्वध्याभृत्यानांचैववृत्त्यर्थमापदि पशुहिंसनमप्राप्तंप्राणात्ययेऽभ्यनुज्ञायते । अवेदविहितहिंसाप्रतिषेधोऽयम् । नचवेदविहिताऽभ्यनुज्ञायते ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । उपसंहरति मधुपर्केचेति । यज्ञे पशुबन्धसौत्रामणीसोमेषु । पितृकर्मण्यष्टकायां । दैवतकर्मणि आश्वलायनगृह्याद्युक्तपशुकल्पे अत्रैव ब्राह्मणेन हिंस्याइत्येवकारेण व्यवच्छिद्यापि नान्यत्रेति पुनर्वदन्नभ्यासे भूयांसमर्थंमन्यन्तइतिन्यायेन निमित्तान्तरेण पार्वणादावपि हिंसायाऽतिशयितप्रत्यवायहेतुतांदर्शयति ॥ ४१ ॥

( ३ ) **कुल्लूकः** । समांसोमधुपर्कइति विधानान्मधुपर्के च यज्ञे च ज्योतिष्टोमादौ पित्र्ये दैवे च कर्मणि श्राद्धादौ पशवोहिंसनीयानान्यत्रेति मनुरभिहितवान् ॥ ४१ ॥

( ४ ) **राघवानन्दः** । हिंसास्थलंगणयति मध्विति । अत्रैवेति । तथाच श्रुतिः । न हिंस्यात्सर्वभूतान्यन्यत्र तीर्थेभ्यः ॥ ४१ ॥

( ५ ) **नन्दनः** । त्रिष्वेव पशुवधइत्याह मध्विति । पितृदैवत्यंकर्मश्राद्धम् ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । अत्र मधुपर्के पशुवधःसत्ययुगपरोज्ञेयः ॥ ४१ ॥

**एष्वर्थेषु पशून् हिंसन्वेदतत्त्वार्थविद्विजः ॥ आत्मानं च पशुं चैव गमयत्युत्तमां गतिम् ॥ ४२ ॥**

( २ ) **सर्वज्ञनारायणः** । वेदतत्वार्थविदिति वेदस्य तात्विकं तात्पर्यविषयमर्थं यदि जानाति यदि तत्कर्म साङ्गंकरोतीतियावत् । गमयत्युत्तमांगतिमतउपकाराधिक्याददोषइत्यर्थः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । एषु मधुपर्कादिषु पदार्थेषु पशून्हिंसन्नात्मानंपशुंचोत्तमांगतिंस्वर्गाद्युपभोगयोग्यविलक्षणदेहदेशादिसंबन्धंप्रापयति । वेदतत्त्वार्थविदिति विद्वदधिकारबोधनार्थम् । नन्वन्याधिकारिकेकर्मणि कथमनधिकृतस्य पश्वादेरुत्तमगतिप्राप्तिःफलं। उच्यते। शास्त्रप्रमाणकत्वात् अस्यार्थस्य पित्रधिकारिकायांजातेष्टावनधिकारिणोऽपि पुत्रस्य फलप्राप्तिव-

दिह्यपि पश्वादिगतफलसंभवाद्यजमानएव कारुणिकतया पशुगतफलविशिष्टमेव फलंकामयिष्यति अतएवात्मानंच पशुंचै-वेत्यभिधानात् यजमानव्यापारादेव पशुगतफलसिद्धिरुक्ता ॥ ४२ ॥

( ४ ) **राघवानन्दः**। अतआह एष्विति । आत्मनःस्वर्गकामोयजेत वायव्यंश्वेतमालभेतेति श्रुतेः। पशूंश्चेति यज्ञार्थनिधनंप्रामाइत्युक्तम् ॥ ४२ ॥

( ६ ) **रामचन्द्रः**। एष्वर्थेषु मधुपर्कादिषु पशून्हिंसन्सद्विजआत्मानंपशूंश्चोत्तमांगतिं गमयति प्रापयति ॥ ४२ ॥

**गृहे गुरावरण्ये वा निवसन्नात्मवान्द्विजः ॥ नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ ४३ ॥**

( १ ) **मेधातिथिः**। नच गुरौ वसतोब्रह्मचारिणोऽरण्ये चतपस्यतोन्या काचिद्धिंसास्ति । अवकीर्णिनोब्रह्म-चारिणः स्यादपिवानप्रस्थस्यतु नैवास्ति । ब्रह्मचारिणोऽप्यात्मोपेक्षणंनैवेष्यते । अतोऽयंविधिरेवश्राद्धे गृहइत्यनुवा-दएव । यदिचायं विधिःस्यादरण्यआपद्यपीतिकिमालम्बनमेतत्स्यात् । नच वानप्रस्थस्य साग्निकस्यापि पशुयागोऽस्ति पुरोडाशांश्चरूंश्चैवेत्यत्र दर्शयिष्यामइति केचित् । उपाध्यायस्त्वाह युक्तंब्रह्मचारिणोवानप्रस्थस्यत्वपराजितांवास्थायेत्या-दिनात्मत्यागोपि विहितस्तस्य नास्ति जीवितार्थाहिंसेति स्फुटतरं तत्रैव निरूपयिष्यते । ननुचापद्ययंप्रतिषेधउच्यते । तत्कुतस्तत्रैवानुज्ञानंव्याख्यायते । सत्यम् । अन्यथा न किंचिदनेन कृतंस्यात् । अर्थवादार्थमितिचेदर्थवादस्याप्यालम्ब-नमन्वेषणीयम् । अतोनापद्ययंप्रतिषेधोविधिश्चापद्यविरुद्धः । बहुभेदादापदामल्पीयस्यामापदिमासिकमर्धमासिकंवा भोजनंभविष्यतीति बुद्ध्याप्रवृत्तिर्निषिध्यते । यदा त्वेषाबुद्धिरधुनैवानश्नन्न जीवामि यदानाभिमुखागतउद्यतशस्त्रआ-ततायी तदापद्यनुज्ञा । एवंसर्वतएवात्मानंगोपायेदितिश्रुतिरनुगृहीताभवति ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः**। गृहे गार्हस्थ्ये । गुरौ ब्रह्मचर्ये । अरण्ये वनस्थत्वभिक्षुत्वयोः । एतेन यथा ब्रह्म-चार्यादीनांहिंसादोषस्तादृगेव गृहिणोपीत्युक्तम् ॥ ४३ ॥

( ३ ) **कुल्लूकः**। गृहाश्रमे ब्रह्मचर्याश्रमे वानप्रस्थाश्रमे च प्रशस्तात्मा द्विजोनिवसन्नापद्यपि नाशास्त्रीयांहिंसांस-माचरेत् ॥ ४३ ॥

( ४ ) **राघवानन्दः**। गृहइत्यादि त्रयमाश्रमत्रयसंग्राहकम् । ब्रह्मचारिगृहस्थयोःस्वतोमांसाभोजित्वेपि गुर्वाद्यर्थ-हिंसासंभवात् ॥ ४३ ॥

( ५ ) **नन्दनः**। गृहेगृहाश्रमे । गुरौब्रह्मचर्याश्रमे । अरण्येवानप्रस्थाश्रमे ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। आत्मवान् यत्नवान् द्विजः अवेदविहितांहिंसां न समाचरेत् । गृहे गृहस्थाश्रमे । गुरौब्रह्मचर्या-श्रमे । अरण्येवानप्रस्थाश्रमइति । ब्रह्मचारिवनस्थसाहचर्याद्गृहस्थस्यापि हिंसायांदोषः ॥ ४३ ॥

**या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ॥ अहिंसामेव तां विद्याद्वेदाद्धर्मोहि निर्बभौ ॥ ४४ ॥**

( १ ) **मेधातिथिः**। वेदविहितोयः प्राणिवधः सोऽस्मिञ्जगति चराचरेस्थावरजङ्गमे नियतोनित्योऽनादिः । यस्तु तन्त्रादिः सोन्वयव्यतिरेकभ्रान्त्याइदानींतनः अतोवैदिकीमहिंसामेव विद्यात् अमुत्र प्रत्यवायाभावात् । अहिंसेति कार्य-तउच्यते न स्वरूपतः । ननुच सैव हिंसारूपाभेदात्कथंकार्योभेदः । उच्यते । वेदाद्धर्मोहिनिर्बभौ धर्मस्याधर्मस्य च यत्प्रण-यनंतद्वेदादेवपौरुषेयाणामप्रामाण्यात् । वेदस्यस्वतएवाभ्युदयहेतुत्वंक्वचिज्ज्ञापयति । स्वरूपाभेदोपिनास्ति । क्रत्वर्थपुरु-षार्थत्वेन भेदादाशयभेदेन प्रवृत्तेः । लौकिक्यांमांसयतोद्विषाणस्यचाप्रवृत्तिः वैदिक्यांतु शास्त्रेण चोदितमिदंक्रत्वर्थमिति । निर्बभौ निःशेषेण भातः प्रकाशतांगतइतियावत् ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । नियता सर्वैरनुष्ठीयमाना । अहिंसामेव तां तामेवाहिंसां अहिंसासाम्याभिधानेएवकार स्यानुपयोगात् । निर्बभौ प्रकाशंगतः ॥ ४४ ॥

( ३ ) **कुल्लूकः** । कथंतर्हितुल्येहिंसात्वेवैदिकीदैक्षादिपशुहिंसानाधर्मायेत्यतआह यावेदविहितेति । या श्रुतिविहिता कर्मविशेषदेशकालादिनियताऽस्मिञ्जगति स्थावरजङ्गमात्मन्यहिंसामेव तांजानीयात् हिंसाजन्याधर्मविरहात् । दैक्षपशुहननमधर्मः प्राणिहननत्वात् ब्राह्मणहननवत् इत्याद्यनुमानमुपजीव्यशास्त्रबाधादेव न प्रवर्तते दृष्टान्तीकृतब्राह्मणहननस्याप्यधर्मत्वे शास्त्रमेवोपजीव्यम् । वेदाद्धर्मोहि निर्बभौ यस्मादनन्यप्रमाणकोधर्मोवेदादेव निःशेषेण प्रकाशतांगतः ॥ ४४ ॥

( ४ ) **राघवानन्दः** । किंच वेदविहिता हिंसा न हिंसेत्याह येतित्रिभिः । हिंसातोऽधर्मोयथावेदप्रमाणकस्तथा यज्ञे हिंसातोधर्मस्तत्प्रमाणक इति भावः । कर्म ब्रह्मोद्भवंविद्धीति स्मृतेः ॥ ४४ ॥

( ५ ) **नन्दनः** । वेदाद्धर्मोहि निर्बभौ न प्रमाणान्तरात् । तेनवेदविहितहिंसा हिंसात्वेन वक्तुंनयुक्तेत्यभिप्रायः ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । अस्मिश्चराचरे या वेदविहिता हिंसा विध्युक्ताहिंसा तांहिंसामहिंसामेव विद्याज्जानीयात् । धर्मोवेदान्निर्बभौ नितरांबभौ प्रकाशतइत्यर्थः ॥ ४४ ॥

## योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ॥ सजीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥ ४५ ॥

( १ ) **मेधातिथिः** । अकारोत्रप्रतिषेधार्थीयः प्रश्लिष्टोद्रष्टव्यः । अहिंसकानांच प्रतिषेधात्सर्पव्याघ्रादीनामप्रतिषेधः ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । अहिंसकान्यनपकारीणीत्यपकारिवधे दोषाल्पतोक्ता । आत्मसुखेच्छया आत्ममात्रसुखार्थं नान्येषांवध्यस्य चोपकाराय ॥ ४५ ॥

( ३ ) **कुल्लूकः** । योऽनुपघातकान्प्राणिनोहरिणादीनात्मसुखेच्छया मारयति सइहलोके परलोके च न सुखेन वर्धते ॥ ४५ ॥

( ४ ) **राघवानन्दः** । अहिंसकानि मृगमीनादीनि । न क्वचिदिहामुत्र पूर्वकृतहिंसादुरदृष्टवशादिहापि ॥ ४५ ॥

( ५ ) **नन्दनः** । अहिंसकानीति विशेषणाद्व्याघ्रादिहिंसायांदोषमात्रं सूचितम् ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । यान्यहिंसकानि भूतानि तानि यआत्मसुखेच्छया हिनस्तिसजीवंत्सन्मृतसंज्ञः जीवन्मृतकइत्यर्थः । क्वचित्कस्मिंश्चिल्लोके सुखंनैधते न प्राप्नोतीत्यर्थः ॥ ४५ ॥

## योबन्धनवधक्लेशान् प्राणिनां न चिकीर्षति ॥ ससर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥ ४६ ॥

( १ ) **मेधातिथिः** । बन्धनवधाएव क्लेशाः । अथवा वित्ताशनादयः तान्योन कर्तुमिच्छति वित्ताशनमेव येन नकृतं तद्विषयेच्छैव यस्य निवृत्ता न केवलंपीडांन करोति यावद्वित्तंमेप्सितुमिच्छति सर्वस्य ससुखमत्यन्तमश्नुते ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । नचिकीर्षत्येतादृक्संकल्पोत्पादनेन ॥ ४६ ॥

( ३ ) **कुल्लूकः** । योबन्धनमारणक्लेशादीन्प्राणिनांकर्तुंनेच्छति ससर्वहितप्राप्तीच्छुरनन्तसुखंप्राप्नोति ॥ ४६ ॥

( ४ ) **राघवानन्दः** । अहिंसकस्य गुणानाह यइतिद्वाभ्यां । बन्धनवधाभ्यांयःक्लेशस्तं । अत्यन्तं कल्पस्थायि ॥ ४६ ॥

**यद्ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च ॥ तदवाप्नोत्ययत्नेन योहिनस्ति न किंचन ॥ ४७ ॥**

( १ ) **मेधातिथिः** । यच्चिन्तयति शुल्कमर्हणादि यत्रच रतिमभिलाषंबध्नात्यभिमेत्यवस्तुनि तदयत्नेन स्वल्पेनैव कालेनावाप्नोति । यत्तु कुरुते कर्मणा तत्कर्मनिष्पत्तिसमनन्तरमेवाविघ्नेन प्राप्नोति ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । ध्यायति चिन्तयति । रतिमिच्छाम् ॥ ४७ ॥

( ३ ) **कुल्लूकः** । अन्यच्च यद्ध्यायतीति । यच्चिन्तयति धर्मादिकमिदंमेस्त्विति यच्च श्रेयःसाधनंकर्म करोति यत्र च परमार्थध्यानादौ धृतिंबध्नाति तत्सर्वमक्लेशेन लभते । यउपघातनिमित्तंदंशमशकाद्यपि न व्यापादयति ॥ ४७ ॥

( ४ ) **राघवानन्दः** । न केवलमेवंकिंतु सत्यसंकल्पःस्यादित्याह यद्ध्यायतीत्यादि । अप्रतिबद्धंतस्य कर्म फलतीतिभावः । रतिर्विजिगीषा तेन वाचिकंकर्म लक्ष्यते ॥ ४७ ॥

**नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ॥ न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ४८ ॥**

( १ ) **मेधातिथिः** । सर्वस्य हिंसाप्रतिषेधश्लोकसंघातस्य मांसभक्षणशेषतांदर्शयति । यावत्प्राणिनोन हतास्तावन्मांसंनोत्पद्यते हिंसाचातिशयेन दुःखावहा तस्मान्मांसंविवर्जयेत् । ननुच स्वयंमृतानांभवत्येवमांसंकिमिदमुच्यते नाकृत्वेति । अर्थवादोयं । स्वयंमृतानांच मांसंरोगहेतुत्वादग्राह्यमेव नह्यदत्वामांसंभक्ष्यते नच रोगहेतोर्दानमस्ति । उत्पद्यतइतिमांसस्य हिंसानिमित्तत्वात्कर्तृव्यपदेशसमानकर्तृकत्वंभवत्येवाविरुद्धम्। अथवोत्पद्यतइति । न च स्वर्ग्यइति न स्वर्गानुत्पत्तिहेतुमात्रमभिप्रेतमपितु नरकादिदुःखहेतूनाम् ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । एवं प्रपञ्चेन मांसभक्षणे तद्भक्षणदोषोहिंसादोषश्चेतिदर्शितम् तत्र स्वयंहिंसामकृत्वा क्रीतस्य लब्धस्य वा मांसस्य भक्षणेऽपि हिंसादोषोस्तीत्याह नाकृत्वेति । क्रीतलब्धादौ साक्षादहननेपि क्रेतृग्रहीतृद्देशेन हननादस्तिहिंसादोषइत्यर्थः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । मांसभक्षणप्रसङ्गेन हिंसागुणदोषावभिधाय पुनःप्रकृतमांसाभक्षणमाह नाकृत्वेति । प्राणिहिंसाव्यतिरेकेण न क्वचिन्मांसमुत्पद्यते प्राणिवधश्च न स्वर्गनिमित्तं नरकहेतुरेव यस्मात्तस्मादविधिना मांसंन भक्षयेदिति ॥ ४८ ॥

( ४ ) **राघवानन्दः** । प्राणिप्रसूतस्यैव मांसत्वमित्याह नेति । मांसमविधिसंपादितं वर्जयेत् न भक्षयेत् ॥ ४८॥

( ५ ) **नन्दनः** । पुनरपिमांसभक्षणवर्जनमेवोपक्रम्याह नाकृत्वेति । स्वर्ग्यः स्वर्गाय हितः ॥ ४८ ॥

**समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ॥ प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥ ४९ ॥**

( १ ) **मेधातिथिः** । अशुचिस्थाने कुक्षौ गर्भवृद्धिः शुक्रशोणिताभ्यांवाऽशुचिभ्यांप्रभवः । तथाच वधबन्धौ शरीरवतांतत्कृतौ एतत्सर्वंप्रसमीक्ष्य निपुणबुध्या तत्वतोनिरूप्य निवर्तेत सर्वमांसस्य भक्षणात्सर्वस्या प्रतिषिद्धस्यापि किंपुनः प्रतिषिद्धस्य । अर्थवादोयम् । नपुनस्तत्वतः अशुच्येव मांसंज्ञेयं नहि तदशुचित्वविधिपरंवाक्यम् ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । समुत्पत्तिं शुक्रशोणितप्रभवतया कुत्सिताम् । वधबन्धौ परलोकविरुद्धौ ॥ ४९ ॥

---

( ४७ ) तदवाप्नोति=तदेवा ( क, ख, ण )=तत्तदा. ( घ )
धृतिं=रतिं ( ट, ठ, ड, थ )

( ३ ) **कुल्लूकः** । शुक्रशोणितपरिणामात्मिकांसमुत्पत्तिंघृणाकरींविज्ञाय प्राणिनांवधबन्धौचक्रूरकर्मरूपौ निरूप्य विहितमांसभक्षणादपि निवर्तेत किमुताविहितमांसभक्षणादित्यविधिना मांसभक्षणनिन्दानुवादः ॥ ४९ ॥

( ४ ) **राघवानन्दः** । मांसभक्षिनारंधिगस्त्वित्याह समिति । समुत्पत्तिं शुक्रशोणितपरिणामत्वाज्जुगुप्सितंप्रेक्ष्य । मेषविशेषस्य बन्धनंकृत्वामांसंगृह्यतेनम्रियतेसइत्यपि ॥ ४९ ॥

( ५ ) **नन्दनः** । समुत्पत्तिर्मातापित्रोः शोणितशुक्राभ्यां विण्मूत्रादिभिर्दूषिते कुक्षौ संभवः ॥ ४९ ॥

**न भक्षयति योमांसं विधिं हित्वा पिशाचवत् ॥ सलोके प्रियतांयाति व्याधिभिश्च न पीड्यते ॥ ५० ॥**

( १ ) **मेधातिथिः** । विधिर्देवार्चनं तद्धित्वा योन भक्षयति किंतर्हि विधिना भक्षयति सलोकस्य प्रियतांप्राप्नोति प्रियःसर्वस्य भवति । व्याधिभिश्च कृशदुर्बलादेर्मांसमश्नतोव्याधिरुपजायते तेनापि विधिनैवाशितव्यम् । तथाभक्षयन्व्याधिभिर्नपीड्यते । अन्यथा अश्नन्नपिमांसं पीड्यतएव व्याधिभिः । पिशाचवदितिपिशाचास्तिर्यग्जातिविशेषा स्ते विधिमनपेक्ष्यमांसमश्नन्ति ततोन्योपि तथा भक्षयन्पिशाचसदृशोभवतीति निन्द्यते ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । सर्वमांसस्याभक्ष्यत्वेनोक्तस्यापि पिशाचवदिति विधिहानौ दृष्टान्तः ॥ ५० ॥

( ३ ) **कुल्लूकः** । उक्तविधिव्यतिरेकेण योन मांसंभक्षयति । पिशाचवदिति यथा पिशाचोभक्षयति तथा नेति व्यतिरेके दृष्टान्तः । सलोकस्य प्रियोभवति रोगैश्च न बाध्यते । तस्मादवैधमांसभक्षणाद्याधयोभवन्तीति दर्शितम् ॥ ५० ॥

( ४ ) **राघवानन्दः** । मांसाभक्षिणमलंकरोति नेति । पिशाचवदिति व्यतिरेकेणदृष्टान्तः ॥ ५० ॥

( ५ ) **नन्दनः** । पिशाचवद्विधिंहित्वेत्यन्वयः ॥ ५० ॥

**अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ॥ संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ ५१ ॥**

( १ ) **मेधातिथिः** । अन्येनहन्यमानंस्वप्रयोजनतोयद्यन्योनुमोदते साध्वयंहन्ताकरोतीत्यनुमन्ता विशसिता हतस्याङ्गविभागकारः । उपहर्तापरिवेषकः । खादकइत्येतेसर्वेघातकाः । अघातकेषु खादनसंस्कारविक्रयादिकर्तृषु घातकत्वेध्यारोपिते निन्दा न पुनस्तत्वतएते घातकाएव लौकिकी हि वधक्रिया प्राणत्यागफला तस्यकर्ता घातकः स्मृतितोगम्यते । स्वतंत्रःकर्तेति विशेषशास्त्रादिना यःप्राणवियोजनंप्राणिनांकरोति सहन्तोच्यते क्रयविक्रयाद्याश्च क्रियास्ततोन्या एव । ननुचेयमपि स्मृतिरेव । एते अनुमन्तृप्रभृतयोघातकाइति नेदंशब्दार्थसंबन्धे प्रमाणम् । किंतर्हि धर्माधर्मयोरभियुक्ततरोहि तत्र भवान्पाणिनिः मन्वादयश्च लोकप्रसिद्धैः पदार्थैर्व्यवहरन्ति न शब्दार्थसंबन्धविधिंस्मरन्ति प्रयोक्तारोह्येते न स्मर्तारः । ननुच तमाचार्यप्रचक्षतइत्यादेःस्मरन्त्येते । सत्यं । न तत्र शास्त्रस्मृतिविरोधः । नच तेषांवाक्यानामन्यत्प्रयोजनमस्ति । इहतु गौणेनापि प्रयोजनेनार्थवादतयाप्युपपत्तेर्न घातकत्वंशक्यमवसातुं । येप्याहुर्भक्षकश्चेन्न विद्यते वधकोपि न विद्यतइति भक्षणप्रयुक्तएव वधः प्रयोजकश्च कर्ता स्मर्यते । ततोमुख्यमेव घातकत्वमतोघातकप्रायश्चित्तमेव खादकस्य युक्तमिति ब्रूमः । पृथक्प्रायश्चित्तहतानांरसास्वादकस्य जग्ध्वामांसमभक्ष्यंचेति । यदि प्रयोजकत्वेन कर्तृत्वमुक्तं तदपि नैवास्ति । इदंहि तस्य लक्षणं । प्रेषणाध्येषणाभ्यांतु यःस्वतन्त्रस्य चोदकः सकर्ता सएव हेतुश्च मुख्योपर इति । वधकोहि जीवनप्रयुक्तया प्रवर्तते मांसविक्रयेण जीविष्यामीति नतु खादकेन विनियुज्यते । अथ तत्समर्थाचरणंप्रयोजकत्वम् । योयंक्रियांकर्तुमध्यवसितस्तत्रानुकूल्येन यः संविधि-

न्तुः सम्प्रयोजकइति । एतदप्यत्र नैवास्ति साधनोपनिधानं त्रसतः पशोरस्वतन्त्रीकरणंखड्गोपनयनमित्येव संविधानशब्द-वाच्यंयुक्तम् । तेन विना क्रिया न निष्पद्यते । अथ यदर्थःक्रियारम्भः सम्प्रयोजकश्चेतिचेन्माणवकमध्यापयतीत्यध्याप-नेहेतुकर्तृसंज्ञाप्रतिलम्भोन ह्यध्ययनमध्यापयति । नचासौ किंचिदुद्दिश्य हनने प्रवर्तते । येनास्य तदर्थनिरूपणाय भ-क्षणेऽनर्था प्रवृत्तिः स्यात् । सर्वइमे स्वभूत्यै यतन्ते न केनकश्चित्परोनुग्रहीतव्यइति मुहूर्तमप्यवतिष्ठतइत्यपि पूर्णकामः अथ स्वार्थप्रवृत्तस्य भक्षयितारमन्तरेण प्रवृत्तिरनर्थिका तस्मिंस्तु सति फलवती फलंच प्रयोजकम् तच्च खादका-धीनमिति पारंपर्येण खादकःप्रयोजकइति । एवंतर्हि योद्वेषाद्वध्यते सहन्तुः प्रयोजकः स्यात्ततश्च हन्यमानएव ह-न्ता संपद्यते । नहि द्वेषेण विना हन्तृत्वोपपत्तिरिति । तथा ब्रह्महत्यायामपि सर्वस्वंदद्यात्पातकसंप्रयोजकं नहि प्रति-ग्राहयितारमन्तरेण प्रतिग्रहोपपत्तिस्ततश्च प्रतिग्राही न केवलंप्रत्यवेयादपितु दातापि । रूपवती च स्त्री स्मरशरदह्य-मानहृदयेन रागिणा दर्शितस्पृहातिशयेनशीलंरक्षन्ती प्रत्यवेयात् तस्मान्नेदंप्रयोजकलक्षणम् । तौहि वधकखादकौ स्वा-र्थप्रवृत्तौ नष्टाश्वदग्धरथवदितरेतरोपकारमनुभवन्तौ न पुनरन्यतरप्रयोजकस्मृतिर्विशङ्कया च शूद्रविट्क्षत्रविप्राणामित्यत्र श्लोके निपुणमेतन्निर्णीतम् ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । क्रीत्वा लब्ध्वा वा भक्षयितुरपि हिंसादोषइत्युक्तं तदुपपादयन्भक्षणोचितव्यापारान्तर करणेऽपि हिंसायांदोषइति दर्शयति अनुमन्तेति । अनुमन्ता यदनुमत्या विना न वधः । विशसिता मांसविभागकारी । निहन्ता प्राणव्यापादकः । क्रयविक्रयीति क्रयाय परार्थंक्रेता विक्रेता परनिहतपशोर्मांसंक्रीत्वा तद्विक्रयणकारी । सं-स्कर्ता पाचकः । उपहर्ता परिवेषकः । खादकोभक्षकः । एतैर्व्यापारैर्विना उद्देश्याभावाद्घातकोपि न घातयतीत्येतेपि हिंसकाइत्यर्थः ॥ ५१ ॥

( ३ ) **कुल्लूकः** । यदनुमतिव्यतिरेकेण हननंकर्तुंन शक्यते सोऽनुमन्ता । विशसिता अङ्गानि यःकर्तर्यादिना पृथ-क्पृथक्करोति । क्रयविक्रयी मांसस्य क्रैताविक्रेता च । संस्कर्ता पाचकः । उपहर्तापरिवेषकः । खादकोभक्षयिता । गोवि-न्दराजस्तु यः क्रीत्वा विक्रीणाति सक्रयविक्रयीत्येकमेवाह तदयुक्तं । हननेन तथा हन्ता धनेनक्रायकस्तथा । विक्रयी तु धनादानात्ससंकर्तातत्प्रवर्तनादिति यमवचनेन पृथङ्निर्देशात् । घातकत्ववचनंचेदमशास्त्रीयपशुवधेनुमत्यादयोऽपि न कर्त-व्याइत्येवंपरंविधिनिषेधपरत्वाच्छास्त्रस्य खादकादीनांपृथक्प्रायश्चित्तदर्शनात् ॥ ५१ ॥

( ४ ) **राघवानन्दः** । नैतादृशंपापमस्तियदष्टौ दूषयतीत्याह अनुमन्तेति । सम्यक्कृतमित्यनुमन्यते यः सोनुमन्ता । पश्वङ्गानि कर्तनादिना यःपृथक्पृथक्करोति सविशसिता संस्कर्ता पाचकः । उपहर्ता परिवेषकः ॥५१॥

( ५ ) **नन्दनः** । खादके हि सत्यनुमन्त्रादयोभवन्ति । तेन वधमकुर्वतोऽपिखादकस्यातोदोषोभूयान्भवति । तस्मा-न्न खादकः स्यादित्यर्थः ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । अनुमन्ता यदनुज्ञया हतः । विशसिता अवयवमांसविभागकर्ता ॥ ५१ ॥

**स्वमांसं परमांसेन योवर्धयितुमिच्छति ॥ अनभ्यर्च्य पितॄन्देवांस्ततोऽन्योनास्त्यपुण्यकृत् ॥५२॥**

( १ ) **मेधातिथिः** । अधिकपुष्ट्यर्थंयोमांसमश्नाति तस्येयंनिन्दा नतु रोगोत्पत्तिभयाशङ्कया यतआह योवर्धयितु मिच्छतीति तस्याप्यनभ्यर्च्यपितॄन्देवान् । नतु रोगहेतोस्त्वर्चनमकुर्वतोपि कथंचिदसंभवान्न दोषः ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । अनभ्यर्च्य पितॄन्देवानिति पितॄनन्वष्टकायां देवान्पशुबन्धादौ ॥ ५२ ॥

( ३ ) **कुल्लूकः** । स्वशरीरमांसंपरमांसेन देवपित्राद्यर्चनंविना योवृद्धिंनेतुमिच्छति तस्मादपरोनापुण्यकर्तास्तीत्यविधिमांसभक्षणनिन्दानुवादः ॥ ५२ ॥

( ४ ) **राघवानन्दः** । किंच स्वेति । अपुण्यकृत्पातकी ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । तत्तस्मात्पूरुषात् अपुण्यकृत् पापकर्ता नास्ति ॥ ५२ ॥

**वर्षे वर्षेऽश्वमेधेन योयजेत शतंसमाः ॥ मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥ ५३ ॥**

**[ सदा यजति यज्ञेन सदा दानानि यच्छति । सतपस्वी सदा विप्रोयश्च मांसं विवर्जयेत् ॥ १ ॥]+**

( १ ) **मेधातिथिः** । देवाद्यर्चनशिष्टस्य शशादिमांसस्य भक्षणमनुज्ञातं । ततोनिवर्तमानो ऽश्वमेधफलमश्नुते अश्वमेधस्य फलं सर्वान्कामानश्यंसर्वाविजितीरित्यादि । न चात्र चोदनोयम् कथमल्पायासेन बहुधनव्ययेन च तुल्यफलता मांसनिवृत्तेः स्यात् । यतएषोपि संयमोतिदुष्करः । किंच लोकवत्परिमाणतःफलविशेषः स्यादित्ययंन्यायोजृम्भतएव । अतः फलविधौ न दोषः वयंतु ब्रूमः । अर्थवादएवायं यतोवर्षे शतंसमाइतिवार्थवादपक्षेसुघटम् । नहि प्रतिवर्षमश्वमेधस्य विधेयत्वसंभवः । नापि वर्षे शतं तावतः कालस्याधिकारिणोर्जीवनाद्यसंभवात् । पुण्यंच फलंच पुण्यफलम् । समाहारद्वन्द्वः । षष्ठीसमासेप्यसामर्थ्यम् ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । अधुना यस्य वर्णस्य यादृशंमांसभक्षणंनिषिद्धंतदकरणे फलमाह वर्षेवर्षे इति । शतंसमा इति यावदायुः प्रतिवर्षमश्वमेधफलमित्यर्थः ॥ ५३ ॥

( ३ ) **कुल्लूकः** । इदानीमनियमिताप्रतिषिद्धमांसभक्षणस्य निवृत्तिर्धर्मायेत्येतद्दर्शयितुमाह वर्षेवर्षइति । योवर्षशतंयावत्प्रतिवर्षमश्वमेधेन यजेत यश्च यावज्जीवंमांसंन खादति तयोःपुण्यस्य फलंस्वर्गादि तुल्यम् ॥ ५३ ॥

( ४ ) **राघवानन्दः** । मांसवर्जनादधिकंपुण्यंनसंभाव्यमित्याह वर्षइति । तयोर्मांसाभक्षकाश्वमेधयाजिनोःप्राणिवधाकरणात्समम् ॥ ५३ ॥

**फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ॥ न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥ ५४ ॥**

( १ ) **मेधातिथिः** । मेध्यैर्दैवार्हैः । मुन्यन्नानि नीवाराद्यन्नान्यकृष्टपच्यजनितानि । अयमर्थवादएव ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । फलमूलाशनैःतन्मात्रभक्षणैः । मुन्यन्नानां नीवारादिमुन्यन्नानां भोजनैर्भक्षणैः ॥ ५४ ॥

( ३ ) **कुल्लूकः** । पवित्रफलमूलभक्षणैर्वानप्रस्थभोज्यानांच नीवाराद्यन्नानांभोजनैर्न तत्फलमवाप्नोति यच्छास्त्रानियमिताप्रतिषिद्धमांसवर्जनाल्लभते ॥ ५४ ॥

( ४ ) **राघवानन्दः** । फलमूलाशनैरनयोरेव भोजनैः मेध्यैर्देवयोग्यैः मेधोयज्ञस्तत्तुल्यफलैः । न भक्षयामीति संकल्पपूर्वकंमांसपरिवर्जनात् ॥ ५४ ॥

**मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ॥ एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ५५ ॥**

( १ ) **मेधातिथिः** । नामधेयनिर्वचनमर्थवादः । मांसभक्षयिता सइतिसर्वनाम सामान्यापेक्षं योग्येनार्थेनप्रतिराकांक्षीकरोति यस्य मांसमश्नाति ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । अनिष्टफलमाह मांसभक्षयितेति । अमुत्रजन्मान्तरे ॥ ५५ ॥

---

+( अ, इ, ढ )

( ३ ) **कुल्लूकः** । इहलोके यस्य मांसमहमश्नामि परलोके मां सभक्षयिष्यतीत्येतन्मांसशब्दस्य निरुक्तंपण्डिताः प्रवदन्ति । इतिमांसशब्दस्य निर्वचनमवैधमांसभक्षणपापफलकथनार्थम् ॥ ५५ ॥

( ४ ) **राघवानन्दः** । मांसपदव्युत्पत्तिमाह मांसेति । सपशुर्मांसस्य भक्षकममुत्र परलोकेभक्षयिता यस्य पशोर्मांस महमिहाद्मीति ॥ ५५ ॥

( ५ ) **नन्दनः** । मांसभक्षणस्य वर्जनीयतांमांसशब्दनिर्वचनेनाप्याह मांसइति । भक्षयिता भक्षयिष्यति ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । यस्य मांसमहमिहाद्मि अमुत्र परलोके मां सभक्षयिता भक्षयिष्यति । एतन्मांसस्यमांसत्वंमनीषिणःप्रवदन्ति ॥ ५५ ॥

**न मांसभक्षणे दोषोन मद्ये न च मैथुने॥ प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ ५६ ॥**

( १ ) **मेधातिथिः** । प्राणस्यान्नमित्यतआरभ्य यावदयंश्लोकोर्थवादसंघातएव द्वित्राः श्लोकाविषयार्थाः । नमांसभक्षणेदोषोयथाक्रीत्वास्वयंचाप्युत्पाद्येति तथायमपि श्लोकः । निवृत्तिस्तुमहाफलेत्येतदत्र श्रूयते । बहुभिर्निन्दार्थाकरैरीदृशः संस्कारोजातोयन्न किंचिन्मांसमशितव्यम् । भूतानांवृत्त्यर्थमाह न मांसभक्षणेदोषइति । देवार्चनशिष्टे ब्राह्मणकाम्यादिषु निमित्तेषु प्रागुक्तेषु न दोषः किंचिदशितुमिच्छन्ति । निवृत्तिर्नभक्षयामीतिसंकल्पपूर्विका महाफला । फलविशेषाश्रुतेःस्वर्गः फलमितिमीमांसकाः एवंमद्ये क्षत्रियादीनां मैथुनेतु सर्ववर्णानां दिवोदक्यापर्वकालादन्यत्र। अल्पस्वल्पा प्रवृत्तिरेषा शास्त्रीया भूतानां शरीरस्थितिहेत्वर्था प्रवृत्तिः तथाचायुर्वेदकृत् । आहारोब्रह्मचर्यंच निद्राचेति त्रयंमतम्। मादकंचस्त्रियश्चैव ह्युपस्तम्भनमायुषइति । यस्तु तेन विनापि शक्नोति जीवितुं तस्य निवृत्तिर्महाफला । प्रदर्शनार्थंचैतदशिष्टाप्रतिषिद्धविषयाणामन्यासामपिनिवृत्तीनामेवमेव । यत्र विधानंपुरुषस्य प्रवर्तमानस्य प्रीत्यतिशयोत्पत्तिप्रयोजनमनिन्द्यंगर्हैतवा यतोनिवृत्तिःफलाय यथा मध्वशनंसंपन्नभोजनंराङ्कवंपरिधानमित्येवमादि तथाच शिष्टसमाचारः व्यासश्च भगवानेवमेवाह । ये तुसंसक्तितोऽशिष्टाप्रतिषिद्धाअपि यथा हसितकण्डूयनादयस्ततोनिवृत्तिर्धर्माय ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । उक्तमर्थमुपसंहरति नमांसभक्षणइति । अनुपाकृतमांसभक्षणे श्राद्धादिष्वपि अदोषोनास्ति किंतु दोषोस्त्येवेति व्यतिरेकनिषेधमुखेनान्वयप्रदर्शनमवधारणार्थम् तेन सर्वेष्वेव मांसभक्षणेषुच सर्वेषांदोषोस्तीत्येवेत्यर्थः । यथा येषांक्षत्रियादीनां मद्यमनिषिद्धं येषांच ब्राह्मणानां निषिद्धं तेषांसर्वेषांमद्यपानेनादोषोज्ञेयः गुरुलघुत्वाभ्यांतु निषेधानिषेधौ तथा पर्ववर्जंव्रजेच्चैनामित्यनृतुमैथुने विहितेपि न दोषः यतःप्रवृत्तिरेषा भूतानांरागवशात्सर्व साधारणा प्रवृत्तिर्न वैधी । पाठीनरोहितावाद्यावित्यादिविधानामपि परिसङ्ख्यादिपरत्वेन मांसभक्षणविधित्वाभावात्सामान्यतश्च मांसमद्यमैथुनानांहिंसामदकामरागहेतुत्वात्तेषांच निषिद्धत्वादित्यर्थः । नन्वेवं मांसादेः सामान्यतोनिषिद्धत्वात् लशुनादेरिव ततोनिवृत्तिर्नाभ्युदयहेतुः स्यादतआह निवृत्तिस्तु महाफलेति । एतादृशमेवैतत् यत्सामान्यतोनिषिद्धत्वेपि ततोनिवृत्तिर्महाफलेति । एतच्च वेदैकसमधिगम्यत्वान्न विपरीतदृष्टान्तमात्रेणान्यथा संभावयितुंशक्यमितितात्पर्यम् । एषएव मनुवचनार्थोयमेन स्फुटीकृतः यदाह ॥ सर्वेषामेव मांसानांमहान्दोषस्तु भक्षणे । निवर्तने महत्पुण्यमितिप्राह पितामहः ॥ तथा बृहस्पतिः मद्यंमांसंमैथुनंच भूतानांललनंस्मृतम् । तदेव विधिना कुर्वंत्स्वर्गंप्राप्नोति मानवः ॥ अभून्मांसपुरोडाशोभक्ष्याणांमृगपक्षिणाम् । पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ सौत्रामण्यांतथा मद्यं श्रुतौ भक्ष्यमुदाहृतम् । ऋतौ च मैथुनंधर्म्यंपुत्रोत्पत्तिनिमित्ततः ॥ स्वर्गंप्राप्नोति नैवंतु प्रत्यवायेन युज्यते ॥ यमेन सर्वेषामित्युक्तत्वात् । तथाचमांसंप्रक्रम्य भारतेप्युक्तम् । भक्षणस्य महान्दोषोनिवृत्त्या पुण्यमुच्यतइति ॥ तथा बृहस्पतिना मां-

समद्याच्चतुर्द्धैषा परिसंख्येत्युक्त्वा रोगार्तोभ्यर्थितोवापि योमांसंनात्यलोलुपः। फलंप्रामोत्ययत्नेन सोश्वमेधशतस्य चेत्युक्तम् ॥ अतोविहितादपि भक्षणान्निवृत्तिर्महाफलेति गम्यते। तथा तद्भक्षणे दोषोप्यस्ति उक्तंच महाभारते अल्पदोषमिह ज्ञेयमिति। अतएव देवान्पितॄंश्चार्चयित्वा खादन् मांसंन दुष्यतीति। अत्रापि न तादृक्संपूर्णदोषभाग्भवतीत्यर्थः। यत्तु मांसभक्षणे दोषोनास्तीत्यैतत्परतयैतच्छ्लोकव्याख्यानंनिबन्धातरेषु कृतं तत्कथमप्यसंगतत्वात् प्रवृत्तिरेषा भूतानामित्याद्यनन्वयाच्च नोवाप्येतेन दुष्यते कामधेनुदीपिकायांचैतद्बहुविचारितमितिनेह भूयःप्रतिपाद्यते ॥ ५६ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणादीनांवर्णानांयथाधिकारमविहिताप्रतिषिद्धभक्षणादौ न कश्चिद्दोषोयस्मात्प्राणिनांभक्षणपानमैथुनादौ प्रवृत्तिःस्वाभाविकोयंधर्मः वर्जनंपुनर्महाफलं। अविहिताप्रतिषिद्धमद्यमैथुननिवृत्तेर्महाफलकथनार्थोयमुक्तस्यैव मांसवर्जनमहाफलकथनस्यानुवादः ॥ ५६ ॥

( ४ ) **राघवानन्दः**। विहितमांसभक्षणे न दोषोयद्यपि तथापि ततोपि निवृत्तिःकार्येत्याह न मांसेति। अग्नीषोमीयंपशुमालभेतेति तन्मांसं सुराग्रहांश्च गृह्णातीति वाजपेयादौ मद्यं ऋतौ भार्यामुपेयादिति मैथुनंचविधिप्राप्तं तन्निवृत्तिर्मयेदंनभोक्तव्यं नपातव्यं न गन्तव्यमिति निःशेषेणनिवृत्तिर्नियमस्ततःफललाभसंभवात्। इत्यभक्ष्यप्रकरणम् ॥ ५६ ॥

( ५ ) **नन्दनः**। मांसभक्षणेऽनुज्ञातमांसभक्षणे। मद्ये मदकरद्रव्ये। अविहिताप्रतिषिद्धे ताम्बूलादौमैथुने चाविहिताप्रतिषिद्धेऽनृतौ स्वदारगमने ॥ ५६ ॥

( ६ ) **रामचन्द्रः**। मांसभक्षणे दोषोन यज्ञादौ पुरोडाशमात्रे। न मद्ये मद्यपाने दोषः सौत्रामण्यां सुराग्रहान्गृह्णातीति श्रुतेः। रागवशात्सर्वसाधारणप्रवृत्तिर्नचैतस्मात्पुण्यं। आघ्राणंन तु पानं पानात्पतितोभवेदिति वचनात्। मैथुने न दोषोविवाहितास्वेव व्यवायःकार्योनान्यस्त्रीषु। भूतानां मनुष्याणां एषा प्रवृत्तिर्ज्ञेया निवृत्तिस्तर्हिमहाफलेत्यत्र किमुवक्तव्यं। इतिमांसप्रकरणम् ॥ ५६ ॥

## प्रेतशुद्धिं प्रवक्ष्यामि द्रव्यशुद्धिं तथैव च ॥ चतुर्णामपि वर्णानां यथावदनुपूर्वशः ॥ ५७ ॥

( १ ) **मेधातिथिः**। चतुर्णामपीतिवचनंसामान्यविहिताधर्माः शूद्रस्यनेदृशंयत्नमन्तरेण भवन्तीति ज्ञापनार्थम्। प्रेतेषु जीवतांशुद्धिः। सुप्सुपेतिसमासः। प्रापणंचाप्रेतवन्निमित्ता शुद्धिरियंविशेषस्य। अतश्च यद्यपि शुद्धिवचनंप्रतिज्ञायते तथाप्यशुद्धिसापेक्षत्वाच्छुद्धेः। शास्त्रप्रत्ययकारकत्वादुभयोरप्रतिज्ञातापि प्रथममशुद्धिरुच्यते ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः**। अथ देहद्रव्याशौचंप्रक्रमते प्रेतशुद्धिमिति। प्रेतशुद्धिः प्रेतनिमित्ता शुद्धिः शोधनं कालादि चतुर्णामिति ब्राह्मणादीनां प्रेतशुद्ध्यान्वितम् ॥ ५७॥

( ३ ) **कुल्लूकः**। ब्राह्मणादीनांचतुर्णामपि वर्णानांप्रेतेष्वपिपित्रादीनां शुद्धिंब्राह्मणादिक्रमेण या यस्येति। द्रव्यादीनांच तैजसादीनांशुद्धिमभिधास्यामि ॥ ५७ ॥

( ४ ) **राघवानन्दः**। अशौचंप्रतिजानीते प्रेति। अपिना नानासंकरजातिग्रहः ॥ ५७ ॥

( ५ ) **नन्दनः**। अथप्रकरणान्तरमारभते प्रेतेति। प्रेतशब्दोऽत्र जातस्याप्युपलक्षणार्थम् ॥ ५७ ॥

( ६ ) **रामचन्द्रः**। अथप्रेतशुद्धिमाह प्रेतशुद्धिमिति। प्रेतशुद्धिं देहद्रव्याशौचं। चतुर्णामपिवर्णानां। अनुपूर्वशः ब्राह्मणादिवर्णक्रमेण ॥ ५७ ॥

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ॥ अशुद्धाबान्धवाः सर्वे सूतके च तथोच्यते ॥ ५८ ॥

( १ ) **मेधातिथिः** । अनुजातोदन्तजाताद्बालतरइतिस्मरन्ति । तथाविभागेनोद्देशमात्रमिदं यतस्तदपेक्षआशौचकालभेदोभविष्यति । तद्यथा स्मृत्यन्तरे आदन्तजन्मनः तथा बाले देशान्तरस्थेचेत्यादिना सद्यःशौचंश्रुतम् । बालश्चाजातदन्तोविज्ञेयः । एवंच नृणामकृतचूडानामित्येतदेकरात्रिकमाशौचंदन्तजातेऽप्यवस्थाप्यते । एवमेते स्मृतिविषयव्यवस्थायाअविरोधिन्यौ बालविषये भवतः। नैशिकीच शुद्धिराचूडाकरणात् यतोनिवृत्तमुण्डकानांत्रिरात्रंवक्ष्यति । तच्च त्रिरात्रंप्रागुपनयनात्परतः शुद्धयेद्विमइत्यादि । येतु दशाहंशावमाशौचमित्येतान्पक्षान्वयोविभागेन वर्णयन्ति स्मृत्यन्तरात्समाचाराच्चव्युत्क्रमेण संबन्धयन्ति दशाहमुपनीतस्य अनुपनीतस्य चतुरहं कृतमुण्डस्य त्र्यहं जातदन्तस्यैकाहमनुजातस्य सद्यःशौचिकादयस्तुविकल्पाः एवंत्र्यहचतुरहयोः कृतचूडस्य तेषांमते स्मृत्यन्तरप्रसिद्धोवृत्तस्वाध्यायापेक्षोन विकल्पःप्रतिपादितःस्यात्तच्चोत्तरत्र दर्शयिष्यामः । सर्वव्यापारनिवृत्त्या मृतउच्यते । संपूर्वस्य तिष्ठतेर्व्यापारोपरमदर्शनात् । बान्धवाः सपिण्डाःसमानोदकाः । सूतकेच पुत्रजन्मादौ तथोच्यते अशुद्धाबान्धवाः सर्वइत्येतेनास्य संबन्धः । कथंपुनरत्र वयोभेदप्रतिपत्तिर्यावता कृतमुण्डइति संस्कारसंबन्धोगम्यते । कृतोपनयनेचेत्यत्र श्रुतमेव । अतएव कृतचौडः कियन्तंकालमुच्यतइति नैव श्रूयते । उच्यते । दन्तजातानुसाहचर्यात्कृतमुण्डःकाललक्षणार्थोविज्ञायते सच कालोत्र प्रथम तृतीयइत्येषः यद्यपि प्रथमे वर्षे वैकल्पिकंमुण्डीकरणंतस्मिन्समयआदन्तजन्मनः सद्यइत्येतद्बाधितंभवति । तदप्ययुक्तं कियानवधिः कृतमुण्डइति चशब्दात्कृतमुण्डेचेतिकृतोपनयेचेतिलभ्यते । संस्कारान्तरमाप्तौ व्यपदेशान्तरप्रवृत्तेः । एवं चैतयास्मृत्या एकवाक्यता भविष्यत्यादन्तजन्मनः सद्यइत्यत्रापि। त्रिरात्रमाव्रतादेशादिति । व्रतादेशग्रहणंकालोपलक्षणार्थमेव नचब्राह्मणस्यानित्योष्टमवर्षे एवंक्षत्रियवैश्ययोर्यश्च कालः तदा शूद्रस्य न कश्चित्कालउक्तःस्यात् । तत्राप्यतीतशैशवस्य परिपूर्णसर्वेषामितिवचनादतश्चाष्टमाद्वर्षादूर्ध्वंचतुर्णामपिवर्णानांसर्वाशौचंशूद्रस्यापि तस्य कालस्य सद्भावात् । यस्मिंस्तु पक्षे एकादशे वर्षे क्षत्रियवैश्ययोरुपनयनंलक्ष्यते तदा शूद्रस्य नकश्चित्कालउक्तःस्यात् । तत्राप्यतीतशैशवस्य परिपूर्ण मर्वाक्त्रिरात्रं । शैशवस्य निवृत्तेश्च । स्मृत्यन्तरे प्रागष्टमाच्छिशुः प्रोक्तः अन्यैस्तु आषोडशाद्भवेद्बालइति । येपि षोडशाद्बाल्य निवृत्तिमाहुस्तेषामप्यष्टमादूर्ध्वंमासिक्येव शुद्धिः । एवंपठ्यते । ऊर्ध्वंतुषड्भ्योवर्षेभ्यः शुद्धिः शूद्रस्य मासिकी। अन्यत्र पठितमष्टवर्षस्य मासइति । ननु वक्ष्यमाणेभ्यएव वाक्येभ्यएषावयोभेदव्यवस्था लभ्यते किमनेन दन्तजातइत्युद्देशेनसत्यं सुखावबोधार्थम् ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । दन्तजाते जातदन्ते । अनुजाते जातदन्तादनुपश्चाज्जाते अजातदन्तइत्यर्थः । कृतचौलेचेति चकारादुपनीतेच संस्थितेमृते सर्वे बान्धवाः सपिण्डसमानोदकाः । सूतके बान्धवस्य जन्मनि । तथोच्यतइत्यशुद्धाः सर्वेबान्धवाइत्यर्थः ॥ ५८ ॥

( ३ ) **कुल्लूकः** । तत्रशुद्धेरशुद्धिसापेक्षत्वात्तन्निरूपणार्थमाह दन्तजातइति । दन्तजाते जातदन्तइत्यर्थः । वाहिताग्न्यादिष्वित्यनेन जातशब्दस्य परनिपातः । अनुजाते जातदन्तानन्तरे कृतचूडाकरणे च चकारात्कृतोपनयनेच संस्थिते मृतेसति बान्धवाःसपिण्डाःसमानोदकाश्चाशुद्धाभवन्ति प्रसवे च तथैवाशुद्धाभवन्तीत्युच्यते । वयोविभागेनोद्देशमात्रमिदंवक्ष्यमाणाशौचकालभेदादिसुखावबोधनार्थम् ॥ ५८ ॥

( ४ ) **राघवानन्दः** । तत्र जातकाद्याशौचशुद्धीराह दन्तेत्यष्टाविंशत्या । दन्तजाते उत्पन्नदन्ते । अनुजाते पूर्वस्य-

पतनानन्तरंपश्चाद्भाविन्यनुत्पन्नदन्ते आदन्तजन्मनः। कृतचूडेत्यत्रचकारउपनयनोपलक्षकः। संस्थिते मृते। सूतकं जन्म ॥ ५८ ॥

( ५ ) **नन्दनः**। आशौचनिमित्तान्याह दन्तेति । दतजान्ते जातदन्ते षाण्मासाधिकइतियावत्। अनुजाते पुनर्जातउपनीतइतियावत् प्राप्ताष्टवर्षइत्यर्थः। कृतचौले प्राप्ततृतीयवर्षइतियावत्। संस्थितेमृते। बान्धवाः सपिण्डाः सर्वे सन्निकृष्टाअसन्निकृष्टाश्च अवस्थाविशेषोपन्यासोऽशुद्धिवैषम्यात् ॥ ५८ ॥

( ६ ) **रामचन्द्रः**। दन्तजाते जातदन्ते। सर्वेबान्धवाअशुद्धाभवन्ति। च पुनः अनुजातःअनुपश्चाज्जातोऽनुजातः परस्य विशेषणंदन्तोत्पत्तिकालपर्यन्तमित्यर्थः। च पुनः कृतचूडे अनुपनीते चकारादुपनीतेपि संस्थिते मृते सतिसर्वेबान्धवाअशुद्धाभवन्ति। तथा सूतके जननाशौचे बान्धवाअशुद्धाः। योगीश्वरः आदन्ताजननात्सद्यआचूडान्नैशिकीस्मृता। त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम् ॥ ५८ ॥

## दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥ अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव वा ॥ ५९ ॥

( १ ) **मेधातिथिः**। साषिण्ड्यलक्षणंवक्ष्यते। अर्वाक्संचयनादिति चतुरहोपलक्षणंवक्ष्यति । आहिताग्नेः संचयनंचतुर्थ्यामितिवचनमस्ति । अयंच विकल्पोवृत्तस्वाध्यायापेक्षोवृत्तापेक्षोवा । तथाच स्मृत्यन्तरम्। एकाहाद्ब्राह्मणः शुद्धोयस्तु ब्रह्माग्निसंयुतः। त्र्यहात्केवलवेदस्तुनिर्गुणोदशभिर्दिनैः। तत्र त्रिवेदस्याग्निमतएकाहः। द्विवेदस्य तु त्र्यहं। निर्गुणस्य दशाहम्। गौतमेनपठितंसद्यः शौचं तच्च विशेषएव ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थं तत्रक्रियान्तराणि उभयत्र दशाहानि कुलस्यान्नं भुज्यते। दानंप्रतिग्रहोहोमः स्वाध्यायश्चनिवर्ततइत्याद्याः क्रियानिवर्तन्ते। केवलंबहुवेदस्यागुण्यमानंप्रणश्यतीति स्वाध्यायोननिवर्तते। तथावृत्त्यपेक्षोयुक्तोविकल्पः। षट्कर्मजीविनोदशाहः त्रिभिरन्यइत्यस्य चतुरहोद्वाभ्यामेकइत्यस्यत्र्यहः। दाशाहिकआशौचे प्रतिग्रहादावनधिकारात्प्राणयात्रैव दुर्लभा येतु वयांसि चत्वारि चत्वारश्चाशौचकालाः अतोयथावयोयथासंख्येन संबन्धः तेषांदन्तजाते दशाहः प्राप्नोति उपनीतेतु मृतेएकाहएव तत्र स्मृत्यन्तरसमाचारविरोधः। अथविरोधपरिहारार्थंप्रातिलोम्येन संबन्धः क्रियते। उपनीते दशाहः कृतमुण्डे चतुरहः त्र्यहोदन्तजाते एकाहोनुजातइति। अत्रापि निवृत्तचौडकानांतुत्रिरात्रादितिविरोधेन विकल्पोयुक्तः स्वशब्देन त्रिरात्रस्यानुविधानात्। चतुरहस्य वृत्तिभेदेन संचयभेदेन विषयत्वसिद्धेः स्मृत्यन्तरेणैवमेकवाक्यता भवति एकाहादित्यनेन। अन्यथा वयोभेदेन विकल्पे व्याख्यायमाने वृत्तस्वाध्यायापेक्षोमानवे शास्त्रे केन विकल्पोलभ्यते । अतोगौतमवचनाद्यस्य प्रात्यहिकेन प्रतिग्रहेण विनापि वृत्तिरस्ति कुसूलधान्यादेस्तस्य बहुस्वाध्यायस्य स्वाध्यायाध्ययनमात्रे सद्यःशुद्धिः। येपि त्र्यहादयःकल्पास्तत्रापि त्र्यहैहिकादीनांतावन्मात्रएव विशुद्धिर्वृत्त्यर्थं प्रतिग्रहेऽनेनैव गौतमदर्शनेन। अन्यथा ब्राह्मणस्य स्वाध्यायिनइत्येवावक्ष्यत् न स्वाध्यायानिवृत्त्यर्थमिति। अतोयद्यप्यविशेषेणैकाहाच्छुद्धिरित्यादि श्रुतं तथापि नियतक्रियाविषयंविज्ञेयम् । येननित्यवद्ब्राह्मणस्य दशाहमाह शुद्ध्येद्विप्रोदशाहेनेति । न ह्यन्यत्पुनर्वचने प्रयोजनमस्ति तस्मा द्विकल्पोयंयुक्तेन मार्गेण व्याख्येयः । यत्र पुनर्बालादौ सद्यःशौचं निवृत्तमुण्डकादौ त्रिरात्रं तत्र विकल्पाभावात्सर्वक्रियासु शुचित्वम् ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः**। दशाहमितिगुणरहितब्राह्मणविषयम्। सपिण्डेषु मृतेषु। अर्वाक्संचयनादिति विप्राणांचतुर्थेन्हि संचयनस्य प्रायिकत्वाच्चतुरहोपलक्षणं एतदेकशाखीयमन्त्रमात्रमधीतवतोदशाहस्थाने । त्र्यहः संपूर्णैकशाखाध्येतुः। एकाहोवेदश्रौताग्निमतः ॥ ५९ ॥

( ३ ) **कुल्लूकः**। सप्तपुरुषपर्यन्तंसपिण्डतांवक्ष्यति । सपिण्डेषु शवनिमित्तमाशौचंदशाहोरात्रंब्राह्मणस्योपदिश्यते शुध्येद्विप्रो दशाहेनेतिवक्ष्यमाणत्वात्। अर्वाक्संचयनादस्थ्नामितिचतुरहोपलक्षणम्। चतुर्थे दिवसेऽस्थिसंचयनंकुर्यादितिविष्णुवचनात्। त्र्यहमेकाहंवा अहःशब्दोऽहोरात्रपरः । अयंचाग्निवेदादिगुणापेक्षोव्यवस्थितविकल्पः । यथाह दक्षः एकाहाच्छुध्यते विप्रोयो ऽग्निवेदसमन्वितः। हीने*हीनंभवेच्चैव त्र्यहश्चतुरहस्तथा॥ श्रौताग्निमतो मन्त्रब्राह्मणात्मककृत्स्नशाखाध्यायिन एकाहाशौचम्। तत्र श्रौताग्निवेदाध्ययनगुणयोरेकगुणरहितोहीनस्तस्यत्र्यहः । उभयगुणरहितस्तु हीनतरः केवल स्मार्ताग्निमांस्तस्यचतुरहः। सकलगुणरहितस्य दशाहः। तदाहपराशरः निर्गुणो दशभिर्दिनैरिति॥ ५९॥

( ४ ) **राघवानन्दः**। शवनिमित्तं शावं मृतोमनुष्यःशवः। सकलगुणरहितस्य तु दशाहंतथाह पराशरः। निर्गुणोदशभिर्दिनैः। अनाहिताग्नेःसंचयनंचतुर्थ्यामिति स्मृतेश्चतुर्थदिवसेऽस्थिसंयचनंकुर्यादिति विष्णुवचनाच्चतुरहोपलक्षणमिदम्। आशब्दोत्र छन्दसि व्यवहिताश्चेति समः पूर्वः तेन हीनतरस्याचतुरहमाशौचमितिभावः। अर्वाक्संचयनादिति मेधातिथिः। अहःशब्दोत्राहोरात्रपरः। तथोक्तं॥ एकाहाच्छुध्यते विप्रोयोग्निवेदसमन्वितः। हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा॥ एवंचसाग्निःशाखायुक्तोविप्रः। स्वशाखाध्याय्यग्निहीनोहीनस्तस्य त्र्यहं। स्मार्ताग्निमात्रेणहीनतरस्तस्य चतुरहं। उक्तसकलगुणहीनस्य दशाहमितिचतुर्णांव्यवस्थितविकल्पइति। उक्तषट्कर्मा दशाहेन शुध्यति तथा त्रिभिर्जीवी चतुर्भिः। द्वाभ्यांजीवी त्र्यहैः। एकेन जीव्येकाहेनेति मेधातिथिः॥ ५९॥

( ५ ) **नन्दनः**। दशाहमनिर्गुणेषु सपिण्डेषु बान्धवेषु। अस्थ्नामासंचयनाद्वेति चतुरहोपलक्षणं चतुर्थेऽन्हि संचयनमितिवचनात्। चतुरहंगुणवत्स्वित्यर्थः। त्र्यहंगुणवत्तरेषु। एकाहमग्निहोत्रनित्यस्वाध्यायवत्सु। स्मृत्यन्तरानुरोधादेवंव्याख्यानम्॥ ५९॥

( ६ ) **रामचन्द्रः**। आशौचनिमित्तकालनियममाह दशाहमिति। शावमाशौचंदशाहपर्यन्तंसपिण्डेषु विधीयते गुणरहितब्राह्मणविषयम्। अस्थिसंचयनादर्वाक् त्र्यहं वेदैकदेशाध्येतृविषयम्। एकाहंवा साङ्गसमग्रशाखाध्येतृपरम्। तद्यथा सञ्चयश्चब्राह्मणानांप्रायेण चतुर्थेऽहनि भवत्यतोदिनचतुष्टयमेकशाखामन्त्रमात्रमधीतवतोदशाहस्थाने । त्र्यहः संपूर्णैकशाखाध्येतुः। एकाहोवेदश्रौताग्निमतः॥ ५९॥

**सपिण्डता तु पुरुषे सप्तमे विनिवर्तते॥ समानोदकभावस्तु जन्मनाम्नोरवेदने॥६०॥**

( १ ) **मेधातिथिः**। अन्वर्थसंज्ञाविज्ञानाद्बान्धवग्रहणानुवृत्तेश्चान्वयजाः सप्तमपुरुषावधयः सपिण्डाउच्यन्ते। येभ्यश्चास्य पिता दद्यात्तेभ्यः पुत्रइतिजीवत्पूर्वपित्रादेर्विधानात् षट् तावद्योग्यतया सपिण्डा भवन्ति। यद्यपिपितृभ्योदीयते आत्मना सप्तमअतःपितामहप्रपितामहाद्याःपूर्वमन्वयजातास्तेसपिण्डाइतिव्यपदिश्यन्ते । पूर्वे षट् सपिण्डाः। अपरे पुत्रादयः षडेव यतएकस्याःपिण्डदानक्रियायाः सहभावात्सपिण्डाद्युपदेशोलभ्यते। पुत्रादेरपिसहभावः पौत्रादिनाक्रियमाणोऽयम् तेनयेभ्योदीयते यैश्च सह संप्रदानवान्भविष्यति सर्वे ते सपिण्डाव्यपदिश्यन्ते। यतोन तत्र पिण्डदानमभ्युपलक्षणत्वाच्छरइववेलायोमागन्तव्यमिति। तेन यावदुक्तंस्यात् प्रपितामहस्य यःप्रपितामहस्तदन्वयजाये यावत्सप्तमास्ते सपिण्डाएव स्वसन्ततौपित्रादिसन्ततौ द्रष्टव्यम्। यतएव भेदस्तमुपादाय गणना कर्तव्या यावत्सप्तमावधि। यथा पितामहोयेषामेकस्तत आरभ्य सप्तमावधयःसपिण्डाइत्येव सर्वत्र तदन्वयजत्वे चोपलक्षणे जातिरनाश्रयणाद्विजातीयाअपि क्षत्रियादयोब्राह्मणादीनांसपिण्डाभवन्ति । अतएव तज्जननाद्याशौचे ब्राह्मणस्यदशाहएव तेषांनुस्वकालएव द्वादशाहादिः।

---

* हीनंभवे=हीनतरे ( अ )

अतःसर्वस्यविजातीयनिमित्तेविजातीयसपिण्डनिमित्तेवाजन्मादौस्वकालएवशुद्धिः । क्षत्रियादीनांब्राह्मणापेक्षया त्रिपुरुषंसापिण्ड्यं तथाच शङ्खः । यद्येकजाताबहवःपृथक्क्षेत्राःपृथग्जनाः । एकपिण्डाःपृथक्शौचाःपिण्डस्त्वावर्तते त्रिषु ॥ पृथक्क्षेत्राः भिन्नजातीयासुस्त्रीष्वित्यर्थः । पृथग्जनाः पृथक्क्षेत्राः समानजातीयाअप्यनेकमातृकाभवन्ति तदर्थमुभयोरुपादानम् । एकपिण्डाःसपिण्डाभवन्ति किंतु पृथक्शौचाः स्वजातिनिर्मित्तएव तेषांशुद्धिकालः । ब्राह्मणस्य क्षत्रियादेः सूतकादौ दशाहः । ब्राह्मणसूतके तेषां द्वादशाहश्च । तथाचान्योपि विशेषःपिण्डस्त्रिष्वावर्तते त्रिष्वेव भवति पुरुषेषु । समानजातीयापेक्षया क्षत्रियादीनांब्राह्मणवत्षट्पुरुषस्य सापिण्ड्यं एकजाताःपृथक्क्षेत्राइत्यादिविशेषणोपादानादसमानजातीयापेक्षंत्रिपुरुषत्वमनेन वाक्येनशक्यते प्रतिपादयितुम् । एषएवार्थोऽनया स्मृत्या स्पष्टीक्रियते । क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्यबान्धवाः । तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ षड्भिस्त्रिभिरथैकेनेत्यादिच ॥ स्त्रीणांतु विजातीयानांभर्तृकालेन जीवति भर्तरि शुद्धिः । आह च । सूतौ मृते तु दासानां पत्नीनांचानुलोमतः । स्वामितुल्यंभवेच्छौचं मृते स्वामिनि पैतृकम् ॥ अन्ये पठन्तिअसवर्णासुतानामिति प्रथमंपादंयद्ययमस्तिपाठस्तदा पुत्राणामपि शूद्राणांपितृगृहे व्यवस्थितानांतत्परतन्त्राणांपितृजात्यपेक्षया दशाहादिरेव शुद्धिकालः । दासाश्चात्र वैतनिकागृह्यन्ते येतु गर्भदासास्तेषांविध्यन्तरंश्रूयते । कारवः शिल्पिनोवैद्यादासीदासंतथैवच । राजानोराजभृत्याश्च सद्यःशौचाः प्रकीर्तिताइति ॥ स्पर्शनेचैवमेतेषांशुचित्वंविज्ञेयं न पुनर्दानभोजनादिक्रियासु यतःकर्मनिमित्ताएते शब्दाअतःकिंविपर्यये शुद्धिः किंसर्वाःक्रियाः प्रतिप्रसवाउतकाश्चिदेवाभ्यनुज्ञायन्ते । यतोराज्ञश्च कार्याविघातार्थमत्याकांक्षायांयान्येव कर्माणि तान्येव त्वदयमागच्छन्ति । तथैवच समाचारः । ननुच नात्र स्पर्शप्रतिषेधः श्रुतोयावता स्मृत्यन्तरे पठ्यते । अस्थिसंचयनादूर्ध्वमङ्गस्पर्शोविधीयते । तथान्यच्चत्रिभिश्चतुर्भिर्वाहोभिर्ब्राह्मणःस्पृश्यतामियात् । एकादशेन शुद्धिःस्यान्मृतके सूतके तथा । राज्ञः षष्ठे सप्तमे वा स्पर्शोद्वादशाहेनान्नशुद्धिः । वैश्यस्य स्पर्शनमष्टमे नवमे वा पक्षेणान्नशुद्धिः । शूद्रस्य स्पर्शनमेकादशे द्वादशे वा मासेनान्नशुद्धिः । हारीतस्तथा वाक्यान्तरमपि । स्पर्शेक्रमेण वर्णानांत्रिचतुःपञ्चषैर्दिनैः । भोज्यान्नोदशभिर्विप्रःशेषाद्वित्रिषडुत्तरैः । एतेच विकल्पाः । प्रयोजनपेक्षया गुणवदगुणापेक्षया व्यवस्थापनीयाः । सर्वेषांतावद्ब्राह्मणस्य भक्तदासास्त्रिचतुरैरहोभिःस्पर्शनेन दूषयन्ति । गर्भदासास्तु सद्यः । एवमितरेषामपि वर्णानांयत्रेदंसद्यःशौचंतत्र सर्वत्रस्नानंवाससा च । द्रव्यस्य शुद्धिर्यास्य विहितेतिज्ञापयिष्यते । कन्यानामपि त्रिपौरुषेयी सपिण्डता । सपुत्राणांतुस्त्रीणांत्रिपुरुषंविज्ञायतइतिवसिष्ठः । आशौचएवैतत् । विवाहे तु विधिर्दर्शितः । स्थितमेतत् । सप्तमपुरुषोमर्यादा षट्पुरुषाःसपिण्डाइति । सप्तमे प्राप्ते विनिवर्तते । समानोदकभावः समानोदकव्यपदेशः जन्मनाम्नोरवेदने जन्मचायमस्मत्कुले जातः नाम अमुष्मादिदं नामकात्पितृपितामहादेरुभयोरवेदने । निवृत्तिरतश्चान्यतरज्ञानेप्यनिष्टोदकंज्ञेयम् । अवतीर्य नदीमन्यद्वा जलाशयंनाभिदघ्नमभुग्नोदक्षिणाभिमुखः सव्योत्तराभ्यांपाणिभ्यामुदकंकृत्वानवेक्षमाणाः प्रत्याव्रजेयुरिति ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । सप्तमे स्वंविहाय स्वापेक्षया त्वष्टमे निवर्तते । अत्रच सप्तमे पुरुषइतिसामान्याभिधानस्य स्वापेक्षयार्वाचीनेषु षट्सु पराचीनेष्वपि षट्सु तेषामपिच सन्ततौ सप्तसङ्ख्यावच्छिन्नायांसपिण्डतानुवर्तते । तत्रैतदुक्तमाशौचमितितात्पर्यम् । सप्तमे देयपिण्डेपि पिण्डभोजितया त्रयाणांलेपभागितया च त्रयाणांसमानपिण्डसंबन्धात्सापिण्ड्यमितितुमत्स्यपुराणादिषूपलक्षणमात्रमुक्तम् । जन्मत्स्वार्वाचीनपराचीनधारामध्यउत्पत्तिः । नामामुकशर्मेति । एतयोरुभयोरवेदनेज्ञानाभावे निवर्तते । एतत्संज्ञाकरणमाशौचविध्यर्थम् ॥ ६० ॥

( ३ ) **कुल्लूकः** । सपिण्डलक्षणमाह । यंपुरुषंप्रतियोगिनंकृत्वा निरूप्यते तस्य पितृपितामहप्रमृतीन्षट्पुरुषानतिक्रम्य सप्तमे पुरुषे प्राप्ते सपिण्डत्वंनिवर्तते । एवंपुत्रपौत्रादिष्वप्यवगन्तव्यम् । पिण्डसंबन्धिनिबन्धनाचेयंसपिण्डता । तथाहि पितृपितामहप्रपितामहेभ्यस्त्रिभ्यःपिण्डदानंप्रपितामहस्य पित्रादयस्त्रयःपिण्डलेपभुजश्च तत्पूर्वस्य तु सप्तमस्यपिण्डसंबन्धोनास्तीत्यसपिण्डता । यस्य चैते षट्पुरुषाःसपिण्डाःसोपि तेषांसपिण्डः पिण्डदातृत्वेन तत्पिण्डसंबन्धात् । अतःसाप्तपौरुषीयंसपिण्डता । तदुक्तंमत्स्यपुराणे लेपभाजश्चतुर्थाद्याःपित्राद्याःपिण्डभागिनः । पिण्डदःसप्तमस्तेषांसापिण्ड्यंसाप्तपौरुषम् ॥ सगोत्रत्वे चेयंसपिण्डता । अतएव शङ्खलिखितौ सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । तेन मातामहादीनामेकपिण्डसंबन्धेपि न सपिण्डता । समानोदकत्वंपुनरस्मत्कुलेऽमुकनामाभूदितिजन्मनामोभयापरिज्ञानेनिवर्तते ॥ ६० ॥

( ४ ) **राघवानन्दः** । सपिण्डेष्वित्युक्तंसप्रतियोगिकंतल्लक्षणमाह सपिण्डतेति । तदुक्तं मात्स्ये ॥ लेपभाजश्चतुर्थाद्याःपित्राद्याःपिण्डभागिनः । पिण्डदः सप्तमस्तेषांसापिण्ड्यंसाप्तपौरुषम् ॥ पिण्डभागिनःप्रपितामहान्ताउत्तरे त्रयोलेपभुजइति षट् सपिण्डता तु सर्वेषांगोत्रतःसाप्तपौरुषीति शङ्खोक्तेःअतोमातामहादीनामेकपिण्डसंबन्धेपि न सपिण्डता गोत्रभेदात्अस्मत्कुलेऽमुकनामाजातआसीत्तावत्पर्यन्तंसमानोदकभावःतदवेदने तदज्ञाने समानोदकता निवर्ततइत्यन्वयः ॥ ६० ॥

( ५ ) **नन्दनः** । सपिण्डानाह सपिण्डतेति । पित्रादिषु पूर्वेषु षट्सु पुत्रादिष्वपरेषु सत्सु सपिण्डता वर्तते सप्तमादौ निवर्तते । पुरुषग्रहणंस्त्रीद्वारसंबन्धिनिवृत्त्यर्थम् । उत्तरार्धेविनिवर्ततइत्यनुषञ्जनीयम् ॥ ६० ॥

( ६ ) **रामचन्द्रः** । सप्तमे स्वंविहाय स्वापेक्षयात्वष्टमेनिवर्तते सप्तमे पुरुषइति सामान्याभिधानात्स्वापेक्षयार्वाचीनेषु षट्सुतेषामपि च संततौ जन्मनाम्नोरवेदनेऽज्ञाने समानोदकभावःसमानोदकसंज्ञो भवति । शवस्पर्शे विशुध्यन्ति त्र्यहादुदकदायिनइत्यादिवाक्यैः ॥ ६० ॥

**यथेदं शावमाशौचं सपिण्डेषु विधीयते ॥ जननेप्येवमेवस्यान्निपुणं शुद्धिमिच्छताम् ॥ ६१ ॥**

**[ उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहोयज्ञः स्वाध्यायश्च निवर्तते ॥ १॥ ]‡**

( २ ) **सर्वज्ञनारायणः** । यथेदंदशाहादि एवमेव दशाहचतुरुयेकाहाशौचं गुणापेक्षया व्यवस्थितं सपिण्डानाम् । निपुणां सर्वप्रकारामन्नादिविषयामपि । शावाशौचेतिगुणापेक्षया भर्तुश्चतुरहाद्याशौचापकर्षात्पत्न्याअप्याशौचापकर्षः । सूतकेतु नाशौचं सूतकेपुंसः संसर्गंचेन्न गच्छति । रजस्तत्राशुचिज्ञेयंतच्च पुंसि न विद्यतइत्यङ्गिरोवचनात् रजः प्रवृत्तिनिमित्तकंसूत्याशौचंपुंसआशौचापकर्षेपिस्त्रियादशाहमेव तथाचान्नादावप्याशौचशङ्कामाभूदित्येतदर्थंनिपुणामित्युक्तम् ॥६१॥

[ **सर्वज्ञनारायणः** । उभयत्र सूतके मृतके च दशाहानीत्याशौचकालोपलक्षणम् । दशाहग्रहणंतु ब्राह्मणस्य प्राधान्यात् तदाशौचेषु च दशाहस्याप्युत्कृष्टत्वात् । कुलस्य तत्कुलस्यान्नंनभुज्यतेन्यैः । दानप्रतिग्रहादयश्चाशौचिभिः क्रियमाणाः । होमःस्मार्तः ॥ १ ॥ ]

( ३ ) **कुल्लूकः** । यथेदंदशाहादिकंशवनिमित्तमाशौचंकर्मानर्हत्वलक्षणंसपिण्डेषु दशाहंशावमाशौचमित्यनेन विधीय

---

( ६१ ) निपुणं=निपुणां ( क, ख, ण, च, ञ, ज, झ, ढ. )

‡ ( क, ख, द, त. )

ते । प्रसवेऽपि सम्यक्शुद्धिमिच्छतांसपिण्डानांतादृशमेवाशौचंभवेत् ॥ ६१ ॥

( ४ ) **राघवानन्दः** । सूतकंनिर्दिशति यथेदमिति । एवंवृत्तिभेदेपि दशाहाद्युन्नेयम् ॥ ६१ ॥

( ५ ) **नन्दनः** । एवमेवस्यात् पूर्ववदेवस्यात् । दशाहंनिर्गुणेषु चतुरहंगुणवत्सु त्र्यहंगुणवत्तरेष्वेकाहंगुणवत्तमेष्वित्यर्थः ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । यथेदं आशौचं शावाशौचंदशाहपर्यन्तंसपिण्डेषु विधीयतेजननेपि एवंदशाहंस्यात् । निपुणां यथोदितांशुद्धिमिच्छताम् ॥ ६१ ॥

[ **रामचन्द्रः** । उभयत्रेति । उभयत्र शावाशौचे जननाशौचेच दशाहंतत्कुलस्यान्नं भुञ्जते न भुञ्जीत । दानप्रतिग्रहौवर्ज्यौ यज्ञंवर्जयेत् यज्ञाहुतितत्र हावयेन्न तु हापयेत् । स्वाध्यायोवेदाध्ययनं न भवेत् । ]

**सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ॥ सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ६२॥**

**[ सत्रधर्मप्रवृत्तस्य दानधर्मफलैषिणः ॥ त्रेताधर्मापरोधार्थमरण्यस्यैतदुच्यते ॥ १ ॥ ] ‡**

( २ ) **सर्वज्ञनारायणः** । सर्वेषामिति । सपिण्डानांसर्वेषामस्थिसंचयनात्प्राक्शावमाशौचमङ्गाशौचमस्पृश्यताहेतु स्मृत्यन्तरोक्तम् । सूतकंतुप्रसवनिमित्तमङ्गाशौचंमातापित्रोरेव । सूतकंयावद्दशरात्रमङ्गाशौचं । पिता तु स्नातएव स्पर्शे शुचिरित्यर्थः ॥ ६२ ॥

( ३ ) **कुल्लूकः** । अनिर्देशेन तुल्यतायांप्राप्तायां विशेषमाह सर्वेषामिति । मरणनिमित्तमस्पृश्यत्वलक्षणमाशौचंसर्वेषामेव सपिण्डानांसमानम् । जननिमित्तंतु मातापित्रोरेव भवति तत्राप्ययंविशेषः जननिमित्तमस्पृश्यत्वंमातुरेव दशरात्रं पिता तु स्नानात्स्पृश्योभवति ।अयमेवसंबन्धःसंवर्तेन व्यक्तीकृतः॥ जाते पुत्रे पितुःस्नानंसचैलंतु विधीयते । माताशुध्येद्दशाहेन स्नानात्तु स्पर्शनंपितुः ॥ ६२ ॥

( ४ ) **राघवानन्दः** । किंच सर्वेषामिति । मरणनिमित्तमस्पृश्यत्वलक्षणमाशौचंसर्वेषामेव सपिण्डानांसमानं जन्मनिमित्तमस्पृश्यत्वंमातापित्रोरेव स्यात् तत्रैव विशेषान्तरमाहसूतकंमातुःसूतकनिमित्तमस्पृश्यता दशरात्रं पिता तु प्रातःस्पृश्योभवति तथाच संवर्तः ॥ जाते पुत्रे पितुःस्नानंसचैलंतु विधीयते । माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनंपितुरिति ॥ तस्मात्सदिवसःपुण्यःपितॄणांप्रीतिवर्धनइत्यपि संगतम् ॥ ६२ ॥

( ५ ) **नन्दनः** । मातापित्रोरेवसूतकं नसपिण्डानाम् । उत्तरार्धेन पक्षान्तरमाह सूतकंमातुरेवेति । उपस्पृश्य पिताशुचिरित्युत्तरार्धेनोपपादयति ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । सपिण्डानांशावमाशौचं सूतकं जननिमित्तं अस्पृश्यत्वमाशौचंमातापित्रोरेव नसपिण्डानां अस्पृश्यत्वंसूतकंमातुरेव च उपस्पृश्य स्नात्वा पिता शुचिःस्यात् ॥ ६२ ॥

[ **रामचन्द्रः** । सत्रेति । सत्रकर्म बहुकर्तृकयज्ञकर्म तथा त्रेताधर्मः । उपलक्षणंतृतीयो धर्मोयस्येति त्रेताधर्मः वानप्रस्थः अरण्यवासी वानप्रस्थस्यएतद्विधिरुच्यते । ]

---

‡ ( क, ख, ट, ण ) ।

निरस्य तु पुमाञ्छुक्रमुपस्पृश्यैव शुध्यति ॥ बैजिकादभिसंबन्धादनुरुन्ध्यादघंत्र्यहम् ॥ ६३ ॥

[जननेऽप्येवमेवस्यान्मातापित्रोस्तुसूतकम् ॥ सूतकंमातुरेवस्यादुपस्पृश्यपिताशुचिः ।।१ ॥ ]

[ मेधातिथिः । एवमेतत्सपिण्डानांजनने यथैव दशाहादयः कल्पाः षट्कर्मादिवृत्त्यपेक्षया स्वाध्यायाल्पमहत्वापेक्षयाच व्यवस्थितामरणे तथैव जननेपिशौचमात्रमतिदिश्यते कालानवच्छिन्नं । सामर्थ्याच्चागृह्यमाणविशेषतया तत्संबन्धसकललाभः । कालावच्छिन्नातिदेशे तु एकेनैव मुख्यत्वाद्दशाहेन संबन्धः स्वाध्यायादिष्वपाठप्रत्यासत्त्या दशाहाद्यपेक्षया एकाहेनशक्येनैवच निराकांक्षीकृतत्वादन्यैस्त्र्यहादिभिर्नसंबन्धः स्यात् । तत्रेयंस्मृतिरविशेषेण वृत्तिस्वाध्यापेक्षायांव्यवस्थायांमृतसूतकयोर्विदधती जनने गुणाद्यनपेक्षया जातिमात्रे स्थाप्यमानाविरुध्येत समाचारश्च बाधितः स्यात् । नन्वेवंस्त्रीणामपि त्र्यहैकाहादयः कल्पाः सूतिकानांप्राप्नुवन्ति समाचारविरोधिनः । अत्रोच्यते । यद्ययंविकल्पःस्यात्तदैव व्यवस्थितएवासीत्कल्पः । तथाहि तुशब्दउपपन्नतरोभवति । सूतकशब्दश्च नाशौचे वर्तते । लक्षणया सूतकसंबन्ध्यशौचंलक्षयेत् । लक्षणायासाहचर्यादस्पृश्यतैव लक्षयितुंयुक्ता यदिच सर्वमाशौचमभिप्रेतंस्यादाशौचग्रहणमेवाकरिष्यत् अशौचंमातुरेवेति । अतश्चस्मृत्यन्तरे त्रिरात्रमस्पृश्यतोक्त्या इह तदभावस्तयोर्विकल्पः सूतकंमातुरेव । मातापित्रोर्मातुरेवेतिपितुर्विकल्पः उपस्पृश्यस्नात्वा शुचिर्भवतीति उपक्रममात्रमिदंवक्ष्यमाणेन श्लोकेन पितुरपित्र्यहमेव ॥ ६१ ॥ ]

( १ ) मेधातिथिः । सहेतुकंत्र्यहमुपदिशन्नुपस्पर्शनशुद्धिपूर्वोक्तामनुमन्यते । किमर्थमुच्यतइतिचेत् सरूपविधितयार्थवादार्थं नविधेयतया जर्तिलयवाग्वाजुहुयादितिवत् । निरस्यतुशुक्रं मैथुनधर्मेण संप्रयुज्य शुक्रोत्सर्गादनन्तरं उपस्पृश्य स्नात्वा शुचिर्भवति । अतोबैजिकादभिसंबन्धात् । बीजनिमित्तोबैजिकः । अभिसंबन्धःअपत्योत्पत्तिःअतस्तत्र कथंनानुरुन्ध्यान्नानुवर्तेत । अघमाशौचं त्र्यहं यादृशंच शुक्रनिरसनेन । कृतस्नानस्याशुचित्वं न तादृशमेव प्रसवे । अपि तु त्र्यहं पूर्वश्लोकार्धत्र्यहशेषतयाऽनूद्यते । अतएवो पस्पृश्येति स्नानमुच्यते । स्नानंमैथुनिनःस्मृतमितिवचनान्नाचमनं पुत्रेतु जाते तदहःस्पृश्यतैवेति केचित् । तथाच शङ्खआह । कुमारप्रसवे नाड्यामछिन्नायांगुडतिलहिरण्यवस्त्रप्रावरणगोधान्यप्रतिग्रहेष्वदोषस्तदहरित्येके ॥ तस्मात्सदिवसःपुण्यःपितॄणांप्रीतिवर्धनः । स्मरणाच्चैव पूर्वेषांतदहर्न प्रदुष्यतीति ॥ तथा-श्राद्धमप्येके कुर्वन्तीतिच । अनेन पितुःसर्वथाशौचाभावएव । तत्रैते स्मृती पूर्ववद्वृत्तिसदसद्भावापेक्षया विकल्पेते ॥६३॥

( २ ) सर्वज्ञनारायणः । निरस्य स्वस्त्रीव्यतिरिक्तस्त्रीषु प्रक्षिप्य उपस्पृश्यस्नात्वा । एतच्च शुद्धेर्हेतुमात्रम् । प्रायश्चित्तंत्वन्यदेव । एतच्च स्नानं यथोक्तंमृज्जलशौचंकृत्वा कर्तव्यम् । बैजिकादिति स्वस्त्रीव्यतिरिक्तस्त्रीषु जनितानांप्रसवमरणयोर्बीजसंबन्धात्त्र्यहमघमाशौचमनुरुन्ध्यात् । बैजिकादितिदशाहाशौचाभावार्थंबीजमात्रासंबन्धोनतु स्वभार्याद्वारापि संबन्धइतितात्पर्येणोक्तम् ॥ ६३ ॥

( ३ ) कुल्लूकः । स्नानंमैथुनिनःस्मृतमिति मैथुने स्नानंविधास्यति । तेन मैथुनंविनाऽपि कामतोरेतःस्खलने स्नात्वा पुमाञ्छुद्धोभवति । अकामतस्तु स्वप्नादौ रेतःपाते मूत्रवद्रेतसउत्सर्गइत्यापस्तम्बोक्तेः स्नानंविनाऽपि गृहस्थस्यशुद्धिः । ब्रह्मचारिणस्त्वकामतोऽपि स्वप्ने सिक्त्वा ब्रह्मचारीत्यनेन स्नानादिना शुद्धिरुक्ता। बैजिके तु संबन्धे परपूर्वभार्यायामपत्योत्पत्तौ त्र्यहमाशौचंभवति । तथाच विष्णुः । परपूर्वभार्यासु त्रिरात्रम् । रेतःपातिनामाशौचमप्रकृतमपि जननप्रकरणे प्रसङ्गात्तदनुगुणतयोक्तम् । यत्र रेतःपातमात्रेण स्नानंतत्रापत्योत्पत्तौ त्रिरात्रमुचितम् ॥ ६३ ॥

( ४ ) **राघवानन्दः** । स्नानंमैथुनिनःस्मृतमित्यृतुकालमैथुने स्नानंविधास्यति तद्वते तु कामतोरेतःस्कन्दने स्नानंस्वप्ने तु न स्नानंगृहस्थस्यसूत्रवदितिवदन्यत्किंचिद्विधत्ते निरस्येत्विति । निरस्य मैथुनेन योनावृत्तौ नियोज्योपस्पृश्य-स्नात्वा अन्यत्रमूत्रवद्रेतउत्सर्गइत्यापस्तम्बोक्तेः । परभार्यायामपत्योत्पत्तौ त्र्यहमाशौचंस्यादित्याह बैजिकादिति । सपिण्डतादिसंबन्धासत्वेन बीजंरेतः संबन्धे हेतुर्यत्रापत्योत्पत्तौतस्मादघमशौचमनुरुंध्यात्कुर्यात्तथाच विष्णुः । परपूर्वासु भार्यासु त्रिरात्रंरेतःपाते तुमूत्रवदिति ॥ ६३ ॥

( ५ ) **नन्दनः** । शुक्रंनिरस्य गर्भाधानंकृत्वेतियावत् । उपस्पृश्य स्नात्वा । पुमान्पिता शुचिःस्याच्छुध्यति । गर्भाधानंकृत्वातदानीमेव स्नातस्यापि जननाशौचसंबन्धोनभवतीत्यर्थः । सूतिकामस्पृशतोऽयंपक्षउक्तः । स्पृशतस्तु गुणवत्तमस्याऽपि दशरात्रमेवैतदित्यवगन्तव्यम् । स्मृत्यन्तरानुरोधात्पक्षान्तरमाह बैजिकादिति अघमाशौचम् । अनुरुन्ध्यात्कुर्यात् ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । पुमान् शुक्रंनिरस्य योनौ पातयित्वा उपस्पृश्य स्नात्वा शुध्यति ऋतुशंकित्वात् । बैजिकादेवसंबन्धात् स्वस्त्रीव्यतिरिक्तस्त्रिषु जनितानांप्रजनमरणयोर्बीजसंबन्धात् त्र्यहं त्रिदिनपर्यन्तं अघं आशौचं अनुरुन्ध्यात् । बैजिकादिति दशाहाशौचाभावार्थं बीजमात्रसबन्धः । नतुस्वभार्याद्वारासंबन्धइति तात्पर्यार्थः ॥ ६३ ॥

## अन्हा चैकेन राञ्या च त्रिरात्रैरेव च त्रिभिः ॥ शवस्पृशोविशुध्यन्ति त्र्यहादुदकदायिनः॥६४॥

( १ ) **मेधातिथिः** । त्रयस्त्रिरात्रानवाहानि एकेनच । अन्हा एकयाच राञ्या अहोरात्रः एवं दशाहोवृत्तानुरोधादेवमुपदिष्टः । शवस्पृशः शवस्य स्नानालंकारादिकारिणः । अन्येषांस्नानमात्रंवक्ष्यति तन्निर्यापकांश्च । तथाच मकटीकरिष्यति प्रेताहारैःसममित्यत्र एतच्च समानोदकानां मूल्येनवा निर्हरतां । अनाथनिर्हरणे तु स्मृत्यन्तरे ॥ नतेषामशुभंकिंचिन्नाशौचंशुभकर्मणाम् । जलावगाहनात्तेषांसद्यः शौचंविधीयते ॥ यत्तु असपिण्डंद्विजमिति तत्रवै वक्ष्यामः। उदकदायिनः समानोदकाःतेषांच पृथक्पिण्डेचसंस्थितइति सद्यःशौचमपि वक्ष्यते । तत्र विकल्पः । सपिण्डेष्वेतदस्वाध्यायाद्यपेक्षम् ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । अन्हैकेनराञ्याअहोरात्रेणेत्यर्थः । त्रिरात्रैस्त्रिभिर्नवरात्रेणेत्येवंदशभिर्दिनैः शवस्पृशोधनाभिसंधिनाशवस्पृशोवहनादिकर्तारोविशुद्ध्यन्ति । एतदाशौचमुक्तम् । प्रायश्चित्तंतु स्मृत्यन्तरोक्तम् । उदकदायिनः समानोदकाः । समानोदकमरणे त्र्यहाच्छुध्यन्ति ॥ ६४ ॥

( ३ ) **कुल्लूकः** । एकेनान्हैकया च राञ्येत्यहोरात्रेण त्रिरात्रैस्त्रिभिरितिनवाहोरात्रैर्मिलित्वा दशाहेनेतिवैदग्ध्येनोक्तम् । ननु दशाहेनेतिवक्तव्ये किमर्थोयंवाग्विस्तरः । उच्यते ॥ बंहीयसींलघिष्ठांवा गिरंनिर्मान्ति वाग्मिनः । न चावश्यत्वमेतेषांलघूक्त्यैव नियम्यते ॥ वृत्तस्वाध्यायगुणयोगिने ये सपिण्डाएकाहाद्यल्पाशौचयोग्यास्ते यदि स्नेहादिना शवस्पृशोभवन्ति तदा दशाहेनैव शुध्यन्ति उदकदायिनःपुनःसमानोदकास्त्र्यहेण । गोविन्दराजस्तु धनग्रहणपूर्वकशवनिर्हारकासंबन्धिब्राह्मणविषयमिदंदशाहाशौचमाह ॥ ६४ ॥

( ४ ) **राघवानन्दः** । अन्हाचेति। स्वाध्यायगुणयोगिनोऽसपिण्डास्ते शवस्पृशः शवस्य स्नानालङ्कारकारिणोऽन्हाएकाहोरात्रेण हीनतराश्च त्रिरात्रैःनिर्गुणाश्च दशरात्रेण शुध्येयुरिति । उदकदायिनःसमानोदकाःत्र्यहादिति । दशरात्रैर्धनग्र-

---

( ६४ ) त्रयहादुद०=त्र्यहात्तूदक ०(ख)

किंतु विशुध्यतीति प्रकृते पुनः साध्वीतिवचनादनिवृत्ते रजसि वैदिककर्माधिकारानुप्रवेशोनास्ति न पुनः स्पर्शादिनिषेहणपूर्वकशवस्पृशोऽल्पशौचयोग्याअपि शुध्येयुरिति गोविन्दः । त्रिरात्रैःत्रिभिरिति नवाहोभिःराज्या चेत्येकं तथाचदशरात्रयः तैः शुध्येयुरिति मेधातिथिः ॥ ६४ ॥

( ५ ) **नन्दनः** । रजन्याऽन्हैवचैकेनेत्यहोरात्रस्य निर्देशः । त्रिरात्रैरेवचत्रिभिरिति नवरात्रस्य संहत्य दशभिरहोरात्रैरितियावत् । उक्तिवैचित्र्यमिदम् । शवस्पृशश्चेद्गुणवत्तमाअपिसपिण्डादशाहेनैव शुध्यन्तीति । उदकदायिनःसमानोदकाः ॥ ६४॥

( ६ ) **रामचन्द्रः** । एकेनान्हा राज्याचैकया एवमेकंदिनं त्रिरात्रैःतिसृभीरात्रिभिस्त्रिगुणितैःएवंनवभिःएवंदशदिनपर्यन्तंशवस्पृशःमौल्येन शववाहकाः विशुध्यन्ति उदकदायिनः सपिण्डाः त्र्यहाच्छुध्यन्ति ॥ ६४ ॥

## गुरोः प्रेतस्यशिष्यस्तु पितृमेधंसमाचरन् ॥ प्रेतहारैःसमंतत्र दशरात्रेण शुध्यति॥६५॥

( १ ) **मेधातिथिः** । पितृमेधः चरमेष्टिः अन्येतु सर्वं कर्मैवलक्ष्यतइतिप्राहुः । तत्कुर्वन् शिष्योदशरात्रेण शुध्यति । ब्रह्मचारिणोप्ययंविधिरस्त्येव । प्रेताहारैःसमः प्रेतंहरन्ति निर्यापयन्ति यथा तेषांदशाहएवंशिष्यस्यापीत्यर्थः ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । गुरोराचार्यस्य सपिण्डपुत्राद्यभावे पितृमेधंत्वयंकुर्वन् दशाहमाशौचंकुर्यात् । ईदृशे चासपिण्डशिष्यकर्तृके संस्कारे ये प्रेतहाराः प्रेतवाहकास्तेपि धनाद्यभिसंधिशून्यत्वेपि तावदाशौचिनइति प्रेतहारैः सममित्यनेनोक्तम् ॥ ६५ ॥

( ३ ) **कुल्लूकः** । गुरोराचार्यादेरसपिण्डस्य मृतस्य शिष्योऽन्त्येष्टिंकृत्वा प्रेतनिर्हारकैर्गुरुसपिण्डैस्तुल्योदशरात्रेण शुद्धोभवति ॥ ६५ ॥

( ४ ) **राघवानन्दः** । किंच गुरोरिति । यद्यसपिण्डस्य प्रेतस्य मृतस्य पितृमेधमन्त्येष्टिंकृत्वा शिष्यः प्रेतहारैः सपिण्डैः । समं तुल्यः अतोदशरात्रेण शुध्यति ॥ ६५

( ५ ) **नन्दनः** । शिष्योऽसपिण्डोऽपि प्रेताहारैः प्रेतान्नभोजिभिः सपिण्डैरितियावत् । एवंवदता गुणवत्तमानामपि प्रेताहाराणांदशाहमेवाशौचमितिसूचितम् ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । शिष्यःप्रेतस्य गुरोः पितृक्रियांसमाचरेत् प्रेताहारैः प्रेतवाहकैः समंमिलित्वा ॥ ६५॥

## रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति॥ रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला॥ ६६ ॥

( १ ) **मेधातिथिः** । गर्भस्रावे गर्भमासरात्रीस्त्रियाएव शुद्धिर्युक्ताइहवाक्येतस्याः श्रुतत्वात् । सपिण्डानांतुस्मृत्यन्तरसमाचारावन्वेषणीयौ । वसिष्ठेन तु सपिण्डानां त्र्यहः समाम्नातः । ऊनद्विवर्षे प्रेते गर्भपतने सपिण्डानांत्रिरात्रमशौचम् । स्रावस्तु गर्भस्य मासत्रयादूर्ध्वंप्राग्दशमान्मासात् । केचित्तु प्राङ्नवमादित्याहुः । अप्राप्तकालस्य पातः स्रावउच्यते । न पुनर्द्रवरूपस्यैव । तथा गौतमेन गर्भविस्रंसने गर्भमाससमारात्रीरितिपठितम् । सप्तमास्याश्च जीवन्ति । अतः सप्तमे मासे पूर्णमाशौचं एतत्तु जीवतोजातस्य युक्तमन्यथातु गर्भमाससमाइत्येव । इह रजस्वलायारजस्युपरते स्नानेन शुद्धिराम्नातास्मृत्यन्तरे त्र्यहादूर्ध्वं तत्रैवंव्यवस्था । प्राक्त्र्यहाद्रजोनिवृत्तावपि नास्ति शुद्धिरूर्ध्वमनुपरतेपि भवति ।

---

( ६५ ) समाचरन्=समाचरत् ( ख, च )

( ६५ ) प्रेतहारैः=प्रेताहारैः ( नन्दनः )

धः। उक्तमाद्याश्चतस्रोनिन्दिताइति। रजस्वला स्त्री रजस्युपरते स्नानेन साध्वी भवति शुद्धा कर्मयोग्येत्येवंपदयोजना। स्त्रीग्रहणंवर्णमात्रस्व्यर्थम्। पूर्वेतु श्लोकाब्राह्मणविषयाव्याख्यातास्तदाशङ्कानिवृत्त्यर्थंस्त्रीग्रहणम्। उत्तरत्रापि यत्र विशेषप्रमाणंनास्ति तत्रापि वर्णमात्रविषयतयैवयथा नृणामकृतमुण्डानामिति ॥ ६६ ॥

( २ ) **सर्वज्ञनारायणः**। अर्वाक् षण्मासतःस्त्रीणामितिब्राह्मवचनात्षण्मासमध्यएव स्रावः तत्र मासतुल्याभिः स्रावसंबन्धिमाससमसङ्ख्याभिःस्त्री शुद्ध्यति। शुचिकर्त्राकाङ्क्षायांस्त्रीपदस्योत्तरार्धस्थस्यान्वयात्। अतएव सपिण्डान्तराणांसद्यः शौचम्। रात्रिभिरितिबहुवचनाच्चाद्यद्वितीयमासयोरपि स्रावे त्रिरात्राशौचम्। तत्रतु मासतुल्याभिरितिनान्वीयते अयोग्यत्वात्। रजस्वला तु स्त्री रजस्युपरते स्नाता सती धर्मकार्येषु शुध्यतियदि सा साध्वी भवतिमनसापि पतिं न व्यभिचरतिअन्यथात्वागामिरजःपर्यन्तमेव तस्याआशौचमित्यर्थः। रजस्युपरतइतिवचनादनुपरते रजसि चतुर्थेन्हि स्नातापि न धर्मकृत्ये शुध्यतीत्युक्तम् ॥ ६६ ॥

( ३ ) **कुल्लूकः**। अत्र रात्रिभिरितिविधेयगामिनोबहुत्वस्य विवक्षितत्वात्तृतीयमासात्प्रभृति गर्भस्रावे गर्भमासतुल्याहोरात्रैर्विशेषाभिधानाच्चातुर्वर्ण्यस्त्री विशुध्यति। एतच्चषण्मासपर्यन्तम्। यथोक्तमादिपुराणे। षण्मासाभ्यन्तरंयावद्गर्भस्रावो भवेद्यदि। तदामाससमैस्तासांदिवसैःशुद्धिरिष्यते॥ अतऊर्ध्वंतु जात्युक्तमाशौचंतासु विद्यते॥ मेधातिथिगोविन्दराजादयस्त्वादिपुराणे वचनादर्शनात्सप्तमासादर्वाग्गर्भस्रावे मासतुल्याहोरात्रैःस्त्रीणांविशुद्धिरित्यतिदिशन्ति। प्रथमद्वितीयमासीयगर्भस्रावे स्त्रीणांत्रिरात्रम्। यथाह हारीतः। गर्भस्रावे स्त्रीणांत्रिरात्रंसाधीयोरजोविशेषत्वात्। पित्रादिसपिण्डानांत्वत्र सद्यःशौचम्। यथाह सुमन्तुः गर्भमासतुल्यादिवसागर्भसंस्रवणे सद्यःशौचंवा। भवति। गर्भमासतुल्याइतिस्त्रीविषयं सद्यःशौचंवेतिपित्रादिसपिण्डविषयमितिव्यवस्थितविकल्पः। रजस्वला च स्त्री रजसि निवृत्ते सति पञ्चमे दिने स्नानेनादृष्टार्थकल्पनयोग्या भवति। स्पर्शयोग्या तु त्रिरात्रव्यपगमे चतुर्थेऽहनि कृतस्नाने नैव शुद्धा भवति ॥ ६६ ॥

( ४ ) **राघवानन्दः**। किंच रात्रिभिरिति। मासद्वयाभ्यन्तरे त्रिरात्रंबहुवचनवशात् तृतीयमासप्रभृति षण्मासपर्यन्तंमासतुल्याहोरात्रैःस्त्री शुध्यति अतऊर्ध्वंस्वजातिक्रमेण। सप्तमे मासे जीवेन संयुक्तोभवतीतिगर्भोपनिषच्छ्रुतेर्जीवावेशात्पूर्णाशौचम्। अतः षण्मासाभ्यन्तरंयावद्गर्भस्रावोभवेद्यदि। तदा माससमैस्तासांदिवसैःशुद्धिरिष्यते॥अतऊर्ध्वंस्वजात्युक्तमाशौचंतासु विद्यतइत्यादित्यपुराणोक्तेः। तथा गर्भमासतुल्यादिवसागर्भस्रावेसद्यःशौचंवा भवतीतिसुमन्तूक्तेः। गर्भमासतुल्येति सर्ववर्णस्त्रीसाधारणम्। सद्यइति पितृसपिण्डानामितिशेषः सपिण्डानांतु त्रिरात्रंवृत्ते गर्भपतने सपिण्डानांत्रिरात्रमाशौचमितिवसिष्ठोक्तेः। ऋतुःस्वाभाविकइत्यत्राशुद्धिरुक्ता न शुद्धिस्तत्राहरजसि उपरतेनिवृत्ते स्नानेन मैथुनयोग्या साध्वीति विशेषणात् पञ्चमेहनि तासामदृष्टार्थाशुद्धिः॥ शुद्धाभर्तुश्चतुर्थेन्हि स्नानेनस्त्री रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेहनि शुध्यतीति याज्ञवल्क्योक्तेः ॥ ६६ ॥

( ५ ) **नन्दनः**। प्रथमद्वितीययोर्मासयोरार्तवंतृतीयादिषुचतुर्षुगर्भस्रावःसप्तमादिषुमासेषु प्रसवइतिप्रसिद्धम् तत्र तृतीये मासे गर्भस्रावे तिस्रोरात्रयआशौचंचतुर्थेचतस्रःपञ्चमेपञ्च षष्ठेषट्उत्तरार्धेन रजस्वलाशौचमुच्यते। रजस्युपरते त्रिरात्रेऽतीतइत्यर्थः। स्नानेनविशुध्यतीत्यनुवर्तते ॥ ६६ ॥

( ६ ) **रामचन्द्रः**। गर्भमासतुल्याभिः रात्रिभिरिति बहुवचनात्प्रथमद्वितीयमासयोरपि स्रावे त्रिरात्रंस्त्रियाएवाशौचं अन्येषांतु सद्यः पुनःरजसिउपरते निवृत्ते पुनःरजोद्गमे स्नानेन साध्वीशुद्धा भवेत्। असाध्वी चेदृत्वन्तरपर्यन्तमशुद्धा स्यात् ॥ ६६ ॥

नृणामकृतचूडानांविशुद्धिर्नैशिकी स्मृता ॥ निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥ ६७ ॥

[ प्राक्संस्कारप्रमीतानां वर्णानामविशेषतः । त्रिरात्रात्तु भवेच्छुद्धिःकन्यास्वह्नोविधीयते ॥१॥ ] ‡

[ अदन्तजन्मनःसद्यआचूडान्नैशिकी स्मृता । त्रिरात्रमाव्रता देशाद्दशरात्रमतःपरम् ॥ २ ॥ ] ‡

[ परपूर्वासु भार्यासु पुत्रेषु प्रकृतेषु च । मातामहे त्रिरात्रंतु एकाहंत्वसपिण्डतः ॥ ३ ॥ ]‡

( १ ) **मेधातिथिः** । इमाः षष्ठीः कर्तृकर्मणोः कृतीति कर्तृलक्षणाः केचिद्व्याचक्षते । अकृतचूडएकाहेन शुध्यति । तथाच योवस्थापेक्षोपिविकल्पइत्येकीयमतमुक्तम् । तस्यैव श्लोकस्य व्यवस्थावाक्ये इमेअन्येत्वध्याहारेण संबन्धलक्षणाआहुः । अकृतमुण्डानांमृतानांये सपिण्डास्तत्रोत्तरपक्षः । समाचाराभिमतः । स्मृत्यन्तरेसद्यः शौचमप्याम्नातंविषयस्तत्रैव दर्शितः । आदन्तजन्मनः सद्यः आचूडान्नैशिकी निवृत्तचूडकानांत्रिरात्रमिति ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः** । अकृतचूडानांमरणे नैशिकी निशाव्यापिनीएकाहोरात्रमशुद्धिरित्यर्थः । अत्र चादन्तजातमरणेपि प्रागाशौचमात्रस्योक्तत्वादेकाहापकर्षः । सद्यः शौचमेवाशौचंतच्च स्नानपर्यन्ताशौचम् । निवृत्तचूडकानां प्रागुपनयनान्मरणेत्रिरात्रंऊनद्विवार्षिकमित्यग्रे वक्ष्यमाणत्वात् कृतचूडापदंपूर्णद्विवर्षतोपलक्षणम् ॥ ६७ ॥

( ३ ) **कुल्लूकः**। अकृतचूडानांबालनांमरणे सपिण्डानामहोरात्रेण शुद्धिर्भवति । कृतचूडानांतुमरणेप्रागुपनयनकालात्रिरात्रेण शुद्धिः ॥ ६७ ॥

( ४ ) **राघवानन्दः** । किंच नृणामिति नैशिकी एकाहोरात्रनिर्वर्त्यायदाह याज्ञवल्क्यः॥ आदन्तजननात्सद्यआचूडान्नैशिकी स्मृता । त्रिरात्रैमाव्रतादेशाद्दशरात्रमतःपरमिति सर्वमेतदुचितकालपरम् ॥ ६७ ॥

( ५ ) **नन्दनः** । अकृतचौलानामप्राप्ततृतीयवर्षाणांषष्ठमासादूर्ध्वमरणे ज्ञातीनांशुद्धिर्नैशिकी । आशौचमेकरात्रंनिवृत्तचौलकानां प्राप्ततृतीयवर्षाणांसप्तमवर्षात्प्राङ्मरणेत्रिरात्रमाशौचम् ॥ ६७ ॥

( ६ ) **रामचन्द्रः** । नृणां बालानां अकृतचूडानांनैशिकी स्मृता निवृत्तचूडकानां आव्रतादेशात् आव्रतबन्धात् त्रिरात्राच्च शुद्धिरिष्यते ॥ ६७ ॥

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवाबहिः ॥ अलंकृत्यशुचौ भूमावस्थिसंचयनादृते ॥ ६८ ॥

( १ ) **मेधातिथिः** । ऊने असंस्कृतस्यद्वेवर्षे यस्य जातस्य उच्यते ऊनद्विवार्षिकस्तंप्रेतंबान्धवाबहिर्ग्रामंनिदध्युर्भूमौ निखातायांस्थापयेयुः । स्मृत्यन्तरे निखनेदितिपठ्यते । अलंकृत्य प्रेतालंकारैः । ऊनद्विवर्षेपि श्रूयमाणो ऽलंकारः समाचारात्कृतोपनयनादावपि विज्ञेयः । शुचौ यत्रास्थीनि भूप्रदेशे न सन्ति अस्थिसंचयरहितत्वेन या शुद्धा तत्र निखाय स्थाप्यः । श्मशाने किलास्थीनि संचितानि भवन्ति । अतएव तेन वचनेन ततोन्यत्र विधानमुच्यते । न पुनस्तादृशस्यास्थिसंचयोन कर्तव्यइत्येव वाक्यार्थः । अग्निसंस्काराभावादेवतदप्राप्तेः ॥ ६८ ॥

---

‡ सप्त=नव ( अ )   १ तिदिशंति=भिदधाति ( अ )

( ६७ ) विशुद्धि=मशुद्धि ॥ ( क, ख, ग ण )

‡ ( क )

(२) **सर्वज्ञनारायणः** । बहिर्ग्रामाद्भूमौ निदध्युरिति निखननमुक्तम् । अलंकृत्य स्रगादिना । अस्थिसंचयनादृते मांसापगमानन्तरमपि तन्न कार्यमित्यर्थः ॥ ६८ ॥

(३) **कुल्लूकः** । असंपूर्णद्विवर्षबालंमृतकृतचूडं मालादिभिरलंकृत्य ग्रामाद्बहिःकृत्वा विशुद्धायांभूमौ कालांतरे शीर्णदेहतया शक्यमस्थिसंचसनवर्जंबान्धवाः प्रक्षिपेयुः । विश्वरूपस्तु । यस्यां भूमावन्यस्यास्थिलचयनंन कृतंतस्यां निदध्युरिति व्याचष्टे ॥ ६८ ॥

(४) **राघवानन्दः** । असंपूर्णद्विवर्षस्यकृत्यमाहऊनेतिद्वाभ्यां । अलंकृत्य माल्यादिभिः । अस्थिसंचयनादृते दाहाभावादस्थिसंचयनाप्राप्तेःशुद्धायांभूमौनिक्षिपेदितिविश्वरूपः ॥ ६८ ॥

(५) **नन्दनः** । ऊनद्विवार्षिकमसंपूर्णद्वितीयवर्षम् । निदध्युर्निखनेयुः । बहिर्ग्रामसीम्नःअस्थिसंचयनादृतेअस्थिसञ्चयनरहितायांभूमावित्यर्थः ॥ ६८ ॥

(६) **रामचन्द्रः** । ऊनद्विवार्षिकं ऊने अपरिपूर्णे द्वे वर्षे यस्यासौऊन द्विवार्षिकः तंप्रेतंशुचौ भूमौ अवटंगर्तंकृत्वा गन्धमाल्यादिभिरलंकृत्य स्मशानादेर्बहिर्निदध्युः स्थापयेयुः बान्धवाः अस्थिसञ्चनादृते अस्थिसञ्चयनंन कर्तव्यम् । ब्रह्मपुराणे ॥ विप्रे द्विवर्षन्यूने तु मृते शूद्धिस्तु नैशिकी । द्व्यहा तु क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते सति ॥ निवृत्तचूडकेविप्रे त्रिरात्राच्छुद्धिरिष्यते । निवृत्तेक्षत्रिये षड्भिर्वैश्ये नवभिरेव च ॥ शूद्रे द्विवर्षन्यूने तु मृते शुद्धिस्तुपञ्चभिः । अतऊर्ध्वंमृते शूद्रे द्वादशाहा द्विशुध्यति ॥ षड्वर्षान्तमतीतोयःशूद्रश्चेन्म्रियतेयदि ॥ मासिकंचे त्याङ्गिरसभाषितम् ॥ ६८ ॥

**नास्य कार्योऽग्निसंस्कारोन च कार्योदकक्रिया ॥ अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥६९॥**

(१) **मेधातिथिः** । काष्ठवदिति निरपेक्षतामाह । श्राद्धमपि न कर्तव्यंनचोदकं उदकक्रियानिषेधेन श्राद्धनिषेधः सिद्धः अङ्गाङ्गिभावात् । अतः समाचारप्रसिद्धः । श्राद्धनिषेधोलिङ्गेन साधयितव्यः। अन्येतु स्मृत्यन्तरदृष्टनिखननप्रतिषेधार्थंवर्णयन्ति । ततश्च विकल्पः । क्षपेयुः उदास्येयुः शास्त्रचोदितंव्यापारंन कुर्यात् ॥ ६९ ॥

(२) **सर्वज्ञनारायणः** । उदकक्रिया पिण्डमप्युपलक्षयति काष्ठवदिति । यमसूक्तपाठादिस्मृत्यन्तरसिद्धमनुप्रेतस्य कार्यमपि न कर्तव्यमित्यर्थः । आरण्यइतिचारण्यमध्यएव निखननंमुख्यं तदभावे बहिर्ग्रामादितिदर्शितम् । क्षपेयुः क्षपयेयुस्त्र्यहमाशौचेन तच्छवनिखननकारिणःसपिण्डाः इतरसपिण्डानांतु यथोक्तमेव ॥ ६९ ॥

(३) **कुल्लूकः** । अस्योनद्विवार्षिकस्याग्निसंस्कारोन कर्तव्यः । नाप्युदकक्रिया कर्तव्या । उदकदाननिषेधोऽयंश्राद्धादिसकलप्रेतकृत्यनिवृत्त्यर्थः । किंत्वरण्ये काष्ठवत्परित्यज्य काष्ठवदितिशोकाभावोऽभिहितः । यथाऽरण्ये काष्ठंपरित्यज्य शोकोन भवति । एवंत्यक्त्वा त्र्यहंक्षपेत् त्र्यहाशौचंकुर्यात् । अयंचाकृतचूडस्य त्र्यहाशौचविधिः । पूर्वोक्तैकाहाशौचविकल्पपरः सच व्यवस्थितोवृत्तस्याध्यायादियुक्तस्यैकाहः । तद्रहितस्य त्र्यहः । यद्यपि मनुना परित्यागमात्रंविहितं तथाप्यूनद्विवार्षिकंनिखनेदिति याज्ञवल्क्यवचनाद्विशुद्धभूमौ निखायैव त्यक्तव्यः ॥ ६९ ॥

(४) **राघवानन्दः** । तदेवाह नेति । अरण्ये काष्ठवदितिस्थानविकल्पउपेक्षायां दृष्टान्तोवा । ऊनद्विवर्षस्य कृतचूडस्य त्र्यहमाशौचमित्यर्थः ॥ ६९ ॥

(५) **नन्दनः** । अस्योनद्विवार्षिकस्यनिखातस्य प्रेतस्यनकेवलंनिखननमेव संस्कारः किंतु त्यागोऽप्युत्तरार्धेनोच्यते । नियमैःकालयापनंक्षपणम् । त्र्यहमाशौचवान्भवेदित्यर्थः ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । अस्य ऊन द्विवर्षस्य अग्निसंस्कारोन कर्तव्यः । उदकक्रिया जलाञ्जलिक्रिया न कर्तव्या । अरण्ये काष्ठवदमन्त्रपूर्वकंत्यक्त्वात्र्यहंत्रिदिनपर्यन्तंआशौचं क्षपेरन् क्षपेयुः ॥ ६९ ॥

**नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ॥ जातदन्तस्य वा कुर्युर्नाम्निवापि कृते सति ॥ ७० ॥**

( १ ) **मेधातिथिः** । आत्रिवर्षस्येति आतृतीयाद्वर्षात्प्रतिषेधः न पुनश्चतुर्वर्षादौएवमर्थमेवादिशब्दंकेचित्पठन्ति । नात्रिवर्षस्य कर्तव्या त्रिवर्षादेरिति । समाचारश्चैवमेव । जातदन्तस्य वा कुर्युः उदकक्रियासाहचर्यादग्निसंस्कारोभ्यनुज्ञायते । ननुच विकल्पे कामचारः तत्र कः प्रयाससाध्यंचित्तक्षयकरमनुष्ठानपक्षमाश्रयेत व्यर्थस्तदुपदेशः । उच्यते । सर्वविलक्षणोयंपित्रोरधिकारः । प्रेतोपकारार्थमेतत्क्रियते ननैमित्तिकत्वादवश्यकर्तव्यमित्येतत्प्रागेवोक्तम् । तत्रावश्यकर्तव्यताप्रतिषेधोस्तीतोहनिश्चीयते । प्रेतोपकारार्थत्वमस्तीत्यभ्यनुज्ञानेन ज्ञाप्यते । तत्राकरणे नास्ति विध्यतिक्रमः । प्रेतोपकारस्त्वनुष्ठानाद्भवतीतिविधिप्रतिषेधयोर्नासमञ्जस्यम् ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । नात्रिवर्षस्येति अत्रोनद्विवर्षस्योदकक्रियांनिषिद्धामनूद्य प्रेताभ्युदयार्थित्वेन सा पुनर्न विधीयते । अत्रिवर्षः अप्रविष्टतृतीयवर्षः । जातदन्तस्यवा कुर्युरिति स्त्रीविषयम् । तेन स्त्रियां जातदन्तायांमृतायां तदभ्युदयार्थित्वेउदकंकार्यम् । अनिर्दिष्टविशेषत्वाच्च नपुंसकलिङ्गेनाभिधानं शवविशेषणतयाचेति । नाम्नि वापीतिपुत्रविषयं तस्य जन्ममात्रेणातिशयितोपकारकारित्वात् । नामव्यतिरेकेणचोदकदानानुपपत्तेर्नामकरणानन्तरंप्रेताभ्युदयार्थमुदकदानम् ॥ ७० ॥

( ३ ) **कुल्लूकः** । अप्राप्ततृतीयवर्षस्य पित्रादिसपिण्डैरुदकक्रिया न कर्तव्येति पूर्वत्र निषिद्धाप्युत्तरार्थमनूद्यते । जातदन्तस्य वा उदकदानंकर्तव्यं । नामकरणे वा कृते उदकक्रिया साहचर्यादग्निसंस्कारोप्यनुज्ञामात्रं । प्रेतपिण्डश्राद्धादिकंच । यद्यप्यकरणसंभवे करणं क्लेशावहं । तथापि करणाकरणयोराम्नानाज्जातदन्तकृतनाम्नोःकरणे प्रेतोपकारोभवत्यकरणे प्रत्यवायाभावइत्यवगम्यते ॥ ७० ॥

( ४ ) **राघवानन्दः** । अप्राप्ततृतीयवर्षस्य जातदन्तस्य कृतनाम्नउदकक्रियास्ति । तयाचाग्निसंस्कारप्रेतश्राद्धे उपलक्षिते तेषांकरणाकरणयोराम्नातत्वात्करणे प्रेतोपकारोऽकरणे न प्रत्यवायइति भावः । तत्रोदकक्रिया अपनःशोशुचदघमित्येनेन मन्त्रेण । एवंमातामहाचार्यप्रेतानामुदकक्रिया ॥ कामोदकंसखिप्रत्तास्वस्रीयश्वशुरर्त्विजम् इतियाज्ञवल्क्योक्तेः ॥ ७० ॥

( ५ ) **नन्दनः** । त्यागपक्षे किमुदकक्रिया कार्या नवेतिचोदनायामाह नात्रिवर्षस्येति । उत्तरार्धेनोदकक्रियाकार्येतिगृह्यतेकुर्युरुदकक्रियामितिविभक्तिविपरिणामः ॥ ७० ॥

( ६ ) **रामचन्द्रः** । अत्रिवर्षस्य अपरिपूर्णत्रिवर्षस्य बान्धवैरुदकक्रिया न कर्तव्या । जातदन्तस्य स्त्रीशवस्य ॥ ७० ॥

**सब्रह्मचारिण्येकाहमतीते क्षपणंस्मृतम् ॥ जन्मन्येकोदकानांतु त्रिरात्राच्छुद्धिरिष्यते ॥ ७१ ॥**

( १ ) **मेधातिथिः** । सब्रह्मचारी समानचरणोऽतएकोदकाअप्यासपिण्डेभ्यःपरिगृह्यन्ते तेषामितरेतरंजन्मनि सूतके त्रिरात्रम् । सद्यःशौचमपि स्मृत्यन्तरादुदकदायिनांविकल्पितंद्रष्टव्यम् ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । सब्रह्मचारिणि स्वाध्ययनसमकालंस्वगुरुणोपनीताध्यापिते । एकोदकाः समानोदकाः ॥ ७१ ॥

( ३ ) **कुल्लूकः** । सहाध्यायिनि मृते एकरात्रमाशौचंकतर्व्यम् । समानोदकानांपुनः पुत्रजनने सति त्रिरात्रेण शुद्धिर्भवति । त्र्यहानुदकदायिनइति मरणविषयमुक्तम् ॥ ७१ ॥

( ४ ) **राघवानन्दः** । किंचसेति । सब्रह्मचारिणि सहाध्यायिनि अतीतेमृते क्षपणमशौचस्य निवृत्तिः । सपिण्डानांदशाहत्वेपि समानोदकानांसूतके तन्यूनतामाहजन्मनीति त्र्यहादुदकदायिनइति मरणेउक्तत्वात् ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मणासहचरतीति सब्रह्मचारी सवेदाध्यायी सहाध्यायी अतीते मृते एकाहं आशौचं क्षपणंस्मृतम् जन्मन्येकोदकानांत्रिरात्राच्छुद्धिः ॥ ७१ ॥

**स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः॥ यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः॥७२॥**

**[ परपूर्वासु पुत्रेषु सूतके मृतकेषु च । मातामहे त्रिरात्रंस्यादेकाहंतु सपिण्डने ॥ १ ॥ ] +**

( १ ) **मेधातिथिः** । असंस्कृतायावाङ्मात्रेण प्रतिगृहीतानच विवाहितास्तासांमरणे बान्धवाःपतिपक्षास्त्रिरात्रेण सनाभयस्तु सपिण्डाःस्वपितृपक्षायथोक्तेन कल्पेन निवृत्तचौडकानामितिजातेरधिकारात्त्रिरात्रेण । अन्यैस्तूक्तंसोदर्यादशरात्रेणेति तेषांचाभिप्रायः अष्टवर्षायाःकन्यायादानंविहितं अदत्तायाश्च निवृत्तचौडकव्यपदेशाभावात्पुंसइवोपनीतस्य तदानींकल्पान्तरस्यानाम्नानाद्दशाहएव युक्तः । अन्यैस्तु पठितम् । अहस्त्वदत्तकन्यासुबालेषुच विशोधनमिति । तत्र व्याख्यातारःपञ्चादशाब्ददेशीयापि याप्रदत्ता कन्या तिष्ठेत्तदहरेवाशौचम् । यतोमुख्यमाम्नानमतिक्रम्य कालक्षपणे प्रमाणाभावात् । तत्रोच्यते । बालेषुचेतिकोस्यार्थोयावताउक्तमेव योगविभागे आदन्तजन्मनःसद्यइति नचैतेनतद्बाधितुंयुक्तंसामान्यरूपत्वादस्य तस्यच विशेषव्यवस्थापनरूपत्वादतोयमेकाहःपृथगुक्तोपि आचूडादेव व्यवतिष्ठते । सामान्यस्य विशेषापेक्षत्वात्तस्मादनार्षएवायमर्धश्लोकः प्रतिपद्यते स्पर्शविषयतया नेयम् । स्पर्शप्रतिषेधोहि मृतकसूतकयोर्बालस्यापि पुंवत्प्राप्तःतदर्थमेतदुक्तंस्यात् अहस्त्वदत्तकन्यासुबालेषुचविशोधनमिति । एवंच विषयसप्तम्याश्रिताभवति साच युक्ताकारकविभक्तित्वात् । इतरथा अध्याहृत्य भावलक्षणा सप्तमी व्याख्यायेत बालेषु मृतेषु जीवतांशुद्धिरिति नच तदुस्पर्शनादाशौचमेतेनैतत्सित्ध्यतीति विषयान्तरे तस्य च चरितार्थत्वात् भूमौपरिवृत्तत्वात् भूमौ परिवृत्तस्य च स्पर्शनसंभवात् । अविशेषोक्तौ कुतोविशेषप्रतिपत्तिरितिचेत् तस्याचमनकल्पोविद्यतइत्येतत्संनिधौ तादृशस्येवस्पर्शस्यप्रतीयमानत्वात् । तथाच रजस्वलास्पृष्टिनोबालस्य स्पर्शनंनेच्छन्ति । अथास्य विशेषेणस्यात् । तथा गौतमेन तदुक्तंस्वस्यांस्मृतौयुक्तमेवाधातुमेतस्य तस्माद्युक्तैवाधानकाललक्षणा ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । असंस्कृतानां अपरिणीतानां वाग्दत्तानां । बान्धवाः पतिपक्षाः । यथोक्तेन त्र्यहेण कल्पेन प्रकारेण वाग्दत्तानामेव स्त्रीणां सनाभयोज्ञातयः ॥ ७२ ॥

( ३ ) **कुल्लूकः** । स्त्रीणामकृतविवाहानांवाग्दत्तानांमरणेबान्धवाः भर्त्रादयस्त्र्यहेन शुध्यन्ति । वाग्दानंविना भर्तृपक्षेसंबन्धाभावात् । आश्रुतमपि वाग्दानान्तपर्यन्तंबोद्धव्यम् । सनाभयःपितृपक्षावाग्दत्तानांविवाहादर्वाङ्मरणे यथोक्तेनैव कल्पेनेत्येतच्छ्लोकपूर्वार्धोक्तेन त्रिरात्रेणैव शुध्यन्तीत्यर्थः । तदुक्तमादिपुराणे आजन्मनस्तु चूडान्तंयत्र कन्याविपद्यते । सद्यःशौचंभवेत्तत्र सर्ववर्णेषु नित्यशः ॥ ततोवाग्दानपर्यन्तंयावदेकाहमेव हि । अतःपरंप्रवृद्धानांत्रिरात्रमिति निश्चयः ॥

---

+ ( ण )

वाग्दाने तु कृते तत्र ज्ञेयंचोभयतस्त्र्यहम्। पितुर्वरस्य च ततोदत्तानांभर्तुरेव हि॥ स्वजात्युक्तमशौचंस्यान्मृतके सूतकेऽपि च॥ मेधातिथिगोविन्दराजौतु यथोक्तेनैव कल्पेनेतिनृणामकृतचूडानामित्येतदुक्तेन विधिना शुध्यन्तीति व्याचक्षाते। अत्रच व्याख्याने पुत्रवत्कन्यायामपि चूडाकरणादूर्ध्वमरणे त्र्यहाशौचंस्यात्। तच्चादिपुराणाद्यनेकवचनविरुद्धम् ॥ ७२ ॥

( ४ ) **राघवानन्दः**। किंच स्त्रीणामिति। असंस्कृतानां केवलवाग्दत्तानां बान्धवाः भर्तुःसंबधिनः वाग्दानंविना भर्तृपक्षैःसंबन्धाभावात् इतिभावः। दत्तानांभर्तुरेवहीति भर्तृपक्षाणांकेवलंतासां। अपितुपितृपक्षाअपित्र्यहाच्छुध्यन्तीत्याह यथेति। सनाभयः सपिण्डाः यथोक्तेन त्रिरात्रेण। अवाग्दत्तानांतु अहस्त्वदत्तकन्यासु बालेषुच विशोधनमिति। अत्र अष्टवर्षान्यूनाकन्य बालश्चद्विवर्षान्न्यूनः॥ ७२ ॥

( ५ ) **नन्दनः**। असंस्कृतानामनूढानांचौलादूर्ध्वमरणे सनाभयःसोदराःयथोक्तेन दशरात्रेण शुध्यन्ति॥ ७२ ॥

( ६ ) **रामचन्द्रः**। स्त्रीणांकन्यकानां असंस्कृतानांअपरिणीतानांवाग्दत्तानांबान्धवाः पतिपक्षीयाः त्र्यहाच्छुध्यन्ति तद्यथा अकृतचूडायां सद्यःशौच वाग्दानादूर्ध्वंसंस्कारात्प्राक्पतिपक्षे पितृपक्षेचत्रिरात्रमेव संस्कृतासु स्त्रीषु नाशौचंपितृपक्षे। प्रसव मरणे चेत्पितृगृहे प्रसव एकरात्रं मरणे त्रिरात्रमित्यर्थः। यथोक्तेन त्र्यहेन कल्पेन प्रकारेण सनाभयः भ्रात्रादयः शुध्यन्ति॥ ७२ ॥

**अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्॥मांसाशनं च नाश्नीयुः शयीरंश्च पृथक्क्षितौ॥७३॥**

( १ ) **मेधातिथिः**। क्षारलवणंच यवक्षारादिक्षारं लवणं सैन्धवादितन्नभुञ्जीरन् लवणविशेषणंवा क्षारग्रहणं तेनसैन्धवस्याप्रतिषेधः। निमज्जनंच नदीतडागादौचतीर्थस्नानमङ्गपरिघर्षणादिवर्जनम्। मांसाशनंच यावदाशौचं स्मृत्यन्तरात्प्रतिषिध्यते। एवंपठ्यते नस्त्रियमुपेयुर्नमार्जयेयुर्नमांसमश्नीयुः। गृह्यकारस्तु त्र्यहमनश्नन्तआसीरन् क्रीतोत्पन्नेन वा वर्तेरन्नित्याहशयीरंश्च स्थण्डिले परसंगवर्जं। सूतकेपि ब्रह्मचर्यस्मृत्यन्तरे प्रदर्शितम्॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः**। क्षारः सर्जिकादिः लवणंसैन्धवादि तदन्यान्नाशनाः। निमज्जेयुरुदकदानार्थम्। तेसपिण्डाः। त्र्यहमिति दशाहस्नानाशक्तौ निमज्जनमात्रेणान्वीयते। अन्यत्तु सर्वंयावद्दशाहमेव। मांसाशनं मांसरूपमशनीयम्। पृथगेकैकं क्षितौ क्षितिस्पृष्टस्रस्तरादौ न खट्वादौ॥ ७३ ॥

( ३ ) **कुल्लूकः**। क्षारलवणंकृत्रिमलवणंतद्रहितमन्नमश्नीयुः। त्रिरात्रंनद्यादौ स्नानमाचरेयुः। मांसंच न भक्षयेयुः। भूमौ चैकाकिनःशयनंकुर्युः॥ ७३ ॥

( ४ ) **राघवानन्दः**। उभयपक्षिणांनियममाह अक्षारेति। मांसाशनं मांसयुक्तमशनमन्नंपृथक्क्षितावेव। आचम्याग्निंचसलिलंगोमयंगौरसर्षपान्। प्रविशेयुःसमालभ्य कृत्वाश्मनि पदंशनैरित्यपि याज्ञवल्क्यवचनात्कार्यमुक्तरकृत्यम् ॥ ७३ ॥

( ५ ) **नन्दनः**। शावाशौचवतान्नियमानाह अक्षारेति। निमज्जेयुश्चतेन्वहमितिपाठः। ते शावाशौचिनः॥ ७३ ॥

( ६ ) **रामचन्द्रः**। अक्षारलवणान्नाः अक्षारं अलवणं अन्नं येषांते अक्षारलवणाः पुरुषाः स्युः क्षारलवणसंयुक्तान्नवर्ज्याःस्युस्तेआशौचिनः। त्र्यहंनिमज्जेयुः तद्यथा दशाहस्नानाशक्तावुदकदानार्थं त्र्यहंनिमज्जन्ति कुशादिभिराच्छादितायांक्षितौपृथक्शयीरन्॥ ७३ ॥

सन्निधावेषवै कल्पः शावाशौचस्य कीर्तितः ॥ असन्निधावयं ज्ञेयोविधिः संबन्धिबान्धवैः ॥७४॥

( १ ) मेधातिथिः । संनिधौ यत्रासौ मृतस्तत्र तत्संनिधीयते । अन्येतु मयाणकाले ये संनिहितास्तेषामेवायंविधिरित्याहुः । संबन्धिनः समानोदकाः । बान्धवाः सपिण्डाः । अन्येतु ग्रामान्तरेनगरान्तरेऽवस्थानमसंनिधानंमन्यन्ते-तेषांच ॥ ७४ ॥

( २ ) सर्वज्ञनारायणः । कल्पः प्रकारः । अयं वक्ष्यमाणः । संबन्धिनः सब्रह्मचारिसमानोदकाद्याः । बान्धवा-ज्ञातयः ॥ ७४ ॥

( ३ ) कुल्लूकः । मृतस्य सन्निधावेकस्थानावस्थानादहःपरिज्ञाने शावाशौचस्य विधिरयमुक्तश्च देशान्तरावस्था-नादज्ञाने सत्ययंवक्ष्यमाणोविधिःसंबन्धिबान्धवैर्ज्ञातव्यः । संबन्धिनःसपिण्डाः समानोदकाबान्धवाः ॥ ७४ ॥

( ४ ) राघवानन्दः । वर्तिष्यमाणार्थंवृत्तंकीर्तयति । सन्निधाविति । मृतस्य सन्निधानावस्थानात्तदहःपरिज्ञान उक्तःकल्पोविधिः । देशान्तरावस्थानादज्ञाने संस्कुतानांतु संबन्धिबान्धवैः सपिण्डसमानोदकैःकार्योवक्ष्यमाणविधिरितिशेषः ॥ ७४ ॥

( ५ ) नन्दनः । एतच्छब्देन दन्तजातइत्यारभ्योक्तस्य सकलस्याशौचकल्पस्य परामर्शः । नानान्तरोक्तस्यैव । अ-यंवक्ष्यमाणः । संबन्धिनोजामातृदौहित्रादयः । बान्धवाज्ञातयः ॥ ७४ ॥

( ६ ) रामचन्द्रः । सन्निधौ समीपे मरणएवएषवैकल्पोविधिः शावाशौचस्यकीर्तितः असंनिधावयंविधिः संबन्धि-बान्धवैरितिसंबन्धिभिःसमानोदकैःबान्धवैः ज्ञातिभिः ॥ ७४ ॥

विगतं तु विदेशस्थं शृणुयाद्योह्यनिर्दशम् ॥ यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ७५ ॥

[ मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा ॥ अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥१॥† ]

( १ ) मेधातिथिः । देशोग्रामान्तरादिः पूर्ववत् । विगतं मृतं । अनिर्दशं उपलक्षणमेतद्यस्य यआशौचकालस्त-च्छेषंतस्याशौचम् । पुनर्दशरात्रग्रहणंश्लोकपूरणार्थम् । उत्पत्यपेक्षयाजन्ममरणयोराशौचकालविकल्पेनावश्यमपेक्षा यदा सूतकाद्युत्पन्नं तदाप्रभृति दशाहादिकल्पेन यदासपिण्डैर्ज्ञातमिति । अतश्च यदातिथिना ज्ञातंसूतकादि नतु गृह-स्थेन तदाप्यभोज्यमन्नंतथैवोत्पत्तिनिमित्तमात्रमिदमुभयत्रेति । दशाहमाशौचिनांततऊर्ध्वंत्रिरात्रैकाहाशौचिनांतु सचै-लस्नानजासद्यः शुचिः ॥ ७५ ॥

( २ ) सर्वज्ञनारायणः । विगतं मृतं विदेशोयत्र मृतस्तद्दिने न श्रूयते । अनिर्दशं अनतीततन्निमित्ताशौचम् । दशरात्रस्य तन्निमित्ताशौचस्य । दशरात्रपदमाशौचमात्रोपलक्षणमितिसंबन्धिबान्धवैरित्युभयप्रक्रमाद्गम्यते ॥ ७५ ॥

( ३ ) कुल्लूकः । विगतंमृतंविदेशस्थंविप्रकृष्टदेशस्थमनिर्दशमनिर्गतदशाहाद्यशौचकालं यः शृणोति सयदवशिष्टंदश-रात्राद्यशौचस्य तावत्कालमविशुद्धोभवति । विगतमित्युपलक्षणंजननेप्येतदवगन्तव्यम् । तथाचबृहस्पतिः । अन्यदेशमृ-तंज्ञातिंश्रुत्वा वा पुत्रजन्मच । अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति ॥ ७५ ॥

( ४ ) राघवानन्दः । विगतं विशिष्टंपरलोकगतं । तावदवशिष्टदिवसपर्यन्तं एतदप्युपलक्षणंजननस्य । अन्यदेशमृ-तंज्ञातिंश्रुत्वा वा पुत्रजन्मच ॥ अनिर्गतदशाहेतुशेषाहोभिर्विशुध्यतेति बृहस्पत्युक्तेः ॥ ७५ ॥

( ५ ) नन्दनः । विगतंमृतम् । दशरात्रग्रहणंएकाहादीनामप्युपलक्षणार्थम् ॥ ७५ ॥

---

† ( ण )

( ६ ) **रामचन्द्रः** । संबन्धिबान्धवैरित्युभयत्र तन्निमित्ताशौचमध्ये श्रवणे आशौचशेषेनैवशुद्धिः ॥ ७५ ॥

**अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत् ॥ संवत्सरे व्यतीते तु स्पृष्ट्वैवापोविशुध्यति ॥ ७६ ॥**

( १ ) **मेधातिथिः** । यस्य यः कृतआशौचकालोदशाहादिस्तस्यतदूर्ध्वंत्रिरात्रं । यस्यतु त्र्यहैकाहादिस्तस्य ततऊर्ध्वंसवाससः स्नानमात्रमेव । तथाचोत्तरत्रवक्ष्यति । सवासाइत्यादि । संवत्सरे अतीते अतिक्रान्ते स्पृष्ट्वैवापः स्नात्वा शुध्येदित्यर्थः । हस्तेनचसपादेनेत्यादिवचनात्सर्वाङ्गस्पर्शनं प्रतीयते तच्च स्नानमेव ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । अतिक्रान्ते दशाहइतितु दशाहपदंनोपलक्षकं । अतिक्रान्ते शृणुयादित्यनुषङ्गः एवंव्यतीतइत्यत्रापि । स्पृष्ट्वापः स्नात्वा । एतद्दशाहाशौचिनांसपिण्डनाम् । समानोदकादीनांत्वाशौचमध्येश्रवणे । आशौचशेषेणैवेति विगतंत्वित्यत्र सिद्धम् ॥ ७६ ॥

( ३ ) **कुल्लूकः** । नाशौचंप्रसवस्यास्ति व्यतीतेषु दिनेष्वपि ॥ इतिदेवलवचनान्मरणविषयंवचनमिदम् । सपिण्डमरणे दशाहाशौचेऽतिक्रांतेत्रिरात्रमशुद्धोभवति संवत्सरे पुनरतीते स्नात्वैव विशुध्यति । एतच्चाविशेषणाभिधानाच्चातुर्वर्ण्यविषयम् ॥ ७६ ॥

( ४ ) **राघवानन्दः** । दशाहादुत्तीर्णे त्वाह अतीति ॥ नाशौचंप्रसवस्यास्ति व्यतीतेषु दिनेष्वपीति देवलवचनान्मरण विषयंत्विदम् । सपिण्डमरणेदशाहोत्तरंत्रिरात्रंवर्षोत्तरंतुस्नानं । दशाहादुत्तीर्णेसंवत्सराभ्यन्तरेसमानोदकानांस्नानम्। एतच्चातुर्वर्ण्यसाधारणम् ॥ ७६ ॥

( ५ ) **नन्दनः** । दशाहेऽतिक्रान्तेवत्सरादर्वाक्त्रिरात्रमशुचिर्भवेत् । अत्रापिदशाहग्रहणमेकाहादीनामुपलक्षणम् । अपःस्पृष्ट्वैवस्नात्वैव ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । दशाहादिप्राप्तमशौचस्यापवादमाह अतिक्रान्तइति । दशाहे अतिक्रान्ते त्रिरात्रमशुचिर्भवेत् । व्यतीते संवत्सरे अपःस्पृष्ट्वा स्नानेन शुध्यति । तथा देवलः ॥ नाशुद्धिःप्रसवाशौचे व्यतीतेषु दिनेष्वपि । प्रोषिते कालशेषःस्यादशेषे त्र्यहमेवतु ॥ सर्वेषांवत्सरे पूर्णे प्रेते दत्त्वोदकंशुचिः ॥ सर्वेषां द्विजानां तत्राह ॥ मासत्रये त्रिरात्रंस्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वंस्नानेन शुध्यति ॥ पितरौ चेन्मृतौस्यातां दूरस्थोपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहंसूतकीभवेत् ॥ ७६ ॥

**निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ॥ सवासाजलमाप्लुत्य शुद्धोभवति मानवः ॥ ७७ ॥**

( १ ) **मेधातिथिः** । समानोदकानामयंविधिस्त्र्यहैकाहपक्षेच सपिण्डानामपि । सवासावाससा सहितः । जलमाप्लुत्य स्नात्वेत्यर्थः ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । ऊर्ध्वंत्वाहनिर्दशमिति । निर्दशमतीततदाशौचकालं । ज्ञातिः समानोदकः । पुत्रस्य स्वपुत्रस्य जन्म निर्दशमेव । शुद्धोऽपगताशौचः । एवमन्येषामपि त्रिरात्रपक्षिण्याद्याशौचिनामूह्यम् । ज्ञातिपदस्यासपिण्डोपलक्षणार्थत्वात् । एवंदशाहव्यतिरिक्ताशौचनिमित्तस्य तन्मध्ये श्रवणे शेषेण शुद्धिरूर्ध्वंतु श्रवणे स्नानमात्रमिति सिद्धम् ॥ ७७ ॥

( ३ ) **कुल्लूकः** । दशाहाशौचव्यपगमे कर्मानर्हत्वलक्षणस्य त्र्यहाशौचस्योक्तत्वात्तदङ्गास्पर्शविषयम् । निर्गतदशाहसंपिण्डमरणंश्रुत्वा पुत्रस्य जन्म च सचैलंस्नात्वा स्पृश्योभवति ॥ ७७ ॥

( ४ ) **राघवानन्दः** । दशाहादुत्तीर्णेसपिण्डमरणे पुत्रजन्मनि च स्नानमात्रमितिमेधातिथिः । मानवइति विशेषणान्निर्दशमिति स्वस्वजात्युचिताशौचपरंशुद्धः स्पृश्यः । कर्माधिकारिता तु त्र्यहोत्तरमितिकुल्लूकः ॥ ७७ ॥

( ५ ) **नन्दनः** । निर्दशंज्ञातिमरणंसंवत्सरादर्वागपिश्रुत्वा । अयंपूर्वोक्तस्य त्रिरात्राशौचस्य विकल्पः ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । मानवः समानोदकः ॥ ७७ ॥

**बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ॥ सवासाजलमाप्लुत्य सद्यएव विशुध्यति ॥ ७८ ॥**

( १ ) **मेधातिथिः** । बालेदन्तजाते सूनौ देशान्तरस्थे पृथक्पिण्डे । चसंस्थितइत्येकार्थानि पदानि । पृथक्पिण्डः समानोदकइतियावत् । तस्मिन्देशान्तरस्थे संस्थिते सद्यः शुद्धिः । संनिधौ त्र्यहात्तूदकदायिनइत्युक्तम् ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र बालमरणे विशेषमाह बालइति । यदि सपिण्डोदेशान्तरस्थोबालोऽकृतचौलोम्रियते यदि वाबालएव पृथक्पिण्डः समानोदकमातुलतत्तुल्यस्यालादिः सबन्धी म्रियते तदा सचैलस्नानमात्रमित्यर्थः । बालपदस्योभयत्रान्वयार्थंचकारद्वयम् ।

इहच दशाहप्रक्रमेण तदतिक्रमे संवत्सरमध्ये श्रवणे तत्त्रिभागत्र्यहाशौचविधानात्तदनुसारेणगुणोत्कर्षादिकृतचतुरहाद्याशौचान्तश्रवणेपि तत्त्रिभागेनाशौचव्यवस्थाग्राह्या तेषांदशाहाशौचस्थानपतितत्वात् ॥ ७८ ॥

( ३ ) **कुल्लूकः** । बालेऽजातदन्ते मृते जातदन्ते नृणामकृतचूडानामित्येकाहोरात्राभिधानाद्देशान्तरस्थे च सपिण्डे मृतइत्येकाहाशौचविषयम् । पूर्वश्लोके दशाहाशौचिनस्त्र्यहविधानात्पृथक्पिण्डे समानोदके त्रिरात्रमुक्तम् । तत्र त्रिरात्रव्यपगमे सर्वेष्वेषु सचैलंस्नात्वा सद्योविशुद्धोभवति ॥ ७८ ॥

( ४ ) **राघवानन्दः** । जातदन्तबाले देशान्तरस्थेदशाहाभ्यन्तरेपिसद्यः शौचमित्याह बालेति । पृथक्पिण्डे सपिण्डातिरिक्ते समानोदके । सन्निधौ तु त्र्यहादुदकदायिनइत्युक्तम् ॥ ७८ ॥

( ५ ) **नन्दनः** । बालेऽजातदन्ते । प्राग्षष्ठमासइत्यर्थः । संस्थितेमृते । सपिण्डःसद्यएवस्नानेन शुध्यति । देशान्तरस्थे च सपिण्डे पृथक्पिण्डे समानोदके च संस्थितेदशाहादूर्ध्वंश्रुत्वा सद्यः शुध्येत्स्नानेन ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । बालेऽजातदन्ते । अकृतचूडे देशान्तरस्थेच पुनः पृथक्पिण्डेऽस्यसपिण्डे समानोदकमातुलतत्तुल्यशालकादौ ॥ ७८ ॥

**अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ॥ तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशम् ॥ ७९ ॥**

( १ ) **मेधातिथिः** । अत्रापिदशाहग्रहणमाशौचकालोपलक्षणार्थम् । यस्य यआशौचकालस्तस्मिन्ननिवृत्ते यदिपुनरन्यदाशौचनिमित्तमुत्पद्यते तदा पूर्वशेषेणैव शुद्धिर्नत्वन्तरानिपतितंयत्तदीयादन्हःप्रभृतिदशाहादिगणना कर्तव्या । तथाच गौतमः । तच्चेदन्तःपुनरापतेत्तच्छेषेण शुध्येयुरिति । मरणजन्मनी इतिसमासे यत्नमन्तरेण क्रमाप्रतिपत्तेर्व्यन्तरेणाप्युपनिपातनप्राप्तौ समाचारात्समानजातीयएवेतिद्रष्टव्यम् । पुनःशब्दश्च समानजातीयापेक्षया समर्थतरोभवति । विप्रग्रहणमप्याशौचिनामुपलक्षणार्थं स्मृत्यन्तरेतु विहितं रात्रिशेषे द्वाभ्यांप्रभाते तिसृभिरिति । एतस्य ब्राह्मणस्य प्रेतस्पर्शे दशरात्रमाशौचमिति । प्रकृत्य नचेदन्तरा म्रियेत जायेत वा शिष्टैरेव दिवसैःशुद्ध्येतेतीयंस्मृतिः समानजातीयासमानजातीयभेदंनानुमन्यते ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । अन्तर्दशाहे पुनर्मरणमेकं दशाहाशौचमध्ये तादृङ्मरणानन्तरं पुनर्जननंतु तादृग्जनने जननान्तरं तद्यदि पूर्वाशौचदशमदिनात्प्राक्पतेत्तदा यावत्पूर्वाशौचमनिर्दशमनतीतं तावदेवाशुचिः । पुनर्मरणं पुनर्जन्मचपुनं मरणजन्मनी । अत्रापिदशाहपदंसंपूर्णशौचोपलक्षणं तेन क्षत्रियादीनामपिस्वशावाशौचमादायैवमेव व्यवस्था । किंचात्र सर्वत्र विष्ण्वादिस्मृतिदर्शनात्पूर्वाशौचशेषदिनआशौचान्तरपाते दशाहोर्ध्वमपि दिनद्वयमाशौचं तद्दिवसीयाष्टमयामे त्वाशौचान्तरपाते दिनत्रयमिति प्रपञ्चितंचैतच्छुद्धिदीपिकायाम् विस्तरभयान्नात्र लिख्यते ॥ ७९ ॥

( ३ ) **कुल्लूकः** । दशाहादिमध्ये यदि पुनर्मरणे मरणंजनने जननंस्यात्पुनःशब्दात्सजातीयावगमात् तदातावत्कालमेव विप्रादिरशुद्धःस्यात् । यावत्पूर्वजातदशाहाद्यशौचंनापगतंस्यात्तावत्पूर्वाशौचव्यपगमेनैव द्वितीयेऽपि मृतके सूतके चशुद्धिरित्यर्थः ॥ ७९ ॥

( ४ ) **राघवानन्दः** । किंच दशाहादिमध्ये यदि मरणंजननंतदा पूर्वाशौचनिवृत्तावनयोर्निवृत्तिरित्याह अंतर्दशाहेति। तत्पूर्वाशौचं अनिर्दशंयावत्तावद्विप्रोऽशुचिः स्यादित्यन्वयः । विप्रपदंचातुर्वर्ण्यपरम् ॥ अन्तराजन्ममरणे शेषाहोभिर्विशुध्यतीति याज्ञवल्क्योक्तेः ॥ ७९ ॥

( ५ ) **नन्दनः** । तत्पूर्वाशौचम् ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । पुनर्दशाहाद्याशौचप्राप्तौ तदपवादमाह अन्तरिति। अन्तर्दशाहेमरणजन्मनीमरणे स्यातांचेत् यावद० निर्दशंस्यातावद्विप्रोऽशुचिःस्यात्। जनने मरणे जाते पूर्वाशौचावशिष्टैरहोभिर्नविशुध्यति । उशनाअप्याह ॥ स्वल्पाशौचस्य मध्ये तु दीर्घाशौचंभवेद्यदि । न पूर्वेणैव शुद्धिःस्यात्सकालेनैव शुध्यति ॥ तथा अङ्गिराअप्याह ॥ सूतके मृतकंचेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकंशौचंकुर्यान्न सौतकं ॥ षट्त्रिंशन्मतेपि ॥ शावाशौचे समुत्पन्ने सूतकंतु यदाभवेत् । शावेन शुध्यते सूतिर्नसूतिःशावशोधिनी ॥ यदि स्यात्सूतके सूतिर्मरणे वा मृतिर्भवेत् । शेषेणैवभवेच्छुद्धिरहःशेषे त्रिरात्रिकमिति ॥ अपवादमाह ॥ मातर्यग्रेप्रमीतायामशुद्धोम्रियते पिता । पितुःशेषेण शुद्धिःस्यान्मातुर्मातृकपक्षिणी ॥ कौशिकः ॥ पितुर्दशाहमध्ये तु मातुश्चे न्मरणंयदि । न तिलोदकादिकंकर्म दाहमन्त्राहुर्तिविना ॥ पितृकर्म समाप्याथ मात्राशौचंच पक्षिणीम् । मातुःक्रियांततःकुर्यात्तिलाञ्जल्यादिकंच यत् ॥ पितुराशौचंसमाप्य सपिण्डीकरणान्तंकृत्वा पश्चान्मातुः पक्षिणीं पक्षिणीमध्ये सर्वाःक्रियाः कार्याः । अथवा ॥ आद्यंहिषोडशश्राद्धंसपिण्डीकरणान्न हि । मातुः ततःकुर्यात्पितुः पुत्रः षोडशंवा सपिण्डनम् । अथैकस्मिन्दिने चाथ सपिण्डीकरणंतयोरिति ॥ ७९ ॥

**त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ॥ तस्य पुत्रे च पत्न्यांच दिवारात्रमिति स्थितिः॥८०॥**

( १ ) **मेधातिथिः** । आचार्यउपनेता तस्मिन्संस्थिते त्रिरात्रंशिष्यस्य तस्याचार्यस्य पुत्रे पत्न्यांच संस्थितायामहोरात्रम् ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । आचार्ये उपनीयाध्यापके ॥ ८० ॥

( ३ ) **कुल्लूकः** । आचार्ये मृते सति शिष्यस्य त्रिरात्रमाशौचंवदन्ति । तत्पुत्रपत्न्योश्च मृतयोरहोरात्रमित्येषा शास्त्रमर्यादा ॥ ८० ॥

( ४ ) **राघवानन्दः** । आचार्येउपनेतरि । ज्ञातिभिन्ने त्रिरात्रंव्याप्याशौचंशिष्यस्येत्याहुः ॥ ८० ॥

( ६ ) **रामचन्द्रः** । आचार्ये संस्थिते मृते त्रिरात्रमाशौचं । आचार्यपुत्रे आचार्यपत्न्यांवा मृते दिवारात्रं अहोरात्रमित्यर्थः ॥ ८० ॥

**श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् ॥ मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥ ८१ ॥**

( १ ) **मेधातिथिः** । वेदशाखाध्यायी श्रोत्रियः । उपसंपन्नः मैत्र्या प्रयोजनेन वा केन चित्संगतः शीलेन युक्तो- वा । पूर्वंतु सब्रह्मचारिण्येकाहमगृहीतवेदे दृष्टम् । अभिधानकोशे तु उपसंपन्नोमृतपर्यायः । बहुकालत्वादाशौचस्य पूर्वैव व्याख्याज्यायसी । अन्येतु श्रोत्रिये मातुले त्रिरात्रमित्येव संबध्नन्ति पक्षिणींरात्रिमिति शिष्यादिभिः । बान्धवाः शालकमातृष्वस्रेयादयः । यदातु मातुले पक्षिणीमितिसंबन्धस्तदा मातुलबान्धवत्वादेव सिद्धा पक्षिणी पुनर्वचनंनित्या- र्थं तेनान्येषु बान्धवेषु यथाकामम् ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । उपसंपन्ने प्रातिविश्ये श्रोत्रिये मृते । पक्षिणीं पक्षाविव दिनद्वयेनोभयतोयुक्तांरात्रिम् । शिष्ये मृते आचार्यस्य पक्षिणी । आगामिवर्तमानाहर्युक्तायांनिशि पक्षिणीति मालाकारः । एवमृत्विजि याज्यस्य तथा बान्धवेष्वात्मबन्धुषु मातुलपितृष्वसृमातृष्वसृसुतेषु ॥ ८१ ॥

( ३ ) **कुल्लूकः** । वेदशास्त्राध्यायिनि उपसंपन्ने मैत्रादिना तत्समीपवर्तिनि तद्गृहवासिनीत्यर्थः । तस्मिन्मृते त्रिरात्रेण शुद्धोभवति । मातुलर्त्विक्शिष्यादिषु पक्षिणीरात्रिंव्याप्याशौचं द्वेअहनी पूर्वोत्तरे पक्षाविव यस्याःसा पक्षिणी ॥ ८१ ॥

( ४ ) **राघवानन्दः** । किंच श्रोत्रियइति । उपसंपन्ने मैत्रादिना समीपवर्तिनि स्वशाखाध्यायिनि वा । पक्षिणी पक्षाविवाहनी यस्यादिवसद्वयसंदंशिनीरात्रिस्तांबान्धवेषुपैतृष्वस्रीयादिषु ॥ ८१ ॥

( ५ ) **नन्दनः** । उपसंपन्नः स्वगृहेवासी । संस्थितइत्यनुषङ्गः । बान्धवा मित्राणि ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । श्रोत्रिये प्रातिवेश्ये स्वगृहपार्श्ववर्तिनि साङ्गवेदाध्येतरि उपसंपन्नेमृते त्रिरात्रमशुचिः । मातुले पक्षिणीं रात्रिंच पुनः शिष्यर्त्विग्बान्धवेषु पितृष्वस्रादिपुत्रादिषु पक्षिणीम् ॥ ८१ ॥

**प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः ॥ अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ॥८२॥**

( १ ) **मेधातिथिः** । राजशब्दोयमभिषेकादिगुणयोगिनि वर्णमात्रे लक्षणया वर्तते यतआह । यस्यस्याद्विषयेस्थितः । जातिविशेषावच्छिन्नविषयेश्वरवचनत्वे लक्षणा नच शब्दार्थः । सज्योतिः सह ज्योतिषा वर्तते दिवा प्रेते दिवैव रात्रौतु तन्नास्ति । एवंरात्रौ रात्रिरेव नाहः इदमेव ज्ञापकमन्यत्र रात्रिग्रहणेहर्ग्रहणेप्यहोरात्रप्रतिपत्तेः । यथा रात्रिभिर्मासतुल्या- भिरूयहमेकाहमिति । अन्हाचैकेनेत्यत्र तु रात्रिग्रहणंपादपूरणार्थं रात्रावग्निर्ज्योतिः । एवंह्यग्निहोत्रब्राह्मणे अग्निनावै तेजसातेजस्विन्यादित्येन तेजसा भवति । अश्रोत्रियेऽवेदाध्यायिनि अनूचाने कृत्स्नमहः । रात्रौनभवत्येव उत्पन्नेपि रात्रौ निमित्ते कथंपुनरश्रोत्रियेनूचाने एवंहि स्मर्यते प्रवरे स्वाङ्गेधीतीति सत्यं प्रवक्ताप्यनूचानउच्यते । तेनैवंकथंचि- दङ्गादिग्रन्थार्थान्यः प्रवक्ति तस्मिन्नयमहर्विधिः । उपसन्नेवा उपसन्ने च गुरौ पूज्यत्वेन मुख्येआचार्येवा विध्यन्तरभा- वात् केचितु अश्रोत्रियेत्वित्यत्र नत्रंसंबध्नन्ति इह नञःप्रश्लेषेण योन्येषामुपाध्यायस्तस्य च न कश्चित्तत्रेमंविधिमाच- क्षते ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । राजन्ये क्षत्रिये स्वनिवासदेशाधिपतौ मृते सज्योतिः सूर्यनक्षत्रयोरन्यतरेण येनोप-

---

८२ यस्य स्याद्विषये स्थितः=यस्य यद्विषये स्थितिः ( ख )

=यस्य स्याद्विषये स्थितिः ( घ, च, ) । ( ख ) चिन्हितपुस्तके टीकायामपिएवमेव ।

लक्षिते काले निमित्तोत्पत्तिस्तज्ज्योतिरवस्थानपर्यन्तम् अश्रोत्रिये उपसन्नइति व्यवहितेनान्वयः तेन श्रोत्रिये प्रातिवेश्ये-मृते एकरात्रमित्यर्थः। अनूचाने साङ्गवेदाध्येतरि गुरौ वेदार्थव्याख्यातरि ॥ ८२ ॥

( ३ ) **कुल्लूकः**। यस्य देशेब्राह्मणादिःस्थितःतस्मिन्राजनि कृताभिषेके क्षत्रिये मृते सज्योतिराशौचंस्यात्। सह ज्योतिषा वर्ततइति सज्योतिः। यदि दिवा तदा यावत्सूर्यज्योतिस्तावदाशौचं। यदि रात्रौ मृतस्तदा यावत्तारकाज्योतिस्तावदाशौचम्। श्रोत्रिये त्रिरात्रमुक्तम्। अश्रोत्रिये पुनस्तद्गृहे मृते कृत्स्नंदिनमात्रमाशौचं। नतु रात्रावपि। रात्रौमृते-रात्रावेवेत्यवगन्तव्यम्। साङ्गवेदाध्यायिनि स्वल्पंवा बहु वा यस्येत्येतन्निर्दिष्टे गुरावप्यहर्मात्रमेव ॥ ८२ ॥

( ४ ) **राघवानन्दः**। राजादित्रयमरणे आशौचमाह प्रेतइति। विषये देशेइति लिङ्गात्प्रजापालनकर्तरि चातुर्वर्ण्येन ज्योतिर्मरणावधि यावत्सूर्योनक्षत्रंवा परेद्युस्तावदाशौचं अश्रोत्रिये संपन्ने कृत्स्नमित्यहोरात्रम्। अनूचाने साङ्गवेदाध्यायिनि गुरौ वेदातिरिक्ते अल्पंवा बहुवायस्य श्रुतस्योपकरोतियइत्युक्तलक्षणे ॥ ८२ ॥

( ५ ) **नन्दनः**। यस्य राज्ञोविषये देशेस्थितिस्तस्मिन्राजनि प्रेते स्वस्य सज्योतिर्ज्योतिःसहितमाशौचम्। दिवाचे-ज्ज्योतिःशब्दः सूर्यवचनः नक्तंचेन्नक्षत्रवचनः। अश्रोत्रियउपसंपन्ने श्रोत्रियेऽगुरावनुपसंपन्नेऽनूचाने चैकाहम् ॥ ८२ ॥

( ६ ) **रामचन्द्रः**। राजनि प्रेते सति सज्योतिः सूर्यनक्षत्रयोरन्यतरेणयेनोपलक्षिते काले निमित्तोत्पत्तिस्तज्ज्योति-रवस्थानपर्यन्तं। यस्य स्याद्विषये स्थितिः यस्य विषये देशे स्थितिः। अश्रोत्रिये मृतेऽहःकृत्स्नं। समग्रं अनूचाने साङ्गवेदाध्येतरि तथा गुरौ वेदशास्त्रार्थव्याख्यातरि मृते अहः कृत्स्नंआशौम् ॥ ८२ ॥

**शुध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः॥ वैश्यः पञ्चदशाहेन शूद्रोमासेन शुध्यति ॥ ८३ ॥**

**[ क्षत्रविट्शूद्रदायादास्युश्चेद्विप्रस्य बान्धवाः। तेषामशौचं विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ १ ॥ ]§**

**राजन्यवैश्ययोश्चैवं हीनयोनिषु बन्धुषु। स्वमेव शौचं कुर्वीत विशुद्ध्यर्थमिति स्थितिः ॥ २ ॥‡**

**विप्रः शुध्येद्दशाहेन जन्महानौ स्वयोनिषु। षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ ३ ॥‡**

**सर्वेचोत्तमवर्णास्तु शौचं कुर्युरतन्द्रिताः। तद्वर्णं विधिदृष्टेन स्वं तु शौचं स्वयोनिषु ॥ ४ ॥‡ ]**

( १ ) **मेधातिथिः**। क्षत्रियादीनांमागुक्तवृत्ताद्यपेक्षत्र्यहचतुरहादिकल्पव्यावृत्त्यर्थमिदम्। ब्राह्मणे दशाहस्त्वनूचत-एव। अत्र त्विदंवाक्यंकेन क्षत्रियादीनां द्वादशाहेन नियतकालप्राप्तिर्येन कल्पान्तरव्यावृत्त्यर्थतावगम्यते। इयमेवह्येषा मियत्कालस्य प्रापकंसत्यस्मिंस्तत्र दशाहोयमाशौचकालस्तदुपलक्षणार्थो विज्ञायते। ननुच सत्यप्यस्मिंस्तस्यो पलक्षणार्थता सत्यपि चातुर्वर्ण्याधिकारे यस्यैव दशाहउक्तस्तस्यैवेतरेकल्पाइति। स्मृत्यन्तरेच ब्राह्मणविवक्षयैवोक्तम्। एकाहाद्ब्राह्मणस्यस्यात्स्वाध्यायेत्यादि। तेषांतु स्मृत्यन्तरे यानि कल्पान्तराण्याम्नातानि विकल्पन्ते। एकादशे आशौ-चकालः कश्चिद्विवरणकारआह। शुध्येद्विप्रोदशाहेनेति अत्राहर्ग्रहणंविवक्षितं तेन दशम्यांरात्रौ नास्त्याशौचं। ततः पूर्वेद्युर्निमन्त्रणादि युक्तं। अग्निचाधास्यतः पौर्वाह्णिकजागरणादिनाशौचउपक्रान्तंभविष्यति। तदयुक्तं अहर्विवक्षा यामाद्यास्वपि रात्रिषुनस्यादाशौचम्। अथ दशाहंशावमिति एतस्मात्तत्र भविष्यति। अत्राविवक्षायांकिंप्रमाणं तस्मादहः शब्दोऽयमहोरात्रवचनइतिप्रदर्शितम्। तथाच पूर्वश्लोके ऽहः कृत्स्नमिति रात्रिनिवृत्त्यर्थंकृत्स्नग्रहणम् ॥ ८३ ॥

§ ट, ड, ‡ ( ञ, ड ) चिन्हितपुस्तकेचत्वारएव।

( २ ) **सर्वज्ञनारायणः** । दशाहस्थाने क्षत्रियादिषु विशेषाभिधानार्थं विप्रसंबन्धेन विहितंदशाहमनूद्य विशेषमाह शुध्येद्विप्रइति ॥ ८३ ॥

( ३ ) **कुल्लूकः** । उपनीतसपिण्डमरणे संपूर्णकालीनजनने च वृत्तस्वाध्यायादिरहितब्राह्मणोदशाहेन शुद्धोभवति। क्षत्रियोद्वादशाहेन वैश्यःपञ्चदशाहेन । शूद्रोमासेन तस्य चोपनयनस्थाने विवाहः ॥ ८३ ॥

( ४ ) **राघवानन्दः** । संप्रति क्षत्रियादित्रयस्याशौचमाह शुध्येदिति । दशाहेन निर्गुणविप्रःशुध्येत् । इतिद्वादशाहादिना शुध्येयुरित्यन्वयः । नैतेषु गुणवदगुणवत्वापेक्षा ॥ ८३ ॥

( ५ ) **नन्दनः** । अथशावाशौचयोर्वर्णविशेषात्कालविशेषमाह शुध्येदिति ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । पूर्णाशौचमित्यर्थः ॥ ८३ ॥

**न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः॥ न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥८४॥**

( १ ) **मेधातिथिः** । यस्यैषाबुद्धिः । यउक्तारूयहादयःकल्पास्तुल्यंदशाहेन विकल्प्यन्ते । न वृत्तादिव्यवस्थयेति ततश्चिरतरकालमन्यस्यसंभवे किमित्येकाहपक्षंनित्यस्वाध्यायाक्लेशकरंप्रतिपत्स्ये । दशाहमपाश्रयामि । निष्कर्मसुखमासिष्यइतितंप्रति सौहार्द्देन सा व्यवस्था स्पष्टीक्रियते । नैते तुल्याअपितु व्यवस्थिताएव । व्यवस्था च प्राग्दर्शिता । अन्यथा यस्याशौचकालोविहितस्तस्य ततःकालावधिकस्य कुतोवृद्धिप्राप्तिः । येनैवमर्थवत्स्याद्विस्पष्टार्थत्वे कोदोषः । अन्येत्वाहुरतीतेष्वप्यहःसु यावत्स्नानादिक्रियानकृतातावन्नैव शुद्धिः विप्रःशुध्यत्यपइत्यादि वक्ष्यतितत्राशुचित्वादनुष्ठानेन दुष्यामीति स्नानादिषु शुद्धये न प्रवर्तते तत्रैवमुच्यते न वर्धयेन्नानीतेष्वहःसुबाह्माशौचेविलम्बितव्यम् । येत्वहःशब्दोदशमस्यान्होया रात्रिस्तस्यामाशौचं न भवतीति ते न सम्यग्मन्यन्तइत्युक्तम् । तथाच गौतमः । आशौचमध्यआशौचान्तरउत्पन्ने तच्छेषेण शुद्धिरित्युक्ता एकस्यांरात्रौ शेषायां तयैव शुद्धिमन्यमानआह रात्रिशेषे द्वाभ्यामिति । प्रत्यूहेन्नाग्निषु क्रियाः अशुचित्वात्सर्वश्रौतस्मार्तक्रियानिवृत्तौ प्राप्तायामिदमुच्यते । अग्निषुयाःक्रियाः सायंहोमाद्यास्तान प्रत्यूहेन्न प्रत्यस्येत् । प्रत्यूहोनिर्हासअननुष्ठानं। नच स्वयंकुर्याद्यतआह नच तत्कर्मकुर्वाणःसनाभ्योपीति । सनाभ्योपिनाशुचिःस्यात्किपुनरन्यस्तथा गृह्यंनित्यानिनिवर्तेरन्वैतानवर्जं शालाग्नौचैकइत्युक्ता आह अन्यएतानि कुर्युरिति । नच यदग्न्याधानंहोममात्रमेवक्रियते किंतर्हि साङ्गप्रयोगस्तत्रैव कर्तुर्न्नरस्य संभवात्प्रधानहोमस्यतु द्रव्यत्यागरूपत्वात्स्वयंकर्तृतैव । अतोहोमवैश्वदेवदर्शपूर्णमासाद्यानिवर्तन्ते । अन्येषांतु जपसंध्योपासनादीनांनिवृत्तिर्नदर्शिता तानिचनित्यानि अतोअन्येषामेवाभ्यनुज्ञानं यतः स्मृत्यन्तरे प्रतिषिद्धं होमस्वाध्यायौ निवर्ततइति । अतोनित्यकाम्यभेदेन व्यवस्था । काम्यंतु नैव कर्तव्यमशुचित्वादधिकारापगमात् । ननुच नित्येष्वपि नैवाशुचेरधिकारः ॥ नचशौचमङ्गंयदि विगुणंनित्यमनुष्ठीयते नकाम्यमित्युच्यते अथास्माद्वचनाद्भवति । मैवं । इहयदपि मानंतदस्यान्यएतानि कुर्युरितिपरकर्तृकत्वमभ्यनुज्ञायते तच्चविगुणत्वान्नित्येषूपपद्यते न काम्येषुवैश्वदेवे तु विवदन्तेस्मृत्यन्तरंचोदाहरन्ति ॥ होमंतत्र न कुर्वीतशुष्कधान्यफलैरपि । पञ्चयविधानंतु न कुर्यान्मृत्युजन्मनोः॥ अतःसन्ध्याहोमौ दर्शपूर्णमासौ सांवत्सरिकंचाश्वयुज्यादिकर्तव्यम् । उपाकरणंतु नक्षत्र अयमेव न पौर्णमास्याअयम् ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । नवर्धयेदिति । निःकर्मतासुखाभिसंधिना गुणवत्तया चतुरहाद्याशौचार्होन दशाहादिपरिग्रहंकुर्यादित्यर्थः । प्रत्यूहेद्विघ्नताःकुर्यात् । अग्निषु श्रौतेषु होमादि क्रियानित्याः । तच्छ्रौताग्निसंबन्धि कर्मसनाभ्यःसपिण्डोन्योपि यःसाग्निःसोपि स्वतोहोमोसंभवऽस्याग्निषु होमंकुर्वाणोनाशुचिःकिमुत स्वयमित्यर्थः ॥ ८४ ॥

( ३ ) **कुल्लूकः** । यस्य तु वृत्तस्वाध्यायाद्यपेक्षया पूर्वमर्वाक्संचयनादस्थ्नामित्याद्याशौचसंकोचउक्तःसनिष्कर्मा सुखमासिष्यइतिबुध्यानाशौचदिनानि दशाहादिरूपतया वर्धयेत् । संकुचिताशौचदिनेष्वपि । अग्निष्विति बहुवचनाच्छ्रौताग्निष्वग्निहोत्रहोमान्न विघातयेत् । स्वयंकुर्यादशक्तौ वा पुत्रादीन्कारयेत् । अत्रैव हेतुमाह । यस्मात्तत्कर्माग्निहोत्ररूपंकुर्वाणः पुत्रादिः सपिण्डोनाशुचिर्भवति । तदाह पारस्करः नित्यानि विनिवर्तन्ते वैतानवर्जम् । वैतानंश्रौतोहोमः गार्हपत्यकुण्डस्थानग्नीनाहवनीयादिकुण्डेषु वितत्य क्रियतइति । तथाच शङ्खलिखितौ अग्निहोत्रार्थंस्नानोपस्पर्शनाच्छुचिः । जाबालोऽप्याह ॥ जन्महानौ वितानस्य कर्मलोपोन विद्यते । शालाग्नौ केवलोहोमः कार्यएवान्यगोत्रजैः॥ छन्दोगपरिशिष्टमपि । मृतके कर्मणांत्यागः संध्यादीनांविधीयते । होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैः ॥ तस्मादेकाहत्र्यहाद्याशौचसंकोचे संध्यादीनामेव परित्यागोनतु श्रौतहोमस्य । एकाहत्र्यहाद्यपगमे तु संध्यापञ्चमहायज्ञादिसर्वमेवानुष्ठेयम् । अतोयन्मेधातिथिगोविन्दराजाभ्यामन्यथाप्यभिधायि एकाहत्र्यहाद्यशौचसंकोचोऽयंहोमस्वाध्यायमात्रविषयः संध्योपासनादिकंतु तेनाऽपि दशाहमेव न कर्तव्यमितितन्निष्प्रमाणकम् । यत्तु गौतमेनराज्ञांच कर्मविरोधाद्ब्राह्मणस्य स्वाध्यायानिवृत्यर्थं । याज्ञवल्क्येन च ऋत्विजांदीक्षितानांचेत्यादिना सद्यः शौचमुक्तं तत्सर्वेषामेव दशाहाद्यशौचिनामपि तत्तत्कर्मविषयम् । यानि तूभयत्र दशाहानि कुलस्यान्नंन भुञ्जीतेत्यादीनि दशाहंतत्तत्कर्मनिषेधकानि वचनानि तानि दशाहाशौचविषयाणीति न कश्चिद्विरोधः । तस्माद्धोमस्वाध्यायमात्रार्थंसगुणेऽशौचलाघवंन संध्योपासनार्थमितीदंनिष्प्रमाणम् ॥ ८४ ॥

( ४ ) **राघवानन्दः** । अर्वाक्संचयनादित्यादिना गुणवदगुणवत्सु संकुचिताशौचमालस्यान्नवर्धयेदित्याह नवर्धयेदिति । संकुचिताशौचेपि कुण्डान्तरेष्वग्नीन्समूहमानोहोमकरणेनाशुचिःस्यादित्याह प्रत्यूहेदिति । प्रत्यूहेन्नविघातयेत् तदुक्तं । छन्दोगपरिशिष्टे सूतके कर्मणांत्यागःसन्ध्यादीनांविधीयते । होमःश्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैरिति ॥ सायंप्रातर्होममात्रं नतुवैश्वदेवदर्शादिकं होमस्वाध्यायादि वर्ततइतिकाम्यपरं सूतकंमृतकोपलक्षणं ॥ जन्महानौ वितानस्य कर्मत्यागोन विद्यते इतिजाबालोक्तेः । हानिर्मरणं वितानस्य श्रौतस्य । सनाभ्यः पुत्रादिःशुचिरिति कैमुत्योक्तेः ॥८४ ॥

( ५ ) **नन्दनः** । श्रौतस्मार्तकर्मनिरतैर्लघुरेवाशौचकल्पआश्रयणीयोन गुरुरित्याह नेति । लघुकल्पसंभवे गुरुकल्पाश्रयेणाघवानघाहानि न वर्धयेत् । लघुकल्पमाश्रितोऽप्यग्निषु क्रियान प्रत्यूहेन्न विहन्यात् । तत्कर्म अग्निकर्म । सनाभ्यः सोदरः । अग्निशब्दोऽयंवैतानिकविषयोबहुवचनादितिकेचित् ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । अघाहानि अघस्य आशौचस्य अहानि दिनानि न वर्धयेत् । अग्निषु क्रियानप्रत्यूहे न्न हन्यात् विघ्नंन कुर्यात् । विघ्नोन्तरायःप्रत्यूहइत्यमरः । ह्रावयेन्न तु ह्रापयेत् । च पुनः तत्कर्म श्रौताग्निकर्म कुर्वाणः एतेन कर्मणा सनाभ्यःसगोत्रीनाशुचिर्भवेत् ॥ ८४ ॥

**दिवाकीर्तिमुदक्यांच पतितं सूतिकां तथा ॥ शवंतत्स्पृष्टिनंचैव स्पृष्ट्वा स्नानेन शुध्यति ॥ ८५॥**

( १ ) **मेधातिथिः** दिवाकीर्तिश्चाण्डालः अत्यन्ताशुचिसाहचर्याद्धारतेच प्रयोगदर्शनान्मार्जारमूषिकसंवादे तस्मिन्नपिचकालेभूद्दिवाकीर्तिभयादितइति । न नापितस्तस्य स्पृश्यत्वात् भोज्यान्नत्वाच्च । यत्तु श्मश्रुकर्मणि तस्येदंस्नानमित्याहुस्तदपि सिद्धत्वादवाच्यं आवश्यंश्मश्रुकर्माणि कारयतोरोमाणि गात्राणि स्पृशन्ति तानि शरीरच्युतान्यशुद्धानीति सिद्धंस्नानम् । तत्स्पृष्टिनं तस्यस्पृष्टं तत्स्पृष्टं तदस्यास्तीति तत्स्पृष्टी येनैते स्पृष्टास्तदपि स्नानमेव । इहसर्वस्याप्रत्यासत्तेः तत्स्पृष्टिनमित्यनेन संबन्धःशवस्यैव केचिदाहुर्नदिवाकीर्त्यादीनाम् । अन्येतु एकवाक्योपनिपातादन्ते श्रुतत्वात्सर्वेषांबुद्धौ संनिधानातच्छब्देन सर्वनाम्नापरामर्शइति । अत्र हि शवपर्यन्तानांद्वन्द्वंकृत्वा स्पृष्टीत्यनेनसंवंधः तत्रतत्स्पृष्टी-

तिसमासार्थस्य बुद्धौ संनिहितत्वात्तच्छब्देनावमर्शः नहिशवस्पृष्टिपदेनसबन्धोलक्ष्यते पतितादिभिरितरैयुक्तत्वात्। किंतु केवलस्य पदान्तसंबन्धः द्वन्द्वे ह्येकैकः शब्दःसर्वार्थाभिधायी। ततः सर्वे मत्यासन्नाः अथापि शवस्पृष्टिशब्दस्य तत्स्पृष्टिपदेन संबन्धंकृत्वा ततोन्यैरभिसंबन्धः। तथासति पतितादीनांस्पृष्टिपदेन संबन्धोन स्यात्। तस्मात्समाचारतएव निर्णयः ॥८५॥

( २ ) **सर्वज्ञनारायणः**। दिवाकीर्तिचाण्डालं। पतितं महापातकिनं। सूतिकां स्त्रियं दशाहमध्ये। तत्स्पृष्टिनं दिवाकीर्त्यादीनांपञ्चानामन्यतमस्यस्प्रष्टारम् ॥ ८५ ॥

( ३ ) **कुल्लूकः**। चाण्डालं रजस्वलां ब्रह्महादिकं प्रसूतां दशाहाभ्यन्तरे शवंशवस्पृष्टिनंच स्पृष्ट्वा स्नानेन शुद्धोभवति। केचित्तु तत्स्पृष्टिनमितिचाण्डालोदक्यादिभिः सर्वैः संबन्धयन्ति। गोविन्दराजस्तु याज्ञवल्क्यवचनाच्छवस्पृष्टिनमेवतत्स्पृष्टिनमाह नोदक्यादिस्पृष्टिनम् तत्राचमनविधानात्। तदाह याज्ञवल्क्यः॥ उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत्। उदक्याशुचिभिः स्पृष्टः स्नानंकुर्यात् उदक्याशौचिभिः स्पृष्टैः स्पृष्टस्तूपस्पृशेदाचमेत् ॥ ८५ ॥

( ४ ) **राघवानन्दः**। किंचैतान्षट्स्पृष्ट्वा स्नायादित्याह दिवेति। दिवाकीर्तिं चण्डालं उदक्यां रजस्वलां। तत्स्पृष्टिनं शवस्पृष्टिनं। नतु दिवाकीर्त्यादिस्पृष्टिनंतेषांसाक्षात्स्पर्शेस्नानमेव परंपरास्पर्शे त्वाचमनं ॥ उदक्याशौचिभिःस्नायात्स्पृष्टस्तैर्वायुपस्पृशेदि इति याज्ञवल्क्योक्तेः ॥ ८५ ॥

( ५ ) **नन्दनः**। दिवाकीर्तिः चण्डालः। तत्स्पृष्टंदिवाकीर्त्यादिस्पृष्टम् ॥ ८५ ॥

( ६ ) **रामचन्द्रः**। दिवाकीर्तिर्नापितः चाण्डालइति केचित्। च पुनः तत्स्पृष्टिनं शवस्पृष्टिनं स्पृष्ट्वा स्नानेन शुध्यति ॥ ८५ ॥

**आचम्य प्रयतोनित्यंजपेदशुचिदर्शने ॥ सौरान्मन्त्रान्यथोत्साहंपावमानीश्च शक्तितः ॥ ८६ ॥**

( १ ) **मेधातिथिः**। अशुचयः संनिधानात्पूर्वोक्ताएव। सूर्यदैवत्यामन्त्राःसौराउदुत्यंजातवेदसमित्यादयः। पावमान्यः दाशतयीषु नवमे मण्डलेऽधीताःस्वादिष्टयेत्याद्याः। यथोत्साहं शक्तितइतिच एकएवार्थः वृत्तवशाच्छब्दद्वयंपठितम्। बहुवचननिर्देशात्त्रित्वसंख्यावश्यंकर्तव्या परतस्तु यदिगुरुतरकार्यात्ययोन भवति तदाकर्तव्यएवजपः। मन्त्रग्रहणात्पावमानीरितिचऋचामुपादानादसमाप्तेपि सूक्ते त्रिभ्यउर्ध्वंभवत्येव शुद्धिः। श्वाप्यत्र प्रक्षेप्तव्यः सोप्यशुचिरेव। पठितंच गौतमीयेस्मिन्नेव वर्गे शुनश्चयदुपहन्यादित्येकइति। प्रयतः अनन्यमनामन्त्रदेवतादिध्यानपरः। अथवा प्रयतोदेवतादिपूजाप्रवृत्तोयदा पश्येत्तदैवकुर्यान्नान्यदेति ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः**। प्रयतोजपादिकर्मकरणार्थंप्रायश्चित्तकाले। अशुचिः चाण्डालादिः। सौरानुदुत्यंजातवेदसं चित्रंदेवानामुद्वयंतमसइत्यादीन्। यथोत्साहं यथाशक्ति पावमानीः स्वादिष्ठयामदिष्ठयेत्याद्याः ॥ ८६ ॥

( ३ ) **कुल्लूकः**। श्राद्धदेवपूजादिसंचिकीर्षुः स्नानाचमनादिना प्रयतः सन्प्रकृतचाण्डालाद्यशुचिदर्शने सतिउदुत्यंजातवेदसमित्यादिसूर्यदैवतमन्त्रान्यथासामर्थ्यंपावमानीश्च शक्त्या जपेत् ॥ ८६ ॥

( ४ ) **राघवानन्दः**। किंचान्यदित्याहआचम्येति। प्रयतः श्राद्धदेवादिपूजाचिकीर्षुः सन्निधानाद्दिवाकीर्त्यादिषण्णामशुचीनांदर्शने उदुत्यमित्यादिसौरमन्त्राः। यथोत्साहं यथासामर्थ्यंसान्निध्यादिदर्शनानुरूपंवा ॥ ८६ ॥

( ५ ) **नन्दनः**। अशुचयोदिवाकीर्त्यादयः। सौरान्सूर्यदैवत्यान्। पावमानीः पवमानदैवत्याऋचइतिशेषः ॥ ८६ ॥

( ६ ) **रामचन्द्रः**। अशुचिदर्शने सौरान्मन्त्रान् गायत्र्यादीन्जपेत्। च पुनः शक्तितः पावमानीं सूक्तं जपेत् पावमान्यः पुनन्तुमामिति पठेत् ॥ ८६ ॥

**नारंस्पृष्ट्वास्थिसस्नेहं स्नात्वा विप्रोविशुध्यति॥ आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्यवा॥८७॥**

( १ ) **मेधातिथिः**। नरोमनुष्यस्तस्येदंनारं सस्नेहं मांसमज्जादिग्धम्। गोरालभनंस्पर्शः। अर्कदर्शनगवालम्भौ विकल्पेते॥ ८७॥

( २ ) **सर्वज्ञनारायणः**। सस्नेहमदग्धमशुष्कंच निःस्नेहं दग्धंशुष्कंवा। आचाम्यैवेत्याचमनंकृत्वा गोस्पर्शन-सूर्येक्षणयोरन्यतरत्कार्यमित्यर्थः॥ ८७॥

( ३ ) **कुल्लूकः**। मानुषास्थि स्नेहसंयुक्तंस्पृष्ट्वा ब्राह्मणादिः स्नानेन विशुध्यति। स्नेहशून्यंपुनः स्पृष्ट्वाऽऽचम्य गोस्पर्शार्कावेक्षणयोरन्यतरत्कृत्वाविशुद्धोभवति॥ ८७॥

( ४ ) **राघवानन्दः**। नारं नरस्येदं। गोस्पर्शोरवेरीक्षणंवा॥ ८७॥

( ६ ) **रामचन्द्रः**। नराज्जातंनारं सस्नेहमस्थि स्पृष्ट्वा स्नात्वा शुध्यति द्विजात्यस्थिविषयं शूद्रस्यास्थिस्पर्शने त्रिरात्रमाशौचम्। निःस्नेहं शुष्कं अस्थि स्पृष्ट्वा पादौ प्रक्षाल्याचम्य गामालभ्य स्पृष्ट्वा अर्कमीक्ष्य वा शुद्धोभवेत्॥ ८७॥

**आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्॥ समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति॥ ८८॥**

( १ ) **मेधातिथिः**। आदेशआदिष्टं व्रतादेशनसंबन्धाद्रूढिरूपेण ब्रह्मचार्युच्यते तस्यब्रह्मचर्याश्रमस्थस्य सतोये सपिण्डाःप्रमीयन्ते तेषामयमनिष्टोदकदानप्रतिषेधः। प्राक्प्रमीतानांतु विहितमन्वाहिकंकुर्याद्देवपितृतर्पणमिति। आव्रतस्येति आसमावर्तनादित्यर्थः। न पुनरान्तरालिकसाहसिकादित्यर्थः। व्रतचरणसमाप्तेः समावृत्तःससर्वेषामेकैकस्योदकंकृत्वै-कस्मिन्नहनि त्रिरात्रमाशौचंकुर्यात्। मातुस्तूदकदानंव्रतिनोपीष्यते नचव्रतलोपः। स्मृत्यन्तरमुदाहरन्ति। अपराध्यआदि-ष्टोनोदकइति॥ ८८॥

( २ ) **सर्वज्ञनारायणः**। आदिष्टमाचार्येण ब्रह्मचार्यस्यपोशानेत्यादिना ब्रह्मचर्यव्रतं यस्यसआदिष्टी सपितर्यपि मृते नोदकमर्थादाशौचमपिनकुर्यात्। समाप्तेत्विति। समाप्ते तु ब्रह्मचर्ये यद्यनतीतवत्सरंपितृमरणंशृणुयात्तदा शौचमु-दकदानंच प्रेतोद्देशेन त्रिरात्रंब्रह्मचारिणा कार्यं। ततः प्राक्सपिण्डने कृते प्रेतत्वाभावान्नैतदुदकदानमित्यर्थसिद्धम्। एतेन व्रतिनोव्रतकालआपादितत्वादाशौचस्य तदाशौचात्ययकालप्राप्तकालमाशौचंकालान्तरेपिनास्तीतियाह्यमितिदर्शितम्। एतच्च युक्तिसिद्धमपि स्पष्टार्थमुक्तम्। उदककरणोत्तरकालोनत्वात्त्रिरात्रपूरणस्योदकंकृत्वेत्युक्तम्॥ ८८॥

( ३ ) **कुल्लूकः**। व्रतादेशनमादिष्टंतदस्यास्तीतिब्रह्मचारी समेतोदकमाव्रतसमापनान्न कुर्यात्। उदकमितिपूरक-पिण्डषोडशश्राद्धादिसकलप्रेतकृत्योपलक्षणम्। समाप्ते पुनर्ब्रह्मचर्ये प्रेतोदकंकृत्वा त्रिरात्रमशौचंकृत्वा विशुद्धोभवति। एतच्च मातापित्राचार्यव्यतिरिक्तविषयम्। तदाह वसिष्ठः ब्रह्मचारिणः शवकर्मणा व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा शवकर्मणेति शवनिमित्तकेन निर्हरणदहनोदकदानपूर्वकपिण्डषोडशश्राद्धादिकर्मणा। वक्ष्यति च आचार्यत्वमुपाध्याय-मिति॥ ८८॥

( ४ ) **राघवानन्दः**। किंचआदिष्टीति। आदिष्टीब्रह्मचारी उदकंतत्पूर्वकसपिण्डषोडशश्राद्धादिप्रेतकृत्योपलक्षकंए-तन्मातापित्राचार्यातिरिक्तविषयं तेषांकुर्यात्। आचार्यत्वमुपाध्यायमित्यादिवक्ष्यमाणत्वात्॥ ८८॥

---

( ८७ ) गामालभ्यार्कमीक्ष्य वा=गांस्पृष्ट्वा वीक्ष्य वा रविम् ( क, ग )
=गामालभ्यार्कमीक्ष्य च ( ख, ण )

( ५ ) **नन्दनः** । आदिष्टंव्रतं तद्वानादिष्टी । व्रतस्यब्रह्मचर्यस्य । समाप्ते व्रते । कृतसमावर्तनस्याकृतविवाहस्यायंत्रिरात्रविधिः ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । आदिष्टी ब्रह्मचारी आव्रतस्य समापनात् उदकं जलां जलिन कुर्यात् व्रतं समाप्य जलाञ्जलिं कृत्वा त्रिरात्रेणैव शुध्यति । एतवद्वत्सराभ्यन्तरे अकृतसपिण्डे बोद्धव्यम् ॥ ८८ ॥

**वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम् ॥ आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया ॥ ८९ ॥**

( १ ) **मेधातिथिः** । जातशब्दः प्रत्येकमभिसंबध्यते । वृथाजातोयोन देवानर्चयति न पितॄन्न मनुष्यानिति । सत्यधिकारेऽनाश्रमी । हुताहुतपरित्यक्तः संवत्सरमनाश्रमी भूत्वेत्यादिचिरकालावस्थाने महादोषश्रवणात् । ब्रह्मचारिपरिव्राजकाभ्यामन्यस्य परपाकरतित्वं आत्मार्थस्तु पाकोनिषिद्धः । संकरजाताइतरेतरजातिव्यतिकरेण प्रतिलोमाआयोगवादयः । निन्दितत्वाद्वृथाजातसाहचर्येण । अनुलोमास्तु सत्यपिसंकीर्णयोनित्वे मातृजातीयत्वादधिकारित्वाच्च नेहगृह्यन्ते । नचानुलोमेषुसंकीर्णयोनित्वव्यवहारः । संकीर्णयोनयस्त्वेताः प्रतिलोमानुलोमजाइति । अनियुक्तासुतादयश्चानेकपुरुषसंसर्गजाः वेश्याजाताश्च । पारस्त्रैणेयास्तु असत्यनेकपुरुषसंसर्गेसंकरजाताः । अयंच सपिण्डानांनिषेधोन तत्पुत्राणामिति केचित् । आत्मत्यागिनांतु पुत्राणामपि तदुक्तमविशेषश्रवणात् । प्रव्रज्यासु बाह्यासु भगालवरक्तपटाद्यास्वनधिकाराद्बहुवचननिर्देशात् । व्रतादिदर्शनभेदेन बाह्याः । आत्मनस्त्यागिनां पुरुषाणामायुषोक्षये स्वेच्छया शरीरंत्यजन्ति वृद्धानामचिकित्स्यमहाव्याधीनांचभिषक्प्रत्याख्यातानामिष्यतएव । यथोक्तम् ॥ वृद्धःशौचस्मृतेर्लुप्तःप्रत्याख्यातभिषक्क्रियः । आत्मानंघातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ तस्य त्रिरात्रमाशौचंद्वितीयेत्वस्थिसंचयः । तृतीयेतूदकं कृत्वा चतुर्थे श्राद्धमाचरेदिति ॥ कुष्ठ्यादेः क्षुद्व्याधिगृहीतस्य इष्यतएव । यथोक्तं लुप्तचेष्टस्यगृहस्थावस्थायामपि महाप्रस्थानगमनावृथानेच्छन्तिजीवितुं लुप्तचेष्टश्चोच्यतेयः शौचादिष्वसमर्थः संध्योपासनादिषुच । अपरिक्षीणशरीरोवा । सादयेद्यस्त्वात्मानमलुप्तचेष्टोवा । अतस्तद्विपरीतस्यानुज्ञानंभवति । स्मृत्यन्तरेष्वन्येषामप्युदकक्रियानिषेधोविहितः । यथोक्तं राजभिर्निहतानांच शृंगिदंष्ट्रिसरीसृपैः । आत्मनस्त्यागिनांचैव श्राद्धमेषांन कल्पयेत् ॥ उदकंपिण्डदानंच प्रेतेभ्योयच्च दीयते । नोपतिष्ठतितत्सर्वमन्तरिक्षे विनश्यति ॥ नारायणबलिःकार्योलोकगर्हाभयान्नरैः । तस्मादेभ्योपि दातव्यमन्नमेव सदक्षिणम् ॥ तथान्यत्र ॥ चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणंपापकर्मणाम् ॥ तथाचोक्तम् ॥ नृणांचैवाग्निदानांच स्नानालंकारकारिणाम् । तप्तकृच्छ्रद्वयेशुद्धिरश्रुपातेऽनुयायिनाम् ॥ तेनोद्दिष्टंनचैवान्यैःकार्यमस्यौर्ध्वदेहिकम् । नचनामापि कर्तव्यंतद्वंशस्य तदीयकम् ॥ अत्यन्तनरकस्थस्य तस्य पापीयसोधिकम् । कारणंकीर्तनंनाम सर्वंचैव भयावहम् ॥ संवर्तेन आत्मेव क्रियासु सान्तपनमाम्नातम् । पराशरेण तप्तकृच्छ्रं वसिष्ठेन तप्तकृच्छ्रसहितंचान्द्रायणम् । तत्रापूर्वादिविशेषाउपेक्ष्याः । यदुक्तं । चण्डालादुदकादित्याद्युपक्रम्यं मरणंपापकर्मणामिति । तत्रेदंसन्दिह्यते । किं यश्चण्डालादिर्बुद्धिपूर्वमात्मानंघातयति । तस्यायंविधिरौर्ध्वदेहिकाकरणं तत्करणे च प्रायश्चित्तमुतप्रमादहतस्यानिच्छतइति । कुतःसंदेहइह गौतमेनप्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रयतनमित्युक्तम् । इहचाविशेषेण श्रुतं चण्डालादुदकादिति । तत्र स्मृत्यन्तरेणैकशास्त्रत्वादुदकादित्यत्र तावदवश्यमिच्छतामितिसंबध्यते । साहचर्यादन्यत्रापि तथैवेत्याशङ्काजायते । किंच पापकर्मणामिति श्रूयते । पापंच कर्म प्रतिषिद्धं । अत्रप्रतिषिद्धंयोनुतिष्ठतिसपापकर्मेत्युपपद्यते । अनुष्ठातृत्वंच स्वव्यापारेण परप्रयोक्तृतयाच तत्र न वैद्युतदंष्ट्रिशृङ्ग्यादयःतेचन प्रयुज्यन्ते नापि ते श्वभ्रोदकखड्गादिस्थानीयाः । येन तदुपादानेनात्मानंघ्नन् स्वतन्त्रःक-

( ८९ ) सङ्करजातानाम्=जातीनाम् ( क, ख )

र्ता स्यात् । किंतर्हि यस्येदृशंमरणमुपनतंसपूर्वजन्मनि कृतपापकइति शास्त्रेण ज्ञाप्यते । यथाश्यावदन्तप्रभृतयस्तत्रापि किमेतेन ज्ञापितेन । अङ्गहीनादीनांपूर्वपापसंबन्धित्वंज्ञाप्यते । प्रायश्चित्तमनुष्ठेयं यथा वसिष्ठेनोक्तम् । कस्यचित्कृच्छ्रद्वयचरणंकस्यचिदभ्यधिकमपि । इह मृत्युना सर्वाधिकारस्यापहृतत्वान्नार्थोनेन । यदिवासौ कृतपातकइत्यवसीयते । तेनसह येकेचन केनचित् यौनमौखस्रौवाःसंबन्धाःकृताः । सोपि पापकारी स्यात् । नचैवंशिष्टानामाचारः । नहि तादृशेन संबन्धंकृतवन्तःकेनचिद्विचिकित्स्यन्ते । प्रायश्चित्तंनाचरन्ति अतइच्छतामनुमीयते । येतुगोब्राह्मणहतानामिति स्मृत्यन्तरे पठित्वा आत्मनस्त्यागिनामिति पृथक्पठन्ति तेनविशेषपक्षः प्रतिभाति । अतःसंशयः किं पुनरत्र युक्तंइच्छतामितिकुतः पापकर्मवचनात् । स्वेच्छया यश्चात्मव्यापत्तिहेतौ व्यापारे प्रवर्तते तेन तस्माद्बहुनपुरायुषःस्वःकामी प्रेयादितिशास्त्रमतिक्रान्तं भवति । सच युक्तःपापकर्मेतिव्यपदेष्टुं । ननुचोक्तं नहि ते खड्गादिस्थानीयाः । येनेच्छयावधोपपत्तिः । उच्यते । यः प्रमादंनरक्षति तेन तत्कृतमेवेति । तेन यश्चाण्डालदस्युभूयिष्ठेरण्यएकाकी गच्छति तस्ययद्यपि चण्डालामांघ्नन्त्वितीच्छा न भवति तथापि तत्समर्थाचरणेन प्रमादस्यापरिहृतत्वाद्भवत्येव शास्त्रातिक्रमः । एवंयोबाहुभ्यांनदींतरति संदिग्धांवा नावमधिरोहत्यकुशलकर्णधाराधिष्ठिताम् । एवंतस्य व्यापद्यमानस्य वेगक्षयेण नौपरिवर्तनादिनावा युक्तैव पापकारिता । तथाचागाधतांदण्डादिना ग्राहमकरसंगंचाज्ञात्वास्नातारोयद्यपन्हियेरन्नदुष्येयुरेवम् । यस्तु दृढबन्धनांतरींरतीव्राम्भसि कुशलावहितसमर्थप्रेरकप्रेर्यमाणामधिरूढः सहसोत्पतिते जविनिपवने चक्रवातेन पिच्छलमवाप्नवान् प्लवव्यापत्याम्रियेतशास्त्रमतिक्रमेत् एवंसर्पोपहृतंदंशंच परिहरन्दष्टोव्यापद्येत प्रत्यवेयादेव नान्यथा । एवंतीक्ष्णशृङ्गांगां हस्तिनं चादृष्ट्वा दूरमनपक्रामतोहन्यमानस्य युक्तोऽतिक्रमः । एवमरण्येवर्षासूच्चरन्तीषु विद्युत्सु ग्रामनगरयोरप्रवेशेदुष्टतैव । ग्रामस्थस्योपरि कथंचिद्विद्युत्पातःस्यात्तदा न किंचिदपराध्यति । अतोयुक्तमीदृशंयथाविहितक्रियाकरणम् । तत्रचोदकक्रियानिषेधः सर्वौर्ध्वदेहिकप्रदर्शनार्थः स्मृत्यन्तरेस्योदाहृतत्वात् ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । वृथाजाताः क्लीबाः । संकरजाः प्रतिलोमजाः । प्रव्रज्या चतुर्थाश्रमः । आत्मनस्त्यागिनामुद्बन्धनादिना । उदकक्रियेत्याशौचस्यापि ग्रहणम् ॥ ८९ ॥

( ३ ) **कुल्लूकः** । जातशब्दः प्रत्येकमभिसंबध्यते वृथाजातानांबाहुल्येन त्यक्तस्वधर्माणांसंकरजातानांहीनवर्णेनोत्कृष्टस्त्रीषूत्पन्नानां वेदबाह्यरक्तपटादिप्रव्रज्यासुवर्तमानानामशास्त्रीयविषोद्बन्धनादिना कामतश्च कृतजीवितत्यागिनामुदकादिक्रिया न कर्तव्या ॥ ८९ ॥

( ४ ) **राघवानन्दः** । एषामुदकंनास्तीत्याह वृथेतिद्वाभ्यां । वृथाजातानां पञ्चयज्ञाद्यनधिकारित्वेन चिरकालमनाश्रमिणामिति मेधातिथिः । संकरजातानांहीनवर्णेनोत्कृष्टस्त्रीषु जातानां । तिष्ठतां परमहंसानाम् ॥ ८९ ॥

( ५ ) **नन्दनः** । वृथाजाताः पञ्चमहायज्ञादीनामकर्तारः । संकरजाताः परभार्यायामनियुक्तायामुत्पन्नाः ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह वृथेति । वृथाजातापञ्चयज्ञरहिताः क्लिबादयोवा सङ्करजातानांच पुनः यतीनांच पुनः आत्मत्यागिनाम् पाषण्ड्यमाश्रितानाम् । च पुनः कामतः चरन्तीनां व्यभिचारिणीनाम् । एवंवृथादिसुराप्यंतानां योषितां उदकक्रियाजलाञ्जलिदानसूतकमपि निवर्तेत न कुर्यात् ॥ ८९ ॥

**पाषण्डमाश्रितानां च चरन्तीनां च कामतः ॥ गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् ॥ ९० ॥**

( १ ) **मेधातिथिः** । शास्त्रपरित्यागेनबाह्यदर्शनाश्रयं नरशिरःकपालरक्ताम्बरादिधारणंपाषण्डं तदाश्रिताः कृततल्लिङ्गपरिग्रहाः तद्दर्शनवशवर्तिन्यः । चरन्तीनांच कामतः तदाचारकुलस्थितित्यागेनेच्छामात्रानुवृत्येकानेकपरपुरुषसंप्रयोगः-

कामचारः । भर्तुर्विषगरादिदानेन । गर्भस्य च पातनं द्रोहः । सुराप्यः यथाप्रतिषेधंप्रतिषिद्धायाःपानेन । अत्रकाश्चिदाह ब्राह्मणो न पिबेत्सुरामिति । सत्यपि जात्यर्थाविशेषलिङ्गात्पुंसएव ब्राह्मणस्य प्रतिषेधोन स्त्रियाइति । यद्यपि स्त्रीपुंसयोरेकाजातिस्तथापि स्त्रीत्वपुंस्त्वलिङ्गे भिद्येते इहच ब्राह्मणइति पुल्लिङ्गस्य शब्दस्य श्रवणादश्रुतायाःकः प्रसङ्गः । यथा ब्राह्मणींपाययेत्पुत्रार्थमिति न पुंसःपाययेदिति तद्वत्पुंल्लिङ्गश्रुतौ न स्त्रियउपादीयन्ते । क्वचिल्लिङ्गंन विवक्ष्यते यथा ब्राह्मणोनहन्तव्यइति स्त्रियाअपि प्रतिषेधोविज्ञायते । तत्रद्वितीययाश्रुत्या ब्राह्मणस्येप्सिततमत्वात्प्राधान्यम् । नच प्रधाने प्रातिपदिकार्थव्यतिरेकेणान्यलिङ्गसंख्यादि विवक्ष्यते यथा ग्रहंसंमार्ष्टीतिनैकस्य संमार्गः । इह पुनर्ब्राह्मणेन सुरा न पेयेति कर्तृतया साधनभावेन क्रियांप्रतिनिर्देशात् ब्राह्मणोनपिबेत्सुरामित्याख्याताभिहितेपि तादर्थ्यनामनिवृत्तेःप्रातिपदिकार्थोपपत्त्या प्रथमापि तृतीयानुगुणेतिगुणभावात् गुणेच सर्वश्रुतंविवक्ष्यते । यथा पशुना यजेतेति पुमान्पशुरालभ्यते एकश्च । अत्रोच्यते । नात्र द्वितीयातृतीये गुणप्रधानभावेनाविवक्षाविवक्षयोःकारणं किंतर्हि प्राप्त्यप्राप्ती यदप्राप्तंविधिविषयतयोपपद्येततद्विवक्ष्यते । अनन्यपरशब्दावगम्यत्वात् । यत्वन्यतोवगतमर्थान्तरंविध्यर्थमुपादीयते तद्यादृशमेव प्रमाणान्तरावगतंतादृशमेव विधेयकार्यान्तरसंबन्धितया शब्देन प्रतिपाद्यते । ब्राह्मणोनहन्तव्यइत्यत्र वाक्येविप्रतिषेधएव पर्यवस्यति यदन्यत्तदन्यतोवगतम् । प्रातिपदिकार्थविवक्षातु श्रुत्यानर्थक्यप्रसंगात् । लिङ्गसंख्यादेस्तु प्रत्ययार्थस्य नान्तरीयकत्वेनाप्युपादानसंभवाद्विवक्षाविवक्षे उच्येते । तत्रेह न ब्राह्मणादिभिःपुरुषोविधिनाप्रवर्त्यः । तद्वेषात्स्वतःप्रवृत्तेः तत्सर्वस्यचात्रस्वयंप्रसंगात् । नह्यविधीयमानःप्रतिषेधःकथंचिदन्वेतुमलं । अन्यतःप्राप्त्यभावात् । अकारकत्वादकारकविशेषणत्वात्स्वभावानुप्रवेशेनापि संबन्धंलभ्यते । तस्मादस्यान्वयसिद्ध्यर्थंविषयभावएषितव्यः । तस्मिंश्च विधिना विषयीकृतेन भावार्थोविषयतयापेक्ष्यते । भावार्थश्च प्रतिषेधेन विषयांशस्य गृहीतत्वात्ततःप्रच्युतलौकिक्या च प्रवृत्त्या सिद्धानुष्ठानआत्मविधिसिद्ध्यर्थमनुप्रवेशमप्यकांक्षन्नधिकारमात्रसापेक्षविधौप्रमाणान्तरतःप्रतिपन्नहननकर्तृभावस्य पुंसोधिकारतांप्रतिपादयंस्तद्विशेषणद्वारेणान्वयंप्रतिपद्यतइत्युपपन्नमन्विताभिधानं तेन भावार्थस्य सविशेषणस्याविधेयत्वाल्लौकिकी प्रवृत्तिरभ्युपेतव्या । अस्तिच रागलक्षणा प्रवृत्तिर्नतस्यालिङ्गसंख्यानियमोस्ति द्वेषाद्वा तस्मादविधेयार्थशब्दोऽवगतार्थपरत्वादभिधानंशक्तिमुत्सृज्य प्रमाणान्तरतोयथावधृतस्वरूपमर्थंलक्षयति । तत्र लिङ्गसंख्ययोस्तात्पर्यन्तःशब्देनानभिधानात्कुतोविवक्षा केवलंप्रातिपदिकनिर्देशार्थयेनकेनचिद्वचनेन निर्देशःकर्तव्योनकेवला प्रकृतिः प्रयोक्तव्येति तदर्थंलिङ्गसंख्ययोरुपादानम । अतइयमत्रावगतिः हननेध्यवसितकर्तृभावःसनञर्थेनियुज्यते । अतःप्रतिषेधवाक्ये द्वितीयाश्रुतिरविवक्षायामतन्त्रं यथापिहि तृतीयाश्रूयते प्रथमावा ब्राह्मणेन न पातव्या ब्राह्मणोनपिबेदिति तत्रापि तदर्थस्यान्यतः प्राप्तिरविधेयत्वादनूद्यते । या अधिकारविशेषणत्वेनैव संबध्यतेएते द्वितीयाविशिष्टे प्रथमातृतीये । सत्यामपि च द्वितीयाश्रुतौ । पदप्राप्तंतद्विधेयत्वाद्विवक्ष्यते यथा भार्यामुपगच्छेत् अपत्यमुत्पादयेदिति । नहि लौकिकोभार्यार्थः । उपयमनेनैव तत्सिद्धेः । नापि वाक्यान्तरे विधिना क्वचिदुपात्तोयेन यथावगममुद्दिश्येत यथाश्विनंगृह्णाति मैत्रावरुणंगृह्णाति दशैतानध्वर्युर्गृण्हातीति संख्याविशिष्टाएव ग्रहाउपादीयन्ते । अतोनिर्ज्ञातसंख्यत्वात्संमार्गविधौयथासंख्यावगमंनिर्दिश्यते । अत्र पुनर्वाक्यान्तराभावादस्यैवोत्पत्तिवाक्यत्वाच्छ्रुतसंख्यापरित्यागे प्रमाणाभावान्निरपेक्षाभिधानशक्तिसमर्पितस्यैकस्य परित्यागः । पुरुषबुद्धिप्रभवएव स्यात् । एवंपशुना यजेतेति यागविषयत्वाद्विधेस्तस्यच साध्यस्वभावत्वात्सधनाकांक्षायांसमर्पितसविशेषणकारितसहितस्यविधेयत्वे यद्यर्थमात्रेविधिव्यापारापरिसमाप्तेः स्वार्थपरशब्दाभिहितापेक्षितस्वार्थाःकिमितिनयन्ति । प्रमाणाशास्त्रविदस्तु स्वयंविधिंविदन्ति । अन्योक्तमत्रगा-

हन्ते । यत्वस्माभिरुक्तंतत्सुखोपायग्राह्यं नातिमहतीव्युत्पत्तिरत्रोपयुज्यते इयदेववक्तत्सारद्दंयतीसाविद्यानुष्ठानोपयोगिनी यदधिकमाहोपुरुषिकामात्रंतदर्थवादएव । तत्र ह्यर्थवादाद्विशेषावगतिर्भवति यत्राकांक्षाविधेरनिवृत्तिरिति यथोक्तमुपदधातीति । बहुषु भोजनसाधनेषु सर्पिस्तैललवणादिषु सत्सु केनेत्यनवसाये घृतेनेति गम्यते यथातु रात्रिष्वनुष्ठानाश्रवणदाकांक्षायांप्रतितिष्ठन्तीत्यर्थवादः । अतःप्रतिष्ठाकामस्यैतिगम्यते । इह पुनर्ब्राह्मणाइतिपरिसमासत्वात्पदार्थस्य निवृत्तकांक्षेति । स्तुतिमात्रापेक्षयार्थवादः । अथलिङ्गदर्शनमात्रतयोपन्यस्यते देवानामश्नता हविरितितस्माच्छ्रेयःसंपन्नंपापीयानन्वेतीतिवत्तदपिपुंसःप्रतिषिद्धत्वात्पाक्षिकेनानुवादेन सालम्बनमितिन किंचित् । स्त्रीणामपि देवान्नशेषमाज्यादिप्राशनमस्त्येव वेदोदाहरश्च दर्शपूर्णमासादिषु वैश्वदेविकमासीतेति । नचश्राद्धस्य कर्तुःसुरांपाययेदितिचोदनया तासांपानमनुमीयते । ब्रह्महत्यादाविव । नैवंप्रतिग्रहस्तस्माज्जातिमात्रस्यप्रतिषेधइत्येषएतस्यांविप्रतिपत्तौ निर्णयः ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । पाषण्ड्यं बौद्धादिदर्शनं तल्लिङ्गंवा आश्रितानां पुंसांस्त्रीणांचकामतश्चरन्तीनां सवर्णव्यभिचारिणीनामपि । गर्भद्रुहां गर्भानुत्पत्त्यर्थंकृतौषधीनां । भर्तृद्रुहां भर्तृताडनादिकारिणीनां । सुरापीनामिति ब्राह्मणीविषयेणान्यदप्यन्यजातीयास्वपि महापातकमुपलक्ष्यते । वृथासंकरजातानामित्यादौ पुल्लिङ्गमत्र च स्त्रीलिङ्गं योषितामितिपदं चाविवक्षितार्थम् ॥ ९० ॥

( ३ ) **कुल्लूकः** । वेदबाह्यरक्तपटमौञ्जादिव्रतचर्या पाषण्डतदनुतिष्ठन्तीनां स्वच्छन्दमेकानेकपुरुषगामिनीनां गर्भपातनभर्तृवधकारिणीनांद्विजातिस्त्रीणां सुरापीनामुदकक्रियौर्ध्वदैहिकंनिवर्ततइति पूर्वेण संबन्धः ॥ ९० ॥

( ४ ) **राघवानन्दः** । अशास्त्रीयबन्धनादिना प्राणस्य त्यागिनांचरंतीनां कामतः काममात्रोपशमनार्थं कुलटानां । योषितां सुरापीनां द्विजातिस्त्रीणाम् ॥ ९० ॥

( ५ ) **नन्दनः** । पाखण्डयंवेदबाह्यंकर्म । कामचारोव्यभिचारः । निवर्ततोदकक्रियेत्यनुषङ्गः ॥ ९० ॥

## आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ॥ निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ९१॥

( १ ) **मेधातिथिः** । स्वग्रहणमाचार्यविशेषणंमन्यते । गुरोर्गुरौ संनिहितइत्यतिदेशात्तदाचार्येपि प्राप्तेप्रतिषेधः । अन्येतु स्वशब्दंबान्धववचनंव्याचक्षते । अत्रतु पितरंमातरमितिनवक्तव्यं नित्यार्थत्वभिधानमिति । गुरुरल्पंवाबहुवापीत्यनेन यउक्तः । एतान्निर्हरतोव्रतवियोगोनास्तीति श्रुतसामर्थ्याद्दर्शयति । अन्यान्निर्हृत्यानेन वियुज्यतइति पदार्थसिद्धिः ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः** । आचार्यमुपनायकं । उपाध्यायं वेदाध्यापकं । गुरुं वेदार्थव्याख्यातारं । निर्हृत्य निर्हरणंदाहादितेषांकृत्वा । एतच्चान्यस्मिन्कर्तर्यसति । अर्थादन्यस्मिन्सति तथाचार्यादिभ्योन्यस्य निर्हरणादिकरणे व्रतलोपस्तथाच पुनः संस्कारः ॥ ९१ ॥

( ३ ) **कुल्लूकः** । आचार्यउपनयनपूर्वकंसंपूर्णशाखाध्यापयिता । उपाध्यायोवेदैकदेशस्याङ्गस्य वा ऽध्यापकः । वेदस्य वेदानांचैकदेशस्यापि व्याख्याता गुरुः । निर्हरणपूर्वकत्वात्प्रेतकृत्यस्य निर्हृत्यइतिदाहदशाहपिण्डषोडशश्राद्धादिसकलप्रेतकृत्यस्य प्रदर्शनार्थमाचार्यादीन्पञ्च मृतान्निर्हृत्य ब्रह्मचारी न लुप्तव्रतोभवति । एवंचान्यान्निर्हृत्यव्रतलोपोभवतीति गम्यते । आचार्यस्वमित्यभिधानाद्गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेदिति न्यायान्नाचार्याचार्यमपि स्वमितिसर्वत्र संबध्यते तेनोपाध्यायोपाध्यायमपि निर्हृत्य व्रतलोपएव ॥ ९१ ॥

( ४ ) **राघवानन्दः** । उक्तलक्षणाचार्यादिपञ्चकंप्रत्युदकादिकृद्ब्रह्मचारी न व्रतलोपीस्यादित्याह आचार्यमिति । आदिष्टीत्यस्य प्रतिप्रसवः तेषांपुत्राद्यभावे ॥ ९१ ॥

( ५ ) **नन्दनः** । स्वमुपाध्यायमितिवचनाद्गुरोरुपाध्याये प्रतिषेधः । व्रतीब्रह्मचारी । निर्हृत्य पितृमेधकर्मणासंस्कृत्य । एभ्योऽन्यान्निर्हृत्य व्रतेन वियुज्यतंइत्यभिप्रायः ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । व्रती ब्रह्मचारी आचार्यादीन् निर्हृत्य दग्ध्वा व्रतेन न वियुज्यते ॥ ९१ ॥

**दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ॥ पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः॥९२॥**

( १ ) **मेधातिथिः** । पुरद्वारेणेतिपुरग्रहणंग्रामादीनामप्युपलक्षणार्थम् । यत्रानेकद्वारसंभवस्तत्रायंनियमः । योयत्रेष्टेतस्यायमुपदेशः । अमङ्गल्यत्वाच्च शूद्रादारभ्यक्रमेणोपदिष्टम् । अतश्च यथायोगमितिवैश्यक्षत्रियब्राह्मणाःपश्चिमादिभिर्यथासंख्यंसंबन्धनीयाः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । यथायोगं यथार्हं वैश्यक्षत्रियविप्रक्रमेणेत्यर्थः ॥ ९२ ॥

( ३ ) **कुल्लूकः** । अमाङ्गलिकत्वादत्यन्तापकृष्टशूद्रक्रमेणाभिधानम् । शूद्रंमृतंदक्षिणपुरद्वारेण निर्हरेत् । द्विजातीन्पुनर्यथायोगंयथायुक्त्यापकृष्टवैश्यक्षत्रियक्रमेणैव पश्चिमोत्तरपूर्वद्वारेण निर्हरेत् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । शावाशौचप्रसंगेनाह दक्षिणेनेति । यथोपयोगमपकृष्टवैश्यादिक्रमेण । पूर्वेण विप्रमित्येव संभवद्विषयत्वात् । पुरादन्यत्रानियमः ॥ ९२ ॥

( ५ ) **नन्दनः** । पश्चिमेन वैश्यं उत्तरेण क्षत्रियं पूर्वेण ब्राह्मणं यथायोगं यथाक्रमं हारयेत् ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । दक्षिणेन पुरद्वारेण मृतंशूद्रं निर्वहेत् निष्क्रामयेत् । यथायोगं यथाक्रमं द्विजन्मानः द्विजातयः तद्यथा पश्चिमेन वैश्यं उत्तरेण क्षत्रियं पूर्वेण ब्राह्मणमिति ॥ ९२ ॥

**न राज्ञामघदोषोस्ति व्रतिनां च सत्रिणाम् ॥ ऐन्द्रंस्थानमुपासीनाब्रह्मभूताहि ते सदा॥९३॥**

( १ ) **मेधातिथिः** । राजशब्दोयद्यपि क्षत्रियजातौ वर्तते । तथापीह ऐन्द्रंस्थानमुपासीनाइतिकारणस्योपादानाज्जनपदेश्वरवचनोलक्षणया विज्ञायते । उत्तरश्लोके निपुणंवक्ष्यामः । व्रतिनोव्रतचारिणः चान्द्रायणादिस्थाश्च । सत्रिणोगवामयनिका अन्यस्मिन्वा यज्ञे दीक्षिताः । तथाच गौतमः । ऋत्विग्दीक्षितब्रह्मचारिणामिति । अत्रार्थवादः । ऐन्द्रस्थान माधिपत्यपदंप्रजैश्वर्यमुपासीनाःकुर्वाणाराजानोब्रह्मत्वंप्राप्ताः । व्रतिनः सत्रिणश्च । अघदोषमाशौचं । अन्येतु सततदानप्रवृत्तान्सत्रिणोमन्यन्ते । मुख्ययानुवृत्त्या क्रतुविशेषे वर्तते ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रइति स्मृत्यन्तरेभिधानात् । राजब्रह्मचारियजमानानां व्यवहारदर्शनाद्यसाधारणराजकार्याध्ययनसंध्योपासनादिब्रह्मचारिकृत्ययागतदङ्गमन्त्रपाठादियजमानकृत्येष्वेवाशौचाभावः । अघदोषआशौचकृतमनधिकारित्वम् । सत्रं यज्ञं तद्वतां यजमानानामित्यर्थः । ऐन्द्रं स्थानं परलोकमुपासीनाअकाङ्क्षमाणाएतत्कर्मकुर्वन्तोब्रह्मभूताब्रह्मवच्छुद्धाः । ब्रह्मपूताइतिपाठे ब्रह्मवत्पूताइत्यर्थः ॥ ९३ ॥

( ३ ) **कुल्लूकः** । राज्ञामभिषिक्तक्षत्रियाणांसपिण्डमरणादावाशौचदोषोनास्ति यतोराजानऐन्द्रंस्थानंराज्याभिषेकाख्यमाधिपत्यकारणंप्राप्ताः । व्रतिनोब्रह्मचारिणश्चान्द्रायणादिव्रतकारिणश्च । सत्रिणोगवामयनादियागप्रवृत्ताः । यतोब्रह्मभूतास्ते ब्रह्मैव निष्पापाः । आशौचाभावश्चायंकर्मविशेषे । तदाहविष्णुः आशौचंन राज्ञांराजकर्मणि नव्रतिनांव्रते नसत्रिणांसत्रे राजकर्मणि व्यवहारदर्शनशान्तिहोमादिकर्मणि ॥ ९३ ॥

( ४ ) **राघवानन्दः** । अयमपि प्रतिप्रसवः नराज्ञामिति । प्रकरणादघपदमाशौचपरं इदमाशौचराहित्यंकर्मविशेषे तदाहविष्णुः आशौचं नराज्ञांराजकर्मणि नव्रतिनांव्रते न सत्रिणांसत्रइति । ऐन्द्रमिन्द्रवदधिकृतं । ब्रह्मभूताः ब्रह्मेव तत्तत्कर्मसु निष्पापाः आरब्धत्वेन श्रौताहोमवदावश्यकत्वादितिभावः ॥ ९३ ॥

( ५ ) **नन्दनः** । राज्ञामभिषिक्तक्षत्रियाणाम् । व्रतिनांप्रारब्धवेदपारायणकृच्छ्रादीनाम् । सत्रिणांप्रारब्धयज्ञानाम् । उत्तरार्धेन हेतुरुक्तः । ऐन्द्रंस्थानमुपासीनाः देवतायजनपरत्वात् तथाहि श्रुतिः एषवाएतर्हीन्द्रोयोयजतइति । ब्रह्मभूताधर्मत्वरूपिणइत्यर्थः । हियस्मात् ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । राज्ञां राजकर्मणि अघदोषः आशौचदोषः नास्ति । व्रतिनां पूर्वसंकल्पितव्रते दोषोनास्ति स्नातकव्रतादिकानांवा । सत्रिणां सत्रकर्मणि दोषोनास्ति । अघदोषः आशौचकृतमनधिकारित्वम् । ऐन्द्रंस्थानं परलोकं उपासीनाः आकाङ्क्षमाणाः एतत्कर्म कुर्वन्तोब्रह्मभूताः ब्रह्मवच्छुद्धाः हि निश्चये । न तेषांशौचाभावः ॥ ९३ ॥

**राज्ञोमाहात्मिके स्थाने सद्यः शौचं विधीयते ॥ प्रजानां परिरक्षार्थमासनं चात्रकारणम् ॥ ९४॥**

( १ ) **मेधातिथिः** । महानात्मा यस्य स्थानस्य तन्माहात्मकं यस्मिंस्थाने स्थितस्य पुंसः प्रजानांपरिरक्षा । महात्मंतदैवमुच्यते तच्चप्रजैश्वर्यं । यदाह आसनंचात्रकारणमिति । तदुक्तं । नात्र जातिमात्रंकिंतु प्रजापालनाधिकारः । आसनशब्दोपीह नासनशय्यादिवचनः अपितु तत्पदंमाप्नवतोयत्कर्तव्यंतदाह अतश्चक्षत्रियोपियदिप्रजापालनेसमर्थःतस्याप्याशौचाभावएवपूर्वैर्व्याख्यातः प्रजानांपरिरक्षार्थमिति । न सर्वेण सर्वाशौचनिवृत्तिः किंतर्हि प्रजापालनविरोधि यदाशौचधारणंतन्निवर्तते । यथा दुर्भिक्षादौ स्वकोशादन्नदानेन प्रजाभरणं । तथादिव्यन्तरिक्षभौमेषूत्पातेषु शान्तिः । अकस्मात्सभ्यैः कर्तव्येन राज्ञा अथवा श्रमेषु द्विजातीनांधर्मसंशयसत्वेन प्रथमेज्यादावप्यस्ति प्रवक्तृत्वंतदपि प्रयोजनम् ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । उक्तमर्थमेकदेशेनविवृणोति राज्ञइति । यत्रस्थितस्य महानात्माभवति तद्व्यवहारदर्शनादिस्थानं माहात्मिकंतत्र स्थानेतत्रापि धनार्थितया तत्करणे नाशौचाभावः किंतु प्रजारक्षोद्देशेन करणइत्याह प्रजानामिति । आसनमवस्थानं अत्र सद्यःशौचकारणम् ॥ ९४ ॥

( ३ ) **कुल्लूकः** । महात्मनइदंस्थानंमाहात्मिकंराज्यपदाख्यंसर्वाधिपत्यलक्षणंमहात्मैवप्राचीनपुण्यराज्यमासादयति तस्मिन्वर्तमानस्य सद्यःशौचमुपदिश्यते । नतु राज्यप्रच्युतस्य क्षत्रियजातेरपि । अत्र जातिरविवक्षितेत्यनेन श्लोकेन दर्शितं । यतोन्यायनिरूपणेन दुर्भिक्षेऽन्नदानेनोपसर्गेषु शान्तिहोमादिना प्रजारक्षार्थंराज्यासनेष्ववस्थानमाशौचाभावे कारणम् । तच्चाक्षत्रियाणामपि तत्कार्यकारिणांविप्रवैश्यशूद्राणामविशिष्टम् । अतएव सोमकार्यकारिणिफलचमसे सोमधर्माअतएव व्रीहिधर्मान्विततयाश्रुतमप्यवघातादितत्कार्यकारित्वस्य विवक्षितत्वात्प्रकृतौ यवे विकृतौ च नीवारादिषु संबध्यतइतिकर्ममीमांसायां तत्तदधिकरणेषु निरणायि ॥ ९४ ॥

( ४ ) **राघवानन्दः** । अतएवाह राज्ञइति । माहात्मिके माहात्म्यं प्रततैश्वर्यं तेन राज्यरक्षाव्यवहारदर्शशान्तिहोमादिके सर्वाधिपत्यआसने एतच्चचातुर्वर्ण्यराजसाधारणम् अवघातवत्प्रकृतिविकृतिसाधारणनियमविधित्वात् ॥ ९४ ॥

---

( ९४ ) ०र्थमासनं=०र्थंशासनं ( ज, झ )

( ५ ) **नन्दनः** । महात्माइन्द्रस्तस्येदं माहात्मिकं तस्मिन्स्थानआसीनस्येतिशेषः । अत्र सद्यःशौचे ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । परिरक्षार्थमित्युक्ते महात्मिके स्थाने । धनार्थितया व्यवहारदर्शने नाशौचाभावः । आसनं सिंहासनं अत्र शौचे कारणं सिंहासनस्थस्याभावः ॥ ९४ ॥

**डिम्बाहवहतानां च विद्युता पार्थिवेन च ॥ गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः॥९५॥**

( १ ) **मेधातिथिः** । डिम्बोबहुजनसंकुलःअशस्त्रकलहोवा । आहवः संग्रामोयुद्धःतत्र हतानांसद्यःशौचम् । विद्युदशनिःएतद्याख्यातं । पार्थिवः पृथिव्याईश्वरश्चातुर्वर्ण्यस्य यःकश्चित् । ब्राह्मणार्थेगवार्थेच युद्धादन्यत्रापि जलाग्निदंष्ट्रिहतस्य । यस्यचेच्छतिपार्थिवः स्वकार्यार्थपरिपालनाधिकृतस्य कुतएतद्यतोराज्ञांपरिपालनएवाशौचनिवृत्तिस्तत्र कुतोन्यस्याविशेषेण तदिच्छयाविनिवृत्तिःस्यात् ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । डिम्बाहवहतानां ये बान्धवास्तेषांसद्यःशौचमित्यर्थः । एवमुत्तरेष्वपि । अत्रच कानिचिन्मरणान्यतिनिन्दितत्वेनाशौचाभावकारणानिकानिचिदतिशस्तत्वेनेतिविवेचनीयम् । डिम्बाहवोऽराजकंयुद्धं । विद्युता हतानां पार्थिवैः क्षुद्रापराधेन हतानां द्विजैरभिचारादिना तदभिचारनिमित्तंतद्विप्रियकरणएव । गोब्राह्मणस्येति गवां ब्राह्मणस्य वा प्राणरक्षार्थं हतानां । यस्य च स्वपरिचारकस्यानन्यसाध्यव्यापारेष्वाशौचाभावंराजेच्छति ॥ ९५ ॥

( ३ ) **कुल्लूकः** । डिम्भाहवोनृपरहितयुद्धं तत्र हतानां विद्युता वज्रेण पार्थिवेण वधार्हे ऽपराधे हते गोब्राह्मण रक्षणार्थंविनापि युद्धंजलाग्निव्याघ्रादिभिर्हतानां यस्य पुरोहितादेःस्वकार्याविघातार्थंनृपतिरशौचाभावमिच्छति तस्यापि सद्यः शौचम् ॥ ९५ ॥

( ४ ) **राघवानन्दः** । किंच डिम्भेति । डिम्भाहवोनृपतिरहितयुद्धंतेन हतानां युद्धंविना हतानामपिगोविप्रार्थंजलादिव्याघ्राद्यैश्च हतानां । पार्थिवोवा यस्य पुरोहितादेः स्वकार्यपरिपालनाद्यर्थमाशौचाभावमिच्छति तस्यापि सद्यः शौचम् ॥ ९५ ॥

( ५ ) **नन्दनः** । डिम्भोबालः । महाजनसंमर्दइतिकेचित् । विद्युताअशन्या । गोब्राह्मणहेतोर्हतानांच । अत्रापि सद्यःशौचमित्यनुषज्यते ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । डिम्भाहवहतानां डिम्भाहवोराजकंयुद्धं अशस्त्रकलहः तत्र हतानां । विद्युत्पातेन पार्थिवेनच हतानां । गोब्राह्मणरक्षार्थंविपन्नानां मृतानां संबन्धिनां ये सपिण्डास्तैरप्याशौचंन कार्यम् । यस्य पार्थिवः शुद्धत्वमिच्छति सएव शुद्धः स्वस्वाधिकारस्थलेपौरोहित्यादौ ॥ ९५ ॥

**सोमाग्न्यर्कानिलेन्द्राणांवित्ताप्पत्योर्यमस्य च ॥ अष्टानां लोकपालानां वपुर्धारयते नृपः ॥९६॥**

( १ ) **मेधातिथिः** । वपुस्तेजोंशः । वित्तपतिर्वैश्रवणः । अपांपतिर्वरुणः । अत्रैव द्वितीयोर्थवादः ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । सोमादीनामष्टानांलोकरक्षकाणाम् । वपुस्तेजोंऽशं । सोमउत्तरस्याअधिपतिः । अर्कस्त्वैशान्यारुद्रमूर्तित्वात्तस्य । वित्तपतिः कुबेरोनैर्ऋत्याः । कालपतित्वात् । अप्पतिर्वरुणः । अन्येषांतु लोकपालानां दिशः प्रसिद्धाः । राजधर्मेषु चैतदुपपादयिष्यति ॥ ९६ ॥

( ३ ) **कुल्लूकः** । चन्द्राग्निसूर्यवायुशक्रयमानांवित्तस्यापांच पत्योःकुबेरवरुणयोरेवमष्टानांलोकपालानांसंबन्धिदेहं राजा धारयति ॥ ९६ ॥

---

( ९५ ) डिम्बाहव=डिम्भाहव (नं०)

( ४ ) **राघवानन्दः** । राज्ञआशौचसंकोचेतद्वाक्यतस्तत्संकोचेचार्थवादमाह सोमेतिद्वाभ्यां । वित्ताप्पत्योः कुबेर-वरुणयोः वपुस्तेजस्तत्तत्कर्मणि ॥ ९६ ॥

( ५ ) **नन्दनः** । राज्ञामाशौचाभावंश्लोकद्वयेनोपपादयति सोमेति । वित्तपतिर्वैश्रवणः । अप्पतिर्वरुणः ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । कुतोराज्ञामाशौचाभावइत्यपेक्षायामाह सोमेति । सोमादीनामष्टानांलोकपालानांवपुर्नृपोधारयते । वित्ताप्पत्योः कुबेरवरुणयोः ॥ ९६ ॥

**लोकेशाधिष्ठितोराजा नास्याशौचंविधीयते ॥ शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययम् ॥ ९७ ॥**

( १ ) **मेधातिथिः** । एतैर्लोकेशैरधिष्ठितोराजा नास्यशौचाशौचं । यतोमर्त्यानांमनुष्याणामाभ्यामधिकारः । तयोश्च प्रभवाप्ययौ प्रवृत्तिनिवृत्ती लोकेभ्यःसकाशान्मर्त्यानां नतु लोकेशानामेव ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । नास्याशौचमसाधारणंलोकेशकर्मणि । शौचाशौचंहि मिलितंमर्त्यानामेव न देवानां तेषां शौचमात्रत्वात् । लोकेशप्रभवोह्ययमतोनास्याशौचमित्यर्थः । लोकेशप्रभवोऽप्ययइतितुक्वचित्पाठस्तत्र लोकेश प्रभवे नृपेशौचाशौचयोरप्ययोभ्यपनयोऽतोयस्य शौचमाशौचंवाऽपनेतुमिच्छति तस्य तदपनयोभवतीत्यर्थः ॥ ९७ ॥

( ३ ) **कुल्लूकः** । ततः किमतआह लोकेशेति । यतोलोकेशांशाक्रान्तोनृपतिरतोनास्याशौचमुपदिश्यते यस्मान्मनुष्याणांयच्छौचमशौचंवा तल्लोकेशेभ्यः प्रभवति विनश्यति च अप्ययोविनाशः । एतेनान्यदीयशौचाशौचोत्पादनविनाशशक्तस्य लोकेश्वररूपस्य नृपतेः कुतः स्वकीयाशौचमिति पूर्वोक्ताशौचाभावस्तुतिः ॥ ९७ ॥

( ४ ) **राघवानन्दः** । लोकेशाधिष्ठितः उक्तैः सोमाद्यैर्लोकपालैरधिष्ठितः स्वांशेनानुगृहीतः । लोकेशप्रभवात्ययं लोकेशेभ्यः प्रभवतितद्वाक्यतआशौचंभवति पुनस्तेभ्योत्ययः अभावोपि तद्वाक्यादेव यस्य शौचाशौचंविशेष्यंअस्यापि लोकेशत्वादयमेव परकीयाशौचसंकोचे हेतुर्युक्तः । लोकेशप्रभवाप्ययावितिक्वचित्पाठस्तदा तयोः प्रवृत्तिनिवृत्ती लोकेशेभ्यः सकाशान्मर्त्यानां नतु लोकेशानामितिमेधातिथिः ॥ ९७ ॥

( ५ ) **नन्दनः** । अयंराजालोकेशप्रभवोदेवइत्यर्थः ॥ ९७ ॥

( ६ ) **रामचन्द्रः** । राजा लोकेशाधिष्ठितः तस्मात्कारणादस्य राज्ञः आशौचंन विद्यते । अयं राजा लोकेशेभ्यः । प्रभवोयस्य सलोकेशप्रभावः ॥ ९७ ॥

**उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च॥ सद्यः संतिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः ॥ ९८ ॥**

( १ ) **मेधातिथिः** । येन शस्यते हन्यते तच्छस्त्रम् । अतः पाषाणलगुडादिनापि हतस्य यज्ञसंस्था निष्पद्यतेनायुधैरेव खड्गादिभिः । आहूयन्ते यत्रेतरेतरंस्पर्धमानायुद्धाय सआहवः संग्रामः । क्षत्रधर्मः अपराङ्मुखत्वं प्रजार्थं प्रभुप्रयुक्तंच सद्यःसंतिष्ठते समाप्तिमेति । यज्ञोज्योतिष्टोमादिस्तत्पुण्येन युज्यतइति यावदाशौचमपि सद्यएव । अत्रकेचित् क्षत्रधर्महतस्येत्यनेन सद्यइत्यभिसंबध्नन्ति । ततश्च यःसंग्रामभूमौ मृतःतस्यैवायंविधिर्नतु योन्येद्युस्ततोन्यत्र गतस्तदेतद्विचार्यम् ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । उद्यतैःशस्त्रैरिति कूटशस्त्रादिघातव्यवच्छेदः । आहवे नृपतिकर्तृके युद्धे क्षत्रधर्मेणापराङ्मुखत्वादिना हतस्य यज्ञः । पितृयज्ञोऽस्थिसंचयनदशाहपिण्डादिसहितः सद्यः सन्तिष्ठते समापनीयस्तदाशौचंच सद्यइत्यर्थः ॥ ९८ ॥

( ३ ) **कुल्लूकः** । उद्यतैः शस्त्रैः खड्गादिभिर्नतु लगुडपाषाणादिभिरपराङ्मुखत्वादिक्षत्रियधर्मयुक्तसंग्रामे हतस्य तत्क्षणादेव ज्योतिष्टोमादियज्ञः संतिष्ठते समाप्तिमेवेति तत्पुण्येन युज्यतइत्यर्थः । तथाशौचमपि तत्क्षणादेव समाप्तिमेति इयंशास्त्रे मर्यादा ॥ ९८ ॥

( ४ ) **राघवानन्दः** । किंच उद्यदस्त्राद्यपराङ्मुखयुद्धहतस्य क्षत्रियादेर्ज्योतिष्टोमादियज्ञः समाप्तिंगच्छतिआशौचंचेत्याह उद्यतैरिति । अस्त्रैरस्यतेघात्यतेयैर्लगुडाद्यैरपि आहवे संग्रामे । ज्योतिष्टोमादिपुण्येन युज्यतइतिमेधातिथिः । प्रकरणात्पुत्राद्याशौचाभावपरंवा ॥ ९८ ॥

( ५ ) **नन्दनः** । संतिष्ठते समाप्नोति । युद्धस्य यज्ञत्वसंस्तवः परधर्मत्वप्रतिपादनार्थः । तथाशौचमपिसद्यः संतिष्ठते ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । आहवे सङ्ग्रामे उद्यतैःशस्त्रैः कूटशस्त्रैः व्यवच्छेदरूपैः क्षत्रधर्महतस्य च सद्यःशौचं यज्ञः पितृयज्ञः सद्यःसंतिष्ठते भवति । तथा अशौचं सद्यः अशौचंशौचाभावः । इति स्थितिः मर्यादा ॥ ९८ ॥

**विप्रः शुध्यत्यपःस्पृष्ट्वा क्षत्रियोवाहनायुधम् ॥ वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः॥९९॥**

( १ ) **मेधातिथिः** । दशाहादीनांकल्पानांपरिपूर्णआशौचकालइदमपरंकर्तव्यम् । अपःस्पृष्ट्वेतिस्नानमुपदिश्यतइतिप्राग्व्याख्यातम् । कृतक्रियइतिक्षत्रियादिभिरभिसंबध्यते । क्रियाच स्नानमेव अन्यस्याश्रुतत्वात् । स्नात्वावाहनादीनि स्पृशेयुः । अन्येतु श्राद्धक्रियामाहुः । श्राद्धादिकृत्वा सर्वएव विशुध्यति । तत्रापि ब्राह्मणउदकंहस्तेन स्पृष्ट्वा क्षत्रियादयस्तु वाहनादिभिः ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । एकादशेन्हि प्रातःशुध्यर्थं स्नात्वा जलस्पर्शखड्गाश्वादिस्पर्शप्रतोदरश्म्यन्यतरस्पर्शकाष्ठदण्डस्पर्शैःक्रमाच्छुद्धिरित्यर्थः । कृतक्रियोतीतदशाहकृत्यकालइत्यर्थः ॥ ९९ ॥

( ३ ) **कुल्लूकः** । अशौचान्ते कृतश्राद्धादिकृत्योब्राह्मणोऽपः स्पृष्ट्वेति जलस्पर्शमात्रंदक्षिणहस्तेन कृत्वा शुद्धोभवति नतु संवत्सरे व्यतीते तु स्पृष्टैरद्भिर्विशुध्यतीतिवत् स्नात्वा वाहनादिस्पर्शसाहचर्यात् स्पृष्ट्वेत्यस्य च सकृदुच्चरितस्यार्थभेदस्यान्याय्यत्वात्क्षत्रियोहस्त्यादिवाहनंखड्गाद्यस्त्रंच वैश्योबलीवर्दादितोदंलोहप्रोताग्रं योक्त्रंवा शूद्रोयष्टिंवंशदण्डिकाम् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । कृतश्राद्धादिब्राह्मणादिचतुष्टयमाशौचान्तेऽबादिचतुर्णांस्पर्शनेनैव शुध्येदित्युत्तराङ्कमाह विप्रइति । प्रतोदं सूक्ष्मलोहाग्रदण्डं । रश्मीन् योक्त्ररज्जुं । कृतक्रियः कृतोर्ध्वदेहिकाक्रिया येन सविप्रादिः । इतिदैहिकशुद्धिः ॥ ९९ ॥

( ५ ) **नन्दनः** । कृतक्रियः समापितसमस्ताशौचक्रियइत्यर्थः ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । सूतकान्ते कृतक्रियः कृतश्मश्रुवपनादि तैलेन पिण्याकेन सह कृतस्नानः विप्रःअपःस्पृष्ट्वा कृताचमनः शुध्यति । एवंकृतशौचोक्षत्रियः वाहनायुधंस्पृष्ट्वा शुध्यति । एवंकृतशौचोवैश्यः प्रतोदंरश्मीन्वा स्पृष्ट्वा शुध्यति । एवंशूद्रःकृतशौचोयष्टिंस्पृष्ट्वाशुध्यति ॥ ९९ ॥

**एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः॥ असपिण्डेषु सर्वेषु प्रेतशुद्धिं निबोधत॥१००॥**

( १ ) **मेधातिथिः** । पूर्वोत्तरवस्तुपसंहारोपपत्त्युपन्यासार्थौपूर्वोत्तरावर्धश्लोकौ ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः**। सपिण्डेषु मृतेषु तन्मरणनिमित्तकाशौचे सति शौचं। असपिण्डेषु प्रेतशुद्धिं प्रेतवहनादिनिमित्ताशौचशुद्धिम् ॥ १०० ॥

( ३ ) **कुल्लूकः**। भोद्विजश्रेष्ठाएतच्छौचंसपिण्डेषु प्रेतषु युष्माकमुक्तम्। इदानीमसपिण्डेषु प्रेतशुद्धिंशृणुत ॥ १०० ॥

( ४ ) **राघवानन्दः**। वर्तिष्यमाणशुद्ध्यर्थंवृत्तमुपसंहरति एतदितित्रिभिः ॥ १०० ॥

**असपिण्डं द्विजं प्रेतंविप्रोनिर्हृत्य बन्धुवत् ॥ विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥१०१॥**

( १ ) **मेधातिथिः**। बन्धुवदिति धर्मेण न मूल्येन । मातुराप्तांश्च आप्तग्रहणंप्रत्यासन्नबान्धवमातुलादिग्रहणार्थम्। अस्माच्चानुमीयते असपिण्डः असमानोदकोन सर्वसपिण्डादन्यः ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः**। निर्हृत्य दाहाङ्गनिर्हरणान्यतमं दाहंवा कृत्वा । बन्धुवत् धनमगृहीत्वा त्र्यहमात्रेण तद्गृहवासे नचेत्तस्मिन्नित्येकाहे वक्ष्यमाणत्वात्। मातुश्च बान्धवान् चकारात्पितुश्चासगोत्रबन्धून् तथा आप्तानागन्तुना संबन्धेन प्राप्तान्स्यालादीन् ॥ १०१ ॥

( ३ ) **कुल्लूकः**। असपिण्डंब्राह्मणंमृतंब्राह्मणोबन्धुवत् स्नेहानुबन्धेन न त्वदृष्टबुद्ध्येत्यर्थादुक्तम्। मातुश्चाप्तान्सन्निकृष्टान्तसहोदरभ्रातृभगिन्यादीन्बान्धवान्निर्हृत्यत्रिरात्रेण शुद्धोभवति ॥ १०१ ॥

( ४ ) **राघवानन्दः**। धर्मेणैव मातुराप्तान् सोदरभ्रातृतत्पुत्रभगिन्यादीन्। मातुले पक्षिणीमित्यसन्निकृष्टे ॥ १०१ ॥

( ५ ) **नन्दनः**। निर्हृत्य वहनादिकंकृत्वा। बन्धुवदुपकारबुद्ध्या ॥ १०१ ॥

( ६ ) **रामचन्द्रः**। मातुर्बान्धवान् मातुष्वस्रीयादीन् चकारात्पितुःष्वसुःपुत्रादीन् तथा आप्तान् स्यालादीन् निर्हृत्य दग्ध्वा त्रिरात्रेण विशुध्यति ॥ १०१ ॥

**यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ॥ अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत् ॥ १०२ ॥**

( १ ) **मेधातिथिः**। अनश्नतोनिवसतश्च पूर्वोक्तस्त्रिरात्रएव। अश्नतेऽनिवसतश्च एकाहएव । अश्नतःनिवसतश्च दशाहएव ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः**। यद्यन्नमत्ति निर्हृत्य वा उभयथा दशाहेन । तदन्नाशनतद्गृहवासयोरकरणे निर्हरणाद्यकरणे चैकाहइति विवेकः ॥ १०२ ॥

( ३ ) **कुल्लूकः**। निर्हारकोयदि तेषांमृतस्य सपिण्डानामाशौचिनामन्नमश्नाति तदा तद्दशाहेनैव शुध्यति न त्रिरात्रेण। अथ तेषामन्नंनाश्नाति गृहे च तेषांन वसति निर्हरति च तदाहोरात्रेणैव शुध्यति। एवंच तद्गृहवासे सति तदन्नाभोजिनोनिर्हारकस्य पूर्वोक्तंत्रिरात्रम् ॥ १०२ ॥

( ४ ) **राघवानन्दः**। स्नेहादिवत्वेत्याह यदीति। अयमर्थः अन्नंनाश्नाति गृहे न वसति निर्हरति च तदाहोरात्रेण शुध्यति। गृहेवसन्नान्नमश्नाति तदा पूर्वोक्तत्रिरात्रेण । गृहेवसन्नन्नमदन्दशाहेनेति ॥ १०२ ॥

( ६ ) **रामचन्द्रः**। अन्नमनदन्नभक्षयन् अन्हैव विशुध्यति ॥ १०२ ॥

**अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ॥ स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥१०३॥**

( १ ) **मेधातिथिः** । अनुगमनंबुद्धिपूर्वमनुव्रजनम्। यथाकथंचिदधिगमनेनच सचैलंस्नानम् । अग्निस्पर्शोघृतप्राशनंचसमुच्चितंशुद्धिहेतुः ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । इच्छया न धनादिना । ज्ञातिं सपिण्डादिसंबन्धिनम् । अज्ञातिमसंबन्धिनम् घृतप्राशनं नान्नान्तरनिवर्तकम् । विशुध्यति अनुगमदोषात् ॥ १०३ ॥

( ३ ) **कुल्लूकः** । ज्ञातिमज्ञातिंवा मृतमिच्छातोऽनुगम्य सचैलस्नानंच कृत्वा ततोऽग्निस्पृष्ट्वा पश्चाद्घृतप्राशनं कृत्वा अनुगमननिमित्ताशौचाद्विशुध्यति ॥ १०३ ॥

( ४ ) **राघवानन्दः** । ज्ञातिमिवाज्ञातिमनुगम्य बुद्धिपूर्वं अनुगमननिमित्तस्यौपाधिकस्याशौचस्य स्नानादित्रयंप्रायश्चित्तं नाधिकाशौचे मानमस्तीति भावः । अनुगमननिमित्ताद्वाशौचात् अग्न्यादित्रयेण सर्वे शुध्येयुः शुद्धेः कर्तॄणि देहिनामिति वक्ष्यमाणत्वात् । ज्ञातिपक्षेउक्तमाशौचमस्त्येव ॥ १०३ ॥

( ५ ) **नन्दनः** । अनुगम्यनीयमानेन शवेन सहगत्वा ॥ १०३ ॥

**न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत् ॥ अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ १०४**

( १ ) **मेधातिथिः** । ननाययेन्ननिर्हारयेत् । स्वेषु तिष्ठत्सु समानजातीयेषु सत्सु । आहुतिग्रहणान्न दाहयेदिति । विप्रग्रहणमतन्त्रं । क्षत्रियवैश्ययोरपि शूद्रसंस्पर्शोदोषएवेत्यर्थवादात्प्रतिषेधःप्रतीयते ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । स्वेषु विप्रेषु । क्षत्रियादेस्तु स्वेषु तिष्ठत्स्वपि शूद्रेण नयने दोषाभावः । स्वेषुतिष्ठत्स्विति वचनात्स्वेष्वसत्सुशूद्रेणापि निर्हार्योविप्रः । अस्वर्ग्या स्वर्ग्यानभवतीत्यर्थः । यजमानोहिपितृमेधे हविस्तस्य शूद्रेण संपर्कात्तेन हविषा कृताहुतिर्दुष्यतीतितात्पर्यम् । अत्र शौचमधिकृत्य स्मृत्यन्तरीयशुद्धिप्रकारोऽस्माभिः शुद्धिदीपिकायांप्रपञ्चितइतितेषामेतदविरोधेन व्यापारस्तत्रैवानुसंधेयः ॥ १०४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणादिंमृतंसमानजातीयेषु स्थितेषु न शूद्रेण पुत्रादिर्निर्हारयेत् यस्मात्सा शरीराहुतिः शूद्रस्पर्शदुष्टासती मृतस्य स्वर्गाय हिता न भवति मृतं स्वर्गं न प्रापयतीत्यर्थः । स्वेषु तिष्ठत्स्वित्यभिधानाद्ब्राह्मणाभावे क्षत्रियेण तदभावे वैश्येन तदभावे शूद्रेणाऽपि निर्हारयेदित्युक्तम् । यथापूर्वंश्रेष्ठत्वादस्वर्ग्यदोषश्च ब्राह्मणादिसद्भावे शूद्रेण निर्हरणे सति बोद्धव्यः । गोविन्दराजस्तु दोषनिर्देशात्स्वेषु तिष्ठत्स्वित्यविवक्षितमित्याह तदयुक्तम् । संभवदर्थपदद्वयोच्चारणवैयर्थ्यप्रसङ्गादुपक्रमावगतेश्च वेदोदितन्यायेनानुबोध्यत्वाद्गुणभूतशुद्ध्यनुरोधेन प्रधानभूतायाजातेरुपेक्षायांगुणलोपेनऽमुख्यस्येत्यपि न्यायो बाध्येत तस्मात्स्वेषु तिष्ठत्स्वितिपदद्वितयंन विवक्षितम् । इमांगोविन्दराजस्य राजाज्ञांनाद्रियामहे ॥ १०४ ॥

( ४ ) **राघवानन्दः** । स्वेषुज्ञातिषुसत्सु सजातीयेषुवा नहापयेत् न निर्हरेत् । सादेहाहुतिः स्वर्गार्हानभवतीत्यर्थवादः न त्वाहुतिर्नकार्या प्रधानलोपापत्तेः प्रकरणबाधश्चातोवक्ष्यति संकरजातिनिर्णये अबान्धवंशवंचैवनिर्हरेयुरितिस्थितिरिति ॥ १०४ ॥

( ५ ) **नन्दनः** । स्वेषु सजातीयेषु । तिष्ठत्सु तत्र विद्यमानेषु । आहुतिः शवाहुतिः ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । शूद्रसंस्पर्शगर्हिता दूषिता । यथा यमः ॥ प्रस्थानयति शूद्रोग्निंतृणंकाष्ठंहवींषि च । प्रेतत्वंहिसदा तस्य सचाधर्मेण लिप्यते ॥ १०४ ॥

**ज्ञानंतपोग्निराहारोमृन्मनोवार्युपाञ्जनम् ॥ वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥ १०५ ॥**

( १ ) **मेधातिथिः** । ज्ञानादीनि कालशुद्धेःदृष्टान्ततयोपादीयन्ते । तथैतानि स्वविषये शुद्धिकारणानि एवंकालोपि

नात्रातिशङ्कितव्यः । एतेषांयस्य यत्र शुद्धिहेतुत्वं तदिहैव प्रकरणे तेषांवक्ष्यते । अन्येषांतत्रतत्रदेशे । तत्र ज्ञानमाध्यात्मिकं साङ्ख्ययोगोपदिष्टं तेनहि अविद्यावासनापासनेन रागादिक्षयेनिर्दोषज्ञानमुपैति । वक्ष्यतिच बुद्धिर्ज्ञानेन शुध्यतीति । तपः कृच्छ्रचान्द्रायणादि तत्पातकोपपातकानांशुद्धिहेतुः । अग्निर्मृन्मयादिषु पुनःपाकेनेति । आहारः पवित्राणां पयोमूलानां सोपि तपइव शोधयति । मृद्वारिणांशुद्धिहेतुताप्रसिद्धैव । मनसीवक्ष्यते मनःसत्येनेति । उपाञ्जनं मठादेःसुधागोमयादिना संमार्जनानुलेपने । वायुश्चण्डालादिस्पृष्टे तृणकाष्ठादौ रथ्यापतिते । कर्माणि संध्योपासनादीनि । उक्तंच ॥ पूर्वांसंध्यांजपंस्तिष्ठेन्नैशमेनोव्यपोहतीति । एतच्च द्वितीये व्याख्यातम् । सत्यपि तपसःकर्मत्वे प्राधान्यख्यापनार्थंपृथगुपदेशः प्रायेण च शास्त्रभेदेनैव कर्मणस्तपोनिर्दिश्यते कर्मनिष्ठास्तपोनिष्ठाइति ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । अथ बाह्यद्रव्यशरीरोपघातशुद्धिप्रकारानभिधित्सुः सामान्यतः शोधनान्याह ज्ञानमिति । ज्ञानं ब्रह्मज्ञानं सकलपापक्षयहेतुत्वाच्छोधकम् । तपः प्राणायामः । प्राणायामः परंतपइतिवचनात् । अग्निस्तैजसादीनामिव देहिनांमूर्धाग्निः । आहारोब्रह्मसुवर्चलापानादिर्दुष्टजलादिपाने । मृद्दशौचादौमनःक्षमाख्यनियमयुक्तंजीवस्य वारिक्षालनादिना । उपाञ्जनं सजातीयेन लेपोभूम्यादेः । वायुः सर्वायुष्ट्वेन जीवपावनः । कर्मचान्द्रायणव्रात्यस्तोमादि । अर्कोदर्शनादिना अस्थिस्पर्शादेः । कालोदशाहादिः । आशौचिनांदेहिनांदाहप्रभृति ॥ १०५ ॥

( ३ ) **कुल्लूकः** । ज्ञानादीनि शुद्धेः साधनानि भवन्ति । तत्रब्रह्मज्ञानंबुद्धिरूपान्तःकरणशुद्धेः साधनम् । यथा वक्ष्यति । बुद्धिर्ज्ञानेन शुध्यति तपोयथा तपसा वेदवित्तमाः । अग्निर्यथा पुनः पाकेन मृन्मयम् । आहारोयथा हविष्येण यवाग्वा इति । मृद्वारिणी यथा मृद्वार्यादेयमर्थवदिति । मनोयथा मनःपूतंसमाचरेदिति । संकल्पविकल्पात्मकंमनोनिश्चयात्मिका बुद्धिरिति मनोबुद्ध्योर्भेदः । उपाञ्जनमुपलेपनं यथा मार्जनोपाञ्जनैर्वेश्म । कर्मयथायजेद्वाऽश्वमेधेनेत्यादि । अर्कोयथा गामालभ्यार्कमीक्ष्यवा । कालोयथा शुध्येद्विप्रोदशाहेन वायोस्तु शुद्धिहेतुत्वं मनुनानुक्तमपिपन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैरितिविष्ण्वादावुक्तंग्राह्यम् ॥ १०५ ॥

( ४ ) **राघवानन्दः** । दशाहादेः शुद्धिहेतुतावत्ज्ञानादेरप्याह ज्ञानमिति । ज्ञानंब्रह्मज्ञानं । असौवावलोकोगौतमाग्निरित्यादिपञ्चाग्निविद्यादिज्ञानंच नहि ज्ञानेन सदृशंपवित्रमित्युक्तेः । तपश्चान्द्रायणादि आहारोहविष्येण यवाग्वा वा । मनोमनःपूतंसमाचरेत् । वायुः प्राणायामः बाह्यवायुश्च । वारि जलं । उपाञ्जनं उपलेपनं । कर्म तरति ब्रह्महत्यां योश्वमेधेनयजतइत्यादि । कालः शुध्येद्विप्रोदशाहेनेत्यादिः । प्रकरणात्कालवदेतान्यपि देहिनांशुद्धिहेतवइतिवा ॥ १०५ ॥

( ५ ) **नन्दनः** । शुद्धिहेतूनाह ज्ञानमिति । ज्ञानमध्यात्मज्ञानंतच्छुद्धिकारणं शरीरात्मविवेकेन । तपोऽनशनादिकंसच्छरीरगतदोषनिर्हरेण । अग्निःस्पर्शनादिना । आहारः पञ्चगव्यादिसत्त्वशोधनेन । मृद्धारणादिना । मनोदेवताध्यानेन वारि स्नानादिना । उपाञ्जनं गोमयादिकं तदुपलेपेन । वायुश्चण्डालादिस्पृष्टतृणकाष्ठादीनांस्पर्शेन । कर्मयज्ञादिकंतद्देवताप्रीणनेन । अर्ककोंऽशुभिर्वस्तुशोषणेन । कालएकरात्रपक्षिण्यादिः सदोषपावनेन ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । ज्ञानं आध्यात्मिकं । तपः प्राणायामादि । आहारः जलपानादिः । देहिनामेतानि शुद्धेःकर्तॄणीत्यर्थः ॥ १०५ ॥

**सर्वेषामेव शौचानामर्थशौचं परंस्मृतम् ॥ योऽर्थे शुचिर्हि सशुचिर्न मृद्वारिशुचिःशुचिः ॥१०६॥**

( १ ) **मेधातिथिः** । कोस्यप्रसंगः । यथामृद्वारिशुचावविलम्बंकृतोत्सर्गःप्रवर्तते तथा प्रमादस्खलितेपरद्रव्यापहरणादावविलम्बितंप्रायश्चितंशुद्धये समाश्रयणीम् ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थशौचं शुद्धोपायागतार्थत्वम् ॥ १०६ ॥

( ३ ) **कुल्लूकः** । सर्वेषांमृद्वारिनिमित्तदेहशौचमनःशौचादीनांमध्यादर्थशौचमन्यायेन परधनहरणपरीहारेण यद्वनेहा तत्परंप्रकृष्टंमन्वादिभिः स्मृतम् । यस्माद्योऽर्थे शुद्धः सशुद्धोभवति । यः पुनर्मृद्वारिशुचिरर्थे चाशुद्धः सोऽशुद्धएव ॥ १०६ ॥

( ४ ) **राघवानन्दः** । एकादशाहादौवक्ष्यमाणंप्रासंगिकमाह सर्वेषामिति । अर्थेशुचिः परद्रव्याहरणंकर्मविवक्षितं- अथवाअर्थेनदत्तेनैवाशौचशुद्धिरतआह यइति अर्थेविषये शुचिरकृपणोदातेतियावत् अतएव वक्ष्यति दानेनाकार्यकारिण इतिदानेनवधनिर्णेजकमित्यादिच ॥ १०६ ॥

( ५ ) **नन्दनः** । अर्थशौचमान्तरेभ्यः श्रेष्ठमित्याह सर्वेषामिति ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । सर्वेषांशौचानांमध्ये अर्थशौचं मानसंशौचमिन्द्रियनिग्रहादिकं परं उत्कृष्टं स्मृतम् । यः कश्चन पदार्थः अर्थे मानसिके शौचे इन्द्रियनिग्रहादौ शुचिः सएव शुचिः । मृद्वारिभ्यांशुचिः शुचिर्न किंतु एतादृशः स्वयमेव शुचिः ॥ १०६ ॥

**क्षान्त्या शुध्यन्ति विद्वांसोदानेनाकार्यकारिणः ॥ प्रच्छन्नपापाजप्येन तपसा वेदवित्तमाः ॥ १०७ ॥**

( १ ) **मेधातिथिः** । एकादशे वक्ष्यति । ये विद्वांसस्तेक्षान्त्यैव शुध्यन्ति । तेहि द्वेषेर्ष्यामत्सरैर्नोपहन्यन्ते ततोदुष्कृतेषु प्रवृत्तेषु नित्यशुद्धाभवन्ति । क्षान्तिर्नाम चित्तधर्मः सर्वत्र साम्यम् । दानस्याप्यकार्यकृच्छुद्धिरुक्ता दानेन वधनिर्णेकमित्यादिना प्रच्छन्नपापानामपि रहस्याधिकारे जपउक्त एव । तपोवेदविदांवेदाभ्यासएव ज्ञानंच । यथोक्तं ब्राह्मणस्य तपोज्ञानमिति । कृच्छ्रादि तु सर्वेषांशुद्धिहेतु न वेदविदामेव ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । क्षान्त्या क्लेशसहत्वेन विद्वांसोऽज्ञात्वाऽकार्यकारिणः । अकार्यकारिणः षण्ढवधादिना दानापनेयपापकारिणोदानेन वक्ष्यमाणसीमादिदानेन । प्रच्छन्नपापाः परैरज्ञातपापचरणाः जप्येन रहस्यप्रायश्चित्तरूपेण । तपसा प्राणायामेन वेदवित्तमाः । उपनिषदर्थीभूतात्मविदःवेदोवेदार्थः । एतेन यतिनांसर्वविषये प्राणायामाएव प्रायश्चित्तंगुरुलघ्वपेक्षयातुभूयस्त्वाल्पत्वे इतिग्राह्यम् ॥ १०७ ॥

( ३ ) **कुल्लूकः** । परेणापकारे कृते तस्मिन्प्रत्यपकारबुद्ध्यनुत्पत्तिरूपया पण्डिताः शुध्यन्ति । यथाच वक्ष्यति महायज्ञक्रियाः क्षमा नाशयंत्याशुपापानीति । अकार्यकारिणोदानेन । यथा वक्ष्यतिसर्वस्वंवा वेदविदे ब्राह्मणायेति । अप्रख्यातपापाजप्येन यथावक्ष्यति जपंस्तूपवसेद्दिनमिति वेदवित्तमाः वेदार्थचान्द्रायणादितपोविदः तपसेत्येकादशाध्याये वक्ष्यमाणेन ॥ १०७ ॥

( ४ ) **राघवानन्दः** । किंच क्षान्त्येति । तितिक्षया । प्रच्छन्नपापामिथुनातिरिक्तजनाविदितपापाः मनोजनितपापावा जप्येन गायत्र्यादेः । तपसा कृच्छ्रचान्द्रायणादिना वेदान्ताभ्यासेन वा ॥ १०७ ॥

( ५ ) **नन्दनः** । क्षान्त्या द्वन्द्वसहिष्णुतया । विद्वांसोऽध्यात्मविदः । तपसास्वाध्यायेन तपोहिस्वाध्यायइति स्वाध्यायप्रवचने । तद्धि तपस्तद्धितपः इतिश्रुतेः ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । परमार्थशुचित्वमाह क्षान्त्येति । विद्वान् क्षान्त्या कायक्लेशेन शुध्यति । अकार्यकारिणः यज्ञाहितकारिणः दानेन बन्धनादिना शुध्यन्ति । प्रच्छन्नपापानां अविख्यातदोषाणां अघमर्षणादिसूत्रजाप्येन शुद्धिः । वेदवित्तमोद्विजः तपसा कृच्छ्रचान्द्रायणादिना शुध्यति ॥ १०७ ॥

**मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति॥ रजसा स्त्री मनोदुष्टा सन्यासेन द्विजोत्तमः॥१०८॥**

( १ ) **मेधातिथिः** । नद्यःपारावारे क्षीणोदकायाअशुध्युपहते तस्याएव वेगागतायाःकूलंकषायाउदकंवेगेन शुध्यति । यथान्यस्याभूमेः भूमिःशुध्यति पञ्चभिरिति शुद्धये प्रतीतिर्नैवंनदीतीरेषु । अथवा वेगवत्या अशुचिप्रवाहसंसर्गेणाशुच्याशङ्कायामिदमुच्यते नदीवेगेनेति । नैवंमन्तव्यं इतश्चामुतश्चाशुचिप्रवाहैःसंस्पृष्टा न शुध्यति । शारीरेव्यभिचारे ऽनुपलभ्यमाने परपुरुषरूपगुणानुचिन्तनेन मनोदुष्टा रजसा ऋतौ शोणितेन सृतेन शुध्यति स्त्री । सन्यासः षष्ठे वक्ष्यते तेन द्विजोत्तमाःशुद्धाभवन्ति । न कथंचिन्मानसापचारे यदविदुषाचिन्तितसूक्ष्मप्राणिवधादितदेषामपनीयते ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । शोध्यं बहिर्द्रव्यं देहश्च । नदी ग्राममलवहा । मनोदुष्टा मनसा पुरुषान्तररक्ता रजसा रजोन्तरप्रवृत्त्या । सन्यासेन पारिव्राज्येन द्विजोत्तमोविप्रः । ॥ १०८ ॥

( ३ ) **कुल्लूकः** । मलाद्युपहतंशोधनीयंमृज्जलैः शोध्यते । नदीप्रवाहश्च श्लेष्माद्यशुचिदूर्षितोवेगेन शुध्यति । स्त्री च परपुरुषमैथुनसंकल्पादिदूषितमानसा प्रतिमासार्तवेन तस्मात्पापाच्छुद्धा भवति । ब्राह्मणश्च संन्यासेन षष्ठाध्यायाभिधेयेन पापाच्छुध्यति ॥ १०८ ॥

( ४ ) **राघवानन्दः** । शोध्यं मलाद्युपेतं । नदी श्लेष्माद्यशुचिदूषिता । मनोदुष्टा परपुरुषमैथुनसंकल्पदुष्टा रजसा पुनर्ऋतुयोगेन । द्विजोत्तमोब्राह्मणः संन्यासमुपक्रम्य ब्राह्मणः पुत्रैषणायाश्चसब्राह्मणः केन स्यादिति श्रुतेः पारिव्राज्यदर्शनाच्चेति भाष्योक्तेश्च सन्यासएवासाधारणः संस्कारोविप्रस्येति ॥ १०८ ॥

( ५ ) **नन्दनः** । शोध्यंशरीरलग्नंमलम् । मनोदुष्टा मनसा भर्तारंव्यतिक्रान्ता । सन्यासेन सङ्गत्यागेन ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । शोध्यंवस्तु अमेध्योपहतं मृत्तोयैः शुध्यति । नदी वेगेन वर्षाम्बुप्रवाहवेगेन । मनोदुष्टा मनसिव्यभिचारेण स्त्री रजोदर्शनेन शुध्यति । संन्यासः प्रव्रज्या द्विजन्मनांमानसोपचारे शुद्धिकृत् ॥ १०८ ॥

**अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ॥ विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ १०९ ॥**

( १ ) **मेधातिथिः** । इयानेवाधिकारी कर्ताच पुरुषोयदान्तरात्मा । अन्तःकरणंमनः । बुद्धिः । शरीरं भोगायतनं इन्द्रियाणांभौतिकत्वान्नपृथक्त्वम् । अत्र किंचित्केनचिच्छोध्यते । कालेनतु सर्वमितिस्तुतिपरम् । गात्राणीत्यवयवैरवयविनंलक्षयति । अद्भिः स्नानेन शरीरंशुध्यति। मनस्तु सदसदात्मकं तस्यासत्संकल्पादशुद्धिः सत्येन साधुसंकल्पेन निवर्तते । पूर्वंमनसःशुद्धिहेतुत्वमुक्तं तदध्याहारेणनेदंवाचोमनः शुद्धिकरणं । तथाच श्रुतिः । मनसावाइषिता वाग्वदति यांह्यन्यमनावाचंवदत्यसुर्यावैसावागदेवजुष्टेति । यावाऽनुपभुक्तजन्मान्तरकृताशुभकर्मजा । एकैकदुष्कृतजावाबुद्धिरात्मनोयावत्सहजाविद्यात्मकाभेदग्रहणलक्षणागुणात्मविवेकाभावलक्षणावा धनपुत्राद्यभिषङ्गरूपा तृष्णातिशयहेतुःसातुविद्ययासाङ्ख्यवेदान्ताभ्यासजन्यया । तपसा च कृच्छ्रादिनाभ्युपेतःशुध्यति । भूतात्म भूतशब्दस्तत्ववचनः । पारमार्थिकोयमात्माऽनुषचिताहंप्रत्ययवेद्योनतुभूतमयआत्मा शरीरात्मेतिमन्तव्यम् । बुद्धिरविद्यमानार्थाकारदर्शनीयास्वप्नादिष्वसत्सिद्धान्तप्रकल्पितार्थाभिनिवेशतयाबस्त्वात्मार्थाकारयोरसद्भेदाध्यवसायेन दुष्यन्ती ज्ञानेन स्वप्रकाशाश्रययाप्रमाणव्युत्पत्त्या शुत्ध्य-

---

( १०९ ) सत्येन=सत्त्वेन ( नन्दनः )

ति। बुध्यर्थयोर्भेदादाकारवत्वादर्थस्य विषयाकारेण च परिणामासिद्धिर्निर्विकारत्वनिश्चयाद्बुद्धिशुद्धिः पूर्वत्रचविद्यावेदार्थवेदनमेव। तस्याश्चहेतुत्वं यथैधांस्तेजसा वन्हिरितिवदिति। एवंशुद्धःपूतोब्रह्मलोकमवाप्नोतीत्येषा सा चतुर्विधा शुद्धिः। यथैताशुद्धयःपरपुरुषार्थहेतवस्तज्जननादिष्वियमितिप्रशंसा। ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः**। अद्भिः स्नानेन शुध्यन्ति कर्माधिकारंलभन्ते। मनः शुध्यति मनसा यत्पापंकृतंतत्सत्याभिधानेननश्यति। विद्या वैश्वानराद्युपासना तपोऽनाशकं भूतात्मा स्थूलः सूक्ष्मश्चदेहः बुद्धिः क्षेत्रईश्वरज्ञानेन ॥ १०९ ॥

( ३ ) **कुल्लूकः**। स्वेदाद्युपहतान्यङ्गानि जलेन क्षालितानि शुध्यन्ति। मनश्च निषिद्धचिन्तादिना दूषितंसत्याभिधानेन शुध्यति। भूतात्मा सूक्ष्मादिलिङ्गशरीरावच्छिन्नोजीवात्मा ब्रह्मविद्यया पापक्षयहेतुतया तपसा च शुद्धोभवति। शुद्धः परमात्मरूपेणावतिष्ठते। बुद्धिश्चविपर्ययज्ञानोपहता यथार्थविषयज्ञानेन शुध्यति ॥ १०९ ॥

( ४ ) **राघवानन्दः**। किंचअद्भिरिति। गात्राणिकरचरणादीनि। मनः निषिद्धचिन्ताद्यशुद्धंसत्येनसत्याभिधानेन। सर्वदा प्रसन्नमनाव्यवहरेन्न मिथ्याभाषेतेति। विद्यातपोभ्यां भूतात्मासचित्कोदेहः स्थूलोहमित्यभिमानात् शुध्यति विद्याआत्मानात्मविवेकधीः तपश्चान्द्रायणादि विपर्ययज्ञानोपहताबुद्धिर्यथार्थज्ञानेन। वस्तुतस्तु। विद्या सगुणोपासना तपोनित्यनैमित्तिकप्रायश्चित्तंकर्म ताभ्यांविशुद्धो भूतात्मा ब्रह्मसाक्षात्काराहः। ज्ञानेन बुद्धिर्जीवोपाधिरन्तःकरणंशुध्यति। तत्त्वंपदार्थद्वयनिश्चयवती तदुपहितचैतन्यस्य ब्रह्ममात्रत्वे तस्याअपि तन्मात्रताशुद्धिरात्यन्तिकी नान्या। तपसा कल्मषंहन्ति विद्यांचाविद्यांच यस्तद्वेदोभयंसह अविद्यया मृत्युंतीर्त्वाविद्ययामृतमश्नुतइति श्रुतेः एवंच सगुणब्रह्मविदोपि न श्राद्धादि। नाशौचंच तथाचश्रुतिः यद्यस्मिन्छव्यंकुर्वन्ति यदुच नतेर्चिषमतिसंभवतीति अस्यार्थः कंब्रह्मखंब्रह्मेत्येवंविद्यस्मिन्पुरुषे यदिशव्यंकुर्वन्ति शवसंबन्धिदाहश्राद्धादिकंकर्म कुर्वन्ति यदुचनयदिवानउभयथाअर्चिरादिमार्गेण ब्रह्मलोकंगच्छन्तीत्यनेनाप्यविदुषस्तदकरणे प्रेतत्वमस्तीति भावः। इतिप्रेतशुद्धिः ॥ १०९ ॥

( ५ ) **नन्दनः**। गात्राणि शरीरमितियावत्। रजस्तमोदूषितंमनः सत्त्वेन सत्त्वगुणेन शुध्यति। विद्यातपोभ्यांज्ञानस्वाध्यायाभ्याम्। भूतात्मा चेतः। बुद्धिरध्यवसायनिमित्तमन्तःकरणम्। ज्ञानेनशास्त्रार्थज्ञानेन ॥ १०९ ॥

**( ६ ) रामचन्द्रः**। गात्राणि अङ्गानि हस्तपादादीनि अद्भिःप्रक्षालनेन शुध्यन्ति। मनः सत्याचारेण शुध्यति। भूतात्मा विद्यातपोभ्यांशुध्यति। तद्यथा भूतशब्देन तद्विकारभूतोदेहेन्द्रियसंघोलक्ष्यते तत्र स्थूलोऽहंकृशोऽहमित्येवंतदभिमानित्वेन योयमात्मा वर्तते सभूतात्मा तस्य तपोविधे शुद्धि निमित्ते। तपः ब्रह्मजिज्ञासुश्चेति पञ्चकोशव्यतिरेकप्रतिपादानपरंवाक्यं। विद्याशब्देन चोपनिषदस्थूलमनण्वह्रस्वमसंगोह्ययमात्मेत्यात्मपदार्थनिरूपकवाक्यजन्यंज्ञानं विद्या वैखानसाद्युपासना वा तपः अनशनादि। भूतात्मा जीवात्मा। बुद्धिः सूक्ष्मदेहः। ज्ञानेन आत्मज्ञानेन शुध्यति शरीरादिव्यतिरिक्तसंशयविपर्ययरूपत्वेन स्वरूपज्ञानंविशोधनम् ॥ १०९ ॥

**एषशौचस्य वः प्रोक्तः शारीरस्य विनिर्णयः ॥ नानाविधानां द्रव्याणां शुद्धेः शृणुत निर्णयम् ॥ ११० ॥**

( १ ) **मेधातिथिः**। नानाविधानांद्रव्याणांबहुप्रकाराणांतैजसमार्तिकद्रवकठिनव्यस्तसंहतकार्यद्रव्यादिभेदैर्द्रव्याणामुपकरणभूतानांपूर्वस्याःशुद्धेर्भेदमेतेनाह। तत्र बुद्ध्यात्मनःप्रधानता शुद्धिः। द्रव्याणांतु तत्संपरिग्रहात्। इहतु विपरीतंशृणुत निर्णयं पूर्वेणार्थस्यासांकार्यार्थः श्लोकः ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । शारीरस्य बाह्यद्रव्यविषयस्येत्यपि । द्रव्याणां बाह्यानां नानाविधानां प्रकारविशेषोपाधिभिन्नानांतत्तदुपाधिभेदनियतायाःशुद्धेः ॥ ११० ॥

( ३ ) **कुल्लूकः** । अयंशरीरसंबन्धिनः शौचस्य युष्माकंनिश्चयउक्तः । इदानींनानाप्रकारद्रव्याणांयेन यच्छुध्यति तस्य निर्णयंशृणुत ॥ ११० ॥

( ४ ) **राघवानन्दः** । तामुपसंहरन्द्रव्यशुद्धिंप्रतिजानीते एवेति । शारीरस्य देहद्वयसंबन्धिनः ॥ ११० ॥

( ६ ) **रामचन्द्रः** । नानाविधानांपात्राणांतथा द्रव्याणांशुद्धेर्निर्णयंशृणुत ॥ ११० ॥

**तैजसानां मणीनां च सर्वस्याश्ममयस्य च ॥ भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः॥१११॥**

( १ ) **मेधातिथिः** । तैजसान्युच्यन्तेयान्यग्निसंयोगाद्द्रवीभवन्ति रजतसुवर्णताम्रायसत्रपुसीसादीनि । मणयः स्फटिककल्पाःअश्मापाषाणः तद्विकारःपात्रमश्ममयम् । सर्वस्येति पादपूरणार्थं । पर्वतग्राव्णोनदीस्थस्यचेत्यालंबनम् । भस्मनएककार्यत्वान्मृद्भस्मनी विकल्प्येते । आपःसमुच्चीयन्ते । किंपुनरत्र कार्यंलेपगन्धापमार्जनं । उक्तं लेपगन्धापकर्षणे शौचममेध्यस्य । इहापि यावन्नापैत्यमेध्याक्तादिति तत्ररूपतोऽपारुष्यंसमानंमृद्भस्मनोःस्नेहांनमित्तकार्यभेदेशुद्धिः। अशुचेःशुचित्वापादनमत्यवायापनयेन संव्यवहारयोग्यता । यद्येवमशुद्धिर्वाच्या इदमनेन संपृक्तमशुचीति । ननु लौकिकाःपदार्थास्तत्रलोकाएव ज्ञास्यन्ते । नैकसामान्यमात्रंलोकाज्ज्ञायते । यज्जुगुप्सितंमूत्रपुरीषशोणितसंसर्गेण तादृशंलोकेशुचीत्याह । यदयोग्यंस्पर्शनादिक्रियासु तदशुचि । कथंच तस्यायोग्यतेत्येतच्छास्त्रादेव विवेक्तव्यम् । किंच परद्रव्यादौ योन स्खलति सशुचिरुच्यते । अतोऽनया पदार्थप्रसिध्येह किंचित्सिध्यति अपहतमशुचीति सिद्धेपिइदमनेनापहन्यतइति । नान्तरेण शास्त्रविशेषःसिध्यति कथंपुनः शास्त्रात्पदार्थविशेषावसायोयावता कर्तव्यतापरत्वेन शास्त्रंप्रमाणंनपदार्थप्रसिद्धौ पाणिनिवत् । वेदमूलत्वाभ्युपगमान्मन्वादिस्मृतीनामुच्यते । अनेन द्रव्येण यद्दुष्टंतेन न व्यवहर्तव्यमित्यस्त्येव विध्यनुमानम् । यत्संसर्गेण व्यवहारप्रतिषेधः सउपघातहेतुरित्यवगमोनविरुध्यते । एवंशुद्धावपि यदुपहतंद्रव्यंतेन यथाविहितंकृतप्रक्षालनादिक्रियेणव्यवहर्तव्यमितिशक्यतेविधिमूलताप्रतिपत्तुम् । न च शुद्धिःकर्तव्येतिविध्यर्थः तथा सत्यकुर्वन्प्रत्यवेयात् । किंतु दृष्टार्थे व्यवहारेयेन केचित्पात्रेण शुचिनान्येनवा कर्तव्येर्थित्वात्प्राप्ते नियमःशास्त्रीयः । इत्थंभूतेन व्यवहर्तव्यं सत्यर्थित्वे नानित्थंभूतेन । ननुच नियमपक्षेभ्युदयार्थिनोधिकारः अन्यस्य तु कामप्रसंगः । यथाकुसाधुत्वचिन्तायांवाचकत्वाविशेषेपि नियमः पुण्यपापयोरिति । सत्यं । यद्यशुद्धे पात्रस्य प्रतिषेधोन स्यात् । प्रतिषेधेतु सति कुतोऽकृतशुद्धिना व्यवहारः । शुद्धिविधिस्तु प्रतिप्रसवमात्रम् । प्रतिप्रसवे कुतोभ्युदयः केवलंप्रतिषेधातिक्रमोन भवति । भवतु वा पदार्थाधिगमपरैव स्मृतिरियं साध्वसाधुविवेकवत्स्वल्पस्मृतिवच्चयत्तुकार्यमूलत्वंमन्वादिवाक्यानामिति । केनैतदुक्तं यत्रयादृश्यंमूलत्वेन शक्यतेवगन्तुं तत्र तदेवाभ्युपगम्यते । अष्टकादौकार्यरूपे तादृशमेव वाक्यंमूलसिद्धार्थमेव पदार्थव्यवस्थायामिदंप्रथमता व्यहारमूलेति न कदाचित्कृतिः । इहतु न कथंचिद्व्यवहारमूलंसंभवति वैदिकमन्त्रसाध्यायांच शुद्धौ का व्यवहारमूलता शक्या विधिश्चानर्थकःस्यात् । ननुच पाणिनेरपि विधिरस्ति साधुभिर्भाषितव्यंनासाधुभिरिति नैषा पाणिनेःस्मृतिः । साह्येतावतिपर्यवसिता साधुरयमयंनेति एतत्तुधर्मसूत्रकारिणा यद्यप्यस्ति । अभिधानसाराच्चैनन्निपुणतोऽवगन्तव्यम् । ननु तत्स्मृतावपिविधिःश्रूयते । दायादाएवपरिभजेरन् चतुरोंशानूहरेज्ज्येष्ठः ज्येष्ठएव तु गृण्हीयादिति । किंविध्यर्थएव लिङ्गान्तरेप्रैषादौ स्मर्यते । पदार्थाविधिरूपाविधिशेषाःप्रैषादयः सर्वत्र प्रवर्तनाप्रतिपत्तेरितिचेत् । हेतुहेतुमतोराशिषि प्राप्तकालादिषु का प्रवर्तना नच ग्रहणंविधेयः अर्थितया प्राप्तत्वात् । स्वपरांशयोरविशिष्टायामर्थि-

तायांनियमार्थोविधिरितिचेत् अदृष्टकल्पेन विहितांशातिरेकेण विधिनियमानुपपत्तेः । प्रतिषेधाख्यापरिसंख्येतिचेत् युक्तमेतत् विभागकालएव यः कश्चिदधिकमंशंभ्रातृभिरनुज्ञातमाददीत समस्त्यवेयात्सत्यामप्यनुज्ञायामेकवस्त्वांशः । नच स्वत्वंज्ञाप्येतग्रहणविधौहि स्वत्वापत्तिरुपात्ता । तस्य यदन्यत्तदस्वमितिविज्ञायते प्रतिषेधः । पुनस्तदतिक्रमेणापि परिग्रहे स्यादेव स्वाम्यं अतश्च चौर्यादिनापीष्यते न तदा इदमस्य स्वमिदंनेति परिग्रहाद्दते निश्चीयते तस्माद्विधिनियमपरिसंख्यानामसंभवादियत्यंशेऽयंस्वामीयत्यंशेऽयमिति । एतावान्विभागार्थः । अतोयमर्थान्तरेलिङ्गं भजेरन्निति । प्राप्तकालतायां हरेयुरित्यादिषु लौकिकप्रवृत्त्यनुवादोयथा क्षुधितोभुञ्जीत योगक्षेमार्थमीश्वरमभिगच्छेदिति । गौतमश्च स्पष्टमेवाह । रिक्थक्रयेत्यादि । तस्मादष्टकादिस्मृतेःशुत्ध्यशुद्धिवचनस्यसंस्कारविधितैव शिष्यते । विधिमूलत्वाद्विधिशिष्टैव । अतः शुध्यशुद्धीउभेअपि शास्त्रावसेये ततः शुद्धिरपि वाच्या । उच्यते । उक्तैवतर्हि वसाशुक्रमिति । नृहग्रणंचतत्र स्मृत्यन्तरदर्शनेन प्रदर्शनार्थं । श्वमार्जारखरोष्ट्रकपिकाकविड्वराहग्राम्यकुक्कुटाखुशृगालक्रव्यादमृगशकुन्तनखिनकुलानांवसादिग्रहणंच । रोममांसानांशुद्धिवचनाच्चाशुद्धानांमूत्राद्युपहातानामयंसंस्कारःकर्तव्योन पुनरेवमेवप्रयुज्यमानानाम् । नहि सुवर्णादयोभावाःस्वरूपेणाशुद्धायेन प्रयोगकालेशुद्धिमपेक्षेरन् । अथवा दृष्टार्थोदृष्टप्रयोगाश्रयःसंस्कारोविधीयते । प्राङ्मुखेनेव भोजने तत्र शुद्धिवचनंविरुध्यते । येतु पात्राणांभोजनारम्भसंमार्जनप्रक्षालनेते समाचारतः न पुनरस्याःशुद्धिःस्मृतेः । यदप्यन्यदस्पृश्यं पुरुषस्य पतितचाण्डालादि तथा लशुनापलाण्डुसुरामांसादि तदपि द्रव्याणामुपघातकम् । तत्र कस्मिन्नुपघाते का शुद्धिरिति स्मृत्यन्तरसमाचारावन्वेषणीयौ । उक्तश्च विशेषोहारीतापस्तम्बपराशरमुनिभिः । तानितु वचनान्यस्माभिरिह सर्वाणि न परिवर्तितानि । लेखकविशेषप्रसंगाच्चन्द्रगोपतन्त्रकारवत् ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । तैजसानां सुवर्णादीनां । मणीनां माणिक्यादीनाम् । अश्ममयस्य प्रस्तरमयस्य । भस्मनेति भस्ममृदोरन्यतरेणाद्भिश्च सलेपोपघाते शुद्धिः ॥ १११ ॥

( ३ ) **कुल्लूकः** । तैजसानांसुवर्णादीनांमरकतादिमणीनांपाषाणमयस्य च सर्वस्य भस्मना जलेन मृत्तिकया च मन्वादिभिः शुद्धिरुक्ता । निर्लेपस्य जलेनैवान्तरंशुद्धेर्वक्ष्यमाणत्वादिदमुच्छिष्टघृतादिलिप्तविषयम् । तत्र मृद्भस्मनोर्गन्धक्षयैककार्यत्वाद्विकल्पः । आपस्तूभयत्र समुच्चीयन्ते ॥ १११ ॥

( ४ ) **राघवानन्दः** । तामाह तैजसानामिति । पञ्चत्रिंशता तैजसानां ताम्रकटाहादीनां मणीनां मरकतादीनां अश्ममयस्य पात्रादेः उच्छिष्टघृतादिसलेपानांतेषांभस्मादित्रिभिरेव शुद्धिरुक्तेत्यन्वयः ॥ १११ ॥

( ५ ) **नन्दनः** । तैजसानांलोहविकाराणांमणीनांरत्नादीनां भस्मादिभिस्त्रिभिर्द्वाभ्यामेकेन वा यथायोगंशुद्धिःप्रोक्ता ॥ १११ ॥

( ६ ) **रामचन्द्रः** । अथ पात्रद्रव्यशुद्धिमाह तैजसानामिति । तैजसानां सुवर्णादीनां मणीनां मुक्तादीनां सर्वस्याश्ममयस्य दृषदुपलादीनां तेषां सौवर्णादीनां सोच्छिष्टानां मृद्भस्मवारिणा शुद्धिरुक्ता ॥ १११ ॥

**निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति ॥ अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥ ११२ ॥**

( १ ) **मेधातिथिः** । तैजसविशेषयोः काञ्चनराजतयोर्निर्लेपयोरयंविधिः । अन्येषांतु ताम्रादीनांयथोच्छिष्टस्पर्शेधावनादिष्टकादिभिःक्षीरंवा पानीयंवा पीतंतत्र न भवति लेपः । यत्र मांसघृतक्षीरादिभिरुच्छिष्टैःसंश्लिष्यन्त्यवयवास्तत्र वक्ष्यति तस्मात्तयोःस्वयोन्यैवेति लेपगन्धापकर्षणवचनाच्च योलेपोयेनैवापक्रष्टुंशक्यते तत्र तदेवोपादेयंन भस्मवारिणीएव । तथाच हारीतः गोधूममकुष्ठककसाययवमुद्गमसूरचूर्णैरित्यादिपठति । श्वचाण्डालोदक्यादिस्पर्शेतुनिर्लेपयो-

रपि भस्मना त्रिःसप्तकृत्वःपरिमार्जनमिति हारीतः। शङ्खस्तु तैजसानांकुणपरुधिररेतोमूत्रपुरीषोपहतानामावर्तनमुल्लेखनंभस्मना वा त्रिःसप्तकृत्वःपरिमार्जनमिति । तत्र चिरकालमूत्रादिवासितानामावर्तनम् । नामाकृतिमुपमृद्येच्छातस्तदाकृतिसंपादनमावर्तनम्। उल्लेखनं तीक्ष्णेन शस्त्रेणाश्मना वा निघर्षः । स्मृत्यन्तरे त्वाकारदाहावचूलनान्याम्नातानि तत्रसुवर्णकारैर्वर्णीकृतस्य शुद्धिः। दाहःअग्नौ सुवर्णकारैर्निष्टपनम्। अवचूलनं दाहेनातीतानांसुवर्णकाराणांसुवर्णघनभाण्डे तेन सर्वतअहननम्। तस्मिन्स्वर्णाकारे। तथाचोक्तं । आकराःशुचयःसर्वइति। अब्जं शङ्खस्फोटनादि । शङ्खस्यतु सलेपस्य गौरसर्षपकल्केन गोमूत्रोदकाभ्यांक्षारेणच। स्मृत्यन्तरेहि पठ्यते। अद्भिःशङ्खस्येति क्षीरोदकाभ्यांगौरसर्षपकल्केनोच्छिष्टस्नेहयुक्तस्येति। अनुपस्कृतमखातपूरितमथवात्यन्तानुपहतं। सर्वशेषश्चायम्। तेन शुष्कामेध्यचण्डालादिस्पर्शे सत्यपि निर्लेपत्वे प्राक्प्रदर्शितैव शाखान्तरीयाशुद्धिः ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । निर्लेप शुष्कविष्ठादिस्पृष्टं उच्छिष्टनरादिस्पृष्टंच। अब्जंशङ्खादि। अश्ममयपदेन मणीनामपि ग्रहणम्। अनुपस्कृतमनुत्कीर्णकाञ्चनाब्जादि । उत्कीर्णे रेखान्तर्मलावस्थानसंभवादधिकंशौचम्। रजतपदं ताम्रादिव्यवच्छेदार्थम् ॥ ११२ ॥

( ३ ) **कुल्लूकः** । उच्छिष्टादिलेपरहितंसौवर्णभाण्डं जलभवंच शङ्खमुक्तादि पाषाणमयंच राजतमनुपस्कृतंरेखादिगुणान्तराधानरहितं तथाविधमलासंभवाज्जलेनैव भस्मादिरहितेन शुध्यति ॥ ११२ ॥

( ४ ) **राघवानन्दः** । अब्जं शङ्खशुक्त्यादि अनुपस्कृतं रेखादिरहितं निर्लेपंचेज्जलेनैवं ॥ ११२ ॥

( ५ ) **नन्दनः** । भाण्डंपात्रम्। अब्जंशङ्खशुक्त्यादिकम्। अनुपस्कृतंनिर्लेपमित्यर्थः। निर्लेपमित्यत्रविशेषणात्सलेपविषयाः पूर्वोक्ताः ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । अब्जं मुक्ताफलशङ्खशुक्त्यादि राजतंच अनुपस्कृतंरेखादिरहितं अन्नादिना असंस्पृष्टं अद्भिः प्रक्षालनेन शुध्यति ॥ ११२ ॥

**अपामग्नेश्च संयोगाद्धैमं रौप्यं च निर्बभौ ॥ तस्मात्तयोः स्वयोन्यैव निर्णेकोगुणवत्तरः ॥ ११३ ॥**

( १ ) **मेधातिथिः** । अर्थवादोयम्। अग्निर्वैवरुणानीत्यारभ्याकामयतेत्याद्यर्थवादेषु हेम्नःसुवर्णस्यरूप्यस्यचोत्पत्तिःश्रुता। पुरुषधर्मेणाग्निर्वरुणानीरपोऽकामयतमैथुनधर्मेण समयुज्यत ततएतद्द्वयंनिर्बभौ उद्भूतंअतस्तयोःस्वयोन्या स्वेनोत्पत्तिकारणेनाग्निना अत्यन्तोपघातउदकेनच । सयोन्येतिपाठे समानोत्पत्तिना भस्मनेति व्याख्येयम्। तद्दर्शनाच्च मृदोपि कदाचिदनुज्ञायन्ते। निर्णेकःशोधनं गुणवत्तरः ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । अत्यन्तोपघातित्वाह अपामग्नेश्चेति । अप्सुअग्नितेजोरूपवीर्यविसर्गात्सौवर्णराजतोर्ध्वाधःशकलद्वयवद्ब्रह्माण्डोत्पन्निरितितात्पर्येणेदमुक्तम्। स्वयोन्या अग्नौ प्रताप्य आवर्त्यवा जलप्रक्षेपेणेत्यर्थः। निर्णेकः शोधनं गुणवत्तरः शोधनान्तरेभ्यः ॥ ११३ ॥

( ३ ) **कुल्लूकः** । अग्निर्वै वरुणानीरकामयतइत्यादिवेदे श्रूयते तथाग्नेः सुवर्णमिन्द्रियंवरुणानीनांरजतमित्यादिश्रुतिष्वग्न्यापःसंयोगात्सुवर्णरजतंचोद्भूतंयस्मादतस्तयोः स्वेनकारणेनैव जलेनात्यन्तोपघातेनाग्निना निर्णेकःशुद्धिहेतुः। गुणवत्तरः प्रशस्ततरः ॥ ११३ ॥

( ४ ) **राघवानन्दः** । किंच अपामग्नेश्चेति। अत्यन्तोपघाते तयोःसुवर्णरजतयोः। अग्निजलजत्वंश्रौतमाश्रित्याह तस्मात्तयोरिति। सुवर्णरेताहुतभुक् सोरोदीद्यदरोदीत्तद्रजतमभूदिति श्रवणादग्निजलरूपया स्वयोन्या निर्णेकःशुद्धिर्गुणवत्तरःप्रशस्तः ॥ ११३ ॥

---

( ११३ ) गुणवत्तरः=बलवत्तरः ( नन्दनः )

( ५ ) **नन्दनः** । आग्नेयंहिरेतोगंगाजलसंयोगात्सुवर्णरजतंचाभवदितिहासपुराणेषु स्मर्यते तेनोक्तमग्नेश्चापांचसंयोगाद्धेमरूप्यंचनिर्बभाविति । बलवत्तरशब्देनात्यन्तोपहतहेमरूप्यमिदमितिगम्यते ॥ ११३ ॥

( ६ ) ) **रामचन्द्रः** । हैमं हेमविकारं रौप्यं रौप्यविकारं जलाग्निसंयोगान्निर्बभौ तयोर्न्यैव जलाग्निसंयोगेनैव निर्णेकः शुद्धिगुणवत्तरः उत्कृष्टः ॥ ११३ ॥

**ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ॥ शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः॥११४॥**

( १ ) **मेधातिथिः** । यथार्हं यस्ययदर्हति येन यस्य मलमपक्रष्टुंशक्यतइत्यर्थः । अतएव स्मृत्यन्तरोक्तमपि लभ्यते वाहनीयास्त्रपुसीसकविकारागोमयतुषैरिति । यथा गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि चेति । अतएव क्षारभेदाश्च काञ्जिकदाडिमादियोजिताःसिद्धाभवन्ति ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । रैत्यं पैत्तलं । त्रपुरङ्गं । अत्ररैत्यानामितिविकारमुक्त्वा त्रपुणइति प्रकृत्यभिधानात्तत्प्रकृतिविकारयोस्तुल्यंशौचमित्युक्तम् । यथार्हं येन यस्य मलापगमः । क्षारसहितेन वारिणा ताम्ररैत्यव्यतिरिक्तानाम् तयोस्तु अम्लोदकेनअम्लरसेन वारिणाचेत्यर्थः ॥ ११४ ॥

( ३ ) **कुल्लूकः** । अयोलोहं रीतिःपित्तलं तद्भवंपात्ररैत्यं त्रपुरङ्गम् एषांभस्माम्लोदकैः शोधनंकर्तव्यं यथार्हंयस्ये यदर्हति ॥ अम्भसा हेमरौप्यायःकांस्यंशुध्यति भस्मना । अम्लैस्ताम्रंच रैत्यंच पुनः पाकेन मृन्मयम् ॥ इति बृहस्पत्यादिवचनाद्विशेषोऽत्र बोद्धव्यः ॥ ११४ ॥

( ४ ) **राघवानन्दः** । ताम्रादिषण्णांशुद्धिमाह ताम्रेति । अयोलोहं रीतिः पित्तलं तदुद्भवंरैत्यं त्रपु रङ्गं यथार्हं यस्य यदिति ॥ अम्भसा हेमरूप्यायःकांस्यंशुध्यति भस्मना । आम्लाद्यैस्ताम्ररैत्येच पुनः पाकेन मृन्मयम् ॥ इति बृहस्पतिवचनात् । मद्योपहतत्वेऽल्पोपहतत्वे च वारिणैव अत्यन्तोपहतत्वेभस्मक्षारादिनाशुद्धिः ॥ ११४ ॥

( ५ ) **नन्दनः** । क्षारोभस्मोषोवा । अम्लोदकंचिञ्चाफलादिरसः । गन्धवर्णादिदूषितविषयमेतत् । कुतः यथार्हमिति लोकदृष्टिसामर्थ्यानुसारोपदेशात् । इह रूप्यस्य पुर्ग्रहणमम्लोदकार्थम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । रैत्यं पैत्तलं । त्रपुणः रङ्गस्य च पुनः सीसकस्य पात्रस्य ताम्रादेः क्षाराम्लोदकेन शुद्धिः ॥ ११४ ॥

**द्रवाणांचैव सर्वेषांशुद्धिरुत्पवनंस्मृतं ॥ प्रोक्षणंसंहतानांच दारवाणांच तक्षणम् ॥ ११५ ॥**

( १ ) **मेधातिथिः** । क्षरणधर्माणोद्रवाः । घृततैलोदश्वित्प्रभृतयस्तेषांश्वकाकाद्युच्छिष्टानांप्रस्थमात्रपरिमाणानामुत्पवनं कस्यचिदंशस्यापनयनंपूर्वभागस्थितस्य । स्मृत्यन्तरेत्वेवमाम्नातम् ॥ कुशाग्राभ्यांपवमानःसुवर्जनइत्यनुवाकेन । अन्येतुप्लावनमुत्पवनमाहुरन्यत्समानजातीयं तावदासिच्यते यावत्पूर्णे भाण्डे कांश्चिन्मात्राअवस्रवन्ति । साक्षादुपघातएतत् अल्पानांत्यागएव । भाण्डोपघातेतु पात्रान्तरनयनमुच्छिष्टस्पर्शे तु तैलसर्पिषी उदकेवधायजपेदित्युक्तम् । तत्रार्थापात्रोत्क्षेपः । नहि तैलस्य उदके क्षिप्तस्य पात्ररहितस्योपयोगःसंभवति साहचर्यात् घृतस्यापि । एतच्चोत्पवनंद्रवाणाम् । मद्यामेध्यसंसर्गकृतौ गन्धवर्णौ नदृश्येते तयोस्तु सत्योस्त्यागएव सर्वंचैतद्बौधायनस्मृतौ परिगृहीतम् । पक्वानांतु द्रव्याणांपुनःपाकोपि श-

---

( ११४ ) रैत्यानां=रौप्यानां ( क, ख, नन्दनश्च )

ङ्खेनाम्नातः। सर्वेषां येप्यमेध्यामद्यादयस्तेषामप्यैषैव शूद्रादीन्प्रति शुद्धिः। अत्रतूत्पवनंप्लावनमेव । यथा वसिष्ठेनोक्तं। भूमिष्ठानांतूदकवत्। संहताः कठिनाः शानंघृतं आमिक्षागुडपर्पटकादयस्तेषांयःप्रदेशउपहतस्तमपनीयशेषस्य शुद्धिः। उक्तं-चशङ्खेन शुष्काणामुद्धृतदोषाणामिति। अथवासमुदायादवयविनः संहताःशयनासनसरणादयःसजातीयविजातीयद्रव्यसं-घातात्मकाः। उद्धृतदोषाणामितिसर्वत्र द्रष्टव्यम्। शवशुष्कामेध्यसंसर्गेषु यःप्रदेशोवृत्तसंसर्गस्तस्य प्रक्षालनमवशिष्टस्य-प्रोक्षणम्। दारवाणां केवलदारुकृतानां बृशीफलकादीनांकाष्ठमयानांच शवचण्डालपुरीषसंसर्गे तक्षणम्। अन्येतु पुरीषसं-सर्गएवेच्छन्ति। तक्षणेनगन्धलेपाद्यपनेतव्यम् । अवशिष्टस्य मृद्वारिभ्यांप्रक्षालनंप्रोक्षणंवा । श्वाद्युपघाते तु प्रक्षालनमे-व। पुरीषवत्खट्वाशय्यादीनांच दारुचर्मसूत्रघटितानांसंहतत्वेन शुद्धिः ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः**। उत्पवनं वस्त्रेण पावनं कठिने चोपघाते संहतानामेकत्र स्यूतानामनेकेषांपटचर्मादीनाम्। दारवाणां तक्षणं मलाद्युपघाते ॥ ११५ ॥

( ३ ) **कुल्लूकः**। द्रवाणांघृततैलानांकाककीटाद्युपहतानांबौधायनादिवचनात्प्रसृतिमात्रप्रमाणानांप्रादेशप्रमाणकुशपत्र-द्वयाभ्यामुत्पवनेन शुद्धिः। संहतानांच शय्यादीनामुच्छिष्टाद्युपघाते प्रोक्षणं। दारवाणांचात्यन्तोपघाते तक्षणेन ॥ ११५ ॥

( ४ ) **राघवानन्दः**। किंच। द्रवाणां काकाद्युपहतघृतादीनां उत्पवनं प्रस्थमात्रपरिमाणानांप्रादेशपरिमितकुश-पत्रद्वयाग्राभ्यामुत्पवनेनशुद्धिरिति बौधायनोक्तेः। संहतानांसूत्रादिसंयुक्तानां उच्छिष्टाद्युपघाते तद्देशंप्रक्षाल्य प्रोक्षणं उपस्पर्शेतु प्रोक्षणमात्रं। दारवाणांदारुनिर्मितानां तक्षणं छेदनं अवयवस्य ॥ ११५ ॥

( ५ ) **नन्दनः**। संहतानाम् अपृथक्कृव्यसमवायरूपाणां शयानादीनाम्। तथा चाङ्गिराः॥ शयनासनयानानिरोमब-न्धानि यानि च। वस्त्राणि तानि सर्वाणि संहतानि प्रचक्षतेइति॥ उत्पवनंस्वल्पोपघाते तक्षणमत्यन्तोपघाते ॥ ११५ ॥

( ६ ) **रामचन्द्रः**। सर्वेषांद्रवाणां द्रवभूतानांघृतादीनां अस्य प्रमाणाधिकस्य काकाद्योपहतस्य अमेध्यसंस्पृष्टस्य सर्वद्रव्यस्य उत्प्लवनं सजातीयेन द्रवद्रव्येण भाण्डस्यातिपूरंयावन्निःसरणं शुद्धिः संहतानांसूत्रपटचर्मादीनांबहूनांधान्यवा-ससांप्रोक्षणं शुद्धिः। दारवाणां काष्ठपात्राणां अमेध्यलिप्तानां तक्षणं शुद्धिः ॥ ११५ ॥

**मार्जनंयज्ञपात्राणांपाणिना यज्ञकर्मणि ॥ चमसानांग्रहाणांच शुद्धिःप्रक्षालनेन तु ॥११६॥**

( १ ) **मेधातिथिः**। श्लोकद्वयंश्रुतिसिद्धार्थानुवादेन दृष्टान्ततया नेयम्। ग्रहचमसादीनांयज्ञपात्राणांप्रयोगान्तरे प्रयु-ज्यमानानां पूर्वप्रयोगलग्नाज्यहविर्लेपादिससर्गपरिहारार्थमुष्णेन वारिणा लेपाद्यपकर्षःकर्तव्यः। ततोयथाश्रुति क्वचित्पा-णिना क्वचिद्दर्भैः क्वचिद्दशापवित्रेण संमार्गःकर्तव्यः। इयंप्रायोगिकीशुद्धिःउच्छिष्टाद्युपघातेतुलौकिकपात्रवत्। न सोमेनो-च्छिष्टा भवन्तीतिविशेषश्रुतेरन्यत्रोपघाते सामान्यशुद्धिरस्तीति ज्ञायते। ग्रहचमसस्फ्यायाज्ञिकेभ्यआकारविशेषेणावसात-व्याः ॥ ११६ ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः**। शम्याकृष्णाजिनादियज्ञपात्राणां मललेपोपघाते यज्ञमध्ये मार्जनम्। चमसानां ग्रहा णांच ऋत्विगादिभिस्तद्गतशेषपाने क्षालनमात्रम् ॥ ११६ ॥

( ३ ) **कुल्लूकः**। चमसानांग्रहाणांचान्येषांयज्ञपात्राणांपूर्वंपाणिना मार्जनंकार्यं पश्चात्प्रक्षालनेन यज्ञे कर्तव्ये शु-द्धिर्भवति ॥ ११६ ॥

( ४ ) **राघवानन्दः**। मार्जनं चमसातिरिक्तयज्ञपात्राणां चमसानां ग्रहाणांच यज्ञकर्मणि कर्तव्ये पूर्वंपाणिना संस्कृत्य प्रक्षालनमन्यदा मार्जनमात्रम् ॥ ११६ ॥

( ५ ) **नन्दनः** । यज्ञकर्मणीतिविशेषणात्कार्यान्तरेषु जातिनिमित्तैवशुद्धिर्द्रष्टव्या ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । यज्ञपात्राणांस्रुक्स्रुवादीनां यज्ञकर्मणि प्रयुज्यमानानां दक्षिणेन पाणिना कुशसहितेन कर्माङ्गतया मार्जनं प्रक्षालनं कर्तव्यम् । चमसानां जलपात्राणां ग्रहाणां सोमपात्राणां षोडशीप्रभृतीनां जलप्रक्षालनेन शुद्धिः ॥ ११६ ॥

**चरूणांस्रुक्स्रुवाणांच शुद्धिरुष्णेन वारिणा ॥ स्फ्यशूर्पशकटानांच मुसलोलूखलस्य च॥११७॥**

( २ ) **सर्वज्ञनारायणः** । चरूणामित्यादि सलेपयज्ञभाण्डपरम् । स्फ्यादीनां प्रोक्षणं मलोपघाते ॥ ११७ ॥

( ३ ) **कुल्लूकः** । स्नेहाक्तानांचरुस्रुगादीनामुष्णजलेन शुद्धिः स्नेहाद्ययुक्तानांतु जलमात्रेणैव शुद्धिर्यज्ञार्थम् ११७ ॥

( ४ ) **राघवानन्दः** । उष्णेनेतीति विशेषणादन्यत्र शीतोदंचरूणां चर्वर्थपात्रस्यस्फ्यः खड्गाकारंकाष्ठम् ॥ ११७ ॥

( ५ ) **नन्दनः** । स्रुक्स्रुवाणामाज्यसंपृक्तानामुष्णेन वारिणा शुद्धिः । अत्र यज्ञकर्मणीत्यनुवर्तते ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । चरूणां चरुस्थाली स्रुक्स्रुवौ प्रसिद्धौ सस्नेहानि पात्राणि एतानि लेपरहितानि उष्णेन वारिणा शुध्यन्ति । स्फ्यः वज्रः यज्ञाङ्गकाष्ठखड्गः प्रसिद्धः शकटानां रथानां उष्णेन वारिणा मुसलोलूखलस्य च ॥ ११७ ॥

**अद्भिस्तु प्रोक्षणंशौचंबहूनांधान्यवाससाम् ॥ प्रक्षालनेन त्वल्पानामद्भिःशौचंविधीयते ॥ ११८ ॥**

**[ त्र्यहकृतशौचानांतु वायसी शुद्धिरिष्यते । पर्युक्षणात्धूपनाद्वा मलिनामतिधावनात् ॥ १ ॥ ] ‡**

( १ ) **मेधातिथिः** । बहुत्वंधान्यानांद्रोणाधिक्ये स्मर्यते । अन्येतु पुरुषापेक्षयादेशकालापेक्षयाचवर्णयन्ति । कस्यचिद्दुर्गतस्य कुडवार्धमपि बहु भवति । तथा कस्यांचिदवस्थायांवर्धितकोशोबहुतामेति । यथाहबौधायनः । देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनम् । उपपत्तिमवस्थांतु ज्ञात्वा शुद्धिंप्रयोजयेत् । एवंवासस्स्वपि केचिदाहुस्त्रिभ्यऊर्ध्वंबहूनियद्यपि त्रिप्रभृतिषु बहुत्वं यतोल्पानामिति बहुवचनंश्रुतमतस्त्रिपर्यन्तान्यल्पानि । अद्भिरित्युपलक्षणम् । तेन यस्यवाससोयेनैव दोषसंसर्गोव्यपैति तदपि द्रष्टव्यम् । तच्च प्राग्दर्शितम् । प्रोक्षणसंबंद्धोऽब्ग्रहणनियमार्थः । उदकेनैव प्रोक्षणंकर्तव्यं । एतेनैवच भेदेन द्विःपाठः । एतच्च महत्युपघाते शवपुरीषचाण्डालादिस्पर्शे अन्यथा त्वल्पानामिति प्रोक्षणमेव । यदि पर्यवस्यतोपि लेपादिवासतानापैति तदा तन्मात्रछेदनमुत्सर्गोवेतिगोतमेनोक्तम् ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । बहूनां द्रोणाधिकधान्यानाम् । तत्समभिव्याहाराच्च वाससामपि तावद्गुरुत्वयोग्ये बहुत्वे प्रोक्षणम् । अल्पानां धान्यवाससामेव । अत्र सर्वत्राद्भिरितिपदं द्रव्यान्तरेण गोमूत्रादिना क्षालनादि निवृत्त्यर्थम् ॥११८॥

( ३ ) **कुल्लूकः** । बहूनांधान्यानांवस्त्राणांच चाण्डालाद्युपघाते जलेन प्रोक्षणाच्छुद्धिः । बहुत्वंच पुरुषभारहार्याधिकत्वमिति व्याचक्षते । तदल्पानांतु प्रक्षालनाच्छुद्धिर्मन्वादिभिरुपदिश्यते ॥ ११८ ॥

( ४ ) **राघवानन्दः** । किंच पुरुषबाह्यातिरिक्तत्वेन बहुत्वं तद्युक्तानांधान्यानांचाद्भिः प्रोक्षणं उत्तानहस्तेन जलक्षेपः ॥ तिरश्चाभ्युक्षणंप्रोक्तंन्यश्चता वोक्षणंमतम् । उत्तानेन तु हस्तेन प्रोक्षणंसमुदाहृतमिति गौतमीतन्त्रवचनात् । तथा वाससांच पुंवाह्यन्यूनानामल्पानां धान्यवाससामद्भिःप्रक्षालनम् ॥ ११८ ॥

---

‡ ( ज, झ )

( ५ ) **नन्दनः** । धान्यानांबहुत्वंद्रोणाधिकत्वम् । वाससांबहुत्वंदशाधिकत्वम् ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । बहूनां धान्यवाससां द्रोणाधिकधान्यानां राशीकृतानां प्रोक्षणेनैव शुद्धिः चाण्डालादिस्पृष्टत्वात् ॥ ११८ ॥

**चैलवच्चर्मणांशुद्धिर्वैदलानांतथैवच ॥ शाकमूलफलानांच धान्यवच्छुद्धिरिष्यते ॥ ११९ ॥**

( १ ) **मेधातिथिः** । चर्मणां वर्धाणांस्पृश्यानां नतु श्वशृगालादिसमन्वितानां स्वभावाशुचीनां उपानत्कवर्चोदीनामपि तद्विकाराणामेषएव विधिः । अत्र हिप्रकरणे प्रकृत्यापि विकृतिर्गृह्यते । विकृत्यापि प्रकृतिः । तथाच दारवाणामित्यत्र दारूणामप्येवैव शुद्धिः । वसिष्ठेन हि दारवाणांशुद्धिमभिधाय दार्वस्थिभूम्यानीत्युक्तम् । यदिच विकृत्या प्रकृतिर्न गृह्येत तदनुक्तशुद्धिविधानेन दारूणांकथमतिदेशःक्रियेत । प्रकृतेस्तु विकारग्रहणं तद्धृध्यनपायाद्युक्तमेव । वैदलानि वार्क्षत्वगादीनि । स्मृत्यन्तरे पक्षपवित्रचर्मचामरतृणवेत्रबालवल्कलानांचैत्यादिनैव शुद्धिर्विहिता । तत्र मयूरादिपक्षास्तन्निर्वृत्ताश्च छत्रपिच्छिकादयोगृह्यन्ते । पवित्रंदर्भस्तेषां दर्भमयानांच वाससां । तृणशब्देन तालपत्राण्युच्यन्ते । तृणराजंविदुस्तालमिति स्मर्यते । तत्रैकदेशात्समुदायप्रतिपत्तिर्दत्तशब्दादिवद्देवदत्ते । वालागवाश्वाजानां न मनुष्याणां तेषांच्युतानामस्पृश्यत्वात् । सर्वाचेयंद्रव्यान्तरोपघाते शुद्धिरुच्यते न स्वभावोपहतौ चैलधान्ययोरेकरूपत्वाच्छुद्धेः शाकादेर्धान्यवद्वचनम् । यथा धान्यानामवघातादिसंस्कारान्तररहितानांधान्यावस्थानामेव प्रोक्षणप्रक्षालने शुद्धिहेतूतद्वच्छाकादीनामपि । तेनापक्वानामयंविधिः पक्वानांतु सत्यपि शाकादिशब्दवाच्यत्वे शुद्ध्यन्तरमन्वेषणीययम् । यथोक्तम् । सुवर्णवारिणा पावकज्वालयावेत्यादि । आकरादाहृतानांतु शाकादीनामुदश्विद्दधिक्षीरादीनांप्रोक्षणपर्यग्निकरणेविशेषतोहारीतेनाम्नाते । तथा शिम्बीधान्यानामुद्घर्षणदलनपेषणादि । एतच्च पादस्पर्शे शङ्कानिवृत्त्यर्थं तदुक्तम् आकराः शुचयःसर्वइति ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । चैलवद्बहुत्वे प्रोक्षणमल्पत्वे क्षालनम् । वैदलानां वेत्रवंशादिविदलकृतानां शाकादीनामपि । चैलवदित्यनेनान्वयसंभवे धान्यवदितिवचनं धान्यानामत्यल्पानां बहुमलोपघाते त्यागइति स्मृत्यन्तरसिद्धस्यार्थस्य शाकादावपि प्राप्त्यर्थम् ॥ ११९ ॥

( ३ ) **कुल्लूकः** । स्पृश्यपशुचर्मणांवंशादिदलनिर्मितानांच वस्त्रवच्छुद्धिर्भवति । शाकमूलफलानांच धान्यवच्छुद्धिः ॥ ११९ ॥

( ४ ) **राघवानन्दः** । किंच चैलवद्बहुत्वे प्रोक्षणं अल्पत्वे क्षालनंवैदलानांवंशदलादिनिर्मितानाम् ॥ ११९ ॥

( ५ ) **नन्दनः** । चैलवत् वासोवत् । वैदलानांवेणुदलनिर्मितानाम् । शाकमूलफलानामपक्वानाम् ॥ ११९ ॥

( ६ ) **रामचन्द्रः** । चर्मणां शुद्धिः चैलवद्वस्त्रवत् शुष्के चर्मणि वस्त्रवदिति वचनात् । चर्म अजादिचर्मविकारछत्रचामरादीनामुपलक्षणम् । वैदलानां वेत्रवैणवादीनां धान्यवत्प्रोक्षणेन शुद्धिः ॥ ११९ ॥

**कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ॥ श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥ १२० ॥**

( १ ) **मेधातिथिः** । ऊषाःकाञ्चनमृदः । अरिष्टकादयःप्रसिद्धाःलेहादिलेपे सत्युदकेनैतेषांद्रव्याणांचूर्णसंमिश्रेणन लेपनोच्छेदनादि कर्तव्यम् । कौशेयःपट्टविशेषः । एवमंशुपट्टमाविकमूर्णामियंतस्य हारीतेनोक्तंआदित्येनोर्णामयानांतन्नित्यंम्रियमाणानामनेकपुरुषस्य शरीरसंस्पर्शेद्रष्टव्यंनान्यस्मिन्नुपघातेवासस्त्वादेःतेषांकेवलयोःप्रोक्षणप्रक्षालनयोःप्राप्तयोःस्नेहाविलेपापकर्षणेअतिदिश्येते । क्षौमग्रहणं शाणादीनामपि प्रदर्शनार्थम् ॥ १२० ॥

( २ ) सर्वज्ञनारायणः । ऊषैरूषरमृद्भिर्जलेनचेत्यर्थात् । कुतपानां नेपालकम्बलानां अरिष्टैर्बिम्बसदृशैः । अंशूनां नाडीवादिवल्कलजातीनांसूत्राणां । पट्टानां कौशेयविशेषाणांच । क्षौमाणामतसीत्वग्जनितानाम् ॥ १२० ॥

( ३ ) कुल्लूकः । कृमिकोशोद्भवस्य वस्त्रस्य मेषादिलोमप्रभवस्य कम्बलादेरूषैः क्षारमृत्तिकाभिः कुतपानांनेपालकम्बलानामरिष्टैररिष्टचूर्णैः अंशुपट्टानांपट्टशाटकानांबिल्वफलैः क्षौमाणांदुकूलानांक्षुमावल्कलभवानांवस्त्राणांतु पिष्टश्वेतसर्षपप्रक्षालनाच्छुद्धिः ॥ १२० ॥

( ४ ) राघवानन्दः । पट्टसूत्रातिरिक्तकृमिजः कौशेयः । आविकोमेषलोमजः । ऊषैःक्षारमृत्तिकादिभिः । स्यादूषः क्षारमृत्तिकेत्युक्तेः । अरिष्टैररिष्टफलचूर्णैः । कुतपोनेपालदेशजःकम्बलः । अंशुपट्टः पट्टशाटी । क्षुमा वल्कलसूत्रं तज्जानाम् ॥ १२० ॥

( ५ ) नन्दनः । कौशेयम् कृमिकोशप्रभवम् । आविकमूर्णामयम् । ऊषोमृत्तिकाविशेषः क्षारवान् । पर्वतसंबन्धिच्छागरोमनिर्मितकम्बलविशेषः कुतपः । अरिष्टः फेनकः । श्रीफलंबिल्वफलम् । अंशुपट्टोवल्कलविशेषः । अतसीसूत्रनिर्मितंक्षौमम् । मलगन्धादिदूषितानामियंशुद्धिः न स्पर्शमात्रोपहतानाम् ॥ १२० ॥

( ६ ) रामचन्द्रः । कौशेयं कृमिकोशोत्थमित्यमरः । कौशेयं कोशप्रभवं । आविकं ऊर्णामयं । ऊषःस्यात्क्षारमृत्तिकेत्यमरः क्षारमृत्तिकासहितोदकेन प्रक्षालनंशुद्धिः । कुतपं नेपालकम्बलं अरिष्टफलसहितोदकैः। अंशुपट्टं वल्कलं तन्तुकृतं नु श्रीफलैर्बिल्वफलोदकैः । क्षौमाणां अतसीवल्कलजानां अतसीसूत्रनिर्मितंक्षौमं गौरसर्षपसहितोदकैः शुध्यति ॥ १२० ॥

**क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च ॥ शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वा ॥ १२१ ॥**

( १ ) मेधातिथिः । अस्थिशृङ्गदन्ताः स्पृश्यानांगोमेषहस्त्यादीनां नश्वगर्दभादीनाम् । गोमूत्रोदकयोर्विकल्पः । गौरसर्षपकल्कस्तु समुच्चीयते ॥ १२१ ॥

( २ ) सर्वज्ञनारायणः । क्षौमवद्गौरसर्षपकल्कसहितजलैः शङ्खशृङ्गाणां सलेपबहूपघाते । अस्थिमयस्य हस्त्यादिदन्तमयस्य क्षौमवदेव गोमूत्रोदकाभ्यांप्रोक्षणेन ॥ १२१ ॥

( ३ ) कुल्लूकः । शङ्खस्य पशुशृङ्गाणांस्पृश्यपश्वस्थिभवस्य गजादिदन्तस्य च क्षौमवत्पिष्टश्वेतसर्षपकल्केन गोमूत्रजलयोरन्यतरयुक्तेन शास्त्रविदा शुद्धिः कर्तव्या ॥ १२१ ॥

( ४ ) राघवानन्दः । क्षौमवदिति गौरसर्षपातिदेशः । पुनः शङ्खग्रहणमत्यन्तोपहत्यर्थम् । शृङ्गं कृष्णसारादेः । अस्थिगोमेषयोः । दन्तोगजवराहयोर्नतु गर्दभादेरिति मेधातिथिः । विजानता अत्यन्तोपहतानुपहतभेदविदा ॥ १२१ ॥

( ५ ) नन्दनः । गौरसर्षपाणामतिदेशः । गोमूत्रेणोदकेनवेतिशोध्यमलविशेषापेक्षोऽयंविकल्पः ॥ १२१ ॥

**प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुध्यति ॥ मार्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृन्मयम् ॥ १२२ ॥**

( १ ) मेधातिथिः । व्रीह्यादिकाण्डंरूस्तरादिप्रयोजनं पलालम् । तृणानि कुशशाद्वलादीनि । ननुच दारवाणामित्यत्र विकृतिःप्रकृतेर्ग्राहिकेत्युक्तं किमर्थंकाष्ठग्रहणं । नियमार्थं । प्रोक्षणमेव तेन यावन्न महानुपघातस्तावद्दारूणि तक्ष्यन्ते । चण्डालादिस्पर्शेतु सोमसूर्यांशुमारुतैरित्यनेनैव शुद्धिः । तद्विकाराणांतु दर्व्यादीनांप्रक्षालनतक्षणेस्वल्पोपघातेऽन्नाद्युपयोगिनांकर्तव्ये । मार्जनं शोधनं गृहस्यधूमांधकाराद्यपनयनम् । उपाञ्जनं सुधागोमयादिभिर्भूमिविलेपनम् । एतच्चशवचण्डा-

---

( १२२ ) णात्तृण=णात्पर्ण ( च )

लोदक्यादिर्भिर्भित्तिसस्पर्शेव्यापिनिद्रष्टव्यम् । अव्याप्तौतु तावन्मात्रस्यैव । ऊर्ध्वशवोपघातेतु भित्तितक्षणं सूर्यरश्म्यनुप्रवेशोऽग्निज्वालाभिमर्शनम् । क्वचित्पुनर्नवीकरणमित्यादिपठितंसंमार्जनम् । मृन्मयानांपुनःपाकः । पर्यग्निकरणमुच्छिष्टपुरुषसंस्पर्शादौ द्रष्टव्यम् । पुनःपाकस्तु मद्यभाण्डादिसंस्पर्शे द्रष्टव्यःसाक्षात्स्पर्शेतु त्यागएव । यथोक्तम् ॥ मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः । संस्पृष्टंनैव शुध्येत पुनःपाकेन मृन्मयमिति ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** । तृणानि काष्ठानि बहूनि पलालस्य तृणत्वेपि पृथग्ग्रहणं तल्लग्नधान्यानामपि तावन्मात्रेण शुद्धिरित्येतदर्थम् । मार्जनम् संमार्जन्या मृद्भागकाष्ठभागयोः । उपाञ्जनं सजातीयेन लेपोभूमिकुड्यभागयोः । पुनःपाकेन चाण्डालादिमद्यादिस्पर्शव्यतिरिक्तलेपोपघाते मृन्मयं स्थाल्यादि ॥ १२२ ॥

( ३ ) **कुल्लूकः** । तृणकाष्ठपलालंच चाण्डालादिस्पर्शदूषितंप्रोक्षणेन शुध्यति । तृणपलालसाहचर्यादिदमिन्धनादिकाष्ठविषयम् । दारवाणांच तक्षणमितिनिर्मितदारुमयगृहमात्रविषयम् । गृहमुदक्यानिवासादिदूषितं मार्जनगोमयाद्युपलेपनेन मृन्मयभाण्डमुच्छिष्टादिस्पर्शदूषितंपुनः पाकेन शुध्यति । १२२ ॥

( ४ ) **राघवानन्दः** । तृणंकाष्ठानि शुध्यन्तीत्यनुषज्यते । मार्जनं संमार्जन्या ॥ १२२ ॥

( ५ ) **नन्दनः** । उपाञ्जनमुपलेपनम् ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । पलालं सस्यलग्नधान्यं वेश्म मार्जनगोमयादिलिम्पनैः । मृन्मयं पुनःपाकेन शुध्यति ॥ १२२ ॥

**मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः ॥ संस्पृष्टंनैव शुध्येत पुनःपाकेन मृन्मयम् ॥ १२३ ॥**

( ३ ) **कुल्लूकः** । मद्यादिभिस्तु संस्पृष्टंमृन्मयपात्रंपुनः पाकेनापि न शुध्यति । ष्ठीवनंश्लेष्मा पूयंशोणितविकारः॥ १२३॥

( ४ ) **राघवानन्दः** । मद्यादिषड्भिःस्पृष्टंमृन्मयंपुनःपाकेपि न शुध्यतीत्याह मद्यैरिति ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । मद्याद्यैरुपस्पृष्टंमृन्मयंपुनःपाकेन न शुध्यति ॥ १२३ ॥

**संमार्जनोपाञ्जनेन सेकेनोल्लेखनेन च ॥ गवां च परिवासेन भूमिः शुध्यतिपञ्चभिः ॥ १२४ ॥**

( १ ) **मेधातिथिः** । सेकोगोमूत्रेणोदकेनवा क्षीरेणापि क्वचिदुक्तः । उल्लेखनं शस्त्रादिना लेखाकरणं आवापनं च । आवापनंच भूमेरितिगौतमनिर्देशादेव । पञ्चभिरितिपुनर्वचनमभिघातापेक्षया व्यस्तसमस्तप्रयोगदर्शनार्थम् । तत्र संमार्जनंशून्यं शोधनमुपाञ्जनंत्वाकाररहितायाःकेवलमपि मूत्रपुरीषादिलेपे । उल्लेखनसंमार्जनसेकानदीपुलिनवनादिषु । गवांपरिवासःएकाहमात्रंगोष्ठीकरणम् । एतच्च श्मशानभुवःसर्वेकर्तव्यम् । आवपनंतु यत्र पूर्वमस्थिकपालिकाद्यस्ति तदुद्धृत्यमृदामन्यासांप्रक्षेपोयत्र चान्तर्हितमेवमादिकालान्तरेणाशङ्क्यमानसद्भावमित्यादिवत्तत्रापि ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । सेकेन जलस्य । उल्लेखनेन कुद्दालादिनोद्धरणेन । परिवासेन सर्वतोव्याप्य शयनेन पञ्चभिरुपघाताल्पबहुत्वापेक्षया व्यस्तैः समस्तैश्च ॥ १२४ ॥

( ३ ) **कुल्लूकः** । अवकरशोधनेन गोमयाद्युपलेपनेन गोमूत्रोदकादिसेकेन खात्वा कतिपयमृदपनयनेन गवामहोरात्रनिवासेन पञ्चभिरेकैकशोभूमिः शुध्यति । एषांचोच्छिष्टमूत्रपुरीषचण्डालनिवासाद्युपघातगौरवलाघवाभ्यांसमुच्चयविकल्पाववगन्तव्यौ ॥ १२४ ॥

( ४ ) **राघवानन्दः** । किंच संमार्जनेनेति । संमार्जनं संमार्जन्या अञ्जनं गोमयेन सेकोजलेन उल्लिखनं खात्वा पुनर्मृत्पूरणं गवामहोरात्रवासेन पञ्चभिरिति । एषांचोच्छिष्टमूत्रपुरीषचाण्डालनिवासाद्युपघातगौरवलाघवाभ्यांसमुच्चयविकल्पौ ज्ञेयौ ॥ १२४ ॥

( ५ ) **नन्दनः** । मार्जनेनाञ्जनेनचाशुचित्वतारतम्यवशेन समस्तैर्व्यस्तैर्वा शुद्धिः ॥ १२४ ॥

( ६ ) **रामचन्द्रः** । भूमिशुद्धिमाह संमार्जनेति । संमार्जनादिना पञ्चधा पञ्चप्रकारेण भूमिःशुध्यति । पांसुतृणादीनांप्रोत्सारणं मार्जनं उपाञ्जनेन गोमयादिलेपेन । सेकः क्षीरगोमूत्रगोमयवारिभिः । उल्लेखनेन तक्षणेन भूमिःशुध्यति । गृहं मार्जनानुलेपनाभ्यांशुध्यति । गृहस्य पृथगग्रहणंसंमार्जनलेपनयोःप्रतिदिवसेनिर्निमित्तम् ॥ १२४ ॥

**पक्षिजग्धं गवा घ्रातमवधूतमवक्षुतम् ॥ दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥**

( १ ) **मेधातिथिः** । अत्र जग्धिपदाल्लिङ्गादन्नविषयतास्य श्लोकस्य प्रतीयते । पक्षिभिस्तु शुकादिभिरन्यैश्च भक्ष्यैर्यदन्नमुच्छिष्टीकृतम् नतु काककङ्कगृध्रादिभिस्तत्र हि महत्प्रायश्चित्तं पतत्रिणावलीढमितितदेतदुक्तम् । प्रकृतशुद्धे भोजनप्रायश्चितम् । तथाच तत्तुल्यप्रायाश्चत्तस्य गवाघ्रातस्य नैव शुद्धिः । भवेदयंन्यायः । तथापि स्मृत्यन्तरसमाचारावन्वेष्यौ । एवंहि शिष्टादशशरावाधिकंकाकादिक्रव्यादोपहतंतावन्मात्रमपनीयावशिष्टंशोधयित्वोपयुञ्जते अर्वाक्तस्त्यजन्ति । अत्राप्यवस्थाविशेषोपेक्ष्यः । स्मृत्यन्तरेतु कृष्णशकुनिनोपहतमपि निषिद्धम् । अवधूतं मुखश्वासेनावकम्पितंवाससोवा । यस्योपरि रजोपनयनार्थमुत्क्षेपणादि क्रियते आकाशदेशात् । अवक्षुतंयस्योपरि क्षुतंतदेव । केशामनुष्याणांच्युताः । कीटाः क्षुद्रजन्तवःकृमयः । तेकेचिद्गृहस्वेदान्नाद्यजास्तेजीवन्तोमक्षिकावन्नोपघ्नन्ति मृतानांतेषामन्नसंस्पर्शे शुद्धिरियम् । येत्वमेध्यसंसर्गजास्तेविड्भोजिनश्च तेषांजीवतामपि । गौतमीयम् नित्यमभोज्यंकेशकीटावपन्नमिति । बहुव्याप्तौ सर्वत्र त्यागः । महाराशावशुचिकीटसंसर्गेपिस्वल्पे तन्मात्रापनयनमवशिष्टस्यशुद्धिः । काञ्चनरजतदर्भमणीनां वारिसहितानां स्पर्शः स्मृत्यन्तरे केशाद्यवपन्नेहितः । अवज्वलनमपि क्वचित् । येतु भूमेरिमांशुद्धिमाहुस्तैःस्मृत्यन्तरसमाचारोवाक्यार्थश्च त्यक्तः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । पक्वान्नफलादिविषयेआह पक्षिजग्धमिति । पक्षिस्पर्शोत्र ग्राह्यः । अवधूतं वस्त्राञ्चलपादादिवातेन । अवक्षुतं यदुपरि क्षुतंकृतं । केशैः । कीटैश्च मृतैश्च तत्क्षणपतितैः । एतादृशमोदनाद्यन्नं मृत्प्रक्षेपेणाल्पमृत्प्रक्षेपणानन्तरंच प्रोक्षणेन स्मृत्यन्तरप्रसिद्धेन शुध्यति ॥ १२५ ॥

( ३ ) **कुल्लूकः** । भक्ष्यपक्षिभिर्नतु काकगृध्रादिभिः कश्चिद्भागोयस्य भक्षितः गवा यस्य घ्राणंकृतं पदाचावधूतमुपरिकृतक्षुतं केशकीटदूषितं जग्धशब्दलिङ्गादन्नमल्पंमृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥

( ४ ) **राघवानन्दः** । किंच पक्षीति । अवधूतंपादेन धूनितं । अवक्षुतंयदुपरिक्षुतंकृतं केशकीटोपपन्नंच पदास्पृष्टंच कामतइत्यादि स्नातकप्रकरणे धृतमनूद्य शुद्धिविधानादेतदकरणएव प्रायश्चित्तमिति । मृदित्युपलक्षणम् जलस्यतेनोभाभ्यांशुद्धिः ॥ १२५ ॥

( ५ ) **नन्दनः** । पक्वान्नशुद्धिमाह । पक्षिजग्धमिति । अवधूतंसंमार्जनरजःकुक्कुटपक्षपादादिदूषितम् । अवाङ्मुखेन यस्योपरि क्षवथुः कृतस्तदवक्षुतम् ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । पक्षिभिर्जग्धमन्नं गवाघ्रातंगोनिश्वासोपहतमन्नं अवधूतं अवधूतान्नं यस्योपरि क्षुतंकृतं केशकीटैर्दूषितं एतादृशमन्नं मृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥

**यावन्नापैत्यमेध्याक्ताद्गन्धोलेपश्च तत्कृतः ॥ तावन्मृद्वारिचादेयं सर्वासु द्रव्यशुद्धिषु ॥ १२६ ॥**

( १ ) **मेधातिथिः** । अमेध्यमस्पृश्यं तच्च यद्यस्य यदभोज्यंतस्य तदशुद्धिहेतुर्यथा ब्राह्मणस्य सुरा मद्यंशूद्रस्य तदयुक्तम् । प्राग्घोमाद्धवींष्यभोज्यानि नच तान्यस्पृश्यानि सुरामद्यादीनि तु स्पर्शेपिप्रतिषिद्धानि ब्राह्मणस्य । तस्माद्य-

स्यैव स्पर्शःप्रतिषिद्धःसएव संसर्गेणाशुचित्वमापादयति । अतोनायंनियमोयदभोज्यंतदस्पृश्यंयत्त्वस्पृश्यंतदभोज्यमिति । आकंलिप्तंउपदिग्धं तावदित्यावृत्तिविधानं मृद्वारि सति प्रयोजने प्रयोजनंच गन्धलेपापनयनं शुष्कामेध्यसंसर्गे चिरवृत्तसंसर्गेवा कालेनापि तयोर्गन्धलेपयोःसकृदेव मृद्वारिभ्यामार्जनम् । ननु मृद्वार्यादीनांशुध्यर्थमादानंदृष्टार्थं तत्रैव शुध्यत्यपगतेलेपइति किमनेन यावन्नापैतीति उच्यते । एकालिङ्गइत्यादौ संख्यातिक्रमार्थम् । उक्तया संख्यया अशक्ये पुरीषादिलेपापनये अनादृत्याश्रुतसंख्याऽधिकाप्याश्रयणीया । संख्यावचनंतु ततोन्यूनतयाप्यपनीते लेपे संख्यापूरयितव्येत्येवमर्थम् । मृद्वारिग्रहणंशुद्धिसाधनोपलक्षणार्थंवर्णयन्ति । अतश्च यद्यप्यशुद्धिहेतुभूतंवारिणाक्षालितमपि क्षीरादिना संमार्ष्टव्यमन्यथा नपश्यत्। अपैति अपगच्छति निवर्ततइति । यावत्तत्कृतस्तेनामेध्येन कृतः । अतश्च कस्तूरिकादिवत्स्रगंधोनापैति नैव दुष्येत । कुंकुमाद्यनुलिप्तस्य यःप्रदेशोऽमेध्येन संसृज्येत्तत्र कुंकुमाद्यप्यपमार्जितव्यम् । अमेध्यसंसृष्टं हितत् तत्रापि गन्धलेपग्रहणात् । यदिगात्ररूढः कुंकुमवर्णोनिघृष्यमाणोन शक्येतापक्रष्टुं स्यादेव शुद्धिः ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः** । यावन्नापैतीत्युक्तानुक्तशुद्धिकपक्वान्नद्रवद्रव्येतरद्रव्यवद्देहगतलेपतदुपघातविषया शुद्धिः ॥ १२६ ॥

( ३ ) **कुल्लूकः** । विष्ठादिलिप्ताद्द्रव्याद्यावत्तत्संबन्धिनौ गन्धलेपौ तिष्ठतस्तावद्द्रव्यमुद्धृत्य मृद्वारिप्रक्षिप्यग्रहीतव्यम् । यत्र वसामज्जादौ मृदा शुद्धिस्तत्र मृत्सहितंजलग्रहणंकर्तव्यम् । यत्र कर्णमलादौ जलेनैव शुद्धिस्तत्र जलमात्रमित्यवगन्तव्यम् ॥ १२६ ॥

( ४ ) **राघवानन्दः** । किंच । अमेध्याक्ताद्द्रव्यात् । तत्कृतोऽमेध्यकृतः । आदेयमासमन्ताद्देयं कर्तव्यासु द्रव्य शुद्धिषु ॥ ॥ १२६ ॥

( ५ ) **नन्दनः** । तत्कृतोऽमेध्यकृतः । मृद्ग्रहणंगन्धलेपक्षयकराणांद्रव्याणामुपलक्षणार्थम् ॥ १२६ ॥

( ६ ) **रामचन्द्रः** । अमेध्याक्तः अमेध्याः शरीरजामलाः वसाशुक्रादयः ऐतैर्वसादिभिः अक्तः लिप्तःतत्कृतो गन्धलेपोयावन्नापैति तावन्मृद्वारि देयं स्यात् मृदा तोयेन शुद्धिः कर्तव्या सर्वासु द्रव्यजातिषु ॥ १२६ ॥

**त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ॥ अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥१२७॥**

( १ ) **मेधातिथिः** । पवित्राणि शुद्धानि देवग्रहणंस्तुतिः । ब्राह्मणग्रहणमपि समाचारात्तत्सर्ववर्णार्थम् । अदृष्टं यदनारक्षप्रदेशस्थंद्रव्यमदुष्टश्वकाकादिसंसर्गेनचसद्भावमात्रेण तदुपघाताशङ्का निष्प्रमाणिका कर्तव्या । एवंमहानसादौ सूदादिभिरकृतशौचैर्व्यवहरद्भिःपाक्यंद्रव्यमदृष्टंपरिभोक्तुंन दुष्यति न पुनरियमाशङ्का कर्तव्या उत्तरकाले तत्प्रागविज्ञातोपघाते न दोषः । तथाह्यमत्यैतानिचेत्यादिविरुध्येत । एवंतावद्यत्र दोषसंबन्धोन केन चित्प्रमाणेनावगम्यते तच्छुद्धं । यत्र पुनरसत्यपि निश्चायके प्रमाणे कुतर्केण संभाव्यते तत्राद्भिर्निर्णेक्तव्यम् । यथा समानदेशस्थालीपीठरादिश्वकाकादिभिरुपहन्यमानंदृष्टम् । अन्यददृष्टमप्यद्भिर्निर्णेक्तव्यं । तथैवंविधमेव वाचा प्रशंसनीयम् । शुद्धमेतदस्त्विवतिशिष्टावाचयितव्याः ब्राह्मणवचनाच्छुद्धिर्भवतीत्याहुः। प्रशस्यतइतिलङयंविधौद्रष्टव्यः । येत्वाहुर्दृष्टोपघातंयत्तस्यव्यवहर्त्रा साक्षाच्छुद्धौक्रियमाणायामदृष्टायांशिष्टाश्चेदाहुः कृतमस्य शौचमिति तत्रप्रत्येतव्यमिति वाक्प्रशस्तस्यार्थस्तदयुक्तं । आप्तवचनस्य सर्वत्रैवाप्रामाण्यस्यानङ्गीकृतत्वात्पौनरुक्त्यप्रसङ्गः । अन्येत्वद्भिर्निर्णिक्तमिति दृष्टान्ततया व्याख्यानयन्ति । अदृष्टवाक्प्रशस्ते विधीयते । यथाद्भिर्निर्णिक्तंशुद्धमेवनदृष्टंवाक्प्रशस्तंविधीयते । ननुच यद्यदृष्टदोषंप्रत्यक्षानुमानागमैःशुद्धंतत्कथंसंवत्सरस्यैकमपीति भक्ष्यविषयं तत्स्पृश्यविषयाशुद्धिरियं गुरुलघुतयावाआपदनापद्भेदेन वा व्यवस्था ॥१२७ ॥

( २ ) **सर्वज्ञनारायणः** । अदृष्टंवस्तु उपघातेसत्यप्यज्ञातोपघातं एतच्च पश्चादप्यज्ञाने ज्ञानेतुयथोक्तंप्रायश्चित्तं कार्यम् । भक्ष्यादन्यतमभक्षणेतु संवत्सरस्यैकमपीत्युक्तत्वात्कृच्छ्रंब्राह्मणेन कर्तव्यमेव । अद्भिर्निर्णिक्तं क्षालितमल्पदोषत्वे । वाचा प्रशस्यते ब्राह्मणैः शुद्धमस्त्वित्युच्यते । वाचेति मनसा तादृशाशंसायामपि दोषानपगमउक्तः एतदप्यल्पोपघाते । ब्राह्मणानामित्युक्तत्वादन्येषांद्रव्यस्य यथोक्तमेव शोधनम् । तदभावे चाज्ञानेपि पूर्णएव दोषः ॥ १२७ ॥

( ३ ) **कुल्लूकः** । केनापि प्रकारेणादृष्टोपघातहेतुसंसर्गमदृष्टं संजातोपघातशङ्कायांजलेन प्रक्षालितम् । तदाह हारीतः यच्चन्मीमांस्यंस्यात्तदद्भिः स्पर्शाच्छुद्धंभवति । उपघातशङ्कायामेव पवित्रंभवत्विति ब्राह्मणवाचा यत्प्रशस्यते तानि त्रीणि पवित्राणि देवाः ब्राह्मणानांकल्पितवन्तः ॥ १२७ ॥

( ४ ) **राघवानन्दः** । किंच त्रीणीति । ब्राह्मणानामित्यन्येषामपि । अदृष्टंकेनापि मानेनानिर्णीतंसंदिग्धंच निर्णिक्तंक्षालितंयन्मीमांस्यंस्यात्तदद्भिःस्पर्शाच्छुध्यतीति हारीतोक्तेः । वाचा विप्रस्यैव ॥ १२७ ॥

( ५ ) **नन्दनः** । अथ सर्वद्रव्यसाधारणाञ्छुद्धिहेतूनाह त्रीणिदेवाइति । ब्राह्मणग्रहणमन्येषामप्युपलक्षणम् । अदृष्टमज्ञातोपघातम् । अल्पदोषशङ्काविषयोऽयंश्लोकः ॥ १२७ ॥

( ६ ) **रामचन्द्रः** । स्पृष्टास्पृष्टमदृष्टंयद्वस्तु अद्भिर्यन्निर्णिक्तं प्रक्षालितं शुद्धिसन्देहे यद्वाचा शुद्धंभवतीति ब्राह्मणवचनेन प्रशस्यते ॥ १२७ ॥

**आपःशुद्धाभूमिगतावैतृष्ण्यं यासु गोर्भवेत् ॥ अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥१२८॥**

( १ ) **मेधातिथिः** । भूमिग्रहणमुपलक्षणार्थं तेन प्रणालिकागताअपि शुचयएव । स्वभावशुचयोह्यापोभूमिगताआकाशगताश्च । किंतु भूमेरमेध्यद्रव्यसंसर्गात्किंचिदशुचित्वं तत्र गतानांसर्गतोऽशुचित्वप्राप्तौ यावतीनांच शुद्धिस्तदर्थमिदं वैतृष्ण्यंयासुगोर्भवेदिति । वैतृष्ण्यंपिपासाविच्छेदः परिमाणोपलक्षणार्थंचैतत् । तत्र चिरन्तनैर्व्याख्यातं लिङ्गदर्शनेन यथा-वै गोःसास्नाम्भसिप्लाव्येति । यत्र गोः सास्नादिमज्जति तृष्णाच विच्छिद्यते तावत्यः । यास्तु मेध्यभूमिगतास्ताःस्वल्पा-अपि शुद्धाः । कथंपुनरमेध्यवाभिरवसेया गन्धवर्णरसान्विताः । अमेध्येनेति तृतीयान्तंषष्ठ्या विपरिणम्यते । अमेध्यसबन्धिभिर्गन्धादिभिर्यद्यन्विताःसंयुक्ताभवन्ति । ततोव्याप्ताउच्यन्ते । एवंच कृत्वा पानीयंतडागादिषु यद्येकस्मिन्प्रदेशेऽमेध्यंदृश्यते प्रदेशान्तरेगन्धादिशून्यंशुध्येदेव ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । भूमिगताः नतु शिलाकाष्ठादिस्थाः तासांदिनान्तरावस्थानेनाशुद्धत्वात् गोरेकस्याः पाने वैतृष्ण्यं जलेच्छाविगमः । अव्याप्ता अवेष्टिताः सर्वतोबहिर्गन्धादयोयत्र देशे जलस्य यादृशास्तैरन्विताः ॥ १२८ ॥

( ३ ) **कुल्लूकः** । यत्परिमाणास्वप्सुगोः पिपासाविच्छेदोभवति ताआपोगन्धवर्णरसशालिन्यः सत्यः यद्यमेध्यलिप्तान भवन्ति तदा विशुद्धभूमिगताविशुद्धाः स्युः । भूमिगताइतिविशुद्धभूमिसंबन्धप्रदर्शनाय न त्वन्तरिक्षगतानांनिवृत्त्यर्थम् ॥ १२८ ॥

( ४ ) **राघवानन्दः** । आपइति स्वाभाविकगन्धादियुक्ताः अमेध्यमूत्रादिनाऽनुपहताःयावत्योगोर्वैतृष्ण्यकारिण्य अन्याश्च । उद्धताश्चापि शुध्यन्तिशुद्धैःपात्रैःसमुद्धताः । एकरात्रोषिताआपस्त्याज्याःशुद्धाअपि स्वयमित्यतोन्तरिक्षगा अपि ॥ १२८ ॥

( ५ ) **नन्दनः** । भूमिगताइतिविशेषणात्तु वर्षाधारावस्थानांशुद्धिर्गम्यते । अमेध्येनाशुद्धेन द्रव्येणाव्यामा असंबद्धाः । गन्धवर्णरसान्विताः चेदित्यत्रापि संबध्यते ॥ १२८ ॥

( ६ ) **रामचन्द्रः** । भूमिस्थाआपोयासुगोर्वैतृष्ण्यंभवेत् चाण्डालादिभिरसंस्पृष्टाश्चेत् ॥ १२८ ॥

**नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ॥ ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ॥ १२९ ॥**

( १ ) **मेधातिथिः** । कारवः शिल्पिनः सूदरञ्जकतन्तुवायादयस्तेषांहस्तोनित्यंशुद्धः । अतश्च जननमरणाशौचयोस्तत्स्पृश्यतास्ति नतु पुरीषादिलेपे दृश्यमाने शुद्धता विज्ञेया । यदुक्तं सद्यःशौचाः प्रकीर्तिताइतितदेवेदम् । अत्र चापौनरुक्त्यंमनुशास्त्रेऽस्यानुपदेशात् । विषयान्तरमप्यस्ति । अनाचान्तास्तन्तुवायावयन्ति तन्तूनांस्तम्भविश्लेषणार्थंयत्पिष्टमण्डादि दीयते तद्भाजनंच यत्र तत्र भूमौ निधीयते तावती याऽशुद्धिः सानेन निवर्त्यते । नतु स्वभावाशुचीनांस्पर्शस्तैस्तस्यशुद्धता विज्ञेया नहि तेषांतत्कारुकर्मविहितम् । एवंचैषैवोपपत्तिरितिम्लेच्छसृष्टानामपि नाशुचित्वं । तत्र शङ्खवचनात्प्रोक्षणाभ्युक्षणे । तत्रहि पठितं । कारुहस्तःशुचिस्तथा करद्रव्याणीति । पण्यं व्यवहाराय यद्द्रव्यंरूपकैर्विक्रीयतेऽन्येनवा द्रव्येण मीयते तत्पण्यं तच्च प्रसारितमापणभूमौ शुचि अनेकक्रेतृसंस्पर्शाद्भूमौच लेपनादिरहितायांस्थापनाद्युपघातस्तेन नाशुचि । पुनःपुनर्दृश्यमानोपघातम् । प्रसारितग्रहणाद्गृहावस्थितस्य बुद्धौस्थितेपि पण्येनशुद्धिः सिद्धान्नानांतु सक्तुपूपादीनांसत्यपि शुचित्वेऽभक्ष्यता शङ्खवचनादेव आपणीयान्यभक्ष्याणीति । ब्रह्मचारिगतमस्मादेव साहचर्यात्पूर्वोक्ताशुद्धिरीदृशउपघाते विज्ञायते । भिक्षमाणस्य रथ्याक्रमणमशुचिदर्शनंक्षवथुनिष्ठीवनमनेकहस्तसंपातोभिक्षायाइत्याद्युपघातःसंभाव्यते ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । शुद्धः संभाव्यमानदोषतया न दुष्टः किंतु निश्चितदोषतयैव । पण्यं विक्रेयं प्रसारितमापणे नतु तद्गृहस्थम् । ब्रह्मचारिपदं भिक्षावृत्तिपरं तद्गतं भैक्ष्यं रथ्याक्रमणकालसंभावितदोषेणादुष्टम् ॥ १२९ ॥

( ३ ) **कुल्लूकः** । कारोर्मालाकारादेर्देवब्राह्मणाद्यर्थेऽपि माल्यादिग्रथने द्रव्यप्रयोजनाद्यपेक्षया शुद्धिविशेषाकरणेऽपि स्वभावादेव हस्तः सर्वदा शुद्धः । तथा जननमरणयोरपि स्वव्यापारे शुद्धः । नत्वाशौचंकारूणां कारुकर्मणीतिवचनात् । तथा यद्विक्रेतव्यंपण्यवीथिकायांप्रसारितंनापणनीयमन्नमश्नीयादितिशङ्खवचनात् सिद्धान्नव्यतिरिक्तं तदनेकक्रेतृकरस्पर्शेऽपि शुद्धमेव तथाच ब्रह्मचार्यादिगतभैक्ष्यमनाचान्तस्त्रीदत्तमपि रथ्यादिक्रमणेऽपि सर्वदा शुद्धमिति शास्त्रमर्यादा ॥ १२९ ॥

( ४ ) **राघवानन्दः** । कारुहस्तइति कारुर्मालाकारादिः । तद्धस्तस्थंशुद्धमिति । न त्वशौचं कारूणांकारुकर्मणीति वचनात् । जननाद्याशौचाभावः । प्रसारितंवीथिकायांविक्रयार्थम् ॥ १२९ ॥

( ५ ) **नन्दनः** । अशुद्धव्यपवादमाह नित्यमिति । नित्यमाशौचेऽपि । कारवोरजकादयः । हस्तग्रहणादङ्गान्तरस्पृष्टानामशुचित्वम् । पण्येयत्प्रसारितं तच्चण्डालादिस्पृष्टमपि शुद्धम् । अशुद्धदेशाक्रमणादुपघातेऽपि ब्रह्मचारिगतं भैक्ष्यंच नित्यमनापद्यपि मेध्यम् ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । कारुहस्तः कारवोरजकचेलधावकसूपकाराद्याः तेषांहस्तः शुचिः शुचित्वंतत्साध्ये कर्मणि वस्त्रधावनादौ सूतकादिसंभवेपि पण्यंपण्यार्हंविक्रेयं वस्त्रादि तत्शुद्धं । भिक्षाणांसमूहोभैक्षंब्रह्मचारिगतं मार्गे रथ्याक्रमणादिनापि न दुष्यति ॥ १२९ ॥

नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ॥ प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥१३०॥

( १ ) मेधातिथिः । मेध्यतयाशुचित्वमाह । सर्वस्त्रीणामास्यं शुचि परिचुंबनादौ स्त्रियश्च रतिसंसर्गइति स्मृत्यन्तरम् । रतिसंबन्धिनीष्वेव न मातृभगिन्यादिषु । अत्रउच्छिष्टप्रतिषेधोयंन मन्तव्योयोषितःसत्यपि रतिसंबन्धित्वेनाश्नीयाद्भार्यया सार्धमितिवचनान्न भुज्येतेतिसिद्धंचतुर्थाध्याये। नित्यग्रहणान्नसंयोगवेलायामेव किंतर्हि तदर्थायांमन्त्रप्रवृत्तौ। शकुनिःफलपातने पक्षिमात्रवचनेपि शकुनिशब्दःकाककङ्कादीनांविट्भुजांनेष्यते । समाचारात्पातनग्रहणाद्वृक्षस्थस्य फलस्यायंविधिः । प्रस्रवे दुह्यमानायागोर्वत्सःपयःप्रक्षरणार्थंस्तनेषु संश्लिष्यते । अथवोच्यते । गावोमेध्यामुखादृतइतिवचनादशुचित्वे प्राप्ते तन्निवृत्त्यर्थंवचनमतस्तदीयास्यसंस्पर्शस्य । नतु श्वा शुचिः मृगंतु यदाखेट्कादौ गृह्णाति हन्तुंतदाशुचिः । ॥ १३० ॥

( २ ) सर्वज्ञनारायणः । आस्यं रतिकाले चुम्बनादौ । फलस्य पातने पातनार्थं चञ्च्वा वृन्ताघाते नतु फलघातेपि । प्रस्रवे प्रस्रवार्थंस्तनोच्छिष्टतायां । मृगग्रहणे दन्तैरुच्छिष्टीकृत्य जीवतोग्रहणे ॥ १३० ॥

( ३ ) कुल्लूकः । सर्वदा स्त्रीणांमुखंशुचि । तथा काकादिपक्षिणांचञ्चूपघातपतितंफलंशुचि वत्समुखंच दोहसमये क्षीरप्रक्षरणेशुचि । श्वाच यदा मृगादीन्हन्तुंगृण्हाति तदा तत्र व्यापारे शुचिः स्यात् ॥ १३० ॥

( ४ ) राघवानन्दः । किंच नित्यमास्यमिति । चुम्बनादौ आस्यमुपलक्षणम् ॥ सोमःशौचंददौ स्त्रीणांगन्धर्वाश्च शुभांगिरम् । पावकः सर्वमेध्यत्वंमेध्यावै योषितःसदेति याज्ञवल्क्योक्तेः । शकुनिः फलपातने चञ्च्वाघातेन काकादीनां पतितंफलंशुचिः । प्रस्रवे दुग्धक्षरणार्थंचोषणे । श्वा मृगग्रहणे शुचिरिति ॥ १३० ॥

( ५ ) नन्दनः । कार्यविशेषापेक्षया शुचीत्याह नित्यमिति । नित्यग्रहणं सर्ववर्णस्त्रीणांविशेषणार्थम् ॥ १३० ॥

( ६ ) रामचन्द्रः । स्त्रीणां आस्यं मुखं संभोगकाले चुम्बनादिविषये शुचि ॥ १३० ॥

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ॥ क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः॥१३१॥

[ शुचिरग्निःशुचिर्वायुः प्रवृत्तोहि बहिश्वरः । जलं शुचि विविक्तस्थं पन्था संचरणे शुचिः ॥१॥ ]+

( १ ) मेधातिथिः । पूर्वंश्वामृगग्रहणइतिमृगवधेश्वाशुचिरित्येतावदेवविवक्षितं इहतु तेन गृहीतोन्यैर्वादण्डादिघातेनेतिविशेषः । उत्तरार्धश्लोकार्थोविधीयते । क्रव्याद्भिः श्येनजम्बूकप्रभृतिभिः चण्डालाद्यैः । आदिग्रहणंश्वापदादीनामबाधाय । दस्यवोनिषादव्याधादयःप्राणिवधजीविनः ॥ १३१ ॥

( २ ) सर्वज्ञनारायणः । श्वभिर्हतस्य दन्ताघातादिना मृतस्य । क्रव्याद्भिर्व्याघ्राद्यैः । चाण्डालाद्यैर्हत्वा स्पृष्टस्य न तत्स्पर्शदोषः ॥ १३१ ॥

( ३ ) कुल्लूकः । कुक्कुरैर्हतस्य मृगादेर्यन्मांसंतच्छुचि मनुरवोचत् तच्छ्राद्धाद्यतिथिभोजनादावेव द्रष्टव्यम् । अन्यैश्चाममांसादिभिर्व्याघ्रश्येनादिभिश्चव्याधादिभिश्च मृगवधजीविभिर्हतस्य ॥ १३१ ॥

( ४ ) राघवानन्दः । तत्रोपलक्षणंक्रव्यादादीनामित्याह श्वभिरिति । दस्युर्जातिविशेषः वक्ष्यमाणः ॥ १३१ ॥

( ६ ) रामचन्द्रः । क्रव्याद्भिः व्याघ्रादिभिः एतैर्हतंमांसंशुचि ॥ १३१ ॥

[ रामचन्द्रः । शुचिरिति । पन्थाः संचरणे सोमसूर्यांशुभिः शुचिः । बहिश्वरः वायुः । ]

---

+ ( ख, ट, ण, त. )

**ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ॥ यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥ १३२ ॥**

( १ ) **मेधातिथिः**। खशब्दोयमिन्द्रियवचनः। तेन कर्मेन्द्रियाणिपादयोर्ग्रहणे यान्यधस्तान्यमेध्यानिबहुवचनंएतद्युक्तं ऊर्ध्वंनाभेरित्यनेन विरोधात्। तत्रनाभेरूर्ध्वंमेध्यतरत्वमुक्तम्। प्रकर्षश्च। यद्यधस्तान्मेध्यत्वंभवति ततउपपद्यते। नहि भवति शुक्लःकृष्णतरइति। न चायमिन्द्रियवचनःकिंतर्हिछिद्रार्थोयम्। तदुक्तं सप्तशीर्षण्याःप्राणाइति। अधश्छिद्रे स्त्रीपुंसोपस्थभेदाद्बहुवचनं। एवंसत्यन्तरास्पर्शेपि हस्तादेःशुद्धता। यदितद्गतश्लेष्मसंबन्धोनभवति ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः**। खानि चक्षुरादिरन्ध्राणि। यान्यधः पायुलिङ्गमिति अतस्तत्संस्पर्शे प्रायश्चित्ताधिक्यमित्यर्थः। बहुवचनंव्यक्त्यपेक्षया। देहात् यत्रदेहदेशेश्लेष्मादिमलानांनित्यावस्थानं तस्माच्च्युताअतएवामेध्याः। तत्रस्थास्तु तेनैवाङ्गेन स्पृश्यमानान दोषाय अङ्गान्तरेणाकर्षे देहाच्च्युतेरप्यावश्यकत्वात् ॥ १३२ ॥

( ३ ) **कुल्लूकः**। यानि नाभेरुपरीन्द्रियच्छिद्राणि तानि सर्वाणि पवित्राणि भवन्ति अतस्तेषांस्पर्शने नाशौचम्। यानि नाभेरधस्तान्यशुचीनि भवन्ति अधश्छिद्रेषु च बहुवचनंव्यक्तिबहुत्वापेक्षया वक्ष्यमाणाश्च वसादयोदेहमलादेहान्निःसृताअशुद्धाभवन्ति ॥ १३२ ॥

( ४ ) **राघवानन्दः**। किंच ऊर्ध्वमिति खानि इन्द्रियाणि देहात् स्वस्वस्थानात् च्युताश्चाष्टामलाविण्मूत्रदूषिकादयः ॥ १३२ ॥

( ५ ) **नन्दनः**। खानिचक्षुरादीनीन्द्रियाणि। मलान्वक्ष्यति। मलादेहच्युताश्चेदमेध्यानदेहस्थाः। अमेध्यानांस्पर्शोनकर्तव्यइतिभावः ॥ १३२ ॥

( ६ ) **रामचन्द्रः**। देहच्युतामलाः अमेध्याः ॥ १३२ ॥

**मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः ॥ रजोभूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥ १३३ ॥**

( १ ) **मेधातिथिः**। तथा दूषिकादुष्टेन पुनश्चासंस्पर्शनाय स्वेदजानाम्। गोग्रहणमजैडकस्य। अश्वग्रहणंहस्त्यश्वतराणाम्। सूर्यग्रहणंज्योतिषाम्। विप्रुषउदबिन्दवः स्पर्शमात्रानुभवनयाअदश्यमानरूपविशेषाः छाया चण्डालादीनां। भूश्चण्डालादिस्पृष्टा पद्भ्यामाक्रम्यमाणाशुद्धा। अन्यस्यास्तु संमार्जनादिविहितम्। एते मक्षिकादयः पुरीषादिस्पृशन्तोन दूषयन्ति ॥ अजाश्वंमुखतोमेध्यंगावोमेध्यामुखादृते ॥ मार्जारनकुलौ स्पृश्यौ शुभाश्च मृगपक्षिणइति स्मृत्यन्तरे ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः**। मक्षिका जीवनकालेऽन्नाद्याक्रमणे। विप्रुषोल्पजलकणाउच्छिष्टभूताअपि न स्नानपर्यन्तशोध्यदोषहेतवः यद्वा आचामयतोये तोयबिन्दवः पादावुपस्पृशन्ति तत्परमेतत्। छाया वृक्षादेः। सूर्यरश्मयो गवाश्वौ रजोभूमिर्वायुरग्निश्चाण्डालादिस्पर्शेपि स्वेन स्पर्शने कर्तव्ये मेध्यानीत्यर्थः। अनाकरस्थोयंश्लोकइतिकेचित् ॥ १३३ ॥

( ३ ) **कुल्लूकः**। मक्षिकाअमेध्यस्पर्शिन्योऽपि विप्रुषोमुखनिःसृताअल्पाजलकणाः छायापतितादर्हीनस्पर्शस्यापि गवादीनि चाग्निपर्यन्तानि चण्डालादिस्पृष्टानि स्पर्शे शुचीनि जानीयात् ॥ १३३ ॥

( ४ ) **राघवानन्दः**। किंच। एतानिमेध्यानीत्याह मक्षिकेति। विप्रुषोमुखनिःसृताबिन्दवः अनवच्छिन्नजलधारावा। मक्षिकासन्ततधाराइत्युक्तेः। छाया वृक्षादेः। स्पृष्टा चण्डालादिभिः। एवंगवादिसप्त। अन्यच्च ॥ अजाश्वमुखतोमेध्यागावो

( १३२ ) न्यधस्तानि=न्यधस्तादमेध्यानि ( क, ग, घ, च, ण )

मेध्यामुखादते। मार्जारनकुलौऽस्पृश्यौ शुभाश्च मृगपक्षिणइति स्मृत्यन्तरात् । मार्जारनिषेधाचारस्तुकर्मण्येव ॥१३३

( ५ ) **नन्दनः**। उपहतान्यपि कानि मेध्यानीत्याह मक्षिकेति । विप्रुषोबिन्दवः। छाया वृक्षादिच्छाया। चण्डालादिस्पृष्टानामपि मक्षिकादीनांस्पर्शोनानुपपन्नइत्यर्थः ॥ १३३ ॥

( ६ ) **रामचन्द्रः**। एतानि मक्षिकादीनि चाण्डालस्पर्शकृतानि स्पर्शे मेध्यानि निर्दिशेत् विप्रुषः अल्पजलकणाउच्छिष्टभूताः। छाया वृक्षादेः गोः अश्वः भूः भूमिः ॥ १३३ ॥

**विण्मूत्रोत्सर्गशुद्ध्यर्थंमृद्वार्यादेयमर्थवत् ॥ दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि ॥ १३४ ॥**

( १ ) **मेधातिथिः**। देहाच्चैव मलाःच्युताइत्यशुद्धतायामिदमुच्यते। विण्मूत्रे उत्सृज्येते येन सविण्मूत्रोत्सर्गः पाय्वादिस्तस्य शुद्ध्यर्थंमृद्वार्यादेयमर्थवत् अनादृत्यसंख्यांयावतीभिर्गन्धलेपावपसर्पतस्तावतीरपोमृदश्चगृह्णीयात्। देहेभवादैहिकामलाअशुचित्वापादकाः। तदर्थाःस्वपि शुद्धिषु मृद्वारिणी उभे अप्यर्थवती आदेये। स्मृत्यन्तरे पठ्यते ॥ आददीतमृदोऽपश्च षट्सु पूर्वेषु शुद्धये वसादिषु। उत्तरेषु तु षट्स्वद्भिःकेवलाभिस्तुशुध्यति। विशुद्धेषु श्लेष्मादिषु स्मृत्यन्तरे पठितं स्नेहविस्रंसनंनासिक्यंश्लेष्माचक्षते तेषामेवसत्यप्युत्तरशट्कतयानमृदआदातव्याएव ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः**। उत्सर्गउत्सृष्टशेषः। मृद्वारीत्यविवक्षितः शब्दक्रमोवारिणःप्रथममादेयत्वात् । अर्थवत प्रयोजनवत्तया यावतागन्धलेपक्षयः। दैहिकानां वसाशुक्रमित्यादिना वक्ष्यमाणानां द्वादशानां तद्भेदाद्द्वादशसु शुद्धिषु तत्र पूर्वमलषट्के मृद्वारिणी उत्तरषट्केतु वारिमात्रं बौधायनवचनात् अत्रोत्तरषट्केपि मृद्विधानंलेपबाहुल्यापेक्षयेति ग्राह्यम् ॥ १३४ ॥

( ३ ) **कुल्लूकः**। विण्मूत्रमुत्सृज्यते येन सविण्मूत्रोत्सर्गः पाय्वादिस्तस्य शुद्ध्यर्थंमृद्वारि ग्रहीतव्यमर्थवत्प्रयोजनवद्यावता गन्धलेपक्षयोभवति। तथा शारीराणांवसादिमलानांसंबन्धिषु द्वादशस्वपि गन्धलेपक्षयार्थंमृद्वारि ग्राह्यम्। तत्र स्मृत्यन्तरात्पूर्वषट्के मृज्जलग्रहणम्। उत्तरषट्के जलमात्रग्रहणम्। तदाह बौधायनः॥ आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये। उत्तरेषु च षट्स्वद्भिःकेवलाभिर्विशुध्यति । ततश्च द्वादशस्वपीति मानवंमृद्वारिग्रहणवचनं व्यवस्थयामृद्वारिणोर्ग्रहणे सति न विरुध्यते। गोविन्दराजस्तु मनुबौधायनवचनसंदर्शनादुत्तरषट्केऽपि विकल्पमाह। सच व्यवस्थितोदैवपित्राद्यदृष्टकर्मप्रवृत्तेउत्तरेष्वपि मृदमादद्यान्नान्यदा ॥ १३४ ॥

( ४ ) **राघवानन्दः**। किंच विण्मूत्रेति। अर्थवत् । यावतागन्धलेपक्षयोभवेत्तावदुपादेयमित्यर्थः। गन्धलेपक्षयकरंशौचं कुर्यादिति याज्ञवल्क्योक्तेः। शुद्धिषु शोधनकर्तव्यासु तदुक्तं ॥ आददीत मृदोपश्च षट्सु पूर्वेषु शुद्धये । उत्तरेषुतु षट्स्वद्भिःकेवलाभिर्विशुध्यतीति बौधायनोक्तेर्व्यवस्था। अतोगोविन्दराजोक्तविकल्पोऽनवसरः ॥ १३४ ॥

( ५ ) **नन्दनः**। विण्मूत्रयोरुत्सर्गे तल्लेपाद्यभावेऽपि शुद्धयेमृद्वार्यादेयम् । अर्थवत्प्रयोजनवत् गन्धलेपक्षयकरमितियावत्। दैहिकानांमलानां द्वादशसु शुद्धिषु द्वादशमलानांशुद्धिषु। अत्रापिमृद्वार्यादेयमित्यनुषङ्गः ॥ १३४ ॥

( ६ ) **रामचन्द्रः**। विण्मूत्रोत्सर्गे तयोःशुध्यर्थमृद्वारि अर्थवत् प्रयोजनवत्। गन्धादिदूरीकरमित्यर्थः ॥ १३४ ॥

**वसाशुक्रमसृङ्मज्जामूत्रविट्घ्राणकर्णविट् ॥ श्लेष्माश्रुदूषिकास्वेदोद्वादशैते नृणां मलाः ॥१३५॥**

( १ ) **मेधातिथिः**। यान्येतानि द्वादशमलानि दर्शितानि नृग्रहणंपञ्चनखानांप्रदर्शनार्थं। श्वशृगालादीनांत्वस्पृश्यत्वादेव सिद्धम्। विण्मूत्रे तु सर्वस्याजाविकगवाश्वेभ्योन्यत्र ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । शुक्रपदं रजसोप्युपलक्षणम् । असृक्पदं पूयस्नायुमांसादेः । विट् विष्ठा । **कर्णविट्** कर्णमलं तदास्यमलस्यापिष्ठीवनादेरुपलक्षणम् । नखपदं केशलोमादेरपि । श्लेष्म नासामलं । दूषिका नेत्रमलं । स्वेदपदेन गात्रमलानामपि ग्रहणम् ॥ १३५ ॥

( ३ ) **कुल्लूकः** । वसा कायस्नेहः शुक्रंरेतः असृग्रक्तं मज्जा शिरोमध्ये पिण्डितस्नेहः दूषिकाऽक्षिमलः स्वेदःश्रमादिना देहनिःसृतंजलं वसादयोद्वादशनराणांदैहिकामलाभवन्ति ॥ १३५ ॥

( ४ ) **राघवानन्दः**। तन्मलान्याह वसेति । वसा कायस्नेहः । मज्जा अस्थिगतस्नेहः । अश्रु नेत्रमलं । दूषिका तदुद्भवःपूयविशेषः ॥ १३५ ॥

( ५ ) **नन्दनः** । द्वादशमलानाह वसेति । कर्णविट्कर्णमलम् । मलग्रहणमन्येषामपि तत्तुल्यानामुपलक्षणार्थम् । अर्थान्तरितेन येन कार्यं पादावनेजनं मृत्पूर्वकं यथा तोयमशुचिक्षालनायच ॥ १३५ ॥

( ६ ) **रामचन्द्रः** । वसादयोद्वादश नृणां मलाः मज्जा पूयस्नायूमांसत्वगादेरुपलक्षणम् । कर्णविट् स्वदेहमात्रमलानामुपलक्षणम् । दूषिका नेत्रमलम् ॥ १३५ ॥

**एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ॥ उभयोः सप्त दातव्यामृदः शुद्धिमभीप्सता ॥ १३६ ॥**

( १ ) **मेधातिथिः** । विण्मूत्रोत्सर्गानन्तरं मेढ्रस्य शुध्यर्थमेकामृद्दातव्या वामेन । स्मृत्यन्तरे शुद्धिविधानाद्यावती तस्मिन्हस्ते याति तावती सोदका ग्रहीतव्या । अहंतु ब्रुवे । अर्थवदिति वचनेनोक्तमेव परिमाणम् । केचित्तु पठन्ति । प्रथमा प्रसृतिर्ज्ञेया द्वितीयातुत दर्धिका । तृतीया मृत्तिका ज्ञेया त्रिभागकरपूरणे । एतच्च परिमाणंपायावेव । अन्यत्र त्वर्थवदित्येकोत्सर्गेपीयत्येव संख्या । आवृत्तिविधानंचेदं मृदांभेदे गवादिवत् । तथाचात्रोच्यते । वल्मीकाद्दूरतरादश्वस्थानाच्चान्येत्यादि । एवमिह सिताकृष्णालोहितेत्याद्यपि नादरणीयम् । अभीप्सता इच्छतेति ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । तत्र विष्ठोत्सर्गे शौचप्रकारमाह एकालिङ्गइति । एकामृत्त्रिपर्वपूरिका । गुदाल्लोष्ठेन मलमपकृष्य तिस्रः प्रसृतितदर्धतदर्धमानाः स्मृत्यन्तरात् । करादौत्वामलकमात्रास्त्वित्युपक्रमे शौचार्थंचैवमृत्तिका इति स्मृत्यन्तरेऽभिधानात्तावत्प्रमाणतोमृदः । एकत्र वामे । उभयोर्वामदक्षिणयोः ॥ १३६ ॥

( ३ ) **कुल्लूकः** । मूत्रपुरीषोत्सर्गे सति शुद्धिमभीप्सता मृद्दार्यादेयमर्थवदित्युक्तत्वाज्जलसहिता मृदेका लिङ्गेदातव्या । गुदे तिस्रोमृदः । तथैकस्मिन्करे वामे । शौचविद्दक्षिणंहस्तंनाधःशौचे नियोजयेत् । तथैव वामहस्तेन नाभेरूर्ध्वंन शोधयेदिति देवलवचनात्तस्यैवाधःशौचसाधनत्वात्तत्रैव दशमृदोदातव्यास्ततउभयोःकरयोःसप्तदातव्याः । यदातूक्तशौचेनापि गन्धलेपक्षयोन भवति तदा यावदपैत्यमेध्याक्तादितिवचनादधिकसंख्याऽपि मृद्दातव्या । एतद्विषयाण्येव मुनीनामधिकमृत्संख्यावचनानि । मृत्परिमाणमाह दक्षः ॥ लिङ्गेऽपिमृत्समाख्याता त्रिपर्वी पूर्यते यया । द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता इति यदातूक्तसंख्यायाअल्पेनापि गन्धलेपक्षयोभवति तदा संख्यावाक्यारम्भसामर्थ्यात्संख्या पूरयितव्यैव ॥ १३६ ॥

( ४ ) **राघवानन्दः** । किंचैकेति । एकत्र करे वामकरे उभयोरिति शुध्यधिकरणद्वित्वोपलक्षणं तेन पाणिपादद्वय शौचसिद्धिरतआह ॥ शौचविद्दक्षिणंहस्तंनाधःशौचेनियोजयेत् । तथैव वामहस्तेन नाभेरूर्ध्वंन शोधयेदिति देवलोक्तेः । दक्षि-

---

( १३६ ) तथैकत्र करेदश ( क, ग, घ, ण ) =तथावामकरे दश ( ख, च )

णकरशौचं संसर्गजलेपक्षयार्थम्। अत्रसङ्ख्याऽदृष्टार्था अधिकेनन्यूनेनवा गन्धलेपक्षयस्यावश्यंभावित्वात् ॥ गन्धलेपक्षयं करं शौचंकुर्यादतन्द्रितइति याज्ञवल्क्योक्तेः ॥ १३६ ॥

( ५ ) नन्दनः। एकालिङ्गे विभक्तिविपरिणामः । एकस्मिन्वामेकरे। उभयोः करयोःसंहतयोः ॥ १३६ ॥

( ६ ) रामचन्द्रः। मूत्रपुरीषशौचाय मृत्परिमाणमाह एकेति । शुद्धिमभीप्सता पुंसा मृदोदातव्याः । उभयोर्हस्तयोः ॥ १३६ ॥

**एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ त्रिगुणं स्याद्वनस्थानां यतीनां तु चतुर्गुणम् ॥१३७॥**

( १ ) मेधातिथिः। शौचविधिराश्रमविशेषेण अनाश्रामिणस्तु मृद्वार्यदेयमर्थवदित्येतदेव शूद्रस्यापि गार्हस्थ्येऽधिकारोस्त्येवेत्येषा संख्या ॥ १३७ ॥

( २ ) सर्वज्ञनारायणः। द्विगुणमित्यादि संख्यातोन स्मृत्यन्तरसिद्धपरिमाणतः अत्र तस्याएव प्रक्रमात् प्रकृतार्थत्वाच्चसर्वनाम्नां वारत्रयगृहीताधिकानांतु मानापेक्षायामन्त्यमानस्य प्रसृत्यर्धार्धस्य ग्रहणम् ॥ ३७ ॥

( ३ ) कुल्लूकः। एका लिङ्गइत्यादियच्छौचमुक्तंतद्गृहस्थानामेव ब्रह्मचारिणांद्विगुणं वानप्रस्थानांत्रिगुणं यतीनांपुनश्चतुर्गुणम् ॥ १३७ ॥

( ४ ) राघवानन्दः। तत्र व्यवस्थितिमाह एतदिति। यतीनां त्रिदण्डिनां आश्रमसमभिव्याहारान्नैकदण्डिनां नोच्छिष्टोनाशुचिर्भवेत् अन्याश्रमस्थइत्यादिश्रुतेः। तत्रच ॥ यच्छौचंदिवसेप्रोक्तंतदर्धंनिशिसन्ध्ययोः। तदर्धमातुरेकाले पथि शूद्रवदाचरेदिति पठन्ति। तेन शूद्रे सङ्ख्यानेष्टा किंतु गन्धलेपक्षयमात्रम् ॥ १३७ ॥

**कृत्वा मूत्रं पुरीषं वा खान्याचान्तउपस्पृशेत् ॥ वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा ॥ १३८ ॥**

( १ ) मेधातिथिः। मूत्रोत्सर्गदेशान्मूत्रादिसंबन्धात् कृत्वा शोधयित्वा यथोक्तेन विधिना आचान्तः खानि इन्द्रियाणि उपस्पृशेत् । वेदमध्येष्यमाणश्च द्वितीयेस्वाध्यायविधौप्राथमिकार्थत्वात्करोतेःकृत्वा उत्सृज्येति प्रतीयते। उन्मृज्य मूत्रंपुरीषंचपायूपस्थंक्षालयित्वाआचामेद्वेदमध्येष्यमाणश्च स्वाध्यायविधेर्धर्मतयोक्तमध्येष्यमाणस्त्वाचान्तइति। इदंत्वध्यापयतोऽन्यतोवाअन्यथा वेदमुदाहरन्तउच्यन्ते। लौकिकानि क्रियान्तराणि कृत्वा नानाचान्तोवेदाक्षराण्युच्चारयेत्। अन्नमश्नंश्च। ॥ १३८ ॥

( २ ) सर्वज्ञनारायणः। आचान्तइति त्रिर्जलंपीत्वा द्विःप्रमृज्यादिति वक्ष्यमाणमाचमनंकृत्वेत्यर्थः । खानि आस्यघ्राणचक्षुश्रोत्रनाभिहृदयब्रह्मरन्ध्राणि स्पृशेदिति साङ्गमाचमनंदर्शितम् । वेदमध्येष्यमाणोऽध्यापयिष्यन्नध्येष्यमाणोवा। अश्नन्नशनादौ। अत्र कृत्वामूत्रंपुरीषंवेत्यप्रायत्यातिशयमात्रोपलक्षणम् । अध्येष्यमाणोन्नमश्नन्नित्यत्यन्तप्रयतसाध्यकर्मारम्भोपलक्षणम् । तेनाप्रायत्यनिवृत्त्यर्थंप्रयतसाध्यकर्मारम्भयोग्यतार्थंवाचमने कार्ये । गृहस्थानामिन्द्रियादिस्पर्शनसहितमाचमनमितिदर्शितम् ॥ १३८ ॥

( ३ ) कुल्लूकः। मूत्रपुरीषंकृत्वा कृतयथोक्तशौचस्त्रिराचान्तइन्द्रियच्छिद्राणि शीर्षाण्यन्यानि च स्पृशेद्वेदाध्ययनंचिकीर्षन्नन्नंवाऽश्नन्। यत्तु द्वितीयाध्याये अध्येष्यमाणस्त्वाचान्तोनिवेद्य गुरवेभ्नीयादाचम्येत्युभयमुक्तंतद्व्रताङ्गत्वार्थम्। इदंतु पुरुषार्थशौचायेत्यपुनरुक्तिः ॥ १३८ ॥

( ४ ) राघवानन्दः। किंच कृत्वेति वेदमध्येष्यमाणइति द्वितीयाध्यायोक्ताचमनधर्मप्रापणार्थम् ॥ १३८ ॥

( ५ ) **नन्दनः** । आचान्तः पीतजलः । खानि चक्षुर्नासिकाश्रोत्राणि । अन्नंचभोक्ष्यमाणः । सर्वदाशुचिरपि ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । मूत्रपुरीषंकृत्वा हस्तपादौ प्रक्षाल्य आचान्तःसन् खानि छिद्राणि मुखादीनिउपस्पृशेत् तत्राह कूर्मपुराणे ॥ अङ्गुष्ठानामिकाभ्यांच स्पृशन्नेत्रद्वयंततः । तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयं ॥ कनिष्ठाङ्गुष्ठयोगेन श्रवणे च समंस्पृशेत् । सर्वासामथयोगेनहृदयंसुतलेन च ॥ संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथ वा द्वयमिति । वेदमध्येष्यमाणः वेदाध्ययनंकुर्वाणः अध्ययमादौ आचान्तः त्रिराचम्य खानि छिद्राणि स्पृशेत् । च पुनः स्नानभोजनेकुर्वन् आदावेवाचामेत् ॥ १३८ ॥

**त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततोमुखम्॥ शारीरं शौचमिच्छन्हि स्त्री शूद्रस्तु सकृत्सकृत्॥१३९॥**

( १ ) **मेधातिथिः** । अयमनुवादःस्त्रीशूद्रार्थः उक्तमप्येतत्स्त्रीशूद्रार्थमुच्यते । केचिद्याचक्षते शूद्रःस्पृष्टाभिरद्भिरिनिस्पर्शमात्रमपांशूद्रेण कर्तव्यं अतःपरिमार्जनंश्रोत्रादिस्पर्शनंवाप्राप्तंसच्छूद्रविषयतया विधीयते । स्त्रीणांतु द्भिः पूयतेविप्रइतिजातिनिर्देशात्पुंवत्प्राप्ताविदमुच्यते । शारीरंशौचमन्विछन्नितिवचनसामर्थ्याद्यद्यध्ययनभोजनयोःशूद्रःप्रवर्तेत तदा नावश्यंत्रिरावृत्तिःस्यात् । नापि प्रमार्जनं । किंतर्हि आचमनं यावतीनांतावतीनामपामिन्द्रियस्पर्शनंच । नान्योब्रह्मचारिधर्मोक्तआचमनविधिः ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । अन्यत्र यथाकर्तव्यंतदाह त्रिराचामेदिति । आचामेत् पिबेत् हृद्गाभिः पूयतइत्याद्युक्तविधिना । प्रमृज्यादङ्गुष्ठतलेन । शारीरं शरीरस्य शौचमिच्छन् । एतेन प्राणस्पर्शनशून्यमप्यल्पप्रायत्यविषयेगृहस्थस्याचमनान्तरमस्तीतिदर्शितम् । ब्रह्मचारिणस्त्विन्द्रियादिस्पर्शवदेवाचमनमितिद्वितीयेदर्शितम् । अतएव नपौनरुक्त्यम् । यतिवनस्थयोश्चशौचवदाचमनेऽप्याधिक्यस्य युक्तत्वात् आधिक्यान्तराश्रवणाच्च ब्रह्मचारिवदेवाचमनम् । स्त्रीशूद्रमिति स्त्रीच शूद्रश्च सर्वत्र विषये सकृत्सकृत् एकवारंपिबेत्सकृच्च मार्जयेदित्यर्थः । एतच्चानुपनीतस्यापि शूद्रतुल्यत्वान्नास्याचमनकल्प इतितु त्रिराचामेदित्यादिकल्पनिषेधपरम् ॥ १३९ ॥

( ३ ) **कुल्लूकः** । आचान्तइतियदुक्तंतत्र विशेषमाह त्रिराचामेदिति । देहस्य शुद्धिमिच्छन्प्रथमंवारत्रयमपोभक्षयेत् । ततोद्विर्मुखंपरिमृज्यात् । स्त्रीशूद्रश्चैकवारमाचमनार्थमुदकंभक्षयेत् ॥ १३९ ॥

( ४ ) **राघवानन्दः** । किंच त्रिराचामेदित्यादि सकृदिति तत्राप्यन्तः सकृत्स्पृष्टाभिरन्ततइत्युक्तेः । अत्रविडिन्त्याद्धिसकृदन्ताःषट्श्लोकाज्ज्ञानेन शुध्यतीन्यत्र स्थानभ्रष्टाः शारीरंशौचमितिलिङ्गाज्ज्ञेयाः ॥ १३९ ॥

( ५ ) **नन्दनः** । आचान्तउपस्पृशेदित्युक्तं तत्कतिकृत्वआचान्तइत्यपेक्षायामाह त्रिराचामेदिति । मुखमोष्ठौ । स्त्रीशूद्रौसकृत्सकृदाचामेतां सकृत्प्रमृज्याताम् । उक्तस्याचमनकल्पस्य पुनरुपन्यासस्तस्य शरीरशुद्धौप्राधान्यज्ञापनार्थः ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । त्रिः त्रीन्वारान् आचामेत् । ततोमुखंद्विः प्रमृज्यात् स्त्रीशूद्रयोःसकृत् सकृत् ॥ १३९ ॥

**शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम्॥वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम्॥१४०॥**

( १ ) **मेधातिथिः** । सामान्योक्तःसच्छूद्राणांप्रसंगेनायंधर्मउच्यते । न्यायवर्तिनोद्विजशुश्रूषवोमहायज्ञानुष्ठायिनश्च-

---

( १३९ ) शौचमिच्छन्हि=मिच्छन्ति ( च )

तैर्वपनंमुण्डनंमासिकंकर्तव्यं तृतीयार्थेषष्ठी । अथवा ब्राह्मणाश्रितास्तत्परतन्त्राब्राह्मणैःकार्यम् । अनेकार्थत्वात्करोतेरुपदेष्टव्यमितिप्रतिपत्तिः । वैश्यवत् शौचकल्पविशेषाः । सूतकादावाचमनेच । द्विजोच्छिष्टंच भोजनं एतत्प्राग्व्याख्यातम् ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । न्यायवर्तिनास्ववर्णधर्माऽच्युतानांशूद्राणां मासिकंमासिमासिमुण्डनं कार्यम् । भोजनंच द्विजोच्छिष्टं द्विजपाकभाण्डावशिष्टं एवंविधवृत्तवतांशूद्राणांवैश्यवच्छौचकल्पमाशौचादिशुद्धिः तेन पञ्चदशाहान्ते सूतकमृतकशुद्धिः । आचमनंच वैश्यवदेवतत्र अद्भिः प्राश्निताभिरित्यादि ग्राह्यम् ॥ १४० ॥

( ३ ) **कुल्लूकः** । शूद्राणांकार्यमितिकृत्यानांकर्तरिवेति कर्तरि षष्ठी । यथाशास्त्रव्यवहारिभिर्द्विजशुश्रूषकैः शूद्रैर्मासिमासि मुण्डनंकार्यं वैश्यवच्च मृतसूतकादौ शौचकल्पोऽनुष्ठातव्यः द्विजोच्छिष्टंच भोजनं भुज्यतइतिभोजनं कार्यमिति ॥ १४० ॥

( ४ ) **राघवानन्दः** । किंच शूद्राणामपि । कृत्यानां कर्तरीति तृतीयार्थे षष्ठी । वपनंमुण्डनरूपं मासिकमिति । प्रासंगिकं । नोच्छिष्टंन हविष्कृतमिति सेवकेतराणांप्रतिषेधः ॥ १४० ॥

( ५ ) **नन्दनः** । न्यायवर्तिनांशूद्राणामितरेभ्योविशेषंप्रसङ्गादाह शूद्राणामिति । मासिकं मासिश्राद्धंकार्यं प्रतिमासंवपनंकार्यमितिवा । शौचाचमनादिकल्पः ॥ १४० ॥

( ६ ) **रामचन्द्रः** । शूद्रधर्ममाह शूद्राणामिति । न्यायवर्तिनां शूद्राणां मासिकं माससंबन्धि श्राद्धं कार्यम् । न्यायवर्तिनां शूद्राणां वपनं क्षौरं कार्यम् । वैश्यवच्छौचकल्पः पञ्चदशदिनपर्यन्तः । द्विजपाकभाण्डावशिष्टं द्विजोच्छिष्टं भोजनं द्विजैर्दत्तं कार्यम् । शूद्रस्तु द्विजसेवयेति वाक्येन ॥ १४० ॥

**नोच्छिष्टं कुर्वते मुख्याविप्रुषोङ्गे पतन्ति याः ॥ न श्मश्रूणि गतान्यास्यं नदन्तान्तरधिष्ठितम् ॥१४१॥**

**[ अजाश्वं मुखतोमेध्यं गावोमेध्याश्वपृष्ठतः ॥ ब्राह्मणाः पादतोमेध्याः स्त्रियोमेध्याश्व सर्वतः॥१॥**

**गौरमेध्या मुखेप्रोक्ता अजा मेध्या ततःस्मृता ॥ गोः पुरीषं च मूत्रंच मेध्यमित्यब्रवीन्मनुः ॥२॥ ]१**

( १ ) **मेधातिथिः** । निष्ठीव्योक्तानृतानिचेतिनिष्ठीवनआचमनविधानादनाचान्तस्याशुद्धिता ज्ञापिता । विप्रुषामपि मुखान्निष्क्रमणंनिष्ठीवनमेव । अतोविप्रुषांश्लेष्मनिरसनरूपनिष्ठीवनादाचमनप्राप्ताविदमाह । मुखेभवामुखनिर्गतावामुख्याःविप्रुषइत्यनुच्छिष्टंकुर्वन्ति नचेदङ्गे निपतन्तीति । ननुच विप्रुषःशुद्धाइत्युक्तंमुखजाविप्रुषइत्यत्रउक्तं । दैहिकमलव्यतिरेकेणान्यत्र । इदमेवज्ञापकं न सर्वोविषयःसंदर्शितः । श्मश्रूणि दाडिकालोमानि । आस्यगतानि प्रविष्टानि नोच्छिष्टंकुर्वन्तीत्यनुषङ्गः । अतश्चान्यत्पूगफलादि जनयत्येव । तथा दन्तातरधिष्ठितंलग्नं । स्मृत्यन्तरे विशेषः । दन्तश्लिष्टेतु दन्तवदन्यत्र जिव्हाविमर्शनात् । प्राक्च्युतेरित्येके । च्युतेष्वास्त्रावविद्यान्निगिरन्नैवतच्छुचिरितिच्युतेष्वजिव्हयेतिविद्यात् जिव्हासंस्पर्शे शुचित्वनिषेधात् । ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । मुख्याः मुखजाः विप्रुषोद्रप्सबिन्दवोतिक्षुद्राबाह्यद्रव्येषु पतिताअपिनोच्छिष्टतांजनयन्ति-

---

( १४१ ) विप्रुषोङ्गे पतन्तियाः =विप्रुषोङ्गं नयन्ति याः ( ख, ण, च )

१( ट )

यद्यङ्गं नयन्ति नगच्छन्ति अङ्गगमनेत्वङ्गस्य क्षालनादिनैव शुद्धिरितितात्पर्यम् । गतान्यास्यमास्यमभ्यप्रविष्टाप्राणि । दन्तयोरन्तरे मध्येऽधिष्ठितंप्रविष्टमन्नकल्कादि नोच्छिष्टंपुरुषंकरोति एतच्चोद्धरणासंभवे रसाद्यनुपलब्धौ चेतिस्मृत्यन्तरात् ॥ १४१ ॥

( ३ ) **कुल्लूकः** । निष्ठीव्योक्त्वानृतानिचेति । निष्ठीवतामाचमनविधानाद्विदुषामपि मुखान्निःसरणंनिष्ठीवनमेवेति प्रसक्तौशुद्ध्यर्थमपवादमाह । मुखभवाविप्रुषोयाअङ्गेनिपतन्ति ताउच्छिष्टंन कुर्वन्ति तथा श्मश्रुलोमानि मुखप्रविष्टानि नोच्छिष्टतांजनयन्ति । दन्तावकाशस्थितंचान्नावयवादि नोच्छिष्टंकुरुते । अत्र गौतमीये विशेषः । दन्ताश्लिष्टेषु दन्तवदन्यत्रजिव्हाभिमर्षणात्प्राक्च्युतेरिति । एके च्युतेष्वाहारवद्विद्यान्निगिरन्नेव तच्छुचिः ॥ १४१ ॥

( ४ ) **राघवानन्दः** । नोच्छिष्टंकुर्वते नोच्छिष्टदोषमावहन्ति । आस्यंगतान्यपि सन्ति । दन्तान्तरधिष्ठितं दन्तासक्तमन्नादि दन्तासक्तं तुदन्तवदित्युक्तेः ॥ १४१ ॥

( ५ ) **नन्दनः** । अथक्वचिदनुष्ठितादाचमनादपवादमाह नोच्छिष्टमिति । मुख्याः मुखोद्भवाः मुखाद्गलिताइतियावत् । याविप्रुषोऽङ्गंनयान्ति तानोच्छिष्टंपुरुषंकुर्वन्ति । तथा आस्यंगतानि श्मश्रूणि च नोच्छिष्टंकुर्वन्ति । यद्दन्तान्तरधिष्ठितं स्थितमन्नादिकं चोच्छिष्टं नकरोति । दन्तवद्दन्तलग्नेषु शुचिस्थानाच्युतेषुतु । दन्तलग्नेष्वन्नादिषु दन्तेष्विव शुचित्वम् । स्थानाद्दन्तस्थानाद्दन्तलग्नेषु परिच्युतेषुतन्निगिरञ्छुचिःस्यात् ॥ १४१ ॥

( ६ ) **रामचन्द्रः** । या विप्रुषः अङ्गं नयन्ति न प्राप्नुवन्ति तामुख्यामुखोद्भवा उच्छिष्टंन कुर्वते । यद्यङ्गंगच्छन्ति तर्ह्यङ्गस्य क्षालनाच्छुद्धिः । आस्यं मुखं गतानि प्रविष्टानि श्मश्रूणि नोच्छिष्टंकुर्वन्ति । दन्तान्तरधिष्ठितं दन्तसक्तंचान्नादिकंनोच्छिष्टंकरोति । अच्युतंदन्तसमंज्ञेयं ॥ दन्तवद्दन्तसक्तेषु जिह्वास्पर्शे शुचिर्भवेदिति वाक्येन ॥ १४१ ॥

**स्पृशन्ति बिन्दवः पादौ यआचामयतः परान् ॥ भौमिकैस्ते समाज्ञेयान तैराप्रयतोभवेत् ॥१४२॥**

**[ दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेषु चेन्न तु ॥ परिच्युतेषु तत्स्थानान्निगिरन्नेव तच्छुचिः ॥ १ ॥ ]×**

( १ ) **मेधातिथिः** । परानाचमयतः परेभ्यआचमनंददतइत्यर्थः । एतदुक्तंभवति । यः परस्माआचमनंददाति तस्याचमयितृहस्तादधोङ्गुलिविवरेभ्यःपतद्भिरुदबिन्दुभिर्भूम्यभिघातोत्थैर्यद्याचमनस्य दातुः पादौ स्पृश्येते तदा न तैरशुचिर्भवति । भौमिकैर्यथानुपहतायांभूमौ स्थिताःकाश्चिदुदकमात्राः शुद्धाएवंतेप्युच्छिष्टाहस्तात्पतन्तउदबिन्दवः । न तैःस्पृष्टः अप्रयतः अशुचिः । परग्रहणाद्यआचामति तेन तत्संसर्गोरक्षितव्यः अन्येनच समीपस्थेन । पादग्रहणाच्च जङ्घाद्यन्तरस्पर्शोदुष्टएव ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः** । बिन्दवोवक्त्रान्निर्गताजलबिन्दवोनतु बहुजलम् । पादावितिप्रायिकत्वादुक्तमङ्गान्तराण्यपि । आचामयतआचमनार्थंजलमपवर्जयतः । भौमिकैर्भूमिस्थैः शुद्धैर्बिन्द्वन्तरैः ॥ १४२ ॥

( ३ ) **कुल्लूकः** । अन्येषामाचमनार्थंजलंददतांयेबिन्दवः पादौ स्पृशन्ति न जङ्घादि विशुद्धभूमिष्ठोदकैस्तुल्यास्तेन नाचमनार्होभवति । तदा तत्र च्यवनावस्थैरकृताचमनःशुध्यति द्रव्यंच शुध्यति ॥ १४२ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् परानाचामयतो जनस्य ये जलबिन्दवःपादौ स्पृशन्ति तेनोच्छिष्टाइत्याह स्पृश-

× क

न्तीति । भौमिकैर्विशुद्धिभूमिगैः । समाःसदृशाः । तैर्जलबिन्दुभिरप्रयतोऽशुद्धोन भवेत् । पादग्रहणात्ततोन्यत्र स्पृष्टाभिरशुद्धइति मेधातिथिः ॥ १४२ ॥

( ५ ) नन्दनः । परानाचमयतोजलमावर्जयतः पादौस्पृशन्त्याचामतोमुखगलितायेबिन्दवस्तेभूगतजलवन्नोच्छिष्टकराइत्यर्थः ॥ १४२ ॥

( ६ ) रामचन्द्रः । येबिन्दवः आचामयतः परान्समीपवर्तिनः द्विजान् तैर्बिन्दुभिः अप्रयतः अशुचिः । न भवेत् । भौमिकैः भूमिसंबन्धिकैः समाज्ञेयाः ॥ १४२ ॥

## उच्छिष्टेन तु संस्पृष्टोद्रव्यहस्तः कथंचन ॥ अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥१४३॥

( १ ) मेधातिथिः । आचमनार्हेण प्रायश्चित्तेन युक्तः पुरुषउच्छिष्टउच्यते । तद्यथा कृतमूत्राद्युत्सर्गश्चाकृतशौचाचमनादिश्च यश्चामेध्यादिसंस्पर्शदूषितोयदि पुरुषोद्रव्यहस्तोहस्तेन च गृहीतंभक्ष्यभोज्यादि द्रव्यवस्त्रादिवा येन सउच्यते द्रव्यहस्तः । वज्रहस्तादिवत्प्रयोगव्यवस्था । सचेत्स्पृष्टोभवतितदा अनिधायैव तद्द्रव्यमनपनीय हस्तगृहीतद्रव्यएवाचामेत् । कथंपुनर्हस्तस्थे द्रव्यआचमनसंभवः । आमणिबन्धनात्पाणी प्रक्षालयेदिति तत्रविधिः । केचिदाहुः । शरीरसंस्पर्शमात्रंद्रव्यस्य विवक्षितं न हस्तस्यैवएवमशुद्धावपि स्कन्धाद्यारोपितेपि द्रव्ये उच्छिष्टस्याशुद्धतैव तथैवाचान्ते शुद्धिःअतोहस्तात्प्रदेशान्तरे प्रकोष्ठोत्सङ्गादिके तु द्रव्यंगृहीत्वाचामेत् । अभिप्रायोयथैव पुरुषाशौचसंबन्धादशुच्येवंतस्यैवान्नशुद्धिः । गौतमेनतु द्रव्यहस्तउच्छिष्टोनिधायाचामेदित्युक्तम् । अत्र व्याख्यानयन्ति । सत्यपि तुल्यसंहितत्वेत्र निधानमेवाभिमतम् । इतरथा द्रव्यहस्तस्योभयोःशुद्धौ कर्तव्यायांकः प्रसंगोद्रव्यनिधानस्य अतोन्तरेण वचनंनिधानाप्राप्तेर्वचनंनिधानार्थमेव । कथंतर्हि द्रव्यस्य शुद्धिः प्रयतेन पुरुषेण ग्रहणात् । स्मृत्यन्तरविहितेन वा प्रोक्षणेन ॥ प्रचरन्नन्नपानेषु उच्छिष्टंसंस्पृशेयदि । आचामेद्द्रव्यमभ्युक्ष्यएवंचैव न दुष्यतीति । यद्यन्तरेण वचनमत्रनिधानंलभ्यते अप्यनिधायैवेतिवचनमनर्थकं एकवाक्यत्वात् स्मृतीनामिह निश्चितेन विधानेन तथाप्येवंविज्ञायते । अद्यपुनर्मतभेदोगम्यते ततश्च विकल्पः तस्यचव्यवस्था गरीयोद्रव्यंनिधीयते अन्यदङ्कस्थंकृत्वावगम्यते । यदापित्वयमन्नमश्नाति भूयिष्ठंवा उच्छिष्टंस्पृशति आचमनार्हेन वा कृताचमनेन स्पृश्यते । सर्वोपिद्रव्यस्योच्छिष्टंसंस्पर्शः ॥ १४३ ॥

( २ ) सर्वज्ञनारायणः । द्रव्यहस्तः अग्निपक्वद्रव्यहस्तः । भूमावनिधायोत्सङ्गे कृत्वा आचान्तआचमनेन शुचितामियात् स्वयंतद्द्रव्यंच ॥ १४३ ॥

( ३ ) कुल्लूकः । द्रव्यहस्तपदेन शरीरसंबन्धमात्रंद्रव्यस्य विवक्षितम् । आमणिबन्धात्पाणिंप्रक्षाल्येति द्रव्यहस्तस्याचमनासंभवात् स्कंधादिस्थितद्रव्योयद्युच्छिष्टेन संस्पृष्टोभवति तदा द्रव्यमनवस्थाप्यैव कृताचमनःशुध्यति । द्रव्यंच शुद्धंभवति ॥ १४३ ॥

( ४ ) राघवानन्दः । किंच उच्छिष्टेनेति । उच्छिष्टेन जलेन तादृगन्नादिनावा द्रव्यहस्तः अन्नं हविर्द्रव्यादिवा हस्ते यस्य सतद्द्रव्यमनिधाय हस्ते कृत्वैवाचान्तः शुचितामियात् । द्रव्यंसोपीति भावः ॥ १४३ ॥

( ५ ) नन्दनः । उच्छिष्टेन स्पृष्टोद्रव्यहस्तोद्विजस्तद्द्रव्यंहस्तगतंभूम्यादौनिधायैवाचान्तः सहद्रव्येण शुद्धःस्यात् । द्रव्यंभूम्यादौ निधायाचामेत्सउच्छिष्टस्पर्शदोषोद्रव्यंसंक्रामतीत्यभिप्रायः ॥ १४३ ॥

( ६ ) रामचन्द्रः । द्रव्यहस्तः अग्निपक्वद्रव्यहस्तः उच्छिष्टेन पुरुषेण संस्पृष्टः तद्द्रव्यं तद्वस्तु भूमावनिधाय आचान्तःसन् शुचितां इयात् प्राप्नुयादित्यर्थः ॥ १४३ ॥

**वान्तोविरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् आचामेदेव भुक्कान्नं स्नानं मैथुनिनः स्मृतम्॥१४४॥**

**[अनृतौ तु मृदा शौचं कार्यं मूत्रपुरीषवत् ॥ ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ॥१॥]+**

( १ ) **मेधातिथिः**। वमनविरेचने प्रसिद्धे। अशितमन्नंयेन मुखेनोद्गीर्णंसवान्तःपुरुषः । यस्योच्चारवेगाअष्टसंख्यायाऊर्ध्वंजाताहरीतक्यादिभक्षणेन व्याधिनावा सविरिक्तः। तौ स्नानंप्रथमंकुर्यातां। ततोन्तेघृतप्राशनंकृत्वैतदन्यदन्नमद्याताम् । नचानेन घृतप्राशनेन भोजनान्तरनिवृत्तिः। प्रायश्चित्तेषुद्रव्यशुद्धिरियं भस्मोदकमार्जनवद्घृतप्राशनं । आचमेदेव भुक्त्वान्नं। अन्नंभुक्त्वा तदहरेव यदि वमनविरेचने स्यातां तदाचमनमेव केवलं न स्नानघृतप्राशने। अपरैस्तु स्वतन्त्रंव्याख्यायते। भुक्त्वाचामेदेव भोजनानन्तरमाचमनंविहितंतस्यैवायमपवादः। मैथुनिनः स्त्रियांकृतशुक्रोत्सर्गः स्नानेन शुध्यति ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः**। वान्तोवमनंकृत्वा विरिक्तः कोष्ठमलमतिसार्य स्नानं घृतप्राशनंच कामतः अकामतः स्नानमात्रम्। आचामेदेव नतु तदुच्छिष्टतापगमेपिस्नायात् । मैथुनिनः ऋतुकालेमैथुनकरणे अनृतौ तु मैथुने आचमनमात्रंस्मृत्यन्तरे उक्तम् ॥ १४४ ॥

( ३ ) **कुल्लूकः**। कृतवमनःसंजातविरेकःस्नात्वा घृतप्राशनंकुर्यात् दशविरेकैंान्विरिक्तइतिगोविन्दराजः*। यदि भुक्त्वाअनन्तरमेव वमति तदाऽऽचमनमेव कुर्यान्न स्नानघृतप्राशने। मैथुनंच कृत्वा स्नायात्। इदंत्वृतुमतीविषयम् ॥ १४४॥

( ४ ) **राघवानन्दः**। किंच वान्तइति वान्तः कृतवमनः विरिक्तः संजातविरेकः। भुक्तान्नंसद्योवमने त्वाचमनमित्याचामेदिति गोविन्दराजः। मैथुनिनः ऋतुमत्या सह अन्यत्र मूत्रवदित्युक्तम् । सन्निधेर्भोजनाव्यवहितमैथुनिनोवा ॥ १४४ ॥

( ५ ) **नन्दनः** । वमनविरेचनयोःसमुच्चितयोः स्नात्वाघृतंप्राश्नीयात् । अन्नंभुक्त्वा तदानीमेव वान्तोविरिक्तश्चेदाचामेदेव नतु स्नानघृतप्राशने कुर्यात् ॥ १४४ ॥

( ६ ) **रामचन्द्रः**। विरक्तंकृतविरेकः कृतपुरीषः मैथुनिनः मैथुनकर्तुः ऋतावपि गमनेन शुध्यति यज्ञादिकार्यार्थम् ॥ १४४ ॥

**सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ॥ पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥ १४५ ॥**

( १ ) **मेधातिथिः**। क्षुत्वा अनिच्छतोवायुप्रेर्यमाणस्य योनासिकाछिद्रादुपजायते शब्दःसक्षवथुस्तंकृत्वा। प्रयतोपिसन् एतदध्येष्यमाणपदेनैवसंबन्ध्यते । प्रयतोप्यध्येष्यमाणआचम्याधीयीतअध्ययनविध्यङ्गतयाचमनंकुर्यादित्यर्थः । स्नानादिभ्यस्त्वनन्तरंसकृदेव । यत्पुनरुक्तं । सुप्त्वाक्षुत्वाचभुक्त्वाचपीत्वापोवैमुनिस्तथा। आचान्तःपुनराचामेन्निष्ठीव्योक्त्वानृतंवचइति एवमभिसंबन्धोत्र कर्तव्यः। आचान्तोभुक्त्वापुनराचामेत् । यत्र पुनर्द्विराचामेदितिपठ्यते तत्रानन्तर्येणैक क्रियावृत्तिः ॥ १४५ ॥

---

+ ( ञ, ट, ठ, ड )

* दशविरेकोविरिक्त इतिपाठः। ( ञ )

( २ ) **सर्वज्ञनारायणः** । क्षुत्वा क्षुतंकृत्वा निष्ठीव्य सश्लेष्मवक्त्ररसंनिरस्य प्रयतोपिसन्नेकेनाचमनेनापरमप्याचामेदितिद्विराचमनमुक्तम् । अध्येष्यमाणइत्यध्ययनार्थप्रायत्यहेतुतया द्विराचमनंविहितम् ॥ १४५ ॥

( ३ ) **कुल्लूकः** । निद्राक्षुद्भोजनश्लेष्मनिरसनमृषावादजलपानादि कृत्वाऽध्ययनंचिकीर्षुः शुचिरप्याचामेत् । यत्तु भुक्त्वाचोपस्पृशेत्सम्यगिति तथा अध्येष्यमाणस्त्वाचान्तइति द्वितीयाध्यायोक्तंतद्व्रताङ्गत्वेन । इहतु भुक्त्वाचमनविधानंपुरुषार्थमध्ययनाङ्गतयाचमनविधानंगृहस्थादीनामपीति ॥ १४५ ॥

( ४ ) **राघवानन्दः** । किंचैतेषट्सु पुनराचामेदित्याह सुप्तेति । आचमनं द्विविधं मार्यश्चित्तार्थं कर्माङ्गंचआचान्तेन कर्तव्यमिति गोभिलस्मरणात् प्रयतोपीःयनेन कर्माद्यर्थमाचान्त एतेषु जातेष्वाचामेदित्यर्थः । चत्रयमनुक्तरथ्योपसर्पणाद्यर्थम् । प्रयतोप्यध्येष्यमाणआचम्याधीयीतेति मेधातिथिः । तत्राप्यध्येष्यमाणश्चाचामेदित्यनेन प्रत्याचमनस्य पूर्वाङ्गत्वप्राप्तेरेतेनाचान्तःपुनराचामेदित्यपिव्याख्या ॥ १४५ ॥

( ५ ) **नन्दनः** । पुनरध्येष्यमाणग्रहणमादरातिशयार्थम् ॥ १४५ ॥

**एषशौचविधिः कृत्स्नोद्रव्यशुद्धिस्तथैव च ॥ उक्तोवः सर्ववर्णानां स्त्रीणां धर्मान्निबोधत ॥१४६॥**

( १ ) **मेधातिथिः** । आद्येनपादत्रयेण शुद्धिप्रकरणोपसंहारश्चतुर्थेन वक्ष्यमाणसंक्षेपवचनम् । शौचविधिशब्दःसामान्यशब्दोपि द्रव्यशुद्धिसंनिधानाद्गोबलीवर्दवदितरविशेषपरःसंपद्यते । स्त्रीणांधर्माअसाधारणस्त्रीकर्तृकाएव । यस्तु साधारणोयागादिःसइह नोच्यते ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । शौचविधिः देहस्यसर्ववर्णानां याः स्त्रियस्तासां धर्मम् ॥ १४६ ॥

( ३ ) **कुल्लूकः** । एषवर्णानांजननमरणादौ दशरात्रादिरशौचविधिः समग्रोद्रव्याणांतैजसादीनांचैलादीनांच जलादिना शुद्धिविधिर्युष्माकमुक्तः । इदानींस्त्रीणामनुष्ठेयंधर्मंश्शृणुत ॥ १४६ ॥

( ४ ) **राघवानन्दः** । प्रतिज्ञान्तरमेषइति त्रयोदशभिः । स्त्रीणां स्त्रीकर्तृकं धर्मम् ॥ १४६ ॥

( ५ ) **नन्दनः** । शौचविधिःशरीरमलशोधनविधिः ॥ १४६ ॥

**बालया वा युवत्या वा वृद्धया वापि योषिता ॥ न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यंगृहेष्वपि ॥ १४७ ॥**

( १ ) **मेधातिथिः** । स्वातंत्र्यंस्त्रीषु कस्यांचिदवस्थायांनास्तीत्युपदेशार्थः । वयोविभागवचनंतु यत्रास्याःपारतन्त्र्यतत्प्रदर्शनार्थमविवक्षितस्वरूपम् । तथाचोक्तं ॥ तत्सपिण्डेषु वा सत्सु पितृपक्षे प्रभुस्त्रियाः । पक्षद्वयावसानेतु राजा भर्ता स्त्रियामतः ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । योषिता स्वातन्त्र्येण भर्त्राद्यननुज्ञया किंचिदणुमात्रमपि न कार्यं कार्यम् ॥ १४७ ॥

( ३ ) **कुल्लूकः** । बाल्ये यौवने वार्धके च वर्तमानया किंचित्सूक्ष्ममपि कार्यंभर्त्राद्यननुमतं न स्वातन्त्र्येण कर्तव्यमिति ॥ १४७ ॥

( ५ ) **नन्दनः** । गृहेष्वपीत्यर्थप्राप्तस्यानुवादोनविशेषणंसर्वेषुकृत्येष्वस्वातन्त्र्यस्येष्टत्वात् । किंचिदपीत्यन्वयः ॥ १४७ ॥

---

( १४७ ) गृहेष्वपि=गृहेण्वपि ( ल, र, ब, न, भ )

( ६ ) **रामचन्द्रः** । स्त्रीधर्मानाह बाल्येति । न स्वातन्त्र्यं स्त्रियाः कचिदित्यर्थः ॥ १४७ ॥

**बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ॥ पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ॥१४८॥**

( २ ) **सर्वज्ञनारायणः** । बाल्यइत्यादि पित्रादिगृहवासकालोपलक्षणम् ॥ १४८ ॥

( ३ ) **कुल्लूकः** । किंतु बाल्ये पितुर्वशे तिष्ठेत । यौवनेभर्तुः भर्तरि मृते पुत्राणां ॥ तदभावे तत्सपिण्डेषु चासत्सु पितृपक्षःप्रभुःस्त्रियः । पक्षद्वयावसाने तु राजा भर्ता स्त्रियामतः । इतिनारदवचनात् ज्ञातिराजादीनामायत्ता स्यात्कदाचिन्न स्वतन्त्रा भवेत् ॥ १४८ ॥

( ४ ) **राघवानन्दः** । स्वातन्त्र्याभावंव्यनक्ति बाल्यइति । पाणिग्राहस्य भर्तुः पुत्राणामिति बहुवचनंसपिण्डादिग्रहणार्थं सर्वत्र तिष्ठेद्वशे इत्यनुषज्यते पितारक्षतीत्युक्तपोषकाभावविषयम् ॥ १४८ ॥

( ५ ) **नन्दनः** । पाणिग्राहस्य भर्तुः ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । पाणिग्राहस्यभर्तुर्वशेयौवने तिष्ठेत् । भर्तरि प्रेते पुत्राणांवशे तिष्ठेत् ॥ १४८ ॥

**पित्रा भर्त्रा सुतैर्वाऽपि नेच्छेद्विरहमात्मनः ॥ एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥ १४९ ॥**

( १ ) **मेधातिथिः** । तत्सपिंण्डेष्वित्यादिना चासतिस्वामिनि कर्तव्यं । अव्यवस्थानंवचनीयताहेतुःकथितोगर्ह्ये-कुर्यादिति । एषांहि विरहेण निवसन्ती गछन्तीवा ग्रामान्तरमित्यध्याहार्यम् ॥ १४८ ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । गर्ह्येकुर्यात् व्यभिचारेण उभे कुले पितुर्भर्तुश्च ॥ १४९ ॥

( ३ ) **कुल्लूकः** । पित्रा पत्या पुत्रैर्वा नात्मनोविरहंकुर्यात् यस्मादेषांवियोगेन स्त्रीबन्धकीभावंगतापि पतिपितृकुले निन्दिते करोति ॥ १४९ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् पित्रेपि । विरहं वियोगं विरहेदण्डमाह तेषामिति गर्ह्ये गर्ह्यायोग्ये ॥ १४९ ॥

( ५ ) **नन्दनः** । उभे कुले पितृभर्तृकुले ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । पित्रादीनामेषांविरहेण स्त्री उभेकुले गर्ह्ये कुर्यात् ॥ १४९ ॥

**सदा प्रहृष्टया भाव्यंगृहकार्येषु दक्षया ॥ सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १५० ॥**

( १ ) **मेधातिथिः** । आभीक्ष्णवचनःसदाशब्दोनित्यशब्दवत् । नित्यप्रहसितयेइतिसत्यप्यन्यत्र क्रोधशोकवेगे भर्तुर्दर्शनेमुखप्रसादस्मितनर्मवचनादिनाप्रहर्षोदर्शनीयः । कुमार्याभर्तृमत्याश्चायमुपदेशः । गृहकार्येच दक्षया । अर्थसंग्रहव्ययोःधर्मकार्येस्नानादौचअर्थस्य संग्रहे चैनामित्यादिना गृहकार्यमुक्तम् । तत्र दक्षया चतुरया भवितव्यम् । अत्र संस्कारादिशीघ्रंनिष्पाद्यम् । सुसंस्कृतोपस्करया उपस्करं गृहोपयोगिभाण्डंघटिकादि तत्सुसंस्कृतंसुसंमृष्टंशोभावत्कर्तव्यम् । व्ययेच मित्रज्ञात्यतिथ्यभोजनार्थे धने अमुक्तहस्तया उदारया नभवितव्यम् । नबहुव्ययितव्यमित्यर्थः । सुसंस्कृतान्युपस्कराणि यस्याइति बहुव्रीहिः एवंमुक्तोहस्तोयस्याइतिविग्रहः पश्चान्नञ्समासः । रूढ्या उदारवचनोमुक्तहस्तशब्दः ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । उपस्करोगृहोपकरणंतत्सुसंस्कृतं निर्णिक्तंकार्यम् । अमुक्तहस्तया संयतहस्तया ॥ १५० ॥

---

( १४८ ) पितुर्वशे=पितुर्गृहे ( ग )

( ३ ) कुल्लूकः । सर्वदा भर्तरि विरुद्धेऽपि प्रसन्नवदनया गृहकर्मणि चतुरया सुशोधितकुण्डकटाहादिगृहभाण्डया व्ययेचाबहुमदया स्त्रिया भवितव्यम् ॥ १५० ॥

( ४ ) राघवानन्दः । तस्याःकृत्यमाह सदेति । प्रहृष्टया प्रहृष्टवदनया सुसंस्कृतोपस्करया सुष्ठु संस्कृतानि कुण्डकटाहपात्राणि यया तया तथा अमुक्तौ हस्तौ बहुव्यये कर्तव्ये यस्याः साऽमुक्तहस्ता तया ॥ १५० ॥

( ५ ) नन्दनः । उपस्करोगृहोपकरणवर्गोघटपिठरशरावपानभोजनभाजनमुसलोलूखलादि ॥ १५० ॥

( ६ ) रामचन्द्रः । व्यये द्रव्यस्य आयव्यये अमुक्तहस्तया संयतहस्तया व्ययपराङ्मुख्या भाव्यमित्यर्थः ॥१५०॥

**यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः॥ तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत्॥१५१॥**

( १ ) मेधातिथिः । भ्रातावानुमतेपितुः यथैव पित्रानुज्ञातस्य भ्रातुर्दातृत्वमेवंपितुर्निरपेक्षस्यापि दातृत्वश्रुतौ भार्यायाअनुमतंसति दानंबोद्धव्यम् । सर्वत्र सहाधिकाराडुभयोश्च दुहितरि स्वाम्यात् । असति पितरि मात्रापि देयेति नवमे दर्शितम् । मात्रापित्रोरपत्यंतन्निमित्तंच स्वाम्यमिति युक्ता इतरेतरापेक्षा । शुश्रूषेत आराधयेत् । संस्थितंच मृतंच न लङ्घयेत् लङ्घनमतिक्रमणंन स्वातन्त्र्येणासीतेत्यर्थः । यथा जीवति भर्तरि तत्परवती एवंमृतेपि तदैव तत्परतन्त्रया भवितव्यम् । यतआह प्रदानंस्वामिकारकम् । यदैवपित्रा दत्ता तदैव पितुःस्वाम्यंनिवर्तते । यस्मैदीयते तस्योत्पद्यते-अतश्च न विवाहकालएवदानंप्रागपि विवाहाद्वरणकालेअस्तिदानंकिमर्थंस्तर्हिविवाहः ॥ १५१ ॥

( २ ) सर्वज्ञनारायणः । भ्रातावेतिदानाधिकार्यन्तरोपलक्षणम् । अनुमतेपितुरितिप्रायिकत्वात् । तंसंस्थितं मृतंच न लङ्घयेन्न व्यभिचरेत् ॥ १५१ ॥

( ३ ) कुल्लूकः । यस्मै पितैनां दद्यात्पितुरनुमत्या भ्रातावा तंजीवन्तंपरिचरेन्मृतंच नातिक्रामेद्व्यभिचारेण तदीयश्राद्धतर्पणादिविरहितया पारलौकिककृत्यखण्डनेन च ॥ १५१ ॥

( ४ ) राघवानन्दः । किंच यस्माइति । न लङ्घयेत् मृतंच नातिक्रामेत् व्यभिचारेण तदीयश्राद्धतर्पणादिविहितपारलौकिकखण्डनेन च ॥ १५१ ॥

( ५ ) नन्दनः । संस्थितंच नलङ्घयेत् । मृते पत्यौ पुरुषान्तरंनभुञ्जेदित्यर्थः ॥ १५१ ॥

( ६ ) रामचन्द्रः । संस्थितं मृतं तत्कर्म न लङ्घयेत् न व्यभिचरेत् ॥ १५१ ॥

**मङ्गलार्थंस्वस्त्ययनंयज्ञश्चासांप्रजापतेः॥ प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ १५२ ॥**

( १ )मेधातिथिः । अभिलषितार्थनिष्पत्तिर्मङ्गलं तत्साधनंतदर्थंप्रयुज्यते । तत्र प्रजापतेर्यज्ञइतिक्रियाविशेषणत्वान्नपुंसकम् । स्वस्तिरीयते प्राप्यते येन तत्स्वस्त्ययनं । यदस्य प्रियंवस्तुविद्यते तन्न नश्यतीत्यर्थः । आसांस्त्रीणां । तेषु-विवाहेषु । यज्ञःप्रजापतेः । प्रजापतेर्देवतायाः क्रियते प्रजापतिनत्वदेतान्यइतिविवाहे आज्यहोमाः केषांचिदाम्नाताः । उपलक्षणंचैतदन्यासामपिदेवतानांपूषवरुणार्यम्णाम् । तथाहि । तत्र मन्त्रवर्णाःपूषणंनुदेवंवरुणंनुदेवमित्यादयोदेवतान्तरप्रकाशनपराः । प्रदानादेवासत्यपि विवाहे स्वाम्यमुत्पद्यतइत्येतदत्रज्ञाप्यते । विवाहयज्ञस्तु मङ्गलार्थइत्याद्यविवक्षितम् । दारकरणंहि विवाहइतिस्मर्यते । सत्यपि स्वाम्ये नैवान्तरेण विवाहंभार्याभवतीति ॥ १५२ ॥

( २ ) सर्वज्ञनारायणः । अत्र केनाप्यधिकारिणा यदि न दत्ता बलाद्धोमादिना ब्राह्मणेन स्त्री संस्क्रियते तदापि विप्रस्य तत्रस्वाम्यमस्तीति प्रसंगाद्दर्शयतिमङ्गलार्थमिति । यत्पुण्याहवाचनादि स्वस्त्यनं तन्न स्वाम्यकारकं मङ्गलार्थत्वेनान्यार्थत्वात्मनवेतल्पमितिश्रुतेः कन्यायामन्वक्षितत्वेप्रजापतिदैवतत्वात्कन्याविवाहे योहोमरूपोयज्ञः सप्र-

जापतेर्यज्ञोभवति सोपि मङ्गलार्थं संपत्यर्थंप्रयुज्यते नतु ततःस्वत्वं किंतु सत्स्वधिकारिषु तैर्दानमसत्सु स्वयंवा स्वस्य दानं-विप्रस्य स्वाम्यकारकमतोयस्मै दत्ता तमेव नव्यभिचरेदित्यर्थः ॥ १५२ ॥

( ३ ) **कुल्लूकः** । यदासांस्वस्त्ययनशान्त्यनुमन्त्रवचनादिरूपं यश्चासांप्रजापतियागः प्रजापत्युद्देशेनाज्यहोमात्मको-विवाहेषु क्रियते तन्मङ्गलार्थमभीष्टसंपत्त्यर्थंकर्म । यत्पुनःप्रथमंप्रदानंवाग्दानात्मकंतदेव भर्तुः स्वाम्यजनकं ततश्च वाग्दा-नादारभ्य स्त्रीभर्तृपरतन्त्रा तस्मात्तंश्रयेतेति पूर्वोक्तशेषः । यत्तु नवमे वक्ष्यते । तेषांनिष्ठा तु विज्ञेया विद्वद्भिःसप्तमेपदेइति तद्भार्यात्वसंस्कारार्थमित्यविरोधः ॥ १५२ ॥

( ४ ) **राघवानन्दः** । किंच मङ्गलेति । पूषणंनु देवं वरुणंनु देवमित्यादिमन्त्रवाचनादिपुरःसरंप्रजापत्युद्देशेनाज्यहो मात्मकोविवाहेषु क्रियते योयज्ञःतन्मङ्गलार्थमभीष्टसंपत्त्यर्थं स्वस्ति मङ्गलमीयतेऽनेनेति स्वस्त्ययनं यथास्यात्प्रदानं वाग्दानंतद्भर्तुःस्वाम्यकारणंविवाहंविना न स्वाम्यमात्रेण भार्यात्वमिति भावः ॥ १५२ ॥

( ५ ) **नन्दनः** । कदायं भर्ता भवतीतिचेत्प्रदानात्प्रभृत्येवेत्याह । मङ्गलार्थमिति । स्वस्त्ययनंवैवाहिकंमन्त्रक्रियारू-पम् । प्रजापतेर्यज्ञःप्राजापत्योहोमश्चयद्द्वयमासांस्त्रीणांविवाहेषु मङ्गलार्थंप्रयुज्यते नस्वामित्वार्थम् । स्वाम्यकारणंस्वामित्व-कारकंप्रदानमेवप्रदानात्प्रभृतिस्वामिपारतन्त्र्यंयुक्तमितिभावः ॥ १५२ ॥

( ६ ) **रामचन्द्रः** । स्वस्त्ययनं स्वस्तिवाचनं आसांयज्ञः विवाहहोमः प्रजायते कन्यायाअधिदेवतायाः स्वाम्य-कारकं स्वामित्वकारकम् ॥ १५२ ॥

**अनृतावृतुकाले च मन्त्रसंस्कारकृत्पतिः ॥ सुखस्य नित्यं दातेह परलोके च योषितः ॥१५३ ॥**

( १ ) **मेधातिथिः** । सर्वत्रैवाप्रतिषिद्धवर्जमिति अनृतावपिसुखस्य दाता । मन्त्रसंस्कारोविवाहविधिस्तस्य कर्ता मन्त्रसंस्कारकृत् । परलोकेच पत्यासह धर्माधिकाराच्च तत्फलावाप्तेः परलोकसुखस्य दातेत्युच्यते ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः** । योदानानन्तरं मन्त्रतः पाणिग्रहणादिसंस्कारकृत्पतिः सोऽनृतौ मैथुनेनेह सुखस्यऋतौ च प्रजोत्पादनद्वारा परलोके सुखस्य दाता । उपपतिस्त्विहैव सुखस्य दातेति न भर्तारंव्यभिचरेदित्यर्थः ॥ १५३ ॥

( ३ ) **कुल्लूकः** । यतः मन्त्रसंस्कारोविवाहस्तत्कर्ता भर्ततावुपेयात्सर्वत्र वा प्रतिषिद्धवर्ज्यमिति गोतमवचनादृतु-कालेऽन्यदाच नित्यमिहलोके च सुखस्य दाता तदाराधनेन च स्वर्गादिप्राप्तेः परलोकेऽपि सुखस्य दातेति ॥ १५३ ॥

( ४ ) **राघवानन्दः** । अनृतौ मन्त्रसंस्कारोविवाहस्तस्य कर्ता ऋतावपि गर्भंधेहिसिनीवालीत्यादिमन्त्रेण यःसं स्कारस्तस्यापि कर्ता अतऋतावुपगच्छेदिति शेषः । उभयत्रगच्छेद्वा । ऋतावुपेयात्सर्वत्रवा प्रतिषिद्धवर्ज्यमिति गौतमव चनात् । अत्रापि तद्व्रतोरतिकाम्ययेत्युक्तं पतिविनोभयत्र सुखाहर्तिरित्याह सुखस्येति ॥ १५३ ॥

( ५ ) **नन्दनः** । अनृतावृतुकालेच सर्वदेत्यर्थः ॥ १५३ ॥

**विशीलः कामवृत्तोवा गुणैर्वा परिवर्जितः॥ उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥ १५४ ॥**

**[ दानप्रभृति यातु स्याद्यावदायुः पतिव्रता ॥ भर्तृलोकं न त्यजति यथैवारुन्धती तथा ॥१॥ ]+**

( १ ) **मेधातिथिः** । द्यूतादिसक्तोविशीलः । कामप्रधानंवृत्तमस्येति कामवृत्तः । गुणैर्वा परिवर्जितः । श्रुतधनादिगुण-विहीनः । उपचार्यःआराधनीयः ॥ १५४ ॥

---

+ ( क, ख, ण )

( २ ) **सर्वज्ञनारायणः** । विशीलोनिष्ठुरः । कामवृत्तः अप्रतिनियतस्त्र्यन्तरसक्तः । गुणैर्विद्यादिभिः ॥ १५४ ॥

( ३ ) **कुल्लूकः** । तस्मात्विशीलइति । सदाचारशून्यःस्त्र्यन्तरानुरक्तोवा विद्यादिगुणहीनोवा तथापि साध्व्या स्त्रिया देववत्पतिराराधनीयः ॥ १५४ ॥

( ४ ) **राघवानन्दः** । किंच विशीलइति । कामवृत्तः निवृत्तकामः परदाररतोवा । उपचर्यः सेव्यः ॥ १५४ ॥

( ५ ) **नन्दनः** । देववद्देवतेव । दानात्प्रभृतिसततमापद्यपिसमाहिताभर्तृलोकानामोतीत्युत्तरत्रसंबन्धः ॥ १५४ ॥

( ६ ) **रामचन्द्रः** । विशीलः शीलरहितः निष्ठुरइत्यर्थः । कामवृत्तः अन्यस्त्रीसक्तः गुणैः विद्यादिभिः परिवर्जितः ॥ १५४ ॥

[ ( ६ ) **रामचन्द्रः** । दानेति । दानप्रभृति कन्यादानप्रभृति ॥ ]

**नास्ति स्त्रीणां पृथग्यज्ञोन व्रतं नाप्युपोषणम्* ॥ पतिंशुश्रूषते येन तेन स्वर्गे महीयते ॥ १५५॥**

**[ पत्यौ जीवति यातु स्त्री उपवासं व्रतं चरेत् ॥ आयुष्यं हरते भर्तुः नरकं चैव गच्छति ॥ १ ॥ ]‡**

( १ ) **मेधातिथिः** । भर्त्राविना कृतानांयज्ञाधिकारोनास्तीत्येतदसकृत्प्रतिपादितं तेनव्रतोपवासावपि । कुर्वती तदनुज्ञांगृण्हीयात् । व्रतं मद्यमांसादिनिवृत्तिसंकल्पः नतु कृच्छ्राणि । तत्र जपहोमयोरङ्गत्वात्तदभावाच्च स्त्रियाः । नच वक्तुंयुक्तं । जपहोमविकलंकृच्छ्रानुष्ठानमस्याभविष्यति नहि स्वेच्छयाङ्गत्यागोयुक्तः सर्वाङ्गकल्पयुक्तस्य कर्मणोभ्युदयसाधनत्वेनावगतत्वात् । नहि पुरुषशक्तिभेदापेक्षयाङ्गानामुपचयापचयौ भवतः । सन्तिच सर्वाङ्गोपसंहारेण सवर्णास्त्रैवर्णिकाः प्रयोगमनुष्ठातुम् । अतोन स्त्रीशूद्रस्याभ्युदयकामस्य कृच्छ्रेष्वधिकारः प्रायश्चित्तेषु विशेषंवक्ष्यामः । उपोषितं उपवासः आहारविच्छेदएकरात्रद्विरात्रादिषु । शुश्रूषते परिचरति ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । पृथक् भर्त्रा विना । न यज्ञः तथा व्रतं चान्द्रायणादि । उपोषणं देवताप्रीत्यर्थमुपवासः । पृथक् स्वातन्त्र्येण पत्यौ जीवति नास्ति । येन कर्मणा पतिंशुश्रूषते सेवते तेन कर्मणा ॥ १५५ ॥

( ३ ) **कुल्लूकः** । यस्माच्च नास्तिस्त्रीणामिति । यथा भर्तुःकस्याश्चित्पत्न्यारजोयोगादिनाअनुपस्थितावपि पत्न्यन्तरेण यज्ञनिष्पत्तिः तथा न स्त्रीणांभर्त्राविना यज्ञसिद्धिः । नापि भर्तुरनुमतिमन्तरेण व्रतोपवासौ किंतु भर्तृपरिचर्ययैव स्त्री स्वर्गलोके पूज्यते ॥ १५५ ॥

( ४ ) **राघवानन्दः** । किंच नास्तीति । न व्रतमुपोषितमुपवासः भर्तुराज्ञांविना व्रतोपवासौनस्तः येनविनयादिना ॥ १५५ ॥

( ५ ) **नन्दनः** । पतिशुश्रूषांविना । स्त्रीणांयज्ञोनास्ति । शुश्रूषैव यज्ञःस्त्रीणामित्यर्थः । तेन शुश्रूषणेन यज्ञप्रतिनिधिनेत्यभिप्रायः ॥ १५५ ॥

**पाणिग्राहस्य साध्वी स्त्री जीवतोवा मृतस्य वा ॥ पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥ १५६ ॥**

( १ ) **मेधातिथिः** । पत्युर्लोकः पत्या सह धर्मानुष्ठानेन योऽर्जितः स्वर्गादिःसपतिलोकस्तमभीप्सन्तीप्राप्तुकामा-

‡ ( क, ख, ण ) * पोषणम्=पोषितम् [ ( अ ), मेधा० ]

नाचरेत्किंचिदप्रियंपरपुरुषसंसर्गादिशास्त्रप्रतिषिद्धम् । नहि मृतस्य किंप्रियमप्रियंचाशक्यमवसातुं । नच जीवतोयत्प्रियंतदेव मृतस्य भवान्तरोपपन्नानांतु प्रीतिभेदात् तस्माद्यत्प्रतिषिद्धंत्वात्तद्भयंतदेवाप्रियं तन्नाचरेत् ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः** । मृतस्यापि तदप्रियं यज्जीवनकाले न प्रियम् ॥ १५६ ॥

( ३ ) **कुल्लूकः** । पत्यासह धर्माचरणेन योजितःस्वर्गादिलोकस्तमिच्छन्ती साध्वी स्त्री जीवतोवा मृतस्य वा भर्तुर्न किंचिदप्रियमर्जयेत् । मृतस्याप्रियंव्यभिचारेण विहितश्राद्धखण्डनेनच ॥ १५६ ॥

( ४ ) **राघवानन्दः** । तदेवाह नाचरेत्किंचिदप्रियमिति अविनयं श्राद्धाद्यभावम् ॥ १५६ ॥

**कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ॥ नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्यतु ॥ १५७ ॥**

( १ ) **मेधातिथिः** । तदेवसविशेषंदर्शयति । पुंवत्स्त्रीणामपि प्रतिषिद्धआत्मत्यागोयदप्यङ्गिरसापतिमनुम्रियेरन्नित्युक्तं तदपि नित्यवदवश्यं कर्तव्यं फलस्तुतिस्तत्रास्तिफलकामायाश्चाधिकारेश्येनतुल्यता । तथैव श्येनेन हिंस्याद्भूतानीत्यधिकारस्यातिप्रवृद्धतरद्वेषान्धतया सत्यामपि प्रवृत्तौ न धर्मत्वमेवमिहाप्यतिप्रवृद्धफलाभिलाषायाःसत्यपि प्रतिषेधे तदतिक्रमेण मरणे प्रवृत्त्युपपत्तेर्नशास्त्रीयत्वमतोस्त्येव पतिमनुमरणेपि स्त्रियाःप्रतिषेधः । किंच तस्माद्दुहनपुरायुषःप्रेयादितिप्रत्यक्षश्रुतिविरोधोयंस्मृतिरप्येषाशक्यते कल्पयितुम् । यथा वेदमधीत्य स्नायादित्यध्ययनानन्तरमकृतार्थोवबोधस्य स्नानस्मरणमतोमृतपतिकायाअनपत्यायाअसति भर्तृधनादौ दायिकेच कर्तनादिना च केनचिदुपायेन जीवन्त्याजीवितस्यातिप्रियत्वात्तदुपेक्षणस्याशास्त्रत्वात्प्रतिषिद्धत्वादापदि सर्वाभिचाराणांविश्वामित्रजाघनीमित्यादिनानुज्ञातत्वाद्यभिचारोपजीविताप्राप्ताविदमुच्यते काममस्यामवस्थायांशरीरंक्षपयेत् क्षयंनयेत्पुष्पमूलफलैर्यथोपपादंवृत्तिंविदधीत । नतु नामापि गृह्णीयात्पतिर्मेत्वमद्येत्यन्यस्य यत्तु । नष्टे मृते प्रव्रजिते क्लीबेऽथपतिते पतौ । पञ्चस्वापत्सु नारीणांपतिरन्योविधीयतइति । तत्र पालनात्पतिमन्यमाश्रयेत सैरन्ध्रकर्मादिनात्मवृत्यर्थं नवमेच निपुणंनिर्णेष्यते । प्रोषितभर्तृकायाश्च सविधिः । कामशब्दप्रयोगोऽर्शचसंसूचनार्थम् । देहक्षपणमप्यकार्यमिदंत्वन्यदकार्यतरंयदन्येन पुरुषेण संप्रयोगः ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । यद्यस्याजीवनोपायमविधायैव भर्ता मृतस्तदापि जीवनोचितधनाद्यर्थेन व्यभिचरेदित्यर्थः । न नामापि गृण्हीयात् वचसापि तवाहमितिन ब्रूयात् ॥ १५७ ॥

( ३ ) **कुल्लूकः** । वृत्तिसंभवेऽपिपुष्पमूलफलैःपवित्रैश्च देहंक्षपयेदल्पाहारेण क्षीणंकुर्यात् । नच भर्तरि मृते व्यभिचारधिया परपुरुषस्य नामाप्युच्चारयेत् ॥ १५७ ॥

( ४ ) **राघवानन्दः** । किंच काममिति । तद्देहंक्षपयेदित्यन्वयः । नामापीति व्यभिचारधिया श्रवणंकीर्तनंकेलिरित्यत्र नामग्रहणस्यापि मैथुनाङ्गत्वोक्तेः ॥ १५७ ॥

( ५ ) **नन्दनः** । आपद्यपि नान्यंभजेदित्याह काममिति । शुभैरनिषिद्धैःकदल्यादिपुष्पमूलफलैर्देहंक्षपयेद्यापयेत् ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । परस्य अन्यस्य नामापि न गृह्णीयात किंपुनः अत्यल्पशीलाचरणादि ॥ १५७ ॥

**आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी ॥ योधर्मएकपत्नीनां कांक्षन्ति तमनुत्तमम् ॥ १५८ ॥**

( १ ) **मेधातिथिः** । एषएवार्थोविस्पष्टीक्रियते । आमरणाद्ब्रह्मचारिण्यासीत अस्यामापदि न व्यभिचारेणात्मानं-

जीवयेत् । क्षान्ता तत्कृतंदुःखमवधीरयन्तीनब्रह्मचर्यंक्षुदुपसृष्टंयेनचित्तंकल्लोलेनखण्डयेत् । एकः पतिर्यासांताएकस्य वा पत्न्यः एकपत्न्यस्तासांसावित्रीप्रभृतीनांयोधर्मो यस्यफलं वरदानाभिशापादिषु शक्तता तंकांक्षन्ती कामयमाना ब्रह्मचर्यंनजह्यात् । अस्यामवस्थायां मूलफलाशिन्यायदि भवति मरणंततोन दोषः ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । आमरणात् स्वस्य । क्षान्ता क्लेशसहा । नियता भोजनादिसंयमवती । ब्रह्मचारिणी अनुत्पन्नापत्यवत्यपि त्यक्तमैथुना नतु पत्युरात्मनैवोपकारबुद्ध्या पुत्रोत्पत्यर्थंपुरुषान्तरंगच्छेदित्यर्थः । योधर्मएकपत्नीना-मेकपतिनियमे योलभ्यः । अनुत्तमं प्रजोत्पादनलभ्याद्धर्माच्छ्रेष्ठंधर्मम् ॥ १५८ ॥

( ३ ) **कुल्लूकः** । एवंचसति आसीतेति । क्षमायुक्ता नियमवत्येकभर्तृकानांयोधर्मःप्रकृष्टतमस्तमिच्छन्ती मधुमांस-मैथुनवर्जनात्मकब्रह्मचर्यशालिनी मरणपर्यन्तंतिष्ठेत् । अपुत्रापि पुत्रार्थंन परपुरुषंसेवेत ॥ १५८ ॥

( ४ ) **राघवानन्दः** । क्षान्ता उद्रिक्तकामापिक्षमाशीला । नियता नियमवती पुंवार्ताविरहिता ब्रह्मचारिणी । ताम्बूलंविधवास्त्रीणांयतीनामूर्ध्वरेतसाम् । प्रत्येकंमांसतुल्यंस्यात्मिलितंतु सुरासमम् इत्युक्तमधुमांसताम्बूलादिनिषेधपरा । एकपत्नीनामेकभर्तृकाणांयोधर्मस्तं अनुत्तमं न विद्यतेउत्तमोधर्मोयस्मात् सोऽनुत्तमस्तम् ॥ १५८ ॥

( ५ ) **नन्दनः** । क्षान्ता दुःखसहिष्णुः ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । एकपत्नीनांपतिव्रतानांपतिधर्मपरायणानांयोधर्मः तंधर्मंअनुत्तमं कांक्षन्ती ॥ १५८ ॥

**अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥ दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥१५९॥**

( १ ) **मेधातिथिः** । पूर्वेणापदि जीविकार्थःपरपुरुषसंसर्गोनिषिद्धोऽनेन पुत्रार्थाप्रवृत्तिर्निषिध्यते । एवंकिल श्रूय-ते । नापुत्रस्य लोकोस्तीतिलिङ्गंच तत्राविवक्षितमतःपुत्रार्थे प्रसङ्गइदमुच्यते । बहूनि सहस्राणि कुमाराएव ब्रह्मचारिणो-ऽकृतदारानैष्ठिकास्तेषामनेकानि सहस्राणि दिवंगतानि स्वर्गंप्राप्नुवन्ति । नियोगस्तु नवमे चतुर्विधयां विहितोनात्मत-न्त्रतया पुत्रार्थिन्याः । अकृत्वा कुलसंततिं कुलवृध्यर्थासंततिस्तामकृत्वा पुत्रानजनयित्वेत्यर्थः । अनेकानीति नञ्स-मासस्योत्तरपदार्थप्राधान्येन बहुवचनंचिन्त्यम् । सत्यप्येकत्वप्रतिषेधेद्यादिसंख्यावचनंदुर्लभम् । तथाह्ययंस्वधर्मावेशेनप-रित्यक्तस्वगतिकत्वेनाच्छादिततद्रूपोप्यतिदीर्घसंख्याविशेषानाचष्टे यथा गोदौग्रामइति । उक्तंच चूर्णिकाकारेण अनेक-स्मादितिसिध्यतीति । एकवचनप्रयोगशिष्टिसिद्धिंदर्शितवान् असहायवचनोवायमनेकशब्दः । असहायानि गतानिभार्या-सहायभूताएषांनासीदित्यर्थः ॥ १५९ ॥

( २ ) **सर्वज्ञनारायणः** । एतदेवप्रपंचयतिबहूनिहीति । कौमारादारभ्य ब्रह्मचारिणाम् । कुलस्य स्वकुलजस्य संहतिं परंपराम् ॥ १५९ ॥

( ३ ) **कुल्लूकः** । यस्मात् अनेकानीति । बाल्यतएव ब्रह्मचारिणामकृतदाराणांसनकवालखिल्यादीनांब्राह्मणानां बहूनि सहस्राणिकुलवृद्धयर्थंसंततिमनुत्पाद्यापि स्वर्गंगतानि ॥ १५९ ॥

( ४ ) **राघवानन्दः** । ऊर्ध्वरेतसांयेलोकास्तेलोकाअस्याइत्याह अनेकेति द्वाभ्याम् । अकृत्वाकुलसन्ततिं विरक्तनै-ष्ठिकानांदाराकरणे न दोषइति ध्वनितं तान्फलवादेनावर्जयति ते यथास्वर्गलोकंगच्छन्ति ब्रह्मचर्येण विन्दतइति श्रुतेः । तथेयमपीत्यन्वयः ॥ १५९ ॥

( ५ ) **नन्दनः** । मृतभर्तृका पुत्रहीनापि ब्रह्मचर्येणस्वर्गंगच्छतीतिनिदर्शनंश्लोकद्वयेनाह अनेकानीति । कुमारब्र-ह्मचारिणांकौमारात्प्रभृत्यामरणंब्रह्मचारिणाम् ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह अनेकेति । कौमारब्रह्मचारिणां विप्राणामनेकानि सहस्राणि अकृत्वा कुलसन्ततिंदिवंगतानि ॥ १५९ ॥

**मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ॥ स्वर्गंगच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः॥१६०॥**

( १ ) **मेधातिथिः** । एषएवार्थोभूयउच्यते प्रतिपत्तिदार्ढ्यार्थम् ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । साध्वी मनसाप्यव्यभिचारिणी । अतः पुत्रेण विनाप्युत्तमलोकलाभान्न प्रजार्थमपि व्यभिचरेदित्यर्थः ॥ १६० ॥

( ३ ) **कुल्लूकः** । साध्वाचारा स्त्री मृतेभर्तर्यकृतपुरुषान्तरमैथुना पुत्ररहिताऽपि स्वर्गंगच्छति यथा ते सनकवालखिल्यादयः पुत्रशून्याःस्वर्गंगताः ॥ १६० ॥

( ४ ) **राघवानन्दः** । एतादृश्याःपुत्रेणालमित्याह अपुत्रापीति ॥ १६० ॥

( ६ ) **रामचन्द्रः** । साध्वी स्त्री मृते भर्तरिब्रह्मचर्येऽवस्थिता अपुत्रापि स्वर्गंगच्छति यथा ते ब्रह्मचारिणःस्वर्गंगताः ॥ १६० ॥

**अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ॥ सेहनिन्दामवाप्नोति पतिलोकाच्च हीयते ॥ १६१ ॥**

( १ ) **मेधातिथिः** । पुत्रोमेजायतामित्यभिलाषःसोऽपत्यलोभस्ततोहेतोर्या भर्तारमतिक्रम्य वर्ततेऽन्येनसंप्रयुज्येत सा इहलोके निंदां गर्हां प्राप्नोति स्वर्गंच न प्राप्नोति ॥ १६१ ॥

( २ ) **सर्वज्ञनारायणः** । अतिवर्तते व्यभिचरति । पतिलोकात् पतिशुश्रूषालभ्यलोकात् ॥ १६१ ॥

( ३ ) **कुल्लूकः** । पुत्रोमे जायतां तेन स्वर्गंप्राप्स्यामीति लोभेन या स्त्री भर्तारमतिक्रम्य वर्तते व्यभिचरतीत्यर्थः सेह लोकेगर्हांप्राप्नोति परलोकंच स्वर्गंतेन पुत्रेण न लभते ॥ १६१ ॥

( ४ ) **राघवानन्दः** । विपरीते दण्डमाह अपत्येति । गुर्वनुज्ञांविनेति शेषः स्वर्गलोकवत् प्रापयति लोकात् ॥ १६१ ॥

( ५ ) **नन्दनः** । अपत्यहेतोः स्त्रीणामन्यपरिग्रहे दोषमाह अपत्येति ॥ १६१ ॥

( ६ ) **रामचन्द्रः** । पुत्रस्य लोभाद्या स्त्री भर्तारमतिवर्तते अतिक्रम्यान्यत्रगच्छति सानिन्दामाप्नोति ॥ १६१ ॥

**नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे ॥ न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते॥१६२॥**

( १ ) **मेधातिथिः** । अन्येन भर्त्रा याउत्पादिता प्रजा सा नैव तस्याःप्रजा । अन्यदारेषु च या पुंसोत्पादिता सापि तस्य न भवति ॥ १६२ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येन भर्तुरन्येनोत्पन्नोत्पादिता न प्रजास्ति स्त्रियाः । नचान्यस्य परिग्रहे भार्यायामुत्पन्ना प्रजा पुरुषस्यास्तीति प्रसंगादुक्तम् । नचैकस्मादन्योपि भर्ता भवति येनतदुत्पन्नाप्रजापिनान्योत्पन्नेत्याह नद्वितीयइति ॥ १६२ ॥

( ३ ) **कुल्लूकः** । अत्रैवहेतुमाह नान्योत्पन्नेति । यस्माद्भर्तृव्यतिरिक्तेन पुरुषेणोत्पन्ना सा प्रजा तस्याःशास्त्रीया नभवति न चान्यपत्न्यामुत्पादितोत्पादकस्य प्रजा भवति । एतच्चानियोगोत्पादितविषयम् । बहुभर्तृकेयमिति लोकप्रसिद्धेः

( १६१ ) पति=पर ( मेधा० )

द्वितीयोपि भर्त्तैव तस्मादन्योत्पादितत्वमसिद्धमित्याशङ्क्याह नेति। लोके गर्हाप्रसिद्धावपि साध्वाचाराणांन क्वचिच्छास्त्रे द्वितीयोपभर्त्तोपदिश्यते एवंच सति पुनर्भूत्वमपि प्रतिषिद्धम् ॥ ६२ ॥

( ४ ) **राघवानन्दः**। साध्वीति विशेषणान्नास्यानियुक्तता कुतोऽस्याःसाध्वीत्वंतत्रहेतुर्नान्येति। नाप्यन्यस्य परिग्रहे अन्यस्य परिग्रहे न वर्तते अन्योस्याःपरिग्रहीता न भवतीति भर्ता गर्भस्येति शेषः ॥ १६२ ॥

( ५ ) **नन्दनः**। अपत्यहेतोः स्त्रीणामन्यपरिग्रहवर्जने हेतुमाह नान्योत्पन्नेति। अन्योत्पन्ना प्रजेह स्त्रीषु नास्ति स्त्रीणामन्योत्पन्ना प्रजा कार्याय न कल्पतइत्यर्थः। अन्यपरिग्रहेऽन्यस्यांभार्यायामन्योत्पन्नाप्रजानास्त्युत्पादकस्य प्रजाकार्यायन कल्पतइत्यर्थः। अस्योपन्यासोदृष्टान्तार्थः। क्वचिच्छास्त्रे साध्वीनांद्वितीयोभर्ता नोपदिश्यते। आभ्यामपिहेतुभ्यामप्रजसापि स्त्रिया ऽन्यपरिग्रहोन कर्तव्यइति ॥ १६२ ॥

( ६ ) **रामचन्द्रः**। अन्योत्पन्ना परपुरुषोत्पन्ना स्त्रीणांप्रजा न भवेत् युक्ता न भवेदित्यर्थः। च पुनः अन्यपरिग्रहेऽपि न प्रजायुक्ता भवेत् ॥ १६२ ॥

**पतिंहित्वाऽपकृष्टंस्वमुत्कृष्टंया निषेवते ॥ निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥ १६३ ॥**

( १ ) **मेधातिथिः**। न केवलंनिन्दामेव येन ॥ व्यभिचारात्तुभर्तुस्त्री लोके प्राप्नोति निन्द्यतां। शृगालयोनिंचाप्नोति पापरोगैश्चपीड्यते ॥ अतोनातिचरेद्भर्तारंदृष्टादृष्टफललोभेन स्त्रीधर्मोपसंहारश्लोकाऋजवश्चस्त्रीधर्माइत्यतोमयात्र व्याख्यानादरःकृतः एतावत्तत्रोपदेशार्थः यथापुंसोन्ययासह पुनःप्रवृत्तिकर्म नेह संस्थितंच नलङ्घयेदित्यनेन न्यायेन पुनःसहप्रवृत्तिरिति। तथा स्वर्गंगच्छत्यपुत्रापीत्यनेनापत्यजननमापदि प्रतिषिध्यते नियोगस्मृत्या तु तत्पुनरभ्यनुज्ञास्यते। तदेतदपत्योत्पादनमुक्तप्रतिषिद्धत्वाद्विकल्प्यते। अनयोस्तुस्मृत्योःकतमा स्मृतिर्ज्यायसीति न शक्यंकर्तुमतिशयावधारणं येनैकत्रापत्यमन्यत्रास्याःसंयमः उभयोरपि वस्तुनिर्वहति ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः**। नच यस्मै दत्ता तस्यापकृष्टकुलत्वे उत्कृष्टकुलभर्त्राश्रयणंकार्यमित्याह पतिमिति। वर्तमानभर्तुः परोन्यः पूर्वोभर्ता यस्याः सा परपूर्वा ॥ १६३ ॥

( ३ ) **कुल्लूकः**। अपकृष्टंक्षत्रियादिकंस्वकीयंपतिंत्यक्त्वोत्कृष्टंब्राह्मणादिकंयाऽऽश्रयति सा लोके गर्हणीयैव भवति। परोऽन्यःपूर्वोभर्तास्याअभूदितिच लोकैरुच्यते ॥ ६३ ॥

( ४ ) **राघवानन्दः**। किंच पतिमिति। स्वपतिंधनादिहीनतयानिकृष्टमपि। परापूर्वा परंभर्त्रन्तरंपूर्वस्मिन्कालेयस्याः सा ॥ १६३ ॥

( ५ ) **नन्दनः**। अपकृष्टोऽपिसाध्व्यापतिर्नहातव्यइत्याह पतिमिति ॥ १६३ ॥

( ६ ) **रामचन्द्रः**। या स्त्री स्वपतिमवकृष्टं पुंस्त्वरहितं हित्वा उत्कृष्टमन्यं निषेवते सा परपूर्वेत्युच्यते ॥ १६३ ॥

**व्यभिचारात्तुभर्त्तुःस्त्री लोके प्राप्नोति निन्द्यताम् ॥ शृगालयोनिंप्राप्नोति पापरोगैश्चपीड्यते ॥ १६४ ॥**

( २ ) **सर्वज्ञनारायणः**। तत्रपरपूर्वात्वे दोषमाह व्यभिचारादिति। लोके परलोके ॥ १६४ ॥

( ३ ) **कुल्लूकः**। व्यभिचारफलमाह व्यभिचारेति। परपुरुषोपभोगेन स्त्रीहलोके गर्हणीयतांलभते मृताच शृगालीभवति कुष्ठादिरोगैश्च पीड्यते ॥ १६४ ॥

( ४ ) **राघवानन्दः** । किंच भर्तुर्व्यभिचाराद्रुल्लङ्घनात् पापरोगैः कुष्ठश्वित्रादिभिः ॥ १६४ ॥

( ६ ) **रामचन्द्रः** । भर्तुःसकाशात् ॥ १६४ ॥

**पतिंया नाऽभिचरति मनोवाग्देहसंयता ॥ सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते १६५ ॥**

( २ ) **सर्वज्ञनारायणः** । नाभिचरति न व्यभिचरति । मनः संयमोमनसः परपुरुषस्यास्मरणम् । वाक्संयमः तस्य स्वभर्तृतोगुणातिशयानभिधानम् । देहसंयमः तदसंस्पर्शः ॥ १६५ ॥

( ३ ) **कुल्लूकः** । मनोवाग्देहसंयतेतिविशेषणोपादानाद्यामनोवाग्देहैरेव भर्तारंन व्यभिचरति सा भर्तृमात्रनिष्ठमनोवाग्देहव्यापारत्वाद्भर्त्रासहार्जितांल्लोकान्प्राप्नोति इहच शिष्टैःसाध्वीत्युच्यते । वाङ्मनसाभ्यामपि पतिंनव्यभिचरेदिति विधानार्थोदैहिकव्यभिचारनिवृत्तेरुक्तायाअप्यनुवादः ॥ १६५ ॥

( ४ ) **राघवानन्दः** । किंचयथोक्तविधानास्यात्तस्याउभयत्र सुखमित्याह पतिमिति ॥ १६५ ॥

**अनेन नारी वृत्तेन मनोवाग्देहसंयता ॥ इहाग्र्यांकीर्तिमाप्नोति पतिलोकंपरत्र च ॥ १६६ ॥**

( २ ) **सर्वज्ञनारायणः** । पतिलोकंपरत्रचेति परत्र यः पतिलोकः पतिपरिचर्यालभ्योलोकस्तंप्राप्नोति ॥ १६६ ॥

( ३ ) **कुल्लूकः** । अनेन स्त्रीधर्मप्रकारेणोक्तेनाचारेण पतिशुश्रूषाभर्त्रव्यभिचारादिना मनोवाक्कायसंयता स्त्रीहलोके प्रकृष्टांकीर्तिपरत्र पत्यासहार्जितंच स्वर्गादिलोकंप्राप्नोतीति प्रकरणार्थोपसंहारः ॥ १६६ ॥

( ४ ) **राघवानन्दः** । किंच अनेनेति । नारीवृत्तेन नार्युक्तशीलेन । अग्र्यां श्रेष्ठां परत्रमृतौ पतिलोकमाप्नोतीत्यन्वयः ॥ १६६ ॥

( ६ ) **रामचन्द्रः** । अनेन वृत्तेन भर्तृशुश्रूषणेन ॥ १६६ ॥

**एवंवृत्तांसवर्णांस्त्रींद्विजातिः पूर्वमारिणीम् ॥ दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ १६७ ॥**

( १ ) **मेधातिथिः** । न्यायप्राप्तानुवादःश्लोकः । एवंतस्याः साध्वीत्वाद्युक्तएवात्राग्निहोत्रिणः संस्कारःनवाग्नयोहवाएतेपत्न्यांप्रमीतायांधार्यन्तइति ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः** । एवंवृत्तां साध्वीं सवर्णां पूर्वमारिणीं स्वस्मात्पूर्वमृतां दाहयेत्तस्याः पुत्रेण कर्त्रा । अग्निहोत्रेण स्वीयेन यज्ञपात्रैस्तद्वात्रोचितैः ॥ १६७ ॥

( ३ ) **कुल्लूकः** । द्विजातिःसमानवर्णांयथोक्ताचारयुक्तांपूर्वमृतांश्रौतस्मार्ताग्निभिर्यज्ञपात्रैश्च दाहधर्मज्ञोदाहयेत् ॥ १६७ ॥

( ४ ) **राघवानन्दः** । पूर्वमारिणीं पूर्वं मृताम् ॥ १६७ ॥

( ६ ) **रामचन्द्रः** । पूर्वमारिणीं स्त्रीं अग्न्युत्थापनपात्रसंबन्धिनीं मृतां यज्ञपात्रैःसह अग्निहोत्रस्याग्निना दाहयेत् ॥ १६७ ॥

**भार्यायै पूर्वमारिण्यै दत्वाग्नीनन्त्यकर्मणि ॥ पुनर्दारक्रियांकुर्यात्पुनराधानमेव च ॥ १६८ ॥**

( १ ) **मेधातिथिः** । तदेतत्पुनरधिकारार्थमुदाह्रियते । इदमप्यन्ययासहाधिकारप्रतिप्रसवः । यदात्वर्थप्रयोजनेधर्मकर्मानुष्ठानेवा तदाप्यसहायभावाद्वानप्रस्थपारिव्राज्येवाधिकारस्याप्रतिषेधः । तथाच श्रुतिः । जरसाहवाएतस्माद्विमुच्यतइति । अर्थलोपेन वा । अपरेत्वाहुः अत्र यदेतिकल्पयिष्यते । एतेन यावज्जीवहोमीयश्रुतेरविरोधःसिद्धोभविष्यति ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । अन्त्यकर्मण्यौर्ध्वदेहिकेकर्मणि । पुनराधानमेव चेत्याहिताग्निर्नानग्निस्तिष्ठेदित्यर्थः ॥ १६८ ॥

( ३ ) **कुल्लूकः** । पूर्वमृतायाअन्त्यकर्मणि दाहनिमित्तमग्नीन्समर्प्य गृहस्थाश्रममिच्छन्नुत्पन्नपुत्रोऽनुत्पन्नपुत्रोवा पुनर्विवाहंकुर्यात् । स्मार्ताग्नीञ्छ्रौताग्नीन्वादध्यात् ॥ १६८ ॥

( ४ ) **राघवानन्दः** । अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः इतिस्मृतिमाश्रित्याह पुनर्दारक्रियामिति । स्वरसाभ्यन्तरसत्वे आधानमात्रमश्रेष्ठायांविद्यमानायांनाग्नित्यागः ॥ १६८ ॥

( ६ ) **रामचन्द्रः** । पूर्वमारिण्यै अरणिपात्रसंबन्धिन्यै भार्यायै अन्तकर्मणि अग्नीन् यज्ञादीन् दत्वा पुनः दारक्रियांकुर्यात् । च पुनः आधानं अग्न्याधानमपि कुर्यात् ॥ १६८ ॥

## अनेन विधिना नित्यंपञ्चयज्ञान्न हापयेत् ॥ द्वितीयमायुषोभागंकृतदारोगृहे वसेत् ॥ १६९ ॥

## इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांशौचविधिः+पंचमोऽध्यायः ॥ ५ ॥

( १ ) **मेधातिथिः** । उपसंहारश्लोकः । पञ्चयज्ञग्रहणंच सर्वप्रसिध्यर्थमिति ॥ १६९ ॥

इतिश्रीभट्टवीरस्वामिसूनोर्भट्टमेधातिथिस्वामिनःकृतौ मनुभाष्ये पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

( २ ) **सर्वज्ञनारायणः** । अनेन विधिना स्नातकव्रतादिनियमेन सहितः न हापयेन्न त्यजेत् । द्वितीयमिति द्वितीयभागे पुनराधानपुत्रोत्पत्तियज्ञानांच संभवे असंभवे त्वधिकमपिकालं गृहे वसेत् गार्हस्थाश्रमे वर्तेत । ब्राह्मणइतिप्राधान्यादुक्तम् ॥ १६९ ॥

इति सर्वज्ञनारायणकृतौ मन्वर्थविवृतौ भक्ष्याभक्ष्यप्रेतशुद्धिद्रव्यशुद्धिस्त्रीधर्मोनाम पञ्चमोध्यायः ॥ ५ ॥ श्रीनारायणसर्वज्ञनिर्मितांवीक्ष्य भारतीम् । धर्मस्य निर्णयंब्रूत पदवाक्यसुनिश्चितम् ॥ ॥ छ ॥ ॥ छ ॥

( ३ ) **कुल्लूकः** । अनेन तृतीयाध्यायाद्युक्तविधिना प्रत्यहंपञ्चयज्ञान्न त्यजेत् । द्वितीयमायुर्भागंकृतदारपरिग्रहोऽनेनैव यथोक्तविधिना गृहस्थविहितान्धर्माननुतिष्ठेत् गृहस्थधर्मत्वेऽपि पञ्चयज्ञानां प्रकृष्टधर्मज्ञापनार्थंपृथङ्गिर्देशः ॥ १६९॥

इतिकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांपञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥

( ४ ) **राघवानन्दः** । गार्हस्थाश्रमकृत्यमुपसंहरति अनेनेति ॥ १६९ ॥

राघवानन्दविरचितायांमन्वर्थचन्द्रिकायांपञ्चमोध्यायः समाप्तः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

( ५ ) **नन्दनः** । एवंप्रपञ्चितंगृहस्थाश्रमाचारविधिमुपसंहरति । अनेनेति । अत्र पुनः पञ्चयज्ञग्रहणंतेषांप्राधान्यप्रतिपत्त्यर्थमिति ॥ १६९ ॥ इतिश्रीनन्दनविरचितेमानवव्याख्यानेपञ्चमोऽध्यायः ॥ ५ ॥

( ६ ) **रामचन्द्रः** । इतिश्रीरामचन्द्रविरचितायांचन्द्रिकायांपञ्चमोध्यायः ॥ ५ ॥

---

+ शौचविधिः=गृहस्थाश्रमवर्णनं, ( ख )

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ षष्ठोऽध्यायःप्रारभ्यते ॥

**एवंगृहाश्रमे स्थित्वा विधिवत्स्नातकोद्विजः ॥ वने वसेत्तु नियतोयथावद्विजितेन्द्रियः ॥१॥**

**[ अतःपरंप्रवक्ष्यामि धर्मं वैखानसाश्रमम् । वन्यमूलफलानांच विधिंग्रहणमोक्षणे ॥ १ ॥ ऽऽ ]**

( १ ) **मेधातिथिः** । गृहोपलक्षितआश्रमोगृहाश्रमः गृहादाराः तत्र स्थित्वातमनुष्ठायवनेवसेदितिविधिः । स्थित्वेति क्त्वाप्रत्ययेन पौर्वकाल्यंगार्हस्थ्यस्य वनवासाद्दर्शयति । क्रमेणाश्रमःकर्तव्यः कृतगार्हस्थ्योवनवासेऽधिक्रियते । समुच्चयपक्षमाश्रित्यैतदुक्तम् । अन्यथाऽविप्लुतब्रह्मचर्यादपि वनवासोविद्यतइत्येतदपिवक्ष्यते । विजितेन्द्रियः पक्वकषायः क्षीणरागइत्यर्थः । एवंविधिवद्यथावदितिपदानि वृत्तपूरणार्थानि तानि प्राक्तत्रतत्रव्याख्यातानि । एतावद्विधीयते । गार्हस्थ्यंकृत्वावनवासआश्रयितव्यः ॥ १ ॥

( २ ) **सर्वज्ञनारायणः** । क्रमप्राप्तौ वनस्थयतिधर्मौ वक्तव्यौ तत्र वनस्थधर्मंतावत्प्रक्रमते एवंगृहाश्रमइति । यथावद्वक्ष्यमाणविधिना वने वसेत् नियतस्तपःस्वाध्यायादिनियमाख्ययोगाङ्गयुक्तः । विजितेन्द्रियोब्रह्मचर्यरूपयमवान् । तेनैकदेशेन हिंसास्तेयापरिग्रहसत्यान्यपि यमान्तराणि गृह्यन्ते ॥ १ ॥

( ३ ) **कुल्लूकः** । आश्रमसमुच्चयपक्षाश्रितोद्विजातिः कृतसमावर्तनउक्तप्रकारेण यथाशास्त्रंगृहाश्रममनुष्ठाय नियतः कृतनिश्चयोयथाविधानंवक्ष्यमाणधर्मेण यथार्हंविशेषेणजितेन्द्रियः परिपक्वकषायइत्यर्थः वानप्रस्थाश्रममनुतिष्ठेत् ॥ १ ॥

( ४ ) **राघवानन्दः** । एवमितिगृहीभूत्वा वनीभवेदिति श्रुतिसंगतिः । स्नातकःउक्तस्नातकधर्मवान् ॥ न गृहंगृहमित्याहुर्गृहिणी गृहमुच्यते ॥ गृहंच गृहिणीशून्यमरण्यसदृशंविदुः ॥ तयोपलक्षितमाश्रमंस्थित्वा तदुचितधर्मंसंपाद्य ॥ १ ॥

[ **रामचन्द्रः** । ब्रह्मचारीगृहस्थयोः धर्माःप्रतिपादिताअतः अधुना वानप्रस्थधर्मानाह अतइति । वैखानसाश्रमेवैखानसऋषिप्रयुक्तआश्रमे । च पुनः वन्यमूलफलादीनांविधिम् ॥ ]

**गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ॥ अपत्यस्यैव चापत्यंतदारण्यंसमाश्रयेत् ॥ २ ॥**

( १ ) **मेधातिथिः** । यदुक्तंत्यक्तविषयोपभोगगर्धोऽधिक्रियतइति तदेवदर्शयति । वली त्वक्शैथिल्यं । पलितंकेशपाण्डुर्यम् । अपत्यस्यापत्यं पुत्रस्यपुत्रइत्याहुः सत्यपि दुहितुरपत्ये दौहित्रे कन्यायांपुत्रस्यापि जातायां नैवंविधिमिच्छन्तिशिष्टाः । अन्येतु शिरः पालित्यं पौत्रोत्पत्तिंच वयोविशेषलक्षणार्थमाहुः । यस्य कथंचित्पालित्यं न भवेत्सोपि वार्ध-

ऽऽ ( ख, नन्दनश्च )

क्येवनंसमाश्रयेत् । यथैव जातपुत्रः कृष्णकेशस्तु आधानेऽधिक्रियते एवंजातपौत्रः पलितशिराः तदापि पुत्रजन्मकृष्णकेशताच वयोविशेषोपलक्षणार्थमेव । नातिशीघ्रंनातिचिरमित्यर्थस्योपलक्षणत्वे तु प्रमाणंवक्तव्यम् ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । तृतीयायुर्भागे वनगमनंदर्शयित्वा कालान्तरमप्याह गृहस्थइति । वलीपलितं मिलितं यदा पश्येदिति द्वितीयःकालः । अपत्यस्यापत्यं पौत्रं यदापश्येदिति तृतीयःप्रकारः ॥ २ ॥

( ३ ) **कुल्लूकः** । गृहस्थोयदात्मदेहस्य त्वक्शैथिल्यंकेशधावल्यं पुत्रस्यपुत्रंच पश्यति तथाविधवयोवस्थयाविगतविषयरागतया* वनमाश्रयेत् ॥ २ ॥

( ४ ) **राघवानन्दः** । आत्मनोदेहस्य वली चर्मशैथिल्यं पलितंकेशधावल्यं एतद्रागक्षयोपलक्षकम् । अपत्यस्येत्यादिकंसंभवद्विषयम् ॥ २ ॥

( ६ ) **रामचन्द्रः** । यदा आत्मनः वलीपलितं पश्येत् जराजर्जरत्वंपश्येत् ॥ २ ॥

**संत्यज्य ग्राम्यमाहारंसर्वंचैव परिच्छदम् ॥ पुत्रेषु भार्यांनिक्षिप्य वनंगच्छेत्सहैव वा ॥ ३ ॥**

( १ ) **मेधातिथिः** । व्रीहियवमयमन्नंततःप्रभृतिनाश्नीयादित्येतत्संत्यज्येत्युच्यते । तदुक्तंमूलाशीत्यादि । परिच्छदः गवाश्ववस्त्रासनशय्यादिः यदि भार्यायाइच्छा तदा सहगमनम् अन्यथा एकाकिनः । अन्येतु तरुणींनिक्षिप्य वृद्धयासहेति वर्णयन्ति । सत्यांभार्यायामयंविधिः पुत्रेषु निक्षेपःवनगमनंवा । असत्यामपिमृतायां वनवासआपस्तम्बादिभिः स्मर्यते पुनराधानइत्यत्र यस्येन्द्रियचापल्यंनास्ति सवानप्रस्थः । इतरः पुनर्दारान्परिगृह्णीयादितिव्यवस्था ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । ग्राम्यंसर्वंपरिच्छदं गोभूहिरण्यादि । भार्यांनिक्षिप्येति भार्यासंभवे ॥ ३ ॥

( ३ ) **कुल्लूकः** । ग्राम्यंव्रीहियवादिकंभक्ष्यंसर्वंच गवाश्वशय्यादिपरिच्छदंपरित्यज्य विद्यमानभार्यश्च वनवासमनिच्छन्तींभार्यांपुत्रेषु समर्प्यैच्छन्त्या सहैव वनंगच्छेत् ॥ ३ ॥

( ४ ) **राघवानन्दः** । किंच संत्यज्येति । ग्राम्यं कृष्यादियत्नोत्पाद्यंपरिच्छदं गवादिकं । सहैव वा वनवासमिच्छन्त्या भार्ययाऋतुमत्या मृतायांवनवासइत्यापस्तम्बोक्तेः सति रागेविवाहोऽसति वनंगच्छेदिति ॥ ३ ॥

( ६ ) **रामचन्द्रः** । ग्राम्यमाहारं गोधूमतिलादिकम् । च पुनः सर्वपरिच्छदमपि गोभूतिलहिरण्यादि । पक्षान्तरं प्रति परिचर्याऽभिलाषेण स्वयमपि वनंगंतुमिच्छति तर्हि तया पत्न्यैव सह वनंगच्छेत् ॥ ३ ॥

**अग्निहोत्रंसमादाय गृह्यंचाग्निपरिच्छदम् ॥ ग्रामादरण्यंनिःसृत्य निवसेन्नियतेन्द्रियः ॥ ४ ॥**

( १ ) **मेधातिथिः** । अग्नयएवाग्निहोत्रशब्देनोक्ताः श्रौतानग्नीन्समादाय गृहीत्वा गृह्यंच अग्निहोत्रपरिच्छदं स्रुक्स्रुवादि । ग्राम्यपरिच्छदस्य त्यागविधानादग्निसंबद्धस्य प्रतिप्रसवोयम् ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । सहगमनपक्षेऽग्निहोत्रसंभवेऽग्निहोत्रमादाय गृह्यमौपासनमादायैकाकिगमनेपि । एवंतत्तदग्निपरिच्छदं स्रुगादिकं तत्तदग्निनयनेनयेदित्यर्थसिद्धमपि स्पष्टार्थमुक्तम् ॥ ४ ॥

( ३ ) **कुल्लूकः** । श्रौताग्निमावसथ्याग्निमग्न्युपकरणंच स्रुक्स्रुवादिगृहीत्वा ग्रामादरण्यंनिःसृत्यगत्वा संयतेन्द्रियः सन्निवसेत् ॥ ४ ॥

( ४ ) **राघवानन्दः** । अग्निहोत्रं श्रौतंगृह्यं आवसथ्याख्यंच । परिच्छदमग्नेःस्रुवादिकं । निःसृत्य अरण्यंनिषेवेत॥४॥

---

* वानप्रस्थत्वार्थम् ( अ )

( ५ ) **नन्दनः** । [ वैखानसाश्रमवानप्रस्थाश्रमविषयम् । वन्यानांमूलफलानामुपादानेपरित्यागेच कालविधिः । ] द्विविधो वानप्रस्थः गृहस्थसमोभिक्षुसमश्चेति । तयोर्गृहस्थसमस्यधर्मास्तावदाह अग्निहोत्रमिति । गृह्यंगृहेविद्यमानम् । अग्निपरिच्छदमरणिपात्रशकटादिकम् । निःसृत्य प्रविश्य ॥ ४ ॥

( ६ ) **रामचन्द्रः** । अग्निहोत्रं वैतानाग्निं गृह्यं आवसथ्याग्निं च पुनः अग्निपरिच्छदंकृष्णाजिनादि । ग्रामान्निःसृत्यारण्यंनिवसेज्जितेन्द्रियःसन् ॥ ४ ॥

**मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥ एतानेव महायज्ञान्निर्वपेद्विधिपूर्वकम् ॥ ५ ॥**

( १ ) **मेधातिथिः** । एतानेव ये गृहस्थविहिताः निर्वपेदनुतिष्ठेत् विधिपूर्वकमित्यनुवादः श्लोकपूरणार्थः ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । मुन्यन्नैरकृष्टपच्यैः । विविधैस्तत्तत्कालोपपन्नैः मेधोयज्ञस्तदर्हैर्मेध्यैर्यज्ञियैः शाकादिनापि मेध्येनैव । एतानेव गृहस्थकार्यान् चतुरोमहायज्ञान् ब्रह्मयज्ञस्तु नान्नसाध्यः ॥ ५ ॥

( ३ ) **कुल्लूकः** । मुन्यन्नैर्नीवारादिभिर्नानाप्रकारैः पवित्रैः शाकमूलफलैर्वारण्योद्भवैरेतानेवेति गृहस्थस्य पूर्वोक्तान्महायज्ञान्यथाशास्त्रमनुतिष्ठेत् ॥ ५ ॥

( ४ ) **राघवानन्दः** । किंच । मुन्यन्नैरिति । मुन्यन्नैर्नीवाराद्यैः यदन्नःपुरुषोराजंस्तदन्नास्तस्य देवताः इतिस्मृतिमाश्रित्याहएतानेवेति । महायज्ञान् वैश्वदेवादीन् निर्वपेत् कुर्यात ॥ ५ ॥

( ५ ) **नन्दनः** । अन्नैर्नीवारादिभिः । एतान्पूर्वाध्यायोक्तान् ॥ ५ ॥

( ६ ) **रामचन्द्रः** । मुन्यन्नैःअकृष्टक्षेत्रोद्भवैर्नीवारवेणुश्यामाकशाकादिभिः एतान्पञ्चमहायज्ञान्विधिपूर्वकंनिर्वपेदेव ॥ ५ ॥

**वसीत चर्मचीरंवा सायंस्नायात्प्रगे तथा ॥ जटाश्चबिभृयान्नित्यंश्मश्रुलोमनखानि च ॥ ६ ॥**

( १ ) **मेधातिथिः** । चर्म गोमृगादीनाम् । चीरं वस्त्रखण्डं । सायं दिवसावसानसमयः । प्रगेचान्हःप्रथमोदये । एवंसायंस्नानविधानाद्रात्रौभोजनमप्याहुः भुक्तेस्नानप्रतिषेधात् । तदयुक्तमित्यन्ये यतःस्नातकव्रतमतः स्नानमाचरेद्भुक्त्वेति । महाभारते तु पुरुषमात्रधर्मतया स्मर्यते । त्रैकालिकमप्यस्य स्नानंभविष्यति वैकल्पिकम् । जटाश्मश्रुलोमनखानि न कर्तयेत् ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । चीरं तृणवल्कलादिकृतंवासः । प्रगे प्रातः । बिभृयात् नछिन्द्यात् ॥ ६ ॥

( ३ ) **कुल्लूकः** । मृगादिचर्म वृक्षवल्कलंवा*आच्छादयेत् । हारीतेन तु वल्कलशाली चर्मचीरकुशमुञ्जफलकवासाइतिविदधता वल्कलादिकमप्यनुज्ञातम् । सायंप्रातः स्नायात् जटाश्मश्रुलोमनखानि नित्यंधारयेत् ॥ ६ ॥

( ४ ) **राघवानन्दः** । चीरं खण्डितवस्त्रं एतदुपलक्षकंवल्कलादेः । तदुक्तंहारीतेन वल्कलशाणचीरचर्मकुशमुञ्जफलवासाइति । प्रगे प्रातः । जटाश्च कृत्रिमाअकृत्रिमावा ॥ ६ ॥

( ५ ) **नन्दनः** । चीरंकुशमयतन्तुस्यूतंवस्त्रम् । प्रगे उषसि ॥ ६ ॥

( ६ ) **रामचन्द्रः** । चर्म कृष्णाजिनादि । चीरं वल्कलकृतं । प्रगे प्रातःसमये ॥ ६ ॥

---

* वृक्षवल्कलंवा=वस्त्रखंडंवा ( अ )

**यद्भक्ष्यंस्यात्ततोदद्याद्बलिंभिक्षांचशक्तितः॥ अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥ ७ ॥**

( १ ) **मेधातिथिः** । मुन्यन्नैरित्युक्तं तानि च नीवारादीनि वन्यानि धान्यानि तथा शाकादीनि वन्यान्येव । अन्नशब्दोबाहुल्येन धान्यविकारे भक्तसक्तुपिष्टादौ प्रयुज्यते ततःशाकादीनांसत्यपि मुन्यन्नत्वे पृथगुपादानम् । मुनयस्तापसास्तेषामन्नानि मुन्यन्नानि । अग्नौपाकधर्मान्महायज्ञान्निर्वपेत् । यदा कालपक्वफलाशी तदा न निर्वपेदित्याशङ्कायामाह यद्भक्षःस्यात् यदेव भक्षयेत्तदेव पिष्टादि यथासामर्थ्यंदद्यात् । बलिं अनग्निहोत्रं इन्द्रायेन्द्रपुरुषेत्यादि यद्विहितम् । अग्नौत्वस्मिन्पक्षे होमोनास्ति तदयुक्तं बलिशब्दस्य चेज्यामात्रवचनत्वादग्नावनग्नौच तुल्यमेतत् अथाप्ययंपक्षः स्याद्यदेवभक्षयेत्तदेव । अग्नावेव पक्केनाग्नौ होमः कर्तव्यस्तथापि तावन्मात्रप्रयोजनंशाकादिवक्ष्यति स्वयंकालपक्वंभोक्ष्यते । सर्वथा कालपक्वाशिनोप्यस्ति वैश्वदेवोऽग्नावेव । अबादिभिर्द्वन्द्वोयम् । अद्भिर्मूलफलैः भिक्षयाच नीवारादिनाऽर्चयेदाश्रमागतंपान्थम् ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । बलिपदंमहायज्ञोपलक्षणम् । भिक्षां भिक्षमाणेभ्यः । अन्नाभावेऽम्मूलादिरूपाभिः भिक्षाभिः भैक्ष्यभूताभिः ॥ ७ ॥

( ३ ) **कुल्लूकः** । यद्भुञ्जीत ततोयथाशक्ति बलिंभिक्षांच दद्यात् । बलिमितितु वैश्वदेवनित्यश्राद्धयोरुपलक्षणम् एतानेव महायज्ञानितिविहितत्वात् । आश्रमागताञ्जलफलमूलभिक्षादानेन पूजयेत् ॥ ७ ॥

( ४ ) **राघवानन्दः** । किंच यदिति । भक्ष्यं स्वनियमप्राप्तंशाकादि । बलिं वैश्वदेवम् । आश्रमागतार्चनमावश्यकमित्याह अद्भिरिति । अद्भिर्जलैःअतोननीवारादिभिर्भिक्षितैः ॥ ७ ॥

( ५ ) **नन्दनः** । बलिर्वैश्वदेवाग्निछष्टभूतबलिर्वा । आश्रमागतानतिथीनितिशेषः ॥ ७ ॥

( ६ ) **रामचन्द्रः** । ततोभक्ष्याद्बलिंदद्यात् बलिपदंमहायज्ञोपलक्षणं । च पुनः शक्तितोभिक्षांदद्यात् ॥ ७ ॥

**स्वाध्याये नित्ययुक्तः स्याद्दान्तोमैत्रः समाहितः॥ दाता नित्यमनादातासर्वभूतानुकम्पकः॥ ८ ॥**

( १ ) **मेधातिथिः** । आश्रमबुद्ध्या स्वाध्यायादीनांनिवृत्तिमाशङ्कमानआश्रमान्तरत्वादस्यानिवृत्त्यर्थमाह । नित्ययुक्तः न यथागार्हस्थ्ये तत्रहि गृहचेष्टार्थाअपि व्यापाराः सन्ति तेष्वनुष्ठीयमानेषु नास्ति स्वाध्यायः । दान्तोदमयुक्तः मदवर्जितः । मैत्रः मित्रकर्मप्रधानः प्रियहितभाषी । सन्निहितस्य चित्तानुकूलतापरस्समाहितः नासंबद्धंनाप्राकरणिकंबहुपराधीनोपिब्रूयात् । दाता अपांमूलभिक्षाणांच । अनादातापथ्यौषधाद्यर्थमाश्रमान्तरादागतंन याचेत् । सर्वभूतानुकम्पकः अनुकम्पा कारुण्यं सत्यपि कारुणिकत्वे नपरार्थमन्यंयाचेत ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । स्वाध्याये जपादौ । दान्तोजितमनाः । मैत्रोमैत्रीपरः । सर्वत्र समाहितः । आत्मविषयनिहितचित्तः । दाता नित्यं सततंदानशीलः । अनादाता अप्रत्युपलब्धिशीलः आदातृत्वशून्यः । सर्वभूतानुकम्पकः सर्वभूतदुःखप्रहरणेच्छावान् ॥ ८ ॥

( ३ ) **कुल्लूकः** । वेदाभ्यासे नित्ययुक्तःस्यात् शीतातपादिद्वन्द्वसहिष्णुः सर्वोपकारकः संयतमनाः सततंदाता प्रतिग्रहनिवृत्तः सर्वभूतेषु कृपावान्भवेत् ॥ ८ ॥

---

( ७ ) यद्भक्ष्यंस्यात=यद्भक्षःस्यात् ( मेधा० )
आश्रमागतान्=अश्रमागतम ( ” )

( ४ ) **राघवानन्दः** । किंच स्वाध्यायइति । तद्विस्मरणे ब्रह्मोज्झतेतिचतुर्णामाश्रमाणांप्रत्यवायसाधारण्यात् । अनादाता अप्रतिग्रहः । सर्वभूतानुकम्पकः सर्वोपकारकः ॥ ८ ॥

( ५ ) **नन्दनः** । मित्रभावोमैत्री तद्वान्मैत्रः ॥ ८ ॥

( ६ ) **रामचन्द्रः** । दान्तः जितेन्द्रियः स्यादिति सर्वत्र संबन्धः । मैत्रः मैत्रीपरः । समाहितः । नियतचित्तः । नित्यं दातादानपरः ॥ ८ ॥

## वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ॥ दर्शमस्कन्दयन्पर्व पौर्णमासं च योगतः ॥ ९ ॥

( १ ) **मेधातिथिः** । वितानोविहारस्तत्रभवंवैतानिकम् । त्रेताग्निविषयं कर्म श्रौतं तज्जुहुयात्कुर्यात् । अग्निहोत्रशब्दोयवाग्वादौ होमसाधनद्रव्ये वर्तते न कर्मनामधेयम् । ततश्च तज्जुहुयादाहवनीयेऽग्निहोत्रादिभिर्जुहोतीत्यर्थः । उपपन्नः प्रथमपक्षेऽग्निहोत्रशब्दोजुहोतिनाऽभिन्नार्थः । ननु च पुत्रेषु भार्यांनिक्षिप्येतिपक्षान्तरमुक्तं तत्र कथंतया विना श्रौतेष्वधिकारः प्रोषितस्य यथेतिचेत् यथा प्रोषितोवा यजमानः संविधानादिना दूरस्थोप्यधिक्रियते संविधानेएवंभवति कर्ता तद्वत्पत्न्यपि वनंप्रतिष्ठमानमनुज्ञास्यति न सहाधिकारोविरोत्स्यतइति तदपिवार्तम् । दैवान्मानुषाद्वा प्रतिबन्धात्कथश्चित्प्रवासोपपत्तेः युक्तमीदृशमनुष्ठानं न स्वेच्छया । सत्यांशक्तौ बहूनि चाङ्गानि परिलुप्येरन् । दर्शपौर्णमासयोः वेदोसि वित्तिरसीत्यादिपत्नींवाचयेदित्युक्तं तद्धीयेत अथोच्येत सहप्रस्थानपक्षे विधिरयंभविष्यतीत्येतदपि न विशेषस्याऽश्रुतत्वात् विनिक्षेपपक्षेचाग्नीनांप्रतिपत्त्यन्तरमनाम्नातं किञ्चसहत्वपक्षेपीदंविरुध्यते ॥ वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैवविधिवन्निर्वपेत्पृथगिति॥ आरण्यानि मुन्यन्नानि नीवारादीन्यभिप्रेतानि ग्राम्यस्य परिच्छदस्य त्यागविधानात् । व्रीह्यादिभिश्च वेदे पुरोडाशाविहितास्तेच ग्राम्याः नच स्मृतिश्रुतिषु उत्पन्नन्यायेन व्रीहिशास्त्रविधिन्यायेनवा केनचिन्मेध्येनारण्येनान्नेन प्रयोगः परिसमाप्येतनिक्षेपे । तेच भार्ययादुरुपपादाः । कथंयावज्जीवश्रुतौ सत्यामग्नीनांत्यागोभार्यायावा तस्मादाश्रमान्तरविधानंवैतानिकानांच कर्मणामनुष्ठानंन संवदेत् । कर्तव्योऽत्र यत्नः केचिदाहुः वैतानिकशब्दः स्मार्तेष्वेव कर्मसु स्तुत्या प्रयुक्तः नच स्मार्तेषु व्रीह्यादिनियमशास्त्रमस्ति तत्रह्याम्नायते ॥ यदन्नः पुरुषोराजंस्तदन्नास्तस्यदेवताइति । अतश्च मुन्यन्नैरनुष्ठानमविरुद्धंभवेद्व्रीह्यादिशास्त्रविरोधः परिहृतः स्यात् । सहाधिकारस्तत्रापि विद्यते तस्यकः परिहारः उभयोःस्मार्तत्वादस्यामवस्थायांबाधिष्यते यत्तु श्रौतवचनं पत्न्यासह यष्टव्यमिति तच्छ्रौतेष्वेव अथवा नैवायंविधिर्गृहस्थाग्नेः किंतर्हि श्रावणिकेनाग्निमाधायेतिगौतमेन पठितं इहापि वक्ष्यति वैखानसमतेस्थितइति तस्माच्छास्त्रविहितानि कर्मान्तराण्येवैतानि । दर्शपूर्णमासादयस्तु शब्दाःभक्त्याः तत्र प्रयुक्ताअतस्तत्रतदाधानमभार्यस्यैव । गार्हस्थ्योपात्तानांप्रतिपत्तिरुक्ता अग्नीन्स्वात्मनि वैतानानिति । यत्तु यावज्जीवश्रुतौ सत्यां कथमग्नीनांत्यागइति एतच्चातुराश्रम्यानुक्रमणप्रकरणे निरूपयिष्यते । अन्ये पुनराहुः होमेग्राम्यानामन्नानांप्रतिषिद्धोनतु देवताद्यर्थउपयोगः ननुच यजमानपञ्चमाइडांभक्षयन्तीति तत्रापि विद्यते भक्षः सत्यं सतु शास्त्रीयोन लौकिकः लौकिकस्यच प्रतिषेधः संत्यज्येति ग्रामप्रवेशश्च तस्य तदर्थोन विरुध्यते यथा वक्ष्यति ग्रामादाहृत्यवाश्नीयादिति तदेव सत् मुन्यन्नैरितिविधानात् तदेवंश्रावणिकेनाग्निमाधायेत्यादिसर्वमुपपन्नम् । तथाह्यग्निहोत्रंसमाधायेति पठ्यते नतु संत्यज्येति । समारोपणमपि मुमूर्षोस्तप्ततपसोवक्ष्यते प्रथमंप्रवासेन नतुरागादिशब्दानांश्रवणिकाग्निविषयत्वे कथंचिदुपपत्तिः मृतभार्यस्य तदाधानंवाचनिकंभविष्यति यद्वावा ब्रह्मचर्यादेव वनवासमिच्छेत्तदा श्रावणिकाधानं तस्मादाहिताग्नेःसहाग्निभिर्वनप्रस्थानंसभार्यस्य । तत्रच यथा-

विधि व्रीह्यादिना श्रौतकर्मानुष्ठानम् । व्रीह्यादीनामपि मुन्यन्नता कथंचिदुपपाद्या व्रीहियवावपि पवित्रं । भार्यानिक्षेपश्चानाहिताग्नेः कथंचित्स्मार्तेऽग्नौ गतिरुभयोःस्मार्तत्वात् । यस्यचद्वेभार्येजाते एकयाचाग्नयोनीतास्तस्य द्वितीयांभार्यांनिक्षिप्येतिवचनम् । अस्कन्दयन् स्कन्दनं विध्यतिक्रमः यथाविहितस्यानुष्ठानस्यासंपादनं एतच्च पादपूरणं योगइत्येतदपि योगतअस्कन्दयन् युक्त्याऽविनाशयन् । युक्तिर्विधिरेव ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । वैतानिकं विततेष्वग्निषुकार्यमग्निहोत्रहोमं । दर्शं पर्वदर्शाख्यं पर्वकृत्यमस्कंदयन्नपातयन् । योगतउद्योगतः ॥ ९ ॥

( ३ ) **कुल्लूकः** । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारोवितानंतत्रभवंवैतानिकमग्निहोत्रंयथाशास्त्रमनुतिष्ठेत् । दर्शपौर्णमासंच पर्वैतिश्रौतस्मार्तदर्शपौर्णमासौयोगतः स्वकालेऽस्कन्दयन्नपरित्यजन् । भार्यानिक्षेपपक्षे च रजस्वलायामिव भार्यायामेतेषामनुष्ठानमुचितं विशेषाश्रवणात् ॥ ९ ॥

( ४ ) **राघवानन्दः** । वैतानिकं गार्हपत्यकुण्डस्थिताग्नेराहवनीयदक्षिणाग्निकुण्डयोर्विहारोवितानं तत्र भवंवैतानिकर्माग्निहोत्रं यथाशास्त्रमनुतिष्ठेत् । अस्कन्दयन्नपरिलोपयन्पर्वपर्वसंबन्धि दर्शाख्यंकर्म एवंपौर्णमासाख्यं योगतः श्रौतस्मार्तदर्शादेःकाले ॥ ९ ॥

( ५ ) **नन्दनः** । वैतानिकमित्यनुवादः । योगतः प्राप्तितःप्राप्तकालइतियावत् । अस्कन्दयन्ननतिक्रामन् ॥ ९ ॥

( ६ ) **रामचन्द्रः** । तथा वैतानिकं अग्नित्रयसाध्यं । च पुनः अग्निहोत्रं यावदन्नादिकंहोमद्रव्यसाध्यं । दर्शश्राद्धंअस्कंदयन्नलुम्पयन् । च पुनः योगतः पौर्णमासंपर्वास्कंदयन् ॥ ९ ॥

**ऋक्षेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत् ॥ तुरायणं च क्रमशोदाक्षस्यायनमेवच ॥ १० ॥**

( १ ) **मेधातिथिः** । दर्शेष्टिश्च आग्रहणंचेति समाहारद्वन्द्वः । चातुर्मास्यतुरायणदाक्षायणाः श्रौतकर्मविशेषवचना नित्याएवतुरायणादयः केषांचित् ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । ऋक्षेष्टयोऽग्निर्वाअकामयतेत्यादितैत्तिरीयेकृत्तिकादिनक्षत्रेष्टयआम्नाताः तुरायणं संवत्सरं सवनविधाइष्टीरित्यादिनापस्तम्बेनोक्तं । दक्षस्यायनं दाक्षायणयज्ञेन स्वर्गकामोयजेतेतितैत्तिरीयआम्नातम् । अत्र यद्यपि वन्यैरेवाकृष्टपच्यैर्नीवारादिभिःपुरोडाशादि तथापि दर्शादेर्घृतंविना दाक्षायणादीनांक्षीरंविनाऽसिद्धेर्गवामपि परिग्रहः ॥ १० ॥

( ३ ) **कुल्लूकः** । ऋक्षेष्टिर्नक्षत्रेष्टिः आग्रयणंनवसस्येष्टिः ऋक्षेष्ट्याग्रयणंचेतिसमाहारद्वन्द्वः तथाचातुर्मास्यतुरायणदाक्षायणानि श्रौतकर्माणि क्रमेण कुर्यात् । अत्र केचित् सर्वमेतच्छ्रौतंदर्शपौर्णमासादिकर्म वानप्रस्थस्य स्तुत्यर्थमुच्यते नत्वस्यानुष्ठेयंग्राम्यव्रीह्यादिसाध्यत्वादेषांच नचस्मृतिः श्रौताङ्गबाधनेशक्तेत्याहुस्तदसत् वासन्तशारदैरित्युत्तरश्लोके मुन्यन्नैर्नीवारादिभिर्वानप्रस्थविषयतया स्पष्टस्य चरुपुरोडाशादिविधेर्बाधनस्यान्याय्यत्वात् । गोविन्दराजस्तु व्रीह्यादिभिरेवकथंचिदरण्यजातैरेतान्निर्वर्तयिष्यतइत्याह ॥ १० ॥

---

( १० ) ऋक्षेष्ट्याग्रयणंच=दर्शेष्ट्याग्रहणं ( मे० )

( १० ) दाक्षस्यायनमेवच=दक्षिणायनमेवच ( क, थ, )

=दक्षस्यायनमेवच ( ख, ग, घ, च, ड, ण, त, )

( ४ ) **राघवानन्दः** । ऋक्षेष्टिर्नक्षत्रेष्टिः । आग्रहायणं नवसस्येष्टिः । चातुर्मास्यं वैश्वदेववरुणप्रघाससाकमेध शुनासीरेतिचतुष्कम् । अथ तुरायणमित्याश्वलायनोक्तेः । केषांचित् श्रौतकर्मविशेषास्तुरायणादयः । पश्वभावादयनाद्यु-पपत्तेः । एते यागभेदाव्रीह्यभावेपि कार्याः नीवारादेःसत्वादावश्यके मुख्यालाभे प्रतिनिधेरावश्यकत्वात् ॥ १० ॥

( ५ ) **नन्दनः** । ऋक्षेष्टिंनक्षत्रेष्टिम् । आग्रयणमिति जातावेकवचनम् । श्यामाकव्रीहियवाग्रयणानि । चातुर्मा-स्यानि वैश्वदेवादीनि । तुरायणंसंवत्सरसाध्यक्रतुविशेषः । दाक्षायणंदर्शेष्टिविकृतिः । क्रमशः तत्र तत्रकाले ॥ १० ॥

( ६ ) **रामचन्द्रः** । ऋक्षेषु कृत्तिकादिषु आग्रयणेच पुनः उत्तरायणं संवत्सरेष्टिविशेषः दक्षस्यायनं तैत्तिरीय-शाखायांदाक्षायणसंज्ञम् ॥ १० ॥

**वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ॥ पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक् ॥ ११ ॥**

( १ ) **मेधातिथिः** । यदा मुन्यन्नैरिति न पूर्वेण संबध्यते तदा नास्ति चोद्यं वैतानिकानि कथंव्रीह्यादिचोदितानि क्रियेरन् । अत्र चरुपुरोडाशावैखानसशास्त्रोक्ताएव वेदितव्याः । वसन्ते जायन्ते पच्यन्तेवा वासन्तानि । एवंशारदैर्मेध्यै-रित्यनुवादः । स्वयमाहृतैः प्रतिग्रहादीनि वृत्तिकर्माणि निषिध्यन्ते । स्मार्तानामुक्तानांकर्मणामनुष्ठानार्थंपुनर्हृत्यादि नाप-हरणम् । विधिवत्पृथगितिपूरणे ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । शारदपदंवार्षिकश्यामाकादेरप्युपलक्षणम् ॥ ११ ॥

( ३ ) **कुल्लूकः** । वसन्तोद्भवैःशरदुद्भवैर्मेध्यैर्यागाङ्गभूतैर्मुन्यन्नैर्नीवारादिभिःस्वयमानीतैःपुरोडाशांश्चरून्यथाशास्त्रंतत्त-द्यागादिसिद्धयेसंपादयेत ॥ ११ ॥

( ४ ) **राघवानन्दः** । अतआह वासन्तेति । वासन्तशारदैस्तत्रोद्भूतैःमेध्यैः यागार्हैः ॥ ११ ॥

( ५ ) **नन्दनः** । पृथक्नवे सस्ये प्राप्ते पुराणस्य त्यागेनेत्यर्थः ॥ ११ ॥

( ६ ) **रामचन्द्रः** । वासन्तादिशारदैर्वार्षिकश्यामाकाद्युपलक्षकैः ॥ ११ ॥

**देवताभ्यस्तुतद्धुत्वा वन्यं मेध्यतरं हविः ॥ शेषमात्मनि युञ्जीत लवणंच स्वयं कृतम् ॥१२॥**

( १ ) **मेधातिथिः** । पर्वसु यद्देवताभ्योदत्तंतच्छिष्टमेवभक्षयेन्नशाकमूलफलादि । शेषमात्मनि युञ्जीत आत्मनि-मित्तमुपयोजयेत् । आत्मार्थे शरीरस्थित्यर्थमित्यर्थः । स्वयंकृतंच लवणंसैन्धवादिनिषेवेत ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । देवताभ्योहुत्वाग्रयणेष्टौ मेध्यतरं ग्राम्यापेक्षयापि मेध्यत्वात् । स्वयंकृतं लवणं वृक्षा-दिक्षारकृतम् ॥ १२ ॥

( ३ ) **कुल्लूकः** । तद्वनोद्भवनीवारादिकसाधितमतिशयेनयागार्हंहविर्देवताभ्यउपकल्प्यशेषान्नमुपभुञ्जीत* आत्मना च कृतंलवणमूषरलवणाद्युपभुञ्जीत ॥ १२ ॥

( ४ ) **राघवानन्दः** । किंचान्यदित्याह देवेति । देवताभ्योग्नेःसोमयमाभ्यामित्याद्युक्ताभ्यः युञ्जीत । स्वयंकृतल-वणंच भुञ्जीतेत्यर्थः ॥ १२ ॥

( ५ ) **नन्दनः** । आत्मनिवेदनंभोजनम् ॥ १२ ॥

( ६ ) **रामचन्द्रः** । च पुनः स्वयंकृतं लवणं वृक्षादिक्षारकृतं युञ्जीतभुञ्जीत ॥ १२ ॥

---

* शेषान्न=शेषमात्मार्थ ( अ )

**स्थलजौदकशाकानि पुष्पमूलफलानि च ॥ मेध्यवृक्षोद्भवान्यद्यात्स्नेहांश्च फलसंभवान् ॥ १३॥**

( १ ) **मेधातिथिः** । स्थलजानि उदकजानि अद्यात् तथा पुष्पमूलफलानि च ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । स्थलजानि वास्तुकादीनि औदकानि हिलमोचिकादीनि शाकानि फलसंभवान् वन्यफलजान् ॥ १३ ॥

( ३ ) **कुल्लूकः** । स्थलजलोद्भवशाकान्यरण्ययज्ञियवृक्षोद्भवानिपुष्पमूलफलानीङ्गुद्यादिफलोद्भवांश्च स्नेहानद्यात् ॥ १३ ॥

( ४ ) **राघवानन्दः** । किंच स्थलजेति । स्नेहान्घृतस्थानीयान् इङ्गुदीफलादिभ्यःसंभवोयेषाम् ॥ १३ ॥

( ५ ) **नन्दनः** । मेध्योयज्ञार्हः ॥ १३ ॥

( ६ ) **रामचन्द्रः** । स्थलजं वास्तुकादि उदकशाकानि मोचकादीनि च पुनः फलसंभवांश्च स्नेहान् अद्याद्भक्षयेत् ॥ १३ ॥

**वर्जयेन्मधु मांसं च भौमानि कवकानि च ॥ भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च॥१४॥**

( १ ) **मेधातिथिः** । भौमानि कवकानि कवकशब्दः प्राग्व्याख्यातः छत्राकपर्यायः । तानिच कवकानि भूमौ जायन्ते वृक्षकोटरादावपि अतोविशेषणार्थं भौमग्रहणम् । समाचारविरोधोगृहस्थधर्मेषु चाविशेषेण कवकानांप्रतिषेधः । वानप्रस्थस्य च नियमातिशयोयुक्तः तस्माद्भौमानीतिस्वतन्त्रपदं तत्र गोजिव्हिकानामकश्चित्पदार्थोवनेचराणांप्रसिद्धस्तद्विषयंबोद्धव्यम् । नतु यत्किंचिद्भुविजातमात्रस्य । कवकानांप्रतिषिद्धत्वात्पुनःप्रतिषेधोभूस्तृणादीनांतत्समप्रायश्चित्तार्थः । भूस्तृणशिग्रुकशब्दौ शाकविशेषवचनौ वाहीकेषु प्रसिद्धौ ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । मधुमांसमिति ब्रह्मचारिवर्जनीयोपलक्षणम् । भौमानि भूमिजानि । कवकानि छत्राकानि । चकारात्काष्ठजानि । भूस्तृणं शाकभेदः । शिग्रु सौभाञ्जनं । श्लेष्मातकोबहुवारः । एतेन गृहस्थानामपि यान्यभक्ष्यत्वेनोक्तानि तानि सर्वाण्युपलक्ष्यन्ते ॥ १४ ॥

( ३ ) **कुल्लूकः** । माक्षिकंमांसं भौमानीतिप्रदर्शनार्थम् भौमादीनि कवकानि छत्राकान्भूस्तृणंमालवदेशेप्रसिद्धंशाकंशिग्रुकंवाहीकेषुप्रसिद्धंशाकंश्लेष्मातकफलानिवर्जयेत् । गोविन्दराजस्तु भौमानि कवकानीत्यन्यव्यवच्छेदकंविशेषणमिच्छन्भौमानांकवकानांनिषेधः वार्क्षानांतु भक्षणमाह तदयुक्तम् मनुनैवपञ्चमेद्विजातेरेव कवकमात्रनिषेधाद्वनस्थगोचरतया नियमातिशयस्योचितत्वात् । यमस्तु भूमिजंवृक्षजंवापिछत्राकंभक्षयन्तिये । ब्रह्मघ्नांस्तान्विजानीयाद्ब्रह्मवादिषुगर्हितान् इति विशेषेणवृक्षजस्यापिनिषेधमाह । मेधातिथिस्तु भौमानीतिस्वतन्त्रंपदंवदन्गोजिव्हिकानाम कश्चित्पदार्थोवनेचराणांप्रसिद्धस्तद्विषयंनिषेधमाह तदपि बहुष्वभिधानकोशादिष्वप्रसिद्धंनश्रद्दधीमहि कवकानांद्विजातिविशेषेपाश्रमिके निषेधे सत्यपि पुनर्निषेधोभूस्तृणादीनांनिषेधेपिचसमप्रायश्चित्तविधानार्थः ॥ १४ ॥

( ४ ) **राघवानन्दः** । किंच वर्जयेदिति । कवकादीनांपुनर्ग्रहणंभूस्तृणादितुल्यप्रायश्चित्तार्थम् । भौमानीतिविशेषाद्गोजिव्हाकाराणीति मेधातिथिः । भूस्तृणं मालवदेशप्रसिद्धशाकं । शिग्रुकं बाल्हीके प्रसिद्धम् ॥ १४ ॥

( ५ ) **नन्दनः** । भौमानि कवकानि भूमिजानि छत्राकाणि । वृक्षकोटरजातानांकवकानामप्यभक्ष्यत्वेभौमानामादरेणवर्जनार्थंविशेषेणनिषेधनम् । भूस्तृणंतृणजातिविशेषः । शिग्रुकंसौभाञ्जनकइत्यन्ये ॥ १४ ॥

---

* हो=हि ( अ )

( ६ ) **रामचन्द्रः** । कवकानि छत्राकाणि शिग्रुकं सौभाञ्जनं भूस्तृणं श्लेष्मातकफलानि च वर्जयेत् । मालातृणक-भूस्तृणेइत्यमरः ॥ १४ ॥

**त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसंचितम् ॥ जीर्णानि चैव वासांसि शाकमूलफलानिच ॥१५॥**

( १ ) **मेधातिथिः** । षण्मासनिचयसमानिचयपक्षयोराश्वयुजे त्यागः ननुमुन्यन्नंतावदेव संचेयं यत्कर्मपर्याप्तं तत्र नैवाधिकमस्ति कस्यत्यागः उच्यते न शक्या तुलाग्रहीतुमर्जनकाले अतोयत्किंचिदवशिष्टमस्ति तस्याश्वयुजे त्यागः । जीर्णानि चैव वासांसि अजीर्णानांनास्ति त्यागः ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वसंचितं पूर्ववर्षे शरदि वसन्तेवा परिगृहीतम् । वासांस्यजिनानि चीराणिवा जीर्णानीति यदिजीर्णानि तदैवाश्वयुजेमासित्याज्यानीत्यर्थः । शाकेति शाकादीन्यप्याहारार्थंशोषयित्वा स्थापितान्याश्वयुजे त्याज्यानीत्यर्थः ॥ १५ ॥

( ३ ) **कुल्लूकः** । संवत्सरनिचयपक्षे पूर्वसंचितनीवाराद्यन्नं जीर्णानि च वासांसि शाकमूलफलानिचाश्विने मासि त्यजेत् ॥ १५ ॥

( ४ ) **राघवानन्दः** । वक्ष्यमाणसमानिचयस्य त्यागकालमाह त्यजेदिति । आश्वयुजे नीवारादेः प्राप्तिकाले । वासांसीति विशेषणान्न चर्मणांत्यागः । संचितशाकादित्रितयमपि त्यजेदित्यन्वयः ॥ १५ ॥

**न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥ न ग्रामजातान्यार्तोऽपि मूलानि च फलानि च ॥१६॥**

( १ ) **मेधातिथिः** । आरण्यस्यापि फालकृष्टस्य प्रतिषेधः । ग्रामजातान्यफालकृष्टान्यपि संत्यज्यग्राम्यमाहारमित्यनेन प्रतिषेधः । पुष्पफलानांक्रियते नोपयोगः ग्राम्याणांदेवताभ्यर्चनादौ पुष्पफलानांनिषेधः । आर्तोपि अन्यासंभवेऽप्यवश्यकर्तव्यत्वाद्देवताद्यर्चनस्य प्रतिनिधिपक्षेऽपि नोपादेयमित्यर्थः । अपिशब्दोभिन्नक्रमोद्रष्टव्यः । पुष्पाण्यपिनोपादेयानि किंपुनर्धान्यानि ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । फालकृष्टानि वनजान्यपि । न ग्रामजातान्यफालकृष्टान्यपि । आर्तोरोगी फलादीनीति व्रीह्यादेरप्युपलक्षणम् ॥ १६ ॥

( ३ ) **कुल्लूकः** । अरण्येऽपिफालकृष्टप्रदेशे जातंस्वामिनोपेक्षितमपि व्रीह्यादि नाद्यात् । तथाग्रामजातान्याफलकृष्ट-भूभागेऽपि लतावृक्षमूलफलानि क्षुत्पीडितोऽपि न भक्षयेत् ॥ १६ ॥

( ४ ) **राघवानन्दः** । किंच नेति । उत्सृष्टं वानप्रस्थाद्युद्देशेनत्यक्तं । पुष्पाणीति मेधातिथिः । फलानि नारिकेलादीनि ॥ १६ ॥

( ५ ) **नन्दनः** । वन्यमपिधान्यंहलकर्षणोत्पादितंनाश्नीयात् । केनचिदुत्सृष्टंपूर्वंपरिगृहीतंपश्चादनादरेणत्यक्तम् ॥ १६ ॥

( ६ ) **रामचन्द्रः** । फालकृष्टं हलोत्कृष्टं केन चिदुत्सृष्टमपि नाऽश्नीयात् ॥ १६ ॥

**अग्निपक्वाशनोवा स्यात्कालपक्वभुगेव वा ॥ अश्मकुट्टोभवेद्वापि दन्तोलूखलिकोपिवा ॥ १७ ॥**

( १ ) **मेधातिथिः** । अग्निना पक्वं शाकौदनादि तदशनंयस्य सोऽग्निपक्वाशनः । काले स्वयमेव यत्पक्वंतदेव भुञ्जी-

त नार्द्रंफलं अथवा धान्यानामेव नीवारादीनां निष्पिष्येदंभक्षणम् । अश्मभिः पाषाणैः कुट्टयित्वा पिष्टरूपंकृत्वा भुञ्जीत । यद्वा यद्रूपपन्नंवृतकादिभिर्बहिस्तुषकपाटकंतदश्मभिरपनीय कवाटमन्तः फलंभक्षयेत् । दन्ताउलूखलम् अस्यदन्तोलूखलिकः दन्तैस्तुषकवाटमपनीय भक्षयेत् । असत्यपि संस्कारे सनकर्तव्यः यदिवा पूर्ववदशनविशेषोपलक्षणं तादृशमश्नीयाद्यदस्य दन्ताएव उलूखलकार्यमवघातंसंपादयन्ति ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । कालपक्कं परिणामपक्कं । अश्मकुट्टोऽश्मन्यश्मना तुषमोक्षंकृत्वाऽश्नन् । दन्तोलूखलिकः स्वदन्तैरेव तुषमोक्षंकृत्वा भुञ्जानः । अत्रचान्यतरस्यैव परिग्रहः कार्यः तत्राप्युत्तरोत्तरस्य श्रेष्ठत्वमितिक्रमोक्तिफलम् ॥ १७ ॥

( ३ ) **कुल्लूकः** । अग्निपक्कंवन्यमन्नंकालपक्कंवा फलादियद्वानोलूखलमुसलाभ्यांकिंतुपाषाणेनचूर्णीकृत्यापक्कमेवाद्यात्। दन्ताएवोलूखलस्थानानि यस्य तथाविधोवा भवेत् ॥ १७ ॥

( ४ ) **राघवानन्दः** । वानप्रस्थस्य नियमविशेषानाह अग्नीति द्वाभ्यां । दन्तोलूखलिकःदन्ताएवउलूखलाभक्ष्यसाधनानि यस्यसः । अग्निपक्कादिचतुष्टयंभक्षणप्रकारनियमः ॥ १७ ॥

( ५ ) **नन्दनः** । फलान्यश्मना निष्पीड्य योभक्षयति न दन्तादिना सोऽश्मकुट्टकः । दन्तैरेवमुसलोलूखलकार्यंयस्यसदन्तोलूखलिकः । प्राधान्यादुलूखलस्यैवग्रहणम् । सतुषाभ्यवहारीत्यर्थः । अनेन व्रतेन परिग्रहपराङ्मुखत्वमुक्तम् ॥ १७ ॥

**सद्यः प्रक्षालकोवा स्यान्माससंचयिकोऽपि वा॥षण्मासनिचयोवा स्यात्समानिचयएव वा॥१८॥**

( १ ) **मेधातिथिः** । यत्पूर्वमशनमुक्तंतदैकाह्निकभोजनपर्याप्तमेवानयेत् । मासोपयोगीवा संचयोमासपर्याप्तः संचयोमाससंचयः सोऽस्यास्तीतिठन्कर्तव्यः यदिवा माससंचयकइति बहुव्रीहिसमासोत्र कर्तव्यः मासपर्याप्तःसंचयोस्येति एवमुत्तरयोरपि ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । अथ सञ्चयेविशेषमाह सद्यःप्रक्षालकइति । सद्यएव संचयभाण्डंप्रक्षालयतीति प्रक्षालनेन तदव्यभिचरिता रिक्तता लक्ष्यते । समानिचयः संवत्सरार्थान्नाद्यसञ्चयकारी संवत्सरोर्ध्वकालार्थसंचयस्तु नास्त्याश्वयुजे त्यागस्योक्तत्वात् । पक्षचतुष्टयंतु पूर्वपूर्वप्राशस्त्यार्थमुक्तम् ॥ १८ ॥

( ३ ) **कुल्लूकः** । एकाहमात्रजीवनोचितंमासवृत्त्युपचितंवा षण्माससंवत्सरनिर्वाहसमर्थंवा नीवारादिकंसंचिनुयात् । यथापूर्वंनियमातिशयः मासवृत्तियोग्यसंचयोमाससंचयःसोऽस्यास्तीतिअतइनिठनावितिठन्प्रत्यये नमाससंचयिकइतिरूपम् ॥ १८ ॥

( ४ ) **राघवानन्दः**। सद्यःप्रक्षालिकादिचतुष्टयं संचयनियमः । नियमभङ्गे प्रायश्चित्ती स्यात् । सद्यःप्रक्षालिकएकाहनिर्वाहकसंचितभक्तः । निचयःसंचयस्तेन षण्मासव्यापी संचयोयस्य एवंसमाअब्दंव्याप्यनिचयोयस्येति ॥ १८ ॥

( ५ ) **नन्दनः** । प्रतिदिनमन्नंसंपाद्यातिथिशेषंभुक्त्वाश्वस्तनिकोहस्तप्रक्षालनंयः करोतिससद्यःप्रक्षालकः ॥ १८ ॥

( ६ ) **रामचन्द्रः** । सद्यः प्रक्षालकोवास्यात् तदहःपर्याप्तकःस्यात् सञ्चयरहितइत्यर्थः । च पुनः समानिचयएववा वर्षपर्याप्तान्नोवा । हायनोस्त्री शरत्समाइत्यमरः । वर्षपर्याप्तान्नसंचयइत्यर्थः ॥ १८ ॥

**नक्तं चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः॥चतुर्थकालिकोवा स्यात्स्याद्वाप्यष्टमकालिकः॥१९॥**

( १ ) **मेधातिथिः** । द्विर्भोजनस्य पुरुषार्थतया विहितत्वादन्यतरस्मिन्काले निर्वृत्तिर्विधीयते । यथायथा वयोया-

ति तथातथा भोजनकालंजह्यात् । चतुर्थमष्टमावधितयाऽऽश्रयेत् । त्रीण्यहोरात्राण्यतीत्य चतुर्थेऽहनि सायंभुञ्जानोऽष्टमकालिकोभवति । भोजनस्य प्रकृतत्वात्तद्विषयश्चतुर्थकालसंबन्धःप्रतीयते ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । नक्तमेव दिवैववा भोजनं तत्र शक्तितः शक्तौसत्यांनक्तमेव यदातु दिवा तदा नित्यमाहृत्य सद्यःप्रक्षालकवृत्तौ स्थित्वैव भोजनमित्यर्थः । चतुर्थकालिकोवेत्याद्यपि शक्तावेकस्मिन्दिने दिवा नक्तंवा भुक्त्वा द्वितीयदिनेऽभुक्त्वा तृतीये दिवा नक्तंवा भोजनमिति चतुर्थकालभोजनम् । सामान्यतोहि सायंप्रातःकालयोर्भोजनकालत्वात्प्रत्यहंद्वौ कालौ भवतः एवमष्टमकालिकत्वमप्युन्नेयम् ॥ १९ ॥

( ३ ) **कुल्लूकः** । यथासामर्थ्यमन्नमाहृत्य प्रदोषेभुञ्जीत । अहन्येव वा चतुर्थकालाशनोवास्यात् ॥ सायंप्रातर्मनुष्याणामशनंदेवनिर्मितमिति विहितम् । तत्रैकस्मिन्नहन्युपोष्यापरेद्युःसायंभुञ्जीत । अष्टमकालिकोवा भवेत्रिरात्रमुपोष्यचतुर्थस्याह्नो रात्रौभुञ्जीत ॥ १९ ॥

( ४ ) **राघवानन्दः** । नक्तंभोजिनोऽहरेवाहरणमाह दिवावेति । वाशब्दोत्रएवशब्दार्थः । सायंप्रातर्मनुष्याणामशनं देवनिर्मितमिति स्मृतेश्चतुर्थभोजनस्य यःकालःसभोजनार्थेविहितोयस्य सः तेन पूर्वेद्युरुपोष्य परेद्युःसायंभोजी चतुर्थकालिकः । एवंत्रिरात्रमुपोष्य चतुर्थेऽहनि सायंभोजी अष्टमकालिकः ॥ १९ ॥

( ५ ) **नन्दनः** । एकमहोरात्रमुपोष्य द्वितीयेऽहोरात्रे नक्तमेव भुञ्जानश्चतुर्थकालिकः ॥ १९ ॥

( ६ ) **रामचन्द्रः** । दिवा अन्नं आहृत्य आनीय नक्तं नक्तकाले अश्नीयात् । नक्तकालमाह आत्मनोद्विगुणांछायामतिक्रामतिभास्करः । तंनक्तंनक्तमित्याहुर्न नक्तंनिशिभोजनम् ॥ चतुर्थकालिकोवा स्यात् एकस्मिन्दिने दिवानक्तंवा भुक्त्वा द्वितीयदिने त्वभुक्त्वा तृतीयदिने दिवा नक्तंवा भोजनमिति चतुर्थकालिकत्वम् । सायंप्रातर्भोजनकालत्वात्प्रत्यहंद्वौ कालौ भवतः एवमष्टमकालिकत्वमप्युन्नेयं चतुर्दिनसाध्यम् ॥ १९ ॥

**चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्तयेत् ॥ पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् ॥२०॥**

**[ यतः पत्रं समादद्यान्न ततः पुष्पमाहरेत् ॥ यतः पुष्पं समादद्यान्न ततः फलमाहरेत् ॥ १ ॥ ]+**

( १ ) **मेधातिथिः** । पक्षान्तौ पूर्णमास्यमावास्ये । अत्र श्रितांयवागूमश्नीयात् । सकृदिति सायंप्रातर्वा ॥ २०॥

( २ ) **सर्वज्ञनारायणः** । शुक्लेकृष्णेचेतिमासमित्यर्थः । पक्षान्तयोःदर्शेपौर्णमास्यांच । क्वथितांतप्तां । सकृदेकदैव ॥ २० ॥

( ३ ) **कुल्लूकः** । शुक्लकृष्णयोः ॥ एकैकंह्रासयेत्पिण्डं शुक्ले कृष्णे च वर्धयेत् इत्यादिनैकादशाध्याये च वक्ष्यमाणैश्चान्द्रायणैर्वावर्तयेत् । पक्षान्तौ पौर्णमास्यमावास्ये तत्र श्रतांयवागूंवाप्यश्नीयात्सकृदितिसायंप्रातर्वा ॥ २० ॥

( ४ ) **राघवानन्दः** । चान्द्रायणविधानैर्वेत्येकादशाध्याये वक्ष्यमाणैः । क्वथितां पक्वां पक्षान्तयोः अमायांपौर्णमास्यांच सकृत्सायंप्रातर्वा वारमात्रमश्नीयात् ॥ २० ॥

( ६ ) **रामचन्द्रः** । पक्षान्तयोः शुक्लकृष्णयोः अन्ते मासांतेऽश्नीयात् मासोपवासइत्यर्थः । यद्वा पक्षान्तयोः शुक्लपक्षान्ते कृष्णपक्षान्ते वाऽश्नीयात् । पक्षागमेथवाऽश्नीदितियोगीश्वरः । क्वथितां यवागूं नीवारादिचूर्णविकाराम् ॥ २० ॥

**पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा ॥ कालपक्वैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥ २१ ॥**

( १ ) **मेधातिथिः** । कालपक्वैः पनसादीनाम् अग्निनापि पाकःक्रियते तन्निषेधार्थम् । तदग्निपक्वंगृहस्थस्यानिषि-

---

+ ( ट )

द्धम् । वैखानसंनाम शास्त्रं यत्र वानप्रस्थस्य धर्माविहितास्तेषांमतेस्थितः । अन्यामपि तच्छास्त्रोक्तांचर्यांशिक्षेत ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । केवलैरन्नान्तरासंसृष्टैः कालपक्कैः फलैः स्वयंशीर्णैः फलाङ्कुरादिजननशक्तिहीनतांप्राप्तैः । वैखानसमते वानप्रस्थधर्मे ॥ २१ ॥

( ३ ) **कुल्लूकः** । पुष्पमूलफलैरेव वा कालपक्कैःनाग्निपक्कैःस्वयंपतितैर्जीवेत् । वैखानसोवानप्रस्थः तद्धर्मप्रतिपादकशास्त्रदर्शनेस्थितः । तेनैतदुक्तम् अन्यदपिवैखानसशास्त्रोक्तंधर्ममनुतिष्ठेत् ॥ २१ ॥

( ४ ) **राघवानन्दः** । केवलैः मत्येकैर्न मिश्रैः कालपक्कैः पनसादिभिरग्निपक्कनिषेधार्थं वैखानसमते वानप्रस्थप्रतिपादकशास्त्रदर्शने स्थितः ॥ २१ ॥

( ५ ) **नन्दनः** । केवलैरनतिपक्कैरामैरितियावत् । वैखानसमिति विखनसाप्रणीतंसूत्रं तत्रहि वानप्रस्थधर्मस्य पूर्णउपदेशः क्रियते ॥ २१ ॥

( ६ ) **रामचन्द्रः** । केवलैः अन्नान्तरासंसृष्टैः स्वयंशीर्णैः फलाङ्कुरादिजननशक्तिहीनैः । वैखानसमते स्थितः वानप्रस्थाश्रमस्थः ॥ २१ ॥

**भूमौ विपरिवर्तेत तिष्ठेद्वाप्रपदैर्दिनम् ॥ स्थानासनाभ्यां विहरेत्सवनेषूपयन्नपः ॥ २२ ॥**

( १ ) **मेधातिथिः** । विपरिवर्तनं केवलायांभूमावेकेन पार्श्वेन निषद्यपुनः पार्श्वान्तरेणावस्थानम् । आहारविहारकालौ वर्जयित्वा एवंवर्तेत । नोपविशेन्नचङ्क्रमेत न शय्यायान्नासने नभित्तौनिर्षीदेदित्यर्थः । प्रपदैः पादाग्रैर्वातिष्ठेत् स्थानासनाभ्यांच दिने रात्रौतु केवलस्थण्डिलशायितांवक्ष्यति । सवनेषु प्रातर्मध्यन्दिनापराह्णेषु उपयन्नपइतिच असंभवे नद्यादीनामुद्धृतोदकेनापि स्नानंदर्शयति ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । विपरिवर्तेतइतस्ततोभ्रमन्वर्तेत । प्रपदैः पादाग्रैः । स्थानासनाभ्यां कदाचिदूर्ध्वस्थितः कदाचिदुपविष्टोविहरेत् कालंनयेत् । अत्रतु पक्षेत्रिषवणस्नानंकार्यमित्याह सवनेष्विति ॥ २२ ॥

( ३ ) **कुल्लूकः** । केवलायांभूमौ लुठन्गतागतानि कुर्यात् स्थानासनादावुपविशेत् उत्तिष्ठेत्पर्यटेदित्यर्थः । आवश्यकंस्नानभोजनादिकालंविहाय चायंनियमः । एवमुत्तरत्रापि । पादाग्राभ्यांवादिनंतिष्ठेत्कंचित्कालंस्थितएवस्यात्कंचिच्चोपविष्टएव नत्वन्तरा पर्यटेत् । सवनेषु सायंप्रातर्मध्याह्नेषु स्नायात् । यत्तु सायंप्रगे तथेत्युक्तंतेनसहास्यनियमातिशयापेक्षोविकल्पः ॥ २२ ॥

( ४ ) **राघवानन्दः** । भूमावेव गतागतंकुर्यादित्याह भूमाविति । आहारतदाहरणकालौवर्जयित्वा प्रपदैःपादाग्रैः तिष्ठेत् नासनादावुपविशेत् । स्थाने न तिष्ठेत् । आसनेन पद्मासनादिना वा विहरेत् दिवसंनयेत् । सवनेषु सायंप्रातर्मध्याह्नेषु स्नायात् । सायंस्नायात्प्रगे तथेत्युक्तेः । तेन सहास्य पश्चातपादौर्नियमाविशेषाद्विकल्पः ॥ २२ ॥

( ५ ) **नन्दनः** । विपरिवर्तेत शयीत । प्रपदैः पादाङ्गुल्यग्रैः । विहरेत्कालंक्षिपेत् । सवनेष्वपउपयन्नुपगच्छंस्त्रिषवणस्नायीतियावत् ॥ २२ ॥

( ६ ) **रामचन्द्रः** । भूमौविपरिवर्तेत इतस्ततोभ्रमन्विपरिवर्तेत दिनं प्रपदैः पादाग्रैः तिष्ठेद्वा । प्रपदंतु पदाग्रंस्यादित्यमरः । स्थानासनाभ्यां विहरेत् स्थानतः कदाचिदूर्ध्वस्थितःकदाचिदुपविष्टस्ताभ्यांस्थानासनाभ्यांविहरेत्सवनेषु अपउपनयन् त्रिषवणंस्नानंकुर्वन् ॥ २२ ॥

**ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः ॥ आर्द्रवासास्तु हेमन्ते क्रमशोवर्धयंस्तपः ॥ २३ ॥**

( १ ) **मेधातिथिः** । पञ्चभिरात्मानंतापयेत् चतसृषु दिक्षु अग्नीन्सन्निधाप्यमध्येतिष्ठेदुपरिष्टादादित्यतापंसेवेत । प्रावृष्यभ्राण्येवावकाशाऽऽश्रयोयस्मिन्देशे देवोवर्षति तंप्रदेशमाश्रयेद्वर्षनिवारणार्थंछत्रवस्त्रादि न गृह्णीयात् । हेमन्ते शीतोपलक्षणार्थं । एतेन शिशिरेप्येषएव विधिः । आर्द्रवासस्त्वं क्रमशः क्रमेण ॥ २३ ॥

( १ ) **सर्वज्ञनारायणः** । शक्तावपि तीव्रतपःप्रकारानाह ग्रीष्मइति । चतुर्दिक्स्थवन्हिचतुष्टयेन सूर्येण चेति पञ्चभिस्तापनात्पञ्चतपाः । अभ्रावकाशकोमेघप्रेक्षकोऽनावृतदेशस्थइत्यर्थः । ग्रीष्मादिपदानि चतुर्मासर्तुपराणि ॥ २३ ॥

( ३ ) **कुल्लूकः** । आत्मतपोविवृद्ध्यर्थंग्रीष्मे चतुर्दिगवस्थितैरग्निभिरूर्ध्वंचादित्यतेजसात्मानंतापयेत् वर्षास्वभ्रावकाशमाश्रयेत् यत्र देशे देवोवर्षति तत्र छत्राद्यावरणरहितस्तिष्ठेदित्यर्थः हेमन्तेचार्द्रवासाभवेत् । ऋतुत्रयसंवत्सरावलम्बेनायंसांवत्सरिकएव नियमः ॥ २३ ॥

( ४ ) **राघवानन्दः** । तेषांतपोविशेषानाह ग्रीष्मेति द्वाभ्यां । चतुर्दिक्ष्वग्निर्मध्येसूर्यइतिपञ्चातपाःयस्य सपञ्चातपः अभ्रेषु वर्षसु अवकाशेनानावरणतया चरतीत्यभ्रावकाशिकः । हेमन्तइति शीतोपलक्षकम् ॥ २३ ॥

( ५ ) **नन्दनः** । अभ्रमाकाशम् ॥ २३ ॥

**उपस्पृशंस्त्रिषवणंपितॄन्देवांश्च तर्पयेत् ॥ तपश्चरंश्चोग्रतरंशोषयेद्देहमात्मनः ॥ २४ ॥**

( १ ) **मेधातिथिः** । उपस्पर्शनं स्नानं अन्यदपि ऊर्ध्वबाह्वादि मासोपवासद्वादशरात्रादि तपः । उग्रतरं प्रकृष्टतरं शरीरपीडाजननं कुर्वन् शोषयेच्छरीरम् ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । उग्रंतपोयदा चरति तदोपस्पृशन् स्नानंकुर्वन् त्रिषवणं देहंशोषयेत् आयासेन ॥ २४ ॥

( ३ ) **कुल्लूकः** । विहितमपित्रिषवणंस्नानंदेवर्षिपितृतर्पणविधानार्थमनूद्यते । प्रातर्मध्यंदिनंसायंसवनेषु त्रिष्वपि देवर्षिपितृतर्पणंकुर्वन्नन्यदपि पक्षमासोपवासादिकंतीव्रव्रतंतपोऽनुतिष्ठन्यथोक्तयमेनपक्षोपवासिनः केचिन्मासोपवासिनःइतिस्वशरीरंशोषयेत् ॥ २४ ॥

( ४ ) **राघवानन्दः** । स्नानतर्पणयोरावश्यकत्वमाह उपेति । देहं बाह्याभ्यन्तरद्वयम् ॥ २४ ॥

( ५ ) **नन्दनः** । त्रिषवणस्य स्नानस्य पुनर्वचनमादरार्थम् ॥ २४ ॥

( ६ ) **रामचन्द्रः** । त्रिषवणे त्रिषु सवनेषु त्रिकालेषु उपस्पृशेत् ॥ २४ ॥

**अग्नीनात्मनि वैतानात्समारोप्य यथाविधि ॥ अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥ २५ ॥**

( १ ) **मेधातिथिः** । विताने भवावैतानाः तान्समारोपयेद्भस्मपानादिविधानेन । आत्मनिसमारोपणविधिश्च श्रवणकादव गन्तव्यः । चिरकालंयदा तपश्चरितंभवति समन्त्यवस्थांवयः प्राप्तंतदा वानप्रस्थएवसन्ननग्निरनिकेतः पर्णकुटींनिवासार्थांजह्यात् । क्वतर्ह्यासीत उपरिष्टाद्वक्ष्यति वृक्षमूलनिकेतनइति । मुनिःस्यादिति संबध्यते तेनायमर्थउक्तोभवति वाङ्नियमंकुर्यादिति मौनव्रतधारी नियतवागुच्यतेलोके । मूलफलाशनः अन्यान्ननिवृत्त्यर्थमेतत् । नीवारादीन्यारण्यान्यपि नाश्नीयात् ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रैवाश्रमे धर्मकाष्ठांदर्शयति अग्नीनिति । वैतानान् श्रौतान् । यथाविधि यातेअग्नेयज्ञियेतिमन्त्रेण । अनग्निस्त्यक्तपाकसाधनाग्निः । अनिकेतोगृहेष्ववसन् । मुनिर्मननपरः ॥ २५ ॥

( ३ ) **कुल्लूकः** । श्रौतानग्नीन्वैखानसशास्त्रविधानेन भक्ष्यपानादिनात्मनि समारोप्य लौकिकाग्निगृहशून्योयथा वक्ष्यति वृक्षमूलनिकेतनइति । मुनिर्मौनव्रतचारीफलमूलाशनएवस्यात् नीवाराद्यपिनाश्नीयात् एतच्चोर्ध्वंषण्मासेभ्योऽप्युपरि अनग्निरनिकेतनइतिवसिष्ठवचनात् षण्मासोपर्यनग्नित्वमनिकेतत्वंच ॥ २५ ॥

( ४ ) **राघवानन्दः** । तत्राप्यपरितुष्यन्तंविरक्तंप्रत्याह । अग्नीनित्यष्टभिः । अग्नीन् भस्मात्मकान् पीत्वा भैक्ष्यमाहरेदितितृतीयेनान्वयः । ऊर्ध्वंषण्मासेभ्योऽनग्निरनिकेतइति वसिष्ठोक्तेः षण्मासंवानप्रस्थं कृत्वा यथाविधि वैश्वानसशास्त्रविधानेन ॥ २५ ॥

( ५ ) **नन्दनः** । एवंगृहस्थसमस्य वानप्रस्थस्य धर्माउक्ताः अथ भिक्षुकस्य धर्मानाह अग्नीनिति । अनग्निः त्यक्तपञ्चाग्निः । मुनिर्मौनी ॥ २५ ॥

( ६ ) **रामचन्द्रः** । वैतानानग्नीनात्मनि समारोप्य अनग्निः पाकादिरहितः अनिकेतःस्यात् गृहरहितःस्यात् ॥२५॥

**अप्रयत्नःसुखार्थेषु ब्रह्मचारी धराशयः ॥ शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ २६ ॥**

( १ ) **मेधातिथिः** । सुखप्रयोजनेषु वस्तुषु यत्नंन कुर्यात् आतपपीडितः छायांनोपसर्पेत् शीतार्दितोनाग्निंसमिन्धीत यदितु दैवोपपादितादित्यतापादिना शीतादिदुःखनिवृत्तिर्भवतीत्यत्रैव तद्दुःखापनोदः क्रियते न निषिध्यते वर्षादिकालादन्यत्रैतद्विधीयते तत्र प्रतिपन्नस्य धर्मस्य विधानात् । अथवा व्याधितस्यौषधप्रयत्नोनिवार्यते व्याधिनिवृत्तिरपिसुखमुच्यते अतस्तन्निवृत्त्यर्थंयत्नंकुर्यात् । धराशयः केवलैस्तृणैराच्छादिते स्थण्डिले शयीत शरणेष्वाश्रयेषु गृहवृक्षमूलादिषु ममकारमात्मीयाभिनिवेशं न कुर्यात् । वृक्षमूलानि निकेतनं गृहस्थानीयं कुर्यात् तदसंभवे शिलातलगुहादयोपि विहिताः ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । सुखार्थेषु सुखसाधनेषु । ब्रह्मचारी त्यक्तस्त्रीसंगः । एवंच सपत्नीकस्य ऋतुगमनानुमतिर्गम्यते । धराशयः क्षितिशायी । शरणेषु वृष्ट्यादिवारकेषु वृक्षादिष्वसमर्थः ॥ २६ ॥

( ३ ) **कुल्लूकः** । सुखप्रयोजनेषु स्वादुफलभक्षणशीतातपपरीहारादिषु प्रयत्नशून्योऽस्त्रीसंभोगी भूशायीच निवासस्थानेषु ममत्वरहितोवृक्षमूलवासी स्यात् ॥ २६ ॥

( ४ ) **राघवानन्दः** । सुखार्थेषु सुखजनकीभूतेषु स्रक्चन्दनादिषु । धराशयोभूमिशयः । शरणेषु निवासेषु । वृक्षमूलमेवनिकेतनंगृहंयस्य सवृक्षमूलनिकेतनः ॥ २६ ॥

( ५ ) **नन्दनः** । सुखार्थेषु सुखहेतुषु । धराशयः स्थलशायी ॥ २६ ॥

( ६ ) **रामचन्द्रः** । शरणेषु वृष्ट्यादिनिवारककुटीवृक्षादिषु अममः निर्ममः भवेत् ॥ २६ ॥

**तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् ॥ गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ २७ ॥**

( १ ) **मेधातिथिः** । पञ्चम्यर्थे सप्तमी । तापसेभ्योमूलफलासंभवे भैक्षमाहरेत् । गृहमेधिभ्योगृहस्थेभ्योवा वनवासिभ्यः । यात्रिकं प्राणमात्रसौहित्यंभवति ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । तापसेषु वनस्थेषु । यात्रिकं प्राणयात्रामात्रार्थं । गृहमेधेषु गृहस्थेषु वनवासिष्विति वदन्नेकान्तशीलतया गृहस्थस्यापि वनवासोदर्शितः । अन्येष्वसंबन्धिषु ॥ २७ ॥

---

( २६ ) अप्रयत्न=अप्रमत्त ( ल, य )

( ३ ) **कुल्लूकः** । फलमूलासंभवेचवानप्रस्थेभ्योब्राह्मणेभ्यः प्राणमात्रधारणोचितंभैक्षमाहरेत् तदभावेचान्येभ्योवन-वासिभ्योगृहस्थेभ्योद्विजेभ्यः ॥ २७ ॥

( ४ ) **राघवानन्दः** । यात्रिकं प्राणधारणोचितं । गृहमेधिष्वित्यनेन वने ये गृहस्थाःस्युस्तेभ्योपि ॥ २७ ॥

( ५ ) **नन्दनः** । तापसेषु वानप्रस्थेषु । तदलाभेगृहमेधिषु ॥ २७ ॥

( ६ ) **रामचन्द्रः** । यात्रिकंयात्रामात्रं यावत्प्राणधारणंतावद्भैक्ष्यं आहरेत् आचरेत् । च पुनः अन्येषु गृहमेधिषु वनवासिषु भैक्ष्यंआचरेत् ॥ २७ ॥

**ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्वने वसन् ॥ प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥२८॥**

( १ ) **मेधातिथिः** । असंभवेतु । ग्रासग्रहणान्नमूलफलभिक्षैव ग्राम्यान्नाशनमन्यासंभवेऽनेनानुज्ञातम् । गृहीत्वा-पत्रपुटेनैव पाणिना भाजनरहितेन शकलेन शरावाद्येकदेशखण्डेन ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । ग्रामादाहृत्येतिविधिना तन्मात्रार्थंग्रामंप्रविशेत् । पुटेन पर्णपुटेन । पाणिनेतिदक्षिणपा-णिना । वनंप्रतिभैक्ष्यानयनविधानादष्टौग्रासानितिपुटशकलाहरणपक्षयोरेवान्वितम् । शकलेन स्थालीकर्परेण ॥ २८ ॥

( ३ ) **कुल्लूकः** । तस्याप्यसंभवे ग्रामादानीय ग्रामस्यान्नस्याष्टौग्रासान्पर्णशरावादिखण्डेन पाणिनैव वा गृहीत्वा वानप्रस्थोभुञ्जीत ॥ २८ ॥

( ४ ) **राघवानन्दः** । तदलाभे प्रकारान्तरमाह ग्रामादिति । तादृशस्यभिक्षापात्रमपि नास्तीत्याह । पुटेनेति । प-त्रस्यानियतत्वादञ्जलिनावा पाणिपात्रमिति श्रुतेश्च । शकलेन अर्धेन पाणिना ॥ २८ ॥

( ५ ) **नन्दनः** । तदलाभे किंकर्तव्यमित्यपेक्षायामाह ग्रामादिति । पुटेन पत्रघटितेन पात्रेण । शकलेन भिन्नभाण्ड-खण्डेन ॥ २८ ॥

( ६ ) **रामचन्द्रः** । पाणिना दक्षिणेन प्रतिगृह्य अष्टौ ग्रासानश्नीयात् । शकलेन शरावखण्डेनवा ॥ २८ ॥

**एताश्चान्याश्च सेवेत दीक्षाविप्रोवने वसन् ॥ विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ २९ ॥**

( १ ) **मेधातिथिः** । एतादीक्षा नियमानन्यांश्चाऽन्तर्जलस्थानचक्षुर्निमीलनादिकं सेवेत । श्रुतीरौपनिषदीः रहस्या-धिकारपठितानि वेदवाक्यानि अधीयीत चिन्तयेद्भावयेच्चाऽऽत्मसंसिद्धये ब्रह्मप्राप्त्यर्थायाउपासनाउक्ताः । विविधाइत्य-नुवादः ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । अन्याःस्मृत्यन्तरोक्तामासोपवासाद्याः दीक्षाः नियमान्उपनिषण्णायोच्यतइत्युपनिष-द्रहस्यं तादृगर्थाऔपनिषदीःश्रुतीःसेवेतेत्यनुषङ्गः । आत्मनःसंसिद्धिर्विवेकः ॥ २९ ॥

( ३ ) **कुल्लूकः** । वानप्रस्थएतादीक्षाएतान्नियमानन्यांश्चवानप्रस्थशास्त्रोक्तानभ्यसेत् । औपनिषदीश्चश्रुतीःउपनिषत्प-ठितब्रह्मप्रतिपादकवाक्यानिविविधान्यस्यात्मनोब्रह्मसिद्धये ग्रन्थतोऽर्थतश्चाभ्यसेत् ॥ २९ ॥

( ४ ) **राघवानन्दः** । किंच एताश्चेति । दीक्षाशब्दोनियमवचनः । औपनिषदीःरहस्याधिकारपठिताः परीक्ष्य लो-कान्कर्मचितान्ब्राह्मणोनिर्वेदमायादित्यादिकाः । आत्मसंशुद्धये मोक्षाय साह्येवात्मनोवास्तवी शुद्धिः ॥ २९ ॥

( ५ ) **नन्दनः** । एताश्चेत्यादिश्लोकद्वयमेकान्वयम् । दीक्षानियमान् ॥ २९ ॥

( ६ ) **रामचन्द्रः** । युग्मं एतानिति । एतान्पूर्वोक्तान्व्रतान् । च पुनः अन्यान् मासोपवासव्रतादीन् विप्रःवने वस-न् सेवेत । च पुनः दीक्षांवानप्रस्थदीक्षां सेवेत् ॥ २९ ॥

**ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ॥ विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३० ॥**

( १ ) **मेधातिथिः** ।अविशेषेणोक्ताअन्याश्च सेवेत। शाक्यपाशुपतादिदीक्षादिसेवनमपि प्राप्तंतन्निषेधति ऋषिभिर्महाभारते संतप्यवनेष्वाद्यैः सेवितावर्ण्यन्ते । ब्राह्मणैश्च गृहस्थैर्याः सेविताः तदुक्तमुत्तरेषांचैतदविरोधीति । विद्या आत्मैकत्वविज्ञानं तच्छ्रुतिसेवनेन वृद्धिनयेत् दृढीकुर्यात् । शरीरस्य च शुद्धये आहारनियमदीक्षाः सेवेत ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । ताश्चविद्या वैश्वानराद्युपासना तपः स्वाध्यायस्तयोर्वृत्ध्यर्थं तथा तासामेव पवित्राणांजपेन शरीरस्य शुद्धिः पापक्षयस्तदर्थंच ऋष्यादिभिःसेविताःश्रुतीः सेवेतेत्यन्वयः ऋषिभिर्ज्ञानपरैर्यतिभिः ब्राह्मणैस्तथागृहस्थैरेव ब्राह्मणैर्गृहस्थत्वेपिसेविताः । अतोद्वयोर्मध्यवर्तिनोवनवासिनोऽतिप्रशस्ताएव ताइत्यर्थः ॥ ३० ॥

( ३ ) **कुल्लूकः** । यस्मादेताऋषिभिर्ब्रह्मदर्शिभिःपरिव्राजकैर्गृहस्थैश्च वानप्रस्थैर्ब्रह्माद्वैतज्ञानधर्मयोर्विवृद्ध्यर्थमुपनिषच्छ्रुतयः सेवितास्तस्मादेताः सेवेतेतिपूर्वस्यानुवादः ॥ ३० ॥

( ४ ) **राघवानन्दः** । तास्तौति ऋषिभिरिति । ब्राह्मणैर्ब्रह्मतत्वदर्शिभिः सेविताअभ्यस्यमानाः । शरीरस्य च शुद्धये लिङ्गशरीरे यत्पापंतत्वज्ञानप्रतिबन्धकं स्थूलदेहे यत्पापंतयोर्नाशाय ॥ ३० ॥

( ५ ) **नन्दनः** । सेविताइतिदीक्षाणांचश्रुतीनांचविशेषणम् । विद्या ज्ञानम् ॥ ३० ॥

( ६ ) **रामचन्द्रः** । च पुनः ब्राह्मणैः ब्रह्मचारिभिः च पुनः गृहस्थैः वानप्रस्थैः सेविता धर्माविद्यातपोविवृध्यर्थं । च पुनः शरीरस्य शुद्धये सेवेतेति सर्वत्र संबन्धः ॥ ३० ॥

**अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः ॥ आनिपाताच्छरीरस्य युक्तोवार्यनिलाशनः ॥ ३१ ॥**

( १ ) **मेधातिथिः** । प्राच्याउदीच्याश्चदिशोरन्तरालमपराजितादिक् लोकेष्वैशानीत्युच्यते दिशमास्थाय चेतसिनिधायैषामयागन्तव्येति ततस्तामेवव्रजेत् अजिह्मगः अकुटिलगामी श्वभ्रनदीस्रोतांसि न परिहरेत् । आनिपाताच्छरीरस्य युक्तोवार्यनिलाशनः । प्राच्याउदीच्याश्च गमनविधिरयम् । यावन्नपतति तावद्वायुभक्षोम्बुभक्षश्च स्यात् । युक्तः योगशास्त्रैरात्मानंयुक्त्वा तदेतन्महाप्रस्थानमुच्यते ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । अथ तपसा खिन्नस्याप्रत्यवायंमृत्युप्रकारमाह अपराजितामिति । अपराजितैशानी आस्थायोद्दिश्य । अजिह्मगोग्निकण्टकजलादीनांवर्त्मनि दर्शने तत्परिहारार्थं वक्रगतिमकुर्वन् । युक्तोनियतचित्तवृत्तिः । वार्यनिलाशनस्तदन्यतराशनः ॥ ३१ ॥

( ३ ) **कुल्लूकः** । अचिकित्सितव्याध्याद्युद्भवेऽपराजितामैशानींदिशमाश्रित्याकुटिलगतिर्युक्तोयोगनिष्ठोजलानिलाशनआशरीरनिपाताद्गच्छेत् । महाप्रस्थानाख्यंशास्त्रविहितंचेदंमरणम् तेन न पुरायुषःस्वःकामी प्रेयादितिश्रुत्यापि नविरोधः यतः स्वःकामिशब्दप्रयोगादवैधंमरणमनया निषिध्यते नशास्त्रीयम् ॥ ३१ ॥

( ४ ) **राघवानन्दः** । उपायान्तरमाह अपराजितामिति । ऐशानीं दिशमाश्रित्याजिह्मगोऽकुटिलगतिः युक्तोयोगशास्त्रनिश्चितमहाप्रस्थानः शरीरस्यानिपाताद्व्रजेत् म्रियेतेत्यर्थः ॥ ३१ ॥

( ५ ) **नन्दनः** । प्रकारान्तरमाह अपराजितामिति । अपराजितां प्रागुदीचीम् । अजिह्मगऋजुगतिः । शरीरस्यानिपाताद्व्रजेदित्यन्वयः ॥ ३१ ॥

( ६ ) रामचन्द्रः । अपराजितां ईशानीं आख्याय अजिह्मगःसन्व्रजेत् । कीदृशोवानप्रस्थः शरीरस्यानिपातात् । युक्तः नियतचित्तः । पुनःकीदृशः वार्यनिलाशनः वार्याधारोवा अनिलाधारोवा ॥ ३१ ॥

आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुम् ॥ वीतशोकभयोविप्रोब्रह्मलोके महीयते ॥३२ ॥

( १ ) मेधातिथिः । पूर्वोक्तानि तपांसि महाप्रस्थानंचानन्तरोक्तं महर्षिचर्या आसामन्यतमया नदीप्रवेशेन भृगुप्रपतनेनाग्निप्रवेशेनाहारनिवृत्त्यावा शरीरंत्यजेत् । अस्य च फलं वीतशोकभयस्य ब्रह्मलोकप्राप्तिः । नरकादिदुःखानुभवः शोकः भयं नरकंगमिष्यामीति तदस्य व्येति । अव्यवधानेनैवार्चिरादिक्रमेण ब्रह्मलोकंप्राप्नोति इहस्थानविशेषोब्रह्मलोकः स्वर्गादपिनिरतिशयस्तत्र महीयते पूज्यमानआस्ते नतु ब्रह्मणः स्वाराज्यंप्राप्नोति लोकग्रहणात् । चतुर्थेह्याश्रमे मोक्षंवक्ष्यति न केवलकर्मकृतोमोक्षइत्याहुः । ननुचाप्युक्तं विविधाश्चौपनिषदीरात्मसंसिद्धयेश्रुतीरिति आत्मसंसिद्धिश्च आत्मोपासनया तद्भावापत्तिः नह्यन्यः संसिद्धिशब्दस्यार्थउपपद्यते औपनिषदीषु श्रुतिषु तद्भाव्यंयोगिनामात्मानंब्रह्मसंस्थोमृतत्वमेतीतिच । अथसायुज्यंगच्छतीत्यादि अथोच्यते अन्याअपि तपःसिद्धयःश्रूयन्ते यस्तपति पितृलोकवासोभवतीत्यादिसंकल्पितार्थोपपादितासार्ष्टितासालोक्यंच पुरुषस्य भविष्यति न पुनर्मोक्षइति तदयुक्तं विशेषाभावात् । यथैव परिमितफलामूपासनास्वधिक्रियते एवममृतत्वप्राप्तावपि । नक्वचिच्छ्रूयते परिव्राजकेनैवोपासनायद्वैतविषयाणि कर्तव्यानि । ननुच त्रयोधर्मस्कन्धाइत्युपक्रम्य यज्ञोऽध्ययनंदानमित्यनेन गृहस्थधर्माउक्तास्तपएवेत्यनेन वानप्रस्थोब्रह्मचार्याचार्यकुलवासीत्यनेन नैष्ठिकोब्रह्मसंस्थइत्यनेन परिव्राजकः । एतेषांत्रयाणांपुण्यलोकाउक्ताः पारिशेष्यादेतद्यतिरिक्तस्यामृतत्वम् । नैवं ब्रह्मणिसंतिष्ठते । प्रयतते तत्परस्यब्रह्मसंस्थस्य यौगिकत्वादस्य शब्दस्य । ननुच यदि सर्वेषामधिकारस्तदैतावदेव वक्तव्यंब्रह्मसंस्थोमृतत्वमेतीति । नैवं आश्रमाणांस्वविधिवाक्यावगतंफलंसंपत्क्षयिणः पुण्यलोकाभवन्तीति ब्रह्मसंस्थस्यतदाश्रमावस्थितस्यैवामृतत्वमपुनरावृत्तिलक्षणंविधीयते । ननुचाद्वैतरूपंब्रह्मेत्यात्मविदः सचनिवृत्तकर्माख्यः । आश्रमाश्च प्रवृत्तमार्गाख्याः क्रियाकारकफलभेदानुष्ठानात्मकाः । तत्राद्वैतात्मविज्ञानेसमानभेदाश्रयाणि च गृहस्थाद्यग्निहोत्रकर्मादीनीति परस्परविरोधः । अत्रोच्यते । समानमेतत् पारिव्राज्येपि यमनियमानामिष्टत्वात्तेच भेदाश्रयाः । अथाप्युच्येतकर्मसंन्यासिनोनिवृत्तिमार्गावस्थायिनोनैव केचिच्छास्त्रार्थविषयःसन्ति । नायंशास्त्रार्थः अहंकारममकारत्यागएव संन्यासोवक्ष्यते नाशेषशास्त्रार्थत्यागः तस्यापि क्षुधाद्युपहतस्य भिक्षादौ प्रवर्तमानस्यास्त्येव क्रियाकारकसंबन्धः तत्र लौकिके दृष्टार्थभेदे प्रवर्तमानस्य अद्वैतात्मविज्ञानभावनमविरुद्धम् । शास्त्रीये त्वग्निहोत्रादौ विरोधादिति कोयुक्तकार्येवंवदेत् । अथोच्यते क्षुधाद्युपहतस्याप्यद्वैतत्यागोविरोधिना भोजनेन तावत्कालएव । यथान्धतमसि चलितस्य गच्छतः कण्टकप्रदेशे पादन्यासः सवितरि पुनरुदिते लब्धप्रकाशस्य पुनर्न्याय्यमेवाध्वन्यस्याकण्टकेवस्थानम् । तथा क्षुधाद्युपघाते विच्छिन्नात्मविज्ञानस्य क्षणमालोकस्यामीयायांक्षुन्निवृत्तौ पुनर्दृढसंस्कारवशादेवावस्थानमिति । तत्तापसेऽप्यविरुद्धम् । गृहस्थस्यापि पुत्रदारादितयोपासनमविरुद्धं बहुव्यापारः । ततस्तु भेदसात्म्यतांगतस्य कुतोऽद्वैतसंस्कारोत्पत्तिः । उक्तंच गृहस्थधर्मेष्वेकाकीचिन्तयेदिति । तथा पुत्रे सर्वंसमासज्येति । ननुच तस्माद्दुहमपुरायुषःस्वः कामीप्रेयादितिश्रुतिस्तत्र कुतोवानप्रस्थस्य शरीरत्यागः नहिसाश्रुतिर्वानप्रस्थादन्यत्रानयास्मृत्या विषयउपस्थापयितुंशक्यते । बलीयसी हिश्रुतिः साच स्मृत्यनुरोधेन न संकोचमर्हति । उच्यते जरसा विशीर्णस्यानिष्टसंदर्शनादिना वा विदिते अत्यासन्ने मृत्यौ मुमूर्षतोन

श्रुतिविरोधः। एवंहि तत्र श्रूयते नपुरायुषइति अवस्थाविशेषेष्वनभिप्रेते मरणे एतावदेवावक्ष्यन्नलः कामीप्रेयादिति अरिष्टोपदेशश्चोपनिषत्त्वेवमर्थवान्भवति। यस्यत्वेतन्निमित्तंमरणंनास्ति ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः**। आसां पञ्चतपःप्रभृतीनां महर्षयःप्रथमसर्गजाऋषयस्तेषां चर्या आचारः। शोकोदुःखं ततोभयं शोकभयम् ॥ ३२ ॥

( ३ ) **कुल्लूकः** । एषांपूर्वोक्तानुष्ठानानामन्यतमेनानुष्ठानेन शरीरंत्यक्त्वाऽपगतदुःखभयोब्रह्मैवलोकस्तत्र पूजांलभते मोक्षमाप्नोतीत्यर्थः । केवलकर्मणोवानप्रस्थस्यकथंमोक्षइतिचेन्न। विविधाश्चोपनिषदीरात्मसंशुद्धयेश्रुतीरित्यनेनास्याप्यात्मज्ञानसंभवात् ॥ ३२ ॥

( ४ ) **राघवानन्दः**। आसामुक्तानां। दीक्षाणांमध्येऽन्यतमया तनुंत्यक्त्वेत्यन्वयः। महीयते पूजामाप्नोति ॥ ३२ ॥

( ५ ) **नन्दनः**। आसां महर्षिचर्याणामुक्तानांनियमानाम् ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । आसां महर्षिचर्याणां पञ्चतपःप्रभृतीनांमध्ये अन्यतमया वा चर्यया तनुंत्यक्त्वा विप्रोब्रह्मलोके महीयते। कीदृशोविप्रः वीतशोकभयोऽपारलौकिकभयः ॥ ३२ ॥

**वनेषु च विहृत्यैवं तृतीयं भागमायुषः ॥ चतुर्थमायुषोभागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥ ३३ ॥**

( १ ) **मेधातिथिः**। इतःप्रभृतिचतुर्थाश्रममतिः। तृतीयंभागमिति। कश्चित्कालंस्थित्वेत्यर्थः। यावता कालेन तपःश्रुतसंभवतिविषयाभिलाषश्च सर्वोनिवृत्तः। नहि मुख्यतृतीयआयुषोभागएवानेन शक्योज्ञातुम्। नहि वर्षशतापेक्षाऽऽश्रमाणां यतोवलीपलितापत्योत्पत्तीस्तृतीयाश्रमप्रतिपत्तौ कालउक्तः नच सर्वस्य पञ्चाशद्वर्षदेशीयस्यतदुत्पद्यतेउक्तंचान्यत्र तपसि ऋद्धे परिव्रजेदिति। ननुच यथान्येषामाश्रमाणांकालोविवृतोग्रहणान्तंब्रह्मचर्यं वलीपलिताद्यवधि गार्हस्थ्यं। नैवमिह कश्चित्परिच्छेदे हेतुरस्ति यदि यथाश्रुतंतृतीयोभागःसमाश्रियेत। यच्च तपसिऋद्धइति तत्रापि कालापेक्षायुक्तैव न ज्ञायते कियता तपसाऋद्धिर्भवति अतःकालपरिच्छेदो न वचनार्हः। उक्तमत्र न शतवर्षापेक्षया तृतीयायुर्भागनिश्चयस्संभवति। उक्तश्च कालः कायपाके प्रव्रज्या प्रतिपत्तव्या। यावता तपसा यावतिचवयसि पुनर्मदवृद्धिर्नाशंक्यते तदा परिव्रजेत्। विहृत्यासित्वायथोक्तंविधिमनुष्ठायेतियावत्। संगत्यागश्च ममतापरिग्रहः एकारामता ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । अथ यतिधर्मानाह वनेष्विति । विहृत्य क्षपयित्वेत्युक्ताप्रयोगेण पक्वकषायस्य वानप्रस्थचर्यया। कष्टावपाकेसत्येव यत्याश्रमेऽधिकारइतिदर्शितं अत्रापि तृतीयंभागमिति तावता कालेन तावद्वैराग्योत्पत्तिसंभवे अन्यथातु यावज्जीवमपि वनएव वसेत् संगान् परिग्रहान्। परिव्रजेत् गृहादिपरित्यज्य व्रजेत् ॥ ३३ ॥

( ३ ) **कुल्लूकः**। यस्यतुमरणाभावस्तस्याह वनेष्वित्यादि। अनियतपरिमाणत्वादायुषस्तृतीयभागस्य दुर्विज्ञानात्तृतीयमायुषोभागमितिरागक्षयावधि वानप्रस्थकालोपलक्षणार्थम् । अतएवशङ्खलिखितौ वनवासादूर्ध्वंशान्तस्य परिगतवयसः पारिव्राज्यमित्याचख्यतुः । एवंवनेषु विहृत्यैवंविधिवद्बहुश्वरतपोऽनुष्ठानप्रकारेण वानप्रस्थाश्रमंविषयरागोपशमनाय कंचित्कालमनुष्ठाय चतुर्थमायुषोभागमितिशेषायुःकाले सर्वथा विषयसङ्गांस्त्यक्त्वा परिव्राजकाश्रममनुतिष्ठेत् ॥ ३३ ॥

( ४ ) **राघवानन्दः**। अविरक्तस्यापि। चतुर्थेवयस्यवश्यंसंन्यासइत्याह वनेष्विति। चतुर्थमायुषोभागंप्राप्य परिव्रजेदित्यन्वयः वनी भूत्वा प्रव्रजेदिति श्रुतेः। विरक्तस्यतुक्रमोत्क्रमाभ्यांसंन्यासःअव्रतीवाव्रतीवा उच्छिन्नाग्निरनुच्छि-

न्नाग्निकोवायदहरेव विरजेत्तदहरेव प्रव्रजेत्। यदि चेतरथा ब्रह्मचर्यादेव व्रजेद्वनाद्वा गृहाद्वेत्यादि श्रुतिशतैश्च संन्यासस्य विहितत्वात्। अयंत्वविरक्तोब्रह्मलोकेप्सुःसंन्यासाद्ब्रह्मणःस्थानमितिश्रवणात्॥ ३३॥

( ५ ) **नन्दनः**। अथसन्यासाश्रमंप्रस्तौति वनेष्विति। वितत्य चरित्वा॥ ३३॥

( ६ ) **रामचन्द्रः**। अथ संन्यासाश्रमप्रकरणं वनेष्विति। एवमायुषस्तृतीयभागंनीत्वा चतुर्थमायुषोभागंज्ञात्वा संगान्सर्वांस्त्यक्त्वा परिव्रजेत् संन्यसेत्॥ ३३॥

**आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः॥ भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्धते॥ ३४॥**

( १ ) **मेधातिथिः**। समुच्चयपक्षमुपोद्बलयति। आश्रमादाश्रममिति। गृहस्थाश्रमाद्वानप्रस्थाश्रमंगत्वा हुतहोमउभयोरप्याश्रमयोर्यदा जितेन्द्रियस्तदा परिव्रजेत् प्रेत्य वर्धते मृत्वा विभूत्यतिशयेन। भिक्षाबलिदानेन परिश्रान्तः। द्विराश्रमधर्मानुवादोयम्॥ ३४॥

( २ ) **सर्वज्ञनारायणः**। अत्र वनवासानन्तरंपारिव्राज्याभिधानेन गृहस्थस्य पारिव्राज्याधिकारोनास्तीतिप्रसञ्जितांशङ्कांनिराचष्टे आश्रमादिति। नकेवलंब्रह्मचर्ये वर्तमानस्य तादृशवैराग्यादि तस्य चर्णत्रयापाकरणसंभवात्तमाश्रमं त्यक्त्वा गृहस्थाश्रमगमनमवश्यं नतु गृहस्थस्य ऋणापाकरणमाश्रमान्तरप्राप्यमतोस्य विरागस्यानन्तरमेव पारिव्राज्यंसंभवतीति तात्पर्यम्। हुतहोमइति यज्ञैकदेशाभिधानेन यज्ञस्वाध्यायापत्यैर्ऋणत्रयापाकरणमुक्तम्। जितेन्द्रियोभ्युत्थापितवैराग्यः तेन जितेन्द्रियोहमिति यदि गृहस्थोमन्यते तदा तदैव परिव्रजेदन्यथा वनवासेन जितेन्द्रियतांप्राप्येत्यर्थः। भिक्षादानबलिदानाभ्यांकर्मकलापोलक्ष्यते तेन श्रान्तस्तत्करणासमर्थः। एतेन तच्छक्तौ तत्कुर्वतैवात्मा जिज्ञास्यइतिदर्शितम्। प्रेत्य वर्धते लिङ्गदेहावच्छिन्नस्तदवच्छेदन्यासोद्भवंविभुत्वंलभते॥ ३४॥

( ३ ) **कुल्लूकः**। पूर्वपूर्वाश्रमादुत्तरोत्तराश्रमंगत्वा ब्रह्मचर्याद्गृहाश्रमंततोवानप्रस्थाश्रममनुष्ठायेत्यर्थः। यथाशक्तिगताश्रमहुतहोमोजितेन्द्रियोभिक्षाबलिदानचिरसेवयाश्रान्तःपरिव्रज्याश्रममनुतिष्ठन्परलोके मोक्षलाभाद्ब्रह्मभूतत्त्वर्यतिशयंप्राप्नोति॥ ३४॥

( ४ ) **राघवानन्दः**। आश्रमाद्वानप्रस्थान्तादाश्रमंतेष्वन्तर्गतंब्रह्मचर्याद्यन्यतमंतेषु हुतोहोमोबहुधा श्रौतलौकिकाग्निषु येन सः अतःपरंन होष्यतीत्यर्थः। भिक्षाबलिपरिश्रान्तः ब्रह्मचर्ये भिक्षया गार्हस्थ्य वानप्रस्थयोर्बलिदानेन परिश्रान्तःभिक्षारूपबलेरभिमतत्वाद्वाश्रान्तः व्युत्थायाथ भिक्षाचर्यमस्तीति श्रुतेः। तथाविधएव प्रेत्य सुखी स्यात्॥३४॥

( ५ ) **नन्दनः**। इयमेवाश्रमप्राप्तिरुचिता नान्येत्याह आश्रमादिति। हुतहोमःकृतसमिदाधानाग्निहोत्रहोमः। भिक्षाबलिपरिश्रान्तः भिक्षाहरणवैश्वदेवबलिहरणाभ्यांक्षीणदेहः। आभ्यांविशेषणाभ्यामाश्रमत्रयविहितंकर्म लक्ष्यते। आश्रमादाश्रमंगत्वा ब्रह्मचर्याश्रमाद्गार्हस्थ्यं ततोवानप्रस्थाश्रमंगत्वा॥ ३४॥

( ६ ) **रामचन्द्रः**। भिक्षाबलिपरिश्रान्तः भिक्षाबलिभ्यांरहितः संचयरहितः हुतहोमः। शिखासूत्रपरित्यागे कृतहोमः एतादृशःप्रव्रजेत् प्रेत्य परलोके वर्धते मोक्षंप्राप्नोति। लिङ्गदेहाद्यनवछिन्नविभुत्वंमोक्षत्वंएवंयत्तत्प्राप्नोतीत्यर्थः॥३४॥

**ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्॥ अनपाकृत्य मोक्षं तु सेवमानोव्रजत्यधः॥ ३५॥**

( १ ) **मेधातिथिः**। अपाकरणम् ऋणसंशुद्धिः। मनोमोक्षेनिवेशयेत्। मोक्षशब्देन प्रव्रज्याश्रमोलक्ष्यते। तत्र प्राधान्येन मोक्षैकफलतोच्यते। न तथाऽन्येष्वाश्रमेषु अतोमोक्षः परिव्राज्यकेन॥ ३५॥

( २ ) **सर्वज्ञनारायणः** । उक्तमर्थंस्फुटयति ऋणानीति । मोक्षे मोक्षसाधने चतुर्थाश्रमे । अधोव्रजति प्रत्यवायोत्पत्त्या पूर्वाश्रमेऽप्यनधिकृतोभवति । नचैवं ब्रह्मचर्यादेवप्रव्रजेद्वनाद्गृहाद्वेतिश्रुत्याविरोधः तस्याः पूर्वजन्माभ्यासवशादित्यात्यन्तिकवैराग्यपुरुषविषयत्वात् । तदाहदेवलः यस्यैतानि सुगुप्तानि जिव्होपस्थोदरंगिरः । सन्यसेदकृतोद्वाहोब्राह्मणोब्रह्मचर्यवानिति ॥ यस्तुनात्यन्तंवीतरागःसमन्दाधिकारः । तद्विषयाणिच अनपाकृतर्णत्रयसंन्यासनिषेधकमन्वादिवचनानि यथा भारते ॥ कषायंपाचयित्वा च श्रेणिस्थानेषु च त्रिषु । प्रव्रजेच्च परंस्थानंयत्र गत्वा न शोचतीति ॥ यस्तूत्कटरागस्तद्विषयमैकाश्रम्यंत्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति ऐकाश्रम्यं गार्हस्थ्यरूपैकाश्रमित्वमेव रागिणांयुक्तमित्याचार्याः । रागिणामधिकृत्य गार्हस्थ्यस्य प्रत्यक्षतः श्रुतौ विधानादित्यर्थः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । आश्रमसमुच्चयपक्षमाश्रितोब्राह्मणउत्तरश्लोकाभिधेयानि त्रीण्यृणानि संशोध्य मोक्षे मोक्षान्तरङ्गे परिव्रज्याश्रमे मनोनियोजयेत् । तान्यृणानि त्वसंशोध्य मोक्षंचतुर्थाश्रममनुतिष्ठन्नरकंव्रजति ॥ ३५ ॥

( ४ ) **राघवानन्दः** । किंच वेदाध्ययनपुत्रोत्पादनयज्ञानुष्ठानैर्ऋषिपितृदेवानामृणान्यपाकृत्यशोधयित्वा मोक्षे संन्यासे मोक्षसाधनत्वान्मनोनिवेशयेदित्यविरक्तंशिक्षयन्नाह ऋणानीति । तदकरणे दोषमाह अनपाकृत्येति । अधोनरकंव्रजेदेव ॥ ३५ ॥

( ५ ) **नन्दनः** । ब्रह्मचर्यगार्हस्थ्येकृत्वा वानप्रस्थमकृत्वापिसंन्यासःकर्तव्योनान्यथेत्याह ऋणानीति । ऋणानि त्रीण्यध्ययनप्रजननयजनाख्यानि । मोक्षे मोक्षसाधने संन्यासाश्रमे । अनपाकृत्य ऋणानीत्येव ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । त्रीणि ऋणानि अपाकृत्य परिहृत्य मनो मोक्षे निवेशयेत् । देवर्षिपित्रर्णानि यज्ञेन दैवमृणं वेदाध्ययनेनार्षं पुत्रोत्पादनेन पैतृकं एतदृणत्रयमपाकृत्य परिहृत्य परिव्रजेत् । तुपुनः त्रीणि ऋणानि अनपाकृत्य अनपाहृत्य मोक्षं सेवमानः अधोव्रजति पतति ॥ ३५ ॥

**अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्यधर्मतः ॥ इष्ट्वा च शक्तितोयज्ञैर्मनोमोक्षे निवेशयेत् ॥ ३६ ॥**

( १ ) **मेधातिथिः** । कानि पुनस्तानिऋणान्यतआह त्रिभिर्ऋणैर्ऋणवान् जायते । यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेनर्षिभ्यइति श्रुत्यनुवादिनी स्मृतिरियम् । ननुच गृही भूत्वा प्रव्रजेदथवेतरथा ब्रह्मचर्यादेव प्रव्रजेदिति जाबालश्रुतिरुच्यते । उत्पत्तिमात्रमाश्रित्योक्तमुदाहरति तत्रेदं विरुध्यते अमुत्पाद्य तथा प्रजामिति । यद्येषाश्रुतिरस्ति किंतर्हि इदमुच्यते । प्रत्यक्षविधानाद्गार्हस्थ्यस्येति प्रव्रजेदिति । नतु प्रव्रजितेनेमानि कर्माणि कर्तव्यान्यनयावेतिकर्तव्यतयेत्येतन्नास्ति गृहस्थस्य त्वग्निहोत्रादीनि साङ्गकलापान्याम्नातानीत्येतदभिप्रायमेतत् । येत्वेतांश्रुतिमदृष्ट्वास्मार्ताएव नैष्ठिकादयस्तेच गृहस्थाश्रमेण प्रत्यक्षश्रुतिविधानेन बाध्यन्ते । येच क्लीबाद्यनधिकृतविषयतया स्मृतिवाक्यानामर्थवत्तां वर्णयन्ति तेषामभिप्रायंन विद्मः । यदि तावदाज्यावेक्षणविष्णुक्रमाद्यङ्गाशक्तौ श्रौतेषु नाधिक्रियते यतस्तथा विधाङ्गयुक्तंकर्म संपादयितुंसमर्थस्तंप्रत्यधिकारश्रुतीनामर्थवत्त्वे जाते न तदसमर्थमपि कुर्वीतेति । यद्येवं स्मार्तेष्वपिनैष्ठिकस्य गुर्वर्थमुदकुम्भाद्याहरणंभैक्षपरिचरणम् पारिव्राज्येपि न द्वितीयामपि रात्रिंग्रामे वसेदिति कुतःपंग्वन्धयोः स्मार्तकर्मक्रमाधिकारः उपनयनंचैषमस्ति लिङ्गं ततएषांविवाहार्थंनयदर्थितातुदारैरिति । यद्यप्युपनयनमादित्यदर्शनमग्निप्रदक्षिणंप्रणीत्येतिच विहितं यतोनानुपनीतस्यविवाहसंभवोव्रात्यत्वात् । अतोयावच्छक्यं गुरुशुश्रूषणंविगुणमपि ब्रह्मचर्यमेवमस्ति । क्लीबस्य तु प्रकृतेऽनुपन्नेस्तैव सच पतितश्च न कश्चिदधिकृतः तस्मादनधिकृतविषयंपारिव्राज्यंनैष्ठिकताचेति

नमनः परितोषमादधाति। सत्यं उदितहोमेन तान्नद्भविष्यति समुच्चयपक्षमाश्रित्य। अनपाकृत्येति निन्दावचनं न पुनः प्रतिषेधएव अथवा मदाऽकृतदारपरिग्रहस्य प्रव्रज्यायामधिकारइत्येवमेतन्नेयम् ॥ ३६ ॥

( २ ) सर्वज्ञनारायणः। ऋणत्रयापाकरणस्वरूपमाह अधीत्येति । धर्मतोयथोक्तकन्याविवाहादृतुगमनादित्यर्थः ॥ ३६ ॥

( ३ ) । कुल्लूकः। तान्येवऋणानि दर्शयति अधीत्येति। जायमानोब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाजायते यज्ञेन देवेभ्यः प्रजयापितृभ्यःस्वाध्यायेनऋषिभ्यइतिश्रूयते । अतोयथाशास्त्रंवेदानधीत्य पर्वगमनवर्जनादिधर्मेण च पुत्रानुत्पाद्य यथासामर्थ्यंज्योतिष्टोमादियज्ञांश्चानुष्ठाय मोक्षान्तरङ्गे चतुर्थाश्रमे मनोनियोजयेत् ॥ ३६ ॥

( ४ ) राघवानन्दः। ऋणानीत्युक्तंविवृणोति अधित्येति। धर्मतोधर्मेण ब्राह्मादिना विवाहेन यदिनिवेशयेदेतान्कृत्वैवेत्यर्थः ॥ ३६ ॥

( ५ ) नन्दनः। उक्तमेवार्थमादरार्थंश्लोकद्वयेन प्रपञ्चयति ॥ ३६ ॥

( ६ ) रामचन्द्रः। मोक्षे मोक्षसाधने संन्यासे मनो निवेशयेत् ॥ ३६ ॥

## अनधीत्य द्विजोवेदाननुत्पाद्य तथा सुतान् ॥ अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥३७॥

( १ ) मेधातिथिः । यज्ञैराहिताग्निर्नित्यैःपशुसोमैः ॥ ३७ ॥

( २ ) सर्वज्ञनारायणः। अस्यव्यतिरेकमाह अनधीत्येति । मोक्षगार्हस्थ्ये तिष्ठन्नेव स्वाध्याये यज्ञादिषुचर्णत्रयापाकरणबुद्ध्याऽप्रवर्तमानोब्रह्मचर्यान्मोक्षइत्यभिमानादृतुगमनादिगार्हस्थ्यनियतधर्मेभ्योनिवृत्तः प्राणायामादियोगाङ्गान्यनुतिष्ठन्नित्यर्थः ॥ ३७ ॥

( ३ ) कुल्लूक। वेदाध्ययनमकृत्वा पुत्रमनुत्पाद्य यज्ञांश्चाननुष्ठाय मोक्षमिच्छन्नरकंव्रजंति ॥ ३७ ॥

( ४ ) राघवानन्दः। विपक्षेत्वाह अनधीत्येति। उक्ताननुष्ठायाधोव्रजतीत्यन्वयः। अर्थवादात्मकश्लोकद्वयम् ॥ ३७ ॥

( ६ ) रामचन्द्रः। द्विजः न क्षत्रियादिः तथाच श्रुतिः ब्राह्मणःप्रव्रजतीति ॥ ३७ ॥

## प्राजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणाम् ॥ आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ ३८ ॥

( १ ) मेधातिथिः। प्राजापत्याऽध्वर्युवेदे विहिता तस्यांच सर्वस्वदानंविहितं तांकृत्वाऽऽत्मन्यग्नयः समारोप्यंते। समारोपणेपि विधिस्ततएवावगन्तव्यः । सार्ववेदसंदक्षिणाऽस्यास्तीत्यन्यपदार्थः। वेदोधनंतत्सर्वंदेयम्। इदमर्थे विहितः स्वार्थिकोवा प्रज्ञादेराकृतिगणत्वात्। अन्येतु पुरुषमेधंप्राजापत्यामिष्टिमाहुः। तत्र ब्रह्मणेब्राह्मणमालभतइति प्रथमःपशुर्ब्रह्मा च प्रजापतिः मुख्येन व्यपदेशप्रवृत्तेः प्राजापत्यः पुरुषमेधः सर्वस्वदानमग्निसमारोपणं प्रव्रज्याच तत्रैव विहिता । एवंहि तत्र श्रुतिः अथात्मन्यग्नीन्समारोप्य तत्रारोपणेनादित्योपस्थानादपेक्षमाणैररण्यमभिप्रेयात्तदैव देवमनुष्येभ्य स्थिरोभवतीति । येत्वात्मन्यग्नीन्समारोप्य प्रव्रज्ययाऽप्रदिष्टा अथाह एतएवआत्मनोयज्ञाइत्यतस्तन्मरणात्तस्यै दत्त्वा आत्मन्येव समारोपिताभवन्ति। अतोभार्यामरणपक्षे प्रवृज्या नावश्या पुनर्दारक्रियेति तत्र किंतु तस्याःपूर्वमरणेभार्यायै दत्वाग्नीनन्त्यकर्मणीतिपठितमिति वक्तव्यमितिपौरुषेयोह्ययंग्रन्थोनवेदोयेनोक्तमुपालभेमहीतिपरिहारःस्यात् ॥ ३८ ॥

( २ ) सर्वज्ञनारायणः। प्राजापत्यां प्रजापतिदैवतपुरोडाशहविष्कां वेदइति धननाम सर्ववेदोदक्षिणा यत्र सातथा.

सर्वस्वदक्षिणामित्यर्थः । सर्ववेदएव सर्ववेदसं । पुत्राणांच संविभजनीयत्वादवशिष्टः स्वीयोभागःसर्वोदेयइतिग्राह्यम् । समारोप्य यातेअग्नेयज्ञियातनूरितिमन्त्रेण । ब्राह्मणइतिपदस्यानन्यपरत्वात्क्षत्रियादीनांन पारिव्राज्यमस्तीतिगम्यते अतएव श्रुतिरपि ब्राह्मणाःप्रव्रजन्तीति । प्रकर्षेण व्रजेदपुनरावर्तनाय ॥ ३८ ॥

( ३ ) **कुल्लूकः** । यजुर्वेदीयोपाख्यानग्रन्थोक्तांसर्वस्वदक्षिणांप्रजापतिदेवताकामिष्टिंकृत्वा तदुक्तविधिनैवात्मन्यग्नीन्समारोप्य गृहादित्यभिधानाद्वानप्रस्थाश्रममनुष्ठायैव चतुर्थाश्रममनुतिष्ठेत् । एतेन मनुना चातुराश्रमस्य समुच्चयोऽपि दर्शितः श्रुतिसिद्धाश्चएकद्वित्रिचतुराश्रमाणांसमुच्चयाविकल्पिताः । तथाजाबालश्रुतिः ब्रह्मचर्यंसमाप्य गृहीभवेद्गृहीभूत्वा वनीभवेद्वनीभूत्वा प्रव्रजेत् इतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा ॥ ३८ ॥

( ४ ) **राघवानन्दः** । प्रव्रजनप्रकारमाह प्रेति । प्राजापत्यां प्रजापतिदेवताकां यजुर्वेदविहितां सर्ववेदसदक्षिणां सर्वस्वदक्षिणां । अग्नीन् श्रौतान् स्मार्तंच । गृहादित्याश्रमत्रयोपलक्षकं कुटीचकादिसंन्यासिचतुष्टयसाधारणं तत्रैकदण्डिनांतु शिखायज्ञोपवीतवेदानांत्यागः सशिखंवपनंकृत्वा बहिःसूत्रंत्यजेदिति श्रुतेः । सत्यानृतेसुखदुःखेवेदानिमंचलोकममुंचलोकंपरित्यज्यात्मानमन्विच्छेदित्यापस्तम्बोक्तेः । ॐभूः सावित्रींप्रविशामीत्युपक्रम्य ॐभूर्भुवःस्वरोंयज्ञोपवीतंजुहोमीत्यादिशौनकेनधृतत्वात् ॥ ३८ ॥

( ५ ) **नन्दनः** । प्रव्रज्याप्रकारमाह प्राजेति । सर्ववेदसंसर्वस्वम् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । प्राजापत्यां प्रजापतिदैवतसंज्ञां इष्टिं निरूप्य कृत्वा सर्ववेदसदक्षिणां सर्वः वेदोधनं दक्षिणा यस्याःसा सर्ववेदसमेव सार्ववेदसं सर्वस्वदक्षिणां आत्मनि अग्नीन् वैतानाग्नीन् श्रुत्युक्तविधानेन समारोप्य ब्राह्मणएव गृहात्प्रव्रजेत् न तु क्षत्रियादिः ॥ ३८ ॥

**योदत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ॥ तस्य तेजोमयालोकाभवन्ति ब्रह्मवादिनः ॥ ३९ ॥**

( १ ) **मेधातिथिः** । गार्हस्थ्यनिन्दया चतुर्थाश्रमप्रशंसा । यज्ञेहि पशवोहन्यन्ते । प्ररोहधर्मकाश्चेतनाइतिदर्शने तृणौषधीनां छेदइत्येत तद्भूतभयं । तद्गृहात्प्रव्रजितस्य समारोपिताग्नेर्नास्तीत्युक्तम् अभयंसर्वभूतेभ्योदत्त्वेति अनेनाशुष्काणांतृणपलाशानामनुपादानमाह । तेजोमयानित्यप्रकाशाउदयास्तमयौ यत्रादित्यस्य न विभाव्येते यथोक्तमतऊर्ध्वमादित्योनैवोदेति नवास्तमेतीत्युपनिषत्स्वित्येवमाहुर्वचांसि ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । गृहादिति ग्रामस्थितादरण्यस्थिताद्वेत्यर्थः । तेजोमयालोकाब्रह्मलोकगतास्तदेकदेशाः । संन्यासाद्ब्रह्मणः स्थानमितिपुराणेष्वभिधानात् । ब्रह्मवादिनोब्रह्मविषयश्रौतज्ञानवतः । तेनात्मन्यसाक्षात्कृतेऽपि संन्यासमात्राद्ब्रह्मलोकप्राप्तिरुक्ता ॥ ३९ ॥

( ३ ) **कुल्लूकः** । यःसर्वेभ्योभूतारब्धेभ्यः स्थावरजङ्गमेभ्योऽभयंदत्त्वा गृहाश्रमात्प्रव्रजति तस्य ब्रह्मप्रतिपादकोपनिषन्निष्ठस्य सूर्याद्यालोकरहिताहिरण्यगर्भादेर्लोकास्तत्तेजसैव प्रकाशाभवन्ति तानाप्नोतीत्यर्थः ॥ ३९ ॥

( ४ ) **राघवानन्दः** । तादृशे संन्यासे योदत्त्वेति फलवादः । अभयं दत्त्वेत्यन्वयः । तस्याहंब्रह्मास्मीति ब्रह्मवादिनस्तेजोमयाःस्वप्रकाशालोकाः ॥ ३९ ॥

( ५ ) **नन्दनः** । गृहनिष्क्रमणात्पूर्वमेव सर्वभूतेभ्योऽभयंदातव्यमित्याह योदत्त्वेति ॥ ३९ ॥

**यस्मादण्वपि भूतानां द्विजान्नोत्पद्यतेभयम् ॥ तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥४०॥**

( १ ) **मेधातिथिः** । एषएवार्थः । पुनरुक्तः । देहाद्विमुक्तस्य वार्तमानिकंशरीरंतस्य पततीत्यर्थः ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । एतत्प्रपञ्चयति यस्मादिति । देहाद्विमुक्तस्य मृतस्य भयंनास्ति नित्याभयत्वाद्ब्रह्मलोकस्य ॥ ४० ॥

( ३ ) **कुल्लूकः** । यस्माद्द्विजात्सूक्ष्ममपिभयंभूतानां न भवति तस्य देहाद्विमुक्तस्यवर्तमानदेहनाशे कस्मादपिभयंनभवति ॥ ४० ॥

( ४ ) **राघवानन्दः** । येषांनोयमात्मायंलोकइति श्रुतेः किमुवाच्यंपरत्र तेजोमयालोकाइतीहैवजीवन्मुक्तःसइत्याह यस्मादिति । द्विजात् कृतसंन्यासात् । कुतश्चन यमाद्राजादेश्च नबिभेतिकुतश्चनेति श्रुतेः ॥ ४० ॥

( ५ ) **नन्दनः** । अभयप्रदानस्य फलान्तरमाह यस्मादिति । न केवलमिदमभयदानंसंन्यासिनएव धर्मः किंतु सर्वस्यापीतिसूचितम् ॥ ४० ॥

( ६ ) **रामचन्द्रः** । यस्माद्द्विजाद्भूतानामण्वपिभयं न उत्पद्यते नजायते तस्य द्विजस्य देहाद्विमुक्तस्य कुतश्चन कस्मिन्नपि लोके भयंनास्ति ॥ ४० ॥

**आगारादभिनिष्क्रांन्तः पवित्रोपचितोमुनिः ॥ समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥ ४१ ॥**

( १ ) **मेधातिथिः** । पवित्रैर्मन्त्रजपैर्दर्भकमण्डलुकृष्णाजिनैरुपचितोयुक्तः । अथवापावनैः कृच्छ्रैः । मुनिर्रकिंचिद्वादी । समुपोढेषु केनचित्कामेषु स्पृहणीयेषु मृष्टभोजनादिषु यदृच्छातोगीतादिशब्देषु सन्निहितेषु पुष्पादिसुवासमुपस्थितेषु निरपेक्षोभवेत । नैतांश्चिरंस्निग्धेन चक्षुषा पश्येन्नाकर्णयेन्नतैस्सहासीत ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । पवित्रोपचितः पवित्रैस्तपोजपादिभिर्गार्हस्थ्यकालकृतैः उपचितः उत्तमतांनीतः । मुनिर्मननिरतः । समुपोढेषु सम्यग्भुक्तेषु तथाच भोगान्मन्दीभूतायांतृष्णायां निरपेक्षस्तादृगिच्छाशून्यः । यत्तु न जातु कामः कामानामुपभोगेन शाम्यतीति ॥ तस्योपभोगमात्रेण न शाम्यतीतितात्पर्यम् । धर्मपरिव्राजकधर्ममाचरेन्नित्यमितिक्वचित्पाठः ॥ ४१ ॥

( ३ ) **कुल्लूकः** । गृहान्निर्गतःपवित्रैर्दण्डकमण्डल्वादियुक्तोमुनिर्मौनी समुपोढेषु कामेषु केनचित्सम्यक्समीपंप्रापितेषु स्वाद्वन्नादिषु विगतस्पृहः परिव्रजेत् । मेधातिथिस्तु पवित्रैर्मन्त्रजपैरथवा पावनैः कृच्छ्रैर्युक्तइतिव्याचष्टे ॥ ४१ ॥

( ४ ) **राघवानन्दः** । पवित्रेण ज्ञानेनोपनिषदावोपचितोयुक्तः । समुपोढेषु सम्यक्तया प्रीतिजनकत्वेनोपस्थितेषु दारान्नादिषु निरपेक्षः विगतस्पृहः ॥ ४१ ॥

( ५ ) **नन्दनः** । गृहनिष्क्रमणकाले कर्तव्यमाह आगेति । समुपोढेषु गृहसंचितेषु भोगेषु । पवित्रंजलपवित्रम् । एतच्छिक्यकमण्डल्वादेरप्युपलक्षणम् उपचितग्रहणात् । मुनिर्मित्रादीननामन्त्रयन्नगारादपि निष्क्रान्तः परिव्रजेत्सर्ववर्जयित्वागच्छेत् ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । अगाराद्गृहादभिनिष्क्रान्तः पवित्रोजपयज्ञादिभिः संपूर्णः समुपोढेषु कामेषु सम्यगनुभूतेषु कामेषु मुनिः परिव्रजेत् ॥ ४१ ॥

**एकएव चरेन्नित्यंसिद्ध्यर्थमसहायवान् ॥ सिद्धिमेकस्य संपश्यन्न जहाति न हीयते ॥ ४२ ॥**

( १ ) **मेधातिथिः** । यतआह । एकारामताऽनेन विधीयते । एकएवेत्यनेन पूर्ववस्तु परित्यागउच्यते । असहायवानिति भृत्यादेः पूर्वस्यापि परिग्रहोन कर्तव्यः संविद्रागद्वेषविनिर्मुक्तस्य सर्वसमता एवंभवति । अन्यथा एषएव भृत्यादिरन्तिकस्थः तत्रैवं बुद्धिः स्यादयंमदीयोनायमिति । एषएव संगोऽवधिहेतुर्यथात्वेषसंपत्स्यते यदा न जहाति न कश्चित्पुत्रादिस्तेनत्यक्तोभवति । अतोन हीयते न वियुज्यते पुत्रादिभिस्तद्वियोगदुःखंनासादयति । इतरथा संगात्पुनस्त्यागे महद्दुःखं न तस्य कश्चिन्म्रियते सनकस्यचिदिति ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । सिध्यर्थं शमनार्थं । एकएवेत्यसहकारिणांमेलकेनिषिद्धे असहायवानिति तद्धर्मानुगुण तयाऽपि द्वितीयस्य ग्रहणंनिवर्तयितुमुक्तम् । एकस्यैव सिद्धिरिति सिद्धिमेकस्यासहायस्य पश्यन् हेयस्य द्वितीयस्याग्रहणान्नकिंचित्त्यजति नच त्यज्यतेऽनेनेनियोगदुःखाभावउक्तः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । एकस्य सर्वसङ्गविरहिणोमोक्षावाप्तिर्भवतीतिजानन्नेकएवं सर्वदापि मोक्षार्थंचरेत् । एकएवेत्यनेन पूर्वपरिचितपुत्रादित्यागउच्यते । असहायवान् इत्युत्तरस्यापि । एकाकीयदि चरति सकिंचिन्नत्यजति न कस्यापि त्यागेन दुःखमनुभवति नापि केनापि त्यज्यते न कोऽप्यनेन त्यागदुःखमनुभाव्यते । ततश्चसर्वत्रनिर्ममत्वःसुखेन मुक्तिमाप्नोति ॥ ४२ ॥

( ४ ) **राघवानन्दः** । किंचैकइति । सिद्धिमिति सित्ध्यर्थंमोक्षार्थंत्यक्तव्याभावादेकाकिनस्त्यागान्न दुःखंत्यक्तुरप्यभावाच्च न हीयते ॥ ४२ ॥

( ५ ) **नन्दनः** । अभिनिष्क्रान्तस्य धर्मानाह एकएवेति । एकस्यसिद्धिंपश्यन्नसहायस्य सिद्धिर्भवतीति जानन्सिद्धिंनजहाति ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । एकएव एकाकीसन्मोक्षार्थं संचरेत् ॥ ४२ ॥

**अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ॥ उपेक्षकोऽशंकुसुकोमुनिर्भावसमाहितः ॥ ४३ ॥**

( १ ) **मेधातिथिः** । श्रौतानामग्नीनांपूर्वमभावउक्तोऽनेन गार्हस्थ्यस्योच्यते । अथवा पाकप्रतिषेधोयमन्यर्थस्य चेन्धनस्य शीतादिनिवृत्तिप्रयोजनस्य । निकेतोगृहं । ग्राममेकांरात्रिमन्नार्थमाश्रयेत् । कृतप्रयोजनोरण्ये शेषंकालं । एषा चैकरात्रिर्ग्रामे गौत्तमेनोक्ता तत्र यदि समयाग्रामंतदान्नार्थएवप्रवेशः । अथदूरतस्तदैकांरात्रिंवसेत् । द्वितीयामरण्ये संभावयेत् । उपेक्षकः अचेतनेष्वपि भावेषु कमण्डल्वादिषु न तन्निजायत्तंकुर्यात् । अथवा शरीरस्य व्याधिप्रतिकारंन कुर्यात् । अन्येत्वशङ्कुसुकइतिपठन्ति अस्थिरः शङ्कुसुकः तन्निषेधेनचित्तवृत्तिधैर्यमुपदिशति । मुनिःसंयतवागिन्द्रियः । भावेन चित्तेन समाहितः मनसा विकल्पान्वर्जयेत् । भावेनैव समाहितोन वाङ्मात्रेण ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । अनग्निः पाकसाधनाद्यर्थमप्यपरिग्रहीता निकेतोगृहं तत्परिग्रहशून्योऽनिकेतः उपेक्षकः ग्रामस्यापि भोगसाधनस्याऽभोक्ता असंचयिकः प्राणयात्रार्थमपिधनसंग्रहमकुर्वन् । क्वचिदशङ्कुशुकइतिपाठस्तत्रात्मसत्वापवर्गसाधनेषु स्थिरमतिरित्यर्थः । भावसमाहितोमनसा सदा समाधिपरः ॥ ४३ ॥

---

( ४३ ) संकुसुको=संचयिको ( क, ख, ग, ट, ठ, ड, ण, त, ल, य

=संकसुको ( च, थ )

( ३ ) **कुल्लूकः**। अनग्निर्लौकिकाग्निसंयोगरहितःशास्त्रीयाग्निसमारोप्येतिपूर्वमुक्तत्वात् । अनिकेतोगृहशून्य.उपेक्षकःशरीरस्यव्याध्याद्युत्पादेतत्प्रतीकाररहितः । अशंकुसुकःस्थिरमतिः असंचयिकइत्यन्येपठन्ति मुनिर्ब्रह्ममननान्मौनस्य पूर्वोक्तत्वात् भावेन ब्रह्मणि समाहितः तदेकतानमनाअरण्ये च दिवारात्रौ वसन्भिक्षार्थमेव ग्रामंप्रविशेत् ॥ ४३ ॥

( ४ ) **राघवानन्दः**। किंच अनग्निरिति। अनिकेतः निकेतआमन्त्रणं तद्रहितःसन्ग्राममाविशेत्। उपेक्षकः शरीरस्य व्याध्याद्युत्पत्तौ प्रतीकाररहितः। क्वचिदसंकुसुकइतिपाठस्तदात्वसंशयः। भावसमाहितः भावेनब्रह्मणि समाहितः ॥ ४३ ॥

( ५ ) **नन्दनः**। अनग्निस्त्यक्तपचनाग्निः। भावसमन्वितोविधेयान्तःकरणः ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। उपेक्षकः प्राप्ते भोगसाधन उपेक्षाशीलः। असंचयिकः प्राणयात्रार्थे अगृहीतधनः ॥ ४३ ॥

**कपालं वृक्षमूलानि कुचेलमसहायता ॥ समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ४४ ॥**

( १ ) **मेधातिथिः**। भिक्षाभोजनपात्रंकपालम्। निकेतोवृक्षमूलानि। कुचेलं स्थूलजीर्णवस्त्रखण्डम्। समता शत्रौ मित्रे उभयरूपरहिते स्वात्मनि च। मुक्तस्य लक्षणं अविलम्बात्प्यतो मोक्षस्योच्यते न पुनरियतैव मुक्तोभवति ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। कपालं स्थाल्यादिखण्डोभिक्षार्थम्। वृक्षमूलं निवासार्थम्। कुचेलं जीर्णकर्पटचर्मादि परिधानार्थम्। असहायताएकाकिता। समता मैत्रीप्रवृत्तिः शत्रावपि मुक्तस्य संगान्निर्गतस्य लक्षणं चिन्हम्। एतेन त्रिदण्डेन यतिश्चेति लक्षणानीति स्मृत्यन्तरोक्तं लक्षणमनावश्यकमितिदर्शितम् मन्दाधिकारसंन्यासिपरत्वात्तस्येति ॥ ४४ ॥

( ३ ) **कुल्लूकः**। कपालमित्यादिमृन्मयकर्परादिभिक्षापात्रंवासार्थंवृक्षमूलानि स्थूलजीर्णवस्त्रंकौपीनकन्थासर्वत्र ब्रह्मबुद्ध्या शत्रुमित्राभावः। एतन्मुक्तिसाधनत्वान्मुक्तस्यलिङ्गम् ॥ ४४ ॥

( ४ ) **राघवानन्दः**। भावसमाहितंलक्षयति कपालमिति। कपालं भिक्षापात्रं। वृक्षमूलानीत्यनेन सर्वदानैकवृक्षाश्रयः। समता निर्वैरता। मुक्तस्यात्मनिष्ठस्यजीवन्मुक्तस्य वा ॥ ४४ ॥

( ५ ) **नन्दनः**। कपालंभिक्षार्थमलाबुपात्रम्। वृक्षमूलानि वृक्षमूलनिवासइतियावत्। कुचेलंजीर्णमलिनवस्त्रधारित्वम्। मुक्तस्य संन्यासिनः ॥ ४४ ॥

( ६ ) **रामचन्द्रः**। कपालस्थाल्यादिखण्डसमता मैत्रीवृत्तिः मुक्तस्यैतल्लक्षणं अतिवैराग्यमित्यर्थः ॥ ४४ ॥

**नाभिनन्देत मरणं नाभिनन्देत जीवितम्॥ कालमेव प्रतीक्षेत निर्देशं भृतकोयथा ॥ ४५ ॥**

**[ ग्रैष्म्यान्हैमन्तिकान्मासानष्टौभिक्षुर्विचक्रमेत् ॥ दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसेत् ॥ १ ॥**

**नासूर्यं हिव्रजेन्मार्गं नादृष्टां भूमिमाक्रमेत् । परिभूताभिरद्भिस्तु कार्यं कुर्वीत नित्यशः ॥ २ ॥**

**सत्यां वाचमहिंस्रां च वदेदनपकारिणीम् । कल्कापेतामपरुषामनृशंसामपैशुनाम् ॥ ३ ॥ ] +**

---

+ ( ख, च, ञ, ट, ठ, ड, ण, ब; ) । ( र ) चिन्हित पुस्तके प्रथमौ द्वौ स्तः ( त ) चिन्हिते प्रथम एव । ( ड ) चिन्हितपुस्तकेद्वितीयश्लोकस्यपूर्वार्धे ( नादृष्टाम् ) इत्यत्र ( नाज्ञाताम् ( इति पाठो दृश्यते ।

( १ ) **मेधातिथिः** । अनेनाक्लेशिताभिहिता न मरणंकामयेत । नाप्यतिशयलाभार्थीजीवितं कालमेव प्रतीक्षेत यदा भविष्यति तत्तदैवास्त्विति चिन्तयेत् । यथा भृतकोनिर्वेशंभृतिंगृहीत्वा कालंपरिपालयति । आहरेत्तस्य मया कर्त्तव्यमिति नान्तरा विच्छेदे मूल्यलाभः । एवंसंसारक्षयाच्छरीरपाते मोक्षोभवत्येतेन विधिना न स्वेच्छावृत्तेन ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । अभिनन्देताशंसेत् । कालं स्वतःसिद्धंजीवनकालंप्रतीक्षेतानुपालयेत् । निर्देशमाज्ञां । निर्वेशमितिपाठे निर्वेशं भृतिं भृतिशोधनावाधिमितियावत् ॥ ४५ ॥

( ३ ) **कुल्लूकः** । मरणंजीवनंच द्वयमपि न कामयेत्किंतु स्वकर्माधीनंमरणकालमेव प्रतीक्षेत । निर्दिश्यतइति निर्देशोभृतिस्तत्परिशोधनकालमिवभृतकः ॥ ४५ ॥

( ४ ) **राघवानन्दः** । जीवन्मुक्तश्चेत्कृतंदेहस्थित्या तत्राह नेति । भृतकः भृतिमुपजीव्यकर्मकर्ता सयथाकालक्षयेउपरतव्यापारःस्यादेवंकालंप्रारब्धम् ॥ ४५ ॥

[ **राघवानन्दः** । ग्रीष्मेति । तेषुमासेषुक्षुद्रजंतूनांविशेषतःसंचरणं इतरेषुतेषांबाहुल्यमिति भावः ॥ १ ॥ ]

( ५ ) **नन्दनः** । निर्देशं भृतिम् । भृतकसादृश्यात्क्रियमाणकर्मफलैरपेक्ष्यमुक्तम् ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । निर्देशोभृतिः ॥ ४५ ॥

[ **रामचन्द्रः** । ग्रैष्मानिति । वर्षासु चतुर्मासेषु एकत्र एकस्मिन्ग्रामे संवसेत् ॥ १ ॥ ]

[ **रामचन्द्रः** । असूर्यं सूर्यादर्शनंमार्गं न गच्छेत् रात्रौ न गच्छेदित्यर्थः ॥ २ ॥ ]

[ **रामचन्द्रः** । सत्यामिति । कस्यापि अपकारिणींवाचंन वदेत् । कल्कान्वितां सपापांन वदेत् । कल्कोऽस्त्री-शमलैनसोः इत्यमरः । च पुनः परुषांवाचंन वदेत् । चकारःसमुच्चयार्थः च पुनः हिंस्रांवाचंन वदेत् । च पुनः नृशंसाभिधांन वदेत् । तथा पैशुन्यांवाचंन वदेत् । असत्यांवाचंन वदेत् ॥ ३ ॥ ]

**दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ४६ ॥**

( १ ) **मेधातिथिः** । चक्षुषा मार्गनिरूप्य यस्मिन्प्रदेशे प्राणिनःपीडांन गच्छन्ति तत्र पादंनिदध्यात् । सत्यांवाचंवदेदितिसिद्धे पूतग्रहणंसत्यशब्दस्योपलक्षणतांदर्शयति । तेनापविद्धंभवति । मनसा पूतोमनःपूतः सदा स्यात्परद्रव्याभिध्यानादि न कुर्यात् ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । दृष्टिपूतं दृष्ट्या पवित्रत्वेन पदंनिधानस्थानंयदाज्ञातंभवतितदेत्यर्थः क्रियाविशेषणंचैतत् । वस्त्रपूतं वस्त्रेणोत्पूयापनीतजन्तुजातम् । सत्यपूतां सत्यार्थत्वेन शुद्धां । मनःपूतं मनसा समीचीनत्वेन ज्ञातम् ॥ ४६ ॥

( ३ ) **कुल्लूकः** । केशास्थ्यादिपरिहारार्थंदृष्टिशोधितभूमौ पादौ क्षिपेत् । जलेषु क्षुद्रजन्त्वादिवारणार्थंवस्त्रशोधितंजलंपिबेत् । सत्यपवित्रांवाचंवदेत् । ततश्च मौनेन सह सत्यस्य विकल्पः प्रतिषिद्धसंकल्पशून्यमनसा सर्वदा पवित्रात्मा स्यात् ॥ ४६ ॥

( ४ ) **राघवानन्दः** । किंच । दृष्टीति । भूतानामनुकम्पायै दृष्टिपूतमित्यादिचतुष्टयम् । अग्राह्यादपि यद्गृह्यते तदप्यात्मानिरिक्तंनास्तीतिमनःपूतता । परद्रव्यानभिलाषिता वा प्रतिषिद्धसंकल्पशून्यता वा योगान्निरुद्धतावा ॥ ४६ ॥

**अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ४७ ॥**

( १ ) **मेधातिथिः** । शास्त्रमतिक्रम्य यः कश्चिद्वदति सोऽतिवादः अप्रियाक्रोशः । तितिक्षेत क्षमेत नच मनसा

क्रुध्येदित्यतोवक्ष्यत्याक्रुष्टः कुशलंवदेदिति । अनेन मनसः क्षोभोविनिवार्यते न कुशलशब्दाभिधानंविधीयते । तदाहि मिथ्यावादी स्यादन्यद्धृदयेऽन्यत्तु वाचा वदन्नावमन्येतेति । अवज्ञानंन कस्यचित्कुर्यात् गुर्वादिपूजनंनातिक्रामेत् । नचेमंदेहं यदि कश्चित्प्रहरेच्छरीरे तेनसह वैरंकुर्यात् । किमनेन मे शरीरेण नष्टेनानष्टेन वा तेजोमयंमे शरीरंभवत्विति ध्यायेत् ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । अतिवादानतिक्रमवादाननिष्टभाषणानि तितिक्षेत क्षमेत । इमंदेहमाश्रित्य एतद्देहसंवर्धनोत्साहेनात्मानंत्वाश्रित्य दुःखसाधनैरधर्माद्यैः योगविघ्नकारिभिश्चराक्षसाद्यैर्वैरंनविरोधीत्यनेनदर्शितम् ॥ ४७ ॥

( ३ ) **कुल्लूकः** । अतिक्रमवादान्परोक्तान्सहेत न कंचित्परिभवेत् । नेमंदेहमस्थिरंव्याध्यायतनमाश्रित्य तदर्थंकेनचित्सह वैरंकुर्यात् ॥ ४७ ॥

( ४ ) **राघवानन्दः** । किंचातिवादानन्येनोक्तान्सहेतेत्याह अतिवादानिति । देहनिमित्तंतद्रक्षार्थम् ॥ ४७ ॥

( ५ ) **नन्दनः** । इमंदेहं विनश्वरमितियावत् ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । अतिवादं अनिष्टभाषणं तितिक्षेत सहेत् ॥ ४७ ॥

## क्रुध्यंतं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ॥ सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ ४८ ॥

( १ ) **मेधातिथिः** । सप्तद्वाराणि चधर्मार्थौ धर्मकामावर्थकामौकामार्थौकामधर्मौअर्थधर्मौत्रिवर्गइति अत्राऽवकीर्णांविक्षिप्तामेतद्विषयांन वाचंवदेदनृतां भेदाश्रयत्वादेतेषांभेदस्य सर्वस्यासत्यत्वादनृतामित्युक्तम् । किंतर्हि मोक्षाश्रयामेव वदेत् । अथवा सप्त शीर्षण्याः प्राणास्ते वाचोद्वाराणि अथवा षडिन्द्रियाणि बुद्धिः सप्तमी एतैर्गृहीतेष्वर्थेषुवाक्प्रवर्तते सप्तविभक्तयइत्यन्ये ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । सप्तसु द्वारेषु करणेषु चक्षुस्त्वक्श्रोत्रघ्राणरसनामनोहंकारेषु अवकीर्णां विक्षिप्तां वाचं तद्विषयेषु विक्षिप्तत्वात् । एतेनचक्षुरादिगृहीतेषु विषयेषु वाचमुच्चारयन्नानृतांवदेदित्यर्थः । बुद्धेस्त्वध्यवसायव्यापारायाहंकाराद्भेद विवक्षयासतेत्युक्तम् ॥ ४८ ॥

( ३ ) **कुल्लूकः** । संजातक्रोधाय कस्मैचित्प्रतिक्रोधं न कुर्यात् । निन्दितश्चान्येन वाचंभद्रांवदेत् नतुनिन्देत् । सप्तद्वारावकीर्णामितिचक्षुरादीनिपञ्चबहिर्बुद्धीन्द्रियाणिमनोबुद्धिरित्यन्तःकरणद्वयम् । वेदान्तदर्शनएतैर्गृहीतेषुस्वेषुवाचाप्रवृत्तेरेतानि सप्तद्वाराणीत्युच्यन्ते । एतैरवकीर्णांनिक्षिप्तांतद्गृहीतार्थविषयांवाचं न वदेत् किंतुब्रह्ममात्रविषयांवदेत् । ननु मनसैव ब्रह्मोपास्यते । ब्रह्मविषयवागुच्चारणमपिमनोव्यापारः तत्कथंसप्तद्वारावकीर्णत्वविशेषेऽपिब्रह्मविषयांवदेदित्यन्यविषयांन वदेदितिलभ्यते । उच्यते । अतएवानृतामितिविशेषयतिस्म । अनृतमसत्यंविनाशीतियावत्तद्विषया वागप्यनृतोच्यते । तेनविनाशिकार्यविषयांवाचंनोच्चारयेत् । अविनाशिब्रह्मविषयांतु प्रणवोपनिषदादिरूपांवदेत् । गोविन्दराजस्तु धर्मोऽर्थःकामोधर्मार्थावर्थकामौधर्मार्थकामाइत्येतानि सप्तवाग्विषयतया वाक्प्रवृत्तेर्द्वाराणि तेष्ववकीर्णांविक्षिप्तांसर्वस्यभेदस्यासत्वात्तद्विषयामसत्यरूपांवाचंन वदेत् । अन्ये तु सप्तभुवनान्येव वाग्विषयत्वात्सप्तद्वाराणि तेषांभेदाद्विनाशित्वाच्चासत्यतया तद्विषयांवाचमसत्यांन वदेत्केवलंब्रह्मविषयांवदेत् ॥ ४८ ॥

---

( ४८ ) सप्तद्वारा=अष्टद्वारा० ( नं० )

( ४ ) **राघवानन्दः** । आक्रुष्टःपरेण तमाक्रोष्टारं । सप्तभिश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणमनोबुद्धिभिरिन्द्रियैरवकीर्णांतत्तद्विषयविषयिणींअतएवानृतामनृतविषयत्वात्तैर्गृहीतेर्थे वाक्प्रवर्तते यन्मनसा ध्यायति तद्वाचा वदतीति श्रुतेः । ऋतंच सूनृता वाणी तद्भिन्नारुक्षा अतउक्तं सर्वेन्द्रियक्षोभकारिणींतांवाचंन वदेदिति । सत्यस्य सत्यमित्यादिसत्यंब्रह्म तद्विषयिणींवाचंकुर्यादिति मौनंकुर्यादिति तात्पर्यार्थः ओमित्येवंध्यायत्यथात्मानमन्यावाचोविमुञ्चथेत्यादिश्रुतेः ॥ ४८ ॥

( ५ ) **नन्दनः** । बोध्यव्यवसायः प्रथमं आहंकारिकोभिमानोद्वितीयं मानससंकल्पस्तृतीयं पञ्चेन्द्रियनिवृत्तिरूपमालोचनपञ्चकंपञ्चइत्यष्टौवाचोद्वाराणिनिर्गमनमार्गावाचोनिमित्तानीतियावत् । अष्टद्वारावकीर्णावाक्सत्याध्यवसायसहितत्वात् । अहंकारादिसप्तद्वारावकीर्णावाक्सत्याध्यवसायरहितत्वात् । तांनवदेत् स्वयमनध्यवसितमर्थं परस्मै न वदेदित्यर्थः । धर्मोर्थःकामोधर्मार्थौधर्मकामावर्थकामौधर्मार्थकामाश्चेतिये केचित्सप्तद्वाराण्याहुस्तेषांपक्षेऽयमर्थः । मोक्षाश्रितामेव वाचंवदेन्नत्रिवर्गाश्रितामिति । अपरे सप्तद्वाराणि सप्तविभक्तयइति व्याचक्षते । चक्षुषी नासिके श्रोत्रे आस्यंचेत्यन्ये ॥ ४८ ॥

( ६ ) **रामचन्द्रः** । आक्रुष्टः कुशलंशुभंवदेत सप्तद्वारावकीर्णां चक्षुस्त्वक्श्रोत्रघ्राणरसनामनोहंकारेषु विवक्षितां तद्विषयाधीनां वाचमनृतांन वदेत् ॥ ४८ ॥

**अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः ॥ आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४९ ॥**

( १ ) **मेधातिथिः** । आत्मतत्वप्रतिबोधापादनपरमेकाग्रत्वमध्यात्मं तद्रतिस्तदर्थचिन्तापरआसीत । निरपेक्षइत्युक्तानुवादोविषयान्येभ्योधर्मेभ्योनुष्ठानार्थः । निरामिषोनिःस्पृहः । मांसमामिषम् । तेनस्पृहांलक्षयित्वा प्रतिषेधस्तत्रातिशयवती प्राणिनांस्पृहा । अन्यत्प्रागुक्तमेव ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । अध्यामरतिरात्मविषये दृढरतिः । सुखार्थी नित्यसुखार्थी ॥ ४९ ॥

( ३ ) **कुल्लूकः** । आत्मानंब्रह्माधिकृत्य रतिर्यस्य सोऽध्यात्मरतिः सर्वदा ब्रह्मध्यानपरः आसीनइति स्वस्तिकादियोगासननिष्ठः निरपेक्षोदण्डकमण्डल्वादिष्वपि विशेषापेक्षाशून्यः निरामिषः आमिषंविषयाः तदभिलाषरहितः आत्मनोदेहेनैव सहायेन मोक्षसुखार्थीह संसारे विचरेत् ॥ ४९ ॥

( ४ ) **राघवानन्दः** । अतएवाध्यात्मरतिः आत्मानमधिकृत्यप्रवर्ततेऽध्यात्मंतस्य ध्यानंतद्वाचकशब्दोवा । आत्मा वा रे द्रष्टव्यःश्रोतव्योमन्तव्योनिदिध्यासितव्यइति तत्रैव रतिःश्रद्धायस्यसतथा । निरामिषः आमिषंविषयःमनोमत्स्याकर्षकत्वात्तत्र हेतुः आत्मनैवदेहेन परमात्मना वा शरीरसुखार्थी मोक्षसुखान्वेषी वा ॥ शारीरंकेवलंकर्म कुर्वन्नाप्नोति किल्बिषमित्युक्तेः ॥ ४९ ॥

( ५ ) **नन्दनः** । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि विषयात्मनोऽहंकारोबुद्धिरव्यक्तंजीवः परमात्मा चेतिषड्विंशतिरध्यात्मम् । एकएवचरेद्धर्ममित्यत्रासहायत्वस्य प्रतिपादितत्वादासीनोऽध्यात्मरतिस्स्यात् विचरंश्च परमात्मपरःस्यादित्यर्थः ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । निरामिषो निष्प्रतिग्रहः ॥ ४९ ॥

**न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ॥ नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ ५० ॥**

( १ ) **मेधातिथिः** । उत्पातादिव्यान्तरिक्षभौमाउपरागग्रहोदयकेतूदयदिग्दाहावनिचलनादयस्तत्फलं कथयेद्भिक्षालिप्सया । निमित्तंगृहादौ स्थित्यादि । नक्षत्रविद्यायकृत्तिकाकर्मण्यायात्रानक्षत्रमित्यादि । अङ्गविद्या ह-

स्तलेख्यादिलक्षणम् । अनुशासनंराज्ञस्तत्प्रकृतीनां एवंयुक्तंवर्तितुं एतेन सन्धिरनेन विग्रहइदंत्वया किमिति कृत-मिदंकिन्न करोषीतिवादोऽभिमानहेतुकः शास्त्रार्थविप्रतिपत्तौ साधनदूषणाद्युपन्यासः ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । उत्पातउल्कापातादिरशुभसूचकः निमित्तमुल्कादिचेष्टितंशुभसूचकं ताभ्यां तत्सूचनीयोपदेशेन । नक्षत्रविद्या नक्षत्रगुणदोषज्ञानं अङ्गविद्या व्याकरणादिवेदाङ्गज्ञानं । अनुशासनं वेदाध्यापनादि वादोविगृह्यकथांकृत्वाजयः ॥ ५० ॥

( ३ ) **कुल्लूकः** । भूकम्पाद्युत्पातचक्षुःस्पन्दादिनिमित्तफलकथनेनाद्याश्विनीहस्तरेखादेरीदृशंफलमितिनक्षत्राङ्गविद्यया। ईदृशोनीतिमार्गइत्थं वर्तितव्यं अनुशासनेन शास्त्रार्थकथनेन च कदाचिन्न भिक्षांलब्धुमिच्छेत् ॥ ५० ॥

( ४ ) **राघवानन्दः** । एतादृशस्य भिक्षोरुपाधिनिराह नेति । नचोत्पातनिमित्ताभ्यां उत्पातोभूमिकम्पःचक्षुरादि-स्फन्दोनिमित्तं तयोःफलकथनेन नक्षत्रविद्या ग्रहसंचारादिनिर्णयः अङ्गविद्या व्याकरणादि ताभ्यांच । नानुशासनवादा-भ्यामनुशासनमुपदेशः वादश्छलवितर्कात्मकःताभ्यामपि न भिक्षां लिप्सेत कर्हिचिदत्यन्तकष्टदशायामपीत्यन्वयः ॥ ५० ॥

( ५ ) **नन्दनः** । उत्पातोऽद्भुतम् । निमित्तं वायसस्वरादिः । नक्षत्रविद्या ज्योतिःशास्त्रम् । अङ्गविद्या सामुद्रिकम् । चिकित्सावा । अनुशासनंशिष्यपरिग्रहः । वादस्तर्कः ॥ ५० ॥

( ६ ) **रामचन्द्रः** । नक्षत्राङ्गविद्यया ज्योतिर्विद्यया षडङ्गया अनुशासनवादाभ्यां वेदाध्ययनकथाप्रवर्तिताभ्यां न भिक्षांलिप्सेत ॥ ५० ॥

## न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ॥ आकीर्णं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ॥ ५१ ॥

( १ ) **मेधातिथिः** । आकीर्णं यत्र बहवोन्नलाभाय संघटितास्तंप्रदेशंभिक्षार्थंवर्जयेत् ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । तापसैः व्रतस्थैः अन्नार्थं वने चरद्भिः ग्रामेवाप्रविष्टैःब्राह्मणैः तदन्यैर्भिक्षार्थिभिर्विप्रैः । तथान्यैः पाषण्ड्यादिभिः पूर्वोक्तव्यतिरिक्तैर्भिक्षुकैः आकीर्णं व्याप्तं नोपसंव्रजेत् तेषामेवोपरोधभिया ॥ ५१ ॥

( ३ ) **कुल्लूकः** । वानप्रस्थैरन्यैर्वा ब्राह्मणैर्भक्षणशीलैः पक्षिभिः कुक्कुरैर्वा व्याप्तंगृहंभिक्षार्थंन प्रविशेत् ॥ ५१ ॥

( ४ ) **राघवानन्दः** । सोपि श्वादिभिराकीर्णगृहंभिक्षार्थं न गच्छेदित्याह नेति । तापसैर्विरक्तवानप्रस्थैः ब्राह्मणैः ब्रह्मनिष्ठैः भिक्षुकैः संन्यासिभिः अन्यैः चातुर्वर्ण्यसाधारणदुःखितैः आक्रान्तागारंभिक्षार्थंसंन्यासी नोपसंव्रजेदित्यन्वयः ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । तापसादिभिराकीर्णं आगारंगृहं नोपसंव्रजेत् । वयोभिः पक्षिभिः शुकादिभिः अन्यैर्वाध्वांक्षादिभिः आकीर्णाम् ॥ ५१ ॥

## क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् ॥ विचरेन्नियतोनित्यं सर्वभूतान्यपीडयन् ॥ ५२ ॥

( १ ) **मेधातिथिः** । पात्राणि वक्ष्यति । दण्डास्त्रयः त्रिदण्डी हि सः । कुसुम्भः कमण्डलुः न महारजनम् । उत्तर-श्लोकार्धस्यार्थः प्राग्विहितएव ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । नीचकेशादिर्मासिमासि क्षौरादिकर्मणा । क्वचित् क्लृप्तकेशनखश्मश्रुरितिपाठस्तत्रक्लृप्तपदं

छिन्नमात्रपरम् । छेदनंच क्षुरेणैव केशानां स्मृत्यन्तरदर्शनात् । पात्री भिक्षापात्रवान् । दण्डी एकेनत्रिभिर्वा । कुसुम्भं कमण्डलुः । नित्यंविचरेन्नैकत्र तिष्ठेत् ॥ ५२ ॥

( ३ ) **कुल्लूकः** । क्लृप्तकेशनखश्मश्रुर्भिक्षापात्रवान्दण्डीकुसुम्भःकमण्डलुस्तद्युक्तः सर्वप्राणिनोऽपीडयन्सर्वदा परिभ्रमेत् ॥ ५२ ॥

( ४ ) **राघवानन्दः** । ऋतुसन्धिषु वापयेदिति श्रुतिमाश्रित्याह क्लृप्तेति । क्लृप्तानि छिन्नानि केशादीनि यस्य सः । कुसुम्भं कमण्डलुरुदकाधारः सच मृदादिविकारः मृत्पात्रंअलाबुपात्रंदारुपात्रंचेति श्रुतेः । भिक्षापात्रं त्रिदण्डिनामेव नैकदण्डिनाम् पाणिपात्रमुदरपात्रंवेतिश्रुतेः ॥ ५२ ॥

( ५ ) **नन्दनः** । क्लृप्तंकृत्तंगुप्तमितियावत् । केशश्मश्रुग्रहणादन्यतोरोमवपननिषेधः । पात्रंभाजनंतद्वान्पात्री । कुसुम्भवान्कुसुम्भकरः ॥ ५२ ।

( ६ ) **रामचन्द्रः** । कुसुम्भं कमण्डलुः तद्वान् ॥ ५२ ॥

**अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ॥ तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥५३॥**

( २ ) **सर्वज्ञनारायणः** । अतैजसानि सुवर्णाद्यघटितानि पात्राणि भिक्षायाजलस्यच निर्व्रणान्यछिद्राणि । अद्भिरम्मात्रेण चमसानामिव निर्लेपत्वे लेपसंभवेतु तदपनयोऽपि द्रव्यान्तरेण कार्यइतिग्राह्यम् ॥ ५३ ॥

( ३ ) **कुल्लूकः** । सौवर्णादिवर्जितानि निश्छिद्राणि भिक्षोर्भिक्षापात्राणि भवेयुः । तथायमः ॥ सुवर्णरूप्यपात्रेषुताम्रकांस्यायसेषुच । गृह्णन्*भिक्षांनधर्मोस्ति गृहीत्वा नरकंवजेत् ॥ तेषांच यतिपात्राणांजलेनैव तु शुद्धिः यज्ञेचमसानामिव ॥ ५३ ॥

( ४ ) **राघवानन्दः** । किंच अतैजसानीति । निर्व्रणानि निश्छिद्राणि । तैजसेतु ॥ सुवर्णरूप्यपात्रेषु ताम्रकांस्यायसेषु च । भिक्षांदत्वा न धर्मोस्ति गृहीत्वा नरकंव्रजेदिति यमवचनात् । तैजसपात्राःस्वीकृतिः । तत्र भक्षणे न दोषः । ग्रासंग्रासंभजेन्मुनिरितिस्मरणात् । अद्भिरिति । गोवालच्छेददाह्यानांस्नातकादिपात्रे ग्राह्यानान्निवृत्त्यर्थं चमसानांग्रहाणांच शुद्धिःप्रक्षालनेनचेत्युक्तेः ॥ ५३ ॥

( ५ ) **नन्दनः** । अतैजसान्यलोहमयानि । शौचंभोजनकृते ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । तस्य यतेः अतैजसानि अधातुकानि तेषां पात्राणां अद्भिःशौचं प्रक्षालनं स्मृतम् ॥ ५३ ॥

**अलाबुं दारुपात्रं च मृन्मयं वैदलं तथा ॥ एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥५४ ॥**

( २ ) **सर्वज्ञनारायणः** । वैदलं वंशादिविदलकृतं । यतिपात्राणि भिक्षार्थंजलार्थंच ॥ ५४ ॥

( ३ ) **कुल्लूकः** । तान्येवदर्शयति अलाबुमित्यादि । अलाबुदारुमृत्तिकावंशादिखण्डनिर्मितानि यतीनांभिक्षापात्राणि स्वायम्भुवोमनुरवदत् । वैदलंतरुत्वक्निर्मितमितिगोविन्दराजः ॥ ५४ ॥

( ४ ) **राघवानन्दः** । अतैजसानीत्युक्तंविवृणोति अलाबुमिति । वैदलं वंशपर्वात्मकं विशिष्टपत्रनिर्मितंवा ॥ ५४ ॥

( ५ ) **नन्दनः** । वैदलंवेणुदलनिर्मितम् ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । वैदलंवैणवम् ॥ ५४ ॥

---

* गृह्णन्=दत्त्वा ( अ )

एककालंचरेद्भैक्षं न प्रसज्जेत विस्तरे ॥ भैक्षे प्रसक्तोहि यतिर्विषयेष्वपि सज्जति ॥ ५५ ॥

( १ ) मेधातिथिः । भैक्षकार्यस्य भोजनस्यैककालता विधीयते न पुनर्भैक्षचरणस्यैव । द्विर्भोजनप्रतिषेधोत्राऽभिसंहितस्तत्र सकृच्चरित्वा द्वितीयस्मिन्काले शेषयित्वा न भुञ्जीत तदर्थोभोजनप्रतिषेधः । अतएवाह न प्रसज्जेत विस्तरइति । द्वितीयभोजनार्थितया हि विस्तरः प्राप्नोति । एकारामस्य न भृत्यार्थेन भैक्षविस्तरइति हेतुंब्रुवन्सकृद्भोजनेपि सौहित्यंनिषेधति ॥ ५५ ॥

( २ ) सर्वज्ञनारायणः । विस्तरे विस्तारे भिक्षाबहुत्वे न प्रसज्येतैककालंचरन्नपि । प्रसक्तिनिषेधाद्दैवादधिप्राप्तौ दोषाभावः । विषयेषु रूयादिषु आकाङ्क्षायाअवकाशलाभेन प्रसारात् ॥ ५५ ॥

( ३ ) कुल्लूकः । एकवारंप्राणधारणार्थंभैक्षंचरेत् । तत्रापि प्रचुरभिक्षाप्रसङ्गं न कुर्यात् यतोबहुतरभिक्षाभक्षणप्रसक्तोयतिः प्रधानधातुवृद्ध्या रूयादिविषयेष्वपि प्रसज्जते ॥ ५५ ॥

( ४ ) राघवानन्दः । भिक्षाकालस्य नियममाह एकेति । बहुभिक्षणे बहुवारभिक्षणेच दोषमाह भैक्षइति । विषयेषु स्त्रीभोगाद्यनर्थेषु ॥ ५५ ॥

( ५ ) नन्दनः । विस्तरे भिक्षाबहुत्वे ॥ ५५ ॥

( ६ ) रामचन्द्रः । विस्तरे भिक्षाविस्तरे न प्रसज्जेत न संसक्तोभवेत् ॥ ५५ ॥

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ॥ वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत् ॥ ५६ ॥

( १ ) मेधातिथिः । भुक्तवन्तोजनायस्मिन्काले सभुक्तवज्जनः । एवंविधूमादयोपि । शरावाणांसंपातउच्छिष्टानांभूमौत्यागः सयदाऽतीतोभवति । सर्वेणैतेन प्रथमे पाककालेभिक्षादानावसरोनिवृत्तोयदा भवति तदा भिक्षितव्यमित्याह विधूमइत्यादिना द्वितीयपाकप्रवृत्तिमाह । सन्नामुसलाऽवघट्टनान्निवृत्ताःस्थापिताः ॥ ५६ ॥

( २ ) सर्वज्ञनारायणः । विधूमइति न पाककालइत्यर्थः । सन्नमुसलइति न पाकार्थमन्ननिष्पादन काले । व्यङ्गारे न पाकनिष्पत्त्यनन्तरकालएव । भुक्तवज्जने न भुञ्जानेषु । वृत्ते शरावसंपाते भुक्तवत्स्वपि जनेषु न भिक्षुकेभ्योभिक्षायांदीयमानायांशरावसङ्घट्टशब्दे वर्तमानइत्यर्थः । एतेन तत्तदुत्तरकालप्रतीक्षणासंभवे तत्तदव्यवहितपूर्वकालभैक्ष्यचरणनियमउक्तः । मुख्यभिक्षाकालप्रतीक्षायांचापर्युषितालाभे पर्युषितमप्याददीतेतिगम्यते ॥ ५६ ॥

( ३ ) कुल्लूकः । विगतपाकधूमेनिवृत्तावहननमुसलेनिर्वाणपाकाङ्गारे गृहस्थपर्यन्तभुक्तवज्जनउत्सृष्टशरावेषु त्यक्तेषु सर्वदा यतिर्भिक्षांचरेत् । एतच्च दिनशेषमुहूर्तत्रयरूपसायान्होपलक्षणम् । तथाह याज्ञवल्क्यः । अप्रमत्तश्चरेद्भैक्ष्यं सायान्हेनाभिसंधितः ॥ ५६ ॥

( ४ ) राघवानन्दः । एककालेपि प्रातरादिनिवर्तयन्नाह विधूमेत्यादि । गतपाकधूमे सन्नमुसले निवृत्तावघातमुसलेव्यङ्गारे पाकाङ्गारनिवृत्तौभुक्तवज्जने गृहस्थस्यापि भोजननिवृत्तौ वृत्तेशरावसंपाते परिवेषणनिवृत्तौ । एतेषांप्रत्येकंसमुदाययोरननुगमात् षष्ठकालैकभोजनेतात्पर्यम् तदाह याज्ञवल्क्यः ॥ अप्रमत्तश्चरेद्भैक्ष्यंसायान्हेनाभिलक्षितइति । इदंसर्वंयाचितपरंतच्चमाधुकरंअसंक्लृप्तंतात्कालिकोपपन्नमिति त्रिविधं । असंक्लृप्तंकरपात्रमिति प्रसिद्धं । अयाचितंद्विविधंप्राक्प्रणीतमयाचितमिति । प्राक्प्रणीतंनिमन्त्रितं अत्र तु दातुरनुरोधात्कालानियमोऽयाचितेपितथा ॥ ५६ ॥

( ५ ) नन्दनः । भक्षणे कालनियममाह विधूमइति । विधूमत्वादिविशेषणैरपराह्णकालोलक्ष्यते ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । शरावसंपातेवृत्ते निवृत्ते प्रक्षालितेत्यर्थः । एतादृशे कालेयतिर्भिक्षांचरेत् ॥ ५६ ॥

**अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ॥ प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः॥५७॥**

( १ ) **मेधातिथिः** । ईदृशे काले कुतश्चिन्न लभ्यते तदा विषादश्चित्तपरिखेदोन ग्रहीतव्यः । लाभालाभयोर्हर्षविषादौ न ग्राह्यौ प्राणयात्रिकी प्राणधारणार्था मात्रा परिमाणंभैक्षंयस्य । अनेनैतद्दर्शयति भैक्षासंभवे प्राणयात्रा मूलफलमूलोदकादिभिरप्यनन्यपरिगृहीतैः कर्तव्या मात्रा पात्रदण्डादि तत्र सङ्गः प्रयत्नेनोपार्जनम् । ततोविनिर्गतोनिवृत्तः अकामइतियावत् ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । प्राणयात्रिकमात्रः प्राणस्थित्यर्थमात्रप्रवृत्तः । मात्रा परिच्छदःकम्बलादिः तत्र सङ्गाद्विनिर्गतोबहिर्भूतः ॥ ५७ ॥

( ३ ) **कुल्लूकः** । भिक्षादेरलाभे न विषीदेत् लाभे च हर्षं न कुर्यात् । प्राणस्थितिमात्रोपचितान्नभोजनपरःस्यात् । दण्डकमण्डलुमात्रास्वपीदमशोभनंत्यजामीदंरुचिरंगृह्णामीत्यादिप्रसङ्गंन कुर्यात् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । तस्मिन्समयेऽपि लाभालाभयोरौदासीन्यमाह अलाभइति । लाभः प्राप्तिरपि । न हर्षयेन्न मोदयेत् । एनंयति । प्राणयात्रिकमात्रंस्यात् प्राणस्य यात्राव्यवहारसामर्थ्यंयावन्मात्रेणतत्प्राणयात्रिकंतावन्मात्रंस्वीकृतंयेन सः । मात्रासंगाद्विवर्जितः मात्रातु दण्डकमण्डल्वादि तेष्वपि इदमशोभनं त्यजामि इदंशोभनंगृण्हामीत्यभिनिवेशरहितः द्वन्द्वातीतोवा ॥ ५७ ॥

( ५ ) **नन्दनः** । उदरपूरणविधिः । मात्रा तत्र सङ्गोमात्रासङ्गः ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । अलाभे भिक्षालाभे न विषादीस्यात् । प्राणयात्रिकएवस्यात् । यावद्दत्तेन प्राणानांयात्रानिर्वाहःस्यात्तावदेव ग्राह्यंनाधिकमित्यर्थः । मात्रासंगात् मात्रा परिच्छदः दण्डकमण्डलुकम्बलादिः । शब्दस्पर्शरूपरसगन्धावा तस्मात् विनिर्गतःविरहितः भवेदित्यर्थः ॥ ५७ ॥

**अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ॥ अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ॥ ५८ ॥**

( १ ) **मेधातिथिः** । अभ्यर्च्यंयंददाति सोऽभिपूजितलाभः तंजुगुप्सेतेति निन्देद्गर्हेत अतश्चनिन्दितंनसमाचरेत् सर्वशः सर्वकालंएकमप्यहस्तादृशंभैक्षं न गृह्णीयात् । उत्तरेऽर्थवादः । नहिमुक्तस्यबन्धसंभवः ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । अभिपूजिताः ससंमानालाभाः । जुगुप्सेतेति त्यजेदित्यर्थः । बध्यते अभिपूजितदातरिप्रत्युपकाराभिसन्धिना ॥ ५८ ॥

( ३ ) **कुल्लूकः** । पूजापूर्वकभिक्षालाभंसर्वकालंनिन्देन्नस्वीकुर्यादित्यर्थः यस्मात्पूजापूर्वकलाभस्वीकारे दातृगोचरस्नेहममत्वादिभिरासन्नमुक्तिरपि यतिर्जन्मबन्धाल्लभते ॥ ५८ ॥

( ४ ) **राघवानन्दः** । पूजापूर्वकभैक्ष्यप्रसक्तिरतीवानर्थायेत्याह अभीति । अजुगुप्सिनेत्वाह । मुक्तोपि जीवन्मुक्तोपि बध्यते । गर्वासक्तिभ्यामिति शेषः ॥ ५८ ॥

( ५ ) **नन्दनः** । मुक्तोऽसक्तः ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । अभि सर्वतः पूजितान् लाभान् जुगुप्सेत ॥ ५८ ॥

**अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ॥ क्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ॥ ५९ ॥**

( १ ) **मेधातिथिः** । रहोनिर्जनोदेशस्तत्र स्थानासने कर्तव्ये एकारामतायाः फलमिन्द्रियजयोऽनेन प्रदर्श्यते । अथवा निष्कुतूहलतानेनोच्यते । यत्र बहवोजनसंघाताःस्त्रीपुंसात्मकाविचित्राभरणादृश्यते न तत्र क्षणमपि तिष्ठेत् ॥५९॥

( २ ) **सर्वज्ञनारायणः** । रहएकान्ते यत्स्थानं तत्रासनेन ॥ ५९ ॥

( ३ ) **कुल्लूकः** । आहारलाघवेन निर्जनदेशस्थानादिना च रूपादिविषयैराकृष्यमाणानीन्द्रियाणि निवर्तयेत् ॥५९॥

( ४ ) **राघवानन्दः** । तत्रैव दृष्टार्थमाह अल्पान्नाभ्यवहारेणेति । तथाच गीता । विविक्तसेवी लघ्वाशी यतवाक्कायमानसइत्यादि ॥ विषयैर्ह्रियमाणानीइन्द्रियाण्याकृष्यमाणानि विषयेभ्योनिवर्तयेदित्यन्वयः ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । अल्पान्नानामभ्यवहारेण च रहःस्थानासनेन विषयैः शद्वादिभिः क्रियमाणानीन्द्रियाणि निवर्तयेत् ॥ ५९ ॥

**इन्द्रियाणांनिरोधेन रागद्वेषक्षयेण च ॥ अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ६० ॥**

( १ ) **मेधातिथिः** । निरोधः स्वविषयप्रवृत्तिप्रतिबन्धः । अमृतत्वाय कल्पते अमृतत्वाय समर्थोयोग्योभवतीत्यर्थः । ६० ॥

( २ ) **सर्वज्ञनारायणः** । इन्द्रियाणांनिरोधेन यःकृतोरागद्वेषक्षयस्तेन ॥ ६० ॥

( ३ ) **कुल्लूकः** । यस्मात् इन्द्रियाणामित्यादि । इन्द्रियाणांनिग्रहणं रागद्वेषाभावेन च प्राणिहिंसाविरतेन च मोक्षयोग्योभवति ॥ ६० ॥

( ४ ) **राघवानन्दः** । तत्कारणमन्येन समुच्चित्य तत्र फलमाह इन्द्रियेति । एतैस्त्रिभिरमृतत्वाय मोक्षाय कल्पते समर्थःस्यात् ॥ ६० ॥

( ६ ) **रामचन्द्रः** । इन्द्रियाणांनिरोधोनिग्रहः ॥ ६० ॥

**अवेक्षेत गतीर्नॄणां कर्मदोषसमुद्भवाः ॥ निरये चैव पतनं यातनाश्च यमक्षये ॥ ६१ ॥**

( १ ) **मेधातिथिः** । आत्मज्ञानमेतदपीतिदर्शयति । परमार्थभावनाप्रसंख्यानाप्रसंख्यानमिदमुच्यते दुःखात्मकसंसारस्वरूपनिरूपणम् । कथन्नामायं प्रव्रज्याभैक्षचर्यादिशरीरक्लेशांस्तु सुहृत्स्वजनेभ्योपुत्रदारधर्मविभवत्यागदुःखहेतुंपरीगमय्य विरोधतःस्वच्छन्दतश्चाविगुणमनुष्ठास्यति । मनुष्याणांगतिर्दुःखबहुला कर्मदोषेभ्यः प्रतिषिद्धसेवनेभ्योहिंसास्तेयपारदार्यपारुष्यापैशुनानिष्टसंकल्पादयः समुद्भवन्ति इहैव जीवलोके दारिद्र्याधिपरिभवाद्वा विकल्पादयोदातव्याःफलोपभोगाः । अमुत्र निरये नरके पतनं मूत्रपुरीषाद्यमेध्यस्थाने कृमिकीटादिजन्म यमगृहे च यातनाः कुम्भीपाकादयः दमपरमवेक्ष्यम् ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । गतीर्व्याचष्टे निरयइति । निरये नरके यातनास्तीव्रदुःखानि । यमक्षये यमगृहे ॥ ६१ ॥

( ३ ) **कुल्लूकः** । इदानींइन्द्रियनियमोपायविषयवैराग्याय संसारतत्त्वचिन्तनमुपदिशति अवेक्षेतेत्यादि । विहिताकरणनिन्दिताचरणरूपकर्मदोषजन्यांमनुष्याणांपश्वादिदेहप्राप्तिंनरकेषु पतनंयमलोके नरकस्थस्य निशितनिस्त्रिंशच्छेदनादिभवास्तीव्रवेदनाः श्रुतिपुराणादिषूक्ताश्चिन्तयेत् ॥ ६१ ॥

( ४ ) **राघवानन्दः** । वैराग्यंविना नमोक्षइति वैराग्योपायमाह अवेति पञ्चभिः । अवेक्षेत शास्त्रादृष्टोपपत्तिभिः । कर्मदोषेति कर्म पुण्यापुण्यं दोषोरागादिः तदुद्भवागतीर्जन्मानि । निरये असिपत्रादिनरके यातना असह्यदुःखं यमक्षये यमपुर्याम् ॥ ६१ ॥

( ५ ) **नन्दनः** यातनानरकपतनात्पूर्वमेवानुभवितव्यःपीडाविशेषः ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । वक्ष्यमाणगतागतीरवेक्षेत । यमक्षये यमलोके ॥ ६१ ॥

**विप्रयोगं प्रियैश्चैव संयोगं च तथाऽप्रियैः ॥ जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥ ६२॥**

( १ ) **मेधातिथिः** । अवेक्षेतेति क्रियापदसंभवात् द्वितीया । प्रियाः पुत्रादयोबान्धवास्तैर्वियोगोप्राप्तकाले मृतैः । अप्रियैःशत्रुसंग्रहगमनादिभिःसंयोगः । जरया चतुर्थे वयस्य वस्था विशेषोजरा तयाभिभवनं शरीराकारनाशः । अशक्तिः इन्द्रियवैकल्यकासश्वासादि व्याधिबाहुल्यं सर्वेषामकाम्यता उपहास्यतेत्यादिज्वराभिभवः । व्याधिभिः प्रागपि जरसा उपपीडनं केषांचित् । अथ महती तृष्णा एवंस्थितस्यापि भवति एवंतर्हि ह्ययमप्रतीकारोनिच्छतोप्युत्पद्यते ॥ ६२ ॥

( ३ ) **कुल्लूकः** । इष्टपुत्रादिवियोगमनिष्टहिंसकादियोगंजराभिभवनंव्याध्यादिभिश्चपीडनंकर्मदोषसमुद्भवमनुचिन्तयेत् ॥ ६२ ॥

( ४ ) **राघवानन्दः** । किंचात्र विप्रयोगं वियोगं प्रियैः पुत्रादिभिरिहामुत्राऽप्रियैः । शात्रवादिभिः ॥ ६२ ॥

( ५ ) **नन्दनः** । अवेक्षेतेत्यनुवर्तते ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । संसारस्वरूपमाह विप्रयोगमिति चतुर्भिः । जरयाचाभिभवनं जरया वलीपलिताद्यभिभवंरूपविपर्ययं अवेक्षेत पश्येत् । व्याधिभिः उपपीडनं अवेक्षेत । प्रियैःपुत्रादिभिः अप्रियैः चौरव्याघ्रादिभिः ॥ ६२ ॥

**देहादुत्क्रमणं चास्मात्पुनर्गर्भे च संभवम् ॥ योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥ ६३ ॥**

( १ ) **मेधातिथिः** । प्राणानामुत्क्रमणमन्तर्विच्छेदः दुःसहा च प्राणपीडा । गर्भे संभवः । तत्र नानाविधंदुःखं इन्द्रियाणामनुद्रेदक्रमादुभयतः कुक्षिस्थस्य मातृसंबंधिनाऽऽहारेण अतिशीतोष्णेन हीनातिमात्रेण चोक्ता पीडा । योनिकोटिसहस्रेषु सृतीः सरणानि प्राप्तास्तिर्यक्प्रेतकृमिकीटपतङ्गश्वाद्याः क्षेत्रज्ञस्य । ननुच विभुरन्तरात्मेष्यते नित्यश्च तस्य सकल जगद्व्यापिनः कुतउत्क्रमणं क्व च योनिसरणं संभवोपि गर्भे नित्यस्यानुपपन्नः उच्यते अस्ति केषांचिद्दर्शनंयथायमन्तः शरीरमंगुष्ठमात्रः पुरुषस्तिष्ठति तन्मात्रमनोबुध्यहंकारात्मकः सयावत्संसारमेति धर्मस्तस्य चोपचितस्य चैतन्यशक्तिगर्भोभवति । अतस्तदीयधर्माअन्तरात्मन उपचर्यन्ते । अथवा तस्य भावार्थाये प्राणादयस्तेषूत्क्रामत्सुसमुत्क्रामतीत्युच्यते । एवंसंभवोपि द्रष्टव्यः पुनश्चैताद्वादशेवक्ष्यामः किं बहुना ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः** । उत्क्रमणमात्मनः । योनिर्जातिः । सृतीः संसरणानि ॥ ६३ ॥

( ३ ) **कुल्लूकः** । अस्माद्देहादस्यजीवात्मन उत्क्रमणंतथा च मर्मभिद्भिर्महारोगपतितस्य श्लेष्मादिदोषनिरुद्धकण्ठस्य महतींवेदनांगर्भेचोत्पत्तिदुःखबहुलांश्वशृगालादिनिकृष्टजातियोनिकोटिसहस्रगमनानि स्वकर्मबन्धान्यनुचिन्तयेत् ॥ ६३ ॥

( ४ ) **राघवानन्दः** । अस्मात् स्थूलदेहात् । सृतीर्जन्मानिअन्तरात्मनः लिङ्गदेहस्यअवेक्षेतेत्यनुषङ्गः ॥ ६३ ॥

( ५ ) **नन्दनः** । स्मृतिःसंसृतिः । अन्तरात्मनोजीवस्य ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । अस्माद्देहात् प्राणभाण्डात् । क्रमणं निष्क्रमणं अवेक्षेत । अभ्यन्तरात्मनः जीवस्य सृतीर्गतीःजन्मानि योनिकोटिसहस्रेषु अवेक्षेत तद्यथा श्वशूकरखरोरगाद्यनेकजातिषु जन्मानि पश्येदित्यर्थः ॥ ६३ ॥

**अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम् ॥ धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ॥ ६४ ॥**

( १ ) **मेधातिथिः** । अधर्मात्प्रभव उत्पत्तिः । दुःखेन योयोगः पीडानुभवः । धर्मउक्तलक्षणोयःपदार्थस्ततःसुखेनाक्षयेन संयोगः । एतदप्यन्त्यंपारिव्राज्यंच मुख्योधर्मइत्यभिप्रायः ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मार्थप्रभवं धर्मरूपादर्थादर्थ्यमानादनुष्ठीयमानात्प्रभूतं तत्र प्रवृत्तंख्यातं सुखसंयोगंस्वर्गादौ तथानिवृत्ताधर्मादक्षयंसुखसंयोगमितिविवेकः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । शरीरवतांजीवात्मनामधर्महेतुकंदुःखसम्बन्धंधर्महेतुकोऽर्थोब्रह्मसाक्षात्कारस्तत्प्रभवंमोक्षलक्षणमक्षयंब्रह्मसुखसंयोगंचिन्तयेत् ॥ ६४ ॥

( ४ ) **राघवानन्दः** । धर्मार्थप्रभवमिति धर्मप्रभवोयोर्थः ब्रह्मसाक्षात्कारस्तत्प्रभवंमोक्षलक्षणं अन्यसुखस्य मुख्यत्वाक्षयत्वानुपपत्तेः ॥ ६४ ॥

( ५ ) **नन्दनः** । धर्मानुष्ठानज्ञानमेवप्रधानं न लिङ्गमित्याह अधर्मेति ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । अधर्मप्रभवं अधर्मस्य उत्पन्नं अवेक्षेत् । धर्मार्थयोः प्रभवंअवेक्षेत ॥ ६४ ॥

**सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ॥ देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥ ६५ ॥**

( १ ) **मेधातिथिः** । योगश्चित्तवृत्तिस्थैर्यं यथा पतञ्जलिना दर्शितं तेनात्मनः क्षेत्रज्ञस्य सूक्ष्मतामन्ववेक्षेत शरीरादौ प्राणादौवानात्मबुद्धिःकर्तव्या । किंतर्हि योगजेन ज्ञानातिशयेन सर्वेभ्यएतेभ्योऽन्तर्बहिस्तत्वेभ्योव्यतिरिक्तोबोद्धव्यइत्येवंपरमेतत् । नतु स्थूलादिविकल्पाआत्मनस्सन्ति । यथा चोत्तमेषु देवादिशरीरेष्वस्योपपत्तिः । शरीराधिष्ठातृतया फलोपभोगः सर्वगतस्यापि सतः एवमधमेषु तिर्यक्प्रेतपिशाचादिषु । एकत्वपक्षे परमात्मविभूतयएव क्षेत्रज्ञाइति । अतःपरमात्मनोगतीरन्ववेक्षेतेत्युक्तम् ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । योगेन ध्यानेन । सूक्ष्मतामतियत्नाधिगम्यतामवेक्षेत सदा चिन्तयेत् तेनहीनाभ्यासंमध्येविच्छिनत्ति । उपपत्तिमुत्पत्तिम् ॥ ६५ ॥

( ३ ) **कुल्लूकः** । योगेन विषयान्तरचित्तवृत्तिनिरोधेन परमात्मनः स्थूलशरीराद्यपेक्षया सर्वान्तर्यामित्वेन सूक्ष्मतांनिरवयवतांतत्त्यागादुत्कृष्टापकृष्टेषु देवपश्वादिशरीरेषु जीवानांशुभाशुभफलभोगार्थमुत्पत्तिमधिष्ठानमनुचिन्तयेत् ॥ ६५ ॥

( ४ ) **राघवानन्दः** । किंच सूक्ष्मतामिति । योगेन चित्तवृत्तिनिरोधेन । परमात्मनःसूक्ष्मतांनिरवयवतयासङ्गतां । उत्पत्तिं घटाकाशवदध्यासवशात्तत्प्रतीतिम् । उत्तमेषु देवादिषु अधमेषु पश्वादिषु उत्तमाधमेषु नृष्वपि ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । संसारस्वरूपापेक्षानन्तरंकिंकार्यमित्यतआह सूक्ष्मतामिति । योगेन योगाभ्यासेन परमात्मनः सूक्ष्मतांदुर्ग्रहतामवेक्षेत ॥ ६५ ॥

**दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ॥ समः सर्वेषु भूतेषु नलिङ्गं धर्मकारणम् ॥ ६६ ॥**

---

( ६६ ) दूषितोपि=भूषितोपि ( क, ग, घ, च )
=गृहस्थोपि ( ख )

( १ ) मेधातिथिः । भूषितःकुसुमकटकाद्याभरणैः धर्मःपरिव्राजकस्ययद्विहितमात्मोपासनादि तद्यत्नतश्चरेत् । यस्मिन्नाश्रमेयोविहितस्तंचरेत् । नत्रिदण्डादिलिङ्गधारणमात्राद्यतिमात्मानंमन्येत अपितु समःसर्वेषु भूतेषु स्यात् । रागद्वेषलोभान्यत्नतः परिहरेदितितात्पर्यम् । न लिङ्गत्यागे नभूषणाभ्यनुज्ञानम् ॥ ६६ ॥

( २ ) सर्वज्ञनारायणः । भूषितोपि स्रगादिना गृहस्थोपीत्यर्थः । धर्मंयोगधर्मं यत्रतत्रेति वानप्रस्थब्रह्मचर्याश्रमस्थोपि । समः सर्वत्र मैत्रीप्रवृत्तः । लिङ्गं परिव्राजकलिङ्गंदण्डकरकादि । धर्मस्य योगधर्मस्य कारणम् ॥ ६६ ॥

( ३ ) कुल्लूकः । यस्मिन्कस्मिंश्चिदाश्रमे स्थितस्तदाश्रमविरुद्धाचारदूषितोऽप्याश्रमलिङ्गरहितोऽपि सर्वभूतेषु ब्रह्मबुद्ध्या समदृष्टिः सन्धर्ममनुतिष्ठेत् । नहि दण्डादिलिङ्गधारणमात्रंधर्मकारणं किंतु विहितानुष्ठानम् । एतच्च धर्मप्राधान्यबोधनायोक्तं नतुलिङ्गपरित्यागार्थम् ॥ ६६ ॥

( ४ ) राघवानन्दः । किंच दूषितोपीति । आश्रमलिङ्गराहित्येन दूषितोभ्रष्टः अभिशस्तोवा स्त्र्यादिना । समस्तुल्योदूषकेष्वपि धर्मंचाश्रमधर्मंचरेत् यत्र कुटीचकबहूदकहंसपरमहंसेषु ब्रह्मचर्याद्याश्रमेषु वा । स्वस्वधर्मंनत्यजेदिति । यद्वा स्त्र्यादिसंगदोषयुक्तोपि धर्ममधिष्ठानतया सर्वधारणाद्ब्रह्म तच्चरेत्ध्यायेत् । अतएवाह । समइति ब्रह्मैव सर्वभूतेषु धारकतया वर्तमानत्वात् । नाहमस्म्यधिकारीति बुध्यातत्त्यक्ताश्रमान्तरप्रायश्चित्तान्तरंवा नाश्रयेत् । तथोक्तं ॥ यदि दैवात्प्रमादेन योगी कुर्याद्विगर्हितं । योगेनैव दहेदंहोनान्यत्किंचित्समाचरेत् ॥ उपपातकेषु सर्वेषु पातकेषु महत्सु च । प्रविश्य रजनीपादंब्रह्मध्यानाद्यपोहतीति ॥ कुसुमकटकमुकुटाद्यैर्भूषितइति मेधातिथिः तथासति । समइत्यादि न चारु ॥ ६६ ॥

( ६ ) रामचन्द्रः । सर्वेषु भूतेषु समः सर्वत्र मैत्रीपरः लिङ्गं आश्रमलिङ्गं स्वरूपं धर्मकारणंन भवेत् ॥ ६६ ॥

**फलंकतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ॥ न नामग्रहणादेव तस्य वारि प्रसीदति ॥ ६७ ॥**

( १ ) मेधातिथिः । कलुषितमुदकंकतकवृक्षफले निक्षिप्ते प्रसीदति स्वच्छं शुद्धरूपतामापद्यते । किंतु न तस्य फलस्य नामग्रहणेन तन्निर्मलीभवति अपित्वनुष्ठानमपेक्षते एवंलिङ्गधारणंफलनामस्थानीयं न तावन्मात्रात्सिद्धिर्यावदेकारामतोपासनसर्वसमतादिधर्मोनानुष्ठितः । पूर्वशेषार्थवादः ॥ ६७ ॥

( २ ) सर्वज्ञनारायणः । नन्वेवं संन्यासोविफलस्तंविनाप्यपेक्षितसिद्धेरतआह फलमिति । यथा कतकमानयेति कतकनामग्रहणे प्रयोजकेन कृते यदि प्रयोज्येन तदानीय पिष्ट्वा दीयते ततोजलंप्रसीदति तथात्र लिङ्गधारणं नामग्रहणस्थानीयं प्रधानसाधनंतु कनकावयवप्रक्षेपस्थानीयं कर्मफलं संन्यासएवेति प्रधानत्यागे न लिङ्गधारणमात्रप्रयोजकं । तथा यद्यपि जलस्य कलुषितस्य विक्षिप्तस्य चित्तस्य व्याक्षेपप्रसादरूपहेतुतया संन्यासस्य तदङ्गतयाच लिङ्गधारणस्यास्त्येवोपयोगोयथा कतकेऽसन्निहिते तदाहरणार्थं नामग्रहणस्य तत्प्रक्षेपस्य च जलप्रसादने नतु सर्वत्र गार्हस्थ्ये वर्तमानस्यापि शुद्धाशयतया चित्ते व्याक्षेपशून्ये जलइव स्वतःप्रसन्ने कतकप्रक्षेपस्य संन्यासतल्लिङ्गधारणयोरनुप्रयोगादित्याशयेनाम्बुप्रसादादिपदोपसंदानेनोदाहरणंकृतमितिमन्तव्यम् ॥ ६७ ॥

( ३ ) कुल्लूकः । अत्रदृष्टान्तमाह फलमिति । यद्यपि कतकवृक्षस्य फलंकलुषजलस्वच्छताजनकंतथापि तन्नामोच्चारणवशान्न प्रसीदति किंतु फलप्रक्षेपेण एवंनलिङ्गधारणमात्रंधर्मकारणंकिंतुविहितानुष्ठानम् ॥ ६७ ॥

( ४ ) राघवानन्दः । धर्मचरणंविनाऽऽश्रमाभिमानोव्यर्थइत्याह फलमिति । कतकफलचूर्णपङ्किल पायसि क्षिप्तं

कर्दमन्नाशयति। स्वयंच नश्यति न तु तत्फलनामेत्यभिप्रायः लिङ्गधारणाय प्रयोजकमन्यार्जिन धर्मानुष्ठानमेव परलोकहेतु रिति ॥ ६७ ॥

( ५ ) **नन्दनः**। अत्रदृष्टान्तमाह फलमिति। यथा कतकतरुफलंमलनिर्हरणेन जलंप्रसादयति एवंधर्मोऽनादिकर्ममलनिर्हरणेनात्मानंप्रसादयति। यथा कतकफलनामग्रहणादेव न वारिप्रसीदति तथा धर्मलिङ्गधारणादेवात्मा न प्रसीदतीत्यभिप्रायः ॥ ६७ ॥

( ६ ) **रामचन्द्रः**। तत्र दृष्टान्तमाह फलमिति। तस्य फलस्य नामग्रहणादेव वारि न प्रसीदतिन निर्मलंभवति तथाश्रमधारणाद्धर्मन भवतीत्यर्थः ॥ ६७ ॥

**संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ॥ शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥ ६८॥**

( १ ) **मेधातिथिः**। यदुक्तंदृष्टिपूतंपादंन्यसेदिति तस्यप्रयोजनप्रदर्शनश्लोकोयम्। शरीरस्यात्ययेपि शरीरपीडायामपि सत्यां रात्रावहनि वा तृणास्तरणे शयनार्थमास्तीर्णेपि शरीरनिषङ्गोऽनवेक्ष्यादृष्ट्वा कर्तव्योऽस्मिन्व्यतिक्रमे प्रायश्चित्तम्। अथवा अल्पाःसूक्ष्माः केचन क्षुद्रजन्तवःसर्वेशरीरावयवसंवलनमात्रेणैव नश्यन्ति तदर्थमिदम् ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः**। संरक्षणार्थं चरणाभिघातेन हिंसायानिवृत्त्यर्थंशरीरस्यात्ययेप्यस्येति अस्य स्वशरीरस्यात्यये पीडायामपीत्यर्थः ॥ ६८ ॥

( ३ ) **कुल्लूकः**। शरीरस्यापि पीडायांसूक्ष्मपिपीलिकादिप्राणरक्षार्थंरात्रौ दिवसे वा सदा भूमिंनिरीक्ष्य पर्यटेत्। पूर्वंकेशादिपरिहारार्थंदृष्टिपूतंन्यसेत्पादमित्युक्तम् इदंतुहिंसापरिहारार्थमित्यपुनरुक्तिः ॥ ६८ ॥

( ४ ) **राघवानन्दः**। दृष्टिपूतमित्यस्यानुवादः समिति। स्वशरीरस्यात्यये पीडाप्रसक्तौतस्यांपीडायामपिभूतपीडानकार्यैतिभावः॥ ६८ ॥

( ५ ) **नन्दनः**। अत्ययेऽत्यन्तदौर्बल्ये सत्यपि ॥ ६८ ॥

( ६ ) **रामचन्द्रः**। शरीरस्यात्यये शरीरपीडायामपि जन्तूनांसंरक्षणार्थं समीक्ष्य वसुधांचरेत्। क्वचित्सद्विजइति पाठः ॥ ६८ ॥

**अह्ना रात्र्या च याञ्जन्तून्हिनस्त्यज्ञानतोयतिः ॥ तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥ ६९ ॥**

( १ ) **मेधातिथिः**। जन्तून् क्षुद्रजन्तूनितिद्रव्यं तेषांहिंसायांयत्पापंतद्विशुद्ध्यर्थमितिसंबन्धः ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः**। अह्नारात्र्याचेतिविग्रहएकैककालीनहिंसादोषोपशमार्थंत्रिस्त्रिःप्राणायामकरणार्थं षट्प्राणायामान्। प्रणवव्याहृतिसहितगायत्र्या त्रिरायतप्राणेन पाठदिकःप्राणायामः इतिक्रमेण। यथा वसिष्ठः ॥ सव्याहृतिंस प्रणवांगायत्रींशिरसा सह। त्रिःपठेदायतप्राणाःप्राणायामःसउच्यतइति ॥ ६९ ॥

( ३ ) **कुल्लूकः**। अत्रप्रायश्चित्तमाह अह्नेति। यतिर्यानज्ञानतोदिवसे रात्रौ वा प्राणिनोहन्ति तद्धननजनितपापनाशार्थंस्नात्वा षट्प्राणायामान्कुर्यात्। प्राणायामश्च सव्याहृतिंसप्रणवांगायत्रींशिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः सउच्यते इतिवसिष्ठोक्त्याऽत्र द्रष्टव्यः ॥ ६९ ॥

( ४ ) **राघवानन्दः** । योदत्वेति भूताभयदस्याज्ञानकृते किंस्यात्तत्राह अह्नेति ॥ ६९ ॥

( ५ ) **नन्दनः** । तेषांजन्तूनाम् । शुद्ध्यर्थंहिंसादोषप्रायश्चित्तार्थम् ॥ ६९ ॥

**प्राणायामाब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ॥ व्याहृतिप्रणवैर्युक्ताविज्ञेयं परमं तपः ॥७०॥**

( १ ) **मेधातिथिः** ।ब्राह्मणशब्देनजातिर्मता तामाह। न परिव्राजकस्यैवविधिरयम्। त्रयोपि त्रिभ्यऊर्ध्वंफलाधिक्यं- त्रयस्त्ववश्यंकर्तव्याः । व्याहृतयः ओंकारपूर्विकाइत्यत्रयाउक्ताः प्रणवओंकारस्तैर्युक्ताः । प्राणायामकालएतद्ध्यातव्यम्। एते त्रिविधाः कुम्भकरेचकपूरकाख्याः । तत्रच मुख्यस्य नासिक्यस्यच वायोर्बहिर्निष्क्रमणनिरोधेन कुम्भकपूरकाख्याः अनुच्छ्वसतोबहिर्नैरन्तर्येण वायोरुत्सर्गेण रेचकोभवति । अवधिर्द्वितीयाध्याये निर्दिशितः । यदिवा तपसा पुनर्यावता कालेन न पीडोपजायते ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । षट्प्राणायामाशक्तवाह प्राणायामाइति । व्याहृतिप्रणवैरित्येकदेशोक्त्यावसिष्ठोक्तंप्राणायामोपलक्षणम् ॥ ७० ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्येतिनिर्देशाद्ब्राह्मणजातेरयमुपदेशोन यतेरेव । त्रयोऽपि प्राणायामाः सप्तभिर्व्याहृतिभिर्दशभिःप्रणवैर्युक्ताविधिवदित्यनेन सावित्र्या शिरसा च युक्ताः पूरककुम्भकरेचकविधिना कृताब्राह्मणस्य श्रेष्ठंतपोज्ञातव्यम्। पूरकादिस्वरूपंस्मृत्यन्तरेषु ज्ञेयम्। तथा योगियाज्ञवल्क्यः ॥ नासकोत्कृष्टउच्छ्वासोध्मातः पूरक उच्यते । कुम्भकोनिश्चलश्वासोमुच्यमानस्तु रेचकः ॥ त्रयोऽपीत्यपिशब्देन त्रयोऽवश्यंकर्तव्याः। अधिककरणेत्वधिकपापक्षयः ॥ ७० ॥

( ४ ) **राघवानन्दः** । प्राणायामलक्षणाकांक्षायांसार्थवादंतल्लक्षणमाह प्राणेति । व्याहृतीति गायत्र्युपलक्षणं तथाचवसिष्ठः । सव्याहृतिंसप्रणवांगायत्रींशिरसासह । त्रिःपठेदायतप्राणःप्राणायामःसउच्यतइति ॥ ब्राह्मणस्येति प्रकरणात्संन्यासिनः तत्रापि त्रिदण्डिनोव्याहृत्यादित्रिभिः एकदण्डिनस्तु प्रणवेनैव तदुक्तं योगियाज्ञवल्क्येन ॥ ओंकारेण तु कर्तव्यः प्राणायामोयथोदितइति ॥ ७० ॥

( ५ ) **नन्दनः** । अथप्राणायामप्रसङ्गादाह प्राणायामइति । ब्राह्मणस्य द्विजस्य ॥ सव्याहृतिंसप्रणवांगायत्रींशिरसा सह । त्रिः पठेदायतप्राणःप्राणायामःसउच्यते इत्युक्तंविधिमनुवदति विधिवदिति ॥ ७० ॥

**दह्यन्तेध्मायमानानां धातूनां हि यथा मलाः॥ तथेन्द्रियाणांदह्यन्ते दोषाः प्राणस्य निग्रहात् ॥७१॥**

( १ ) **मेधातिथिः** । धातवस्सुवर्णादयः तेषांध्मायमानानांसुवर्णमेवावशिष्यते तथेन्द्रियाणांविषयदर्शने यौ प्रीतिपरितापौ जायेते तयोर्यत्पापंतस्यदाहः प्राणनिरोधात् । प्रीतिपरितापोत्पत्तिर्मुमुक्षोर्निषिद्धा सातु शरीरिणः त्यक्तसंगस्यापि यादृच्छिकशब्दाद्युपनतौकसाचिन्मात्रया वस्तुसामर्थ्येन नियतेन्द्रियस्याप्युपजायते अतस्तद्दोषनिवृत्त्यर्थाः प्राणायामाः ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । धातूनां लोहादीनां इन्द्रियाणांदोषाः तत्तद्विषयाभिषङ्गाः ॥ ७१ ॥

( ३ ) **कुल्लूकः** । धातूनांस्वर्णरजतादीनांयथामूषायामग्निना ध्मायमानानांमलद्रव्याणि दह्यन्ते एवंमनसोरागादयश्चक्षुरादेश्च विषयप्रवणत्वादयोदोषाः प्राणायामेन विषयानभिध्यानाद्दह्यन्ते ॥ ७१ ॥

( ४ ) **राघवानन्दः** । प्राणायामेन पापक्षये दृष्टान्तमाह दह्यन्तइति । ध्मायमानानां वह्निनेति शेषः ॥ ७१ ॥

( ५ ) नन्दनः । प्राणस्य निग्रहात्प्राणायामात् ॥ ७१ ॥

( ६ ) रामचन्द्रः । तथा दोषाः विषयाभिषङ्गाः प्राणस्य वायोर्निग्रहाद्दह्यन्ते ॥ ७१ ॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ७२ ॥**

( १ ) मेधातिथिः । प्राणायामैरित्येतत्पूर्वश्लोकेनदर्शितम् । अपरेत्वाहुः । दोषारागादयस्तान्दहेत् । कथंप्राणायामैर्दग्धुमेतेशक्यन्ते युक्तःपापस्यतैर्दाहः । अदृष्टाचतस्योत्पत्तिःशास्त्रलक्षणं तथानिवृत्तिरपि । रागादयस्तुप्रत्यक्षवेद्याःतेषांप्राणायामानांनिवर्त्यनिवर्तकभावःप्रत्यक्षादिवेद्यएवयुक्तोभवितुंनशास्त्रीयः । यदिशास्त्रमेवंवदेद्वह्निमेनशीतंनिवर्तयेदितिकिंप्रमाणिभवेत् । तस्माद्रागादिनिमित्तमशुभाचरणंदोषशब्देनोच्यते । तस्यकार्यंदाहोदाहः स्वरूपतोहिस्वरसतएवकर्मणांक्षणिकत्वान्नाशः । एषएवचदाहोनत्वन्यस्येवभस्मीभावः एवंच पूर्वश्लोकार्थोनुवादः । धारणाभिश्च ननुचकिल्बिषंपापदोषश्चेत्तत्रैतावद्वक्तव्यम् प्राणायामैर्धारणाभिश्चदोषान्दहेत् किंकिल्बिषमित्यनेन किल्बिषमितिवास्तु किंदोषग्रहणेन उच्यते दोषग्रहणमवश्यंकर्तव्यंविशिष्टस्यपापस्य प्राणायामैर्दाहोयथाविज्ञायेत न सर्वस्येति । दोषशब्देन हि रागादयउच्यन्ते अतस्तन्निमित्तएव पापेउपचारोयथोक्तः । एवं तर्हि तदेव क्रियतांकिंकिल्बिषमित्यनेन पादपूरणार्थमित्यदोषः । तत्रोत्पन्नस्य पापस्य प्राणायामादहनाउच्यन्ते । धारणास्तु दोषानुत्पत्तिमेव कुर्वन्ति काः पुनरेताधारणाःशमयमादिभिर्नियमाद्विषयदर्शनाभिलाषेण प्रकृष्यमाणंमनोधार्यते तत्रैव स्थाने नियम्यते । ताश्चविषयगतदोषभावनाअस्थिरस्थूणमित्याद्याः कान्तिलावण्यतारुण्यसंस्थानशौर्यादयः स्त्रीषु दृश्यमानाअभिलाषहेतवः तेच सविकल्पंप्रत्यक्षग्राह्याः । विकल्पाश्च मनोधाराः अतोविकल्पान्तरैर्मूत्रपुरीषपूर्णनामेति तस्मिन्विषयगतदोषभावे कटककर्पटान्वितंस्त्रीद्रव्यंनामाधिकंप्राणिनोयत्प्रयत्नतःपरिहर्तव्यमभिलषन्ति याप्येषा सुखलेशभ्रान्तिः सा क्षणभङ्गिनी तदासेवनेन घोरादीर्घकालाश्च यमयातनाइत्यादिभिः शक्यन्तेनिरोद्धुम् । एतदेव तत्प्रसंख्यानमुच्यते । एवंभोजनादिष्वपि भावयितव्यम् । यदेतच्छर्कराघृतपूरहैयङ्गवीनपायसादि तच्च भैक्षंकदन्नादिभिः सममेतच्छरीरधारणतया विशेषाभावात्कस्यचित्प्रकृतेर्जिव्हाग्रेक्षणलवमात्रवर्तमानस्य विशेषोयस्सविशेषतया प्रतिभासेत गन्धर्वनगरप्रख्योयंक्षणिकावभासइति । एवमन्यत्रापि स्पर्शदोषोभावयितव्यइत्येवमुपदिशति । अन्येत्वाहुः । कौष्ठ्यस्य वायोर्मुखनासिकासंचारिणःशरीरैकदेशान्तर्हृदयाकाशादभ्यासवशतो धारणंधारणा । ननुच प्राणायामेभ्यएतासांसाधारणानांकोभेदः बाहुललाटादावपि यथेच्छंव्याप्तत्यादिध्यानसहितंधारणा प्राणायामारेचनेनाधिक्रियन्तइतिविशेषः । अन्येतु मैत्रीमुदिताकरुणाउपेक्षाएताधारणाइति मन्यन्ते । मैत्रीकृपा मुदोपेक्षा सर्वप्राणिष्ववस्थिता । ब्रम्हलोकंनयन्त्याशु ध्यातारंधारणास्त्विमाः । तत्र मैत्री द्वेषाभावोनतु सुहृत्स्नेहस्तस्य बन्धात्मकत्वात् । कृपाकरुणाचित्तधर्मः दुःखितजनदर्शनेन कथमयमस्माद्दुःखादुद्धियेतेति समुद्धरणकामना । न त्वहिंसानुग्रहयोरनारम्भइत्युक्तं अतएवेदमुच्यते चित्तधर्मोयमभ्यसितव्यः । मुदिताशोकव्यावृत्तिर्व्याध्यादिनिमित्ते दुःखे नरकादिभयजेवा नतु हर्षः तस्य रागहेतुत्वात् । उपेक्षा विषयअनुग्राहकेषु उपघातेच । प्रसिद्धैव । मनसोवातहृदयाकाशे ब्रह्मचिन्तापरतयानिश्चलता धारणा । प्रत्याहारेण संसर्गमिन्द्रियाणांविषयैस्सह सम्बन्धस्तत्र प्रवृत्तिःसंसर्गस्तन्दहेत्प्रत्याहारः ततोहरणमिन्द्रियाणांप्रतिबन्धकरणंवा । आश्चर्यरूपेण न कटकादौ रूपवत्स्त्रीसंदर्शनेवास्थगयितव्ये चक्षुषी अन्यत्र वा दृष्टिरुपनेया । एवंसर्वेन्द्रियेषु । एवंच समाधानंयोगिनोऽप्रतिबद्धंभवति । ध्यानेनानीश्वरान्गुणान् । गुणान्सत्वरजस्तमांसि तेचानीश्वराः परतन्त्राःचेतनाधीनमूर्तयः पुरुषस्यानतस्यसुखादिरहितस्य योभिमानोहं सुख्यहं-

दुःखीति निर्गुणस्य गुणिताभिमानस्सगुणपुरुषविवेकध्यानेन दग्धव्यः । चिद्रूपःपुरुषोनिर्गुणोगुणमयी प्रकृतिरित्येवंगुणपुरुषविवेकःकर्तव्यः ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । धारणाभिःसाकारोकस्मिंश्चिदभीष्टेचित्तनिवेशनैः किल्बिषं योगप्रतिबन्धकंपापं । प्रत्याहारेण विषयेभ्योमनसआकर्षेण संसर्गान्विषयेणसह ज्ञानस्य संबन्धान् । ध्यानेन निराकारानुचिन्तनेनानैश्वरान् शुद्ध विषयज्ञानस्थैर्यरूपैश्वर्यविरोधिनोगुणान् रजस्तमोविकारान् तन्द्रादीन् ॥ ७२ ॥

( ३ ) **कुल्लूकः** । एवंसति अनन्तरोक्तप्रकारेण प्राणायामैरागादिदोषान्दहेत् । अपेक्षितदेशे परंब्रह्मादौ यन्मनसोधारणंसा धारणा तया पापंनाशयेत् । प्रत्याहारेण विषयेभ्यइन्द्रियाकर्षणैर्विषयसंपर्कान्वारयेत् । ब्रह्मध्यानेनेतिसोऽहंमस्मीतिसजातीयप्रत्ययप्रवाहरूपेणानीश्वरान्गुणानीश्वरस्य परमात्मनोये गुणानभवन्ति क्रोधलोभासूयादयः तान्निवारयेत् ॥ ७२ ॥

( ४ ) **राघवानन्दः** । प्राणायामप्रसंगेन प्रत्याहारादित्रीण्याह प्राणेति । धारणा षट्चक्रमध्ये पृथिव्यादिचिन्तनं । देशबन्धश्चित्तस्य धारणेति । किल्बिषविषयशोध्यानाध्यासं पादपूरणार्थमितिमेधातिथिः । प्रत्याहारेणेति प्रत्याहारोविषयेभ्यइन्द्रियाकर्षणं । तथाचपतञ्जलिसूत्रम् ॥ स्वविषयासंप्रयोगे चित्तस्यस्वरूपानुकारइवेन्द्रियाणांप्रत्याहारइति । संसर्गान् विषयसंपर्कजान् प्रीतिपरितापान् । ध्यानेनेश्वरस्यअनीश्वरान् ईश्वरानाश्रितान्कामक्रोधादीन् ॥ ७२ ॥

( ५ ) **नन्दनः** । अथ योगाङ्गानि प्राणायामप्रसङ्गादाह प्राणायामैरिति । दहेत्त्यजेत् । दोषान्रागादीन् । इन्द्रियप्राणमनोबुद्ध्यात्मनामेकत्रावस्थापनंधारणा । कुष्टस्य मनसः पुनः प्रत्यामयनार्थे प्रयोजनंप्रत्याहारइतिदेवलः । इन्द्रियाणां विषयैःसंबन्धः संसर्गः । अनैश्वरान्प्राकृतान् । गुणान्सत्वरजस्तमांसि । एवंयोगउक्तः ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । प्राणायामैः दोषान् बाह्येन्द्रियजान् दहेत् । धारणाभिः चित्तस्यअवस्थापकाभिः किल्बिषं योगप्रतिबन्धकं दहेत् । प्रत्याहारेण विषयेभ्योमनसःप्रकर्षेण संसर्गान् विषयान् दहेत् । ध्यानेन निराकारानुचिन्तनेन अनीश्वरान् ऐश्वर्यप्रतिबन्धकान् शुद्धिविषयज्ञानस्वरूपैश्वर्यनिरोधिनोगुणान तन्द्रादीन् दहेत् ॥ ७२ ॥

## उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ॥ ध्यानयोगेन संपश्येद्गतिमस्यान्तरात्मनः ॥ ७३ ॥

( १ ) **मेधातिथिः** । सकथंकर्तव्योध्यानेन किंपुनर्ध्येयमतआह । अन्तरात्मान्तर्यामी पुरुषस्तस्य गतिः स्वरूपं यथावद्विज्ञेयं सुखदुःखाभिमानोन केवलं मनुष्यजन्मनि किंतर्हि उच्चावचेषु नानाविधेषु भूतेषु तिर्यक्प्रेतपिशाचादिष्वहंममेति प्रत्ययोऽविद्याकृतोनिवर्त्यः । अथवा कथमयंविभुरन्तरिक्षाज्ज्यायान्दिवोज्यानेभ्योलोकेभ्यः सर्वकामः सर्वरसः सर्वगन्धः सर्वस्पर्शइदमभ्यस्यतोविजिघत्सोविपिपासोः । एवंविधेपि सुखे दुःखे शरीरस्य शरीरेष्वसर्वभोगतया सोहंनामाहोकर्मणांमहात्म्यं यदयं सर्वात्मकः स्वतन्त्रः परतन्त्रीक्रियते कर्मभिर्नैतानि करिष्येदुष्टस्वामिस्थानीयानि भृतकइवकर्माणि प्रतिपालयिष्ये यथा भृतकःकश्चित्स्वामिनंनिबन्धेनाराधयितुं प्रविष्टः सन्वंमन्यते यावद्दुराधर्षइव नोदण्डशीलस्तर्जनापरः परुषभाषी नैनंभूयः परिचरिष्यामि । यन्मयास्मात्किंचित्भृत्यादि गृहीतं तदेवास्य कर्मकरणेन शोधयामि एवंध्यायन्नासीत । कृतानांकर्मणांफलोपभोगेनान्तंयास्यामि अन्यानिचनकरिष्यामीत्येवमादिध्येयम् । तथाकिमेतेक्षेत्रज्ञाःपरमात्मनोविभूतयउतस्वतन्त्राः नैवंपरवान्यःकश्चिदस्तीति वेदान्तनिषेवणादिना निश्चित्यध्यातव्यम् । अन्ये पुनराहुः ध्यानंचयोगश्च ध्यानयोगं तेनांतरात्मनःगतिंसंपश्येन्निरुध्योप्यासीत गतिंध्यानेन योगेन च । अथवा ध्यानार्थोयोगः

चित्तस्थैर्यंतत्कृत्वाऽऽत्मनोगतिंसंपश्येदुपासनाभिरनपावृतादिगुणविशिष्टंवेदान्ताभिहितरूपंनिष्कल्मषमभिमुखीकुर्यात्। अकृताअसंस्कृताःशास्त्रेणाऽऽत्मानोयैस्तैर्नशक्यं ज्ञातुम् ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । उच्चावचेष्वनेकविधेषु भूतेषु गतिंप्राप्तिंअस्य स्वीयस्यान्तरात्मनः ध्यानयोगेन ध्यानाभ्यासेन सम्यक्पश्येत् । अकृतात्मभिरसंस्कृतमनोभिः ॥ ७३ ॥

( ३ ) **कुल्लूकः** । अस्य जीवस्योत्कृष्टापकृष्टेषुदेवपश्वादिषु जन्मप्राप्तिमकृतात्मभिः शास्त्रैरसंस्कृतांतःकरणैर्दुर्ज्ञेयां ध्यानाभ्यासेन सम्यक्सकारणकंजानीयात् । ततश्चाविद्याकाम्यनिषिद्धकर्मनिर्मितेयंगतिरितिज्ञात्वा ब्रह्मज्ञाननिष्ठोभवेदितितात्पर्यार्थः ॥७३ ॥

( ४ ) **राघवानन्दः** । किंचोच्चेति । उच्चावचेषु उत्कृष्टापकृष्टेषु । देवमनुष्यतिर्यक्षुगतिंदुर्ज्ञेयां अप्यकृतात्मभिरजितेन्द्रियैःअन्तरात्मनोजीवस्य ध्यानयोगेन । एकएवायमुपायः परम् अथवाएकएवतुभूतात्माभूतेभूतेव्यवस्थितइतिचिन्ताभ्यासेन अहोकर्मफलमाहात्म्यं यदेवंकर्मणानीश्वरोपिईश्वरःक्रियतेऽथवागतिमैकात्म्यलक्षणां संपादितवतोयोनिकोटिसहस्रेषुसृतीर्विमोचयतीतिकिमुवक्तव्यमित्यत्र चिन्तनस्यतात्पर्यं । तथाचतन्त्रं तत्सूत्रं तत्र प्रत्ययैकतानताध्यानमिति ॥ ७३ ॥

( ५ ) **नन्दनः** । अथतत्प्रसङ्गात्सांख्यमाह उच्चावचेष्विति । उच्चावचेषूत्कृष्टापकृष्टेषु भूतेषु शरीरेष्वन्तरात्मनोऽन्तःपुरुषस्य ज्ञानंपञ्चविंशतितत्त्वज्ञानंतस्य योगेनाभ्यासेन संपश्येत्सम्यक्पश्येत् ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । उच्चावचेषु ब्रह्मादिकीटपर्यन्तेषु अस्यान्तरात्मनः गतिं व्याप्तिं ध्यानयोगेन संपश्येत् ॥ ७३ ॥

**सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते ॥ दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥ ७४॥**

( १ ) **मेधातिथिः** । आन्तरस्य विधेःफलमाह । सम्यग्दर्शनमनन्तरोक्तमात्मनोयथार्थज्ञानंतेन संपन्नः कृतसाक्षात्कारः कर्मभिर्ननिबध्यते । संसारंनानुवर्तते कृतानांकर्मणांभोगेन क्षयादन्येषामकरणात् । न पुनरनेन केवलात् ज्ञानान्मोक्षउक्तोभवति । दर्शनेनाऽऽध्यात्मिकेन वेदान्तोपदिष्टेन योविरहितःकेवलकर्मकारो संसारमेति ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञानी कर्मभिर्धर्माधर्मरूपैरुत्पन्नैर्ननिबध्यते न फलानुभवेन संबद्धः क्रियते । दर्शनेन सम्यगात्मदर्शनेन ॥ ७४ ॥

( ३ ) **कुल्लूकः** । ततश्चतत्त्वतोब्रह्मसाक्षात्कारवान्कर्मभिर्न निबध्यते कर्माणि तस्य पुनर्जन्मने नप्रभवन्ति पूर्वार्जितपापपुण्यस्य ब्रह्मज्ञानेन नाशात् । तद्यथा इषीका तूलमग्नौप्रोतंप्रदूयेत एवंह्यस्यसर्वेपाप्मानःप्रदूयन्तउभौब्रह्मैवैष*भवतीतिश्रुत्या । तथा क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टेपरावरइति अविशेषश्रुत्या पुण्यसंबन्धोऽपि बोध्यते । उत्तरकाले चदैवात्पापेकर्मणि कृतेऽपि न पापसंश्लेषः । तथाचश्रुतिः पुष्करपलाशआपोन श्लिष्यन्तएवमेवंविदिपापकर्म न श्लिष्यतइति । देहारम्भकपापपुण्यसंबन्धःपरंनश्यति । अयमेवचार्थोब्रह्ममीमांसायांतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादितिसूत्रेणबादरायणेन निरणायि । ब्रह्मसाक्षात्कारशून्यस्तु जन्ममरणप्रबन्धंलभते ॥ ७४ ॥

( ४ ) **राघवानन्दः** । अतस्तदेव दर्शनंस्तौति सम्यगिति । दर्शनेन ज्ञानेन संपन्नस्यैव सर्वपापविरहात् ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः । क्षीयन्ते चास्यकर्माणि तस्मिन्दृष्टे परावरे ॥ सर्वेपाप्मानोतोनिवर्तते इत्यादिश्रुतेः । तदसंपत्तौ दोषमाह दर्शनेनेति ॥ ७४ ॥

---

* उभेतेवैष ( अ )

( ५ ) **नन्दनः** । सम्यक्पश्यतः फलमाह सम्यगिति । कर्मभिर्न निबध्यते संसारमुक्तोभवति । दर्शनेन सम्यग्दर्शनेन ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । सम्यक् ईश्वरस्य दर्शनेन संपन्नःसंयुक्तःकर्मभिर्ननिबध्यते ॥ ७४ ॥

**अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ॥ तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ॥ ७५ ॥**

( १ ) **मेधातिथिः** । इदन्तु ज्ञानकर्मणोःसमुच्चयान्मोक्षइतिश्लोकद्वयंज्ञापकम् । पूर्वेण ज्ञानमुक्तमनेन कर्माण्युच्यन्ते । कानि पुनर्वैदिकानि कर्माणि येषांफलंतत्पदंमाप्नोतीत्युच्यते । यानि तावत्काम्यानि तेषांस्वविधिवाक्येश्रुतमेव स्वर्गादिफलम् । तद्व्यतिरेकेण फलान्तरकल्पनायामतिप्रसङ्गः । संकीर्णफलताश्रयणंवानर्थकंस्यात् । तावता च वाक्यार्थस्य समाप्तेर्विध्यनपेक्षिततत्पदप्राप्तिलक्षणफलेन कथंसंबन्धः । श्रुतेनैवान्वयिना विध्यर्थेसंपन्नं विधिर्नोपेक्षते अत्रोच्यते अस्त्येवात्र वाक्यान्तरं यज्ञेन तदाप्नोतीति रहस्याधिकारे । ततश्च संयोगपृथक्त्वात्फलद्वयंयुक्तं अतश्च सर्वेषामेव काम्यानामविच्छिन्नफलयोगिता परमपदप्राप्त्यर्थता च न विरोत्स्यते । तत्रयागद्वयेन प्रयोगभेदेन स्वर्गापवर्गौ भवतः नच तत्र यज्ञविशेषः श्रुतोयेन नित्यानामेतत्फलंस्यान्न काम्यानाम् । अथोच्यते नित्येष्वश्रुतत्वात्फलावच्छेदस्याविरोधात्तद्विषयता युक्ता न काम्येषु तावतैव यज्ञेनेत्यस्य सर्वविषयत्वालाभादितिचेत् किमत्र फलश्रवणेन कर्तव्यतानिष्ठानिच वैदिकानि वाक्यानि । साचकर्तव्यताऽन्तरेण वैदिकं फलपदंयावज्जीवादिपदेन गमितेति तत्रापि फलसंबन्धोनऽपेक्षितएव कल्प्यमानोऽधिकत्वान्नैकार्थ्ययायात् । अतोयज्ञेनेति वाक्यमप्रतिष्ठमानंविविक्ते विषयेसर्वयज्ञशब्दवाच्यंनित्यंकाम्यंच गोचरयति । न चैतत्फलंकाम्यानां अपवर्गकामइत्यश्रुतत्वात् । एतदभिप्रायमेवोक्तं कामात्मतानप्रशस्तेति । महाभारतेपि माकर्मफलहेतुर्भूर्मातेसंगोस्त्वकर्मणीति ॥ अतश्च भेदग्राहपरिवेष्टितान्तःकरणस्य तृष्णाविद्यावतोऽनिर्मुक्ताहंकारममकारस्याभिसंहितपरिमितफलप्राप्तिः । इतरस्य त्वनभिसंधायफलविशेषचोदितत्वात्कर्तव्यमितिबुद्ध्या वर्तमानस्यापरिमितनिरतिशयानन्दरूपब्रह्मावाप्तिः । न चैतच्चोदनीयं एकसप्तशतंक्रतवोयावन्तोवा तेषां सर्वेषामनुष्ठानस्याशक्यत्वादनारभ्योपदेशतास्यादिति । यतोदर्शनसंपत्त्यैवात्रानुष्ठानसंपत्तिरिति । सर्वेच क्रतवोदर्शनसंपादनीयाः तथाचोक्तं ज्ञानेनैवापरे विप्रायजन्तइति । अथवा याल्लोकानेतीत्यवच्छेदनिर्देशः स्वर्गकामःपुत्रकामइति । अतीतानादिभेदग्रहवासितान्तरात्मानोदृष्टफललाभेनासत्येनैवप्रधाने पुरुषार्थे प्रवर्तन्ते । यथा बालःपुष्ट्यर्थे औषधेन शिखाते वर्धिष्यतइत्यसत्ययैव शिखावृद्ध्याप्रवर्त्यतइति केचित् । अपरंमतं नित्यान्यत्रकर्माण्यभिप्रेतानितान्यक्रियमाणानि प्रत्यवायहेतुतया प्रतिबंधकानि अतस्तैरनुष्ठीयमानैरसति प्रतिबन्धे उक्तंवैदिकैश्चैव कर्मभिरिति । यद्यपि तानि नमोक्षार्थतया चोदितानि उग्रैरत्यन्तंशरीरतापहेतुभिः तस्य ब्रह्मणः पदंस्थानं ब्रह्मलोकंसाधयन्ति स्वीकुर्वन्ति । अथवा तदीयपदंयादृशस्तस्याधिकारः सर्वैश्वरत्वंस्वातन्त्र्यंतद्रूपप्राप्तिरितियावत् ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । इन्द्रियासंगैरिन्द्रियार्थेषु रागहान्या वैदिकैःकर्मभिर्नित्यनैमित्तिकैः । तपसश्चान्द्रायणादेश्चरणैःप्रतिबन्धकपापक्षयार्थकृतैः । तत्परं ब्रह्म साधयन्ति जानन्ति ॥ ७५ ॥

( ३ ) **कुल्लूकः** । निषिद्धहिंसावर्जनेनेन्द्रियाणांच विषयसंगपरिहारेण वैदिकैर्नित्यैः कर्मभिः काम्यकर्मणांबन्धहेतुत्वात् उक्तंच कामात्मतानप्रशस्तेति तपसश्चयथासंभवमुपवासकृच्छ्रचान्द्रायणादेरनुष्ठानैरिहलोके तत्पदंब्रह्मात्यन्तिकलयलक्षणंप्राप्नुवन्ति पूर्वश्लोकेन ब्रह्मदर्शनस्य मोक्षहेतुत्वमुक्तम् । अनेन तत्सहकारितया कर्मणोऽभिहितम् ॥ ७५ ॥

( ४ ) **राघवानन्दः** । सम्यग्दर्शनस्य सर्वसाध्यत्वंस्वीकुर्वन्माभ्युपायमाह अहिंसयेति । तत्पदं तत्त्वज्ञानं ब्रह्मणोऽसाध्यत्वात् ॥ ७५ ॥

( ५ ) **नन्दनः** । न केवलंसांख्ययोगाविवसन्यासिनः परमगतिप्राभ्युपायः किंतु पूर्वाश्रमकृतानि कर्माण्यपीत्याह अहिंसेति । अहिंसयेन्द्रियासङ्गैरिति ब्रह्मचर्यधर्मोलक्ष्यते । वैदिकश्चैवकर्मभिरितिगृहस्थधर्मः । तपसश्चरणैश्चेतिवानप्रस्थधर्मः । इन्द्रियाणांविषयेसङ्गइन्द्रियासङ्गः । वैदिकंकर्माग्निहोत्रहोमस्नातकव्रतादिकम् ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । अहिंसया इद्रियाणामसंगैः वैदिकैःकर्मभिः अष्टचत्वारिंशत्संस्कारैःउग्रैस्तपश्चरणैः तत्पदं ब्रह्मसाधयन्तीह जानन्तीत्यर्थः ॥ ७५ ॥

**अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ॥ चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥ ७६ ॥**

( १ ) **मेधातिथिः** । वैराग्यजननमेतत् । तिष्ठन्तु तावत् कृमिकीटपतङ्गादिशरीराणि जलौकोभूमिस्वेदजादीनां अन्यदिदंमानुषशरीरंस्पृहणीयत्वेनाभिप्रेतम् । यत्राशङ्किनोनित्यभितामनुष्यास्तन्मूत्रपुरीषकुटीगृहकमिव तदिदानींकुटीगृहकेन निरूपयति । अस्थीनिस्थूणाइव तैरवष्टब्धं स्नायुना बद्धं मांसशोणिताभ्यांदेहचर्मणाअवनद्धंततउपरि अथवा आछादितं पूर्णं मुत्रपुरीषयोः । ओदनस्य पूर्णइतिवत्षष्ठी ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । स्नायुभिर्युतं मिश्रितं बद्धमितियावत् चर्मणाऽवनद्धं बहिश्छादितं । भूतमयमावासंभूतावासमिति श्लेषेण भूताख्यप्रेतानांवासतुल्यतांदर्शयन्नस्थिस्थूणत्वादिकमपियुक्तमिति कथयति अतएव दुर्गन्धीत्यादिविशेषणं पूर्णमूत्रपुरीषयोः मूत्रेण पुरीषेण चान्तर्व्याप्तमित्यर्थः ॥ ७६ ॥

( ३ ) **कुल्लूकः** । इदानींमोक्षान्तरङ्गोपायसंसारवैराग्याय देहस्वरूपमाह श्लोकद्वयेन अस्थीत्यादिजरेत्यादिच । अस्थीन्येव स्थूणाइव यस्य तमस्थिस्थूणं स्नायुरज्जुभिराबद्धंमांसरुधिराद्युपलिप्तंचर्माच्छादितंमूत्रपुरीषाभ्यांपूर्णमतएवदुर्गन्धि ॥ ७६ ॥

( ४ ) **राघवानन्दः** । तदर्थंपुनर्वैराग्योपायमाह अस्थीति । नाविरक्तस्य ज्ञानेधिकारोयतःनिर्वेदमायादिति । अतः अस्थीनि स्थूलसूक्ष्माणि स्थूणास्तम्भोयस्य भूतावासमिमंत्यजेदिति द्वितीयेनान्वयः । स्नायुयुतंस्नायवःशिराःताभिरेव बद्धमन्तरे बहिश्चर्मावनद्धं पूर्णमूत्रपुरीषयोस्ताभ्यांपूर्णमित्यर्थः ॥ ७६ ॥

( ५ ) **नन्दनः** । सांख्ययोगयोरुभयोः साधारणधर्मान्पञ्चभिःश्लोकैराह अस्थीति । अस्थिस्थूणमितिश्लोकद्वयमेकान्वयम् ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । शरीरस्यस्वरूपमाह युग्मेन अस्थीति । मूत्रपुरीषयोः पूर्णं संबन्धे षष्ठी ॥ ७६ ॥

**जराशोकसमाविष्टं रोगायतनमातुरम् ॥ रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥ ७७ ॥**

( १ ) **मेधातिथिः** । जराचचरमे वयसि शरीरापचयहेतुरवस्थाविशेषः । आतुरंनित्यगृहीतं रोगैः । रजस्वलं स्पृहयालुः सर्वपदार्थेषु तदसंपत्यांच महद्दुःखं सर्वस्मिन्सोढेमतीकारमनिवर्त्यसर्वगतत्वात्तस्य अतस्तत्रमताशरीरेण कर्तव्या ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । आतुरं दुःखवत् रजस्वलं रजोगुणेन दूषितम् ॥ ७७ ॥

( ३ ) **कुल्लूकः** । जरोपतापाभ्यामाक्रान्तंविविधव्याधीनामाश्रयमातुरंक्षुत्पिपासाशीतोष्णादिकातरंप्रायेणरजोगुण-

युक्तंविनश्वरस्वभावंच आवासोगृहंपृथिव्यादिभूतानि तेषामावासंदेहमेव जीवस्यगृहत्वेन निरूपितंत्यजेत् । यथापुनर्देहसबन्धोन भवेत्तथा कुर्यात् गृहसाम्यमेवोक्तमस्थीत्यादिना ॥ ७७ ॥

( ४ ) **राघवानन्दः** । आतुरंक्षुत्पिपासाशीतादियुक्तं । रजस्वलं प्रायेण रजोगुणयुक्तंपापजनकत्वात् त्यजेत् । अनात्मतयाजानीयात् आयुषःक्षये स्वतएव नष्टत्वात् जीवापेतंवावकिलेदंम्रियते नजीवइतिश्रुतेः । इमंदेहंजीवतस्त्यक्तुमशक्यत्वात् ॥ ७७ ॥

( ५ ) **नन्दनः** । रजस्वलंरजोगुणबहुलंभूतावासंशरीरगृहंत्यजेत् अस्मिन्नहन्तांनकुर्यात् यथा गृहे तिष्ठन्गृहीगृहंमन्योन भवत्येवंदेहे तिष्ठन्देहम्मन्योन स्यादित्यभिप्रायः ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । रजस्वलं मलिनं भूतावासं पञ्चमहाभूतानामावासस्थानं एतादृशंशरीरंज्ञानेन त्यजेत् ॥ ७७ ॥

**नदीकूलं यथावृक्षोवृक्षं वा शकुनिर्यथा ॥ तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥ ७८ ॥**

( १ ) **मेधातिथिः** । यस्तावदयंकुटीरूपकोदेहस्तस्य दृष्टान्तोनदीकूलंवृक्षइति न स्वेच्छयाग्निप्रवेशादिनात्यक्तव्यः किन्तु तृष्णा तत्र न कर्तव्या । अनुद्दिष्टोऽपूर्वआपातस्तदा भविष्यतिकर्मक्षयात् वृक्षस्येव कूलस्थस्य न प्रयुक्तंनाभिनन्देतमरणमिति यस्तु लब्धज्योतिर्वशीकृतप्राणसंचारोमोहविकारनिगृहीतमनास्तेन पूर्वमुत्क्रमणंकर्तव्यं यथा शकुनिर्वृक्षंत्यजति ग्राहइव ग्राहः दुःखहेतुत्वसाम्यात् तद्ग्राहकृच्छ्रात् प्राप्तिपूर्विकस्यापियावच्छरीरंवस्तुसामर्थ्याद्भवत्येव कृच्छ्रपूर्वविप्रतिपत्तावेतदुच्यते ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** नदीकूलमिति उत्पन्ने ज्ञानेऽपि यदि देहारम्भककर्माणि भोग्यानि भवन्ति तदा कर्मक्षयक्रमेण कालान्तरे देहत्यागस्तमपेक्ष्य नदीकूलंयथावृक्षइत्युक्तं नद्यभिघाताद्वृक्षस्य क्रमादेव पातात् । यदातु न तादृशंकर्मावशिष्टमस्ति तदा सद्योदेहत्यागोभोग्यकर्माभावात् तमपेक्ष्य वृक्षंवा शकुनिरित्युक्तं तत्क्षणादेव तस्य वृक्षविभागात् । कृच्छ्रात् ग्राहात् दुःखात् ग्राहात् ग्राहसदृशात् भयहेतोः ॥ ७८ ॥

( ३ ) **कुल्लूकः** । ब्रह्मोपासकस्य देहत्यागसमयेमोक्षः आरब्धदेहस्य कर्मणोभोगेनैवनाशात् । तत्रदेहत्यक्तुर्द्वैविध्यमाह । यः कर्माधीनंदेहपातमवेक्षते सनदीकूलंयथावृक्षस्त्यजतितत्पातमजानन्नेव नदीरयेण पात्यते तथा देहंत्यजन् यश्चज्ञानकर्मप्रकर्षाद्भीष्मादिवत्स्वाधीनमृत्युःसयथा पक्षी वृक्षंस्वेच्छया त्यजति तथादेहमिमंत्यजन्संसारकष्टाद्ग्राहादिव जलचरप्राणिभेदाद्विमुच्यते ॥ ७८ ॥

( ४ ) **राघवानन्दः** । अवश्यंमुक्तियास्यतीत्यत्र दृष्टान्तमाह नदीति । नदीवेगेन प्रशिथिलमूलोयथावृक्षःकृच्छ्ररूपग्राहात्संसारात् नदनिविष्टस्य नाजीर्यद्वहिर्भावइत्यनुभवः ॥ ७८ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थमुदाहरणार्थं दृष्टान्ताभ्यांप्रपञ्चयति नदीति । नदीकूलस्थोयथावृक्षोनदीकूलमात्मानंनमन्यते यथा वृक्षस्थःशकुनिर्वृक्षमात्मानंनमन्यते एवंदेहस्थोदेही देहमात्मानंनमन्यतइत्यभिप्रायः । कृच्छ्राद्ग्राहात्संसारात् ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । तथा इमंपुरोवर्तिनंदेहं त्यजन् दुःखग्राहात् ग्राहसदृशकृच्छ्राद्विमुच्यते ॥ ७८ ॥

**प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥ ७९ ॥**

( १ ) **मेधातिथिः** । प्रीतिपरितापकृतश्चित्तसंक्षोभोहर्षशोकादिलक्षणोऽनेनोपायेन परिहर्तव्यः यत्किञ्चित्प्रियंकरोति यन्मम सुकृतविशेषस्तस्येदंफलंनिष्पन्नं अहंभर्ता मम स्नेहबुध्या प्रियं न चायमेवं शक्नोति कर्तुं यन्ममायमप्रियं-

करोति तन्ममैव दुष्कृतंपीडाकरमित्येवंविमृश्य ध्यानयोगेन चित्ते भावयेत् अतोऽस्य न प्रियकारिणि रागोनाप्रियकारिणि द्वेषोजायते। एवंकुर्वाणः सनातनंशाश्वतंब्रह्माभ्येति अभिमुखंप्राप्नोति अचिरादिपथेन न व्यवधीयते। शाश्वतग्रहणादनावृत्तिः प्रतीयते ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रियेषुस्वेष्विति एतेनब्रह्मविदएतादृशीशक्तिर्यतः कर्माण्यपीच्छन्नुसंचारयत्यतस्तस्यापिविप्रियंनकार्यमित्यत्रतात्पर्यम् ध्यानयोगेन ध्यानाभ्यासेन ब्रह्माभ्येति ॥ ७९ ॥

( ३ ) **कुल्लूकः** । ब्रह्मविदात्मीयेषु प्रियेषु हितकारिषु सुकृतमप्रियेष्वहितकारिषु दुष्कृतंनिक्षिप्य ध्यानयोगेन नित्यंब्रह्माभ्येति ब्रह्मणि लीयते । तथाचश्रुतिः तस्यपुत्रादायमुपयन्ति सुहृदः साधुकृत्यंद्विषन्तः पापकृत्यमिति । अपराश्रुतिः ततस्तेषु सुकृतदुष्कृतेविधुनुते तस्य प्रियाज्ञातयः सुकृतमुपपद्येरन्नप्रियादुष्कृतमिति । एवमादीन्येव वाक्यान्युदाहृत्य सुकृतदुष्कृतयोर्हानिमात्रश्रवणेप्युपायनंप्रतिपत्तव्यमितिब्रह्ममीमांसायाम् । हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगायनवत्तदुक्तमित्यादिसूत्रैर्बादरायणेन निरणायि । ननु परकीयसुकृतदुष्कृतयोः कथंपरत्रसंक्रान्तिः । उच्यते । धर्माधर्मव्यवस्थायांशास्त्रमेव प्रमाणम् संक्रामोऽपि तयोः शास्त्रप्रमाणकएव । अतः शास्त्रात्संक्रमणयोग्यावेतौसिध्यतः । अतःशास्त्रेण बाधान्न प्रतिपक्षानुमानोदयःशुचिनरशिरःकपालंप्राण्यङ्गत्वातशङ्खादिवदितिवत् । मेधातिथिगोविन्दराजौ तु स्वेषु प्रियेषु केनचित्कृतेषु ध्यानाभ्यासेनात्मीयमेवसुकृतम् तत्रकारणत्वेनारोप्य एवमप्रियेष्वपि केनचित्कृतेष्वात्मीयमेवप्राग्जन्मार्जितंदुष्कृतंकारणत्वेन प्रकल्प्योद्धृत्य तत्संपादयितारौ पुरुषौ रागद्वेषाख्यौ त्यक्त्वा नित्यंब्रह्माभ्येति ब्रह्मस्वभावमुपगच्छतीतिव्याचक्षाते । तन्न विसृज्येतिक्रियायांसुकृतंदुष्कृतमितिकर्मद्वयत्यागेन तत्संपादयितारावित्यश्रुतकर्माध्याहारात्कर्मद्वयेचश्रुतक्रियात्यागेनकारणत्वेनप्रकल्प्येत्याद्यश्रुतक्रियाध्याहारात् । किंच व्यासव्याख्यातवेदार्थमेवमस्यामनुस्मृतेः । मन्ये न कलिपतंगर्वादर्वाचीनैर्विचक्षणैः ॥ ७९ ॥

( ४ ) **राघवानन्दः** । सुहृदःसाधुकृत्यंद्विषन्तःपापकृत्यमित्यादिश्रुतिमाश्रित्यविद्वत्सत्कारनिन्दाविधानार्थंस्तुतिमाह प्रियेष्विति । प्रियेषु स्वेषु ज्ञातिषु अप्रियेषु द्विषत्सु च ध्यानेन निदिध्यासनेन युज्यते जन्यतइति ध्यानयोगोब्रह्मसाक्षात्कारस्तेन ततस्तुतं पश्यन्ध्यायमानइति श्रुतेर्ध्यानसाध्याब्रह्मधीरिति कृतसक्षात्कारस्य ज्ञानेन पुण्यापुण्ययोर्दाहादन्यागामित्वस्य न्यायविरोधाद्धानौतूपायनमित्यादिन्याये निर्णीतत्वाच्च स्तुतिमात्रम् ॥ ७९ ॥

( ५ ) **नन्दनः** । पुरातनयोश्च पुण्यपापयोस्त्यागोपायमाहप्रियेष्विति । प्रियेषु मित्रेषु । ध्यानयोगेन ब्रह्माभ्येतीत्यन्वयः ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । स्वेषु प्रियेषु पुत्रेषु बन्धुषु वा सुकृतंसुखं अप्रियेषु शत्रुषु दुष्कृतं ध्यानयोगेन विसृज्य सनातनंब्रह्माभ्येति प्राप्नोति ॥ ७९ ॥

**यदा भावेन भवति सर्वभावेषु निःस्पृहः ॥ तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥ ८० ॥**

( १ ) **मेधातिथिः** । चित्तधर्मोपदेशोयं न स्पृहा कार्याभिप्रेतवस्तूपादानपरिहारेण निःस्पृहत्वं अपितु तत्कारणत्यागेन भावश्चित्तधर्मोवात्मनोवाभिलाषलक्षणः सर्वभावेषु पदार्थवचनोद्वितीयोभावशब्दः । सर्वग्रहणेनावश्यकर्तव्येष्वपि पानभोजनादिषु शरीरस्थितिहेतुष्वभिष्वङ्गोनिषिध्यते न पुनरिच्छा । सा ह्यस्य भाविनीवस्तु सामर्थ्यजा बुभुक्षा पिपासा च भिन्ना चेच्छा स्पृहातो रागानुबन्धिनी द्रव्यनिमित्ता स्पृहा इच्छातु भोजनादौ भुक्तपीताहारपरिणामसमनन्तरंस्वयं उपजायते ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । यदा भावेन मनसा सर्वभावेषु सर्वपदार्थेषु निःस्पृहोभवति । इहच जीवन्मुक्तिकाले ॥८०॥

( ३ ) **कुल्लूकः** । यदापरमार्थतोविषयदोषभावनया सर्वविषयेषु निरभिलाषोभवति तदेहलोकेसंतोषजन्यसुखंपरलोकेचमोक्षसुखमविनाशि प्राप्नोति ॥ ८० ॥

( ४ ) **राघवानन्दः** । सुखप्राप्तिप्रकारमाह यदाभावेनेति । संसारदोषभावनया परमात्मभावनया वा भावेषु विषयादिषु । तदुक्तम् ॥ रसवर्जंरसोऽप्यस्य परंदृष्ट्वा निवर्ततइति ॥ ८० ॥

( ५ ) **नन्दनः** । अथसर्वसङ्गत्यागमाह यदेतिभावेनान्तःकरणेन । सर्वभावेषु सर्वविषयेषु । इह सुखंविषयार्जनप्रयत्नदुःखाभावः । शाश्वतंसुखंपरंपदम् ॥ ८० ॥

( ६ ) **रामचन्द्रः** । सर्वभावेषु विषयेषु उपरोधेषु भावेन मनसा यदा निःस्पृहोभवति ॥ ८० ॥

## अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्छनैःशनैः ॥ सर्वद्वन्द्वविनिर्मुक्तोब्रह्मण्येवावतिष्ठते ॥ ८१ ॥

( १ ) **मेधातिथिः** । संगांस्त्यक्त्वासर्वान् । गवाश्वहस्तिहिरण्यदासभार्याक्षेत्रायतनादिषु ममेदमिति बुद्धिः संगः । तत्त्यागादेकारामतायाःपरिग्रहः ग्रहणेन च एवंप्रथममुपाश्रित्यैनंप्राधान्येन । ततोऽनेन विधिना पूर्वोक्तेन क्रियाकलापेन बाह्याध्यात्मिकेनानुष्ठितेनब्रह्मणि चिद्रूपेऽवतिष्ठतेकर्माणि वक्ष्यति । सर्वद्वन्द्वैःशुभाशुभकर्मार्थैःसुखदुःखैर्विनिर्मुक्तोभवति ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । संगान् विषयरागान् । द्वन्द्वमशनापिपासे शोकमोहौ जरामृत्यूच द्वे द्विसमुदायत्वात ब्रह्मण्येवावविष्ठतेब्रह्मभवतीत्यर्थः ॥ ८१ ॥

( ३ ) **कुल्लूकः** । पुत्रकलत्रक्षेत्रादिषु ममत्वरूपान्क्रमेण सङ्गान्सर्वांस्त्यक्त्वा द्वन्द्वैर्मानापमानादिभिर्निर्मुक्तोऽनेन यथोक्तेन ज्ञानकर्मानुष्ठानेन ब्रह्मण्येवात्यन्तिकंलयमाप्नोति ॥ ८१ ॥

( ४ ) **राघवानन्दः** । ब्रह्मण्यवसानप्रकारमाह अनेनेति । शनैःशनैरित्ययमभिप्रायः आदौ क्रमप्राप्तस्त्रिदण्डीस्यात्ततएकदण्डी ततोऽदण्डीति अतएवाहंब्रह्मास्मीति ब्रह्मणावस्थानम् । तथाचश्रुतिः दण्डान्लोकाग्नीन्विसृजेदितीत्युपक्रम्य वैणवंदण्डकौपीनंपरिग्रहेन्न तथा न दण्डं न शिखां न कमण्डलुंयज्ञोपवीतंचरति परमहंसः तथात्मन्येवावतिष्ठतइति ॥ ८१ ॥

( ५ ) **नन्दनः** । अनेनविधिनोक्तेन चातुराश्रम्यकर्मणा शनैःशनैर्गुरुसेवया स्नातकवृतैस्तपश्चर्ययाचेत्यर्थः । चतुर्थाश्रमे सर्वद्वन्द्वविनिर्मुक्तः ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । सर्वान्संगान्शनैःशनैःत्यक्त्वा सर्वद्वन्द्वं क्षुत्पिपासे शोकमोहौ एतादृशैर्विनिर्मुक्तः । ब्रह्मण्यवतिष्ठते ब्रह्मस्वरूपंप्राप्नोति ॥ ८१ ॥

## ध्यानिकं सर्वमेवैतद्यदेतदभिशब्दितम् ॥ न ह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते ॥ ८२ ॥

( १ ) **मेधातिथिः** । ध्याने सति भवति ध्यानिकं ध्याने क्रियमाणे लभ्यते किंतद्यदेतदनन्तरमभिशब्दितमुक्तमाभिमुख्येन तात्पर्येण प्रतिपादितम् । सुकृतदुष्कृतयोःत्वयोः प्रियाप्रियहेतुत्वन्यासः पुरुषस्य यदप्रियकर्तृत्वंतज्ज्वरस्यैव पीडाहेतुत्वमग्निरिवदुरुपसर्पणदग्धत्वं । यथानाऽग्निदग्धोर्मिद्वेष्टि एवंपुरुषमप्यप्रियकारिणंमन्यते न प्रतिषेद्धा स्यात् । एतच्च

ध्याने सति भवति । एकाग्रे चित्ते भवति सर्वकालमेतद्धृदयेनाभ्यसितव्यम् । यथा सुखदुःखे । इमेकर्मणःफलं न राजा सुखस्य ग्रामादेर्दाता अपितु मदीयायासेन प्रथमोपसर्पणलाभः । पूर्वकृतंपुण्यं कर्म दातृ न राजा । एवं दण्डोनोद्वेजयिता-कर्माणि मामुद्वेजयन्ति न राजा नापि शक्तोन्यःकश्चित् एतत्सर्वदा ध्यातव्यं चिन्तयितव्यं यदपि संसारवैराग्यजनना-योक्तमस्थिस्थूणमित्याद्यपि नित्यंभावनीयं नह्यनध्यात्मवित् । अध्यात्मंचित्तमत्रोच्यते । यदेतदभिशब्दितं नवेत्ति ननि-श्चिनोति नाभ्यासेन भावयति । अन्नक्रियार्थंदलेषु परितुष्टःपरिव्राजकस्य या भैक्षचर्या क्रिया ग्रामैकरात्रवासादिश्चन तत्फलंमोक्षाख्यंलभते । यावदस्थिस्थूणादिभावनया भावेनैव निरभिलाषता सर्वत्र नोत्पन्ना यावच्च कर्मसु फलन्यासेन रागद्वेषप्रहाणंन कृतमित्यर्थः । तच्च नित्यंयदा एवंचित्तंयुज्यते तदा भवति नाकस्मादिति अथवा ब्रह्मण्येवावतिष्ठतइति । एतस्य यदेतदभिशब्दितमिति परामर्शनम् । ब्रह्मण्यावस्थानंध्यानिकं नतु क्रियानुष्ठानमात्रलभ्यं किंतद्ध्येयमित्यतआह नह्यनध्यात्मविदिति। आत्मानमधिकृत्य योग्रन्थोवेदान्तादि सोध्यात्मं नवेद । अथवाऽऽत्मन्यधियोनिर्वृत्तस्तदध्यात्मं । य-थायमात्मा देहेन्द्रियमनोबुद्धिप्राणादिव्यतिरिक्तःनैषांनाशेनश्यति । कर्ताकर्मणांप्राग्भोक्ता तत्फलानां भेदग्रहाकृष्टस्य सर्व-मेतद्भवति । यदा त्वयमपहतपाप्मा नदोषैर्नकार्यैःस्पृश्यतएकत्वादेषएव सर्वमिदंन ततोन्यद्यतिरिक्तिमस्ति । प्रभासमात्रं पृथक्त्वं । हरिसवर्णसोदकादिकाउपनिषदोयोन वेदध्यानेनैकाग्रया संततया मत्या न दार्ढ्यमुत्पादयति सन यथोक्तं-क्रियाफलंलभते । अतआत्मा वेदान्ताभिहितस्वरूपोनित्यमाहारविहारकालंवर्जयित्वा ध्येयइतिश्लोकार्थः । अथवा यद्यपि प्रव्रज्याधिकारस्तथापि गृहस्थस्यापि क्रियाफलग्रहेणनिर्देशःयदिक्रियाप्रधानः । अतएतदुक्तंभवति यद्यप्यग्निहो-त्रादीनि कर्माणि कुर्वते गृहस्थारहस्यविद्याविदश्च नभवन्ति याविद्याःकर्मसूपविष्टाउद्गीथाअथवा यावतीउद्गीथमन्वयन्त-इत्यादिना तेन निपुणाःकर्मकाण्डज्ञाअपि न ततःपरिपूर्णफलंचिरकालभाविलभन्ते । एषोर्थोवाजसनेयके छान्दोग्येच श्रु-तिद्वये निर्दिशितः । योवा एतदक्षरंगार्ग्यविदित्वा यजते जुहोति तपस्तप्यते बहून्यपि वर्षसहस्राणांतदेतद्भवतीति । तथा यदेव विद्यया करोति श्रद्धया परिषदा तदेव वीर्यवत्तरं भवति । छन्दोगोक्तयस्तु यथोक्तामध्यात्मोपदिष्टांविद्यांविदित्वा करोति तस्यैव फलातिशयः उक्तंच तद्यइत्थंविदुर्यइमेरण्ये श्रद्धातपइत्युपासत इति यमभिसंभवतीत्यादिविजानतांकर्म-कारिणामर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमेषांश्रुतिराह ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । यदेतदभिशब्दितमुक्तंपूर्वाध्यायेषु कर्मकाण्डफलं तदपि सर्वं ध्यानिकं ध्यानजम् । अनध्यात्मविदात्मविषयज्ञानशून्यः । क्रियाफलं संपूर्णं तथाच श्रुतिः योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनिवर्षसहस्राण्यन्तवदेवास्यतद्भवतीति ॥ ८२ ॥

( ३ ) **कुल्लूकः** । यदेतदित्यत्यन्तसन्निधानात्पूर्वश्लोकोदितंपरामृश्यते । यदेतदुक्तंपुत्रादिममत्वत्यागोमानापमाना-दिहानिर्ब्रह्मण्येवावस्थानंसर्वमेवैतद्ध्यानिकमात्मनः परमात्मत्वेन ध्याने सति भवति । यदात्मानंपरमात्मेति जानाति तदा सर्वसत्त्वान्न विशिष्यते । तस्यनकुत्रचिन्ममत्वंमानापमानादिकंवा भवति तथाविधज्ञानात् ब्रह्मात्मत्वंच जायते ध्यानिकविशेषात् । ध्येयविशेषलाभे परमात्मध्यानार्थमाह नह्यनध्यात्मविदिति । यस्मादात्मानंजीवमधिकृत्य यदुक्तंत-स्यपरमात्वंतद्योन जानाति न ध्यायति सप्रकृतध्यानक्रियाफलंममत्वत्यागमानापमानादिहानिमोक्षंच न प्राप्नोति ॥ ८२ ॥

( ४ ) **राघवानन्दः** । ननुविद्यमाने जगति कथंब्रह्मण्येवावस्थानंतत्राह ध्यानिकमिति । अभिशब्दितं शब्दबोध्यं शब्दज्ञानानुपातीवस्तुशून्योविकल्पः । तथा वाचारम्भणंविकारोनामधेयंमृत्तिकेत्येवसत्यमतःसर्वंजगत्ध्यानिकं सांक-ल्पिकं अतःसंकल्पाद्यधिष्ठानंनित्यात्मेति ज्ञाने कर्मफलप्राप्तिरपीत्याह नहीति । अथयोहवास्माल्लोकात्स्वंलोकमदृष्ट्वाप्रैतिसए-

वमविदितोन भुनक्तीति श्रुतेः । उक्तंच नाविदित्वाऽऽत्मनःपरलोकसंबन्धंकर्मत्वधिक्रियतइति । अतएव मेधातिथिः ध्यानिकं ध्याने क्रियमाणे लक्ष्यते किंतद्यदेतदनन्तरमभिशब्दितंतात्पर्येणोक्तंब्रह्मण्यवस्थानंतदविदोन क्रियाफलमपीत्याह नहीति । अथवैतमेवात्मानंवेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसेति ॥ सर्वकर्माखिलंपार्थज्ञानेपरिसमाप्यते इतिश्रुतिस्मृतिभ्यांसर्वकर्मणामात्मविधोपयोगिनिदिध्यासने पर्यवसानार्थमाह अनध्यात्मविदिति ॥ ८२ ॥

( ५ ) **नन्दनः** । एवंप्रतिपादितमध्यात्मज्ञानंस्तौति ध्यानिकमिति । यदेतदभिशब्दितंचातुराश्रम्यंकर्म एतत्सर्वंध्यानकर्माध्यात्मज्ञानसाध्यमित्यर्थः । हिशब्दोहेत्वर्थः । कश्चिदाश्रमीतिशेषः ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । एतत्सर्वंध्यानिकं ध्यानीयं यदेतदभिशब्दितं कथितं । अनध्यात्मवित्कश्चित्क्रियाफलंनोपाश्नुते ॥ ८२ ॥

## अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ॥ आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥ ८३॥

( १ ) **मेधातिथिः** । एवमात्मज्ञानार्थध्येयेविहितेवेदजपे प्राप्ते तत्साधनतयातस्तंविधत्ते । जपमात्रमस्याभ्यनुज्ञायते न पुनर्गृहस्थादिवदभ्यासार्थमध्ययनम् । यज्ञेष्वधियज्ञं विध्यायकर्मब्राह्मणमाधिदैविकमधिदैवं भवंदेवताप्रकाशकमन्त्रास्तेषामेव विशेषआध्यात्मिकमिति । अहंमनुरभवमहंभवमहंरुद्रेभिरित्यादि ॥ वेदान्तइति यदभिहितं तदपि कर्मज्ञानसमुच्चयं ब्रह्मत्वाद्दर्शयति ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । ध्यानाद्विरतस्य यत्कार्यंतदाह अधियज्ञमिति । अधियज्ञं यज्ञमधिकृत्य प्रदत्तंभागं । ब्रह्म वेदं । आधिदैविकं । देवताश्रुतिमधिकृत्य प्रवृत्तंमन्त्रभागं । आध्यात्मिकं आत्मविषयमुपनिषद्भागं । वेदान्ताभिहितं वेदान्तेषुजप्यत्वेनोक्तमोंकाररूपंब्रह्म इदंवेदान्ताभिहितम् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । पूर्वंब्रह्मध्यानस्वरूपमुपासनमुक्तम् इदानींतदङ्गतया वेदजपंविधत्ते । तथाचश्रुतिः तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तीतिविद्याङ्गतया वेदजपमुपदिशति अधियज्ञमिति । यज्ञमधिकृत्य प्रवृत्तंब्रह्मवेदंतथादेवतामधिकृत्यप्रवृत्तंतथा जीवमधिकृत्य तथावेदान्तेषूक्तं सत्यंज्ञानमनन्तंब्रह्मेत्यादिब्रह्मप्रतिपादकंसर्वदा जपेत् ॥ ८३ ॥

( ४ ) **राघवानन्दः** । अतएवाह अधीति । अधियज्ञं यज्ञमधिकृत्य प्रवृत्तंकर्मकाण्डंइषेत्वोर्जेत्वेत्यादि । ब्रह्म वेदं जपेत् आधिदैविकं देवताईश्वरादितद्विषयकं सहस्रशीर्षादिसंकर्षणकाण्डं । आध्यात्मिकं तत्वमसि सत्यंज्ञानमनन्तंब्रह्मेत्यादि वेदान्ताभिहितं वेदान्तपदवाच्यं जपेदित्यनुषज्यते ॥ ८३ ॥

( ५ ) **नन्दनः** । यतएवंतस्माद्वेदस्य यःकश्चित्प्रदेशः संन्यासिनोऽध्यात्मज्ञानसहितोजप्यइत्याह अधीति । अधियज्ञंयज्ञमधिकृत्यप्रवृत्तंवेदंब्राह्मणभागमाधिदैविकंब्रह्मादिदेवानधिकृत्य प्रवृत्तंमन्त्रभागमाध्यात्मिकंब्रह्मोपनिषद्भागंवेदान्ताभिहितं ब्रह्मप्रणवंजपेत् । अध्यात्मज्ञानसहितमितिभावः । सच्छब्दआध्यात्मिकप्रणवजपयोरादरातिशयसूचकः ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । अधियज्ञं यज्ञमधिकृत्य ब्रह्म जपेत् यज्ञप्रतिपादकवेदभागं च पुनः आधिदैविकं देवतामधिकृत्य तत्स्वरूपप्रतिपादकं मन्त्रभागं च पुनः अध्यात्मिकं आत्मस्वरूपप्रतिपादकं एतत्त्रयं जपेत् । च पुनः यद्वेदान्ताभिहितं वेदान्तेनकथितमोंकारंसततंजपेत् ॥ ८३ ॥

---

( ८३ ) यत्=सत् ( कं० )

**इदं शरणमज्ञानामिदमेव विजानताम् ॥ इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । इदमितिवेदाख्यंब्रह्माचष्टे सोपि ब्रह्मैव । तथाचोक्तं ॥ द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परंच यत् । शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति इति । अध्ययनविज्ञानंतदर्थानुष्ठानेन निष्णातता । पूर्वस्य विधेरयमर्थवादः । अज्ञानामतदर्थविदां जपादिष्वनधिकारेण तथाच भगवता व्यासेन सिद्धिर्जापकानांदर्शिता । अथवा अज्ञाअनात्मज्ञाः शास्त्रादनवगतात्मतत्वात्मत्वात् । अपि तदुपासना पराअलब्धचित्तस्थैर्यास्तेषांवेदशरणंजपेन कर्मानुष्ठानेन वा वृत्त्या च विद्यया नरकेषु कीटपतङ्गादियोनिषु चानुपपत्तेः इदमेव विजानतांकथंपुनर्विदुषांशरणमतआह । इदमन्विच्छतांस्वर्गं एतावदेतेकर्मकाण्डज्ञाआत्मन्यलब्धमनःप्रतिष्ठावा तेषांकर्मानुष्ठानात्स्वर्गादिफलंलभ्यते । इतरे त्यक्तसङ्गाप्रेक्षणीयरागादिदोषज्ञाआत्मतत्त्वोपासनापरास्तेषामानन्त्यमपुनरावृत्तिरिति सर्वेषांवेदएव शरणं नान्यःपन्थाअस्तीत्यर्थः ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मशरणं रक्षकं । अज्ञानां ध्यानोचितज्ञानशून्यानां । विजानतां तादृक्ज्ञानवतां । आनन्त्यं मोक्षम् ॥ ८४ ॥

( ३ ) **कुल्लूकः** । इदंवेदाख्यंब्रह्म तदर्थानभिज्ञानामपि शरणंगतिःपाठमात्रेणापि पापक्षयहेतुत्वात् सुतरांतज्जानतांतदर्थाभिज्ञानांस्वर्गमपवर्गंचेच्छातामिदमेव शरणं तदुपायोपदेशकत्वेन तत्प्राप्तिहेतुत्वात् ॥ ८४ ॥

( ४ ) **राघवानन्दः** । सर्वसाध्ये वेदस्यैवसाधनत्वमाह इदमिति । इदं वेदरूपं अज्ञानां वेदार्थानभिज्ञानां पाठमात्रेण ऋचोधीतेइत्यादिफलहेतुत्वावगमात् । विजानतां कर्मकर्तव्यतया विदुषांतदुपायभूतम् । इदमेवस्वर्गमिच्छतांयागाद्यनुष्ठायिनामपीदंसाधनं यागादिबोधहेतुत्वात् । आनन्त्यंमोक्षमिच्छतांमुमुक्षूणां तदुपायतत्वज्ञानजनकत्वादिति तदुक्तमत्रैव । ब्राह्मणेषु च विद्वांसोविद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारःकर्तृषु ब्रह्मवेदिनइति । उपवीतंवातत्प्रधानत्वादिति न्यायाद्वा सर्वसाधनस्तुत्याआत्मध्यानंविधत्ते इदमिति निवीतंमनुष्याणांप्राचीनावीतंपितॄणामुपवीतंदेवानामित्यत्रोपवीतमेव निवीतादिपदाभ्यांश्रूयते उपव्ययते देवलक्ष्ममेव तत्कुरुतइत्युपवीतस्य प्राधान्यवतइति न्यायार्थः । अथवाऽज्ञानामित्यादिपदचतुष्टयेन ब्रह्मचर्यादिचतुर्णांग्रहणम् ॥ ८४ ॥

( ५ ) **नन्दनः** । आध्यात्मिकज्ञानमेवप्रकारान्तरेणस्तौति इदमिति । इदमध्यात्मज्ञानम् ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । इदमाध्यात्मिकादित्रयमज्ञानांपुंसांशरणम् ॥ ८४ ॥

**अनेन क्रमयोगेन परिव्रजति योद्विजः ॥ सविधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥ ८५ ॥**

( १ ) **मेधातिथिः** । क्रमेण योगोऽनुष्ठानं आत्मज्ञानकर्मणोःसमुच्चयेयःक्रमउक्तस्तेनऋणापाकरणंकृत्वेत्यर्थः । विधूय पाप्मानमश्वइवरोमाणिभासितथैवात्मविद्यया । यथोक्तंयथापुष्करपलाशआपोनश्लिष्यन्त्येवमेतद्विदि पापं कर्म नश्लिष्यतीति । परंब्रह्माधिगच्छति तद्रूपंसंपद्यते । निवृत्तभेदग्रहइतिविद्याश्रमफलविधिः ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । क्रमयोगेन ऋणत्रयापाकरणपूर्वकम् ॥ ८५ ॥

( ३ ) **कुल्लूकः** । अनेन यथाक्रमोक्तानुष्ठानेन यः प्रव्रज्याश्रममाश्रयति सइहलोके पापंविसृज्य परंब्रह्म प्राप्नोति । ब्रह्मसाक्षात्कारेणोपाधिशरीरनाशाद्ब्रह्मण्यैक्यंगच्छति ॥ ८५ ॥

(४) **राघवानन्दः** । अतआह अनेनेति ब्रह्मचर्यंसमाप्य गृहीभवेत् गृहीभूत्वा वनीभवेत् वनीभूत्वा प्रव्रजेदिति ॥ ८५ ॥

(५) **नन्दनः** । एवंप्रतिपादितस्य यत्याश्रमस्य फलमाह अनेनेति अनेनोक्तेन यत्याश्रमधर्मकर्मानुष्ठानेन चातुराश्रम्यक्रमयोगेनेति ॥ ८५ ॥

(६) **रामचन्द्रः** । इह शरीरं विधूय परंब्रह्माधिगच्छति ॥ ८५ ॥

**एषधर्मोनुशिष्टोवोयतीनां नियतात्मनाम् ॥ वेदसंन्यासिकानां तु कर्मयोगं निबोधत ॥८६॥**

(१) **मेधातिथिः** । वेदस्य संन्यासः त्यागः सएषामस्तीति वेदसंन्यासिकाः । वेदशब्देन यागहोमादेःकर्मणस्त्यागउच्यते न पुनर्जपत्यागः । आत्मचिन्तनंतु विहितमेव केवलंअतः स्वाध्यायः शरीरक्लेशसाध्याश्च तीर्थयात्रादयउपवासादयश्च निषिध्यन्ते । यानि त्वात्मैकसाधनसाध्यानि सन्ध्याजपादिककर्माणि तेषामनिषेधः । तदेतत्स्वस्थानएव दर्शयिष्यामः । आद्येनार्धेन प्रव्रज्याश्रमोपसंहारः उत्तरेण वेदसंन्यासिकस्य कर्मोपदेशप्रतिज्ञा ॥ ८६ ॥

(२) **सर्वज्ञनारायणः** । यतीनां यमवतां । नियतात्मनां नियमवतां । पक्वकषायाणां परिव्राजकानामिति यावत् । वेदसंन्यासिकानां अपक्वतया कषायस्य ध्यानप्रवृत्तावशक्तानां गृहस्थानां मोक्षहेतौ वेदाभ्यासएवात्मानं संन्यस्तानां । कर्मयोगं कर्तव्यमुद्यमम ॥ ८६ ॥

(३) **कुल्लूकः** । एषःयतीनांयतात्मनांचतुर्णामेव कुटीचरबहूदकहंसपरमहंसानांसाधारणोधर्मोवोयुष्माकमुक्तः इदानींयतिविशेषाणांकुटीचराख्यानांवेदविहितादिकर्मयोगिनामसाधारणंवक्ष्यमाणंपुत्रैश्वर्यैसुखंवसेदिति कर्मसंबन्धंशृणुत । भारते चतुर्धाभिक्षवउक्ताः ॥ चतुर्धाभिक्षवस्तु स्युः कुटीचरबहूदकौ । हंसःपरमहंसश्चयोयःपश्चात्सउत्तमइति ॥ कुटीचरस्यायंपुत्रभिक्षाचरणरूपासाधारणकर्मोपदेशः । गोविन्दराजस्तु गृहस्थविशेषमेव वेदोदिताग्निहोत्रादिकर्मत्यागिनंज्ञानमात्रसंपादितवैदिककर्माणंवेदसंन्यासिकमाह । तन्न यतोगृहस्थस्याहिताग्नेरन्त्येष्टौ विनियोगश्चतुर्थाश्रमाश्रयणे चात्मनि समारोपः शास्त्रेणोच्यते तदुभयाभावेसत्येवमेवाग्नीनांत्यागः स्यात् । गोविन्दराजोगृहस्थंवेदसंन्यासिकंब्रुवन् । एवमेवाहिताग्नीनांत्यागमर्थादुपेतवान् वेदसंन्यासिकंमेधातिथिःप्राहनिराश्रमम् । तन्मतेचातुराश्रम्यनियमोक्तिः कथंमनोः ॥ ८६ ॥

(४) **राघवानन्दः** । यतिधर्ममुपसंहरति एषइति । यतीनां त्रणायां बहूदकहंसपरमहंसभेदेन । वेदसंन्यासिकानां कुटीचकानां वेदोक्ताग्निहोत्रादिकर्मत्यागिनां नतु तज्जपत्यागिनामितिमेधातिथिः ॥ ८६ ॥

(५) **नन्दनः** । एवंप्रतिपादितस्य संन्यासउपपद्यते नान्यस्येत्याह एषइति । एतच्छब्देनात्रफलाभिसंन्धियुक्तंकर्मविवक्षितम् । तस्य त्यागोवेदसंन्यासस्तद्वान्वेदसंन्यासिकः । नहि वेदस्य शब्दराशिरूपस्य संन्यासउपपद्यते । वेदसन्यासिकानांब्रह्मत्वेन नियतोवेदमभ्यस्यन्निितिवक्ष्यमाणत्वात् । कर्मयोगंवक्ष्यमाणंदशलक्षणंधर्मात्मकम् ॥ ८६ ॥

(६) **रामचन्द्रः** । हेद्विजाः नियतात्मनां नियमवतां पक्वकषायाणांयतीनां एषधर्मअनुशिष्टः कथितः । वेदसंन्यासिकानां अपक्वकषायतया मोक्षहेतोर्वेदाभ्यासरतात्मनांकर्मयोगंनिबोधत ॥ ८६ ॥

**ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ॥ एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥ ८७॥**

(१) **मेधातिथिः** । ननुच संन्यासिककर्माणि वक्ष्यामीति प्रतिज्ञयाऽऽश्रमानुक्रमणमप्रकृतं केचिदाहुर्नसंन्यासआश्रमान्तरमत्रैवान्तर्भावोस्येतिदर्शयितुम् । सच कस्मिन्गृहस्थेन्तर्भावितः गृहेहि वासस्तस्य । अन्यैस्तु प्रव्रज्यायांसंगत्यागसा-

मान्यायतोनास्यान्तर्भावेप्रयोजनं पुरुषधर्मैर्यतिधर्मैश्च नयागादावधिकरिष्यति । वैशेषिकैश्च स्वशब्दविधानादनाश्रमित्वात्संवत्सरमनाश्रमीति प्रायश्चित्तप्रसङ्गादितिचेत् वचने नैवास्याव्यवस्थायाविहितत्वात्कुतःप्रायश्चित्तंप्राप्तम् । तस्माद्गृहस्थादितुल्यतया संन्यासिकंप्रशंसितुमाश्रमान्तरसंकीर्तनम् तच्च समुच्चयंद्रढयितुं गृहस्थानमवस्थितिरेषामित्यर्थः । गृहस्थः प्रभवः स्थितिहेतुरेषामितिविग्रहः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । तत्र गार्हस्थ्यमेव तावत्स्तौति ब्रह्मचारीति । एतेगृहस्थप्रभवाः । गृहस्थस्यैवापत्योत्पादकत्वात् अनुत्पन्नानांचाश्रमायोगात् ॥ ८७ ॥

( ३ ) **कुल्लूकः** । इदानींवेदसंन्यासिकस्य प्रतिज्ञातिकर्मयोगेऽनन्तरंवक्तुमुचितेऽपि वेदसंन्यासिकः पंचमाश्रमी निराश्रमी वा चत्वारएवाश्रमानियताइति दर्शयितुमुक्तानाश्रमाननुवदति ब्रह्मचारीति । ब्रह्मचर्यादयोयएते पृथगाश्रमाउक्ताएते चत्वारएवगृहस्थजन्याभवन्ति ॥ ८७ ॥

( ४ ) **राघवानन्दः** । कुटीचकाख्यानांवेदसंन्यासिकत्वेन पञ्चमाश्रमत्वंप्राप्तमितिशङ्कास्यात्तदर्थमुक्तानाश्रमाननुवदति ब्रह्मचारीति । एषांनैष्ठिकोपकुर्वाणषट्कर्मत्रिकर्मवालखिल्यफेनपकुटीचकबहूदकाद्यवान्तरभेदेपि चत्वारएवतइति । गृहस्थप्रभवागृहस्थमाश्रित्यैव प्रकर्षेणतेभवन्ति । गृहस्थस्यापि शिलोञ्छनादिवृत्तिर्गृहस्थमाश्रित्यैव भवति । यद्वागृहस्थस्यैव सर्वे चत्वारःपुत्रास्तदन्येषांपुत्राभावादिति तथाच गौतमसूत्रं एषा गृहस्यैकायोनिरिति ॥ ८७ ॥

( ५ ) **नन्दनः** । न केवलं चतुर्थाश्रमएव वेदसंन्यासिकस्य परमगतिप्राप्त्युपायः किंतु यःकश्चिदप्याश्रमइति श्लोकद्वयेनाह ब्रह्मेति । ब्रह्मचारी ब्रह्मचर्यम् । भावप्रधाननिर्देशः । एवमुत्तरत्रापि । गृहस्थप्रभवागार्हस्थ्यमूलाः । अनेनगार्हस्थ्यस्य श्रैष्ठ्यंसूचितम् ॥ ८७ ॥

**सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ॥ यथोक्तकारिणं विप्रंनयन्तिपरमां गतिम् ॥ ८८ ॥**

( २ ) **सर्वज्ञनारायणः** । सर्वेपि क्रमशो न व्युत्क्रमेण । यथाशास्त्रं नतु स्वेच्छया । आश्रमधर्मपरिग्रहेण यथोक्तकारिणं मोक्षानुगुणत्वेनोक्तानां क्रमान्नैष्ठिकधर्मवेदसंन्यासमहाप्रस्थानध्यानाभ्यासानां कर्तारं । परमांगतिं मोक्षं नयन्ति नतु यत्याश्रममात्रं । तथाच सर्वप्रभवत्वान्मोक्षहेतुत्वादगार्हस्थ्यं प्रशस्ततरमित्यर्थः ॥ ८८ ॥

( ३ ) **कुल्लूकः** । एते सर्वे चत्वारोऽप्याश्रमाःशास्त्रानतिक्रमेणानुष्ठिताः । अपिशब्दात्त्रयोद्वावेकोऽपि यथोक्तानुष्ठातारंविप्रंमोक्षलक्षणांगतिंप्रापयन्ति ॥ ८८ ॥

( ४ ) **राघवानन्दः** । सर्वे धर्माब्रह्मचर्यादयः क्रमशउक्तक्रमेण निषेविताअनुष्ठिताः । यथोक्तकारिणं यथाविध्याश्रमचतुष्टयानुष्ठातारं । विप्रमिति मनुवचनाद्विप्रदेहस्यैव संन्यासात्मज्ञानान्मुक्तिः । ब्राह्मणाविविदिषन्ति ब्राह्मणाःपुत्रैषणायाश्च सब्राह्मणःकेन स्यादितिब्राह्मणश्रुतेः । गर्भस्थोवामदेवःप्रतिपेदइतिमन्त्रलिङ्गात् श्वेतकेतुभृग्वादिसंवादात् । काश्यादिमृतानामप्यन्येषांतात्कालिकविप्रदेहोनुमेयइति परमामितिविशेषणान्मोक्षाख्याम् ॥ ८८ ॥

( ५ ) **नन्दनः** । यथोक्तकारिणंनतुयथोक्तफलैषिणम् ॥ ८८ ॥

**सर्वेषामपि चैतेषां वेदस्मृतिविधानतः ॥ गृहस्थउच्यतेश्रेष्ठः सत्रीनेतान्बिभर्तिहि ॥ ८९ ॥**

( १ ) **मेधातिथिः** । इदमयुक्तंवर्तते वेदशास्त्रश्रुत्या गार्हस्थस्य विधानंप्रतिज्ञायते । इतरेषांच भर्तव्यत्वम् । गार्हस्थस्य प्रत्यक्षश्रुतिविधानेनैवाश्रमान्तराणांसद्भावः । संनिहिततपःस्मृतिभ्योबलीयसी श्रुतिः । अथोच्येत नैवायमभिसंबन्धः-

क्रियते वेदश्रुत्याविधानादित्यभिसंबन्धः सत्यपिचैतान्विविधाने गृहस्थस्य श्रैष्ठ्यंतद्धरणनिमित्तंसत्रीनेतानित्यनेन प्रतिपाद्यते । तत्र वक्तव्यंकथमाश्रमान्तराणांश्रुतत्वात् श्रौतत्वे च स्पष्टेयं स्मृतिर्विरुध्यते । प्रत्यक्षविधानाद्गार्हस्थ्यस्येत्यादिना यः संबन्धान्तरसंभवः । अथोच्येत गृहीभूत्वावनीभवेत् वनीभूत्वाप्रव्रजेदिति जाबालश्रुतिमपेक्ष्य सर्वाण्येवाश्रुतानीतिस्मृतिविरोधस्तावदपरिहृतएव । किंच नैषाश्रुतिर्विधात्री न ह्येतत्श्रुतं एवंवने वा परिहर्तव्यानीमानि वनस्थेनैव कर्माणिकर्तव्यानीमानि प्रव्रजितेनेति । यथाऽऽधानात्प्रभृत्याचरमेष्टिसर्वंगृहस्थकर्म आश्रमान्तराणांकेवलंनाममात्रंश्रूयते गृहीभूत्वेत्यादि तस्मात्पूर्वापरविरुद्धंगार्हस्थ्यंवेदमूलमाश्रमाणांचोपदेश्यम् । अत्रोच्यते सत्यमाधानात्प्रभृति गृहकर्माणिप्रत्यक्षश्रुतानि कृतदारपरिग्रहस्य तत्र विवाहे प्रयुक्तिनिरूपणार्त्त्किकर्म श्रुतिभिः प्रयुज्यते अग्निहोत्रादिभिः स्वाहाकारः श्रुतेरथापत्योत्पत्तिविधिनाउतदृष्टेन पुरुषार्थेन अनुरागःस्त्रीमात्रंप्रयुङ्क्ते न विवाहं येन विनायन्ननिष्पद्यते तत्तस्य प्रयोजकमिति न्यायः । रागिणांच स्त्रीमात्रेण गृह्यकर्मनिर्वृत्तिः किमिति विवाहमपेक्षेरन्न सत्यं यदि वचनान्तरेस्त्रीमात्रगमनंनिषिद्धंस्यात् । समानेपि सर्वत्र वेदाधिगमे शास्त्रतोगम्यागम्यविवेकः । अतश्च धीरप्रकृतीनां न विवाहमन्तरेण स्वार्थसंपत्तिरितियुक्तेरेव वेदस्य प्रयोजकाशङ्का यद्येवं सर्वस्य न प्रयोजकानि सन्ति सर्वेषांतस्मिन्सत्यर्थनिवृत्तौ किंतेन निरूपितेन योस्ति विवाहप्रयोजकः सोस्तु आश्रमान्तराणि प्रत्यक्षविधाने गार्हस्थस्य कथमुपपद्यन्तइत्येतदधिकृतं विवाहप्रयुक्तिविनातु केन संगच्छते। उच्यते यावदुक्तंसर्वेषामर्थसिद्धिरिति सत्यं एकेन प्रयुक्तावन्यस्य प्रसंगादुपकारसिद्धौ न पृथक्प्रयोक्तृत्वकल्पना यथाव्रीयहःपुरुषार्थेन जीवनेन प्रयुक्ताःकर्मसु विनियुज्यन्ते। न कर्मणि धनार्जनंप्रयुज्यते यथा वाविद्या सत्यपि वेदस्यानधिकारे न प्रयुज्यते स्वाध्यायविधिनैवतत्सिद्धेः । एवमिह कामतःप्रवृत्तिसिद्धेर्नकर्मश्रुतयःप्रयोक्तव्याः तेनाकृतविवाहमपि कृत्यकर्मविधयउपपत्स्यन्ते अतश्च योब्रह्मचर्मएवकथंचित्परिपक्वकषायस्सन विवक्षते ततस्सद्वितीयत्वाभावान्नाधिकरिष्यते । अतश्च श्रौतेष्वनधिकारात्तादृशस्याश्रमान्तरतापत्स्येत । अन्ये मन्यन्ते नायंधनतुल्योविवाहः यथा धनेन विना जीवनमनुपपन्नमिति सर्वे जीवेद्धनतः एवं न स्त्रियमन्तरेण जीवनाभावइत्यतएव न दृष्टंनियमिनः प्रयोजनंसंभवतीतिधर्माधिकारार्थोपि युक्तोविवाहः अवश्यंचैतदेवंविज्ञेयमधिकारोत्पत्त्यर्थेयत्नः कर्तव्यइति । इतरथा हि कृतोत्सर्गस्याशुचित्वादधिकारापनये जननादि शुद्धकालावस्थे च संपादयतोन नित्यकर्मातिक्रमः स्यात्। ततश्च केनार्थेन मृतादि शुद्ध्यवधिक्लेशमादध्यात् तदपि विहितमेवेतिचेत् एवंतावन्मात्रस्यातिक्रमोनपुनर्विधिसहस्य । अथोच्येत कस्य पुनर्विधेरयंव्यापारोयदपि कृतत्वसंपत्त्यर्थमधिकृतः स्यामिति पुरुषेण यत्नः कर्तव्यइत्युपदिशति । एतावदग्निहोत्रादिविधयस्तेयस्याम्नायस्तद्विषयांकर्तव्यतांगमयन्ति न त्वग्नीनामुत्पत्तिंप्रयुञ्जते । अग्नयोपि काम्येषु लिप्सया प्रवर्तमानेन तदधिकारसिध्यर्थमाधीयन्ते । तथाहि तेषु जातेष्वाहिताग्नित्वेयावज्जीवश्रुतयः । भार्यावतश्चाधानेऽधिकारः यथैवाधिकारिणमात्मानंकर्तुमग्नीनाधत्ते एवंभार्यामप्युपयच्छते अतोन कस्यचिद्विधेरर्थोविहितोयदिनाग्निहोत्रादिष्वधिकारोजनयितव्यः नच विवाहविधिरेवस्वार्थकर्तव्यतामवगमयति नित्याग्निहोत्रादिश्रुतिवत्संस्कारकर्मत्वादधिकारश्रवणाभावाच्च अत्र पूर्वेवदन्ति । ऋणत्रयापाकरणश्रुतिरस्ति जायमानोवैब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान्प्रजायतइत्यादि । एषा श्रुतिर्जातमात्रनिबन्धना । नचात्र जन्मद्वितीयमुपनयनाख्यमभिप्रेतंप्राक्ततस्तिर्यक्समानधर्मत्वात् । आधानेजन्मनि सति यावता कालेनाधिकारावगमोभवति तदेव ऋणश्रुत्या परिमृह्यते । ततश्च विदुषः स्सत्यधिकारे यः कन्यांयाचमानोन प्राप्नुयाद्यावत्सर्वतः पलितस्तस्य वानप्रस्थादावधिकारः । सह्येतन्निश्चिनोति यौवने वा याकन्यासर्वतरमिदानींयाचतेकथमसौ कृष्णकेशस्यैवाधानंश्रुतंभार्यामरणंवर्जयित्वा न सर्वतः पलितेनाधातव्यमितिश्रुत्यर्थंव्याचक्षते कर्मसंबन्धाद्गृहस्थः श्रेष्ठः अत-

आश्रमस्यैव श्रैष्ठ्यमुक्तंभवति त्रीनेतानिति । इदमपरंश्रैष्ठ्यकारणंयदन्येषामाश्रमाणांभरणं । तदुक्तं ज्ञानेनान्नेन चेति ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । तदेव प्रकृतमाह सर्वेषामिति । वेदेश्रुतितः शब्दाभिधानवृत्त्या गृहस्थस्य धर्माणामेव बाहुल्येन विधानदर्शनादितरधर्माणांतुक्वचिदेव विधानाद्बलवत्तात्पर्यं गार्हस्थ्यधर्मएव श्रुतेरित्यर्थः । श्रेष्ठत्वेहेत्वन्तरमाह सत्रीनिति । त्रीनाश्रमान् बिभर्ति पुष्णाति तस्माद्गृहस्थाश्रमे परोपकारबाहुल्यात्तस्य च सत्त्वशुद्धित्वाद्गृहस्थएव श्रेष्ठः ॥ ८९ ॥

( ३ ) **कुल्लूकः** । प्रकृतवेदसंन्यासिकस्य गृहे पुत्रैश्वर्येसुखेवासंवक्ष्यति तदर्थंगृहस्थोत्कर्षमाह सर्वेषामिति । सर्वेषामेतेषांब्रह्मचार्यादीनांमध्ये गृहस्थस्यश्रूयमाणत्वेन प्रायशोऽग्निहोत्रादिविधानाद्गृहस्थोमन्वादिभिः श्रेष्ठउच्यते । तथा यस्माद्ब्रह्मचारिवानप्रस्थयतीनसौ भिक्षादानेन पोषयति तेनाप्यसौश्रेष्ठः यथोक्तं यस्मात्त्रयोऽप्याश्रमिणोज्ञानेनान्नेनान्नेनचान्वहमिति ॥ ८९ ॥

( ४ ) **राघवानन्दः** । किंच सर्वेषामिति । विधानमाचरंस्तेभ्यस्त्रीनेतान्बिभर्तीति कृत्वा श्रेष्ठः । वानप्रस्थस्यापि गृहस्थकालीनविद्याद्युपजीवित्वात् ॥ ८९ ॥

( ५ ) **नन्दनः** । तथापिवेदसंन्यासिकस्य गृहस्थाश्रमश्रेष्ठतरइत्याह सर्वेषामिति । वेदस्यस्मृत्याःप्रत्यक्षेण विधानतःवैदिकानामाधानादीनांकर्मणांगृहस्थमधिकृत्य विधानस्य प्रत्यक्षश्रुतिमूलत्वादित्यर्थः ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । सगृहस्थः त्रीनेतानाश्रमान्बिभर्ति ॥ ८९ ॥

## यथा नदीनदाः सर्वे सागरे यान्ति संस्थितम् ॥ तथैवाश्रमिणःसर्वे गृहस्थे यान्ति संस्थितम् ॥ ९० ॥

( १ ) **मेधातिथिः** । एषएवार्थोदृष्टान्तेनदृढीक्रियते । नद्योगङ्गादयोभिद्यादयोनदाः केनचिदाधारसन्निवेशभेदेन रसभेदेन च नदीनदयोर्निर्देशभेदः एकत्वविधानंतु रूढ्या लिङ्गभेदेभार्यादारशब्दवत् । संस्थितिराश्रमः समुद्रोयथासर्वजलाश्रयएवंगृहस्थः सर्वधर्माधिकृतवान् ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । हेत्वन्तरमाह यथेति । संस्थितिमवस्थानं ब्रह्मचर्यपूर्वकत्वादाश्रमान्तराणां तस्यच गृहस्थाश्रयणनियतत्वात् अतोविश्वस्याश्रयणीयत्वादपि श्रेष्ठइत्यर्थः ॥ ९० ॥

( ३ ) **कुल्लूकः** । यथा सर्वे नदीनदागङ्गाशोणाद्याः समुद्रेऽवस्थितिंलभन्ते एवंगृहस्थादपरे सर्वाश्रमिणस्तदधीनजीवनत्वाद्गृहस्थसमीपेऽवस्थितिंलभन्ते ॥ ९० ॥

( ४ ) **राघवानन्दः** । किंच यथेति । संस्थितिं गृहस्थसमीपेइति कुल्लूकः । संस्थितिं मृतिं प्राप्य गृहस्थेष्वेव यान्तिजायन्तइति वार्थः । गृहस्थे सति सम्यक्स्थितिंवा तएव गृहस्थप्रभवाइत्युक्तं । गृहस्थंसर्वधर्मेष्वधिकृत्यर्थमर्थवादइतिमेधातिथिः ॥ ९० ॥

( ५ ) **नन्दनः** । संस्थितिम् प्रतिष्ठाम् ॥ ९० ॥

( ६ ) **रामचन्द्रः** । संस्थितिं एकत्रस्थितिम् ॥ ९० ॥

## चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ॥ दशलक्षणकोधर्मः सेवितव्यः प्रयत्नतः ॥ ९१ ॥

( १ ) **मेधातिथिः** । वक्ष्यमाणोपन्यासार्थः श्लोकः । दशलक्षणानि यस्येति बहुव्रीहिः । लक्षणंस्वरूपं । सेवि-

तव्यः सर्वकालमनुष्ठेयः। उक्तानामप्येतेषांप्रधानत्वाय पुनर्वचनं। ज्ञानकर्मसमुच्चयपक्षश्चानेन पुनर्वचनेन दृढीकृतः ॥९१॥

( २ ) **सर्वज्ञनारायणः**। वेदसंन्यासिकधर्मप्रक्रम्य प्रसङ्गादन्येष्वप्युपदिशति चतुर्भिरिति ॥ ९१ ॥

( ३ ) **कुल्लूकः**। एतैर्ब्रह्मचार्यादिभिराश्रमिभिश्चतुर्भिरपि द्विजातिभिर्वक्ष्यमाणोदशविधस्वरूपोधर्मःप्रयत्नतः। सततमनुष्ठेयः ॥ ९१ ॥

( ४ ) **राघवानन्दः** । चतुर्णांसाधारणधर्मानाह चतुर्भिरिति ॥ ९१ ॥

( ५ ) **नन्दनः**। एतैर्वेदसंन्यासिकैः ॥ ९१ ॥

## धृतिः क्षमा दमोऽस्तेयंशौचमिन्द्रियनिग्रहः ॥ धीर्विद्या सत्यमक्रोधोदशकं धर्मलक्षणम् ॥ ९२ ॥

( १ ) **मेधातिथिः** । धृत्यादयआत्मगुणाः तत्र धृतिर्नाम धनादिसंक्षये सत्वाश्रयः। यदिक्षीणंततःकिंशक्यमर्जयितुमिति। एवमिष्टवियोगादौ संसारगतिरियमीदृशीति प्रचलतश्चित्तस्य यथापूर्वमवस्थापनम्। क्षमा अपराधमर्षणम्। कस्मिंश्चिदपराद्धरि प्रत्युद्वेजनानारम्भः । दमः अनौद्धत्यं। विद्या मदादित्यागः । अस्तेयंप्रसिद्धं। शौचमाहारादिशुद्धिः। इन्द्रियसंयमः अप्रतिषिद्धेष्वपि विषयेष्वप्रसंगः । धीःसम्यग्ज्ञानं प्रतिपक्षसंशयादिनिराकरणम्। विद्याऽऽत्मज्ञानं कर्माध्यात्मज्ञानभेदेन धीविद्ययोर्भेदः। एतत्पौनरुक्ततया धीविद्येतिपठन्ति तन्न सम्यक् भेदस्य दर्शितत्वात्। अन्यत्प्रसिद्धम्। अक्रोधः उत्पत्स्यमानस्यानुत्पत्तिः क्षमाकृतेप्यपकारेऽपकारानारम्भः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः**। धृतिः प्रारब्धकर्मणि दुःखेसत्यनुद्वेगः। क्षमा क्रोधहेतूत्पत्तावपि तदनुत्पादः। दमस्तपःक्लेशसहता । अस्तेयं परपरिगृहीतेष्वस्पृहा। शौचं मृदादिभिः। इन्द्रियाणांनिग्रहोविषयेष्वप्रवर्तनं। ह्रीरकार्यान्निवर्तकं ज्ञानं । विद्याऽत्मोपासना। सत्यं मिथ्याहितात्मकवाक्यानुक्तिः । अक्रोधः दैवादुत्पन्ने क्रोधे तन्निवर्तनप्रयत्नः। धर्मलक्षणं धर्मकारणम् ॥ ९२ ॥

( ३ ) **कुल्लूकः**। तमेवस्वरूपतःसंख्यादिभिश्चदर्शयति धृतिरित्यादि। संतोषोधृतिः। परेणापकारे कृते तस्य प्रत्यपकारानाचरणम् क्षमा। विकारहेतुविषयसन्निधानेऽप्यविक्रियत्वंमनसोदमः मनसोदमनंदमइतिसन्दवचनात् । शीतातपादिद्वन्द्वसहिष्णुतादमइति गोविन्दराजः। अन्यायेन परधनादिग्रहणं स्तेयंतद्भिन्नमस्तेयम्। यथाशास्त्रंमृज्जलाभ्यांदेहशोधनंशौचम्। विषयेभ्यश्चक्षुरादिवारणमिन्द्रियनिग्रहः । शास्त्रादितत्त्वज्ञानंधीः। आत्मज्ञानंविद्या । यथार्थाभिधानंसत्यम्। क्रोधहेतौसत्यपि क्रोधानुत्पत्तिरक्रोधः। एतद्दशविधंधर्मस्वरूपम् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । तानेवाह धृतिरिति। धृतिः स्वस्वधर्मास्खलनं। क्षमा द्वन्द्वसहिष्णुता। दमोमनसोनिग्रहः। शौचं बाह्यमाभ्यन्तरं। धीः शास्त्रतत्वज्ञानं। विद्यात्मज्ञानंसगुणोपासना वा ॥ ९२ ॥

( ५ ) **नन्दनः**। दशलक्षणंधर्ममाह धृतिरिति । धृतिःस्वधर्मापरित्यागः। क्षमाऽवमानसहत्वम्। दमोऽनुद्धतिः। ह्रीर्निषिद्धकरणे लज्जा धीरितिपाठेऽध्यवसायः । विद्या बाहुश्रुत्यम् । अक्रोधोवाञ्छितार्थप्रतिघातिषु चित्तस्याविकारः ॥ ९२ ॥

( ६ ) **रामचन्द्रः**। धृतिः कार्यानुद्वेगः। क्षमाशान्तिः। दमः तपः क्लेशसहिष्णुता । अस्तेयं परद्रव्यनिस्पृहता ।

---

( ९२ ) धीर्विद्या=ह्रीर्विद्या ( क, ख, ग, च, ण, नन्दनश्च )

शौचं मृत्तिकादिभिः। इन्द्रियनिग्रहः । ह्रीः अकार्यान्निवर्तनं। विद्या आत्मोपासना। सत्यं यथार्थभाषणं। अक्रोधः। एवंधर्मलक्षणदशकंसंपूर्णम् ॥ ९२ ॥

**दशलक्षणानि धर्मस्य ये विप्राः समधीयते ॥ अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ॥ ९३॥**

( १ ) **मेधातिथिः**। पूर्वस्य विधेःफलकथनं। अध्ययनात्फलश्रुतिरनुष्ठानश्रुत्यर्था ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः**। समधीयते जानन्ति। अनुवर्तन्ते अनुतिष्ठन्ति। अज्ञात्वाऽनुष्ठानस्याफलत्वात् ज्ञानेऽपि फलोक्तिः ॥ ९३ ॥

( ३ ) **कुल्लूकः**। ये विप्राएतानि दशविधधर्मस्वरूपाणि पठन्ति पठित्वा चात्मज्ञानसाचिव्येनानुतिष्ठन्ते ते ब्रह्मज्ञानसमुत्कर्षात्परमांगतिंमोक्षलक्षणांप्राप्नुवन्ति ॥ ९३ ॥

( ४ ) **राघवानन्दः**। वेदाभ्यासार्थमेव संन्यासी वेदसंन्यासी तस्य च कृत्यमाह दशेतिद्वाभ्यां। एतेषामध्ययनेनापि कृतकृत्यतामाह अधीयतइति। अनुवर्तन्ते शब्दतोर्थतश्चाभ्यस्यन्ति परमामनुपमाम् ॥ ९३ ॥

( ५ ) **नन्दनः**। वेदसंन्यासिनोगृहस्थस्य कर्तव्यमाह। दशेति ॥ ९३ ॥

**दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ॥ वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणोद्विजः ॥ ९४ ॥**

( १ ) **मेधातिथिः** । संन्यस्येदनृणः यदा ऋणत्रयमपाकीर्णं तदा संन्यासइत्येवमर्थमेतत्। समानकालेप्रव्रज्यायांनाधिक्रियते एवंसंन्यासेपि। वेदान्तान्विधिवत् अविदितवेदान्तार्थस्य नास्ति संन्यासः। यद्यपि स्वाध्यायविध्यनुष्ठानाक्षिप्तंकर्म विधिशास्त्रवद्वेदान्तज्ञानमपि स्वाध्यायशब्दवाच्यत्वाविशेषात् तथापि वेदान्तानांपुनरुपन्यासो विशेषार्थः तत्परेण भवितव्यम्। अथ संन्यस्येदिति कःशास्त्रार्थः। कोयंसंन्यासोनाममममेदमिति परिग्रहत्यागः। ननु वेदसंन्यासिकाइत्युक्तं तत्रेदंप्रतीयते। वेदस्य वेदार्थस्यवा संन्यासः। नचवैदिककर्मसिध्यर्थाये प्रतिग्रहादयस्तेषांसंन्यासः इदमानंत्यमिच्छतामित्यध्ययनस्य ज्ञानप्राधान्येपि विहितत्वात्। अग्निहोत्रादीनांतुद्रव्यसाध्यत्वादसति ममकारे त्यागएव। सचायंधर्मापादकोमृतभार्यस्य परनिष्ठस्य वा कृतसंप्रतिविधानस्य। वाजसनेयकेहि पठ्यते। यदा प्रैष्यन्मन्यतेऽथपुत्रमाहेत्यादि। अग्निसमारोपणंच तदा विहितं। अजीर्णस्य च जरया हवाएतस्मान्मुच्यतइत्यामनन्ति। यानिचाद्रव्यसाध्यानि संध्योपासनादीनि नित्याग्निहोत्रादीनि तेषामनिषेधात्तत्रान्त्यादुच्छ्वासादधिकारः ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । वेदसंन्यासप्रकारमाह दशलक्षणमिति। वेदान्तानुपनिषदः। विधिवदाचार्योपसदनादिना अनृणोपाकृतर्णत्रयोभूत्वा संन्यसेद्वेदाभ्यासतदनुगुणाधिकारापादकसंध्योपासनादिकर्मातिरिक्तानि कर्माणि संत्यजेत् ॥ ९४ ॥

( ३ ) **कुल्लूकः** । उक्तंदशलक्षणकंधर्मंसंयतमनाःसन्ननुतिष्ठन्नुपनिषदाद्यर्थंगृहस्थावस्थायांयथोक्ताध्ययनधर्मान्गुरुमुखादवगम्य परिशोधितदेवाद्यृणत्रयः संन्यासमनुतिष्ठेत् ॥ ९४ ॥

( ४ ) **राघवानन्दः** । किंच दशेति अपठितवेदान्तस्य संन्यासेनाधिकारइत्याह वेदान्तानिति। विधिवदिति गुरुमुखात् षड्विधलिंगपुरःसरंश्रुत्वा वेदान्तानांतात्पर्यनिर्णयंच। षड्विधलिङ्गंतु ॥ उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गंतात्पर्यनिर्णय इति ॥ ९४ ॥

---

( ९३ ) दशलक्षणानिधर्मस्य=दशलक्षणकंधर्मं ( ज, झ, अ, ढ, )

( ५ ) नन्दनः । संन्यासःकाम्यकर्मत्यागः । तथाचोक्तंभगवद्गीतायाम् ॥ काम्यानांकर्मणांन्यासं संन्यासंकवयोविदुः । नियतस्य तु संन्यासः कर्मणोनोपपद्यते ॥ यज्ञोदानंतपश्चैवनत्याज्यं कार्यमेवतत् । यज्ञोदानंतपश्चैव पावनानिमनीषिणाम् ॥ एतान्यपि च कर्माणिसङ्गंत्यक्त्वाफलानिच । कर्तव्यानीतिमेपार्थनिश्चितंमतमुत्तममिति ॥ ९४ ॥

**संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन् ॥ नियतोवेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥ ९५ ॥**

**[ संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत् ॥ वेदसन्यासतःशूद्रस्तस्माद्वेदं न संन्यसेत्ऽऽ ॥ ]**

( १ ) मेधातिथिः । वेदमभ्यस्येति वेदस्यात्यागमाह । दर्शितमेतत् । अभ्यस्यन्निति शतृप्रत्ययान्तपाठोवा । पुत्रैश्वर्ये सुखंवसेत् । पुत्रग्रहणमुत्पन्नस्य पुत्रस्य अन्योपि यस्तत्स्थानः पौत्रादिस्तत्रापि युक्तोगृहान्तरन्यासइत्याहुः ॥९५॥

( २ ) सर्वज्ञनारायणः । सर्वकर्माणि नित्यनैमित्तिककाम्यानि वेदाभ्यासतदनुगुणदेहशुद्धिहेत्वाचमनस्नानसंध्याकर्मादिभ्योन्यानि संन्यस्य त्यक्त्वा संन्यासात् कर्मानुष्ठानाविनाभूतान्हिंसादिदोषानपानुदन्परिहरन् नियतोयमनियमवान् । अभ्यस्यन् सततमधीयानः । पुत्रैश्वर्ये पुत्रगार्हस्थ्ये तेन पञ्चमहायज्ञानुष्ठानंपुत्रेणैव कार्यं स्वयंतु वाच्येकेजुव्हतिप्राणमित्युक्तप्रकारेण स्वाध्यायेनैव पञ्चमहायज्ञाःसंपाद्याः । पुत्रस्यैवैश्वर्यंयद्गार्हस्थ्येनत्वात्मनइत्यभिधानेन वित्तेषु ममता पुत्रेणैव कार्या न स्वयं तथाचानीहोभूत्वा निवसेदिति गम्यते ९५ ॥

( ३ ) कुल्लूकः । सर्वाणि गृहस्थानुष्ठेयाग्निहोत्रादिकर्माणि परित्यज्याज्ञातजन्तुवधादिकर्मजनितपापानि च प्राणायामादिना नाशयन्नियतेन्द्रियउपनिषदोयन्थतोऽर्थतश्चाभ्यस्य पुत्रैश्वर्यइतिपुत्रगृहे पुत्रोपकल्पितभोजनाच्छादनत्वेन वृत्तिचिन्तारहितः सुखंवसेत् । अयमेवासाधारणोधर्मःकुटीचरकस्योक्तःइदमेववक्तुंवेदसंन्यासिनांत्विर्तिपूर्वमुक्तम् ॥ ९५ ॥

( ४ ) राघवानन्दः । पुत्रैश्वर्येपुत्रदत्तभिक्षादौ ॥ ९५ ॥

( ५ ) नन्दनः । तत्तत्काम्यकर्मफलभोगानुरूपदेहप्राप्तयः । कर्मदोषास्तानपानुदंस्तेषामपनोदनहेतोः सर्वाणि काम्यकर्माणि संन्यस्य नियतोनियतकर्मकारीवेदमभ्यस्यञ्जपन् ॥ ९५ ॥

( ६ ) रामचन्द्रः । कर्मदोषानपानुदन दूरीकुर्वन् नियतःसन्वेदमभ्यस्य ओंकारंवा अभ्यस्य पुत्रैश्वर्येपञ्चयज्ञविधानंपुत्रेण कार्यं एवंविधः सुखंवसेत् ॥ ९५ ॥

**एवंसंन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ॥ संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ ९६ ॥**

( १ ) मेधातिथिः । स्वकार्यमात्मोपासनं परमं प्रधानमस्येति स्वकार्यपरमः । अस्पृहः मनसापि स्पृहा न क्वचित्कर्तव्या ॥ ९६ ॥

( २ ) सर्वज्ञनारायणः । स्वकार्यपरमः स्वकर्तव्यनित्यकर्मविशेषस्वाध्यायमात्रपरः । अपहत्यैनः संसारहेतुमधर्मम् । तदानेन गृहस्थएव धृत्यादिदशलक्षणधर्मानुष्ठानपरः स्वाध्यायनित्योऽनीहमानः पुत्रगृहे भुञ्जानोनित्यनैमित्तिककाम्यकर्मपरित्यागादविघ्नितात्मदृष्टिर्वेदान्तार्थपरिभावनया ब्रह्मभवतीति दर्शितम् । तत्रस्नानाचमनसंध्योपासनानिस्वाध्यायाधिकारार्थमेवानुष्ठेयं संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्विति वचनेन हि संध्यानुष्ठानमपि

ऽऽ ( क ) । अयमेवश्लोकः ( अ, ड, ) चिन्हितपुस्तके इत्थंदृश्यते ॥ संन्यसेत्सर्वकर्माणिवेदंतुनपरित्यजेत् । परित्यागाद्धिवेदस्य शूद्रतामनुगच्छति ॥

शां हेतुतया स्मर्यंते यमानांमियमानांच मध्ये यावत्स्वाध्यायाविरोधस्तावदनुष्ठेयम् स्वाध्यायेच क्रियमाणे निरन्तरं तदर्थोऽनुसंधेयः अर्थज्ञानशून्यस्य तस्याल्पफलत्वादिति ॥ ९६ ॥

( ३ ) कुल्लूकः । एवमुक्तप्रकारेणवर्तमानोऽग्निहोत्रादिगृहस्थकर्माणि परित्यज्यात्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः स्वर्गादावपि बन्धहेतुतया निस्पृहः प्रव्रज्यया पापानि विनाश्य ब्रह्मसाक्षात्कारेण परमांगतिमोक्षलक्षणांप्राप्नोति ॥ ९६ ॥

( ४ ) राघवानन्दः । स्वकार्य परमः आत्मसाक्षात्कारप्रधानइति केचित् तत्र पुत्रैश्वर्यइति वचनात् । अविरक्ततया संन्यासाद्ब्रह्मणःस्थानमित्युक्तेश्च तदुपायनारायणमन्त्रोपासनया सह स्वधर्मानुष्ठानपरोभवेदित्यर्थः । संन्यासेनापहत्य एनः पापं ॥ मनोवाक्कायकर्माणि मे शुध्यन्तांज्योतिरहंविरजाविपाप्माभूयासंस्वाहेतिमन्त्रलिङ्गादिति । परमांगतिं ब्रह्मलोकावाप्तिं प्राप्नोति । परमपदप्रयोगात्पुत्रैषणायाश्चेति श्रुतेश्च । तत्राप्याश्रमे विरक्तःसन्परमहंससंन्यासंकृत्वा वा मोक्षावाप्तिरिति ॥ ९६ ॥

( ५ ) नन्दनः । वेदसंन्यासिकस्य कर्मयोगानुष्ठाने फलमाह एवमिति । स्वकार्यपरःस्वस्यकार्यनियतःकर्मनिरतस्तत्फलेष्वस्पृहः ॥ ९६ ॥

**एषवोऽभिहितोधर्मोब्राह्मणस्य चतुर्विधः ॥ पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत ॥ ९७ ॥**

**इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांषष्ठोध्यायः ॥ ६ ॥**

( १ ) मेधातिथिः । चतुर्विधोधर्मश्चातुराश्रम्यम् । ब्राह्मणस्य सर्वमेतद्विहितम् । ननुच पूर्वंगृहाश्रमे स्थित्वाविधिवत्स्नातकोद्विजइति द्विजग्रहणमुपक्रमे श्रुतं तस्य चानुपजातविरोधित्वाच्चैवर्णिकार्थिता निश्चिता अतश्चेदंब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थमेव युक्तम् यथैकवाक्यतोपक्रमोपसंहारयोर्न स्यात् । एकवाक्यत्वेतुबलवदुपक्रमार्थः शक्यः प्रतिपत्तुं कृत्स्नवाक्यपर्यालोचनया योऽर्थःसनिश्चीयते । अतोद्विजग्रहणंब्राह्मणपरतयोपसंहर्तव्यम् । अस्ति ब्राह्मणस्य द्विजातित्वम् । नतुसर्वेषु द्विजातिषु ब्राह्मण्यम् । अत्रापि द्विजशब्दार्थे संभवति नान्वयिनि लक्षणा न्याय्या । तथाच महाभारते शूद्रस्यापि त्रयआश्रमाः श्रूयन्ते शुश्रूषाकृतकृत्यस्येत्युपक्रम्य आश्रमाविहिताः सर्वे वर्जयित्वा निरामिषम् । पारिव्राज्यमित्यर्थः । नैवं तस्यायमर्थः सर्वआश्रमास्तु न कर्तव्याः किंतर्हि शुश्रूषयाऽपत्योत्पादनेन च सर्वाश्रमफलंलभते द्विजातीन् शुश्रूषमाणोगार्हस्थ्येन सर्वाश्रमफलंलभते परिव्राजकफलंमोक्षंवर्जयित्वा अतोब्राह्मणधर्मएव चातुराश्रम्यमितिसिद्धम् ॥ ९७ ॥ इति भट्टवीरस्वामिसूनोर्भट्टमेधातिथिकृतौ मनुभाष्ये षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

( २ ) सर्वज्ञनारायणः । उपसंहरति एषवइति । चतुर्विधः आश्रमभेदात् ब्राह्मणस्यैव चतुर्विधोन्येषांतु द्विजातीनांत्रिविधएव । संन्यासे तेषामनधिकारात् शूद्रस्यतु गार्हस्थ्यएवाधिकारादेकविधएव । ब्राह्मणस्येत्यत्र केचित् बौधायनेन परिव्राजकधर्मं प्रक्रम्य स्त्रीणांचैकइतिवचनात्पुल्लिङ्गमविवक्षितमित्याहुः एकग्रहणाद्बौधायनस्यापि स्त्रीणांपारिव्राज्यं नापेक्षितमिति विवक्षितमेव पुल्लिङ्गमित्यन्ये । चतुर्विधोपि पुण्यः स्वर्गहेतुपुण्यजनकः अक्षयफलोमोक्षहेतुः ॥ ९७ ॥

श्रीनारायणसर्वज्ञकृता वृत्तिर्मनुस्मृतेः । कुनिबन्धकृतव्याख्यामियंदूरे निरस्यते ॥ इतिसर्वज्ञश्रीनारायणकृतौ मनुस्मृत्यर्थविवृतौ वानप्रस्थयतिधर्मोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

( ३ ) **कुल्लूकः**। ऋषीन्संबोध्यउच्यते। एषयुष्माकंब्राह्मणस्य संबन्धी क्रियाकलापोधर्मस्तस्यैव ब्रह्मचारिगृहस्थवानप्रस्थादिभेदेन चतुर्विधः परत्राक्षयफलउक्तः । इदानींराजसंबन्धिनंधर्मंशृणुत । अत्र च श्लोके ब्राह्मणस्य चातुराश्रम्योपदेशाद्ब्राह्मणः प्रव्रजेदितिपूर्वमभिधानाद्ब्राह्मणस्यैवप्रव्रज्याधिकारः ॥ ९७ ॥ ॥ छ ॥ ॥ छ ॥

इतिश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥

( ४ ) **राघवानन्दः**। वोयुष्मभ्यं चतुर्विधः ब्रह्मचर्यादिभेदभिन्नः पुण्यः पुण्यप्रदः अक्षयफलः अक्षय[illegible]द्विपरार्धकालपर्यन्तं स्थायिफलंयस्यसः ॥ ९७ ॥

इति श्रीराघवानन्दविरचितायां मन्वर्थचन्द्रिकायां षष्ठोध्यायः ॥ ६ ॥ ॥ छ ॥

इति नन्दनाचार्यविरचिते मानवव्याख्याने षष्ठोध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

इति श्रीमानवे धर्मशास्त्रे रामचन्द्रविरचितायां टीकायांषष्ठोध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ सप्तमोऽध्यायःप्रारभ्यते ॥

राजधर्मान्प्रवक्ष्यामि यथावृत्तोभवेन्नृपः ॥ संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ १ ॥

( १ ) **मेधातिथिः**। धर्मशब्दःकर्तव्यतावचनइत्युक्तम्। यद्राज्ञःकर्तव्यंतदिदानीमुच्यतइतिप्रतिज्ञा कर्तव्यंच दृष्टार्थंषाड्गुण्यादि अदृष्टार्थमग्निहोत्रादि तत्रेहप्राधान्येनदृष्टार्थमुपदिश्यते। तत्रैवचराजधर्मप्रसिद्धिः राजशब्दस्तुनेहक्षत्रियजातिवचनः किंतर्ह्यभिषेकाधिपत्यादिगुणयोगिनिपुरुषेवर्तते अतएवाह यथावृत्तोभवेन्नृपः। नृपग्रहणेनजनपदैश्वर्यवतोधिकारमाह। प्रमाणान्तरमूलाह्यत्रधर्माउच्यन्ते। नसर्वेवेदमूलाः अन्यमूलत्वेचयदत्रधर्मशास्त्राविरुद्धंतदुच्यते। तथाच कात्यायनः अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेदिति। यथावृत्तः यद्वृत्तंयदाकारंवास्येति चबहुव्रीहिः अन्यपदार्थोराजा यथार्थप्राधान्येऽव्ययीभावः स्यात्। वृत्तंपरिपालनार्थोव्यापारोऽदृष्टार्थः। संभवश्चोत्पत्तिः सउक्तोराजानमसृजत्प्रभुरित्यादिना। परमासिद्धिर्विजिगीषोरैकाधिपत्यं राजवृत्तस्यफलप्रतिज्ञेयम् ॥ १ ॥

( २ ) **सर्वज्ञनारायणः**। एवंतावत्पञ्चभिरध्यायैर्ब्राह्मणस्यासाधारणधर्माःकथिताः अधुना द्वितीयवर्णस्य क्षत्रियस्यासाधारणधर्मानाह राजधर्मानिति। धर्मोधर्मसाधनं। यथावृत्तोयदाचारः। संभवः सृष्ट्यादौ। सिद्धिर्दृष्टार्थसिद्धिः॥१॥

( ३ ) **कुल्लूकः**। धर्मशब्दोऽत्र दृष्टादृष्टार्थानुष्ठेयपरः षाड्गुण्यादेरपिवक्ष्यमाणत्वात्। राजशब्दोऽपि नात्र क्षत्रियजातिवचनः किंत्वभिषिक्तजनपदपुरपालयितृपुरुषवचनः। अतएवाह यथावृत्तोभवेन्नृपइति। यथावदाचारोनृपतिर्भवेत्तथा तस्यानुष्ठेयानि कथयिष्यामि यथा येन प्रकारेण वा राजानमसृजत्प्रभुरित्यादिना तस्योत्पत्तिः यथाचदृष्टादृष्टफलसंपत्तिस्तदपि वक्ष्यामि ॥ १ ॥

( ४ ) **राघवानन्दः**। राजा धर्मस्य कारणमित्यनुशासनान्नृपतिधर्मयोः कार्यकारणसंगतिरध्यायद्वये। राजधर्मानिति। राजपदमत्रावेष्ट्यधिकरणन्यायेनान्ध्रप्रसिद्धिमाश्रित्य राजन्यपरं प्रजापालनकण्टकोद्धरणादिनाराज्यस्यकर्तरि वर्णान्तरेच लाक्षणिकमिति उत्तरेच ब्राह्मंप्राप्तेन संस्कारंक्षत्रियेणेति अन्तेच क्षत्रियस्यापराधेन ब्राह्मणःसीदति क्षुधा वेदाभ्यासोहि विप्रस्य क्षत्रियस्याभिरक्षणम् नाक्षत्रंब्रह्मवर्धते क्षत्रियाय ददौ राज्यं संध्यांचोपास्य शृणुयादित्यादिस्वरसात्। नतु ब्राह्मणादौ राजधर्मप्राप्तिरिति। अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन तेजसा। जीवेत्क्षत्रियधर्मेण सह्यस्य प्रत्यनन्तरइत्यापदिमनुवचनादेवधर्माःकर्तव्याः। तत्रादृष्टमग्निहोत्रादि तदर्थं ऋत्विगादि दृष्टं प्रजापालनादितदर्थं षाड्गुण्यादि तयोः प्राप्तिः। यथावृत्तोयथाचारोभवेत्। संभवश्चेन्द्रादिभ्यउत्पत्तिः। सिद्धीरणेनैव ॥ १ ॥

( ५ ) **नन्दनः**। एवंप्रतिपादितस्याश्रमधर्मस्य रक्षाधिकारिणंराजानंप्रति धर्मान्प्रस्तौति राजेति। यथावृत्तोयत्प्रकारवृत्तोनृपोभवेत् नृनृपातुंशक्नुयात् तथा च वक्ष्यामि सिद्धिरैहिकामुष्मिककफलम् ॥ १ ॥

( ६ ) **रामचन्द्रः** । राजधर्मानाह राजधर्मानिति । यथावृत्तः यथाचारः नृपोभवेत् तस्य राज्ञः यथासंभवः सृष्ट्यादौ जन्म तस्य यथा सिद्धिः कार्यसिद्धिः एतादृशान्वक्ष्यमाणलक्षणान्राजधर्मान्प्रवक्ष्यामि ॥ १ ॥

**ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ॥ सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ २ ॥**

( १ ) **मेधातिथिः** । ब्रह्मवेदः तत्रश्रुतःसंस्कारोब्राह्मः सवेदाध्ययनजन्योग्रहणवतोर्थलक्षणोवेदस्यस्वाध्यायविधिनिर्वर्त्यइत्यर्थः । उपनयनंतु ब्रह्मग्रहणार्थत्वाद्ब्राह्ममितियुक्तं । तथा च वक्ष्यति त्रैविद्येभ्यस्त्रयींविद्यामिति इतरथाविदितवेदितोपदेशःस्यात् । गर्भाधानादिस्मृतिशास्त्रादृष्टाचत्वारिंसंस्कारम् । क्षत्रियेणेति एतेन क्षत्रियएव राज्याधिकारीति सूचितं क्षत्रियाभावे तदतिदेशोपि ग्राह्यःअन्यथा प्रजालोपः स्यादितिभावः सर्वस्य करदस्य दीनानाथादेश्च । अस्येति स्वविषयवासिनां यथास्वंजनपदपुरनिर्देशः । यथान्यायं न्यायःशास्त्रंधर्मशास्त्ररूपंनार्थशास्त्रमौशनसादिप्रणीतं तमनतिक्रम्य । परिरक्षणंपरिपालनं । अपायपरिहारोदुर्बलानांबलवद्भिरनभिभवः शास्त्रमर्यादानतिक्रमश्च । दुःखत्राणंपरिरक्षा शास्त्रातिक्रमे चादृष्टंदुःखं अतस्तदनतिक्रमे राजभयेन रक्षिताभवन्ति । राजदण्डे दुःखमिति चेन्महतोनरकादिदुःखाद्राजदण्डनमल्पीयः कर्तव्यमिति विधिः अधिकारश्चाष्टमे निरूपितः ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मंतूपनयनादिस्नानान्तम् ॥ २ ॥

( ३ ) **कुल्लूकः** । ब्रह्मवेदस्तत्प्राप्त्यर्थतयोपनयनसंस्कारस्तं यथाशास्त्रं प्राप्नुवता क्षत्रियेणास्य सर्वस्य स्वविषयावस्थितस्य शास्त्रानुसारेण नियमतोरक्षणंकर्तव्यम् । एतेन क्षत्रियएव नान्योराज्याधिकारीतिदर्शितम् । अतएव शास्त्रार्थतत्त्वंक्षत्रियस्य जीवनार्थं । तथा क्षत्रियस्य तु रक्षणंस्वकर्मसु श्रेष्ठंच वक्ष्यति ब्राह्मणस्यह्यापदि जीवेत्क्षत्रियधर्मेणेत्यभिधास्यति वैश्यस्यापिक्षत्रियधर्मंशूद्रस्य च क्षत्रियवैश्यकर्मणी जीवनार्थमापदि जगाद नारदः । न कथंचन कुर्वीत ब्राह्मणः कर्मवार्षलम् । वृषलः कर्मचब्राह्मंपतनीये हिते तयोः ॥ उत्कृष्टंचापकृष्टंच तयोः कर्म न विद्यते । मध्यमे कर्मणी हित्वा सर्वसाधारणे हिते ॥ रक्षणंवेदधर्मार्थंतपःक्षत्रस्यरक्षणमिति सर्वतोधर्मषड्भागोराज्ञोभवतिरक्ष्यतइतिचवक्ष्यमाणत्वात् रक्षितुर्बलिषड्भागग्रहणाद्दृष्टार्थमपि योरक्षन्बलिमादत्तइतिनरकपातंवक्ष्यति ॥ २ ॥

( ४ ) **राघवानन्दः** । ब्रह्म वेदस्तत्कृतं संस्कारमुपनयनवेदाध्ययनादिप्राप्तेन क्षत्रियेण ॥ २ ॥

( ५ ) **नन्दनः** । अभिषेकादिसंस्कारयुक्तस्य क्षत्रियस्य रक्षायामधिकारोनान्यस्येत्याह ब्राह्ममिति । ब्राह्मं संस्कारंवैदिकमुपनयनाभिषेकादिकं संस्कारं प्राप्तोयस्तस्यैव रक्षायामधिकारोनान्यस्येति ॥ २ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मंसंस्कारं उपनयनादिसंस्कारान् प्राप्तेन क्षत्रियेण यथाविधि अस्य सर्वस्य जगतः परिरक्षणंकर्तव्यम् ॥ २ ॥

**अराजके हि लोकेऽस्मिन्सर्वतोविद्रुते भयात् ॥ रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ ३ ॥**

( १ ) **मेधातिथिः** । विद्रुते पीडितेऽप्रतिष्ठिते वा प्रभुः । प्रजापतिस्तुतिरियम् ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । विद्रुते कल्पादौ ॥ ३ ॥

( ३ ) **कुल्लूकः** । यस्मादराजके जगति बलवद्भयात्सर्वतःप्रचलिते सर्वस्यास्य चराचरस्य रक्षार्थं राजानंसृष्टवांस्तस्मात्तेन रक्षणंकार्यम् ॥ ३ ॥

( ४ ) **राघवानन्दः** । तत्र पुरावृत्तमाह अराजकइति । विद्रुते पीडिते । प्रभुः प्रजापतिः ॥ ३ ॥

( ५ ) **नन्दनः** । तत्र हेतुः तामधिकृत्य तस्यसृष्टत्वमित्याह अराजकेहीति । सर्वतोभयाद्दैविकान्मानुषाच प्रभुःप्रजापतिः ॥ ३ ॥

( ६ ) **रामचन्द्रः** । अराजकेऽस्मिँल्लोके भयात्सर्वतोविद्रुतेसति अस्य विश्वस्य रक्षार्थं प्रभूराजानमसृजत् ॥ ३ ॥

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः ॥ ४ ॥**

( १ ) **मेधातिथिः** । अनिलोवायुः । वित्तेशोधनपतिर्वैश्रवणः । मात्राअवयवाः । शाश्वतीः सारभूताः । निर्हृत्य निष्कृष्य ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । मात्राअवयवान् । निर्हृत्याकृष्य ॥ ४ ॥

( ३ ) **कुल्लूकः** । कथंसृष्टवानित्याह इन्द्रेति । इन्द्रवातयमसूर्याग्निवरुणचन्द्रकुबेराणांमात्राअंशान्सारभूतानाकृष्य राजानमसृजत् ॥ ४ ॥

( ४ ) **राघवानन्दः** । सर्वनियन्तृत्वविधानार्थमुत्पत्तिस्वरूपकथनेन स्तौति इन्द्रेतिद्वाभ्याम् । वित्तेशः कुबेरः । मात्राः सारभूतांशाः दधिमण्डस्य नवनीतवत् । शाश्वतीर्मन्वन्तरव्यापिनीः । निर्हृत्य निष्कृष्य ॥ ४ ॥.

( ५ ) **नन्दनः** । किमुपादायासृजदित्यपेक्षायामाह इन्द्रेति । शाश्वतीर्मात्राः स्वाभाविकानंशान् इन्द्रस्यैश्वर्यंअनिलस्य बलं इत्यादिकाःशक्तीरित्यर्थः । निर्हृत्यासृजदित्यनुषङ्गः ॥ ४ ॥

**यस्मादेषां सुरेन्द्राणां मात्राभ्योनिर्मितोनृपः ॥ तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ५ ॥**

( १ ) **मेधातिथिः** । एषामिन्द्रादीनां सुरश्रेष्ठानांमात्राभिस्तेजोंशैर्निर्मितस्तस्माद्धेतोरभिभवति । दुर्निरीक्ष्यमुखोभवति तेजसाहेतुना । निष्कृष्यनिर्मितउत्पादितःयतः कृषिरुत्पादने धातुर्वर्तते । तेनापायावधित्वान्मात्राभ्यइतिपञ्चमीतृतीयावापठितव्या ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । तेजसा वीर्येण ॥ ५ ॥

( ३ ) **कुल्लूकः** । यस्मादिन्द्रादीनांदेवश्रेष्ठानामंशेभ्योनृपतिः सृष्टस्तस्मादेषसर्वप्राणिनोवीर्येणातिशेते ॥ ५ ॥

( ४ ) **राघवानन्दः** । तदेवाह यस्मादिन्द्रादीनांमात्राभिर्निर्मितोनृपस्तस्मात्स्वतेजसा सर्वभूतान्यभिभवत्येषइति ॥५॥

( ५ ) **नन्दनः** । उक्तस्य प्रत्यक्षत्वंश्लोकत्रयेणोपपादयति यस्मादिति ॥ ५ ॥

( ६ ) **रामचन्द्रः** । यस्मात्कारणादेषां सुरेन्द्राणामिन्द्रादिलोकपालानां मात्राभ्योऽशेभ्योनिर्मितोनृपस्तस्मात्कारणात्तेजसा सर्वभूतान्यभिभवति ॥ ५ ॥

**तपत्यादित्यवच्चैषचक्षूंषि च मनांसि च ॥ न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ ६ ॥**

( १ ) **मेधातिथिः** । तपति तापयतीव संमुखो शक्यदर्शनत्वादेवमुच्यते तदाह नचैनं भुविशक्नोति ब्राह्मणजात्युत्कृष्टाब्रह्मवर्चस्विनोपि नैनमभिमुखंवीक्षितुंशक्नुवन्ति । तदुक्तं तमुपर्यासीनमधस्तादुपासीरन् ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । तपत्यादित्यवदित्यादित्यांशोपपादनमितरेष्वप्येवंस्वयमूह्यम् ॥ ६ ॥

( ३ ) **कुल्लूकः** । अयंचराजा स्वतेजसा सूर्यइव पश्यतांचक्षूंषि मनांसि च संतापयति । नचैनंराजानंपृथिव्यांकश्चिदप्याभिमुख्येन द्रष्टुंक्षमते ॥ ६ ॥

( ४ ) **राघवानन्दः** । कार्येणापि तदंशोऽनुमेयइत्याह तपतीतिद्वाभ्याम् । दुष्टानांचक्षुर्मनसोःसंतापजननात्तद्दर्शना-निष्ठाक्षमत्वंसूचितं । साधूनांनतपति विमलंप्रसाधयति ॥ ६ ॥

( ६ ) **रामचन्द्र** । सर्वेषांचक्षूंषि मनांसिचार्कवन्नृपस्तपति संतापयतीत्यर्थः ॥ ६ ॥

**सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः सधर्मराट् ॥ सकुबेरः सवरुणः समहेन्द्रः प्रभावतः ॥ ७ ॥**

( १ ) **मेधातिथिः** । अग्न्यादिदेवतानांमात्राशयत्वात्तच्छक्तियोगितयैवमुच्यते प्रभावोऽलौकिकी या शक्तिः ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रभावतः प्रभाववानेवैवंभवतीत्यर्थः ॥ ७ ॥

( ३ ) **कुल्लूकः** । एवंचाग्न्यादीनांपूर्वोक्तांशभवत्वात्तत्कर्मकारित्वाच्चप्रतापयुक्तस्तेजस्वीत्यादिना नवमाध्यायवक्ष्य-माणत्वात्सराजाश्चेत्यतिशयेनाग्न्यादिरूपोभवति ॥ ७ ॥

( ४ ) **राघवानन्दः** । सधर्मराट् यमः । प्रभावतः ऐश्वर्येण ॥ ७ ॥

( ५ ) **नन्दनः** । प्रभावतः शक्तितः ॥ ७ ॥

**बालोपि नावमन्तव्योमनुष्यइति भूमिपः ॥ महती देवता ह्येषा नररूपेण तिष्ठति ॥८॥**

( १ ) **मेधातिथिः** । मनुष्योयमित्येवंबालोपि भूमिपोराजा नावमन्तव्यः किंतर्हि महती काचिदेषादेवतैतेन मानु-षेण रूपेण स्थितेति अतोऽदृष्टेनापि दोषेण राजन्यवज्ञानयुज्यते ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । महती देवता ईश्वरः ॥ ८ ॥

( ३ ) **कुल्लूकः** । तेजश्च मनुष्यइतिबुद्ध्याबालोऽपि राजा नावमन्तव्यः यस्मान्महतीयंकाचिद्देवता मानुषरूपेणा-वतिष्ठते । एतेन देवतावज्ञायामधर्मादयोऽदृष्टदोषाउक्ताः ॥ ८ ॥

( ४ ) **राघवानन्दः** । किंच बालोपीति । अवमानप्रसक्तिमाह मनुष्यइति ॥ ८ ॥

( ५ ) **नन्दनः** । एवं देवांशप्रभवत्वाद्राजा नावमन्तव्यइत्याह बालइति । महती देवता अग्निरित्यर्थः । हि शब्दो हेतौ ॥ ८ ॥

**एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ॥ कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ ९ ॥**

( १ ) **मेधातिथिः** । अस्यविधेरर्थवादश्लोकाएते । राजधर्मोपि यतःसर्वपुरुषार्थोयं योग्निंहस्तादिनास्पृशति समिद्धस्याप्यन्तिकोभवति सदुरुपसर्पिनरःप्रमादस्खलितोदह्यते राजातुक्रुद्धः सपुत्रधनदारबान्धवंहन्ति । कुलंयेकेचित् ज्ञातयः । स्वजनाश्चतानप्यपराधसंबन्धात्पशुभिर्धनसंचयैश्चसह नाशयति ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । दुरुपसर्पिणं दुष्टेन प्रकारेणोपसर्पन्तमभिभवार्थमग्नेः स्वयमेव तन्मध्ये प्रवेशादिका-रिणम् ॥ ९ ॥

( ३ ) **कुल्लूकः** । संप्रतिदृष्टदोषमाह एकमित्यादि । योऽग्नेरतिसमीपमनवहितः सन्नुपसर्पति दुरुपसर्पिणमेकमेवा-ग्निर्दहति नतत्पुत्रादिकं क्रुद्धोराजाग्निः पुत्रदारभ्रात्रादिरूपंकुलमेव गवाश्वादिपशुसुवर्णादिधनसंचयसहितंसापराधंनिहन्ति ॥ ९ ॥

( ४ ) **राघवानन्दः** । महत्वमेवाह एकमिति । दुरुपसर्पिणं दुःखार्थमरणायुद्यतं उपसर्पिणं समीपगामिनम् । राजा-तु देशान्तरस्थमपि कुलादिविशिष्टमपि हन्ति । अग्निदेवतातोप्यधिकइतिभावः ॥ ९ ॥

( ५ ) नन्दनः । अग्नितोऽपिराजा दाहशक्तो विशिष्टतरइत्याह एकमिति । दुरुपसर्पिणामुपसर्पणविपुणां प्रमादादग्नौ पतितमितियावत् । कुलं दहतियस्मात्तस्मान्नावमन्तव्यः ॥ ९ ॥

( ६ ) रामचन्द्रः । एकमेव नरमग्निर्दहति कीदृशंनरं दुरुपसर्पिणं कुत्सेन प्रकारेण उपसर्पन्तं मिथ्याचारिणं ॥ ९ ॥

**कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ॥ कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥ १० ॥**

( १ ) मेधातिथिः । नैतन्मन्तव्यंबन्धुर्मेराजा सुहृद्वेति । कस्य राजाभवेन्नियतकानि मित्राणि राज्ञनि ॥ प्रयोजनापेक्षयाचशत्रौमित्रवदाचरन्ति मित्रेशत्रुवत् । तथाशक्ताकंचिदपराधंक्षमन्ते । शक्तिंप्राप्योन्मूलयन्ति एवंदेशकालावपि अतोधर्मसिध्यर्थंकार्यसिध्यर्थंविश्वरूपंकुरुते क्षणान्मित्रक्षणेन शत्रुः नैकरूपएव राजाभवति । अतोनविश्वसितव्यं राजनि । मैत्र्याद्वाल्लभ्यात्सौजन्याद्वा तत्तुल्यवयोदृष्ट्या नवर्तितव्यम् अपितुसर्वदा नयेन द्रष्टव्यः ॥ १० ॥

( २ ) सर्वज्ञनारायणः । कार्यं प्रयोजनं । शक्तिं स्वस्य । देशकालौ विग्रहादियोग्यौ । विश्वरूपं मित्रेपि शत्रुतां शत्रावपि मैत्रीं । अतोमित्रमित्यत्र नाविश्वसनीयमित्यर्थः ॥ १० ॥

( ३ ) कुल्लूकः । सराजा प्रयोजनापेक्षया स्वशक्तिदेशकालौचावेक्ष्य कार्यसिद्ध्यर्थंतत्त्वतोविश्वरूपंबहूनि रूपाणि करोति । जातिविवक्षया बहुष्वेकवचनम् । अशक्तिदशायांक्षमते शक्तिंप्राप्योन्मूलयति । एवमेकस्मिन्नपि देशे काले च प्रयोजनानुरोधेन शत्रुर्वामित्रंवोदासीनोवा भवति अतोराजवल्लभोऽहमिति बुद्ध्यानावज्ञेयः ॥ १० ॥

( ४ ) राघवानन्दः । किंच कार्यमिति । कार्यमनुग्रहनिग्रहौ । शक्तिं बाल्ययौवनाद्यनुरूपाम् । देशोदूरनिकटादिः । कालः सुभिक्षदुर्भिक्षादिः । अवेक्ष्य निश्चित्यैव विश्वरूपं प्रयोजनानुरूपेण शत्रुमित्रोदासीनतया ॥ १० ॥

( ५ ) नन्दनः । विश्वरूपं नानादेवतारूपम् ॥ १० ॥

( ६ ) रामचन्द्रः । देशकालौ विग्रहादियोग्यौज्ञात्वा धर्मसिद्ध्यर्थं पुनःपुनः विश्वरूपं नानारूपं इन्द्रयमादिरूपं मित्रे शत्रुतां शत्रौमित्रतां वा कुरुते ॥ १० ॥

**यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ॥ मृत्युश्च वसति क्रोधे सर्वतेजोमयोहि सः ॥ ११ ॥**

( १ ) मेधातिथिः । प्रसन्नआराधनश्चश्रियंददाति क्रुद्धोमृत्युनायोजयति अतः श्रीकामेनाराधनीयः । नकेवलंश्रियायोजयति यावदस्य शत्रवःसन्तितानपि पराक्रम्य परितोषितोहन्ति अतः शत्रुवधकामेन यथावत्परिचरणीयः । पद्माश्रीः पर्यायोपिपद्माशब्दोमहत्वप्रतिपादनार्थः प्रयुक्तोमहतींश्रियंददातीत्यर्थः । एते चार्थाराज्ञःप्राप्यन्ते यतस्सर्वतेजोमयोसौ अग्न्यादित्यचंद्रमसांतेजोबिभर्ति ॥ ११ ॥

( २ ) सर्वज्ञनारायणः । यस्यप्रसादइत्यादित्रयंक्रमात्कुबेरशक्रयमानांव्यापारकथनम् । पद्मा पद्महस्ता । यतःपद्मादयस्तदुद्भवाअतः सर्वतेजोमयः । एवमन्येष्वप्युक्तांशेषु व्यापारोज्ञेयइत्याशयः ॥ ११ ॥

( ३ ) कुल्लूकः । पद्माशब्दः श्रीपर्यायोऽपि महत्त्वविवक्षयाऽत्रप्रयुक्तः । यस्यप्रसादान्महती श्रीर्भवत्यतः श्रीकामेन सेव्यः । यस्य शत्रवः सन्ति तानपि संतोषितोहन्ति तेन च शत्रुवधकामेनाप्याराधनीयः । यस्मै कुप्यति तस्य मृत्युंकरोति तस्माज्जीवनार्थिना न क्रोधनीयः । यस्मात्सर्वेषांसूर्याग्निसोमादीनांतेजोबिभर्ति ॥ ११ ॥

---

( १० ) धर्म=कर्म ( क )

( ११ ) यस्य=दस्य ( नं० )

( ४ ) राघवानन्दः । विश्वरूपत्वं व्यनक्ति यस्येति । प्रसादेऽनुग्रहविषये पद्माश्रीरितिपर्यायत्वेपि महत्त्वानपायत्वख्यापनार्थं पद्मालयत्वसूचनेनवा सुखहेतुत्वंख्यापितम् । श्रियःसत्वेपि नृणामसंतुष्टे राजनि सुखादर्शनात् । पराक्रमे शत्रुंप्रतिगमने विजयस्तत्संभावना। तदवमानात्तत्क्रोधानन्तरंप्रजामृत्युदर्शनान्मृत्युः । तस्माच्छ्रीप्राप्तिःशत्रुजयशत्रुवधादिकामैर्नृपःसेव्यइतिध्वनिः ॥ ११ ॥

( ५ ) नन्दनः । अत्रोदाहरणमाह तस्येति । तस्य प्रसादे श्रीर्वसति तस्य प्रसादे सति लक्ष्मीर्जायतइत्यर्थः । पद्मापद्मवती । विजयइन्द्रः । सर्वतेजोमयः सर्वदेवताशक्तिमयः ॥ ११ ॥

**तं यस्तु द्वेष्टि संमोहात्सविनश्यत्यसंशयम् ॥ तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ १२ ॥**

( १ ) मेधातिथिः । प्रत्यवायाद्यथाविन्दति जनोनैवमभिप्रेतार्थलोभेनातः पुनःपुनराह तंराजानंयोद्वेष्टिप्रातिकूल्येनवर्तते तस्मिन्सत्यसंशयंनश्यति । तस्यह्याशुविनाशाय ऽन्यःकश्चिदपराधंक्षमते । अशक्यराजनिवेदनेन तत्र व्यवहारभागस्य धनपरिक्षयोभवति भूतोप्यर्थः साक्षिणांचित्तवैचित्र्यादन्यथात्वमायातिह्यपेक्ष्यमाणःकश्चित्क्रमेणापि । राज्ञा तद्विनाशार्थमपराधेन मनसिस्थितेन बाध्यतएवासौ शक्तिमत्वाद्राज्ञःप्रयतमानस्य स्वतन्त्रविरोधापत्तेः ॥ १२ ॥

( २ ) सर्वज्ञनारायणः । तस्मात्तद्द्वेषोपि न कर्तव्यइत्यर्थः ॥ १२ ॥

( ३ ) कुल्लूकः । तंराजानमज्ञतया योद्वेष्टि तस्याप्रीतिमुत्पादयति सनिश्चितंराजक्रोधान्नश्यति यस्मात्तस्यविनाशाय शीघ्रंराजा मनोनियुङ्क्ते ॥ १२ ॥

( ४ ) राघवानन्दः । नापि राज्ञाद्वेषाद्याचरणीयमित्याह यस्त्विति । विनश्यतीत्यत्र हेतुस्तस्येति ॥ १२ ॥

( ५ ) नन्दनः । हि हेतौ । विनाशाय विनाशंकर्तुम् । प्रकुरुतेऽध्यवस्यति ॥ १२ ॥

( ६ ) रामचन्द्रः । संमोहाद्यस्तंद्वेष्टि तस्य ह्याशु विनाशाय राजा मनःकुरुते ॥ १२ ॥

**तस्माद्धर्मं यमिष्टेषु सव्यवस्येन्नराधिपः ॥ अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ १३ ॥**

( १ ) मेधातिथिः । यतः सर्वतेजोमयोराजा तस्माद्धेतोरिष्टेषु वल्लभेषु मन्त्रिपुरोहितादिषु कार्यगत्याधर्मंकार्यव्यवस्थांशास्त्राचाराविरुद्धांव्यवस्येन्निश्चित्यस्थापयेन्नविचालयेत् सा तादृशीराज्ञोनुज्ञानातिक्रमणीया अद्य पुरे सर्वैरुत्सवः कर्तव्यः मन्त्रिगेहे विवाहोवर्तते तत्र सर्वैः संनिपातव्यं तथा पशवोनाद्य सैनिकैर्हन्तव्यानशकुनयोबन्धयितव्याः नातिकार्धानकैराराधनीयाएतावन्त्यहानि । एवमनिष्टेष्वपि एतेन संसर्गोनकर्तव्यएतस्य गृहे प्रवेशोनदेयः एवंविधोत्रधर्मः पटहघोषादिनाराज्ञादिष्टोनातिक्रमणीयः । नत्वग्निहोत्रादिधर्मव्यवस्थायैवर्णाश्रमिणांराजाप्रभवति स्मृत्यन्तरविरोधप्रसङ्गात् अविरोधे चास्मिन्विषये वचनस्यार्थवत्वात् ॥ १३ ॥

( २ ) सर्वज्ञनारायणः । यंधर्मंव्यवहारमिष्टेषु क्षुद्रेष्वप्यक्षुद्रयोग्यंनियमयेदेवंमहत्स्वप्यनिष्टेषु क्षुद्रयोग्यंनतु दण्डादिनियमोपि राज्ञइच्छया कार्यस्तस्य शास्त्रीयस्यैव राज्ञापि कार्यत्वात् ॥ १३ ॥

( ३ ) कुल्लूकः । यतः सर्वतेजोमयोनृपतिस्तस्मादपेक्षितेषु यमिष्टंशास्त्रानुष्ठेयंशास्त्राविरुद्धंनिश्चित्य व्यवस्थापयत्यनपेक्षितेषु चानिष्टंनियमंनातिक्रामेत् ॥ १३ ॥

( ४ ) राघवानन्दः । प्रकरणमुपसंहरति तस्मादिति । इष्टेषु प्रियेषु धर्मं अयमेवमर्हत्ययमेवंनार्हतीति व्यवस्थापयेत् । स्थापयितुस्तं मौढ्यादिना नचालयेत् यतःक्रुद्धोहन्तिप्रसन्नोनुगृह्णीयात् ॥ १३ ॥

( ५ ) **नन्दनः** । इष्टेष्वनिष्टेषु च यमर्थं धर्मादनपेतत्वेन निश्चिनोतितमर्थंधर्ममत्वा न विचालयेत् ॥ १३ ॥

( ६ ) **रामचन्द्रः** । तस्मात्कारणात् इष्टेषु क्षुद्रेषु यंधर्मंसनराधिपः व्यवस्येत् निश्चिनोति च पुनः अनिष्टं अयोग्यं अनिष्टेषु अच्छिद्रेषु अनिन्द्येषु तंधर्मंन विचारयेत् ॥ १३ ॥

**तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ॥ ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥ १४ ॥**

( १ ) **मेधातिथिः** । उक्ता राजोत्पत्तिः । दण्डोत्पत्तिरिदानीमुच्यते । तस्माद्दंतदर्थंराज्ञः प्रयोजनसिद्धये दण्डमसृजदीश्वरः प्रजापतिः । कोराज्ञोर्थोदण्डेन उच्यते गोप्तारंसर्वभूतानां गोप्ता रक्षिता दण्डएव नदण्डेनविना राजारक्षितुंशक्नोति । अतोराजत्वसिध्यर्थंएवदण्डःसृष्टः । धर्ममात्मजंब्रह्मतेजोमयमितिदण्डस्तुतिः नयागदानादिधर्मः । किंतर्हिदण्डएव । नचायंप्राणधनहारित्वादधर्मोविज्ञेयः अपित्वेषएव धर्मआत्मजःशरीरादेवजातः प्रजापतेः । नचपाञ्चभौतिकः । किंतर्हिब्रह्मणोयत्केवलंतेजस्तेन निर्मितः पूर्वराजसृष्टेः ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । तस्यार्थे राजार्थे । धर्मं धर्मांशोद्भवंविधिं । स्वस्य सुतं अतएव ब्रह्मतेजोमयं ब्रह्मणस्तेजसा सृष्टम् । दण्डं दमकम् । ईश्वरोब्रह्मा ॥ १४ ॥

( ३ ) **कुल्लूकः** । तस्य राज्ञः प्रयोजनसिद्धये सर्वप्राणिनांरक्षितारंधर्मत्वरूपंपुत्रंब्रह्मणोयत्केवलंतेजस्तेननिर्मितं न पाञ्चभौतिकंदेहंब्रह्मापूर्वंसृष्टवान् ॥ १४ ॥

( ४ ) **राघवानन्दः** । तस्य राज्ञोर्थे रक्षणादिप्रयोजनार्थं सर्वभूतानामनुशासनरूपं धनप्राणधिक्शब्दहस्ताद्याहरणात्मकंधर्मं तद्धेतुत्वात् । आत्मजं ब्रह्मणस्तेजसा निर्मितं ब्रह्मतेजोमयं पूर्वंच राजसृष्टेः । दण्डमिति कर्तृकरणव्युत्पत्त्या क्वचिद्राजा क्वचिदनुशासनम् ॥ १४ ॥

( ५ ) **नन्दनः** । अथ राज्ञः सहायं दण्डं प्रस्तौति तस्येति । तस्यार्थे तस्य राज्ञः कार्ये निमित्ते गोप्तारं गुप्तिंकरिष्यन्तं सर्वभूतधर्मगुप्त्यर्थमितियावत् ब्रह्मतेजोमयं परमात्मशक्तिमयं परमात्मशक्तिमुपादायेतियावत् धर्मात्मकंदण्डमसृजत् धर्मस्वस्माद्दण्डरूपेण ससर्ज । पूर्वं युगारम्भे । ईश्वरःप्रजापतिः । एतदुक्तं भवति दण्डस्यात्माधर्मःशरीरंब्रह्मतेजोमयमीश्वरोजनयितेति ॥ १४ ॥

( ६ ) **रामचन्द्रः** । तस्यार्थे राज्ञोऽर्थे ईश्वरः ब्रह्मापूर्वेदण्डरूपमात्मजंपुत्रमसृजत् ॥ १४ ॥

**तस्य सर्वाणि भूतानि स्थावराणि चराणि च ॥ भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥१५ ॥**

( १ ) **मेधातिथिः** । तस्यदण्डस्यभयात् संबन्धितामात्रविवक्षायांभयहेतुत्वंनास्तीति षष्ठी । दण्डभयात्स्थावराणि भूतानि भोगाय फलकुसुमच्छायादिभिर्भोगार्थंकल्पन्ते तत्समर्थाभवन्ति । योहिस्थावरः फलंनददाति सपरिशोष्यते । नचेत्परिशुष्यति सर्वतोव्यामदेशात्वाच्छित्वाऽगारीक्रीयते एतया वृक्षोपमया दण्ड्यस्य राजापथ्यकारिणःपुरुषस्यैवंकर्तव्यं च्छेदनमूलोत्पाटनादिना दण्डःप्रणेयः । स्थावरग्रहणस्तुत्या दृष्टान्तार्थमीदशोऽयंदण्डोयत्स्थावराअपिदण्ड्यन्ते किं पुनश्चराः नतु स्थावराणांदण्डोयमित्येषाबुद्धिरस्ति । स्वधर्मान्न चलन्ति अकालेन पुष्यन्ति न प्रसुवते ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । भोगाय कल्पन्ते अन्येषां । स्थावराणीत्युक्तं स्थावराणामपि पृथिव्यादीनां पृथ्व दिभिर्दण्डस्य धृतत्वात् ॥ १५ ॥

( ३ ) **कुल्लूकः** । तस्य दण्डस्य भयेन चराचराः सर्वे प्राणिनोभोगंकर्तुंसमर्थाभवन्ति । अन्यथा बलवता दुर्बलस्य धनदारादिग्रहणे तस्यापि तदपेक्ष्य बलिनेति कस्यापिभोगोन सिध्येत् वृक्षादीनांस्थावरादीनांछेदने भोगासिद्धिः । तथासतामपि नित्यनैमित्तिकत्वधर्मानुष्ठानमकरणेयाम्ययातनाभयादेव ॥ १५ ॥

( ४ ) **राघवानन्दः** । किंच तस्येति । भयाद्दण्डस्येत्यन्वयः । भोगाय कल्पन्ते समर्थाः चोराद्युपद्रवराहित्यात् । भृशदण्डस्य देशेऽधर्माभावाद्यथाकालंस्थावराणि द्रुमादयः फलशालीनीतिभावः । तस्यराज्ञोभोगायफलदानि भवन्ति दण्डाद्यभावेछिद्यन्ते तानि । साधवःपाल्यन्ते दस्यवश्छिद्यन्तइति मेधातिथिः ॥ १५ ॥

( ५ ) **नन्दनः** । दण्ड प्रशंसति तस्येति । तस्य दण्डस्य भयात् । स्थावराणामपि दण्डोधारितोमहात्मभिरितिहासेषु श्रूयते । यथागस्त्येन विन्ध्यस्य यथा वायुना शाल्मलीतरोर्हैमवतस्य ॥ १५ ॥

( ६ ) **रामचन्द्रः** । तस्य राज्ञोभयात्स्वधर्मान्न्भूतानि न चलन्ति ॥ १५ ॥

**तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ॥ यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥ १६ ॥**

( १ ) **मेधातिथिः** । अन्यायवर्तिनोयेराजापथ्यकारिणोमहामात्यादयस्तेषामयंदण्डउच्यते । अन्येषांतु परस्परव्यवहारिणामनुबन्धमनुज्ञात्रापरिज्ञायेत्यत्रोच्यते । तत्रैव चायंश्लोकोव्याख्यातः । विद्यात्राधिका सा च वेदार्थविषया । यथार्हतः यथार्हतोयस्ययोग्यइत्यर्थः । संप्रणयेत् प्रवर्तयेत्कुर्यादितियावत् एतत्सर्वमवेक्ष्य निरूप्य तत्तदपेक्षोदण्डः कर्तव्यः । अन्यथा प्रणीतोराज्ञोदृष्टमनर्थमावहेत् । दृष्टाऽदृष्टभेदेन स्वप्रकृतिजनपदभेदेन सप्तमाष्टमयोर्दण्डमातृकाश्लोकयोर्भेदः ॥१६॥

( २ ) **सर्वज्ञनारायणः** । देशकालादि त्वरण्यरात्र्यादिकृतत्वेन दण्डाधिक्यात् । शक्तिं धनदाने । विद्यामिति वेदादिपाठशीलतया दण्डाल्पतार्थम् ॥ १६ ॥

( ३ ) **कुल्लूकः** । तमित्यादि तंदण्डंदेशकालौ दण्ड्यस्य च शक्तिंविद्यादिकंयस्मिन्नपराधे योदण्डोर्हतीत्यादिकंशास्त्रानुसारेणतत्त्वतोनिरूप्यापराधिषु प्रवर्तयेत् ॥ १६ ॥

( ४ ) **राघवानन्दः** । कथंतत्प्रणयनमित्याह तमिति । दण्डस्य देशकालौ शास्त्रानुसारेणावेक्ष्य यथार्हतः यस्मिन्नपराधे योयंदण्डमर्हति तदनतिक्रमेण संप्रणयेत् देशं दूरनिकटादिं । कालं दुर्भिक्षादिं । विद्यामस्त्रशिक्षादिकां वेदविद्यांच । अन्यायवर्तिष्वन्यथागामिषु ॥ १६ ॥

( ५ ) **नन्दनः** । तस्य दण्डस्य प्रणयनप्रकारमाह तमिति । शक्तिः बालोवृद्धोदरिद्रोधनवानित्यादिरूपा । विद्यावेदवित्त्वमित्यादिरूपा ॥ १६ ॥

( ६ ) **रामचन्द्रः** । दण्डमन्यायवर्तिषु देशकालादिकमवेक्ष्य यथार्हतः संप्रणयेत् ॥ १६ ॥

**सराजा पुरुषोदण्डः सनेता शासिता च सः ॥ चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥ १७ ॥**

( १ ) **मेधातिथिः** । सएववस्तुतोराजा तस्मिन्सति राजशक्तियोगे सएव पुरुषः येन बलीयसोपि पुरुषान्स्त्रीवन्न्यक्कृत्य वशीकरोति सनेता कार्याणितेननीयन्ते । शासिता शासनंराजाज्ञा तस्याभावेदण्डःस्मृतः । धर्मतः कर्तृत्वमौपचारिकम् । चतुर्णामाश्रमाणांयोधर्मस्तत्र सप्रतिभूरिव यथा प्रतिभूश्चलितुंनददाति तद्वद्दण्डोपि ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । सदण्डएवराजा जनस्य तदधीनत्वात् । पुरुषः पुरुषात्मा । नेता नायकःप्रवर्तकः । शासिता एवंकुर्वित्युपदेष्टा । धर्मस्य धर्माचरणंकारयितुं प्रतिभूरिव ॥ १७ ॥

( ३ ) **कुल्लूकः** । सएवदण्डोवस्तुतोराजा । तस्मिन्सति राजशक्तियोगात्सएव पुरुषस्ततोऽन्ये स्त्रियइवतद्विधेय*त्वात् । सएव नेता तेन कार्याणि नीयन्ते प्राप्यन्ते । सएव शासिताशासनमाज्ञातद्दातृत्वात् । सएवचतुर्णामप्याश्रमाणांयोधर्मस्तस्य संपादने प्रतिभूरिवप्रतिभूर्मुनिभिः स्मृतः ॥ १७ ॥

( ४ ) **राघवानन्दः** । दण्डंविना राजाऽकिंचित्करइति दण्डंस्तौति सइतित्रिभिः । तस्मिन्सति राजशक्तिः । पुरुषः सर्वान्राजप्रभृतीन् स्त्रियइव न्यक्कृत्य स्वधर्मे स्थापयतीति पुरून् बहून् धनाद्यादानेन स्यति तनूकरोतीतिवा राज्ञोपि दण्डश्रुतेः । नयति प्रापयति स्वस्वधर्मे राजानेनेतिनेता एधांसि पचन्तीतिवद्वा कर्तृत्वोपचारः । प्रमादात्प्रच्याव्य सर्वान् शास्त्रानुसारेण शास्तीति शासिता । सन्यासिनामपि पातित्ये दासआमरणान्तिकइति राजभृत्यतास्मृतेराश्रमचतुष्टयग्रहः । धर्मस्य प्रतिभूः तत्संपादने प्रभुर्द्वितीयः ॥ १७ ॥

( ५ ) **नन्दनः** । पुनरपि श्लोकद्वयेन दण्डस्तुतिमाह सइति । स दण्डएव राजपुरुषः राजनियोगकरः । नेता तत्तत्कामानुष्ठापकः । शासिताआज्ञापकः । तेजोविनासकलकार्यासिद्धेः ॥ १७ ॥

**दण्डः शास्ति प्रजाः सर्वादण्डएवाभिरक्षति ॥ दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १८ ॥**

( १ ) **मेधातिथिः** । न राजा शास्त्रंशास्ति कर्तव्याकर्तव्योर्विधिनिषेधयोः किंतर्हिदण्डएव । दण्डएवाभिरक्षति बलवद्भ्योदुर्बलान् । सुप्तेषु राजपुरुषेषु दण्डभयादेव न यथा कामंलोकोव्यवहरति । द्विविधोदण्डोराजदण्डोयमदण्डश्च ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । यतः शास्तारोरक्षन्ति । तथाऽन्येषु रक्षितृषु सुप्तेष्वप्येतद्भयादेव न पापंक्रियते ॥ १८ ॥

( ३ ) **कुल्लूकः** । यस्माद्दण्डः सर्वाः प्रजाआज्ञांकरोति तस्मात्साधूक्तंशासितेतिज्ञेयम् । यस्मात्सएव प्रजारक्षति ततोयुक्तमुक्तंराजेति । निद्राणेष्वपिरक्षितृषुदण्डएव जागर्ति तद्भयेनैव चौरादीनामप्रवृत्तेः । दण्डमेवधर्महेतुत्वाद्धर्मंजानन्ति । कारणेकार्योपचारः । ऐहिकपारत्रिकदण्डभयादेव धर्मानुष्ठानात् ॥ १८ ॥

( ४ ) **राघवानन्दः** । किंच शास्तीति । अभिरक्षति प्रमादादधर्मेभ्यः । सुप्तेषु प्रमत्तेषु ॥ १८ ॥

( ६ ) **रामचन्द्रः** । दण्डःसुप्तेषु जागर्ति दण्डभयात्केपिनलुम्पन्ति ॥ १८ ॥

**समीक्ष्य सधृतः सम्यक् सर्वारञ्जयति प्रजाः ॥ असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ १९ ॥**

( १ ) **मेधातिथिः** । धृतः प्रणीतः प्रवर्तितः समीक्ष्य पूर्वोक्तदेशकालाद्यपेक्ष्य समीक्ष्य । रञ्जयत्यनुरागंप्रजासु जनयति । विपरीतंप्रणीयमानोन केवलंस्वकार्येन करोति यावद्दुरुपयुक्तोविषवद्विनाशयत्यर्थंजनस्य ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । समीक्ष्य शास्त्रतोनिरूप्य ॥ १९ ॥

( ३ ) **कुल्लूकः** । सदण्डःशास्त्रतः सम्यङ्निरूप्यापराधानुरूपेण देहधनादिषु धृतः सर्वाः प्रजाः सानुरागाः करोति । अविचार्य तु लोभादिना प्रयुक्तः सर्वाणि बाह्यार्थपुत्रादीनि नाशयति । सर्वतइतिद्वितीयार्थेतसिः ॥ १९ ॥

( ४ ) **राघवानन्दः** । समीक्ष्य यथाशास्त्रं अनुरञ्जयति राजानंप्रत्यावर्जयति । सर्वतः सराष्ट्रसपशुद्रव्यसंचयंराजानंनाशयतीतिभावः ॥ १९ ॥

---

* तद्विधेयत्वात्=तद्विधत्वात् ( अ )

( ५ ) **नन्दनः** । धृतःधारितःसदण्डः ॥ १९ ॥

( ६ ) **रामचन्द्रः** । सम्यक्समीक्ष्य धृतःसदण्डःसर्वाः प्रजारञ्जयति असमीक्ष्याविचार्य प्रणीतः सर्वशो विनाशयति ॥ १९ ॥

**यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ॥ शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥ २० ॥**

( १ ) **मेधातिथिः** । अप्रणयनाद्दण्डस्य ये बलवत्तराबलीयांसोबलेनाधिकामहाप्राणतया शस्त्रहस्तमनुष्याभूयस्त्वेन वा ते दुर्बलानपक्ष्यन् शूले मत्स्यानिव यथामत्स्या शूल्याक्रियन्ते भोजनार्थमेवमशक्तोजनोऽधिकशक्तिभिरुपह्रीयेत धनशरीरदारहरणादिना तस्माद्दण्डार्हानतन्द्रितोनलसोदण्डयेत् कुतोमया समीक्षाशक्या कर्तुंनैवदण्डंकरोमीति नैवंबुद्धिः कर्तव्या ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । शूलेमत्स्यानिव अपक्ष्यन् पचेयुः । अविध्यन्नितिक्वचित्पाठः ॥ २० ॥

( ३ ) **कुल्लूकः** । यदि राजाऽनलसोभूत्वा दण्डप्रणयनंन कुर्यात्तदा शूले कृत्वा मत्स्यानिव बलवन्तोदुर्बलानपक्ष्यन् लृङन्तस्य पचिधातोरूपमिदम् बलिनोऽल्पबलानांहिंसामकरिष्यन्नित्यर्थः । शूले मत्स्यानिवापक्ष्यन्नित्येषमेधातिथिगोविन्दराजलिखितःपाठः । जले मत्स्यानिवाहिंस्युरितिचपाठान्तरम् । अत्र बलवन्तोदुर्बलान्हिंस्युरितिमत्स्यन्यायएवस्यादित्युक्तम् ॥ २० ॥

( ४ ) **राघवानन्दः** । दण्डाकरणे दोषमाह यदीतित्रिभिः । शूलेमत्स्यान् शूलमारोप्यापक्ष्यन्नितिक्रियातिपत्तिः । तेन यदि दण्डयिता राजा नाभविष्यत्सर्वाःप्रजाःबलिभिर्दस्युभिरनंक्ष्यन्निति ॥ २० ॥

( ५ ) **नन्दनः** । अप्रणयनेदोषंश्लोकद्वयेनाह यदीति ॥ २० ॥

( ६ ) **रामचन्द्रः** । त्रिभिराह यदीति । द्वितीयेनान्वयः । राजा अतन्द्रितः दण्ड्येषु दण्डं यदि न प्रणयेत् न प्रयोजयेत् तर्हि बलवत्तरःपुरुषोदुर्बलान्पुरुषान् अद्यात् लुम्पेत कानिव अपक्षान् शूलआरोपितान्मत्स्यानिव ॥ २० ॥

**अद्यात्काकः पुरोडाशं श्वावलिह्याद्धविस्तथा ॥ स्वाम्यं च नस्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥ २१ ॥**

( १ ) **मेधातिथिः** । काकादयोप्यत्यन्ताधमादेवैः सह संस्पर्धेरन् । देवेभ्योदातव्यंहविश्चरुपुरोडाशादितत्तेअद्युर्यदिदण्डेन ननिवार्येरन् । अन्यदपियत्स्वाम्यंस्वस्वामिभावःसनस्यात् । जायापत्योःपितापुत्रयोः जायायाःपतिर्नस्यात्स्वातन्त्र्येण स्त्रियः प्रवर्तेरन् । अधरोत्तरं यदधरंवृषलादितदुत्तरंप्रधानंस्यात् । यदुत्तरंब्राह्मणादितदवरतांनिकृष्टतामियात् । शूद्राधर्ममुपदिशेयुः । वैदिकोधर्मोनानुष्ठीयेत ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । अद्यात्काकः श्वावलिह्यादितिदृष्टान्तायोक्तम् । तेन श्वावलिह्यादित्याद्यर्थेषु पूरणीयम् । अधरोत्तरमधराणामुत्कृष्टत्वम् । ॥ २१ ॥

( ३ ) **कुल्लूकः** । यदि राजा दण्डंनाचरिष्यत्तदा यज्ञेषु सर्वथा हविरनर्हः काकः पुरोडाशमखादिष्यत्तथा कुक्कुरः पायसादिहविरलेक्ष्यन्नकस्यचित्कुत्रचित्स्वाम्यमभविष्यत्ततोबलिना तद्ग्रहणाद्ब्राह्मणादिवर्णानांच मध्ये यदवरंशूद्रादि तदेवोत्तरंप्रधानंप्रावर्तिष्यत ॥ २१ ॥

( ४ ) **राघवानन्दः** । किंच काकश्वानौ दण्डेनानिवारितौ देवभोग्यौ पुरोडाशावश्नीतोयथातद्वत्स्यात् । तथा क

स्मिन् न्यायोपात्तेपि वित्ते कस्यापीति शेषः । दण्डादृतेदस्यूनांप्राबल्यात् । अधरोत्तरं ब्राह्मणादिवर्णानांचमध्ये ये अधराः शूद्रादयः ते उत्तरं प्राधान्यं प्रावर्त्स्यन्निति ॥ २१ ॥

( ६ ) **रामचन्द्रः** । राज्ञा अप्रयुक्तेदण्डे कस्मिन्नपिवस्तुनि स्वाम्यंप्रभुत्वंन स्यात् अधरोत्तरं अधरं प्रतिलोमजं उत्तरं अनुलोमजं एवमधरोत्तरं प्रवर्तेत ॥ २१ ॥

**सर्वोदण्डजितोलोकोदुर्लभोहि शुचिर्नरः ॥ दण्डस्य हि भयात्सर्वंजगद्भोगाय कल्पते ॥ २२ ॥**

( १ ) **मेधातिथिः** । स्वभावेनैव प्रकृत्यैव शुचिः शुद्धोधर्मार्थकामेषु सतादृशोनरोदुर्लभः दुःखैर्लब्धुंशक्यः । किंतु दण्डजितोदण्डेन जीयते पथिस्थाप्यते तद्भयान्नयथाकामंप्रवर्तते । जगद्भोगायेति प्रागुक्तमेव ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । शुचिः शुद्धमनाः । भोगाय भोगिनाम् ॥ २२ ॥

( ३ ) **कुल्लूकः** । सर्वोऽयंलोकोदण्डेनैव नियमितःसन्मार्गेऽवतिष्ठते । स्वभावविशुद्धोहिमानुषः कष्टेन लभ्यते । तथा सर्वमिदंजगद्दण्डस्यैव भयादावश्यकभोजनादिरूपेऽपि भोगे समर्थभवति ॥ २२ ॥

( ४ ) **राघवानन्दः** । किंच दण्डभयादेव शुचिर्नरोन स्वतोरागादित्याह । दण्डस्येत्यादि पूर्वोक्तस्य निगमनम् ॥ २२ ॥

( ५ ) **नन्दनः** । दण्डप्रणयने हेतुमाह सर्वइति ॥ २२ ॥

**देवदानवगन्धर्वारक्षांसि पतगोरगाः ॥ तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥ २३ ॥**

( १ ) **मेधातिथिः** । ये देवाः पर्जन्योवायुरादित्यइत्यादयः । भोगायकल्पन्ते शीतोष्णवर्षैर्नियतैरोषधीःपाचयन्ति तद्दण्डभयाशङ्किनः अन्यथाकिमिति सूर्याचंद्रमसौ धातृपर्जन्यौ वा स्वरसात्कार्यकालान्नियतान्नविचलेताम् । कदाचिद्द्वे अहनी त्रीणि वा नोदियात्सूर्यः सतिस्वातन्त्र्ये । दण्डात्तुबिभ्यन्नातिक्रामति मर्यादां । तथाचश्रुतिः ॥ भयात्सूर्यः प्रतपति भयात्तपतिचंद्रमाः । भयादग्निश्चवायुश्चेति । दानवादयश्च यदिदमखिलमहर्निशंन जगदुपघ्नन्ति दण्डमाहात्म्यमेतत् । पतङ्गवयांसि गृहमण्डनाःशुकसारिकादयोयद्बालानामक्षिणीनोत्पाटयन्तिश्येनकाककङ्कगृध्रादयोयज्जीवतोनादन्ति तदप्येवमेव । उरगाःसर्पाःकेवलंक्रोधविषात्मकाः संभूय सर्वे न दशन्तिसर्वप्राणिजातम् तद्दण्डसामर्थ्यं अतस्तुतिरेषोच्यते यद्देवादयोमहर्धिकाअचेतनावा स्वमर्यादातोन विचलन्ति भयात्किंपुनर्मनुष्याः । अत्रश्लोकःपुर्वैःपठितः ॥ दृष्ट्वातु दैन्यंवनपाटलानांपुष्पप्रगल्भंकुटजप्रहासं । संबन्धदानेन [illegible] जहास नीपोपि रन्ध्रंप्रहरत्यवश्यम् इति ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । [illegible]नैव परमेश्वरस्य । यदुक्तं भीषास्माद्वातःपवतइति ॥ २३ ॥

( ३ ) **कुल्लूकः** । उक्तेऽपि दण्डस्यभोगसंपादकत्वंदार्ढ्यार्थंपुनरुच्यते । इन्द्राग्निसूर्यवाय्वादयोदेवास्तथादानवगन्धर्वराक्षसपक्षिसर्पाअपि जगदीश्वरपरमार्थभयपीडिताएव वर्षदानाद्युपकारायप्रवर्तन्ते । तथाचश्रुतिः । भयादस्याग्निस्तपतिभयात्तपतिसूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावतिपञ्चमइति ॥ २३ ॥

( ४ ) **राघवानन्दः** । देवदानवेतिदृष्टान्तार्थम् । भीषास्माद्वातःपवते भीषोदेतिसूर्यइतिश्रुतेर्यथेश्वरभयात्पवनादेः प्रवृत्तिरेवंराजप्रभृतेर्भयाद्देवादयोपि स्वकार्याय नीयन्ते । यद्वा दण्डपीडिताः दण्डेन या यस्य या पीडा तया आवर्जिता निष्पापानांतेऽबाधकाः ॥ २३ ॥

( ५ ) **नन्दनः** । देवयोनयोऽपि दण्डसाध्याः किंपुनर्मनुष्ययोनयइत्यत्राह देवेति ॥ २३ ॥

( ६ ) **रामचन्द्रः** । दण्डेन ईश्वराज्ञारूपेण ॥ २३ ॥

**दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ॥ सर्वलोकप्रकोपश्च भवेद्दण्डस्यविभ्रमात् ॥ २४ ॥**

( १ ) **मेधातिथिः** । दण्डस्य विभ्रमोऽकरणमन्यायेन वाकरणम् तस्मिन्सति सर्ववर्णादुष्येयुः इतरेतरस्त्रीगमनेन संकरप्रवृत्तेः । सेतवोमर्यादाः सर्वाभिद्येरन् सर्वमर्यादापरिलोपःस्यादित्यर्थः ब्राह्मणाश्चशूद्रवद्वर्तेरञ्छूद्राब्राह्मणवत् अतश्च-सर्वलोकप्रकोपः स्यात् । त्रयोपिलोकाइतरेतरंवृष्ट्यातपादिना नोपकुर्युः ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । दुष्येयुः संकरादिवैकृत्यकरणेनहेतुना । सेतवोमर्यादाः । प्रकोपोऽन्योन्यवैरम् । वि-भ्रमान्मोहात् ॥ २४ ॥

( ३ ) **कुल्लूकः** । दण्डस्यानाचरणादनुचितेन वा प्रवर्तनात्सर्वे ब्राह्मणादिवर्णाइतरेतरस्त्रीगमनेन संकीर्येरन् सर्व-शास्त्रीयनियमाश्चतुर्वर्गफलाउत्सीदेयुः चौर्यसाहसादिना च परस्यापकारात्सर्वलोकसंक्षोभश्चाजायेत ॥ २४ ॥

( ४ ) **राघवानन्दः** । किंच सर्वसेतवोवर्णानामाश्रमाणांच अनेन वर्णेनेदंकर्तव्यमनेनाश्रमेणेदंकर्तव्यमितिधर्ममर्या-दाः । प्रकोपः संक्षोभः । विभ्रमादकरणाद्विपरीतकरणाच्च ॥ २४ ॥

( ५ ) **नन्दनः** । सेतवःमर्यादाः । विभ्रमादसम्यक्प्रणयादप्रणयाच्च ॥ २४ ॥

( ६ ) **रामचन्द्रः** । दण्डस्य विभ्रमाद्विस्मरणादन्यथाप्रयोगात्सर्वे वर्णाः दुष्येयुः संकीर्णाभवेयुः । च पुनः सर्वसे-तवो मर्यादाभिद्येरन् ॥ २४ ॥

**यत्र श्यामोलोहिताक्षोदण्डश्चरति पापहा ॥ प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ २५ ॥**

( १ ) **मेधातिथिः** । एतद्द्वयंमनुष्याणांप्रशस्ततमं अतस्तेनासता रूपकभंग्या स्तौति द्विरूपोदण्डःदुःखदोभयदश्च भयहेतुत्वंश्यामतया दुःखहेतुत्वंलोहिताक्षत्वेन । परिसमाप्तादण्डस्तुतिः । दण्डोऽवश्यंकर्तव्यः सचदेशाद्यपेक्षयेति अन्यः-सर्वोर्थवादः । नेताचेत् नेता दण्डस्य नायकः सचेत्साधुपश्यति सुनिरूपितंदेशकालादिकंकृत्वा पालयति तत्र प्रजा नमुह्यन्ति नकेनचिद्दोषेण युज्यन्ते ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । यत्रश्यामइति प्रागुक्तपुरुषरूपताकथनम् । श्यामः कृष्णः तामसत्वात् । लोहिताक्षः रजोधिकत्वेन कोपनत्वात् । साधु युक्तं पश्यति ॥ २५ ॥

( ३ ) **कुल्लूकः** । यत्र देशे शास्त्रप्रमाणावगतः श्मामवर्णःलोहितनयनोऽधिष्ठातृदेवताकोदण्डोविचरति तत्र प्रजा-व्याकुलान भवन्ति । दण्डप्रणेतायदिविषयानुरूपंसम्यग्जानाति ॥ २५ ॥

( ४ ) **राघवानन्दः** । किंच श्यामइत्यादि तदधिष्ठातृदेवतारूपम् । नेता राजा शास्त्रानुरूपंसाधुचेत्पश्यति न तदा प्रजामुह्यन्तीत्यन्वयः ॥ २५ ॥

( ५ ) **नन्दनः** । सम्यक्प्रणयने गुणमाह यत्रेति । दण्डाभिमानिनीं देवतां प्रकृत्याधिष्ठेयाधिष्ठात्रोरभेदोपचारादुक्तं श्यामोलोहिताक्षइति । दण्डदेवतायाः श्यामत्वंलोहिताक्षत्वं च महाभारतेऽपि स्मर्यते ॥ नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतु-र्भुजः । अष्टपाद्रक्तनयनः शकुन्तर्णोर्ध्वरोमवान् ॥ जटी द्विजिव्हस्ताम्रास्योभृङ्गराजतनुच्छदः । एतद्रूपं बिभर्त्युग्रं तेनद-ण्डोदुरावरइति ॥ २५ ॥

---

( २४ ) दुष्येयुः=नश्येयुः ( त, ट )

( ६ ) **रामचन्द्रः** । दण्डस्य स्वरूपमाह यत्रेति । यत्रदेशेश्यामोदण्डश्चरति श्यामइत्यनेन मनुष्यरूपता श्यामःकृष्णः । लोहिताक्षः रजोऽधिकत्वेन कोपनत्वात् । यदि नेता साधु युक्तं यथा स्यात्तथा पश्यति तत्र प्रजान मुह्यन्ति ॥ २५ ॥

**तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ॥ समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ २६ ॥**

( १ ) **मेधातिथिः** । इदंसंप्रणेतुः साधुदर्शनं सत्यवादिता समीक्ष्यकारिता प्राज्ञता त्रिवर्गे कौशलं च । सत्यवादी यः शास्त्रानुसारितयादण्डंकृत्वा कुतश्चिन्महाधनत्वंविज्ञाय नतंवर्धयति नचवल्लभस्य रागादवनंकरोति । प्राज्ञोदेशादीनांबाध्यबाधकभावार्थमवस्थाविशेषज्ञः कदाचिद्देशेन कालोबाध्यते कालेन वा देशः उभौवातौविद्याशक्ती तयोश्च परस्परमुत्सर्गापवादभावज्ञः कार्यवशादर्थश्चबाधकएवबाध्यतामित्यतः प्राज्ञत्वमुपयुज्यते । धर्मादीनां च गुरुलघुताभावः । स्वल्पोयत्रध- र्मस्तस्मिन्साध्यमानेमहाननर्थोभवति तत्र धर्मस्त्यज्यते । प्रायश्चित्तेन समाधास्यतइत्येवमादिबोद्धव्यम् ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । समीक्ष्यकारिणं समीक्ष्य शास्त्रेण विचार्य कुर्वाणम् ॥ २६ ॥

( ३ ) **कुल्लूकः** । तस्य दण्डस्य प्रवर्तयितारमभिषेकादिगुणयुक्तंनृपतिमवितथवादिनंसमीक्ष्यकारिणंतत्त्वातत्त्वविचारोचितंप्रज्ञाशालिनंधर्मार्थकामानांज्ञातारंमन्वादयोप्याहुः ॥ २६ ॥

( ४ ) **राघवानन्दः** । तदनुरूपंराजलक्षणमाह तस्याहुरितिसार्धेन । तस्य दण्डस्योक्तविशेषणविशिष्टंराजानं प्रणेतारंमन्वादयआहुरित्यन्वयः । सत्यवादिनं लोभादिना समयभेदरहितम् । समीक्ष्य पूर्वापरमालोच्यकर्तृशीलम् । प्राज्ञमूहापोहसमर्थम् । धर्मार्थकोविदं स्मृतिवात्स्यायननीतिशास्त्राणांवेत्तारं तत्र वेदस्मृतिभ्यांधर्मस्य वात्स्यायनादिनाकामस्य नीतिशास्त्रेणार्थस्य वेत्तारम् ॥ २६ ॥

( ५ ) **नन्दनः** । दण्डप्रणयनाधिकारमाह तस्येति ॥ २६ ॥

( ६ ) **रामचन्द्रः** । तस्य दण्डस्य संप्रणेतारं प्रयोक्तारं समीक्ष्य शास्त्रं धर्मानालोच्य कारिणं कुर्वाणं राजानमाहुः ॥ २६ ॥

**तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्धते ॥ कामात्मा विषमः क्षुद्रोदण्डेनैव निहन्यते ॥ २७॥**

( १ ) **मेधातिथिः** । कामान्धः रागप्रधानः । विषमः क्रोधनः । समत्वेन दण्डपातनेन शत्रौ मित्रे च वर्धते । क्षुद्रः छलान्वेषाद्दण्डेनैव निहन्यते प्रकृतिकोपेनादृष्टेन वा दोषेण ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । विषमोविषमदण्डप्रणेता । क्षुद्रोलुब्धः ॥ २७ ॥

( ३ ) **कुल्लूकः** । तंदण्डंराजासम्यक्प्रवर्तयन्धर्मार्थकामैर्वृद्धिंगच्छति । यःपुनर्विषयाभिलाषी विषमः कोपनः क्षुद्रश्छलान्वेषी नृपः सप्रकृतेनैव दण्डेनामात्यादिना कोपादधर्माद्वा विनाश्यते ॥ २७ ॥

( ४ ) **राघवानन्दः** । अतआह त्रिवर्गेणेति । धर्मार्थकामैस्तपोवनानाश्रितस्य तन्मात्रेण मोक्षासिद्धिरितिभावः । उक्तविशेषणहीनोनाधिकारीत्याह कामेति । कामात्मा विषयाभिलाषी । विषमः कोपनः । क्षुद्रः छलान्वेषी । विहन्यते प्रकृतिकोपादग्रद्वारा दण्डेनैव । तादृशोराजेति शेषः । कामान्धइति पाठोमेधातिथेः ॥ २७ ॥

( ५ ) **नन्दनः** । सम्यग्यथाशास्त्रम् ॥ २७ ॥

( ६ ) **रामचन्द्रः** । तंदण्डं सम्यक्प्रणयन् राजा त्रिवर्गेण धर्मार्थकामैरभिवर्धते । कामात्मा पुरुषः विषमप्रणेता क्षुद्रोलुब्धः एतादृशोदण्डेनैव निपात्यते ॥ २७ ॥

**दण्डोहि सुमहत्तेजोदुर्धरश्चाकृतात्मभिः ॥ धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥ २८ ॥**

( १ ) **मेधातिथिः** । सुमहद्यत्तेजः सदण्डः अकृतात्मभिः शास्त्रेण गुरूपासनया सहजेन वा विनयेन येऽनभिविनीतास्तैर्दुर्धरोनशक्यते सम्यक्प्रणेतुम् । नैवंमन्तव्यमाज्ञामात्रेण दण्डःप्रणीयते का तस्य दुर्धरता यतोयस्तत्र नजागर्ति प्रयत्नवान्नभवति तंप्रमादिनंसबान्धवंदण्डोहन्ति शरीरेण केवलेन राजा न नश्यति यावत्पुत्रपौत्राद्यन्वयेन सह ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । दुर्धरोऽदण्ड्येषु धारयितुमशक्यः ॥ २८ ॥

( ३ ) **कुल्लूकः** । यतोदण्डःप्रकृष्टतेजःस्वरूपः स्वशास्त्रैरसंस्कृतात्मभिर्दुःखेन ध्रियतेऽतोराजधर्मरहितंनृपमेवपुत्रबन्धुसहितंनाशयति ॥ २८ ॥

( ४ ) **राघवानन्दः** । अकृतात्मभिरजितेन्द्रियैः शास्त्रासंस्कृतबुद्धिभिर्वा । तत्रापि सबान्धवंहन्ति अधर्मोत्पादनेनेतिशेषः ॥ २८ ॥

( ५ ) **नन्दनः** । यथाग्निरन्यत्र प्रणीयमानोपि प्रमत्तंप्रणेतारमेव दहत्येवंदण्डोऽपीत्यभिप्रायेणाह दण्डोहीति । हिहेतौ । सुमहत्तेजः सुमहानग्निः । चलितं स्खलितम् ॥ २८ ॥

( ६ ) **रामचन्द्रः** । दुर्धरः धर्तुमशक्यः ॥ २८ ॥

**ततोदुर्गं च राष्ट्रं च लोकं च सचराचरम् ॥ अन्तरिक्षगतांश्चैव मुनीन्देवांश्च पीडयेत् ॥ २९ ॥**

( १ ) **मेधातिथिः** । देशाद्यनपेक्षया यत्रदण्डः प्रणीयते तत्र सराजकस्य जनपदस्य तिर्यक्स्थावरसहितस्य नाशः । ततोमन्त्रिभिर्जनपदैश्च राजा विज्ञापनीयः त्यक्तव्योवा तादृशोदेशः । देवमुनयः पीड्यन्ते इतः प्रदानजीवनादेवाः अस्मिंश्चानुष्ठानाद्युच्छेदान्नष्टाएव देवमुनयः । तथाचपुराणकारैः ॥ वर्णाश्रमेभ्यः स्थितत्वात्तु लोकेस्मिन्यः प्रवर्तते । स्वर्गादौ देवयोनीनांस्थितिहेतुः सवैस्मृतइति । प्रथमात् श्लोकादारभ्य यावदयंश्लोकस्तत्रायमर्थसंग्रहः । समवृत्तेन क्षत्रियेण जनपदरिपालनंकर्तव्यम् तच्चदण्डेन विना न भवतीति सदेशाद्यपेक्षयावश्यंनिपुणतोनिरूप्य स्वराष्ट्रे परराष्ट्रे वा यथाशास्त्रंप्रणेयः । अन्यथातुप्रवृत्तावुभयलोकनाशः । अन्यः सर्वोर्थवादः ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । ततोराज्ञिविनष्टे रक्षकाभावात् । दुर्गं राज्यं तदीयलोकमिमं सचराचरं स्थावरजङ्गमसहितं देवांश्च हविर्दानाद्यभावेन पीडयेत् किंपुनरन्यान् ॥ २९ ॥

( ३ ) **कुल्लूकः** । दोषाद्यनपेक्षया योदण्डःक्रियते सबन्धुनृपनाशानन्तरंधन्व्यादिदुर्गराष्ट्रंदेशंपृथिवीलोकंजङ्गमस्थावरसहितंहविःप्रदानजीवनादेवाइतिश्रुत्या हविःप्रदानाभावेऽन्तरिक्षगतानृषीन्देवांश्चपीडयेदिति ॥ २९ ॥

( ४ ) **राघवानन्दः** । दुर्गं षड्विधंवक्ष्यमाणम् । अन्तरिक्षगतान् मर्त्यलोकादुत्पथगामिनः । यज्ञाद्यकरणान्मुन्यादीनांपीडैव । तदुक्तं वर्णाश्रमेभ्यः स्थित्यातु लोकेस्मिन्यः प्रवर्तते । स्वर्गादौ देवयोनीनांस्थितिहेतुःसवै स्मृतइति ॥ सयज्ञादिः ॥ २९ ॥

( ५ ) **नन्दनः** । नैतावताविरमतीत्याह ततइति । लोकं भूलोकं । देवान् स्वर्गगतान् । इज्याविच्छेदादन्तरिक्षगतादीनांपीडाः ॥ २९ ॥

( ६ ) **रामचन्द्रः** । ततःदेवान् हविर्दानाद्यसंभवेन दण्डः पीडयेत् ॥ २९ ॥

**सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ॥ न शक्योन्यायतोनेतुं सक्तेन विषयेषु च ॥ ३० ॥**

( १ ) **मेधातिथिः** । सहायसंग्रहार्थंप्रकरणमिदानीमारभ्यते यस्यच निरूपणावक्ष्यमाणा तत्सहायादिगुणयोगिनश्चार्यसभ्यसेनापतिदण्डाधिकारिणोनसन्ति तेन स्वयमेवनिःशङ्कंनयकालगुणसंपन्नेनापिन्यायतोन प्रणेतुंशक्यः । न्यायः शास्त्रानुसारिणीदेशाद्यपेक्षयाचव्यवस्था अतःसहायाःशोभनाःकर्तव्याः । यथास्वयंमूढोविचित्तोऽसंस्कृतबुद्धिरस्ति सक्तोविषयेषु लुब्धोधनविनियोगंयथावन्नकरोति तेन तादृशेनैतैर्दोषैर्युक्तेन नसम्यक्क्रियते एवमसहायेनापीति तात्पर्यम् । यस्तु विपरीतस्तेन शक्यते ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । मूढेन प्रमादहेतुमोहवता । अकृतबुद्धिना शास्त्रासंस्कृतमतिना ॥ ३० ॥

( ३ ) **कुल्लूकः** । सदण्डोमन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रासंस्कृतबुद्धिपरेण नृपतिना शास्त्रतोन प्रणेतुंशक्यते ॥ ३० ॥

( ४ ) **राघवानन्दः** । सदण्डः । असहायेनाविद्वद्ब्राह्मणप्राड्विवाकादिरहितेन । मूढेन मुग्धेन । अकृतबुद्धिना शास्त्रानभिज्ञेन । तदभिज्ञत्वेपि विषयेषु सक्तेन न्यायतोऽन्योपदिष्टशास्त्रानुष्ठानरहितेनापि । न्यायः शास्त्रानुसारिणी देशाद्यपेक्षया व्यवस्था तया नेतुंन शक्यः ॥ ३० ॥

( ५ ) **नन्दनः** । सम्यक्प्रणयनोपायंश्लोकाभ्यामाह सइति ॥ ३० ॥

( ६ ) **रामचन्द्रः** । सदण्डः मूढेन प्रमादमोहवता अकृतबुद्धिना अकृतधर्मशास्त्राभ्यासेन एतादृशेनराज्ञा न्यायतोनेतुं प्रवर्तयितुंन शक्यः ॥ ३० ॥

**शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा ॥ प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥ ३१ ॥**

( १ ) **मेधातिथिः** । एषएवार्थोवैपरीत्येनोच्यते । शुचिरलुब्धः । सत्यसन्धः सत्यप्रधानः । सत्यमेवपुरोधायसर्वक्रियासुप्रवर्तते सविजितेन्द्रियः अजितेन्द्रियस्य कुतः सत्यं । यथाशास्त्रमनुसरति वर्तते । सुसहायः शोभनाः सहाया अस्येति अमूर्खैर्भक्त्यनुरक्तैःसहायैर्युक्तः । धीमता प्राज्ञेन । योसौमूढः प्रागुक्तस्तस्यायंप्रतिपक्षतयोक्तः । अतःपञ्चभिर्दोषैर्हीनस्तावद्भिरेव गुणैर्युक्तोदण्डप्रणयनेऽधिकृतो दृष्टादृष्टफलातिशयभाग्भवतीति श्लोकद्वयस्यार्थः ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । शुचिना अलुब्धेन । धीमता ऊहापोहवता ॥ ३१ ॥

( ३ ) **कुल्लूकः** । अर्थादिशौचयुक्तेन सत्यप्रतिज्ञेन यथाशास्त्रव्यवहारिणा शोभनसहायेन तत्त्वज्ञेन कर्तुंशक्यतइतिपूर्वोक्तदोषप्रतिपक्षे गुणाअनेन श्लोकेनोक्ताः ॥ ३१ ॥

( ४ ) **राघवानन्दः** । अनधिकारिणमुक्त्वाधिकारिणमाह शुचिनेति । शुचिनाअलुब्धेन सत्यसन्धेन स्वोक्तरक्षणशीलेन धीमता पूर्वापरालोचनयुक्तेन सुसहायेन वक्ष्यमाणसहायवता दण्ड्येषु दण्डोनेतुंशक्यः ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । शुचिना अलुब्धेन ॥ ३१ ॥

**स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु ॥ सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ३२ ॥**

( १ ) **मेधातिथिः** । पितृपितामहादिक्रमागतोदेशोव्यपदेशहेतुः । काश्मीरकस्यकाश्मीरः पाञ्चालस्यपाञ्चालाः स्वराष्ट्रं । तत्रन्यायप्रवृत्तिः न्यायेनवर्ततन्याययोगाद्वान्न्यायः अतोबहुव्रीहिः । न्यायवृत्तिरितिवापाठः । एतत्पूर्वसिद्धमनूद्य

शत्रुषु भृशदण्डता विधीयते । परराष्ट्राणिपुनः पीडयेन्नतत्रविप्राद्युपेक्षणीयं राष्ट्रीयोपरोधोवा तथाकुर्वतः प्रतापउपजायते प्रतापतश्च शत्रवोनमन्ति । ब्राह्मणेषुसर्वत्र क्षमान्वितः । अपराधेष्वपि साम्नादण्डः प्रयोज्योन क्रोधेन । परराष्ट्रवासिनोपि राष्ट्रघातकाले यदिशक्यन्तेरक्षितुंतदा नहन्यन्ते स्निग्धेषु सुहृत्सु । अजिह्मोऽकुटिलवृत्तिः कार्यसिद्धिकृत्तत्कार्यैप्रधानंस्यात् ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । भृशदण्डस्तीक्ष्णदण्डः । सुहृत्सु बन्धुषु स्निग्धेषु च मित्रेषु अजिह्मोऽवक्रमतिः । इति राजदण्डयोःप्रशंसा ॥ ३२ ॥

( ३ ) **कुल्लूकः** । आत्मदेशे यथाशास्त्रव्यवहारी स्याच्छत्रुविषयेषु तीक्ष्णदण्डोभवेन्निसर्गस्नेहविषयेषु मित्रेष्वकुटिलःस्यान्नकार्यमित्रेषु ब्राह्मणेषु च कृताल्पापराधेषु च क्षमावान्भवेत् ॥ ३२ ॥

( ४ ) **राघवानन्दः** । किंच स्वेति । न्यायवृत्तः शास्त्रानुसारव्यवहारी । भृशमत्यर्थंदण्डोऽस्यास्तीतिभृशंदण्डः शत्रुषु तद्राष्ट्रेषु अजिह्मोऽकुटिलः । क्षमान्वितः विप्रादिक्रोशसहिष्णुः ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । सुहृत्सुसंबन्धिषु राजा अजिह्मःस्यात् । स्निग्धेषु मित्रेषु क्षमान्वितःस्यात् ॥ ३२ ॥

**एवंवृत्तस्य नृपतेः शिलोञ्छेनापिजीवतः ॥ विस्तीर्यते यशोलोके तैलबिन्दुरिवांभसि ॥३३॥**

( १ ) **मेधातिथिः** । प्रक्रान्तवृत्तेःस्तुतिरियं शिलोञ्छेनापि जीवतोऽत्यन्तक्षीणकोशस्यविस्तीर्यते यशःप्रथते । ततश्चपरराष्ट्राणि स्वयंनमन्ते स्वराष्ट्रिकश्चानुरागादविचलितोभवति ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । एवंवृत्तस्येति यथोक्तदण्डप्रणेतुः । शिलोञ्छेनापीति भोगदानाभ्यांरहितस्यापीत्यर्थः ॥ ३३ ॥

( ३ ) **कुल्लूकः** । शिलोञ्छेनेतिक्षीणकोशत्वंविवक्षितंक्षीणकोशस्यापि नृपतेरुक्ताचारवतोजले तैलबिन्दुरिव कीर्तिर्लोके विस्तारमेति ॥ ३३ ॥

( ४ ) **राघवानन्दः** । किंच एवमिति । शिलोञ्छेनापीति क्षीणकोशत्वंविवक्षितम् ॥ ३३ ॥

( ५ ) **नन्दनः** । सम्यक्प्रणयनस्यफलमाह एवमिति । भूतलविप्रकीर्णं धान्यंशिलम् तस्योद्धारउञ्छः । शिलान्प्युञ्छतइतिलिङ्गात् । अथवा शिलंचोञ्छश्च शिलोञ्छम् वर्तयंस्तुशिलोञ्छाभ्यामितिलिङ्गात् । उञ्छःकणशआदानं कणिशाद्यर्जनंशिलमितियादवः ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः भोगदानाभ्यांरहितस्यापि यशः लोके विस्तीर्यते । अम्भसि तैलबिन्दुरिव ॥ ३३ ॥

**अतस्तु विपरीतस्य नृपतेरजितात्मनः ॥ संक्षिप्यते यशोलोके घृतबिन्दुरिवाम्भसि ॥ ३४ ॥**

( १ ) **मेधातिथिः** । अतोवृत्ताद्विपरीतस्य चलितस्य अत्रहेतुरजितात्मता । यथाशास्त्रमनियतात्मायः ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । अजितात्मनोधनलोभवश्यात्मनः ॥ ३४ ॥

( ३ ) **कुल्लूकः** । उक्ताचाराद्विपरीताचारवतोनृपतेरजितेन्द्रियस्य जले घृतबिन्दुरिव कीर्तिः लोके संकोचयति ॥३४॥

( ४ ) **राघवानन्दः** । उक्तवैपरीत्ये दोषमाह अतस्त्विति । अतउक्तेभ्योविपरीतस्य संक्षिप्यते अभिषेककाले विस्तीर्णयशाअपि तदुत्तरमजितेन्द्रियत्वादिनासंकुचितयशाभवेदित्यर्थः ॥ ३४ ॥

( ६ ) **रामचन्द्रः**। अजितात्मनः लोभाद्यासक्तचितस्य ॥ ३४ ॥

**स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ॥ वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥ ३५॥**

( १ ) **मेधातिथिः**। स्वधर्माणांचराजासृष्टोभिरक्षिता स्वधर्मनिष्ठानामपालनेराज्ञःप्रत्यवायोधर्मच्च्यतास्तु यदि केनचिदुपहन्येरन् नतत्रराज्ञोतीवदोषइति स्वेस्वेधर्मइत्यनेन दर्शयति । अथवानलिप्यतेऽनिविष्टानामिति । येतुशास्त्रात्पुत्राद्युपदेशाद्वा स्वधर्मापन्नाः न तेषांराजाप्रमुखेन वर्तेत । वर्णग्रहणंस्त्रीबालवृद्धानांरक्षार्थं नहि तेआश्रमस्थाः आश्रमग्रहणंतर्हिकिमर्थंप्राधान्यार्थंब्राह्मणवसिष्ठवत् प्रयोजननिर्देशोवायं । आश्रमसन्ध्योपासनादिधर्माच्चलितुमेषामकरणान्नु नचैवंदण्डाद्यपघातःकर्तुमेतेषांदेयः इतरथाबाधापरिहारः एवंरक्षाविज्ञायन्तेसंध्योपासनाद्यप्रकरणेषुनामान्यस्य कस्यचिद्भवति द्विरूपा राज्ञः कर्तव्यतेति वर्णाश्रमग्रहणम् । एतदेवोक्तंवर्णानाश्रमांश्च न्यायतोऽभिरक्षेदिति ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः**। स्वेस्वइति प्रकारान्तरारम्भार्थः प्रागुक्तानुवादः ॥ ३५ ॥

( ३ ) **कुल्लूकः**। क्रमेण स्वधर्मानुष्ठातॄणांब्राह्मणादिवर्णानांब्रह्मचार्याद्याश्रमाणांच विश्वसृजा राजा रक्षिता सृष्टः । तस्मात्तेषांरक्षणमकुर्वतोराज्ञः प्रत्यवायः स्वधर्मविरहिणांत्वरक्षणेऽपि न प्रत्यवायइत्यस्य तात्पर्यार्थः ॥ ३५ ॥

( ४ ) **राघवानन्दः**। उक्तविधंराजानंमहीकरोति स्वइति । रक्षितेतिकृत्वा सृष्टः ब्रह्मणेति शेषः ॥ ३५ ॥

( ५ ) **नन्दनः**। अर्थान्तरविवक्षार्थमुपसंहरति स्वइति । वर्णानामित्यधर्माधिकारिणांनिर्देशः । आश्रमाणामिति धर्माधिकारिणामिति । अभिरक्षितासृष्टोरक्षितृत्वेन सृष्टइत्यस्माभिरुक्तंह्येतिभावः ॥ ३५ ॥

**तेन यद्यत्सभृत्येन कर्तव्यं रक्षता प्रजाः ॥ तत्तद्वोऽहंप्रवक्ष्यामि यथावदनुपूर्वशः ॥ ३६ ॥**

( १ ) **मेधातिथिः**। वक्ष्यमाणावबोधनार्थश्लोकः। तेन राज्ञा सभृत्येन तदीयैःसहायैर्यत्कर्तव्यंप्रजारक्षणार्थंतदिदानीमुच्यते ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः**। यथावत् यस्ययदर्हम् । अनुपूर्वशः प्रातरारभ्य कार्यम् ॥ ३६ ॥

( ३ ) **कुल्लूकः**। वक्ष्यमाणावतारार्थोऽयंश्लोकः । तेन राज्ञा प्रजारक्षणंकुर्वता सामात्येन यद्यत्कर्तव्यंतत्तत्समग्रं युष्माकमभिधास्यामि ॥ ३६ ॥

( ४ ) **राघवानन्दः**। किंच तेनेति । सभृत्येन सामात्येन प्रजारक्षता यद्यत्कर्तव्यमित्यन्वयः ॥ ३६ ॥

( ५ ) **नन्दनः**। अर्थान्तरमेव प्रस्तौति तेनेति । रक्षताकर्तव्यं रक्षार्थंकर्तव्यमितियावत् ॥ ३६ ॥

( ६ ) **रामचन्द्रः**। तेन राज्ञा यद्यत्कर्तव्यंतत्तद्युष्माकमहंप्रवक्ष्यामि ॥ ३६ ॥

**ब्राह्मणान्पर्युपासीत प्रातरुत्थाय पार्थिवः ॥ त्रैविद्यवृद्धान्विदुषस्तिष्ठेत्तेषां च शासने ॥ ३७ ॥**

( १ ) **मेधातिथिः**। प्रातरुत्थाय शयनंत्यक्त्वा यथाविधानं कृतसंध्योपासनः प्रथमंब्राह्मणानांदर्शनंदद्यात् । उपासनमन्तिकोपवेशनकुशलप्रश्नादिकरणं परिः पादपूरणः । तिष्ठेत्तेषांचशासने आज्ञाकरणं तेषांशासनं यदि कस्यचिदुपकारायाविशेयुस्तद्विरुद्धंनशङ्क्यं नाप्यनर्थकमनुतिष्ठेत् । त्रैविद्यवृद्धान् तिसृणांविद्यानांसमाहारः त्रैविद्यं तदधीयते । त्रैविद्यारूढ्याऋग्वेदादिवेदत्रयाध्यायिनउच्यन्ते । विदुषस्तदर्थवेदिनश्च एवंविधायेब्राह्मणास्तानुपासीत तदीयामाज्ञां कुर्यात् । वृद्धास्त्रैविद्यानांश्रेष्ठाःप्रकर्षवन्तोध्ययनविज्ञानयोः ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः**। त्रैविद्येन वेदविद्यया वृद्धान् श्रेष्ठान् । तथा विदुषः शास्त्रसंस्कृतमतीन् ॥ ३७ ॥

( ३ ) **कुल्लूकः** । प्रत्यहंप्रातरुत्थाय ब्राह्मणानृग्यजुःसामाख्यविद्यात्रयग्रन्थार्थाभिज्ञान्विदुषइतिनीतिशास्त्राभिज्ञान्सेवेत तदाज्ञांकुर्यात् ॥ ३७ ॥

( ४ ) **राघवानन्दः** । तदेवाह ब्राह्मणानिति । त्रैविद्यवृद्धान् ऋग्यजुःसामाख्याविद्यास्तत्राभिज्ञान् । विदुषः नीतिशास्त्रज्ञान् । अनुशासने आज्ञायाम् ॥ ३७ ॥

( ५ ) **नन्दनः** । त्रयीदण्डनीतिरात्मविद्याचेति तिस्रोविद्यास्त्रयीविद्या तामधीयतइतित्रैविद्याः । विद्वांसस्तत्तत्त्ववेदिनः । उपासीत तदहःकृत्यसाधनार्थमितिभावः ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । राजाब्राह्मणान्पर्युपासीत । तेषांब्राह्मणानांशासने तिष्ठेत् । कीदृशान्ब्राह्मणान् त्रैविद्यवृद्धान् वेदत्रयस्तपःसंपन्नान् ॥ ३७ ॥

**वृद्धांश्च नित्यं सेवेत विप्रान्वेदविदः शुचीन् ॥ वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥ ३८ ॥**

( १ ) **मेधातिथिः** । वृद्धान्वयस्थब्राह्मणान् । एतदपूर्वं अन्यत्पूर्वसिद्धंविप्रानित्यादि । शुचीन्निरुपाधीन् । एतदप्यपूर्वं यथैवाध्ययनविज्ञाने उपास्यत्वकारणमेवंशुचित्वमपि द्वितीयश्लोकार्थार्थवादः । रक्षोभिः रक्षांसि निर्दयानि महाबलानि सर्वधर्मशून्यानितान्यपि वृद्धसेविनंपूजयन्ति ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । वृद्धान वयोवृद्धान् तेषांपुरावृत्तज्ञतयोहापोहशक्तत्वात् । तानपि वेदार्थज्ञान् शुचीन् शौचयुक्तानेव नान्यानित्येतदर्थंविशेषणद्वयम् ॥ ३८ ॥

( ३ ) **कुल्लूकः** । तांश्चब्राह्मणान्वयस्तपस्यादिवृद्धानर्थतोग्रन्थतश्च वेदज्ञान्बहिरन्तश्चार्थदानादिनाशुचीन्नित्यंसेवेत यस्माद्वृद्धसेवी सततंहिक्रूरैराक्षसैरपि पूज्यते तैरपि तस्य हितंक्रियते सुतरांमनुष्यैः ॥ ३८ ॥

( ४ ) **राघवानन्दः** । वृद्धसेविनांगुणमाह वृद्धाश्चेति । वृद्धान् पित्रादीन् । वेदविदोवेदाध्ययनमात्रशालिनः । तावन्मात्रत्वेपि न तपस्वित्वंमहत्त्वेकारणमित्याह शुचीनिति । वृद्धसेवीतिकृत्वा रक्षोभिः राक्षसाद्यैः ॥ ३८ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थमादरार्थमाह वृद्धानिति । वृद्धाञ्छीलेन वयसा च । रक्षोभिरपि दुर्जनैरपि ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । एतादृशोराजा रक्षोभिः राक्षसैरपि पूज्यते ॥ ३८ ॥

**तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपि नित्यशः ॥ विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥ ३९ ॥**

( १ ) **मेधातिथिः** । वृद्धसेवायाः प्रयोजनमाह तेभ्योविद्वद्ब्राह्मणेभ्योवृद्धेभ्यश्च विनयंराजवृत्तमधिगच्छेच्छिक्षेत । विनीतात्मा यद्यपि स्वयंबुध्यापि विनीतोऽर्थशास्त्रैर्वातथापि वृद्धोपदेशेयत्नवान्स्यात् । दृष्टकर्माणःशास्त्रज्ञेभ्योनिपुणतराः । अथवा पाटवातिशयजननार्थंविनीतेनापि स्वभावतोवृद्धेभ्यआर्येभ्यआत्माविनेयः स्वभावशुद्धस्य सुवर्णस्य तेजःसंयोगादिनाधीयमानसंस्कारोविशुद्धतररूपवानसौदृश्यते । अस्य विनयाधानस्य फलंनविनश्यतीति ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । विनयमिन्द्रियजयोपायम् । विनीतात्माप्यविनयादधिकंशिक्षेदित्यर्थः ॥ ३९ ॥

( ३ ) **कुल्लूकः** । सहजप्रज्ञयार्थशास्त्रादिज्ञानेन च विनीतोऽप्यतिशयार्थंतेभ्योविनयमभ्यसेत् यस्माद्विनीतात्मा राजा न कदाचिन्नश्यति ॥ ३९ ॥

( ४ ) **राघवानन्दः** । वृद्धसेवाप्रयोजनमाह तेभ्यइति । विनीतात्मापि स्वयमिति शेषः । कर्हिचित् शत्रुतः पराजय-दशायामपि विनयेन ततोपि राज्यमाप्नुयात् ॥ ३९ ॥

( ५ ) **नन्दनः** । सेवितेभ्योवृद्धेभ्यः प्राप्यमाह तेभ्यइति ॥ ३९ ॥

( ६ ) **रामचन्द्रः** । तेभ्यः वृद्धेभ्यः विनयं इन्द्रियजयोपायम् ॥ ३९ ॥

**बहवोऽविनयान्नष्टाराजानः सपरिच्छदाः ॥ वनस्थाअपि राज्यानि विनयात्प्रतिपेदिरे ॥ ४० ॥**

( १ ) **मेधातिथिः** । पूर्वोक्तएवार्थः श्लोकत्रयेणैव दृढीक्रियते । अविनीताः सपरिग्रहानष्टाः पुत्रदारहस्त्यश्वादिसंपत्परिग्रहः । येतु विनयिनोन ते राष्ट्रंप्राप्य हारयन्ति यावत्तेदूरस्थावनस्थाअपि कोशहीनाअपि राज्यंप्रतिपेदिरे लब्धवन्तः ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । बहवोऽविनयात वेनोविनष्टः पृथुस्तुविनयादितिश्लोकत्रयमस्यैव प्रपञ्चः । अत्राविनयः कामक्रोधलोभमदमानहर्षरूपारिड्वर्गापारवश्यं विनयस्तदपारवश्यम् ॥ ४० ॥

( ३ ) **कुल्लूकः** । करितुरगकोशादिपरिच्छदयुक्ताअपिराजानोविनयरहितानष्टाः बहवश्चवनस्थानिष्परिच्छदाअपि विनयेन राज्यंप्राप्नुवन् ॥ ४० ॥

( ४ ) **राघवानन्दः** । अत्रैव गुणदोषावाचष्टे बहवइति । अविनयादिति छेदः । परिच्छदः चतुरङ्गसेना । अहो विनयस्य माहात्म्यं यत्तावन्मात्रेणापरिच्छदाअपि राज्यान्यापुरित्याह वनस्थाश्चेति ॥ ४० ॥

( ५ ) **नन्दनः** । विनयस्यावश्याधिगम्यतांव्यतिरेकान्वयाभ्यामाह बहवइति ॥ ४० ॥

( ६ ) **रामचन्द्रः** । बहवोराजानः । अविनयात्कामक्रोधलोभमदमानहर्षरूपषड्वर्गात् सपरिच्छदानष्टाः ॥ ४० ॥

**वेनोविनष्टोऽविनयान्नहुषश्चैव पार्थिवः ॥ सुदाःपैजवनश्चैव सुमुखोनिमिरेव च ॥ ४१ ॥**

( १ ) **मेधातिथिः** । उभयत्राप्युदाहरणानि श्लोकसिद्धानिवर्णयन्ति । एतानिमहाभारतादाख्यानानिज्ञेयानि ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । वेनः पृथोः पिता मानमदाभ्याम् । नहुषोमदक्रोधाभ्याम् । सुदानामा पिजवनापत्यं मदात्क्रोधाच्च । सुमुखोलोभात् । निमिर्हर्षात् । हर्षआत्मन्यकस्मात्प्रीत्युद्रेकः ॥ ४१ ॥

( ३ ) **कुल्लूकः** । उभयत्रैव श्लोकद्वयेन दृष्टान्तमाह वेनइत्यादि । वेनोनहुषश्च राजा पिजवनस्यच पुत्रः सुदानामा सुमुखोनिमिश्चाविनयादनश्यन् ॥ ४१ ॥

( ४ ) **राघवानन्दः** । अत्रेतिहासमाह वेनइति । सुदाःपैजवनः पिजवनस्य पुत्रः सुदानामा । एतेषडविनयान्नष्टाः ॥ ४१ ॥

( ५ ) **नन्दनः** । अविनयान्नष्टानुदाहरति वेनइति ॥ ४१ ॥

**पृथुस्तु विनयाद्राज्यं प्राप्तवान्मनुरेव च ॥ कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥ ४२ ॥**

( १ ) **मेधातिथिः** । ब्राह्मण्यंचैवगाधिजः । ननुच राज्याधिकारे कोब्राह्मण्यप्राप्त्युपन्यासावसरः । राष्ट्रप्राप्तिरेव यथापूर्वंवर्णयितव्या उच्यते धनैश्वर्यादपि जात्युत्कर्षोदुष्प्रापः सर्वाधिकारहेतुत्वात् । ननुचकथंतस्य विनयोहेतुः षाड्गुण्यप्रयोगः अप्रमादः अतिव्ययवर्जनं अलोभः व्यसनासेवनं एवमादीर्निविनयः । तदेतद्ब्राह्मण्यस्यैकमपि नकारणं तपोहि

तत्र कारणत्वेन श्रुतं विश्वामित्रस्तपस्तेपे नानृपपुत्रः स्यामित्येवमादि उच्यते नार्थशास्त्रोक्तैवनीतिर्नयः किंतर्हि शास्त्रीयोविधिर्लोकाचारश्च । शास्त्रेचतपसाजात्युत्कर्षोजन्मान्तरेप्राप्यतइति विहितमेव । विश्वामित्रस्य ब्राह्मण्यंतु तस्मिन्नेव जन्मनि क्षत्रियस्य सतइत्याख्यातमेव ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । पृथ्वादिकथाश्च प्रसिद्धाएव । गाधिजोविश्वामित्रः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । पृथुर्मनुश्च विनयाद्राज्यंप्रापतुः कुबेरश्चविनयाद्धनाधिपत्यंलेभे गाधिपुत्रोविश्वामित्रश्च क्षत्रियः संस्तेनैव देहेन ब्राह्मण्यंप्राप्तवान् । राज्यलाभावसरे ब्राह्मण्यप्राप्तिरप्रस्तुताऽपि विनयोत्कर्षार्थमुक्ता । ईदृशोऽयंशास्त्रानुष्ठाननिषिद्धवर्जनरूपोविनयोयदनेन क्षत्रियोऽपिदुर्लभंब्राह्मण्यंलेभे ॥ ४२ ॥

( ४ ) **राघवानन्दः** । विनयात्प्राप्तराज्यानाह पृथुरिति । गाधिजोविश्वामित्रः विनयाद्ब्राह्मण्यंप्राप किमुतान्यत् । एभिस्त्विति क्वचित्पाठः तदा इत्यादिभीराज्यं प्राप्तमित्यध्याहार्यम् ॥ ४२ ॥

( ५ ) **नन्दनः** । विनयाल्लब्धमनोरथानुदाहरति पृथुरिति । मनुर्वैवस्वतः । गाधिजोविश्वामित्रः ॥ ४२ ॥

## त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ॥ आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥ ४३ ॥

( १ ) **मेधातिथिः** । विद्यामिति द्वितीयान्तपाठेऽधिगच्छेदित्यनुषञ्जनीयम् । समाप्तब्रह्मचर्यस्य राज्योपदेशात्त्रय्यर्थाधिगमेच तन्निष्पत्तेरभ्यासार्थोयमुपदेशः त्र्यवयवाविद्यात्रिविद्या तामधीयतेत्रैविद्यास्तेभ्यस्त्रयीमृग्वेदादिवेदत्रयंविद्यात् । संदिग्धेषु पदार्थेषु वेदेभ्योनिर्णयंकुर्यात् तैःसहवेदार्थंचिन्तयेदिति यावन्न राजत्वाभिमानान्मदावलेपेन सर्वज्ञोहमिति बुद्ध्या सदिह्यमानानर्थानुपेक्षेत । दण्डनीतिंच दण्डविषया नीतिः दण्डोदमनमित्याहुः येन शत्रवोप्रकृतयोविषयवासिनश्चान्यायकारिणोदम्यन्ते सदण्डोऽमात्यादिसंपत् नीतिस्तस्यप्रयोजनं तत्रविधिस्तंशिक्षेत । तद्विद्भ्यश्चाणाक्यादिग्रन्थविद्भ्यः । शाश्वतीमितिस्तुतिः । यद्यपि दण्डनीत्याप्यस्यसर्वलोकः शक्यते ज्ञातुं अन्वयव्यतिरेकमूलत्वादस्यार्थस्य तथाप्यबुधबोधनार्थानि तानि शास्त्राणि बुधानांचसंवादार्थानीति युक्तोदण्डनीतिशास्त्राधिगमः । एवमान्वीक्षिक्यपि तर्कविद्यार्थशास्त्रादिका । आत्मविद्याध्यात्मविद्या । विशेषणविशेष्येवापदे आत्मने या हितान्वीक्षिकी तर्काश्रया तांशिक्षेत साह्युपयुज्यते । व्यसनाभ्युदयोपरमचित्तसक्षोभोपशमाय । यातु बौद्धचार्वाकादितर्कविद्या सा नातीवकृत्वा क्वचिदुपयुज्यते प्रत्युतास्तिक्यमुपहन्ति योनातिनिपुणमतिः । यदा तुतत्रतंत्रामान्वीक्षिकीवेद तदा तस्यदूतसंवादादिषु वाक्यवैशद्यानामुपयोगोनोपहास्योभवति । वार्तारम्भाश्च पण्यानामर्थपरिज्ञानं वाणिज्यकौशलं समयेन बार्हस्पत्येन तत्र परिज्ञानं वार्ता तन्निमित्ताआरम्भावार्तारंभाः । वार्तात्वरूपंज्ञात्वा तद्विषयकार्यायप्रवृत्तिरारंभः । एतल्लोकतोविद्यात् वणिज्याजीवनोत्रलोकोऽभिप्रेतः तेहि तत्र कुशलाभवन्ति । लोकतइति च पूर्वयोरनुषङ्गःकर्तव्यस्तेन सर्वत्र तद्विद्भ्यइति लभ्यते ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । त्रैविद्येभ्यएव दण्डनीतिमभ्यस्येदान्वीक्षिकींचात्मविद्यां न्यायसांख्यादिकामपवर्गोपयोगिनीं वार्तारम्भास्तु कृष्यादीन्धनार्जनोपायान् लोकतएवान्वयव्यतिरेकाभ्याम् ॥ ४३ ॥

( ३ ) **कुल्लूकः** । त्रिवेदीरूपविद्याविद्भ्यस्त्रिवेदीमर्थतोग्रन्थतश्चाभ्यसेत् ब्रह्मचर्यदशायामेव वेदग्रहणात् समावृत्तस्य च राज्याधिकारात् अभ्यासार्थोऽयमुपदेशः । दण्डनीतिंचार्थशास्त्ररूपामर्थयोगक्षेमोपदेशिनींपारंपर्यागतत्वेन नित्यांतद्विद्भ्योऽधिगच्छेत् । तथान्वीक्षिकींतर्कविद्यांभूतप्रवृत्तिप्रयुक्त्युपयोगिनींब्रह्मविद्यांचाभ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुंशिक्षेत । कृषिवाणिज्यपशुपालनादिवार्तांतदारम्भान्धनोपायार्थांस्तदभिज्ञकर्षकादिभ्यः शिक्षेत ॥ ४३ ॥

( ४ ) **राघवानन्दः** । किंच यस्य वेदाक्षरकलापग्रहणोत्तरकालमेवाभिषेकैस्तदवसरेऽविचारितवेदार्थविचारतोजानीयादित्याह त्रैविद्येभ्यइति । धर्मार्थत्रयीं द्रव्यार्थदण्डनीतिमर्थोपायशास्त्रं शाश्वतींकुलपरंपरागतां आन्वीक्षिकीं तर्कविद्यां ऊहापोहार्थं आत्मविद्यां आत्मा नित्यः न जायतइत्यादिरूपां शोकापनोदार्थम् । वार्तारम्भान् कृषिपाशुपाल्य वाणिज्यादिवार्ता तदारम्भान् धनोपायान् लोकतः कृषीवलेभ्यः कृषीः पराशरादिस्मृतिभ्योवा ॥ ४३ ॥

( ५ ) **नन्दनः** । एवंत्रैविद्यवृद्धेभ्योविनयस्याधिगमउक्तः इदानींतेभ्यएव विद्यास्तिस्रोऽधिगन्तव्या इत्याह त्रैविद्येभ्यइति । वार्ताकृषिगोरक्षवाणिज्यादीनि तस्याआरम्भानक्रियाः ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । त्रैविद्येभ्यः त्रिवेदिभ्यः त्रयींविद्यां वेदत्रयीं शिक्षेत । दण्डविद्यां आन्वीक्षिकीं तर्कविद्यां आत्मविद्यां आत्मज्ञानहेतुभूतांशिक्षेत । वार्तायाआरम्भावार्तारम्भाः जीविकोपायास्तान्कृष्यादीन् लोकतः शिक्षेत ॥ ४३ ॥

**इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ॥ जितेन्द्रियोहि शक्नोति वशे स्थापयितुं प्रजाः ॥ ४४ ॥**

( १ ) **मेधातिथिः** । इन्द्रियजयस्य ब्रह्मचारिधर्मेषु सर्वपुरुषार्थतयोपदिष्टस्य पुनरिहोपदेशोराजधर्मेषु मुख्योयंविनयइति ज्ञापयितुं तदिदमाह जितेन्द्रियइत्यादि । सर्वस्यैतत्प्रसिद्धं अजितेन्द्रियस्य न प्रजावशे तिष्ठन्ति । योगस्तात्पर्यं दिवानिशमहोरात्रम् ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । इन्द्रियाणांजयेआयत्तत्वे ॥ ४४ ॥

( ३ ) **कुल्लूकः** । चक्षुरादीनामिन्द्रियाणांविषयासक्तिवारणे सर्वकालंयत्नंकुर्यात् यस्माज्जितेन्द्रियःप्रजानियंतुंशक्नोति न तु विषयोपभोगव्यग्रः । ब्रह्मचारिधर्मेषु सर्वपुरुषोपादेयतयाऽभिहितोऽपीन्द्रियजयोराजधर्मेषु मुख्यत्वज्ञानार्थमनन्तरवक्ष्यमाणव्यसननिवृत्तिहेतुत्वाच्च पुनरुक्तः ॥ ४४ ॥

( ४ ) **राघवानन्दः** । जितेन्द्रियएव यस्मात्प्रजानियन्तुं शक्नोति तस्मात्तज्जये यत्नआस्थेयइत्याह इन्द्रियाणामिति ॥ ४४ ॥

( ५ ) **नन्दनः** । एवंविनीतेन विदुषा सततमिन्द्रियजयःकर्तव्यइत्याह इन्द्रियाणामिति । योगमभियोगम् ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । इन्द्रियाणांजये दिवानिशंयोगं समातिष्ठेदित्यर्थः ॥ ४४ ॥

**दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ॥ व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥ ४५ ॥**

( १ ) **मेधातिथिः** । इदमपरमिन्द्रियजयोपदेशस्यप्रयोजनं अजितेन्द्रियस्य दुष्परिहराणि व्यसनानि दुरन्तानि दुःखकरोऽन्तोवसानंयेषां प्रथमंप्राप्तिकाले सुखयन्तिव्यसनानि पश्चात्तुवैरस्यजनयन्ति ततोदुरन्तान्युच्यन्ते । अथवा दुष्प्रापोऽन्तएषां नहि व्यसनिनस्ततोनिवर्तितुंशक्नुवन्ति । कामाद्धेतोस्समुत्थानंजन्मयेषाम् ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । दुरन्तानि दुःखोदर्कानि ॥ ४५ ॥

( ३ ) **कुल्लूकः** । दश कामसंभवान्यष्टौ क्रोधजानि वक्ष्यमाणव्यसनानि यत्नतस्त्यजेत् । दुरन्तानि दुःखावसानान्यादौ सुखयंत्यन्ते दुःखानि कुर्वंति । यद्वा दुर्लभोऽन्तोयेषांतानिदुरन्तानि नहि व्यसनिनस्ततोनिवर्तयितुंशक्यन्ते ॥ ४५ ॥

( ४ ) **राघवानन्दः** । अजितेन्द्रियता हि विषयाधीनेत्याह दशेति । वक्ष्यमाणानि व्यसनानि विविधदुःखहेतुनरकेषु व्यस्यते पुमान्यैस्तानि दुःखहेतवइति यावत् । दुरन्तानि दुःखमेवान्तोयेषांतानि ॥ ४५ ॥

( ५ ) **नन्दनः** । कामक्रोधजानि व्यसनानि वर्ज्यत्वेनाह दशेति ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । कामसमुत्थानि दशव्यसनानि अष्टौ क्रोधजानि व्यसनानि दुरन्तानि दुःखोदर्कानि प्रयत्नेन वर्जयेत् ॥ ४५ ॥

**कामजेषु प्रसक्तोहि व्यसनेषु महीपतिः ॥ वियुज्यतेऽर्थधर्माभ्यांक्रोधजेष्वात्मनैव तु ॥ ४६ ॥**

( १ ) **मेधातिथिः** । एषांवर्जनेप्रयोजनमाह गुरुलघुभावंच । अर्थधर्मवियोगेन व्यवहितआत्मवियोगः । क्रोधजेषु-सर्वैर्वियुज्यतइतिविशेषः ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनैव देहेन वियुज्यतइत्यन्वयः । यद्यपि कामजेपि मृत्युः संभवति तथापि कामजैः स्वप्रयोजनमल्पंसुखंसिद्ध्यति न क्रोधजइत्यत्रैवात्मवियोगोक्तिः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । वर्जनप्रयोजनमाह कामजेष्विति । यस्मात्कामजनितेषु व्यसनेषु प्रसक्तोराजा धर्मार्थाभ्यांहीयते क्रोधजेषु प्रसक्तः प्रकृतिकोपाद्देहनाशंप्राप्नोति ॥ ४६ ॥

( ४ ) **राघवानन्दः** । कस्मिन्गणे कोदोषस्तत्राह कामजेष्विति । आत्मनैवतु सहदेहेन वियुज्यतेऽतस्तद्रहितः स्यात् राजा । कामजेष्वर्थधर्मवियोगेन व्यवहितोप्यात्मवियोगःकामजैःसन्निकृष्टः ॥ ४६ ॥

( ५ ) **नन्दनः** । तेषूभयेषु व्यसनेषु प्रसक्तस्यानर्थान्विविच्याह कामेति । आत्मना शरीरेण वियुज्यते म्रियतइति-यावत् । अनेन क्रोधजानांगुरुतरत्वमुक्तम् ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । कामजेषु व्यसनेषु प्रसक्तोमहीपतिरर्थधर्माभ्यांवियुज्यते । क्रोधजेषु व्यसनेषु प्रसक्तोमहीपतिरा-त्मनैव वियुज्यते ॥ ४६ ॥

**मृगयाक्षोदिवास्वप्नः परिवादः स्त्रियोमदः ॥ तौर्यत्रिकं वृथाट्या च कामजोदशकोगणः ॥ ४७ ॥**

( १ ) **मेधातिथिः** । तानीदानींव्यसनानिस्वनामतोदर्शयति आखेटकार्थोमृगवधोमृगया अक्षस्तद्विषयक्रीडा एत-योस्त्वानर्थत्वंप्रसिद्धम् । दिवास्वप्नः कर्मानुष्ठानकाले कर्मस्वव्यापारः न दिवाशब्देनाहरेव विवक्षितं तदुक्तं जागर्तव्ये प्रसुप्तकेति अथवा मुख्यएव दिवास्वप्नः सहि प्रतिषिद्धः सर्वकार्यविघाती रुच दर्शनार्थिनामन्येषांतदसंपत्तेर्द्वेष्यताजनकः प्रजासु । परिवादः रहसि परदोषाऽऽवर्जनं तेन सर्वाःप्रकृतयोविरज्यन्ति अपरिवाद्यानांचपरिवादेऽधर्मःस्थितएव । स्त्रियो-मदइत्येतयोरनर्थरूपता सुप्रतीता । तौर्यत्रिकंनृत्यगीतवादित्राणाम् । वृथाट्याअप्रयोजनमीषत्प्रयोजनंवाइतस्ततश्चपरिभ्रम-णम् । दशपरिमाणोदशकः कामजः कामइच्छा ततोजायतेविशिष्टसुखोपभोगार्थोवा अनुभूतविशेषाद्वा जायमानः का-मजः ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । परिवादः स्वप्रशंसार्थमद्वेष्याणामपि निन्दा । मदः पानमत्तता । तौर्यत्रिकं नृत्यगीत-वाद्यानि । वृथाट्या विनाप्रयोजनंयात्रा । कामजोविनाक्रोधंरागमात्राज्जातः ॥ ४७ ॥

( ३ ) **कुल्लूकः** । तानि व्यसनानि नामतोदर्शयति मृगयेत्यादि । आखेटकाख्योमृगवधोमृगया अक्षोद्यूतक्रीडा सकलकार्यविघातिनीदिवानिद्रा परदोषकथनंस्त्रीसंभोगोमद्यपानजनितोमदः तौर्यत्रिकंनृत्यगीतवादित्राणि वृथाभ्रमणं एषदशपरिणामोदशकःसुखेच्छाप्रभवोगणः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । दशकामसमुत्थान्याह मृगयेति । मृगया वृथामृगवधः श्राद्धाद्यर्थम् । युधिष्ठिराद्यनुष्ठितोऽक्षो-

द्यूतक्रिया । परिवादइति स्वयंनोत्पादयेत्कार्यमित्यस्यानुवादः । स्त्रियः स्त्रीसेवनं तच्च दिवाधिकरणं निषिद्धं राजकार्यविघातित्वात् प्रजोद्वेगहेतुः बहुस्त्रीसेवनंवा । मदः स्त्रीभोगाय पानजः । तौर्यत्रिकं नृत्यगीतवादित्राणित्रीणि ॥ ४७ ॥

( ५ ) **नन्दनः** । कामजान्याह मृगयेति । मदःपानम् । तौर्यत्रिकं नृत्यगीतवादित्राणि । वृथाट्यानिष्प्रयोजनं पर्यटनम् । दशकःदशावयवः ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । तान्यष्टादश व्यसनान्याहमृगयेति द्वाभ्याम् । मृगया अक्षः दिवास्वमः परिवादः स्वमशंसार्थमद्वेष्याणामपिनिन्दा स्त्रियः स्त्रीणामासक्तिः मदः पानमत्तता तौर्यत्रिकं नृत्यगीतवाद्यं वृथोद्या वृथालापः वृथाट्येतिपाठे वृथाटनं एषदशकोगणः कामजः रागमात्रजातः ॥ ४७ ॥

**पैशुन्यं साहसं द्रोहईर्ष्यासूयार्थदूषणम् ॥ वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोष्टकः ॥ ४८ ॥**

( १ ) **मेधातिथिः** । अमात्यादयोयेसुकृतबान्धवास्तत्रयन्निगोपनीयंतस्यप्रकाशनंपैशुन्यम् । साहसं ज्यायसोनीचकर्मणि विनियोगः । स्वल्पेनैवापराधेन कराधानंकरावरोधोवा द्रोहउपांशुवधः । तत्रोपघातोवाजीवतएवेर्ष्या । सर्वसाधारणस्यविषयस्यसाधारण्यव्यावृत्तिः असहनंवा गुणिनांगुणेषुदोषाविष्करणंअसूया । अर्थदूषणं अर्थानामदानं हरणंवा । वाग्दण्डपारुष्येप्रसिद्धे । क्रोधोद्वेषः तत्प्रधानाएतत्कुर्वन्ति ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । पैशुन्यमसद्दोषाविष्कारः । साहसं अल्पेपि कारणे स्वयंमानुषवधादि । द्रोहः परजिघांसा । ईर्ष्या परस्यानभिसन्धिकृतत्वस्त्रीदर्शनादावपचिकीर्षा । असूया परस्तवासहिष्णुता । अर्थदूषणमर्थानांपरकीयानां स्वयमग्रहणेपि विनाशनम् । वाक्पारुष्यं आक्रोशादिना वाङ्मात्रेण परद्वेषोत्पादनम् । दण्डपारुष्यमयुक्तदण्डप्रणयनम् ॥ ४८ ॥

( ३ ) **कुल्लूकः** । पैशुन्यमविज्ञातदोषाविष्करणंसाहसंसाधोर्बंधनादिनिग्रहः द्रोहश्छद्मवधः ईर्ष्याऽन्यगुणासहिष्णुता परगुणेषुदोषाविष्करणमसूया अर्थदूषणमर्थानामपहरणंदेयानामदानंच वाक्पारुष्यमाक्रोशादि दंडपारुष्यंताडनादि एषोष्टपरिमाणोव्यसनगणःक्रोधाद्भवति ॥ ४८ ॥

( ४ ) **राघवानन्दः** । क्रोधजानष्टावाह पैशुन्यमिति । अविज्ञातंदोषाविष्करणं पैशुन्यम् । साहसं साधोर्बन्धनादिनानिग्रहः । द्रोहः छद्मनावधः । ईर्ष्या परगुणासहिष्णुता । परगुणेषु दोषाविष्करणमसूया । अर्थदूषणं परस्वापहारः न त्वर्थार्थदूषणं परिवादेन गतार्थत्वात् । पारुष्यविशेषणंवाग्दण्डजं तत्र वाक्पारुष्यमाक्रोशादि अनपराधेदण्डपारुष्यंताडनादि तेन द्वयम् ॥ ४८ ॥

( ५ ) **नन्दनः** । क्रोधजान्याह पैशुन्यमिति । अर्थदूषणंनाम परदूषणार्थं महतोऽर्थस्य परित्यागः । तथाकामन्दकेनोक्तम् ॥ दूष्यस्य दूषणार्थंहि परित्यागोमहीयसः । अर्थस्य नीतिशास्त्रज्ञैरर्थदूषणमुच्यते इति ॥ ४८ ॥

( ६ ) **रामचन्द्रः** । पैशुन्यं असद्दोषाविष्कारः । साहसं अल्पेपि कारणे स्वयंमानुषवधादिकम् । द्रोहः अपकारः॥ परजिघांसा ईर्ष्या । असूया परस्तवासहिष्णुता । अर्थदूषणं अर्थानांपरकीयानां स्वयमग्रहणेपि विनाशनम् ॥ ४८ ॥

**द्वयोरप्येतयोर्मूलं यं सर्वे कवयोविदुः ॥ तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ ४९ ॥**

( १ ) **मेधातिथिः** । उक्तंतावत्कामस्य व्यसनवर्गस्य लोभोमूलं विषयोपभोगस्पृहा कामः इच्छा अभिलाषोलोभइ-

त्यनर्थान्तरं यतः क्रोधजस्य कथंलोभोमूलं येनोच्यते तज्जावेतावुभौगणाविति । उच्यते नात्र लोभकारणता तयोर्वर्गयोरभिमेता किंतर्हि वर्गद्वयतुल्यता लोभस्य यमेतानि सर्वाणि व्यसनान्यनर्थमुपजनयन्ति तमेवैकोलोभोव्यसनहीनस्यापि । तदुक्तं लोभःसर्वगुणानिवेति । अतउपचारतएतदुक्तंतज्जावेताविति यदि लोभोन जायेत कथंसमानफलानि स्युः । कारणदोषोहिकार्यदोषंभासयति अतस्तत्कार्यत्वाद्यसनेषु चेद्दोषोध्रुवंकारणस्याप्यसौदोषउक्तोभवति । अथवा लुब्धएव पैशुनादिबहिष्कार्येष्वभिष्वङ्गंगच्छति । इतरस्तु स्वल्पके विषये अनुनयेनवोपशाम्यति । सेयमुपचाराल्लोभमूलताव्यसनवर्गद्वयस्योच्यते ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । लोभःप्राप्तस्य विषयस्यानपव्ययेच्छा तज्जौत्वेताविति क्रोधजेपिलोभप्रवृत्तस्यकामप्रतिहतावेवकोपोदयात् ॥ ४९ ॥

( ३ ) **कुल्लूकः** । एतयोर्द्वयोरपि कामक्रोधजव्यसनसञ्ज्ञयोःकारणंस्मृतिकाराजानन्ति तंयत्नतोलोभंत्यजेत् यस्मादेतद्गणद्वयंलोभाज्जायते क्वचिद्धनलोभतः क्वचित्प्रकारान्तरलोभेन प्रवृत्तेः ॥ ४९ ॥

( ४ ) **राघवानन्दः** । मूलोच्छेदे पुरुषव्यापारादितिन्यायाश्रयेणाह द्वयोरिति । तयोर्गणयोः । अतएवोक्तं गुणानुपक्रम्य ॥ लोभःसर्वगुणान्हन्तिश्वित्रोरूपमिवेप्सितमिति श्वित्ररोगईप्सितंरूपंहन्तीत्यन्वयः ॥ ४९ ॥

( ५ ) **नन्दनः** । द्वयोरपि गणयोर्जयोपायमाह द्वयोरिति । विषयाभिध्यानजआसङ्गोलोभः । तज्जौलोभजौ । लोभात्कामः कामात्प्रतिहतात्क्रोधः तेन तज्जावित्युक्तम् । तथा भगवानुवाच ॥ ध्यायतो विषयान्पुंसःसङ्गस्तेषूपजायते । सङ्गात् संजायतेकामः कामात्क्रोधोऽभिजायतइति ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । एतयोर्द्वयोरपि पूर्वोक्तयोर्मूलं लोभं सर्वे कवयोविदुः । तंलोभं यत्नेन वर्जयेत् । उभौ तौ गणौ तज्जौ तस्माल्लोभाज्जातौ ज्ञेयौ ॥ ४९ ॥

**पानमक्षाःस्त्रियश्चैव मृगया च यथाक्रमम् ॥ एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ ५० ॥**

( १ ) **मेधातिथिः** । दिवा स्वमादिभ्योऽस्य चतुष्कस्य गणस्य बहुदोषतरत्वंप्रसिद्धमेव ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । कामजे चतुष्कं कष्टतममतिशयेन दुःखहेतुः ॥ ५० ॥

( ३ ) **कुल्लूकः** । मद्यपानमक्षैःक्रीडास्त्रीसंभोगोमृगयाचेतिक्रमपठितमेतच्चतुष्कंकामजव्यसनमध्ये बहुदोषत्वादतिशयेन दुःखहेतुंजानीयात् ॥ ५० ॥

( ४ ) **राघवानन्दः** । किंचावश्यंत्याज्यं सार्थवादंसंकलयति पानमिति । मृगयायां व्यायामेनारोग्यगुणोत्पत्तेः । अतः स्त्रीसेवनंकष्टं तत्रापत्योत्पत्तावपि मैथुननिमित्तरेतःक्षरणवेगधारणाद्याभ्युत्पत्त्या मरणोत्पत्तिःसंभावितेति । ततोपि कष्टतरं द्यूतं तत्र पाक्षिकधनाप्तावपि वैराद्युत्पत्तिरिति । ततोपि पानंकष्टतमं मत्तस्य संज्ञारहिततया विषपानादिना मरणाद्यापत्तेर्बहुकालीननरकापत्तिश्चेति । एतच्चतुष्कंदिवास्वप्नादिभ्यउत्तरोत्तरंकष्टंविद्यादित्यन्वयः ॥ ५० ॥

( ६ ) **रामचन्द्रः** । कामजेगणे रागजेगणे एतच्चतुष्कं कष्टतमं दुःखदं विद्यात् ॥ ५० ॥

**दंडस्यपातनं चैव वाक्पारुष्यार्थदूषणे ॥ क्रोधजेपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ ५१ ॥**

( १ ) **मेधातिथिः** । अयमपित्रिकः पैशुनादिभ्यः पापीयानितिसुप्रतीतम् ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । क्रोधजेच त्रिकं सदा सर्वदा दुःखहेतुः ॥ ५१ ॥

( ३ ) **कुल्लूकः** । दण्डपातनंवाक्पारुष्यमर्थदूषणंचेति क्रोधजेऽपि व्यसनगणे दोषबहुलत्वादतिशयितदुःखसाधनंमन्येत ॥ ५१ ॥

( ४ ) **राघवानन्दः** । क्रोधजेप्याह । एवमर्थापहरणात्कष्टतरं वाक्पारुष्यं तावन्मात्रेण मरणोद्यमदर्शनात्त्यक्तधनस्य यतेरपि । तदुक्तं । दुरुक्तैर्भिन्नमात्मानंकःसमाधातुमीश्वरइति। ततोपि कष्टतमोदण्डपातः तत्र बहुकल्पनरकजनकविप्रवधादिदर्शनात् द्रुततरमरणदर्शनाच्चेति ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । क्रोधजेपिगणे दण्डाद्येतत्त्रिकंकष्टं विद्यात् ॥ ५१ ॥

**सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषंगिणः॥ पूर्वंपूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ ५२ ॥**

( १ ) **मेधातिथिः** । पानद्यूतयोःपानंगरीयः तत्र हि संज्ञाप्रणाशः अनुन्मत्तस्योन्मत्तत्वं अप्रेतस्यप्रेतत्वं कौपीनप्रकाशनं श्रुतप्रज्ञाप्रहाणं मित्रहानिः सद्भिर्वियोगः असद्भिश्चसंप्रयोगः गीतादिष्वर्थघ्नेषु प्रसङ्गः रतमन्त्रप्रकाशनंच मानिनो प्युपहास्यता गम्भीरप्रकृतेरपि यत्किञ्चनवादिता मदवेगेनेति पानदोषः। द्यूतेतु जितमेवाक्षविदुषा अनक्षज्ञस्यापि पाक्षिकः पराजयः। स्त्रीद्यूतव्यसनयोर्द्यूतव्यसनंगरीयः येन तदेव जितंद्रव्यंतस्यापि विषंभवति । तथाचतन्निमित्तोवैरानुबन्धः जयः साधारणः केवलंपराजयः भुक्तनाशः मूत्रपुरीषवेगधारणाच्च शरीरेशैथिल्यंव्याधिनिदानमेव तेन क्षुद्रादिभिः स्वपीडातिशयात्। मातर्यपिचमृतायांदीव्यत्येव कृतकृत्येषु च नम्रुत्वद्भिरपि कुप्यते तप्तायसपिण्डवत् परद्रव्याणि परिहरतोनप्रत्ययते च।क्षुधिते दुर्गतेऽन्नाद्युपपत्त्युपेक्षा विषयता सर्वगुणसंपन्नस्यापि तृणवदवज्ञायेत इति द्यूतदोषाः। स्त्रीव्यसने त्वपत्योत्पत्तिः प्रतिकर्म भाजनभुयिष्ठानुभवनं धर्मार्थपरिग्रहः शक्या च स्त्रीराजहिते नियोक्तुमपवाहयितुंवा । स्त्रीमृगयाव्यसनयोः स्त्रीव्यसनंगरीयः अदर्शनंकार्याणांस्त्रीव्यसनसंगेन राजकार्येषु च निर्वेदः कालातिपातनं धर्मलोपः पानदोषानुबन्धः अर्थघ्नेषुचानृतादिषु प्रसंगइति । मृगयायांतु व्यायामः पित्तश्लेष्मबन्धः मेदादिनाशः चलेस्थिरे वा काले लक्षपरिचयः । प्रहरणंवैशारद्योपजननंग्राम्यजनपरिजयश्चेति । एवंकामजस्य चतुष्कस्य वर्गस्य स्ववर्गे पूर्वंपूर्वंपापीयः । क्रोधजस्यापि च दण्डपातदोषानुबन्धः अर्थघ्नेष्वेवानृतादिषु संगः । दण्डपातवाक्पारुष्ययोर्दण्डपातनंगरीयः । दण्डपातने हि शरीरविनाशादिशक्यप्रतिसंधानम् । वाक्पारुष्ये त्वमर्षजः क्रोधाग्निःशक्यते दानमानाम्भोभिः शमयितुम् । वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यङ्गरीयः तेजस्विनोहिपारुष्यवचनचित्तसंक्षोभेभयंनासादयन्ति । तथा च प्रवादः॥ स्थिरंसाध्वसितंकाण्डंभित्वावास्थिप्रवेशितम् । विशल्यमङ्गंकुर्वन्तिनवाचोत्हृदयादपि ॥ रोहतेसायकैर्विद्धंवनंपरशुना हतम् । वाचादुरुक्तंबीभत्सन्नसंरोहतिवाक्क्षतम् ॥ भाग्यायत्तत्वादर्थस्येति नतेजस्विनोऽर्थदूषणंगणयन्ति । एवमेतयोर्वर्गयोःपूर्वस्य पूर्वस्य गरीयस्त्वं निदर्शितम् ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । एतस्मिन्सप्तके यथायथंसर्वगणद्वयमन्तर्भवति तौर्यत्रिकादेःस्त्रीरागादिकृतत्वात् अर्थदूषणादेश्च पैशुन्यादावप्यनुषंङ्गादित्यर्थः । पूर्वंपूर्वमिति द्यूतंहि स्त्रीभ्यः कष्टं द्यूते धननाशनियमात् भोगसुखस्य चाभावात् स्त्रीणांसुखहेतुत्वादित्यादि । एवंक्रोधजगणे विज्ञेयम् ॥ ५२ ॥

( ३ ) **कुल्लूकः** । अस्यपानादेःकामक्रोधसंभवस्य सप्तपरिमाणस्य व्यसनवर्गस्य सर्वस्मिन्नेव राजमण्डले प्रायेणावस्थितस्य पूर्वंपूर्वव्यसनमुत्तरोत्तरात्कष्टतरंप्रशस्तात्माराजा जानीयात् । तथा हि द्यूतात्मानंकष्टतरंमद्यपानेन मत्तस्य संज्ञाप्रणाशाद्यथेष्टचेष्टया देहधनादिविरोधइत्यादयोदोषाः । द्यूते तु पाक्षिकी धनावाप्तिरप्यस्ति । स्त्रीव्यसनात् द्यूतंदुष्टं द्यूतेहिवैरोद्भवादयोनीतिशास्त्रोक्तादोषाः । मूत्रपुरीषवेगधारणाच्च व्याध्युत्पत्तिः । स्त्रीव्यसने पुनरपत्योत्पत्त्यादिगुणयोगो-

व्यस्ति । मृगयास्त्रीव्यसनयोः स्त्रीव्यसनंदुष्टंतत्रादर्शनकार्याणांकालातिपातेन धर्मलोपादयोदोषाः । मृगयायांतु व्यायामे-नारोग्यादिगुणयोगोऽप्यस्तीत्येवंकामजचतुष्कस्यपूर्वपूर्वगुरुदोषम् । क्रोधजेष्वपि त्रिषु वाक्पारुष्याद्दण्डपारुष्यंदुष्टं अङ्ग-च्छेदादेरशक्यसमाधानत्वात् । वाक्पारुष्ये तु कोपानलोदानमानपानीयसेकैःशक्यःशमयितुंअर्थदूषणाद्वाक्पारुष्यंदो-षवन्मर्मपीडाकरंवाक्प्रहारस्यदुश्चिकित्स्यत्वात् तदुक्तंनसंरोहयतिवाक्क्षतम् । अर्थदूषणंतु प्रचुरतरार्थदानाच्छक्यसमा-धानम् । एवंक्रोधजत्रिकस्यापि पूर्वपूर्वंदुष्टतरंयत्नतस्त्यजेत् ॥ ५२ ॥

( ४ ) **राघवानन्दः** । सप्तकस्य पानाद्यर्थदूषणान्तस्य सर्वत्रानुषङ्गिणः इहामुत्र दुःखहेतुत्वाद्यसनस्य । व्यसनमिति परिभाषितस्य गुरुतरत्वंप्रपञ्चितम् ॥ ५२ ॥

( ५ ) **नन्दनः** । अत्रोभयेतारतम्यमाह सप्तकस्येति । वर्गद्वयान्तर्गतबहुत्वापेक्षया वर्गस्येति निर्धारणे षष्ठी । सर्वत्र प्राज्ञेषु मूढेषु चाविशेषेणानुषङ्गिणः । सजातीयापेक्षोऽयंपूर्वशब्दः न सर्वापेक्षः कुतः कामजेभ्यः क्रोधजानांगौरव-स्य प्रतिपादितत्वात् ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । आत्मवानस्यसप्तकस्य पानादिवर्गस्य आत्मनःपूर्वपूर्वव्यसनं गुरुतरंदुःखदंविद्यात् । कीदृशस्य-सप्तकस्य सर्वत्र प्रसरणशीलस्य ॥ ५२ ॥

**व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ॥ व्यसन्यधोधोव्रजति स्वर्यात्यव्यसनी मृतः ॥ ५३ ॥**

( १ ) **मेधातिथिः** । यद्यपि मृत्युव्यसनेसर्वहरेत्तथाप्येवंविशेषः । मृत्युरस्मिल्लोके सर्वहरः व्यसनंपुनरिहचा-मुत्रच तदिदमाह । व्यसन्यधोधोव्रजतिनरकंगच्छतीत्यर्थः । व्यसनशब्देनअत्यन्तोभ्यासएतद्वर्गविषयउच्यते अतश्चाभ्या-सप्रतिषिध्यते नत्वीषदासेवनं व्यसनभूताह्येतेधर्मार्थकामप्राणहराभवन्त्यन्यस्यापि पुरुषस्य किंपुनाराज्ञः । किंचाऽऽसेव-नमप्ययुक्तं पानादीनामशङ्क्यचेति यतोभ्यासप्रतिषेधः ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । अधोधइहलोके परलोके च व्रजति ॥ ५३ ॥

( ३ ) **कुल्लूकः** । यद्यपि मृत्युव्यसने द्वे अपीहलोके संज्ञाप्रणाशादिदुःखहेतुतया शास्त्रानुष्ठानविरोधितया च तुल्ये तथापिव्यसनंकष्टतरंपरत्रापि नरकपातहेतुत्वात् तदाह व्यसन्यधोऽधोव्रजति बहून्नरकान्गच्छतीत्यर्थः । अव्यसनी तु मृतः शास्त्रानुष्ठानप्रतिपक्षव्यसनाभावात्स्वर्गंगच्छति । एतेनातिप्रसक्तिर्व्यसनेषु निषिध्यते नतु तस्य सेवनमपि ॥ ५३ ॥

( ४ ) **राघवानन्दः** । व्यसनस्योभयत्रानर्थहेतुतामाह व्यसनस्येति । उक्तव्यसनजपापी अधोनरकं व्रजति । मृतस्तु मृतिमात्रेण तस्यैतत्पापाद्यसंभवात्स्वर्गम् ॥ ५३ ॥

( ५ ) **नन्दनः** । एतत्सप्तकमवश्यंपरिहरणीयमित्याह व्यसनस्येति ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । चत्वारि कामजानि क्रोधजानि त्रीणि एवंसप्तव्यसनस्यचपुनः मृत्योः द्वयोर्मध्ये सप्तव्यसनंक-ष्टमुच्यते ॥ ५३ ॥

**मौलाञ्शास्त्रविदः शूराँल्लब्धलक्षान्कुलोद्भवान् ॥ सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ ५४ ॥**

( १ ) **मेधातिथिः** । पितृपितामहान्वयागता बहुसुतधनबान्धवाः प्रकटगोभूमिधनास्तद्देशवासिनोमौलाः मूलंप्र-तिष्ठा तत्रभवामौलाः । शास्त्रविदः शास्त्रंशासनंभृत्यविधिज्ञानं तेनाऽन्येपि गुणागृह्यन्ते । तद्यथा प्राज्ञः दृढकारी धारयिष्णु-र्दक्षःवाग्मीप्रबलःप्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिदानशीलः योग्यसत्वयुक्तस्तंभचापलहीनः प्रियोवैरिणाम-

कर्तेति। शूरशब्देन राजकार्ये शरीरकलत्रापत्यधनादिष्वपि निरपेक्षउच्यते । तथामरणेऽभीरुः युद्धोत्साहीएकएव परिभवभयाद्बहुभिर्निरुध्यते। दृढप्रहारी बलवान् । लब्धलक्षाःपरिदृष्टकर्मतामननीहाःदृष्टखड्गव्यापाराःकृतार्थाधिकाराःअनुभूतमन्त्रिभूमयः । कुलोद्गतानकुलांकुशनिगृहीताह्यकार्येनवर्तन्ते । सचिवान्सहायान्नित्यमेते राज्ञः पार्श्ववर्त्तिनोभवेयुः। सप्तवाष्टौवा नियमोयं येनचाल्पएककचित्ताभवन्ति। ततश्चराजमन्त्रउद्घाटकः स्यात् बहूनामपि मन्त्रभेदः। तस्मादेतावन्तएव कर्त्तव्याः सुपरीक्षितान् धमार्थकामभयोपधाभिः सेयंपरीक्षोच्यते । पुरोहितः स्वल्पकार्ये राज्ञा व्याजेनाधिक्षिप्तः बहुनार्थसंप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजयेत् राजा विनाशाय। एतच्चसर्वेमन्त्रिभ्योरोचते। अथकथंभवतइति प्रत्याख्यानेअर्थोपधाशुद्धः परिव्राजिकान्तःपुरेलब्धविश्वासा एकैकममात्यमुपजयेत् साराजमहिषीभवन्तंकामयते कृतसमागमोपायेति प्रत्याख्याने कामोपधाशुद्धः। राजप्रयुक्ताएव केचित्पुरुषाः प्रमादमाविष्कुर्युः कृतसमयैरमात्यैराजाहन्यतइति। उपलब्धप्रमादः पुरोहितस्याप्तः कश्चिदमात्येषु मन्त्रंश्रावयेत्। इमंप्रवादमुपश्रुत्य भवतां नियह्येराज्ञाक्रियतइति तेषामेवचान्यतमः पूर्वमेव कृतसंवित्कः प्रत्येकंराजामात्येषूत्साहयेत्। तत्रयेप्रत्याचक्षते तेभयोपधाशुद्धाः अथवामौलास्तावत्कुर्यादर्थप्रमादकर्तृसंनिधातॄन् येअर्थंग्रामेभ्यः समाहरन्तिसमाद्धतंच रक्षन्ति विनियुञ्जतेच सर्वथाऽर्थव्यवहारिणोमौलाः कर्त्तव्याइत्युक्तंभवति। शास्त्रविदोबुद्धिसचिवामंत्रिणः। शूरान् बलाध्यक्षान्। लब्धलक्षानित्यादिसर्वेषांविशेषणमेकैकस्यसमुदितपरीक्षा च योक्ता राजविषया राजामात्येषूत्साहनमिति सानयुक्तेतिमन्यन्ते। एषएवहिबुद्धिभेदोभवेदमात्यानाम्। तस्मादन्याकाचित्स्त्रीसाध्वीप्रयोज्या अन्यश्चविनाशाविषयउदाहार्यः ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः**। मौलान् परंपरायातान्। लब्धलक्षान् युद्धादिप्रवेशेन दृष्टशस्त्रशास्त्रज्ञानशक्तितया गृहीतसंवादान्। सुपरीक्षितान् अर्थशुचित्वादिना ॥ ५४ ॥

( ३ ) **कुल्लूकः** । मौलान्पितृपितामहक्रमेणसेवकांस्तेषामपि द्रोहादिना व्यभिचाराद्दृष्टादृष्टार्थशास्त्रज्ञान्विक्रान्ताँल्लब्धलक्षाँल्लक्षादप्रच्युतशरीरशल्यादीनायुधविदइत्यर्थः विशुद्धकुलभवान्देवतास्पर्शादिनियतानमात्यान्सप्ताष्टौवामन्त्रादौ कुर्वीत ॥ ५४ ॥

( ४ ) **राघवानन्दः**। सुसहायेनेत्युक्तं तत्र विशेषणविशिष्टान्सहायानाह मौलानिति। पितृपितामहक्रमेण सेवकामौलाविख्यातपितृपितामहावा। शास्त्रविदः नीतिशास्त्रविदः । शूरानिति शूरहीनंराज्यंपरैराक्रम्यतेयतः। भीरूणांसाह्याम्यानुपपत्तेश्च। लब्धलक्षान् लक्ष्यादप्रच्युतशरादीन् युद्धेकुशलान् । कुलोद्गतान् सत्कुलजान् मौलत्वेपि संकरजारजादिव्यावृत्त्यर्थम्। सुपरीक्षितान् देवतादिस्पर्शकृतशपथान् स्त्रीधनादिलोभोत्तीर्णान्वा । सचिवान् सहायान् साचिव्यंयत्कृतंस्मृतंतत्। सप्तचाष्टौवेति विकल्पोबहुविषयाद्यपेक्षया ॥ ५४ ॥

( ५ ) **नन्दनः** । अथामात्यलक्षणमाह मौलानिति । मौलान्कुलक्रमागतान् । लब्धलक्षान्सर्वकालेषुसिद्धफलान् ॥ ५४ ॥

( ६ ) **रामचन्द्रः**। मौलान् पितृपितामहादिक्रमागतान् कुलोद्भवान् विशुद्धकुलसंभूतान् एतादृशान्सचिवान्कुर्वीत ॥५४ ॥

## अपियत्सुकरं कर्म तदप्येकेन दुष्करम् ॥ विशेषतोऽसहायेन किंतु राज्यं महोदयम् ॥ ५५ ॥

( १ ) **मेधातिथिः** । यत्सामान्यंगृहस्थस्य गृहकृत्यंगोश्वादिपालनंसुकरमितिस्थितम्। सएवगांपालयति सएवदोग्धि न शक्यमेतदेकेन कर्तुं तदप्येकेन दुष्करं विशेषतोऽसहायेन दुष्करमशक्तेन न शक्यंकर्तुम्। कथंह्येकोगांचारयति

कथंचभार्यारक्षतु कथंमेवतुराज्यंतु प्रतिमहारंभमुदयकर्म तद्योगः फलवांश्चानपेक्षमाणस्य महत्फलमुपोदेति । नचैकेनषाड्गुण्यंवेदितुंशक्यम् । तस्मादात्मसमाःपरीक्षिताः सहायास्तेषुतेषु कार्येषुकर्त्तव्याः ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । विशेषतोराज्यंमहोदयमसहायेन दुष्करमिति किमु किमाश्चर्यमित्यर्थः ॥ ५५ ॥

( ३ ) **कुल्लूकः** । यस्मात् अपीत्यादि । सुखेनापि यत्क्रियते कर्मतदप्येकेन दुष्करंभवति विशेषतोयन्महाफलंतत्कथमसहायेन क्रियते ॥ ५५ ॥

( ४ ) **राघवानन्दः** । एकाकिनाकिमितिनक्रियेततत्राह अपीति । अपिःसंभावनायाम् । सुकरं गोदोहनशिबिकोद्वहनादि । महोदयं महत्कार्यं महत् ऐश्वर्यादेःशत्रुजयादेर्वा उदयोयस्मात्तत् ॥ ५५ ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह अपीति । यतएवमतः ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । अपि निश्चयेन यत्कर्म सुकरंस्यात्तत्कर्मासहायेन विशेषतःकर्तुंदुष्करम् एवंविधंमहोदयंराज्यं किं किमपीत्यर्थः ॥ ५५ ॥

**तैः सार्धं चिंतयेन्नित्यं सामान्यं संधिविग्रहम् ॥ स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ ५६ ॥**

( १ ) **मेधातिथिः** । तैर्बुद्धिसचिवैर्मुख्यैश्चार्थाधिकारिभिः सहसामान्यंयन्नातिरहस्यंतच्चिन्तयेत्सन्धिविग्रहं किंसन्धिस्संप्रतियुक्तोअथविग्रहउभयत्रगुणदोषान्विचारयेत् । इदंकर्त्तव्यावधारणन्तुस्वबुद्ध्याकुर्याद्यथास्यपरप्रयोज्यता न भवति । इदंचापरंचिन्तयेत्स्थानं तच्चतुर्विधंदण्डकोशपुरराष्ट्राणि तत्र दण्डोहस्त्यश्वरथपदातयः तेषांप्रतिकर्म पोषणरक्षणादि चिन्त्यप्रतिकर्म । नह्यसमाधानंप्रधानंच यथाकोशस्य हेमरूप्यबाहुल्यंप्रचुररूप्यताऽऽयव्ययलक्षणंच कोशस्य । तथान्यायस्थानानि न व्ययितव्यानि न विलम्बनीयानिभृत्यानाम् । तथा राष्ट्रस्य देशपर्यायस्य स्वाजीव आत्मसंधारणंपरसंधारणेन नदीवृक्षाः पशवः शत्रुद्वेषाक्रान्तप्रायः गुप्तिगोचरः पशुमान् अदेवमातृकः आपदिचदण्डकरग्रहइत्येवमादि । पुरस्यवक्षति तस्मादायुधसंपन्नमिति । अथवा स्थानंस्वदेशाच्चाप्रच्यवनं एवंसमुदयोपिचिन्त्यः । तत्रकृषिर्व्रजगुल्मस्थानानिवाणिज्यमुक्तदण्डत्येवमादि । गुप्तिस्त्वराष्ट्रगतांवक्ष्यति । लब्धप्रशमनंच देवतासमंविद्यावतांधार्मिकाणांचमानदानत्यागायोगः अवितानांचाभ्यनुज्ञानं सर्वबन्धनमोक्षः । अनुग्रहोदीनव्याधितानां उत्सवानांचापूर्वाणांप्रवर्त्तनं प्रवृत्तानामनुवृत्तिः । यच्चकोशदण्डोपाधिकमधार्मिकचरित्रंतदपनीयधर्मव्यवहारान्स्थापयेत् । अधर्मचारित्रमकृतमन्यस्यकृतंवान्यैःप्रवर्त्तयेत् नवा धर्मकृतंचान्यैर्निवर्तयेदिति । एवंस्थानादीनिचिन्त्यानि ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । सामान्यंसर्वमेव क्वचिद्विकारेपुनरविश्वासात् । संधिविग्रहाभ्यांषाड्गुण्योपालक्षणम् । स्थानंदण्डकोशपुरराष्ट्रं तत्रहि राजास्थितः । समुदयं वार्तोपायं ततोधनस्योदयः । गुप्तिं लब्धस्यरक्षोपायम् । सर्वप्रशमनं जित्वा ब्राह्मणपूजनमित्यादि । जित्वासंपूजयेद्देवानितिच वक्ष्यति ॥ ५६ ॥

( ३ ) **कुल्लूकः** । सचिवैः सह सामान्यंमन्त्रेष्वगोपनीयंसंधिविग्रहादि तन्निरूपयेत्तथातिष्ठत्यनेनेतिस्थानंदण्डकोशपुरराष्ट्रात्मकंचतुर्विधंचिन्तयेत् । दण्ड्यतेनेनेति दण्डोहस्त्यश्वरथपदातयः तेषांपोषणंरक्षणादि तच्चिन्त्यंकोशोर्थनिचयः तस्यायव्ययादि पुरस्य रक्षणादि राष्ट्रं देशः तद्वासिमनुष्यपश्वादिधारणक्षमत्वादिचिन्तयेत्तथासमुदयंत्युत्पद्यन्ते अस्मादर्थाइतिसमुदयोधान्यहिरण्याद्युत्पत्तिस्थानं तन्निरूपयेत्तथागुप्तिंरक्षामात्मगतां राष्ट्रगतां चत्वपरीक्षितमन्नाद्यमद्यात्परीक्षिताः स्त्रियश्चैवमित्यादिनात्मरक्षणं राष्ट्रस्य संग्रहे नित्यमित्यादिना राष्ट्ररक्षां चवक्ष्यति लब्धस्य च धनस्य प्रशमनानिसत्पात्रेप्रतिपादमादीनिचिन्तयेत्तथाचवक्ष्यति जित्वासंपूजयेद्देवानित्यादि ॥ ५६ ॥

( ४ ) **राघवानन्दः**। किंच तैरिति । सामान्यंयदपि गोप्यंसन्धिविग्रहं तत्षट्कम्। स्थानंअवस्थीयतेऽनेनेति राजदण्डकोशपुरराष्ट्रात्मकं। तत्र दण्डः पणादिरूपोहस्त्यश्वरथपदातयोवा । समुदयं धान्यहिरण्याद्युत्पत्तिस्थानम्। गुप्तिमात्मनोराष्ट्रस्य रक्षाम्। लब्धस्यधनस्य प्रशमनानि सत्पात्रप्रतिपादनानि च। तैःसह चिन्तयेदित्यनुषज्यते ॥ ५६ ॥

( ५ ) **नन्दनः** । सामान्यंसमानत्वम्। द्वैधीभावइत्युभयोर्द्विषतोः समानोहिद्वैधीभावः। यथोक्तंकामन्दकेन बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्। द्वैधीभावेन वर्तेतकाकाक्षिवदलक्षितः इति। स्थानमासनम् । समुदयंयानम्। गुप्तिमात्मगुप्तिंसंश्रयमितियावत्। आत्मगुप्तिलक्षणोहिसंश्रयः तथोक्तंकामन्दकेन॥ उच्छिद्यमानोबलिनानिरुपायप्रतिक्रियः। कुलोद्गतंसत्यमार्यंसंश्रयेतबलोत्कटमिति ॥ षाड्गुण्यात्स्वोपलब्धस्य परराष्ट्रस्य रञ्जनम् अनुरागप्रतापाभ्यांलब्धप्रशमनंस्मृतमितिचतेनैवोक्तम् ॥ ५६ ॥

( ६ ) **रामचन्द्रः**। तैः सचिवैः सार्धं विग्रहादिकं चिन्तयेत्। सन्धिः व्यवस्थाकरणं विग्रहोऽपकारः। स्थानं आसनं उपेक्ष्य संशयः गुप्तिः रक्षा लब्धस्य धनस्य प्रशमनानि पात्रेषु प्रतिपादनानि ॥ ५६ ॥

**तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ॥ समस्तानां च कार्येषु विदध्याद्धितमात्मनः॥ ५७॥**

( १ ) **मेधातिथिः**। तेषांपृथक्पृथगैकैकस्य रहस्यभिप्रायंहृदयनिहितंभावमुपलभ्य समस्तानांसंहतानां यत्कारणं कश्चित्पुरुषः परिषदि अप्रतिभानवान्भवति रहसिप्रगल्भः कश्चित्परिषद्यासादितप्रज्ञः ततश्चतान्समस्तान्पृच्छेत्। ततःस्वयंयद्युक्ततरंहितमात्मने तद्व्यवस्येद्विदध्यात्। तत्प्रामाण्यंतेषामेवान्यतमेनोपदिष्टंवा यदप्रत्यतीकंनिर्दोषंच ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः**। पृथक् प्रत्येकम्। समस्तानां संभूयालोच्य वदताम् ॥ ५७ ॥

( ३ ) **कुल्लूकः**। तेषांसचिवानां रहसि निष्प्रतिपक्षतया हृदयगतभावज्ञानसंभवात्प्रत्येकमभिप्रायंसमस्तानामपियुगपदभिप्रायंबुद्ध्वा कार्येयदात्मनोहितंतत्कुर्यात् ॥ ५७ ॥

( ४ ) **राघवानन्दः**। तथापि पृथक्पृथगिति रहसि पूर्वंप्रत्येकंभावंज्ञात्वा पश्चात्समस्तानांतेषांकार्येषु युगपद्भावंबुद्ध्वाऽऽत्महितंविदध्यादिति भावः ॥ ५७ ॥

( ५ ) **नन्दनः** । समस्तानांसंगतानाम् ॥ ५७ ॥

( ६ ) **रामचन्द्रः**। तेषांसमस्तानांत्वंस्वमभिप्रायमुपलभ्यात्मनोहितं हितकार्यं विदध्यात् कुर्यात् कर्तव्यमित्यर्थः ॥ ५७ ॥

**सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ॥ मंत्रयेत्परमं मन्त्रं राजाषाड्गुण्यसंयुतम् ॥ ५८ ॥**

( १ ) **मेधातिथिः**। विपश्चिता विदुषाअर्थशास्त्रज्ञेन परंमन्त्रमत्यन्तंगोपनीयंमन्त्रयेत् षाड्गुण्ययुक्तम्। आधिकतरप्रज्ञोहि ब्राह्मणोधार्मिकत्वाच्चविश्वसनीयः ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः**। सर्वेषां सर्वेभ्यः ॥ ५८ ॥

( ३ ) **कुल्लूकः**। एषामेवसर्वेषांसचिवानांमध्यादन्यतमेन धार्मिकत्वादिनाविशिष्टेन विदुषाब्राह्मणेनसह संधिविग्रहादिवक्ष्यमाणगुणषट्कोपेतंप्रकृष्टंमंत्रंनिरूपयेत् ॥ ५८ ॥

( ४ ) **राघवानन्दः**। किंच सर्वेषांत्विति। सर्वेषांमध्ये विशिष्टेन स्वभावतोऽकुटिलादिगुणवता कार्याणांच षाड्गुण्यंवक्ष्यमाणम्। आत्मबुद्धिःसुखकरी गुरुबुद्धिर्विशेषतइति न्यायात् ॥ ५८ ॥

( ५ ) **नन्दनः** । परमंकार्यनिर्णयकरम् । षाड्गुण्यसंयुतंषाड्गुण्यविषयम् । षड्गुणाएव षाड्गुण्यम् ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । सर्वेषांमन्त्रिणांमध्ये विशिष्टेन ब्राह्मणेन राजा परंमन्त्रंमन्त्रयेत् । कीदृशं मन्त्रं षाड्गुण्यसहितम् । षाड्गुण्यमाह ॥ सन्धिर्ना विग्रहोयानमासनंद्वैधमाश्रयइत्यमरः ॥ ५८ ॥

**नित्यं तस्मिन्समाश्वस्तः सर्वकार्याणि निक्षिपेत् ॥ तेन सार्धं विनिश्चित्य ततः कर्म समारभेत् ॥५९॥**

( १ ) **मेधातिथिः** । तादृशिब्राह्मणेसर्वराष्ट्रमण्डलंनिक्षिप्यविश्वस्तोराज्यसुखंभुञ्जीत च सहविनिश्चित्य यानासनादिकर्मव्यवहारसंग्रहादिसमाचरेत् ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । निक्षिपेत् समर्पयेत् ॥ ५९ ॥

( ३ ) **कुल्लूकः** । सर्वदातस्मिन्ब्राह्मणेसंजातविश्वासोभूत्वा यानिकुर्यात्तानिसर्वकार्याणिसमर्पयेत् तेनसह निश्चित्य सर्वकर्मारभेत् ॥ ५९ ॥

( ४ ) **राघवानन्दः** । तत्रापि ब्राह्मणमेव महीकरोति नित्यमिति । तेन विपश्चिता ब्राह्मणेनाण्वपि कार्यमविचारितं न कुर्यादित्यर्थः ॥ ५९ ॥

( ५ ) **नन्दनः** । तस्मिन्ब्राह्मणे । समाश्वस्तोविश्वस्तः ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । अस्मिन् ब्राह्मणे समाश्वस्तः कृतविश्वासः सर्वकर्माणि निक्षिपेत् । तेन ब्राह्मणेन सार्धम् ॥ ५९ ॥

**अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् ॥ सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ॥ ६० ॥**

( १ ) **मेधातिथिः** । यदुक्तंसप्तचाष्टौवेति तस्यायमपवादः । अर्थसमाहर्तॄन्संनिधातॄन्सुपरीक्षितानुपधाभिः कुर्यात् ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । शुचीनलोलुपान् । अवस्थितान् स्थिरस्वभावान् । कुलोद्गतानितिकचित्पाठः । अर्थसमाहर्तॄन् राष्ट्रेष्वर्थोत्पादनरक्षादिकर्तॄन् । प्रागुक्तेभ्योऽष्टभ्योऽमात्यानन्यानपि कुर्वीत ॥ ६० ॥

( ३ ) **कुल्लूकः** । अन्यानित्यादि । अन्यानपि अर्थदानादिनाशुचीन् प्रज्ञाशालिनः सम्यग्धनार्जनशीलान्धर्मादिनापरीक्षितान् कर्मसचिवान् कुर्यात् ॥ ६० ॥

( ४ ) **राघवानन्दः** । किंच अष्टातिरिक्तानपि कुर्यादित्याह अन्यानितिद्वाभ्याम् । अवस्थितान् अभीरून् । सम्यगर्थसमाहर्तॄन् अव्याजेनार्थहारकान् । अमात्यान् यैरमा सह दुष्कराण्यपि कार्याण्यत्येतितान् ॥ ६० ॥

( ५ ) **नन्दनः** । एवंमन्त्रसहायाउक्ताः अधुनाकार्यसहायानाह अन्यानिति । अवस्थितान्व्यवस्थितान् अर्थसमाहर्तॄन्कार्यकरान् प्रकुर्वीताधिकुर्वीत ॥ ६० ॥

( ६ ) **रामचन्द्रः** । सम्यक् अर्थस्य द्रव्यस्य समाहर्तॄन् आनयितॄन् अनवस्थितान् चञ्चलान् ॥ ६० ॥

**निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ॥ तावतोऽतन्द्रितान्दक्षान्प्रकुर्वीत विचक्षणान् ॥ ६१ ॥**

( १ ) **मेधातिथिः** । सर्वएतेमन्त्रज्ञाविचक्षणाः विद्वांसश्चाधिकारिकाः कर्त्तव्याः । दक्षान् भयसंनिधानेप्यव्ययहेता-

वत्युत्साहवन्तः अतन्द्रितान् अनलसान् । उक्तंचाध्यक्षप्रचारे बुद्धिमाननुरक्तश्चयुक्तोधर्मार्थकोविदः । शुचिर्दक्षः कुलीनश्चमन्त्रीयस्यसराज्यभाक् ॥ तस्मिन्निक्षिप्यकार्याणिभोगसंगीननश्यति । राजवश्यविधिस्तेनदानानुग्रहणैरिति ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । अतन्द्रितान् प्रमादशून्यान् । इतिकर्तव्यता कार्यम् ॥ ६१ ॥

( ३ ) **कुल्लूकः** । अस्यराज्ञोयत्संख्याकैर्मनुष्यैः कर्मजातंसंपद्यते तत्संख्याकान्मनुष्यानालस्यशून्यान् क्रियासुसोत्साहान् तत्कर्मज्ञान् तत्रकुर्यात् ॥ ६१ ॥

( ४ ) **राघवानन्दः** । किंच निवर्तेतेति । अस्य राज्ञइतिकर्तव्यता इतीदंप्रकर्तव्यमस्तीति तत्समाप्यते यावद्भिस्तावतः कुर्यादित्यन्वयः । अतन्द्रितान् निरलसान् । दक्षानुपस्थितेपि भये उत्साहिनः ॥ ६१ ॥

( ५ ) **नन्दनः** । अनिन्दितान्प्रशस्तान् । दक्षांश्चतुरान् । विचक्षणान्पण्डितान् ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । अस्य राज्ञः इतिकर्तव्यता यावद्भिर्नृभिर्निवर्तेत तावतोऽधिकारिणःकुर्वीत ॥ ६१ ॥

**तेषामर्थे नियुञ्जीत शूरान्दक्षान्कुलोद्गतान् ॥ शुचीनाकरकर्मान्तेभीरूनन्तर्निवेशने ॥ ६२ ॥**

( १ ) **मेधातिथिः** । अर्थे आयव्ययव्यवहारे । शुचीनर्थेष्वस्पृहान्नियुञ्जीत तान्यर्थस्थानान्युदाहरणेन दर्शयति आकरकर्मान्तइति आकराः सुवर्णरूप्याद्युत्पत्तिसंस्कारस्थानानि । कर्मान्ताभक्ष्यकार्पासावापादयः । अन्तः पुनर्भोजनशय्यास्त्रीगृहाणि भिरवस्तत्रनियोज्याः शूराहिराजानमेकाकिनमुपजप्याहन्युः । दक्षाः सर्वेपिव्युत्थानशीलतयाद्वन्द्वोपरिपातमपरिगणय्य स्वामिनः कार्यकालेनातिपातयन्ति ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । तेषांमध्येऽर्थेऽर्थोत्पादने । शुचीन्भीरूनित्युभयमुभयतोन्वितम् । आकरे रत्नाद्युद्धारस्थाने कर्मान्ते भूषणशस्त्रादिनिष्पादने । भीरून् मारणादिभीतान् । अन्तर्निवेशनेन्तःपुरे ॥ ६२ ॥

( ३ ) **कुल्लूकः** । तेषांसचिवानांमध्येविक्रांतांश्चतुरान् कुलाङ्कुशनियमितान् शुचीन् अर्थनिःस्पृहान् धनोत्पत्तिस्थानेनियुंजीत । अस्यैवोदाहरणं आकरकर्मांतइति आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु कर्मांतेषु च इक्षुधान्यादिसंग्रहस्थानेषु अंतर्निवेशनेभोजनशयनगृहांतःपुरादौ भीरून्नियुंजीत । शूराहितत्रराजानंप्रायेणैकाकिनंस्त्रीवृतंवा कदाचित् शत्रूपजापदूषिताहन्युरपि ॥ ६२ ॥

( ४ ) **राघवानन्दः** । तत्रव्यवस्थितिमाह तेषामिति । तेषां कर्मसचिवानांमध्ये ये शूरास्तानर्थेऽर्जनवत्परतोर्थाहरणे । आकरकर्मान्ते शुचीन् ॥ योऽर्थे शुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिरित्युक्तेस्तेषामेव शुचित्वाभिधानात् । आकरकर्मान्ते आकरः सुवर्णाद्युत्पत्तिस्थानं तदेव कर्मणोप्यन्तं ऐहिकचेष्टामात्रस्य धनार्थत्वात् । अन्तर्निवेशने भोजनशयनस्त्रीपुरादौ भीरोर्हि राजदारदूषणविषदानादौत्रासात्तन्त्र्यादर्शनात् ॥ ६२ ॥

( ५ ) **नन्दनः** । तेषांमध्येशूरानर्थे कोशेआकरकर्मान्त आकरकर्मणिशुचीनर्थशुद्धान्नियुञ्जीत आकरद्रव्यस्याकृतपरिमाणत्वात् ॥ ६२ ॥

---

( ६१ ) ऽतन्द्रितान्=ऽनिन्दितान् ( नं० )

( ६२ ) शूरान्=शूद्रान् ( ट, ठ, )

तेषामर्थे=तेषांदण्डे ( नं० )

( ६ ) **रामचन्द्रः** । तेषामधिकारिणां अर्थे कार्ये कुलोद्भवान्नियुञ्जीत । तथा आकरकर्मान्ते रत्नाद्युत्पत्तिस्थाने । अन्तर्निवेशनेऽन्तःपुरे शुचीन् भीरून् एतादृशान्भृत्यान्नियुञ्जीत । इतिमन्त्रिस्वरूपम् ॥ ६२ ॥

**दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ॥ इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ ६३ ॥**

( १ ) **मेधातिथिः** । दूतस्यायमधिकोगुणःइङ्गिताकारचेष्टज्ञता । परविषयेराज्ञेमन्त्रिणांच संधित्सतामिङ्गितानि दूतस्यादरेण संपरिग्रहः । विश्वसनंमुहर्मुहुः संपूर्णतद्वाक्यस्य तस्यचाभिनंदनं एतानि विपर्यस्तान्युपेक्षेत आकारशरीरवैकृत्यं मानिर्मुखस्य वर्णवैकृत्यम् । तूष्णींभावोदीर्घोष्णनिःश्वासता एवमादिविकारैर्दैन्यंसूचयति । अस्तिकाचिदापदस्य तेनायंविवर्णइति वाक्यवैशारद्यम् । शारीरसंस्कारः प्रसन्नमुखता एवमादि हर्षंसूचयति । शुचिस्त्रीगतेर्थैगमनविशेषैर्यतः-स्त्रीसंबन्धेमन्त्रभेदः परिभवश्च ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः** । इङ्गितं भावसूचकम् । चेष्टितमक्षिनिकोचादि । आकरस्ततोन्योभावसूचकोवक्त्रारुण्यादिः ॥ ६३ ॥

( ३ ) **कुल्लूकः** । दूतंचदृष्टादृष्टार्थशास्त्रज्ञं इंगितज्ञमभिप्रायसूचकंवचनस्वरादि आकारोदेहधर्मादिसुखप्रसादवैवर्ण्यादिरूपः प्रीत्यप्रीतिसूचकः चेष्टा करास्फालनादिक्रिया कोपादिसूचिका तदीयतत्त्वज्ञं अर्थदानस्त्रीव्यसनाद्यभावात्मकंशौचयुक्तंचतुरंकुलीनंकुर्यात् ॥ ६३ ॥

( ४ ) **राघवानन्दः** । दूतस्तत्कुरुतइतिवक्ष्यमाणदूतस्य लक्षणमाह दूतमितिद्वाभ्यां । अधिकगुणाय सर्वविशारदं भावाभिज्ञम् । शास्त्रविशारदं शास्त्रं प्रतिपत्तिहेतु संस्कृतप्राकृतदेशभाषाधर्मशास्त्रकरपल्लवादि तत्र विशारदं निपुणम् द्वन्द्वात्परमिति स्मरणात् । इङ्गिताकारचेष्टाज्ञं इङ्गिताकाराभ्यामेव चेष्टाज्ञं परचिकीर्षितज्ञम् । कुलोद्गतं कुलीनं दूतवंश्यंबा ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । अथ दूतलक्षणमाह दूतमिति । शुचिं अलोलुपम् ॥ ६३ ॥

**अनुरक्तःशुचिर्दक्षः स्मृतिमान्देशकालवित् ॥ वपुष्मान्वीतभीर्वाग्मी दूतोराज्ञः प्रशस्यते ॥ ६४ ॥**

**[ सन्धिविग्रहकालज्ञानुसमर्थानायतिक्षमान् । परैरहार्यान् शुद्धांश्च धर्मतः कामतोर्थतः ॥ १ ॥**

**समाहर्तुं प्रकुर्वीत सर्वशास्त्रविपश्चितः । कुलीनान् वृत्तिसंपन्नान् निपुणान् कोशवृद्धये ॥ २ ॥**

**आयव्ययस्यकुशलानुगणितज्ञानलोलुपान् ॥ नियोजयेद्धर्मनिष्ठान् सम्यक्कार्यार्थचिन्तकान् ॥३॥**

**कर्मणिचातिकुशलान् लिपिज्ञानायतिक्षमान् । सर्वविश्वासिनःसत्यानुसर्वकार्येषुनिश्चितान् ॥४ ॥**

**अकृताशांस्तथाभर्तुःकालज्ञांश्चप्रसंगिनः ॥ कार्यकामोपधाशुद्धाबाह्याभ्यन्तरचारिणः ॥ ५ ॥**

**कुर्यादासन्नकार्येषुगृहसंरक्षणेषुच । ]+**

( १ ) **मेधातिथिः** । अनुरक्तः अहार्योभवति । दक्षः देशकालौनातिक्रामति । स्मृतिमानमुषितस्मृति प्रसङ्गेनस्वामि-

---

( ६४ ) शुचिर्दक्षः=स्थितारम्भः ( ग )

+ ( क )

संदेशंकथयति। देशकालवित् देशकालौज्ञात्वाऽन्यदपिसंदिष्टं तत्कालयोग्यंकथयति। वपुष्मान्स्वाकृतिः प्रियदर्शनत्वान्निपुणमुचितंवक्ति। वीतभीः अनेननिपुणमुच्यते। वाग्मी संदेशस्योत्तरे प्रतिवचनसमर्थोभवति॥ ६४॥

( २ ) **सर्वज्ञनारायणः**। सामान्यतोदूतलक्षणमुक्त्वाप्रशस्तदूतलक्षणमाह अनुरक्तइति। वपुष्मानधृष्यशक्तिः॥ ६४॥

( ३ ) **कुल्लूकः**। यस्मात् अनुरक्तइति। जनेषु अनुरागवान् तेनप्रतिराजादेरपि अद्वेषविषयः अर्थस्त्रीशौचयुक्तः तेनधनस्त्रीदानादिनाऽभेद्यः दक्षश्चतुरः तेनकार्यकालंनातिक्रामति स्मृतिमान् तेनसंदेशंनविस्मरति देशकालज्ञः तेनदेशकालौज्ञात्वा अन्यदपिसंदिष्टंदेशकालोचितमन्यथाकथयति सुरूपः तेनादेयवचनः विगतभयः तेनाप्रियसंदेशस्यापिवक्ता वाग्मीतेनसंस्कृताद्युक्तिक्षमः एवंविधोदूतोराज्ञः प्रशस्योभवति॥ ६४॥

( ४ ) **राघवानन्दः**। अनुरक्तः स्वराजनि। स्मृतिमानुक्तानुसंधाता। वपुष्मान् सुन्दरोबली वा। वीतभीः वधोद्यमेपि॥ ६४॥

( ५ ) **नन्दनः**। दूतगुणानाह अनुरक्तइति। शौचदाक्ष्ययोरादरार्थंपुनर्वचनम्॥ ६४॥

**अमात्येदण्डआयत्तोदण्डे वैनयिकी क्रिया॥ नृपतौ कोशराष्ट्रे च दूते संधिविपर्ययौ॥ ६५॥**

( १ ) **मेधातिथिः**। उक्तदूतगुणानांसंपादनाय तत्प्रयोजनमाह। अमात्ये सेनापतौ दण्डोहस्त्यादिबलमायत्तं तदिच्छया कार्येषु प्रवृत्तेः। दण्डेवैनयिकी योविनेयः स्वपरराष्ट्रगतः सदण्ड्योयतः विनयाश्रिता वैनयिकीक्रियाकार्यम्। नृपतौकोशराष्ट्रे आयत्ते सञ्चयस्थानंकोशः। राष्ट्रंजनपदः द्वेचतेपराधीनेन कर्त्तव्ये स्वयमेव विलम्भनीयफलप्रासाच्च। दूतेसन्धिविपर्ययौ प्रियवचनेन स्वामिकार्यप्रदर्शनेन सन्धिः तद्वैपरीत्येन विग्रहः एतदुभयंदूतायत्तम्॥ ६५॥

( २ ) **सर्वज्ञनारायणः**। अमात्येदण्डआयत्तो विनातद्बुद्धिंदूरेदण्डसिद्धेः। दण्डेवैनयिकी लोकविनयहेतुक्रिया। नृपतौकोशराष्ट्रे तदुद्यमादेव तद्व्ययवृद्धेः। विपर्ययोविग्रहादिपञ्चकम्॥ ६५॥

( ३ ) **कुल्लूकः**। अमात्येसेनापतौ हस्त्यश्वरथपादाताद्यात्मकोदण्डआयत्तः तदिच्छयातस्यकार्येषुप्रवृत्तेः विनययोगात् वैनयिकीयोविनयः सदण्डआयत्तः नृपतावर्थसंचयस्थानदेशावायत्तौराज्ञापराधीनौनकर्तव्यौ स्वयमेवचिंतनीयंधनंग्रामश्च दूतेसंधिविग्रहावायत्तौतदिच्छयातत्प्रवृत्तेः॥ ६५॥

( ४ ) **राघवानन्दः**। दूतप्रसंगेन तस्य कार्यव्यवस्थितिमाह अमात्येति। अमात्यभूपतेर्हस्त्यश्वरथपदात्यात्मकोदण्डः आयत्तः अधीनः सपणादिदण्डोवा अमात्येननियमितः तदीक्षया पणादिदण्डोदण्ड्येषु प्रवृत्तःसाधुः। दण्डे चतुर्विधे तस्मिन् वैनयिकी विनयायार्हति दण्डे हि विनयी स्यादन्यथोत्पथगामी जनः। नृपतौ कोशराष्ट्रे द्वे तेन कोशःसंचीयते राष्ट्रंच परिपाल्यते। दूते सन्धिभेदावायत्तौ तन्निमित्तत्वात्तयोः। विपर्ययोभेदः॥ ६५॥

( ५ ) **नन्दनः**। दूतगुणबाहुल्यवचनेकारणमाह अमात्याइति। अमात्यःसर्वकार्यनिर्वाहकः। अविनीतदमनंदण्डः। विपर्ययोविग्रहः। अमात्यानामुपन्यासोदृष्टांतार्थः॥ ६५॥

( ६ ) **रामचन्द्रः**। अमात्ये मन्त्रिणि दण्डः आयतः अधीनः॥ अधीनोनिघ्नआयत्तइत्यमरः। दण्डे वैनयकीक्रिया विनयकारिणी क्रिया। दूते सन्धिविपर्ययौ दौत्येन कर्मणा तत्सिद्धेः। विपर्ययोविग्रहः॥ ६५॥

**दूतएवहि संधत्ते भिनत्त्येव च संहतान्॥ दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः॥ ६६॥**

---

( ६६ ) येनमानवाः=बान्धवाः ( ख, भ, र, ल, ब )

( १ ) मेधातिथिः । एवंदूतार्थानुवादः एषएवार्थः पुनरुच्यते । यथादूतःसंधत्ते । यथोक्तंसंहतानेकीभूतान्सएवभिनत्ति । अनुक्तमपिप्रियंसंदिशति । प्रतिकूलमनाचरितमित्यादि । सुवर्णादिद्रव्यमप्रतिश्रुतमित्याहएवंभिनत्तिदूतः । तदेतत्कर्मानन्तरोपदिष्टंयेनराजानोभिद्यन्तेनवाक्पारुष्यापन्नाएवंसंभवन्ति ॥ ६६ ॥

( २ ) सर्वज्ञनारायणः । दूतएवहीत्येतदुपपादनं दूतस्तदिति । नवाभिद्येतसंदध्यात् ॥ ६६ ॥

( ३ ) कुल्लूकः । यस्माद्दूतएवहिभिन्नानांसंधिसंपादनेक्षमः संहतानांच भेदनेतथापरदेशेदूतःतत्कर्मकरोति येनसंहताभिद्यंत तस्माद्दूतेसंधिविग्रहौविपर्ययावायत्ताविितयदुक्तंतस्यैवायंप्रपंचः ॥ ६६ ॥

( ४ ) राघवानन्दः । एतौव्यनक्ति दूतइति । स्वदेशे स्वामात्यादीन्भिन्नान् सन्धत्ते मिश्रयति भिनत्तिच संहतान् स्वराज्यनाशाय कृतोद्यमांच्छत्रूंस्तत्पक्षगांश्च । द्रव्यादिदानेन मिथ्याभयप्रदर्शनेनच । नचान्यथा संधिमायान्तीत्यर्थः ॥ ६६ ॥

( ५ ) नन्दनः । दार्ष्टान्तिकंप्रपञ्चयति दूतइति । न केवलंराज्ञामेवेदंकिंतु सर्वेषामपीत्यभिप्रायेणोक्तंमानवाइति यतएवंतस्माद्यथोक्तलक्षणोदूतःकार्यइति ॥ ६६ ॥

( ६ ) रामचन्द्रः । संहतान् बन्धून् भिनत्ति भेदयति ॥ ६६ ॥

**सविद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ॥ आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥ ६७ ॥**

( १ ) मेधातिथिः । अन्यदपि दूतकार्यंदर्शयति । सदूतोयातव्यस्य राज्ञः कृत्येषु कार्येषु ॥ ६७ ॥

( २ ) सर्वज्ञनारायणः । सदूतोविद्यात् अस्य राज्ञः कृत्येषु क्रियाविषयेषु नलुब्धभीतावमानिषु शत्रुषु य आकारादिस्तं स्वयंनिगूढैरिङ्गितचेष्टितैरुपलक्षितः । इङ्गितपदेनात्राकारेङ्गितयोर्ग्रहणम् । चेष्टितं चेष्टा । यथा युद्धार्थिनः शस्त्रनिर्माणादि । नेङ्गितदिङ्गितमाकारोवेति स्वकृत्येषुच शत्रोश्चिकीर्षितम् ॥ ६७ ॥

( ३ ) कुल्लूकः । दूतस्यकार्यांतरमाह सविद्यादिति । सदूतोऽस्यप्रतिराजस्यकर्तव्ये आकारेङ्गितचेष्टांजानीयात् । निगूढाअनुचराः प्रतिपक्षनृपस्यैवपरिजनाः तस्मिन् युक्ताः तत्सन्निधावपि तेषामिंगितचेष्टितैः भृत्येषुचक्षुब्धलुब्धापमानितेषुप्रतिराजस्यकर्तुमीप्सितंजानीयात् ॥ ६७ ॥

( ४ ) राघवानन्दः । किंच सइति । सदूतः अस्य प्रतिराजस्य निगूढाअनुचराये शत्रोर्नियुक्तास्तेषां सन्निधिमवलम्ब्येङ्गितचेष्टितैराकारादित्रयं भृत्येषु क्षुभितावमानितेषु चिकीर्षितं प्रतिराजस्य कर्तुमिष्टंच विद्यात् जानीयादित्यर्थः ॥ ६७ ॥

( ५ ) नन्दनः । इदानींदूतस्य परंप्रति प्रेषितस्य कर्तव्यंप्रसङ्गादाह सइति । सः दूतः अस्य कृत्येषुस्वराज्ञा भेद्येषु परपक्षस्थेषुपुरुषेषु विद्यमानमाकारमिङ्गितश्चेष्टितंचनिगूढेङ्गितचेष्टितैः पुरुषैर्विद्यात् । किंच कृत्येषुभेद्येषुचिकीर्षितमभिलषितंचतैर्विद्यात् ॥ ६७ ॥

( ६ ) रामचन्द्रः । सराजा अस्य दूतस्य निगूढेङ्गितचेष्टितैः कृत्यं कार्यं आकारादिकं कृत्येषु कार्येषु चिकीर्षितंच विद्यात् ॥ ६७ ॥

**बुध्वा च सर्वंतत्त्वेन परराजचिकीर्षितम् ॥ तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥ ६८ ॥**

( २ ) सर्वज्ञनारायणः । बुध्वा राजा स्वदूतद्वारा । न पीडयेच्छत्रुः ॥ ६८ ॥

( ३ ) **कुल्लूकः** । उक्तलक्षणदूतद्वारेण प्रतिपक्षराजस्यकर्तुमिष्टंसर्वंतत्त्वतोज्ञात्वा तथा प्रयत्नंकुर्यात् यथात्मनः पीडा न भवति ॥ ६८ ॥

( ४ ) **राघवानन्दः** । ततोभृत्येषु परराजचिकीर्षितंबुद्ध्वामद्राजायद्यत्रागन्तुंशक्नोति तदा भवादृशानांक्षोभादिनं- क्ष्यतीति विश्वासंसंपादयेदिति भावः । आत्मानंस्वराजानंदूतंवा यथा न पीडयेत्तथा यत्नमातिष्ठेत् ॥ ६८ ॥

( ५ ) **नन्दनः** । आतिष्ठेत्कुर्यात् । सदूतइत्यनुवर्तते । स्वार्थमस्यराज्ञः कार्यंयथास्वयंनपीडयेत् ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । राजा परराजचिकीर्षितं स्वशत्रुराजचिकीर्षितं तत्त्वेन स्वदूतद्वारा सर्वं बुध्वा ज्ञात्वा यथा आ- त्मानं न पीडयेत्तथा प्रयत्नंकुर्यात् ॥ ६८ ॥

**जाङ्गलं सस्यसंपन्नमार्यप्रायमनाविलम् ॥ रम्यमानतसामन्तं स्वाजीव्यंदेशमावसेत् ॥ ६९ ॥**

( २ ) **सर्वज्ञनारायणः** । अल्पोदकोदेशोजाङ्गलः । आर्यप्रायं धार्मिकबहुलम् । अनाविलं संकराद्युपहतिरहि- तम् । रम्यमनुद्वेगकरम् । आनताः सामन्ताः दुर्गाटवीपर्वतादिवासिनोविषयाऽभिधेयायत्र । सुखेनाल्पायासेन यत्र जीव्यते तत्स्वाजीव्यम् ॥ ६९ ॥

( ३ ) **कुल्लूकः** । अल्पोदकतृणोयस्तुप्रवातः प्रचुरातपः । सज्ञेयोजांगलोदेशोबहुधान्यादिसंयुतः ॥ प्रचुरधार्मिकज- नंरोगोपसर्गाद्यैरनाकुलंफलपुष्पतरुलतादिमनोहरंप्रणतसमीपवास्तव्याटविकादिजनंसुलभकृषिवाणिज्याद्याजीवनमाश्रित्या- वासंकुर्यात् ॥ ६९ ॥

( ४ ) **राघवानन्दः** । स्थानभ्रष्टानशोभन्तइति न्यायमाश्रित्य राज्ञोवसतियोग्यंदेशंसहेतुंसार्थवादंचाह जाङ्गल- मित्यष्टभिः ॥ अल्पोदकतृणोयस्तु प्रवातःप्रचुरातपः । सज्ञेयोजाङ्गलोदेशइत्युक्तलक्षणं जाङ्गलम् । सस्यसंपन्नं सार्वका- लिकसस्यैर्युतम् । आर्यप्रायं आर्याःप्रायोवसन्ति यस्मिन् तेनाम्लेच्छदेशम् । अनाविलं रोगाद्युपसर्गानाक्रान्तम् । आनत- सामन्तं आनतावशीकृताः सामन्ताः चतुर्दिक्षुवर्तमानागिरिवनवासिनोदस्युप्रायाजनायत्र तत् । स्वाजीव्यं सुलभंकृषि- वाणिज्यादि यत्र तत् ॥ ६९ ॥

( ५ ) **नन्दनः** । अथ राज्ञोनिवासयोग्यजनपदमाह जाङ्गलमिति । पथ्यत्वाद्गन्नजलादिरकर्दमोदेशोजाङ्गलः । अना- विलमसङ्कीर्णमनुष्यम् । आनतोविनीतःसामन्तः समंदताद्भवोजनोयस्मिंस्तम् । स्वाजीव्यंविशिष्टभृत्यगुणयुक्तम् । आवसे- दावासंकुर्यात् । राजेतिसामर्थ्याद्गम्यते ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । राज्ञोनिवासस्थानमाह जाङ्गलमिति । जाङ्गलः स्वल्पोदकतरुपर्वतोदेशः तथाप्यत्र समजलत- रुपर्वतोदेशोजाङ्गलशब्देन विधीयते । आर्यमायं धार्मिकबहुलं । अनाविलं संकराद्युपद्रवरहितं शोकरोगाद्युपहतिरहितंवा । आजीव्यं कन्दमूलादिभीरम्यं । आनतसामन्तं वशीकृतमाण्डलिकं आनतानम्राः सामन्तायस्मिन्सः । सामन्तःस्यादधी- श्वरइत्यमरः । एतादृशंदेशमावसेत् ॥ ६९ ॥

**धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ॥ नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥ ७० ॥**

( १ ) **मेधातिथिः** । उक्तप्रकारेण द्विगुणोत्सेधेनैष्टकेन शैलेन द्वादशहस्तादूर्ध्वमुद्धतेन तालमूलेन कपिशीर्षचिता- ग्रेण दृढप्रणाल्यापरिकृतंधनुर्दुर्गम् । महीदुर्गमगाधेनाश्रयणीयेनचोदकेनपरिवेष्टितंदुर्गम् । समंततोऽर्धयोजनमात्रं घनमहा-

वृक्षान्वितंवार्क्षम् । चतुरङ्गबलाधिष्ठितंप्रवरायुधवीरपुरुषप्रायंनृदुर्गम् । गिरिपृष्ठेदुरारोहमेवैकमार्गानुगतमन्तर्नदीप्रस्रवणोदकं-गिरिदुर्गम् ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । धन्वदुर्गंमरुदुर्गं यत्रातिनिर्जलतया तद्देशवासिभिरेव कथंचिज्जलंलभ्येत । महीदुर्गं पृथिव्येव यत्र समविषमतया प्राकारादिभिश्चात्यन्तदुर्गा । अब्दुर्गमतिप्रचुरोदकतया दुर्गम् । वार्क्षं वनवेष्टितत्वेन । नृदुर्गं मानुषबहुलतयाऽगम्यम् । गिरिदुर्गं गिरिवेष्टिततया ॥ ७० ॥

( ३ ) **कुल्लूकः** । धनुर्दुर्गंमरुवेष्टितंचतुर्दिशंपंचयोजनमनुदकम् । महीदुर्गंपाषाणेनइष्टकेनवाविस्ताराद्वैगुण्योच्छ्रायेण द्वादशहस्तादुच्छ्रितेन युद्धार्थमुपरिभ्रमणयोग्येन सावरणगवाक्षादियुक्तेन प्राकारेणवेष्टितम् । जलदुर्गं अगाधोदकेन सर्वतःपरिवृतम् । वार्क्षदुर्गंबहिः सर्वतोयोजनमात्रंव्याप्यतिष्ठन्महावृक्षकंटकिगुल्मलताद्याचितम् । नृदुर्गं चतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपादातरक्षितम् । गिरिदुर्गं पर्वतपृष्ठमतिदुरारोहंसंकोचैकमार्गोपेतम् । अंतर्नदीप्रस्रवणाद्युदकयुक्तंबहुसस्योत्पन्नक्षेत्रवृक्षान्वितम् । एतेषु दुर्गेषु मध्यादन्यतमंदुर्गमाश्रित्य पुरंविरचयेत् ॥ ७० ॥

( ४ ) **राघवानन्दः** । राष्ट्रंलक्षयित्वा तन्मध्ये राजधानींनिर्दिशति धन्वदुर्गमिति । धन्वदुर्गं निरुदकपञ्चयोजनदेशेन समन्ततोव्याप्तेन दिवसद्वयपानार्थं जलाभावात्ससैन्यशत्रुभिर्नाक्रम्यते । महीदुर्गंपाषाणेष्टकाकृतेन द्वादशहस्ताद्युच्छ्रितेन बहुविस्तृतेन युद्धार्थमुपरि परिभ्रमणयोग्येन साधारणगवाक्षादियुक्तेन प्राकारेण समन्ताद्वेष्टितं सद्वारंच । अब्दुर्गमगाधोदकेन नक्रादियुतेन नद्यादिना परितोवेष्टितम् । वार्क्षं न्यग्रोधादिमहावृक्षकण्टकलताद्यैरभितोयोजनाद्यावरकेन वेष्टितं तेन तच्छेदनोद्यताये शत्रवस्ते तत्रस्थैर्धानुष्कैर्हन्यन्ते । नृदुर्गं हस्त्यश्वरथपदातिभिश्चतुर्दिक्षुवेष्टितं बहुमनुष्यंवा-शतममध्यमवध्यं सहस्रमध्यमवध्यमिति न्यायात् । गिरिदुर्गं गिरिणाभिवेष्टितंदुरारोहंगिरिपृष्ठंसंकटैकमार्गोपेतमन्तर्नदीप्रस्रवणबहुसस्योत्पत्तिक्षेत्रवृक्षान्वितमित्याद्यूहनीयम् । एतैःकृत्रिमैरकृत्रिमैर्वा दुर्गंपुरमधितिष्ठेदिति तात्पर्यम् ॥ ७० ॥

( ५ ) **नन्दनः** । अथदुर्गंसप्तभिःश्लोकैराह धन्वदुर्गमिति । निरुदकोदेशोधन्वा तेन दुर्गंधन्वदुर्गम् । प्राकारक्षेत्रसीमादियुक्तयामह्यादुर्गंमहीदुर्गम् । नदीपरिखादिभिर्दुर्गमब्दुर्गम् । वृक्षाणांसमूहोवार्क्षं तेन दुर्गंवार्क्षदुर्गम् । शूरैर्मनुष्यैर्दुर्गं नृदुर्गम् ॥ ७० ॥

( ६ ) **रामचन्द्रः** । षड्विधदुर्गस्वरूपमाह धन्वदुर्गमिति । धन्वदुर्गं मरुस्थलं यत्रातिनिर्जलतया तद्देशवासिभिरपि कथंचिज्जलंलभ्यते । समानौमरुधन्वानावित्यमरः । परिखादिभिर्जलदुर्गम् । वार्क्षं वृक्षैर्दुर्गं एतादृशंदुर्गमाश्रित्य निवसेत् ॥७०॥

**सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ॥ एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ ७१ ॥**

( २ ) **सर्वज्ञनारायणः** । बाहुगुण्येन बहुगुणत्वेन ॥ ७१ ॥

( ३ ) **कुल्लूकः** । यस्मादेषांदुर्गाणांमध्यात् दुर्गगुणबहुत्वेनगिरिदुर्गमतिरिच्यते तस्मात्सर्वप्रयत्नेनतदाश्रयेत् । गिरिदुर्गेशत्रुदुरारोहत्वंमहत्प्रदेशादल्पप्रयत्नप्रेरितशिलादिनाबहुविपक्षसैन्यव्यापादनमित्यादयोबहवोगुणाः ॥ ७१ ॥

( ४ ) **राघवानन्दः** । गिरेर्दुर्गत्वंदुरारोहत्वंचाह सर्वेणेति । तेषांधन्वदुर्गाणांमध्ये बाहुगुण्येन बहुगुणत्वेन प्रशस्तम् ॥ ७१ ॥

( ५ ) **नन्दनः** । एषांदुर्गाणांमध्ये बाहुगुण्येन बहुगुणत्वात् ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । एषांमध्ये बहुगुणस्य भावोबाहुगुण्यं तेन गिरिदुर्गंविशिष्यते ॥ ७१ ॥

**त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्ताश्रयाऽप्सराः ॥ त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः ॥ ७२ ॥**

( १ ) **मेधातिथिः** । आद्यानि त्रीणि धनुर्दुर्गादीनि । आश्रिताः आश्रयंकृतवन्तः । मृगागर्ताश्रयागर्गरनकुलादयः । अप्सराग्राहकूर्मादयः । एषांदुर्गाणांतदाश्रितानांच यादृशागुणदोषास्तादृशाएव राज्ञामपि भवन्तीति प्रदर्शनार्थंत्रीण्युत्तराणि । प्लवङ्गमाःकपयः ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । त्रीण्याद्यानि धन्वमहीजलदुर्गाणि क्रमात् । मृगाहरिणादयः तेहि जलाभावादत्र मृगया न संभवतीति मरुषु तिष्ठन्तीति । गर्ताश्रयामूषकाद्याः । अप्सरामत्स्याद्याः । प्लवङ्गमावानराः । नराग्रामादिनृदुर्गवासिनः । अमरामेरुगिरिप्रभृतिवासिनएवासुरभयात् ॥ ७२ ॥

( ३ ) **कुल्लूकः** । एषांदुर्गाणांमध्यात्प्रथमोक्तानित्रीणिदुर्गाणिमृगादयआश्रिताः । तत्रधनुर्दुर्गंमृगैराश्रितं महीदुर्गं-गर्ताश्रितैर्मूषिकादिभिः अब्दुर्गंजलचरैर्नक्रादिभिः इतराणित्रीणिवृक्षदुर्गादीनिवानरादयआश्रिताः तत्रवृक्षदुर्गंवानरैराश्रितं नृदुर्गंमानुषैः गिरिदुर्गंदेवैः ॥ ७२ ॥

( ४ ) **राघवानन्दः** । दुर्गाश्रयोदुर्जयइत्यत्र दृष्टफलमाह त्रीणीति । एषांधन्वादिदुर्गाणांमध्ये धन्वमहीजलदुर्गत्रयं-मृगमूषिकनक्रैराश्रितम् । अतस्तेषांदुर्जयत्वंलोकतःप्रसिद्धम् । तथावृक्षमनुष्यगिरिदुर्गत्रयं वानरनरामरैराश्रितत्वाद्दुर्जयम् । अतःप्रसिद्धमेतद्दुर्गाश्रितस्यापराजयइति ॥ ७२ ॥

( ५ ) **नन्दनः** । लोकसिद्धनिदर्शनोपन्यासेन दुर्गाश्रयणफलंश्लोकाभ्यामाह त्रीणीति । तेषांदुर्गाणांमध्यआद्यानि त्रीणि धन्वमहीजलदुर्गाणि क्रमशोमृगागर्ताश्रयाबिलाश्रयामूषिकादयः अप्सराः मीनग्राहादयः उत्तराणिवार्क्षंनृगिरिदुर्गाणिमेरुमन्दरगिरिदुर्गाश्रिताह्यमराअसुरादिभिर्नपराजीयन्ते ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । एषांषण्णांमध्ये आद्यानि त्रीणि धन्वदुर्गं मृगाणामाश्रयः । महीदुर्गं गर्ताश्रयाणांमूषकादीनाम् । तथा जलदुर्गं झषादीनामाश्रयः । उत्तराणि क्रमशः वृक्षदुर्गं प्लवङ्गानां वानरादीनाम् । नृदुर्गं सेनादुर्गंनृणामाश्रयः । गिरिदुर्गममराणामाश्रयः यथा कालञ्जरे नीलकण्ठादयोवसन्ति ॥ ७२ ॥

**यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः ॥ तथारयोन हिंसन्ति नृपं दुर्गसमाश्रितम् ॥ ७३ ॥**

( १ ) **मेधातिथिः** । दुर्गविधानप्रयोजनश्लोकोयम् । अत्यल्पबलाअपिदुर्गाश्रितामहाबलैररिभिर्नसहसाशक्यन्तेऽ-भिभवितुमतोदुर्गाश्रयोयुक्तः ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । शत्रवएषांव्याधाद्याः ॥ ७३ ॥

( ३ ) **कुल्लूकः** । यथैतान्दुर्गवासिनोमृगादीन् व्याधादयःशत्रवोनहिंसंति एवंदुर्गाश्रितंराजानंनशत्रवः ॥ ७३ ॥

( ४ ) **राघवानन्दः** । एते यथा अबाध्यास्तथा नृपोप्यबाध्यइत्याह यथेति । शत्रवोव्याधमार्जारश्येनादयः दुर्गाश्रितान् दुर्गनिविष्टान् एतान्नोपहिंसन्त्येवमरयःप्रतिराजानोदुर्गनिविष्टंन हिंसन्तीत्यर्थः ॥ ७३ ॥

( ५ ) **नन्दनः** । एतान्मृगादीनमरपर्यन्तान् ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । यथा दुर्गाश्रितानेतान्मृगादीन् शत्रवः सिंहादयोन हिंसन्ति तथाऽरयोदुर्गसमाश्रितंराजानंनहिंसन्ति ॥ ७३ ॥

**एकः शतं योधयति प्राकारस्थो धनुर्धरः ॥ शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ ७४ ॥**

**[ मंदरस्यापिशिखरंनिर्मानुष्यंनशिष्यते । मनुष्यदुर्गंदुर्गाणां मनुःस्वायंभुवोब्रवीत् ॥ १ ॥ ]** +

( १ ) **मेधातिथिः** । सुप्रसिद्धमेतद्दुर्गप्रयोजनं प्राकारदृष्टान्तेन गिरिदुर्गबलमेतदिति तदयुक्तं महीदुर्गेपिप्राकारसंभवात् तस्मात्सर्वेषांदुर्गाणांतत्प्रयोजनंस्वबुद्ध्यारूप्यते ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । शतं पदातीन् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । यस्मादेकोधानुष्कः प्राकारस्थः शत्रूणांशतंयोधयतिप्राकारस्थंधानुष्कशतंचशत्रूणांदशसहस्राणि तस्माद्दुर्गंकर्तुमुपदिश्यते ॥ ७४ ॥

( ४ ) **राघवानन्दः** । गिरिदुर्गे कैमुतिकन्यायमाह एकइति । कृत्रिमप्राकारस्थोप्येकोधनुर्धरःप्रतिराज्ञःशतं योधयति युद्धेन निग्रहीतुंशक्नोति । यस्माच्छतंप्रतिपक्षदशसहस्राणितथाकर्तुमीष्टे तस्मात्किंवक्तव्यंगिरिस्थानांसामर्थ्यम् । यईषत्क्षिप्तोपि शिलादिर्वाबहून्व्यापादयति ॥ ७४ ॥

( ५ ) **नन्दनः** । शतमायुधिनांबहिःस्थानामेकोयोधयति जयतीतियावत् । शतंप्राकारस्थानांधनुर्धराणांदशसहस्राणिबहिः स्थानामायुधिनाम् ॥ ७४ ॥

**तत्स्यादायुधसंपन्नं धनधान्येन वाहनैः ॥ ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥ ७५ ॥**

( १ ) **मेधातिथिः** । आयुधैः खड्गप्रासादिभिः संपन्नमुपेतम् । आयुधग्रहणंवर्मशिरस्त्राणोपस्कारादेरन्यस्यापि युद्धोपकरणस्य प्रदर्शनार्थम् । धनंरूप्यसुवर्णादीनि । वाहनानि रथाश्वादयः । शिल्पिभिर्यन्त्रावाहतक्षप्रभृतिभिर्यवसेन ब्राह्मणैर्मन्त्रिपुरोहितैरन्यैर्वा दण्डिकापोतेन ध्वजशङ्कया कदाचिन्नृपधर्मसाहाय्येन प्रवर्तन्ते । प्रदर्शनार्थत्वाच्च भिषगौषधाद्यपेक्षेत संरोहणाद्युपयोगिसंनिधापयितव्यम् ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । यन्त्रैः क्षेप्यादिभिः ॥ ७५ ॥

( ३ ) **कुल्लूकः** । तद्दुर्गंखड्गाद्यायुधसुवर्णादिधनधान्यकरितुरगादिवाहनब्राह्मणभक्ष्यादिशिल्पियंत्रघासोदकसमृद्धंकुर्यात् ॥ ७५ ॥

( ४ ) **राघवानन्दः** । किंचान्यदित्याह तदिति । तत्पुरं आयुधसंपन्नं आयुधानि धनुरादीनि तैःसंपत्तिमत् । ब्राह्मणैः शत्रुघातने वाग्वज्रैः । यन्त्रैर्लोहादिनिर्मितदिव्यास्त्रैः । यवसेन हस्त्याद्याहारादितृणेन ॥ ७५ ॥

( ५ ) **नन्दनः** । तत्रदुर्गेसञ्चेतव्यान्याह तदिति ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । तद्दुर्गमायुधसंपन्नंस्यात् । यवसेन तृणादिना धान्यादिभिः । यन्त्रैः क्षेपणादिभिः सपन्नंकार्यम् ॥ ७५ ॥

**तस्य मध्ये सुपर्याप्तंकारयेद्गृहमात्मनः ॥ गुप्तंसर्वर्तुकंशुभ्रंजलवृक्षसमन्वितम् ॥ ७६ ॥**

( १ ) **मेधातिथिः** । सुपर्याप्तंयावदात्मनोराज्ञोराजपुत्रकोशायुधाश्वागारादिषूपयुज्यते । गुप्तंबहुकक्षाकंगृहंकारयेत् । सर्वर्तुकं सर्वर्तुमाल्यफलैः शोभितं सर्वेऋतवोयत्रेति ऋतुशब्देन तत्कार्याणिपुष्पफलादीनिलक्ष्यन्ते । सर्वर्तुगमितिपाठे

---

( ७५ ) यंत्रैर्यवसेनोदकेनच=यंत्रैर्यवसेनोदकेन्धनैः ( ख, ग, ज, झ, ढ, ण, ब, ल )
=यन्त्रैर्यद० ( च ) + ( ख, ढ, )

सर्वानृतून्गच्छतिप्राप्नोतीति व्युत्पत्तिः अर्थस्तुसएव योयत्रभवतिसतेनव्याप्तइत्युच्यते । शुभ्रं सुधाधवलितम् । जलवृक्षसमन्वितं धारागृहोद्यानवनसंपन्नम् ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । सुपर्याप्तं सर्वेषांवसतामसंकीर्णम् । सर्वर्तुकं सर्वर्तुरम्यम् । शुभ्रं प्रसाद्यम् ॥ ७६ ॥

( ३ ) **कुल्लूकः** । तस्येत्यादि तस्यदुर्गस्यमध्येपर्याप्तंपृथक्पृथक्स्त्रीगृहदेवागारायुधागाराग्निशालादियुक्तंपरिखाप्राकाराद्यैर्गुप्तंसर्वर्तुकफलपुष्पादियोगेनसर्वर्तुकंसुधाधवलितंवाप्यादिजलयुक्तंवृक्षान्वितमात्मनोगृहंकारयेत् ॥ ७६ ॥

( ४ ) **राघवानन्दः** । ततःकिंतत्राह तस्येति । सुपर्याप्तं सुष्ठु हस्त्यश्वरथपदातिभीराज्ञीनांराज्ञःपुत्राणांच वसतये पर्याप्तं समर्थम् । गुप्तं प्राकाराद्यैः । सर्वर्तुकं सर्वेषामृतूनांयोग्यानि पुष्पादीनि यत्र । शुभ्रं सौधादिभिः ॥ ७६ ॥

( ५ ) **नन्दनः** । तस्य दुर्गस्य । सुपर्याप्तंमहावकाशम् । सर्वर्तुगंसर्वेष्वृतुषुगम्यं सर्वकालानुगुणमितियावत् । कारयेद्राजा । जलवृक्षसमन्वितंदीर्घिकोद्यानसम्पन्नमित्यर्थः ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । तस्य दुर्गस्य मध्ये सुपर्याप्तंविस्तीर्णंगृहमात्मनःकारयेत् । जलवृक्षसमुद्भवं जलवृक्षयोर्मध्ये समुद्भवोयस्य तत् । सर्वर्तुकं षडार्तवोत्पन्नं रक्षितम् ॥ ७६ ॥

**तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् ॥ कुले महति संभूतां हृद्यां रूपगुणान्विताम् ॥ ७७ ॥**

( १ ) **मेधातिथिः** । तद्गृहमाश्रित्य भार्या तत्रसहायार्थंमहतः कुलादुद्वोढव्या एतत्संबन्धेन संरक्षणार्थम् । सवर्णामित्यादावुच्यते तत्प्राक्प्रदर्शितम् । हृद्यांमनोरमांकान्तिलावण्ययुक्ताम् । रूपंसंस्थानं गुणावचनकरणादयस्तैरन्वितांयुक्ताम् ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । हृद्यां मनस्यदुष्टाम् ॥ ७७ ॥

( ३ ) **कुल्लूकः** । तद्गृहमाश्रित्यसमानवर्णांशुभसूचकलक्षणोपेतांमहाकुलप्रसूतांमनोहारिणींसुरूपांगुणवतींभार्यामुद्वहेत् ॥ ७७ ॥

( ४ ) **राघवानन्दः** । तदध्यास्येति । अधिशीङ्स्थासांकर्मेतिकर्मत्वं अधिकरणस्य । तत्पुरं अध्यास्य अधिष्ठाय भार्यामुद्वहेत् । तांविशिनष्टि । लक्षणान्वितां भ्रातृमत्वश्रीसौख्यसूचकत्वश्यामाङ्गित्वादिदेहगुणयुक्ताम् । तदुक्तम् । कूपोदकंतरुच्छायाश्यामाङ्गीइष्टकागृहम् । शीतकाले भवेदुष्णंग्रीष्मकाले च शीतलमिति । हृद्यां कामकलादिनिपुणतया हृदे मनसे अर्हतिया ताम् । रूपगुणान्वितां रूपंचम्पकगौरादि गुणाअङ्गसौष्ठवपातिव्रत्यादयः तैर्युक्तांच ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । तद्गृहं अध्यास्य उषित्वा हृद्यां मनोहराम् भार्यामुद्वहेत् ॥ ७७ ॥

**पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः ॥ तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥ ७८ ॥**

( १ ) **मेधातिथिः** । सत्यपिद्वितीयानिर्देशे न प्राधान्यावगमेविवक्षितमेवैकत्वं अन्यत्राप्युपादानात् यूपंछिनत्ति भार्याविन्देतेतिवत् ऋत्विजोवृणुयात् तेषांचसङ्ख्याश्रुतितएवावगन्तव्या । गुणाश्चनातिस्थूलोनातिकृशः नातिदीर्घोनातिह्रस्वः नातिवृद्धोनातिबालः । सप्तपुरुषान्विद्यातपोभ्यां पुण्यैश्च कर्मभिः समनुष्ठितोभयभावनान्प्रतिनाब्राह्मण्यमाशङ्क्यते विद्वान्याजयतीत्यादि । गृह्याणिकर्माणि शान्तिस्वस्त्ययनादीनि वैतानिकानि वैहारिकाणि त्रेताग्निविषयाणि ॥ ७८ ॥

---

( ७६ ) सर्वर्तुकं=सर्वर्तुगं ( नं० )

( २ ) **सर्वज्ञनारायणः** । गृह्याणि स्मृत्याचारतोग्राह्याणि । वैतानिकानि श्रौतानि ॥ ७८ ॥

( ३ ) **कुल्लूकः** । पुरोहितंचाप्याथर्वणविधिनाकुर्वीत ऋत्विजश्च कर्माणि कर्तुंवृणुयात्तेचास्य राज्ञोगृह्योक्तानि त्रेतासंपाद्यानि कर्माणि कुर्युः ॥ ७८ ॥

( ४ ) **राघवानन्दः** । पुरोहितं अथर्ववेदिनंपुरोहितंवृणीतेति श्रुतेः । सर्ववैदिकोविप्रश्च ऋत्विजःवृणुयात् । ऋत्विजः अस्य राज्ञः गृह्याणि गृह्योक्तानि वेत्थदेवादीनि वैतानिकानि श्रौताग्निहोत्रादीनिच ते वृताःकुर्युरित्यन्वयः ॥ ७८ ॥

( ५ ) **नन्दनः** । गृहस्थस्य राज्ञः श्रौतस्मार्तकर्मस्वधिकृतानाह पुरोहितमिति । गृह्याणिऔपासनादीनि। वैतानिकान्यग्निहोत्रादीनि ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । सतस्य राज्ञः गृह्याणि स्मार्तानि स्वशाखोक्तानि कर्माणि वैतानिकानि श्रौतानि कुर्यात् ॥७८॥

**यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ॥ धर्मार्थंचैव विप्रेभ्योदद्याद्भोगान्धनानि च ॥ ७९ ॥**

( १ ) **मेधातिथिः** । आप्तदक्षिणैर्भूरिदक्षिणैः पौण्डरीकादिभिः भोगान्धनानिच वस्त्रगन्धविलेपनादयोभोजनविशेषाश्चभोगाः । धनानिसुवर्णादीनि नित्यमेवतद्दानमिच्छन्ति । धर्मार्थंतस्योत्पत्त्यर्थमेव ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । भोगान् भोगहेतून् स्त्रीवस्त्रगृहादीन् । धनानि सुवर्णानि ॥ ७९ ॥

( ३ ) **कुल्लूकः** । राजा नानाप्रकारान् बहुदक्षिणान् अश्वमेधादियज्ञान् कुर्यात् ब्राह्मणेभ्यश्च स्त्रीगृहशय्यादीन् भोगान् सुवर्णवस्त्रादीनि धनानि दद्यात् ॥ ७९ ॥

( ४ ) **राघवानन्दः** । आप्तदक्षिणैः एनेन सहस्रदक्षिणेनयजेतेत्यादिविधिना प्राक्प्रोक्ता या दक्षिणा तद्दक्षिणैः । भोगान् भोग्यान् स्त्रीगृहशय्यादीन् । धनानि सुवर्णरजतादीनि च दद्यादित्यन्वयः ॥ ७९ ॥

( ५ ) **नन्दनः** । याजकवरणप्रसङ्गाद्यजमानमप्याह यजेतेति । आप्तदक्षिणैः पर्याप्तदक्षिणैः । भोगान्भोग्यान् गोमहिषादीन् ॥ ७९ ॥

**सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ॥ स्याच्चाम्नायपरोलोके वर्तेत पितृवन्नृषु ॥ ८० ॥**

( १ ) **मेधातिथिः** । बलिंकरंधान्यादीनांषष्ठाष्टमादिभागमाप्तैरर्थादुपधाशुद्धैः । यथोक्तमाम्नायपरश्चस्यात् । आगमप्रधानतर्कशास्त्राण्याश्रयेत् । अथवापारंपर्यागतमेवभागंगृह्णीयान्नाधिकम् । वर्तेतपितृवन्नृषु करदेष्वन्येषुचस्नेहबुद्ध्यावर्तेत ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । सांवत्सरिकं वत्सरलभ्यंबलिं करं भूमिजलशुष्कादिनिमित्तम् । आम्नायपरोऽभ्यासपरः । सर्वस्याकरादेःस्मरणेयत्नंकुर्यादित्यर्थः ॥ ८० ॥

( ३ ) **कुल्लूकः** । राजा सत्करमात्यैर्वर्षग्राह्यंधान्यादिभागमानाययेत् लोके च करादिग्रहणेशास्त्रनिष्ठःस्यात् स्वदेशवासिषुनरेषुपितृवत्स्नेहादिनावर्तेत ॥ ८० ॥

( ४ ) **राघवानन्दः** । आप्तैर्युक्तकारिभिः । संवत्सरोत्तीर्णं बलिं करं धान्यादीन् धनंच गृह्णीयादितितात्पर्यम् । आम्नायपरः करादिग्रहणशास्त्रनिविष्टः । पिता यथा पुत्रपालनान्वेषी तद्वन्नृपःस्यात् नृषुस्वप्रजासु ॥ ८० ॥

( ५ ) **नन्दनः** । कुतश्च राज्ञोधनागमोधनेनयजेत दद्याच्चेदपेक्षायामाह सांवत्सरिकमिति । संवत्सरेभवंसांवत्स-

---

( ७९ ) भोगान्धनानिच=भागान्धनानिच ( र )

रिकंसंवत्सरस्यसंवत्सरस्य सकृदितियावत्। बलिंकरम्। पूर्वमर्यादानुरूपेणकरादानमाम्नायः । नृषु दीनादिष्वनुकम्पया-वर्तनंपितृवद्वर्तनम् ॥ ८० ॥

( ६ ) **रामचन्द्रः** । सांवत्सरिकंबलिं उपहारान्। च पुनः आम्नायपरः अभ्यासपरः स्यात् सर्वस्य करादेःस्मरणे यत्नं कुर्यादित्यर्थः ॥ ८० ॥

## अध्यक्षान्विविधान्कुर्यात्तत्रतत्रविपश्चितः ॥ तेऽस्य सर्वाण्यवेक्षेरन्नृणांकार्याणि कुर्वताम् ॥८१॥

( १ ) **मेधातिथिः** । अध्यक्षाअधिकृताः प्रत्यवेक्षितारस्तान्कुर्यात् । विविधान् बहुप्रकारान् मृदूनुग्रान् धार्मिकान् अर्थार्जनपरांश्च । तत्रतत्रसुवर्णकोष्ठागारे पण्यकुप्यकर्मस्वधिकृताः प्रत्यवेक्षितारस्तान् शुल्कनौहस्त्यश्वरथपदात्यादीन् विपश्चितः स्थापयेत् । सर्वएतेअमात्यगुणसंपद्युक्ताविज्ञेयाः । यथोक्तमध्यक्षप्रचारे तेअध्यक्षाः सर्वाणि कार्याण्यवेक्षेरन्नन्येषांनृणांतत्स्थानोपयोगिनांकार्याणि कुर्वतांहस्त्यध्यक्षेण हस्तिपकाः अश्वाध्यक्षेण तुरङ्गमाद्याः गवाध्यक्षेण कर्षणादयः॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । अध्यक्षानीक्षणेनाधिष्ठातॄन्। कार्याणि अर्थानयनादीनि । कुर्वतांकार्याण्यवेक्षेरन् ॥८१॥

( ३ ) **कुल्लूकः** । तत्रतत्र हस्त्यश्वरथपदाताद्यर्थादिस्थानेष्वध्यक्षानवेक्षितॄन् विविधान् पृथक्पृथक्विपश्चितः कर्मकुशलान्कुर्यात् ते अस्यराज्ञः तेषुहस्त्यश्वादिस्थानेषु मनुष्याणांकुर्वतांसर्वाणिकार्याणिसम्यक्कार्यार्थमवेक्षेरन् ॥ ८१ ॥

( ४ ) **राघवानन्दः** । किंचान्यत्। तत्रतत्र हस्त्यश्वरथपदातिव्यवहारार्थस्थानेषु। अध्यक्षानुक्तविषयानधिलक्षीकृतान्यक्षानीन्द्रियाणि येषांतान् अवेक्षितॄन् । विपश्चितः तत्तत्कर्मशास्त्रज्ञान् । ते अस्य रक्षकाः कार्याणि कर्माणि कुर्वतांनृणां यथा तानि सम्यगवितथं तथा ऽवेक्षेरन्नित्यन्वयः ॥ ८१ ॥

( ५ ) **नन्दनः** । कराहारिणामनुसंधायकानाह अध्यक्षानिति । तत्र तत्र करविशेषे । कार्याणिकराहरणकार्याणि ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । ईक्षणे तत्र तत्र विविधानधिष्ठातॄन्कुर्यात् ॥ ८१ ॥

## आवृत्तानां गुरुकुलाद्विप्राणां पूजकोभवेत् ॥ नृपाणामक्षयोह्येषनिधिर्ब्राह्मोभिधीयते ॥ ८२ ॥

( १ ) **मेधातिथिः** । गुरुकुलेऽधीतावगतवेदार्थागार्हस्थ्यंप्रतिपित्सवोधनेन पूजयितव्याः । इदमपि नैय्यमिकदानमतएवाह नृपाणामक्षयइति । नित्यत्वादक्षयोयावज्जीविकः काम्यत्वेवा फलभावि निवर्तते । यदुक्तं सांतानिकंवक्ष्यामाणमिति तदेवेदम्। अन्येत्वाहुः तत्रार्थिभ्योदानंविहितं इहत्वनर्थिनामधिकारात् विधानमात्रयावस्त्रयुगादिदानेनच नराणांपूजाकर्तव्या । तथाचाहविप्राणांपूजकोभवेदिति । निधिरिवनिधिः उत्तमफलत्वात्। ब्रह्मसंनिहितोब्राह्मः ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । आवृत्तानां समावृत्तानां गुरुदक्षिणार्थं विवाहार्थं कर्तुमिच्छतांवा । ब्राह्मोब्राह्मणेषु निक्षिप्तः ॥ ८२ ॥

( ३ ) **कुल्लूकः** । गुरुकुलान्निवृत्तानां अधीतवेदानांब्राह्मणानांगार्हस्थ्यार्थिनांनियमतोधनधान्येनपूजांकुर्यात् यस्माद्योयंब्राह्मोब्राह्मणेषुस्थापितधनधान्यादिनिधिरिवनिधिःअक्षयोब्रह्मफलत्वात् अविनाशीराज्ञांशास्त्रेणोपदिश्यते ॥ ८२ ॥

( ४ ) **राघवानन्दः** । किंच । आवृत्तानामागतानांगुरुकुलात् पूजकोगृहादिदाता स्यात्। तेन किं तत्राह एषनिधिः एवंविशिष्टब्राह्मणेषु वस्त्रौदनादिनिधिर्निक्षेपतुल्यः । सहि यथा कालान्तरे प्राप्यतेएषोपि तथा । ब्राह्मः परंपरया ब्रह्मणि

( २ ) **सर्वज्ञनारायणः** । गृह्याणि स्मृत्याचारतोग्राह्याणि । वैतानिकानि श्रौतानि ॥ ७८ ॥

( ३ ) **कुल्लूकः** । पुरोहितंचाप्याथर्वणविधिनाकुर्वीत ऋत्विजश्च कर्माणि कर्तुंवृणुयात्तेचास्य राज्ञोगृह्योक्तानि त्रेतासंपाद्यानि कर्माणि कुर्युः ॥ ७८ ॥

( ४ ) **राघवानन्दः** । पुरोहितं अथर्ववेदिनंपुरोहितंवृणीतेति श्रुतेः । सवैदिकोविप्रश्च ऋत्विजःवृणुयात् । ऋत्विजः अस्य राज्ञः गृह्याणि गृह्योक्तानि वेत्थदेवादीनि वैतानिकानि श्रौताग्निहोत्रादीनिच ते वृताःकुर्युरित्यन्वयः ॥ ७८ ॥

( ५ ) **नन्दनः** । गृहस्थस्य राज्ञः श्रौतस्मार्तकर्मस्वधिकृतानाह पुरोहितमिति । गृह्याणिऔपासनादीनि । वैतानिकान्यग्निहोत्रादीनि ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । सतस्य राज्ञः गृह्याणि स्मार्तानि स्वशाखोक्तानि कर्माणि वैतानिकानि श्रौतानि कुर्यात् ॥७८॥

**यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ॥ धर्मार्थंचैव विप्रेभ्योदद्याद्भोगान्धनानि च ॥ ७९ ॥**

( १ ) **मेधातिथिः** । आप्तदक्षिणैर्भूरिदक्षिणैः पौण्डरीकादिभिः भोगान्धनानिच वस्त्रगन्धविलेपनादयोभोजनविशेषाश्चभोगाः । धनानिसुवर्णादीनि नित्यमेवतद्दानमिच्छन्ति । धर्मार्थंतस्योत्पत्त्यर्थमेव ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । भोगान् भोगहेतून् स्त्रीवस्त्रगृहादीन् । धनानि सुवर्णानि ॥ ७९ ॥

( ३ ) **कुल्लूकः** । राजा नानाप्रकारान् बहुदक्षिणान् अश्वमेधादियज्ञान् कुर्यात् ब्राह्मणेभ्यश्च स्त्रीगृहशय्यादीन् भोगान् सुवर्णवस्त्रादीनि धनानि दद्यात् ॥ ७९ ॥

( ४ ) **राघवानन्दः** । आप्तदक्षिणैः एतेन सहस्रदक्षिणेनयजेतेत्यादिविधिना प्राक्प्रोक्ता या दक्षिणा तद्दक्षिणैः । भोगान् भोग्यान् स्त्रीगृहशय्यादीन् । धनानि सुवर्णरजतादीनि च दद्यादित्यन्वयः ॥ ७९ ॥

( ५ ) **नन्दनः** । याजकवरणप्रसङ्गाद्यजमानमप्याह यजेतेति । आप्तदक्षिणैः पर्याप्तदक्षिणैः । भोगान्भोग्यान् गोमहिषादीन् ॥ ७९ ॥

**सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ॥ स्याच्चाम्नायपरोलोके वर्तेत पितृवन्नृषु ॥ ८० ॥**

( १ ) **मेधातिथिः** । बलिंकरंधान्यादीनांषष्ठाष्टमादिभागमाप्तैरर्थादुपधाशुद्धैः । यथोक्तमाम्नायपरश्चस्यात् । आगमप्रधानतर्कशास्त्राण्याश्रयेत् । अथवापारंपर्यागतमेवभागंगृह्णीयान्नाधिकम् । वर्तेतपितृवन्नृषु करदेष्वन्येषुचस्नेहबुद्ध्यावर्तेत ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । सांवत्सरिकं वत्सरलभ्यंबलिं करं भूमिजलशुष्कादिनिमित्तम् । आम्नायपरोऽभ्यासपरः । सर्वस्याकरादेःस्मरणेयत्नंकुर्यादित्यर्थः ॥ ८० ॥

( ३ ) **कुल्लूकः** । राजा सत्क्रैरमात्यैर्वर्षग्राह्यंधान्यादिभागमानाययेत् लोके च करादिग्रहणेशास्त्रनिष्ठःस्यात् स्वदेशवासिषुनरेषुपितृवत्स्नेहादिनावर्तेत ॥ ८० ॥

( ४ ) **राघवानन्दः** । आप्तैर्युक्तकारिभिः । संवत्सरोत्तीर्णं बलिं करं धान्यादीन् धनंच गृह्णीयादितितात्पर्यम् । आम्नायपरः करादिग्रहणशास्त्रनिविष्टः । पिता यथा पुत्रपालनान्वेषी तद्वन्नृपःस्यात् नृषुस्वप्रजासु ॥ ८० ॥

( ५ ) **नन्दनः** । कुतश्च राज्ञोधनागमोधनेनयजेत दद्याच्चेदपेक्षायामाह सांवत्सरिकमिति । संवत्सरेभवंसांवत्स-

---

( ७९ ) भोगान्धनानिच=भागान्धनानिच ( र )

रिकंसंवत्सरस्यसंवत्सरस्य सकृदितियावत्। बलिंकरम्। पूर्वमर्यादानुरूपेणकरादानमाम्नायः । नृषु दीनादिष्वनुकम्पया-वर्तनंपितृवद्वर्तनम् ॥ ८० ॥

( ६ ) **रामचन्द्रः**। सांवत्सरिकंबलिं उपहारान्। च पुनः आम्नायपरः अभ्यासपरः स्यात् सर्वस्य करादेःस्मरणे यत्नं कुर्यादित्यर्थः ॥ ८० ॥

## अध्यक्षान्विविधान्कुर्यात्तत्रतत्रविपश्चितः ॥ तेऽस्य सर्वाण्यवेक्षेरन्नृणांकार्याणि कुर्वताम् ॥८१॥

( १ ) **मेधातिथिः**। अध्यक्षाअधिकृताः प्रत्यवेक्षितारस्तान्कुर्यात् । विविधान् बहुप्रकारान् मृदूनुग्रान् धार्मिकान् अर्थार्जनपरांश्च। तत्रतत्रसुवर्णकोष्ठागारे पण्यकुप्यकर्मस्वधिकृताः प्रत्यवेक्षितारस्तान् शुल्कनौहस्त्यश्वरथपदात्यादीन् विपश्चितः स्थापयेत् । सर्वएतेअमात्यगुणसंपद्युक्ताविज्ञेयाः। यथोक्तमध्यक्षप्रचारे तेअध्यक्षाः सर्वाणि कार्याण्यवेक्षे-रन्नन्येषांनृणांतत्स्थानोपयोगिनांकार्याणि कुर्वतांहस्त्यध्यक्षेण हस्तिपकाः अश्वाध्यक्षेण तुरङ्गमाद्याः गवाध्यक्षेण कर्ष णादयः॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः**। अध्यक्षानीक्षणेनाधिष्ठातॄन्। कार्याणि अर्थानयनादीनि। कुर्वतांकार्याण्यवेक्षेरन् ॥८१॥

( ३ ) **कुल्लूकः**। तत्रतत्र हस्त्यश्वरथपदाताद्यर्थादिस्थानेष्वध्यक्षानवेक्षितॄन् विविधान् पृथक्पृथक्विपश्चितः कर्म-कुशलान्कुर्यात् ते अस्यराज्ञः तेषुहस्त्यश्वादिस्थानेषु मनुष्याणांकुर्वतांसर्वाणिकार्याणिसम्यक्कार्यार्थमवेक्षेरन् ॥ ८१ ॥

( ४ ) **राघवानन्दः**। किंचान्यत्। तत्रतत्र हस्त्यश्वरथपदातिव्यवहारार्थस्थानेषु। अध्यक्षानुक्तविषयानधिलक्षी-कृतान्यक्षानीन्द्रियाणि येषांतान् अवेक्षितॄन् । विपश्चितः तत्तत्कर्मशास्त्रज्ञान् । ते अस्य रक्षकाः कार्याणि कर्माणि कुर्वतांनृणां यथा तानि सम्यगवितथं तथा ऽवेक्षेरन्नित्यन्वयः ॥ ८१ ॥

( ५ ) **नन्दनः** । कराहारिणामनुसंधायकानाह अध्यक्षानिति। तत्र तत्र करविशेषे। कार्याणिकराहरणकार्या-णि ॥ ८१ ॥

( ६ ) **रामचन्द्रः**। ईक्षणे तत्र तत्र विविधानधिष्ठातॄन्कुर्यात् ॥ ८१ ॥

## आवृत्तानां गुरुकुलाद्विप्राणां पूजकोभवेत् ॥ नृपाणामक्षयोह्येषनिधिर्ब्राह्मोभिधीयते ॥ ८२ ॥

( १ ) **मेधातिथिः**। गुरुकुलेऽधीतावगतवेदार्थागार्हस्थ्यंप्रतिपित्सवोधनेन पूजयितव्याः । इदमपि नैय्यमिकदान-मतएवाह नृपाणामक्षयइति। नित्यत्वादक्षयोयावज्जीविकः काम्यत्वेवा फलभावि निवर्तते । यदुक्तं सांतानिकंवक्ष्यामा-णमिति तदेवेदम्। अन्येत्वाहुः तत्रार्थिभ्योदानंविहितं इहत्वनर्थिनामधिकारात् विधानमात्रयावस्त्रयुगादिदानेनच नरा-णांपूजाकर्तव्या। तथाचाहविप्राणांपूजकोभवेदिति। निधिरिवनिधिः उत्तमफलत्वात्। ब्रह्मसंनिहितोब्राह्मः ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः**। आवृत्तानां समावृत्तानां गुरुदक्षिणार्थं विवाहार्थं कर्तुमिच्छतांवा । ब्राह्मोब्राह्मणेषु नि-क्षिप्तः ॥ ८२ ॥

( ३ ) **कुल्लूकः** । गुरुकुलान्निवृत्तानां अधीतवेदानांब्राह्मणानांगार्हस्थ्यार्थिनांनियमतोधनधान्येनपूजांकुर्यात् य-स्मादयंब्राह्मोब्राह्मणेषुस्थापितधनधान्यादिनिधिरिवनिधिःअक्षयोब्रह्मफलत्वात् अविनाशीराज्ञांशास्त्रेणोपदिश्यते ॥ ८२ ॥

( ४ ) **राघवानन्दः**। किंच। आवृत्तानामागतानांगुरुकुलात् पूजकोगृहादिदाता स्यात्। तेन किं तत्राह एषनिधिः एवंविशिष्टब्राह्मणेषु वस्त्रौदनादिनिधिर्निक्षेपतुल्यः। सहि यथा कालान्तरे प्राप्यतेएषोपि तथा। ब्राह्मः परंपरया ब्रह्मणि

मोक्षरूपे पर्यवसितः। तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेनेत्यादिश्रुतेः। ब्रह्म ब्राह्मणजातिः तदुद्देश्यकत्वाद्वा ब्राह्मः ॥ ८२ ॥

( ५ ) **नन्दनः**। एवंधनागमद्वारमुक्तम् इदानींप्रस्तुतंदानमेवाह आवृत्तानामिति। पूजकोभवेदिष्टार्थदोभवेत्। एषब्राह्मोनिधिर्नृपाणामक्षयोऽभिधीयते एतत्सृष्टाब्राह्मणनिहितंद्रव्यंराज्ञामक्षय्यफलमिति शास्त्रैर्विधीयते। हिशब्दोहेतौ. ॥ ८२ ॥

( ६ ) **रामचन्द्रः**। गुरुकुलादावृत्तानामागतानां स्नातकानां विप्राणांविशेषतःपूजकोभवेत्। एषब्राह्मणोनिधिः ब्राह्मणेषु दत्तमक्षयमित्यर्थः ॥ ८२ ॥

**नतंस्तेनानचामित्राहरन्ति न च नश्यति ॥ तस्माद्राज्ञा निधातव्योब्राह्मणेष्वक्षयोनिधिः ॥ ८३ ॥**

( १ ) **मेधातिथिः**। ब्राह्मणेभ्योयोयोर्थोदत्तः नतंस्तेनाआटविकादयो मित्राश्चशत्रवोहरन्ति न भूमिष्ठमिवविस्मृत्यप्रातिभाव्येन वा नश्यति ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः**। न नश्यति स्वयमदर्शनं नयाति ॥ ८३ ॥

( ३ ) **कुल्लूकः**। अतएव नतमिति। तंब्राह्मणस्थापितनिधिंनचौरानापिशत्रवोहरंति अन्यनिधिवत्भूम्यादिस्थापितः कालवशान्ननश्यतिस्थानभ्रांत्यावाऽदर्शनमुपैति तस्माद्योयमक्षयोऽनंतफलोनिधिरिवनिधिः धनौघः सराज्ञाब्राह्मणेषु निधातव्यः तेभ्योदेयइत्यर्थः ॥ ८३ ॥

( ४ ) **राघवानन्दः**। अक्षयत्वमाह नेति। स्तेनाः छिद्रंकृत्वा ये हरन्ति प्रसभंवा। अमित्राः शत्रवः। न नश्यति भूमिष्ठनिधिरिव ॥ ८३ ॥

( ५ ) **नन्दनः**। न ह्यास्य निधेरुपसर्गानिधित्वप्रयुक्ताःसन्तीत्याह नतमिति। तंनिधिम्। नश्यतिविस्मरणादिना ॥ ८३ ॥

( ६ ) **रामचन्द्रः**। तंनिधिं स्तेनाः चोराः शत्रवोवानहरन्ति ॥ ८३ ॥

**न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ॥ वरिष्ठमग्निहोत्रेभ्योब्राह्मणस्य मुखेहुतम् ॥ ८४ ॥**

( १ ) **मेधातिथिः**। एषएवार्थोऽवश्यानुष्ठेयः प्रकारान्तरेण पुनरुच्यते। अग्नौयद्धूयतेतत्कदाचित् स्कन्दत्यधः पतति हूयमानम् तथा च्यवते पुरोडाशादिक्षामतया। ततश्च कर्मवैगुण्याद्विनश्यति शिष्टानाम्। इदन्तुब्राह्मणेभ्योदानंनतस्यैतेदोषाःसन्ति नितरांवरिष्ठमग्निहोत्रेभ्योऽग्नौहोमेभ्यइत्यर्थः। मुख्यार्थवृत्त्याकर्मनामधेयमेवाग्निहोत्रशब्दस्तदाचादिग्रहणं व्याख्येयम्। मुखेहुतमितिपाणिरेवब्राह्मणस्य मुखं पाण्यास्योहिद्विजःस्मृतइतिवचनात्। वरिष्ठंश्रेष्ठं अर्थवादश्चायंनपुनर्होमनिन्दैव ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः**। नस्कन्दते नस्रवति। नच्यवते नपतति। कठिनं नव्यथतइतिपाठेप्ययमर्थः। नविनश्यति श्वावलेहादिना ॥ ८४ ॥

( ३ ) **कुल्लूकः**। अग्नौयत्हविर्हूयतेतत्कदाचित्स्कंदतेस्रवत्यधःपतति कदाचिद्व्यथतेशुष्यति कदाचिद्दाहादिनानश्यति ब्राह्मणस्यमुखेयत्हुतंपाण्यास्योहिद्विजःस्मृतइति ब्राह्मणहस्तदत्तमित्यर्थः। तस्यनोक्तादोषाः तस्मादग्निहोत्रादिभ्यः श्रेष्ठंब्राह्मणायदानमित्यर्थः ॥ ८४ ॥

( ४ ) **राघवानन्दः** । किंच न स्कन्दते नाधःपतति न व्यथते ननंक्ष्यतीतिकृत्वा व्यथा दुःखंनोत्पादयति पुत्रादिवत्प्रत्यक्षंन नश्यतीतिवरिष्ठमिति । अग्नौ हविःक्षिप्तंदेवनृप्तौ संदिग्धं ब्राह्मणमुखे तु न तथा साक्षात्प्रीत्युक्तेः ब्राह्मणोमनुष्येषु इतिश्रुतेः । नाहंतथाद्मियजमानहविर्वितानैश्चोतद्धृतप्लुतमदन्हुतभुङ्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोनुघासमिति भागवतोक्तेश्च ॥ ८४ ॥

( ५ ) **नन्दनः** । यजेतदद्याच्चेत्युक्तम् यजनाद्दानंविशिष्टमित्याह नेति । स्कन्दनंपरिस्रवणम् । केशकीटापत्तिर्व्यथनम् । अदर्शनंनाशः । अग्निहोत्रेभ्योऽग्निहोत्रहुतेभ्योद्रव्येभ्यः ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । यद्ब्राह्मणस्य मुखे हुतंतन्नस्कन्दते नक्षरते । स्कन्दिगतिशोषणयोरित्यस्य धातोरूपंज्ञेयम् ॥ ८४ ॥

**सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ॥ प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥ ८५ ॥**

( १ ) **मेधातिथिः**। विप्रेभ्यइतिच प्रकृतं तथा चप्रागप्युक्तम् । वेदतत्त्वार्थविदुषे ब्राह्मणायेति । नच यथाश्रुतदानफलोपपत्तिः । कीदृशंहितत्साम्यंजातितः परिमाणतः उपकारतोवा यदि तावज्जातितस्तदिति औषधपानोद्देशेन देवलेभ्योदत्तं खाद्यदानंदुःखायैवस्यात् । तिक्तकषायानिप्रायशऔषधानिविरेचनीयानीति प्रतिपत्तिः । अथपरिमाणतः तत्रापि यद्विद्रव्यमनपेक्ष्य केवलपरिमाणसाम्यं सुवर्णे दत्तं तत्परिमाणंताम्रंलभ्येत । अन्यथामृत्काष्ठादि । अथजातितः परिमाणतश्चतत्रप्रागुक्ताएवदोषाः । अथोपकारतः तत्रापि हि यदि तज्जातीयएवोपकारः निवृत्तिफलकेनौषधदानेन व्याधिराक्षेप्तव्यः सुसंभवादुःखंप्राप्ताइति तस्मात् उपवीतंदेवानामुपव्ययते देवलक्ष्ममेवतत्कुरुतइत्युपव्यानविशेषान्निवीतादयोन पृथग्वाक्यानि तथेदमपिभवितव्यम् । अत्रोच्यते नात्राख्यातश्रवणमस्तिसर्वेषांसुमत्वात् तत्रयोऽर्थवादः साहस्रंवेदपारगइति तदर्थवादोस्तु । अथायंविधिः विध्यन्तरशेषभावात्तदर्थविधिरभ्युपेतव्योविशेषाभावात् निवीतादिषुतूपव्ययतइत्यत्राख्यातदर्शनात् तदर्थविधिविषयत्वयोग्यत्वाभावादेकत्वावगमाच्च युक्तार्थवदेवतर्ह्यनुक्तोविशेषः नाब्राह्मणेभ्योदानमस्तीतितद्विस्मृतंभवेत् दीनानाथादिभ्यः सर्वेभ्योदानस्य विहितत्वात् । एतान्येवच विधायकानि वाक्यानि ब्राह्मणेभ्योराज्ञांदानस्यतूक्तंयथाश्रुतफलानुपपत्तिः सर्वप्रकारेणास्याभ्युपगम्यमानत्वादिति । अत्रोच्यते लौकिकीयंवाचोयुक्तिः सममिति यल्लोकेनात्युत्कृष्टंतदेवमुच्यते समलवणाः सक्तवइति । उपकारापेक्षा च द्विगुणमिति संख्याश्रुतिर्यावत्तस्योपकारस्तावद्विगुणोभवति । न तद्द्रव्यमाग्निर्नापि तज्जातीयएवोपकारः किन्तुप्रीत्यतिशयोत्पत्तिः नचेहफलविशेषश्रुतिर्येनेयमाशङ्कास्यादपितु किंतदेव द्रव्यंप्राप्यते ततःसएवोपकारइति । अश्रुतफलविशेषेषुस्वर्गः फलं किंचतिलादिदानेप्रजाप्तिः फलंश्रूयते । तत्र काद्रव्यसाम्याशङ्का तस्माच्चायमर्थंउत्तरोत्तरातिशयदानात्फलातिशयसिद्धिः तथाचाह पात्रस्यहि विशेषेणेति । ब्राह्मणब्रुवे ब्रुवशब्दः कुत्सायां जातिमात्रब्राह्मणोऽध्ययनादिगुणहीनइत्यर्थः । आचार्यउपनेतावेदपारगोऽध्ययनश्रवणाभ्यांवेदस्यान्तंगतः ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । दानमवैधमपि अब्राह्मणे क्षत्रियादौ दीयमानमानृशंस्यात्तत्समं यावन्मात्रंदानस्यानृशंस्यं कृतंफलं तत्र तावन्मात्रम् । द्विगुणंब्राह्मणब्रुवे जातिमात्रोपजीविनि प्रतिग्रहरूपेण दत्तेआनृशंस्यदानफलंच प्रतिग्रहदानफलंच । आचार्येअध्यापयितरि वेदैकदेशस्य द्विगुणीभूतमेव सहस्रगुणम् । वेदपारगे वेदस्यैकस्यार्थतोग्रन्थतश्च पारंगते ॥ ८५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणेतरक्षत्रादिविषयेयद्दानंतत्समफलंयस्यदेयद्रव्यस्ययत्फलंश्रुतंततोनाधिकंनचन्यूनंभवति ।

योब्राह्मणः क्रियारहितआत्मानंब्राह्मणंब्रवीति सब्राह्मणब्रुवः तद्विषयदानंपूर्वापेक्षयाद्विगुणफलं । एवंप्राधीतेप्रक्रांताध्ययनेब्राह्मणेलक्षगुणंफलं । समस्तशाखाध्यायिन्यनंतफलं । सहस्रगुणमाचार्यइतिवातृतीयपदस्यपाठः ॥ ८५ ॥

( ४ ) **राघवानन्दः** । विप्राणामितिप्रकृतं तत्र प्रासंगिकान्पात्रगुणानाह समेति । क्षत्रियब्राह्मणपदवाच्याध्ययनप्रवृत्तब्रह्मचारिकृतवेदाध्ययनाश्चत्वारोऽब्राह्मणइत्यादिपदचतुष्टयवाच्याइति । ब्राह्मणब्रुवः ब्राह्मणोहंब्रवीति नतु कर्मणा ब्राह्मणइति । गर्भाधानादिसंस्कारैर्युक्तः सनियमव्रती । नाध्यापयति नाधीते सज्ञेयोब्राह्मणब्रुवइति पारिभाषिकोवा । ब्राह्मणश्रमात्पात्रंक्षत्रियः तस्मात्सर्वेभ्योदेयमेतेभ्यः परंतु यस्यश्रुतंफलमिति ॥ ८५ ॥

( ५ ) **नन्दनः** । पात्रविशेषात्फलविशेषमाहसममिति । समंतावन्मात्रम् । अब्राह्मणेक्षत्रियादौदानमदानफलम्॥८५॥

( ६ ) **रामचन्द्रः** । न ब्रह्म वेदोयस्यास्तीति सः अब्राह्मणस्तस्मिन्दत्तंदानं समंज्ञेयम् । ब्राह्मणब्रुवे वेदाध्यायिनि किंचिन्मात्रे एवंविधे द्विजे दत्तंद्विगुणंभवेत् । वेदपारगे एकशाखाध्यायिनि ॥ ८५ ॥

**पात्रस्य हि विशेषेण श्रद्दधानतयैव च ॥ अल्पंवा बहुवा प्रेत्य दानस्यफलमश्नुते ॥ ८६ ॥**

**[ एषएवपरोधर्मःकृत्स्नोराज्ञउदाहृतः । जित्वा धनानि संग्रामात्द्विजेभ्यःप्रतिपादयेत् ॥ १ ॥* ]**

**[ देशकालविधानेन द्रव्यंश्रद्धासमन्वितम् । पात्रे प्रदीयते यत्तु तद्धर्मस्यप्रसाधनम् ॥ २ ॥‡ ]**

( १ ) **मेधातिथिः** । पातयतोधर्मकर्मणः पात्यमानंवा त्रायतइतिपात्रंसंप्रदानं अथवा घृततैलाद्याधारः पात्रमुपचारादिदमपि पात्रं अत्रापि हिद्रव्यंनिधीयते आह च नृपाणामक्षयोह्येषनिधिर्ब्राह्मणोनिधीयतइति।तस्यविशेषोभेदः सगुणनिर्गुणत्वादिः तेन हेतुना दानस्य फलमवाप्यते । अल्पंवा गुणवते वृत्तस्वाध्यायसंपन्नाय दत्तंबहु निर्गुणायत्वल्पम् ॥८६॥

[ **मेधातिथिः** । प्रदानःउदकपूर्वकस्वस्तिवाचनसंस्कारातिशयोभावः प्रसादइत्यादि । द्रव्यं गोभूहिरण्यादि । श्रद्धाप्राप्त्यभिलाषातिशयः कथमिदंमेनिवर्तेतेतिबुद्धिसंतानः प्रत्येति । क्रियासमनन्तरंफलोत्पत्तेरनियममाह । नपुनर्जन्मान्तरफलतामेव । वैदिकानांकर्मणांफलएव कामस्य नियमावगमात् ॥ २ ॥ ]

( २ ) **सर्वज्ञनारायणः** । विशेषेण दोषेण गुणेनवा । श्रद्दधानतया श्रद्धानिकर्षप्रकर्षाभ्याम ॥ ८६ ॥

( ३ ) **कुल्लूकः** । विद्यातपोवृत्तियुक्ततया पात्रस्यतारतम्यमपेक्ष्य शास्त्रेतथेतिमत्ययरूपायाः श्रद्धायास्तारतम्यपात्रमासाद्य दानस्याल्पंमहद्वाफलंपरलोकेलभ्यते ॥ ८६ ॥

( ४ ) **राघवानन्दः** । किंच पात्रस्येति । प्रेत्य मृत्वा । स्थितस्य फलावश्यंभावनियमादित्याह अवाप्यतइति ॥ ८६ ॥

[ **राघवानन्दः** । किंच देशेति । देशःकुरुक्षेत्रादिः । कालउपरागादिः । विधानमुदकपूर्वकस्वस्त्युक्तिः । श्रद्धयाल्पंदीयमानंपात्रविशेषेच बह्वेव स्यादिति वाक्यार्थः ॥ २ ॥ ]

( ५ ) **नन्दनः** । श्रद्धातश्च फलविशेषमाह पात्रस्येति ॥ ८६ ॥

**समोत्तमाधमैराजा त्वाहूतःपालयन्प्रजाः ॥ न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन् ॥८७॥**

( १ ) **मेधातिथिः** । सर्वोपरिक्षये राज्ञोविहितंयुद्धं तत्र संग्रामभूमिगतस्याहतस्य समन्यूनाधिकबलेनापेक्षा प्र-

---

* ( ख, ट, त )　　‡ ( थ , मेधा० )

( ८६ ) फलमश्नुते=वाप्यतेफलम् ( ट, ठ, ड, त, थ, न, ब, भ )

तिषेधार्थमिदंपदं नमन्तव्यंनिकृष्टबलेंनहन्मीति । अथवा ये शत्रवआटविकादयः प्राक्स्थितांमर्यादामतिलंघ्यदेशमुत्क्रामन्तिशत्रुभिर्वाराज्ञः संदधते नचेत्तेयुद्धेन विनानियन्तुंशक्यन्ते तदा निकृष्टबलैरपि तैर्योद्धव्यमेव । यद्यपि तैरसौशब्देन नाहूतोवस्तुतस्त्वाहूतएवभवति । एषहि क्षत्रियाणांधर्मः यदाहूतः प्रकृतैस्तैर्युद्धे सर्वेण सह योद्धव्यमेव । जातिवयशिक्षापुरुषकारादि नापेक्षितव्यम् । एषधर्मः स्मर्तव्यः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । अधमः शूद्रः । आहूतोयुद्धार्थम् । ननिवर्तेत नप्रवर्तेत ॥ ८७ ॥

( ३ ) **कुल्लूकः** । समबलेनाधिकबलेनहीनबलेनचराज्ञा युद्धार्थमाहूतोराजा प्रजारक्षणंकुर्वन् युद्धान्ननिवर्तेत क्षत्रियेणयुद्धार्थमाहूतेनावश्यंयोद्धव्यमितिक्षात्रंधर्मंस्मरन् ॥ ८७ ॥

( ४ ) **राघवानन्दः** । प्रासंगिकमुक्त्वा प्रकृतमाह समइति । धनविद्याशूरत्वादिना समोत्तमाधमैर्युद्धायाहूतोन निवर्तेतेत्यन्वयः ॥ ८७ ॥

( ५ ) **नन्दनः** । राष्ट्राऽत्करमादाययष्टव्यश्चदातव्यंचेत्युक्तम् इदानींराष्ट्रप्रत्यर्थिभिराहूतेन योद्धव्यमित्याह समेतिप्रजाःपालयन्प्रजापालनहेतोः ॥ ८७ ॥

( ६ ) **रामचन्द्रः** । समश्चोत्तमश्चाधमश्चतैराजा आहूतः संग्रामान्न निवर्तेत ॥ ८७ ॥

**संग्रामेष्वनिवर्त्तित्वं प्रजानां चैव पालनम् ॥ शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥ ८८ ॥**

( १ ) **मेधातिथिः** । त्रयाणां धर्माणांतुल्यफलत्वायश्लोकोयम् ॥ ८८ ॥

( ३ ) **कुल्लूकः** । यस्मात् संग्रामेष्विति । युद्धेष्वपराङ्मुखत्वंप्रजानांचरक्षणंब्राह्मणपरिचर्या एतद्राज्ञामतिशयितंस्वर्गादिश्रेयःस्थानम् ॥ ८८ ॥

( ४ ) **राघवानन्दः** । प्रासंगिके फलमाह संग्रामेष्विति । प्रजापरिपालनवद्द्विजशुश्रूषायायुद्धानिवर्तित्वस्यापि श्रेयस्करत्वमित्यर्थः ॥ ८८ ॥

( ५ ) **नन्दनः** । कोयंक्षात्रोधर्मस्तमाह संग्रामेष्विति । पालनशुश्रूषयोरुपन्यासोदृष्टान्तार्थः ॥ ८८ ॥

**आहवेषु मिथोऽन्योन्यं जिघांसन्तोमहीक्षितः ॥ युध्यमानाः परं शक्त्यास्वर्गं यान्त्यपराङ्मुखाः ॥ ८९ ॥**

( १ ) **मेधातिथिः** । आहूयन्ते युद्धार्थमितरे यत्र वीराः सआहवः संग्रामः । मिथः स्पर्धमानाअन्योन्यंपरस्परंजिघांसन्तोहननेच्छवः युद्ध्यमानाः प्रहरन्तः परंशक्त्या परया यथा शक्त्या यथाबलमित्यर्थः छांदसत्वात्परेत्यस्य स्थाने परमितिरूपम् । अपराङ्मुखायुध्यमानाइति संबन्धः । स्वर्गंयान्ति । ननुचराज्यलोभात्प्रवृत्तानांनार्हस्तस्य फलस्य संभवः कुतः स्वर्गउच्यते । वक्ष्यमाणयुद्धनियमापेक्षः स्वर्गः नहि तेषांनियमानामन्यत्प्रयोजनमस्ति । नकूटैरायुधैरित्यादिनात्यक्तराज्यस्यापिशक्तप्रणिपातेन तदनुजीवनसंभवात् तस्मादर्हस्तत्फलसंभवः । अथवा निश्चिते पराजये निराशस्य यद्युद्धावतारः तत्स्वर्गायैव । अस्मादेव वचनान्नात्मत्यागनिषेधस्य विषयोयम् । महीक्षितोमण्डलेश्वरानपुनस्तदनुजीविनस्तेषांहिस्वाम्यर्थेवृप्रवृत्तिर्नस्वार्था अतश्चकुतस्तेषांफलसंबन्धः ऋत्विजामिव दक्षिणापणेन परिक्रीतामेवमेषामपिवृत्तिपरिक्रीतानांकुतः स्वर्गादिफलोत्पत्तिः । नतुविशेषेणैवकुर्वन्तः ॥ उद्यतैराहवेशस्त्रैः क्षत्रधर्मेहतस्यच । सद्यःसन्तिष्ठतेयज्ञइति । तथा ॥ द्वाविमौपुरुषौलोके-

सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्चशूरश्चाभिमुखोहतइति । तथाभारते युद्धप्रेक्षिणामपिस्वर्गःसंदर्शितः । मन्त्रलिङ्गानिचसन्ति येयुध्यन्तेप्रधनेषुशूरासोयेतनुत्यजः । येवासहस्रदक्षिणास्ताँश्चदेवापिगच्छतात् । सहस्रदक्षिणानांयजमानानांशूराणांचरणशिरसित्यक्तप्राणानांमहाफलत्वंदर्शयति येयुध्यन्ते नचमरणायैवह्रियन्ते नहिसंपरिग्रहकालेऽयमुपसंवादोस्ति यथाहोत्रोद्गात्रादीनांस्वप्रवचनसमाख्या नियतार्त्विज्यपदार्थानुष्ठानायैव वरणं तस्मात्प्रभुकार्योद्देशेन यन्मरणंतदनुक्रान्तफलायैव नचपरप्रयुक्तात्कर्मणोन्यस्यफलंनास्ति । अश्वमेधावभृथेहिब्रह्मघ्नस्य स्नानादयजमानस्यैव शुद्धिः । अत्रोच्यते यदुक्तमुद्यतैराहवइति तदाभृतिपरिक्रीतस्य प्रजार्थेयुद्धे प्राणत्यागोधर्मायैव । यस्य वा कुर्वितिप्रयाणंरणइत्येवपरिकरोबद्धस्तदपेक्षमेतयज्ञसंस्थावचनं एवंभूतश्चाभिमुखोहतइति । अथवा नरकाभावएव सूर्यमंडलभेदनंयुध्यमानस्य भविष्यति । यत्रविषयान्तरेश्वरेणराज्ञा परस्य राज्ञोविषयोहन्यते भज्यते जनोलुप्येत्तत्र तदर्थेयुद्धे प्राणत्यागोधर्मार्थःअन्धतमोहिनरकेतदभावात्सति प्राकाश्ये सूर्यमण्डलभेदनवचनं सूर्यमण्डलंभिनत्ति उपरिष्टाल्लोकानाप्नोति नाधःप्रपततीत्यर्थः । भृतिपरिक्रीतस्य प्रभोःसंग्रामे समुपस्थिते तमेव जहतोनरकनिपतनं तदर्थेयुध्यमानस्य भर्तृपिण्डानृण्यङ्गतवतोदुष्कृतेनप्रतिबध्यमानस्य स्वैःसुकृतैर्युक्तएव स्वर्गादिलाभः । अतउक्तं सद्यःसंतिष्ठते यज्ञइति अव्यवधानेन यज्ञफलमविशेषश्रुतौ स्वर्गमवाप्नोतीत्यर्थः । एवंभारतेपि भृतिपरिक्रीतानांस्वर्गफलावाप्तिवचनमुपपद्यते । युद्धप्रेक्षिणान्तुस्वर्गावाप्तिरर्थवादएव । अथवा बहुषुजीवनोपायेषु सत्सुयच्छस्त्रेण जीवनंततोनियमात्स्वर्गः । यत्तुनमरणायजीयन्तइति शस्त्रभृतांभृतिदानेनान्यद्युद्धात्प्रयोजनमस्ति विशेषानुपदेशात् सर्वकार्योद्यताःसर्वप्रकारंमदर्थःसंपादनीयइतिपरिक्रीयन्तेतत्रयदायुद्धमुपस्थितंभवति तदाऽऽशरीरपातात्प्रभुर्गुरुः कर्तव्यस्तथाऽऽनृण्यंभवति । अनुपस्थिते तु युद्धे यदिभृत्यस्य मरणंभवति तदासर्वेऽनृणाएव । उद्युक्तेह्यसौतत्कार्ये तादृशएवास्योपसंवादः युद्धकालेयोद्धव्यंभवतीतिलिङ्गदर्शनमपितूपपद्यतएव । अश्वमेधावभृथेतुस्पष्टंवचनं तस्मात्समागमेतेषामिति । इहतुयुद्धसाध्यमिति विशेषः ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । मिथोजिघांसन्तोऽन्योन्यं युद्ध्यमानाइत्यपौनरुक्त्यम् ॥ ८९ ॥

( ३ ) **कुल्लूकः** । अतएव आहवेष्विति राजानोमिथःस्पर्द्धमानायुद्धेष्वन्योन्यंहंतुमिच्छंतःप्रकृष्टयाशक्त्यासंमुखीभूययुध्यमानाः स्वर्गंगच्छंतियद्यपियुद्धस्य शत्रुजयधनलाभादिरूपंदृष्टमेवफलंनस्वर्गः तथापियुद्धाश्रितापराङ्मुखत्वनियमस्य स्वर्गः फलमिति न दोषः ॥ ८९ ॥

( ४ ) **राघवानन्दः** । आहवेषु युद्धेषु । महीक्षितोराजानः स्वर्गंयान्तीति फलसंबन्धमात्रमत्र विधेयमन्येषांस्वधर्मत्वेन प्राप्तेः ॥ ८९ ॥

( ५ ) **नन्दनः** । अनिवर्तित्वस्यश्रेयस्करंचेत्कारणमाह आहवेष्विति । यद्यस्मात्स्वर्गंयान्ति तस्माच्छ्रेयस्करत्वमनिवर्तित्वमिति ॥ ८९ ॥

**न कूटैरायुधैर्हन्याद्युध्यमानोरणे रिपून् ॥ न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥ ९० ॥**

( १ ) **मेधातिथिः** । तानिदानीमदृष्टार्थान्नियमान्दर्शयति । कूटानि यानिबहिःकाष्ठमयान्यन्तर्निशितशस्त्राणि । कर्णिनःशराये शल्यस्यमूले मध्ये वा कर्णाकारैःफलकैःक्रियन्ते तेहिप्रविष्टादुरुद्धराभवन्ति उद्ध्रियमाणाःप्रहारैरभिन्नमपिशरीरैकदेशंभिन्दन्ति । दिग्धाविषोपलिप्ताः । अग्निनाज्वलितमादीपितंतेजोमयफलकंयेषां एतैर्नयोद्धव्यम् ॥ ९० ॥

---

( ९० ) नकूटैः=सुतीक्ष्णैः ( क )

( २ ) **सर्वज्ञनारायणः**। कूटैश्छद्मनिह्नुतैः। कर्णिभिः कर्णाकारफलकैः। दिग्धैर्विषाक्तैः। अग्निज्वलिततेजनैरग्निधमनोष्णीकृतफलकैः ॥ ९० ॥

( ३ ) **कुल्लूकः**। कूटान्यायुधानि बहिःकाष्ठादिमयान्यन्तर्गुप्तनिशितशस्त्राणि एतैः समरे युध्यमानः शत्रून्नहन्यान्नापि कर्ण्याकारफलकैर्बाणैर्नापि विषाक्तैर्नाप्यग्निदीप्तफलकैः ॥ ९० ॥

( ४ ) **राघवानन्दः**। तत्रान्याययुद्धं स्वर्गासाधनमिति निषेधति नकूटैरितिचतुर्भिः। कूटताहि दृश्यमानकाष्ठादिमयत्वेप्यन्तर्निहितलोहाद्यस्त्रयुक्तता। कर्णिभिः कर्णिकारवत्फलकैर्बाणैः। दिग्धैः विषाक्तैः। ज्वलिततेजनैः प्रदीप्तफलकैः ॥ ९० ॥

( ५ ) **नन्दनः**। सजातीयानिशास्त्राण्याह नकूटैरायुधैरिति। कूटैः कृत्रिमैः। कर्णयुक्तःशरः कर्णी। दिग्धोविषलिप्तः। अग्निज्वलिततेजनैः अग्निदीपितशल्यमुखैः ॥ ९० ॥

( ६ ) **रामचन्द्रः**। कर्णिभिः कर्णिसंज्ञैः चारणैः दिग्धैर्विषसंयुक्तैः अग्निज्वलिततेजनैः अग्निधमितोष्णीकृतफलकैः एतादृशैर्बाणैर्न युध्येत ॥ ९० ॥

## नच हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् ॥ न मुक्तकेशं नासीनं न तवास्मीति वादिनम्॥ ९१॥

( १ ) **मेधातिथिः**। रथस्थेन रथारूढएव हन्तव्यः स्थलस्थितोन हन्तव्यः। क्लीबोनपुंसकः पौरुषहीनोवा। अन्यत्र दृढआसीनउपविष्टोरथपृष्ठे भूमौ वा तवास्मीति वदति यस्तमपि न हन्यात्। शब्दनियमोऽत्र न विवक्षितः दीनंवदन्नेवंजातीयकैरपि शब्दैस्त्वदीयोहंत्वाश्रितोस्मीति नहन्तव्यः ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः**। स्थलारूढं युद्धभूमिंत्यक्त्वा स्थलेन्यैरप्राप्यर्थस्थितम् ॥ ९१ ॥

( ३ ) **कुल्लूकः**। स्वयंरथस्थोरथंत्यक्त्वा स्थलारूढंन हन्यात्। तथा नपुंसकंबद्धाञ्जलिमुक्तकेशमुपविष्टं त्वदीयोहमित्येवंवादिनं न हन्यात् ॥ ९१ ॥

( ४ ) **राघवानन्दः**। किंचैतानष्टादश न हन्यात्सतांधर्ममनुस्मरन्नित्याह नचेति त्रिभिः। स्वयंरथारूढः त्यक्तरथमरिंनहन्यात्। एवंक्लीबं क्लैब्यभाषिणं नपुंसकंवा। आसीनं रथमध्ये भूमौ वोपविष्टम्। तवास्मीतिवादिनं शरणागतम् ॥ ९१ ॥

( ५ ) **नन्दनः**। अवध्यानाह नचहन्यादिति। स्थलंतुङ्गप्रदेशम् ॥ ९१ ॥

## न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ॥ नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ ९२ ॥

( १ ) **मेधातिथिः**। न नग्नं न भग्नमिति वा पाठः। विसन्नाहस्य प्रतिषेधान्नग्नस्य प्राप्तिरेव नास्ति तेनशिरस्त्राणाद्यभावेनैकदेशेन नग्नतया नग्नोद्रष्टव्यः। भग्नस्यापि परावृत्तप्रतिषेधात्संमुखस्थोपि त्वया सह न युध्येयमिति वक्ति सनानुबन्धनीयोऽवश्यंयोद्धव्यमिति। नायुध्यमानंपश्यन्तं यः प्रेक्षकएव केवलःसन हन्तव्यः यस्तु प्रेक्षते युध्यतेच न तत्र प्रतिषेधः। परेण समागतः अन्येन सहयुध्यमानोऽन्येन नहन्तव्यः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः**। अयुध्यमानं पश्यन्तमित्येव समागतं युद्धार्थम् ॥ ९२ ॥

( ३ ) **कुल्लूकः**। सुप्तंमुक्तसन्नाहंविवस्त्रमनायुधमयुध्यमानंप्रेक्षकमन्येन सह युध्यमानंच न हन्यात् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । सुप्तं स्वमायितं श्रमवशात् । विसन्नाहं सन्नाहः कवचादिः तच्छून्यम् । पश्यन्तंरणोत्सवम् । परेणसमागतं परेण सह युद्धासक्तम् ॥ ९२ ॥

( ५ ) **नन्दनः** । विसन्नाहंविकवचम् । पश्यन्तंयुद्धदर्शिनम् । नहन्यादित्यनुवर्तते ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । विगतःसन्नाहोयस्यसविसंनाहस्तं नहन्यात् ॥ ९२ ॥

**नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् ॥ न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥ ९३ ॥**

( १ ) **मेधातिथिः** । आयुधव्यसनमायुधकृच्छ्रमायुधभङ्गः कुण्डलिभावः खड्गस्य ज्याछेदइत्येवमादिस्तंप्राप्तम् । आर्तः हतपुत्रभ्रात्रादिः । भीतंमुखरागादिनाविज्ञायशस्त्रसंमुखमपिपरावृत्तं प्रत्यावृत्यस्थितं एतेनियमाः । प्रतिषेधापेक्षः प्रत्यवायस्तदा च स्वर्गप्राप्तिवचनमर्थवादः किंपुनरत्रयुक्तं पुरुषार्थः प्रतिषेधात् न कलञ्जंभक्षयेदितिवत् तथाहि नञो-मुख्यार्थवृत्तिता भवति । सतांधर्ममिति शिष्टानामेषआचारइत्याह अनुस्मरन्निति ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । युद्धव्यसनं दैवकृतं रथभङ्गादिना । आयुधव्यसनमिति क्वचित्पाठः तत्रायुधव्यसनं खड्गादिभङ्गः । आर्तं पुत्रादिशोकार्तम् । अतिपरिक्षतमन्येनसह युध्वा । परावृत्तं युद्धात् ॥ ९३ ॥

( ३ ) **कुल्लूकः** । भग्नखड्गाद्यायुधंपुत्रशोकादिनाऽऽर्तंबहुप्रहाराकुलंभीतंयुद्धपराङ्मुखंच शिष्टक्षत्रियाणांधर्मंस्मरन् न हन्यात् ॥ ९३ ॥

( ४ ) **राघवानन्दः** । आयुधव्यसनंप्राप्तं भग्नरथाद्यायुधम् । आर्तं पुत्रादिशोकैः । परिक्षतमापादतलमस्तकक्षतक्षतम् । भीतं वेपमानं भयेन । परावृत्तं युद्धात्पराङ्मुखम् । सतांभीष्मादीनाम् ॥ ९३ ॥

( ५ ) **नन्दनः** । आयुधव्यसनं आयुधभङ्गादिकम् । आर्तं पुत्रादि । सतान्धर्मं कूटयुद्धादिभिरयोधनं स्थलारूढादीनाञ्चानुस्मरन् राजा नहन्यादित्यनुवर्तते ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । आयुधव्यसनंप्राप्तं भग्नायुधं आर्तं पुत्रादिशोकविकलं अतिपरिक्षतं शस्त्रादिपरिक्षतं क्षतसंयुक्तम् ॥ ९३ ॥

**यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ॥ भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥ ९४ ॥**

( १ ) **मेधातिथिः** । नैवंमन्तव्यं परावृत्तोयदि हन्यते तदा दुष्कृत्यहतस्तुनेति किंतर्हिपरावृत्तमात्रनिबन्धनंदोषवचनं किंचनपरावृत्तहतेनेयंबुद्धिः कर्तव्या अनुभूतखड्गप्रहारोस्म्यनृणः कृतभर्तृकृत्यइति । तथाविधः प्रहारोन कार्यो-दोषातिशयदर्शनेनेति दर्शयति । भर्तृसंबन्धिदुष्कृतमिति यच्च वचनमुत्तरत्रतदीयसुकृतग्रहणमिति तदर्थवादः । नह्यन्येन कृतंशुभमशुभंवाऽन्यस्यसंभवति नच सुकृतस्य नाशः किन्तु महता दुष्कृतेन प्रतिबन्धे चिरकालभाविता सुकृतस्य फलस्योच्यते ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । भर्तुर्यद्दुष्कृतमिति बहुतरदुष्कृतोत्पादोपलक्षणं न तुमुख्यार्थं अदुष्कृते भर्तरि तदभावापत्तेः ॥ ९४ ॥

( ३ ) **कुल्लूकः** । यस्तु योधोभीतः पराङ्मुखस्सन् युद्धे शत्रुभिर्हन्यते सपोषणकर्त्तुः प्रभोर्यद्दुष्कृतंतत्सर्वंप्राप्नोति शास्त्रप्रमाणके च सुकृतदुष्कृते यथा शास्त्रंसंक्रमयोग्यएवसिद्ध्यतः अतएवोपजीव्यशास्त्रेण बाधनान्न प्रतिपक्षानुमानोदयोपि एतच्च षष्ठे प्रियेषु स्वेषु सुकृतमित्यत्राविष्कृतमस्माभिः ॥ पराङ्मुखहतस्यस्यात्पापमेतद्विवक्षितम् । न त्वत्र प्रभुपापंस्या-

दिति गोविन्दराजः । मेधातिथिस्त्वर्थवादमात्रमेतन्निरूपयन् मन्ये नैतद्वयंयुक्तंव्यक्तमन्वर्थवर्जनात् । अन्यदीयपुण्यपापेऽन्यत्र संक्रमेतइति शास्त्रप्रामाण्याद्वेदान्तसूत्रकृता बादरायणेन निर्णीतोयमर्थइति यथोक्तमेव रमणीयम् ॥ ९४ ॥

( ४ ) **राघवानन्दः** । संग्रामे पराङ्मुखादेर्दोषमाह यस्त्विति द्वाभ्याम् । परस्थपापंपरत्र फलदमिति च न तस्य नातिभारः । मेधातिथिस्त्वाहार्थवादमात्रम् । भर्तुः शस्त्रभरणयोग्यस्य वान्यस्य यत्पापंतत्पराङ्मुखघातकानांभवेदिति गोविन्दराजः । प्रकरणादिति परैः शत्रुभिः परावृत्तः पराङ्मुखोयदि घात्यते तदापोषकस्य भर्तुर्यत्पक्षपातितया बुध्यति तस्य दुष्कृतंसर्वमाप्नोतीति वस्त्वर्थः । तस्मात्पराङ्मुखेन नभाव्यमितिभावः ॥ ९४ ॥

( ५ ) **नन्दनः** । अयोधस्य परावृत्तस्य दोषमाह यस्तुभीतइति । भर्तुः स्वामिनः ॥ ९४ ॥

**यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् ॥ भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥ ९५ ॥**

( १ ) **मेधातिथिः** । यच्चास्य सुकृतंकिंचिद्भर्ता तत्सर्वमादत्तइति । अमुत्रार्थमुपार्जितं अर्थोस्यास्तीत्यर्थः अर्शआदित्वादच् अमुत्रामुष्मिँल्लोके यत्प्रयोजनंतदर्जितंतदस्य निष्फलंभवति अमुत्रार्थोस्येति वा अमुत्रार्थंव्यधिकरणोबहुव्रीहिर्गमकत्वात्प्रायोजकाच्च ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । अस्यच परावृत्तहतस्य चकारात्परावृत्तमात्रस्य यदमुत्रार्थंचसुकृतं चकारादिहलोकार्थंच ॥ ९५ ॥

( ३ ) **कुल्लूकः** । पराङ्मुखहतस्य यत्किंचित्सुकृतंपरलोकार्थमर्जितमनेनास्ति तत्सर्वंप्रभुर्लभते ॥ ९५ ॥

( ४ ) **राघवानन्दः** । नकेवलमेवमपि त्वस्य पराङ्मुखस्य भर्ता पोष्टा परावृत्तः पराङ्मुखः सचासौ हतश्चेतितस्य परावृत्तहतस्य परलोकार्थमुपार्जितंसुकृतमुपादत्तइत्यन्वयः ॥ ९५ ॥

**रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून्स्त्रियः ॥ सर्वद्रव्याणि कुप्यंच योयज्जयति तस्य तत् ॥ ९६ ॥**

( १ ) **मेधातिथिः** । कुप्यं शयनासने ताम्रभाजनादियोयज्जयति तस्य तद्राज्ञः स्वामित्वाद्ग्रहणे प्राप्ते तदपवादार्थमेतत् । सुवर्णरूप्यभूम्यावासकादि राज्ञएव एवमर्थंपरिगणनम् विनायुधोवाहनादि राज्ञएव धान्यादीनांपृथगुपादानाद्धनशब्देन गोमहिष्यादिकमुच्यते । तथा चहीनाधनंप्राप्य तद्धनंममार्धमिति प्रयुञ्जते ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । धनं रत्नादि । सर्वद्रव्याणि वस्त्रादीनि । कुप्यंहेमरूप्यान्यधातुद्रव्यम् ॥ ९६ ॥

( ३ ) **कुल्लूकः** । राज्ञः स्वामिनः सर्वधनग्रहणे प्राप्ते तदपवादार्थमाह । रथाश्वहस्तिछत्रवस्त्रादि धनधान्यगवादि दास्यादिस्त्रियः सर्वाणि द्रव्याणि गुडलवणादीनि । कुप्यंच सुवर्णरजतव्यतिरिक्तंताम्रादिधनम् यः पृथग्जित्वा सततंगृहमानयति तस्यैव तद्भवति सुवर्णरजतभूमिरत्नाद्यनपकृष्टधनंतु राज्ञएव समर्पणीयं एतदर्थमेवात्र परिगणनीयम् ॥ ९६ ॥

( ४ ) **राघवानन्दः** । अरिधनस्य ग्रहीतारमाह रथाश्वमिति । दन्तिनं कुप्यं सुवर्णरजतं भूमिरत्नाद्यतिरिक्तं शयनासनादि ॥ ९६ ॥

( ५ ) **नन्दन** । योधैर्जितंद्रव्यं न राज्ञा हार्य्यमित्यभिप्रायेणाह रथाश्वमिति । स्वर्णरजतव्यतिरिक्तद्रव्यं कुप्यम् ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । रथादिकं योयज्जयति तस्य तत्सर्वंभवेत् । च पुनः कुप्यं सुवर्णरौप्यव्यतिरिक्तंधातुसंज्ञम् ॥ ९६ ॥

राज्ञश्च दद्युरुद्धारमित्येषा वैदिकीश्रुतिः ॥ राज्ञा च सर्वयोधेभ्योदातव्यमपृथग्जितम् ॥ ९७ ॥

[ भृत्येभ्योविभजेदर्थान्नैकः सर्वहरोभवेत् । नाममात्रेण तुष्येत छत्रेण च महीपतिः ॥ १ ॥ ]*

( १ ) मेधातिथिः । येन यज्जितंतेन तद्गृहीतव्यमित्यस्यायंविशेषउच्यते । स्वयमुद्धारंराज्ञेदद्युरुत्तमद्रव्यमुद्धृत्यदद्युरित्यर्थः । नसर्वंतैर्ग्रहीतव्यमित्येषावैदिकीश्रुतिः इन्द्रोवैवृत्रंहत्वेत्याद्युपक्रम्यसमहान्भूत्वादेवताअब्रवीदुद्धारंमउद्धरतेति । राज्ञावापृथग्भूयस्वयमूहनीयमत्रार्थविभागोनास्त्यनेनायंग्रामोजितएषांवापरकीयसामन्तादिः सर्वेणसर्वउत्खातमूलः सकृत्कृतस्तत्रराज्ञा लब्धप्रशमनंन्यायेन भृत्याः संविभजनीयाः ॥ ९७ ॥

( २ ) सर्वज्ञनारायणः । उद्धारं तन्मध्ये यदिष्टंवस्तु राज्ञस्तदुत्कृत्य दद्युः । तथाच श्रुतिः इन्द्रोवैवृत्रंहत्वेत्युपक्रम्य समहान्भूत्वादेवताअब्रवीदुद्धारंमउद्धरतेति यथाप्येतर्हीच्छतीति । पृथक्जितं यैर्योधैर्मिलित्वाजितं तेभ्योदद्यात् ॥ ९७ ॥

( ३ ) कुल्लूकः । अतएवाह । राज्ञइत्यादि उद्धारंयोद्धारोराज्ञेदद्युः । उद्ध्रियतइत्युद्धारः । जितधनादुत्कृष्टधनंसुवर्णरजतकुप्यादि राज्ञे समर्पणीयं करितुरगादिवाहनमपि राज्ञे देयं वाहनंच राज्ञउद्धारंचेति गौतमवचनात् । उद्धारदाने च श्रुतिः इन्द्रोवै वृत्रंहत्वेत्युपक्रम्य समहान् भूत्वा देवताअब्रवीत् उद्धारंसमुद्धरतेति । राज्ञाचापृथग्जितंसहजितंसर्वयोधेभ्योयथापौरुषं संविभजनीयम् ॥ ९७ ॥

( ४ ) राघवानन्दः । उद्धारं सुवर्णरजतभूम्याद्युत्कृष्टं करितुरगवाहनमपीति गौतमवचनात् । तच्छ्रेष्ठमपि अपृथग्जितं सहजितं दातव्यं यथापौरुषंविभजनीयम् ॥ ९७ ॥

( ५ ) नन्दनः । दद्युर्योधाः । उद्धारमुत्कृष्टद्रव्यंउद्धारंवा वैदिकीश्रुतिःशब्दः । अपृथक्जितंसर्वयोधैः सह जितम् ॥ ९७ ॥

( ६ ) रामचन्द्रः । तन्मध्ये रथाश्वादिमध्ये उद्धारंयदिष्टंवस्तु तदुद्धृतंराज्ञोदद्युरिति ॥ ९७ ॥

एषोऽनुपस्कृतः प्रोक्तोयोधधर्मः सनातनः ॥ अस्माद्धर्मान्नच्यवेत क्षत्रियोघ्नन् रणे रिपून् ॥ ९८ ॥

( १ ) मेधातिथिः । उपसंहारोयं योधायोद्धारस्तेषांधर्मोयोधधर्मः । अनुपस्कृतः अगर्हितः अविकृतोवा अतएवाह सनातनः स्वेच्छया प्रवर्तितोविकृतःस्यात् । नच्यवेत सर्वदानुतिष्ठेत् । क्षत्रियग्रहणंमुख्यस्तस्यात्राधिकारइति दर्शयितुं नत्वन्यस्य तत्स्थानापन्नस्य नायंधर्मइति ॥ ९८ ॥

( २ ) सर्वज्ञनारायणः । अनुपस्कृतोधुनाऽसंस्कृतः परंपरागतः इदानीमपि तदवस्थएव वर्तमानः ॥ ९८ ॥

( ३ ) कुल्लूकः । अविगर्हितएषोऽनादिसर्गप्रवाहसंभवतया नित्योयोधधर्मउक्तः । युद्धेशत्रून्हिंसन् क्षत्रियएतंधर्मंन त्यजेत् । युद्धाधिकारित्वात्क्षत्रियग्रहणं अन्योपि तत्स्थानपतितोन त्यजेत् ॥ ९८ ॥

( ४ ) राघवानन्दः । अनुपस्कृतः अविगर्हितः । योधर्मः कर्तव्याकर्तव्यविचारः । तस्माद्दृष्टलोभादपि नच्यवेत न पराङ्मुखः स्यात् । घ्नन्रिपून्नाशयन् ॥ ९८ ॥

( ५ ) नन्दनः । एषोनुपस्कृतः अकृतप्रयत्नः स्वभावसिद्धइत्यर्थः ॥ ९८ ॥

( ६ ) रामचन्द्रः । अनुपस्कृतः अधुनाऽसंस्कृतः परंपरागतोधर्मः इदानीमपितदवस्थएव ॥ ९८ ॥

---

*( ख )

**अलब्धंचैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ॥ रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥ ९९ ॥**

( १ ) **मेधातिथिः** । न क्षत्रियः संतुष्टः स्याद्ब्राह्मणवत्किन्त्वलब्धार्जनेयत्नंकुर्यात् । अर्जितंचधनंरक्षेद्रक्षितंचवर्धयेत्कोशसंचयंकुर्यात् ततः पात्रेभ्योदद्यात् नायथार्थव्ययंकुर्यात् । तदुक्तं कुर्यादल्पतरव्ययमिति ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । अलब्धं ग्रहणार्थम् ॥ ९९ ॥

( ३ ) **कुल्लूकः** । अजितंभूमिहिरण्यादिजेतुमिच्छेत् जितंप्रयत्नतोरक्षेत् रक्षितंचवाणिज्यादिना वर्द्धयेत् वृद्धंच पात्रेभ्योदद्यात् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । ननु राज्ञःपरिपूर्णधनत्वात्किमित्यायोधनोद्धारंगृह्णात्यतआह अलब्धमिति । लिप्सेत जयकरादिना । वर्धयेल्लभ्यादिना । एतदर्थमेव क्षीणवृत्तिर्वणिग्रक्षितः । पात्रेषु ब्राह्मणेषुनिक्षिपेत् दद्यात् ॥ ९९ ॥

**एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम् ॥ अस्य नित्यमनुष्ठानं सम्यक्कुर्यादतन्द्रितः ॥ १०० ॥**

( १ ) **मेधातिथिः** । पुरुषस्य येऽर्थास्तेषांप्रयोजनंचतुर्विधम् ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । चतुर्विधमलब्धलाभादि । पुरुषार्थोधर्मादिः प्रयोजनं यस्य तत्तथा ॥ १०० ॥

( ३ ) **कुल्लूकः** । एतच्चतुःप्रकारंपुरुषार्थोयः स्वर्गादिस्तत्प्रयोजनं यस्मादेवंरूपंजानीयादतोऽनलसः सन्सर्वदाऽनुष्ठानंकुर्यात् ॥ १०० ॥

( ४ ) **राघवानन्दः** । किंच एतदिति । एतदलब्धलिप्सादि चतुष्टयं पुरुषार्थचतुष्टयप्रयोजनार्थम् । अतस्तत्संपादयेत् ॥ १०० ॥

( ५ ) **नन्दनः** । अस्य चतुष्टयस्य ॥ १०० ॥

( ६ ) **रामचन्द्रः** । पुरुषार्थोधर्मादिः प्रयोजनं यस्य तत्पुरुषार्थप्रयोजनं एतदलब्धमित्यादि चतुर्विधंविद्यात् । अस्य पुरुषार्थस्य अनुष्ठानं विधानं अतन्द्रितः सन् सम्यग्यथा स्यात्तथा कुर्यात् ॥ १०० ॥

**अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ॥ रक्षितं वर्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥ १०१ ॥**

( १ ) **मेधातिथिः** । पुरुषस्ययेऽर्थास्तेषांप्रयोजनंचतुर्विधम् । चतस्रएताः क्रियास्तत्र प्रयोज्याअर्जनवर्धनरक्षणदानानि । उपकारवचनोऽर्थशब्दः पुरुषार्थसिद्ध्यर्थमेतत्प्रयोजनं तस्य चतुर्विधस्य प्रसक्तस्यनित्यमनुष्ठानंकुर्यात् ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः** । इच्छेद्दण्डेन ग्रहीतुंशत्रुतः वैश्यादेस्तुकुटुम्बिनः साम्नैव ॥ १०१ ॥

( ३ ) **कुल्लूकः** । अलब्धंयद्धस्त्यश्वरथपादातात्मकेन दण्डेन जेतुमिच्छेत् जितंच प्रत्यवेक्षणेन रक्षेत् रक्षितंच वृद्ध्युपायेन स्थलजलपथवाणिज्यादिना वर्द्धयेत् वृद्धंशास्त्रीयविभागेन पात्रेभ्योदद्यात् ॥ १०१ ॥

( ४ ) **राघवानन्दः** । केन किंसंपादयामीत्यपेक्षांपूरयति अलब्धमित्यादिः । साधनचतुष्टयंविधत्ते अलब्धमिच्छेदिति । दण्डेनेति शुल्कादेरुपलक्षणम् । वृद्ध्या वाणिज्यादिना ।दद्यान्निक्षेपयेदुत्तरकाले माभ्यै ॥ १०१ ॥

---

( ९९ ) चैव=नित्यं ( त, थ )
=वृद्ध्या ( ट )
=नीत्या ( ठ, ड )

( १०१ ) वृद्ध्या=युक्त्या ( ड )

( ५ ) **नन्दनः** । दण्डेन सैन्येन । अपेक्षयानुसन्धानेन ॥ १०१ ॥

**नित्यमुद्यतदण्डःस्यान्नित्यं विवृतपौरुषः ॥ नित्यं संवृतसंवार्योनित्यं छिद्रानुसार्यरेः ॥१०२ ॥**

( १ ) **मेधातिथिः** । उद्यतोदण्डोनेनेत्युद्यतदण्डः उद्यतउद्युक्तः सव्यापारइति यावत् । तत्र हस्त्यादिबलं नित्यंयोग्याभिविनयेन शिक्षा वाहनदमनादिभिर्विधेया करणयोग्या अभ्यासाश्च तद्वाहनादिषु वस्त्राभरणसंस्कारइत्यादिरुद्यतदण्डता तथा कुर्वतोस्योत्साहशक्तियोगोमण्डले प्रकाशी भवति । तथा नित्यंविवृतपौरुषः विवृतंप्रकाशतामागतंयत्कर्तव्यम् । सन्धिपालाटवीस्थानादिष्वाप्तपुरुषैरधिष्ठिताः सन्निरुद्धाः कवचिनः सततंजागरणार्थंनियोज्याः । नित्यंसंवृतसर्वार्थः संवरणीयंसंगोपनीयमात्मगतंकृत्वातत्स्थानंसंवृतंकर्तव्यमुपग्रहेण परोपजापाकरणेन च नित्यंछिद्रानुसरणेन सर्वेशत्रोःकृत्यपक्षंज्ञात्वा झटितितदुपजयः ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः** । उद्यतदण्डोविपरीताचारेषु । विधृतमत्यक्तं पौरुषं पुरुषकारोयेन सतथा । संवृतं निन्हुतं संचारकार्यं यस्य ॥ १०२ ॥

( ३ ) **कुल्लूकः** । नित्यंहस्त्यश्वादियुद्धादिशिक्षाभ्यासोदण्डोयस्य सतथा स्यात् नित्यंच प्रकाशीकृतमस्त्रविद्यादिना पौरुषंयस्य सतथा स्यात् नित्यंसंवृतंसंवरणीयंमन्त्राचारचेष्टादिकंयस्य सतथा स्यात् नित्यंच शत्रोर्व्यसनादिरूपछिद्रानुसंधानंतत्परः स्यात् ॥ १०२ ॥

( ४ ) **राघवानन्दः** । किंच नित्यमिति । विवृतपौरुषः विवृतं प्रकाशीकृतं योधादिष्वस्त्रविद्यादिप्रकाशरूपं पौरुषं येनसः । संवृतसंवार्यः संवृतः संवरणीयः दूतादिर्मन्त्रश्च यस्यसः । न केवलमेवं परच्छिद्रानुसरणमप्यवश्यंकर्तव्यमस्तीत्याह नित्यमिति । अरेश्छिद्रानुसारी स्यादिति ॥ १०२ ॥

( ५ ) **नन्दनः** । धर्मान्तिरमाह नित्यमिति । उद्यतदण्डःस्यात् कृतापराधदमनोद्यतः स्यात् । संवृतसञ्चारः अच्छिद्रकार्यव्यापारः ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । नित्यंसंवृतसन्धानः अरेः छिद्रानुसारी छिद्रान्वेषी स्यात् ॥ १०२ ॥

**नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ॥ तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १०३ ॥**

( १ ) **मेधातिथिः** । अनन्तरस्यफलंसर्वंजगदुद्विजतेबिभेति प्रतापख्यातिभर्वति । तस्मात्सर्वाणि भूतानि स्वप्रकृतीः परांश्चदण्डेनैव प्रसाधयेत् । एवंयत्नवतोभीताःशत्रवोनमन्त्ययत्नेनैव ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वाणि भूतानि स्वकर्तव्येऽनवस्थितानि ॥ १०३ ॥

( ३ ) **कुल्लूकः** । यस्मान्नित्योद्यतदण्डस्य जगदुद्विजेदिति तस्मात्सर्वप्राणिनोदण्डेनैवात्मसात्कुर्यात् ॥ १०३ ॥

( ४ ) **राघवानन्दः** । समुद्यतदण्डस्य प्रत्यक्षंफलमाह नित्यमिति । उद्विग्नंसज्जगदस्वातन्त्र्यान्नानिष्टाय समर्थमितिनित्यदण्डःप्रशस्तइतिभावः ॥ १०३ ॥

**अमाययैव वर्त्तेत न कथंचन मायया ॥ बुध्येतारिप्रयुक्तांच मायां नित्यं स्वसंवृतः ॥ १०४ ॥**

( १ ) **मेधातिथिः** । मायाछद्म तेन नवर्तेत नच परप्रकृतीरज्ञातरूपाउपजयेत् । अरिणा प्रयुक्तांच मायांयथावद्बुध्येत बुद्ध्या कृत्वोपजापंकुर्यात् तत्रकृत्यपक्षश्चतुर्विधः क्रुद्धलुब्धभीतावमानितैः । तत्रयेनहृतंशल्यंकिंचिदुपकारोवा दर्शि-

तःसविप्रलभ्यतेप्रसादेन नियोज्यतेअवमन्यते वा तदर्थोपि तत्समानः शल्योपकारी क्रुध्यति नास्यास्मदीयं शल्यमुपकारोवोपयुज्यते तादृशाउपजापसहाभवन्ति । तथावाल्लभ्येनोपगृहीतः पश्चान्मानाधिकाराभ्यांभ्रष्टः प्रवासितबन्धुस्तद्वल्लभः प्रसभमभिपूज्य स्वीकृतः सकुल्यैरन्तर्हितः सर्वस्वमाहारितस्तत्समानकर्मविद्योन्यः पूज्यते सोवधीर्यतइत्येवमादिक्रुद्धः केनचित्कृतपैशुन्यंतत्समानदोषेभ्योदण्डिनः तंसर्वाधिकारस्थाः सहसोपपादितार्थइत्यादि लुब्धवर्गः । परिक्षीणः कदर्योव्यसनबहुलइत्यादिर्भीतवर्गः । आत्मसंभावितः शत्रुपूजार्चनरतः तीक्ष्णसाहसिकोहोमेनासंतुष्टइत्येवमादिरवमानितवर्गः । एतत्परस्योपजपेत् आत्मनश्चरक्षेत् ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । माया वञ्चनेच्छा । सुसंवृतोरक्षितस्वच्छिद्रः ॥ १०४ ॥

( ३ ) **कुल्लूकः** । मायया छद्मतयाऽमात्यादिषु न वर्त्तेत तथासति सर्वेषामविश्वसनीयः स्यात् । धर्मरक्षार्थंयथातत्त्वेनैवव्यवहरेत् यत्नकृतात्मपक्षरक्षश्च शत्रुकृतांप्रकृतिभेदरूपांमायांचारद्वारेण जानीयात् ॥ १०४ ॥

( ४ ) **राघवानन्दः** । किंच स्वप्रजास्वमायांविधत्ते अमाययैवेति । अरिप्रयुक्तां तत्कृतप्रकृतिभेदादिकाम् । सुसंवृतोऽप्रकटदूतद्वारेणेत्यर्थः ॥ १०४ ॥

( ५ ) **नन्दनः** । कथञ्चन आपद्यपीत्यर्थः । सुसंवृतःप्रच्छन्नोभूत्वा ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । सुसंवृतः आच्छादितः अरिप्रयुक्तांमायांबुध्येत ॥ १०४ ॥

**नास्य छिद्रंपरोविद्याद्विद्याच्छिद्रं परस्य तु ॥ गूहेत्कूर्मइवाङ्गानि रक्षेद्विवरमात्मनः ॥ १०५ ॥**

**[ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति॥१॥]***

( १ ) **मेधातिथिः** । एषएवार्थः पुनरुच्यते । तथायत्नातिशयंकुर्याद्यथापरस्यछिद्रमन्विच्छेदात्मनश्चरक्षेत् । यएवंक्रुद्धादिः कापटिकादिवीरपुरुषैर्ज्ञायते सएवात्मीयोनुनीयतइति कूर्मवदङ्गंगूहेद्रक्षेद्विवरमात्मनः परोपजापाच्छिद्ररक्षणंमहाप्रयोजनमित्येतदनेनाह ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । कूर्मोयथाङ्गानिशिरआदीन्यन्तर्निवेश्य रक्षति तथाङ्गानि सप्त स्वाम्यादीनि गुप्तस्थापनेन रक्षेत् । विवरं प्रहारावकाशम् ॥ १०५ ॥

( ३ ) **कुल्लूकः** । तथा यत्नंकुर्याद्यथास्य प्रकृतिभेदादिछिद्रंशत्रुर्नजानाति शत्रोस्तु प्रकृतिभेदादिकंचारैर्जानीयात् । कूर्मोयथा मुखचरणादीन्यङ्गान्यात्मदेहे गोपायत्येवंराज्याङ्गान्यमात्यादीनि दानसंमानादिनाऽऽत्मसात्कुर्यात् दैवाच्च प्रकृतिभेदादिरूपे छिद्रे जाते यत्नतः प्रतीकारंकुर्यात् ॥ १०५ ॥

( ४ ) **राघवानन्दः** । किंच नेति । परस्यारेः । कूर्मइवेति अयमर्थः । यथा कूर्मःकरचरणादिपरेभ्योरक्षंस्तद्विवरमपि गोपायत्येवंराजामात्यादीन्दानमानाभ्यांरक्षन्परेभ्यःस्वछिद्रंरक्षेत् । अमात्यादयोहि विक्रियमाणाः स्वच्छिद्रंप्रकटयेयुःपरच्छिद्रंचगोपयेयुरिति ॥ १०५ ॥

( ५ ) **नन्दनः** । अङ्गानि कर्म्मारम्भोपायः पुरुषद्रव्यसंपद्विनिपातप्रतीकारदेशकालविभागकार्यसिद्धिश्चेति । रक्षेत् गूहेत् ॥ १०५ ॥

---

* ( ख )

( ६ ) रामचन्द्रः । आत्मनः छिद्रं हानिवृद्धिं परः शत्रुर्न विद्यात् । विवरं महारावकाशं रक्षेत् ॥ १०५ ॥

**बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ॥ वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥ १०६ ॥**

( १ ) **मेधातिथिः** । यथाअप्सुदुर्गाश्रयमपि मत्स्यबलंस्वभावतस्तद्ग्रहणार्थंबकःपर्युदासनपरतया तद्ग्रहणोपायं ध्यानादियोगादासादयति एवमर्थचिन्ताऽभियोगातिशयेनसुदुष्प्रापाअप्यर्थाआसाद्यन्तइति मन्वानोनिर्वेदंगच्छेत् । यथा चशशोऽल्पकायत्त्वाच्छक्नोति निष्पतितुमुपरिसंघादपि तथाएकोप्यसहायः सर्वतः समुत्थितःआसन्नप्रकोपोशक्तोवस्था-तुंदुर्गेऽरिसंपातंकृत्वा तस्माद्विनिष्पतेद्गुणवतिसंश्रयार्थम् । यथा च वृकः पशुग्रहणाभियोगाच्छ्रलग्नमांसाद्यवलुम्पते एवंस्वरक्षः परइति मत्वा तद्ग्रहणाभियोगेनमोक्तव्योभविष्यति सकालोयत्र वृकवदवलुंपिष्यते । यथा सिंहोमहाकायानपि हस्त्यादीन्हन्ति पराक्रमोत्साहशक्तियोगात् एवमहदरिबलमितिनभेतव्यं अल्पप्राणेनापिकदाचिदुत्साहवतामहाप्राणोनिहन्यतइति ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । बकवद्गुप्तप्रचारः कर्तव्यंचिन्तयेत् यथा सत्यक्तचेष्टोदुर्गस्थानामपि मत्स्यानामन्तरंपश्यति । सिंहवच्छौर्यमात्रेण न मायया तदसंभवे वृकवत्परस्यान्तरंदृष्ट्वा ऽवलुम्पेत गृह्णीयात् । व्याधवेष्टितोयथा शशः शैघ्र्यादलक्षितगत्या बहिर्याति तथा शत्रुवेष्टितोप्यशक्तो निःसरेत् ॥ १०६ ॥

( ३ ) **कुल्लूकः** । यथा बकोजले मीनमतिचञ्चलस्वभावमपि मत्स्यग्रहणादेकतानान्तःकरणश्चिन्तयत्येवंरहसि सुविहितरक्षस्यापि विपक्षस्य देशग्रहणादीनर्थांश्चिन्तयेत् । यथा च सिंहः प्रबलमतिस्थूलमपि दन्तीबलंहन्तुमाक्रमत्येवमल्पबलोबलवतोपक्रान्तः संश्रयाद्युपायान्तरासंभवे सर्वशक्त्या शत्रुंहन्तुमाक्रमेत् । यथा च वृकः पालकृतरक्षणमपि पशुंदैवात्पालानवधानमासाद्यव्यापादयत्येवंदुर्गाद्यवस्थितमपि रिपुंकथंचित्प्रमादमासाद्य व्यापादयेत् ।यथा शशः वधोद्धुरविविधव्याधमध्यगतोपि कुटिलगतिरुत्प्लुत्य पलायतएवंस्वयमबलोबलवदरिपरिवृतोपि कथंचिदरिध्यामोहमाधाय गुणवत्पार्थिवान्तरंसंश्रयितुमुपसर्पेत् ॥ १०६ ॥

( ४ ) **राघवानन्दः** । राज्ञोवृत्त्यन्तरमाह बकवच्चेति । बकवदेकान्तवासित्वं तेन सयथा जलान्तर्गतमतिचपलमपि मत्स्यंगृह्णाति तद्वद्विविक्तः परराष्ट्रग्रहणंचिन्तयेत् । सिंहवत् शूरत्वप्रकटनं सयथाल्पदेहोपि करिणमादत्ते तद्वदल्पसैन्योपि सामदानभेदेषूपायेषु क्षीणेषु विजयाय पराक्रमेत् । वृकवन्नित्यपशुग्रहणाभियोगात्परग्रहणोपायत्वं परतोऽप्रमादित्वंच । शशवद्व्याधमध्यतः कुटिलगतितयाऽरिमध्यतःपलायनंच शिक्षेदित्यनुषज्यते ॥ १०६ ॥

( ५ ) **नन्दनः** । एकाग्रत्वे बकेन सादृश्यम् । निर्भयत्वे सिंहेन । क्रूरत्वे वृकेण । क्षिप्रकारित्वे शशेन ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । अर्थान् कार्याणि वृकवत्परस्यान्तरंदृष्ट्वा अवलुम्पेत् गृह्णीयात् । च पुनः शशवद्विनिष्पतेत् शशोयथा अलक्षितगत्या बहिर्याति तथा शत्रुवेष्टितोऽलक्षितोनिःसरेत् ॥ १०६ ॥

**एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ॥ तानानयेद्वशंसर्वान्सामादिभिरुपक्रमैः ॥ १०७ ॥**

( १ ) **मेधातिथिः** । ये परिपन्थिनः प्रतिपक्षतया वर्तन्ते ते वशमानेतव्याः नत्वानुकूल्येन ये वर्तन्तेतेऽपि सामादिभिः पूर्वं प्रथमतएवदण्डेन ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । उपक्रमैरुपायैः ॥ १०७ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण विजयप्रवृत्तस्य नृपतेर्येविजयविरोधिनोभवेयुस्तान्सर्वान्सामदानभेददण्डैरुपायैः वशमानयेत् ॥ १०७ ॥

( ४ ) **राघवानन्दः** । राज्ञःसदैवारातिजयायेतिकर्तव्यतामाह एवमितिचतुर्भिः । परिपन्थिनः शत्रवः । उपक्रमैः उपसमीपंक्रम्यन्ते शत्रवोयैस्ते उपक्रमाः उपायास्तैरिति ॥ १०७ ॥

( ५ ) **नन्दनः** । उपक्रमैरुपायैः ॥ १०७ ॥

## यदि तेतु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ॥ दण्डेनैव प्रसह्यैतांश्छनकैर्वशमानयेत् ॥ १०८ ॥

( १ ) **मेधातिथिः** । सामादिभिरशक्याद्दण्डेन वशमानितव्याइति यदुक्तंतद्दण्डेन प्रसह्य भूयः शनकैर्यावद्वशे दण्डोपक्रमस्तेन नसाहसिकतया ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रथमैस्त्रिभिः सामदानभेदैः । प्रसह्याभिभूय शनकैः क्रमेण यदि सामसाध्यता स्यादित्याशया ॥ १०८ ॥

( ३ ) **कुल्लूकः** । ते च विजयविरोधिनोयद्याद्यैस्त्रिभिरुपायैर्न निवर्त्तन्ते तदा बलाद्देशोपमर्द्दादिना युद्धेन शनकैर्लघुगुरुदण्डक्रमेण दण्डेन वशी कुर्यात् ॥ १०८ ॥

( ४ ) **राघवानन्दः**। तत्र चतुर्थदण्डस्यकालमाह यदीति । सामदानभेदैः प्रथमैः प्राथमिकैः । एतान्दण्डेन वशमानयेदित्यन्वयः। तत्र चतुर्णांदण्डादीनां साम्ना साधून्वशयति दण्डेनोग्रान् दानेन भिन्नान् लुब्धान्वा भेदेन संहतान् तैरसाध्यत्वे दण्डयेदिति तत्रापि शनैरन्यथा ते प्राणोद्यतानवशमेयुरिति भावः ॥ १०८ ॥

( ५ ) **नन्दनः** । उपक्रमेषु क्रममाह यदितेत्विति । ते परिपन्थिनस्तिष्ठेयुः । वशइतिविभक्तिविपरिणामः प्रथमैःसामदानप्रभेदैः अपिशब्देन दण्डस्य मुख्यत्वंसूचितम् ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । ते परिपन्थिनः प्रथमैः त्रिभिरुपायैर्वशे न तिष्ठेयुर्यदि तान्दण्डेनैव वशंप्रसह्यानयेत् ॥ १०८ ॥

## सामादीनामुपायानां चतुर्णामपि पण्डिताः ॥ सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये ॥१०९॥

( १ ) **मेधातिथिः** । वक्ष्यमाणानांसामादीनामुपायानांसामदण्डौनिगद्येते प्रशस्यतया सतिसाम्निक्षिप्रंकंपोनभवतिदण्डे तु सर्वसिद्धिः ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । सामदण्डौ प्रशंसन्ति साम्नि धनादिक्षयाभावात् दण्डेच दैवाज्जयेकीर्तिर्मृत्यौस्वर्गइति ॥ १०९ ॥

( ३ ) **कुल्लूकः** । चतुर्णामपि सामादीनामुपायानांमध्यात्सामदण्डावेव राष्ट्रवृद्ध्यर्थंपण्डिताः प्रशंसन्ति साम्नि प्रयासधनव्ययसैन्यक्षयादिदोषाभावात् दण्डे तु तत्सद्भावेऽपि कार्यसिद्ध्यतिशयात् ॥ १०९ ॥

( ४ ) **राघवानन्दः** । तत्र च स्वराष्ट्रे सामदण्डौ परराष्ट्रे दानभेदौ तावेव प्रशस्तावित्याह सामादीनामिति ॥ १०९ ॥

( ५ ) **नन्दनः** । शत्रुष्वेवायंक्रमोनराष्ट्रइत्याह । साधुषु सामप्रयोक्तव्यमसाधुषु दण्डंतेन राष्ट्राभिवृद्धिरित्यर्थः ॥ १०९ ॥

**यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ॥ तथा रक्षेन्नृपोराष्ट्रं हन्याच्च परिपन्थिनः ॥ ११०॥**

( १ ) **मेधातिथिः** । येराजानमभिद्रुह्यन्ति तेषांयेसुहृद्बान्धवाः संबन्धोपसर्पिणोवा न ते विनाशयितव्याः यदि न तत्कार्याभ्यन्तराः यएवदुष्टास्तएवनिग्राह्यानतत्संबन्धिनइत्येतन्निर्दातृदृष्टान्तेन प्रतिपाद्यते । यथाधान्यकक्षयोःसहोत्पन्नयोरत्यन्तसहितयोरपि नैपुण्येन धान्यंरक्षति कक्षमुद्धरति । एवंस्वराष्ट्रेयावन्तस्तेषांसुहृदावपि तयोर्दोषवान्यः सएव निग्राह्योन यः सुसङ्गतोपि अतःसाध्वसाधुविवेकेन साधवोरक्ष्याअसाधवोनिग्राह्याः ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । निर्दाता तृणच्छेत्ता कक्षं तृणादि धान्यमध्यगतमुद्धरेदुत्पाटयेत् । राष्ट्रं स्वराष्ट्रं । परिपन्थिनश्चौरादीन् ॥ ११० ॥

( ३ ) **कुल्लूकः** । यथा क्षेत्रे धान्यतृणादिकयोः सहोत्पन्नयोरपि धान्यानि लवनकर्त्ता रक्षति तृणादिकंचोद्धरत्येवंनृपतीराष्ट्रे दुष्टान्हन्यान्नत्वदुष्टांस्तदीयसहजान्भ्रातॄनपि निर्दातृदृष्टान्तादवसीयते शिष्टसहितंच राष्ट्रंरक्षेत् ॥ ११० ॥

( ४ ) **राघवानन्दः** । किंचान्यत् यथेति । निर्दाता धान्यतृणाद्युत्पाटनकर्ता सयथा कक्षंतृणाद्युद्धरति धान्यंच रक्षत्येवं राजा दण्डादि कुर्वन्नपि प्रजारक्षेत् हन्यादेव परिपन्थिनोदस्यून् ॥ ११० ॥

( ५ ) **नन्दनः** । अत्र दृष्टान्तमाह यथेति । निर्दाता भूमेः खण्डयिता कुद्दालादिभिः कृषीवलइतियावत् । परिपन्थिः नअसाधून् ॥ ११० ॥

( ६ ) **रामचन्द्रः** । यथा निर्दाता क्षेत्रप्ररूढधान्यमध्यस्थिततृणोद्धर्ता तृणमुद्धरति धान्यंरक्षति तथा नृपोराष्ट्रंरक्षेत् परिपन्थिनः चौरान् हन्यात् ॥ ११० ॥

**मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ॥ सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥१११॥**

( १ ) **मेधातिथिः** । यस्तु राजा पूर्वोक्तविवेकमकृत्वा मोहेनानवेक्षया स्वराष्टंकर्शयतिस दण्डैः सह भ्रश्यत्यचिराद्राज्याज्जनपदानुरागेण प्रकृतिकोपेन जीविताच्च साहसिकैरेकाकिभिरपि जीवितनिरपेक्षैर्हन्यते ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । कर्शयति चौराद्युपघातैः क्षीणंकरोति ॥ १११ ॥

( ३ ) **कुल्लूकः** । योराजाऽनवेक्षया दुष्टशिष्टाज्ञानेन सर्वानेव स्वराष्ट्रीयजनान् शास्त्रीयधनग्रहणमारणादिकष्टेन पीडयति सशीघ्रमेव जनपदवैराख्यप्रकृतिकोपाधर्मैर्राजा राज्याज्जीविताच्च पुत्रादिसहितोभ्रश्यते ॥ १११ ॥

( ४ ) **राघवानन्दः** । दण्डे क्रियमाणेपि राज्यंयथा न नश्यति तथा वर्तितव्यमन्यथा सदृष्टान्तंदोषमाह मोहादितिद्वाभ्याम् । कर्षयति लोभेनाधिकदण्डादिना पीडयति ततोऽनवेक्षया शास्त्रमर्यादोल्लङ्घनेन नकेवलंराज्याद्भ्रश्यते स्वयंभ्रष्टोपितुजीवितादायुषः नंक्ष्यतीत्यध्याहार्यम् ॥ १११ ॥

( ५ ) **नन्दनः** । विपर्ययेणार्थश्लोकद्वयेनाह मोहाद्राजेति ॥ १११ ॥

( ६ ) **रामचन्द्रः** । राजा स्वराष्ट्रंस्वराज्यमनवेक्षयाऽविचारेण कर्शयति क्षीणंकरोति सराज्याद्भ्रश्यते सबान्धवोजीविताच्च भ्रश्यते ॥ १११ ॥

**शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा॥तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥११२॥**

( १ ) **मेधातिथिः** । स्वराष्टेऽत्यन्तमवहितेनानुरागउत्पादनीयस्तद्धि शरीरस्थानीयं शरीरे कर्शितेऽपथ्यभोजनरुक्षभोजनादिभिर्यथा प्राणाउत्क्रामन्ति एवंराष्ट्रकर्शनादपि ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । राष्ट्रस्य स्वराष्ट्रस्य कर्शनात् ॥ ११२ ॥

( ३ ) **कुल्लूकः** । यथा प्राणभृतामाहारनिरोधादिना शरीरशोषणात्प्राणाः क्षीयन्तएवंराज्ञामपि राष्ट्रपीडनात्प्रकृतिकोपादिना प्राणाविनश्यन्ति तस्मात्स्वशरीरवद्राज्ञा राष्ट्रंरक्षणीयमित्युक्तम् ॥ ११२ ॥

( ४ ) **राघवानन्दः** । अन्नाद्यभावेन शरीरकर्षणेसति यथा प्राणाःक्षीयन्ते तथा राष्ट्रकर्षणाद्राजप्राणाःप्रजासंतापकोपाद्यैःक्षीणतामीयुर्विनश्यंतीति भावः ॥ ११२ ॥

**राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ॥ सुसंगृहीतराष्ट्रोहि पार्थिवः सुखमेधते ॥ ११३ ॥**

( १ ) **मेधातिथिः** । संग्रहोरक्षतिधनं सुसंगृहीतंरक्षाविधानेनवशीकृतंपरिपालितंवा येन स्वराष्ट्रंसपार्थिवः सुखमेधते ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । संग्रहआत्मीयताकरणे ॥ ११३ ॥

( ३ ) **कुल्लूकः** । राष्ट्रस्य रक्षणे च वक्ष्यमाणमिममुपायमनुतिष्ठेत् यस्मात्संरक्षितराष्ट्रोराजाऽनायासेन वर्द्धते ॥ ११३ ॥

( ४ ) **राघवानन्दः** । अतोराज्यरक्षणे यत्नआस्थेयइत्याह राष्ट्रस्येति । राष्ट्रस्य स्वराष्ट्रस्य प्रतियोग्यनपेक्षाश्रवणादिदमिति षड्भिर्वक्ष्यमाणम् । सुसंगृहीतः ग्रामाध्यक्षादिना राष्ट्रोयस्यसः ॥ ११३ ॥

( ५ ) **नन्दनः** । यस्मादेवंतस्माद्राष्ट्रस्येति संग्रहे संरक्षणे । इदंवक्ष्यमाणम् ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । राष्ट्रस्य ग्रहे स्वायत्ती करणे आत्मवशीकरणे ॥ ११३ ॥

**द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ॥तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम्॥११४॥**

( १ ) **मेधातिथिः** ।द्वयोर्ग्रामयोर्मध्ये गुल्मंकुर्यात् । गुल्मोरक्षितृपुरुषसमूहस्तेनैवाधिष्ठितंसंग्रहंकुर्यात् । तद्युक्तमधिष्ठातारंपुरुषंकुर्यात् । अधिकारिसंग्रहइहोच्यते एवंत्रयाणांपञ्चानांच । अथवा राजभाव्यार्थग्रहणस्थानंसंग्रहः ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । द्वयोर्ग्रामयोरेकं अपरंत्रयाणां अन्यत्पञ्चानांग्रामाणां अन्यद्ग्रामशतस्येति पूर्वपूर्वमुत्तरोत्तराशक्ये रक्ष्यस्य स्थानस्य रक्षकंगुल्मं स्तेनादिरक्षार्थंस्थापितं पदात्याद्यधिष्ठितमिति तदपि केनचिदधिष्ठितंकार्यमित्यर्थः । ग्रामशतानामिति शतस्य पञ्चशतस्य सहस्रस्य चेति बहुवचनार्थः । एवंराष्ट्रस्य संग्रहंकुर्यादित्युपसंहारः ॥ ११४ ॥

( ३ ) **कुल्लूकः** । द्वयोर्ग्रामयोर्मध्ये त्रयाणांवा ग्रामाणांपञ्चानांवा ग्रामशतानांगुल्मंरक्षितृपुरुषसमूहंसत्यप्रधानपुरुषाधिष्ठितंराष्ट्रस्य संग्रहंरक्षास्थानंकुर्यात् । अस्य लाघवगौरवापेक्षश्चोक्तविकल्पः ॥ ११४ ॥

( ४ ) **राघवानन्दः** । किंच द्वयोरिति । ग्रामयोर्ग्रामाणांवा मध्येगुल्मं रक्षितृपुरुषसमूहमध्ये प्रधानपुरुषैरधिष्ठितंच राष्ट्रस्यसंग्रहं रक्षास्थानं कुर्यादित्यन्वयः । द्वयोरित्यादि दस्युलाघवगौरवापेक्षया विकल्पः । तत्फलंदस्युनिग्रहः ॥ ११४ ॥

( ५ ) **नन्दनः** । द्वयोर्ग्रामयोस्त्रयाणांपञ्चानांच ग्रामाणांग्रामशतानांमध्ये राष्ट्रगुप्तये कुर्यात् । व्यूढंसैन्यंगुल्मम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । द्वयोःत्रयाणां पञ्चानां मध्येगुल्ममधिष्ठितं रक्षकं स्वस्थानानाम् । एवंराष्ट्रस्यसंग्रहंकुर्यात् ॥ ११४ ॥

**ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा ॥ विंशतीशं शतेशं च सहस्रपतिमेव च ॥ ११५ ॥**

( १ ) **मेधातिथिः** । एकैकस्मिन्ग्रामेऽधिपतिंकुर्यात् । तदुपरिदशग्रामपतिम् । एवंसर्वत्र ॥ ११५ ॥

( २ ) । **सर्वज्ञनारायणः** । ग्रामस्याधिपतिंकरग्रहाद्यर्थम् ॥ ११५ ॥

( ३ ) **कुल्लूकः** । एकग्रामदशग्रामाद्यधिपतीन्कुर्यात् ॥ ११५ ॥

( ४ ) **राघवानन्दः** । ग्रामादीनांगुणदोषज्ञानप्रकारमाह ग्रामस्येतित्रिभिः । विंशतीशं ग्रामाणांविंशतेरीशमीश्वरम् । एवमुत्तरत्र ॥ ११५ ॥

( ५ ) **नन्दनः** । विंशतीशंविंशतिग्रामेशं । एवमुत्तरत्रापि ॥ ११५ ॥

( ६ ) **रामचन्द्रः** । ग्रामाध्यक्षानाह ग्रामस्येति । एकंकरार्थंग्रामाधिपंकुर्यात् । शतेशं शतानां ईशःशतेशःतं शतग्रामाधिपंकुर्यात् । तथासहस्राधिपतिम् ॥ ११५ ॥

**ग्रामदोषान्समुत्पन्नान्ग्रामिकः शनकैः स्वयम् ॥ शंसेद्ग्रामदशेशाय दशेशोविंशतीशिने ॥११६ ॥**

( १ ) **मेधातिथिः** । येग्रामदोषाएकग्रामाधिकृतेननशक्यन्ते समाधातुंतान्दशेशाय निवेदयेत् एवमशक्तौयावत्सहस्रपतिर्विज्ञाप्यः ॥ ११६ ॥ ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । दोषान् तद्ग्रामीयजनविद्रवादीन् । अत्र विंशतीशमित्यादि यावति रक्षिते ग्रामाणां रक्षा भवति तस्मात्परम् । विंशतिग्रामानीशितुंशीलमस्य विंशतीशी ॥ ११६ ॥

( ३ ) **कुल्लूकः** । ग्रामाधिपतिश्चौरादिदोषान्ग्रामे संजातानात्मना प्रतिकर्तुमक्षमोऽनुत्कृष्टतया स्वयंदशग्रामाधिपतये कथयेत् एवंदशग्रामपतयोविंशतिग्रामस्वाम्यादिभ्यः कथयेयुः तथाचसतिसम्यक्चौरादिकण्टकोद्धारोभवति ॥ ११६ ॥ ॥ ११७ ॥

( ४ ) **राघवानन्दः** । शनकैरित्यनेनेन हठात् । तेन स्वस्मिन्नपि दोषाशङ्का वारिता । स्वयमित्यनेनौद्धत्यंभेदकत्वंच निरस्तम् । तेन स्वयंगत्वा शंसेत्कथयेत् ग्रामदेशेशायेत्यन्वयः । एवमुत्तरत्र विंशतीशिने विंशतिग्रामाधिपतये ॥ ११६ ॥

( ५ ) **नन्दनः** । ग्रामिकोग्रामाध्यक्षः । शनकैरत्वरया । यथातथ्यंनिरूप्य । स्वयंशंसेन्न परमुखेन । दशेशाय दशग्रामेशाय विंशतिग्रामाणामीशितुंशीलमस्येति विंशतीशः ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । युग्मं ग्रामदोषानिति । ग्रामिकः एकग्रामाधिपः समुत्पन्नान् ग्रामदोषान् ग्रामदशेशाय शंसेत् । दशेशः दशग्रामाधिपः विंशतीशिने शंसेत् ॥ ११६ ॥

**विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ॥ शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ ११७ ॥**

( २ ) **सर्वज्ञनारायणः** । तत्सर्वं दोषजातम् ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । विंशतीशः शतेशाय निवेदयेत् । शतेशः सहस्रपतये शंसेत् ॥ ११७ ॥

**यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ॥ अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्॥११८॥**

( १ ) **मेधातिथिः** । एकग्रामाधिकृतस्य वृत्तिरियम् । ग्रामिकोग्रामाधिकृतस्तान्यवाप्नुयाद्गृह्णीयात् वृत्त्यर्थंराज्ञेप्रदातव्यानिग्रामवासिभिः । अन्नादीनि तु धान्यादेःषष्ठाष्टमभागादिः यथावक्ष्यति धान्येऽष्टमंविंशामित्यादि ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः**। राजप्रदेयानि एतावदत्र प्रत्यहं राजाधिकृतपुरुषाय भक्तार्थंदेयमिति प्रागेव नियमितानि। आदिपदात्तैलादीनि। ग्रामीकोग्रामाधिपतिः ॥ ११८ ॥

( ३ ) **कुल्लूकः**। एकग्रामाधिकृतस्य वृत्तिमाह यान्यन्नपानेन्धनादीनि ग्रामवासिभिः प्रत्यहंराज्ञे देयानि न त्वब्द-करंधान्यानामष्टमोभागइत्यादिकंतानि ग्रामाधिपतिर्वृत्त्यर्थंगृह्णीयात् ॥ ११८ ॥

( ४ ) **राघवानन्दः**। किंच प्रजाभीराज्ञेदेयद्रव्यग्रहीतॄनाह यानीतिद्वाभ्याम् । इन्धनंकाष्ठं पानंमध्वादि अवाप्नुया-त्। ग्रामिकएकग्रामाध्यक्षः। एकग्रामाध्यक्षस्येन्धनादीन्येव जीविका ॥ ११८ ॥

( ५ ) **नन्दनः**। ग्रामाध्यक्षादीनांवृत्तनियमंश्लोकद्वयेनाह यानीति। अन्नपानेन्धनादिग्रहणेन पशुधान्यहिरण्यादी-नांनिषेधः ॥ ११८ ॥

( ६ ) **रामचन्द्रः**। ग्रामिकः एकग्रामिकः। यानि राजप्रदेयानि एतावदत्र राजपुरुषेण भोक्तव्यमिति प्रयोजनदर्शि-तानि ॥ ११८ ॥

**दशी कुलं तुभुञ्जित विंशी पञ्चकुलानि च ॥ ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥११९॥**

( १ ) **मेधातिथिः**। दशसुग्रामेष्वधिकृतोदशी एवंविंशी। छान्दसःशब्दसंस्कारः। कुलंग्रामैकदेशः। क्वचिद्वद्दृइ-तिप्रसिद्धः क्वचिदुष्टइति। एतदेवपञ्चगुणंविंशतिग्रामेष्वधिकृतः सर्वग्रामशताध्यक्षः। पुरंनगरं सहस्रेशः स्थानकर्मानुरूपेण वृत्तिकल्पेतेत्येतत्सत्यम् ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः**। एवंग्रामाध्यक्षस्य भृतिमुक्त्वाऽन्येषामाह दशीति। दशग्रामाधिपोदशी। हलंतुद्विगुणंकुल-मितिवचनाद्वाभ्यांहलाभ्यांया कृष्यते भूस्तांभुञ्जीतेत्यर्थः। हलमानंच ॥ अष्टगवंधर्महलंषड्गवंजीवितार्थिनाम्। चतुर्गवंगृह-स्थानांद्विगवंब्रह्मघातिनामिति हारीतोक्तम्। धर्महलंग्राह्यं गृहस्थहलंवा। विंशी विंशतिग्रामपः ॥ ११९ ॥

( ३ ) **कुल्लूकः**। अष्टागवंधर्महलंषड्गवंजीवितार्थिनाम्। चतुर्गवंगृहस्थानांत्रिगवंब्रह्मघातिनामिति हारीतस्मरणात् ॥ षड्गवंमध्यमंहलमिति तथाविधहलद्वयेन यावतीभूमिर्वाह्यते तत्कुलमिति वदति तद्दशग्रामाधिपतिर्वृत्त्यर्थंभुञ्जीत। एवंविंश-त्यधिपतिः पञ्चकुलानि शताधिपतिर्मध्यमंग्रामंसहस्राधिपतिर्मध्यमंपुरम् ॥ ११९ ॥

( ४ ) **राघवानन्दः**। दशीत्यादेस्तामाह दशीति ॥ अष्टागवंधर्महलंषड्गवंजीविकार्थिनाम्। चतुर्गवंगृहस्थानां द्वि-गवंतु गवाशिनामिति लघुहारीतवचनात्षड्गवंमध्यमहलं तथाविधहलद्वयेन यावती भूःकृष्यते तत्कुलमिति परिभाषितं वृ-त्यर्थंदशग्रामाधिपस्तावतींभूमिंगृह्णीयादित्यर्थः। ग्रामं मध्यमं। तत्र ग्रामोभृगुप्रोक्तः॥ विप्राश्च विप्रभृत्याश्चयत्रचैव वस-न्ति ते। सतु ग्रामइति प्रोक्तःशूद्राणांवासएव चेति । पुरं राजधानीयोग्यं प्राकारशिल्पिवणिग्जनहट्टादियुक्तम्। आकरः सुवर्णाद्युत्पत्तिस्थानम्। व्रजः गवांनिवासः । खेटः कर्कटिकाद्युत्पत्तिस्थलम् । वाटी पूगनारिकेलाद्युत्पत्तिस्थलम्। इति चतुष्टयं प्रासंगिकं व्याख्यातंचखेटइत्यत्रश्रीधरस्वामिना ॥ ११९ ॥

( ५ ) **नन्दनः**। दशी दशग्रामाधिपतिः। कुलंगृहमेककृषीवलभागमित्यर्थः। ग्रामंकुलशतयुक्तम्। यथाहकौटिल्यः कुलशतावरंपञ्चशतकुलावरंग्रामंनिवेशयेदिति ॥ ११९ ॥

( ६ ) **रामचन्द्रः**। दशी दशग्रामाधिपतिः कुलंभुंजीत हलंतु द्विगुणंकुलं द्वाभ्यांहलाभ्यांकृष्यते याभूस्तां। भुञ्जीते-त्यर्थः। विंशी पंचकुलानि दशहलकृष्यक्षेत्राणिभुञ्जीत ॥ ११९ ॥

**तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ॥ राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्ये दतन्द्रितः ॥ १२० ॥**

( १ ) **मेधातिथिः** । तेषांग्रामकार्येष्वितरेतरंविप्रतिपत्तिः । अन्यः स्वकार्येऽन्यः सचिवोमहत्तमः स्निग्धोरागद्वेषवर्जितोदर्शनाय नियोक्तव्यः ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । ग्राम्याणि ग्रामसंबन्धीनि कृत्यानि संकरादिविषयाणि । पृथक्कार्याण्यन्योन्यकलहादीनि ॥ १२० ॥

( ३ ) **कुल्लूकः** । तेषांग्रामनिवासिप्रभृतीनांपरपस्परविप्रतिपत्तौ यानि ग्रामभवानि कार्याणि कृताकृतानि च पृथक्कार्याणि तान्यन्योराज्ञोहितकृत्तन्नियुक्तोऽनलसः कुर्वीत ॥ १२० ॥

( ४ ) **राघवानन्दः** । एषामेकग्रामाधिपप्रभृतीनामन्योन्यविप्रतिपत्तौ ग्राम्याणि ग्रामभवानि कार्यकार्याणि पृथक्कार्याणि च कृताकृतादीनि अन्यउक्तेभ्यः स्निग्धः पार्थिवइतिशेषः । यथा राज्ञःपापंन जायतेतथा हितैषी अतन्द्रितः राजभीतेः पश्येदित्यन्वयः ॥ १२० ॥

( ५ ) **नन्दनः** । तेषांग्रामाध्यक्षादीनां । ग्राम्याणि ग्रामसंबन्धीनि सेतुबन्धनादीनि ॥ १२० ॥

( ६ ) **रामचन्द्रः** । कार्याणि प्रकृतान्यन्योन्यकलहादीनि ॥ १२० ॥

**नगरेनगरे चैकं कुर्यात्सर्वार्थचिन्तकम् ॥ उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥ १२१ ॥**

( १ ) **मेधातिथिः** । उच्चैःस्थानं प्रधानभूतमित्यर्थः । घोररूपं प्रतापवन्तं । नक्षत्राणामिवग्रहं अंगारकंहस्त्यश्वादिबलसंपन्नम् ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः** । उच्चैःस्थानं तेभ्योधिकंगृहपरिच्छदसंमानादिकम् । घोररूपं दण्डप्रणयनशक्तवेषधरम् । ग्रहं सोमम् ॥ १२१ ॥

( ३ ) **कुल्लूकः** । प्रतिनगरमेकैकमुच्चैः स्थानं कुलादिना महान्तंप्रधानरूपंघोररूपंहस्त्यश्वादिसामग्र्या भयजनकं नक्षत्रादिमध्येभार्गवादिग्रहमिव तेजस्विनंकार्यद्रष्टारंनगराधिपतिंकुर्यात् ॥ १२१ ॥

( ४ ) **राघवानन्दः** । नैतावता राज्ञःकृतकृत्यतेत्याह नगरइतिद्वाभ्याम् । सर्वार्थचिन्तकं हस्त्यश्वप्रजानुवृत्तादिचिन्तनानियुक्तम् । उच्चैःस्थानं प्रधानभूतं ग्रहं शुक्राङ्गाररूपम् । दण्डादावकृपालुत्वार्थमाह घोररूपम् ॥ १२१ ॥

( ५ ) **नन्दनः** । सर्वार्थचिन्तकं सर्वकार्यनिर्णायकं । उच्चैःस्थानं महाप्रभावम् । घोररूपमैश्वर्यातिशयेनदुर्धर्षम् ॥ १२१ ॥

( ६ ) **रामचन्द्रः** । नगरे नगरे एकंपुरुषं सर्वार्थसाधकं सर्वकार्यकर्तारम् । उच्चैःस्थानं उच्चस्थानस्थितमित्यर्थः । घोररूपं दण्डप्रणयनयोग्यवेषधरम् । नक्षत्राणांग्रहमिव प्रकाशमानम् ॥ १२१ ॥

**सतानानुपरिक्रामेत्सर्वानेव सदा स्वयम् ॥ तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥ १२२ ॥**

( १ ) **मेधातिथिः** । सनगराधिकृतस्तान्सार्वानपिपतीननुपरिक्रामत्सबलेन पूरयेत्सतिप्रयोजने तेषांसर्वेषामधिपतीनांतद्वृत्तंसम्यक्परिणयेत् सम्यग्रूपतयापरिजानीयात् कैराजचरैःकार्पटिकादिभिः ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** । अनुपरिक्रामेदनुसंदध्यात् । वृत्तिं चेष्टाम् । परिणयेत् प्रापयेत् राजसमीपं तच्चरैर्नृपचारैः ॥ १२२ ॥

( ३ ) **कुल्लूकः** । सनगराधिकृतस्तान्सर्वान्ग्रामाधिपत्यादीनसति प्रयोजने सर्वदा स्वयंसबलेनानुगच्छेत्तेषांच नगराधिकृतपर्यंतानांसर्वेषामेव यद्राष्ट्रे स्वचेष्टितंतत्तद्विषयनियुक्तैश्चरैः सम्यक्प्रजाः परिणयेदवगच्छेत् ॥ १२२ ॥

( ४ ) **राघवानन्दः** । सतादृशः तान् ग्रामेशादिसहस्राध्यक्षान्तान् अनुक्रामेदहर्निशंसंचरेत् संचरंस्तेषांवृत्तं चेष्टां परिणयेत् जानीयात् । तच्चरैः तत्रतत्र नगरेषु बहुकालवासिभिः । तैर्हि तत्रत्यानांभद्राभद्रंज्ञायते ॥ १२२ ॥

( ५ ) **नन्दनः** । नगरे नियुक्तस्तान्ग्रामाध्यक्षादीन् । अनुपरिक्रामेत् अनुसंदध्यात् । तेषां ग्रामाध्यक्षादीनाम् । तच्चरैः तत्रत्यचरैः । परिणयेत् परीक्षेत ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । सः तान्सर्वान् ग्रामनिवासिनः अनुपरिक्रामेत् अनुसंदध्यात् सर्वोपरि तिष्ठेदित्यर्थः । तेषां ग्रामनिवासिनांवृत्तं तच्चेष्टां तच्चरैः ग्रामचरैः नृपचरैर्वा ॥ १२२ ॥

**राज्ञोहि रक्षाधिकृताः परस्वादायिनः शठाः ॥ भृत्याभवंति प्रायेण तेभ्योरक्षेदिमाः प्रजाः॥१२३॥**

( १ ) **मेधातिथिः** । परस्वमादातुंशीलंयेषांते परस्वादायिनः शठाः सम्यक्कारिणः प्रायेणाधिकृताःसन्तोभवन्ति । प्राक्शुचयोपि रक्षन्तिवित्तानि अतः प्राक्शुचित्वानुमाने नोपेक्षणीयाः यत्नतः प्रतिजागरितव्यास्तेभ्योरक्षेदिमाःप्रजाः । नकेवलंराजार्थनाशः अनवेक्षयायावत्प्रजाअपिनिर्द्धनीकुर्वन्ति ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । राज्ञोभृत्याइत्यन्वयः ॥ १२३ ॥

( ३ ) **कुल्लूक** । यस्माद्ये राज्ञोरक्षाधिकृतास्ते बाहुल्येन परस्वग्रहणशीलावञ्चकाश्च भवन्ति तस्मात्तेभ्यइमाः स्वात्मीयाः प्रजाराजा रक्षेत् ॥ १२३ ॥

( ४ ) **राघवानन्दः** । तत्किमर्थंतत्राह राज्ञइति । रक्षाधिकृतारक्षार्थमधिकृताः ग्रामाध्यक्षादयोभृत्याअपि परस्वादायिनः परस्य स्वत्वे विद्यमानेप्यादायिनः प्रायेण बाहुल्येन भवन्ति । तत्र हेतुः शठावञ्चकाः । अतस्तेभ्यः इमाः बुद्धिस्थीभूताः सर्वनगराध्यक्षादिद्वारा रक्षेद्राजेतिभावः ॥ १२३ ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह राज्ञोहीति । रक्षेत् संगरेयुक्तः । श्लोकाविमौ राजविषयौ वा ॥ १२३ ॥

**ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः ॥ तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥१२४॥**

( १ ) **मेधातिथिः** । ये रक्षाधिकृताः कार्यिकेभ्योव्यवहर्तृभ्योव्यापारवद्भ्योवा हल्लेशोद्देशिकयादण्डयन्ति जनपदांस्तेषांसर्वस्वहरणप्रवासने राजाकुर्यात् ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । येकार्यिकेभ्योर्थमेव गृह्णीयुः पापचेतसइति कार्यार्थिभ्योवादिप्रभृतिभ्यउत्कोचरूपेणार्थमेव गृह्णीयुर्नराजकार्यंकुर्युः ॥ १२४ ॥

( ३ ) **कुल्लूकः** । ये रक्षाधिकृताः कार्यार्थिभ्यएव वाक्छलादिकमुद्भाव्य लोभादशास्त्रीयधनग्रहणंपापबुद्धयः कुर्वन्ति तेषांसर्वस्वंराजा गृहीत्वा देशान्निःसारणंकुर्यात् ॥ १२४ ॥

---

( १२४ ) र्थमेव=र्थमेवं ( घ, च, ण )

( १२४ ) येकार्यिकेभ्योइ०=कारिकेभ्योर्थमादाययेकुर्युःकर्षमन्यथा ( ल )

( ४ ) **राघवानन्दः** । राज्ञःस्वकीयंकृत्यमाह यइति । कार्यिभ्यः कार्यार्थिभ्यः वादिप्रतिवादिभ्योव्यवहारिभ्योवा वाक्छलादिकमुद्भाव्यार्थमुत्कोचरूपंगृह्णीयुः । प्रवासनं देशान्निर्याणंकुर्यादित्यर्थः ॥ १२४ ॥

( ५ ) **नन्दनः** । परस्वादाने तेषांदण्डमाह येकार्यिकेभ्यइति । कार्यिकाः कार्य्यवन्तः कार्यार्थिनइतियावत् ॥ १२४ ॥

( ६ ) **रामचन्द्रः**। येभृत्याः कार्यिभ्यः वादिप्रतिवादिभ्यः अर्थमेव प्रतिगृह्णीयुः । कीदृशाभृत्याः पापचेतसः लोभाक्रान्ताः । राजा तेषां प्रवासनं निष्काशनंकुर्यात् ॥ १२४ ॥

**राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च ॥ प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥१२५॥**

( १ ) **मेधातिथिः** । युक्तानांनियुक्तानांस्त्रीणामन्तःपुरदास्यादीनांप्रेष्यजनस्य दोलकवाहादेः प्रत्यहंवृत्तिंकल्पयेन्न सांवत्सरीयंसकृद्दद्याद्ग्रामंतदेकदेशंवा स्थानकर्मानुरूपतः स्थानंप्रधानंनियोगः शय्यारक्षादि कर्म शरीरव्यापारस्तदनुरूपेण वृत्तिर्देया प्रधानेस्थानेस्वल्पेपि कर्म्मणि महतीवृत्तिर्निकृष्टे स्थाने महत्यपि कर्मणि स्वल्पे तदुभयानुरूपम् ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । राजकर्मसु राज्ञउपचारादिषु । स्थानमन्तर्बहिरपि कर्मोत्तममध्यमाधमं तदनुरूपेण ॥ १२५ ॥

( ३ ) **कुल्लूकः** । राजोपयुक्तकर्मनियुक्तानांस्त्रीणांदास्यादीनांकर्मकरजनस्य चोत्कृष्टमध्यमापकृष्टस्थानयोग्यानुरूपेण प्रत्यहंकर्मानुरूपेण वृत्तिंकुर्यात् ॥ १२५ ॥

( ४ ) **राघवानन्दः** । राज्ञःकृत्यान्तरमाह राजेति । राजकर्मसु युक्तानां नियुक्तानां स्त्रीणां दास्यादीनां प्रेष्यजनस्य सेवकस्य । स्थानं स्वनिकटदूरादि कर्माल्पायासबव्हायाससाध्यं तदनुरूपतस्तदनुसारेण ॥ १२५ ॥

( ५ ) **नन्दनः** । अधिकृतानां वृत्तिनियममाह राजाकर्मस्विति युक्तानामधिकारिणांप्रत्यहंकल्पयेन्नप्रतिमासंप्रतिवत्सरंवा ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । स्थानं अन्तर्बहिः अनुरूपतः उत्तमाधममध्यमम् ॥ १२५ ॥

**पणोदेयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्॥षाण्मासिकस्तथाच्छादोधान्यद्रोणस्तु मासिकः॥१२६॥**

( १ ) **मेधातिथिः** । अवकृष्टःसंमार्जनशोधनविनियुक्तस्तस्य भक्तार्थपणोदेयः । उत्कृष्टस्य षट्सु षट्सु मासेषुगतेष्वाच्छादवस्त्रंधान्यद्रोणश्चमासिकः । चतुराढकोद्रोणः । पणपरिमाणंवक्ष्यति । वृत्तिकल्पनार्थाएते ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थान्मध्यमस्य त्रयः । भक्तकं भृतिः । षट्सु मासेष्वाच्छादनं तत्राप्येकं त्रीणि षडिति पणानुसारेण व्यवस्था । एवंद्रोणेप्येकस्त्रयःषडिति । मासिकोमासेमासेदेयः ॥ १२६ ॥

( ३ ) **कुल्लूकः** । तामेवदर्शयतिपणइति । अवकृष्टस्य गृहादिसंमार्जकोदकवाहादेः कर्मकरस्य वक्ष्यमाणलक्षणः पणोभृतिरूपः प्रत्यहंदातव्यः षाण्मासिकश्चाच्छादोवस्त्रयुगंदातव्यम् ॥ अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौ च पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्त्तितः ॥ चतुराढकोभवेद्द्रोणइति गणनया धान्यद्रोणश्च प्रतिमासंदेयः । उत्कृष्टस्य तु भृतिरूपाश्च षट्पणादेयाः अनयैव कल्पनया षाण्मासिकानि षट्वस्त्रयुगानि देयानि प्रतिमासंषाण्मास्याद्रोणादेयाः अनयैवातिदिशा मध्यमस्य पणत्रयंभृतिरूपंदातव्यं षाण्मासिकंच वस्त्रयुगत्रयंमासिकंच धान्यंद्रोणत्रयंदेयम् ॥ १२६ ॥

---

( १२६ ) वेतनम्=भक्तकम् ( क, ग, घ, च, ण )

( ४ ) **राघवानन्दः** । स्वकर्मनियुक्तदास्यादीनांदेयविभागमाह पणइति । अयमर्थः । अपकृष्टस्य गृहमार्जनादिकर्तुः प्रत्यहंपणः षाण्मासिकं छादोद्वादशहस्तपरिमितंवस्त्रं प्रतिमासधान्यं द्रोणः । एवंषड्गुणितं पणवस्त्रधान्यद्रोणादि उत्कृष्टस्य साक्षात्कर्मकुशलिनः । तथा मध्यमस्यापि त्रिगुणं तत्त्रितयं पणाधिक्यमात्रमन्यत्समानमिति वा । तत्र च ॥ अष्टमुष्टिर्भवेत्किंचिद्द्व्यरेष्टौतु पुष्कलः । पुष्कलानिच चत्वारि आढकःपरिकीर्तितः ॥ चतुराढकोभवेद्द्रोणइति द्रोणस्य लक्षणम् ॥ १२६ ॥

( ५ ) **नन्दनः** । कियतीवृत्तिः कल्प्येति चेदाह पणोदेयइति । भक्तकंपणइत्यन्वयः उक्तार्थः पणइत्यर्थः । देयः प्रत्यहं देयः । षट्पणाइति वचनविपरिणामः । पणद्रोणयोः परिमाणंवक्ष्यति । आच्छादोवस्त्रम् । षाण्मासिकः षण्मासे देयः षाण्मासिकः ॥ १२६ ॥

( ६ ) **रामचन्द्रः** । पणः अशीतिवराटकानां पणः अवकृष्टस्य अर्थान्मध्यमस्यत्रयः भक्तकं भृतिः षट्सु मासेषु आच्छादनं तत्राप्येकं त्रीणि षडिति पर्यायानुसारेण व्यवस्था । एवंद्रोणेऽप्येकः त्रयःषडिति मासिमासिदेयम् ॥ १२६ ॥

**क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम् ॥ योगक्षेमं च संप्रेक्ष्य वणिजोदापयेत्करान् ॥ १२७ ॥**

( १ ) **मेधातिथिः** । करग्रहणविधिःकियता मूल्येन क्रीतमेतत्कियच्च विक्रीयमाणं लभते कियता च कालेन विक्रियते कियत्प्रतिभावे न नश्यत्यथनेत्येवमादिरूपक्रयविक्रयपरीक्षा । अध्वानंचिराचिरगमनप्राप्यताम् । भक्तं सक्त्वोदनादिमूलम् । परिव्ययस्तदुपकरणंसर्पिः सूपशाकादि धनादि च । योगक्षेममरण्ये कान्तारे वा गच्छतोराजभयंचौरभयं निश्चौरतावेत्यादि । एतदपेक्ष्य वणिग्भ्यः कराआदातव्यावणिग्भिर्दापयेत्करानिति पाठोयुक्तः गत्यादिनियमेन कर्मसंज्ञायाअभावात् । दण्डवचनोवा धातुस्तदा दण्डिवद्द्विकर्मकत्वम् ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः** । क्रयविक्रयमितीयता क्रीत्वेयता विक्रेतुंशक्यमिति । अध्वानमिति एतावान्वर्त्मायासङ्ति । भक्तमन्नमूल्यम् । परिव्ययं ताम्बूलव्यञ्जनादिपरिकरार्थव्ययम् । योगमलब्धलाभं वणिजामायासानुरूपंक्षेमंरक्षणमेतावति देशेऽमीषामस्माभिः कृतमिति विज्ञायेत्यर्थः । करान् शुल्कम् ॥ १२७ ॥

( ३ ) **कुल्लूकः** । कियता मूल्येन क्रीतमिदंवस्त्रंलवणादिद्रव्यंविक्रीयमाणंचात्र कियल्लभ्यते कियद्दूरादानीतंकिमस्य वणिजोभक्तव्ययेन शाकसूपादिना परिव्ययेण लग्नंकिमस्यारण्यादौ चौरादिभ्योरक्षारूपेण क्षेमप्रतिविधानेन गतं कोऽस्येदानींलाभयोगइत्येतदवेक्ष्य वणिजः करान्दापयेत् ॥ १२७ ॥

( ४ ) **राघवानन्दः** । वणिक्करादानमाह क्रयेति । क्रयविक्रयमूल्यं दूरागतं भक्ष्यव्ययचौरादिव्हृतं योगक्षेमादीनिच ज्ञात्वा तद्विक्रेतृभ्यः करान् शुल्कानि दापयेत् हट्टादिकृते स्वयंगृह्णीयाद्वा ॥ १२७ ॥

( ५ ) **नन्दनः** । अथकरादानमाह क्रयविक्रयमिति । क्रयंमूल्यम् । विक्रयंलाभम् । भक्तंवणिग्भिः कर्मकारादिभ्योदेयम् । परितोव्ययः परिव्ययः शुल्कादिकः ॥ १२७ ॥

( ६ ) **रामचन्द्रः** । युग्मम् । सपरिव्ययं ताम्बूलव्यञ्जनादिपरिव्ययसहितम् ॥ १२७ ॥

**यथा फलेन युज्येत राजा कर्त्ता च कर्मणां ॥ तथावेक्ष्य नृपोराष्ट्रे कल्पयेत्सततं करान् ॥ १२८ ॥**

( १ ) **मेधातिथिः** । क्षीणकृषेर्न्यूनः करोग्रहीतव्यइत्येवमर्थमेतत् । वार्योकसोजलौकसः । षट्पदाभ्रमराः । यथाते स्वल्पमाददानाः परिपुष्टाभवन्ति तथा राज्ञा मूलच्छेदोन कर्तव्यः ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । फलेन फलप्राप्त्या राजा । कर्ताचकर्मणां कृष्यादीनां फलेन धान्यादिना युज्येत लाभदर्शनाद्धि पुनः प्रवर्तते ॥ १२८ ॥

( ३ ) **कुल्लूकः** । यथा राजाऽवेक्षणादिकर्मणः फलेन यथा च वार्षिकवणिगादयः कृषिवाणिज्यादिकर्मणांफलेन संबध्यन्ते तथा निरूप्य राजा सर्वदा राष्ट्रे करान् गृह्णीयात् ॥ १२८ ॥

( ४ ) **राघवानन्दः** । यथा कर्मणांकृषिवाणिज्यादीनांकर्ता तत्फलेनसंबध्यतएवंराजापि तत्फलभागीत्याह यथेति । नृपइति नृनृप्रत्यनुकूलः ॥ १२८ ॥

( ५ ) **नन्दनः** । सामान्यतः करपरिकल्पनस्य लक्षणमाह यथेति ॥ १२८ ॥

**यथाल्पाल्पमदन्त्याद्यंवार्योकोवत्सषट्पदाः ॥ तथाल्पाल्पोग्रहीतव्योराष्ट्राद्राज्ञाब्दिकः करः ॥१२९॥**

( १ ) **मेधातिथिः** । एतदेवाह कर्मणांकर्त्तावाणिजकः राजा च फलेन युज्येत तथा करान्कल्पयेन्न परिमाणनियमकारणमस्ति । यत्र महान्लाभस्तत्राधिकमप्युक्तपरिमाणातिक्रमेण ग्रहीतव्यम् । केचिदिमंश्लोकंपठित्वा यथाल्पाल्पमिति पठन्ति ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । वत्सः प्रस्नवे । वार्योकसः जलौकसः रक्ताकर्षे ॥ १२९ ॥

( ३ ) **कुल्लूकः** । अत्रदृष्टान्तमाह यथेत्यादि । यथा जलौकोवत्सभ्रमराः स्तोकस्तोकानि रक्तक्षीरमधून्यदन्त्येवंराज्ञा मूलधनमनुच्छिन्दताऽल्पोऽल्पोराष्ट्रादब्दिकः करोग्राह्यः ॥ १२९ ॥

( ४ ) **राघवानन्दः** । करमपिदेशकालसंपत्यनुरूपेणादद्यादितिसदृष्टान्तमाह यथेति । वार्योकोजलौकाः । अल्पमल्पं क्रियाविशेषणं सयथा गात्राद्रक्तमल्पमादत्ते यद्वा मत्स्यः गन्धवारिचरः अपांबहूनांयथेष्टतत्पाने उपजीव्यजलनाशे स्वनाशशङ्कयाल्पोदकंपिबति । वत्सोपि सर्वदुग्धपाने गोपस्य क्षतिःस्यादित्याशङ्कयाल्पंचोषति । भ्रमरस्यापि सर्वमधुपाने फलानुत्पत्तेस्तज्जपुष्पान्तराभावात्स्वनाशशंका । एवं राजन्यप्यूहनीयम् । प्रजानांमूलानुच्छेदादितिभावः । आब्दिकः अब्दसमाप्यः ॥ १२९ ॥

( ५ ) **नन्दनः** । अत्रदृष्टान्तमाह यथाल्पाल्पमिति । आद्यमदनीयम् । वार्योकावार्योकसः । ऋषिनिपातनादकारान्तत्वम् ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । वार्योकसः यथाल्पाल्पं आद्यंभक्ष्यं अदन्ति भक्षयन्ति यथाषट्पदाः भ्रमराः अल्पमल्पमदन्ति तथा राजा राष्ट्रमवेक्ष्य आब्दिकान्करान्सततंकल्पयेत् ॥ १२९ ॥

**पञ्चाशद्भागआदेयोराज्ञा पशुहिरण्ययोः ॥ धान्यानामष्टमोभागः षष्ठोद्वादशएव वा ॥ १३० ॥**

( १ ) **मेधातिथिः** । मूल्याधिकयोः पशुहिरण्ययोः पञ्चाशद्भागोग्राह्यः । धान्यानांभागविशेषः सुकरदुष्करापेक्षया मन्तव्यः पंचाशत्पूरणः पञ्चाशः विंशत्यादिभ्यइतिपक्षेतमट् । पञ्चाशद्भागइतिपाठे द्विभागादिवत्संख्यान्तरम् ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चाशद्भागइत्यादिना जनपदानांवार्षिककरग्रहउक्तः । हिरण्यपदंरूप्यादेरप्युपलक्षणम् । द्वादशेति फलेऽष्टमोमध्यमउत्तमेषष्ठः ॥ १३० ॥

( ३ ) **कुल्लूकः** । तमाह पञ्चाशद्भागइत्यादि । मूलादधिकयोः पशुहिरण्ययोः पञ्चाशद्भागोराज्ञा ग्रहीतव्यः एवंधा-

न्यानांषष्ठोऽष्टमोद्वादशोवा भागोराज्ञा ग्राह्यः । भूम्युत्कर्षापकर्षापेक्षया कर्षणादिक्लेशलाघवगौरवापेक्षश्चायंबह्वल्पग्रहण-विकल्पः ॥ १३० ॥

( ४ ) **राघवानन्दः** । द्रव्यविशेषे विशेषतःकरमल्पमाह पञ्चाशदिति । पशुहिरण्ययोस्तज्जीविभ्यआदेयः । पञ्चाशद्भागएकोनपञ्चाशद्भागोद्रव्यस्वामिना ग्राह्योराज्ञा त्वेकोऽवशिष्टोभागः । एवंसर्वत्र भूम्युत्कर्षापकर्षापेक्षया कर्मक्लेशलाघवगौरवापेक्षया वा धान्यानांभागविकल्पः ॥ १३० ॥

( ५ ) **नन्दनः** । द्रव्यविशेषेष्वादेयंभागविशेषंश्लोकत्रयेणाह पञ्चाशद्भागइति । सर्वत्र व्ययव्यतिरिक्तलाभविषया भागकल्पना भूमेर्मध्यमोत्तमाधमापेक्षया व्यवस्थितविषयोयमष्टमादिकोविकल्पः कल्पनीयः ॥ १३० ॥

**आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ॥ गन्धौषधिरसानांच पुष्पमूलफलस्य च ॥ १३१ ॥**

( १ ) **मेधातिथिः** । द्रुमशब्देन वृक्षाउच्यन्ते शेषंप्रसिद्धम् । एतेषांषष्ठोभागोलाभाद्गृहीतव्यः ॥ १३१ ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः** । द्रुमाणांस्वयमर्जितानां वनाद्धृतानांच एवं रसानां लवणादीनाम् ॥ १३१ ॥

( ३ ) **कुल्लूकः** । द्रुमशब्दोत्र वृक्षवाचकः वृक्षादीनांसप्तदशानां अश्ममयान्तानांषष्ठोभागोलाभाद्गृहीतव्यः ॥ १३१ ॥

( ४ ) **राघवानन्दः** । किंचान्यदाददीतेति द्वाभ्याम् । द्रुः काष्ठाद्यर्थोवृक्षः तदाद्यश्ममयान्तानांसप्तदशानांतदुत्पादकेभ्यस्तद्विक्रयिभ्यश्च षड्भागमेवाददीतेत्यन्वयः । मांसं मांसमत्स्यौ ॥ १३१ ॥

( ६ ) **रामचन्द्रः** । द्रुमांसमधुसर्पिषां राजा षड्भागमाददीत । द्रोर्वृक्षस्य मांसस्य मधुनः सर्पिषःघृतस्य । पलाशीद्रुद्रुमागमाइत्यमरः । तुपुनः गन्धादीनामिति ॥ १३१ ॥

**पत्रशाकतृणानांच चर्मणां वैदलस्य च ॥ मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च॥१३२॥**

( २ ) **सर्वज्ञनारायणः** । पत्रं तालीपत्रादि । वैदलं वंशादिविदलकृतभाण्डादि । मृन्मयानां कुलालादिकृतानाम् ॥ १३२ ॥

( ४ ) **राघवानन्दः** । द्रुमाणामितिपाठोमेधातिथेः । वैदलस्य शूर्पादेः ॥ १३२ ॥

( ५ ) **नन्दनः** । आददीतेत्यत्रानुवर्तते ॥१३२ ॥

( ६ ) **रामचन्द्रः** । पत्रशाकतृणादीनांच षड्भागमाददीत स्वीकुर्यात् ॥ १३२ ॥

**म्रियमाणोप्याददीत न राजा श्रोत्रियात्करम् ॥ न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥ १३३ ॥**

( १ ) **मेधातिथिः** । तथा कुर्याद्यथा क्षुधास्य विषये श्रोत्रियोनावसीददिति ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः** । श्रोत्रियात्तेनार्जितधनाद्भागम् ॥ १३३ ॥

( ३ ) **कुल्लूकः** । क्षीणधनोऽपि राजा श्रोत्रियब्राह्मणात्करंनगृह्णीयात् न च तदीयदेशे वसन् श्रोत्रियोबुभुक्षयाऽवसादंगच्छेत् ॥ १३३ ॥

( ४ ) **राघवानन्दः** । पर्युदासाधिकरणन्यायेन श्रोत्रियस्य करादानाभावमाह म्रियमाणइति द्वाभ्याम् ॥ १३३ ॥

---

( १३१ ) द्रुमांस=द्रुमाणां ( ग, ण )

**यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥ तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥ १३४॥**

( १ ) **मेधातिथिः** । अनन्तरविधेरतिक्रमफलमेतत् ॥१३४ ॥

( २ ) **सर्वज्ञनारायणः** । तस्माद्देयमस्मै किंचिदित्यर्थः ॥ १३४ ॥

( ३ ) **कुल्लूकः** । यस्य राज्ञोदेशे श्रोत्रियः क्षुधावसन्नोभवति तस्य राष्ट्रमपि दुर्भिक्षादिभिः क्षुधा शीघ्रमवसादंगच्छति ॥ १३४ ॥

( ४ ) **राघवानन्दः** । न केवलंकरानादानंकिंचास्य राज्ञोविषये वसन् श्रोत्रियोनावसीदेदपि । क्षुधा बुभुक्षया क्षुधासक्तौदृष्टदोषमाह तस्येति । विषये देशे । अतःश्रोत्रियातिरिक्तेभ्यःकरंगृह्णीयादित्यर्थः ॥ १३४ ॥

**श्रुतवृत्ते विदित्वास्य वृत्तिं धर्म्यां प्रकल्पयेत् ॥ संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥ १३५ ॥**

( १ ) **मेधातिथिः** । धर्म्यांवृत्तियया कुटुम्बधर्मस्यावसादनंनभवति । वृत्तिंप्रकल्प्य सर्वतोरक्षेच्चौरादिभ्यः । स्वयमधिकव्ययाच्च ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । तदाह श्रुतवृत्ते इति । वृत्तमाचारः । धर्म्यां स्ववर्णयोग्यां प्रतिग्रहादिकाम् ॥ १३५ ॥

( ३ ) **कुल्लूकः** । यतएवमतः श्रुतेति । शास्त्रज्ञानानुष्ठाने ज्ञात्वाऽस्य तदनुरूपांधर्मादनपेतांजीविकामुपकल्पयेत् चौरादिभ्यश्चैनमौरसपुत्रमिव पिता रक्षेद्यस्मात् ॥ १३५ ॥

( ४ ) **राघवानन्दः** । नकेवलमादानाभावमात्रं प्रत्युतास्मै दानंसार्थवादमाह श्रुतवृत्तेइतिद्वाभ्याम् । श्रुतवृत्ते शास्त्रज्ञानानुष्ठानेइतिकुल्लूकः । श्रुतंवेदाध्ययनं वृत्तमयाचितत्वादि ते ज्ञात्वास्य श्रोत्रियस्य धर्म्यांधर्मादनपेतांतदभिमतांवृत्तिंदद्यात् तांलिखितदिव्यादियुक्तताम्रपट्टादिना । रक्षेदेनंचश्रोत्रियं यथातामन्योनहरेदितिभावः । चोरादिभ्योरक्षणंसाधारणम् ॥ १३५ ॥

**संरक्ष्यमाणोराज्ञायं कुरुते धर्ममन्वहम् ॥ तेनायुर्वर्धते राज्ञोद्रविणं राष्ट्रमेव च ॥ १३६ ॥**

( १ ) **मेधातिथिः** । धार्म्मिकश्रोत्रियरक्षायाः फलमेतदायुर्द्रविणराष्ट्रवृद्धिः ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । संरक्ष्यमाणोदस्युभ्यः ॥ १३६ ॥

( ३ ) **कुल्लूकः** । सच श्रोत्रियोराज्ञा सम्यग्रक्षमाणोयंधर्मंप्रत्यहंकरोति तेन राज्ञआयुर्धनराष्ट्राणि वर्धन्ते ॥ १३६॥

( ४ ) **राघवानन्दः** । अतआह समिति । तेनधर्मेणायुर्द्रविणंराष्ट्रंचास्यराज्ञोवर्धतइत्यन्वयः ॥ १३६ ॥

( ६ ) **रामचन्द्रः** । अयं ब्राह्मणः तेन धर्मेण ॥ १३६ ॥

**यत्किंचिदपि वर्षस्य दापयेत्करसंज्ञितम् ॥ व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥ १३७ ॥**

( १ ) **मेधातिथिः** । कृषिधनप्रयोगक्रयविक्रयादिव्यवहारेण जीवन्तंपृथग्जनं ब्राह्मणात्श्रोत्रियादन्यंकरंदापयेत् करसंज्ञासंजातास्य करसंज्ञितम् ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येनापि कर्मणा वाणिज्यादिव्यवहारेण जीवन्तंपृथग्जनमब्राह्मणं किंचिदण्यमपि दापयेत् नतु किंचिदाददीत ॥ १३७ ॥

( ३ ) **कुल्लूकः** । राजा स्वदेशे शाकपर्णादिस्वल्पमूल्यवस्तु क्रयविक्रयादिना जीवन्तंनिकृष्टजनंस्वल्पमपि कराख्यंवर्षेण दापयेत् ॥ १३७ ॥

( ४ ) **राघवानन्दः** । किंच व्यवहारेण शाकादिक्रयविक्रयादिना जीवतोनिकृष्टस्याल्पःशुल्कोग्राह्यइत्याह यदिति । पृथग्जनंनिकृष्टम् ॥ १३७ ॥

( ५ ) **नन्दनः** । यत्किञ्चिदपि वर्षस्य संवत्सरस्य व्यवहारेण वाणिज्येन पृथग्जनं प्रकृतजनम् ॥ १३७ ॥

( ६ ) **रामचन्द्रः** । पृथग्जनं सामान्यजनं कारुकादिकं यत्किंचिदपिकरं दापयेत् ॥ १३७ ॥

**कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः॥एकैकं कारयेत्कर्म मासि मासि महीपतिः॥१३८॥**

( १ ) **मेधातिथिः** । शिल्पमात्रोपजीविनस्तान्मासंमासमेकमहः कर्मकारयेत् आत्मोपजीविनश्चशूद्रावेशभारवाहादयः १३८ ॥

( २ ) **सर्वज्ञनारायणः** । कारुकान् वर्धक्यादीन् । शिल्पिनोनटादीन् । आत्मोपजीविनोभक्तार्थं नित्यंपरस्य कर्म कृत्वा तल्लब्धभक्तेन जीवतः ॥ १३८ ॥

( ३ ) **कुल्लूकः** । कारुकान्सूपकारादीन् शिल्पिभ्यईषदुत्कृष्टान् शिल्पिनश्च लोहकारादीन् शूद्रांश्च देहक्लेशोपजीविनोभारिकादीन् मासि मास्येकंदिनंकर्म कारयेत् ॥ १३८ ॥

( ४ ) **राघवानन्दः** । दुःखजीविनोविष्ट्यादिना नातिपीडनीयाइत्याह कारुकानिति । कारुकान् शूर्पादिकारिणः शिल्पिनः चित्रलोहकारादीन् आत्मोपजीविनः देहक्लेशोपजीविनः वेतनजीविनः कर्म स्वकंमासिमासि मासंमासंप्रत्येकैकं कारयेदित्यन्वयः ॥ १३८ ॥

( ५ ) **नन्दनः** । आत्मोपजीविनः शरीरोपजीविनः कर्मोपजीविनइति यावत् ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । कारुकादीन् एकैकं विष्टिरूपंकर्ममासिमासि कारयेत् ॥ १३८ ॥

**नोच्छिन्द्यादात्मनोमूलं परेषां चातितृष्णया॥उच्छिन्दन् ह्यात्मनोमूलमात्मानं तांश्च पीडयेत्॥१३९॥**

( १ ) **मेधातिथिः** । करशुल्कादेरग्रहणमात्मनोमूलछेदः अतिबहुग्रहणंपरेषां तच्च तृष्णया भवतीत्यनुवादः आत्मनोमूलच्छेदेनात्मपीडा भवतिकोशक्षयात् अतस्तेपि पीड्यंते । उपस्थितेविग्रहेक्षीणकोशशक्तिररिभिरपरुद्धोद्धरणेऽवश्यंभवेत् । साचतेषांमहतीपीडा यत्तुसार्वकालिकंकरग्रहणंसंपादयतोनाखेदिताभवति ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनोमूलं करग्रहणेन न छिन्द्यात् । अतितृष्णयाचातिकरग्रहणेन न परेषांमूलंधनंछिन्द्यात् ॥ १३९ ॥

( ३ ) **कुल्लूकः** । प्रजास्नेहात्करशुल्कादेरग्रहणमात्मनोमूलच्छेदः अतिलोभेन प्रचुरकरादिग्रहणंपरेषांमूलोच्छेदः एतद्‌द्वयंनकुर्याद्यस्मादात्मनोमूलमुच्छिद्य कोशक्षयादात्मानंपीडयेत् पूर्वार्धात्परेषांचेत्यपिसंबध्यते परेषांमूलमुच्छिद्य तांश्च पीडयेत् ॥ १३९ ॥

( ४ ) **राघवानन्दः** । किंच प्रजास्वकरादाने नातीव स्नेहोराज्ञोनधर्मइत्याह नेति । आत्मनोमूलं करशुल्कादेर्ग्रहणं स्नेहेन तन्नत्यजेत् । नापिच परेषांप्रजानामतितृष्णया मूलं सर्वस्वादिकं गृह्णीयादिति ॥ १३९ ॥

( ५ ) **नन्दनः** । स्वस्यान्येषाञ्च मूलं कृषिगोरक्षवाणिज्यादिकं करोत्पत्तिस्थानम् । अतितृष्णया शास्त्रविरुद्धैः करैर्नोच्छिन्द्यात् । तत्रकोऽनर्थइत्यपेक्षायामुक्तमुत्तरार्धे मतमुच्छिन्द्यात्मनोमूलमित्यत्र परेषामित्यनुपादानं कृष्यादिकस्य राजमूलत्वसारज्ञापनार्थं तानन्यांश्चपीडयेत् दरिद्रयेत् ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । आत्मनः मूलं मूलधनं प्रजारूपं करग्रहेण नोच्छिन्द्यात् उच्छिन्नंन कुर्यात् । च पुनः परेषां ग्रामनिवासिनांप्रजानां अतितृष्णया अतिकरग्रहणेन । च पुनः आत्मनः मूलमुच्छिन्दन् हि निश्चयेन आत्मानंच प्रजाश्च पीडयेत् । तस्मान्मूलधनंनोच्छिन्द्यात् ॥ १३९ ॥

**तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः ॥ तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः॥१४०॥**

( १ ) **मेधातिथिः** । तीक्ष्णमृदुता नित्यमभ्यसनीया । तादृशोराजा प्रजानांसंमतोभवत्यभिप्रेतम् ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । कार्यंप्रेक्ष्य मार्दवेनैव साध्यं यत्तत्र मृदुरन्यत्र तीक्ष्णः ॥ १४० ॥

( ३ ) **कुल्लूकः** । कार्यविशेषमवगम्य क्वचित्कार्ये तीक्ष्णः क्वचिन्मृदुश्च भवेत् नत्वेकरूपमालंबेत यस्मादुक्तरूपोराजा सर्वेषामभिमतोभवति ॥ १४० ॥

( ४ ) **राघवानन्दः** । अपिच राजानंधर्मविशेषेण शिक्षयति तीक्ष्णश्चेति । दण्ड्येष्वपराधयुक्तेषु तीक्ष्णो निरुपरुद्धः मृदुश्च साधुषु संमतोमन्वादीनाम् ॥ १४० ॥

( ५ ) **नन्दनः** । धर्मान्तरमाह तीक्ष्णश्चैवेति । तीक्ष्णः अग्न्यर्कादिमात्रानिर्मितत्वात् मृदुश्च सोमवरुणादिमात्रानिर्मितत्वात् ॥ १४० ॥

( ६ ) **रामचन्द्रः** । महीपतिः कार्यंवीक्ष्य तीक्ष्णः सन्मृदुःस्यात् । कदाचित्तीक्ष्णः कदाचिन्मृदुः राजा संमतो भवति ॥ १४० ॥

**अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् ॥ स्थापयेदासने तस्मिन्खिन्नः कार्येक्षणे नृणाम् ॥ १४१ ॥**

( १ ) **मेधातिथिः** । प्रजानांसंबन्धिनि कार्यदर्शने खिन्नः शान्तः । धर्मज्ञादिगुणयुक्तंसर्वसहममात्यंतस्मिन् कार्येक्षणे नियुञ्जीत नपुनस्तस्मिन्नेव सिंहासने ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । आसनेतस्मिन्स्वस्थानइत्यर्थः ॥ १४१ ॥

( ३ ) **कुल्लूकः** । स्वयंकार्यदर्शने खिन्नः श्रेष्ठामात्यंधर्मविदंप्राज्ञंजितेन्द्रियंकुलीनंतस्मिन्कार्यदर्शनस्थाने नियुञ्जीत ॥ १४१ ॥

( ४ ) **राघवानन्दः** । यत्रस्वयमसमर्थस्तत्रामात्यंनियोजयेदित्याह अमात्येति । धर्मज्ञमित्यनेन मर्मोविक्रियाराहित्यंसूचितम् । दान्तं लोभाद्यनभिभूतत्वेन प्रजासु । कुलोद्गतं कुलीनम् । आसनेस्थित्वा यत्र कार्येक्षणे कार्यदर्शने खिन्नः खेदयुक्तोऽसमर्थस्तत्रैवंविधममात्यंप्रयोजयेदित्यन्वयः ॥ १४१ ॥

( ५ ) **नन्दनः** । खिन्नः बहुकार्यविक्षणात्परिश्रान्तः । स्वस्मिन्नासने स्वस्मिन्कृत्ये ॥ १४१ ॥

( ६ ) **रामचन्द्रः** । राजा नृणांकार्याणामीक्षणे स्वयं खिन्नः ज्वरादिना युक्तश्चेत्तदा एतादृशममात्यमासने कार्यावेक्षणे स्थापयेदित्यर्थः ॥ १४१ ॥

**एवंसर्वंविधायेदमितिकर्त्तव्यमात्मनः ॥ युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ १४२ ॥**

( १ ) **मेधातिथिः** । सहायसंग्रहप्रभृत्युक्तस्यार्थस्यैवमिति परामर्शनं विधाय कृत्वा इतिकर्तव्यमुपकारकमितिकर्त्तव्यमुच्यते युक्तस्तत्परः अतएवाप्रमत्तः अभावाबुद्ध्यस्खलनमप्रमत्तता सर्वकाले । एवंप्रजाःपरिरक्षेत् ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः** । युक्तउद्युक्तः । अप्रमत्तोन्यत्रासक्तः ॥ १४२ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण सर्वमात्मनः कार्यजातंसंपाद्योद्युक्तः प्रमादरहितआत्मीयाः प्रजारक्षेत् ॥ १४२ ॥

( ४ ) **राघवानन्दः** । प्रतिज्ञान्तरंब्रुवन्प्रकृतमुपसंहरति एवमिति । युक्तः उद्युक्तः इमाः स्वदेशस्थाः रक्षेदेवेत्यन्वयः ॥ १४२ ॥

( ५ ) **नन्दनः** । इदमुक्तम् । युक्तउपायवान् ॥ १४२ ॥

**विक्रोशन्त्योयस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः॥संपश्यतः सभृत्यस्य मृतः सनतु जीवति॥१४३॥**

( १ ) **मेधातिथिः** । पूर्वोक्तयोरप्रमादयोरन्यथात्वे दोषमाह यदिसम्यग्गुल्मस्थानानि न जानाति तदाछिद्रान्वेषिभिर्दस्युभिः प्रजाह्रियन्ते तासु किंकरिष्यति । अतस्तादृशोराजामृतएव जीवितंमरणमेव अतोऽप्रमत्तेन भवितव्यम् । विक्रोशन्त्यः आक्रन्दत्यः ह्रियन्ते संपश्यतः सभृत्यस्यनिर्दिष्टंद्रक्ष्यतेकेवलंचभृत्यास्तदीयाः पश्यन्ति नानुधावन्ति मोक्षयन्ति सर्वेतेमृतकल्पाः ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः** । दस्युभिः शत्रुभिः ॥ १४३ ॥

( ३ ) **कुल्लूकः** । यस्य राज्ञोऽमात्यादिसहितस्य पश्यतएव राष्ट्रादाक्रोशन्त्यः प्रजास्तस्करादिभिरपि ह्रियन्ते समृतएव नतु जीवति जीवनकार्याभावाज्जीवनमपि तस्य मरणमेवेत्यर्थः । तस्मादप्रमत्तः प्रजारक्षेदिति पूर्वोक्तशेषम् ॥१४३ ॥

( ४ ) **राघवानन्दः** । सार्थवादंतदेवाह विक्रोशन्त्यइतिद्वाभ्याम् । विक्रोशन्त्यः हाहतोस्मीतिवचउद्गिरन्त्यः अपह्रियन्ते धनाद्यादानेन दस्युभिः साहसिकैः । संपश्यतइत्यनादरेषष्ठी । मृतः शवइवघृणास्पदीभूतः ॥ १४३ ॥

( ५ ) **नन्दनः** । अरक्षितुर्निन्दामाह विक्रोशन्त्यइति । ह्रियन्ते धनमितिशेषः ॥ १४३ ॥

**क्षत्रियस्य परोधर्मः प्रजानामेव पालनम् ॥ निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥१४४ ॥**

( १ ) **मेधातिथिः** । प्राप्तंफलंभुङ्क्तेराजा सधर्मेण युज्यते अन्यथानुग्राहकाणामेवपालनंकुर्वन्प्रत्यवैति ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः** । निर्दिष्टफलं शास्त्रनियमितकरादि ग्रहणेन भोगसिद्धिः ॥ १४४ ॥

( ३ ) **कुल्लूकः** । तदेवद्रढयति क्षत्रियेति । धर्मान्तरेभ्यः श्रेष्ठंक्षत्रियस्य प्रजारक्षणमेव प्रकृष्टोधर्मः यस्माद्यथोक्तलक्षणफलकरादिभोक्ता राजा धर्मेण संबध्यते ॥ १४४ ॥

( ४ ) **राघवानन्दः** । किंच क्षत्रियस्येति । निर्दिष्टफलभोक्ता शास्त्रनिर्दिष्टकरादिफलभोक्ता ॥ १४४ ॥

( ५ ) **नन्दनः** । निर्दिष्टफलभोक्ता प्रजापालनार्थंवेतनीकृतस्य षड्भागादिकस्य फलस्य भोक्ता ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । निर्दिष्टफलभोक्ता शास्त्रोक्तफलभोक्ता ॥ १४४ ॥

**उत्थाय पश्चिमे यामे कृतशौचः समाहितः॥ हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्सशुभां सभाम्॥१४५॥**

( १ ) **मेधातिथिः** । पश्चिमोयामोब्राह्मोमुहूर्त्तः । यतआह कृतशौचः समाहितः हुताग्निरिति नच ब्राह्मे मुहूर्ते होमविधानमस्ति तदा हि चतुर्मुहूर्तशेषा रात्रिर्भवति होमश्च व्युष्टायांरात्रौसमाप्यकार्यउषःकल्पत्यागेन । आर्च्यब्राह्मणान्पूजयित्वा सभांशुभांमङ्गलवतीं प्रविशेत् ॥ १४५ ॥

---

( १४५ ) हुताग्निर्ब्रा० = गुर्वग्निब्रा० ( ग )
=हुत्वाग्नीन् ( त, थ, द, ठ, ड, )

( २ ) **सर्वज्ञनारायणः** । आर्च्य समभ्यर्च्य ॥ १४५ ॥

( ३ ) **कुल्लूकः** । सभूपो रात्रेः पश्चिमयाममुत्थाय कृतमूत्रपुरीषोत्सर्गादिशौचोऽनन्यमनाः कृताग्निहोत्रावसथ्यहोमोब्राह्मणान्पूजयित्वा वास्तुलक्षणाद्युपेतांसभाममात्यादिदर्शनगृहंप्रविशेत् ॥ १४५ ॥

( ४ ) **राघवानन्दः** । अधुनास्याहरहः कृत्यमाह उत्थायेतिद्वाभ्याम् । पश्चिमेयामे ब्राह्मेमुहूर्ते हुत्वाग्निमावसथाख्यं श्रौतं पुरोहितसाध्यं । आर्च्यसत्कृत्य । शुभां शुभफलदाम् ॥ १४५ ॥

( ५ ) **नन्दनः** । राज्ञोनित्यकर्त्तव्यंकर्म्मश्लोकद्वयेनाह उत्थायपश्चिमइति ॥ १४५ ॥

**तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ॥ विसृज्य च प्रजाः सर्वामन्त्रयेत्सह मन्त्रिभिः ॥ १४६ ॥**

( १ ) **मेधातिथिः** । तत्र तस्यां सभायां स्थिताः प्रजादर्शनार्थमागताः प्रतिनन्द्य यथार्हसंभाषणेक्षणाभ्युत्थानाभिवादनैर्हर्षयित्वा विसर्जयेत् यथागतमनुजानीयात् । ततोविसर्जितेषु तेषुमन्त्रयेत्सहमन्त्रिभिः किंकर्त्तव्यमिति स्वपरराष्ट्रगतकर्त्तव्यतानिरूपणंमन्त्रपश्चाङ्गंदर्शयिष्यते ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रतिनन्द्य प्रियमुक्त्वा ॥ १४६ ॥

( ३ ) **कुल्लूकः** । तस्यां सभायां स्थितोदर्शनार्थमागताः प्रजाः सर्वाः संभाषणदर्शनादिभिः प्रतिनन्द्य प्रस्थापयेत् ताश्च प्रस्थाप्य मन्त्रिभिः सह सन्धिविग्रहादि चिन्तयेत् ॥ १४६ ॥

( ४ ) **राघवानन्दः** । किंच । प्रतिनन्द्य वाग्वस्त्रादिना सत्कृत्य ॥ १४६ ॥

( ५ ) **नन्दनः** । तत्र सभायांस्थितः उपविष्टः । प्रतिनन्द्य न्याय्यनिर्णयेन प्रीणयित्वा मन्त्रयेत्कर्त्तव्याकार्य्यजातमितिशेषः ॥ १४६ ॥

**गिरिपृष्ठं समारुह्य प्रासादंवा रहोगतः ॥ अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥ १४७ ॥**

( १ ) **मेधातिथिः** । मन्त्रदेशविधिः । रहोगतः विविक्ते निर्जने देशे स्थितः अविभावितः अनुमानेनापि यथा न जनाजानन्तीदंवस्तुविद्यतइति तथा कुर्यात् । निःशलाकं शलाकाइषीकाः यत्रतृणमपि नास्ति येन न कश्चित्तिष्ठतीति संभावनास्तितन्निःशलाकम् । इमान्यङ्गानि कर्मणामारम्भोपायः पुरुषद्रव्यसंपत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिरिति । अथवा प्रार्थनाकालंनातिपातयेत्तत्रदीर्घोमन्त्रः स्यात् । न तेषांब्रूयात् गुप्तमन्त्रश्चस्यात् ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । निःशलाकएकान्ते यत्र क्वाप्यविभावितः अन्यैरनुपलक्षितः ॥ १४७ ॥

( ३ ) **कुल्लूकः** । पर्वतपृष्ठमारुह्य निर्जनवनगृहस्थितोऽरण्यदेशे वा विविक्ते मन्त्रभेदकारिभिरनुपलक्षितःकर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागोविनिपातप्रतीकरः कार्यसिद्धिरित्येवंपश्चाङ्गंमन्त्रंचिन्तयेत् ॥ १४७ ॥

( ४ ) **राघवानन्दः** । मन्त्रयेदित्युक्तंतदुचितंस्थलमाह गिरीति । प्रासादं रहोगतं अन्तःपुरगतम् । निःशलाके मन्त्रभेदकाःशलाकाः प्रतिरोधकजन्तवोवक्ष्यमाणाजडादयः तद्रहिते विविक्तइति यावत् । अविभावितः मन्त्रभेदकैरनुपलक्षितः ॥ १४७ ॥

( ५ ) **नन्दनः** । मन्त्रणस्य देशमाह गिरिपृष्ठमिति । निःशलाके कुशशलाकादिहीने । अविभावितः अविदितः अनाप्तैरिति शेषः ॥ १४७ ॥

---

( १४७ ) दविभावितः =त्सविभावितः ( ग )

( ६ ) **रामचन्द्रः** । अथमन्त्रविधिमाह गिरीति । गिरिपृष्ठं गिरिशृंगं समारुह्य निःशलाके निर्मानुष्ये मन्त्रंकुर्यात् । निःशलाकास्तथारहइत्यमरः । अविभावितः अज्ञातः ॥ १४७ ॥

**यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ॥ सकृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोपि पार्थिवः ॥ १४८ ॥**

( १ ) **मेधातिथिः** । मन्त्रप्रकाशनिवारणार्थः श्लोकः । पृथग्जनाअमन्त्रिणो मन्त्रविद्बाह्याः ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । पृथग्जनामन्त्रबाह्याः समागम्य तन्मन्त्रज्ञैःसह ॥ १४८ ॥

( ३ ) **कुल्लूकः** । यस्य राज्ञोमन्त्रिभ्यः पृथगन्येजनामिलित्वास्य मन्त्रंन जानन्ति सक्षीणकोशोऽपि सर्वांपृथिवीं-भुनक्ति ॥ १४८ ॥

( ४ ) **राघवानन्दः** । तत्रैव दृष्टार्थवादफलमाह यस्येति । समागम्य मिलित्वा मन्त्रणं पृथङ्मन्त्रणंच । जनाःप्रा-णिनः । सपार्थिवः दरिद्रोपिकृत्स्नां समुद्रमेखलां पृथ्वीं भुङ्क्तइत्यन्वयः ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । यस्य मन्त्रं पृथग्जनाः मन्त्रबाह्यान जानंति कोशहीनोपि सराजा कृत्स्नांपृथिवीं भुंक्ते ॥१४८॥

**जडमूकान्धबधिरांस्तैर्यग्योनान्वयोतिगान् ॥ स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकालेऽपसारयेत् ॥ १४९ ॥**

( १ ) **मेधातिथिः** । यत्किंचित्प्राणिजातंतन्मन्त्रयमाणोविशोधयेत् ततः प्रदेशादपशोधयेत् मन्त्रभेदाशङ्कया तिर्य-ग्योनिषु च शुकसारिकादयोपिमन्त्रंभिन्दन्ति गवाश्वादयोपि । योगारूढाःपरिवर्तितवार्त्ताविनिकाः सदसद्ग्राहोरूपवार्त्तादयो-भवंति तदान्तर्धानादयोपि नरेन्द्रविद्याश्च श्रूयन्ते । व्यङ्गत्वादेव ग्रहणे सिद्धे गोबलीवर्दवत् व्यङ्गस्य हस्तपादादिच्छेदने न मन्त्रनियमास्था कर्त्तव्या नायंकुत्रचित् गंतुंशक्नोति इहैवावरुद्धआस्ते कथंमन्त्रान्भेत्स्यतीति । अथवा एवंविधामन्त्रिणोन कर्त्तव्याबुद्धिविभ्रमसंभवात् अतोनाम्नाअपि ततोपसर्पः ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । जडोदेहस्पन्दनाशक्तः । तैर्यग्योनाः श्वकाकादयः । एतान्कृतकमूकान्धजडा-दिभावाशङ्कया म्लेच्छवङ्गादींश्च सहजदुष्टाश्रयतयाऽपनयेत् ॥ १४९ ॥

( ३ ) **कुल्लूकः** । बुद्धिवाक्चक्षुःश्रोत्रविकलान् तिर्यग्योनिभवांश्च शुकसारिकादीन् अतिवृद्धस्त्रीम्लेच्छरोग्यङ्ग-हीनांश्च मन्त्रसमयेऽपसारयेद्यस्मात् ॥ १४९ ॥

( ४ ) **राघवानन्दः** । किंच मन्त्रणे कर्तव्ये वर्ज्यान् सार्थवादमाह जडेति द्वाभ्याम् । तैर्यग्योनान् तिर्यग्योनौ भवान् शुकसारिकादीन् वयोधिकान् वृद्धान् व्यङ्गान् काणादीन् अपसारयेत् ॥ १४९ ॥

( ५ ) **नन्दनः** । तैर्यग्योनान् शुकसारिकादीन् । अपसारयेन्निषेधयेत् ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । जडमूकान्धादीन्मन्त्रकाले अपसारयेत् प्रतिषेधयेदित्यर्थः ॥ १४९ ॥

**भिन्दन्त्यवमतामन्त्रंतैर्यग्योनास्तथैव च ॥ स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतोभवेत् ॥ १५० ॥**

( १ ) **मेधातिथिः** । मानादपेताअवमताः क्षुद्रादयोपमानासत्वे कदाचित्किंचिच्छ्रुणुयुः । कदाचिद्वाक्षराण्युच्चा-

( १४९ ) म्लेच्छ = क्लीब ( ख )

रयितुंशक्नुयुस्ततोमन्त्रभेदःस्यात् । शक्नुवन्ति निपुणाः किंचिदागमेष्वनुमन्तुम् ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । स्त्रीतैर्यग्योनयोर्विशेषमाह भिन्दन्तीति । तैर्यग्योन्या एवमेव मन्त्रंभिन्दन्ति स्त्रियस्त्ववमानादिति विवेकः । तत्र तदपसारणे ॥ १५० ॥

( ३ ) **कुल्लूकः** । एते जडादयोपि प्राचीनदुष्कृतवशेन प्राप्तजडादिभावाअधार्मिकतयैवावमानितामन्त्रभेदंकुर्वन्ति तथा शुकादयोऽतिवृद्धाश्च स्त्रियश्च विशेषेणास्थिरबुद्धितया मन्त्रंभिन्दन्ति तस्मात्तदपसारणे यत्नवान्स्यात् ॥ १५० ॥

( ४ ) **राघवानन्दः** । तत्रहेतुः भिन्दन्तीति । नृपेणावमताजडादयो मन्त्रंभिन्दन्तीतिकृत्वा तानपसारयेदित्यन्वयः । आदृतोयत्नवान् तेषु ॥ १५० ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह भिन्दन्त्यवमताइति । अवमतशब्देन जडादयोगृह्यन्ते ते मनुष्यैरवमताभवन्ति । अथवावमतग्रहणंतद्वर्जनार्थं तस्मिन्पक्षे तैर्यग्योनग्रहणंजडान्धादीनामप्युपलक्षणार्थम् । आदृतोभवेत् वर्जने कृतयत्नोभवेत् ॥ १५० ॥

( ६ ) **रामचन्द्रः** । अवमताः तिरस्कृताः जडादयः मन्त्रंभिन्दन्ति । तस्मात्कारणात्तत्र जडादिष्वादृतः प्रयत्नवान् भवेत् ॥ १५० ॥

**मध्यंदिनेऽर्धरात्रे वा विश्रान्तोविगतक्लमः ॥ चिन्तयेद्धर्मकामार्थान्सार्धंतैरेकएव वा ॥ १५१ ॥**

( १ ) **मेधातिथिः** । धर्मादीनांपरस्परविरोधंचिन्तयेत् अन्यतमवृद्धौ सर्वोत्थितिर्जयेत् ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । विश्रान्तः सुखासीनः । विगतक्लमोदेहदौःस्थ्यरहितः ॥ १५१ ॥

( ३ ) **कुल्लूकः** । दिनमध्ये रात्रिमध्ये वा विगतचित्तखेदःशरीरक्लेशरहितश्च मन्त्रिभिः सहैकाकीवाधर्मार्थकामाननुष्ठातुंचिन्तयेत् ॥ १५१ ॥

( ४ ) **राघवानन्दः** । मन्त्रोचितंकालंकथयन्धर्मादिचिन्तनंब्रूते मध्यंदिनमितित्रिभिः । विश्रान्तोयुद्धादिकृतश्रमरहितः विगतक्लमोरोगालस्यनिद्राद्युपद्रवशून्यः । तैरमात्यैः । अतिगोप्यत्वेत्वेकएववा ॥ १५१ ॥

( ५ ) **नन्दनः** । मन्त्रस्य कालमाह मध्यन्दिन इति । मध्यन्दिने विश्रान्तो विगतक्लमः आधिव्याधिरहितः । तैर्मन्त्रिभिः ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । विश्रान्तः सुखासीनः तैः अमात्यैः सार्धं एकएव वा धर्मकामार्थान् चिन्तयेत् ॥ १५१ ॥

**परस्परविरुद्धानां तेषां च समुपार्जनम् ॥ कन्यानां संप्रदानं च कुमाराणां च रक्षणम् ॥ १५२ ॥**

( १ ) **मेधातिथिः** । धर्मार्थकामानांवा मन्त्रिणांवा समुपार्जनंसंग्रहणम् । कन्यानांसंप्रदानंस्वकार्यसिद्धिवशेनचिन्त्यम् । कुमाराणांराजपुत्राणांरक्षणं तववयमित्येवमादिभिर्धर्ममर्थंच । तेग्राहयितव्याः नवंहिद्रव्यंयेनार्थजातेनोपदिश्यते - तत्तदा दूषयति एवमसंस्कृतबुद्धयोयद्युच्यन्ते तत्तत्प्रथमं गृह्णन्ति यद्यसद्भिःसंसृज्यन्ते तदा तत्स्वभावस्तेषांप्राप्नोति तेच दुःसंस्कारोपदिग्धाः न शक्यन्ते व्यसनेभ्योनिवर्तयितुं उक्तंच नीलीरक्तेवाससिकुंकुमाङ्गरागोदुराधेयस्तस्मात्ते नित्यमनुशासनीयाः तत्रापि ये गुणवतस्तान्वर्धयेत् इतरानीषत्संविभजेत् ज्येष्ठंमहागुणममत्सरंयौवराज्येभिषिंचेत् एवंराजपुत्ररक्षणे नित्यंयत्नवता भवितव्यम् ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः** । परस्परविरुद्धानां तेषां धर्मादीनांत्रयाणांसमुपार्जनंसंभूतानामविरोधेनार्जनम् ॥ १५२ ॥

( ३ ) **कुल्लूकः**। तेषांच धर्मार्थकामानांप्रायिकविरोधवतांविरोधपरिहारेणार्जनोपायंचिन्तयेत्। दुहितॄणांच दानं स्वकार्यसिद्धयर्थंनिरूपयेत्। कुमाराणांच पुत्राणांविनयाधाननीतिशिक्षार्थंरक्षणंचिन्तयेत् ॥ १५२ ॥

( ४ ) **राघवानन्दः**। किंच परेति। परस्परविरुद्धानांप्रायेण समानोपायशून्यानांधर्मार्थकामानांसमुपार्जनंचिन्तयेदित्यनुषङ्गः। अयमर्थः। अतिदण्डादिना अर्थे जन्ये धर्मोहीयेत अतिक्लेशेन धर्मे जन्ये कामोविषयभोगः कुतस्त्यः इतिविरोधपरिहारेणार्जनोपायमसंप्रदानं संप्रदीयते। अस्मैसत्कुलप्रसूतवरादिः। रक्षणंयौवराज्ये स्थापयितुंविनयाधानरीतिशिक्षाद्यम् ॥ १५२ ॥

( ५ ) **नन्दनः**। तामेव चिन्तांश्लोकत्रयेण प्रपञ्चयति परस्परेति। तेषांधर्मार्थकामानाम्। समुपार्जनमधिगमनोपायम्। संप्रदानंपरंचिन्तयेदित्यनुवर्तते ॥ १५२ ॥

( ६ ) **रामचन्द्रः**। परस्परविरुद्धानां तेषां धर्मार्थकामानां समुपार्जनं चिन्तयेदिति पूर्वेणान्वयः ॥ १५२ ॥

**दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥ अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥ १५३ ॥**

( १ ) **मेधातिथिः**। येन संधानंविग्रहोवापि कार्यस्तेन च दूतसंप्रेषणंचिन्त्यम्। आरब्धकार्यसंबन्धंचिन्तयेत्। अवस्थापनायकक्षान्तेरेष्वन्तर्वंशिकसैन्याधिष्ठितोन्तःपुरंप्रविशेत्। तत्र स्थविरस्त्रीमतिशुद्धांदेवींपरिपश्येन्नापरिशुद्धां देवीं। ग्रहलीनोहि भ्राता भद्रसेनोमातुः शयनान्तर्गतः कुपुरुषशङ्कविषदिग्धेन नूपुरेणावन्त्यंदेवीजघानमेखलायाः सौवीरंवेण्यांगूढेन शस्त्रेण विदूरथं तस्मादेतानि विस्रंभस्थानानियत्नतः परीक्षेत। मुण्डजटिलकुहकप्रतिसंसर्गंबाह्यदासीभिरन्तःपुरदासीनांप्रतिषेधयेत्। प्रणिधीनांचकार्पटिकादीनांवापरस्पराभिवेष्टितंचिन्तयेत् ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः**। कार्यशेषंकृतस्यार्थस्यासमाप्तिम्। प्रचारंप्रवृत्तिम्। प्रणिधीनांचेष्टितं परसंगमादि ॥ १५३ ॥

( ३ ) **कुल्लूकः**। दूतानांसंगुप्तार्थलेखहारित्वादिना परराष्ट्रप्रस्थापनंचिन्तयेत् तथा प्रारब्धकार्यशेषंसमापयितुंचिन्तयेत् स्त्रीणांचातिविषमचेष्टितत्वात् तथाहि ॥ शस्त्रेण वेणीविनिगूहितेन विदूरथंवै महिषीजघान। विषप्रदिग्धेन च नूपुरेण देवीविरक्ता किलकाशिराजम ॥ इत्याद्यवगम्यात्मरक्षार्थंचान्तःपुरस्त्रीणांचेष्टितंसखीदास्यादिना निरूपयेत्। चराणांच प्रतिराजादिषु नियुक्तानांचरान्तरैश्चेष्टितमवधारयेत् ॥ १५३ ॥

( ४ ) **राघवानन्दः**। कार्यशेषम् दण्डशुल्काशेषम्। अन्तःपुरप्रचारं स्त्रीणांसमविषमचेष्टितम्। प्रणिधीनांचराणां चारान्तरचेष्टितमवधारयेत् ॥ १५३ ॥

( ५ ) **नन्दनः**। अन्तःपुरप्रचारं पुरान्तर्वर्तिनां प्रवृत्तिम्। प्रणिधीनांगूढपुरुषाणाम् ॥ १५३ ॥

( ६ ) **रामचन्द्रः**। कार्यशेषं कृतस्यार्थस्य समाप्तिं अन्तःपुरप्रचारं प्रवृत्तिंच चिन्तयेत् ॥ १५३ ॥

**कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ॥ अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ १५४ ॥**

**[ वने वनेचराःकार्याश्रमणाटविकादयः ॥ परप्रवृत्तिज्ञानार्थं शीघ्राचारपरंपराः ॥ १ ॥ ] ‡**

**[ परस्यचैते बोद्धव्यास्तादृशैरेवतादृशाः ॥ चारसंचारिणःसंस्थाःशठाश्चागूढसंज्ञिताः ॥ २ ॥ ] ‡**

( १ ) **मेधातिथिः**। अकृतारम्भकृतानुष्ठानं अनुष्ठितविशेषणं कर्मफलसंग्रहः तथा सामभेददानदण्डमेतदष्टवि-

---

‡ नन्दनः।

धंकर्म । अथवा वणिक्पथःउदकसेतुबन्धनं दुर्गकरणं कृतस्य वा तत्संस्कारनियमः हस्तिबन्धनंखनिखननं शून्यनिवेशनं दारुवनच्छेदनंचेति । अपरेत्वाहुः ॥ आदानेचविसर्गेचतथाप्रैषनिषेधयोः । पञ्चमेचार्थवचनेव्यवहारस्यचेक्षणे ॥ दण्डशुध्द्योःसदायुक्तस्तेनाष्टगतिकोनृपः । अष्टकर्मादिवंयातिराजाशत्रुभिरर्चितः ॥ इत्यौशनसौश्लोकौ तत्रस्वीकरणमादानं बलीनां भृत्येभ्योधनदानंविसर्गः प्रैषोदुष्टत्यागः अर्थाधिकृतानांमतिप्रवृत्तिनिरोधोनिषेधः असत्प्रवृत्तिनिषेधश्चार्थवचनं वर्णाश्रमाणांस्वकर्मसंशयव्यवहारावेक्षणं परस्पराभियोगे दण्डनिपातनं पराजितानांच प्रमादस्खलिते तु प्रायश्चित्तमित्येतदष्टविधंकर्म । पञ्चवर्गः कापटिकोदास्थितगृहपतिकवैदेहिकतापसव्यञ्जनाः परमधर्मज्ञाः प्रगल्भछात्राः कापटिकास्तानर्थमानाभ्यामुपसंगृह्य मन्त्री ब्रूयात् राजानंमाञ्चप्रमाणं कृत्वा यत्र यदकुशलंतत्तदानीमेवाच्छातव्यंतयेति । प्रव्रज्यायाः प्रत्यवसितउदास्थितः सचप्रज्ञाशौचयुक्तः सर्वान्नप्रदानसमर्थायां भूमौ प्रभूतहिरण्यायांदासकर्मकारयेत् । कृषिकर्मफलं तच्च सर्वप्रव्रजितानां ग्रासाच्छादनावसथान्प्रतिविदध्यात् तेषांये वृत्तिकामास्तानुपजपेदेवमेतेनैव वृत्तेन राजार्थश्चरितव्योभक्तवेतनकाले चोपस्थातव्यमिति । सर्वप्रव्रजिताःस्वंस्वंकर्मोपजपेयुः । कर्षकोवृत्तिक्षीणः प्रज्ञाशौचयुक्तोगृहपतिव्यञ्जनः सकृषिकर्मकुर्याद्यथोक्तायांभूमाविति। वाणिजिकोवृत्तिक्षीणः प्रज्ञाशौचयुक्तोवैदेहिकव्यञ्जनः सवणिक्कर्मकुर्यात्प्रदिष्टायां भूमाविति समानम् । मुण्डोजटिलोवा वृत्तिकामस्तापसव्यञ्जनः सन्नगराभ्याशे प्रभूतजटिलमुण्डान्तेवासिशाकंयवमुष्टिंवा मासान्तरितंप्रकाशमश्नीयाद्धर्मव्याजेन गूढं यथेष्टमाहारंतापसव्यञ्जनान्तेवासिनश्चैनंप्रसिद्धयोगैरर्थलाभमग्रे शिष्याश्चादिशेयुः दाहंचौरभयंदुष्टवधंच विदेशप्रवृत्तमिदमद्यश्वोवा भविष्यतीदंवा राजाकरिष्यतीति तस्य गूढमन्त्रिणस्तत्प्रयुक्ताः संपादयेयुः । येचास्य राज्ञोवंशलक्षणविद्यासंगवेद्यां जंभकविद्यां मायागतमाश्रमधर्मनिमित्तज्ञानंचाधीयानामन्त्रिणस्तत्रराजा एतत्पञ्चसंस्थायतैर्मन्त्रिभिःस्वविषयेवस्थापयेत् । मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वैशिकादिषु सद्यपदेशवेषशिल्पभाषाविदोजनपदापदेशेन मन्त्रिणःस्संधारयेत् तथा कुब्जवामनकिरातमूकजडबधिरान्धनटनर्त्तकगायनादयः स्त्रियश्चाभ्यन्तरचारिण्योऽटव्यांवनेचराः कार्याग्रामे ग्रामीणकादयः पुरुषव्यापारार्थाः स्वव्यापारपरंपराः परस्परंचैते बोद्धव्यास्तादृशैरेव तादृशाः । क्रूरिसंस्थागूढसंज्ञिताः । एवंपञ्चवर्गंप्रकल्प्य परस्यात्मनश्चात्मीयादेव पञ्चवर्गान्मन्त्रिपुरोहितादीनामनुरागापरागौविद्यात् तथा राजमण्डलप्रचारंकोमाण्डलिकः संधिविग्रहादौ कस्मिन्प्रचारेप्रवर्त्ततइति ॥ १५४॥

( २ ) **सर्वज्ञनारायणः** । अष्टविधंकर्मचोशनसोक्तम् ॥ आदानेच विसर्गेच तथा प्रैषनिषेधयोः । पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥ दण्डशुद्ध्योः सदायुक्तस्तेनाष्टगुणिकोनृपः । अष्टकर्मा दिवंयाति राजा शक्राभिपूजितइति ॥ अत्रच करादीनामादानं । भृत्यादिभ्योदानं विसर्गः । प्रैषश्चरादेः । निषेधोभृत्यादीनामविनयनिषेधः । अर्थवचनं धर्मसन्देहनिर्णयः । व्यवहारस्य चेक्षणं व्यवहारदर्शनम् । दण्डोदुष्टदण्डनम् । शुद्धिः प्रायश्चित्तनिश्चयः । पञ्चवर्गस्तु कर्मारम्भोपायःपुरुषद्रव्यसंपत् विनिपातप्रतीकारः देशकालविभागः कार्यसिद्धिरिति । कापटिकोदास्थितवैदेहगृहपतितापसव्यञ्जनपञ्चविधपरकीयवर्गएवंपंचवर्गइत्यन्ये । उदास्थितः प्रव्रजितः । वैदेहोवणिक् । अनुरागापरागौ परकीयस्वकीयानाम् । मण्डलस्य अरिमित्रारिमित्रंमित्रमित्रारिमित्रमित्रपार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दसारमध्यमोदासीनविजिगीषुरूपद्वादशनृपसमुदायस्य प्रचारं प्रवृत्तिम् ॥ १५४ ॥

( ३ ) **कुल्लूकः** । अष्टविधंकर्मसमग्रंचिन्तयेत्तच्चोशनसोक्तम् ॥ आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥ दण्डशुद्ध्योः सदा युक्तस्तेनाष्टगतिकोनृपः । अष्टकर्मादिवंयाति राजा शक्राभिपूजितः ॥ तत्रादानंकरादीनां विसर्गोभृत्यादिभ्योधनदानंप्रैषोमात्यादीनांदृष्टादृष्टानुष्ठानेषु निषेधोदृष्टादृष्टविरुद्धक्रियास्वर्थव-

चनंकार्यसंदेहे राजाज्ञयैव तत्र नियमात् । व्यवहारईक्षणंप्रजानामृणादिविप्रतिपत्तौ दण्डः पराजितानांशास्त्रोक्तधनग्रहणं शुद्धिः पापे कर्मणि जाते तत्र प्रायश्चित्तसंपादनम् मेधातिथिस्तु अकृतारम्भकृतानुष्ठानमनुष्ठितविशेषणंकर्मफलसंग्रहः तथा सामदानदण्डभेदाएतदष्टविधंकर्म । अथवा वणिक्पथउदकसेतुबन्धनंदुर्गकरणंकृतस्य संस्कारनिर्णयोहस्तिबन्धनं-खनिखननंशून्यनिवेशनंदारुवनच्छेदनंचेत्याह तथा कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकंपञ्चविधंचारव-र्गंपञ्चवर्गशब्दवाच्यंतत्त्वतश्चिन्तयेत् । तत्र परमर्मज्ञः प्रगल्भछात्रः कपटव्यवहारित्वात्कापटिकस्तंवृत्त्यर्थिनमर्थमानाभ्यामु-पगृह्य रहसि राजा ब्रूयात् । यस्य दुर्वृत्तंपश्यसि तत्तदानीमेव मयि वक्तव्यमिति प्रव्रज्यारूढपतितउदास्थितस्तंलोकेषु विदितदोषंप्रज्ञाशौचयुक्तंवृत्त्यर्थिनंकृत्वा रहसि राजा पूर्ववद्ब्रूयात् बहूत्पत्तिकमठे स्थापयेत्प्रचुरसस्योत्पत्तिकंभूम्यन्तरंच तद्वृत्त्यर्थमुपकल्पयेत् सचान्येषामपि प्रव्रजितानांराजाचारकर्मकारिणांग्रासाच्छादनादिकंदद्यात् । कर्षकः क्षीणवृत्तिः प्रज्ञा-शौचयुक्तोगृहपतिः व्यञ्जनस्तमपि पूर्ववदुक्त्वा स्वभूमौ कृषिकर्मकारयेत् । वाणिजकः क्षीणवृत्तिः वैदेहिकव्यञ्जनस्तंपूर्व-वदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यंकारयेत् । मुण्डोजटिलोवा वृत्तिकामस्तापसव्यञ्जनः सोऽपि क्वचिदाश्रमे सब-हुमुण्डजटिलान्तरे कपटशिष्यगणवृतोगुप्तराजोपकल्पितवृत्तिस्तापस्यंकुर्यात् मासद्विमासान्तरितंप्रकाशंबदरादिमुष्टिमश्नी-याद्रहसि च राजोपकल्पितमाहारंकल्पयेत् । शिष्याश्चास्यातीतानागतज्ञानादिकंख्यापयेयुस्तेन बहुलोकवेष्टनमासाद्य सर्वेषांविश्वसनीयत्वात्सर्वकार्यमकार्यंच पृच्छन्ति अन्यस्य कुक्रियादिकंकथयंत्येवंरूपंपञ्चवर्गंयथावच्चिन्तयेत् एवंपञ्चवर्गं प्रकल्प्य तेनैव पञ्चवर्गद्वारेण प्रतिराजस्यात्मीयानांचामात्यादिनांचानुरागविरागौ ज्ञात्वा तदनुरूपंचिन्तयेत् वक्ष्यमाणस्य राजमण्डलस्य प्रचारंकः संध्यर्थी कोवा विग्रहार्थीत्यादिकंचिन्तयेत् तंच ज्ञात्वा तदनुगुणंचिन्तयेत् ॥ १५४ ॥

( ४ ) **राघवानन्दः** । किंच कृत्स्नमितिप्रत्येकान्वयि । अष्टविधम् ॥ आदानेच विसर्गेच तथा प्रैषनिषेधयोः । पञ्च-चमे चानुवचने व्यवहारस्य चेक्षणे ॥ दण्डशुद्ध्योः समायुक्तस्तेनाष्टगतिकोनृपः । अष्टकर्मा दिवंयाति राजा शक्रादि-पूजितइति शुक्रोक्तेः । तत्रादानंकरादेः । विसर्गोदानंधनादेर्विप्रभृत्यादिभ्यः । प्रैषः प्रेरणादृष्टार्थानुष्ठाने । निषेधोऽमात्यादी-नां दृष्टादृष्टविरुद्धक्रियासु । अनुवचनं प्रजानांकार्यसंदेहे राजाज्ञयैवासकृन्नियमनम् । व्यवहारस्यच वक्ष्यमाणस्य ऋणा-द्यष्टादशविधस्येक्षणे । दण्डेविप्रतिपत्तौपराजितानांदण्डेन शास्त्रोक्तधनग्रहे शुद्धौ प्रायश्चित्ते स्वपरेषां पापकर्मणि ज्ञाते यस्यचेच्छतिपार्थिवइत्युक्तेः । समायुक्तस्तत्तत्कर्मनिपुणः । विस्तरभयान्मतभेदाद्विरम्यते । पञ्चवर्गं यथा कापटिक-दाम्भिकगृहपतिवैदेहकतापसव्यञ्जनात्मकम् । तत्र राजाज्ञया धर्मज्ञोपि कपटेन व्यवहारेण प्रजानांधर्माधर्मौ राज्ञ ज्ञापयतीति कापटिकः । एवंसंन्यासारूढः पतितस्तंधनैः प्रलोभयंस्तद्द्वारा परकीयसंन्यासिव्याजचाराणांवृत्तिंजानी-याद्येन सदाम्भिकः । पतितः सन्यासी सएव दासआमरणान्तिकइतियाज्ञवल्क्योक्तेः । गृहपतिः पूर्वंस्वयंकृषकः दुरदृ-ष्टवशात्क्षीणवृत्तिस्तमेव स्वभूमौ कृषिंकारयेदिति । वैदेहकं वणिजंक्षीणवृत्तिंस्ववाणिज्ये नियोजयेदिति । तापसः मुण्डो-जटिलोवा वृत्तिकामस्तमपि तादृशैः कपटतापसैरध्यापकत्वादिना संभाव्य तद्द्वारा परपक्षंकबुध्या प्रलोभयेदिति । तेन पञ्चवर्गद्वारेणात्मन्यमात्यानामनुरागंप्रतिराज्ञोऽपरागंविद्वेषंचिन्तयेदित्यनुषज्यते । प्रचारं यथा कः संध्यर्थी कोवा वि-ग्रहार्थीति मण्डलस्यच वक्ष्यमाणस्य ॥ १५४ ॥

( ५ ) **नन्दनः** । अष्टविधंकर्म्मकामन्दकेनोक्तम् ॥ कृषिर्वणिक्पथोदुर्गं सेतुःकुञ्जरबन्धनम् । खन्याकरवनादाने सैन्यानांचनिवेशनम् ॥ अष्टवर्गमिमंसाधुःस्वस्थचित्तोविचिन्तयेत् ॥ पञ्चवर्गःकर्म्मारम्भोपायादिः पूर्वोक्तः मण्डलंद्विसप्त तिप्रकृत्यकंवक्ष्यति । प्रचारःप्रवृत्तिः ॥ १५४ ॥

[ **नन्दनः** । मण्डलप्रचारपरिज्ञानोपायमाह । श्रवणाटविकादयोवनचराः वनेवनाधिपेषु चारपरंपराः कार्याः । श्रमणावानप्रस्थाः ॥ १ ॥ ]

[ **नन्दनः** । तादृशाः श्रमणादिरूपिणः तादृशैः परमार्थश्रमणादिभिः परस्यैते चराबोद्धव्याः तेषांद्वैविध्यमुत्तरार्द्धेनोच्यते चारसञ्चारिणः गतागताभ्यां प्रवृत्तिज्ञापका इति यावत् । संस्थानामेकत्रस्थित्वाप्रवृत्तिहारयितारस्तेषामुभयेषां विशेषणम् गूढाश्चगूढसंज्ञिताइति गूढाःसन्तोप्यगूढसंज्ञिताइतिगूढत्वेनपरिज्ञातास्ते । द्विविधा बोद्धव्याइति ॥ २ ॥ ]

( ६ ) **रामचन्द्रः** । द्विसप्ततिसंख्याकानि राज्याङ्गानि पञ्चभिराह । पूर्वंकृत्स्नमष्टविधंकर्म चिन्तयेत् । तद्यथा उशनसोक्तम् ॥ आदाने च विसर्गे च तथा प्रेषनिषेधयोः । पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥ दण्डशुद्ध्योः सदा युक्तस्तेनाष्टगुणिकोनृपः । अष्टकर्मा दिवंयाति राजा शक्राभिपूजितः ॥ इति च पुनः तत्वतः विचारेण पञ्चवर्गं चिन्तयेत् । कर्मणामारम्भोपायः पुरुषद्रव्यसंपत् विनिपातप्रतीकारः देशकालविभागः कार्यसिद्धिरितिपञ्चवर्गः । कापटिकोदस्थितगृहपतिवैदेहतापसव्यञ्जनात्मकः पञ्चवर्गइत्यन्ये । अनुरागापरागौ परकीयाणां तथा मण्डलस्य स्वकीयस्य प्रचारंप्रवृत्तिं चिन्तयेत् ॥ १५४ ॥

**मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ॥ उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥ १५५ ॥**

( १ ) **मेधातिथिः** । एतस्मिन्राजमण्डलइमाश्चतस्रोराजप्रकृतयोमुख्याभवन्ति । विजिगीषुररिर्मध्यमउदासीनइति तत्र एषच योराजा प्रकृतिसंपन्नोऽहमेवंविधांपृथिवींविजेष्येऽभ्युत्थितःसविजिगीषुः उत्साहशक्तियोगात् । शत्रुस्त्रिविधः सहजः प्राकृतःकृत्रिमः स्वभूम्यनन्तरइति मध्यमोऽनयोररिविजिगीष्वोरसंहतयोर्निग्रहसमर्थनसंहतयोरुदासीनः अरिविजिगीषुमध्यमानामसंहतानांनिग्रहसमर्थोनतुसंहतानाम् ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । तत्रापि चतुर्णांयत्नतोन्वेष्यः प्रचारोधिककार्यत्वादित्याह मध्यमस्येति । अरिविजीगिषुमध्यवर्ती क्षुद्रोपि मध्यमोन्यतरप्रवेशेनान्यतरं बाधतइति प्रतिसन्धेयः । विजिगिषोर्मण्डलमध्यउत्साहवतः उदासीनः सर्वतोबाह्यः सतु सर्वानेवोत्थापयितुं शक्तइत्यन्वेष्यः । एवमरिः सर्वानर्थमूलतया ॥ १५५ ॥

( ३ ) **कुल्लूकः । अरिविजिगीषोर्यौभूम्यनन्तरः** संहतयोरनुग्रहसमर्थोनिग्रहेचासंहतयोः समर्थः समध्यमः तस्य प्रचारंचिन्तयेत् । **तथा प्रज्ञो**त्साहगुणप्रकृतिसमर्थोविजिगीषुस्तस्य चेष्टितंचिन्तयेत् । तथा विजिगीषुमध्यमानांसंहतानामनुग्रहेसमर्थोनिग्र**हे चा**संहतानांसमर्थउदासीनःतस्य प्रचारंचिन्तयेत् । शत्रोश्च त्रिविधस्यापि सहजस्य अकृत्रिमस्य भूम्यनन्तरस्य च पूर्वापेक्षया प्रयत्नतः प्रचारंचिन्तयेत् ॥ १५५ ॥

( ४ ) **राघवानन्दः** । मण्डलमाह मध्यमस्येति । एतस्मिन्राजमण्डले विजिगीषुररिर्मध्यउदासीनइति चतस्रोमुख्याराजप्रकृतयः तत्र विजिगीषुर्योराजा प्रकृतिसंपन्नोऽहमेवंविधांपृथ्वींजेष्यामीत्युच्छ्रितः । उत्साहयोगादरिरपि त्रिविधः सहजकृत्रिमस्वभूम्यन्तरितभेदेन कृत्रिमोभूम्याद्यपरिहारनिर्मितः । मध्यमः अरिजिगीषोर्मध्यभूमिगतःसंस्तयोः संहतयोर्निग्रहेऽसमर्थोऽसंहतयोर्निग्रहेसमर्थः । उदासीनस्त्वरिविजीगिषुमध्यमानामसंहतानांनिग्रहे समर्थः संहतानामसमर्थः। तेषांप्रचारंचिन्तयेदित्यनुषज्यते । प्रचारोनाम प्रज्ञोत्साहगुणप्रकृतिसपन्नत्वम् । श्लोकोऽर्थक्रमाद्व्याख्यातः ॥ १५५ ॥

( ५ ) **नन्दनः** । मण्डलंवक्तुंक्रमते मध्यमस्येति । प्रचारःमध्यमादीनां चतुर्णां लक्षणत्वं वक्ष्यति । बोद्धव्यइति वचनविपरिणामः ॥ १५५ ॥

**एताः प्रकृतयोमूलं मण्डलस्य समासतः॥अष्टौ चान्याः समाख्याताद्वादशैव तु ताः स्मृताः॥१५६॥**

( १ ) **मेधातिथिः** । एताःस्मृताः एतामूलप्रकृतयोमण्डलस्यव्याख्याताः । अष्टौचान्याः आसांचतसृणांप्रकृतीनामेकैकस्याःप्रकृतेर्मित्रममित्रंचेति द्वेद्वेप्रकृताएताअष्टौ आद्याश्चतस्रएवमुभयतोद्वादशभवन्ति ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः** । एतदाह एताइति । प्रकृतयोऽवयवाः । मण्डलस्य मूलं प्रधानम् । अष्टावन्यामित्रप्रभृतयोद्वादशैव ताःप्रकृतयोमिलित्वा तदयंसमुदायार्थः । मण्डलस्य मध्ये योधिकलाभार्थनित्योत्साहः प्रवर्तते सविजिगीषुस्तस्याग्रतोरिस्तदनन्तरोमित्रं तदनन्तरोरिमित्रं ततोमित्रमित्रं ततोरिमित्रमित्रं पृष्ठे तु पार्ष्णिग्राहस्तत्पृष्ठे आक्रन्दः तत्पृष्ठे पार्ष्णिग्राहासारस्तत्पृष्ठआक्रन्दासारः । अरिविजिगीष्वोर्मध्यस्थः क्षुद्रोमध्यमः उदासीनः सर्वेभ्यः परतरइतिद्वादशभिर्नृपैर्मण्डलमुच्यते । क्षुद्रोप्युभयोरन्यतरप्रवेशेनान्यतरेण सह विग्रहंकुर्वन्दुर्ग्रहइति मण्डले गम्यते । अत्र यः स्वापेक्षया विजिगीषुस्तमादाय स्वात्मानमन्तर्भाव्य द्वादशराजकमण्डलंप्रकल्प्यते तेषांद्वादशानांप्रवृत्तिरन्वेष्टव्येत्यर्थः ॥ १५६ ॥

( ३ ) **कुल्लूकः** । एतामध्यमाद्याश्चतस्रः प्रकृतयः । संक्षेपेण मण्डलमूलं अपरासामभिधास्यमानप्रकृतीनाममात्यादीनांमूलमित्युच्यते । अन्याश्चाष्टौ समाख्याताः तद्यथा अग्रतोऽरिभूमीनांमित्रमरिमित्रंमित्रमित्रमरिमित्रमित्रंचेति एवंचतस्रः प्रकृतयोभवन्ति पश्चाच्च पार्ष्णिग्राहआक्रन्दः पार्ष्णिग्राहासारआक्रन्दासारइति चतस्रः एवमष्टौ प्रकृतयोभवन्ति पूर्वोक्ताभिश्च मध्यमारिविजिगीषूदासीनशत्रुरूपाभिर्मूलप्रकृतिभिः सह द्वादशैताः प्रकृतयःस्मृताः ॥ १५६ ॥

( ४ ) **राघवानन्दः** । एतामध्यमाद्याश्चतस्रः प्रकृतयः संक्षेपेणमण्डलस्यमूलम् । अष्टौ चान्याः । अग्रतः स्वभूमीनां अरिः अरिमित्रं मित्रं उदासीनश्चेतिचतस्रः तथा पार्ष्णिग्राहः आक्रन्दः पार्ष्णिग्राहासारः आक्रन्दासारः इतिचतस्रः एवमष्टौ उक्ताभिर्मध्यमविजिगीषूदासीनशत्रुरूपाभिः सहद्वादश ॥ १५६ ॥

( ५ ) **नन्दनः** । मण्डलस्य द्विसप्ततिप्रकृत्यात्मकंश्लोकद्वयेनाह एताः प्रकृतयोमूलमिति मध्यमो विजिगीषूदासीनःशत्रुरित्येताश्चतस्रःप्रकृतयः मण्डलस्य मूलंप्रकृतिरिति राजा । काःपुनरष्टताः प्रकृतयः मित्रमरिमित्रंमित्रमित्रमरिमित्रंपार्ष्णिग्राहः आसारःआक्रन्दआसारश्चेति एवन्तावद्द्वादशस्मृताः ॥ १५६ ॥

( ६ ) **रामचन्द्रः** । एताश्चतस्रः प्रकृतयो मण्डलस्य मूलं **प्रधानं समासतः** संक्षेपतः अरिमित्रारिमित्रमित्रमित्रारिमित्रमित्रपार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासारमध्यमोदासीनविजिगीषुरूपद्वादशोत्पत्तिः । प्रथमोविजिगीषुः ततोऽरिस्ततोमित्रंततोरिमित्रंततोमित्रमित्रं ततोरिमित्रमित्रम् । पृष्ठे तु पार्ष्णिग्राहस्तत्पृष्ठे आक्रन्दस्तत्पृष्ठे पार्ष्णिग्राहासारस्तत्पृष्ठे आक्रन्दासारः । अरिविजिगीष्वोर्मध्यस्थः क्षुद्रोमध्यमः । उदासीनः सर्वेभ्यःपरतरइति द्वादशमण्डलम् ॥ १५६ ॥

**अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ॥ प्रत्येकं कथिताह्येताः संक्षेपेण द्विसप्ततिः ॥१५७॥**

( १ ) **मेधातिथिः** । प्रकृतीनांएकैकस्याभवन्ति अतःषट्द्वादशकाद्विसप्ततिः ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । एवंतेषां याअङ्गभूताअमात्यकोशराष्ट्रदण्डदुर्गाख्याः प्रकृतयस्तासामपि प्रवृत्तिरनुसंधेयेत्याह अमात्येति । मण्डले प्रधानभूताश्चत्वारइतरेचाष्ट तेषांद्वादशानाममात्यदुर्गराष्ट्रकोशदण्डाः प्रत्येकंपञ्चपञ्चैतिषष्टिस्तेच द्वादशेत्येवंमिलित्वा मण्डलावयवा द्विसप्ततिरित्यर्थः ॥ १५७ ॥

( ३ ) **कुल्लूकः** । आसांमूलप्रकृतीनांचतसृणामष्टानांशाखाप्रकृतीनामुक्तानामेकैकस्याः प्रकृतेरमात्यदेशदुर्गकोशदण्डाख्याः पञ्चद्रव्यप्रकृतयोभवन्ति एताश्च पञ्चद्वादशानांप्रत्येकंभवन्त्योद्वादशगुणजाताः षष्टिरेव द्रव्यप्रकृतयोभवन्ति तथा मूलप्रकृतिभिश्चतसृभिः शाखाप्रकृतिभिश्चाष्टाभिः सह संक्षेपतोद्विसप्ततिप्रकृतयोमुनिभिः कथिताः ॥१५७ ॥

---

( १५७ ) राष्ट्रदुर्गार्थम्=पुरराष्ट्रार्थम् ( त )

( ४ ) **राघवानन्दः** । तेषांप्रकृतानांप्रत्येकं पुनः पञ्चपञ्चप्रकृतयः सन्तीति सविनिगमनमाह अमात्येति । अमात्यः पुरोहितादिः । राष्ट्रंदेशः । दुर्गोगिर्यादिः । अर्थःकोशः । दण्ड्यतेपापी शत्रुर्वानेनेति दण्डः पणग्रहणादिः सेनादिर्वा । तेन मूलप्रकृतयोमध्यमाद्याश्चतस्रः मित्राद्याश्चतस्रः शाखाः प्रकृतयः तथापार्ष्णिग्राहाद्याश्चतस्रइतिद्वादश तासांप्रत्येकममात्यादिपञ्चेति षष्टिरिति द्विसप्ततिःप्रकृतयः ॥ १५७ ॥

( ५ ) **नन्दनः** । आसु द्वादशसु प्रकृतिषु प्रत्येकममात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्चप्रकृतयः सन्ति । अर्थः कोशदण्डोबलं एताअनन्तरोक्ताश्चतस्रः अष्टौ च द्वादशदशपञ्चकानि च प्रकृतयोविस्तरेण कथिताः । संक्षेपेण द्विसप्ततिः संपद्यन्तेएषमण्डलस्य विस्तारःसंक्षेपश्चेत्यर्थः ॥ १५७ ॥

**अनन्तरमरिंविद्यादरिसेविनमेव च ॥ अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ १५८ ॥**

**[ विप्रकृष्टेऽध्वनीयन्न उदासीनो बलान्वितः । सखिलोमण्डलार्थस्तु यस्मिन्ज्ञेयः समध्यमः ॥ १ ॥ ]+**

( १ ) **मेधातिथिः** । विजिगीषुभूम्यनन्तरमरिंविद्यात्तथारिमित्रंमित्रंत्वेवमरिंभूम्यनन्तरंविजिगीषोर्मित्रंभवति । उदासीनस्तयोःपरः । अरिमित्रलक्षणंच सहजकृत्रिमयोरपिद्रष्टव्यम् ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । अमात्यादीनांच स्वाम्यधीनतया तन्मध्यगणनेन यदि द्वादशैव प्राधान्येन गण्यन्ते तदा तत्रापि विवक्षितविवेके वस्तुतश्चत्वारएव स्युरित्याह अनन्तरमरिमिति । अरिसेविनमरिमित्रादिमरिमेव विद्यात् । एवंचानन्तरस्य तत्संयुक्तस्यचारित्वे पार्ष्णिग्राहतदासाराऽरितन्मित्राणामरित्वमेव । एवमरेरनन्तरं तद्वैरिणं सर्वमेव मित्रकोटिंविद्यात् । तथाउदासीनउभयप्रकाररहितोविजिगीषुश्च द्वावपि पृथगिति चातुर्विध्यं तयोःपरं ताभ्यामन्यं विजिगीषोश्चेति शेषः ॥ १५८ ॥

( ३ ) **कुल्लूकः** । विजिगीषोर्नृपस्यान्तरितंचतुर्दिशमप्यरिप्रकृतिविजानीयात् तथा तत्सेविनमप्यरिमेवविद्यात् अरेरनन्तरंविजिगीषोर्नृपस्यैकान्तरंमित्रप्रकृतिंविद्यात्तयोश्चारिमित्रयोः परंविजिगीषोरुदासीनप्रकृतिंविद्यात् । आसामेव प्रकृतीनामग्रपश्चाद्भावभेदेन व्यपदेशभेदः । अत्राग्रवर्तिनोऽरिव्यपदेशएव पश्चाद्वर्तिनस्त्वरित्वेऽपि पार्ष्णिग्राहव्यपदेशः ॥१५८ ॥

( ४ ) **राघवानन्दः** । उक्तार्थादिचतुष्टयस्य लक्षणमाह अनन्तरमिति । अनन्तरं स्वभूमेःचतुर्दिक्षु वर्तमानंराजचतुष्टयमरिंविद्यात् तथा अरिसेविनमप्यरिंविद्यादतएव तस्यापरपक्षनिक्षिप्तत्वादरिमित्रोदासीनपार्ष्णिग्राहाश्चतस्रः । तयोरिमित्रयोःपरं बहिर्भूमौवर्तमानमुदासीनंचिंतयेदित्यन्वयः । वस्तुतस्तु मध्यमस्येत्यादेरयमर्थः । मध्यमस्य मित्रमुदासीनोऽरिर्विजिगीषुश्चेति चतस्रःप्रकृतयः तएव नामभेदेनारिमित्रमित्रारिमित्रपार्ष्णिग्राहासाराक्रन्दासारतांप्रतिपद्यन्ते । नचैकस्यनामादिभेदादनेकत्वमदृष्टचरमितिवाच्यम् । एकचक्रश्चैकाश्वःसवितेति श्रुतेर्भेदेन समसमिवहःपञ्चितिस्मृतिदर्शनात् कृष्णाष्टम्याएव जयन्त्यादिभेदेन फलभेददर्शनाच्च । अतएव । अरिर्मित्रमुदासीनोऽनन्तरस्तत्परःपरइतियाज्ञवल्क्यः । पार्ष्णिग्राहाक्रन्दासारादयश्चारिमित्रादिष्वन्तर्भवन्तीतियाज्ञवल्क्यमिताक्षरावचनमपिसंगच्छतइति स्वविषयस्याग्रवर्त्यरिः पश्चाद्वर्ती पार्ष्णिग्राहः ॥ विषयानन्तरोराजा शत्रुर्मित्रमतःपरम् । उदासीनःपरतरःपार्ष्णिग्राहस्तु पृष्ठतइत्यभिधानात् ॥ एवंचतुर्दिक्षुद्वादशैव राजानः ॥ १५८ ॥

( ५ ) **नन्दनः** । मध्यमादीनांलक्षणंश्लोकद्वयेनाह अनन्तरमरिंविद्यादिति । विजिगीषोरनन्तरमरिंविद्यात

+ ( ट )

अरिसेवितश्चारिमित्रंपार्ष्णिग्राहः आसारश्चेति चत्वारोऽरिसेविनः स्वयमरिश्चेति पञ्चारयः सम्पद्यन्ते । अरिप्रसङ्गान्मित्रलक्षणमुक्तम् । अरेरनन्तरममित्रमिति अरेरनन्तरंजातावेकवचनं अरीणां पञ्चानामनन्तरममित्रंविद्यादित्यर्थः । मित्रंमित्रमित्रमाक्रन्दंआसारश्चेति चत्वारिमित्राणि संपद्यन्ते । तयोररिवर्गमित्रयोः परंबहिस्थितमुदासीनंविद्यादिति । उदासीनस्य लक्षणशेषमुत्तरत्र श्लोकेऽपि वक्ष्यते ॥ विप्रकृष्टेऽध्वन्यधत्तउदासीनोबलान्वितः । विजिगीषुर्मण्डलार्थोयस्मिन्ज्ञेयः समध्यम इति ॥ योविप्रकृष्टेऽध्वनि स्थितोयत्नरहितःसउदासीनः । योमहाबलः सविजिगीषुमण्डलार्थोमण्डलस्य कृत्यमनिग्रहानुग्रहादिकंयस्मिंस्तिष्ठति समध्यमोज्ञेयः । एतन्मण्डलप्रकरणंकामन्दकमतानुसारेण व्याख्यातं । तथाह कामन्दकः ।

॥ संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीषुरितिस्मृतः ॥ १ ॥
अरिमित्रमरेर्मित्रमित्रमित्रमतः परम् । तथारिमित्रमित्रञ्च विजिगीषोःपरःस्मृतः ॥ २ ॥
पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चेति विजिगीषोस्तुमण्डलम् ॥ ३ ॥
अरेश्च विजिगीषोश्च मध्यमोभाम्यनन्तरम् । अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥ ४ ॥
मण्डलाद्बहिरेतेषामुदासीनोबलान्वितः । अनुग्रहे संहतानांव्यस्तानाञ्चैव योप्रभुः ॥ ५ ॥
अमात्यराष्ट्रदुर्गाणि कोशोदण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥ ६ ॥
द्वादशानांनरेन्द्राणांपञ्चपञ्चपृथक्पृथक् । अमात्याद्यास्तु प्रकृतीरामनन्तीहमानवाः ॥ ७ ॥
मालाद्वादशचैवेताअमात्याद्यास्तथा च याः । समविद्याधिकाश्चैषाः सर्वाः प्रकृतिमण्डलम् ॥ ८ ॥

इति ॥ १५८ ॥

**तान्सर्वानभिसंदध्यात्सामादिभिरुपक्रमैः ॥ व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥ १५९॥**

( १ ) **मेधातिथिः** । संदध्याद्वशीकुर्यात् । पौरुषनयौ सामदण्डावेव तत्रचोक्तौ सामदण्डौ प्रशंसतीति ॥ १५९ ॥

( २ ) **सर्वज्ञनारायणः** । अभिसंदध्यात् आत्मीयान्कुर्यात् । उपक्रमैरुपायैः । पौरुषेण दण्डकारणभूतेन । नयेनच मतिकौशलेन सामदानभेददण्डकारणभूतेन ॥ १५९ ॥

( ३ ) **कुल्लूकः** । तान्सर्वान्नृपतीन्सामभेददानदण्डैरुपायैर्यथासंभवंव्यस्तैः समस्तैर्वशीकुर्यात् । अथवा पौरुषेण दण्डेनैव केवलेन नयेन साम्नैव वा केवलेनात्मवशान्कुर्यात्तथाचोक्तम् ॥ सामदण्डौप्रशंसन्तिनित्यंराष्ट्राभिवृद्धये ॥१५९॥

( ४ ) **राघवानन्दः** । एतेषांज्ञानेकिंस्यात्तदाह तानिति । अभिसंदध्याद्वशीकुर्यात् । व्यस्तैः साम्नादानेनभेदेनदण्डेनच कंचित् समस्तैःकंचित्सामभेददण्डैः । पौरुषेण दण्डेनैव नयेन साम्नैववा । तथोक्तम् ॥ सामदण्डौप्रशंसन्तिनित्यंराष्ट्राभिवृद्धयइति ॥ १५९ ॥

( ५ ) **नन्दनः** । पौरुषेण उत्साहेन ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । सामादिभिरुपक्रमैश्चतुर्भिरुपायैः सामदानदण्डभेदैः समस्तैर्व्यस्तैर्वा तान्सर्वानरिमित्रादीन्संदध्यात् संधिकुर्यात् ॥ १५९ ॥

**संधिं च विग्रहं चैव यानमासनमेव च ॥ द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥ १६०॥**

( १ ) **मेधातिथिः** । तत्रहिरण्यादिदानोभयानुग्रहार्थःसन्धिस्तद्विपरीतोविग्रहः एकान्ततापुच्यते याममुपेक्षायामा-

सनंसन्धिविग्रहोपादानंद्वैधीभावः परस्यात्मार्पणंसंश्रयः एतेषड्गुणाः एतेषांयस्मिन्गुणेऽवस्थितोमन्येताहंशक्ष्यामि दुर्गंकारयितुं हस्तिनीर्बन्धयितुं खनीःखनयितुं वणिक्पथंप्रयोजयितुं जतुवनंछेदयितुं अदेवमातृकदेशे क्षेत्राणि बन्धयितुमित्येवमादीनि परस्य वित्तानि व्याहर्तुंवृद्धिविघातार्थंगुणमुपेयादेवंचसति ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । संधिर्दानसामादिनात्मीयताकारणम् । विग्रहोवैरोपदर्शनम् । यानमुद्यम्य गमनम् । आसनमकिंचिदुक्तावधारणम् । द्वैधीभावोल्पस्य सैन्यस्य विभज्य योधनम् । संश्रयः स्वस्याबलत्वे बलवत्पराश्रयणम् ॥ १६० ॥

( ३ ) **कुल्लूकः** । तत्रोभयानुग्रहार्थंहस्त्यश्वरथहिरण्यादिनिबन्धनेनावाभ्यामन्योन्यस्योपकर्त्तव्यमिति नियमबन्धः सन्धिः । वैरंविग्रहाचरणाद्याधिक्येन । यानंशत्रुंप्रति गमनम् । उपेक्षणमासनम् । स्वार्थसिद्धये बलस्य द्विधाकरणंद्वैधीभावः । शत्रुपीडितस्य प्रबलतरराजान्तराश्रयणंसंश्रयः । एतान्गुणानुपकारकान्सर्वदा चिन्तयेत् यद्गुणाश्रयणे सत्यात्मनउपचयः परस्यापचयस्तंगुणमाश्रयेत् ॥ १६० ॥

( ४ ) **राघवानन्दः** । परस्यात्मसात्करणे षड्उपायानाह सन्धिमिति । तत्र सन्धिरुभाभ्यांहस्त्याद्यर्थेनापकर्तव्यमिति नियमबन्धः द्वयोर्धारणपोषणयोर्हेतुत्वात् । विग्रहोवैरम् । बलाधिक्येन शत्रुंप्रतिगमनं यानम् । उपेक्षासनम् । स्वार्थसिद्धये स्वस्य हस्त्यादिबलस्यच द्विधाकरणं द्वैधीभावः । शत्रुपीडितस्य प्रबलतरराजाश्रयणमाश्रयइति ॥ १६० ॥

( ६ ) **रामचन्द्रः** । षाड्गुण्यविधिमाह सन्धिमितिसप्तभिः । सन्धिः व्यवस्थाकरणं द्रव्यसामादिना वशीकरणं विग्रहः अपकारः यानं शत्रुंप्रति यात्रा आसनं उपेक्ष्यावज्ञाकरणं द्वैधीभावः स्वबलस्य द्विधाकरणं संश्रयः प्रबलस्याश्रयः ॥१६०॥

**आसनं चैव यानं च संधिं विग्रहमेव च ॥ कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥ १६१ ॥**

( १ ) **मेधातिथिः** । एकेन संधायापरस्मिन्याने शक्तंमृषा विगृह्णीयात् एवमासनमपि संधाय विगृह्यच सर्वमेतत्कार्यंवीक्ष्य प्रयुञ्जीत नात्र नियतकालोयदैव यद्युक्तंमन्येत तदैवतदाचरेत् यदि कालनियमोलक्षयितुंनशक्यते उपदेशःकिमर्थमेवमाह नशक्यते विशेषोदुर्लक्षः सामान्यन्तु सुलक्षमेतदप्यबुधानामुपयुज्यते ॥ १६१ ॥

( २ ) **सर्वज्ञनारायणः** । कार्यंवीक्ष्य यत्र स्वप्रयोजनदर्शनं तदेव नतुसर्वसंभवेयत्किंचित्प्रयोज्यम् । संधायचविगृह्यचेतिपाठेसंधाय यानं तथा आसनंवा विगृह्यापि तथेत्यर्थः ॥ १६१ ॥

( ३ ) **कुल्लूकः** । संध्यादिगुणानांनैरपेक्ष्येणानुष्ठानमनन्तरमुक्तंतदुचितानुष्ठानार्थोयमारम्भः । आत्मसमृद्धिपरहान्यादिकंकार्यंवीक्ष्य संधायासनंविगृह्य वा यानंद्वैधीभावसंश्रये च केनचित्संधिंकेनचिद्विग्रहमित्यादिकमनुतिष्ठेत् ॥ १६१ ॥

( ४ ) **राघवानन्दः** । एतानिस्वार्थसमृद्धिपरपीडादिकार्यगौरवमालोच्य प्रयोक्तव्यानीत्याह आसनंचेति । प्रयुञ्जीत अनुतिष्ठेत् ॥ १६१ ॥

( ६ ) **रामचन्द्रः** । एतान्सन्धिविग्रहादीन्कार्यंवीक्ष्यप्रयुञ्जीत ॥ १६१ ॥

**संधिं तु द्विविधं विद्याद्राजा विग्रहमेव च ॥ उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥१६२॥**

( २ ) **सर्वज्ञनारायणः** । सर्वे गुणाद्विविधाइत्यर्थः ॥ १६२ ॥

( ३ ) **कुल्लूकः** । संध्यादीन्षडेव गुणान्द्विप्रकारान् जानीयात् । *इत्यविवक्षार्थम् ॥ १६२ ॥

---

* इत्य = इत्युत्तर ( अ )

( ४ ) **राघवानन्दः** । एतेषांद्वैविध्यंप्रतिजानीते सन्धित्विति । सन्ध्यादिषट्कं प्रत्येकं द्विविधमित्यर्थः ॥ १६२ ॥

( ६ ) **रामचन्द्रः** । राजासंधिविग्रहादीन् गुणान् द्विविधान्विद्यात् ॥ १६२ ॥

**समानयानकर्मा च विपरीतस्तथैव च ॥ तदा त्वायतिसंयुक्तः संधिर्ज्ञेयोद्विलक्षणः ॥ १६३ ॥**

( १ ) **मेधातिथिः** । समानयानकर्मायानफलंसहितौ तुल्यौ गच्छावः समानफलभागितयानचत्वयाहमुल्लङ्घनीयो- यत्ततोलप्स्यते तत्तत्र मम च भविष्यति । अथवा त्वमन्यतोयाह्यहमन्यत्र यास्यामीत्येवमसमानयानकर्मा विपरीतः ॥१६३॥

( २ ) **सर्वज्ञनारायणः** । संधिर्द्विधा समानयानकर्मा किंचिद्दूरंयानंकृत्वा यः क्रियते । विपरीतः स्वस्थानस्थेनै- व क्रियमाणः । सच द्विविधोपि कश्चित्तदात्वसंयुक्तस्तदैव देयफलः प्राप्यफलोवा । आयतिसंयुक्तस्तु कालान्तरे सफलो- द्वयोऽफलोवा ॥ १६३ ॥

( ३ ) **कुल्लूकः** । तात्कालिकफललाभार्थमुत्तरकालीनफललाभार्थंवा यत्र राजान्तरेण सहान्यंप्रति यानादिक- र्म क्रियते ससमानयानकर्मासंधिः यः पुनस्त्वमत्र याह्यहमत्र यास्यामीति सांप्रतिकोत्तरकालीनफलार्थितयैव क्रि- यते सोऽसमानयानकर्मेत्येवंद्विप्रकारः संधिर्ज्ञातव्यः ॥ १६३ ॥

( ४ ) **राघवानन्दः** । तत्र सन्धेर्द्वैविध्यंविशदयति समानेति । संप्रत्युदर्केवा यत्फलंतदर्थंराजान्तरेणसहैवान्यंप्रति- यानादिकर्मकरणंतत्समानयानकर्मा सन्धिः समानस्यैकफलस्य यानेन कर्मणोभयोरनुसन्धेयत्वात् । विपरीतः असमा- नकर्म त्वमत्रयाहि अहमन्यत्रयास्यामीति सांप्रतिकोत्तरकालीनफलार्थितयावा गमनम् । तदेवाह तदात्वायतिसंयुक्तइति तदात्वंतत्कालः आयतिरुत्तरकालः तयोःसम्यक्फलसिद्धये युक्तः साधुः सच सन्धेर्विशेषणम् ॥ १६३ ॥

( ५ ) **नन्दनः** । लब्धसमानयानयोः समानंभवेदितिकृतसंयोगद्वयाद्यानंयानसमर्थफलंकर्म युद्धादिकश्च समानं- यस्मिन्ससमानयानकर्म्मा । तदात्वायतिसंयुक्तः तदात्वंवर्तमानः कालः आयतिर्भविष्यत्कालः क्रियमाणकरिष्यमाणयोः कार्य्ययोरित्यर्थः ॥ १६३ ॥

( ६ ) **रामचन्द्रः** । समानंयानकर्म यस्य ससमानयानकर्मा शत्रोःसमानयानहस्त्यश्वादीनि । च पुनःविपरीतः शत्रुः हस्त्यश्वादिभिर्यदाहीनः । तदातु आयतिसंयुक्तः भाग्ययुक्तः सन्धिर्द्विलक्षणोज्ञेयः ॥ १६३ ॥

**स्वयंकृतश्च कार्यार्थमकाले कालएव वा ॥ मित्रस्य चैवापकृते द्विविधोविग्रहः स्मृतः ॥१६४ ॥**

( १ ) **मेधातिथि** । स्वयंविग्रहस्य कालोयदावश्यंस्वबलेनोत्सहते परंकर्षयितुमुत्साहयुक्तः प्रकृतयः संहताविवृद्धाश्च स्वकर्मकृष्यादि फलसंपन्नाःपरस्यैतान्यपहरिष्यन्तिकर्माणि क्षीणलब्धप्रकृतिः परः शक्यास्तत्प्रकृतयउपजापेनात्मीयाः कर्तुंसस्वयंविग्रहस्य कालः । अकालएतद्विपरीतः तत्रापि विग्रहोमित्रस्यापकृते यदि शत्रुणा तदीयंमित्रमपकृतंतदा तद्वि- चिन्त्याकालेऽपि विग्रहः कर्त्तव्यः । यद्यपि स्वयमपि शत्रोरनन्तरंमित्रंभवति तथापि तेन मित्रेण सहायेन शक्यः शत्रुरप- बाधितुम् । शत्रोरनन्तरंमित्रंभवति शत्रोस्तु शत्रुर्विषयानन्तरत्वम् । पाठान्तरं मित्रेण चैवापकृते । तेन यद्यसौबाधितो- भवतितदाऽकालेऽपिविग्रहःकार्यः । एतद्विग्रहस्य द्वैविध्यंस्वकार्यार्थंमित्रकार्यार्थंच । अथवात्मनोभ्युच्छ्रयादेकः प्रकारो- मित्रेणापकृतेव्यसनिनि तत्रैव द्वितीयः ॥ १६४ ॥

( २ ) **सर्वज्ञनारायणः** । स्वार्थंकृतोमित्रार्थंचेति द्विधा सच सर्वोविग्रहयोग्यकाले हेमन्तादावपि क्रियते अयो- ग्यकाले वर्षास्वपि अपकृतेऽपकारेऽन्येन कृते तदपकारार्थम् ॥ १६४ ॥

( ३ ) **कुल्लूकः**। शत्रुजयरूपयोजनार्थंशत्रोर्व्यसनादिकमाकलय्य वक्ष्यमार्णमार्गशीर्षादिकालादन्यदा यथोक्तकाल-एवं वा स्वयंकृतइत्येकोविग्रहः। अपकृतमपकारः मित्रस्यापकारे राजान्तरेण कृते मित्ररक्षणार्थमपरोविग्रहइत्येवंद्विवि-धोविग्रहः। गोविन्दराजेनतु मित्रेण चैवापकृतइतिपठितंव्याख्यातंच यः परस्य शत्रुः सविजिगीषोर्मित्रंतेनापकारे क्रियमा-णेव्यसनिनि शत्राविति तस्माल्लिखितपाठार्थौ वृद्धैर्गोविन्दराजतः मेधातिथिप्रभृतिभिर्लिखितौ स्वीकृतौ मया ॥ १६४ ॥

( ४ ) **राघवानन्दः**। विग्रहोविरोधस्तद्वैविध्यंस्फुटयति स्वयमिति। काले मार्गशीर्षादौ अकाले तद्भिन्ने कार्यार्थं शत्रुजयप्रयोजनार्थं तद्व्यसनादिकमाकलय्य स्वेन संपादितोविग्रहएकः। अपरश्च मित्रस्यापकारे परेणक्रियमाणे तद्रक्ष-णार्थं द्विविधः। गोविन्दराजेन मित्रेण चैवापकृतइति पठितं व्याख्यातंच। परस्य शत्रुःसविजिगीषोर्मित्रंतेनमित्रेणापकृते-मित्रादेर्व्यसनिनिशत्रौ तन्निग्रहार्थोविग्रहः ॥ १६४ ॥

( ५ ) **नन्दनः**। स्वयंविजिगीषुणामित्रेकृतः मित्रेणविजिगीषौकृतश्चेतिद्विविधेविग्रहः ॥ १६४ ॥

( ६ ) **रामचन्द्रः**। द्विविधविग्रहमाह स्वयमिति। अकाले काले वा कार्यार्थं स्वयंकृतं स्वार्थं मित्रार्थं वा मित्रस्या-पकृते अनेनापकारेकृते सति तदपकारार्थं क्रियते सः द्विधाविग्रहः ॥ १६४ ॥

**एकाकिनश्चात्ययिके कार्ये प्राप्ते यदृच्छया ॥ संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥ १६५ ॥**

( १ ) **मेधातिथिः**। एकाकिनोमित्रेण वासंहतस्य यानद्वैविध्यं सत्यां शक्तावेकाकिनः अन्यथा संहतस्य। आत्ययिकंकार्यंपरस्य व्यसनोत्पत्तिः तदाह्यभिगमननियमोभवति परतः। कदाचिल्लब्धोच्छ्रयोदुरुच्छेद्यः ॥ १६५ ॥

( २ ) **सर्वज्ञनारायणः**। एकाकिनइत्येकयात्रा मित्रसंहतस्येत्यपरा सा द्विविधापि स्वस्यात्ययिकं तत्कालप्र-तीकारेऽनर्थहेतुंकार्यमाकलय्य भवति। यद्वात्मनोबलवत्तामात्रमवेक्ष्य यदृच्छयेति ॥ १६५ ॥

( ३ ) **कुल्लूकः**। आत्ययिकंकार्यंशत्रोर्व्यसनादिकंतस्मिन्नकस्माज्जाते शक्तस्यैकाकिनोयानमशक्तस्य मित्रसहित-स्येत्येवंयानंद्विविधमभिधीयते ॥ १६५ ॥

( ४ ) **राघवानन्दः**। यानद्वैविध्यंभिनत्ति एकाकिनश्चेति। आत्ययिकेशत्रोर्व्यसनादिके कार्येसैन्यादिविक्रियातः-क्षयादिके यदृच्छया अकस्मात्प्राप्ते शक्तस्यैकाकिनः अशक्तस्यसंहतस्यमित्रेणमिलितस्यशत्रुंप्रति गमनमिति यानद्वैविध्य-म् ॥ १६५ ॥

( ५ ) **नन्दनः**। आत्ययिके आवश्यके कार्य्ये परस्यव्यसनादीनि यदृच्छया प्राप्ते ॥ १६५ ॥

( ६ ) **रामचन्द्रः**। आत्ययिके आवश्यके तत्कालप्रतीकार्ये कार्ये प्राप्ते अनर्थहेतुमाकलय्य यदृच्छया आत्मनो-बलाबलमात्रमवेक्ष्य एकाकिनोराज्ञः यानमेकंयानम्। द्वितीयमाह मित्रेण संहतस्य मित्रेण सह मिलित्वा कार्यं द्वितीयं यानम् ॥ १६५ ॥

**क्षीणस्य चैव क्रमशोदैवात्पूर्वकृतेन वा ॥ मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥ १६६ ॥**

( १ ) **मेधातिथिः**। आत्मसंवरणमासनं तदपि द्विविधं क्षीणस्य बलकोशोपनयेन वृद्धस्यापि शत्रुंप्रत्यपेक्षा। आसनंच मित्रानुरोधेन यदि मित्रस्य शत्रुणा सहसंबन्धोनेदृशोभवति तदीयेन मित्रेण नायमुत्तम्भनीयइत्यतस्तदनुवृ-त्त्यासीत। सच क्षयोदैवात्पूर्वकृतेनवेत्यनुवादः। वृद्धिक्षयौ सर्वस्यैतेन कारणेन भवतः तत्र दैवंस्वकृतप्रमादः अतिव्यय-शीलता अप्रतिजागरणंस्वेबले पूर्वकृतमशुभंकर्मापि विपर्ययेण वैतद्व्याख्येयम्। मोहादिति पाठान्तरं अर्थस्तुदैवशब्देन व्याख्यातः ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः** । क्षयोद्विधा दैवान्मारकादिनारिणि पूर्वकृतेन दण्डेनचेत्येकमेव क्षीणासनंद्विविधम् । तथा मित्रस्यानुरोधेन स्वस्य तंप्रति सामर्थ्येपि तेन स्वमित्रस्य प्रतिबन्दिभावेन पीडाकरणशङ्कया परम् ॥ १६६ ॥

( ३ ) **कुल्लूकः** । प्राग्जन्मार्जितेन दुष्कृतेनैहिकेन वा पूर्वकृतेन क्रमशः क्षीणहस्त्यश्वकोशादिकस्य समृद्धस्यापि वा मित्रानुरोधेन तत्कार्यरक्षार्थमित्येवंद्विविधमासनंमुनिभिः स्मृतम् ॥ १६६ ॥

( ४ ) **राघवानन्दः** । आसनद्वैविध्यंस्पष्टयति क्षीणस्येति । क्षीणस्य हस्त्यश्वकोशादिरहितस्य दैवाददृष्टवशात् पूर्वकृतेनैहिकेनबलवच्छत्रुपीडादिकर्मणावा मित्रस्यानुरोधेन मित्ररक्षानुरोधेनवा आसनद्वैविध्यम् । आसीतेत्यासनम् । न चलेत्तदा स्वदेशत्यागे पराजयस्यैव संभाव्यमानत्वादितिभावः । स्मृतं मुनिभिः ॥ १६६ ॥

( ५ ) **नन्दनः** । अस्मिन् जन्मनि साध्वकारिणोपि दैवात्क्षीणस्य पूर्वकृतेनास्मिन् जन्मनि पूर्वसंवत्सरादिषु कृतेन कर्म्मणा वा क्षीणस्यापन्नस्य यदासनंतत्प्रथमंदैवपूर्वकृताभ्यां क्षीणस्य मित्रस्यानुरोधेन यदासनंतद्वितीयमिति द्वितीयमासनम् ॥ १६६ ॥

( ६ ) **रामचन्द्रः** । क्षयोद्विविधः दैवात् दैवकृतमरणादिना एकः पूर्वकृतदण्डेन अरिणा वा द्वितीयः । मित्रस्यानुरोधेन वा आसनं उपेक्षाकरणंद्विविधं स्मृतम् ॥ १६६ ॥

**बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ॥ द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः॥१६७॥**

( १ ) **मेधातिथिः** । बलस्यस्थितिः स्वामिनश्च भेदेन दुर्गस्वामिनः स्वल्पेन बलेन सेनापतेरन्यत्र महता बलेन युक्तस्य अथवाबलशपथानुग्रहार्थःकश्चित्कर्त्तव्योहिरण्यादिलाभापेक्षया परस्त्वधिकेनाशुद्वैधीभावोनामायमुपायः । तस्यैतदेवरूपंयद्विधास्थितिर्बलस्वामिनोरत्रैवंरूपस्य तस्यापरंद्वैधंवक्तव्यं नच तदनेन किंचिदुच्यते केवलंबलस्य स्वामिनश्च स्थितिरेतद्विविधंतत्रवक्तव्यंमायायांद्वैधीभावस्तस्येदंद्वैविध्यम् । उच्यते सामर्थ्यलभ्यमेतत्परानुग्रहार्थमेतत्कर्तव्यंस्वकार्यार्थंचेत्येषद्विधाभावस्यद्वैधीभावः ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः** । बलस्य सेनापत्यधिष्ठितस्य पुरोवस्थानं स्वामिनस्तु सैन्यैकदेशेन यानमित्येकं द्वैधमपरमेतद्विपर्ययात् । तथा षड्गुणस्य गुणसमुदायस्य गुणः प्रयोजकता ॥ १६७ ॥

( ३ ) **कुल्लूकः** । साध्यस्वप्रयोजनसिद्ध्यर्थंबलस्य हस्त्यश्वादेः सेनाधिपत्याधिष्ठितस्यैकत्र शत्रुनृपोपद्रववारणार्थमवस्थानमन्यत्रदुर्गदेशे राज्ञः कतिचिद्बलाधिष्ठितस्यावस्थानमेवंसंध्यादिगुणषट्कोपकारज्ञैर्द्विविधंद्वैधंकीर्त्यते ॥१६७ ॥

( ४ ) **राघवानन्दः** । द्विधा भूत्वावस्थितिर्द्वैधं तत्स्फुटयति बलस्येति । बलस्य हस्त्यश्वादेः सेनापत्यधिष्ठितस्य शत्रुसंमुखावस्थितिः अपरत्र दुर्गदेशे स्वात्मनः राज्ञः धनसहितस्यावस्थितिश्च । कार्यार्थसिद्धये शत्रुवारणार्थंमित्रस्येत्यनुवर्तते ॥ १६७ ॥

( ५ ) **नन्दनः** । बलिनोर्द्विषतोर्मध्ये वाचात्मानंसमर्प्पयन् । द्वैधीभावेन वर्तेतकाकाक्षिवदलक्षितः ॥ इति कामन्दकवचनानुगुण्यादयंश्लोकोव्याख्येयः । बलस्य शत्रुभ्यामिति युक्तस्य तदीयया भावनया द्विधाभूयावस्थानम् स्वामिनस्तथावस्थानमिति द्विविधंद्वैधीभावः कीर्त्यते ॥ १६७ ॥

**अर्थसंपादनार्थं च पीड्यमानस्य शत्रुभिः ॥ साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥ १६८॥**

( १ ) **मेधातिथिः** । शत्रुभिः पीड्यमानस्य अर्थसंपादनार्थमन्यत्र संशयः अर्थपीडानिवृत्तिस्तत्संपादनार्थशक्यम-

न्यमाश्रयेत् स्वदेशंहित्वा तत्र गच्छेत् । व्यपदेशश्चापीडितेऽपि आगामिपीडा परिहाराय व्यपदेशार्थमन्यंसंश्रयेत् एषोस्य सहायकोवर्तते न शक्योयमुपपीडयितुमिति व्यपदेशसिद्धिर्न केन चिदुपपाद्यते व्यपदेशप्रयोजनसंश्रयोव्यपदेशशद्बेनोक्तः । समानाधिकरण्येन पाठान्तरंव्यपदेशार्थमिति । क्वपुनःसंश्रयःकर्त्तव्यस्तदाह साधुषु येसाधवोराजानस्तेषामन्यतममाश्रयेत् येभ्यःसकाशात्कुसृतिर्नाशङ्क्यते । साधुशद्बेन परिभवत्राणसामर्थ्यादयोगुणाः प्रतिपाद्यन्ते ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । पीड्यमानस्य सतोयोर्थस्तस्य सिद्ध्यर्थमेकः तथा स्वस्याल्पतयाऽवश्यं कस्मिंश्चित्संश्रयणीये संश्रयेण साधुषु कीर्तिर्भवतीत्यपरः संश्रयः ॥ १६८ ॥

( ३ ) **कुल्लूकः** । शत्रुभिः पीड्यमानस्य शत्रुपीडानिवृत्ताख्यप्रयोजनसिद्ध्यर्थमसत्यामपि वा तत्काले पीडायां भाविशत्रुपीडनशङ्कया अमुकमयंमहाबलंनृपतिमाश्रितइति सर्वत्रव्यपदेशोत्पादनार्थम् । बलवन्तमुपाश्रयणमेवंद्विविधः संश्रयः स्मृतः ॥ १६८ ॥

( ४ ) **राघवानन्दः** । संश्रयद्वैविध्यंविशदयति अर्थेति । अर्थसंपादनार्थं शत्रुकृतपीडायांसत्यांतन्निवृत्तिप्रयोजनार्थं असत्यांच शङ्क्यमानायांसत्याममुकराजानमाश्रितोस्मीत्युदर्कानर्थनिवारणख्यापनार्थयोव्यपदेशस्तदर्थंवा । साधुष्वित्यस्यायमभिप्रायः । साधूनामवक्रबुद्धित्वाद्यथाश्रुतग्राहित्वाच्चसाधुराजसुवा व्यपदेशोव्यपाश्रयणम् । यथान्यैराश्रितराजतोभीतैर्नाक्रम्यते तदर्थमिति भावः ॥ १६८ ॥

( ५ ) **नन्दनः** । शत्रुभिः पीड्यमानस्य विजिगीषोरर्थसंपादनार्थंशत्रुपीडानिवृत्त्यर्थं बलवदुपाश्रयणमेकः संश्रयः । शत्रुपीडाभावेऽपि साधुभिर्दृढमलैः सह व्यपदेशार्थं भविष्यदनर्थपरिहारार्थमितियावत् । बलवदपाश्रयणमपरसंश्रयः ॥१६८॥

( ६ ) **रामचन्द्रः** । संश्रयंद्विविधमाह अर्थेति । शत्रुभिःपीड्यमानस्य योर्थस्तस्यार्थस्य संपादनार्थं सिद्ध्यर्थं बलाश्रयः मित्राश्रयः एकः । तथा साधुषु व्यपदेशार्थं स्वल्पीयतया अवश्यशंसनीयेन साधुषु कीर्तिर्भवतीतिद्वितीयः ॥१६८॥

**यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ॥ तदात्वे चाल्पिकां पीडां तदा संधिं समाश्रयेत् ॥ १६९ ॥**

( १ ) **मेधातिथिः** । आयतिरागामीकालोयद्येवंमन्येत समबलोममायमप्येषन्यूनबलोवा कालात्तु लब्धकृत्योपजापेन मित्रग्रहेण वा शक्नोत्येनमभिभवितुंतदा संधिंकुर्यात् । आधिक्यमधिकबलता ध्रुवंनिश्चितम् । तदात्वे वर्तमानकालवचनोयम् ॥ १६९ ॥

( २ ) **सर्वज्ञनारायणः** । पीडां क्षतिं धनादेः ॥ १६९ ॥

( ३ ) **कुल्लूकः** । यदायुद्धोत्तरकाले निश्चितमात्मनआधिक्यंजानीयात्तदात्वे तत्कालेऽल्पधनाद्युपक्षयः तदात्वल्पमङ्गीकृत्यापि सन्धिमाश्रयेत् ॥ १६९ ॥

( ४ ) **राघवानन्दः** । सन्ध्यादिषण्णांकदा किंकार्यमित्यपेक्षायामादौ सन्धेस्तदाह यदेति । आयत्यामुदर्केआधिक्यंबहुलोत्पत्तिंतदात्वेतत्काले अल्पधनादिपीडामङ्गीकृत्यापि सन्धिसमाश्रयेत् स्वप्रकृत्याद्यवशतया पराजयस्यैव संभाव्यमानत्वात् ॥ १६९ ॥

( ५ ) **नन्दनः** । अथषण्णांगुणानांप्रयोगकालंषड्भिःश्लोकैराह आयतिर्भविष्यत्कालस्तदात्वंतत्कालः । अल्पिकामत्यर्थमल्पां अविद्यमानामिति यावत् ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । षाड्गुण्यस्य कालमाह यदेति । आयत्यां उत्तरकाले आत्मनो ध्रुवमाधिक्यं यदा अवगच्छेत् पश्येत् तदात्वेचाल्पिकांपीडां धनादेः तदा सन्धिसमाश्रयेत् ॥ १६९ ॥

**यदा प्रहृष्टामन्येत सर्वास्तु प्रकृतीर्भृशम् ॥ अत्युच्छ्रितं तथात्मानं तदा कुर्वीत विग्रहम् ॥१७०॥**

( १ ) **मेधातिथिः** । प्रहृष्टाउत्साहानुरागयुक्तादानमानाभ्यामुपसंगृहीताआत्मीयाःप्रकृतीरमात्यादिकामन्येत अत्युच्छ्रितमात्मानंकोशहस्त्यश्वादिसंपदा तदा केनचिदपदेशेन संधिदूषणंकृत्वा विग्रहमाश्रयेत् ॥ १७० ॥

( २ ) **सर्वज्ञनारायणः** । अत्युच्छ्रितमत्यर्थबलम् ॥ १७० ॥

( ३ ) **कुल्लूकः** । यदामात्यादिकाः सर्वाः प्रकृतीर्दानसंमानाद्यैरतीव तुष्टामन्येत आत्मानंच हस्त्यश्वकोशाद्यैः शक्तित्रयेणोपचितंतदा विग्रहमाश्रयेत् ॥ १७० ॥

( ४ ) **राघवानन्दः** । विग्रहोचितावस्थामाह यदेति । प्रहृष्टाः दानसंमाननाद्यैरतीवतुष्टाः अत्युच्छ्रितं बलबुद्धिहस्त्यश्वकोशाद्यैः समृद्धमात्मानंमन्येतेत्यनुषज्यते तदा विग्रहं परराष्ट्रक्षोभादिंकुर्यात् ॥ १७० ॥

( ५ ) **नन्दनः** । प्रहृष्टाः स्वामिनि परितुष्टाः । प्रकृतीरमात्यादिकाः ॥ १७० ॥

( ६ ) **रामचन्द्रः** । सर्वाःप्रकृतीःभृशंप्रहृष्टाः हस्त्यश्वादिना आत्मानमत्युच्छ्रितंकोशसमृद्धंयदामन्येत तदा विग्रहं विग्रहकालं मन्येत ॥ १७० ॥

**यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ॥ परस्य विपरीतं च तदा यायाद्रिपुं प्रति॥१७१॥**

( १ ) **मेधातिथिः** । भावोहर्षपोषकारणंबहुना धनेन संविभक्तता कृष्यादिकर्माणि फलितान्येषामित्यादिहर्षपोषयोः कारणम् । बलंहस्त्यश्वरथपादातं परस्ययदा विपरीतंतदा शत्रुंप्रतियायादभिषेणयेच्छत्रुमित्यर्थः । न विग्रहकारणान्येव यानकारणानि किंतर्हि तान्यपि अपचयश्च हर्षपोषयोः परस्य प्रकृतीनाम् ॥ १७१ ॥

( २ ) **सर्वज्ञनारायणः** । भावेन मनसा । हृष्टंपुष्टं यात्रोचितसहायादिपुष्टियुक्तम् ॥ १७१ ॥

( ३ ) **कुल्लूकः** । यदात्मीयममात्यादिसैन्यंहर्षयुक्तंधनादिना पुष्टंतत्त्वतोजानीयात् शत्रोश्चामात्यादिबलंविपरीतंतदा तंलक्षीकृत्य यायात् ॥ १७१ ॥

( ४ ) **राघवानन्दः** । यानस्यकालमाह यदामन्येतेति । भावेन हर्षपोषादिहेतुना धनेन हृष्टं हर्षितमत्युत्साहयुक्तंमांसौदनादिना पुष्टंस्वकमितिविशेषणात्परस्यशत्रोः विपरीतंपश्येदिति शेषः । यायात् यानंकुर्यात् ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । यदा स्वकंबलं हृष्टं तदा रिपून्प्रति यायात् यात्रांकुर्यात् । तथाच याज्ञवल्क्यः ॥ यदासस्यगुणोपेतंपरराष्ट्रंतदाव्रजेत् । परश्चहीनआत्माचहृष्टवाहनपूरुषइति ॥ १७१ ॥

**यदा तु स्यात्परिक्षीणोवाहनेन बलेन च ॥ तदा सीत प्रयत्नेन शनकैः सांत्वयन्नरीन् ॥ १७२ ॥**

( १ ) **मेधातिथिः** । वाहनंहस्त्यश्वरथं बलंपादातं गोबलीवर्दवद्भेदः परिक्षीणे बले सति सान्त्वयन्नरिमासीत । सामोपप्रदानाभ्यामनुकूलनंसान्त्वनम् ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । सान्त्वयन् भाविफलप्रत्याशया ॥ १७२ ॥

( ३ ) **कुल्लूकः** । यदा पुनर्वाहनेन हस्त्यश्वादिना बलेन चामात्यादि विपत्त्यादि परिक्षीणोभवेत्तदा सामोपदाप्रदानादिना शत्रून्प्रसांत्वयन्प्रयत्नेनासनमाश्रयेत् ॥ १७२ ॥

( ४ ) **राघवानन्दः** । आसनस्यापितमाह यदात्विति । परिक्षीणं वाहनेन हस्त्यश्वादिचतुरङ्गेण बलेन कोशाद्येन शारीरेणवा । स्वयंशनैरभिमतग्रामादिदानेन असांत्वनेऽरीणामावश्यकमागमनं तदामहाननयःस्यादितिभावः ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । यदा वाहनेन बलेन सैन्येन परिक्षीणःस्यात्तदा रिपून् शनकैःसान्त्वयन्नासीतस्थितोभवेदि- त्यर्थः ॥ १७२ ॥

**मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ॥ तदा द्विधा बलं कृत्वा साधयेत्कार्यमात्मनः ॥ १७३ ॥**

( १ ) **मेधातिथिः** । अशक्यंसंधानं बलवता रुद्धस्य दुर्गसंश्रयणंच हितं दुर्गंच बलावस्थानमेव द्वैधीभावः सच- प्रागुक्तार्थः ॥ १७३ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वथाबलवत्तरमुपायत्रयासाध्यंच ॥ १७३ ॥

( ३ ) **कुल्लूकः** । यदा राजा सर्वप्रकारेण बलीयांसमशक्यसंधानंच शत्रुंबुध्येत्तदा कतिचिद्बलसहितः स्वयंदुर्ग- माश्रयेत् बलैकदेशेन च शत्रुविरोधमाचरेत् एवंद्विधाबलंकृत्वा मित्रसंग्रहादिकंस्वकार्यंसाधयेत् ॥ १७३ ॥

( ४ ) **राघवानन्दः** । द्वैधेनावस्थानकालमाह मन्येतेति । उक्तद्विधास्थितौ हठादरिणा नाक्रम्यते अरिःसेनायां- पतति चेत्स्वयंतीर्णस्तमाक्रमितुंशक्तः स्वामिन्यापततिचेत्सेनापतिस्तमाक्रमितुंशक्तइतिभावः ॥ १७३ ॥

( ५ ) **नन्दनः** । अरिंपुरस्थितंपार्ष्णिग्राहस्थितञ्च । कुतएतद्विधाबलंकृत्वेति लिङ्गात् ॥ बलिनोर्द्विषतोर्मध्ये वाचात्मानंस- मर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ इति कामन्दकवचनाच्च ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । यदा आत्मनः सकाशात् शत्रुं सर्वथा बलवत्तरंमन्येत तदा स्वबलंसैन्यंद्विधा कृत्वा कार्यंसा- धयेत् ॥ १७३ ॥

**यदा परबलानान्तु गमनीयतमोभवेत् ॥ तदा तु संश्रयेत्क्षिप्रं धार्मिकं बलिनं नृपम् ॥ १७४ ॥**

( १ ) **मेधातिथिः** । गमनीयतमोऽभिभवनीयतमोदुर्गस्थोहमिति मन्यते तदा क्षिप्रंदुर्गमुज्झित्वाऽन्यंसंश्रयेद्धार्मिकं यतः कुसृतिर्नाङ्क्यते यस्ययशोमयीस्थिरप्रकृतिः बलिनमित्येतेनैतत्सुदर्शितम् ॥ १७४ ॥

( २ ) **सर्वज्ञनारायणः** । गमनीयतमोऽभिगम्यः ॥ १७४ ॥

( ३ ) **कुल्लूकः** । यदा तु सैन्यानाममात्यादिप्रकृतिदोषादिनातिशयेन ग्राह्योभवति बलंद्वैधंविधाय दुर्गाश्रयणेनापि नात्मरक्षाक्षमस्तदा शीघ्रमेव धार्मिकंबलवन्तंच राजानमाश्रयेत् ॥ १७४ ॥

( ४ ) **राघवानन्दः** । संश्रयस्यापितमाह यदेतिचतुर्भिः । गमनीयतमोऽवश्यमरिगमनविषययोग्यः स्वयम् । धार्मिकमित्यनेनोदर्कानर्थशङ्का वारिता ॥ १७४ ॥

( ५ ) **नन्दनः** । गमनीयोभिभवितुंशक्योधार्मिकंस्वयमेव एतमाश्रितः अग्निवदग्निर्यादपीत्युक्तंधार्मिकम् ॥ १७४ ॥

( ६ ) **रामचन्द्रः** । गन्तुंशक्योगमनीयः अतिशयेनगमनीयोगमनीयतमः परबलानांगमनीयतमोयदा भवेत्तदा स्व- बलंहीनंदृष्ट्वा बलिनंहस्त्यश्वादिभिर्बलिनं बलिष्ठं धार्मिकं शरणागतरक्षकं क्षिप्रं संश्रयेत् ॥ १७४ ॥

**निग्रहंप्रकृतीनांच कुर्याद्योरिबलस्य च ॥ उपसेवेत तंनित्यंसर्वयत्नैर्गुरुंयथा ॥ १७५ ॥**

( १ ) **मेधातिथिः** । बलिनमित्युक्तं कियता बलेन बलवान्भवतीत्येतदर्थमिदमुच्यते । यादुष्टास्तदीयाः प्रकृतयो- यश्चशत्रुरुभयस्यापि निग्रहे समर्थःसआश्रयितव्यः सगुरुवत्परिसेवितव्योमानमुज्झित्वानैवंमन्तव्यंमहाराजाएषोपि समत्वेन वार्त्तावहइति प्रभुवदसौ सेवितव्यः सर्वयत्नैरुपायैः प्रियवचनैरवसरे समीपेसंनिधानेन ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । निग्रहणंप्रकृतीनां यदि स्वप्रकृतिभिरेव शत्रुरुत्थापितः ॥ १७५ ॥

( ३ ) **कुल्लूकः**। कीदृशंतंबलवन्तमित्याह निग्रहमिति यासांदोषेणासौ गमनीयतमोजातस्तासां प्रकृतीनां यस्माच्च शत्रुबलादस्य भयमुत्पन्नंतयोर्द्वयोरपि यः संश्रितोनिग्रहक्षमस्तंनृपंसर्वयत्नैर्गुरुमिव नित्यंसेवेत ॥ १७५ ॥

( ४ ) **राघवानन्दः**। बलिनमितिविशेषणस्य कृत्यमाह प्रकृतीनां स्वकीयानांदुष्टानां अरिबलस्य च भीत्यायस्याश्रयणंकृतंतस्यच। गुरुंयथेतिवित्तशाठ्यादिदोषंपरिहृत्येत्यर्थः ॥ १७५ ॥

( ५ ) **नन्दनः**। संश्रितस्य कृत्यमाह निग्रहमिति। प्रकृतीनाममात्यादीनामात्मीयादीनाम् अनेन सूचितं प्रतिक्षोभेऽपि बलीयान्समाश्रयणीयइति ॥ १७५ ॥

( ६ ) **रामचन्द्रः**। यः अरिबलस्य तु पुनः प्रकृतीनां शत्रूत्थापकानाममात्यानां निग्रहंकुर्यात्तंनृपः सर्वयत्नैरुपसेवेत भजेत यथा सर्वयत्नैर्गुरुमुपसेवेत ॥ १७५ ॥

**यदि तत्रापि संपश्येद्दोषंसंश्रयकारितम् ॥ सुयुद्धमेव तत्रापि निर्विशङ्कःसमाचरेत् ॥ १७६ ॥**

( १ ) **मेधातिथिः**। यदि तस्मिन्नपि संश्रये संपश्येज्जानीयात्कथंचिद्दोषंसंश्रयकारितं बलीयानेव हि व्यसने बलंद्विधाकरोतीति दृश्यते दोषदर्शनलिङ्गानि च ॥ दत्वानुतापः कृतपूर्वहोमंविमाननादुश्चरितानि कीर्तनं। दृष्टेरदानं प्रतिकूलभाषण मेताश्चदुष्टस्य भवन्तिवृत्तयः ॥ ततस्तत्रापि संश्रये दोषकारिणि विज्ञातेऽपि शब्दादाश्रयेनिर्दोषेऽसति सुयुद्धमेव तस्मिन्नपि काले निर्विकारः कुर्यात् नहि संश्रये विनाशः दृश्यते ह्यल्पबलेनापि महाबलोजीयमानः अपिचान्त्यावस्थायामुभयथा गुणोविजये राज्यंपराजये ध्रुवः स्वर्गइति युद्धस्य तु शोभनत्वंदर्शयिष्यामः। एकैकगुणाश्रयेणमण्डलविजयायया याच्छक्तः ॥ १७६ ॥

( २ ) **सर्वज्ञनारायणः**। संश्रयकारितमाश्रीयमाणेन कर्तव्यतया संभावितम् ॥ १७६ ॥

( ३ ) **कुल्लूकः**। अगतिका हि गतिः संश्रयोनाम तत्रापि यदि संश्रयकृतंदोषंपश्येत्तदा निःसंशयोभूत्वा शोभनमेव युद्धंतस्मिन्काले समाचरेत् दुर्बलेनापि बलवतोजयदर्शनान्निहतस्य च स्वर्गप्राप्तेः ॥ १७६ ॥

( ४ ) **राघवानन्दः**। किंचान्यदित्याह यदीति। दोषंसंश्रयकारितं संश्रयेनृपतौ स्वबलद्विधाकरणरूपभाषगपूर्ववैरानुरूपकीर्तनादिलिङ्गैः कारितं प्रकाशितं दुष्टप्रकृत्यादिभिरिवानेनापिकार्योयमस्मदर्थादिक्षयोभविष्यतीत्येवं कारितं संश्रयेराजनिसमर्पितं दोषजातं यदिवा संपश्येत् तत्रापि तस्मिन्सतीत्यर्थः। निर्वितर्कः जेष्यामीति कृतनिश्चयः ॥ १७६ ॥

( ५ ) **नन्दनः**। धार्मिकबलिसमाश्रयणे दोषान्तरंभविष्यतीति निश्चिन्वानस्य किंकर्तव्यमित्यपेक्षायामाह यदीति। तत्रापि धार्मिकबलिसमाश्रयणे दोषः नीचसमाश्रयप्रभवलोके कोशादिकंतत्रापि तेषु परबलेष्वात्मवधोद्योगिष्वपि सुयुद्धमाचरेत् जये भूमिलाभात् मरणे स्वर्गलाभादित्यभिप्रायः ॥ १७६ ॥

( ६ ) **रामचन्द्रः**। यदि तत्रापि तस्मिन्राज्ञि संश्रयकारितं आश्रयभूतेन राज्ञा कारितं दोषं पश्येत्सराजा युद्धमेव निर्वितर्कः निःशङ्कःसन्समाचरेत् ॥ १७६ ॥

**सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ॥ यथास्याभ्यधिकानस्युर्मित्रोदासीनशत्रवः॥१७७॥**

( १ ) **मेधातिथिः**। उपायवचनात्सामादिभिर्व्यस्तैः समस्तैर्वा । सर्वग्रहणात्तु येन शक्यन्ते संघादिनापि तथा कुर्यात् तेन प्रकारेण यतेत नीतिज्ञः अर्थशास्त्रज्ञः स्वाभाविकप्रज्ञः नयाद्यभिज्ञोवा राजा यथास्यात् शक्तित्रयेणाभ्यधिका-

मित्रादयोन भवेयुस्तथा प्रकृत्यादिसमादिष्टे कर्मप्रवर्तनेचतेभ्योऽधिकमात्मानंकुर्यात्। श्लोकानुरोधान्मध्यमग्रहणंनकृतं सोपि तु द्रष्टव्योन मित्रमित्युपेक्ष्यं स्वप्रयोजनव्यतिरेकेण मित्रंनामाव्यवस्थितंहि मित्रत्वाधिक्यमुपगतंस्वार्थगति वशाच्च मित्रमप्यरिर्भवति। तथाचव्यासआह ॥ नकश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः। सामर्थ्ययोगाद्विज्ञेयामित्राणि रिपवस्तथेति ॥ एतैरुपायैर्मण्डलैर्विचारयेत् ॥ १७७ ॥

( २ ) **सर्वज्ञनारायणः**। मित्रमपि स्वस्याधिक्ये मैत्र्या प्रयोजनाभावान्मैत्रींत्यजेदिति तस्याप्याधिक्यंखण्डनीयम् ॥ १७७ ॥

( ३ ) **कुल्लूकः**। सर्वैः सामादिभिरुपायैः नीतिज्ञोराजा तथा यतेत यथास्य मित्रोदासीनशत्रवोऽभ्यधिकान भवन्ति आधिक्ये हि तेषामसौ ग्राह्योभवति। धनलोभेन मित्रस्यापि शात्रवापत्तेः ॥ १७७ ॥

( ४ ) **राघवानन्दः**। किंच सर्वैति। सर्वोपायैः क्वचिद्दानं क्वचिद्भेदः क्वचिद्युद्धं क्वचित्सामेति । अस्यक्षीणस्यराज्ञः छिद्रेष्वनर्थाबहुलाभवन्तीतिन्यायान्मित्रमपि बलादिभिःपूर्णं धनलोभेन क्वचिदेनंप्रत्यमित्रःस्यात् एवमुदासीनेष्वपि ज्ञेयम्। तथाच व्यासः ॥ नकश्चित्कस्यचिन्मित्रंनकश्चित्कस्यचिद्रिपुः । सामर्थ्ययोगाद्विज्ञेयंमित्राणिरिपवस्तथेति ॥ १७७ ॥

( ५ ) **नन्दनः**। अस्मात्स्वस्मादिति यावत् ॥ १७७ ॥

( ६ ) **रामचन्द्रः**। नीतिज्ञः यथा अस्य राज्ञः मित्रोदासीनशत्रवः अधिकानस्युः सर्वोपायैस्तथा कुर्यात् ॥ १७७ ॥

## आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ॥ अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥१७८॥

( १ ) **मेधातिथिः**। कार्याणि कर्माणि प्रयोजनानि तेषांसर्वेषामारिप्समानामायतिः परिणाम्यागामिकालस्तदात्वंप्रारंभावस्थावर्त्तमानकालस्तंच विचारयेत् तत्त्वतस्तत्त्वेन अनेकमुखानि हि कार्याणि क्षणाच्चान्यथा भवन्तीति तत्र येषामुभौ कालौ न शुध्यतस्तानि कार्याणि कथमारभेतेति तद्विचारार्थोपदेशः। अतीतानामतिक्रान्तानांचसर्वेषांगुणदोषौ ततोविचारयेत् अत्राप्यतीतानांगुणदोषौविचार्य यानि कर्माणि गुणवन्त्यतीतानि तान्येव कथंनामपुनराररभेतेत्यतीतकार्यगुणदोषतत्त्वविचारणोपदेशएवमर्थः ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः**। आयतिरागामिफलं। तदात्वं वर्तमानं। अतीतानांच कार्याणांगुणदोषौ चकारात्स्वरूपंच तच्चिन्तनेन चतत्साम्यादागामिन्यपि प्रवृत्तिर्निवृत्तिर्वा प्रयोजनम् ॥ १७८ ॥

( ३ ) **कुल्लूकः**। सर्वेषांकार्याणामल्पानांबह्वानामपि आयतिमुत्तरकालं गुणदोषंविचारयेत्। वर्त्तमानकालंच शीघ्रसंपादनाद्यर्थंविचारयेत्। अतीतानांच सर्वकार्याणांगुणदोषौ किमेषांकृतंविघटितं किंवावशिष्टमित्येवंयथावद्विचारयेत् ॥ १७८ ॥

( ४ ) **राघवानन्दः**। राज्ञःकार्यान्तरंविधत्ते आयतिमिति। आयतिः उदर्केयत्फलं तदात्वं शीघ्रंकार्यसिद्धयेवर्तमानकालिकंचफलं। अतीतानामितिदृष्टान्तार्थं एवंपूर्वंकृतं तेनजयादिजातमन्यथापराजयादि जातमितिगुणदोषौविचारयेत् ॥ १७८ ॥

( ५ ) **नन्दनः**। आयतिं आगामिफललाभंतदात्वं तत्कालफलम्। सर्वेषामर्थानामितिशेषः ॥ १७८ ॥

( ६ ) **रामचन्द्रः**। सर्वकार्याणां आयतिं आगामिफलं तदात्वं वर्तमानं अतीतानांसर्वेषांगुणदोषौ तत्वतोविचारयेत् ॥ १७८ ॥

**आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ॥ अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥ १७९ ॥**

( १ ) **मेधातिथिः** । एवंहि । योह्यायत्यामागामिनिकाले कार्याणांगुणदोषौविजानाति नियमेनासौविमृश्यकारीति स्वयंचारभतेविमृश्यकारीति न सदोषं एवमर्थेहिज्ञानंतदात्वेवर्त्तमानेयःक्षिप्रमवधारयति कार्यं न विलम्बते तदात्वे क्षिप्रनिश्चयः क्षिप्रकारीभवति गुणवत्करोति नदोषवत्। अतीते कृते सति कार्येशेषतोयः कार्यमेवबुध्यते न तत्परिसमाप्तौलभतइति गुणवत्सर्वकार्यफलसंबन्धादभ्यधिकः शत्रुभिर्नाभिभूयेत। नहि धर्मशास्त्रे षाड्गुण्योपदेशः शक्यते कर्तुंदृष्टइति ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । गुणदोषज्ञोभाविगुणदोषविचारकः । क्षिप्रनिश्चयः शीघ्रंकार्याकार्यत्वयोर्निश्चेता । अतीते दैवाद्विपन्ने कार्ये कार्यशेषस्य तदेकदेशोद्धारोपायस्यापि ज्ञाता ॥ १७९ ॥

( ३ ) **कुल्लूकः** । यस्मात् आयेति यः कार्याणामागामिकगुणदोषज्ञः सगुणवत्कार्यमारभते दोषवपरित्यजति । यश्च वर्त्तमानकाले क्षिप्रमेवावधार्य कार्यंकरोति अतीते कार्ये यः कार्यशेषज्ञः सतत्कार्यसमाप्तौ तत्फलंलभते यस्मादेवंविधकालत्रयसावधानत्वान्न कदाचिच्छत्रुभिरभिभूयते किंबहुना ॥ १७९ ॥

( ४ ) **राघवानन्दः** । विचारेकिंस्यात्तत्राह आयत्यामिति । आयत्यां गुणदोषज्ञोयतोविमृश्यकारी क्षिप्रनिश्चयश्चादीर्घसूत्री अतीते कृते दक्षिणादिदानवदवशिष्टसमापयितासनाभिभूयते शत्रुभिरित्यन्वयः ॥ १७९ ॥

( ५ ) **नन्दनः** । विचारस्यफलमाह आयत्यामिति ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । आयत्यांगुणदोषज्ञः तदात्वे वर्तमाने क्षिप्रनिश्चयः । अतीते कार्यशेषज्ञः दैवाद्विपन्ने कार्यशेषस्यतदेकदेशोद्धारोपायस्यज्ञाता एतादृशोराजाशत्रुभिर्नाभिभूयते ॥ १७९ ॥

**यथैनं नाभिसंदध्युर्मित्रोदासीनशत्रवः ॥ तथा सर्वं संविदध्यादेषसामासिकोनयः ॥ १८० ॥**

( १ ) **मेधातिथिः** । दिङ्मात्रमुक्तं यथानतैस्तैः प्रयोगैरभिसंदध्युस्तथा कुर्यादर्जितैरितरैरिवोपायैरित्येषसंक्षेपिकोन्यायइत्युपसंहारः । षाड्गुण्यस्यातिसंधानविरोधश्चैवंन भवति कृत्यानामुपजापरक्षणाद्व्यसनेषु प्रतीकारात्स्वमण्डलसंग्रहाद्गुणोपायानांसम्यक्प्रयोगात्कर्मस्वभ्युत्थानमित्येवंद्रष्टव्यम् ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । अभिसंदध्युर्वञ्चयेयुः । सामासिकः संक्षिप्तः ॥ १८० ॥

( ३ ) **कुल्लूकः** । यथैनंराजानंमित्रादयउक्ता न बाधेरन् तथा सर्वसंविधानंकुर्यादित्येषसांक्षेपिकोनयोनीतिः॥१८०॥

( ४ ) **राघवानन्दः** । राजातुसर्वथाऽप्रमत्तः स्यादित्याह यथेति । एनंराजानंनाभिसंदध्युःनाभिभवेयुः । एषः सामासिकः समासः संक्षेपस्तत्र भवः ॥ १८० ॥

( ५ ) **नन्दनः** । अत्रायमनुष्ठेयार्थइत्याह यथैनमिति ॥ १८० ॥

( ६ ) **रामचन्द्रः** । यथा एनंशरणागतंमित्रोदासीनशत्रवः नाभिसंदध्युः नसंधेयुः तथा सर्वं संविदध्यात् कुर्यात् एषः सामासिकः संक्षिप्तः नयः सामादिरूपाणांन्यायः ॥ १८० ॥

**यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः ॥ तदानेन विधानेन यायादरिपुरं शनैः ॥ १८१ ॥**

( १ ) **मेधातिथिः** । इदानीमभियास्यतःकर्माह । यदोपचिकीर्षत्यरिराष्ट्रंप्रत्याभिमुखेन तदानेन विधानेन गच्छेदत्वरमाणः । वक्ष्यमाणोपन्यासः सुखावबोधनार्थः ॥ १८१ ॥

( २ ) **सर्वज्ञनारायणः** । यानमातिष्ठेत् विग्रहार्थं यात्रामात्रार्थंवा ॥ १८१ ॥

( ३ ) **कुल्लूकः** । यदा पुनः शक्तःसन् शत्रुराष्ट्रंप्रति यात्रामारभेत्तदाऽनेन वक्ष्यमाणप्रकारेण शत्रुदेशमत्वरमाणोगच्छेत् ॥ १८१ ॥

( ४ ) **राघवानन्दः** । कदारिपुपुरंगन्तव्यं कथंवायोद्धव्यं कुत्रवा किं कर्तव्यमित्यपेक्षायांतत्रादौ यानमनुवदन्नुचितकालमाह यदात्वितित्रिभिः । मात्सर्यक्रोधाज्ञानैर्नगन्तव्यमित्याह प्रभुः सकलशक्तिसंपन्नः यानंयायादित्यत्र प्रकृतिः प्रत्ययोच्चारणार्था तेनयात्रांकुर्यादित्यर्थः । केन अनेन वक्ष्यमाणेन शनैर्यायान्नतुहठात् ॥ १८१ ॥

( ५ ) **नन्दनः** । अथयात्रांप्रस्तौति यदेति । अनेन वक्ष्यमाणेन ॥ १८१ ॥

( ६ ) **रामचन्द्रः** । प्रभुः अरिराष्ट्रंप्रति यदा यानं गमनं आतिष्ठेत् गच्छेत्तदा अनेनविधानेन वक्ष्यमाणलक्षणेन अरिपुरं शनैःयायाद्गच्छेदित्यर्थः ॥ १८१ ॥

**मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः॥फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथा बलम् ॥१८२॥**

( १ ) **मेधातिथिः** । यातव्यापेक्षया बलापेक्षया दीर्घयोद्धुमिच्छन्बलप्रायः शारदवासन्तिकसस्यप्रायंपरराष्ट्रंमार्गशीर्षेयायात् अत्रहिगच्छन्शारदंफलंगृहादिगतंसुखंगृह्णाति वासन्तंसस्यमुपहरति । कामश्च महान्दुर्गोपरोधादिकार्यक्षमोमार्गश्च प्रसिद्धवकपथोपभृतकाशोदकवीरुधोनभवन्ति कालश्च नात्युष्णशीतः । उपचितर्मापि न सस्यंनानाप्रयुक्तंप्रियं सस्यत्रयोपघातकालविप्रकर्षापेक्षया च परआश्रयंसंधत्ते । उभयसस्योपघातावकर्षणंसम्यक्कृतंभवत्यात्मनश्चबलापचयइति उपघातमात्रचिकीर्षया परदेशादेरल्पकालसाध्ये वा यातरि बलप्रायः फाल्गुनचैत्रयोर्यायात् । वासन्तिकसस्यप्रायदेशंतदाप्यात्मनोयवसादि भवति । परोपघातक्षेत्रगतसस्योपघातात् । यथाबलमिति येन प्रकारेण बलानुरूपंयायादित्यर्थः ॥ १८२ ॥

( २ ) **सर्वज्ञनारायणः** । मार्गशीर्षइति मुख्यः पक्षः तत्कालेऽन्नबाहुल्यात् शुभेग्रहशुद्ध्यादियुक्ते । फाल्गुनंचैत्रमिति मध्यमः तदापि यवान्नसंभवात् ॥ १८२ ॥

( ३ ) **कुल्लूकः** । यच्चतुरङ्गबलोपेतोराजा करिरथादिगमनविलम्बेन विलम्बितप्रयाणः तथा हैमन्तिकसस्यबहुलंच परराष्ट्रंजिगमिषुः समुपगमनाय शोभने मार्गशीर्षे मासि यात्रांकुर्यात् । यःपुनरश्वबलप्रायोनृपतिः शीघ्रगतिर्वा सर्वसस्यबहुलंपरराष्ट्रंयियासुः सफाल्गुने चैत्रे वा मासे स्वबलयोग्यकालानतिक्रमेण यायात् अतएव मन्वर्थव्यापारपरंसंक्षेपेण याज्ञवल्क्यवचनम् । यदा सस्यगुणोपेतंपरराष्ट्रंतदा व्रजेत् ॥ १८२ ॥

( ४ ) **राघवानन्दः** । अत्र मार्गशीर्षादिर्व्यवस्थितविकल्पपरः । तत्र रथप्रधानः पार्थिवो मार्गशीर्षे गच्छेत् । चक्रवाताद्यभावात् । अश्वप्रधानः फाल्गुने । पदातिप्रधानश्चैत्रे ॥ १८२ ॥

( ५ ) **नन्दनः** । यायात्कुर्य्यात् मासौ प्रतिमासयोरिति यावत् ॥ १८२ ॥

( ६ ) **रामचन्द्रः** । फाल्गुनंवा चैत्रंवा एतौ द्वौ मासौ यात्रांप्रति शुभौ । यथाबलं स्वबलानुसारं यात्रांयायात् ॥१८२॥

**अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम् ॥ तदा यायाद्विगृह्यैव व्यसने चोत्थितेरिपोः॥१८३ ॥**

( १ ) **मेधातिथिः** । अस्यापवादः एतद्व्यतिरेकेणान्येष्वपि प्रावृडादिकालेषु यदा मन्येतात्मनोऽवश्यंभाविविजयं-

* वासर्व=वसन्त ( अ )

तदायायात् । यदा हस्त्यश्वबलप्रायंवर्षास्वश्वबलंहस्तिबलंतदा हि स्वबलकालप्रभावादैकान्तिकोजयः । व्यसनपरस्य स्वबलकोशादि तस्मिन्नुत्पन्ने स्वबलकालनिरपेक्षोयायात् । व्यसनपीडितोहिशत्रुः साध्योभवति । काष्ठमिवगुणोपयुक्तसन्नियोगमात्रादेवविनश्यति । विगृह्येति यातव्यमेवाष्टभ्याहूय यायान्महानस्मिन्नेवावगम्यते ॥ १८३ ॥

( २ ) सर्वज्ञनारायणः । अन्येष्वपीति त्वधमः । कार्यविशेषोदयश्चात्र निमित्तं विगृह्य विग्रहंभाविनमुद्घुष्य कथंचिद्विग्रहज्ञानमात्रेण परस्य प्रणतिसंभवात् । रिपोर्व्यसने चोत्थिते न कालनियमइति तदा सर्वएव मुख्यः कालइत्यर्थः ॥ १८३ ॥

( ३ ) कुल्लूकः । उक्तकालव्यतिरिक्तेषु यदात्मनोनिश्चितंजयमवगच्छेत्तदा स्वबलयोग्यकाले ग्रीष्मादावपि हस्त्यश्वादिबलप्रायोविगृह्यैव यात्रांकुर्यात् । शत्रोश्चामात्यादिप्रकृतिगोचरदण्डपारुष्यादिव्यसने जातेऽरिपक्षभूतायां तत्प्रकृतावप्युक्तकालादन्यत्रापि यायात् ॥ १८३ ॥

( ४ ) राघवानन्दः । नौगजप्रधानोवर्षास्वित्याह अन्येष्वपीति । कर्दमनदीप्लवनादेरन्यैरसाध्यत्वात् । विगृह्य विग्रहं करिष्यामीति । उक्तव्यवस्थितिंनिराह व्यसनेचोत्थितइति । दैवात्सैन्यामात्यादीनांदण्डपारुष्यादिना कोपेसतीत्यर्थः ॥ १८३ ॥

( ५ ) नन्दनः । कालेषु मासेष्वित्यर्थः । व्यसने मित्रबलादीनांव्यापत्तौ ॥ १८३ ॥

( ६ ) रामचन्द्रः । अन्येषु कालेषु ध्रुवंजयंयदा पश्येत्तदा विगृह्यैव विग्रहंभाविनमुद्घुष्यकथंचिद्विग्रहज्ञानमात्रेण परस्यप्रणतिसंभवात् यात्रांयायात् । रिपोःस्वशत्रोर्व्यसनेउत्थिते सति न संग्रामार्हकालनियमः ॥ १८३ ॥

**कृत्वा विधानं मूले तु यात्रिकं च थाविधि ॥ उपगृह्यास्पदंचैव चारान्सम्यग्विधायच ॥१८४ ॥**

( १ ) मेधातिथिः । मूले स्वदुर्गराष्ट्रे कुर्यादथपार्ष्णिग्राहश्च तत्र विधानंप्रतिविधानंकृत्वा दुर्गंतावत्प्रभूतधान्यादिकंसुसज्जयन्त्रप्राकारपरिखादिकार्यम् । राष्ट्रस्यापि स्वबलंश्रेणीबलेभ्योरक्षांविधाय कुर्याद्दानमानेभ्यउपसंयम्य प्रत्यन्तेषु प्रक्षेप्तव्यंपार्ष्णिग्राहंप्रतिमाह तत्समर्थश्च बलैकदेशः स्वराष्ट्रे स्थापयितव्यः । यात्राप्रयोजनंयात्रिकं हस्त्यश्वादिबलयोग्यंच प्रहरणधारणादिसज्जंयथाविधिपरोपदेशंकृत्वाऽऽस्पदंप्रतिष्ठानं किंतर्ह्यतोऽपरकीयाः क्रुद्धादयोद्रष्टव्यास्तानुपगृह्य स्वीकृत्याकारस्यपरविषयेनिवृत्तेस्तज्ज्ञानाय सम्यग्यथावद्विधाय प्रयुज्य किमयदष्टोपसंग्रहंकर्तुमारब्धमुत शत्रुपरिमण्डलंकोपयितुमथमध्यममुदासीनंवा संश्रयितुं तथा मूलयात्रांवा हर्तुकामोविधिवद्वेदंवा कर्तुकामइत्यादि यथा चैतदेवंतथा ॥ १८४ ॥

( २ ) सर्वज्ञनारायणः । मूले स्थिरशिबिरे । यात्रिकं यात्रायोग्यं संनाहादि विधाय । आस्पदं शिबिरस्थानं गम्यदेशे परिगृह्य ॥ १८४ ॥

( ३ ) कुल्लूकः । मूले स्वीयदुर्गराष्ट्ररूपे पार्ष्णिग्राहसंविधानंप्रधानपुरुषाधिष्ठितरक्षार्थसैन्यैकदेशस्थापनरूपंप्रतिविधानंकृत्वा यात्रोपयोगिच वाहनायुधवर्म यात्राविधानंयथाशास्त्रंकृत्वा परमण्डलगतस्य च येनास्यावस्थानंभवति तदुपगृह्य तदीयान्भृत्यपक्षानात्मसात्कृत्वा चारांश्च कापटिकादीञ्छत्रुदेशवार्त्ताज्ञापनार्थंप्रस्थाप्यसम्यक्तया जाङ्गलानूपाटविकविषयभेदेन त्रिविधंपन्थानंमार्गंशोधिततरुगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणादिना संशोध्य तथा हस्त्यश्वरथपदातिसेनाकर्मकरात्मकंषड्विधंबलंयथोपयोगमाहारौषधसत्कारादिना संशोध्य सांपरायिकंसंपरायः संग्रामः तदुपचितविधिना शत्रुदेशमत्वरया गच्छेत् ॥ १८४ ॥ ॥ १८५ ॥

( ४ ) राघवानन्दः । कथंप्रवेष्टव्यमित्यस्योत्तरमाह कृत्वेतिचतुर्भिः । मूले स्वराष्ट्रे प्रधानपुरुषाधिष्ठितंस्वराष्ट्ररक्षण-

क्षमंस्वसैन्यंस्थापयित्वा । आस्पदं येनास्पदेनात्रस्थानंभवति परकीयात्मसात्करणे तेषांपरकीयभृत्यानां स्वकीयभृत्यवद्वस्त्रगृहान्नादि । चारान्प्रच्छन्नदूतान्कार्पटिकादीन्पूर्वोक्तान् शत्रुदेशज्ञापनार्थंविधाय नियुज्य ॥ १८४ ॥

( ५ ) **नन्दनः** । मूले पुरराष्ट्रलक्षणे विधानंसंविधानम् यात्रायोग्यंयात्रिकंतण्डुलमुद्गादिकम् आस्पदंनिर्मितगृहादिकम् यायादित्येव ॥ १८४ ॥

( ६ ) **रामचन्द्रः** । युग्मं । मूले स्थिरशिबिरे अग्रामे वसतिस्थाने विधानं रक्षां कृत्वा अरिपुरंशनैर्यायात् । किंकृत्वा यात्रिकं संग्रामयोग्यं सन्नाहादिकं यथाविधि उपगृह्य आस्पदं शिबिरस्थानं उपगृह्य ॥ १८४ ॥

**संशोध्य त्रिविधंमार्गंषड्विधंच बलंस्वकम् ॥ सांपरायिककल्पेन यायादरिपुरंशनैः ॥ १८५ ॥**

( १ ) **मेधातिथिः** । त्रिविधःपन्थाः जाङ्गलआतपआटविकइति केचिदाटविकस्थाने वनप्रक्षेपात्त्रिविधइति । अपरउन्नतोनिम्नःसमइत्येवंत्रिविधं संशोध्य मार्गरोधिवृक्षगुल्मलताविच्छेदेन स्थलनिम्नयोः समीकरणं नदीगर्त्तयोस्तीर्थकरणं पथिरोधकव्यालसमुच्छेदः प्रवर्तकानामात्मीकरणं यवससेनादिमत्ताचेति षड्विधंबलमितिकेचित् । हस्त्यश्वरथपदातिसेनाकोशकर्मकरात्मकंषड्विधंबलमित्यन्ये । कोशस्थाने प्रक्षेपणमित्यपरे । मौलभृत्यश्रेणिमित्रामित्राटविकबलभेदात् । सांपरायिक विधानेन सांपरायिकंयुद्धेकृत्स्नंतत्प्रयोजनंयस्यतत्सांपरायिकं दुर्गकल्पेन वा रिपुंप्रतियायात् । सच सैन्यनिवेशस्तेषु तेषु च स्थानेषु स्थावरजङ्गमदण्डोबहुमुखपरिघफलकशाखाभिः प्राकारइत्यादिस्तादृशस्थापितविशेषतस्तुयात्रागतः ॥ ॥ १८५ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिविधंमार्गं जाङ्गलानूपाटविकमिति कश्चित् ग्रामारण्यपर्वतरूपमितितु युक्तम् । षड्विधंबलं हस्त्यश्वरथपदातयश्चत्वारः हस्त्याद्यारोहकाः शस्त्रोपनायकाश्चेति द्वाविति षड्विधम् । केचित्तु हस्त्यारोहकादयएकविधावश्याःपरेतिषड्विधतामाहुः । सांपरायिककल्पेन संग्रामयोग्येन विधानेन । शनैर्यदि मध्ये परः सन्दध्यादित्याशया ॥ १८५ ॥

( ४ ) **राघवानन्दः** । त्रिविधं जाङ्गलाटविकानूपभेदेन तत्संशोध्य मार्गविरोधिततरुगुल्मनिम्नोन्नतादिच्छेदसमीकरणादिना तत्र जाङ्गलस्य लक्षणमुक्तम् । आटविकं अटवी वनं तत्प्रायमाटविकं तस्य छेदेन । अनूपं जलप्रायं जलप्रायमनूपंस्यादित्यभिधानात् । तस्य पूरणेनषड्विधं हस्त्यश्वरथपदाति सेनापतिकर्मकारात्मकं संशोध्यच बलस्य च संशोधनमार्गस्यभावादिचिकित्सा । सांपरायिककल्पेन संपरायः संग्रामः तदुचितविधिनापूर्वापरानुसन्धानंविना नगन्तव्यमित्याह शनैरिति ॥ १८५ ॥

( ५ ) **नन्दनः** । त्रिविधं जाङ्गलमनूपमाटविकञ्च बलस्य षड्विधत्वंकामन्दकेनोक्तम् ॥ मौलंभृतंश्रेणिसुहृद्द्विषदाटविकंबलम् । षड्विधन्तुबलंव्यूह्यद्विषतोभिमुखंव्रजेदिति सांपरायिककल्पेन युद्धार्हसन्नाहेन आयुधौषधादिसंपादनेनेति यावत् ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । मार्गं त्रिविधं जाङ्गलं आटविकंग्रामारण्यपर्वतरूपम् । षड्विधंस्वकंबलंसंगृह्य षड्विधं हस्त्यश्वरथपदातयः हस्त्यश्वाद्यारोहकाः शस्त्रोपनायकाश्चेति । सांपरायिककल्पेन संग्रामयोग्येन विधानेन ॥ १८५ ॥

**शत्रुसेविनि मित्रे च गूढे युक्ततरोभवेत् ॥ गतप्रत्यागते चैव सहिकष्टतरोरिपुः ॥ १८६ ॥**

( १ ) **मेधातिथिः** । शत्रुसेविनि गूढेप्रच्छन्ने मित्रे गतप्रत्यागते च युक्ततरः स्यात् । अभियुक्ततरआदततरोभवेन्नविश्वसेदित्यर्थः । यस्मात्सकष्टतरोरिपुरन्येभ्यःक्रुद्धादिभ्यः एवंच युक्ततरवचनात्कष्टतरवचनाच्च गतप्रत्यागतमग्राह्यमस्येति

गम्यते । सचतुर्विधः कारणाद्गतस्ततोविपरीतकारणादागतोयथा दोषेणगतः पुनरागतोगुणमुभयोः परित्यज्य कारणेनागतइतियःसत्याज्योलघुबुद्धित्वाद्यत्किंचित्कारीति । पुनरस्य प्रत्ययस्तु कारणाद्गतःकारणागतः यथा स्वामिदोषेणगतः परस्तात्स्वदोषेणागतइति सत्कर्त्तव्योयदि सङ्गित्वादागतस्ततोग्राह्यः । अथपरप्रयुक्तस्तेन वा दोषेणापकर्त्तुकामइति ततोनेति पर राष्ट्रंमत्यभिप्रस्थितः ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः** । स्वस्य मित्रतामापन्नेविगूढे शत्रुसेविनि शङ्कितः स्यात् । तथा गतप्रत्यागते रिपुसमीपंगत्वा पुनरागत्य प्रविष्टे ॥ १८६ ॥

( ३ ) **कुल्लूकः** । यन्मित्रंगूढंकृत्वा शत्रुंसेवते यश्च भृत्यादिः पूर्वविरागाद्गतः पश्चादागतः तयोः सावधानोभवेत् यस्मात्तावतिशयेन दुर्निग्रहोरिपुः ॥ १८६ ॥

( ४ ) **राघवानन्दः** । किंच शत्र्विति । शत्रुसेविनि शत्रोरेवानुकूले युक्ततरोऽतिशयप्रयत्नवान् । तत्र हेतुर्गते गमनोन्मुखे मित्रवदाचरति प्रकटितद्वारादिनानुकूलः प्रत्यागते प्रत्यागमनोद्यते तद्वारावरोधेन प्रतिकूलएवपुनरागमस्यलेनैवासंभवात् । गूढेशत्रुसेविनि मित्रे मित्रवदाचरत्यपि शत्रुपक्षपातिनि अतः सहि रिपोरपि कष्टतरः ॥ १८६ ॥

( ५ ) **नन्दनः** । शत्रुसेविनीति । द्वयंमित्रविशेषणं गतप्रत्यागते आत्मसकाशाच्छत्रुंगत्वा तत्सकाशात् प्रत्यागते सतिइति द्वयोः प्रत्येकंपरामर्शः ॥ १८६ ॥

( ६ ) **रामचन्द्रः** । शत्रुसेविनि मित्रे राजा युक्ततरः अतिशयेन युक्तोयुक्ततरः सावधानः भवेत् । च पुनः । गतप्रत्यागते गमनागमने शत्रोः । सरिपुः कष्टतरः ॥ १८६ ॥

**दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ॥ वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥ १८७ ॥**

( १ ) **मेधातिथिः** । तत्र दण्डाकारोव्यूहोदण्डव्यूहः । एवंशकटाकृतिस्थानाच्छकटइत्यादियोज्यम् । पुरस्ताद्बलाध्यक्षोमध्येराजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनस्तेषांसमीपेऽश्वास्ततः पदातयइत्येषसर्वतः समवायोदण्डव्यूहोऽतिर्यग्भवति । सर्वतोभयकार्यःसूचिव्यूहः स्थलसमुत्थानसैनिकः प्रवीरपुरुषमुखोतिदीर्घऊर्ध्वोयतः परकक्षीऽन्यैःसमंप्रवर्त्तमानः । मकरव्यूहस्तु मुखेजघनयोः पृथुरुभयतोयेन प्रशस्तःसर्वेनफल्गुबलंलभते न चार्थे तद्विशूरैर्हन्यमानमन्येषामपि भङ्गायभवति । तस्यान्तमन्यकार्यमवरुद्धंनिश्चयेनावतिष्ठते । परिशिष्टन्तुबलंव्यूहस्यान्तःप्रक्षिपेत् एवंरचनाविशेषैरुक्तैरुक्तप्रयोजनापेक्षया वा विशेषेण तु समायां भूमौ दण्डगरुडसूचिभिर्यायात् विषमायांसंकटायां शकटमकरवराहैरिति ॥ ॥ १८७ ॥

( २ ) **सर्वज्ञनारायणः** । दण्डशकटादिर्दण्डशकटाद्याकृतिसाम्येन । व्यूहभेदस्य गौणी संज्ञा तदाकृतिभेदाश्च प्रपञ्चभिया न लिख्यन्ते नीतिशास्त्रेषु तु द्रष्टव्याः ॥ १८७ ॥

( ३ ) **कुल्लूकः** । दण्डाकृतिव्यूहरचनादि दण्डव्यूहः एवंशकटादिव्यूहाअपि तत्राग्रे बलाध्यक्षोमध्ये राजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपे घोटकास्ततः पदातयइत्येवंकृतरचनोदीर्घः सर्वतः समविन्यासोदण्डव्यूहस्तेन तद्यातव्यंमार्गंसर्वतोभये सति यायत् । सूच्याकाराग्रः पश्चात्पृथुलः शकटव्यूहस्तेन पृष्ठतोभये सति गच्छेत् । सूक्ष्ममुखः पश्चाद्भागः पृथुमध्योवराहव्यूहः एषएव पृथुतरमध्योगरुडव्यूहस्ताभ्यां पार्श्वयोर्भये सति व्रजेत् । वराहविपर्ययेण मकरव्यूहस्तेनाग्रे पश्चाचोभयत्र भये सति गच्छेत् । पिपीलिकापङ्क्तिरिवाग्रपश्चाद्भावेन संहतरूपतया यत्र यत्र सैनिकावस्थानंसशीघ्रप्रवीरपुरुषमुखः सूचीव्यूहस्तेनाग्रतोभये सति यायात् ॥ १८७ ॥

( ४ ) **राघवानन्दः** । व्यूहे दण्डादिपदप्रक्षेपस्तदाकृतिसूचनार्थः । व्यूहस्तु सेनायाःसंस्थानं तेत्रसम तत्र दण्डव्यू-

होयस्याग्रे बलाध्यक्षोमध्ये नृपतिःपश्चात्सेनापतिःपार्श्वे करिणस्तत्समीपेऽश्वादयःततःपदातयइत्येवंरचनाविशेषोदण्डाकारइतिसर्वतोभयेमार्गे तेनव्यूहेन रिपोराष्ट्रंयायादित्यन्वयः । पृष्ठतोभये च शकटव्यूहः सच सूच्यग्रः पश्चात्पृथुः । वराहस्तु सूक्ष्ममुखः पश्चादपि तथापृथुमध्यः सएव मकरोऽतीवदीर्घः एतौतु पार्श्वतोभयेपि । पिपीलिकापङ्क्तिरूपोऽग्रेदीर्घावीरपुरुषममुखाः पश्चाद्भागेसंहतायत्रसैनिकाः । सूचीव्यूहः सएवाग्रतोभये । गारुडस्त्वग्रेपश्चाच्चसूक्ष्मः प्रसारितपक्षवद्दीर्घः पृथूदरइतितत्र समायांभुविदण्डगरुडसूचीभिर्यायाद्विषमायांसंकटायांशकटमकरवराहैरिति ॥ १८७ ॥

( ५ ) **नन्दनः** । दण्डगरुडादयोव्यूहानामसदशाः कार्याः ॥ १८७ ॥

( ६ ) **रामचन्द्रः** । दण्डव्यूहेन दण्डशकटाद्याकृतिसाम्येन व्यूहभेदस्य गौणीसंज्ञा । तेनमार्गे यायात् ॥ १८७ ॥

**यतश्च भयमाशङ्केत्ततोविस्तारयेद्बलम् ॥ पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् ॥ १८८ ॥**

( १ ) **मेधातिथिः** । तस्मिन्पथियस्मात्प्रदेशात्परहितकारिभ्योभयाशङ्कास्यात्तेन प्रदेशेन पूर्वगृहाद्विस्तारयेद्बलं गव्यूतिमात्रमधिकंवा । यवसंपत्रदृढप्रहारविस्तीर्णशत्रुपुष्टपरस्परमवरुद्धरथिकाश्वारोहकरीबलान्यवहिनिभवन्ति समन्ताद्विस्तृतपरिमण्डलोमध्यनिविष्टविजिगीषुः पद्मव्यूहः । एवंनित्यंनिविशेत्पुरान्निर्गच्छेद्ग्रामाद्वा ॥ १८८ ॥

( २ ) **सर्वज्ञनारायणः** । एषांच विकल्पेन करणे निमित्तमाह यतश्चेति । निविशेत शिबिरंकुर्यात् ॥ १८८ ॥

( ३ ) **कुल्लूकः** । यस्यादिशः शत्रुभयमाशङ्केत तस्यामेव बलंविस्तारयेत् समविस्तृतपरिमण्डलोमध्योपविष्टजिगीषुः पद्मव्यूहस्तेन पुरान्निर्गत्य सर्वदा कपटनिवेशनंकुर्यात् ॥ १८८ ॥

( ४ ) **राघवानन्दः** । कथंस्थातव्यमित्यस्योत्तरमाह यतइति । विस्तारयेत् गव्यूतिमात्रमधिकंवायुद्धे संपन्नदृढप्रहारिभिरिति । पद्मव्यूहस्तु समंततोविस्तृतसेनोमध्यस्थितनृपतिः । अनेनरिपुपुरंप्रविश्य निवेशंकुर्यात् । मेधातिथिस्तु समन्ताद्विस्तृतपरिमण्डलोमध्यनिविष्टविजिगीषुःपद्मव्यूहइति आशंक्येतभयंयस्मादितिच पाठंकरोति ॥ १८८ ॥

( ६ ) **रामचन्द्रः** । यतोदिग्भ्यः भयमाशङ्केत ततः बलं सैन्यं विस्तारयेत ॥१८८ ॥

**सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ॥ यतश्च भयमाशङ्केत्प्राचीं तां कल्पयेद्दिशम् ॥ १८९ ॥**

( १ ) **मेधातिथिः** । सेनापतिःसमग्रस्य धनस्याधिपतिर्बलाध्यक्षस्तयोर्बहुत्वाभावाद्विवचननिर्देशाच्च सर्वदिक्षु तदसंभवइति तत्पुरुषास्तच्छब्देनोच्यन्ते । तदीयपुरुषसन्निवेशाच्च सर्वदिक्षु तावेव सन्निवेशितौ भवतः तेन भिन्नैस्तुरगगजादिभिस्तत्प्रतिबद्धनिवेशानांसंयोधनाय समन्ततोनिवेश्य गिरिंगर्त्तंवापृष्ठतोऽध्यक्षंकृत्वा यतोभयमाशङ्केत यथासा प्राचीदिग्भवत्येव । निवेशंकुर्यादभिमुखनिर्गमार्थमिव ॥ १८९ ॥

( २ ) **सर्वज्ञनारायणः** । सेनापतिः सैन्ये प्रधानभूतः स्वयंयोद्धा बलाध्यक्षोबलावेक्षकः । प्राचींतामितितत्संमुखोनिविशेतेत्यर्थः ॥ १८९ ॥

( ३ ) **कुल्लूकः** । हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्यः सच पत्तिकउच्यते । पत्तिकदशकस्यैकः पतिः सेनापतिरुच्यते । तद्दशकस्यैकः सेनानायकः सएव च बलाध्यक्षः सेनापतिबलाध्यक्षौ समस्तासु दिक्षु संघर्षयुद्धार्थंनियोजयेत् । यस्याश्च दिशोयदा भयमाशङ्केत तदा तामग्रे दिशंकुर्यात् ॥ १८९ ॥

---

( १८८ ) पद्मेन = पाद्मेन ( ल, )

( ४ ) **राघवानन्दः** । अत्र कृत्यविशेषमाह सेनापतीति । अत्रकल्केभैकरथाश्वपत्तिः पञ्चपदातिकेति ॥ हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पत्तिः कार्यः सपत्तिः पत्तिदशाध्यक्षः सेनापतिस्तद्दशाध्यक्षोबलाध्यक्षइति तौच तुर्दिक्षुनिवेशयेत् । प्राचींतांशङ्कास्पदांदिशंअग्रेकृत्वातिष्ठेदितिभावः ॥ १८९ ॥

( ५ ) **नन्दनः** । बलाध्यक्षोबलानुसन्धायकः । तांदिशंप्राचींकल्पयेत् । तांदिशमभिमुखोनिविशेत् इत्यर्थः ॥ १८९ ॥

( ६ ) **रामचन्द्रः** । राजा सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् । यस्यांभयमाशङ्केत्तांदिशंप्राचींकल्पयेत् । प्राचीमिति । तत्संमुखोभूत्वा निवेशयेदित्यर्थः ॥ १८९ ॥

## गुल्मांश्च स्थापयेदाप्तान्कृतसंज्ञान्समन्ततः ॥ स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥ १९० ॥

( १ ) **मेधातिथिः** । गुल्मान्मनुष्यसमवायान् केचित्साक्षात्समन्ततः सशङ्खपटहाअन्येविपरीतास्तत्रचोत्पन्नदुश्चिकित्संमहते चानर्थाय गुणैर्विशेषयति । आप्तानामसदृशानित्यभेदार्थं कृतसंज्ञान् कृता संज्ञा यैस्ते कृतसंज्ञास्तानवसरे युद्धेषु शङ्खभेरीनादध्वजादिभिर्दायैस्तूर्णमेवाहरिष्यामस्तदपगमाशङ्कायां चैवमेवकुर्यात् आहते ध्वजेवोछ्रिते पृथक्पृथगवस्थातव्यं एवंसंहतैरेवमहर्त्तव्यं एवंव्यावर्त्तितव्यमित्यादिस्थितम् । स्थाने तत्र कुशलाअन्यैःशरैःशक्यमागन्तुंसमे तेन शक्यमस्मिन्नवयमपृथक्परेपृथगित्यादिवृद्वेगे नानुसरणादौ कुशलाभवन्तःसंहतैर्योधनाय प्रासारंकृत्वा प्रविष्टाः पृष्ठदेशार्थः प्रहारिणा चित्रंयोजयितव्यः भग्नानामनेकार्थशतानांपृष्ठंग्राह्यमित्यादि । अभीरवः अनेनविस्तीर्णसमेताअविकारिणोऽभेदात्मकैर्यैर्युक्तमपरस्य एवमेतान्गुल्मान्समन्ततस्त्रिषु दिक्षु गव्यूतिमात्रव्यापीप्रत्यहमनियतदेशान्बहूनस्थपतेर्भयप्रतिबोधनार्थमवहिते भयदातरिजनोविश्वस्तोभवति दानमानकार्यदर्शनादिभिरपवृत्ते युद्धेऽमात्यादिभिः सह सर्वेषांस्वार्थःसंग्रामोनाममात्रंराजेति सर्वे वयंसमानविभवोपभोगायजये राज्यंपराजये स्वर्गइति हेतुनाऽऽगताः ॥ १९० ॥

( २ ) **सर्वज्ञनारायणः** । गुल्मान् गुल्मदेशस्थान् । कृतसंज्ञानेतत्संकेतज्ञस्यैव प्रवेशादयइति संकेतं कृत्वा । स्थाने गुल्मस्थानावस्थाने । युद्धे युद्धादिभूमिस्थाने । कुशलान् कृतानुभवान् । अभीरून् संग्राममरणादभीतान् । अविकारिणः आप्तत्वेसत्यपि कदाचिदागन्तुकविचाररहितान् ॥ १९० ॥

( ३ ) **कुल्लूकः** । गुल्मान्सैन्यैकदेशानाप्तपुरुषाधिष्ठितान् स्थानापसरणयुद्धार्थंकृतभेरीपटहशङ्खादिसंकेतानवस्थानयुद्धयोः प्रवीणान्निर्भयानव्यभिचारिणःसेनापतिबलाध्यक्षान्दूरतः सर्वदिक्षु पारक्यप्रवेशवारणाय शत्रुचेष्टापरिज्ञानाय च नियोजयेत् ॥ १९० ॥

( ४ ) **राघवानन्दः** । किंच । गुल्मानामाप्तपुरुषाधिष्ठितसैन्यैकदेशान्कृतसंज्ञान् युद्धोद्यमसूचकभेरीपटहशङ्खादिसङ्केतान् सेनापतिबलाध्यक्षयोर्दूरतःस्थापयेदित्यन्वयः । कुशलान् अवस्थानयुद्धयोः । अविकारिणोधनलोभादिना विकर्तुमशीलान् ॥ १९० ॥

( ५ ) **नन्दनः** । सेनानिवेशविशेषोगुल्मः । स्थानेऽपलायने । अविकारिणः अकृतापराधान् ॥ १९० ॥

( ६ ) **रामचन्द्रः** । सेनायाःसमन्ततः कृतसंज्ञान् शिरस्युपरि । पत्रंपुष्पंधारयेदित्यर्थः । एतादृशान् गुल्मान् रक्षकान् आप्तान् स्थापयेत् स्थाने युद्धस्थाने युद्धे च कुशलान् ॥ १९० ॥

**संहतान्योधयेदल्पान्काममविस्तारयेद्बहून् ॥ सूच्या वज्रेण चैवैतान्व्यूहेन व्यूह्य योधयेत् ॥ १९१ ॥**

( १ ) **मेधातिथिः** असंहता हि बलवद्भिस्तीर्णबलमासाद्यावयवशोविध्वंसनायवाहनाघातैः क्षयंयान्ति तद्विनाशेचोत्पन्नाइमेऽतोल्पानात्मीयान्संहतान्योधयेदन्योन्यापेक्षया युध्यमानानभिघ्नतइतरेतरानुग्रहात्परस्परानुरागात्स्पर्द्धायाश्च परान्संहतान्सोढुंसमर्थाभवन्ति । काममयथेष्टंकार्यार्थंबहून्विस्तारयेद्विप्रकीर्णान्योधयेदित्यादिमन्येत । भिन्नांस्तांश्चेतांश्चैतान्भयमेष्यति परान्स्वान्वा बहून्दृष्ट्वात्रासःस्यादिति। सूचीपूर्वोक्तोक्षव्यूहभेदोऽग्रतः पृष्ठतश्च त्रिधा व्यवस्थितःपार्श्वयोर्भेदनेन तेनचात्मानंसूचीव्यूहंविभज्य योधयेत् । सतांचसर्वव्यूहानांप्रतिष्ठाव्यूहनसमर्थावितिप्रतिगृहीतावेवंकारणात् । यदातुपरबलेह्येतावेव भवतस्तदा स्वेबले विपर्ययः कार्यः। तुल्यत्वे तुपुष्टिमत्वानुरक्तकुशलमाननप्रभृतैकार्थकारित्वादित्यतोविशेषे यथासंभववाक्यैर्योधयेदिति वचनाद्राजा स्वयंतत्प्रतिसंधानार्थंव्यूहदुर्गाद्यमश्वेप्रतिग्रहभूतस्तिष्ठेत्समानतन्त्रेणोक्तं द्वेशतेधनुषांगत्वाराजातिष्ठेत्प्रतिग्रहः ॥ भिन्नसंघातनार्थंतुनयुध्येताप्रतिग्रहः ॥ १९१ ॥

( २ ) **सर्वज्ञनारायणः** । सूच्याल्पान् । वज्रेणबहून् ॥ १९१ ॥

( ३ ) **कुल्लूकः** । अल्पान्योधान्संहतान्कृत्वा बहून्पुनर्यथेष्टंविस्तारयेत् । सूच्या पूर्वोक्तया वज्राख्येन व्यूहेन त्रिधा व्यवस्थितबलेन रचयित्वा योधान्योधयेत् ॥ १९१ ॥

( ४ ) **राघवानन्दः** । कथंयोद्धव्यमित्यस्योत्तरमाह संहतानिति । संहतान्परकीयान्प्रति अल्पान्योधान्योधयेत् युद्धायनियोजयेत् । अल्पान्प्रतिवा बहूंश्चेद्विस्तारयेत्प्रदर्शयेत् । वज्रेणेति त्रिधाव्यवस्थितबलोवज्रइत्यभिधीयते ॥ १९१ ॥

( ५ ) **नन्दनः** । अल्पबलश्चेदल्पान्स्वकीयान्योधान् संहतान्कृत्वा योधयेत् । सूच्यव्यूहेनाल्पबलः वज्रव्यूहेन बहुबलइतिविवेकः ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । संहतान् एकत्रस्थान् अल्पान्बहून्वा स्थापयेत् विस्तारयेत् योजयेत् ॥ १९१ ॥

**स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ॥ वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ १९२ ॥**

( १ ) **मेधातिथिः** । सेनानांदेशस्य मकॢप्त्यर्थमाह समप्रदेशे रथैरश्वैश्च युध्येत तत्र हितेषामप्रतिघातः अनूपः पानीयप्रायः तत्राप्यल्पोदके हस्तिभिरगाधोदकेतु नौभिः तेषांहि तत्र सुखप्रचरता वृक्षैर्गुल्मैश्चसंछन्ने धनुर्भिः तद्ग्रहणाच्च बलीवर्दगर्त्ताद्याकुलोगृह्यते समानकार्यत्वात् । स्थलमिति पाषाणवृक्षलतागर्त्तादिरहितोदेशस्तस्मिन्सिद्धिः । धार्यैःशरादिभिरायुधैश्च शक्त्यादिभिर्युद्ध्येत आसन्नयुद्धत्वादेवंसामर्थ्यप्रदर्शनार्थत्वादस्य ॥ १९२ ॥

( २ ) **सर्वज्ञनारायणः** । स्यन्दनाश्वैः स्यन्दनैरश्वैश्च। चापैरसिचर्मायुधैरिति पदानीनामायुधकथनम् । अश्वादयोदेशविशेषे पदातयस्तु सर्वत्रेत्याशयः ॥ १९२ ॥

( ३ ) **कुल्लूकः** । समभूभागे रथाश्वेन युध्येत तत्र तेन युद्धसामर्थ्यात्तदानुगतोदकेनौकाहस्तिभिः तरुगुल्मावृते धन्विभिर्गतकण्टकपाषाणादिरहितस्थले खड्गफलककुन्ताद्यैरायुधैर्युध्येत ॥ १९२ ॥

( ४ ) **राघवानन्दः** । यथाक्रमंयुद्धोचितंदेशमाह स्यन्दनेति । समेसमस्थले शुष्कइति यावत् । अनूपे अल्पोदकस्थलेनावश्च द्विपाःकरिणस्तैः । वृक्षाश्च गुल्मावंशादयस्तैरावृते स्थले निम्नोन्नते ॥ १९२ ॥

( ५ ) **नन्दनः** । अनूपःप्रभूतजलोदेशः ॥ १९२ ॥

( ६ ) **रामचन्द्रः** । समेदेशे स्यन्दनाश्वैर्युध्येत । अनूपे सजलेदेशे नौकाभिःयुध्येत । तथा वृक्षगुल्मावृते देशे चापैर्धनुर्भिः तथा असिचर्मायुधैःयुध्येत ॥ १९२ ॥

## कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालान् शूरसेनजान् ॥ दीर्घाँल्लघूंश्चैव नरानग्रानीकेषु योजयेत् ॥ १९३ ॥

( १ ) **मेधातिथिः** । किंचकुरुक्षेत्रंप्रसिद्धं मत्स्यसंज्ञोविराटदेशोनागपुरे पञ्चालाउभयेकान्यकुब्जाआहिछत्राश्च शूरसेनजामाथुराः । क्वचिच्चात्र भावार्थे प्रत्ययोलुप्तनिर्दिष्ट एतद्देशजाहि प्रायेण महावर्ष्माणो बलवन्तः पृथुवक्षसःशूराअभिमानिनोदुर्विषहाइत्यत्रयेऽमी कथिताः परेषांभयहेतवोभवन्ति दीर्घकायाध्यवस्ताल्पदेशाअपिदीर्घश्वसूकरामहाकायत्वात् लघवस्तुमरणासमर्थानिर्भयेन जनेन प्रच्छन्नाविद्धाः प्रहरन्तोऽपकारासमर्थाआदर्शभूताश्चैतइतरेषांभवन्ति ॥ १९३ ॥

( २ ) **सर्वज्ञनारायणः** । लघून् शीघ्रान् । अग्रानीकेषु तेषामापततामधृष्यत्वात् ॥ १९३ ॥

( ३ ) **कुल्लूकः** । कुरुक्षेत्रभवान्मत्स्यान्विराटदेशनिवासिनः पञ्चालान्कान्यकुब्जाहिच्छत्रोद्भवान् शूरसेनजान् माथुरान्प्रायेण पृथुशरीरशौर्य्याहङ्कारयोगात्सेनाग्रे योजयेत् तथान्यदेशोद्भवानपि दीर्घलघुदेहान्मनुष्यान्युद्धाभिमानिनः सेनाग्रएव योजयेत् ॥ १९३ ॥

( ४ ) **राघवानन्दः** । मनुष्यसंनिवेशप्रकारमाह कौरुक्षेत्रांश्चेति । कुरुक्षेत्रादयोदेशविशेषास्तदुद्भवान् । लघून् शरीरतोविक्रमतश्च । अग्रानीकषु अनीकानांसेनानामग्रेषु ॥ १९३ ॥

( ५ ) **नन्दनः** । कुरुक्षेत्रादिदेशजाः कृतज्ञाः शूरजाश्च तेष्वपि दीर्घाः प्रतिपक्षभीषणाश्च तेष्वपि लघवः प्रवृत्तिक्षमाश्च अतस्तानग्रानीकेषु योजयेदित्यभिप्रायः ॥ १९३ ॥

( ६ ) **रामचन्द्रः** । दीर्घान् नालसंघान् पश्चिमदेशनिवासिनः । लघून् पर्वतवासिनः ॥ १९३ ॥

## प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत् ॥ चेष्टाश्चैव विजानीयादरीन्योधयतामपि ॥ १९४ ॥

( १ ) **मेधातिथिः** । व्यूहंरचयित्वा स्वबलंभृशंदर्शयन्किमेषांजीयते जिताएवामी युष्मत्प्रतापेनेत्येवंप्रहर्षयेत् । जये महानर्थलाभः आश्रितोपाश्रितसुखंवधे वापिस्वर्गोभर्तृपिण्डनिर्यातनंच । पराजये त्रितयाभावइत्यादि नैमित्तिकोपितदुपशःतादर्शननिमित्तनियमान्मानय सहस्वोर्व्यावश्यंभावोयदि प्रधानपुरुषः स्वजनवधोराजा तदप्रतिग्रहव्याजेन स्थितोभीरुत्वात्स्वयंयुद्धंनकामयतइत्यादि तत्र ये ब्रूयुस्ते तदेव स्वार्थएवायमस्माकमत्र वधे शस्त्रोपजीविभूतानांसंग्रामविशेषधर्मोऽव्ययीभावः स्वधर्मायासोऽनर्थहेतूराजा सर्वप्रकारैरक्षणीयः । परिश्रान्तानाञ्चास्माकमपरिश्रान्तसुखमनुग्रहंकरिष्यतीत्येवमर्थस्थितइति तान्विशेषतोगृह्णीयात् जेतुः प्रशंसितुः परसंव्ययंवाकारयेयुस्तानुपग्रहैः परिष्वङ्गालङ्कारदानादिना च वशीकुर्यात् शत्रचेष्टांचैवारीणांयोधयतांविजानीयात् कथंयुद्धे चेष्टन्ते कोशाबलंवा केचिद्विधात्वदयाः केचित्तुपक्षान्तइत्यादिचिन्तानित्यत्वान्मनुष्याणामुपकुर्वतोपि स्वार्थवशादुपकुर्वन्तीत्यत्र दुष्टानाप्रबलमध्ये विन्यसेद्यथारिर्दुर्गाश्रितोभवति ॥ १९४ ॥

( २ ) **सर्वज्ञनारायणः** । परीक्षयेत् स्वयमनुसंदध्यात् ॥ १९४ ॥

( ३ ) **कुल्लूकः** । बलंरचयित्वा जये धर्मलाभः अभिमुखहतस्य स्वर्गप्राप्तिः पलायने तु प्रभुदुरितग्रहणंनरकगमनंचइत्याद्यर्थवादैर्युद्धार्थंप्रोत्साहयेत् । तांश्च योधान्केनाभिप्रायेण तुष्यन्ति कुप्यन्ति वेति परीक्षयेत् । तथा योधानामरिभिः सह युद्ध्यमानानामपि सोपध्यनुपधिचेष्टाबुध्येत ॥ १९४ ॥

(४) **राघवानन्दः**। किंचान्यत् प्रहर्षयेदिति ॥ स्वर्गद्वारमपावृतम्। सुखिनः क्षत्रियाः पार्थलभन्ते युद्धमीदृशम् ॥ हतोवा प्राप्स्यसिस्वर्गं जित्वावा भोक्ष्यसे महीमिति ॥ तथा ग्रामंदास्यामि धनंदास्यामीत्यादिनाप्र हर्षयेत् योधानांहर्षमुत्पादयेत्। योधयतां चेष्टाः स्वपरपक्षपातिकर्माणिविजानीयात् दूतेनेतिशेषः ॥ १९४ ॥

(५) **नन्दनः**। तानप्यानीकेषु योजितान् योधयतांबलाध्यक्षाणाम् ॥ १९४ ॥

(६) **रामचन्द्रः**। अरीन्योधयतांपुंसांचेष्टांविजानीयात् ॥ १९४ ॥

**उपरुध्यारिमासीत राष्ट्रंचास्योपपीडयेत् ॥ दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ १९५ ॥**

(१) **मेधातिथिः**। तद्दुर्गलम्भोपायमाह उपरोधस्तथा कर्त्तव्योयथा। न कश्चिन्निष्क्रामति किंचित्प्रविशति। राष्ट्रंदुर्गाद्बहिर्देशस्तस्योपपीडणंस्वदेशापवाहोपमर्द्दनादिभिः। व्यवसादीनांदूषणंविनाशनमसद्द्रव्यमिश्रणादिभिः ॥ १९५ ॥

(२) **सर्वज्ञनारायणः**। इन्धनदूषणंजलेनार्द्रीकरणादि ॥ १९५ ॥

(३) **कुल्लूकः**। दुर्गाश्रयमदुर्गाश्रयंवारिपुमयुध्यमानमप्यावेष्ट्यासीत। अस्य च देशमुत्सादयेत्। तथा घासान्नोदकेन्धनानि सर्वदाऽस्यापद्द्रव्यसंमिश्रणादिना दूषयेत् ॥ १९५ ॥

(४) **राघवानन्दः**। अरिषु कृत्यान्तरमाह उपेतित्रिभिः। उपरुध्यावपीडयेल्लुण्ठनाग्न्यादिदानेन। दूषयेत् भेदयेत् विषादिना वा ॥ १९५ ॥

(६) **रामचन्द्रः**। नगरवेष्टनमाह उपरुध्येति त्रिभिः। अरिं शत्रुं उपरुध्य वेष्टयित्वा आसीत स्थितोभवेत्। अस्य राज्ञः राष्ट्रं देशं उपपीडयेत्। च पुनः यवसान्नोदकेन्धनानिदूषयेत्। यवसेन्धन मग्निना दाहयेत्। एतानि अन्नं क्षेत्रस्थं लुम्पेत्मार्गावरोधेनमहार्घंकुर्यात् ॥ १९५ ॥

**भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा ॥ समवस्कंदयेच्चैनं रात्रौ वित्रासयेत्तथा ॥ १९६ ॥**

(१) **मेधातिथिः**। तडागग्रहणंसर्वजलाश्रयदर्शनार्थं तत्र तडागस्य सेतुबन्धेन प्रयोजनभेदनं प्राकारेयंत्रैर्विदारणं सुरङ्गया वाभङ्गः परिखायाःपूरणेन पार्श्वभङ्गेन वा छिद्रेषु प्रवीरपुरुषैरवस्कंदयेत्। दुर्गे रात्रौ च वित्रासयेत् अग्निकुंभशिरस्कैःशिवावद्रुतानि कुर्वद्भिर्मनुष्यैः ये नराः स्वयमुत्पातदर्शनाद्रात्रौजाग्रति जागरणावजीर्णोलोकः सुसाध्योभवति। तस्मिंश्च काले भूयोभूयः ॥ १९६ ॥

(२) **सर्वज्ञनारायणः**। समवस्कन्दयेत् सौप्तिकेन हन्यात् ॥ १९६ ॥

(३) **कुल्लूकः**। शत्रोरुपजीव्यानि तडागादीनि नाशयेत्। तथा दुर्गप्राकारादीन्भिन्द्यात्तत्परिखाश्च भेदेन पूरणादिना निरुदकाः कुर्यात्। एवंच शत्रूनशङ्कितमेव सम्यगवस्कन्दयेत्तथा शंकितगृह्णीयात्। रात्रौ च ढक्काकाहलिकादिशब्देन वित्रासयेत्सदामींच ॥ १९६ ॥

(४) **राघवानन्दः**। तडागानि जलाशयान् तथा परिखाः समन्ततोव्यापकाअगाधजलशालिनीःखातस्वरूपाः भिन्द्यात्। समवस्कन्दयेत् शक्तितोगृह्णीयात् अग्निप्रक्षेपादिनाचैनमरिंशोषयित्वा त्रासयेत् रात्रौ चढक्कादिशब्देन ॥ १९६ ॥

(५) **नन्दनः**। समवस्कन्दयेत् सौप्तिकंकारयेत्। अवस्कन्दस्तु सौप्तिकमिति नैघण्डवाः। एनंशत्रुम्। रात्रौ वित्रासयेच्च ॥ १९६ ॥

(६) **रामचन्द्रः**। च पुनः एनंराजानं ग्रामंवासंअवस्कन्दयेत् सौप्तिकंहन्यात् ॥ १९६ ॥

**उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् ॥ युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥ १९७ ॥**

( १ ) **मेधातिथिः** । उपजप्याः क्रुद्धादयः कुलीनाः स्वराज्याभिलाषिणस्तानुपजपेदिति हेतुः कर्त्तरि कर्त्तव्यव्यपदेशमुपजपेदित्यर्थः उपजपेद्ग्राहयेदित्यर्थः । उपजापआश्रयाद्विश्लेषात्महितानुष्ठानप्रतिपादनम् । तेन चारिणासुकृतमप्यभिमतदुर्गस्थेन वाकिञ्चित्प्रारब्धंबलाटविकपार्ष्णिग्राहादिकोपनार्थमध्यमोदासीनानामन्यतरेण सहसंधानमित्यादिबुध्येत । युक्तेचदैवे विजिगीषोरनुकूलदैवइत्यर्थः । नक्षत्रग्रहदैवसुमुहूर्तेषु साधकेषु दृष्टः स्वमदर्शननिमित्तेषु चानुगुणेष्वनुलोमवातादिषु जयमिच्छन्निर्गतभयोदुर्गस्थानानि यथा । प्रथमंयोद्धुंगच्छेत ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः** । उपजप्यान् भेद्यान् । युक्तेऽनुकूले दैवे ग्रहादौ ॥ १९७ ॥

( ३ ) **कुल्लूकः** । उपजापार्हान्रिपुवंश्यान्राज्यार्थिनः क्षुब्धानमात्यादींश्च भेदयेत् उपजपेनात्मीयकृतांच तेषांचेष्टां जानीयात् शुभग्रहदशादिना शुभफलयुक्ते दैवेवगते निर्भयोजयेप्सुर्युध्येत् ॥ १९७ ॥

( ४ ) **राघवानन्दः** । किंचान्यदुपेति । उपजप्यानरिवंश्यान्राज्यार्थिनः क्रुद्धानमात्यादींश्च उपजपेत् भेदयेत् । उपजपेनात्मसात्कृतानांतेषां चेष्टाः स्वपरपक्षपातान् जानीयादिति । युक्ते शुभफलदानाऽनुकूले दैवे ग्रहनक्षत्रादौ । जयप्रेप्सुः नेष्यामीतिकृतनिश्चयः । अपेतभीः मरिष्यामीतिवा गतभीः ॥ १९७ ॥

( ५ ) **नन्दनः** । तत्कृतंशत्रुकृतं उपजापमिति शेषः । दैवे युक्ते सुनिमित्तादिभिर्दैवानुकूल्ये सति ॥ १९७ ॥

( ६ ) **रामचन्द्रः** । उपजप्यान् भेद्यान् उपजपेत् भेदयेत् । च पुनः तत्कृतं बुध्येत जानीयात । भेदकत्कृतंकार्यंयुद्धे जानीयादित्यर्थः । च पुनः युक्ते दैवे अनुकूले दैवे ग्रहादौ चैवंविधो राजा जयंप्रेप्सुः युध्येत ॥ १९७ ॥

**साम्ना दानेन भेदेन समस्तैरथवा पृथक् ॥ विजेतुंप्रयतेतारीन्न युद्धेन कदाचन ॥ १९८ ॥**

( १ ) **मेधातिथिः** । सहसायुध्येत एतावत्प्रथमं विशिष्टस्थापनोपदेशनं सुमुखंचमिथोमहाजनकथा सहृदारदर्शनादि दानविधानंद्रव्याणांहिरण्यादीनांप्रीत्युत्पादनार्थंप्रतिपादनं भेदस्तत्कुलीनादेरुपसंग्रहः ततोविशेषेण तत्रविशसनमित्याद्यकारणम् ॥ १९८ ॥

( २ ) **सर्वज्ञनारायणः** । कदाचन सामादिसंभवे ॥ १९८ ॥

( ३ ) **कुल्लूकः** । प्रीत्यादरदर्शनहितकथनाद्यात्मकेन साम्ना हस्त्यश्वरथहिरण्यादीनांच दानेन तत्प्रकृतीनांतदनुयायिनांच राज्यार्थिनांभेदेन एतैः समस्तैर्व्यस्तैर्वा यथासामर्थ्यमरीञ्जेतुंयत्नंकुर्यान्नपुनः कदाचिद्युद्धेन ॥ १९८ ॥

( ४ ) **राघवानन्दः** । प्रकारान्तरेणारिवश्यत्वे युद्धंन कुर्यादित्याह साम्नेति । पृथक् प्रत्येकं तत्र सामादि संबध्यते । समस्तैस्त्रिभिर्वा ॥ १९८ ॥

( ५ ) **नन्दनः** । एवमभियुज्य शत्रुंसामदानभेदैःसादयेन्नयुद्धेनेत्याह साम्नादानेनेति ॥ १९८ ॥

**अनित्योविजयोयस्माद्दृश्यते युध्यमानयोः ॥ पराजयश्च संग्रामे तस्माद्युद्धंविवर्जयेत् ॥ १९९ ॥**

( १ ) **मेधातिथिः** । यस्मान्नायंनियमोदृश्यते योजयति सोऽत्यन्तबलवानवश्यंतेन यश्च पराजीयते सोऽत्यन्तंदुर्बलस्तावश्यमित्यनित्योविजयः ॥ १९९ ॥

( २ ) **सर्वज्ञनारायणः** । पराजयश्च संग्रामे प्रामिकः दानाद्यैर्जयपराजयशङ्कापि ॥ १९९ ॥

( ३ ) **कुल्लूकः** । यस्माद्युध्यमानयोर्बहुलबलत्वाद्यल्पबलत्वाद्यनपेक्षमेवानियमेन जयपराजयौ दृश्येते तस्मात्सत्युपायान्तरे युद्धंपरिहरेत् ॥ १९९ ॥

( ४ ) **राघवानन्दः** । नयुद्धेनेतितत्र हेतुरनित्यइति पराजयोपीति ॥ १९९ ॥

( ५ ) **नन्दनः** । अत्र हेतुमाह अनित्योविजयइति ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । विजयः अनित्यः पराजयोपि संग्रामेऽनित्यः ॥ १९९ ॥

**त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे ॥ तथा युध्येत संपन्नोविजयेत रिपून्यथा ॥ २०० ॥**

( १ ) **मेधातिथिः** । सामादीनामसाधकस्तदा संदिग्धेपि जये समानेऽपि किंपुनारूपेण सह तेन प्रकारेण युध्येत येन प्रकारेणात्मनोजयःस्यात् । जये राज्यंवधेऽपि स्वर्गइति युष्माकमेवजयः परप्रत्यूहकल्पना कूटयुद्धादिप्रकारः अत्यन्तोच्छेदानुसरणपीडनाभ्यां सहसानिकार्यस्तथा च व्यासआह ॥ पुनरावर्त्तमानानांनिराशानांचजीविनां । न शक्येदग्रतः स्थातुंशक्रेणापि धनञ्जयः ॥ यदासंदिग्धंपराजयंतदाऽपक्रमणंयुक्तं निर्गतोहि जीवोन कार्यमासादयति येन भद्राणि पश्यति स्वर्गमर्जयति मृतइति येन केनचित्प्रकारेणजित्वारिम् ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः** । यथा येनप्रकारेण वञ्चनादिनापि विजयते । इतिषाड्गुण्यप्रकरणम् ॥ २०० ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तानांत्रयाणामपि सामादीनामुपायानामसाधकत्वे सति जयपराजयसंदेहेऽपि तथा प्रयत्नवान्सम्यग्युध्येत । यथा शत्रूञ्जयेत् यतोजयेऽर्थलाभोऽभिमुखमरणे च स्वर्गप्राप्तिः निःसंदिग्धेतु पराजये युद्धादपसरणं साधीयोयथा वक्ष्यति । आत्मातुसर्वदारक्ष्यइति मेधातिथिगोविन्दराजौ ॥ २०० ॥

( ४ ) **राघवानन्दः** । अन्यथानुपपत्तौतत्कार्यमित्याह त्रयाणामिति । त्रयाणां भेदान्तानां परिक्षये सामादीनां अरिवश्यानुपायत्वे ॥ २०० ॥

( ५ ) **नन्दनः** । उपसंहरति त्रयाणामपीति ॥ २०० ॥

( ६ ) **रामचन्द्रः** । त्रयाणां उपायानां सामदानभेदानां परिक्षये । संयत्तः सावधानः ॥ २०० ॥

**जित्वा संपूजयेद्देवान्ब्राह्मणांश्चैव धार्मिकान् ॥ प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥ २०१ ॥**

( १ ) **मेधातिथिः** । लब्धप्रशमनमिदमतोयस्मिन्पुरे जनपदे देवब्राह्मणाश्च धार्मिकान्विहितानुष्ठानिनोयथा सामर्थ्यात्प्रतिषिद्धवर्जकामात्त्वात्त्रेणारीन्जित्वासाध्यप्रवृत्तादिकंगंधधूपपुष्पद्रव्यसंविभागास्फोटनादिसंस्कारद्वारेण यथार्हमभ्यर्चयेत् । कुटुंबिनांपरिहारार्थेस्थितिर्यथा प्रवृत्तिविशिष्टकरभारशुल्कप्रदेशानांप्रदानेन तथा तया वा संवत्सरमेकोद्धौ वा दद्यादुच्चानांच पौरजनपदबलतानामातपादिडिण्डिमकगदापातेन ख्यापयेत्तैर्यैःस्वाम्यनुरागादस्थानमपचितंतेषामप्यारक्षान्तंयथा स्वस्वंव्यापारमनुतिष्ठत्विति एवमनुग्रहे क्रियमाणेऽपि यदा पौरजानपदानामन्येषांस्वाम्यनुरागादहंवक्तृतैजसभावोबहुमतः स्यादितिमन्येत मदीयस्य दण्डोऽवस्थातुंनशक्नुयात्तदा ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः** । लब्धप्रशमनमाह जित्वेति । परिहारान् अग्रहारान् । अभयख्यापनं यैरस्माभिःसह प्राग्युद्धंकृतंतेषामधुनाऽभयमित्यादि ॥ २०१ ॥

( ३ ) **कुल्लूकः** । परराष्ट्रंजित्वा तत्र ये देवास्तान् धर्मप्रधानांश्च ब्राह्मणान् भूमिसुवर्णादिदानसंमानादिभिः पूजयेत् । जितद्रव्यैकदेशदानादिनैव चेदंपूजनं तदाह याज्ञवल्क्यः ॥ नातः परतरोधर्मोनृपाणांयद्रणार्जितम् । विप्रेभ्योदीयते द्रव्यं-

---

( २०० ) संपन्नः=संयत्तः ( नंदनः )

प्रजाभ्यश्चाभयंसदा ॥ तथा देवब्राह्मणार्थमयैतद्दत्तमिति तद्देशवासिनांपरिहारान्दद्यात् । तथा स्वामिभक्त्या यैरस्माकमपकृतं तेषांमया क्षान्तमिदानींनिर्भयाः सन्तःसुखंस्वव्यापारमनुतिष्ठन्त्वित्यभयानि ख्यापयेत् ॥ २०१ ॥

( ४ ) **राघवानन्दः** । जयोत्तरंयत्कर्तव्यंतदाह जित्वेति । देवाद्यर्चनं प्रतिपत्तिकर्मोत्तरजयसूचनार्थंवा । परिहारान्वस्त्रालंकारादीन् । तद्देशवासिभ्यः अभयानि स्वस्वव्यापाराननुतिष्ठन्तु माभयंकुरुतेति ॥ २०१ ॥

( ५ ) **नन्दनः** । सति विजये कर्त्तव्यमाह जित्वासंपूजयेदिति । परिहारान्करपरित्त्यागान् । तत्रत्यानामभयानिडिण्डिमघोषादिना ख्यापयेत् ॥ २०१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणान् परिहारान् अग्रहारान् प्रदद्यात् । च पुनः अभयानि स्थापयेत् यैरस्माभिःप्राग्युद्धंकृतंतेषामभयमिति भावः ॥ २०१ ॥

**सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ॥ स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥२०२॥**

( १ ) **मेधातिथिः** । एषपौरादीनामभिप्रायः संक्षेपेण ज्ञात्वा नैतदेवमिच्छति । तत्कुलीनंकर्तुमिच्छत्वयमेव तस्मिन्देशे तद्वंश्यंमृदुमलंप्रियसुखकलत्रंतेन संहततत्प्रकृतिभिश्च प्रधानादिभिः समयंकुर्यात् समकोशदानादि परिमाणंच भवता मम दैवाकारेणपापेन भवितव्यंकार्यकालेन स्वयमुपस्थातव्यमुभयतोदण्डेन कोशेन चेत्यादि ॥ २०२ ॥

( २ ) **सर्वज्ञनारायणः** । एषां परराष्ट्रे प्रकृतिभूतानां । समासेन समुदायेन । तद्वंश्यं शत्रोरेव वंश्यं । समयक्रिया समयस्य क्रिया न त्वयास्मान्नियमाच्चलितव्यमिति ॥ २०२ ॥

( ३ ) **कुल्लूकः** । एषांशत्रुनृपामात्यानांसर्वेषामेव संक्षेपतोऽभिप्रायंज्ञात्वा तस्मिन्राष्ट्रे बलनिहतराजवंश्यमेव राज्येऽभिषेचयेत् । इदंकार्यंत्वयेदंनेति तस्य तदमात्यानांच नियमंकुर्यात् ॥ २०२ ॥

( ४ ) **राघवानन्दः** । परराज्ये स्ववंश्यान्नाभिषिंचेदपितु तद्वंश्यानित्याहसर्वेषामिति । सर्वेषाममात्यादीनां चिकीर्षितं स्ववंश्यपक्षपातित्वं तद्राज्यवंश्यपक्षपातित्वंवेति । समयक्रियां त्वयातःपरमिदंकार्यमिदंनेतिनियमनम् । उपजप्यराज्यार्थितद्वंश्यस्थापनेन राज्यान्तरलाभसंभावना दृष्टफलमिति भावः ॥ २०२ ॥

( ५ ) **नन्दनः** । एषांशत्रोरमात्यादीनाम् । तत्र शत्रु देशेतद्वंश्यंस्थापितेन सह युद्धंवयश्चैवंकरिष्यामहइति । समयक्रियांकुर्य्यात् ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । सर्वेषामेषांपरराष्ट्रप्रकृतिभूतानां समासेन समुदायेन चिकीर्षितंविदित्वा तत्र तस्मिन्राज्ये तद्वंश्यंस्थापयेत् अविद्यमाने राजनि सति । चपुनः समयक्रियांकुर्यात्त्वयाऽस्मद्धर्मान्नचलितव्यमिति ॥ २०२ ॥

**प्रमाणानि च कुर्वीत तेषांधर्म्यान्यथोदितान् ॥ रत्नैश्च पूजयेदेनंप्रधानपुरुषैः सह ॥ २०३ ॥**

( १ ) **मेधातिथिः** । यत्प्रकारावस्थास्तेषामुपचिताः पूर्वप्रवृत्ताःब्रह्मदेयामरवृत्तिदेवस्वव्यापारादयस्ताननुजानीयात्प्रमाणानि कुर्यादेवंह्यस्मिंस्तेषामनुरागी भवति । ये च तत्र प्रधानाः पुरुषास्तत्र प्रतिज्ञास्वजनबहुत्वादिगुणैस्तैःसहराजानमेनंशस्त्रधनधान्यालङ्कारवाहनछत्रपीठिकादारपट्टबन्धादिभिः पूजयेत् ॥ २०३ ॥

( २ ) **सर्वज्ञनारायणः** । तेषांधर्मान् देशधर्मान् । प्रमाणानि कुर्वीत नभिद्यात् । रत्नैः स्वीयैः एनं नूतनंनृपं तस्य प्रधानपुरुषैःसहेति तानपि पूजयेदित्यर्थः ॥ २०३ ॥

( ३ ) **कुल्लूकः** । तेषांच परकीयानां धर्मादनपेतानाचारादेशधर्मतया शास्त्रेणाभ्युपेतान्प्रमाणीकुर्यात् । एनंचाभिषिक्तममात्यादिभिः सह रत्नादिदानेन पूजयेत् ॥ २०३ ॥

( ४ ) **राघवानन्दः** । शास्त्राविरुद्धान्ब्रह्मदेयामरवृत्तिदेवस्थानपहारादीन्धर्मान् मातुलकन्यापरिणयमत्स्यभक्षणादीं-श्चपरराष्ट्राचारान् प्रमाणीकुर्यादित्याह प्रमाणानीति । यथोदितान् तत्रत्यैर्यथावदुक्तान् । एनं तद्वश्यं प्रधानपुरुषैरमात्यैः सह तेऽपिपूज्याइत्यर्थः ॥ २०३ ॥

( ५ ) **नन्दनः** । नैरुक्तान्देशधर्मान्परिमाणान्कुर्वीत तथैव प्रवर्त्तयेदित्यर्थः ॥ २०३ ॥

( ६ ) **रामचन्द्रः** । तेषां यथोक्तधर्मान् प्रमाणानि कुर्वीत नभिद्यात् । च पुनः स्थापितं रत्नैःपूजयेत् ॥ २०३ ॥

**आदानमप्रियकरं दानं च प्रियकारकम् ॥ अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥२०४॥**

( १ ) **मेधातिथिः** । कस्मात्पुनः प्रकृतिभ्योरत्नादि दानमुच्यते । आदियस्यामतिपादनंनवस्य राज्ञोऽन्यस्यवाऽप्रियकरमप्रीतेःकारणंहेतुः । दानंच प्रतिदानंप्रियकारकमेतदुभयंबहुशएवंप्रसिद्धमपि कालयुक्तंकालोपपन्नंक्रियमाणमभिमतानामर्थानांसुखावहंभवेदन्यथा चदुःखयतीत्यर्थः । प्रशस्यते यस्मादपि क्वचित्काले किंचनप्रीतिंजनयति तदापि नाल्पमशोभनंवा प्रीतिमुत्पादयति तस्मात्कालमपेक्ष्य दानादाने कार्येइति । यत्किंचिदतिक्रान्तंवक्ष्यमाणंकिञ्चनतत् ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । आदानं बलाद्ग्रहणम् । कालेयुक्तं दानकालेदानंकार्यं न सर्वदाकोशक्षयापत्तेः । बलात्ग्रहणंतु न कदाचित्कार्यमित्यर्थः ॥ २०४ ॥

( ३ ) **कुल्लूकः** । यस्मात् आदानमिति । यद्यप्यभिलषितानांद्रव्याणांग्रहणमप्रियकरंदानंच प्रियकारकमित्युत्सर्गस्तथापि समयविशेषे दानमादानंच प्रशस्यते तस्मात्तस्मिन्कालएवंपूजयेत् ॥ २०४ ॥

( ४ ) **राघवानन्दः** । यस्माद्ध्वंसकथंसर्वैःपूज्यस्तत्राह आदानमिति । ननु राज्यधनादिलोभेन परराज्यंगृहीतंतत्राह अभीप्सितानांगजाश्वादीनांकाले विलम्बितं युक्तं योग्यं प्रशस्यते हारमितिचेत्यन्वयः शेषः ॥ २०४ ॥

( ५ ) **नन्दनः** । तत्र तेभ्योदानमादानञ्च कालयुक्तंकर्त्तव्यमित्यभिप्रायेणाह आदानमिति । लोके खल्वभीप्सितानामर्थानामादानंप्रियकरं दानञ्च प्रियकरं तथापि तदुभयंकालयुक्तञ्चेत्प्रशस्यते ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । अभीप्सितानामर्थानां आदानं बलाद्ग्रहणं अप्रियकरम् । तु पुनः अर्थानांदानंप्रियकारकं तस्मात्कालयुक्तं समयदातृत्वं प्रशस्यते ॥ २०४ ॥

**सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ॥ तयोर्दैवमचिन्त्यन्तु मानुषे विद्यते क्रिया ॥ २०५ ॥**

**[ दैवेन विधिना युक्तंमानुष्यं यत्प्रवर्तते ॥ परिक्लेशेन महता तदर्थस्य समाधकम् ॥१॥ ]‡**

**[ संयुक्तस्यापि दैवेन पुरुषकारेण वर्जितम् ॥ विना पुरुषकारेण फलंक्षेत्रंप्रयच्छति ॥२ ॥ ]‡**

**[ चन्द्रार्काद्याग्रहावायुरग्निरापस्तथैव च ॥ इहदैवेन साध्यन्ते पौरुषेण प्रयत्नतः ॥ ३ ॥ ]‡**

( १ ) **मेधातिथिः** । समर्थादर्थकर्मकार्यफलंकर्मतत्सर्वमशेषमायत्तमधिकंक्वापि विदधातीति विधानंकर्मफलंयद्दिशति तद्विशेषयति दैवं मानुषे दैवधर्मादौ पूर्वकृतविहितप्रतिषिद्धविषये चात्मनः कार्यकर्मफलंयदिफलकर्मक्रिया दृष्टार्थानयानययोः तथाचश्रुतिः विधिर्विधानंनियति स्वभावः कालोब्रह्मेश्वरः कर्मदैवंभाग्यानि पुण्यानि पर्यायनामानि पुराकृतस्य । स्मृतिरपि ॥ दैवमात्मकृतंविद्यात्कर्मवत्पौर्वदेहिकं । स्मृतःपुरुषकारस्तुक्रियतेयदिहापरमिति ॥ दैवमानुषस्येति ग्रामे मृतवशाद्दैवेमानुषस्यापिकारणता विवक्षिता अस्मिन्कार्यइदंसर्वक्रियाफलमायत्तंनदैवंपुरुषकाररहितंफलंददात्यवश्यंहितेन पुरुषप्रय-

‡ मेधातिथिः ।

त्नोऽपेक्षितव्यः नचपुरुषकारोदैवेनेति दैवाच्च पुरुषकारनिरपेक्षात्फलस्यापि पुरुषसन्निपातोभवेदपि गर्भस्य असति गर्भे नियमैर्दैवसन्निपातात्फलसंभवोऽनुमेयएवंपुरुषप्रयत्नादपि यदिदैवनिरपेक्षास्यात् यतोव्यायामे सति सर्वदा सर्वेषांस्यान्नैतदस्ति तस्मादुभयंकारणम्। तथा चव्यासआह॥ आरम्भामानुषाःसर्वे निदानंकर्मणोर्द्वयोः। दैवे पुरुषकारे च परतोन्यन्नविद्यतइति॥ समानतन्त्रेऽपि दैवंनयानययोर्मानुषंकर्मलोकंपालयतीति। अत्र दैवकारणाआहुर्दैवमेवात्र कारणं दृश्यन्ते हि जडक्लीबपङ्ग्वादयः पुरुषकाररहिताअपि सुखिनोनिष्प्रतीकाराअन्योपाधिककर्मलभमानास्तथालंप्रतीकाराअपि कुणयोऽव्यङ्गशूराः प्रवीणाश्चशास्त्रे दक्षाश्चादुःखिनोयतमानाश्च तथा पुरुषकारनिरपेक्षंदैवमात्राभिधानादिनाशविनिपातादिभिरिष्टानिष्टफलमुत्पाद्यमानमुपलभन्ते। एवंच कृत्वा परलोकहेतवः क्रियारम्भोपदेशात्सुतरामर्थवन्तोभवन्ति तथाच यत्नेन पूर्वकृतानीहोपभुञ्जीमहइहकृतान्यपि परतउपभोक्ष्यामहइति विजानन्तोविचिकित्सा मनुष्यधर्मएवंप्रयातितव्यं। तथाचोदाहरन्ति॥ जानामि धर्म्मंनच तत्करोमि पापंन जानामि न मे प्रवृत्तिः। धात्रानिसृष्टोस्मियथा तथाहंनातः परंशासयितास्तिकश्चिदिति॥ पुरुषकारिणोह्याहुः पुरुषकारएवात्रकारणंकृषित्वमनलसःकुर्वन्स्वव्यापारफलंकर्तृकरणकार्यकृष्यादिषु प्राप्नुयात्तथा चोक्तं॥ कर्म्मैवेहानसाधूनामारभ्यानुपसेविता। कर्मकृत्वा हि पुरुषोभुङ्क्ते वै बलवानिति॥ सत्यपि चान्नसंभवे नह्यभुञ्जन्तस्तृप्यन्तितदा तत्र चाभ्यवहारैर्यत्समनन्तरंचफलंतन्निमित्तफलोत्पादइति न्यायस्तस्मादत्रादृष्टव्यापारःएवंचकृत्वार्थवन्तःक्रियारम्भोपदेशोभवति॥ तथाचाहुः॥ प्रतिहन्तिमुनिर्येनदैवमापतितंकचित्। शीतोष्णेच तथा वर्षमुत्थापयतिहन्तिच॥ एवमास्थितेभ्यउभयंकारणमन्यतराभावे फलाभावात् क्वचित्तुकेचित्प्राधान्येन वर्त्तन्तइति तत्परिगृह्यते। कुतोपि पुरुषकारोबलवता दैवेनाभिभूतोविशीर्यते आर्द्रमिवदार्वल्पाग्नौप्रक्षिप्तंनज्वलति एवंयदि दुर्बलंदैवंमहता यत्नेन पुरुषकारेण पुरस्कृतंफलत्यार्द्रमपिदारुमहत्यग्निस्कन्धे प्रक्षिप्तंनाग्निस्तद्दैवयापयति॥ दैवंपुरुषकारेण दुर्बलंह्युपहन्यते। दैवेन चेतनंकर्मविशिष्टेनोपहन्यतइत्येवपरिकल्प्याह तयोर्दैवपुरुषकारयोर्दैवमेवाचिन्त्यं तुशब्दोऽवधारणार्थः। अपरिज्ञातस्वरूपंकस्मिन्काले तन्निमित्तेन फलंदास्यतीत्येवमचिन्त्यंशास्त्रादृते चास्यपरिज्ञानादेवाविचार्यत्वात्प्रयोक्तुमशक्यत्वादशक्यमिति तत्रदैवंनिष्फलं मनुष्येषु पुरुषकारोवक्ष्यते क्रियाप्रकृतत्वात् वित्तंचक्रियामानुषे किञ्चिज्ज्ञाज्ञानंकृष्यादिभिः शक्यंचिन्तयितुमीदृशंमया कृष्यादिकर्त्तव्यमेतैःसाधनैर्दैवादिभिरेवच तस्य चेदृशंफलमिति तदेव प्रारब्धंयदारंभमध्यावसानेषु विवक्ष्यते तद्दैवंसमाधेयंनविपन्नानामप्येवंकर्त्तव्यमिति। यावत्फलवेदनमित्यतोदैवस्याचिन्त्यत्वान्नतत्परेणासितव्यं। मनुष्यकर्मचिन्तयित्वा यद्यत्कार्यंतदनुष्ठेयंयत्किञ्चनकारीहि विनश्यतीति शक्तित्रययोगात्पुरुषकारेण च युक्तस्य परराष्ट्रविजयचिकीर्षा यत्रदैवमानुषसंपन्ना भवति सैवसर्वार्थसाधिकाभवति तथापि तस्यामतिशयंदैवंप्रवर्त्तते अतिरिक्तःपुरुषकारएवभवतीत्यर्थः। नहिविजिगीषोर्दैवमन्तरेण तदा यातव्यस्य व्यसनंदैवंमानुषंभवति पौरुषंसमंदैवेन नातिव्यूहंद्वयोर्वासमंतुल्यम्॥

[ **मेधातिथिः**। तदयुक्तंदैवे च विधानेन पराङ्मुखे दैवमानुषेपुरुषकारः प्रवर्त्ततेअष्टविधकर्मणि तन्महता क्लेशेनार्थफलंसाधयति निष्फलंवा भवत्यतःक्लेशेनाप्यसिद्धोवा दैवापेक्षोभूत्वानपरितप्येत् पुरुषार्थस्तु दैवेन संयुक्तोयः प्रवर्त्ततेअक्लेशेन ससर्वेषांमन्त्रार्थानामेवसाधकःपुरुषार्थः पुरुषकारःसएव यदात्यन्तगुणदैवेऽनुष्ठीयते तदा क्लेशेन विनैकान्तेन समग्रफलसाधकोभवति। अस्य दार्ढ्यार्थमुदाहरणंश्लोकद्वयेन॥ केचिद्युद्धमपिक्षेत्रंयुक्तंपुरुषकर्मणा। दैवहीनायतुफलंकस्यचित्संप्रयच्छन्ति॥ केचित्क्षेत्रस्य मृतमित्युक्तंपुरुषकर्मणा। पुनःपुनर्दृष्टेषु शोधितंयथावच्चोक्तमित्याद्युपकारकलक्षणेन दैवेन हीनाय फलंनददातीति॥ ]

[ **मेधातिथिः** । संयुक्तस्यापिदैवेनेति । दैवयोगस्तु तस्मात्फलादानादनुमीयते एवंच सर्वस्य तदा भावःदैवभावः । अन्येत्वाहुः दैवंयथा कालंपर्यामंदृष्टाद्युपलम्भादेवकृतत्वान्नकृतमिति यथा तत्पुरुषकाराभावंदर्शयति बीजवर्जित मित्यबीजम् । ]

[ **मेधातिथिः** । चन्द्रार्कास्तावद्ग्रहाः । ]

( २ ) **सर्वज्ञनारायणः** । अचिन्त्यं पुरुषाकारेण नतस्य प्रतीकारश्चिन्त्यः । क्रिया प्रतिक्रिया ॥ २०५ ॥

( ३ ) **कुल्लूकः** । यत्किंचित्संपाद्यंतत्प्राग्जन्मार्जितसुकृतदुष्कृतरूपे कर्मणि दैवशब्दाभिधेये तथेहलोकार्जितमानुषशब्दवाच्ये व्यापारे आयत्तंतयोर्मध्ये दैवंचिन्तयितुमशक्यं मानुषे तुपर्यालोचनमस्त्यतोमानुषद्वारेणैव कार्यसिद्धये यतितव्यम् ॥ २०५ ॥

( ४ ) **राघवानन्दः** । जयादेरदृष्टसाध्यत्वादलंप्रयत्नेनेति । तत्राह सर्वमिति । विधाने व्यापारेदैवमानुषे दृष्टादृष्टेतयोर्मध्ये ऐहिकभोगहेतुप्रबलादृष्टस्येदानीमसाध्यत्वेपि दृष्टंतु शक्यसंपादमित्याह मानुषेति । क्रिया पुरुषकारः ॥ २०५ ॥

( ५ ) **नन्दनः** । एवंप्रतिपादितंनीतिमार्गमनुस्रुत्य राज्ञा पौरुषेण भवितव्यं न दैवमनुसृत्य तुष्णींभूतेनेत्यभिप्रायेणाह सर्वमिति । दैवमानुषे दैवपुरुषसंबन्धिनि । विधाने कर्म्मणि । सर्वविदंकर्म्म कर्म्मफलमिति यावत् । आयत्तमासनम् । तयोर्दैवमानुषयोर्दैवमचिन्त्यमनुकूलमननुकूलंवेति निश्चेतुमशक्यंकिन्तुमानुषे पुरुषकारे सति तस्य दैवस्य क्रिया विद्यते ज्ञायते यतएवंतस्मात्पुरुषकारोविधातव्यइत्त्यभिप्रायः ॥ २०५ ॥

( ६ ) **रामचन्द्रः** । इदंसर्वंकर्म दैवे मानुषेआयत्तं अधीनं ॥ अधीनो निघ्नआयत्तइत्यमरः । तु पुनः तयोर्दैवमानुषयोर्मध्ये दैवमचिन्त्यं । पौरुषे पुरुषार्थे क्रिया प्रतिक्रिया विद्यते ॥ २०५ ॥

**सह वापि व्रजेद्युक्तः संधिं कृत्वा प्रयत्नतः॥मित्रं हिरण्यं भूमिं वा संपश्यंस्त्रिविधं फलम्॥२०६॥**

( २ ) **सर्वज्ञनारायणः** । यदि युद्धंविनापि हिरण्यादि लभ्येत तदा युक्तउद्युक्तेपि सहशत्रुणा संधिंकृत्वा स्वदेशंव्रजेत् ॥ २०६ ॥

( ३ ) **कुल्लूकः** । एवमुपक्रमणीये न शत्रुणा युद्धंकार्यं यदि वा सएवं मित्रंतेन च दत्तंहिरण्यंभूम्येकदेशोवार्पितमेतत्त्रयंयात्राफलम् । तेन सह संधिंकृत्वा यत्नवान्व्रजेत् ॥ २०६ ॥

( ४ ) **राघवानन्दः** । प्रसिद्धोपक्रमेप्रदिप्रमत्तोरिस्तदासन्धिरेवश्रेयानित्याह सहेति । सन्धिंकृत्वा मित्रतामुत्पादयेदितिशेषः । भूमिंभूम्येकदेशं । फलं यात्रायाइतिशेषः ॥ २०६ ॥

( ५ ) **नन्दनः** । मित्रहिरण्यभूमिलाभे सन्धिः कर्तव्यो न शत्रुवधे निर्बन्ध इत्याह सहवापि व्रजेदिति सन्धौ कृते ममायं शत्रुरन्यो वामित्रंभवेत् हिरण्यं भूमिंवास्मात्सोत्र इति त्रिविधंफलंसंपश्यन्निश्चिन्वानस्तदात्वानुगुण्येन युक्तः प्रयत्नतः शत्रूणां संधिंकृत्वा व्रजेन्नस्वराष्ट्रंप्रत्याव्रजेत् ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । रिपुणा सह वापि यदि युद्धंविना हिरण्यादिकंलभ्येत तदा युक्तो मिलित्वा तेन सह संधिंकृत्वा स्वदेशंव्रजेत् कार्यस्यान्तंगच्छेत् किंकुर्वन् त्रिविधंफलंसंपश्यन् कीदृशंफलं मित्रभूमिहिरण्यादि ॥ २०६ ॥

**पार्ष्णिग्राहंच संप्रेक्ष्य तथाऽऽक्रन्दंच मण्डले॥मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात्॥२०७॥**

( २ ) **सर्वज्ञनारायणः** । यदि पार्ष्णिगृह्णीयात्पृष्ठगःतदान्येनापि निवर्तितव्यं तदापि यदि स्वस्याक्रन्दस्तस्यापि

पार्ष्णिगृह्णीयात् तदापूर्वमरेःपश्चान्मित्रतामापन्नाद्धनंप्राप्य । यद्वा अमित्राच्च स्वास्थितादेव प्राप्य निवर्ततेत्यर्थः ॥ २०७ ॥

( ३ ) **कुल्लूकः** । विजिगीषोरिरिंप्रति निर्यातस्य यः पृष्ठवर्त्तीनृपतिर्देशाक्रमणाद्याचरति सपार्ष्णिग्राहः । तस्य तथा कुर्वतोयोनियामकस्तस्यानन्तरोनृपतिःसआक्रन्दः तावपेक्ष्य यातव्यम् । मित्रीभूतादमित्राद्वा यात्राफलंगृह्णीयात्तावनपेक्ष्य गृह्णन्कदाचित्तत्कृतेन दोषेण गृह्यते ॥ २०७ ॥

( ४ ) **राघवानन्दः** । तस्मान्मित्रादमित्राद्वा सन्धिरेवेष्टव्यइत्याह पार्ष्णिग्राहंचेति । आरिंप्रतिनिर्यातस्य स्वदेशाक्रमणशीलःपृष्ठवर्ती राजा पार्ष्णिग्राहस्तस्यानन्तरस्तन्नियामकआक्रन्दस्तौ संप्रेक्ष्य तावनपेक्ष्ययात्राफलंगृह्णंस्तत्कृतदोषेण युज्यते । अयमर्थः । पार्ष्णिग्राहोरिरिव तत्पृष्ठगयोस्तु मित्रोदासीनत्वेन ग्रहणात् । यदि सचारिश्चाक्रन्देन मित्रेण तत्पृष्ठगामिनाऽभिभूतस्तदारिंजित्वैवागन्तव्यमनभिभूतश्चेत्सत्वस्य विजिगीषोराज्यंनाशयतीतिकृत्वा यातव्यारिमपि मित्रात् मित्रत्वेन संभाव्यमानादुपगम्य । पार्ष्णिग्राहासाराक्रन्दासारौतु पार्श्वदेशवर्तिनौ राजानाविति ॥ २०७ ॥

( ५ ) **नन्दनः** । मित्रादिफलंप्राप्तव्यंतदाह पार्ष्णिग्राहश्चेति । मण्डले द्वादशराजात्मके पार्ष्णाग्राहमाक्रन्दमित्राण्यमित्रांश्च संप्रेत्य मण्डलस्थानांशत्रूणांक्षयंमित्राणाञ्चवृद्धिंसमीक्ष्येत्यर्थः । यात्राफलंमित्रभूमिहिरण्यमवाप्नुयात् ॥२०७ ॥

( ६ ) **रामचन्द्रः** । पार्ष्णिग्राहं पृष्ठे तत्पृष्ठे आक्रन्दंच मण्डलेसंप्रेक्ष्य मित्राद्वाऽमित्राद्वा यात्राफलमवाप्नुयात् ॥ २०७ ॥

**हिरण्यभूमिसंप्राप्त्या पार्थिवोन तथैधते ॥ यथा मित्रंध्रुवंलब्ध्वा कृशमप्यायतिक्षमम् ॥ २०८ ॥**

( २ ) **सर्वज्ञनारायणः** । तत्रतु मित्रलाभे संभवति नात्यन्तंधने यतितव्यमित्याह हिरण्यमिति । आयतिक्षमं भविष्यच्छक्ति ॥ २०८ ॥

( ३ ) **कुल्लूकः** । सुवर्णभूमिलाभेन तथा राजा न वृद्धिमेति यथेदानींकृशमप्यागामिकाले वृद्धियुतंस्थिरंमित्रंलब्ध्वा वर्धते ॥ २०८ ॥

( ४ ) **राघवानन्दः** । अरेरेव मित्रत्वेन लाभे महान्गुणइतिस्तौति हिरण्येतिद्वाभ्याम् । नैधतेनहर्षमाप्नुयात् । कृशं तात्कालिकोपकारासमर्थम् । आयतिक्षममुदर्कोपकारकम् । तदुक्तम् ॥ अधनंस्वर्णादिधनंधनमधनंचवाणिज्यम् ॥ अतिधनमेतत्त्रितयंविद्याभूमिःसुमित्रमिति ॥ २०८ ॥

( ५ ) **नन्दनः** । हिरण्यभूमिभ्यांमित्रफलं विशिष्टतरमित्याह हिरण्यभूमी इति । ध्रुवंस्थिरम् ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । यात्राफलमाह । हिरण्यभूमिंसंप्राप्य पार्थिवस्तथानएधते नवर्धते यथा ध्रुवंलब्ध्वाएधते । कृशमपि आयतौ उत्तरकाले क्षमं योग्यमिति । तथा योगेश्वरः मित्रलब्धिर्वरायतः ॥ २०८ ॥

**धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ॥ अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥ २०९ ॥**

( २ ) **सर्वज्ञनारायणः** । तुष्टप्रकृतिकं तोषितस्वप्रकृति । स्थिरारम्भमचलचित्तं । लघुलघ्वपि क्षुद्रमपीत्यर्थः ॥ २०९ ॥

( ३ ) **कुल्लूकः** । धर्मज्ञंकृतोपकारस्य स्मर्तृसानुरागमनुरक्तंस्थिरकार्यारम्भंप्रीतिमत्प्रकृतिकंयत्तन्मित्रमतिशयेन शस्यते ॥ २०९ ॥

( ४ ) **राघवानन्दः** । तत्र मित्रंलक्षयति धर्मज्ञमिति । कृतज्ञं कृतोपकारंस्मर्तारम् । तुष्टप्रकृतिः तुष्टाधिकारिणः प्रकृतयोऽमात्यादयो यस्य । लघ्वित्यनायाससाध्यता । स्वल्पाम्यूनंवाअधार्मिकादेर्मित्रतादुःसंपाद्येति भावः ॥ २०९ ॥

( ५ ) **नन्दनः** । प्रकृतिरमात्यादिः । लघुः शीघ्रकारी स्वस्मान्न्यूनमितिवा । एवंविधपुरुषोमित्रंप्रशस्यते ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । मित्रलक्षणमाह धर्मज्ञमिति । धर्मज्ञादिकंमित्रंप्रशस्यते ॥ २०९ ॥

**प्राज्ञं कुलीनं शूरं च दक्षं दातारमेव च ॥ कृतज्ञं धृतिमन्तं च कष्टमाहुररिं बुधाः ॥ २१० ॥**

( २ ) **सर्वज्ञनारायणः** । धृतिमन्तं दुःखेष्वनुद्विग्नम् । कष्टं दुःखसाध्यम् ॥ २१० ॥

( ३ ) **कुल्लूकः** । विद्वांसंमहाकुलंविक्रान्तंचतुरंदातारमुपकारस्मर्तारंसुखदुःखयोरेकरूपशत्रुंदुरुच्छेदंपण्डितावदन्ति ॥ तेनैवंविधशत्रुणा सह संधातव्यम् ॥ २१० ॥

( ४ ) **राघवानन्दः** । तत्प्रतियोगितयाऽरेर्लक्षणमाह प्राज्ञमिति । अत्र प्राज्ञं कृतमुपकारंस्मर्तृशीलम् । कुलीनं दुरभिमानिनम् । दक्षं सततोद्यमम । दातारमित्यनेन दृष्टादृष्टंजयहेतुता सूचिता । धृतिमन्तं सित्ध्यसिध्योरेकरूपम् । कष्टं कष्टदम् । तेन तादृशारिणा सन्धिरेव कार्योदुरुच्छेद्यत्वादेवंविधस्येतिभावः ॥ २१० ॥

( ५ ) **नन्दनः** । शत्रोर्गुणान्मित्रीकरणाय मित्रप्रसङ्गादाह प्राज्ञंकुलीनमिति । एवंविधंगुणवन्तम रिंकष्टमाहुः दुर्ज्जयमाहुरिति यावत् । तस्मात्तादृशमरिमपि मित्रंकुर्य्यादित्यभिप्रायः ॥ २१० ॥

( ६ ) **रामचन्द्रः** । अरिस्वरूपमाह प्राज्ञमिति । एतादृशमरिंकष्टंबुधाआहुः । २१० ॥

**आर्यता पुरुषज्ञानं शौर्यं करुणवेदिता ॥ स्थौललक्ष्यं च सततमुदासीनगुणोदयः ॥ २११ ॥**

( १ ) **मेधातिथिः** । पुरुषाणांप्रकृतधर्माधर्मसंज्ञकेन दैवेन सुखदुःखोपभोगनिमित्तंसाध्यते । अनिष्टस्थानप्राप्ताश्चापौरुषेयेण शान्त्यादिकारणप्रकारेण समतामापद्यन्ते इह स्थानस्थिताअव्यभिचारानुगुणाःक्रियन्ते पुरुषज्ञानलोकज्ञानपुरुषविशेषज्ञोनुरूपमुपकारीभवति । अनुवर्तते शूरः कार्यक्षमोभवति ॥ कारुण्यगुणस्तयेन करुणावेदीदयालुमनालेभिन परिरक्षति । स्थूललक्षः प्रभूतस्याप्यर्थमेषांसर्वकालंक्षमते ॥ २११ ॥

( २ ) **सर्वज्ञनारायणः** । आर्यताऽशठता । पुरुषज्ञानमयं योग्योयंनेतिज्ञानं । करुणावेदिता करुणास्थानज्ञानं । स्थौललक्ष्यं दातृत्वं । एतेषु सत्स्वेवोदासीनता संभवत्यन्यथा कस्याप्यरिः कस्यापि मित्रमित्यवश्यंस्यादित्यर्थः ॥२११॥

( ३ ) **कुल्लूकः** । साधुत्वंपुरुषविशेषज्ञता विक्रान्तत्वंकृपालुत्वंसर्वदाच स्थौललक्ष्यंबहुप्रदत्वं अतएव ॥ स्युर्वदान्यः स्थूललक्ष्यदानशौण्डाबहुप्रदे इत्याभिधानिकाः । स्थौललक्ष्यमर्थेऽसूक्ष्मदर्शित्वमिति तु मेधातिथिगोविन्दराजयोः । पदार्थकथनमनागमं एतदुदासीनगुणसामर्थ्यंतस्मादेवंविधमुदासीनमाश्रित्योक्तलक्षणेनाप्यरिणा सह योद्धव्यम् ॥ २११ ॥

( ४ ) **राघवानन्दः** । उदासीनलक्षणमाह आर्यतेति । आर्यता अवक्रता । पुरुषज्ञानं पुरुषविशेषज्ञता । करुणवेदिता कृपालुत्वं । स्थूललक्षं बहुप्रदः ॥ स्युर्वदान्यस्थूललक्ष्यदानशौण्डाबहुप्रदे इत्यभिधानात् ॥ मेधातिथिगोविन्दराजयोः सूक्ष्मदर्शित्वाद्याख्या । स्थूलवत्सूक्ष्मंलक्षयतीति । एतान्येवोदासीनगुणस्योदयः प्रकटता तद्धेतवः । एवंविधमुदासीनमाश्रित्यारिणा योद्धव्यमितिभावः ॥ २११ ॥

( ५ ) **नन्दनः** । उदासीनस्य च गुणान्मित्रीकरणार्थं मित्रप्रसङ्गादाह आर्यतापुरुषज्ञानामिति । स्थौललक्ष्यं बहुप्रदत्वम् । गुणोदयोगुणोत्कर्षः । गुणवन्तमुदासीनमपि मित्रीकुर्य्यादित्यभिप्रायः ॥ २११ ॥

( ६ ) **रामचन्द्रः** । उदासीनस्वरूपमाह । आर्यताऽशठता । पुरुषज्ञानं अयंयोग्योऽयंनेतिज्ञानम् । क-

रुणवेदिता करुणस्थानज्ञानं । स्थौललक्ष्यं दातृत्वं । गुणोदयः एतेषु सत्स्वेव उदासीनता संभवति अन्यथा कस्यापि मित्रमित्यवश्यंस्यादित्यर्थः ॥ २११ ॥

**क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ॥ परित्यजेन्नृपोभूमिमात्मार्थमविचारयन् ॥ २१२ ॥**

( १ ) **मेधातिथिः** । तादृशीमपि भूमिमविलम्बमानः परित्यजेत् क्षेम्या आटविकादिभिरनभिभवनीया नित्यमस्य प्रधानमुभयंबहुसस्याऽदेवमातृकाच पशुवृद्धिकरीच जाङ्गलरूपत्वादबहुफलपत्रतृणत्वाच्चैवंगुणा हिभूमिर्वणिकृषीवलबहुला- भवति दुर्भिक्षव्याधिरहिता कान्तारमनुष्यात्मभरणाचेति चतुर्थ्याप्रकृतिपरित्यागे चोभयंन ततोज्ञापयति नसहसा- युधानांप्रकृतिपरित्यजेत्तस्यामवस्थायां किन्तुतांपरित्यजेद्यांमन्येतसाक्ष्येशेषांप्रकृतिभिः प्रत्यादातुमिति यथातुनमि- त्रकोशदण्डपरित्यागे नाविशेषंप्रतिक्षणं यांमन्येततदा गुणवतीमपि भूमिंत्यजेत् ॥ २१२ ॥

( २ ) **सर्वज्ञनारायणः** । क्षेम्यां शक्यक्षेम्यां । आत्मार्थं यदि तत्त्यागेनैवात्मनिस्तारः ॥ २१२ ॥

( ३ ) **कुल्लूकः** । अनामयादिकल्याणक्षमामपि नदीमातृकतया सर्वदा सर्वसस्यप्रदामपि प्रचुरतृणादियोगात्पशुवृ- द्धिकरीमपि भूमिमात्मरक्षार्थमविलम्बमानोराजा निजरक्षाप्रकारान्तराभावात्परित्यजेत् ॥ २१२ ॥

( ४ ) **राघवानन्दः** । भूमिमित्युक्तं कथंविजिगीषुलिप्सिता भूर्देयेतिचेत्तत्राह क्षेम्यामिति । क्षेम्यां योगक्षेमकरी- मपि । सस्यप्रदां नदीमातृकां । पशुवर्धिनीं चतुर्दिक्षु तृणोदकसंपन्नाम् । चात्मार्थंदेहरक्षार्थम् ॥ २१२ ॥

( ५ ) **नन्दनः** । अभियुक्तंप्रत्याह क्षेम्यांसस्यप्रदामिति । क्षेम्यांरक्षितुंसुकराम् ॥ २१२ ॥

( ६ ) **रामचन्द्रः** । एतादृशींभूमिमात्मार्थमविचारयन्नृपः परित्यजेत् ॥ २१२ ॥

**आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २१३ ॥**

( १ ) **मेधातिथिः** । कृच्छ्रप्रकारसाध्योयंनियमोभवति आपदर्थेयथा मशकार्थे धूमोमशकानपनेतुमिति ज्ञायते त- न्निमित्तंधनंरक्षेन्नान्यत्रधनरक्षायाः कार्यमस्ति तत्वभुक्तफलंहि धनमिति तथाहि तेन प्रतीक्ष्ययानमासनं दण्डंबिभर्त्ति- उपजप्यानुपगृह्णातीति धनेनापि दारारक्ष्याः दारग्रहणं प्रणिधिसंबंधिप्रत्युपलक्षणार्थं आत्मा तु रक्ष्यः अन्येन प्रकारे- णात्मानंरक्षितुमसमर्थः सर्वस्वंदत्वा दारानपि काले परित्यज्य वाग्यतस्थितोदारधनादि वर्जयित्वा धर्मंकरिष्यति । ये तु धनदारानुरोधेन विनश्यन्ति न तेषांधनदारादिदृष्टं नाप्यदृष्टंधर्माधर्मानाचरणात् । नच कौमारदारत्यागित्वं नत्याग- प्रतिषेधस्यायंच वाजयति राजधर्मप्रकरणेऽपि नायमुक्तोदृष्टार्थत्वादन्यस्यापि द्रष्टव्यः । ननु च राजा राज्यंप्राप्यमहाध- नोश्वमेधादि करिष्यत्यतुलंचसुखमनुकरिष्यत्यतस्तु लोकः संकुष्टंकिंकरिष्यति नैषदोषोऽल्पस्यापि पावनानि कर्माणि सं- न्न्दधनस्यापि जपादयः विशेषनिमित्तानि धनान्येव नचेदमस्यामवस्थायांलोकसंक्रुष्टमिति नच सहसैतत्कार्यम् ॥२१३ ॥

( २ ) **सर्वज्ञनारायणः** । आपदः प्रकृति कोपबलक्षयरोगादयः । धनैर्भूम्यादिभिः ॥ २१३ ॥

( ३ ) **कुल्लूकः** । यस्मात्सर्वविषयोयंधर्मः स्मर्यते आपदर्थमित्यादि । आपन्निवारणार्थंधनंरक्षणीयंधनपरित्यागेना- पि दारान्रक्षेत् आत्मानंपुनः सर्वदा दारधनपरित्यागेनापि रक्षेत्सर्वतएवात्मानंगोपायीतमिति श्रुत्या शास्त्रीयमरणव्यतिरे- केणात्मरक्षाइत्युपदेशात् ॥ २१३ ॥

---

( २१२ ) अविचारयन् = अवधारयन् ( ठ )

( ४ ) **राघवानन्दः** । आत्मनाचेज्जीवति प्रधिनागादिति श्रुतिसंमतमर्थवादमाह आपदर्थमिति । आपदर्थमापत्तिवारणार्थं मशकार्थोधूमइतिवत् । दारान् स्त्रियं धनैः धनदानेनेतिशेषः । एवमुत्तरत्र । आत्मना देहेन चेज्जीवतिगतप्रधिना धनेनेतिश्रुतेरर्थः ॥ २१३ ॥

( ५ ) **नन्दनः** । गुणवद्भूमिपरित्यागेनाप्यात्मा रक्षितं दुःशक्यश्चेद्दारपरित्यागेनात्मा रक्षितव्यइत्याह आपदर्थमिति । आपदर्थं आपन्निवृत्त्यर्थम् ॥ २१३ ॥

**सह सर्वाः समुत्पन्नाः प्रसमीक्ष्यापदोभृशम् ॥ संयुक्तांश्च वियुक्तांश्च सर्वोपायान्सृजेद्बुधः ॥ २१४ ॥**

( १ ) **मेधातिथिः** । आपदोदैवमानुषाणि व्यसनानि तानि कतिविषयाणि युगपदुपजातानित्यर्थमपि यथा स्युस्तथा संयुक्ताश्चसामपुरस्सरंदानंसामपूर्वकंभेदंसामदानभेदसहितंदण्डमेव वा । दानमेवेत्यादिकान्सर्वोपायान्विसृजेद्बुधइति यत्र यत्प्राप्तं तत्समीक्ष्यविचार्य प्रयुञ्जीतेत्यर्थः नतुविषण्णआसीत ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । संयुक्तान् मिलितान् । सर्वोपायान् सामादीन् ॥ २१४ ॥

( ३ ) **कुल्लूकः** । कोशक्षयप्रकृतिकोपमित्रव्यसनादिकाः सर्वाआपदोयुगपदतिशयेनोत्पन्नाज्ञात्वा न मोहमुपेयादपि तु व्यस्तान्समस्तान्वा सामादीनुपायाञ्छास्त्रज्ञः संप्रयुञ्जीत ॥ २१४ ॥

( ४ ) **राघवानन्दः** । किंच सहेति । सह सर्वाः कोशक्षयप्रकृतिकोपाविकृतव्यसनादिकाः समीक्ष्योपलभ्य सर्वोपायान् सामादीन् व्यस्तान् सृजेत्प्रयुंज्याच्च नतुमोहमुपेयादतआह । बुधः पण्डितः ॥ २१४ ॥

( ५ ) **नन्दनः** । सह सर्वाः समुत्पन्नाः युगपत्सम्भूताः । सृजेत्प्रयुज्यात् ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । सर्वोपायान्सामादीन् संयुक्तान् मिलितान् वियुक्तान् एकैकमेववा बुधः सृजेत् कुर्यात् ॥ २१४ ॥

**उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ॥ एतत्त्रयंसमाश्रित्य प्रयतेतार्थसिद्धये ॥ २१५ ॥**

( १ ) **मेधातिथिः** । कथमित्यपेक्षायामाह साधयेत्कार्यमात्मनइति पाठान्तरम् । तत्रोपेतारमात्मानं प्राप्यकार्यं मित्रवत्साधयेत् । सर्वोपायाः समस्तव्यस्ताएवअयमपि उपेयसामान्यनिर्देशमाह समाश्रित्याङ्गीकृत्यसमर्थचिन्तने नैतत्समावृतं भवति । किमर्थमुपायाः समर्थे नानुमताः समर्थस्तथा किंयुक्तमितिविचार्येयता केनोपायेनैषामिदंप्राप्नुयादिति । कृत्स्नशइति त्रयविशेषणंकृत्स्नमित्यर्थः । एवंचयोयदुपायसाध्योयदापथा युक्तस्तत्रसदा तथा प्रयुञ्जीत स्वकार्यसिध्यर्थं उपायोएतानामवस्थानांचानन्त्यात्सर्वतन्त्रेणाशक्यंवक्तुमिति समासेनोक्तमतः परीक्षामुपाचरेत् । उपेत्यविशेषभावनोप्याह ॥ सतुयुक्तोहिसंधत्ते युक्तआत्मपराक्रमः ॥ तावुभौनयसंपन्नौस्तेनोप्ययसमन्वितइति ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । उपेतारं आत्मानमुपायस्रष्टारं । उपेयमुपायसाध्यं । समाश्रित्य मनसा बलाबलादिद्वारानिश्चित्य ॥ २१५ ॥

( ३ ) **कुल्लूकः** । उपेतारमात्मानमुपेयंप्राप्तव्यं उपायाः सामादयः सर्वे ते च परिपूर्णाएतत्त्रयमवलम्ब्य यथा सामर्थ्यप्रयोजनसिद्धये यत्नंकुर्यात् ॥ २१५ ॥

( ४ ) **राघवानन्दः** । किंचोपेति । उपेतारमात्मानं उपेयंप्राप्तव्यं सर्वोपायांश्च समाश्रित्य किंत्याज्यंकिंनेतिविचार्य- आत्मसिद्धये आत्मरक्षार्थंप्रयतेत । उपेताचेज्जीवतिसर्वंभविष्यतीतिभावः ॥ २१५ ॥

---

( २१५ ) अर्थसिद्धये = आत्मसिद्धये ( ट, ठ, ड, त )

( ५ ) **नन्दनः** । एवंप्रतिपादितांनीतिंविजिगीषांसंक्षिप्य निगमयति उपेतारमिति । उपेतारममात्यादिकं वर्गं उपेयं भृत्यादिकम् । सर्वशब्देन मायापेक्षयेन्द्रजालानां ग्रहणं कृत्स्नशः समाश्रित्य न्यूनमधिकंच ॥ २१५ ॥

( ६ ) **रामचन्द्रः** । उपेतारं उद्यमफलयुक्तमात्मानमुपायस्रष्टारं । उपेयं उपायसाध्यं । सर्वोपायांश्च सामादीन् मनसाबलाबलादिद्वारा निश्चित्य एतत्त्रयमाश्रित्य सिद्धये प्रयतेत ॥ २१५ ॥

**एवं सर्वमिदं राजा सहसंमन्त्र्य मन्त्रिभिः ॥ व्यायम्याप्लुत्यमध्याह्ने भोक्तुमन्तःपुरंविशेत् ॥ २१६ ॥**

( १ ) **मेधातिथिः** । एवंयथोक्तं राजा वृत्तमिदंसर्वमापद्यनापदि वाऽऽत्मशक्त्यपेक्षया वा कस्यामवस्थायांकिंकर्त्तव्यमिति मन्त्रिभिः सह विचार्य मध्यंदिनमुक्तकालंमध्यंदिनंव्यायामंकृत्वोपचार्यस्नानंच स्नानमक्रमोक्तमपि पुनराज्यार्थमुच्यते मङ्गलाचारैयुक्तानाम् । राजा स्नानपरिग्रहार्थं भोजनादियुतं तद्गृहंपूर्वस्नानापेक्षयाऽन्तःपुरंयायादिति विशेषार्थमुपसंहारः । विविक्ते देशे ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । एवंसर्वमिदमिति यदुक्तप्रकारमिदंसर्वमित्यर्थः । व्यायम्यारूयाभ्यासेन शमंलब्ध्वा ॥ २१६ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण सर्वराजवृत्तंमन्त्रिभिः सह विचार्यानन्तरमायुधाभ्यासादिना व्यायामंकृत्वा मध्याह्ने स्नानादिकंमाध्याह्निकंकृत्यंनिर्वाह्य भोक्तुमन्तःपुरंविशेत् ॥ २१६ ॥

( ४ ) **राघवानन्दः** । राज्यमुपसंहरति एवमिति । व्यायम्य युद्धाद्युपयोगिव्यायामंकृत्वा आप्लुत्य स्नात्वा भोक्तुंविशेदित्युक्तम् ॥ २१६ ॥

( ५ ) **नन्दनः** । इदमुक्तं व्यायम्य हयारोहणादिव्यापारंकृत्वा आप्लुत्य स्नात्वा ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । एवं व्यायम्य विचार्य । आप्लुत्य स्नात्वा ॥ २१६ ॥

**तत्रात्मभूतैः कालज्ञैरहार्यैः परिचारकैः ॥ सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥ २१७ ॥**

( १ ) **मेधातिथिः** । तत्राऽन्तर्गतगृहआत्मरक्षाभूताआत्मसमाः कालज्ञावयोविशेषावस्थादि प्रतिनियतकाले भक्ष्यभोज्यदानादिविशेषज्ञाः अहार्याअभेद्याविश्वसनीयाः परिचारकाः स्वरवैद्यादय एतैर्गृहीतंसर्वंपरीक्षितमदनीयमन्नाद्यमद्यात् परीक्षा कुशलैर्वैद्यैरग्निचकोरादिभिः कर्तव्या । विषादिसंसृष्टस्य शुष्कस्याशुद्धताभवति वैवर्ण्यैः सुगन्धोपघातश्च अतिम्लानताग्नौप्रक्षिप्तस्य वेति । वेति शब्दः वैवर्ण्यज्वालासुईक्षिते च तस्मिन्वयसां विपत्तिः दर्शनेन म्रियते यत्रकोकिलः ग्लायति जीवंजीवकः चकोरस्याक्षिणी विनश्यतो विषंप्रदर्श्यापि भवति मुष्कस्यावग्रहः स्वदइत्यादिमन्त्रैश्चविषापहैः परिजयेव्द्यापदिकासु ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । कालज्ञैर्यदा यद्यन्नादि देयं तद्ज्ञैरभेद्यैरनुपजप्यैः । अहार्यैरितिपाठेप्ययमर्थः । विषापहैश्चकोरादिभिर्मन्त्रैश्च सुपरीक्षितंयत्परिवारकैस्तदद्यात् ॥ २१७ ॥

( ३ ) **कुल्लूकः** । तत्रान्तःपुरे आत्मतुल्यैर्भोजनकालवेदिभिरभेद्यैः सूपकारादिभिः कृतंसुष्ठुचपरीक्षितं चकोरादिदर्शनेन सविषमन्नंदृष्ट्वा चकोराक्षिणीरक्ते भवतः विषापहैर्मन्त्रैर्जपितमन्नमद्यात् ॥ २१७ ॥

( ४ ) **राघवानन्दः** । तत्र प्रकारमाह तत्रेति । भोजनेकर्तव्ये आत्मभूतैर्देहवत्प्रियतमैः अहार्यैर्धनादिलोभेनाभेद्यैः सूपकारादिभिः । विषापहैर्मन्त्रितमन्नम् ॥ २१७ ॥

( ५ ) **नन्दनः** । अहार्यैः अभेद्यैः ॥ २१७ ॥

( ६ ) **रामचन्द्रः** । तत्र अन्तःपुरे आत्मभूतैः पुत्रैः कालज्ञैः तद्भक्ष्यअन्नादिकंयत्तद्देयमितितज्ज्ञैर्ज्योतिर्विद्भिः अहार्यैः अनुपजप्यैः तथापरिचारिकैः विषापहैर्मन्त्रैरुपलक्षितमन्नाद्यंसर्वेअद्यात् भक्षयेदित्यर्थः ॥ २१७ ॥

**विषघ्नैरगदैश्चास्य सर्वद्रव्याणि योजयेत् ॥ विषघ्नानि च रत्नानि नियतोधारयेत्सदा ॥ २१८ ॥**

( १ ) **मेधातिथिः** । विषघ्नैरुदकैश्चास्य सर्वद्रव्याणि राजौपयिकानि वस्त्रादीनि विशोधयेत् । विषघ्नानि रत्नानि गरुडोदीर्णनागदमणिप्रभृतीनि यतः प्रत्यये नित्योभोजनकालादन्यदापि धारयेत् ॥ २१८ ॥

( २ ) **सर्वज्ञनारायणः** । अगदैरोषधैर्नेजयेत् क्षालयेत् । नियतः शुचिः ॥ २१८ ॥

( ३ ) **कुल्लूकः** । विषनाशिभिरौषधैः सर्वाणि भोज्यद्रव्याणि योजयत् । विषहरणानि च रत्नानि यत्नवान्सर्वदा धारयेत् ॥ २१८ ॥

( ४ ) **राघवानन्दः** । तद्भृत्याल्लिक्षयति विषघ्नैरित्यर्धेन । अगदैरौषधैः विशिष्टानि द्रव्याण्यन्नपानादीनि शोधयेत् । अस्य राज्ञः । शत्रुतोविषदानादिभियातन्नाशकंरत्नंधारयेदित्याह विषघ्नानीति । सदा विषघ्नानि नियतोधारयेदित्यन्वयः ॥ २१८ ॥

( ५ ) **नन्दनः** । नेजयेत्प्रक्षालयेत् ॥ २१८ ॥

( ६ ) **रामचन्द्रः** । विषघ्नैरगदैरौषधैः अस्य राज्ञः द्रव्याणि भक्ष्यपदार्थादीनि चतुर्विधानि चोष्यलेह्यभक्ष्यभोज्यानि नेजयेत्प्रक्षालयेत् ॥ २१८ ॥

**परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः ॥ वेषाभरणसंशुद्धाः स्पृशेयुः सुसमाहिताः ॥ २१९ ॥**

( १ ) **मेधातिथिः** । परीक्षिताविचारिताउपधाभिः शीलशौचाचारैः स्त्रियोदास्यः परिचारिकाव्यजनोदकधूपनैः करणभूतैः संस्पृशेयुरुपचरेयुर्वेषादिसंयुक्ताः सुवेषाः स्नानेन कृत्वा समाहिताअप्रविक्षिप्तमनसः वेषाभरणंकपटवेषः केशनखाद्येवंविचार्य कदाचित्तत्रायुधानि कृत्वा विश्रब्धंहन्युः आभरणानिचविषदिग्धैराभरणैःस्पृशेयुरिति ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः** । व्यजनोदकधूपनैः स्पृशेयुरस्य समीपमागच्छेयुः ॥ २१९ ॥

( ३ ) **कुल्लूकः** । स्त्रियश्च गूढचारद्वारेण कृतपरीक्षागुप्तायुधग्रहणविषलिप्ताभरणधारणशङ्कया निरूपितवेषाभरणाअनन्यमनसः चामरस्नानपानाद्युदकधूपनैः एनंराजानंपरिचरेयुः ॥ २१९ ॥

( ४ ) **राघवानन्दः** । तस्यैव स्त्रीविषयनियममाह परीक्षिताइति । स्त्रियश्च दुष्टहृदयाःकदाचिदस्त्रविषादियुक्ताः स्युरिति भयात् भर्तृष्वेताविकुर्वतइति न्यायात् परीक्षितामहिलादिभिः धम्मिल्लादौक्षुरंदध्युर्नूपुरादौ तथा विषमिति तत्राह । वेशाभरणसंशुद्धाः विशत्यासुचित्तंयूनामेभिरिति वेशाधम्मिल्लकुचनितम्बालकवस्त्राणि आभरणानि कटककङ्कणहारनूपुरादीनि तेष्ववलोकनेन सम्यक्शुद्धाः ॥ २१९ ॥

( ५ ) **नन्दनः** । व्यजनोदकधूपनैः संस्पृशेयुः ॥ २१९ ॥

( ६ ) **रामचन्द्रः** । एनंराजानं एतादृशाःस्त्रियः स्पृशेयुः आलिङ्गनंकुर्युः ॥ २१९ ॥

**एवं प्रयत्नं कुर्वीत यानशय्यासनाशने ॥ स्नाने प्रसाधने चैव सर्वालङ्कारकेषु च ॥ २२० ॥**

( १ ) **मेधातिथिः** । एवंविषोदकाञ्जनादिनादौ प्रयत्नंकुर्यात् स्नानंशिरःस्नानंगन्धोरोचनादि आसनमत्रप्रदर्शनार्थं तत्रह्युपविष्टोयथा तत्र महान्यत्नः क्रियते एवंयानादावपि कर्त्तव्यः ॥ २२० ॥

( २ ) **सर्वज्ञनारायणः** । एवमिति यानादिष्वलंकरणान्तेषु विषशस्त्रादिशङ्कया प्रयत्नविधानम् ॥ २२० ॥

( ३ ) **कुल्लूकः** । एवंविधपरीक्षादिप्रयत्नंवाहनशय्यासनाशनस्नानानुलेपनेषु सर्वेषु चालङ्करणार्थेषु कुर्यात् ॥ २२० ॥

( ४ ) **राघवानन्दः** । पुत्रादपिधनभाजांभीतिरितिन्यायमाश्रित्य सर्वत्र भयनाशनार्थंप्रयत्नंविधत्ते । एवमिति । प्रसाधने केशादिसंस्कारेसर्वालंकारिकेषु कुत्सितमपि देहमलंक्रियते भूष्यते एभिरिति कटकमुकुटकङ्कणवस्त्रादयस्तेषु ॥ २२० ॥

( ५ ) **नन्दनः** । एवं विषादिप्रयोगरक्षणे यत्नं कुर्वीत । स्नाने स्नानीये प्रसाधने गन्धपुष्पादौ ॥ २२० ॥

**भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह ॥ विहृत्य तु यथाकालं पुनः कार्याणि चिन्तयेत् ॥ २२१ ॥**

( १ ) **मेधातिथिः** । तस्मिन्नेवान्तर्गृहआत्मविनोदाय स्त्रीभिर्नवोढभार्यादिभिर्यथा सुखंक्रीडेत् यथाकालमिति यावद्विहरणकालमिति चोत्तरेण संबन्धनीयं विहृत्यविश्रान्तः कालोपपन्नानि कार्याण्येकाकीमन्त्रिभिश्च सह पुनर्विचारयेत् ॥ २२१ ॥

( २ ) **सर्वज्ञनारायणः** । विहरेत् क्रीडेत् ॥ २२१ ॥

( ३ ) **कुल्लूकः** । कृतभोजनश्च तत्रैवान्तःपुरे भार्याभिः सह क्रीडेत् । कालानतिक्रमेण च सप्तमे दिवसस्य भागे तत्र विहृत्याष्टमे भागे पुनः कार्याणि चिन्तयेत् ॥ २२१ ॥

( ४ ) **राघवानन्दः** । दिवाभोजनमनुवदन्कार्यान्तराणिविधत्ते । भुक्तवानिति । स्त्रीभिः सहेत्यन्वयः । विहारोत्रचित्तप्रसाधनंमैथुनवर्जं दिवामैथुननिषेधात् ॥ २२१ ॥

**अलङ्कृतश्च संपश्येदायुधीयं पुनर्जनम् ॥ वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ॥ २२२ ॥**

( १ ) **मेधातिथिः** । अन्तःपुरान्निष्क्रम्यालंकृतआयुधीयंपश्येत्तस्याच्छायिकांदद्यात् पुनरितिवचनात्पूर्वाण्हेदृष्टमपि नित्यंदर्शनीयं आयुधजीविनामायुधादौयत्नोभवति । सर्वाणि च वाहनानि तेषांदर्शनमभ्युपचयविज्ञानार्थंनियुक्तानांचतत्र विशेषाधानार्थं दण्डप्रधानंजीविभृत्यावेक्षणमभीक्ष्णमुभयतस्ततः ॥ २२२ ॥

( २ ) **सर्वज्ञनारायणः** । आयुधीयंजनं प्रातर्दृष्टमेव पुनः पश्येत् ॥ २२२ ॥

( ३ ) **कुल्लूकः** । कृतालङ्कारःसन्नायुधजीविनं वाहनानि हस्त्यश्वादीनि सर्वाणि च शस्त्राणि खड्गादीन्यलङ्काररचनादीनि पश्येत् ॥ २२२ ॥

( ४ ) **राघवानन्दः** । आयुधीयमायुधजीवनम् । आभरणानि चर्मादीनि ॥ २२२ ॥

( ६ ) **रामचन्द्रः** । आयुधीयंजनं पार्ष्णिग्राहकं पुनःपुनःपश्येदित्यर्थः ॥ २२२ ॥

**संध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ॥ रहस्याख्यायिनां चैव प्रणधीनां च चेष्टितम् ॥ २२३ ॥**

( १ ) **मेधातिथिः** । त्रैवर्णिकस्योक्तमपि सन्ध्योपासनमुच्यते प्रजाकार्येपुनः कश्चित्कालमतिक्रामेदिति । उत्तरक्रियानन्तर्यार्थंवाअन्तर्वेश्मनि रहसिप्रासादादौ भवंतस्याख्यायिनः पौरावा केचित्प्राप्तप्रणिधयस्तेषांचेष्टितंचेष्टाव्यवहारः किंदृष्टंश्रुतंकृतंचेति तेषांचास्मिन्काले दर्शनमिष्यते परैरनवबोधनार्थंस्वस्थस्य चार्यकार्यकालनिमेनापतितंवर्तेत ॥ यथाचोत्पादितंकार्यंसंपश्येन्नोभितापयेत् । कृच्छ्रसाध्यमतिक्रान्तमसाध्यंवापिजायतइति ॥ २२३ ॥

( २ ) सर्वज्ञनारायणः । शस्त्रभृत् चारेभ्यः स्वरक्षार्थं रहस्याख्यायिनाममात्यादीनां प्रणिधीनां चराणाम् ॥२२३॥

( ३ ) कुल्लूकः । गत्वेति ततः संध्योपासनंकृत्वा तस्मात्प्रदेशात्कक्षान्तरंविविक्तप्रकोष्ठावकाशमन्यद्गत्वा गृहाभ्यन्तरे धृतशस्त्रोरहस्याभिधायिनांचराणांस्वव्यापारंशृणुयात्ततस्तंचरंसंप्रेष्य परिचारिकास्त्रीवृतः पुनर्भोक्तुमन्तःपुरंविशेत्॥ २२३ ॥ ॥ २२४ ॥

( ४ ) राघवानन्दः । राज्ञोपि सन्ध्याकरणे न प्रतिनिधिरित्याह । सन्ध्यामिति । स्वयंशस्त्रभृत् प्रच्छन्नभूतः । प्रणिधीनां चराणां । रहस्याख्यायिनां एकान्तेऽनुभूतार्थादिचेष्टाभिधायिनाम् ॥ २२३ ॥

( ५ ) नन्दनः । रहस्याख्यायिकानां वाक्यानीतिशेषः ॥ २२३ ॥

इतिश्रीनन्दनाचार्येणविरचिते मानवव्याख्याने सप्तमोऽध्यायः ॥ ॥ ७ ॥ ॥ ७ ॥

( ६ ) रामचन्द्रः । रहस्याख्यायिनां चाराणां प्रणिधीनां अमात्यादीनां चेष्टितं शृणुयात् ॥ २२३ ॥

**गत्वा कक्षान्तरन्त्वन्यत्समनुज्ञाप्य तं जनम् ॥ प्रविशेद्भोजनार्थं च स्त्रीवृतोऽन्तःपुरंपुनः ॥ २२४ ॥**

( १ ) मेधातिथिः । तस्माद्गृहान्तेकक्षान्तरंगत्वा तंच रहस्याख्यायिनंविसृज्य स्त्रीभिः परिचारिकाभिः परिवृताभिरन्तःपुरंपुनः प्रविशेत् ॥ २२४ ॥

( २ ) सर्वज्ञनारायणः । कक्षान्तरं कक्षाविशेषमन्तःपुरस्य ॥ २२४ ॥

( ४ ) राघवानन्दः । किंच गत्वेति । कक्षान्तरं विविक्तकोष्ठावकाशम् तंजनं चारभूतम् । स्त्रियः परिचारिकाः ताभिर्वृतः तत्र तासामेव प्रवेशात् ॥ २२४ ॥

**तत्र भुक्त्वा पुनः किंचित्तूर्यघोषैः प्रहर्षितः ॥ संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥ २२५॥**

( १ ) मेधातिथिः । किंचिदित्यव्ययंतूर्याणि वेणुवीणापणवमृदङ्गभेरीशंखादीनि तेषांघोषैर्मृदुभिःश्रुतिसुखैः प्रहर्षितोयथा कालंसंविशेद्यउचितकालस्तंतन्नयेदिति । गतक्लमोविगताशेषदुःखः कार्यदर्शनायोत्तिष्ठेत् ॥ २२५ ॥

( २ ) सर्वज्ञनारायणः । किंचित् अल्पभुक् ॥ २२५ ॥

( ३ ) कुल्लूकः । तत्रान्तःपुरे वादित्रशब्दैः श्रुतिसुखैः प्रहर्षितः पुनः किंचिद्भुक्त्वा नातितृप्तः कालानतिक्रमेण गतार्धप्रहरायां रात्रौ स्वप्यात् । ततोरात्रेः पश्चिमयामे च विश्रान्तः सन्नुत्तिष्ठेत् ॥ २२५ ॥

( ४ ) राघवानन्दः । संविशेत् शयीत । सालस्योनोत्तिष्ठेदित्याह गतक्लमोगताजीर्णादिश्रमः ॥ २२५ ॥

**एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ॥ अस्वस्थः सर्वमेतत्तु भृत्येषु विनियोजयेत् ॥ २२६ ॥**

**इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां राजधर्मोनाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥**

( १ ) मेधातिथिः । एतदिति यदनुक्रान्तंमध्यंदिनेऽर्धरात्रे वेति । तस्याप्येवंवृत्तंव्यापारस्तेन स्वयमुपातिष्ठेदस्वस्थोभृत्येषु विनियोजयेद्वियुञ्जीतेत्यर्थः । यावच्छक्नुयात्तावदेव एवंप्रतिविहितस्वतन्त्रकृतात्मरक्षाव्यापारः प्रजामात्मनश्च कार्यंकरोति ॥ २२६ ॥

इति श्रीभट्टवीरस्वामिसूनोर्भट्टमेधातिथिकृतेमनुभाष्येसप्तमोध्यायः ॥ शुभमस्तु ॥ श्रीरामचंद्रायनमोनमः ॥ ७ ॥७ ॥

( २ ) **सर्वज्ञनारायणः** । एतद्वृत्तं चेष्टितम् ॥ २२६ ॥

इति श्रीसर्वज्ञनारायणकृतौ मन्वर्थविवृतौ सप्तमोध्यायः ॥ ७ ॥ राजधर्मसंकीर्तननामायंसमाप्तश्च ॥ ॥

( ३ ) **कुल्लूकः** । एतद्यथोक्तप्रकारप्रजारक्षणादिकंनीरोगोराजा स्वयमनुतिष्ठेत् अस्वस्थः पुनः सर्वमेतद्योग्यश्रेष्ठामात्येषु समर्पयेत् ॥ २२६ ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां सप्तमोऽध्यायः ॥ ७ ॥ ७ ॥

( ४ ) **राघवानन्दः** । परमप्रकृतमुपसंहरन्प्रतिनिधिंविधत्ते एतदिति । विधानमनुष्ठेयं दृष्टादृष्टार्थं षाड्गुण्याग्निहोत्रादिकम् ॥ २२६ ॥

इति श्रीराघवानन्दविरचितायांमन्वर्थचन्द्रिकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥

( ६ ) **रामचन्द्रः** । अस्वस्थःदुःखितःराजा एतत्सर्वंराजमन्त्रादिकंभृत्येषुमन्त्रिषुनियोजयेत् स्थापयेत ॥ २२६॥

इतिमानवेधर्मशास्त्रेसप्तमोध्यायः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ अष्टमोऽध्यायःप्रारभ्यते॥

**व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ॥ मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥ १ ॥**

( १ ) **मेधातिथिः** । प्रजानांपालनंराज्ञोवृत्तिर्विहिता साचात्र ॥ शस्त्रास्त्रभृत्त्वंक्षत्रस्य वणिक्पशुकृषीर्विशः।आजीवनार्थंशूद्रस्यद्विजातीनांनिषेवणम् ॥ एवंनृपोवर्तमानोलोकानाप्नोत्यनुत्तमानिति ॥ तथाधर्मोवर्धतेलोके अन्येषामपि वर्णानांक्षत्रियवृत्या जीविनामस्त्येव राज्याधिकारः ॥ यः कश्चित्सर्वलोकानांपालकश्च नृपः स्मृतः । कर्मनिष्ठाचविहिता लोकसाधारणे हिते ॥ परिपालनंच पीडापहारः । द्वयीच पीडा दृष्टादृष्टाच तत्र दुर्बलस्य बलीयसा धनहरणादिना बाध्यमाना दृष्टा पीडा इतरस्य तु विध्यतिक्रमजनितेन प्रत्यवायेनामुत्रिकदुःखोत्पादनमदृष्टपीडा । प्रजाहि द्वेषमत्सरादिभिरितरेतरमयथा वदाचरन्ति कुपथेन यान्त्यदृष्टदोषेण बाध्येरन् । अतश्च राज्यनाशः प्रजैश्वर्यंहि राज्यमुच्यते तासु विनश्यन्तीषु कस्य राज्यंस्यात् । व्यवहारादयोऽतः शास्त्रदण्डेनव्यवस्थाप्यमानानभयात्पृथक्प्रचलन्ति तथाचोभयथापि रक्षिताभवन्ति ‡धनदश्च राज्ञः करशुल्कादिवैतदन्यधर्मिष्ठजीविका नभवतीति वृत्तिपरिक्षयादपि राज्यावसादः अतोराज्यस्थित्यर्थंव्यवहारदर्शनंकर्तव्यंतदिदानीमुच्यते व्यवहारश्चात्र वादिप्रतिवादिनोरितरेतराशनोधाराय वृत्तिरुच्यते । अथवा ऋणादानादयः पदार्थाएव विप्रतिपत्तिविषयाः सन्तोविचारगोचरसमर्थतया कर्तव्याइति । दिदृक्षुरित्युक्त्वा पश्येत्कार्याणीति सामानाधिकरण्यं पुनश्च प्रत्यवमर्शस्तेषामाद्यमृणादानमिति । तान्पदार्थान्विचारयेदिति संबन्धः वक्ष्यमाणाधिकृतपुरुषाधिष्ठितः प्रदेशः सभाप्रवेशस्तदभ्यन्तरभावः । किमेकएवप्रविशेच्चेत्याह ब्राह्मणैः सहेति।अथ मन्त्रज्ञैरिति कस्यविशेषणं न तावन्मन्त्रिणोमन्त्रित्वादेवसिद्धेः नहि मन्त्रमजानानोमन्त्रीति शक्यते वक्तुं नापि ब्राह्मणानां व्यवहारदर्शनेऽधिकृतानांतत्परिज्ञानमदृष्टंनस्यात् । अत्रोच्यते ब्राह्मणविशेषणमेवैतत् तेह्यमन्त्रज्ञाभूत्वा निरपेक्षमवधारयन्तः स्युरन्यथाराज्ञोऽनर्थमावहेयुः । तथा हि महामात्याश्रितः कश्चिज्जनपदेन* व्यवहरन्सहसाजितोयदि न दण्ड्यते धनंवावष्टभ्य न दाप्यते तदा समत्वेनव्यवहारदर्शनंनकृतंस्यात् पक्षपातमशङ्किवास्य जनपदामन्येरन् । अथ दण्ड्यते महामात्यक्षोभादपि प्रकृतिविकृतंस्यात् मन्त्रज्ञास्तु सन्तः संशयितारोयदि निर्णेतव्यस्य केनचिदपदेशेन प्रसंङ्गरोधंकृत्वा रहसि राजानंपरिबोधयन्ति । अनयोर्विवादिनोरयंजीयतेऽयंजयतीति व्यवहारस्त्वस्माभिर्न तदानीमेव निर्णीतइति स्वामी प्रमाणं तत्र राजैवंविदित्वा महामात्यमादेशयति त्वदीयोमनुष्योजीयते मम हानिर्माभूदिति संप्रति निर्णयोवधीरितः त्वमेव तथा कुरु । यथैषमनुष्यः संधीयते बाधास्य व्यपनीयते ते मन्त्रिणोवादेयवाक्यामनुष्याणांसर्वेषामनर्थ्याच प्रवृत्तिंप्रतिबध्नन्ति । अन्येतु काकाक्षिवदुभयविशेषणमर्थभेदेन मन्त्रज्ञपदंमन्यन्ते यदा मन्त्रिणोविशेष्यन्ते तत्तद्धातुतत्परिज्ञानमन्त्रज्ञानं ब्राह्मणपक्षे तु कार्यार्थसमभावश्च मन्त्रिब्राह्मणानांन प्रवेशमात्रमेव किन्तर्हि निर्णयंपश्येदित्युत्तरत्र वाक्यानि यथा योग्यमितरथा दृष्टाय प्रवेशः स्यात् अतोनैकाकी निर्णयंकुर्यात्कि-

‡ धनदश्च=धनदण्डश्च ( आ आ )   * जनपदेन=जनपदे ( आ आ )

न्तर्हि तैः सह निरूप्येति । विनीतोवाक्पाणिपादचापल्यरहितः वेपतोह्यनर्थः स्यात् । पार्थिवग्रहणान्नक्षत्रियस्यैवायमुपदेशः किन्तर्ह्यन्यस्यापि पृथिव्यामधिपतेर्देशेश्वरस्य न ह्यन्यथा राज्यमविचलितं भवतीति ॥ १ ॥

( २ ) **सर्वज्ञनारायणः** । श्रीमहागणपतयेनमः । व्यवहारानिति ॥ १ ॥

( ३ ) **कुल्लूकः** । एवंविधविपक्षमहीक्षित्रृयः प्रजानांरक्षणादवाप्तवृत्तिस्तासामेवेतरेतरविवादजपीडापरिहारार्थमृणादानाद्यष्टादशविवादे* विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसंदेहहारीविचारएवव्यवहारः । तदाह कात्यायनः॥विनानार्थेह संदेहहरणंहारउच्यते । नानासंदेहहरणाव्द्यवहारइतिस्मृतः ॥ तान्व्यवहारान्द्रष्टुमिच्छन्पृथिवीपतिर्वक्ष्यमाणलक्षणलक्षितैर्ब्राह्मणैरमात्यैश्चसप्तमाध्यायोक्तपश्चाङ्गमन्त्रैःसह विनीतोवाक्पाणिपादचापलविरहादनुद्धतः अविनीतेहि नृपे वादिप्रतिवादिनांप्रतिभाक्षयादसम्यगभिधाने तत्त्वनिर्णयोन स्यात्तादृशोवक्ष्यमाणांसभांप्रविशेत् । व्यवहारदर्शनंचेदंप्रजानामितरेतरपीडायां तत्त्वनिर्णयेनरक्षणार्थंवक्ष्यमाणदृष्टादृष्टार्थकरणफलेनैव फलवत् ॥ १ ॥

( ४ ) **राघवानन्दः** । संप्रति व्यवहारार्थं सभाप्रवेशप्रकारमाह व्यवहारानिति द्वाभ्याम् । संगतिरानन्तर्यलक्षणा व्यवहारनिर्णयस्य राजकृत्यत्वात् । ऋणादानाद्यष्टादशविषयोविरुद्धार्थिप्रत्यर्थिवाक्यजनितसंदेहहारी विचारोव्यवहारः॥ विनानार्थेऽवसंदेहे हरणंहारउच्यते । नानासंदेहहरणाद्व्यवहारःसउच्यत इतिकात्यायनवचनात् ॥ मिताक्षरातु अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । यथा कश्चिदिदंक्षेत्रादि मदीयमिति कथयति तद्विरोधेन मदीयमिति । मन्त्रज्ञैः पूर्वाध्यायोक्तपञ्चाङ्गमन्त्रज्ञैर्नीतिशास्त्रज्ञैःकापटिकादिभिः प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्तैर्वा मन्त्रिभिश्चामात्यैः ॥ १ ॥

( ५ ) **नन्दनः** । एवंराज्ञः स्वविषयरक्षणंपरविषयलाभेप्रशमनंचोक्तं इदानींतस्य व्यवहारदर्शनमुच्यते व्यवहारान्दिदृक्षुस्त्विति । मन्त्रज्ञैरिति विशेषणं ब्राह्मणानांमन्त्रिणांच । विनीतः उक्तैरेतै रुभयैः ॥ १ ॥

( ६ ) **रामचन्द्रः** । अथ व्यवहाराध्यायोनिरूप्यते । पार्थिवो ब्राह्मणैःसहतथा मन्त्रिभिःसह व्यवहारादीद्दिदृक्षुः सभांप्रविशेत् । अन्यानन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । कीदृशैर्ब्राह्मणैःमन्त्रज्ञैः वेदव्याकरणधर्मशास्त्राभिज्ञैः ॥ १ ॥

**तत्रासीनः स्थितोवापि पाणिमुद्यम्य दक्षिणम् ॥ विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥ २ ॥**

( १ ) **मेधातिथिः** । आसीनोधर्मासनोपविष्टः स्थितोनिषिद्धगतिरनुपविष्टएव स्थानासनयोश्च व्यवस्थितोविकल्पः कार्यविशेषापेक्षः गरीयसि कार्ये बहुवक्तव्यउपविष्टआसीनः लघीयसि स्वल्पवक्तव्ये स्थितः ‡क्रममाणस्य सर्वथा प्रतिषेधः सहि मार्गावलोकनपरोनार्थिप्रत्यर्थिनोर्निपुणतोवचनमवधारयेत् अन्येत्वदृष्टार्थंतथा मन्यन्ते । तपस्विवद्ब्राह्मणादिषु विवादिषु स्थितेषु स्थितआसीनेष्वासीनः । पाणिमुद्यम्येति उत्तरपाणिमुद्धृत्योत्थानंकृत्वेत्यर्थः । सूत्रकृतोयंव्यतिक्रमः सर्वदा विहितत्वाद्वसनोपव्यानमेतत् तेनायमर्थोहस्तउत्क्षेप्तव्योन पुनः समीपवर्तिनि संलग्नः कर्तव्यः । प्रश्ननिषेधावसरे च तेनाभिनेतव्यं नतु प्रव्याणादिना अनेन व्यवहारदर्शनेन तात्पर्यख्यापितंभवति प्रायेण हि पुरुषकार्येषु प्रयत्नवन्तोहस्तमुद्यच्छन्ति यथा सुखोपविष्टंव्रजति कर्तारं ततश्च परिजने तदेतद्राजा वित्तंन ददाति सभ्यैर्निर्भयैर्वयंजिताइति पाणिग्रहणंबाहूपलक्षणार्थं केवलस्य हि हस्तस्य यावद्व्यवहारदर्शनंव्यापारणंपीडाकरं न चायमदृष्टार्थउपदेशः । विनीतवेषाभरणइ-

* विवादे = विषयो ( अ ) ‡ क्रममाणस्य=क्रमेणास्य ( आ आ )

ति पूर्वश्लोके बाह्याभ्यन्तरेन्द्रियविषयावधानार्थोभिहितः श्वगणानांशालीनतया मुखोपसर्पणार्थउद्धतवेषे हि रजोनिवृत्तिलक्षणया तथा विधानामप्रतिपत्तिः स्यात् अतउधृतवेषाभरणंन कथंचित्केशवसनविन्यासादिविशेषः आभरणंकर्णिकादि तत्रोद्धतवेषऊर्ध्ववस्त्रोजवनरक्ताम्बरधारितेत्यादि उद्धताभरणोदीप्तिमद्बहुरत्नालङ्कारोबव्हाहारश्च सह्यादित्यइव दुर्निरीक्ष्यः सामान्यजनानांविशेषतोभियुक्तानाम् । पश्येदिति सभाप्रवेशस्य प्रयोजनमाह पश्येद्विचक्षणः अयंच राज्ञोदर्शनापदेशोदण्डप्रणयनेयथा स्थानार्थप्रतिपादनपर्यन्तोभविष्यति तात्पर्यंतस्यैव रक्षाधिकारः प्रयुक्तः स्यात् ईदृशस्य च दर्शनस्यान्येषामसंभावनादनधिकारः सर्वेषांसंशयच्छेदमात्रं फलन्तु व्यवहारदर्शनंप्रायश्चित्तोपदेशवद्विदुषोब्राह्मणस्यास्त्येव उक्तंहि धर्मसंकटेषु ब्रूयादिति तथैकवर्ग्याणांवाणिज्यकर्षकपशुपालप्रभृतीनांस्ववर्गसामायिकार्थविप्रतिपत्तावन्यस्यांवोत्मुकनिर्णयाद्गतिरिति तथाविधव्यवहारदर्शने नियोगः तथा हि पठितं ॥ कुलानि श्रेणयश्चैव गुणैश्चाधिकृतोनृपः । प्रतिष्ठा व्यवहाराणांगुर्वेभ्यस्तूत्तरोत्तरमिति ॥ तत्र कुलानि बन्धुजनसमूहः तैर्या व्यवस्था कृता ततोनविचलितव्यम् । अथ तत्र ताश्च स्युस्तवैतेऽधिकतरंसंबन्धिनइति वदद्भिस्तु ततश्रेणिषु निवेदितव्यं श्रेणयः समानव्यवहारजीविनोवणिक्प्रभृतयः । तेषांबन्धुभ्योधिकगुरुत्वबान्धवादिज्ञातिधर्मभयाद्विचलितंन नियच्छन्ति श्रेणयस्तु राजगमनेन श्रेणिधर्मोराजपुरुषप्रवेशात्परिभवनीयत्वेन नश्यतीति अविचलनार्थंप्रतिभूग्रहणपूर्वकंविचारयन्ति यएतस्माद्विचलन्ति । परिषदि दण्डोदातव्यश्चलितुंवापि त्वया न देयमिति । गणागणशश्चारिणोगृहप्रासादादिकरामठब्राह्मणादयश्च ते स्वगणिनांव्यवहारंन पश्येयुः । तत्राविचलार्थउपसदः कर्तव्याः पूर्वेसमानकर्मजीविनएकाकिनोऽपीमे तु संभूयकारिणइति विशेषः । श्रेणिभ्यःसंभूयकारितया विवादिनोभूमिज्ञत्वात् अन्ये तु कुलानीति मध्यस्थपुरुषानाहुः ते हि कार्याभ्यन्तराअश्रेणिकृताएव निर्णेतारः त्रैविद्योविद्वान्ब्राह्मणस्तस्य हि धर्मसंकटेषु प्रवक्तृत्वंविहितं तस्य पूर्वेभ्योगुरुत्वंवैदुष्यात् । नृपस्यापि गुरुत्वमतिशयशक्तित्वादतः स्वयंविदुषा नृपेण निर्णीते नास्त्येतद्योमन्येताजितोस्मीति न्यायेनापि पराजितः द्विगुणदण्डमास्थाय तत्कार्यंपुनरुद्धरेदिति। अन्येषुकरणेष्वेतद्भवति तत्र ह्यस्ति वचनावसरोनाधिकृतैः सम्यक् निर्णीतं राज्ञा तु विवेचिते किंवक्ष्यतीति अर्थान्तरं नृपैरधिकृतोराजस्थानीयब्राह्मणस्तथान्यस्य गृहिणः स्वतन्त्रस्तु गृहे गृहीति स्वातन्त्र्यस्मरणाद्दण्डपर्यन्तोस्त्येव व्यवहारः सुपरीक्षितोभवति । वासनाविनयार्थश्रुतियाह्यप्रसक्तशिष्यसुताद्याः ॥ अन्यत्रदण्डाच्छारीरात्पातनीयाचकर्मणइति स्वल्पेऽपराधेगृहस्थएव राजायते महति व्यतिक्रमे राजनिवेदनमेवोचितमित्यस्यार्थः । अतश्च यत्कैश्चित्पश्येदिति परिसंख्यार्थत्वमारोप्य ब्राह्मणादीनामधिकारआशङ्कितः पुनश्च क्लेशेन समर्थितस्तदयुक्तं विषयभेदादधिकारभेदात् स्वविषयोहि राज्ञोदण्डावधिकोब्राह्मणादीनांनिर्णयावधिः अधिकारोपि भिन्नोराज्ञोराज्यस्थितिप्रयोजनमितरेषांसंशयच्छेदादेरपरोपकारकत्वं अतोनोवृत्त्याशङ्कैव नास्ति कार्मोविप्रतिपत्तिनिरासोर्थिनां विप्रतिपन्नयोर्हि साम्यंव्यवहारदर्शने राज्ञा कर्तव्यं नोचेत्संविदाने कोराज्ञः स्वाधिगमे निरोधः कायकशुद्धोहि श्वानिरोधवानिति वक्ष्यामः ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । उद्यम्य उत्तरीयोपरिकृत्वा । विनीतोयोग्योवेषोदेहावैकृतरूपमारभणंचयस्य । अनुद्धतिव्यंजकंतद्भयंकुर्यादित्यर्थः ॥ २ ॥

( ३ ) **कुल्लूकः** । तस्यां च सभायांकार्यगौरवापेक्षायामुपविष्टोलघुनि कार्ये उत्थितोपि वा । पाणिशब्दोबाहुपरः । दक्षिणबाहुमुद्यम्यानुद्धतवेषालङ्कारः पूर्वत्रश्लोकइन्द्रियानौद्धत्ययुक्तंतादृशः कार्याणि विचारयेत् ॥ २ ॥

( ४ ) **राघवानन्दः** । ततःकिंतत्राह तत्रासीनइति । आसीनोगुरुतरकार्ये । स्थितएव शीघ्रंसमाप्यपाणिमुमद्यम्येति-वस्त्रादिभ्यः प्रकाशितदक्षिणपाणिः । कार्याणि व्यवहारेऽनुष्ठेयानि । पश्येत् चिन्तयेत् । कार्यिणां अर्थिप्रत्यर्थिनाम् ॥ २ ॥

( ५ ) **नन्दनः** । आसीनः स्थितोवा नतु शयानः । दक्षिणंपाणिमुद्यम्य अप्रावृतदक्षिणइति यावत् । यज्ञोपवीतीत्यन्ये । कार्याणि व्यवहारान् । कार्यिणांव्यवहारिणाम् ॥ २ ॥

( ६ ) **रामचन्द्रः** । षड्भिराह तत्रेति । तत्र तस्यांसभायां आसीनः कार्यिणांअष्टादशविधानि कार्याणि पश्येत् । किंकृत्वा दक्षिणं पाणि उद्यम्य उत्धृत्य ॥ २ ॥

**प्रत्यहंदेशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ॥ अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक् ॥ ३ ॥**

**[ हिंसांयः कुरुते कश्चिद्देयंवा न प्रयच्छति । स्थाने ते द्वे विवादस्य भिन्नोष्टादशधा पुनः ॥१॥]**‡

( १ ) **मेधातिथिः** । पूर्वार्द्धेनिर्णयहेतवः कथ्यन्ते उत्तरेण विवादपदसङ्ख्यानिर्देशः । पश्येदिति पूर्वश्लोकादनुषज्यते कार्याणीति च प्रत्यहंपश्येत्कार्याणि प्रतिदिवसगमने व्यवहारनिर्णयः कर्तव्यः । हेतुभिरिति हेतुर्निर्णयसाधनं । सच द्विविधः प्रमाणरूपोव्यवस्थारूपश्च । तत्र प्रमाणरूपोऽर्थनिर्णयहेतुः साक्ष्यादिः व्यवस्थारूपोयतोऽसत्ये वार्थनिश्चये व्यवहारः संतिष्ठते । यथा सत्यशपथउभयानुमतएकः साक्षी यद्यर्थिप्रत्यर्थिभ्यामभ्युपगतप्रमाणभावः सभ्यैरपरीक्षितोपि निर्णयहेतुतांप्रतिपद्यते । नच परीक्षितस्य पुंसोवचनादसत्यात्पूर्व वदर्थनिश्चयः प्राश्निकानामभ्युपगमेऽपि व्यवस्था हेतुर्भवति । सा च व्यवस्था द्विविधा साधारण्यसाधारणीच देशभेदाश्रयभेदात्सापि द्विविधा अविरुद्धा विरुद्धा च अविरुद्धायथा केषांचिद्दाक्षिणात्यानामपुत्रा स्त्रीभर्तर्युपरते सभास्थाणुमुपारोहति तमुपारूढाऽधिकृतैरक्षपराहता कृतलक्षणा तत्सेवानन्तरं सपिण्डेषु कुच्छ्रंलभते* । तथोदीचांलभ्यमानांकन्यांयाचमानाय भोजनंयदि दीयते ततइयंतुभ्यंदत्तेत्यनुक्तेऽपि प्रतिश्रुता भवति विरुद्धाच क्वचिद्देशे वसन्ते धान्यंयुज्यते शरदिद्विगुणंप्रत्यादीयते तथानुज्ञातभोगआधिर्द्विगुणेऽपि तदुत्थधने प्रविष्टआमूलहिरण्यदानाद्भुज्यतएव एषा ह्यशीति भागंगृण्हीयात्कुसीदवृद्धिर्द्वैगुण्यंनात्येतीतिविरुद्धा । तत्र भेदाश्रयादेशदृष्टहेतुशब्देनाभिहिताः । शास्त्रदृष्टास्तुहेतवः शास्त्रेपठितास्तेच केचन शास्त्रकारैः कल्पितव्यवस्थाः केचिद्यथावत्स्ववस्थिता अनुदिताः तत्र कल्पितव्यवस्था यथा लेख्यं यथोपभोगः साक्षिणश्चानुमानंवस्तुनियतं यथानयत्यस्यासृतैः मृगस्य मृगयुः पदमिति यद्यपि सर्वंलौकिकंनशास्त्रकारवचनात्प्रामाण्यंभवति तथा लौकिकमेव तस्मिन्नक्व चिच्छास्त्रमाश्रयितव्यम् । याचयतीदृशे चापराधइदंदिव्यंनियता च कालेन भोगः प्रमाणमिति लौकिकमपि तच्छास्त्रदृष्टमित्युक्तम् । तस्यां च व्यवस्थायां शास्त्रकाराणांमूले संभवति । साममाणमसंभवे तन्मूला सा नादरणीया यथा लेख्यक्रमपाठः ॥ उभयाभ्यर्थितेनैवंमया ह्यमुकसूनुना । लिखितंह्यमुकेनैव लेखकस्तत्त्वतोलिखेदिति ॥ यस्यादावेवलेखकः स्वनाम निवेशयेदिदंनामाहममुष्यपुत्रोलिखामीदमितिनकश्चिद्दोषःस्यात् सह्येवमर्थनाम निवेशयत्यनेनेदंलिखितमिति लेख्यकमुपलिखितंयथा स्यात् यदिह्यसौ लेखकः प्रमाणान्तरेण प्रत्ययितोभवति ततस्तल्लिखितंप्रमाणं यदि चासावात्मानंस्वगोत्रनाम्ना नोपलक्षयेत्ततः कस्य प्रत्ययिता प्रमाणान्तरादन्विष्यतां अथतुलेख्यान्तरदर्शनेनान्येन वा हेतुना विशिष्टलेखकइति प्रत्यभिज्ञानं स्यादनुपलक्षितोपि नकश्चिद्दोषः । तत्र यदि लेखकोनलिखेन्मयेदंलिखितमिति भवेदेवतादृशंलेख्यंपरिपूर्णलक्षणं एषा च लेखकपरीक्षा तत्रोपयुज्यते । पत्रलेखकस्य साक्षित्वान्तर्भावोन्येषांसाक्षिणामल्पत्वात् यत्र त्वन्ये बहवः प्रत्ययिताः साक्षिणः स्वहस्तारूढा :सन्ति तत्र लेखकसंबन्धिनी प्रत्ययिता नोपयुज्यते तथेयमपराव्यवस्था ॥ लिखितंलिखितेनैव साक्षिमच्चैव

---

‡ ( क )

( ३ ) निबद्धानि=विविधानि ( मेधा० ) * लभते=नलभते ( आत्रा )

साक्षिभिः । साक्षिभ्योलिखितंश्रेयोलिखितेनतुसाक्षिणः ॥ नास्यामपि व्यवस्थायांकिंचिन्निबन्धनमस्ति तथाहि द्विविधंलेख्यंस्वहस्तकृतं परहस्तकृतंच परहस्तकृतमपि द्विविधं स्वहस्तलेखकलिखितमधिकृतलेखकलिखितंतदेतत्परहस्तकृतंसर्वप्रकारंसाक्ष्यात्मकमेव तत्र साक्षिभ्योलिखितमिति भेदानुपपत्तेरिदंहि तस्य लक्षणं ॥ साक्षिणः स्वस्वहस्तेन पितृनामादिपूर्वकं । तत्राहममुकः साक्षी लिखेयुरिति ते सममिति ॥ नाप्येकहस्तलिखितस्य प्रामाण्यमिष्यते यथैकस्य साक्षित्वं अथायंभेदहेतुसाक्षिणोहस्तारूढास्तएव लेख्यमिति नानेन विशेषेण श्रेयस्त्वंभवति प्रत्ययितता* हि श्रेयस्त्वे हेतुः साचोभयत्रापि परीक्ष्या तस्मादीदृशे लेख्ये साक्षिद्वैधान्यायोबहुत्वंपरिगृह्णीयादिति । अधिकृतत्वमपि न विशेषः परीक्षितोधिक्रियतइत्येतत्तत्राधिक्यम् । नच सर्वैराजाधिकृताः सुपरीक्षिताभवन्ति यदि नु निरुपाधिस्तादृशश्चेदत्यन्तगुणयोगास्याडुपेयादेवासाविकएव संवादकत्वं तथा हि राजाग्रहारशासनान्येककायस्थहस्तलिखितान्येवप्रमाणीभवन्ति । दातुस्वाहस्तक्यंस्वयमभ्युपगमः इयदस्मान्मया गृहीतमिदंचास्मै दातव्यमिति तत्र यदि पश्चाद्यूतेन गृहीतमिति तदा पूर्वनिबद्धंब्रुवाणैर्जीयते तत्र साक्षिणामवसरएव नास्ति । ननुच तदीयाल्लेख्यादभ्युपगतमेतदनेनेत्यवगम्यते उत्तरकालंच सएवाह नगृहीतमिति तत्रोभयोरभ्युपगमयोः केन हेतुना पूर्वेणोत्तराबाध्येत न पुनरुत्तरेणपूर्वा तुल्यत्वाद्विरुद्धत्वसंशयः ततश्च प्रमाणान्तरव्यापारणमेव युक्तं भवेदेवंयदि तुल्यतास्यात् न गृहीतमिति ह्यभ्युपगमोलोभादिनापि संभवति । न त्वगृहीत्वानुन्मत्तोगृहीतमिति ब्रूयात् तत्रापि यदि ब्रूयात्प्रतिदत्तमिति लेख्यन्तु न संपादितं ‡असंनिधानात्प्रतिलेख्यंच न गृहीतं लेखकासंनिधानात्कार्यान्तरेऽतिपातिनि त्वरावत्वान्नात्रास्त्येव प्रमाणान्तरस्य साक्ष्यादेरवसरः । यदपि लिखितंलिखितेनेति नैषा* परिभाषा वस्तुसामर्थ्यायातामवगतिंबाधितुंशक्नोति । दृश्यन्ते हि धनिकहस्तगतलेख्यक्रमेण संशोधयन्तोनच पृष्ठे संशोधितंधनमभिलिखन्ति । अद्य तावदिदंदत्तंमातरन्यदानीयैकीकृत्योपर्यारोपयिष्यामि सर्ववा कतिपयैरहोभिः संशोध्य लेख्यंपाटयिष्यामीति नान्यवस्तुनोसंबन्धः धनिकेन चोपरुन्धस्यासंभवत्यंशमूललाभधनेसंशुद्धिभागमात्रे दीयमाने कुतइयंतत्प्रभवति नददाति यावत्प्रतिलेख्यंनदत्तमिति । यदिचैषा परिभाषा लिखितंलिखितेनैवेति तदा बलोपाधिकृतत्वंकथंविचार्यतां नहि तत्र लेख्यान्तरसंभवः तेन यथात्र सत्येव लेख्ये तन्निश्चयार्थं प्रमाणान्तरंव्यापार्यते तद्वदन्यत्रापि व्यापारणीयम् । यथा कश्चिदावेदयेन्नास्य प्रत्ययंगत्वा लेख्यंमया कृतमनेनोक्तः सद्यः पुण्याहेतुरकारणमिमांच धनमात्रांगृहाणाश्व नसर्वदातास्मीत्युक्त्वा सैव धनमात्रा दत्ता परिशिष्टंनदत्तमिति तदास्त्येवन्यायकायकान्तरव्यापारणावसरः । तत्र यद्यधमर्णस्यास्मिन्प्रकारे साक्षिणः सन्ति तदाभिहिते लेख्यआभासाकृते श्वोदानमुत्तमर्णेन साधनीयम् । अथ तयोरपि रहसि परिभाषयमभूत्तदादैव्याः क्रियायाअवसरः अथतु तस्यामपि व्यभिचरित्वदनाश्वासः सत्यशपथेन व्यवस्था कार्या । नन्वेवंसति स्वहस्तलेख्यंप्रमाणान्तरसंवेदसापेक्षत्वादप्रमाणमेव तत्र विनापि साक्षिभिः सिध्येन्न स्वहस्तपरिचिन्हितमितिविरोधः । अनेनैवन्यायेन प्रत्यक्षंदीयमानंद्रव्यंन पश्यति । केवलंतत्समक्षंगृहीत्वा परिभाष्यतइयदिदमस्मान्मया गृहीतमिति तेऽपि साक्षिणः

---

* प्रत्ययितता=प्रत्ययिता ( आआ )

† नत्वगृहीत्वानुन्मत्तो=तेनगृहीतत्त्वान्मनुमतो ( आआ )

‡ असंनिधानात्=अनुसंनिधानांन ( आआ )

* नैषा=तेषां ( आआ )

स्युः तत्रापि शक्यते वक्तुमस्य प्रत्ययंगत्वा प्रपन्नोहमितिउक्तमत्र न स्मृतिविरोधाद्वस्तुस्थितिरहन्तुंशक्यते । अपि चयत्रास्य वचनस्यावसरोनास्ति तत्प्रमाणंभविष्यति क्वचिन्नास्ति यत्रचिरकालंतिष्ठति धनिकहस्तेलेख्यंयदिहितेन धनंदत्तंतदा कथमनेनवा नाम न मार्गितंलेख्यंन त्याजितमिति नहि चिरकालमपेक्षा वस्तुनीदृशेदृश्यंसंभवति मिथ्यावादितात्वस्यानुमीयते तथाचोक्तं ॥ सद्यस्त्वयहाद्वाकार्येषु बलंराज्ञोनिवेदयेदिति । यत्र वा भोग्यबन्धोनच भोगआम्नातोपहारकालसूत्रविप्रतिपत्तौ विनापि साक्षिभिः स्वहस्तलेख्यंनह्यधमर्णावक्तुंलभन्ते प्रीत्या त्वयैतदुक्तंसंप्रति त्यजेति । नच पूर्वोक्तस्य वचनस्यावसरः कृतंलेख्यंततोदास्यामीत्युक्त्वा न दत्तमिति यदि न दत्तंकथंबन्धभोगोमर्षितः । ननुचैवंसति लेख्यैः सह योभोगः प्रमाणंस्यात् केवलस्य तु भोगस्य प्रामाण्यमामनन्ति लिखितंसाक्षिणोभुक्तिरिति । किमिदंप्रत्युक्तंपर्यनुयुज्यामहे विशिष्टकालोभोगः प्रमाणंनभोगमात्रं एवंहि पठ्यते यत्किंचिद्दशवर्षाणितथापश्यतोब्रुवतोभूमेर्हानिर्विंशतिवार्षिकीति । कस्तर्ह्यस्यार्थोलिखितंलिखितेनैवेति व्याख्यातमन्यैः कर्तृविशेषसंशयेऽने नैतल्लिखितंनचेतिलिखितेन निश्चिततत्कर्तृकेण निश्चीयते । यत्तु साक्षिसमक्षंतत्र कृताकृतसंदेहंसाक्षिभिर्हरति तएव तत्र प्रमाणं न तत्र तत्कृतलेख्यान्तरदर्शनमुपयुज्यते । बुद्धिपूर्वेषु च ऋणादानादिषु केवलेभ्यः साक्षिभ्योलिखितंश्रेयः साक्षिणोहि विस्मरेयुरन्यतरेण वा संबन्धंगच्छेयुरन्यद्वा पातकस्यासाक्षित्वे हेतुमासादयेयुः लेख्यन्त्वभियोगवत आत्माधीनतया सुरक्षमिति साक्षिभ्यः श्रेयस्त्वन्तस्य एतदेवाह लिखिते नतु साक्षिणइति । स्वहस्तप्रतिष्ठेन विस्मृतमप्यर्थंवृत्तमिति मन्यन्ते मृतावा साक्षिणस्तद्वस्तुप्रत्यभिज्ञानेन प्रमाणोभवन्ति । व्याख्यानान्तराणि भर्तृयज्ञेनैव सम्यक्कृतानीति तनएवावगन्तव्यानि । सर्वथा प्रमाणमूलानिस्मृतिः कारणव्यवस्था तु कर्तव्येति । नच स्मृतेरेव प्रमाणकल्पना युक्ता नहि व्यवहारस्मृतिर्वेदमूला शक्यतेवक्तुं सिद्धार्थरूपत्वात्प्रत्यक्षाद्यवगम्यत्वाज्जयपराजयप्रकाराणाम् । सिद्धोह्ययमर्थः एवंव्यवहारिजीयतइतरइतरोजयतीति यदाप्यत्र लिङ्गश्रुतिः सापि हरीलकींभक्षयेदारोग्यकामइतिवदवसेया । ईदृशेषु विधिस्वरूपेषु प्रत्ययेषु द्रव्यशुद्धेः प्रसङ्गेनार्थोविवेचितइति न पुनः प्रयतामहे । अष्टादशसु मार्गेषु विषयोविवादस्य एतानर्थानुद्दिश्य पुरुषाः प्रायेण विवदन्ते न विद्धानि कार्याणि प्रयोजनान्यर्थसिद्धयइति यावत्तान्युत्तरत्र दर्शयिष्यामः । पृथक्पृथक्प्राधान्यमेतेषामाह एतानि प्रत्येकंप्रयोजकानि न पुनः परस्परमन्तर्भवन्ति । यथान्यानन्यत्र षड्भावादिष्वन्तर्भवन्ति नैवमेवेत्यनुसक्तानितु सहस्रशः सन्ति ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्यहंपश्येदित्यन्वयः । देशदृष्टैः शास्त्राऽविरुद्धैः देशाचारसिद्धैः हेतुभिः प्रमाणैःशास्त्रदृष्टैःसाक्ष्यादिभिः । अष्टादशस्वृणादानादिषु मार्गेषु कार्यनिर्गमोपायतयामार्गसदृशेषु निबद्धानि संबद्धानि कार्याणीत्यन्वयः ॥ ३ ॥

( ३ ) **कुल्लूकः** । तानि च ऋणादानादीनि कार्याणि अष्टादशसु व्यहारमार्गेषु विषयेषु पठितानि देशजातिकुलव्यवहारावगतैः शास्त्रावगतैः साक्षिदिव्यादिभिर्हेतुभिः पृथक्पृथक् प्रत्यहंविचारयेत् ॥ ३ ॥

( ४ ) **राघवानन्दः** । कार्याणीत्युक्तं तानि अष्टादशसु व्यवहारमार्गेषु कथं ज्ञेयानीत्यत्राह प्रत्यहमिति । देशदृष्टैः देशजातिकुलव्यवहारावगतैःप्रत्यक्षैर्न्यायैः हेतुभिर्वा । शास्त्रदृष्टैः शास्त्रोक्तसाक्ष्यादिमीमांसनैश्च (अ) ॥ ३ ॥

( ५ ) **नन्दनः** । हेतवः प्रमाणानि । देशदृष्टाहेतवोद्विविधा सर्वदेशव्यापाः देशविशेषनियताश्चेति । शास्त्रदृष्टाहेतवः समभाषादयः । अष्टादशसु मार्गेषु वक्ष्यमाणेषु विवादपदेषु निबद्धानि संबद्धानि । कार्याणि पश्येदित्यनुषज्यते ॥ ३ ॥

---

( अ ) मीमांसनैश्च=मीमांसनैश्चवक्ष्यतियत्रसुविहितंकार्यंधर्मासिद्धिमभीप्सतेति ॥ ( राघ॰ ४ )

( ६ ) **रामचन्द्र**। देशदृष्टैः देशाचारैः शास्त्रदृष्टैः शास्त्राविरुद्धैः हेतुभिः साधनैः अष्टादशसुमार्गेषुअष्टादशसंज्ञेषुपृथक् निबद्धानि कार्याणि प्रत्यहं पश्येत् ॥ ३ ॥

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ॥ संभूयच समुत्थानं दत्तस्यानपकर्म च ॥ ४ ॥**

( १ ) **मेधातिथिः**। पाठक्रमापेक्षमृणादानस्याद्यत्वंप्राथम्यम् अथवा मुख्यमाद्यं अनेन हि वनवासिनोपि स्पृश्यन्ते ऋणादानानुषक्तमनृणादानमेव च यथा ऋणंते मया दत्तंशुद्धिलेख्यंप्रयच्छेत्यादि नैतदृणादानमनुक्तन्तु तत्रेति तद्यपदेश्यं· तथा॥ ऋणंदेयमदेयंच येन यत्र यथा च यत्। दानग्रहणधर्माश्चेति ॥ तत्र देयमृणंस्वकृतंपितृकृतं च यस्य च ऋक्थंहरेत् अ· देयंस्वकृतंद्विगुणादधिकंपितृकृतंच द्यूतादि भागेनेति पुत्रेण भर्त्रा पित्रा चेत्यतथा ॥ न स्त्रीपतिकृतंदद्यादृणंपुत्रकृतंतथा । अभ्यु- पेयते कृतेयत्सहपत्न्या कृतंभवेत् । यद्यपि देयमित्यत्रैतदन्तर्भूतंतथापि द्यूतादिकृतंविशेषानपेक्षंस्वरूपतोदेयमिदन्तु कर्तृनिय- मादिति गोबलीवर्दवद्भवन्ति चेद्भेदोयावदिति द्वैगुण्यपर्यन्तंतत्रापि भेदः पूर्ववत् । यत्रेति पाठे देशकालग्रहणंयत्रैव गृहीतंत- त्रैवदेयं सत्यां धनिकेच्छायां देशान्तरेऽपि सति संभवे कालोपि शरद्यनिच्छेत्युक्तंग्रैष्मे वा सत्सु सस्येषु यदावास्य धना- गममन्येतेति यथा सतिसंभवे सर्वमसति कश्चिदंशोयावत्क्रमेण संशुद्धमिति सर्वभावे परिक्षीणे न कर्मणापि सममिति· दानग्रहणधर्माइति साक्षिलेख्यादयः पारुष्येदण्डवाचिकेइति दण्डश्च वाक्च दण्डवाचंद्वन्द्वाच्चुदषहान्तादिति समासान्तस्त- दस्यास्तीत्यतइनिठनाविति ठन् । स्त्रीपुंधर्मइति स्त्रीसहितः पुमानिति शाकपार्थिवादिवत्समासः स्त्रीचपुमांश्चेति विग्रहे स्त्री- पुंसधर्म इतिस्यात् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः**। आद्यं प्रधानं बहुविषयं ऋणस्य नदानमदानम् । संभूयसमुत्थानंअनेकैर्मिलित्वा यत्र धनार्थंवाणिज्याद्युद्यमःक्रियते । अनपकर्म अप्रत्यर्पणम् ॥ ४ ॥

(३) **कुल्लूकः**। तान्येवाष्टादशगणयति तेषामिति । तेषामष्टादशानांमध्ये आदाविहऋणादानंविचार्यते। तस्य स्वरू- पमुक्तंनारदेन ॥ ऋणंदेयमदेयंच येन यत्र तथाचयत्। दानग्रहणधर्माश्च तदृणादानमुच्यते ॥ ततश्च स्वधनस्यान्यस्मिन्नर्पणरू- पोनिक्षेपः। अस्वामिना च कृतोविक्रयः। संभूयवणिगादीनांक्रियानुष्ठानम्। दत्तस्य धनस्यापात्रबुद्ध्याक्रोधादिना वा ग्रहण- म् कर्मकरस्य भृतेरदानम् कृतव्यवस्थाऽतिक्रमः । क्रयविक्रये च कृते पश्चातापाद्विप्रतिपत्तिः । स्वामिपशुपालयोर्विवादः । ग्रामादिसीमाविप्रतिपत्तिः । वाक्पारुष्यमाक्रोशनादि दण्डपारुष्यंताडनादि स्तेयंनिन्हवेन धनग्रहणम् । साहसंप्रसह्यधन- हरणादि । स्त्रियाश्च परपुरुषसंपर्कः स्त्रीसहितस्य पुंसोधर्मेव्यवस्था । पैतृकादिधनस्य च विभागः । अक्षादिक्रीडापण- व्यवस्थापनपूर्वकंपक्षिमेषादिप्राणियोधनमित्येवमष्टादश एतानि व्यवहारप्रवृत्तेः स्थानानि। समाह्वयस्य प्राणिद्यूतरूपत्वेन द्यूतावान्तरविशेषत्वादष्टादशसंख्योपपत्तिः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

( ४ ) **राघवानन्दः**। उक्तानष्टादशविवादान्विशदयति तेषामिति चतुर्भिः । ऋणादानम् ॥ ऋणंदेयमदेयंचयेनय- त्रयथाचयत्। दानंग्रहणधर्मश्च तदृणादानमुच्यते इतिनारदोक्तेः ॥ निक्षेपः धनस्यान्यस्मिन्नर्पणं यथातथादानंच। यथादायस्तथाग्रहइति वक्षते । अस्वामिविक्रयः । सोपि द्विविधः प्रकाशाप्रकाशभेदेन । संभूयसमुत्थानं संहत्यच समु- त्थानंअदानंप्रदानंवादत्तस्यानपकर्मच संहत्यवणिगादीनांक्रियाद्यनुष्ठानंअनपकर्म अपात्रबुध्या क्रोधादिनावा दत्तस्य अपयच्छत्यनेनपरस्मैधनमित्यपकर्म दानादि तद्भिन्नमनपकर्म पुनरादानमित्यर्थः ॥ ४ ॥

( ५ ) **नन्दनः**। अष्टादशविवादपदान्याह तेषामाद्यमिति । तेषांकार्याणाम् । ऋणादानंऋणस्याप्रदानम् । निक्षेपो-

निक्षेपापहरणम् । अस्वामिना परद्रव्यस्य । विक्रयोऽस्वामिविक्रयः । बहुभिस्संभूयकर्मकरणं संभूय समुत्थानं दत्तस्यानपकर्मदत्तस्याप्रदानम् ॥ ४ ॥

( ६ ) **रामचन्द्रः** । तेषामष्टादशव्यवहाराणांसंज्ञाआह चतुर्भिः । तेषामष्टादशानामाद्यमृणादानं निक्षेपः अस्वामिविक्रयः संभूयच समुत्थानंअनेकैर्मिलित्वा धनाद्युद्यमः अनपकर्माप्रत्यर्पणम् ॥ ४ ॥

**वेतनस्यैव चादानंसंविदश्च व्यतिक्रमः ॥ क्रयविक्रयानुशयोविवादः स्वामिपालयोः ॥ ५ ॥**

( २ ) **सर्वज्ञनारायणः** । संविदोनियमस्य । अनुशयः पश्चात्तापः तेन पुनर्ग्रहणप्रयत्नोलक्ष्यते । स्वामिनः पशूनांपालकस्य ॥ ५ ॥

( ४ ) **राघवानन्दः** । वेतनस्य भृतेरादानम् संविदः अस्माभिः एतत्कर्तव्यमेतन्नेति कृतनिकृतनियमस्यातिक्रमोऽव्यवस्थात्यागः । क्रयविक्रयानुशयः तत्कृतेपि तस्मिन्पश्चात्तापात्तदादानपरित्यागौ । स्वामिपालयोः विवादोविप्रतिपत्तिः । पशुस्वामितत्पालयोः ॥ ५ ॥

( ५ ) **नन्दनः** । वेतनंभृतिः । तस्यादानम् । ग्रामनगरादिवासिनांसमयस्संवित् । स्वामिपालयोः पशुस्वामिपालयोः ॥ ५ ॥

( ६ ) **रामचन्द्रः** । वेतनस्यादानं संविदः समयस्य व्यतिक्रमः क्रयविक्रयस्य वस्तुनोऽनुशयः विवादः स्वामिपालयोः ॥ ५ ॥

**सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ॥ स्तेयंच साहसंचैव स्त्रीसंग्रहणमेव च ॥ ६ ॥**

( २ ) **सर्वज्ञनारायणः** । सीमायांविवादधर्मः । दण्डवाचिके दण्डकृतवाक्पारुष्यइत्येकम् । स्त्रीसंग्रहणं स्त्रियाः परपुरुषेण स्वीकारः ॥ ६ ॥

( ४ ) **राघवानन्दः** । सीम्नियोविवादस्तस्य धर्मोमर्यादानिर्णयः । पारुष्ये वाक्पारुष्यमाक्रोशादि दण्डपारुष्यंछेदादि । स्तेयं निन्हवेन धनग्रहणम् । साहसं सहोबलं तत्कृतंप्रसह्य धनहरणम् । स्त्रीहरणं स्त्रियाः परपुरुषसंपर्कादि ॥ ६ ॥

( ५ ) **नन्दनः** । सीमा ग्रामक्षेत्रादिसीमा । पारुष्ये दण्डवाचिके दण्डपारुष्यंवाक्पारुष्यं च परगात्रेषु हस्तादिभिः कृन्तनादिकं दण्डपारुष्यं । जातिकुलाचारादिनामाक्रोशोवाक्पारुष्यम् । साहसंबलात्कारः । स्त्रीसंग्रहणंपरदारपरामर्शः ॥६॥

( ६ ) **रामचन्द्रः** । सीमाविवादः पारुष्यं स्तेयम् साहसं स्त्रीसंग्रहः ॥ ६ ॥

**स्त्रीपुंधर्मोविभागश्च द्यूतमाह्वयएव च ॥ पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ ७ ॥**

( २ ) **सर्वज्ञनारायणः** । स्त्रीपुंधर्माः अन्योन्यवृत्तिनियमस्तयोः । आह्वयः पशुपक्षियोधनम् । आहवइतिपाठेऽप्ययमर्थः । पदानि स्थानानि । व्यवहारस्य विवादस्य । स्थितौ निर्णये ॥ ७ ॥

( ४ ) **राघवानन्दः** । स्त्रीपुंधर्मः स्त्रीसहितपुंसोधर्मव्यवस्था । विभागः पैतृकादिधनादेः द्यूतं अक्षादिक्रीडा । आह्वयः पणपूर्वकपक्षिमेषादियोधनम् । पदानि स्थानानि विषयाः विचारस्येतिशेषः ॥ ७ ॥

( ५ ) **नन्दनः** । स्त्रीपुंधर्मोदम्पतिभ्यामन्योन्यस्मिन्कर्तव्योधर्मः । विभागः दायविभागः । आह्वानंप्राणिद्यूतम् । मेषकुक्कुटादियोधनंद्यूतम् द्यूतमाह्वानमित्युभयमप्येकव्यवहारास्पदमभिप्रेततयोर्द्वयोर्विजयपराजयफलत्वात् । कारणतोऽभिभेदीन स्वरूपइति । तथा चायमेव वक्ष्यति ॥ अप्राणिभिर्य्यत्क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिःक्रियते यत्तु सविज्ञेयःसमाह्वयइति ॥ ७ ॥

( ६ ) **रामचन्द्रः** । स्त्रीपुंधर्मः विभागे द्यूतं मेषादियुद्धक्रीडा एतानि अष्टादश पदानि स्थानानि व्यवहारस्थितौ पश्येदित्यर्थः ॥ ७ ॥

## एषु स्थानेषु भूयिष्ठं विवादं चरतांनृणाम् ॥ धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम् ॥ ८ ॥

( १ ) **मेधातिथिः** । भूयिष्ठग्रहणंप्राधान्यख्यापनार्थं अन्येऽपि व्यवहारहेतवः सन्ति यथा निवसनार्थंत्वया मे वेश्म दत्तंतत्र किमित्यर्वाग्वत्सरादन्यस्मै ददासीति नचेदंदत्तानपकर्म नह्यत्र स्वत्वनिवृत्तिरस्ति भोगानुज्ञामात्रंवसतः तथा मदीयस्थण्डिलाभिमुखंत्वया वेश्मनि गवाक्षंकृतमिति । धर्मंशाश्वतमाश्रित्येति अर्थकामावशाश्वतौ अथवा शाश्वतोधर्मअनिदंप्रथमतां*याव्यवस्थाताननुपालयेद्यात्विदानींतनयी[1]प्रवर्तिता साऽशाश्वतत्वादनादरणीया ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । भूयिष्ठप्रायशः तेनान्यान्यपि पदानि भवन्तीत्यर्थः ॥ ८ ॥

( ३ ) **कुल्लूकः** । एषु ऋणादानादिषु व्यवहारस्थानेषु बाहुल्येन विवादंकुर्वतांमनुष्याणामनादिपारंपर्यागतत्वेन नित्यंधर्ममवलंब्य कार्यनिर्णयंकुर्यात् । भूयिष्ठशब्देनान्यान्यपि विवादपदानि सन्तीति सूचयति तानि च प्रकीर्णकशब्देन नारदाद्युक्तानि अतएव नारदः ॥ न दृष्टंयच्च पूर्वेषु सर्वंतत्स्यात्प्रकीर्णकमिति ॥ ८ ॥

( ४ ) **राघवानन्दः** । एष्वतीवयत्नंविधत्ते एष्विति । भूयिष्ठं बाहुल्येन विवादं चरतां कुर्वताम् । भूयिष्ठमित्युक्तिरष्टादशातिरिक्तसूचनार्थं तेन प्रतिज्ञादिग्रहः । अनादिपरंपरागतं तेन शाश्वतम् ॥ ८ ॥

( ६ ) **रामचन्द्रः** । एष्विति ॥ एषुस्थानेषु अष्टादशस्थानेषु भूयिष्ठं अतिशयम् ॥ ८ ॥

## यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ॥ तदा नियुञ्ज्याद्विद्वांसंब्राह्मणंकार्यदर्शने ॥ ९ ॥

( १ ) **मेधातिथिः** ॥ अष्टादशपदाभिज्ञंप्राड्विवाकेतिसंज्ञितं । आन्विक्षिक्यां च कुशलंश्रुतिस्मृतिपरायणम् ॥ कुतश्चिदतिपादिकार्यान्तरव्यासङ्गादपाटवाद्वा यदि स्वयंनपश्येत्तदा विद्वान्ब्राह्मणोनियोज्यः । विद्वत्ता च या व्यवहारविषयासा तदधिकारतएवार्थगृहीता नहि योयन्न जानाति सतत्राधिकारमर्हति । धर्मशास्त्रपरिज्ञानन्तु रागद्वेषदोषेण विपरीतार्थावधारणनिवृत्यर्थमुपयुज्यते । धर्मज्ञस्तु सतोरपि रागद्वेषयोः शास्त्रभयेन विपर्ययेत्युपयोगवद्धर्मशास्त्रपरिज्ञानं व्यवहारदर्शनन्तु तदर्थगृहीतंयेन विना न शक्यते व्यवहारनिर्णयः कर्तुंतद्विज्ञानंतदधिकाराऽऽक्षिप्तम् । यत्तु ज्ञात्वाऽन्यथा क्रियते तन्निवृत्तिरुपदेशान्तरविषया वक्षति चैवमर्थंयत्नान्तरमपि वेदविदस्त्रयः राज्ञश्च प्रकृतोविद्वानिति । शास्त्रान्तरपरिज्ञानन्तु व्यवहारेऽधिक्रियमाणस्यादृष्टाय स्यात् । नियोज्योविद्वान्स्यादिति पठितव्यम् । नियुञ्ज्यादिति नियुञ्जित स्वराज्यतोपसृष्टादिति हि क्रातीयाआत्मनेपदंस्मरंति ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । स्वयंनकुर्वीत कारणान्तरवशात् ॥ ९ ॥

( ३ ) **कुल्लूकः** । यदा कार्यान्तराकुलतया रोगादिना वा राजा स्वयंकार्यदर्शनंन कुर्यात्तदा तद्दर्शनार्थंकार्यदर्शनाभिज्ञंब्राह्मणंनियुञ्जीत ॥ ९ ॥

( ४ ) **राघवानन्दः** । अत्रार्थे स्वयमसमर्थश्चेत्प्रतिनिधिंकुर्यादित्याह यदेति । ब्राह्मणमेव नियुञ्ज्यान्नान्यमितिनियमः ॥ ९ ॥

( ५ ) **नन्दनः** । आपत्कल्पमाह । यदास्वयन्नेति ॥ ९ ॥

---

* ता=तो ( आ आ ) [1] तनयी=ततः ( आ आ )

( ६ ) **रामचन्द्रः** । नृपतिर्यदा स्वयं वादिप्रतिवादिनोः कार्यनिर्णयं नकुर्यात्तदा विद्वांसंब्राह्मणं कार्यदर्शने नियुञ्ज्यात् ॥ ९ ॥

**सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः॥ सभामेव प्रविश्याग्र्यामासीनः स्थितएव वा॥१०॥**

( १ ) **मेधातिथिः** । सभ्यैरिति जातिविशेषानुपादानेऽप्युत्तरत्र विप्रग्रहणाद्ब्राह्मणैः सहेति च पूर्वत्र ब्राह्मणग्रहणाद्ब्राह्मणाएव विज्ञायन्ते । त्रिग्रहणन्त्वेकद्वयोः प्रतिषेधार्थं त्रिप्रभृतयस्त्विष्यन्तएव साक्षीप्रकरणे चैतद्वक्ष्यामः । सभामेव प्रविश्याग्र्यामिति राजस्थानापत्या सभांप्रविश्य स्थानासनेषु तद्धर्मेषु पुनर्वचनंप्रदर्शनार्थंधर्मान्तरनिवृत्त्यर्थंवा तेन राजस्थाने नोपविशति ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । सभ्यैः सभास्थैः अन्यैरपि त्रिभिर्वेदज्ञैः । सभां राज्ञः प्रविश्यैव न बहिरपि ॥ १० ॥

( ३ ) **कुल्लूकः** । सब्राह्मणोऽस्य राज्ञोद्रष्टव्यानि कार्याणि त्रिभिर्ब्राह्मणैः सभायां साधुभिर्धार्मिकैः कार्यदर्शनाभिज्ञैर्वृतस्तामेव सभांप्रविश्योपविश्य स्थितोवा नतुचंक्रम्यमाणः तस्य चित्तव्याक्षेपसंभवत्वात्तादृशऋणादानादीनि कार्याणि पश्येत् ॥ १० ॥

( ४ ) **राघवानन्दः** । तस्य प्रतिनिधेःकृत्यप्रकारमाह सोस्येति । सभ्यैः सभायांसाधुभिःब्राह्मणैः । अग्र्यां श्रेष्ठाम् । आसीनादि पदद्वयं । गुरुलघुकार्यपरं चक्रमणंप्रत्याचष्टे वा ॥ १० ॥

( ६ ) **रामचन्द्रः** । सः ब्राह्मणः अस्य राज्ञः समैरेभिस्त्रिभिर्वृतः कार्याणि पश्येत् ॥ १० ॥

**यस्मिन्देशे निषीदन्ति विप्रावेदविदस्त्रयः॥ राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभांविदुः ॥ ११ ॥**

( १ ) **मेधातिथिः** । उक्तंसभांप्रविश्य व्यवहारान्पश्येदिति सभाशब्दश्च लोके गृहप्रासादविशेषे वर्तते मयेन निर्मिता दिव्या सभा हेमपरिष्कृतेति क्वचित्पुरुषविशेषसंघटिता सभेति तन्निवृत्त्यर्थंसभायालक्षणमाह । यत्र त्रयोब्राह्मणावेदविदः सन्निधीयन्ते राज्ञश्चसंबन्धीप्रकृतोधिकृतोविद्वानिति अथवा प्रकृतोन्तरश्लोके सन्निहितः । सेह सभाभिप्रेता । ब्रह्मग्रहणंस्तुत्यर्थम् । यथा ब्रह्मणः सभा निरवद्यैवेयमपीति ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । त्रयोवेदविदोवेदार्थविदः एकैकवेदस्यैकैकेनाध्ययनात् । प्रकृतोधिकृतः । सभां निर्णययोग्याम् ॥ ११ ॥

( ३ ) **कुल्लूकः** । यस्मिन्स्थाने ऋग्यजुःसामवेदिनस्त्रयोपि ब्राह्मणाअवतिष्ठन्ते राज्ञाधिकृतश्च विद्वान्ब्राह्मणएव प्रकृतत्वादवतिष्ठते तांसभांचतुर्मुखसभा मेव मन्यते ॥ ११ ॥

( ४ ) **राघवानन्दः** । सभामित्युक्तंतल्लक्षणमाह यस्मिन्निति । वेदविदः ऋग्यजुःसामविदः । राज्ञाऽधिकृतः प्राड्विवाकः । एतांस्तोति ब्रह्मणइति प्रजापतेः । तादृशीं विदुर्मन्वादयः ॥ ११ ॥

( ५ ) **नन्दनः** । सभालक्षणमाह यस्मिन्देशइति ॥ ११ ॥

( ६ ) **रामचन्द्रः** । सभास्वरूपमाह यस्मिन्निति । यस्मिन्देशे स्थाने त्रयोविप्राः निषीदन्ति उपविशंतीत्यर्थः । राज्ञः संमताराज्ञःस्वभावानुकारी ॥ ११ ॥

**धर्मोविद्धस्त्वधर्मेण सभांयत्रोपतिष्ठते॥ शल्यंचास्य नकृन्तन्ति विद्धास्तत्र सभासदः॥ १२ ॥**

---

( १२ ) नकृन्तन्तिविद्धास्तत्रसभासदः = निकृन्तन्तिविद्वांसोत्रसभासदः ( ग )

( २ ) **सर्वज्ञनारायणः** । धर्मःसत्यरूपः विद्धोगृहीतभेदः । अधर्मेण असत्येन । तच्छल्यमसत्यम् । नकृन्तन्ति नच्छिन्दन्ति । विद्धाः पापविद्धाः ॥ १२ ॥

( ३ ) **कुल्लूकः** । भाःप्रकाशः तया सहवर्त्ततइति विद्वत्संहतिरेवात्र सभाशब्देनाभिमता । यत्र देशे सभांविद्वत्संहतिरूपांधर्मःसत्याभिधानजन्योऽनृताभिधानजन्येनाधर्मेण पीडितआगच्छति । अर्थिप्रत्यर्थिनोर्मध्यएकस्य सत्याभिधानादपरस्य मृषावादात्ते च सभासदोऽस्य धर्मस्य पीडाकरत्वाच्छल्यमिवाधर्मनोद्धरन्ति तदातएव तेनाधर्मशल्येन विद्धाभवन्ति ॥ १२ ॥

( ४ ) **राघवानन्दः** । अप्रमत्तैः सभा प्रवेष्टव्येति विधास्यन्नाह धर्मइति । भा प्रकाशः कृताकृतप्रकाशकविद्वत्संगतिरूपा तयासह वर्तमाना सभा । अतोयत्र देशे सत्याभिधानजःप्रकाशरूपोधर्मः अनृतप्रच्छादकतमोरूपाऽधर्मेण विद्धोऽभिभूतःसन् तादृशींसभां उपतिष्ठते धर्मः । अतएव* शल्यं शल्यमिवाधर्मं दुःखसामग्रीत्वात् धर्मस्य शल्यमितिवा तंननिकृन्तन्ति नोद्धरन्ति । अतस्तेन सभासदएव विद्धास्तत्पापयुक्ताएवेति ॥ १२ ॥

( ५ ) **नन्दनः** । असम्यग्व्यवहारदर्शने सभ्यानांदोषमाह धर्मेति । यत्र देशेऽधर्म्मेण विद्धोनिपीडितोधर्मस्तत्परिहारार्थसभांसभ्यानुपतिष्ठन्ति न कृन्तन्ति न निर्हरन्ति चेत्तत्रदेशे स्थिताःसभासदोनिन्द्याभवन्ति ॥ १२ ॥

( ६ ) **रामचन्द्रः** । अस्य कार्यार्थिनः शल्यं शल्यरूपंदुःखं नकृन्तन्ति न छिन्दन्ति तत्र सभासदोविद्धाभवन्ति पापेनयुक्ताभवन्तीत्यर्थः ॥ १२ ॥

**सभांवा न प्रवेष्टव्यंवक्तव्यंवा समञ्जसम् ॥ अब्रुवन्विब्रुवन्वापि नरोभवति किल्बिषी ॥ १३॥**

( १ ) **मेधातिथिः** । अनेनार्थेन द्वयंविप्रतिषिध्यते प्रतिपन्नाधिकारेण मिथ्यादर्शनंन कर्तव्यमन्येन च क्रियमाणंनोपेक्षणीयंतत्रोभयथा दोषः । अब्रुवन्नन्येनविपरीतेनुष्ठीयमाने तूष्णीमासीनोहस्तक्षेपेण वा शास्त्रान्याविरुद्धंब्रुवन्किल्बिषी पापभाग्भवति तेन नैषा प्रत्याशा कर्तव्या द्वितीयः प्राड्विवाकोमिथ्यापश्यति सएव योजयत्यहंतूष्णीभूतउदासीनः किमित्येनसा योक्ष्यइति सभाप्रवेशनिषेधेन चात्र व्यवहारदर्शनाधिकारप्रतिपत्तिः प्रतिषिध्यते । सभा वा न प्रवेष्टव्येति व्यवहारदर्शनाधिकारोन प्रतिपादनीयइत्यर्थः । प्रतिपन्नश्चेत्समञ्जसंवक्तव्यं अनेन त्वनधिकृतस्यापि यदृच्छया सन्निहितस्य मिथ्यापश्यत्सु सभ्येषु विदुषस्तूष्णींभावंनेच्छन्ति तथा च नियुक्तोवानियुक्तोवा धर्मज्ञोवक्तुमर्हति अथराजपुरुषपर्यनुयोगआशङ्क्यतेकिमित्यनधिकृतोब्रवीति ततश्च तत्प्रदेशादपसर्तव्यं तदिदमुक्तंदुर्बलहिंसायां चाविमोचने शक्तश्चेदिति ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । विब्रुवन् विपरीतंब्रुवन् ॥ १३ ॥

( ३ ) **कुल्लूकः** । यतएवमतः सभामिति सभामवगम्य व्यवहारार्थतत्प्रवेशोन कर्त्तव्यः पृष्टश्चेत्तदा सत्यमेव वक्तव्यम् । अन्यथा तूष्णीमवतिष्ठमानोमृषा वा वदन्नुभयथापि सद्यः पापी भवति । मेधातिथिना तु सभावानप्रवेष्टव्याइति ऋग्वेदपठितम् ॥ १३ ॥

( ४ ) **राघवानन्दः** । एवंसभामिति । ज्ञात्वा न प्रवेष्टव्यं दैवात्प्रविष्टेन समञ्जसमेव वक्तव्यम् । नप्रवेष्टव्यासभावे-

---

*एव=एव अस्य ( राघ०४ ) पापी=पापीभवत्येव ( राघ० ४ ) ( १ ) नियुक्तोवा=पिमुक्तोवा=( आ आ )

( १३ ) सभांवानप्रवेष्टव्यम् = सभावानप्रवेष्टव्या ( ट, ठ, ड, थ, भ, र, न, य, )

= सभायांनप्रवेष्टव्यम् ( त )

ति पाठोमेधातिथेः । अब्रुवन् लोभादिनाज्ञात्वानजानामीति तूष्णींवातिष्ठेत् । विब्रुवन् श्रुतदृष्टादन्यथाब्रुवन् । किल्बिषीपापी ॥ १३ ॥

( ५ ) **नन्दनः** । सभायामधिकृतोन भवेद्वा अधिकृतश्चेद्वक्तव्यः समञ्जसंन्याय्यम् । विब्रुवन् असमञ्जसंब्रुवन् ॥१३॥

( ६ ) **रामचन्द्रः** । सभेति । समंजसंसद्धर्मानुकूलंअब्रुवन्मौनंकुर्वन् विब्रुवन् अथ विरुद्धंब्रुवन् नरःकिल्बिषीभवति ॥ १३ ॥

## यत्र धर्मोह्यधर्मेण सत्यं यत्रानृतेन च ॥ हन्यते प्रेक्ष्यमाणानांहतास्तत्र सभासदः ॥ १४ ॥

( १ ) **मेधातिथिः** । धर्मशास्त्रन्यायदेशनियता व्यवस्था सा वेदधर्मेण तद्व्यतिक्रमरूपेण हन्यते विनाश्यतेऽर्थिना प्रत्यर्थिना तथा सत्यमनृतेन साक्षिभिर्हन्यते प्राड्विवाकादयश्च प्रेक्षंते न तत्त्वमुद्धरन्ति ततस्ते हताः शवतुल्या भवन्तीतिनिन्द्यते तस्मान्नार्थिप्रत्यर्थिनौ विपरीतमाचरन्तौ सभासद्भिरुपेक्ष्यौ । साक्षिणश्च धर्माधर्मग्रहणे न सत्यानृतग्रहणेनवासिद्धंश्लोकपूरणमुभयोरुपादानमतो विषयभेदेन व्याख्यातम् ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । यतएव सत्यमनृतेन हन्यतेऽतएव धर्मोऽधर्मरूपेण तत्र हन्यते ॥ १४ ॥

( ३ ) **कुल्लूकः** । यस्यां सभायामर्थिप्रत्यर्थिभ्यामधर्मेण धर्मोन दृश्यते यत्र च साक्षिभिः सत्यमनृतेन नाश्यते । सभासदांप्रेक्षमाणानांताननादृत्य तेप्रतीकारक्षमानभवन्तीत्यर्थः । षष्ठीचानादरइत्यनेन षष्ठी । तत्र तएव सभासदस्तेन पापेन हताभवन्ति ॥ १४ ॥

( ४ ) **राघवानन्दः** । सत्यंवदन्तमाहुर्धर्मंवदतीतिश्रुतिमाश्रित्य धर्मपदंस्वकारणंसत्यंलक्षयतीतिस्पष्टयन्धर्मरक्षणंसार्थवादंविधत्ते यत्रेतिचतुर्भिः । अर्थिप्रत्यर्थिभ्यामधर्मेण धर्मोनाश्यते यत्रवा सत्यं साक्षिभिरनृतेन नाश्यतइति प्रेक्षमाणानां षष्ठीचानादरइतिषष्ठी । तान्प्रतीकाराक्षमान् अनादृत्येत्यर्थः । तेन पापेन हताः हतप्रायाः ॥ १४ ॥

( ५ ) **नन्दनः** । कैश्चित्सभ्यैर्द्धर्मे हन्यमाने केषांचित्सभ्यानामुपेक्षमाणानांदोषमाह यत्रधर्मोहीति यत्र हन्यते कैश्चित्सभासद्भिर्धर्मेण पीड्यते प्रेक्षमाणानांकेषांचित्सभासदामनादरे षष्ठी प्रेक्षमाणास्ते सभासदोहताः स्युः ॥ १४ ॥

( ६ ) **रामचन्द्रः** । किंप्रेक्ष्यमाणानांपापदर्शिनांपश्यतां अधर्मेणधर्मःहन्यते तत्र सभासदःहताज्ञेयाः ॥ १४ ॥

## धर्मएव हतोहन्तिधर्मोरक्षति रक्षितः ॥ तस्माद्धर्मोन हन्तव्योमानोधर्मोहतोवधीत् ॥ १५ ॥

( १ ) **मेधातिथिः** । न भयादन्यथा दर्शनंकर्तव्यं यतोधर्मोव्यतिक्रान्तः सन्हन्ति नोर्थतत्सहायोराजावा तथा धर्मएव पालितः सर्वतोभयमपनुदति नापकर्तुमिथ्यारयः क्रुद्धाः शक्नुवन्ति तस्मादेवंजानानः सुखदुःखे धर्माधीने इति धर्मोनहन्तव्यः यदि वयंधर्महन्मस्तदा सोस्मान्सर्पइव रोषितः प्रतिहन्तीत्यतोधर्मोहतः सन्मास्मान्वधीदित्यात्मपरित्राणार्थंधर्मोरक्षितव्यः ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । हतोहन्यमानः । मावधीदितिपूरणीयम् ॥ १५ ॥

( ३ ) **कुल्लूकः** । यस्माद्धर्मएवातिक्रान्तइष्टानिष्टाभ्यां सह नाशयति नार्थिप्रत्यर्थ्यादिः । सएव नातिक्रान्तस्ताभ्यां सह रक्षति तस्माद्धर्मोनातिक्रमणीयःमाऽस्मान्नृत्वत्सहितानतिक्रान्तोधर्मोवधीदिति सभ्यानामुत्पथप्रवृत्तस्य प्राड्विवाकस्य संबोधनमिदम् अथवा नोनिषेधेऽव्ययं नोहतोधर्मोमावधीत् नहन्त्येवेत्यभिप्रायः ॥ १५ ॥

( ४ ) **राघवानन्दः** । धर्मस्य हननाद्रक्षणमेव पथ्यमित्याह धर्मइति । धर्मोन हन्तव्योऽस्माभिः यतः नः अस्मान्

हतः अधर्मेणप्रतिबद्धः मावधीत् माहिंस्यादित्यन्वयः। अन्यथा धर्मस्य हननाभावाद्धतोवा कथं हन्यादिति भावः॥ १५॥

( ५ ) **नन्दनः**। कथंधर्मे हन्यमाने सभासदोहन्यन्तइत्याह धर्मएवहतइति यैर्धर्मोहतस्तान्धर्मोहंत्येव। हेमहर्षयः मानोस्वान्धर्मोवधीत्॥ १५॥

( ६ ) **रामचन्द्रः**। धर्मएव पुरुषंहन्ति। हतोधर्मः नः अस्माकमवधीत्॥ १५॥

**वृषोहि भगवान्धर्मस्तस्य यः कुरुते ह्यलम्॥ वृषलंतंविदुर्देवास्तस्माद्धर्मंन लोपयेत्॥ १६॥**

( १ ) **मेधातिथिः**। वृषलशब्दनिर्वचनेन मिथ्यावादी*निन्द्यते न जातिवृषलोवृषलः किंतर्हि योवृषस्य कामवर्षिणो-धर्मस्यालंकुरुते निवृत्तिवचनोलंशब्दः सवृषलइत्येतमर्थं देवाः प्रतिपन्नाः मनुष्यास्तु यदि जातिशब्दमेनमन्यन्ते कामंमन्य-न्ताप्रमाणतरास्तु देवास्ते चानेन प्रवृत्तिनिमित्तेन वृषलशब्दप्रयोगंमन्यन्ते देवग्रहणमर्थवादः। तस्माच्छ्राद्धकाले वृषलैर्न प्रवेष्ट-व्यंहन्तव्योवृषलश्चौरइत्याद्यासु क्रियासु मिथ्यादर्शी ब्राह्मणएव वृषलशब्देन ग्रहीतव्यइतिअतोवृषलत्वंमा प्रापमिति ध-र्मंनलोपयेन्ननाशयेदिति वृषलत्वाध्यारोपोनिन्दा॥ १६॥

( २ ) **सर्वज्ञनारायणः**। वृषोधर्मइष्टार्थवर्षणात्। अलं व्यर्थत्वं निषेधंवा। वृषलंतंविदुरतःसोपि शूद्रादिवृषलव-न्निन्द्यः॥ १६॥

( ३ ) **कुल्लूकः**। कामान्वर्षतीति वृषः वृषशब्देन धर्मएवाभिधीयतइति। अलंशब्दोवारणार्थः यस्माद्धर्मस्य योवा-रणंकरोति तंदेवावृषलंजानन्ति न जातिवृषलम्। तस्माद्धर्मंनोच्छिंद्यादिति धर्मव्यतिक्रमखण्डनार्थंवृषलशब्दार्थनिर्वचन-म्॥ १६॥

( ४ ) **राघवानन्दः**। धर्मस्यारक्षणे किंस्यात्तत्राह वृषेति। वृषःप्रवर्षत्यर्थकाममोक्षानिति। अलंशब्दोवारणार्थः। तेन धर्मस्य वारणात्तंवृषलंशूद्रं गवाशिचण्डालंवा विद्यादित्यन्वयः॥ १६॥

( ५ ) **नन्दनः**। सम्यग्व्यवहारादर्शिनांशूद्रसमत्वंवृषलशब्दनिर्वचनेनाह वृषोहिभगवानिति। हि हेतौ तस्माद्धर्मंलो-पयेदिति॥ १६॥

( ६ ) **रामचन्द्रः**। तस्य धर्मस्य यः अलं निवारणं लोपम्॥ १६॥

**एकएव सुहृद्धर्मोनिधनेऽप्यनुयाति यः॥ शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥ १७॥**

( १ ) **मेधातिथिः**। भयाद्धर्मातिक्रमोनकर्तव्यइत्येतद्धर्मएव हतोहन्तीत्यनेनोपदिष्टंस्नेहतोन कर्तव्यइत्यनेनोप-दिश्यते यतएकः सुहृद्धर्मस्तत्र स्नेहोभावनीयः अन्योहि मनुष्यः सुहृत्कार्यमपेक्ष्य जहाति जीवनं योपि स्यादत्यन्तमि-त्रंतस्यापि सौहार्दमनिधनात्। धर्मस्तु मृतमपि पुरुषमन्वेत्यतोन सुहृदपेक्षया मिथ्यादर्शननुपेक्षाकर्तव्या॥ भार्यापुत्रोमि-त्रमर्थाश्चरिक्थंनश्येन्त्यंतेदेहनाशेनरस्य। धर्मस्त्वेकोनैनमुज्झत्यजस्रंतस्माज्जह्यात्पुत्रदारान्नधर्मम्॥ यदन्यद्धर्माद्भार्यादि त-त्सर्वशरीरेण सह नाशंगच्छति धर्मादन्योमृतंन परित्रातुंकश्चित्समर्थइत्यर्थः। सुहृद्बान्धवानुरोधादपि धर्मोन हातव्यः॥ १७॥

( २ ) **सर्वज्ञनारायणः**। अनुयाति नत्यजति॥ १७॥

( ३ ) **कुल्लूकः**। धर्मएवैकोमित्रंयोमरणेऽप्यभीष्टफलदानार्थमनुगच्छति यस्मादन्यत्सर्वंभार्यापुत्रादिशरीरेणैव सहा-दर्शनंगच्छति तस्मात्पुत्रादिस्नेहापेक्षयापि धर्मोन हातव्यः॥ १७॥

---

* वादी=दर्शी ( आआ )

( ४ ) **राघवानन्दः** । अहोसर्वप्रयत्नेनधर्मोरक्षणीयइत्याह एकइति । सुहृत् प्रत्युपकारंनापेक्षतेऽथवोपकरोति अतएव ज्ञायते । धर्मोनित्यः सुखदुःखेत्वनित्ये इति ॥ अहोकष्टंयदेतादृशंधर्मंजनानपालयन्तीत्याह शरीरेणेति स्थूलेन । प्रत्यक्षंह्येतत्सर्वंधनजायादि तदुक्तम् ॥ भार्यापुत्रोमित्रमर्थाविचित्रानश्यन्त्येतेदेहनाशेनरस्य । धर्मस्त्वेकोनैनमुञ्झत्यजस्रंतस्माज्जह्यात्पुत्रदारंनधर्ममिति ॥ १७ ॥

( ५ ) **नन्दनः** । कुतश्च धर्मनलोपयेदित्याह एकएवेति । अनुयाति कर्त्तारंरक्षति । यद्यमादिति यावत् । अन्यत्पुत्रमित्रादिकर्म । हिशब्दोहेतौ तस्मान्नलोपयेदिति ॥ १७ ॥

( ६ ) **रामचन्द्रः** । एकएव धर्मःसुहृद्रूपः यः निधने मरणे अति नुयाति अनुपश्चाद्गच्छति । अन्यत्तु सर्वं शरीरेण समं नाशं गच्छति ॥ १७ ॥

**पादोधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति ॥ पादः सभासदः सर्वान्पादोराजानमृच्छति ॥ १८ ॥**

( १ ) **मेधातिथिः** । नचैषा मनीषा कर्तव्यार्थिना प्रत्यर्थिना वान्यतरस्य भूम्याद्यपह्नीयते सएव भूम्यपहारदोषभाग्भविष्यति वयन्तु तदकारिणः किमितिदोषवन्तःस्यामोयतस्तस्यायंचतुर्धा विभज्यते अर्थवादश्चायं नह्यन्यकृतस्यैनसोन्यत्र गमनमस्ति तेषामपि मिथ्यादर्शननिषेधादुत्पद्यते पापंमिथ्यालंबनं राज्ञःस्वयमपश्यतोप्यधिकृतराजस्थानीयादिदोषाद्दोषवत्त्वं यदि राजाधिकृतोमिथ्याचरितेन ज्ञापितः पराजितंदुष्टंनगृह्णीते नचपुनःसम्यङ्निर्णयंकरोति ततः सोपि पापभाग्भवति । अधिकृतोपलक्षणार्थंवा राजग्रहणं यदा राजा स्वयंमिथ्या पश्यति तदा दुष्यति यदा राजस्थानीयस्तदा तस्य दोषइत्यर्थः ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । अधर्मस्य कृतस्य पादोयावताभवतितावद्भागः कर्तारंमिथ्याशाद्धिमृच्छति याति । एवमुत्तरत्र ॥ १८ ॥

( ३ ) **कुल्लूकः** । दुर्व्यवहारदर्शनादधर्मसंबन्धीचतुर्थभागोऽर्थिनमधर्मकर्त्तारंप्रत्यर्थिनंवा गच्छति परश्चतुर्थभागः साक्षिणमसत्यवादिनम् । अन्यपादः सभासदः सर्वानधर्मप्रवृत्त्यनिवारकान्प्याप्नोति । पादश्च राजानंव्रजति सर्वेषांपापसंबन्धोभवतीत्यत्र विवक्षितम् ॥ १८ ॥

( ४ ) **राघवानन्दः** । वृषपदसूचितधर्मप्रतियोगितयाऽधर्मस्यापि चतुष्पात्त्वंप्रकटयन् तत्कार्यमाह पादइति । सभांगच्छन्ति कचित्तत्रैवाधर्मेणावसीदन्तीतिवा सभासदः । सभापूर्वसदेरूपम् ॥ १८ ॥

( ५ ) **नन्दनः** । सम्यग्व्यवहारादर्शने परकृतस्याधर्मस्यांशभागिनआह पादोधर्मस्य कर्त्तारमिति ॥ १८ ॥

**राजा भवत्यनेनास्तु मुच्यन्तेच सभासदः ॥ एनोगच्छति कर्त्तारंनिन्दार्होयत्र निन्द्यते ॥ १९ ॥**

( १ ) **मेधातिथिः** । एषएवार्थोविपर्ययेणोच्यते यत्र दोषवान् दोषंगोपयितुं न लभते प्रकटीक्रियते तदीयोदोषस्तत्र सर्वसाधुसंपद्यतइति । यत्र धर्मइत्यतआरभ्य मिथ्यादर्शनोपेक्षणप्रतिषेधार्थेनिन्दाप्रशंसाभ्यां शुभाशुभफलदर्शनार्थाअर्थवादाः ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । मुच्यन्तेचेति चकारात्साक्षिणोपि ॥ १९ ॥

( ३ ) **कुल्लूकः** । यस्यां पुनः सभायामसत्यवादी निन्दार्होऽर्थीप्रत्यर्थीवा सम्यक्न्यायदर्शनेन निन्द्यते तत्र राजा निष्पापोभवति । सभासदश्च पापेन न संबध्यन्ते । अर्थ्यादिकमेव कर्त्तारंपापमुपैति ॥ १९ ॥

---

( १९ ) एनोगच्छतिकर्त्तारम्=पादोधर्मस्यकर्त्तारम् ( घ )

( ४ ) **राघवानन्दः**। तत्प्रतीकारमाह राजेति। निन्द्यते राजसभासदैर्यस्तन्निन्दनमेव तेषांप्रायश्चित्तम्। राजा अनेनाः पापान्मुक्तः। राजेतिसाक्षिसभासदानामुपलक्षणम्। एनः पापं कर्तर्येव स्यादितिभावः॥ १९॥

( ५ ) **नन्दनः**। तत्रायंपरिहारइत्याह राजेति। येमुच्यन्ते एनसा यत्र सभायाम्॥ १९॥

( ६ ) **रामचन्द्रः**। न एनः यस्यास्तीअनेनाःराजाभवति। नयार्थःयत्रनिन्द्यते॥ १९॥

**जातिमात्रोपजीवी वा कामंस्याद्ब्राह्मणब्रुवः॥ धर्मप्रवक्ता नृपतेर्नतु शूद्रः कथंचन॥ २०॥**

( १ ) **मेधातिथिः**। उक्तंब्राह्मणैः सह धर्मनिर्णयंकुर्यात्त्रिभिश्च मन्त्रज्ञैः तत्र मन्त्रिणाञ्जातेरविशेषितत्वाच्छूद्राअपि सभांप्रविष्टामन्त्रित्वादनुज्ञातव्यवहारनिर्णयास्तद्गतांधर्मव्यवस्थांकथंचित्संस्कृतबुद्धयोब्रूयुः नच सर्वत्र व्यवहारंकृतबुद्धयोब्रूयुः नच सर्वत्र व्यवहारे स्मृतिशास्त्रपरिज्ञानमुपयुज्यते येन तदभावादर्थलुप्तत्वादनर्थकः शूद्रप्रतिषेधआशङ्क्येत तथाहिजयपराजयकारणानिलौकिकप्रमाणवेद्यान्येव साक्ष्यादीनि अयंसाक्षी धार्मिकोनचैतस्यं[1] केन चित्संबन्धेन संबन्धी अयंत्वसाक्ष्यसकृद्दष्टव्यभिचारत्वादित्येवमादि शक्यते व्युत्पन्नबुद्धिना स्वयमुत्प्रेक्षितुं न स्मृतिशास्त्रैकगोचरः अतः प्राप्तस्य प्रतिषेधोयं नच मन्त्रित्वे पुरोहितवज्जातिनियमः तथाहि तैः सार्धंचिन्तयेदित्युक्त्वा ततोब्राह्मणेन सह चिन्तयेदिति तेनायमर्थोयद्यपि कथंचिच्छूद्रोन्यायलेशांशमधिगच्छेत्तथापि राजाधिकरणे विवदतोमन्त्रीनिग्रहाधिकृतोवा न किंचित्प्रब्रूयात्। पूर्वश्लोकार्थप्रतिषेधः शेषतया व्याख्येयः। नहि जातिमात्रोपजीविनोवैदुष्यादिगुणरहितस्य धर्मप्रवक्तृत्वनियोगःशक्योवक्तुंतस्यैव रूपपरीक्षायां तस्माद्विषंभक्षयमाचास्यगृहेभुक्था[2]इतिवत्प्रतिषेधशेषभूतमिदमनुज्ञानंन पुनरनुज्ञानमेव अतएव काममित्याआह कामशब्दप्रयोगे विधित्वंव्याहन्यते। अन्ये तु ब्रुवते। ब्राह्मणस्य प्रवक्तृत्वविधानात्तदा नियोज्योविद्वान्स्याद्ब्राह्मणइति क्षत्रियादयस्तत्रापि वर्णानिषिद्धास्तत्रेह पुनः शूद्रप्रतिषेधोविद्वद्ब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थइति शेषंसमानं जातिमात्रमुपजीवतीति मात्रशब्दोवधारणे ब्राह्मणजातिमेव केवलमुपाश्रित्य जीवति नाध्ययनादीन्गुणविशेषान्निर्गुणत्वात्। ब्रुवशब्दःकुत्सायां॥ २०॥

( २ ) **सर्वज्ञनारायणः**। जातिमात्रोपजीवी जात्याब्राह्मणः संस्काररहितः सएव संस्कृतोऽनध्येता ब्राह्मणब्रुवः। नतुशूद्रइति ब्राह्मणब्रुवस्याप्यसंभवे क्षत्रियवैश्यावपि स्यातामित्येतदर्थम्॥ २०॥

( ३ ) **कुल्लूकः**। ब्राह्मणजातिमात्रंयस्य विद्यते नतु ब्राह्मणकर्मानुष्ठानं वणिगादिवत्साक्ष्यादिद्वारेण स्फुटन्यायान्यायनिरूपणक्षमोब्राह्मणजातिरपि वा यस्य संदिग्धार्थानां* ब्राह्मणंब्रवीति सवरं उक्तयोग्यब्राह्मणाभावे च क्वचित्कार्यदर्शने नृपतेर्भवेन्नतु धार्मिकोपि व्यवहारज्ञोपि शूद्रः। ब्राह्मणोधर्मप्रवक्तेति विधानादेव शूद्रनिवृत्तिः सिद्धा पुनर्नतु शूद्रइति शूद्रनिषेधोयोग्यब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थः अतएवकात्यायनः॥ यत्रविप्रोन विद्वान्स्यात्क्षत्रियंतत्र योजयेत्। वैश्यंवा धर्मशास्त्रज्ञंशूद्रंयत्नेन वर्जयेत्॥ २०॥

( ४ ) **राघवानन्दः**। उक्तगुणवद्विप्रालाभे तादृक् शूद्रोपिसभ्यः स्यादितिमन्वानं सार्थवादं प्रत्याह जातीतिद्वाभ्याम्॥ ब्राह्मणोयत्र नस्यात्तु क्षत्रियंतत्र योजयेत्। वैश्यंवाधर्मशास्त्रज्ञंशूद्रंयत्नेन वर्जयेत् इतिकात्यायनोक्तेः॥ जा-

---

१ नचैतस्य=नाध्ययनवान्नचैतस्यं ( आ आ ) २ चा=ण ( आ आ )
३ क्था=क्त्वा ( आ आ ) * यस्यसंदिग्धार्थानाम्=यंसंदिग्धात्मा ( अ )

तिमात्रोपजीवी जात्या ब्राह्मणोनतुकर्मणा । जातिसंदेहेपि ब्राह्मणोहमिति ब्रवीतीति ब्राह्मणब्रुवः । सोपि धर्मप्रवक्ता अनेन जितमनेन नेति विचारकः ॥ २० ॥

( ५ ) **नन्दनः** । एवंतावद्व्यवहारदर्शने ब्राह्मणस्याधिकारित्वंतस्यासम्यग्दर्शने दोषश्च प्रतिपादितः इदानींब्राह्मणाभावे क्षत्रियादयोव्यवहारदर्शनेऽधिकर्तव्याइतिचेत्तत्राह जातिमात्रोपजीवीवेति । कथञ्चन आपद्यपि । शूद्रस्यैव निषेधात्क्षत्रियवैश्ययोरापद्यनुज्ञा गम्यते ॥ २० ॥

( ६ ) **रामचन्द्रः** । नृपतेर्धर्मप्रवक्ता जातिमात्रोपजीवी संस्काररहितः ब्राह्मणः कामं अतिशयेन स्यात् । ब्राह्मणब्रुवः संस्कारसहितोवा धर्मप्रवक्ता स्यात् । नतु शूद्रः कथंचन ॥ २० ॥

**यस्य शूद्रस्तु कुरुते राज्ञोधर्मविवेचनम् ॥ तस्य सीदति तद्राष्ट्रं पङ्केगौरिव पश्यतः ॥ २१॥**

( १ ) **मेधातिथिः** । पूर्वविधिशेषोयमर्थवादः । यस्य राज्ञः शूद्रोधर्मविवेचनं धर्मनिर्णयंकरोति तस्य सीदति नश्यति राष्ट्रंप्रजाः कर्दमे गौरिव ‡ ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । पश्यतोराज्ञः ॥ २१ ॥

( ३ ) **कुल्लूकः** । यस्मात् यस्येत्यादि यस्य राज्ञोधर्मविवेचनंशूद्रः कुरुते तस्य पश्यतएवपङ्केगौरिव तद्राष्ट्रमवसन्नंभवति ॥ २१ ॥

( ४ ) **राघवानन्दः** । शूद्रकृते विचारे दृष्टदोषमाह यस्येति । पश्यतोराज्ञः रक्षकस्यापीत्यनादरे षष्ठी । तृणाद्यलाभेन यथा पङ्कस्था गौः सीदत्येवं शूद्रविचारजधर्मेण राज्यंनश्यतीतिभावः ॥ २१ ॥

( ५ ) **नन्दनः** । शूद्राधिकारे कोनर्थइति चेत्तत्राह यस्य शूद्रःप्रकुरुतइति ॥२१ ॥

( ६ ) **रामचन्द्रः** । यस्य राज्ञः धर्मप्रवचनं धर्मनिर्णयं शूद्रः कुरुते ॥ २१ ॥

**यद्राष्ट्रंशूद्रभूयिष्ठंनास्तिकाक्रान्तमद्विजम् ॥ विनश्यत्याशु तत्कृत्स्नंदुर्भिक्षव्याधिपीडितम् ॥ २२॥**

( १ ) **मेधातिथिः** । अयमपि पूर्ववदर्थवादएव । प्रकरणाच्च शूद्रभूयिष्ठता विवादनिर्णये तु शूद्रविषया द्रष्टव्या यत्र शूद्राभूयांसोविवादनिर्णयकारास्तद्राष्ट्रमाशु विनश्यति दुर्भिक्षव्याधिपीडाभिः राष्ट्रनाशेच राष्ट्रपतेर्नाशइत्युक्तंभवति । नास्तिकाक्रान्तमिति दृष्टान्तः यथा नास्तिकैः परलोकापवादिभिर्लौकायतिकाद्यैराक्रान्तमधिष्ठितमद्विजं नहि नास्तिकानांब्राह्मणादिभेदोयथार्थः संकीर्णत्वात् तदुक्तंवैद्यवणिग्व्यपदेशादिवद्ब्राह्मणादयः यत्र वा धर्मसंकटे तु न द्विजा प्रमाणीक्रीयन्ते तदद्विजम् ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । शूद्रभूयिष्ठमित्यादि त्रयं पृथक् पृथक् ॥ २२ ॥

( ३ ) **कुल्लूकः** । यद्राष्ट्रंशूद्रबहुलंबहुलपरलोकाभाववाद्याक्रान्तंद्विजशून्यंतत्सर्वंदुर्भिक्षरोगपीडितंतच्छीघ्रंविनश्यति अग्नौ प्रास्ताहुतिःसम्यगित्यस्याभावेन वृष्टिविरहात् । उपजातदुर्भिक्षरोगाद्युपसर्गशांत्यर्थकर्माभावाच्च ॥ २२ ॥

( ४ ) **राघवानन्दः** । अत्रैव प्रासंगिकमाह यदिति । अद्विजं द्विजशून्यम् । शूद्रबाँहुल्यतोपि यदि नास्तिकास्तैराक्रान्तं तथापि नश्यतीत्यन्वयः ॥ २२ ॥

---

‡ गौरिव=गौरिवपश्यतःअवलोकयतः ( आ आ ) *शूद्रबाहुल्यतोऽपि=तेऽपि ( राघ०४ )

( ५ ) नन्दनः । न केवलंव्यवहारदर्शनएव । शूद्राधिकाराद्राष्ट्रावसादः किन्तुअन्यत्रापि तदधिकारप्राधान्यादिति- प्रसङ्गादाह यद्राष्ट्रमिति । शूद्रभूयिष्टंशूद्राधिकारप्रधानं अतएव नास्तिकाक्रान्तमतएवाद्विजम् ॥ २२ ॥

धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ॥ प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥ २३॥

( १ ) मेधातिथिः । धर्मप्रधानं[1]यस्मिन्नासनं[2]भवति तद्धर्मासनं राजासने हि राज्यस्थित्यानुगुण्येनार्थमेव प्रधानीक- रोति न्यक्कृत्यापि धर्मं व्यवहारनिर्णये तु धर्ममेव प्रधानंश्रेयं[3]इत्यर्थो न पुनरासनधर्मोनेन ज्ञाप्यते । संवीताङ्गः वस्त्रादिना स्थगितशरीरः प्रणम्य लोकपालेभ्यइन्द्राद्यष्टौ लोकपालास्तान्नमस्कृत्य कार्यदर्शनमारभेतेत्यदृष्टार्थमेतद्वयं अङ्गसंवरणं लोकपालप्रणामश्च । समाहितः अनन्यचित्तः कार्यदर्शने एवंहिदृष्टार्थं भवति । प्रणामविशेषणंवा समाहितग्रहणंयद्यप्यत्र किंचिदुक्तमेव प्रतिभाति तथापि पद्यग्रन्थत्वान्नातीवपौनरुक्त्यम् । लोकपालेभ्यइति चतुर्थीसंप्रदाने कथंक्रियाग्रहणंसंप्रदा- नसूत्रेचोदितंश्राद्धायँ[4] निगृह्णते पत्येशेतइत्याद्यर्थं नचक्रियाग्रहणंगृह्णात्यादिविषयमेव भाष्येऽनुक्तत्वात् ॥ २३ ॥

( २ ) सर्वज्ञनारायणः । धर्मार्थमासनं धर्मासनम् ॥ २३ ॥

( ३ ) कुल्लूकः ।धर्मदर्शनार्थमासनउपविश्याऽऽच्छादितदेहोऽनन्यमनालोकपालेभ्यः प्रणामंकृत्वा कार्यदर्शनमनुति- ष्ठेत् ॥ २३ ॥

( ४ ) राघवानन्दः । सभारूढः कथं व्यवहरेदित्याह धर्मेतिद्वाभ्याम् । धर्मासनं धर्मादिनिर्णयार्थमास्यतेऽत्रेति सभा तां आसीनःसंस्थितइयुक्तत्वात् । समाहितोऽनन्यमनाः । कार्यमुक्ताष्टादशाख्यं तस्य दर्शनं विचारः ॥ २३ ॥

( ५ ) नन्दनः । इदानींव्यवहारदर्शिना राज्ञा कर्तव्यमाह धर्मासनमधिष्ठायेति । उत्तरीयेण संवीताङ्गः ॥ २३॥

( ६ ) रामचन्द्रः । संवीताङ्गःसंकुचिकीभवत्येव ॥ २३ ॥

अर्थानर्थावुभौ बुध्वा धर्माधर्मौ च केवलौ ॥ वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥ २४ ॥

( १ ) मेधातिथिः । धर्माधर्मावेव केवलावर्थानर्थौ न गोहिरण्यादिलाभोर्थस्तद्विपर्ययोवानर्थः किंतर्हि धर्मएवार्थो- ऽनर्थश्चाधर्मइति बुद्ध्वा हृदि निश्चित्यकार्याणि पश्येत् अथवार्थानर्थावपि शोध्यौ धर्मावपि धर्मस्य सारता बोद्धव्यार्थस्य फल्गुता । अथवा यत्र माहाननर्थः स्वल्पश्चाधर्मस्तत्रानर्थं परिहरेत् । शक्योहिमहतार्थेनेषदधर्मोदानप्रायश्चित्तादिना निराकर्तुम् । सन्निपाते च व्यवहारिणांबहूनांवर्णक्रमआश्रयितव्यः एषच दर्शने क्रमोवर्णानां यदार्थे तुल्यपीडाभवन्ति यदा त्ववरवर्णस्याप्यात्यायिकंकार्यंमहद्वा तदा यस्य चात्ययिकापीडेत्यनेन न्यायेन तदेव प्रथमंपश्येत् न क्रममाद्रीयेत राज्यस्थित्यर्थोहि व्यवहारनिर्णयइत्युक्तमतोन यथा श्रुतमादरणीयम् ॥ २४ ॥

( २ ) सर्वज्ञनारायणः । अर्थःप्रयोजनंयस्यतस्यार्थित्वं अनर्थोलाभोयस्यतस्यप्रत्यर्थित्वं मात्राधिकोनात्रेतिबुध्वा धार्मिकस्य कार्यंप्रथमंद्रष्टव्यम् । अधर्मोधर्माभावमात्रम् । केवलावसंकीर्णौ वर्णक्रमेणेतिच ब्राह्मणस्य दृष्ट्वा ततोराजन्य- स्येत्यादिएतदभावे धार्मिकत्वेन व्यवस्था । तस्याप्यभावेऽर्थित्वेन ॥ २४ ॥

---

१ नं=नो ( आ आ ) २ नं=ने ( आ आ ) ३ श्राद्धायनि=पश्चाद्धापि न ( आ आ ) ४ श्रेयः=आ- श्रयेत् ( आ आ )

( ३ ) **कुल्लूकः** । प्रजारक्षणोच्छेदाद्यात्मकावैदिकावर्थानर्थौ बुध्वा परलोकार्थंधर्माधर्मौ केवलावनुरुध्य यथा विरोधोन भवति तथा कार्यार्थिनांकार्याणि पश्येत् । बहुवर्णमेलके तुब्राह्मणादिक्रमेण पश्येत् ॥ २४ ॥

( ४ ) **राघवानन्दः** । तत्रच अर्थानर्थौ प्रजारक्षणोत्सादनात्मकौ ऐहिकामुष्मिकावर्थानर्थौवा बुध्वा । परलोकार्थंधर्माधर्मावपेक्ष्य वर्णक्रमेण चातुर्वर्ण्योपस्थितविरोधे ब्राह्मणादिक्रमेण दृष्टविरोधंपरित्यत्य ब्राह्मणादिक्रमेणधर्मंपश्येदित्यन्वयः ॥ २४ ॥

( ५ ) **नन्दनः** । अथ व्यवहारपरिभाषा तत्र युगपत्कार्यनिर्णये प्राप्ते क्रममाह अर्थानर्थाविति । वर्णक्रमेण प्रथमंब्राह्मणानांकार्यंपश्येत् तेष्वप्यर्थानर्थौ प्रथमंसौम्ये धर्माधर्मौ केवलौ कृत्स्नौ । ब्राह्मणकार्यदर्शनानन्तरंक्षत्रियादीनांकार्याणि क्रमेण पश्येत् ॥ २४ ॥

( ६ ) **रामचन्द्रः** । केवलौ अर्थादिहीनौ ॥ २४ ॥

## बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ॥ स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ २५ ॥

( १ ) **मेधातिथिः** । तथा चेदमाह अनुमानेनापि सत्यानृतवादिता व्यवहारतः साक्षिणांनिश्चेतव्याइति श्लोकार्थः । अतश्च स्वरादिग्रहणंप्रदर्शनार्थं तेन निश्चितलिङ्गेनैव परिछिन्द्यादित्युक्तंभवति न पुनः स्वरादिभिरेव सव्यभिचारित्वात्तेषां अनुचितप्रवेशाहि महाप्रकृतिदर्शनेन सत्यकारिणोपि स्वभावतोविक्रियन्ते प्रगल्भास्तु संवृताकाराभवन्ति स्वरश्च वर्णश्चेङ्गितंच स्वरवर्णेङ्गितानि तेषामाकाराः स्वरवर्णेङ्गिताकाराः आकारोविकारः स्वाभाविकानांहि स्वरादीनामन्यथात्वंतैर्विभावयेन्निश्चिनुयाद्भावमभिप्रायमन्तर्गतंमनुष्याणांविवादिसाक्ष्यादीनांतत्र स्वरस्य विकारोवाचिगद्गदरुदितादि वर्णस्यगात्ररूपविपर्ययादि इङ्गितंस्वेदवेपथुरोमाञ्चादि चक्षुषा संभ्रमक्रोधदृष्टिपातेन चेष्टितेन हस्तनिक्षेपभ्रूविक्षेपादिस्वसंवेद्यंचैतत् । यद्गुह्यमानमप्यभिप्रायंस्वरादयः प्रकाशयन्ति निपुणतोलक्ष्यमाणाः यतः प्रसिद्धमेतेषांगूढाभिप्रायप्रकटनसामर्थ्यम् ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । विभावयेत् जानीयात् । वर्णाः रक्तगौरादिः । इङ्गितमभिप्रायसूचकंदेहवैकृत्यमबुद्धिपूर्वकंबाहुकम्पादि । आकारः स्वरादिः । चक्षुषा स्निग्धादिना चेष्टितेन । तद्बुत्धिकृतशरीरावयवशरीरयोश्चलनेन । एतच्च बाह्यप्रपञ्चनम् ॥ २५ ॥

( ३ ) **कुल्लूकः** । बाह्यैः स्वरादिलिङ्गैरित्यभिधानादेवावधारितव्यापारैः अर्थिप्रत्यर्थिनामन्तर्गतमभिप्रायंनिरूपयेत् । स्वरोगद्गदादिः । वर्णः स्वाभाविकवर्णादन्यादृशोमुखकालिमादिः । इङ्गितमधोनिरीक्षणादिः । आकारोदेहभवस्वेदरोमाञ्चादिः । चेष्टाहस्तस्फालनादिः ॥ २५ ॥

( ४ ) **राघवानन्दः** । किंच भावंअन्तर्गतधर्माधर्मं तद्विषयाभिप्रायंवा । लिङ्गैःअनुमानैः । लिङ्गैरित्यस्य विवरणंस्वरेत्यादि । स्वरोवितथाभिधानं गद्गदादिर्वा वर्णः सहजवर्णातिरिक्तमुखकालिमादिः इङ्गितमधोनिरीक्षणादि एतैरेव मनोगतं व्यक्तं स्यादिति विभावयेन्निश्चिनुयात् ॥ २५ ॥

( ५ ) **नन्दनः** । दुष्टादुष्टपरिज्ञानोपायमाह बाह्यैर्विभावयेदिति । उत्तरार्द्धेन बाह्यानि लिङ्गान्येव व्याकरोति । आकारःस्वेदरोमाञ्चकंपादियुक्तमङ्गम् ॥ २५॥

( ६ ) **रामचन्द्रः** । कार्यिणांनृणां बाह्यैर्लिङ्गैः भावं विभावयेत् जानीयादित्यर्थः ॥ २५ ॥

---

१ वा=च ( राघ०४ )

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥ नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ २६ ॥

( १ ) **मेधातिथिः** । तथाहि लोके दृष्टशक्तितोऽनेन श्लोकेन स्वरादीनांपूर्वोक्तार्थाधिगमेन दर्शयतीत्यपौनरुक्त्यं तत्राक्रियन्तेविक्रियन्तइत्याकाराइङ्गितादयःइङ्गितंव्याख्यातं व्यक्तिभेदाद्बहुवचनम् । गतिः पूर्वश्लोकादत्राधिका सा प्रस्खलन्तीस्वभावतोन्यथाभूता भाषितंपौर्वापर्यविरुद्धंवचनं वक्त्रविकार आस्यविशेषादिः शेषंपूर्वश्लोकएवव्याख्यातम् । एतैर्विकृतैरन्तर्गतंचित्तंलौकिकैरन्यत्रापि गृह्यतइतिसमासार्थः ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रयुक्तिमाह आकारैरिति । गत्या शरीरगमनेन । चेष्टया अवयवचलनेन ॥ २६ ॥

( ३ ) **कुल्लूकः** । यस्मात् आकारैरिति आकारादिभिः पूर्वोक्तैः गत्या स्खलत्पादादिकया अन्तर्गतमनोबुद्धिरूपेण परिणतमवधार्यते ॥ २६ ॥

( ४ ) **राघवानन्दः** । निगमनेन पूर्वोक्तानां स्वरादीनां दृष्टशक्तितामाह आकारैरिति । गत्या स्खलितपदतया देशान्तरादिना । तदुक्तं याज्ञवल्क्येन ॥ देशाद्देशान्तरं याति सृक्किणी परिलेढि वा । ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ परिशुष्यत्स्खलद्वाक्योविरुद्धं बहुभाषते । वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ स्वभावाद्विकृतिं गच्छेद्वाङ्मनःकायकर्मभिः । अभियोगे तथा साक्ष्ये दुष्टः सपरिकीर्तितइति ॥ नोपूजयति पूर्ववन्नसत्करोति वाचा नोत्तरं दत्ते चक्षुषा दर्शनासमर्थः निर्भुजति सततं कुटिलीकरोतीतियाज्ञवल्क्यवचनार्थः ॥ २६ ॥

( ५ ) **नन्दनः** । न केवलंव्यवहारदर्शनएव बाह्यनिर्णयलिङ्गैर्भावनिर्णयः किन्तु अन्यत्रापीत्याह आकारैरिङ्गितैरिति ॥ २६ ॥

( ६ ) **रामचन्द्रः** । अन्तर्गतंभावंहृदयेस्थितंभावंजानीयात् ॥ २६ ॥

बालदायादिकं रिक्थं तावद्राजानुपालयेत् ॥ यावत्सस्यात्समावृत्तोयावच्चातीतशैशवः ॥ २७ ॥

( १ ) **मेधातिथिः** । ननुच व्यवहारदर्शनंवक्तव्यतयाप्रस्तुतं तत्र कः प्रसङ्गोबालधनरक्षायाः उच्यते विवादपदतामेवैतद्विषयान्निवर्तयितुमिदमारभ्यतेबालधनंस्वधनवत्परिपालनीयं अन्यथा पितृव्यादिबान्धवामयेदंरक्षणीयंमयेदमिति विवदेरन् नचान्यः प्रसङ्गोस्ति आशङ्क्यमानव्यवहारत्वाच्च न केवलेषु राजधर्मेषूपदिश्यते अतोन्यस्मिन्नेवावसरे वक्तव्यम् । बालोदायादोस्य बालदायादिकं दायादः स्वाम्यत्रोच्यते बालस्वामिकंधनंतावद्राजारक्षेद्यावदसौ समावृत्तोगुरुकुलात्प्रत्यागतोयावच्चातीतशैशवआ*समावर्तनात्प्रतिपाल्यधनः स्यात् । अथवा द्विजातीनांसमावर्तनमवधिरन्येषांशैशवात्ययः ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । बालोदायादोभागी यस्यतत्तथा । अनुपालयेत् स्वगोचरीकृत्य स्थापयेत् । समावृत्तः षट्त्रिंशदब्दादिषु । तन्मध्येचेद्धनेन कार्यं तदा यावद्धेत्यवध्यन्तरम् । शैशवं षोडशाब्दात्प्राक् ॥ २७ ॥

( ३ ) **कुल्लूकः** । अनाथबालस्वामिकंधनंपितृव्यादिभिरन्यायेन गृह्यमाणंतावद्राजा रक्षेत् यावदसौ षट्त्रिंशदब्दादिकंब्रह्मचर्यमित्याद्युक्तेन प्रकारेण गुरुकुलात्समावृत्तोन भवति तादृशस्यावश्यकबाल्यविगमात् । यस्त्वशक्त्यादिना बालए-

---

* शैशवआसमा=शैशवः अतिक्रान्तबालभावः अयंच विकल्पो यो गृहशैशवोभवति तदर्थं मतीतशैशवइत्युच्यते यस्तुव्रतकः सन्निवृत्तेपि शैशवे आसमा ( आ आ )

व समावर्त्तते सोऽपियावदतीतबाल्योभवति तावत्तस्य धनंरक्षेत्। बाल्यंच षोडशवर्षपर्यंतम् बालआषोडशाद्वर्षादिति नारदवचनात् ॥ २७ ॥

( ४ ) **राघवानन्दः** । प्रातिनिध्यं विचार्य प्राधानिकं राजकृत्यं सप्रसंगं दायविषयमाह बालेति श्लोकानांविंशत्या। बालदायादिकं अनाथबालस्वामिकं पितृव्यादिभ्योनुपालयेत् रक्षयेत्। समावृत्तोगुरुकुलाद्यावदायाति अतीतशैशवः शूद्रादिर्वा यावत्तावत् ॥ २७ ॥

( ५ ) **नन्दनः** । बालधनविप्रतिपत्तौ कर्तव्यमाह बालदायादिकमिति। दायमादत्तइति दायादः स्वामी। यस्य बालोदायादःतद्बालदायादिकंरिक्थंधनंज्ञात्याद्यपहरतोनुपालयेत्। कार्यादिसामर्थ्यापेक्षयाव्यवस्थापनीयोविकल्पः ॥ २७ ॥

( ६ ) **रामचन्द्रः** । बालस्य बन्धुरहितस्य दायादिकंरिक्थं अंशं तावत् अनुपालयेत् यावत्सबालः समावृत्तः लब्धानुज्ञो भवेत्। लब्धानुज्ञःसमावृत्त इत्यमरः ॥ २७ ॥

**वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥ पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ २८ ॥**

**[ एवमेव विधिः कुर्याद्योषित्सु पतितास्वपि ॥ वस्त्रान्नपानंदेयंच वसेयुश्चगृहान्तिके ॥ १ ॥**

( १ ) **मेधातिथिः** । यः कश्चिदनाथस्तस्य सर्वस्य धनंराजा यथावत्परिरक्षेत् तथा चोदाहरणमात्रं वशादयएवंप्रजापालनमनुष्ठितंभवति। पूर्वस्तु श्लोकः कालनियमार्थः वशा वन्ध्याअपुत्राऽसमर्थपुत्राऽविद्यमानपुत्रा दुर्गतपुत्रा वा वशाश्चापुत्राश्चेति द्वन्द्वः। ननुच वशाप्यपुत्रैव सत्यं उभयोपादानन्तु सत्यपि भर्त्तरि तस्याः संरक्षणार्थं तस्यां ह्यधिविन्नायां भर्ता निरपेक्षोभवति निष्कुलाग्रहणंतासांविशेषणंयासांन कश्चिद्देवरपितृव्यमातुलादिः परिरक्षकोस्ति स्त्रीत्वाच्च स्वयमसमर्थाः बान्धवास्तु मत्सरिणः तासांच तदुच्यते बन्धुभिर्हि स्त्रीणांशरीरधनानि रक्षितव्यानि तदुक्तं विनियोगोस्तिरक्षासु भरणे च सईश्वरः ॥ परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ॥ तत्सपिंडेषु वासत्सु पितृपक्षःप्रभुःस्त्रियाः ॥ पक्षद्वयावसाने तु राजा भर्त्ता प्रभुस्त्रियः सा तु स्वयमेव कथंचिच्छक्ता न तत्रबान्धवानांव्यापारोस्ति अतएवाह आतुरास्विति। असामर्थ्यमेतेनलक्ष्यते अन्यैस्त्वातुरभर्तृकाआतुराव्याख्याता अविधवापि भर्तुरसामर्थ्याद्राज्ञैव रक्ष्यास्यादितिनिर्मनुष्याणामे तत् कुलंबन्धुजातंयासांनास्ति ताः निष्कुलाः अन्येतु कुटिलांनिष्कुलामाहुः तासामपि वशाद्युपार्जितंधनंराज्ञा रक्ष्यम् अस्मिश्चपक्षे स्वतन्त्रनिष्कुलाग्रहणम् पतिव्रतासु विधवासु मृतभर्तृका विधवा धवइति भर्तृनाम तद्विरहिता विधवा यावत्पतिव्रता भवति तदा सा रक्ष्यधना व्यभिचारेतुस्त्रीधनानर्हत्वंस्मृत्यंतरे पठ्यते ॥ अपकारक्रियायुक्ता निर्लज्जाचार्थनाशिका। व्यभिचाररता या च स्त्रीधनंनतु साहर्तीति ॥ तस्यास्तु निष्काशनंकार्यं निष्काशनंच प्रधानवेश्मनो बहिरवस्थापनं नतु निर्वासनमेव यतः पतितानामपि तासांगृहांतरे वासोभक्ताच्छादनदानंच विहितम् ॥ २८ ॥

[ **मेधातिथिः** । भेदेन यः कश्चित्स्त्रीणांनिर्वासनविधिः स्त्रीधनद्रव्यसर्वस्वमित्यादिषु श्रूयते एवंविधएवद्रष्टव्यतया[१]पि यावद्भक्तात्सर्पणादिना*किंचिदर्जितंतदर्हत्येव न बान्धवाअपहरेयुः । इहत्वस्मिन्नेवनिमित्ते आधिवेदनंविहितं नतु स्त्रीधनापहारः। तथाह्याह मद्यपा ऽसाधुवृत्ता च प्रतिकूला च या भवेत् ॥ व्याधिताचाधिवेत्तव्याहिंसार्थघ्नीच सर्वदा ॥ अतश्च

१ व्यतया=व्यःतथा ( आआ )

* यावद्भक्तात्सर्पणादिना=भक्तोपसर्पणादि ( आआ )

मानवस्मृतिबलेन स्त्रीधनंनतु सार्हतीत्येषा स्मृतिरेव‡ व्याख्यायते ।अधिवेदनिकस्त्रीधनमेषानार्हति नैतस्यै देयमित्यर्थः । यदुक्तमधिविन्नस्त्रियैदद्यादाधिवेदनिकंसममिति तत्तु भाग्दत्तमत्याअपहर्तव्यं वयंतु ब्रूमः पुरुषद्वेषिण्याव्यभिचाररतायाश्च युक्तएवापहारः यतइहाप्युक्तं अतिक्रामेत्प्रमत्तंया मत्तंरोगार्तमेववा ॥ सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदात् विभूषणपरिच्छदैर्वियुक्ता कर्तव्येत्यर्थः ॥ १ ॥ ]

( २ ) **सर्वज्ञनारायणः** । वशा वन्ध्या । अपुत्रा मृतपुत्रा अजातपुत्रावा । तदा यावत्तत्कुल्यगोचरेणतयोर्यदिसिद्धिस्तावत्तद्वित्तंरक्ष्यं तत्पोषणंच कार्यं ते यदि निष्कुले रक्षकस्वकुल्यरहिते स्यातां तदाप्येवं यावज्जीवरक्षणं स्वगोचरेण स्थापनंच राज्ञा कार्यम् । एवंविधासुच पतिव्रतासु पत्युद्देशेन ब्रह्मचर्यादिव्रतकारिणीषुवा ॥ २८ ॥

( ३ ) **कुल्लूकः** । वशासु वन्ध्यासुकृतदारान्तरपरिग्रहः स्वामी निर्वाहार्थोपकल्पितधनोपायासु निरपेक्षः । अपुत्रासु च स्त्रीषु प्रोषितभर्तृकासु निष्कुलासु सपिण्डरहितासु साध्वीषु च स्त्रीषु विधवासु रोगिणीषु च यद्धनंतस्यापि बालधनस्येव राज्ञा रक्षणंकर्त्तव्यम् । अत्र चानेकशब्दोपादाने गोबलीवर्दन्यायेन पुनरुक्तिपरीहारः ॥ २८ ॥

( ४ ) **राघवानन्दः** । किंच वशेति । वशा वन्ध्या प्रोषितभर्तृका अपुत्रा असमर्थादिपुत्रा निष्कुला वरपितृव्यमातुलादिशून्या तासु । पतिव्रतासु असमर्थभर्तृकासु एतासु । विधवासु पतिपुत्रशून्यासु । तदुक्तम् ॥ विनियोगोस्ति रक्षासु भरणे च सईश्वरः ' परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ॥ सपिण्डेष्वपिचासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥ पक्षद्वयावसानेतु राजा भर्ता प्रभुः स्त्रियाइति ॥ आतुरासु कुष्ठाद्यभिभूतासु स्त्रीधनंरक्षणीयमिति वक्तव्ये वशाद्युपादानं गोबलीवर्दन्यायेन स्त्रीष्वितिविरोधिलक्षणयावा कुलद्यधनंनरक्षणीयमितिभावः ॥ २८ ॥

( ५ ) **नन्दनः** । वशा वन्ध्या । अपुत्रा स्त्री मृतप्रजा च । अपुत्रास्वित्येव वशायाअपि विनिग्रहे सिद्धे वशाग्रहणमादरार्थम् । निष्कुला निर्जातबन्धुः । पतिव्रता प्रोषितभर्तृका । आतुरा आतुरभर्तृपुत्रादिका रक्षणंरिक्थरक्षणं । एवंस्यात् बालदायादरिक्थरक्षणवत्स्यात् ॥ २८ ॥

( ६ ) **रामचन्द्रः** । वशापुत्रासुपुत्राभ्यांरहितासुनिष्कुलासु पतिपितृकुलरहितासु एवं रक्षणंस्यात् । च पुनः आतुरासु ॥ २८ ॥

**जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ॥ तांच्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥२९॥**

( १ ) **मेधातिथिः** । बान्धवानांस्त्रीधनमपहरतामयंचोरदण्डः तेहि बहुभिरुपायैरपहरन्ति अस्वतन्त्रैषास्त्रीकिंददाति किंभुंक्ते वयमत्र स्वामिनइति चोरदण्डोविधीयते । जीवन्तीनांतासांस्वबान्धवादेवरादयस्तद्धनंये हरेयुस्ताञ्छिष्यात् पृथिवीपतिर्निगृह्णीयात् । चौरदण्डोवक्ष्यमाणः ॥ येन येन यथाङ्गेन स्तेनोनृषु विचेष्टते । छेत्तव्यंतत्तदेवास्यत्तन्मनोरनुशासनमिति ॥ स्वबन्धुभ्यश्चैतद्विषतोरक्षितव्यं चौररक्षा तु सर्वराष्ट्रविषया विहिता ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । यदितु तासांवित्तंसंभवति तदाह जीवन्तीनामिति ॥ २९ ॥

( ३ ) **कुल्लूकः** । वयमत्रान्तराधिकारिणोरक्ष्यामइदंधनमित्यादिव्याजेन ये बान्धवास्तासांजीवन्तीनांतद्धनंगृह्णन्तितान्वक्ष्यमाणचौरदण्डेन धार्मिकोराजादण्डयेत् ॥ २९ ॥

---

‡ रेव=रेवं= ( आआ )

( ४ ) **राघवानन्दः** । नकेवलमेवं किंतु जीवन्तीनामिति । तद्धनं तासांधनं बान्धवादेवरादयश्चेद्धरेयुर्गृह्णीयुस्तान् चोरदण्डेनशिष्यादित्यर्थः ॥ २९ ॥

( ५ ) **नन्दनः** । स्त्रीधनस्य रक्षणीयप्रकरणे तदपहर्तृदण्डविधानमाह जीवन्तीनान्त्विति । स्वदेवरादयोबान्धवास्सोदरादयः । जीवन्तीनामितिविशेषणान्मृतासु बान्धवानामेव स्त्रीधने स्वामित्वंगम्यते ॥ २९ ॥

**प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ॥ अर्वाक्त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ॥ ३० ॥**

( १ ) **मेधातिथिः** । यद्द्रव्यंस्वामिनोनष्टंप्रमादात्किंचित्पथि गच्छतोभ्रष्टमरण्ये कान्तारे वा स्थापयित्वारण्यपालैरन्यैर्वा राजपुरुषैर्लब्धंराजसकाशमानीतं तद्राज्ञा स्वांरक्षांकृत्वा राजद्वारे राजमार्गे वा प्रकाशस्स्थापयितव्यं‡ यतः प्रदेशाल्लब्धंतस्मिन्नेवप्रदेशे रक्षिपुरुषाधिष्ठितंकर्तव्यंमेएवंत्रीणि वर्षाणि स्थापयितव्यं तत्रार्वाक् त्रिभ्योवर्षेभ्यो यः कारणत*आत्मीयंज्ञापयेत्तस्योद्धृतवक्ष्यमाणषड्भागादिभागकंसमर्पयितव्यं परतः स्वकोष्ठे प्रवेशनीयमिति । प्रनष्टः स्वामी यस्य ऋक्थस्य तत्प्रनष्टस्वामिकंप्रनष्टोऽविज्ञातः ऋक्थंधनं त्रयाणामब्दानांसमाहारस्त्र्यब्दंत्रिवर्षवत्त्र्यब्देडीबभावः अब्दशब्दः संवत्सरपर्यायः निधापयेत्स्थापयेत् । अर्वाक्त्र्यब्दात्पूर्वंत्रिभ्योवर्षेभ्योहरेत्स्वामी स्वीकुर्यात् अर्वाक्शब्दोऽवधौदिग्देशादिकात्पूर्वानाह। अन्येतु नृपतिर्हरेदिति भोगानुज्ञानमपारमाहुः । नहि ऊर्ध्वमपि त्रिभ्योवर्षेभ्यः परकीयस्य द्रव्यस्यापहारोयुक्तस्तस्मात्रिभ्योवर्षेभ्यऊर्ध्वमनागच्छति स्वामिनि राज्ञाभोक्तव्यं तदयंश्लोकः कथंव्याख्यानीयोयत्किंचिद्दशवर्षाणीति यदि च परकीयस्यापहारोनयुक्तइत्युच्यते भोगोपिनयुक्तः परकीयस्य वस्त्रादिवद्भुज्यमानानःयत्येव तत्रानपहारंवाचोरोयुक्ते[1]रेवापहारफलस्य सद्भावेनैव जपमुद्रादेस्तु[2] कीदृशोभोगइतिवाच्यं तस्माद्यथा श्रुतार्थत्यागे कारणमस्ति हरतिश्च गृह्णात्यर्थेऽसकृद्दृष्टप्रयोगऋक्थंहरेदित्यादौ तस्मात्परेण नृपतिर्हरेत्स्वीकुर्यादित्ययमेवार्थः ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । प्रनष्टोऽदृश्यमानः स्वामी यस्य तद्राजभृत्यैर्लब्धंधनंप्रनष्टस्वामिकं हरेत् स्वामी कृत्स्नं परेणनृपतिर्हरेत् रक्षकभागमात्रं वक्ष्यमाणम् ॥ ३० ॥

( ३ ) **कुल्लूकः** । अज्ञातस्वामिकधनंराजा कस्य किंप्रनष्टमित्येवंपटहादिनोद्घोष्य राजद्वारादौ रक्षितंवर्षत्रयंस्थापयेत् वर्षत्रयमध्ये यदि धनस्वाम्यागच्छति तदा सएव गृह्णीयात् तदूर्ध्वंतुनृपतिर्विनियुञ्जीत ॥ ३० ॥

( ४ ) **राघवानन्दः** । किंच प्रेति । प्रनष्टस्वामिकत्वे प्रनष्टं तत्संबन्धापरिज्ञानमात्रंनतु स्वामिनोऽभावः । निधापयेत् स्थापयेत् । स्वामी रिक्थस्य । अर्वाक् पूर्वम् । परेण त्र्यब्दादूर्ध्वं नृपतिर्हरेदित्यनुषज्यते ॥ ३० ॥

( ५ ) **नन्दनः** । परेण त्र्यब्दादूर्ध्वम् । अब्राह्मणस्वविषयमेतत् । ब्रह्मस्वंब्राह्मणानुश्रयेदिति स्मृत्यन्तरानुरोधात् ॥ ३० ॥

( ६ ) **रामचन्द्रः** । प्रनष्टोदेशान्तरगतः ॥ ३० ॥

**ममेदमिति योब्रूयात्सोनुयोज्योयथा विधि ॥ संवाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति ॥ ३१ ॥**

( १ ) **मेधातिथिः** । कथंपुनः स्वामीप्रनष्टे धने स्वामित्वंज्ञापयेदतआह यः कश्चिदागत्य ममेदंस्वंद्रव्यमिति ब्रूया-

---

‡ यतः=पटह घोषणेनवा कस्यकिंहारितमिति प्रकाशयितव्यम् यतः ( आ आ )   * कारणत आ=कारणमा ( आ आ )

१ स्वाचारीयुक्तैरे=रोवाचोयुक्तैरे । ( आ आ )   २ सद्भावेनैवजपमुद्रादेस्तु=शब्दायितगजतुरंगादेस्तु ( आ आ )

( ३१ ) अनुयोज्यो=अनुयुक्तो ( नं )

त्सोनुयोज्योयथाविधिःअनुयोज्यः प्रष्टव्यइत्यर्थः । कोसावनुयोगविधिः किंद्रव्यंहारितं किंरूपं किंपरिमाणं किंसङ्ख्याकं संपतितमपतितंवायदिपतितंकस्मिन्देशे तथा कुतआगमितंत्वयेत्येवंपर्यनुयोगः कर्तव्यः सयदि संवादयति रूपसङ्ख्यादीन् रूपंप्राणिवस्त्रादिविषयं शुक्लंवस्त्रं गौर्वेत्यादि तथा सङ्ख्या दशगावोवायुगानिवा आदिग्रहणाद्धस्तादिप्रमाणंसुवर्णंचेत्परिमाणं-प्रकीर्णरूपकंवा एतत्सर्वंसंवादयति तदासौ स्वामी भवति अतस्तद्द्रव्यमर्हति स्वीकर्तुंसंवादउच्यते यादृशमेकेन प्रमाणेनपरि-च्छिन्नंतादृशमेवास्यानेन परिच्छिद्यते। रूपसङ्ख्यादिग्रहणंच प्रदर्शनार्थंस्वामित्वकारणानामन्येषामपि साक्ष्यादीनाम् ॥३१॥

( २ ) **सर्वज्ञनारायणः** । रूपं नीलत्वदीर्घत्वादि । संख्यामेकादिकाम् ॥ ३१ ॥

( ३ ) **कुल्लूकः** । मदीयंधनमिति योवदति सकिंरूपंकिंसंख्याकंकुत्र मनष्टंतद्धनमित्यादिविधानेन प्रष्टव्यः ततोय-दिरूपसंख्यादीन्सत्यान्वदति तदा सतत्र धनस्वामी तद्धनंग्रहीतुमर्हति ॥ ३१ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् ममेति । सस्वामी अनुयोज्यः किंवर्णं किंरूपं कतिसङ्ख्यं कुत्र कथंनष्टमितिपृष्टः संवाद्य वर्णाद्यभिधानेनप्रतीतिंजनयित्वा अर्हतिद्रव्यमित्यन्वयः ॥ ३१ ॥

( ५ ) **नन्दनः** । प्रनष्टस्वामिकंद्रव्यंममेदमिति ब्रुवतस्तत्वपरिज्ञानोपायमाह ममेति। अनुयुक्तः पृष्टः तस्य द्रव्यस्य रूपसंख्यादिकंसभ्यैः संवाद्य सभ्यानांसम्यक् वेदयित्वा ॥ ३१ ॥

## अवेदयानोनष्टस्य देशं कालं च तत्त्वतः ॥ वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥ ३२ ॥

( १ ) **मेधातिथिः** । मिथ्याप्रवर्तमानस्य दण्डोयमुच्यते योनज्ञापयति *स्पष्टंधनस्य देशंकालंचास्मिन्देशे काले वा हारितंतत्त्वतः परमार्थतोवर्णंशुक्लादिकंगुणंरूपंपटीशाटकयुगवेत्यादिकमाकारंप्रमाणं पञ्चहस्तायामंसप्तहस्तमात्रंवाऽवेदया-नोयावतिद्रव्ये मिथ्याप्रवृत्तस्तत्तुल्यंदण्डमर्हति ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । अवेदयन्नप्रतिपादयन् । देशमस्मिन्देशइति । वर्णं नीलत्वादि । रूपं कण्टकत्वादि । प्रमाणं दैर्घ्याद्येकत्वादि ॥ ३२ ॥

( ३ ) **कुल्लूकः** । नष्टद्रव्यस्य देशकालावस्मिन्देशेऽस्मिन्काले नष्टमिति तथा वर्णंशुक्लाद्याकारंकटकमुकुटादिपरिमा-णंच यथावदजानन्नष्टद्रव्यसमदण्डमर्हति ॥ ३२ ॥

( ४ ) **राघवानन्दः** । तदवेदने। दण्डमाह अवेदयानइति । अवेदयानंरूपसङ्ख्यादीनित्यन्वयः । प्रमाणं संख्यां-साक्ष्यादिवा ॥ ३२ ॥

( ५ ) **नन्दनः** । प्रनष्टस्य स्वामिसकाशात्पूर्वंप्रनष्टंराज्ञः पश्चादधिगतम् ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । नष्टस्य द्रव्यस्य देशकालौ अस्मिन्देशे अमुकसंवत्सरामुकमासपक्षदिनइति कालवर्णरूपंप्रमाणं सङ्ख्याप्रमाणं अवेदयन् अकथयन् तत्समंदण्डं सो ऽर्हति ॥ ३२ ॥

## आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ॥ दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ ३३ ॥

( १ ) **मेधातिथिः** । आददीत गृह्णीयात्षष्ठंभागंदशमंद्वादशंवा प्रनष्टलब्धाद्द्रव्यात्परिशिष्टंस्वामिनेऽर्पयेत् । तत्र प्रथमे

---

( ३२ ) अवेदयानोनष्टस्य=अवेदयन्प्रनष्टस्य ( त, ट, ठ )

* स्पष्टं=नष्टस्य ( आआ )

१ अवेद्यानो=तदातत्समम्

वर्षे द्वादशोभागोद्वितीये दशमस्तृतीये षष्ठइति । अथवा रक्षाक्लेशक्षयापेक्षोभागविकल्पः । सतांधर्ममनुस्मरन् शिष्टानामेव समाचारइति जानानः ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । अब्दात्परं यद्ग्राह्यं तदाह आददीतेति । अतिनिर्गुणवदतिगुणवदपेक्षयाविकल्पः । सतांधर्ममितिव्यवहारसिद्धं यावत्तावद्वत्यर्थः ॥ ३३ ॥

( ३ ) **कुल्लूकः** । देशकालादिसंवादे पुनः आददीतेति । यदेतद्राज्ञा प्रनष्टद्रव्यंप्राप्तंतस्मात्षड्भागंदशमंद्वादशंवा रक्षादिनिमित्तंपूर्वेषांसाधूनामयंधर्मइति जानन्राजागृह्णीयात् । धनस्वामिनोनिर्गुणसगुणत्वापेक्षश्चायंषड्भागादिग्रहणविकल्पः । अवशिष्टंस्वामिने समर्पयेत् ॥ ३३ ॥

( ४ ) **राघवानन्दः** । किंच । आददीत राजा । तृतीयाद्यब्दतारतम्याद्विकल्पःतेन प्रथमाब्दे द्वादशभागं द्वितीये दशमं तृतीये षड्भागं अतउक्तंसतांधर्ममिति ॥ ३३ ॥

( ५ ) **नन्दनः** । तस्मात्प्रनष्टाधिगताद्द्रव्यात्स्वामिप्रत्यर्पणीयंसमर्पयेत् । षड्भागमाददीत । स्वामिगुणापेक्षयारक्षणादिःकार्यापेक्षया षड्भागादिविकल्प्य व्यवस्था ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । पूर्वं प्रनष्टः देशान्तरंगतः आगतः पश्चादधिगतः तस्मात्पुरुषात् राजा षड्भागं आददीत स्वीकुर्यात् ॥ ३३ ॥

**प्रनष्टाधिगतंद्रव्यंतिष्ठेद्युक्तैरधिष्ठितम् ॥ यांस्तत्र चौरान्गृह्णीयात्तान् राजेभेन घातयेत् ॥ ३४ ॥**

( १ ) **मेधातिथिः** । प्रनष्टमधिगतंप्रनष्टाधिगतं पूर्वंप्रनष्टंपश्चाल्लब्धमधिष्ठितंयुक्तैस्तत्परैरारक्षपुरुषैस्तिष्ठेत् । तथा स्थितमपि यदि केचन चोरागृह्णीयुस्तान् राजा इभेन हस्तिना घातयेत् । हस्तिग्रहणमदृष्टार्थम् ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रनष्टं चौरादिभिर्नीतं राजभृत्यैरधिगतमन्यैर्वा । युक्तैर्नियुक्तैराजभृत्यैः । तत्र तेषुगृह्यमाणेषु यांस्तच्चौरान्राजाप्राप्नुयात्तान्घातयेत् सुवर्णशतोपरि शतादधिकेवधइतिस्मृतेः ॥ ३४ ॥

( ३ ) **कुल्लूकः** । यद्द्रव्यंकस्यापि प्रनष्टंसद्राजपुरुषैः प्राप्तंरक्षायुक्तैः रक्षितंकृत्वा स्थाप्यंतस्मिश्चद्रव्ये यांश्चौरान्गृह्णीयात्तान् हस्तिना घातयेत् । गोविन्दराजस्तु शतादभ्यधिके वधइति दर्शनात् अत्रापि शतसुवर्णस्य मौल्यादिकद्रव्यहरणे वधमाह तन्न तत्र संधिकृत्वातुयच्चौर्यमिति यत्स्वाम्येऽपि प्रनष्टराजरक्षितद्रव्यहरणेनैव विशेषेण वधविधानात् शतादभ्यधिके वधइत्यस्य विशेषोपदिष्टवधेतरविषयत्वात् ॥ ३४ ॥

( ४ ) **राघवानन्दः** । युक्तैः संयतैः । राजा यांस्तद्धनहर्तॄन्गृह्णीयात्तान् इभेन हस्तिना इभेनेति वाचनिकं वचनस्य नातिभारइतिन्यायात् । गोविन्दराजस्तु शताधिकसुवर्णहरणे वधइति । तच्च सन्धिकृत्वातु ये चौर्यमित्यादिवक्ष्यमाणवचनातिरिक्तविषयम् ॥ ३४ ॥

( ५ ) **नन्दनः** । प्रनष्टाधिगते द्रव्ये प्रत्यर्पणात्पूर्वंकर्तव्यमाह प्रनष्टाधिगतमिति । युक्तैरधिकृतैस्तिष्ठेत् यावत्स्वामिदर्शनंस्थापयेत् । तत्र युक्तैरधिष्ठिते द्रव्ये । इभेन गजेन ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । पूर्वं प्रनष्टं पश्चादधिगतं द्रव्यं युक्तैरक्षकैः अधिष्ठितं रक्षितं तिष्ठेत् । तत्र यान् चौरान् राजा गृह्णीयात्तान् इमान् इभेन गजेन घातयेत् ॥ ३४ ॥

**ममायमिति योब्रूयान्निधिं सत्येन मानवः ॥ तस्याददीत षड्भागं राजा द्वादशमेव वा ॥ ३५ ॥**

( १ ) **मेधातिथिः** । निखातायां भूमौ गुप्तंस्थापितंधनंनिधिरुच्यते वर्षशतिकावर्षसहस्रिकाश्च निधयोभवन्ति तत्र

यदि भूमेर्विदार्यमाणायाः कथंचित्केनचिन्निधिरासाद्यते सतु राजधनं तथा च गौतमः निध्यधिगमोराजधनमिति एतच्चा-स्मर्यमाणनिधातृके निधौ द्रष्टव्यं तस्याख्याता षष्ठंलभेतेत्युक्तं अयन्तु श्लोकोयत्राख्यातैव निधाता तत्पुरुषोवा पितृपिता-महादिस्तद्विषयोद्रष्टव्यः । ममायंनिधिरिति योब्रूयात्सत्येन प्रमाणेन ज्ञापयेदित्यर्थः । तस्याददीतषड्भागमिति निश्चिते तत्स्वामिकत्वे राज्ञः षष्ठादिभागग्रहणं विकल्पश्चाऽऽख्यातृगुणापेक्षया ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । निधिं स्वपित्रादिनिहितं स्वयमेवोद्धृतं परेणवोद्धृतं ममेति योब्रूयात् । षड्भागं क्षत्रियादेः । द्वादशंब्राह्मणस्य विदुषः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । योमानुषःस्वयंनिधिंलब्ध्वाऽन्येन वा निधौ प्राप्ते ममायंनिधिरिति वदति सत्येनप्रमाणेन च स्वसं-बन्धंबोधयति तस्य पुरुषस्य निर्गुणत्वसगुणत्वापेक्षया ततोनिधानादष्टभागंद्वादशभागंवा राजा गृह्णीयात् अवशिष्टंतस्या-र्पयेत् ॥ ३५ ॥

( ४ ) **राघवानन्दः** । किंच ममेति । निधिं स्वकीयं परेण प्राप्तम् । तस्य निधेः । षट् द्वादशेति ‡ गुणवद्भेदेन वि-कल्पः ॥ ३५ ॥

( ५ ) **नन्दनः** । यइति । तस्य पुरुषस्य षड्भागंनिधेः षष्ठंभागम् । अत्रापि पूर्ववद्विकल्प्य व्यवस्था ॥ ३५ ॥

**अनृतं तु वदन्दण्ड्यः स्ववित्तस्यांशमष्टमम् ॥ तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम्॥३६॥**

( १ ) **मेधातिथिः** । यस्तु मयाऽयंनिहितोमत्पूर्वजेन चेति प्रतिज्ञांन साधयति सोन्यवादी दण्ड्यः । यावत्तस्य वित्तमस्ति ततोष्टमंभागंतस्यैव वाऽभिधानस्याल्पीयसींकलांमात्रांभागमित्यर्थः नतु तदेव द्रव्यंसुवर्णादिकंदापयेत्किन्तुत-त्परिमाणमन्यद्वा सममूल्यंयया धनमात्रया दण्डितोऽवसादंगच्छेद्विनयंवा ग्राह्येत अनुबन्धादिविशेषापेक्षया पुरुषगुणा-पेक्षया च विकल्पआश्रयणीयः । आतिशायनिकात्पूर्वदण्डात्स्वल्पोदण्डइति ज्ञापयति तेन यस्य बहु वित्तंस्वल्पोनिधि-स्तत्र ननिध्यपेक्षा मात्रामस्याऽर्थादीनांदण्ड्यः साह्यल्पीयसी भवति ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । तस्यैवेति ब्राह्मणस्य दण्ड. । तस्य निधानस्य शततमोभागोयावान्भागस्तावतीमल्पीय-सींकलामंशम् । संख्याय व्यवस्थाप्य ॥ ३६ ॥

( ३ ) **कुल्लूकः** । अस्वीयंस्वीयमिति ब्रुवन्स्वधनस्याष्टमंभागंदण्ड्यः यद्वा तस्यैव निधेरत्यन्ताल्पभागंगणयित्वा येनावसादंन गच्छति न विषयश्च लभते तद्दण्ड्यः । अल्पीयसींमितीयसुन्नन्तनिर्देशात्पूर्वस्मादन्योयंदण्डः । विकल्पश्च निर्गुणसगुणापेक्षः ॥ ३६ ॥

( ४ ) **राघवानन्दः** । तत्रैव विशेषमाह अनृतमिति । स्ववित्तस्यानृतवादिनोयावद्वित्तंतस्य । तस्यैव यंनिधिंप्रति लोभान्मिथ्याभाषी । अल्पीयसीमितिनातिपीडया । विकल्पस्तु गुणवद्गुणवद्भेदेन ॥ ३६ ॥

( ५ ) **नन्दनः** । अनृतंवदन् अन्यदीयंस्वकीयमिति सकलमल्पंवा वदन् । अल्पीयसींकलांस्ववित्तस्यांशं दण्ड्यः शासितव्यः । दण्डयतेःशास्तेश्च तुल्यार्थत्वाद्विकर्मत्वम् ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । स्ववित्तस्य अष्टमं अंशंदण्ड्यः । वा पक्षान्तरं तस्यैव निधानस्य द्रव्यपूर्णकुम्भस्य सङ्ख्याया-ल्पीयसींकलां तुच्छककलाम् । कलातुषोडशोभागइत्यमरः । षोडशींगृह्णीयादित्यर्थः ॥ ३६ ॥

‡ गुणवद्भेदेन=गुणवद्गुणभेदेन ( राघ०४ )

विद्वांस्तु ब्राह्मणोदृष्ट्वा पूर्वोपनिहितंनिधिम् ॥ अशेषतोप्याददीत सर्वस्याधिपतिर्हि सः ॥ ३७ ॥

[ ब्राह्मणस्तु निधिलब्ध्वा क्षिप्रंराज्ञे निवेदयेत् । तेन दत्तं तु भुञ्जीत स्तेनः स्यादनिवेदयन् ॥१॥ ]+

( १ ) **मेधातिथिः** । यदाविद्वान्ब्राह्मणः पूर्वैः पित्रादिभिरुपहितंनिधिंयदा प्राप्नुयात्तदा सर्वमेवाददीत न राज्ञे पूर्वोक्तंभागंदद्यात् । अस्यार्थवादः सर्वस्याधिपतिर्हिसः । तथा चोक्तं सर्वस्वंब्राह्मणस्येदमिति एतच्चाशेषतोग्रहणंयोब्राह्मणस्वामिकएव निधिः यस्त्वविज्ञातः* ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वैःस्वपुरुषैरुपनिहितं निधिम् । सर्वस्य कृत्स्नस्य तस्य निधेः ॥ ३७ ॥

( ३ ) **कुल्लूकः** । विद्वान्पुनर्ब्राह्मणः पूर्वमुपनिहितंनिधिंदृष्ट्वा सर्वगृह्णीयान्नषड्भागंदद्यात् यस्मात्सर्वस्य धनजातस्य प्रभुः अतएवोक्तम् सर्वस्वंब्राह्मणस्येदमिति तस्मात्परनिहितविषयमेतद्वचनम् तथाच नारदः ॥ परेण निहितंलब्ध्वा राजाह्यपहरेन्निधिम् । राजगामीनिधिः सर्वःसर्वेषांब्राह्मणादृते ॥ याज्ञवल्क्योप्याह ॥ राजा लब्ध्वा निधिंदद्याद्द्विजेभ्योर्धंद्विजः पुनः । विद्वानशेषमादद्यात्ससर्वस्य प्रभुर्यतः ॥ अतोयन्मेधातिथिगोविन्दराजाभ्यां ममायमिति योब्रूयादित्युक्तंराजदेयार्थनिरासार्थंपित्रादिनिहितविषयत्वमेवास्य वचनस्यव्याख्यातम् तदनार्षम् नारदादिमुनिव्याख्याविपरीतंस्वकल्पितम् । नमेधातिथिगोविन्दराजव्याख्यानमाद्रिये ॥ ३७ ॥

( ४ ) **राघवानन्दः** । विदुषाब्राह्मणेनोपलब्धस्य राजा नांशभाक् प्रत्युत निधानस्य स्वलब्धस्य दातेत्याह विद्वांस्त्विति द्वाभ्याम् । पूर्वोपनिहितं पूर्वमेवोपसमीपे निहितं † लब्धं पश्येत् पूर्वमितिशेषः ॥ ३७ ॥

यंतु पश्येन्निधिंराजा पुराणंनिहितंक्षितौ ॥ तस्माद्द्विजेभ्योदत्वार्धमर्धं कोशे प्रवेशयेत् ॥ ३८ ॥

( १ ) **मेधातिथिः** । कोशशब्देन वित्तसंचयस्थानमुच्यते । पुराणंनिहितंक्षिताविति निधिरूपानुवादः ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । संपश्येत् स्वपुरुषैरन्येनचोत्धृतम् । पुराणमज्ञातनिधातृकम् ॥ ३८ ॥

( ३ ) **कुल्लूकः** । यंपुनरस्वामिकंपुरातनंभूम्यन्तर्गतंनिधिंराजा लभते तस्माद्ब्राह्मणेभ्योऽर्धंदत्वार्धमात्मीयधनागारे च प्रवेशयेत् ॥ ३८ ॥

( ४ ) **राघवानन्दः** । तस्मान्निधेः द्विजेभ्यो ‡ विप्रेभ्यः ॥ ३८ ॥

( ५ ) **नन्दनः** । अस्वामिके निधौ राज्ञा दृष्टे कर्तव्यमाह यन्तुपश्येन्निधिंराजेति ॥ ३८ ॥

निधीनां तु पुराणानां धातूनामेव च क्षितौ ॥ अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥ ३९ ॥

( १ ) **मेधातिथिः** । अन्यैरपि दृष्टस्य निधेराज्ञाभागः पूर्वोक्तोगृहीतव्यइत्यस्यार्थवादोयंनिधीनांहि पुराणानामिति

---

+ ( ञ, ट, ठ, ड )

* विज्ञातः=विज्ञातः । स्वामीकस्तस्मिन् विज्ञेयः ब्राह्मणदृष्टेपिअस्त्येव राज्ञोभागः यतोवक्ष्यति । निधीनांहिपुराणानामिति । ( आ आ )

† लब्धं= लब्धं अशेषस्त्वादानेत्वतः सर्वदयेत्यादि । ( राघ० ४ )

१ कोश=यो राज्ञा स्वयं निधिगतस्तस्मान्निधेरयं ब्राह्मणे भ्यो दाननियमो राज्ञः कोश ( आ आ )

‡ विप्रेभ्यः =विप्रेभ्यः दानेहेतुः पूर्वोक्तः भूयेवा व्रणाइत्यादिवाक्षितावित्युपलक्षणं वृक्ष कोटरादेः । ( राघ० ४ )

( ३९ ) निधीनांतुपु = निधीनांहि ( नं ) ( ३९ ) धातूना = सर्वेषा ( ग )

धातूनामेव च क्षितावयन्त्वप्राप्तविधिः सुवर्णरूप्यादिबीजैर्मिदंसिन्दूरकालाञ्जनाद्याश्च धातवः । सुवर्णाद्याकरभूमीर्यः खनति योवा पर्वतादिषु गैरिकादिकादिधातूनुपजीवति तेनापि पूर्ववद्राज्ञोभागोदातव्यः । अर्धभागिति अर्धशब्दोंशमात्रवचनः समासनिर्देशाद्यथा ग्रामार्धोनगरार्धमिति नपुंसकलिङ्गस्तु समप्रविभागः इहतु समासे लिङ्गविशेषप्रतिपत्त्यभावात्पूर्वस्यैव षड्दशद्वादशादेर्भागस्य प्रकृतत्वात्तद्वचनोविज्ञायते अर्धभजतएकदेशंगृह्णातीत्यर्थः । अत्रहेतूरक्षणादिति यद्यपि क्षितौ निहितस्य केनचिदज्ञानान्नराजकीयरक्षोपयुज्यते तथापितस्य बलवतापहारः संभाव्यते अतोस्त्येव रक्षायाअर्थवत्त्वंएतदर्थमेवाहभूमेरधिपतिर्हिसः प्रभुरसौ भूमेस्तदीयायाश्च भुवोयल्लब्धंतत्र युक्तंतस्य भागदानम् ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । धातूनां हेमादीनामाकरस्थानां चकाराद्रत्नानांच । रक्षणादिति भूमेरधिपतिरितिच हेतुद्वयम् ॥ ३९ ॥

( ३ ) **कुल्लूकः** । निधीनांपुरातनानामस्वकीयानांविद्वद्ब्राह्मणेतरलब्धानांसुवर्णाद्युत्पत्तिस्थानानांचार्धहरोराजा यस्मादसौ रक्षति भूमेश्च प्रभुः ३९ ॥

( ४ ) **राघवानन्दः** । विद्वद्ब्राह्मणेतरनिधिलाभे राजांशभागित्याह निधीनामिति । हिर्हेतौ । निधीनामस्वामिकानां पुराणानामस्वकीयानाम् । धातूनां सुवर्णाद्युत्पत्तिस्थानिनांच । भूमेरधिपतिरिति लिङ्गात् अर्धशब्दोत्र षष्ठांशवाची समासनिविष्टत्वात् । तथाच याज्ञवल्क्यः ॥ इतरेणनिधौ लब्धे राजा षष्ठांशमाहरेत् । अनावेदितविज्ञातोदाप्यस्तंदण्डमेव चेति ॥ अनावेदितविज्ञातःमयाप्राप्तमित्यनुक्ते यदि राज्ञा विज्ञातइत्यर्थः ॥ ३९ ॥

( ५ ) **नन्दनः** । अर्धग्रहणे हेतुमाह निधीनांहीति । धातूनांहेमरूप्यादिलोहगणानां मृत्तिकाविशेषाणाम् ॥ ३९॥

**दातव्यंसर्ववर्णेभ्योराज्ञा चोरैर्हृतंधनम् ॥ राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम् ॥ ४० ॥**

( १ ) **मेधातिथिः** । चौरैर्यन्नीतंकिञ्चिद्धनंतद्राजा प्रत्याहृत्य नात्मन्युपयुञ्जीत किंतर्हि यएवमुषितास्तेभ्यएव प्रतिपादयितव्यम् । सर्वग्रहणेन च चण्डालेभ्योपिदेयमिति । चोराद्धृतमित्यस्मिन्पाठे चौरेभ्यआहृतमिति विगृह्य साधनंकृतेति समासः पाठान्तरे चौरहृतमिति तृतीयेति योगविभागात्पूर्ववद्वा समासः । अयन्त्वत्रार्थोयच्चौरैर्हृतमशक्यप्रत्यानयनंतद्राज्ञा स्वकोशाद्दातव्यम् । उत्तरश्लोकार्धएवंयोजनीयः राजातदुपयुञ्जानइति । अनेकार्थत्वाद्धातूनामुपपूर्वोयुजिर्लक्षणया ऽप्रतिपादनएव द्रष्टव्यः योह्यन्यस्मै प्राप्तकालंधनंन ददाति स्वप्रयोजनेषु विनियुङ्क्ते न तदीयंतदुपयुक्तंभवतीतियुक्तमुच्यते । राजातदुपयुञ्जानश्चौरस्याप्नोति किल्बिषं ॥ किल्बिषं पापं ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । चोरैर्हृतं चोरेभ्यआकृष्य ॥ ४० ॥

( ३ ) **कुल्लूकः** । यद्धनंचौरैर्लोकानामपहृतंतद्राज्ञा चौरेभ्यआहृत्य धनस्वामिभ्योदेयंतद्धनंराजास्वयमुपयुञ्जानश्चौरस्य पापंप्राप्नोति ॥ ४०॥

( ४ ) **राघवानन्दः** । चोराल्लब्धं सर्ववर्णेभ्यः धनस्वामिभ्यः दातव्यमित्याह दातव्यमिति । अन्यथा तदुपभुंजानोयथेष्टविनियोक्ता । तच्चोरकृतं किल्बिषं §चोरनिष्ठजातीयं राज्ञस्तादृशप्रायश्चितपरंवा ॥ ४० ॥

( ५ ) **नन्दनः** । दातव्यं चोरेभ्यः प्रत्याहृत्य कोशाद्वा ॥ ४० ॥

( ६ ) **रामचन्द्रः** । राजा चौरहृतंद्रव्यं उपभुञ्जानः स्वीकुर्वाणः चौरस्य किल्बिषं प्राप्नोति ॥ ४० ॥

---

* मिदं=मृदः ( आ आ ) १ समप्र=समग्र ( आ आ )

§ जातीयं=जातीयमवाप्नुयात्पापं दण्डंवा ( राघ० ४ )

**जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित् ॥ समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥ ४१ ॥**

( १ ) **मेधातिथिः** । कुरुकापिशकाश्मीरादिदेशोनियतावधिः । जनपदं तत्रभवाधर्माजानपदाः किंच* तत्र भवन्ति ये तद्देशव्यपदेशैरनुष्ठीयन्ते । अथवा तन्निवासिनोजनास्तावन्मंचाः क्रोशन्तीत्यत्र जनपदशब्देनाभिधीयन्ते तेषामनुष्ठेया-जानपदाः तस्येदमितितद्धितः जातेर्जानपदाजातिजानपदाइति षष्ठीसमासः । जातिमात्रविषयादेशधर्माराज्ञा परिपालनीयाः । समीक्ष्य विचार्य किमाम्नायैर्विरुद्धा अथ न तथा पीडाकराः कस्यचिदुतनएवंविचार्ययेऽविरुद्धास्तान्प्रतिपादयेदनुष्ठापये-दित्यर्थः तथाच वक्ष्यति सद्भिराचरितंयत्स्यादिति अथवा जातयश्च ते जानपदाश्चेति विशेषणसमासः जातिशब्देन च नि-त्यत्वंलक्ष्यते प्रशंसामात्रंचैतत् । देश¹धर्माअपि शास्त्राविरुद्धानित्यास्ते नित्यवदनुष्ठेयादृष्टार्थगोप्रतिचारोदकक्षणादयः यथा-ग्राश्रणाअत्र प्रदेशे गावोन चारणीयाइति समयमाश्रयन्ति कस्य चित्कार्यस्य सिध्यर्थं तत्र योव्यतिक्रामति सराज्ञादण्ड्यः। अथवा जनपदेभवाजानपदादेशनिवासिनउच्यन्ते जात्याजानपदाजातिर्जन्मोत्पत्तिरिति यावत् एतेन देशबन्धस्य पु-रुषाणांनित्यता लक्ष्यते ये तद्देशीयास्तद्देशाभिजनास्तन्निवासिनश्च गृह्यन्ते तेषांसर्वविशेषणावशिष्टानामनिदंप्रथमतोजाता-ये धर्मास्ते जातिजानपदशब्देनोच्यन्ते। वृद्धाच्छेतद्धिते प्रसक्ते छान्दसत्वादणेवकृतः । अथवाऽभेदोपचारात्पुरुषशब्दस्त-त्संबन्धिषु धर्मेषुप्रयुक्तः एतेनायंदेशनियमोधर्माणांसएवंविधात्पुरुषात्प्रतिद्रष्टव्यएते हि देशधर्मादेशानांन पुनरार्याणां नहि तिर्यक्समानधर्माणोन्यत्रानधिकृताः स्वसमाचारप्रसिद्धंधर्ममनुतिष्ठन्ति । मातृविवाहादिः सार्वभौमेन निवारणीयः । स्वदेशा-चारवतांतेषांजातिधर्मोजननिवासावन्धेनाभ्यानुज्ञानादाम्नाये विरोधोप्यत्र नास्ति अधिकृतानांविरोधाद्विरोधोनतिरश्चां ननु ॥ अहिंसासत्यमक्रोधः शौचमिंद्रियसंयमइति॥ प्रतिलोमाधिकारेणैवोक्तंम्लेछाश्च प्रतिलोमाएव तत्र यदि मातृविवाहे मू-त्रोत्सर्गे चोदकशुद्ध्यभावेन दुष्यति कइन्द्रियसंयमः कीदृशंवाशौचमिति उक्तमेतत्। आर्यावर्तमध्यवर्तिनामेते धर्माः शौचादयः चातुर्वर्ण्ये तु तद्देशनियमोधर्माणांनास्तिकेचिददृष्टार्थादेशधर्माइतिवक्ष्यामः । एककार्यापन्नावणिक्कुरुकुसीदचातु-र्विद्यादयः । तेषांधर्माः श्रेणीधर्माः यथा केचनवणिङ्महत्तरावचनेन परिच्छिन्नंराज्ञा राज्ञे भागंप्रयच्छन्तीमांवणिज्यांवयमुप-जीवाम एषते राजभागोस्माकंयावल्लाभोन्यूनोऽधिकोवा तत्र राज्ञाऽभ्युपगतेवणिज्येलाभातिशयार्थराष्ट्रविरोधिनींचेतरेतर-व्यवस्थांकुर्वन्ति इदंद्रव्यमियन्तंकालमविक्रयमयंराज्ञोपदेशेनार्थोदण्डः पततिदेवतोत्सवार्थोवा तत्र यदि कश्चिद्व्यतिक्रामति सएवंश्रेणीधर्मव्यतिक्रमंदण्ड्यः । कुलधर्माइति कुलंवंशः तत्र प्रख्यातमहिम्नापूर्वजेन धर्मः प्रवर्तितोभवति योस्मद्वंशजःकु-तश्च न धनंलभेत सनादत्वा ब्राह्मणेभ्योन्यत्र विनियुञ्जीतेत्यादयोधर्माः तथा सति योग्यत्वे यएव पूर्वपुरुषाणांयाजकानां कन्यादिसंप्रदानभूतोवासएव कार्यात्तदतिक्रामन् राज्ञोऽनुष्ठापयितव्य एतेषांच सामायिकधर्माशङ्कया पुनर्वचनंचोभयसंब-न्ध्यतिक्रमइति वक्ष्यामः ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । जातिर्ब्राह्मणादिः जनपदोऽनेकग्रामसमुदायः तद्वासिनोजानपदाः तत्संगतान् । श्रेणी पा-षण्डवणिगादिगणः कुलं वसिष्ठकुलमित्यादितन्नियतान्धर्मान् समीक्ष्य निरूप्य ॥ ४१ ॥

( ३ ) **कुल्लूकः** । धर्मान् ब्राह्मणादिजातिनियतान्याजनादीन् जानपदांश्च नियतदेशव्यवस्थितान् आम्नायाविरुद्धान्। देशजातिकुलधर्माश्चाऽऽम्नायैरप्रतिषिद्धाः प्रमाणमिति गौतमस्मरणात् । श्रेणीधर्मांश्च वणिगादिधर्मान् प्रतिनियतकुलव्यव-स्थितान् ज्ञात्वा तदविरुद्धान्राजा व्यवहारेषुतत्तद्धर्मान्व्यवस्थापयेत् ॥ ४१ ॥

---

* किंच=केचित् ( आ आ )

१ देशधर्मा अपि=देशधर्माणां यथा जातिर्नित्याएवं देशधर्मा अपि ( आ आ )

(४) **राघवानन्दः**। प्रासंगिकंजातिधर्माद्यनुशास्ति जातीति। जातिधर्मान् ब्राह्मणादिजातिनियमान्याजनादीन् च जानपदांश्चनियतदेशव्यवस्थितान्। तथाचगौतमः॥ आम्नायाविरुद्धादेशजातिकुलधर्माप्रतिषिद्धाःप्रमाणमिति ॥ श्रेणीध-र्मान्वणिगादिधर्मान्। कुलधर्मान् तत्तत्कुलप्रतिनियतान्। कुलं वंशः ब्राह्मणादिर्मूर्धाभिषिक्तादिरितिवा। एतेषामेतद्देव स्व-धर्ममिति वीक्ष्य परिपालयेत्राजेति॥ ४१॥

(५) **नन्दनः**। जातिधर्मोब्राह्मणादीनांप्रतिनियतोधर्मः। जानपदोधर्मोदेशधर्मः यथादाक्षिणात्यानांमातुलसुतापरि-णयनम्। श्रेणीधर्मो वणिक्कुशीलवादितत्तंनिकायधर्मः यथा इयन्तंकालमिदन्द्रव्यंविक्रेतव्यंनपरमिति। कुलधर्मःपूर्व-शिखापरशिखादिनियमः॥ ४१॥

(६) **रामचन्द्रः**। श्रेणीधर्माः पाषण्डवणिगादिधर्माः। एकजात्योपजीविनः श्रेणयः॥ ४१॥

**स्वानि कर्माणि कुर्वाणादूरे सन्तोपि मानवाः॥ प्रियाभवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः॥४२॥**

(१) **मेधातिथिः**। पूर्वोक्तस्य जानपदादेर्धर्मस्य दृष्टादृष्टतानेन प्रदर्श्यते। स्वानिकर्माणि कुलस्थित्यनुरूपाणि ये कुर्वन्ति ते दूरस्थाअपि प्रियाभवन्ति सर्वस्यान्योनिकटवर्त्तीसंसर्गातिशयात्प्रियोभवति स्वकर्मकारीतु दूरस्थएव प्रियः। स्वेस्वेकर्मण्यवस्थिताइत्यनेन परकर्माननुष्ठानमाह ये न परकर्माणि कुर्वन्ति ते सर्वस्य प्रियाभवन्तीति श्लोकार्थः॥४२॥

(२) **सर्वज्ञनारायणः**। दूरेदेशे देशान्तरे अतोलोकाविरुद्धत्वात्स्वस्वजात्यादिधर्मएव ग्राह्यस्तेषामित्यर्थः। स्वे-स्वेकर्मइति प्रियत्वे हेतुतया पुनरुक्तम्॥ ४२॥

(३) **कुल्लूकः**। यस्मात् स्वानीत्यादि जातिदेशकुलधर्मादीन्यात्मीयकर्माण्यनुतिष्ठन्तः स्वे स्वे च नित्यनैमित्तिकादौ कर्मणि वर्त्तमानादूरेपि सन्तः सान्निध्यनिबन्धनस्नेहाभावेपि लोकस्य प्रियाभवन्ति॥ ४२॥

(४) **राघवानन्दः**। अत्रैवार्थवादमाह स्वानीति। स्वेस्वे नित्ये नैमित्तिकेच। यथोक्तकारीहिदूरेवर्तमानलोकस्य र-क्षणादौ लोकनेनरक्षणसमर्थस्य राज्ञः सामान्योक्तिर्वा॥ ४२॥

(५) **नन्दनः**। उक्तार्थे प्रशंसामाह स्वानिकर्माणीति॥ ४२॥

**नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः॥ नच प्रापितमन्येन ग्रसेदर्थं कथं चन॥ ४३॥**

(१) **मेधातिथिः**। कार्यविवादवस्तु तद्राजा स्वयंनप्रवर्तयेत्। कस्यचिद्द्वेष्यस्योपघातार्थंधनिनोवा धनग्रहणार्थं-नतदीयमृणिकमन्यंचापराद्धमुद्वेजयेत्। एषते धर्मइति किमिति ममाग्रतोनाकर्षत्येतेन वा तावदनपराद्धंयावदहमेनंनिर्घात-यामीत्येवंराज्ञा न वक्तव्यं सत्यपि द्वेषे धनलोभेवा। नच प्रापितमावेदितमन्येनार्थिना ग्रसेत निगिरेन्नोपेक्षेतेति यावत्। अवधीरणायांनिगिरेदिति प्रयुज्यते तत्समानार्थश्च ग्रसतिः तथा च वक्तारोभवन्ति यावत्किंचिदद्योच्यते तत्सर्वंनिगिरति न किंचिदयंप्रतिवक्ति। अन्ये तूत्तरंश्लोकार्द्धमेवंव्याचक्षते नच प्रापितंव्यवहारादन्येन प्रकारेणार्थंधनंग्रसेत स्वीकुर्यात्। यदि हि राजास्थललेशोद्देशिकया धनदण्डे प्रवर्तेत ततः परलोकेदोषोद्रष्टव्यः राज्ये चोपघातःस्यात्। अथेदमपरंकेषांचि-द्व्याख्यानंनोत्पादयेत्स्वयंकार्यंराजा साक्षादुपलभ्याप्यपकारिणांन स्वयंकिंचिद्ब्रूयाद्यस्यापराधी तेन वा तद्व्यवहारेण नाकृष्टः

---

(४२) लोकस्य = लोकेस्मिन् (च)

परव्यवहारदर्शनमेव पराजितस्य निग्रहावसरोभवति न राजा एतच्चकरणदानादिष्वेव द्रष्टव्यं ये तुस्तेनसाहसिकादयः कण्टकस्थानीयास्तात्राजा स्वयमेवावगम्य गृह्णीयात् शेषंसमानं नाप्यस्य पुरुषइति अस्य राज्ञः पुरुषोधिकारीमनुष्यः ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । नोत्पादयेदिति एतच्च ऋणादानादौ नतु साहसादावपि तत्रस्वयमप्यन्वेष्यत्वात् । प्रापितमन्येनेतिस्वयमृणादिदत्तमृणिनाऽदीयमानंराज्ञे यदा निवेद्येत तदा नग्रसेन्नोपेक्षेत नवाप्रापितमित्यपरःपाठः अन्येनान्यतरेण प्रापितं अनुपदर्शितप्रमाणं नग्रसेत् ग्रासयेदन्यतरस्मै दापयेत् ॥ ४३ ॥

( ३ ) **कुल्लूकः** । प्रासङ्गिकमिदमभिधाय पुनः प्रकृतमाह नोत्पादयेदिति । राजा राजनियुक्तोवा धनलोभादिना कार्यमृणादिविवादंनोत्पादयेत् । तदाह कात्यायनः ॥ न राजा तु वित्वेन धनलोभेन वा पुनः । स्वयंकर्माणि कुर्वीत नराणामविवादिनाम् ॥ नचार्थिना प्रत्यर्थिना वाऽऽवेदितंविवादंधनादिलोभेनोपेक्षेत ॥ ४३ ॥

( ४ ) **राघवानन्दः** । प्रासंगिकमुक्त्वा प्रकृतमाह नेति । कार्यं धनलोभादिना ऋणादिविवादं नोत्पादयेन्नोत्थापयेत् अस्यराज्ञः । अनेननियुक्तः पुमान् । अन्येनोत्कोचादिना स्वयंवाग्रसेत् प्राप्तंदत्तंवागृह्णीयात् अर्थंग्रसित्वा कार्यार्थिनांकार्यंनोपेक्षेतेति । व्यवहारादन्येन प्रापितंवा नगृण्हीयात् राज्ञो यत्नात्प्राप्तनिष्यादेर्व्यर्थत्वस्योक्तेः ॥ ४३ ॥

( ५ ) **नन्दनः** । परिभाषान्तरमाह नोत्पादयेदिति । कार्य्यंविवादपदं दण्डदशबन्धाद्यपेक्षयास्वयन्नोत्पादयेत् । अन्येन व्यवहारवता प्रापितमावेदितंव्यवहारंन ग्रसेन्ननिर्हरेत् ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । राजा कार्यं नोत्पादयेत् । अस्य राज्ञः पुरुषः नोत्पादयेत् । च पुनः अन्येन वादिनावा प्रापितं निवेदितं अर्थं कार्यं कथंचन न ग्रसेत् नोपेक्षेत ॥ ४३ ॥

**यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ॥ नयेत्तथानुमानेन धर्मस्य नृपतिः पदम् ॥ ४४ ॥**

( १ ) **मेधातिथिः** । यदुक्तंन स्वयंदृष्ट्वापि राजा सहसा कंचिदाक्रमेत वा निगृह्णीयाद्यन्नर्मणाप्येतत्संभवति कथंपुनरेतदेवगन्तव्यं किंपरिहासकृतमेतदुपक्रोधान्यनुबन्धकृतमिति यतआह अनुमानेनैतज्ज्ञातव्यं यथा मृगयुर्व्याधोवृथा मृगंदृष्टिपथातिक्रान्तछिद्रनिसृतैरसृक्पातैःरवनिःस्यंदमानैः पदंमृगस्य नयत्यासादयत्येवं राजाऽनुमानेन परोक्षे प्रत्यक्षे वार्थकारणंनिश्चिनुयात् । धर्मश्च कृतव्यवहारविषयस्तत्वावगमः । उक्तस्याप्यनुमानस्य पुनर्वचनंस्मृतिदार्ढ्यार्थम्॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । यथेत्यनुमानव्यवहारदर्शनस्योक्तम् ॥ ४४ ॥

( ३ ) **कुल्लूकः** । यथा मृगस्य शस्त्रहतस्य रुधिरपातैर्व्याधः पदंस्थानंप्राप्नोति तथानुमानेन दृष्टप्रमाणेन वा धर्मस्य तत्त्वंनिश्चिनुयात् ॥ ४४ ॥

( ४ ) **राघवानन्दः** । परनिष्ठाधर्मज्ञानदृष्टान्तमाह यथेति । असृक्पातैर्गात्रात्पतितैर्मृगयुना घातितस्य मृगस्य पदमवस्थितिस्थलं नयेज्जानीयात्तथा । मृगयुर्व्याधः । अनुमानेन बाह्यैर्विभावादित्युक्तेन । पदं तत्वम् ॥ ४४ ॥

( ५ ) **नन्दनः** । नकेवलंसाक्ष्यादिभिरर्थोनिर्णेतव्यः किन्त्वनुमानेनापीत्याह यथानयत्यसृक्पातैरिति पदंनिर्णयम् ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । दृष्टान्तमाह यथेति । मृगयुः लुब्धकः । मृगस्य असृक्पातैर्यथा पदं नयति तथाऽनुमानेन हेतुनाधर्मस्य पदं नृपातिः नयेत्प्रापयेदित्यर्थः ॥ ४४ ॥

---

१ यान्नर्मणा=यन्नधर्मेणा ( आ आ )

**सत्यमर्थंच संपश्येदात्मानमथ साक्षिणः॥ देशं रूपं च कालंच व्यवहारविधौ स्थितः॥४५॥**

( १ ) **मेधातिथिः** । व्यवहारविधौ व्यवहारकर्मणि स्थितः प्रवृत्तोन केवलंव्यवहारानेवसंपश्येद्यावदेतदपरंसत्यादि तत्र सत्यसंदर्शनं यस्याप्यर्थिप्रत्यर्थिनोरन्यतरेण शालीनतया परिपूर्णाक्षरंनाभिहितं तथापि यदि राजा प्रमाणान्तरतः पूर्वोक्ताद्वानुमानादेव कथंचिदीदृशोयमर्थइति निश्चेतुंपारयेत् तदा तदाश्रयेन्नोपेक्षेत । अनेनैतन्नसर्वमुक्तमिति तदुक्तं॥ छलंनिरस्य भूतेषु व्यवहारंनयेन्नृपइति । अर्थस्य दर्शनमर्थशब्दोधनवचनप्रयोजनवचनोवा तत्र यदि महान्तमर्थमासादयेत्तदात्यक्त्वाप्यन्यानि राजकार्याणि नोद्विजेत व्यवहारेक्षणंकुर्यादेव अथवा यदि कश्चिद्ब्रूयात्साक्षिभिरर्थएतस्माद्गृहीतोऽन्येन वा सत्येन तत्र निरूपयितव्यं यदेतद्व्यवहारपदंयदि स्वल्पंन संभवति धनग्रहणं अर्थगुरुसभ्याः साक्षिणश्च दैन्यंगतास्तदासंभावनीयंप्रमाणान्तराच्चनिश्चेतव्यं एतच्चात्मानंसाक्षिणंकृत्वा साधनीयं एतदुक्तंभवति कण्टकशोधनन्यायेन चारैश्चारयेत् अथवात्मानंसपश्येदात्मनोव्यवस्थांसंपश्येत्कोशक्षयं महाकोशतांवा अस्मिन्पक्षे साक्षिणइति स्वतंत्रंपदं देशस्य दर्शनं-क्वचिदल्पोप्यर्थोमहत्वमासादयति । महानपि योन्यत्र सत्कविर्लघुभवतीति एतद्देशस्य दर्शनमेवंकालोपि द्रष्टव्यः रूपव्यवहारस्तु स्वभावतोगुरुर्लघुतांपश्येदिति । अन्यैस्तु व्याख्यातं सत्यार्थयोः सारफलतांपश्येदात्मानंसाक्षिणंकृत्वा एतदुक्तंभवत्यर्थात्सत्यंगुरुत्वेन महाप्रयोजनत्वादुभयोर्लोकसाधनरूपतयाऽऽश्रयितव्यं अर्थस्त्यक्तव्योऽसारत्वात् देशः स्वर्गादिः सत्यसमाश्रयप्राप्यः कालश्चिरन्तत्र वासः रूपंसुरसुंदरीणांमनोहरं एतदेव विपरीतं सत्यत्यागेन केवलार्थसमाश्रयणात्॥ ४५॥

( २ ) **सर्वज्ञनारायणः** । सत्यं कोभागःसत्यइति । अर्थंदण्डादिसिद्धं । आत्मानं राजानं पश्येत् । ततोराजवृत्तमनुगच्छेत्तथा साक्षिणोदेशादींश्च संपश्येत् प्रयत्नेनानुसंदध्यादित्यर्थः देशमत्रायमाचारइति । कालमत्रैतद्योग्यमिति । रूपमर्थिप्रभृतीनामाकारम्॥ ४५॥

( ३ ) **कुल्लूकः** । व्यवहारदर्शनप्रवृत्तोराजा छलमपहाय सत्यंपश्येत् तथार्थंच । अर्शादित्वान्मत्वर्थीयोऽच् । अर्थवन्तंगोहिरण्यादिधनविषयस्थंव्यवहारंपश्येत् नत्वहमनेनाक्षिनिकोचनेनोपहसितइत्यादिस्वल्पापराधं आत्मानंच तत्वनिर्णयेस्वर्गादिफलभागिनंसाक्षिणः सत्यवादिनः देशंकालंच देशकालोचितंस्वरूपंव्यवहारस्वरूपंगुरुलघुतादिकंपश्येत्॥४५॥

( ४ ) **राघवानन्दः** । किंच सत्यमिति । व्यवहारविधौ तत्तत्कर्मणि व्यवस्थितो नृपतिः छलमपहाय सत्यं पश्येत् अर्थं हिरण्यादिविषयकव्यवहारम् आत्मानं च तत्वनिर्णयेन स्वर्गादिफलभागिनम् । साक्षिणोयथादृष्टश्रुतार्थवादिनः। देशं वाराणस्यादिकम् । कालंदुर्भिक्षादिरूपं लघुगुरुभावादिकं च । पश्येदित्यनुषज्यते॥ ४५॥

( ५ ) **नन्दनः** । सत्यंसंपश्येत् अस्मिन्व्यवहारोपवादिनोः किंप्रयोजनंभविष्यतीति पश्येत् साक्षिणःपश्येत् यथोक्तगुणानामपि साक्षिणांरागद्वेषौ पश्येत् । इङ्गितादिभिर्देशंकालंच पश्येत् । अस्मिन्देशेऽस्मिन्कालेऽयमर्थोयुज्यते न वेति पश्येत् । विवादविषयस्यार्थस्यरूपंच पश्येत्॥ ४५॥

( ६ ) **रामचन्द्रः** । अर्थं कार्यम्॥ ४५॥

**सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः॥ तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत्॥ ४६॥**

( १ ) **मेधातिथिः** । सन्तः प्रतिषिद्धवर्जकाधार्मिकाविहितानुष्ठायिनः यद्यप्येकएव शब्दउभयमर्थंप्रतिपादयितुंशक्नोति तथापि भदापादानाद्विषयविभागेनैवंव्याख्यायत तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यंतद्देशकुलजातीनांमक-

ल्पयेदनुष्ठापयेत् । अविरुद्धश्रुतिस्मृतिभिरुपलभ्यमानाभिर्यदुक्तं जातिजानपदान्धर्मानित्यत्र श्लोकेदेशकुलाद्याचारस्य प्रामाण्यंतस्यानेन विशेषः कथ्यते आम्नायेनाविरोधितेन दृष्टार्थान्यपि ग्रामदेशराजकार्याणि शास्त्राविरुद्धान्यादरणीयानि न विरुद्धानि यथा कश्चिद्देशऋणिकआत्मानंविक्रम्यधनंदाप्यते तच्च कर्मणापि सममित्यनेन विरुद्धं अन्यत्र श्लोकेन दर्शितम् । अन्यस्य चाचारस्य शिष्टसंबन्धितयैव प्रामाण्यमुक्तमाचारश्चैव साधूनामिति । नच तद्विरुद्धार्थसमाचरणेन साधुत्वमुपपद्यते तस्माद्वचनाद्दृष्टाय तद्विषयोयमुपदेशः । अन्यस्त्वाह देशान्तरेधार्मिकैः सद्भिर्द्विजैर्यदविरुद्धंश्रुत्यास्मृत्यन्तरेण वा कार्यते तद्देशान्तरेपि राजा प्रकल्पयेत् यथोष्ट्रभयज्ञादयउदीच्येषु प्रसिद्धास्तेप्राच्यैर्दाक्षिणात्यैःप्रतीच्यैश्चानुष्ठेयाः कुतः आचाराद्धिस्मृतिरनुमातव्या स्मृतेः श्रुतिः सा च यद्येवमनुमीयत उदीच्यैरप्येतत्कर्तव्यमिति तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात्तत्र जातस्तत्रसंभवस्ततआगतस्तमभिप्रस्थितः शेषइति चैतस्य लक्षणविकारोभयरूपत्वादन्येष्वपि प्रतिपदमनुपातेषु तद्धितस्मरणान्नास्त्युदीच्योनाम यउदीच्यशब्देन निवर्त्येत ततश्च पुरुषमात्रेणैतत्कर्तव्यमित्यापतति देशसमाख्यायानियतनिमित्तत्वभावेनानियामकत्वादप्येवंवाक्यमनुमीयते । उदीच्यांजातेन तद्देशवासिना वा तदपि व्यभिचारितवतोपि नान्यत्र करोति तन्निवास्यप्यन्यत्र जातोन करोत्येव । अथोदग्देशाभिजनस्तन्निवासीवेत्यनित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव नहि जातिगुणगोत्राणीवाभिजननिवासौ नित्यौ तस्मान्नित्यस्य नकस्यचिदनुष्ठातॄणामवच्छेदकस्यानुपपत्तेः सर्वविषयाधर्मानदेशधर्मानामकेचनसन्ति अनेनैव न्यायेन कुलधर्माअपि कथंतर्हिदेशधर्माः कुलधर्माजातिधर्माइति चस्मृतिकारैर्भेदेन व्यपदिश्यन्ते । उक्तंदृष्टार्था नियता व्यवस्था तत्र धर्मस्तस्यच नियमउपपद्यतइति उक्तम् । कुलंचगोत्रैकदेशः यस्तुकुलगोत्रधर्मोयथा न वासिष्ठावैश्वामित्रमवधीरिति सनित्यत्वाद्गोत्रव्यपदेशस्य तान्यस्येति विरम्यते ॥४६॥

( २ ) **सर्वज्ञनारायणः** । सद्भिर्दोषरहितैर्वैदिकादिभिः । तद्वस्तु प्रकल्पयेत् प्रकृष्टंव्यवहारेषु कल्पयेत् । यदि देशाद्यविरोधि विरोधेतु तद्देशादिधर्मएव तद्देशजानाम् एवंसामान्यतोराजधर्माव्यवहाराऽनुगुणाउक्ताः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यद्दृश्यमानशास्त्रमनुष्ठितंतद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत् ॥ ४६ ॥

( ४ ) **राघवानन्दः** । किंच सद्भिरिति । आचरितं शास्त्रदृष्टमप्यनुष्ठितम् सद्भिरिति द्विजातीनां विशेषणं । शूद्रव्यावृत्त्यर्थम् । धार्मिकैःप्रतिषिद्धवर्जनपुरःसरं धर्मानुष्ठातृभिः । तद्देशकुलजातीनामविरुद्धमेव प्रकल्पयेत् प्रमाणंकुर्यात् कुलधर्माश्चेत्यत्रोक्तत्वात् ॥ ४६ ॥

( ५ ) **नन्दनः** । तदनुरूपनिर्णयोपायपरिग्रहार्थमशास्त्रीयमपि सद्भिराचरितंधर्ममनुपालयेदित्याह सद्भिराच रितंमत्स्यादिति । स्वधर्मनिरताअध्यात्मविदःसन्तो विरुद्धंविरुद्धंचेत्प्रकल्पयेदनुपालयेत् ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । अविरुद्धंदण्डं प्रकल्पयेत् ॥ ४६ ॥

## अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः ॥ दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

( १ ) **मेधातिथिः** । यः सर्वेषु व्यवहारपदेषु साधारणंतदुक्तंविशेषापेक्षायामिदमाह सोपचयंकालान्तरे दास्यामीति योधनमन्यस्माद्गृह्णाति सोधमर्णः यस्तु सोपचयंप्रत्यादास्यामीति प्रयुङ्क्तेसोत्तमर्णः सम्बन्धिशब्दावेतौ । अधमर्णस्यार्थः अर्थोधनंप्रकरणाद्यदेवोत्तमर्णाय देयंतदेवोच्यते तस्य सिद्धिरुत्तमर्णंप्रतिनिर्यणंद्वितीयोर्थशब्दः प्रयोजनवचनः अयंसमुदायार्थः। उत्तमर्णेन यदा राजाचोदितोज्ञापितोभवत्यधमर्णेन योगृहीतोर्थः समेसिद्ध्यतु दापयतु भवान् राजात्वधमर्णात्तदा दापयेद्ध

निकस्यार्थम् । धनमस्यास्तीति धनिकः उत्तमर्णएव च प्रसिध्या धनिकउच्यते । दापयेदिति संबन्धाच्चतुर्थी त्यक्ता सात्व-पूर्णत्वात्संप्रदानभावस्य न कृता यथा प्रतः पृष्ठंददाति रजकस्य वस्त्रंददातीति नह्यत्र मुख्योददात्यर्थः इहाप्युभयोः सत्त्वस्य भावादुभयोःस्वत्वाभावादपरिपूर्णोददातीत्यर्थः । किमुत्तमर्णवचनादेवासौ दापयितव्योनेत्याह विभावितमिति यदा निश्चि-तेन प्रमाणेन धारयतीति प्रतिपद्यते । अथवा विभावितः स्वयंप्रतिपन्नोयतोविप्रतिपन्नस्य वक्ष्यत्यपन्हवेऽधमर्णस्येति । क-थंपुनः स्वयंप्रतिपन्नोविभावितइत्युच्यते नैषदोषः विस्मरणे स्वहस्तलेख्यादिना स्वयंप्रतिपन्नश्च भवति विभावितश्चाप्रतिपन्न-श्चजानानोपि मिथ्याप्रतिपन्नः ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । ऋणदानमवतारयति अधमर्णेति । अधमर्णेन गृहीतोऽर्थोऽधमर्णार्थस्तस्योत्तमर्णसित्थ्यर्थं चोदितोराज्ञा अधमर्णंदापयेत् । विभावितं प्रमाणेन ॥ ४७ ॥

( ३ ) **कुल्लूकः** । एतत्सकलव्यवहारसाधारणंपरिभाषात्मकमुक्तंसंप्रति ऋणादानमधिकृत्याह अधमर्णेति । अधमर्णा-र्थसित्थ्यर्थंप्रयुक्तधनसित्थ्यर्थंधनस्वामिना राजा बोधितोवक्ष्यमाणलेख्यादिप्रमाणप्रतिपादितंधनमुत्तमर्णस्याधमर्णंप्रदाप-येत् अधमर्णादुत्तमर्णायदापयेदित्यर्थः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । संप्रति ऋणविषयकव्यवहारमाह अधमर्णेति । अधमर्णार्थसिद्ध्यर्थं अधमर्णादर्थस्य सिद्धिरु-त्तमर्णेन प्राप्तिस्तदर्थं चोदितः प्रार्थितोनृपः । मयैतस्माद्धनंप्राप्यते यथेति । विभावितंसंभावितं साक्ष्यादिना धनिकस्यो-त्तमर्णस्य दापयेदित्यर्थः ॥ ४७ ॥

( ५ ) **नन्दनः** । इदानीमाद्यमृणादानंनामव्यवहारपदंप्रस्तूयते । अधमर्णेति ऋणग्राहकोऽधमर्णस्तेन गृहीतार्थस्य लाभार्थमुत्तमर्णऋणप्रयोक्ता ॥ उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमादित्यमरः । तेनोत्तमर्णेन चोदितोराजा धनिकस्यो-त्तमर्णस्यार्थमधमर्णेनदापयेत् । विभावितमुत्तमर्णेन लेख्यादिना साधितंवा तदर्थस्य विशेषणम् ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । उत्तमर्णेनधनिकेन चोदितोराजा अधमर्णगृहीतस्य अर्थस्य सित्थ्यर्थंधनिकस्यार्थंसाक्ष्यले-ख्यादिभिः स्थिरीकृतं दापयेत् ॥ ४७ ॥

**यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ॥ तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥ ४८ ॥**

( १ ) **मेधातिथिः** । नेहाप्राप्तार्थादुत्तमर्णाद्राज्ञो भागंवक्ष्यत्यधमर्णाद्दण्डं तत्र स्वभागतृष्णया राजानमुपायान्तरेण ध-नमार्गणंधनिकानांकारयेयुरतस्तन्निवृत्त्यर्थमिदमुच्यते । यैर्यैर्वक्ष्यमाणैरुपायैः स्वधनंपूर्वप्रयुक्तमुत्तमर्णोलभेत तैस्तैरधमर्णं दापयेत् । संगृह्य स्थिरीकृत्य अनेनैवोपायेनैतस्मादेतल्लभ्यतइत्येतन्निश्चित्येत्यर्थः । अथवाऽनुकूलमुपसांत्वनंग्रहः उत्तम-र्णएव उत्तमर्णिकः उत्तमंच तदृणंचोत्तमर्णं तदस्यास्तीत्युत्तमर्णिकः अतइनिठनाविति रूपं । एवमितरावपि सर्वधनादिषु प्र-क्षेपव्यावन्यत्र वीरपुरुषकोग्रामइतिवद्बहुव्रीहिणैव सामानाधिकरण्यस्य मत्वर्थेचोक्तार्थाविशेषेण समासः मत्वर्थीयश्च दु-र्लभः वृद्धिलाभार्थंप्रयोगविषयंधनमृणंद्वौ च तस्य संबन्धिनोप्रयोक्ता ग्रहीता च प्रयोजकस्य च तदुत्तमंभवति स्वतस्त्रोध-नदाने प्रत्यादाने च । इतरस्य सोपचयदानाद्ध्लायामत्वाच्चाधमत्वंव्युत्पत्तिमात्रत्वे तद्रूढ्यैव त्वेतौ प्रयोक्तृग्रहीत्रोर्वाचकौ के पुनस्तत्रोपायाइत्येतत्प्रदर्शनार्थउत्तरश्लोकः ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । स्वयमेवोत्तमर्णःशक्तोयथाकुर्यात्तथाह यैर्यैरिति । संगृह्य नियम्य दापयेदुत्तमर्णः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । कथंदापयेदित्याह यैर्यैरिति । यैर्वक्ष्यमाणैरुपायैः संप्रयुक्तमर्थमुत्तमर्णोलभते तैस्तैरुपायैर्वशीकृत्य तमर्थंदापयेत् ॥ ४८ ॥

( ४ ) **राघवानन्दः** । तत्र यत्नमाधत्ते यैरिति । उत्तमर्णिकः उत्तमं देयत्वेन पूर्वंयदृणं तेन व्यवहरतीति । गृहीतेन ऋणेनाधमर्णोनिकृष्टोयस्तमधमर्णिकं धनं दापयेद्राजेतिशेषः ॥ ४८ ॥

( ५ ) **नन्दनः** । उत्तमर्णकइति स्वार्थे कः साधयेद्दापयेत् ॥ ४८ ॥

( ६ ) **रामचन्द्रः** । तैस्तैरुपायैः अधमर्णिकं संगृह्य नियम्य दापयेदित्यर्थः ॥ ४८ ॥

**धर्मेण व्यवहारेण छलेनाचरितेन च ॥ प्रयुक्तंसाधयेदर्थंपञ्चमेन बलेन च ॥ ४९ ॥**

( १ ) **मेधातिथिः** । तत्र धर्मस्कन्धकरीत्या स्तोकंस्तोकंग्रहणमिदमद्य इदंश्वइदंपरश्वः यथाकुटुंबसंवाहोस्यैवंवयमपि तव कुटुंबभूताः संविभागयोग्याइत्यादि पठितप्रयोगोधर्मः यस्तु निःश्वसव्यवहारेण दापयितव्यः । अन्यत्र कर्णोदकवद्धनंदत्वा कृषिवणिज्यादिना व्यवहारयितव्यं तत्रोत्पन्नंधनंतस्माद्गृहीतव्यम् । यस्तु व्यवहारोराजनिवेद्यस्तस्य सर्वोपायपरीक्षयेयोज्यत्वाद्बालग्रहणेन च गृहीतत्वात् । यस्तु साक्षान्नददाति विद्यमानधनोपि सच्छलेन दातव्यः केनचिदपदेशेन विवाहोत्सवादिना कटकाद्याभरणंगृहीत्वा न दातव्यंयावदनेन तद्धनंनदत्तम् । आचरितमभोजनगृहद्वारोपवेशनादि बलराजाधिकरणोपस्थानंतत्र राजा साम्ना ऽप्रच्छन्नंनिगृह्य च प्रपीड्यदापयतीति ननुस्वगृहसंबन्धिधनादि बलंयतः प्रकृतीनांबलंराजनीतिः पठ्यते तस्मिन्नेव प्रसङ्गेउक्तासा अन्येतु राज्ञएवायमुपदेशइति वर्णयन्ति राजधर्मप्रकरणात् । राजा ज्ञापितउपायैरेनंदापयेत्पराजितंस्वयंप्रतिपन्नंच नतु सहसावष्टभ्य सर्वस्वंधनिने प्रतिपादनीयः यतउभयानुग्रहोराज्ञा कर्तव्यः सर्वस्वादानेचाधमर्णस्य कुटुंबोत्सादः स्यात्सोपि न युक्तः उक्तंहि ॥ नावसाद्यशनैर्दाप्यः काले काले यथोदयं । ब्राह्मणस्तु विशेषेण धर्मकेसति राजनीति ॥ तस्मात्किंचनवृद्ध्या संदापनीयः । कुटुंबादधिकंधनंसरुचः सर्वंदापनीयः । सर्वासंभवे च कर्मणापि समंकुर्यादित्यन्यस्मिन्व्याख्याने छलाचारौ राजानमज्ञापयित्वा नकार्यौ ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मेण परस्वानादाननियमजनितपरलोकफलादिकथनेन यथादिनियमेनेतिकेचित् । व्यवहारेण राजसन्निधौ । छलेन व्याजाद्बन्धकादिग्रहेण । आचरितेन स्वयंप्रायोपवेशेन । बलेन गृहपतिरोधादिना ॥ ४९ ॥

( ३ ) **कुल्लूकः** । तानुपायानाह धर्मेणेत्यादि । धर्मादिना प्रयुक्तमर्थंसाधयेत्तत्र धर्मानाह बृहस्पतिः ॥ सुहृत्संबंधिसंदिष्टैः साम्ना चानुगमेन च । प्रायेण वा ऋणीदाप्योधर्मएषउदाहृतः ॥ देये धनेऽधमर्णस्याविप्रतिपत्तौ व्यवहारेण । तथा च ववक्ष्यति अर्थेपव्ययमानंत्विति । मेधातिथिस्तु निःस्वोयः सव्यवहारेण दापयितव्यः । अन्यत्कर्मोपकरणंधनंदत्वा कृषिवाणिज्यादिना व्यवहारयितव्यः । तदुत्पन्नंधनंतस्मात्तुगृह्णीयादित्याह छलादीनि त्रीण्याह बृहस्पतिः ॥ छद्मना याचितंचार्थमानीय ऋणिकाद्बली । अन्याहृतादिवाहृत्य दाप्यतेतत्र सोपधिः ॥ दारपुत्रपशून्हत्वा कृत्वा द्वारोपवेशनम् । यत्रार्थीदाप्यतेऽर्थंस्वंतदाचरितमुच्यते ॥ बध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिकोदाप्यते यत्र बलात्कारः प्रकीर्त्तितः ॥ ४९ ॥

( ४ ) **राघवानन्दः** । स्वयंवा गृण्हीयात्तत्रोपायानाह धर्मेणेति । एतान्पञ्चलक्षयति बृहस्पतिः ॥ धर्मेणेति यथा ॥ सुहृत्संवन्धिसंदिष्टैः साम्नावानुनयेन च । प्रायेणवा ऋणीदाप्योधर्मएषउदाहृतइति ॥ व्यवहारेणेति । यथायतोद्रव्यं विनिक्रीयऋणार्थं चैव गृह्यते ॥ तन्मूल्यमुत्तमर्णेन व्यवहारइति स्मृतः ॥ छलेनेति यथा ॥ छद्मना याचितं वार्थमानीय ऋणिकाद्धनी । अन्याहृतादि वाहृत्य दाप्यते यत्र सोपधिरिति ॥ उपधिश्छलं । आचरितेनेति यथा ॥ दारपुत्रपशून्बध्वा

---

( ४९ ) छलेनाचरितेन = स्थाने नाचरितेन ( क )

कृत्या द्वारोपसेवनम् । यदृणी दाप्यते ह्यर्थं तदाचरितमुच्यते ॥ बलेनेति यथा ॥ बध्वात्मगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिकोदाप्यते यत्र बलात्कारः सकीर्तितइति बृहस्पत्युक्तधर्मादिना ॥ ४९ ॥

( ५ ) नन्दनः । के ते पुनरुपायास्तानाह धर्मेणेति । धर्मेणाधमर्णायधर्मप्रदर्शनेन । व्यवहारेण व्यवहारबलप्रदर्शनेन । छलेनोत्तमर्णकरिष्यमाणसहसाद्युपन्यासादिना । आचरितेन साधनेन प्रयुक्तमधमर्णस्योत्तमर्णेन प्रयुक्तमर्थंसाधयेत् । एषामुपायानांपूर्वपूर्वाभावउत्तरोग्राह्यः पाठक्रमात्सामर्थ्याच्च ॥ ४९ ॥

( ६ ) रामचन्द्रः । उपायान् आह धर्मेणेति । धर्मेण धर्मभीतियुक्तेन वचसा धर्मोपदेशेन व्यवहारेण साक्ष्यलेख्यादिना छलेन उत्सवादिव्याजेन भूषणादिग्रहणेन आचरितेन अभोजनेन च पुनः पञ्चमेनबलेन निगडादिबन्धेन प्रयुक्तं अर्थं दत्तंद्रव्यं साधयेत् ॥ ४९ ॥

**यः स्वयंसाधयेदर्थमुत्तमर्णोऽधमर्णिकात् ॥ न सराज्ञाऽभियोक्तव्यः स्वकं संसाधयन्धनम् ॥ ५० ॥**

( १ ) मेधातिथिः । उक्तस्यैवार्थस्यस्पष्टीकरणार्थः श्लोकः न छलादिनोपायेन स्वेछयोत्तमर्णोधमर्णाद्धनंसंसाधयन् राजा किंचिद्वक्तव्यः । मामविज्ञाप्य किमित्यस्मादाभरणादिस्वधनसंशुध्यर्थंव्याजेन छद्मना गृहीत्वा किंनास्मै प्रतिप्रयच्छसीति ॥ ५० ॥

( २ ) सर्वज्ञनारायणः । नाभियोक्तव्यस्त्वयाबलंकृतमिति । स्वकमितिधार्यमाणार्थस्य स्वीयत्वसिद्धावेवैतदितितात्पर्यम् ॥ ५० ॥

( ३ ) कुल्लूकः । यउत्तमर्णः संप्रतिपन्नमर्थमधमर्णात्स्वयंबलादिना साधयति सस्वीयंधनंसम्यक्साधयन् अस्मास्वनिवेद्य किमिति बलादिकंकृतवानसीति न राज्ञानिषेद्धव्यः ॥ ५० ॥

( ४ ) राघवानन्दः । ननु स्वयं बलात्कारकरणे राजदण्डशंका स्यात्तत्राह यइति । नाभियोक्तव्यः एनंकदर्थीकृत्य किमिति धनमस्मादृहीतमिति । तत्रहेतुः स्वकं संसाधयन्धनमिति ॥ ५० ॥

( ५ ) नन्दनः । स्वयमेवस्वार्थसाधनमुत्तमर्णस्य शक्तौसत्यांदोषावहमित्याह यःस्वयंसाधयेदिति । अभियोक्तव्योदोषमारोपणीयः अत्र हेतुः स्वकंसंसाधयन्धनमिति संसाधयन्तीति हेत्वर्थे शतृप्रत्ययः ॥ ५० ॥

( ६ ) रामचन्द्रः । सउत्तमर्णः स्वकंधनंसंसाधयन् राजा नाभियोक्तव्यः त्वया बलंकृतमिति नोपालम्भनीयः ॥ ५० ॥

**अर्थेऽपव्ययमानंतु करणेन विभावितम् ॥ दापयेद्धनिकस्यार्थं दण्डलेशंच शक्तितः ॥ ५१ ॥**

**[ यत्र तत्स्यात्कृतंयत्र करणंच न विद्यते । नचोपलम्भपूर्वोक्तस्तत्र दैवीक्रिया भवेत् ॥ १॥ ] +**

( १ ) मेधातिथिः । सत्यपि विभावके प्रमाणे येन स्वयंप्रतिपद्यते न तस्य छलाद्युपायप्रयोगः कर्तव्यः किंतर्हि राजैव तेन ज्ञापयितव्यस्तत्र राज्ञाऽऽकारितेऽर्थ ऋणेपव्ययमानमपह्नुवानंनास्मै किंचनधारयामीति वदन्तंकारणेन साक्षिलेख्यभुक्त्यात्मकेन विभावितंधारयामीति प्रतिपादितंदापयेदुत्तमर्णाय धनदण्डलेशंच स्वल्पंदण्डंदण्डमात्रमित्यर्थः । अन्यत्र दशमभागंवक्ष्यति यस्तु तावद्दातुमशक्तः सोल्पमपि दशमाद्भागाद्दण्डंदापयितव्यः । अथवा यः प्रमादात्कथंचिद्विस्मृ-

---

+ ( क, ट, ठ, ड )

त्यापजानीतेतस्यायंयथा शक्तिदशमभागाल्पतोदण्डः । कारणंप्रमाणंत्रिविधं तदन्यैरेतद्भवतीति परिगणितं । यथाचाहुः ॥ यत्र नस्यात्कृतंपत्रंसाक्षी चैव न विद्यते । नचोपलंभःपूर्वोक्तोदैवी तत्र क्रिया भवेदिति ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थेविषये अपव्ययमानं संवृण्वानं निह्नुवानमित्यर्थः । पश्चाद्धनिकेन कारणेन विभावितमर्थंदापयेद्राजा दण्डलेशंच यावता पुनरपह्नवंनकुर्यात् । शक्तितोवित्तानुसारेण देयंप्रतिज्ञाते प्रथमंविवादंकृत्वा पश्चाद्राजसभायांयद्यनुमन्यते तदा शते पञ्चभागान्दण्ड्यः अथतत्राप्यपह्नवंकृत्वा व्यवहारात्तंनयति तदा दशभागान् ॥५१॥

( ३ ) **कुल्लूकः** । नाहमस्मै धारयामीति धनविषयेऽपन्हवानमधमर्णंकरणेन लेख्यसाक्षिदिव्यादिना प्रतिपादितमर्थमुत्तमर्णस्य राजा प्रदापयेत् । दण्डलेशंच अपन्हवे तु द्विगुणमिति वक्ष्यमाणदशमभागदण्डान्न्यूनमपिदण्डंपुरुषशक्त्या दापयेत् ॥ ५१ ॥

( ४ ) **राघवानन्दः** । किंच अर्थेति । अपव्ययमानं न धारयामीत्यपन्हुवानं । करणेन लेख्यादिना विभावितं निर्णीतं दापयेदर्थम् दण्डलेशंच अपह्नवे तु द्विगुणमिति वक्ष्यमाणदशमभागाद्दण्डान्न्यूनम् ॥ ५१ ॥

( ५ ) **नन्दनः** । उत्तमर्णेन दत्तेऽर्थे वादंकुर्वाणमधमर्णं । करणेन साधनेन लेखादिना । विभावितंसाधितंधनिकस्य कृत्स्नमर्थंराजा दापयेत् । दण्डलेशंच स्वस्मैशक्तितोदण्डदापनं निर्द्धनविषयंगुणवद्विषयंवा । करणादिसाधितार्थंदशमभागस्य दण्डत्वेन वक्ष्यमाणत्वात् ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । अर्थे द्रव्ये अपव्ययमानं निह्नवानम् । तु पुनः करणेनसाक्ष्यादिना पत्रेणवा विभावितंप्रकटीकृतं अर्थं धनिकस्य राजा दापयेत् । च पुनः शक्तितः शक्त्यनुसारेण अधमर्णस्य दण्डलेशः कार्यः ॥ ५१ ॥

**अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ॥ अभियोक्ता दिशेद्देश्यंकरणंवान्यदुद्दिशेत् ॥ ५२ ॥**

( १ ) **मेधातिथिः** । यदा राज्ञा प्राड्विवाकेन वा संसदि व्यवहाराधिकरणादिदेशउत्तमर्णाय धनमिति उक्तस्यापह्नवोपलापोपलापोधर्मेण भवति तदाभियुक्तोधनस्य प्रयोक्तोत्तमर्णाय दिशेद्देशंसाक्षिणंप्रमाणभूतंनिर्दिशेत् अन्यद्वा कारणंलेख्यादि देशशब्देन लक्षणया धनप्रयोगप्रदेशवर्तिनांसाक्षिणामुपादानात् । कारणशब्दः सामान्यशब्दोपि गोबलीवर्दवत्साक्षिव्यतिरिक्तंलेख्यादिकारणमाचष्टे ततश्च कारणंवा समुद्दिशेदिति अस्याप्ययमेवार्थः अथवायमन्यः पाठः अभियुक्तोदिशेद्देशमिति अयंचार्थः यत्राधमर्णोदेहीत्युक्तः प्रतिजानीते सत्यमेव धनंप्रतिदत्तंयदसावभियोक्ताऽऽसीत्सएवाभियुक्तः संवृतः सचाभियुक्तः संदिशेद्देशंकस्मिन्देशे त्वया मे प्रतिदत्तंकालं च निर्दिशेद्देशग्रहणस्य प्रदर्शनार्थत्वात्कारणंवा समुद्दिशेत् । अस्ति तावकंसेदुर्द्दिशेत्येवंब्रूयादथवा यदि समादेशांनार्हसाक्ष्यादि तस्यैव प्रदर्शनंकारणंवा शब्दश्च शब्दस्य स्थाने ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । अधमर्णस्य देहिधनमस्माइति सभ्यैरुक्तस्यापह्नवे तेन क्रियमाणेऽपलापेइत्यर्थः । आदिशेत् ब्रूयात् देशं अत्रदेशे न त्वया गृहीतमिति । देशमिति कालादेरप्युपलक्षणम् । देशेऽप्युक्ते विप्रतिपत्तौ कारणं प्रमाणं दशादन्यत् समुद्दिशेत् ब्रूयात् ॥ ५२ ॥

( ३ ) **कुल्लूकः** । उत्तमर्णस्य धनंदेहीति सभायां प्राड्विवाकेनोक्तस्याधमर्णस्य नास्मै धारयामीत्यपलापेसति अभियोक्ताऽर्थी देश्यंधनप्रयोगदेशवर्तिसाक्षिणंनिर्दिशेत् । प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणऋणनिर्णयात्प्राक्साक्ष्युपन्यासः । अन्यद्वा करणंपत्रादि कथयेत् ॥ ५२ ॥

---

( ५२ ) कारणं=कारणं ( मेधा० )

( ४ ) **राघवानन्दः** । किंच अपह्नवेति । संसदि सभायां उत्तमर्णेन देहीत्युक्ते नोधारयामीत्यधमर्णेन निह्नवीकृतेसतीत्यर्थः । अभियोक्तोत्तमर्णः । देश्यं धनप्रयोगदेशवर्तिनः साक्षिणः । करणं पत्रम् । अन्यत् ममधनेनेदंक्रीतंद्रव्यादि ॥ ५२ ॥

( ५ ) **नन्दनः** । यदाधमर्णोयुक्तार्थापह्नवकुर्वीत तदोत्तमर्णेन कर्त्तव्यमाह अपह्नवेऽधमर्णस्येति । ऋणरूपेण यन्मया तव दत्तंतन्मे देहीत्युक्तस्याधमर्णस्यापह्नवेऽर्थापह्नवे सत्यभियोक्तोत्तमर्णोदेशंदिशेत् अस्मिन्देशेऽस्मिन्कालेऽनेन प्रकारेण मयादत्तमिति देशकालादिकंब्रूयात् । यदि तत्राप्यधमर्णोविप्रतिपद्येत ततःकरणलेखादिकंसमुद्दिशेत् ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । संसदि सभायांच देहीत्युक्तस्य अधमर्णस्य अपह्नवेङ्गीकृते गोपिते सति अभियोक्ता उत्तमर्णः देश्यं साक्ष्यादिभ्यः आदिशेत् । च पुनः अन्यत्करणं प्रमाणान्तरं उद्दिशेद्दर्शयेत् ॥ ५२ ॥

**अदेश्यंयश्च दिशति निर्दिश्यापह्नुते च यः॥ यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥ ५३ ॥**

( १ ) **मेधातिथिः** । उक्तमेवाधमर्णेऽपह्नुवाने धनिना राज्ञाज्ञापयितव्यः विज्ञापनाकर्तव्या अस्मिन्देशेऽस्मिन्काल-इदंधनमियद्वेतनंमत्सकाशाद्गृहीतं सच पृष्टोभावयति नैतस्मिन्देशेऽहमभवंयेन धनग्रहणकालउपदिष्टंतदा देशे दीयते । अथवा देशसाक्षिणोव्याख्यातास्तान्साक्षिणोदेशकालावसंभवतोनिर्दिशति । निर्दिश्यदेशादिकमपजानीते नैतन्मया निर्दिष्टमिति यश्चाधरोत्तरानर्थान्पौरस्त्यानौपरिष्टांश्चविगीतान्विरुद्धानभिहितान्नावबुध्यते यद्वा पूर्वक्रमभेदंच नगतमात्मनोनानुसंधत्ते हीनः सइति निर्दिशेदिति सर्वत्रक्रियानुषङ्गोभविष्यतीति ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । अदेशं यत्र ऋणिकगमनंनसंभाव्यते तथा एकान्तादि । तथा उक्त्वा देशादि पश्चान्नमयैतदुक्तमित्यपह्नुते । तथा अधरोत्तरान् पूर्वोत्तरवाक्यानि स्वान्येव यानि तदर्थान्विपरीतान् विरुद्धान् नबुध्यते ॥ ५३ ॥

( ३ ) **कुल्लूकः** । अपदिश्येति असंभाव्यइति ब्रूहीत्यादिअदेश्यम् । यत्र देशेऽधमर्णस्य ऋणग्रहणकाले सर्वदावस्थानंन संभवतीति निर्दिश्य चादेशादिकंनैतन्मया निर्दिष्टमित्यपनयति यश्च पूर्वोक्तानर्थास्वर्थान्स्वोक्तान्विरुद्धान्वात्रगच्छति यश्च ममहस्तात्सुवर्णस्य पलमनेन गृहीतमिति निर्दिश्य मत्पुत्रहस्ताद्गृहीतमित्येवमादिना यः पुनरपसरति यश्चसम्यक्प्रतिज्ञातमर्थंकस्मात्त्वया रात्रावसाक्षिकंदत्तमित्येवमादिप्राड्विवाकेन पृष्टःसन्न समाधत्ते यश्च संभाषणानर्हनिर्जनादिदेशे साक्षिभिः सहान्योन्यंसंभाषते यश्च भाषार्थस्थिरीकरणाय नितरामुच्यमानंप्राड्विवाकेन प्रश्नंनेच्छेत् यश्च निष्पतेत् उक्तांश्च व्यवहारान्पुराऽनाख्याय यथा स्थानात्स्थानांतरंगच्छेत् यश्च ब्रूहीत्युक्तोन किंचिद्ब्रवीति उक्तंसाध्यंन प्रमाणेन प्रतिपादयति पूर्वसाधनमपरंसाध्यंतद्योन जानाति असाधनमेव साधनत्वेन निर्दिशति असाध्यमेव मानेन शशशृंगकृतंधनुर्देयमित्यादिसाध्यत्वेन निर्दिशति सतस्मात्साध्यादर्थाद्धीयते ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

( ४ ) **राघवानन्दः** । किंच अदेश्यादिषड्भिःश्लोकैरधमोत्तमर्णयोःपराजयहेतूनाह । अदेश्यं उत्तमर्णादृणग्रहणकाले तद्देशावर्तिनमपि साक्षित्वेनोपदिशतिवदत्युत्तमर्णः । तथा निर्दिश्य देशादिस्वरूपं पुनर्मया नोक्तमित्यपलपति । अर्थानधरोत्तरान् किंतद्वस्त्वित्वति पृष्टः पूर्वोत्तरविकलान् विगीतान् संख्यादिना स्वोक्तविरोधान्नावबुध्यते नजानाति उत्तमर्णइति शेषः ॥ ५३ ॥

---

( ५३ ) अदेश्यं = अदेयं ( नं० )

( ५ ) **नन्दनः** । हीनलक्षणं पञ्चभिः श्लोकैराह अदेयंयश्चेति । अदेयंदानादानयोरयोग्यंदेशकालादिकंनिर्दिश्याप-ह्नुते नैवंमयोक्तमिति निर्दिष्टापह्नुते । विगीताद्विप्रतिपन्नान् सहीयतइति वक्ष्यमाणेन संबन्धः ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । पराजितस्य लक्षणमाह चतुर्भिः अदेश्यमिति । यः अधमर्णः अदेश्यं असाक्षिकं दिशति कथय-ति । च पुनः अदेश्यं असाक्षिकं निर्दिश्य कथयित्वा अपह्नुते निह्नुते च पुनः अधरोत्तरानर्थान् पूर्वापरानर्थान् कार्याणि विगीतान् विरुद्धान् नावबुध्यते न जानाति ॥ ५३ ॥

**अपदिश्यापदेश्यंच पुनर्यस्त्वपधावति ॥ सम्यक्प्रणिहितंचार्थंपृष्टः सन्नाभिनन्दति ॥ ५४ ॥**

( १ ) **मेधातिथिः** ।. पूर्वेणार्धेनोक्तस्यार्थस्य निगमनमुत्तरेणानुक्तोर्थउच्यते यदुक्तं ॥ अदेशंयश्च दिशति निर्दि-श्यापह्नुते च यइति ॥ सएवार्थोपदिशत्यस्याऽऽदेशएवापदेशआदिश्य कथयित्वा पुनः पश्चादवधावत्यपसरतिनैतौ देश-कालौ मम निश्चितौ यावत्सुदेशकालोवधारयति तावदयंमह्यमिति पश्चाद्ब्रवीति सोपि तस्मादर्थाद्धीयते सम्यक्प्रणिहितंचा-र्थमनाकुलंनिश्चितमुक्तंयदा पृच्छते तदानेनोक्तंतत्र किंब्रवीषि केन वा प्रमाणेन स्वपक्षंसाधयसीति पृष्टोन श्रद्दधते सम्यक्-प्रणिहितंचार्थमनाकुलंनिश्चितमुक्तं कथान्तरंप्रस्तौति विचारावसानेन किल मेपराजयोभवतीति कालमुपक्षिपामीति तस्या पिपराजयएव । अथवापदेशोव्याजस्तमपदेश्यापन्यस्य योपैत्यधुनामे महती पीडा समुत्पन्ना न शक्नोमि प्रतिवक्तुमलीका-दिना वा प्रस्थितः सोपि जीयते ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । तथा बहुविधं अपदिश्य उक्त्वा पुनः स्वयमेवावधारणादयमेवात्र हेतुर्ग्राह्यइति । प्रणिहि-तं विचारितम् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । किंच । अपेति । देश्यएवोपदेश्यस्तमपदिश्योक्त्वा अपधावति पलायते । पुनर्वदति मद्धस्ता-त्सुवर्णंगृहीतमित्युक्त्वा मत्पुत्रहस्ताद्गृहीतमितिवा सोपि तस्मादर्थात्प्रहीयतइत्यनुवादः । अपिच सम्यक्प्रणिहितं कस्मा-त्त्वयेदमपहसितमितिप्राड्विवाकेन पृष्टःसन् नाभिनन्दति न समाधत्ते प्रमाणोपन्यासपुरःसरम् ‡ ॥ ५४ ॥

( ५ ) **नन्दनः** । अपदेश्यमपदिश्य वक्तव्यमुक्त्वा तत्साधने यः पुनरपधावति अपसरति । पूर्वंस्वयमुपन्यस्तंसद-स्यैःसम्यक्प्रणिहितमवधृतमर्थंतैःपृष्टःसन्नाभिनन्दति नसम्यङ्मयाबुद्धमित्ति वदतिसोऽपि हीयतइति संबन्धः ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । अपदिश्यापदेश्यं कार्याकार्यं नजानाति वाच्यावाच्यंवा न जानाति । पुनः यः पुनः धावति स्थानात्स्थानान्तरंगच्छति । च पुनः सम्यक्प्रणिहितमर्थं सम्यक्प्रकारेणदत्तंद्रव्यं पृष्टःसन्नाभिनंदति नकथयति ॥ ५४ ॥

**असंभाष्ये साक्षिभिश्च देशे संभाषते मिथः ॥ निरुच्यमानंप्रश्नंच नेच्छेद्यश्चापि निष्पतेत् ॥ ५५ ॥**

( १ ) **मेधातिथिः** । असंभाषणार्हे देशेऽपह्नवादौ साक्षिभिः सह संभाषतएकाकी तद्देशशङ्कया निरुच्यमानं पृच्छ्य-मानंनिरूप्यमाणंवा प्रश्नंविचारवस्तुंनेच्छति किंचिद्राजकार्यमुद्दिश्य राजपुत्रमान्याद्यनुग्रहेण च काललाभंकरोति यश्चापि

---

ऽऽअहसितम्= अपहस्तितम् ( राघ०४ )

‡ पुरसरं=पुरःसरंसोऽपिहीयते ( राघ०४ )

१ देश्यएवोपदेश्यस्तमपदिश्योक्त्वा=अपदेश्यमपादिश्योक्त्वा ( राघ ०४ )

( ५५ ) असंभाष्ये=असंभाव्ये ( नं )

निःष्पतेत् वक्ष्यमाणंचक्रियापदंसहीयतइति यदेवोक्तंपुनर्यस्त्ववधावतीति सएवार्थः यश्चापि निष्पतेदिति पुनर्वचनेप्रयोजकमुक्तमत्यन्तापौनरुक्त्यंमाभूदिति कश्चिद्विशेषआश्रयितव्यः ॥ ५५ ॥

( ३ ) **सर्वज्ञनारायणः** । असंभाष्ये संभाषानर्हे देशे एकान्तादौ । स्वकीयंप्रश्नं परेण निरुच्यमानमाकलय्य नेच्छेत्तदनिच्छाविभावकंकोलाहलादि कुर्यात् । निष्पतेत् सभातःपलायेत् ॥ ५५ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् । असंभाष्ये संभाषानर्हे निर्जनादिदेशे साक्षिभिःसंभाषतेसोपि तस्मादर्थाद्धीनः । यश्चापि निरुच्यमानं प्राड्विवाकेन प्रश्नं नेच्छेदुत्तरंदातुम् । अथच निष्पतेत् नयुक्तंस्थातुमितिनिष्क्रामेत्सोपिहीनः । एतद्वयोःसाधारणम् ॥ ५५ ॥

( ५ ) **नन्दनः** । साक्षिभिरसंभाष्ये । मिथोदेशे रहस्यइति यावत् । निरुच्यमानंसूत्य विकल्पेनोच्यमानम् । प्रश्नंपृष्टमर्थम् । नेच्छेन्नसंवदेत् । निष्पतेत्सदसोपसरेत् । सोपि हीयतइतिसंबन्धः ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । असंभाष्येदेशे अवाच्येदेशे साक्षिभिर्मिथोयःसंभाषते । च पुनः निरुच्यमानं वाच्यमानं प्रश्नंवानेच्छेत् न कथयति । च पुनः यः निष्पतेत् पलायते ॥ ५५ ॥

**ब्रूहीत्युक्तश्च न ब्रूयादुक्तंच न विभावयेत् ॥ नच पूर्वापरं विद्यात्तस्मादर्थात्सहीयते ॥ ५६ ॥**

( १ ) **मेधातिथिः** । उक्तार्थएव श्लोकोयं श्लोकान्तरैर्दृश्यते । पुनर्वचने च प्रयोजनमुक्तंबहुकृत्वापि पथ्यंवेदितव्यमितिअक्षरार्थस्त्वर्थिना विश्लेषिते पूर्वपक्षे प्रतिवादी ब्रूह्यस्मिन्वस्तुनीति पृष्टोयदि न ब्रूयात्पुनःपुनः पृच्छ्यमानेऽपि योहि सम्यगुत्तराभावादेव मे पराजयोभवति तूष्णींभूतस्य तु संशयएव न पराजयोभवतीत्यनया बुध्या नोत्तरंददाति सोपि जीयते वक्ष्यति चात्र कालावच्छेदंन चेत्त्रिपक्षात्प्रब्रूयादिति सद्योह्याकृष्टस्य* पूर्वपक्षार्थानवबोधादुत्तराप्रतिपत्तेर्युक्तंकालहरणं अत्र च दिवसैः पञ्चभिर्दशभिर्द्वादशभिर्वैषड्दतस्त्रिपक्षसमाप्तिर्नत्वियन्तंकालंतूष्णींभावएव यश्चातोधिकः कालः संस्थितोपि कश्चित्संवत्सरंप्रतीक्षेत प्रतिभावयेदिति न युक्तमादर्तुंयतोप्रतिभावे प्रतीक्षाकारणंसोसंवत्सरादूर्ध्वंभवतीति किमित्यकारणं नचैषनियमः केन चित्प्रकारेण नावगम्यते प्रतिभानवतः संवत्सरेण प्रतिभाभवतीति तस्मात्तावन्त्येवाहान्युपेक्षा युक्ता यावद्भिः पूर्वपक्षावधारणा भवत्युत्तरंच प्रतिभाति एतच्चामुकस्य मन्दधियोप्येतावन्मात्रैरहोभिर्भवतीति नाधिकंकालमुपेक्षणीयं पूर्वपाक्षिकस्य तु तदहरेव स्वार्थविनिवेशनंयुक्तं यतइदमेषामवधारयतीदंवानेन ममापकृतमिति निश्चितंतस्य भवति स्वेच्छयाह्यसौ प्रवर्तते केवलंतस्मै स्वपक्षमावेदयते किमित्यनिश्चितः स्वार्थोभवति उत्तरपाक्षिकस्त्वविदितसंबन्धस्तदानीमेव राजपुरुषैरानीयमानः कथमिव स्वपरपक्षौ निश्चिनुयात् पक्षद्वयनिरूपणंहि तदस्य तदानीमेवापतति नान्यथोत्तरपाक्षिकोभवति तस्मात्पूर्वपाक्षिकस्य साध्ये वस्तुनि तदहः पूर्वपक्षसमाप्तिर्द्वित्रादिदिवसलाभोवोभवपि चैतौ पक्षौ स्मृत्यन्तरपरिगृहीतौ तथाह्याह ॥ सुनिश्चितबलाधानः पूर्वपक्षी भवे त्सदा । दशाहंद्वादशाहंवा स्वपक्षंपरिशोधयेदिति ॥ तथेदमपरम् ॥ ततोर्थीलेखयेत्सद्यः प्रतिज्ञातार्थसाधनं ॥ या तु संवत्सरपरीक्षा सा मूलासंभवादप्रमाणं नहि व्यवहारस्मृतावष्टकादिवद्वेदमूलता शक्यते वक्तुरकार्यरूपत्वादर्थस्य प्रमाणान्तरविषयत्वे च तदसंभवः प्रतिपादितः । एषा पितृपक्षोपेक्षा न सर्वत्र यतउक्तं ॥ साहसस्तेयपारुष्ये गोभिशापात्यये स्त्रियां । विवादयेत्सद्यएव कालोन्यत्रेच्छयास्मृतइति ॥ साहसादौ हि चिरमुपेक्ष्यमाणे परमपरामुयात् अतः सद्योविवादोविधीयते । नचात्र स्मृत्यादयोनुक्तहेतवः संभवन्ति साहसादिकारणं हि तदानीमेव राजानंवेदयेत तीव्रसंवेगता हि तत्र भवति वस्त्राद्युपहारेण तदुपेक्षायां रागशङ्का भवति साक्षि-

---

* आकृष्टस्य=आक्षिप्तस्य ( आ आ )

णस्तत्र यदृच्छया संनिहिताअपि भवन्ति ते हि देशान्तरङ्गतानामजात्यादिभिर्नविज्ञायन्ते ततः स्वाभाविकप्रमाणाभावः किंच ऋणादानादिषु कदाचिदितरेतरंसंदधते न तत्र राज्ञोहस्तप्रक्षेपः प्रायेण च संशुद्धौ स्मृतिर्नयुज्यते तदा कियद्दत्तमिति। साहसकारी तु राजाऽवश्यंनिग्रहीतव्य इतरेण संधीयमानोपि तस्मादृणादिषु कालहरणंसाहसादिषु सद्यइति स्थितं तदुक्तं गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि॥ ऋणादिषुहरेत्कालंकामंतत्त्वबुभुत्सया॥ यदा संकुलः पूर्वपक्षोभवति तदा गहनत्वान्न शक्यते ग्रहीतुमनाकुलोविलुप्तक्रमेपि गृहीतप्रतिवचनंकालमहत्वान्नशक्यते सर्वेण स्मर्तुमिति स्मृत्यन्तरस्यार्थः। उक्तंच नविभावयेत् साध्यंवस्तुनिर्दिश्य नसाधयति साधनस्याभावाद्विपक्षाभावात्। नच पूर्वापरंविद्यात् उक्तमेतत् तस्मादर्थव्यवहारवस्तु न सहीयते पराजितोभवतीत्यर्थः॥ ५६॥

( ३ ) **सर्वज्ञनारायणः**। नब्रूयात् चिन्तयन्नेव तिष्ठेत्। उक्तं स्वोक्तं नविभावयेत् नव्याकुर्यात्। नच पूर्वापरंएतत्प्राग्वाच्यमेतत्पश्चादिति जानीयात्। तस्मात् प्रक्रान्तादर्थात्॥ ५६॥

( ४ ) **राघवानन्दः**। किंच। ब्रूहीत्युक्तोनब्रूयात्। वदतोऽवश्यंपराजयइतितूष्णींतिष्ठेत्। न विभावयेत्। पूर्वापरं साध्यं* नविद्यात् यथावस्तु नविजानीयात्। अर्थात् शशशृङ्गधनुर्भवतीतिसाध्यत्वेननिर्दिश्य तस्मादर्थाद्व्यवहारवस्तुतोहीयते पराजितोभवतीति। एतदुत्तमर्णस्य॥ ५६॥

( ५ ) **नन्दनः**। न विभावयेत्पूर्वापरंनच विद्यात्। इदंपूर्वमुक्तमिति च न विद्यात् हीयते जीयते॥ ५६॥

( ६ ) **रामचन्द्रः**। त्वंब्रूहीत्युक्तःसन्योन ब्रूयात्। च पुनः उक्तंस्ववचनं नविभावयेत्। च पुनः पूर्वापरंकार्यं योन विद्यात्सपुरुषस्तस्मादर्थाद्धीयते हीनोभवतीत्यर्थः॥ ५६॥

**साक्षिणः संतिमेत्युक्त्वा दिशेत्युक्तोदिशेन्न यः॥ धर्मस्थः कारणैरेतैर्हीनंतमपि निर्दिशेत्॥ ५७॥**

( १ ) **मेधातिथिः**। ज्ञातारः साक्षिणः पुरुषाममसंतीत्युक्त्वा यदोच्यते। कथयतामिति तदा तूष्णीकआस्ते न तान्देशनामजातिभिर्विशेषणैः कथयति तदा एतैः प्रत्येकंपूर्वमुक्तैः कारणैरिह हीनोऽसौद्रष्टव्यः। इतिधर्मस्थोधर्माधिकरणस्थः प्राड्विवाकोनिर्दिशेन्निश्चितंब्रूयाज्जितोयमिति। तथैव विवक्षितार्थकप्रमाणवृत्त्या पराजयएव स्वपक्षे साधनादावप्यभावानिश्चयश्च पुनः पुनरवसरे ऽनुपन्यासात्कारणान्तरस्य चानुपन्यासेऽभावादिति। ज्ञातारइति तृन्नन्तमेव तत्रेदमिति द्वितीयान्तंयुज्यते। खलर्थतृनामिति षष्ठीनिषेधात् हीनंतमिति द्वितीयान्तःपाठइतिशब्दप्रकारार्थोद्रष्टव्यः। एभिरुक्तैः प्रकारैरन्यैश्चैवंविधैर्हीनंतन्निर्दिशेत् यदा तु वाक्यार्थवचनमात्रंतदा हीनोसाविति पाठः वाक्यार्थस्य कर्मत्वाद्द्वितीयायाअभावः। एते पराजयहेतवः नत्वाकारेङ्गितादिवद्व्यभिचारणाः। योहि पुनः पुनर्विचारावसरे न सन्निधीयते संनिहितोनोत्तरंप्रतिवक्ति न तत्र निश्चितमिदंभवति नास्यजयहेतुरस्तीति। यदि च सर्वदैवानुत्तरवादिनंनपराजयेद्राजा ततोव्यवस्थाभङ्गआपद्यते पौर्वापर्यानवबाधस्त्विङ्गितादिवद्द्रष्टव्यः। यः सर्वकालवाग्मीप्रगल्भंप्रतिपत्तिमांस्तस्येङ्गितादयोन्यथाभवंतः पराजयहेतौ प्रमाणान्तरेणापिनिश्चितेऽपिलिङ्गदर्शनस्थानीयाउपोद्बलका भवन्ति॥ ५७॥

( २ ) **सर्वज्ञनारायणः**। मेत्युक्तेति छान्दसःसन्धिः। धर्मस्थः धर्मासनस्थोराजादिः। कारणैरेतैः प्रागुक्तैश्च तं वादिनं हीनं पराभियोगप्राप्तम्॥ ५७॥

---

* साध्यं=पूर्वसाधनंपरंसाध्यं ( राघ० ४ )

( ५७ ) साक्षिणः=ज्ञातारः ( क )

( ५७ ) साक्षिणः सन्तिमे=सन्तिज्ञातारइ ( नं० )

( ३ ) **कुल्लूकः** । साक्षिणोमम विद्यन्तइत्युक्त्वा तान्निर्दिशेत्युक्तोयोननिर्दिशति तंपूर्वोक्तैरेभिः कारणैर्धर्मस्थः प्राड्विवाकः पराजितंकथयेत् । ज्ञातारःसन्तिमेत्युक्त्वाइति वा पाठः । अत्रछान्दसमिकारस्य पररूपत्वम् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । किंच साक्षिणइति । ज्ञातारइति पाठान्तरम् । साक्षिणःसन्तिमे ममाप्यन्यसाक्षिणइति । मयानगृहीतमत्यर्थे तर्हि दिशानयेत्युक्तोनानयति । मेत्युक्तेत्यार्षः । धर्मस्थः प्राड्विवाकः कारणैरुक्तैः हीनं पराजितं निर्दिशेत जानीयात् । तमपीत्यपिशब्दादधमर्णमपि ॥ ५७ ॥

( ५ ) **नन्दनः** । अविद्यमानलेख्यादिसाधनेऽर्थे ज्ञातारः साक्षिणःसन्तीत्युक्त्वा तान् ज्ञातॄन् । दिश दर्शयेति सभ्यैरुक्तोऽनेन साक्ष्यनुदेशाख्येन हेतुना धर्मस्थो धर्मासनस्थः । प्रत्यर्थिदत्तोत्तरस्याभियोगस्याप्रतिवचने ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । ज्ञातारः मे ज्ञातारः सन्ति इति उक्त्वा आदिश कथय धर्मस्थः यः उक्तः सन् नादिशेत् नकथयेत् एतैः कारणैस्तमपि हीनं पराजितं निर्दिशेत्कथयेत् ॥ ५७ ॥

## अभियोक्ता न चेद्ब्रूयाद्बध्योदण्ड्यश्च धर्मतः ॥ न चेत्त्रिपक्षात्प्रब्रूयाद्धर्मंप्रति पराजितः ॥ ५८ ॥

( १ ) **मेधातिथिः** । अभियोक्तार्थीकिंचन पुरुषमाहूय यदि व्यवहारपदंन कथयति तदा निष्प्रयोजनाद्बध्योदण्ड्यः श्च दण्डबन्धने दण्डपरिमाणे च गुणवत्तांप्रत्यर्थिन आव्हानेन च हानिमपेक्ष्य कल्पनीयानि अतस्तदहरेवार्थिनाविवदितव्यं प्रत्यर्थीतु नचेत्त्रिपक्षाद्ब्रूयादित्यर्थस्तदा नासौ दण्ड्योबन्धयितव्योवा किंतर्हीयता कालेनोत्तरे सत्यपराजितएव धर्मप्रति धर्मतएवायंपराजयोन छलमित्यर्थः । त्रिपक्षादिति पात्रादिषु द्रष्टव्यस्तेनेकाराभावः अर्थतत्त्वमस्य लोकस्यास्माभिः प्राङ्निरूपितम् ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । नचेद्ब्रूयात् ज्ञातॄन् साक्षिणः ज्ञातृपदंप्रमाणपरम् । वध्यस्ताडनादिनाअभियुक्तेनाप्रमाणे वाच्ये विशेषमाह नचेदिति । त्रिपक्षादर्वाङ् नचेत्साक्षिणोब्रूयात्तदा सः धर्मप्रति धर्मानपेक्ष्य पराजितोभवत्यतोवध्योदण्ड्यश्चेत्यर्थाज्जातम् । एतच्च प्रत्यर्थिविषयम् । अर्थिना सद्यएव वाच्याः स्मृत्यन्तरात् ॥ ५८ ॥

( ३ ) **कुल्लूकः** । योऽर्थीसन् राजस्थाने निवेद्यभाषायां न ब्रूयात्तदा विषयगौरवापेक्षया बध्योलघुनि विषये दण्ड्यश्चधर्मतः स्यात्प्रत्यर्थी पुनर्यदि पक्षत्रयमध्ये न ब्रूयात्तदा धर्मतएव पराजितः स्यात् नतुछलेन ॥ ५८ ॥

( ४ ) **राघवानन्दः** । अभियोक्ता अर्थीसन् राजस्थाने निवेद्य राजपुरुषमानीय व्यवहारास्पदंभाषांनब्रूयात् । वध्यइत्यादि विकल्पस्तु विषयगौरवाद्यपेक्षया । त्रिपक्षात्पक्षत्रयमपि प्रत्यर्थीवा पुनर्न ब्रूयात् साक्षी वा न ब्रूयात् तदापराजितइति सोपिदण्डार्हः ॥ ५८ ॥

( ५ ) **नन्दनः** । अभियोक्तारंप्रति राज्ञः कर्त्तव्यमाह अभियोक्तानचेदिति । प्रत्यर्थिदत्तोत्तरोभियोक्ता ततउत्तरंनचेद्ब्रूयाद्बध्योहिंस्यः । दण्ड्योदण्डार्हः । तद्गुणापेक्षया विकल्पः । तत्रकालावधिरुत्तरार्द्धेनोक्तः । धर्मशब्दौ व्यवहारवचनौ ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । अभियोक्ता उत्तमर्णः नब्रूयात् सधर्मतोवध्योदण्ड्यश्च । प्रत्यर्थीचेद्धर्मप्रति त्रिपक्षान्न ब्रूयात्सपराजितोज्ञेयः ॥ ५८ ॥

---

( १ ) मपि=मध्ये ( राघ० ४ )

**योयावन्निह्नुवीतार्थंमिथ्यायावतिवा वदेत् ॥ तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणंदमम् ॥ ५९ ॥**

( १ ) **मेधातिथिः** । येन पञ्चसहस्राणि दत्तानीति प्रमाणान्तरान्निश्चितंलेख्यादौ तु करणे देशसमारोपितानि प्रमाणान्तरंसंवत्सराख्यमिति निश्चित्येदमपश्यत्केवलेन लेख्यप्रमाणेन सर्वत्र प्रवर्तमानच्छलव्यवहारीतिद्विगुणंदण्ड्यं यस्य तु विस्मृत्याप्यन्यथा प्रवृत्तिराशङ्क्यते तस्य दशकंशतमेवमितरस्यापि नतु सर्वापह्नवे दशभागएकदेशापह्नुवे द्विगुणमिति किन्तुशाठ्यादन्यथा प्रतिपद्यमानौद्विगुणंदण्ड्यौ विस्मृतिदारिद्र्याभ्यांदण्डमुत्तरं योयावन्तमर्थमपह्नुवीतापजानीतेऽधमर्णो-मिथ्यायाचति विपरीतंधनंवदेदुत्तमर्णः तावुत्तमर्णाधमर्णावधर्मज्ञौद्विगुणंदमं तदित्यपह्नूयमानधनपरामर्शः यावदपह्नुतं-ततोद्विगुणंदमोदण्डः अधर्मज्ञग्रहणाच्च लिङ्गानिश्चितच्छलविषयोयंदण्डइत्युक्तम् ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्यन्ताभिनिवेशादिप्रवृत्तौ दण्डमाह योयावदिति । निह्नुवीत प्रत्यर्थिशोधितंमयेत्यादि । मिथ्या वदेत् मह्यंधारयतइत्यर्थः ॥ ५९ ॥

( ३ ) **कुल्लूकः** । यः प्रत्यर्थी यत्परिमाणधनमपनयत्यर्थीवा यत्परिमाणधने मिथ्यावदति तावधार्मिकावपह्नुतमिथ्योक्तधनाद्द्विगुणंदण्डरूपंदापनीयौ । अधर्मज्ञाविति वचनात्ज्ञानपूर्वापह्नवमिथ्योक्तिविषयमिदम् । प्रमादादिनापलापमिथ्यानियोगापह्नवे द्विगुणमिति शतदशमभागंवक्ष्यति ॥ ५९ ॥

( ४ ) **राघवानन्दः** । उत्तमर्णाधमर्णयोर्दण्डप्रकारमाह यइति । यः प्रत्यर्थी यावद्धनंनिह्नुवीत अर्थीवा यावति परिमाणे मिथ्याभाषते तद्द्विगुणं तौदण्ड्याविन्वत्ययः । दमं धनदण्डम् ॥ ५९ ॥

( ५ ) **नन्दनः** । विवादिनोर्मिथ्यावचने दण्डमाह योयावन्निह्नुवीतेति । यःप्रतिवादी यावद्यावन्तमेकदेशंकृत्स्नंवार्थमपह्नुवीत । योवादी यावत्येकदेशे कृत्स्ने वार्थे मिथ्यावदेत्तद्द्विगुणंतिरोहितार्थाद्द्विगुणंदण्डंदाप्यौदण्डत्वेनदाप्यौ । अपि शब्दात्तिरोहितमर्थंच ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । यः अधमर्णः यावन्निह्नुवीतार्थं अर्थीवा यावति मिथ्या वदेत्तावद्धर्मज्ञौ नृपेण तस्मात्कारणात्तद्विगुणंदमंदाप्यौ दण्डनीयौ ॥ ५९ ॥

**पृष्टोऽपव्ययमानस्तु कृतावस्थोधनैषिणा ॥ त्र्यवरैः साक्षिभिर्भाव्योनृपब्राह्मणसन्निधौ ॥ ६० ॥**

( १ ) **मेधातिथिः** । यः कृतावस्थआहूतोभियुक्तोगृहीतप्रतिभूश्च राजसकाशे प्राड्विवाकेनान्यैर्वा पृच्छ्यते किमस्मै धारयसि नेति पृष्टः सन्नपव्ययतेऽपह्नुते ह्नुवानोधनैषिणा स्वधनंपूर्वप्रयुक्तमात्मनःसाधयितुमिच्छता साक्षिभिर्भाव्योविप्रतिपन्नः प्रतिपादयितव्यः । त्र्यवरैस्त्रय अवरेयेषांतैस्त्र्यवरैरवरमपचयातिशयमाह यद्यत्यन्तन्न्यूनास्तदा त्रयः स्युः अन्यथा त्रिभ्यऊर्ध्वम् । नृपब्राह्मणसंनिधाविति ननु च तेषामेव यैर्न्यायः प्रारब्धस्तत्रतत्संनिधानएव साक्षिप्रश्नः प्राप्तः किमनेन नृपब्राह्मणसंनिधाविति नैवंप्रमाणपुरुषप्रेषणेनापि साक्षिप्रश्नउपपद्यतइति साक्षात्प्रष्टव्यइति पुनर्वचनम् ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । पृष्टः प्राड्विवाकेन किंधारयसि नवेति । अपव्ययमानोनिह्नुवानः । कृतावस्थः कृतावस्थानः । त्रयोऽवराअल्पीयांसोयेषांसाक्षिणांतैः ॥ ६० ॥

( ३ ) **कुल्लूकः** । धनार्थिनोत्तमर्णेन राजपुरुषापकर्षकृताव्हानः प्राड्विवाकेन पृष्टःसन् यदा न धारयामीत्यपह्नवानोभवति तदा नृपत्यधिकृतब्राह्मणसमक्षंत्र्यवरैः साक्षिभिः त्रयोवरान्यूनायेषांतैरर्थिना भावनीयः ॥ ६० ॥

( ४ ) **राघवानन्दः** । किंच अपव्ययमानः सन् पृष्टः प्राड्विवाकेन कृतावस्थः *राजपुरुषकृताव्हानः । त्र्यवरैः त्रयोऽवरान्यूनायेभ्यःसाक्षिभ्यः तैर्यथावत् तैर्वक्ष्यमाणविशेषणविशिष्टैःसाक्षिभिः धनैषिणोत्तमर्णेन भाव्यः ऋणवत्तया संभावनीयः सऋणं दाप्यः इत्यध्याहार्यम् ॥ ६० ॥

( ५ ) **नन्दनः** । वादिप्रतिज्ञातमर्थसभ्यैः पृष्टस्तमर्थमपव्ययमानोपह्नुवानः । कृतावस्थोयथा नापसरति तथा सभ्यैः कृतावस्थानः प्रतिवादी धनैषिणा वादिना त्र्यवरैः साक्षिभिर्भावयितव्यः । प्रतिज्ञातार्थसाधनीयः ॥ ६० ॥

( ६ ) **रामचन्द्रः** । धनैषिणा उत्तमर्णेन पृष्टःसन् अपव्ययमानः निह्नुवानः कृतावस्थः कृतपीडः नृपब्राह्मणसन्निधौ त्र्यवरैःसाक्षिभिर्भवितव्यः ॥ ६० ॥

**यादृशाधनिभिः कार्याव्यवहारेषु साक्षिणः ॥ तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतंच तैः ॥ ६१ ॥**

( १ ) **मेधातिथिः** । साक्षिलक्षणोपन्यासः श्लोकः यादृशाःसाक्षिणोयज्जातीयायद्गुणयुक्ताश्च धनिभिरुत्तमर्णैर्व्यवहारेषु धनप्रयोगादिषु कर्तव्यास्तादृशान्वक्ष्यमाणेन कथयिष्यामि यथा च वाच्यंवक्तव्यंपृष्टैः सद्भिस्तैःपूर्वाह्णइत्यादि तमपि प्रकारंवक्ष्यामीति ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । यथा यादृक्शपथादि कृत्वा । ऋतं सत्यम् ॥ ६१ ॥

( ३ ) **कुल्लूकः** । धनिभिरुत्तमर्णादिभिः ऋणादानादिव्यवहारेषुयथाविधाः साक्षिणः कर्त्तव्यास्तथाविधान्वदिष्यामि यथा च तैरपिसत्यंवक्तव्यंतमपि प्रकारंवक्ष्यामि ॥ ६१ ॥

( ४ ) **राघवानन्दः** । साक्षिणइत्युक्तंतल्लक्षणमाह यादृशाइति द्वाभ्याम् । व्यवहारेष्वृणादिषु साक्षित्वेन कार्याः । ऋतं सत्यं वाच्यं साक्षिभिर्यथेति तंच संप्रवक्ष्यामीत्यन्वयः ॥ ६१ ॥

( ५ ) **नन्दनः** । धनिभिरव्यवहारिभिः । तैःसाक्षिभिः । यथा ऋतंवाच्यंतथा च वक्ष्यामीति ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । साक्षिस्वरूपमाह तैः साक्षिभिः यथाऋतं सत्यं वाच्यम् ॥ ६१ ॥

**गृहिणः पुत्रिणोमौलाः क्षत्रविट्शूद्रयोनयः ॥ अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥ ६२ ॥**

( १ ) **मेधातिथिः** । कृतदारपरिग्रहागृहिणः । गृहशब्दोदारेषु वर्तते तेहि स्वकलत्रपरिभवभयान्नकूटमाचरन्ति । आत्मनि केचिन्निरपेक्षाअभिभवन्ति अन्यदेशान्तरगमने नात्मानंरक्षयिष्यामइहैव च क्वचिद्भूमाभविष्यामोधनंमित्रंवार्जयामइत्यनया बुद्ध्याअनृतमपि वदन्तिकुटुम्बिनस्तुस्वकुटुंबभयान्क्वात्मानंनपरिरक्षिष्यामइति दूरंकृत्वा कुटुंबस्य सापेक्षतया राजदण्डभयान्नान्यथा प्रवर्तन्ते । पुत्रिणइति पुत्रस्नेहात्पुत्रिणोपुत्रदारश्च साक्षिप्रश्नकाले साध्वाचारोपि कदाचिन्नसंनिहितोभवति सहि नैकस्मिन्देशे आस्थानवान् भवत्येवंमौलाअपि व्याख्येया मौलाजानपदास्तद्देशाभिजनास्ते हि स्वजनज्ञातिमध्ये पापभीरुतया न मिथ्यावदन्ति । मूलंप्रतिष्ठा सा येषामस्ति तेमौलाअर्थकथनमेतत् तद्भिलस्तु भावार्थएव कर्त्तव्यः योहि यत्रभावः सोपि तत्रास्तीत्यविरुद्धम् । क्षत्रविट्शूद्रयोनयः न ब्राह्मणः सर्वदाह्यस्याध्ययनाध्यापने विहिते अन्वहंवाग्निहोत्रहोमस्तत्र दूरस्थे राजन्यधर्मोमाभूदित्यसौ न कर्तव्यतयोपादीयते । यदृच्छयावगतार्थस्तुसाक्ष्यन्तराभावे गरीयसि कार्ये मुख्यतमः ससाक्षी तथा च ब्रूहीति ब्राह्मणंपृच्छेदिति साक्षिप्रश्नोभविष्यति योनिशब्दः प्रत्येकमभिसंब-

---

* राजपुरुष=राजपुरुषद्वारा ( राघ० ४ )

( ६२ ) अर्थ्युक्ताः=अभ्यज्ञाः ( क )

ध्यते क्षत्रियोयोनिरुत्पत्तिः कारणमस्यासौ क्षत्रयोनिः क्षत्रियजातीयइत्यर्थः । क्षत्रंयोनिर्जन्मास्येति पञ्चमीतियोगविभागात्समासोप्युक्तः । अर्थिनायदोक्तंभवत्येते ममसाक्षिणः साक्षिकर्मणि योग्याभवन्ति ये तु स्वयमागताःसाक्ष्यंददति न ते साक्षिणः । अनापद्यापत्साक्ष्यन्तराभावइति केचित् तदयुक्तं विसंवादकत्वमसाक्षित्वे कारणंतत्संवेदेन्नतानपैति न वयं ब्रूमः प्रतिषिद्धसाक्षिभ्योविद्यमानानृताभिधानहेतवोर्द्धसंबद्धावास्यामवस्थायां प्रतिश्रूयन्तेकिंतर्हि येषांकदाचिदाहूयमानानांधर्मविरोधोभवति श्रोत्रियादीनांतेषामविद्यमानेष्वन्येष्वनुभूतार्थानामिदंप्रत्यनुज्ञानंन पुनरभूतानाम् ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । मौलास्तद्ग्रामे परंपरयानिवसन्तः । अर्थ्युक्ताः अर्थिनोक्ताः नत्वयमेवसाक्ष्येऽहमितिवादिनः ॥ ६२ ॥

( ३ ) **कुल्लूकः** । कृतदारपरिग्रहाः पुत्रवन्तः तद्देशजाः क्षत्रियशूद्रवैश्यजातीयाः अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्याभवन्ति ते हि कृतपरिकरपुत्रभयात्तद्देशवासिनाविरोधाच्च नान्यथावदन्ति नतु ये केचिदृणादानादिव्यवहारेषु साक्षिणः स्युः । आपदितु वाग्दण्डपारुष्यस्त्रीसंग्रहणादिषूक्तव्यतिरिक्ताः साक्षिणोभवन्ति ॥ ६२ ॥

( ४ ) **राघवानन्दः** । मौलास्तद्देशजाः अर्थ्युक्ताअर्थिना उभयेनोक्ताः अत्रार्थेयूयं*साक्षिणइति तादृशाः साक्ष्यमर्हन्ति दातु मिति शेषः । आपत्कालेवक्ष्यमाणः ॥ ६२ ॥

( ५ ) **नन्दनः** । गृहिणोभार्यावन्तः । मौलाः कुलश्रेणीप्रधानभूताः । अर्थ्युक्ताअर्थिना कार्यकाले सर्वेषु वर्णेषु रक्षित्वेन भाविताः ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । गृहिणइति साक्षीश्रवणाद्दर्शनाद्भवति । तेसाक्षिणः कीदृशाः गृहिणः गृहस्थाः पुत्रिणःमौलाः वंशपरंपरायाताः ग्रामनिवासिनः क्षत्रविट्शूद्रयोनयः अर्थ्युक्ताः अर्थिना उक्ताः अनापदि साक्षित्वमर्हन्ति आपदि कदाचित् प्रापयेत् ॥ ६२ ॥

**आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ॥ सर्वधर्मविदोलुब्धाविपरीतांस्तु वर्जयेत् ॥ ६३ ॥**

( १ ) **मेधातिथिः** । आप्ताअविसंवादकायथादृष्टार्थवादिनःयेषांलोकोविप्रलंभकत्वंन संभावयति धर्मानुष्ठानपराये ज्ञातारः सर्वधर्मज्ञायदाचरन्तिश्रौतंस्मार्तमाचारनिरूढंच सर्वधर्ममिह नरकः फलमिह स्वर्गइत्येवंनिरवशेषंजानन्ति ते ह्यनृताभिधाने नरकंपश्यन्तोबिभ्यति अलुब्धाउदारसत्वानस्वल्पंधनंबहुमन्यन्ते एकैकस्य समस्तानि सर्वाणि विशेषणानि साक्षिक्रियायां गुणभूतत्वाद्गुणे च साहित्यस्य विवक्षितत्वात् । सर्वेषु वर्णेष्विति सर्वकार्येष्वित्यर्थः नजातिनियमोस्तीत्युक्तंभवति यत्पुनर्जातिव्यवस्थावचनंतदुपरिष्टाद्वक्ष्यामः तदेतदुक्तंभवति सर्वैःकार्यिभिःसर्ववर्णायथा संभवंसाक्षिणःकर्तव्याः कार्येषु ऋणादानादिषु यथोक्तलक्षणाः । विपरीतांस्तु वर्जयेत् यद्यपि विशिष्टेष्वभिहितेषु तद्विपरीतानांप्रसङ्गएव नास्तितथापि लौकिकोयंपर्युदासः । प्रायेण हि लौकिकाअन्यविषयेऽन्येतद्विपरीतंनिषेधयन्ति तथा च भवन्ति वक्तारः क्रिया हि द्रव्यंविनयति नाद्रव्यमिति किंचाविसंवादकमिह प्रधानंसाक्षिलक्षणंतच्च न विधिमुखेन शक्यावसानंकिन्तु विसंवादकरणाभावमुखेननह्यविसंवादकत्वंप्रत्यक्षदृश्यंतद्धियथार्थाभिधानंश्रोत्रग्राह्ये च वस्तुनि कुतः प्रत्यक्षोयथार्थनिश्चयः प्रत्यक्षत्वे हि नैवसाक्ष्यवगमोन्विष्यते न च सर्वत्र परोक्षे वस्तुनि शब्दावगम्ये प्रमाणान्तरसंभवः तस्माद्यानि भूयस्त्वेन मिथ्याभिधानकरणतया दृष्टानि न भावनिश्चयेनाविसंवादकत्वमनुमीयते अतस्तत्प्रदर्शनार्थोयमुपक्रमोविपरीतांस्तु वर्जयेदिति ॥ ६३ ॥

---

* यूयं=पूर्वं ( राघ० ४ )

( २ ) **सर्वज्ञनारायणः** । आप्ताः यथादृष्टवादितया गृहीतसंवादाः तथा सर्वविदः अलुब्धाश्च निश्चिताः आप्तत्वेऽपि कार्याः ॥ ६३ ॥

( ३ ) **कुल्लूकः** । क्षत्रविट्शूद्रयोनयइत्युक्तत्वात्ततोब्राह्मणपरिग्रहार्थंसर्वेषु वर्णेष्वित्यभिधानंसर्ववर्णेषु मध्ये ये यथार्थावगतवादिनः सर्वधर्मज्ञालोभरहिताःते साक्षिणः कर्त्तव्याः उक्तविपरीतांश्चवर्जयेत् ॥ ६३ ॥

( ४ ) **राघवानन्दः** । किंच आप्तायथावगतवादिनः । सर्वधर्मविदोमन्वादिधर्मशास्त्रविदः । अलुब्धा इति च्छेदः ॥ ६३ ॥

( ५ ) **नन्दनः** । कार्याः कार्येषु आप्ताधर्मनिश्चये प्रधानभूताः । अलुब्धाः रागद्वेषरहिताः । सर्वेषु धर्मेषु विद्वांसः । सर्वेषु विद्यमानावर्णविशेषानपेक्षयेति यावत् ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । सर्वेषुवर्णेषु चतुर्षु सर्वेषु कार्येषु साक्षिणः कार्याः । कीदृशाः आप्ताः गृहीतसंवादाः । पुनः कीदृशाः सर्वधर्मविदः अलुब्धाः । ब्राह्मणस्य ब्राह्मणाः क्षत्रियस्य क्षत्रियाः एवमग्रे ॥ ६३ ॥

**नार्थसंबन्धिनोनाप्तान सहाया न वैरिणः ॥ नदृष्टदोषाः कर्त्तव्यान व्याध्यार्तान दूषिताः ॥ ६४ ॥**

( १ ) **मेधातिथिः** । तानीमानि संभाव्यमानमिथ्याभिधानकरणत्वेन पठ्यन्ते तत्रार्थसंबन्धिनउत्तमर्णाधमर्णाद्या-उत्तमर्णाह्यधमर्णवचनेन पराजीयमानास्तदानीमेव रोषावेशवशिताःस्तंभयन्ति धनंमत्यादातुमधमर्णमतोसौ संनिहितधनत्वाच्चित्तमनुवर्तमानः शक्यते तस्मादसौनसाक्षी उत्तमर्णोपिनिर्धनेऽधमर्णेव्यवहारजयाच्चधनप्राप्तौ मह्यमयंप्रतिदास्यतीत्यनया बुध्या कदाचित्तत्पक्षानुगुणंवक्तीतिसोप्यसाक्षी अथवार्थः प्रयोजनंयस्य साक्षिणोविवादिभ्यां किंचित्प्रयोजनंसाध्यंतेन वा तयोः सउपकारगतेनार्थेन समानफलइत्येवंप्रकारार्थसंबन्धिनआप्तामित्रबान्धवतया कार्याभ्यन्तराः पितृव्यमातुलादयः सहायाः प्रतिभूप्रभृतयोवैरिणः प्रसिद्धादृष्टदोषाअन्यत्र कृतकौटसाक्ष्याअन्यद्वा प्रतिषिद्धमाचरितवन्तोव्याध्यार्तारोगपीडिताः न पुनरौषद्रोगिण इत्यार्त्तग्रहणं पीडितस्य हि क्रोधविस्मृत्यादयोमिथ्यावचनता च संभाव्यन्ते दूषिताःपातकिनोभ्यस्तोपपातकाश्च दृष्टदोषग्रहणन्तु तेषामेव कृतनिग्रहाणांपरिग्रहार्थंते हि राजनि भृतदण्डाग्राहितविनयत्वान्नसंप्रतिदूषिताभवन्ति ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थसंबंधिनस्तज्जयफलभागिनः । आप्ताः स्निग्धाः स्वस्यपरस्यवा असाधारण्येन । सहायाः भृत्याः वक्तुः । दृष्टदोषाः दृष्टसाक्ष्यमिथ्याभिधानाः । दूषिताः अभिशस्ताः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । ऋणाद्यर्थसंबन्धिनोऽधमर्णाद्याः आप्तामित्राणि सहायास्तत्परिचारकाः शत्रवः स्थानान्तरावगतकौटसाक्ष्याः रोगपीडितामहापातकादिदूषिताः साक्षिणोन कर्त्तव्याः । लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनांसंभवात् ॥ ६४ ॥

( ४ ) **राघवानन्दः** । विपरीतान्वर्जयेदित्युक्तंतानाह नेतिचतुर्भिः । अर्थसंबधिनः ऋणाद्यर्थसंबधिनः । आप्ताः पुत्रादयः । दृष्टदोषाः कूटसाक्षिणः । नव्याध्यार्ताः कुष्ठ*ाद्याक्रान्ताः । दूषिताः महापातकादिना ॥ ६४ ॥

* कुष्ठा=क्रूरा ( राघ० ४ )

( ५ ) **नन्दनः** । अर्थसंबन्धिनोवादिप्रतिवादिनोरन्यतरेण कृतोपकाराः । आप्ताएकतरस्मिन्पक्षेस्निग्धाः । सहायाः सहचारिणः । दृष्टदोषाः पूर्वकौटसाक्ष्यादिकृतदूषिताः । अभिशस्ताः ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । निषिद्धानाह नेति । अर्थिसंबधिनोन कार्याः । आप्ताःशक्तान । अर्थिसंबंधिसहायाःन । वैरिणः सहायानकार्याः । दृष्टदोषाः कुष्टाद्यपस्मारसहितान कर्तव्याः । व्याध्यार्तान कर्तव्याः । दूषिताःअभिशस्तान कार्याः ॥६४॥

**न साक्षीनृपतिः कार्यो न कारुककुशीलवौ ॥ न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्योविनिर्गतः ॥६५॥**

( १ ) **मेधातिथिः** । त्वंमे साक्षी भविष्यसीति व्यवहारकृता धनविसर्गादिकाले साक्षित्वे नृपतिनाध्येषितव्यः तस्य हि साक्ष्यंददतः पक्षपातंनाशङ्केरन् प्रभुत्वादतोन्यतरस्य कार्यनाशः नच साक्षिधर्मेण प्रष्टुंयुज्यते तद्देशवासीच यद्यपि लेखादिना संवादयेत्तथापि साक्षिधर्मसर्वंन कुर्यादिति तद्देशवासिनोराज्ञः समानकरणप्रतिषेधः । कारुकादीनांस्वकार्योपरोधशङ्कया संगत्या च ते जीवन्ति स्वभावश्चैषजानपदानांयत्स्वयंनिश्चितवन्तोपि जीवामहे वयमिति जिताः साक्षिकादिभ्यो-रुष्यन्ति ततश्च सार्वलौकिकीसंगतिःकारुकादीनामुच्छिद्यते किंच प्रकृतिपरिलघुत्वात्तेषांवृत्तयश्चलयितुमपि शक्यन्ते तथा च पक्षपातंभजेरन् श्रोत्रियस्य तु साक्षित्वे कर्तव्यता प्रतिषिध्यते राजवन्नपुनरप्रत्ययितता नहि श्रोत्रियत्वंप्रामाण्यंविहन्ति जनयत्येव विशेषतः नहि श्रोत्रियत्वंविसंवादहेतुतयोपलब्धमेवमुत्तरत्रापि । कारुकाः शिल्पोपजीविनः सूपकारायस्कारादयः कुशीलवानटनर्तकगायनाद्याः श्रोत्रियोवेदपाठकोयः स्वाध्यायनतत्परःसइह गृह्यते अथवा श्रोत्रियत्वंकर्मानुष्ठानोपलक्षणार्थंतेनानुष्ठानपरस्य तद्विरोधतया प्रतिषेधः लिङ्गस्थोब्रह्मचारी परिव्राजकपाखण्डलिङ्गधारिणस्तु कुशास्त्रवर्तित्वादेवा[illegible]ाः सङ्गेभ्योनिर्गता वेदसंन्यासिनोगृहस्थाः सङ्गोलालसतया विषयोपभोगोदृष्टार्थकर्मारम्भोवा ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । ननृपतिः तस्य । बहुव्यासक्तत्वेनाऽस्मरणात् । एवं कारुकः शिल्पी । कुशीलवोनटः । श्रोत्रियोवेदाध्ययनपरः । लिङ्गस्थः परिव्राजकादिः । संगनिर्गतः सर्वदैकान्तसेवनादिशीलः ॥ ६५ ॥

( ३ ) **कुल्लूकः** । प्रभुत्वात्साक्षिधर्मेण प्रष्टुमयोग्यत्वान्न राजा साक्षी कार्यः । कारुः सूपकारादिः कुशीलवोनटादिः तयोः स्वकर्मव्यग्रत्वात् । प्रायेणधनलोभवत्त्वाच्चासाक्षित्वम् । श्रोत्रियोप्यध्ययनाग्निहोत्रादिकर्मव्यग्रतया न साक्षी । लिङ्गस्थोब्रह्मचारीसङ्गनिर्गतः परिव्राजकः तयोरपिस्वकर्मव्यग्रत्वाद्ब्रह्मनिष्ठत्वाच्चासाक्षित्वम् । श्रोत्रियग्रहणादध्ययनाग्निहोत्रादिव्यग्रेतरब्राह्मणस्यानिषेधः ॥ ६५ ॥

( ४ ) **राघवानन्दः** । एतेषट् न साक्षिणइत्याह नेति । कारुकुशीलवावुक्तौ । राजादीनांस्वस्वकर्मव्यग्रतया अस्थिरचित्तत्वात् । नश्रोत्रियः अध्यापनाध्ययनाग्निहोत्रव्यग्रत्वात् । संगेभ्योविनिर्गतः संन्यासीति केचित् । कुटुम्बबहिष्कृतः मण्डलाच्च बहिष्कृतइतिवा लिङ्गस्थपेदन संन्यासिनोग्रहणात् ॥ ६५ ॥

( ५ ) **नन्दनः** । राज्ञः साक्षित्वे शपथादिना लाघवंसंभवेदिति राज्ञःप्रतिषेधः । कारुः कर्मकरोरजकादिः । कुशीलवोगायकः । परिकरभूतत्वात्तयोर्नृपसदस्याह्वाने परकार्यविरोधःस्यादिति प्रतिषेधः । श्रोत्रियादीनांत्रयाणामाह्वाने धर्मपीडास्यादिति प्रतिषेधः । न पुनरेषामसत्यवचनत्वात् । लिङ्गस्थः सन्यासी । सङ्गेभ्योविनिर्गतोविरक्तः ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । नृपतिः राजा साक्षी नकार्यः । कारुकः करकर्ता कुशीलवौ कुत्सितं शीलं यस्य सःकुशीलः । न लिङ्गस्थः ब्रह्मचारी । सङ्गेभ्योविनिर्गतः संन्यासी नकार्यः ॥ ६५ ॥

**नाध्यधीनोन वक्तव्यो न दस्युर्न विकर्मकृत्॥ न वृद्धो न शिशुर्नैकोनान्त्यो न विकलेंद्रियः॥६६॥**

( १ ) **मेधातिथिः** । अध्यधीनशब्दोत्यन्तपरतंत्रगर्भदासादौ रूढ्या वर्तते अन्ये तु तुल्यसहितत्वादध्याधीनइति पठन्ति अध्याधीनोबन्धकीकृतोवक्तव्योऽनुशास्यः शिष्यपुत्रादिराचार्याधीनत्वात्। अथवा कुष्ठादिना कुत्सितकायः दस्युः भृतदासवैतनिकः सद्युपादासयति कर्माणीति नैरुक्ते निरुक्तः। तस्य च दिवसभृतत्वान्नात्यन्तपारतन्त्र्यमस्तीति पृथगुपदेशः क्रियते कर्मजीवनत्वापत्तौ तथा विधानांजीविकोच्छेदः लघुवृत्तित्वाच्च लोभादिसंभवेनाप्रत्ययितताऽपि चौरस्य तु शब्दान्तरोपादानान्नदस्युग्रहणेन ग्रहणं अकठिणत्दयोवा दस्युः क्रूरचेष्टविकर्मकृच्छास्त्रविरुद्धंयः कर्मकरोति यथा ब्राह्मणःक्षत्रियवृत्तिर्वैश्योवेत्यादि वृद्धोवयःपरिणामादसंस्मृतिःशिशुर्बालोऽप्रामण्यवहारः एवं त्र्यवरग्रहणेनैकस्याप्राप्तेः प्रतिषेधोद्वयोः कस्यांचिदवस्थायां सभ्यनुज्ञानार्थः यथा तृहस्ताचारोपत्रे यद्यपि तत्र तृतीयलेखको भवति तथापि लेखनमात्रस्य व्यापारोन साक्षित्वर्हति कस्यचिदियमाशङ्कास्यात्। अन्त्योबर्बरचण्डालादिः स्वधर्मादन्यत्र शूद्रयोनित्वेन प्राप्तस्य प्रतिषेधः विकलेन्द्रियोऽन्धबधिरादिः शरीरपीडयोपलब्धिर्विकलत्वाच्च॥ ६६॥

( २ ) **सर्वज्ञनारायणः** । अध्यधीनोऽन्यस्य गर्भदासः। वक्तव्योदुराचारत्वादिना गर्हितः। दस्युर्घातकः। विकर्मकृत् सूनादिः। नैकइति। अभावे द्वयोरपि ग्रहणम्। अन्त्योऽन्त्यजः॥ ६६॥

( ३ ) **कुल्लूकः** । अध्यधीनोत्यन्तपरतन्त्रोगर्भदासोन वक्तव्योविहितकर्मत्यागाल्लोकविगर्हितः। दस्युः क्रूरकर्मा नचौरोनापि तस्करइति वक्ष्यमाणत्वात्। विकर्मकृन्निषिद्धकर्मकारी एतेषांरागद्वेषादिसंभवात्। न वृद्धः प्रायेण स्मृतिभ्रंशसंभवात्। नबालोऽप्रामण्यवहारत्वात्। नैकोविनाशप्रवासशङ्कया तस्य त्र्यवरैरितिविधानात्। अर्थप्रतिषेधसिद्धौ कस्याश्चिदवस्थायां द्वयोरभ्यनुज्ञानार्थंनिषेधवचनम्। अन्त्यश्चांडालादिः धर्मानभिज्ञातत्वात्। विकलेन्द्रियउपलब्धिवैकल्यान्नसाक्षीकार्यः॥ ६६॥

( ४ ) **राघवानन्दः** । एते सप्तदश न साक्षिणइत्याह नेतिद्वाभ्याम्। अध्यधीनः अत्यन्तपरतन्त्रः। गर्भदासोविचित्तत्वात्। वक्तव्यः सर्वलोकविगर्हितः वृद्धोऽत्यन्तवयसा। अन्त्यश्चाण्डालादिः। विकलेन्द्रियः बाधिर्यादियुक्तः॥ ६६॥

( ५ ) **नन्दनः** । अध्यधीनोत्यन्तपरतन्त्रः गर्भदासइतिकेचित्। वक्तव्योनिन्द्यः। दस्युर्हीनजातिः। अध्यधीनादीनामसाक्षित्वे कारणंसत्यवाचकनियमाभावः। पूर्वसाक्षिणांत्र्यवरमुक्तं अत्रैकत्वंप्रतिषिद्धं तेनायमर्थोगम्यते त्र्यधिकत्वमुत्तमः पक्षः। त्र्यवरत्वंमध्यमः। द्वित्वमधमः। नकदाचिदप्येकमिति॥ ६६॥

( ६ ) **रामचन्द्रः** । अध्यधीनोनगर्भदासःअत्यन्ताधीनः वक्तव्यः शिष्यपुत्रादिर्नकार्यः। दस्युर्घातकोवाविकर्मकृत्। नवृद्धः नभृतिदासःनान्त्यः अन्त्यः शूद्रचाण्डालः॥ ६६॥

**नार्त्तो न मत्तोनोन्मत्तो न क्षुत्तृष्णोपपीडितः॥ न श्रमार्त्तो न कामार्त्तो न क्रुद्धोनापि तस्करः॥६७॥**

( १ ) **मेधातिथिः** । आर्तोबन्धनादिना रसेन मत्तोमद्यमत्तः क्षीबः अपस्मारगृहीतउन्मत्तपिशाचकीक्षुत्तृष्णोपपीडितोबुभुक्षापिपासाभ्यां व्यथितः श्रमःकायचेष्टाधिक्येन दूराध्वगमनयुद्धादिनोत्पन्नस्तेनार्तः पीडितः। कामः स्त्रीसङ्गा-

---

( ६६ ) नाध्यधीनो=नान्याधीनो (क)

( १ ) वक्तव्यः सर्वलोक=वक्तव्यः विहितकर्मत्यागाल्लोकगर्हितः। दस्युः क्रूरकर्मा न तस्करः तस्य नापितस्करइवक्ष्यमाणत्वात्। विकर्मकृत् निषिद्धकारी। एतेषां रागद्वेषादि संभवात्। सर्वलोक (न, श.)

भिलाषस्तेनाऽऽर्तोविप्रलंभोऽत्यन्तसंयोगोद्भावपि तावत्प्रत्ययौ वित्तोपप्लवात्तत्ससाधने चविप्रलंभाशङ्कया च । क्रुद्धोन्यस्मिन्नपि बहुतरक्रोधः सहिक्रोधेन व्याप्तचित्तत्वान्नयावदनुभवति नाप्यनुभूतंस्मरति । तस्करश्चौरः यद्यप्यसौविकर्मकृत्तथापि भेदोपादानाद्गोबलीवर्दन्यायोद्रष्टव्यः ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः** । नार्तइति । एतेचार्तत्वादयः साक्षिकरणकाले दोषाः । आर्तःशोकादिना । मत्तोमद्यादिना । उन्मत्तोवातादिना । तस्करः साक्ष्यकाले दृष्टपरार्थापहारः ॥ ६७ ॥

( ३ ) **कुल्लूकः** । आर्तोबन्धुविनाशादिना मत्तोमद्यादिना उन्मत्तउत्क्षेपभूतावेशादिना क्षुधापिपासादिनापीडितः श्रमार्त्तोवर्त्मगमनादिना खिन्नः कामार्त्तउत्पन्नक्रोधः चौरश्च न साक्षी कार्यइति सर्वत्रसंबध्यते । तत्रार्त्तादिर्बुद्धिवैकल्यात् चौरस्त्वधार्मिकत्वात् ॥ ६७ ॥

( ४ ) **राघवानन्दः** । आर्तोधनपुत्रादिनाशेन । मत्तोमद्यादिना । उन्मत्तोवातुलः । श्रमार्तोभारोद्वहनादिना । तस्करः चोरः । वृद्धादिकुद्धान्तानांप्रायेणस्मृतिलोपात् आर्ताद्यष्टसु स्मृतिलोपः प्रसिद्धः ॥ ६७ ॥

( ५ ) **नन्दनः** । आर्त्तः पुत्रशोकादिर्पीडितः ॥ ६७ ॥

( ६ ) **रामचन्द्रः** । नउन्मत्तोन ग्रहाभिभूतः ॥ ६७ ॥

**स्त्रीणांसाक्ष्यंस्त्रियः कुर्युर्द्विजानांसदृशाद्विजाः॥ शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः॥६८॥**

( १ ) **मेधातिथिः** । यत्र पुमांसावर्थिमत्यर्थिनौ तत्र स्त्रीणांसाक्ष्यंनास्ति यत्र तु स्त्रिया सह पुंसः कार्यस्त्रीणामेव चेतरेतरंस्वल्पंतत्र भवन्त्येव स्त्रियः साक्षिण्यः नचायंनियमः स्त्रीणांस्त्रियएव साक्ष्यंकुर्युर्नपुमांसः केवलंयुवतिविषये व्यवहारे क्वचिदेव स्त्रीणांसाक्ष्यं यतोऽस्थिरत्वादिति हेतुरुपात्तः भवन्ति काश्चन स्त्रियोब्रह्मवादिन्यइव सत्यवादिन्यःस्थिरबुद्धयश्च । द्विजानांसदृशाद्विजाः यः प्रमाणतरोद्विजः सविसदृशंशङ्क्यमानप्रमाणभावमपि दिशन्साक्ष्ये न श्रद्धेयवचनोभवति यतस्तथाभूतेन प्रमाणभूतएवद्रष्टव्यः सहि तस्य सदृशः सदृशानांहि समानंदेशः स्थानमितरेतरकार्यज्ञत्वंच संभाव्यते इतरस्य तु तत्प्रदेशसन्निधिर्यत्नेन साध्यः सदृशत्वौचित्यात्सिद्धएव एवंहीनस्य हीनगुणोपि सदृशाग्रहीतव्योनतूत्कृष्टगुणोन ग्रहीतव्यः सादृश्यंजात्या शल्यादिना वा गुणेन क्रियया चाश्रुताध्ययनादिक्रया समानशीलतया एतच्च नातिशयिनि कार्ये द्रष्टव्यम् । नहि हीनगुणेषु प्रत्ययितता निश्चीयते अन्त्यानांचण्डालश्वपचादीनांतादृशाएवान्त्ययोनयः अन्तेभवान्त्या सायोनिरुत्पत्तिकारणंयेषामिति विग्रहः प्रदर्शनंचैतत् येसमाजातिशिल्पशीलादिभिस्तेषामिहानुक्तानामपि कुणिकारुकुशीलवादीनांहेतोः समानत्वात् ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । एतद्दोषविरहे चाण्डालादयोपि ग्राह्याइत्येतदर्थस्त्रीणामित्यादिप्रतिषेधः । द्विजाब्रह्मक्षत्रविशोन्योन्यंकुर्युः । सदृशाइति नोत्तमानात्यधमाइत्यर्थः । सन्तोऽसंभावितदोषाः ॥ ६८ ॥

( ३ ) **कुल्लूकः** । स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिण्योभवन्ति । द्विजानांब्राह्मणक्षत्रियविशांसदृशाः सजातीयाः साक्षिणः स्युः । एवंशूद्रासाधवः शूद्राणाम् । चाण्डालादीनांचाण्डालादयः साक्षिणोभवेयुः । एतच्च सजातीयसाक्ष्यभिधानमुक्तलक्षणसजातीयसाक्षिसंभवेऽसंभवे विजातीयाअपि साक्षिणोभवन्ति । अतएव याज्ञवल्क्यः ॥ यथा जातियथावर्णसर्वे सर्वेषु वा स्मृताः ॥ ६८ ॥

( ४ ) **राघवानन्दः** । उक्तेषु प्रतिप्रसवतया व्यवस्थितिमाह स्त्रीणामिति । कुर्युः दद्युः । वर्णव्यवस्थितिमाह द्विजानामिति । सन्तोद्विजशुश्रूषादिरताः ॥ ६८ ॥

( ५ ) **नन्दनः** । बहुशुचयोपिचस्त्रियइति । जस्त्रीणांसाक्षित्वस्य वक्ष्यमाणस्यायमपवादः । सदृशाः सजातीयः ॥६८॥

( ६ ) **रामचन्द्रः** । उक्तानाह स्त्रीणामिति । द्विजानां सदृशाः सवर्णाः द्विजाः । अन्त्यानांअन्त्ययोनयः ॥ ६८ ॥

**अनुभावी तुयः कश्चित्कुर्यात्साक्ष्यंविवादिनाम् ॥ अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये॥६९॥**

( १ ) **मेधातिथिः** । अन्तर्वेश्मनि यः कार्यमतर्कितोपनतावाग्दण्डपारुष्यसंग्रहस्तेयंसाहसादिरूपमरण्ये वा तादृशमेव शरीरेण च पीड्यमाने तत्कालदस्युभिरन्यैर्वादाय तत्कुतश्चिद्गृहीतं योवाधननिमित्तंप्रतिभूत्वेन स्थापितोनच साक्षिणोलभ्यंते तावत्कालंनप्रतिपालयन्ति । अनुभावी साक्षाद्द्रष्टा यः कश्चिदिति न जातिनियमः सदृशंच तदा नास्तीत्याह अन्तर्वेश्मनीति विरलजनोपलक्षणार्थंतेन शून्यदेवतायतनादीन्यपि विरलजनानि गृह्यन्ते तथाचारण्यग्रहणमस्यैवार्थस्य प्रदर्शनार्थम् । अन्ये तु शरीरस्यापि वात्ययइत्यन्यथा व्याख्यानयन्ति कार्यशरीरस्यातिपाते यः कश्चित्साक्षी यत्कार्यमनुष्ठीयमानमतिपतत्युत्तरकालमशक्यानुष्ठानंतत्र साक्षिणांजातिलिङ्गवयः सादृश्यकसंबन्धाभावादिनियमोनास्ति । एतदेवोत्तरेणदर्शयति ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः** । अनुभावी येन तत्कार्यप्रसंगादप्यनुभूतम् । यःकश्चिदधमोपि । अन्तर्वेश्मन्यरण्यइत्यसंभवत्पुरुषान्तरदेशोपलक्षणम् । शरीरस्यात्यये तत्साक्ष्यकरणे तदैव यदि मृत्युस्तदापीत्यर्थः ॥ ६९ ॥

( ३ ) **कुल्लूकः** । गृहाभ्यन्तरेऽरण्यादौ वा चौरादिकृतोपद्रवे देहोपघाते वातताम्यादिकृते यः कश्चिदुपलभ्यते सवादिनोरेवसाक्षीभवति नतु ऋणादानादिवदुक्तलक्षणोपेतः ॥ ६९ ॥

( ४ ) **राघवानन्दः** । विवादेसत्युक्तविधजनासंभवेनृमात्रंसाक्षीत्याह अनुभावीति । अन्वगन्वक्षं तत्र भावीवर्तमानः । शरीरस्यात्यये मृतौ साक्ष्यं कुर्यात् दद्यात् ॥ ६९ ॥

( ५ ) **नन्दनः** । यथोक्तगुणसाक्ष्यभावे यः कश्चिदनुभावितापिसाक्षीत्याह अनुभाव्यपीति । अनुभावी अर्थानुसन्धायी । यः कश्चित्सजातीयोपि । अन्याये पीडायाम् ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । यःकश्चित् अनुभावीप्रसङ्गादपि येन तत्कार्यमनुभूतम् । शरीरस्यापि अत्यये नाशे उपस्थिते तस्य ॥ ६९ ॥

**स्त्रियाप्यसंभवे कार्यं बालेन स्थविरेण वा ॥ शिष्येण बन्धुनावापि दासेन भृतकेन वा ॥ ७० ॥**

( १ ) **मेधातिथिः** । स्त्रियेतिलिङ्गव्यत्ययउक्तः । बालेन स्थविरेणवेति वयोव्यत्ययः शिष्येणेत्यादिना संबन्धिनः प्रतिप्रसवएतच्च प्रदर्शनमेवंविधानांव्यभिचाराय तेन ज्ञातिसादृश्येऽपि नाद्रियेते । सुहृद्वैरिदोषादयस्तुनेष्यन्ते येषांकिंचिदसत्याभिधानकरणत्वंदृष्टंनापिव्यापकंतेन प्रतिप्रसूयन्ते येषान्तुबहुव्यापकंक्वचिदेव गुणातिशयंचेति व्यभिचरेत्ततः क्वचिदेव तत्साक्षिणउक्तंच ॥ एकः सहस्राल्लभ्येतनसौहार्दान्नशात्रवात् । नार्थसंबन्धतोवापि पुरुषोनृतमाचरेदिति ॥ असंभवेऽन्येषांसाक्षिणांस्त्रियापि कार्यंसाक्ष्यमिति पूर्वश्लोकादनुषज्यते । शिष्येणेतिमौखस्रौवसंबन्धप्रदर्शनार्थमेतत् । बन्धुनेति अहार्योत्पत्तिकायानसंबंधप्रतिप्रसवः सत्यपि संबन्धत्वे । योनातिप्रत्यासन्नः सगृह्यते तेन भ्रातृव्यमातुलश्वशुर्यादयोन साक्षिणः तथाविधे हि बन्धुशब्दोरूढः । दासेनेति सस्वामिसंबन्धउपलक्ष्यते न स्वाम्युपाध्यायोयाजकश्च सर्वैविधे विषये साक्षिणः दासोगर्भदासोभृतकोवैतनिकः ननुचासामर्थ्याद्बालादयः साक्षित्वेनिरस्ताः नह्येते साक्ष्यमवधारयितुंशक्नुवन्ति बुद्धेरस्थैर्यात्परिपाकादिभिर्दोषैस्तदापदि प्रतिस्वमानसमञ्जसमिति नह्यापदि शक्तिरस्याविर्भवति योहि ब्रूयात्तेन वानवौदनः पक्तव्यः सत्याग्नौ तु पक्तव्यइति तादृगेतत्स्यात् नैषदोषएवमर्थमेवोत्तरश्लोकआरभ्यते ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । अस्यप्रपञ्चः स्त्रियापीति । दासोगर्भदासः । भृतकः भृत्या परिक्रीतः ॥ ७० ॥

( ३ ) **कुल्लूकः** । तदेवोदाहरणात्स्पष्टयति स्त्रियापीति । अन्तर्वेश्मादावुक्तसाक्ष्यभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्मकराअपि साक्षिणः स्युः ॥ ७० ॥

( ४ ) **राघवानन्दः** । किंच स्त्रियेति । स्त्र्यादिसप्तभिः कार्यं देयं साक्ष्यमिति शेषः ॥ ७० ॥

( ५ ) **नन्दनः** । असंभवे यथोक्तगुणसाक्ष्यलाभे कार्यसाक्ष्यमिति शेषः । पूर्वप्रतिषिद्धानांशिष्यादीनांसह पाठादिहचायोग्यत्वमनुमीयते ॥ ७० ॥

**बालवृद्धातुराणांच साक्ष्येषु वदतांमृषा ॥ जानीयादस्थिरांवाचमुत्सिक्तमनसांतथा ॥ ७१ ॥**

( १ ) **मेधातिथिः** । अयमस्यार्थः नेहात्यन्तामाप्तनिरुद्धाभ्रान्तबुद्धयोबालादयोगृह्यन्ते येनानारभ्योर्थउपदिष्टः स्यात् किन्तु ये शक्नुवन्त्यवधारयितुं तदातिस्थिरचेतसस्तत्रानुज्ञायन्ते तेषांवचनमनुमाने परीक्ष्य यदि संबद्धंवदन्ति नचाशङ्क्यमानदोषेण केन चित्संगतास्ततः प्रमाणंतदाह तेषांमृषावदतामस्थिरांवाचंजानीयादेतदुक्तंभवति वाचोःस्थैर्येण मृषात्वंनिश्चिनुयात् तत्र वाचोःस्थैर्यंवचनानामितरेतरासंगतिः अस्फुटा परिपूर्णाक्षरत्वं एतच्च बालादीनामवस्थोपलक्षणार्थं ये वयसा व्याधिना वाप्यवस्थामियतींगताअन्यद्विवक्षन्तोन्यदुच्चारयन्ति तच्चाव्यक्तंन तेसाक्षिणः एतत्प्रत्यक्षवेद्यमसाक्षित्वकारणं अन्यत्तु रागद्वेषप्रबललोभादिसाधारणमनुमानतः परीक्ष्यं तथाचोक्तमेव उत्सिक्तचेतसः प्रकृत्यैवोपप्लुताअधीरधियः ॥ ७१ ॥

(२ ) **सर्वज्ञनारायणः** । बालादिषु कर्तव्यविशेषमाह बालेति । तत्र मिथ्याभिधानव्यभिचार्यस्थिरत्वादिकंवाचः प्रतिसन्धेयम् । तदभावे तद्वचनेनाप्यर्थनिश्चयः संभवतीत्यर्थः । उत्सिक्तमनसामस्थिरचेतसाम् ॥ ७१ ॥

( ३ ) **कुल्लूकः** । नन्वस्थिरबुद्धित्वादिना स्त्रीबालादीनांकथमत्रापि साक्षित्वमित्यत्राह बालवृद्धेति । बालवृद्धव्याधितानामुपप्लुतमनसांच मत्तोन्मत्तादीनांसाक्ष्येऽनृतंवदतामस्थिरावाग्भवति अतस्तामनुमानेन जानीयात् । यथोक्तम् वाँग्भिर्विभावयेल्लिङ्गैरिति ॥ ७१ ॥

( ४ ) **राघवानन्दः** । बालादिसाक्षिषु प्रमाणान्तरं सहायं विधत्ते बालेति । जानीयादनुमानादिना । उत्सिक्तमनसां कामाद्युपप्लुतमनसाम् ॥ ७१ ॥

( ५ ) **नन्दनः** । आपद्विषयसाक्षिपरिग्रहे राज्ञः कर्तव्यमाह बालवृद्धातुराणान्त्विति । सत्यासत्यरूपांवाचंराजा चिन्हैर्जानीयान्नोक्तिमात्रेण परिगृण्हीयात् । संख्यानां च गुणानांच साम्येद्विजोत्तमान्परिगृण्हीयात् ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । साक्ष्यं मृषा वदतां उत्सिक्तमनसां चञ्चलचित्तानां वाचमस्थिरांजानीयात् । बालःअप्राप्तव्यवहारः । वृद्धः अशीतिवर्षः वृद्धग्रहणंवचनानिषिद्धानामन्येषामपि ॥ ७१ ॥

**साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ॥ वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ ७२ ॥**

( १ ) **मेधातिथिः** । सहोबलंतदाश्रित्य यत्क्रियते तत्साहसं राजवल्लभेन महापक्षतया स्वशरीरबलेन बलवदाश्रयेण वा यदकार्यकरणंतत्साहसं यथा वस्त्रपाटनाग्निदाहकरछेदाद्यन्यत्प्रसिद्धंअत्र साक्षिणोन परीक्ष्याः गृहिणः पुत्रिणइत्येवमादिरूपा परीक्षा तत्र प्रतिषिध्यते या तु व्यभिचारहेतुतया शङ्क्यते रागद्वेषधनलोभादिरूपा सा कर्तव्या दृष्टदृष्टमूलत्वादस्याः स्मृतेरित्युक्तम् ॥ ७२ ॥

*वाग्भिः=वाह्यैः ( अ )

( २ ) **सर्वज्ञनारायणः**। नपरीक्षेत बालत्वादिना नत्यजेत् किंतु तत्रयुक्तरीत्या स्थैर्यादि प्रतिसंधेयम् ॥ ७२ ॥

( ३ ) **कुल्लूकः**। गृहदाहादिषु साहसेष्वाचार्यस्त्रीसंग्रहणे वाग्दण्डपारुष्ये च गृहिणइत्युक्तसाक्षिपरीक्षा न कार्या। स्त्रीयाप्यसंभवे कार्यमित्यस्यैवायमुदाहरणप्रपञ्चः ॥ ७२ ॥

( ४ ) **राघवानन्दः**। साहसादिषु साक्षी न परीक्षणीयइत्याह साहसेष्विति। साहसेषु गृहदासादिषु। सहो बलंतेनायंभवतीति साहसः। संग्रहणे स्त्रीभोगादौ। वाग्दण्डयोश्च पारुष्ये वाक्पारुष्ये धिगाद्युक्तौ दण्डपारुष्ये ताडनादौ साक्ष्यन्तराभावान्नपरीक्ष्येत गृहिणःपुत्रिणइत्यादिधर्मेण ॥ ७२ ॥

( ५ ) **नन्दनः**। संग्रहणंपरदारपरिग्रहः ॥ ७२ ॥

( ६ ) **रामचन्द्रः**। सर्वेषु चतुर्विधेषु साहसेषु साक्षीकार्यः। चतुर्विधत्वमाह ।। मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयंचेतिसाहसंस्याच्चतुर्विधम् ॥ च पुनः स्तेयकर्मणि संग्रहणेषु रहसि क्रियमाणेसंग्रामे धार्यपारुष्यसाहसेषु साक्षिणः कार्याः अत्रगुणरहितासाक्षिणोभवन्तीति भावः ॥ ७२ ॥

**बहुत्वंपरिगृह्णीयात्साक्षिद्वैधे नराधिपः॥ समेषु तु गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ॥ ७३ ॥**

( १ ) **मेधातिथिः**। यत्रभूमिभागादौ विप्रतिपत्तिर्द्वाभ्यां च भोगसाक्षिणोनिर्दिष्टास्ते च केचिदर्थिनस्तत्र बहूनांवचनंग्राह्यं समसङ्ख्येषु तु ये गुणैरुत्कृष्टाबहुगुणाइति अथैकेन वा गुणेन दृष्टपुरुषार्थोपकारिणामतिशयेन युक्तगुणवतांसमगुणानांभेदे जातिरादर्तव्या सर्वसाम्येशपथः अन्यद्वा समानं बहुत्वंपरिगृह्णीयाद्बहूनांवचनंप्रमाणीकुर्यात्। द्वैधंपरस्परविरुद्धाभिधानम् ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः**। बहुत्वमिति यद्यन्येऽन्यथावदन्ति तद्विरोधेऽपि बहूनांवचोग्राह्यमित्यर्थः। द्विजोत्तमान् ब्राह्मणान् ॥ ७३ ॥

( ३ ) **कुल्लूकः**। साक्षिणांपरस्परविरुद्धानांबहुभिर्यदुक्तंतदेव निर्णयार्थत्वेन राजा गृह्णीयात्। समेषु तु विरुद्धार्थाभिधायिषु गुणवतः प्रमाणीकुर्यात्। गुणवतामेव विप्रतिपत्तौद्विजोत्तमान् द्विजेषु येउत्तमाः क्रियावन्तइत्यर्थः। अतएव बृहस्पतिः॥ गुणिद्वैधे क्रियायुक्ताइति ॥ ७३ ॥

( ४ ) **राघवानन्दः**। यत्र परस्परं साक्षिणां विरुद्धभाषितया द्वैधं तत्र बहुभिरुक्तं ग्राह्यमित्याह बहुत्वमिति। समेतु गुणोत्कृष्टान् गुणाधिकान्। द्विजोत्तमान् विशिष्टगुणवतोविप्रान् सम्यश्चोबहवश्चेति न्यायात् ॥ ७३ ॥

( ५ ) **नन्दनः**। अथसाक्षिद्वैधेबलाबलमाह बहुत्वमिति। विवादिनोःसाक्षित्वे द्वैधे साक्षिणांबहुत्वंपरिगृण्हीयात् समेषु समसंख्येषु साक्षिषु ॥ ७३ ॥

( ६ ) **रामचन्द्रः**। नराधिपःसाक्षिद्वैधे विविधे साक्षिबहुत्वं परिगृह्णीयात्। समेषु तुल्येषु गुणोत्कृष्टान् ॥ ७३ ॥

**समक्षदर्शनात्साक्ष्यंश्रवणाच्चैव सिध्यति॥ तत्र सत्यंब्रुवन्साक्षी धर्मार्थाभ्यां नहीयेत॥ ७४ ॥**

( १ ) **मेधातिथिः**। ननु चानुभावीतु यः कश्चिदित्यनेनोक्तमेवैतत्कथंचान्यथा सिद्धिराशङ्क्यते येनेदमुच्यते दर्शनश्रवणाभ्यां साक्षिसिद्धिरिति तत्रोच्यते साक्षी व्यवहारिष्यता कर्तव्यस्त्वमस्मत्साक्षी भविष्यसीत्युक्तं तत्र यएवंनोक्तः सन प्राप्नोत्येवमर्थमिदमुच्यते यस्तत्र संनिहितः कथंचिदनुभवितात्वं स्मर्त्तुमर्हस्यावयोरिममर्थमित्येवमनुक्तेऽपि भवत्येव साक्षी समक्षदर्शनात्साक्षादनुभवाच्छ्रवणाच्च साक्ष्यशब्दानुषङ्गः कर्तव्यः। यस्कुतश्चिदेकेन श्रूयते ततोन्येन तत्परंपराश्रुतंतेन पर-

पराश्रावी न साक्षी यथैतेनेदमकार्यंकृतमिदमस्मैवा धारयतीति लोकप्रसिद्ध्यावगतम् । ननु प्रमाणतस्तत्र समक्षदर्शनंसाक्षादनुभवनमर्थविषयमृणप्रयोगदण्डपारुष्यादि साक्षाद्दृष्टंचक्षुर्व्यापारेण वाक्पारुष्यंतथेदमस्मान्मया गृहीतमित्येवमादिविषयंशब्दमापणंयद्यपि दर्शिरुपलब्धिमात्रवचनस्तत्रापि वृत्तानुरोधितया श्रोत्रज्ञानंश्रवणभेदेनोपात्तंएतावच्चात्र विवक्षितं प्रमाणतोयेनानुभूतंससाक्षी समक्षदर्शनंग्रहणंच प्रमाणमात्रोपलक्षणार्थं तेनानुमानादिनाप्यनुभूतमेव अतआप्तागमाश्च तस्य प्रत्यक्षमपि प्रमाणम् । उत्तरस्तु श्लोकार्धोनुवादएव सत्यवचनस्य विहितत्वात् असत्यवादिनोधर्मार्थहानेश्च प्रमाणान्तरावगतत्वात् ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । समक्षदर्शनात् प्रत्यक्षतोदर्शनात् । श्रवणादाप्तवचनसंज्ञानात् । अर्थाहानिर्दण्डाभावात् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । गोविन्दराजस्तु गुणवतांविप्रतिपत्तौ द्विजोत्तमान्ब्राह्मणान्प्रमाणीकुर्यादित्याह समक्षेति । चक्षुर्ग्राह्ये साक्षा द्दर्शनात् श्रोत्रग्राह्येश्रवणात्साक्ष्यंसिध्यति । तत्र साक्षी सत्यंवदन्धर्मार्थाभ्यां न मुच्यते । सत्यवचेनन धर्मोपपत्तेर्दण्डाभावेर्थहान्यभावात् ॥ ७४ ॥

( ४ ) **राघवानन्दः** । साक्ष्यंहि यथादृष्टश्रुताभिधानमितिप्रकटयन्साक्षिपदस्य यौगिकत्वमाह समक्षेति । अक्षमत्रेन्द्रियमात्रंतेन । तत्र श्रुत दृष्टस्पृष्टेऽर्थे । सत्यं दृष्टादिप्रतिपादकं ब्रुवन् वधादि । धर्मार्थाभ्यां धर्मतोनहीयते स्वर्गतोनहीयते अर्थतोनहीयते न श्रुतंदण्डं प्राप्नोति श्रुतादिमत्त्वात् ॥ ७४ ॥

( ५ ) **नन्दनः** । साक्षिणांलक्षणंकर्त्तव्यंचाह समक्षदर्शनादिति ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । सार्धेनाह तत्रेति । तत्र सभायां सत्यं ब्रुवन् साक्षी सधर्मार्थाभ्यांन हीयते ॥ ७४ ॥

## साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ॥ अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥ ७५ ॥

( १ ) **मेधातिथिः** । असत्याभिधाने साक्षिणांफलदर्शनार्थमिदं दृष्टश्रुतशब्दउपलब्धिपर्यायइत्युक्तं तस्मादन्यदनुपलब्धंतद्ब्रवीति आर्याः सभ्याः सत्कारिणस्तेषांसंसदि सभायामवाग्धोमुखंनरकंयाति यमयातनास्थानंगच्छति । प्रेत्य मृत्वा स्वर्गाच्च हीयते भ्रश्यति । यद्प्यनेन स्वर्गारोहणकंकर्मकृतंतदपिकौटसाक्ष्यपापस्य गुरुत्वात्प्रतिबध्यते ननु स्वर्गस्य कर्मणः पापेनानेन नाशः स्वफलविधित्वात् कर्मणामन्यत्र प्रायश्चित्तेभ्यः । ७५ ॥

( २ ) **सर्वज्ञनारायणः** । विब्रुवन् विशेषेण ब्रुवन् । नरकानुभवान्तेऽपि सुकृतनाशात् स्वर्गाद्धीयते न स्वर्गं प्राप्नोति ॥ ७५ ॥

( ३ ) **कुल्लूकः** । साक्षी दृष्टश्रुतादन्यादृशंसाधुसभायां वदन्नधोमुखोनरकंगच्छति परलोके च कर्मान्तरजन्यस्वर्गरूपफलादानेन पापेन हीयते ॥ ७५ ॥

( ४ ) **राघवानन्दः** । उक्तवैपरीत्ये दण्डमाह साक्षीति । विब्रुवन् सुवर्णरूप्यमिति विरुद्धप्रकारकंवा ब्रुवन् । आर्यसंसदि विद्वद्ब्राह्मणसभायाम् । अवाङ्मुखःसन्नरकमभ्येति । नकेवलमेवमपितु हीयते स्वर्गाच्च तज्जनकशुभादृष्टस्यनरकेणप्रत्यन्तरितत्वात् स्वर्गहेतुधर्मनाशाद्वा ॥ ७५ ॥

( ५ ) **नन्दनः** । तत्रदर्शनश्रवणयोर्विपर्यये दोषमाह साक्षीदृष्टश्रुतादिति स्वर्गात्पुण्यान्तरार्जितात् ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । साक्षी आर्यसंसदि दृष्टश्रुतादन्यद्विब्रुवन् अन्यथा ब्रूवन् अर्वाक्शिरानरकं एवैतिप्रत्य स्वर्गाच्च हीयते ॥ ७५ ॥

**यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किंचन ॥ दृष्टस्तत्रापि तद्ब्रूयाद्यथादृष्टंयथाश्रुतम् ॥ ७६ ॥**

( १ ) **मेधातिथिः** । ननु चोक्तंसमक्षदर्शनादित्यत्र यथावदभूतवचने नियुक्तस्यापि साक्ष्यमस्तीति तत्र किमनेन यत्रानिबद्धोपीति कोवा शेषउच्यते लेख्यारूढस्य व्यापारविशेषाद्युक्तं साक्षित्वंनपुनरनन्वारूढस्य आरोहणस्यानर्थक्य प्रसङ्गादुभयोः साक्षित्वे अतएतदाशङ्कामपनोत्तुमिदमुच्यते पूर्वस्तु श्लोकोयत्रानुक्ताः साक्षिणः अयन्तु यत्र ससाक्षिकंले-ख्यं अनिबद्धोलिख्यमनारूढोपीत्यर्थः ईक्षणश्रवणे व्याख्याते शेषंसुबोधम् ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । अनिबद्धोऽनधिकृतः । प्रसंगात्तत्रागतः ॥ ७६ ॥

( ३ ) **कुल्लूकः** । त्वमस्मिन्विषयेसाक्षी भवइत्येवमकृतोपि यत्किंचिदृणादानादि पश्यति वाक्पारुष्यादिकंवाशृणो-ति तत्रापि साक्षी सपृष्टःसन्यथोपलब्धंकथयेत् । अयंत्वकृतसाक्षी सामान्येन मनुनोक्तः । अस्य ग्रामश्च प्राड्विवाकश्च राजा-चेत्यादिना नारदादिभिः षाड्विध्यमुक्तम् ॥ ७६ ॥

( ४ ) **राघवानन्दः** । दर्शनश्रवणमात्रं न साक्षिताप्रयोजकं किंतु तद्विशेषइत्याह यत्रेति । निबद्धस्त्वमस्मिन्विष-ये अवधानंकुर्वितिनियुक्तः तदभावेपि ब्रूयादेवेत्यन्वयः* यथादृष्टं तमपिपृष्टःसन् ॥ ७६ ॥

( ५ ) **नन्दनः** । साक्षित्वेनानिमन्त्रितोपि यादृच्छिकसाक्ष्यमर्हतीत्याह यत्रानिबद्धोऽपीति । यत्र विवादपदे अनि-बद्धः साक्षित्वेनानिमन्त्रितः यादृच्छिकइति यावत् ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । यत्र साक्ष्ये अनिबद्धः सन् साक्षित्वेनानधिकृतः सकिंचन शृणुयात् वीक्ष्येतवा तत्रापि पृष्टः सतुतत्सत्यं यथाश्रुतंयथादृष्टंब्रूयात् ॥ ७६ ॥

**एकोलुब्धस्तु साक्षीस्याद्बह्व्यः शुच्योपि न स्त्रियः ॥ स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येपि ये वृताः ॥ ७७ ॥**

( १ ) **मेधातिथिः** । एकस्य पुनः प्रतिषेधोलोभादिरहितस्य प्रतिप्रसवार्थः तेन सत्यवादितया निश्चितएकोपि सा-क्षी भवत्येव स्त्रियस्तु न कथंचित्साक्ष्यमर्हन्त्यल्पावबोधावाशुच्योपीति गुणवत्योपीत्यर्थः । अत्र हेतुः स्त्रीबुद्धेरस्थिर-त्वादिति प्रकृतिरेषा स्त्रीणांयद्बुद्धेश्चपलत्वंगुणास्तु यत्नोपार्जिताअपि प्रमादालस्यादिनान्यतयान्यतः स्वाभाविकमस्थै-र्यंतिष्ठेदेव यथाऽऽमयाविनो घृतादिनोत्पत्तेः । अग्रे स्थैर्ये स्वल्पेनापि प्रमादे पुनः सहजामयावित्वानुवृत्तिरतोनया शङ्कया गुणवतीष्वपि तासु नाश्वासः यत्तु स्त्रियोप्यसंभवे कार्याइति तद्यत्र तत्क्षणादेव पृच्छयन्ते यत्रेयमाशङ्का न भ-वति केनचिदासांचलितंमनइति यत्र तु कालव्यवधानं तत्र जीयमानेन कदाचिदनुकूलास्ताइति न क्वचित् साक्ष्यदोषै-श्चान्येऽपि ये वृत्ताः रोगादिभिर्दोषैर्ये स्त्रीभ्योन्येऽपि पुरुषावृत्ताआक्रान्तभूयिष्ठादोषानाम उक्तं रागादयः शास्त्रप्रतिषिद्धाः शङ्कामानव्यभिचारहेतवः यद्यपि केवलेन स्वशब्देनैवोक्तायेषांतथाप्यनुक्तपरिग्रहणार्थमिदमपुनरुक्तं सामान्यविशेषाभिधा-नंहि सर्वत्रग्रन्थकाराअनुमन्यन्ते । अन्येत्वकारप्रश्लेषेणालुब्धोप्येकोन साक्षी किंपुनर्लुब्धइत्येवमाचक्षते तथा द्वयोर-भ्यनुज्ञानंभवति शुच्यइतीकारोदुर्लभोवोतोगुणवचनादितिविधानात् । कृदिकारादिति केचित्समर्थयन्ते ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । एकोप्यलुब्धःपुमान् । शुच्योअलुब्धाअपि । दोषैश्चान्योपियेवृताः अर्थसंबन्धित्वादिभिस्तेपि नबहवःसाक्षिणः । एकस्मिन्नलुब्धे विपरीतवादिनि सति ॥ ७७ ॥

---

* अन्वयः=आहनिबद्धइति ( राघ० ४ )

( ३ ) **कुल्लूकः** । एकोऽलुब्धइत्यत्राकारप्रश्लेषोद्रष्टव्यः । एकोपि साक्षी लोभादिरहितः स्यात् । अतएव व्यासः ॥ शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् । प्रमाणमेकोपि भवेत्साहसेषु विशेषतः ॥ मेधातिथिगोविन्दराजाभ्यामेकोलुब्धस्त्वसाक्षीस्या दिति पठितंव्याख्यातंच । लोभात्मकः एकः साक्षी न भवति एवंचालुब्धोगुणवान्कस्यांचिदवस्थायामेको पि भवतीति । स्त्रियः पुनरात्मशौचादियुक्ताबह्व्योप्यस्थिरबुद्धित्वाद्दणादानाद्यैः पर्यालोचितव्यवहारे साक्षिण्योनभवन्ति अपर्यालोचिते तुस्तयवा ग्दण्डपारुष्यादौस्त्रियाप्यसंभवे कार्यमिति साक्षित्वमुक्तम् । अन्येऽपि ये स्तेयादिदोषैर्व्याप्तास्तेऽपि पर्य्यालोचितव्यवहारे साक्षिणोन स्युः ॥ ७७ ॥

( ४ ) **राघवानन्दः** । बहुष्वपि लोभाद्यनभिभूतः एकः साक्षीत्याह एकइति । अलुब्धइतिच्छेदः । शुच्योपि अपरपुत्रलोभान्निवृत्ताअपि तत्र हेतुः अस्थिरबुद्धिरादितिये दोषदुष्टाः पुमांसस्ते नादरणीयाइत्याह दोषैरिति । अतएव व्यासः ॥ शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् । प्रमाणमेकोपि भवेत्सद्दशेषु शेषतः इति ॥ शुचिक्रियः अर्थादिव्यवहारे शुचयःक्रियाः यस्यसः । धर्मज्ञपदेन यज्ञादिसत्क्रियस्योक्तेः अनुभूतवाक् त्वंअत्र साक्षीत्यादिकानुभूता वाग्येनसद्तिव्या सोक्त्यर्थः । गोविन्दराजस्तु लोभाभिभूतोन साक्षीति लुब्धस्त्वसाक्षीति पाठंचक्रे ॥ ७७ ॥

( ५ ) **नन्दनः** । पुनरपि साक्षिणांनियममाह एकोबुधस्त्विति । येऽन्ये दोषैर्वृतास्तेऽप्यसाक्षिणइति वचनविपरिणामः ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । अलुब्धःसाक्षी स्यात् । शुच्योपिपाविघ्ययुक्ताः स्त्रियः बह्व्यः साक्ष्येनकार्याः । कस्मात् स्त्रीबुद्धेरस्थिरत्वात् । च पुनः अन्येपि ये पुरुषादोषैर्वृतावेष्टिताः ॥ ७७ ॥

## स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यंव्यावहारिकम् ॥ अतोयदन्यद्विब्रूयुर्धर्मार्थंतदपार्थकम् ॥ ७८ ॥

( १ ) **मेधातिथिः** । साक्षिणोयत् स्वभावेन व्यावहारिकंब्रुवन्ति तद्ग्राह्यं यत्तु स्वभावाद्विचलिता धर्मार्थंब्रूयुस्तदपार्थकमग्राह्यमित्यर्थः । यद्यथादृष्टस्यार्थस्य वचनंस्वभावतोयत्वन्यथा माभूत्तस्य वचनंसस्वभावं यस्त्वन्यथा माभूत्तस्य तपस्विनोमद्वचनेन तापइत्यनया बुद्ध्यातदपार्थकं यथाकेनचिदावेदितं भवत्यनेनाह नाक्रुष्टइत्यत्रापरेणापह्नुते साक्षिणआहुः सत्यमाक्रुष्टोनर्मणानतु रोषेणेति तत्राक्रुष्टइत्येतत्साक्षिवचोग्राह्यं नर्मणेत्येतदुत्तरवादिनानुक्तत्वादपृष्टमुक्तमपि न ग्राह्यव्यावहारिकंव्यवहारगतमपगतप्रयोजनमपार्थकं अन्ये व्याचक्षते यदप्रगल्भादिति स्खलितंपदमुदाहरन्ति न तावता न तदनादेयं किन्तु स्वभावएषामुपलक्षितव्योनुमानेन । अमी अप्रागल्भ्यास्खलन्ति उक्तंसत्यामभिधायेति तत्तु प्रागुक्तंचाक्षरार्थइत्यपेक्षम् ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । स्वभावेनाविचार्यैव द्राक् । व्यावहारिकं व्यवहारसंपादकम् । यदन्यत् पश्चादालोचनादिना अपार्थकं व्यर्थम् ॥ ७८ ॥

( ३ ) **कुल्लूकः** । यत्साक्षिणोभयादिव्यतिरेकेण स्वभावाद्यद्ब्रूयुस्तद्व्यवहारनिर्णयार्थंग्राह्यं यत्पुनः स्वाभाविकादन्यत्कुतोऽपि कारणाद्वदन्ति तद्धर्मविषये निष्प्रयोजनंतन्न ग्राह्यम् ॥ ७८ ॥

( ४ ) **राघवानन्दः** । एवं तर्हि स्त्रीणां वाक्यं सर्वत्राश्रद्धेयं तत्राह स्वभावेनेति । अन्यथा भक्षणादिव्यवहारलोपापत्तिः । तत्रापि व्यावहारिकं न सदुपदेशादि विशिष्टमपि ब्रूयुः स्त्रीबुद्धिःप्रलयंकरीत्युक्तेः । अतोऽपार्थकं शास्त्रदृष्टभावेनापगतोऽर्थोधर्मरूपोयस्मात्तदपार्थकमतोमिथ्यात्वादश्रद्धेयम् ॥ ७८ ॥

( ५ ) **नन्दनः** । स्वभावेन सत्येन । व्यावहारिकंव्यवहारोपयोगि । धर्मार्थंव्यवहारार्थम् ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । स्वभावेनैव यत् ब्रूयुः तत् व्यावहारिकं व्यवहारप्रवर्तकं ग्राह्यम् । अतःकारणात् अन्यधर्मार्थं-विब्रूयुः तत् अपार्थकंव्यर्थं स्यात् ॥ ७८ ॥

**सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ॥ प्राड्विवाकोनुयुञ्जीत विधिना तेन सान्त्वयन् ॥ ७९॥**

( १ ) **मेधातिथिः** । सभायामन्तः सभान्तः शौण्डादित्वात्समासः । व्यवहारदेशगताउभयोरर्थिप्रत्यर्थिनोः संनि-धानेऽनुयोक्तव्यावक्ष्यमाणेन विधिना सांत्वयन्न पुरुषंब्रुवन्वाक्पारुष्येण हि प्राड्विवाकाद्बिभ्यतोऽप्रकृतिस्थानसर्वेस्मरे-युः संस्कारभ्रंशहेतुत्वाद्भयस्य प्राड्विवाकोराज्ञा व्यवहारदर्शनाधिकृतोरूढ्योच्यते । यद्यप्यत्र यथार्थोराजन्यपि संभव-ति पृच्छति विविनक्तीति तथा च भेदेन प्रयोगदर्शनममात्यःप्राड्विवाकोवा यः कुर्यात्कार्यमन्यथेति पृच्छतीति प्राट् क्वि-ब्वचिप्रच्छिश्रिद्रुस्रुपुवांदीर्घोऽसंप्रसारणंचेति । प्राड्विशेषणंधर्मसंकटेषु विवेक्तीतिविवाटः कृत्यल्युटोबहुलमिति कर्तरिघञ् चजोः कुधिण्यतोरिति कुत्वं प्राट्चासौ विवाकश्च प्राड्विवाकः ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । अनुयुञ्जीत पृच्छेत् किमिदं जानीथेति ॥ ७९ ॥

( ३ ) **कुल्लूकः** । सभामध्यंसाक्षिणः संप्राप्तानर्थिप्रत्यर्थिसमक्षंराजाधिकृतोब्राह्मणः प्रियोक्तिरचयन्वक्ष्यमाणप्रकारेण पृच्छेत् ॥ ७९ ॥

( ४ ) **राघवानन्दः** । साक्षिणः कथं प्रष्टव्याइत्याकांक्षायामाह सभान्तरिति । अनुयुञ्जीत पृच्छेत् । अनेन वक्ष्य-माणेन विधिना धर्मोपदेशेन सान्त्वयन् ॥ ७९ ॥

( ५ ) **नन्दनः** । अथ साक्षिप्रश्नविधिमाह सभान्तःसाक्षिणइति । प्राड्विवाकोव्यवहारनिर्णायकः ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । अनेनविधिनासभान्तः सभामध्ये अर्थिप्रत्यर्थिसंनिधौ प्राप्तान्साक्षिणःसात्वयन् प्राड्विवाकः प्रकर्षेण विविनक्तिविचारयति सोनियुञ्जीत आज्ञापयेत् । तत्राह ॥ विवादानुगतंदृष्ट्वासमेभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥ ७९ ॥

**यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिश्चेष्टितंमिथः ॥ तद्ब्रूत सर्वंसत्येन युष्माकंह्यत्र साक्षिता ॥ ८० ॥**

( १ ) **मेधातिथिः** । भवतामत्रप्रामाण्यं युष्मद्वचनाधीने सत्यानृते इत्यनेनप्रोत्साह्यन्ते साक्षिभूतेस्मिन्कार्यइति सामान्यनिर्देशेऽप्यखिलवस्तुसाक्ष्यंनसामर्थ्याद्द्रष्टव्यं नह्यश्रुतविशेषाः प्रश्नविषयंवेदितुमर्हन्तीति ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । वेत्थ जानीथ ॥ ८० ॥

( ३ ) **कुल्लूकः** । यद्द्वयोरर्थिप्रत्यर्थिनोरनयोः परस्परमस्मिन्कार्ये चेष्टितंजानीथ तत्सर्वंसत्येन कथय यतोयुष्मा-कमत्र साक्षित्वम् ॥ ८० ॥

( ४ ) **राघवानन्दः** । तमेवविधिमाह यदिति । अनयोरर्थिप्रत्यर्थिनोः । वेत्थविजानीत । अस्मिन् व्यवहारे । युष्मा-कं यत्रार्थे साक्षिता तदर्थजातं सत्येन ब्रूतेत्यन्वयः ॥ ८० ॥

( ५ ) **नन्दनः** । अनेन वक्ष्यमाणेन विधिमाह यद्द्वयोरिति । वेत्थजानीथ । मिथः अन्योन्यम् ॥ ८० ॥

सत्यंसाक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् ॥ इहचानुत्तमांकीर्त्तिवागेषा ब्रह्मपूजिता ॥८१॥

[ विक्रयाद्योधनंकिंचिद्गृह्णीयात्कुलसंनिधौ । क्रमेणसविशुद्धंहिन्यायतोलभते धनम् ॥१॥ ]‡

( १ ) **मेधातिथिः** । इतः प्रभृतिसत्यार्थे साक्षिणामनुयोगविधिः । सत्यंवदन् लोकान्स्वर्गादिलक्षणाननिन्दितानगर्हितानभिप्रेतफलभोगहेतून्लभते साक्षी । जातिवचनोवालोकशब्दः शुभे जन्मनि जायतइत्यर्थः । अस्मिंश्च जन्मनि कीर्तिः-ख्यातिरनुत्तमा यस्याअन्यदुत्तमंप्रकृष्टंनास्ति तांलभते साधुसाधुवादभाजनेनास्मैदीयते वाक्सत्या सरस्वती ब्रह्मणा प्रजापतिना पूजिता ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मपूजिता ब्राह्मणाऽनुमोदिता ॥ ८१ ॥

( ३ ) **कुल्लूकः** । साक्षी साक्ष्ये कर्मणि सत्यंवदन्सनुत्कृष्टान्ब्रह्मलोकादीन्प्राप्नोतिपुष्कलानिहलोकेषु चात्युत्कृष्टांख्यातिंलभते यस्मादेषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता ॥ ८१ ॥

( ४ ) **राघवानन्दः** । तत्रार्थवादमाह सत्यमिति । पुष्कलान् अप्रतिबद्धतया पूर्वादिष्टाकृष्टान् नचानेनास्य किंचित्पुण्यं परार्थे क्लिश्यन्तीति वक्ष्यमाणत्वात् । ब्रह्मपूजिता ब्रह्मणा सत्येन विशिष्टा यतः ॥ ८१ ॥

( ५ ) **नन्दनः** । एषा वागेतत्सत्यवचनम् । ब्रह्मपूजिता वेदप्रशस्ता ॥ ८१ ॥

साक्ष्येऽनृतंवदन्पाशैर्बध्यते वारुणैर्भृशम् ॥ विवशः शतमाजातीस्तस्मात्साक्ष्यंवदेदृतम् ॥ ८२ ॥

[ ब्राह्मणोवै मनुष्याणामादित्यस्तेजसांदिवि । शिरोवा सर्वगात्राणांधर्माणांसत्यमुत्तमम् ॥ १ ॥ ]*

[ नास्ति सत्यात्परोधर्मोनानृतात्पातकंपरम् । साक्षिधर्मे विशेषेण तस्मात्सत्यंविशिष्यते ॥ २ ॥ ]*

[ एकमेवाद्वितीयंतु प्रब्रुवन्नावबुध्यते । सत्यंस्वर्गस्य सोपानंपारावारस्य नौरिव ॥ ३ ॥ ]+

( १ ) **मेधातिथिः** । पूर्वेण दृष्टोनृतवचनबद्धइत्यर्थः । दृष्टशुभप्रदर्शनेन साक्षिणः प्रोत्साहिताः अनेन विपरीताभिधाने दुःखोत्पत्तिदर्शनंसत्यंवचनार्थमेवैतत् । साक्षिणः कर्मसाक्ष्यंतत्रान्यद्ब्रुवाणोवारुणैः पाशैर्बध्यते पीड्यते भृशमत्यर्थं विवशः परतन्त्रीकृतः सर्वचेष्टासु वाक्चक्षुर्गतास्वपि शतंतावज्जन्मानि वारुणपाशाघोराः सर्परज्जवो जलचराणि वा एतद्दोषपरिहारार्थंसत्यंवदेदिति विधिः । आजातीरितिनायंमर्यादाभिविध्योराङ् तथासति पञ्चमीस्यात्तस्मादुपसर्गोयमनर्थकः प्रलंबइति यावत् द्वितीयाचेयं आवृत्तिश्चात्र गम्यते शतंजन्मान्यावर्तते उदाहरणगृहीतः ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । शतं शतसंख्याः । आजातीरावृत्त्या जन्मानि ॥ ८२ ॥

( ३ ) **कुल्लूकः** । यस्मात्साक्षी मृषावाचंकथयन्वरुणसंबन्धिभिः पाशैः सर्परज्जुभिः जलोदरेण परतन्त्रि कृतः शतंजन्मानि यावदत्यर्थंपीड्यते तस्मात्साक्ष्ये सत्यंब्रूयात् ॥ ८२ ॥

( ४ ) **राघवानन्दः** । अन्यथावदनेन नरकप्राप्तिमाह साक्ष्यइति । विवशः परतन्त्रीकृतः । शतमाजातीर्जन्मशतं व्याप्य । ऋतं यथाश्रुतदृष्टम् ॥ ८२ ॥

( ५ ) **नन्दनः** । आप्रेत्य जायतइत्याजातिरितिजन्मकालोविवक्षितः । तेनात्यन्तसंयोगे द्वितीया ॥ ८२ ॥

---

‡ ( क )

* ( अ, ट, ड, ) + ( ट )

( ६ ) **रामचन्द्रः** । साक्ष्येऽनृतंवदन्विवशः परवशःसन् शतमाजातीः शतजन्मानि भृशं वारुणैःपाशैर्बध्यते तस्मात्कारणात्साक्षी ऋतंसत्यंवदेत् ॥ ८२ ॥

**सत्येन पूयते साक्षी धर्मः सत्येनवर्धते ॥ तस्मात्सत्यंहि वक्तव्यंसर्ववर्णेषु साक्षिभिः ॥ ८३ ॥**

( १ ) **मेधातिथिः** । पूयते शुध्यत्यन्यस्मादपि पापान्मुच्यतइतियावत् शेषंगतार्थम् ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । पूयते पूर्वकृतात्पापात् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । यस्मात्सत्येन पूर्वार्जितादपि पापात्साक्षी मुच्यते धर्मश्चास्य सत्याभिधानेन वृद्धिमेति तस्मात्सर्ववर्णविषये साक्षिभिः सत्यंवक्तव्यम् ॥ ८३ ॥

( ४ ) **राघवानन्दः** । लोकानाप्नोतीत्युक्तं तत्र हेतुः सत्येनेति । पूयते तत्प्राप्तिप्रतिबन्धकादधर्मान्मुच्यते । अतएवतद्धर्मोऽप्रतिबन्धतया स्वफलंजनयतीत्याह वर्धतइति । अतआह सर्ववर्णेष्विति । निमित्तार्था सप्तमी अवच्छेदार्थावा संकर ‡ सर्ववर्णाविशिष्टैःसाक्षिभिरिति ॥ ८३ ॥

**आत्मैवह्यात्मनःसाक्षीगतिरात्मातथात्मनः ॥ मावमंस्थाः स्वमात्मानंनृणांसाक्षिणमुत्तमम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । एषएवार्थोविस्पष्टीक्रियते उत्तरेण श्लोकेन ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मा परमात्मा आत्मनःशरीरस्य जीवस्यच । साक्षी चेष्टितसाक्षात्कारी । गतिर्ज्ञानहेतुः । मावमंस्थाः आत्मना दृष्टस्य विपरीताभिधानात् ॥ ८४ ॥

( ३ ) **कुल्लूकः** । यस्माच्छुभाशुभकर्मप्रतिष्ठा । आत्मैवात्मनः शरणंतस्मादिवंस्वमात्मानंनराणांमध्यमादुत्तमंसाक्षिणंमृषाभिधाने नावज्ञासीः ॥ ८४ ॥

( ४ ) **राघवानन्दः** । तन्मिथ्यात्वापरिज्ञानात्कथंप्रत्यवैति साक्षी तत्राह आत्मेतित्रिभिः । आत्मा जीवः मिथ्योक्तंमयेत्यनुसंधत्तेऽवश्यम् गतिर्गमनसाधनं तत्पुण्यादिना तत्तल्लोकावाप्तेः । मावमंस्थाः आत्मानं* कथंपश्यन्तीतिमावजानीहि । उत्तमं अत्यन्तविजनेपि साक्षाद्द्रष्टृत्वात् ॥ ८४ ॥

( ५ ) **नन्दनः** । आत्मा परमात्मा । आत्मनः शरीरिणः । आत्मानंपरमात्मानं । नृणांशरीरिणाम् ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । आत्मनः जीवस्य आत्मैव परमात्मैव साक्षी । तथा आत्मनः जीवस्य गतिरात्मैव । तस्मात् आत्मानंमावमंस्थाः । नृणांउत्तमंसाक्षिणंज्ञेयः ॥ ८४ ॥

**मन्यन्ते वै पापकृतोन कश्चित्पश्यतीति नः ॥ तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥ ८५ ॥**

( १ ) **मेधातिथिः** । नशब्दोव्यवहितः पापकृतः कूटादिकारिणएवंजानते नकश्चिदस्मान्पश्यतीति इतिकारेण मन्यतेर्वाक्यार्थः कर्मेतिप्रतिपाद्यते । न नः कश्चित्पश्यतीत्येषवाक्यार्थः तांस्तु देवावक्ष्यमाणाः पश्यन्ति स्वयंचान्तरात्मा तदुक्तमात्मैव ह्यात्मनः साक्षीति ननु कारणंपापाचारस्तस्य च कोन्योद्रष्टा यावतात्मैवकर्त्ताशुभानांनवान्तरपुरुषोद्रष्टेति सत्यंतस्यैवंदेवतात्वमध्यारोप्यकर्मकर्तृव्यपदेशोऽनृतनिवृत्त्यर्थं देवतारूपत्वंजानीषे तात्त्विकमात्मीयमान्तरंरूपं

---

( ८५ ) स्वस्यैवा = स्वश्चैवा ( क,ग,च, )

‡ संकर=संकरा संकर ( राघ० ४ )

* आत्मानं=आत्मा ( राघ० ४ )

शारीरं तथा बाह्यमनात्मीयमसारमेतत्पोषार्थमादुष्कृतंकार्षीरिति प्रोत्साह्यते अतोमावमंस्थाः स्वमात्मानमावज्ञासीर्नृणां-साक्षिणमुत्तमम् अन्योहि साक्षी अस्मिन्नेव लोकेयन्तुमृतस्यापि साक्षंददाति तस्मादेतस्माद्भेतव्यम् । असत्यवादी कदाचिन्मन्यते आत्मान्तरंप्रतिपन्नस्य किमेषमेद्रष्टापि करिष्यतीति तन्न गतिरात्मातथात्मनः आत्मानमन्तरेणान्या-गतिर्नास्ति नहिद्वावात्मानावेकस्य भवतः । अन्येतुमन्यन्ते परमात्मा साक्षी संसार्यात्मानोनियोज्याइति भेदः ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । देवा इन्द्रियस्थाःसूर्यादयः । आन्तरपुरुषः परमात्मा ॥ ८५ ॥

( ३ ) **कुल्लूकः** । पापकारिणएवंमन्यन्ते अस्मानधर्मप्रवृत्तान्नकश्चित्पश्यतीति तान्पुनर्वक्ष्यमाणादेवाः पश्यन्ति स्व-स्यान्तरपूरुषः पश्यति ॥ ८५ ॥

( ४ ) **राघवानन्दः** । तान्पापकृतः । आन्तरपूरुषः अन्तर्यामी ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । पापकृत् च नःअस्माकंन कश्चित् पश्यति इति वै मन्यन्ते ॥ ८५ ॥

**द्यौर्भूमिरापोहृदयंचन्द्रार्काग्नियमानिलाः ॥ रात्रिःसन्ध्येचधर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥ ८६ ॥**

( १ ) **मेधातिथिः** । के पुनस्ते देवारहस्यतिप्रच्छन्नंपापमापन्नंये पश्यन्त्यतआह हृदयशब्देन हृदयायतनोलि-ङ्गपुरुषउच्यते देवादीनांद्रष्टव्यं अचेतनेषु चैतन्यमारोप्यते । दर्शनान्तरे तु महाभूतानि देवतांशतया चेतनान्येव तथा च पृथिवीभारावतरणाय ब्रह्माणमुपागमदिति वर्ण्यते सर्वगतत्वात्तेषांनकिंचिदप्रत्ययमस्तीति सर्वशरीरिणांवृत्तंशीलंचात्मनः कायगतंशुभमशुभंच जानते ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । हृदयं मनः ॥ ८६ ॥

( ३ ) **कुल्लूकः** । द्युलोकपृथिवीजलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसंध्याद्वयधर्माः सर्वशरीरिणांशुभाशुभ-कर्मज्ञाः । दिवादीनांचाधिष्ठातृदेवतास्ति सा च शरीरिण्यैकत्रावस्थापिता तत्सर्वंजानातीति आगमप्रामाण्याद्वेदान्तदर्शनं-तदङ्गीकृत्येदमुक्तम् ॥ ८६ ॥

( ४ ) **राघवानन्दः** । एतेपि द्वादशजानन्तीत्याह द्यौरिति ॥ द्युभूम्यादीनामचेतनत्वेपि तदभिमानिव्यपदेशादिति न्यायेन तदभिमानिनांसाक्षित्वात् । यतश्चित्तं हृदयं वृत्तं जातंपुण्यं पापंवा जानन्तीति वृत्तज्ञाएव देवाः । पश्यन्ती-त्यनुषज्यते ॥ ८६ ॥

( ५ ) **नन्दनः** । के पुनस्ते देवा स्तानाह द्यौर्भूमिरापइति । हृदयंहृदयस्थः परमात्मा ॥ ८६ ॥

( ६ ) **रामचन्द्रः** । वृत्तज्ञाः शुभाशुभज्ञाः ॥ ८६ ॥

**देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतंद्विजान् ॥ उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिःशुचीन् ॥ ८७ ॥**

( १ ) **मेधातिथिः** । देवादुर्गामार्तण्डादयः प्रतिमाकल्पिताः । शुचीन् कृतस्नानाचमनादिविधीन् । शुचिः प्रष्टापि त-थाविधएवस्यात् । ऋतमिति श्लोकपूरणार्थमेवार्थसिद्धमनूद्यते ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्सर्वंश्रावयित्वाऽनन्तरंसाक्ष्यंपृच्छेत् । ऋतं सत्यम् ॥ ८७ ॥

( ३ ) **कुल्लूकः** । प्रतिमा देवता । ब्राह्मणसन्निधाने शुचीन्द्विजातिप्रभृतीन्प्राङ्मुखानुदङ्मुखान्वा स्वयंप्रयतः प्राड्विवाकः पूर्वाह्णे काले याथातथ्यंसाक्ष्यंपृच्छेत् ॥ ८७ ॥

( ४ ) **राघवानन्दः** । साक्षिणः कुत्र किंमुखान् कदाकीदृशान् कीदृशः पृच्छेदित्यपेक्षायामाह देवेति । देवादुर्गा-दिप्रतिमाः । शुचीननुष्ठितस्नानाचमनादीन् । स्वयंच तथा शुचिः । ऋतं श्लोकपूरणार्थम् । साक्ष्यं पृच्छेदित्यन्वयः ॥ ८७ ॥

( ७ ) **नन्दनः** । देवोदेवताप्रतिमा ॥ ८७ ॥

**ब्रूहीति ब्राह्मणंपृच्छेत्सत्यंब्रूहीति पार्थिवम् ॥ गोबीजकाञ्चनैर्वैश्यंशूद्रंसर्वैस्तु पातकैः ॥ ८८ ॥**

( १ ) **मेधातिथिः** । क्व पुनरियंतृतीया गोबीजकाञ्चनैरिति यदि तावत्पृच्छेदिति क्रियासंबन्धात्करणमुच्यते तदनुपपन्नं शब्दोहि तत्र करणमस्ति नैषदोषः यथागवादीनि प्रश्नकरणत्वे प्रतिपद्यतेतथाव्याख्येयम् । पातकैरित्युभयशेषोविज्ञेयः गोबीजकाञ्चनैः पातकैरिति तदयमर्थोभवति गोबीजकाञ्चनविषयैः पातकप्रदर्शनैः पृच्छेदिति गांहत्वा हृत्वा वा यत्पातकंतद्भवति तवमिथ्यावदतइति प्रश्नवाक्यंपठितव्यम् । एवंवक्ष्यमाणैः पातकैः शूद्रंपृच्छेत् । पातकशब्दस्त्वपातकप्रदर्शनार्थेष्वभिधानेषु द्रष्टव्योमुख्यानांप्रश्नकरणत्वाभावादित्युक्तम् ॥ ८८ ॥

( २ ) **सर्वज्ञनारायणः** । गोबीजकाञ्चनैरेतेषांतेहार्निर्मिथ्योक्ताविति । एतैः पातकैर्वक्ष्यमाणैः ब्रह्मघ्नइत्यादिभिः । साक्षिणंप्रति कथितैः ॥ ८८ ॥

( ३ ) **कुल्लूकः** । ब्रूहीत्येवंशब्दमुच्चार्य ब्राह्मणंपृच्छेत् । सत्यंब्रूहीति पार्थिवंक्षत्रियंपृच्छेत् । गोबीजसुवर्णापहारे यत्पापंतद्भवतोऽनृताभिधाने स्यादित्येवंवैश्यम् । शूद्रंपुनः सर्वैर्वक्ष्यमाणपापैः संबध्यसेयदि मृषावदसीति पृच्छेत् ॥ ८८ ॥

( ४ ) **राघवानन्दः** । तत्रैव व्यवस्थितप्रश्नप्रकारानाह । ब्रूहीति शब्दमुच्चार्य ब्राह्मणंपृच्छेत् सत्यमिति । शब्दं पार्थिवं क्षत्रियम् । वैश्यं गोबीजकाञ्चनापह्नवेन यत्पापंतत्तव स्यादिति शपथेने ति । यतआह पातकैरिति । वक्ष्यमाणसर्वपातकयुक्तोसीति शपथेनशूद्रम् ॥ ८८ ॥

( ५ ) **नन्दनः** । पार्थिवंक्षत्रियम् । गोबीजकाञ्चनानि स्पर्शयित्वेत्यर्थः । सर्वैः पातकैः । अनृतवादिनस्तव सर्वाणि पातकानि संभवन्तीत्युक्त्वेत्यर्थः ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । गोवधेयत्पापं बीजापहारेयत्पापं काञ्चनापहारेयत्पापं तद्वैश्यस्य ॥ ८८ ॥

**ब्रह्मघ्नोये स्मृतालोकाये च स्त्रीबालघातिनः ॥ मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतोमृषा ॥ ८९ ॥**

( १ ) **मेधातिथिः** । ब्राह्मणंहत्वा ये लोकानरकादिलक्षणाः प्राप्यन्ते तत्कारिभिस्ते तव भवन्ति मिथ्यावदतस्तस्मात्सत्यंब्रूहीत्यनुयोगः । यश्च मित्रंद्रुह्यति ब्राह्मणादीन्सर्वस्वापहरणान्नाशयति । यश्च कृतमुपकारंविस्मृत्य तमेवोपकर्तारमपकरोति यः कृतघ्नस्य दुःखंतदवाप्नोति ॥ ८९ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणहन्तुः स्त्रीघातिनोबालघातिनश्च ये नरकादिलोकाऋषिभिः स्मृताः ये च मित्रद्रोहादिकारिणः ये चोपकर्त्तुरपकारिणस्ते तव मिथ्यावदतोभवेयुः ॥ ८९ ॥

( ४ ) **राघवानन्दः** । पातकानांस्वरूपसत्त्वंनानानर्थावहमिति तत्फलपर्यवसायित्वमाह ब्रह्मघ्नेति । येस्मृताः शास्त्रप्रमाणकालोका भोगभूमयः ते तव शूद्रस्य साक्ष्ये मिथ्यावदतः स्युरित्येवं श्रावयेत् । एवमुत्तरत्र सर्वमेव श्रावयेदितियावत् ॥ ८९ ॥

( ५ ) **नन्दनः** । एतदेव विशदयति ब्रह्मघ्नइति ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । ते लोकाः तेमृषा ब्रुवतस्युः भवेयुः ॥ ८९ ॥

---

१ श्रावयेत्=अंजसावदेत् ( राघ० ४ )

**जन्मप्रभृतियत्किंचित्पुण्यंभद्र त्वया कृतम् ॥ तत्ते सर्वं शुनोगच्छेद्यदिब्रूयास्त्वमन्यथा ॥ ९० ॥**

( १ ) **मेधातिथिः** । शुनोगच्छेन्निष्फलंस्याद्भवतइत्यर्थः । अन्येषु दोषप्रदर्शनार्थेश्वगमनवचनं यथा कृच्छ्रेण महता सुवर्णाद्युत्तमद्रव्यमर्जयित्वा शुचिप्रवाहेत्यजेत्तादृक्सुकृतंभवति ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । भद्रेति । शूद्रसंबोधने ॥ ९० ॥

( ३ ) **कुल्लूक** । हेशुभाचारयत्त्वया जन्मतआरभ्य किंचित्सुकृतंकृतंतत्सर्वंत्वदीयंकुक्कुरादिकंसंक्रामति यदि त्वमसत्यंब्रवीषि ॥ ९० ॥

( ४ ) **राघवानन्दः** । शपथान्तरंतस्याह जन्मेति । भद्र हे मङ्गलाश्रय । शुनोगच्छेत् ते पुण्यफलस्य श्वा भोक्तेति ॥ ९० ॥

( ५ ) **नन्दनः** । अन्यथा ऽसत्यम् ॥ ९० ॥

**एकोहमस्मीत्यात्मानंयत्त्वंकल्याणमन्यसे ॥ नित्यंस्थितस्ते हृद्येषः पुण्यपापेक्षितामुनिः ॥ ९१ ॥**

( १ ) **मेधातिथिः** । पुण्यपापयोरीक्षता द्रष्टा मुनिस्तूष्णींभूतः कः ॥ ९१ ॥

( २ ) **सर्वज्ञनारायण** । मुनिर्ज्ञानवान्परमात्मा ॥ ९१ ॥

( ३ ) **कुल्लूकः** । हे भद्र एकएवाहमस्मि जीवात्मकइति यदात्मानंमन्यसे मैवंमंस्थाः यस्मादेवंपापानांपुण्यानांच द्रष्टा मननान्मुनिः सर्वज्ञस्तवहृदये परमात्मा नित्यमवस्थितः । तथा च श्रुतिः ॥ द्वासुपर्णा सयुजा सखाया समानंवृक्षंपरिषस्वजाते । तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति ॥ ९१ ॥

( ४ ) **राघवानन्दः** । मिथ्यात्वसर्वदेवज्ञेयत्वमनुवदन् सत्यवादिनः सर्वतीर्थगमनफलवादेन तन्निषेधरूपस्तुतिमाह एकोहमितिद्वाभ्याम् । मुनिर्मननादन्तर्यामी ईशः पुण्यपापयोर्ज्ञातैषहृदिस्थत्वात् ॥ ९१ ॥

( ५ ) **नन्दनः** । यस्त्वंमन्यसे तस्य ते पुण्यपापेक्षिता पुण्यपापयोर्द्रष्टा । तदानींमुनिर्मौनी ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । हेकल्याण तेहृदये पुण्यपापेक्षकः मुनिर्मननशीलः साक्षीस्थितःईश्वरः ॥ ९१ ॥

**यमोवैवस्वतोदेवोयस्तवैषहृदिस्थितः ॥ तेन चेदविवादस्ते मागङ्गांमाकुरून्गमः ॥ ९२ ॥**

( १ ) **मेधातिथिः** । कःपुनरसौमुनिर्भयातिशयप्रदर्शनार्थमाह यथैषसर्वप्राणिनांदेहधनाद्युच्छेदकारीयातनाभिश्च निगृह्णीतेति श्रुतिपथमागतोभवतः सोयंतव हृदये वर्तते न विप्रकृष्टः सचापराधंमामेवंनयति माचैवंमनसि कृथाएषआत्मामदीयोमामुपेक्षिष्यतइति नह्येतस्य कश्चिदात्मीयस्तेनचेदविवादः सचेत्प्रसन्नः प्रत्ययिनः किंगङ्गागमनेन स्नानार्थिनः पापशुद्धये किंकुरुक्षेत्रगमनेऽस्ति प्रयोजनं तत्फलंपापक्रमोपलक्षणार्थं ततः पुण्यंतदिहैवाविसंवादिनि परमात्मनि नहि पापकारिणआत्मा निर्विशङ्कोभवति किंमेऽतः स्यादितेनेति नास्तिकस्यापि किंकथिका भवत्येव गङ्गानदीपावयन्ती कुरुक्षेत्रंतु देशएव पावनः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । हृदिस्थितः पुण्यपापेक्षणार्थम् । अविवादस्तद्दर्शनाविरुद्धवादः । कुरून् कुरुक्षेत्रम् । तदविवादे च सर्वतीर्थफललाभइत्यर्थः ॥ ९२ ॥

( ३ ) **कुल्लूकः** । सर्वसंयमनाद्यमः परमात्मा वैवस्वतइति दण्डधारित्वात् । देवनाद्देवः । यस्तवैषहृदि तिष्ठति तेन यथार्थकथने यदि तवाविवादः यदात्वन्मनोगतमसावन्यज्जानाति त्वंचान्यथा कथयसि तदान्तर्यामिणा सह विप्रतिपत्तिः स्यात् । एवंचात्र सत्याभिधानेनैव निःपापः कृतकृत्योसि पापनिर्हरणार्थमा गङ्गांमा च कुरुक्षेत्रंयासीः । मनूक्तमेवात्र गङ्गाकुरुक्षेत्रयोः साम्यंमत्स्यपुराणे व्यासेन स्फुटीकृतं ॥ कुरुक्षेत्रसमागंगायत्रतत्रावगाहितेति । मेधातिथिगोविन्दराजौ तु विवस्वतः पुत्रोयोयमोदक्षिणदिक्पतिर्लोकतः कर्णगोचरीभूतत्वात्तवहृदये परिस्फुरति तेन सह यदि तवाधर्मकारित्वा द्विवादोनास्ति तदा मागङ्गांमा कुरुक्षेत्रंयासीरिति व्याचक्षाते ॥ ९२ ॥

( ४ ) **राघवानन्दः** । यमश्चासौ वैवस्वतश्च । तेन विज्ञातेनानेन विवादः संवादश्चेन्मागमः गङ्गादिकं मागच्छेत्यन्वयः । विसंवादश्चेत्पापाभीरोर्गङ्गादिगमनंवृथेतिस्तुतिनिन्दे ॥ ९२ ॥

( ५ ) **नन्दनः** । पश्चात्किंकरिष्यतीति चेत्तत्राह यमोवैवस्वतइति देवोयस्तवैषहृदि स्थितः सवैवस्वतोयमोनान्यः । यमोभूत्वा त्वांघातयतीत्यभिप्रायः ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । वैवस्वतोयमोनियन्ता तेन यमेन सहअविवादःते तव चेत्तर्हि गङ्गांस्नानार्थं मागमः कुरून् कुरुक्षेत्रंमागमः मा गच्छ । आत्मैव शुद्धइत्यर्थः ॥ ९२ ॥

**नग्नोमुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ॥ अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतंवदेत् ॥ ९३ ॥**

( १ ) **मेधातिथिः** । कपालशरावादिपात्रैकदेशः सुबोधम् ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । कपालेन घटादिकर्परेण । एतावद्दुःखजनकंपापंभवेदित्यर्थः ॥ ९३ ॥

( ३ ) **कुल्लूकः** । यः साक्ष्यमसत्यंवदेत्सनग्नः कृतमुण्डनपरिभावोऽन्धः कर्परेणोपलक्षितः भिक्षार्थी शत्रुकुलंगच्छेत् ॥ ९३ ॥

( ४ ) **राघवानन्दः** । अनृतवदने दृष्टरूपंदण्डान्तरमाह नग्नइतित्रिभिः । मुण्डः कृतमुण्डनपरिभवः शत्रुगृहं भिक्षार्थी गच्छेदित्यन्वयः । यएवं दृश्यतेसोऽनृतवदनफलभागित्युन्नेयः ॥ ९३ ॥

( ५ ) **नन्दनः** । कपालंअलाबुपात्रम् ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषः साक्ष्यमनृतंवदेद्वदति सएवंविधःस्यात् नग्नोमुण्डःकपालीति ॥ ९३ ॥

**अवाक्शिरास्तमस्यन्धे किल्बिषी नरकंव्रजेत् ॥ यः प्रश्नंवितथंब्रूयात्पृष्टः सन्धर्मनिश्चये ॥ ९४ ॥**

( १ ) **मेधातिथिः** । निमित्तंपृष्टोयोवितथमसत्यंवक्ति सतेन किल्बिषेन पापेन गृहीतऊर्ध्वपादोऽधोमुखोमहति गाढे तमसि नरकंयातनास्थानंतत्प्राप्नोतीत्यर्थः । अन्यस्मिंस्तमसि किंचिद्दृश्यते तत्र तु न किंचिदेवेत्यन्धग्रहणम् ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । अन्धे अन्धताहेतौ ॥ ९४ ॥

( ३ ) **कुल्लूकः** । योधर्मनिश्चयनिमित्तंपृष्टःसन्नसत्यंब्रूयात्सपापवान् । अधोमुखोमहान्धकारे योनरकस्तंगच्छति ॥ ॥ ९४ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् अवागिति । सकिल्बिषी पापी अन्धेतमसि नरके अवाक्शिराऊर्ध्वपादःसन्

पतेदिति । विशिष्टधर्मनिश्चये कर्तव्ये अयमेव धर्मइति अविनयमधर्मइतिवितथमधर्मंब्रूते इति । सोपि कूटसाक्षिवदधार्मिकः उक्तनरकपातीति शेषः ॥ ९४ ॥

( ५ ) **नन्दनः** । प्रश्नंपृष्टंसाक्ष्ये धर्मनिश्चये व्यवहारनिर्णये ॥ ९४ ॥

**अन्धोमत्स्यानिवाश्नाति सनरःकण्टकैः सह ॥ योभाषतेऽर्थवैकल्यमप्रत्यक्षंसभाङ्गतः ॥ ९५ ॥**

( १ ) **मेधातिथिः** । अर्थवैकल्यंसत्यादपेतंभाषते यथा कण्टकाअसिताभक्षिताजनयन्ति न तादृशींमत्स्याःप्रीतिंजनयन्ति । यदा धनलोभेन काचित्प्रीतिमात्रा भवति तथापि मोहदुःखंभवतीति सकण्टकमत्स्याशनोपमा ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । मत्स्यानिवाश्नाति कण्टकैरिति तत्र यथा आपाततः सुखं दुःखंतु महत्तथात्रेत्यर्थः । अर्थवैकल्यम् यथार्थंयथाभवति । अप्रत्यक्षमचक्षुर्विषयम् ॥ ९५ ॥

( ३ ) **कुल्लूकः** । यः सभांप्राप्तस्तत्त्वार्थस्यायथार्थस्याभिप्रायमनुपलब्धमुत्कोचादिसुखलेशेनकथयति सनरोअन्धइव सकण्टकान्मत्स्यान्भक्षयति सुखबुध्या प्रवृत्तोदुःखमेव महल्लभते ॥ ९५ ॥

( ४ ) **राघवानन्दः** । अन्धस्य कण्टकैर्विशिष्टं मत्स्याइनं दुःखं दुरदृष्टजमिति तद्विदः प्रसिद्धमयमपि तादृशदुःखभागित्युन्नेयः । कोयोयमेतादृशंभाषतइत्यन्वयः । अर्थवैकल्यं अर्थस्य विकलता शून्यत्वं यत्र तत् । अप्रत्यक्षं प्रत्यक्षेतरंवत्रः अनुपलब्धंवा ॥ ९५ ॥

( ५ ) **नन्दनः** । सभागतेऽर्थे आत्मनोप्रत्यक्षंवैकल्यमर्थसद्भावंयोभाषते सनरइहजन्मन्यन्धोभूत्वा वृत्यभावात्कैवर्त्तादिवत्समुद्रादितिरवर्तिमत्स्योदरस्थैः कण्टकैः सहमत्स्यानश्नाति ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । यःसभांगतःसन्नर्थवैकल्यं अप्रत्यक्षंयथाभवतितथा अप्रत्यक्षं भाषते सनरः अन्धइव कण्टकैःसह मत्स्यानिवाश्नाति ॥ ९५ ॥

**यस्य विद्वान् हि वदतः क्षेत्रज्ञोनाभिशङ्कते ॥ तस्मिन्न देवाः श्रेयांसंलोकेऽन्यंपुरुषंविदुः ॥ ९६ ॥**

( १ ) **मेधातिथिः** । यस्य वदतः साक्षिणोविद्वान्सत्यानृते जानानः क्षेत्रज्ञोन्तर्यामी पुरुषोनाशङ्कते किमयंसत्यंवक्ष्यत्यनृतंवेत्येवंनाशङ्कते निश्चितमेवैषसत्यंवक्तीति यस्यात्मा निर्विशङ्कस्तस्मात्पुरुषान्नान्यंश्रेयांसंश्रेष्ठंप्रशस्ततमंपुरुषंदेवाजानते कः पुनरयंवेदिता कश्च ततोन्यआशङ्किता एकएव ह्यात्मा हृत्प्रपन्नद्वारेण वाचमीरयन्वेदिता संपद्यते सएव तद्धर्मेण किंकथंस्यादित्येवंरूपेणाशङ्काख्यानेन युज्यते तत्र भेदानुपपत्तिः सत्यमेतत् काल्पनिकेन भेदेनैवमुक्तं यथा हन्त्यात्मानमात्मनेति ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । क्षेत्रज्ञः परमात्मा विशङ्कते विपरीतंशङ्कते ॥ ९६ ॥

( ३ ) **कुल्लूकः** । यस्य वदतः सर्वज्ञोन्तर्यामी किमयंसत्यंवदत्युतानृतमिति नशङ्कते किन्तु सत्यमेवायंवदति निर्विशङ्कःसंपद्यते तस्मादन्यंप्रशस्ततरंपुरुषंदेवान जानन्ति ॥ ९६ ॥

( ४ ) **राघवानन्दः** । [१]आत्मनो मिथ्यावादित्वेनाशङ्कितंस्तौति यस्येति । क्षेत्रज्ञः क्षेत्रभासकः साक्ष्यतएव विद्वान्

---

( राघ०४ ) चिन्हितपुस्तके ९६ । ९७ श्लोकोव्युत्क्रमौस्तः ।

१ आत्मानो······प्रतिजानीते=आत्मनोमिथ्यावादित्वेनाशङ्कितं स्तौतियस्येति । यस्यवदतः सर्वज्ञोऽन्तर्यामीकिमयसत्य माह उतानृतमिति न शङ्कते किंतुसत्यमेवायंवदतीति निर्विशङ्कः संपद्यते । तस्मात्पुरुषादन्यं प्रशस्ततरं पुरुषं देवानजानन्ति ॥ ( न,श )

यस्यमिथ्यावदतः पुंसोसत्यमेववदति नाशङ्कते स्वयंवासत्यमेवोक्तमितिवा श्रेयांसंश्रेष्ठतरं भृगुर्हि प्रतिज्ञान्तरं प्रतिजानीते ॥ ९६ ॥

( ५ ) **नन्दनः** । वदतोयस्य वाक्यादिति शेषः । क्षेत्रज्ञः परमात्मा न तुष्यतीति ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । यस्य वदतोविद्वान्नातिशङ्कते यस्य क्षेत्रज्ञोनातिशङ्कते ॥ ९६ ॥

**यावतोबान्धवान्यस्मिन्हन्ति साक्ष्येऽनृतंवदन् ॥ तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥९७॥**

**[ एवंसंबन्धनात्तस्मान्मुच्यते नियतावृतः । पशून्गोश्वपुरुषाणां हिरण्यं भूर्यथा क्रमम् ॥ १ ॥ ]‡**

( १ ) **मेधातिथिः** । द्रव्यविशेषानृताश्रयाः पापविशेषाः कूटसाक्षिणइत्येतत्प्रदर्शनार्थंप्रकरणमारभ्यते तत्रायंश्लोकः संबन्धोधनद्वारेणोपदिश्यमानआदरार्थः संपद्यते यद्गुह्यंमिथउपदिश्यते तद्यथा कथंचिद्भवतीत्यवधारितंग्रहणंनातिगुरु इदंत्वतिमहाप्रयोजनमवहितैः श्रोतव्यमिति । सौम्येति चैकवचनमनेकशिष्यसन्निधाने भृगवेव विवक्षितं यस्मिन्साक्ष्यइति व्यधिकरणसप्तमी यस्मिन्द्रव्यभेदभिन्ने व्यवहारे यत्साक्ष्यतत्र तन्निमित्तंयदनृतमित्येएषा विषयसप्तमी अपरा यस्य च भावनेति । अथवा द्रव्यभेदात्साक्ष्यभेदस्तत्र समानाधिकरणएव । तावतइति परिमाणे व्युत्पाद्यते तत्र यत्प्रभूतनिमित्तमपिपरिमाणंसंभाव्यते । शिशून्स्त्रियोवृद्धानित्यतोविशिनष्टि संख्ययेति । अनुपूर्वशइति सुखप्रतिपत्तयेऽनुपूर्वेण ह्यभिधीयमानंसुखेन प्रतीयते । आनुपूर्वीच सङ्ख्या गतात्राभिप्रेता तस्याएव वक्ष्यमाणत्वात्पञ्चपश्वेत्यादि ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । बान्धवान् पूर्वपुरुषान् हन्ति नरकेपातयति । केचित्तु तावत्पुरुषहन्तृदोषोभवतीत्यस्यार्थइत्याहुः ॥ ९७ ॥

( ३ ) **कुल्लूकः** । यस्मिन्पश्वादिनिमित्ते साक्ष्येऽनृतंवदन्यत्संख्याकान्पित्रादिबान्धवान्नरके योजयति तत्संख्याकान्क्रमेण परिगणनया मयोच्यमानान्साधोशृणुअथवा यावतोबान्धवान्यस्मिन्हन्ति यावतांबान्धवानांहननफलंप्राप्नोति तावत्संख्याकान् शृणु । पक्षद्वयेप्यनृतनिन्दार्थमिदम् ॥ ९७ ॥

( ४ ) **राघवानन्दः** । शृण्विति यावतइति । यस्मिन्पश्वादिहरणनिमित्ते बान्धवान्पित्रादीन्हन्त्युत्तमलोकात्पातयति तिर्यग्योनिं प्रापयतिवा आत्मनोऽनाशोक्तेः तस्मिन्साक्ष्येकर्मणि तावतोबान्धवान्संख्यया संख्याविशिष्टत्वेन ॥ ९७ ॥

**पञ्चपश्वनृतेहन्ति दशहन्ति गवानृते ॥ शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ९८ ॥**

( १ ) **मेधातिथिः** । पशुनिमित्तमनृतं शाकपार्थिववत्समासः पञ्चबान्धवांश्चानृतं हन्ति ततश्च तेषांनरकपातनंमातापितरौ जायामिथुनंचापत्यमिति पञ्च कथंपुनरन्यकृतेनैनसान्यस्य फलं संसर्गादिति ब्रूमः तैरयंपरित्यज्यतइत्युक्तंभवति अथवा तैर्हतैर्यत्पापंतदस्य भवतीत्यघ्नन्नपि हन्तीत्युच्यते अदृष्टकार्यतुल्यत्वात् अर्थवादश्चायंन तत्कार्योपदेशस्तत्कार्योपदेशे हि हिंसाप्रायश्चित्तीस्यात्कौटसाक्ष्यप्रायश्चित्तमेतद्भवति उत्तरोत्तरसङ्ख्यादिवृद्धिः प्रायश्चित्तगौरवार्था न पुनर्विवक्षितैव तेनोत्तरोत्तरस्य गरीयः प्रायश्चितमित्युक्तंभवति । अयंपुरुषः कस्य दासइत्येवंसंशये यदनृतंतत्पुरुषानृतमुच्यते ॥९८॥

( २ ) **सर्वज्ञनारायणः** । पश्वनृते गवाद्यन्यपश्वर्थमनृते । सहस्रं पूर्वपूर्वपुरुषानेव ॥ ९८ ॥

( ३ ) **कुल्लूकः** । पशुविषयेऽनृते पञ्चबान्धवान् नरके योजयति पञ्चानांबान्धवानांहननफलंप्राप्नोति । एवंदश गोविषये शत मश्वविषये सहस्रं पुरुषविषये संख्यागौरवंचेदंप्रायश्चित्तगौरवार्थम् ॥ ९८ ॥

---

‡ ( ठ )

( ४ ) **राघवानन्दः** । तदेवाह पश्वेतितिभिः । पञ्चसङ्ख्याकान्पितॄन् । एवमुत्तरत्र । हननं तिर्यग्योनित्वप्राप्तिः । पश्वनृते पश्वर्थमिथ्याभाषणे । एवंसैत्यत्रपशुत्वेन गवादीनांप्राप्तत्वेपुनर्वचनंप्रायश्चितगौरवार्थम् । पुरुषानृते मनुष्यविषयानृते ॥ ९८ ॥

( ५ ) **नन्दनः** । पञ्चबान्धवानित्यनुवर्त्तते पशुरजादिः । पुरुषानृते अयंदासोदासोवात्येवमादिके हन्ति ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । पश्वनृते पशोःसाक्ष्येऽनृतंवदति सपञ्चपूर्वपुरुषान्हन्ति घातयति । यद्वा नरके योजयति पातयति । हनंहिंसागत्योरित्यस्य धातोरूपम् गत्यर्थे हन्ति इति ज्ञेयम् गवानृते दशपुरुषान्हन्ति नरके पातयति । अश्वानृते शतंपुरुषान् हन्ति पातयति । सहस्रंपुरुषानृतेहन्ति ॥ ९८ ॥

**हन्तिजातानजातांश्च हिरण्यार्थेऽनृतंवदन् ॥ सर्वंभूम्यनृते हन्ति मास्मभूम्यनृतं वदीः ॥ ९९ ॥**

**[ पशुवत्क्षौद्रघृतयोर्यच्चान्यत्पशुसंभवम् ॥ गोवद्वस्त्रहिरण्येषु धान्यपुष्पफलेषुच ॥ अश्ववत्सर्व यानेषु खरोष्ट्रवतरादिषु ॥ ]‡**

( १ ) **मेधातिथिः** । कथंपुनरजातानामसति संसर्गे परकीयेन संयोगेनेदमुच्यते हन्ति जातानुजातांश्चेति उक्तमर्थवादोयमिति सर्वंभूम्यनृतंवद मावादीः भूमिसंबन्ध्यसत्यं मावादीरित्यादरार्थमप्येतत्प्रत्यक्षसंबोधनम् । कापुनरियंभूमिर्नाम यदेतत्पृथिवीगोलकंपर्वतावष्टंभनंसागरावधिप्रसिद्धंनत्वियत्त्याःकः स्वामी कोवापहर्ता न सार्वभौमःकश्चिदस्ति तथा च गाथा भूमेः न मांमर्त्यः कश्चन दातुमर्हति न कश्चित्सार्वभौमोस्तीत्यभिप्रायः । विश्वकर्मा भौवनमादिशद्विश्वकर्मभौमनेति पितृव्यपदेशेन स्वनाम्ना च राज्ञामन्त्रणंश्रुतंमयासौरन्तुमिछतीति वक्षाम्यहंसलिलस्य मध्ये मैवंसंकल्पंकृत्वैवंसंकल्पितवति सलिले मज्जामि सलिलमज्जनेन नैष्फल्यमब्रदानसंकल्पस्य गृहे यथा सलिले निक्षिप्तंनिष्फलमेवमेतदपीति मृषैवकश्यपाय सागरः तवैषसागरःप्रतिश्रवः प्रतिज्ञानंकश्यपाय ददामीति मोक्षःबंधस्तु सर्वसाधारणार्हा। सर्वजनोपभोग्या केवलंराजानोरक्षानिर्देशमात्रभाजइत्यभिप्रायः । अतएतावत्याभूमेर्नदानोपहारसंभवइति कुतोविवादः सत्यंयश्चैवायंभूमिशब्दोत्रवर्तते एवंक्षेत्रग्रामस्थण्डिलादावपि तत्र च संभवत्येव स्वाम्यंप्रत्यक्षस्यैव दानापहाराविति न किंचिदनुपपन्नं अपहारश्चास्यायादृशेन रूपेण गृहादेर्नवीरुद्विछेदः अतश्च यः परकीये क्षेत्रे चंक्रम्येत मृदोवा कश्चिदादद्यान्नासौ भूम्यपहारी । मीमांसकैरुक्तं न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति एकदेशवचनंच भूमिशब्दमधिकृत्य भगवान्कृष्णद्वैपायनोदानधर्मेषु पठितवान् ॥ परैरप्यनुमन्तव्योदानधर्मोनृपैर्भुवि । अक्षयोहि निधिर्ब्राह्मोविहितोयंमहीभृतामिति ॥ कृत्स्नगोलकाभिप्रायमेव नादेयत्वंभूमेर्विश्वजिति मीमांसकैरुक्तं न भूमिःस्यात्सर्वान्प्रत्याविशिष्टत्वादिति सर्वान्पुरुषान्प्रतिचंक्रमणादियोग्यतयातिशिष्टा भूमिः स्वामीकर्तुमशक्या कथंदीयतइत्यर्थः । अस्मिंस्तु पक्षे ग्रामनगरादिविश्वजिति दातव्यं अन्ये तु पठन्ति अन्तरेण सदःपत्नीशालंच दक्षिणानयन्तीति भूमौ गुणविधेरस्यासंभवात्क्षेत्रादेरप्यत्रदानं वदन्तिचैएकवचननिर्देशाच्छृणुसौम्येति साक्षिविषयमेवैतत्संबोधनंनशिष्यविषयम् । शूद्रैमभिस्तुपातकैरित्यतआरभ्य यावन्तोमध्यमपुरुषनिर्देशास्तेसर्वेषांपातकभूयस्त्वसमानाख्यातरूपाद्येकवाक्यत्वाच्छूद्राऽनुयोगार्थाः । अन्धःशत्रुगृहंगच्छेदित्यतआरभ्य सर्वेसाक्षिविषयाअनुयोगाः आख्यातवैरूप्येन प्रकरणस्य विछेदात् मध्यमपुरुषे समानार्थक्रमत्वात्कर्तव्यो गच्छेदिति प्रथमपुरुषनिर्देशः पूर्वाधिकारनिवृत्त्यर्थः ॥ ९९ ॥

---

* सत्यत्र=अन्यत्र ( राघ०४ ) ‡ ( नंदनः )

( २ ) **सर्वज्ञनारायणः** । अजातान् पुत्रादीन् । अत्रापि सहस्रमित्यन्वयः । सर्वं सहस्रादप्यधिकम् ॥ ९९ ॥

( ३ ) **कुल्लूकः** । हिरण्यार्थेऽनृतंवदन् जातानजातांश्च पुत्रप्रभृतीन्नरके योजयति एषांहननफलंप्राप्नोति । भूमिविषये चानृतंवदन्सर्वप्राणिनांहननफलंप्राप्नोति तस्माद्भूमिविषयेऽनृतंमावदीरिति विशिष्याभिधानम् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । अजातानुत्तरकालीनान् । अर्थवादोयमिति मेधातिथिः । सर्वमिति अपरिमितंदेयमितिवत्सहस्रादधिकं उक्तसङ्ख्यायाअन्तर्भावात् । एवं सर्वजातादीन् ॥ ९९ ॥

( ५ ) **नन्दनः** । सर्वजगत् ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । हिरण्यार्थे । अनृतंवदन् जातानजातांश्चहन्ति नरके योजयति । सहस्रमित्यनुवर्तते । न सहस्रजातान् सहस्रमुत्पद्यमानान्हन्ति ॥ ९९ ॥

**अप्सु भूमिवदित्याहुः स्त्रीणांभोगे च मैथुने ॥ अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥ १०० ॥**

**[ पशुवत्क्षौद्रघृतयोर्यानेषु च तथाश्ववत् । गोवद्रजतवस्त्रेषु धान्ये ब्राह्मणवद्विधिः ॥ १ ] ॥+**

( १ ) **मेधातिथिः** । मैथुनाख्ये केनेयंस्त्रीभुक्ता मैथुनधर्मेणेत्यब्जेषु रत्नेषु मणयोरत्नानि मुक्ताद्याअश्ममयेषु वैडूर्यादिषु रत्नेष्विति संबध्यते । त्रिविधान्येवरत्नानि जलजान्याश्मनानि च । अतोरत्नग्रहणएव कर्तव्ये विशेषणद्वयोपादानंश्लोकपूरणार्थम् । अद्भ्योजातान्यब्जानि । अश्मनोविकाराअश्ममयानि ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । भूमिवत् भूम्यनृतवद्दोषः । स्त्रीणां भोगेमैथुने मैथुनरूपस्त्रीसंभोगविषयमिथ्योक्तौ अब्जेषु रत्नेषु मुक्तादिषु । अश्ममयेषुरत्नेषुमाणिक्यादिषु ॥ १०० ॥

( ३ ) **कुल्लूकः** । वैदूर्य्यादिष्वनृतंवदतोभूमिवद्दोषमाहअप्स्विति । तडागकूपप्राप्योदकविषयेऽनृते स्त्रीणांच मैथुनाख्योपभोगविषये अब्जेषु च रत्नेषु च मुक्तादिषु पाषाणमयेषु वैडूर्यादिष्वनृते भूमिवद्दोषमाहुः ॥ १०० ॥

( ४ ) **राघवानन्दः** । भोगे मैथुनधर्मेण । निजस्त्रियः न जाने इतिब्रूते जानन्नपि ॥ १०० ॥

( ५ ) **नन्दनः** । उक्तमर्थं वस्त्वन्तरेष्वतिदिशति अप्सु अब्धिविषये ऽनृते । मैथुने भोगे मिथुनभोगविषयेऽनृते । अब्जानि शङ्खमुक्तादिकम् ॥ १०० ॥

( ६ ) **रामचन्द्रः** । अप्सु जलस्यानृते भूमिवत् भूमेर्यत्पापमुक्तंतज्जलानृतइत्यर्थः । च पुनः स्त्रीणांभोगे मिथ्योक्तौ भूमिवत्पातकम् । च पुनः अब्जेषु मौक्तिकादिषु भूमिवत् । च पुनः सर्वेष्वश्ममयेषु माणिक्यादिषु अनृतेभूमिवत् ॥ १०० ॥

**एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ॥ यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद ॥ १०१ ॥**

( १ ) **मेधातिथिः** । ऊहापोहौवर्जयित्वा यथाश्रुतंचादृष्टंतत्वेन ब्रूहि ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः** । अञ्जसाशीघ्रम् ॥ १०१ ॥

( ३ ) **कुल्लूकः** । एतानसत्यभाषणदोषानधिगम्य दृष्टश्रुतानतिक्रमेण सर्वमेवाञ्जसा तत्त्वतोब्रूहि ॥ १०१ ॥

( ४ ) **राघवानन्दः** । साक्षिवाचनमुपसंहरति एतानिति । ब्रह्मघ्नानित्यादि वेदेत्यन्तान् शूद्रायैव श्रावणीयं संदंशन्यायात् शूद्रवदाचरेदिति गोरक्षकादिषु शूद्रधर्मातिदेशाच्च ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । अञ्जसा शीघ्रंवदेति ॥ १०१ ॥

---

+( च,ण,ञ,ट,ड )

( १०१ ) सर्वम्=सत्यम् ( ड )

**गोरक्षकान्वाणिजिकांस्तथा कारुकुशीलवान् ॥ प्रेष्यान्वार्द्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत् ॥ १०२ ॥**

**[ ये प्यतीताः स्वधर्मेभ्यः परपिण्डोपजीविनः । द्विजत्वमभिकांक्षन्तितांश्च शूद्रानिवाचरेत् ॥ १ ॥ ]+**

( १ ) **मेधातिथिः** । कारवः शिल्पिनस्तक्षायस्कारसूपकारादयः कुशीलवानर्तकगायनाद्याः प्रेष्याजीविकार्थपरस्याज्ञाकारादासाइति प्रसिद्धाः वार्धुषिकावृध्युपजीविनः एते ब्राह्मणाअपि सन्तः प्रकरणात्साक्ष्ये शपथे च शूद्रवद्द्रष्टव्यानक्रियांतरे यथा शूद्रोन दानपुण्यादिना पृच्छयते साक्ष्ये शपथे चाग्निहरणादिना शोध्यते तद्वदेषोपि शपथोयद्यपि पूर्वत्राप्रकृतस्थाप्युत्तरत्रानन्तर्याद्दोषवत्वात्प्रयतत्वात् प्रयतत्वेप्यानन्तर्यस्य संबन्धहेतुत्वाद्वक्ष्यमाणस्यापि प्रत्यासत्या पूर्ववद्द्वयोसन्निपातात् शपथेऽपितुल्यम् ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः** । गोरक्षकान् पशुपालनेन जीवतः। कारून् सूपकारादिवृत्तीन् कुशीलवान् नटवृत्या प्रेष्यान् ब्राह्मणस्यादास्येऽपि स्वतःप्रतिपन्नदास्यान् । वार्द्धुषिकान् वृद्धिजीविनः । शूद्रवत् सर्वपातकैः पृच्छेदिति ॥ १०२ ॥

( ३ ) **कुल्लूकः** । गोरक्षणजीविनोवाणिज्यजीविनः सूपकारादिकारुकर्मजीविनः दासकर्मजीविनः नटकर्मनृत्यगीतादिजीविनः प्रतिषिद्धजीविनोब्राह्मणान् प्रकृतसाक्ष्यदर्शने शूद्रवत्पृच्छेत् ॥ १०२ ॥

( ४ ) **राघवानन्दः** । वाक्यप्रकरणपठितं* पंचपश्वनृतइत्याद्यधर्मज्ञातंद्विजानामपि भवत्येव । सर्वपातकादियुक्तेनिकृष्टद्विजेऽपि वाचयेदित्याह गोरक्षेति ॥ १०२ ॥

( ५ ) **नन्दनः** । गोरक्षकान्विप्रान् शूद्रवदाचरेत्सर्वैः पातकैर्ब्रूहीति ब्रूयादित्यर्थः ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणान्प्रत्याह गोरक्षकानिति । पाशुपाल्यादिवृत्तिजीविनोविप्रांन्साक्ष्ये शूद्रवत्पातकैःपृच्छेत् ॥ १०२ ॥

**तद्वदन्धर्मतोर्थेषु जानन्नप्यन्यथा नरः ॥ न स्वर्गाच्च्यवते लोकाद्दैवींवाचंवदन्ति ताम् ॥ १०३ ॥**

( १ ) **मेधातिथिः** । तदन्यथापि वदन्न स्वर्गाद्भ्रश्यति कूटमपि वदन्न दुष्यतीत्यर्थः किंसर्वदैव नेत्याह धर्मतोर्थेषु धर्मेण दयादिना निमित्तेनार्थेषु व्यवहारेषु । धर्मस्य च निमित्तत्वमुक्तमुत्तरश्लोके दर्शयिष्यति एतच्च न स्वमनीषिकयोच्यते किंतर्ह्येतांवाचंवदन्ति अस्मात्पूर्वेऽविस्मर्तारः का पुनर्दैवी वाग्ययास्मिन्निमित्तेऽनृतंवदितव्यमित्येषा देवानांसंबन्धिनीवाक् तामन्वादयः श्रुत्वा वदन्तीति विशेषेऽनृतप्रशंसा । अन्यैस्तु पूर्वविधिशेषतयायंश्लोकोव्याख्यातस्तदेतद्गोरक्षकादिष्वनुयोगवाक्येषु ब्राह्मणेषु भवितव्यमन्यथा ब्राह्मणएव कथंशूद्रवदनुयोगस्तथापि विद्वान्दुष्यतीति यतोमन्वादयएवंविधांवाचंवदन्ति यथैते शूद्रवन्नाचरणीयाइति । ते च धर्माधर्मयोः प्रमाणंतैश्च सत्यंवदितव्यं तच्च यथाविहितंतत्र सएव धर्मोयत्रवानृतंतत्रानृताभिधानमेव धर्मइति ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । तत्साक्ष्यं धर्मतोधर्मार्थं जानन्नप्यन्यथावदन् स्वर्गान्नच्यवते यतस्तत्रानृतापि वाग्दैव्यैवेति वदन्ति ॥ १०३ ॥

---

+ ( ड ) । ( ट ) चिन्हितपुस्तकेतु येप्यपेताः स्वकर्मभ्यः परकर्मोपजीविनः ॥ द्विजाधर्मविजानन्तस्तांश्च शूद्रवदाचरेदितिपाठः ।

* पठितं=प्रमितं ( राघ० ४ )

( ३ ) **कुल्लूकः** । तदेतत्साक्ष्यमन्यथापि जानन्मनुष्योधर्मेण दयादिना व्यवहारेष्वन्यथा वदन्स्वर्गलोकान्नभ्रश्यति यस्माद्यदेतन्निमित्तविशेषेणासत्याभिधानंतांदेवसंबन्धिनींवाचंमन्वादयोवदन्ति ॥ १०३ ॥

( ४ ) **राघवानन्दः** । क्वचिदेतस्य प्रतिप्रसवमाह तद्वदन्निति द्वाभ्याम् । तत् साक्ष्यविषयभूतंसत्यं जानन्नप्यन्यथा-नब्रुवन्स्वर्गाच्च्यवते यतोऽसत्यामपि तांवाचं दैवींवदन्त्यतानुद्धरिष्यामीतिविजिगीषाहेतुत्वात् । धर्मतोदयादिना । अर्थेषु व्यवहारेषु ॥ १०३ ॥

( ५ ) **नन्दनः** । अर्थेषु चातुर्वर्ण्यवधपर्यन्तेषु । अन्यथा जानन्नप्यन्यथा तदनृतं धर्मतोहेतोर्वदन्स्वर्गान्नच्यवते । कुतः तांधर्मानुसारिणींवाचंदेवींसत्यांवदन्ति यतस्तस्माद्धर्माविरुद्धंचेदसत्यमपि साक्षिभिर्वक्तव्यं न धर्मविरुद्धंसत्यमिति ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । तद्वदन्निति सार्धेनाह । तत्साक्ष्यं धर्मतोर्थेषु वर्णिरक्षाद्यन्यतरधर्मार्थेषु जानन्नप्यन्यथावदन्नरः-स्वर्गान्नच्यवते ॥ १०३ ॥

**शूद्रविट्क्षत्रविप्राणांयत्रर्तोक्तौ भवेद्वधः ॥ तत्र वक्तव्यमनृतंतद्धि सत्याद्विशिष्यते ॥ १०४ ॥**

( १ ) **मेधातिथिः** । तत्र नानृतंवदेदिति यः प्रतिषेधस्तस्य शूद्रादिविधविषयतानेनोच्यते न पुनरनृतवदनंविधी-यते तथा सति प्रतिषेधे नैकवाक्यता बाध्यते का पुनरत्र निमित्तश्रुतिस्तत्रेति तस्य वधविशेषणत्वान्न वधस्तस्याः म-नोमित्रत्वानुपपत्तेरतश्च कृतेऽवधौपश्चात्तद्विषयमतद्विषयंवानृतंवक्तव्यमित्यर्थः । आपतति तत्त्वनिष्ठंन ननु च यत्रेति व्य-वहारस्तुर्तिर्निर्दिश्यते पुनस्तत्रेति तदेव प्रतिनिर्दिश्यते ततश्च यस्मिन्व्यवहारे राजत्वात्क्रोधदण्डस्य चाशास्त्रीयत्वादस्थितं-परिमाणतया निश्चयाभावेन तस्यापि निमित्तत्वोपपत्तिरतः प्रतिषेधशेषतैव न्याय्या गौतमीयेत्वनृतविध्याशङ्कापि नास्ति। नानृतवदने दोषोजीवनंचैतदधीनमित्येवमादिप्रतिषेधे सत्यानृतयोः कामचारप्रसङ्गेसत्यवचनेन निमित्तभावः प्रतिपद्यमानो-नहिंस्यात्सर्वभूतानीति प्रतिषेधव्यतिक्रमतया चानृतप्रतिपद्यतइति युक्तिमत्वेनेदंकृतंनचेदसौ पृष्टआचष्टे न पुनर्हन्ति अघ्नंश्च कथंहिंसादोषेणानुषज्यते । अथ सत्यपि स्वातन्त्र्ये तद्वदनेन राज्ञाहन्यमानत्वात्तद्धेतुभावापत्या प्रयोजिकत्वमिति चेत् न-सर्वोहेतुः प्रयोजकोधनेन कुलंविद्ययायशइति भवति विद्यया यशसोहेतुना प्रयोक्त्री । ननु चान्यएवायंलौकिकफलोत्पत्ति-योग्यताहेतुलक्षणे हेतुभावोपि तु द्रव्यगुणायत्रापि क्रियाश्रूयन्तेऽग्निना पाकइति सापि स्वरूपेण सिद्धरूपाभिधानात्कृदन्तै-र्भावस्य अन्यश्चायंशास्त्रीयकर्तव्यव्यापारस्य प्रयोजकोहेतुर्नतु तत्प्रयोजकत्वमेवमित्यर्थं यदि तावत्प्रेषणाध्येषणेआज्ञाप्रा-र्थनारूपे प्रयोजकत्वंशोषयते व्रीहीनातपइत्यादावचेतनेषु णिजुत्पत्तिर्दुर्लभा ननु च परिहृततमेतद्व्याख्यातृभिः मुख्योपच-रितक्रियइति चेतनावद्वस्तूपचारे भिक्षावासयति कारीषोध्यापयतीति न ह्यत्र चैतन्यकृतउपकारे ऽपि तु निश्चित्तत्वात्तद-न्यस्य प्रयोजकस्य अध्ययनंह्याचार्यविधिप्रयुक्तंकुर्वाणस्य शीतादिलक्षणंप्रतिबन्धकमनुवदति कारीषेप्रयोजकत्वाद्ध्यारो-पः । प्रेरकत्वाद्धि प्रयोजकमुच्यते तच्च चैतन्यस्य वायुजलादेरग्निकाष्ठादौ सुतरांदृश्यते तदा विधिप्रयोजकस्तुतिप्रयोक्तृभिः प्रेषणाद्यभावाद्गौणार्थशब्दास्युः । अथैतत्समर्थाचरणंप्रयोजकत्वं तच्च प्रयोजकस्य व्यापारानुगुणंपोषणादिव्यतिरिक्तक्रिया-न्तरावरणंसंविधानाख्यं संविदधानएव हि कारयतीत्युच्यते यथा बुभुक्षमाणस्य कश्चित्पात्रमाहरत्यन्योभक्तमुपनयति क-स्य चिद्वधप्रवृत्तस्य कश्चिदायुधमर्पयन्त्यास्योवध्यदोषाधिकरणे न वध्यंभेषयत्येवंलक्षणः प्रपित्रादि रूपोहितः सव्यापारः

प्रयोज्यफलसिद्धावानुकूल्यं प्रतिपद्यमानस्तत्समर्थाचरणपक्षे प्रयोजकः। अस्मिन्पक्षे कारीषोपाध्यायौ तुल्यौ प्राप्तुतः। अत्रापि यमन्तरेण क्रियायाअनिर्वृत्तिर्यस्य च कारकविशेषसंज्ञा न प्रवर्तन्तेसमुख्यःप्रयोजकः कर्त्ता अध्यापयितारंचान्तरेण कारीषोन शक्नोत्यध्ययनहेतुभावंप्रतिपत्तुं आचार्यस्तु तमन्तरेणापि शक्तएवेति गुणः कारीषः यत्र च करणादिभावे निश्चितहेतुमत्प्रत्ययदर्शनात्तत्रापि गौणार्थतैव यथा कश्चित्स्वल्पोनापि प्रयोजनेन दूरंग्रामंपुनः पुनर्गतवन्तंदृष्टा ब्रवीत्यश्वोगमयतिदेवदत्तमिति यत्र तु न कस्य चिदासत्तिविप्रकर्षावन्तरङ्गबहिरङ्गभावोवा गम्यते तत्र यावन्तस्तदानुकूल्यंप्रतिपद्यन्ते सर्वे ते प्रयोजकाः। नन्ु च कारकसंज्ञायामन्तरङ्गयोगोनास्तीति कोविशेषः कारीषोपाध्याययोः स्वप्रक्रियैव सा तत्र भवतांन वस्त्वाश्रया वस्त्वाश्रयौ च विधिप्रतिषेधौ इदमपि तत्र पठ्यते विवक्षातः करणकारकाणिभवन्तीति एवंच सति यत्राकर्तुरेव कर्तृत्वंकश्चिद्विवक्षेत्तत्र कर्तृप्रत्ययविधिप्रतिषेधावपि स्यातां यथा पातकपरिगणनायामनुपठति क्रयविक्रयी संस्कर्ताचोपहर्ताचेति तस्मादन्वाख्यानसिध्यर्थानांतावकी सा व्यवस्थानवस्त्वधिष्ठानमर्थमवस्कन्दति अतएव व्याख्यातृभिस्तत्समर्थाचरणंचेद्धेतुमात्रे प्रसङ्गः ततश्च योपि कस्मै चिद्भोजनंददाति सचौदरिकतयातिसौहित्येन व्यापद्येत प्राप्तंतत्र दातुर्वधकर्तृत्वमिति नच तत्प्रयुक्तंभवति क्रियान्तरेण ह्यसौ निश्चितोभोजनाख्योप्रयोजकोन वधोन वैर्ष्यादिकथंचिन्निमित्तंभवति भवतु-प्रयोजकत्वाभावात्तु कर्तृत्वंनास्तीति ब्रूमः। यस्य तु भूमिसुवर्णापहारादिनापराध्येत सच तदपहारमृत्युना कथंचिन्म्रियेत किंतत्रापहर्तुरपहारदोषएवोभयवधेऽपि निमित्तिभावइति चिन्त्यं। किमत्र चिन्त्यते अव्यभिचारावगम्यत्वाद्धेतुहेतुमद्भावस्य न खड्गप्रहारभोजनविच्छेदादेरिव भूम्यादिहरणस्य नियतनिमित्तत्वोपपत्तिः। कोयंनियमोऽभिप्रेतः यदि ह वा केचिन्म्रियन्ते केचिन्नेति नियतोनियमोभवति पुरुषस्वभावभेदात् तदेवौषधंश्लेष्मिकोपहितंविपरीतमन्यस्येति सर्वेषामेव च भावानांदेशकालस्वभावभेदसहकारिसापेक्षा शक्त्यन्तरप्रादुर्भावस्तदेव लक्षणं पुरुषवित्तसंततिसापेक्ष्यंपिपासाहेतुप्राण्यन्तरसापेक्ष्यंतद्विच्छेदहेतुरिति एवमत्यन्तामर्षिणोमन्युमतःस्वहरणपरिभवादि मरणाय कल्पते । किंतव शक्योनिमित्तभावोपह्नोतुं पेशलमानसस्य तूपेक्षैव तत्र । ये पुनर्मन्युपरीताअनशनश्वभ्रपतनविषभक्षणादिनापरान्द्वारमुद्दिश्य म्रियेरंस्तत्राप्येषएवन्यायः। ननुचान्यस्यैव प्रसिद्धहेतुभावस्य विषभक्षणादेर्निमित्तस्य तत्र दर्शनान्न भूम्यादिहरणस्यापराधोहन्तृत्वमाप्नुयात्तेनोपजनितमन्युमरणहेतोः प्रवर्तनंइति पारंपर्यन्तोनिमित्तत्वमितिचेत् एवंसति पथ्योपदेशेनापि किंचिद्विजमानाआत्मानंव्यापादयन्ति ततश्च तत्रोपदेष्टारोहन्तारः स्युः। तथामत्सरिणः परद्रव्येष्वीर्ष्यया शुष्यन्तोधनिषु दोषमाददीरन्। तथान्ये मूढमनसः प्रियान्पुत्रान्स्वामिनश्चानुम्रियन्ते तत्र प्रियादीनां हन्तृतापत्तिः। अपरेच रूपवत्स्त्रीदर्शनेन परिफल्गुमनसः सूयन्ते भज्यमानहृदयाश्च विवेकसूत्यात्मानस्तत्र शीलवत्यः स्त्रियोदुष्येयुः । तदेवेदमापतितंमृतस्य ब्रह्महत्येति सत्यमेवंयदि विधिप्रतिषेधविशेषोनस्यात् विहितोहितोपदेशः प्रतिषिद्धंस्वहरणादि तथा चाहुः। उपकारप्रवृत्तानांकथंचिद्विपर्यये न तत्र दोषः केषांचिद्भेषजामौषधी यथा अत्र न केवलंवैद्यादेरातुरोपकारार्थिनः प्रयुक्तौषधस्य कथंचिद्विपरीततयोपपत्तावदोषः किंतर्ह्यन्यस्यापि गवादेर्महति पङ्केनिमग्नस्योद्धर्तृभुजाकर्षणाय यथाश्रमेण यदि व्यापत्तिर्न तत्रोद्धर्त्ता दुष्येदिति कथितंभवति एवंसर्वत्र योपि कस्मिंश्चित्स्वव्यापारानुष्ठानवति धनरूपातिशयसंपद्वति दृश्यमाने दन्दह्यते न तंप्रति कस्यचिच्छास्त्रार्थातिक्रमः निश्चितोहि निमित्ताभावः प्रतिषेधस्यविषयोभवितुमर्हति। नच प्राण्यन्तराश्रयिषु चैतसिकेषु धर्मेषु प्रतिक्षणमन्यथा भवत्सु स्वभावविशेषावसायः। नहि शक्यमवसादितु मयमस्यारूपसंपदा व्यापद्यतइति नच निश्चिते प्रतिषेधविषये संभवत्यनिश्चितविषयता न्याय्या यत्र तर्हि कथंचिद्वर्णविपर्यय शरीरशोषणादिना कुतार्किकपठितास्यादपि निमित्तावगतिस्तत्र किंभ्रंशयितुंशीलंसंयुज्यतांकामिनां भवतु वा पुरुषव्यापिनीति नैतदेवं नहीदृशीभवन्त्यपि

निमित्तता प्रतिषेधस्य विषयविध्यन्तरविरोधात् । अस्ति ह्यत्र व्यभिचारप्रतिषेधविधिः न वापि विध्यन्तरेणानवष्टब्धे-विषये कृतावकाशाविधयोविरोधविध्यन्तरंविषयमास्कंदितुमर्हन्ति । येऽपि मन्यन्ते रागलक्षणां प्रवृत्तिंशीलसंरक्षणोपदे-शोनिषेधति न शास्त्रलक्षणां तेन ग्राह्यानुभावतया नास्य तपस्विनोजीवितुं चेच्छेदिति प्राणोजिहीर्षया मुमूर्षुणा संप्रयुज्यते नासौ व्यभिचारप्रतिषेधमतिक्रामेत् । यत्तु विध्यन्तरविषये न विध्यन्तरंप्रवर्ततइति नैवायंविध्यन्तरस्यविषयोरागलक्षण-त्वात् । ननु च प्रतिवृत्तावपिनैवशास्त्रमस्ति नियोगविधाविव व्यभिचारानुज्ञानंस्मृत्यभावात् । अथाप्रवृत्तौ कामयेत मारण-मिति प्रतिषेधभयात्प्रवर्ततेसोऽपि प्रतिषेधोरागलक्षणामेत्र हिंसांप्रतिषेधयति नचासौ रागतो न प्रवततेऽपि तु प्रतिषेधभ-यात् या तु परोपकारतः प्रवृत्तिः सापि प्रतिषेधविषयपरिहारेण योपि किंचिद्यावदयमहमात्मानंहन्मीति हन्यान्न तत्रा-प्रयत्नतोघातकत्वं व्यवहारोच्छेदप्रसङ्गात् ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । यत्रान्यथावाच्यंतदाह शूद्रेति । ऋतोक्तौ सत्योक्तौ । ब्राह्मणस्य वधाभावेप्युग्रदण्डाद-धार्मिकाद्राज्ञोवधःसंभवत्येव तत्रच प्रमादस्खलितादिकृतदोषविषयम् । बुद्धिपूर्वसाहसादौतु दृष्टे वधसंभवेपि सत्यंवाच्यम् । तथाच गौतमः ॥ नानृतवचने दोषोजीवनंचेत्तदधीनं नतु पापीयसोजीवनमिति ॥ एवंचात्र विषये राज्ञा साक्षिव्यतिरिक्त-प्रमाणेनैव तत्त्वमन्वेष्यम ॥ १०४ ॥

( ३ ) **कुल्लूकः** । क्वपुनस्तदसत्यंवक्तव्यमित्यतआह शूद्रेति । यस्मिन्व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्रियब्रा-ह्मणानांवधः संपद्यते तत्रासत्यंवक्तव्यंयस्माद्यस्मिन्विषयेऽनृतंयत्तत्प्राणरक्षणेन सत्याद्विशिष्यते एतच्च प्रमादस्खलिताधर्मवि-षयत्वे नत्वत्यन्ताधार्मिकसंधिकारस्तेनादिविषये । तथा गौतमः ॥ नानृतवदने दोषोयज्जीवनंचेत्तदधीनं नतु पापीयसोजी-वनमिति । नच ॥ न जातुब्राह्मणंहन्यात्सर्वपापेष्वपि स्थितमिति मनुनैव वक्ष्यमाणत्वात् न ब्राह्मणवधप्रसक्तिरिति वाच्य म् उग्रदण्डत्वाद्राज्ञः कथंचित्संभवात् । अत्र वचने शूद्रादिक्रमेणाभिधानंवधस्यामङ्गलत्वात् ॥ १०४ ॥

( ४ ) **राघवानन्दः** । सावाक्कुत्रवाच्येत्यतआह यत्र ऋतोक्तौ सत्योक्तौ शूद्रविट्क्षत्रियाणांवधोभवेत्तत्र वक्तव्यमनृ-तं । तत्र हेतुः तद्धीति । तदनृतं । सत्येनधर्ममात्रमत्रतु विप्रादिरक्षा दृष्टार्थाऽहिंसाऽदृष्टार्थेति तद्द्वयमतोविशेषइतिभावः । शूद्रेतिक्रमवैपरीत्यं कूष्मांडैरित्यापिप्रायश्चित्तचतुष्टयस्य सूचनार्थं* अन्यथा तदसंभवात् ॥ १०४ ॥

( ५ ) **नन्दनः** । अथ साक्षिगांक्वचित्सत्यवचनेऽपवादमाह शूद्रविडिति । उक्ते ऋतइति पदच्छेदः सन्धिकार्यमार्षम् । उक्त्वार्त्तमिति वा पाठः । तत्र समानकर्त्तृत्वमार्षम् ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । यत्रसाक्ष्ये ऋतोक्तौ प्राणिनांमनुष्याणांवधोभवेत् । तत्र योगीश्वरः ॥ प्राणिनांहि वधोयत्र तत्र साक्ष्यनृतंवदेत् ॥ १०४ ॥

**वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ॥ अनृतस्यैनसस्तस्य कुर्वाणानिष्कृतिंपराम् ॥ १०५ ॥**

( १ ) **मेधातिथिः** । वाक् चासौ देवता च सा वाग्देवता तदर्थंच चरवोवाग्दैवत्यास्तण्डुलानातिपक्वाश्चरवस्तैर्यजे-रन्निति बहुवचननिर्देशात् । चरुभिरिति बहुवचनंन पुनरेकैकशोबहवश्चरवोनापि संहतानांव्रात्यस्तोमवद्यागोदेवश्चे द्वेषद्वहवोब्राह्मणायजेरन्निति तद्बहुवचनं ननु कपिञ्जलैश्च त्रिभिर्यजेरंस्तदेतद्ब्राह्मणाद्यनुग्रहार्थमनृतमुक्तंभवति अनृत-

---

* सूचनार्थं=शूद्रादिषुक्रमसूचनार्थं ( राघ०४ )

मेवैनः पापमसत्याभिधानलक्षणा क्रिया यथा धर्मक्रियावतएवंसमानाधिकरणे षष्ठी येषान्तु क्रियाजन्यौ धर्माधर्मौ न क्रियैव तन्मतेऽनृतस्य यदेनइति वैय्यधिकरण्येऽनृतनिमित्तत्वादेनोनृतमुपचारतः समानाधिकरणेएव तस्य निष्कृतिः शोधनंपावनंप्रायश्चित्तमिति यावत्। पराप्रकृष्टा। ननु च कुतोत्रपापंयावतास्मिन्निमित्तेनानृतवचने दोषइत्युक्तम्। केचिदाहुर्निवृत्तिस्तुमहाफलेति। अस्माच्छास्त्रात्तु यावज्जीवमनृतंमया न वक्तव्यमिति येन संकल्पितंतस्य मिथ्यासंकल्पदोषोमाभूदिति प्रायश्चित्तमुच्यते गेहदाहवधाप्रतिषेधेऽपिनैमित्तिकंविधानमेनसोनिष्कृतिमित्यर्थवादः इदंतर्हि वाग्देवत्यैः सरस्वतींयजेरन् यदि वाग्देवत्यासरस्वतीकथमिष्यते अथवा सरस्वत्योरेकत्वेनैवंदेवताभावे शब्दावगम्यरूपत्वाद्देवताया-भिन्नौ चेतौ वाक्सरस्वतीशब्दौ यथाग्नये जुहोतीति चोदितेन ज्वलनाय कृशानवे वा स्वाहेति हूयते वायवे निरूप्य जुहुयाद्वायुर्वैप्राणइत्युक्तेऽपि न प्राणायेति हूयते सत्यंवागेवदेवतासामानाधिकरण्याद्देवतार्थेतद्धितः। सरस्वतींद्वितीयानिर्देश्यादेवता कर्मणि हि द्वितीया संप्रदानंचदेवता न कर्म कथंतर्हि सरस्वतीपदान्वयः अर्थवादोयमग्नयेजुहोत्यग्निर्वै सर्वादेवताइति वागेव सरस्वती तया प्रीतया सा प्रीता भवति। योगेन देवतावगम्यते कथमग्निर्यष्टव्यः प्रजापतिर्यष्टव्यस्तथाग्नियजतीत्यादि केचिदाहुर्दैवतैः स्वतस्तत्र तत्र पूज्यन्तेदैवतपूजावचनोत्र यजिः पूजा च पूज्यमानकार्मिका तत्र युक्त्या द्वितीया तथा च देवतापूजनंयेत्यादिस्मर्यते एतच्च नयुक्तं अस्मिन् हि पक्षे देवतात्वंमन्यते नूनंतव यागसंप्रदानंदेवतेति स्मरणविरोधः एषा च स्मृतिर्बलीयसी निरपेक्षत्वात्। पूर्वादेवताउद्दिश्याध्येयाचयस्यै देवतायै हविर्गृहीतंस्यात्तामनसा ध्यायेदिति तक्रियाकर्मत्वात्कर्मण्येव द्वितीया ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः**। संभूयानेकैः साक्षिभिर्मिथ्याभिधानेपि स्वस्वाग्निषु प्रत्येकमेकैकएवचरुः पृथक्पृथङ्निर्वाप्यः। यदुक्तं याज्ञवल्क्येन ॥ तत्पावनाय निर्वाप्यश्चरुःसारस्वतइति ॥ अत्रच सरस्वत्येव देवता वाक्पदं तदुपलक्षकम् ॥ १०५ ॥

( ३ ) **कुल्लूकः**। ते साक्षिणोऽनृताभिधायिनोवाग्देवताकैश्चरुभिः सरस्वतींयजेरन् तस्यानृताभिधानजनितपापस्य प्रकृष्टांशुद्धिंकुर्वाणाः। साक्षिबहुत्वापेक्षंचेदम् नत्वेकस्यैव साक्षिणः कपिञ्जलन्यायेनचरुत्रयम्। यद्यपि वाग्देवताके चरौ वाक्शब्देनैव देवतात्वंन सरस्वतीशब्देन विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्याया तथापि वाग्वैसरस्वतीति श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः। अत्र प्रकरणे चेदंप्रायश्चित्ताभिधानंलाघवार्थम्। तत्र क्रियमाणे शूद्रविट्क्षत्रियब्राह्मवधविषयानृतवादिनइत्यपि वक्तव्यंस्यात् ॥ १०५ ॥

( ४ ) **राघवानन्दः**। अनृतवदनस्याकर्तव्यत्वंद्रढयन्नेवंविधेपि प्रायश्चित्तमाह वागितिद्वाभ्याम्। चतुर्भिश्चरुभिः चत्वारः शूद्रादयः ते साक्षिणः अनृतस्यैनसः। अनृतजन्यस्य पापस्य निष्कृतिं शुद्धिं कुर्वाणाः सरस्वतींयजेरन्नित्यन्वयः ॥ १०५ ॥

( ५ ) **नन्दनः**। एवमन्यसत्यवचने प्रायश्चित्तंश्लोकद्वयेनाह वाग्दैवत्यैश्चेति। ते धर्महेतोरनृतवादिनः साक्षिणोनिष्कृतिंप्रायश्चित्तम् ॥ १०५ ॥

( ६ ) **रामचन्द्रः**। वाग्दैवत्यैः सारस्वतैर्मन्त्रैः। एनसः पापस्य ॥ १०५ ॥

## कूष्माण्डैर्वापि जुहुयाद्धृतमग्नौ यथाविधि ॥ उदित्यृचा वा वारुण्यातृचेनाब्दैवतेन वा ॥ १०६ ॥

( १ ) **मेधातिथिः**। कूष्माण्डानाम मन्त्रायजुर्वेदेपठ्यन्ते तैर्घृतमग्नौ जुहुयात्। जुहोतिश्च देवतामुदिश्य द्रव्यस्य त्यागः

आधारविशेषणे तत्रैहादावित्यधिकरणनिर्देशादनुर्वर्णिकी दैवता वेदितव्या येषु च मन्त्रेण देवताविशेषलिङ्गंनियम्यते यथा देवकृतस्यैनसोवयजनमसीत्यादिषु तत्र प्रजापतिर्देवतेति याज्ञिकाः। अथवा यस्यान्यत्र देवतात्वंदृष्टं सहसंबन्धियावत्। तथा च निरुक्तकारोपि वा सा कामदेवतास्यादिति यद्यपि यज्ञस्य हविषोदेवता सम्यक्सम्यग्भावस्तथापि यजति श्रूयते द्रव्यंमन्त्राः स्वयंतन्त्राः सत्यंदेवतायां जुहोतीति रूपंतदुत्तरेण जुहुयादिति व्याख्येयं तच्चायुक्तंतथाभिक्षारयेदिति वक्तव्यम् वयन्तु ब्रूमोदेवकृतस्यैनसोवयजनमसीत्यत्र कर्मैवावयजनमेवावयाजनमित्युच्यते अतस्तद्देवतासर्वत्र चमन्त्राभिधेयंवस्त्वस्त्विति न देवतायां मन्त्रवर्णाभावःउदुत्तमंवरुणपाशमस्मदिति मतोके तल्लक्ष्यते। वारुणीग्रहणंचान्यस्याउत्वामंदंतुस्तोमाइत्युछशब्दप्रतीकायानिवृत्याच तत्रायनाद्दैवतेन चेति तदेवदेवतैवदैवतं आपोदैवतमस्यतृचस्य तेनापोहिष्ठेत्यादिना अतश्चैकैकया भावादिकैकाहुतिः प्रत्येकशब्दवत्तत्वेन समुदायाहुतिरेकेति घृतमग्नाविति सर्वत्रानुषङ्गः यथा विधि यादृशः शिष्टसमाचारइत्यर्थः तेन च विधिहीनत्वादग्नामायामिति कर्तव्यतायांपरिसमूहनपर्युक्षणावोक्षणःस्रुवहोमाद्येतावन्मात्रमनुजानाति। वाशब्दाद्वैकल्पिकाः सर्वएव ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः**। उदित्यृचा उदुत्तमंवरुणेत्यृचा जुहुयात् घृतमेव पापोत्कर्षापेक्षया सहस्रादप्यधिकंहोतव्यम्। अल्पेतु सहस्रम्। तृचेनापोहिष्ठीयेन। गुणजात्याद्युत्कर्षापेक्षया च प्रायश्चित्तचतुष्कव्यवस्था।अत्रचाग्नाविति वचनात्पूर्वोक्तोवाग्दैवत्यश्चरुर्वैतानिकेष्वेवेति गम्यते ॥ १०६ ॥

( ३ ) **कुल्लूकः**। कूष्माण्डमंत्रायजुर्वेदिकायद्देवादेवहेडनमित्येवमादयः तैर्मंत्रेदेवतायैघृतमग्नौ जुहुयात्। यथाविधि परिस्तरणादित्वात्स्वधर्मेण स्वगृह्योक्तेन। उदुत्तमंवरुणपाशमित्येतया वरुणदेवताकयाआपोहिष्ठाइतितृचेन वाब्देवताकेन जुहुयात्। घृतमग्नाविति सर्वत्रानुषङ्गः ॥ १०६ ॥

( ४ ) **राघवानन्दः**। कूष्माण्डमन्त्रायाजुर्वेदिकाः। यद्देवादेवहेडनंदेवासश्चकृमावयं आदित्यास्तस्मान्मामुञ्चततस्यतेनमामितस्वाहा आदित्येभ्यइदंनममेत्युद्देशत्यागोन मन्त्रान्तःपाती। एवमुत्तरत्रापिज्ञेयम्। प्रयोगश्च महार्णवोक्तः। यथाविधि पर्युक्षणादिहोमधर्मेण स्वगृह्योक्तेन। तदित्यृचा गायत्र्या तदादिकेत्युक्तत्वात्। उदुत्तमंवरुणपाशमित्येतया वारुण्या। अब्दैवतेन आपोहिष्ठेत्यनेन। अत्र यदि शूद्रः साक्ष्यंवक्ति सोपि ब्राह्मणद्वारा होमंकारयेत्। तदुक्तंयाज्ञवल्क्येन॥ वर्णिनांहिवधोयत्रतत्र साक्ष्यनृतंवदेत्। तत्पावनाय निर्वाप्यश्चरुःसारस्वतोद्विजैरिति ॥ अत्र द्विजैरिति निर्देशाद्गुणमुख्यसाधारणं अन्यथा शूद्रोमिथ्यावदन्नेवंविषये न प्रत्यवेयात्। द्विजैरिति स्वरसात्तान्प्रत्येव नियमः शूद्रस्यतु दानादि ॥ १०६ ॥

( ५ ) **नन्दनः**। उदित्यृचाउदुत्तमंवरुणेत्यृचेन। आपोहिष्ठेत्यादिना द्विजानामिदंप्रायश्चित्तं। शूद्रस्य तु स्मृत्यन्तरे प्रोक्तं शूद्रस्य द्वादशकस्य ग्रासदानम् ॥ १०६ ॥

( ६ ) **रामचन्द्रः**। कूष्माण्डैः मन्त्रैः यद्देवादेवहेळनमित्यादिमन्त्रैः।वारुण्याऋचा तृचेनाब्दैवतेनवा आपोहिष्ठेतितिसृभिः ॥ १०६ ॥

**त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः ॥ तदृणंप्राप्नुयात्सर्वंदशबंधंच सर्वतः॥ १०७ ॥**

( १ ) **मेधातिथिः**। पञ्चदशाहोरात्राणि पक्षः। त्रयाणांपक्षाणांसमाहारोत्रिपक्षं आकारान्तोत्तरपदोद्विगुरिति स्त्रीत्वे प्राप्ते पात्रादिदर्शनात्प्रतिषेधः यद्येवंत्रिपक्षी न प्राप्नोति छान्दसस्तत्र लिङ्गव्यत्ययः ल्यब्लोपे कर्मणिपञ्चमी। त्रीन्पक्षान्योवदतीत्ययंसाक्ष्यं न गदतीत्यगदोऽपीडितशरीरस्तत्सदृशंप्राप्नुयादित्यर्थः। दशबन्धंच दशमञ्चभागंदण्डनीयस्तस्माद्दणा-

दृणादिष्वित्यादि ग्रहणेन सर्वव्यवहारोपक्रमः । द्वितीयमृणग्रहणमुपलक्षणार्थम् । यस्मिन्व्यवहारे साक्ष्यमियन्तंकालंभवति पराजीयमानस्य बाधोससाक्षिणोबाढमित्युक्तंभवति । गदोरोगस्तत्समानप्रत्युत्थानहेतूपलक्षणार्थंतेनात्र कुटुम्बोपद्रवधनिकोपरोधाद्यपि परीक्ष्यम् । बन्धशब्दः सङ्ख्यादिपरोदण्डविषये दशमाषवचनः । नरग्रहणंसर्वतोग्रहणंचश्लोकपूरणार्थम् । अन्येत्वाहुस्तदृणंप्राप्नुयादित्यस्यायमर्थः । ऋणोपहरणलक्षणेन पापेन युज्येत । राज्ञे वाजीयमानस्य योदण्डस्ततोदशममंशंदद्यादिति दण्डितः पुनः पृच्छ्यते ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिपक्षात् त्रिपक्षपर्यन्तं साक्ष्यमवदन्धनिकाय तद्धनंदद्यात् । तथा दशबन्धं तत्धनदशमभागं राज्ञेदण्डम् । बध्यतइतिबन्धःदशानांभागानांसंबन्धीबन्धःभागस्तदेकदेशोदशबन्धः । सर्वतः सर्वस्माद्विवादविषयधनात् । इदंच स्मरणार्थं त्रिपक्षदानम् । यदितु व्याध्याद्यभिभवात्तावतापि न स्मर्तुंयोग्यस्तदा न दोषइत्येतदर्थमगदइति ॥ १०७ ॥

( ३ ) **कुल्लूकः** । अव्याधितः साक्षी ऋणादानादिव्यवहारे त्रिपक्षपर्यंतंयदि साक्ष्यंन वदेत्तदा तद्विवादास्पदंसर्वमृणमुत्तमर्णस्य दद्यात्तस्य च सर्वस्य ऋणस्यदशमंभागंराज्ञोदण्डंदद्यात् ॥ १०७ ॥

( ४ ) **राघवानन्दः** । साक्ष्यदानावधिंकुर्वन् तदुत्तरेदण्डमाह त्रिपक्षादिति । अगदइतिछेदः । तथाभूतोयदि त्रिपक्षपर्यन्तंसाक्ष्यंन ब्रूयात् तस्मात्साक्षिणः सर्वमृणंप्राप्नुयात् प्रापयेदुत्तमर्णम् । दशबन्धंदशमंभागं आत्मानंप्रत्यपि नृपः । सर्वतःसर्वेभ्योब्राह्मणादिभ्यः ॥ १०७ ॥

( ५ ) **नन्दनः** । प्राप्नुयात् दण्डत्वेन राज्ञे देयात् । न केवलमेतावदेव किन्तु सर्वतः सर्वद्रव्येषु विवादविषयादन्यत्र द्रव्यान्तरेष्वपि दशबन्धंदशभागंदण्डंप्राप्नुयादित्यर्थः ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । साक्षी नरः ऋणादिषु साक्ष्यंजानन् अब्रुवन् न वदति तदा राज्ञा धनिनेसर्वंसवृद्धिकमृणं दाप्यः । च पुनः दशबन्धंसर्वतः सर्वस्माद्विवादविषयाद्धनाद्दशमंभागंच दाप्यः ॥ १०७ ॥

**यस्य दृश्येत सप्ताहादुक्तवाक्यस्यसाक्षिणः ॥ रोगोग्निर्ज्ञातिमरणमृणंदाप्योदमंचसः ॥ १०८ ॥**

( १ ) **मेधातिथिः** । सप्ताहादिति पञ्चमीदर्शनादर्वागित्यध्याह्रियेत सप्तानांदिवसानामन्यतमस्मिन्नहनि यस्य साक्षिणोरोगादिदृश्यते समृषावादी दैवेनविभावितः पूर्वोक्तेन विधिना दापयितव्यः । रोगात्यन्तपीडाकरोग्निर्गोवाहनदहनः पुत्रादारादिप्रत्यासन्नज्ञातिमरणंतस्यकूटसाक्षित्वे लिङ्गम् ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । उत्कर्टद्रव्ये फलावधिरयम् । क्षुद्रेषु त्ववर्वाक्चतुर्दशादित्यादि स्मृत्यन्तरोक्तः । एतच्च तत्प्रागनुपजातनिमित्तकृतंग्राह्यम् । अग्निर्गृहादिदाहः ॥ १०८ ॥

( ३ ) **कुल्लूकः** । यस्य साक्षिणउक्तसाक्ष्यस्य सप्ताहमध्ये व्याध्यग्निदाहसन्निहितपुत्रादिज्ञातिमरणानामन्यतमंभवति दैवसूचितमिथ्याभिदोषत्वादृणमुत्तमर्णस्य दण्डंच राज्ञा दाप्यः ॥ १०८ ॥

( ४ ) **राघवानन्दः** । उक्तसाक्षिणांदृष्टरोगादिलिङ्गेन वैतथ्ये निश्चिते दण्ड्यतामाह यस्येति । ससाक्षी उत्तमर्णस्यऋणंदमं दशमभागंदण्डरूपंराज्ञादाप्यइति ॥ १०८ ॥

( ५ ) **नन्दनः** । कूटसाक्षिपरिज्ञानोपायमाह यस्यदृश्येतेति । अग्निः गृहादिष्वग्निदाहः । रोगादिर्यस्य सप्ताहान्तर्दृश्यते सऋणंदाप्यः ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । उक्तवाक्यस्य साक्षिणः रोगः अग्निःज्ञातिमरणंवादृश्येत तदा राज्ञा धनिने ऋणं धनं दाप्यः । चपुनः राज्ञा दमंचदाप्यः ॥ १०८ ॥

**असाक्षिकेषु त्वर्थेषु मिथोविवदमानयोः ॥ अविन्दंस्तत्त्वतस्सत्यंशपथेनापि लम्भयेत् ॥ १०९ ॥**

( १ ) **मेधातिथिः**। अविद्यमानाः साक्षिणोयेष्वर्थेषु व्यवहारेषु तेऽसाक्षिकाः तेषु सत्यमजानानोराजा तत्त्वतोलौकिकेनानुमानेनापीत्यर्थः। तत्र शपथेनापि वक्ष्यमाणेन दैवेनानुमानेन लम्भयेज्जानीयात्। प्राप्तिवचनोसामर्थ्याज्ज्ञानात्यर्थः ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः**। शपथेनात्मशिरःस्पर्शादिनापि तत्त्वं लम्भयेत् प्रापयेत् वादिनम् ॥ १०९ ॥

( ३ ) **कुल्लूकः**। अविद्यमानसाक्षिकेषु व्यवहारेषु परस्परंविवदमानयोस्तत्त्वतश्छलादिव्यतिरेकेण सत्यमलभमानः प्राड्विवाकोवक्ष्यमाणेन शपथेन सत्यमुन्नयेत् ॥ १०९ ॥

( ४ ) **राघवानन्दः**। असाक्षिकेकथंनिश्चयस्तत्राह असाक्षिकेत्विति। अविन्दन्सत्यं सत्यतामलभमानः शपथेनापि लम्भयेदुत्तरयेत् ॥ १०९ ॥

( ५ ) **नन्दनः**। शपथविमुखः कृतशपथश्च रोगाद्यभिभूतौ पराजिताविति। शपथेनापि विप्रतिपन्नार्थनिर्णयोपायः। शपथोनामयदीदंमयोक्तमेतदन्यथा चेत्पातकीस्यामित्यादिवचनंयदुक्तमृषिणा यद्यादुरीर्यदियातुधानइति ॥ १०९ ॥

( ६ ) **रामचन्द्रः**। सत्यं तत्त्वतः अविदन् अजानन् राजा शपथेन लम्भयेत् प्रापयेत् ॥ १०९ ॥

**महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ॥ वसिष्ठश्चापि शपथंशेपेपैजवने नृपे ॥ ११० ॥**

( १ ) **मेधातिथिः**। अर्थवादोयं पूर्वोक्तस्य शपथविधेर्महर्षिभिः सप्तर्षिप्रभृतिभिः कार्यार्थंसंदिग्धकार्यनिर्णयार्थंशपथाः कृताः अस्मिन्नर्थे च भगवतः कृष्णद्वैपायनस्याख्यानमुदाहर्तव्यं विशेषेषुतेष्वपहारितेष्वितरेतरंसमर्षयः शेपिरे य स्तेऽहरति पुष्करंसइमांपापकृतोगतिंगच्छेदित्यादिदेवैरिन्द्रप्रभृतिभिरिन्द्रोऽहल्यां प्रत्यभिशप्तः शापभयाद्बहुविधंशपथंचकार। वसिष्ठश्चेतिपृथङ्निर्देशः प्राधान्यख्यापनार्थः शपथंकृतवानित्यर्थः। उपपदादेव विशेषावगतेः शपतिः करोत्यर्थमात्रे वर्तते यथायज्ञंयजतइति स्वपोषंपुष्टइति तथाशपथंशेपइतिज्ञेयम्। शेप उपलेभइति लिटि प्रथमपुरुषात्मनेपदैकवचने शेपइतिरूपम्। पैजवनोराजा बभूवतस्मिन्काले विश्वामित्रेणाकृष्टोमण्डलमध्यगतःकामक्रोधाभ्यां संशोध्यचरणोधासुरोयातुधानोस्मीति शपथंगृहीतवान् विश्वामित्रेणोक्तस्तस्य राज्ञः समक्षमनेनैव तत्पुत्रशतमशितमेषहि रक्षइति ततः सउवाच अद्यैव म्रियेयदि रक्षःस्यामित्यात्मन्यनिष्टाशंसनमन्त्रः सशपथः पुत्रदारादिशिरस्पर्शने एतदनिष्टाशंसनंशपथोमन्तव्यः ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः**। महर्षिभिर्देवैश्च विशस्तैन्यादौ शपथाःकृताः। कार्यार्थं कार्यनिर्णयार्थम्। अनेनपुत्रशतंभक्षितमिति विश्वामित्रेणोक्ते सुदासः पैजवनस्याग्रे वसिष्ठःशपथंचक्रे अद्यापुनीययदियातुधानोअस्मीत्यादिभिर्ऋग्भिः ॥ ११० ॥

( ३ ) **कुल्लूकः**। सप्तर्षिभिर्देवैश्च इन्द्रादिभिः संदिग्धकार्यनिर्णयार्थंशपथाः कृताः वसिष्ठोप्यनेन पुत्रशतंभक्षितमिति विश्वामित्रेणाकृष्टः स्वपरिशुद्धये पिजवनापत्ये सुदासि राजनि शपथंचकार। अनेकार्थत्वाद्धातूनांशपिरपि करोत्यर्थः ॥ ११० ॥

---

( १०९ ) स्तत्वतःसत्यं····लंभयेत्=स्तत्वतो धर्मं····लंघयेत् ( च )
=स्तत्वतः कार्यं····लंभयेत् ( ग )
अविंदं=अवदं ( ट, ठ ) =अविदं ( त, थ, ड )

( ४ ) **राघवानन्दः** । शपथे सदाचारंप्रमाणयति महर्षिभिश्चेति । हेपैजवनअनेन पुत्रशतंते भक्षितमित्यभिशस्तोविश्वामित्रेण वसिष्ठः । पैजवने पिजवनस्यापत्ये सुदासि । शपथं शेपे चकार ॥ ११० ॥

( ५ ) **नन्दनः** । कार्यार्थसंदिग्धस्यनिर्णयार्थंकृतवान् । नृपेसन्निधौ ॥ ११० ॥

**न वृथा शपथंकुर्यात्स्वल्पे ऽप्यर्थे नरोबुधः ॥ वृथा हि शपथंकुर्वन्प्रेत्य चेह च नश्यति ॥ १११ ॥**

( १ ) **मेधातिथिः** । मिथ्याशपथे फलाख्यानमेतत् वृथान्यथाऽसत्यमिति यावत् । तत्रापह्रियमाणसुवर्णादिद्रव्यजात्यपेक्षोऽनृतशपथदोषोन्यथा शपथेस्वल्पेगरीयसि तु कार्ये गौरवादधिकतरोदोषोऽस्त्येव । प्रेत्य नाशोनरकमिहमहदयशः प्रामाण्यान्तरत्वज्ञाते राजदण्डः ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । वृथा मिथ्या ॥ १११ ॥

( ३ ) **कुल्लूकः** । स्वल्पेपि कार्ये न वृथा शपथंपण्डितः कुर्यात् । वृथाशपथंकुर्वन्परलोकइहलोके नरकप्राप्त्या ऽकीर्तिप्राप्त्याच नाशंप्राप्नोति ॥ १११ ॥

( ४ ) **राघवानन्दः** । अल्पकार्ये तंनिषेधति नेति ॥ सत्येनापि शपेद्यस्तु देवाग्निगुरुसन्निधौ । तस्य वैवस्वतोराजा धर्मस्यार्थनिकृन्ततीति ॥ निंदाश्रवणात् शपथंनकुर्यादित्यर्थः । मिथ्याशपथकारिणोरोगादिदर्शनादैहिकानर्थः पापादामुष्मिकइत्याह प्रेत्येति ॥ १११ ॥

( ५ ) **नन्दनः** । शपथकारिणंप्रत्याह नवृथाशपथमिति । वृथाशपथंमिथ्याशपथम् । महत्स्वर्थेषु दोषातिशयः सूचितः । स्वल्पेप्यर्थइति शपथस्य क्वचित् ॥ १११ ॥

( ६ ) **रामचन्द्रः** । बुधः पण्डितः ॥ १११ ॥

**कामिनीषु विवाहेषु गवांभक्ष्ये तथेन्धने ॥ ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥ ११२ ॥**

( १ ) **मेधातिथिः** । कामः प्रीतिविशेषोविशिष्टेन्द्रियस्पर्शजन्यः सयासु भवति पुरुषस्य नाकामिन्योभार्यावेश्यादयः तत्र यः शपथः कामसिध्यर्थोयथा नाहमन्यांकामयेप्राणेश्वरीमेत्वमित्याद्योयन्तुसंप्रयुज्यशपथइदंत्वयादेयंदास्यइति तत्र भवत्येव दोषः शपथेविषयसप्तमी ननिमित्तसप्तमी तेन यस्यामेवैकाकिन्यां यथाप्यते तत्रोक्तरूपशपथे दोषः। निमित्तसप्तम्यांतु निमित्ते परद्रव्यापहारे दोषः स्यात् । अतश्च कामादशगुणंपूर्वजनमित्यादिकंकरण्डपिधानंन युज्यते तथापि सहिनिमित्तानन्तरकृतेविवादोस्त्येव वृथा शपथदोषएव। एवंसर्वत्रविवाहेषु नत्वयान्या वोढव्या । अन्यस्यापि सुहृदादेर्विवाहार्थमेवंविधिरनृतमदोषः न पुनः प्रेत्य बहुदोषः । गवांभक्ष्ये गवांयवससिध्यर्थमयापहर्तव्यमेवापयितव्यंपरस्य चातत्संबन्धिभिर्युक्तस्य वृथा साक्ष्ये शपमानस्य न दोषः एवमिन्धने । ब्राह्मणानामभ्युपपत्तिरनुग्रहः सर्ववर्णानुग्रहेऽनुज्ञातमेव किमिहपुनर्बचनेन केचिदाहुः शपथोब्राह्मणेऽनुज्ञायते शूद्रादिषु त्वनृतमेतच्च न हि सत्याद्विशिष्यतइति वचनान्नैतदनृतमतोन तत्रह्येवमुच्यते । तत्रत्यवधात्परित्राणमुक्तंसर्ववर्णविषयं अभ्युपपत्तिस्तु ब्राह्मणस्यैव साहि धनलाभादिना संभवति सर्वतश्च परसंबन्धिषु क्रियास्वेवंविधौसुशपथाभ्यनुज्ञानमुपायान्तरेण तत्सिध्यसंभवएव द्रष्टव्यम् ॥११२॥

( २ ) **सर्वज्ञनारायणः** । कामिनीषु त्वमेव मे प्रियेत्यादौ । विवाहे विवाहान्तरकरणादौ प्रकारान्तराभावे । ग-

---

( ११२ ) ब्राह्मणाभ्युपपत्तौच=ब्राह्मणस्यविपत्तौच ( ड )
=ब्राह्मणस्यावपत्तौच ( ट, ठ )

वार्थं ग्रासमपहृत्य न हृतमिति वचने। एवमग्निहोत्राद्यर्थमिन्धनमपहृत्य। ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षार्थम् ॥ ११२ ॥

( ३ ) **कुल्लूकः**। वृथाशपथप्रतिप्रसवार्थमाह कामिनीष्विति। बहुभार्यस्य नान्यामहंकामये त्वमेव मत्प्रेयसीत्येवंविशिष्टः सुरतलाभार्थंकामिनीविषये विवाहविषये च मयान्या न वोढव्येत्यादौ। गवार्थंघासाद्युपहारे च। अग्नौ होमार्थमिन्धनाद्युपहारे। ब्राह्मणरक्षार्थमङ्गीकृतधनादौ वृथा शपथे पापं न भवति ॥ ११२ ॥

( ४ ) **राघवानन्दः**। किंच कामिनीष्विति। कामिनीषु सुरतलाभार्थंत्वत्सदृशी मम प्रेयसी नास्तीति बहुभार्यस्य तथा विवाहार्थं त्वामृते नान्या वोढव्येति अधिकरणसप्तम्यौ। अग्न्यर्थमिन्धने। ब्राह्मणाभ्युपपत्तौ ब्राह्मणार्थमङ्गीकृतधनादौ पातकंनिकृन्ततीत्यादिदोषोनास्तीत्याशयः ॥ ११२ ॥

( ५ ) **नन्दनः**। प्रतिप्रसवमाह कामिनीष्विति। ब्राह्मणाभ्युपपत्तौब्राह्मणरक्षणेपातकम् ॥ ११२॥

( ६ ) **रामचन्द्रः**। कामिन्यादिषु शपथे कृते पातकंनास्ति। कामिनीषु त्वंमे प्रियेति तथा विवाहेषु। गवांभक्ष्ये गोग्रासार्थे। तथा इन्धने होमार्थे। च पुनः ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षार्थं शपथेपातकंनास्ति ॥ ११२ ॥

**सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः॥ गोबीजकाञ्चनैर्वैश्यं शूद्रंसर्वैस्तु पातकैः॥ ११३॥**

( १ ) **मेधातिथिः**। ननु च यद्यहमेवंकुर्यांतदिदमनिष्टमाप्नुयामिति संकीर्तनक्रियाशपथास्तत्र यः शाप्यते सएवंवाच्यते सत्येन शपे सत्यादिनिबन्धनोयंधर्मोवा मे निष्फलः स्यादिति एवंचायुधानामपि करणत्वंवाहनानांच एतैरात्मानंशपतोन वा निष्फलानि स्युरिति। गोबीजकाञ्चनानिवैश्योहस्तेन स्पर्शयित्वाभिशपेदेतानि वा मेनिष्फलानि पूर्ववत्। शूद्रंसर्वैस्तु पातकैर्वक्ष्यमाणानि पातकानि मे स्युरिति शूद्रोबाध्यते ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः**। सत्येन सत्यंत्वया हतंभवति मिथ्योक्ताविति। वाहनायुधैःएतानि त्वया हतानि स्युरिति। एतच्च लघुकार्ये ॥ ११३ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणंसत्यशब्दोच्चारणेन शापयेत्। क्षत्रियंवाहनायुधंमम निष्फलंस्यादित्येवम्। वैश्यंगोबीजकाञ्चनानि च ममनिष्फलानि स्युः। शूद्रंच सर्वाणि मे पातकानि स्युरित्येवंशापयेत् ॥ ११३ ॥

( ४ ) **राघवानन्दः**। शपथेनापि लम्भयेदित्युक्तस्य शपथस्य चातुर्वर्ण्ये व्यवस्थितिमाह सत्येनेति। सत्यशब्दोच्चारणं शापयेत् शपथंकारयेदिति ‡ यत्सत्यंते तन्निष्फलंभवेदितिवा। एवंवाहनादिषु साक्षिवाचनेन स्पर्शस्योक्तत्वात्। ब्रह्मघ्नइत्यादिवाक्योक्तैःपातकैरेतानि पातकानि ते स्युरितिशूद्रं शापयेदित्यनुषज्यते ॥ ११३ ॥

( ५ ) **नन्दनः**। अथक्केन पुनः प्रकारेण वर्णानांशपथः कारयितव्यइत्याह सत्येनशापयेदिति। शापयेच्छपथंकारयेद्राजा ॥ ११३ ॥

**अग्निंवाहारयेदेनमप्सु चैनं निमज्जयेत्॥ पुत्रदारस्य वाप्येनंशिरांसि स्पर्शयेत्पृथक्॥ ११४॥**

( १ ) **मेधातिथिः**। अग्निमाहारयेदेनंहस्तेनाश्वत्थपर्णव्यवहितेन तयोःप्रदेशान्तरंसप्तपदसंहितमित्यादिस्मृत्यन्तरानिपुणनत्वेऽन्वेष्यं पारंपर्यप्रसिद्धेश्चैतदेवोच्यते। अप्सु जले निमज्जयेत्प्राड्विवाकइत्यर्थः। पुत्रदारशिरांसि स्पर्शयेत् ॥११४॥

( २ ) **सर्वज्ञनारायणः**। गुरुण्याह अग्निंवेति ॥ ११४ ॥

( ३ ) **कुल्लूकः**। कार्यगौरवलाघवापेक्षया अग्निमिति। अग्निसन्निभंपञ्चाशत्पलिकमष्टाङ्गुलमयःपिण्डं हस्तद्वयविन्यस्त

‡ यत्सत्यं=सत्यंवद। धर्मंचरेतिश्रुतेर्यत्सत्यं ( न, श )

समाश्वत्थपत्रंशूद्रादिकंसमपदानि पितामहाद्युक्तविधानादाहारयेत् । जलौकादिरहितजले चैनंनिमज्जयेत् । अशेषेपि कर्त्तव्यता स्मृत्यन्तरे ज्ञेया । पुत्राणांदाराणांच पृथक्शिरस्येनंस्पर्शयेत् ॥ ११४ ॥

( ४ ) **राघवानन्दः** । शपथेन द्रव्यालाभे परीक्षणमेवोचितमित्याह अग्निमिति । अग्निसन्निभमयःपिण्डं पञ्चाशत्पलपरिमितमष्टाङ्गुलम् । एनं अधमर्णत्वेन संभाव्यमानम् । स्पर्शयेत् तेषांशिरसि हस्तंदापयेत् । पृथगितिपदं व्यवहारस्य गुरुलघुतया विकल्पसूचनार्थम् ॥ ११४ ॥

( ५ ) **नन्दनः** । शूद्रंसच्छूद्रमसच्छूद्रंप्रत्याह अग्निंवाहारयेदिति । अग्निवर्णंप्रतप्तमयःपिण्डम् । वृत्तापेक्षयाविकल्पः ॥ ११४ ॥

## यमिद्धोन दहत्यग्निरापोनोन्मज्जयन्ति च ॥ न चार्त्तिमृच्छति क्षिप्रं सज्ञेयः शपथे शुचिः ॥११५॥

( १ ) **मेधातिथिः** । तप्तायसपिण्डोऽनवद्यगृहीतोन दहति । आपश्चनोर्ध्वंप्लावयन्ति सत्यशपथे केशादौ । नचार्तिमृच्छति पीडां न प्राप्नोति । रोगोग्निरित्यत्रोक्तं सशुद्धःशुचिर्निर्दोषः । क्षिप्रंचतुर्दशवाहान्यवधिः स्मृत्यन्तरात् ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । नचार्तिंपुत्रादिशिरःस्पर्शेकृते ॥ ११५ ॥

( ३ ) **कुल्लूकः** । यंप्रदीप्तोऽग्निर्न दहति आपश्च यंनोर्ध्वंनयन्ति न चार्त्तिमेव महतींप्राप्नोति सशपथे विशुद्धोज्ञेयः ॥ ११५ ॥

( ४ ) **राघवानन्दः** । शपथस्य परीक्षणमाह यमिति । यमुक्तशपथकर्तारम् । इद्धः उत्तेजितः । आर्त्तिं रोगधनक्षयपुत्रमरणादिकाम् । क्षिप्रंत्रिपक्षाभ्यन्तरे ॥ ११५ ॥

( ५ ) **नन्दनः** । तत्र शुद्धस्य लक्षणमाह यमिद्धोनदहतीति । आर्त्तिंशरीरपुत्रदारादिपीडाम् । क्षिप्रंसप्ताहात् । शपथेऽग्निहरणादिके ॥ ११५ ॥

( ६ ) **रामचन्द्रः** । यंपुरुषं इद्धोग्निः स्पर्शनान्न दहति सशुचिर्ज्ञेयः । यःशपथेक्षिप्रमार्तिं नऋच्छति नगच्छति सशुचिर्ज्ञेयः ॥ ११५ ॥

## वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ॥ नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः ॥११६॥

( १ ) **मेधातिथिः** । कथंपुनरग्निर्न धक्ष्यति आपोनोन्मज्जयिष्यन्ति नहि महाभूतानि विपरियन्ति स्वभावतोचैतन्यादिति पर्यनुयोगमाशङ्क्यार्थवादेनोक्तमर्थंदृढीकरोति । यद्यप्ययमन्वयव्यतिरेकसमाधिगम्योर्थः प्रत्यक्षःशाब्दोवा तथापि धूर्तकल्पितेन्द्रजालवद्भ्रान्तिमहनादत्रमुखबिभीषिकासञ्जनमात्रंफलंशपथागोरणमिति मन्यमानोवैदिकंनिदर्शनमुपन्यसेत् । भवन्ति प्रतिपत्तारोर्थागमेन पूर्ववृत्तदर्शनाद्दृढतांप्रतिपद्यन्ते। वत्सोनामकाण्वऋषिरभवत्सच कनीयसा वैमात्रेण भ्रात्राभिशप्तआक्रुष्टोनत्वमसि ब्राह्मणः शूद्रपुत्रइति सतंप्रत्युवाच सत्येनाग्निंप्रविशामि यदि न ब्राह्मणइति। तस्येदमुक्तवतः प्रविष्टस्यनाग्निर्ददाह रोमापि कथंसत्येन हेतुना कथमग्निः सत्यंजानातीति चेदतआह जगतःस्पशः गूढात्मा परकीयकृताकृतज्ञः सउच्यते सच चारःप्रणधिरिति च प्रसिद्धिः । अग्निर्हि भगवान्सर्वभूतान्तरचारी कृताकृतानांवेदिता । तथा च छान्दोग्ये ताण्डके प्रयोगोदेवासुरसेनयोरभ्यन्तरे गौतममाश्रयन्ति गौतमंमिंद्रंद्रढयेत्तत्र चाह इह नोभावान्स्पशश्चरत्वित्यादि । अर्थवाचि निदर्शनेऽपि पञ्चविंशब्राह्मणमुदाहार्यं वत्सश्चहवैमेधातिथिश्चकाश्यपावास्तांतंवत्संमेधातिथिराक्रोशदब्राह्मणोसीत्यादि तस्य हलमेव नौषदिति ननु च चौराअपि न दह्यन्ते साधवोपि दह्यमानादृश्यन्ते तत्कथंशपथे आश्वासः । उच्यते न दृश्येनव्यभिचारेण व्यवस्थेयमपनेतुंशक्यते । कादाचित्कत्वाद्यभिचारस्य प्रत्यक्षादिष्वपि प्रमाणेषु दृश्यतएवतादृशोव्यभिचारोनच

तानि न प्रमाणं अथ व्यभिचारवन्तिनैवप्रत्यक्षादिशब्दवाच्यानि यद्यभिचारितप्रत्यक्षंयत्प्रत्यक्षंन तद्यभिचरतीति वचनादि ह्यापि शक्यते तद्वक्तुंव्यभिचरतीत्यसौ शपथोयः शपथः सन व्यभिचरतीति कः पुनः शपथोयः समस्तेतिकर्तव्यता मात्राद्यपग्रहण निरूपितकुहकःस्तंभनाभावः विपरीतोऽशपथः न तादृशस्य व्यभिचारोस्ति अथापि स्यात्तत्रापि प्राक्तनस्य कर्मणः फलविपाकोभवति निमित्तत्वाकृतापराधोपि पूर्वकृतेन गरीयसाशुभेन मुच्यते । अकृतापराधोजन्मान्तरदोषेण निगृह्यते विचित्राहि कर्मणां फलपाकाभिव्यक्तिहेतवः सहस्रादेकोमिथ्यागृह्यते उत्सर्गतस्त्वमिथ्यात्वंपुत्रेष्टिकारीर्यादिष्व प्येतत्समानं तस्मात्साक्षिवच्छपथेऽति प्रत्येतव्यंतेऽपि हि कदाचिन्मिथ्यावदन्तोन भयप्रदर्शनमात्रमेतत् यस्यातोरुक्ष्या शपथाउक्ताः सत्यंप्रतिष्ठतइति ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । वत्सस्य ऋषेः । शूद्रोसीति वैमात्रेयेणभ्रात्राभिशस्तस्याग्निंप्रविष्टस्यस्पशश्चरः ॥ ११६ ॥

( ३ ) **कुल्लूकः** । अत्र प्रकृतमर्थवादमाह वत्सस्येति यस्मात्पूर्वकाले वत्सनाम्नऋषेर्न त्वंब्राह्मणः शूद्रापत्यो सीत्येवंकनीयसा वैमात्रेयेणाभिक्रुष्टस्य नैतदेवमिति सयथार्थमग्निं प्रविष्टस्याग्निःसर्वस्य जगतः शुभाशुभकर्तव्ये चारभूतः सत्येनाहेतुना रोमैकमपि वन्हिर्न दग्धवान् ॥ ११६ ॥

( ४ ) **राघवानन्दः** । तत्र हेतुतया सदाचारमाह वत्सस्येति । हि यस्मात्पुरा वत्सनामऋषेर्नब्राह्मणस्त्वंशूद्रापत्यो-सीतिकनीयसा वैमात्रेयेनाक्रुष्टस्याग्निंप्रविष्टस्यापिनाग्निर्ददाहेति तस्मात्सत्यंशुचिं न दहत्यग्निः अथयदितस्याकर्ताभवति-सनदह्यतेऽथ मुच्यतइत्यादिश्रुतेः । जगतःसर्वस्य कृतस्यशुभाशुभकर्तव्यस्यस्पशश्चारभूतइति । लेख्यसाक्षिणोरभावेश-पथः । यथाह याज्ञवल्क्यः ॥ तुलाग्न्यापोविषंकोशोदिव्यानीह विशुद्धये । महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ दिव्यग्राहिणि शीर्षकस्थे विद्यमानेऽभियोक्तरि ॥ रुच्यावान्यतरंकुर्यादपरोवर्तयेच्छिरः ॥ अपरोवादी वर्तयेच्छिरः शारीरमर्थदण्डंवाअङ्गीकुर्यात् ॥ विनापिशीर्षकंकुर्याद्राजद्रोहे च पातके । राजभिःशङ्कितानांच निर्दिष्टनांच दस्युभिः ॥ आत्मशुद्धिपराणांच दिव्यंदेयंशिरोविनेति पातके ब्रह्मवधाद्यभिशस्ते । इत्यधिकारनिर्णयः ॥ सचैलंस्नानमाहूय सूर्योदयउ-पोषितं । कारयेत्सर्वदिव्यानि देवब्राह्मणसन्निधौ ॥ इति कर्तव्यता ॥ तुलास्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् । अग्निर्ज-लंवा शूद्रस्य यवाःसप्तविषस्यवा ॥ इत्यधिकारिव्यवस्थितिः ॥ नासहस्राद्धरेदग्निं नविषं नतुलां तथा । सहस्रपणान्न्यूने विवादे ॥ नृपार्थेष्वभिशापेषु वहेयुः शुचयः सदा ॥ इत्यधिकारिनियमः ॥ तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रति-मानसमीभूतोलेखां कृत्वाऽवतारितः ॥ इति तुलामानम् ॥ त्वं तुले सत्यनामासि पुरा देवैर्विनिर्मिता । तत्सत्यं वद कल्या-णि संशयान्मां विमोचय ॥ यद्यस्मि पापकृन्मातस्ततोमां त्वमधोनय । शुद्धश्चे द्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ ए-ह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश । सहितोलोकपालैश्च वस्वादित्यमरुद्गणैः ॥ धर्मोजयति नाधर्मः सत्यं जयति ना-नृतम् । क्षमा जयति न क्रोधोविष्णुर्जयति नासुराः ॥ तुलितोयदि गच्छेत्सशुद्धः स्यान्नतुसंशयः । समोवा हीयमानोवा अविशुद्धोभवेन्नरः ॥ यद्यधोयात्यशुद्धः स्यात्तुलाभङ्गे च सर्वदा । नविशीर्यति शिक्यंचेदूर्ध्वं याति विशुद्ध्यति ॥ इति तुलापरीक्षणम् ॥ करौ सुमृदितव्रीहेर्लक्षयित्वा ततोन्यसेत् । समाश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ त्वमग्ने स-र्वभूतानामन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्योब्रूहि सत्यं कवे मम ॥ इत्यग्न्यभिमन्त्रणम् ॥ तस्येत्युक्तवतोलोहं पञ्चा-शत्पणिकं समम् । अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ सतमादाय समैव मण्डलानि शनैर्व्रजेत् ॥ षोडशाङ्गुलकं

ज्ञेयं मण्डलं तावदन्तरम् । त्यक्ताग्निमृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ॥ अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत् ॥ इत्यग्निपरीक्षणम् ॥ सत्येन माभिरक्षत्वं वरुणेत्यभिशाप्यकम् ॥ कं जलमित्यर्थः ॥ नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ समकालमिषुं क्षिप्रमानीयान्योजवी नरः ॥ गते तस्मिन्निमग्नाङ्गं पश्येच्छुद्धिमवाप्नुयात् ॥ इति जलपरीक्षणम् । इषुक्षेपसमकालं योगतः सचेदागत्य पश्येदित्यन्वयः ॥ त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः । त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् । एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ॥ यस्य वेगैर्विना जीर्येच्छुद्धंतस्य विनिर्दिशेत् ॥ इति विषपरीक्षा । वेगैर्मूर्च्छाद्युपद्रवैः ॥ देवानुग्रान्समभ्यर्च्यतत्स्नानोदकमाहरेत् । संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ अर्वाक्चतुर्दशादह्नोयस्य नोराजदैविकम् ॥ व्यसनं जायते घोरं सशुद्धः स्यान्नसंशयः ॥ ‡ महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते । नास्तिकव्रात्यदासेषु कोशपानं विगर्हितम् ॥ इति कोशपरीक्षा ॥ तत्र ॥ पूर्वाह्णेग्निपरीक्षा स्यादपराह्णे धटोभवेत् ॥ मध्याह्नेतुजलं देयं धर्मतत्त्वमभीप्सता । दिवसस्यतु पूर्वाह्णे कोशशुद्धिर्विधीयते ॥ रात्रौतु पश्चिमे यामे विषं देयं सुशीतलमितिपितामहोक्तेः ॥ परीक्षाकालः । धटस्तुला ॥ ११६ ॥

( ५ ) **नन्दनः** । अत्र परकृतिरूपमर्थवादमाह वत्सस्यहीति । वत्सोनामकश्चिदृषिः जगतःस्पृशःजगतश्चारः शुभानुसंधायीति यावत् । तथा चाग्निप्रतिमन्त्रवर्णः इहतोभगवाञ्जगतश्चारोस्त्विति । एवंवदता ब्राह्मणादीनामप्यग्निकरणादिकं सूचितम् ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । पुरा यवीयसा भ्रात्रा वत्सस्यऋषेः अभिशस्तस्य शूद्रइति निन्दितस्य सः अग्निः रोमापि न ददाह ॥ ११६ ॥

**यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यंकृतंभवेत् ॥ तत्तत्कार्यंनिवर्तेत कृतंचाप्यकृतंभवेत् ॥ ११७ ॥**

( १ ) **मेधातिथिः** । यस्मिन्व्यवहारे कूटसाक्षिभिर्व्यवहारः कृतःस्यात्सनिवर्तयितव्यः । कृतंचाप्यकृतंभवेत् गृहीतधनोप्युत्तमर्णःप्रतिपादयितव्यइतरदण्डोगृहीतोपि त्याज्योवाग्मात्रेण जितस्त्वमसीति निश्चिते कार्यंनिवर्ततइत्युच्यतेदण्डपर्यंतंकृतमपीति विशेषः । वीप्साश्लोकपूरणायाम् ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । तत्कार्यं निवर्तेत पुनर्विचार्य कृतंचापि दण्डायकृतंभवेत्प्रत्यर्पणीयमित्यर्थः ॥ ११७ ॥

( ३ ) **कुल्लूकः** । यस्मिन्यस्मिन्व्यवहारे साक्षिभिरनृतमुक्तमिति निश्चितंभवेत्तत्कार्यमसमाप्तंप्राड्विवाकः पुनरपि निवर्तयेत् यदपि च दण्डसमाप्तिपर्यंतंतांनीतंतदपि पुनः परीक्षेत ॥ ११७ ॥

( ४ ) **राघवानन्दः** । कौटसाक्ष्यकृतमप्यकृतमित्याह यस्मिन्निति । निवर्तेतेत्यस्य विवरणं कृतमित्यादि ॥ ११७ ॥

( ५ ) **नन्दनः** । कूटसाक्षिभिर्निर्णीतोप्यर्थोनिवर्त्ततइत्याह यस्मिन्यस्मिन्निति ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । यस्मिन्विवादे कौटसाक्ष्यं कपटेन साक्ष्यं भवेत् ॥ ११७ ॥

**लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च ॥ अज्ञानाद्बालभावाच्च साक्ष्यंवितथमुच्यते ॥ ११८ ॥**

( १ ) **मेधातिथिः** । कौटसाक्ष्यलोभादिनिमित्तंविषयकथनंदण्डविशेषभावार्थं वितथमसत्यं सर्वत्र पञ्चमीहेत्वर्था ॥ ॥ ११८ ॥

---

‡ महा—व्यसनं दुःखम् । इत्युग्रदैवपरीक्षणम् । महा ( न, श )

( २ ) **सर्वज्ञनारायणः**। लोभोऽर्थलिप्सा । मोहोविपरीतज्ञानम् । कामः स्त्रीरागः । अज्ञानं तद्विषयस्फुटज्ञानाभावः । बालभावः साक्ष्ययोग्यवयोवस्थाभावः । वितथं मिथ्यासाक्ष्यमुच्यते लोकैः ॥ ११८ ॥

( ३ ) **कुल्लूकः**। वक्ष्यमाणविशेषार्थंलोभादीन्पृथक् निर्दिशति लोभेन विपरीतज्ञानेन भयेन स्नेहेन कामेन क्रोधेनाज्ञानेनानवधानेन साक्ष्यमसत्यमुच्यते ॥ ११८ ॥

( ४ ) **राघवानन्दः**। कृतमप्यकृतमिति कस्मादिति तत्र हेतून्प्रदर्शयंत्साक्ष्यभावमाह लोभादिति । मोहाद्वैचित्त्यात् सच त्रिविधोरोगादिकृतो धत्तूरादिकृतः प्रमादकृतश्च । भयादस्युवृत्तिभ्यः । कामात्तदीयस्त्र्यादिषुभोग्यज्ञानादज्ञानादद्दृष्टश्रुतंजानामीत्यभिधानाद्बालभावादधर्माद्यज्ञानादिति ॥ ११८ ॥

( ५ ) **नन्दनः**। कौटसाक्ष्ये कारणानि दण्डतारतम्यार्थमाह लोभान्मोहादिति । बालभावः ऊनषोडशवयस्कत्वम् ॥ ११८ ॥

( ६ ) **रामचन्द्रः**। कामात् । स्त्रीरागात् अज्ञानात् स्फुटज्ञानाभावात् कृतं साक्ष्यं वितथं व्यर्थं उच्यते ॥ ११८ ॥

**एषामन्यतमे स्थाने यः साक्ष्यमनृतंवदेत् ॥ तस्यदण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः॥ ११९ ॥**

( १ ) **मेधातिथिः**। लोभाद्योवितथंवक्ति ससहस्रंदण्डनीयइत्येवंप्रयोजना कर्तव्या ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः**। अन्यतमेस्थाने अन्यतमनिमित्तंप्राप्य ॥ ११९ ॥

( ३ ) **कुल्लूकः**। एषांलोभादीनांमध्यादन्यतमस्मिन्निमित्ते सति योमिथ्यासाक्ष्यंकथयेत्तस्यदण्डविशेषाणि क्रमशोवदिष्यामि ॥ ११९ ॥

( ४ ) **राघवानन्दः**। अत्रार्थे किं स्यात्तत्राह एषामिति । लोभादीनांमध्येऽन्यतमनिमित्ते स्थाने युक्तान्दण्डविशेषान्वक्ष्यामीत्यन्वयः ॥ ११९ ॥

( ५ ) **नन्दनः**। स्थाने करणे ॥ ११९ ॥

( ६ ) **रामचन्द्रः**। एषां लोभादीनां अन्येषांवा ॥ ११९ ॥

**लोभात्सहस्रंदण्ड्यस्तु मोहात्पूर्वंतु साहसम्॥ भयाद्वौ मध्यमौ दण्डौ मैत्रात्पूर्वंचतुर्गुणम् ॥१२०॥**

( १ ) **मेधातिथिः**। तत्र यः परस्माद्धनमुपादाय विपरीतंवक्ति तस्य लोभोहेतुः मोहाद्विचिन्तयतोयथार्थवादी यथादृष्टार्थवादी च केन चिच्चित्तसंक्षोभहेतुना प्रश्नकाले व्यारूढः सम्यक्प्रश्नार्थमनवधार्यास्मृतत्वाद्वान्यथा ब्रूयात्समोहादित्युच्यते । भयंत्रासोयदि भयेन सत्यवचनेनायंजीयेत तत्रायंकदाचित्ज्ञातिधनादिबाधया मांव्यापादयेदित्याशङ्कासहस्रमिति संख्येयविशेषावगतिर्वाक्यान्तरात्पणानामिति पूर्वंतु साहसं प्रथमं पणानान्तुद्वे शते सार्धइत्यादौ द्वौ मध्यमौ साहसाविति विपरिणामः पूर्वंचतुर्गुणंसहस्रमेवेत्यर्थः । वृत्तानुरोधेन विचित्रया शब्दवृत्त्या सएवार्थः कथ्यते ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः**। सहस्रं पणाः । पूर्वं प्रथमंसाहसम् । द्वौमध्यमौ मध्यमसाहसंद्विगुणम् ॥ १२० ॥

( ३ ) **कुल्लूकः**। लोभेन मिथ्याभिधाने सति वक्ष्यमाणपणानांसहस्रंदण्ड्यः । मोहेन प्रथमंसाहसंवक्ष्यमाणंभयेन च वक्ष्यमाणौ मध्यमसाहसौ मैत्रात्प्रथमसाहसंचतुर्गुणम् ॥ १२० ॥

( ४ ) **राघवानन्दः**। तानेवाह द्वाभ्यांलोभादिति । सहस्रं पणानामितिशेषः । पूर्वं प्रथमपरिभाषितं सपञ्चाशच्छतद्वयम् । मध्यमोमध्यमः शतानि पञ्च तेन सहस्रम् । पूर्वंचतुर्गुणं सहस्रद्वयम् ॥ १२० ॥

( ५ ) **नन्दनः**। लोभात्कौटसाक्ष्ये कृते ताम्रकार्षापणानांसहस्रंदण्ड्यः। पूर्वसाहसंअभ्यर्द्धशतद्वयं मध्यमौ मध्यमसाहस्रौ पञ्चशतानिमध्यमः साहस्रः तौद्वौसहस्रत्रयम् ॥ १२० ॥

( ६ ) **रामचन्द्रः**। द्वाभ्यामाह लोभादिति । लोभादन्यथाकारी पुरुषः सहस्रं सहस्रपणान् दण्ड्यः। तु पुनः मोहात् अन्यथाकारी पूर्वसाहसं पञ्चाशदधिकशतद्वयपणपरिमाणं पूर्वसाहससंज्ञं दण्ड्यः । मैत्र्यात् पूर्वं प्रथमसाहसं चतुर्गुणम् । तत्राह याज्ञवल्क्यः ॥ साशीतिःपणसाहस्रोदण्डउत्तमसाहसः। तदर्धंमध्यमःप्रोक्तस्तदर्धमधमःस्मृतः ॥ पणानांसहस्रंपणसहस्रं तत्परिमाणमस्येति पणसाहस्रः अशीत्या सहवर्ततइति साशीतिः अशीत्यधिकपणसहस्रपरिमितदण्डोयःसउत्तमसाहससंज्ञोवेदितव्यः ॥ १२० ॥

**कामाद्दशगुणंपूर्वंक्रोधात्तु त्रिगुणंपरम् ॥ अज्ञानाद्वेशते पूर्णे बालिश्याच्छतमेव तु ॥ १२१ ॥**

( १ ) **मेधातिथिः**। मन्मथः कामोयत्रस्त्रियोविवदन्ते तत्संबन्धान्यतरं कामयमानोऽनृतंवदति अर्धतृतीयानि सहस्राणि दण्ड्यते क्रोधात्त्रिगुणंपरं प्रथमसाहसस्य प्रकृतत्वात्ततः परोवध्यः सर्वान्ते लौकविज्ञानादिति वा उत्तमएव परः द्वेषः क्रोधः अज्ञानादिति योविपरीतंप्रथमंब्रूयाद्भ्रान्त्या ननु प्रश्नकाले द्वे शते दमः प्रदर्शनमेव विपरीतंनाभिधानंबालिशभावः अप्राप्तबुद्धिस्थैर्यस्यायंबालिशोथव्यवहारतईषदपक्रान्तबालभावस्य दण्डोन्यस्य त्वसाक्षित्वैव ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः**। पूर्वं प्रथमंसाहसं दशगुणम् । परमुत्तमसाहसं । द्विशते पणानाम् ॥ १२१ ॥

( ३ ) **कुल्लूकः**। स्त्रीसंभोगरूपकामानुरोधेन मिथ्यावदन्प्रथमसाहसंदशगुणंदण्ड्यः। क्रोधेन तु परंमध्यमसाहसंत्रिगुणंवक्ष्यमाणम् । अज्ञानत्वाद्विशते । बालिश्यादनवधानात्पणशतमेवदण्ड्यइति सर्वत्रानुषङ्गः ॥ १२१ ॥

( ४ ) **राघवानन्दः**। कामेतिदशगुणं पूर्वं प्रथमसाहसं ततःपञ्चशताधिकसहस्रद्वयम् । त्रिगुणं परमुत्तमसाहसं तेन * न सहस्रत्रयम् ॥ १२१ ॥

( ५ ) **नन्दनः**। बालिश्याद्बाल्यात् ॥ १२१ ॥

( ६ ) **रामचन्द्रः**। कामात् कामतः अन्यथाकारी पूर्वसाहसं पञ्चाशदधिकशतद्वयपणपरिमितं दशगुणंदण्ड्यः। क्रोधात्तु त्रिगुणं उत्तमसाहसंत्रिगुणं दण्ड्यः ॥ १२१ ॥

**एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः॥ धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥ १२२ ॥**

( १ ) **मेधातिथिः**। उभयप्रयोजनोदण्डइति दर्शयत्यवश्यानुष्ठेयत्वाच्छास्त्राचारनिरूढा व्यवस्था धर्मस्तस्याव्यभिचारोऽनिवृत्तिरुच्यते ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः**। अव्यभिचारार्थं सर्वथानिश्चयार्थम् ॥ १२२ ॥

( ३ ) **कुल्लूकः**। सत्यरूपधर्मस्यापरिलोपार्थमसत्यरूपाधर्मस्य च वारणार्थमेतान्कौटसाक्ष्यविषये पूर्वैर्मुनिभिरुक्तान्दण्डान्मन्वादयआहुः। एतच्च सकृत्कौटसाक्ष्ये ॥ १२२ ॥

( ४ ) **राघवानन्दः**। अत्रार्थे मुन्यन्तरवाक्यं प्रमाणयति एतानिति । मुनिभिः प्रोक्तान्मन्वादयआहुः। तत्किमर्थं तत्राह धर्मस्येति । दण्डे कृते कोपि न स्वधर्माद्व्यभिचरेदित्याह । अव्यभिचारार्थमिति । अधर्मान्नियमनं निवृत्तिस्तस्मैच ॥ १२२ ॥

---

* नसहस्रत्रयं=सहस्रत्रयं ( न, श )     ( १२२ ) नियमाय=निधनाय ( नंद० )

( ५ ) **नन्दनः** । धर्मस्य सत्यस्य । अधर्मनिधनायासत्यस्य निवृत्तये ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । धर्मस्याव्यभिचारार्थं यथा धर्मस्य व्यभिचारः धर्मव्यतिक्रमः न भवेच्च पुनः अधर्मनियमाय पापापनुत्यर्थम् ॥ १२२ ॥

**कौटसाक्ष्यन्तुकुर्वाणांस्त्रीन्वर्णान्धार्मिकोनृपः॥ प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत् ॥१२३॥**

( १ ) **मेधातिथिः** । सकृदपराद्धानांपूर्वोदण्डः अभ्यासात्प्रवर्तमानानांदण्डयित्वा प्रवासनंराष्ट्रान्निष्कासनंमरणंवार्थशास्त्रे प्रयोगदर्शनात्तद्रूपत्वाच्चदण्डविधेः । ब्राह्मणन्तुविवासयेत् वाससोपहरणंविवासनंगृहाभावोवाविवासंकरोति तत्करोतीति णिचि णाविष्टवदिति टिलोपे रूपम् । त्रीन्वर्णानिति क्षत्रादयस्त्रयोब्राह्मणस्य दण्डान्तरविधानात् ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रवासयेत् स्वदेशात् । विवासयेत् प्रवासयेदेव न दण्डयेत् । गोविन्दराजस्तुदण्डयित्वा नग्नीकुर्यादित्यस्यार्थमाह ॥ १२३ ॥

( ३ ) **कुल्लूकः** । भूयोभूयःकौटसाक्ष्यकरणेतु कौटसाक्ष्यमिति क्षत्रियादीन् त्रीन्वर्णान्कौटसाक्ष्यात्पूर्वोक्तेन दण्डयित्वा धार्मिकोराजा स्वराष्ट्राद्विवासयेत् ब्राह्मणन्तुधनदण्डव्यतिरेकेण स्वराष्ट्रान्निःसारयेत् ॥ न जातु ब्राह्मणंहन्यात्सर्वपापेष्ववस्थितम् । राष्ट्रादेनंबहिः कुर्यात्समग्रधनमक्षतमिति ॥ धनसहितनिर्वासनस्याभिधास्यमानत्वात् । गोविरन्दाजस्तु ब्राह्मणंपुनः पूर्वदण्डेन दण्डयित्वानग्नंकुर्यादितिव्याचष्टे । मेधातिथिस्तु ब्राह्मणस्य विवासस्त्वंवासोपहरणंगृहभङ्गोवेत्याचष्टे॥१२३॥

( ४ ) **राघवानन्दः** । दण्डोत्तरकालीनंकृत्यमाह कौटेति । विवासयेत् दण्डंविना वासयेत् स्वराज्यादन्यत्र । तथाच वक्ष्यति ॥ न जातु ब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितम् । राष्ट्रादेनंबहिः कुर्यात् समग्रधनमक्षतमिति ॥ गोविन्दराजस्तु दण्डंकृत्वा नग्नंकुर्यात् । मेधातिथिस्तु वस्त्रशून्यंगृहमिति । विवासनपदस्यान्यत्र वसतौ भूरिप्रयोगात्अनयोर्व्याख्यानमसाध्विति । कौटसाक्ष्याभ्यासपरंवक्ष्यन्निति केचित् ॥ १२३ ॥

( ५ ) **नन्दनः** । ब्राह्मणंदण्डयित्वा विवासयेत् । प्रवासनंप्रमापणम् । विवासनन्तुदेशान्तरप्रापणम् । कुर्वाणानित्यनेनबहुशः कौटसाक्ष्यकरणंसूचितम् ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । कौटेन कपटेन । ब्राह्मणं तुविवासयेत् ॥ १२३ ॥

**दशस्थानानि दण्डस्य मनुः स्वायंभुवोब्रवीत् ॥ त्रिषु वर्णेषु यानि स्युरक्षतोब्राह्मणोव्रजेत् ॥१२४॥**

( १ ) **मेधातिथिः** । स्थानशब्दोविषयपर्यायः एतैः प्रदेशैः पीडयितव्यः । प्रत्यपराधशब्देन ब्राह्मणस्य धनदण्डविधानादकृतत्वोपदेशः शरीरपीडापरिहारार्थःकल्पते सत्यपि धनस्य दशसङ्ख्यान्तर्भावे । वयन्तु ब्रूमः समग्रधनमक्षतमित्यत्र धनपीडापि निषिद्धैव ब्राह्मणस्य तस्माद्यः सकृत्कथंचिदपराद्धःश्रुतशीलोभिजनयुक्तस्तस्य धनदण्डोपि नास्ति तथा च गौतमस्तादशमेव ब्राह्मणमधिकृत्य द्वौ लोके वृतव्रतावित्युपक्रम्य षड्भिः परिहार्यश्चेत्यादि ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । स्थानानि विषयान् ॥ १२४ ॥

( ३ ) **कुल्लूकः** । हैरण्यगर्भोमनुर्दशदण्डस्थानान्युक्तवान् यानि क्षत्रियादिवर्णत्रयविषये भवन्ति । ब्राह्मणः पुनर्महत्यपराधेऽक्षतशरीरोदेशान्निःसार्यते ॥ १२४ ॥

( ४ ) **राघवानन्दः** । धनदण्डप्रसंगेन दण्डान्तरंससंख्यंवक्ष्यन्ब्राह्मणस्य तदभावमाह दशेति । अक्षतोहीनोधनाद्यैः ॥ १२४ ॥

( ५ ) **नन्दनः** । व्रजेद्विवसेत् ॥ १२४॥

( ६ ) **रामचन्द्रः** । दण्डस्य अङ्गच्छेदरूपस्य दशस्थानानिस्युःअक्षतः अव्रणः ब्राह्मणोव्रजेत् गच्छेत् ॥१२४ ॥

**उपस्थमुदरंजिव्हा हस्तौ पादौ च पञ्चमम् ॥ चक्षुर्नासा च कर्णौ च धनंदेहस्तथैव च ॥ १२५॥**

( १ ) **मेधातिथिः** । उपस्थंप्रजनधर्मः स्त्रीपुंसयोरुद्देशमात्रमिदं विनियोगस्तूत्तरत्र भविष्यति । यत्र च दण्डविशेषोनाम्नातस्तत्र योयेनैवाङ्गेनापराद्धः सतत्रैव पीडयितव्यः । तत्रागम्यागमनउपस्थनिग्रहः चौर्यउदरस्याहारनिवृत्यादिना वाग्दण्डपारुष्ये जिव्हाहस्तयोः पादबलेन व्यतिक्रामन्पादयोः विवृत्य विश्रब्धंराजदारान्वीक्ष्यमाणश्चक्षुषोः अनुलेपनगन्धमाजिघ्रन्नासिकायां रहसि राजानंमन्त्रयमाणंकुड्यंपटान्तरितउपशृण्वन्कर्णयोः धने प्रसिद्धोदण्डः देहमारणंमहापातकिनः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । उपस्थादीनांछेदनादिदण्डविषयत्वम् । धनस्यतु ग्रहंदण्डः । देहःकृत्स्नस्ताडनवधादिदण्डविषयः ॥ १२५ ॥

( ३ ) **कुल्लूकः** । लिङ्गादीन्येतानि दशदण्डस्थानानि अतस्तत्तदङ्गेनापराधे सत्यपराधलाघवगौरवापेक्षया तत्तदङ्गताडनवेदनादि कर्तव्यम् । अल्पापराधे यथाश्रुतंधनदण्डः । देहदण्डोमारणंमहापातकादौ ॥ १२५ ॥

( ४ ) **राघवानन्दः** । तानेव दण्डानाह उपस्थमिति । एषांविच्छित्तिःकार्येत्यर्थः ॥ धनंचग्राह्यम् १२५ ॥

( ५ ) **नन्दनः** । तान्येवदशस्थानान्याह उपस्थमुदरमिति । पञ्चमंस्थानमितिशेषः ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । दशस्थानान्याह उपस्थेति ॥ १२५ ॥

**अनुबन्धंपरिज्ञाय देशकालौ च तत्त्वतः ॥ सारापराधौचालोक्य दण्डंदण्ड्येषु पातयेत् ॥ १२६ ॥**

( १ ) **मेधातिथिः** । उक्तानुक्तदण्ड्येष्वपराधेषु मातृका श्लोकोयं एतदर्थानुसारणेन सर्वदण्डक्लृप्तिःकर्तव्या तत्र पौनःपुन्येन प्रवृत्तिरनुबन्धः प्रवृत्तिकरणंवा अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि तंपरिज्ञाय किमयमात्मकुटुम्बक्षुदवसायेन धर्मउत सङ्गेन वा अथमद्यद्यूतादिशौंडतया तथा प्रमादाद्बुद्धिपूर्ववा परप्रयुक्तस्वेच्छया वेत्यादिरनुबन्धः । देशोग्रामारण्यग्रहजलजन्मप्रसवभूमादिः कालोनक्तंदिवादिः सुभिक्षदुर्भिक्षबाल्ययौवनादिशक्त्यशक्तीआढ्यत्वदारिद्र्येअपराधोष्टादशानांपदानामन्यतमः एतत्सर्वपौर्वापर्येण निरूप्याथदण्डंपातयेत्कुर्याद्यथास्थितिः सांसारिकी नभ्रश्यतीति ॥१२६ ॥

( २ ) **सर्वज्ञनारायणः** । अनुबन्धंपुनःपुनःकरणम् । देशंग्रामवनादिं । कालं राज्यादिं । सारं चित्तस्यगुरुताम् । अपराधं न्यूनाधिकम् ॥ १२६ ॥

( ३ ) **कुल्लूकः** । पुनः पुनरिच्छातोऽपराधकरणमपेक्ष्य ग्रामारण्यादिचापराधिस्थानंराज्यादिकंवाऽपराधस्यापेक्ष्य सारंचापराधकारिणोधनशरीरादिसामर्थ्यमपराधंच गुरुलघुभावेन चालोक्य दण्डनीयेषु दण्डंकुर्यात् । एतच्चाभिहिताभिधास्यमानदण्डशेषभूतम् ॥ १२६ ॥

( ४ ) **राघवानन्दः** । दण्ड्येषु राज्ञातावद्यत्नवता भाव्यमित्याह अनुबन्धमिति । अनुबन्धंसकृदसकृदाद्यपराधकारणम् । सारापराधौ अपराधकारिणोधनदेहादिसामर्थ्यं सारं अपराधंच लघुगुरुतया विज्ञाय । आलोच्येतिक्वचित्पाठः विचार्येति ॥ १२६ ॥

---

( १२६ ) अनुबन्धं=अपराधं ( नं )

( ५ ) **नन्दनः** । दण्डविधाने राज्ञा बोद्धव्यमाह अपराधमिति । सारासारदण्डस्य बलाबलम् ॥ १२६ ॥

**अधर्मदण्डनंलोके यशोघ्नंकीर्तिनाशनम् ॥ अस्वर्ग्यंच परत्रापि तस्मात्तत्परिवर्जयेत् ॥ १२७ ॥**

( १ ) **मेधातिथिः** । अधर्मप्रधानदण्डनंच पूर्वोक्तमनपेक्ष्यैर्दशास्त्रपाठमात्रेण राजेच्छया रागद्वेषादिभिर्वा तद्यशोनाशकंकीर्तेश्च विच्छेदकं स्वदेशे गुणख्यातिर्यशः देशान्तरेकीर्तिः जीवतोवा पुण्यशब्दोयशः ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः** । यशोबहुभिःपरैर्गुणानांज्ञानम् । कीर्तिस्तत्कथनम् ॥१२७ ॥

( ३ ) **कुल्लूकः** । जीवतः ख्यातिर्यशः मृतस्य ख्यातिः कीर्तिः । यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिहलोके यशोनाशनंमृतस्य च कीर्तिनाशनंपरलोके च धर्मान्तरार्जितस्वर्गप्रतिबन्धकंतस्मात्तत्परित्यजेत् ॥ १२७ ॥

( ४ ) **राघवानन्दः** । वैपरीत्ये दोषमाह अधर्मेतिद्वाभ्याम् । अधर्मेणदण्डनेऽयशोजीवति मृतेऽकीर्तिरित्यनयोःकथंचिद्भेदइति केचित् । यशोज्ञातिप्रशंसाकीर्तिर्जनप्रशंसेतिनृसिंहतापनीयभाष्ये अस्वर्ग्यमधर्मदण्डनेन पापोत्पत्तेः ॥ १२७ ॥

( ५ ) **नन्दनः** । अदण्ड्यदण्डनमिति गुणवत्ताप्रसिद्धिर्यशः तत्कथनंकीर्त्तिः ॥ १२७ ॥

( ६ ) **रामचन्द्रः** । लोकेअधर्मदण्डिनं जीवतः यशोघ्नं मृतस्यकीर्तिनाशनम् तत् अधर्मदंडनं परिवर्जयेत् ॥ १२७ ॥

**अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ अयशोमहदाप्नोति नरकंचैव गच्छति ॥१२८ ॥**

( १ ) **मेधातिथिः** । पूर्वश्लोकेऽनुबन्धादीनि निरूपणविधिविशेषः । अनेन त्वनपराधानांदण्डनंप्रतिषिध्यते सापराधानांच विधीयते । कृतार्थतांदण्डस्य मन्यमानोनुग्रहेणमाहासीदिति ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । अयशोयशोनाशम् ॥ १२८ ॥

( ३ ) **कुल्लूकः** । राजा दण्डानर्हान्धनलोभादिनादण्डयन् दण्डार्हांश्चानुरोधादिनोत्सृजन् महतीमख्यातिंप्राप्नोति नरकंचव्रजति ॥ १२८ ॥

( ४ ) **राघवानन्दः** । अस्वर्ग्यमित्यनेन स्वर्गायोग्यत्वमुक्तं न केवलमेतत्प्रत्युत नरकंचैवेतीत्याह अदण्ड्यानिति ॥ १२८ ॥

( ५ ) **नन्दनः** । दण्ड्यादण्डनेऽपि राज्ञांदोषमाह अदण्ड्यानिति । अयशोस्मिँल्लोके परस्मिन्नरकम् ॥ १२८ ॥

**वाग्दण्डंप्रथमंकुर्याद्धिग्दण्डंतदनंतरम् ॥ तृतीयंधनदण्डन्तु वधदण्डमतः परम् ॥ १२९ ॥**

( १ ) **मेधातिथिः** । योगुणवानीषत्प्रथममेवापराद्धः सवाचा निर्भर्त्स्यते न साधुकृतवानसि मापुनरेवंकार्षीरिति तथा विनीयमाने यदि न निवर्तते कार्यदोषइति वा प्रतिजानीयात्तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते ततोप्यनिवर्तमानोयथाशास्त्रंधनेनदण्डनीयस्तदप्यगणयन्नैश्वर्यादिना हंतव्यः वधदण्डश्च तदानीमङ्गच्छेदनाद्यपि न मरणमेव ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । वाग्दण्डं ताडयतैनमित्युक्तं । प्रथमं कूटसाक्ष्यादौप्रथमप्रवृत्तौ । धिग्दण्डं धिक्कमिति तदनन्तरं द्वितीये । तृतीये तृतीयवारकरणे । अतःपरं चतुर्थवारापराधे वधदण्डमङ्गच्छेदम् ॥ १२९ ॥

( ३ ) **कुल्लूकः** । न साधुकृतवानसि मैवंभूयः कार्षीः इत्येवंवाग्भिर्भर्त्सनंप्रथमापराधेगुणवतः कुर्यात् तथापि यदि नोपशाम्यति तदा धिक्जाल्ममजीवनिस्ते पापस्य भूयादित्येवमादितस्य कार्यम् । तदापि यद्यसन्मार्गान्न नि-

( १२७ ) अधर्मदण्डनं=अदण्ड्यदण्डनं ( नं )

वर्त्तते तदा धनदण्डमस्य तृतीयंकुर्यात्। एवमपि चेन्नावतिष्ठते तदातः परंवधदण्डंताडनाद्यङ्गच्छेदरूपंतस्य कुर्यान्न मारणम् ॥ १२९ ॥

( ४ ) **राघवानन्दः** । दण्डत्वेन देहपदं वाग्दण्डंउपलक्षयतीतिकृत्वाह वाग्दण्डमिति । गुणवतोहि वाग्दण्डः सचैवं नसाधुकृतंत्वयेत्यादिः प्रथमापराधे । तथापि न शाम्यतीति चेत् धिग्जन्मा त्वमिति द्वितीयः । वधदण्डंकर्णच्छेदादि प्रत्येकंकुर्यात् ॥ १२९ ॥

( ५ ) **नन्दनः** । दण्डनक्रममाह वाग्दण्डमिति । वाग्दण्डंपरुषभाषणम् । धिग्दण्डः सदोमध्याद्वाचानिर्भर्त्स्य निष्कासनम् । धनदण्डः स्वर्णादानम् । वधदण्डः शरीरपीडनम् । कुतएतदुत्तरश्लोकानुगुण्यात् । एते दण्डाः क्रमादल्पतरेऽल्पे महति महत्तरे वापि प्रयोज्याअपराधे ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । वाग्दण्डंप्रथमंकुर्यात् । धिग्दडं धिक्कामित्येवंरूपं तदनन्तरम् । तृतीयं धनदण्डम् । वधदण्डं अङ्गच्छेदरूपम् ॥ १२९ ॥

**वधेनापि यदा त्वेतान्निग्रहीतुंन शक्नुयात् ॥ तदैषु सर्वमप्येतत्प्रयुञ्जीत चतुष्टयम् ॥ १३० ॥**

( १ ) **मेधातिथिः** । यतआह मारणंचेद्वधःकिंतदन्यद्यन्न शक्यते कथंचैनंपापंनिगृण्हीतेत्यादि परुषवाक्यपूर्वंदुर्विनीतेषु धनदण्डवधौ समुच्चेतव्यौ कृतेपि शरीरदण्डे यदि नावतिष्ठते ततोनकृतनिग्रहइत्युत्सृजेदपितुसवधदण्डः कर्तव्यः । धनवधदण्डयोश्च पुनः प्रवृत्यर्थोयमारम्भः वाग्दण्डमृदुत्वात्कः पृच्छति धनेन च गृहीतस्य पुनर्वधोदृष्टोङ्गुलिग्रन्थिभेदस्येति ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः** । सर्वमेवैतद्दशविधंदण्डंप्रागुक्तं वाग्दण्डादित्रयंच ॥ १३० ॥

( ३ ) **कुल्लूकः** । यतोवक्ष्यति वधेनापि यदा त्वेतानिति । व्यस्तेनाङ्गच्छेदेनापि दण्ड्यान्वशे कर्तुंन शक्नुयात्तदैतेषु सर्ववाग्दण्डादिचतुष्टयंकुर्यात् ॥ १३० ॥

( ४ ) **राघवानन्दः** । उक्तदण्डेन यदा न शाम्यन्ति तदा वाग्दण्डादिचतुष्टयंसंप्रयोक्तव्यमित्याह वधेनेति । एतान् पापिनः । चतुष्टयमिति उपस्थादीनांवधदण्डत्वेन संग्रहात् ॥ १३० ॥

( ५ ) **नन्दनः** । वधेन शरीरपीडनेन ॥ १३० ॥

( ६ ) **रामचन्द्रः** । तत् तस्मात्कारणात् एषुचतुर्विधेषुदण्ड्येषुएतत्सर्वं चतुष्टयं प्रयुञ्जीत ॥ १३० ॥

**लोकसंव्यवहारार्थंयाः संज्ञाः प्रथिताभुवि ॥ ताम्ररूप्यसुवर्णानांताः प्रवक्ष्याम्यशेषतः ॥ १३१ ॥**

( १ ) **मेधातिथिः** । ताम्रादीनांलिक्षादयः संज्ञाभुवि प्रसिद्धाः किंशास्त्रपरिभाषया तत्र वृद्धव्यवहारोगवादिशब्दवदित्यतआह लोकसंव्यवहारार्थं अर्थशब्दोविषयवचनस्तेन व्यवहारप्रसिद्धिराश्रिता भवति नतश्च गवादिशब्दतुल्यतया व्यवहारात्प्रसिद्धः किंशास्त्रोपदेशेन उच्यते नियमार्थउपदेशोन्येषामपि परिमेयानामयस्कांस्यसुवर्णादीनामेताः संज्ञाः सन्तितन्निवृत्यर्थः क्वचिद्देशे परिमाणे भेदोप्यस्ति तन्निवृत्यर्थश्च क्वचित्संबन्धतया नियम्यते । अथ चैवंसंबन्धःक्रियते याःसंज्ञाभुवि प्रथिता स्तालोकसंव्यवहारार्थंवक्ष्यामि सर्वस्य लोकस्याभिरेव संव्यवहारोयथा स्याद्दण्डादिनियोगस्याप्यन्यथा प्रसिद्धिः ॥ १३१ ॥

( २ ) **सर्वज्ञनारायणः** । संव्यवहारार्थं दृष्टादृष्टव्यवहारसिद्ध्यर्थम् ॥ १३१॥

(३) **कुल्लूकः**। ताम्ररूप्यसुवर्णानांयाः पणादिसंज्ञाः क्रयविक्रयादिलोकव्यवहारार्थंपृथिव्यां प्रसिद्धास्तादण्डाद्युपयोगार्थंसाकल्येन कथयिष्यामि ॥ १३१ ॥

(४) **राघवानन्दः**। धनदण्डस्य ताम्रपणसुवर्णादिभेदेन नानात्वात्तद्दण्डप्रसंगेन तत्परिमाणं प्रतिजानीते लोकेति। संज्ञाधर्मशास्त्रपरिभाषाः ॥ १३१ ॥

(५) **नन्दनः**। चतुष्टयंवाग्दण्डादिकं वक्ष्यमाणेषु धनदण्डादिकेष्वियत्तानियामिकामानसंज्ञा प्रस्तूयते लोकसंव्यवहारार्थमिति। संव्यवहारः क्रयविक्रयादिः ॥ १३१ ॥

(६) **रामचन्द्रः**। ताम्ररूप्यसुवर्णानांपरिमाणमाह लोकेति। याः संज्ञाः प्रथिताः प्रसिद्धास्ताः संज्ञाः प्रवक्ष्यामि ॥ १३१ ॥

## जालान्तरगते भानौ यत्सूक्ष्मंदृश्यते रजः ॥ प्रथमंतत्प्रमाणानांत्रसरेणुंप्रचक्षते ॥ १३२ ॥

(१) **मेधातिथिः**। इमंश्लोकंकेचिन्नाधीयते त्रसरेणौ विप्रतिपत्या तावद्गवाक्षकुचिकाविवरप्रविष्टे सूर्ये योरेणुर्दृश्यते सत्रसरेणुः। अन्तरशब्दोविवरपर्यायः। प्रथमंतत्प्रमाणानामिति ॥ त्रसरेणवोष्टौविज्ञेयालिख्यैकपरिमाणतः। ताराजसर्षपस्तिस्रस्तेत्रयोगौरसर्षपः ॥ ततोपचितपरिमाणाः न पुनरयंलिक्षाशब्दः स्वेदजक्षुद्रजन्तुवचनस्तास्तिस्रोलिक्षाएकोराजसर्षपाख्यपरिमाणपदार्थएवंयोजनीयम्। ततश्च व्यभिचारयन्ति न यथोक्त[1]परिमाणार्थमेते शब्दावर्तन्तइति। यथाचोपक्रान्तसंज्ञाः प्रवक्ष्यामि परिमाणमिति त्रसरेणुश्चार्थोनियतपरिमाणस्तेनैतत्सर्वंनिश्चेयं शक्नुवन्ति च निपुणास्त्रसरेणून्संहर्त्तुमिति नानारम्यार्थोपदेशः। एतत्स्वर्णकाराभिमानसङ्ख्यास्मृतिरूपंनिर्बाधंभवति ततएव वस्तुनिपुणतोशेषतोऽवधारयितव्यम् ॥ १३२ ॥

(२) **सर्वज्ञनारायणः**। भानोरश्मौ। रजोऽदन्तेपुंसि। प्रमाणानां परिमाणानांमध्ये ॥ १३२ ॥

(३) **कुल्लूकः**। गवाक्षविवरप्रविष्टसूर्यरश्मिषु यत्सूक्ष्मंरजोदृश्यते तद्दृश्यमानपरिमाणानांप्रथमंत्रसरेणुंवदन्ति ॥ ॥ १३२ ॥

(४) **राघवानन्दः**। ताआह जालेतिषड्भिः। जालं गवाक्षं तदन्तरगे भानौ सूर्यकरे यत्सूर्यमरीचिस्थंरूक्ष्मंदृश्यते तत्प्रमाणानां परिमाणपरिच्छेद्यानांमध्ये प्रथमं यद्रजोधूलिः त्रसरेणु त्रसरेणुसंज्ञकम् ॥ १३२ ॥

(५) **नन्दनः**। भानौ रविकिरणे ॥ १३२ ॥

(६) **रामचन्द्रः**। जालान्तरजः प्रमाणानां परिमाणानां प्रथमं त्रसरेणुं प्रचक्षते ॥ १३२ ॥

## त्रसरेणवोऽष्टौ विज्ञेयालिक्षैकापरिमाणतः ॥ ताराजसर्षपस्तिस्रस्ते त्रयोगौरसर्षपः ॥ १३३ ॥

(२) **सर्वज्ञनारायणः**। लीक्षा यूकाडिम्बं। राजसर्षपोराजिका ॥ १३३ ॥

(३) **कुल्लूकः**। अष्टौ त्रसरेणवोलिक्षैकापरिमाणेन ज्ञेया तास्तिस्रोलिक्षाराजसर्षपोज्ञेयः ते राजसर्षपास्त्रयोगौरसर्षपोज्ञेयः ॥ १३३ ॥

---

(१) यथोक्त परिमाणार्थ=यथोक्तपरिमाणायवादयइति ते निरस्ताभवन्ति नहियवादीनामर्थानांपरिमाणं कथमेतत् तर्हियथोक्तपरिमाणार्थ (आ आ)

( ४ ) **राघवानन्दः** । लिक्षेतिसंज्ञान्तरमेवमुत्तरत्र । ताःलिक्षास्तिस्रः राजसर्षपः । तेत्रयोगौरसर्षपइत्यन्वयः ॥१३३॥

( ६ ) **रामचन्द्रः** । अष्टौत्रसरेणवएकालिक्षा तास्तिस्रः लिक्षाराजसर्षपः । ते त्रयोराजसर्षपाएकोगौरसर्षपः ॥१३३॥

**सर्षपाः षट् यवोमध्यस्त्रियवंत्वेककृष्णलम् ॥ पञ्चकृष्णलकोमाषस्तेसुवर्णस्तु षोडश ॥ १३४ ॥**

( १ ) **मेधातिथिः** । मध्यमशब्दोऽभ्रान्तिहेतुः परिमाणपरत्वे नात्यन्तमपिचितोनातिस्थूलः सर्षपपरिमाणइति मध्यग्रहणमर्थवत् संज्ञापरत्वे तु न किंचिन्मध्यमशब्देन यवशब्दसंज्ञात्वात् तदसत् नायंसंदर्भोयेन प्रत्यक्षयवप्रयोजनमुच्यते पद्यग्रन्थोयंतत्रसंगमनार्थमपि वृत्तानुरोधात्किंचिदुच्यते अस्ति चास्यान्वयः अनन्विताभिधानंहि वाक्यार्थविरोधान्न प्रमाणंनचावगताभिधानमपि । परिमाणभेदांस्त्रसरेणुशतमानादीनाद्यन्तानपेक्ष्य मध्यपठितत्वान्मध्यो यवाख्यः परिमाणविशेषः । पञ्चकृष्णलाअस्मिन्सन्त्यतइनिठनावितिठन्कर्त्तव्यः पञ्चकृष्णलिकः पञ्चकृष्णलकइति पाठे कबन्तोबहुव्रीहिः । ते कृष्णलाः षोडशएकः सुवर्णः ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः** । मध्योयवोनातिसूक्ष्मोनातिमहान्वा ॥ १३४ ॥

( ३ ) **कुल्लूकः** । गौरसर्षपाः षट् मध्योन स्थूलोनापि सूक्ष्मोयवोभवति त्रिभिर्यवैः कृष्णलंरक्तिकेति प्रसिद्धं पञ्चभिः कृष्णलैर्माषः षोडशमाषाः सुवर्णः स्यात् । पुल्लिङ्गश्चायंपरिमाणवचनः ॥ १३४ ॥

( ४ ) **राघवानन्दः** । यवोमध्यः स्थूलसूक्ष्मभिन्नः । त्रयीयवापरिच्छेदकायस्य तदेकं कृष्णलं । ते षोडश माषाः सुवर्णइत्यन्वयः ॥ १३४ ॥

( ५ ) **नन्दनः** । संव्यवहारेषु सूक्ष्मोमध्यमस्थूलइति त्रिविधोवयवउक्तः अंशद्वयमयवस्य लक्षणमुक्तंसर्षपाषड्यवोमध्यइति ॥ १३४ ॥

( ६ ) **रामचन्द्रः** । षट् सर्षपाः मध्योयवः नस्थूलोनसूक्ष्मः । त्रियवंत्रयोयवाः एकं कृष्णलम् पञ्चकृष्णलकोमाषः । ते माषाः षोडशएकः सुवर्णः ॥ १३४ ॥

**पलंसुवर्णाश्चत्वारः पलानि धरणंदश॥ द्वे कृष्णले समधृते विज्ञेयोरौप्यमाषकः ॥ १३५ ॥**

( १ ) **मेधातिथिः** । पलमिति संज्ञानिर्देशः सुवर्ण मिति संज्ञी चत्वारः इति विशेषणं धरणमिति संज्ञादशपलानीति संज्ञी द्वे कृष्णलेइति संज्ञा रूप्यमाषकइति समुदायसंज्ञामन्यन्ते । ननु रूप्यविषयमाषकनिर्देशेद्वेकृष्णाले प्रतिपत्तव्ये इति प्रतिजानीते । प्रादेशनिश्चयः । समधृते तुलासूत्रके उन्मानादहीने यदि धार्येते प्रयोजनंमध्यशब्दवद्यतो ऽसमया ह्यार्यमाणतया परिमाणानिश्चयः ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । पलानि दश सुवर्णस्य धरणम् ॥ १३५ ॥

( ३ ) **कुल्लूकः** । चत्वारः सुवर्णाः पलंस्यात् दशपलानि धरणं कृष्णलद्वयंसमंकृत्वा तुलया धृतंरूप्यमाषकोबोद्धव्यः ॥ १३५ ॥

( ४ ) **राघवानन्दः** । सुवर्णाश्चत्वारः पलंस्यात् । पलानि दश धरणं धरणसंज्ञकं परिमाणान्तरम् रूप्यमाषमानमाह द्वेइति । समधृते समंकृत्वा तुलयाऽवधृते ॥ १३५ ॥

( ५ ) **नन्दनः** । उत्तरार्द्धेन रूप्यमानमुच्यते । समधृते सहोन्मिते ॥ १३५ ॥

( ६ ) **रामचन्द्रः** । चत्वारःसुवर्णाः पलम् दश पलानि धरणसंज्ञं भवति । रूप्यपरिमाणमाह । द्वेकृष्णले रूप्यमाषकः ॥ १३५ ॥

**ते षोडशस्याद्धरणंपुराणश्चैव राजतः ॥ कार्षापणस्तुविज्ञेयस्ताम्रिकः कार्षिकः पणः ॥ १३६ ॥**

( १ ) **मेधातिथिः** । षोडशरूप्यमाषकारूप्यस्य धरणंभवति पुराणइति संज्ञान्तरम् । कार्षापणइति च द्वे संज्ञे ताम्रकर्षस्य कर्षाख्यश्च शब्दोलोकतएव प्रसिद्धार्थइहगृह्यते व्यभिचारदर्शनासत्त्ववचनेन नकृष्णलादिवत्परिभाष्यते ॥ ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । राजतोरजतसंबन्धो । पुराणोधरणंचेतिमाषाः षोडश । कार्षिकः कर्षः ताम्रिकः ताम्रः । कार्षापणःपणश्चोच्यते । अत्रचानुक्ते सुवर्णमनाग्रहणात् कर्षः पलचतुर्थभागः पञ्चकृष्णलकः षोडशमाषात्मकोग्राह्यः ॥ १३६ ॥

( ३ ) **कुल्लूकः** । ते षोडशरूप्यमाषकारौप्यधरणंपुराणश्च राजतोरजतसंबन्धी स्यात् । कार्षिकः ताम्रमयः कार्षापणः पणइति विज्ञेयः । कार्षिकश्च शास्त्रीयपलचतुर्थभागोबोद्धव्यः । अतएव पलंकर्षचतुष्टयमित्याभिधानिकाः ॥ ॥ १३६ ॥

( ४ ) **राघवानन्दः** । राजतोरजतसंबन्धी । ते रूप्यमाषकाः षोडश धरणंस्यात् राजतंधरणमस्यैव संज्ञान्तरं पुराणइति । पणमानमाह कार्षइति । कार्षिकः कर्षप्रमाणः सएव पणइति पणएव कार्षापणः । ताम्रिकःताम्रमयश्चेत्कार्षिके ताम्रिके पणइत्यभिधानात् ॥ १३६ ॥

( ५ ) **नन्दनः** । ते रूप्यमाषकाः षोडशराजतंधरणम् । पुराणमनादिसिद्धं । उत्तरार्द्धेन ताम्रिकमानंसूच्यते माषषोडशकस्य कर्षइति संज्ञा लोकप्रसिद्धा कर्षेणमितः कार्षिकः ताम्रस्य विकारस्ताम्रिकःकर्षमिति । ताम्रीकृतःपणोत्रव्यवहारेकार्षापणसंज्ञोज्ञेयःनतुलोकप्रसिद्धोरूप्यादिमानइत्यर्थः ॥ १३६ ॥

( ६ ) **रामचन्द्रः** । तेषोडशमाषाः रजतः धरणं भवति । राजतः पुराणेतिसंज्ञो भवति । कर्षःस्याद्दशमाषिकइति निघण्टुः । पलचतुर्थांशकः कर्षकयोन्मानितः कार्षिकः ताम्रस्य विकारः ताम्रिकः कर्षसंमितताम्रविकारः ढब्बूकस्यार्धः ॥ १३६ ॥

**धरणानि दशज्ञेयः शतमानस्तु राजतः ॥ चतुः सौवर्णिकोनिष्कोविज्ञेयस्तु प्रमाणतः ॥१३७॥**

( १ ) **मेधातिथिः** । शतमानइति संज्ञा दशानांधरणानां रजतशब्देन सुवर्णमप्युच्यते तेन रूप्यसुवर्णयोरियंसंज्ञा सुवर्णस्य समानन्तु शास्त्रान्तरात्परिमातव्यं तथा च विशेषयिष्यति शतमानंतुराजतमिति ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः** । राजतःशतमानोदशभिर्धरणैः । चतुर्भिःसुवर्णैर्निष्कः । सुवर्णस्यैव स्थूलयवैः कृष्णलपरिकल्पनायांव्यावहारिकनिष्कस्य षोडशांशः कृष्णलोभवतीति दानप्रकरणादौ व्यावहारिकी विशिष्टसंज्ञानिष्कस्य ॥ १३७ ॥

( ३ ) **कुल्लूकः** । दशरूप्यधरणानि रौप्यशतमानोज्ञातव्यः । चतुर्भिः सुवर्णैर्निष्कः प्रमाणेन बोद्धव्यः ॥ १३७ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् धरणेति । धरणानि रौप्याणि दशशतमानइति मानान्तरम् । चतुःसौवर्णिकंचतुर्भिःसुवर्णैःपरिमितः निष्कः पलंसुवर्णाश्चत्वारइतियाज्ञवल्क्योक्तेः ॥ १३७ ॥

( ६ ) **रामचन्द्रः** । पणसंज्ञाः शतं भवन्ति राजतः रूप्यस्य दश धरणानि शतमानोज्ञेयः ॥ १३७ ॥

**पणानांद्वेशते सार्द्धे प्रथमः साहसः स्मृतः ॥ मध्यमः पञ्चविज्ञेयः सहस्रंत्वेव चोत्तमः॥ १३८ ॥**

( १ ) **मेधातिथिः** । मध्यमउत्तमइत्यत्र साहस पदानुषङ्गः कर्त्तव्योमध्यमोत्तमशब्दावत्रकेवलावपि शास्त्रान्तर दृष्टावाभ्यां दण्डः । उत्तमइति तत्र शास्त्रसिद्ध्यासाचहर्यात्साहसंप्रतीयते । अवयवाः स्पष्टाः ॥ १३८ ॥

( २ ) **सर्वज्ञनारायणः** । पणानां ताम्रकर्षाणां । प्रथमसाहसइत्यस्य दण्डादिप्रकरणेषु संज्ञा । मध्यमः पञ्चपञ्चशतानि । सहस्रं पणानाम् ॥ ऋणेदेयेप्रतिज्ञातइति श्लोकमत्र केचित्पठन्ति ॥ १३८ ॥

( ३ ) **कुल्लूकः** । पञ्चाशदधिके द्वे पणशते प्रथमसाहसोमन्वादिभिः स्मृतः । पणपञ्चशतानि मध्यमः साहसोज्ञेयः । पणसहस्रन्तूत्तमसाहसोज्ञेयः ॥ १३८ ॥

( ४ ) **राघवानन्दः** । मोहात्पूर्वंतुसाहसमित्यत्र प्रथमसाहसादिपरिमाणमुक्तंतत्पारिभाषिकमितिज्ञापयति पणानामिति । पञ्चाशदुत्तरशतद्वयाभ्यां प्रथमः । मध्यमः साहसः पणानांपञ्च शतानीतिशेषः । एतन्माषकादिपरिमाणंलोकप्रसिद्धमपि शास्त्रीयत्वेन विधेयमिति ॥ १३८ ॥

( ५ ) **नन्दनः** । कार्षापणानामयंसंज्ञाविशेषमाह पणानामिति । कार्षापणानांसार्द्धेऽर्धशतसहिते पञ्चाशत्सहितइतियावत् । पञ्चशतानीतिवचनविपरिणामः ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । पञ्चाशदधिकशतद्वयपरिमितःप्रथमसाहसः । मध्यमसाहसःपञ्चशतपरिमितः । सहस्रंचोत्तमः उत्तमसाहसोविज्ञेयः ॥ १३८ ॥

**ऋणे देये प्रतिज्ञाते पञ्चकंशतमर्हति ॥ अपह्नवे तद्द्विगुणंतन्मनोरनुशासनम् ॥ १३९ ॥**

( १ ) **मेधातिथिः** । योराजसभायामानीतोधर्मेण ऋणंदेयतया प्रतिजानीते सत्यमस्मै धारयामि सपञ्चकंशतमर्हति दण्डमितिशेषः । अनेन संकल्पितेन विंशतितमोभागोदण्ड्यते किमिति तत्सकाशमुत्तमर्णःप्रेषिनोबहिरेव कस्मान्न परितोषितइत्यतोनेन शास्त्रव्यतिक्रमेण । दण्डमर्हति यस्तु व्यतिक्रमान्तरंकरोत्यपह्नुते नाहमस्मै धारयामीति सतैः प्रतिपादितस्तद्द्विगुणंतस्मात्पञ्चकाद्द्विगुणंदशकंशतमित्यर्थः तन्मनोः प्रजापतेरनुशासनं सृष्टिकालप्रभृतिव्यवस्थानीतिरिति यावत् । अन्ये तु तच्छब्देनदेयमेवप्रत्यवमृशन्ति यावत्तस्मैदेयंतद्द्विगुणं तेन यावदृणमित्यनेनैकवाक्यंभवति अन्यथा वाक्यभेदविषयविशेषानिर्देशादेकविषयत्वे विकल्पः प्राप्नोति सच नयुक्तोद्विगुणस्यात्यन्तबहुत्वात् असत्यपि निर्देशे तस्य विषयोदर्शनंतस्य प्रत्यासन्नेषुपञ्चकमित्यर्थस्तस्यैवानुप्रत्यवमर्शोयुक्तः ॥ १३९ ॥

( ३ ) **कुल्लूकः** । मयोत्तमर्णस्य धनंदेयमिति सभायामधमर्णेनोक्ते सत्यधमर्णः पणशतात्पञ्चपणाइत्येवंदण्डमर्हति । यदा तु सभायामपि न किंचिदस्मै धारयामीत्येवमपलपति तदा पणशताद्दशपणाइत्येवंदण्डमर्हतीत्येवंमनुस्मृतो दण्डप्रकारः ॥ ३३९ ॥

( ४ ) **राघवानन्दः** । प्रासंगिकमुक्त्वा प्रकृतंदण्डमाह ऋणइति । अधमर्णोत्तमर्णप्रति देयमिति सभायांप्रतिज्ञाते यदि न ददाति तदा पणानां तच्छतंप्रतिपणंपञ्चकंदण्डमर्हतीत्यर्थः । धारयामीत्यपह्नवे तद्द्विगुणंदशपणम् । एवंसहस्रादिष्वपिज्ञेयम् ॥ ३३९ ॥

( ५ ) **नन्दनः** । इदानीमृणमप्रयच्छतोऽधमर्णस्य दण्डमाह ऋणेदेयइति । उत्तमर्णाभियोगानन्तरमधमर्णेन देये प्रति-

ज्ञाते । देयत्वेन संप्रतिपन्ने ऋणे सोधमर्णः पञ्चकंशतमर्हति । यस्माच्छतादेयत्वेन राज्ञे पञ्चकंदीयतइति तत्पञ्चकं शतंतस्मिन्वृद्ध्यादीयते । संप्रतिपन्नादृणाद्विंशतिभागंदण्डइत्यर्थः । अपह्नवे ऋणस्यासंप्रतिपत्तौ तत्पञ्चकंज्ञाते ऋणदशभागंदण्ड्यइति ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । ऋणे देये पञ्चशतंग्रहीतुमर्हति । अधमर्णेनापह्नवे कृते गोपिते तत्पञ्चशताद्विगुणंग्रहीतुमर्हति ॥ १३९ ॥

## वसिष्ठविहितांवृद्धिंसृजेद्वित्तविवर्द्धिनीम् ॥ अशीतिभागंगृह्णीयान्मासाद्वार्धुषिकः शते ॥ १४० ॥

( १ ) **मेधातिथिः** । अशीतीति विधेयनिर्देशः वसिष्ठविहितामित्यादिरर्थवादः वसिष्ठोभगवान्त्रिकालज्ञोलोभादिदोषरहितइति तांवृद्धिंगृहीतवानतएषा प्रशस्ता धनंतया वृद्धिमुपैति नच लोभदोषोस्ति । सृजेत्प्रयुञ्जीत यदा धनंतदधमर्णस्य तांवृद्धिंधनप्रयोगकाले निर्दिशेत् । सर्वद्रव्येषु वस्त्रधान्यहिरण्यादिष्वेतदेव वृद्धिपरिमाणंसङ्ख्येयपरमेयादिष्वष्टगुणा वृद्धिरित्यादिषु द्वैगुण्यापवादइति वक्ष्यामः ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । अशीतिभागइति वसिष्ठविहिता वृद्धिः पणशतात्पञ्चकाकिण्यः । एतच्च सबन्धके स्मृत्यन्तरदर्शनात् अनेनत्वेवाधाविति बन्धकावताराच्च ॥ १४० ॥

( ३ ) **कुल्लूकः** । वसिष्ठेनोक्तांवृद्धिंधर्म्यत्वाद्धनवृद्धिकरींवृद्धिजीवी गृह्णीयात् तामेव दर्शयति शतेप्रयुक्तेऽशीतिभागंप्रतिमासंवृद्धिंगृह्णीयात् ॥ १४० ॥

( ४ ) **राघवानन्दः** । ऋणप्रसंगेन तल्लभ्यपरिमाणमाह वसिष्ठेतित्रिभिः । सृजेत् गृह्णीयात् । अधमर्णोवा दद्यात् । शतइतिपणसुवर्णवस्त्रादिसाधरणधान्यादेर्वक्ष्यमाणत्वात् । वसिष्ठेत्यर्थवादोवृद्धेर्दोषापनुत्याइतिमेधातिथिः ॥ १४० ॥

( ५ ) **नन्दनः** । सृजेत्कुर्यात् । वसिष्ठविहितादिभिरुत्तरार्धेनोच्यते ॥ १४० ॥

( ६ ) **रामचन्द्रः** । वार्धुषिकः उत्तमर्णः शते शतसङ्ख्ये द्रव्ये मासात् अशीतिभागं अशीतितमभागं गृह्णीयात् ॥ १४० ॥

## द्विकंशतंवागृह्णीयात्सतांधर्ममनुस्मरन् ॥ द्विकंशतंहिगृह्णानोन भवत्यर्थकिल्बिषी ॥ १४१ ॥

( १ ) **मेधातिथिः** । द्वौवृद्धिर्यस्मिन्शते दीयते द्विशता पूर्वयाऽजीवाता बहुकुटुम्बस्यायंद्विकशतविधिः मासमनुवर्तते । सतामित्यादिरत्रायमर्थवादः । सतांधर्ममिति एषापि वृद्धिःसाधूनांधर्मः नैतया साधुत्वंहीयते नात्यन्तमर्थपरउच्यते तद्दर्शयति न भवत्यर्थकिल्बिषी अन्यायेन परस्वग्रहणात्पापमर्थकिल्बिषंतदस्यास्तीत्यर्थकिल्बिषी ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । अबन्धेकत्वाह द्विकमिति । पणानांशतात्पणद्वयमित्येतद्ब्राह्मणात् । अर्थकिल्बिषी परस्वग्रहणदोषवान् ॥ १४१ ॥

( ३ ) **कुल्लूकः** । साधूनामयंधर्मइति मन्यमानः पणशते प्रयुक्ते पणद्वयंवा प्रतिमासंगृह्णीयात् यस्माद्विकंशतंहिगृह्णानोवृद्धिधनग्रहणे किल्बिषी न भवति ॥ १४१ ॥

( ४ ) **राघवानन्दः** । सबन्धकेशतंप्रत्यशीतिभागमेवाबन्धके द्विकमेव नाधिकमित्याह द्विकमिति । कार्यवशादपि नभवत्यर्थकिल्बिषोयुक्तत्वात् ॥ १४१ ॥

( ५ ) **नन्दनः** । संबन्धकविषयमेतदुक्तंपक्षद्वयंब्राह्मणविषयंनान्यवर्णविषयमिति सूचयन्नाह द्विकमिति । द्विकादिषु पूर्ववत्कन्प्रत्ययः ॥ १४१ ॥

**द्विकंत्रिकंचतुष्कंच पञ्चकंच शतंसमम् ॥ मासस्य वृद्धिंगृह्णीयाद्वर्णानामनुपूर्वशः ॥ १४२ ॥**

( १ ) **मेधातिथिः** । ब्राह्मणादिवर्णक्रमेण चतुर्णांसकाशाद्विकादयश्चत्वारःकल्पयितव्यायथासङ्ख्येन ग्राह्यतयानुज्ञायन्ते । समेन पादेन वाऽर्धेन वाधिकंतदाधिकोपि सपादद्विकंसार्द्धद्विकमिति द्विकादिव्यपदेशस्यानिवृत्तेराशङ्कानिवारणार्थंसमग्रहणं यथा मात्रान्यत्वेऽपि संज्ञान्तरव्यपदेशंनिवर्तयति इदमपि पूर्वेणाजीवतः कल्पान्तरंयस्य वा महते धर्माय गृहारम्भोराजा च नातिधार्मिकस्तत्रायंविधिः । येऽसाधुभ्योऽर्थमादायेति न्यायेन । सममिति पाठान्तरं संवत्सरंयावदेषा वृद्धिर्न परतोपि महत्वादिकत्वाद्वैगुण्यंस्यात् ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः** । एतदेवानूद्य क्षत्रादिष्वाह द्विकमिति । समं तन्यूनमधिकंवा ॥ १४२॥

( ३ ) **कुल्लूकः** । ब्राह्मणादिवर्णानांक्रमेण द्विकंत्रिकंचतुष्कंपञ्चकंशतसममितोनाधिकंमासस्य संबन्धिनींवृद्धिंगृह्णीयात् । नन्वशीतिभागोलघुद्विकशतग्रहणंगुरु कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्पेतां ( अत्र मेधातिथिगोविन्दराजौ तु पूर्ववृद्ध्यानिर्वाहासंभवे द्विकशतपरिग्रहइति व्याचक्षाते । इदन्तुवदामः सबन्धकेष्वशीतिभागग्रहणं बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः । तदाह याज्ञवल्क्यः ॥ अशीतिभागोवृद्धिः स्यान्मासिमासिसबन्धके । वर्णक्रमाच्छतंद्वित्रिचतुः पञ्चकमन्यथा ॥ वेदान्तोद्गीतमहसोमुनेर्व्याख्यानमाद्रिये । तद्विरुद्धंस्वबुद्ध्याच निबद्धमधुनातनैः ॥ १४२ ॥

( ४ ) **राघवानन्दः** । निर्बन्धकेतु चतुर्णांव्यवस्थितिमाह द्विकमिति ॥ अशीतिभागोवृद्धिः स्यान्मासिमासि सबन्धके । वर्णक्रमाच्छतंद्वित्रिचतुष्पञ्चकमन्यथा ॥ अन्यथा अबन्धकइतियाज्ञवल्क्योक्तेः । अतोद्विकादिकमशक्तपरमिति व्याख्यानंत्वश्रद्धेयमिति ॥ १४२ ॥

( ५ ) **नन्दनः** । ब्राह्मणानांद्विकम् । क्षत्रियाणांत्रिकम् । वैश्यानांचतुष्कम् । शूद्राणांपञ्चकं शूद्रात्पञ्चकंमासस्य गृह्णीयादित्यर्थः ॥ १४२ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणेऽधमर्णे द्विकं शतं गृह्णीयात् । क्षत्रिये त्रिशतं । वैश्ये चतुष्कं । शूद्रेपञ्चकं । मासि मासीतिसर्वत्रसंबध्यते । समं नन्यूनाधिकं । वर्णानामनुपूर्वशः क्रमेण ॥ १४२ ॥

**न त्वेवाधौ सोपकारे कौसीदींवृद्धिमाप्नुयात् ॥ न चाधेःकालसंरोधान्निसर्गोस्ति न विक्रयः॥१४३॥**

( १ ) **मेधातिथिः** । बहुधाप्रयोगोगृहीत्वाधिमन्यथाच आधिरपि द्विविधोगोप्योभोग्यश्च भोग्योपि द्विविधः समयादुह्यमानभोगः सरूपतोवा । आधिर्दोग्ध्री गौः पिहितसुवर्णादि तत्र भोग्यमाधिमधिकृत्येदमुच्यते नत्वेवाधौसोपकारइति विविध सोपकारः क्षीरिणीगौः क्षेत्रारामादिच तस्मिन् भुज्यमाने कुसीदे भवा कौसीदी अनन्तरोक्ता वृद्धिस्तानाप्नुयात् आधिन्तु भुञ्जानोनान्यांवृद्धिंलभेत गोप्येप्याधौ कालसंरोधाच्चिरमवस्थानाद्विगुणीभूतेऽप्यमोक्षमाणे ननिसर्गोस्ति नविक्रयः । अन्यत्र च विधिनार्पणंनिसर्गः । अन्यत्र संक्रामितंद्विगुणीभूतमपि पुनर्वर्धतएव तथा च पठिष्यति सकृदाहितेति विक्रियः प्रसिद्धः सोपि न कर्तव्यः । किंतर्ह्यस्यामवस्थायां कर्तव्यं । आधिंभुञ्जीत यावद्विगुणंधनंप्रविष्टं ततोमोच्यआधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने भोग्यस्तावदेवमभोग्यस्तावद्देयंभोग्यस्त्वाधिरस्य लाभंतिष्ठेद्यावद्बाधोनआगते तु बाधे कथंचिद्धनिकोदरिद्रतामुपगतस्तावन्मात्रशेषधनः सकञ्चित्कालंप्रतीक्ष्य राजनि निवेद्य विक्रीणीत बन्धं ततोविक्रयादुत्पन्नंद्विगुणमात्मनोबंधनंगृहीत्वा शेषंमध्यस्थहस्ते ऋणिकसात्कुर्यात् । ननुच ॥ आधिः प्रणश्येद्विगुणे धने यदि न मोक्षयेदिति पठ्यते । एतदुत्तरत्रव्याख्यास्यामः । प्रणाश्यत्वान्नपूर्वस्वामिनः स्वाम्यहानिः प्रयोक्तुश्च स्वतापत्तिः यदि च निसर्गविक्रयौ नस्तः कीदृश्यमस्यस्वा-

न्यमुच्यते तस्मात्प्रतिषेधसामर्थ्येन प्रणाशवचनंप्रतिषिद्धभोगस्य भोगानुज्ञानार्थंव्याख्यायते वस्त्रादिविषयंवा तस्य हि भज्यमानस्यप्रणाशएव न क्षेत्रादेरिव तिष्ठतः स्वरूपात्प्रच्यवमानस्य भोग्यता संभवति तेनैतत्स्मृतिव्यवस्थायां व्याख्येयं गौणौ चात्र प्रणाशनिसर्गौविक्रयप्रतिषेधस्तु मुख्यएव। न ह्यसौ गौणतया प्रतिपत्तुंशक्यते एतदेव प्रस्तुत्य नस्यातां विक्रयाधीनेइति स्मृत्यन्तरपठितमतइह निसर्गोन्यत्राधानंविक्रयसाहचर्यात् सदृशौ हि तौ केनचिदंशेन ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः**। सोपकारे गोप्यादिनापि प्रसंगादुपकारसिद्धौ वृद्धिर्नग्राह्या। कौसीदीं कुसीदवृत्तिसंबन्धिनीम्। कालसंरोधात् कालातिक्रमेपि द्वैगुण्योर्ध्वं आधेर्बन्धकद्रव्यस्य ननिसर्गोदानमस्ति नच विक्रयोस्ति किंतु प्रतिरोधादिना धनस्यैव ग्रहणम् ॥ १४३ ॥

( ३ ) **कुल्लूकः**। भूमिगोधनादौ भोगार्थबन्धके दत्ते धनप्रयोगभवामनन्तरोक्तांवृद्धिमुत्तमर्णोन लभते कालसंरोधाच्चिरकालावस्थानात् द्विगुणीभूतमूलधनप्रवेशेऽपि न निसर्गोऽन्यस्मैदानंनवान्यतोविक्रयः। मेधातिथिगोविन्दराजौ तु आधेश्चिरकालावस्थानेऽपि न निसर्गोनान्यत्र बन्धके नार्पणमिति व्याचक्षाते। अत्र तु सर्वदेशीयशिष्टाचारविरोधः बन्धकीकृतभूम्यादेरन्यत्राधीकरणसमाचारात् ॥ १४३ ॥

( ४ ) **राघवानन्दः**। सबन्धकेऽशीतिभागइत्युक्तं तत्र द्रव्यविशेषे तदभावमाह नेति। आधौ गोभूमिदासादौ सोपकारि भोगार्थंदत्ते तत्र भोगएव वृद्धिः। कौसिदीलभ्यइतिप्रसिद्धांनाप्नुयादित्यन्वयः। तत्रैव बन्धकस्य विशेषमाह नेति। कालसंरोधात् चिरकालावस्थानात् द्विगुणीभूतमूलप्रवेशेवा। विसर्गोत्र स्वच्छन्देनान्यस्मै दानम्। नापि वक्रयः। तथाच याज्ञवल्क्यः ॥ आधिःप्रणश्येद्द्विगुणे धने यदि न मोच्यते। काले कालकृतोनश्येत्फलभोग्योन नश्यति ॥ एतावताकालेन ननीयतेचेत्तदैवतदितिकालकृतस्य वचनादेव सर्वस्वत्वहानिरित्यर्थः। फलभोग्यउक्ताधिरूपः ॥ १४३ ॥

( ५ ) **नन्दनः**। अथाधिविषये वृद्धिप्रकारमाह नत्विति। ऋणप्रदानार्थमधमर्णादुत्तमर्णेन गृहीते बन्धआधिः तस्मिन्सोपकारे सत्ये च धेन्वनडुहादिरूपतया भोगक्षेमे सत्यपि योभोगानुज्ञापरस्परमाधिराहितः यस्य चाननुज्ञातभोगमन्तरेण वैगुण्यप्रसङ्गः तस्मिन्नाधौ भुक्तेसत्यपीत्यर्थः। कौशिदींऋणसंबन्धिनीसंरोधात्। सकालःसमाप्तइत्यधमर्णायदद्यात् किन्तु यावदृणलाभंभुञ्जीत। नचलब्धमृणमिति। विक्रीणीयादिति ॥ १४३ ॥

( ६ ) **रामचन्द्रः**। ननुतर्के। वा पक्षान्तरे सोपकारे आधौ बन्धके कौसीदींवृद्धिमाप्नुयात् गृह्णीयात् विश्वासार्थेयआधीयतइतिआधिरितियावत् आधेः कालसंरोधात् कालातिक्रमात् ननिसर्गोस्ति। न दानं। न विक्रयः। तथायोगीश्वरः ॥ आधिःप्रणश्येद्द्विगुणोधनेयदिनमोच्यते। कालेकालकृतोनश्येत्फलभोग्योन नश्यति ॥ क्षेत्रारामादि फलभोग्यादि कदाचिदपि न नश्यति ॥ १४३ ॥

## न भोक्तव्योबलादाधिर्भुञ्जानोवृद्धिमुत्सृजेत् ॥ मूल्येन तोषयेच्चैनमाधिस्तेनोन्यथा भवेत् ॥ १४४ ॥

( १ ) **मेधातिथिः**। ननु च प्रागप्येतदुक्तंनत्वेवाधाविति सत्यंयत्र यावत्येव वृद्धिस्तावानेव भोगः सपूर्वस्य विषयः यत्र तु महतीवृद्धिः स्वल्पोपभोगश्चेद्बलादिना भुञ्जानस्य सर्वेण सर्ववृद्धिहानिः यत्र क्षेत्रगवादिर्बन्धस्तद्भोगश्च वृद्धिसमितः चोपचितामपि वृद्धिंन ददाति नच बन्धनंद्विगुणंतत्र कयाचिदतिमत्यात्यन्तमुक्तैव वृद्धिर्निश्चेतव्या यदि तु वस्त्रादिभुज्यमानंनस्यात्तत्र मूल्येन तोषयेदेनमाधातारमितरोपि वृद्धिंलभते यतोन्यथा ददन्मूल्यमाधिस्तेनोभवेत् यज्जातीयमाधिंभुक्तवांस्तदपहारे योदण्डः सएव दाप्यस्तेनश्चौरः। अन्ये व्याचक्षन्ते बलाद्भुक्ते वृद्धिहानिंभुञ्जीत तन्मूल्यतएव वा यदणि-

कस्य मूल्यंमूल्यहिरण्यंयत्रभुञ्जानउच्यते मा मे बन्धंविजानीष्वमा भुङ्क्ष्वकतिपयैरहोभिर्मोक्षयामि तथाप्युच्यमानोभुङ्क्ए-वंसोस्य विषयः ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः** । शयनादिषु भुज्यमानेष्वव्यविनाशिषु बन्धकदात्रा यदि भोगनिषेधः कृतस्तदा नत-द्भोक्तव्यं भोगे वृद्धित्यागः । यदातु वृद्धिरतिभूयसी तदा वृद्धिंगृह्णीयात् । किंतु मूल्येन तोषयेत् । यावता तावद्भो-गसिद्धिस्तद्देयम् ॥ १४४ ॥

( ३ ) **कुल्लूकः** । गोप्याधिविषयंवचनमिदंवस्त्रालङ्कारादिर्गोप्याधिर्बलान्न भोक्तव्यः भुञ्जानोवृद्धिमुत्सृजेत्याङ्मूल्ये-नात्रैनंतोषयेत् । यद्वा भोगेनासारतामाधौ नीते सारावस्थाधिमूल्यदानेन स्वामिनंतोषयेत् अन्यथा बन्धकचौरः स्या-त् ॥ १४४ ॥

( ४ ) **राघवानन्दः** । वस्त्रालंकारादेराधौ विशेषमाह [नभोक्तव्यइति] । नभोक्तव्यस्त्वयाधिरितिनिषेधे कृते बलाद्भु-ञ्जानःउत्सृजेन्न गृण्हीयात् । प्रत्युत मूल्येन भोगेनासारतांगते तन्मूल्येन एनं पूर्वस्वामिनम् । अन्यथा तन्मूल्यस्यादाने आधिस्तेनः उत्तमर्णोपि गोप्यबन्धविषयः ॥ १४४ ॥

( ५ ) **नन्दनः** । भुञ्जानएनमधमर्णमूल्येन भुक्तेन फलेन तोषयेत् भुक्तंफलमधमर्णाय दद्यादित्यर्थः । अयथा यदि न तोषयेदाधिः स्तेनोभवेत् आधिश्चोरःस्यात् ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । बलादाधिर्न भोक्तव्यः । भुञ्जानःसन्वृद्धिमुत्सृजेत् । भोगेनाधौ नष्टे व्यवहाराक्षमेएनंमूल्येन तोषयेत् । अन्यथा आधिस्तेनः चौरः भवेत् ॥ १४४ ॥

**आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ॥ अवहार्यौभवेतां तौ दीर्घकालमवस्थितौ ॥ १४५ ॥**

( १ ) **मेधातिथिः** । आधिरुक्तार्थः प्रीत्या भुज्यमानः उपनिधिस्तु शास्त्रान्तरवदन्तर्हितोव्याप्तः तौ चिरकालंन स्थाप्यौ किंतर्हि प्राप्ते काले तौ मोक्षणीयौ । आधिमोक्षणकालोद्विगुणीभूतंधनंतस्यातिक्रमस्तस्मिन्नपि कालेऽमोक्षः उप-निधिरपि यावता कालेन नास्यावसरोभवति मदीयमेवैतद्भोक्ताहमिति समत्याहारकालः ततोधिकः कालः कालात्यय-स्तन्नार्हतः सन कर्तव्यइत्यर्थः । हेतुमाह अवहार्यौभवेतान्ताविति अतोपि दीर्घकालमवस्थितावप्रत्याह्रीयमाणौ व्यव-हार्याविति स्थितंतस्माद्द्विगुणीभूतधनेऽधिमोक्षणे प्रयतितव्यं सुहृदुपदेशोयंनत्वेवाधाविति भूयसापि कालेनापहारः यतो-वक्ष्यति आधिसीमाबालधनमिति अतस्तस्यैवायमनुवादः । अन्येत्वाधिविषयमुपदेशमिच्छन्ति योद्वेषेण द्विगुणीभूते धने कालंक्षपति तत्रिलाभंधनंनाधिकंवर्द्धते । नचास्याधुनाऽन्यत्राधानविक्रयौस्तइह वृद्धिमयंमालभतामित्यनेन मात्सर्येण तत्रेदमुच्यतेऽवहार्यौभवेतान्ताविति अनया बुध्याऽमोक्षयतः स्वाम्यमस्य निवर्तते यस्तु कथंचिदसति धने न मोक्षयति तस्य निसर्गविक्रयौ न स्तइति अयत्रापरोर्थोमुखेनोपेक्षयति परहस्तगतया शङ्कयोच्यतेऽवहार्यौभवेतामिति ॥ १४५ ॥

( २ ) **सर्वज्ञनारायणः** । आधिग्रहणानन्तरमल्पमूल्यापत्तौ तत्पूरकतया यत्नेनसह स्थाप्यते सउपनिधिः । का-लात्ययं कालातिक्रमं नाशम् । अवहार्यौ स्वामिना आनेतव्यौ ॥ १४५ ॥

( ३ ) **कुल्लूकः** । आधिर्बन्धकःउपनिधीयतइत्युपनिधिः प्रीत्याभोगार्थमर्पितंद्रव्यं नारदस्मृतिलक्षितौ च निक्षेपो-पनिधी तावेवात्रोपनिधिशब्देन गृह्येते । एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः यदैव स्वामि-ना प्रार्थितौ तदैव तस्यावहार्यौ समर्पणीयावित्यर्थः ॥ १४५ ॥

( ४ ) **राघवानन्दः** । आधिप्रसंगेनउपनिधेःकालात्ययेऽपि दानविक्रयौ नस्तइत्याह आधिरिति । आधिः बन्धकत्वेन

दत्तः उपनिधिः प्रीत्या भोगार्थमुपनीयमानोहारकुण्डलपात्रादिः कालेन चिरकालेनापि अत्ययं विनाशं धनिकान्नार्हतः किंच। अवहार्यौ समर्पणीयौ। स्वामिप्रार्थनेसति सुदीर्घकालेपि उपनिधिरिवाधिरपि न नश्यतीति वार्थः। नत्वेवाधावित्यत्रात्ययाभावस्योक्तत्वात् ॥ १४५ ॥

( ५ ) **नन्दनः**। आधिःप्रसिद्धः स्वामिनास्वीकर्त्रपेक्षामात्रेण भोगमनुज्ञाय निहितोर्थः उपनिधिः। तौ परिभाषिते काले प्राप्तव्यौ न कालात्ययमर्हतः। कालोतीतश्चेत्तावपहार्य्यौ अपहारार्हौ। दीर्घकालावस्थानात्परिग्रहीत्रा भुञ्जानेन ममेदमित्यपहर्त्तुंसुशकावित्यर्थः ॥ १४५ ॥

( ६ ) **रामचन्द्रः**। आधिश्च उपनिधिश्च उभौ कालात्ययं चिरंकालं न नाशनं अर्हतः। तौ आध्युपनिधी दीर्घकालस्थितौ अवहार्यौ प्रयत्नेननेतव्यौ भवेताम् ॥ असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते। तंजानीयादुपनिधिंनिक्षेपं गणितंविदुः ॥ १४५ ॥

**संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ॥ धेनुरुष्ट्रोवहन्नश्वोयश्च दम्यःप्रयुज्यते ॥ १४६ ॥**

( १ ) **मेधातिथिः**। प्रीतिरेवसंप्रीतिः तया हेतुभूतयोपभुज्यन्तेबान्धवादयस्ते न नश्यन्ति पूर्वस्वामिसंबन्धहान्याभोक्तुः सत्वापत्तिर्नाशः बान्धवादीनांप्रीत्या भुज्यमानानांन भवति । ननु च सर्वस्यैवोपनिधिर्भोगेनापहारोनास्ति वक्ष्यति निक्षेपोपनिधिश्चयइति कोविशेषोबन्धादीनांउच्यते यत्र दशवर्षौभोगोनच स्वरूपनाशस्तत्र यत्किंचिदिति सामान्यवचनेन प्राप्तेऽपहारे उपनिधेः प्रतिषेधः बन्धादीनांतूपनिधित्वमेव नास्त्यतः प्रतिषेधस्य नायंविषयइति स्यादाशङ्काधाननिमित्तोहि धेनुशब्दोयदि परसंवत्सरे धेनुः स्यात् परतउपसर्यायदि गर्भमादध्याद्धेनुत्वमापद्येत तदा जनयेदाशङ्कामस्यैवेयंन देवदत्तस्य यतः प्रष्ठौहीनभोग्या प्रीतिसंभोग्यश्चोपनिधिर्येन स्वकैर्भोग्यंपरिपाल्य पुनर्भुज्यमानंदृष्टंन पुनरुपनिधेरेतद्रूपंभोग्योह्युपनिधिरसद्भावाद्भोग्यस्य च कीदृशमुणमुपनिधित्वं उपनिधेश्चासौ प्रतिषेधः तस्मादुपनिधिरूपातिक्रमादसति तस्मिन्प्रतिषेधयत्नान्तरमुक्तम्। उष्ट्रादीनामपि दशवर्षाणि भुज्यमानामवस्थान्तरापत्तिः अतस्तत्रापि नोपनिधित्वम्। वहन्निति केचिदश्वविशेषणंमन्यन्ते । वृषस्यनायंविधिः अपरे तु गर्दभाश्वतरार्थंमन्यन्ते । पुनरवसरोस्ति देहि मे वस्त्रंविनाशितंत्वया तत्समेन मूल्येन संसाधयति ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः**। एते दशवर्षोर्ध्वमपि न नश्यन्ति। धेनुर्दुह्यमाना गौः। वहन्नश्वोनत्ववहन्। दम्योदमनीयोबलीवर्दोयःस्वयंदान्तःकृत्वा प्रयुज्यते हले ॥ १४६ ॥

( ३ ) **कुल्लूकः**। यत्किंचिद्दशवर्षाणीत्यनन्तरंभोगेन स्वत्वहानिंवक्ष्यति तदपवादार्थमिदम्। दृश्यमानागौरुष्ट्रोश्वश्चवहन् दमनार्थंच प्रयुक्तोबलीवर्दादिः एते प्रीत्याऽन्ये नतु भुज्यमानाः कदाचिदपि स्वामिनोन नश्यन्ति प्रदर्शनार्थमिदंप्रीत्योपभुज्यमानंन नश्यतीति विवक्षितं सामान्योपक्रमंचेदंविशेषाभिधानमिति नपुंसकलिङ्गता ॥ १४६ ॥

( ४ ) **राघवानन्दः** । यत्किंचिद्दशवर्षाणीतिभोगेनवक्ष्यमाणस्वत्वहानेर्बाधकमाह संप्रीत्येति। न नश्यन्ति स्वामिनः सत्त्वे दशवर्षाभ्यन्तरेऽकृतेपि निषेधे भुञ्जानस्यापि स्वत्वंन जायतेऽतःस्वामिप्रार्थनायांदातव्याधेन्वादयश्चत्वारः ॥ चन्द्रे कलङ्कःसुजने दरिद्रतेतिवन्ननश्यन्तीत्यन्वयः। दुग्धार्थंधेनुर्वाहनार्थमुष्ट्रोश्वश्च दमनार्थमन्यद्बलीवर्दादि ॥ १४६ ॥

( ५ ) **नन्दनः**। या धेनुर्दुह्यमाना गौर्वहन्नुष्ट्रोश्वोदम्योबलीवर्दः प्रयुज्यते तानिसर्वाण्याहितानि उपहितानि वा समवृत्त्या भुज्यमानानि चिरकालावस्थानेऽपि नश्यन्ति परिग्रहीत्रा ममेदमिति नापहर्त्तुंशक्यानीत्यर्थः ॥ १४६ ॥

( ६ ) **रामचन्द्रः** । संप्रीत्या अनुज्ञया धेन्वादीनि भुज्यमानानि कदाचन ॥ १४६ ॥

**यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ॥ भुज्यमानंपरैस्तूष्णींन सतल्लब्धुमर्हति ॥ १४७ ॥**

( १ ) **मेधातिथिः** । यत्किंचिद्भुज्यमानमित्यवस्थितेन संबन्धोधनीति सन्निधानात्सामान्यनिर्देशेऽपि पुमानत्र धनोपेक्षणे प्रतीयते । यत्किंचिदितिदासीदासासारभाण्डादि सर्वंग्राहयति नहि तल्लोकेऽत्यन्तंधनमिति प्रसिद्धं गोभूहिरण्याद्येवमहार्घधनमिति प्रसिद्धतरंतेनायमत्र वाक्यार्थः यत्किंचिद्द्रव्यंपरेण भुज्यमानंधनी धनस्वामि दशवर्षाणि यावत्प्रेक्षते न किंचिद्वक्ति नराजनि व्यवहरति नकुलसमक्षंभोक्तारंवदति मदीयमेतत्किमिति त्वया स्वयंभुज्यतइति सदशभ्योवर्षेभ्यउत्तरकालंन तल्लब्धुंस्वीकर्तुमर्हति निवर्ततेऽस्य स्वमिति यावत् । प्रेक्षणेन ज्ञेयतामात्रमुच्यते न प्रत्यक्षतैव संनिधाविति वक्ष्यामः न ज्ञातिसंबन्धिभिः तथाच स्मृत्यन्तरंज्ञातिसंबन्धिभिर्विनेति ॥ संबन्धिबान्धवैश्चैव भुक्तंयज्ज्ञातिभिस्तथा । नतद्भोगोनिवर्तेत भोगमन्यत्र कल्पयेत् तदयुक्तं । अव्यवस्थवंसति स्यात् केज्ञातयः के वा संबन्धिनइति संबन्धमात्रग्रहणे न किंचिद्यावर्त्यंतस्माद्येनान्यदीयंभुज्यते सएवंभवतिकिन्तु तथासति परशब्दोनुवादमात्रमनर्थः कस्यापि न परव्यपदेशः सनिरस्यते यथाँभार्या पितापुत्राविति तत्रह्यात्मन्यपि व्यपदेशोस्त्यर्द्धोहवाएषआत्मनोयज्जायाऽऽत्मावै पुत्रनामासीति । तेनदम्पत्योः पितृपुत्रयोर्नभोगाभोगौ कारणं तेषामपि विभक्तधनानांभोगकाले प्राप्तेऽभोगाबाधकएव भार्यायाअपि स्त्रीधने भर्तृसकाशाद्गृहीते बन्धेन पत्युर्भोगे नासिद्धिः साह्यात्यन्तपरवती नोभयोर्विभागोस्ति स्त्रीधनमपि तेनैव तस्याः परिपालनीयं राज्ञास्त्रीश्रोत्रियद्रव्यादन्यत्रेति चपठ्यते एवमनेन स्वामिनउपेक्षमाणस्य स्वाम्यहानिरुक्ता कस्य तर्हि तत्संभवतीत्येवमर्थमुत्तरश्लोकः ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । द्रव्यान्तरेष्वाह यत्किंचिदिति ॥ १४७ ॥

( ३ ) **कुल्लूकः** । यत्किंचिद्धनजातंसमक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दशवर्षाणि भुज्यमानंस्वामी प्रेक्षतेमाभुङ्क्ष्वेत्यादिप्रतिषेधोक्तिंन रचयति नासौ तल्लब्धुंयोग्योभवति तस्य तत्र स्वाम्यंनिवर्ततइति भावः ॥ १४७ ॥

( ४ ) **राघवानन्दः** । भूम्यतिरिक्तंयत्किंचित्कालनियमार्थंदशवर्षाणि भुज्यमानंकदापि माभुंक्ष्वेति ननिषिद्धं सधनी स्वामी नाप्नुयादित्यन्वयः । अयमर्थः । प्रतिषेधभुक्त्योः समानत्वेपि स्वत्वानुपादकत्वम् ॥ अनागमंतु योभुङ्क्ते बहून्यब्दशतान्यपि । चोरदण्डेन तंपापंदण्डयेत्पृथिवीपतिरितिवचनात् ॥ आगमेन प्रमाणेन भोगीयाति विशुद्धतामितिकात्यायनोक्तेश्च प्रतिग्रहादि विनास्वत्वंनास्त्येव किंतु पूर्वभुक्तभूम्यादिफलं बहुमूल्यमपिपूर्वस्वामिना न प्राप्यते भूम्यादि प्राप्यते । एवंच वक्ष्यमाणंभग्नंतद्व्यवहारेणेति भग्नंनष्टंनतद्धनं किंतु तदुत्पन्नंबहुसस्यादि नष्टमित्यर्थः ॥ १४७ ॥

( ५ ) **नन्दनः** । आहितमुपहितमितियावत् । किंचिद्वस्तुदशवर्षाणिपरैर्गृहीतृभिर्भुज्यमानंतूष्णीमासीनोधनी आधातोपानिधाता वा यः प्रेक्षते न तल्लब्धुमर्हति ॥ १४७ ॥

**अजडश्चेदपोगण्डोविषये चास्य भुज्यते ॥ भग्नंतद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८ ॥**

( १ ) **मेधातिथिः** । न सतल्लब्धुमर्हतीत्यस्य शेषः अजडश्चेदपोगण्डेयदि जडः अप्रतिपत्तिमान् पोगण्डोबालः प्राक्षोडशाद्बालः पोगण्डइत्युच्यते एतच्च स्वधनसंरक्षणासामर्थ्यकारणानामन्येषामप्युपलक्षणार्थं मद्यद्यूतविशक्तादीर्घरोगगृहीततातपः स्वाध्यायैकपरत्वंव्यवहारेष्वनैपुण्यंवागिन्द्रियाभावोबाधिर्यंयस्यैतेऽसामर्थ्यहेतवः सन्ति नतदीयेधनेभोक्तु-

---

* यथा=न्यस्य ( आ आ )

बहुतरेणापि कालेन स्वत्वमापद्यते विषये चास्य भुज्यते अस्येति धनिनः प्रत्यवमर्शः विषयः काश्मीराणांकश्मीरपञ्चालानां- पञ्चालायदि भोक्ता च स्वामी चैकस्मिन्नेव देशेवसेत्तथापि शक्तिविहीनस्यायंव्यवहारः। अत्रापि व्याख्याने प्रपञ्चएवायं अजडापौगण्डग्रहणस्य प्रदर्शनव्याख्यानत्वात् तेन यस्य जानतः प्रज्ञानोपमंभाव्यते तदीयंधनंदशवर्षाणि भुञ्जानोभोक्के- वार्हति तस्य तत्स्वमित्यवगन्तव्यम्। ननु च न भोगात्स्वत्वंयुक्तंसत्वे सति भोगोयुक्तः भोगाद्धिस्वत्वेऽव्यवस्था स्यात्। यश्चायमवधिर्दशवर्षाणीति सस्मृत्यन्तरेण न सर्वस्मिन्धनइष्यते किंतर्हि॥ पश्यतोऽब्रुवतोभूमेर्हानिर्विंशतिवार्षिकीति। अन्ये तु विंशतिवार्षिकेणापि भोगेन स्वाम्यमनुमन्यन्ते एवंह्याहुः॥ अनागमंचयोभुङ्क्तेबहून्यब्दशतान्यपि। तथा॥ संभोगोयत्र दृश्य- तेन दृश्येतागमः क्वचित्। आगमः कारणंतत्र न संभोगइति स्थितिः॥ त्रिपुरुषभुक्तिवादिनस्तावदेवंपठन्ति॥ यद्विनागममत्य- न्तंभुक्तंपूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्तुंक्रमात्त्रिपुरुषागतम्॥ अस्यायमर्थः। आगमोदानाद्यसति तस्मिन्यद्भुक्तंपितृ- पितामहप्रपितामहैस्तच्चतुर्थस्य सिध्यति न तु विंशत्या वर्षैस्तत्रान्यत्रोक्तं॥ आदौतु कारणंदानंमध्ये भुक्तिस्तु सागमा। अन्तेतुभुक्तिरेवैका प्रमाणंस्थावरे भवेत्॥ तृतीयस्य भोगात्सिद्धिर्न प्रथमद्वितीययोः पितृपितामहयोरस्यापि न विंशति- वर्षैर्भोगप्रमाणं अन्येत्वागमरहितस्य वार्षशतिकस्यापि भोग्यस्याप्रामाण्यमनुमन्यन्ते तथाचाहुः॥ अनागमंतुयोभुङ्क्ते बहू- न्यब्दशतान्यपि। चौरदण्डेन तंपापंदण्डयेत्पृथिवीपतिः॥ भोगकेवलतांयस्तु कीर्तयेन्नागमंक्वचित्। आगमः कारणंतत्र न संभोगइति स्थितिः॥ यातु बहून्यब्दशतानीति तदा भर्तृविषयमात्मीयमेव भोगम्। चिरकालत्वे हेतुमाह। तस्य पितृ- पितामहभोगेन विना न सिद्ध्यतीत्यर्थः। कथंपुनरेकस्यानेकादशतोभोगः पुरुषस्य नैषदोषः चिरकालप्रतिपादनपरत्वव- चनाः शतंसहस्रमित्यादयः शब्दायथा शतायुर्वैपुरुषः शतवीर्यः शतेन्द्रियइति। एतदुक्तंभवति विंशतिवार्षिकाद्भोगादधि- धिकादपि न प्रथमभोक्तुर्भोगात्स्वत्वसिद्धिरर्थात्पुत्रस्यापि न सिद्ध्यतीति न यथा श्रुतमेव। नहि बहुष्वब्दशतेष्वागमस्मर- णंसंभवति ततश्च चिरन्तनदेवायतनब्राह्मणमठग्रामाराजभिरपह्रियेरन् लेख्यशासनमपि राजाधिकृतलेखकलिखितमिति चिरन्तनेषु नैव प्रत्यभिज्ञायेत कूटशासनमपि संभाव्येत तस्माच्चिरन्तनोभोगः स्वत्वस्य दानाद्यारामसंभावनया ज्ञापकः अतएव भुक्तिः प्रमाणमध्ये पठिता॥ लिखितंसाक्षिणोभुक्तिः प्रमाणंत्रिविधंस्मृतमिति। ननु स्वत्वकारणमध्ये सप्तवित्तागमाइ- ति श्रुतशौर्यतपःकन्ये त्यादौ च। अथवा यत्र बलादिभोगकारणंसंभाव्यते तद्विषयमेतत्। अनागममित्यादि त्वत्रैव प्रक- रणे पठितम्॥ याचितान्वाहितंन्यस्तंबलावष्टब्धयाचितम्। अप्रत्यक्षंचयद्भुक्तंषडेतान्यागमंविनेति॥ ननुचाधिःसीमेत्यनेनै- वायमर्थः सिद्धउक्तस्य कालस्यत्रिपुरुषंयावद्भुङ्क्तेसएवार्थः। अयंतु ततउत्तरकालमपि निवृत्यर्थमारभते तथा च बहून्य- ब्दशतानीत्यत्र वचनमन्वाहितंयत्प्रकटमन्यथा प्रदर्श्यान्तर्हितमन्यदवस्थाप्यते बन्धोपात्तंरात्रौ सन्धिभेदच्छलादिना बलावष्टब्धत्वंप्रसह्येति विशेषः। शिष्टंप्रसिद्धम्। यदि त्रिपुरुषाभुक्तिः प्रमाणंकस्तर्हि॥ यदुक्तंपश्यतोब्रुवतोभूमेर्हानिर्विंश- तिवार्षिकीत्यस्यार्थः केचिदाहुः कियन्तंकालंभुञ्जानस्य सति लेख्यदोषादौ सक्ताभियुक्तादिकृतत्वं क्रमाक्षरविलेपाद- सत्यनयाभ्यामधमर्णउच्यते। संदिग्धरूपमपि लेख्यमियता कालेन निश्चीयते। अन्येत्वाहुर्यत्रैव तामेव भूमिरेकस्य बन्धायार्पयति तामेव चापरस्यैकस्याऽऽद्यंप्रमाणपरस्य पाश्चात्यंतत्र सत्यपि प्रामाण्यस्याद्यत्वे पाश्चात्योर्विंशतिवार्षिको- भोगोबलवानेतत्तत्वमुक्तं येनैव स्वीकृतोबन्धस्तथैवसः आधिस्वीकरणासिद्धिरिति वचनात् स्वीकारश्च भूमेर्भोगाभिला- षेव तेनेदृशे विषये स्वल्पेनापि भोगमिति कालेन बन्धसिद्धिः। एतदेवाभिप्रेत्योक्तं॥ विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु॥ विशेषतः स्थावराणांयन्न भुक्तंन तत्स्थिरमिति। विशेषग्रहणंगवाश्वादावभुज्यमानेऽपि यतस्तेनावश्यंभो- ग्यास्तथाहि न विज्ञोगृह्णाति कीदृशोस्याअतोभोगः भूमिस्तु सर्वदा फलमेति भोगलाभमन्तरेण न बन्धत्वसिद्धिः।

तत्रापि कथंचिदुपेक्ष्यमाणस्य तु यच्छतः प्रथमभोगकालएव यदि द्वितीयेनाऽऽधिग्राहकेण संनिकर्षादिना स्वीकृतः स्यादितरेण वाद्य प्रमाणवतदिशविप्रकर्षात्कार्यव्यासङ्गान्नस्वीकृतस्तदाविचार्यते नेयतातदसिद्धिः । यदा तु गृहीताधिरेव समनन्तरंराज्ञा प्रव्राजितोमहान्तंव्याधिमाससाद नवास्यान्योर्थरक्षाद्यधिकृतः कश्चिदस्ति सचिरेणाप्यागतः सिद्धावपि निरुपधिप्रमाणकाले लभतएव स्वीकृतमप्यन्येन । अन्ये तु भ्रातॄणांन्यूनाधिकविभक्तानांपुनर्विभागः समीकरणार्थउक्तः सविंशतिवर्षेभ्यऊर्ध्वंनास्तीत्येवमर्थमिदमाहुः । एतावन्मात्रफलत्वे तत्रैवाभिधानमुचितं सामान्याभिधानंतु प्रकरणोत्कर्षेणान्यविषयतामपि ज्ञापयति । अपरे तु खिलीभूता भूमिर्येन क्षेत्री कृता तत्र भूमिस्थानोपभोगउक्तः सचेदेतावन्ति वर्षाणि निगृहीतस्तथा सूत्रक्षेत्रयन्त्रैश्चस्वामीभूमित्वेन सच विषयइत्येवमाहुः । इहभवन्तस्त्वाहुर्यौ समानदेशौ समानसामर्थ्यौ समानस्वभावौ समानधनौ तत्प्रयोजनावपरस्परसंबन्धिनौ तयोरन्यतरस्येतरेण भुज्यमानमियन्तमवधिसमक्षमुपेक्षमाणस्यास्यैव स्थावरेषु स्वाम्यं किन्तु त्रिपुरुषभुक्तिविरोधात् । सर्वेणसर्वविरुद्धेष्वेते स्मातीते न किमपि कल्पनमर्हतोयेनास्ति चस्वाम्यं नास्तिचेत् किंचिद्युज्यते ततएव व्यवस्था युक्ता । यद्यपि सत्वागमकारणानि बहूनि सन्ति दानविक्रयबन्धकारणादीनि तथाप्यनुपलभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविषये बन्धरूपताभ्युपगन्तुं युक्ता चञ्चलं भोग्यंच स्वत्वंवस्त्वपचये तत्प्रत्याहन्तुंलभ्यते ततश्च त्रिपुरुषाभुक्तिः सर्वस्य स्वमापादयति दानविक्रयसंभावना यावत्येव सा वार्षिकी भविष्यति विंशतिवार्षिकेषु भोगे न किंचिदनुपपन्ना । यत्रोभावप्यागममन्तरेण भोगमात्रबलात्प्रवृत्तौ तत्र पूर्वोभोगश्चिरन्तनोपि विंशतिवर्षभोग्येन सांप्रतिकेन निरुपाधिना बाध्यते । दण्डपूर्विकयात्रागतइयत्कालोभोगः त्रिपुरुषागतायाभुक्तेर्बाधकइत्युक्तंभवति । भग्नंतद्व्यवहारेणेति व्यवहारग्रहणंधर्मनिवृत्त्यर्थं तेन यदि कथंचिज्जानीते तदा जीयेत तदापि त्वनेनोपधिभोगज्ञापने प्रमाणंनास्ति तेन व्यवहरतोजीयन्ते तद्धर्मोनास्ति तादृशेन भोगेनापिहृतइति तिष्ठत्वेतत् ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रैव विशेषमाह अजडइति । अजडोविकलेन्द्रियः । अपौगण्डोबालः । विषयेतस्य पुनः पुनर्ज्ञानविषये । भग्नं विनष्टं पूर्वस्वामिनः । अन्यथातु दशवर्षोर्ध्वमपिन नश्यतीत्यर्थः । व्यवहारेणेति वचनाद्धर्मतः पूर्वस्वामिनएवेति केचित् ॥ १४८ ॥

( ३ ) **कुल्लूकः** । जडोबुद्धिविकलः । न्यूनषोडशवर्षः पोगण्डः । तथा च नारदः बालआषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः ॥ सधनस्वामी यदि जडः पोगण्डश्च न भवति तदीयदर्शनविषये चतद्धनंभुज्यते तदा स्वामिनोव्यवहारेण नष्टंततोभोक्तुरेव तद्धनंभवति ॥ १४८ ॥

( ४ ) **राघवानन्दः** । जडादेस्तदपि सस्यादिकं न नश्यतीत्याह अजडइति । जडोबुद्धिविकलस्तेन बालोपि गृहीतः सच बालआषोडशाद्वर्षात्पौगण्डश्चापि शब्दितइतिनारदोक्तलक्षणभिन्नोऽपौगण्डः । धनी प्रेक्षतइत्यन्वयः । अस्येदशधनस्वामिनोविषये दर्शनविषये । भग्नंतद्व्यवहारेण धनस्वामिनो व्यवहारेण प्रनष्टम् । तथाह याज्ञवल्क्यः ॥ पश्यतोऽब्रुवतोभूमेर्हानिर्विंशतिवार्षिकी ॥ परेण भुज्यमानायाधनस्य दशवार्षिकीति ॥ १४८ ॥

( ५ ) **नन्दनः** । उक्तेर्थे विशेषमाह अजडश्चेदिति । आधातोपनीता ऽजडः समर्थः । अपोगण्डोऽबालश्चेत् । अस्यायातुरुपनिधातुर्विषये निवारणयोग्ये देशे यद्भुज्यते तद्भुज्यमानंव्यवहारेण भग्नंपराजितंस्यात् । तस्माद्भोक्ता तद्धनमर्हति न तु स्वामी एतदुक्तंभवति । अजडादिना सन्निधौ भोगात्सत्त्वहानिर्भवति नतु जडादीनामिति ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । अजडः स्पष्टवाक् बुद्धिविकलोनचेत् अपोगण्डः अपगतः पौगण्डोयस्यसः अपोगण्डः । पौ-

गण्डः दशमावधि । अस्यपूर्वस्वामिनः विषयेसमीपे भुज्यते तद्वस्तु व्यवहारेण भग्नं नष्टं भोक्तातद्धनमर्हति॥ १४८ ॥

आधिः सीमा बालधनंनिक्षेपोपनिधिः स्त्रियः ॥ राजस्वंश्रोत्रियस्वंच न भोगेन प्रणश्यति ॥१४९॥

[ यद्विनागममत्यन्तंभुक्तपूर्वैस्त्रिभिर्भवेत् ॥ नतच्छक्यमपाहर्तुंक्रमाधिपुरुषागतम् ॥ १ ॥ ][‡]

( १ ) **मेधातिथिः** । आधीयतइत्याधिर्बन्धकद्रव्यंगोभूहिरण्याद्युच्यते यच्चोत्तमर्णाद्धनमादीयतउपनिधिः शास्त्रान्तरेणान्तर्हितोन्यासउक्तः यदप्रदर्शितरूपंसचिन्हवस्त्रादिना पिहितंनिक्षिप्यते प्रीतिभोग्यन्तु युक्तमुपनिधिशब्दवाच्यंतस्य निक्षेपग्रहणेनैव गृहीतत्वात् । सीमा मर्यादा ग्रामादीनां बहुसाधारण्याद्धि तत्रोपेक्षा संभवति गृहादीनान्तु प्राकारपरिखादिरूपाद्वित्रिहस्तपरिमाणरूपा द्वयोः साधारणी याऽन्यतरे कथंचिदुपजीयमाना स्वल्पत्वाद्भोगस्य कश्चित्कियन्तंकालमुपेक्ष्य तत्रापि दानादिसत्वापगमहेतुंसंभावयतः अतस्तत्पुत्राः पौत्रावा रूढ्यां* चिन्हादिना प्रज्ञापितसीमत्वादाच्छिन्दन्त्येव । बालधनंदृष्टान्तार्थं पोगण्डशब्दस्य दर्शितत्वादित्युक्तम् । स्त्रियोदास्यः भार्यावा । नेतरस्याधनस्यापहारउक्तोधनस्य दशवार्षिकीति । ननु च नेह धनमस्ति यत्किंचिदिति वस्तुमात्रनिर्देशोयं नैवंधनीति संबन्धेन विषयतैव यत्किंचिदिति सामान्यशब्दस्य प्रतीयते कएवमाह स्त्रियोधनमिति इत्थंविनियोज्ये द्रव्ये धनशब्दोवर्तते । अथास्मादेव स्त्रीधनात्स्वत्वमात्रोपलक्षणंधनोपमानेन पुमांसोऽपि भोगेन दासाः स्वीक्रियन्तएव । राजस्वंदेशेश्वराराजानस्तेषांधनं तेहि महाधनत्वादुत्वत्वान्वयंधनमन्विच्छन्तोविरुतभेदादिभिर्निधनीक्रियन्ते तदूनापेक्षया श्रोत्रियधनाभियुक्तिः ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । सीमा चिन्हनिर्णीता । बालधनमिति पूर्वश्लोकव्यतिरेकः । स्त्रियोऽन्यपरिणीतादास्यश्च । आध्यादिकमबालधनमपि न नश्यतीत्येतदर्थंबालधनोक्तिः । प्रणश्यति भोक्तुः स्वं भवति ॥ १४९ ॥

( ३ ) **कुल्लूकः** । बन्धोग्रामादिमर्यादा बालधनंनिक्षेपः वासनस्थमनाख्याय समुद्रंयन्निधीयतइति नारदोक्तउपनिधिलक्षणः । दास्यादिस्त्रियोराजश्रोत्रियधनानि उक्तेन दशवर्षभोगेन न स्वामिनोनश्यन्ति न भोक्तुः स्वत्वंभजंते ॥ ॥ १४९ ॥

( ४ ) **राघवानन्दः** । उक्तार्थे प्रतिप्रसवमाह आधिरिति । आधिर्बन्धकत्वेन स्थापितः । आधिवन्निक्षेपादिर्ननश्यतित्यन्वयः । आधेरवहार्यस्योक्तत्वात् । सीमा चतुर्विधावक्ष्यमाणा । बालधनं राजरक्षितातिरिक्तम् । निक्षेपः प्रसिद्धः । उपनिधिरत्र समुद्रं यन्निधीयते तत् । स्त्रियोदास्यादयः । राजस्वं करशुल्कादि । श्रोत्रियस्वं धनभूम्यादिमात्रम् । एषूत्पन्नं वृद्धिसस्यापत्याद्यपि न नंक्ष्यतीतिभावः ॥ ४९ ॥

( ५ ) **नन्दनः** । अस्यापवादमाह आधिस्सीमेति । सीमाक्षेत्रादिः । बालोऽसमर्थः । निक्षेपोऋणार्थं परत्र निहितोर्थः । स्त्रियोदास्योन भोगेन प्रणश्यति भोगेनभोक्तृत्वंनभवतीत्यर्थः । आध्युपनिध्योः स्वामिना प्राप्तव्यकालात्प्राचीनभोगविषयोऽयमपवादोग्राह्यः । अन्यथा ॥ आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हत ॥ इत्यनेन विरोधप्रसङ्गः स्यादिति ॥ १४९ ॥

( ६ ) **रामचन्द्रः** । स्त्रियः दास्यः ॥ १४९ ॥

---

‡ ( ड )

* रूढ्या=गूढ ( आ आ )

**यः स्वामिनाऽननुज्ञातमाधिंभुङ्क्ते विचक्षणः॥ तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः॥१५०॥**

( १ ) **मेधातिथिः** । उक्तं ॥ न भोक्तव्यंबलादाधिंभुञ्जानोवृद्धिमुत्सृजेदिति सर्वस्य हि ग्रहणमुच्यते तत्र निषिद्धोभोगे बलादाधिंभुञ्जानोवृद्धिमुत्सृजेदिति सर्वंहारयत्येव वृद्धिमनभिहितप्रतिषेधनंतस्योपभुज्यमानोभोगेन चाधिर्नश्यति। रूपवर्णालंकारादावर्द्धवृद्धित्यागोऽनेन श्लोकेनोच्यते । यत्तु नवंमहार्घमलङ्करणवस्त्रादिपरिधीयमानंनासितंतत्र न केवलंवृद्धिहानिर्यावद्धनंननष्टंतत्परिपीड्य मूलतः प्रविशतीति महत्तरैर्व्याख्यातम्। यज्वना तु व्याख्यानंयत्र स्वामी व्यवहरति अध्यधीनश्च तत्राप्यधीनेन बन्धोदत्तः स्वामिना च दृष्टस्तत्र धारणकेन कस्मिंश्चिदवसरेऽप्यधीनः पृष्टः प्रयोजनंममानेन बन्धेनास्ति तत्रोपनिधिर्न्यायेन तेनानुज्ञातः कालान्तरे भुञ्जानंयदि स्वामी पश्यंस्तदनुज्ञातंबन्धंक्षपितवान् सतीदृशे विषयेऽर्द्धवृद्धित्यागः तदयुक्तं यतस्तुल्योव्यवहारः परस्परापेक्षः स्वामिभृत्ययोः तत्र तत्रान्यतरेणानुज्ञाते नायमनुज्ञातः प्रयुज्यते । अधर्मतः स्वामिशब्दस्यार्थैस्तत्वमीदृशि विषये भवति अन्यथा बन्धंयोददाती सोऽवश्यंस्वाम्येन अध्यधीनस्तु न स्वामी यद्येवंचौरस्तर्हि तस्मात्स्वामित्वाध्यारोपउपयोगे वाध्यधीने स्वाम्यनुज्ञाव्यवहाराद्ब्रह्मदत्तवदतः पूर्वएवार्थः । स्वामिग्रहणंपादपूरणार्थं । भुङ्क्तेऽविचक्षणइत्यकारः संहितया प्रश्लिष्टनिर्दिष्टोवेदितव्यः यस्याह्यस्ति बुद्धिर्वृद्धिर्मास्त्येवाधिकोलाभोवस्तुभोगइति सोविचक्षणः । नहि लोके शास्त्रवियोजनीया स्थितिः यदुभौ लाभश्च भोगश्च वृद्धिःस्यात्तेन सा वृद्धिर्भोक्तव्या निष्कृतिपरशुद्धिर्विनियमइति यावत् । अन्ये तु द्विगुणीभूतेऽप्यमोक्ष्यमाणे प्रतिषेधमिममिच्छन्ति तस्य हि स्वल्पोपराधइति वदन्तः प्रथमंतावदादावेव तैर्याज्ञवल्क्यवचनस्य विषयोदेयआधिः प्रणश्येदिति ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । अननुज्ञातं अनुज्ञांविना नतु बलात् । एतच्च वृद्धेरल्पत्वे बहुत्वे तद्भोगोचितमूल्यदानं प्रतिषिद्धाधिभोगे प्रागुक्तम् ॥ १५० ॥

( ३ ) **कुल्लूकः** । योवृद्ध्यादत्तंबन्धंस्वाम्यनुज्ञाव्यतिरेकेण मूर्खोनिह्नवेन भुङ्क्तेतेन तस्य भोगस्य संशुद्ध्यर्थमर्धवृद्धिर्मोक्तव्या बलभोगे नतु भोक्तव्ये बलादधिभुञ्जाने सति सर्ववद्धित्यागएवोक्तः ॥ १५० ॥

( ४ ) **राघवानन्दः** । अननुमत्याऽऽधिनिह्नवेन भुक्तवतोऽर्धवृद्धित्यागप्रायश्चित्तमाह यइति । तेनाविचक्षणेन नभोक्तव्योबलादाधिरित्यत्र निषेधमतिक्रम्य बलाद्भोजने सर्वावृद्धिस्त्याज्या अनिह्नवेअननुमत्याऽर्धमिति भेदः ॥ १५० ॥

( ५ ) **नन्दनः** । अविचक्षणः वृद्धिहानिमजानन् ॥ १५० ॥

**कुसीदवृद्धिर्द्वैगुण्यंनात्येति सकृदाहृता ॥ धान्येसदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ १५१ ॥**

( १ ) **मेधातिथिः** । लाभार्थोधनप्रयोगः कुशीदंतत्र वृद्धिः अथवा प्रयुज्यमानंप्रयोक्तृसंबन्धिधनमेव कुशीदम् । यदायंस्वल्पंदत्वाधिकंग्रहीष्यामीति धनंदीयते तत्कुशीदंतत्र वृद्धिः सा द्विगुणत्वंनातिक्रामति तावदुत्तमर्णेन वृत्थ्यर्थंधनंदत्तवता ऽधमर्णाद्ग्रहीतव्यंयावन्मूलधनंद्विगुणंप्रविष्टम् । ननुवृद्धेर्द्वैगुण्यंश्रूयते मूलेन सहत्रिगुणंप्राप्नोति नैवंगुणोऽवयवउच्यते सतावदवयविनमपेक्षते प्रकृतंच धनं अतः प्रयोगविषयस्य धनस्यानेन प्रकारेण द्वैगुण्यमुक्तंभवति तथा च स्मृत्यन्तरं चिरस्थाने द्वैगुण्यप्रयोगस्य मोच्यआधिः सतदुत्पन्ने प्रविष्टेद्विगुणेधनइति । वृद्धिश्चानेकरूपा कार्षापणेषु प्रयुक्तेषु कार्षापणएव वर्द्धते क्वचित्सन्ततिः स्त्रीपशूनांवेति संततिः क्वचिदाधिभोगः गोभूम्यादेः तत्रेदंद्वैगुण्यंसरूपवृद्धिविषयंकेचिदाहुः । तत्र हिमुखंवृद्धेर्द्वैगुण्यंप्रतीयते संततौ नविज्ञायते किंसङ्ख्यास्यद्वैगुण्यमुतपरिमाणेनोन्मानतावेयमतोवेत्यादिनिश्चयेपशूनांमूल्याद्धिमाहर्घत्वंहस्त्यश्वादिषु क्रयविक्रयादौ दृश्यतएव महाप्रमाणाहि महार्घाभवन्ति ।

ननु च संततौ सारूप्यमस्त्येव गोःसंततीर्गौरेव तत्र भेदोपन्यासोन युक्तोवृद्धिसरूपासंततिश्चेति उच्यते नैकजातीयत्व-मात्रेण सारूप्यंभवति किन्तुवयः परिमाणादिसाम्येन अतोयुक्तोभेदोपन्यासः। भोगलाभेऽपि कुतोद्वैगुण्यप्रतीतिरूप-काणिजनयतु गावः प्रयुज्यन्ते। गोभूम्यादिपयोयवसादयोयथा संभवंभुज्यन्ते तत्र कीदृशंद्वैगुण्यं समाचारश्च क्वचि-द्दृश्यते वर्षशतानि भूमिरामूलहिरण्यादानाद्भुज्यते। पठति च याज्ञवल्क्यः ॥ आधिश्च भुज्यते तावद्यावत्तन्न प्रदीयतइति। अत्रोच्यते वृद्धिमात्रेश्रूयमाणे द्वैगुण्यंकथंविशेषेवस्थाप्यते नहि स्तुत्या सामान्यप्रतिपत्तिर्भवन्तीविना प्रमाणेन वि-शेषेऽवस्थातुमर्हति। यत्तु संततावनुपपन्नंद्वैगुण्यमित्यवगमेयत्नः क्रियतां मूलमर्षेण परिनिश्चतवता वृद्धिस्तत्सामा-न्या यतएव तज्जातानांभवति भूमिभोगेऽपि यवसगोधूमादौ तत्पच्यमानस्यार्थतः शक्यतएव समत्वंनिश्चेतुं उपकारवच-नोपि गुणब्दोस्ति कएवंसति समगुणोभवति कउपकारकोभवतीति गम्यते अनेन यावन्मूल्यंगोधान्यविनिमया-दुत्पद्यते तावदेव चेत्ततउत्पन्ना वृद्धिस्तदा भवति समगुणत्वे परिमाणादिसाम्याभावेऽपि यस्तु क्वचित्समाचारोभवतै-व परिहृतः क्वचिद्ग्रहणंप्रयुञ्जाने समाचारभ्रंशसंभवे स्मृतयोनियामिकाअर्थवत्यः अक्षीणि मे दर्शनीयानि पादामे सुकुमारतराइति दृष्टवियोगत्वाद्बहुवचनमिति चारभ्यते असति विप्रयोगदर्शने प्रत्याख्यायते उपसर्गपूर्वापर्यप्रयोगसि-द्ध्यर्थमुक्तं नहि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्तइति वचनमपि ॥ आधिस्तु भुज्यते तावद्यावतन्नप्रदीयते ॥ यावद्दानात्तद्विगुणमप्रविष्टमित्यपि शक्यते नेतुंस्मृत्यन्तरैकवाक्यत्वाच्चैतदेव युक्तमध्यवसातुं उपपादितंचैतन्निपुणतो-न्यत्र। सकृदाहिता सकृदित्यनेन व्यवस्थापितोङ्गीकृतः पुनःपुनः प्रयोगइति यावत् आधानंस्थापनमुच्यते वचनव्य-वस्थया चनिरूपणंस्थापनमेव पुनः प्रयोगस्य द्विगुणीभूतेधने आदीयमाने भवति यदाद्विगुणोहि वृद्ध्यर्थउत्तमर्णोधमर्णश्च तदीयेन धनेन महत्कार्यंकरिष्यन्करणपरिवृत्तिंकरोतीति या प्राक्तनीवृद्धिरियंवाद्यप्रभृतिवर्धतइति तदाद्विगुणभूतमपि पु-नर्वर्धतएव पुरुषान्तरसंचारेण वा यदि द्विगुणीभूतधनिकस्योपयुज्यते तदाऽधमर्णउच्यमानोन्यपुरुषंददतमर्पयति ए-षतइयद्भिरहोभिर्दास्यतीति तत्र स्वहस्तंदीयमानंपुनर्वर्द्धते नचायंदानंप्रति प्रति प्रतिभूः किन्तु निक्षेप्ता दातैव एतत्तु ऋजुना पुरुषान्तरमसंक्रान्तमिति व्याख्यातं अथवा प्रागपि द्वैगुण्याद्यदा बन्धमन्यस्मै प्रत्यर्पयति दीनारेषु सलाभेषु द्वित्वेतस्याबन्धस्य एषतु धर्माक्षकोबन्धस्य प्रागवृद्धौस्थितायां तस्मादह्नः प्रभृति पुनर्द्वैगुण्यमाप्नो- ति यदा तदीयंबन्धकंतदनुज्ञयोत्तमर्णेनान्यत्राधाय स्वधनंगृह्णते तदा वर्धतएषपुरुषान्तरसंचारः। उभयत्वाद्विगुणीभूते प्रयोक्ता-धमर्णकेन प्रकारेणान्यस्माद्ग्रहणमनुज्ञाप्यते यदि वास्मादन्यद्गृह्णते ग्रहीता देशान्तरंगमिष्यन् कार्यान्तरेण चान्यत्र सं-चारयति ऋजुस्तु तस्मादेवाधमर्णादनवीकृते प्रयोगे द्विगुणाधिकांवृद्धिंनेच्छति अतआह पुरुषान्तरमसक्रान्तेपुनः क्रिया प्रयोजनंच वक्ष्यामः। ये तु व्याचक्षते या वृद्धिरुपचिता सांवत्सरी युगपत्सर्वे वा नीयन्ते तत्रायंविधिः या पुनः प्रामदानापि सर्वा न दीयते तत्र द्विगुणादधिकग्रहणमपि तेषांन शब्दोयथार्थोनाप्याहितइति। सांवत्सरीतावदुप-चिता ग्राह्याद्वितीयसंवत्सरे पुनरानयनमस्त्येवेति न क्वचिद्वैगुण्यनियमः स्यात्। अथ योद्विगुणीभूतंसलाभंधनमानयति तत्राधिकनिषेधस्तु प्राग्द्वैगुण्यावृद्धिमात्रदायसमर्थोवृद्धिंददाति मूलंतस्यापरिमितग्रहणमिति एतदपि न किंचित्। यः संवहति तस्यानुग्रहोन्याय्योनाधिकग्रहणं यस्तु राजा द्विगुणीभूतमपि कथंचिदाप्यते तस्याधिकमोक्षइत्येतदन्याय्यं नचाहितेन्यस्य शब्दस्यायमर्थः। अप्याहृतेतिपाठान्तरंतथापि सकृच्छब्दोन निश्चितार्थोन्यायात्तुपरित्यक्तः स्वकृतश्च पाठःस्यान्न मानवी स्मृतिरित्युक्तैव व्यवस्था न्याय्या धान्यादिषु पञ्चतांपञ्चगुणतांनात्येति। स्मृत्यन्तरे धान्ये चतु-र्गुणोक्ता ॥ हिरण्यवस्त्रधान्यानांवृद्धिर्द्वित्रिचतुर्गुणेति तत्र व्यवस्था यदि दरिद्रभूतः प्रयोक्ता ग्रहीता च महाधनसंपन्न-

स्तेन धान्येन महान्तमर्थंकृतवांस्तदा पञ्चगुणान्यथा चतुर्गुणा सा च फलंवार्षे धान्यस्य पृथगुपादानात्। मालवकउदीच्येषूर्णाविषयः प्रसिद्धः। वाह्योगईभोष्ट्रबलीवर्दादिः ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । कुसीदवृद्धिः कुसीदपदं वाणिज्यवृद्धिव्यवच्छेदार्थम् । सकृदाहिता मूल्यग्रहणकालग्राह्या वृद्धिः । यातु प्रत्यहप्रतिमासग्राह्या वृद्धिः सा वृद्धिर्ग्रहणानन्तरंपुनःपुनराधीयतइति न सकृदाहिता । तथा यत्र सवृद्धिकमेव मूलधनं मूलतया स्थाप्यते सोप्येवमित्येतदुभयंद्वैगुण्यमित्येव । धान्यइति एषु पञ्चगुणपर्यन्तं याति नतु ततोधिकम्। सदे सस्ये नालिकेरादौ। लवः शराद्यस्त्रं ऊर्णेति केचित्। वाह्ये वाहनीये वृषादौ। एतत्त्वया भोक्तव्यं भोगनिमित्तंचैतावदेतावता कालेन वर्धतइति प्रयुक्ते। अशीतिभागवृद्धितोपि यदि सौहार्दादिना न्यूनापि वृद्धिः स्थापिता सा ॥ १५१ ॥

( ३ ) **कुल्लूकः** । वृद्ध्याधनप्रयोगः कुसीदं तत्र या वृद्धिः सकृद्गृहीता सा द्वैगुण्यंनातिक्रमति मूलवृद्धिर्द्विगुणैव भवति प्रतिदिनप्रतिमासादिग्राह्येति तात्पर्यम्। धान्ये पुनर्वृद्ध्यादिः प्रयुक्ते। सदे वृक्षफलेलूयतइति लवः ऊर्णालोम तस्मिन्वाहनोयेचबलीवर्दादौप्रयुक्तेचिरेणापिकालेनमूलधान्यादिनासहपञ्चगुणतांनातिक्रामेदिति ॥ १५१ ॥

( ४ ) **राघवानन्दः** । कौसीदींवृद्धिमित्युक्तं सा मूलेनसह द्वैगुण्यं नात्येतीत्याह कुसीदेतिद्वाभ्याम्। कुसीदवृद्धिः कुसीदंलभ्यमुच्यतइति। सकृदाहृता प्रतिमासमग्राह्यासतीसकृदेकदा मूल्येनसह गृह्यमाणा द्वैगुण्यं नात्येतीत्यन्वयः। ततोधिकेसत्यपि मूलेन सह द्विगुणादूर्ध्वंन प्राप्यतइति। प्रतिमासग्रहणंतु वर्णक्रमेण द्विकादिकमेवेतिभावः । धान्यादिचतुर्षु विशेषमाह धान्यइति। सदे वृक्षफले। लवे छेदनयोग्ये ऊर्णादिलोम्नि वाह्ये वहनीये उक्षादौ बहुकालेपि मूल्यधान्यादिना सह पञ्चगुणतांनातिवर्तते ॥ १५१ ॥

( ५ ) **नन्दनः** । द्रव्यविशेषे वृद्धिनियममाह कुसीदवृद्धिरिति वृद्धिकालमहत्वेऽपि द्वैगुण्यंमूल्यद्वैगुण्यंनात्येतिकुसीदं द्वैगुण्यात्परंवृद्ध्या न वर्धते धान्येमाषमुद्गादौ सदेतद्व्यतिरिक्ते कृषिफले इक्ष्वादौ यवव्रीहिशाल्यादौ तथाचोक्तं ॥ व्रीहिशाल्यादिकंधान्यंश्रूयते च लवन्तुतदिति ॥ लवंक्षुमादिकमितिकेचित्। वाह्ये बलीवर्दादौ। पञ्चतांपाञ्चगुण्यं पारिशेष्यादितरेषुद्वैगुण्यमवगन्तव्यम्। सकृदाहृतेति विशेषणाद्विरोधनद्वैगुण्यात्ययानुज्ञा गम्यते ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । कुसीदवृद्धिः द्विगुणा न अत्येति नातिक्रामति । कुसीदंवृद्धिजीविका द्रव्यंतुद्विगुणंस्मृतमितिवाक्यात् । सकृत् आहृतामूल्यग्रहणकाले गृह्याधान्ये पञ्चतांनातिक्रामति । शदोवृक्षमूलफलादि पञ्चतांपञ्चगुणतां नातिक्रामति नातिक्रामेत्। लवे चामरादौ पञ्चतां नातिक्रामति । वाह्ये वाहनीये बलीवर्दादौ पञ्चतां नातिक्रामति। योगी ॥ वस्त्रधान्यहिरण्यानांचतुस्त्रिद्विगुणाःस्मृताः ॥ १५१ ॥

**कृतानुसारादधिका व्यतिरिक्ता न सिध्यति ॥ कुसीदपथमाहुस्तंपञ्चकंशतमर्हति ॥ १५२ ॥**

( १ ) **मेधातिथिः** । अनुसरन्त्यनुधावन्त्यनुवर्तन्ते सर्वएवार्थाएतमित्यनुसारः शास्त्रोदितः समाचारः सच विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तस्तस्मादधिका वृद्धिः कृता यावत्तथाधमर्णेनोत्तमर्णस्य न सिध्यति कुतोव्यतिरिक्ता यतः शास्त्रबाह्येत्यर्थः। अर्थवादान्तरमाह कुसीदपथमाहुस्तमिति कुपुरुषायत्र सीदन्ति कुशीदंधर्मेण तद्धनिनोलक्ष्यन्ते कुशीदीनामयंपन्था मार्गोव्यवहारोन साधूनामिति निन्दा यस्यावश्यमधिका कर्तव्या महद्धिकार्यमयंमदीयेन धनेन साधयतीति बुद्ध्या तदा वर्णविभागमनपेक्ष्यंपञ्चकंशतंग्रहीतुमर्हति लिप्सेदर्थं इदमुच्यते पाठान्तरंकृतानुसारादधिकेति

यस्याकिंचनस्य सतः स्वल्पा कृता तेनैव धनेनान्यथा वा महार्थतांप्राप्तस्तस्यानुसारादधिका क्रियमाणा न सिध्यति यः परंपञ्चकशतमर्हति ॥१५२॥

( २ ) **सर्वज्ञनारायणः** । कृतादनुसारात् तदनुसरात् अधिका शास्त्रीयत्वेपि न सिध्यति । एवमशीतिभागाधिकवृद्धिनियमेनऋणंगृह्णतेतदाशीतिभागादेः शास्त्रीया । आर्ततया तदधिकं शताद्यत्पञ्चकग्रहणं शूद्रउक्तं तच्चतुर्षु वर्णेषु ग्राह्यम् । नतु ततोऽन्यतिरिक्ता विशेषेणातिरिक्ता कृतत्वमात्रेण सिध्यति । एतच्च कुसीदपथंवृद्धिजोविवत्र्माहुरत्रैव वृद्धिकृतोदोषइत्यर्थः ॥ १५२ ॥

( ३ ) **कुल्लूकः** । कृतानुसारादितिकृतायावृद्धिर्द्विकंत्रिकमिति शास्त्रेण वर्णक्रमेणोक्ता तस्याः शास्त्रानुसारादधिका व्यतिरिक्ता कृता अतोन्या वृद्धिरकृतेत्यर्थः । किंतु कृताऽपि वृद्धिः वर्णक्रमेण द्विकत्रिकशतादिरूपैर्या मासे ग्राह्या । तथा च विष्णुः वृद्धिंदद्युरकृताऽपि वत्सरातिक्रमेयथाभिहिता वर्णक्रमेण द्विकत्रिकादिनेत्यर्थः । किंत्वकृतवृद्धावपि विशेषान्तरमाह कुत्सितात्प्रसरत्ययंपन्थाइति कुसीदपथः अयमधमर्णोयच्छूद्रविषयोक्तंपञ्चकंशतंद्विजातेरपि गृह्णातीत्येवंकुत्सितः पन्थाः पूर्वोक्ताद्धर्म्यवृद्धिकरादपकृष्टइत्येवंमन्वादयआहुः । इयंचाकृता वृद्धिरुद्धारविषये याचनादूर्ध्वंबोद्धव्या । तदाह कात्यायनः ॥ प्रीतिदत्तंन वर्धेत यावन्न प्रतियाचितम् । याच्यमानंनदत्तंचेद्वर्धते पञ्चकंशतम् ॥ ॥ १५२ ॥

( ४ ) **राघवानन्दः** । किंच वृध्येतमपि कृतानुसारादिति । अधिकाऽधिकत्वेन व्यतिरिक्ता या सा नसिध्यतीत्यन्वयः । मयैतद्देयमित्येवस्वीकृतंसिध्यतीत्यर्थः । अथवा अधिका बलात्कारेण द्विकादेकाधिकत्वेन कृतापि अतएव शास्त्रप्रतिपाद्यत्वेन व्यतिरिक्ता शास्त्रतोन सिध्यति । शूद्रे पञ्चगुणं यल्लभ्यमुक्तं तत्सर्वेषामधिकसंख्याव्यवच्छेदार्थमित्याह कुसीदपथमिति । कुत्सितात् शूद्रादधमणात् सीदति प्रसरत्ययंपन्थाइति तम् । अतीवनिकृष्टोहितांवृद्धिंददातीति । शतपणंप्रति पञ्चपणान् दद्यादित्यर्थः । अकृतापि वृद्धिरस्ति । तथाचविष्णुः । वृद्धिंदद्युरकृतामपि । वर्णानुक्रमेणोद्धारविषयेयं याचनादूर्ध्वम् । तथाच कात्ययनः ॥ प्रीतिदत्तं न वर्धेत यावन्नप्रतियाचितम् । याच्यमानं न दत्तंचेद्वर्धतेपञ्चकंशतमिति ॥ प्रीतिदत्तं परितोषाद्यर्थे दत्तं न वर्धते लभ्यंनयावदपियाचितम् । नदत्तंचेच्छतंप्रति पञ्चकंवर्धतइति कात्यायनवचनार्थः । १५२ ॥

( ५ ) **नन्दनः** । लोकेन कृतानुसारात् । परिमाणादधिका शास्त्रोक्तादधिका च कुसीदवृद्धिरुभयानुमतेत्येतावता न सिध्यति तथाहि यत्पञ्चकः शतमर्हति तदेव कुसीदमर्हतीति तथाहुराचार्य्याः । अनाधिकं अत्रापि पूर्ववत्कन्प्रत्ययः ॥ १५२ ॥

( ६ ) **रामचन्द्रः** अनुसारात् कृतवृद्ध्यनुसारात् कृतावृद्धिः अधिका व्यतिरिक्ता पञ्चकोत्तरशतातिरिक्ता न सिध्यति ॥ १५२ ॥

**नातिसांवत्सरींवृद्धिंन चादृष्टांपुनर्हरेत् ॥ चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या॥१५३॥**

---

( * ) वृद्धिं=वृद्धिं द्विजातेरप्या ( न, श )

( १५३ ) नचादृष्टांपुनर्हरेत् = नाभीष्टांतुपुनर्हरेत ( ख ) = नचादिष्टांविनिर्हरेत् ( क )

( १ ) **मेधातिथिः** । संवत्सरे भवा सांवत्सरी अतिक्रान्ता सांवत्सरी भवप्रत्ययार्थः सामर्थ्यादन्तर्भूतः अथवा संवत्सरमतिक्रान्ता अतिसंवत्सरेति प्राप्ते वृद्धीकारौ छन्दस्तुल्यत्वात्कर्तव्यौ येषांवृद्धिरनन्तरप्रक्रान्तपञ्चकंशतंसर्ववर्णविषया सा संवत्सरंयावद्ग्रहीतव्या नातीते संवत्सरे अथवा यावत्संवत्सरंसंवत्सरोवर्णः न यावद्वृद्धिर्न मार्गणी अधमर्णेनापि संवत्सरादूर्ध्वंनविलंबितव्यं विनिर्हरेद्विनिष्कृष्य स्वधनादारभ्योपनयेदित्यर्थः अर्वागपि संवत्सराद्या दीयते साप्यतिक्रान्तसंवत्सरैव । अथवा मासादारभ्य संवत्सरस्य यावद्वृद्धिः परिमाणतोनिरूपितव्या मासेन यद्वर्द्धते संवत्सरेण वेत्येवंप्रयोगः कर्तव्योनतु संवत्सरद्वयस्य लाभार्थी कदाचिच्चिरकालंग्राहयति किंमे कतिपया मासिकेन लाभेन यदि द्वे वर्षे ततोधिकंवागृण्हासि तद्ग्रहणे एषा वेयता कालेन वृद्धिस्तत्रार्वाचीनमपि ददद्धमर्णो द्विसांवत्सरींयथा कालकृतांतदा दाप्येन एकांवृद्धिमनादेयांनदद्यान्नापि दापयेदिति । यथामासिकीवृद्धिः प्रथमे मासि द्वितीयएवान्हि शोधयन्दाप्यते तथायदैवमभ्युपैति संवत्सरेणयद्वर्धतइति तदा तथैव दाप्यते नतु तदधिककालकृता । न चादृष्टांविनिर्हरेत् शास्त्रे यामदृष्टांदशैकादशिकाद्यापञ्चकादधिका न तांगृह्णीयात् व्यतिरिक्ता न सिध्यतीत्यस्यैवायमनुवादइति केचित् । इदन्तु युक्तमदृष्टामनुपचितामित्यर्थः । यावद्बहुभिर्मासैर्न संहतीभूता तावन्नगृह्या दिवसवृद्धिर्मासवृद्धिः । ननु च मासस्य वृद्धिर्गृण्हीयादित्युक्तंपरिमाणंमासिकंतंद्वृद्धेर्नतु ग्रहणंचक्रवृद्धिः कायिकान्वयानामपि नविनिर्हरेदित्यनुषङ्गः । नैवादद्याद्यस्या धमर्णस्य प्रतिषेधस्तथापि सामर्थ्यादुत्तमर्णस्यैव द्रष्टव्योधमर्णोह्यार्तः किंन करोति अथवाविनिर्हारोग्रहणमेव तेनोत्तमर्णस्यैव शाब्दः प्रतिषेधः ननु च द्विकादिवृद्धिविधानाच्चक्रवृध्यादीनांप्राप्तिरेव नास्ति किंप्रतिषेधानुषङ्गेण उच्यते अप्राप्तः प्रतिषेधः पाक्षिकींवृद्धिमनुमापयति यथाऽऽधानेन ब्रह्मसामाभिगायेदित्यविहितंसामगानंप्रतिषेधेनास्तीति ज्ञापयति तेनैताअपि प्रतिषेधद्वारेणाभ्यनुज्ञायन्ते । केषाञ्चिदूनव्यवहारिणांचक्रवृद्ध्यादयोपि भवन्ति तेन स्थलपथवारिपथिकावणिजोयथोक्तं ॥ कान्तरगास्तु दशकंसामुद्राविंशकंशतं । दद्युर्वा स्वकृतांवृद्धिंसर्वे सर्वा स्तु जातिष्विति ॥ कान्तारगादीनामेव स्वकृतासर्वजातिविषयासाधारणीवृद्धिर्नत्वन्येषांचक्रवृद्धिः स्मृत्यन्तरे पठिता वृद्धेर्वृद्धिश्चक्रवृद्धिः । अन्ये तु चक्रवद्यानगन्त्र्यादि तद्वृद्धिश्चवृद्धिः तेषांयस्मिन्नह्नि चक्रंवर्तते तत्रैव वृद्धिः यदा तु नदीसंतारे महति नावाप्रयाणं तदा नास्ति वृद्धिरेवमन्येषामपि बलीवर्द्दादिवाह्यप्रयोक्तृणामीदृशी वृद्धिश्चक्रवृद्धिरुच्यते । कालवृद्धिः प्रतिमासन्तु कालिका । मासग्रहणमुपलक्षणार्थंयाऽनुपचिता वृद्धिर्दिवसे दिवसे गृह्यते मासि मासि वा यस्याः कालेन प्रतीक्ष्यते अथ चैतस्मिन्काले यदि ददासि तदाद्विगुणीभवति धनमित्येकरूपा कालवृद्धिः कारिता इत्थंकृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाऽधमर्णौकुरुतः एषापि दिग्वणिजामेव । अन्येषांतु व्यतिरिक्ता न सिध्यतीत्युक्तंपञ्चकंशतमर्हतीति हिरण्ये प्रयुक्ते वासांसि वृद्ध्यागृह्यन्ते तत्राधिलक्षणंद्रव्यंसा कारिता यथाभोगलाभे न्यासरूपविषये च स्यात् कायिका कायकर्मणा संशोध्या कायजीविका चैषांक्रमेलकाचैवाधिकादीनाम् ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः** । अथ व्यवहारसिद्धाअप्यधर्महेतुतयाऽकर्तव्यावृद्धीराह नातिसंवत्सरीमिति । अतिसांवत्सरीं संवत्सरमात्रेणातिक्रान्तामतिशयितांद्विगुणतांगताम् । तथा नादृष्टां सांहत्येन दर्शनायोग्यां प्रत्यहग्राह्यां विनिर्हरेत् गृह्णीयात् । तथा चक्रवृद्धिः वृद्धेरपिवृद्धिस्तांन गृह्णीयात् । कालवृद्धिः प्रतिमासं प्रदेया । कारिता द्विगुणादूर्ध्वं वृद्धिरशास्त्रीयत्वेपि तदूर्ध्वमपि मूल्यंवर्धतइति ऋणिकेनार्थितया कृता । कायिका यावन्न मूलमर्प्यते तावत्कायेन कलार्थं कार्यमिति । केचित्तु प्रथमान्तत्वादस्य पूर्वेणानन्वयात्कर्तव्यमित्यस्यार्धस्यार्थइत्याहुः । तत्तुच्छम् । यच्छब्देनयेति पूर्वप्रक्रान्तप्रक्रियानुकर्षार्थेनत्वपास्तम् ॥ १५३ ॥

( ३ ) कुल्लूकः । ममैकस्मिन्मासि मासद्वये मासत्रये वागते तस्य वृद्धिंविगणय्यैकदा दातव्येत्येवंविधनियमपूर्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्यन्तंकुर्यात् । नातिक्रान्ते संवत्सरे नियमस्य वृद्धिंगृह्णीयात् नच शास्त्रादृष्टामुक्ताधर्म्यद्विकत्रिकशताद्यधिकांगृह्णीयात् । अधर्मत्वबोधनार्थोनिषेधः चक्रवृद्ध्यादिचतुष्टयींचाशास्त्रीयांन गृह्णीयात् । तासांस्वरूपमाह बृहस्पतिः ॥ कायिका कायसंयुक्ता मासग्राह्या च कालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता । तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता कलावृद्धिस्तु द्विगुणाधिकग्रहणेन कायिकाचातिवाहदोहादिनाकारिता ऋणिकेन याऽनापत्कालएवोत्तमर्णपीडयाकृता । चतस्रोपिवृद्धीरशास्त्रीया न गृह्णीयात् । तथा च बृहस्पतिः ॥ भागोयद्द्विगुणादूर्ध्वंच ऋवृद्धिश्च गृह्यते । पूर्णे च सोदयंपश्चाद्वार्धुष्यंतद्विगर्हितम् ॥ कात्यायनः ॥ ऋणिकेन कृता वृद्धिरधिका संप्रकल्पिता । आपत्कालकृता नित्यंदातव्या कारिता तथा ॥ अन्यथा कारिता वृद्धिर्न दातव्या कथंचन ॥ १५३ ॥

( ४ ) राघवानन्दः । किंच त्वयैकस्मिन्मासि एवंदेयं द्वितीये तृतीयेच[1] तस्य वृद्धिंविगणय्य एकदा दातव्येत्येवंविधनियमपूर्वकमुत्तमर्णःसंवत्सरपर्यन्तंगृह्णीयात् अतीते संवत्सरे यां संगृह्णीयात्साऽतिसंवत्सरी ताम् । तथा अदृष्टां शास्त्रतः पञ्चकाद्यतिरिक्ताम् चक्रवृद्ध्यादिचतुष्टयमपि न ग्राह्यमित्याह नहरेत् नगृह्णीयात् । बृहस्पतिस्तांलक्षयतिस्म ॥ कायिका कायसंयुक्तामासग्राह्याचकालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिनाकृतेति ॥ चक्रवृद्धिःस्वरूपेणैव गर्हिता । कालवृद्धिस्तु द्विगुणाधिका संवत्सरान्ते द्विकादिकामित्युक्तेः नातिसंवत्सरीमितिग्रहणेनाऽशास्त्रीया । कायिकाच वाहदोहादिना । कारिकातु कालेउत्तमर्णेन पीडया कृता अशास्त्रीयाएताअपि न ग्राह्याइत्यध्याहारः । तथाच बृहस्पतिः ॥ भागोयद्द्विगुणादूर्ध्वंचक्रवृद्धिश्चगृह्यते । पूर्णेच सोदयंपश्चाद्वार्धुष्यंतद्विगर्हितमिति ॥ पूर्णे ऋणतुल्ये सति सोदयं ततोधिकलभ्यंगृह्यतेयत्तद्विगर्हितमित्यन्वयः । कात्यायनोपि ॥ धनिकेनतु या वृद्धिरधिकामं प्रकल्पिता । आपत्काले कृता नित्यं दातव्या कारितातु सा ॥ अन्यथा कारिता वृद्धिर्न दातव्या कथंचन ॥ अधिकामंस्वेच्छया । अन्यथा अनापत्काले ॥ १५३ ॥

( ५ ) नन्दनः । संवत्सरादूर्ध्वंभवांवृद्धिं लोकशास्त्रयोर्दृष्टंचक्रवृद्ध्यादयोवृद्धयस्ताश्च न हरेन्नगृह्णीत । चक्रवृद्ध्यादयोबृहस्पतिना व्याख्याताः ॥ कायिका कर्मसंशोद्ध्या मासग्राह्या च कालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिका ऋणिना कृतेति ॥ १५३ ॥

( ६ ) रामचन्द्रः । अतिसांवत्सरीं वृद्धिंन हरेत् न गृह्णीयात् च पुनः अभीष्टांवृद्धिं न हरेत् न गृह्णीयात् च पुनः या वृद्धेरपि वृद्धिः चक्रवृद्धिः प्रतिमासं देया । कारिता द्विगुणेन मूल्यमिति कारिता च पुनः कायिका कायमूल्यमिति योगीश्वरः ॥ वृद्धिवृद्धिश्चक्रवृद्धिः प्रतिमासंतु कालिका । इच्छाकृता कारितास्यात्कायिका कायकर्मणि इति ॥ १५३ ॥

**ऋणंदातुमशक्तोयः कर्तुमिच्छेत्पुनः क्रियाम् ॥ सदत्वा निर्जितांवृद्धिंकरणंपरिवर्तयेत् ॥ १५४ ॥**

( १ ) मेधातिथिः । वृद्धिद्विगुणीभूतमृणंधनपरिक्षयाद्दातुमशक्तोयः सपुनः क्रियांकारयितव्यः करणंलेख्यसाक्ष्यादिपरिवर्तयितव्यः वृद्धिंतु दद्यात् निर्जितो यावतीगणनया भवतीत्यर्थः द्विगुणादधिकंनग्राह्यमिति यदुक्तंतस्यायमपवादोजयोह्ययंप्रयोगइति कुतः पुनः द्वैगुण्यापवादार्थता यावता नेह किंचिदीदृशंवचनमस्ति वृद्धिसहितंधनंवर्द्धते मूलधनंवा केवलंपुनः क्रियाश्रूयते सा च करणंपरिवर्तयेदिति व्याख्यान्तरेण व्याख्याता यदि नवर्धतेकिमर्थंतर्हि

---

( १ ) चे=चैवं ( न )

करणपरिवर्तनं उच्यते शान्तलाभे धनेऽदीयमाने यागत्न्यादिसंभावना साक्षिणश्च दीर्घे गच्छति काले विस्मरेयुर्यथोक्तं ॥ यत्र कायोभवेद्येन कृतेपक्षाद्दशाब्दिकी । विवादस्तत्र नैकःस्यात्साहसेषु विशेषतः ॥ तथा दशवर्षोपेक्षितमृणमसाध्यमिति । तथा च पूर्वे स्म व्याचक्षते । अयंच राज्ञउपदेशः पीडितस्यानुग्रहः ॥ १५४ ॥

( २ ) **सर्वज्ञनारायणः** । ऋणं समूलांवृद्धिम् । पुनःक्रियां कलांदत्वा मूलस्य पुनर्वृद्धिनियमम् । निर्जितां तावत्कालेन संचिताम् । करणं यत्र साक्ष्यादिव्यवस्थां परिवर्तयेत् पुनःकुर्यात् ॥ १५४ ॥

( ३ ) **कुल्लूकः** । योऽधमर्णोधनदानासामर्थ्यात्पुनर्लेख्यादिक्रियांकर्तुमिच्छेत्सनिर्जितामुत्तमर्णः सत्यतया आत्मसात्कृतांवृद्धिंकृत्वा करणंलेख्यंपुनः कुर्यात् ॥ १५४ ॥

( ४ ) **राघवानन्दः** । ऋणादत्तेजीवितुमसमर्थःपूर्वोत्तमर्णादृणान्तरंलिप्सुरेवंकुर्यादित्याह ऋणमिति । पुनःक्रियां ऋणान्तरम् निर्जितां मासिमासि लभ्यत्वेनानीतामुत्तमर्णप्राप्यां तांसंपूर्णांदत्वा करणं क्रियते लिख्यते ऋणमत्रेति पत्रान्तरंकुर्यादित्यर्थः ॥ १५४ ॥

( ५ ) **नन्दनः** । पुनःक्रियां ऋणस्यपुनः स्वीकरणक्रियां । निर्जितामुत्तमर्णेन निर्जितामधमर्णेनतदानींदातव्यमितियावत् । करणंमूल्यमात्रस्य ऋणस्यस्वीकरणं । परिवर्तयेत् अस्यां करणपरिवृत्तौ यावतीसंभवेद्वृद्धिस्तावतीदातुमर्हति ॥ १५४ ॥

( ६ ) **रामचन्द्रः** । सः निर्जितां तत्कालसञ्चितां कृतांवृद्धिं दत्वा यदन्यत् करणं यत्रसाधनं परिवर्जयेत् । अन्यत्कारयेदित्यर्थः ॥ १५४ ॥

**अदर्शयित्वा तत्रैव हिरण्यंपरिवर्तयेत् ॥ यावती संभवेद्वृद्धिस्तावतींदातुमर्हति ॥ १५५ ॥**

( १ ) **मेधातिथिः** । अदर्शयित्वा हिरण्यमदत्वा हिरण्यं अदत्वा निर्धनत्वाद्वृद्धिहिरण्यंतत्रैव पुनः करणंपरिवर्तयेत् साक्षिसमक्षमेवंब्रूयादेतावन्मूलमस्मै धारयामि । एतावतीच वृद्धिरिति यत्रैवारोपयेत् यावत्संवत्सरावृद्धिरिति तावद्व्याचक्षते पुनः करणे वृद्धिसहितमूलीभूतेलघीयसीवृद्धिः कर्तव्या यावत्या वृद्ध्यानातिपीड्यते या प्रागासीत्ततोन्यूनेत्यर्थः । यज्वासहायनारदीनांतु मते काकिणीमात्रमपि शक्तः करणपरिवृत्तिकाले दापयितव्यः येन साक्षिशक्तश्रवणमात्रे साक्षित्वंवृद्धिंददाति तत्समक्षमधमर्णोर्थसंबन्धोपि प्रत्यक्षीभवति यतः श्रवणाश्रवणे च कृताभविष्यन्ति ततश्चित्तंतिष्ठति धने दशवर्षोपेक्षितमित्यादिव्यनश्वरोभविष्यति ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्स्फोरयति अदर्शयित्वेति । मूलभूतंहिरण्यंधनिके अदर्शयित्वा अदत्वा क्रियांपरिवर्ततदाच यावती संभवेत्तावता कालेन वृद्धितामेव दातुमर्हति नतु मूलस्य पुनःस्थापनार्थमधिकं तेन देयमित्यर्थः ॥ १५५ ॥

( ३ ) **कुल्लूकः** । यदि दैवगत्या वृद्धिहिरण्यमपि समये दातुंन शक्नोति तदातद्गृहीत्वैव तत्रैव पुनः क्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत् । यत्प्रमाणंचक्रवृद्धिधनंतदानींसंभवति तद्दातुमर्हति ॥ १५५ ॥

( ४ ) **राघवानन्दः** । उत्तमर्णप्रत्युक्तलभ्यानासमर्थस्य लभ्यं पूर्वपत्रोपरि वर्धयेदित्याह अदर्शयित्वेति । अदर्शयित्वा आदौ लेख्यमदत्वाछेदनादिभयात् । तत्रैव लेख्ये हिरण्यं वृद्धिधनं दत्तावशिष्टं परिवर्तयेत्समारोपयेत् । अतएवाह यावतीन्यादि ॥ १५५ ॥

( ५ ) **नन्दनः** । वृद्धेर्वृद्धिरितिनवक्तव्यमित्यर्थः ॥ ५५ ॥

( ६ ) **रामचन्द्रः**। तत्रैव हिरण्यमदर्शयित्वा अदत्वा परिवर्तयेत्। तत्क्रियामितिशेषः। यावती वृद्धिः संभवेत्तावतीं वृद्धिं अधमर्णः दातुमर्हति ॥ १५५ ॥

**चक्रवृद्धिसमारूढोदेशकालव्यवस्थितः॥ अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात् ॥ १५६ ॥**

( १ ) **मेधातिथिः**। वाराणसींयास्यामि तदीयं पुण्यंमे भाण्डंच हेतुरेषा च ते वृद्धिरिति तत्र यदि कान्तारनदीसंतरणंराष्ट्रोपप्लवादिना तद्देशंन गतस्ततोऽर्वाग्देशात्कियता लाभेन प्रवृत्त्या व्यावृत्तस्तदा यथा निरूपिता वृद्धिर्न दाप्यते यतस्तंदेशंयावद्वहतांया वृद्धिरमाप्तानांसा कथंस्यात् दीर्घमध्वानंवहतांयुग्यानामहान्क्लेशः स्वामिनश्च तावन्तंकालंकृतैववृद्धिर्युग्योपकारः शीघ्रंतु प्रति निवृत्तानांस्वामिनः पुनरन्यत्रोपकारणंसंपद्यतएव एषएवातिक्रमः एवंकालातिक्रमोमासमेव हन्तुंबलीवर्दाइयती तव वृद्धिरिति तत्र यदि पश्चात्प्रत्येति तत्र चक्रवृद्धिमधमर्णःसमारूढः प्रतिपन्नोङ्गीकृतवानितियावत्। तस्यां वृद्धौदेशकालौ व्यवस्थितौ यत्तया पूर्वोक्तेन प्रकारेण देशविशेषंकालविशेषंवा न निर्विशेषणमेव कृतवान् सएवंविधोधर्मस्तौ देशकालौ अतिक्रमोनप्राप्नुयात्तत्फलंवृध्याख्यंनाप्नुयान्नभजेत नाद्यादित्यर्थः ॥१५६॥

( २ ) **सर्वज्ञनारायणः**। यदि चक्रवृद्धिः कार्या तदा मयात्र देशेऽत्रकाले शोधनीयेति यत्र व्यवस्था कृता स यदि ततोन्यत्रान्यदा च याचते तदा चक्रवृद्धिर्न लभ्यते अपितु अशीतिभागादिर्धर्म्यैवेत्यर्थः। तत्फलं चक्रवृद्धिलाभम् ॥ १५६ ॥

( ३ ) **कुल्लूकः**। चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभररूपा वृद्धिरभिमता। चक्रवृद्धिमाश्रितउत्तमर्णोदेशकालव्यस्थितः यदि वाराणसीपर्यन्तंलवणादिशकटेन वहामि तदा ममेदंयद्धनंदातव्यमिति वेतनरूपदेशव्यवस्थितिः। यदि मासंयावद्वहामि तदा मासंयद्धनंदातव्यमितिकाल व्यवस्थितिः। एवमभ्युपगतदेशकालनियमस्थौ देशकालौ दैवादपूरयन् शकटादिना वहँल्लाभरूपफलंसकलंनप्राप्नोत्यपि तु ॥ १५६ ॥

( ४ ) **राघवानन्दः**। वृद्धिप्रसंगेन देशकालमर्यादया नियमिता या भृतिःतदपूरणेन सर्वांनाप्नोतीत्याह चक्रवृद्धिमिति। चक्रवृद्धियुक्तकटेन वहनीयत्वात्कायिकावृद्धिसदृशत्वाच्च चक्रपदं बलीवर्दादेरुपलक्षणम्। देशकालव्यवस्थितइति वाराणसीपर्यन्तंतवैतत्पूगादि शकटेन वहामि यदि तदा ममैतद्धनंभृतिरूपंदेयमिति देशव्यवस्थितिः यदि मासं प्रापयामि तदा ममैतद्धनंदातव्यंइति कालव्यवस्थितिरेवंसमयारूढोवाहकोदेशकालावतिक्रामन्नपूरयन् तत्फलं संपूर्णांभृतिंनाप्नोति किंतु तन्निपुणैर्व्यवस्थितामेवप्राप्नोतीति भावः ॥ १५६ ॥

( ६ ) **रामचन्द्रः**। देशकालव्यवस्थितः अस्मिन् देशे अस्मिन्कालेस्थितः सन् चक्रवृद्धिं समारूढः दातुमुद्यतः अधमर्णः देशकालौ अतिक्रमन् तंकालंतंदेशंअतिक्रामन् ग्रहीतुंनायाति मर्यादानन्तरं धनं धनिकः आप्नुयात् ॥ १५६ ॥

**समुद्रयानकुशलादेशकालार्थदर्शिनः॥ स्थापयन्ति तु यांवृद्धिंसा तत्राधिगमंप्रति ॥ १५७ ॥**

( १ ) **मेधातिथिः** किंतत्र नैवास्ति वृद्धिरथवा पञ्चकंशततेनेत्याह समुद्रयानग्रहणंपात्रोपलक्षणार्थं स्थूलपथिकावारिपथिकाश्च वणिजोयांवृद्धिंस्थापयन्ति सा तत्राधिगमनंप्रति निश्चयंप्रति सैव निश्चेतव्येत्यर्थः। देशकालार्थदर्शिनोस्मिन्प्रदेशइयानर्थलाभोऽस्मिनियानिति ये पश्यन्ति जानते नतु समुद्रयानएव च ये कुशलाः कर्णधारादयः। अन्ये पूर्वश्लोकमेवंव्याचक्षते यदृच्छाध्याहारेणाधमर्णेन या देशकालंचाश्रिता तांच प्राप्य तद्देशोदितंफलंलाभाख्यमन्यस्माद्देशाद्यदि नाप्नुयात्तदा कीदृशीतत्रवृद्धिरित्याकांक्षायामुत्तरश्लोकःचक्रवृद्धिग्रहणंकारितायाअपि प्रदर्शनार्थं लोभातिशयभा-

जांवणिजांक्षयव्ययाय संविधिज्ञाः परस्परस्य यांवृद्धिंस्थापयेयुस्तांराजा प्रमाणी कुर्यात् । तत्राधिगमंप्रतीति प्रतिःकर्मप्रवचनीयोधिगमस्य लक्षणत्वाल्लक्षणेत्थंभूताख्याने तद्युक्ते च द्वितीया ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । समुद्रेति । दुर्गोदेशः कालश्चाल्पोर्थस्तल्लभ्योबहुरिति जानन्तः समुद्रयानकुशलाःवर्त्मनोदुर्गत्वेन मूलनाशस्यापि संभवात् यामिति बहुलामपि वृद्धिंकुर्वन्ति साधिगमंप्रति अधिगमंलाभंप्रति ऋणिकेन वाणिज्यफले प्राप्तेएव देया नान्यथा । अत्रावधिकवृद्धिग्रहणं समुद्रादौ प्रायिकींविपत्तिमनुसंधायेत्यतःसमुद्रयायिनां दैवाल्लाभाभावे वृद्धेरप्यदानमित्यर्थः । समुद्रेतिचैवंविधाकारादेरप्युपलक्षणम् ॥ १५७ ॥

( ३ ) **कुल्लूकः** । स्थलपथजलपथयाने निपुणाइयद्देशपर्यन्तमियत्कालपर्यन्तमूह्यमाने सत्यतावाँल्लाभोगृहीतुंयुक्त इत्येवंदेशलाभधनज्ञावणिगादयोयांवृद्धिंतथा विषये चावस्थापयन्ति सैव तत्र व्यवस्था तत्राधिगमंधनप्राप्तिंप्रति प्रमाणम् ॥ १५७ ॥

( ४ ) **राघवानन्दः** । संप्रति वणिग्व्यवस्थितिमङ्गीकुर्वन्धर्मव्यवस्थितिमाह समुद्रेति । समुद्रयानकुशलाः स्थलपथजलपथगमननिपुणाः । एतावत्पर्यन्तमेतन्नयने एतावान् लाभोलब्धव्यइत्येवं यां वृद्धिं स्थापयन्ति सैव तत्र व्यवस्था प्रमाणं अधिगमं धनप्राप्तिंप्रति ॥ १५७ ॥

( ५ ) **नन्दनः** । देशकालव्यवस्थितः अस्मिन्देशेऽस्मिन्काले ऋणंगृहीष्यामीति कृतव्यवस्थश्च वृद्धिसमारूढः समातत्र स्थितोत्तमर्णस्तोदेशकालावनिक्रमंतत्फलंताश्च अभियुक्तपुरुषविशेषकल्पिता वृद्धिः क्वचियुक्तेत्याह समुद्रेति । स्थापयन्ति तत्र देशकाले । अधिगमंस्वीकारंप्रतिसावृद्धिस्यात्तैरेवोक्तांवृद्धिंगृह्णीयादित्यर्थः ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । सावृत्तिं तत्र अधिगमं लाभं ॥ १५७ ॥

## योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ॥ अदर्शयन्सतंतस्य प्रयच्छेत्स्वधनादृणम् ॥ १५८ ॥

( १ ) **मेधातिथिः** । ऋणप्रयोगे द्विविधे विश्रंभः प्रतिभूराधिर्वा तत्र प्रतिभूपक्षइदमुच्यते । त्रिविधश्च प्रतिभूदर्शने-प्रत्यये दाने च तत्र दर्शनप्रतिभुवमधिकृत्येदमाह यस्य दर्शनाय प्रतिभूस्तिष्ठेदमुष्मिन्प्रदेशे मयैषतव दर्शनीयः सतथा कुर्वन्स्वधनात्तस्य ऋणंयतेत प्रयत्नंकुर्याद्दातुमिति शेषः दद्यादिति यावत् ऋणग्रहणंव्यवहारवस्तुमात्रोपलक्षणार्थं तेन यावन्तोऽर्थविषयाव्यवहारेभूत्वानुकंपयन्ते तद्वस्तुदद्याद्दर्शने नान्यतरेणाभियुक्तः वाक्पारुष्यसंग्रहणादौ येन परिभाषा कर्तव्या यदि न दर्शितंतदेतन्मयादातव्यं अकृतायान्तु परिभाषायां राजदण्डमेव दाप्यः शरीरे तुनिग्रहान्तंविक्रयणंसुवर्णम् ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । दर्शनायादीयमाने ऋणिकं दर्शयिष्यामीति । एतच्चोपलक्षणम् । अयमेतादृशोधनी पुत्री आप्तश्चेत्यादिष्वर्थेषु मद्वचसा प्रत्ययः क्रियतामित्येवंप्रत्ययप्रतिभूरपि प्रत्ययविपर्यये प्रयच्छेदित्यपि द्रष्टव्यम् । दर्शने प्रत्ययेच प्रतिभूत्वनिमित्तं यद्देयं तत्प्रतिभूरेव दद्यात् नतु तद्रिक्थग्राहिणोपि पुत्रादयः ॥ १५८ ॥

( ३ ) **कुल्लूकः** । योमनुष्योयस्य दर्शनाय प्रतिभूस्तिष्ठेत् धनदानकाले ममायमधमर्णोदर्शनीयइति सतंतस्मिन्काल-उत्तमर्णस्यादर्शयन् तद्धनंदातुंयतेत ॥ १५८ ॥

( ४ ) **राघवानन्दः** । किंच लग्नकस्याधमर्णाद्यदर्शनेस्वधनादृणादानमाह यइति । यः प्रतिभूर्लग्नकः यस्याधमर्णादेर्दर्शनायतिष्ठेदिमंतुभ्यंदर्शयामीति सयदि तं नदर्शयेत्तदा स्वकीयधनात् ऋणादि दद्यादित्यर्थः ॥ १५८ ॥

( ५ ) **नन्दनः** । अथप्रतिभूकृत्यमृणप्रसंगादाह योयस्येति । योयस्याधमर्णस्य समानवर्णस्तमधमर्णतस्योत्तमर्णस्य ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । प्रतिभूस्वरूपमाह यइति । योमानवः यस्य प्रतिभूर्दर्शनायतिष्ठति सःप्रतिभूः तंअधमर्णमदर्शयन् अप्रत्यक्षीकुर्वंस्तस्याधमर्णस्य ऋणं स्वधनात्प्रयच्छेत् ॥ १५८ ॥

## प्रातिभाव्यंवृथादानमाक्षिकंसौरिकंच यत् ॥ दण्डशुल्कावशेषंच न पुत्रोदातुमर्हति ॥ १५९ ॥

( १ ) **मेधातिथिः** । प्रतिभुवः कर्म प्रातिभाव्यं प्रतिभुवा यत्कर्तव्यंपरर्णसंशोधनादि तत्प्रातिभाव्यं अर्हत्ता योग्यता सानेन प्रतिषिध्यते तस्यां च प्रतिषिद्धायामधिकारः प्रतिषेधः । अनधिकृतश्च न ददातीत्येवंन दातव्यमित्युक्तंभवति सर्वत्राद्दत्तौ क्रियापदे व्याख्यायंते द्रष्टव्ये । कथंपुनः पुत्रस्य प्रातिभाव्यादिप्रभिस्तर्हि तदृणस्य पित्राऽगृहीतत्वात् नैषदोषः यद्येन दातव्यतयाङ्गीकृतंतद्गृहीतफलत्वाद्गृहीतमेव तन्निश्चितस्वरूपत्वमापन्नाअतः प्रतिषिध्यन्ते । वृथादानंपरिहासादिनिमित्तंप्रतिश्रवणंकुरुकार्यमिदमपनिष्पन्नमिदंदास्यामीति निष्पादिते कार्ये पित्राऽदत्तंप्रतिश्रुते कथंचित्पुत्रोन दाप्यते एवंपारितोषिकादिबंदिपरिहासादिविषयंपंचाहममुष्माद्वणिजएतस्ययद्दापयेदिति तत्र तु मनुष्ये प्रेषिते कथंचिद्दातुमघटितेऽसंनिधानाद्वणिजोन्यतोऽपि कारणाद्दत्तान्तरे पितरि मृते पुत्रोन दाप्यते अक्षिनिमित्तमाक्षिकंसनिकायंयद्धार्यते ऽन्यतोवा तत्प्रयोजनंयद्गृहीतमिति शक्यते ज्ञातुंतस्य प्रतिषेधः यः परित्यक्तबान्धवोक्षमालास्वेव शय्यासनविहारीप्रसिद्धः क्रीडनकस्तदृणमाक्षिकमिति मन्यन्ते ज्ञातुम् । सुरापाननिमित्तंसौरिकंसुराग्रहणंमद्योपलक्षणार्थंतेन यः पानशौण्डोत्यन्तमद्यपस्तदृणप्रतिषेधः दण्डशुल्कयोरिव शेषः । यत्र पित्रा दण्डशःशुल्कशश्च कश्चिद्दत्तः परिपूर्णौदण्डशुल्कौ न दत्तौ तादृशस्य प्रतिषेधः । यत्किंचित्पित्रादत्तंसतद्दाप्यते । स्मृत्यन्तरेऽप्यविशेषेणोक्तं प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डान पुत्रेण दातव्यानभवेयुरिति तत्र विकल्पः महत्यपराधे महति च धने पैत्रिकेऽवशेषस्य प्रतिषेधः शुल्केऽप्येवं स्वल्पे तु सर्वस्य ॥ १५९ ॥

( २ ) **सर्वज्ञनारायणः** । वृथादानं चारणादिषु । आक्षिकं द्यूतहारितम् । सौरिकं तत्पीतसुरामूल्यम् । दण्डावशिष्टं परिणीतकन्यादिनिमित्तदत्तशुल्कावशिष्टंच दण्डशुल्कावशिष्टम् । अवशेषमित्युपलक्षणम् । सर्वमप्यदत्तमदेयमेव ॥ १५९ ॥

( ३ ) **कुल्लूकः** । प्रतिभूत्वेन यद्देयंधनंतत्प्रातिभाव्यं वृथादानंपरिहासनिमित्तं षण्डादिभ्योदेयत्वेनपित्रांगीकृतंद्यूतनिमित्तंसुरानिमित्तंच दण्डंयद्देयंदण्डंशुल्कंघट्टादिदेयंतदवशेषंच पितृसंबन्धिनं पितरि मृते पुत्रोदातुंनार्हति ॥ १५९ ॥

( ४ ) **राघवानन्दः** । पितृप्रतिश्रुतादि पुत्रैर्देयमिति सिद्धवत्कृत्य तददेयंसंकलयति प्रातिभाव्यमिति । प्रतिभुवा लग्नकेन पित्रा यद्दर्शनादि प्रतिश्रुतंतत्प्रतिभाव्यं वृथादानं परिहासादिना मागधादिभ्यः प्रतिश्रुतं आक्षिकं द्यूतनिमित्तं सौरिकं सुरानिमित्तं दण्डशुल्कावशेषं राजदण्डपण्यस्त्रीघट्टादिस्वीकृतशेषंच नपुत्रोदातुमर्हतीत्यन्वयः । प्रतिभाव्यमिवमधमर्णंदर्शयामीतिप्रतिश्रुतस्यदर्शनप्रतिभुवःपितुरदर्शनेन पुत्रस्तंनदर्शयेत् ॥ १५९ ॥

( ५ ) **नन्दनः** । तदभावे पुत्रेण देयमिति प्राप्तस्यापवादमाह प्रतिभाव्यमिति । वृथादानंधर्मरहितंगायकादिभ्योदेयम् । आक्षिकंद्यूतनिमित्तम् । सौरिकंसुरासंबन्धि ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । यत्प्रातिभाव्यंदर्शनप्रातिभाव्यंतत् । वृथादानं धूर्तबन्दिमल्लादिभ्योयत्प्रतिज्ञातंतत्वृथादानम् । च पुनः आक्षिकंअक्षसंबन्धकृतंद्यूतकृतं । सौरिकं यत्सुरासंबन्धकृतंतत् । च पुनः दण्डशुल्कावशेषं पुत्रोदातुंनार्हति । योगी-

श्वरः॥ सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्। वृथादानंतथैवेह पुत्रोदद्यान्न पैतृकम् । पितृकृतमृणंपुत्रोनदद्यादित्यर्थः ॥ १५९ ॥

## दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः॥ दानप्रतिभुवि प्रेते दायादानपि दापयेत्॥ १६० ॥

( १ ) **मेधातिथिः**। पूर्वश्लोके योविधिर्मया चोदितउक्तः यथा पुत्राणांन भवति पैत्रिकंप्रातिभाव्यंतद्दर्शनप्रातिभाव्ये यद्येवंमत्ययप्रतिभुवः पुत्रादाप्यन्तामतआह दानप्रतिभुवि प्रेते दायादाः पुत्रादाप्यन्ते नान्यस्मिन् यद्येवंप्रथमोर्द्धश्लोकोनर्थकः दानप्रतिभुवःपुत्राणांसाधनानुक्ते सामर्थ्याद्यस्य प्रतिभुवोनास्ति पुत्राणांसंबन्धइति गम्यते। अथविस्पष्टार्थमुच्यते प्रत्ययग्रहणमपि कर्तव्यमितरथाप्रतिषेधदर्शनं ग्रहणादुभयपरिभ्रष्टस्य किंविधिभूतप्रतिषेधइति संशयःस्यात् नास्ति संशयः स्मृत्यन्तरे स्पष्टमुक्तत्वात्। दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोवा। न तत्पुत्राऋणंदद्युर्दद्युर्दानाय येस्थिताइति॥ इहापि दानप्रतिभुवोन्यस्य विधित्वादन्यत्राप्राप्तिः दर्शनग्रहणमुपलक्षणार्थंअनुवादेचोपलक्षणत्वमदोषः किंप्रयोजनमिति चेद्विचित्राश्लोकानांकृतिर्मानवी ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः**। दर्शनेति प्रत्ययस्याप्युपलक्षणम्। दानप्रतिभूरेतेनादत्ते दास्यामीति नियम्यभूतः। दायादानृक्थग्राहिणोनतु पुत्रानेव ॥ १६० ॥

( ३ ) **कुल्लूकः**। सुरानिमित्तंच यद्देयंदण्डंप्रातिभाव्यंन पुत्रोदातुमर्हतीति योयंपूर्वोपदेशः सदर्शनप्रतिभुवः पितुर्देयोज्ञेयः दानप्रतिभुवि तु पितरि मृते पुत्रमृणंदापयेत् ॥ १६० ॥

( ४ ) **राघवानन्दः**। प्रातिभाव्यं पुत्रोन दातुमर्हत्युक्तो दानप्रतिभुवि तूत्तमर्णस्य देयमिति प्रतिश्रुत्य मृतेपितरिपुत्रोपिदद्यादित्याह दायादानिति दापयेद्राजेतिशेषः। तथाह याज्ञवल्क्यः॥ दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोपि वा। नतत्पुत्राऋणं दद्युर्दद्युर्दानाययः स्थितइति॥ प्रात्ययिको यथा प्रत्ययोविश्वासः अस्मत्प्रत्ययेनास्मै धनं प्रयच्छतु भवान नायं त्वां वञ्चयिष्यति यतोऽमुकस्य पुत्रोयमिति प्रत्ययार्थं भवतीति दानप्रतिभूर्यथा यद्ययंन ददाति तदाहमेव दास्यामीति ॥ १६० ॥

( ५ ) **नन्दनः**। पूर्वचोदितः पुत्रेण देयमिति पूर्वश्लोकउक्तः॥ १६० ॥

( ६ ) **रामचन्द्रः**। दर्शनप्रातिभाव्ये दर्शयितुंप्रतिभुवि अहंदर्शयिष्यामीत्युक्तौ पूर्वनोदितोविधिःस्यात्। दानप्रतिभुवि मयाधनंदेयमित्युक्तेसतिप्रेतेमृते सति दयादान् पुत्रानपि दाययेत् पुत्रेभ्यःदापयेदित्यर्थः॥ १६० ॥

## अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्॥ पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना॥ १६१ ॥

( १ ) **मेधातिथिः**। अनेन श्लोकेन संदिहानः प्रश्नंकृत्वोत्तरेण निश्चाययति। संदेहहेतुश्लोकः पदद्वयेनादातरि विज्ञातप्रकृताविति सप्तम्यन्तानिसमानाधिकरणानिपदानिव्याख्यायन्ते अदातरि प्रतिभुवि प्रतिज्ञातप्रकृतौ न ऋणमनुत्तमर्णः केन हेतुना परीप्सेत लब्धुमिच्छेत्किंकेवलेनैवात्मव्यापारेण ततः प्रतिभुवः पुत्रमपि व्यापारयति कुतः संदेहउक्तमृतोदानप्रतिभूतज्जातस्तादृशे मृते कस्तत्पुत्राणांसंबन्धः यतस्तु खलु विज्ञातप्रकृतिर्विज्ञातकारणः प्रतिभूत्वेन धनंगृहीत्वा स्थितइत्येतन्निश्चितमतोभवति बुद्धिरस्तितत्पुत्राणांसंबन्धोयतस्तेन ऋणसंशुध्यर्थमस्यनिसृष्टमिति। पुनः शब्दः पूर्वस्माद्विशेषमाह यदि दानप्रतिभुवः पुत्राः संबध्यन्ते यस्तर्ह्यदाता तस्मिन्मृतेदातोत्तमर्णः पश्चात्ततउत्तरकालमित्यर्थः। शेषंव्याख्यातं परीप्सा प्राप्तीछा ॥ १६१ ॥

( २ ) **सर्वज्ञनारायणः**। उक्तमुपपादयति अदातरीति। प्रतिभुव्यदातरि दानार्थमभूते विज्ञातप्रकृतौ प्रथममेव

दर्शनादिनियमकरणेन निश्चितादातृत्वभावे मेते ऋणं दातोत्तमर्णः केनहेतुना तत्पुत्रादावर्थमीप्सेत यतएव दानार्थं नासौ प्रतिभूः कुतः पित्राच देयत्वेनाङ्गीकृतमेव दायादेन देयमतोन्यथा न देयमित्यर्थः ॥ १६१ ॥

( ३ ) **कुल्लूकः** । अदातरि दानप्रतिभुवोन्यस्मिन्दर्शनप्रतिभुविप्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्यकारणमूलशोधनोचितधनग्रहणं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केनहेतुनाधनंप्राप्तुमिच्छेत् ॥ १६१ ॥

( ४ ) **राघवानन्दः** । तर्हि दानप्रतिभूवद्दर्शनादिप्रतिभुवोपि पुत्रस्तद्दद्यादित्याशङ्क्याह अदातरीति । दानप्रतिभुवोऽन्यस्मिन्दर्शनप्रतिभुवि प्रत्ययप्रतिभुविवापुनर्नष्टेमृते विज्ञातप्रकृतौ विज्ञाता प्रकृतिः प्रतिश्रुतप्रातिभाव्यकारणमपि दर्शयामीत्यादियस्यतस्मिन्मृते दातोत्तमर्णः परीप्सेत्केनहेतुनाप्राप्तुमिच्छेत् । दर्शनादिप्रतिभुवो मृतत्वाददानप्रतिभूपुत्रेवचनाभावात् । विज्ञातप्रकृतेरिति क्वचित्पाठस्तदा दर्शयामीत्यादिप्रतिभूत्वेन विज्ञातः प्रकृतिः पितायेनतस्मात्तत्पुत्रात्केन हेतुनाप्राप्नुयादित्यन्वयः । समासःसएव ॥ १६१ ॥

( ५ ) **नन्दनः** । पुनरितिवाक्योपन्यासे अधमर्णे ऋणदातरि सति विज्ञातप्रकृतौ दातोत्तमर्णः केन हेतुना धनंपरीप्सेत्कस्माद्धनंलभेतेति महर्षिप्रश्नसद्भावेनत्वयमुपन्यासोयं हेमहर्षयः एवंपृच्छतिचेदित्यर्थः ॥ १६१ ॥

( ६ ) **रामचन्द्रः** । तत्र प्रश्नमाह अदातरीति । दाता उत्तमर्णः दर्शनप्रत्ययप्रतिभुवि दानप्रतिभूव्यतिरिक्तेमृतेसति पुनः अदातृत्वेनविज्ञातात् नियतत्वेन पश्चात्प्रकृतरूपात् अधमर्णात् ऋणंकेनहेतुना परीप्सेत् इच्छेत् ॥ १६१ ॥

## निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः ॥ स्वधनादेव तद्दद्यान्निरादिष्टइति स्थितिः १६२ ॥

( १ ) **मेधातिथिः** । निरादिष्टंनिसृष्टंस्वधनादर्पितंभवल्यकइदंते धनंमत्तस्त्वया संशोधनीयं यद्यहंन दद्यामभवतः पर्याप्तधनं । यावद्धनमुत्तमर्णाय दातव्यंतावत्परिपूर्णप्रसृष्टं स्वल्पेतु निसृष्टे बहुनिसंशोध्ये न दापयितव्यः । पूर्वस्य प्रश्नस्योत्तरमिदं यद्यपि न दानप्रतिभूरद्य निरादिष्टस्तत्तत्पुत्रोदाप्यते स्वधनादेव तद्योनिरादिष्टपुत्रइति द्रष्टव्यं तस्यैव प्रकृतत्वात् साक्षात्प्रतिभुवस्तुप्रतिभूत्वादेव प्राप्तिरिति चेन्नैवं निरादेशने नइति स्थितिरेषा शास्त्रमर्यादा विचारादेवावलंबनइति सिद्धेयन्निरादिष्टोलंबनइति चैवमभिधानंतत्पद्यग्रन्थानुरोधेन ॥ १६२ ॥

( २ ) **सर्वज्ञनारायणः** । तत्किमेवंसर्वत्रेत्याह निरादिष्टेति । दर्शनप्रत्ययप्रातिभाव्यकालएव संप्रत्ययार्थं यदि प्रतिभूर्द्धारिणिकेन निरादिष्टधनोदत्तधनःस्यात् । तच्च दत्तं तस्मै धनं धार्यमाणशोधनायालंपर्याप्तं यस्य सोऽलंधनः । तदा निरादिष्टोदत्तधनः सतस्मिन्द्रव्ये व्ययितेऽपि स्वधनादेवाकृष्यदद्यात् । तथाच तद्दायादेरपि तद्देयमेवेत्यर्थः । अलंधनमिति सर्वदानमपेक्ष्य अल्पेतु स्थापिते तावदेव शोधनीयं न सर्वंधनंदेयम् ॥ १६२ ॥

( ३ ) **कुल्लूकः** । प्रतिभुवोमृतत्वात्तत्पुत्रस्य चादानप्रतिभूत्वेनादातृत्वादित्याशङ्क्याह निरादिष्टेति । असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदिनिरादिष्टधनोधमर्णेन निसृष्टधनो यावता धनेनासौ प्रतिभूस्तच्छोधनपर्याप्तधनस्तदात्मधनादेव तद्धनंनिरा दिष्टोत्र निरादिष्ट धनपुत्रोलक्षणयोच्यते ऋणमुत्तमर्णाय दद्यादिति शास्त्रसंप्रदायः ॥ १६२ ॥

( ४ ) **राघवानन्दः** । अधमर्णादवाप्तधनस्य पितुर्मरणेपि पुत्रः समर्थश्चेत्तदृणं दद्यादित्याह निरादिष्टेति । अधमर्णेन निरादिष्टं समर्पितं मरणादिकाले किंचिद्धनंयस्मै सनिरादिष्टधनः दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा अलंधनश्च पर्याप्तधनः यावति धने ऋणपरिशोधनंस्यात्तावद्धनः स्वधनादृणंदद्यादिति । निरादिष्टधनइति प्रतिभूपुत्रोलक्षणया । इति स्थितिः शास्त्र-

मर्यादानतु बलात्कारः। अलंधनइति विशेषणात्परीप्सेत्केनहेतुनेतिन्यायाभावस्योक्तत्वात् च विज्ञातप्रकृतित्वेन धनलाभस्य सूचितत्वाच्चप्रकरणाद्दायादानपि दापयेत्इत्यत्र दानप्रतिभूदायादस्यैववाग्रहणम् ॥ १६२ ॥

( ५ ) **नन्दनः**। अत्रोत्तरत्वेनेदमाह निरादिष्टधनइति। निरादिष्टधनः पुत्रः परत्रवासंक्रामितधनः प्रतिभूर्मरणेन तिरोधानेन वाऽलक्षितोयदि स्यात्सनिरादिष्टः। प्रतिभूर्धनग्राह्यो पुत्रावरोवा स्वधनादेव तदृणमुत्तमर्णाय दद्यात् ॥ १६२ ॥

( ६ ) **रामचन्द्रः**। तत्रोत्तरमाह निरादिष्टेति। प्रतिभूर्निरादिष्टधनः अधमर्णेनदत्तधनश्चेत्तर्हि अलंधनः उत्तमर्णाय दातुं गृहीतसंपूर्णधनस्यसनस्यात्सप्रतिभूःस्वधनादेयंतदृणंदद्यात् ॥ १६२ ॥

**मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा ॥ असंबद्धकृतश्चैव व्यवहारोन सिध्यति ॥ १६३ ॥**

( १ ) **मेधातिथिः**। कार्यपर्यायोव्यवहारशब्दः यत्किंचिद्दानाधानविक्रयादिकार्यंलेख्यादि च प्रमाणमेतैः कृतंतन्न सिध्यति कृतमप्यकृतंभवति। मत्तोन्मत्तौविख्यातौ आर्त्तोधनबन्धुनाशादिपीडितः प्रत्युपस्थितभयश्च। यौगिकत्वान्मत्तादिशब्दानांयावन्मदादियुक्तास्तावत्तत्प्रमाणमावस्थिकोयंप्रतिषेधः प्रदर्शनार्थंचैतदप्रकृतिस्थत्वमात्रस्य यथोक्तं कुर्यादप्रतिकृतिंगतः तदाप्रकृतमस्याहुरस्वतन्त्रेसहेतुलइति। अप्रकृतिस्थश्चोच्यते उपप्लुतबुद्धिस्वकार्यविवेचनेअसमर्थः उक्तंच ॥ कामक्रोधाभियुक्तार्थो भयव्यसनपीडिताः। रागद्वेषपराश्चेति ज्ञेयास्त्वप्रकृतिंगताइति ॥ कामादीनांद्वन्द्वंकृत्वा पीडितशब्देनतैः पीडिताइति साधनंकृतेति तृतीयासमासः तेन पीडितस्य प्रतिषेधः सचायंसंप्रति मन्मथाधिष्ठस्त्रीपरिरम्भणादिपरीप्समानोभवति अभियुक्ताद्यूतादिक्रियान्तरे दत्तावधानाः एते हि तत्र संसज्जन्तः स्वामिनोपि स्वइत्यस्य प्रातिभाव्यादिक्रियानिश्चयस्यानवधानान्न प्रमाणं यतः क्रियान्तरावहिततया परेण पृच्छ्यमानाइदमस्मै दीयतामङ्गीकृतंवा प्रातिभाव्यमियति वस्तुनीदृशेऽनेन च प्रकारेणोच्यतइत्येवमादि निपुणतोनावधारयन्ति प्रकृतिक्रियाविघ्नोवा माभूदस्मिन्निहस्थइत्यभिप्रायमभ्युपगच्छन्ति गच्छ त्वंयद्ब्रवीषि तत्सर्वमनुष्ठीयतइति पारतन्त्र्यंवाङ्गीकुर्वन्ति तदुक्तं स्वतन्त्रसहेतुतइति येन हेतुनाऽस्वतन्त्रोऽप्रमाणंसोस्य स्वतन्त्रस्यापि हेतुर्विद्यते यथाऽस्वतन्त्रः स्वमपि न विनियुङ्क्ते एवमयमपि कामादिवशीकृतमर्थविवेकंकार्याणांच गुणदोषौ क्रियमाणावनधिगच्छन्नस्वतन्त्रेण तुल्योभवति। आर्त्तोव्याख्यातः अभियुक्तविशब्दौ च धर्मिवचनौ लक्षणया धर्मिपरौ विज्ञेयौ अभियोगोऽभियुक्तआतुरइति। व्यसनानि कामक्रोधसमुत्थितानि मृगयादीनि अभियुक्तव्यसन्यपि काश्चित्क्रियांतात्पर्येण कुर्वन्नुच्यते अव्यसन्यप्रवृत्तोऽपि तद्व्याख्यानरतः। अथवा कामक्रोधशब्दौ कामिनिक्रोधवतिवर्तेते अत्र पक्षेभयव्यसनशब्दौ कृतद्वन्द्वौ पीडितशब्देन संबध्येते अन्येतु स्वतन्त्राएव रागद्वेषाभ्यांपरीताव्यामारागः क्वचिदात्मीयेष्वभिषङ्गआत्मीयतया परिगृहीतस्य चित्संबन्धिनापि ध्यायतोवाभिप्रेतसिद्धौ मनसः परितोषोरागस्तद्विपरीतोद्वेषविषयः परिपन्थिन्यनात्मीयतया परिगृहीते तदस्वास्थ्यतद्विपर्ययात्परितुष्टिवृत्तिरित्येवमादिरूपौ रागद्वेषौ सर्वथास्य भावबुद्धिश्चलिता क्षणमपिविवक्षितेकार्ये नावतिष्ठते अन्यद्वदन्तोऽन्यदाचरन्ति एवंरूपोऽप्रकृतिस्थः अन्यथा सर्वएव पुरुषाः कामादियुक्ताः जराजीर्णाक्षिशिरोरोगार्त्तिमत्ताः प्रकृतिस्थाः स्युर्नचैवमध्यधीनोगर्भदासः पुत्रशिष्यौ भार्या च यद्यपि रूढ्या गर्भदासएवाध्यधीनस्तथाप्यस्वतन्त्रोपलक्षणार्थत्वात्सर्वएव ते गृह्यन्ते। स्वधनदानादि स्वामिनमनुज्ञाप्य यत्कुर्वन्ति तत्सिध्यति तथाच नारदः ॥ यद्बालः कुरुते कार्यमस्वतन्त्रकृतंच यत् ॥ अकृतंतदिति प्राहुरिति ॥ अस्वतन्त्रः स्मृतः शिष्यआचार्येतु स्वतन्त्रता। अस्वतन्त्राः स्त्रियः पुत्रादासाद्यश्च परिग्रहः ॥ स्वतन्त्रस्तुगृही यस्यतस्य तत्स्यात्क्रमागतम् ॥ ननु यदि न स्वातन्त्र्यंस्त्रीणामुच्यते पुंसश्च स्वातन्त्र्यमेतदनुपपन्नं यतः साधारणं धनंकथमेकाकीमनुष्योभार्यायाऽननुज्ञातोदानविक्रयादिभ्यः प्रभवेदतइत्युक्तं ॥ स्त्रीकृतान्यप्रमाणानि का-

र्याण्याहुरनापदीति ॥ तथा कुले ज्येष्ठइत्युपक्रम्य तत्कृतःस्यात्कार्यंज्ञातविक्रीतमिति धनसाधारणंहि पुरुषेऽपि स्त्रीवदस्वतन्त्र यच्छब्दे स्वाम्यंपारतन्त्र्यंचेति तद्विरुद्धमिव स्वामित्वस्येत्येताश्च व्यवस्थेति योज्यंभवति। पारतन्त्र्यंपरिविधेयताछदिर्वार्तित्वं यदि च परतन्त्रःपरेच्छामन्तरेण विनियोक्तुंन लभते कीदृशमन्यस्वाम्यस्य अथदानाधानविक्रये यत्र प्रकृतत्वादनीशाः स्वशरीरे परिभोगादौ यावदिछंस्वधर्मोविनियोज्यते परतन्त्रमहाधनानांशास्त्रनिगृहीतात्मनांयोनात्मोपभोगोभवेद्बालस्यस्वाम्यपारतन्त्रे उपपन्नोयदा ग्रामव्यवहारस्तदा शिष्यते एव पुत्रादावपि स्त्रियास्तु न कदाचिदपारतन्त्र्यं ॥ बालया वा युवत्या वा वृद्धया वापि योषिता। न स्वतन्त्रेण कर्तव्यंकार्यंकिंचिदिति स्थितिः ॥ स्वाम्यपारतन्त्र्ये स्त्रीणामसमावेशउच्यते न पारतन्त्र्यवचनेन स्त्रीणांस्वधनविनियोगनिषेधः क्रियते किंतर्ह्यस्थाने दानाधानविक्रयादि वार्यते परतन्त्रास्तैरासांस्थाने निरूपणे येन हिताः स्वयंविवेक्तुमलमेषपात्रमर्हति। भूमिहिरण्यादिप्रतिग्रहमनेन कन्यासंबन्धंकुर्यात् इदंद्रव्यमस्मात्कर्तुंविक्रेतुंवार्हसीत्येवमादितया ज्ञातव्यं अतोलेख्यादिकाले भर्त्राद्यनुमतिरुपयुज्यते केवलाकृते कार्ये नाहंकिंचिदविज्ञाते त्वया विप्रलब्धास्मीति वचनस्यावसरत्वात्। भर्त्राद्यनुमतौ तुकिंवक्ष्यति तदुक्तं ॥ एतान्यपि प्रमाणानि भर्तायद्यनुमन्यते। पुत्रः पत्युरभावे वा राजाधिपतिपुत्रयोः ॥ अतिस्वातन्त्र्यमपि नियमितं ॥ अनुशिष्टा विसर्गे च विक्रये विस्तरा मता ॥ अपिबुद्धिपूर्वंबालस्खलिते स्वामिना पत्न्यादयोनियोज्याअनुबन्धादिना ननु तैः स्वाम्यविसर्गेऽपि ॥ सा सद्यः संनिरोद्धव्या त्यजेद्वाकुलसंनिधाविति ॥ स्त्रीणामेव न पुंसः पारतन्त्र्यंपतितस्याप्याप्रायश्चित्तसमाप्तेः प्रतीक्षणोपदेशोतोविक्रयोपि दासादीनांगरीयस्यामापदि कुत्रचिदस्ति तेषु स्वामिनइत्येतदपेक्ष्यभार्याशिष्यदासीनांयथास्वंपारतन्त्र्यं धनसाधारण्यात्तु न भर्तुरनुज्ञाप्यभार्यायायागादौ क्वचिदधिकारइतिस्थितं यच्चेदंपुत्राणांभर्तरि प्रेते वशोत्तिष्ठतु तथा ॥ जीवतोरस्वतन्त्रःस्याज्जरयापि समन्वितः। तयोरपि पिता श्रेयोनभोवावीजिनोमतइति पुत्राणांपारतन्त्र्यम्। ननु चान्योन्यव्याहतामतिनास्ति व्याघातः अनधिकारिणि पुत्रे बाले मातृपरतन्त्रता मातुस्तु पुत्रे पारतन्त्र्यंमातृधनरक्षणंचोरादिदोषेभ्यः पुत्रस्यापि यत्पितरि पारतन्त्र्यंतदपृथक्कृतस्य तदग्रहे निवसेत् यदा तु पितृविभक्तधनंस्वयमर्पितवांस्तदा ॥ ऊर्ध्वन्तुषोडशाद्वर्षात्पुत्रंमित्रवदाचरेदिति ॥ स्वातन्त्र्यमेव बालोऽप्राप्तव्यवहारः षोडशवर्षात्प्राक् स्थविरोलुप्तस्मृतिनिराभिभूतोभीतव्यवहारः। यद्यप्ययंकस्यांचिद्वेलायां प्रकृतिस्थोपि भवति तथापि न प्रमाणंन प्रयात् यस्य तु भर्तुः स्त्री जनानांकार्यप्रतिबन्धेन वर्तते तयानुज्ञातमेतद्भवति असंबन्धः कृतः परार्थमनियुक्तोयोव्यवहारयति न भ्राता न पिता देवदत्ताय शतंधारयतीत्येवमादिवक्तुंन लभ्यते। येतुभ्रातरःसमानकार्याः सर्वे च तुल्यव्यवहारिणस्तेषामन्यतरेणापि गोपश्वादिविक्रयोगृहादिबन्धनप्रयोगादिच क्रियमाणंसिध्यति संबन्धित्वाय व्यवहारशब्दः सर्वव्यवहारग्रहणार्थः प्रकरणादृणव्यवहारएव स्यात् ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः**। आर्त्तः शोकादिना। अधीनोभृत्यः। अधिपदमीश्वरेवर्तते । बालेन षोडशवर्षेण। स्थविरेण लुप्तस्मृत्यादिना। कृतइत्यनुषङ्गः। असंबद्धेन स्वाम्यप्रहितेन परेण। व्यवहारऋणादानादिः। नसिध्यति न लभ्योधनिकस्य ॥ १६३ ॥

( ३ ) **कुल्लूकः**। मद्यादिना मत्तः उन्मत्तोव्याध्यादिपीडितोपहतास्वतंत्रबालवृद्धैरस्वतन्त्रत्वेन पितृभ्रातृनियुक्तादिव्यतिरेकेण कृतऋणादानव्यवहारोन सिध्यति ॥ १६३ ॥

( ४ ) **राघवानन्दः**। कृतोपि व्यवहारः क्वचिदसिद्धइत्याह मत्तइति। मत्तोमद्यादिना उन्मत्तोवातादिना आर्त्तोरोगादिना आध्यधीनः कामादिपीडितः अध्यधीनः सेवकोवा स्थविरोऽत्यन्तवृद्धस्तैःकृतः। असंबद्धकृतः असंबद्धेन पित्राऽप्यविनियुक्तेन कृतश्च व्यवहारः ऋणादिविषयकः। मत्तादिभिःसंबन्धिभिःकृतोन सिध्यतीतिवार्थः ॥ १६३ ॥

( ५ ) **नन्दनः** । क्वचित्कृतस्य निवर्तनीयत्वंत्रिभिः श्लोकैराह मत्तेति । आर्त्तोऽप्रतिक्रियपीडायुक्तः । असंबद्धो-गृहक्षेत्रादिरहितः । आगन्तुकस्तेनकृतसंबन्धः । ऋणदानक्रयविक्रयादिकंसंव्यवहारो व्यवहारः । आर्त्तादिभिः सहकृतो-संबन्धकृतश्च व्यवहारोन सिध्यतीति वर्तते ॥ १६३ ॥

( ६ ) **रामचन्द्रः** । अध्यधीनैः नित्यपराधीनैः । असंबद्धः स्वाम्यरहितः । एतैर्मत्तादिभिः कृतोव्यवहारोन सिध्यति ॥ १६३ ॥

**सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ॥ बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥१६४॥**

( १ ) **मेधातिथिः** । कस्यचिदनुष्ठेयस्यार्थस्य प्रतिपादकः शब्दोभाषा सामान्येन भवति योर्थस्तया प्रतिपाद्यते सोनुष्ठेयः किंसर्वाविभाषा न सत्या नेत्याह बहिश्चेद्धर्मान्धर्मवाच्यंयदुच्यते शास्त्राचारविरुद्धंपञ्चकादधिकावृद्धिः भार्या-मत्यविक्रयादिरन्वयिनः सर्वस्तदानीमित्येवमादि यद्यपि स्यात्प्रतिष्ठिताः पत्रलिखिताः प्रतिभुवोवा दत्तास्तथापि न सिध्यन्ति । व्यावहारिकोधर्मआचारनिरूढोनियतोऽनादिर्नेदानींतनः पूर्वशेषंचैतत् । अस्वतन्त्राभकृतिस्थैःकृतंदानाद्यनिश्चित-मिति नप्रमाणम् ॥ १६४ ॥

( २ ) **सर्वज्ञनारायणः** । भाषा परिभाषा कलादिनियमस्य लेखादौ निरूढा नसत्या भवतिव्यर्थाभवति यद्यपि साक्ष्यादिमत्तया प्रतिष्ठिता दृढा स्यात्तथापि । यदि धर्माद्बहिर्भाष्यते तच्च । नियताद्व्यावहारिकात् देशादिव्यवहारसिद्धा-दाचारात् ॥ १६४ ॥

( ३ ) **कुल्लूकः** । इदंमयानुष्ठेयमित्येवमादिकाभाषालेख्यादिना स्थिरीकृतापि यदि शास्त्रीयधर्मात्पारम्पर्यात्सद्व्यवहारा च्च बहिर्भाष्यते सा सत्या न भवति तदर्थोनानुष्ठेयः ॥ १६४ ॥

( ४ ) **राघवानन्दः** । भाषामात्रंनवस्तुसाधकमित्याह सत्येति । इदंमयानुष्ठेयमित्येवंस्थिरीकृतापिभाषा शास्त्रनि-यमात्पारंपर्यात्सत्यव्यवहाराद्वा बहिर्भूता स्वतन्त्रा तदाऽसिद्धैवेतिपद्यस्यार्थः । तथाच ॥ प्रत्यर्थिनोऽग्रतोलेख्यं यथा चो-दितमर्थिना । समामासतदर्धाहोनामजात्यादिचिन्हितमिति ॥ भाषारूपमेतद्बहिर्भूतोऽशास्त्रीयः । तत्र लेख्यप्रकारे याज्ञव-ल्क्यः ॥ यःकश्चिदर्थोनिर्णीतः स्वरुच्या तु परस्परम् । लेख्यंतु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥ समामासतदर्धा-हर्नामजातिस्वगोत्रकैः । सब्रह्मचारिकात्मीयपितृनामादिचिन्हितम् ॥ समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखितम् ॥ साक्षिणश्चस्वहस्तेन पितृनामादिपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ ते सङ्ख्यातोगुणतश्च समाः कार्याइत्यर्थः ॥ अलिपिज्ञऋणी यः स्याल्लेखयेत्स्वमतं तुसः । साक्षीचेत्साक्षिणान्येन सर्वसाक्षिसमीपगः ॥ साक्ष्यप्यलिपिज्ञश्चेत्सोपि सर्वसाक्षिसमीपगःसन्स्वनाम लेखयेदित्यर्थः ॥ उभयानुमतेनैतन्मयाह्यमुक-सूनुना । लिखितंह्यमुकेनेति लेखकोन्ते ततोलिखेत् ॥ विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ॥ तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते ॥ ऋणं लेख्यगतं देयं पुरुषैस्त्रिभिरेवच ॥ त्रिभिरित्यनेन प्रपौत्रादीनां न दानार्हत्वम् ॥ आधिस्तु भुज्यते तावत्यावत्तन्नप्रदीयते ॥ नप्रदीयतेबन्धकधनमित्यनेन बन्धकभूम्यादीनां प्रपौत्रादेरपि ग्राह्यतेत्यर्थः ॥ देशान्त-रस्थे दुर्लेख्येनष्टेम्लिष्टेहृतेतथा । भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ दुर्लेख्ये उक्तवैपरीत्येम्लिष्टेऽक्षर-शोलुप्ते भिन्ने द्वैधीभूते छिन्नेऽवयवशइति भेदः । किंच ॥ संदिग्धे लेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः । युक्तिप्राप्तिक्रियाचिन्हसंबन्धागमहेतुभिः ॥ युक्तिरित्यादेरयमर्थः । धनवतोस्मादयं ग्रहीतुं योग्यः निर्धनत्वादिति युक्तिः । प्राप्ति-रेतावत् त्वत्तःप्राप्तम् क्रिया मद्धनेन वाटीयंक्रीता मद्धनेन मठोयंदत्तइति । चिन्हं मद्धनेन दुहितृविवाहःकारितः । आ-गमोमयास्मात् तद्धनं प्रगृहीतं दत्तंच । तुभ्यमित्येतैर्हेतुभिःलेख्यशुद्धिःस्यादित्यन्वयः । किंच ॥ लेख्यस्यपृष्ठेऽभिलिखेद्-

त्वादत्वर्णिकोधनं। धनी वोपगतंदद्यात् स्वहस्तपरिचिन्हितम् ॥ दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्। साक्षिमच्च भवेद्यद्वा तद्दातव्यंससाक्षिकमिति याज्ञवल्कीयवचनजातम् ॥ १६४ ॥

( ५ ) **नन्दनः**। परस्परकृतसमयोभाषा। प्रतिष्ठिता साक्ष्यलेख्यादिरूपा यदि स्याद्धर्माद्धर्मशास्त्रभावात्। व्यावहारिकाल्लोकव्यवहारभवाच्च। नियमात्समयात् बहिर्भाष्यतेचेत्सत्यानुचिता कार्यनिष्पादनीसा न भवति। तस्य सत्यत्वंनिवर्तनीयमित्यर्थः ॥ १६४ ॥

( ६ ) **रामचन्द्रः**। भाषा परिभाषा सत्या न भवति यद्यपि प्रतिष्ठितास्यात् लेख्यानिश्चिता लेख्यसाक्ष्यादिना स्यात् नियताद्व्यावहारिकात् चेत् धर्मादपेतातद्बहिः भाष्यते ॥ १६४ ॥

**योगाधमनविक्रीतंयोगदानप्रतिग्रहम्॥ यत्र वाप्युपधिंपश्येत्तत्सर्वंविनिवर्तयेत् ॥ १६५ ॥**

( १ ) **मेधातिथिः**। योगः छद्म तेन यदावापकंबन्धकीकृतमिति एतच्च ज्ञायते असत्यकार्येण कृतंतद्राजा विनिवर्तयेत् कश्चिद्धनिकेनोपरुध्यमानआह न किंचिदस्तीति ननु क्षेत्रे स्थण्डिलेवासोस्ति तदर्पयेत्यनयाशङ्कया सुहृत्स्वजनायकस्मै चिदसावाधानी करोति ततआह तदन्यस्य मया बाधकीकृतमिति एतच्चज्ञायते सत्यपि प्रकाशलेख्ये तस्य आधातृतायोगात्। यदि हि परमार्थतयाधित्वेन कृतंकथमाधानैव भुङ्क्तइति एवंविधियोगावापनमप्रमाणीकृत्य धनिने क्षेत्रादि दापयितव्योऽधमर्णः यस्य चान्येनागमेन स्वाम्यंधनदानकालआगमान्तरेण करणंकरोति तदपि योगावापनं तत्राधमर्णोयस्य वानेनागमेन स्वाम्यंदण्डितः सत्यमागमंकारयितव्यः एवंविक्रयादि योयेन महार्घज्ञोविक्रीणीते नैव मूल्ये क्रेतुरादत्ते यच्चात्र तेहविक्रीतंमया तवेदमिति सउत्तरकालंविक्रीतंत्वया ममेदमिति न लभते वक्तुं नचायंविक्रयानुशयोदशाहात्परेणापि निवर्तयेदिति यांवाप्रेन क्राययति पूर्वोक्ते पञ्चम्याङ्कनिमित्ते सति निमित्तान्तरे वा सति विक्रीतेन च रूपादिभिः क्रयोपहर्तव्यव्यवहारे न दृश्यते नच रूपकादिसंचयशीलइत्यादिना योगविक्रयाधिगमोयोगदानप्रतिग्रहंन यद्यपि दानप्रतिग्रहक्रिययोरन्यतरोपादानेनैवेतराक्षेपोन्यथा स्वरूपासिद्धेः तथापि क्रियाद्वयोपादानंवृत्तपूरणार्थम्। अथवैकक्रियोपादाने तत्कारिणएव दण्डःस्यात् द्वितीयस्य सत्यपि तत्साधनत्वे शब्देनानुपादानादतोदातुः प्रतिग्रहीतुर्द्वयोर्दण्डार्थंभेदेनोपादानं तथा सति योगवन्नविक्रीतमित्यत्रापि क्रयादिद्वितीयक्रियोपादानंकर्तव्यं स्मृत्यन्तराद्वा सामान्यशास्त्राद्वानुपादाने पिण्डः स्यात्। यच्चाप्युपधिंपश्येदिति यदुभयस्वामिकमन्यतरे प्रतिग्रहीत्रा सह संविदंकृत्वा दापयते एवमादियोगदानप्रतिग्रहंदानंच प्रतिग्रहश्चेति विगृह्य द्वन्द्वैकव्यवहारः। उपधिः छद्मनमन्यत्राप्येताभ्यः क्रियाभ्यः उपधिर्विधर्मः यथाकश्चिद्धनिनोतत्वोयावदियद्भिरहोभिर्दातव्यमिति प्रतिभुवंन स्थापयसि तावत्त्वांनत्यक्ष्यामीति तस्मिन्विषये कश्चिदुत्तमर्णेन सहसंविदंकरोति मासस्य प्रतिभुवंगृहाण यावदेनमुपपीडयामि बव्हनेन ममापकृतं अहमस्यपीडार्थएव प्रतिभूर्नं मया किंचिद्दातव्यमिति तत्रोत्तमर्णः प्रकाशमाह यद्यस्यास्ते प्रतिभूर्नास्तिकर्मादिकंन प्रार्थयसे नूनंजिहीर्षितंते धनंसमीहितःप्रत्याह नैतेन सह मम द्वयोर्व्यवहारः प्रवृत्तपूर्वइति प्रतिभूः पुनराह भवानितवाहंप्रतिभूः सोनिछन्पीडोपरोधादाहं वणिज्याशिल्पारम्भादिक्रियैतद्व्यतिरेकिणोदर्शनीया उदाहरणमात्रंदानमेवायंन विक्रयः तदेतद्योगकृतंकार्यंयावत्किंचन तत्सर्वंराजा निवर्तयेद्राजाकृतमप्यकृतमादिशेन्न प्रमाणीकुर्यात् कर्तारंकारयितारंच दण्डयेत् ॥ १६५ ॥

( २ ) **सर्वज्ञनारायणः**। योगः छद्म तेन कृतं आधमनमाधिस्थापनं तथा छद्मकृताविक्रयदानप्रतिग्रहाः। अन्यत्रवा यत्रर्णग्रहणक्रयोपनिध्यादावप्युपधिंछलंपश्येत्तत्र कृतं लेख्यादिकमपि निवर्तयेत् ॥ १६५ ॥

---

( १६५ ) योगाधमन=योगावाप ( मे. )

( ३ ) **कुल्लूकः** । योगशब्दश्छलवाची छलेन ये बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न तत्त्वतोऽन्यत्रापि निक्षेपादौ यत्र छद्मजानीयात् वस्तुतोनिक्षेपादि न कृतंतत्सर्वंनिवर्तेत ॥ १६५ ॥

( ४ ) **राघवानन्दः** । छलादिविषयेऽप्यसिद्धिमाह योगेति । योगशब्दोयमत्र छलपर्यायोऽधमनोवश्चकैस्तेन व-न्धकादिचतुष्टयंकृतंनिवर्तयेत् । अत्रनिक्षेपादावुपधिं छद्म वा पश्येज्जानीयात्तदपि निवर्तयेत् । यद्वा साध्यव्यापकत्वे-सति साधनाव्यापकत्वमुपाधिः यथा ममेदं हिरण्यं हिरण्यत्वात् मद्धस्तगतहिरण्यवदिति तत्रत्वक्रीतत्वाद्युपाधि-रूपं पश्ये त्तदपि निवर्तयेन्मिथ्येति कृत्वा ॥ १६५ ॥

( ५ ) **नन्दनः** । आधमनविक्रयादिप्रयोजनेभ्योलोकसिद्धेभ्यः प्रयोजनान्तरसबन्धोयोगस्तदभिसबन्धिकृतमाधनं-योगाधमनंयथा ज्ञातिभीतस्य गृहक्षेत्रादिकाधमनं एवंयोगविक्रयंयोगदानंयोगप्रतिग्रहंयत्र पश्येदुपहितंचविनिवर्तयेद्रा-जा ॥ १६५ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषः गाधंपरछलकारणं पश्येत् अनविक्रीतं अधिस्थानं योगदानप्रतिग्रहं योगः उपधिः दानं प्रतिग्रहः तं यत्रयोगेयत्रदानं यत्र प्रतिग्रहे उपधिंपश्येत् यत्र कार्ये उपाधिकं परं पश्येत्तत्कार्यंविनिवर्तयेत् ॥ १६५ ॥

**ग्रहीता यदि नष्टः स्यात्कुटुम्बार्थे कृतोव्ययः ॥ दातव्यंबान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः ॥ १६६॥**

( १ ) **मेधातिथिः** । उक्तंयेन गृहीतमृणंतेन प्रतिदातव्यं तदभावे पुत्रपौत्रैस्तदभावे तद्रक्थहारी तत्तद्व्यतिरेकेनान्य-स्य दानंप्राप्तमिष्यतेऽत्रकचिद्विषये तदर्थमिदमुच्यते यद्गृहीतंधनंसचेन्नष्टोमृतोदेशान्तरंगतोवा कुटुम्बेन च कृताव्यये।दातव्यं-बांधवैस्तद्भ्रातृतत्पुत्रपितृव्यादिभिः प्रविभक्तैर्विभक्तधनैरपि स्वतः स्वधनादित्यर्थः । यत्तावद्भ्रातरहमिति तेषांयदृणमुप जातं-तद्गृहमध्यादेवदीयते । तद्दृष्टेऽस्य विभागः यथोक्तं ॥ पितृव्येणाविभक्तेन भ्रात्रा वा यदृणंकृतं । मात्रा वा यत्कुटुम्बार्थंदद्यु-स्तत्सर्वमृक्षितइति ॥ अविभक्तानामन्यतमेन यत्कुटुम्बार्थमृणंकृतंतद्भ्रातृपितृव्यतत्पुत्रादयः सर्वे दद्युर्नत्वकुटुम्बार्थमित्यर्थः अविभक्तग्रहणात्तेषामेव तथाविधमृणंसंभवेत् प्रायः नहि प्रविभक्तात्परकीयकुटुम्बकरणार्थमृणंगृह्णन्तोदृश्यन्ते प्रविभक्ति-रपीत्याह अपिशब्दादविभक्तैश्च यदिश्चेद्भ्रातॄणांविभक्तानांस्वकुटुम्बभरणात्समकृत्वा प्रवसेदितरश्च महासत्वतया तदीयकु-टुंबंबिभ्रतीयास्तत्र विभक्तेनापि भ्रात्रा पितृव्येण यदृणंकृतंतदितरोदद्यादेव देशान्तरागतः ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः** । विभक्तेनाविभक्तेनवा भ्रात्रादिना कुटुम्बार्थे यः कृतोव्ययः सतत्र मृते तिष्ठद्भिर्दायादै-र्देयइत्यर्थः । स्वतोधनात् मृतसंबन्धिनः स्वीयाद्वा ॥ १६६ ॥

( ३ ) **कुल्लूकः** । ऋणग्रहीता यदि मृतः स्यात्तेन पूर्वविभक्ताविभक्तसर्वभ्रातृकुटुम्बसंवर्द्धनार्थंतदृणव्ययः कृतस्तदा तदृणंविभक्तैरविभक्तैश्च स्वधनाद्दातव्यम् ॥ १६६ ॥

( ४ ) **राघवानन्दः** । यदि ग्रहीता ऋणादेर्मृतस्तदा कागतिरत्राह ग्रहीतेति । ग्रहीताधमर्णोज्येष्ठभ्रात्रादिः । कुटु-म्बार्थेकृतोव्ययस्तदृणंव्ययितम् । तदा स्वतः स्वकीयाद्धस्तात् । नष्टपदं प्रव्रज्याद्युपलक्षणम् ॥ पितरि प्रोषिते प्रेते व्य-सनादियुतेपि वा । पुत्रपौत्रैर्ऋणंदेयंनिन्हवे साक्षिभाषितमितियाज्ञवल्क्योक्तेः ॥ पितृपदं ज्येष्ठाद्युपलक्षणम् । बान्धवैः पुत्राद्यैः ॥ १६६ ॥

( ५ ) **नन्दनः** । ऋणस्य ग्रहीता नष्टोमृतस्तिरोहितोयदिस्यात् कुटुम्बे च ऋणस्य तस्य व्ययस्तेन कृतोयदि स्यात् बान्धवैर्भ्रातृभिर्यैस्तदृणमविभक्तैर्भुक्तंपश्चात्प्रविभक्तैरपितैःस्वीकार्यादर्थात्तदृणमुत्तमर्णाय दातव्यंस्यात् ॥ १६६ ॥

* वश्चकः=बंन्धक ( राघ० २ )

( ६ ) रामचन्द्रः । यदि गृहीता स्वामीनष्टःस्यात् च पुनः कुटुम्बार्थे कृतोव्ययः तत्ऋणंबान्धवैःदातव्यम् विभक्तैःबान्धवैः स्वस्वधनात्न दातव्यम् ॥ १६६ ॥

**कुटुम्बार्थेऽध्यधीनोपि व्यवहारंयमाचरेत् ॥ स्वदेशे वा विदेशे वा तंज्यायान्नविचालयेत् ॥१६७॥**

( १ ) मेधातिथिः । तिष्ठन्तु तावद्भ्रात्रादयः कुटुम्बार्थेध्यधीनोऽपितुगृहकर्मभृत्योऽपि व्यवहारंते वस्त्रादिविक्रयंक्षेत्रस्थण्डिलादिप्रयोगकर्षणायऋणंव्यवहारंवा यमाचरेत्सदेशे वा सन्निहितस्य प्रोषितस्य चतंज्ञात्वा गृहस्वामी न विचालयेदविचार्येव साधुकृतमन्येनुमन्यन्ते । अन्येतु पूर्वशेषोयमर्थवादोनविधिरित्याहुः तदुक्तं । नह्यर्थवादताबीजंकिंचिदस्ति विभज्यमानंशाकंक्षेत्रंयत्तच्छब्दाभिसंबन्धम् । अथ मत्तोन्मत्तार्त्ताध्यधीनैरस्वातन्त्र्यादध्यधीनस्य तत्कृतप्रमाणमिति । अकुटुम्बार्थे संनिहिते च स्वामिनि नयुक्तंकल्पयितुं अन्यथाकुटुम्बावसादस्यादतस्तद्भरणात्मके व्यापारे प्रमाणीभवति दैवाद्यधीनः ॥ १६७ ॥

( २ ) सर्वज्ञनारायणः । अध्यधीनोभृत्यः । विदेशे स्वपरोक्षे । ज्यायानधिकृतः ॥ १६७ ॥

( ३ ) कुल्लूकः । तद्देशस्थे देशान्तरस्थे वा स्वामिनि स्वामिसंबन्धिकुटुम्बव्ययनिमित्तंदासोपि यदृणादानादि कुर्यात्स्वामी तत्तथाप्यनुमन्येत ॥ १६७ ॥

( ४ ) राघवानन्दः । एवंकुटुम्बपोषणाय कनिष्ठादिगृहीतमपि ज्यायसा देयमित्याह कुटुम्बेति । अध्यधीनः कनिष्ठादिः नविचालयेत् । न ददामीति नब्रूयात् ॥ १६७ ॥

( ५ ) नन्दनः । यस्यव्यवहारमाणादिप्रयोगोज्यायान्स्वतंत्रोगृही न विचारयेत् ॥ १६७ ॥

( ६ ) रामचन्द्रः । अध्यधीनः गर्भदासः कुटुम्बार्थेयंव्यवहारंऋणं आचरेत् करोति स्वदेशे वा तंऋणंज्यायान् ज्येष्ठः न विचारयेत् अन्यथा न कुर्यात् ॥ १६७ ॥

**बलाद्दत्तंबलाद्भुक्तंबलाद्यच्चापि लेखितम् ॥ सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ १६८ ॥**

( १ ) मेधातिथिः । यथा न बालाः स्वतन्त्राप्रकृतिस्थौपधिकृतंप्रमाणंतद्वद्बलकृतमपि सर्वान्बलकृतानर्थान्निवर्त्यानित्येव विधिः । भुक्तंदत्तंलेख्यलेखितमित्युदाहरणमात्रं तत्र बलाद्दत्तंयदनुपयुज्यमानंक्षेत्रारामादि वाहनाय दीयते वृद्धिकामोवा यद्धनंदैवादारोपयति वारवाहनमनिच्छतांगृहेषु मुख्यार्पणंपण्यमश्नुते लिखितमात्रकारणं सर्वानित्यन्यानप्येवंविधानर्थान्कार्याणीत्यर्थः । योगावापनमित्यत्र निपुणंदर्शितमत्रापि श्लोके समस्य योगबलशक्ये प्रक्षेपंपृथक्श्लोकद्वयकरणंविचित्राश्लोकस्य कृतिर्मनोर्मत्तोन्मत्ताध्यधीनैर्बालवृद्धैर्वा बलात्कृतोऽसंविधिना योगोव्यवहारोन सिध्यतीति सिद्धत्येव न मानवद्भवति ॥ १६८ ॥

( २ ) सर्वज्ञनारायणः । बलात् बन्धनताडनादिनातद्भयेनवा । सर्वान् क्रयादीन् । अकृतान्निवर्तनीयान् ॥ १६८ ॥

( ३ ) कुल्लूकः । बलाद्दत्तमप्रतिग्राह्यादि बलाद्भुक्तंभूम्यादि बलाल्लेखितंचऋवृद्धिपत्रादि प्रदर्शनंचैतत्सर्वान्बलकृतान्व्यवहारान्निवर्त्तनीयान्मनुराह ॥ १६८ ॥

( ४ ) राघवानन्दः । किंच बलादिति । बलादावश्यकर्तव्यतातिरेकात् दत्तं व्ययितं अप्रतिग्राह्यादि राजादिसहायाद्वा दत्तं दापितम् । भुक्तं निषिध्यमानं भूम्यादि । लेखितं चक्रवृद्ध्यादिपत्रम् सर्वान् । क्रयविक्रयादीन् अकृतान् मनुरब्रवीदित्यन्वयः । मत्ताद्यतिरिक्तविषयम् तदसिद्धस्योक्तत्वात् ॥ १६८ ॥

( ५ ) **नन्दनः** । प्रमाणादिकंकुर्य्यादेव बलकृतंसर्वंनिवर्तनीयमित्याह बलाद्दत्तमिति । तदप्यकृतंमनुरब्रवीत् । सर्वानुक्तव्यतिरिक्तान्योऽर्थोश्चास्मिन्प्रकरणे साक्षिप्रतिभुवोः परार्थेक्लेशउक्तः । दण्डदशबन्धादिनाराज्ञोवृद्धिश्चोक्ता ॥ १६८ ॥

**त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ॥ चत्वारस्तूपचीयन्ते विप्रआढ्योवणिङ्नृपः ॥ १६९ ॥**

( १ ) **मेधातिथिः** । परेणार्थ्यमाने साक्ष्यंप्रातिभाव्यंव्यवहारेणक्षणंच कर्तव्यं कुलादिभिर्नत्वयमुपेत्य हठात् । अतः स्वयंकुर्वन्तोन प्रमाणीभवन्ति अथवा परस्यार्थंकुर्वन्तः क्लेशमाप्नुवन्ति नह्येषांत्वार्थगन्धोस्त्यतोबलान्नकारयितव्याः । कुलंवृद्ध युषाः परेण वार्थ्यमानाविप्रादयउपचीयन्ते अतोन हठादनिच्छन्विप्रंप्रतिग्रहीतव्याः । अथवा परसंबन्धिनोऽर्थायेोपचयोविप्रस्यातः स्वार्थाप्रवृत्तिर्नै परार्थैव तेन विप्रेण नबलात्तदनादाने प्रवर्तनीयं हृतबलसाध्यंदानमिति लोकप्रवादोन दापयन्तंनिषेधति तदिच्छन्तंदापयेत् याञ्चयातुबलं एवमाढ्यः कुशीदवृत्तिर्धनवानिव नप्रयोजनीयः किमिति कुसीदंव्यवहारेऽन्यस्मैददाति न मह्यमिति । अथवा तेन बलवतोन्यस्मिन्नेच्छन्ति तद्ध्यंकुर्वद्धनमारोपयितव्यं यतः परेणार्थ्यमानउपचीयते न बलान्प्रयुञ्जानः शास्त्रनिषेधात् एवंवणिक्कुसीदी धनवृद्धिकामएव व्यवहारयति वणिक्पण्यजीवी नृपोराजापि प्रयुक्तराजदण्डमाददानउपचीयते नतु बलादिप्रोत्साहनेन व्यवहारयन् तदुक्तं नोत्साहयेत्स्वयंकार्यमिति विप्रादीनांविधिरनुवादोराज्ञोदृष्टान्तार्थः । अथवा सर्वस्योदाहरणप्रपञ्चस्तथाप्येतनोऽपि ॥ १६९ ॥

( २ ) **सर्वज्ञनारायणः** । कुलमविभक्ताज्ञातयोमृतस्यज्ञातेरत्वस्याप्यृणंशोधयन्तः । अतःसाक्षित्वप्रतिभूत्वानाङ्गीकारेण कुलत्वंच विभागे निवर्तनीयमित्यर्थः । व्यवहारेण तद्दर्शनेन । चत्वारः उपचीयन्ते परधनंलभन्ते विप्रः प्राड्विवाकः राज्ञःसकाशाद्धनप्राप्त्या । आढ्योधनिकोवृद्ध्या जीवनेन । वणिक् वाणिज्येन । नृपोराजा दण्डादिप्राप्त्या ॥ १६९ ॥

( ३ ) **कुल्लूकः** । साक्षिणः प्रतिभूः कुलंच धर्मार्थव्यवाहारद्रष्टा त्रयएते परार्थेक्लेशमनुभवन्ति तस्मात्त्वनेन साक्ष्यं प्रातिभाव्यंव्यवहारईक्षणंच नाङ्गीकारयितव्याः चत्वारः पुनः ब्राह्मणोत्तमर्णवणिग्राजानः पदार्थदानफलोपादानऋणद्रव्यार्पणविक्रयव्यवहारेक्षणरूपंकुर्वाणाधनोपचयंप्राप्नुवन्ति । तस्माद्विप्रोदातारमाढ्योऽधमर्णंवणिक्क्रेतारंराजा व्यवहर्तारंबलेन न प्रवर्तयेत् । पूर्वश्लोकाभिहितबलनिषेधस्यैवायंप्रपञ्चः ॥ १६९ ॥

( ४ ) **राघवानन्दः** । बान्धवानपि दापयेदिति प्रसंगेन सप्तानां परतः यथासंभवंक्लेशवृद्धीराह त्रयइति । तत्र साक्षिप्रतिभूकुलानि क्लेशभाञ्जि । तत्र साक्षिणां सत्योक्तौ न किंचित् अनृतोक्तौ कुलनाशाद्युक्तम् । प्रतिभुवः प्रातिभाव्यदर्शनादौ नकिंचित् तददर्शनादौ स्वधनव्ययैः* । एवं कुलस्य कुपुत्रेण नाशः तस्मात् परतःक्लेशभाजस्तेन बलान्नप्रवर्तनीयाइतिभावः । प्रतिभूपदं निक्षेपधाद्युपलक्षकम् सोपि परार्थएवक्लिश्यति निक्षेपधारणेन किंचित् तन्नाशे चाप्रतिष्ठा तद्दानमिति । परेभ्योविप्रादीनांचतुर्णां प्रतिग्रहाणां दानानर्घविक्रियकरादिग्रहैरुपचयइति । तस्मात् विप्रेण दाता आढ्येनाधमर्णः वणिजा क्रेता नृपेण कार्यार्थीचन बलात्प्रेरणीयइतिभावः ॥ १६९ ॥

( ५ ) **नन्दनः** । तत्र बलात्कारमाशङ्क्यपरिहरति त्रयइति । कुलशब्देन कुलीनोभिप्रेतः तस्योपन्यासोदृष्टान्तार्थः । यथा कुलीनः परार्थे यतमानः क्लिश्यति एवंसाक्षिप्रतिभुवाविति तस्मान्नात्र बलात्कारः कर्त्तव्यइत्यभिप्रायः । चत्वारः परार्थउपचीयन्ते वर्द्धन्ते । विप्रस्योपचयः परार्थएव न स्वार्थो देवपितृशेषत्वात् । आढ्योवार्द्धुषिकस्तस्योपचयः परार्थो-

---

* व्ययः=व्ययः उक्तः ( राघ० २ )

मात्मार्थः । प्रजावृद्ध्यर्थत्वात् । यथा विप्रादयः प्रजार्थमुपचीयन्तएवंनृपोऽपि परार्थमुपचीयतेतस्मादेतदर्थात्मानंनच-क्लादित्यभिप्रायः ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । कुलं अविभक्ताज्ञातयः । चत्वारः उपनीयन्ते जीवन्ति । विप्रः प्राड्विवाकः । श्लाघ्यः दाना-दिव्यवहारेण । नृपः राजा विवदमानानामितियोगीश्वरः ॥ १६९ ॥

**अनादेयंनाददीत परिक्षीणोपि पार्थिवः ॥ न चादेयंसमृद्धोपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥ १७० ॥**

( १ ) **मेधातिथिः** । करदण्डशुल्कादिशास्त्रविहितंवर्जयित्वान्यत्पौरधनमनादेयंराज्ञा क्षीणकोशस्यापि । यत्तु शास्त्र-न्यायागतंरक्षानिर्वेशधनंतत्सूक्ष्मंकार्षापणमात्रमपि न त्यजेत् तदुक्तं ॥ वल्मीकपथवद्राजा कोशवृद्धिंतुकारयेदिति ॥ १७० ॥

( २ ) **सर्वज्ञनारायणः** । अतोयत्कर्तव्यंनृपेण तदाह अनादेयमिति । यतोधर्मतोपि परवित्तग्रहणेनोपचीयते नृ-पस्तस्मादनादेयमशास्त्रीयंनाददीत ॥ १७० ॥

( ३ ) **कुल्लूकः** । क्षीणधनोपि राजा नाग्राह्यमर्थंगृह्णीयात् समृद्धोपि स्वल्पमपि ग्राह्यंधनंन त्यजेत् ॥ १७० ॥

( ४ ) **राघवानन्दः** । प्रजास्नेहेनराजाकरादिनव्यापादयेदितिसार्थवादमाह अनादेयमितिचतुर्भिः । अनादेयमन्या-योपात्तं नाददीतैव । आदेयं न्यायोपात्तं सूक्ष्मं रजोमात्रं नोत्सृजेत् न त्यजेत् । परिक्षीणो धनादिभिः तैः समृद्धोवा॥१७०॥

( ५ ) **नन्दनः** । एवंबलात्कृतंसर्वराज्ञानिवर्तनीयमित्युक्तं अधुना स्वयमपि राज्ञा बलात्कारोनकार्यइत्याह अनादे-यमिति । परिक्षीणोप्यसमृद्धोपि अनादेयमदण्ड्यस्यार्थंसूक्ष्ममपि बलान्नाददीत । समृद्धोपि दण्ड्यस्यार्थंसूक्ष्ममपि बलान्नो त्सृजेत् ॥ १७० ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह अनादेयमिति । परिक्षीणोपि पार्थिवः अनादेयमग्राह्यद्रव्यं नाददीत न गृह्णीयात् । च पुनः समृद्धोपि राजा सूक्ष्ममपिअर्थं अदेयम् अर्थं नोत्सृजेत् ॥ १७० ॥

**अनादेयस्य चादानादादेयस्य च वर्जनात् ॥ दौर्बल्यंख्याप्यते राज्ञः सप्रेत्येह च नश्यति ॥ १७१ ॥**

( १ ) **मेधातिथिः** । अनादानार्हमनादेयं अर्हेकृत्यस्तच्च दर्शितं दौर्बल्यंक्षाप्यते प्रकृतिभिरस्माभिरस्मान्दण्डयति स्ते-नाटविकसामन्तादीन्नशक्तोविजेतुमिति परे स्वशक्तिंप्रथयन्तिराष्ट्रे याअतस्तैरभिषेण्यमानोविरक्तप्रकृतिरिह नश्यति आदा-नादिहप्रेत्य वा धर्मदण्डनात् ॥ १७१ ॥

( २ ) **सर्वज्ञनारायणः** । अनादेयादानाद्दरिद्रोयमिति लोकेऽख्यातिरधर्मश्चदौर्बल्यहेतुर्जायतेऽतःप्रेत्येहच नाशः । एवमादेयवर्जनादशक्तोयमित्यपकीर्तिःप्रजानामधर्मचरणेनाऽधर्मश्च ॥ १७१ ॥

( ३ ) **कुल्लूकः** । यस्मात् अनादेयस्येति । अग्राह्यग्रहणाच्छास्त्रीयग्राह्यपरित्यागात्तु राज्ञः पौरैरसामर्थ्यंख्याप्यते ततश्च सप्रेत्याधर्मेण नरकादिभोगादिहाकीर्त्या विनश्यति ॥ १७१ ॥

( ४ ) **राघवानन्दः** । ततःकिंतत्राह अनादेयस्येति । ज्ञानतोवर्जनात्स्वधनस्य दौर्बल्यं ख्याप्यते गृह्यते । अयम-र्थः । नीतिशास्त्रानभिज्ञोयंयतोअनादेयमादत्तेऽपरिपूर्णधनोयमित्याक्रमणीयः यतआदेयमपि नादत्ते आदातुमसमर्थोवे-ति । अनादेयस्यादानात्प्रेत्य नश्यति ॥ १७१ ॥

( ५ ) **नन्दनः** । उक्तार्थाननुष्ठाने च दोषमाह अनादेयस्यचेति ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । अनादेयस्य अग्राह्यस्य आदानात्स्वीकारात् आदेयस्य स्वीकरणीयस्य चवर्जनात् परित्यागात् तस्य राज्ञोदौर्बल्यंस्थाप्यते । सःराजा प्रेत्यइहलोके नश्यति ॥ १७१ ॥

**स्वादानाद्वर्णसंसर्गात्त्वबलानांच रक्षणात् ॥ बलंसंजायते राज्ञः सप्रेत्येह च वर्धते॥ १७२ ॥**

( १ ) **मेधातिथिः** । स्वस्य न्यायप्राप्तस्यादानंशोभनंवाऽऽदानं भव्यमेवशोभनंवर्णयोरेव संसर्गः समानजातीयैर्वर्णसंसर्गः द्विष्टत्वात्संसर्गस्य च संबन्धिनोरश्रुतत्वाद्वर्णानांमस्तुतत्वात्तत्रैवापेक्षा युक्ता यस्तु वर्णानामत्रान्तरप्रभवे संसर्गोनासौ वर्णानामेव संबन्धितया व्यपदेष्टुंशक्यते । कश्चित्तुन कारंपठति वर्णासंसर्गादिति सर्वथा वर्णसंकरप्रतिषेधानुवादोयं दुर्बलानांबलवद्भिर्भिरभिभूयमानानां स्वेभ्यस्त्राणाद्धेतोः राज्ञेबलंसंजायते सम्यग्व्यवहारदर्शनंकर्तव्यंधर्मदण्डनंच न कर्तव्यमित्येतद्विशेषाः । पठिष्यन्ते श्लोकानामर्थवादाः ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । आदानादुचितदण्डादिग्रहणाद्धनबलम् । वर्णानामसंकरेण संसर्गात् संसर्जनात् दुर्लभरक्षणाच्च धर्मबलम् ॥ १७२ ॥

( ३ ) **कुल्लूकः** । न्याय्यधनग्रहणाद्वर्णानांसजातीयैः शास्त्रीयपरिणयनादिसंबन्धात् यद्वा वर्णसंसर्गाद्वर्णसंकरादित्यत्रापि रक्षणादिति योजनीयंप्रजानांदुर्बलानांबलवद्भ्योपिरक्षणात्सामर्थ्यमुपजायते नृपस्य ततश्चासाविहलोकपरलोकयोश्च वर्धते ॥ १७२ ॥

( ४ ) **राघवानन्दः** । किंच आदानादिति । आदानात्धर्मसंसर्गादिति हेतुमद्भावे पञ्चम्यौ । न्यायोपात्तधनादिना धर्मवृद्धेःप्रेत्य वृद्धिः । इहापि वृद्धिःकीर्तिधनाभ्यां वर्णसंसर्गादितिक्वचित्पाठस्तदाऽऽदानादिह वृद्धिर्वर्णसंसर्गाच्छास्त्रीयपरिपालनेन प्रेत्य वृद्धिः । रक्षणाद्बलं चतुरङ्गबलवान्हि रक्षितुंसमर्थोजायते ज्ञायतेवा ॥ १७२ ॥

( ५ ) **नन्दनः** । उक्तार्थानुष्ठाने फलमाह स्वादानादिति । स्वादानात्स्वस्य प्राप्तद्रव्यस्यादानाद्ग्रहणात् । वर्णसंश्लेषात्वर्णैः सह प्रीत्येति यावत् ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । स्वंद्रव्यंतस्य आदानात् उपहितदण्डादिग्रहणात् । वर्णसंसर्गात्सांकर्यराहित्यात् ॥ १७२ ॥

**तस्माद्यमइव स्वामी स्वयंहित्वा प्रियाप्रिये ॥ वर्तेत याम्यया वृत्त्या जितक्रोधोजितेन्द्रियः॥१७३॥**

( १ ) **मेधातिथिः** । तथाचैतदेवप्रपञ्चयति अयंसेवकआत्मीयोऽतः प्रियः न केवलंराष्ट्रवासी यस्यैव राष्ट्रंतमेवावतिष्ठतेऽतोऽप्रियः तद्विदित्वा यमवत्प्रजासु तुल्यः परिपालने व्यवहारे च स्यात् ईदृशीहि यमस्य वृत्तिर्दृष्टा यमस्येत्यणोबाधकंतत्रौपसंख्यानिकंयकारमिच्छन्ति कः पुनर्यमतुल्यतांभजति जितक्रोधोजितेन्द्रियः रागद्वेषौ जयेत्प्रसङ्गाख्यानेन ॥ १७३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रियाप्रिये मित्रत्वशत्रुत्वे । याम्यया वृत्त्या कर्मानुरूपसुखदुःखदाने । जितेन्द्रियोजितस्वेन्द्रियजकामलोभः ॥ १७३ ॥

( ३ ) **कुल्लूकः** । यतएवंतस्माद्यमेति । तस्माद्यमइव राजा वशीकृतक्रोधोजितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य यमस्य चेष्टया सर्वत्र साम्यरूपया वर्तेत ॥ १७३ ॥

( ४ ) **राघवानन्दः** । उपसंहरति तस्मादिति । स्वामी राजा यमोहि यथाऽदृष्टानुरूपेण दण्डानुग्रहौ करोति न प्रत्यवैत्येवंराजाऽपि स्वारसिकक्रोधादिविवर्जितोदृष्टापराधानुसारेण वर्तेतेत्यर्थः ॥ १७३ ॥

( ५ ) **नन्दनः** । याम्यया समवर्त्ती ही यमः ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । तस्मात्कारणात् स्वामी राजा प्रियाप्रिये स्वयं हित्वा याम्यया वृत्त्या सकललोकसमदृष्ट्या मित्रामित्रेतिहित्वा वर्तेत । यथा यमः वर्तते ॥ १७३ ॥

**यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ॥ अचिरात्तंदुरात्मानंवशे कुर्वन्ति शत्रवः ॥ १७४ ॥**

( १ ) **मेधातिथिः** । अधर्मे यः कार्याणि कुरुते समोहादेवेह व्यामूढोधर्मजज्ञात् तस्येदंधर्मजंफलंविरक्तप्रकृतितया वशे कुर्वन्ति शत्रवः विरक्ताहि प्रकृतयः क्रुद्धलुब्धभीतावमानिताः परैरुपजप्येरंस्ततश्चबहुकृत्यवशे कुर्वन्ति दण्डयन्ति बन्धन्ति घ्नन्ति राष्ट्रमपहरन्ति चेत्येषवशीकारः ॥ १७४ ॥

( २ ) **सर्वज्ञनारायणः** । मोहाद्धर्मोनास्तीतिभ्रमात् ॥ १७४ ॥

( ३ ) **कुल्लूकः** । यः पुनर्नृपतिर्लोभादिव्यवहारादधर्मेण व्यवहारदर्शनादीनि कार्याणि कुरुते तंदुष्टचित्तंप्रकृतिपौरविरागात्क्षिप्रमेव शत्रवोनिगृह्णन्ति ॥ १७४ ॥

( ४ ) **राघवानन्दः** । उक्तार्थवैपरीत्ये दण्डमाह यस्त्विति । अधर्मेण अयथाशास्त्रेण तत्रहेतुर्मोहात्कार्याणि दण्डशुल्कादीनि । सामन्तायैर्दत्तहस्ताः शत्रवस्तं वशे कुर्वन्तीति शत्रुभयादप्यकार्यान्निवर्तितव्यमितिभावः ॥ १७४ ॥

( ५ ) **नन्दनः** । अधर्मेणासमवृत्त्या ॥ [illegible] ॥

( ६ ) **रामचन्द्रः** । योमहीपतिः मो[illegible]र्नास्तीति भ्रमात् अधर्मेण कार्याणिकुर्यात् शत्रवःतंराजानं अचिराद्वशेकुर्वन्ति ॥ १७४ ॥

**कामक्रोधौ तु संयम्ययोऽर्थान्धर्मेण पश्यति ॥ प्रजास्तमनुवर्तन्ते समुद्रमिवसिन्धवः ॥ १७५ ॥**

( १ ) **मेधातिथिः** । सिंधवोनद्योयथा समुद्रमाश्रयन्त्याश्रिताश्चानुरागिण्यस्तन्मय्योवसन्ति न ततोनिवर्तन्ते एवंकामक्रोधजयाद्राजानंप्रजाः समयोगक्षेमास्तन्मय्यः संपद्यन्ते ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थमर्थसाध[illegible] व्यवहारादि ॥ १७५ ॥

( ३ ) **कुल्लूकः** । योराजा रागद्वेषौ [illegible] धर्मेण कार्याणि निरूपयति तंराजानंप्रजाभजन्ते समुद्रमिव नद्यः नद्योयथा समुद्रान्ननिवर्तन्ते तेनैवैकतांयां[illegible]ताअपि तस्मान्नृपादनुवर्तिन्यस्तदेकतानाभवन्तीति साम्यम् ॥ १७५ ॥

( ४ ) **राघवानन्दः** । जितक्रोधइत्य[illegible] तत्र दृष्टान्तमाह कामेति । कामक्रोधौ रागद्वेषौ संयम्य विहाय अर्थान् प्रजापालनादीन् धर्मेण यथाशास्त्रं [illegible]यस्तम् । सिन्धवःस्यन्दनात् नद्यःगाम्भीर्याचलमर्यादत्वबोधरत्नाकरत्वदुरवग्राह्यत्वादयोराज्ञः समुद्रमित्यनेन सू[illegible] ॥ १७५ ॥

( ५ ) **नन्दनः** । अनुवर्तन्ते न भि[illegible] १७५ ॥

( ६ ) **रामचन्द्रः** । यो राजा धर्मे[illegible]न् व्यवहारान्पश्यति ॥ १७५ ॥

**यः साधयन्तंछन्देन वेदयेद्ध[illegible]पे ॥ सराज्ञा तच्चतुर्भागंदाप्यस्तस्य च तद्धनम् ॥ १७६ ॥**

( १ ) **मेधातिथिः** । छन्दइच्छा [illegible]राजानमज्ञापयित्वा यदा प्रागुक्तैश्चतुर्भिरुपायैः स्वेच्छया न धनमार्गेण प्रवृत्तं तथा भूतंवा राजपुत्रैराव्हयनेनार्हतर[illegible]रुध्येदंहि धनमिति सचापृष्टोधारयामीति यत्प्रतिपद्यते सराज्ञा चतुर्थंभागंदण्डापयितव्यः । यावत्तस्मै धारयति तत्र सर्वमृणंशतंचेद्धारयति पञ्चविंशतिर्दण्डनीयः शतंतस्य दाप्यः । एवंपञ्चविंशतिः नत्वियंभ्रान्तिः कर्तव्या शतंर[illegible]धनिकस्य धनिकोहि तथा दण्डितः स्यान्नार्णिकः ॥ १७६ ॥

( २ ) **सर्वज्ञनारायणः** । साधयन्तं स्वच्छन्देन स्वेच्छयाऽमतिरोधादिना राज्ञि वेदयेत् ज्ञापयेत् । देयधनचतुर्थभागं ऋणचतुर्थभागं दण्ड्योधनिकाय धनंदाप्यः ॥ १७६ ॥

( ३ ) **कुल्लूकः** । योऽधमर्णोराजवल्लभोहमिति गर्वादुत्तमर्णस्वेच्छया धनंसाधयन्तंनृपेनिवेदयेत्सराज्ञा ऋणचतुर्थभागंदण्ड्यः तस्य तद्धनंदापनीयम् ॥ १७६ ॥

( ४ ) **राघवानन्दः** । प्रकृतमाह यइति । योऽधमर्णः छन्देन इच्छया तस्मात्स्वधनं साधयन्तं राजवल्लभोहमितिगर्वान्नृपे निवेदयेत् सराज्ञा चतुर्थांशं दण्ड्यः । धनिकस्यापि तद्धनंदापनीयम् प्रयुक्तंसाधयेदर्थमित्यत्रोक्तोभियोगाभावाद्दण्डइह तुदण्डइतिन पौनरुक्त्यम् ॥ १७६ ॥

( ५ ) **नन्दनः** । प्रासङ्गिकंबलात्कारवर्जनंपरिसमाप्य प्रकृतमेव ऋणदापनमुपक्रम्याह यःसाधयन्तमिति । राजन्यनिवेद्य छन्देन स्वेच्छया । स्वमर्थंसंरोधनादिना साधयन्तंधनिकमुत्तमर्णमधमर्णोनृपे निवेदयेत् असावयमेवंमांबाधतइति सराज्ञा ऋणचतुर्भागंतस्मैदण्डनंदाप्यः । तस्योत्तमर्णस्य तद्धनमृणंच दाप्यः ॥ १७६ ॥

( ६ ) **रामचन्द्रः** । यः अधमर्णः छन्देन स्वेच्छया साधयन्तंधनिकमुत्तमर्णंनृपे वेदयेत् सः राज्ञा ऋणचतुर्भागंदण्डं तस्य उत्तमर्णस्य तद्धनंचदाप्यः ॥ १७६ ॥

**कर्मणापि समंकुर्याद्धनिकायाधमर्णिकः ॥ समोऽवकृष्टज [illegible] र दद्याच्छ्रेयांस्तु तच्छनैः ॥ १७७ ॥**

( १ ) **मेधातिथिः** । निर्धनोधनेन निर्धनत्वान्न मुच्यते किंतर्हि कर्मकारयितव्यः प्रेष्यत्वंव्रजेत् यावता धनेन तत्कर्मकर्मकरःकरोति तत्तस्य प्रविष्टंसंपद्यपि कर्तव्यं कर्मकुर्वतश्च सलाभधने प्रविष्टे दास्यान्मोक्षः समंकुर्यादुत्तमर्णेनानंतशुद्धेधनेनोत्तमाधमव्यवहारइत्यप्येके उत्तमर्णोपरोधमर्णएतच्च कार्यते वर्ज्ञः समःसमानजातीयोऽवकृष्टजातिर्हीनजातीयः श्रेयांस्तूत्तमजातीयोगुणाधिकोवा शनैः क्रमेण यथोत्पादंदद्यात् नारदे पठ्यते ॥ ब्राह्मणस्तु परिक्षीणो शनैर्दाप्योयथादशमिति ॥ अतोराज्ञा धनिकधनसंशुद्ध्यर्थंपरिक्षीणोब्राह्मणोन पीडयितव्यः उत्तमर्णश्च रक्षणीयः ॥ १७७ ॥

( ३ ) **कुल्लूकः** । समानजातिरपकृष्टजातिश्चाधमर्णोधनाभावे स [illegible] वजात्यनुरूपकर्मकरणेनापि समंकुर्यात् निवृत्तोत्तमर्णाधमर्णव्यपदेशतया धनिकसममात्मानंकुर्यात् । समजातिरच [illegible] रः कर्मणाक्षत्रविट्शूद्रान्समानजातीयान्हीनांस्तु दापयेदिति कात्यायनेन विशेषितत्वात् । श्रेयान्पुनरुत्कृष्टजातिर्न [illegible] यितव्यः किंतु शनैः शनैः यथासंभवंतद्धनंदद्यात् ॥ १७७ ॥

( ४ ) **राघवानन्दः** । यद्यधमर्णोदातुमसमर्थस्तत्रकागतिस्तत्राह [illegible] यः समः । उत्तमर्णतुल्यजातिः ततोऽपकृष्टजातिर्वाऽधमर्णिकः कर्मणास्वजात्यनुरूपेण वेतनकृत्यादिना सममृणश [illegible] र्यात् श्रेयांस्तु विपश्चित् शनैर्दद्यात् एवं ॥ हीनजातिं परिक्षीणमृणार्थंकर्म कारयेत् ॥ ब्राह्मणस्तु परिक्षीणः शनैद [illegible] गोदयमितियाज्ञवल्क्योक्तेः ॥ शनैः शनैर्धनमेव दद्यात् नतु कर्मणा लौकिकेन समंकुर्यात् विप्रस्य लौकिककर्मकर [illegible] स्य वक्ष्यमाणत्वात् । आर्त्विज्यादौतुनदोषः हीनजातिमित्यनेन क्षत्रियोवैश्यस्य शनैर्दद्यान्नतुकर्मकुर्यात् इत्ये [illegible] । ब्राह्मणपदं राजसेवकगुणवत्त्वाद्युपलक्षकं तेपि दद्युस्तेन न प्रकृतविरोधः ॥ १७७ ॥

( ५ ) **नन्दनः** । ऋणप्रदानाशक्तस्याधमर्णस्य जातितारतम्यवशेन न [illegible] करणमाह कर्मणापीति । समः समानजातिरपकृष्टजातिश्चाधमर्णिकोधनिकायोत्तमर्णाय कर्मणापि समंकुर्यात् ऋणर [illegible] कर्मकुर्यादित्यर्थः । श्रेयानुत्कृष्टजातिस्तद्धनंशनैर्दद्यात् ॥ १७७ ॥

( ६ ) **रामचन्द्रः** । अधमर्णः कर्मणापि धनिकाय समं अनृणं कुर्यात् समः अन्योन्यसमः अवकृष्टजातिः हीनजातिश्च श्रेयांस्तु श्रेष्ठः तद्धनंशनैर्दद्यात् ॥ १७७ ॥

**अनेन विधिना राजा मिथोविवदतांनृणाम् ॥ साक्षिप्रत्ययसिद्धानि कार्याणि समतांनयेत् ॥ १७८ ॥**

( १ ) **मेधातिथिः** । अनेनेति पूर्वोक्तप्रकारमत्यवमर्शः विधिना प्रकारेण साक्षिप्रत्ययः सिद्धशद्धः प्रत्येकमपि संबध्यते साक्षिभिः सिद्धानि निर्णीतानि प्रत्ययः । अनुमानंदैवी वा क्रिया कार्याणि न केवलमृणादानमन्यदपि समतंन यदर्थिप्रत्यर्थिविप्रतिपत्तिमपाकुर्या दैक्यमन्यतउत्पादयेत्। उपसंहतमृणादानंसमाप्तोव्यवहारः । सर्वत्र जयपराजयप्रकाराणामेवंरूपत्वात् । नहिसाक्ष्यादिभ्यऋते किंचिदुत्तरेषु विवादेषु प्रतिपत्तिनिरासनिमित्तंकेवलंदंडविशेषस्तत्स्वरूपंचवक्तव्यमित्युत्तरः प्रपञ्चः । कीदृशोस्वामिविक्रयः कीदृशोनुशयइति स्वरूपंव्यवस्थाप्यते ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः** । साक्षिभिः प्रत्ययैः शपथैश्च सिद्धानि । समतां अविवादम् ॥ १७८ ॥

( ३ ) **कुल्लूकः** । अनेन प्रोक्तप्रकारेण परस्परंविवदमानानामर्थिप्रत्यर्थिनांसाक्ष्यादिप्रमाणेन निर्णीतार्थानि कार्याणि विप्रतिपत्तिखण्डनेन राजा समीकुर्यात् ॥ १७८ ॥

( ४ ) **राघवानन्दः** । एतद्विवादाद् ।तिदिशति अनेनेति । साक्षिप्रत्ययसिद्धानि साक्षी प्रत्ययश्च लेख्यपूर्वकप्रतिग्रहक्रयादिश्च ताभ्यां सिद्धानि निर्णीतानि समतामविवादं उक्तप्रकारेण ऋणादिशोधनंवा ॥ १७८ ॥

( ५ ) **नन्दनः** । ऋणप्रदानोपसंहारमाह अनेनेति । अनेनोक्तेन प्रत्ययशपथहेतुभिर्वा कार्याणि व्यवहारान्समतान्नयेद्विप्रतिपत्तिरहिताम् ॥ १७८ ॥

( ६ ) **रामचन्द्रः** । साक्षिप्रत्ययः शपथः सिद्धानि कार्याणि समतां व्यवहारराहित्यं नयेत् प्रापयेत् ॥ १७८ ॥

**कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ॥ महापक्षे धनिन्यार्ये निक्षेपंनिक्षिपेद्बुधः ॥ १७९ ॥**

( १ ) **मेधातिथिः** । प्रख्यातोभिजनः कुलंचयस्य पितृपितामहाविद्वांसोधार्मिकामहापरिग्रहाःस्वकुलांशंनिगृहीत्वा नाकार्ये प्रवर्तते सहि स्वल्पामपि गर्हणांसोढुमसमर्थः नितरांनच निन्दन्ति जनाः वृत्तंशीलमाचारोजनापवादभीरुता स्वाभाविकं संपन्नंतद्युक्तः धर्मज्ञस्तु स्मृतिपुराणेतिहासाभ्याससंजाततदर्थावबोधः सत्यवादी बहुकृत्वः कार्येष्वदृष्टाकार्ये संभाव्यमानोवृत्ताभिधानः महापक्षः सुहृत्स्वजनराजामात्याद्यनुग्रहीतमहिमहत्त्वेन दुष्टराजाधिकारिणांगम्योनभवति धनी-स्वधनरक्षार्थमदृष्टभयाच्च न परद्रव्यापहारणे वर्तते अस्ति मे पर्याप्तंधनंकिंपरकीयेन कथंचिज्ज्ञातेदण्ड्यःस्यामिति आर्योधर्मानुष्ठायी ऋजुप्रकृतिर्वा निक्षिप्यमाणंसुवर्णादिद्रव्यंकर्मसाधनेन घञोच्यते निक्षिपेद्रक्षार्थंस्थापयेद्बुधः एवंनिक्षिपन्प्राज्ञोभवति अन्यथा मूर्खः संपद्यते । सुहृद्भूत्वोपदिशति दृष्टंनायमदृष्टार्थोऽष्टकादिवदुपदेशः ईदृशिपुरुषे निक्षिप्तस्य न विप्रत्ययोभवत्येवविधेन निक्षिप्तमनेनेति शङ्का न भवति यस्तु नग्नकितवपानशौण्डादिः सकेनचिदाकृष्टोऽपि सत्पित्रास्य हस्ते निक्षिप्तंमया चेति न शङ्कास्पदं सुवर्णादेर्महतोधनस्य निक्षेपधारकइति काकणी मामिकेति युज्यमानोभवत्येव ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । ऋणादानम् निक्षेपमुपक्रमते कुलजइति । वृत्तमाचारः । महापक्षे बहुबन्धौ । आर्ये उत्तमदेशजाते ॥ १७९ ॥

---

( १७९ ) वृत्तसंपन्ने = वित्तसं० ( च ) = वृत्ति० ( ख )

( ३ ) **कुल्लूकः** । सत्कुलप्रसूते सदाचारवति धर्मवेदिनि सत्याभिधायिनि बहुपुत्रादिपरिजने ऋजुप्रकृतौ मनुष्ये व्यभिचाराभावान्निक्षेपंस्थापयेत् ॥ १७९ ॥

( ४ ) **राघवानन्दः** । निक्षेपइत्युक्तं तद्विषयकमाह अष्टादशभिः तत्रादौ तदुचितस्थलमाहकुलजइति वृत्तसंपन्नेवृत्तं स्वाध्यायाचारादि तद्युक्ते महापक्षे पुत्रपौत्राद्युपेते आर्येस्वच्छप्रकृतौ धनिनि स्थाप्यधनादधिकधनवति ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । कुलजे महापक्षे मातृपितृभ्यां शुद्धपक्षे एतादृशे निक्षेपं बुधोनिक्षिपेत् स्थापयेत् ॥ १७९ ॥

**योयथा निक्षिपेद्धस्ते यमर्थंयस्य मानवः ॥ सतथैव ग्रहीतव्योयथा दायस्तथा ग्रहः ॥ १८० ॥**

( १ ) **मेधातिथिः** । यथेति यादृशेन प्रकारेण समुद्रममुद्रंससाक्षिकमित्येवमादिसतथैवेति सोर्थोनिक्षिप्तस्तथैव ग्रहीतव्योयथा दायोदीयते निक्षिप्यते तथा गृह्यते यत्रैतन्निश्चितंभवति सर्वकालमेवास्यहस्ते समुद्रयित्वा स्थापयति तत्र विप्रतिपत्तावमुद्रिते लब्धे धारणकोयदि ब्रवीति नैषमुद्रयति निक्षिप्य मे बलाद्गच्छति तत्रैवंशङ्कास्पदंजीयते प्रमाणान्तरात्प्रायशोमुद्रणमन्यदा तु मुद्रानाशे कियदपहारितमिति परिमाणविशेषज्ञानाय प्रमाणान्तरंव्यापारणीयंराज्ञापह्नवादेव सामान्यदण्डेन दण्डनीयः निक्षेपदण्डस्तु द्रव्यपरिमाणे निश्चिते द्वितीयः । ननुच सर्वापह्नवएवविभागितोजितएव युक्तः सत्यं यत्राविनाभावसिद्धंयथा मुषिते ग्रामे देवदत्तोनियुज्यते त्वयान्यैश्चोरैःसह मुष्मिन्नहनि सग्रामोहतइति सआह नैव तस्मिन्नहनि तंग्राममहमगमंस्तत्र साक्षिभिरुक्तंदृष्टंतस्मिन्नहनि तत्र यन्मुष्टंतत्तु न दृष्टंतत्रदेवदत्तेन मेषोप्यपह्नुतस्तदहर्ग्रामसन्निधानसिद्धेः स्फुटे च कारणान्तरे सन्निधावनुपलभ्यमाने सन्निधानादेशदेशाच्चौरत्वमपि युक्तमनुमातुं इहतुप्रमादनष्टानांनराणांमुद्रितनिक्षिप्तममुद्रितमेव नीयते । यथादायस्तथाग्रहः कोमेऽभियोगावसरइत्यनया बुद्ध्या संभवत्यपह्नवः नहि शक्नोत्यनुमातुंयथापि कथंचिदनुमापयेत्परिमाणन्तु न विना प्रमाणान्तरंनिक्षिप्तवचनादेव सिध्यतीति युक्तोदिव्योदितोनिश्चयः सर्वथा यएकदेशान्तरेण नसंभवति तत्रैवैकदेशपराजितइतिनिश्चयः ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । यथानिक्षिपेत् मुद्रितममुद्रितं ससाक्षिकमसाक्षिकमित्यादि । यथादायइति पुनरस्यार्थस्य । कथनं लोकसिद्धिहेतुतया ॥ १८० ॥

( ३ ) **कुल्लूकः** । योमनुष्योयेन प्रकारेण मुद्रारहितंसमुद्रंवा ससाक्षिकमसाक्षिकंवायमर्थंसुवर्णादि यस्य हस्ते निक्षिपेत्सोऽर्थस्तेन निक्षेप्त्रा तथैव ग्राह्योयस्मात् येन प्रकारेण समर्पणंतेनैव प्रकारेण ग्रहणंन्याय्यं समुद्रस्थापितसुवर्णादेर्निक्षेप्ता स्वयमेव मुद्रांभित्वा यदा वदति ममेदंतुलयित्वा समर्पयेत्यभिधानंदण्डाद्यर्थम् ॥ १८० ॥

( ४ ) **राघवानन्दः** । तद्ग्रहणोपायमाह यइति । योनिक्षेप्तायथायेन प्रकारेण मुद्रया संख्ययावायमर्थंसुवर्णादिस्वरूपं यस्यहस्ते तत्र हेतुः यथादायः यथासमर्पणं तथाग्रहस्तथैव ग्रहणम् ॥ १८० ॥

( ५ ) **नन्दनः** । यथारूपोयोऽर्थः सतथा रूपस्य हस्तात्तेन ग्राह्यः तथा हि यथा दायः स्थितस्तथा ग्राह्यः यथा दानंतथा ग्रहणंनिक्षिप्तंद्रव्यं अविकृतंदद्यादित्यर्थः ॥ १८० ॥

( ६ ) **रामचन्द्रः** । यथा दायः अंशः तथा ग्रहः गृहीतुं योग्योग्रहः निक्षेपः ॥ १८० ॥

**योनिक्षेपंयाच्यमानोनिक्षेप्तुर्न प्रयच्छति ॥ सयाच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥ १८१ ॥**

( १ ) **मेधातिथिः** । याच्यइति एवमुपायोयुक्तस्तथाह्यर्थसङ्गतिर्भवति साक्ष्यभावाद्दिव्येषु प्राप्तेषु वचनमिदं यथावर्णादानादिषु साक्ष्यभावसमनन्तरमेव दिव्यानि दीयन्ते नतद्वदत्र किंतर्हि चरैरस्य वृत्तमनुचारयेत् तत्र यदि पुनश्चार्थ-

माणेन कचिद्दृत्तेस्खलति तदा न शपथैरदर्शनीयः अथाप्यत्र प्रमाद्यति तदा निक्षेपहरणसंभावनापि युक्तैव तदा च दिव्यैः परिशोधनी न पुनरनेकनिक्षेपहरणेनापरनिक्षेपहरणंसिध्यति कदाचिद्गरीयसा प्रयोजनेनैकमपह्नुतंकुलाप्रयोजनउत्पन्नानुशयोवान्यस्य समर्पयति अतोयंश्लोकसंघातोझटिति निक्षेपधारणकस्य शपथनिवृत्त्यर्थोन पुनः प्रमाणोपन्यासः नच प्राड्विवाकनिक्षेपहरणे राजदण्डवदनिश्चितापरनिक्षेपहरणोपि प्रथमाभियोक्तुर्दापयितुंयुक्तः अनिश्चितेहि हरणे दाप्येत यदि शास्त्रेण तदा निर्णयार्थंव्यवहारशास्त्रंस्यात् । ततश्चहेतुभिर्निर्णयः कर्तव्यइति विकल्पितस्तस्मान्न शास्त्रीयोयमर्थोनच लौकिको व्यवस्थितिः साक्ष्यभावइत्याद्युक्तेन प्रकारेणान्यपरतया नेया ॥ १८१ ॥

( २ ) **सर्वज्ञनारायणः** । नप्रयच्छति प्रथमं लोभात् । निक्षेमुरसन्निधौ याच्यः ॥ १८१ ॥

( ३ ) **कुल्लूकः** । यः पुरुषोदेहि मे निक्षिप्तंहिरण्यादि द्रव्यमित्येवंनिक्षेप्त्रा प्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापितेप्राड्विवाकेन तस्य निक्षेमुरसन्निधौ याचनीयः ॥ १८१ ॥

( ४ ) **राघवानन्दः** । तस्योद्धरणप्रकारमाह योनिक्षेपमिति । सनिक्षेपधारी प्राड्विवाकेनराजस्थापितेनपुंसा याच्योऽसौतद्देहीति । असंनिधौ स्थलान्तरे ॥ १८१ ॥

( ५ ) **नन्दनः** । असाक्षिकेषु निक्षेपेषु निक्षेपहारित्वेन शङ्किते प्रयोक्तव्यविधिंश्लोकद्वयेनाह योनिक्षेपमिति । प्रश्नंविविच्य ब्रुवतीति प्राड्विवाकः प्रधानसभ्यः ॥ १८१ ॥

( ६ ) **रामचन्द्रः** । सप्राड्विवाकेन निक्षेप्तुंअसंनिधौ तंनिक्षेपं वाच्यः कथनीयः ॥ १८१ ॥

**साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ॥ अपदेशैश्च संन्यस्य हिरण्यंतस्य तत्त्वतः ॥ १८२ ॥**

( १ ) **मेधातिथिः** । पदार्थयोजनामिदानीमनुसरामः सप्राड्विवाकेन तन्निक्षेमुरसंनिधौ येन रहसि स्थापितंसाक्षिष्वसत्सुनिक्षेप्ता तस्य याचमानस्य धारणकोयमपह्नुते तत्त्वया किंचिन्निक्षिप्तमिति ततोनिक्षेप्ता राजाज्ञापितोन निक्षेपधारिणोऽकारंदर्शयेत् किंतर्हि कुर्यात्प्रणिधिभिश्चहिरण्यमात्मीयंसुवर्णंरूप्यंवान्यस्य निक्षिप्य याचितव्योर्थनीयः प्राड्विवाकेन प्राड्विवाकग्रहणंनिर्णयाधिकृतपुरुषोपलक्षणार्थम् किंसाक्षादेवयाचितव्योनेत्याह प्रणिधीनांमुखेनयैरेव न्यस्तंवयोरूपमन्वितैः वयसामन्वितायेन बालान भवन्ति तेषांहि परैः प्रेरितानांमद्दश्चनार्थोन्यासइति संभाव्यते परिणतवयेभ्यस्तु नाशकोभवति एवंरूपसमन्वयोव्याख्येयः रूपमेव कस्य नादृशंभवति यस्य दर्शनादेव चापलंप्रतिभाति तथाच रूपमेतद्याचष्टे भगवन्वीतरागतामिति तेनैव तदुक्तंभवति तादृशाः प्रणिधयः कर्तव्यायेषांमद्दश्चनार्थोयमुपक्रमइति नाशङ्कते धारणकः अपदेशैः सव्याजैर्निक्षेपकारः राज्ञोपद्रवग्रामगमनादिभिरनेन हेतुना त्वयि संप्रति निक्षिपामीत्यनृतसंभवात्कारणकथनमपदेशः एतच्च सर्वप्राड्निक्षेमुरसंनिधौ कर्तव्यम् ॥ १८२ ॥

( २ ) **सर्वज्ञनारायणः** । निक्षेपविषयवदृष्टप्रमाणाभावात्कृत्स्नस्यनिक्षेपानभ्युपगमादाह साक्ष्यभावइति । प्रणिधिभिश्चरैःस्वीयैः वयसा वृद्धत्वादिना रूपेणच पालित्यादिना प्रामाणिकत्वोचितेनान्वितैः । प्राड्विवाकस्तस्यनिक्षेपानभ्युपगमेतु निक्षेपान्तरंनिदध्यात् । अपदेशैर्नास्य धनस्य रक्षकोस्माकंविद्यतइत्यादिव्याजोक्तिभिः । तत्त्वतोयथानिक्षेपःसंपद्यते तथेत्यर्थः ॥ १८२ ॥

( ३ ) **कुल्लूकः** । किंकृत्वाकिंयाचनीयइत्याह साक्ष्येति । प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैश्चारपुरुषैरनिक्रान्तबाल्यैः सौम्यादिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यानि तत्त्वेन तत्र निक्षेपयित्वा तैरेव चारपुरुषैः सनिक्षेपधारी प्राड्विवाकेन चारपुरुषनिक्षिप्तसुवर्णयाच्यः ॥ १८२ ॥

( ४ ) **राघवानन्दः** । प्राड्विवाकस्यापि प्रार्थनयाऽलब्धेऽप्युपायान्तरमाह साक्ष्यभावइतिद्वाभ्याम् । प्रणिधिभिश्च-रैःवयोरूपसमन्वितैः अतिक्रान्तशैशवसौम्याकृतिनिक्षेपधारिसमानवयः प्रभृतिभिः तेषुहि सख्यादिवशादतिगोप्यमपि प्रकाश्यतइति । अपदेशैः राजामांहनिष्यति दण्डयिष्यतीत्यादिराजोपद्रवव्याजाभिधायिभिः । तत्वतोवस्तुतोहिरण्यं स-न्यस्य निक्षेपयित्वा ॥ १८२ ॥

( ५ ) **नन्दनः** । वयोरूपसमन्वितैः पूर्वनिक्षेप्तुर्वयोरूपसदृशैः प्रणिधिभिः करणैस्तत्कालोचितसंबन्धोवयोरूपसादृश्योपहेत्वन्तरेण निक्षेपप्रतिपादनशङ्कापरिहारार्थः । अपदेशोनिक्षेपनिधानार्थानुज्ञानार्थः । हिरण्यग्रहणंपूर्वनिक्षिप्तसजातीयद्रव्योपलक्षणार्थम् ॥ १८२ ॥

( ६ ) **रामचन्द्रः** । साक्ष्यभावे प्रणिधिभिः चारैः अपदेशैः व्याजैः संन्यस्य निक्षिप्य तत्त्वतः ॥ १८२ ॥

**सयदि प्रतिपद्येत यथा न्यस्तंयथा कृतम् ॥ न तत्र विद्यतेकिंचिद्यत्परैरभियुज्यते ॥ १८३ ॥**

( १ ) **मेधातिथिः** । एतेनास्माकीनः साक्ष्यभावान्निक्षेपोपह्नूयतइति यथा न्यस्तंयथा कृतमिति गूढागूढचिन्हकृतेन भेदः अथवा गृहीतनिक्षेप्तुर्व्यापारभेदेन भेदः । यथाकृतंयथागृहीतंनिर्विकल्पमवलंबंच गृहीतं तथैव प्रतिदातव्यं प्रतिदाने यत्र कालग्रहणे न क्रियतइत्यर्थः ॥ १८३ ॥

( २ ) **सर्वज्ञनारायणः** । यदित्वया ततोपत्ततंतद्धतमेव धनं त्वयास्माभिश्च ग्राह्यमित्युक्तः सयदि प्रतिपद्येत संमतःस्यात् । यथा मुद्रादिना न्यस्तंतथाकृतंकण्टकादि । निक्षेप्त्रोक्तं नतत्रविद्यतइति यदि तस्मिन्प्रत्यर्पितेपि परोममैतन्न्यूनमित्यभियुङ्क्ते तदभियोगादिकं तत्र न विद्यते तावतैवतच्छोधनमुक्तं मुद्रादेर्भावात् । नतु दण्डोनास्ति सापराधत्वात् ॥ १८३ ॥

( ३ ) **कुल्लूकः** । सनिक्षेपधारी यथान्यस्तंसमुद्रंवा यथाकृतंकटकमुकुटाद्याकारेण रचितंयदि तथैव प्रतिपद्येत सत्यमस्ति गृह्यतामिति तदा परेण पूर्वनिक्षेप्त्रा प्राड्विवाकवेदिना यन्निक्षिप्तमित्यभियुज्यते तत्र न किंचिदस्तीति ज्ञातव्यम् ॥ १८३ ॥

( ४ ) **राघवानन्दः** । पश्चात्सयाच्यमानः निक्षेपधारी यथान्यस्तं समुद्रमसमुद्रंवा यथाकृतं यथाकारं कटकादिरूपं तद्भिन्नंवा प्रतिपद्यते दातुंमन्यतेयदि तदा परैः पूर्वनिक्षेप्तृभिः यदभियुज्यतेतन्न भवतीतिज्ञातव्यम् ॥ १ १८३ ॥

( ५ ) **नन्दनः** । सनिक्षेपहारित्वेन शङ्कितः । परैः पूर्वनिक्षेप्तृभिः ॥ १८३ ॥

( ६ ) **रामचन्द्रः** । सपुरुषः यत्र स्थापितः यदि प्रतिपद्येत अङ्गीकुर्यात् यथान्यस्तंयथाकृतंतत्रकिंचिन्नविद्यतेयत् अन्यैर्निक्षिपेत् परैरभियुज्यते आरोप्यते ॥ १८३ ॥

**तेषांन दद्याद्यदि तु तद्धिरण्यंयथा विधि ॥ उभौ निगृह्य दाप्यः स्यादिति धर्मस्य धारणा ॥१८४॥**

( १ ) **मेधातिथिः** । तेषांप्राड्विवाकप्रयुक्तनिक्षेप्तृणांयदि द्रव्यंनिक्षिप्तंन दद्याद्यथाविधीति यथाकृतपदेन व्याख्यातंसधारणकोऽवष्टब्धस्य राजपुरुषैरुभयमर्थिने राजनिक्षेपंच दाप्यतइति धर्मस्य साधारणा व्यवस्था तात्पर्यमत्र व्याख्यातम् ॥ १८४ ॥

( २ ) **सर्वज्ञनारायणः** । तेषां प्रणिधीनां अर्थनानन्तरं यदि न दद्यात्तद्धिरण्यं तदोभयंनिक्षेपद्वयं संनिगृह्य गृहीत्वादाप्योदण्डमित्यर्थः । यदितु प्रणिधिदत्तं मत्यर्पयेत्तदा निश्चयानुत्पत्तेर्दिव्या क्रियेत्यर्थात्सिद्धम् ॥ १८४ ॥

( ३ ) **कुल्लूकः** । तेषांचारपुरुषाणांयन्निक्षिप्तंहिरण्यंयथान्यस्तंयदि तन्नदद्यात्तदा द्वावपि निक्षेपौ ज्ञापकचारसंबन्धिनौ

संपीड्य दापनीयः स्यादित्येवंरूपोधर्मस्य धारणा निश्चयः । योनिक्षेपमित्यादिश्लोकचतुष्टयस्य चेदश्चएव पाठक्रमो-मेधातिथिभोजदेवादिभिर्निश्चितः गोविन्दराजेन तु साक्ष्यभावे प्रणिधिभिरिति श्लोकोऽन्तएव पठितः तदा च नार्थसङ्गतिः न वा वृद्धाम्नायादरः ॥ १८४ ॥

( ४ ) **राघवानन्दः** । अपदेशैःस्थापितस्यापह्नवेदण्डमाह तेषामिति । तेषां प्रणिधीनां यथाविधि यथास्वरूपं यथा-स्थापितंचनदद्यात्तदोभौनिक्षेपौनिक्षेपधारोदाप्यः ॥ १८४ ॥

( ६ ) **रामचन्द्रः** । तेषां निक्षेप्तॄणां यद्धिरण्यं तद्यथाविधि न दद्यात्तदा उभौ निक्षेपृनिक्षेप्तारौ निगृह्य दाप्यइति धर्मस्य धारणा मर्यादा ॥ १८४ ॥

## निक्षेपोपनिधी नित्यंन देयौ प्रत्यनन्तरे ॥ नश्यतोविनिपाते तावनिपाते त्वनाशिनौ ॥ १८५ ॥

( १ ) **मेधातिथिः** । उत्पत्त्यनन्तरउच्यते निक्षेप्तुः पुत्रोभ्राता भार्या वा यस्य निक्षेप्तुर्द्रव्ये स्वाम्यमस्ति भार्याया-स्तावत्स्वाम्यमुक्तमेव पुत्रस्यापि पैतामहे भ्रातुश्चैकधनस्य तत्र तेषांकश्चिद्यावन्निक्षेप्तर्यसंनिहिते देहिनोऽस्माकीनमेतदिति तत्र कश्चिदनया बुद्ध्या दद्यात्साधारणमेतदेकेन निक्षिप्तमपरेण नीतमिति कोदोषइति अतउच्यते न देयौ निक्षेपोपनिधी प्रत्यनन्तरे । अत्रैवार्थवादंहेतुसरूपमाह नश्यतोविनिपातेतौ विनिपातो ऽन्यथात्वंप्रत्यनन्तरस्य देशान्तरगमनादि तस्मिन्न-सति तौ हीयेते यदि तेन नीत्वा निक्षेप्तुंन दत्तंतदा तेन पर्यनुयुक्तस्य धारणकस्य किमुत्तरं तदीयेन भ्रात्रैतद्धनं साधारण-स्वामिना नीतमिति नैतदुत्तरं यथा दायस्तथा ग्रहइत्युक्तं येनैव निक्षिप्तंस्वामिनाऽस्वामिना वा तस्माएव देयंतस्यैवायं-प्रपञ्चः यदि तु प्रत्यनन्तरोविक्रियांन गच्छेत्तदा तद्दानेऽपि न दोषस्तदाह अनिपाते त्वनाशिनौ तत्र ह्यस्त्युत्तरं मानशत्त-स्यादर्पयामि प्रत्यनन्तरेण नीते विनिपाते च तस्य निक्षेप्तृयाचमानायस्वधनंदातव्यमिति श्लोकार्थः ॥ १८५ ॥

( २ ) **सर्वज्ञनारायणः** । उपनिधिर्भाण्डादिस्थःसमुद्रः । निक्षिप्तोनिक्षेपस्त्वमुद्रः । उपनिधिपदंचायाचिताद्युपलक्षणम् । प्रत्यनन्तरे देशान्तरादिगते निक्षेप्तरि तत्पुत्रादौ । नश्यतः पुनर्देयौभवतः । विनिपाते तस्य पुत्रादेर्मरणादिना निक्षेप्तुर्नि-क्षिप्तधनाप्राप्तौ । अनिपाते तत्प्राप्तौ अनाशिनौ प्रत्यर्पणीयौकेवलंत्वत्पुत्रे दत्तमिति विभाव्यमेव ॥ १८५ ॥

( ३ ) **कुल्लूकः** । निक्षिप्यतइति निक्षेपः मुद्राङ्कितमगणितंवा यन्निधीयते सउपनिधिः ब्राह्मणपरिव्राजकवदुपदे-शभेदः तौ निक्षेपोपनिधी निक्षेप्तर्युपनिधातरि जीवति प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरे तद्धनाधिकारिणि कदाचिन्न निक्षेपधारिणा देयौ यतस्तस्य पुत्रादेरपि पितुरसमर्पणविनाशे तौ निक्षेपोपनिधी नश्यतः । पुत्रादेः पितुश्च पुनरविनाशे-समर्पणे च कदाचिदविनाशिनौ स्यातां तस्मादनर्थसंदेहान्न देयौ ॥ १८५ ॥

( ४ ) **राघवानन्दः** । निक्षेपवदुपनिधेरप्युद्धरणबोधयन् तत्र कार्यान्तरंविधत्ते निक्षेपइति । निक्षिप्यते परस्मिन्यत् तन्निक्षेपोद्रव्यमात्रं अङ्कितमगणितंवा । पुटस्थमुपनिधिः प्रत्ययार्थंनिक्षेपोऽबन्धकइतिभेदः । किंच निक्षेप्तरि अनिपाते जीवति प्रत्यनन्तरे तत्पुत्रपौत्रादौ नदेयौ तत्र हेतुर्नश्यतइति । कदाचिद्दैवात्पुत्रस्यान्यथाभावे निधेरसमर्पणाद्वा दत्तौ नाशंगच्छतः । अतोनिक्षेपधारिणा नदेयौ । विनिपाते तु निक्षेपस्थापकेमृते पुनस्तत्पुत्रादावधिकारिणि देयौन तदाऽवि-नाशिनावित्यन्वयः ॥ १८५ ॥

( ५ ) **नन्दनः** । प्रत्यनन्तरे निक्षेप्तुः प्रत्यासन्ने पुत्रादौ अत्रहेतुरुक्तः नश्यतोविनिपातेताविति । प्रत्यनन्तरस्यवि-

निपातेतौनिक्षेपोपनिधी अपिनश्येतां ततश्च निक्षेप्तुः पुनरपि प्रतीपदेयौ स्यातां तस्मान्नदेयौ तौ प्रत्यनन्तरस्यविनिपातेऽनाशिनौ तस्मादादाय पुनरपि निक्षेप्तुरिति प्रतिप्रदातुंशक्यौ ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । तौ निक्षेपोपनिधीप्रत्यनन्तरे पुत्रादौ नदेयौ तौविनिपाते यद्धस्तेदत्तं तन्मरणे नश्यतः पुनर्देयौ भवतः अपाते अमरणे अनाशिनौ अदेयौ ॥ १८५ ॥

**स्वयमेव तु योदद्यान्मृतस्य प्रत्यनन्तरे ॥ न सराज्ञा नियोक्तव्योन निक्षेप्तुश्च बन्धुभिः ॥ १८६ ॥**

( १ ) **मेधातिथिः** । जीवतस्तस्मान्निक्षेप्तुः प्रत्यनन्तरदानंनास्तीत्युक्तं मृतस्य तुयस्तद्धनमस्तीत्यविजानते स्वयंदद्यान्न सव्यवहारलेखनादिक्लेशनीयोऽन्यदप्यस्ति न यदि तस्याभविष्यत्किमपि अत्राप्याशङ्का यदि न निवर्तेत महाधनोऽसावभून्नचान्येन समंभुज्यते प्रमाणान्तरंविचारणीयं विषादिभिः शपथैर्नार्दनीयः धटकोशसत्यतण्डुलास्तु न विरुध्यन्ते विनाशकरोयः साक्ष्यभावः सद्वितीयोन्यासः सइहापि द्रष्टव्यः ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः** । मृतेतु दातर्याह स्वयमिति । असाक्षिकंनिक्षेपं पुत्रादिभिरज्ञातं यःस्वयं पुत्रादौ दद्यान्नासौ राज्ञा पुत्रादिनावा न्यूनत्वादिशङ्कयाऽभियोज्यः । न्यूनत्वादिनिश्चये त्वभियोज्यएव ॥ १८६ ॥

( ३ ) **कुल्लूकः** निक्षेप्तुर्मृतस्य निक्षेपधारी तद्धनाधिकारिणि पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति सराज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति ना क्षेप्तव्यः ॥ १८६ ॥

( ४ ) **राघवानन्दः** । अतएवाह स्वयमिति । स्वयमेव दद्याच्चेत्ततोऽन्यदस्तीति नाभियोक्तव्यः बन्धुभिश्च ॥ १८६ ॥

( ५ ) **नन्दनः** । नाभियोक्तव्यः निक्षिप्तद्रव्यपरिमाणनं प्रष्टव्यम् ॥ १८६ ॥

( ६ ) **रामचन्द्रः** । राज्ञा सननियोक्तव्यः अधिकं नारोपणीयः । निक्षेप्तुः स्वबन्धुभिः नअभियोक्तव्यः ॥ १८६ ॥

**अच्छलेनैव चान्विच्छेत्तमर्थंप्रीतिपूर्वकम् ॥ विचार्य तस्य वा वृत्तंसाम्नैव परिसाधयेत् ॥ १८७ ॥**

( २ ) **सर्वज्ञनारायणः** । यदाच निक्षेपस्तत्र संभावितोनच स्वयंतेन दत्तस्तदाह अच्छलेनेति । तदीयप्रतिपन्नद्रव्यादेश्छद्मादिना ग्रहणेन तदुद्धारार्थंनयतितव्यम् । प्रीतिपूर्वकं मैत्र्यादिकरणपूर्वकं अन्विच्छेदनुसंदध्यात् । तथा तस्य वृत्तं चेष्टितं निक्षेपहरणानुरूपं अतिव्ययाद्यपि तद्द्रव्यनियतं विचार्य तमेव साम्ना याचेत् । दण्डादिनातु साधने कथंचिन्मिथ्याभियोगे दण्डापातः ॥ १८७ ॥

( ३ ) **कुल्लूकः** । यदि कथंचिद्भ्रान्तिः स्यात्तदा अच्छलेनैवेति । तत्रार्थे धनान्तरसद्भावलक्षणवाच्छलादिपरिहारेणैव प्रीतिपूर्वकंनिश्चिनुयात् न तु झटिति दिव्यादिदानेन तस्यनिक्षेपधारिणः शीलमवेक्ष्य धार्मिकोयमिति ज्ञात्वा साम्नप्रयोगेन निश्चिनुयात् ॥ १८७ ॥

( ४ ) **राघवानन्दः** । निक्षेप्तुर्निक्षेपग्रहणे नियममाह अच्छलेनेति । अच्छलेन ऋजुमार्गेण तमर्थं स्थापितमर्थम् साम्ना स्वयमेव राजतः परिसाधने ग्रहणे अन्यथाधारिणःस्ततोलाभाचभावान्कोपि निक्षेपधारी न स्यादिति भावः ॥ १८७ ॥

( ५ ) **नन्दनः** । निक्षेपप्रत्यादानविधिमाह अच्छलेनेति तमर्थंनिक्षेपं प्रीतिपूर्वकंसौमनस्यपूर्वकम् । तस्य निक्षेपहर्तुः । वृत्तंशुभमशुभंवेति विचार्य साम्नाप्रियाप्रियभाषणेन ॥ १८७ ॥

---

( १८६ ) नसराज्ञानियोक्तव्यो = सराज्ञानाभियोक्तव्यो ( नं० )

( ६ ) रामचन्द्रः । तमर्थं प्रीतिपूर्वकमच्छलेनान्विच्छेत् । तस्य वृत्तं अतिव्ययादिकं विचार्यसाम्नैव ॥ १८७ ॥

**निक्षेपेष्वेषु सर्वेषु विधिः स्यात्त्वरिसाधने ॥ समुद्रे नामुयात्किंचिद्यदि तस्मान्न संहरेत् ॥ १८८॥**

( १ ) मेधातिथिः । निक्षेपेषूपचयमानेष्वनन्तरोक्तोविधिः साक्ष्यभावइत्यादिः परमसाधनार्थोविज्ञेयः । निक्षेपेण दाप्येऽस्मिन्नामुयान्निक्षेपधारी तत्र धारणकस्य एवंमूषकादिनाशेद्रष्टव्यं यदिदारुमये भाण्डे वस्त्रादिस्थापितंतीक्ष्णदशनैर्मूषकैर्दारुभित्वाभक्षेत न निक्षेपधारिणोदोषः। तत्रापि वासनपरिवेष्टितःस्थूलपोट्टलकोमुद्रितोयदि निक्षिप्येत यदा तदा येदारुभाण्डेनैवमान्ति तदा बहिर्मूषकादिभक्षितेऽपि हि न दोषः । यदि चैतन्निक्षेमुर्ज्ञानंभवति धारकेण परिभाषितंन मम भाण्डमन्यदस्ति चरित्रज्ञोवास्य निक्षेमा कदाचित्प्रत्यासन्नोभवति ॥ १८८ ॥

( २ ) सर्वज्ञनारायणः । निक्षेपेषु निक्षिप्तेषु याचितान्वाहितनिक्षेपादिषु । समुद्रे मुद्रासहिते प्रत्यर्पिते नामुयात् किंचिदपहरणशङ्कादि । तथा अमुद्रेपि यदि तस्मात्किंचित् नसंहरेत् नसंगृह्णीयात् ग्रहणव्यभिचारिभाण्डफलत्वादि न कुर्यात् ॥ १८८ ॥

( ३ ) कुल्लूकः । सर्वेषु निक्षेपेष्वपक्रियमाणेष्वेषसाक्ष्यभावेत्यादि पूर्वोक्तविधिनिर्णयसिद्धौ स्यात्। मुद्रितादौ पुनस्तस्य निक्षेपधारी यदि प्रतिमुद्रादिना न किमप्यपहरेत्तदा तस्मिन्नपि तेन किंदूषणंप्रामुयात् ॥ १८८ ॥

( ४ ) राघवानन्दः । उपसंहारव्याजेनावशिष्टंज्ञापयति निक्षेपेति । विधिः सामाद्यव्याजरूपः। समुद्रेप्रतिमुद्रादिधारीततः स्थापितधनात्किंचिन्नाहरेत्तदा नदोषमवामुयादितिभावः ॥ १८८ ॥

( ५ ) नन्दनः । सर्वेषु नीचादिविषयेष्वपि एषः पूर्वोक्तः ॥ १८८ ॥

( ६ ) रामचन्द्रः । एषु सर्वेषु निक्षेपेषु समुद्रे मुद्रासहिते किंचित् अपहारणशङ्कादि नामुयात् ॥ १८८ ॥

**चौरैर्हृतंजलेनोढमग्निना दग्धमेव वा ॥ न दद्याद्यदि तस्मात्सन संहरति किंचन ॥ १८९ ॥**

( १ ) मेधातिथिः । चौरास्तुवेदिताअवेदितावा सुरङ्गभिदादिना यदि मुष्णीयुः कृतरक्षासंविधाने धारणिके स्वामिनएव नाशः । जलेनोढमुदकेन देशान्तरंनीतम् ॥ १८९ ॥

( २ ) सर्वज्ञनारायणः । चौरैरित्यादिराजदैवोपघातोपलक्षणम् । किंचन अल्पमपियद्यसौ नसंहरति नगृह्णाति । एतेनाल्पस्यापिहरणे निक्षेपो दैवादिनष्टोपि देयइत्युक्तम् । अत्रच यथाशक्तिरक्षणे क्रियमाणे दोषाभावउक्तोनत्वक्रियमाणेपीत्यर्थसिद्धत्वान्नोक्तम् ॥ १८९ ॥

( ३ ) कुल्लूकः । चौरैर्मुषितं उदकेनदेशान्तरंप्रापितं अग्निना वा दग्धं निक्षेपंनिक्षेपधारी न दद्यात् । यदि स्वयंतस्मात्किंचिदप्यपहरति ॥ १८९ ॥

( ४ ) राघवानन्दः । एवं चौरैरिति जलेनोढम् जलौघादिना स्थानान्तरंप्रापितम् । सनिक्षेपधारी नदद्यादेव ॥१८९॥

( ६ ) रामचन्द्रः । चौरैः हृतं जलेन ऊढं प्रवाहितं देशान्तरंप्रापितं अग्निना दग्धं नदद्यात् यदि तस्मात् द्रव्यात् किंचिन्न संहरति न गृह्णाति । गृह्णाति चेत्तर्हि दद्यात् ॥ १८९ ॥

**निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च ॥ सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥ १९० ॥**

( १ ) मेधातिथिः । हरति योनिक्षिप्तमसाक्षिकंयोप्यपनीयनीत्वा वा याचते तमन्विच्छेत् अन्वेषणा तत्वपरिज्ञान-

यत्नः । सर्वप्रमाणव्यापारेणोपायाः प्रमाणान सामादयोवा तेन चलितवृत्तस्याप्रतिपाद्यमानस्य ताडनबन्धनाद्यपि महति धने चोरवत्तत्वप्रतिपत्यर्थंप्रयोज्यं न तत्वानिश्चये निग्रहः । वैदिकग्रहणंस्तुत्यर्थम् ॥ १९० ॥

( २ ) **सर्वज्ञनारायणः** । अनिक्षेप्तारमनिक्षिप्ययाचमानम् । उपायैश्शरादिभिः । अन्विच्छेत् जिज्ञासेत् । वैदिकैः वेदोक्तैरग्न्यादिभिः । श्रुतौहि सोनृतेनात्मानमन्तर्धाय यस्तप्तंपरशुंगृह्णाति सदह्यतइत्यादावग्नीनांतत्वग्राह्युपायता गम्यते ॥ १९० ॥

( ३ ) **कुल्लूकः** । निक्षेपस्यापह्नोतारमनिक्षिप्य याचितारं सर्वैः सामादिभिः उपायैर्वैदिकैश्च शपथैरग्निहरणादिभि र्नृपोनिरूपयेत् ॥ १९० ॥

( ४ ) **राघवानन्दः** । किंच असाक्षिके निक्षेपे तयोरपि शपथपर्यन्तं व्यापारमाह निक्षेपस्येति । अनिक्षेप्तारम-निक्षिप्यैव निक्षेप्तास्मीतियोब्रूयात्तम् । सर्वैः सामभेददानदण्डैः । तत्र साम तस्मिन् तत्स्त्रीपुत्रादिषुवा धर्मोपदेशपुरःसरं स्तुत्युक्तिः । भेदः त्वम्येवास्यनिक्षेपोनिक्षिप्तोस्तीति अन्यैरपि ज्ञायते कथंनदीयतेदानं तदर्धदातव्यमित्यादि । स्त्र्यादियद्य-प्येवंसंभाषणीयं । दण्डः एतद्धनंचेन्नदीयतेतदात्वच्छेदंविधास्यामि । शपथैरुक्तरूपैश्चान्विच्छेदित्यन्वयः ॥ १९० ॥

( ५ ) **नन्दनः** । अनिक्षेप्तारं अनिक्षिप्तयाचितारम् । सर्वैरुक्तादन्यैः ॥ १९० ॥

( ६ ) **रामचन्द्रः** । उपायैःसर्वैः अन्विच्छेत् परीप्सेत् ॥ १९० ॥

**योनिक्षेपंनार्पयति यश्चानिक्षिप्य याचते ॥ तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समंदमम् ॥ १९१ ॥**

( १ ) **मेधातिथिः** । निक्षिप्तमपह्नुवानस्य निक्षिप्तयाचमानस्य दण्डोयं यावति धने मिथ्याप्रवर्तते ताव-द्दण्ड्यते ॥ १९१ ॥

( २ ) **सर्वज्ञनारायणः** । चौरवच्छास्यौ साङ्गच्छेदादिना रत्नाद्यपहारे अल्पेतु दाप्यौचेति ॥ १९१ ॥

( ३ ) **कुल्लूकः** । निक्षिप्तधनंयोन समर्पयति यश्चानिक्षिप्तंप्रार्थयति तौ द्वौ सुवर्णमुक्तादौ महति विषये चौरवद्-ण्ड्यौ । स्वल्पविषये ताम्रादौ तत्समंदण्डनीयौ ॥ १९१ ॥

( ४ ) **राघवानन्दः** । मिथ्यात्वेनिर्णीते तयोर्दण्डमाह यइति । विप्रादन्यौचेच्चोरवत्कायेन दण्डोपि विप्रौचेद्दाप्या-वेव तत्समं यावतिनिक्षेपधने विवादस्तत्तुल्यम् ॥ १९१ ॥

( ५ ) **नन्दनः** । दाप्यौ दण्ड्यौ ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । यो निक्षेपं न अर्पयति न ददाति यश्चानिक्षिप्य याचते तौ चौरवच्छास्यौ तत्समंदाप्यौ द-ण्डनीयौ ॥ १९१ ॥

**निक्षेपस्यापहर्तारंतत्समंदापयेद्दमम् ॥ तथोपनिधिहर्तारमविशेषेण पार्थिवः ॥ १९२ ॥**

( १ ) **मेधातिथिः** । चौरवच्छिष्टिः पूर्वेणोक्ता तथा च शरीरनिग्रहस्तत्समधनंवैकल्पिके जातिभेदेन ब्राह्मणादन्यत्र प्रदेशउक्तोनेन निवर्त्यते पुनर्विधानेन चौरवाछिष्टिर्वाग्दण्डधिग्दण्डादिरूपैव समुच्चीयते धनदण्डेन नाङ्गच्छेदादिरूपा नच ब्राह्मणस्यापि वैकल्पिके पूर्वेण शारीरदण्डे प्राप्ते तन्निवृत्यर्थंपुनर्वचनंयुक्तंसामान्येन ब्राह्मणस्य शारीरदण्डप्रतिषेधात् न जातुब्राह्मणंहन्यादिति । उपनिधिः प्रीत्या यद्भुज्यतेऽविशेषेण द्रव्यजातिंच नापेक्षते । अन्यैस्तूपनिधिः परिभाषितः सतत्रै-

* चौरविधानेनचौ ( आ आ )

व नेह परिभाषायाअकरणाल्लौकिकार्थएव ग्रहीतुंन्याय्यः वक्ष्यति च प्रतीत्योपनिहितस्य चेति ॥ १९२ ॥

( २ ) सर्वज्ञनारायणः । अत्रच वर्णविशेषेण दण्डविशेषाशङ्कां निवारयति निक्षेपस्येति । उपनिधिपदं पूर्ववदुपलक्षणम् । अविशेषेण वर्णाविशेषेण ॥ १९२ ॥

( ३ ) कुल्लूकः । निक्षेपापहारिणंनिक्षिप्तमसमधनंदण्डयेत् । समशिष्टत्वादनिक्षिप्य याचितारमपि । नच पुनरुक्तिः म इत्यपराधे ब्राह्मणेतरस्य चौरवदिति पूर्वश्लोकेन शारीरदण्डस्यापि प्राप्तौ तन्निवृत्त्यर्थमिदम् । दापयेदिति धनदण्डनियमात् । नचानेन पूर्वश्लोकवैयर्थ्यम् अस्य प्रथमापराधविषयत्वात्पूर्वोक्त चाभ्यासे चौरोक्तमहासाहसादि धनदण्डावरोधकत्वात् । उपनिधिर्मुद्रादिचिन्हितंनिहितधनम् तस्यापहर्त्तारंकथितविशेषणंराजा दण्डयेत् ॥ १९२ ॥

( ४ ) राघवानन्दः । निक्षेपहर्तुर्दण्डंदृष्टान्तीकृत्योपनिधिहर्तुस्तमाह निक्षेपस्येति । तत्समं निक्षेपधनसमम् ॥१९२ ॥

( ५ ) नन्दनः । अविशेषेण वर्णविभागेन ॥ १९२ ॥

( ६ ) रामचन्द्रः । तथा उपनिधिहर्तारं उपनिधिपदेन अन्वाहितयाचिते विवक्षिते ॥ १९२ ॥

**उपधाभिश्च यः कश्चित्परद्रव्यंहरेन्नरः ॥ ससहायः सहंतव्यः प्रकाशंविविधैर्वधैः ॥ १९३ ॥**

( १ ) मेधातिथिः । उपधाव्याजंछद्मेत्यनर्थान्तरं तच्चानेकविधद्रव्यपरिवर्तकुंकुमंदर्शयित्वा कुसुंभादिदानं तुलादिमानपरिवर्त्ताद्यास्तत्र चान्यंविधिंवक्ष्यतिनान्येन संसृष्टमित्यादि इहतु चित्रासमन्तरान्यतउपकारदर्शनंकन्यानुरागकथनमित्येवमादिगृह्यन्ते चौरास्त्वांमुष्णन्ति यद्यहंत्वांन रक्षामि राजा तवात्यन्तंकुपितोमया तु बहुसमाहितंराजतस्तेनगराधिकारंदापय मे मुख्यंवोपकारंकरोमि पुत्रमित्रदुहितान्वयात्यन्तमनुरागिणीमद्हस्त्विदमुपायनंप्रेषितवतीत्येवमाद्यनृतमुक्त्वाऽऽत्मीयमुपायनमासज्य बहुप्रतिनयन्ति तत्समक्षंच राजनि तत्समेवाकार्यान्तरमुपांशुनिवेद्य कथयन्ति त्वदीयंकार्यमुपक्रान्तमित्येवमाद्युपाधिभिः परद्रव्यंचभुञ्जते तेषामयंराजमार्गप्रकाशंविविधःकुठारशूलारोपणहस्तिपदमर्दनाद्यनेकोपायसाधनोवधउच्यते । अन्येतु प्रकरणान्निक्षेपविषयमेवमाहुः तत्र हि प्रतिपद्यान्यत्र मयानिहितंसच न संनिहितःश्वआगच्छतीत्यसमर्पयन्हरतीति ॥ १९३ ॥

( २ ) सर्वज्ञनारायणः । अतिप्रसिद्धनिक्षेपाच्छलेनापहारमाह उपधाभिरिति । ननिक्षिप्तमित्यादिच्छलोक्त्या निक्षेपादिपरद्रव्यंयोहरेत् । प्रकाशं लोकसाक्षिकं विविधैरङ्गच्छेदादिभिःसर्वैरेव । एतच्च भूयःकरणे ॥ १९३ ॥

( ३ ) कुल्लूकः । राजा त्वयि रुष्टस्तस्मात्त्वांरक्षामि मम धनंदेहि । धनधान्यादिलोभोपकरणंवाऽनृतमभिधायच्छद्मभिर्यःपरद्रव्यंगृह्णाति सच्छद्मधनसहकारिसहितोबहुजनसमक्षंकरचरणशिरश्छेदादिभिर्नानाप्रकारैर्वधोपायैः राज्ञा हन्तव्यः ॥ १९३ ॥

( ४ ) राघवानन्दः । प्रासंगिकं परद्रव्याभिलाषितया मिथ्याभिलाषिणो दण्डमाह उपधाभिरिति । उपधाहि राजा त्वयि रुष्टस्तस्मात् त्वांरक्षिष्यामि मह्ममेतद्देहीति धनकन्यादिलाभार्थमभिधानमुपधातैःयःपरद्रव्यं हरेत्सः ससहायः सत्यंअयंवक्तीति मिथ्याभिधानेन साहाय्यंगते न सह प्रकाशं बहुजनसमक्षंविविधैः शिरच्छेदादिनानाप्रकारैः ॥ १९३ ॥

( ५ ) नन्दनः । उपधाभिः पञ्चविधाभिः ॥ १९३ ॥

( ६ ) रामचन्द्रः । यःकश्चिन्नरः परद्रव्यं उपधाभिः उपायैर्व्याजैर्हरेत् ॥ १९३ ॥

**निक्षेपोयः कृतोयेन यावांश्च कुलसन्निधौ ॥ तावानेव सविज्ञेयोविब्रुवन्दण्डमर्हति ॥ १९४ ॥**

( १ ) **मेधातिथिः** । यइति निक्षिप्यमाणद्रव्यनिर्देशः यावानिति परिमाणस्य यआह सुवर्णमेतस्य हस्ते मया निक्षिप्तकांस्यंददाति शतंच स्थापितमर्धंददाति सपृच्छ्यते किंरहस्युत कस्य चित्समक्षमिति भवेदाह कुलसंनिधौ कुलंसाक्षिणस्तत्र ते पृष्टायदाहुस्तदेवसत्यंविब्रुवन्विरुद्धंब्रुवाणोदण्ड्यते तत्रापि यदि ब्रूयात्साक्षिसमक्षंकथंतैर्विनान्यत्स्थापितमिति अस्त्यत्रप्रमाणान्तरव्यापारणावसरः अयमपि श्लोकोनाधिकविध्यर्थः ॥१९४ ॥

( २ ) **सर्वज्ञनारायणः** । सक्तुकरणेतूक्तम् । निक्षेपोनिक्षेपादिः । कुलस्य ज्ञात्यादेः । यः सुवर्णादिः । विब्रुवन्न मह्यमत्र रक्षणभागोदेयइति वदन् ॥ १९४ ॥

( ३ ) **कुल्लूकः** । यः सुवर्णादिर्यावत्परपरिमितोयेन साक्षिसमक्षंनिक्षेपः कृत स्तत्र परिमाणादिविप्रतिपत्तौ साक्षिवचनात्तावानेव विज्ञातव्यः । विप्रतिपत्तिंकुर्वन्नप्येतदुक्तानुसारेण दण्डंदाप्यः ॥ १९४ ॥

( ४ ) **राघवानन्दः** । प्रकृतमनुवर्तयन् तत्र विशेषमाह निक्षेपइति । यइति स्वरूपतः यावानिति सङ्ख्यातःकुलसंनिधौ स्थापनकाल यावन्तःसाक्ष्यादयस्तावतांसन्निधौविज्ञेयइतिशेषः । तथोक्तेपि साक्षिभिः स्वयंसङ्ख्यायां विब्रुवन् विप्रतिपद्यमानोनिक्षेप्ता दण्डमर्हतीत्यन्यः ॥ १९४ ॥

( ५ ) **नन्दनः** । कृतः निक्षिप्तः । यावान् यत्परिमाणः । कुलसन्निधौ कुलीनाभिज्ञाने ब्रुवन् अयथावदन् ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । विब्रुवन् अन्यथाब्रुवन् स दण्डं अर्हति ॥ १९४ ॥

**मिथोदायः कृतोयेन गृहीतोमिथएव वा ॥ मिथएव प्रदातव्योयथा दायस्तथा ग्रहः ॥ १९५ ॥**

( १ ) **मेधातिथिः** । योयथा निक्षिपेदित्यनेन निक्षिप्तविधिरयमुक्तोन्येषु कार्येष्वनेन प्रतिपद्यते ऋणादानोपनिधिविक्रयाद्यपि येन यादृशेन प्रकारेण कृतंतादृशेनैव प्रत्यर्पणीयं रहसि कृतस्य राजकुलेऽशमार्गणादिना प्रकाशनंन कर्तव्यं तेन स्वहस्तलेख्येन ऋणेगृहीते न राजकुलेशंदाप्यते उत्तमर्णधनंक्षपणीयं अनेनैव निक्षेपेऽपि सिद्धे तत्र पुनर्वचनंनित्यार्थं तेन निक्षेपादन्यत्र रहसि कृतस्यापि विप्रतिपत्त्याशङ्कायां प्रकाशप्रतिदानंकदाचिदस्ति । अथवेहाप्रकाशकृतस्य प्रकाशीकरणंनिषिध्यते तत्र त्वन्योऽर्थः समुद्रोऽसमुद्रइत्यादितेनापौनरुक्त्यं मिथः शब्दोरहसि विज्ञेयः अथवा परस्परंमिथः सर्वंकार्यंद्वाभ्यांसंख्यादानादिपरमेव क्रियतइति पुनर्वचनंतृतीयप्रतिषेधार्थं दायशब्दः सामान्यशब्दोनिक्षेपादन्यानपि विक्रयादीनाह ॥ १९५ ॥

( २ ) **सर्वज्ञनारायणः** । कुलासंनिधावसाक्षिकमाह मिथइति । मिथएकान्ते । दायोनिक्षेपदानम् । मिथोगृहीतो गृहीत्वापि न ज्ञापितोग्रहीत्रा मिथएव न साक्ष्यादिसंनिधौ । एतेन ग्रहणे साक्ष्यभावे प्रत्यर्पणेऽपि साक्षिणोनानुसंधेयाइत्युक्तम् । यथादायस्तथेतितु ससाक्षिके ससाक्षिकएवेति ॥ १९५ ॥

( ३ ) **कुल्लूकः** । रहसि येन निक्षेपोर्पितोनिक्षेपधारिणा च रहस्येवगृहीतः सनिक्षेपो रहस्येव प्रत्यर्पणीयः न प्रत्यर्पणे साक्ष्यपेक्षा यस्माद्येनैव प्रकारेण दानंतेनैव प्रकारेण प्रत्यर्पणंदातव्यमिति श्रवणान्निक्षेपधारिणोयंनियमविधिः । योयथा निक्षिपेद्धस्तइति तु निक्षेप्तुर्नियमार्थंग्रहीतव्यइति श्रवणात् अतोन पौनरुक्त्यम् ॥ १९५ ॥

( ४ ) **राघवानन्दः** । निक्षेपधारिणोनियममाह मिथइति । मिथःअन्योन्यंनिक्षेपधारिणारहसि निक्षेपः कृतश्चेद्रहस्येव याचितव्योवायथा दायः स्थापनं तथाग्रहस्तेनैव प्रकारेणादानम् न तत्र साक्ष्यपेक्षेतिभावः ॥ १९५ ॥

( ५ ) **नन्दनः** । दायसमर्पणंमिथः रहसिअसाक्षिक मितियावत् ॥ १९५ ॥

( ६ ) **रामचन्द्रः** । तथा ग्रहः गृह्णातीतिग्रहः मिथएव ग्रहः ग्रहीतव्यः येन पुंसा मिथः एकांते दायः निक्षेपदानंकृतः यथा दायः तथा ग्रहः ग्रहणीयः ॥ १९५ ॥

**निक्षिप्तस्य धनस्यैवंप्रीत्योपनिहितस्य च ॥ राजा विनिर्णयंकुर्यादक्षिण्वन्न्यासधारिणम् ॥१९६॥**

( १ ) **मेधातिथिः** । प्रकरणोपसंहारोऽनेन क्रियते प्रीत्योपनिहितस्य स्नेहेन किंचित्कालंभोगार्थंदत्तस्य न्यासोनिक्षेपस्तस्य धारणकोयथान पीड्यते तथानिर्णयः कर्तव्यइति । अक्षिण्वन्नपीडयन् द्वित्रश्लोकानिक्षेपकरणे विध्यर्थाः सर्वमन्यदन्यतः सिद्धंश्लोकार्द्धेनोक्तम् ॥ १९६ ॥

( २ ) **सर्वज्ञनारायणः** । निक्षिप्तस्येति याचिताद्युपलक्षणम् । प्रीत्योपनिहितस्य यावदस्मदागमनं तावत्त्वया क्षीराद्यस्यागृह्यतामिति गवादेर्बन्धुत्वेन रक्षणार्थंस्थापितस्य । अक्षिण्वन् प्रथमतएव दण्डेनाहिंसन् निक्षेपः ॥ १९६ ॥

( ३ ) **कुल्लूकः** । राज्ञा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रादियुतस्य वोपनिधिरूपस्य तथा प्रीत्या कतिचित्कालंभोगार्थमर्पितस्यानेनोक्तप्रकारेण न्यस्तधनधारिणमपीडयन्निर्णयंकुर्यात् ॥ १९६ ॥

( ४ ) **राघवानन्दः** । नृपतेर्नियममाह निक्षिप्तस्येति । प्रीत्योपनिहतस्य प्रीत्यर्थं कंचित्कालं दत्तस्य अक्षिण्वन्नपीडयन् न्यासधारिमं साक्षीनैवं विधइतिभावः । इति निक्षेपप्रकरणम् ॥ १९६ ॥

( ५ ) **नन्दनः** । उपसंहरति निक्षिप्तस्येति । विनिर्णयंप्रतिदानम् विवादपदंसमाप्तम् ॥ १९६ ॥

( ६ ) **रामचन्द्रः** । प्रीत्या निक्षिप्तस्य च पुनः उपनिहितस्य राजा विनिर्णयं कुर्यात् न्यासधारिणं अक्षिण्वन् अपीडयन् ॥ १९६ ॥

**विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः ॥ न तंनयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम् ॥१९७॥**

( १ ) **मेधातिथिः** । अस्वामिविक्रयाख्यविवादपदमिदमनुक्रान्तं परस्य यद्द्रव्यादिस्वंतच्चेदस्वामी तत्पुत्रादिरन्योवा विक्रीणीते स्वामिनाननुज्ञातस्तंस्तेनंचौरंविद्यात् यद्यपि यस्तस्मात्क्रीणाति सतमस्तेनंमन्यते नतंनयेत साक्ष्यन्तु तंपुरुषंननयेत न प्रापयेत्साक्ष्यंनकारयेत्साक्षिकरणे ननियोक्तव्यइत्यर्थः । यथा चौरस्तादृशएवासौ स्तेनत्वाच्च न साक्षित्वएव प्रतिषेधः किंतर्हि सर्वासुसाधुजनसाध्यासु क्रियासु परस्वमननुज्ञातेन विक्रीतंक्रेतुर्नस्वंभवतीति सिद्धेसाक्षिकर्मनिषेधद्वारेण प्रतिषेधोवैचित्र्यार्थः ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः** । अस्वामिविक्रयमाह विक्रीणीतइति । न तं साक्ष्यन्तंनयेत् साक्षिसमीपंनयेत् तद्वचनाद्धिनैव निर्धारणासंभवे । एतेन महापराधत्वमस्य कथयति ॥ १९७ ॥

( ३ ) **कुल्लूकः** । अस्वामी यः स्वामिना चाननुगतः परकीयंद्रव्यंविक्रीणीते वस्तुतश्चौरमचौरमात्मानंमन्यमानं तंसाक्षित्वंन कारयेन्नकुत्रचिदपि प्रमाणी कुर्यादित्यर्थः ॥ १९७ ॥

( ४ ) **राघवानन्दः** । दण्डार्थमनुवदति विक्रीणीतइति । अस्वामी स्वाम्यसंमतश्च वस्तुतःस्तेनं तं साक्ष्यं साक्ष्युक्तिविषयं ननयेत । तदर्थे साक्ष्यनादरइतिभावः ॥ १९७ ॥

( ५ ) **नन्दनः** । अस्वामिविक्रयमाह विक्रीणतेपरस्येति । स्वाम्यसंमतः स्वामिनाअवनुज्ञातः । तंसाक्ष्यंन नयेत ससाक्षित्वयोग्योन भवेत् । एवंनिन्द्योसावस्वामिविक्रयी तस्मादस्वामिविक्रयंन कुर्यादिति ॥ १९७ ॥

( ६ ) रामचन्द्रः । यःअस्वामी परस्य स्वं द्रव्यं स्वाम्यसंमतः तं साक्ष्यं न नयेत् । अस्तेनमानिनंस्तेनंज्ञेयम ॥१९७॥

अवहार्योंभवेच्चैव सान्वयः षट्शतंदमम् ॥ निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥१९८॥

( १ ) मेधातिथिः । पूर्वेणसाधुजनकर्तृकासु क्रियासु साक्ष्यादिष्वपि स्वामिक्रियकारिणामनर्हतोक्ता अनेन षट्शतोदण्डउच्यते षट्कार्षापणशतान्यवहार्योदापयितव्योदण्ड्यइतियावत् । सान्वयोऽन्वयोऽनुगमनसंबन्धः सयस्यास्ति पुत्रभ्रात्रादिस्वामिनोनुगतसान्वयः सह्यनुज्ञातोऽपि विक्रीणानोनस्फुटचोरोयतस्तस्यबुद्धिर्मदीयमवैतत्पितुरिति तत्प्रतीयमपि संभावनाभवति तस्यैव विक्रीयमूल्यंददाति यस्त्वत्यन्तासंबन्धः सनिरन्वयः । चौरकिल्बिषंनिग्रहंऽनिःसंशयंप्राप्तः । अनपसरोयदि तद्गृहंतस्य नापसृतंभवति तदाऽनपसरश्चौरवदण्ड्यः यदि तु यद्गृहादेव केनचिद्दत्तंविक्रीतंवा तस्य तेन वा ऽज्ञात्वाऽप्रतिगृहीतं प्रकाशनस्य विक्रेयद्रव्यस्यान्यतः क्रयः अपसरः क्रयादन्यः प्रतिग्रहादिरागमः एतदुक्तंभवति यदिति न तन्नकुतश्च न क्रीतंनापि प्रतिगृहादिना लब्धंतदा चौरः ॥ १९८ ॥

( २ ) सर्वज्ञनारायणः । अवहार्योदण्ड्यः । सान्वयस्तद्द्रव्ययोग्यंसंबन्धाभासवान् तथा तस्मिन्नजीवति विभक्तभ्रात्रादिः । निरन्वयोत्यन्तोदासीनः संबन्धाभासेनापिरहितः । तथा सान्वयोप्यनवसरोऽकालेऽदेशेच विक्रयंकुर्वन् चौरकिल्बिषं चौरापराधं प्राप्तः स्यात् ॥ १९८ ॥

( ३ ) कुल्लूकः । एषपरस्वविक्रयी यदि स्वामिनोभ्रात्रादिरूपत्वेन सान्वयः संबन्धी भवति तदा षट्पणशतान्यवहार्योदण्डनीयः यदि पुनः स्वामिनः संबन्धी न भवतिअनपसरश्च स्यात् । अपसरत्यनेनास्मात्सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः सयस्य स्वामिसंबन्धिपुत्रादेः सकाशान्नास्ति तदा चौरसंबन्धिपापंप्राप्नोतितद्वद्दण्डनीयइत्यर्थः ॥ १९८ ॥

( ४ ) राघवानन्दः । न केवलमेवदण्डमप्याह अवेति । एषपरस्वापहारी अवहार्योदण्डनीयः । सान्वयः स्वामिनोभ्रात्रादिरूपेणसंबन्धी तदा षट्शतं । निरन्वयश्चेच्चोरकिल्बिषं सहस्रं दण्ड्यइत्यन्वयः । अनपसरइति विशेषणम् अपसरत्यनेन स्वामिनोधनमित्यपसरः प्रतिग्रहक्रयपिण्डादिः सयस्य संबन्धी नास्ति सोऽनपसरः ॥ १९८ ॥

( ५ ) नन्दनः । अस्वामिविक्रयी सान्वयः ससहायः पणानांषट्शतमपहार्यः । किल्बिषंदण्डम् । नावसरः अनुग्रहावसररहितः । निर्दयमेव चोरदण्डोदण्ड्यइतियावत् ॥ १९८ ॥

( ६ ) रामचन्द्रः । एषः सान्वयः विभक्तभ्रात्रादिसंबन्धवान् अवहार्यः दण्ड्यःनिरन्वयः अविभक्तभ्रात्रादिसंबन्धवान् अनवसरः चौरकिल्बिषं प्राप्तः स्यात् ॥ १९८ ॥

अस्वामिना कृतोयस्तु दायोविक्रयएव वा ॥ अकृतः सतु विज्ञेयोव्यवहारे यथा स्थितिः ॥१९९॥

[ अनेन विधिना शास्ता कुर्वन्नस्वामिविक्रयम् । अज्ञानाज्ज्ञानपूर्वन्तुचौरवद्दण्डमर्हति ॥ १ ॥ ]‡

( १ ) मेधातिथिः । न केवलमस्वामिसकाशात्क्रीतंतन्नसिध्यति किंतर्हि प्रतिगृहीतमपि प्रतिग्रहेण प्रीत्या वा दानंदायः सोऽपि न सिध्यति विक्रीणीतेपरस्येत्यनेन विक्रेतुः प्रतिग्रहीतुश्चास्वाम्यमुच्यते । स्वामीरिक्थक्रयेत्यादिना स्वाम्याशङ्कायां प्राप्तायां प्रतिषेधव्यवहारएवस्थितिर्नातिक्रमणीया ॥ १९९ ॥

---

( १९८ ) अनपसरः=अनवसरः ( ख, ग ) अवहार्योभवेच्चैव=अपहार्यः सतुभवेत् ( नं )

( १९९ ) दायोविक्रयएववा=क्रयोविक्रयएवा ( ज, झ, ञ, ढ, )

‡ ( क, ख. ग, च, ण, ज, झ, ञ, ट, ठ, ड, र, ल )

( २ ) **सर्वज्ञनारायणः** । क्रयोपि स्वाम्यसंमत्या स्वाम्यर्थकृतोनिवर्त्यः । एवंविक्रयोप्यकृतोनस्वत्वनाशकः । यथा-व्यवहारे स्थितिः सेयमुक्तेति शेषः ॥ १९९ ॥

[ **सर्वज्ञनारायणः** । एषच सर्वोऽज्ञानकृतविषयोऽज्ञानेत्वन्यथेत्याह अनेनविधिनेति ॥ १ ॥ ]

( ३ ) **कुल्लूकः** । अस्वामिना यत्कृतंयद्दत्तंविक्रीतंवा तदकृतमेव बोद्धव्यम् । व्यवहारे यथा मर्यादा तथा कृतंन भवतीत्यर्थः ॥ १९९ ॥

( ४ ) **राघवानन्दः** । क्रयाद्यसिद्धिमप्याह अस्वामिनेति । स्वत्वरहितेनद्रव्येण अन्यायोपात्तेन परद्रव्येणवा यः क्रयःकृतः सोप्यस्वामिनाकृतः स्यादेव । तथावस्तुतोअस्वाम्यास्पदीभूतस्य विक्रयई*त्यप्यविरोधः । व्यवहारे यथा मर्यादा तथाकृतं नभवतीत्यर्थः ॥ १९९ ॥

( ५ ) **नन्दनः** । क्रयविक्रयग्रहणंदानादीनामप्युपलक्षणार्थम् ॥ १९९ ॥

[ **नन्दनः** । एतदेवविशदयति अनेनविधिनेति। अनेनविधिना षट्शतेन दण्डेन ॥ १ ॥ ]

( ६ ) **रामचन्द्रः** । सः अकृतः विज्ञेयः व्यवहारे यथास्थितिः ॥ १९९ ॥

[ **रामचन्द्रः** । अनेनेति । अनेन विधिनाऽस्वामिविक्रयंकुर्वन्नज्ञानविज्ञानपूर्वकंवा शास्ता चौरवद्वधमर्हति ॥ १ ॥ ]

**संभोगोदृश्यते यत्र न दृश्येतागमः क्वचित् ॥ आगमःकारणंतत्र न संभोगइति स्थितिः ॥ २०० ॥**

( १ ) **मेधातिथिः** । यस्मिन्वस्तुनि गोवस्तुहिरण्यक्षेत्रादावन्यस्य भोगोदृश्यते अन्यस्य च रिक्थप्रतिग्रहादिरागमः स्वाम्यापादकस्तत्रागमोबलवत्संभोगोभोगएवसंभोगकारणं स्वाम्येतत्रेतिस्थितिः एवमनादिव्यवस्थाभोगमात्रेण स्वत्वं यादृशेन च स्वत्वंतत्पुरस्ताद्याख्यातं । यत्किंचिद्दशवर्षाणीति वानेन विरोधस्तत्रैव परिहृतः ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः** । एकस्य भोगोदृश्यते आगमश्च लेख्यादिर्नदृश्यते इतरस्यच आगमोदृश्यते तत्र यस्यागमस्तस्यैवनभोगिनइत्याह संभोगइति ॥ २०० ॥

( ३ ) **कुल्लूकः** । यस्मिन्वस्तुनि संभोगोविद्यते क्रयादिरूपस्त्वागमोनास्ति तत्रप्रथमपुरुषगोचर आगमएव प्रमाणंन संभोगइति शास्त्रमर्यादा ॥ २००॥

( ४ ) **राघवानन्दः** । आधिःसीमेत्यादिना पूर्वोक्ताध्यादीनामष्टानांभोगेन न स्वत्वमित्युक्तं तर्हि केन स्यादित्याशङ्कायामाह संभोगइति । आगमः प्रतिग्रह क्रयादिः कारणं तद्वते दशवर्षोत्तरंभोगमात्रात्स्वत्वासिद्धेः भुक्त्यसत्वे आगमोन प्रमाणं किंतूभयम् । तथाहयाज्ञवल्क्यः ॥ आगमोभ्यधिकोभुक्तेर्विनापूर्वक्रमागतात् । आगमोबलवान्नैव भुक्तिस्तोकापि यत्रनो इतिपूर्वक्रमात् पित्रादित्रयभोगात् । अतएव नारदः ॥ आगमेनविशुद्धेन भोगोयाति प्रमाणताम् । अविशुद्धागमोभोगः प्रामाण्यं नाधिगच्छतीति आगमेन प्रतिग्रहादिनास्तोकापीति रहसि प्रतिग्रहे कृते साक्षिरहिते । प्रतिग्रहीतरि मृतेत्वमृतेवा स्तोकभोगरहितंन पुत्रादयः प्राप्नुवन्तीत्यर्थः ॥ २०० ॥

( ५ ) **नन्दनः** । नाष्टिकविप्रतिपत्तौ बलाबलमाह संभोगोयत्रेति । यत्र अस्वामिना विक्रीतेर्थे एकस्य संभोगोदृश्यते तत्रागमः कारणंप्रमाणं न संभोगः अस्वामिविक्रयसाधर्म्यात् ॥ २०० ॥

( ६ ) **रामचन्द्रः** । यत्र संभोगोदृश्येत आगमः साक्ष्यलेख्यप्राप्तिर्नदृश्येत ॥ २०० ॥

---

* इत्यप्य = इत्यन्यथा ( राघ० २ ) = इत्यन्वया ( न, श्च )

**विक्रयाद्योधनंकिंचिद्गृह्णीयात्कुलसन्निधौ ॥ क्रयेण सविशुद्धंहि न्यायतोलभते धनम् ॥ २०१॥**

( १ ) **मेधातिथिः** । यादृशेन क्रयेण स्वाम्यंभवतितंदर्शयति विक्रीणतेऽस्मिन्व्यवहारिणइति विक्रयआपणभूमिस्ततोयोगृह्णीयाद्धनंगवादिक्रीयमाणद्रव्यंमूल्यंवा सलभते न्यायतः क्रयउचितेन मूल्येनासंभाव्य पापपुरुषमेलककारपुरुषसमूहस्य समक्षे गृहीतंलभते नापहारयति । अन्यथा स्वामिना तद्द्रव्यंप्रतिनीयतेऽस्य न्यायतोविक्रये किन्तु मूल्यंलभते तस्माद्यस्तस्य विक्रयी अन्यायतः क्रयेण तु दण्ड्यते मूल्यंच हारयति एतदुक्तं ॥ विक्रेतुर्दर्शनाच्छुद्धिः स्वामीद्रव्यंनृपोदमं । क्रेतामूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ एषएवार्थस्तेन श्लोकेन प्रतिपाद्यते ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः** । कुलं संघः सच स्वर्णकारादिर्माध्यस्थः । क्रयेणविशुद्धं विक्रेतरि संभाव्य तावद्वस्तुसद्भावं तथा अमूल्यत्वादेशकालत्वादिक्रयाविशुद्धिरहितम् । अन्यथा स्वाम्यदर्शनेपि राज्ञएव तदित्यर्थः ॥ २०१ ॥

( ३ ) **कुल्लूकः** । विक्रीयतेऽस्मिन्निति विक्रयदेशोविक्रयः ततोयत्क्रेयधनंकिंचिद्व्यवहर्तृसमूहसमक्षंक्रीयतेऽनेनेति क्रयोमूल्यंतेन यस्माद्गृह्णीयात् अतोन्यायतएवास्वामिविक्रेतृसकाशात्क्रयणाद्विशुद्धंधनंलभते ॥ २०१ ॥

( ४ ) **राघवानन्दः** । क्रयादिस्वत्वापादकमिति सनियममाह विक्रयादिति । विक्रयाद्विक्रेतुःधनं क्रेयम् क्रयेण द्रव्येण क्रीणात्यनेनेति । कुलसंनिधौहट्टादिस्थितबहुजनसन्निधौ योगृह्णीयात्तन्न्यायतोविशुद्धं धनं क्रेयद्रव्यं लभतेविप्रतिपत्तावपि मूल्यंविक्रेतृसकाशाल्लभतइतिभावः ॥ २०१ ॥

( ५ ) **नन्दनः** । अस्वामिविक्रयमजानतः क्रेतुः दोषोनास्तीत्याह विक्रयाद्यइति । यः क्रेताधनंक्षेत्रादिकंक्रयेण हेतुना विक्रेतुः सकाशाद्धनंमूल्यंलभते ॥ २०१ ॥

( ६ ) **रामचन्द्रः** । कुलसंनिधौ यः किंचिद्यदि गृह्णीयात्सः क्रयेण विशुद्धं देशकालोचितमूल्यंन्यायतोधनंलभेत ॥ २०१ ॥

**अथ मूलमनाहार्यंप्रकाशक्रयशोधितः ॥ अदण्ड्योमुच्यते राज्ञा नाष्टिकोलभते धनम् ॥ २०२॥**

( १ ) **मेधातिथिः** । असंभाव्यपापाच्च पुरुषादित्यादिन्यायतः क्रयउक्तः सचेद्विक्रेता शक्यआहर्तुंतदा पूर्वोक्तोविधिः स्वामीद्रव्यमित्यादि अथ सविक्रयीगतोनेन क्रीतंस्वामिना चिन्हीकृतंतेन च मूलंविक्रेता पुरुषआहर्तुंन शक्यते प्रकाशजनसमक्षंप्रसिद्धये विक्रयभुवः क्रीतमतईदृशेन क्रयेण शोधिते द्रव्यशुद्धः । क्रेताऽदण्ड्योमुच्यते धनन्तुनाष्टिकंस्वामीज्ञापितस्वंवा लभते । नष्टमन्वेषते नाष्टिकः नष्टमस्यास्तीत्येवंठन्कृते प्रज्ञादित्वात्स्वार्थिकोणूकर्तव्यः नष्टंप्रयोजनमस्येति वा तेनायंसंक्षेपतः क्रये प्रकाशक्रयेतुदण्डोन स्याद्धननाशस्तुस्थितएव ॥ २०२ ॥

( २ ) **सर्वज्ञनारायणः** । अस्वामिविक्रये तद्धनस्य मूलं विक्रेता यद्याहार्यस्तदा तमाहूय क्रेता शुध्यति । तदाहरणासंभवेतु प्रकाशक्रयेणोचितदेशकालससाक्षिकक्रयेण राज्ञा नदण्ड्यः । धनंतु मूल्यमदत्वैव नाष्टिकोनष्टमूलद्रव्योलभेत । क्रयप्रकाशाभावे दण्डोपि ॥ २०२ ॥

( ३ ) **कुल्लूकः** । अथ मूलमस्वामी विक्रेता मरणाद्देशांतरादिगमनादिनावाहर्तुंशक्यते प्रकाशक्रयेणे चासौ निश्चितस्तदादण्डानर्हएव क्रेता राज्ञामुच्यते नष्टधनस्वामी च यदस्वामिनाविक्रीतंद्रव्यंतत्क्रेतुर्हस्ताल्लभ्यते । अत्र च विषयोर्धमूल्यं क्रेतुर्दत्वा स्वधनंस्वामिना ग्राह्यम् । तदाह बृहस्पतिः ॥ वणिग्वीथीपरिगतंविज्ञातंराजपूरुषैः । अविज्ञाताश्रयात्क्रीतं-

---

( २०२ ) शोधितः=शोधितम् ( ल, र, ब, य, भ )

विक्रेता यत्र वा मृतः ॥ स्वामी दत्वार्धमूल्यन्तु प्रगृह्णीयात्स्वकंधनम् । अर्धंद्वयोरपहृतंतत्र स्याद्यवहारतः ॥ २०२ ॥

( ४ ) **राघवानन्दः** । कुलसन्निधौ क्रीतस्यापि नष्टधनस्वामिनोविप्रतिपत्तौ विशेषमाह अथेति । मूलं विक्रेतृरूपं अनाहार्यं देशाद्देशान्तरगमनात्साक्षात्कर्तुमशक्यंयदि तदा नाष्टिकः नास्ति कं धनं यस्य सनष्टधनः स्वीयंधनं गृह्णीयात् क्रेताऽवदण्ड्योयतः प्रकाशक्रयशोधितः प्रकाशे बहुजनसंनिधौ क्रीतत्वेन चोरत्वाद्याशङ्कानुत्पत्तेरिति पद्यार्थः । तथाच याज्ञवल्क्यः ॥ स्वंलभेतान्यविक्रीतंक्रेतुर्दोषोऽप्रकाशिते । हीनाद्रहोहीनमूल्ये वेलाहीनेच तस्करइति ॥ हीनादस्वामिनः । अप्युक्तिकंबहुमूल्यं निकृष्टाद्वाएतेषु क्रेता तस्कर इवदण्ड्यइतियाज्ञवल्क्यार्थः । एवंक्रेतातु बृहस्पत्युक्तितोऽ अर्धमूल्यं प्राप्नोति । तथाच ॥ वणिग्वीथीपरिगतं विज्ञातंराजपूरुषैः । अविज्ञाताश्रयात्क्रीतंविक्रेता यत्र वा मृतः ॥ स्वामी दत्वार्धमूल्यंतु प्रगृह्णीयात्स्वकंधनम् । अर्धंद्वयोरपि हृतंतत्र स्याद्यवहारतइति ॥ द्वयोः क्रेतृस्वामिनोः हृतं नष्टमित्यर्थः । मूलमाहार्यंचेत्तत्राह याज्ञवल्क्यः ॥ विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपोदमम् । क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयीति॥ तस्य परधनस्येत्यर्थः । यत्र भूम्यादौ प्रतिग्रहीत्रोः पौर्वापर्यं तत्र पूर्वएव प्राप्नोति पूर्वा तुबलवत्तरेति याज्ञवल्क्योक्तेः । पूर्वा प्रतिग्रहक्रियेत्यर्थः ॥ २०२ ॥

( ५ ) **नन्दनः** । अथान्यशब्दोयदर्थः । मूलमनाहार्यंविक्रेतुः सकाशान्नष्टंलभते ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । नाष्टिकः नष्टमूलद्रव्यः धनं लभते ॥ २०२ ॥

**नान्यदन्येन संसृष्टरूपंविक्रयमर्हति ॥ नचासारंनच न्यूनंन दूरेण तिरोहितम् ॥ २०३ ॥**

( १ ) **मेधातिथिः** । अस्वामिविक्रयप्रसङ्गेनान्योऽपि विक्रये धर्मउच्यते नान्यकुंकुमादिद्रव्यंकुद्रव्येण तदाभासेन कुसुंभादिना संसृष्टंविक्रेयं यत्वसावद्यंचिरकालंभांडेवस्थितत्वात् । प्राप्तविभावंजीर्णमजीर्णाभासंवस्त्रादि नचन्यूनंतुलामानादिना । दूरस्थितंग्रामे ममविद्यन्तेवासांसि गुडादिवा द्रव्यंतिरोहितंस्थगितंवस्त्रादिनांतर्हितं यस्य वा स्वरूपंकेनचिद्द्रव्यरागेणान्तर्द्धीयते । पुराणंनववत्प्रतिभाति तत्तिरोहितंनविक्रेतव्यं इदंद्रव्यमीदृशंच प्रदर्श्यविक्रयः कर्त्तव्यः । अन्यथाकृतस्तु न कृतोदशाहादूर्ध्वमपि प्रत्यर्पणे न दोषः । अस्य दण्डस्येहानाम्नातत्वादुपधाभिरित्येषएवदण्डः प्रकरणभेदेन पठितत्वात् अस्वामिविक्रयदण्डइत्यन्ये ॥ २०३ ॥

( २ ) **सर्वज्ञनारायणः** । विक्रयप्रसंगागतमन्यदपि प्रदर्शयति नान्यदिति । नान्यदन्येन विजातीयेन संसृष्टंरूपं नाणकं विक्रयमर्हति विक्रीतमपि निवर्त्यमित्यर्थः । रूपपदं विक्रीतमात्रोपलक्षणम् । सावद्यं दुष्टमदुष्टमितिविक्रीतं । न्यूनं धरणछद्मना समतां नीतम् । न दूरे दर्शनायोपस्थाने स्थितम् । न तत्रैवस्थितमपि वस्त्रादितिरोहितम् ॥ २०३ ॥

( ३ ) **कुल्लूकः** । कुंकुमादिद्रव्यंकुसुंभादिना मिश्रीकृत्य न विक्रेतव्यं नचासारंसारमित्यभिधाय नच तुलादिना न्यूनंन परोक्षावस्थितंनरागादिना स्थगितरूपं अत्रास्वामिविक्रयसादृश्यादस्वामिविविक्रये दण्डएव स्यात् ॥ २०३ ॥

( ४ ) **राघवानन्दः** । विक्रयप्रसंगेन द्रव्यान्तरमिश्रितं विक्रयमपि प्राप्तं तन्निषेधति नान्यदिति । रूपं कुङ्कुमादि अन्येन कुसुम्भादिना संसृष्टं मिश्रीकृतम् सावद्यं सारमित्युक्त्वाऽसारमन्यूनं परिमाणेनतत् । दूरे गृहंगत्वा ददामीति परोक्षावस्थितम् । तिरोहितं रागादिना । अत्राप्यर्धमूल्यं दण्डः । अविज्ञाताश्रयादिति पदेन सूचितत्वात् आश्रयपदस्य नानार्थत्वात् ॥ २०३ ॥

( ५ ) **नन्दनः** । अन्येनसंसृष्टमन्यद्द्रव्यंवस्तु कुंकुमादीनि विक्रयमर्हति । सावद्यंजरादिदोषदुष्टंवस्त्रादिकंन्यूनंपरि-

भाषितेन परिमाणेन हीनम् । दूरेदुर्गमे देशान्तरे स्थिताः क्षेत्रादिकम् । तिरोहितंनिखननापरीक्षं वर्णादीनिविक्रयम-र्हति ॥ २०३ ॥

( ६ ) **रामचन्द्रः** । अन्यद्द्रव्यंअन्येन विजातीयद्रव्येण संस्पृष्टंमिलितरूपं न विक्रयमर्हति । न सावद्यं नचन्यूनं दूरे वर्तमानंन । तिरोहितंविक्रयंनार्हति ॥ २०३ ॥

**अन्यांचेद्दर्शयित्वान्यावोढुः कन्या प्रदीयते ॥ उभे तएकशुल्केन वहेदित्यब्रवीन्मनुः ॥ २०४ ॥**

( १ ) **मेधातिथिः** । विक्रयप्रकारत्वाच्छुल्कादेर्योयत्कन्यायाअस्मिन्नवधौ धर्मउच्यते शुल्ककाले रूपवतींदर्शयित्वा गृहीतशुल्कोस्यांरूपहीनांददाति वयोहीनांच तस्योभेऽपि शुल्कदनैकेन शुल्केन हर्तव्या कन्यानामेवायंधर्मोगवाश्वादिद्रव्याणान्त्वस्मिन्व्यतिक्रमेऽन्योविधिर्वक्ष्यते ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रदीयते शुल्केनानेनेति उन्मत्तादिदोषवत्यपि । प्रथमं दोषकथने दण्डोनास्ति नापि निवृत्तिः । एतच्च द्रव्यान्तरेपि द्रष्टव्यं न्यायसाम्यात् कन्यापदस्योपलक्षणत्वात् ॥ २०४ ॥

( ३ ) **कुल्लूकः** । शुल्कदेयांशुल्कव्यवस्थाकाले निरवद्यांदर्शयित्वा यदि सावद्या वराय दीयते तदा द्वेऽपि कन्ये ते नैवैकेन शुल्केनासौ वरः परिणयेदिति मनुराह । शुल्कग्रहणपूर्वककन्यायादानस्य विक्रयरूपत्वादर्थक्रयविक्रयसाधर्म्येणास्यात्राभिधानम् ॥ २०४ ॥

( ४ ) **राघवानन्दः** । आर्षेयादिविवाहेषु कन्यायाः शुल्कं प्राप्तमनूद्य तत्र विशेषमाह अन्यांचेति । वोढुः विवाहोद्यतस्य । उभेते कन्ये । एकशुल्केन एकस्यायच्छुल्कं मूल्यं तेन । मनुरब्रवीत् शास्त्रमर्यादेति ॥ २०४ ॥

( ५ ) **नन्दनः** । अभिरूपांकन्यांशुल्कक्लृप्तिकालेदर्शयित्वाया कन्या तत्पित्रादिना वोढुः परिणेतुः प्रदीयते चेदेकशुल्केनाभिरूपा विषयपरिणितेन शुल्केन ते द्वेऽपिकन्ये सहोद्वहेदुपयच्छेत् ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । अथ कन्यानिमित्तंकिंचिदुच्यते अन्यांचेति । वोढुः परिणेतुः अन्यांदर्शयित्वा अन्या वाकन्या प्रदीयते ते कन्ये एकशुल्केन उद्वहेत् परिणयेत् इतिमनुरब्रवीत् ॥ २०४ ॥

**नोन्मत्ता या न कुष्ठिन्या न चया स्पृष्टमैथुना ॥ पूर्वंदोषानभिख्याप्य प्रदाता दण्डमर्हति ॥ २०५ ॥**

( १ ) **मेधातिथिः** । उन्मत्तादिदोषान्कथयित्वा ददतोदण्डोनास्तीति प्रतिषेधद्वारेण कथयतोदण्डमाह नकेवलंशुल्कदेयायाअन्यस्यापि ब्राह्मादिविवाहेन विवाहयिष्यमाणायादत्ताऽप्यदत्ता भवति दण्डश्च प्रामुयाच्चौरकिल्बिषमितिजानानस्य अजानतः प्रकृतत्वात् । उन्मत्तया कुष्ठिन्या ये कुष्ठोन्मत्तादयः या च स्पृष्टमैथुना तस्याश्च योदोषोमैथुनस्पर्शस्तान्दोषान्पूर्ववाक्प्रदानेनाख्याप्य प्रकाश्यैतद्दोषाकन्येत्येवमुक्त्वा ददतोनास्ति दण्डइति पदयोजना ॥ २०५ ॥

( २ ) **सर्वज्ञनारायणः** । यास्पृष्टमैथुना लब्धपुंयोगा तस्यादाता । अभिख्याप्य प्रकाश्य । अस्वामिविक्रयः ॥ २०५ ॥

( ३ ) **कुल्लूकः** । उन्मत्तायास्तथा कुष्ठवत्याया चानुभूतमैथुना तस्याब्राह्मणादिविवाहात्पूर्वमुन्मादादीन्दोषान्वरस्य कथयित्वा दण्डार्होनभवति तेनाकथने दण्डइति गम्यते । यस्तु दोषवतींकन्यामितिवक्ष्यति ॥ २०५ ॥

( ४ ) **राघवानन्दः** । कन्याप्रसंगेन ज्ञाततद्दोषाकथने दण्डइत्याह नेति । या स्पृष्टमैथुना स्पृष्टमनुभूतं मैथुनमुक्तं यया स्यादिति शेषः । तासां पूर्वंदोषान् अनभिख्याप्य* अकथयित्वा तथा दाताचेद्दण्डंवक्ष्यमाणषण्णवतिपणानर्हतीत्यन्वयः ॥ २०५ ॥

---

* अनभिख्याप्य अकथयित्वा = अनभिख्याप्यप्रदानं ( राघ० २ )

( ५ ) **नन्दनः** । दोषवत्याः कन्यायादोषंप्रकाश्य प्रदातुर्न दण्डइत्याह नोन्मत्तायाइति । कुष्ठिन्याश्च या स्पृष्टमैथुना तस्याश्च दोषानभिख्याप्य पूर्वप्रदानात्प्राक् । प्रदाता दण्डंनार्हति । अनभिख्याप्य प्रदानाद्दण्डमर्हतीत्यर्थः । सिद्धिमुन्मत्तादिग्रहणंसर्वदोषाणांसर्वासामप्युपलक्षणार्थम् । अस्वामिविक्रयःसमाप्तः ॥ २०५ ॥

( ६ ) **रामचन्द्रः** । उन्मत्ता या कुष्टिन्या या स्पृष्टमैथुनापूर्वदोषान् अविख्याप्य अकथयित्वा एवंयःकन्यादाता सःदण्डमर्हति ॥ २०५ ॥

## ऋत्विग्यदि वृतोयज्ञे स्वकर्मपरिहापयेत् ॥ तस्य कर्मानुरूपेण देयोंऽशः सह कर्तृभिः ॥ २०६ ॥

( १ ) **मेधातिथिः** । संभूयसमुत्थानस्य प्रक्रमोयं तत्र वैदिकंतावत्संभूयकार्यमुदाहरति यज्ञोज्योतिष्टोमादिः तत्र यागरूपानेकाङ्ककर्मनिर्वर्तनार्थमृत्विग्वृतस्त्वया ममेदंहौत्रंकर्तव्यमाध्वर्यवमौद्गात्रंचेति श्रौतेन विधिनानुष्ठेयमित्युपगमश्च प्रवर्तितः कथंचिदपाटवादिना सामिकृतांयत्परिहापयेत्त्यजेत्तदानींतस्य देयोदक्षिणांशः कर्मानुरूपेण यावतीतस्मिन्क्रतौ दक्षिणा तांनिरूप्य चतुर्थभागे कर्मणःकृते चतुर्थतृतीयइत्येतदारूयंसहकर्तृभिः कर्त्तातत्पुरुषाप्रधानार्त्विजांहोतृउद्गात्रादीनांप्रस्तोतृमैत्रावरुणप्रभृतयः ॥ २०६ ॥

( २ ) **सर्वज्ञनारायणः** । संभूयसमुत्थानमाह ऋत्विगिति । परिहापयेत् व्याध्यादिना नसमापयेत् । सहकर्तृभिरन्यैस्तत्स्थानपूरणायस्थितैः ॥ २०६ ॥

( ३ ) **कुल्लूकः** । अथसंभूयसमुत्थानमाह ऋत्विगिति । यज्ञे कृतवरणऋत्विग्यदि किंचित्कर्मकृत्वा व्याध्यादिना कर्मत्यजति तदा तस्येतरऋत्विग्भिः पर्यालोच्य कृतानुसारेण दक्षिणांशोदेयः ॥ २०६ ॥

( ४ ) **राघवानन्दः** । संभूय च समुत्थानमातिदेशिकंभविष्यतीतिकृत्वा दत्तस्यानपकर्माह ऋत्विगितिद्वादशभिः । तत्रादौ दक्षिणायादृष्टार्थतया भृतिरूपत्वंप्रकटयन्नाह ऋत्विगिति । स्वकर्माध्वर्यवादिकं हापयेत् त्यजेत् वृतः वरणानतः व्याध्यादिना कर्तृभिःसह संमन्त्र्य तैस्तदीयकर्मसमापयद्भिःकर्मानुरूपोंशोदेयः ॥ २०६ ॥

( ५ ) **नन्दनः** । अथसंभूयसमुत्थानंप्रस्तौति ऋत्विग्यदीति । कर्मानुरूपेणांशोदेयः कर्मचतुर्थेऽशे कृते दक्षिणायाश्चतुर्थांशोदेयइत्यादि । सहकर्तृभिः सहकारिभिः ऋत्विग्भिः ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । यदि ऋत्विग्यज्ञे वृतः स्वकर्म व्याध्यादिना परिहापयेत् त्यजेत् तस्यअन्यकर्तृभिःसहअन्यर्त्विग्भिःसह । तस्य कर्मानुरूपेण अंशोदेयः ॥ २०६ ॥

## दक्षिणासु च दत्तासु स्वकर्मपरिहापयन् ॥ कृत्स्नमेव लभेतांशमन्येनैव चकारयेत् ॥ २०७ ॥

( १ ) **मेधातिथिः** । माध्यन्दिने सवने दक्षिणादीयन्तइति तउपरिष्टात्कर्मत्यजतामप्रत्याहरणीयालभेत न प्रतीपंत्याजयेदित्यर्थः अन्यांभृतिंदत्वाअन्येन पुरुषेण यजमानस्तत्कर्म समापयेत् ऋत्विग्भिः कर्त्तव्यंवरणाच्च ऋत्विजोभवंति तच्च नियतकाले प्राक्कर्मणआरंभादतः ऋतुक्रियमाणंविगुणंभवति समाप्तिश्चापि कर्तव्येति विगुणंचेत्समापनीयमंगान्येव तदन्यकर्तृकाणिकरिष्यामीति बुद्धिनिवृत्त्यर्थमुक्तमन्येनैवेति तावदेवविगुणंयदशक्यंशक्यंतु सर्वंकर्तव्यं केचित्कारयेदिति ऋत्विजोपि संबन्धमाहुः गृहीत्वा दक्षिणांवाधिकांदद्यात्स्वयमशक्नुवन्प्राग्दक्षिणाभ्यः शेषकर्मसमापने यजमानएवाऽधिक्रियते ॥ २०७ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येनैव कारयेदृत्विक्स्वकार्यशेषम् ॥ २०७ ॥

( ३ ) कुल्लूकः । माध्यंदिनसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्मपरित्यजन्नतु शाठ्यात् कृत्स्न मेव दक्षिणाभागंलभेत कर्मशेषंप्रकृतमन्येन कारयेत् ॥ २०७ ॥

( ४ ) राघवानन्दः । तस्यैवाप्तदक्षिणस्य विशेषमाह दक्षिणास्विति । स्वयं परित्यज्यान्येन कारयेच्चेत्कृत्स्नं लभे- तान्यथा न संपूर्णं लभेतेतिभावः ॥ २०७ ॥

( ५ ) नन्दनः । अस्यापवादमाह दक्षिणास्विति परिहापयन् त्यजन्न प्रतिदद्यात् । अन्येन स्ववर्ज्यपुरुषेण स्वक- र्मकारयेत् ॥ २०७ ॥

( ६ ) रामचन्द्रः । कृत्स्नमेवअंशंलभेत । च पुनः अन्येन कर्म कारयेत् ॥ २०७ ॥

**यस्मिन्कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ॥ सएव ताआददीत भजेरन्सर्वएव वा ॥ २०८ ॥**

( १ ) मेधातिथिः । इदमपरंप्रकृतोपयोगिवैदिकंकथ्यते वैदिके कर्मणि सामस्त्येन दक्षिणा सा यत्तेन प्रतिपुरुषे विभागेन तस्य द्वादशशतंदक्षिणेति तच्चातिदेशेन क्रत्वन्तराणि तद्विकाराण्यनुगच्छन्ति तत्रासूयादीनि तत्र च केषुचिद- जर्यकर्मसु प्रतिपदमन्यादक्षिणाऽऽम्नाता पुरुषविशेषसंयोगेन हिरण्मये प्रकाशवदवयवइत्यादि ताः प्रत्यङ्गदक्षिणाः संपद्य- न्ते किमध्वर्योश्चातुर्विद्यावादिकवद्ददातिसंबन्धः सर्वेषामृत्विजांदक्षिणाध्वर्यस्तुद्वारमात्रं उततांश्चैवसामान्याऽन्येषां प्रकृत- एवांशः संशयोपन्यासार्थः श्लोकः । प्रतिपदंपुरुषविशेषाश्रयाऽङ्गेषु दक्षिणाः प्रत्यङ्गदक्षिणाः । अथवा वीप्सायांप्रत्यङ्ग- शब्दः अङ्गमङ्गमाश्रिताःप्रत्यङ्गाःसएषताआददीत मुख्यएव पुरुषस्य ददातिना संयोगे उत्तरकर्तृत्वाविशेषादन्येऽपि भजे- रंल्लभेरन् । प्रधानदक्षिणायाइव ॥ २०८ ॥

( २ ) सर्वज्ञनारायणः । प्रत्यङ्गदक्षिणाः प्रतिस्वंकर्मणांदक्षिणाः । सएववाददीत यमृत्विजंप्रतियथोच्यते । सर्वेभजे- रन् यत्रर्त्विग्विशेषानुक्तिः ॥ २०८ ॥

( ३ ) कुल्लूकः । यस्मिन्कर्मण्याधानादावङ्गमङ्गंप्रति या दक्षिणा यत्संबन्धेन श्रुताः स्युः सएव ताआददीत न तत्त द्भागमात्रंसर्वे विभज्य गृह्णीरन्निति संशयः ॥ २०८ ॥

( ४ ) राघवानन्दः । दक्षिणाप्रसंगेन तद्विभाग*माह यस्मिन्निति द्वाभ्याम् । आधानादौ प्रत्यङ्गदक्षिणाः अङ्गमङ्गं- प्रतियाभिन्नभिन्नकारिकादक्षिणायत्संबन्धेन श्रुताहौत्रमित्यादिनासमाख्याताः सएवर्त्विक् ताःसर्वाः प्राप्नुयादुत सर्वे वेतिसंशये । सएवेति तु पूर्वपक्षे ॥ २०८ ॥

( ५ ) नन्दनः । सएव तस्य कर्मणः ॥ २०८ ॥

( ६ ) रामचन्द्रः । यस्मिन्कर्मणि याःप्रत्यङ्गकर्मदक्षिणाउक्ताःस्युस्तादक्षिणाःसएव पुरुषआददीत । सर्वएव वाभजेर- न्वा ॥ २०८ ॥

**रथंहरेत चाध्वर्युर्ब्रह्माधाने च वाजिनम् ॥ होता वापि हरेदश्वमुद्गाता चाप्यनः क्रये ॥ २०९ ॥**

( १ ) मेधातिथिः । पुरुषविशेषमुक्तास्तदर्थाएवेति निर्णयः एवंददातिर्मुख्यार्थोभवति पुरुषसंयोगश्च नादृष्टार्थः रथ- मध्वर्युराधानेहरेद्ब्रह्माच वाजिनंवेगवन्तमश्वंहोतावा कासु चिच्छाखास्वाधानएतादक्षिणाअतःसोमक्रये यच्छकटंतदुद्गातु- स्तत्र शकटेऽन्यतरोऽनड्वान्युक्तः स्यादन्यतरोवियुक्तइत्यपि पठ्यते तेन च सोमः क्रीतउपाह्रियते अन्येत्वपूर्वमनआहुर्न

---

* विभागं = विशेषं ( न, श. )

सोमोपाहरणार्थेन हि क्रयेण शक्यते विशेषयितुं एवंतावत्पुरुषविशेषसंयोगिनीनामझ्ददक्षिणानांविधिरुक्तः ॥ २०९ ॥

( २ ) सर्वज्ञनारायणः । आद्यमुदाहरति रथमिति । आधाने अग्न्याधाने । अश्वंहोता ज्योतिष्टोमे । क्रये सोमक्रये ॥ २०९ ॥

( ३ ) कुल्लूकः । अत्र सिद्धांतमाह रथमिति । केषांचिच्छाखिनामाधानेऽध्वर्यवे रथोदेयत्वेनाम्नायते । ब्रह्मणे वेगवानश्वः होत्रे चाश्वः । उद्गात्रे सोमक्रयवहनशकटमतोव्यवस्थाम्नानसामर्थ्याद्यादक्षिणा यत्संबन्धत्वेन श्रूयते सएव तामाददीत ॥ २०९ ॥

( ४ ) राघवानन्दः । व्यवस्थामाह रथमिति । आधाने कर्मणि । अनः शकटम् क्रये सोमक्रयार्थं यदनः वाजीभूत्वादेवानवहदितिश्रुतेरश्वविशेषंवाजिनम् ॥ २०९ ॥

( ५ ) नन्दनः । तत्रैवास्यविकल्पस्यापवादमाह । रथंहरेदिति ॥ २०९ ॥

( ६ ) रामचन्द्रः । अध्वर्युः रथं हरेत गृह्णीयात् । आधाने अग्न्याधाने ब्रह्मा वाजिनं हरेत् । होता ज्योतिष्टोमे अश्वंहरेत् । च पुनः उद्गाता क्रये सोमक्रये अनः हरेत् । अनः शकटे मातारिश्वेत्यमरः ॥ २०९ ॥

**सर्वेषामर्धिनोमुख्यास्तदर्धेनार्द्धिनोपरे ॥ तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥ २१० ॥**

( १ ) मेधातिथिः । प्रधानदक्षिणानांसामान्यतःश्रुतानामिदानींविभागमाह सर्वेषामृत्विजांये मुख्यास्तेऽर्धिनः यावतीतस्मिन्क्रतौ सामस्त्येन दक्षिणाम्नाता तस्यास्तेऽर्द्धिनोऽर्द्धहराः सोमयागेषु हि षोडशर्त्विजस्तत्र चत्वारोमुख्याहोताध्वर्युर्ब्रह्मोद्गातेति तेषामर्धं तस्य द्वादशशतंदक्षिणेति ततोर्ध्वंषट्पञ्चाशन्मर्तार्धिनोष्टाविंशत्यार्धिनस्तद्वन्तोऽपरे येषांततोनन्तरंवरणमाम्नातं मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तृतीयेन तृतीयांशाः अंशशब्दोऽर्धशब्देन समानार्थोऽर्धशब्दस्त्वनावश्यंसमप्रविभागएव किंचिन्न्यूनेऽधिकेऽपि सामीप्येन वर्तते तेन तृतीयोभागःषट्पञ्चाशतः षोडशगृह्णन्ते एकैकस्य चतस्रोभवन्ति । समतृतीयंभागंप्रयच्छन्ति षट्पञ्चाशततृतीयंच होतुरच्छावाकोध्वर्योर्नेष्टाब्रह्मणोग्नीदुद्गातुः प्रतिहर्ता ये च पादिनस्ते चतुर्थभागंकर्मणःकुर्वन्तीतिपादिनः चतुर्थे च स्थाने मैत्रावरुणस्थानान्ते चतुर्थांशाद्वादशसमुदाये पूर्ववत् एवंतंशतेन दीक्षेन्महतीतत्रापिकृभिःकर्तव्यार्धिनोदीक्षयति पादिनोदीक्षयतीत्येवमादिभिःशब्दैः तत्र द्वादशक्रमविधिरेवान्यत्रश्रुतोव्यवहारइहापि तयैव रीत्या कृतइति ॥ २१० ॥

( २ ) सर्वज्ञनारायणः । द्वितीयमुदाहरतिसर्वेषामिति । शतंगावोग्निष्टोमे दक्षिणा तत्र यदर्धं तद्भागिनः सर्वेषांमुख्याः होत्रध्वर्युब्रह्मोद्गातारः । अर्धमिति किंचिन्न्यूनंग्राह्यं अष्टाचत्वारिंशद्धि वस्तुतोभवन्ति । अपरेचत्वारोमैत्रावरुणाद्यास्तद्भागार्धेऽनार्धिनोऽर्धभागाः । तृतीयिनस्तृतीयास्तृतीयस्थानाअच्छावाकादयस्तृतीयिनोमुख्यदक्षिणास्तृतीयांशिनः । चतुर्थांशाश्चतुर्थस्थानभागिनोग्रावस्तुदादयः पादिनः पादभागाः ॥ २१० ॥

( ३ ) कुल्लूकः । संप्रतिपत्तिविधाने दक्षिणाविभागमाह सर्वेषामिति । तंशतेनदीक्षयतीति श्रूयते तत्र सर्वेषांषोडशानामृत्विजांमध्ये ये मुख्याऋत्विजोहोत्रध्वर्युब्रह्मोद्गातारः समग्रदक्षिणायास्तेऽर्धहराः । अष्टचत्वारिंशद्गोभाजोभवन्ति अतएव कात्यायनेन यद्द्वादशाद्येभ्यइति प्रत्येकंद्वादशगोदानंविहितम् । यद्यपिशतस्यार्धंपञ्चाशद्भवति तथापीह न्यूनार्धग्रहणेनापीमेऽर्धिनउच्यन्ते सामीप्यात् । अपरे मैत्रावरुणयोः प्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्ते मुख्यर्त्विग्गृहीतदक्षिणार्धग्रहणे नार्धिनउच्यन्ते तृतीयिनोऽच्छावाङ्नेष्टाग्नीध्रप्रतिहर्तारस्तेमुख्यर्त्विग्गृहीतस्य तृतीयमंशंलभन्ते पादिनस्तुग्रावस्तुदुन्नेतृपोतृसु-

ब्रह्मण्याएते मुख्यर्त्विक्गृहीतस्य चतुर्थमंशंलभन्ते एतच्च षट्षट्द्वितीयेभ्यश्चतस्रः चतस्रश्चतृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्यइति सूत्रयता कात्यायनेन स्फुटीकृतम् ॥ २१० ॥

( ४ ) **राघवानन्दः**। तंशतेन दीक्षयन्तीत्यादिसंख्याश्रवणे विभागविशेषमाह सर्वेषामिति। सर्वेतिगवामितिशेषःसर्वेषां षोडशानामृत्विजां ये मुख्याऋत्विजोहोत्रध्वर्युब्रह्मोद्गातारः ते अर्धिनोऽष्टचत्वारिंशद्भागभागिनः अपरेमैत्रावरुणप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः तदर्धिनः मुख्यर्त्विग्गृहीताष्टचत्वारिंशदर्धं । ततएवार्धिनश्चतुर्विंशतिभागभागिनः। तृतीयिनोच्छावाकनेष्टाअग्नीध्रप्रतिहर्तारस्तु मुख्यर्त्विग्गृहीततृतीयांशभागिनः। अतएव षोडशभागभाजः पादिनः ग्रावस्तुनेतृपोतृसुरापास्ते मुख्यर्त्विक्चतुर्थांशाः। अतएव द्वादशभागभाजः। इतिप्रत्येकं द्वादश मुख्येभ्यः षट् द्वितीयेभ्यश्चतस्रस्तृतीयेभ्यस्तिस्रइतरेभ्यइति कात्यायनसूत्रेणैव तत्स्पष्टीकृतम्। दक्षिणायाभृतिरूपत्वं दीक्षितमदीक्षितादक्षिणाभिःपरिक्रीताऋत्विजोयाजयेयुरिति श्रुतिसिद्धम् गावोऽत्र स्त्रियः गावोवै देवमातरइति श्रुतेः। एवंसहस्रदक्षिणेन यजेतेत्यादावपि विभागउन्नेयः ॥ २१० ॥

( ५ ) **नन्दनः**। सर्वेषां षोडशानामृत्विजांमध्येहोताध्वर्युरुद्गाताब्रह्मेत्येते मुखसंज्ञाश्चत्वारः समस्तायाः क्रतुदक्षिणायार्द्धिनोर्द्धभाजः स्युः। मैत्रावरुणः प्रतिप्रस्थाता प्रस्तोता ब्राह्मणाच्छंसीत्यपरेऽर्धिसंज्ञाश्चत्वारस्तदर्द्धेन मुख्यर्त्विग्भागार्द्धेन भागिनःस्युः। अच्छावाकोनेष्टाप्रतिहर्त्ताग्नीध्रइत्येते तृतीयसंज्ञाश्चत्वारस्तृतीयांशामुख्यभागतृतीयभागभाजःस्युः। ग्रावस्तुदुन्नेता सुब्रह्मण्यः पोतेत्येते पादिनःसंज्ञाश्चत्वारश्चतुर्थांशभाजः स्युः। तद्यथा दक्षिणांपञ्चविंशतिधा विभज्य प्रथमस्य चतुष्टयस्य द्वादशभागाःस्युः। द्वितीयस्य षट्। तृतीयस्य चत्वारः। चतुर्थस्य तृतीयइति प्रथमस्य सार्द्धद्वादशभागप्राप्तौ तस्यामपि यद्द्वादशभागकल्पना चतुष्टयानामन्येषांभागकल्पना या दुःशकतामाभूदिति सर्वेषामर्द्धिनोमुख्याइत्यत्रार्द्धिशब्दः। किंचिन्न्यूनार्थवाचीमन्तव्यइति ॥ २१० ॥

## संभूय स्वानिकर्माणि कुर्वद्भिरिहमानवैः ॥ अनेन विधियोगेन कर्तव्यांशप्रकल्पना ॥ २११ ॥

( १ ) **मेधातिथिः**। यथा यज्ञे बहूनि कर्माणि कायक्लेशकरैर्विदधदतिशयसाध्ये च नियुक्तोभूयसींदक्षिणांलभते न्यूनकर्मकारी तु न्यूनां तद्वल्लौकिकेषु गृहचैत्यादिकारिषु संभूय संहत्य वर्धकिस्थपतिसूत्रधारादिषु स्वसमयप्रसिद्धोयावानंशःसूत्रधारस्ययावान्स्थपतेस्तत्रानेन विधियोगेन विधिर्वैदिकोर्थस्तत्प्रसिद्धाव्यवस्था विधियोगवैदिक्या यज्ञगतया व्यवस्थयेत्यर्थः। एवंनाटकादिप्रेक्षायां नर्तनगायनवादकेषु भागप्रक्लृप्तिः यद्यपि सर्वे विद्वांसःसर्वकर्मानुष्ठानशक्ताश्च तथापि कर्मानुरूप्येण भागोन पुरुषानुरूप्येणेति संभूयसमुत्थानम् ॥ २११ ॥

( २ ) **सर्वज्ञनारायणः**। स्वानि कर्माणि वाणिज्यादीनि। अनेन क्रमयोगेन विधिप्रकारसंबन्धेन श्रमानुरूपधनविभागेन मूलसाम्येपि तल्लाभविभागस्तदार्जनश्रमानुरूपएवेति। संभूयोत्थानम् ॥ २११ ॥

( ३ ) **कुल्लूकः**। मिलित्वा गृहनिर्माणादीनि स्वकर्माणि लोके स्थपतिसूत्रधार्यादिभिश्च मनुष्यैः कुर्वद्भिरनेन यज्ञदक्षिणाविधिनाश्रयणेन विज्ञानव्यापाराद्यपेक्षया भागकल्पना कार्या ॥ २११ ॥

( ४ ) **राघवानन्दः**। संभूयच समुत्थानमित्युक्तं तत्रातिदिशति समिति। इह लौकिके स्मार्ते च कर्मणि। एतद्दक्षिणाविभागः स्थपतिसूत्रधारादिभिः। अनेन मुख्यामुख्यानुरूपविभागेनेत्यन्वयः ॥ २११ ॥

( ५ ) **नन्दनः**। एवमुक्तांवैदिकींविषमांशकल्पनांलोकेऽप्यतिदिशति संभूयस्वामिकर्माणीति। वाणिज्यादिषु भागवैषम्यकल्पनंमूल्यप्रयत्नगुरुलाघवापेक्षया कल्पनीयमिति। इति संभूयसमुत्थानंसमाप्तम् ॥ २११ ॥

( ६ ) **रामचन्द्रः** । स्वानिकर्माणि वाणिज्यादीनि कुर्वद्भिः मानवैःसंभूय मिलित्वा ॥ २११ ॥

**धर्मार्थंयेन दत्तंस्यात्कस्मै चिद्याचते धनम् ॥ पश्चाच्च न तथा तत्स्यान्नदेयंतस्य तद्भवेत् ॥२१२॥**

( १ ) **मेधातिथिः** । यः कश्चिदाह सान्तानिकोहंयियक्षुर्वा देहि मे किंचिदिति तस्मै यदि दत्तंभवेन्न विवाहकर्मणि प्रवर्तेत तद्धनंद्यूतेन वेश्याभिर्वा क्षपयेदित्यत्र वादिनि युञ्जीत वृद्धिलाभकृष्यादौ न देयंतस्य तद्दत्तस्य दानप्रतिषेधोनोपपद्यते अतः प्रत्याहरणीयमिति वाक्यार्थः । अथवा नष्टान्तो गौणोव्याख्येयोदत्तंप्रतिश्रुतंनदेयंतथाच गौतमः ॥ प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् किंपुनरत्र युक्तमुभयमित्याह दत्तस्य प्रत्याहरणंप्रतिश्रुत्य वा दानं तथाच स्मृत्यन्तरउभयंपठितं आहेह नारदः ॥ कर्त्ताहमेतत्कर्मेति ॥ यद्दत्तंस्यादविज्ञातमदत्तंतदपिस्मृतमिति ॥ प्रयोजनविशेषोद्देशेनयद्दत्तंतस्मिन्ननिवर्त्यमाने स्ववस्थितमपि प्रतिग्रहीतृगृहादाहर्त्तव्यं दानस्योपक्रममात्रंतदानींसमर्पणंसमाप्तिस्तुनिर्वर्तप्रयोजनेति नारदस्यमतम् ॥२१२॥

( २ ) **सर्वज्ञनारायणः** । दत्तानपाकर्माह धर्मार्थमिति । धर्मार्थं स्वधर्मसिद्ध्यर्थम् । नतथाधर्मार्थंभवति दानानर्हत्वादिना प्रतिग्रहीतुः । केचित्तु यागादिधर्मार्थं याचमानाय दत्तं तथा न भवति यदि तेन यागादि न करोतीति व्याचक्षते ॥ २१२ ॥

( ३ ) **कुल्लूकः** । इदानींदत्तानपकर्माह धर्मार्थमिति । येन यागादिकर्मार्थंकस्मै चिद्याचमानाय धनंदत्तंप्रतिश्रुतंवा पश्चाच्च तद्धनमसौ यागार्थंन विनियुञ्जीत तदा तद्दत्तमपि धनंग्राह्यंप्रतिश्रुतंच न देयं । यदाह गौतमः प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् ॥ २१२ ॥

( ४ ) **राघवानन्दः** । किंच तवेदं यज्ञादिकर्म करिष्यामीतिकृत्वा याचते यद्दत्तं प्रतिश्रुतंवा सचेत्तत्कर्मनकरोति पुनस्तद्ग्राह्यमित्याह धर्मार्थमिति । नतथातत्स्याद्दत्तंनस्यात् अपितुदानस्यौपाधिकत्वात् उपाध्यभावेन स्वत्वापादनादित्यर्थः ॥ २१२ ॥

( ५ ) **नन्दनः** । अथदत्तानपकर्मात्मकंविवादपदंश्लोकद्वयेनाह धर्मार्थंयेनेति । कस्मै चिद्याचते धर्मार्थंयेन धनंदत्तंस्यात्पश्चाच्चेन्न तथा तद्धर्मार्थंन मया दत्तमिति प्रदातानुशयादभियुक्तंचेदित्यर्थः तस्मै प्रदात्रे तेन प्रतिग्रहीत्रा तद्धनंनदेयं प्रदात्रानापहार्यमित्यर्थः ॥ २१२ ॥

( ६ ) **रामचन्द्रः** । कस्मैचित्भिक्षुकाय धनं याचतेधर्मार्थंदत्तं स्यात् पश्चाद्दत्तानन्तरं तद्धनं न तथा तत्स्यात् तस्य स्वामिनः न देयं पूर्वस्वामिना तस्यग्रहीतुःतद्भवेत्विवादपरम् ॥ २१२ ॥

**यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ॥ राज्ञा दाप्यः सुवर्णंस्यात्तस्य स्तेयस्यनिष्कृतिः ॥२१३॥**

( १ ) **मेधातिथिः** । संसाधनंराजनिवेदनादिना ऋणवत्प्रतिश्रुतस्य मार्गणंस्वीकृतस्य प्रतियाच्यमानस्य राजनिवेदनं अयंमह्यंदत्वा प्रतिजिहीर्षतीति सिद्धस्य दृढीकरणंसंसाधनमेतदेतदर्पाल्लोभेनेति कारणानुवादः । एवंकुर्वतोदण्डः सुवर्णः स्यात्तस्य स्तेयस्य निष्कृतिरितिचौरदण्डमाशङ्कमानंसुवर्णविधत्तआचोरशङ्कादि दत्तंकिलतेन तस्मै न स्वयंहृतं कथमयंचौरः स्यादितिशङ्कांनिवर्तयितुंस्तेयशब्दः प्रयुक्तः सत्यपि चौरत्वे वाचनिकः सुवर्णदण्डोऽन्यासु क्रियासु चौरवद्व्यवहर्तव्यः ॥ २१३ ॥

( २ ) **सर्वज्ञनारायणः** । सुवर्णंदाप्यः शतम् ॥ २१३ ॥

( ३ ) **कुल्लूकः** । यदि तद्दत्तमसौ गृहीत्वा लोभादहंकाराद्वा न त्यजति प्रतिश्रुतंवाधनंबलेन गृह्णाति तदा तस्य चौर्यपापस्य संशुद्ध्यर्थंराज्ञा स्वर्णदण्डंदापनीयोभवति ॥ २१३ ॥

( ४ ) **राघवानन्दः** । याचयितुस्तदादाने दण्डमाह यदीति । संसाधयेत् प्रतिश्रुतंगृह्णीयात् । दत्तंनदद्याद्वा । अदानेहेतुः । दर्पेति । दर्पोराजपुत्रादि बलम् स्तेयस्येत्यनेन तस्यस्वामिनोधनं दापनीयम् । राज्ञा ससुवर्णोदण्डत्वेन ग्राह्यइत्यर्थः ॥ २१३ ॥

( ५ ) **नन्दनः** । संसाधयेदनुतिष्ठेत् । तत्प्रतिग्रहणकाले प्रदात्रे निवेदितंधर्मंविवाहयज्ञादिकंमानवः प्रतिग्रहीता स्वर्णप्रतिभाषितं पञ्चकृष्णलिकोमाषस्तेसुवर्णस्तुषोडशेति तद्दाप्यो दण्डरूपेण । अपहृतार्थे प्रतिपादनमर्थप्राप्तमेव । इतिदत्तानपाकर्मसमाप्तम् ॥ २१३ ॥

( ६ ) **रामचन्द्रः** । दर्पाल्लोभेनवा पुनर्यदि तत्संधारयेत्तस्य स्तेयस्य निष्कृतीराज्ञासुवर्णदाप्यःस्यात् दापनीयः स्यात् ॥ २१३ ॥

**दत्तस्यैषोदिता धर्म्या यथा वदनपक्रिया ॥ अतऊर्ध्वंप्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥ २१४ ॥**

( १ ) **मेधातिथिः** । पूर्वेणार्धेन पूर्वविवादोपसंहारउत्तरेण वक्ष्यमाणोपक्रमोदत्तस्यैवानपक्रियोदिता अपक्रिया- क्रियापायस्तस्य नञाप्रतिषेधस्तदेवमुदितंभवति एषैव दाने स्थितिरिति यावत् । धर्मादनपेताधर्म्या कथंप्रतिश्रुत्याऽदीयमानोधर्मोन पश्यतीति नैषा शङ्काकर्तव्या एषएवात्र धर्मोयन्नदीयते दत्तंच प्रत्यादीयते । उदिता उक्ता यथावच्छब्दसमुदायएव याथातथ्ये वर्त्तते सम्यङ्निरूपितेत्यर्थः । अथच यथाशब्दोयोग्यतायां वर्तते तामर्हतीतिवतिः कर्तव्यः । वेतनंभृतिस्तस्यानपक्रिया वेतनेन स्वकर्मकुर्वतांयोधर्मः सइदानीमुच्यतइति प्रतिज्ञा ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । धर्म्या न्याय्या । दत्ताप्रदानम् ॥ २१४ ॥

( ३ ) **कुल्लूकः** । एतद्दत्तस्याप्रतिपादनंधर्मादपेतं तदुक्तं अतोऽनन्तरंभृतेरसमर्पणादिकंवक्ष्यामि ॥ २१४ ॥

( ४ ) **राघवानन्दः** । दक्षिणामुपसंहरन् लौकिकभृतेरनपक्रियांप्रतिजानीते दत्तस्येति । अपगच्छति धनमन्यंप्रत्येनेनेति अपक्रिया दानंतदभावोऽनपक्रिया पुनरादानम् ॥ २१४ ॥

( ५ ) **नन्दनः** । अथवेतनप्रदानमाह दत्तस्यैषइति । अनपाक्रिया अनपाकरणं प्रदानमितियावत् ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । दत्तस्ययथावद्दत्तस्य अनपआदानंतस्यक्रियाउदिता ॥ २१४ ॥

**भृतोनार्त्तोन कुर्याद्यो दर्पात्कर्म यथोदितम् ॥ सदण्ड्यःकृष्णलान्यष्टौ न देयंचास्य वेतनम् ॥ २१५ ॥**

( १ ) **मेधातिथिः** । उद्दिष्टेन मूल्येनोद्दिष्टंकर्मकरोति सइह भृतोभिप्रेतः भृत्यकर्मविशेषेण स्वीकृतोभृत्यादेहि मे पञ्चरूपकाणीदन्ते कर्मकर्तास्मीयता कालेनेत्याभाष्यप्रविष्टः सचेत्कर्मनसमापयति कृष्णलानि सौवर्णानि ताम्ररजतयोर्वा कर्मस्वरूपमनुबन्धानि च ज्ञात्वा दण्ड्यते तानि रूपकाणि वेतनार्थकल्पितानि न लभेत यद्यनार्त्तोदर्पान्न करोति यथोदितकर्म व्याध्यादिनाऽपीड़ितस्य दर्पादकुर्वतोभृतिहानिर्दण्डनमतः सएवंवक्तुंन लभते यावन्मयायासः कृतस्तदानुरूप्येण देहीति ऋत्विजामप्येवंदण्डकेचिदिच्छन्ति स्वेच्छया त्यजतां तदयुक्तं अत्र हि महाननर्थोयजमानस्य सामिकृत्ये यजमानेऽतोदण्डोमहानत्रयुक्तः यजमानस्य च यत्नष्टंतद्दापनीयंदीक्षोपसद्व्रतैः शरीरापचये समुत्थातव्यम् । अन्योयंशिल्पी कश्चनकर्मणि प्रवर्तयति तडागखनने देवस्य गृहकरणेऽहन्ते समापयिता प्रवर्तकत्वेनेति पश्चात्नापसरेयंतेन

स्वामिनः क्षयायासाः सर्वेसंवोढव्याभाण्डवाहवणिग्न्यायेन एषहि न्यायः कात्यायनेन सर्वत्रातिदिष्टः भाण्डवाहकदोषेणवणिजोर्यदिद्रव्यंनश्येत्तद्भांडवाहकोवहेत् योप्यन्यः कस्यचित्कर्मणि धनमावर्ध्यार्धतोनिवर्तेतेति कात्यायनीये सूत्रे धनमाबध्याऽऽसज्य धनव्ययंकारयित्वा यद्यर्द्धकृते निवर्तेत सोऽपि तद्वहेदित्यनुषङ्गः एवं योपि षाण्मास्यः सांवत्सरोवा यथोपपादककर्मकारी भक्तदासस्तस्याप्येषएवन्यायः। आह च नारदः॥ कर्माकुर्वन्प्रतिश्रुत्य कार्योदत्वा भृतिंबलात्। भृतिंगृह्णातिकुर्वाणोद्विगुणंभृतिमावहेत्॥ कालेऽपूर्णे त्यजन्कर्मभृतिनाशनमर्हति॥ २१५॥

( २ ) **सर्वज्ञनारायणः**। अथ वेतनानपकर्म। भृतइति। भृतःसन्ननार्त्तः पीडारहितोपि। वेतनं नदेयं कृतस्याप्येकदेशस्य यच्चदत्तं तदप्यादेयमित्यर्थः॥ २१५॥

( ३ ) **कुल्लूकः**। योभृतिपरिक्रीतोव्याध्यपीडितोयथानिरूपितंकर्माहंकारान्न कुर्यात्सकर्मानुरूपेण सुवर्णादिकृष्णलान्यष्टौ दण्डनीयः वेतनंचास्य न देयम्॥ २१५॥

( ४ ) **राघवानन्दः**। तमेवाह भृतइति। भृतिर्वेतनं तया क्रीतोभृतः अनार्त्तोपि यदि नकुर्यात्। अष्टौकृष्णलानि सभृत्योराज्ञादण्ड्यः। न तद्देयं नदापनीयं वेतनमिति च॥ २१५॥

( ५ ) **नन्दनः**। भृतोवेतनग्राही। अनार्त्तो व्याधिरहितः॥ २१५॥

( ६ ) **रामचन्द्रः**। अनार्तःभृतःसन्दर्पाद्यथोदितंकर्म योनकुर्याद्यथोदितम्॥ २१५॥

**आर्त्तस्तु कुर्यात्स्वस्थः सन्यथाभाषितमादितः॥ सदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्॥२१६॥**

( १ ) **मेधातिथिः**। अनार्त्तस्य दण्डउक्तोभृतिहरणमार्त्तस्येदानीमुच्यते आर्त्त्याभृतोर्द्धकृतंकर्म यदि हित्वा गच्छेत्सस्वस्थः सन्पुनरागत्य यथोक्तमादौ ततः कुर्यात् बहुनापि कालेन पीडया मुक्तः प्रत्यागतः कृतकर्मशेषउपलभेतच वेतनम्॥ २१६॥

( २ ) **सर्वज्ञनारायणः**। आर्त्तोयदि मध्ये तदा स्वस्थःसन् तत्कर्म कुर्यात्। सुदीर्घस्यापि कालस्य दीर्घेणापिकालेन कुर्यादित्यन्वयः॥ २१६॥

( ३ ) **कुल्लूकः**। यदा व्याध्यादिपीडया कर्म न करोति स्वस्थः सन्यादृग्भाषितंतादृक्कर्म कुर्यात वेतनंच चिरकालादपि लभेतैव॥ २१६॥

( ४ ) **राघवानन्दः**। आर्त्तश्चेत्तस्य कालविलम्बेन करणेन दोषइत्याह आर्त्तस्त्विति। तेन यथा भाषितं तादृक्कुर्यात्। आदितः आदौ। तद्भृतिधनम्॥ २१६॥

( ६ ) **रामचन्द्रः**। पूर्वआर्तः पश्चात्स्वस्थः सन्दीर्घस्य कालस्य आदितोयथा भाषितंकुर्यात् तद्वेतनंलभेत्॥२१६॥

**यथोक्तमार्त्तः सुस्थोवा यस्तत्कर्म न कारयेत्॥ न तस्य वेतनंदेयमल्पोनस्यापि कर्मणः॥२१७॥**

( १ ) **मेधातिथिः**। अथवा स्वामिनोधारयत्यनेन च तत्कर्मकारितंस्यात्स्वांभृतिंदत्वा तदा तत्सममसौ स्वस्थः कारयितव्यः अथापि स्वामी ब्रूयान्नमे किंचित्कर्तव्यमस्तीति तत्रापि कृतानुरूपेण लभेतैव यथोक्तमात्राम्॥ २१७॥

( २ ) **सर्वज्ञनारायणः**। यथोक्तमार्त्ते स्वस्थे वा यः प्रकारउक्तः। वेतनादानम्॥ २१७॥

( ३ ) **कुल्लूकः**। यत्कर्मयथाभाषितंपीडितोऽन्येन कारयेत् सुस्थोवा न कुर्यान्नापिकारयेत् तस्य किंचिच्छेषस्यापि कृतस्य कर्मणोवेतनंन देयम्॥ २१७॥

( ३ ) **कुल्लूकः**। यदि तद्दत्तमसौ गृहीत्वा लोभादहंकाराद्वा न त्यजति प्रतिश्रुतंवाधनंबलेन गृह्णाति तदा तस्य चौर्यपापस्य संशुत्व्यर्थंराज्ञा स्वर्णदण्डंदापनीयोभवति ॥ २१३ ॥

( ४ ) **राघवानन्दः**। याचयितुस्तदादाने दण्डमाह यदीति । संसाधयेत् प्रतिश्रुतंगृह्णीयात् । दत्तंनदद्याद्वा । अदानेहेतुः । दर्पेति । दर्पोराजपुत्रादि बलम् स्तेयस्येत्यनेन तस्यस्वामिनोधनं दापनीयम् । राज्ञा ससुवर्णोदण्डत्वेन ग्राह्यइत्यर्थः ॥ २१३ ॥

( ५ ) **नन्दनः**। संसाधयेदनुतिष्ठेत् । तत्प्रतिग्रहणकाले प्रदात्रे निवेदितंधर्मंविवाहयज्ञादिकंमानवः प्रतिग्रहीता स्वर्णप्रतिभाषितं पञ्चकृष्णलिकोमाषस्तेसुवर्णस्तुषोडशेति तद्दाप्यो दण्डरूपेण । अपदृतार्थे प्रतिपादनमर्थमाप्तमेव । इतिदत्तानपाकर्मसमाप्तम् ॥ २१३॥

( ६ ) **रामचन्द्रः**। दर्पाल्लोभेनवा पुनर्यदि तत्संधारयेत्तस्य स्तेयस्य निष्कृतीराज्ञासुवर्णंदाप्यःस्यात् दापनीयः स्यात् ॥ २१३ ॥

**दत्तस्यैषोदिता धर्म्या यथा वदनपक्रिया ॥ अतऊर्ध्वंप्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥ २१४ ॥**

( १ ) **मेधातिथिः**। पूर्वेणार्धेन पूर्वविवादोपसंहारउत्तरेण वक्ष्यमाणोपक्रमोदत्तस्यैवानपक्रियोदिता अपक्रियाक्रियापायस्तस्य नञाप्रतिषेधस्तदैवमुदितंभवति एषैव दाने स्थितिरिति यावत् । धर्मादनपेताधर्म्या कथंप्रतिश्रुत्याऽदीयमानोधर्मोन पश्यतीति नैषा शङ्काकर्तव्या एषएवात्र धर्मोयन्नदीयते दत्तंच प्रत्यादीयते । उदिता उक्ता यथावच्छब्दसमुदायएव याथातथ्ये वर्त्तते सम्यङ्गिरूपितेत्यर्थः। अथच यथाशब्दोयोग्यतायां वर्तते तामर्हतीतिवतिः कर्तव्यः । वेतनंभृतिस्तस्यानपक्रिया वेतनेन स्वकर्मकुर्वतांयोधर्मः सइदानीमुच्यतइति प्रतिज्ञा ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः**। धर्म्या न्याय्या । दत्ताप्रदानम् ॥ २१४ ॥

( ३ ) **कुल्लूकः**। एतद्दत्तस्याप्रतिपादनंधर्मादपेतं तदुक्तं अतोऽनन्तरंभृतेरसमर्पणादिकंवक्ष्यामि ॥ २१४ ॥

( ४ ) **राघवानन्दः**। दक्षिणामुपसंहरन् लौकिकभृतेरनपक्रियांप्रतिजानीते दत्तस्येति । अपगच्छति धनमन्यंप्रत्येनेनेति अपक्रिया दानंतदभावोऽनपक्रिया पुनरादानम् ॥ २१४ ॥

( ५ ) **नन्दनः**। अथवेतनप्रदानमाह दत्तस्यैषइति । अनपाक्रिया अनपाकरणं प्रदानमितियावत् ॥ २१४ ॥

( ६ ) **रामचन्द्रः**। दत्तस्ययथावद्दत्तस्य अनपआदानंतस्यक्रियाउदिता ॥ २१४ ॥

**भृतोनार्त्तोन कुर्याद्यो दर्पात्कर्म यथोदितम् ॥ सदण्ड्यःकृष्णलान्यष्टौ न देयंचास्य वेतनम्॥२१५॥**

( १ ) **मेधातिथिः**। उद्दिष्टेन मूल्येनोद्दिष्टंकर्मकरोति सइह भृतोभिप्रेतः भृत्यकर्मविशेषेण स्वीकृतोभृत्यादेहि मे पञ्चरूपकाणीदन्ते कर्मकर्तास्मीयता कालेनेत्याभाष्यप्रविष्टः सचेत्कर्मनसमापयति कृष्णलानि सौवर्णानि ताम्ररजतयोर्वा कर्मस्वरूपमनुबन्धानि च ज्ञात्वा दण्ड्यते तानि रूपकाणि वेतनार्थंकल्पितानि न लभेत यद्यनार्त्तोदर्पान्न करोति यथोदितकर्म व्याध्यादिनाऽपीडितस्य दर्पादकुर्वतोभृतिहानिर्दण्डनमतः सएवंवक्तुंन लभते यावन्मयायासः कृतस्तदानुरूप्येण देहीति ऋत्विजामप्येवंदण्डकेचिदिच्छन्ति स्वेच्छया त्यजतां तदयुक्तं अत्र हि महाननर्थोयजमानस्य सामिकृत्ये यजमानेऽतोदण्डोमहानत्रयुक्तः यजमानस्य च यन्नष्टंतद्दापनीयंदीक्षोपसद्देवव्रतैः शरीरापचये समुत्थातव्यम् । अन्योयंशिल्पी कश्चनकर्मणि प्रवर्तयति तडागखनने देवस्य गृहकरणेऽहन्ते समापयिता प्रवर्तकत्वेनेति पश्चात्तापसरेयंतेन

स्वामिनः क्षयायासाः सर्वेसंवोढव्याभाण्डवाहवणिग्न्यायेन एषहि न्यायः कात्यायनेन सर्वत्रातिदिष्टः भाण्डवाहकदोषेणवणिजोयदिद्रव्यंनश्येत्तद्भांडवाहकोवहेत् योप्यन्यः कस्यचित्कर्मणि धनमावर्ध्यार्धतोनिवर्तेतेति कात्यायनीये सूत्रे धनमाबध्याऽऽसज्य धनव्ययंकारयित्वा यद्यर्द्धकृते निवर्तेत सोऽपि तद्वहेदित्यनुषङ्गः एवं योपि षाण्मास्यः सांवत्सरोवा यथोपपादककर्मकारी भक्तदासस्तस्याप्येषएवन्यायः । आह च नारदः ॥ कर्माकुर्वन्प्रतिश्रुत्य कार्योदत्वा भृतिंबलात् । भृतिंगृह्णातिकुर्वाणोद्विगुणंभृतिमावहेत् ॥ कालेऽपूर्णे त्यजन्कर्मभृतिनाशनमर्हति ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । अथ वेतनानपकर्म । भृतइति । भृतःसन्ननार्त्तः पीडारहितोपि । वेतनं नदेयं कृतस्याप्येकदेशस्य यच्चदत्तं तदप्यादेयमित्यर्थः ॥ २१५ ॥

( ३ ) **कुल्लूकः** । योभृतिपरिक्रीतोव्याध्यपीडितोयथानिरूपितंकर्माहंकारान्न कुर्यात्सकर्मानुरूपेण सुवर्णादिकृष्णलान्यष्टौ दण्डनीयः वेतनंचास्य न देयम् ॥ २१५ ॥

( ४ ) **राघवानन्दः** । तमेवाह भृतइति । भृतिर्वेतनं तया क्रीतोभृतः अनार्त्तोपि यदि नकुर्यात् । अष्टौकृष्णलानि सभृत्योराज्ञादण्ड्यः । न तद्देयं नदापनीयं वेतनमिति च ॥ २१५ ॥

( ५ ) **नन्दनः** । भृतोवेतनग्राही । अनार्त्तो व्याधिरहितः ॥ २१५ ॥

( ६ ) **रामचन्द्रः** । अनार्तःभृतःसन्दर्पाद्यथोदितंकर्म योनकुर्याद्यथोदितम् ॥ २१५ ॥

## आर्त्तस्तु कुर्यात्स्वस्थः सन्यथाभाषितमादितः ॥ सदीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥२१६॥

( १ ) **मेधातिथिः** । अनार्त्तस्य दण्डउक्तोभृतिहरणमार्त्तस्येदानीमुच्यते आर्त्योभृतोर्द्धकृतंकर्म यदि हित्वा गच्छेत्सस्वस्थः सन्पुनरागत्य यथोक्तमादौ ततः कुर्यात् बहुनापि कालेन पीडया मुक्तः प्रत्यागतः कृतकर्मशेषउपलभेतच वेतनम् ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । आर्त्तोयदि मध्ये तदा स्वस्थःसन् तत्कर्म कुर्यात् । सुदीर्घस्यापि कालस्य दीर्घेणापिकालेन कुर्यादित्यन्वयः ॥ २१६ ॥

( ३ ) **कुल्लूकः** । यदा व्याध्यादिपीडया कर्म न करोति स्वस्थः सन्यादृग्भाषितंतादृक्कर्म कुर्यात् वेतनंच चिरकालादपि लभेतैव ॥ २१६ ॥

( ४ ) **राघवानन्दः** । आर्त्तश्चेत्तस्य कालविलम्बेन करणेन दोषइत्याह आर्त्तस्त्विति । तेन यथा भाषितं तादृक्कुर्यात् । आदितः आदौ । तद्भृतिधनम् ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । पूर्वंआर्तः पश्चात्स्वस्थः सन्दीर्घस्य कालस्य आदितोयथा भाषितंकुर्यात् तद्वेतनंलभेत् ॥२१६॥

## यथोक्तमार्त्तः सुस्थोवा यस्तत्कर्म न कारयेत् ॥ न तस्य वेतनंदेयमल्पोनस्यापि कर्मणः ॥२१७॥

( १ ) **मेधातिथिः** । अथवा स्वामिनोधारयत्यनेन च तत्कर्मकारितंस्यात्स्वांभृतिंदत्वा तदा तत्सममसौ स्वस्थः कारयितव्यः अथापि स्वामी ब्रूयान्नमे किंचित्कर्तव्यमस्तीति तत्रापि कृतानुरूपेण लभेतैव यथोक्तमात्राम् ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । यथोक्तमार्त्ते स्वस्थे वा यः प्रकारउक्तः । वेतनादानम् ॥ २१७ ॥

( ३ ) **कुल्लूकः** । यत्कर्म यथाभाषितंपीडितोऽन्येन कारयेत् सुस्थोवा न कुर्यान्नापिकारयेत् तस्य किंचिच्छेषस्यापि कृतस्य कर्मणोवेतनंन देयम् ॥ २१७ ॥

( ४ ) **राघवानन्दः** । स्वीकृतासंपूर्णेपि यथोक्तं वेतनंनदेयमित्याह यथेति । अल्पोनस्याल्पन्यूनस्यापिकर्मणः । स्वस्थोपि न वा कुर्यान्न संपूरये न्नवाकारयेदन्येन ॥ २१७ ॥

( ५ ) **नन्दनः** । कर्मणःवेतनंतस्य न देयमित्यन्वयः । इति वेतनानपक्रियोक्ता ॥ २१७ ॥

( ६ ) **रामचन्द्रः** । आर्तःस्वस्थोवायः यथोक्तंकर्म न कारयेत् अल्पोनस्य अल्पन्यूनस्य कर्मणः तस्य पुंसः वेतनंन देयं ॥ २१७ ॥

**एषधर्मोऽखिलेनोक्तोवेतनादानकर्मणः ॥ अतऊर्ध्वंप्रवक्ष्यामि धर्मंसमयभेदिनाम् ॥ २१८ ॥**

( १ ) **मेधातिथिः** । वेतनादानकर्मणइति विवादपरस्यास्य नामधेयमेतत्तेन न चोद्यमेतत् । कथंवेतनस्यादानकर्मोक्तंयावता दानकर्माप्युक्तंतल्लभेतैव वेतनमिति नाम्नोहि येन केनचिदन्वितेन संबन्धिना नामता नविरुद्धा नहि यावन्तः सूत्रार्थास्ते सर्वे प्रवर्तन्ते तथाचाग्निहोत्रे यद्यप्यग्निप्रजापत्योर्होमस्तथाप्यग्निहोत्रमिति नामप्रवर्ततएव । तदुक्तंतत्रैवंस्थूणादर्शयाचसमानीचास्यादिति समयसिद्धिः संङ्केतइदंयावता मगुते निश्चितंकर्तव्यमित्यभ्युपगमस्तंभिन्दन्ति व्यतिक्रामन्ति ते समयभेदिनः । संविदश्चव्यतिक्रमइति यदुद्दिष्टंतदिदानीमुच्यते पूर्वेणार्द्धेन पूर्वप्रकारिणोपसंहारोऽपरेणोद्दिष्टप्रकरणसूचनम् २१८ ॥

( २ ) **सर्वज्ञनारायणः** । समयभेदनमवतारयति एषइति । समयभेदिनां धर्मं नियतंदण्डम् ॥ २१८ ॥

( ३ ) **कुल्लूकः** । एषा व्यवस्था वेतनादानाख्यकर्मणोनिःशेषेणोक्ता अतोऽनन्तरंसंविद्व्यतिक्रमकारिणंदण्डादिव्यवस्थांवदिष्यामि ॥ २१८ ॥

( ४ ) **राघवानन्दः** । भृतिमुपसंहरन् संविदश्च व्यतिक्रमंप्रतिजानीते एषइति । धर्मं दण्डादिव्यवस्थाम् । समयभेदिनामिदमस्माभिःपरिहर्तव्यमितिनिश्चयकारिणाम् ॥ २१८ ॥

( ५ ) **नन्दनः** । अथसंविद्व्यतिक्रममाह एषधर्मोऽखिलेनेति । समयभेदिनांसंविद्व्यतिक्रमिणाम् ॥ २१८ ॥

( ६ ) **रामचन्द्रः** । वेतनादानकर्मणः वेतनस्य आदानं स्वीकारः तस्य कर्मणः एषधर्मः अखिलेनउपायेनउक्तः तेषांसमयभेदिनांधर्मंअतऊर्ध्वंप्रवक्ष्यामि ॥ २१८ ॥

**योग्रामदेशसंघानांकृत्वा सत्येन संविदम् ॥ विसंवदेन्नरोलोभात्तंराष्ट्राद्विप्रवासयेत् ॥ २१९ ॥**

( १ ) **मेधातिथिः** । शालासमुदायोग्रामस्तन्निवासिनोमनुष्यागृह्यन्ते तेषामेव संविदः संभवात् एवंग्रामसमुदायोदेशसंघएकधर्मानुगतानांनानादेशवासिनांनानाजातीयानामपि प्राणिनांसमूहः यथाभिक्षूणांसंघोवणिजांसंघश्चातुर्विद्यानांसंघइति । ग्रामादीनांयत्कार्यंयथा पारिग्रामिकैर्ग्रामोनोपहतः प्रायआत्माकीने गोप्रचारे गाश्चारयन्ति उदकंच भित्त्वा नयन्ति तद्यदिवोमतंदग्धएव दोषान्कर्तुंन दद्मएवंनः प्रतिबध्नतां यदि तैः सहदण्डादण्डिर्भवति राजकुले वा व्यवहारसूत्रे सर्वे वयमेककार्यानोचेदुपेक्षामाह । तत्र ये संविदते वेदकमिति प्राक्तनीग्रामस्थितिस्ते व्यतिक्रम्येत्येवंप्रोत्साह्य विसंवदेद्वलात्तैः सह सङ्गच्छेतत्तेषु बाह्याभ्यन्तरःस्यात्सराज्ञा स्वराष्ट्रान्निर्वासयितव्योनिष्कासयितव्यः । स्वविषयेऽस्यवस्तुंनदेयमेवंवणिग्भवब्राह्मणादिकार्यंइदशेकृतसंवित्तेन नातिक्रमितव्यमन्यत्कार्यंग्रामाद्युपकारकंशास्त्राचारप्रसिद्धंपुरराष्ट्राविरोधितत्संविद्व्यतिक्रमे दण्डोयंलोभादिति स्तेनोपकारगन्धेन परग्रामणीकृतेनास्वातन्त्र्यंलोभः । अज्ञानात्तु विसंवादेमान्यस्य कल्पः ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः** । ग्रामाणां ग्रामस्थानाम् । संविदत्रग्रामे एवंकर्तव्यमिति एवंदेशविशेषमादाय । तथा संघानां बौद्धादिसंघानाम ॥ २१९ ॥

( ३ ) **कुल्लूकः** । ग्रामदेशशब्दाभ्यां तद्वासिनोलक्ष्यन्ते । संघोवणिगादिसमूहः । इदमस्माभिः कर्त्तव्यंपरिहार्यतामित्येवं रूपंसंकेतं सत्यादिशपथेन कृत्वा तन्मध्ये योनरोलोभादिना निष्क्रामेत्तंराजा राष्ट्रान्निर्वासयेत् ॥ २१९ ॥

( ४ ) **राघवानन्दः** । तदेवाह यइतिद्वाभ्याम् । ग्रामदेशेति तत्रस्थयोर्ग्रहणम् । संघेति वणिगादिसमूहः । संविदं उक्तसंकेतम् । विसंवदेदतिक्रामेत् । विप्रवासयेद्दण्डपुरःसरम् । ब्राह्मणस्य न दण्डः केवलं ग्रामत्यागइति ॥ २१९ ॥

( ५ ) **नन्दनः** । योग्रामदेशसंघानामिति त्रयंस्पष्टम् । संविद्यतिक्रमउक्तः ॥ २१९-२२१ ॥

( ६ ) **रामचन्द्रः** । यःपुरुषः ग्रामदेशसङ्घानां ग्रामाणां देशानां सङ्घानां समूहानां सत्येन शपथेन संविदं समयं । मर्यादांकृत्वा नरःलोभाद्विसंवदेदन्यथारदेत्तंराष्ट्राद्विप्रवासयेत् ॥२१९ ॥

## निगृह्य दापयेच्चैनंसमयव्यभिचारिणम् ॥ चतुः सुवर्णान्षण्णिष्कांश्छतमानंच राजतम् ॥ २२०॥

( १ ) **मेधातिथिः** । निगृह्यावष्टभ्य पीडयित्वा काललाभमकारयित्वा दण्ड्यः । चत्वारिसुवर्णानियेषांनिष्काणां-परिमाणंते चतःसुवर्णानिष्काः यद्यपि चतुःसुवर्णिकोनिष्कइत्यत्रोक्तंतथापि शास्त्रान्तराच्छाब्दंशतंसुवर्णानांनिष्कमाहुर्म-हाधियइत्येवमादिपरिमाणान्तरंपश्येत् विशिष्टे संज्ञाकरणसामर्थ्यादेव लभ्यतइतिचेत् पद्यग्रन्थत्वान्न दोषः । अन्येतुसहार्थे-बहुव्रीहिंकृत्वा त्रीन्दण्डानाहुः । चतुर्भिः सुवर्णैः सह षण्णिष्कादण्डनीयोदशनिष्काः प्रतिपादिताभवन्ति । बहुव्रीहिसि-द्ध्यर्थंसहार्थेकथंचिन्मत्वर्थोयोजितव्यः नहि चित्राभिर्गोभिः सहितश्चित्रगुर्देवदत्तइति भवति । एते च त्रयोदण्डायदि च-त्रिभिरेकइति कार्यापेक्षया योजनं निर्वासनदण्डेन विकल्पते दण्डोयम् ॥ २२० ॥

( २ ) **सर्वज्ञनारायणः** । चतुर्भिःसुवर्णैर्योनिष्कस्तान् षट्पलानीत्यर्थः । एतच्च दीनारादिनिष्कव्यवच्छेदार्थंविशे-षणम् । शतमानमेकम् ॥ २२० ॥

( ३ ) **कुल्लूकः** । अथ चैनंसंविद्यतिक्रमकारिणंनिबोध्य चतुरः सुवर्णान् षण्निष्कान् प्रत्येकंचतुः सुवर्णपरिमितान् राजतंच शतमानंविंशत्यधिकरक्तिकाशतत्रयपरिमाणंत्रयमेतद्विषयलाघवगौरवापेक्षया समन्वितंव्यस्तंवाराजादण्डंदापयेत् ॥ २२० ॥

( ४ ) **राघवानन्दः** । दण्डसंख्यामाह नीति । निगृह्य कारागारंप्रापयित्वा चतुःसौवर्णिकोनिष्कइत्युक्तेः चतुःसुव-र्णानिति तु निष्कपदस्याभरणाद्यर्थत्व्यावृत्त्यर्थंतेनपशुमालभेतेत्याद्येकत्वस्येव षडित्युपादेयविशेषणमतः प्रत्येकं षण्णि-ष्कानांदण्डइति । शतमानं विंशत्यधिकरक्तिकाशतत्रयं समस्तं व्यस्तंवा कार्यगौरवलाघवापेक्षया ॥ २२० ॥

( ६ ) **रामचन्द्रः** । एवं समयव्यभिचारिणं समयभेत्तारं निगृह्य दण्डंदापयेत् । दण्डमाह चतुःसुवर्णान्वा दण्डयेत् । षण्णिष्कान् निष्कंसुवर्णाश्चत्वारःइति षट्पलानि अथवा राजतः रूप्यस्य शतमानः । द्वात्रिंशत्कृष्णलं धरणं भवेत् ध-रणानि दश ज्ञेयःशतमान एवं कृष्णलाभवन्ति अष्टगुंजात्मकोमाषः तेषांचत्वारिंशत् माषप्रमाणं भवति ॥ २२० ॥

## एतद्दण्डविधिंकुर्याद्धार्मिकः पृथिवीपतिः ॥ ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥ २२१ ॥

( १ ) **मेधातिथिः** । जातिसमूहेषु च नानाजातीयानांसमानजातीयानांवा संघेषु तद्विषयोव्यभिचारोयेषामित्यर्थः । प्रकरणोपसंहारः ॥ २२१ ॥

( २ ) **सर्वज्ञनारायणः** । दण्डविधिं दण्डप्रकारम् । जातिर्ब्राह्मणादिः ॥ २२१ ॥

( ३ ) **कुल्लूकः** । ग्रामेषु ब्राह्मणजातिसमूहेषु संविद्यतिक्रमकारिणामेतद्दण्डविधिधर्मप्रधानोराजानुतिष्ठेत् ॥ २२१ ॥

( ५ ) **राघवानन्दः** । उक्तंदण्डविधिमन्यत्रातिदिशति एतमिति । ग्रामजातिसमूहेषु ग्रामस्य ब्राह्मणादिषु जातिसमूहेषु वणिगादिषु च ॥ २२१ ॥

( ६ ) **रामचन्द्रः** । एवं धार्मिकः पृथिवीपतिः दण्डविधिं कुर्यात् ॥ २२१ ॥

**क्रीत्वा विक्रीयवा किंचिद्यस्येहानुशयोभवेत् ॥ सोऽन्तर्दशाहात्तद्द्रव्यंदद्याच्चैवाददीतवा ॥२२२॥**

( १ ) **मेधातिथिः** । यद्द्रव्यंप्रचुरक्रयविक्रयंव्यवहारकाले न गच्छति न नश्यति मूलतश्चनापचीयते त्रपुताम्रभाण्डादिस्थिरार्घतादृशस्यानुपभुक्तस्य दशाहमध्यआदानप्रत्यर्पणे यस्तु विरलक्रेतुरनुशयंन मया साधुकृतंयद्विक्रीतमिति तदा क्रेता तस्मैप्रतिपादयितव्यः एकस्थानवासिनांचैषकालोदेशान्तरवासिनांतात्कालिकीप्रतिनिवृत्तिः । केचिद्गोभूम्यादिविषयंविधिमिममिच्छन्ति न वस्त्रादौ स्मृत्यन्तरे हि वणिक्पणने योविधिराम्नायते एवंहि नारदः पठति ॥ क्रीत्वामूल्येन यः पण्यंदुष्क्रीतमिति मन्यते । विक्रेतुःप्रतिदेयंतत्तस्मिन्नेवाह्न्यविक्षतमिति ॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्र्यंशांशमावहेत् । द्विगुणंतत्तृतीयेऽह्नि परतःक्रेतुरेवतत् ॥ विक्रयार्थंयद्द्रव्यंतत्पण्यं यद्विक्रीयतदुत्पन्नेनद्रव्यान्तरक्रयादिना पुरुषोव्यवहरति जीविकाधनमर्जयितुं तथा पणभूमौप्रसारितंच भवति वणिजा तत्रेह पण्यग्रहणात्कश्चिद्विशेषोविवक्षितइतरथा क्रीत्वा मूल्येनइत्येतावदवजातं कः पुनरसौ विशेषः उच्यते यत्क्रीतमपि पण्यत्वमजहद्वणिग्भिः क्रियते तार्हि विक्रयार्थमेव क्रीणन्ति तेषांवणिजामितरेतरक्रीणतांच नारदीयोविधिरन्येषांमानवइतिकेचित् किंपुनरत्र युक्तं पण्यधर्मादेर्व्यवस्थावानुसरणीया तथाचाश्वानांबलसंचारोहस्तिनामङ्कुशारोहणंविक्रयविभावकमित्यादिना व्यवहारस्तेषु पण्येषु सिद्धोभवति । अविवक्षितमविनष्टमुपनिध्यादौ वस्त्रादेर्यावन्नात्र नाशस्तावतोमूल्यमुपनिधात्रे दीयते द्रव्यन्तु गृह्णातीह त्वीषन्नाशेसर्वंमूल्यंदेयंक्रेतुः ॥ २२२ ॥

( २ ) **सर्वज्ञनारायणः** । क्रयविक्रयानुशयमाह क्रीत्वेति । अनुशयः पश्चात्तापः ॥ २२२ ॥

( ३ ) **कुल्लूकः** । क्रीत्वा विक्रीयवा किंचिद्द्रव्यम् विनश्वररूपंस्थिरार्घंभूमिताम्रपट्टादि यस्य लोके पश्चात्तापोजायते न साधु मया क्रीतमिति सक्रीतंदशाहमध्ये प्रत्यर्पयेत् विक्रीतंवागृह्णीयात् ॥ २२२ ॥

( ४ ) **राघवानन्दः** । क्रयविक्रयानुशयइत्युक्तं तत्र क्रेतृविक्रेत्रोः पश्चात्तापाद्युत्पत्तौ दशाहाभ्यन्तरे निवर्त्ययोग्यतास्तीत्याह क्रीत्वेति । साधु मया नकृतमित्यनुतापोनुशयः । क्रीतं दद्याद्विक्रीतंच गृह्णीयादित्यर्थः ॥ २२२ ॥

( ५ ) **नन्दनः** । अथक्रयविक्रयानुशयमाह क्रीत्वाविक्रीयवेति । तद्द्रव्यंयन्मूल्यत्वेन क्रेत्रादत्तम् ॥ २२२ ॥

( ६ ) **रामचन्द्रः** । किंचिद्वस्तु क्रीत्वा विक्रीय वा इह यस्य अनुशयः पश्चात्तापः भवेत्सः अन्तर्दशाहात्तद्द्रव्यंदद्यात् आददीत स्वीकुर्यात् ॥ २२२ ॥

**परेण तु दशाहस्य न दद्यान्नापि दापयेत् ॥ आददानोददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥ २२३॥**

**[ स्याच्चतुर्विंशतिपणोदण्डस्तस्य व्यतिक्रमे । पणस्य दशमे भागे दाप्यः स्यादति पातिनि ॥१॥ ]‡**

**[ क्रीत्वाविक्रीयवा पण्यमगृह्णन्न ददतस्तथा । पणाद्द्वादशदाप्यश्च मनुष्याणांच वत्सरान् ॥ २ ॥ ]**

**[ पणाद्द्वादशदाप्यः स्यात्प्रतिबोधे न चेद्भवेत् । पशूनामप्यनाख्याने त्रिपदादर्पणंभवेत् ॥ ३ ॥ ]**

( १ ) **मेधातिथिः** । दशाहात्परतोन क्रेता यावतानुशयश्चापि विक्रेता यदि राजनिनिवेदयेत्ततः षट्शतानि दण्ड्यः

---

‡ ( ण, ञ ) । डचिन्हिते पुस्तकेप्रथम एवैकः श्लोको वर्तते

नदद्यादिति नायमदृष्टार्थः प्रतिषेधः किंतर्हि ज्ञायते स्थितिरीदृशी अन्विच्छेत्क्रेता दशाहादूर्ध्वंनत्याजनीयोनापि विक्रेता ग्राहयितव्यः अतश्च यदि साम्प्रोभयेच्छायां दानादानेस्यातां तत्र न कश्चिद्दोषः ॥ २२३ ॥

( २ ) **सर्वज्ञनारायणः** । दशाहस्यपरेणेति बीजविषयम् । वस्त्रवाह्यरत्नदोह्यपुरुषस्त्रीषु एकपञ्चसप्तत्र्यहमासार्धमासानामवधीनां स्मृत्यन्तरे उक्तत्वात् । नाददीत विक्रीतंवस्त्वादातुं न यतेत । शतानि पणानाम् ॥ २२३ ॥

( ३ ) **कुल्लूकः** । दशाहादूर्ध्वंक्रीतंन त्यजेत् नापि विक्रीतंविक्रयिकोबलेन दापयेत् । विक्रीतंबलेन गृह्णन्परित्यजन् राज्ञा षट्शतानि पणान्दण्ड्यः ॥ २२३ ॥

( ४ ) **राघवानन्दः** । दशाहादाधिक्ये तदुभयमनुचितमित्याह परेणेति शतानीति ताम्रिकपणानामितिशेषः । एवं-सर्वत्र ॥ २२३ ॥

( ५ ) **नन्दनः** । आददानोबलाद्गृह्णन्नददच्च षट्शतानि कार्षापणानांदण्ड्यः ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । अन्यथाराज्ञा षट्शतानि पणानुनि दण्ड्यः ॥ २२३ ॥

**यस्तु दोषवतींकन्यामनाख्याय प्रयच्छति ॥ तस्य कुर्यान्नृपोदण्डंस्वयंषण्णवतिंपणान् ॥२२४॥**

( १ ) **मेधातिथिः** । या कन्या दोषैर्युक्ता साच दात्रा वराय नाख्यायते न प्रकाश्यतएवमेव दीयते तत्र दातुर्दण्डो-विदिते राज्ञा कार्यः । स्वयंग्रहणमादरार्थम् । कन्यादोषाश्च धर्मप्रजासामर्थ्यविघातहेतवः । क्षयोव्याधिर्मैथुनसंबन्धश्च नोन्मत्तयेत्येतत्प्रकरणोक्तोदण्डोऽयंवा ॥ २२४ ॥

( २ ) **सर्वज्ञनारायणः** । यस्त्विति पूर्वोक्तकन्याविक्रयविषयदण्डसामान्यस्य विशेषोक्तिरियमत्रतस्य संगतिसंभवात् । कुर्यात् दण्डम् । अर्थात्कन्यामपि प्रतिपादयेत् पूर्वकृतशुल्कंवरोन दद्यात् ॥ २२४ ॥

( ३ ) **कुल्लूकः** । नोन्मत्तायाइति सामान्येनोक्तं दण्डविशेषाभिधानार्थमिदं उन्मादादिदोषानकथयित्वा दोषवतींकन्यांवराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिंपणान्दण्डंकुर्यात् । अनुशयप्रसङ्गेनैतत्कन्यागतमुच्यते॥२२४॥

( ४ ) **राघवानन्दः** । नोन्मत्तायाइत्यत्रोक्तदण्डस्य संख्यामाह यस्त्विति । दोषवतीमुक्तोन्मत्तादिदोषत्रययुक्ताम् ॥ २२४ ॥

( ५ ) **नन्दनः** । अनुपक्रान्तमपि क्रयविक्रयसाधर्म्यात्कन्याप्रदानविषयंविवादमाह यस्तुदोषवतीमिति स्वयंकन्या भर्त्रादिभिरनिवेदितोऽपि ॥ २२४ ॥

( ६ ) **रामचन्द्रः** । षण्णवतिपणान्नृपःस्वयंदण्डंकुर्यात् ॥ २२४ ॥

**अकन्येति तु यः कन्यांब्रूयाद्द्वेषेण मानवः ॥ सशतंप्राप्नुयाद्दण्डंतस्यादोषमदर्शयन् ॥ २२५॥**

( १ ) **मेधातिथिः** । अकन्यावृत्तमैथुनसंबन्धेति योवदेत्तंच दोषंन भावयेत्तदा शतंकार्षापणंदण्ड्यः । अन्ये मन्यन्तेऽल्पत्वाद्दण्डस्य महत्वाच्चक्रोशस्येतिकरणस्य च पदार्थविपर्यासकत्त्वेन दर्शनादकन्येति शब्दस्वरूपंविवक्षितं अकन्येयमित्येतेनैव शब्देनाक्रोशेत्तस्य शतंदण्डः कः पुनरत्र विशेषः उच्यते सइदंवादी पृच्छ्यते कथमियमकन्येति सचेद्ब्रूयान्निर्लज्जा नृशंसाश्लीलवादिनी नैषकन्यानांधर्मएतच्च न साधयेत्तदा यंदण्डः कन्यागुणनिषेधउक्ते सति । अथवा कन्याशब्दंप्रथमवयोवचनमाश्रित्य परोक्षे कस्यचित्स्वल्पा *वृद्धादत्ता यदि राजानंज्ञापयेदभिरूपतमा कन्या मदीया प्रार्थ्यमाना-

---

* स्वल्पावृद्धादत्ता=दर्शयमानस्यब्रूयात्किंतावन्नासौस्वल्पावृद्धाबालावाकन्यादत्ता ( आआ )

ऽनेन तस्यामभिलाषएवमुक्ताथ पराजितस्तत्र ग्रामकालायां यद्येवमुक्तंतदा पराजितस्यायंदण्डः ॥ २२५ ॥

( २ ) **सर्वज्ञनारायणः**। अकन्याचेयं स्त्री किंतु क्लीबमिति ॥ २२५ ॥

( ३ ) **कुल्लूकः**। नेयंकन्या क्षतयोनिरियमिति योमनुष्योद्वेषेण ब्रूयात्तस्याउक्तदोषमविभावयन्पणशतंराजा दण्डं प्रकल्पयेत् ॥ २२५ ॥

( ४ ) **राघवानन्दः**। वाचादूषितकन्यस्य दण्डमाह । अकन्येयं कन्या केनापि क्षतयोनित्वादिति योब्रूयात् । दोषं क्षतयोनित्वादिकमदर्शयन्पणशतंदण्डमाप्नुयादित्यन्वयः ॥ २२५ ॥

( ५ ) **नन्दनः**। अकन्या क्षतयोनिः। शतंपणानाम् ॥ २२५ ॥

( ६ ) **रामचन्द्रः**। यः द्वेषेण कन्यां अकन्याइति ब्रूयात्सः पणशतंदण्डंप्राप्नुयात्। किंकुर्वाणः तस्याःदोषं अदर्शयन् ॥ २२५ ॥

**पाणिग्रहणिकामंत्राः कन्यास्वेव प्रतिष्ठिताः ॥ नाकन्यासु क्वचिन्नृणांलुप्तधर्मक्रियाहिताः ॥२२६॥**

( १ ) **मेधातिथिः**। पाणिग्रहणंविवाहोदारमन्त्राणांतत्र विद्यमानत्वात्सचाग्निमयक्षतेत्येताभ्यां संबन्धेनासांविवाहे कर्तृत्वंदर्शयति । परमार्थतस्तु विवाहविधौ कन्यामुपयच्छेदिति विहितं तादृशमेवार्थमन्त्राअभिवदन्ति न पुनर्मन्त्रेषु कन्याशब्दश्रवणात्कन्यानांविवाहमन्त्राणामविधायकत्वात्। एषएवार्थस्तद्विपरीतप्रतिषेधमुखेन दृढीक्रियते कन्यासु क्वचिन्नृणां। नकस्यांचिद्वेदशाखायां मनुष्याणामकन्याविषयोविवाहः श्रुतः। लुप्तक्रियाः यासांधर्मेऽग्निहोत्रादावपत्योत्पादनविधौ चाधिकारोनास्त्यतस्तानविवाह्याः अतः कन्यामकन्येति वदन्महता दण्डेन योजनीयइतिपूर्वश्लोकादनन्तरमुच्यते अप्राप्तमैथुनास्त्री कन्योच्यते ॥ २२६ ॥

( २ ) **सर्वज्ञनारायणः**। अकन्यातु यदि सा वस्तुतः स्यात्तदा त्याज्यैवेत्युपपादयति पाणिग्रहणिकाइति। कन्यास्वेव कन्याविषयाः। एवं नाकन्यासु क्लीबेषु ॥ २२६ ॥

( ३ ) **कुल्लूकः**। युक्तश्चास्याकन्येति वादिनोदण्डोयस्मात् पाणिग्रहेति अर्यमणंदेवंकन्याऽग्निमयक्षतेत्येवमादयोवैवाहिकामनुष्याणांमन्त्राः। कन्याशब्दश्रवणात्कन्यास्वेव व्यवस्थितातानाकन्याविषये क्वचिच्छास्त्रे धर्मविवाहसिद्ध्ये व्यवस्थिताअसमवेतार्थत्वात् अतएवाह ताःक्षतयोनयोवैवाहिकमन्त्रैः संस्क्रियमाणाअपि यस्मादपगतधर्मविवाहादिशालिन्योभवन्ति नासौ धर्म्योविवाहइत्यर्थः ननु क्षतयोनेर्वैवाहिकमन्त्रहोमादिनिषेधकमिदम् या गर्भिणीसंस्क्रियते तथा वोढुः कन्या समुद्भवमिति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्य वक्ष्यमाणत्वात्। देवलेन तु ॥ गान्धर्वेषु विवाहेषु पुनर्वैवाहिकोविधिः ॥ कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकइति ॥ गान्धर्वेषु विवाहेषु होममन्त्रादिविधिरुक्तः। गान्धर्वश्चोपगमनपूर्वकोऽपि भवतितस्य क्षत्रियविषये सुधर्मत्वंमनुनोक्तं। अतः सामान्यविशेषन्यायादितरविषयोयंक्षतयोनिविवाहस्याधर्मत्वोपदेशः ॥ २२६ ॥

( ४ ) **राघवानन्दः**। ननु कन्यात्वक्षतौ किंस्यात्तत्राह पाणीति । अर्यमणंनुदेवं कन्याअग्निमयक्षतेति मन्त्रलिङ्गमाश्रित्यावधारणमाह कन्यास्वेवेति । लुप्तधर्माक्रियाः अपगतविवाहादिक्रिं*याइति निन्दामात्रम्। अष्टवर्षा भवेत्कन्येति तत्कालावच्छिन्नकन्यादानतात्पर्यमन्यथा या गर्भिणीसंस्क्रियते तथा वोढुःसुतमिति क्षतयोन्यधिकृता न स्यात्। अपिच गान्धर्वासुरपैशाचानां क्षतयोनेरावश्यकत्वात् ॥ गान्धर्वेषु विवाहेषु पुनर्वैवाहिकोविधिः । कर्तव्यश्च त्रिभिर्वर्णैः समयेना-

* क्रियाइति=धर्म्या ( राघ० २ )

ग्निसाक्षिकइति होममन्त्रविधेर्दैवलोकत्वात् । अतएव गोत्रत्वप्राप्तिः । तदुक्तम् । एकत्वमागता यस्माच्चरुमन्त्राहुतिव्रतैरिति ॥ २२६ ॥

( ५ ) **नन्दनः** । पाणिग्रहणंविवाहस्तत्र भवाः पाणिग्रहणिकाः विवाहसाधनभूताइति यावत् ॥ २२६ ॥

( ६ ) **रामचन्द्रः** । अकन्यासु क्वचित् लुप्तधर्मक्रिया नृणां हितान ॥ २२६ ॥

**पाणिग्रहणिकामन्त्रानियतंदारलक्षणम् ॥ तेषांनिष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ २२७ ॥**

( १ ) **मेधातिथिः** । दारा भार्या तस्यालक्षणंनिमित्तंविवाहमन्त्रास्तैस्तत्र प्रयुक्तैर्विवाहाख्यःसंस्कारोनिर्वर्तते द्विजातीनांपुनर्मन्त्रास्तत्र शूद्रस्य दारमसङ्गोनहि तस्य मन्त्राःसन्ति मन्त्रवर्जंसर्वान्येति कर्तव्यतास्ति अतोविवाहाख्यसंस्कारोपलक्षणंमन्त्रास्तेषांमन्त्राणांनिष्ठा समाप्तिः सप्तमे पदे विज्ञेया लाजहोममभिनिर्वर्त्य त्रिःप्रदक्षिणमग्निमावर्त्य सप्तपदानि स्त्री प्रक्रम्यते इषएकपदीभवेत्यादियावत्सखासप्तपदीभवेति तस्मिन्प्रक्रान्ते कन्यायाःपदे कन्यापितुर्वोढुर्वानुशयोनास्ति उन्मादवत्यपि भार्यैव न त्याज्या मैथुनवत्यास्तु नैवासौ विवाहः सत्यपि लाजहोमादाविति कर्तव्यतास्वरूपे नभार्यासा अतस्तत्र द्रव्यान्तरवदनुशयः यथाच शूद्रकर्तृकेणाधानेनाहवनीयो भवति सपिण्डायाश्च कृतेऽप्यग्निसंस्कारे विवाहस्वरूपत्वंतत्र तु प्रसिद्धम् ॥ संस्कारकरणादेकः प्रायश्चित्तीयते पुमान् । कन्या चान्यस्याप्यविवाह्या वसिष्ठवचनात् । यदि प्रजननविघातरोगगृहीतामूढ्वा नत्यजति का तर्हि गतिः प्रत्यधिकारे अन्यामुद्वाहयिष्यति सद्यस्त्वप्रियवादिनीतिवत् कृते तु जातपुत्रायामाधाने यदि क्षयोव्याधिःस्यात्तथापि नैनामधिविन्देदधिवेदनिमित्तानांपरिगणनात् तत्रापि यदि कामतस्तुप्रवृत्ताना मित्येतत्प्रयोजकमिष्यते न निवारयामस्तेनैव संक्षेपतः कन्यायां धर्मोयथान्येषांद्रव्याणांदशाहादूर्ध्वमपि साम्रा प्रत्यर्पणंनैवंकन्यानांकृतविवाहानांशुल्कदेयानामपि प्राग्विवाहाद्द्रव्यान्तरधर्मः । या तु धर्माय दीयते तस्यानैवानुशयइति वचनात् तत्रापि ॥ दत्तामपि हरेत्कन्यांज्यायांश्चेद्वरआव्रजेदित्यस्त्येवापहारआसप्तमपदात् सप्तमेतुपदेवरे दानानिवृत्तेर्गवादिद्रव्यदानवन्नास्त्यपहारः अथैव केन चित्कस्मै चिद्गविदत्तायां न तयोरन्योन्येच्छयानुशयोदानादाने दानस्य तदानीमेवनिवृत्तत्वात् । प्रतिगृहीतंचेद्दात्रे पुनः प्रयच्छेत्तद्दानोत्तरमेवतत्स्यात्तत्पूर्वदाननिवृत्तिः । एवंसगुणयोः कन्यावरयोर्नान्योन्येच्छयात्यागोस्तिप्रागपि विवाहात् विवाहे तु कृते दोषवत्याअपि नास्तित्यागः कन्यायाः । स्पृष्टमैथुना या तुकन्यैव नभवत्यतोऽसौ त्यज्यते कन्यायायतोविवाहोविहितोविवाहश्चोपयोगस्थानीयोयथा परिभुक्तंवस्त्रमन्तर्दशाहमपि नैव विक्रेत्रेऽर्प्यते तथैव कन्या कृतविवाह्या पुनश्चायमर्थोनिर्णेष्यते सकृत्कन्याप्रदीयतइत्यत्रान्तरे ॥ २२७ ॥

( २ ) **सर्वज्ञनारायणः** । किंच सप्तपदीगमनात्प्राग्दोषदर्शने कन्यायाअशुल्कायाअपि त्यागइत्युपपादयति पाणिग्रहणिकाइति । दारलक्षणं दारहेतुः । निष्ठा अनिवर्तमानोचिता समाप्तिः ॥ २२७ ॥

( ३ ) **कुल्लूकः** । वैवाहिकामन्त्रानियतंनिश्चितंभार्यात्वे निमित्तंमन्त्रैर्यथाशास्त्रप्रयुक्तैर्भार्यात्वेन निष्पत्तेः तेषांतु मन्त्राणांसखा सप्तपदी भवेति मन्त्रेण कल्पनया सप्तमे दत्ते पदे भार्यात्वनिष्पत्तेः । शास्त्रज्ञैः निष्पत्तिर्विज्ञेया एवंच सप्तपदी दानात्प्राग्भार्यात्वानिष्पत्तेः सत्यनुशये जह्यान्नोर्ध्वम् ॥ २२७ ॥

( ४ ) **राघवानन्दः** । पाणिग्रहस्य दृष्टतया तन्मन्त्राणांकोपयोगस्तत्राह पाणिग्रहेति । तेषां मन्त्राणां निष्ठा समाप्तिः सप्तमेपदे सप्तमपदगमनेन कन्यायाः । अन्यथा विधितोदारत्वासिद्धेः सर्वधर्मलोपापत्तिरिति । एतेन सखासप्तपदीभवेति मन्त्रेण कन्यायाःसप्तमपदगमनेन भार्यात्वस्यावधिकथनात्तदभ्यन्तरेऽनुशयेसतित्याज्यत्वं सूचितम् ॥ २२७ ॥

( ५ ) **नन्दनः** । कन्यायादारत्वे नियामकः पाणिग्रहणमन्त्रैःसंस्कारस्तेषांनिष्ठा तैर्मन्त्रैःसंस्कारसंपत्तिः सप्तमे प-दे न प्रागिति । पाणिग्रहणमन्त्रसंस्कारोक्षतयोनीनामेव नान्यासामिति पाणिग्रहणिकाइत्युक्तंविशेषणम् ॥ २२७ ॥

( ६ ) **रामचन्द्रः** । तेषांमन्त्राणां निष्ठा अवस्था वर्तनोचितासमाप्तिः सप्तमे पदे विद्वद्भिर्विज्ञेया ॥ २२७ ॥

## यस्मिन्यस्मिन्कृते कार्ये यस्येहानुशयोभवेत् ॥ तमनेन विधानेन धर्म्ये पथि निवेशयेत्॥२२८॥

( १ ) **मेधातिथिः** । न केवलंवणिजांपण्यधर्मोयंदशाहिकोनुशयः किं तर्हि वेतनसंविद्वृद्धिप्रयोगादिषु यस्मिन्यस्मि-न्नेतिवीप्सयाऽशेषकार्यपरिग्रहोऽनेन विधानेन दाशाहिकेन विधिना । धर्मादनपेतोधर्म्यः पन्थामार्गः निवेशयेत्स्थापये-द्राजा । अतिदेशो यंकृते कार्यइति प्रक्रान्ते पुनः सर्वेण सर्वनिवृत्तेः तत्र ह्यनुशयोभावः । सच निरूपिते स्थापिते बान्तरे-ऽनुशमय्य दशाहप्रतीक्षणम् । यत्र पुनर्वृद्ध्यर्थंधनंनीतमृत्विक्काइत्तोवेतनंच यद्दत्तंकृतसमये विरोधआरब्धस्तत्र नायंधर्म-इति केचिन्नहि कृतमकृतंभवत्येतच्च न कृतंनिवृत्तमुच्यते न प्रक्रान्तंनह्ययमादिकर्मणि क्तोनहि मुख्यार्थत्यागे कारणम-स्ति यत्तुकृतंनाकृतंभवतीति कृतमपि तत्साध्यकार्यप्रतिषेधादकृतमेव यथा भुक्तंवांतमिति लौकिकेष्वपि पदार्थेषु शास्त्रा-वसेयव्यवस्थाकेषु शास्त्रतएव निवृत्यनिवृत्तीविज्ञेये अथापि वृत्ताः पदार्थास्तथापि प्रत्याहरणंविधीयते निष्पन्नेऽपि ध-नप्रयोगेस्वस्थाननीतेष्वपि रूपकेषु प्रत्यानयनंकर्तव्यमन्यतरानुशयात क्षयव्यययोःशास्त्रधर्मेण नीतेषु वोढव्यास्तथाच गृहो-तमात्रेषु मासिकींवृद्धिमिच्छन्ति यत्रैवंबन्धएषभोक्तव्यइयन्तंकालमित्येवमायन्तर्दशाहमनुशयोनिवर्त्यते । ऋत्विजान्तु वरणं विवाहइवकन्यानांसंविदे दशाहादूर्ध्वंप्रवर्तितव्यमस्मिन् शास्त्रे सति ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः** । एवमन्येष्वपि द्रव्येषु दोषदर्शनान्निवर्तनमूह्यमित्यतिदिशति यस्मिन्निति । धर्मेपथि निवे-शयेत् क्रयप्रत्यावर्तनेन राजा ॥ २२८ ॥

( ३ ) **कुल्लूकः** । न केवलंक्रयएव अन्यत्रापि यस्मिन् यस्मिन्संबन्धित्वेनादौ कार्ये यस्य पश्चात्तापोजायते तमनेन दशाहवि धिना धर्मादनपेते मार्गे नृपः स्थापयेत् ॥ २२८ ॥

( ४ ) **राघवानन्दः** । क्रीत्वेत्यत्रोक्तंगृहीतस्य त्यागमन्यत्राप्यतिदिशन्नाह यस्मिन्निति । धर्म्ये दशाहाभ्यन्तरे सप्त-मपदाभ्यन्तरेकन्यामपि निवेशयेत् पूर्वस्वामिन्यर्पयेदिति भावः ॥ २२८ ॥

( ६ ) **रामचन्द्रः** । यस्य पुंसः इहकार्ये अनुशयः पश्चात्तापः भवेत् ॥ २२८॥

## पशुषु स्वामिनांचैव पालानांच व्यतिक्रमे ॥ विवादंसंप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥२२९॥

( १ ) **मेधातिथिः** । गवादिपशुविषये व्यतिक्रमे स्वामिनांपालानांच गोपालादीनांयोविवादोगौस्त्वया मे नाशिता तांमे देहीति पालोपि विप्रतिपद्यते मदीयोदोषोनाभवदित्यत्र वादपदे यद्धर्मतत्त्वंयादशी व्यवस्था तांयथावन्निपुणतोव-क्ष्यामीत्यवधानार्थः पिण्डीकृतप्रकरणोपन्यासः ॥ २२९ ॥

( २ ) **सर्वज्ञनारायणः** । स्वामिपालविवादंप्रक्रमते पशुष्विति । पशुषु विषयेषु ॥ २२९ ॥

( ३ ) **कुल्लूकः** । गवादिपशुविषये स्वामिनांपालानांव्यतिक्रमे जाते विवादंसम्यग्धर्म्यंयथा तथा व्यवस्थया व-क्ष्यामि ॥ २२९ ॥

( ४ ) **राघवानन्दः** । स्वामिपालयोरित्युक्तंतमनुसरति पशुष्विति । यथावद्धर्मतत्त्वतः यथातथाव्यवस्थितयोः ॥ २२९ ॥

( ५ ) **नन्दनः** । अथस्वामिपालयोर्विवादमाह पशुषु स्वामिनांचैवेति ॥ २२९ ॥

( ६ ) **रामचन्द्रः** । पशूनांस्वामिनां च पुनः पालानां गोपानां व्यतिक्रमे अपराधे यथा वक्ष्यामि ॥ २२९ ॥

**दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ॥ योगक्षेमेऽन्यथाचेत्तु पालोवक्तव्यतामियात्॥२३०॥**

( १ ) **मेधातिथिः** । दिवा पशूनांयोगक्षेमे दोषउत्पन्ने नष्टविनष्टमित्यादिके वक्ष्यमाणे पाले वक्तव्यता कुत्सनीयता तेन सदोषोनिवोढव्यः । रात्रौ स्वामिनोदोषउद्बन्धनादि मृतानां गृहे स्वामिगृहे यदि पालेन प्रवेशिताभवन्ति अन्यथाचेत्तु यदि रात्रावपि पालेन न प्रवेशितोऽरण्यएववर्तते तदा पालोदोषभाक्स्यात् एतदुक्तंभवति पालहस्तगतागावोयदा क्षेत्रे कस्यचित्सस्यंभक्षयन्ति केनचिद्वा हन्यन्ते तदापालस्य अथपालेन समर्पितास्तदा स्वामिनः । अयोगक्षेमे योगशब्दप्रयुक्तोलक्षणया यथान्धे चक्षुष्मानिति ॥ २३० ॥

( २ ) **सर्वज्ञनारायणः** । वक्तव्यता पशूनामक्षेमे तत्कृतापचयवत्ता । तद्गृहे तद्गृहावस्थाने पशूनाम् । योगक्षेमे पशूनामप्राप्तानांप्रापणं प्राप्तरक्षणंच यदित्वन्यथा दिवारात्रौच पालएवार्पितं तदा पालदोषः ॥ २३० ॥

( ३ ) **कुल्लूकः** । दिवा पशूनांपालहस्तन्यस्तानांयोगक्षेमविषये पालस्य गर्हणीयता । रात्रौ पुनः पालप्रत्यर्पितानांस्वामिगृहस्थितानांस्वामिनोदोषोऽन्यथातु यदि रात्रावपि पालहस्तगताभवन्ति तत्र दोषउत्पन्ने पालएव गर्हणीयतांप्राप्नोति ॥ २३० ॥

( ४ ) **राघवानन्दः** । तमेवाह दिवेति । वक्तव्यता गर्हणीयता योगक्षेमविषये योगोप्राप्तस्य प्रापणं क्षेमः प्राप्तस्य परिपालनं तस्यनसति तद्गृह पालेनसमर्पितत्वे अन्यथा पालेनासमर्पितत्वे पालएव वक्तव्यः प्रायश्चित्ताद्यन्वितत्वेनइत्यन्वयः ॥ २३० ॥

( ५ ) **नन्दनः** । वक्तव्यताऽपराधः । योगोयवसपानीयादिदानरूपः क्षेमोऽनिष्टनिवारणरूपः ॥ २३० ॥

( ६ ) **रामचन्द्रः** । अन्यथाचेत्पाले समर्पिता सर्वदा पालःवक्तव्यतां दोषभावितां इयात् ॥ २३० ॥

**गोपः क्षीरभृतोयस्तु सदुह्याद्दशतोवराम् ॥ गोस्वाम्यनुमते भृत्यः सास्यात्पालेऽभृते भृतिः ॥ २३१॥**

( १ ) **मेधातिथिः** । कोसौ योगक्षेमः अतःप्रपञ्चयति गांपाति गोपःगोपालकः सकदाचिद्भक्तादिना भ्रियते कदाचित्क्षीरेण तत्र क्षीरभृतोदशभ्योवरान्श्रेष्ठान् अवरान्वा संहितायामकारप्रश्लेषाद्रक्षायामनुरूपकता यस्य नान्यदन्नंसएकस्यागोःक्षीरमादद्यात् । अनया कल्पनया न्यूनाधिकरक्षणे भृतिः कल्पयितव्या । एवंदोह्यादोह्यधेनुवत्सतरीदम्यवत्सकादिवारणे क्वचित्त्रिभागः क्षीरस्य क्वचिच्चतुर्भागः स्वामिभिः कल्पयितव्यः दिङ्मात्रप्रदर्शनार्थश्लोकोयं । देशव्यवस्थात्वाश्रयणीया भृतिंनिरूपयिष्यामीति ग्रामगोपालेन यदि गावस्त्यक्ताभवन्ति न तेन स्वामिनमननुज्ञाप्य दशमोगौर्दोह्येति भक्तभृतोऽपि क्षीरेण विनिमयस्येति बुद्ध्या दुहीत तन्निवृत्त्यर्थमुक्तंगोस्वाम्यमनुमतइति स्वामिनोनुमतिमन्तरेण प्रवर्तमानोदण्ड्यः सानन्तरोक्ता अभृते भृतिर्भवेत् । क्षीरभृतएषा वृत्तिः भृत्योभरणार्थेन धर्माय प्रवृत्तोरक्षायामथवा स्वेच्छया दशम्यागोःक्षीरमाददानश्चोरः स्यात् अस्मिंस्त्वनुज्ञाते भृतिस्तस्येयमिति न दोषः अत्रापि स्वामिनोऽननुमत्या दोषएवेति चेत्सत्यंतस्य तावतादण्डमात्रं नचौरोभवत्यस्मिंस्तु चौरोनिक्षेपहारी वा स्यात् । अयंश्लोकआदौ वक्तव्यः अतोनंतरःक्वचित्पद्यते ॥ २३१ ॥

( २ ) **सर्वज्ञनारायणः** । क्षीरभृतः क्षीरमात्रवेतनोयोगोपालः सदुह्यादात्मार्थम् । दशतोदशसु गोषु रक्षितासु तन्म-

---

( २३१ ) दुह्यात्=दद्यात् ( रामचन्द्रः ) गोस्वाम्यनुमते=गोस्वामिनिभृते ( रामचन्द्रः )

ध्यतोवरामुत्तमाम् । गोस्वाम्यनुमतइति तदननुमत्या । मृत्यवष्टम्भेन दोहे दण्ड्यइत्यर्थः । क्षीरंदुह्यादितिच तत्तत्पशुविकारोपयोगोपलक्षणम् । तेनमेषादावूर्णादिग्रहणेपि तत्पालकस्यायंभागक्रमइत्याह सास्यादिति ॥ २३१ ॥

( ३ ) **कुल्लूकः।** योगोपालाख्योभृत्यः क्षीरेण न भक्तादिना स्वस्वाम्यनुज्ञया धर्षितोगोभ्यः श्रेष्ठामेकांगांभृत्यर्थंदुह्यात्साभक्तादिरहिते गोपाले भृतिः स्यात् । एवंचैकगवीक्षीरदानेन दशगाः पालयेदित्युक्तम् ॥ २३१ ॥

( ४ ) **राघवानन्दः** । गवांपालस्य भृतिमाह गोपइति । गवां क्षीरमेव भृतं भृतिर्यस्य दशतोवरां दशभ्यःश्रेष्ठां गां दुह्यात् स्वभृतितया । अभृते भक्तादिभिः सा गोभृतिः स्यात्स्वार्थे दुह्यमानायादुग्धभृतिरितिभावः ॥ २३१ ॥

( ५ ) **नन्दनः** । क्षीररूपभृतिग्राही क्षीरभृतः । दशतोवरंदशभ्योगोभ्यः पाल्यमानाभ्योदोह्यहेतुभूताभ्यः अवरामेकांगांगोस्वामिनानुज्ञातोदुह्यात् । जातस्य दशगोरक्षकस्य भृतिः ॥ २३१ ॥

( ६ ) **रामचन्द्रः** । क्षीरभृतः क्षीरवेतनः गोपः दशतः अवरां ऊनां गोस्वामिनिभृते सःभृत्यःदद्यात् दशगवांमध्ये वरां श्रेष्ठां अभृते । अकृतवेतनेपाले साभृतिः स्यात् ॥ २३१ ॥

## नष्टंविनष्टंकृमिभिः श्वहतंविषमे मृतम् ॥ हीनंपुरुषकारेण प्रदद्यात्पालएव तु ॥ २३२ ॥

( १ ) **मेधातिथिः** । नष्टंदृष्टिपथादपेतं न ज्ञायते क्वगतम् । विनष्टं कृमिभिः आरोहकनामानः कृमयोगवांप्रजननवर्त्मनानुप्रविश्य नाशयन्ति । श्वहतंप्रदर्शनार्थमेतत् तेन गोमायुव्याघ्रादिहतानामेषैव स्थितिः । विषमेश्वभ्रदरीशिलादिसंकटादौ मृतंप्रदद्यात्पालएव । हीनंपुरुषकारेण पुरुषव्यापारचपलस्य तद्यसंनिधानात् वृकनिवारणे दण्डादिना प्रवृत्तिस्तेनापेतं यदिस्यान्म्रियमाणोव्याघ्रादिवारणे नैव समर्थःसहसैवोत्पत्य कश्चित्पशुर्वेगेन श्वभ्रंगच्छेदनुगच्छतापिनशक्यः प्रत्यावर्तयितुंन पालेदोषः ॥ २३२ ॥

( २ ) **सर्वज्ञनारायणः** । नष्टमदर्शनंगतं कृमिभिर्विनष्टंविनाशितं विषमेमृतंनिम्नपातादिना यत्रतु पुरुषकारसंभवे तदकरणं तत्पुरुषकारहीनं तं पालोदद्यात् ॥ २३२ ॥

( ३ ) **कुल्लूकः** । नष्टंदृष्टिपथातीतंकृमिभिर्नाशितंश्वभिःखादितंहतंविवरादिपातमृतंप्रदर्शनंचैतत्पालसंबन्धिरक्षकाख्यपुरुषव्यापाररहितंमृतंपलायितंगवादि पशुपालएव तु स्वामिने दद्यात् ॥ २३२ ॥

( ४ ) **राघवानन्दः** । भृतिभुजः पालस्य दण्डमाह नष्टमिति । नष्टं दृष्टिपथातीतं कृमिभिः सर्पादिभिर्विनष्टं मृतं पुरुषकारेणहीनं चोरादिना क्रियमाणं नरक्षितं तादृशंपशुं दद्यात् ॥ २३२ ॥

( ५ ) **नन्दनः** । नष्टमदृष्टंपशुमितिशेषः ॥ २३२ ॥

( ६ ) **रामचन्द्रः** । पुरुषकारेण हीनं नष्टं पुरुषकारेसति यदितंनकरोति तर्हि पालएव प्रदद्यात् ॥ २३२ ॥

## विघुष्य तु हृतंचौरैर्न पालोदातुमर्हति ॥ यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ २३३॥

( १ ) **मेधातिथिः** । विघुष्याऽऽघुष्य पटहांश्चौरैर्हृतंपशुपालोनदाप्यते निघोषकरणंच पालस्याशक्त्युपलक्षणार्थम् । यदि बहवश्चोराः प्रसह्यच मुष्णन्ति तदा पालोमुच्यते सोपि यदि प्राप्तकालंतस्यामेव वेलायां स्वामिनः कथयति देशे यच स्वामी संनिहितः कथंविज्ञातस्तव अथवा निवासदेशे स्वामी न तत्र यद्यसावसंनिहितोऽपि भवति तथापि तत्स्थानीयोभवति यो राजानमधिकारिणंवा ज्ञापयित्वा चौरानभिद्रवति । स्वस्येति राजनिवृत्त्यर्थं सोहि स्वामीतद्द्रव्यमोक्षणे यत्नंकुरुते न तथा पालज्ञापितोराजा दुष्करा च राजज्ञापनापालस्य अथ मुषित्वा गतेषु ज्ञापयेद्दुष्येदेव ॥ २३३ ॥

( २ ) **सर्वज्ञनारायणः**। विघुष्य प्रकाश्य बलादिति यावत्। देशे समीपदेशे काले दिवसादौवा शंसति दूरदेशविषमकालादौत्वकथनेऽप्यदोषइत्यर्थः ॥ २३३ ॥

( ३ ) **कुल्लूकः**। चौरैः पुनः पटहादिविघुष्य हृतंपालोदातुंनार्हति। विघुष्येति चौराणांबहुत्वंप्रबलत्वकथनपरम्। सन्निहिते देशे हरणकालानन्तरमेवात्मीयस्वामिनः कथयति ॥ २३३ ॥

( ४ ) **राघवानन्दः**। एवंकर्मा पालोन दद्यादित्याह विघुष्येति। तेषां प्राबल्ये सतीत्यर्थः। यदीति देशकालनिश्चयार्थम्*। देशे नदीतीरादौ काले प्रातरादौ हरणकालानन्तरमेव स्वस्य गवादेर्वृत्तं स्वामिनःप्रति शंसति कथयति स्वस्य युद्धादिकमिति वा ॥ २३३ ॥

( ५ ) **नन्दनः**। विघुष्य ह्रियमाणंविख्याप्य हृतंबलाद्धृतमितियावत् ॥ २३३ ॥

( ६ ) **रामचन्द्रः**। यदि देशे यस्मिन्देशे चौरैर्हृतं अस्मिन्काले स्वामिनः स्वस्य द्रव्यस्य गवादेः हरणे सति सः न दातुं अर्हति ॥ २३३ ॥

**कर्णौ चर्मचवालांश्च बस्तिस्नायुंच रोचनाम् ॥ पशुषु स्वामिनांदद्यान्मृतेष्वङ्गानि दर्शयेत्॥२३४॥**

( १ ) **मेधातिथिः**। आयुषःक्षयान्मृतेषु पशुषु स्वामिनः पर्णाचर्पणीयं गोरोचनांगवांशृङ्गेषु चूर्णभवति बस्तिरङ्गविशेषः अङ्गाःकर्णादयः स्वामिविशेषज्ञानार्थंचिन्हानि तानपि दर्शयेत्। एवंपालस्यशुद्धिः। अङ्गदर्शनेन हि प्रत्यभिज्ञाभवत्ययंसपशुरिति ॥ २३४ ॥

( २ ) **सर्वज्ञनारायणः**। स्वयंमृतेत्वाह कर्णाविति। बस्तिमूत्रपुटं। एतेषामन्यतमंदद्यात्। शृङ्गाणिच दर्शयेदिति विकल्पः। मृतेष्वङ्गानीति पाठे अङ्गान्यङ्गरूपाणि अङ्गान्तराणीत्यर्थः ॥ २३४ ॥

( ३ ) **कुल्लूकः**। स्वयंमृतेषु पशुषु कर्णचर्मलाङ्गूलप्रवालान्नाभेरधोभागस्नायुरोचनाः स्वामिनांदद्यात् अन्यानि च चिन्हानि शृङ्गखुरादीनि दर्शयेत् ॥ २३४ ॥

( ४ ) **राघवानन्दः**। स्वयंमृतेषु पशुस्वामिने तदीयानेतान्प्रदर्शयन्न दण्डभागित्याह कर्णाविति। बस्तिमधोदेशम्। अंगान्युक्तारिक्तानिशृङ्गखुरादीनि ॥ २३४ ॥

( ५ ) **नन्दनः**। गवांमरणे गोपालेन कर्त्तव्यमाह कर्णौचर्मेति। मृतेषु पशुष्वङ्गान्युक्तान्येव दर्शयेत्स्वामिने ॥ २३४ ॥

( ६ ) **रामचन्द्रः**। पशौमृते पशोःअंगानि कर्णादीनि दर्शयेत् गोरोचनं तिलकादि ॥ २३४ ॥

**अजाविके तु संरुद्धे वृकैः पाले त्वनायति ॥ यांप्रसह्य वृकोहन्यात्पाले तत्किल्बिषंभवेत्॥२३५॥**

( १ ) **मेधातिथिः**। अजा चाविका चाजाविकेऽविरेवाविकैडका एते वृकैः शृगालप्रभृतिभिः संरुद्धेअवष्टब्धे प्रथमपातएव हते अस्मिंश्चान्तरे सत्यामोक्षणेऽहतत्वान्नच पालआयति मोक्षयितुमनायत्यनागच्छति पाले यत्तत्र प्रसह्य बलेनाभिभूय वृकोहन्यात्पालस्य सदोषः स्वामिनोदापयितव्यः प्रायश्चित्तंचरेत्। गोर्महत्त्वाद्गोमायुना न शक्यते संरोद्धुमित्यजाविकेइत्युच्यते न पुनस्तद्रूपमतश्च बालानांगोवत्सानामेषएव न्यायः ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः**। अजाविकइति वृकघातयोग्यतया गवागवादेस्तुव्याघ्रादेरेवभयं तत्रच पालस्य रक्षणाशक्तेर्न दोषः। वृकैःसंरुद्धे तदाच पालेऽन्यव्यासक्त्या तत्रागत्य क्षेममकुर्वति। किल्बिषमपराधः ॥ २३५ ॥

---

* निश्चयार्थे=निश्चयार्थं प्रायश्चित्तंयदिस्यादितिवत् ( राघ० २ )

( ३ ) **कुल्लूकः** । अजाश्चाविकाश्चाजाविकं गवाश्वप्रभृतीनिचेति द्वन्द्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृते सति पाले नागच्छति यामजामेडकांवा वने वृकोहन्यात्सपालस्य दोषः स्यात् ॥ २३५ ॥

( ४ ) **राघवानन्दः** । गोविषयकमुक्त्वाऽजादिविषयकमाह अजेतिद्वाभ्याम् । वृकैर्व्याघ्रैर्हन्तुंरुद्धे अनायति अनागच्छतिसतिदण्डोबहिःप्रायश्चित्तार्थम् । किल्बिषमिति तद्वधपापंपालस्येत्यर्थः ॥ २३५ ॥

( ५ ) **नन्दनः** । वृकग्रहणंव्याघ्रादीनामप्युपलक्षणार्थं अनायत्यनागच्छति । यामजामविंवा । अजाविकेति पुसांपूर्वलक्षणमेतत् । तत्किल्बिषंतस्यवधोपराधः ॥ २३५ ॥

( ६ ) **रामचन्द्रः** । अजःछागःआविकःअनायतिसति अनागच्छतिसति वृकःयान्प्रसह्य हन्यात् तत्किल्बिषंपाल भवेत् ॥ २३५ ॥

## तासांचेदवरुद्धानांचरंतीनांमिथोवने ॥ यामुत्प्लुत्य वृकोहन्यान्न पालस्तत्र किल्बिषी ॥ २३६ ॥

( १ ) **मेधातिथिः** । अजाविकोपूर्वश्लोके जात्यपेक्षंद्विवचनं पशुशकुनिद्वन्द्वत्वाद्विभाषितैकवद्भावः इह तु तासामिति व्यक्त्यपेक्षेण बहुवचने परामर्शः । अविरुद्धानां मिथएकत्रप्रदेशे स्थापितानांसंहतीभूतानांदिग्भ्योविदिग्भ्यश्च निरुद्धगमनानां वनेचरन्तीनां दृष्टिगोचराणांयदि कुतश्चनकुञ्जात्संचारणोत्पातनात्तुक्रमेण निष्क्रम्य वृकोहन्यान्नपालोदोषभाक् अशक्यंह्यनेकवृक्षक्षुपशरवल्लीगहनंवनंनिर्विवरीकर्तुंछिद्रानुसारिणश्च वृकाः मिथोग्रहणाच्चातिदूरविप्रकृष्टासु वधेदोषएव पालहस्तगताःपशवस्तदुपेक्षायां यदि दोषमाप्नुयुः सपालेनैव समाधेयइति एषप्रपञ्चः सुखावबोधार्थः ॥ २३६ ॥

( २ ) **सर्वज्ञनारायणः** । अवरुद्धानामेकस्थानीकृत्य पालेन रक्ष्यमाणानाम् ॥ २३६ ॥

( ३ ) **कुल्लूकः** । तासामजाविकानांपालेन नियमितानांसंघीभूय वनेचरन्तीनाम् यत्नाद्यदि कश्चित्कुतश्चिदुत्प्लुत्यालक्षितोयांकांचिद्धन्यान्नपालस्तत्र दोषभाक् ॥ २३६ ॥

( ४ ) **राघवानन्दः** । अवरुद्धानांपालेनप्राकारादिना रक्षार्थमागतेतुनदोषइत्याह तासामिति । यामिति लिङ्गमविवक्षितम् । तत्र तादृशे हते नकिल्बिषी दण्डं प्रायश्चित्तंवा नार्हति ॥ २३६ ॥

( ५ ) **नन्दनः** । तासामजावीनांमद्ध्ये मिथोवने वनगहने ॥ २३६ ॥

## धनुः शतंपरीहारोयामस्यस्यात्समन्ततः ॥ शम्यापातास्त्रयोवापि त्रिगुणोनगरस्य तु ॥ २३७ ॥

( १ ) **मेधातिथिः** । चतुर्हस्तंधनुस्तेषांशतंचत्वारिहस्तशतानि समंततश्चतसृषु दिक्षु यामस्य परीहारः कर्तव्यः । अनुप्तसस्या भूमिः पशूनांसुखप्रचारार्था कर्तव्या । दण्डयष्टिःसा बहुवेगेन प्रेरिता यत्र पतति ततः प्रदेशादुद्धृत्य पुनः पातयितव्या यावत्त्रिस्तस्य परिमाणोवा शम्यापातः परिहारः । त्रिगुणोनगरस्य ग्रामनगरे प्रसिद्धे शम्यायाः पाताः प्रेरितायाविगसंस्कारक्षयोभूमौ स्थानादि ॥ २३७ ॥

( २ ) **सर्वज्ञनारायणः** । धनुर्हस्तचतुष्कं तच्चतुःशतं महाग्रामस्य परीणाहोवेष्टनेन त्याज्या भूमिः । परीहारइति क्वचित्पाठः । शम्यापाताः क्षिप्ताःशम्यायावतितेत्रयस्तत्त्रिगुणोदेशः क्षुद्रग्रामस्य । एतयोर्द्वयोस्त्रैगुण्यं नगरस्य बृहत्त्वक्षुद्रत्वापेक्षया विकल्पेन ॥ २३७ ॥

( ३ ) **कुल्लूकः** । चतुर्हस्तोधनुः शम्यायष्टिः तस्याः पातः प्रक्षेपोग्रामसमीपे सर्वासु दिक्षु चत्वारिहस्तशतानि त्रीन्वा यष्टिप्रक्षेपान्यावत्पशुप्रचारार्थंसस्यवपनादिसंरोधपरिहारः कार्यः । नगरसमीपे पुनरयंत्रिगुणः कर्त्तव्यः ॥ २३७ ॥

( ४ ) **राघवानन्दः** । ग्रामनगरयोर्निकटवर्तिनि सस्ये पशुभिर्भुक्तेपि पालेनदण्डभागनवरुद्धत्वात्सस्यस्येत्याह धनुरितिद्वाभ्याम् । चतुर्हस्तोधनुः । शम्यापातः शमी यष्टिस्तस्याः आपातः प्रक्षेपः तेन धनुःशतेन शम्यापातैस्त्रिभिर्वा यावान्व्याप्योदेशस्तावतः परिहारः त्यागः सस्यशून्यतया कर्तव्यः । नगरस्यतु त्रिगुणः परिहारः कार्यइत्यन्वयः ॥२३७॥

( ५ ) **नन्दनः** । अथगोप्रचारभूमिपरिमाणमाह धनुःशतमिति । धनुःशतेनपरिमाणेनपरिवार्यतइति धनुःशतपरिवार्यकोदेशः । शम्यास्मिन्पात्यतइति शम्यापातोदेशः त्रिगुणेधनुःशतत्रयपरिमाणानि । शम्यापातनवकपरिमाणोवा । क्षुद्रत्वमहत्त्वापेक्षया विकल्पः ॥ २३७ ॥

( ६ ) **रामचन्द्रः** । ग्रामस्य समन्ततोधनुःशतंधनुः चतुर्हस्तंपरिणाहः अनुप्तसस्या भूमिःस्यात् यष्टिः यादण्डयष्टिः पातास्त्रयः दण्डः प्रक्षेपेण यत्र पतति तावत्त्रयंवा परिणाहः । तु पुनः नगरस्य त्रिगुणः परीणाहःनसस्यं विद्यते यस्यांसा असस्याभूमिः ॥ २३७ ॥

**तत्रापरिवृतंधान्यंविहिंस्युः पशवोयदि ॥ न तत्र प्रणयेद्दण्डंनृपतिः पशुरक्षिणाम् ॥ २३८ ॥**

( १ ) **मेधातिथिः** । तत्र परीहारस्थाने क्षेत्रंन कर्तव्यमथकृतंकस्माद्वृत्तिर्न कृताऽत्रक्षेत्रिणएवापराध्यन्ति न पशुपालाः नहि पालएकैकंपशुंहस्तबन्धेन नेतुंशक्नोति नच पशूनामन्योनिर्गमोस्ति ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । तत्र परिणाहे । धान्यमिति पशुभक्ष्योपलक्षणम् विहिंस्युर्भक्षयेयुः ॥ २३८ ॥

( ३ ) **कुल्लूकः** । तस्मिन्परिहारस्थाने यदि केन चिददत्तावृतिकंधान्यमुप्यतेतच्चेत्पशवोभक्षयेयुस्तत्र पशुपालानांनृपोदण्डंन कुर्यात् ॥ २३८ ॥

( ४ ) **राघवानन्दः** । अपावृतेतु नदण्डइत्याह तत्रेति । विहिंस्युर्भक्षयेयुर्विमर्दयेयुर्वा ॥ २३८ ॥

( ५ ) **नन्दनः** । तत्र गोप्रचारदेशे अपरिवृतंवृतिरहितम् । तत्र वान्यहिंसाविषये ॥ २३८ ॥

( ६ ) **रामचन्द्रः** । तत्र परिणाहे अपरिवृतं अवेष्टितं धान्यंपशवोयदिविहिंस्युस्तत्रापराधेनृपतिः पशुरक्षिणांदण्डंन प्रणयेत् ॥ २३८ ॥

**वृतिंतत्र प्रकुर्वीत यामुष्ट्रोन विलोकयेत् ॥ छिद्रंच वारयेत्सर्वंश्वसूकरमुखानुगम् ॥ २३९ ॥**

( १ ) **मेधातिथिः** । कंटकशाखादीनांप्रकारविन्यासः पशुप्रवेशवारणार्थः क्षेत्रारामादीनांवृतिरुच्यते याकचित्पर्णिकेतिप्रसिद्धावारणावृतिः । तस्याउन्नतिरियतीकर्तव्या ययोष्ट्रोनावलोकयति किमियंद्वितीया तृतीयार्थे यामुष्ट्रइति नेति ब्रूमः कथंतर्हिवृतिमुष्ट्रोन पश्यति महोत्सेधायाद्वितीयपार्श्वस्यादर्शनाददृष्टैववृतिः । छिद्रंचविवरमावारयेत्सर्वम् । श्वसूकरमुखेन यदनुगम्यते तन्मुखंपरिमाणंतथा कुर्याद्यथाश्वमुखंनमाति तन्मुखादप्यल्पछिद्रमित्यर्थः तथा कृतायां वृतौ ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकुर्वीत धान्यस्वामीयामुष्ट्रइत्युच्चलोक्ता । श्वशूकरमुखं यत्रानुगच्छति तादृक्छिद्रंवारयेत् ॥ २३९ ॥

( ३ ) **कुल्लूकः** । तत्र परिहारस्थाने क्षेत्रे वृतिंकण्टकादिमयींतथाविधामुच्छ्रितांकुर्यात् यामपरपार्श्वे उष्ट्रोन विलोकयेत्तस्यांच यत्किंचिच्छिद्रंश्वसूकरमुखप्रवेशयोग्यंतत्सर्वमावृणुयात् ॥ २३९ ॥

( ४ ) **राघवानन्दः** । अपरिवृतमित्युक्तं तत्र किंरूपा वृतिर्देयेत्यपेक्षायामाह वृतिमिति । उष्ट्रावलोकपर्यन्तामुच्छ्रितां वृतिं कुर्यादिति । श्वादेर्मुखं यावत्प्रविशति तावदपि छिद्रं निरुन्ध्यादिति । अनेन खेटखर्वटवाटीनामप्यावृतत्वंसूचितम् ॥ २३९ ॥

( ५ ) **नन्दनः** । श्वसूकरमुखानुगं श्वसूकरमुख्यैरनुगम्यंसुप्रवेशम् ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । तत्र परिणाहे वृतिं कण्टकवेष्टनं । यां वृतिमुष्ट्रोनविलोकयेत् न पश्येत् । वापातान्तरंश्वशूकरमुखानुगंछिद्रंसर्वंवारयेत् यत्रछिद्रे शुनः शूकरस्यतयोःमुखप्रवेशयोग्यं छिद्रस्यमुद्रणंकुर्यात् ॥ २३९ ॥

**पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः ॥ सपालः शतदण्डार्हो विपालान् वारयेत्पशून् ॥२४०॥**

( १ ) **मेधातिथिः** । परिवृते पथि क्षेत्रे ग्रामसमीपवर्तिनि च परीहारमध्यगते अन्तशब्दः समीपवचनोयदि भक्षयेत्पशुः सपालश्चस्यात्सन्निहिते पालः शतदण्डार्हः पशोर्दण्डासंभवात् पालेऽसंनिहितेऽपि गृहे यदा नाप्यसौपालः प्रसिद्धोन पुनस्तत्प्रेषितोवारिकोरूपमात्रचेतनः विपालाःपशवोवारयितव्यादण्डादिना ननुदण्डनीयाः विपालाश्चोत्सृष्टवृषादयः अन्येषान्तुविपालानांस्वामिनोदण्डोऽथवा परिवृतइति प्रश्लेषक्षेत्रसंबधाच्च गम्यमानः स्वामी सपालइत्यन्यपदार्थतया संबध्यते सहपालेन क्षेत्रेकोदण्ड्यउभौ दण्ड्यौ पालः क्षेत्रिकश्च क्षेत्रिकस्तावत्किल्बिषमिति पथि क्षेत्रे वृतिंन कृतवान् पालेनापि वृतौ चसत्यां किंक्षेत्रंखादयितव्यंपालप्रमादादपि तौ वारयेत् तथागौतमः ॥ पथिक्षेत्रेऽनावृते पालक्षेत्रिकयोरिति । २४० ॥

( २ ) **सर्वज्ञनारायणः** । पथि परिवृते तथा क्षेत्रे तथाग्रामान्तीये प्रागुक्तग्रामान्तरपरिणाहेच परिवृत्ते । ग्रामपदं नगरस्याप्युपलक्षणम् । सपालःपशुः शतं पणान् दण्ड्यः । पशोर्दण्डः पालस्यैवार्थात् । विपालान् देवादिपशून् स्वयमेव क्षेत्रस्वामी चारयेत् ॥ २४० ॥

( ३ ) **कुल्लूकः** । वर्त्मसमीपग्रामसमीपवर्तिनि वा परिहारस्थे क्षेत्रे दत्तवृत्तौ सपालः पशुः पालानिवारितोद्वारादिना कथंचित्प्रविष्टोयदा भक्षयति तदा पणशतंदण्ड्यः । पशोश्च दण्डासंभवात्पालएव दण्ड्यः । विपालान्पुनर्भक्षणप्रवृत्तान्क्षेत्ररक्षकोनिवारयेत् ॥ २४० ॥

( ४ ) **राघवानन्दः** । परिवृतसस्यभोजिनां पालस्य भावाभावावाश्रित्याह पथीति । सपालः पशुः पालेन रक्षितः स्तत्रापिपालस्यैव दण्डोनपशोः । वारयेत् भक्ष्ये प्रवृत्तान विपालानिति* शेषः ॥ २४० ॥

( ५ ) **नन्दनः** । परिवृते वृतियुक्ते धान्यंविहिंस्युःपशवोयदीत्यनुषङ्गः । शतंपणशतं । विपालंगोपरहितं पशुंक्षेत्रस्वामी वारयेत् । न तत्र दोषः ॥ २४० ॥

( ६ ) **रामचन्द्रः** । पथि क्षेत्रे मार्गसमीपक्षेत्रे कंटकैः परिकृते विपालान्चारयेत् तर्हि सपालः शतदण्डार्हः । वा पुनः ग्रामान्तीये ग्रामसमीपे पशून्चारयेत् सदण्डार्हः ॥ २४० ॥

**क्षेत्रेष्वन्येषु तु पशुः सपादंपणमर्हति ॥ सर्वत्र तु सदोदेयः क्षेत्रिकस्येति धारणा ॥ २४१ ॥**

( १ ) **मेधातिथिः** । पथिक्षेत्रग्रामान्तीयेभ्योऽन्यानि क्षेत्राणि तद्भक्षणे सपादपणोदण्डः ननु चात्र स्वल्पेन दण्डेन भवितव्यं पातप्रमादासन्निहिते क्षेत्रे यन्तु पन्थानमतिक्रम्य क्षेत्रंवा हिग्रामंच तत्र महादण्डोयुक्तः किमिति गवांपालोगन्तुंतत्र ददाति नैषदोषः यद्यत्र महादण्डोनोच्यते तदा प्रत्यहंप्रवेशनिर्गमैर्गवांभक्षयन्तीनांग्रामान्तक्षेत्राण्युत्सीदेयुर्दण्डात्तु महतो बिभ्यतोयत्नेन रक्षन्ति अन्यत्र क्षेत्रिणोविशेषार्थाकथंचिन्नयति स्वल्पोदण्डः अत्रापि विपालानांवारणमेव सर्वत्र क्षेत्रस्वामिनोगतफलदेये च ते परिमाणे कल्पिते । क्षेत्रमस्यास्तीति व्रीह्यादित्वाट्ठक् इति धारणैषनिश्चयइत्यर्थः । सर्वत्र ग्रहणाच्च विपालेऽपि पशौ क्षेत्रिकस्य गतलाभः । यद्यपि पशुशब्दः सामान्यशब्दोमहिष्यजात्युष्ट्रगर्दभादिषुवर्तते तथापि स्मृत्यन्तरदर्शनाद्गोष्वयंदण्डइति मन्यते तथा च गौतमः ॥ दशमहिषीष्वजाविषु द्वावित्याद्यन्यत्र कल्पना ॥ २४१ ॥

* विपालानिति=विपालान् क्षेत्रपालकेति ( न, श, )

( २ ) **सर्वज्ञनारायणः**। क्षेत्रेष्वन्येष्वनावृतेषु ग्रामदूरस्थक्षेत्रेषु। अयंच राजदण्डः। नष्टस्तु सदः सस्यं क्षेत्रिकस्य सर्वत्र पशुकृतापराधे देयः ॥ २४१ ॥

( ३ ) **कुल्लूकः** । वर्त्मग्रामान्तव्यतिरिक्तेषु पशुर्भक्षयन्सपादंपणंदण्डमर्हति अत्रापि पालएव दण्ड्यः। सर्वत्र क्षेत्रे पशुभक्षितंफलंस्वामिने पालेन स्वामिनावा यथापराधंदातव्यमिति निश्चयः ॥ २४१ ॥

( ४ ) **राघवानन्दः**। वर्त्मग्रामान्तव्यतिरिक्तक्षेत्रेषु दण्डन्यूनतामाह क्षेत्रेष्विति । एवंविधे पशुः पशुपालः पणं मूल्यं पणस्यपादंवासपादं माषचतुष्काधिकताम्रतोलकद्वयंसर्वत्र सपालैर्विपालैर्वाभक्षितसस्याय। क्षेत्रिगे सदः मूल्यं स्वामिना पालेनवोक्तानुसारेण देयइति धारणा नियमः। नियमविशेषोयाज्ञवल्क्यात् ज्ञेयः। तथाहि ॥ माषानष्टौतु महिषी सस्यघातस्य कारिणी। दण्डनीया तदर्धंतु गौस्तदर्धमजाविकम् ॥ भक्षयित्वोपविष्टानांयथोक्ताद्द्विगुणोदमः। सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ यावत्सस्यं विनश्येत तावत्क्षेत्री फलंलभेत्। गोपस्ताड्यस्तु गोमीतु पूर्वोक्तं दण्डमर्हतीति ॥ विवीते वननिकटे। सपालेपि। धारणा नियमः ॥ २४१ ॥

( ५ ) **नन्दनः**। अन्येषु क्षेत्रेषु वृतिरहितेषु गोप्रचारदेशव्यतिरिक्तेषु। पशुर्हिंस्यादित्यनुषज्यते वचनविपरिणामेन। सर्वत्र ग्रामान्तादौ। सदःकृषिफलं क्षेत्रिकाय क्षेत्रस्वामिने ॥ २४१ ॥

( ६ ) **रामचन्द्रः**। अन्येषु क्षेत्रेषु सपादंपणंदण्डं अर्हति। तु पुनः सर्वत्र सदः अन्नं क्षेत्रिकस्य देयः इति धारणा मर्यादा ॥ २४१ ॥

## अनिर्दशाहांगांसूतांवृषान्देवपशूंस्तथा ॥ सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥२४२॥

( १ ) **मेधातिथिः**। अत्रापवादः गोग्रहणान्मनुष्यादिषु दोषः वृषाःसत्कारैर्देवपशवोदेवयागार्थंयजमानेन कल्पिताः प्रत्यासन्नयागाअथवेष्टकादिकूटस्थापिताहरिहरादीनांप्रकृतयोवोच्यन्ते तेषांपशवस्तानुद्दिश्य केनचिदुत्सृष्टास्तदाह्यस्य देवानांपशूनांच स्वस्वामिसंबंधस्य संभवात् देवायतनमण्डनानांचैषधर्मः नतु तत्पालकैर्वाहदोहाद्यर्थंये देवगृहेषु धार्यन्ते यतः पालकाएव तेषांदेवानामर्थंविनियुञ्जते अतस्तत्र पालकाएवस्वामिनोऽतोयुक्तः स्वामिनामन्येषांयोधर्मः सतत्राऽऽयतनमण्डनस्थः परिगृहीताऽव्यवधानेन देवपशुर्शुद्धिमुत्पादयन्ति। वृषोत्सर्गादिविधानोत्सृष्टावृषाःकैश्चित्परिगृह्यन्ते ततः सपालाअथागृहीत्वा विपालाउभयेषामयंदण्डः ॥ २४२ ॥

( २ ) **सर्वज्ञनारायणः**। अनिर्दशाहां सूतां तस्याश्चारयितव्यत्वादुन्मत्ततया रक्षणाशक्तेश्च सपालत्वेपि न दोषः। वृषानुत्सृष्टान् देवपशून् देवसंबन्धिनश्छागादीन् विपालानप्येतान्नदण्डयेत् देवस्वग्रहणपर्यवसानात् ॥ २४२ ॥

( ३ ) **कुल्लूकः**। प्रसूतांगामनिर्गतदशाहांतथा च चक्रशूलांकितोत्सृष्टवृषान् हरिहरादिप्रतिमासंबन्धिपशून्पालसहितान्पालरहितान्वा सस्यभक्षणप्रवृत्तान्मनुरदण्ड्यानाह उत्सृष्टवृषाणामपि गर्भार्थगोकुले पालैर्द्धारणात्सपालत्वसंभवः ॥ २४२ ॥

( ४ ) **राघवानन्दः**। सपालेपि* प्राप्तदण्डाभावमाह अनिर्दशेति। वृषान् बह्वीषु गोषु रेतःसेकसमर्थान्। देवपशून् देवोद्देशेनोत्सृष्टान्। अत्र सदोपि न वाक्यभेदात् ॥ २४२ ॥

( ५ ) **नन्दनः**। अनिर्दशाहामनतीतदशाहां न दण्ड्यानदण्ड्यान् ॥ २४२ ॥

---

* सपालेपि=तत् ( न, श, राघ० २ )

( ६ ) **रामचन्द्रः** । दण्डस्यापवादमाह । गांअनिर्दशाहां सूतां प्रसूतां वृषान् वृषाउत्सृष्टपशवः तथा देवतोद्देशेन-त्यक्तान् सपालान्वा अपालान्वा नदण्ड्यान्मनुरब्रवीत् ॥ २४२ ॥

**क्षेत्रियस्यात्यये दण्डोभागाद्दशगुणोभवेत् ॥ ततोऽर्धदण्डोभृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥२४३॥**

( १ ) **मेधातिथिः** । क्षेत्रस्वामिनः स्वक्षेत्रेऽत्ययोऽतिक्रमोपराधोयदि भवेत्स्वकृतेऽकालेवापनंनिदानमयोग्यबीज-वापः स्वपशुभिर्भक्षणंगिरणंवा विदितफलके प्रायशइत्यादि तदा राज्ञोयावान्भागःआगच्छति तंदशगुणंदण्डनीयः अथ तस्याज्ञातमेतत्प्रयुक्तैर्भृत्यैः क्षेत्रजागर्यानियुक्तैर्वाऽपराद्धंतदार्धदण्डोभृत्यानामत्यये क्षेत्रकस्य दण्डइति संबन्धः । क्षेत्रप्रस-ङ्गादत्रेदमुक्तम् ॥ २४३ ॥

( २ ) **सर्वज्ञनारायणः** । क्षेत्राधिकृतस्यैव पशुभिः सस्यात्यये कृते राज्ञोग्राह्यत्वभागाद्दशगुणोऽन्योपि भागोदण्ड-त्वेन ग्राह्यः । क्षेत्रिकाज्ञाने पालमात्रदोषात्तन्नाशे ग्राह्यत्वभागात्पञ्चगुणोभागोभृत्यानांपालानांदण्डः । भृत्येनच क्षेत्रि-काय सदोदेयस्तुल्यन्यायत्वात् ॥ २४३ ॥

( ३ ) **कुल्लूकः** । क्षेत्रकर्षकस्यात्मपशुसस्यभक्षणेऽयथाकालंवपनादौ वाऽपराधे सति यावतोराजभागस्य तेन हानिः कृता ततोदशगुणदण्डः स्यात् । क्षेत्रिकाविदिते भृत्यानामुक्तापराधे क्षेत्रिकस्यैव दशगुणार्धदण्डः । क्षेत्रसस्यप्रसङ्गाच्चेद-मुक्तम् ॥ २४३ ॥

( ४ ) **राघवानन्दः** । क्षेत्रदण्डप्रसंगेन कालापराधादौ दण्डमाह क्षेत्रिकस्येति । अत्यये कृषियोग्यकालात्यये राजकीयभागस्य दशगुणः क्षेत्रिकस्य कृषिकस्य दण्डस्ततोर्धदण्डः पञ्चगुणः । क्षेत्रिकस्य क्षेत्रकर्मणः कृष्यादेः अज्ञानात् भृत्यानाम् ॥ २४३ ॥

( ५ ) **नन्दनः** । क्षेत्रिकस्याक्रमे दण्डमाह क्षेत्रिकस्येति । अत्ययेऽतिक्रमे क्षेत्रिकनिमित्ते सस्य घातइतियावत् । तस्य विनष्टाद्भागाद्दशगुणोदण्डोभवेत् । क्षेत्रस्याज्ञानादनुमत्या भृत्यानांसंबन्धिनामत्यये दशगुणादर्द्धदण्डः पञ्चगुणदण्डो-भवेत् ॥ २४३ ॥

( ६ ) **रामचन्द्रः** । क्षेत्रिकस्य अत्यये क्षेत्राधिपते रेव पशुभिः क्षेत्रनाशे कृते भागात् राजग्राह्यात् दशगुणःदण्डः भवेत् राज्ञा ग्रहीतव्यः । क्षेत्रिकस्यतुअज्ञानात् । भृत्यानां पालानां ततोर्धदशभागार्धदण्डः ॥ २४३ ॥

**एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ॥ स्वामिनांच पशूनांच पालानांच व्यतिक्रमे ॥ २४४ ॥**

( १ ) **मेधातिथिः** । सुबोधोयंश्लोकः ॥ २४४ ॥

( २ ) **सर्वज्ञनारायणः** । पशूनांपशुभिर्व्यतिक्रमे तत्स्वामिनां तत्पालानांच विधानं दण्डप्रकारविशेषम् ॥ २४४ ॥

( ३ ) **कुल्लूकः** । स्वामिनांपालानांचारक्षणादपराधे पशूनांच सस्यभक्षणरूपेव्यतिक्रमे धर्मप्रधानोभूपतिरेतत्पूर्वो-क्तंकर्त्तव्यमनुतिष्ठेत् ॥ २४४ ॥

( ४ ) **राघवानन्दः** । उपसंहरति एतदिति । व्यतिक्रमे सस्यभक्षणादौ ॥ २४४ ॥

( ५ ) **नन्दनः** । एतदुक्तंविधानम् ॥ २४४ ॥

( ६ ) **रामचन्द्रः** । धार्मिकःपृथिवीपतिः एतद्विधानं आतिष्ठेत् कुर्यात् ॥ २४४ ॥

---

( २४३ ) क्षेत्रिय=क्षेत्रिक ( क, ख, ग, घ, च )

**सीमांप्रतिसमुत्पन्ने विवादे ग्रामयोर्द्वयोः ॥ ज्येष्ठे मासि नयेत्सीमांसुप्रकाशेषु सेतुषु ॥ २४५ ॥**

( १ ) **मेधातिथिः** । सीमांप्रतिविवादे सीमानिमित्ते लक्षणेत्थंभूतेति प्रतेःकर्मवचनीयत्वात् द्वितीयानिमित्तमपि लक्षणमितिशक्यते वक्तुं सीमा मर्यादा ग्रामादीनांविभागःपरिमाणमियत्ता परिच्छेदनमिति यावत् ज्येष्ठे मासि नयेन्निर्णयः कर्तव्यः । मासविशेषनिर्णये हेतुमाह संप्रकाशेषु सेतवः सीमालिङ्गानि वक्ष्यमाणानि लोष्ठपाषाणविशेषजातीयसीमादाह्य-तृणगुंजादीनि प्रागस्मात्कालादनुस्थितेषु तृणेषु लोष्ठपाषाणयोरन्यस्याश्च भूमेर्न विशेषोलक्षितोयदा तत्र तृणानि न ज्ञायन्ते तदा सीमेति निश्चीयते । एवंवल्लीस्थानादिष्वपि माग्वसंताद्वासंतिके दाहविशेषोन लक्ष्यते हत्वाभिधानात्तस्मिन्देशे यदा व्ययते ततोमासात्कालहरणंकर्तुनादेयमन्यदातु लिङ्गाज्ञानार्थंकालापेक्षापि भवतीत्येतत्तात्पर्यंष्वेषु ग्रहणे ॥ २४५ ॥

( २ ) **सर्वज्ञनारायणः** । अथसीमा ॥ सीमांप्रतीति । नयेदुन्नयेत् । संप्रकाशेषु प्रकटेषु ॥ २४५ ॥

( ३ ) **कुल्लूकः** । द्वयोर्ग्रामयोर्मर्यादांप्रतिविप्रतिपत्तावुत्पन्नायां ज्येष्ठे मासि ग्रीष्मरवितापसंशुष्कतृणत्वात्प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमांनिश्चिनुयात् ॥ २४५ ॥

( ४ ) **राघवानन्दः** । सीमाविवादधर्मस्येत्युक्तंतन्निर्णयमाह सीमेत्यादिभिर्द्वाविंशत्या । तत्र सीमा चतुर्धा देशग्राम-क्षेत्रगृहभेदेन तत्र तदुचितकालमाह सीमामिति । सेतुषु भेदकेषु सुप्रकाशेषूक्तस्थले तृणादीनां शोषदाहाभ्याम् ॥ २४५ ॥

( ५ ) **नन्दनः** । सीमाविवादमाह सीमामिति नयेत्प्रापयेत् । ज्येष्ठमासे सीमानयनविधेः कारणंतस्मिन्कालेसीमाविवादनिर्णयहेतवः सेतवः सुप्रकाशाभवन्तीति ॥ २४५ ॥

( ६ ) **रामचन्द्रः** । ज्येष्ठे मासि सप्रकाशेषुसेतुषु सीमां ग्रामयोःसीमां नयेत्प्रापयेत् ॥ २४५ ॥

**सीमावृक्षांश्च कुर्वीतन्यग्रोधाश्वत्थकिंशुकान् ॥ शाल्मलीन्सालतालांश्च क्षीरिणश्चैव पादपान् ॥ २४६ ॥**

( १ ) **मेधातिथिः** । पादपान्वृक्षाःक्षीरिणोकोदुंबरप्रभृतयः । एवंहि चिरस्थायित्वात्सीमादेशएव रोपयितव्यान ग्राममध्ये सीमादेशादन्यत्र क्रियमाणान निश्चायकाः स्युः ॥ २४६ ॥

( २ ) **सर्वज्ञनारायणः** । यैरुहेतदभिधानाय सीमाचिन्हकरणप्रकारमाह सीमावृक्षानिति । सीमावृक्षान् सीमालिङ्गवृक्षान् ॥ २४६ ॥

( ३ ) **कुल्लूकः** । न्यग्रोधादीन्वृक्षान् क्षीरिणउदुम्बरादीन् चिरस्थायित्वात्सीमालिङ्गभूतान्कुर्वीत ॥ २४६ ॥

( ४ ) **राघवानन्दः** । सीमाज्ञप्त्यै तदुचितवृक्षानाह सीमेतिद्वाभ्याम् । न्यग्रोधोवटः । किंशुकः पलाशः । क्षीरिणः उदुम्बरादीन ॥ २४६ ॥

( ५ ) **नन्दनः** । किंशुकान्पलाशान् ॥ २२६ ॥

( ६ ) **रामचन्द्रः** । किंशुकान्पलाशान च पुनः क्षीरिणः पादपान्कुर्वीत ॥ २४६ ॥

**गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च ॥ शरान्कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥ २४७ ॥**

( १ ) **मेधातिथिः** । उपच्छन्नानि चान्यानि कारयेत् शरान्मुक्तकुब्जगुल्मांश्च तथा सीमा न नश्यति । संहतप्रकाण्डावीरुधोगुल्मानि वेणवआरग्वधादयः बहुत्वाच्च विविधग्रहणं वल्योव्रततयः । दीर्घांकुरास्तृणजातयः कृत्रिमा शाड्वलादि-

पिण्डिका कुब्ज्यकस्य गुल्मत्वात्पृथगुपदेशआदरार्थः । करीषंशुष्कगोमयं अङ्गाराअग्निदग्धाः काष्ठावयवाः पाषाणकठिना मृदः शर्करा कपालिकाशकलैकदेशः ॥ २४७ ॥

( २ ) **सर्वज्ञनारायणः** । गुल्मान् बीजपूराद्यान् । शमीं वृक्षविशेषम् । वल्लीं चिरस्थायिनीं करञ्जादिलताम् । स्थलंच मृदादिना । कुब्जकगुल्मान् कुब्जकषण्डान् ॥ २४७ ॥

( ३ ) **कुल्लूकः** । गुल्मान्प्रकाण्डरहितान्वेणूंश्च प्रचुरकण्टकत्वाल्पकण्टकत्वादिभेदेन नानाप्रकारान्सीमावृक्षान्वल्लीर्लताः स्थानानि कृत्रिमोन्नतभूभागान् शरान्कुब्जकगुल्मांश्च प्रचुराऽल्पभोगत्वेनादरार्थंपृथक्निर्दिष्टान्सीमालिङ्गभूतान्कुर्यात् । एवंकृते सीमा न नश्यति ॥ २४७ ॥

( ४ ) **राघवानन्दः** । गुल्मान् बहुमूललताकारान् शतमूल्यादीन् । वल्ली लता । स्थलानि कृत्रिमोच्छ्रितभूमयः अत्यादरार्थं पुनर्गुल्मांश्चेति ॥ २४७ ॥

( ६ ) **रामचन्द्रः** । गुल्मान् बीजपूरादीन् वल्ली करञ्जादिलता । स्थलानि सत्कूटादीनि ॥ २४७ ॥

## तडागान्युदपानानि वाप्यः प्रस्रवणानि च ॥ सीमासंधिषु कार्याणि देवतायतनानि च ॥२४८ ॥

( १ ) **मेधातिथिः** । महांभांसितडागानि वाप्यः पुष्करिण्यउदपानानि कूपप्रभृतीनि प्रस्रवणान्युदकस्यन्दाईषत्स्रवदुदकाभूप्रदेशाः । देवतायतनानि यक्षगृहकादीन्येतानि प्रकाशकानि नह्येतानि स्वल्पेनायासेन नाशयितुंशक्यन्ते नाश्यमानेषु च महान्प्रत्यवायोभवति । सर्वस्य चोदकार्थिनोदेवतादर्शनार्थिनश्च तत्र संनिधानात्सुज्ञातश्च साक्षिणांसीमासन्धिर्भवति अन्यानिप्रच्छन्नानिकरीषादीनि भवन्ति कारयेद्राजा नवग्रामसंनिवेशे कृते निर्णयं एवंसीमा न कदाचिन्नश्यति अन्यथा तंप्रदेशंकश्चित्कर्षणेन नाशयेत् ॥ २४८ ॥

( २ ) **सर्वज्ञनारायणः** । तडागानि पुष्करिण्यः । उदपानानि कूपाः । वाप्यः क्षुद्रपुष्करिण्यः । प्रस्रवणानि बृहत्खातानि ॥ २४८ ॥

( ३ ) **कुल्लूकः** । तडागकूपदीर्घिकाजलनिर्गममार्गदेवगृहाणि सीमारूपेषु ग्रामद्वयसंधिस्थानेषु कर्त्तव्यानि । एतेषु सीमानिर्णयाय विख्याप्य कृतेषूदकाद्यर्थिजनाअपि श्रुतिपरंपरया चिरकालेऽपि साक्षिणोभवन्ति ॥ २४८ ॥

( ४ ) **राघवानन्दः** । तस्यांतु महत्यां तड़ागाद्यपि कार्यमित्यादि तड़ागानीति । उदपानानि कूपाः । देवतायतनानि मण्डपादीनि । बहुजनप्रसिद्धता फलम् । तत्र देशसीम्नि तडागः कार्यः । ग्रामसीम्नि वापी । क्षेत्रसीम्नि कूपः । गृहसीमायां प्रस्रवणम् । जलसंचरणार्थमर्थतो व्यवस्था । तत्र ॥ पञ्चाशद्भिर्भवेत्कूपः शतहस्तातु वापिका । पुष्करिण्यस्तदर्धेतु यावद्धनुःशतद्वयम् ॥ तडागोष्टशतः प्रोक्तः सरस्तु चतुरस्रकम् इत्यधिकसंख्यावच्छेदार्थम् ॥ २४८ ॥

( ५ ) **नन्दनः** । कुल्यगुल्मान् ( इरण्डानात्तु )* वाप्यः दीर्घिकाः । प्रस्रवणानि ( केणीकळ )* देवतायतनानि दुर्गाविनायकादिस्थानानि ॥ २४८ ॥

( ६ ) **रामचन्द्रः** । प्रस्रवणानि बहुस्वामितानि ॥ २४८ ॥

## उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ॥ सीमाज्ञाने नृणांवीक्ष्य नित्यंलोके विपर्ययम् ॥ २४९ ॥

( २ ) **सर्वज्ञनारायणः** । उपच्छन्नानि भूम्यभ्यनिहितानि ॥ २४९ ॥

---

* तामिल भाषायां ।

( ३ ) **कुल्लूकः** । सीमानिर्णयेसर्वदाऽस्मिँल्लोके मनुष्याणांविभ्रममज्ञानंदृष्ट्वाऽभिहितव्यतिरिक्तानि गूढानि वक्ष्यमाणानि सीमाचिन्हानि कारयेत् ॥ २४९ ॥

( ४ ) **राघवानन्दः** । किंच प्रयत्नतोऽप्युद्धरणासमर्थानि स्थायीनि गूढान्यपि कुर्युरित्याह उपेति। उपच्छन्नानि गूढान्यपि कुर्युरिति ॥ २४९ ॥

( ५ ) **नन्दनः** । लिङ्गानि चिन्हकरणे प्रयोजनमुत्तरार्द्धेनोच्यते विपर्ययंविसंवादंवीक्ष्य विगणय्य तत्परिहारार्थं कारयेदिति ॥ २४९ ॥

( ६ ) **रामचन्द्रः** । उपच्छन्नानि मृत्कूटवेष्टितानि लोके नित्यं विपर्ययं अन्यत्वं वक्ष्य सीमालिङ्गानि कारयेत् ॥ २४९ ॥

**अश्मनोऽस्थीनि गोवालांस्तुषान्भस्मकपालिकाः ॥ करीषमिष्टकांगारांश्छर्करावालुकास्तथा ॥ २५० ॥**

( २ ) **सर्वज्ञनारायणः** । कपालिकाघटादिकर्परान् । शर्कराग्रन्थिष्टकाः ॥ २५० ॥

( ३ ) **कुल्लूकः** । प्रस्तरास्थिगोवालतुषभस्मकर्पटिकाशुष्कगोमयपक्वेष्टकाऽङ्गारपाषाणकर्परसिकताअन्यान्यप्येवंप्रकाराणि कालाञ्जनकार्पासाऽस्थिप्रभृतीनि यानि चिरकालेनापि भूमिरात्मसान्नकरोति तानि ग्रामयोः संधिषु सीमायां प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेदिति बृहस्पतिवचनात् । स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा प्रच्छन्नानि भूमौ निखाय धारयेत् ॥ २५० ॥ २५१ ॥

( ४ ) **राघवानन्दः** । उपच्छन्नानीत्यस्य विवरणं अश्मनइतिद्वाभ्याम् । करीषं शुष्कगोमयम् । शर्कराः पाषाणकणिकाः ॥ २५० ॥

( ५ ) **नन्दनः** । तान्येवच्छिन्नानि चिन्हान्याह अश्मानोस्थीनीति ॥ २५० ॥

**यानि चैवंप्रकाराणि कालाद्भूमिर्नभक्षयेत् ॥ तानि संधिषु सीमायामप्रकाशानि कारयेत्॥२५१॥**

( १ ) **मेधातिथिः** । गुल्मादीनामुपदेशः प्रदर्शनार्थोन परिसंख्यार्थः खदिरसारकालाञ्जनाद्यानि शर्करा हि गुल्मादिकैवंप्रकारता अतआह कालाद्भूमिर्न भक्षयेत् भूमेर्भक्षणमुपमया स्वरूपोपादानं यथा भक्षितंभेदेन नोपलभ्यते तद्वद्भूमिसादादपत्रमिव तादृशंकुर्यात् ॥ २५१ ॥

( ४ ) **राघवानन्दः** । सर्वत्रहेतुः कालादित्यादिः ॥ २५१ ॥

( ६ ) **रामचन्द्रः** । एवं यानि प्रकाराणि भूमिर्नकालान्तरे भक्षयेत् तानि सीमायासन्धिषु अप्रकाशानि कारयेत् ॥ २५१ ॥

**एतैर्लिङ्गैर्नयेत्सीमांराजा विवदमानयोः ॥ पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥ २५२ ॥**

( १ ) **मेधातिथिः** । उभयोर्ग्रामयोःशून्यात्तल्लिङ्गैर्निर्णयः वसतः पूर्वभुक्त्या सततमविछिन्नयाऽस्मर्यमाणावधिकया नहि त्रिपुरुषभोगेन सह्यत्र प्रतिषिद्धप्रामाण्यआधिःसीमेत्यत्र संभवति हि तत्रोपेक्षा बहुसाधारण्यात्सीमायाः यत्तु तत्र सीमशब्दंपठन्ति तेषांभुक्तेःसिद्धमेव प्रामाण्यं लिङ्गानांप्रामाण्यस्योक्तत्वात्प्रमाणान्तरनिवृत्तिराशङ्क्यतेति । पुनः कोयमुद

कागमः प्रामाण्येनोच्यते यथान्यानिलिङ्गानि नवसंनिवेशे क्रियन्ते तद्वदेवोदकप्रवाहोपि कर्तव्यः । अथवा ययोर्ग्रामयोः प्रदेशान्तरे सएवोदकागमोविभागहेतुःप्रदेशान्तरेचविप्रतिपत्तिस्तत्र सएव प्रमाणं अथवा महाग्रामविषयमेतत् नद्याअपरए-कोवा वारएकग्रामस्तत्र न पारवारिणोवक्तव्यं अस्मदीया भूमिरत्रापि विद्यतइति यदि नामान्यतरशून्यत्वादतिक्रम्य नद्यातुस्तमपि तथापि न भोगः प्रमाणंविभागः हेतुः स्वल्पेऽपहारे ॥ २५२ ॥

( २ ) **सर्वज्ञनारायणः** । उदकस्यागमेन यत्र ग्रामद्वयोदकमूर्छति तेनेत्यर्थः ॥ २५२ ॥

( ३ ) **कुल्लूकः** । विवदमानयोर्ग्रामयोः प्रागुक्तैरेतैरुक्तचिन्हैराजा सीमामुन्नयेत् वसतोः पुनरविच्छिन्नया भुक्त्या सीमानिर्णयोनतु त्रिपुरुषादिकतया तस्याधिः सीमेति पर्युदस्तत्वात् । ग्रामद्वयसंधिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमांनिश्चिनुयात् ॥ २५२ ॥

( ४ ) **राघवानन्दः** । सीमानिर्णयः प्रायशोराजकृत्यइत्याह एतैरिति । पूर्वभुक्त्याऽनवच्छिन्नभुक्त्या । उदकस्यागमने न ग्रामद्वयसंधिस्थनद्यादिप्रवाहेण ॥ २५२ ॥

( ५ ) **नन्दनः** । एतैरुक्तैर्लिङ्गाभावेपूर्वभुक्त्योदकस्यागमेनोदकस्यागमनमार्गेण ॥ २५२ ॥

( ६ ) **रामचन्द्रः** । एतैर्लिङ्गैः राजा सीमां नयेत् निर्द्धारयेत् च पुनः उदकस्यागमेन निम्नजलप्रवाहमार्गेण सीमा नेया ॥ २५२ ॥

**यदिसंशयएवस्याल्लिङ्गानामपि दर्शने ॥ साक्षिप्रत्ययएव स्यात्सीमावादविनिर्णयः ॥ २५३ ॥**

( १ ) **मेधातिथिः** । कथंपुनर्लिङ्गेषु सत्सु संशयः यानि तावत्प्रछन्नानि तानि यदि केनचित्कथंचिदागम्य प्रछन्नमन्यत्र नीयेरन्नत्रैव निश्चयः स्यात् येऽपि प्रकाश्यान्यग्रोधादयस्तेऽपि न सीमायामेव रोहन्त्यन्यत्रापि जायन्तेऽतः संदेहआभासत्वात् यत्रपुनरियंसंभावना नास्ति तत्र प्रमाणमेवलिङ्गानि साक्षिप्रत्ययः साक्षिहेतुकः साक्षिणः प्रत्ययोयत्रेति विनिश्चये तत्त्वाधिगमलिङ्गेवा सीमाविवादसाक्ष्यहेतुकोनिर्णयइति तात्पर्यम् ॥ २५३ ॥

( २ ) **सर्वज्ञनारायणः** । लिङ्गानां लिङ्गतयोक्तानां वृक्षादीनां संशयएव वृक्षाद्यन्तरदर्शनादिना । साक्षिप्रत्ययः साक्षिकारणकः ॥ २५३ ॥

( ३ ) **कुल्लूकः** । यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेऽपि प्रच्छन्नांगारतुषादिकुम्भाअमी स्थानान्तरंनीत्वा निखातानायंसीमा तरुर्न्यग्रोधः सनष्टइत्यादि समस्तएव यदि संदेहः स्यात्तदा साक्षिप्रमाणएव सीमाविवादनिश्चयोभवेत् ॥ २५३ ॥

( ४ ) **राघवानन्दः** । एवंकृतेपि संशये सति विधानान्तरमाह यदीति । लिङ्गानां वृक्षादीनां आधुनिकाएते स्थानभ्रष्टाश्चेतिसंशये साक्षिप्रत्ययः साक्षिप्रमाणकः सीमावादनिर्णयः सीम्नि योवादो विप्रतिपत्तिः तस्य निर्णयोयस्मात् ॥२५३॥

( ५ ) **नन्दनः** । लिङ्गानांवृक्षाद्युदकागमान्तानांसाक्षिप्रत्ययः साक्षिहेतुकः ॥ २५३ ॥

**ग्रामीयककुलानांच समक्षंसीम्नि साक्षिणः ॥ प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥२५४॥**

( १ ) **मेधातिथिः**। यद्यप्यसंख्यातपुरुषकोग्रामस्तथापि द्वौ विवादिनौ द्वयोर्ग्रामयोर्भवतस्तयोः समक्षमन्येषांच ग्रामेयककुलानांच ग्रामणिपुरुषसमूहानांसमक्षंसीम्नि साक्षिणः प्रष्टव्याः साक्षिप्रश्नकाले सर्वैर्ग्रामीणैर्व्यवहारएकैरपि संनिहितैर्भवितव्यंनार्थिमत्यार्थिनोरन्यतरोवक्तुंलभते एवंविसृष्टार्थे विवादे किमेते संनिधीयन्ते अथवा येऽन्ये सामन्तेभ्योग्रामेभ्यः

( २५४ ) ग्रामीयक=ग्रामेयक ( ट, ठ, ड, त, थ, )

केचिद्वृद्धतमाः साक्ष्ये समुद्दिष्टास्तद्ग्रामीणैरन्यैः संनिहितैर्भवितव्यंयतस्तैर्वृद्धेभ्यः श्रुतंभवति तत्समक्षंपृच्छयमानान विपर्यन्ति वृद्धाः सीमालिङ्गानि यत्र लिङ्गान्युभयथा तत्र वृद्धेभ्यस्तानि निश्चित्य सीम्न्येवसाक्ष्यंपृच्छते कात्र सीमेति ॥ २५४ ॥

( २ ) **सर्वज्ञनारायणः** । ग्रामेयककुलानां ग्रामीणसमूहानां । विरुद्धानेकसीमलिङ्गदर्शनेन सीमलिङ्गानि प्रष्टव्याः कान्यत्र सीमालिङ्गानीति । विवादिनोः समक्षमित्यन्वयः ॥ २५४ ॥

( ३ ) **कुल्लूकः** । ग्रामिकजनसमूहानांग्रामद्वयस्थनियुक्तयोर्वादिप्रतिवादिनोश्च समक्षंसीमाविषये सीमालिङ्गसंदेहे लिङ्गानि साक्षिणः प्रष्टव्याः ॥ २५४ ॥

( ४ ) **राघवानन्दः** । साक्षिप्रश्नोचितदेशमाह ग्रामेति । ग्रामेयककुलानां ग्रामीणजनसमूहानां कुलानां विप्राणांचेतिवा तयोः सीमद्वयसंबन्धिनोः समक्षं प्रष्टव्याइत्यन्वयः ॥ २५४ ॥

( ५ ) **नन्दनः** । ग्रामीयकुलानांग्रामवासिनांकुलानां तयोर्विवादिनोश्च समक्षम् ॥ २५४ ॥

**ते पृष्टास्तु यथा ब्रूयुः समस्ता सीम्नि निश्चयम् ॥ निबध्नीयात्तथा सीमांसर्वांस्तांश्चैव नामतः २५५ ॥**

( १ ) **मेधातिथिः** । ते साक्षिणोयथा यादृशंनिश्चयंब्रूयुः समस्ताः सर्वएव न पुनर्वाक्यभेदोन्याम्योद्वैधे च बहूनामिति । निबध्नीयात्तत्र साक्षिणश्च नामविभागे साक्षिमात्रेण ॥ २५५ ॥

( २ ) **सर्वज्ञनारायणः** । समस्तानतु व्यस्ताः । तांश्च निबन्धीयादेतत्साक्षिकैषासीमेति ॥ २५५ ॥

( ३ ) **कुल्लूकः** । ते पृष्टाः साक्षिणःसमस्तानैद्वेधेन सीमाविषयेणयेन प्रकारेण निश्चयंब्रूयूस्तेन प्रकारेणाविस्मरणार्थंपत्रे सीमांलिखेत् तांश्च सर्वानेव साक्षिणोनामविभागतोलिखेत् ॥ २५५ ॥

( ४ ) **राघवानन्दः** । साक्षिप्रश्नानु पुनः सीमाः कार्याइत्याह तइति । समस्तामिलिताः सर्वैकमत्येनेति यावत् । तथैव सीमाताम्रपट्टेषु लेख्येत्याह । निबध्नीयात् नामतः साक्षिणांनामभिःसह ॥ २५५ ॥

( ५ ) **नन्दनः** । निबध्नीयाच्छिलादिषु लिखेदमुनैवमुक्तममुनैवमुक्तमिति । सर्वांस्तांश्च नामतोनिबध्नीयात् ॥ २५५ ॥

( ६ ) **रामचन्द्रः** । नामतः नामग्रहणात् । समन्ताद्भवाः सामन्ताः ॥ २५५ ॥

**शिरोभिस्तेगृहीत्वोर्वीस्रग्विणोरक्तवाससः ॥ सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसम् ॥ २५६ ॥**

( १ ) **मेधातिथिः** । मूर्ध्नोर्वींपृथ्वींमृल्लोष्टकान्गृहीत्वा साक्षिणः स्रग्विणोयथासंभवंमाल्यधरारक्तवर्णकुसुमधरारक्तवाससोलोहिताच्छादनायद्यस्य शुक्लस्य वर्णान्तरापादनेऽपि रागेवर्ततते भूयांस्तु लोहितप्रयोगीरक्तोगौर्लोहितइति भयभञ्जनार्थंचैतत् लोहितवाससश्च सशूकाभवन्ति । यदस्माकंसुकृतंकिंचिदर्जितमस्ति तन्निष्फलमस्त्विति वाच्यं स्वैःस्वैरिति लिप्सया विशेषनामाभियुक्तंतंकथयेयुस्तत्कस्यादानंतीर्थस्नानंचेत्यादि समंजसंक्रियाविशेषणं सत्यादनपेतऋजुर्धार्मिकोयोमार्गस्तेन नयेयुः । समंजसमृजुस्पष्टमित्येकोर्थःसत्यव्यवहारश्च स्पष्टइन्युक्तंसमंजसमिति ॥ २५६ ॥

( २ ) **सर्वज्ञनारायणः** । उर्वीं मृत्तिकाखण्डम् । स्रग्विणोरक्तस्रजः । एतच्च वास्तुपुरुषरूपमिति तद्रूपधारिभिः सीमानयनमुक्तम् । समंजसं यथार्थम् ॥ २५६ ॥

---

( २५५ ) समस्ताः–सामन्ता ( ख, )

( ३ ) **कुल्लूकः** । ते साक्षिणइति सामान्यश्रवणेऽपि रक्तस्रग्वाससः सीमांनयेयुरिति याज्ञवल्क्यवचनाद्रक्तपुष्पमाला धारिणोलोहितवाससोमस्तके मृल्लोष्ठानि गृहीत्वा यदस्माकंसुकृतंतन्निष्फलंस्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तः तांसीमांयथाशक्तिनिर्णयेयुः ॥ २५६ ॥

( ४ ) **राघवानन्दः** । साक्ष्यदानप्रकारमाह शिरोभिरिति । शिरोभिर्भूलोष्टादिति गृहीत्वा स्रग्विणः रक्तपुष्पस्रग्विणः रक्तवसनाः सीमां नयेयुः क्षितिधारिणइतियाज्ञवल्क्योक्तेः । सुकृतैः यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवंप्रकारैरिति केचित् । वस्तुतस्तु ॥ सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ॥ गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरित्यत्रोक्तैः अन्यथा स्वैस्वैरित्यनुपपत्तिः । समञ्जसं सत्यम् ॥ २५६ ॥

( ५ ) **नन्दनः** । उर्वीमृदम् ॥ २५६ ॥

( ६ ) **रामचन्द्रः** । स्वैःस्वैःशपथैः ॥ सत्येन शापयेत् विप्रंक्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ते शिरोभिः ऊर्वीं गृहीत्वा मूर्धारोपितक्षितिखण्डाः स्रग्विणस्तेसमंजसंयथार्थं नयेयुः सीमांप्रापयेयुः ॥ २५६ ॥

**यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ॥ विपरीतंनयन्तस्तु दाप्याः स्युर्द्विशतंदमम् ॥ २५७ ॥**

( १ ) **मेधातिथिः** । प्रमाणान्तरलिङ्गेभ्योन्यथासंभवभ्द्यः अन्ययितरपुरुषेभ्योमिथ्यात्वे बध्यते प्रत्येकंद्विशतोदण्ड एकैकस्य साक्षित्वात्साक्षिणांचदण्डयत्वात् नहि व्यासज्जवदन्ति साक्षात्सत्यप्रधानाः साक्षिणः सत्यसाक्षिणः पूयन्ते अनृताभिधानेन पापेन न संबध्यन्तइति । यथोक्तेन याथातथ्येन नहि शब्दात्मकस्य वचनस्यात्रावसरः प्रमाणान्तरसंवादमात्रमनेन लक्ष्यते अथवा यथाशास्त्रमुक्तेन सत्येनेति यावत् शास्त्रे हि सत्यंवक्तव्यमित्येवमुक्तमतोयथोक्तेन सत्येनेत्युक्तंभवति ॥ २५७ ॥

( २ ) **सर्वज्ञनारायणः** । विपरीतंनयन्तः पश्चाल्लिङ्गान्तरेण समाहान्तर्बन्धुमरणादिनाच तद्विपर्ययनिश्चये द्विशतंपणान् प्रत्येकम् ॥ २५७ ॥

( ३ ) **कुल्लूकः** । ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन विधानेन निर्णयस्थानिष्पापाभवन्ति अतथ्येन तु निश्चिन्वन्तः प्रत्येकंपणशतद्वयंदण्डंदाप्याभवेयुः ॥ २५७ ॥

( ४ ) **राघवानन्दः** । तत्रैवार्थवादं प्रदर्शयन्विपरीते दण्डमाह यथेति । ताम्रिकंपणशतद्वयं प्रत्येकमितिशेषः ॥ २५७ ॥

( ५ ) **नन्दनः** । यथोक्तेन मार्गेण । सेतुंसीमांनयन्तः स्थापयन्तस्त्रिपक्षादर्वाग्रोगाद्यभावे पूयन्ते । विपरीतंनयन्तस्त्रिपक्षादर्वाग्रोगादिदर्शनात् ॥ २५७ ॥

( ६ ) **रामचन्द्रः** । विपरीतंनयन्तः अनयेन प्रापयन्तः द्विशतंदमं दण्डंदाप्याःस्युः ॥ २५७ ॥

**साक्ष्यभावे तु चत्वारोग्रामाः सामन्तवासिनः ॥ सीमाविनिर्णयंकुर्युः प्रयताराजसन्निधौ ॥ २५८ ॥**

( १ ) **मेधातिथिः** । ग्रामसामन्ताः सीमान्तरवासिनः प्रष्टव्याः तेषांवचने निश्चयंकुर्यात् प्रयता साक्षिधर्मेण शास्त्रान्तरेण । राजसंनिधाविति श्लोकपूरणं नतुसामन्ताःस्वेच्छया राजवन्निश्चिन्वन्ति ॥ २५८ ॥

---

( २५८ ) ग्रामाः सामन्तवासिनः=ग्रामसीमान्तवासिनः ( ग, ण, )

(२) सर्वज्ञनारायणः। सीमान्तवासिनोमध्यभूतविवादविषयग्रामयोःपर्यन्तेषु निरन्तरवासिनः। प्रयातानियमिताः। साक्ष्युक्तप्रकारेणैव ॥ २५८ ॥

(३) कुल्लूकः। ग्रामद्वयसंबन्धिसीमाविवादसाक्ष्यभावे चतुर्दिशंसमन्तभवाः सामन्तास्तद्वासिनश्चत्वारोग्रामवासिनः साक्षिधर्मेण राजसमक्षंसीमानिर्णयंकुर्युः ॥ २५८ ॥

(४) राघवानन्दः। साक्ष्यभावे प्रकारान्तरमाह साक्ष्यभावइति ग्रामाः ग्रामस्थाः सामन्तवासिनः समन्तएव सामन्तः तत्र वासिनश्चतुर्दिशंवर्तमानाः ॥ २५८ ॥

(५) नन्दनः। समन्ताद्भवोदेवःसामन्तः ॥ २५८ ॥

**सामन्तानामभावे तु मौलानांसीम्नि साक्षिणाम् ॥ इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥२५९॥**

(१) मेधातिथिः। सामन्तानांमौलानामिति विशेषणविशेष्यभावस्तुत्यर्थः ग्रामप्रविष्टास्तत्काले भवाउत्पत्तिसहभुवोमौलाउच्यन्ते ते च सामन्तानित्यानित्यसंनिहितत्वात्तेषामभ्यभावः कथंचिदुच्छन्नत्वात्तदास्तमेति तदेमानपि वक्ष्यमाणान्पृच्छेत् अथवा मौलाअनुभाविनः सामन्ताव्याख्याताव्यवहर्तव्याः मौलानांपूर्वोक्तानांसद्भावे सामन्ताः प्रमाणंतदभावेवनगोचरान्विनियुञ्जीत निपुणतः पृच्छेत् ॥ २५९ ॥

(२) सर्वज्ञनारायणः। सामन्तानामभावे तथा मौलानां मूलभूतानां साक्षिणाममावे। इमान् वक्ष्यमाणान्। एतच्च वनसमीपग्रामविषयम् ॥ २५९ ॥

(३) कुल्लूकः। साक्षिधर्मेण राजसमक्षमनुभवेन निर्णयमकुर्वतांग्रामवासिनांग्रामनिर्माणकालादारभ्य मौलानांपुरुषक्रमेण तद्ग्रामस्थानांसीमासाक्षिणामभावइमान्वक्ष्यमाणान्सन्निहितवनचारिणः पृच्छेत् ॥ २५९ ॥

(४) राघवानन्दः। पूर्वोक्तानामभावे साक्ष्यन्तरमाह सामन्तानामिति। मौलानां ग्रामारम्भप्रभृतिपुत्रपौत्रतया तत्रैव कृतवसतीनां सामन्तानां मौलेत्यादिविशेषणद्वयम्। इमान्वक्ष्यमाणान्। जलारण्यवासिनः ॥ २५९ ॥

(५) नन्दनः। मौलानांप्रोक्तानांतदानीन्तनानां वा च्छेदरहितानामिमान्वक्ष्यमाणाननुयुञ्जीत पृच्छेत् ॥ २५९ ॥

(६) रामचन्द्रः। सामन्तानांअभावे तु मौलाःमूले भवामौलाः तेषां सीम्नि साक्षिणांअभावेइमान् वनगोचरान् अपि साक्ष्येनियुञ्जीत पृच्छेत् ॥ २५९ ॥

**व्याधांश्छाकुनिकान्गोपान्कैवर्तान्मूलखानकान् ॥ व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ॥ २६० ॥**

(१) मेधातिथिः। एते हि ग्रामवासिनस्तत्र वनानि भ्राम्यन्ति ग्राममध्ये नगछन्तः कदाचित्तद्वृत्तंविद्युस्तेहि तेन पथा गछन्तोविवादास्पदंप्रदेशंपूर्वकांश्चित्पुरुषान्कृषतोदृष्ट्वा पृच्छेयुः कोयंग्रामोयोभवद्भिः कृष्यतइति एवमादिना संभवति पूर्वानुभवः व्याधामृगया जीविनस्तेषामपि वनाद्भ्रष्टमृगमनुधावतांभवति ग्रामसंबन्धः एवंशाकुनिकाः शकुनिबन्धजीविनस्तदन्वेषणे ये सर्वान्ग्रामानागोचरयन्ति गोपानांगवांतृणविशेषज्ञानाय तत्र तत्र परिभ्राम्यन्ति कैवर्तादाशास्तडागखननादिजीविनस्तत्र तत्र गच्छन्ति क्वास्माकीनंकर्मोपयुज्यते मूलंवृक्षादेः खनयन्ति स्थूलकाशादेः व्यालग्रहाः सर्पग्राहिणः

(२५९) वनगोचरान्=धर्मगोचरान् (च)

जीविकार्थंतेपि सर्पास्तन्तंप्रदेशमन्विच्छन्त्यतः तेषामपि पारिग्रामिकैर्बहुभिः संबन्धः उञ्छवृत्तयोपि दरिद्राअनेकग्रामपर्यटनेन यात्रामात्रंनिर्वर्तयन्ति अन्यांश्च फलकुसुमेन्धनार्थिनः ॥ २६० ॥

( २ ) **सर्वज्ञनारायणः**। व्याधान् मृगवेधिनः। शाकुनिकाः शकुनघातजीविनः। गोपान् गोपालान् प्रायोये वनगताएव। मूलखानकान् मूलमुत्पाट्य विक्रीय जीवतः। उञ्छवृत्तीन् शिलोञ्छवृत्त्या वर्तमानान्द्विजान् तेषांप्रायः क्षेत्रवनगोचरत्वात्। अन्यांश्च शबरादीन् ॥ २६० ॥

( ३ ) **कुल्लूकः**। लुब्धकान्पक्षिवधजीविनः गोपालान्मत्स्यजीविनोमूलोत्पाटनजीविनः सर्पग्राहिणः शिलोञ्छवृत्तीनन्यांश्च फलपुष्पेन्धनाद्यर्थवनव्यवहारिणः पृच्छेत्। एतेहि स्वप्रयोजनार्थं तेन ग्रामेण सर्वदा वनंगच्छेयुस्तद्ग्रामसीमाभिज्ञाः संभवन्ति ॥ २६० ॥

( ४ ) **राघवानन्दः**। तानवाहे व्याधानिति। व्याधान् लुब्धकान्। मूलखानकान् सूरणादिमूलोत्पाटनेन जीविनः। व्यालग्राहान् सर्पान्वेषिणः। एतेहि मूलमृणालाद्यर्थं ग्रामाद्ग्रामं संचरन्तस्तद्ग्रामस्थैर्निवारिताः सीमां जानन्तीतिभावः। अन्यान्वनचारिणः फलाद्यर्थमिति केचित्। वस्तुतस्तु वनमत्र जलं सीमावधितडागादि जलचारिणः शम्बूकजलपुष्पाद्यर्थम् ॥ २६० ॥

( ६ ) **रामचन्द्रः**। शाकुनिकान् पक्षिवधजीविनः। उञ्छवृत्तीन् अन्यांश्च शबरादीन् ॥ २६० ॥

**ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ॥ तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः॥२६१॥**

( १ ) **मेधातिथिः**। तेधर्मेणपृष्टाइति योजना सीमाश्च ताः सन्धयश्च सीमासन्धयः ग्रामद्वयसंयोगः सन्धिः सच सीमैव लक्षणंज्ञापकम् ॥ २६१ ॥

( २ ) **सर्वज्ञनारायणः**। इदमेवलक्षणं युक्तं नेदमिति यथा ब्रूयुः ॥ २६१ ॥

( ३ ) **कुल्लूकः**। ते व्याधादयःपृष्टाः सीमारूपेषु ग्रामसंधिषु येन प्रकारेण चिन्हंब्रूयुस्तत्तेनैव प्रकारेण राजा द्वयोर्ग्रामयोः सीमांव्यवस्थापयेत् ॥ २६१ ॥

( ४ ) **राघवानन्दः**। उक्तार्थवादोयं तइति ॥ २६१ ॥

( ६ ) **रामचन्द्रः**। यद्वयोःमध्ये स्थापयेत ॥ २६१ ॥

**क्षेत्रकूपतडागानामारामस्य गृहस्य च ॥ सामन्तप्रत्ययोज्ञेयः सीमासेतुविनिर्णयः ॥ २६२ ॥**

( १ ) **मेधातिथिः**। आरामउद्यानभूमिः शाकवाटश्च सामन्तप्रमाणकत्वंनिश्चयः व्याधादिनिवृत्यर्थमिदमुच्यते सीमासेतुः सीमाबन्धः सीमाविभावनार्थयआबध्यते स्थाप्यते ॥ २६२ ॥

( २ ) **सर्वज्ञनारायणः**। कूपस्य सीमाकूपस्य परितस्त्याज्योयोदेशस्तस्य सीमा। एवंतडागादौ। सामन्तप्रत्ययः सामन्ताः समन्तवासिनः तद्धेतुकः सीमानिर्णयइतिशेषः। तथा सीमासुयेसेतवस्तेषामपि सीमानिर्णये कर्तव्ये ॥ २६२ ॥

( ३ ) **कुल्लूकः**। एकग्रामेऽपि क्षेत्रकूपतडागोद्यानगृहाणांसीमासेतुविवादे समस्तदेशवासिसाक्षिप्रमाणकएव। मर्यादाचिन्हनिश्चयोविज्ञेयोन व्याधादिप्रमाणकः ॥ २६२ ॥

( ४ ) **राघवानन्दः**। ग्रामसीमायामुक्तनिर्णयप्रकारमन्यत्रातिदिशति क्षेत्रेति। तडागाद्युक्तलक्षणम्। आरामः

---

*परकीय=पूर्वेभ्यःसामन्तानामधिकोदण्डः पृथक्पृथगित्यनुवादः उक्त्वान्यायस्य क्षेत्रादिप्रातिवेश्याअवश्यंज्ञातारोभवन्ति एषांदण्डमहत्त्वं सामन्तानान्तुपरकीय ( आआ )

उपवनम् । सामन्तप्रत्ययः समन्ततोवर्त्मप्रद[र्श]नेनाहरन्पञ्चशतान्प्रतिदण्ड्यः सइत्यन्वयएवं मानानां ज्ञानपुरःसरं वाक्यमेव प्रमाणमित्यर्थः । न तु व्याधादीनां तत्र युक्त्यन्तरापेक्षणात् ॥ २६२ ॥

( ५ ) **नन्दनः**। एवंग्रामयोः सीमाविनिर्णयमुक्त्वाक्षेत्रादीनामाह क्षेत्रकूपतटानामिति। सामन्ताः समन्ताद्वासिनः॥२६२॥

( ६ ) **रामचन्द्रः** । क्षेत्रादि सीमासेत्विति विनिश्चयः । सामन्तप्रत्ययोज्ञेयः सामन्तादिभिर्यदुक्तंतत्प्रायोज्ञेयः॥२६२॥

**सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतांनृणाम् ॥ सर्वे पृथक्पृथग्दण्ड्याराज्ञा मध्यमसाहसम्॥२६३॥**

( १ ) **मेधातिथिः** । परकीयसीमावेदनंनावश्यमिति द्विशतोदमोनुवर्त्यः तेन ग्रामसीमायां द्रष्टृणांसामन्तानांच विशतःये तु सामन्तशब्दमाश्रित्य ग्रामक्षेत्रादिसीमयोः सामन्तत्वात्तुल्यदण्डत्वमाहुस्ते न्यायविरोधादुपेक्षणीयाः ॥ २६३ ॥

( २ ) **सर्वज्ञनारायणः** । सेतावित्युपलक्षणं क्षेत्रादावपि ॥ २६३ ॥

( ३ ) **कुल्लूकः** । सीमाचिन्हनिमित्तंविवदमानानांमनुष्याणांयदि सामन्तादेशवासिनोमिथ्याब्रूयुस्तदा ते सर्वे प्रत्येकं-राज्ञा मध्यमसाहसंदण्डनीयाः एवंचासामन्तरूपाणांपूर्वोक्तद्विशतोदमोज्ञेयः ॥ २६३ ॥

( ४ ) **राघवानन्दः** । तेषांमिथ्याभाषित्वे दण्डमाह सामन्ताइति । मध्यमसाहसं पणानां पञ्चशतानि । सेतावित्युपलक्षणं कूपादिचतुर्णाम् । सेतुर्मर्यादा सीमेतिपर्यायाः ॥ २६३ ॥

( ५ ) **नन्दनः** । सेतौ सीमाविषये ॥ २६३ ॥

( ६ ) **रामचन्द्रः** । अन्यथा ब्रूयुःते सर्वे राज्ञा मध्यमसाहसंदण्ड्याः ॥ २६३ ॥

**गृहंतडागमारामंक्षेत्रंवाभीषया हरन् ॥ शतानि पञ्चदण्ड्यः स्यादज्ञानाद्विशतोदमः ॥ २६४ ॥**

( १ ) **मेधातिथिः** । क्षेत्रादि प्रसङ्गादिदमुच्यते सीमाग्रहणनिमित्तोपलक्षणार्थं अस्यैवैतन्निश्चितमित्येवंजानतोहरतः पञ्चशतोदण्डः मध्यमसाहसे प्रकृते पञ्चशतग्रहणंनिमित्तभेदे न्यूनाधिकदण्डार्थंपूर्वत्र वा संख्यामेव विवक्षितामन्यन्ते तेन व्यवहारंलेखयामि चौरैर्दोषयामीति भयप्रदर्शनेन हरति तस्यां दण्डोनिमित्तान्तरानुकल्पः ॥ २६४ ॥

( २ ) **सर्वज्ञनारायणः** । भीषया भयोपदर्शनेन हरन् तत्सीमांलङ्घयन् । भीषयेति ज्ञानपूर्वकत्वोपलक्षणम् ॥२६४॥

( ३ ) **कुल्लूकः** । गृहतडागोद्यानक्षेत्राणामन्यतमंमारणंबन्धनादिभयकथनपूर्वमाक्रम्य हरणे पञ्चपणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरतोद्वि शतोदमः ॥ २६४ ॥

( ४ ) **राघवानन्दः** । गृहादीनां निर्णयप्रसंगेन तेषां हरणेपि दण्डमाह गृहमिति । भीषया भयप्रदर्शनेन । सचेद्विप्रःस्याद्दण्डार्होनवधार्हः एतदर्थम् । उपधाभिस्तु यः कश्चित्परद्रव्यंहरेन्नरइत्यत्र वधउक्तोत्र दण्डविशेषइतिभेदः ॥ २६४ ॥

( ६ ) **रामचन्द्रः** । गृहादिषु अन्यथा वदन् पञ्चशतानि दण्डयः ॥ २६४ ॥

**सीमायामविषह्यायां स्वयंराजैव धर्मवित् ॥ प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः ॥ २६५ ॥**

**[ ध्वजिनी मत्सिनी चैव निधानी भयवर्जिता । राजशासननीता च सीमा पञ्चविधा स्मृता॥१॥]‡**

( १ ) **मेधातिथिः** । अविषह्या निश्चेतुमशक्या लिङ्गसाक्ष्यभावात् राजैव स्वेच्छया भूमिंप्रदिशेद्द्द्यादियंवोभूमिरियं-

‡ ( ट, ठ, )

वइति धर्मवित्पक्षपातोनैवकस्य चित्कर्तव्यइति एतदाह उपकाराद्धेतोर्यया सीमया द्वावपि ग्रामौ समकरौ भवतः तेन यदि न्यूनापि कस्यचिद्भूमिःस्यात्क्षेत्रंचेत्सुगुणंबहूत्पत्तिकंतदपेक्षःप्रदेशः ल्यब्लोपेपंचमीउपकारमपेक्ष्य । अथवैकेषांप्रदिशे-दपरेषामनिश्चितामपहरेत् यदि विवादिमत्तांसीमांयावद्वक्तुंनशक्नुयादितरे च शक्तास्तदन्येभ्यःप्रदिशेत् एवमात्मनोबहूनांच ग्रामीणानामुपकृतंभवति ॥ २६५ ॥

( २ ) **सर्वज्ञनारायणः** । अविषह्यायां सर्वथा निर्णेतुमशक्यायाम् । प्रदिशेत् भूमिं उपकारात् तयायस्योपकारातिशयस्तस्मै ग्रामाय दद्यादित्यर्थः ॥ सीमानिर्णयः ॥ २६५ ॥

( ३ ) **कुल्लूकः** । लिङ्गसाक्ष्याद्यभावे सीमायां परिच्छेत्तुमशक्यायां राजैव धर्मज्ञः पक्षपातरहितोग्रामद्वयमध्यवर्तिनींविवादविषयांभूमिंयेषामेव ग्रामवासिनामुपकारातिशयोभवति तद्व्यतिरेकेण च महाननिर्वाहस्तेषामेव दद्यादिति शास्त्रव्यवस्था ॥ २६५ ॥

( ४ ) **राघवानन्दः** । उक्तोपायैर्यदा सीमायाअपरिच्छेद्यकर्तुमकर्तुमन्यथाकर्तुंसमर्थेन राज्ञैव तत्कर्तव्यं तस्य भूमित्वादित्याह सीमायामिति । अविषह्यायां विचारंसोढुमशक्यायाम् । तं धर्मं न विचालयेदित्युक्तेः । ननु स्वतन्त्रोराजा कथं प्रवर्तते तत्राह प्रदिशेदिति । विवादसमाप्तेस्तेषामहानुपकारःस्यात् । स्थितिः पुण्यंपरोपकारेणेतिशास्त्रमर्यादा ॥ २६५॥

( ६ ) **रामचन्द्रः** । सीमायांअविषह्यायां सर्वोपायैर्निश्चेतुमशक्यायां एतेषां स्वयं राजैव प्रदिशेत् निर्णीय प्रदद्यात् । योगीश्वरः । राजासीम्नःप्रवर्तिता ॥ २६५ ॥

**एषोऽखिलेनाभिहितोधर्मः सीमाविनिर्णये ॥ अतऊर्ध्वंप्रवक्ष्यामि वाक्पारुष्यविनिर्णयम् ॥२६६॥**

( १ ) **मेधातिथिः** । पूर्वोपसंहारसंक्षेपोपन्यासः श्लोकार्थेदण्डवाचिकइत्युक्त्वा क्रमभेदोलाघवाद्वाक्पारुष्यंस्यात्ततोदण्डव्यापारद्वन्द्वेचेतरेतरयोगाद्वलक्रमसमासार्थप्रतिपत्तेरेकैकस्योभयार्थःप्रतिपादनाद्दण्डशब्देन वार्थोप्युपात्तइति कःक्रमभेदः तथा च यथा यथासंख्यसूत्रारंभोमहाभाष्यकारेण समर्थितः एतदेव दर्शनमाश्रित्य संज्ञासमासनिर्देशादिति॥२६६॥

( २ ) **सर्वज्ञनारायणः** । एषइतिवाक्पारुष्यंपश्चादुक्तमपिलघुत्वादेवाभिधातुमतऊर्ध्वमिति ॥ २६६ ॥

( ३ ) **कुल्लूकः** । एषसीमानिश्चयेधर्मोनिःशेषेणोक्तः अतऊर्ध्ववाक्पारुष्यंवक्ष्यामि दण्डपारुष्याद्वाक्पारुष्यप्रवृत्तेः पूर्वमभिधानं अनुक्रमश्रुत्यान्तु पारुष्ये दण्डवाचिकइति दण्डशब्दस्याल्पस्वरत्वात्पूर्वनिर्देशः ॥ २६६ ॥

( ४ ) **राघवानन्दः** । सीमानिर्णयमुपसंहरन्पारुष्ये दण्डवाचिकइत्युक्तं तत्र वाक्पारुष्यनिर्णयं प्रतिजानीते एषइति ॥ २६६ ॥

( ५ ) **नन्दनः** । अथवाक्पारुष्यनिर्णयंप्रस्तौति एषोऽखिलेनेति । नचात्रोद्देशक्रमत्यागःशङ्क्यःदण्डवाचिके इत्यत्र दण्डशब्दप्राथम्यस्याल्पाच्तरत्वप्रयुक्तपूर्वनिबन्धिनत्वेनार्थक्रमस्याविवक्षितत्वादिति ॥ २६६ ॥

( ६ ) **रामचन्द्रः** । एषसीमाविनिर्णयः धर्मः अखिलेन उपायेन अभिहितः उक्तः ॥ २६६ ॥

**शतंब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति ॥ वैश्योप्यर्धशतंद्वे वा शूद्रस्तु वधमर्हति ॥ २६७ ॥**

( १ ) **मेधातिथिः** । परुषवचनमाक्रोशः सबहुधाभृशंसाश्लीलभाषणंतेन भणितोयोऽभिशापः अकरणहन्ता वृषलभूयाः असद्दुःखोत्पादनंकन्याते गर्भिणीति तत्र द्वयोर्ब्राह्मणक्रोशे क्षत्रियावैश्ययोरयंदण्डः । अन्यत्र ॥ पतनीयेकृते क्षेपेदण्डोमध्यमसाहसइत्यादि स्मृत्यन्तरोक्तः । तस्य च वधताडने जिह्वाछेदनमारणादि सर्वआक्रोशभेदावेदितव्याः ॥ २६७ ॥

( २ ) **सर्वज्ञनारायणः** । आक्रुश्य त्वंपापिष्ठोसीत्यादिना । अभ्यर्धशतं सार्धशतमल्पाक्षेपे । द्वेवेत्यतिशयिते । एते

सर्वे पणाः । वधस्ताडनम् ॥ २६७ ॥

( ३ ) **कुल्लूकः** । द्विजस्य चौरेत्याक्षेपरूपंपरुषमुक्त्वा क्षत्रियः पणशतंदण्डमर्हति । एवंसार्द्धशतंद्वे वा शते लाघवगौरवापेक्षया वैश्यः । शूद्रोप्येवंब्राह्मणाक्रोशे ताडनादिरूपंवधमर्हति ॥ २६७ ॥

( ४ ) **राघवानन्दः** । वाक्पारुष्यमतेत्वनुवदंस्तदुचितदण्डमाह शतमिति द्वादशभिः । अध्यर्धशतं अधि अधिकमर्धं शतं यत्र तेन सार्धशतम् । द्वेवेतिगुणवद्ब्राह्मणापेक्षया । वधं ताडनादिरूपं हुंकाराद्यल्पाक्रोशे उत्तरत्र जिह्वाछेदस्य वक्ष्यमाणत्वात् ॥ २६७ ॥

( ५ ) **नन्दनः** । द्वे शते वा गुणदोषापेक्षा विकल्पः ॥ २६७ ॥

( ६ ) **रामचन्द्रः** । द्विजमाक्रुश्यवैश्योअपध्यर्धशतंद्वेवा । शूद्रस्तु वधं ताडनं अर्हति ॥ २६७॥

**पञ्चाशद्ब्राह्मणोदण्ड्यः क्षत्रियस्याभिशंसने ॥ वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशकोदमः ॥ २६८ ॥**

( १ ) **मेधातिथिः** । अभिशंसनंसर्वप्रकारआक्रोशः पतनीयादन्यत्र सूत्रेदण्डान्तरविधानात् निमित्तसप्तमीचैषा वैश्यइति दण्डविषयसप्तमी ब्राह्मणस्याक्रोष्टुराक्रुश्यमानस्य च दण्डउक्तः । क्षत्रियादीनांत्वितरेतरंस्मृत्यन्तरमन्वेषणीयं। तथा च गौतमः ब्राह्मणराजन्ययोःक्षत्रियवैश्ययोः परस्पराक्रोशे क्षत्रियश्चेद्वैश्यमाक्रोशेत्पञ्चाशतंदण्ड्यः वैश्यः क्षत्रियंशतं एवंक्षत्रियःशूद्रमाक्रोशेत्पञ्चविंशतिर्दण्ड्यः वैश्यःपञ्चाशतं शूद्रस्य तुतदा क्रोशे गुणापेक्षिकोदण्डोवक्ष्यते ॥ २६८ ॥

( २ ) **सर्वज्ञनारायणः** । अभिशंसने आक्रोशे । वैश्ये आक्रुश्यमाने विप्रेण । एवंशूद्रइत्यत्रापि ॥ २६८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः क्षत्रियस्योक्तरूपाक्षेपे कृते पञ्चाशत्पणान्दण्ड्यः वैश्ये शूद्रे च यथोक्ताक्रोशे कृते पञ्चविंशतिर्द्वादशपणाः क्रमेण ब्राह्मणस्य दण्डः स्यात् ॥ २६८ ॥

( ४ ) **राघवानन्दः** । प्रतिलोमतयोक्त्वाऽनुलोमतयाह पञ्चाशदिति । अभिशंसने स वैश्ये आक्रुष्टे । एवं शूद्रे ॥ २६८ ॥

( ५ ) **नन्दनः** । अर्द्धपञ्चाशत् पञ्चविंशतिः ॥ २६८ ॥

**समवर्णेद्विजातीनांद्वादशैव व्यतिक्रमे ॥ वादेष्ववचनीयेषु तदेव द्विगुणंभवेत् ॥ २६९ ॥**

**[ विप्रक्षत्रियवत्कार्योदण्डोराजन्यवैश्ययोः ॥ वैश्यक्षत्रिययोः शूद्रे विप्रे यः क्षत्रशूद्रयोः ॥ १ ॥**

**समुत्कर्षापकर्षास्तु* विप्रदण्डस्य कल्पना ॥ राजन्यवैश्यशूद्राणांधनवर्जमिति स्थितिः ॥ २ ॥ ]+**

( १ ) **मेधातिथिः** । द्विजातिग्रहणमत्र समवर्णे द्वादश व्यतिक्रमे परस्पराक्रोशे दण्डः सच जातिचित्तबन्धुवयःकर्मविद्याभिर्विशेषानुपदेशात् तत्र समानजातीये चित्ताधिके द्विगुणं तस्मिन्नेव बन्धुत्वाधिके त्रिगुणं यावत्सर्वगुणानिर्गुणस्य षड्गुणंवादाआक्रोशाअवचनीयाअत्यन्तनृशंसामातृभगिनीभार्यादिगताः तदेव द्विगुणंदंडपरिमाणं नपुंसकलिङ्गात्सर्वशेषोयंन समवर्णविषयएव अथवा तदेवशतमिति योजनंलिङ्गसामर्थ्याच्छतस्य च प्रथमश्लोके श्रुतत्वात् अतोऽवचनीयेषु समवर्णेष्वपि द्विशतोदमः लिङ्गोपपत्त्यर्थंपरिमाणपदमश्रुतमध्याहर्तव्यं शते तु व्यवहितकल्पना ज्यायसी ॥ २६९ ॥

( २ ) **सर्वज्ञनारायणः** । समुत्कर्षइति । क्षत्रादीनामपि स्वावरवर्णेष्वाक्रोशे विप्रस्येव दण्डक्लृप्तिरित्यर्थः । द्विजातीनां त्रयाणां व्यतिक्रमे आक्रोशे । अवचनीयेष्वश्लीलेषु त्वं स्वसृगामीत्यादिष्वाक्रोशमात्रतात्पर्येणोक्तेषु समवर्णेषु ॥२६९॥

---

+( ट, ठ, य ) *कर्षास्तु=कर्षाभ्यां ( ट, )

( ३ ) **कुल्लूकः** । द्विजातीनांसमानजातिविषये यथोक्तोक्रोशे कृते द्वादशपणोदण्डः । अवचनीयेषु पुनराक्रोशवादेषु मातृभगिन्याद्यश्लीलरूपेषु तदेवेति नपुंसकनिर्देशात् शतब्राह्मणमाक्रुश्येत्यादियदुक्तंतदेव द्विगुणंदण्डरूपंभवेत् ॥ २६९ ॥

( ४ ) **राघवानन्दः** । किंच समिति । समवर्णे तुल्यजातीये व्यतिक्रमे यदि विप्रोविप्रमाक्षिपति । एवमुत्तरत्र । वादेषुतु विशेषमाह वादेष्विति । अवचनीयेषु मातृभगिन्याद्यश्लीलेषु क्रोधावेशपुरःसरेषु ॥ २६९ ॥

( ५ ) **नन्दनः** । व्यतिक्रमेऽल्पवाक्पारुष्ये ॥ यदिदंद्वादशेत्युक्तंतदेव द्विगुणंभवेत् ॥ २६९ ॥

( ६ ) **रामचन्द्रः** । द्विजातीनां व्यतिक्रमे द्विजस्य द्विजः क्षत्रियस्य क्षत्रियः वैश्यस्य वैश्यः शूद्रस्य शूद्रः व्यतिक्रमे द्वादशैव पणान्दण्ड्यः । व्यतिक्रमेद्विगुणं चतुर्विंशतिःपणाः ॥ २६९ ॥

**एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ॥ जिव्हायाः प्रामुयाच्छेदंजघन्यप्रभवोहि सः ॥ २७० ॥**

( १ ) **मेधातिथिः** । एकजातिः शूद्रः सत्रैवर्णिकान्क्षिपन्नाक्रोशनदारुणया पातकादियोगिन्या वाचा नृशंसादिरूपया जिव्हाछेदंलभते जघन्यप्रभवइति पादाभ्यां ब्राह्मणउत्पन्नइति हेत्वभिधनंप्रातिलोमानामपि ग्रहणार्थं तेन जघन्यप्रभवाएव नास्ति पञ्चमइति वर्णान्तरनिषेधात् ॥ २७० ॥

( २ ) **सर्वज्ञनारायणः** । एकजातिः शूद्रः । दारुणया अवचनीयया । जघन्यप्रभवोन्त्यजन्मा ॥ २७० ॥

( ३ ) **कुल्लूकः** । शूद्रोद्विजातीन्पातकाभियोगिन्या वाचाक्रुश्य जिव्हाच्छेदंलभेत् यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जातः ॥ २७० ॥

( ४ ) **राघवानन्दः** । शूद्रकर्तृकत्रैवर्णिकाक्रोशे विशेषमाह एकेतिचतुर्भिः । एकजातिः शूद्रः एकैव जातिर्जन्मरूपा यस्येतिव्युत्पत्तेः । वाचादारुणयेति करुत्वं रेयज्ञदत्तेत्यादिरूपया । जिव्हाछेदेहेतुः जघन्यप्रभवः पद्भ्याँशूद्रोअजायतेतिपादजः ॥ २७० ॥

( ५ ) **नन्दनः** । एकजातिरुपनयनानर्हः शूद्रइतियावत् ॥ २७० ॥

( ६ ) **रामचन्द्रः** । एकजातिः शूद्रः द्विजातिब्राह्मणक्षत्रियवैश्यानां दारुणयावाचाक्षिपन् जिव्हायाः छेदं प्रामुयात् । सः द्विजातिः जघन्यस्य शूद्रस्य प्रभवः ॥ २७० ॥

**नामजातिग्रहंत्वेषामभिद्रोहेण कुर्वतः ॥ निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्येदशाङ्गुलः॥२७१॥**

( १ ) **मेधातिथिः** । अभिद्रोहआक्रोशः कुत्साबुद्धिर्ब्राह्मणक त्वंमा मया स्पर्द्धिष्टाएवमन्यदपियोज्यं ग्रहणंग्रहः निरुपपदंनामगृह्णाति कुत्साप्रत्यययोगेन वा देवदत्तकेति अभिद्रोहेण क्रोधेनाभिद्रोहःक्रोधःनिःक्षेप्यः प्रक्षेप्यः शङ्कुःकीलकः ज्वलन्नग्निना दीप्यमानोऽयोमयोलोहमयः ॥ २७१ ॥

( २ ) **सर्वज्ञनारायणः** । नामग्रहंमैत्रइति । जातिग्रहं ब्राह्मणइति । अभिद्रोहेणाक्रोशाभिमानेन कुर्वतः शूद्रस्य । ज्वलन्नतितप्तः ॥ २७१ ॥

( ३ ) **कुल्लूकः** । अभिद्रोहआक्रोशः ब्राह्मणादीनां रे त्वंयज्ञदत्तब्राह्मणापसदइत्याक्रोशेननामजात्यादिग्रहणंकुर्वतोलोहकीलोऽग्निना प्रदीप्तोदशाङ्गुलोमुखेषु क्षेप्तव्यः ॥ २७१ ॥

---

( २७१ ) निक्षेप्यो=निखेयो ( क, च, घ, )

( ४ ) **राघवानन्दः** । ब्राह्मणापसदइत्याद्याक्रोशेदण्डान्तरमाह नामेति । शङ्कुर्लौहकीलकंज्वलन्नग्निदीप्तः निखेयः प्रवेशनीयः ॥ २७१ ॥

( ५ ) **नन्दनः** । नामजात्योर्ग्रहणं हेयज्ञशर्मन्ब्राह्मणेत्यादिकं एषांद्विजातीनां कुर्वतएकजातेः ॥ २७१ ॥

( ६ ) **रामचन्द्रः** । अमुकनामासित्वं अमुकजातिस्त्वं । अभिद्रोहेण आक्रोशाभिमानेन ग्रहं कलहंकुर्वतः यस्तस्य आस्ये मुखे अयोमयःशङ्कुःदशाङ्गुलः ज्वलन्स्थाप्यः ॥ २७१ ॥

**धर्मोपदेशंदर्पेण विप्राणामस्य कुर्वतः ॥ तप्तमासेचयेत्तैलंवक्त्रे श्रोत्रे च पार्थिवः ॥ २७२ ॥**

( १ ) **मेधातिथिः** । अथ ते स्वधर्मइयंवात्रेति कर्तव्यता मैवंकार्षीःछांदसोसीत्येवमादिव्याकरणलेशज्ञानतया दुन्दुकत्वेनदर्पवन्तः शूद्राउपदिशन्ति तेषामेषदण्डः यस्तु ब्राह्मणापाश्रयादेव व्युत्पन्नोविस्मृतंकथंचिद्देशकालविभागंस्मारयेत्पूर्वाह्णकालंनातिक्रामयेति क्रियतांदैवंकर्मदेवांस्तर्पयोपवीतीभव माप्राचीनावीतंकार्षीरिति न दोषः । तप्तमग्निसंबन्धात्पीडाकरं आसेचयेत्क्षारयेत् युक्तंवक्त्रे मुखेनोपदेशकत्वात् श्रोत्रस्य कोपराधः मागसत्तर्कादिश्रवणम् ॥ २७२ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मोपदेशं प्रायश्चित्ताद्युपदेशम् । अस्य शूद्रस्य ॥ २७२ ॥

( ३ ) **कुल्लूकः** । कथंचिद्धर्मलेशमवगम्यायंते धर्मानुष्ठेयइति ब्राह्मणस्याहङ्कारादुपदिशतोऽस्यऽशूद्रस्य मुखे कर्णयोश्च ज्वलत्तैलंराजा प्रक्षेपयेत् ॥ २७२ ॥

( ४ ) **राघवानन्दः** । तस्यैव धर्मवक्तृत्वे दण्डान्तरमाह धर्मइति । दर्पेण धनविद्यादिजेन विप्राणां धर्मोपदेशं कुर्वतोऽस्य शूद्रस्य । तं धर्मं स्वयं श्रुत्वाऽनुष्ठास्यतीतिकृत्वा श्रोत्रे ॥ २७२ ॥

( ५ ) **नन्दनः** । अस्यैकजातेरित्येव ॥ २७२ ॥

( ६ ) **रामचन्द्रः** । विप्राणांधर्मोपदेशं दर्पेण कुर्वतः अस्य शूद्रस्य वक्त्रे तप्तंतैलं । च पुनः श्रोत्रे आसेचयेत्पार्थिवः ॥ २७२ ॥

**श्रुतंदेशंच जातिंच कर्मशारीरमेव च ॥ वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतंदमम् ॥ २७३ ॥**

( १ ) **मेधातिथिः** । सत्येन श्रुतेनैतदनेन सम्यक्श्रुतंइत्याह श्रुतमेव वा क्षिपति नैतत्संस्कारकंयदनेन श्रुतमिति ब्रह्मावर्तीयमभिजनाभिमानिनंवाह्लकोयमित्याह एवंजात्यंब्राह्मणं क्षत्रियोयमित्याह क्षत्रियंवा बान्धवतया ब्राह्मणइति कर्म स्नातकइति शरीरावयवे शारीरेऽव्यङ्गंदुश्चर्मेति वितथेन वितथमनृतं प्रकृत्यादिभ्यइति तृतीया । अथवायधर्मोवैतथ्यंतस्यवाच्यंप्रति कारणता युक्तैव । मदात्परावज्ञानंदर्पः अज्ञानात्परिहासतोवा न दोषः कस्यपुनरयंदण्डः सर्वेषामितिब्रूमः शूद्राधिकाराच्छूद्रस्यैवेतिपरे । द्विजातिविषये वैतथ्ये ॥ २७३ ॥

( २ ) **सर्वज्ञनारायणः** । शारीरंकर्म भारवहनादि वितथेनब्रुवन्नत्वश्रुतादि । दर्पादभिमानात् । अश्रुताद्यभिमानेनब्रुवन्द्विजएव दण्ड्योनतु शूद्रस्तस्यतु वधएव ॥ २७३ ॥

( ३ ) **कुल्लूकः** । समानजातिविषयमिदंदण्डलाघव न्नतु शूद्रस्य द्विजात्याक्षेपविषयम् । नत्वयैतच्छ्रुतंन भवान् तद्देशजातोन तवेयंजातिर्न तव शरीरसंस्कारमुपनयनादि कर्मकृतमित्यहङ्कारेण मिथ्याब्रुवन्द्विशतंदण्डंदाप्यः स्यात् । वितथेनेति तृतीयाविधाने प्रकृत्यादिभ्यउपसङ्ख्यानमिति तृतीया ॥ २७३ ॥

( ४ ) **राघवानन्दः** । समवर्णेआह श्रुतमिति । नत्वंद्विजातिर्नतवायमुचितोदेशइत्येवं वितथेन वितथं ब्रुवन् शूद्रः-

शूद्रस्यैव ब्रुवन्। प्रकृत्यादिभ्यः उपसंख्यानमितितृतीया। अथवा स्वख्यात्यर्थंदर्पात् मिथ्यावदंच्छूद्रोदण्डनीयइत्याह श्रुतमिति। मयैतत्पुराणादिकं श्रुतं मम मध्यदेशेवसतिरतीव कुलीनोहमतीव सत्कर्मास्मि ममातीव चूडादिसंस्कारोवृत्तइति। अन्यथा वितथेनेत्यनुपपत्तेरिति ॥ २७३ ॥

( ५ ) **नन्दनः**। सर्ववर्णानामविशेषेण दण्डमाह श्रुतंदेशं चेति। देशंजन्मभूम्यादिकं। कर्मयज्ञादिकं। शारीरमुपनयनादिकं। वितथेनवैतथ्येन ॥ २७३ ॥

( ६ ) **रामचन्द्रः**। तवश्रुतं तवदेशं तवजातिं तवशारीरंकर्म भारवाहनादिकर्मवितथेन विथतत्वेन दर्पात् ब्रुवन् द्विशतंदमंदाप्यःस्यात् ॥ २७३ ॥

**काणंवाप्यथवा खञ्जमन्यंवापि तथाविधम् ॥ तथ्येनापि ब्रुवन्दाप्योदण्डंकार्षापणावरम्॥२७४॥**

( १ ) **मेधातिथिः**। एकेनाक्ष्णाविकलः काणः खञ्जः पादविकलः तथाविधंकुणिविटपंतथ्येननासत्येनापि शब्दाद्वितथेन अकाणंच काणइत्युक्ते कार्षापणोवरोदण्डः अत्यन्ताल्पोयदि दण्डःकथंचिदनुग्राह्यतया युक्ते तदा कार्षापणोवरोदण्डः अन्यथा द्वौ त्रयः पञ्चवा पुरुषविशेषापेक्षयापिदण्ड्यः शूद्रः सर्वे वा पूर्ववत् ॥ २७४ ॥

( २ ) **सर्वज्ञनारायणः**। ब्रुवन्काणस्त्वमित्यादिकमभिमानात् कार्षापणोत्यन्तावरोयत्र दण्डे तम्। अधिकसंभवेतु ततोपि किंचिदधिकंदाप्यइत्यर्थः ॥ २७४ ॥

( ३ ) **कुल्लूकः**। एकाक्षिविकलंपादविकलमन्यमपि वा तथाविधंहस्ताद्यङ्गविकलंसत्येनापि काणादिशब्देन ब्रुवन्नत्यन्ताल्पंतदा कार्षापणंदण्डंदाप्यः ॥ २७४ ॥

( ४ ) **राघवानन्दः**। किंचान्यत् वस्तुतोङ्गहीनस्य तथावदने दण्डमाह काणमिति। तथाविधं विरूपम्। तथ्येनापीत्यत्रापेरवधारणार्थत्वात्परिहासवारणाय। कार्षापणावरं पणादपि न्यूनं पुनः प्रसंगवारणाय ॥ २७४ ॥

( ५ ) **नन्दनः**। तथाविधंविकलाङ्गंशक्त्यपेक्षया परिणामनीयम् ॥ २७४ ॥

( ६ ) **रामचन्द्रः**। काणादिकं तथ्येन ब्रुवन् कार्षापणां अवरंदण्डं दाप्यःकर्षपणंकार्षापणं अवरंतुच्छं ॥ २७४ ॥

**मातरंपितरंजायांभ्रातरंतनयंगुरुम् ॥ आक्षारयञ्छतंदाप्यः पन्थानंचाददद्गुरोः ॥ २७५ ॥**

( १ ) **मेधातिथिः**। आक्षारणंभेदनमनृतेन एषा ते माता न स्नेहवती द्वितीये पुत्रेऽत्यन्ततृष्णावती कनकमयमङ्गुलीयकंरहसि तस्मै दत्तवतीत्येवमाद्युक्त्वा भेदयति एवंपितापुत्रौ जायापती भ्रातृन्गुरुशिष्यौ तनयग्रहणंद्वितीयसंबन्धिप्रदर्शनार्थं। अन्यथा मातरमित्युक्ते मातरंपुत्राद्भिन्दतोदण्डः स्यान्न पुत्रंमातुः यद्यपि भेदनमुभयाधिष्ठानंतथापि यन्मुखेन क्रियते सएव भेदयितव्यइति व्यवहारः। तत्रासति तनयगृहणे प्रदर्शनार्थे यदैवमातरमाह तेनैषते पुत्रोऽभक्तोदुःशीलश्चेत्येवमादिना मातरमाक्षारयति तत्रैव स्यान्न पुत्रंदर्शितम्। अन्ये तु चित्तकदर्थनोत्पादनमाक्षारणमाहुः प्रवक्ष्यामिधनंश्रुतंवार्जयितुंतीर्थान्युपसेवितुंतत्प्रवासशङ्कया च मानसी तृष्णया पीडा भवति तथा न कर्तव्यं। यावद्गुरवस्तेजीवेयुस्तावन्नान्यंसमाचरेन्नतैरननुज्ञातइति च। यत्तु विद्वेषणादिना चित्ते खेदोत्पादनंतत्र शतान्नमुच्यते प्रतिरोद्धागुरोरिति महत्त्वाद्दोषस्य। जायायाअनुकूलायाः पुत्रवत्याःकरोत्यन्यंविवाहमित्येतदक्षारणं एवंगुणवतः पुत्रस्याकारणेऽन्यकरणं गुरोःसर्वप्रकारंपन्थानमत्यजतःशतंदण्डः ॥ २७५ ॥

( २ ) **सर्वज्ञनारायणः**। अक्षारयन्नगम्यमैथुनेनाभिशंसन्। जायासंनिधेर्जायायाएव मातरंपितरंचेतिग्राह्यम्। तेनात्र जायांप्रति तव माता स्वैरिणीत्यादिरभिशापोद्रष्टव्यः ॥ २७५ ॥

( ३ ) **कुल्लूकः** । आक्षारितः क्षारितोऽभिशप्तइत्याभिधानिकाः मात्रादीन्पातकादिनाऽभिशपन्गुरोश्च पन्थानमत्यजन्-दण्ड्यः । भार्यादीनांगुरुलघुपापाभिशापेन दण्डसाम्यंसमाधेयम् । मेधातिथिस्तु आक्षारणंभेदनमित्युक्त्वा मातृपुत्रपित्रादीनांपरस्परभेदनकर्तुरयंदण्डविधिरितिव्याख्यातवान् ॥ २७५ ॥

( ४ ) **राघवानन्दः** । मात्राद्यभिशप्तस्तुदण्डमाह मातरमिति । आक्षारयन् पातकादिना अभिशस्तंकुर्वन् शतं दाप्यः । तथा गुरोराचार्यस्य पन्थानमददज्जनोदण्ड्यः । क्षारणमेतेषामन्योन्यंवैमत्यं तत्कर्तुर्दण्डइतिमेधातिथिः ॥ २७५ ॥

( ५ ) **नन्दनः** । आक्षारयन्वाक्पारुष्येण क्रोधयन्मातापितृगुरुज्येष्ठभ्रातॄणामाक्षारणे सकृत्कृतेऽन्येषामसकृत्कृते दण्डः अतुल्यकक्षित्वात् ॥ २७५ ॥

( ६ ) **रामचन्द्रः** । मातरंवा पितरंवा जायांवा जायाशब्दसन्निधानात्तस्याएव पितरौ ग्राह्यौ भ्रातरं तनयं गुरुं वाऽऽक्षारयन् अगम्यागमनेन निन्दन् सः शतंदाप्यः च पुनः गुरोःपन्थानं अददत् शतंदाप्यः ॥ २७५ ॥

**ब्राह्मणक्षत्रियाभ्यान्तुदण्डः कार्योविजानता ॥ ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥२७६॥**

( १ ) **मेधातिथिः** । ब्राह्मणक्षत्रियाभ्यां परस्पराक्रोशे कृते तयोरयंदण्डइत्येवमध्याहारेण योजना तादर्थ्येचतुर्थी वा तद्विनयाय दण्डः कर्तव्यः पातकस्याक्रोशे कृते अयंदण्डोदुःखोत्पादनरूपे ॥ २७६ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणक्षत्रियाभ्यामन्योन्यमाक्षारणे ॥ २७६ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणक्षत्रियाभ्यां परस्परंपतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः दण्डमेव विशेषेणाह ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्योब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः ॥ २७६ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणक्षत्रियाभ्यामन्योन्यंपतनीयाक्रोशे कृते दण्डमाह ब्राह्मणेति । विजानता दण्डशास्त्रज्ञेन राज्ञा दण्डःकार्यः । तयोर्व्यवस्थानमाह । ब्राह्मणे क्षत्रियाक्रोशिनि पूर्वः सार्धशतत्रयम् । विप्राक्रोशिनिराजनि मध्यमः पञ्चशतानि ॥ २७६ ॥

( ५ ) **नन्दनः** । वर्णानांस्वजातिविषये वाक्पारुष्यातिशये दण्डंश्लोकद्वयेनाह ब्राह्मणक्षत्रियाभ्यान्त्विति । विजानता राज्ञा । ब्राह्मण क्षत्रियाभ्यां वाक्पारुष्यातिशये कृते तयोर्दण्डौकार्यावित्यर्थः । तावुत्तरार्द्धेनोक्तौ ॥ २७६ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणक्षत्रियाभ्यांअन्योन्याक्षारणे पतनीये कृतः विजानता पुंसा दण्डःकार्यःपूर्वसाहसःप्रथमसाहसः ॥ २७६ ॥

**विट्शूद्रयोरेवमेव स्वजातिंप्रतितत्त्वतः ॥ छेदवर्जंप्रणयनंदण्डस्येति विनिश्चयः ॥ २७७ ॥**

**[ पतितंपतितेत्युक्त्वा चौरंचौरेति वापुनः । वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतांव्रजेत् ॥ १ ॥ ]**[१]

( १ ) **मेधातिथिः** । एवमेव प्रथममध्यमौ साहसावित्यतिदिश्यते तेनैव क्रमेण वैश्यस्य शूद्राक्रोशे प्रथमः शूद्रस्य वैश्याक्रोशे मध्यमः छेदवर्जंदण्डस्य प्रणयनमिति । एकजातिर्द्विजातिमित्यनेन जिव्हाछेदंप्राप्तंनिवर्तयति स्वजातिप्रतीतिः नैवंमन्तव्यंसमानजातीयप्रतीतिः किंतर्हि यात्रजातिरुपात्ता वैश्यशूद्राविति । स्वग्रहणश्लोकाभिप्रायं परस्पराक्रोशेयावत्स्व-

[१] ( ख, ग ) व्यवहारमयूखे ( पृ० ८७ ) इयन्नारदोक्तिरिति पठितम् )

जातिमिति पूर्वत्रापि संबन्धनीयंमणयनंप्रवर्तनम् । क्षत्रियस्य वैश्यशूद्राक्षारणेप्रथमार्द्धसाहसः एवंब्राह्मणस्यवैश्यशूद्रयोः-कल्पः ॥ २७७ ॥

( २ ) **सर्वज्ञनारायणः** । विट्शूद्रयोरेवमेवान्योन्याक्षारणे प्रथमोवैश्यस्य शूद्रस्य मध्यमः । तयोस्तुस्वस्वजात्याक्षारणे छेदवर्जं तत्तज्जात्युचितदण्डमात्रप्रणयनम् । तेनार्थाद्ब्राह्मणक्षत्रियाक्षरणे छेदएवेत्यर्थः ॥ २७७ ॥

[ **सर्वज्ञनारायणः** । पतितमिति । पतितं पातकिनम् । उक्त्वाआक्रोशबुद्ध्या तुल्यदोषोऽतस्तुल्योदण्डः । एवंद्विर्दोषतां द्विगुणदोषतामित्यादि ॥ वाक्पारुष्यम् ॥ १ ॥ ]

( ३ ) **कुल्लूकः** । वैश्यशूद्रयोरन्योन्यजातिंप्रतिपतनीयाक्रोशे ब्राह्मणक्षत्रियवद्वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यमसाहसइत्येवंरूपंदण्डस्य प्रणयनंजिव्हाच्छेदरहितंयथावत्कर्तव्यमिति शास्त्रनिश्चयः एवंचेकजातिर्द्विजातींस्त्विति प्रागुक्तजिव्हाच्छेदोवैश्ये निवारितोब्राह्मणक्षत्रियाक्रोशविषयएवावतिष्ठते ॥ २७७ ॥

( ४ ) **राघवानन्दः** । उक्तदण्डमन्यत्रातिदिशति विडिति । शूद्राक्रोशिनि वैश्ये प्रथमः । वैश्याक्रोशिनि शूद्रे मध्यमः । स्वजातिंप्रति संनिधेःस्वस्य जातिर्यदनन्तरंतत्स्वजातिस्तेन वैश्यः क्षत्रियमाक्रुश्य प्रथमसाहसंदद्यात् । वैश्यमाक्रुश्य शूद्रोमध्यमसाहसंदद्यात । अन्यथा समवर्णेद्विजातीनामिति वैश्यस्य द्वादशस्योक्तत्वात्तत्त्वतः परिहासंविना छेदवर्जं जिव्हाछेदंविना । अतो ब्राह्मणक्षत्रियाक्रोशिनि शूद्रे जिव्हाछेदः प्रथमोक्तः पर्याप्तः ॥ २७७ ॥

( ५ ) **नन्दनः** । एवमेवेति मध्यमसाहसातिदेशः स्वजातिंप्रतिवाक्पारुष्यइतिशेषः । अपरार्द्धेऽपि स्वजातिंप्रतीत्यनुषङ्गः । शूद्रस्येति च विपरिणामः तेनायमर्थः शूद्रस्य जिव्हाछेदवर्जनंदण्डप्रणयनंस्वजातिविषये न द्विजातिविषयइति ॥ २७७ ॥

( ६ ) **रामचन्द्रः**। वैश्यशूद्रजातिंप्रतितत्त्वतःक्ष्वेडंवर्जयेत् । प्रणयनपरिहासवर्जंप्रणयनंदण्डस्यइतिविनिश्चयःदण्डः कार्यः ॥ २७७ ॥

[ **रामचन्द्रः** । पतितमिति । पतितंप्रति त्वंपतितइत्युक्त्वा चौरंप्रति त्वंचोरइत्युक्त्वा वावचनात्तत्तुल्यदोषः स्यात् ॥ १ ॥ ]

**एषदण्डविधिः प्रोक्तोवाक्पारुष्यस्य तत्त्वतः॥ अतऊर्ध्वंप्रवक्ष्यामि दण्डपारुष्यनिर्णयम्॥२७८॥**

( १ ) **मेधातिथिः** । दण्डपारुष्यंदण्डेन दुःखोत्पादनंयथा कण्टकादेः पुरुषस्य स्पर्शः पीडाकरएवंपीडाकरत्वसामान्यात्पारुष्यशब्दप्रयोगस्तत्र निर्णयोदण्डविशेषनिर्णयः । पूर्वप्रकरणोपसंहारोपन्यासार्थः श्लोकः ॥ २७८ ॥

( २ ) **सर्वज्ञनारायणः** । तत्त्वतोधर्मतः ॥ २७८ ॥

( ३ ) **कुल्लूकः** । एषोऽनन्तरोक्तोवाक्पारुष्यस्य यथावद्दण्डविधिरुक्तोऽनन्तरंताडनादिर्दण्डपारुष्यस्य निर्णयंवक्ष्यामः ॥ २७८ ॥

( ४ ) **राघवानन्दः** । वाक्पारुष्यदण्डमुपसंहरन्कायकृताहिंसने तं प्रतिजानीते एषइति ॥ २७८ ॥

**येन केनचिदङ्गेनहिंस्याच्चेच्छ्रेष्ठमन्त्यजः॥ छेत्तव्यंतत्तदेवास्य तन्मनोरनुशासनम् ॥ २७९ ॥**

( १ ) **मेधातिथिः** । अन्त्यजः शूद्रश्चण्डालपर्यन्तः श्रेष्ठः त्रैवर्णिकः तंचेद्धिंस्यादङ्गेन केनचित्साक्षाद्दण्डखड्गादिप्रहरणव्यवधानेन वा तदङ्गस्य छेत्तव्यंहिंसावा क्रोधेन प्रहरणंताडनमिच्छयाहस्ताद्युद्यम्य वेगेन निपातनंमारणमेव तत्त-

दिति वीप्सा अङ्गमिति छेत्तव्यमिति चैकत्वविवक्षामातिज्ञापितेनानेकेनाङ्गेन प्रहरणेऽनेकस्यैव छेदः। अनुशासनमुपदे-शोपनुक्तैषा मर्यादा अनुशासनग्रहणंकारुणिकस्य राज्ञः प्रवृत्यर्थः ॥ २७९ ॥

( २ ) **सर्वज्ञनारायणः**। हिंस्यात् पीडयेत् । अन्त्यजः शूद्रः ॥ २७९ ॥

( ३ ) **कुल्लूकः**। अन्त्यजः शूद्रोयेनकेनचित्करचरणादिनाङ्गेन साक्षाद्दण्डादिनाऽव्यवहितेन द्विजातिं प्रहरेत्तदे-वाङ्गमस्यछेत्तव्यमित्ययंमनोरुपदेशः मनुग्रहणमादरार्थम् ॥ २७९ ॥

( ४ ) **राघवानन्दः**। तमेवाह येनेति द्वाविंशत्या। केनचित् पाण्याद्यन्यतमेन। अन्त्यजः शूद्रः ॥ २७९ ॥

( ५ ) **नन्दनः**। अथदण्डवाक्पारुष्यमाह येनकेनचिदिति। श्रेयांसंत्वस्यपूर्ववर्णं अन्त्यजस्तस्मादपरवर्णः ॥२७९ ॥

( ६ ) **रामचन्द्रः**। अन्त्यजः शूद्रः श्रेष्ठं विप्रं येनकेनचित् अंगेनाहिंस्यात् करेणपादेनवा तत्तदेव अंगंअस्य शूद्रस्य छेत्तव्यं तन्मनोःअनुशासनम् ॥ २७९ ॥

## पाणिमुद्यम्य दण्डंवा पाणिच्छेदनमर्हति ॥ पादेन प्रहरन्कोपात्पादच्छेदनमर्हति ॥ २८० ॥

( १ ) **मेधातिथिः**। उद्यम्योत्क्षिप्यच कोपात्ताडनेच्छोस्तदङ्गमनिपातयतोऽस्यपाणिः च्छेत्तव्यः दण्डग्रहणंसमान-पीडाकरस्य हिंसासाधनस्योपलक्षणार्थंतेन मृदुशफादावन्योदण्डः। पादेन प्रहरन्निति अत्राप्युद्यम्येत्यपेक्षितव्यं अवगुर-तोप्येषएव ॥ २८० ॥

( २ ) **सर्वज्ञनारायणः**। उद्यममात्रेत्वाह पाणिमिति। प्रहरन् प्रहारार्थमुद्यमंकुर्वन् प्रहरंश्च ॥ २८० ॥

( ३ ) **कुल्लूकः**। अस्यैवोत्तरप्रपञ्चः पाणिमिति प्रहर्तुंपाणिंदण्डंवोद्यम्य पाणिच्छेदंलभते पादेन कोपात्प्रहरणे पाद-च्छेदंप्राप्नोति ॥ २८० ॥

( ४ ) **राघवानन्दः**। येनेत्यस्य विवरणं पाणिमिति पञ्चभिः। दण्डः लगुडादिः । अस्थिभेदनपर्यन्तं कोपादित्य-नुवर्तते तदभावे वाग्दण्डादिः ॥ २८० ॥

( ५ ) **नन्दनः**। उक्तमर्थंचतुर्भिःश्लोकैः प्रपञ्चयति। पाणिमुद्यम्येति पादेन प्रहरन्पादप्रहारहेतोः पादमुद्यम्येत्य-र्थः ॥ २८० ॥

( ६ ) **रामचन्द्रः**। पाणिंहस्तंवा उद्यम्य हिंस्यात्तर्हि पाणिछेदनं अर्हति ॥ २८० ॥

## सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ॥ कट्यांकृताङ्कोनिर्वास्यः स्फिचंवास्यावकर्तयेत्॥२८१॥

( १ ) **मेधातिथिः**। उत्कृष्टोब्राह्मणोजातितोदौःशील्यादवकृष्टोऽपीतरेवर्णाऔत्तराधर्येण परस्परापेक्षयोत्कृष्टाःस्त्वाव-कृष्टाश्च तत्राहावकृष्टजइति जनिना जन्मचोत्कर्षउपात्तंतत्संनिधानादुत्कर्षोऽपि जन्मनैव जन्मना चनिरपेक्षोत्कर्षोब्राह्म-णस्यनापकर्षः तेन शूद्रस्यायंब्राह्मणेन सहैकमासनमारूढवतोदण्डः। कटिःश्रोणी तत्र कृतचिह्नः अङ्कविधौ च सुधाकुम्कु-मादिना चिह्नकरणमात्रमपि अयन्तु दण्डः ख्यापनार्थः। अतिक्रमाद्विभियुरिति तेन देशान्तरे यदनपायितच्चिन्हमायसो-ल्लेखनादुपदिश्यते तथाच वक्ष्यति उद्वेजनकरे दण्डे चिन्हयित्वेति राष्ट्राच्च निष्कास्यः स्फिक्श्रोण्येकदेशः सव्योदक्षि-णश्च तंचावकर्तयेत् चिन्हेन विकल्पविधानात्तावन्मात्रच्छेदोन सर्वस्य स्फिजः अभिप्रेप्सुरितिच नेच्छामात्रेण किंतर्हि प्राप्न-वतएव इच्छाया शक्यापह्नवत्वाद्दण्डस्य च महत्त्वात् ॥ २८१ ॥

---

( २८१ ) स्फिचं=स्फिचौ ( क )

( २ ) **सर्वज्ञनारायणः** । उत्कृष्टस्योत्तमजातेः । अपकृष्टः क्षत्रियादिः । कट्यामिति क्षत्रविशोः शूद्रस्यच तदुभयस्य हास्येच्छायाम् । स्फिचमिति शूद्रस्य ब्राह्मणहासेच्छायाम् ॥ २८१ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणेन सहासनोपविष्टः शूद्रः कट्यां तप्तलोहकृतचिन्होपदेशोनिर्वासनीयः स्फिचंवास्य यथा न म्रियते तथाच्छेदयेत् ॥ २८१ ॥

( ४ ) **राघवानन्दः** । सहासनं सहोपवेशनम् । उत्कृष्टस्य द्विजातेः । कृताङ्कः कृतचिन्हः । निर्वास्योदेशादेव । स्फिचं कटिं यथा न म्रियते तथा छेदयेत् ॥ २८१ ॥

( ५ ) **नन्दनः** । गुणोदोषवशाद्विकल्पः ॥ २८१ ॥

( ६ ) **रामचन्द्रः** । अवकृष्टजः शूद्रः उत्कृष्टस्य महासनंअभिप्रेप्सुः ईप्सुःइच्छेत्सःशूद्रःकट्यां कटिप्रदेशे कृताङ्कः कृतलाञ्छनः निर्वास्यः निष्कासनीयः । च पुनः अस्य स्फिचंअवकर्तयेत् ॥ २८१ ॥

**अवनिष्ठीवतोदर्पाद्द्वावोष्ठौ छेदयेन्नृपः ॥ अवमूत्रयतोमेढ्रमवशर्धयतोगुदम् ॥ २८२ ॥**

( १ ) **मेधातिथिः** । मूत्रेणावसिंचतोऽभिमुखंवातदवमानार्थंक्षिपतोऽसत्यपिसंस्पर्शेऽवमनयति मूत्रेणेति । निष्कर्तव्यः समानफलत्वादेतस्यापिदण्डोयं निष्ठीवनंनासिकास्यश्रावस्यघ्राणेन क्षेपे नासापुटच्छेदः येनाङ्गेनेत्युक्तत्वात् । शर्धनंकुत्सितोगुदशब्दः दर्पान्न प्रमादात् ॥ २८२ ॥

( २ ) **सर्वज्ञनारायणः** । अवनिष्ठीवतः उत्तमस्योपरिनिष्ठीवतः । एवमत्र मूत्रमुपरिमूत्रणम् । अवशर्धनं कुत्सितगुदशब्दकरणंतदुपरि ॥ २८२ ॥

( ३ ) **कुल्लूकः** । दर्पेण श्लेष्मणा ब्राह्मणानपमानयतः शूद्रस्य राजा द्वावोष्ठौ छेदयेत् मूत्रप्रक्षेपेणापमानयतोमेढ्रं शर्धनं कुत्सितोगुदशब्दःतेनावमानयतोदर्पान्न प्रमादाद्गुदंछेदयेत् ॥ २८२ ॥

( ४ ) **राघवानन्दः** । किंच । अवनिष्ठिवतोद्विजादौकफादीन्यस्यतः ओष्ठौ छेदयेदेव । मेढ्रं लिंगम् । अवशर्धनं कुत्सितोगुदशब्दस्तत्कुर्वतः ॥ २८२ ॥

( ६ ) **रामचन्द्रः** । दर्पात् अवनिष्ठीवतः द्विजोपरि निष्ठीवनंकुर्वतः द्वावोष्ठौछेदयेत् ॥ २८२ ॥

**केशेषु गृह्णतोहस्तौ छेदयेदविचारयन् ॥ पादयोर्दाढिकायां च ग्रीवायांवृषणेषुच ॥२८३॥**

( १ ) **मेधातिथिः** । दर्पादित्यनुवर्तते परिभवबुध्याकेशेषु ब्राह्मणंगृह्णतः शूद्रस्य हस्तौ छेदयेत् । द्विवचनमेकेनापि द्वाभ्यांतुल्यपीडाकरउभयच्छेदोनैकस्यैव दाढिकाश्मश्रु अन्यदपि यदङ्गंगृह्यमाणंग्रीवादितुल्यपीडाकरंतत्र सर्वथाप्ययमेव दण्डः अविचारयन्पीडाकियत्यस्य गृहीतस्य संजाता महतीस्वल्पावेति एतदनुबन्धश्लोकप्राप्तंविवरणंविचार्यते ग्रहणमात्रेदण्डः ॥ २८३ ॥

( २ ) **सर्वज्ञनारायणः** । दाढिकायां श्मश्रुणि । एतत्सर्वमुत्तमेऽधमेन क्रियमाणम् ॥ २८३ ॥

( ३ ) **कुल्लूकः** । दर्पादित्यनुवर्ततेऽहंकारेण केशेषु ब्राह्मणंगृह्णतः शूद्रस्य पीडाऽस्य जाता न जातावेत्यविचारयन्हस्तौ छेदयेत् पादयोः श्मश्रुणि च ग्रीवायां वृषणे चाहिंसार्थंगृह्णतोहस्तद्वयच्छेदमेव कुर्यात् ॥ २८३ ॥

---

( २८३ ) णेषुच=णेषुवा ( क )

( ४ ) **राघवानन्दः** । किंच केशेष्विति । दाढिकायां श्मश्रुणि । हिंसार्थं पादादिचतुष्टये नरं गृह्णतोहस्तौ छेदयेदित्यन्वयः । वृषणं फलकद्वयम् ॥ २८३ ॥

( ५ ) **नन्दनः** । पादयोरित्यादिषु गृह्णतइत्येव ॥ २८३ ॥

**त्वग्भेदकः शतंदण्ड्योलोहितस्य च दर्शकः ॥ मांसभेत्ता तु षण्णिष्कान्प्रवास्यस्त्वस्थिभेदकः ॥ २८४ ॥**

( १ ) **मेधातिथिः** । द्विजातीनामयंपरस्परापराधे शूद्रस्य तुशूद्रापराधे मन्यते यः केवलामेवत्वचंभिन्द्याद्विदारयेन्न लोहितंदर्शयेत्तस्य शतंदण्डः तावदेव लोहितदर्शने यद्यपि त्वग्भेदमन्तरेण न लोहितं दृश्यते तथाप्यधिकापराधादधिकदण्डे प्राप्ते शतवचनंनियमार्थं अन्येतु कर्णनासिकादेरपि स्रवतिशोणितं बहिस्त्वग्भेदेपि तदर्थमुच्यत इत्याहुस्तदयुक्तं अन्तर्भेदे हि महत्त्वान्महादण्डोयुक्तस्तस्माद्यत्रैषत्स्रवतिशोणितंतत्र शतंशिरोभेदे तु मांसवत् । निष्कशब्दः सुवर्णपरिमाणवाचीत्युक्तं प्रवास्योऽस्थांभेदकस्तत्प्रयोजकइति घञन्तेन समासंकृत्वा तंकरोतीतिपठितव्यः अस्थिभेदकृदिति प्रवासनसमर्थशास्त्रप्रवृत्त्या मारणंनिर्वासनंवा दण्डविधौ ह्यर्थशास्त्रश्रवणंदृश्यते तथाहि दशवस्त्रसंबन्धमिति बार्हस्पत्यऔशनस्ये च प्रयोगः । निर्वासनंब्राह्मणस्य नान्येषाम् ॥ २८४ ॥

( २ ) **सर्वज्ञनारायणः** । त्वग्भेदकइत्यादिसमावकृष्टविषयापराधकरणे । शतं पणान् । षट् निष्कान् दीनारान् । प्रवास्योदेशान्निर्वास्योगृहीतसर्वस्वः । अस्थिभेदकोऽस्थिभङ्गप्रहारकृत् ॥ २८४ ॥

( ३ ) **कुल्लूकः** । चर्ममात्रभेदकृत्समानजातिर्न शूद्रोब्राह्मणस्य दण्डलाघवंपणशतंदण्डनीयः तथा रक्तोत्पादकोपि पणशतमेव दण्ड्यः मांसभेदी षण्णिष्कान् दाप्यः अस्थिभेदकस्तु देशान्निर्वास्यः ॥ २८४ ॥

( ४ ) **राघवानन्दः** । त्वग्भेदकइत्ययं श्लोकःशूद्रस्य समानजातिविषयो दण्डस्य लाघवादिति ॥ २८४ ॥

( ५ ) **नन्दनः** । एवंतावदसमजातिविषयेदण्डमाह त्वग्भेदकइति । शतंपणानाम् ॥ २८४ ॥

( ६ ) **रामचन्द्रः** । त्वक्भेदकोद्विजः शतंदण्ड्यः । च पुनः शोणितस्य चदर्शकःदण्ड्यः । एषांसंभेत्ता दंड्यःअस्तिभेदकोगृहीतसर्वस्वः प्रवास्यः ॥ २८४ ॥

**वनस्पतीनांसर्वेषामुपभोगंयथा यथा ॥ तथा तथा दमः कार्योहिंसायामिति धारणा ॥ २८५ ॥**

( १ ) **मेधातिथिः** । वनस्पतिग्रहणंसर्वस्थावरप्रदर्शनार्थं फलपुष्पपत्रच्छायादिना महोपभोग्यस्य वृक्षस्य हिंसायां विनाशमाह समध्यमस्य मध्यमोनिकृष्टस्यप्रथमस्तथा स्थानविशेषोद्रष्टव्यः पत्रच्छेदः फलच्छेदःशाखाछेदइति फलानामपि विशेषोमहार्घतादुष्प्रापता तथा स्थानविशेषोपि द्रष्टव्यः सीम्नि चतुष्पथे तपोवनइति ॥ २८५ ॥

( २ ) **सर्वज्ञनारायणः** । उपभोगोयथाधिकः कस्यचिच्छायामात्रेणान्यस्यपुष्पैरप्याम्रादेःफलैरपीत्यादि ॥ २८५ ॥

( ३ ) **कुल्लूकः** । वृक्षाद्युद्भिदांसर्वेषांयेन येन प्रकारेणोपभोगः फलपुष्पपत्रादिनोत्तममध्यमाधमरूपोभवति तथा तथाहिंसायामप्युत्तमसाहसादिर्दण्डोविधेयइति निश्चयः । तथा च विष्णुः फलोपभोगद्रुमच्छेदी तूत्तमंसाहसं पुष्पोपभोगद्रुमच्छेदीमध्यमं वल्लीगुल्मलताछेदी कार्षापणशतं तृणच्छेद्येकंकार्षापणंच पणएवमनुनाप्युक्तोवेदितव्यः ॥ २८५ ॥

( ४ ) **राघवानन्दः** । नृकायदण्डप्रसंगेन स्थावरस्यापि ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥ स्थाणुमन्येनु

संयन्तीति श्रुतेः ॥ तस्मात्पश्यन्ति पादपाइतिस्मृतेस्तेषां कायाभिमानित्वेनाहिंस्यत्वात्तत्कर्तुःप्रथमसाहसादिदण्डोज्ञेयइत्याह वनस्पतीनामिति । तथाच विष्णुः ॥ फलोपभोगद्रुमच्छेत्तातूत्तमसाहसं पुष्पोपभोगच्छेदी कार्षापणशतं तृणच्छेद्येकपणमिति । छेद्यत्रहिंसकः । धारणा शास्त्रमर्यादा ॥ २८५ ॥

( ५ ) **नन्दनः** । वनस्पतीनांस्थावराणां हिंसायामुपभोगगुरुलाघवापेक्षया दण्डः कल्प्यः ॥ २८५ ॥

( ६ ) **रामचन्द्रः** । हिंसायां छेदनेन इति सर्वत्र धारणा मर्यादा ॥ २८५ ॥

**मनुष्याणांपशूनांच दुःखाय प्रहृते सति ॥ यथायथामहद्दुःखंदण्डंकुर्यात्तथा तथा ॥ २८६ ॥**

( १ ) **मेधातिथिः** । यदुक्तंत्वग्भेदकइति तस्य विशेषोयं असति मनुष्यग्रहणे प्राणिमात्रहिंसाविषयत्वेऽथश्लोकस्य महापशूनां क्षुद्राणांच पशुपक्षिमृगाणांतुल्यदण्डता माभूदिति तदर्थमिदं यथा यथा महद्दुःखमिति स्वल्पे भेदने शोणिते च प्राणिनांमहत्त्वादल्पत्वंप्रहारस्य शतादूनोपि दण्डमर्हति शतादभ्यधिकोपि अन्येतु महद्गुणान्महतिदुःखे दण्डवृद्ध्यर्थनाल्पेऽपचयार्थंयथाश्रुतमेव तत्र दुःखाय प्रहृते दुःखोत्पत्त्यर्थंप्रहारे प्रमादस्तु नवृद्धिः अनुबन्धः परिज्ञायते तस्यैव श्लोकद्वयमुदाहरणंभङ्ग्याव्याख्येयम् ॥ २८६ ॥

( २ ) **सर्वज्ञनारायणः** । दुःखाय न मरणाय ॥ २८६ ॥

( ३ ) **कुल्लूकः** । मनुष्याणांपशूनांपीडोत्पादनार्थंप्रहारे कृते सति यथायथा पीडाधिक्यंतथातथा दण्डमप्यधिकंकुर्यात् । एवंच मर्मस्थानादौ त्वग्भेदनादिषु कृतेषु त्वग्भेदकः शतंदण्ड्यइत्युक्तादप्यधिकोदण्डोदुःखविशेषापेक्षया कर्त्तव्यः ॥ २८६ ॥

( ४ ) **राघवानन्दः** । मनुष्यादीनामपि दुःखतारतम्याद्दण्डतारतम्यमाह मनुष्याणामिति । प्रहृते प्रहारे कृते ॥ २८६ ॥

( ५ ) **नन्दनः** । मनुष्याणांपशूनांच मध्ये कस्मिंश्चिद्दुःखायप्रहृतेसतिदुःखतारतम्येन दण्डंकुर्यात् ॥ २८६ ॥

**अङ्गावपीडनायां च व्रणशोणितयोस्तथा ॥ समुत्थानव्ययंदाप्यः सर्वदण्डमथापि वा ॥ २८७ ॥**

( १ ) **मेधातिथिः** । अङ्गानामवपीडना दृढरज्वादिग्रहणसंबन्धिविश्लेषणादिना तत्र याचितधने पथ्यभिषगौषधादिमूल्येन प्रत्यापत्तिमायाति तावदपीडितस्य दाप्यः । एवंप्राणशोणितयोरवपीडनानामिति समस्तमपियोज्यं अथवा प्राणशोणितयोः समुत्थानव्ययंदाप्यइति संबन्धः सामर्थ्यापचितयोरिति लभ्यते समुत्थानंप्रकृत्यापत्तिः प्राणोबलंप्रहारेणास्वस्थस्य भोजनादृते कार्श्याद्युपपत्तौ बलमपचीयते तत्राङ्गेऽनष्टे प्रत्यागते च यावद्बललाभस्तावत्तदुपयोगे यत्किंचिद्घृततैलादिदापनीयं एवंशोणिताद्युत्पत्तौ तद्दुर्बलीभूतस्य व्याध्यन्तरंवा प्राप्तस्याप्रकृतशरीरावस्थाप्राप्तेः समुत्थानव्ययंदाप्यः न चेत्तद्गृह्णाति तदा तच्चदण्डंपरिपिण्ड्य सर्वराज्ञे दद्यात् ॥ २८७ ॥

( २ ) **सर्वज्ञनारायणः** । अङ्गावपीडनमङ्गभङ्गः । व्रणोमांसभेदः । शोणितं त्वग्भेदेन रक्तोत्पादः । समुत्थानं संरोहणं । तद्यावता भवतिभग्नादीनां तावत् भग्नाङ्गादिभ्योदापनीयः । प्राणपदं व्रणपदस्थाने क्वचित्पठ्यते तत्र प्राणोबलं तस्यसमुत्थानं प्रागवस्थाप्राप्तिः । तथा सर्वदण्डं प्रागुक्तं यथायोग्यं दण्ड्यः । वेतिसमुच्चये ॥ २८७ ॥

( ३ ) **कुल्लूकः** । अङ्गानांकरचरणादीनांव्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययंयावता कालेन पूर्वावस्था-

---

( २८७ ) व्रणशोणितयोस्तथा=प्राणशोणितयो ( ट, ठ, ड, त, थ )

प्राप्तिः समुत्थानसंबन्धोभवति तावत्कालेन पथ्यौषधादिना यावान्व्ययोभवति तमसौ दापनीयः अथ तंव्ययंपीडोत्पादको-न दातुमिच्छति तदा यः समुत्थानव्ययोयश्च दण्डस्तमेनंदण्डत्वेन राज्ञा दाप्यः ॥ २८७ ॥

( ४ ) **राघवानन्दः** । तेषामेव पीडाविशेषनिमित्तं दण्डविशेषमाह अङ्गेति अङ्गानां करचरणादीनाम् । प्राणे निश्वासावरोधने कृते । समुत्थानव्ययं येन व्ययेनौषधादिना समुत्थातुमर्हति तं दातुंनेच्छति तावदेवासौ दाप्यः त्वग्भेदकःशतमित्यनेनोक्तं सर्वतावदभावे सर्वस्वं देयमित्याह सर्वेति । एतत्तु वधमुद्दिश्य पीडामात्रइति पूर्वस्माद्भेदः ॥ २८७ ॥

( ५ ) **नन्दनः** । अङ्गावपीडनायां कृतायां व्रणशोणितयोश्च कृतयोः समुत्थाननामावृत्यावार्त्तितंतदर्थं व्ययंसमुत्थानव्ययमपीडिताय राज्ञा विचिकित्सादिहेतोर्दाप्यः अपि च सर्वेदण्डम् । अथवैतस्मिन्निमित्ते यावद्राज्ञः मदेयंदण्डात्मकंद्रव्यंतावत्पीडितायापि पीडकोदाप्यः ॥ २८७ ॥

**द्रव्याणि हिंस्याद्योयस्य ज्ञानतोऽज्ञानतोपि वा ॥ सतस्योत्पादयेत्तुष्टिंराज्ञे दद्याच्च तत्समम् ॥२८८॥**

( १ ) **मेधातिथिः** । द्रव्याणि गृहोपकरणान्यन्यानि वानुक्तदण्डविशेषाणि शूर्पोलूखलघटस्थालीपिठरादीनि तेषांहिंसाप्राग्रूपनाशः सत्यपि कार्यक्षमात्वे ज्ञानतोऽज्ञानतइति प्रमादकृतेबुद्धिपूर्वेचाविशेषेणाहिंसता तस्य द्रव्यस्वामिनोजनयेत्परितोषंतद्रूपान्यदानेन मूल्येन प्रणयेन वाराज्ञे तु द्रव्यमूल्यंद्रव्यंवादद्यात्अस्यक्वचिदपवादः ॥ २८८ ॥

( २ ) **सर्वज्ञनारायणः** । हिंस्यात् विनाशभङ्गादिना । तुष्टिमुत्पादयेत् वाचापि । तत्समं तन्मूल्येन तुल्यंदण्डम् । ज्ञानतोऽज्ञानतस्त्वर्धमित्यर्थसिद्धत्वान्नोक्तम् । तुष्ट्युत्पादनेतु न विशेषइति तदपेक्षया ज्ञानतोऽज्ञानतइत्युक्तम् ॥ २८८ ॥

( ३ ) **कुल्लूकः** । द्रव्याण्यनुक्तविशेषदण्डानि कटकानि ताम्रघटादीनि योयस्य ज्ञानादज्ञानाद्वा नाशयेत्सतस्य द्रव्यान्तरादिना तुष्टिमुत्पादयेत् राज्ञश्च विनाशितद्रव्यसमंदण्डंदद्यात् ॥ २८८ ॥

( ४ ) **राघवानन्दः** । द्रव्यनाशोपि हिंसाविशेषोऽतस्तत्रापि स्वामिनोमूल्यद्रव्यादिना तुष्टिं विदधदपि राजकीयदण्डमर्हतीत्याह द्रव्याणीति । तुष्टिं प्रणिपातेन धनेन वा । राज्ञस्तु तत्समंनाशितद्रव्यमूल्यसमंदद्यात् ॥ २८८ ॥

( ५ ) **नन्दनः** । द्रव्याणि वस्त्रादीनि तुष्टिमुत्पादयेत्तदा द्रव्यदानादिना । तत्समंहिंसितद्रव्यसमं अज्ञानतोहिंसायांतुष्टिर्ज्ञानतोहिंसायांतुष्टिश्चराज्ञेतत्समंद्रव्यदानंच ॥ २८८ ॥

( ६ ) **रामचन्द्रः** । द्रव्याणि वस्तूनि योयस्य हिंस्यात् ज्ञानतः पूर्णदण्डः कार्यः । अज्ञानतः अज्ञानपूर्वके नाशे अर्धदण्डः ॥ २८८ ॥

**चर्मचार्मिकभाण्डेषु काष्ठलोष्ठमयेषु च ॥ मूल्यात्पञ्चगुणोदण्डः पुष्पमूलफलेषु च ॥ २८९ ॥**

( १ ) **मेधातिथिः** । चर्मचार्मिकयोर्द्वन्द्वंकृत्वा भाण्डपदेन विशेष्येण समासः अथवा धार्मिकभाण्डयोर्विशेषणसमासंकृत्वा चर्मशब्देन द्वन्द्वः चर्मविकाराश्चार्मिकाणि भाण्डानि कटिसूत्रवरत्रादीनि चर्माण्यविकृतानि गवादीनांअथवा चर्मभाण्डानि केवलचर्ममयानि चर्मावनद्धानि चार्मिकाणि काष्ठमयभाण्डान्युलूखलमुसलफलकादीनि लोष्ठोमृद्विकारः पाषाणाकृतिः पिण्डीभूता मृत्तन्मयानि स्वल्पपाकाधानादीनि तन्नाशने मूल्यात्पञ्चगुणोदण्डस्तुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव ॥ २८९ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वोक्तापवादस्थानमाह चर्मेति । चर्म स्वरूपतः । चार्मिकं चर्मनिर्मितंभाण्डम् । काष्ठभाण्डेषु लोष्टेन मृदा कृतेषुच भाण्डेषु नाशितेषु द्रव्यवतेमूल्यंदाप्यः । तथा मूल्यात्पञ्चगुणोनृपाय ॥ २८९ ॥

( ३ ) **कुल्लूकः** । चर्मणि चर्मघटितवरत्रादौ चर्मकाष्ठमृत्तिकानिर्मितेषु च भाण्डेषु पुष्पमूलफलेषु परस्य नाशितेषु मूल्यात्पञ्चगुणोदण्डोराज्ञोदेयः स्वामिनश्च तुष्टिरुत्पादनीयैव ॥ २८९ ॥

( ४ ) **राघवानन्दः** । द्रव्यविशेषे तद्भेदमाह चर्मेति । चर्मणि तन्निर्मितेषु लोष्टोत्र मृत् तन्निर्मितेषु घटादिषु एतेषु नाशितेषु । स्वामिनस्तुष्ट्युत्पादोनुवर्तते ॥ २८९ ॥

( ५ ) **नन्दनः** । चार्मिकभाण्डादिषु हिंसितेष्विति विपरिणामः । लोष्टंमृत्पिण्डः चर्मादिभ्योन्यत्र पूर्वोक्तस्तत्समोदण्डः ॥ २८९ ॥

( ६ ) **रामचन्द्रः** । चर्मादिभाण्डेषु नष्टेषु चर्मोस्यायंचार्मिकः मूल्यात्पञ्चगुणोदण्डः द्रव्यस्वामिने मूल्यंपञ्चगुणंदेयम् ॥ २८९ ॥

## यानस्य चैवयातुश्च यानस्वामिनएव च ॥ दशातिवर्तनान्याहुः शेषेदण्डोविधीयते ॥२९०॥

( १ ) **मेधातिथिः** । सत्यामपि हिंसायां क्वचिद्दोषोनास्तीत्येतदनेन प्रकरणेन प्रदर्श्यते । यानंगन्त्र्यादि यदारुह्य यान्ति पन्थानंतच्च गन्त्र्यादिबलीवर्दगर्दभमहिषादिवाह्यंतएव वा गर्दभादयः पृष्टारोह्यायानानि । याता तदारूढः सारथ्यादिः यानस्वामीयस्य तत्स्वयानंतत्रैषांचक्रवेगादिभीरथ्याकर्षणयुक्तैर्वाश्वादिभिः कस्यचिद्द्रव्यस्य नाशोमरणंवा तत्र पशुस्वामियानव्यतिक्रमन्याये प्राप्ते कदाचिद्यातुर्दोषः कदाचित्स्वामिनः कदाचिदुभयोः कदाचिन्नकस्यचिदपीति योविशेषस्तत्र नोक्तइहैवेष्यते सउच्यते अतिक्रम्य हिंसादण्डंवर्तते नात्र दण्डोस्ति दण्डनिमित्तानि नभवन्तीति यावत् शेषेदण्डउक्तेभ्योनिमित्तेभ्यः । अन्यत्र तान्यपि वक्ष्यति ॥ २९० ॥

( २ ) **सर्वज्ञनारायणः** । यानस्य यद्यपि पश्वादेर्नदण्डस्तथापि शिबिकावाहकमनुष्यादिरूपस्यास्तीति यानग्रहणम् । यानुर्यापयितुर्नेतुःसारथ्यादेः । यानस्वामिनोऽधिकृतस्य । वक्ष्यमाणान्यतिवर्तनानि दण्डातिवृत्तेर्दण्डातिभावस्थानानि । अभिवर्तनानीति क्वचित्पाठः । तत्र दण्डार्थं निवर्तनं विरोधनंनास्तीत्यर्थः ॥ २९० ॥

( ३ ) **कुल्लूकः** । यानस्य रथादेर्यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानंतेषां छिन्ननास्यादीनि दशनिमित्तानि दण्डमतिक्रम्य वर्तन्ते एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च प्रकृते यानस्वामिनांदण्डोन भवतीति मन्वादयआहुः । एतद्व्यतिरिक्तनिमित्ते च पुनर्दण्डोऽनुष्ठीयते ॥ २९० ॥

( ४ ) **राघवानन्दः** । अत्रैव प्रतिप्रसवमाह यानस्येति । यानस्य रथशकटादेः । छिन्ननास्यादिदशनिमित्तिकान्दण्डानतिक्रामन्तीत्यतिवर्तनानि । नैतेषु निमित्तेषु दण्डः यातुः सारथेः तदारूढस्य यानस्वामिनश्च न स्यात् । तथा च वक्ष्यमाणानि दशनिमित्तानि वर्जयित्वा शेषे दण्डइत्यन्वयः ॥ २९० ॥

( ५ ) **नन्दनः** । यानस्यशकटादेः यातुःसारथेः यानस्वामिनोयानारूढस्य च दशातिवर्त्तनान्याहुः दण्डविधानरहितानि दशातिक्रमणान्याहुरित्यर्थः । शेषइति वर्त्तने दण्डोविधीयते न तेषु दशस्विति ॥ २९० ॥

( ६ ) **रामचन्द्रः** । यानादिकानां भग्नेसति दशातिवर्तनान्याहुः शेषस्थानेदण्डोविधीयते ॥ २९० ॥

## छिन्ननास्ये भग्नयुगेतिर्यक्प्रतिमुखागते ॥ अक्षभङ्गेच यानस्य चक्रभङ्गेतथैव च ॥ २९१ ॥

( २ ) **सर्वज्ञनारायणः** । तान्याह छिन्ननास्यइति । वाहकाक्षादिरज्जुच्छेदे भङ्गे युगकाष्ठस्य दैवादभिघातादिना तिर्यग्गते याने तथा प्रतिमुखागते प्रत्यावृत्यागते ॥ २९१ ॥

( ३ ) **कुल्लूकः** । नासायां भवंनास्यं शरीरावयवत्वाद्यत् । साचेहबलीवर्दनासासंबंधिनीरज्जुः छिन्नंनास्यरज्जौ बलीवर्दादिके भग्नयुगाख्येकाष्ठे रथादौ भूमिवैषम्यादिना तिरश्चीनंवा गते तथा चक्रान्तःप्रविष्टाक्षकाष्ठभङ्गयन्त्राणांचर्मबंधनानांछेदने योक्त्रस्य पशुग्रीवारज्जौ रश्मेः प्रहरणस्य छेदनेऽपसरापसरेत्युच्चैः शब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसाद्रव्यविनाशयोःकृतयोः सारथ्यादेर्दण्डोनास्तीति मनुराह ॥ २९१ ॥ २९२ ॥

( ४ ) **राघवानन्दः** । तान्येवाह छिन्नेतिद्वाभ्याम् । छिन्ननास्ये नासायैतत्संबन्धिरज्जुद्रव्यं तस्मिन्बलीवर्दादिना छिन्ने । भग्नयुगे युगाख्ये रथकाष्ठे भग्ने । तिर्यक्प्रातिमुखागते भूमिवैषम्यात्प्रतीचीनआगते । अक्षभङ्गे चक्रान्तःकाष्ठमक्षम् ॥ २९१ ॥

( ५ ) **नन्दनः** । तान्येवातिवर्त्तनानि श्लोकद्वयेनाह छिन्ननास्यइति । छिन्ननास्येछिन्ननासिकारज्जौ याने सति यन्तारमतिक्रम्य तिर्यगागते प्रतिमुखमागते च ॥ २९१ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह छिन्ननास्यइति ॥ २९१ ॥

## छेदने चैव यन्त्राणांयोक्त्ररश्म्योस्तथैव च ॥ आक्रन्देचाप्यपैहीति न दण्डंमनुरब्रवीत् ॥२९२॥

( १ ) **मेधातिथिः** । यत्रनास्ति दोषस्तानितावदाह नासायां भवंनास्यं शरीरावयवाद्यत् नासिकापुठसंयोगिनी बलीवर्दानांरज्जुरश्वानांखलीनंहस्तिनामङ्कुशस्तस्मिंछिन्ने त्रुटिते युगे चभग्ने रथाङ्गकाष्ठंयुगंछिन्नंनास्यमस्येतिबहुव्रीहिणा रथउच्यते पशुर्वा उभयोरपि साक्षात्पारंपर्येण संबन्धात् तिर्यक्प्रतिमुखागते याने तिरश्चीनंवा प्रतीचीनंवा कथंचिद्भूवैषम्यात्पशुत्रासाद्वा यानाङ्गत्वे कंचिदपराध्येन्नदुष्येत् प्राजकोहि संमुखीनाञ्छक्तोरक्षितुं तिर्यक्प्रत्यवस्थितौ त्वदृश्यमानस्य कथंरक्षितुंप्रतिमुखागतंप्रत्यगावृत्तिः । अन्येतु तिर्यगागते हिंस्यमाने ऋजुगामिन्येनयानेन दोषमाहुः प्रतिमुखंचाभिमुखंमन्यन्ते अभिमुखागतः किमिति चक्रिणंदृष्ट्वापन्थानंन ददाति । अक्षचक्रे रथाङ्गेप्रसिद्धे यन्त्राणि चर्मबन्धनानि शकटकाष्ठानां योक्त्रंपशुग्रीवाकाष्ठरश्मिः प्रग्रहोहस्तवभियुग्यानांसंचरणनियमनार्थः आक्रन्दउच्चैः शब्दोऽपेहीत्यपसरेत्यर्थः । * अविधेयेषु युग्येष्वपसरेति क्रोशतः प्राजकस्य पथोनातिक्रामन्यदिहिंस्यान्न दोषः ॥ २९२ ॥

( २ ) **सर्वज्ञनारायणः** । यन्त्राणां काष्ठसन्धिघटनानाम् । योक्त्रं युगादिबन्धनरज्जुः । रश्मिः अश्वापकर्षणरज्जुः । आक्रन्दे सारथिनान्येनवाक्रुष्टे । अशक्यनिवर्तनत्वेसतीदम् ॥ २९२ ॥

( ४ ) **राघवानन्दः** । यन्त्राणां चर्मबद्धानाम् । योक्त्ररश्म्योः योक्त्रस्य पशुग्रीवास्थरज्जोः रश्मेः प्रग्रहस्यच छेदने। आक्रन्दे सारथ्यादिना अपेहीत्युक्ते । एतैर्हि प्राणिहिंसाद्रव्यनाशयोःसत्वेपि सारथ्यादेर्न दण्डइतिमनुरब्रवीदित्यन्वयः ॥ २९२ ॥

( ५ ) **नन्दनः** । योक्त्रस्य छेदने च यन्तुर्यानस्वामिनोयानारूढानांवा दण्डंमनुरब्रवीत् ॥ २९२ ॥

( ६ ) **रामचन्द्रः** । चक्ररश्म्योःयुगबन्धनरज्जुः आक्रंदेततपृष्ठेइति अपेहि ॥ २९२ ॥

## यत्रापवर्तते युग्मंवैगुण्यात्प्राजकस्य तु ॥ तत्र स्वामी भवेद्दण्ड्योहिंसायांद्विशतंदमम् ॥ २९३॥

( १ ) **मेधातिथिः** । प्राजकोयानसारथिस्तस्य वैगुण्यमशिक्षितत्वं नतु प्रमादः प्रमादे हि शिक्षितस्य स्वामिनोन दो-

---

* अविधेयेषु=इतिकरणोभाषाप्रसिद्धतदर्थशब्दोच्चारणार्थोनत्वयमेवशब्दप्रयोक्तव्यः अविधेयेषु ( आशा )

षः तस्माद्धेतोर्यदि युग्यंसहसापवर्तते स्वष्टंमार्गंहित्वा तिर्यक्पश्चाद्वा गच्छेद्द्रव्यंचांकिंचिन्नाशयेत्तत्र स्वामीदण्ड्यः। अशिक्षितः प्राजकः किमित्यारोपितः। मनुष्यमारणेक्षिप्रमित्यादिवक्ष्यमाणेन प्राणिभेदेन द्रव्यभेदेन च दण्डान्तरविधानाद्द्विशतइतिविवक्षति दण्डनिमित्तमेतदित्येतावतैव वाक्यस्यार्थतत्वादुत्तरत्र न कश्चिदन्योर्थः श्रूयते येन वाक्यंतत्र संख्याविधायकमित्युच्यते ॥ २९३ ॥

( २ ) **सर्वज्ञनारायणः**। अपवर्तते व्यावर्ततेयुग्यंरथादि। वैगुण्यादज्ञानात्। स्वामीदण्ड्यः तादृक्सारथिकरणात्। अङ्गभङ्गादिरूपायांहिंसायांभूतायां द्विशतंपणान्दण्ड्योनान्यथा ॥ २९३ ॥

( ३ ) **कुल्लूकः**। यत्र सारथेरकौशलाद्यानमन्यथा व्रजति तत्र हिंसायामशिक्षितसारथ्यनियोगत्स्वामी द्विशतंदण्डंदाप्यः स्यात् ॥ २९३ ॥

( ४ ) **राघवानन्दः**। एतदन्यत्र दण्डमाह यत्रेति। प्राजकस्य सारथेर्वैगुण्यादकौशलात्। युग्यंरथशकटादि। तन्निमित्ताहिंसायां स्वामीद्विशतं दण्ड्यइत्यन्वयः ॥ २९३ ॥

( ५ ) **नन्दनः**। यत्र निमित्ते युग्यंयानंरथादिकंप्राजकस्य वैगुण्यात्सारथेरसामर्थ्यादपवर्तते विषमंप्रवर्तते तत्र निमित्ते मनुष्यपश्वादिहिंसायां द्विशतंदमंस्वामी दण्ड्योभवेदनाप्तप्राजकनियोगात् प्राजकस्य मनुष्यमारणे क्षिप्रवंचोरवदित्यादिश्लोकद्वये वक्ष्यमाणसर्वजनसामान्येति एवंदण्डइत्यवगन्तव्यम् ॥ २९३ ॥

( ६ ) **रामचन्द्रः**। अथ यत्र स्थानात् युग्यंरथं ॥ युग्यंपत्रंच धोरणं इत्यमरः ॥ प्राजकस्य सारथेः वैगुण्यात् अपवर्ततेतत्स्वामी दण्ड्यः भवेत् ॥ २९३ ॥

**प्राजकश्चेद्भवेदाप्तः प्राजकोदण्डमर्हति ॥ युग्यस्थाः प्राजकेऽनाप्ते सर्वेदण्ड्याः शतंशतम् ॥ २९४॥**

( २ ) **सर्वज्ञनारायणः**। आप्तोविज्ञःप्राजकोदण्ड्यः स्वाम्यपराधाभावात्। तत्रानाप्तेअज्ञे युग्यस्थानरथस्थाः सारथिपक्षपूरकतया विज्ञाताःस्वामिना नियुक्तास्ते दण्ड्याः। अनःस्वामी तेचसर्वे शतं प्रत्येकं दण्ड्याः ॥ २९४ ॥

( ३ ) **कुल्लूकः**। यदि सारथिः कुशलः स्यात्तदा सारथिरेवोक्तद्विशतंदमंवक्ष्यमाणंच मनुष्यमारणइत्यादिकंदण्डमर्हति न स्वामी अकुशलेतु तस्मिन्सारथिस्वामिव्यतिरिक्ताअन्येपि यानारूढाअकुशलसारथिकयानारोहणात्सर्वेप्रत्येकंशतंशतंदण्ड्याः ॥ २९४ ॥

( ४ ) **राघवानन्दः**। तत्रैव विधानान्तरमाह प्राजकश्चेति। आप्तोनिपुणोनैपुण्येतु प्राजकस्य। सर्वे स्वामिसारथियुग्यस्थाअपि दण्डभाजः। यग्यं शकटादि। अकुशलसारथ्येनोढत्वात् शतंशतंप्रत्येकम् ॥ २९४ ॥

( ५ ) **नन्दनः**। प्राजकआप्तश्चेन्मनुष्यपश्वादिहिंसायां प्राजकएवंदण्डमर्हति न स्वामी प्राजके त्वनाप्ते न केवलंस्वाम्येव दण्ड्यःकिन्तु युग्यस्थारथादिस्थाःसर्वेपिशतंशतंदण्ड्याः ॥ २९४ ॥

( ६ ) **रामचन्द्रः**। प्राजकः सारथिश्चेत् आप्तः निपुणः। युग्यस्थाः सारथिपक्षपूरकाः प्राजकेअनाप्तेसति अनिपुणेसतिते सर्वेशतंदण्ड्याः ॥ २९४ ॥

**सचेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ॥ प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः ॥ २९५॥**

( १ ) **मेधातिथिः**। उक्तोहिंसायांदमस्तत्र विशेषंवक्तुमिदमाह सप्राजकःपथिसंरुद्धोऽग्रजघनावसर्पिणा संरुद्धोनिरुद्धगतिः पश्चात्स्थितेनाक्षिशितत्वात्प्रमादाद्वा वेगेन धुर्याश्चोदिताः पुनःस्थिरयतश्चेन्निकटोरथस्तेन च तस्य वेगनिरोधेकृ-

ते यदि पुरोरथस्थविगपातात्पशुभिरयुक्तैरश्वादिभिः रथेन रथावयवैर्वा प्राणिनोमनुष्यादीन्मारयेत् ततोदण्डस्य विचारोनास्ति स्थितएव दण्डः अथवाजवोत्पत्तिताअश्वाः पथिसंरोधकसंमुखीनरथदर्शनेन बलाद्विधार्यमाणास्तिर्यग्गत्या गच्छेयुः पार्श्वकीयाः प्रत्यगवस्थितत्वात्तथा हन्युस्तत्र दण्डोविचारितोनास्ति प्राजके दोषाभावात् । अथवापथितोन स्थितोवर्तमानः संरुद्धोनविध्रियमाणोऽथवा विचारितोविशेषेण विहितोविशेषितइति ॥ २९५ ॥

( २ ) **सर्वज्ञनारायणः** । अशक्यविषयेतु हिंसायामाह सचेदिति । सयुग्यादिः । पशुभिर्हस्त्यादिभिः । उपलक्षणंचैतत् । प्रपातगमनोच्चारोहणतिर्यग्गमनादिनापीत्यशक्यप्रतीकारागन्तुनिमित्तवशादित्यर्थः । दण्डोऽविचारितोननिर्णीतोमुनिभिः नास्त्येवेत्यर्थः ॥ २९५ ॥

( ३ ) **कुल्लूकः** । सचेत्प्राजकःसंमुखागतैः प्रचुरगवादिभीरथान्तरेण वा संरुद्धः स्वरथगमनानवधानात्प्रत्यक्समर्पणाक्षमःसंकटेपि स्वरथतुरगान्प्रेरयन्तुरगैरथेन वा रथावयवैर्वा प्राणिनोव्यापादयति तत्राविचारितोदण्डः कर्त्तव्यएव ॥ २९५ ॥

( ४ ) **राघवानन्दः** । प्रकारान्तरेण दण्डमाह सचेदिति । पशुभिः गजादिभिः स्वरथसबन्धव्यतिरिक्तैः रथेन रथान्तरेणवा बद्धोगन्तुमशक्तःसन्परावृत्तत्वात् उक्तातिरिक्तपाश्चात्यात् । प्रमापयेत् हिंस्यात् । अकुशलोभूत्वा लोभायत्तो यतःप्रवृत्तः अतोदण्डार्हः । अविचारितः पूर्वं विचारोन कृतः केवलं किंतु दण्डोऽस्तीति ॥ २९५ ॥

( ५ ) **नन्दनः** । योयंस्वामिप्राजकरथस्थानांदण्डउक्तस्तत्र प्राजकंप्रति नियममाह सचेत्त्विति । सआप्तोनाप्तोवा प्राजकः पथि पथिकैः संरुद्धः पशुभिः स्वरथवाहिभिर्बलीवर्द्दादिभीरथेन वा प्राणभृतः प्रमापयतिचेत्तत्र प्रमापणे दण्डः अविचारितोऽसंदिग्धः पुनस्तद्भयात्पथोपक्रमणनिमित्तरूपपतनादिहेतुकेप्रमापन्नइति ॥ २९५ ॥

( ६ ) **रामचन्द्रः** । पशुभिः सःयुग्यादिना रथंपशुभिःपथि संरुद्धः प्राणिभृतः प्रमापयेत् हन्यात् तत्र दण्डः अविचारितः मुनिभिः ॥ २९५ ॥

**मनुष्यमारणे क्षिप्रंचौरवत्किल्बिषंभवेत् ॥ प्राणभृत्सुमहत्स्वर्धंगोगजोष्ट्रहयादिषु ॥ २९६ ॥**

( १ ) **मेधातिथिः** । तादृशे प्राजके रथपशुभिर्मानुष्यश्चेन्मार्यते तदा चौरवत्तस्य किल्बिषंवादण्डः । यद्यपि चौरस्य वधः सर्वस्वहरणादयोदण्डास्तथापीह दण्डएव गृह्यते नवधः महत्स्वर्धमिति तत्रैवार्धसंभवात् सचोत्तमसाहसः कैश्चिदभ्युपगतोयतश्चक्षतेद्विशतोदमोऽतः प्रथमस्थानांमुख्यानामुत्तमोयुक्तइति प्राणभृतः प्राणवन्तोमनुष्यतिर्यक्पक्ष्यादयः । महत्सु महत्त्वंगवांप्रभावतोहस्त्यादीनांप्रमाणतः आदिग्रहणाद्गर्दभाश्वतरव्याघ्रादयश्च कथंचित्परिगृह्यन्ते वयन्तुक्रमः सहस्रमित्येवमवक्ष्यत् यद्येवारवद्दण्डानामभिप्रेताअभविष्यन् तस्मादर्धग्रहणाद्वेधामाभूद्धनदण्डास्तु सर्वस्वहरणादयः सर्वेचौरोक्ताः पुरुषापेक्षयातिदिश्यन्ते । ननु च मनुष्यमारणेकस्य चौरदण्डःस्यादितिव्यतिदेशोयुक्तः सप्रतिपदंमनुष्यहनने विहितः सच पुरुषाणांकुलीनानामिति वधएव तत्र किमिति वाक्यान्तरगतार्धशब्दानुरोधिनैव व्याख्यायते वरमर्धस्यैव गुणितः कदाचिद्वृत्तिराश्रीयतां सत्यंयद्धर्मशब्दोमारणेन संबध्यमानोऽन्यथोपपद्यते नच चौरवदित्यस्यानुषङ्गागतस्यार्थान्तरवृत्तिः पूर्वापरवाक्ययोः शक्या ॥ २९६ ॥

---

( १ ) चक्षते=क्षुद्रकपशूनांतृतीयस्थानप्राप्तानां ( आआ )

( २ ) मुख्यानां=मनुष्याणां ( आआ )

( २ ) **सर्वज्ञनारायणः** । अथ लगुडादिना बुद्धिपूर्वं मारणे दण्डमाह मनुष्यमारणइति । प्राणभृत्सु महत्सु गवादिषु अर्धं यस्य चौर्ये यावान्दण्डोधनकृतस्तदर्धम् ॥ २९६ ॥

( ३ ) **कुल्लूकः** । सकृदपराधे*कीदृशइत्याह मनुष्येति । तत्र मनुष्यमारणे प्राजकस्यानवधानाद्यानेन कृतं शीघ्रमेव चौरदण्डोत्तमसाहसंभवेन्नतु मारणरूपः प्राणभृत्सु महत्स्वर्द्धमिति श्रवणात् । गोगजादिषु महत्सु प्राणिषु मारितेषूत्तमसाहसस्यार्द्धपञ्चशतपणोदण्डोभवेत् ॥ २९६ ॥

( ४ ) **राघवानन्दः** । तांदण्डव्यवस्थामाह मनुष्येतित्रिभिः । चौरवत् चोरश्चोत्तमसाहसं इत्युक्तेः । गवित्यादिचतुष्टयंविशेषणं प्राणभृतादेरर्धंपञ्चशतानि ॥ २९६ ॥

( ५ ) **नन्दनः** । एवंयानेन ममापणे दण्डउक्तः । अथ पारुष्येण मनुष्यपश्वादिमारणे दण्डंश्लोकत्रयेणाह मनुष्यमारणइति । किल्बिषंदण्डः सचार्थविषयएव अर्थविषयसामर्थ्यात् चोरकिल्बिषमुत्तमसाहसः गवादीनांप्रभावतोमहत्त्वम् ॥२९६॥

## क्षुद्रकाणां पशूनान्तु हिंसायां द्विशतोदमः ॥ पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ २९७ ॥

( १ ) **मेधातिथिः** । अपठितपरिमाणाः क्षुद्रकास्तेच केचिद्वयस्ते वत्सकिशोरककलभादयः केचिज्जातिस्वभावतोऽजैडकादयः तत्राजाविकानांपञ्चमाषान्वक्ष्यति परिशेषाणांगवादीनामेवायंदण्डोल्पपरिमाणानाम् । अशुभाः*काकोलूकश्च शृगालादयः पशुशब्दश्चतुष्पाज्जातिवचनः हिंसामात्रेण दण्डमिममिच्छन्ति न प्रकृतया न विधिहेतुंब्रुवते तत्र दण्डोविचारितइत्यनेनैव यानप्रकरणंव्यवच्छिन्नंविचारितः समाप्तविचारइत्यर्थः । इदानीमेतत्प्रकरणनिरपेक्ष्यमुच्यतइति एवन्तु प्राणभृत्सु महत्स्वर्धमिति हस्तादिच्छेदोन मारणमित्यर्धशब्दोनेयः स्मृत्यन्तरात् ॥ २९७ ॥

( २ ) **सर्वज्ञनारायणः** । क्षुद्रपशूनां मृगपक्ष्यादीनां द्विशतइत्युत्तमदण्डोपदर्शनमेतत् । तत्रतत्रतु क्षुद्रत्वे ह्रासःक्रमेणोह्यः । एतच्च परिगृहीतविषये । अपरिगृहीतेष्याह पञ्चाशत्त्विति । शुभेषु चित्रमृगशुकादिषु ॥ २९७ ॥

( ३ ) **कुल्लूकः** । क्षुद्रकाणांपशूनांजातितोविशेषापदिष्टेतरेषांवनचरादीनांवयसा च किशोरादीनांमारणे द्विशतोदण्डः स्यात् । शुभेषु मृगेषु रुरुपृषतादिषु पक्षिषु च शुकहंससारसादिषु पक्षिषु हतेषु पञ्चाशद्दण्डोभवेत् ॥ २९७ ॥

( ४ ) **राघवानन्दः** । क्षुद्रकाणामित्यल्पार्थे कः रुरुपृषतादीनाम् । शुभेषु हंसपारावतसारसादिषु कृष्णसारादिषु द्विशतोदमोन्यथाव्याधादीनामवृत्तिःस्यात् ॥ २९७ ॥

( ५ ) **नन्दनः** । क्षुद्राणांमार्जारादीनां मृगपक्षिहिंसितेषु ॥ २९७ ॥

## गर्दभाजाविकानान्तु दण्डः स्यात्पञ्चमाषिकः ॥ माषिकस्तु भवेद्दण्डः श्वसूकरनिपातने ॥ २९८ ॥

( १ ) **मेधातिथिः** । पञ्चमाषाः परिमाणमस्येति पाञ्चमाषिकः माषस्य च द्रव्यजातेरनुपपादनान्मध्यमकल्पनायाश्च न्याय्यत्वाद्रौप्यस्य निर्देशोयमित्याहुः । हिरण्यन्तु युक्तमेवंतत्सममिति नापि बाधिकंभवति अनुबन्धाद्यपेक्षया तुद्रव्यजातिः कल्प्येति सिद्धान्तः ॥ २९८ ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चमाषिकः सुवर्णमाषाः पञ्च तन्निष्पाद्योमाषकः सुवर्णमाषकः तन्निष्पाप्याद्यः । सूकरोग्राम्यः । वराहेत्वधिकम् ॥ २९८ ॥

---

* सकृदपराधे = रथसंकटापराधे ( क्ष )

* अशुभाः=शुभामृगात्तपृष्ठादयः आकारतोलक्षणतश्च पक्षिणोहंसशुकसारिकादयः । अशुभाः ।

( ३ ) **कुल्लूकः** । गर्दभच्छागेडकादीनांपुनर्मारणे पञ्चरूप्यमाषकपरिमाणोदण्डःस्यात् । नचात्र हैरण्यमाषग्रहणमुत्तरोत्तरलघुदण्डाभिधानात् । श्वसूकरमारणेषु पुनारौप्यमाषपरिमाणोदण्डः स्यात् ॥ २९८ ॥

( ४ ) **राघवानन्दः** । किंच गर्दभेति । अविर्मेषः । पञ्चमाषिकः पञ्च रूप्यमाषंपरिमाणंयस्य दण्डस्य सतथा ॥ २९८ ॥

( ५ ) **नन्दनः** । गर्दभाजाविकानांनिपातने ॥ २९८ ॥

( ६ ) **रामचन्द्रः** । अच्छागः अविकः रूप्यदण्डः ॥ २९८ ॥

**भार्यापुत्रश्च दासश्च प्रेष्योभ्राता च सोदरः ॥ प्राप्तापराधास्ताड्याः स्युरज्वा वेणुदलने वा॥२९९॥**

( १ ) **मेधातिथिः** । प्राप्ताअपराधंप्राप्तापराधाअपराधोन्यतिक्रमः नीतिभ्रंशः सयदा तैः कृतोभवति तदा ताडयितव्याः ताडनमपि हिंसेत्युक्तंसा च न हिंस्याद्भूतानीति प्रतिषिद्धाऽपराधे निमित्ते भार्यादीनांप्रतिप्रसूयते संबन्धिशब्दाश्चैते यस्य भार्या यश्च यस्य दासः सतेनानुशासनीयः मार्गस्थापनोपायविधिः परश्चायंन ताडनविधिरेव वाग्दण्डाद्यपि कर्तव्यं अपराधानुरूपेण कदाचित्ताडनम् सोदरस्थाने कनीयान्पठितव्यः भ्राता तथानुजः सहि ज्येष्ठस्य पुत्रवत्ताडनार्हः वैमात्रेयोपि गुणवज्ज्येष्ठतन्त्रश्च सोप्युन्मार्गगामी ताडनादिपर्यन्तैरुपायैर्निवारणीयः । वेणुदलंवंशत्वक् एतदप्युपलक्षणंतथाविधानां मृदुपीडासाधनानां शिष्यादीनाम् ॥ २९९ ॥

( २ ) **सर्वज्ञनारायणः** । भ्राता कनीयान् ॥ २९९ ॥

( ३ ) **कुल्लूकः** । भार्यापुत्रादयः कृतापराधारज्वा वातिलघुवेणुशलाकया ताड्याभवेयुः शिक्षार्थंताडनविधानादत्रदण्डापवादः ॥ २९९ ॥

( ४ ) **राघवानन्दः** । ननुपितररमित्यभिशस्ति निषेधता । भार्यादीनामपराधे ताडनमपि निरस्तमतस्तेषां स्वातन्त्र्ये प्राप्ते ताडनसाधनं तदुचितस्थलान्यावेदयनूताड्यत्वमाह भार्येति सार्धेन । तत्रत्यं तनयपदं भार्याद्युपलक्षणं तुल्यन्यायत्वात् । वेणुदलेन वेणोरेकांशेन ॥ २९९ ॥

( ५ ) **नन्दनः** । अथ भार्यापुत्रादीनामनुशासनप्रकारमन्यथानुशंसने दण्डविधानार्थमाह भार्यापुत्रश्चेति ॥ २९९ ॥

( ६ ) **रामचन्द्रः** । भार्यादयः प्राप्तापराधाः रज्वा वेणुदलेनवा ताड्याः ताडनीयाः । सोदरःभ्राताचअन्यमातृजोन ॥ २९९ ॥

**पृष्ठतस्तु शरीरस्य नोत्तमाङ्गेकथंचन ॥ अतोन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्विषम् ॥ ३०० ॥**

( १ ) **मेधातिथिः** । उक्तताडनसाधनाभ्यामनेन प्रकारेण भ्रन्नक्षादिषु लगुडादिभिर्वा चौरदण्डं न प्राप्नोति निन्दैषा नत्वयमेव दण्डः योन्यत्र हिंसायादण्डः सोत्र भवतीत्युक्तंभवति ॥ ३०० ॥

( २ ) **सर्वज्ञनारायणः** । चौरकिल्विषं ताडितस्यामरणे स्तेयदण्डोमरणेतु भूयस्त्वमूह्यमित्यर्थः ॥ ३०० ॥

( ३ ) **कुल्लूकः** । रज्वादिभिरपि देहस्य पृष्ठदेशे ताडनीयाः नतु शिरसि । उक्तव्यतिरेकेण प्रहरणोवाग्दण्डधनदण्डरूपश्चौरदण्डंप्राप्नुयात् ॥ ३०० ॥

---

( २९९ ) वा=च ( क )

( २९९ ) प्रेष्यो = शिष्यो ( ज, झ, ञ, ट )

( ३०० ) कथंचन = नवक्षसि ( ट, ड, )

( ४ ) **राघवानन्दः** । उक्तातिक्रमे दोषमाह अतइति । अतोन्यथापृष्ठादन्यत्र ॥ ३०० ॥

( ५ ) **नन्दनः** । ताडनस्थानमाह पृष्ठतस्त्विति । अन्यथाऽनुशासने दण्डउत्तरार्द्धेनोच्यतइति दण्डपारुष्यनिर्णयः ॥ ३०० ॥

**एषोखिलेनाभिहितोदण्डपारुष्यनिर्णयः ॥ स्तेनस्यातः प्रवक्ष्यामि विधिंदण्डविनिर्णये ॥ ३०१ ॥**

( १ ) **मेधातिथिः** । एषनिःशेषेणोक्तोदण्डपारुष्यनिर्णयोदण्डव्यवस्था दण्डशब्दोहि साधनोपलक्षकतयाविनयदानेविवक्षितार्थः नामधेयपूर्वपदंस्तेनस्य चौरस्य दण्डभेदानतः परंवक्ष्यामीत्युपसंहारोपन्यासार्थःश्लोकः ॥ ३०१ ॥

( २ ) **सर्वज्ञनारायणः** । एषइति । स्तेनस्य स्तेनदोषे ॥ ३०१ ॥

( ३ ) **कुल्लूकः** । एषदण्डपारुष्यनिर्णयोनिःशेषेणोक्तः अतऊर्ध्वंचौरदण्डविनिर्णये विधानंवक्ष्यामि ॥ ३०१ ॥

( ४ ) **राघवानन्दः** । कायदण्डमुपसंहरंस्तेनदण्डंप्रतिजानीते एषइति । दण्डविनिर्णये दण्डार्थम् ॥ ३०१ ॥

( ५ ) **नन्दनः** । अथ स्तेयनिर्णयंप्रस्तौति एषोऽखिलेनेति अतः परंस्तेयसाहसयोरर्थहिंसात्मकत्वेनापृथग्भावमाशङ्क्यभेदोपन्यासेनपरिहरति तस्मात्साहसन्त्वनवयवप्रसभंकर्म यत्कृतं । निरन्वयंभवेत्स्तेयंकृत्वापव्ययते च यत् । अन्वयोनुसारोनुमतिरिति यावत् तद्युक्तमन्वयवत् यत्कर्मकृततांयोपहारः कृतस्तत्साहसंस्यात् येन केन चिदुपायेन स्वामिनोऽनुमतिमासाद्य परद्रव्यापहरणंसाहसंस्यादित्यर्थः प्रसभंप्रसह्य यत्कृतंतच्च साहसंस्यात् अनुमतमपि यत्कर्मकृत्वापव्ययतेऽपह्नुते पूरुषस्तच्च स्तेयंभवेदिति ॥ ३०१ ॥

**परमंयत्नमातिष्ठेत्स्तेनानांनिग्रहे नृपः ॥ स्तेनानांनिग्रहादस्य यशोराष्ट्रंच वर्धते ॥ ३०२ ॥**

( १ ) **मेधातिथिः** । कश्चित्करुणावानक्रूरोहिंसाकर्मेति मन्यमानोन प्रवर्तते अतस्तत्प्रतिपत्यर्थंस्तेननिग्रहस्तुत्यर्थवादः प्रक्रम्यते नात्र हिंसा दोषोस्ति प्रत्युतदृष्टोपकारहेतुत्वात्स्तेनाहिंसैव श्रेयस्करी वेदतुल्यतांच ख्यापयितुमर्थवादाभूयांसस्तत्र हि प्रायेण सर्वार्थवादकाविध्युद्देशादिति तत्प्रतीत्यनुसरणेन वैदिकोयमर्थइति प्रसिद्धिः । भवन्ति केचित्प्रतिपत्तारोये स्तुतिभिरिरितितरांप्रवर्तन्ते परमंयत्न प्रकृष्टमतिशयवत्तात्पर्यमाश्रयेच्चौरैश्चारयेत्साक्षात्प्रकाशंचातिप्रयत्नतः । स्तेनाश्चौराः निग्रहोनियमनवधबन्धनादि एवंकृते यशः ख्यातिर्भवति निरुपद्रवोस्य राज्ञोदेशस्तेनानाभिभवन्ति निशादिवातुल्यात्तत्रेति सर्वत्रस्थितंभवति राष्ट्रंवर्धते राष्ट्रंजनपदस्तस्मिन्निवासिनश्च पुरुषाश्चौरैरनुपद्रूयमाणावर्धन्ते श्रीभिः प्रमोदमानाबहुपर्यन्ते देशान्तरस्थाअपि निरुपद्रवंराष्ट्रमाश्रयन्ते ततोवर्धते ॥ ३०२ ॥

( २ ) **सर्वज्ञनारायणः** । निग्रहे दण्डने ॥ ३०२ ॥

( ३ ) **कुल्लूकः** । चौराणांनियमने राजा परममुत्कृष्टंयत्नंकुर्यात् यस्मात्चौरनिग्रहाद्राज्ञः ख्यातिर्निरुपद्रवतया राष्ट्रंचवृद्धिमेति ॥ ३०२ ॥

( ४ ) **राघवानन्दः** । तत्रदृष्टादृष्टदोषाननुसंधायिनोराज्ञःततोनिवृत्तिमाशंक्य दृष्टफलैः प्रलोभयन् तत्रयत्नाधिक्यंनोपरममितिपञ्चभिः । तत्र सततंनृपइत्यन्तं दृष्टफलमतःपरमदृष्टफलम् अस्य राज्ञः ॥ ३०२ ॥

( ५ ) **नन्दनः** । राज्ञास्तेननिग्रहोवश्यः कार्यइत्यष्टभिः श्लोकैराह परमंयत्नमिति । अस्य राज्ञः ॥ ३०२ ॥

**अभयस्य हि योदाता सपूज्यः सततंनृपः ॥ सत्रंहि वर्धते तस्य सदैवाभयदक्षिणम् ॥ ३०३ ॥**

( १ ) **मेधातिथिः** ।अभयंचौरादिभ्योधिकृतेभ्यश्चासद्दण्डनिवारणेन योददाति ससर्वदैव पूज्योभवति स्वैरकथास्वपि-

राज्याच्च्युतोवनस्थोपि । सत्रंक्रतुविशेषोगवामयनादि तदस्य वर्धते निष्पद्यते सर्वाङ्गमुत्पन्नमेवंगुणमित्येवतद्वर्धतइत्य-नेनाहरहः सत्रफलंप्राप्नोतीत्यर्थः । अभयंदक्षिणा अन्येषु सत्रेषु दक्षिणा नास्ति इदन्तुसर्वेभ्योपि विशिष्टं यद्दक्षिणया व-त्सगवाश्वादिभिर्यैपुष्यन्ते तदरक्षातोराज्ञामधर्मोयावद्येहरन्ति दक्षिणाविलक्षणेत्यर्थवान्सत्रव्यतिरेकः ॥ ३०३ ॥

( २ ) **सर्वज्ञनारायणः** । सएव पूज्योनत्वन्यादृशः । सत्रं प्रजारक्षणरूपोयज्ञः । वर्धतेऽधिकफलतया ॥ ३०३ ॥

( ३ ) **कुल्लूकः** । हिरवधारणे चौराणांनियमनेन योनृपतिः साधूनामभयंददाति सएव पूज्यःपूर्वेषांश्लाघ्योभवति । सत्रंगवायनादिक्रतुविशेषः यद्यस्मात्सत्रमिव सत्रंतदभयदानाच्चौरनिग्रहरूपाभयदक्षिणंसर्वदैवतस्य वृद्धिमेति अन्यद्धि नि-यतकालीनंनियतदक्षिणं च एतत्सर्वकालीनमभयदक्षिणंचेति वाक्यंव्यतिरेकालङ्कारः ॥ ३०३ ॥

( ४ ) **राघवानन्दः** । अभयदक्षिणं साधूनामभयं दक्षिणात्वेन निरूपितं यत्र तादृशं सत्रम् । अर्थाद्दस्युवधःपशुसो-मादिः ॥ ३०३ ॥

( ५ ) **नन्दनः** । अभयस्य स्तेननिग्रहरूपस्य ॥ ३०३ ॥

( ६ ) **रामचन्द्रः** । यःनृपः अभयस्यदाता ससततंपूज्यः । सदैवतस्य अभयदक्षिणंसत्रं प्रजा। रक्षणरूपोयज्ञःप्रव-र्तते ॥ ३०३ ॥

**सर्वतोधर्मषड्भागोराज्ञोभवति रक्षतः ॥ अधर्मादपि षड्भागोभवत्यस्य ह्यरक्षतः॥३०४॥**

( १ ) **मेधातिथिः** । प्रकाशाद्यज्ञादेःतथा ग्रामवासिभिः स्वकृताकृतधर्मषड्भागंराजालभते एवमधर्मादपि चौरैः प्रच्छ-न्नकृतद्राज्ञः षड्भागोभवति न केवलंस्तेनैर्यैमुच्यन्ते तदरक्षातोराज्ञामधर्मोयावद्ये हरन्ति तेषामपि चौर्यभावेनाधर्मोदयस्त-द्दंशेनापि राजानः संबध्यन्ते तानि गृह्णन्ति अदृष्टदोषनिवारणमपि रक्षाणांरक्षैव तत्राधिकृतस्य राज्ञस्तदकरणाद्युक्तः प्र-त्यवायः । ननुनृपतिपरिक्रीतत्वाद्धर्मषड्भागमयुक्तम् उक्तंदीनानाथपरिव्रजितादयःसन्त्यकरप्रदाः परिपूर्णस्वधर्मपालनेकानु-पपत्तिः ॥ ३०४ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मषड्भागः प्रजाभिःक्रियमाणस्य धर्मस्य यावान् षष्ठोभागस्तावान्धर्मइत्यर्थः ॥ ३०४ ॥

( ३ ) **कुल्लूकः** । प्रजारक्षतोराज्ञः सर्वस्य भृतिदातुर्वणिगादेर्भृत्यदातुश्च श्रोत्रियादेः सकाशाद्धर्मषड्भागोभवति अरक्षतश्चाधर्मादपि लोकेन कृतात्षड्भागः स्यात् तस्माद्यत्नतः स्तेननिग्रहेण राजा रक्षणंकुर्यात् । नच भृतिक्रीतत्वाद्राज्ञो-धर्मषड्भागोनयुक्तइति वाच्यम् भृत्याधर्मषड्भागेन च परिक्रीतस्य शास्त्रीयत्वात् ॥ ३०४ ॥

( ४ ) **राघवानन्दः** । किंच सर्वतइति । रक्षतोरक्षांकुर्वाणस्य प्रजाभिरनुष्ठिताद्धर्मात् षड्भागः षष्ठांशोराज्ञःस्यादेव । अरक्षतोऽधर्मांशः ॥ ३०४ ॥

**यदधीते यद्यजते यद्ददाति यदर्चति ॥ तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥ ३०५ ॥**

( १ ) **मेधातिथिः** । यदुक्तंसर्वतइति तस्य चप्रपंचोयं अध्ययनादयोधर्मार्थतयान्यत्र प्रसिद्धरूपाश्च अर्चनंदेवगुरू-णांपूजनं तस्येति कर्मणोध्ययनादेःपदार्थस्येति योजनीयं क्रियायाःस्त्रीलिङ्गत्वात्षड्भागइति यच्च कर्तुः पञ्चकर्मफलां-शात् षष्ठोनृपतेः समग्रकर्मफलभोक्तृत्वस्याधिकारतः कर्तुरवगतत्वात् अपि तु सम्यग्ग्रहणात्स्वकर्मानुष्ठानात्तावन्मात्रंराज्ञः फलमुत्पद्यतइति नान्यकृतस्य शुभस्याशुभस्य वा अन्यत्रगमनंनाकर्तुः फलमस्तीति स्थितम् ॥ ३०५ ॥

( २ ) **सर्वज्ञनारायणः** । अधीते लोकः । यदर्चति पुष्पादिनदेवादीन् ॥ ३०५ ॥

( ३ ) **कुल्लूकः** । यः कश्चिज्जपयागदानदेवतार्चादीनि करोति तस्य राजा पालनेन षड्भागंप्राप्नोति ॥ ३०५ ॥

( ४ ) **राघवानन्दः**। धर्मेत्युक्तंतमेवाह यदिति । यदधीते वेदादि यद्यजते यज्ञादि करोति यद्ददाति यदर्चति पूजयति तस्याध्ययनादिचतुष्टयस्य फलभाग्रक्षणाद्भवति राजेत्यन्वयः ॥ ३०५ ॥

( ५ ) **नन्दनः** । उक्तमर्थमपश्चयति यदधीतइति । अधीते कश्चिद्विषयवासीति शेषः तस्याध्ययनादेर्धर्मस्य ॥३०५॥

**रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् ॥ यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ ३०६ ॥**

( १ ) **मेधातिथिः** । भूतानि स्थावरजङ्गमानि चौरेभ्योरक्षन्वध्यांश्च शास्त्रतोवधार्हास्तांश्च घातयेत् सहस्रशतदक्षिणानांपौण्डरीकादीनांक्रतूनांफलमन्वहंराजा प्राप्नोतीति स्तुतिः ॥ ३०६ ॥

( २ ) **सर्वज्ञनारायणः** । यजेत बहुदक्षिणे यागफललाभात् ॥ ३०६ ॥

( ३ ) **कुल्लूकः** । भूतानि सर्वाणि स्थावरजङ्गमादीनि यथा शास्त्रंदण्डप्रणयनरूपेण धर्मेण रक्षवध्यांश्च स्तेनादीन्ताडयन्प्रत्यहंलक्षगोदक्षिणैर्यज्ञैर्यजते तज्जन्यंपुण्यंप्राप्नोतीति भावः ॥ ३०६ ॥

( ४ ) **राघवानन्दः** । किंच रक्षन्निति । वध्यान्वधार्हांश्चोरादीन् । यज्ञैर्यज्ञवद्दृष्टादृष्टफलसाधनत्वाद्रक्षायाः ॥ ३०६ ॥

( ५ ) **नन्दनः** । भूतानि न्यायवर्त्तीनि ॥ ३०६ ॥

( ६ ) **रामचन्द्रः** । एवं रक्षादि कुर्वन् राजा अहरहः यज्ञैर्यजते वा कीदृशैः । सहस्रशतदक्षिणैः ॥ ३०६ ॥

**योऽरक्षन्बलिमादत्ते करंशुल्कंच पार्थिवः ॥ प्रतिभागंच दण्डंच ससद्योनरकंव्रजेत् ॥ ३०७ ॥**

( १ ) **मेधातिथिः** । बलिप्रभृतीनि राजग्राह्यकरनामानि देशभेदे सूपे माणवकवत्प्रसिद्धानि तत्र बलिर्धान्यादेः षष्ठोभागः करोद्रव्यादानंशुल्कं वणिक्प्राप्यभागः प्रतिभागंफलभरणिकाद्युपायनं राजैतद्गृह्णाति चौरेभ्योन रक्षति ससद्यआयुःक्षयान्नरकंगच्छेत् गृहीत्वा राजभागंरक्षा कर्तव्या नरकायुःक्षयभयादिति श्लोकतात्पर्यम् ॥ ३०७ ॥

( २ ) **सर्वज्ञनारायणः** । बलिं धान्यादिभागम् । करंतद्वद्भूमिनियतंदेयंहिरण्यम् । शुल्कं तरादिदेयम् । प्रतिभोगं फलाद्युपायनमुपढौकितम् । प्रीतिभोगमिति क्वचित्पाठः । तत्र प्रीत्योपढौकितं फलादीत्यर्थः । दण्डमपराधनिमित्तग्राह्यम् ॥ ३०७ ॥

( ३ ) **कुल्लूकः** । योराजा रक्षामकुर्वन्बलिंधान्यादेःषड्भागंग्रामवासिभ्यःप्रतिमासंवा भाद्रपौषनियमेन ग्राह्यंशुल्कंस्थलजलपथादिना वणिज्याकारितेभ्योनियतस्थानेषु द्रव्यानुसारेण ग्राह्यंदानमिति प्रसिद्धं प्रतिभागंफलकुसुमशाकतृणाद्युपायनंप्रतिदिनग्राह्यंदण्डंव्यवहारादौ गृह्णाति सम्रतः सन्सद्यएव नरकंयाति ॥ ३०७ ॥

( ४ ) **राघवानन्दः** । तस्यैवस्वधर्मस्याकरणेदोषमाह यइतित्रिभिः । बलिं धान्यादेःषड्भागम् । करं ग्रामवासिभ्यः प्रतिमासिकशुल्कंवणिगादेर्हट्टघट्टादिनियतस्थानेषु द्रव्यानुसारेण यत् ग्राह्यंतत् । प्रीतिभोगं पुष्पशाकाद्युपायनं प्रतिदिनं ग्राह्यम् । दण्डं व्यवहारादौयतः ॥ ३०७ ॥

( ५ ) **नन्दनः** । अरक्षन्निति पदंरत्नहारित्वेन यद्राष्ट्रात्पशुधान्यादिकंविशिष्टमाच्छाद्य राज्ञा भुज्यते वस्तु तद्बलिरित्युच्यते शुल्कंपथिकैर्वणिगादिभिर्देयं प्रीतिभोगमुपायनादिकम् ॥ ३०७ ॥

( ६ ) **रामचन्द्रः** । यःराजा अरक्षन् बलिं धान्यादिषड्भागं आदत्ते यः करं गुल्मंदायादिकं आदत्ते यः शुल्कं तुरा-

---

( ३०७ ) प्रतिभागं=प्रतिभोगं ( क, च, घ, ण )

दिकं आदत्ते यः प्रीतिभोगं आदत्ते यः दण्डं फलहरणाद्युपायनंशिल्पर्थं न्यायदण्डग्रहणं । अरक्षन्एवं आदत्ते सःसद्यः- नरकंव्रजेत् ॥ ३०७ ॥

**अरक्षितारंराजानंबलिषड्भागहारिणम् ॥ तमाहुः सर्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥**

( १ ) **मेधातिथिः** । पूर्वस्य शेषोयमर्थवादः न रक्षति आत्तोपजीविता प्रजानांराजभागग्रहणेन एतदेवस्पष्टयति बलिषड्भागहारिणंतंतादृशंराजानमाहुः शिष्टाः सर्वलोकस्य सर्वस्याः प्रजायाः समग्रंबलंपापंतस्य हारकंस्वीकर्तारं सर्वेण प्रजापापेन दूष्यतइत्यर्थः ॥ ३०८ ॥

( २ ) **सर्वज्ञनारायणः** । अत्तारमतिशयितकरग्रहेणखादकमिव । राजानमिति क्वचित्पाठः । सोऽनाकरः । बलिरूपो- योधान्यादेः षड्भागः षष्ठोभागस्तद्धारिणम् । मलं पापं पूर्वमरक्षणात्पापषष्ठभागित्वमुक्तम् । अत्रत्वत्तृत्वेनाधिकेन सर्वपा- पग्रहणमिति । सर्वत्रचात्र तावत्पापान्तरकर्मान्तरोत्पत्तौ तात्पर्यं नतु तत्पापधर्मयोरेव प्रतिसंक्रमइत्यर्थोग्राह्यः ॥ ३०८ ॥

( ३ ) **कुल्लूकः** । योराजा न रक्षति अथ च धान्यादिषड्भागंबलिरूपंगृह्णाति तंसर्वलोकानांसकलपापहारिणंमन्वा- दयआहुः ॥ ३०८ ॥

( ४ ) **राघवानन्दः** । उक्तबल्यादिंगृहीत्वाप्यरक्षितारं समग्रमलहारकं मन्वादयस्तमाहुरित्यन्वयः । अग्रं फलं तेन सह वर्तते समग्रं फलदानोन्मुखस्य मलस्य हर्तारं सर्वेषांपापहर्तारंतथावानलसेनवक्षितव्यंआत्मनोहितंकुर्वतेत्यन्वयः ॥ ३०८ ॥

( ५ ) **नन्दनः** । अत्रबलिशब्दः करवचनः ॥ ३०८ ॥

**अनपेक्षितमर्यादंनास्तिकंविप्रलुंपकम् ॥ अरक्षितारमत्तारंनृपंविद्यादधोगतिम् ॥ ३०९ ॥**

( १ ) **मेधातिथिः** । मर्यादा शास्त्रशिष्टसमाचारनिरूढा धर्मव्यवस्था या साऽनवेक्षिताऽतिक्रान्ता येन नास्ति पर- लोकोनास्ति दत्तंनास्ति हुतमिति नास्तिकः प्रथमोरागादिना त्यक्तधर्मोवस्तुविपरीतोऽतिनिश्चयः विलुम्पति हरति ‡ धा- न्यान्यसद्दण्डैः प्रजानांतत्तुल्योऽरक्षिता तमधोगतिंविद्यान्नरकपतितमधोगतंविद्यान्नरकपतितमेवाचिरात् पाठांतरमसत्यंच नृपंत्यजेत् अन्यदुक्तान्यन्करोति यस्तंत्यजेत्तद्विषयेनासीत ॥ ३०९ ॥

( २ ) **सर्वज्ञनारायणः** । मर्यादा धर्माधर्मव्यवस्था । नास्तिकं परलोकनास्तिकताज्ञानवन्तं । विप्रलुम्पकं विप्रा- णांलोपकमपचयहेतुम् ॥ ३०९ ॥

( ३ ) **कुल्लूकः** । लङ्घितशास्त्रमर्यादंपरलोकाभावशालिनमनुचितदण्डादिना धनग्राहिणंरक्षणरहितंकरबल्यादेर्भक्षिता- रंराजानंनरकगामिनंजानीयात् ॥ ३०९ ॥

( ४ ) **राघवानन्दः** । किंच । अनपेक्षितमर्यादं उल्लङ्घितशास्त्रमर्यादं विप्रलुम्पकंविप्रादपि धनहारिणं लुण्ठाकंअ- त्तारं केवलं अधोगतिं नरकस्थमेव तं विद्यादित्यन्वयः ॥ ३०९ ॥

( ५ ) **नन्दनः** । प्रलुम्पकंब्राह्मणपरित्यागिनम् ॥ ३०९ ॥

( ६ ) **रामचन्द्रः** । अनवेक्षिता मर्यादा येन तं अनवेक्षितमर्यादं पुनःकीदृशंनृपं विप्रलुम्पकं असद्वादादिना धना-

---

( ३०९ ) नृपंविद्यादधोगतिं=असत्यंचनृपंत्यजेत् ( मेधा )    ‡ धान्यानि=धनानि ( आआ )

नालुम्पकं पुनःकीदृशं अत्तारं करादेर्भक्षितारं एतादृशंनृपमधोगतिंविद्यात् । अधः नरके गतिर्यस्य सः अधोगतिः ॥३०९॥

अधार्मिकंत्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ॥ निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥

( १ ) मेधातिथिः । अर्थवादैर्दृढीकृत्य निग्रहविधमिदानींप्रस्तौति अधार्मिकंप्रकरणाच्चौरंतंत्रिभिर्नियमनप्रकारैर्निगृह्णीयान्नियच्छेत् न्यायोनियामकः निरोधनंराजदुर्गे बन्धनागारे चरणंबन्धस्तत्रैव रज्जुनिगडादिभिःस्वातन्त्र्योत्पादनं विविधोवधस्ताडनादारभ्य शरीरनाशनात् प्राणत्यागपर्यन्तनिर्देशादेव त्रित्वे लब्धे त्रिभिरिति वचनमन्येषामपि नियमनप्रकाराणांपरिग्रहणार्थं तेन तप्ततैलसेकादयोपि परिगृहीताभवन्ति ॥ ३१० ॥

( २ ) सर्वज्ञनारायणः । न्यायैः नियमैः । निरोधनेन कारागारे ॥ ३१० ॥

( ३ ) कुल्लूकः । अधार्मिकंचौरादिकमपराधापेक्षया त्रिभिरुपायैः प्रयत्नेन नियमयेत्तानाह कारागारप्रवेशनेन निगडादिबन्धनेन करचरणछेदनादिनानाप्रकारहिंसनेन ॥ ३१० ॥

( ४ ) राघवानन्दः । अत्यौत्सुक्येन निग्रहोपायं प्रदर्शयन् राजानं स्तौति अधार्मिकमिति द्वाभ्याम् । तत्र निरोधः कारागारप्रवेशः । बन्धनं निगडः ॥ ३१० ॥

( ५ ) नन्दनः । एवंस्तेननिग्रहस्यावश्यकर्तव्यतांप्रतिपाद्य तन्निग्रहप्रकारमाह अधार्मिकमिति । विविधेन तत्तत्स्तेयानुरूपेण ॥ ३१० ॥

( ६ ) रामचन्द्रः । अधार्मिकंपुरुषं त्रिभिर्न्यायैः नियमैः सामदानादिभेदैः च पुनः केनउपायेन निरोधनेन नितरांरोधनेन ॥ ३१० ॥

निग्रहेण हि पापानांसाधूनांसंग्रहेण च ॥ द्विजातयइवेज्याभिः पूयन्ते सततंनृपाः ॥ ३११ ॥

( १ ) मेधातिथिः । [ पापयुक्ताः पुरुषाः पापाः तेषांनिग्रहः पूर्वोक्तयथाशास्त्रवद्वर्तिनः साधवस्तेषांसङ्ग्रहोयथाशक्त्युपकारः तेनपूर्ववद्विपाप्मानो भवन्ति प्रायश्चित्तेनवेत्यर्थवादः । ' ] अपरोर्थवादोदृष्टकंपापानुत्पत्तिरेव पूतत्वं ब्राह्मणाइव सततमिज्याभिः नित्यैर्महायज्ञादिभिः ॥ ३११ ॥

( २ ) सर्वज्ञनारायणः । द्विजातयोविप्राः ॥ ३११ ॥

( ३ ) कुल्लूकः । पापशालिनांनिग्रहेण साधूनांसंग्रहेण द्विजातयइव महायज्ञादिभिः सर्वकालंनृपतयः पवित्रीभवन्ति तस्मादधार्मिकान्निगृह्णीयात् साधूंश्चानुगृह्णीयात् ॥ ३११ ॥

( ४ ) राघवानन्दः । ततः किंतत्राह । पापानां पापिनां निग्रहेण साधूनां परिपालनेन । द्विजातयः विप्रोत्तमाः सर्वदा यज्वानोवानृपस्योभयसंभवेन दार्ष्टान्तिकत्वासिद्धिः ॥ ३११ ॥

( ५ ) नन्दनः । स्तेनहिंसाराज्ञएव धर्मोनान्यस्येत्याह निग्रहेणचेति ॥ ३११ ॥

( ६ ) रामचन्द्रः । एवंनिग्रहादिना नृपाः सततं पूयन्तेइज्यादिभिःद्विजाइव ॥ ३११ ॥

क्षन्तव्यंप्रभुणा नित्यंक्षिपतांकार्यिणांनृणाम् ॥ बालवृद्धातुराणांच कुर्वता हितमात्मनः ॥ ३१२ ॥

( १ ) मेधातिथिः । कार्यिणोर्थिप्रत्यर्थी ज्ञातिसुहृदः कस्मिंश्चिद्धन्यमाने यदि नसतांभावोवा राजा नापेक्षितुमिच्छेद्वा तदा क्षमायां बालादीनांकार्यिणामेवमात्मने हितंकृतंभवति क्षंतव्यमित्येतद्विविधमेवात्महितम् ॥ ३१२ ॥

---

( ३१० ) वधेनच=बलेनच ( क ) ( १ ) आ आ

( २ ) **सर्वज्ञनारायणः** । प्रभुणा शक्तेनापि । कार्यिणां कार्यासिद्धेः । क्षिपतामप्रियंवदतांबालादीनामकार्यिणामपि ॥ ३१२ ॥

( ३ ) **कुल्लूकः** । कार्यवतामर्थिप्रत्यर्थिनांदुःखेनाक्षेपोक्तिंरचयतां तथा बालवृद्धव्याधितानामाक्षिपतांवक्ष्यमाणमात्मीयमुपकारमिच्छता प्रभुणा क्षमणीयम् ॥ ३१२ ॥

( ४ ) **राघवानन्दः** । राज्ञः स्वतन्त्रस्यापि कार्यविशेषे अस्वातन्त्र्यं सार्थवादमाह क्षन्तव्यमिति द्वाभ्याम् । प्रभुणा प्रतीकारसमर्थेनापि राज्ञा क्षिपतामाक्षेपंकुर्वतां कार्यिणामर्थिप्रत्यर्थिनां तथा बालादीनांच क्षन्तव्यमात्मनोहितंकुर्वतेत्यन्वयः । तेषामाक्षेपसहनमेवहितमितिभावः ॥ ३१२ ॥

( ५ ) **नन्दनः** । स्तेनापहृतद्रव्यैस्तद्रव्यप्रत्यानयनकालात्ययादिवर्तैर्जनैर्यत्पारुष्यमुच्यते तद्राज्ञाक्षन्तव्यमित्यभिप्रायेणाह क्षन्तव्यंप्रभुणेति । प्रभुणा क्षिपतांतेषां निग्रहाय प्रभुणापि ॥ ३१२ ॥

( ६ ) **रामचन्द्रः** । कार्यिणां कार्यार्थिनांनृणां क्षिपतां अप्रियंवदतां प्रभुणा क्षन्तव्यं बालादीनांहितं आत्मनःहितंकुर्वता ॥ ३१२ ॥

**यः क्षिप्तोमर्षयत्यार्त्तैस्तेन स्वर्गे महीयते ॥ यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ ३१३ ॥**

( १ ) **मेधातिथिः** । आर्त्तैर्दण्ड्यमानतत्संबन्धिभिरधिक्षिप्तआक्रुष्टोयन्मर्षयति नक्रुध्यति तेन क्षमणेन स्वर्गे महीयते कण्वादिरयं महत्त्वंप्राप्नोति स्वर्गेऽकोपेन तर्हि क्षमाकर्तव्या । अकामिनोयथाम्यतआह यत्तु प्रभुरहमित्यभिमानेन न सहते तेन नरकंप्राप्नोति । आर्त्तग्रहणंबालवृद्धयोरपि प्रदर्शनार्थंपूर्वशेषत्वादस्य ॥ ३१३ ॥

( २ ) **सर्वज्ञनारायणः** । आर्त्तैः कार्यालाभाद्दुःखितैः ॥ ३१३ ॥

( ३ ) **कुल्लूकः** । दुःखितैराक्षिप्तः सहते यःसतेन स्वर्गलोकेपूजांलभते प्रभुत्वदर्पान्न सहते यःसतेन नरकंगच्छति ॥ ३१३ ॥

( ४ ) **राघवानन्दः** । हितंव्यनक्ति यइति । आर्त्तैः दुःखादिभिःपीडितैः आक्षिप्तोपि मर्षयति क्षमते तेन तितिक्षारूपेण स्वर्गे महीयतेऽक्षमायां नरकगच्छतीत्यन्वयः ॥ ३१३ ॥

( ५ ) **नन्दनः** । तेन क्षेपणेन क्षान्तेन ॥ ३१३ ॥

( ६ ) **रामचन्द्रः** । आर्त्तैः कार्यालाभाद्दुःखितैः क्षिप्तः तिरस्कृतःसन् मर्षयति क्षमापयति ॥ ३१३ ॥

**राजा स्तेनेन गंतव्योमुक्तकेशेन धावता ॥ आचक्षाणेन तत्स्तेयमेवकर्मास्मि शाधिमाम् ॥३१४॥**

( १ ) **मेधातिथिः** । अविशेषोपादाने सुवर्णहारी स्तेनोद्रष्टव्यः तस्यैव शास्त्रान्तरे गमनविधानात् न वेदनमागमनपरंविधिशास्त्रदण्डविधित्वात् । उक्तंहि स्तेनःस्यात्प्रवक्ष्यामिविधिंदण्डनिर्णयइति अतोनुवादमगमनस्यात्रराजसकाशंसुवर्णचौरेण गंतव्यं मुक्तकेशेन धीमता वीर्यवता धावतेति पाठान्तरं आचक्षाणेन कथयता पथि तत्पातकमेवंकर्मास्मि ब्राह्मणस्यमयेषत्सुवर्णंहृतमिति कुरु निग्रहंमे ॥ ३१४ ॥

( २ ) **सर्वज्ञनारायणः** । राजास्तेनेनेत्यादिप्रायश्चित्तप्रकरणवाच्यार्थाभिधानं । वधावश्यकर्तव्यतारूपराजधर्मकथनार्थम् । स्तेनेन ब्राह्मणस्वर्णहारकेण । मुक्तकेशेनेतिधावनेतिचनियतंमरणरूपप्रायश्चित्ताङ्गम् । एवमुत्तराण्यपि । शीघ्रगत्या गच्छता धावता ॥ ३१४ ॥

---

( ३१४ ) धावता=धीमता ( मेधा० )

( ३ ) **कुल्लूकः** । यद्यपि सुवर्णस्तेयकृद्विप्रइत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यति तथापि सुवर्णस्तेनंप्रति राजदण्डरूपतामस्य दंडप्रकरणे दर्शयितुंपाठः ब्राह्मणसुवर्णस्य चौरेण मुक्तकेशेन वेगाद्गच्छता मया ब्राह्मणसुवर्णमपहृतमितिख्यापयतामुसलाख्यमायुधंखादिरमयंवादण्डमुभयतस्तीक्ष्णांशक्तिंलोहमयंवा दण्डंस्कन्धे गृहीत्वा राजसमीपंगच्छेत्ततोब्राह्मणसुवर्णहार्य्यहमतोऽनेन मुसलादिना मांव्यापादयेत्येवंराज्ञे वक्तव्यम् ॥ ३१४ ॥ ३१५ ॥

( ४ ) **राघवानन्दः** । एवं स्तुतिनिन्दाभ्यां राजानमभिमुखीकृत्य स्तेनस्य कृत्यमाह राजेतित्रिभिः । आशु शुद्धिमिच्छता स्तेनेनाचक्षाणेन स्तेयकर्मेतिशेषः ॥ ३१४ ॥

( ५ ) **नन्दनः** । स्तेनंप्रत्याह राजास्तेनेनेति । शाधिमामित्यत्रेतिकरणंद्रष्टव्यं इत्याचक्षाणेनेति तस्यान्वयः ब्राह्मणसुवर्णापहरणविषयमेतत् ॥ ३१४ ॥

( ६ ) **रामचन्द्रः** । स्तेनेन सुवर्णस्तेनेन चौरेण राज्ञःसमीपे गन्तव्यं । कीदृशेनस्तेनेन तत्स्तेयं राज्ञः आचक्षाणेन कथकेन एवं कर्मामां शाधि ॥ ३१४ ॥

**स्कन्धेनादाय मुसलंलगुडंवापि खादिरम् ॥ शक्तिंचोभयतस्तीक्ष्णामायसंदण्डमेव वा ॥ ३१५ ॥**

**[ गृहीत्वा मुसलंराजा सकृद्धन्यात्तुतंस्वयम् । वधेन शुध्यते स्तेनोब्राह्मणस्तपसैव वा ॥ १ ॥ ] ‡**

( १ ) **मेधातिथिः** । वर्णानामनुक्रमेण मुसलादीनामुपदेशंमन्यन्ते तदयुक्तंवा शब्दोन समर्थितः स्यात् । नच ब्राह्मणस्येदंप्रायश्चित्तमिछन्ति तत्प्रायश्चित्तेषु निरूपयिष्यामः । खदिरजातिर्लगुडएव न मुशलेनानुषक्तव्यः ॥ ३१५ ॥

( २ ) **सर्वज्ञनारायणः** । लगुडं दण्डं । उभयतस्तीक्ष्णां लोहभागखड्गधाराद्यवयववतीम् ॥ ३१५ ॥

( ४ ) **राघवानन्दः** । स्वप्रहारोचितं दण्डाद्यादायैव गन्तव्यमित्याह स्कन्धेनेति । शक्तिं सदण्डां छुरिकाकारां तीक्ष्णां क्षुरधारोपमाम् ॥ ३१५ ॥

( ५ ) **नन्दनः** । उभयतस्तीक्ष्णां उभयाग्रकृतधारामादाय गन्तव्यइति सर्वेण संबन्धः ॥ ३१५ ॥

( ६ ) **रामचन्द्रः** । स्कन्धेनेति द्वाभ्यामाह । मुसलादिकंगृहीत्वा आत्मानं घातयेत् ॥ ३१५ ॥

**शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ॥ अशासित्वा तु तंराजा स्तेनस्याप्नोति किल्बिषम् ॥ ३१६ ॥**

( १ ) **मेधातिथिः** । शासनान्मुशलादिभिः प्रहरणात्क्षत्रियादिः पापान्मुच्यते विमोक्षादुत्सर्गाद्गच्छक्षान्तमिति ब्राह्मणस्तपसैवेति वधतपसी विहिते तत्र वधस्तावद्ब्राह्मणस्य नास्ति तपस्तुप्रायश्चितं नच तपइच्छातोराजाभिगमनमस्ति तस्मात्क्षत्रियादीनामेवविमोक्षः । सच धनदण्डंगृहीत्वा । यतआह आशासित्वेत्यादि नच विमोक्षणशुद्धौसत्यांराज्ञस्तदशासनाद्दोषोपपत्तिः नच शासनमपि विहितंमोक्षोपि विहितस्तत्र यस्मिन्पक्षे शासनंतदपेक्षंदोषवचनं पाक्षिकंहि तथा कल्पनं च वचनमनित्यवच्छ्रुतंपाक्षिकंयुक्तकल्पयितुं । तथाच सामान्येन वसिष्ठादयआहुः । अधमेनस्वीयेन कृच्छाति राजानमुत्सृजन्तं सकिल्बिषन्तंचेज्याद्यतोराजाऽधन्धर्मेण नदुष्यति नायंकल्पोयुक्तः क्वचिदियंहिंसा प्रतिषिद्धा । नाहिंस्याद्भूतानीतिरागादिना पुरुषार्थतया प्राप्ता क्वचिद्विहिता क्रत्वर्थत्वेन योदीक्षितोयदग्नीषोमीयमिति इयन्तु शासनविमोक्षणवञ्चना नहि नाममर्तिष-

---

‡ ( क )

द्वाद्युक्तौसति विधौ कथंन प्रतिषेधोनहिंस्याद्भूतानीति सामान्यतः प्रतिषेधोविधिविशेषमन्तरेण न शक्योबाधितुं । अथो-च्यते नैवायंप्रतिषेधस्य विषयः कर्मार्थत्वात् । कथंपुनरन्तरेण विधिकर्मार्थता शक्यावगन्तुं लोकतइतिचेल्लौकिकीवृत्तिः कथंतर्हि प्रतिषेधस्तत्रावतरेत् ननु प्रदाने प्रवृत्तिर्निरूप्यतां यदि तावद्वैदिकी प्रवृत्तिस्ततस्तदङ्गेहिंसायामपि ततएव एका हि प्रवृत्तिरन्तरङ्गप्रधानयोः अथ लिप्सातोङ्गेपितत्रप्रवृत्तिः सुतरांतर्हिहिंसेयंलौकिकी जीविकार्थिनोहिप्रजापोषणाधिकार-नियमेन विधिस्तेनेयमङ्गस्थापि हिंसामुख्येन तुल्यत्वात्प्रतिषेधविषयः । नच लौकिकमस्यानियतमङ्गत्वंनोहिंसामन्तरेण प्रजापालनमशक्यं निरोधनादिनापि शक्यत्वात् नैषनियमः एकरूपाङ्गप्रधानयोः प्रवृत्तिरितिस्यान्नाग्नीषोमीययोरनेक-विशेषः स्यादतोलिप्सालक्षणे पिधानेऽहंविधिलक्षणमभ्युपेतव्यं नचैषहिंसाविधिः लक्षणा शक्याभ्युपगन्तुंस्वरूपकार्यलौ-किकत्वात्पालनस्य हिंसायाश्च अथ विधिलक्षणा षोडशग्रहणवद्विकल्पितुमर्हति शासनवचनेन प्रतिषिद्धाअन्येतुमन्यन्ते द्वेएते वाक्ये शासनादिति स्तेनस्य बुद्धिरुच्यते । परेणार्धेन राज्ञस्तदशासने दोषः । तत्र यदि राजा शासनदोषमात्मीयम-ङ्गीकृत्य मुंचन्मुंचेत्तैवैनसः ब्राह्मणस्यापि स्वयमागतस्य वधः शुद्धिहेतुः स्कंशास्त्रभृतामितिवचनात् शारीरोऽब्राह्मणदण्डः इति न राजा यदि प्रतिषेधातिक्रमेण हन्याद्ब्राह्मणःशुध्येदेव अशासित्वा मुशलादिभिरहत्वा स्तेनस्य यत्पापंतेन युज्यते ॥ ३१६ ॥

( २ ) **सर्वज्ञनारायणः** । शासनात् तदन्यतरेणाभिघातात् । विमोक्षान्नशासिष्यामीतिमनसा राज्ञा त्यागात् । एतच्च क्षत्रियादीनामेव ब्राह्मणस्यतु प्रकारान्तरेणात्महननम् ॥३१६ ॥

( ३ ) **कुल्लूकः** । सकृन्मुसलादिप्रहारेण प्राणपरित्याजनान्मृतककल्पस्य जीवतोपि परित्यागाद्वा सचौरस्तस्मात्पा-पात्प्रमुच्यते । अतएव याज्ञवल्क्यः ॥ मृतकल्पः प्रहारार्त्तोजीवन्नपि विशुध्यतीति । तंपुनःस्तेनंकरुणादिभिरहत्वा स्तेनस्य यत्पापंतद्राजा प्राप्नोति ॥ ३१६ ॥

( ४ ) **राघवानन्दः** । ततःकिं एवं शासनान्मृतोजीवन्वाउभयथा शुद्धःइत्याह शासनाद्वेति । स्तेयात् स्तेयजपा-पात् । अशासित्वा तैर्दण्डादिभिरहत्वा किल्बिषं पापं सहस्रदंडंवा ॥ ३१६ ॥

( ५ ) **नन्दनः** । शासनात्तेनानीतमुसलादिना ताडनरूपात् विमोक्षान्नत्वांहन्मि गच्छेत्यनुज्ञारूपात् स्तेयाद्दोषात्तस्य शासनाद्राजास्तेनस्याप्नोति किल्बिषं तस्मात्सःशासितव्यइति ॥ ३१६॥

( ६ ) **रामचन्द्रः** । शासनाद्वा तमाशिष्यामीति मनसा राज्ञा त्यागाद्विमोक्षाद्वा स्तेनश्चौरः स्तेयात् कृतपापात् विमु-च्यते । एतत्क्षत्रियाणामेव ॥ ३१६ ॥

अन्नादे भ्रूणहामार्ष्टि पत्यौ भार्यापचारिणी ॥ गुरौ शिष्यश्च याज्यश्च स्तेनोराजनि किल्बिषम् ॥ ३१७ ॥

( १ ) **मेधातिथिः** । अन्नमत्तीत्यन्नादोभ्रूणहा ब्रह्महा तदीयमन्नंयोभुङ्क्ते तस्मिन्ब्रह्महत्यापापंमार्ष्टि निरस्य श्लेषय-ति यथा मलिनंवस्त्रमुदकेमृज्यते तन्मलंतत्रसंक्रामत्येएवं अर्थवादश्चायं तस्य तत्पापमुत्पद्यते नपुनर्ब्रह्महणोविश्लेषः । प-त्यौ भर्त्तरि भार्यापचारिणी जारिणी सचेत्क्षमते अत्रापि भर्त्तुरुत्पाद्यते पापंतस्याअपैति गुरौ शिष्यश्च याज्यश्च शिष्यः सूर्याभ्युदितादिभिरपराध्यतु गुरौ क्षममाणे तत्पापंप्रक्षिपति एवंयाज्येयाजकः सोपि गुरुरेवेत्यतोयाजकग्रहणंनकृतं एवं-चौरोराजनि नचेद्राज्ञा निगृह्यते याज्योपि कर्मणि प्रवृत्ते विधिमुपक्रामतिचेद्याजकवचनेनावतिष्ठते तदा त्याज्योन पुन-स्तस्य ताडनादिशिष्यवत्कर्तव्यं । अन्नादादिषु सर्वेष्वन्यत्र विधिरस्तीति नाबुद्धिरतोर्थवादोयम् ॥ ३१७ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नादे तदीयान्नभोक्तरि भ्रूणहा ब्रह्महा मार्ष्टि शोधयति । भ्रूणघ्नस्तेनपापस्यक्षयात्पापोत्पादाच्च । एवं पत्यौ भार्या व्यभिचारिणी संगृह्यमाणागुरावध्यापकर्त्विजोः शिष्ययाज्यौ पापिष्ठौ । स्तेनोराजनीतितु प्रकृतम् ॥ ३१७ ॥

( ३ ) **कुल्लूकः** । ब्रह्महा यस्तत्संबन्धियोन्नमत्ति तस्मिन्नसौ स्वपापंसंक्रामयति भ्रूणहान्नभोक्तुः पापंभवतीति एतदत्र विवक्षितंनतु ब्रह्मघ्नः पापंनश्यति तथा भार्या व्यभिचारिणीजारपतिंक्षममाणे भर्त्तरि पापंसंश्लेषयति शिष्यश्च संध्याग्निकार्याद्यकरणजन्यंपापंगुरौ सहमानेन्यस्यति याज्यश्चविधिमतिक्रामन्याजके क्षममाणे पापंनिःक्षिपति स्तेनश्च राजन्युपेक्षमाणे पापंसमर्पयति तस्माद्राज्ञा स्तेनोनिगृहीतव्यः ॥ ३१७ ॥

( ४ ) **राघवानन्दः** । स्तेनस्य परस्य पापेन राजा तज्जातीयपापवान्भवतीति स्तेनदृष्टान्तेनाऽन्येषामपि परपापवत्त्वमाह अन्नादइति । अन्नादितदन्नभोक्ता भ्रूणहा स्वकिल्बिषं मार्ष्टि संक्रामयतीत्यन्वयः । पतिपदमुपलक्षणं येन येन संगता तंतमपि । अतएवोक्तं निःश्वासाद्गात्रसंस्पर्शादित्यादिः । याज्यश्च याजकेतिशेषः । एतेनान्यपापेनान्यस्यापि तज्जातीयपापजन्म विवक्षितम् नतु पापिनः पापनाशइति केचित् । तत्रदानेनाकार्यकारिणे नेतिवचनात् शुध्यन्त्येव ते सर्वदा अन्यथा बहुवित्तव्ययायासप्रार्याश्चत्तादौ तादृशे कोपिनप्रवर्तेत अतएव योयस्यान्नंसमश्नाति सतस्याश्नाति किल्बिषमितिसंगतम् । अत्र भ्रूणहेत्यादित्रयं सिद्धवत्कृत्य राजनि पापसंक्रान्तिरुक्ता अतश्चतुर्णां परस्परदृष्टान्तता तेन पापिनोऽन्नं न भोक्तव्यम् भार्यादिकंच शासनीयमितिभावः ॥ ३१७ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थंदृष्टान्तेन द्रढयति । अन्नादेभ्रूणहेति योभ्रूणघ्नोन्नमत्ति तस्मिन्भ्रूणहा स्वकिल्बिषं शोधयति अपचारिणी व्यभिचारिणी एवंशासितरिराजनि किल्बिषंस्तेनोमार्ष्टि यतएवंतस्माद्राज्ञा स्तेनः शासितव्यइति ॥३१७॥

( ६ ) **रामचन्द्रः** । अन्नादेअन्नभोक्तरि भ्रूणहापापंमार्ष्टि । मृजूशुद्धौइत्यस्य धातोरूपम् । अपचारिणी मर्यादाव्यभिचारिणी भार्या पत्यौ उपपतिंक्षममाणे पापंमार्ष्टि । याज्योशिष्यः गुरौ पापंमार्ष्टि । अशास्तरि राजनि चौरःकिल्बिषम् राजनि ॥ ३१७ ॥

**राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः ॥ निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनोयथा ॥ ३१८॥**

( १ ) **मेधातिथिः** । यदुक्तंपापकारिणोनिग्रहणे कर्मकृतोरक्षन्तइति तत्स्फुटयति । वृत्तोविनिपातिते दण्डोयेषांराजभिस्ते कृत्वा पापानि कृतपापाराजनिग्रहेण निर्मलानिरस्तपापाभवन्ति । अपगते च पापे यदेषांस्वर्गारोहिकंकर्म तेन स्वर्गंप्राप्नुवन्ति महद्धिपापंशुद्धस्य कर्मणः फलस्य प्रतिबन्धकं सुकृतिनोनित्यंसुकृतकर्मकारिणः यथा सत्री धार्मिकस्तद्वदसतामधर्मोनैवोत्पद्यतएषामुत्पन्नोनिग्रहणेन विना स्थितइति प्राक्प्रध्वंसाभावयोर्विशेषोमानवग्रहणानुप्रकरणाच्चौराणामेव । दण्डशब्दस्तु शरीरनिग्रहविषयोनहि प्रकरणमतिक्रामति धनदण्डोहि राजार्थः वृत्तिर्हि या राज्ञः शारीरे तु दण्डेदण्ड्यमानार्थता शक्यतेनिह्नोतुं त्वक्संस्कारोहिंसा अथेयंबुद्धिः पालनमेव हिंसामन्तरेण न निष्पाद्यते तत्स्वंराजार्थमिति कुतोमार्यमाणार्थता मारणस्य अथ किंपालनंपाल्यमानार्थदृष्टमेवापह्नूयते नहि तद्दृष्टुमुपादेयंराज्ञेव स्वरक्षार्थकरमुद्दिश्यभृत्याउपादीयन्ते अतः सुतरांरक्षोपयोगित्वे हिंसायां हिंस्यमानार्थता सिद्धिः कथंवाहिंसया विना न रक्षानिवृत्तिर्यदि तावदव-

( ३१८ ) राजभिः कृत=राजभिर्वृत ( मेधा० )

मर्थनिगृह्यन्ते पुनरकार्यमावर्तयिष्यते तन्निबोधनादपि शक्यते नियंतुं अथ तानि गृहीत्वा तान्दृष्ट्वा भयादनेन प्रवर्तयिष्यतइति धनदण्डेनापि शक्यते दुःखमपितु हन्यमानेष्वपि सहस्रशः प्रवर्तन्ते तस्मादियंहिंस्यमानेष्वपि सहस्रशः प्रवर्तन्ते तस्मादियंहिंसा रक्षासती हिंस्यमानसंस्कारइति मन्तव्यं अतश्च कारणादिछेदने नियमोहस्त्यादिविधिश्चेदल्पेष्वेवादृष्टमाधास्यति राजार्थोभविष्यति तस्माच्छरीरदण्डेपापान्मुक्तिर्न धनदण्डइति स्थितं। तथा च महापातकिनांह्तसर्वस्वानामसुप्रवेशितदण्डानांसंव्यवहारपरिहारार्थमङ्कनंवक्ष्यति। यदि बन्धनदण्डेन शुध्येयुः पुनरङ्कनमनर्थकंस्यात् अत्र स्वयमागतस्य नानीतस्य विशेषोयस्तंनएव विशेषोभवत्विदंसर्वं शारीरदण्डविषयम् ॥ ३१८ ॥

( २ ) **सर्वज्ञनारायणः** । कृत्वापापानि धृतदण्डाइत्यन्वयः। स्वर्गमायान्तिपापक्षयेपूर्वोपात्तधर्मेण ॥ ३१८ ॥

( ३ ) **कुल्लूकः** । सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभिर्विहितदण्डामनुष्याःसंतः प्रतिबन्धकदुरिताभावात्पूर्वार्जितपुण्यवशेन साधवः सुकृतकारिणइवस्वर्गंगच्छन्ति एवंप्रायश्चितवद्दण्डस्यापि पापक्षयहेतुत्वमुक्तम् ॥ ३१८ ॥

( ४ ) **राघवानन्दः** । दण्डेन नकेवलंपापान्मुक्तिरपितु स्वर्गाद्यपीत्याह राजभिरिति। पापनिर्मुक्तिमात्रमत्र विवक्षितं स्वर्गावाप्तिस्तु पूर्वकृतसुकृतकर्मणः दुरदृष्टप्रतिबन्धरहितात्। नच पापिनः कुतः सुकृतमितिवाच्यम्। कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठतीतिस्मृतेरनारब्धफलकमर्णःसत्वप्रतीतेः ॥ ३१८ ॥

( ५ ) **नन्दनः** । पापकृतामपि श्रेयस्करोराजदण्डः तेनाप्यवश्यंते दण्ड्याइत्याह राजभिर्धृतदण्डास्त्विति। नकेवलंनिर्मलत्वमेव किन्तुस्वर्गमायान्तिच ॥ ३१८ ॥

**यस्तु रज्जुंघटंकूपाद्धरेद्भिद्याच्च यः प्रपाम् ॥ सदण्डंप्राप्नुयान्माषंतच्च तस्मिन्समाहरेत् ॥ ३१९ ॥**

( १ ) **मेधातिथिः** । प्रपिबन्त्यस्यामितिप्रपा। जलाधारस्थावस्थानंउद्धृतजलनिधानंवा माषस्यजातिर्ननिर्दिष्टा समरुजाङ्गलानुपभेदा द्रष्टव्या। तच्च रज्ज्वादिसमाहरेद्दद्यात्तस्मिन्स्थाने न राजनि ॥ ३१९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रपां जलशालां भिन्द्यात् तत्काष्ठादिहरेत्। माषं सुवर्णस्य। तस्मिन् कूपादौ तद्रज्ज्वादि ॥ ३१९ ॥

( ३ ) **कुल्लूकः** । कूपसमीपे रज्जुघटयोर्जलोद्धारणाय धृतयोरज्जुंघटंवाहरेत् योवा पानीयदानगृहंविदारयेत्ससौवर्णमाषंदण्डंप्राप्नुयात्। अनिर्दिष्टन्तुसौवर्णमाषंतत्र प्रकल्पयेदिति कात्यायनवचनात्। तच्च रज्ज्वादि तस्मिन्कूपे समर्पयेत् ॥ ३१९ ॥

( ४ ) **राघवानन्दः** । प्रकृतंपुनर्दण्डमाह यस्त्विति। केनापि पुण्यवता कूपसमीपे स्थापितौ रज्जुघटौ कृतप्रपां वा हरेद्वानाशयेत् ससौवर्णमाषं दण्डं प्राप्नुयादित्यर्थः*। तच्च रज्ज्वादिकं समाहरेत्। संपाद्य दद्यादिति ॥ ३१९ ॥

( ५ ) **नन्दनः** । द्रव्यान्तराणांचोरयितारंप्रत्याह यस्तुरज्जुंघटमिति। रज्जुश्चघटश्चरज्जुघटं हरेन्मुष्णीयात्ततश्च तस्मिन्कूपे कूपसमीपे समाहरेत्पुनरास्थापयेत्तस्मिन्स्थाने प्रतिसमादध्यादिति ॥ ३१९ ॥

( ६ ) **रामचन्द्रः** । माषं सुवर्णस्य। तच्च रज्जुघटादि तस्मिन् कूपादिस्थाने समाहरेत् ॥ ३१९ ॥

**धान्यंदशभ्यः कुम्भेभ्योहरतोऽभ्यधिकंवधः ॥ शेषेऽप्येकादशगुणंदाप्यस्तस्य च तद्धनम् ॥ ३२० ॥**

( १ ) **मेधातिथिः** । कुंभशब्दः परिमाणविशेषे वर्तते न घटमात्रे। क्वचिद्विंशतिप्रस्थान्क्वचिद्द्वाविंशद्द्वाविंशतिरिति

---

* दित्यर्थः। तच्च = दित्यर्थः। तथाच कात्यायनः अनिर्दिष्टंतु सौवर्णमाषं तत्रप्रकल्पयेदिति ( न, श्रा )

देशभेदाद्यवस्था। दशभ्योधिकंहरतोवधविधिरुक्तार्थोऽनुबंधादिना नियम्यते शेषेषु दशसु प्राकृतस्तत्तएकादशगुणोदण्डः त-तस्य च तद्धनमिति सर्वत्र स्तेये योज्यं। धान्यं व्रीहियवादिसप्तदशानीतिस्मर्यते ॥ ३२० ॥

( २ ) **सर्वज्ञनारायणः**। कुम्भः पलशतद्वयम्। वधस्ताडनादि । ब्राह्मणादिद्रव्येत्वङ्गच्छेदादिः। शेषे ततःप्राक् त-स्य तद्धनं दाप्यइत्युभयत्र ॥ ३२० ॥

( ३ ) **कुल्लूकः**। द्विपलशतंद्रोणोविंशतिद्रोणश्च कुम्भोदशसंख्येभ्यः कुंभेभ्योऽधिकंधान्यंहरतोवधः सच हर्तृस्वामि-गुणवत्तापेक्षया ताडनांगच्छेदमारणात्मकोज्ञेयः। शेषे पुनरेकस्मादारभ्य दशकुम्भपर्यन्तहरणे निह्नुतैकादशगुणंदण्डंदाप्यः स्वामिनश्चापहृतंदाप्यः ॥ ३२० ॥

( ४ ) **राघवानन्दः**। धान्यहरणे दण्डमाह धान्यमिति। कुम्भेभ्यः द्विपलशतं द्रोणोविंशतिद्रोणश्च कुम्भः तेभ्यो-धिकं हरतोवधः हर्तृगुणवत्वाद्यपेक्षया ताडनाङ्गच्छेदनमारणात्मकः हिंसामात्रवाचित्वाद्वधस्य। शेषे दशकुम्भाभ्यन्तरे एकादशगुणं हृतद्रव्यापेक्षया। तस्य धान्यस्वामिनंतद्धनं तावद्धान्यम् ॥ ३२० ॥

( ५ ) **नन्दनः**। कुसूलात्किञ्चिन्न्यूनंधान्यभाजनंकुम्भः दशभ्यः कुम्भेभ्यइत्येकपुरुषस्य संवत्सरभोजनपर्य्यन्त-धान्यग्रहणं ततोभ्यधिके हरणे दण्डःस्यात्। दशभ्यःकुंभेभ्योन्यूनेहरणे हृतादेकादशगुणंधान्यंहर्त्रा दण्डत्वेन दाप्यः। धान्यस्वामिने तद्धृतं धान्यंच दाप्यं। ब्राह्मणधान्यहरणे क्षत्रियादीनामयमेव दण्डोऽवगन्तव्यः ॥ ३२० ॥

( ६ ) **रामचन्द्रः**। अभ्यधिकंहरतःवधः ताडनादि । एतद्विप्रविषयम् क्षत्रियादावंगच्छेदइत्यर्थः। शेषेपि ततोन्यूने राज्ञे एकादशगुणं दण्डं तस्य स्वामिनः तद्धनम् ॥ ३२० ॥

## तथा धरिममेयानांशतादभ्यधिके वधः ॥ सुवर्णरजतादीनामुत्तमानांच वाससाम् ॥ ३२१ ॥

( १ ) **मेधातिथिः**। धरणंधरिम तुला तेन मीयन्ते परिछिद्यन्ते तानि धरिममेयानि घृतादीनांद्रवाणांप्रस्थादिमे-यतास्तीति कठिनानांपरिमेयता भवतीति तदर्थमाह सुवर्णरजतादीनां आदिग्रहणादेव रजते लब्धे पुनरुपादानात्तुल्यग्रह-णार्थात्प्रवालादीनि गृह्यन्ते नतुताम्रलोहादीनि तेषांशतादूर्ध्वंहरणे वधः। किंपुनरेतच्छतंपलानामुतकर्षाणामेव कार्षापणानांवा केचिदाहुः। केचिदाहुः पलानामिति। नन्वत्रविशेषोहेन्तुरस्ति तस्माद्यस्मिन्देशधरिममानकाले यथासंख्यया व्यवहारः। श्रुत-मिदंसुवर्णस्य क्वचित्तोलके क्वचित्पलेषु यथा देशंव्यवस्था। उत्तमानांच वाससांकौशेयपट्टादीनामिति। नन्वत्र विशेषहेतुरस्ति तस्मिन्यस्मिन् शतादभ्यधिके वधइत्यनुषङ्गः। अत्रापि शाकटकयुगमेकमिति संख्यायते पुष्पपटाद्युपबर्हणन्त्वेकमेवेति ननु च सुवर्णरजतादीनामित्येवसिद्धे परिमेयग्रहणमनर्थकं कर्पूरागरुकस्तूरिकादीनांमहार्घाणांग्रहणार्थं। आदिग्रहणाद्धिते-जसानि गृह्यन्ते। निष्कादिपरिमाणव्यपदेश्यानि वा नहि कर्पूरादीनांकर्षादिव्यपदेशोस्ति यद्यपि सुवर्णवद्रजतेऽपि शतसंख्या तथापि प्रायश्चित्तभेदवद्दण्डभेदोपि युक्तोविषमसमीकरणस्य न्याय्यत्वादतोयावत्सुवर्णगतस्य मूल्यंतावतिरूप्ये गृहीते वधः कर्पूरादीनांतु पलानामेव शतसंख्या ॥ ३२१ ॥

( २ ) **सर्वज्ञनारायणः**। धरिमं तुला तन्मेयानां सुवर्णरजतव्यतिरिक्तानां ताम्रादीनां शतात् निष्कशतात्। एतच्च षोडशमाषकरूपसुवर्णचतुष्टयरूपनिष्कव्यवस्थयाग्राह्यम्। अत्रापि वधोमारणं ब्राह्मणद्रव्यत्वे अन्यत्रत्वङ्गच्छेदादि। सुवर्णे-ति। सुवर्णरजतोत्तमवाससामल्पानामपि हरणे वधएवेत्यर्थः ॥ ३२१ ॥

( ३ ) **कुल्लूकः**। यथा धान्येन वधउक्तस्तथा तुलापरिच्छेद्यानांसुवर्णरजतादीनामुत्कृष्टानांच वाससांपट्टादीनांपल-

शताधिकेऽपहृतेवधः कर्त्तव्यएव विषयसमीकरणंचात्र देशकालापहर्तृद्रव्यस्वामिजातिगुणापेक्षया परिहरणीयं एवमुत्तरत्रापि ज्ञेयम् ॥ ३२१ ॥

( ४ ) **राघवानन्दः** । उक्तदण्डमन्यत्रातिदिशति तथेतिद्वाभ्याम् । धरिमेति धरणंतुला तेन परिच्छेद्यानां कार्पासादिदिद्रव्याणां पलशतादधिके अपहृते वधः । तत्रापि देशकालहर्तृद्रव्यस्वामिजातिगुणापेक्षया ताडनाङ्गच्छेदनमारणादि ज्ञेयम् ॥ ३२१ ॥

( ६ ) **रामचन्द्रः** । धरधटताम्रादीनांतुलमेयानां शतान्निष्कात् अभ्यधिकंहरतःवधः ताडनादि । सुवर्णादि हरतः अल्पानांहरणे वधः ॥ ३२१ ॥

**पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ॥ शेषे त्वेकादशगुणंमूल्याद्दण्डंप्रकल्पयेत् ॥ ३२२ ॥**

( १ ) **मेधातिथिः** । सुबोधोयं मूल्यादिति नापहृते द्रव्यंदेयं कचित्तज्जातीयंनैव प्राप्यते अतोरूपकैर्धान्यादित्यादिना वा निमेयम् ॥ ३२२ ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चाशतइतिताम्रादिविषयम् । शेषे पञ्चशतऊने ॥ ३२२ ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तानांपञ्चाशदूर्ध्वंशतंयावदपहारे कृते हस्तच्छेदनंमन्वादिभिरभिहितं शेषेष्वेकपलादारभ्य पञ्चाशत्पलपर्यन्तापहारेऽपहृतधनादेकादशगुणंदण्डंदाप्यः ॥ ३२२ ॥

( ४ ) **राघवानन्दः** । एवमुक्तानां सुवर्णादीनां तोलकानां पञ्चाशत्पर्यन्तमपहृतस्य मूल्यादेकादशगुणो दण्डः पञ्चाशतोऽधिके हस्तछेदः ॥ ३२२ ॥

( ५ ) **नन्दनः** । स्वर्णानां पञ्चशतोभ्यधिके हरणे शेषे पञ्चाशतोन्यूने ॥ ३२२ ॥

( ६ ) **रामचन्द्रः** । पञ्चाशतस्तु अधिके ताम्रादि पञ्चाशतन्यूनेन ॥ ३२२ ॥

**पुरुषाणांकुलीनानांनारीणां च विशेषतः ॥ मुख्यानांचैव रत्नानांहरणे वधमर्हति ॥ ३२३ ॥**

( १ ) **मेधातिथिः** । सत्कुले जाताविद्यादिगुणयोगिनः कुलीनाः नारीणांच विशेषतोगुणरूपसौभाग्यतः संपन्नानामित्यर्थः । चशब्दात्कुलीनानामित्येव परस्परापेक्षाणि नारीणांविशेषणानि मुख्यानि रत्नानि वज्रवैडूर्यमरकतप्रभृतीनि अत्रापि सुवर्णशततुल्यानीत्यपेक्ष्यमन्यथोत्तमत्वमापेक्षिकमिति दण्डोन व्यवतिष्ठेत वधमर्हत्यनुवधाद्यपेक्षया सर्वत्रार्हत्यर्थोयोजनीयः । अकुलीनानामवशिष्टानाममुख्यानांच विशेषे त्वेकादशगुणइत्येव ॥ ३२३ ॥

( २ ) **सर्वज्ञनारायणः** । वधः उत्कृष्टापकृष्टापेक्षया मारणाङ्गच्छेदादिः ॥ ३२३ ॥

( ३ ) **कुल्लूकः** । महाकुलजातानांमनुष्याणांविशेषेण स्त्रीणांमहाकुलप्रसूतानांश्रेष्ठानांच रत्नानांवज्रवैदूर्यादीनामपहारे वधमर्हति ॥ ३२३ ॥

( ४ ) **राघवानन्दः** । मनुष्यरत्नविशेषयोरपहृते*अवश्यंवधइत्याह पुरुषाणामिति । नारीणां विशेषताकुलजानाम् । कांपञ्चलानितिवञ्चित्वं विवक्षितम् । मुख्यानां वज्रवैडूर्यादीनां रत्नानाम् ॥ ३२३ ॥

( ५ ) **नन्दनः** । ह्रियमाणहरणयोर्जातिगुणाद्यपेक्षया वधशब्दार्थः कल्पनीयः छेदनरूपोमारणरूपोवा ॥ ३२३ ॥

---

* अपहृते=अपह्नवे ( राघ २ )

**महापशूनांहरणे शस्त्राणामौषधस्य च ॥ कालमासाद्य कार्यंच दण्डंराजा प्रकल्पयेत् ॥ ३२४ ॥**

( १ ) **मेधातिथिः** । महापशवोहस्त्यश्वादयस्तेषांहरणे कालकार्यापेक्षा दण्डप्रकूप्तिः ननु च सर्वत्रैव कालाद्यपेक्षोक्ता तथा च कालदेशवयशक्तोश्चिन्तयेद्दण्डकर्माणीति सत्यं विज्ञाते दण्डस्वरूपे न्यूनाधिकभावोऽनुबन्धाद्यपेक्षः यथा वधविधौ ताडनमारणादिकल्पनापेक्ष्या इहात्यन्तविलक्षणोदण्डः तथा हि विंशतिपणोपि खड्गशात्रोरुद्यतशस्त्रस्य सन्निधौ यदि ह्रियते तेन कार्यातिशयेन तेन च कालेन मारणंदण्डः अन्यदा द्विगुणएकादशगुणोवा तथौषधमलभ्यत्वेन महाप्रयोजनंतदुपयोगवेलायां ह्रियते लभ्यमानमपि क्वाथाद्यपेक्षंकालातिक्रमणेन महदातुरस्य दुःखंजनयतीति तत्र महान्दण्डः अन्यदा तु स्वल्पइति नयनान्तरमन्तरेणेदृशंवैषम्यंलभ्यते अन्यथा सएवैकश्लोकोदण्डविधौ पठितव्यःस्यात् तस्माद्वक्तव्यमिदंविग्रहकालेऽश्वादीनां राज्यापेक्षोदण्डः शस्त्राणांराजोपयोगिनांकदाचित्क्षमा कदाचिन्महान्दण्डः गोमहिष्यादीनांतु प्रजासंबन्धिनांराज्ञा कर्तव्यंकार्याएव यदश्वादिभिः कर्तव्यं तदप्यपेक्षाविग्रहोपि यदि पर्वतादौ भवति यत्र नातीवाश्वैः प्रयोजनंभवन्त्येव दण्डादयः कालमासाद्य ज्ञात्वा निरूप्य दण्डंकल्पयेत्सएवात्र भवति नशास्त्रम् ॥ ३२४ ॥

( २ ) **सर्वज्ञनारायणः** । महापशूनामश्वादीनां हरणेवधः । शस्त्राणामौषधस्यच हरणे तदेकादशगुणमित्यादिः कार्यबहुत्वाल्पत्वमपेक्ष्य दण्डः । तथा शस्त्रादीनां युद्धकालादौ हरणे ततोद्विगुणमित्याद्युन्नेयमित्यर्थः ॥ ३२४ ॥

( ३ ) **कुल्लूकः** । महतांपशूनांहस्त्यश्वादिगोमहिष्यादीनांतथा खड्गादीनांशस्त्राणांकल्याणघृतादेश्चौषधस्य च दुर्भिक्षादिरूपंकालंकार्यप्रयोजनंच सदसद्विनियोगरूपंनिरूप्य राजा ताडनाङ्गच्छेदवधरूपंदण्डंप्रकल्पयेत ॥ ३२४ ॥

( ४ ) **राघवानन्दः** । पश्वादीनामपहारेऽङ्गच्छेदनादिदण्डमात्रमित्याह महेति । महापशूनां हस्त्यश्वानाम् । शस्त्राणां खड्गादीनाम् । औषधस्य कल्याणघृतादेः । कालं सुभिक्षदुर्भिक्षरूपम् । कार्यमासन्नंयुद्धरोगादि । आसाद्य विचार्य ॥ ३२४ ॥

( ५ ) **नन्दनः** । महापशूनांहस्त्यश्वानां कालं दुर्भिक्षसुभिक्षादिकं कार्यमाह पशुभिरिदंकार्यंशस्त्रैरिदंकार्यमित्यादिकं आसाद्य निरूप्य दण्डं वधमेकादशगुणंवा राजा कल्पयेत् ॥ ३२४ ॥

( ६ ) **रामचन्द्रः** । महापशूनां अश्वादीनांहरणे कालं युद्धादिसमयं आसाद्य कार्यंयुद्धादिरूपंप्रकल्पयेत् च पुनः राजा दण्डं वामकल्पयेत् ॥ ३२४ ॥

**गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने ॥ पशूनांहरणे चैव सद्यः कार्योऽर्धपादिकः ॥ ३२५ ॥**

( १ ) **मेधातिथिः** । ब्राह्मणसंस्था ब्राह्मणाश्रिता ब्राह्मणस्वामिकास्तासांहरणे षष्ठ्यर्थे सप्तमी । पशूनांचाजैडकादीनां बहुवचनंसर्वत्रात्र विवक्षितं सद्यस्तत्क्षणादविचार्य पादस्यार्धमर्धपादंतदस्यास्तीत्यर्धपादिकः तच्च संततंयदि पादार्धंतेन छिद्यते तेनार्धपादच्छेदनंकर्तव्यमिति वाक्यार्थः खरिका ययागोरक्षेक्षेत्रादौ वाह्यते बलीवर्दः भेदने वाह्यमानायाः प्रतोदेन पीडोत्पादनंभेदनंवाहानामुपलक्षणार्थंव्याचक्षते पूर्वोऽवश्यंवाहयन्दुःखयति अवश्यमयंदण्डइत्येवान्ये पठन्ति अन्ये तु पश्चाद्भागंचतुर्थंखरिकामाहुः खरिकेति या प्रसिद्धा पलायनशीला या पालोर्धपादिकः कार्यः अन्ये त्वधिकरणसप्तमीं मत्वा गोसंस्थदध्यादीन्यभ्याहरन्ति तदयुक्तं श्रुतपदसंबन्धसंभवे कुतोऽभ्याहारः ॥ ३२५ ॥

---

( ३२५ ) छूरिका=खरिका ( मे० ) =स्थूरिका ( सर्वज्ञ०, राघ०, नंदनः, )

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणसंस्थासु ब्राह्मणसंबन्धिनीषु । स्थूरपृष्ठेनभारवोढा वृषः तद्वारः स्थूरिका तस्याभेदने पाटयित्वा तद्गतधान्यादेरपहारइत्यर्थः । पशूनां महिषादीनाम् । अर्धपादिकः छिन्नार्धपादद्वयः ॥ ३२५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणसंबन्धिनीनांगवामपहारे वन्ध्यायाश्च गोर्वाहनार्थेनासाछेदने पशूनांचाजैडकानांदण्डभूयस्त्वाद्यागाद्यर्थानांहरणेऽनन्तरमेव छिन्नार्धपादिकः कार्यः ॥ ३२५ ॥

( ४ ) **राघवानन्दः** । तद्विशेषेअर्धपादछेदोदण्डःस्यादित्याह गोष्विति । ब्राह्मणसंस्थासु तत्संबन्धिनीषु हरणइतिशेषः । भेदनेस्थूरिकायाः वन्ध्यागोर्वाहनार्थे नासिकायां। पशूनां अजाव्यादीनाम् ॥ ३२५ ॥

( ५ ) **नन्दनः** । स्थूरिकानामपार्ष्णेश्चतुरङ्गुलादूर्ध्वःप्रदेशः । ब्राह्मणगोस्थूरिकाभेदने च इतरेषांपशूनांहरणे च भेत्ता हर्त्तार्धपादिकः कार्य्यः ॥ ३२५ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणसंस्थासु संबन्धिनीषु गोषु पृष्ठे भारयोः प्रच्छुरिकायाःभेदने च पुनः पशूनां हरणे अर्धपादिकः दमःछिन्नार्धद्विपादिकःदमःकार्यः अर्धदण्डः कार्यः ॥ ३२५ ॥

**सूत्रकार्पासकिण्वानांगोमयस्य गुडस्य च ॥ दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥**

( १ ) **मेधातिथिः** । सूत्रमूर्णासणादि लवणानि सैंधवविडलवणादीनि यच्चान्यत्पशुसंभवमामिषादिति अन्येषामपूपमोदकादीनां आदिशब्दःप्रकारे प्रकारःसादृश्यंतुल्यता सदृशकार्यकरणोपयोगादिरूपा तथा च सर्पिमण्डेक्षुखण्डशर्करा किलाटकूर्चिकाद्याअपूपागृह्यन्ते पशुसंभवंराङ्कवाजिनाद्यपीच्छन्ति केचित् । आदिग्रहणात्प्रकृतिर्विकृतिरपि प्रकृतिंयच्चोभयोपादानंदध्नः क्षीरस्य चेति तदुदाहरणार्थं एवंसूत्रग्रहणेन सूत्रमयंवासोपि गृह्यते नलिकादीनांसत्यपि सूत्रमयत्वे पशुसंभवत्वउत्तमत्वादुत्तमानांचेत्त्वयमपवादविषयः प्रकृत्यन्तरे तैलशब्दः स्नेहवाचो न तिलविकारएव तेनातसीप्रियङ्गुपश्चाङ्गुलतैलादयोपि गृह्यन्ते ॥ ३२६ ॥ ३२७ ॥ ३२८ ॥ ३२९ ॥

( २ ) **सर्वज्ञनारायणः** । किण्वं मद्यबीजम् ॥ ३२६ ॥

( ३ ) **कुल्लूकः** । ऊर्णादिसूत्रकार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य च सूक्ष्मवेणुखण्डनिर्मितजलाहरणभांडादीनांयद्प्यन्यत्पशुसंभवं च मृगचर्मखड्गशृङ्गाद्यन्येषामप्येवंविधानामसारप्रायाणांमनःशिलादीनांमद्यानांद्वादशानांपक्कान्नानामोदनव्यतिरिक्तानामप्यपूपमोदकादीनांच कार्पासादिशब्दार्थानांप्रसिद्धानांचापहारेकृतमूल्याद्विगुणोदण्डः कार्यः ॥ ॥ ३२६ ॥ ३२७ ॥ ३२८ ॥ ३२९ ॥

( ४ ) **राघवानन्दः** । द्रव्यविशेषेषु तद्द्रव्यमूल्याद्विगुणं दण्डं दापयितुं षड्विंशतिं द्रव्यविशेषाननुवदति सूत्रेतिचतुर्भिः । किण्वानां सुराबीजानाम् । पानीयस्य पानार्थं संस्कृतस्य ॥ ३२६ ॥

( ५ ) **नन्दनः** । किण्वंसुराप्रकृतिद्रव्यम् ॥ ३२६ ॥

( ६ ) **रामचन्द्रः** । सूत्रादीनांहरणेदण्डमाह सूत्रेतिचतुर्भिः । किण्वानां मद्यबीजानाम् ॥ ३२६ ॥

**वेणुवैदलभाण्डानांलवणानांतथैव च ॥ मृन्मयानांच हरणे मृदोभस्मनएव च ॥ ३२७ ॥**

( २ ) **सर्वज्ञनारायणः** । वेणुभाण्डानां तथा वैदलभाण्डानां विदलीकृतान्यकाष्ठभाण्डानाम् ॥ ३२७ ॥

( ४ ) **राघवानन्दः** । वैदलभाण्डानां स्थूलवेणुखण्डनिर्मितजलाहरणादिसमर्थानाम् । भस्मनः कदलीक्षारादेः ॥ ३२७ ॥

( ५ ) **नन्दनः** । वैदलंवेत्रमयंभाण्डमुपकरणम् ॥ ३२७ ॥

( ६ ) **रामचन्द्रः** । मृन्मयानां भाण्डानाम् ॥ ३२७ ॥

**मत्स्यानांपक्षिणांचैव तैलस्य च घृतस्य च ॥ मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवम् ॥ ३२८ ॥**

( २ ) **सर्वज्ञनारायणः** । पशुसंभवं रोचनादि ॥ ३२८ ॥

( ४ ) **राघवानन्दः** । पशुसंभवंचर्मचामरवर्मरज्जुगोरोचनाशृङ्गास्थिनिर्मितसंपुटकखड्गाभरणादिकम् । तस्यापि हरण-इत्यनुषज्यते ॥ ३२८ ॥

( ६ ) **रामचन्द्रः** । पशुसंभवं दुग्धादि ॥ ३२८ ॥

**अन्येषांचैव मादीनामद्यानामोदनस्य च ॥ पक्कान्नानांच सर्वेषांतन्मूल्याद्विगुणोदमः ॥ ३२९ ॥**

( २ ) **सर्वज्ञनारायणः** । एवमादीनां पक्कान्नानां व्यञ्जनानाम् । सर्वत्रात्र द्रव्यवते द्रव्यमूल्यमधिकं देयम् ॥३२९॥

( ४ ) **राघवानन्दः** । एवमादीनां एवंविधानां पानकादि* द्वादशानाम् । पक्कान्नानामोदनेतरशष्कुल्यादीनाम् ॥ ३२९ ॥

( ५ ) **नन्दनः** । आद्यानांभक्ष्याणाम् ॥ ३२९ ॥

( ६ ) **रामचन्द्रः** । अन्येषां अजादीनां अद्यानां अदनीयानां च पुनः ओदनस्य भक्तस्य तन्मूल्यात् तद्वस्तुमूल्यात् द्विगुणोदमः ॥ ३२९ ॥

**पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ॥ अन्येष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥**

( १ ) **मेधातिथिः** । नवमालिकादीनि पुष्पाणि हरन्ति धान्यंक्षेत्रस्थं नगावृक्षाः अन्येष्वपरिपूतेषु बहुवचनात्प-रिपवनाय च धान्यंक्षेत्रेष्वेव तुषपलालादिविमोक्षरूपयोः संभवादुत्तरश्लोके धान्यग्रहणमेवाकृष्यते । गुल्मादीनांहि सत्य-पि पलाशे नापि सत्वे पुष्पाणांच परिपूतव्यवहारः । सप्तमी हरणापेक्षा तत्त्वंपूर्वस्मादनुवर्तते अत्रपञ्चकृष्णलोदण्डः कृष्णलानाद्रव्यजाः अल्पत्वमहत्त्वप्रयोजनापेक्षा सुवर्णस्येति पूर्वे ॥ ३३० ॥

( २ ) **सर्वज्ञनारायणः** । हरिते माषादौ शमीधान्ये धान्येशूकधान्ये । एष्वल्पेषु तथाऽपरिपूतेष्वपृथक्कृतबुसेषु ॥ ३३० ॥

( ३ ) **कुल्लूकः** । पुष्पेषु हरिते क्षेत्रस्थे धान्ये गुल्मलतावृक्षेषु परिवृतेषु अनपावृतवृक्षेषु वक्ष्यमाणश्लोके धान्यादिषु निर्देशात्परिवपनसंभवाच्च धान्येषु अन्येषु समर्थपुरुषभारहार्येषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्ण-लमाषपरिमाणोदण्डः स्यात् ॥ ३३० ॥

( ४ ) **राघवानन्दः** । पुष्पादिद्रव्यविशेषापहरणे पञ्चकृष्णलकं दण्डं विदधदपि तान्यनुवदति पुष्पेष्विति । हरिते क्षेत्रस्थधान्ये गृहधान्येषूक्तत्वात् । अपरिपूतेष्वनुत्सादिततुषादिषु । सुवर्णमाषः पञ्चकृष्णलकोमाषइत्युक्तेः नतु रूप्यमाषकः ॥ ३३० ॥

( ५ ) **नन्दनः** । धरिमंतुला तेन मेयानामुन्मानयोग्यानांस्वर्णादीनामुत्तमवाससांहरणे पुष्पेषु हरितेनवेधान्येचपरि-पूतेष्वशोधितपांसुषु धान्येष्वित्युत्तरश्लोकादपकर्षणीयम् ॥ ३३० ॥

---

* पानकादि = मद्य [ । ] नांपानकादि ( राघ० २ ) = मनःशिलादीनांएवंविधानांमद्य [ । ] नांपानकादि ( न, श )

३३० ) अन्येष्व० = अल्पेष्व ( क, ख, ग, च, ण, र )

( ६ ) **रामचद्रः** । हरितेधान्ये माषादौ नगेषु वृक्षेषु अपरिपूतेषु अदूरीकृतबुसेषु ॥ ३३० ॥

**परिपूतेषु धान्येषु शाकमूलफलेषु च ॥ निरन्वये शतंदण्डः सान्वयेऽर्धशतंदमः ॥ ३३१ ॥**

( १ ) **मेधातिथिः** । मूलमिक्षुद्राक्षादि । निरन्वयेद्रव्यहरणे अन्वयोऽनुनयः स्वामिनः प्रीत्यादिप्रयोगः यत्त्वदीयं-तन्मदीयमेवेत्यनया बुध्याहंप्रवृत्तोनचेदेवंतद्गृहाणेत्येवमादिवचनंतद्यत्र न क्रियते तन्निरन्वयं साहसप्रकारवादिकोदण्डः अन्वयेनसहसान्वयः येन सह कश्चिदपि संबन्धोनास्त्येकग्रामवासादिस्ततः शतंदण्ड्यः खलस्थेषु धान्येष्वयंदण्डः तत्र हि परिपूयते गृहस्थेषुत्वेकादशगुणः प्रागुक्तः ॥ ३३१ ॥

( २ ) **सर्वज्ञनारायणः** । परिपूतेष्वपास्तबुसेषु । शाकमूलफलेषु बहुमूल्यात्यन्तोपयुक्तेषु । निरन्वये तद्द्रव्यसंबन्ध-योग्यतापादकज्ञानोपाधिकोन्वयोयस्तमभिधाय यत्र हरणं न भवति तत्र । तद्विपरीतं सान्वयम् ॥ ३३१ ॥

( ३ ) **कुल्लूकः** । निष्पुलाकीकृतेषु वृक्षेषु धान्येषु शाकादिषु चापहृतेषु अन्वयोद्रव्यस्वामिनांसंबंधःयेनसहकश्चिदपि संबन्धोनास्त्येकग्रामवासादिस्तत्र शतंदण्ड्यः सान्वये तु पञ्चाशत्पणोदेयः खलस्थेषु च धान्येष्वयंदण्डस्तत्र हि परिपूर्यते गृहेष्वेकादशगुणोदण्डःप्रागुक्तः ॥ ३३१ ॥

( ४ ) **राघवानन्दः** । तद्विशेषेषु धान्यादिचतुष्टयेषु व्यवस्थया शतमर्धशतंवा दमं दापयन् तान् उद्दिशति परीति । परिपूतेषु यज्ञाद्यर्थसंस्कृतेषु अपसारिततुषेषुवा । निरन्वये संपूर्णहृते द्रव्यस्वामिना एकग्रामवासादिसंबन्धइतिकेचित् ॥ ३३१ ॥

( ५ ) **नन्दनः** । अपहृतेष्वित्येव निरन्वये निःशेषापहारेर्द्धशतम् ॥ ३३१ ॥

( ६ ) **रामचन्द्रः** । परिपूतेषु धान्येषु दूरीकृतबुसेषु निरन्वये अनारक्षे निर्मले सान्वये रक्षासहिते वंशजे ॥ ३३१ ॥

**स्यात्साहसंत्वन्वयवत्प्रसभंकर्म यत्कृतम् ॥ निरन्वयंभवेत्स्तेयंहृत्वापव्ययते च यत् ॥ ३३२ ॥**

( १ ) **मेधातिथिः** । परद्रव्यापहरणंस्तेयमुच्यते धात्वर्थप्रसिद्धया चास्यैव कर्ता स्तेनः इहतु विशेषेणायंव्यवहार-इष्यते तदर्थोयंश्लोकः नपरद्रव्यादानमात्रमृणादाननिक्षेपादिष्वपि स्तेयंदण्डप्रसङ्गात् संज्ञाभेदोदण्डभेदार्थः अपह्नुत्ययत्तेन मया कृतमित्याह कर्मयत्कृतंपरपीडाकरंवस्तूत्पाठनाग्निदाहद्रव्यापहरणादि अग्निदाहे यद्यपि द्रव्यापहरणंनास्तितथापि-चौर्यमेव रहसि करणादपह्नवाचमन्यन्ते चौर्येहि द्रव्यविशेषाश्रयोदण्डः सोत्र नस्यात् एवमर्थमेव स्तेयप्रकरणोत्कर्षणं-स्तेयंप्रसभंकर्मेति कर्मग्रहणाद्द्रव्यापहारादन्यदप्येवंकृतंयुक्तंसाहसमेव कस्तर्ह्यग्निदाहादावप्रसभंकृते दण्डः कण्टकशुद्धौ-वक्ष्यामः अतएवमन्विच्छेदसत्यपिद्रव्यापहरणे कण्टकशुद्धौदण्डमामनन्ति अन्यथाएवंवक्ष्यते ॥ ३३२ ॥

( २ ) **सर्वज्ञनारायणः** । उपक्लृप्तानि भोजनादिप्रयोजनार्थंसज्जितानि । आद्यं प्रथमसाहसं । अग्निं त्रेताग्निमाधाना-दिसंस्कृतम् ॥ ३३२ ॥

( ३ ) **कुल्लूकः** । यद्धान्यापहारादिकंकर्मद्रव्यस्वामिसमक्षंबलाद्धृतंतत्साहसंस्यात्सहोबलंतद्भवंसाहसमतइह स्तेयद-ण्डोन कार्यः एतदर्थः स्तेयप्रकरणेऽस्यपाठः । यत्पुनः स्वामिपरोक्षापहृतंतत्स्तेयंभवेत् यच्चहृत्वाऽपह्नुते तदपि स्तेय-मेव ॥ ३३२ ॥

( ४ ) **राघवानन्दः** । स्तेयात्साहसंभिन्दन्नाह स्यादिति' । साहसं सहोबलं तेन कृतम् । प्रसभं प्रभोः समक्षम् । अन्वयवत् पणानांशतार्धं दण्डः संख्यान्तरानुक्तेः । स्तेयं प्रभोःपरोक्षं हृतंतन्निरन्वयंभवेत् तन्निरन्वयवत् शतदण्डार्हन् । हृत्वा अपव्ययते अपह्नुते यत्र तत्र शतं दण्डइति ॥ ३३२ ॥

( ६ ) **रामचन्द्रः** । प्रसभंकर्म प्रत्यक्षापहाररूपंकर्म निरन्वयं आरक्षवर्जितम् ॥ ३३२ ॥

**यस्त्वेतान्युपकॢप्तानि द्रव्याणि स्तेनयेन्नरः ॥ तमाद्यंदण्डयेद्राजा यश्चाग्निंचोरयेद्गृहात् ॥ ३३३ ॥**

( १ ) **मेधातिथिः** । एतानि सूत्रादीन्युपकॢप्तानि प्रत्यासन्नदानोपभोगादिकार्यकालानि अथवा संस्कृतानि कृतसामर्थ्याधानानि तथा तदेव सूत्रंतन्तुवायहस्ते वायनार्थंदत्तंकिंचित्परिवर्त्यते एवंदधिमन्थनमरिचशर्करादिसंस्कृतंक्षीरंगृहमित्यादिसंस्कारस्तत्र शतंदण्डः । आद्यमिति पाठे प्रथमसाहसः । अग्नीन्धनपरिगृहीतंशालाग्निहोत्रेत्यादिकंहेमन्ते वा सीतार्दितानांदरिद्राणाममणोतमप्यग्नेरुपकल्पनं पाककालः सीतादिनिवृत्यर्थंवा तापनकालोऽविशेषेणायमग्नेर्दण्डः स्वल्पस्य बहोरुपकॢप्तस्य च सत्यपि सूत्रादिदण्डे आदिग्रहणेनाग्नेस्तन्मूल्यादिसंभवति क्रयविक्रयव्यवहाराप्रसिद्धेः यावतावेन्धनेनाग्निरपहृतपरिमाणउत्पद्यते यावतीभिर्दक्षिणाभिस्तन्मूल्याद्द्विगुणोदण्डःसंभवति शक्यते व्यपदेष्टुंतुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव अतस्त्रेताग्निहरणे यावत्पुनराधाने गच्छति प्रायश्चित्तेष्टौ तावदग्निमते दातव्यः अतोयमग्नेर्दण्डः शालाप्रणीताग्निविषयएव स्वल्पत्वात् त्रेतायां तु तन्मूल्याद्द्विगुणइति तथा च सुलभेष्वधिकारनिवृत्तिमकुर्वत्सु यागाङ्गद्रव्येष्वपह्रियमाणेषु कुशकरकाग्निहोत्रद्रव्यान्यपहरतोऽङ्गच्छेदः स्यादिति शङ्काः। अग्निषु तु भूतेष्वधिकारएव निवर्तते तत्र कथंमहादण्डोन स्यात् ॥३३३॥

( २ ) **सर्वज्ञनारायणः** । अत्र साहसं सहसा अविविच्य दोषगुणौ यदि कृतं तदा स्तेयमपि तथैवेत्याशङ्कां प्रसंगादपनयति स्यादिति । नैवतावन्मात्रं साहसं किंतु प्रसभंहठात्स्वामिसमक्षं बलवदन्वयवदनुबन्धि उत्तरकालमपि यत्र न तद्गोप्यते साहसं तदित्यर्थः । निरन्वयं उत्तरकालनिह्नवयत्नसहितं यच्च कृत्वा स्वामिनोऽपव्ययते तदेव निह्नवाय यतते तद्व्याहरणं स्तेयम् । एवंच युद्धादिना यत्परस्वहरणं परमारणादि तत्साहसं निह्नवप्रयत्नवतातुयत्परस्वमादीयते तत् स्तेयमित्यर्थः । तथा अनिह्नवेनचायतकलहादिनिमित्तकं ताडनादि क्रियते तद्दण्डपारुष्यमित्युक्तम् ॥ ३३३ ॥

( ३ ) **कुल्लूकः** । यः पुनरेतानि सूत्रादिद्रव्याण्युपभोगार्थंकृतसंस्काराणि मनुष्यश्चोरयेत् यश्च त्रेताग्निंगृह्याग्निंवाऽग्निगृहाच्चोरयेत्तंराजा प्रथमंसाहसंदण्डयेदग्निस्वामिनश्चाधानोपक्षयोदातव्यः । गोविन्दराजस्तुलौकिकाग्निमपिचोरयतोदण्डइत्याह तदयुक्तमल्पापराधे गुरुदण्डस्यान्याय्यत्वात् ॥ ३३३ ॥

( ४ ) **राघवानन्दः** । संप्रत्युक्तसूत्रादिद्रव्यापहारे प्रकारविशेषमुपक्षिपन्प्राथमिकंदण्डमाह यस्त्विति । उपकॢप्तानि उपयोगार्थंकृतसंस्काराणि स्तेनयेत् चौर्यंकुर्यात् । तेषामाद्यं प्रथमसाहसम् । अग्निं गार्हपत्याग्निम् । गृहादग्निगेहात्॥३३३॥

( ५ ) **नन्दनः** । एतानि सूत्रकार्पासकिण्वादीनि उपकॢप्तानि महाभोगार्थं स्तुतानि ॥ ३३३ ॥

( ६ ) **रामचन्द्रः** । एतान्युपकॢप्तानि सूत्रादीनिद्रव्याणियो नरः स्तेनयेत् चौर्येणगृह्णीयात् तंपुरुषं आद्यं प्रथमसाहसं राजादण्डयेत् च पुनः यः अग्निं वैतानाग्निं गृह्णीयात् चौर्येणनयेत्सोपि प्रथमसाहसं दण्ड्यः ॥ ३३३ ॥

**येन येन यथाङ्गेन स्तेनोनृषु विचेष्टते ॥ तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥३३४ ॥**

( १ ) **मेधातिथिः** । भूयोभूयः प्रवृत्तस्यायंदण्डः योधनेन दण्डितोपि न मार्गेऽवतिष्ठते तस्य त्रिचतुर्दण्डितस्यानवतिष्ठमानस्य द्रव्यजातिपरिमाणानपेक्षः सन्विच्छेदायनपेक्षचौर्यक्रियामसावाश्रितोऽङ्गच्छेदः । यस्य यस्याङ्गस्य बलमाश्रित्यावतिष्ठते स्तेनचौर्ये प्रवर्तते तत्तदस्य हरेच्छिन्द्यात् यथाकश्चित्पादबलमाश्रित्यावष्टभ्य पलायते नमामनुगंतुंकश्चिदपि शक्नोतीति तस्यपादच्छेदः अन्यःप्रसिद्धिभेदज्ञोहंतस्य हस्तच्छेदः प्रत्यादेशाय प्रतिरूपफलदर्शनाय स्वावष्टंभेन साभिमानं

---

( ३३३ ) तमाद्यं=तंशतं ( मेधा० )

सक्रोधंसावज्ञंन्यक्करणंवा प्रत्यादिशोयएवंकरोति तस्य तस्याहमेवंकर्तेति व्याख्यानंप्रत्यादेशः ॥ ३३४ ॥

( २ ) **सर्वज्ञनारायणः** । विचेष्टते विरुद्धंचेष्टते द्रव्यंहरति । हरेदपनयेदतिशयितापराधे । प्रत्यादेशायान्यस्यापि निषेधाय ॥ ३३४ ॥

( ३ ) **कुल्लूकः** । येन येन अङ्गेन हस्तपादादिना येन प्रकारेण संधिच्छेदादिना चौरोमनुष्येषु विरुद्धंधनापहारादिकंचेष्टते तस्य तदेवाङ्गंप्रसङ्गनिवारणाय राजा छेदयेत् तत्र धनस्वाम्युत्कर्षापेक्षयाऽयमङ्गच्छेदः ॥ ३३४ ॥

( ४ ) **राघवानन्दः** । येनाङ्गविशेषेण द्रव्यस्वामिनमनुरुन्धानोस्तेनयेत्तस्य तत्तदवयवंछिन्द्यादित्याह येनेति । यथा यथावत् । अस्य चोरस्य । प्रत्यादेशाय पुनःप्रसंगवारणाय ॥ ३३४ ॥

( ५ ) **नन्दनः** । अर्थदण्डे पुनरपि स्तेनयन्तंप्रत्याह येन येन यथेति । विचेष्टते स्तेनयति हरेच्छिन्द्यात् प्रत्यादेशायप्रतिषेधाय अपुनरपराधायेतियावत् ॥ ३३४ ॥

( ६ ) **रामचन्द्रः** । पार्थिवः प्रत्यादेशाय चौर्यनिराकरणाय एतस्य तदेववस्तु हरेत् ॥ ३३४ ॥

**पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ॥ नादण्ड्योनामराज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ ३३५ ॥**

( १ ) **मेधातिथिः** । भार्यापुत्रः स्वकातनुरात्मीयंशरीरं कः पुनरात्मनोदण्डः प्रायश्चित्ततपोधनदानादिविचलितोधर्मः स्वकान्योयः स्वधर्मान्ननुतिष्ठति ससर्वोदण्डः ॥ ३३५ ॥

( २ ) **सर्वज्ञनारायणः** । पितेत्यादि येषां हिंसायां पापातिशयस्तेषामपि दण्ड्यान्तरवद्दण्डने न दोषइत्यर्थः ॥३३५॥

( ३ ) **कुल्लूकः** । पित्राचार्यमित्रभ्रातृमातृपत्नीपुत्रपुरोहितानांमध्यात्स्वधर्मे योनावतिष्ठते सराज्ञोऽदण्डनीयोनास्त्यपि तु दण्डनीयएव ॥ ३३५ ॥

( ४ ) **राघवानन्दः** । स्वपित्रादेस्तेयादिकर्तृत्वे राज्ञः कागतिस्तत्राह पितेत्यादि । स्वधर्मे न तिष्ठति स्वधर्माच्च्युतः सोप्यवश्यंदण्ड्यः ॥ ३३५ ॥

( ५ ) **नन्दनः** । पित्रादिष्वप्यपराधिषु राज्ञा दण्डोधारयितव्यः किं पुनरन्येष्वित्यभिप्रायेणाह पिताचार्यइति ॥ ३३५ ॥

( ६ ) **रामचन्द्रः** । अदण्ड्यानाह पितेति ॥ ३३५ ॥

**कार्षापणंभवेद्दण्ड्योयत्रान्यः प्राकृतोजनः ॥ तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥ ३३६ ॥**

( १ ) **मेधातिथिः** । प्राकृतोजनः सामान्यपुरुषोयोनातिगुणसंयुक्तस्तस्य यत्र यस्मिन्नपराधेयावान्दण्डस्तत्सहस्रगुणोराज्ञः कार्षापणग्रहणस्य दण्डपरिमाणोपलक्षणार्थत्वात् दण्डस्य चात्मानमपिनियम्य परोनियन्तुंशक्यतइति युक्तंप्रत्यपराधे दण्डार्हत्वं महाधनत्वादल्पंदण्डंनविगणयेत् राजाधिकृतानांमन्त्रिपुरोहितादीनामनयैव कल्पनया न्यूनाधिकभावः धनदण्डश्च ब्राह्मणेभ्योऽप्सु प्रवेशनेन वरुणाय वा योनावद्दास्यति राज्ञांदण्डधरोहि सः ॥ ३३६ ॥

( २ ) **सर्वज्ञनारायणः** । किंबहुनाऽऽत्मापि दण्ड्यएवेत्याह कार्षापणमिति । तच्च द्रव्यं ब्राह्मणेभ्योदेयमिति ता-

( ३३५ ) भार्यापुत्रः=भ्रातापुत्रः ( च )

त्पर्यम् । प्राकृतः अधनइतिवाच्ये प्राकृतइत्यैश्वर्यापेक्षया राजामात्यादीनामप्यधिकदण्डत्वमुक्तम् । धारणा निश्चयः ॥ ३३६ ॥

( ३ ) **कुल्लूकः** । यत्रापराधे राजव्यतिरिक्तोजनः कार्षापणंदण्डनीयोभवेत्तस्मिन्नपराधे राजा पणसहस्रंदण्डनीयइति निश्चयः स्वार्थदण्डन्त्वप्सुप्रवेशयेद्ब्राह्मणेभ्योवा दद्यात् ईशोदण्डस्य वारुणइति वक्ष्यमाणत्वात् ॥ ३३६ ॥

( ४ ) **राघवानन्दः** । ननु नृपतेर्दण्डोनास्ति चेत्प्रामव्यभिचारादित्वमस्तिचेत्कथंदण्ड्यस्तत्राह कार्षेति । यत्रापराधे प्राकृतः कार्षपणं दण्डमर्हतितस्मिन्राजा सहस्रंपणानां ब्राह्मणाय दद्यात् विद्वान्सर्वस्वमर्हतीत्युक्तेः ॥ ३३६ ॥

( ५ ) **नन्दनः** । अथशक्तितारम्यतोदण्डतारतम्यमाह कार्षापणंभवेदिति । यत्रापराधे राजशब्दोयमाढ्यवचनः ॥ ३३६ ॥

( ६ ) **रामचन्द्रः** । राजा उपलक्षणंधनिकस्य ॥ ३३६ ॥

**अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम् ॥ षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य च ॥३३७॥**

( १ ) **मेधातिथिः** । तद्दोषगुणविद्धिसइति हेत्वभिधानाद्विदुषांदण्डोयंयत्र खलजनएकंकार्षापणंदाप्यते तत्राविद्वान् शूद्रोऽष्टगुणामष्टभिः आपाद्यते संबध्यते । यत्किल्बिषंपापंतदेवमुच्यते अष्टभिर्वाऽऽपाद्यतआहन्यते गुण्यतइति यावदुभयथाप्यष्टगुणस्य वाचकोष्टापद्यशब्दएव तदेव द्विगुणंवैश्यस्य सहि साक्षादध्ययनज्ञानयोरपि कृतशूद्रस्तु कथंचिद्ब्राह्मणापाश्रिततत्सन्नत्या कियदपि ज्ञास्यति क्षत्रियस्तु रक्षाधिकारदोषेण समाने विद्वत्वे ततोपि द्विगुणंदण्ड्यते ब्राह्मणे तु दण्डविधौ नतृप्यति चतुःषष्टिशतमष्टविंशंवा शतमिति तस्यहि प्रवचनमुपदेष्टृत्वंवाधिकंच रक्षा ततोभवेत् । प्राकृतजनस्य तिर्यक्प्रख्यस्यापराधः अविद्वांसोगुणदोषानभिज्ञाअकार्ये प्रवर्तन्ते विद्वानपि तथैव चेद्वर्तेत हन्तहन्तजगत् तृतीयस्य शिक्षितुरभावात्तदुक्तं द्वौ लोकौ धृतव्रतोराजा ब्राह्मणश्च बहुश्रुतइति राज्ञः पूर्वेण दण्डाधिक्यमनेन ब्राह्मणस्याधिक्यमात्राविधिश्चायं न यथाश्रुतसंख्याविधिः ब्राह्मणदण्डेऽनवस्थाश्रवणादयंवायंचेति नच विकल्पोयुक्तोव्यवस्थाहेतुत्वाभावात् तुल्यबलस्यैव विषयस्यानुपपत्तेः कोहि राजा द्विजगुणमुत्सृज्य चतुःषष्टिंग्रहीष्यति यदि परमदृष्टार्थोदण्डे विकल्पउपपद्यते नचादृष्टार्थोयमित्युक्तं तथा च गौतमोविदुषोतिक्रमदण्डभूयस्त्वमित्याह तस्मादनवस्था विधित्वंव्याहन्ति । नचगुणापेक्षोविकल्पोयुक्तोनष्टादिश्लोकेनैव सिद्धत्वात् । अर्थवादाच्चात्रविध्यगतिः सचाधिक्यविधौ लब्धालंबनइति न यथाश्रुतपरिकल्पने विकल्पने समर्थः ॥ ३३७ ॥ ३३८ ॥

( २ ) **सर्वज्ञनारायणः** । अष्टापाद्यमष्टगुणं यदपहृतंद्रव्यं तन्मूल्यादष्टगुणितोदण्डोग्राह्यइत्यर्थः । एतच्च प्रागुक्तमतिनियतदण्डरज्जुघटादिस्तेयव्यतिरेकेणार्किविषयस्यापराधस्याष्टगुणत्वं अष्टगुणदण्डापनोद्यतैव ॥ ३३७ ॥

( ३ ) **कुल्लूकः** । तद्दोषगुणविद्धि सइति सर्वत्र संबध्यते यस्मिन्स्तेये योदण्डउक्तः सस्तेयगुणदोषज्ञस्य शूद्रस्याष्टभिरापाद्यते गुण्यतइत्यष्टगुणः कर्तव्यः षोडशगुणोगुणदोषज्ञस्य वैश्यस्य द्वात्रिंशद्गुणस्तथाविधक्षत्रियस्य चतुः षष्टिगुणोगुणदोषविदुषोब्राह्मणस्य शतगुणोवाऽष्टाविंशत्यधिकशतगुणोवा गुणातिशयापेक्षया ब्राह्मणस्यैव ॥ ३३७ ॥ ३३८ ॥

( ४ ) **राघवानन्दः** । एवं स्तेयदोषानभिज्ञेषु चतुर्षु वर्णेषु साधारणं दण्डमुक्त्वा तद्विज्ञेषु तद्विशेषमाह अष्टेतिद्वाभ्याम् । अष्टापाद्यं अष्टाभिरापाद्यतेगण्यतइत्यष्टापाद्यं यस्मिन् स्तेये योदण्डउक्तोमूर्खस्य शूद्रस्य तद्दोषज्ञस्यतदष्टगुणं किल्बिषं दण्डरूपम् । एवं षोडशद्वात्रिंशद्वैश्यक्षत्रिययोः ॥ ३३७ ॥

( ५ ) **नन्दनः** । ज्ञानतारतम्यतश्च दण्डतारतम्यंश्लोकद्वयेनाह अष्टापाद्यन्त्विति। स्तेयेकृते आपाद्यमापादयितव्यंकि-

ल्बिषं दण्डः शूद्रस्याष्टभवत्यपहृतद्रव्याष्टगुणंभवतीत्यर्थः अज्ञत्वात् । वैश्ये तु षोडशगुणमल्पज्ञत्वात् । क्षत्रियस्य द्वात्रिंशद्गुणं ज्ञत्वात् ॥ ३३७ ॥

( ६ ) **रामचन्द्रः** । शूद्रस्यअष्टभिर्भागोग्राह्यः भवति । वैश्यस्य षोडशोभागःहरेत् किल्बिषं दण्डनिमित्तापराधम् ॥ ३३७ ॥

**ब्राह्मणस्य चतुःषष्टिः पूर्णंवापि शतंभवेत् ॥ द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥ ३३८ ॥**

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणस्य पक्षत्रयं निर्गुणगुणवदतिगुणापेक्षया । अतएव तृतीये हेतुतया ज्ञानमुक्तम् । दोषः पापः गुणः पुण्यम् । केचित्तु दोषगुणित्वंसर्वविशेषणम् तथाच तदज्ञस्य शूद्रस्य सएवाष्टगुणः एवं क्षत्रियादेरपीत्याहुः । अन्येतु शूद्रादिपदानि राजसेवकशूद्रादिपराण्यत्र तेषामितरशूद्राद्यपेक्षयाऽष्टगुणत्वादित्याहुः ॥ ३३८ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्यतु चतुःषष्ट्यादिविकल्पस्तपो विद्यादिक्रमापेक्षया । ब्राह्मणस्य दण्डाधिक्येहेतुस्तद्दोषेत्यादि । अन्येषां तद्वत्त्वं विप्रोपदेशादितिभावः । विदुषि विप्रे चतुःषष्टिं तपोयुक्ते तस्मिन् शतं तपोनियुक्ते तस्मिन् अष्टाविंशत्युत्तरशतमित्युन्नेयम् ॥ ३३८ ॥

( ५ ) **नन्दनः** । ब्राह्मणस्य चतुःषष्टिगुणं ज्ञतमत्वात् । ब्राह्मणविषये विज्ञानतारतम्याभिप्रायेणोक्तं पूर्णंवापीत्यादि तद्दोषगुणवित्तस्य स्तेयस्य करणंदोषोऽकरणंगुणइत्येवंवेत्ति । यद्वा गुणआवर्चनमुत्तरोत्तराधिक्यंवेत्तीति तद्दोषगुणविद्धियस्मात्सब्राह्मणस्तस्मात्तस्य दण्डोदेयइति । एवंहेतुवचनबलादेवैषज्ञानवैषम्यप्रयुक्तोदण्डेवैषम्यविधिः क्षत्रियादिष्वपि कल्पनीयः । अन्येत्वाहुः । किल्बिषेशब्दोयंदोषवचनः नार्थदण्डवचनः तत्र हेतुर्वाग्दण्डपारुष्ययोर्जात्युत्कर्षवशेन दण्डलाघववचनमिति ॥ ३३८ ॥

**वानस्पत्यंमूलफलंदार्वग्न्यर्थंतथैव च ॥ तृणंच गोभ्योग्रासार्थमस्तेयंमनुरब्रवीत् ॥ ३३९ ॥**

( १ ) **मेधातिथिः** । वनस्पतएववानस्पत्यंवृक्षाः स्वार्थेप्रत्ययः ग्रासार्थंगृह्यमाणमस्तेयंवंशांकुरादिमूलफलं वनस्पतीनामन्यद्धिससस्यादिसूत्रादिगणेऽग्रासार्थमूलफलाहरणेदण्डउक्तः अस्तेयवचनंग्रासार्थमात्रार्थमक्षीणवृत्तेरपि कथंचिज्जातलौल्यस्य स्मृत्यन्तरदर्शनात्त्वापरिवृत्तेश्च दण्डः । तथा च गौतमः पुष्पाणि स्ववदाददीत फलानिचापरिवृत्तानामिति दोषार्थमाहिताग्नेरसंनिहिते वनस्पतावुद्धात्यग्नौ तद्धारणार्थंकाष्ठमदोषंपालाशीर्वा समिधोदध्यात् अप्रचुरपलाशे च ग्रामे कथंस्यादित्यादिगृह्णेरन्न दोषः तृणंच गोभ्यः तादर्थ्ये चतुर्थी गोग्रहणात्प्रस्तारार्थेदोषएव येतुग्रासार्थपदेन गवामभिसंबन्धमिच्छन्ति तेषांगोभ्यइति नोपपद्यते षष्ठीहि तत्प्रयुक्ता ॥ ३३९ ॥

( २ ) **सर्वज्ञनारायणः** । वानस्पत्यं वनस्पतिवृक्षमात्रं तद्भवम् । तेनौषधीमात्रव्यवच्छेदः । एतच्चारण्यगतं अपरिवृतानामिति गौतमस्मरणात् । अपरिवृताऽपरिगृहीताऽत्रेष्टा । अग्न्यर्थं वैतानिकाग्न्यर्थम् । एवंच वृक्षास्तृणकाष्ठादीनिच गृहाच्छादनाद्यर्थमरण्यादपि राजाऽननुमत्या नीतानि स्तैन्यनिमित्तान्येवेत्युक्तम् ॥ ३३९ ॥

( ३ ) **कुल्लूकः** । वीरुद्वनस्पतीनांपुष्पाणि स्ववदाददीत फलानिचापरिवृतानामिति गौतमवचनात् अपरिवृतवानस्पत्यादीनांमूलफलंहोमीयाग्न्यर्थंच दारु गोग्रासार्थंच तृणंपरकीयमस्तेयंमनुराह तस्मान्न दण्डोनाप्यधर्मः ॥ ३३९ ॥

---

( ३३८ ) गुणविद्धिसः=गुणवेदिनः ( क )

( ४ ) **राघवानन्दः** । उपसंहारस्य फलवादेन राज्ञोमहत्कार्यंदण्डमित्यत्र सूचितस्य प्रतिप्रसवमाह वानस्पत्यमिति। वानस्पत्यं वनस्पत्युद्भवम्। ग्राम्येच्छया गोप्रचारोभूमीराजवशेनवा द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेदितियाज्ञवल्क्योक्तेः गोप्रचारः गोचरणार्थाभूमिः। स्ववदात्मीयवत्। तथा गौतमोपि वीरुद्वनस्पतीनांच पुष्पाणि स्ववदाददीत फलानिचानृतानामिति ॥ ३३९ ॥

( ५ ) **नन्दनः** । वनस्पतयोवृक्षवल्यादयस्तत्र भवः वानस्पत्योमूलफलादिरहितइतिशेषः अग्न्यर्थं गोभ्योगवाम् ॥ ३३९ ॥

( ६ ) **रामचन्द्रः** । दारुकाष्ठंअग्न्यर्थं अस्तेयं मनुरब्रवीत् ॥ ३३९ ॥

## योदत्तादायिनोहस्ताल्लिप्सेत ब्राह्मणोधनम् ॥ याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥३४०॥

( १ ) **मेधातिथिः** । अतिदेशोयं योब्राह्मणश्चौरानुपजीवति सचोरवद्दण्ड्यो याजनाध्यापनेनापि अपिः क्रियान्तरसूचकः स्तेनंप्रतिगृह्णतांक्षत्रियादीनामन्यथैव वार्तादिस्वकर्मणा चोरंगृह्णतां ब्राह्मणग्रहणन्तु मया किलधर्मेणार्जितंयाजयतेत्यभिमाननिवृत्त्यर्थं अदत्तमादत्तेगृह्णातीत्यदत्तादायीचोरः लिप्सेत लब्धुमिच्छेदगृहीतास्वपि दक्षिणासु तत्संबन्धादेव चौरनिग्रहः ॥ ३४० ॥

( २ ) **सर्वज्ञनारायणः** । स्तेनाद्याजनादिना द्रव्यग्रहणेपि स्तेनवद्दण्डयेदित्याह यइति ॥ ३४०॥

( ३ ) **कुल्लूकः** । अदत्तादायिनश्चौरस्य हस्ताद्योब्राह्मणोयजनाध्यापनप्रतिग्रहैरपि परकीयधनंज्ञात्वा लब्धुमिच्छेत्सचौरवच्चौरतुल्योज्ञेयः अतः सइव दण्ड्यः ॥ ३४० ॥

( ४ ) **राघवानन्दः** । याजनाद्युपायैरपि चोराद्धनमिच्छंस्तेनोभवतीत्याह यइति। अदत्तमादातुंशीलंयस्य सोऽदत्तादायी तस्य यज्ञाद्यर्थधनस्वत्वानुत्पत्तेरितिभावः ॥३४०॥

( ५ ) **नन्दनः** । अदत्तादायीति स्तेनसाहसिकयोर्ग्रहणं हस्तात्सकाशान्नकेवलंप्रतिग्रहणं किन्तुयाजनाद्ध्यापनेनापीति यथा स्तेनस्तथैव सः सोऽपि स्तेनवद्दण्ड्यइत्यर्थः ॥ ३४० ॥

( ६ ) **रामचन्द्रः** । यः ब्राह्मणः अदत्तादायिनः स्तेनस्यहस्तात् धनंलिप्सेत याजनाध्यापनेन वा स्तेनान् लब्धधन द्विजःयथा स्तेनः चौरः तथैव सब्राह्मणः। चौरद्रव्यस्य संग्रहात्संसर्गदोषीभवति ॥ ३४० ॥

## द्विजोध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ॥ आददानः परक्षेत्रान्न दण्डंदातुमर्हति ॥ ३४१ ॥

( १ ) **मेधातिथिः**। द्विजग्रहणंशूद्रप्रतिषेधार्थं अध्वगोनैकग्रामवासी तत्रापि क्षीणवृत्तिः क्षीणपथ्योदनः द्वाविक्षूदण्डौ मूलके प्रदर्शनार्थंचैतत्परिमितहरीतकमुद्गादिशमीधान्यानां तथाच शमीत्रपुसयुग्यघासेषु चनाप्रतिषेधइति स्मृत्यन्तरं परक्षेत्रात्परकीयस्थानादित्यर्थः परिवृत्तादपि ॥ ३४१ ॥

( २ ) **सर्वज्ञनारायणः** । आददानो अनुक्तापि ॥ ३४१ ॥

( ३ ) **कुल्लूकः** । द्विजातिः पथिकः क्षीणपाथेयः द्वाविक्षुदण्डौ द्वे वा मूलके परकीयक्षेत्राद्गृह्णन्दण्डदानयोग्योन भवति ॥ ३४१ ॥

( ४ ) **राघवानन्दः** । क्षीणवृत्तिपथिकद्विजातेर्द्रव्यविशेषे दण्डाभावमाह द्विजइति। मूलके मूलकं प्रसिद्धम् ॥३४१॥

( ५ ) **नन्दनः** । इक्षुमूलयोर्ग्रहणंप्राणधारणार्थानां फलादीनामप्युपलक्षणार्थम् ॥ ३४१ ॥

( ६ ) रामचन्द्रः । इक्ष्वूंश्च पुनः द्वेमूल्के ॥ ३४१ ॥

**असंदितानांसंदातासंदितानांच मोक्षकः ॥ दासाश्वरथहर्ता च प्राप्तःस्याच्चोरकिल्बिषम् ॥ ३४२॥**

( १ ) मेधातिथिः । पश्वादयोविमुक्तशृङ्खलादिबन्धनामुस्तादियवभूयिष्टेषु विजनेषु वार्यन्ते ततश्चेन्निद्रायति स्वामिनि पाले वा कश्चित्सन्दानवतः कुर्यात् । नूनंनिनीषत्यसाविति शङ्कया चौरवद्दण्डयः यस्तुस्वामिगृहच्युतंयूथभ्रंशागतंवा रक्षितुमेव वा बध्नीयान्न तस्य दोषएवंगवादीनामपि गले दामादि संजातएषएव दमः ये च संदिताः पादस्थशृङ्खलादिना तेषांमोक्षकः दासांश्च रहसि प्रोत्साह्य भक्तदासादीनपहरत्यहन्ते बहुददामि किमेतंभजसइति कुलीनानांहरणे वधउक्तः पुरुषाणामित्यत्रानेन दासामुच्यन्ते यद्येवतत्रैव कुलीनमुक्तमेवंप्रोत्साह्य नयनग्रहणंन कर्तव्यं तत्प्रबलादिनाचौर्येणवेति अश्वरथहर्तेति अश्वानांरथानांच महापशूनामित्यत्र राजसंबन्धिनोऽश्वाइमे तुजनपदानांराजेच्छया दण्डः इह तु नियतोवधः । यद्यपि बहवश्चोरदण्डास्तथापि स्मृत्यन्तरे ॥ बंदिग्राहांस्तथा वाजिकुञ्जराणांच हारिणः ॥ प्रसह्यघातिनश्चैव शूलमारोपयेत्तरानिति ॥ इहापि सामान्यतोयेन येनेत्युपक्रम्य तत्तदेव हरेदिति । अन्येत्वश्वयुक्तोरथइति सामान्यमन्यन्ते प्रदर्शनाच्चाश्वगोरथादीनां तत्र केवलानामश्वानांरथस्य च दण्डश्चिन्त्यः स्मृत्यन्तरे केवलानामश्वानांचौरदण्डस्योक्तत्वात् यद्यप्ययुक्तानामपि सिद्धोयेतु प्रोत्साह्ननयनंहरणंमन्यन्ते तेषामश्वरथशब्देन रथकारोलक्ष्यते रथकर्तेति सच सर्वशिल्पार्थशिल्पिनांहरणे चौरदण्डः अश्वानामपि प्रोत्साहनंवडवादर्शनेन ॥ ३४२ ॥

( २ ) सर्वज्ञनारायणः । असन्दितानामबद्धानां अस्वामिकतयोत्सृष्टानां संवाहनादिकर्ता सन्दाता । सन्दितानामन्यपशूनां तद्विरोधाचरणबुद्ध्या मोक्षकः । दासाश्वरथहर्ता कथंचित्प्रतारणादिना तैःस्वकर्म कारयन् । तेन तदस्तेयेपि तत्कर्मस्तेयात्तत्स्तेयातिदेशः ॥ ३४२ ॥

( ३ ) कुल्लूकः । अबद्धानामश्वादीनांपरकीयानांयोदर्पेण बन्धयिता बद्धानांमन्दुरादौ मोचयिता योदासाश्वरथापहारी सचौरदण्डंप्राप्नुयात् सच गुरुलघ्वपराधानुसारेण मारणाङ्गच्छेदनधनाद्यपहाररूपोबोद्धव्यः ॥ ३४२ ॥

( ४ ) राघवानन्दः । अस्तेयेष्वपि दण्डार्थं स्तेयमाह असन्दितानामिति । अनागस्त्वेनाऽवरोधानर्हपरकीयपशूनां दर्पात्सन्दाताऽवरोद्धा कृतागस्त्वेनाऽवरुद्धानां मोक्षयितेत्यन्वयः । दासादित्रयहर्ताच पणानांसहस्रंदण्ड्यः ॥ ३४२ ॥

( ५ ) नन्दनः । असन्धितानां सन्धाता ॥ ३४२ ॥

( ६ ) रामचन्द्रः । असन्दितानां अबद्धानां संदाता बंधकः च पुनः सन्दितानांमोक्षकः भृत्यहर्ता अश्वस्यहर्तासः चौरकिल्बिषं चौरस्येव किल्बिषं दण्डार्हःस्यात् ॥ ३४२ ॥

**अनेन विधिना राजा कुर्वाणःस्तेन निग्रहम् ॥ यशोऽस्मिन्प्राप्नुयाल्लोके प्रेत्यचानुत्तमं सुखम् ॥ ३४३ ॥**

( १ ) मेधातिथिः । अनेनान्तरप्रक्रान्तेन मार्गेण चौरनिग्रहंकुर्वाणोयशः सकलजनसाधुवादोस्मिँल्लोके यावज्जीवंप्रेत्य मृतस्यानुत्तमंस्वर्गाख्यंसुखमश्नुतइति प्रकरणोपसंहारोयम् ॥ ३४३ ॥

( २ ) सर्वज्ञनारायणः । स्तेयम् ॥ ३४३ ॥

( ३ ) कुल्लूकः । अनेनोक्तविधानेन राजा चौरनियमनंकुर्वाणइहलोके ख्यातिंपरलोके चोत्कृष्टसुखंप्राप्नुयात् ॥ ३४३ ॥

( ४ ) राघवानन्दः । स्तेयनिग्रहाद्युपसंहरन्राजानं फलेन तत्रावर्जयति अनेनेति । सुखं प्रजारक्षणपुण्येन ॥३४३॥

**ऐन्द्रंस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् ॥ नोपेक्षेत क्षणमपि राजा साहसिकंनरम् ॥३४४॥**

( १ ) **मेधातिथिः**। सहोबलंतेन वर्तते साहिकः दृष्टादृष्टदोषानपरिगणय्य बलमात्रमाश्रित्य स्तेयहिंसासंग्रहणादिपरपीडाकरेषु वर्तमानः प्रकाशं पुरुषः साहसिकः तदुक्तंस्यात्साहसमिति नस्तेयादिभ्यः पदार्थान्तरंसाहसंकिन्तु प्रसह्यकरणान्येव साहसानिभवन्ति यद्यप्यग्निदाहवस्त्रपाटनादि सापि द्रव्यनाशात्मकत्वात्सिद्धैवेति तस्य निग्रहोनापेक्षते न विलंबेक्षणमपि यदागृहीतस्तदैव निगृहीतव्यः इन्द्रस्वामिकंस्थानंस्वर्गाख्यमैन्द्रंतदाभिमुख्येन प्राप्तुमिच्छन्। अथवास्वमेव राज्यपदमैन्द्रमिवगच्छन्नविचालित्वसामान्यं निग्राह्यनिग्रहेण हि प्रतापानुग्रहाभ्यां प्रजाअनुप्रवर्तन्ते तदुक्तं समुद्रमिवसिन्धवइति यशोक्षयमव्ययंच द्वैधविशेष्यविशेषणे स्थानमव्ययंयशोक्षयमिति अथोभयेनापि यशोविशिष्यते क्षयोमात्रापचयः व्ययोनिरन्वयविनाशः उभयमपि तत्रास्ति न मलिनीभवति यशोनकदाचिद्विच्छिद्यते भूतार्थवादस्तुतिरियम् ॥३४४ ॥

( २ ) **सर्वज्ञनारायणः**। साहसं प्रक्रमते ऐन्द्रमिति। अक्षयमनाशि। अव्ययमन्यूनम् ॥ ३४४ ॥

( ३ ) **कुल्लूकः**। इदानींसाहसमाह ऐन्द्रमिति सर्वाधिपत्यलक्षणंपदंख्यातिंचाविनाशिनीमनुपक्षयांचातिशयेन प्राप्तुमिच्छन् राजाबलेन गृहदाहधनग्रहणकारिणंमनुष्यंक्षणमपि नोपेक्षेत ॥ ३४४ ॥

( ४ ) **राघवानन्दः**। कृतलक्षणंसाहसिकं दण्डयितुं दृष्टादृष्टफलेन राजानं तत्रावर्जयति। ऐन्द्रमिति अक्षयंस्थानं कल्पादिवर्ति। अव्ययं यशइति ॥ ३४४ ॥

( ५ ) **नन्दनः**। अथसाहसदण्डनविधिंप्रस्तौति ऐन्द्रस्थानमिति। अक्षय्यं स्वरूपेण अव्ययं फलेन सहोबलन्तेन युक्तंसाहसं तस्य कर्त्ता साहसिकः परेषांप्रमापकइत्यर्थः तंनोपेक्षेत ॥ ३४४ ॥

**वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः ॥ साहसस्य नरः कर्ता विज्ञेयः पापकृत्तमः ॥ ३४५ ॥**

( १ ) **मेधातिथिः**। अयमपरार्थवादोनिग्रहविधिः स्तुत्यर्थः वाचादुष्टोवाग्दुष्टस्तस्करश्चौरदण्डेनैव दण्ड्यःपारुष्यकृत् दण्डः प्रहरणोपलक्षणार्थःत्रिभ्यएतेभ्योऽनन्तरातिक्रान्तेभ्यःपापकारिभ्योऽयमतिशयेन पापकृत्तमः ॥ ३४५ ॥

( २ ) **सर्वज्ञनारायणः**। वाग्दुष्टोवाक्पारुष्यकृत्। दण्डेन हिंसकोदण्डपारुष्यकृत् ॥ ३४५ ॥

(३ ) **कुल्लूकः**। वाक्पारुष्यकृताच्चोराच्च दण्डपारुष्यकारिणश्च मनुष्यात्साहसकृन्मनुष्योऽतिशयेन पापकारी बोद्धव्यः ॥ ३४५ ॥

( ४ ) **राघवानन्दः**। पारुष्यादिकर्तृभ्यस्त्रिभ्योपि पापकृदयमिति नोपेक्षणीयइत्याह वागिति। तस्करात् चोरात्। योदण्डेन हिंसकस्तस्मादपि ॥ ३४५ ॥

( ५ ) **नन्दनः**। अस्य दूषणमाह वाग्दुष्टादिति। वाग्दुष्टस्तस्करश्च दण्डेन हिंसकश्च पापकृतः तेभ्यः साहसस्य कर्त्ता पापकृत्तमः तस्मात्तंनोपेक्षेतेति ॥ ३४५ ॥

**साहसे वर्तमानन्तु योमर्षयति पार्थिवः ॥ सविनाशंव्रजत्याशु विद्वेषंचाधिगच्छति ॥ ३४६ ॥**

( १ ) **मेधातिथिः**। अयमप्यर्थवादः साहसेस्थितंपुरुषंयोमर्षयति प्रकृत्यर्थेऽयंणिचूयोमृष्यतिक्षमते सविनाशंप्राप्नोति द्वेष्यतां च प्रजासुप्राप्नोति द्वेष्यैश्चाभिभूयते ॥ ३४६ ॥

( २ ) **सर्वज्ञनारायणः**। विनाशं साहसकारिणएव सकाशात्। विद्वेषं प्रजासु ॥ ३४६ ॥

( ३ ) **कुल्लूकः** । योराजा साहसे प्रवर्तमानंक्षमते सपापकृतामुपेक्षणादधर्मबुद्ध्या विनश्यति अपक्रियमाणराष्ट्रतया जनविद्वेषंच गच्छति ॥ ३४६ ॥

( ४ ) **राघवानन्दः** । राज्ञस्तत्त्यागोदृष्टानर्थावहश्चेत्याह साहसइति । विद्वेषं प्रजाभिःसह ॥ ३४६ ॥

( ५ ) **नन्दनः** । उपेक्षणे दोषमाह साहसेवर्त्तमानन्त्विति । विनाशंक्षीणकोशादित्वं विद्वेषंलोकगर्हाम् ॥ ३४६ ॥

**न मित्रकारणाद्राजा विपुलाद्वा धनागमात् ॥ समुत्सृजेत्साहसिकान्सर्वभूतभयावहान् ॥ ३४७ ॥**

( १ ) **मेधातिथिः** । अतआह पार्श्वर्तीयस्य कस्यचित्स्नेहहेतोरमात्यादिना प्रार्थ्यमानोन मृष्येत् अथवा सएवातिबहुधनंददातीति नापेक्षित । सर्वेषां भूतानांभयमावहन्तिसाहसिकाः अयमप्यर्थवादः ॥ ३४७ ॥

( २ ) **सर्वज्ञनारायणः** । मित्रकारणादेषमित्रंभविष्यतीति ॥ ३४७ ॥

( ३ ) **कुल्लूकः** । मित्रवाक्येन बहुधनप्राप्त्या वा सर्वभूतभयजनकान्साहसिकान्राजा न त्यजेत् ॥ ३४७ ॥

( ४ ) **राघवानन्दः** । लोभादिनाऽप्येते नक्षन्तव्याइत्याह नेति । अयंमित्रंभवतु मांनापकरोतु प्रत्यपकरिष्यतीतिवा विपुलात्प्रचुरात् धनागमाद्धनलाभात् तान्विशिनष्टि सर्वभूतभयावहानित्यनेनमामुपकरिष्यतीतिनिरस्तम् ॥ ३४७ ॥

( ५ ) **नन्दनः** । उक्तमर्थंनिगमयतिनमित्रकारणाद्राजेति ॥ ३४७ ॥

**शस्त्रंद्विजातिभिर्ग्राह्यंधर्मोयत्रोपरुध्यते ॥ द्विजातीनांच वर्णानांविप्लवे कालकारिते ॥ ३४८ ॥**

( १ ) **मेधातिथिः** । वैणवींधारयेद्यष्टिमिति विधानादनुदितशस्त्रग्रहणाः श्रोत्रियाःसबलाविष्टंभवतिचसाहसिकेबलातिशयधायीवशस्त्रमतः साहसिकत्वाच्छक्तायशस्त्रग्रहणमप्राप्तंविधीयते शस्त्रंद्विजातिभिर्ग्राह्यमिति एतावतावाक्यंविच्छिद्यते अवशिष्टंतुग्रन्धर्मेणेत्यनेनाभिसंबध्यतइत्यतोह्यएतेवाक्येयेत्वेतेष्वेव निमित्तेषुग्रहणमिच्छन्ति नान्यदेति तेषामतर्कितोपनताततायीमुखपतितस्याशस्त्रस्य का गतिः नहि तेशस्त्रग्रहणंतस्य प्रतिपालयन्ति अथैवंव्याख्यायतेधर्मोयत्रोपरुद्ध्यते विप्लवेकालकारिते राजनि व्यतिक्रान्ते संस्थायांप्रवृत्तायांशस्त्रंग्राह्यं अन्यदातुसौराज्येराजैवरक्षतीति नहिप्रसार्यहस्तौराजा प्रतिपुरुषमासितुंशक्नोति भवन्ति केचिद्दुरात्मानोये राजपुरुषानपि शूरतमाभियुक्तान्बाधन्ते शस्त्रवतस्तुबिभ्यतीतिसार्वकालिकंशस्त्रधारणंयुक्तं किंपुनर्ग्रहणमात्रंबिभीषिकाजननमात्रंनेत्याह ग्रन्धर्मेणनदुष्यतीति हिंसापर्यन्तोयमुपदेशः यत्त्वापस्तंबेनोर्क्तनब्राह्मणःपरीक्षार्थमपि शस्त्रमाददीतेति असति यथाभिहते निमित्तआकर्षणस्य प्रतिषेधोन ग्रहणस्य विकोशाहिपरीक्ष्यन्तेधर्मस्योपरोधोयदा यज्ञादीनांविनाशः कैश्चित्क्रियतेवर्णानांविप्लवोऽव्यवस्थानंवर्णसंकरादि कार्यकालतेराजमरणादौतप्रस्त्वधनकुटुंबरक्षार्थंशस्त्रंग्राह्यम् । अन्येतुपरार्थमप्यस्मिन्नवसरे तथाचगौतमःदुर्बलहिंसायांचविमोचनेशक्तश्चेदिति उक्तंयज्ञविनासंकरनिवृत्त्यर्थंशस्त्रग्रहणं निमित्तांतरमाह आत्मनश्चपरित्राणे परिःसर्वतोभावेशरीरभार्याधनपुत्ररक्षार्थंग्रन्धर्मेण नदुष्यति दक्षिणानांच संगरोऽवरोधः यदियज्ञार्थकल्पितादक्षिणाः कैश्चिदपह्रियेरंस्तदातन्निमित्तंयोद्धव्यं अन्येत्वेवमभिसंबध्नन्ति दक्षिणानांहेतोः संगरेयद्युपरोधःप्रवृते धर्मे ऽप्रवृत्तेर्दक्षिणासंगरइति विशेषाणामभ्यवपत्तिपरिभवः । यत्रस्त्रियःसाध्व्योहठात्केनचिदुपगम्यन्ते हन्यन्तेवा एवंब्राह्मणाःकेनचिद्धन्यन्ते तत्रग्रन्खड्गादिना नदुष्यतिहिंसाप्रतिषेधातिक्रमोनकृतोभवतीत्यर्थः असतिप्रतिषेधे कामचारप्राप्तौविध्यन्तरपर्यालोचनया गौतमवचनमनुध्यायमानेन दुर्बलहिंसायांविमोचनेशक्तश्चेदित्यवश्यंहननेप्रवर्तितव्यं अथप्रतिहारशङ्काभवति तदासर्वतएवात्मानंगोपायेदित्यपेक्षा ॥ ३४८ ॥ ३४९ ॥

(२) **सर्वज्ञनारायणः** । द्विजातिभिस्त्रिभिरपि ग्राह्यम् किमुत राज्ञेत्यर्थः । धर्मस्योपरोधे बलात्साहसिकैरधर्मप्रवर्तने ।

द्विजातीनां विप्लवउत्तमायास्त्रियाअधमेन योगात्संकरे कालकारिते नतु देशकृते। तेषां तत्प्रायत्वेन निवर्तनासंभवात् ॥ ३४८ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणादिभिस्त्रिभिर्वर्णैः खड्गाद्यायुधंगृहीतव्यं यस्मिन्काले वर्णानामाश्रमिणांच साहसकारादिभिर्धर्मः कर्तुंन दीयते तथा त्रैवर्णिकानामराजकेषु राष्ट्रेषु परचक्रागमनादिकालजनिते स्त्रीसङ्करादौ प्राप्ते तथाऽत्मरक्षार्थंदक्षिणाधनगवाद्यपहारनिमित्ते च संग्रामे स्त्रीब्राह्मणरक्षार्थंच धर्मयुद्धेनानन्यगतिकतया परान्हिंसन्न दोषभाग्भवति परमारणेप्यत्र साहसदण्डोन कार्यः ॥ ३४८ ॥ ३४९ ॥

( ४ ) **राघवानन्दः**। न केवलं राजाऽनुपेक्षणीयोऽयमपितु प्रजाभिरपीत्याह शस्त्रमिति। धर्मोयागादिः साहसिकैर्धनाद्यपहारनिमित्तं उपरुध्यते नश्यति विप्लवे परचक्राद्यागमननिमित्तस्त्रीव्यतिकरादौच कालकारिते दुर्भिक्षादिकाले दस्युनिमित्ते विप्लवेवा एतेषु रक्षणार्थं द्विजातिभिरपि शस्त्रं ग्राह्यमित्यन्वयः ॥ ३४८ ॥

( ५ ) **नन्दनः**। क्वचित्साहसिकत्वस्यापवादमाह शस्त्रंद्विजातिभिरिति। यत्र विषये धर्मोपरुद्ध्यते तत्र शस्त्रंद्विजन्मादिभिर्ग्राह्यं। शस्त्रेण द्विजातिभिर्धर्मोपरोधिवधः कर्तव्योन तेन तेषांसाहसिकत्वमित्यभिप्रायः। विप्लवे मर्यादाभङ्गे कालकारितेदुर्भिक्षादियुक्तेन कालेन कारिते ॥ ३४८ ॥

( ६ ) **रामचन्द्रः**। विप्लवे उत्तमस्त्रीणामधमपुंसःसंसर्गे ॥ ३४८ ॥

**आत्मनश्च परित्राणे दक्षिणानांच सङ्गरे ॥ स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥ ३४९ ॥**

( २ ) **सर्वज्ञनारायणः**। आत्मनःपरित्राणे प्राणरक्षणे। दक्षिणानां दक्षिणार्थे। तदपहारे केनचित्क्रियमाणे। संगरे युद्धे। स्त्रीविप्रयोरभ्युपपत्तौ प्राणरक्षणे। धर्मेण विषदिग्धशराद्यधार्मिकप्रकारत्यागेन ॥ ३४९ ॥

( ४ ) **राघवानन्दः**। पूर्वस्मिन् श्लोके तस्यावरोधेन रक्षामात्रं विवक्षितमत्रतु तद्वधेनाप्यात्मादीनां रक्षणंसूचितमित्याह आत्मनश्चेति। दक्षिणानां दक्षिणाद्यर्थंवा हरणनिमित्ते संगरे संग्रामे अभ्युपपत्तौ स्त्रीणां रक्षार्थं तान् घ्नन् नाशयन्नपि धर्मेण न दुष्यति न पापीस्यादिति ॥ ३४९ ॥

( ५ ) **नन्दनः**। आत्मनोर्दक्षिणानांच परित्राणे परित्राणार्थं संगरे युद्धेऽभ्यवपत्तौ रक्षणार्थंधर्मेण हेतुना घ्नन्नार्थार्थंन दुष्यति न साहसिकोभवतीत्यभिप्रायः ॥ ३४९ ॥

( ६ ) **रामचन्द्रः**। स्त्रीणां विप्रस्य अभ्युपपत्तौ प्राणरक्षणे ॥ ३४९ ॥

**गुरुंवा बालवृद्धौ वाब्राह्मणंवा बहुश्रुतम् ॥ आततायिनमायांतंहन्यादेवाविचारयन् ॥ ३५० ॥**

**[ अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ १ ॥ ]+**

**[ उद्यतासिर्विषाग्निभ्यां शापोद्यतकरस्त था ॥ आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥२॥]‡**

**[ भार्यारिक्थापहारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥ ३ ॥ ]***

( १ ) **मेधातिथिः**। आत्मपरित्राणार्थमविचारेण योद्धव्यंतदनुदर्शयति आततायिनमुद्यतोयः शरीरधनदारपुत्रनाशे

---

( ३४९ ) स्त्रीविप्रा=स्त्रीबाला ( ग )

+ ( क, ण ) ‡ ( क, ट, ठ ) * ( क, ट )

सर्वप्रकारमुद्यततममविधारयन्नविचारयन्हन्यात् गुर्वादिग्रहणमर्थवादः । एतेपि हन्तव्याः किमुतान्यइति एतेषांत्वाततायित्वेपि वधोनास्ति आचार्यंच प्रवक्तारमित्यनेनापकारिणामपि वधोनिषिद्धः गुरुमाततायिनमितिशक्यः संबन्धस्तथा सत्याततायिविशेषणमेतत्ततोगुर्वादिव्यतिरिक्तस्याततायिनः प्रतिषेधः कुतः स्याद्वाक्यान्तराभावात् अथनाततायिवधे दोषइत्येतद्वाक्यान्तरंसामान्येनाभ्यनुज्ञापकमिति तदपि न विधिरश्रवणात् पूर्वशेषतयार्थवादत्वे प्रकृतवचनत्वादिह भवतांस्त्वाहुर्यथाततायिनमित्येवविधिरवशिष्टोर्थवादस्तथापि गुर्वादीनांवधानुज्ञानं यतोन्यदपकारित्वमन्यदाततायित्वंयोह्यन्यांकांचनपीडांकरोति न सर्वेण शरीरादिना स्तेयकारीतस्त्वाततायी । तथाच पठ्यते ॥ उद्यतासिविषाग्निभ्यांशापोद्यतकरस्तथा । आथर्वणेन हन्ताच पिशुनश्चापि राजतः ॥ भार्यातिक्रमकारीच रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिनः॥आयान्तमिति वचनादात्तशस्त्रोहन्तुमभिधावन्दारान्वाजिहीर्षन्हन्तव्यः कृतेतु दोषे किमन्यत्करिष्यतीत्युपेक्षाइति ब्रुवते तदयुक्तं यतः प्रकाशमप्रकाशेचेतिवक्ष्यति समानौह्येतौ करिष्यन्कृतवांश्च सृष्टश्चेदिति तस्मादायान्तमित्यनुवादः कर्तुमागतंकृत्वा वागतमिति आततायित्वाच्चासौ हन्यते नच कृतवचनआतयित्वमुपैति नास्यात्मनोरक्षार्थएव वधआत्मनश्च परित्राणइति नोक्तम् ॥ ३५० ॥

( २ ) **सर्वज्ञनारायणः** । अत्रात्मनः परित्राणे शस्त्रग्रहणमुक्तं तत्प्रपञ्चयति । आततायिनं हननप्रवृत्तं हन्यादेवाङ्गच्छेदादिरूपघातेन नत्वत्यन्तं अन्यत्रगोब्राह्मणादिति गौतमस्मृतेः । आततायीतु ॥ अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारीच षडेते आततायिनइत्यादिनास्मृत्यन्तरउक्तम् । शस्त्रपाणिः शस्त्रेण घातयितुमायातः । यदभावे वृत्त्युच्छेदस्तेयौ । हिरण्यादिधनधान्याद्युत्पत्तिभूम्योर्धनक्षेत्रपदाभ्यां ग्रहणम् ॥ ३५० ॥

( ३ ) **कुल्लूकः** । गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमंवधोद्यतमागच्छन्तंविद्यावृत्तादिभिरुत्कृष्टंपलायनादिभिरपिस्वनिस्तरणाशक्तौर्निर्विचारंहन्यात् । अतएवोशनाः ॥ गृहीतशस्त्रमाततायिनंहत्वा न दोषः । कात्यायनश्च भृगुशब्दोल्लेखेन मनूक्तश्लोकमेव व्यक्तंव्याख्यातवान् ॥ आततायिनिचोत्कृष्टे तपः स्वाध्यायजन्मतः ॥ वधस्तत्र तु नैवस्यात्पापंहीने वधोभृगुः ॥ मेधातिथिगोविन्दराजौतु स्त्रीविप्राभ्युपपत्तौ च ग्रन्धर्मेण न दुष्यतीति पूर्वस्यायमनुवादः गुर्वादिकमपि हन्यात्किमुतान्यमपीति व्याचक्षाते ॥ ३५० ॥

( ४ ) **राघवानन्दः** । एवमपि साहसिकतया गुर्वाद्युपस्थितौ किं कार्यं तत्राह गुरुंवेति । स्वापेक्षया बहुश्रुतं बहुविद्यम् आततायिनम् ॥ अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते आततायिनइत्युक्तलक्षणम् ॥ ३५० ॥

( ५ ) **नन्दनः** । अत्राततायिशब्देन धर्मोपरोधकादयोविवक्षिताः स्मृत्यन्तरेऽग्निदोगरदइत्यादयउक्तास्तेऽपि परमार्थतएवंसंपद्यन्ते ॥ ३५० ॥

( ६ ) **रामचन्द्रः** । आततायिस्वरूपमाह ॥ अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः । क्षेत्रदारापहारीच षडेतेआततायिनः॥ अन्यच्च ॥ उद्यतासिर्विषाग्निभ्यांशापोद्यतकरस्तथा । आथर्वणेनहन्ताचपिशुनश्चापि राजनि ॥ भार्यातिक्रमकारीचछिद्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥ अविचारयन्गुर्वादीन् हन्यात् त्यागंकुर्यात् नतु हिंसां कुर्यात् । हन हिंसागत्योरित्यस्य धातोर्गत्यर्थता नहिंसार्थम् ॥ ३५० ॥

नाततायिवधे दोषोहन्तुर्भवतिकश्च न ॥ प्रकाशंवाऽप्रकाशंवा मन्युस्तंमन्युमृच्छति ॥ ३५१ ॥

( १ ) **मेधातिथिः** । नकश्चनेति नाधर्मोन दण्डोन प्रायश्चित्तमिति प्रकाशंजनसमक्षमप्रकाशंविषादिदानेन येनकेनचिदुपायेन मन्युः क्रोधाभिमानिदेवतासौमन्युमृच्छति । नात्रहन्तृहन्तव्यभावोस्ति पुरुषयोरर्थआततायिक्रोधइतरेण हन्यतइत्यर्थवादोयं यथाप्रतिग्रहकामः कोमह्यंददातु नाहंप्रतिग्रहीता नत्वंदातातातश्चकुतः प्रतिग्रहदोषोमामेवमत्रापीह साहसिकेदण्डोनाम्नातः सदण्डपारुष्येच द्रष्टव्यः इह त्वधिकतरोयतउक्तंविज्ञेयः पापकृतइति ॥ ३५१ ॥

( २ ) **सर्वज्ञनारायणः** । हन्तुर्वधकर्तुः । नकश्चन दोषोभवतीति ब्रह्महत्यादिकृतमपि पापं न तादृशं भवति । तथाहि प्रायश्चित्तमपि तत्राल्पमेव स्मृतिकारैर्निबद्धम् । प्रकाशं युद्धेन अप्रकाशमभिचारेण । मन्युः क्रोधः तज्जन्या हिंसोपलक्ष्यते । हन्तुर्हिंसा आततायिनोर्हिंसांप्रति ऋच्छति तत्प्रतिरुद्धा न फलंप्रसूते । तन्न कर्तरि पापंजनयति हिंसितेन हिंसाकरणादिति तात्पर्यम् ॥ साहसम् ॥ ३५१ ॥

( ३ ) **कुल्लूकः** । जनसमक्षंरहसि वा वधोद्यतस्य मारणे हन्तुर्न कश्चिदप्यधर्मदण्डः प्रायश्चित्ताख्योदोषो भवति यस्माद्धन्तृगतोमन्युः क्रोधाभिमानिनी देवता हन्यमानगतंक्रोधंविवर्धयति । साहसे चापराधगौरवापेक्षया मारणाङ्गच्छेदनधनग्रहणादयोदण्डाः कार्याः ॥ ३५१ ॥

( ४ ) **राघवानन्दः** । एवंकृते प्रायश्चितीनस्यात्तत्राह नेति । प्रकाशं जनानांसमक्षम् । अप्रकाशं रहसि । अदोषे मंहेतुर्मन्युरित्यादि मन्युः क्रोधाभिमानी देवता मृत्युं हन्यमानगतं क्रोधंऋच्छति । निवर्तयतीति अन्यायवधोहि क्रोधेनैव भवतीति क्रोधस्यैव कारणत्वं नहन्तुरितिभावः । अत्राप्यपराधलाघवगौरवाद्यपेक्षया पापस्य मारणताडनधनाद्यपहारादि* । पलायनेऽसमर्थस्य ब्राह्मणस्यैवायं विधिः स्वपरवधे ब्रह्महत्यायास्तुल्यत्वात् । अतआहउशनाः ॥ गृहीतशस्त्रमाततायिनंहत्वा न दोषइति ॥ अतः कात्यायनः ॥ आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मनः । वधस्तत्र तु नैव स्यात्पापे हीने वधोभृगुरित्यादिइतिकेचित् ॥ मेधातिथिगोविन्दराजौतु स्त्रीविप्राभ्युपपत्तौचघ्नन् धर्मेण नदुष्यतीति ॥ अस्यैवार्थवादरूपं श्लोकद्वयमित्याहतुः । युक्तंचैतत् ॥ नहिंस्यात्सर्वभूतानीति निषेधकधर्मशास्त्रात् श्येनेनवन्नीति शास्त्रं रागोपाधीति प्रतीकारसत्वे न कर्तव्योवधः । अतः धर्मशास्त्रादर्थशास्त्रं दुर्बलमित्याहुः ॥ ३५१ ॥

( ५ ) **नन्दनः** । प्रकाशवधोयुद्धे शस्त्रादिकृतः अप्रकाशोविषाभिचारादिकृतः मन्युर्हन्तुर्मन्युः ॥ ३५१ ॥

( ६ ) **रामचन्द्रः** । प्रकाशं युद्धादिना । प्रकटंवापक्षान्तरे । अप्रकाशं अभिचारादिना । अप्रकटंमन्युः तं मन्युं आततायिनं यस्य हिंसा ऋच्छति प्राप्नोति ॥ ३५१ ॥

परदाराभिमर्शेषु प्रवृत्तान्नॄन्महीपतिः ॥ उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥ ३५२ ॥

( १ ) **मेधातिथिः** । विवाहसंस्कृतायांस्त्रियांदारशब्दोवर्तते आत्मनोन्यः परः अभिमर्शः संभोगआलिङ्गनारभ्य आलिङ्गनंजनद्वयसमवायभोगजन्यायाः प्रीतेः प्रवृत्तिः प्रारंभस्तनिवृत्त्यर्थंदूतीसंप्रेषणादिना प्रोत्साहनं अथच संग्रहणमभिमर्शनंप्रचक्षते यमर्थंपरभार्यागमने प्रवृत्तंपुरुषंज्ञात्वोद्वेजनकरैस्तीक्ष्णाग्रैः शक्तिशूलादिभिरङ्कयित्वा नासाछेदादिभिर्विवासयेत् सर्वत्रात्रविशेषदण्डस्योक्तत्वादस्यविषयभावोनसामान्यदण्डोयंकिंतर्हि पुनःपुनः प्रवृत्तौ । इदन्तु युक्तमलभ्यमानस्य विषयान्तरंप्रवासस्य धनदण्डस्य च कार्यभेदात्समुच्चयस्तथादर्शयिष्यामः ॥ ३५२ ॥

---

* अपहारादि=धनाद्यपहाराद्युन्नेयं ( राघ० २ )

( २ ) **सर्वज्ञनारायणः** । दण्डैः शिश्नच्छेदादिभिः ॥ ३५२ ॥

( ३ ) **कुल्लूकः** । इदानींस्त्रीसंग्रहणमाह परदारेति । परदारसंभोगाय प्रवृत्तान्मनुष्यगणानुद्वेजनकैर्दण्डैर्नासौष्ठकर्तनादिभिरङ्कयित्वा देशान्निःसारयेत् ॥ ३५२ ॥

( ४ ) **राघवानन्दः** । परदाराभिरतस्य स्वजातौ दण्डमाह षट्त्रिंशता श्लोकैः परदारेति । नॄनिति विशेषणाद्विवतिर्यक्षु नदोषः । उद्वेगजनकैः नासौष्टकर्तनादिभिः सर्वत्र । ब्राह्मणंतु विवासयेत् ॥ ३५२ ॥

( ५ ) **नन्दनः** । दण्डैः शिश्नच्छेदभगादिभिः ॥ ३५२ ॥

( ६ ) **रामचन्द्रः** । महीपतिः परदाराभिमर्शे प्रवृत्तान्पुरुषान् हन्यात् । चपुनः दण्डैः शिश्नच्छेदादिभिः ॥ ३५२ ॥

**तत्समुत्थोहिलोकस्य जायते वर्णसंकरः ॥ येन मूलहरोऽधर्मःसर्वनाशाय कल्पते ॥ ३५३ ॥**

( १ ) **मेधातिथिः** । समुत्थानमुत्पत्तिः ततःपरदारागमनात्संकरोवान्तरवर्णरूपोजायते येनजातेनाधर्मोमूलस्य लोकस्य दिवः पतिता वृष्टिस्तांहरत्यधर्मः धर्मेहि सत्यादित्याज्जायते वृष्टिः नचसंकरेसत्यपि कारीरीयागोनापिपात्रेदानमतोदानयागहोमानांसस्योत्पत्तिहेतुभूतानामभावात्सर्वजगन्नाशसमर्थोभवति तस्मात्पारदारिकाधर्ममूलवर्णसंकरःस्यादितिसस्यादिनिष्पत्तिमूलांवावृष्टिंरक्षन्प्रवासयेत् ॥ ३५३ ॥

( २ ) **सर्वज्ञनारायणः** । मूलहरोमूलभूतधर्महार्यधर्मः ॥ ३५३ ॥

( ३ ) **कुल्लूकः** । यस्मात्परदाराभिगमनात्संभूतोवर्णस्य संकरः संपद्यते येन वर्णसंकरेण विशुद्धपत्नीकयजमानाभावात् अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत्यस्याभावे सति वृष्ट्याख्यजगन्मूलविनाशोऽधर्मोजगन्नाशाय संपद्यते ॥ ३५३ ॥

( ४ ) **राघवानन्दः** । ननु तद्व्यस्य तथैवस्थाने किमिति दण्डनीयं तत्राह तदिति । वर्णसंकरोशूद्रादिमिश्रणं । संकरोपि किं स्यात्तत्राह येनेति । अग्नौप्रास्ताहुतिभिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नं ततः प्रजाइतिप्रजोत्पत्तिहेतुराहुतिः । साच संकरजेन हुतानफलतीतिमूलहरोऽधर्मः । तथाच भगवद्गीता ॥ स्त्रीषु दुष्टासुवार्ष्णेय जायते वर्णसंकरः । संकरोनरकायैव कुलघ्नानां कुलस्य च ॥ पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाः इत्यादि । मूलं ब्राह्मण्यादिवा ॥ ३५३ ॥

( ५ ) **नन्दनः** । दण्डप्रकर्षे हेतुमाह तत्समुत्थोहीति । तत्समुत्थः परदाराभिमर्शनसंभूतः येन वर्णसंकरेणाधर्मइतिपदं मूलंहरेद्धर्मस्य मूलहरः ॥ ३५३ ॥

( ६ ) **रामचन्द्रः** । तत्समुत्थः असत्स्त्रीपुरुषसंयोगात् समुत्थः । वर्णसंकरः येन वर्णसङ्करेण मूलधर्मः तस्यहरः अधर्मः सर्वनाशाय कल्पते ॥ ३५३ ॥

**परस्य पत्न्यापुरुषः संभाषांयोजयन्रहः ॥ पूर्वमाक्षारितोदोषैः प्राप्नुयात्पूर्वसाहसम् ॥ ३५४ ॥**

( १ ) **मेधातिथिः** । संभाषः संभाषणंतमालपितुंकुर्वन्संग्रहणाद्देषितत्स्त्रीप्रार्थनादितिपूर्वमाक्षारितोऽभिसंभवामेव पत्न्यातस्यामुत्राद्दष्टदोषः चपलउद्घातादौ निषिद्धसंभाषणइति केचित् कारणादप्यन्यपत्न्यासंभाषणंकुर्वन्प्रथमसाहसंदण्डंप्राप्नुयाद्दापयितव्यइत्यर्थः योस्त्वनाक्षारितोपि भाषेत कारणान्न दोषंप्राप्नुयात्किंचित् नहितस्यव्यतिक्रमःपूर्वस्यमत्युदारणमेतत् ॥ ३५४ ॥

( २ ) **सर्वज्ञनारायणः** । संभाषांयोजयन् सत्यपि कारणे । पूर्वमाक्षारितः परपत्नीगमनेनाभिशस्तोयः संभावितपरदारगमनइत्यर्थः ॥ ३५४ ॥

( ३ ) **कुल्लूकः** । तत्स्त्रीप्रार्थनादिदोषैः पूर्वमुत्पन्नाभिरपवादप्रार्थनाभिशापादिभिः पुरुषःउचितकारणव्यतिरेकेण परभार्यया संभाषणंकुर्वन्प्रथमसाहसंदण्डंप्राप्नुयात् ॥ ३५४ ॥

( ४ ) **राघवानन्दः** । अदृष्टदोषमुक्त्वा दृष्टदोषनिवृत्त्यै दण्डमाह परस्येति । संभाषां मैथुनाङ्गतया परिहासादिरूपा । तदुक्तम् ॥ स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेवच । इत्यङ्गानि । एतैर्दोषैः पूर्वमपि यः आक्षारितोऽनभिशस्तः सपूर्वसाहसं पणानां सार्धशतद्वयं प्राप्नुयात् दण्डं दद्यात् ॥ ३५४ ॥

( ५ ) **नन्दनः** । आक्षरितःमैथुनंप्रत्याकृष्टः ॥ ३५४ ॥

( ६ ) **रामचन्द्रः** । पुरुषःपरस्य पत्न्यासह संभाषां रहोयोजयन् । पूर्वं आक्षारितः अभिशस्तः पूर्वसाहसं प्रथमसाहसं दण्डंप्राप्नुयात् ॥ ३५४ ॥

**यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ॥ न दोषंप्राप्नुयात्किंचिन्नहि तस्य व्यतिक्रमः॥३५५॥**

( १ ) **मेधातिथिः** । अनाक्षारितोप्यकारणात्संभाषयन्मिश्रयन्पूर्वदण्डभाक् ॥ ३५५ ॥

( २ ) **सर्वज्ञनारायणः** । अनाक्षारितइत्यसंभावितपरदारगामित्वमिष्टम् । सोपि करणादावश्यकनिमित्तादेवाभिभाषेतान्यथातु पूर्ववद्दण्ड्यः ॥ ३५५ ॥

( ३ ) **कुल्लूकः** । यः पुनः पूर्वंतत्स्त्रीप्रार्थनाभिशापरहितः केनचित्कारणेन जनसमक्षमभिभाषणंकुर्यान्न सपुनर्दण्ड्यत्वादिदोषंप्राप्नुयात्तस्मान्न कश्चित्तस्यापराधोस्ति ॥ ३५५ ॥

( ४ ) **राघवानन्दः** । संभाषणमात्रं नदण्डावहमित्याह यस्त्विति । कारणात् क्रयविक्रयभिक्षादिभ्यः । व्यतिक्रमोऽपराधः ॥ ३५५ ॥

( ६ ) **रामचन्द्रः** । यस्तु पूर्वं अनाक्षारितः अनभिशस्तः कारणात्परस्त्रियमभिभाषेत सार्किचिद्दोषं न प्राप्नुयात् । तस्य व्यतिक्रमः दण्डोन कार्यइत्यर्थः ॥ ३५५ ॥

**परस्त्रियंयोभिवदेत्तीर्थेऽरण्ये वनेऽपि वा ॥ नदीनांवापि संभेदे ससंग्रहणमाप्नुयात् ॥ ३५६ ॥**

( १ ) **मेधातिथिः** । परस्यपत्न्येति प्रकृते पुनः परस्त्रीग्रहणंमातृभगिनीगुरुपत्न्यादीनामप्रतिषेधार्थं नहि ताः सत्यपि परसंबन्धित्वे परस्त्रीव्यपदेश्यातीर्थमुच्यते । येन मार्गेण नदीतडागादिभ्योजलमानेतुमवतरन्ति सहि विजनप्रायोभवति नानुदकार्थे न तत्र संनिधीयते संङ्केतस्थानंतादृशमत्रकल्पितायामवश्यमेवगन्तव्यमहमपि संनिधीयमानोनाशंक्योभविष्यामीति उदकार्थींदिवाशौचाचारंवा करिष्यन्प्रतिपालयन्निति जनामंस्यन्ते प्रदेशान्तरे तु किमत्रायंप्रतिपालयतीति शङ्कास्यादतस्तीर्थे प्रतिषेधः । अरण्यंहिग्रामाद्विजनोदेशोगुल्मवृक्षलतादिगहनोवनवृक्षसंततोनदीनांसंभेदः समागमः सोपि हिसङ्केतस्थानंससंग्रहणंस्मृतंयेनकेनचित्संबन्धेनसंबन्धिनितस्यावस्त्रमाल्यादिदानेनोपकारकरणंतद्दात्रोपक्रान्तंभोजनपानादिना केलिपरिहासोवक्रभणितादिनाप्राप्नुयात् परस्त्रीकामत्वंसंग्रहणम् । अतश्च यस्तत्र दण्डः सोऽस्य स्यादित्युक्तंभवति अनाक्षारि-

( ३५६ ) ऽरण्ये=गृहे ( ट )

( ३५६ ) वनेपिवा=गृहेपिवा ( ल )

तस्यापि सत्यपि कारणेऽयंप्रतिषेधः । यस्त्वापस्तंबेनोक्तंनासंभाष्यस्त्रियमतिव्रजेदिति तदन्येषुसंनिहितेष्वेतच्छास्त्रज्ञेषु प्रकाश्येएतच्छास्त्रंभगिनीनमस्तेइत्याद्यभिवादनमविलंबमानेन कर्तव्यम् ॥ ३५६ ॥

( २ ) **सर्वज्ञनारायणः** । अभिवदेत् संभाषेत । तीर्थे जलावतारस्थाने । अरण्ये निर्जने एतच्च सर्वविशेषणम् । वनेऽटव्याम् । संभेदः संगमः एतच्च रमणीयैकान्तमात्रोपलक्षणम् । अत्रानाक्षारितस्यापि कारणादपि संभाषणे दण्डः । संग्रहणं समीचीनं ग्रहणं परस्त्रियआत्मीयताकरणं तत्र यउक्तोदण्डः । परस्यपत्न्येत्यत्र प्रथमसाहसस्तं प्रामुयादित्यर्थः ॥ ३५६ ॥

( ३ ) **कुल्लूकः** । तीर्थाद्यरण्यवनादिकनिर्जनदेशोपलक्षणमात्रं यः पुरुषः परस्त्रियमुदकावतरणमार्गेऽरण्ये ग्रामाद्बहिर्गुल्मलताकीर्णे निर्जने देशे वने बहुवृक्षसंतते नदीनांसङ्गमे पूर्वमनाक्षारितोपि कारणादपि संभाषेत ससंग्रहणंसहस्रपणदण्डवक्ष्यमाणंप्रामुयात् । सम्यग्गृह्यते ज्ञायते येन परस्त्रीसंभोगाभिलाषइति संग्रहणम् ॥ ३५६ ॥

( ४ ) **राघवानन्दः** । स्थलविशेषेपि संभाषणं दण्डावहमित्याह परस्त्रियमिति । तीर्थे उदकाहरणादौ । अरण्ये महति । तदतिरिक्तविजने वने जले वा । गृहइति क्वचित्पाठः । तदा गोप्यस्थले । संभेदे संगमे नदीवेगकृतगव्हरेवा । संग्रहणं वक्ष्यमाणं संग्रहणोचितदण्डम् ॥ ३५६ ॥

( ५ ) **नन्दनः** । अथस्त्रीसंग्रहणं प्रथमंतावत्तस्य लक्षणमाह परस्त्रींयोऽभिभाषेतेति । अरण्ये कान्तारे वने उपवने ॥ ३५६ ॥

( ६ ) **रामचन्द्रः** । यः स्त्रियं तीर्थे उदकावतरणमार्गे अभिवदेत् । नदीनांसंभेदे संगमे सपुरुषः संग्रहणं सम्यक् परस्त्रीग्रहणनिमित्तं दण्डः स्मृतः कथितः ॥ ३५६ ॥

**उपचारक्रियाकेलिः स्पर्शोभूषणवाससाम् ॥ सहखट्वासनंचैव सर्वंसंग्रहणंस्मृतम् ॥ ३५७ ॥**

( १ ) **मेधातिथिः** । भूषणंहारकटकादि तदङ्गलग्नंतदीयमेतद्वेति ज्ञात्वा विनाप्रयोजनेनान्यगृहीतमपि स्पृश्यते एकस्यांखट्वायामसंसक्ताङ्गयोरपि सहासनंसर्वमेततुल्यदण्डम् ॥ ३५७ ॥

( २ ) **सर्वज्ञनारायणः** । उपचारक्रिया उद्वर्तनादि । भूषणवाससामङ्गस्थानाम् । संग्रहणं तावद्दण्डविषयः । अत्रतु व्यापाराधिक्येन द्वैगुण्यादि कल्प्यम् ॥ ३५७ ॥

( ३ ) **कुल्लूकः** । स्रग्गन्धानुलेपनप्रेषणाद्युपचारकरणं केलिः परिहासालिङ्गनादिः अलङ्कारवस्त्राणांस्पर्शनमेकखट्वासनमित्येतत्सर्वंसंग्रहणंमन्वादिभिः स्मृतम् ॥ ३५७ ॥

( ४ ) **राघवानन्दः** । संग्रहणान्याह उपचारेतिद्वाभ्याम् । उपचारक्रिया स्रक् सुगन्धानुलेपनकेशप्रसाधनजलक्षेपादि । केलिस्तदुचितपरिहासादिः । भूषणवाससांस्पर्शोऽन्योन्याकर्षणम् । सर्वं संग्रहणं सम्यक् गृह्यते ज्ञायतेऽनेनति परस्त्रीषु संभोगाभिलाषइति ॥ ३५७ ॥

( ५ ) **नन्दनः** । केलिर्नर्मक्रिया ॥ ३५७ ॥

( ६ ) **रामचन्द्रः** । उपचारादि सर्वं संग्रहणं दण्ड्यंदण्डार्हं स्मृतम् ॥ ३५७ ॥

**स्त्रियंस्पृशेददेशे यः स्पृष्टोवा मर्षयेत्तया ॥ परस्परस्यानुमते सर्वंसंग्रहणंस्मृतम् ॥ ३५८ ॥**

**[ कामाभिपातिनीयातुनरंस्वयमुपव्रजेत् । राज्ञादास्येनियोज्यासाकृत्वातद्दोषघोषणम् ॥ १ ॥ ] +**

---

+ ( ट, ठ )

( १ ) **मेधातिथिः** । प्रदेशस्पर्शस्य यत्र विनैव तत्स्पर्शनंगमनागमनादिसंसिध्यति महाजनसंकुले न दोषः यथा शरीरावयवोपि देशस्तत्र हस्तस्कंधस्पृष्टभाण्डावरोपणे तत्स्पर्शे न दोषः ओष्ठचिबुकस्तनादिषु दोषः तया वा स्तनादिस्पर्शेनोत्पीडितोयदिकस्तत्सहतेभवन्नकार्षीरित्यादिना प्रतिषेधति परस्परस्यानुमते मतिपूर्वमेतत्तस्मिन्नकृते न दोषोयं न पुनः कर्मादौ खल्वंपुरुषंकण्ठेऽवलंबतेपुरुषोवास्तनान्तरे स्त्रियंतद्धस्तगृहीतद्रव्यादानप्रवृत्ताशुल्केपतिष्यामीति कर्द्दमे पततीति निवेदनस्यापि नदुष्यताम् ॥ ३५८ ॥

( २ ) **सर्वज्ञनारायणः** । अदेशे स्तनश्रोण्यादौ । स्पृष्टस्तयाऽदेशे । परस्परस्यानुमते नत्वज्ञानेपि ॥ ३५८ ॥

( ३ ) **कुल्लूकः** । यः स्प्रष्टुमनुचिते स्तनजघनादिदेशे स्त्रियंस्पृशेत्तया वा वृषणादिके स्पृष्टः क्षमते तदाऽन्योन्याङ्गीकरणे सर्वसंग्रहणंमन्वादिभिः स्मृतम् ॥ ३५८ ॥

( ४ ) **राघवानन्दः** । किंच । अदेशे स्तनजघनादिदेशे । तयास्पृष्टो वृषणादिदेशे यदि तमर्षयेत् क्षमेत । तंवा सापि तदभिरुचिः । तदुभयमनुमते संभोगाभिलाषग्रहणं परिभाषितमिदंवा ॥ ३५८ ॥

( ५ ) **नन्दनः** । अदेशे विविक्तदेशे अस्पृश्ये स्तनादौवा । अनुमते अनुज्ञायां परस्त्रीमिति संभेदे संगमे तीर्थादौ परस्त्रीसंभाषणंच संग्रहणमित्यस्यार्थः ॥ ३५८ ॥

( ६ ) **रामचन्द्रः** । यः अदेशे स्तनकट्यादौ स्त्रियंस्पृशेत् एतत्सर्वंसंग्रहणंस्मृतं दण्डस्यग्रहणं स्मृतम् ॥ ३५८ ॥

**अब्राह्मणः संग्रहणे प्राणान्तंदण्डमर्हति ॥ चतुर्णामपिवर्णानांदारारक्ष्यतमाः सदा ॥ ३५९ ॥**

( १ ) **मेधातिथिः** । उक्तंसंग्रहस्वरूपंदण्डइदानीमत्रोच्यते अब्राह्मणः क्षत्रियादिसंग्रहणे कृते चतुर्णामपि वर्णानांहीनोत्तमजातिभेदमनपेक्ष्य प्राणान्तंप्राणत्याजने मारणे पर्यवसितंदण्डमर्हति कथंपुनर्ब्राह्मण्यां शूद्रायां च संगृहीतस्य समोदण्डः । अत्र हेतुःस्वरूपमर्थमाह दारारक्ष्यतमाः सदा । सर्वस्य कस्यचिद्दाज्ञा दाराधनशरीरेभ्योऽतिशयेन रक्ष्याः । तुल्ये हि सङ्करे शूद्रस्यापि कुलनाशः एतदुक्तंभवति वाचनिकोयमर्थोत्रहेतुर्वक्तव्यः कोसौ अत्र पूर्वव्याचख्युर्नसर्वस्मिन्संग्रहणे प्रागुक्तदण्डोयंकिंतर्हि मुख्ये स्पर्शविशेषे जन्यप्रीतिविशेषात्मके गमने कथंहि तीर्थादिष्वपि वदनंगमनंच समदण्डात्तूपपद्येयातां तस्मादब्राह्मणः शूद्रोऽधिजातिगमने ब्राह्मणे छेदार्होनान्यः नहि विषमसमीकरणंन्याय्यमतःस्वप्रागुक्तेषु संग्रहणेष्वनुबन्धाद्यपेक्षया दण्डःकल्प्यः । यत्रैवंनिश्चितंगमनार्थएवायमुपकारः क्रियादिरूपक्रमस्तत्र मुख्यदण्डएव युक्तोन ह्यत्र वैषम्यमस्ति दृष्टंचैतदप्यहत्वापीति यथेदमुक्तंयद्यत्रायंदण्डोमुख्ये संग्रहणे किंकरिष्यतीति नैवान्यन्मुख्यसंग्रहणमस्ति नह्यस्य लौकिकः पदार्थोवधृतोयेन परश्चदस्य्वनुकारादौ प्रयुक्तइत्येवमस्यैवायंचाभवनुमुख्यंसंग्रहणंमन्यते । तत्र महान्दण्डः । प्रतिषिद्धंपरस्त्रीगमनंशास्त्रमपयद्योज्यमितिचेत् उपकारादावपि प्रतिषेधवत् प्रतिषेधवद्धि मायश्चित्तमपि तुल्यप्रसक्तमिति चेत्कानामेयमनिष्टापत्तिः किन्तु प्रसज्येत यदासंग्रहणशब्देन तदुच्यते सिक्ते हि रेतसि गन्धेनाद्यभिधानंयत्र यादृशोदण्डस्तत्र तत्समानंदुःखंप्राममतौस्मिन्विपर्ययेरेतःसेकनिमित्तंतच्छब्देनाभिधानात् । उपकारादिभिरादौकल्प्यंयदि च संलापादौ स्वल्पोदण्डः स्यात्तदा प्रवर्तेरन् तत्परस्त्रीसंलापादिभूतेनान्येनाभिवसता व्यादीपितमन्मथा स्मरशराकृष्यमाणा शरीरनिरपेक्षा राजनिग्रहंन गणयेयुःराज्यापोह्यानामेवतु निवृत्तौ गृह्यमाणेष्वप्रबन्धवृत्तौ रागे शक्यंनिराकरणं तस्मात्परस्त्रीमुपजापतामेव महान्दण्डोयुक्तः इहत्वन्तग्रहणादादिभूतेनान्येन दण्डेन भवितव्यं नह्यसत्यवादवन्नोभवति प्राणोऽन्तोयस्य प्राणान्तस्तावत्पातयितव्योयावत्प्राणेषु पतति न सर्वस्वग्रहणात् अङ्गच्छेदाद्यप्युक्तंभवति एकैकस्य च दण्डत्वमन्यत्र ज्ञातंसमु-

दायेदण्डआम्नातस्तेषु समहानन्यायोन्यजातीयः स्त्रीसंग्रहणेऽब्राह्मणस्य युक्तैव कल्पना न सर्वत्र तत्र कुलस्त्रीभिरनिच्छन्तीभिः सह रमतीभिः संगृह्यमाणस्य प्राणापहरणंन सजातीयाभिरपि ॥ ३५९ ॥

( २ ) **सर्वज्ञनारायणः** । संग्रहणे परदारमैथुने नतु संभाषादौ । ब्राह्मणस्यतु दण्डनमेवेत्यर्थः ॥ ३५९ ॥

( ३ ) **कुल्लूकः** । अब्राह्मणोऽत्रशूद्रः दण्डभूयस्त्वात् । ब्राह्मण्यामनिच्छंत्यामुत्तमंसंग्रहणंप्राणान्तंदण्डंप्राप्नोति चतुर्णामपि ब्राह्मणादीनांवर्णानांधनपुत्रादीनामतिशयेन दाराः सर्वदा रक्षणीयाः तेन प्रसङ्गनिवृत्त्यर्थमुत्कृष्टसंग्रहणादपि सर्ववर्णैर्भार्यारक्षणीया ॥ ३५९ ॥

( ४ ) **राघवानन्दः** । तदुचितं दण्डमाह अब्राह्मणइति । अब्राह्मणोऽत्रशूद्रोऽतिदण्डनात् । तेन हि संगता ब्राह्मणी ब्राह्मण्यं जहातीति प्रायश्चित्तगौरवश्रवणात् । यतोहि सर्वैरेव परस्त्री काम्यते पुंमात्रदूषकत्वादतः सारक्षणीयेत्याह चतुर्णामिति । यतःश्रुतिः अप्रमत्तारक्षततन्तुमेनमिति स्त्रियंशिक्षयताम् ॥ ३५९ ॥

( ५ ) **नन्दनः** । अब्राह्मणः क्षत्रियादिः संग्रहणे उत्तरोत्तरवर्णस्त्रीसंग्रहणे किमेवब्राह्मणस्य स्त्रीसंग्रहणमात्रेणापि प्राणान्तिकोदण्डविधिरित्याशंकायामुक्तमुत्तरार्द्धं परस्त्रीसंभाषायामर्हानर्हदण्डविधानार्थम् ॥ ३५९ ॥

( ६ ) **रामचन्द्रः** । अब्राह्मणः परस्त्रियः संग्रहणे मैथुनादौ प्राणान्तदण्डंसः अर्हति अतिशयेनरक्ष्याः ॥ ३५९ ॥

**भिक्षुकाबन्दिनश्चैव दीक्षिताः कारवस्तथा ॥ संभाषणंसहस्त्रीभिः कुर्युरप्रतिवारिताः ॥३६०॥**

( १ ) **मेधातिथिः** । भिक्षुकाभिक्षाजीविनोभिक्षायाचनारूपंसंभाषणमवारितः कुर्युर्यदि स्वामिना न निषिद्धाः अथवा नैते वार्यितव्याः । बन्दिनःस्तावकाः दीक्षितायज्ञे भृतिवननार्थंसंभाषेरन् । कारवः सूपकारादयएते तीर्थादिष्वपि न निवार्याः ॥ ३६० ॥

( २ ) **सर्वज्ञनारायणः** । दीक्षिताः व्रतादिमध्यस्थाः ॥ ३६० ॥

( ३ ) **कुल्लूकः** । भिक्षाजीविनः स्तुतिपाठकाः यज्ञार्थंकृतदीक्षकाः सूपकारादयः भिक्षादिस्वकार्यार्थंगृहिस्त्रीभिः सह संभाषणमनिवारिताः कुर्युः एवंचैषांसंग्रहणाभावः ॥ ३६० ॥

( ४ ) **राघवानन्दः** । केषांचित्परदारासंभाषणे देहयात्रादिकार्यानुत्पत्तेः प्रतिप्रसवतया तत्संभाषणमाह भिक्षुकाइति । भिक्षवोब्रह्मचारिसंन्यासिनः भवति भिक्षांदेहीति तद्विना भिक्षाऽलब्धेः । भृतिः बन्दिनः स्तुतिपाठकाः वदान्या त्वमसि कमलनयने विष्णुमित्रस्यपुत्रीत्यादिनाऽभिमुखीकृत्य वस्त्रान्नादि प्रार्थयमानाः । दीक्षितायज्ञेवृताऋत्विजः हविष्कृदेहीत्याह्वानंकुर्वन्ति हविष्कृद्यजमानपत्नीति । कारवः शूर्पकारादयः ॥ ३६० ॥

( ५ ) **नन्दनः** । अप्रतिवारिताः स्त्रीबन्धुभिरनिषिद्धाश्चेत् ॥ ३६० ॥

( ६ ) **रामचन्द्रः** । भिक्षुकादयःस्त्रीभिःसह प्रतिवारिताःसंभाषणंकुर्युः । दीक्षिताब्रह्मचारीव्रतस्थाः ॥ ३६० ॥

**न संभाषांपरस्त्रीभिः प्रतिषिद्धः समाचरेत् निषिद्धोभाषमाणस्तु सुवर्णदण्डमर्हति ॥ ३६१ ॥**

( १ ) **मेधातिथिः** । केचिद्भिक्षुकादीनांनिवारितानांसंभाषणे दण्डोयमिति मन्यन्ते तदसत् नैव ते निवार्याइत्युक्तं कुतश्च भिक्षुकाणांसुवर्णोदण्डः तस्मात्कोपि प्रकाशमानाक्षारितोपि कथंविनिर्षिद्धगोस्वामिना समाचरन्सुवर्णदण्ड्यः ॥३६१॥

( २ ) **सर्वज्ञनारायणः** । प्रतिषिद्धः भिक्षुकादिरपि । सुवर्णमेकम् ॥ ३६१ ॥

( ३ ) **कुल्लूकः** । स्वामिना निषिद्धः स्त्रीभिः संभाषणंन कुर्यात्प्रतिषिद्धः संभाषणमाचरन्राज्ञः षोडशमाषात्मकसुवर्णदानयोग्यीभवति ॥ ३६१ ॥

( ४ ) **राघवानन्दः** । अप्रतिवारिताइत्युक्तं प्रतिवारणोत्तर संभाषणे तेषामपि दण्डमाह नेति सुवर्णं* ॥ ३६१ ॥

( ५ ) **नन्दनः** । प्रतिषिद्धः स्त्रीबन्धुभिः ॥ ३६१ ॥

( ६ ) **रामचन्द्रः** । प्रतिषिद्धः भिक्षुकादिभिःअन्यः ॥ ३६१ ॥

**नैषचारणदारेषु विधिर्नात्मोपजीविषु ॥ सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्तिच ॥ ३६२ ॥**

( १ ) **मेधातिथिः** । यःसंभाषणप्रतिषेधउपकारक्रियाप्रतिषेधश्च नैषश्चारणदारेषु स्यात् चारणानटगायनाद्याः प्रेक्षणकारिणः तथाआत्मोपजीविषु वेषेण जीवन्तु ये दाराअथवाऽऽत्मजायैवार्धोहवाएषआत्मेति तांयउपजीवन्ति उत्कृष्टमाकारं-सज्जयन्ति संश्लेषयन्ति ते चारणपुरुषेण निगूढाः प्रच्छन्नमापणभूमौ प्रतिष्ठंते गृहवेषत्वादेव ताः प्रसिद्धवेश्याभ्योभिद्यन्ते वारयन्ति च तामैथुनंप्रवर्तयन्ति नेत्रभ्रूविलासपरिहासादिभिः पुरुषानाकर्षयन्ति तदनुज्ञानांसज्जनंवारणंसंप्रयोगएव अथवा स्वानारी जयति अन्त्याश्च स्त्रीभिश्चारयन्तिप्रवर्तयन्ति वैश्यात्वंकुट्टिनीत्वंच सुराणांकारयन्तीत्यर्थः ॥ ३६२ ॥

( २ ) **सर्वज्ञनारायणः** । चारणानटादयः । ते चारणाः नारीः स्वदारान् निरूढानिह्नुतनटभार्यात्वादिस्वरूपाः चारयन्ति भ्रामयन्ति तत्रतत्र पुरुषलाभार्थमतस्तेषांतद्वृत्तित्वान्नदोषः ॥ ३६२ ॥

( ३ ) **कुल्लूकः** । परस्त्रियंयोभिवदेदित्यादिसंभाषणनिषेधविधिर्नटगायनादिदारेषु नास्ति तथा भार्या पुत्रः स्वकातनुरित्युक्तत्वात् भार्यैवात्माऽनयोपजीवन्ति धनलाभाय तस्याजारंक्षमन्ते ये तेषु नटादिव्यतिरिक्तेष्वपि ये दारास्तेष्वप्येवंनिषेधविधिर्नास्ति यस्माच्चारणाआत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्यासंश्लेषयन्ते स्वयमागतांश्च परपुरुषान्प्रच्छन्नाभूत्वा स्वाज्ञानंविभावयन्तोव्यवहारयन्ति ॥ ३६२ ॥

( ४ ) **राघवानन्दः** । परदाररतानां स्त्रीविशेषे उक्तदण्डाभावमाह नैषइतिद्वाभ्याम । एषउक्तदण्डविधिर्न पञ्चसु परदारेषु चारानटगायनादिआत्मोपजीविषु आत्माऽत्रआत्मभार्यातां भोगार्थं विक्रीय जीविनस्तेषु । तत्र दृष्टार्थतामाह सज्जयन्तीति । सज्जयन्ति परपुरुषैःसह स्वस्त्रियः श्लेषयन्ति चारयंति स्वागतान्पुरुषान् निगूढाः स्वयंप्रच्छन्नाभूत्वाअज्ञानं विभावयन्तो मैथुनादिना स्वपरस्त्रिया सह ॥ ३६२ ॥

( ५ ) **नन्दनः** । चारणदारेषु रङ्गोपजीविनांदारेषु संभाषितेष्विति विपरिणामः एषपूर्वोक्तसवर्णदण्डविधिर्नस्यात् आत्मोपजीविषु रूपाजीवासु वेश्यासु कस्य चिद्दारत्वेन स्थितास्वित्यर्थः । ते चारणानारीः पुरुषेषु सज्जयन्त्यभिसारयन्ति । एवंतेषांशीलं तस्मान्नैषदण्डविधिरिति ॥ ३६२ ॥

( ६ ) **रामचन्द्रः** । एषविधिः आत्मोपजीविषु चारणदारेषु नटादिस्त्रीषु नकर्तव्यः ॥ ३६२ ॥

**किंचिदेवतु दाप्यः स्यात्संभाषांताभिराचरन् ॥ प्रैष्यासुचैकभक्तासु रहः प्रव्रजितासु च ॥ ३६३ ॥**

( १ ) **मेधातिथिः** । रहोऽप्रकाशंविजने देशे चारणनारीभिः संभाषंकुर्वन् किंचित्सुवर्णाद्यत्यन्ताल्पंसात्रिंशद्भागिकंजातिप्रतिष्ठाने अपेक्ष्य दण्ड्यः यतोन परिपूर्णता सुवेशात्वंभर्तृभिरनुज्ञाताभिर्हिप्रणयन्ते तत्र भर्तृविज्ञानार्थंदूतीमुखेन व्यवहर्तव्यंनतु साक्षात्ताभिरस्वतन्त्रत्वात् प्रकाशन्तु नृत्यन्तीनांगायन्तीनांवाभिनयतालादिनिरूपणावसरे कीदृशमेतदित्यादिप्रश्नद्वारंसंभाषणमनिषिद्धं प्रेष्यादास्यः समभिर्दासयोनिभिरुपनतताएकंभजन्ते एकभक्ताएके नावरुद्धा तत्रान्योप्यस्तिदण्डले-

---

* सुवर्णं = सुवर्णं षण्णवतिरक्तिकं ( राघ० २ ) = सुवर्णमाषाःषोडश ( न, श )

शः किंपुनरयंदासीशब्दः संबन्धिशब्दोयएवयस्याः स्वामी तस्यैव दासीदासागृह्यन्ते साचेन्नावरुद्धान दोषः संग्रहणे अवरुद्धायामनेन दण्डउक्तः विभागेचैतन्निपुणंचालिङ्गिप्रच्छन्नम् ॥ ३६३ ॥

( २ ) **सर्वज्ञनारायणः**। किंचिद्दाप्यः शक्त्यनुरूपम्। रहःसंभाषमाचरन्नित्यन्वयः। एकभक्तास्वेकेन केनचिदवरुद्धासु। प्रव्रजितासु भिक्षुकीप्रभृतिषु ॥ ३६३ ॥

( ३ ) **कुल्लूकः**। निर्जनदेशे चारणात्मोपजीविस्त्रीभिः संभाषणंकुर्वन्स्वल्पदण्डलेशंराज्ञा दाप्यः तासामपि परदारत्वात्। तथादासीभिरवरुद्धाभिर्बौद्धाभिर्ब्रह्मचारिणीभिः संभाषांकुर्वन्किंचिद्दण्डमात्रंदाप्यः स्यात् ॥ ३६३ ॥

( ४ ) **राघवानन्दः**। ताभिःसह व्यवहरन्नपि किंचिद्दाप्यइत्याह किंचिदिति । स्त्रीपणंविना पुनःप्रसक्तिवारणाय तासामपि परदारत्वात्। प्रेष्यासु दासीषु प्राकारावरुद्धासु। एकभक्तासु । भुजिष्यासु तदुक्तं याज्ञवल्क्येन ॥ अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमं इति ॥ प्रव्रजितासु बौद्धादिव्रतब्रह्मचारिणीषु नित्यंव्रजनशीलासु कुलटासु वा ॥ ३६३ ॥

( ५ ) **नन्दनः**। ताभिश्चारणदारादिभिः सह रहस्संभाषामाचरन्तास्वेकपुरुषसक्तासु प्रेष्यासु पृच्छिप्रवर्तितासु च संभाषामाचरन्किंचिद्दाप्यः ॥ ३६३ ॥

( ६ ) **रामचन्द्रः**। एकभक्तासुपुनः प्रव्रजिताः बौद्धावृत्तिचारिण्यः ताभिःरहः संभाषां आचरन्किंचिदेव तुदाप्यः स्यात् ॥ ३६३ ॥

**योऽकामांदूषयेत्कन्यांससद्योवधमर्हति ॥ सकामांदूषयंस्तुल्योन वधंप्राप्नुयान्नरः ॥ ३६४ ॥**

( १ ) **मेधातिथि**। प्रासङ्गिकमिदंतुल्यः समानजातीयः सोनिच्छन्तींकुमारींदूषयेत्कौमार्यादपच्यावयेत्स्त्रीपुरुषसंभोगेन सद्यस्तस्मिन्नेवाहन्यविलंबंहन्तव्यः सकामायादूषणंनास्ति कुतोवधप्राप्तिः यच्चात्र भविष्यति तद्वक्ष्यामः। यद्यपितुल्यवधइत्यवधेःश्रुतंवधेपि जात्यपेक्षायामवश्यंभाविन्यां प्रत्यासत्या संबध्यते ॥ ३६४ ॥

( २ ) **सर्वज्ञनारायणः**। दूषयेन्मैथुनेन। एतच्च सजातित्वेपि। तुल्यः सजातीयः नवधंप्राप्नुयाद्दण्डमात्रंतु प्राप्नुयादेव ॥ ३६४ ॥

( ३ ) **कुल्लूकः**। यस्तुल्यजातिरनिच्छन्तींकन्यांगच्छति सतत्क्षणादेव ब्राह्मणेतरोलिङ्गच्छेदनादिकंवधमर्हति इच्छन्तींपुनर्गच्छन्वधार्होमनुष्योन भवति ॥ ३६४ ॥

( ४ ) **राघवानन्दः**। पंचबाणोन्मथितातिप्रसंगेनकन्यायाःअकामसकामाभ्यांदण्डंतदभावावाह यइति । वधंलिङ्गच्छेदन दूषणमत्र मैथुनपर्यन्तं। विप्रस्य वधाप्रसक्तेः। ब्राह्मणेतरतुल्यं तुल्यजातिः ॥ ३६४ ॥

( ५ ) **नन्दनः**। यः सवर्णस्तुल्यवर्णः ॥ ३६४ ॥

( ६ ) **रामचन्द्रः**। तुल्यः सजातीयः ॥ ३६४ ॥

**कन्यांभजन्तीमुत्कृष्टंन किंचिदपि दापयेत् ॥ जघन्यंसेवमानांतु संयतांवासयेद्गृहे ॥ ३६५ ॥**

( १ ) **मेधातिथिः**। जातिधनशीलविद्यानामन्यतमेनापि पितृकुलादुत्कृष्टंभजन्तींप्रवर्तितमैथुनांकिंचिद्दण्डयेन्न कन्यायाः स्वातन्त्र्याभावात्तद्रक्षाधिकृतानांपित्रादीनांदण्डे प्राप्ते प्रतिषेधः। जघन्यंजात्यादिभिर्हीनं सेवमानांमैथुनायोत्कलय-

---

( ३६४ ) दूषयंस्तुल्यो=दूषयंस्त्वन्यां ( क )

न्तीं संयतांनिवृत्तक्रीडाविहारांकञ्चुकिभिरधिष्ठितांपितृगृहएव वासयेद्यावन्निवृत्ताभिलाषा संजाता अथ हीनजातीये निर्वृत्तप्रीतिविशेषा तदा आन्त्योछ्वासात्संयतैव तिष्ठेत् ॥ ३६५ ॥

( २ ) **सर्वज्ञनारायणः**। नदापयेत् कन्यां पुरुषंच । संयतां बद्धाम् ॥ ३६५ ॥

( ३ ) **कुल्लूकः**। कन्यांसंभोगार्थमुत्कृष्टजातिपुरुषंसेवमानांस्वल्पमपि दण्डंनदापयेत् हीनजातिंपुनः सेवमानांयत्नात्स्थापयेत् यथा वा निवृत्तकामास्यात् ॥ ३६५ ॥

( ४ ) **राघवानन्दः**। कन्याकर्तृकगमने उत्कृष्टतया दण्डाभावमाह कन्यामिति । उत्कृष्टाय तस्मै तांचेदद्यादित्यपेरर्थः । जघन्यं जातिन्यूनं सेवमानां संयतां वासयेत् गृहमानीय पुनःप्रसंगवारणाय ॥ ३६५ ॥

( ५ ) **नन्दनः**। उत्कृष्टमुत्कृष्टवर्णं जघन्यमपकृष्टवर्णम् ॥ ३६५ ॥

( ६ ) **रामचन्द्रः**। उत्कृष्टंउत्तमं विप्रंपुरुषंभजन्तीं कन्यां किंचिद्दडमपिनदापयेत् । जघन्यंशूद्रंसेवमानांकन्यां संयतां अवरुद्धां गृहे वासयेत् ॥ ३६५ ॥

**उत्तमांसेवमानस्तु जघन्योवधमर्हति ॥ शुल्कंदद्यात्सेवमानः समामिच्छेत्पिता यदि ॥ ३६६ ॥**

( १ ) **मेधातिथिः**। अकामायादूषणे ब्राह्मणवर्जमविशेषेण हीनोत्तमानांवधएव दण्डइत्युक्तं सकामायादूषणे त्विदमाहुः उत्तमांरूपयौवनजात्याभिः जघन्योत्यन्तनिकृष्टोनातिसाम्येपि गुणैर्वध्यः सामांतु गछन्सकामांसशुल्कमासुरविवाहइव पित्रे दद्यात् नचेदिच्छति पिता तदा राज्ञे दण्डंतावंतंतदनुचगान्धर्वोयंविवाहइति तत्र न युक्तोदण्डः केनोक्तंगान्धर्वे नास्तिदण्डः अतएव नायंसतीधर्मः नचायंविवाहः संस्कराभावात् यदपि शाकुन्तले व्यासवचनममन्त्रकमनग्निकर्मिति तद्दुःखतेन कामपीडितेनैवंकृतं नचेच्छासंयोगमात्रंविवाहः स्वीकरणोपायभेदादष्टौविवाहानपुनर्विवाहभेदात् वृत्तवरणंतत्र पुनः कर्तव्यमेवमिति । अथवा ऋतुदर्शनोत्तरकालंगान्धर्वः प्रागृतोः शुल्कोदण्डोवा । अथकन्यायाः काप्रतिपत्तिः तस्माएवदेया निवृत्ताभिलाषा चेत्काममन्यत्र प्रतिपद्या शुल्कग्रहणंचात्रापि सकृदुपभोगनिष्कृत्यर्थमस्त्येव वरश्चेन्निवृत्ताभिलाषोहठाद्ग्राहयितव्यः ॥ ३६६ ॥

( २ ) **सर्वज्ञनारायणः**। उत्तमां स्वोत्तमजातिं कन्याम् । शुल्कं पित्रे मूल्यंदद्यात् । अनुमन्यते यदि तस्मै दातुमिच्छेत् अनिच्छयात्वन्यस्मैकन्यां दद्यात् ॥ ३६६ ॥

( ३ ) **कुल्लूकः**। हीनजातिरुत्कृष्टामिच्छन्तीमनिच्छन्तींवागच्छत्यपेक्षयाऽङ्गच्छेदनमारणात्मकंवधमर्हतिसमानजातीयांपुनरिच्छंतींगच्छन्यदिपितामन्यतेतदापितुःशुल्कानुरूपमर्थंवादद्यान्नचदंड्यःसाचकन्यातेनैववोढव्या ॥ ३६६ ॥

( ४ ) **राघवानन्दः** । पुंकर्तृकेत्वाह उत्तमामिति । उत्तमां उत्कृष्टजातिं जघन्योजातितोन्यूनःशूद्रोवधमङ्गच्छेदनमारणादिकम् । क्षत्रियादिजातिः समानजातीयां सेवमानः शुल्कंदद्यात् । शुल्कदाने पितुरिच्छैव कारणमित्याह इच्छेदिति । स्वार्थं कन्यार्थंवा । जघन्यांगृह्णीयादेव पितुरिच्छया । यइत्यादिश्लोकत्रये एतस्योत्कृष्टरागोद्रष्टव्यः अन्यथा तत्कर्मणोरागंविनानुपपत्तेः ॥ ३६६ ॥

( ५ ) **नन्दनः**। उत्तमामुत्कृष्टवर्णांसेवमानः शुल्कन्दद्यात् कन्यापिता शुल्कमिच्छेद्यदि ॥ ३६६ ॥

( ६ ) **रामचन्द्रः**। समां सवर्णांकन्यां सेवमानः यदि पिता शुल्कमिच्छेत्तर्हि दद्यात् ॥ ३६६ ॥

**अभिषह्य तु यः कन्यांकुर्याद्दर्पेण मानवः ॥ तस्याशु कर्त्येअङ्गुल्यौ दण्डंचार्हति षट्शतम्॥३६७॥**

( १ ) **मेधातिथिः** । यद्यपि सकामा कन्या पित्रायस्तुतस्याःसन्निहितास्तानन्निच्छतोऽभिषह्याभिभूय दर्पेण बलेन कः किंकर्तुमे शक्तःकन्यानुरागमात्राश्रितःकन्यांकुर्याद्दूषयेत् अनेकार्थः करोतिः तस्याशुकर्त्याःच्छेत्तव्याअर्धाङ्गुलयः षट्शतानि वादण्ड्यः अन्ये तु योऽकामान्दूषयेदित्यस्यैववध्यर्थस्योपसंहारोयम् ॥ ३६७ ॥

( २ ) **सर्वज्ञनारायणः** । अभिषह्य प्रसह्य कन्यांकुर्यात् योनावङ्गुलीप्रक्षेपेण विवृतयोनिंकुर्यात् । कल्प्ये कर्त्ये । एतच्चाधमजातिपुरुषविषयम् । उत्तमसमयोराह दण्डमिति । चकारोवकारार्थे । एतच्च कन्यायाश्चाकामत्वे ॥ ३६७ ॥

( ३ ) **कुल्लूकः** । योमनुष्यः प्रसह्यबलात्कारेण समानजातीयांगमनवर्जमहङ्कारेणाङ्गुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य शीघ्रमेवाङ्गुलिद्वयच्छेदः कर्तव्यः षट्पणशतानि चायंदण्ड्यःस्यात् ॥ ३६७ ॥

( ४ ) **राघवानन्दः** । ऋतेमैथुनं कन्यादूषकस्य अङ्गुलिच्छेदरूपंदण्डमाह अभिषज्येति । अभिषज्य प्रसह्य कन्यामात्रं धनादेर्दर्पादङ्गुलिप्रवेशादिना विरोधिलक्षणया तामेव कन्यां क्षतयोनिं कुर्यादित्यर्थः । कन्यांकुर्याद्विकुर्यादिति मेधातिथिः । अङ्गुल्यौ तर्जन्यङ्गुष्ठौ ॥ ३६७ ॥

( ५ ) **नन्दनः** । अविषह्यांभार्यत्वेन सोढुमशक्यांअक्षतयोनिमिति यावत् अङ्गुल्योश्छेदनंयोनिक्षतकरणत्वात् ॥ ३६७ ॥

( ६ ) **रामचन्द्रः** । योमानवः अभिषह्य हठात् दर्पेण कन्यांकुर्यात् अङ्गुल्यादिना योनिविदारणंकुर्यात् तस्याशु अङ्गुल्यौ कर्तनीये । वाषट्शतं दण्डंअर्हति ॥ ३६७ ॥

**सकामांदूषयंस्तुल्योनाङ्गुलिच्छेदमाप्नुयात् ॥ द्विशतन्तुदमंदाप्यः प्रसङ्गविनिवृत्तये॥ ३६८ ॥**

( १ ) **मेधातिथिः** । ताडनात्प्रभृतिमारणंयावद्वध्यर्थस्तत्रेमान्निकृष्टजातीयाश्चदूषयन्नमार्यतेऽपित्वङ्गुलीद्वयस्यच्छेदः पूर्वस्यापिसकामविषयत्वात् अभिषह्यकरणे पूर्वदण्डोऽप्रकाशंचौर्यवद्विशतोङ्गुलीच्छेदवर्जितः अथकस्मिंश्चित्पुरुषेऽनुरागवतीकन्या तेनसंयुज्यमानाकन्यात्वनिवृत्तौ सकामा येन विकृतीक्रियतेतस्यायंदण्डः । अथहस्तस्पर्शमात्रमिहदूषणंप्रार्थनीयायाः कन्यायाहस्तस्पर्शः मयास्पृष्टांज्ञात्वान्यएतामर्थइष्यतेन्यस्मिन्ननुरागिणींमन्यमानः ॥ १६८ ॥

( २ ) **सर्वज्ञनारायण** । अन्यत्राह सकामामिति । दूषयन्नङ्गुलीप्रक्षेपेण । तुल्यः सजातिः ॥ ३६८ ॥

( ३ ) **कुल्लूकः** । समानजातिरिच्छन्तींकन्यामङ्गुलिप्रक्षेपमात्रेण नाशयन्नाङ्गुलिच्छेदमाप्नोति किंत्वतिप्रसक्तिनिवारणाय द्विशतंदण्डंदाप्यः ॥ ३६८ ॥

( ४ ) **राघवानन्दः** । रागस्य वैचित्र्यात्तथेच्छन्तीं दूषयन्नदण्डभागित्याह सकामामिति । प्रसंगविनिवृत्तये पुनःप्रसक्तिवारणाय तेनैव तामनुरज्य यःसंभोगस्तन्निवृत्तयेच प्रतिलोमजाऽनुलोमजकन्यामात्रे धनदण्डमात्रमङ्गुलिप्रक्षेपाद्यैरधिकदूषणाभावात् ॥ ३६८ ॥

( ५ ) **नन्दनः** । प्रसङ्गविनिवृत्तयेऽन्यत्र पुनरेवंकरणविनिवर्त्तनाय ॥ ३६८ ॥

( ६ ) **रामचन्द्रः** । सकामां कन्यां दूषयमाणः अङ्गुलिच्छेदं नाप्नुयात् ॥ ३६८ ॥

**कन्यैव कन्यांया कुर्यात्तस्याः स्याद्विशतोदमः ॥ शुल्कंच द्विगुणंदद्याच्छिफाश्चै-वाप्नुयाद्दश ॥ ३६९ ॥**

( १ ) **मेधातिथिः** । बालभावाद्रूपादिद्वेषाद्वा कन्यैवकन्यांनाशयेत्साद्विशतंदाप्या शुल्कश्चत्रिगुणःकिंपुनःशुल्कस्य परिमाणमेषामन्यद्रूपसौंदर्याद्यपेक्षंसौभाग्यापेक्षंच शिफारज्जुलताप्रहाराः ॥ ३६९ ॥

( २ ) **सर्वज्ञनारायणः** । कन्या स्वयमन्यांकन्यांकुर्यात् अङ्गुलीप्रक्षेपेण । शुल्कं कन्याशुल्कंपित्रे स्पृष्टमैथुनताशङ्कयाऽन्येनापरिणयनात् । शिफावृक्षजटाः दश दशकृत्वस्ताभिस्ताडनं प्राप्नुयात् ॥ ३६९ ॥

( ३ ) **कुल्लूकः** । या कन्यैव परामङ्गुलिप्रक्षेपेण नाशयेत्तस्यद्विशतोदण्डःस्यात् कन्याशुल्कंच द्विगुणंकन्यापितुर्दद्यात् शिफाप्रहारांश्च दशप्राप्नुयात् ॥ ३६९ ॥

( ४ ) **राघवानन्दः** । कन्यान्तरकृताङ्गुलिप्रक्षेपेपि दण्डमाह कन्यैवेति । कन्यांकुर्यात्कन्यात्वनाशन्यायस्यापि तुल्यत्वात् । शुल्कं संवननमूल्यम् । पुंसः प्रीतिविशेषसंभवेपि कन्यायास्तदभावात्सान्निध्यविशेषाद्विश्वसनीयत्वाच्च दण्डविशेषः । शिफाःशिखाप्रहाराः ॥ ३६९ ॥

( ५ ) **नन्दनः** । कुर्यादविषह्यामित्यनुवर्त्तते । येन शुल्केन तांपितादास्यति तत्त्रिगुणं । दशशिखाश्चाप्नुयात्तस्याःशिरसि दशशिखाश्चकारयेत् । शिफाइति वा पाठः । शिफा जटा ॥ ३६९ ॥

( ६ ) **रामचन्द्रः** । या कन्यैव कन्यांसंभोगेन कुर्यात्तस्याद्विशतोदमःस्यात् । शुल्कंच द्विगुणंदद्यात्पित्रेकन्यामूल्यं-स्पृष्टमैथुनाकन्यापरिणेयत्वात् । शिफाश्चैवाप्नुयाद्दशदशाप्नुयात् । चपुनःदशशिफाः आप्नुयादेव शिरसि दशशिफाः कार्याइत्यर्थः । शाखाशाले शिफाजटेइत्यमरः ॥ ३६९ ॥

**या तु कन्यांप्रकुर्यात्स्त्री सा सद्योमौण्ड्यमर्हति ॥ अङ्गुल्योरेव वा छेदंखरेणोद्वहनंतथा ॥ ३७० ॥**

( १ ) **मेधातिथिः** । स्त्रियांकन्यानांकन्यालिङ्गंनाशयन्त्यांमौण्ड्यंकेशवपनंदण्डोङ्गलिच्छेदोवा खरेणोद्वहनंकेशच्छेदपक्षे कन्याजात्यादिभेदान्नियाह्यभेदात् त्रैवर्णिकस्त्रीणांब्राह्मणादिक्रमेणेमंदण्डमिच्छन्ति मुद्राश्च कल्पयन्ति तेप्रमाणाभावादुपेक्षणीयाः ॥ ३७० ॥

( २ ) **सर्वज्ञनारायणः** । स्त्री युवती । मौण्ड्यं ब्राह्मणी । खरेणोद्वाहनं क्षत्रिया । इतरे अङ्गुलीछेदम् ॥ ३७० ॥

( ३ ) **कुल्लूकः** । या पुनः कन्यामङ्गुलिप्रक्षेपेण स्त्रीनाशयेत्सा तत्क्षणादेव शिरोमुण्डनमनुबन्धापेक्षयाङ्गुल्योरेवच्छेदनंगर्दभेण च राजमार्गे वहनमर्हति ॥ ३७० ॥

( ४ ) **राघवानन्दः** । योषित्कर्तृके ऽपितस्मिन्दण्डमाह यात्विति । स्त्रीपदमत्रक्लीबोपलक्षकं न्यायस्यतुल्यत्वात् । पूर्वंतु कन्यापदं गोबलीवर्दन्यायेन दण्डविशेषार्थम् । मौण्ड्यं शिरोमुण्डनम् । विकल्पश्छिद्रतारतम्यापेक्षया । अत्रापि पूर्वोक्ताहेतवोऽधिकंतु द्वेषमात्रम् ॥ ३७० ॥

( ५ ) **नन्दनः** । प्रकुर्यादविषह्यामित्येव ॥ ३७० ॥

( ६ ) **रामचन्द्रः** । यातु युवतीस्त्री कन्यांप्रकुर्यात् कन्यायाःसंभोगंकुर्यात् सास्त्री सद्यः मौण्ड्यं मुण्डस्यभावःमौण्ड्यं दण्डं अर्हति । तथा खरेण गर्दभेन उद्वहनम् चपुनः अङ्गुल्योश्छेदनं कर्तनम् ॥ ३७० ॥

भर्तारंलङ्घयेद्यातुस्त्री ज्ञातिगुणदर्पिता ॥ तांश्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥ ३७१ ॥

( १ ) मेधातिथिः । लङ्घनंभर्त्तारमतिक्रम्यान्यत्रगमनंतच्चेत्स्वीकरोति दर्पेण बहवोमेज्ञातयोबलिनोद्रविणसंपन्नाः स्त्रीगुणोरूपसौभाग्यातिशयसंपत् किमनेनाशीलरूपेणेत्येवदर्पेण ताःश्वभिःखादयेद्यावन्मृता । संस्थानंदेशः बहवःसंस्थितायत्रजनाश्चत्वरादौ ॥ ३७१ ॥

( २ ) सर्वज्ञनारायणः । लङ्घयेदन्यपुरुषगमनेन पित्रादिज्ञातिदर्पिता स्त्रीणांगुणैश्च दर्पिता स्त्री । बलेति क्वचित्पाठः तत्रापि बलं गुणएव । संस्थाने सभायां बहुसंस्थिते बहुभिरधिष्ठितायाम् ॥ ३७१ ॥

( ३ ) कुल्लूकः । या स्त्री प्रबलधनिकपित्रादिबान्धवदर्पेणसौन्दर्यादिगुणदर्पेण च पतिंपुरुषान्तरोपगमनाल्लङ्घयेत्तांराजा बहुजनाकीर्णे देशे श्वभिर्भक्षयेत् ॥ ३७१ ॥

( ४ ) राघवानन्दः । स्त्रीप्रसंगेन तस्याः प्रकारान्तरेण दण्डमाह । भर्तारमिति । भर्तारं लङ्घयेत् रतिविशेषलोभेन त्यजेन्नाशयेद्वा । ननुतत्त्यागे जीवनं कुतइत्यत्राह । ज्ञातिः सत्कुलप्रचुरधनादियुक्तपित्रादिः गुणः सौन्दर्यं पुंजोषणादि ताभ्यां गर्विता दर्पिता । तां श्वभिरेव खादयेत् । संस्थाने संस्थाप्यते मार्यतेऽत्रेति वधस्थले बहुसंस्थिते बहुजनाकीर्णे तां दृष्ट्वा यथाऽन्याः न कुर्युरितिभावः ॥ ३७१ ॥

( ५ ) नन्दनः । अथ स्त्रीणांव्यभिचारे दण्डमाह भर्त्तारंलंघयेदिति लङ्घयेद्यभिचरेत् ज्ञातिगुणदर्पिता ज्ञातिगुणेन पित्रादिसकाशाल्लब्धस्त्रीधनादिगौरवेण स्त्रीगुणेन सौभाग्यसौन्दर्यादिना च गर्विता बहुसंस्थितेबहुभिर्जनैर्वृते संस्थाने वध्यघातस्थाने अथवा बहुभिः पुरुषैरारूढे ऊरुमूलप्रदेशे ॥ ३७१ ॥

( ६ ) रामचन्द्रः । बहुसंस्थिते स्थानेतांश्वभिः खादयेद्राजा ॥ ३७१ ॥

पुमांसंदाहयेत्पापंशयने तप्तआयसे ॥ अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥ ३७२ ॥

( १ ) मेधातिथिः । योसौपत्न्याजारःसआयसे लोहशयने तप्तेऽग्निसमेकृते दाहयितव्यः तत्रच शयनस्थितस्य काष्ठानि वध्यघातिनोऽभ्यादध्युरुपरिक्षिपेयुः यावत्काष्ठप्रहारैरग्निज्वालाभिशयनतापेनच मृतः ॥ ३७२ ॥

( २ ) सर्वज्ञनारायणः । पुमांसं तस्याव्यभिचारप्रतियोगिनम् ॥ ३७२ ॥

( ३ ) कुल्लूकः । अनन्तरोक्तंजारंपापकारिणंपुरुषमयोमयशयने प्रज्वलिते राजा दाहयेत्तत्र शयने वध्यघातिनः काष्ठानि निक्षिपेयुर्यावत्पापकारी दग्धः स्यात् ॥ ३७२ ॥

( ४ ) राघवानन्दः । तस्यउपपतेर्दण्डमाह पुमांसमिति । पापं पापिनमितिवक्तव्ये अत्यन्तपापख्यापनार्थम् । शयने अधोनिवेशनसाम्यात्तप्ते प्रज्वलिते । यथाऽर्धदग्धोनपलायतेतथा कुर्यादित्याह अभ्यादध्युरिति । तस्माद्दहेत् अब्राह्मणंचेत् । ब्राह्मणंचेद्विवासयेदेव नजातु ब्राह्मणं हन्यादिति उदर्कनिषेधात् ॥ ३७२ ॥

( ५ ) नन्दनः । ब्राह्मण्याःशूद्रगमनेऽयंदण्डः ब्राह्मण्यांदूषयितुः शूद्रस्य दण्डमाह पुमांसंदाहयेदिति । पुमांसंशूद्रंदाहयेद्दह्येतभस्मीक्रियेत ॥ ३७२ ॥

( ६ ) रामचन्द्रः । काष्ठानि आज्येन अभ्यादध्युः अवसिंचेत् तत्र दह्येत पापकृत् ॥ ३७२ ॥

संवत्सराभिशस्तस्य दुष्टस्य द्विगुणोदमः ॥ व्रात्यया सहसंवासे चाण्डाल्या तावदेव तु ॥ ३७३ ॥

( १ ) मेधातिथिः । अभिशस्तस्तत्पापकारीत्यभिशब्दितः योयस्यां स्त्रियांसंगृहीतस्सोऽभिशस्तोदण्डितः सचेत्संव-

त्सरे पुनस्तस्यामेव संगृह्यते तदा तस्यैकंवारमभिशस्तस्य संवत्सरे गते पुनर्दुष्टस्य द्विगुणोदण्डः संवत्सराभिशस्तस्येति समासपाठे कथंचिद्योजना व्रात्यया सह संवासे तावदेव पुनर्दुष्टस्य नेति ब्रूमः तत्राप्युत्तमाधममध्यमानामनेकविधोदण्डः तत्रकोसाविह द्विगुणइति न ज्ञायते किंतर्हि चण्डाल्यासंवासे यावदेव तावदेव व्रात्ययेति सहस्रन्त्वन्त्यजस्तेयमिति व्रातः पूगःसंघस्तेन चरितंपुंश्चलीकर्तव्यं अथव्रातमर्हतिव्रात्येत्यस्तेयकारांदण्डादिः काच शतमर्हति याऽनेकपुरुषोपभोग्या पुंश्चली सा हि पुरुषव्रातमर्हति अथवाऽनेकपुरुषस्वामिका ग्रामस्यदास्यसत्रमेव दास्यश्च व्रात्याये तद्वदहीनाव्रात्यामन्यन्ते तेषां मतेन मुख्यः शब्दार्थः अयंहि व्रात्यशब्दः स्मृतिकारैः सावित्री पतितेषु प्रयुक्तः नच स्त्रीणांतत्संभवः अथ स्त्रीणांविवाहस्य तदापत्तिवचनादुपनयनं तद्धीनपुरुषवद्व्रात्यागौस्तर्हि नमुख्यः यदिनामोपनयनशब्दोऽनुपनयने विवाहे प्रयुक्तस्तथाप्युपनयनहीनोव्रात्यइत्युक्तेन विवाहहीनइति प्रतीयते यथाऽसिंहोयंदेशइत्युक्तेन सिंहशब्दस्य माणवके प्रयुक्तस्यापि देशस्यामाणवकत्वंप्रतीयते अस्ति तत्र मुख्य इहासंभवइति चेन्नासंभवमात्रनिबन्धना गौणी प्रती तः किंतर्हि संबन्धमपरमुपेक्ष्य भवेदुपनयनशब्दोविवाहे गौणः व्रात्यशब्दस्तु गौणइति कोहेतुः गौणत्वेऽपि विवाहाभावनिबन्धनइति निरुपपदव्रात्यजापि काकाज्जातः काकः श्येनाज्जातः श्येनइति व्रात्येति शङ्क्यते बहुसंबन्धप्रत्यासत्त्या हि तत्र रूपातिदेशप्रतिपत्तिः व्रात्यभार्या तु सत्यपि संबन्धेन व्रात्यशब्देन शक्याभिधातुं सोयमित्यभिसंबन्धे हि पुंयोगादाख्यायमिति तथा भवितव्यं तावतश्चायंभेदविवक्षायां तद्धितेनेति तस्माद्यदि गौणोव्रात्यशब्दोग्रहीतव्यस्तज्जातामत्येया अथशब्दार्थे व्रातमर्हतीति विवाहभ्रष्टातु न मुख्या न गौणीति नच विवाहकालः स्त्रीणांनियतोयत्कालाद्भ्रष्टाव्रात्यास्युर्यदपि प्रागृतोर्विवाह्या तदपि स्वयं वरस्य ऋतुमत्याविनातत परेणाभ्यनुज्ञातएवकाममामरणांतंचेद्गृहे कन्या ॥ ३७३ ॥

( २ ) **सर्वज्ञनारायणः** । वस्तुतोदुष्टस्य लोकैरभिशस्तस्य संवत्सरपर्यन्तं तच्छोधनमकुर्वतस्तद्दोषार्हदण्डाद्द्विगुणोदमः । व्रात्यया योषिदुपनयनस्थानीयविवाहकालेऽपरिणीतया कन्यया प्रवृत्तरजसा सकृत्संयोगे तेन व्रात्यया सकृत्संबन्धमात्रेण तज्जातीयगमनदण्डाद्द्विगुणोदण्डइत्यपेक्षितम् । नतु संवत्सराभिशस्तस्येत्यत्राप्यन्वयः । प्रायश्चित्तंतु पृथगेवाचरणीयम् । एवंचाण्डाल्यापि संवासे तावदेवेति यावान्व्रात्यया सह संवासे सर्वातिशयितोद्विगुणीभूतोदण्डस्तावानेव दण्डः । प्रायश्चित्तंत्वन्यदेवेत्यर्थः ॥ ३७३ ॥

( ३ ) **कुल्लूकः** । परस्त्रीगमनेन दुष्टस्य पुंसोऽदण्डितस्य च संवत्सरातिक्रमेणाभिशस्तस्य पूर्वदण्डाद्द्विगुणोदमः कार्यः। तथा व्रात्यजायागमने योदण्डः परिकल्पितः चाण्डाल्यासह निर्देशाच्चाण्डालीगमनरूपः तथा चाण्डालीगमने योदण्डः सहस्रं त्वंत्यजस्त्रियमिति संवत्सरे त्वतीते यदि तामेव व्रात्यजायांतामेवचाण्डालींपुनर्गच्छति तदा द्विगुणः कर्तव्यः एतत्पूर्वस्यै वोदाहरणद्वयंव्रात्यजायागमनेऽपि चाण्डालीगमनदंडप्रदर्शनार्थं सर्वस्यैव तु पूर्वाभिशस्तदण्डितस्य संवत्सरातिक्रमे पुनस्तामेव गच्छतः पूर्वाद्द्विगुणोदण्डोबोद्धव्यः ॥ ३७३ ॥

( ४ ) **राघवानन्दः** । ततोन्यत्र दण्डमात्रमेतस्यांपुनर्धृतस्यास्यापि संवत्सरान्ते गमने द्विगुणोदमइत्याह समिति । कस्य गुण्यमित्यपेक्षायामाह व्रात्ययेति । सहस्रंत्वन्त्यजस्त्रियमितिवचनाच्चाण्डाल्या गमने यत्प्रायश्चित्तं दण्डंवा तावदेव तु व्रात्यागमने तद्द्वैगुण्यं पुनर्गमनइतिभावः ॥ ३७३ ॥

( ५ ) **नन्दनः** । संवत्सराभिशस्तस्य अस्यां संवत्सरंगूढवर्त्तमानस्य पश्चात्परिज्ञातस्य दुष्टस्य पापकृत्तमस्य द्विगुणोदमउक्तेभ्यः स्त्रीसंग्रहणदण्डेभ्यः व्रात्यया चण्डाल्या सह संवासे संगमे तावदेव द्वैगुण्यमेव दण्डस्य ॥ ३७३ ॥

( ६ ) **रामचन्द्रः** । संवत्सरपर्यन्तं पापशोधनमकुर्वतः अभिशस्तस्योक्तदण्डाद्द्विगुणोदमः संवत्सरानन्तरे पुनर-

भिशस्तस्य पूर्वदुष्टस्य दण्डितस्य द्विगुणोदण्डः व्रात्यया सहसंवासे अतिक्रान्तविवाहकाला प्रवृत्तरजा व्रात्या तया सह संवासे संवत्सरे तु पुनः चाण्डाल्या सह संवासे तावानेव दण्डः ॥ ३७३ ॥

**शूद्रोगुप्तमगुप्तंवा द्वैजातंवर्णमावसन् ॥ अगुप्तमङ्गसर्वस्वैर्गुप्तंसर्वेण हीयते ॥ ३७४ ॥**

( १ ) **मेधातिथिः** । शूद्र आचाण्डालात् गुप्तंवर्णं द्वैजातं द्विजातीनांस्त्रियः आवसन्मैथुनेन गच्छन्रक्षिता भर्त्तादिभिः स्वनियमेन दण्ड्यः कोदण्डइतिचेदगुप्तांचेद्गच्छत्यङ्गसर्वस्वी हीयते अङ्गंच सर्वस्वंतद्वत् केनहीयते प्रकृतत्वात्ताभ्यामेवान्यस्यानिर्देशाद्विशेषस्यानुपादानादपराधानन्तरमेवाङ्गंगुप्तांचेद्गच्छति सर्वेण हीयते नैकेनाङ्गेन यावच्छरीरेणापि हान्युद्देशेनाङ्गच्छेदनसर्वस्वहरणमरणान्युपदिष्टानि भवन्ति हानिरस्य कर्तव्येत्यर्थः तथाचगौतमः शूद्रार्यभिगमनेलिङ्गोद्धारंसर्वस्वहरणंचगुप्तांचेत् ॥ ३७४ ॥

( २ ) **सर्वज्ञनारायणः** । द्वैजातंवर्णंद्विजातित्रयस्य स्त्रियः । अगुप्ते बाह्वाद्येकाङ्गकर्तनं सर्वस्वग्रहणंचेत्येकाङ्गसर्वस्वं तद्वानगुप्तैकाङ्गसर्वस्वी । सर्वेण शरीरेण हीयते वियोज्यते ॥ ३७४ ॥

( ३ ) **कुल्लूकः** । भर्त्रादिभीरक्षितामरक्षितांवा द्विजातिस्त्रियंयदि शूद्रोगच्छेत्तदाऽरक्षितांरक्षारहितांगच्छन् लिङ्गसर्वस्वाभ्यांवियोजनीयः । अत्राङ्गविशेषाश्रवणेऽप्यार्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणंगुप्तांचेद्वधोऽधिकइति गोतमवचनाल्लिङ्गच्छेदः रक्षितांतुगच्छञ्छरीरधनहीनः कर्तव्यः ॥ ३७४ ॥

( ४ ) **राघवानन्दः** । गुप्ता गुप्तस्त्री भेदेन परदण्डं वदन्नादौ शूद्रविषयकं तमेवाह शूद्रइति । गुप्तंभर्त्रादिभीरक्षितं भक्षणाच्छादनस्वगृहाद्यैः नरक्षितमगुप्तं द्वैजातं द्विजातिसंबन्धिवर्णंस्त्रीरूपं* ॥ ३७४ ॥

( ५ ) **नन्दनः** । द्वैजातं द्विजातिसंबधिनं वर्णमावसन् रक्षायुक्तांद्विजातिस्त्रियंगच्छन् । अत्र द्विजातिशब्दः क्षत्रियवैश्यस्त्रीविषयोब्राह्मण्याउक्तपूर्वत्वात् । अगुप्ते रक्षारहितद्विजातिस्त्रीगमने एकाङ्गसर्वस्वेन च हीयते एकांगेनहस्तादिना सर्वस्वेनचहीयतेअगुप्तैकाङ्गेत्यत्र शाकल्यमतेन यकारलोपे कृते च्छन्दोनुसाराद्यकारलोपस्यासिद्धत्वमनादृत्य वृद्धिविधानं गुप्ते रक्षितद्विजातिस्त्रीगमने सर्वेणाङ्गेन सर्वस्वेन च हीयते ॥ ३७४ ॥

( ६ ) **रामचन्द्रः** । शूद्रः द्विजातं क्षत्रियां वैश्यांवा गुप्तंअगुप्तंवा आवसन् अगुप्तं एकाङ्गच्छेदनं लिङ्गच्छेदनं सर्वस्वहरणं कार्यम् गुप्ते सर्वेण सर्वाङ्गच्छेदनं सर्वस्वेन हीयते एतत् ब्राह्मणीतरगुप्तासु क्षत्रियासु ॥ ३७४ ॥

**वैश्यः सर्वस्वदण्डः स्यात्संवत्सरनिरोधतः ॥ सहस्रंक्षत्रियोदण्ड्योमौण्ड्यंमूत्रेण चार्हति ॥ ३७५ ॥**

( १ ) **मेधातिथिः** । वैश्यस्य सर्वस्वदण्डउक्तः इहतु साहचर्यात्सत्यपि द्विजातित्वे नवैश्यस्यसमानजातीयागमेदण्डोयंकिंतर्हि ब्राह्मणक्षत्रिययोरेव एवंक्षत्रियस्य ब्राह्मणीगमने सहस्रंमौण्ड्यंचमूत्रेणोदकस्थानेगर्दभमूत्रंग्रहीतव्यम् । अन्ये व्याचक्षते अन्यस्यानुपादानात्समानजातीयएव संवत्सरनिरोधनेन दण्डाधिक्यं यदिसंवत्सरमवरुद्धंकरोति ततोयंदण्डः आद्यमेव तुव्याख्यानंन्याय्यं नचसमहीनोत्तमानांकथंसमदण्डत्वमितिवाच्यं यतउक्तंसर्वेषामेववर्णानांदारारक्ष्यतमाः सदेति ॥ ३७५ ॥

---

( ३७४ ) अगुप्तमङ्गसर्वस्वैः=अगुप्तैकाङ्गसर्वस्वैः ( नं० )

* स्त्रीरूप = स्त्रीरूपमगुप्तमावसन् मैथुनेनोपभुञ्जानः अङ्गसर्वस्व प्रति हीयते । अङ्गमत्रलिङ्गम् । गुप्तमावसन् सर्वेण शरीरेण धनेन च ( राघ० २ )

( २ ) **सर्वज्ञनारायणः** । संवत्सरनिरोधः संवत्सरंबन्धनारेतस्य स्थापनंकृत्वा सर्वस्वंदण्ड्यइत्यर्थः । एतच्च ब्राह्मणीतरगुप्तागमने वैश्यस्य । मूत्रेणमुण्डनं नरमूत्रेणार्द्रशिरःकृत्वा मुण्डनम् ॥ ३७५ ॥

( ३ ) **कुल्लूकः** । वैश्यस्यगुप्तब्राह्मणीगमने संवत्सरबन्धादनन्तरंसर्वस्वग्रहणरूपोदण्डः कार्यः क्षत्रियागमने तुवैश्यश्च क्षत्रियामिति वक्ष्यति क्षत्रियोगुप्तब्राह्मणीगमने सहस्रंदण्डनीयः खरमूत्रेण चास्य मुण्डनंकर्त्तव्यम् ॥ ३७५ ॥

( ४ ) **राघवानन्दः** । वैश्यक्षत्रिययोर्गुप्तब्राह्मणीविषयकमाह वैश्य इति । अगुप्तामित्युत्तरस्वरसाद्गुप्तांगच्छेदित्यवहार्यम् । संवत्सरबन्धनानन्तरं सर्वस्वं दण्ड्यो वैश्यः । क्षत्रियस्तु मूत्रेण *श्वमूत्रेण सहस्रपणदण्डपुरःसरं मुण्डनमर्हतीत्यन्वयः ॥ ३७५ ॥

( ५ ) **नन्दनः** । निरोधतःकारागृहनिरुद्धः । इच्छन्त्यांब्राह्मण्यांवर्त्तमानयोरयंदण्डः ॥ ३७५ ॥

( ६ ) **रामचन्द्रः** । वैश्यः संवत्सरनिरोधतः संवत्सरे कारागृहेनिरोध्यः सर्वस्वंदण्ड्यः सहस्रंक्षत्रियः दंड्यः । च पुनः नरस्य मूत्रेण मौंड्यं मुण्डनंअर्हति ॥ ३७५ ॥

**ब्राह्मणींयद्यगुप्तान्तु गच्छेतांवैश्यपार्थिवौ ॥ वैश्यंपञ्चशतंकुर्यात्क्षत्रियन्तु सहस्रिणम् ॥ ३७६ ॥**

( १ ) **मेधातिथिः** । अगुप्ता व्याख्याता भ्रष्टशीलाऽनाथा च तद्गमने वैश्यंपञ्चशतंकुर्यात् करोतिः प्रकरणाद्दण्डने वर्तते दण्डयेदित्यर्थः । पञ्चशतान्यस्येति पञ्चशतः बहुब्रीहिर्मत्वर्थीयः तथा कर्तव्यंयथापञ्चाशतान्यस्य भवन्ति किंयदधिकंतत्तस्यापहर्तव्यमित्यथनेति क्रमः तथा सति यस्य पञ्चवै शतानिधनंवान्यूनंतस्यदण्डोन कश्चिदुक्तःस्यात् कस्तर्ह्यर्थः पञ्चशतंकुर्यादिति दण्डाधिकारादण्डंपञ्चशतसंबन्धिनंकुर्यादेवंसहस्रिणंक्षत्रियमिति सहस्रमस्यास्ति दण्डोनगृहेधनमङ्गसर्वस्वीति व्याख्येयं तथाकर्तव्यंयथाङ्गंसर्वस्वंच तस्य दण्डोभवति क्षत्रियस्याधिकोदण्डोरक्षाधिकृतोरक्षति तत्पुनः सएवापराध्यति ॥ ३७६ ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चशतंदण्डम् । क्षत्रियंसहस्रिणमिति । तस्य रक्षाधिकृतत्वादधिकोदण्डः । अन्येतु पञ्चशतं पञ्चशतमात्रशेषवित्तम् । सहस्रिणं सहस्रमात्रशेषवित्तमित्याहुः ॥ ३७६ ॥

( ३ ) **कुल्लूकः** । अरक्षितान्तुब्राह्मणींयदि वैश्यक्षत्रियौ गच्छतस्तदा वैश्यंपञ्चशतदण्डयुक्तंकुर्यात्क्षत्रियंपुनः सहदण्डोपेतं वैश्ये चायंपञ्चशतदण्डः शूद्राभ्रमादिनानिर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः तदितरब्राह्मणीगमने वैश्यस्यापि सहस्रंदण्डएव ॥ ३७६ ॥

( ४ ) **राघवानन्दः** । अगुप्ताविषयकमाह ब्राह्मणीमिति । पञ्चशतं पञ्चशतानि दण्डनीयत्वेनास्य सन्तीतितादृशं वैश्यं कुर्यादेवं क्षत्रियं सहस्रिणम् । आदौक्षत्रियभुक्तामन्यथा न वैश्यस्य दण्डलघुता बहुपुंभोग्यत्वेन प्रायश्चित्तलघुत्वादतोगच्छेतामिति साहित्यमुक्तम् । वैश्यं सहस्रिणमितिमेधातिथिः । शूद्राभ्रमादितिपञ्चशतमितिकुल्लूकः । धनदण्डमात्रमत्र ॥ ३७६ ॥

( ५ ) **नन्दनः** । पञ्चशतंकुर्यात्पञ्चशतपणदण्डयुक्तंकुर्यात् । क्षत्रिये दण्डभूयस्त्वंरक्षकत्वधर्मपरित्यागात् ॥ ३७६ ॥

**उभावपि तु तावेव ब्राह्मण्या गुप्तया सह ॥ विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना॥३७७॥**

( १ ) **मेधातिथिः** । तावेव क्षत्रियवैश्यौ गुप्तया ब्राह्मण्या विप्लुतौ कृतमैथुनौमैथुनप्रवृत्तावेवविप्रशूद्रवद्दण्ड्यौ

* श्वमूत्रेण = खरमूत्रेण ( राघ० २ )

गुप्ते सर्वेणहीयतइति। दग्धव्योवाकटाग्निना वाशब्दोवधप्रकारविकल्पे न वधविकल्पे नहि शूद्रगुप्ते वधादन्योदण्ड-आम्नातः ॥ ३७७ ॥

( २ ) **सर्वज्ञनारायणः**। शूद्रवद्दण्ड्यौ एकाङ्गच्छेदसर्वस्वग्रहणाभ्याम्। कटाग्निना शवाग्निना ॥ ३७७ ॥

( ३ ) **कुल्लूकः**। तावेवोभावपि क्षत्रियवैश्यौ ब्राह्मण्यारक्षितया सह कृतमैथुनौ शूद्रवत्सर्वेण हीयेतइति दण्ड्यौ यद्वाकटे नावेष्ट्य दग्धव्यौ तत्र वैश्यंलोहितदर्भैः क्षत्रियंशरपत्रैर्वा वेष्ट्यइति वसिष्ठोक्तोविशेषोग्राह्यः पूर्वसहस्रंक्षत्रियोद-ण्ड्योवैश्यः सर्व स्वमित्युक्तत्वादयंप्राणांतिकदण्डोगुणवद्ब्राह्मणीगमनविषयोबोद्धव्यः ॥ ३७७ ॥

( ४ ) **राघवानन्दः**। गुप्तायांतु तस्यां समेत्य गमने शूद्रवद्दण्डेन विकल्पमाह उभावपीति। विप्लुतौ कृतमैथुनौ। शू-द्रवच्छरीरसर्वस्वं वैश्यस्य क्षत्रियस्याङ्गसर्वस्वमिति भेदः। अगुणवद्ब्राह्मणीविषयकोदण्डः दाहस्तु गुणवत् ब्राह्मणीविषयः। कटाग्निना शरपत्रेण। तत्रापि लोहितदर्भैः संवेष्ट्य क्षत्रियः वैश्यस्तु शरपत्रैरितिवसिष्ठोक्तेः ॥ ३७७ ॥

( ५ ) **नन्दनः**। विप्लुतौ व्यभिचारितौ ॥ ३७७ ॥

( ६ ) **रामचन्द्रः**। उभौ वैश्यक्षत्रियौ विप्लुतौ कृताभिमानौ तावेव ब्राह्मण्या गुप्तया सह श्मशाने कटाग्निना उभौ दग्धव्यौ ॥ ३७७ ॥

**सहस्रंब्राह्मणोदण्ड्योगुप्तांविप्रांबलाद्व्रजन् ॥ शतानि पञ्चदण्ड्यः स्यादिच्छन्त्यासहसङ्गतः॥३७८॥**

( १ ) **मेधातिथिः**। गुप्ता भ्रष्टशीलापि यदि केनचिद्रक्ष्यते पित्रा भ्रात्रा बन्धुभिर्वा तांहठाद्गच्छन्सहस्रंब्राह्मणोदाप्यः गुप्ता शीलवतीचेत्प्रवासनाङ्गनेनाधिके अथापि शीलवत्यपि गुप्तशब्देनोच्यते तथापि सहस्रमात्राद्ब्राह्मणोमुच्यते। अङ्कन-प्रवासने सर्वत्रमुखीक्रियेते परदाराभिमर्शे ॥ ३७८ ॥

( २ ) **सर्वज्ञनारायणः**। निर्गुणगुणवद्ब्राह्मणापेक्षया दण्डद्वयम्। बलादनिच्छन्तीम्। इच्छन्त्या गुप्तयैव ॥ ३७८ ॥

( ३ ) **कुल्लूकः**। रक्षितांविप्रांब्राह्मणोबलेनोपगच्छन्सहस्रंदण्ड्यः स्यात् इच्छन्त्या पुनः सकृन्मैथुने पञ्चशतानि दण्डनीयोभवेत् ॥ ३७८ ॥

( ४ ) **राघवानन्दः**। तादृशापराधे विप्रस्य दण्डमाह सहस्रमिति। बलादनिच्छतः। इच्छन्त्या ब्राह्मण्या ॥३७८॥

**मौण्ड्यंप्राणान्तिकोदण्डोब्राह्मणस्य विधीयते ॥ इतरेषान्तु वर्णानांदण्डः प्राणान्तिकोभवेत्॥३७९॥**

( १ ) **मेधातिथिः**। यत्र क्षत्रियादीनांवधउक्तस्तत्रब्राह्मणस्य मौढ्यंयथाऽब्राह्मणः संग्रहणात्प्राणान्तंदण्डमर्हति तथातु पुमांसंदाहयेदिति प्राणानामन्तङ्गच्छति प्राणान्तंवा करोति प्राणान्तकःअन्येष्वपिदृश्यतइतिदण्डः। अन्ये तुप्राणान्ति-कइतिपाठान्तरंप्राणान्ते भवः प्राणान्तिकः अध्यात्मादित्वाट्ठञ् इतरेषांब्राह्मणादन्येषांक्षत्रियादीनांवर्णानांप्राणान्तिकएव श्रुतंमारणादिपूर्वमेव तदनन्तरमिदमुच्यते उच्यमानंमौण्ड्यंतच्छेषतया सहस्रंदण्डोविधीयतइतिमन्यन्ते अन्यथा ब्राह्मणस्य प्राणांतदण्डविधानात्कः प्रसङ्गोब्राह्मणस्य येनैवमुच्यतेमौढ्यंप्राणान्तिकइति पुमांसंदाहयेदिति सामान्यविधानप्रशक्त-मिति चेत्तत्रैव कर्तव्यंस्यात्तथाहिस्फुटंतद्विषयत्वंप्रतीयते ॥ ३७९ ॥

---

( ३७८ ) दिच्छन्त्यासह=अगुप्तांसह ( ख )

( ३७९ ) प्राणान्तिकोभवेत्=प्राणान्तकोभवेत् ( मेधा॰ )

=प्राणान्तगोभवेत् ( मेधा॰ )

( २ ) **सर्वज्ञनारायणः**। प्राणान्तिकदण्डस्थाने मुण्डनमेव कार्यमित्यर्थः ॥ ३७९ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणस्य वधदण्डस्थाने शिरोमुण्डनंदण्डः शास्त्रेणोपदिश्यते क्षत्रियादीनांपुनरुक्तेन घातेन दण्डोभवति ॥ ३७९ ॥

( ४ ) **राघवानन्दः**। अन्येषां प्राणान्तिके दण्डे ब्राह्मणस्य मौण्ड्यंविधत्ते मौण्ड्यमिति। जात्यन्तरस्य प्राणान्तिकोऽपराधे यत्रदण्डस्तत्र विप्रस्य मौण्ड्यमात्रमितिसार्वत्रिकः ॥ ३७९ ॥

( ५ ) **नन्दनः**। ब्राह्मणस्य च वधार्हे दण्डे प्राप्ते मौण्ड्यमेव न वधः इतरेषांवधएवेति ॥ ३७९ ॥

**न जातु ब्राह्मणंहन्यात्सर्वपापेष्वपि स्थितम् ॥ राष्ट्रादेनंबहिः कुर्यात्समग्रधनमक्षतम् ॥ ३८० ॥**

( १ ) **मेधातिथिः**। सर्वपापेष्विति प्रकरणविधौ न केवलंसंग्रहणे ब्राह्मणोन हन्यते यावदन्येष्वप्यपराधेषु। अपिशब्दोयुगपत्सर्वपापकार्यपिब्राह्मणोनजातुकदाचिद्धन्तव्यः किंतर्हि तस्य पापकारिणः कर्तव्यं राष्ट्रादेनंविषयाद्ब्राह्मणंबहिः कुर्यान्निर्वासयेत् समग्रधनंसर्वस्वसहितं अक्षतमक्षतशरीरंधनमप्यस्यनापहर्तव्यं कथंतर्हि दण्डोब्राह्मणस्य केचिदाहुर्निर्वासनेत्वाधीयमानंसधनंनिर्वास्य धनदण्डंप्रतिषेधति। अन्येतुसमग्रंधनंत्दत्तसर्वस्वंकृत्वा निर्वास्यतइति मन्यन्ते ॥ ३८० ॥

( २ ) **सर्वज्ञनारायणः**। अक्षतमच्छिन्नाङ्गम् ॥ ३८० ॥

( ३ ) **कुल्लूकः**। ब्राह्मणंसर्वपापकारिणमपि कदाचिन्न हन्यादपि तु सर्वस्वयुक्तमक्षतशरीरंराष्ट्रान्निर्वासयेत् ॥३८० ॥

( ४ ) **राघवानन्दः**। ननु किमिति मौण्ड्यं तत्राह नेति। समग्रधनं समग्रधनयुक्तम् बहिर्निःसारणेधनं नयाह्यम् तदभावे धनं क्वचित् सहस्रंब्राह्मणइत्यत्रोक्तम्। अक्षतमित्यनुवादोऽक्षतशरीरमित्यर्थः ॥ ३८० ॥

( ५ ) **नन्दनः**। न केवलंस्त्रीसंग्रहणएव किन्तु ब्रह्महत्यादिष्वपीत्युक्तंसर्वपापेष्वपीति ॥ ३८० ॥

( ६ ) **रामचन्द्रः**। अक्षतं अव्याहतम् ॥ ३८० ॥

**न ब्राह्मणवधाद्भूयाधर्मोविद्यते भुवि ॥ तस्मादस्य वधंराजामनसापि न चिन्तयेत् ॥ ३८१ ॥**

( १ ) **मेधातिथिः**। पूर्वशेषोयमर्थवादः नब्राह्मणवधादन्योबहुतरोऽधर्मोदुःखफलोस्ति। अन्यशब्दाध्याहारेण पञ्चमी तस्माद्धेतोरस्य ब्राह्मणस्य राजा मारणमङ्गच्छेदंवा मनसापि नेच्छेत् ॥ ३८१ ॥

( २ ) **सर्वज्ञनारायणः**। भूयानातिशयितः ॥ ३८१ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणवधान्महान्पृथिव्यामधर्मोनास्ति तस्माद्राजा सर्वपापकारिणोब्राह्मणस्य मनसापि वधंन चिन्तयेत् ॥ ३८१ ॥

( ४ ) **राघवानन्दः**। तत्रार्थवादः नेति। भूयोनंधर्मोन विद्यते ब्रह्महत्याश्वमेधाभ्यांन परंपुण्यपापयोरित्युक्तेः ॥ योब्राह्मणायावगुरित्यादिश्रुतेः। राजास्तेनेन गन्तव्यमिदमपि। विप्रातिरिक्तविषयम् ॥ ३८१ ॥

( ५ ) **नन्दनः**। उक्तेऽर्थे हेतुमाह नब्राह्मणवधादिति ॥ ३८१ ॥

( ६ ) **रामचन्द्रः**। ब्राह्मणवधाद्भूयान् अधर्मः क्वचित् नविद्यते ॥ ३८१ ॥

**वैश्यश्चेत्क्षत्रियांगुप्तांवैश्यांवा क्षत्रियोव्रजेत् ॥ योब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ ३८२॥**

**[ क्षत्रियांचैववैश्यांचगुप्तांतुब्राह्मणोव्रजन्। नमूत्रमुण्डः कर्तव्योदाप्यस्तूत्तमसाहसम् ॥ १ ॥ ]‡**

---

‡ ( क, ख, ग, च, ञ, ट, ड, ण, थ, र, ल )

( १ ) **मेधातिथिः** । अगुप्तायाब्राह्मण्यागमने वैश्यः पञ्चशतंकुर्यात्क्षत्रियंसहस्रिणमिति तत्र वैश्यस्य पञ्चशतोयएव परिपालयति सएव चेन्नाशयति युक्तंतस्य दण्डमहत्त्वम् ॥ ३८२ ॥

( २ ) **सर्वज्ञनारायणः** । योब्राह्मण्यामगुप्तायां दण्डः पञ्चशतानि वैश्यस्य सहस्रं क्षत्रियस्य ॥ ३८२ ॥

[ **सर्वज्ञनारायणः** । नमूत्रमुण्डइति । मौण्ड्यमत्रविधेयं तद्विधौच क्षत्रियवन्मूत्रेणतन्माभूदित्येतदर्थंमूत्ररूपविशेषणनिषेधः । तथाच मूत्रार्द्रशिरस्त्वस्य विशेषणमात्रस्य निषेधोमुण्डना तु कर्तव्यैव ॥ १ ॥ ]

( ३ ) **कुल्लूकः** । रक्षितांक्षत्रियांयदि वैश्योगच्छेत्क्षत्रियोवायदि रक्षितांवैश्यांतदा तयोर्ब्राह्मण्यामगुप्तायां गमने यौदण्डावुक्तौ वैश्यंपञ्चशतंकुर्यात्क्षत्रियन्तु सहस्रिणमिति द्वावेव दण्डौ वैश्यक्षत्रिययोर्भवतः । अयंच वैश्यस्य रक्षितक्षत्रियागमने पञ्चशतरूपोदण्डोलघुत्वात् गुणवद्वैश्यस्य निर्गुणजातिमात्रोपजीविक्षत्रियायाः शूद्राभ्रान्त्यादिगमनविषयोबोद्धव्यः । क्षत्रियस्य रक्षितवैश्यायां ज्ञानतोयुक्तः सहस्रंदण्डः ॥ ३८२ ॥

( ४ ) **राघवानन्दः** । राजन्यवैश्ययोः परस्परस्य गुप्तस्त्रीगमनेअगुप्तब्राह्मणीगमनवद्दण्डमाह वैश्यश्चेति । योवैश्यः पञ्चशतं कुर्यात्क्षत्रियंतु सहस्रिणमित्यनेनोक्तःसंख्याविशिष्टोदण्डस्तं विड्राजन्यावर्हतइत्यन्वयः । अत्रतु वैश्यस्या गुणवतोक्षत्रियत्वमात्रोपितागमने लघुदण्डस्य शूद्राभ्रान्त्यागमनेनवा ॥ ३८२ ॥

( ६ ) **रामचन्द्रः** । यः दण्डः ब्राह्मण्यामगुप्तायां उक्तस्तमेव तावुभौ वैश्यक्षत्रियौ दण्डं अर्हतः ॥ ३८२ ॥

[ **रामचन्द्रः** । क्षत्रियामिति । मूत्रदण्डः न कर्तव्यः मूत्रेण मुण्डनंन कार्यं किंतु उत्तमसाहसं दाप्यः ॥ १ ॥ ]

**सहस्रंब्राह्मणोदण्डंदाप्योगुप्ते तु ते व्रजन् ॥ शूद्रायां क्षत्रियविशोः साहस्रोवै भवेद्दमः ॥३८३॥**

( १ ) **मेधातिथिः** । गुप्ते क्षत्रियावैश्येगच्छन्ब्राह्मणः सहस्रंदण्ड्यः प्रवासनाङ्कने स्थितेएव शूद्रायागमने क्षत्रियवैश्ययोः साहस्रोदण्डः सहस्रमेव साहस्रंस्वार्थिकोण् सहस्रंवादण्डेऽस्ति साहस्रोदण्डोत्रपदार्थः । मत्वर्थीयोण् ॥ ३८३ ॥

( २ ) **सर्वज्ञनारायणः** । सहस्रंब्राह्मणोदण्डंदाप्योगुप्तेतु तेव्रजन्निति अगुप्ते व्रजन्दाप्यएव न मुण्डनीयइत्यर्थः । शूद्रायां गुप्तायामगुप्तायांवा । वैश्यराजन्ये वैश्यां राजन्यांच पूर्वं तयोर्ब्राह्मणस्य सहस्रदण्डतोक्ता । एतत्तु शूद्रतुल्यवृत्तयोर्योगएवेतिज्ञेयम् ॥ ३८३ ॥

( ३ ) **कुल्लूकः** । क्षत्रियावैश्ये रक्षिते ब्राह्मणोव्रजन्सहस्रंदण्डंदापनीयः शूद्रायां रक्षितायां क्षत्रियवैश्ययोर्गमने सहस्रमेव दण्डः स्यात् ॥ ३८३ ॥

( ४ ) **राघवानन्दः** । विट्क्षत्रिययोरक्षिततज्जातीये स्त्रियौ ब्राह्मणोगच्छंन्सहस्रमित्याहसहस्रमित्यर्धेन । ते विट्क्षत्रिययोषिते । वैश्यक्षत्रिययोरपि रक्षितशूद्रागमने सहस्रंदण्डइत्याह शूद्रायामिति । गमनइतिशेषः । तत्रापि पूर्वं क्षत्रियभुक्तायां वैश्यस्य गमने साहस्रः सहस्रपणनियतः ॥ ३८३ ॥

( ५ ) **नन्दनः** । ते गुप्ते क्षत्रियवैश्यस्त्रियौ शूद्रायांगुप्तायामिति विपरिणामः ॥ ३८३ ॥

( ६ ) **रामचन्द्रः** । ते क्षत्रियवैश्ये व्रजन् गुप्ते ब्राह्मणः सहस्रं दण्डं दाप्यः शूद्रायां गच्छतोः क्षत्रियविशोः साहस्रो दमः वैभवेत् ॥ ३८३ ॥

**क्षत्रियायामगुप्तायां वैश्ये पञ्चशतंदमः ॥ मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियोदण्डमेव वा ॥ ३८४ ॥**

( १ ) **मेधातिथिः** । वैश्यस्य पञ्चशतानि दण्डः अगुप्तांच क्षत्रियां गच्छति क्षत्रियस्य सएवयदि वा मौण्ड्यंमुण्डनमृच्छेत्प्राप्नुयाद्गर्दभमूत्रेण एषएव वैश्यागमनउभयोर्दण्डः ॥ ३८४ ॥

( ३ ) **कुल्लूकः** । अरक्षितक्षत्रियागमने वैश्यस्य पञ्चशतानि दण्डःस्यात् क्षत्रियस्यत्वरक्षितागमने गर्दभमूत्रेण मुण्डनंपञ्चशतरूपंवा दण्डमाप्नुयात् ॥ ३८४ ॥

( ४ ) **राघवानन्दः** । तयोरगुप्तक्षत्रियाविषये व्यवस्थितदण्डमाह क्षत्रियायामिति । वैश्ये पञ्चशतं दण्डः । मौण्ड्य मन्विच्छेत्क्षत्रियोदण्डमेववा । वाशब्दात् मौण्ड्यंनान्विच्छेद्वा ॥ ३८४ ॥

( ५ ) **नन्दनः** । व्रजतीतिविपरिणामः ॥ ३८४ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियायां मूत्रेण मौण्डयं ऋच्छेत् वापक्षान्तरं दण्डमेवगच्छेत् ॥ ३८४ ॥

**अगुप्ते क्षत्रियावैश्ये शूद्रांवाब्राह्मणोव्रजन् ॥ शतानि पञ्चदण्ड्यः स्यात्सहस्रंत्वन्त्यजस्त्रियम्॥३८५॥**

**[ शूद्रोत्पन्नांशपापीयान्नवं मुच्येतकिल्बिषात् । तेभ्योदण्डाहृतंद्रव्यंनकोशेसंप्रवेशयेत् ॥ १ ॥**

**अयाजिकंतुतद्राजादद्याद्भृतकवेतनम् ॥ यथादण्डगतंवित्तंब्राह्मणेभ्यस्तुलंभयेत् ॥ २ ॥**

**भार्यापुरोहितस्तेना येचान्येतद्विधाद्विजाः ॥ ३ ॥ ] +**

( १ ) **मेधातिथिः** । ब्राह्मणस्य क्षत्रियाद्यगुप्तास्त्रीगमनउभयोर्दण्डः अन्त्यजश्चण्डालश्वपचादिस्तत्र सहस्रंतत्रायं-सहस्रपणदण्डसंग्रहः ब्राह्मणस्य चतुर्ष्वपि वर्णेषु गुप्तागमने सहस्रंश्रोत्रियदारेषु प्रवासनाङ्कने अन्यत्र प्रवासनमेव श्रोत्रियदा-रेषु प्रायश्चित्तमहत्वादेव कल्प्यते गुप्तागमने पञ्चशतानि प्रवासनाङ्कने यद्यप्यगुप्तापरदाराव्यपदेशोभवति विवाहसंस्कारे सति तथापि स्वैरिणीभर्तृस्वतामतिक्रान्ता अब्राह्मणस्य प्राणान्तोगुप्तागमने दण्डोबलात् सकामागमने साहस्रोदण्डः प्रवास-नाङ्केच गुप्तागमने वैश्यंपञ्चशतंकुर्यात्क्षत्रियंसहस्रिणमिति ॥ ३८५ ॥

( २ ) **सर्वज्ञनारायणः** । अन्त्यजात्यः । रजकचर्मकृन्नटबुरुडकैवर्तमेदभिल्लाः स्मृत्यन्तरोक्ताः॥ एवंस्त्रीसंग्रहणान्तं-समर्थितं उत्तरेचाध्याये शेषं वाच्यम् ॥ ३८५ ॥

( ३ ) **कुल्लूकः** । अरक्षितांक्षत्रियांवैश्यांशूद्रांवा ब्राह्मणोगच्छन्पञ्चशतानि दण्ड्यः स्यात् । अन्ते भवोऽन्त्यजः यस्मादधमोनास्ति चाण्डालादिस्तस्य स्त्रियंगच्छन्सहस्रंदण्ड्यः ॥ ३८५ ॥

( ४ ) **राघवानन्दः** । अगुप्तत्रिसृष्वपि ब्राह्मणंप्रति दण्डमाह अगुप्तइति । अन्त्यजस्त्रियं चण्डालादिजातिमिति अ-न्त्यजगुप्तागुप्तसाधारणविषयं चतुर्णां सन्निधेः प्रकरणस्य बलीयस्त्वात् ॥ ३८५ ॥

( ५ ) **नन्दनः** । शूद्रांच अगुप्तंच विपरिणामः ॥ ३८५ ॥

( ६ ) **रामचन्द्रः** । अन्त्यजस्त्रियंब्राह्मणो व्रजंन्सहस्रंदाप्यः ॥ ३८५ ॥

**यस्य स्तेनः पुरेनास्ति नान्यस्त्रीगोन दुष्टवाक् ॥ न साहसिकदण्डघ्नौ सराजा शक्रलोकभाक्॥३८६॥**

( १ ) **मेधातिथिः** । यस्य राज्ञः पुरे देशे राष्ट्रे स्तेनश्चौरोनास्ति सशक्रस्येन्द्रस्य लोकंस्थानंभजते स्वर्गंप्राप्नोति । नान्यस्त्रीगमनमन्यस्य या स्त्री भार्यावरुद्धा पुनर्भूर्वा स्त्रीग्रहणमभार्यायाअप्यसंबन्धिन्याःप्रतिषेधार्थं दुष्टवाक्त्रिविधस्या-क्रोशस्य कर्ता साहसिकउक्तः दण्डेन हन्ति दण्डपारुष्यकृत शक्रलोकभागिति सर्वत्रानुषङ्गः स्तेनादीनांशरीरसंग्रहशेषोय-मर्थवादः ॥ ३८६ ॥

+ ( ट, ठ )

( ३८६ ) शक्रलोक=सत्यलोक ( क )

( २ ) **सर्वज्ञनारायणः** । अत्रान्तरा उच्चावचाननूक्तान्कांश्चिद्राजधर्मान्प्रसंगादाह यस्येति । दुष्टवाक् दुष्टपारुष्यकृत् । दण्डघ्नोदण्डपारुष्यकृत् ॥ ३८६ ॥

( ३ ) **कुल्लूकः** । यस्य राज्ञोराष्ट्रे चौरः परदारगामी परुषवादी गृहदाहादिसाहसकारी दण्डपारुष्यकर्ता च नास्ति सराजा शक्रपुरंयाति ॥ ३८६ ॥

( ४ ) **राघवानन्दः** । राजावश्यं स्तेनादिपञ्चसु दण्डपरोभवेदित्येतच्छक्यमाविष्कुर्वन्नाह यस्येतिद्वाभ्याम् । अन्यस्त्रीगः पारदारिकः । सशक्रलोकभाक् मृत्वेतिशेषः ॥ ३८६ ॥

( ५ ) **नन्दनः** । यएते वाक्पारुष्यदण्डपारुष्यस्तेयसाहसस्त्रीसंग्रहणरूपाः पञ्चदोषाउक्तास्तेषु प्रवर्तमानानांनिग्रहेण राज्ञां फलमाह यस्यस्तेनइति । यस्य पुरे स्तेनोनास्ति दण्डभयाद्यस्य विषयेचोरोनास्ति । दण्डेन हन्तीति दण्डघ्नः दण्डपारुष्यकृत् । पुरइति राष्ट्रस्याप्युपलक्षणम् ॥ ३८६ ॥

**एतेषांनिग्रहोराज्ञःपञ्चानांविषये स्वके ॥ साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः ॥ ३८७ ॥**

( १ ) **मेधातिथिः** । साम्राज्यपरः प्राणयितास्वातन्त्र्यं सजातेषु समानस्वर्द्धिनोराजानःसजात्याअभिप्रेतास्तेषु मूर्द्धन्यधितिष्ठति तस्याज्ञाकराः संभवन्तीत्यर्थः लोके च यशस्करइत्युत्पादयन्ति उभयत्रापि निग्रहएव कर्ता हेतुत्वात् जनमारकोयंक्रोधनइति वदन्त्यपि तुस्तुवन्ति ॥ ३८७ ॥

( २ ) **सर्वज्ञनारायणः** । साम्राज्यं समीचीनंराज्यम् । स्वजात्येषु मध्ये ॥ ३८७ ॥

( ३ ) **कुल्लूकः** । एतेषांस्तेनादीनांपञ्चानांस्वराष्ट्रे निग्रहः समानजातीयेषु राजसु मध्ये राजा साम्राज्यकृदिह लोके च यशस्करोभवति ॥ ३८७ ॥

( ४ ) **राघवानन्दः** । पञ्चानां स्तेनादीनाम् । विषये राष्ट्रे । स्वजात्येषु राजसु मध्ये साम्राज्यकृत् एवंकुर्वन् चक्रवर्ती स्यादितिभावः । यशस्करः लोके स्वानुरूपं यशोधत्ते ॥ ३८७ ॥

**ऋत्विजंयस्त्यजेद्याज्योयाज्यंचर्त्विक्त्यजेद्यदि ॥ शक्तंकर्मण्यदुष्टंच तयोर्दण्डः शतंशतम् ॥ ३८८ ॥**

( १ ) **मेधातिथिः** । यज्ञे कर्मकरऋत्विग्घोतोद्गात्रादिः यद्यपि वरणोत्तरकालमाप्रयोगसमाप्तेस्तद्विपदेशस्तथाप्यत्र कर्मणोरितरेतरत्यागे विधिरयं किंतर्हि प्राग्वरणात् । भूतपूर्वगत्या ऋत्विग्व्यवहारः यः प्रयोगान्तरेवृतः सएवशक्तः प्रयोगान्तरेऽपि वरितव्यः न केवलंपूर्ववृतस्यायमन्यायः किंतर्हि तत्पित्रादिभिरपि तथाहि पूर्वोजुष्टः स्वयंवृतइति नारदः नचायमैकपुरुषिकोनियमः किंतर्हि कुलधर्मोयं तथाच महाभारते संवर्त्तमरुत्तीयेषु मपश्चितंतेन यत्कुलाः पित्रादिभिर्ऋत्विजोवृतास्तएव वरीतव्याः । याजनकानामप्येषएवविधिस्तैरपि ते योजनीयाः ऋत्विजंकृतार्त्विज्यंतत्कुलीनंवाऽन्यंयोनवृणीत यियक्षुरपि त्वन्ययाजकमर्थयेत् शक्तंकर्मणि यज्ञे प्रयोगज्ञमदुष्टमभिशंसनाङ्गवैकल्यादिभिर्दोषैरयुक्तमेवमीदृशएवर्त्विगर्थ्यमानोयदिनाङ्गीकुर्याद्याजकत्वं अदुष्टमेभिरेवदोषैरनाक्रान्तंयाज्यंशक्तंविद्वत्तया च तादृशे त्यागे तयोः शतंदण्डः ऋत्विक्शतंदाप्योयाज्यंत्यजन्याज्यऋत्विजं नकेवलमयमृत्विग्याज्यधर्मः शिष्याचार्ययोरपि । तथाच गौतमः। अथयाजकावृत्विगाचार्यौ पतनीयसेवायां चहेयावन्यत्र हानात्पततीति दातृसंप्रदानयोरपि प्रतिग्रहे केचिद्धर्ममिममिच्छन्ति ॥ ३८८ ॥

( २ ) **सर्वज्ञनारायणः** । ऋत्विजमित्यादिसंविद्यतिक्रमशेषभूतमप्यत्र राज्ञाप्यृत्विङ्त्याज्यइतिदर्शयितुंराजधर्मेषूक्तम् । ऋत्विजं परंपरयायातम् । शतं पणाः । पुनश्च पूर्ववत्परिग्रहइत्यपि ग्राह्यम् ॥ ३८८ ॥

( ३ ) कुल्लूकः । योयाज्यः ऋत्विजंकर्मानुष्ठानसमर्थमतिपातकादिदोषरहितमृत्विग्वा याज्यमदुष्टंत्यजति तयोः शतंशतंदण्डः कार्यइति दण्डप्रसङ्गादिदमुक्तम् ॥ ३८८ ॥

( ४ ) राघवानन्दः । प्रकृतमनुवर्तयन्दण्डार्थमनुवदति ऋत्विजमिति । याज्योयजमानः शक्तं कर्मानुष्ठानदक्षिणादानयोः । अदुष्टंपातकादिना । एतद्द्वयं याज्ययाजकयोर्विशेषणम् । शतमिति कर्तृभेदविवक्षया वीप्सा ॥ ३८८ ॥

( ५ ) नन्दनः । प्रकीर्णकाख्यमनुद्दिष्टमपिस्मृत्यन्तरप्रसिद्धंव्यवहारपदंप्रस्तौति ऋत्विजंयस्त्यजेदिति । कर्मणि यज्ञकर्मणि शक्तमिति ऋत्विग्विशेषणम् । अदुष्टमिति याज्यविशेषणम् ॥ ३८८ ॥

( ६ ) रामचन्द्रः । याज्यो यजमानः कर्मणिशक्तंअदुष्टं ऋत्विजंत्यजेत् च पुनः यदिऋत्विक् कर्मणि शक्तंकर्मस्थं याज्यं त्यजेत् तयोः ऋत्विक्याज्ययोः दण्डः शतंशतम् ॥ ३८८ ॥

न मातानपिता न स्त्री न पुत्रस्त्यागमर्हति ॥ त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ॥ ३८९ ॥

( १ ) मेधातिथिः माता नत्यागमर्हति न त्याज्या त्यागः स्वगृहान्निष्कासनंमातृवृत्तेःसक्तायाउपकारस्योपक्रियायामुदितायामकारणे एवंपित्रादीनामपि व्याख्येयं संबन्धेसाहचर्यात्स्त्रीभार्यैवाभिप्रेता । अपतितानामेषांत्यागोनास्ति । मातुस्तु न मातापुत्रंप्रतिपततीत्येकइति शातातपः । भार्यायाश्चापि त्यागःसंभोगे गृहकार्यनिषेधः भक्तवस्त्रादिदानंतु न निषिध्यते योषित्सु पतितास्वपि ॥ वस्त्रान्नमानंदेयंच वसेयुः स्वगृहान्तिकइति पठ्यते ॥ ३८९ ॥

( २ ) सर्वज्ञनारायणः । स्त्री भार्या ॥ ३८९ ॥

( ३ ) कुल्लूकः । मातृपितृभार्यापुत्रास्त्यागमपोषणशुश्रूषणाद्यकरणात्मकंनार्हन्ति तस्मादेतान्पातकादिरहितान्परित्यजन्नेकैकपरित्यागे राज्ञा षट्शतानि दण्ड्यः ॥ ३८९ ॥

( ४ ) राघवानन्दः । ऋत्यन्तरादिवशस्यापतितमात्रादिस्त्यक्तुर्दण्डमाह नेति । षट्शतानि पणानामित्यनुवतर्तते॥३८९॥

( ६ ) रामचन्द्रः । अपतितान् मात्रादीन् त्यजन्राज्ञा षट्शतानि दण्ड्यः ॥ ३८९ ॥

आश्रमेषु द्विजातीनांकार्ये विवदतांमिथः ॥ न विब्रूयान्नृपोधर्मंचिकीर्षन्हितमात्मनः ॥ ३९० ॥

( १ ) मेधातिथिः । वानप्रस्थादीनामरण्याश्रमवासिनाश्रमेषु कार्येधर्मसंकटरूपमयंशास्त्रार्थोनायमिति इतरेतरंविवदमानांनधर्मव्यवस्थांसहसाविब्रूयात्प्रभुतया निर्णयमन्येषामिव न कुर्यात्कथंतर्हि वक्ष्यमाणेन प्रकारेण एवमात्मने हितंकृतंभवति शास्त्रार्थत्यागोन भवतीत्यर्थः गृहस्थानांचाश्रमित्वेपि यथोक्तएव निर्णयप्रकारः कार्यधर्मसंशयात्मकविवादपदं आश्रमग्रहणाच्च विशिष्टविषयता व्याख्यायते ॥ ३९० ॥

( २ ) सर्वज्ञनारायणः । आश्रमेष्वाश्रममध्ये कार्ये कर्तव्ये आश्रमधर्मइत्यर्थः । नविब्रूयात नधर्मविपरीतमर्थं स्वापेक्षया स्थापयेत् ॥ ३९० ॥

( ३ ) कुल्लूकः । द्विजातीनांगार्हस्थ्याद्याश्रमविषये कार्येऽयंशास्त्रार्थोनायंशास्त्रार्थइति परस्परंजातविवादानांराजा स्वीयहितंचिकीर्षुरयंशास्त्रार्थइति सदृशान्विशेषेण न ब्रूयात् ॥ ३९० ॥

( ४ ) राघवानन्दः । दण्डप्रसंगेन पारांचिकभयं स्मारयन्नृपं शिक्षयति आश्रमेष्वितिद्वाभ्याम् । कार्येगार्हस्थाश्रमधर्मविषये विवदतामयंशास्त्रार्थोनायमिति विपर्यासेअयमेवेति विशेषेण नब्रूयात् ३९० ॥

( ५ ) नन्दनः । आश्रमेषु तपोवनेषु द्विजातीनांवानप्रस्थानाम् ॥ ३९० ॥

( ६ ) **रामचन्द्रः**। आश्रमेषुचतुर्षु द्विजातीनां विवदतां सतामात्मनो हितंचिकीर्षन्नृपो नविब्रूयात् विपरीतंन वदेत् ॥ ३९० ॥

**यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः॥ सान्त्वेन प्रशमय्यादौ स्वधर्मंप्रतिपादयेत्॥ ३९१॥**

( १ ) **मेधातिथिः**। यथातत्कर्तव्यंतथेदानीमाह योयादृशींपूजामर्हति गुणानुरूपेण तंतथैवाभ्यर्च्य ब्राह्मणैर्मन्त्रिपुरोहितादिभिः आचार्यसाहित्येधर्मप्रवचने वा तदा च ब्राह्मणाःसत्याविज्ञेयास्तैःसह स्वधर्मन्याय्यमर्थंबोधयेत् सिद्धेमहत्त्वे सभ्येभ्यउपदेशः प्राधान्यार्थस्तान्पुरस्कुर्यात् तथाहि न राज्ञःक्रुध्यन्ति शास्त्रेण प्रीतिस्तुतिवचनैः प्रथमंप्रथममप्यव्यपनीतक्रोधान्कृत्वा ततोब्रूयात्॥ ३९१॥

( २ ) **सर्वज्ञनारायणः**। ब्राह्मणैः स्वकीयधर्मासनस्थैः। सांत्वेनप्रशमय्य विवादंत्याजयित्वा स्वधर्मं तैरेव विचारंकारयित्वा प्रतिपादयेत् ज्ञापयेत्॥ ३९१॥

( ३ ) **कुल्लूकः**। योयादृशींपूजामर्हति तंतथा पूजयित्वाऽन्यैर्ब्राह्मणैः सह प्रथमंप्रीत्याऽपगतकोपंकृत्वा ततएषांयः स्वधर्मस्तंबोधयेत्॥ ३९१॥

( ४ ) **राघवानन्दः**। तर्हिकिंकार्यमितितत्राह यथेति। यथार्हं योयादृशींपूजामर्हति तामनतिक्रम्याभ्यर्च्यकथमेवंविवदन्तइति सान्त्वनेन प्रशमय्य गतकोपान्कृत्वा तेषां यःस्वधर्मस्तंब्राह्मणैः सह प्रतिपादयेत् बोधयेत्॥ ३९१॥

( ५ ) **नन्दनः**। एतान्वानप्रस्थान् ब्राह्मणैः स्वपुरोहितादिभिः सान्त्वेन प्रशमय्य न दण्डेन स्वधर्ममविवादमविवादोहितेषांस्वधर्मः॥ ३९१॥

( ६ ) **रामचन्द्रः**। सः पार्थिवः एतान् आश्रमादीन् ब्राह्मणैः सह सान्त्वयन् अभ्यर्च्य प्रशमय्य आदौ स्वधर्मं स्वस्वधर्मं प्रतिपादयेत् स्वस्वाश्रमधर्मे स्थापयेत्॥ ३९१॥

**प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे॥ अर्हावभोजयन्विप्रोदण्डमर्हति माषकम्॥ ३९२॥**

( १ ) **मेधातिथिः**। विशन्त्यस्मिन्निति वेशोनिवासस्तत्प्रतिगतः प्रतिवेश्यःपृष्ठगृहाभिमुखस्तत्रभवः प्रातिवेश्यः प्राग्दीर्घपाठे स्वार्थिकोण् एवमनुवेश्यः पृष्ठतोवसन्तौ चेन्न भोजयेत् यदिस्वगृहमानीय कल्याणे विवाहाद्युत्सवे विंशतिमात्रायत्रद्विजाअन्ये भोज्यन्ते तदा माषकंसुवर्णदण्डंदाप्योहिरण्यमित्युत्तरत्र विशेषणादिहापि विज्ञायते। अर्हौ यदि तौ प्रातिवेश्यानुवेश्यौ योग्यौ भवतोनद्विषन्तौनात्यन्तनिर्गुणौ॥ ३९२॥

( २ ) **सर्वज्ञनारायणः**। प्रातिवेश्योनिरन्तरगृहस्थः। अनुवेश्यस्तदनन्तरः। कल्याणे उत्सवे। विंशतिर्ब्राह्मणायत्रभोज्यन्ते तत्र। अर्हौ योग्यौ। विप्रइति वचनात्क्षत्रियस्य तादृग्ब्राह्मणभोजने न दोषइत्यर्थः। माषकं सुवर्णस्य॥ ३९२॥

( ३ ) **कुल्लूकः**। निरन्तरगृहवासी प्रातिवेश्यः तदन्तरगृहवास्यनुवेश्यः यस्मिन्नुत्सवे विंशतिरन्ये ब्राह्मणाभोज्यन्ते तत्र प्रातिवेश्यानुवेश्यौ प्रातिवेश्यब्राह्मणातिक्रमकारी चेति विष्णुवचनात् ब्राह्मणौ भोजनार्हावभोजयन्ब्राह्मणउत्तरत्र हैरण्यादिग्रहणादिह रौप्यमाषंदण्डमर्हति॥ ३९२॥

( ४ ) **राघवानन्दः**। ब्राह्मणान्नदायिनोद्विजस्येतद्विशेषाभोजने दण्डमाह प्रातिवेश्येति। प्रातिवेश्यानुवेश्यौ स्वगृहनिकटोपनिकटवासिनौ अर्हौ कुष्ठश्वित्रोपपातकाद्यदुष्टौ। कल्याणे उत्सवे स्वस्त्ययनेवा। विंशतिद्विजे द्विजानांविंशतिर्भो-

जनीयत्वेन यत्र तस्मिन् माषकं रौप्यमितिकेचित् । संदिग्धेषु वाक्यशेषादिति न्यायेन हैरण्यमिति तु तत्रत्त्वंउत्तरवाक्यै-हैरण्यमितिश्रवणात् । विंशतिरिति न्यूनसंख्याव्यवच्छेदार्थम् । विप्रपदं चातुवर्ण्योपलक्षणम् ॥ ३९२ ॥

( ५ ) **नन्दनः** । स्वगृहस्याभिमुखंगृहंप्रतिवेशः अभितः समीपस्थंगृहमनुवेशस्तत्रस्थौ प्रातिवेश्यानुवेश्यौ विंशतिद्विजे विंशतिद्विजभोजनयुक्ते कल्याणे उत्सवे ॥ ३९२ ॥

( ६ ) **रामचन्द्रः** । प्रातिवेश्यानुवेश्यौ प्रातिवेश्यः पार्श्वगृहवर्ती अनुवेश्यः तत्पार्श्वगृहवर्ती तावर्हौ कल्याणे उत्सवे विंशतिब्राह्मणभोजने एतादृशे समये अर्हौ प्रातिवेश्यानुवेश्यौ विप्रः । अभोजयन् चेन्नभोजयेत्सः माषकं सुवर्णमाषकं दण्डं अर्हति ॥ ३९२ ॥

## श्रोत्रियः श्रोत्रियंसाधुंभूतिकृत्येष्वभोजयन् ॥ तदन्नंद्विगुणंदाप्योहिरण्यंचैव माषकम् ॥ ३९३ ॥

( १ ) **मेधातिथिः** । अप्रातिवेश्यार्थोयमारंभःसब्रह्मचारिणामयंनियमः श्रोत्रियस्तादृशमेव श्रोत्रियंगुणवन्तंभूतिकृत्येषुभूतिर्विभवस्तन्निमित्तेषु कार्येषु विभवे धनसंपत्तौयानिक्रियन्तेगोष्ठीभोजनादीनि अथवाभूतिग्रहणंकृत्यविशेषणंभूतिमन्तियानि कृत्यानि प्राचुर्येणप्रभूतयाविवाहादीनि क्रियन्तेयत्र विंशतेरधिकनरा भोज्यन्ते तादृशेषूत्सवेषु अभोजयंस्तदर्थमन्नंभूतिकृत्येषु भोक्तव्यंतावद्विगुणंतस्मैदापयेद्राज्ञेवा उभयंहिरण्यंमाषकोवा ॥ ३९३ ॥

( २ ) **सर्वज्ञनारायणः** । श्रोत्रियमेकग्रामीणं भूतिकृत्येषु कल्याणेषु । तदर्थं दाप्यःश्रोत्रियाय माषकं राज्ञा ॥ ३९३ ॥

( ३ ) **कुल्लूकः** । विद्याचारवांस्तथाविधमेव गुणवन्तंविभवकार्येषु विवाहादिषु प्रकृतत्वात्प्रातिवेश्यानुवेश्यावेव भोजयन् तदन्नंभोजिताद्द्विगुणमन्नंदाप्योहिरण्यमाषकंच राज्ञः ॥ ३९३ ॥

( ४ ) **राघवानन्दः** । कदर्याय नदेयमित्यतःसाधोरदाने दण्डमाह श्रोत्रियइति । भूतिकृत्येषु विवाहादिषु श्रोत्रियं दैवादुपनतं अभोजयन् नदत्तंतदन्नं तदपराधापनुत्तये तस्मैभोजननिर्वाहकद्रव्यंद्विगुणं दाप्यः । राजातु हैममाषिकं गृह्णीयादित्यर्थः । साधुमित्यधिकारित्वद्योतनाय विशेषणम् । तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइतिश्रुतेः । साधुपदमात्मज्ञपरं वा ॥ ३९३ ॥

( ५ ) **नन्दनः** । तदन्नंश्रोत्रियान्नं राज्ञा श्रोत्रियाय दाप्यं माषकंस्वस्मैदण्डत्वेनापेक्ष्यमाणं श्रोत्रियप्रत्याख्यानविषयोयंदण्डविधिः ॥ ३९३ ॥

( ६ ) **रामचन्द्रः** । भूतिकृत्येषु मङ्गलकार्येषु श्रोत्रियः श्रोत्रियमभोजयन् तदन्नंद्विगुणंदाप्यः । च पुनः अतिशयार्थं हिरण्यंमाषकंदाप्यः ॥ ३९३ ॥

## अन्धोजडः पीठसर्पी सप्तत्या स्थविरश्च यः ॥ श्रोत्रियेषूपकुर्वंश्च न दाप्याः केन चित्करम् ॥ ३९४ ॥

( १ ) **मेधातिथिः** । सप्तत्यास्थविरःप्रकृत्याविरूपइतिवत्तृतीया सप्ततिर्वर्षाणि यस्य जातस्यसएवमुच्यते । श्रोत्रियेषुवेदाध्यायिषूपकुर्वन्पादशुश्रूषादिनाकारुकर्मणावा एतेनकर्मवत्कारुशिल्पिनोमासिमासीत्यादिदाप्याः क्षीणकोशेनापि दातव्याइतिकेनचिद्ग्रहणम् ॥ ३९४ ॥

( २ ) **सर्वज्ञनारायणः** । जडः विकलवागादिः । पीठसर्पी पीठद्वयेन गच्छन्खञ्जः । श्रोत्रियेषूपकुर्वन् तेषां परिचर्यापरःशूद्रादिः । करं निवासनिमित्तकम् ॥ ३९४ ॥

( ३ ) **कुल्लूकः** । अन्धोबधिरः पङ्गुः संपूर्णसप्ततिवर्षः सप्तत्येति प्रकृत्यादिभ्यउपसंख्यानमिति तृतीया । श्रोत्रियेषु धनधान्यशुश्रूषादिनोपकारकाः केनचिदपिक्षीणकोशेनापि राज्ञा त्वग्राह्याकरंनादापनीयाः ॥ ३९४ ॥

( ४ ) **राघवानन्दः** । दण्डप्रसंगेन करादानं बुद्धिस्थं क्वचिन्निवर्तयति अन्धइति। जडोबधिरः पीठसर्पी पङ्गुः परायत्त गमनेन पीठवत्सर्तुंशीलमस्येति सप्तत्यास्थविरः सप्तत्युत्तरवयाः एतांचतुरः शुश्रूषया धनैर्वोपकुर्वन्नकरंदाप्यइत्यन्वयः । श्रोत्रियेष्विति विषयसप्तमी । केनचित्राज्ञा करपदंदण्डशुल्कयोरुपलक्षणम् ॥ ३९४ ॥

( ५ ) **नन्दनः** । पीठसर्पी पङ्गुः सप्तत्या वयसासप्तत्या अब्राह्मणाअप्येते करंनदाप्याः ॥ ३९४ ॥

( ६ ) **रामचन्द्रः** । पीठसर्पी पीठद्वयं कराभ्यामादाय गच्छन् । सप्तत्या वयसा स्थविरः । च पुनःयः श्रोत्रियेषु उपकुर्वन् उपकारंकरोतितेन केन चित् क्षीणकोशेनापि । करं निवासनिमित्तकम् दाप्याः ॥ ३९४ ॥

**श्रोत्रियंव्याधितार्त्तौ च बालवृद्धावकिंचनम् ॥ महाकुलीनमार्यंच राजा संपूजयेत्सदा॥३९५॥**

( १ ) **मेधातिथिः** । संपूजनमनुग्रहः अनेकार्थत्वाद्धातूनां नहिबालादीनामन्यापूजोपपद्यते श्रोत्रियोऽत्र ब्राह्मणएवेति स्मरन्ति आर्त्तः प्रियवियोगादिना अकिंचनोदुर्गतः महाकुलीनः ख्यातिधनविद्याशौर्यादिगुणेकुलेजातोमहाकुलीनः आर्य-ऋजुप्रकृतिरवक्रः एतेषांदानमानादिभिरनुग्रहः कर्तव्यः केचिदकिंचनमहाकुलीनविशेषणंव्याचक्षते ॥ ३९५ ॥

( २ ) **सर्वज्ञनारायणः** । आर्त्तं शोकेन । अकिञ्चनं दरिद्रं । आर्यं आर्यप्रधानं । संपूजयेदर्थदानेन॥ ३९५ ॥

( ३ ) **कुल्लूकः** । विद्याचारवन्तंब्राह्मणंरोगिणंपुत्रवियोगादिदुःखितं बालवृद्धदरिद्रमहाकुलप्रसूतोदारचरितान्राजा दानमानहितकरणैः संपूजयेत्सदा ॥ ३९५ ॥

( ४ ) **राघवानन्दः** । नकेवलमनादानं यदिते निःस्वास्तेभ्यःप्रत्युतान्धादिद्वादशेभ्योदानमेवेत्याह श्रोत्रियइति । आर्त्तः पुत्रादिनाशेन । अकिञ्चनः निःस्वः । आर्योऽवक्रबुद्धिर्व्यवहारेपि ॥ ३९५॥

( ५ ) **नन्दनः** । आर्त्तः पुत्रमरणादिना पुनर्वृद्धग्रहणमादरातिशयार्थं संपूजयेत्करंनादद्यात् ॥ ३९५ ॥

( ६ ) **रामचन्द्रः** । व्याधितः व्याधियुक्तः आर्त्तोज्वरादिना बालवृद्धौ बालान् वृद्धान् अकिञ्चनं निःस्वं आर्यं एतान् राजा पूजयेत् ॥ ३९५ ॥

**शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः ॥ नच वासांसि वासोभिर्निर्हरेन्नच वासयेत् ॥३९६ ॥**

( १ ) **मेधातिथिः** । शाल्मलीनामवृक्षस्तद्विकारे फलके सहिप्रकृत्यैव दृढोभवति नच वाससोपि पातैरवयवाअस्य-च्यवन्ते तेहि च्युतावासः पाटयेयुः नचायंजातिनियमोदृष्टोयेनान्यदपि यत्काष्ठमेवंस्वभावंतत्फलकेन दोषः श्लक्ष्णेऽपरु-षे च वासांस्यन्यदीयान्यन्यदीयैर्वासोभिर्ननिर्हरेत् बध्वोपरिवेष्ट्य तीर्थे प्रक्षालयितुंन नयेत् बन्धनाद्वाससांविनाशोमाभूत् अधिकंहि तानि पीडितानि भवन्ति नच वासयेत् अन्यदीयानि वासांस्यन्यस्मैप्रयच्छन्वसनार्थंनदद्यात् एतद्विवासनंवस्ते-ऽपरस्तंरजकोवासयति अश्रुतत्वाद्दण्डस्य प्रकृतमाषकयोजना कर्तव्या ॥ ३९६ ॥

( २ ) **सर्वज्ञनारायणः** । नेनिज्यात् क्षालयेत् । नेजकश्चैलनिर्णेजकः । निर्हरेत् परिवर्तयेत् । वासयेत् चिरंस्थाप-येत् ॥ ३९६ ॥

( ३ ) **कुल्लूकः** । शाल्मल्यादिवृक्षसंबन्धिफलकेऽपरुषे रजकःशनैः शनैर्वासांसि प्रक्षालयेन्नपरकीयैर्वस्त्रैरन्यवस्त्राणि नयेत् नचान्यवासांस्यन्यपरिधानार्थंदद्यात् यद्येवंकुर्यात्तदाऽसौ दण्ड्यः स्यात् ॥ ३९६ ॥

( ४ ) **राघवानन्दः** । दण्डार्थंरजकतन्तुवायौ शिक्षयन्नाह शाल्मलीतिद्वाभ्याम् । फलके काष्ठमये श्लक्ष्णे मृदुनि, नेनिज्यात् क्षालयेत् तत्रापि शनैर्ननिर्हरेत् न नयेत् । वासोभिः क्षाल्यमानैर्नवासयेदाच्छादयेदन्यं स्वं वा ॥ ३९६ ॥

( ५ ) **नन्दनः** । वासोभिर्निर्हरेद्वासोभिर्निबध्यनिर्हरेत् । नचवासयेत्परान्नाच्छादयेत् ॥ ३९६ ॥

( ६ ) **रामचन्द्रः** । नेजकः वस्त्रप्रक्षालकः शाल्मलीफलके श्लक्ष्णे शाल्मलीवृक्षस्य फलके पीठे श्लक्ष्णे वासांसि शनैःशनैर्नेनिज्यात्प्रक्षालयेत् । च पुनः वासोभिर्वासांसि न निर्हरेत् न परिवर्तयेत् च पुनः न वासयेत् न चिरंस्थापयेत् । अन्यस्मै परिधानाय भृतकेन नदद्यात् स्वयंच न परिदध्यात् ॥ ३९६ ॥

## तन्तुवायोदशपलंदद्यादेकपलाधिकम् ॥ अतोन्यथा वर्तमानोदाप्योद्वादशकंदमम् ॥ ३९७ ॥

( १ ) **मेधातिथिः** । तन्तून्वयति तन्तुवायः कुविन्दः शाकटकादेः पटस्य कर्ता ससूत्रपलानि दशगृहीत्वा शाटकंयंनैकपलाधिकंवस्त्रंदद्यात् अनया वृध्या सर्वदद्यात् स्थूलसूक्ष्मादिवाससांरोमवतांच कल्पना कर्तव्या अन्यथा द्वादशपणोदण्डः वृद्धिदानेऽयंदण्डोमूलच्छेदेतु सूत्राणि गणोक्तः एवंविंशति पलंयदि नददाति वृद्धितदा द्विगुणोदण्डः एवंकल्पनाकार्या त्रिगुणश्चतुर्गुण इत्यादि अन्येतु दण्डंराजभागमित्याहुः ॥ ३९७ ॥

( २ ) **सर्वज्ञनारायणः** । तन्तूनांदशपलंगृहीतमेकपलाधिकंसंमाय स्वामिने पटादीन्कृतान्प्रयच्छेत । एवं गणनयैव सर्वत्र संख्यानम । द्वादशकं तस्य तन्तोर्द्वादशंभागम ॥ ३९७ ॥

( ३ ) **कुल्लूकः** । तन्तुवायोवस्त्रनिर्माणार्थंदशपलानि सूत्रंगृहीत्वा पिष्टभक्ष्याद्यनुप्रवेशादेकादशपलवस्त्रंदद्याद्यदि ततोन्यूनंदद्यात्तदा द्वादशपणान्राज्ञा दाप्यः स्वामिनश्चतुष्टिः कर्तव्यैव ॥ ३९७ ॥

( ४ ) **राघवानन्दः** । पटाद्यर्थतन्तूनां दशपलग्रहणे एकादशपलपरिमितं वस्त्रं दद्यात् मण्डादिनाऽधिकांशस्य संभाव्यमानत्वात् । तदपि दानं स्वामितुष्टिपुरःसरम । अन्यथावर्तमानोऽददत् पणानां द्वादश देयाराज्ञे स्वामिनिएकादशपलंच । अत्रोक्तं याज्ञवल्क्येन ॥ शते दशपला वृद्धिरौर्णे कार्पासिके तथा । मध्ये पञ्चपला सूत्रे सूक्ष्मेतु त्रिपलामता ॥ अधिका ग्राह्यत्वेन ॥ कार्मिके रोमबद्धेतु त्रिंशद्भागः क्षयोमतः । नदेयः शिल्पिना ॥ न क्षयोनच वृद्धिस्तुकौशेये वाल्कलेषुच ॥ अग्नौ सुवर्णमक्षीणं द्विपलं रजतेशते ॥ अष्टौ तुत्रपुसीसेषु ताम्रेपञ्चदशानितु ॥ एतद्विकारग्रहणकाले न्यूनं ग्राह्यम् ॥३९७॥

( ५ ) **नन्दनः** । पटकृतद्दशपलाद्दशभ्योलाभेभ्यः एकफलाधिकमेकमधिकंलाभंराज्ञोदद्यात् द्वादशकंफलद्वादशभागम् ॥ ३९७ ॥

( ६ ) **रामचन्द्रः** । तन्तुवायायुतं नुसमार्पितं सूत्रं दशपलं सः तन्तुवायः एकाधिकं एकादशपलप्रमाणं पुनः दद्यात् ॥ ३९७ ॥

## शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ॥ कुर्युरर्घंयथापण्यंततोविंशंनृपोहरेत् ॥ ३९८ ॥

( १ ) **मेधातिथिः** । येषु प्रदेशेषु शुल्कमादीयते तानि शुल्कस्थानानि च राजभिर्वणिग्भिः स्वप्रतिदेशनियतानि कल्पितानि येषु स्थानेषु ये कुशलाः शौल्किकाः येधूर्तैर्नच शक्यन्ते वंचयितुं तथा सर्वेषांपण्यानामागमक्रयविक्रयसारसादिविधिज्ञाविचक्षणास्तैर्भाण्डस्यागतस्यान्यदेशान्तरानीयमानस्य वार्घंकुर्युस्ततोविंशतिभागंराजा गृह्णीयात् किंपुनरर्घकरणेनैतावदेववक्तव्यंपण्यानांविंशतिभागमिति सत्यं यदा स्वरूपेण द्रव्यंराजा न गृह्णाति स्वरूपकान्युपयुज्यन्तेसाटकादीनि विंशतिर्विंशतिभागः प्राग्विंशतेर्नपाटनमन्तरेणोपपद्यतइत्येवमर्थमर्घकरणमविक्रेयाणामात्मोपयोगिनांनास्ति शुल्कइति

ज्ञापितुं यथापण्यएव कालानुरूप्येण न सर्वपण्यंसर्वदा विक्रीयतएकरूपेणार्घेण अतोदेशकालापेक्षया पण्यानामर्घव्यवस्था न नियतोर्घइति ॥ ३९८ ॥

( २ ) **सर्वज्ञनारायणः** । शुल्कस्थानेषु पण्यविक्रयस्थानेषु । अर्घ्यं मूल्यं कुर्युर्व्यवस्थापयेयुः नियुक्ताः । विंशं विंशतिभागैकभागं हरेदर्घकरणनिमित्तम् ॥ ३९८ ॥

( ३ ) **कुल्लूकः** । स्थलजलपथव्यवहारतोराजग्राह्योभागः शुल्कंतस्याऽवस्थानेषु ये कुशलाः तथा सर्वपण्यानांसारासारज्ञास्ते पण्येषु यमर्घंमूल्यमनुरूपंकुर्युः ततोलाभधनाद्विंशतिभागंराजा गृह्णीयात् ॥ ३९८ ॥

( ४ ) **राघवानन्दः** । एवं राजकीय दण्डस्य राजसूयवत्प्राकरणिकत्वाच्छुल्कादेरपि तदन्तर्गतत्वं प्रकटयन्नाह । शुल्केति क्रयस्थानेषु जलस्थलव्यवहर्तृभ्योग्राह्योभागः शुल्कः । अयंतु मूल्यनिर्णयनिमित्तः । सर्वपण्यविचक्षणाःतत्सारासारज्ञाः । अर्घंमूल्यम् । यथापण्यं पण्यं विक्रयद्रव्यं तदनुरूपम् । ततोलाभधनात् विंशतिभागंहरेदित्यन्वयः ॥३९८॥

( ५ ) **नन्दनः** । विचक्षणाः क्रयविक्रयविधौविवेकिनः यथा पण्यंविक्रेयद्रव्यानुरूपमूल्यंकुर्युः कल्पयेयुः ततोविंशतिभागंनृपोहरेत् विक्रयार्थमापणमध्यआहृतंद्रव्यंसर्वंदण्डत्वेनापहरेत् ॥ ३९८ ॥

( ६ ) **रामचन्द्रः** । शुल्कस्थाने मौल्यस्थाने ततः लाभेसति विंशांशं नृपः हरेत् गृह्णीयात् ॥ ३९८ ॥

**राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ॥ तानि निर्हरतोलोभात्सर्वहारंहरेन्नृपः ॥ ३९९॥**

( १ ) **मेधातिथिः** । राज्ञःसंबन्धितया प्रख्यातानि यानि भाण्डानि राजोपयोगितया यथाहस्तिनः काश्मीरेषु कुंकुमप्रायेषु पट्टोर्णादीनि प्रतीच्येष्वश्वादाक्षिणात्येषु मणिमुक्तादीनि यद्यस्यराज्ञोविषये सुलभमन्यत्र दुर्लभंतत्र तस्य प्रक्षालनंभवति तेन हि राजानइतरेतरंसंदधते प्रतिषिद्धानि यानि राज्ञा मदीयाद्देशान्नैतदन्यत्रनेयं अत्रैववाविक्रेयंयथा दुर्भिक्षे धान्यमित्येवमादीनि लोभान्निर्हरतोदेशान्तरनयतोविक्रीणानस्य वा सर्वहारंहरेत्सर्वहरणंसर्वहारः अयंधनलोभान्नयतोदण्डः राजान्तरोपायनार्थंत्वधिकतरः शारीरोपि दुर्गावरोधादिः ॥ ३९९ ॥

( २ ) **सर्वज्ञनारायणः** । राज्ञोयोग्यान्येतानीति प्रसिद्धानि सिंहासनादीनि प्रतिषिद्धानि अन्यत्र विक्रेतुंराज्ञा । निर्हरतोऽन्यत्र नयतोवाणिजकस्य लोभादुचितमूल्याधिकेच्छया । सर्वहारं मूलमदत्वा तस्य सर्वस्वहरणं यथा स्यात् ॥ ३९९ ॥

( ३ ) **कुल्लूकः** । राज्ञः संबन्धितया यानि विक्रेयद्रव्याणि प्रख्यातानि राजोपयोगीनि हस्त्यश्वादीनि च तद्देशोद्भवानि च प्रतिषिद्धानि च यथा दुर्भिक्षे धान्यंदेशान्तरंन नेयमिति तानि लोभाद्देशान्तरंनयतोवणिजः सर्वहरणंराजा कुर्यात् ॥ ३९९ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् राज्ञइति । प्रख्यातभाण्डानि राजयोग्यानिहस्त्यश्वमणिमुक्तादीनि प्रतिषिद्धानि त्वयैतानि न विक्रेयाणीति तानि देशान्तरं नेतुः क्रेतुर्विक्रेतुर्वा मूल्यमदत्वैव सर्वहारंयथास्यात्तथा हरेदित्यन्वयः॥ ३९९ ॥

( ५ ) **नन्दनः** । राज्ञः प्रख्यातभाण्डानि राज्ञएवोपभोक्तव्यत्वेन प्रख्यातद्रव्याणि प्रतिषिद्धानि शास्त्रेक्रयत्वेन प्रतिषिद्धानि च निर्हरतोविक्रयार्थमाहरतःसकाशात्सर्वहारंहरेत् ॥ ३९९ ॥

( ६ ) **रामचन्द्रः** । प्रख्यातभाण्डानि बहुमूल्यत्वे सति राजयोग्यानि। राजयोग्यानि तानिभाण्डानि लोभात् हरतः गृह्णतः ॥ ३९९ ॥

**शुल्कस्थानंपरिहरन्न काले क्रयविक्रयी ॥ मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥४००॥**

( १ ) **मेधातिथिः** । क्रयविक्रयीवाणिज्यउच्यतेशुल्कस्थानंपरिहरन्नुत्पथेन गछन्नकाले वा रात्रौ शुल्काध्यक्षेषु गतेषु संख्याने मिथ्यावादीन्यूनंकथयतिगणनायां उपलक्षणंचैतत्संख्यानंतेन प्रच्छादनेप्येषएवंविधिः दाप्योष्टगुणमत्ययंदण्डोयावदपह्नुते तावदष्टगुणंयावान्वातस्यापह्नुतस्योचितः शुल्कस्तमष्टगुणंदाप्यः आद्यमेव युक्तं अत्ययशब्दोहि तत्र समंजसः तद्धेतुत्वाद्द्रव्ये । अन्ये त्वकालेक्रयविक्रयइतिसंबन्धंकुर्वन्ति अकालश्चागृहीते शुल्के रहसि वा प्रतिषेधोयम् ॥४००॥

( २ ) **सर्वज्ञनारायणः** । शुल्कं क्रयविक्रयराजग्राह्योभागः । परिहरन्नवर्त्मगमनादिना । अकाले राज्यादौ । शुल्कापचयार्थं मिथ्यावाद्यल्पतावादी । संख्याने विक्रेयद्रव्यसंख्यायांविषये । अत्ययं राज्ञोपचितं शुल्कम् ॥ ४०० ॥

( ३ ) **कुल्लूकः** । शुल्कमोषणायोत्पथेन गच्छति अकाले राज्यादौ वा क्रयविक्रयंकरोति शुल्कखण्डनार्थंविक्रेयद्रव्यस्याऽल्पांसंख्यांवक्ति राजदेयमपलपितमष्टगुणंदण्डरूपतया दाप्यः ॥ ४०० ॥

( ४ ) **राघवानन्दः** । किंचान्यत् शुल्केति । शुल्कस्थानं हट्टपट्टादिकं परिहरन् निह्नुवनक्रयाधिकारी अकाले क्रयविक्रयी मिथ्यावादीचसंख्याने मूल्यसंख्यायां राजशुल्कादत्ययंअतिक्रम्यापत्तेरित्यपलपितं यावत्तदष्टगुणंसदाप्यइत्यन्वयः ॥ ४०० ॥

( ५ ) **नन्दनः** । परिहरन्परिहृत्यान्यमार्गेण गच्छन्यद्देयमतिक्रान्तं यदकालेविक्रीतंवा यावच्चक्रयविक्रये वञ्चितंयच्चसंख्याने ह्रतंतदत्ययमष्टगुणंदाप्यः ॥ ४०० ॥

( ६ ) **रामचन्द्रः** । शुल्कस्थानं मौल्यस्थानं परिहरन् कालेक्रयविक्रयंयोन करोति च पुनः मूलसंख्यायां मिथ्याबादी अष्टगुणंशुल्कं कतिदूरादागतं कतिदूरागन्तव्यमिति दाप्यः ॥ ४०० ॥

**आगमंनिर्गमंस्थानंतथा वृद्धिक्षयावुभौ ॥ विचार्य सर्वपण्यानांकारयेत्क्रयविक्रयौ ॥ ४०१ ॥**

( १ ) **मेधातिथिः** । आपणभूमौ ये विक्रेतारस्ते न स्वेच्छया मूल्यंकर्तुंलभेरन्नापि राजाक्रीणीयात्स्वरुचिकृतेनमूल्येन कथंतर्हीदमिदंनिरूप्यआगमंकिंप्रत्यागच्छति देशान्तरादुतनतथेयतोदूरादागछति एवंनिर्गमस्थाने किंसंमत्येव विक्रियतउततिष्ठति । संप्रति निष्क्रामतोद्रव्यस्य स्वल्पोपि लाभोमहाफलस्तदुत्थितेन मूल्येन द्रव्यान्तराविषयेण पुनर्लाभोस्थानात् वृद्धि क्षयोकियत्यस्य वृद्धिस्तिष्ठति कीदृशोवा क्षयइत्येतत्सर्वंपरीक्ष्य स्वदेशे क्रयविक्रयौ कारयेत् यथा न वणिजांपीडा भवति नापि क्रेतॄणांतथार्घव्यवस्थापयेत् ॥ ४०१ ॥

( २ ) **सर्वज्ञनारायणः** । आगममेतावता व्ययेनागमनमत्रेति । एवंनिर्गमश्चकारात्स्थानमेतदवशिष्टंतिष्ठतीति । वृद्धिमेतावद्वर्धतइति । क्षयमानीयमानद्रव्यस्यैवापचयइतस्ततःपातेन ॥ ४०१ ॥

( ३ ) **कुल्लूकः** । कियतोदूरादागतमिति देशान्तरीयद्रव्यस्यागमनंकियद्दूरंनीयतइति स्वदेशोद्भवस्य निर्गमंकियत्कालस्थितंकियन्मूल्यंलभतइति स्थितं तथाकियती वृद्धिरित्यत्र कर्मकाराणांभक्ताच्छादनादिना कियानपक्षयइत्येवंविचार्य तथावणिजांक्रेतॄणांयथा पीडा न भवति तथा सर्वपण्यानांक्रयविक्रयौ कारयेत् ॥ ४०१ ॥

( ४ ) **राघवानन्दः** । विक्रेतुरनुग्रहार्थमाह आगममिति । आगमं विदूरादानीतं निर्गमं स्वदेशाद्विदेशे नयनं स्थानं द्रव्यावस्थितकालवशात्परिमाणक्षयादि वृद्धिक्षयौ लाभालाभौ विचार्योक्तंज्ञात्वा क्रयविक्रयौ कारयेद्राजेतिशेषः ॥४०१॥

( ५ ) **नन्दनः** । आगममागमनमार्गं निर्गमंनिर्गमनकालं उपक्षयरूपेण वणिजोहस्ताद्द्रव्यसंवासः स्थानम् ॥ ४०१ ॥

( ६ ) **रामचन्द्रः** । सर्वपण्यानां आगमं आगमस्थानं स्थापनस्थानंच तथा उभौ वृद्धिक्षयौ विचार्यक्रयविक्रयौ कारयेत् ॥ ४०१ ॥

**पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवागते ॥ कुर्वीत चैषांप्रत्यक्षमर्घसंस्थापनंनृपः ॥ ४०२ ॥**

( १ ) **मेधातिथिः** । आगमनिर्गमनादेर्द्रव्यस्यानित्यत्वादुपचयापचयावर्घस्यानेकरूपौ ततोर्घसंस्थापनंपञ्चरात्रेपञ्चरात्रे प्रत्यक्षीकार्यंन सकृत्कृतंमन्तव्यंनापि वणिजोविश्वसितव्याः किंतर्हि स्वयंप्रतिजागरणीयं यद्द्रव्यंचिरेणनिष्कामति तत्र पक्षेऽर्घगवेषणमन्यत्र पाञ्चरात्रिकम् ॥ ४०२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्यक्षमात्मगोचरम् । कालविकल्पःशङ्काल्पत्वाधिक्यापेक्षया ॥ ४०२ ॥

( ३ ) **कुल्लूकः** । आगमनिर्गमोपाययोगादेः पण्यानामनियतत्वादस्थिरार्घादीनांपञ्चरात्रे पञ्चरात्रे गते स्थिरप्रायार्घाणांपक्षे पक्षे गते वणिजामर्घविदांप्रत्यक्षंनृपतिराप्तपुरुषैर्व्यवस्थांकुर्यात् ॥ ४०२ ॥

( ४ ) **राघवानन्दः** । राज्ञा क्रयादावपि तत्परेण भाव्यमित्याह पञ्चेति । स्थिरास्थिरार्थभेदेनपञ्चरात्रइत्यादिविकल्पः। तेषां वणिजामअर्घस्थापनं तत्स्थानंप्रत्यक्षमाप्तपुरुषैःकुर्यात । यथाते विक्रीय न पलायन्तेऽपह्नुवते वा ॥ ४०२ ॥

( ५ ) **नन्दनः** ।अर्घसंस्थापनम् ॥ ४०२ ॥

( ६ ) **रामचन्द्रः** । एषां पण्यवस्तूनां सर्वसंस्थापनं प्रत्यक्षं आत्मनः पुरतः नृपः कुर्वीत ॥ ४०२ ॥

**तुलामानंप्रतीमानंसर्वंच स्यात्सुलक्षितम् ॥ षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत् ॥ ४०३ ॥**

( १ ) **मेधातिथिः** । तुला प्रसिद्धमानंप्रस्थोद्रोणइत्यादि प्रतीमानंसुवर्णादीनांपरिच्छेदार्थंयत्क्रियते सर्वतोभागे तत्सुलक्षितंराजचिन्हैरङ्कितंकार्यं स्वयंप्रत्यक्षेण परिच्छिद्य स्वमुद्रयापरीक्षयेत् षट्सुषट्सु मासेषु पुनः परीक्षांकारयेदाप्तैरधिकारिभिर्यथान विचालयन्तिकेचित् ॥ ४०३ ॥

( २ ) **सर्वज्ञनारायणः** । तुलामानं कार्पासादितुलारूपंमानम् । प्रतिमानं माषकादिप्रतिकृत्प्रमाणम् । पार्थिवेन लक्षितं मुद्रितम् ॥ ४०३ ॥

( ३ ) **कुल्लूकः** । तुलामानंसुवर्णादीनांपरिच्छेदार्थंयत्क्रियते प्रतिमानंप्रस्थद्रोणादि तत्सर्वंस्वनिरूपितंयथास्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्वंसभ्यपुरुषैर्नृपतिः परीक्षयेत् ॥ ४०३ ॥

( ४ ) **राघवानन्दः** । अत्रापि राज्ञा सावधानेन भाव्यमित्याह तुलेति । तुला कार्पासलवणादिपरिच्छेदिका मानं प्रस्थद्रोणादि प्रतीमानं सुवर्णादीनां परिच्छेदार्थंयन्निरूपितं सर्वं तत् स्वलक्षितं स्वमुद्रामुद्रितं तुलादि धूर्तवणिजः कदाचित्तन्यूनाधिकं कुर्वन्तीति कृत्वा परीक्षयेद्ग्रहादिकं त्यक्त्वा पुनर्मुद्रयेत षट्सुषट्सुइतिवीप्साप्रत्यक्षाभिप्राया ॥ ४०३ ॥

( ५ ) **नन्दनः** । मानंप्रस्थादिलक्षितं राजनामाङ्कनादिना ॥ ४०३ ॥

( ६ ) **रामचन्द्रः** । तुलामानं तुलयामीयते तत् तुलामानं प्रतीमानं सुवर्णमानं सुलक्षितं स्यात् राज्ञोमुद्रादिनाऽङ्कितम ॥ ४०३ ॥

**पणंयानंतरे दाप्यंपौरुषोऽर्धपणंतरे ॥ पादंपशुश्च योषिच्च पादार्धंरिक्तकः पुमान् ॥ ४०४ ॥**

( १ ) **मेधातिथिः** । नदीतीरे यानंगन्त्रीशकटादि तरेण पादंदाप्यं । भाण्डपूर्णानामुत्तरत्रोपदेशाद्रिक्तभाण्डानांयानानांयानद्रव्यानयनार्थमुत्तार्यमाणानामयंराजभागः । पौरुषवाह्योभारोद्रव्यानयनार्थमानीयमानोर्धपणंदाप्यः । पशुर्गोमहिष्यादिः

पादंस्त्रीचरिक्तकोन किंचियोगृहीतवान्भारंसपुमान्पादार्धंदाप्यः रिक्तस्य पुंसोनदीलङ्घनसामर्थ्यासंभावनया लाघवादल्पमादानं स्त्रीअशक्तत्वात्त्वयंतरेण बहुदाप्यते तरे तरनिमित्तं ॥ ४०४ ॥

( २ ) **सर्वज्ञनारायणः** । यानं शकटादि । पौरुषं पुरुषहार्योभारः । पादं पणस्य । पशुश्छागोमेषइत्यादिः । रिक्तकोभारशून्यः ॥ ४०४ ॥

( ३ ) **कुल्लूकः** । भाण्डपूर्णानि यानानीतिवक्ष्यति तेन रिक्तशकटादियानन्तरविषये पणंदाप्यं एवंपुरुषभारोर्धपणंतरपण्यंदाप्यः । पशुश्च गवादिः पणचतुर्थभागं भाररहितोमनुष्यः पणाष्टभागंदापनीयः ॥ ४०४ ॥

( ४ ) **राघवानन्दः** । नद्याद्युत्तरणे दाशादिद्वारा शुल्कविभागमाह पणमिति । तरे नद्याद्युत्तरणे कार्ये यानं रिक्तकंशकटादि प्रति पणं तरशुल्कं दाप्यमित्यन्वयः । एवमुत्तरत्र । पौरुषोमनुष्यवाह्यभारः तत्रार्धपणः । पशुयोषितोर्भारवहना प्रसिद्धेः प्रसिद्धौवा तन्मात्रमेव वचनबलात् । रिक्तकोबाह्यरहितः ॥ ४०४ ॥

( ५ ) **नन्दनः** । यानंशकटादिकं तरे नावि पणंपणमितिकश्चंदाप्यंरिक्थंशुल्कं पौरुषः पौरुषवाह्यभरःभारो ऽर्द्धपणमितंरिक्थंदाप्यं पशुश्चयोषिच्चपादंपणपादंदाप्ये पुमान्पुरुषोनिर्भरः पादार्द्धपणपादार्द्धमितंरिक्थंदाप्यमितियावत् ॥ ४०४ ॥

( ६ ) **रामचन्द्रः** । वाहनस्य नद्यां तरे तरणार्थं पणोदाप्यः पौरुषेतरेऽर्धपणोदाप्यः । पशुर्योषिच्च पादम् । रिक्तकः वस्तुशून्यः पुमान्पादार्धम् । पणस्वरूपमाह ॥ वराटकानांदशकद्वयंच सा काकिणी ताश्च पणश्चतस्रः ॥ वराटकानामशीतिः ८० पणइति लीलावत्याम् ॥ ४०४ ॥

**भाण्डपूर्णानि यानानि तार्यंदाप्यानि सारतः ॥ रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥ ४०५ ॥**

( १ ) **मेधातिथिः** । भाण्डंद्रव्यंवस्त्रव्रीह्यादितेन पूर्णानि यानानि सारतस्तार्यतारार्थंदाप्यानि यदि महार्घवस्त्रादि तत्र बव्हारोपितंतदा बहुदाप्यानि अथ व्रीह्यादिनानातिचारेण तदाल्पं एवंनद्याः सुतरदुस्तरत्वेन कल्पना कर्तव्या । रिक्तभाण्डानि यानानि यत्किंचित्पणपादानि भाण्डशब्दोत्रधनवचनःये च परिच्छदाकोशतोऽपरिच्छेदास्ते न पादार्धमपि तु यत्किंचित्ततोधिकंन्यनंवा अत्रन शक्योनियमोऽतः कल्पनैव शास्त्रार्थः ॥ ४०५ ॥

( २ ) **सर्वज्ञनारायणः** । भाण्डपूर्णानि पण्यद्रव्यपूर्णानि । रिक्तभाण्डानि चर्मभाण्डादीनि । अपरिच्छदाः परिकरशून्याः । अत्र यानादीनांदापनंतन्नेतृपुरुषदापनपरम् ॥ ४०५ ॥

( ३ ) **कुल्लूकः** । पण्यद्रव्यपूर्णानि शकटादीनि द्रव्यगतोत्कर्षापेक्षयाऽऽतरंदाप्यानि द्रव्यरहितानिच गोनीकंबलादीनि यत्किंचित्स्वल्पंतार्यंदाप्यानि अपरिच्छदादरिद्राउक्तपदार्थदानापेक्षया यत्किंचिद्दापनीयाः ॥ ४०५ ॥

( ४ ) **राघवानन्दः** । भाण्डपूर्णानि विक्रयद्रव्यैःपूर्णानि भाण्डानि येषुतानि यानानि शकटादीनि । तार्यं तरशुल्कं पणद्वयादिकम् । सारतः द्रव्यस्य सारासारतः । रिक्तभाण्डानि घटादिशून्यवस्तन्त्राणि शून्ययानंप्रतिपणमात्रस्योक्तत्वात् । अपरिच्छदादरिद्राः प्रदानेप्यशक्ताः किंचिद्दाप्याइति ॥ ४०५ ॥

( ५ ) **नन्दनः** । सारतः तार्यभाण्डसारूप्येण तार्यन्तरः भाण्डानि भाररहितानि यानानियत्किंचिद्द्रव्यंतत्कालसन्निहितंतार्यंदाप्यानि परिहितयत्किंचित्ताम्बूलादिकंतार्यंदाप्याः ॥ ४०५ ॥

( ६ ) **रामचन्द्रः** । भाण्डपूर्णानि पण्यद्रव्यपूर्णानि यानानि तार्यं तरणार्थं सारतःवस्त्वनुसारतः दाप्यानि । रिक्त-

भाण्डानि यत्किंचिद्यत्किमपि देयंच पुनः अपरिच्छदाः वस्तुशून्याः पुमांसः यत्किंचिद्दाप्याः दानुयोग्याअर्हाः ॥ ४०५ ॥

**दीर्घाध्वनि यथादेशंयथाकालंतरोभवेत् ॥ नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥ ४०६ ॥**

( १ ) **मेधातिथिः** । पारावारोत्तारणे पूर्वदानं अयंनावाग्रामान्तरगमने दीर्घाध्वनि योजनादिपरिमाणेनागन्तव्ये यथादेशंयस्मिन्देशे यत्तरिदानंनाविकैः स्थापितंतदेव यथाकालंकालोवर्षादिबहूदकस्तत्रान्यन्मूल्यं स्वल्पोदकायां सरिति चिरेण ग्रामप्राप्तौ नाविकानामधिकतरायासवतामधिकमूल्यं तरमूल्ये कारणे कार्यशब्दस्तरेभवेदिति यावद्यावद्दीर्घोदेशस्तावत्तरपणोवर्धते एतच्च नदीतीरेषु विद्यात् । समुद्रे सागरेनास्ति तरलक्षणं नशक्यतेलक्षयितुंकतियोजनानि नौर्व्यूढा येन तदनुसारेण मूल्यंकल्पन्तेनदनदीषु शक्यते ज्ञातुमयंपन्था योजनमात्रो द्वियोजनइति तत्र हि तत्रग्रामाः परिमाणचिन्हंतत्रैकयोजने ऽध्वनि यन्मूल्यंद्विगुणंतद्द्वियोजने समुद्रे तु बहुवाह्या नौ नच सुष्टुशक्यते योजनादिपरिच्छेदः कर्तुमतएवोक्तंसमुद्रे नास्ति लक्षणमिति ॥ ४०६ ॥

( २ ) **सर्वज्ञनारायणः** । यथादेशं क्रोशमात्रं नदीपात्रमित्याद्यनुरूपेण । यथाकालमल्पवर्त्मत्वेपि स्रोतसा विलम्बादिना नदीतीरेषु तद्विद्यादिति । एतद्द्वयं नदीतीरेष्वेवेत्यर्थः । नास्ति लक्षणं नियामकं तत्र विलम्बादि न नियन्तुंशक्यमतस्तत्तरेऽधिकग्रहोपि न दोषाय ॥ ४०६ ॥

( ३ ) **कुल्लूकः** । पूर्वपारावारे तरणार्थमुक्तमिदानींनदीमार्गे दूराध्वनि गन्तव्ये प्रबलवेगस्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया तरमूल्यंकल्पनीयं । एतच्च नदीतीरे बोद्धव्यं । समुद्रे तु वाताधीनपोतगमनत्वात्स्वायत्तत्वाभावे तरपण्यविशेषज्ञापकंनदीवद्वियोजनादिकंनास्ति ततस्तत्रोचितमेव तरपण्यंग्राह्यम् ॥ ४०६ ॥

( ४ ) **राघवानन्दः** । किंच दीर्घेति । यथदेशं नौकया यदि दूरदेशं गच्छति कालंवा वर्षवातादियुक्तं तत्र तदनुरूपस्तरोदेयः । समुद्रे देशपरिमाणाभावात् सर्वदा वाताक्रान्तत्वेन तदधीनगमनत्वाच्च नास्ति लक्षणम् योजनादिनियमितं तार्यमित्यतउचितमेव नौयायिभिः स्थापितं ग्राह्यमिति ॥ ४०६ ॥

( ६ ) **रामचन्द्रः** । दीर्घाध्वनि दीर्घमार्गे यथादेशं क्रोशमात्रनदी यात्रानुसारेण यथाकालं तरोभवेत् । सोऽत्रकृतविलम्बानुसारेण नदीतीरेषु नद्याः तरणेषु तरणं तरणप्रकार ज्ञेयं । समुद्रे समुद्रतरणे लक्षणं नियमः नास्ति ॥ ४०६ ॥

**गर्भिणी तु द्विमासादिस्तथा प्रव्रजितोमुनिः ॥ ब्राह्मणालिङ्गिनश्चैव न दाप्यास्तारिकंतरे ॥ ४०७ ॥**

( १ ) **मेधातिथिः** । द्वाभ्यां मासाभ्यामृतुदर्शनस्य व्यक्तगर्भास्त्रीभवति तस्याअनुग्राह्यत्वात्तरपणोन ग्राह्यः । प्रव्रजितश्चतुर्थाश्रमी मुनिस्तापसः ब्राह्मणालिङ्गिनोब्रह्मचारिणोब्राह्मणग्रहणंविशेषणंतेन बाह्यप्रव्रज्यालिङ्गधारिणांनैषविधिः तरप्रयोजनंतारिकंपणादि तरनिमित्तंनदाप्याः वृत्तानुरोधात्तारिकमिति सिद्धे तरग्रहणम् ॥ ४०७ ॥

( २ ) **सर्वज्ञनारायणः** । मुनिर्वनस्थः । लिङ्गिनोब्रह्मचारिणः । तारिकं तरशुल्कम् ॥ ४०७ ॥

( ३ ) **कुल्लूकः** । संजातगर्भा स्त्री मासद्वयादूर्ध्वं तथाप्रव्रजितोभिक्षुर्मुनिर्वानप्रस्थोब्राह्मणाश्च लिङ्गिनोब्रह्मचारिणः तरमूल्यंतरे न दाप्याः ॥ ४०७ ॥

( ४ ) **राघवानन्दः** । रिक्तपुरुषयोषितोस्तार्यत्वमुक्तं तद्विशेषे तन्निषेधति गर्भिणीति । द्विमासादिः विदितगर्भा । मुनिर्वानप्रस्थः । लिङ्गिनोब्रह्मचारिणः प्रव्रजितपदेन संन्यासिनोग्रहणात् ॥ ४०७ ॥

( ५ ) **नन्दनः** । दीर्घाध्वन्यनेकदिनगन्तव्याध्वनि दैर्घ्यानुगुण्येन तरःशुल्कंपणंयानमित्यादिनोक्तस्य विषयमुक्त-

रार्द्धेन नियच्छति लक्षणंशुल्कनिर्णयम् । मुनिर्वानप्रस्थः लिङ्गिनस्तीर्थयात्रादिपराः ब्राह्मणग्रहणेन सिद्धेऽपिप्रव्रजितग्रहणंक्षत्रियस्य क्वचित्स्मृत्यन्तरे सन्यासोभवेदिति तारिकंतरःशुल्कम् ॥ ४०७ ॥

( ६ ) **रामचन्द्रः** । प्रव्रजितः यतिः मुनिर्वानप्रस्थः लिङ्गिनोगैरिकादिना तरे कैवर्ते तारिकं मौल्यं न दाप्याः । न दातुंयोग्याः ॥ ४०७ ॥

**यन्नावि किंचिद्दाशानांविशीर्येतापराधतः ॥ तद्दाशैरेव दातव्यंसमागम्य स्वतोंशतः ॥ ४०८ ॥**

( १ ) **मेधातिथिः** । नाव्यारोपितभाण्डंतरणिकायां यदि दाशानांनाविकानामपराधादावर्तमानजलेन प्रदेशेन नयतांवातस्थानंज्ञात्वा दृढबन्धनजलप्रवेशमकुर्वतांवध्यादिनहनीभिरयोमयीभिश्चर्मबन्धैःसूत्रबन्धैर्वा शिथिलीकृतवातांयदिभाण्डंविशीर्येत विनाश्येत तदा तैरेव दातव्यंस्वतोंशतः स्वराजान्नभागाद्भाण्डस्वामिने समागम्य यावन्तोनाव्यारूढादाशाः॥४०८॥

( २ ) **सर्वज्ञनारायणः** । दाशानामपराधतइतिकिंचिद्वणिजोविशीर्येत नश्येत । स्वतोंशतः स्वधनात् न राजधनात् ॥ ४०८ ॥

( ३ ) **कुल्लूकः** । नौकारूढानांयत्किंचिन्नाविकापराधेन नष्टंद्रव्यंतन्नाविकैरेवमिलित्वा यथाभागंदातव्यम् ॥ ४०८ ॥

( ४ ) **राघवानन्दः** । नौयायिनां द्रव्यनाशे दाशानां दण्डमाह यदिति । दाशानामपराधतः पथिकस्य विशीर्येत नाशंगच्छति वस्त्रादिकं समागम्य मिलित्वा स्वांशतः स्वस्वांशैः दातव्यमित्यन्वयः ॥ ४०८ ॥

( ५ ) **नन्दनः** । विशीर्येत जले पतेत् । समागम्य संहृत्य तद्दातव्यंविशीर्णद्रव्यप्रत्यर्पणम् ॥ ४०८ ॥

( ६ ) **रामचन्द्रः** । यत्किंचित्सद्वस्तु दासानां कैवर्तानां अपराधतः नाविनौ कायां विशीर्येत जरयेद्वस्तु दासैरेवदातव्यं किंकृत्वा स्वतःअंशतः समागम्य संगृह्य ॥ ४०८ ॥

**एषनौयायिनामुक्तोव्यवहारस्य निर्णयः ॥ दाशापराधतस्तोये दैविके नास्ति निग्रहः ॥ ४०९ ॥**

( १ ) **मेधातिथिः** । नौभिर्यान्ति तच्छीला नौयायिनस्तेषामेषविधिरुक्तोयथा दाशापराधाद्दत्तभ्रष्टमुदके तद्दद्युर्दैविके दोषउत्पाते वातादिना नौभङ्गे नास्ति नाविकानांद्रव्यनाशे निग्रहः एषस्थले भाण्डवाहकानांभारिकाणांवान्यायः यत्प्रमादेन प्रक्रामतिभारिकोगृहीतदण्डावलंबनोदृढबन्धोपरिभागोकस्माद्दृष्या पथि कर्दमीकृते पतितस्य भाण्डंनश्येन्नभारिकस्य दोषः स्यात् ॥ ४०९ ॥

( २ ) **सर्वज्ञनारायणः** । दैविके वात्यादिना द्रव्यनाशे । निग्रहोतद्द्रव्यग्रहः ॥ ४०९ ॥

( ३ ) **कुल्लूकः** । नाविकापराधाद्यदुदके नष्टंतन्नाविकैरेवदातव्यमिति पूर्वोक्तमनूदितंदैविके नास्तिनिग्रहइति विधातुंनौयायिनामेषव्यवहारस्य निर्णयउक्तः । दैवोपजातवातादिना नौभङ्गेन धनादिनाशे नाविकानांन दण्डः ॥ ४०९ ॥

( ४ ) **राघवानन्दः** । दैवाद्द्रव्यनाशे दाशोन दण्डभागित्याह एषइति । नौयायिनां नौकयागंतुशीलानाम् । 'निग्रहोदण्डादिः ॥ ४०९ ॥

( ५ ) **नन्दनः** । एषः पूर्वोक्तश्लोकोक्तः दैविकेक्रीतेऽपराधे निग्रहो नास्ति नप्रत्यर्पणम् ॥ ४०९ ॥

( ६ ) **रामचन्द्रः** । दैविके वात्यादिकृतेनाशे निग्रहः दण्डः नास्ति ॥ ४०९ ॥

**वाणिज्यंकारयेद्वैश्यंकुसीदंकृषिमेव च ॥ पशूनांरक्षणंचैव दास्यंशूद्रंद्विजन्मनाम् ॥ ४१० ॥**

( १ ) **मेधातिथिः** । इहकेचिद्याचक्षते अनिच्छन्तावपि वैश्यशूद्रौ बलादेव तानि कर्माणि कारयितव्यौयतएतयोः

स्वधर्मोयं सत्यपि दृष्टार्थत्वेऽदृष्टार्थता विद्यते नियमविधित्वादेवंच सति ब्राह्मणोपि हठात्प्रतिग्राहयितव्यइत्यापतति पक्षएव दोषत्वेनायमुक्तइतिचेदत्राप्येषएवपक्षस्तदयुक्तं सत्यांधर्मार्थितायांशास्त्रतोनियमः नतुविधिबन्धनैवप्रवृत्तिर्यत्रस्वयंप्रयोजकमस्तितत्रविधिःप्रयोक्तृत्वंनियमांशे तुविधेर्व्यापारःसचेदीदृशोनियमःवैश्यमेव कारयेद्वाणिज्यमन्यंकुर्वाणमसत्यामापादिदण्डयेत् एवंब्राह्मणमेव प्रतिग्रहंतथाच प्रतिग्रहसमर्थोपि संतोषपरश्चस्यादित्यापद्यते यदपि श्रूयतेऽनिच्छतावपीति सोर्थवादः शूद्रमेव दास्यमित्येवंसर्वत्र नियमरूपता द्रष्टव्या ॥ ४१० ॥

( २ ) **सर्वज्ञनारायणः** । कुसीदं वृद्धिजीवनम् । दास्यं मलोच्छिष्टापनयनादिकर्म ॥ ४१० ॥

( ३ ) **कुल्लूकः** । वाणिज्यंकुसीदकृषिपशुरक्षणानि वैश्यंकारयेत् । शूद्रंच राजा द्विजातीनांदास्यंकारयेत् । अकुर्वाणौ वैश्यशूद्रौ राज्ञोदण्ड्यावित्येवमर्थोयमिहोपदेशः ॥ ४१० ॥

( ४ ) **राघवानन्दः** । राजा हि धर्मस्य कारणमिति ज्ञापयंस्तस्य वैश्यादीनां स्वस्वधर्मप्रवर्तकत्वमाह वाणिज्यमिति । कुसीदं ॥ अशीतिभागोवृद्धिःस्यान्मासिमासिसबन्धकइत्याद्युक्तलभ्यम् । शूद्रं दास्यं सेवां कारयेदित्यर्थः ॥ ४१० ॥

( ५ ) **नन्दनः** । द्विजन्मनांत्रैवर्णिकानाम् ॥ ४१० ॥

( ६ ) **रामचन्द्रः** । शूद्रं द्विजानां ऋणार्थं राजा दास्यं कारयेत् ॥ ४१० ॥

**क्षत्रियंचैव वैश्यंच ब्राह्मणोवृत्तिकर्शितौ ॥ बिभृयादानृशंस्येन स्वानि कर्माणि कारयन् ॥ ४११ ॥**

( १ ) **मेधातिथिः** । ब्राह्मणस्य च वृत्त्याकर्शितौ ब्राह्मणोबिभृयाद्भक्तदानादिना क्षत्रियवैश्ययोर्भरणंकुर्यादानृशंस्येनानुकम्पया स्वानि कर्माणि कारयेत् । ब्राह्मणस्य यानि स्वानि समित्कुशोदकुंभाहरणादीनि अथवा क्षत्रियवैश्ययोर्यानि स्वानि क्षत्रियोग्रामरक्षादौ नियोक्तव्योवैश्यः स्वकृषिपशुपाल्यादौ महाधनोयोब्राह्मणोमहापरिषच्चसामर्थ्यात्तस्यैषविधिःस्वानि कर्माणीतिवचनात् दास्यंकारयितव्योगर्हितोच्छिष्टमार्जनादि ॥ ४११ ॥

( २ ) **सर्वज्ञनारायणः** । स्वानिकर्माण्यस्त्रधारणकृष्यादीनि ॥ ४११ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः क्षत्रियवैश्यौ भृत्यभावेन पीडितौ करुणया स्वानि कर्माणि रक्षणकृष्यादीनि कारयन्नाच्छादनादिना पोषयेत् । एवंधनवान्ब्राह्मणस्तावुपगतावबिभ्रन्राज्ञादण्डनीयइति प्रकरणसामर्थ्याद्गम्यते ॥ ४११ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्यानृशंस्यं वदन्विट्क्षत्रिययोस्तत्पोष्यतामाह क्षत्रियमिति । स्वानि विप्रसंबन्धिकृष्यादीनि ॥ ४११ ॥

( ५ ) **नन्दनः** । स्वानि कर्माणि कारयन्नतुदासकर्माणि तानि कारयतोदण्डविधानार्थोयमारम्भः ॥ ४११ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणोवृत्तिकर्शितौ क्षत्रियवैश्यौ आनृशंस्येन बिभृयात् स्वानि अस्त्रधारणकृष्यादीनि कारयेत् ॥ ४११ ॥

**दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान्द्विजान् ॥ अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट् ॥ ४१२ ॥**

( १ ) **मेधातिथिः** । संस्कृताउपनीतायद्यपि द्विजग्रहणादेवैतल्लभ्यते तथापि त्रैवर्णिकजात्युपलक्षणार्थंनविज्ञायीति योब्राह्मणः समानजातीयान्दास्यंपादधावनोच्छिष्टावकरणसंमार्जनादिकंरूपमनिच्छतः प्रभवतोवाचः प्राभवत्यंप्रभुत्वंशक्त्यतिशयोगतोबलादिना यः कारयति सषट्शतानि दण्डयः लोभादेतद्द्वेषादिभिस्त्वधिकोदण्ड्यः । शत्रन्तस्य भवतेर्भावप्रत्य-

ये प्राभवत्यादिति रूपं प्रभुत्वेनेति वचनाद्गुरोर्नदोषः अनिच्छतइति वचनादिच्छतामन्योदण्डः ॥ ४१२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रभुत्वेन शक्तत्वेन । प्राभवत्यादितिक्वचित्पाठस्तत्रापि प्रभुत्वार्थत्वेन तन्नेयम् ॥ ४१२॥

( ३ ) **कुल्लूकः** । प्रभवतोभावः प्राभवत्यं ब्राह्मणः । कृतोपनयनान्द्विजातीननिच्छतः प्रभुत्वेन लोभाद्दास्यकर्मपादधावनादिकारयन्षट्शतानि दण्ड्यः ॥ ४१२ ॥

( ४ ) **राघवानन्दः** । दास्यमनिच्छतोब्राह्मणस्य तत्कारणेदण्डमाह दास्यमिति । लोभात्कर्मदाक्षिण्यादिज्ञानस्यसंस्कृतानिति व्रात्यादीनां दास्यत्वे न दोषः । प्राभवत्यात् भवऐश्वर्यात् प्रभोर्भावः प्राभवत्यं तस्माद्दास्यं कारयन् ब्राह्मणान् ब्राह्मणोपिदण्ड्यइति ॥ ४१२ ॥

( ५ ) **नन्दनः** । एतान्क्षत्रियवैश्यान् । प्राभवत्वात्प्रभावेन समृद्ध्या ॥ ४१२ ॥

**शूद्रन्तु कारयेद्दास्यंक्रीतमक्रीतमेव वा ॥ दास्यायैव हि सृष्टोसौ ब्राह्मणस्य स्वयंभुवा ॥ ४१३ ॥**

( १ ) **मेधातिथिः** । क्रीतमक्रीतंभक्ताद्युपनतंवक्ष्यमाणस्य विधेरनुवादोयं दास्यायैवेत्यर्थवादः ॥ ४१३ ॥

( २ ) **सर्वज्ञनारायणः** । अक्रीतं भक्तादिभृतम् ॥ ४१३ ॥

( ३ ) **कुल्लूकः** । शूद्रंपुनर्भक्तादिभृतमभृतंवा दास्यंकारयेत् यस्मादसौ ब्राह्मणस्य दास्यायैव प्रजापतिना सृष्टः ॥ ॥ ४१३ ॥

( ४ ) **राघवानन्दः** । शूद्रस्तु भृतिदानादाने दासएवेत्याह शूद्रंत्विति । असौ शूद्रस्त्रैवर्णिकस्य दास्याय दासोचितकर्मणे सृष्टोविशेषतोब्राह्मणस्यातस्तंदास्यंकारयेदेव ॥ ४१३ ॥

( ५ ) **नन्दनः** । क्षत्रियंचैव वैश्यंचेत्यादिश्लोकत्रये ब्राह्मणशब्दस्त्रैवर्णिकोपलक्षणार्थः ॥ ४१३ ॥

( ६ ) **रामचन्द्रः** । दास्यायैव दासस्यभावो दास्यम् ॥ ४१३ ॥

**न स्वामिना निसृष्टोऽपि शूद्रोदास्याद्विमुच्यते ॥ निसर्गजंहि तत्तस्य कस्तस्मात्तदपोहति ॥४१४॥**

( १ ) **मेधातिथिः** । यमाश्रितः सप्तभिः दाशयोनिभिस्तेन निसृष्टोपि दास्यायैवेत्यर्थवादः न स्वामिनानिसृष्टोपि किन्तुनिसर्गजंसहजंजातिसहभाविकंतस्माच्छूद्रोदास्यमपोहत्यपनयति यथा शूद्रजातिर्नतस्यापनेतुंशक्यैवंदास्यमपि अर्थवादोयंयतोवक्ष्यति निमित्तविशेषे शूद्रस्य वादास्यान्मोक्षः ॥ ४१४ ॥

( २ ) **सर्वज्ञनारायणः** । निसृष्टोदास्यान्मोचितः । दास्यात् दासकर्मकरणात् ॥ ४१४ ॥

( ३ ) **कुल्लूकः** । यस्मादसौ ध्वजाहृतत्वादिना दासत्वगतः सतेन त्यक्तः स्वदास्याभावेपि शूद्रोब्राह्मणस्य दास्यान्नविमुच्यते तस्माद्दास्यंशूद्रस्य सहजंकः शूद्रत्वजातिमिवदास्यमपनयति अदृष्टार्थमप्यवश्यंशूद्रेण ब्राह्मणादिद्विजशुश्रूषाकर्त्तव्येत्येवपरमेतत् अन्यथा वक्ष्यमाणदास्यकरणपरिगणनमनर्थकंस्यात् ॥ ४१४ ॥

( ४ ) **राघवानन्दः** । ननु स्वामिना त्यक्तस्य शूद्रस्य दास्यमस्ति न वा नास्तिचेत्प्राप्तं स्वातन्त्र्यं तत्राह नेति । निसृष्टोपि त्यक्तोपिदास्याविमुक्तौहेतुः निसर्गजमिति । अग्नेरुष्णप्रकाशवत्स्वाभाविकं तेनानर्घ्यादौ बलादपि शूद्राद्धनं ग्राह्यमितिभावः ॥ ४१४ ॥

( ५ ) **नन्दनः** । तस्य तद्दास्यंनिसर्गजं हि तद्दास्यंतस्मात् ॥ ४१४ ॥

( ६ ) **रामचन्द्रः** । स्वामिना निसृष्टः आज्ञप्तःशूद्रः दास्यात् दासभावात् न विमुच्यते । तत् दास्यं तस्य निसर्गजम् । तस्माद्दास्यभावात्तंशूद्रं कः पुरुषः अपोहति ॥ ४१४ ॥

ध्वजाहृतोभक्तदासोगृहजः क्रीतदत्त्रिमौ ॥ पैत्रिकोदण्डदासश्च सप्तैते दासयोनयः ॥ ४१५ ॥

( १ ) **मेधातिथिः** । ध्वजग्रहणंवाहनोपलक्षणार्थं ध्वजिनीसेनोच्यते ततआहृतः संग्रामे जितः सन्दासीकृतः किंपुनरिदंक्षत्रियस्य वचनंयुद्धेजितः क्षत्रियोदासीभवति नेति ब्रूमः शूद्रस्यैव प्रकृतत्वात् दास्यायैवहिसृष्टोसाविति स्वामिनंजित्वा तदीयोदासआहृतः आहर्तुर्दास्यंप्रतिपद्यते ननुशूद्रस्य विशेषेणैव दास्यमुक्तंनिसर्गजंतत्तस्येति नैव तथासत्यव्यवस्थास्यात्कस्यासौ दासइति न विज्ञायते सर्वे हि त्रैवर्णिकास्तस्य दासाः पूर्वापरनरवतश्चानियमोऽविधित्वात् तस्य तु न ते सर्वएवोत्तरेपरिचरेयुरिति क्षत्रियादीनामपिदास्यमस्ति तदसत् अन्यद्दास्यमन्यापरिचर्या निकृष्टकर्मकारित्वमप्यज्ञातस्य दास्यंसर्वस्याप्रेषितस्याप्रनिबन्धः परिचर्यातु शरीरसंवाहनमर्थदारादिना नारदेनचैतत्प्रपञ्चितं । भक्तलाभार्थंदास्यंप्रतिपन्नोभक्तदासः । गृहे जातोगृहजोदास्यामुत्पन्नोगर्भदासः । क्रीतोमूल्येन स्वामिनःसकाशात् । दत्त्रिमः प्रीत्याऽदृष्टार्थंवा दत्तः । क्रमागतःपैत्रिकः । अथ गृहजस्यास्य च कोविशेषोगृहजस्तदीयायामेव दास्यांजातः इतरस्तुक्रमागतः । दण्डदासोराज्ञेदण्डंदातुमशक्तोदासोक्रियते कर्मणापि समंकुर्यादित्यवर्णस्यापि दास्यमिच्छन्तितदयुक्तं अन्यद्दास्यमन्यच्च तत्कर्मकारित्वंनचायंदण्डोयेनान्तर्भवेत् नच दासयोनिपुरुषधारणमुक्तंकेवलंकर्मणापीति तथा दासकर्माप्यस्ति ननुच धर्मोपनतोपि शूद्रोदासइष्यते तत्र कथंसप्तदासयोनयः नैषदोषः नतस्योत्पत्तिकंदासत्वमिच्छाधीनत्वाद्धर्मार्थिनोनहि तस्य दानाधानक्रियायुज्यन्ते क्रीतगृहजादिदासवत् एवंह्युक्तंयथायथाहि सद्वृत्तमिति तेनैवंब्रुवतैतत्प्रदर्शितंभवति न तस्य नित्यंदास्यंकिंतर्हि फलविशेषार्थिनः ततश्चानिच्छतोदास्यमस्ति अतोयदि शूद्रोविद्यमानधनंस्वातन्त्र्येण जीवेद्ब्राह्मणाद्यनपाश्रितत्वेन जातु दुष्येत्॥४१५॥

( २ ) **सर्वज्ञनारायणः** । ध्वजाहृतोयुद्धजितइतिकश्चित् । ध्वजंलिङ्गं तेनाहृतोवडवाहृतापरनामा दासीसंबन्धाद्दास्यंप्राप्तइतियावदिति तु युक्तम् । भक्तदासोदुर्भिक्ष्यभक्तदानेन दासीकृतः । गृहजोदासाज्जातः । दत्त्रिमोदत्तःकेनचित् । पैतृकः पितृतोदायभागादागतः । दण्डदासोदण्डदेयस्यशोधनार्थंदास्यंयातः । प्रव्रज्यावसितोराज्ञोदासइत्येवंरूपोवा । दण्डार्थंदास्याद्दण्डदासः । दासरूपायोनयोजातयः ॥ ४१५ ॥

( ३ ) **कुल्लूकः** । संग्रामस्वामिसकाशाज्जितोभक्तलोभाभ्युपगतदास्योभक्तदासः तथादासीपुत्रः मूल्येनक्रीतोऽन्येन दत्तः पित्रादिक्रमागतो दण्डादिधनशुद्ध्यर्थस्वीकृतदास्यभाव इत्येतानि सप्तध्वजाहृतत्वादीनि दासत्वकारणानि ॥ ४१५ ॥

( ४ ) **राघवानन्दः** । तत्र कतिविधादासाइत्यपेक्षायामाह ध्वजेति । ध्वजाहृतः संग्रामे स्वामिसकाशाज्जितः । भक्तादिलोभेन दासत्वं गतोभक्तदासः । गृहजोदास्यांजातः । दत्त्रिमः अन्येन दत्तः । दण्डदासः दण्डादिधनशुद्ध्यै दास्यंगतः । दासयोनयः दासोदास्यं तस्य योनिः निमित्तं संग्रामजित्वादियेषु ते तथा ॥ ४१५ ॥

( ५ ) **नन्दनः** । दास्यप्रसङ्गाद्दासभेदानाह ध्वजाहृतइति । ध्वजशब्देनात्र युद्धमुपचर्यते ध्वजाहृतोयुद्धनिर्जितः । भक्तदासोऽन्नदानेन स्वीकृतः । गृहजोदासीपुत्रः । क्रीतदत्त्रिमौ क्रयदानस्वीकृतौ । पैतृकः क्रमागतः दण्डदासः प्रव्रज्यावसितः दासत्वंहि तस्य दण्डः धनाभावे न दण्डद्रव्यार्थंपित्रादिना दास्यप्रवेशितः स्वयंवा प्रविष्टइति केचित् ध्वजाहृतादयोभावप्रधानानिर्देशाः । एते ध्वजाहृतत्वादयोदस्युयोनयःस्वकारणानि ॥ ४१५ ॥

( ६ ) **रामचन्द्रः** । ध्वजाहृतः युद्धजितः १ भक्तदासः २ गृहजः ३ क्रीतः ४ दत्तः ५ पैतृकः ६ पितृपितामहादागतः दण्डदासः ७ सप्तैते दासयोनयः ॥ ४१५ ॥

**भार्या पुत्रश्च दासश्च त्रयएवाधनाः स्मृताः ॥ यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ४१६ ॥**

( १ ) **मेधातिथिः** । एते त्रयोऽर्जितधनाअप्यधनाः स्वामिनोधनंयत्किंचित्ते धनमर्जयन्ति तद्धनंतस्य स्वंयस्य ते सत्वमापन्नाः भार्याधनंभर्तुःपितुः पुत्रस्य स्वामिनोदासस्य ननु च यद्येते निर्धनाःकथमेषांकर्मभिरधिकारस्तत्रेदंनोपपद्यते पुत्रौ चेदाहिताग्नेस्यातांयेभ्यः पितादद्यात्तेभ्यः पुत्रइति दम्पत्योरपि सहजधर्मश्चरितव्यः । धर्मेचार्थेच कामेच नातिचरितव्यात्वयेति । यदि च निर्धनःकोन्यार्थेऽनतिचारः शूद्रस्यापि पाकयज्ञैः स्वयंयजेतेति निर्धनत्वे विरुध्यते स्वच्छन्दशूद्रविषयत्वेनविरोधोनभवेत् अस्ति तावद्दासानांस्वधने स्वाम्यंयदास्वधनमिति व्यपदिश्यते नह्यसति संबन्धेव्यपदेशः अर्जनंच स्वत्वंनापादयतीति विप्रतिषिद्धं तस्माद्विरुद्धमिदंयत्तेसमधिगच्छन्ति नतत्तेषांस्वामिनि यथाकश्चिद्ब्रूयाद्यस्याअहंपुत्रः सा मम जननीति तादृगेतत् असति वा स्त्रीणांस्वाम्ये पत्न्यैवानुगमनंक्रियते पत्नीवैपारिणह्यस्येशइत्यादिश्रुतयोनिरालम्बनाःस्युः अत्रोच्यते पारतन्त्र्यविधानमेतत् असत्यां भर्तुरनुज्ञायां नस्त्रीभिः स्वातन्त्र्येण यत्रक्वचिद्धनंविनियोक्तव्यं । अन्ये तुमन्यन्ते भार्यापुत्रग्रहणदासार्थंतस्य चैतद्वचनमुत्तरार्थं आपदितासांधनग्रहणेन विचिकित्सितव्यं भर्तुरेव हि तत्स्वम् ॥४१६॥

( २ ) **सर्वज्ञनारायणः** । अधिगच्छन्ति परकर्मकरणादिनापि ॥ ४१६ ॥

( ३ ) **कुल्लूकः** । पुत्रभार्यादासास्त्रयोऽमी निर्धनाएव मन्वादिभिः स्मृताः यस्माद्यद्धनंतेऽर्जयन्ति यस्य तेभार्यादयस्तस्य तद्धनंभवति एतच्च भार्यादीनांपारतन्त्र्यप्रदर्शनार्थंपरमध्यग्न्यादिः षड्विधस्य स्त्रीधनस्य वक्ष्यमाणत्वाद्धनसाध्यादृष्टार्थकर्मोपदेशार्थंच भार्यादीनांपत्न्यधिकरणे पत्न्यर्थेऽपि यागाधिकारस्योक्तत्वात् स्त्रीपुंसयोर्मध्यएकधने चानुमतिद्वारेण स्त्रियाअपि कर्तृत्वात् ॥ ४१६ ॥

( ४ ) **राघवानन्दः** । दासप्रसंगेनान्ययोरपि धनास्वामित्वमाह भार्येति । एते त्रयोयत्समधिगच्छन्त्यर्जयन्ति यस्य संबन्धिनस्ते तस्यैव तेषांधनं तेन तस्मिन् जीवति तदनुज्ञांविना धनव्ययेनाधिकारः अनीशास्ते हि जीवतोरित्युक्तेः । पुत्रंप्रतिस्वत्वंच पितुरूर्ध्वं हरेद्धनमित्युक्तेः । स्त्रियंप्रतितु स्वत्वं अध्यग्न्यध्यावाहनिकमित्यादिषट्प्रकारजं स्त्रीपुंसोर्मध्यगंधनमित्यादिसिद्धं न स्त्रीस्वातन्त्र्यमर्हतीत्यनधिकारात् । दासस्यापि जीवेत्कारुककर्मभिरित्यादि वक्ष्यमाणं स्वत्वहेतुर्नकार्योधनसंग्रहइत्यादिनिषेधबलाच्च त्रयाणाम् स्वातन्त्र्यम् अस्वातंत्र्यम् ॥ ४१६ ॥

( ५ ) **नन्दनः** । अत्र भार्यापुत्रयोरधनत्वप्रसङ्गादुपन्यासः भार्यापुत्रदासभर्तृपितृस्वामिषुजीवत्स्वधनाः अजीवत्सुसधनाः स्मृत्यन्तरानुगुण्यात् यतएवंततः ॥ ४१६ ॥

( ६ ) **रामचन्द्रः** । यद्द्रव्यंते भार्यादयः समधिगच्छन्ति प्राप्नुवन्ति ॥ ४१६ ॥

**विस्रब्धंब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ॥ नहि तस्यास्ति किंचित्स्वंभर्तृहार्यधनोहि सः ॥ ४१७ ॥**

( १ ) **मेधातिथिः** । तथाचकश्चिदाहधर्मोपगतशूद्रविषयमिदंतदुक्तंविशेषप्रमाणाभावात्तस्मात्सर्वस्य दासः शूद्रस्तस्यैवमतिग्राह्यत्वमुच्यते विश्रब्धंनिःशङ्कंशूद्रधनंकथंप्रतिगृह्णीयात्प्रतिषिद्धंहितदित्येषाशङ्कानकर्तव्या यतोन तस्य किंचिदर्थोयस्य निचयः स्यादित्युक्तंभवति स्वामी न ह्रियते धनस्य एतदेवार्जने तस्य प्रयोजनंस्वामीहीयतेऽतोविश्रब्धंद्रव्योपादानद्रव्यग्रहणंकुर्यात्तेनोपनीयमानपि स्वगृहस्थमिवविनियुञ्जीत सति प्रयोजनएतद्युक्तंभवति अविद्यमानधनस्यदासाच्छूद्रात्प्रतिगृह्णतोनदोषः ॥ ४१७ ॥

---

( १ ) योक्तव्यं = योक्तव्यं एवंपुत्रदास्यो रपिद्रष्टव्यम् ( आआ )

( २ ) **सर्वज्ञनारायणः** । अतःशूद्राद्दासात् विश्रब्धं निःशङ्कं द्रव्यादानमाचरेत् । नतु शूद्रधनादिशङ्कया तद्धनत्यागः ॥ ४१७ ॥

( ३ ) **कुल्लूकः** । निर्विचिकित्समेव प्रकृतादासशूद्राद्धनग्रहणंकुर्यात् ब्राह्मणोयतस्तस्य किंचिदपि स्वंनास्ति यस्माद्भर्तृग्राह्यधनोऽसौ एवंचापदि बलादपि दासाद्ब्राह्मणोधनंगृह्णन्न राज्ञादण्डनीयइत्येवमर्थमेतदुच्यते ॥ ४१७ ॥

( ४ ) **राघवानन्दः** । अत एवाह विस्रब्धमिति । विस्रब्धं कृतविश्वासं यथा स्यात्तथा शूद्रात्सप्रविधदासात् द्रव्योपादानं द्रव्यादानं तमाचरेत् तत्र हेतुः भर्तृहार्यधनोहिसइति । भर्त्रर्थमेवाहार्यं जीवेत्कारुककर्मभिरित्यादिनोक्तं धनं यस्य सइत्यर्थः ॥ ४१७ ॥

( ५ ) **नन्दनः** । विस्रब्धः शूद्रप्रतिग्रहः भयरहितब्राह्मणस्त्रैवर्णिकः ॥ ४१७ ॥

( ६ ) **रामचन्द्रः** । विस्रब्धं निःशङ्कं तस्य शूद्रस्य किंचित्स्वं द्रव्यं नास्ति ॥ ४१७ ॥

**वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ॥ तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदंजगत् ॥ ४१८ ॥**

( १ ) **मेधातिथिः** । कर्मव्यतिक्रामन्तः क्षोभयेयुराकुलीकुर्युर्जगदतस्ते प्रयत्नेन स्वकर्मभ्यश्चावयेदनल्पएवातिक्रमे भूयसा दण्डेन योजनीया वैश्याअपि बन्धनंनास्त्यपि धनशक्यः स्वधर्मः ॥ ४१८ ॥

( २ ) **सर्वज्ञनारायणः** । कारयेद्राजा ॥ ४१८ ॥

( ३ ) **कुल्लूकः** । वैश्यंकृष्यादीनि शूद्रंच द्विजातिशुश्रूषादीनि कर्माणि यत्नतोराजा कारयेद्यस्मात्तौ स्वकर्मभ्यश्च्युतावशास्त्रीयोपार्जितधनग्रहणमदादिना जगदाकुलीकुर्याताम् ॥ ४१८ ॥

( ४ ) **राघवानन्दः** । विट्शूद्रौ स्वानिकर्माणि स्वामिनोः विप्रराजन्ययोः कर्माणि कृषिशुश्रूषादीनि कारयेद्राजा ब्राह्मणोवा स्वानीति क्वचित्पाठः । अन्यथादोषमाह तौहीति । स्वकर्मभ्यश्च्युतौ जगदिदं क्षोभयेताम् । वैश्यशूद्रौ धनवत्तया विप्रानधीनौ प्रचुरधनरुचितया गोरक्षाकृष्याद्यकरणाज्जगन्नाशयेद्वैश्यः । शूद्रोपि शुश्रूषाद्यकरणेन विप्रकृतधर्मादावनुकूलत्वाज्जगन्नाशहेतुरिति ॥ ४१८ ॥

( ५ ) **नन्दनः** । कारयेद्राजा ॥ ४१८ ॥

**अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च ॥ आयव्ययौ च नियतावाकरान्कोशमेव च ॥ ४१९॥**

( १ ) **मेधातिथिः** । राजधर्माणामनुसन्धानार्थंकर्मान्ताः कृषिशुल्कस्थानादपवाहनम् हस्त्याद्यायव्ययमिदमस्यप्रविष्टमिदंनिर्यातमित्येवसततंगवेषणीयं आकराधातवःसुवर्णाद्युत्पादेभवन्ति भूमयः कोशोद्रव्यनिश्चलस्थानम् ॥ ४१९ ॥

( २ ) **सर्वज्ञनारायणः** । कर्मान्तान् शस्त्रपातादिकर्मशालाः । आकरान् सुवर्णाद्युत्पत्तिस्थानानि ॥ ४१९ ॥

( ३ ) **कुल्लूकः** । प्रत्यहंतदधिकृतद्वारेण प्रारब्धदृष्टादृष्टार्थकर्मणांनिष्पत्तिंनृपतिर्निरूपयेत्तथा हस्त्यश्वादीनि किमद्यप्रविष्टंकिंनिःसृतमिति सुवर्णरत्नोत्पत्तिस्थानानि भाण्डागारंचावेक्षेत व्यवहारदर्शनासक्तोऽपि राजा धर्मान्नपरित्यजेदिति दर्शयितुमुक्तस्यापि पुनर्वचनम् ॥ ४१९ ॥

( ४ ) **राघवानन्दः** । राजधर्मान्प्रवक्ष्यामीत्युपक्रम्याध्यायद्वयसमाप्यं सार्थवादमुपसंहरति अहन्यहनीतिद्वाभ्याम् ।

कर्मान्तं प्रारब्धकर्मसमाप्तिं वाहनानि हस्त्यश्वादीनि आकरान् सुवर्णाद्युत्पत्तिस्थानानि कोशं धनागारं अवेक्षेत रक्षणार्थमीक्षेतेत्यर्थः ॥ ४१९ ॥

( ५ ) **नन्दनः**। कर्मान्तान्कर्मनिष्पत्तिं नियतौ राजशास्त्रसिद्धौ ॥ ४१९ ॥

( ६ ) **रामचन्द्रः**। अहन्यहनि राजा आयव्ययौ नियतौ आकरान् उत्पत्तिस्थानानि च पुनः कोशमेव वीक्षित पश्येत् ॥४१९॥ इति श्रीरामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायां न्यायप्रकरणे व्यवहारोनामाष्टमोध्यायः ॥८॥छ॥

**एवंसर्वानिमान्राजा व्यवहारान्समापयन् ॥ व्यपोह्य किल्बिषंसर्वंप्राप्नोति परमांगतिम् ॥ ४२० ॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां [ राजधर्मे व्यवहारनिर्णये सामान्यव्यवहारो नाम ]‡**

**अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥**

( १ ) **मेधातिथिः** । उक्तेनप्रकारेणव्यवहारानृणादीन्समापयन्निर्णयावसानंकुर्वन्यत्किञ्चित्तत्सर्वमविज्ञातदोषंतत्सर्वं व्यपोह्यापनुद्यपापं परमां गति मभिप्रेतां स्वर्गापवर्गभूमिंप्राप्नोति लभते ॥ ४२० ॥ इतिभट्टमेधातिथिस्वामिकृतेमनुभाष्येऽष्टमोध्यायः ॥ ॥ छ ॥ ॥ छ ॥

( २ ) **सर्वज्ञनारायणः**। बह्वर्थविषयत्वेनाध्यायस्य दीर्घत्वादतःपरमध्यायानुसंतानेऽतिदीर्घतास्यादित्यपर्यवसितएव प्रतिज्ञानार्थेऽध्यायमुपसंहरति एवमिति । समापयन् संस्थांनयन् व्यपोह्य निरुह्य । परमांगतिं ब्रह्मप्राप्तिलक्षणामिति॥४२०॥ श्रीनारायणसर्वज्ञकृता वृत्तिर्मनुस्मृतेः । कुनिबन्धकृतव्याख्यामियं दूरे निरस्यते ॥ इति मन्वर्थनिबन्धे सर्वज्ञश्रीनारायणकृतेऽष्टमोध्यायः ॥ ८ ॥ समाप्तश्चायंव्यवहारक्षमोऽध्यायः ॥ छ ॥ ॥ छ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेणैतान्सर्वानृणादानादीन्व्यवहारान् तत्त्वतोनिर्णयेनान्तंनयन्पापंसर्वमपहाय स्वर्गादिप्राप्तिरूपामुत्कृष्टांगतिंलभते ॥ ४२० ॥ इनि श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यामष्टमोऽध्यायः ॥ ८ ॥ छ ॥

( ४ ) **राघवानन्दः** । किंच । एव मुक्तानृणादिकानष्टादश समापयन् । समाप्तिपर्यन्तमनुतिष्ठन् । अतएवावश्यकस्य करणात् । किल्बिषमननुष्ठानजं सर्वपापं व्यपोह्य त्यक्त्वा परमांगतिमवाप्नोतीत्यन्वयः ॥ ४२० ॥
इति श्रीराघवानन्दसरस्वतीविरचितायां मन्वर्थचन्द्रिकायामष्टमोध्यायः ॥ ८ ॥ छ ॥

( ५ ) **नन्दनः** । इमानुक्तान्व्यवहारानृणादानादीन्समापयन्यथाशास्त्रंनयन्निर्णयन्ब्रह्मलोके हरिश्चन्द्रानिवासस्थाने ॥ ४२० ॥ इतिमानवव्याख्याने नन्दनकृतेऽष्टमोध्यायः ॥ ॥ छ ॥ ॥ छ ॥

---

**[ अथशक्तिविहीनः स्यादृणीकालविपर्ययात् ॥ प्रेक्ष्यश्चतमृणंदाप्यःकालेदेशेयथोदयं ॥१॥ ]+**

[ **मेधातिथिः**—यद्यधमर्णोदैवदोषान्निर्धनीभूतस्तदा न दुर्गाधानादिना राज्ञोपपीडयितव्यः किंतर्हि कर्तव्यंयदास्य कथंचिद्धनंभवेत्तदा यथासंभवंशनैर्दापयितव्यः । प्रेक्ष्यशक्तिधनवृत्तांयुज्यतइत्यर्थः । दाप्यः उचितस्य वक्ष्यति कर्मणापि समः कुर्यादिति । तस्मात्कारणपरिवृत्तौयदेवोक्तमस्माभिस्तदेवप्रयोजनम् ॥ १ ॥ ]

---

‡ ( क )

( + ) अयंक्षेपकः १५३ श्लोकनन्तरं पठितव्यः ।

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ नवमोऽध्यायः प्रारभ्यते ॥

**पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ॥ संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥ १ ॥**

( १ ) **मेधातिथिः** । स्त्रीसंग्रहणानन्तरंविवादपदनिर्देशः स्त्रीपुंधर्मौविभागश्चेति तदिदानीमुच्यते अत्यन्त [ २० अक्षराणि ] द्युपमृष्टेन भर्त्रा कथंचिदपि बाध्यमानया तेन सह राजनि विवदितव्यमिति [ २० अ० ] विधएवन्यायानुवर्तिनि नद्वेषमत्सरादिमतिभार्यायां तथाच विशील [ २१ अ० ] ति तथाविधस्य पत्युरुपचर्योक्ता नभार्याप्रतिप्रभुत्वं उपचारश्च भृत्यवच्छुश्रूषापादसंवाहनादि [ १० अ० ] स्त्रीपुरुषशब्दौ च यद्यपि लिङ्गविशेषावच्छिन्नमनुष्यजातिवचनौ तथापीह संबन्धिनिजायापत्या [ ९ अ० ] अस्वतन्त्राः स्त्रियः कार्याः पुरुषैःस्वैर्दिवानिशमिति स्वग्रहणेन संबन्धितांलक्षयति वर्तमानप्रतिज्ञावचन [ १ अ० ] प्रयोजन [ ६ अ० ] भर्तुः स्त्रियाश्च जायायाः संयोगएकत्रसंबन्धिनिधाने तथा विप्रयोगे प्रवासप्रायेण [ ५ अ० ] धर्मे या वृत्तिः प्रसाधनंशरीररक्षा हि [ २७ अ० ] तान्वक्षामि शाश्वतग्रहणश्रुतिः धर्म्ये वर्त्मनि तिष्ठतोरनुवादोयंन्याय्यः धर्मशास्त्राचारनिरूढोमार्गः ॥ १ ॥

( २ ) **सर्वज्ञनारायणः** । क्रमप्राप्तंस्त्रीपुंधर्ममवतारयति पुरुषस्येति । संयोगे गार्हस्थ्यकाले । विप्रयोगे पतिप्रवासवैधव्यादौ ॥ १ ॥

( ३ ) **कुल्लूकः** । पुरुषस्य पत्न्याश्च धर्माय हि तेऽन्योन्याऽव्यभिचारिलक्षणे वर्त्मनि वर्तमानयोःसंयुक्तवियुक्तयोश्च धर्मान्पारम्पर्यागतत्वेन नित्यान्वक्ष्यामि दंपत्योःपरस्परधर्मव्यतिक्रमे सत्यन्यतरज्ञाने दण्डेनापि स्वधर्मव्यवस्थानंराज्ञा कर्तव्यमिति व्यवहारमध्येऽस्योपदेशः ॥ १ ॥

( ४ ) **राघवानन्दः** । स्त्रीपुंसोर्धर्मंप्रतिजानीते पुरुषस्येति ॥ स्त्रीपुंधर्मौविभागश्च द्यूतमाह्वयमेवचइति व्यवहारमध्यपातित्वाद्राजकृत्येन संगतिरस्याध्यायस्य । धर्म्ये धर्मजनके धर्मादनपेतेवा वर्त्मनि धर्मोपाये । संयोगे स्वदेशस्थयोः । विप्रयोगे देशान्तरस्थयोः मृतौ वा । शाश्वतान् । वेदोक्तान् ॥ १ ॥

( ५ ) **नन्दनः** । अथस्त्रीपुंसधर्मप्रस्तौति पुरुषस्येति । धर्मेऽन्योन्यव्यभिचाररहिते ॥ १ ॥

( ६ ) **रामचन्द्रः** । धर्म्ये वर्त्मनि तिष्ठतोः दम्पत्योः ॥ १ ॥

**अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ॥ विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनोवशे ॥ २ ॥**

( १ ) **मेधातिथिः** । स्वेच्छया स्त्रीणांधर्मार्थकामेषु व्यवहर्तुंनदेयं यत्किंचनधनंधर्मादौ विनियुज्यते तत्र यथावयः स्वपुरुषाः पत्यादयोऽनुज्ञापनीयाः स्वपुरुषारक्षाधिगताः पितारक्षतीत्यादिनिर्दिष्टाः विषयेषु हिगीतादिष्वन्यतः प्रसङ्गंकुर्व-

न्त्यआत्मनोवशे स्थाप्यास्ततोनिवारणीयाः यद्यप्यस्वतन्त्राइत्यनेनैव सर्वक्रियाविषयास्वातन्त्र्यनिवृत्तिरुपदिष्टा भवति त-थापि पुनर्विषयव्यावृत्तिरुपदिष्टा भवति वचनंयत्नतः परिहारार्थमाविज्ञायी यत्नेभ्यएव परपुरुषसंपर्कादिभ्योनिवारणीयाः। गृहावस्थितास्तु मद्यपानादिसक्तानदुष्यन्ति चशब्देन तावदयंधर्मः पुरुषाणामुक्तः स्वातन्त्र्यंस्त्रीणांतावन्नदेयमर्थाचु ताभि-रपि स्वतन्त्राभिर्न भवितव्यमित्युक्तंभवति। एवंच पुरुषस्य स्त्रियाश्चैवेति च शब्दइतरेतरविषययोर्ये स्त्रीपुंसयोर्धर्मास्तएवो-च्यन्ते नतु यागादयइति समन्वयोभवति ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । पुरुषैः पतिभिः । विषयेषु गीतादिषु । आत्मनोवशे स्थाप्याः यथा न सज्जन्ते ॥ २ ॥

( ३ ) **कुल्लूकः** । स्वीयैर्भर्त्रादिभिःसदास्त्रियः स्वाधीनाःकार्याअनिषिद्धेष्वपि रूपरसादिविषयेषु प्रसक्ताप्यात्मवशाः कार्याः ॥ २ ॥

( ४ ) **राघवानन्दः** । तत्रादौ स्त्रियाः स्वातन्त्र्यंनिषेधति अस्वतन्त्राइतिपंचभिः । पितृभ्रातृपुत्रादिभिःविषयेषु पुरुषा-न्तर स्पर्शसंभोगशब्दादिषु रसायनादिषु च संस्थयावशेकृत्वा दिवागृहकृत्येषु रात्रौतु स्वनिकटे शयनादौ ॥ २ ॥

( ६ ) **रामचन्द्रः** । स्वैः पुरुषैः दिवानिशं अस्वतन्त्राः स्त्रियः कार्याः । पुनः विषयेषु नृत्यगीतादिषु सज्जन्त्यः आस-क्तिंकुर्वन्त्यः स्त्रियः आत्मनोवशे च हि संस्थाप्याः ॥ २ ॥

**पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥ रक्षन्तिस्थविरे पुत्रान स्त्रीस्वातन्त्र्यमर्हति ॥ ३ ॥**

( १ ) **मेधातिथिः** । रक्षानामानर्थप्रतीघातः अनर्थस्त्वनाचारवृत्तातिक्रमेणाप्रवृत्तिपरेणचान्यायतोधनहरणादिनाप-रिभवस्तस्य प्रतीघातोनिवारणंतत्पित्रादिभिः कर्तव्यं । रक्षतीतिभवन्तिर्लिङर्थे छान्दसत्वात्ततोरक्षेदिति विधेयप्रत्ययः । व-योविभागश्रवणंवाधिकतरदोषार्थंसर्वएव तुसर्वदा रक्षार्थमधिक्रियन्ते कौमारग्रहणंदानात्पूर्वकालोपलक्षणार्थं एवंयौवनंजी-वद्भर्तृकायाः प्रदर्शनंअतश्चनित्यानुवादएवायं यदा यदा यदधीना तदा तदा तेनावश्यंरक्षितव्या । तथाच जीवत्यपि भर्तरि पितुः पुत्रस्यचाधिकारस्तथादर्शितंमानवे सर्वएते सर्वदा तत्संरक्षणमकुर्वतः कथ्यमानन्तुग्रन्थगौरवंकरोति ननुच बालया वा युवत्या वेत्यनेनोक्तमेवैतत् नैवमन्यदेवस्वातन्त्र्यमन्या च रक्षा तत्र च स्वातन्त्र्यमुपदिष्टमिह तु रक्षोच्यते तेन सर्वक्रि-याविषयं अन्यतन्त्रायाअपि शक्योनेनार्थः प्रतिहन्तुं ननु चेहापि पठ्यते ॥ नस्त्रीस्वातन्त्र्यमर्हतीत्युच्यते । नानेन सर्वक्रि-याविषयमस्वातन्त्र्यंविधीयते। किंतर्हि नास्वतन्त्रान्यमनस्कता स्वात्मसंरक्षणाय प्रभवति शक्तिविकलत्वात्स्वतः पञ्चमे तु वचनमस्वातन्त्र्यार्थमर्थान्तरस्य तत्रोक्तत्वात् ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । पितारक्षति कन्यादूषणादेः ॥ ३ ॥

( ३ ) **कुल्लूकः** । पिता विवाहात्पूर्वंस्त्रियंरक्षेत्पश्चाद्भर्ता तदभावे पुत्राः तस्मान्न स्त्री कस्यां चिदप्यवस्थायां स्वातन्त्र्यं-भजेत् । भर्ता रक्षति यौवनइत्यादिप्रायिकमभर्तृपुत्रायाः सन्निहितायाः पित्रादिभिरपि रक्षणात् ॥ ३ ॥

( ४ ) **राघवानन्दः** । रक्षितृव्यवस्थितिमाह पितेति । स्वातन्त्र्यं रक्षितृरहितत्वम् ॥ ३ ॥

( ५ ) **नन्दनः** । रक्षति रक्षेत् स्थाविरेवार्द्धके ॥ ३ ॥

**काले दाता पिता वाच्योवाच्यश्चानुपयन्पतिः ॥ मृते भर्तरि पुत्रस्तु वाच्योमातुररक्षिता ॥ ४ ॥**

---

( ४ ) वाच्यः=व्याप्यः ( क, च )

( १ ) **मेधातिथिः** । दानकाले प्रामे यदि पिता न ददाति [ ८ अ० ] यः कः पुनः कन्यायादानकालः अष्टमाद्वर्षात्प्रभृतिप्रागृतोरिति स्मर्यते इहापि लिङ्गमस्ति [ १८ अ० ] तिः । अनुपगच्छन्नरमयन्भार्याभिर्निन्नः उपगमने कालश्चरितुंसद्व्रतस्यपर्ववर्ज्यमित्युक्तः ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । अदाता योग्याय । अनुपनयन् वाग्दत्तामपि परिणयनेनासंस्तुवन् । वाच्योगर्ह्या । उच्यइतिपाठे देहीत्यादि राज्ञा नियोज्यः ॥ ४ ॥

( ३ ) **कुल्लूकः** । प्रदानकालेपिता तामददन्गर्ह्योभवति प्रदानंप्रागृतोरिति गोतमवचनात् । ऋतोः प्राक्प्रदानकालः पतिश्च ऋतुकाले पत्नीमगच्छन्गर्हणीयोभवति पत्यौ मृते मातरमरक्षन्पुत्रोनिन्द्यः स्यात् ॥ ४ ॥

( ४ ) **राघवानन्दः** । रक्षितॄणां तदकरणे गर्ह्यतामाह कालइति । अदातेतिच्छेदः । वाच्यः गर्हणीयः । अनुपयन्नृतावृतावगच्छन् । अरक्षिता रक्षणंप्रत्यकर्ता ॥ ४ ॥

( ५ ) **नन्दनः** । अदातेतिपदच्छेदः याप्यः कुत्सितोदण्ड्यइति यावत् । अनुपयन्नृतुकालेऽनुपगच्छन् ॥ ४ ॥

( ६ ) **रामचन्द्रः** । काले दशवर्षाभ्यन्तरेऽदाता पिता वाच्यः निन्द्यः । च पुनः पतिः अनुपयन् स्त्रियम् अगच्छन् वाच्योनिन्द्यः । मृते भर्तरि मातुररक्षिता पुत्रोवाच्योनिन्द्यः ॥ ४ ॥

**सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियारक्ष्याविशेषतः ॥ द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ५ ॥**

**[भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ॥ प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः॥ १॥]***

( १ ) **मेधातिथिः** । प्रसङ्गःकुसंपर्कोयया कयाचिदविज्ञातशीलया [ ८ अ० ] ण बालेन वा गृहद्वारावस्थानादिनोज्वलवेषपुरुषदर्शनशीलयेत्येवमादयउच्यन्तेऽर्थाच्चित्तचलने [ ९ अ० ] क्ष्यत्वं चैषांनैते किलसाक्षाद्दोषरूपाः नहि साक्षात्स्त्रीसंपर्कः स्त्रियोदोषरूपाः [ १२ अ० ] सूक्ष्मादित्युच्यते ततोरक्ष्याः निवारणीयाः विशेषतःप्रयत्नेन निवारणे दारदः [ १७ अ० ] तश्च सर्वैस्तत्कुलीनैर्भ्रातृपितृव्यदेवराद्यैरक्षितव्याइति सिद्धंभवति न तत्रा [ १४ अ० ] ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसंगेभ्यः परपुरुषभाषणादिभ्यः ॥ ५ ॥

( ३ ) **कुल्लूकः** । स्वल्पेभ्योऽपि दुःसङ्गेभ्योदौःशील्यसंपादकेभ्योविशेषेण स्त्रियोरक्षणीयाः किंपुनर्महद्भ्यः यस्मादुपेक्षितरक्षणाद्द्वयोः पितृभर्तृगणयोः संतापंदापयेयुः ॥ ५ ॥

( ४ ) **राघवानन्दः** । इतोपि स्त्रियोरक्ष्याइत्याह सूक्ष्मेभ्यइति । प्रसंगेभ्यः दौःशील्यसंपादकेभ्योनृत्तगीतपरगृहयानादिभ्यः । कुलयोः पतिपितृसंबन्धिनोः । शोकं जारादिदोषेण ॥ ५ ॥

( ५ ) **नन्दनः** । सूक्ष्मेभ्योपिशुश्रूषादिभ्योपि ॥ ५ ॥

**इमंहि सर्ववर्णानांपश्यन्तोधर्ममुत्तमम् ॥ यतन्ते रक्षितुंभार्यांभर्तारोदुर्बलाअपि ॥ ६ ॥**

( १ ) **मेधातिथिः** । चातुर्वर्ण्यस्य एषउत्तमो [ १६ अ० ] पश्यन्तोजानानाः दुर्बलाअपि भर्तारोभार्यारक्षितुंयतेरन्प्रयत्नंकुर्युः लिङ्र्थे भवन्तीयत [ १५ अ० ] वस्त्वनिजगुप्तोतमतरेयत्तत्रमणापरिवृत्तंबहिराविरोद्धिजातंवधूवपुरहोरतयेतिरागात् । अ [ १० अ० ] क्षाभायकियंचिन्नियमेनवतिद्युमानाराजकुलममाश्रयादिनारक्षितव्या ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । इमं भार्यारक्षणरूपम् ॥ ६ ॥

---

* ( ख, ज, झ, ण, त, थ )

( ३ ) **कुल्लूकः** । सर्वेषांब्राह्मणादिवर्णानां भार्यारक्षणलक्षणंधर्मंवक्ष्यमाणश्लोकरीत्या सर्वधर्मेभ्यउत्कृष्टंजानन्तोऽन्धपङ्ग्वादयोपि भार्यांरक्षितुंयतेरन् ॥ ६ ॥

( ४ ) **राघवानन्दः** । अन्धपङ्गुक्लीबदरिद्रादिभिर्दुर्बलैरपि रक्षणीयास्ताइत्याह इममिति । पश्यन्तोजानन्तः । धर्मं उत्तमं तत्प्रसूतत्वाद्ब्राह्मण्याद्युत्तमत्रयस्य ॥ ६ ॥

( ५ ) **नन्दनः** । इमंधर्मंभार्यापरिरक्षणलक्षणम् ॥ ६ ॥

( ६ ) **रामचन्द्रः** । इमं भार्यारक्षणरूपंधर्मम् ॥ ६ ॥

## स्वांप्रसूतिंचरित्रंच कुलमात्मानमेव च ॥ स्वंच धर्मंप्रयत्नेन जायांरक्षन्हि रक्षति ॥ ७ ॥

( १ ) **मेधातिथिः** । नकेवलंशास्त्रोपदेशादेवस्त्रीरक्षा कर्तव्या यावदिमानि बहूनि प्रयोजनानि प्रसूतिरपत्यंपुत्रदुहितृलक्षणं संकरीन भवतीत्यर्थः। चरित्रंशिष्टसमाचारः । कुलंपूर्वोक्तकस्यापि सत्कुलस्यभ्रष्टशीलायांभार्यायां सर्वंकुलमुपतिष्ठतीति नसाध्व्यंस्तीयमेतेषामिति अथवा पितृपितामहादीनांसंततिशुद्ध्यभावादौर्ध्वदैहिकस्यानिवृत्तेरक्षास्यात् आत्मानं प्रसिद्धात्मनोपपतिनावश्यंहन्यते भार्ययैववाविषादिनास्वंच धर्मंव्यभिचारिण्या धर्मानधिकारात् अतोजायांरक्षिता सर्वमेतद्भवति ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसूतिं पुत्रादिं । चरित्रमाचारं । कुलं कुलस्थितिं । स्वधर्मं गार्हस्थ्यनियतम् ॥ ७ ॥

( ३ ) **कुल्लूकः** । यस्माद्भार्यारक्षतोरक्षणमसंकीर्णविशुद्धापत्योत्पादानेन स्वसंततिं तथा शिष्टसमाचारंपितृपितामहाद्यन्वयमात्मानंविशुद्धसंताननिमित्तौर्ध्वदेहिकलाभेन स्वधर्मंच विशुद्धभार्यस्याधानादावप्यधिकाराद्रक्षति तस्मात्स्त्रियोरक्षितुंयतेतेति पूर्वस्य विशेषः ॥ ७ ॥

( ४ ) **राघवानन्दः** । तद्रक्षणे अन्येपि सुरक्षिताइत्याह स्वामिति । प्रसूतिं सन्ततिं असंकीर्णविशुद्धापत्योत्पादनेन चरित्रं कुलपरंपरागतमाचारं न्यायोपात्तवित्तेनयच्चरितंश्राद्धातिथ्यादितत्स्त्रीतएवकुलं इति आत्मानं विशुद्धसंतानोत्पत्तौ नरकादेः स्वधर्मं अग्निहोत्रादिधर्मंच रक्षतीत्यन्वयः ॥ ७ ॥

( ५ ) **नन्दनः** । प्रसूतिः सन्तानपरिवारादिः चरित्रमाचारः ॥ ७ ॥

( ६ ) **रामचन्द्रः** । चरित्रमाचारं । स्वंधर्मं आश्रमधर्मम् ॥ ७ ॥

## पतिर्भार्यांसंप्रविश्य गर्भोभूत्वेह जायते ॥ जायायास्तद्धिजायात्वंयदस्यां जायते पुनः ॥८॥

( १ ) **मेधातिथिः** । अर्थवादोयं नच प्रत्या [ ५ अ० ] वेशदर्शनं अतः शरीरभारभूतशुक्रद्वारेण गुणवादतः प्रवेशोयमुच्यते । आत्मावै पुत्रनामासीति एतदेवजायाशब्द [ २ अ० ] यवचनत्वेप्रवृत्तिनिमित्तंयतोस्यां पतिर्जायते अपत्यजन्मनिमित्ते जायाशब्दे जारस्यापि जायोच्यते ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । पतिर्जायते शुक्रजननात् ॥ ८ ॥

( ३ ) **कुल्लूकः** । पतिः शुक्ररूपेण भार्यासंप्रविश्य गर्भमापाद्य तस्यां भार्यायांपुत्ररूपेण जायते। तथाचश्रुतिः आत्मा वै पुत्रनामासीति । जायायास्तदेवजायात्वंयतोऽस्यांपतिःपुनर्जायते तथा च बह्वृचब्राह्मणं पतिर्जायांप्रविशति गर्भोभूत्वेह मातरं तस्यां पुनर्नवोभूत्वा दशमे मासि जायते तज्जाया जाया भवति यदस्यां जायते पुनः । ततश्चासौरक्षणीयेत्येतदर्थंनामनिर्वचनम् ॥ ८ ॥

( ४ ) **राघवानन्दः**। जायापदं व्युत्पादयंस्तद्रक्षणेऽतीव यत्नमाविष्करोति पतिरितिद्वाभ्याम्। गर्भोभूत्वा तस्या-आहुतेर्गर्भःसंभवति। तथा॥ पतिर्जायांप्रविशति गर्भोभूत्वेह मातरम्। तस्यां पुनर्नवोभूत्वा दशमे मासि जायते। तज्जा-याजायाभवतियदस्यांजायतेपुनरितिश्रुतेः॥ पतिःपतीरेतोवच्छिन्नंलिङ्गशरीरपरिवेष्टितं चैतन्यं भूतपञ्चकसहितं स्त्रीरजो-युक्तं गर्भतामापद्यापत्यतया जायतइति। अत्र श्रुत्यन्तरम्॥ सोऽकामयत जाया मे स्यादथ प्रजायेयेति॥ तथा॥ अङ्गा-दङ्गात्संभवसीति॥ तथा॥ आत्मा वै जायते पुत्रइत्यत्रचात्मपदंदेहारम्भकभूतसाररेतःपरं लिङ्गदेहात्मनोरनादित्वेन ज-न्मासंभवात्॥ ८॥

( ६ ) **रामचन्द्रः**। पतिः यस्मात् अस्यांजायायांपुनः जायते॥ ८॥

## यादृशंभजते हि स्त्री सुतंसूते तथाविधम्॥ तस्मात्प्रजाविशुद्ध्यर्थंस्त्रियंरक्षेत्प्रयत्नतः॥ ९॥

( १ ) **मेधातिथिः**। स्वांप्रसूतिमिति यदुक्तंतद्दर्शयति नचैवंमन्तव्यं यादृशंद्वितीयंपुरुषंसेवेत सुतंसूते पुत्रंजनयति तथाविधजातीयं नापि गुणसादृश्यमभिप्रेतंयतः शूद्रादिजातस्य चण्डालादिजातिंच [ २ अ० ] मानजातीयजातस्या-पिनैवतज्जातीयत्वं पत्नीष्वक्षतयोनिष्वितिवचनात् गुणसादृश्येपि विशीलदरिद्रपतिकायाउत्क [ २ अ० ] नमनुज्ञातंस्यात् यदात्वयमर्थवादस्तदा यादृशंतथाविधमित्यकुलानुरूपमिति नीयते॥ ९॥

( २ ) **सर्वज्ञनारायणः**। भजते संप्रयोगकाले न मनसा ध्यायति रक्षेन्मनोव्यभिचारात्॥ ९॥

( ३ ) **कुल्लूकः**। यस्माद्यादृशंपुरुषंशास्त्रेण विहितंप्रतिषिद्धंवा तादृशशास्त्रोक्तपुरुषसेवनेनोत्कृष्टंनिषिद्धपुरुषसेवनेन च निकृष्टंपुत्रंजनयति तस्मादपत्यविशुद्ध्यर्थंपत्नींयत्नतोरक्षेत्॥ ९॥

( ४ ) **राघवानन्दः**। यादृशं शास्त्रविहितं निषिद्धंवा पतिं भजते तथाविधं तज्जातिमेव। नहि मनुष्याद्गौः शूद्रा-द्विप्रः। अतः प्रयत्नतः स्त्रियं रक्षेदित्यन्वयः॥ ९॥

( ६ ) **रामचन्द्रः**। यादृशं पुरुषं स्त्री ऋतुस्नानकालेभजते मनसापिसंगच्छेत तादृशंसुतं सूते जनयति सूप्रसवणे॥९॥

## न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्॥ एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्॥ १०॥

( १ ) **मेधातिथिः**। वक्ष्यमाणोपायप्रशंसार्थः श्लोकः प्रसह्य बलेनावष्टभ्य शुद्धान्नावरोधादिना परपुरुषाधिध्या-नादिना नशक्यारक्षितुं किंत्वेतैरुपाययोगैः शक्याः योगाः प्रयोगाउपायैः प्रयुज्यमानैरित्यर्थः॥ १०॥

( २ ) **सर्वज्ञनारायणः**। प्रसह्य बलात्। एतैर्वक्ष्यमाणैः॥ १०॥

( ३ ) **कुल्लूकः**। कथंरक्षणीयेत्यतआहनेति। कश्चिद्बलात्संरोधादिनापि स्त्रियोरक्षितुंन शक्तस्तत्रापि व्यभिचारदर्श-नात् किंत्वेतैर्वक्ष्यमाणैरक्षणोपायप्रयोगैस्तारक्षयितुंसमर्थाः॥ १०॥

( ४ ) **राघवानन्दः**। उपायाभावात्तद्रक्षणमशक्यमित्याशङ्क्याशक्यत्वंस्वीकुर्वन्निवोपायमाह नेतिद्वाभ्याम्। प्र-सह्य बलत्। एतैः औत्तरैः संग्रहणाद्यैः॥ १०॥

( ५ ) **नन्दनः**। प्रसह्य परिरक्षितुमाप्तपुरुषादिभिर्गृहाभ्यन्तरनिरोधनादिना रक्षितुमेतैर्वक्ष्यमाणैः॥ १०॥

( ६ ) **रामचन्द्रः**। एतैः वक्ष्यमाणैरुपाययोगैः तु शक्याः ताः परिरक्षितुम्॥ १०॥

**अर्थस्य सङ्ग्रहे चैनांव्यये चैव नियोजयेत् ॥ शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥ ११ ॥**

( १ ) **मेधातिथिः** । अर्थोधनं तस्य संग्रहः संख्यादिना परिच्छिद्यरक्षार्थंवेश्मनि निधानंरज्ज्वायसबन्धादिना संयम्यस्थापनंमुद्राङ्कमित्येवमादि व्ययोविसर्गस्तस्यैव इदमेतावद्भक्तकार्थमिदंच सूपार्थमेतावच्छाकार्थमिति शौचंदर्विपिठरादिशुद्धिर्भूमिलेपनादिश्च धर्मआचमनोदकतर्पणादिदानंस्त्रीवासगृहकादौ बलिकुसुमविकारैर्देवार्चनं अन्नपक्तिःप्रसिद्धा पारिणाह्यंयस्यासंदीखट्वादि तत्प्रत्यवेक्षणे नियोक्तव्या ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । शौचे गृहादिशोधने । धर्मे सायंबलिदानादौ । अन्नपक्त्यामन्नपाके । पारिणय्यमौपासनाग्नेः । पारीणह्यइतिपाठे पारीणहोगृहबन्धहेतुः सएव पारिणह्योगृहपरिकरस्तस्य तद्भाण्डादेरित्यर्थः ॥ ११ ॥

( ३ ) **कुल्लूकः** । तानुपायानाह अर्थेति । धनस्य संग्रहणे विनियोगे च द्रव्यशरीरशुद्धौ भर्त्रग्निशुश्रूषादिकेऽन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणएनांनियोजयेत् वेक्षणेअवआदिलोपः ॥ ११ ॥

( ४ ) **राघवानन्दः** । अर्थस्यसंग्रहणेरक्षणे व्ययेशास्त्राविरुद्धे शौचे द्रव्यशरीरादेः धर्मे आतिथ्यादिके अन्नपक्त्यां तत्पाके पारिणाह्यस्य गृहोपस्करणस्य शय्यासनकुण्डकटाहादेः ईक्षणे एतांस्त्रियं नियोजयेदित्यन्वयः । एतेषु परं व्यग्रचित्तायाः परपुरुषाद्यभिलाषानुत्पत्तेः ॥ स्थानं नास्ति क्षणं नास्ति नास्तिप्रार्थयिता नरः ॥ तेन नारद नारीणां सतीत्वमुपजायते इतिपञ्चचूडोक्तेः ॥ ११ ॥

( ५ ) **नन्दनः** । तानेवोपाययोगान्दर्शयति अर्थस्य संग्रहे चैनामिति । परितोनह्यतइतिपरिणह्यंतत्र भवंपारिणाह्यमास-नशयनादिकं अर्थसंग्रहणादिषु नियुक्ताः स्त्रियस्तदधिकारभ्रंशभयादात्मनाऽऽरक्षन्तीत्यभिप्रायः ॥ ११ ॥

( ६ ) **रामचन्द्रः** । एनांस्त्रियं अर्थस्य संग्रहे नियोजयेत् व्यये शौचे गृहशौचधनादौ धर्मे सायंबलिदानादौ च पुनः अन्नपक्त्यां गृहस्यभाण्डादेः उपस्करस्य पारिणाह्ये औप [ स ] नाग्ने एतेषां अवेक्षणे नियोजयेत् ॥ ११ ॥

**अरक्षितागृहे रुद्धाः पुरुषैराप्तकारिभिः ॥ आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२ ॥**

( १ ) **मेधातिथिः** । आप्तंप्राप्तंकालेतंकुर्वन्त्याप्तकारिणोऽवधानवन्तउच्यन्ते शुद्धान्ताधिकारिणः कञ्चुकेनस्वेगृहे रुद्धाश्चास्वतन्त्रीकृता यथेष्टंविहारनिषेधेन रक्ष्यमाणानरक्षिताभवन्ति किंत्वात्मनाऽऽत्मानंरक्षन्ति ताः कथंरक्षन्ति ग्रद्येतेषु कार्येषु नियुज्यन्ते उक्तोपायप्रशंसा नोपायान्तरनिषेधः ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । निरोधंकृत्वा यारक्ष्यन्तेताअरक्षिताः । आप्तकारिभिः यथार्थकारिभिः ॥ १२ ॥

( ३ ) **कुल्लूकः** । आप्ताश्च ते आज्ञाकारिणश्च तैः पुरुषैर्गृहे रुद्धाऽप्यरक्षिताभवन्ति यादुःशीलतया नात्मानंरक्षन्ति यास्तु धर्मज्ञतयाऽऽत्मानमात्मना रक्षन्ति ताएव सुरक्षिताभवन्ति अतोधर्माधर्मफलस्वर्गनरकप्राप्त्याद्युपदेशेनासांसंयमः कार्यइति मुख्यरक्षणोपायकथनपरमिदम् ॥ १२ ॥

( ४ ) **राघवानन्दः** । एतैरपि तद्रक्षणाशक्तिं स्वीकुर्वन्निव तास्वेव रक्षणधुरं निक्षिपति अरक्षिताइति । आप्तकारिभिः आप्ताश्चते कार्यकारिणश्च तैः रक्षिताअपिअरक्षिताइति स्वयं रक्षिताश्चेदात्मानंप्रतिसुरक्षिताएवेतिभावः ॥ १२ ॥

---

( ११ ) संग्रहे=रक्षणे ( च )

( ११ ) व्ययेचैवनियोजयेत्=गृहेकर्मणियोजयेत् ( ग )

( ११ ) पारिणाह्यस्य=पारिणह्यस्य ( च ) = पारिणय्यस्य ( सर्वज्ञ१ )

(५) **नन्दनः** । एषएवोपाययोगोनतु बलात्कारइत्याह अरक्षिताइति । गृहे रुद्धागृहान्तरे गुप्ताअरक्षिता भवन्ति रक्षितानभवन्तीत्यर्थः ॥ १२ ॥

**पानंदुर्जनसंसर्गः पत्या च विरहोऽटनम् ॥ स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥ १३ ॥**

(१) **मेधातिथिः** । अटनमापणभूमिषु शस्त्रशाकादिक्रयार्थंदेवतायतनेषु च ज्ञातिकुलेबहून्यप्यवस्थानमन्यगेहवासः नारीसंदूषणानि स्त्रीणामेते चित्तसंक्षोभहेतवः एते हि श्वशुरादिभयंजनापवादभयंच त्यजन्ति ॥ १३ ॥

(२) **सर्वज्ञनारायणः** । पानं मद्यस्य । दुर्जनैरसतीभिःसंसर्गं । अटनमितस्ततोभ्रमणं । स्वप्नः सातत्येन तेन हि जागरादौ बुद्धिर्विपरिवर्तते ॥ १३ ॥

(३) **कुल्लूकः** । मद्यपानमसत्पुरुषसंसर्गः भर्त्रासह विरहः इतस्ततश्च भ्रमणमकालस्वापः परगृहनिवासइत्येतानि षट्स्त्रियाव्यभिचाराख्यदोषजनकानि तस्मादेतेभ्याएतारक्षणीयाः ॥ १३ ॥

(४) **राघवानन्दः** । ताभिरपि स्वरक्षणार्थं पानादिषट्कं वर्जनीयमित्याह पानमिति । पानं मद्यादेः । दुर्जनसंसर्गः पारदारिकसंसर्गः । पतिदेशात्स्थानान्तरावस्थानेनशयनादिना वियोगःविरहः । अटनं परगृहादौ । स्वप्नोऽकाले अहनि वा ॥ १३ ॥

(५) **नन्दनः** । तस्मात्पानादिभ्यः स्त्रियोरक्ष्याइत्यभिप्रायः ॥ १३ ॥

(६) **रामचन्द्रः** । यानं उत्सवादिदर्शननिमित्तंगमनं दुर्जनसंसर्गः व्यभिचारिणीसंसर्गः पत्याविरहः भर्तृविरहः अटनं परिभ्रमणं अह्निस्वप्नः शयनं अन्यगेहवासः एतानिष्षट् नारीणांदूषणानि ॥ १३ ॥

**नैतारूपंपरीक्षन्ते नासांवयसि संस्थितिः ॥ सुरूपंवा विरूपंवा पुमानित्येव भुञ्जते ॥ १४ ॥**

(१) **मेधातिथिः** । नायमभिमानोवोढव्यः सुभगः स्वाकृतिस्तरुणोहंमांहित्वा कथमन्यंकामयिष्यते यतोनैतादर्शनीयोयं पुरुषाकृतिरयमित्येवविचारयन्ति पुमानयमित्येतावतैव भुञ्जते संयुज्यन्ते तेन ॥ १४ ॥

(२) **सर्वज्ञनारायणः** । संस्थितिर्व्यवस्थितिः ॥ १४ ॥

(३) **कुल्लूकः** । नैताः कमनीयरूपंविचारयन्ति नचासांयौवनादिके वयस्यादरोभवति किन्तु सुरूपंकुरूपंवा पुमानित्येतावतैवतमुपभुञ्जते ॥ १४ ॥

(४) **राघवानन्दः** । ताभिः परपुरुषालोकनमपि न कार्यमित्याह नैताइति । रूपमङ्गसौष्ठवम् वयःपञ्चविंशतिवर्षादि पुंसः । आसांच षोडशवर्षादि । तत्र हेतुः पुमानिति । भुञ्जते भोगायाभिमुखाःस्युः ॥ १४ ॥

(५) **नन्दनः** । स्त्रीणांदुःस्वभावमवश्यंरक्षणार्थमष्टभिःश्लोकैराह नैताइति । रूपंपुंसःकान्तिः ॥ १४ ॥

(६) **रामचन्द्रः** । एताः स्त्रियः रूपं न परीक्षन्ते ॥ १४ ॥

**पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ॥ रक्षितायत्नतोऽपीह भर्तृष्वेताविकुर्वते ॥ १५ ॥**

(१) **मेधातिथिः** । यस्मिन्कस्मिंश्चपुंसि दृष्टे धैर्याच्चलनंकथमनेनसंप्रयुज्येयेति रेतसोविकारः स्त्रीणांतत्पौंश्चल्यं अन्यत्रापि धर्मादौ कार्येऽस्थिरता चलचित्तत्वात् यएव द्वेष्यः सएव स्पृह्यतइति भ्रातृपुत्रादिर्योदृष्टस्तस्माएव कामुकत्वेन स्पृहयन्ति स्नेहोरागस्तृष्णाच भर्तरि पुत्रादौ मानविबद्धहृदयाभवन्ति एतैर्दोषैर्योगाद्विकुर्वते विक्रिया भर्तृषु गच्छति तस्मात् ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । पौंश्चल्यात्पुरुषेच्छुत्वात् चालचित्यात् अस्थिरबुद्धित्वात् ॥ १५ ॥

( ३ ) **कुल्लूकः** । पुंसोदर्शने संभोगाद्यभिलाषशीलत्वाच्चित्तस्थैर्याभावात्स्वभावतः स्नेहरहितत्वाच्चैतायत्नेनापि लोके रक्षिताः सत्योव्यभिचाराश्रयणेन भर्तृषु विक्रियांगच्छन्ति ॥ १५ ॥

( ४ ) **राघवानन्दः** । किंच ॥ विश्वासश्च न कर्तव्यः स्त्रीषु राजकुलेषु चेति न्यायेन स्वरक्षणीयाइतिस्मरयन्नाह पौंश्चल्याचेति। पुंमात्रदर्शनेन मैथुनेच्छुत्वं तद्गतचित्तत्वनिस्नेहत्वानांस्वभावत्वात्। ननु मात्रादिशिक्षितामअहोपापीयसी सृष्टि रित्याह भर्तृष्विति। पुरुषान्तराभिलाषितया विकुर्वते मारणादिविक्रियांकुर्वते ॥ १५ ॥

( ५ ) **नन्दनः** । पुंसश्चलन्तीति पुंश्चल्यः तद्भावःपौंश्चल्यं परिचितपुंसः परित्यज्य नूतनांभजन्तइति यावत्। पौंश्चल्यादिति प्रत्येकंसंबध्यते ॥ १५ ॥

( ६ ) **रामचन्द्रः** । पौंश्चल्यात् पुंश्चल्याभावः पौंश्चल्यं तस्माच्चलचित्तस्य भावः चालचैत्यं तस्मात् चालचैत्त्यात् निस्नेहस्वभावः नैःस्नेह्यं तस्माद्धयेतस्मात्स्वभावतः ॥ १५ ॥

**एवंस्वभावंज्ञात्वासांप्रजापतिनिसर्गजम् ॥ परमंयत्नमातिष्ठेत्पुरुषोरक्षणंप्रति ॥ १६ ॥**

( १ ) **मेधातिथिः** । प्रजापतिर्हिरण्यगर्भस्तदीयेनिसर्गउत्पत्तिकाले जातं शिष्टंस्पष्टम् ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रजापतिनिसर्गः प्रजापतिनाताद्दक्स्वभावस्य दानम् ॥ १६ ॥

( ३ ) **कुल्लूकः** । एवंश्लोकद्वयोक्तमासांस्वभावंहिरण्यगर्भसृष्टिकालजनितंज्ञात्वा रक्षणार्थंप्रकृष्टंयत्नंपुरुषः कुर्यात् ॥ ॥ १६ ॥

( ४ ) **राघवानन्दः** । अतस्तारक्षणीयाइत्याह एवमिति । प्रजापतिनिसर्गजं प्रजापतिसृष्टिकालीनमनादिम्। अतस्तासांरक्षणंप्रति यत्नमातिष्ठेदित्यन्वयः ॥ १६ ॥

( ५ ) **नन्दनः** । प्रजापतिनिसर्गजंस्वायंभुवमनुप्राणजातम् ॥ १६ ॥

( ६ ) **रामचन्द्रः** । आसां स्त्रीणाम् निसर्गजं विधातृसृष्टिकम् ॥ १६ ॥

**शय्यासनमलङ्कारंकामंक्रोधमनार्जवं ॥ द्रोहभावंकुचर्यांच स्त्रीभ्योमनुरकल्पयत् ॥ १७ ॥**

( १ ) **मेधातिथिः** । शय्याशयनंस्वप्नशीलत्वं। आसनमनभ्युत्थानशीलता। अलङ्कारः शीलमण्डनं। कामंपुरुषोपभोगस्पृहा। क्रोधोद्विषः। अनार्यतांलिग्धेऽपि द्वेषोद्विष्टेऽपि स्नेहः आकारसंवरणंनिद्धर्मताद्रोग्धृभावोद्रोग्धृत्वं भर्तृपित्रादेःपुरुषव्यसनीतयाऽधर्मात्मकत्वं भर्त्रादीनां। द्रुहेःकर्त्तरितृचाभावशब्देन समासः । कुचर्या नीचपुरुषसेवनं। एषः स्वभावः स्त्रीणांमनुनासर्गादौकल्पितः शय्यासनालङ्कारा द्रोहकुचर्ययोर्दृष्टान्तत्वेनोपदीयन्ते यथैते पदार्थाः स्वभावभूताअविचालिताएवंकुचर्यादयोपि ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । शय्यां उत्तमशयनम्। आसनं सततोपवेशनम्। अलङ्कारमलंक्रियाम् । अनार्यतामनृजुनाम्। द्रोहभावं हिंसात्वम्। कुचर्यामसदाचारम्। मनुरकल्पयदितिप्रजापतिनिसर्गविवरणम् ॥ १७ ॥

( ३ ) **कुल्लूकः** । शयनोपवेशनालङ्करणशीलत्वंकामक्रोधानार्जवपरहिंसाकुत्सिताचारत्वानिसर्गादौ मनुः स्त्रीभ्यः कल्पितवान् तस्माद्यत्नतोरक्षणीयाः ॥ १७ ॥

---

( १७ ) अनार्जवम्=अनार्यताम् ( ल, य, न, ब, र, भ )

( ४ ) **राघवानन्दः** । ताश्च दानमानाभ्यां स्ववशमायान्तीत्येतन्मनुनैव प्रकाशितमित्याह शय्येति । कामोमैथुनेच्छा सोप्यष्टगुणःस्मृतः । द्रोहभावं स्वभर्तुरपिद्रोहाद्युपक्रमम् । कुचर्यां कुत्सितेकर्मणि रतिम् । एतावद्वानिसर्गजम् ॥ १७ ॥

( ५ ) **नन्दनः** । शय्यांसुप्तिं आसनमुपवेशनं अलंकारमलंक्रियां द्रोहभावंद्रोहक्रियां मनुः स्वायंभुवः स्त्रीभ्यआदावकल्पयत ॥ १७ ॥

( ६ ) **रामचन्द्रः** । शय्या शयनार्थं आसनम् ॥ १७ ॥

**नास्ति स्त्रीणांक्रियामन्त्रैरिति धर्मे व्यवस्थितिः ॥ निरिन्द्रियाह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥ १८ ॥**

( १ ) **मेधातिथिः** । केचिदेवंमन्यन्ते सत्यपि प्रमदाव्यभिचारे वैदिकेन जपेन रहस्यप्रायश्चित्तादिना शुद्धिमाप्स्यन्ति ततोनास्ति दोषइति तन्न नहि स्त्रीणांमन्त्रैः क्रियाजपोप्यस्ति येन वृत्तव्यतिक्रमेऽप्रख्यातैः स्वतएव वैदुष्याच्छुद्धिमाप्नुवन्तितस्माद्यत्नतोरक्ष्याइत्येतच्छेषमेवैतत् अतोयेकेचिदविहितमन्त्रेमन्त्रप्रतिषेधोयमिति वर्णयन्ति ततश्च यत्र स्त्रियः कर्तृतया संबध्यन्तेसायंबलिहरणादौ तथा संस्कार्यतया चूडादिषु संप्रदानतया श्राद्धादौ तत्र सर्वत्र मन्त्रप्रतिषेधादमन्त्रकंस्त्रीणांश्राद्धादिकार्यमिति ते ते युक्तवादिनोऽन्यपरत्वादस्यार्थवादितया यदस्ति तदालम्बनन्यायेन विहितप्रतिषेधमन्त्रसंबन्धमन्त्रचूडासंस्कारापेक्षंव्याख्येयमेतत् अध्ययनाभावाच्च प्रायश्चित्तमन्त्रजपाभावः मेक्षया निरिन्द्रिया इन्द्रियंवीर्यधैर्यप्रज्ञाबलादि तासांनास्त्यतोनिच्छन्त्योपि कदाचित्पापाचारैर्बलेनाक्रम्यन्ते ततोरक्षितुंयुक्ताः स्त्रियोवृत्तमिति शीलस्लेहत्वाऽस्थिरत्वादन्यद्वचनेन निन्द्यते ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । क्रिया परिणयनप्राक्कालीनःसंस्कारोगर्भाधानादिः । मन्त्रवत्संस्कारयोग्यतानिमित्तमन्त्रप्रकाश्यपुल्लिङ्गरहिताः । अतएवामन्त्राः । स्थितिर्मर्यादा ॥ १८ ॥

( ३ ) **कुल्लूकः** । जातकर्मादिक्रिया स्त्रीणांमन्त्रैर्नास्तीत्येषा शास्त्रमर्यादा व्यवस्थिता । ततश्च मन्त्रवत्संस्कारगणाभावान्न निष्पापान्तःकरणाइंद्रियंप्रमाणंधर्मप्रमाणश्रुतिस्मृतिरहितत्वान्न धर्मज्ञाअमन्त्राः पापापनोदनमन्त्रजपरहितत्वात् जातेऽपि पापे तन्निर्णेजनाक्षमाअनृतवदशुभाः स्त्रियइति शास्त्रमर्यादा तस्माद्यत्नतोरक्षणीयाइत्यत्र तात्पर्यम् ॥ १८ ॥

( ४ ) **राघवानन्दः** । तासांतु दौःशील्यं नानुयोज्यं चाण्डालादेरिव मन्त्रेण संस्काराभावादित्याह नास्तीति । क्रिया नामकरणादिका विवाहस्तु समन्त्रकइत्युक्तेः । निरिन्द्रियाः इन्द्रियं प्रमाणं धर्मप्रमाणश्रुतिस्मृतिरहिताः । अनृतवदशुभाः नित्यमनृतवादिन्योवा सूनृतवैदिकशब्दप्रयोक्तृत्वाभावात् ॥ १८ ॥

( ५ ) **नन्दनः** । निरिन्द्रियाःज्ञानरहिताइत्यर्थः अमन्त्राअध्ययनबाह्याः ॥ १८ ॥

( ६ ) **रामचन्द्रः** । निरिन्द्रियाः समन्त्रसंस्कारयोग्यतारहिताः ॥ १८ ॥

**तथा च श्रुतयोबह्व्योनिगीतानिगमेष्वपि ॥ स्वालक्षण्यपरीक्षार्थंतासांशृणुत निष्कृतीः ॥ १९ ॥**

( १ ) **मेधातिथिः** । स्वभावतोऽशुद्धहृदयाः स्त्रियइत्यस्मिन्नर्थे वैदिकानि मन्त्रार्थवादरूपाणि वाक्यानि साक्षित्वेनोपन्यस्यति । तथाच यथामयोक्तं स्त्रियोऽनृतमिति तथैव निगमेषुवेदेषुश्रुतयः सन्ति । निगमशब्दोवेदपर्यायः दृष्टप्रयोगश्च बभूथाततन्थेत्यादिनिगमे वेदार्थव्याख्यानाङ्गवचनोप्यस्ति निगमनिरुक्तव्याकरणान्यङ्गानीति निरुक्ते हि प्रयोगोनिगमा-

( १९ ) निगीता=निगदा ( मेधा० )

इमेभवन्तीति तस्येहश्रुतिग्रहणाद्वा वक्ष्यमाणोदाहरणाच्च संभवो ऽतोवेदवचनोनिगमशब्द इहगृह्यते समुदायावयवभेदा-च्चाधाराधेयभावः तेषु निगमेषु श्रुतयएकादशभूतानि वाक्यानि निगीताअधीताः संशब्दिताः पठ्यन्तइति यावत् नित्यप्रवृत्ते च कालाविभागादिनिरुक्तः पाठान्तरंनिगदाइति निगदामन्त्रविशेषाः श्रुतयोब्राह्मणवाक्यानि मन्त्रेषु ब्राह्मणेषु चाय-मर्थोदर्शितोयदनृतास्त्रियइति बह्व्यस्ताः सतीत्यस्मिन्पक्षेऽध्याहारस्तासांश्रुतीनांयानिष्कृतिरूपाव्यभिचारप्रायश्चित्तभूता-स्ताःशृणुत किमर्थमुदाह्रियन्तइति चेत्स्वालक्षण्यपरीक्षार्थं स्वलक्षणंनित्यसंनिहितस्वभावस्तत्प्रतिपादनार्थमङ्गदकुण्डला-दिलक्षणंतत्परिभूतमिदंस्वलक्षणंस्वभावइत्यर्थः एतदासीस्वलक्षणंयदव्यभिचारात्मकम् ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः**। श्रुतयः श्रुतिभागाः । निगमेषु वेदेषु । स्वालक्षण्यस्य स्त्रीणांपौंश्चल्यादिस्वभावस्य परी-क्षार्थं निश्चयार्थम् । तथाहि । इन्द्राद्वरंप्रार्थयमानाअपिकामनाविजनितोःसंभवामेत्याप्रसवंपुरुषसंसर्गमेव वृतवत्यइतिश्रुतिः । यद्येवंयत्नतोरक्षणेपि मनोव्यभिचारसंभवस्तस्य तर्हि कथंनिष्कृतिरतआह । तासांस्त्रीणां निष्कृतिं तद्दोषशान्त्युपायं शृणुत ॥ १९ ॥

( ३ ) **कुल्लूकः**। व्यभिचारशीलत्वंस्त्रीणांस्वभावइत्युक्तंतत्र श्रुतिंप्रमाणतयोपन्यस्यति तथा बह्व्यः श्रुतयोबहूनि श्रुतिवाक्यानि नचैतद्विद्मोब्राह्मणाःस्मोऽब्राह्मणावेत्येवमादीनिनिगमेषुस्वालक्ष्यण्यंव्यभिचारशीलत्वंतत्परिज्ञानार्थंपठितानि तासांश्रुतीनांमध्येयानिष्कृतिरूपाव्यभिचारप्रायश्चित्तभूतास्ताःश्रुतीः शृणुत एकस्याः श्रुतेर्वक्ष्यमाणत्वाच्छ्रुतिंशृणुतेत्यर्थः । सुपांसुपोभवन्तीति द्वितीयैकवचने बहुवचनम् ॥ १९ ॥

( ४ ) **राघवानन्दः**। ननु किमिति स्त्रीणां व्यभिचारित्वादिस्वारसिकं ब्रूत मात्रादिशिक्षतं कथंनस्यात् इति चेन्न अनादिप्रवृत्तश्रुतिसिद्धनिष्कृतिकथनेन तस्याप्यनादित्वसिद्धिरित्याह यथाचेति। स्वालक्षण्यपरीक्षार्थं व्यभिचारित्वज्ञापनार्थम् । योब्राह्मणाचेत्येवमादयःश्रुतयस्तासां श्रुतीनां मध्ये निष्कृतिंनिष्कृतिसाधनं श्रुतिं शृणुत ॥ १९ ॥

( ५ ) **नन्दनः**। यथैतदुक्तंतथात्र निगमेषु वेदेषु गदिताः श्रुतयोवाक्यानि स्वालक्षण्यपरीक्षार्थं सुशब्दोऽत्रबहुलवचनः अलक्षणमलक्षणत्वंदुःस्वभावत्वंदोषबाहुल्यमिति यावत् परीक्षार्थंपरीक्षांकर्त्तुं तासांश्रुतीनामाकृतिसन्निवेशं । शृणुत ॥१९॥

( ६ ) **रामचन्द्रः**। स्वलक्षणपरीक्षार्थं पौंश्चल्यादित्वपरिज्ञानायनिष्कृतीः शृणुत ॥ १९ ॥

**यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ॥ तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥**

( १ ) **मेधातिथिः**। इति कारणान्तेन पादत्रयेण मन्त्रैकदेशोनुकृतः यन्मेमाताअपतिव्रतापत्युरन्यपुरुषे न कामश्चे-तसापीति यस्याव्रतंनियमः सा पतिव्रता तद्विपरीताऽपतिव्रता विचरन्ती परगृहान्गच्छन्ती तत्रोज्वलवेषंदृष्ट्वा प्रलुलुभे लो-भंस्पृहामन्यपुरुषंप्रतिकृतवती तत्पापंममोत्पत्त्या वा तत्पितुः संबन्धियद्रेतः शुक्रंतद्वृङ्क्तामपनुदतु तद्रेतसा सदोषोऽपमृज्यतां रे-तइति षष्ठीस्थाने प्रथमा व्यत्ययेन अथवा रेतएव पितृत्वेन परिकल्पते अपरित्यक्तस्वलिङ्गएव रेतसा सामानाधिकरण्य-मनुभवति द्यौर्मेपितेति यथा अथवा मातृबीज[मप्युच्यते तद्रेतःपिताजनकोवृङ्क्ताशोधयतां दोषसपायत्स्वंपितृबीज]‡प्रभावे-न मातृदोषोपनुद्यतामित्यर्थः । अस्य व्यभिचारात्मकस्यैतन्निदर्शनंदृष्टान्तः सर्वे जपमानाएतंमन्त्रमुच्चारयन्ति यदि च सर्वाः स्त्रियोदुष्टस्वभावास्ततोमन्त्रस्यनित्यवत्प्रयोगोपपत्तिरितरथा पाक्षिकःस्याच्चातुर्मास्येष्वयंमन्त्रोविनियुक्तः पाद्यानुमन्त्रणे च श्राद्धे ॥ २० ॥

‡( आआ )

( २ ) **सर्वज्ञनारायणः** । अस्योक्तस्यार्थस्य निष्कृतेर्निदर्शनं निश्चितंदर्शनं श्रुतौ कथमित्यतआह ध्यायतीति । पाणिग्राहस्यानिष्टंपुरुषान्तरयोगम् । तस्यव्यभिचारस्य मानसस्य निह्नवोपनयः । श्राद्धे पुत्रेणानेन होमंकुर्वतोच्यते प्रार्थ्यते तस्यनिष्कृतिर्भवत्विति ॥ यन्मेमातेतिमन्त्रश्चानुष्टुबनुरोधात्किंचिदन्यथाकृत्वा पठितः । तथाहि । यन्मेमाताप्रलुलोभविचरत्यननुव्रता । तन्मेरेतःपितावृङ्क्तामातुरन्योवपद्यतामिति मन्त्रपाठः । तस्यचार्थोयन्मइति यत् मे मम मातुः पत्यननुव्रतंचरन्त्याःकुर्वत्यालोभात् रेतोरजोरूपंस्कन्नं तन्ममपितैव भजतां व्यभिचारदोषोमाभूदित्यर्थः । यस्तु तन्मनाःसन्मातुरभिभविनान्यःपत्युःसोवपद्यतामधःपतत्विति ॥ २० ॥ २१ ॥

( ३ ) **कुल्लूकः** । कश्चित्पुत्रोमातुर्मानसव्यभिचारमवगम्य ब्रूते मनोवाक्कायकर्मभिः पतिव्यतिरिक्तंपुरुषंया न कामयते सा पतिव्रता ततोऽन्याऽपतिव्रताममामाताऽपतिव्रतासतीपरगृहाण्गच्छन्तीयत्प्रलुलुभे परपुरुषंप्रतिसंजातलोभाऽभूत्तत्पुरुषसंकल्पदुष्टंमातृरजोरूपंरेतोमम पिता शोधयत्वित्यस्य स्त्रियाव्यभिचारशीलत्वस्यैतदिति करणान्तंमन्त्रपादत्रयंज्ञापकं अयंच मन्त्रश्चातुर्मास्यादिषु विनियुक्तः ॥ २० ॥

( ४ ) **राघवानन्दः** । तामेवाह यदिति । यद्वित्यादिवृङ्क्तामित्यन्ता श्रुतिः । अस्याअर्थः । कश्चित्पुत्रोब्रूते पतिं पाणिग्राहं विना नान्यं वृणे इति व्रतं नियमोयस्याः सापतिव्रता तद्भिन्नाऽपतिव्रता मे माता विचरन्ती व्यवहरन्ती यत्पुरुषान्तरं लुलुभे चकमे तेन कामेन यद्दुष्टंरेतोमातूरेतः पितामेतत् वृङ्क्तां* शोधयत्विति । अस्य स्त्रीव्यभिचारस्य एतदेषाश्रुतिः निदर्शनं मानमितिपद्यार्थः ॥ २० ॥

( ५ ) **नन्दनः** । श्रुतिमेकामुदाहरणार्थमाह यन्मेमातेति । पतिमननुव्रताचरती मे माता अन्यस्मात्पुंसोयद्रेतः प्रलुलुभआददादधार तद्रेतोमे पिता वृङ्क्तांमातुः पाणिग्राहकः स्वीकरोतु मम पितैव तद्रेतआहितमस्त्वित्यर्थः । अथवायच्छब्दोवृत्यर्थःततोनयत्नः अस्य स्त्रीणांस्वालक्षण्यस्यैतद्वचनंनिदर्शनंप्रमाणंएषमन्त्रउदाहरणमितियावत् ॥ २०॥

( ६ ) **रामचन्द्रः** । यन्मे मातेति मन्त्रेण श्राद्धे होमंकुर्वाणेनोच्यते प्रकथ्यते अपतिव्रता मे माता यत् प्रचरन्ती प्रलुलुभे तन्मेरेतः लोभाद्रजोरूपं यद्रेतःस्कन्नं तद्रेतोमेपिताभजताम् ॥ २० ॥

## ध्यायत्यनिष्टंयत्किंचित्पाणिग्राहस्य चेतसा ॥ तस्यैषव्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥

( १ ) **मेधातिथिः** । पाणिग्राहोभर्ता तस्य चेतसा यदनिष्टमप्रियंपरपुरुषसंपर्कादिकंस्त्रीचिन्तयति तस्य मानसस्य व्यभिचारस्य निह्नवः शुद्धिरनेन मन्त्रेण कर्मणि नियुक्तेनोच्यते । प्रसङ्गान्मन्त्रप्रयोजनंदर्शितं । यद्यपि कर्मगुणतैव कर्माङ्गमन्त्रप्रयोजनंतथापि जपादौ विनियोगान्मानसव्यभिचारनिवृत्त्यर्थतान्युच्यते ॥ २१ ॥

( ३ ) **कुल्लूकः** । संप्रति मानसव्यभिचारप्रायश्चित्तरूपतामस्य मन्त्रस्याह ध्यायेति । भर्तुरप्रियंयत्किंचित्पुरुषान्तरगमनंस्त्रीमनसा चिन्तयति तस्य मानसस्य व्यभिचारस्यैषप्रकृतोमन्त्रः सम्यक्शोधनोमन्वादिभिरुच्यते मातेति श्रवणात्पुत्रस्यैवायंप्रायश्चित्तरूपोमन्त्रोन मातुः ॥ २१ ॥

( ४ ) **राघवानन्दः** । श्लोकद्वयार्थं संकलयन्नाह ध्यायतीति । यत्पुरुषान्तरेणसहभोगं ध्यायति चेतसा तदेव पाणिग्राहस्य स्वभर्तुरनिष्टम् तस्यैव व्यभिचारस्यानिष्टस्य एषमन्त्रपाठः पुत्रस्यायं निह्नवः प्रायश्चित्तं गम्यतेमातुरित्यन्वयः ॥ २१ ॥

---

* वृङ्क्ताम् = वृद्धाम् ( राघ० २ )

( ५ ) **नन्दनः** । एषमन्त्रः निह्नवस्तिरस्करणमन्यथाकरणं प्रायश्चित्तमितियावत् ॥ २१ ॥

( ६ ) **रामचन्द्रः** । निह्नवः अपह्नवः ॥ २१ ॥

**यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथा विधि ॥ तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥**

( १ ) **मेधातिथिः** । भार्यासंरक्षणकामेन दौःशील्यादात्मा रक्षितव्योनाप्येतयैव केवलया पापतोदुःशीलस्य भार्यापि तथाविधैर्भवति गुणवतःशीलवती यथा समुद्रेण निम्नगा नदी संयुज्यमाना क्षारोदका भवति मधुररसापि सती ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । यादृग्गुणेनपत्या परिणेत्रा । अतोनाधमायदेहीत्यर्थः । समुद्रेण निम्नगा क्षारोदतां यथा याति ॥ २२ ॥

( ३ ) **कुल्लूकः** । यथारूपेण भर्त्रा साधुनाऽसाधुना वा स्त्रीविवाहविधिना संयुज्यते सा भर्तृसदृशगुणा भवति यथा समुद्रेण संयुज्यमानानदी स्वादूदकाऽपि क्षारजला जायते भर्तुरात्मसंयमनाख्यस्त्रीरक्षणोपायान्तरो देशार्थमिदम् ॥ २२ ॥

( ४ ) **राघवानन्दः** । दुःशीलाय सुशीला न देया सुशीलायतु दुःशीलाऽपि देयेत्यत्र दृष्टार्थं सदृष्टान्तमाह यादृगितिद्वाभ्याम् । यादृग्गुणेन साधुना असाधुनाभर्त्रा स्त्री संयुज्यते साऽपि स्त्री तादृग्गुणा सासाध्वी असाध्वीवा भवति । तत्र दृष्टान्तः निम्नगास्वादूदकापिगंगाद्याः क्षारोदेन समुद्रेण संगतास्तादृशादृष्टाः ॥ २२ ॥

( ५ ) **नन्दनः** । एवंप्रतिनियतस्वभावाअपिस्त्रियः स्वगुणानुसारेण दंड्याः कर्त्तुंशक्याइत्याह यादृग्गुणेनेति ॥ २२॥

**अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा ॥ शारङ्गीमन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥**

( १ ) **मेधातिथिः** । हीनजातीयाप्यक्षमाला वसिष्ठभार्यातत्संयोगादभ्यर्हणीयतांप्राप्ता शार्ङ्गीतिर्यग्जातिःचटकामन्दपालेन मुनिना संयुक्ता तथैव पूज्याअतोहीनजातीयाः कनीयस्योपि भूयोभर्तृवत्पूज्यास्तथाचोक्तं वयसिस्त्रियइति ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । अक्षमाला अरुंधती वसिष्ठेन महर्षिणा सम्यग्योगंगता । अधमयोनिजा चतुर्वर्णेतरकुलजा । सारङ्गीपक्षिणी । शार्ङ्गीति क्वचित्पाठः ॥ २३ ॥

( ३ ) **कुल्लूकः** । अत्रोत्कर्षदृष्टान्तमाहअक्षेति अक्षमालाख्यानिकृष्टयोनिजा वसिष्ठेन परिणीता तथा चटका मन्दपालाख्येन ऋषिणा संगता पूज्यतांगता ॥ २३ ॥

( ४ ) **राघवानन्दः** । अत्रेतिहासं प्रमाणयति अक्षेति । अधमयोनिजा चण्डाली अक्षमाला ऋषीणामनुरोधेनोढा वसिष्ठश्चण्डालीमुपयेमइतिश्रुतेः । सारङ्गी चटका मन्दपालेन ऋषिणोढा अभ्यर्हणीयतां पूज्यताम् ॥ २३ ॥

( ५ ) **नन्दनः** । अत्रोदाहरणमाह अक्षमालेति ॥ २३॥

( ६ ) **रामचन्द्रः** । अक्षमाला अरुन्धती । शार्ङ्गपक्षिणी मन्दपालेन ऋषिणा संगता अभ्यर्हणीयतांजगामइति महाभारते आदि पर्वणि ॥ २३ ॥

**एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः ॥ उत्कर्षंयोषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैःशुभैः ॥ २४॥**

( १ ) **मेधातिथिः** । अवकृष्टा निकृष्टा प्रसूतिरुत्पत्तिर्यासांताअवकृष्टप्रसूतयः अन्याश्च गङ्गाकालीप्रभृतयः द्वयोः प्रकृतत्वादेताइति बहुवचनं च शब्देन तृतीयामाक्षिप्य द्विर्वचनंवा एते च ॥ २४ ॥

---

( २३ ) शारङ्गी=शार्ङ्गीच ( क, ख, ग, च ) = शार्ङ्गीव ( मे० )

( २ ) **सर्वज्ञनारायणः** । एताइति पूज्यताभिप्रायेण बहुवचनम् । अन्याः सत्यवत्याद्याः । अत्रच पञ्चमाध्यायस्त्रीधर्मोक्तस्य शब्दतोर्थतश्च पुनरुक्तिः पुरुषकार्यतया तत्रात्रतु स्त्रीकार्यं तत्परिग्राह्यम् ॥ २४ ॥

( ३ ) **कुल्लूकः** । यद्यपि द्वे प्रकृते तथापि प्रदर्शनार्थत्वमनयोर्मत्वैताइति बहुवचनंकृतं एताश्चान्याश्च सत्यवत्यादद्योनिकृष्टप्रसूतयः स्वभर्तृगुणैः प्रकृष्टैरस्मिँल्लोकउत्कृष्टतांप्राप्ताः ॥ २४ ॥

( ४ ) **राघवानन्दः** । उपसंहरति एताइति । अवकृष्टप्रसूतयः निष्कृष्टयोनयः उत्कर्षं जातितः ख्यातितो पतितश्च स्वैर्भर्तृगुणैरेव प्राप्ताइत्यन्वयः ॥ २४ ॥

( ६ ) **रामचन्द्रः** । अपकृष्टप्रसूतयः निकृष्टजातयः ॥ २४ ॥

## एषोदिता लोकयात्रानित्यंस्त्रीपुंसयोः शुभा ॥ प्रेत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥ २५ ॥

( १ ) **मेधातिथिः** । लोकयात्रा लोकवृत्तंलोकाचारोलोकसिद्धमेतत् नायंविधिलक्षणोर्थोयदेवंशक्यते रक्षितुं नान्यथेति अपरिक्षिताभिश्च ताभिः प्रसूत्यादिदोषेभवतीति । इदानींप्रजाधर्मान्निबोधत । कस्य प्रजा बीजिनोवाक्षेत्रिणोवेति उदर्कआगामीकालः ससुखोयेषांसर्वेहि वस्त्ववसाने विरमन्ते तेतु नैवमिति प्रशंसा ननुच का सुखोदर्कता प्रजाधर्मस्य या च प्रजास्याधीना स्त्रियश्च बहुभिर्दोषैरावृतत्वत्त्यागार्हाः ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रजाधर्मान् प्रजोत्पादनार्थं धर्मान् ॥ २५ ॥

( ३ ) **कुल्लूकः** । एषलोकाचारोजायापतिविषयः सदाशुभउक्तः इदानीमिहलोके परलोके चोत्तरकालशुभसुखहेतून् किंक्षेत्रिणोऽपत्यमुत बीजिनइत्यादीन्प्रजाधर्मान् श्रृणुत ॥ २५ ॥

( ४ ) **राघवानन्दः** । स्त्रीणां स्वाभाविकौपाधिकधर्मानुपसंहरन् तत्कार्यप्रजनप्रकारमाह एषेति । लोकयात्रा लोकाचारपरंपरा । सुखोदर्कान् इह दृष्टसुखमुत्तरकालेपि तत्कृतसुकृतजं सुखं येभ्यस्तान् प्रजाधर्मान् प्रजैव धर्मस्तानपुत्रेणायंल्लोकः ॥ दशपूर्वापरान्वंश्यानात्मानंचैकविंशकम् । ब्राह्मीपुत्रः सुकृतकृत्तारयेत् । इत्यादिश्रुतिस्मृतिभ्योधर्महेतुत्वश्रवणात्प्रजायाः ॥ २५ ॥

( ५ ) **नन्दनः** । गार्हस्थ्यस्य स्त्रीनिबन्धनत्वात्स्त्रीणांसंमानेन रक्षणंकार्य्यंनावमानेनेत्यभिप्रायेणाह एषोदितेति॥२५॥

( ६ ) **रामचन्द्रः** । यात्रा चर्या ॥ २५ ॥

## प्रजनार्थंमहाभागाः पूजार्हागृहदीप्तयः ॥ स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्च न ॥ २६ ॥

( १ ) **मेधातिथिः** । नहि गृहे सर्वान्बिभृयादित्येतन्निवृत्त्यर्थमाह । शक्यप्रतिविधानत्वाद्दोषाणांपूजार्हाः यदेतद्दोषप्रयोजनंतन्नावज्ञानार्थंपरिवर्जनार्थंवाभिशस्तपतितादिच किंतर्हि रक्षार्थंदोषाणां नहि भिक्षुकाः सन्तीति स्थालीनाधिश्रियते नचमृगाःसन्तीतियवानोप्यन्तइति प्रयोजनं गर्भग्रहणात्प्रभृत्यपत्यपारपोषणपर्यन्तोव्यापारोऽभिमेतः तथाच वक्ष्येति॥उत्पादनमपत्यस्य जातस्य परिपालनमिति । गृहेदीप्तयइव नहि गृहे सेवा स्त्रिभिर्विना काचिदस्तीति सुप्रसिद्धमेतत् सत्यपि श्रीविभवे भार्यायामसत्यांसुहृत्स्वजनादिष्वागतेषु नगृहस्थाः प्रतिपुरुषंभोजनादिभिरावर्जयितुंसमर्थाः यथा दरिद्रे नभवति शक्तिरतः स्त्रियाःश्रियश्च न विशेषोगृहेष्विति ॥ २६ ॥

---

( २४ ) अपकृष्ट = अवकृष्ट ( मे० ) ( २६ गृहदीप्तयः=मेधिनः ( च )

( २ ) **सर्वज्ञनारायणः** । प्रजनार्थं संतानार्थम् । महाभागामहाभाग्याः ॥ २६ ॥

( ३ ) **कुल्लूकः** । यद्यप्यासांरक्षणार्थंदोषाउक्तास्तथापि शक्यप्रतीकारत्वादिहदोषाभावः । एतास्त्रियोमहोपकारागर्भोत्पादनार्थंबहुकल्याणभाजनभूताः वस्त्रालङ्कारादिदानेन संमानार्हाः स्वगृहेशोभाकारिण्यः स्त्रियःश्रियश्चगेहेषुतुल्यरूपानानयोर्विशेषोविद्यते यथानिःश्रीकंगृहंन राजत्येवंनिःस्त्रीकमिति ॥ २६ ॥

( ४ ) **राघवानन्दः** । गर्भधारणपोषाभ्यांतेनमातागरीयसीतिमानयन् स्त्रियं स्तौति प्रजनार्थमितित्रिभिः । प्रजनार्थं प्रजनमपत्यं तस्मै । गृहदीप्तयः गृहस्य दीप्तीः शोभा याभ्यस्ता । स्त्रियएव श्रियः श्रीहेतुत्वात् ॥ २६ ॥

( ५ ) **नन्दनः** । नविशेषोस्ति स्त्रीणांश्रीणाञ्च ॥ २६ ॥

( ६ ) **रामचन्द्रः** । प्रजनार्थं सन्तानार्थम् गेहेषु स्त्रियः श्रियः लक्ष्मीरूपाः पूजायोग्याः ॥ २६ ॥

**उत्पादनमपत्यस्य जातस्य परिपालनम् ॥ प्रत्यहंलोकयात्रायाः प्रत्यक्षंस्त्रीनिबन्धनम् ॥ २७ ॥**

( १ ) **मेधातिथिः** । अत्र स्थानीयस्य पूर्वश्लोकस्य भाष्यस्थाविमौ श्लोकौ स्त्रीनिबन्धननिमित्तमपत्योत्पादनादौ प्रत्यक्षमेतत् । लोकयात्रागृहागतानामन्नादिदानेनावर्जनमामन्त्रणनिमन्त्रणादि । अस्य प्रत्यर्थंसर्वस्मिन्नर्थे स्त्रीनिधनं । प्रत्यहमिति पाठः । प्रत्यक्षशब्दोन्तरङ्गवचनः अन्तरङ्गमित्यर्थः ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । उत्पादनमुत्पत्तेःकारणं स्त्री । परिपालनं रक्षा कारणभूता । प्रीत्यर्थं या लोकस्य यात्रा व्यवहारः संभोगस्तस्य निबन्धनं स्त्री प्रत्यक्षं नतु पक्षोधर्मादिवत् । प्रत्यर्थमिति पाठेप्रतिविषयमित्यर्थः ॥ २७ ॥

( ३ ) **कुल्लूकः** । अपिच उत्पादेति अपत्यस्य जननं जातस्य परिपालनं प्रतिदिनंचातिथिमित्रभोजनादेर्लोकव्यवहारस्य प्रत्यक्षंभार्यैव निदानम् ॥ २७ ॥

( ४ ) **राघवानन्दः** । तदेवाह उदिति । लोकयात्रायाः अतिथिबन्धुमित्रभोजनादिर्व्यवहारस्य स्त्रीनिबन्धनं स्त्रीहेतुरिति प्रत्यक्षम् ॥ २७ ॥

( ६ ) **रामचन्द्रः** । प्रीत्यर्थं लोकयात्रा प्रियोक्तिसंभोगरूपलोकव्यवहारस्य प्रत्यक्षं स्त्री निबन्धनं निमित्तम् ॥२७॥

**अपत्यंधर्मकार्याणि शुश्रूषा रतिरुत्तमा ॥ दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ २८ ॥**

( १ ) **मेधातिथिः** । प्राग्दर्शितार्थोयंश्लोकः ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । शुश्रूषोपचारः । रतिः कामसुखम् ॥ २८ ॥

( ३ ) **कुल्लूकः** । अपत्योत्पादनमुक्तमप्येतदभ्यर्हितत्वज्ञापनार्थंपुनरभिधानम् । धर्मकार्याण्यग्निहोत्रादीनि परिचर्योत्कृष्टा रतिः पितॄणामात्मनश्चापत्यजननादिना स्वर्गइत्येतत्सर्वंभार्याधीनम् ॥ २८ ॥

( ४ ) **राघवानन्दः** । धर्मकार्याणि बल्यग्निहोत्रादीनि शुश्रूषा तिथ्यादीनां । रतिः स्त्रीसंपर्कजा प्रीतिः । स्वर्गे यत्कर्तव्यं तदनयासहेतिश्रुतेः एतत्सर्वंदाराधीनमितिद्योतीहकारः ॥ २८ ॥

**पतिंया नाभिचरति मनोवाग्देहसंयता ॥ सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥२९॥**

( १ ) **मेधातिथिः** । पञ्चमे श्लोकाविमौ व्याख्यातौ ॥ २९ ॥ ३० ॥

---

( २७ ) प्रत्यहम् = प्रीत्यर्थम् ( ब, ल ) = प्रत्यर्थं ( मे० )

( २ ) **सर्वज्ञनारायणः** । अभिचरति मनोवाग्देहसंयतेति मनःप्रभृतिभिर्नव्यभिचरतीत्यर्थः । वाग्व्यभिचारः परपुरुषादिप्रशंसा । कायेन तद्वीक्षणस्पर्शादि ॥ २९ ॥

( ३ ) **कुल्लूकः** । या स्त्री मनोवाग्देहसंयता सतीति विशेषणोपादानसामर्थ्यान्मनोवाग्देहैरेव न व्यभिचरति सा भर्त्रा सहार्जितान्स्वर्गादिलोकानाप्नोति इहलोके विशिष्टैः साध्वीत्युच्यते ॥ २९ ॥

( ४ ) **राघवानन्दः** । तां दृष्टादृष्टफलेन प्रलोभयन्निव व्यभिचारान्निवर्तयति पतिमिति । या वाङ्मनोदेहेषुसंयता सती नातिक्रमते सा भर्तृलोकं स्वर्गादिकं प्राप्नोति साध्वी चेहोच्यते इतिशेषः ॥ २९ ॥

( ५ ) **नन्दनः** । एवंस्त्रीषुपुरुषाणांकर्त्तव्यमुक्तमिदानींपुरुषेषुस्त्रीणामाह पतिमिति ॥ २९ ॥

( ६ ) **रामचन्द्रः** । मनोवाक्कायकर्मभिः वाग्दण्डसंयता ॥ २९ ॥

**व्यभिचारात्तुभर्त्तुः स्त्री लोके प्राप्नोति निंद्यताम्॥ सृगालयोनिंचाप्नोति पापरोगैश्च पीड्यते ॥३०॥**

( २ ) **सर्वज्ञनारायणः** । सृगालयोनिमिति महापातकभोग्यनरकाद्युपलक्षणम् । तदन्ते सृगालयोनिगमनात् पापरोगैः क्षयादिभिः ॥ ३० ॥

( ३ ) **कुल्लूकः** । पुरुषान्तरसंपर्कात्स्त्री लोके निन्द्यतांजन्मान्तरे च सृगालजातिंप्राप्नोति पापरोगादिभिश्च पीड्यते । पञ्चमाध्याये स्त्रीधर्मउक्तमप्येतच्छ्लोकद्वयंसदपत्यसंपत्त्यर्थत्वेन महाप्रयोजनतया पुनः पठितम् ॥ ३० ॥

( ४ ) **राघवानन्दः** । विपक्षेदण्डमाह व्यभिचारादिति । व्यभिचारात् स्वभर्तारं व्यतीत्याभिमुख्येनान्यत्र मनोवाग्देहानांचरणात् गतैः पापरोगैः कुष्टादिभिः पीड्यते पीडितास्यात् ॥ ३० ॥

**पुत्रंप्रत्युदितंसद्भिः पूर्वजैश्च महर्षिभिः ॥ विश्वजन्यमिमंपुण्यमुपन्यासंनिबोधत ॥ ३१ ॥**

( १ ) **मेधातिथिः** । उपन्यासोविचार्यवस्तुप्रक्षेपः विचारोवा तंनिबोधत । पुत्रंप्रतिपुत्रमधिकृत्योदितमुक्तं सद्भिर्विद्वद्भिर्महर्षिभिश्च [ विश्वजन्यं ][1] सर्वेभ्योजनेभ्योहितं पुण्यंकल्याणकरं स्त्रीस्तुत्याव्यवधानात् प्रजाधर्मंनिबोधतेत्यस्यार्थस्यापि पुनरादरार्थमुपन्यासः उपन्यासंनिबोधतेति ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । एवंस्त्रीणांनियते यत्र क्वचिद्दैवाद्यभिचारस्तत्र यःपुत्रंप्रति बीजिनोऽपत्यंक्षेत्रिणोवेत्यपत्यार्थः उपन्यासस्तं शृणुत । सद्भिर्वर्तमानैः पूर्वजैरतीतैः । विश्वजन्यं विश्वजनहितम् ॥ ३१ ॥

( ३ ) **कुल्लूकः**। पुत्रमधिकृत्य शिष्टैर्मन्वादिभिः पूर्वमुत्पन्नैश्च महर्षिभिरभिहितमिमंवक्ष्यमाणंसर्वजनहितंविचारंशृणुत ॥ ३१ ॥

( ४ ) **राघवानन्दः** । प्रजननार्थमित्युक्तं तदेवाह पुत्रमिति । पुत्रमुद्दिश्योपन्यासं विचारं निबोधत शृणुत । विश्वजन्यं विश्वस्मै सर्वस्मैजनाय हितं पुण्यं पुण्यफलदम् ॥ ३१ ॥

( ५ ) **नन्दनः** । इदानींबीजिनः किंपुत्रःक्षेत्रिणोवेत्येतन्निरूपयितुंप्रक्रमते पुत्रंप्रत्युदितमिति । विश्वजन्यंविश्वजनहितं। इमंवक्ष्यमाणम् ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । विश्वजन्यं सकलजनहितम् । उपन्यासं व्याख्यानम् ॥ ३१ ॥

---

१ ( मे० ८ )

भर्तुः पुत्रंविजानन्तिश्रुतिर्द्वैधंतुभर्तरि ॥ आहुरुत्पादकंकेचिदपरे क्षेत्रिणंविदुः ॥ ३२ ॥

( १ ) **मेधातिथिः** । भर्तोद्वोढा विवाहसंस्कारेण संस्कृतोयेन या नारी तस्यां यस्तस्मादेव जातस्तंपुत्रंतस्य विजानन्त्यभ्युपगच्छन्ति सर्वएव विद्वांसोनात्र विप्रतिपत्तिः सिद्धांतोयम् । श्रुतिर्द्वैधन्तुकर्तरि यः कर्त्रैव केवलमुत्पादयिताऽन्यदीयक्षेत्रे नतूद्वोढा तत्र श्रुतिर्द्वैधंमतभेदस्तंदर्शयति आहुरुत्पादकमपत्यवन्तंकेचित् अपरे क्षेत्रिणोयस्य सा भार्या तस्यामनुत्पादकमपि एवमाचार्यविप्रतिपत्तेःसंशयमुपन्यस्य कारणकथनेन तमेव समर्थयते ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । भर्तुर्भार्यावतः पाणिग्राहस्य पुत्रंसर्वे विजानन्ति । केचित्तु बीजिनः । श्रुतेर्द्वैधं श्रुतौ बीजिनः पुत्रइतिदर्शनात् श्रुतिकृतं द्वैधं सन्देहः । तथाहि । नशेषोऽग्नेअन्यजातमस्तीत्यादिश्रुतेः । शेषः पुत्रः अन्येन जनितःपुत्रोनास्तीत्यस्याअर्थः । एतेन न क्षेत्रिणः किंतु जनकस्यैवेति गम्यते अतएव दर्शनात्केचिदुत्पादकमाहुरन्येतु न्यायबलात्क्षेत्रिणमिति ॥ ३२ ॥

( ३ ) **कुल्लूकः** । भर्त्तुः पुत्रोभवतीति मुनयोमन्यन्ते । भर्त्तरि द्विः प्रकारा श्रुतिर्वर्त्तते केचिदुत्पादकमवोढारमपि भर्त्तारंतेन पुत्रेण पुत्रिणमाहुः अन्येतु वोढारंभर्त्तारमनुत्पादकमप्यन्यजनितेन पुत्रेण पुत्रिणमाहुः ॥ ३२ ॥

( ४ ) **राघवानन्दः** । विचारमेवाह भर्तुरिति । तत्र भर्तृत्वंद्विविधं श्रुतिर्द्वैविध्याद्वोढृत्वाऽवोढृत्वभेदात् । तत्रावोढृत्वेनापत्योत्पादकमपि भर्तारमाहुः । गर्भधारणात्पुत्रस्यानुत्पादकत्वेपि वोढृत्वेन तत्र वोढुःक्षेत्रसंबन्धात्पुत्रोभवेत् । तदुक्तं याज्ञवल्क्येन ॥ अनेन विधिना जातः क्षेत्रिणः संभवेत्सुतइति ॥ ३२ ॥

( ५ ) **नन्दनः** । भर्तृशब्दः स्वामिवचनः भर्त्तरि श्रुतिर्द्वैविध्यंकर्तरीतिपाठेप्ययमेवार्थः उत्तरार्धेन द्वैविध्यमेवोच्यते उत्पादकंबीजिनंकर्तारंकेचिदाहुः ॥ ३२ ॥

क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान् ॥ क्षेत्रबीजसमायोगात्संभवः सर्वदेहिनाम् ॥ ३३ ॥

( १ ) **मेधातिथिः** । क्षेत्रमिवक्षेत्रभूता नारी व्रीह्यादिरुत्पत्तिस्थानंभूमिभागः क्षेत्रंतत्तुल्यानारी यथा क्षेत्रेबीजमुप्तंतत्र विध्रियमाणंजायते एवंनार्यामपि निषिक्तंरेतोबीजभूतएवपुमान् अत्रापि भूतशब्दउपमायां तदीयंरेतोबीजंन साक्षात्पुमान् तदधिकरणत्त्वात्तु तथाव्यपदिश्यते समायोगःसंबन्धआधाराधेयलक्षणस्ततः संभवउत्पत्तिः सर्वदेहिनांशरीरिणांचतुर्विधस्य भूतग्रामस्य स्वेदजानामप्याकारशः क्षेत्रंबीजंत्वेदोऽतोयुक्तःसंशयः उभयमन्तरेण संभवानुपपत्तेः अपत्योत्पत्तौउभयोर्व्यापारः विनिगमनायावद्धेत्वभावात्कस्य तदुभयोः अन्यथान्यतरस्येति संदेहः सर्वस्य च प्रकरणस्यायमर्थोनानुमानपरिच्छेद्योऽपत्यापत्यवद्भावः तथाच विभागश्लोके वक्ष्यामः ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । एवंच क्षेत्रसंबन्धात्क्षेत्रिणोबीजसंबन्धाद्बीजिनइत्युभयोरपि प्राप्तम् ॥ ३३ ॥

( ३ ) **कुल्लूकः** । व्रीह्याद्युत्पत्तिस्थानंक्षेत्रंतत्तुल्या स्त्री मुनिभिः स्मृता पुरुषश्च व्रीह्यादिबीजतुल्यः स्मृतः यद्यपि रेतोबीजंतथापि तदधिकरणत्वात्पुरुषोबीजमिति व्यपदिश्यते क्षेत्रबीजसमायोगात्सर्वप्राणिनामुत्पत्तिः एवंचोभयोः कारणत्वस्याविशिष्टत्वाद्युक्ता विप्रतिपत्तिः किंयत्संबन्धिक्षेत्रंतस्यापत्यमुत यदीयंबीजंतस्येति ॥ ३३ ॥

( ४ ) **राघवानन्दः** । क्षेत्रिणमिति प्रसंगेनक्षेत्रबीजे व्याकुर्वस्तयोःकृत्यमाह क्षेत्रेति । क्षेत्रवदुत्पादनपरिपालनकर्तृत्वात्क्षेत्रभूता । बीजं रेतः तदाश्रयत्वाद्बीजभूतः तत्र चेतनस्य रजोरेतःसंयोगादचेतनस्य भूबीजसंयोगात् संभवः उत्पत्तिः ॥ ३३ ॥

---

( ३२ ) भर्तरि=कर्तरि ( मे० )

( ५ ) **नन्दनः** । द्वैविध्येयुक्तिमाह क्षेत्रभूतास्मृतेति तस्माद्युक्तंद्वैविध्यमिति ॥ ३३ ॥

**विशिष्टंकुत्रचिद्बीजंस्त्रीयोनिस्त्वेव कुत्रचित् ॥ उभयन्तुसमंयत्र सा प्रसूतिः प्रशस्यते ॥ ३४ ॥**

( १ ) **मेधातिथिः** । बीजस्य वैशिष्ट्यंव्यासऋष्यश्रृङ्गादीनांमहर्षीणांदृष्टं स्त्रीयोनिष्वेव क्षेत्रजादिपुत्रेषु धृतराष्ट्रादिषु ब्राह्मणाज्जाताअपि मातृजातयः क्षत्रियास्ते उभयंतुसमं एकस्वामिकमेकजातीयंसमंसा प्रसूतिः प्रशस्यते विप्रतिपत्त्यभावात् तदुक्तमेतद्भर्तुः पुत्रंविजानन्तीति ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । युक्त्यन्तरमाह विशिष्टमिति । बीजं बीजी पुरुषः विशिष्टं ब्राह्मण्यादिगुणवत् । अन्यतरविशिष्टत्वेन प्रजा विशिष्टा नभवति किंतु यत्रोभयंविशिष्टं सएव प्रसवः शस्यते उभयोःप्राधान्यात् । अतःक्षेत्रद्वारा क्षेत्रिणोप्यपत्यमित्यर्थः ॥ ३४ ॥

( ३ ) **कुल्लूकः** । क्वचिद्बीजंप्रधानंजातायेत्वनियुक्तायामिति न्यायेनोत्पन्नोबीजिनोबुधइव सोमस्य तथा व्यासऋष्यश्रृङ्गादयोबीजिनामेव सुताः । क्वचित्क्षेत्रस्य प्राधान्यंयथायंतल्पजः प्रमीतस्येति वक्ष्यति । अतएव विचित्रवीर्यक्षेत्रे क्षत्रियायां ब्राह्मणोत्पादिताअपि धृतराष्ट्रादय. क्षत्रियाः क्षेत्रिणएव पुत्राबभूवुः । यत्र पुनर्बीजयोन्योः साम्यंतत्र वोढेव जनयिता तदपत्यंप्रशस्तंभवति तत्र बीजप्रधान्यापेक्षंतावदाहुः ॥ ३४ ॥

( ४ ) **राघवानन्दः** । तत्र तयोः प्राधान्यं भिन्दानः समे कार्ये प्रशंसति विशिष्टमिति । बीजस्यप्राधान्यंव्यासऋष्यश्रृंगादौ तेनैषां ब्राह्मण्यमेवोत्कृष्टता । क्षेत्रस्य प्राधान्यं धृतराष्ट्रविदुरादौ क्षत्रियक्षेत्रत्वे । उभयं बीजयोन्यात्मकमनूढासजातीयपरिणयेन समं यत्रप्रसूतौ साप्रसूतिरत्यंतंप्रशस्यतइत्यन्वयः ॥ ३४ ॥

( ५ ) **नन्दनः** । स्वमतमाह विशिष्टंकुत्रचिदिति कुत्रचित्प्रसूतौबीजंविशिष्टं नसर्वत्र । प्रसूतिः शिष्टा एवंस्थितउभयत्र समंएकजातीयम् ॥ ३४ ॥

**बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ॥ सर्वभूतप्रसूतिर्हिबीजलक्षणलक्षिता ॥ ३५ ॥**

( १ ) **मेधातिथिः** । एवमुपपादिते संशये बीजप्राधान्यपक्षंपूर्वंपरिगृह्णाति तत्प्राधान्याद्यस्य बीजंतस्यापत्यंतस्य च प्राधान्यं व्रीह्यादेर्द्रव्यस्य क्षित्याद्यनेककारणत्वेपि तद्धर्मानुविधानदर्शनात् अतश्च स्फुटमदृष्टबीजानुविधानस्यापत्यस्यकार्यत्वाद्व्रीह्यादीनामिव तद्धर्मानुविधायित्वंयुक्तमभ्युपगंतुं तथाहि सर्वत्रकार्यऐकरूप्यंनत्यक्तंभवति तथाच बीजेप्राधान्यंतद्दर्शयति सर्वभूतप्रसूतिर्हि सर्वेषांभूतानां प्रसूतिरुत्पत्तिर्बीजलक्षणलक्षिता बीजस्य यल्लक्षणंरूपवर्णसंस्थानादि तेन लक्षिता चिह्निता तद्रूपानुविधायिनीनियावत् ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रपूर्वपक्षमाह बीजस्येति । बीजलक्षणलक्षिता बीजजातिप्रयुक्तनियतजातिः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । बीजक्षेत्रयोर्बीजंप्रधानमभिधीयते यस्मात्सर्वेषांभूतारब्धानांमुत्पत्तिर्बीजगतवर्णस्वरूपादिचिन्हैरुपलक्षिता दृश्यते ॥ ३५ ॥

( ४ ) **राघवानन्दः** । भेदफलमाह बीजस्येति । बीजलक्षणलक्षिता बीजस्य लक्षणानि रूपसंस्थानार्थक्रियास्तैर्लक्षिता विशिष्टा दृश्यन्ते अतएवोपरिचरवसोरपत्यं मत्स्योदरी सत्यवती नाम ॥ ३५ ॥

( ५ ) **नन्दनः** । अथबीजमेव विशिष्टंषड्भिः श्लोकैराह बीजस्य चैवेति । बीजस्य योन्याश्च द्वयोर्मध्ये बीजलक्षणलक्षिता बीजगुणेनैव दृष्टा ॥ ३५ ॥

**यादृशंतूप्यते बीजंक्षेत्रे कालोपपादिते ॥ तादृग्रोहति तत्तस्मिन्बीजंस्वैर्व्यञ्जितंगुणैः ॥ ३६ ॥**

( १ ) **मेधातिथिः** । अनन्तरस्यैवार्थविस्तरत्वेन श्लोकोयंवक्तान्वयप्रदर्शनेन यादृशंशब्दस्यार्थंव्याख्यास्यति व्रीहयः शालयइत्यादिना कालोपपादिते कालेवर्षादौ वपनकालउत्पादिते कृष्टसमीकरणादिना संस्कृते तादृग्रोहति जायते स्वैर्गुणैर्वर्णसंस्थानरसवीर्यादिभिर्गुणैर्व्यञ्जितंपरिदृश्यरूपम् ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । कालोपपादिते कालेनयुक्ते । एतेन कालवत्क्षेत्रस्यापि गुणतैवेत्युक्तम् । स्वैरसाधारणैर्गुणैरूपादिभिः ॥ ३६ ॥

( ३ ) **कुल्लूकः** । यज्जातीयंबीजंव्रीह्यादि ग्रीष्मादिकाले वर्षादिनासंस्कृते क्षेत्रउप्यते तज्जातीयमेव तद्बीजमात्मीयैर्वर्णादिभिरुपलक्षितंतस्मिन् क्षेत्रे जायते ॥ ३६ ॥

( ४ ) **राघवानन्दः** । एतदेव मत्यक्षयति यादृशमिति । कालोपपादिते तत्तत्सस्योचितकालयुक्ते । रोहत्यङ्कुरःसंपद्यते तस्मिन्नङ्कुरे तादृशबीजावयवस्वल्पङ्कुरपत्रकाण्डादिपरंपरया । पुनस्तादृशं बीजं व्यञ्जितं स्वैर्गुणैः शाल्यादिगन्धरसैः जनयतिभूर्न ॥ ३६ ॥

( ५ ) **नन्दनः** । एतदेव विशदयति यादृशंतूप्यतइति । कालोपपादितकालेन संयोजितमपि महतापिकालेनेत्यर्थः ॥ ३६ ॥

**इयंभूमिर्हि भूतानांशाश्वती योनिरुच्यते ॥ नच योनिगुणान्कांश्चिद्बीजंपुष्यति पुष्टिषु ॥ ३७ ॥**

( १ ) **मेधातिथिः** । बीजगुणानुवृत्तिः पूर्वेणोक्ता अनेन क्षेत्रगुणानामभावमाह एषा भूमिर्भूतानांस्थावराणामोषधीतृणगुल्मलतानांयोनिः क्षेत्रमुच्यते नच तद्गुणास्तेषु भूतेषु केचन दृश्यन्ते नमृदः पांसवोवा तत्रोपलभ्यन्ते बीजंपुष्यंतिपुष्टिषु बीजशब्दोत्राङ्कुरनिर्गतव्रीह्यादिवचनोन मूलवचनस्तदपिहि पुनरुपभुक्तशेषमुप्यमानमपरस्मिन्वत्सरे भवत्येव बीजं-तच्चपुष्यति नानुवर्तते पुष्ट्यङ्गंभूतायामनुवृत्तौ पुष्यतिर्वर्तमानः सकर्मकत्वंद्वितीयानिमित्तं योनिर्गुणान्प्राप्यति वा भजते पुष्टिषु तदवयवेषु निमित्तंन पुष्यतिनानुवर्तते यदि पुष्यङ्गाऽनुवृत्तिराख्यातेनोच्यते पुष्टिष्वित्यन्यार्थकं तस्मादनेकार्थत्वाद्धातूनामन्यवचनमात्रएवाख्यातेनानुव्याख्येयः श्लोकपूरणार्थंवापुष्टिष्विति कथंचित्पौनरुक्त्यंपरिहार्यंसामान्यविशेषभावेन वान्वयोवक्तव्यः स्वपोषंपुष्टइति यथा ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । पुष्टिष्वङ्कुरादिप्रादुर्भावेषु ॥ ३७ ॥

( ३ ) **कुल्लूकः** । एवमन्वयप्रकारेण बीजप्राधान्यंप्रदर्श्य व्यतिरेकमुखेन दर्शयितुमाह इयमिति । हिरवधारणे इयमेव भूमिभूतारब्धानांतरुगुल्मलतादीनांनित्या योनिः कारणंक्षेत्रात्मकंसर्वलोकैरुच्यते नच भूम्याख्ययोनिधर्मान्कांश्चिदपि मृत्स्वरूपत्वादीन्बीजंस्वविकारेष्वङ्कुरकाण्डाद्यवस्थासु भजते भजत्यर्थत्वात्पुष्यतेः सकर्मता तस्माद्योनिगुणानुवर्तनाभावान्न क्षेत्रप्राधान्यम् ॥ ३७ ॥

( ४ ) **राघवानन्दः** । एतदेव व्यनक्ति इयमिति । इयं मत्यक्षापि शाश्वती नित्या योनिरपि नस्वगुणान्पुष्यति । समर्पयति । पुष्टिषु वृक्षादिषु । बीजंतु स्वानुरूपाणि मरोहकाण्डपत्रपुष्पफलरसगन्धादीनि पुष्णाति पोषणेन प्रकटयति ॥ ३७ ॥

( ५ ) **नन्दनः** । एतदेवव्यतिरेकमुखेन दर्शयति इयंभूमिर्हिभूतानामिति । शाश्वती चिरन्तनी । एतावता चिरेण कालेन भूमिगुणः किञ्चिद्बीजंनहि पुष्यति ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । सर्वभूतिर्हिभूतानामितिपाठः । पुष्टिषु अङ्कुरादिप्रादुर्भावेषु ॥ ३७ ॥

**भूमावप्येककेदारे कालोप्तानि कृषीवलैः ॥ नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥ ३८ ॥**

( १ ) **मेधातिथिः** । अनन्तरोक्तोर्थउदाहरणाद्याक्रियते एककेदारेऽपि परत्रयोजनीयः एकस्मिन्नपि क्षेत्रे भूमेः काले यस्यबीजस्य योवैककालस्तस्मिन्नुप्तानिकर्षकैर्भिन्नरूपाणि जायन्ते बीजानि स्वभावानुविधानादित्यर्थः । यदि च क्षेत्रे प्राधान्यंस्यात्क्षेत्रस्यैकत्वात्सर्वाण्यैकरूपाणिस्युः ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । भूमिगुणपोषणमुक्त्वा बीजगुणपुष्टिमाह भूमाविति । एककेदारइत्यत्यन्तमनुप्रयोगकथनम् । स्वभावतः स्वस्य योभावोधर्मः शालित्वादिस्तेन सदृशम् ॥ ३८ ॥

( ३ ) **कुल्लूकः** । अपिचभूमाविति भूमावेकस्मिन्नपि केदारे कर्षकैर्वपनकालोप्तानि व्रीहिमुद्गादीनि नानारूपाण्येव बीजस्वभावाज्जायन्ते नतु भूमेरेकत्वादेकरूपाणि भवन्ति ॥ ३८ ॥

( ४ ) **राघवानन्दः** । तदेव दृष्टान्तेन स्वहस्तयति भूमावितिद्वाभ्याम् । केदारे क्षेत्रे कृषीवलैः कर्षकैः कालोप्तानि तत्तद्बीजप्ररोहकालउप्तानि नानारूपाणि यवशाल्यादीनि जायन्ते कार्याकारेण परिणमन्ति । स्वभावतोबीजस्वभावेन ॥३८॥

( ५ ) **नन्दनः** । बीजानां भूमिगुणपोषणे हेतुर्देशकालवैषम्यविकृतइति चेत्तत्राह भूमावपीति । एककेदारे समानेसंस्थाने संस्कृतक्षेत्रेऽपि । कालोप्तानि नानारूपाणि भिन्नजातीयानि स्वभावतः प्रकृत्यैव । इहास्मिँल्लोके जायन्ते एकमपिबीजंस्वभावतो न व्यभिचरतीत्येतद्दर्शयितुमुक्तम् ॥ ३८ ॥

**व्रीहयः शालयोमुद्गास्तिलामाषास्तथा यवाः ॥ यथाबीजंप्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥**

( १ ) **मेधातिथिः** । तानि नानारूपत्वेन बीजानि दर्शयति । यथावा बीजस्वभावाभिपत्या सर्वत्र जात्याख्यायां बहुवचनम् ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । शाल्योहेमन्तपक्वधान्यानि । व्रीहयस्तेभ्योऽन्यानि धान्यानि । लशुनीक्षवइति निन्दितानिन्दितयोरुदाहरणम् ॥ ३९ ॥

( ३ ) **कुल्लूकः** । तथाहि व्रीहीति । व्रीहयः षष्टिकाः शालयः कलमाद्याः तथामुद्गादयोबीजस्वभावानतिक्रमेण नानारूपाणि जायन्ते ॥ ३९ ॥

( ४ ) **राघवानन्दः** । तदेवाह व्रीहयइति । व्रीहयः षष्टिकाद्याः । शालयः कलमाद्याः । लशुनानि स्थूलकन्ददुर्गन्धीनि ॥ ३९ ॥

( ५ ) **नन्दनः** । नानाबीजानां नानारूपत्वमेवोदाहरति व्रीहयःशालयइति ॥ ३९ ॥

**अन्यदुप्तंजातमन्यदित्येतन्नोपपद्यते ॥ उप्यते यद्धि यद्बीजंतत्तदेव प्ररोहति ॥ ४० ॥**

( १ ) **मेधातिथिः** एषएवार्थः शब्दान्तरेण निगम्यते अन्यदुप्तंजातमन्यदित्यनेनोपपद्यते यद्धि यद्बीजंतदेव प्ररोहति मुद्गेषूप्तेषु व्रीहयोजायन्तइत्येतन्नास्ति प्रतिषेधमुखेनोक्तस्य विधिमुखेन पुनः प्रतिपादनमुच्यते यद्धि यद्बीजम् ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । अन्यदन्यजातीयम् । अतोबीजिनएव प्रजा न क्षेत्रिणइति समुदायार्थः ॥ ४० ॥

( ३ ) **कुल्लूकः** । एवंच सति अन्यदिति । व्रीहिरुप्तोमुद्गादिर्जायतइत्येतन्न संभवति यस्माद्यदेवबीजमुप्यते तत्तदेव जायतएवंबीजगुणानुवर्त्तनात्क्षेत्रधर्मानुवृत्तेश्च व्रीह्यादौ मनुष्येष्वपि बीजप्राधान्यम् ॥ ४० ॥

( ४ ) **राघवानन्दः** । एतदेवान्वयव्यतिरेकाभ्यां दृढयन्नाह अन्यदिति । अन्यत् शाल्यादिबीजमुप्तं न यवाद्याकारेण स्यादिति व्यतिरेकः । अन्वयमाह यद्यदेवेति तत्तदेव शालिपरंपरायायदिनिश्चितमेव ॥ ४० ॥

( ५ ) **नन्दनः** । उक्तमेवार्थंनिगमयति अन्यदुप्तमिति । प्ररोहति प्रत्यक्षतः प्ररोहति । तस्मादुप्तादन्यद्रोहतीत्येतन्नोपपद्यतइति ॥ ४० ॥

( ६ ) **रामचन्द्रः** । अन्यत् उप्तंअन्यत्जातंतएतत्कर्म नउपपद्यते न संघटते । अन्यद्भुक्तंअन्यद्वान्तमितिन्यायोन संघटते ॥ ४० ॥

**तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ॥ आयुष्कामेन वप्तव्यंन जातुपरयोषिति ॥ ४१ ॥**

( १ ) **मेधातिथिः** । एवंपूर्वपक्षेसिद्धान्तमाह क्षेत्रप्राधान्यमनेनोच्यते ननुच नात्रक्षेत्रप्राधान्याभिधायकंकिंचित्पदमस्ति केवलंपरक्षेत्रोपगमननिषेधःश्रूयते । वप्तव्यंन जातुपरयोषितीति परदारेषु बीजनिषेकोनकर्तव्यइत्यस्यार्थः । न पुनर्यस्य क्षेत्रंतस्यापत्यमित्यनेनोक्तंभवति सत्यं तथानश्यति वैक्षिप्तंबीजंपरपरिग्रहइत्यनेनैकवाक्यत्वात् दृष्टापत्यापहारलक्षणदोषनिमित्तोयंप्रतिषेधोनादृष्टार्थउपगमनप्रतिषेधः । सहि चतुर्थे विहतएव नहीदृशमनायुष्यमित्यादिना तस्मादन्यशेषतया प्रतिषेधश्रुतेरनन्तरेणैकवाक्यत्वादसतिस्वातन्त्र्ये युक्ता क्षेत्रप्राधान्यप्रतिपादनपरता प्राज्ञेन सहजया प्रज्ञया विनीतेन पित्रादिभिरनुशिष्टेन ज्ञानविज्ञानवेदिना करणसाधनौज्ञानविज्ञानशब्दौ ज्ञानंवेदाङ्गशास्त्राणि विज्ञानंतर्ककलादिविषयं । एतदुक्तंभवति यस्य काचिद्बुद्धिर्विद्यते तेनैवंन कर्तव्यंयतः सर्वशास्त्रेष्वेषास्थितिः । यस्तु मूर्खस्तिर्यक्प्रख्यः सोत्रनाधिकृतएवेत्यनुवादोयं । आयुष्कामेनेति चातुर्थिकस्य प्रतिषेधस्य प्रत्यभिज्ञानार्थमेतत्ततश्च पृथक्प्रतिषेधशङ्कानिरस्ता भवति ॥४१ ॥

( २ ) **सर्वज्ञनारायणः** । एवं पूर्वपक्षे उक्तेरुक्त्वा यद्यप्येवं तथापि लोके क्षेत्रिणएव फलसंबन्धदर्शनात् [ स्वक्षेत्रद्वारा क्षेत्रिणएव प्रजेत्याह तत्प्राज्ञेनेति । तद्बीजं । प्राज्ञेन स्वतोबुद्धिमता । विनीतेन गुरुशिक्षितेन । ज्ञानं धर्मविषया धीः ][1] विज्ञानंलोकविषया तद्वेदी तत्रत्यभावात् ॥ ४१ ॥

( ३ ) **कुल्लूकः** । संप्रतिक्षेत्रप्राधान्यमाह तदिति तद्बीजंसहजप्रज्ञावता पित्रादिभिरनुशिष्टेन ज्ञानंवेदः एवंविज्ञानमपि तदङ्गादिशास्त्राणि तद्वेदिनाऽऽयुरिच्छता न कदाचित्परजायायां वपनीयम् ॥ ४१ ॥

( ४ ) **राघवानन्दः** । दृष्टान्तजातस्य दार्ष्टान्तिके फलितमाह तदिति । तस्मादर्थेज्ञानविज्ञानवेदिना श्रुतिस्मृतिविदा । नवप्तव्यं रेतइतिशेषः । परयोषिति नियुक्तायामपि न वप्तव्यमित्युक्तम् ॥ ४१ ॥

( ५ ) **नन्दनः** । एवं बीजप्राधान्यमुक्तमधुनाक्षेत्रप्राधान्यंचतुर्भिः श्लोकैराह तत्प्राज्ञेनेति । तद्बीजं । ज्ञानंलौकिकं । विज्ञानं शास्त्रजंप्रधानमितिकृत्वा परक्षेत्रेवप्तव्यं क्षेत्रस्वामित्वादित्यर्थः ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । विनीतेन गुरुशिक्षितेन । विज्ञानवेदिना ज्ञानं धर्मविषयं विज्ञानं लोकविषयं तयोर्वेदिना ॥ ४१॥

**अत्र गाथावायुगीताः कीर्तयन्ति पुराविदः ॥ यथा बीजंन वप्तव्यंपुंसा परपरिग्रहे ॥ ४२ ॥**

( १ ) **मेधातिथिः** । गाथाशब्दोवृत्तविशेषवचनः यथोक्तंपिङ्गलेन अत्रासिद्धंगाथेति अविगीताः परंपरागताः श्लोकाअभ्युच्यंते तदेषापियज्ञगाथागीयतइत्युक्त्वा श्लोकाउत्तरत्रवेदे पठ्यन्ते यदस्यपूर्वमपरंतदस्येति वायुनागीताः पठिताः वायुप्रोक्ता पुराविदः पुराणकल्पान्तरवेदिनः परपरिग्रहेपरक्षेत्रे ॥ ४२ ॥

---

( १ ) सर्व० २

( २ ) **सर्वज्ञनारायणः** । माभूदायुष्कामस्य कर्तव्यं किं ततोऽतआह अत्रेति ॥ ४२ ॥

( ३ ) **कुल्लूकः** । अतीतकालज्ञाअस्मिन्नर्थे वायुप्रोक्तागाथाःछन्दोविशेषयुक्तानि वाक्यानि कथयन्ति यथा परपुरुषेण परपत्न्यां बीजंन वप्तव्यमिति ॥ ४२ ॥

( ४ ) **राघवानन्दः** । तत्र सतांवाक्यं प्रमाणयति अत्रेति । गाथाः विगीतश्लोकाः । परपरिग्रहे परगृहीतदाररूपे ॥ ४२ ॥

( ५ **नन्दनः** । यथा येन हेतुना ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । परपरिग्रहे परस्त्रियां यथा न वप्तव्यम् ॥ ४२ ॥

**नश्यतीषुर्यथाविद्धः खे विद्धमनुविध्यतः ॥ तथा नश्यति वै क्षिप्रंबीजंपरपरिग्रहे ॥ ४३ ॥**

( १ ) **मेधातिथिः** । ताइदानींगाथादर्शयति इषुः शरः सनश्यति खेछिद्रे अन्येनेष्वासेन विद्धंमृगमनुविध्यतः [ पूर्वस्य वेधकस्यात्रस्वाम्यं अथवाऽऽकाशेखे शरः क्षिप्तोलक्ष्यमन्तरेण नश्यति निष्फलोभवति विद्धंचानुविध्यतः ] ‡ एवंपरस्त्रियंतेजोनिःक्षिप्तंतस्य बीजिनः क्षेत्रस्वामिनोपत्यंभवति ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येन विद्धमनु पश्चाद्विध्यतः वृथाविध्यतः क्षिप्तोपीषुर्नश्यति । अन्येन पूर्वविद्धत्वेन स्वीकृतत्वादिषुविद्धत्वेपि पक्षिणोमांसलाभोत्र पूर्वपरिग्रहीतुरेवेत्यर्थः । नश्यति निःफलंभवति ॥ ४३ ॥

( ३ ) **कुल्लूकः** । यथान्येन विद्धंमृगंकृष्णसारंतस्मिन्नेव छिद्रे पश्चादन्यस्य विध्यतआविद्धः क्षिप्तः शरोनिष्फलोभवति पूर्वहन्तुरेव हतत्वात्तस्यैव तन्मृगलाभात् एवंपरपत्न्यामुप्तंबीजंशीघ्रमेव निष्फलंभवति गर्भग्रहणानन्तरंक्षेत्रिणः सद्यःफललाभात् ॥ ४३ ॥

( ४ ) **राघवानन्दः** । परक्षेत्रे बीजस्योप्तिर्वप्तुः फलाय न पर्याप्तेति दृष्टान्तगाथामाह नश्यतीति । विद्धं मृगमन्येन । खे तत्कर्तच्छिद्रे । खमित्युपलक्षणम् । अनुविध्यतः पश्चात्ताडयतः इषुः शरोनश्यति मृगलाभायापर्याप्तः यतः पूर्वहन्तुरेव सः शरमृगस्य विद्यमानत्वाद्विद्धेषुर्नश्यति । पाश्चात्येन यथा सपशुर्न लभ्यते एवं गर्भोबीजिना न लभ्यतइत्यर्थः ॥४३॥

( ५ ) **नन्दनः** । तामेव गाथामाह नश्यतीषुर्यथेति । खेविद्धं खेसंबद्धं वायुमिति यावत् वायुंलक्षीकृत्य विद्धोयुक्तः इषुर्विध्यतः प्रहरतः पुरुषस्य यथा नश्यति निष्फलोभवति तथा नश्यति तत्फलं बीजिनोन भवति क्षेत्रिणोभवतीत्यर्थः । क्षेत्रं प्रथमपरिग्रहीतुरेवेति ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । यथाक्षिप्तइषुर्बाणः खे अकाशे नश्यति निराधारत्वात् कीदृशः इषुर्विद्धंलक्षं अनुविध्यतः ॥४३॥

**पृथोरपीमांपृथिवींभार्यांपूर्वविदोविदुः ॥ स्थाणुच्छेदस्य केदारमाहुः शल्यवतोमृगम् ॥ ४४ ॥**

( १ ) **मेधातिथिः** । ईदृशोयंपुराणकृतो जायापतिलक्षणसंबन्धो यद्भिन्नावपि तावेकीकृताविव दर्शयति तथाहि अनेकवर्षसहस्रातीतपृथुसंबन्धामही तेनैव व्यपदिश्यते पृथिवीति तस्मादन्यापि स्त्री यस्य भार्या तस्य पुत्रोऽनेनापिजातः स्थाणुच्छेदस्य केदारंस्तमाहुः संबन्धान्तरस्याभावात् स्वस्वामिसंबन्धंषष्ठीप्रतिपादयति स्थाणुर्गुच्छगुल्मलतादिप्ररूढोयत्र भवतितच्छिनत्ति यः सस्थाणुच्छेदः तस्य तत्क्षेत्रंयेन प्ररूढगुल्मलतावीरुधःछित्वा भूमिः क्षेत्री कृता तत्र कर्षणवप्

‡ ( आ आ )

नजातंफलंतस्यैव शल्यवतोमृगमाहुरित्यनुषज्यते बहूनांमृगमनुधावतामाखेटकार्येयस्यैवसंबंधिशरशल्यंमृगे दृश्यते तस्य तमाहुर्यः प्रथमवेद्धुश्च सभवतीत्युक्तंनश्यतीषुरित्यत्र ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। यथा पृथोः परिग्रहानन्तरमनेकराजपरिगृहीतार्थामपि पृथिवीं प्रथमपरिग्रहीतृत्वात्पृथोस्तस्यैव नाम्ना पृथिवीति व्यपदिशन्ति तथा प्रथमपरिग्रहीतुरेव भार्याऽतोनन्तरंपरिग्रहाद्बीजिनएव क्षेत्रं किं तस्यादित्यपि नाशङ्कनीयमित्यर्थः। स्थाणुछेदस्य यः प्रथमं खिलभङ्गार्थं क्षेत्रे स्थाणुमुत्पादयति तस्य न द्वितीयपरिग्रहीतुः। केदारं क्षेत्रम्। शल्यवतोयस्यतोयेन विद्धोनतु तदनन्तरं मृगग्रहीतुः॥ ४४ ॥

( ३ ) **कुल्लूकः**। इमामपि पृथ्वींपृथुना पूर्वपरिगृहीतत्वात् अनेकराजसंबन्धेपि पृथोर्भार्यामित्यतीतज्ञाजानन्ति तस्मात्स्थाणुंछिन्दन्ति स्थाणुच्छेदः कर्मण्यण् येन स्थाणुमुत्पाठ्य क्षेत्रंकृतंतस्यैव तत्क्षेत्रंवदन्ति तथा शरादिशल्यंयेन पूर्वंमृगे क्षिप्तंतस्यैव तंमृगमाहुः एवंच पूर्वपरिग्रहीतुः स्वामित्वाद्वोढुरेवापत्यंभवति न जनयितुः ॥ ४४ ॥

( ४ ) **राघवानन्दः**। अत्रार्थे पुरावृत्तं स्फुटयन्परयोषिति पुत्रार्थमाशासानस्यपुत्राशावैफल्यमाह पृथोरिति। अनेकराजसंबन्धित्वे भूमेः भुवः पृथ्वीति समाख्याबलात्। पृथोरेव भार्यामाहुः* भुवः स्थाणुच्छेदस्य प्रथमंतदुच्छेदकस्य केदारं क्षेत्रं एवं शल्यवतः अग्रे मृगंप्रतिशरंयोजयितुः दृष्टान्तत्रये क्षेत्रिणएवापत्यम् ॥ ४४ ॥

( ५ ) **नन्दनः**। तेन तत्र क्षिप्तमन्येन बीजंनश्यति तस्येत्यभिप्रायेणाह पृथोरपीमामिति। पूर्वविदः प्रथमं लब्धवतः पृथोरिमां पृथिवीमपि भार्यां विदुः। पूर्वविदइति स्थाणुच्छेदशल्यवतोरपि विशेषणं स्थाणुच्छेदः खिलीकृतक्षेत्रसंस्कर्ता जायापत्योरभेदश्चायम् ॥ ४४ ॥

( ६ ) **रामचन्द्रः**। स्थाणुच्छेदस्य केदारं। भूमिस्थवृक्षछेदकस्य क्षेत्रम्। च पुनः शल्यकर्तुःमृगंमृगयायां इति आहुः ॥ ४४ ॥

## एतावानेव पुरुषोयज्जायात्मा प्रजेति ह ॥ विप्राः प्राहुस्तथा चैतद्योभर्ता सा स्मृताङ्गना ॥ ४५ ॥

( १ ) **मेधातिथिः**। युक्तंच यस्य भार्या तस्यापत्यंयस्माद्भार्यायाभर्तुश्चैकत्वमेव प्रजाप्यात्मभूतैव कथंवान्यस्यात्मासोन्यस्य भवेत् एवंतावद्दृष्टमेतल्लोके शास्त्रज्ञाअप्येवमेव विप्राःप्राहुरिति ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः**। एतावानेव तत्त्रयमेलकःपरिणामः। तत्रप्रजातीपि जायान्तरङ्गमित्याह योभर्तेति। प्रजावयवभूता जायाचात्मैवेत्यर्थः ॥ ४५ ॥

( ३ ) **कुल्लूकः**। नैकः पुरुषोभवति अपि तु भार्या स्वदेहमपत्यानीत्येतत्परिणामएवपुरुषः तथाच वाजसनेयब्राह्मणम् ॥ अर्द्धोहवाएषआत्मनस्तस्माद्यज्जायांनविंदतेनैतावत्प्रजायतेअसर्वोहितावद्भवतिअथयदैवजायांविंदतेऽथप्रजायतेतर्हिसर्वोभवति। तथाचैतद्वेदविदोविप्रावदन्ति योभर्त्ता सैव भार्या स्मृतेति एवंच तस्यामुत्पादितंभर्त्तुरेवापत्यंभवतीति यतश्च दंपत्योरैक्यमतः ॥ ४५ ॥

( ४ ) **राघवानन्दः**। आत्मैवेदमग्रआसीत् एकमेव सोकामयत जाया मे स्यादथ प्रजायेय अर्धोहवा एषआत्मनोयज्जाया आत्मावै पुत्रनामासि इत्यादिश्रुतेरात्मनएव जायापत्यपतित्रितयरूपत्वेन पूर्णत्वात्पुरुषत्वमित्याह एतावानिति। त्रिभिर्मिलित्वा यतः पुरुषत्वमतोपत्यंदंपत्योरेव। एतदेवाह तथेति। भर्तुरेवापत्याकारेणपरिणामोजायोपादानकः। अङ्गाय पुत्रार्थमानीयतइत्यङ्गना ॥ ४५ ॥

---

* माहुः = माहुः एवं ( राघ० २ ) = माहुः एवमपि ( न )

( ५ ) **नन्दनः** । जायाजातस्य भर्तुरपत्यत्वप्रतिपादनार्थमाह एतावानेवेति । आत्मात्वयंपुरुषः जाया प्रजा इति च यदेतावानेव पुरुषः अत्र प्रमाणं माहुः विप्राइत्यादि इतरयोरुपन्यासोदृष्टान्तार्थः ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । भर्तासातस्य अङ्गनास्मृताभर्तैव अङ्गनेति एतावानेवपुरुषःत्रितयसमुदायरूपःयत्यस्मात्कारणात् जायास्त्री आत्मा प्रजा इतित्रयं तथाचपुनः विप्राएतत् आहुः ॥ ४५ ॥

**न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ॥ एवंधर्मंविजानीमः प्राक्प्रजापतिनिर्मितम् ॥ ४६ ॥**

( १ ) **मेधातिथिः** । अथ मन्येत धनादिदानेन क्रीत्वा स्वीयाः करिष्यन्ते परभार्यायांततोविनिवृत्ते दुःस्वाम्येतज्जातोजनयितुः पुत्रोभवतीत्येतन्नयतोन शक्याभार्यात्वेन निष्कसहस्रैरप्यन्यदीयाः स्वत्वमानेतुं नापि भर्त्रा त्यक्ता प्रहीणद्रव्यतया प्रतिग्रहीतुः स्वत्वमापद्यते यतउद्वहेतेति कर्त्रभिप्रायक्रियाफलविषयादात्मनेपदाल्लिङ्गान्नान्येव संस्कृताऽन्यस्य भार्या भवति यथानाहवनीयादयआधातुरन्यस्य क्रियादिनाऽऽहवनीयादिव्यपदेश्या निष्क्रयोविक्रयोविनिमयश्च विसर्गस्त्यागस्ताभ्यां न मुच्यतेनभार्यात्वमस्याअपैति ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । निष्क्रयोविक्रयविनिमयौ । विसर्गः दानं । न मुच्यते पुनर्मूल्यंदत्वाग्रहीतुंलभ्यतइत्यर्थः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । निष्क्रयोविक्रयः विसर्गस्त्यागः नताभ्यां स्त्री भर्तुर्भार्यात्वादपैत्येवंपूर्वंप्रजापतिना स्मृतंनित्यंधर्मंमन्यामहे । एवंच क्रयादिनापि परस्त्रियमात्मसात्कृत्वा तदुत्पादितापत्यंक्षेत्रिणएव भवति न बीजिनः ॥ ४६ ॥

( ४ ) **राघवानन्दः** । अतोविक्रयपरित्यागयोरपि भार्यात्वं नापैतीत्याह नेति । अस्यादानंविक्रयोवानास्ति अभिन्नत्वात्तस्याः । आत्मनोर्धं पत्नीनामेतिश्रुतेरेवंयुक्तत्वमपि नापैति । यस्य तेबीजतोजातास्तस्यते नेतरस्यत्वित्युक्तेभार्या पुत्रदानविक्रयस्मरणं राजादौतदुद्भूतसेवादिपरम् । प्रजापतिविनिर्मितमिति तत्र प्रमाणम् ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । निष्क्रयविसर्गाभ्यां विक्रयदानाभ्यांभर्तुःसकाशात् भार्या नमुच्यते ॥ ४६ ॥

**सकृदंशोनिपतति सकृत्कन्या प्रदीयते ॥ सकृदाह ददानीति त्रीण्येतानि सतांसकृत् ॥ ४७ ॥**

( १ ) **मेधातिथिः** । अयमनुशयविधावष्टमे व्याख्यातः विभागकाले हि समविषमांशभाग्भिः समविषमांशभागकेषु परिकल्प्य विभागःकर्तव्यः तत्र कृते योविप्रतिपद्येततस्य प्रतिषेधार्थमिदं तत्रापि यद्यसावयथार्थतांकस्यचिदंशस्य प्रज्ञापयेत्तदास्यैव पुनर्विभागः अथ बहुना कालेनायथाकृततांब्रूयाद्यावदितःस्वेषु स्वेषु भागकेष्वन्यनिवेशशीर्णप्रतिसंस्कारादिकृतंभवेद्वस्त्रहिरण्यादिचोपयुक्तंस्यात्तदा समतामात्रकरणे प्रभवति न पुनः सर्वसमवापविभागं अन्येतु क्लीबादीनामनर्हितविभागकानांपश्चादभागहरत्वनिमित्तक्लीबत्वादिपरिज्ञानान्नास्तिभागोपहारइति सकृन्निपातप्रयोजनंवदन्ति। एवंद्वित्रिचतुर्भागहराणांयदृच्छया ये समतांप्रकल्पयेयुः पश्चादनुशयातात्प्राक्तनंव्यवस्थानमतिक्रम्यापहर्तुंलभेरन् पतितस्य तु लब्धभागस्याप्यपहारंवक्ष्यामि । सकृत्कन्याप्रदीयते यद्यपि चानेन वाग्दानोत्तरकालंप्रागपि विवाहाद्भर्तुः स्वतोच्यते तथापि दत्तामपि हरेत्कन्यांतेषांतुनिष्ठाविज्ञेयाविद्वद्भिः सप्तमेपदइत्यादिपर्यालोचनया विशिष्टविषयतैव सा च व्याख्याता । सकृदाहददामीति गवादयोहियेनैव रूपेणात्मनः स्वंतेनैवान्यस्माआपद्यन्ते कन्यातु दुहितृत्वेन स्वंसती भार्यात्वेनानिवृत्तस्वसंबन्धा दीयतइति पृथगुपन्यासः ननुचानिवर्तमाने पितुःस्वसंबन्धःकथंकन्यादानेनिवर्ततेएतद्धिदानस्यरूपंयदेकस्य संबन्धोनिवर्ततेऽन्यस्योपजायतइति नैषदोषः द्वावत्रसंबन्धावपत्यापत्यवद्भावः स्वस्वामिसंबन्धश्च तत्रापत्यापत्यवद्भावोन निवर्ततेइतरस्तु निवर्तते तथाच बाल्येपितुर्वशेतिष्ठेदिति पितुश्चात्र स्वाम्यनिवृत्तिमाह पाणिग्राहस्येति भर्तुस्तदुत्पत्तिम् ॥४७ ॥

( २ ) **सर्वज्ञनारायणः** । अंशोदायादानांविभक्तोर्थः सकृत्पतति सकृदेवनियम्यते यएकदानियतः सएवेति यथा तथा । सकृदेव कन्या प्रदीयते प्रकर्षेणहस्तोदकेनदीयते । किंबहुना कन्यांददानीति वाङ्मात्रेणापि सकृदेवाह । वाग्दानमपियत्रादौ कृतंतस्यैव भार्या नतु दोषाभावे स्वेच्छयाऽनन्तरंपित्राऽन्यस्मै प्रदाने तस्य भवतीत्यर्थः । केचित्सकृदाहददानीतिद्रव्यान्तरविषयमाहुः ॥ ४७ ॥

( ३ ) **कुल्लूकः** । पित्रादिधनविभागोभ्रातॄणांधर्मतः कृतः सकृदेव भवति न पुनरन्यथा क्रियतइति तथा कन्यापित्रादिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते एवंचान्येन पूर्वमन्यस्मै दत्तायां पश्चात्पित्रादिभिः प्राप्तायामपि जनितमपत्यंन बीजिनोभवतीत्येतदर्थमस्योपन्यासः तथा कन्यातोन्यस्मिन्नपि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीयतइति त्रीण्येतानि साधूनांसकृद्भवन्ति । यद्यपि कन्यादानस्य सकृत्करणंप्रकृतोपयुक्तंतथापि प्रसङ्गादंशादानयोरपि सकृत्त्वाभिधानंसकृदाह ददानीत्यनेनैव कन्यादानस्यापि सकृत्करणसिद्धौ प्रकृतोपयोगित्वादेव पृथगभिधानम् ॥ ४७ ॥

( ४ ) **राघवानन्दः** । अतआह सकृदिति । अंशोविभागः सच भ्रातॄणामेकवारमात्रं विभागाद्यनुष्ठानं न पुनरनुष्ठानं शास्त्रप्रमाणकमेवं कन्यादानं प्रतिश्रुतं चोत्सर्गतः । अन्यथा संसृष्टविभागे वाग्दत्ताया देवरपरिग्रहे दानोद्देश्यमृतावतिप्रसंगः ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । सकृत् एकवारम् । अंशः विभक्तदायभागः पतति सकृद्ददाति इति आह सतां एतानि त्रीणि सकृत् सकृत् । ४७ ॥

**यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च ॥ नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि॥ ४८ ॥**

( २ ) **सर्वज्ञनारायणः** । अन्यस्वामिकपश्वादिष्वित्यर्थः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । यथा गवादिषु परकीयेष्वात्मवृषभादिकंनियुज्य वत्सोत्पादकोन तद्भागी तथा परकीयभार्यास्वपि नोत्पादकः प्रजाभागी भवति ॥ ४८ ॥

( ४ ) **राघवानन्दः** । ननु परयोषिति बीजवापिनएव फलं स्याद्बीजसारूप्यदर्शनादितिचेन्न लोके तथाऽदृष्टचरत्वादित्याह यथेति । उत्पादकः स्वामी परगवादिषट्सु स्ववृषादिकं नियोज्यापि न प्रजाभागी एवमन्याङ्गनास्वपि ॥ ४८ ॥

( ५ ) **नन्दनः** । क्षेत्रप्राधान्यप्रतिपादकं क्षेत्रिणएव पुत्रो न बीजिनइत्येतन्निदर्शनेनुपपादयति यथागोश्वोष्ट्रदासीष्विति । अन्यगोष्वन्यदीयासु तथैवान्याङ्गनास्वपीति पूर्वेण संबन्धः ॥ ४८ ॥

**येऽक्षेत्रिणोबीजवन्तः परक्षेत्रप्रवापिणः ॥ ते वै सस्यस्य जातस्य न लभन्ते फलंक्वचित् ॥ ४९ ॥**

( १ ) **मेधातिथिः** । प्रसिद्धमेवैतत् अक्षेत्रिणोबीजवन्तोव्रीह्यादिबीजस्वामिनः सस्यस्य मुद्गमाषादेर्जातस्य नलभन्तेफलं परक्षेत्रेचेदुत्पत्तिः ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । ये क्षेत्रिणः क्षेत्रस्वामिनः । केवलं बीजवप्तारः । परक्षेत्रइति प्रवापिणइति दृष्टान्तः । यथेति पूरणीयम् ॥ ४९ ॥

( ३ ) **कुल्लूकः** । क्षेत्रस्वामिनोयेन भवन्ति अथ बीजस्वामिनः सन्तः परक्षेत्रे बीजंवपन्ति ते तत्र क्षेत्रजातस्य धान्यादेः फलंक्वचिदपि देशे न लभन्तइति प्रकृतस्य दृष्टान्तः ॥ ४९ ॥

( ४ ) **राघवानन्दः** । निगमयति । यइति अक्षेत्रिणइतिच्छेदः । येऽक्षेत्रिणः परदाररतास्ते सस्य- बीजानुरूपतोनिर्णीतस्यापि फलं पिण्डादि न लभन्ते स्म ॥ ४९ ॥

( ५ ) **नन्दनः** । अक्षेत्रिणइतिपदम् ॥ ४९ ॥

**यदन्यगोषु वृषभोवत्सानांजनयेच्छतम् ॥ गोमिनामेव तेवत्सामोघंस्कंदितमार्षभम् ॥ ५० ॥**

( १ ) **मेधातिथिः** । पूर्वेण स्थावरेषु धर्मः प्रसिद्धवदुदितोज्ञापितोवा अनेन तिर्यक्षु परिगृहीतेषु गवादिषु निदर्श्यते अन्यदीयोवृषभोयद्यप्यन्यगवीषु वत्सान्बहूनपि जनयेन्नवृषभस्वाम्येकमपि वृषभंलभेत सर्वएव ते वत्सागोमिनांगोस्वामिनां आर्षभमृषभसंबन्धिस्कंदितंबीजनिषेकोमोघंवृथानिष्फलम् ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । गोमिनां गोगवीमताम् । मोघं वृथा । वृषभस्य स्पन्दितं चेष्टितं मैथुनार्थे ॥ ५० ॥

( ३ ) **कुल्लूकः** । यदन्यदीयगवीषु वृषभोवत्सशतमपि जनयेत्सर्वे ते वत्साः स्त्रीगवीस्वामिनोभवन्त्येव न वृषभस्वामिनः वृषभस्य यच्छुक्रसेचनंतद्वृषभस्वामिनोनिष्फलमेव भवति यथा गोश्वोष्ट्रेत्यनेनोत्पादकस्य प्रजाभागित्वंन भवतीत्येतत्परत्वेन दृष्टान्तउक्तः अयन्तुक्षेत्रस्वामिनः प्रजाभागित्वंभवतीत्येतत्परत्वेनातोन पुनरुक्तिः ॥ ५० ॥

( ४ ) **राघवानन्दः** । एतदेव दृष्टान्तान्तरेण दृढयति यदिति । गोमिनां स्त्रीगोस्वामिनाम् । गोपदमपश्वाद्युपलक्षकम् । स्कन्दितं शुक्रसेचनम् । आर्षभमृषभस्येदम् । मोघं स्वस्वामिफलाजनकम् ॥ ५० ॥

( ५ ) **नन्दनः** । अन्यगोषु अन्यदीयगोषु ॥ ५० ॥

( ६ ) **रामचन्द्रः** । गोमिनां गोस्वामिनाम् आर्षभंऋषभाणामिदमार्षभं स्कन्दितं सङ्केतः ॥ ५० ॥

**तथैवाक्षेत्रिणोबीजंपरक्षेत्रप्रवापिणः ॥ कुर्वन्ति क्षेत्रिणामर्थंन बीजी लभते फलम् ॥ ५१ ॥**

( १ ) **मेधातिथिः** । पूर्वस्यनिर्देशोयं यथा गवादिषु स्थावरेषु चैवंमनुष्येष्वपि कुर्वन्ति क्षेत्रस्वामिनामर्थं प्रयोजनंबीजकार्यं संपादयन्ति ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृते योजयति तथैवेति । बीजमिति विभक्तिव्यत्ययः बीजस्य परक्षेत्रे वापिणोवप्तारोऽक्षेत्रिणः । क्षेत्रिणां भार्यावतां । अर्थं फलम् ॥ ५१ ॥

( ३ ) **कुल्लूकः** । यथा गवादिगर्भेषु तथैवापत्यरहिताः सन्तः परकीयभार्यायां ये बीजंवपन्ति ते क्षेत्रस्वामिनामेवापत्यलक्षणमर्थंकुर्वन्ति बीजसेक्ता त्वपत्याख्यंफलंन लभते ॥ ५१ ॥

( ४ ) **राघवानन्दः** । तत्र परोपकारमात्रंकुतइत्यत आह अर्थमिति । सपतिकायां स्त्रियां स्कन्दनं सन्दिग्धो गर्भोऽसन्दिग्धोऽतिगूढोत्पन्नोपि क्षेत्रिणएवेतिभावः ॥ ५१ ॥

( ५ ) **नन्दनः** । तथैव वृषभवत्फलं क्षेत्रिणोबीजवन्तः ॥ ५१ ॥

**फलंत्वनभिसंधाय क्षेत्रिणांबीजिनांतथा ॥ प्रत्यक्षंक्षेत्रिणामर्थोबीजाद्योनिर्गरीयसी ॥ ५२ ॥**

( १ ) **मेधातिथिः** । अविशेषेणोक्तं क्षेत्रिणांफलंनबीजिनस्तस्यावशिष्टविषयत्वमाह अनभिसंधायेति अभिसंधानंबीजक्षेत्रिणोरितरेतरसंविद्व्यवस्थापनं नष्टाश्वदग्धरथवत् उभयोरावयोः फलमस्त्विति यत्र वचनव्यवस्था न भवति तत्र क्षेत्रिणएव प्रत्यक्षोर्थो निश्चितफलंप्रत्यक्षशब्देन निःसंदिग्धतामाह यतोबीजाद्योनिर्बलीयसी क्षेत्रमधिकबलं सत्यां तु संविदि ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । फलमनभिसंधायावयोस्तुल्यं फलमिति समयमकृत्वा बीजिनः प्रवृत्तौ क्षेत्रिणामेवार्थःफलमिति प्रत्यक्षं लोकसिद्धम् । गरीयसी स्वत्वहेतुः ॥ ५२ ॥

( ३ ) **कुल्लूकः**। यदस्यामुत्पत्स्यतेऽपत्यंतदावयोरुभयोरेवैवंयत्र नियमोन कृतस्तत्र निःसंदिग्धमेव क्षेत्रिणोऽपत्यं उक्तरीत्या बीजात्क्षेत्रंबलवत् ॥ ५२ ॥

( ४ ) **राघवानन्दः**। ननु न ते परोपकारार्थं यतन्ते किंतु कामात् सत्यं आर्थिकःसइत्याह फलमिति। अनभिसंधाय एतदपत्यमुभयोरित्यनियमे। बीजिनोरागमात्रोपाधिकत्वात् किंचयोनिर्गरीयसीत्युक्तम्। निगमयति योनिर्गरीयसीति। स्वक्षेत्रे बीजस्योत्कृष्टत्वेपि परक्षेत्रे स्कन्दनेऽतिवृत्ते तद्विशेषे विप्रतिपत्तेःक्षेत्रत्वेन सर्वत्रानुगमात्क्षेत्रस्यैव कारणत्वनिश्चितिरितिभावः ॥ ५२ ॥

( ५ ) **नन्दनः**। क्षेत्रिणामियत्फलंबीजिनामियत्फलमित्यभिसन्धाय परक्षेत्रमवापिण इत्यनुकर्षणं क्षेत्रिणामर्थं कुर्वन्तीति चास्यानुकर्षः प्रत्यक्षंलोके कृषीवलैः क्रियमाणंदृश्यते तेन बीजाद्योनिर्बलीयसी ॥ ५२ ॥

( ६ ) **रामचन्द्रः**। फलंअनभिसंधाय आवयोःसमंफलमिति समयमकृत्वा बीजात् योनिःगरीयसी ॥ ५२ ॥

## क्रियाभ्युपगमात्त्वेतद्बीजार्थंयत्प्रदीयते ॥ तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिकएव च ॥ ५३ ॥

( १ ) **मेधातिथिः**। अनभिसंधाय क्षेत्रिणः फलमुक्तमभिसंधाने किंबीजिनउतोभयोरिति संशयउभयोरित्याह क्रियायाअभ्युपगमोङ्गीकरणमेवमेवैतदितियोनिश्चयः संविल्लक्षणः सा क्रियाभिप्रेता तामभ्युपगमय्यबीजार्थंबीजकार्यफलनिष्पत्त्यर्थंयत्प्रदीयते सामर्थ्याद्बीजमिति गम्यते तस्येह द्वावपि भागिनौ ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः**। क्रिया नियमस्तुल्यमावयोःफलमिति तामभ्युपगम्य यत्क्षेत्रंपरस्मै दीयते बीजार्थं बीजवपनार्थम् ॥ ५३ ॥

( ३ ) **कुल्लूकः**। यदत्रापत्यंभविष्यति तदावयोरेवेति नियम्यैतत्क्षेत्रंस्वामिना बीजवपनार्थंयद्बीजिनोदीयते तस्यापत्यस्य लोके बीजिक्षेत्रिणौ द्वावपि भागिनौ दृष्टौ ॥ ५३ ॥

( ४ ) **राघवानन्दः**। *अनभिसंधायेत्युक्तंतत्राभिसंधानपूर्वकंचेदुभयोरपीत्याह क्रियेति। क्रिया समयः यदत्रापत्यं भविष्यति तदावयो रुभयोर्भवेदिति नियम्यतत्क्षेत्रस्वामिनाबीजवपनार्थंयद्बीजिनोदीयते तस्यापत्यस्यलोके बीजिक्षेत्रिणौद्वावपि भागिनौदृष्टौ ॥ ५३ ॥

( ५ ) **नन्दनः**। क्रियाभ्युपगमाद्बीजनिक्षेपक्रियांप्रतिक्षेत्रिणोबीजिनोनुज्ञानाद्योबीजार्थोबीजरूपोर्थः प्रदीयते निक्षिप्यते तस्य बीजीक्षेत्रिकश्चेहलोके कृष्यारम्भफलभागिनौदृष्टो ॥ ५३ ॥

( ६ ) **रामचन्द्रः**। क्रियाभ्युपगमात् समयकारणात् एतद्बीजार्थं यत्प्रदीयते तस्यइह भागिनौ दृष्टौ बीजीक्षेत्रीएवच ॥ ५३ ॥

## ओघवाताहृतंबीजंयस्य क्षेत्रे प्ररोहति ॥ क्षेत्रिकस्यैव तद्बीजंन वप्ता लभते फलम् ॥ ५४ ॥

( १ ) **मेधातिथिः**। परक्षेत्रेवमुर्बीजवापउक्तस्तत्र मन्येत पुरुषापराधात्तस्य युक्तोपहारोनूनमतः क्षेत्रंजिहीर्षति नोचेत्किमिति परक्षेत्रे वपतीति येन तु स्वक्षेत्रे व्युप्तमोघवाताभ्यामन्यत्रनीतंतस्य कोपराधोयदि स्वंद्रव्यंहारयतितदर्थमाह ओघवाताहृतंबीजंसर्वक्षेत्रप्राधान्यमित्यर्थः ओघोजलनिषेकः तेन वायुना चाहृतंन तंयस्य क्षेत्रे प्ररोहति तस्यैव तद्भवति एतेनैव सिद्धंविशिष्टार्थंन बीजी लभते फलमिति ॥ ५४ ॥

---

[ * कुल्लूकधृतोप्ययंग्रन्थः क्वचित्पुस्तके दृष्टः ]

( २ ) **सर्वज्ञनारायणः** । प्रत्यक्षमितिप्रागुक्तं लोकव्यवहारं दर्शयति ओघेति । ओघोनदीरयः ॥ ५४ ॥

( ३ ) **कुल्लूकः** । यद्बीजंजलवेगवाताभ्यामन्यदीयक्षेत्रादानीतंयस्य क्षेत्रे जायते तत्क्षेत्रस्वामिनएव तद्बीजंभवति नतु येन बीजमुप्तंसतत्फलंलभते एवंच स्वभार्याभ्रमेणापरभार्यागमने ममायंपुत्रोभवितेत्यवगमेऽपि क्षेत्रिणएवापत्यमित्यनेन दर्शितम् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । आकूत्यादिभिर्निश्चयेपि नियमंविना फलं क्षेत्रिकस्यैवेत्याह ओघेति । ओघेन स्रोतसा वातेन प्रबलेन वाहृतं प्रापितं बीजं प्ररोहति अङ्कुरयति । तद्बीजं बीजजंफलं ज्ञेयं मानतः । न्यायोत्र गर्भधारणपोषणादिबाहुल्यम् ॥ ५४ ॥

( ५ ) **नन्दनः** । अविद्यमानायांमिथः संविदिक्षेत्रिणएव फलमिति दृष्टान्तेनोपपादयति ओघवाताहृतमिति । यस्य बीजमित्यन्वयः तद्बीजं क्षेत्रिकस्यैव । वप्ता बीजी ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । ओघः नदीप्रवाहः तेन हृतं बीजं यस्य क्षेत्रे प्ररोहति ॥ ५४ ॥

**एषधर्मोगवाश्वस्य दास्युष्ट्राजाविकस्य च ॥ विहङ्गमहिषीणांच विज्ञेयः प्रसवंप्रति ॥ ५५ ॥**

( १ ) **मेधातिथिः** । अपत्याधिकारात्तद्विषयतैव माविज्ञायीति गवाश्वादिग्रहणं यदि वा बीजफलव्यवहारस्य सस्यादिविषयतया प्रसिद्धतरस्तन्निवृत्त्यर्थमाह द्विपदांचतुष्पदांपक्षिणांस्थावराणांच सर्वत्रैषधर्मः एषइति । द्वयंप्रत्यवमृश्यते अनभिसंधाने यस्य क्षेत्रंतस्य फलमभिसंधानेचोभयोः उदाहरणार्थंवानुगवाश्वादिग्रहणस्य श्वमार्जारादिष्वप्ययमेवन्यायस्तर्हिकिमर्थंयद्यन्यगोष्विति प्रायेणगावः पुरुषाणांभवन्ति न तथा विहङ्गमादयइति प्रसिद्धेरनुवादोऽसौ । दास्यःसप्तभिर्दासयोनिभिरुपगताः प्रसवः कायजन्म तंप्रति तत्रेत्यर्थः ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसवंप्रति प्रसवविषये ॥ ५५ ॥

( ३ ) **कुल्लूकः** । एषैवव्यवस्था गवाश्वादीनांसंततिप्रतिज्ञातव्या यत्क्षेत्रस्वाम्येव गवाश्वादेः संततिस्वामी नतु वृषभादिस्वामी नियमे तु कृते सत्येतयोरेव संततिस्वाम्यम् ॥ ५५ ॥

( ४ ) **राघवानन्दः** । यथागोश्वेत्याद्युक्तमुपसंहरति एषइति । विहङ्गः पक्षी । प्रसवमपत्यम् ॥ ५५ ॥

( ५ ) **नन्दनः** । एवं गवाश्वादिष्वपीत्याह एषधर्मइति धर्मोन्यायः ॥ ५५ ॥

**एतद्वः सारफल्गुत्वंबीजयोन्योः प्रकीर्तितम् ॥ अतः परंप्रवक्ष्यामि योषितांधर्ममापदि ॥ ५६ ॥**

( १ ) **मेधातिथिः** । सारः प्रधानंफल्ग्वसारं उपसंहारःपूर्वप्रकरणस्य उत्तरार्धेन वक्ष्यमाणसूचनं आपज्जीवनस्थितिहेतुभूतभोजनाच्छादनाभावः संतानविच्छेदश्च ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । श्रुतिस्तु नान्यजातःपुत्रोस्तीति परबीजप्रभवस्य सुतस्य परलोकानुपयोगित्वपरा नतु संबन्धाभावपरेति सारत्वं योनेः फल्गुत्वं बीजस्य । आपदि भर्तुरभावेसति स्वपतिजन्यसंतानासंभवे ॥ ५६ ॥

( ३ ) **कुल्लूकः** । एतद्बीजयोन्योः प्राधान्याप्राधान्यंयुष्माकमुक्तं अतोऽनन्तरंस्त्रीणांसंतानाभावे यत्कर्तव्यंतद्वक्ष्यामि ॥ ५६ ॥

( ४ ) **राघवानन्दः** । बीजक्षेत्रयोःप्राधान्याप्राधान्यमुपसंहरन्पुत्रशून्यायाः स्त्रियः स्वकुल्यादप्यपत्यमुत्पाद्यमित्याह एतदिति । सारफल्गुत्वं प्राधान्याप्राधान्यम् । आपदि पुत्रानुत्पत्तिदशायाम् । अन्यथा ॥ पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाइतिस्मृतितः प्रत्यवायः ॥ ५६ ॥

( ५ ) **नन्दनः** । आपत्सन्तानपरिक्षयः ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । फल्गुत्वं निःसारत्वम् आपदि भर्त्रभावे ॥ ५६ ॥

**भ्रातुर्ज्येष्ठस्य भार्यायागुरुपत्न्यनुजस्य सा ॥ यवीयसस्तु या भार्या स्नुषा ज्येष्ठस्य सा स्मृता॥५७॥**

( १ ) **मेधातिथिः** । श्लोकद्वयेन प्राकृतव्यवस्थामनुवदन्नापदिनियोगंविधातुंज्येष्ठोऽग्रेजातः अनुजः पश्चाज्जातःकनीयान्यवीयाननुजएव ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । स्नुषा स्नुषावद्व्यवहर्तव्या ॥ ५७ ॥

( ३ ) **कुल्लूकः** । ज्येष्ठस्य भ्रातुर्या भार्या सा कनिष्ठस्य भ्रातुर्गुरुपत्नीभवति कनिष्ठस्य च भ्रातुर्या भार्या सा ज्येष्ठभ्रातुः स्नुषामुनिभिः स्मृता ॥ ५७ ॥

( ४ ) **राघवानन्दः** । एतदेवाविष्कुर्वन्वर्ज्यावर्ज्यत्वमाह भ्रातुरिति । यवीयसः कनिष्ठस्य गुरुपत्नी मातैव ज्येष्ठभ्राता समःपितुरित्युक्तेः । स्नुषा पुत्रपत्नीति ॥ ५७ ॥

( ५ ) **नन्दनः** । वक्ष्यमाण आपद्धर्मोऽनापदि न कर्त्तव्यइति श्लोकद्वयेनाह भ्रातुर्ज्येष्ठस्येति । गुरुपत्नी ज्येष्ठस्य पितृसमत्वात् । स्नुषायवीयसः पुत्रसमत्वात् ॥ ५७ ॥

**ज्येष्ठोयवीयवीयसोभार्यांयवीयान्वाग्रजस्त्रियम् ॥ पतितौ भवतोगत्वा नियुक्तावप्यनापदि॥५८॥**

( १ ) **मेधातिथिः** । इतरेतरभार्यागमने ज्येष्ठानुजयोः पातित्यमनापदि सत्यपिनियोगे ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । नियुक्तौ गुरुभिः । अनापदि संतत्यन्तरसंभवे ॥ ५८ ॥

( ३ ) **कुल्लूकः** । ज्येष्ठकनिष्ठभ्रातरावितरेतरभार्यांगत्वा संतानाभावंविना नियुक्तावपि पतितौ स्याताम् ॥ ५८ ॥

( ४ ) **राघवानन्दः** । ततः किंतत्राह पतिताविति । पतिभोगवन्मैथुन्यभोगेच्छया नियुक्तावपि भवतः । अनापदि संभवत्पुत्रदशायाम् ॥ ५८ ॥

( ५ ) **नन्दनः** । यतएव मतआह ज्येष्ठइति । पतितौ स्नुषागमनाद्गुरुतल्पगमनाच्च । नियुक्तौ गुरुभिर्नियुक्तौ अनापदिसन्तानापरिक्षये ॥ ५८ ॥

**देवराद्वा सपिंडाद्वा स्त्रियासमम्यङ्नियुक्तया ॥ प्रजेप्सिताधिगन्तव्या संतानस्यपरिक्षये॥ ५९ ॥**

( १ ) **मेधातिथिः** । सर्वविशेषेण विशिष्टोऽनेन नियोगोविधीयते संतानस्य परिक्षये नियुक्तया देवरादिभ्यः सम्यक्प्रजोत्पादयितव्या यदुक्तं योषितांधर्ममापदीति सेयमापत्सतानपरिक्षयः संतानशब्देन पुत्रउच्यते दुहिता च पुत्रिका सा हि पितृवंशंतनोति नान्या तस्य परिक्षयोऽनुत्पत्तिरुत्पन्ननाशोवा पुत्रिकायाश्च करणं नहिस्त्रियाः केवलायांपुत्रिकायामन्यस्मिन्वा पुत्रप्रतिनिधावधिकारइति वक्ष्यामः नियुक्तोत्पादयेदनुज्ञातया गुरुभिः कुतःपुनः गुरुभिरिति स्मृत्यन्तरनिदर्शनात् अथवा नियोगशब्दादेव नियोगे हि गुरुसंबन्धीलोकोप्युच्यते नहि विशेषेण नियुक्तोऽध्यापयतीत्युच्यते आचार्येण नियुक्तः करोत्यनुवदति गुरवश्च श्वश्रूश्वशुरदेवरादयोभर्तृसगोत्राद्रष्टव्याः न पित्रादयः । एतेनापत्येनापत्यवन्तस्तउच्यन्ते तर्हिविशेषेण येषांचोपकारस्तत्कृतऔर्ध्वदेहिकोभवति यद्येवंमातामहस्यापि दौहित्रोपकारोस्ति ततः पित्रा दुहिता नियोक्तव्येत्यापन्नं उक्तंयेनापत्यवन्तउच्यन्ते देवरसपिण्डग्रहणत्वेन तद्गोत्राएव त्वदयमागच्छन्ति महाभारतेच तत्र तत्र नियोक्तृभावोभर्तृपक्षणामेवदर्शितः अतएव भ्रातृपुत्रे सति ननियोगः कर्तव्यः । ये हि नयुक्तास्तेषामेवसंतानोपकारः पुत्रजनिते

स्नेहे पत्योपकारमर्थयमानाअधिक्रियन्ते न मृतस्याधिकारोस्ति कथंतर्हि तस्यापत्यमिति व्यपदिश्यते कथंचित्पिण्डदाने सउपकरोति वचनादिति च ब्रूमः नह्यपत्यमुत्पादयितव्यमित्येषविधिस्तेनानुष्ठितइति तथापितदीये क्षेत्रे नियोगविधिजातेन पिण्डदानादिकर्तव्यमितिशास्त्रार्थः ततश्च तस्योपकारकमवगतंयथाचैतत्तथापुरस्तान्निपुणंवक्ष्यामः। देवरः पतिभ्राता सपिण्डः पत्यन्वयः सएव स्त्रियांस्मृत्यन्तरे जातिमात्राच्चेत्युक्तंभवति सम्यगिति घृताक्तादिनियमंवक्ष्यमाणमनुवदति प्रजेप्सिताधिगन्तव्याविधौ कृत्यईप्सितशब्देन कार्याक्षमतामाह ततोदुहितर्यन्धबधिरादौ च जाते पुनर्नियोगोनुष्ठेयः ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः**। देवरात्पत्युःसोदरभ्रातुः तदभावे सपिण्डात् सपिण्डमात्रदेवरात्पतिसापत्नभ्रातुः मातुलपुत्रादेः सम्यक् घृताभ्यङ्गादि कृत्वा नियुक्तया पत्या गुरुभिर्वा प्रजेप्सिता पुत्ररूपा नतु स्त्रीक्लीबरूपा। ततश्च पुत्रानुत्पत्तौ पुनःपुत्रार्थंप्रवर्तनमुक्तम् ॥ ५९ ॥

( ३ ) **कुल्लूकः**। संतानाभावे स्त्रियापत्यादिगुरुनियुक्तया देवरादन्यस्माद्वा सपिंडाद्वक्ष्यमाणघृताक्तादिनियमवत्पुरुषगमनेनेष्टाः प्रजाउत्पादयितव्याः। ईप्सितेत्यभिधानमर्थात्कार्याक्षमपुत्रोत्पत्तौ पुनर्गमनार्थम् ॥ ५९ ॥

( ४ ) **राघवानन्दः**। उद्देश्यं समर्थयति देवराद्वेति। सम्यगव्याजेन॥ अपुत्रांगुर्वनुज्ञातोदेवरःपुत्रकाम्यया। सपिण्डोवा सगोत्रोवा घृताभ्यक्तऋतावियात्॥ आगर्भसंभवात् गच्छेत्पतितस्त्वन्यथाभवेदिति याज्ञवल्क्यवचनादेकापत्यजननपर्यन्तं गन्तव्या। ईप्सितेतिविशेषणात् षण्डादिव्यावृत्तिः ॥ ५९ ॥

( ५ ) **नन्दनः**। अथतमेवापद्धर्ममाह देवराद्वेति। नियुक्तया गुरुभिः सन्तानस्य परिक्षये भर्त्तुरपुत्रत्वे ॥ ५९ ॥

**विधवायां नियुक्तस्तु घृताक्तोवाग्यतोनिशि ॥ एकमुत्पादयेत्पुत्रंन द्वितीयंकथंच न ॥ ६० ॥**

( १ ) **मेधातिथिः**। विधवाग्रहणमतन्त्रंक्लीबादिनियोगोजीवत्पत्याअप्येषएवविधिः। यतोवक्ष्यति नियुक्तांयोविधिंहित्वेति एतदेव तस्य प्रयोजनंनियमोत्रविषयाणां न नियमानामन्यथा विज्ञायेत प्रकृतत्वाद्विधवायाएवस्युः निशिप्रदीपाद्यालोकनिवृत्त्यर्थमेतत् वचनान्तरेण दिवोपगमनप्रतिषेधात्। अन्येत्वाहुः पुरुषार्थोसौ प्रतिषेधः कर्मार्थस्त्वयं तेनाह्निगमनेन क्षेत्रजमेकमुत्पादयेत्पुत्रंन द्वितीयम् ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः**। विधवायां प्रजोत्पादनसमर्थधवहीनायां प्रमीतस्यक्लीबस्यव्याधितस्यवेतिस्मृतेः। नद्वितीयमिति केषांचिन्मतम् ॥ ६० ॥

( ३ ) **कुल्लूकः**। विधवायामित्यपत्योत्पादनयोग्यपत्यभावपरमिदं जीवत्यपि पत्यावयोग्यपत्यादिगुरुनियुक्तोघृताक्तसर्वगात्रोमौनीरात्रावेकपुत्रंजनयेन्नकथंचिद्वितीयम् ॥ ६० ॥

( ४ ) **राघवानन्दः**। तत्रेतिकर्तव्यतामाह विधवायामिति। विधवा धवोऽत्रोभयलोकशोधकतयापतिः। तद्रहिताऽतोऽधवंपदमपत्यजनकयोग्यपत्यभावपरं गुर्वनुज्ञातश्चत्वरसाद्वचनस्यापत्यतात्पर्यकत्वादतः षण्डस्य भार्याद्वारापुत्रवत्ता संगता। अनुज्ञापदं तादृशपुत्ररागोपलक्षणपरं अन्यथा गुर्वभावे संतानक्षतिः ॥ ६० ॥

( ५ ) **नन्दनः**। व्यर्थं धवा च विधवा वैयर्थ्यंच पुत्रानुत्पादकत्वम् ॥ ६० ॥

( ६ ) **रामचन्द्रः**। विधवायां स्मृत्या क्लैब्येन व्याधितत्वेन वा प्रजोत्पादनार्थं अयोग्यभर्तृसहितायां यथा कुन्ती पाण्डोः सभर्तृका ॥ ६० ॥

द्वितीयमेके प्रजनंमन्यन्ते स्त्रीषु तद्विदः ॥ अनिर्वृत्तंनियोगार्थंपश्यन्तोधर्मतस्तयोः ॥ ६१ ॥

( १ ) मेधातिथिः । अस्यप्रतिप्रसवः । द्वितीयः पुत्रइत्येकेषांमतं तद्विदः क्षेत्रजोत्पत्तिविधिज्ञाः अनिवृत्तंनियोगार्थंपश्यतो नियुक्तया प्रजोत्पाद [ यितव्येत्य ][1] स्य विधिरेकस्योत्पादनेन संपत्तिमन्यन्ते । कस्तेषामभिप्रायः एकवचनमविवक्षितंमन्यन्ते द्रव्यप्रधानत्वात् कर्मणोगुणाभावादविवक्षाग्रहैकत्ववत् ननु चानुपात्तोपदेशेसत्यपि द्वितीयया द्रव्यप्राधान्यावगमे संख्यादिविशेषेण विवक्षा स्थितैव उद्वहेत द्विजोभार्यामिति लिङ्गादपत्यविधावेकत्वसंख्यातिक्रमोदशास्यां पुत्रानाधेहीति यदेवंनद्वित्वएवावस्थानं अस्यामेवाशङ्कायांद्वितीयइति वचनंअन्यनिवृत्त्यर्थमर्थवता तस्याप्ययमभिप्रायः औरसे न लिङ्गविवाहप्रकरणे तु मन्त्रपाठात् इहत्वेकत्वातिक्रमः अपुत्रएकपुत्रइति शिष्टप्रवादात् अथवाऽस्याएव स्मृतेर्द्वितीयपुत्रस्तुतिकल्पनात् धर्मतः शिष्टाचारतः ॥ ६१ ॥

( २ ) सर्वज्ञनारायणः । अपरेषांमतमाह द्वितीयमिति । धर्मतोधर्मनिमित्तंयोनियोगस्तस्यार्थंनियोगप्रयोजनमनिवृत्तमनिष्पन्नंपश्यन्तः एकस्य पुत्रस्य बव्हापत्तितयाऽसत्कल्पत्वात् ॥ ६१ ॥

( ३ ) कुल्लूकः । अन्ये पुनराचार्यानियोगात्पुत्रोत्पादनबिधिज्ञाअपुत्रएकपुत्रइतिशिष्टप्रवादादनिष्पन्नंनियोगप्रयोजनंमन्यमानाः स्त्रीषु पुत्रोत्पादनंद्वितीयंधर्मतोमन्यन्ते ॥ ६१ ॥

( ४ ) राघवानन्दः । अत्रार्थे मतभेदमाह द्वितीय मिति । नियोगः पुत्रोत्पादना । अनिर्वृत्तं अपुत्रएकपुत्रइति नियोगार्थं ननिर्वृत्तमिति मन्यमानाइति । तयोः नियुक्तयोः स्त्रीपुंसयोः ॥ ६१ ॥

( ५ ) नन्दनः । तद्विदआपद्धर्मविदः अनिर्वृत्तमसंपूर्णं नियोगार्थं नियोगप्रयोजनम् ॥ ६१ ॥

( ६ ) रामचन्द्रः । अनिर्वृतं अनिष्पन्नम् । धर्मतःधर्मनिमित्तम् ॥ ६१ ॥

विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ॥ गुरुवच्च स्नुषावच्चवर्तेयातां परस्परम् ॥ ६२ ॥

( १ ) मेधातिथिः । [ इहतुनियोगविषयोयत्रनियुज्यते ][2] सच संप्रयोगाभिमर्दपर्यवसानउपगमनलक्षणस्तस्मिन्निवृत्ते पूर्वैव वृत्तिर्गुरुवत्स्नुषावज्ज्येष्ठस्य भार्यायां गुरुवद्यवीयसस्तुषावत्परस्परग्रहणात् स्नुषावद्वर्तेतस्त्री पुरुषे ज्येष्ठे देवरे गुरुवत् ॥ ६२ ॥

( २ ) सर्वज्ञनारायणः । गुरुवत्पत्युर्ज्येष्ठः यदितु देवरः कनिष्ठस्तदापि गुरुवद्वर्तेत । भर्तृभार्येतियोज्यम् ॥ ६२ ॥

( ३ ) कुल्लूकः । विधवादिकायां नियोगप्रयोजने गर्भधारणे यथा शास्त्रंसंपन्ने सति ज्येष्ठोभ्राता कनिष्ठभ्रातृभार्या च परस्परंगुरुवत्स्नुषावच्च व्यवहरेताम् ॥ ६२ ॥

( ४ ) राघवानन्दः । पुत्रोत्पादनानन्तरं पुनरुभयत्र न गन्तव्यमित्याह विधवायामिति । नियोगार्थे गर्भे जाते गुरुवत् ज्येष्ठोभ्राता स्यात् । तेन तद्भार्यायांकनीयसा न गन्तव्यमिति भावः । कनिष्ठभार्याच स्नुषावच्च स्यात् ॥ ६२ ॥

( ५ ) नन्दनः । गुरुवद्गुरुपत्न्यामिव स्नुषायामिव कनिष्ठज्येष्ठौ परस्परमेकैकं वर्तेयातामाचरेताम् ॥ ६२ ॥

नियुक्तौ यौ विधिंहित्वा वर्तेयातान्तुकामतः ॥ तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥ ६३ ॥

( १ ) मेधातिथिः । विधिंघृताक्तइत्यादिस्तदतिक्रमेपातित्यं । नियुक्तोज्येष्ठस्नुषागः पुमान्गुरुतल्पगः कनीयान् ॥ ६३

( २ ) सर्वज्ञनारायणः । विधिं वाग्यमनादिनियमम् ॥ ६३ ॥

---

( १ ) मे० ८ ( २ ) आआ

( ३ ) **कुल्लूकः**। ज्येष्ठकनिष्ठभ्रातरौ यौ परस्परभार्यायां नियुक्तौ घृताक्तादिविधानंत्यक्त्वा स्वेच्छातोवर्तेयातां तौ स्नुषागगुरुदारगौ पतितौ भवेतां ॥ ६३ ॥

( ४ ) **राघवानन्दः**। पूर्वं नियुक्तयोर्विधिमुक्त्वा कामतोगमनं निषेधति नियुक्ताविति। गुरुतल्पगावितिअनियुक्तदशायां ज्येष्ठकनिष्ठयोः अतिपातकित्वमहापातकित्वख्यापनंतदुचितप्रायश्चित्तप्रदर्शनार्थम्। यद्यप्यावश्यकत्वेनेतिकर्तव्यतापेक्षा तथाप्यत्र सैव विधेया तदकरणे रोधः पातित्यहेतुः पुत्रोत्पादनस्य रागावरोधात्। अतएव देवरपदं भ्रातृमात्रोपलक्षकं तथाच ज्येष्ठस्यापि व्यासस्य विचित्रवीर्यभार्यागमनं निदर्शनं संगच्छते। सपिण्डपदं तूत्कृष्टजातिपरं तेनेन्द्रादिभ्यः पाण्डवाद्युत्पत्तिः ॥ अपुत्रांगुर्वनुज्ञातोदेवरः पुत्रकाम्यया। सपिण्डोवा सगोत्रोवा घृताभ्यक्तऋतावियात् ॥ आगर्भसंभवाद्गच्छेदन्यथा पतितोभवेदिति संकलितोयाज्ञवल्क्येन पञ्चश्लोकार्थः ॥ ६३ ॥

( ५ ) **नन्दनः**। यौ ज्येष्ठकनिष्ठौ विधिंघृताभ्यक्तत्वादिकम् ॥ ६३ ॥

( ६ ) **रामचन्द्रः**। यौ स्त्रीपुरुषौ नियुक्तौ विधिंहित्वा घृताभ्यक्तादिविधानंहित्वा कामतोवर्तेयातां स्नुषागुरुतल्पगामी ॥ ६३ ॥

**नान्यस्मिन्विधवानारी नियोक्तव्या द्विजातिभिः॥ अन्यस्मिन्हि नियुञ्जानाधर्मंहन्युः सनातनम् ॥ ६४ ॥**

( १ ) **मेधातिथिः**। पूर्वेणविहितस्य नियोगस्य प्रतिषेधोयं तत्र केचिद्विधवाग्रहणान्मृतभर्तृकायाः प्रतिषेधः क्लीबेनतुपत्यादनियोक्तव्येति विधिप्रतिषेधौविभक्तविषयाविति प्रतिपन्नाः। अन्येतु विधिवाक्ये सन्तानविच्छेदस्य निमित्तश्रवणात्तस्य च क्लीबव्याधितयोर्मृतस्याप्युपपत्तिभेदः नचविध्यभावप्रतिषेधोप्यविशिष्टएव अपेतधवसंबन्धाविधवेत्युच्यते तत्तुल्यमुभयत्रापि अवश्यंचैतदेवंविज्ञेयमितरथा घृताभ्यक्तादिनियमोपि क्लीबेन नियुज्यमानायानस्यात् तत्रापिह्यामनन्तिविधवायांनियुक्तश्च घृताक्तइति तस्माद्विहितस्याविशेषेण प्रतिषेधोप्यशिष्टः। अतश्च विषयसमत्वे विधिनिषेधयोर्विकल्पः अयंच नित्योऽपत्योत्पादनविधिर्नविकल्पएवकल्पते ग्रहणाग्रहणवत् यदातु पुत्रेण जयतीत्येवमादिफलोत्पादनविधिस्तदाऽसत्यपत्ये तत्कार्यस्यौर्ध्वदेहिकस्योपकारस्याभावाद्भिन्नफलयोः[कुतोविकल्पःसमानविषयौ विधिनिषेधावेकार्थौ विकल्पेते। षोडशीग्रहणाग्रहणयो]ᐟरिति केचित्। उक्तमङ्गभूयस्त्वे फलभूयस्त्वं प्रधानकार्यसिद्धौत्वविशेषः तस्मादस्मिन्पक्षे पुत्रोपकाराभावमाह उपकारविशेषार्थेनास्य प्रवृत्तौ प्रतिषेधातिक्रमेण श्येनतुल्यता इदंत्वत्र निरूप्यंयोसौ नियुज्यते सकिमिति प्र[वर्तते]ᐟनहि तस्यविधिरस्ति नियुक्तेनगन्तव्यमिति स्त्रियापुनर्विद्यते सम्यक्स्त्रियानियुक्तयेति नतु देवरादिषु प्रवर्तमानेषु स्त्रियानियोगसिद्धिरित्यर्थः। तेषामपि वृद्धिस्तद्विधिना क्षेत्रजईप्सितइति वाच्यं। यतोरागतः प्रवृत्तिरुच्यते घृताक्तादिनियमविधानमनर्थकमितिचेन्नानर्थकंतथानियमैरुत्पन्नेक्षेत्रजव्यपदेशोनान्यइति। यदपि गुरुवचनंकर्तव्यमिति केचित्प्रवृत्तिनिबन्धनमाहुः। एवंसति सुरापानादिष्वपि गुर्विच्छयाप्रवृत्तिः प्राप्नोति नचासौ गुरुरकार्येयः प्रवर्तयति॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागोविधीयतइति स्मरणात् ॥ परित्यागश्च गुरुकार्यान्निवृत्तिः। एतेनैतदपि प्रत्युक्तंयन्नियमातिक्रमपातित्यवचनंनियमपूर्विकांवृत्तिमनुजानाति तावुभौ पतितौ स्यातामिति। इतरथा सर्वप्रकारङ्गच्छतः पातित्यमिति विशेषपातित्यमनुपपन्नं यतस्तन्नकेवलस्य पुंसः [श्रूयते]ᐟकिंतर्हि स्त्रियाइति तस्याश्च पुत्रार्थिन्यानियोगोविहितस्तदपेक्ष्यंहिव्यतिक्रमे पतितवचनंतावुभौ पतितौ स्यातामिति। असति व्यतिक्रमएकः पतितः पुमानेवातिक्रमे तु द्वावपीत्येवमपि लिङ्गा-

---

( १ ) मे० ८

निगच्छन्त्येव तस्माद्देवरादिविधिलक्षणःप्रवृत्तिः कथमिति वक्तव्यं । उच्यते व्यासादिदर्शनेनापत्यपिण्डदानइव क्षेत्रजोपत्यर्थंसपिण्डानांगुरुनियोगापेक्षा तदानापगमेनस्तुतिरस्तीत्यनुमन्तव्यं नहिमहात्मनांरागलक्षणंप्रवृत्तिरभ्युपगन्तुंन्याय्या । यच्चोक्तंनियमातिक्रमे पतित [ त्ववचनं ][1] लिङ्गमिति तदयुक्तं यतः पुंसः पतितत्वे पतितोत्पन्नस्याधिकाराभावादुत्पादनमर्थकंतस्मादस्तिदेवरादिविधेराभासोयम् ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । नान्यस्मिन् परिसोदरसपिण्डभ्रातृभ्याम् ॥ ६४ ॥

( ३ ) **कुल्लूकः** । एवंनियोगमविधाय दूषयितुमाह नान्येति । ब्राह्मणादिभिर्विधवास्त्री भर्तुरन्यस्मिन्देवरादौ न नियोजनीया । स्त्रियमन्यस्मिन्नियुञ्जानास्ते स्त्रीणामेकपतित्वधर्ममनादिसिद्धंनाशयेयुः ॥ ६४ ॥

( ४ ) **राघवानन्दः** । ननु विधवायां नियुक्तइति लिङ्गाद्विधवायाः पुनर्विवाहोपि स्यात् भोग्यतासंपादकत्वस्य तुल्यन्यायत्वात् तत्राह नेतिपञ्चभिः । नान्यस्मिन्नुक्तातिरिक्तेननियोक्तव्या । कुतस्तत्राह अन्यस्मिन्निति । नियुञ्जानाः यथावत् पाणिग्रहमन्त्रविधिना तज्ज्ञेयं अन्यथा विधिनिषेधयोः परस्परविरोधःधर्ममेकपतित्वम् [ द्रौपदीन्त्वर्जुनस्यैवसतीकायव्यूहेनान्यान्भोजयतीतिभट्टोक्तं ][2] सनातनं वेदोक्त्यादौ ॥ ६४ ॥

( ५ ) **नन्दनः** । योऽयंनियोगउक्तः सोर्वाचीनैर्दुरनुष्ठानस्तस्मात्सनानुष्ठेयइति श्लोकपञ्चकेनाह नान्यस्मिन्विधवेति । अन्यस्मिन् भर्तुरन्यस्मिन् नियुंजाना द्विजातयः सनातनं वेदविहितं अनन्यनियोगरूपं धर्मं हन्युः ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । द्विजातिभिः विधवानारी अन्यस्मिन्नियोगानधिकारिणि सपिण्डादौ ननियोक्तव्या ॥ ६४ ॥

**नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ॥ न विवाहविधावुक्तंविधवावेदनंपुनः ॥ ६५ ॥**

( १ ) **मेधातिथिः** । उद्वाहनंकर्म तत्र ये मन्त्राःप्रयुज्यन्ते अर्यमणंनुदेवंकन्याअग्निमयक्षतेत्यादयस्तथान्येपि तत्संबन्धाः मयापत्याजरदष्टिरिति मयापत्याप्रजावतीति तत्र सर्वत्र वोढुर्वरयितुः स्वापत्यंभवतीत्याहुः । न तत्र श्रूयते मयायत्रनियुज्यसे ततोजनयेति मन्त्रग्रहणेनैतद्दर्शयति मन्त्रार्थवादाअपि नैवंविधाः सन्ति । दूरतएव तद्दर्शयति नविवाहविधावुक्तंविधवावेदनंपुनः आवेदनंगमनमभिप्रेतमन्त्रे अथ विवाहएवेयंवा संयुज्यते विवाहयिष्यन्ति देवरोभ्रातृजायांततोऽयंनियोगोविवाहविहितएव नत्वत्र विवाहविधाविति पूर्वशेषोयमर्थवादः ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । एवमेतत्सर्वमृष्यन्तरमतमुक्त्वा स्वमतमाह नेति । नकीर्त्यते नमन्त्रलिङ्गाद्गम्यते । विवाहविधौ ब्राह्मणभागे ॥ ६५ ॥

( ३ ) **कुल्लूकः** । अर्यमणन्नुदेवमित्येवमादिषु विवाहप्रयोजनकेषु मन्त्रेषु क्वचिदपि शाखायां न नियोगः कथ्यते नच विवाहविधायकशास्त्रेऽन्येन पुरुषेण सहपुनर्विवाहउक्तः ॥ ६५ ॥

( ४ ) **राघवानन्दः** । अतएवाह नोद्वाहिकेष्विति । मन्त्रेषु अर्यमणंनुदेवमित्यादिषु । विवाहविधौ ब्राह्मोदैवइत्यादौ । वेदनं विवाहः ॥ ६५ ॥

( ५ ) **नन्दनः** । कुतः पुनः सनातनधर्मस्यवधोनियोगस्य वेदविहितत्वादित्याह नोद्वाहिकेषु मन्त्रेष्विति । विवाहविधौ विवाहविधायके मन्त्रब्राह्मणे विधवावेदनं विधवायाः पतिलाभः ॥ ६५ ॥

( ६ ) **रामचन्द्रः** । विधवावेदनं विवाहः । विवाहविधौ विवाहप्रतिपादक ब्राह्मणभागेपुनः न उक्तम् ॥ ६५ ॥

---

( १ ) मे० ८ ( २ ) राघ० २

**अयंद्विजैर्हि विद्वद्भिः पशुधर्मोविगर्हितः ॥ मनुष्याणामपि प्रोक्तोवेने राज्यंप्रशासति ॥६६॥**

( १ ) **मेधातिथिः** । अयमप्यर्थवादएव नियोगप्रतिषेधशेषः ये ऽविद्वांसः सम्यक्शास्त्रंनजानते तत्र व्यवहारिणो-लिङ्गाद्यन्वयपरत्वंच न जानते तैरयंपशुधर्मः सचात्यन्तगर्हितोमनुष्याणामपि प्रोक्तः प्रवर्तितः सचेदानींतन आदिवेनेराज्ञि प्रशासति राष्ट्रंपालयति ननुच लिङ्गानि नैवसन्तीत्युक्तंनैवमुद्वाहकेषु मन्त्रेषु तु सन्तीत्युक्तं । अन्यत्र तु दृश्यते कोवास पुत्रोविधवेवदेवरंमयानुदोषोकुणुते सधस्थआइत्यादि । यथा विधवास्त्री देवरपतिमनुष्यंकुरुते समानशयनएव कोवामनस्विनौ कुरुते येन नागच्छतः को विशेषु विवाहमन्त्रेषु सकिमपत्योत्पत्तिविध्यनुक्रमरूपइत्यभिप्रायः । अन्यैर्विद्वद्भिरिति पठितं गर्हितोमनुष्याणांप्रोक्तः पशूनामिषधर्मोभ्रातृस्त्रीगमनंनाम सच प्रवृत्तोवेनस्य राज्ये ॥ ६६ ॥

( २ ) **सर्वज्ञनारायणः** । अपि न विधवायावेदनं भर्तृलाभः पुनरित्युक्तं तर्हि कथं देवरोपगमाचारस्मृती इत्यत-आह अयमिति । द्विजैर्बहुभिः गर्हितः पशुधर्मः पशूनामेवधर्मोगुरुस्त्रीस्नुषागमनं मनुष्याणामपि धर्मेण कैश्चिन्मुनिभिः प्रोक्तोवेनेपृथोःपितरि पापकर्मप्रवर्तके राजनि ॥ ६६ ॥

( ३ ) **कुल्लूकः** । यस्मादयंपशुसंबन्धी मनुष्याणामपि व्यवहारोविद्वद्भिर्निन्दितः योयमधार्मिके वेने राज्ञि राज्यं-कुर्वाणे तेन कर्तव्यतया प्रोक्तः अतोवेनादरभ्य प्रवृत्तोयमादिमानिति निन्द्यते ॥ ६६ ॥

( ४ ) **राघवानन्दः** । ननु विवाहफलं भोगोदृश्यतइति तत्राह अयमिति । पशुधर्मः पुनर्विवाहः मन्त्रंविनारागतस्त-त्संभोगदर्शनेपि न शास्त्रीयःसइति । वेनेराज्यंप्रशासतीत्यर्थवादमात्रम् एकमुत्पादयेत्पुत्रमितिविधिविरोधात् ॥ ६६ ॥

( ५ ) **नन्दनः** । एवञ्चेत्किमुपज्ञोऽयंनियोगविधिरित्यत्राह अयंद्विजैर्हीति । पशुधर्मः तिर्यग्योनिभिरनुष्ठितोऽन्यायो नियोगाख्यः ॥ ६६ ॥

( ६ ) **रामचन्द्रः** । अयं पशुधर्मः ॥ ६६॥

**समहीमखिलांभुञ्जन्राजर्षिप्रवरः पुरा ॥ वर्णानांसंकरंचक्रे कामोपहतचेतनः ॥ ६७ ॥**

( १ ) **मेधातिथिः** । भुञ्जन्पालयन् कथंपुनर्वर्णसङ्करंप्रवर्तयन् राजर्षीणांप्रवरः उक्तं महीमखिलांभुनक्तियः महाराजत्वात्कामिन रागादिलक्षणेनोपहता नाशिता चेतना चित्तस्थैर्यंयस्य सः ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः** । राजर्षिप्रवरोराजर्षीणांप्रवरोमूलभूतः । वर्णानांसंकरमधर्म्यमैथुनम् ॥ ६७ ॥

( ३ ) **कुल्लूकः** । सवेनोमहींसमग्रांपूर्वंपालयन् अतएव राजर्षिश्रेष्ठोनतु धार्मिकत्वात्कामोपहतबुद्धिर्भ्रातृभार्यागमन-रूपंवर्णसंकरंप्रावर्तयत् ॥ ६७ ॥

( ४ ) **राघवानन्दः** । सवेनः संकरत्वेहेतुः कामोपहतचेतनः । स्वयं सापत्यामपि नियुक्तवानितिविशेषः ॥ ६७ ॥

( ५ ) **नन्दनः** । संकरंनियोगाख्यम् ॥ ६७ ॥

**ततःप्रभृति योमोहात्प्रमीतपतिकां स्त्रियम् ॥ नियोजयत्यपत्यार्थं तं विगर्हन्तिसाधवः ॥ ६८ ॥**

( १ ) **मेधातिथिः** । अस्पष्टार्थोर्थवादः ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः** । तदाप्रभृति नियोजयतीति तदाप्रभृतितुनगर्हन्तीति तंसाधवोविगर्हन्ति ॥ ६८ ॥

( ३ ) **कुल्लूकः** । वेनकालात्प्रभृतियोमृतभर्तृकादिस्त्रियंशास्त्रार्थाज्ञानादपत्यनिमित्तंदेवरादौ नियोजयति तंसाधवोनिय-

---

( ६६ ) द्विजैर्हिविद्वद्भिः=द्विजैरविद्वद्भिः ( मे० )

तंगर्हयन्ते । अयंच स्वोक्तनियोगनिषेधः कलियुगविषयः तदाह बृहस्पतिः ॥ उक्तोनियोगोमुनिना निषिद्धः स्वयमेव तु । युगक्रमादशक्योयंकर्तुमन्यैर्विधानतः ॥ तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः । द्वापरे च कलौ नृणांशक्तिहानिर्हि निर्मिता ॥ अनेकधा कृताः पुत्राऋषिभिश्च पुरातनैः । न शक्यन्तेऽधुना कर्तुंशक्तिहीनैरिदंतनैः ॥ अतोयद्गोविन्दराजेन युगविशेषव्यवस्थामज्ञात्वा सर्वदैव संतानाभावे नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितंतन्मुनिव्याख्या विरोधान्नाद्रियामहे । प्रायशोमनुवाक्येषु मुनिव्याख्यानमेव हि नापराध्योस्मि विदुषांकाहंसर्वविदः कुधीः ॥ ६८ ॥

( ४ ) **राघवानन्दः** । ततः किं तत्राह तदेति । प्रमीतपतिकां प्रमीतोहिंसितः पतिर्यस्यास्तां पुत्रवतीमिति शेषः । योनियोजयत्यपत्यार्थेऽपत्योत्पादनाय तं विगर्हयन्तीत्यन्वयः । अपत्यार्थे विद्यमानपुत्रे सतीति । एषुवेदनश्रुत्यनुरोधेन यस्याम्रियेतइत्युत्तरस्वरसात् सकृत्प्रदीयते कन्याइत्यादिवचनबलात्पुनर्विवाहोनिषिद्धोनत्वपत्यार्थेनियोगइति । यत्तुबृहस्पतिः ॥ उक्तोनियोगोमनुना निषिद्धः स्वयमेवतु । युगह्रासादशक्योयं कर्तुमन्यैर्विधानतः ॥ तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः । द्वापरे च कलौनृणां शक्तिहानिर्हि निर्मिता ॥ अनेकधा कृताः पुत्राऋषिभिश्च पुरातनैः । न शक्यन्ते ऽधुना कर्तुं शक्तिहीनैश्चिरंतनैरिति ॥ तदन्यथा सिद्धं निषेधस्य पुनर्विवाहविषयत्वात् । पुत्रप्रयोजना भार्येति तात्पर्यम् । शास्त्रतात्पर्यादग्नीषोमीयपशोरिवक्वचिदननुष्ठनास्य शास्त्रासंकोचकत्वाद्धोलाकायननुष्ठानवदेकमुत्पादयेत् । पुत्रमिति नियोगविधेःप्राधान्येनार्थवादस्य न हिंस्यात्सर्वाभूतानीतिवत् । स्तनाद्युपमर्दरागनिवर्तनेनान्यथासिद्धेर्गोविन्दराजव्याख्या गरीयसी । अन्यथासंतानकृतेर्दोषापत्तिः । यत्तु ॥ अग्निहोत्रं गवालभं संन्यासं पलपैतृकम् । देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति ॥ तदनमूलम् । समूलत्वेवा लाभाख्यात्यादिरागिनांनिवृत्तितात्पर्यकम् । अन्यथा यदहरेवविरजेत्तदहरेवप्रव्रजेत् ॥ यावज्जीवमग्निहोत्रंजुहोतीत्यादिश्रुतिविरोधश्चेतिदिक् । अतएव मेधातिथिर्देवराद्वेत्यादिसाधवइत्यन्ते ग्रन्थे षोडशिग्रहणादिवद्विकल्पः नियोगतदभावयोः पित्राद्युद्धरणं फलं गन्तुश्च परमोपकारः तदाप्रभृत्ययंश्लोकोऽर्थवादएवेति ॥ ६८ ॥

( ५ ) **नन्दनः** । नियोगनिन्दा च तदाप्रभृत्येवासीदित्याह तदा प्रभृतीति । सप्रकारसापवादश्च नियोगः पुनरेव प्रतिषिद्धः । तत्र मनोरयमभिप्रायइति बृहस्पतिनाव्याख्यातं ॥ नियोगमुक्त्वा मनुनानिषिद्धः स्वयमेव तु ॥ युगह्रासादशक्योयं कर्तुमन्यैर्विधानतः । तपोज्ञानसमायुक्ताः कृतेत्रेतायुगेनराः ॥ द्वापरे च कलौ नृणां शक्तिहानिर्हिनिर्मिता । अनेकधाकृताः पुत्रऋषिभिश्च पुरातनैः ॥ नशक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैरिति ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । मृतभर्तृकांप्रत्याह तदेति । प्रमीतपतिकां मृतभर्तृकाम् ॥ ६८ ॥

## यस्याम्रियेत कन्यायावांचा सत्ये कृते पतिः ॥ तामनेन विधानेन निजोविन्देत देवरः ॥ ६९ ॥

( १ ) **मेधातिथिः** । नियोगरूपत्वात्कन्यागतोयंधर्मउच्यते वाचासत्ये कृते वाग्दाने निवृत्त एकेन दत्ताऽपरेण प्रतिगृहीता तामनेन वक्ष्यमाणेन विधानेन निजसोदरोदेवरोविन्देत विवाहयेत् ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वदैव कथं पुनर्देवरोपगमस्मृतीनांव्यवस्थेत्यतआह यस्याइति । वाग्दत्ताविषयमेव । परिणीतविषयतैव तद्भ्रान्तेर्गृहीतमित्यर्थः । वाचा सत्यवचनेन सत्यंमयादातव्येयमिति सत्याङ्गीकारइत्यर्थः । अनेन विधानेन विवाहविधिना निजः पतिसोदरोदेवरोविन्देत ॥ ६९ ॥

( ३ ) **कुल्लूकः** । नियोगप्रकरणत्वात्कन्यागतंविशेषमाह यस्याइति । यस्याः कन्यायावाग्दाने कृते सति भर्त्ता म्रियते तामनेन वक्ष्यमाणेनानुष्ठानेन भर्त्तुः सोदरभ्रातापरिणयेत् ॥ ६९ ॥

( ४ ) **राघवानन्दः** । अतएव वाग्दत्ताविधितोदेवरैवग्राह्यत्वमाह यस्याइतिद्वाभ्याम् । सत्येकृतेवा अमुकस्य पौत्रा-

यामुकस्य पौत्रीमित्यादिवंशमुच्चार्येमांदातुंप्रतिजानइति प्रतिश्रुतेऽनेन वक्ष्यमाणेन विधिना ॥ ६९ ॥

( ५ ) **नन्दनः** । अथ वाग्दत्तायां पत्यौ मृते कर्तव्यं श्लोकद्वयेनाह यस्याम्रियेतेति । अनेन वक्ष्यमाणेन निजः पत्युस्सोदरः ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । वाग्दानदत्तांप्रत्याह यस्येति । अनेनविधानेन विवाहविधानेन निजोदेवरःविन्देन विवाहयेत्॥६९॥

**यथाविध्यधिगम्यैनांशुक्लवस्त्रांशुचिव्रताम् ॥ मिथोभजेताप्रसवात्सकृत्सकृदृतावृतौ ॥ ७० ॥**

( १ ) **मेधातिथिः** । यथाविधियथाशास्त्रंवैवाह्योविधिस्तथा विवाहवाचनिकोऽयंविवाहः । पुनर्भूश्च तथोच्यते नवा व्यूढापि सती [ भार्या ][1] भवति केवलंपरार्थोस्यावाचनिकोविवाहः । तथा च दर्शयति नदत्वा कस्य चित्कन्यांपुनरन्यस्यदीयत इति नासौ देवराय दीयतइत्यर्थः । अदत्ताचास्वभूताकथमिवभार्याभवेत् शुक्लवस्त्रांनियमोगमनेऽन्यस्मिन्नपि नियोगे धर्मोयमिष्यते ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । शुक्लवस्त्रां न रक्तवस्त्राम् । शुचिव्रतां सच्चरित्रवतीम् । आप्रसवात् प्रसवानन्तरंनिवर्तेत । एतदपत्यंक्षेत्रिणएव तदपेक्षयाच क्षेत्रिणोऽपत्यं देवराज्जातइति स्मृतिषूच्यतइति समुदायार्थः ॥ ७० ॥

( ३ ) **कुल्लूकः** । सदेवरोविवाहविधिनैनांस्वीकृत्य शुक्लवस्त्रांकायवाङ्मनःशौचशालिनीमागर्भग्रहणाद्रहसि ऋतावृतावेकैकवारंगच्छेत् । एवंकन्यायानियोगप्रकारत्वाद्विवाहस्याग्रहाच्च गमनोपदेशाद्यस्मै वाग्दत्ता तस्यैव तदपत्यंभवति ॥ ॥ ७० ॥

( ४ ) **राघवानन्दः** । यथाविधि विवाहविधिमनतिक्रम्य । शुचिव्रतां कायवाङ्मनोभिरनन्यपराम् । मिथोभजेतां ऋतावृतौ मैथुनेनेति शेषः । आप्रसवादितिलिङ्गादपत्यं यस्मैवाग्दत्ता तस्यैव न पुनर्देवरस्येति । ततःपरं न गम्या सेतिभावः ॥ ७० ॥

( ५ ) **नन्दनः** । अधिगम्य उद्बह्य ॥ ७० ॥

( ६ ) **रामचन्द्रः** । शुचिव्रतां सुचरिताम् ॥ ७० ॥

**न दत्वा कस्यचित्कन्यांपुनर्दद्याद्विचक्षणः ॥ दत्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषानृतम् ॥ ७१ ॥**

( १ ) **मेधातिथिः** । तेषांनिष्ठातु विज्ञेया विद्वद्भिः सप्तमे पदइति प्राग्विवाहान्मृते वरे दत्तायामपि पुनर्दानाशङ्कायां प्रतिषेधोयं । विशिष्टेतु पुनर्वचनं तथाविधायाः पुनर्भूरुक्ता नान्यस्मैदत्वा तस्मिन्मृतेऽन्यस्मैदद्यात्तथाकुर्वन्प्राप्नोति पुरुषानृतं मनुष्यहरणे यत्पापंतस्य भवति ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । दत्त्वा ददानीत्युक्त्वा नदद्यादन्यस्मै । पुरुषानृतं पुरुषविषयानृताभिधानम् ॥ ७१ ॥

( ३ ) **कुल्लूकः** । कस्मैचिद्वाचा कन्यांदत्वा तस्मिन्मृते दानगुणदोषज्ञस्तामन्यस्मै न दद्यात् । यस्मादेकस्मै दत्वाऽन्यस्मै ददत्पुरुषानृतंसहस्रमित्युक्तदोषंप्राप्नोति सप्तपदीकरणस्याजातत्वाद्भार्यात्वानिष्पत्तेः पुनर्दानाशङ्कायामिदंवचनम् ॥ ७१ ॥

( ४ ) **राघवानन्दः** । नान्यस्मिन्नित्याद्युपसंहरन् विपक्षे दोषमाह न दत्वेति । वाग्दानेदानं भाक्तं दत्त्वाददत् प्राप्नोति पुरुषानृतं सहस्रंपुरुषानृतइत्युक्तत्वात् । अतएव दत्तामपिहरेत्कन्यांश्रेयांश्चेद्वरआव्रजेदित्यविधिना वाचा दत्ता दानाशंका- ॥ ७१ ॥

( ५ ) **नन्दनः** । अस्यदेवरस्यैव दातव्यत्वे कारणमाह नदत्वाकस्यचिदिति । पुरुषविषयेऽयंदत्तो दत्तः क्रीतोक्रीतइ-

---

( १ ) मे० ८

त्यादौ विवादे प्रोक्तमनृतं पुरुषानृतं पुरुषाणां सहस्रं पुरुषानृते हन्तीति पूर्वोक्तदोषंप्राप्नोतीत्यर्थः ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । कस्य चिद्वरायकन्यांदत्वा ददामीत्युक्त्वा पुनःअन्यस्मै न दद्यात् पुरुषानृतं पापं आमोति ॥ ७१॥

**विधिवत्प्रतिगृह्यापि त्यजेत्कन्यांविगर्हिताम् ॥ व्याधितांविप्रदुष्टांवा छद्मना चोपपादिताम्॥७२॥**

( १ ) **मेधातिथिः** । विधिशास्त्रंतदर्हतीति विधीवत् यादृशःशास्त्रेण विधिरुक्तोद्भिरेवद्विजाग्र्याणामिति सच कैश्चिदुदकाधिकारः कन्याविषये स्मर्यते । तेन प्रतिगृह्यापि त्यजेत्कन्यांप्राग्विवाहाद्विगर्हितां दुर्लक्षामदृष्टंपूर्वांप्रतिगृहीतांमनोज्ञामपि तथानिर्लज्जांबहुपुरुषभाषिणींव्याधितांक्षयव्याधिगृहीतांप्रदुष्टांरोगिण्यादिशब्दितामन्यगतभावीचत्यजेत् । क्षतयोनिविप्रदुष्टांव्याचक्षते नतेसम्यङ्मन्यन्ते यदि तावत्पुरुषानुपभुक्तास्त्रीकन्यादिविकृतातदा नैवदुष्यति । अथपुरुषसंयुक्ता तदा कन्यैव न भवति तत्रत्यजेत्कन्यामिति सामानाधिकरण्यानुपपत्तिः । उक्तश्च तस्यास्त्यागः छद्मनाचोपपादितान्यूनाधिकाङ्गीयाहेतुनियुक्ताऽकथितेषु स्वल्पेष्वपि दोषेषु कृतवरणापि त्याज्यैव ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । विगर्हितां दुष्कुलत्वादिना । व्याधितामसाध्यव्याधिम् । विप्रदुष्टां पुरुषान्तरदूषिताम् । छद्मना श्वित्रादिदुष्टाम्रेव दोषं वस्त्रादिनावृत्य उपपादितां दत्ताम् । पूर्वाध्याये दोषवत्कन्यादातुर्दोषउक्तोत्रतुत्यक्तुर्दोषाभावः ॥ ७२ ॥

( ३ ) **कुल्लूकः** । अद्भिरेव द्विजाग्र्याणामित्येवमादिविधिना प्रतिगृह्यापि कन्यांवैधव्यलक्षणोपेतांरोगिणींक्षतयोनित्वाद्यभिशापवतीमधिकाङ्गादिगोपनच्छद्मोपपादितांसप्तपदीकरणात्प्राक्ज्ञातांत्यजेत्ततश्च तत्त्यागे दोषाभावइत्येतदर्थंन तु त्यागार्थम् ॥ ७२ ॥

( ४ ) **राघवानन्दः** । दातुर्नियममभिधाय स्वीकर्तृनियमं संकोचयति विधिवदिति । विधिः शास्त्रं तत्पुरःसरं प्रतिगृह्यापि कन्यां विगर्हितां वैधव्यादिलक्षणोपेतां विप्रदुष्टां क्षतयोनित्वादितिशापवतीं छद्मनोपपादितां अधिकांगादि प्रच्छाद्य दत्तां सप्तपदीगमनात्प्राक् त्यजेदूर्ध्वंनत्यागः किंतु वस्त्राच्छादनादिना भर्तव्या ॥ पाणिग्रहणिकामन्त्राः पितृगोत्रापहारकाः इति ॥ तेषां निष्ठातु विज्ञेया विद्वद्भिः सप्तमे पद इत्युक्तेः ॥ ७२ ॥

( ५ ) **नन्दनः** । विगर्हितलक्षणां विप्रदुष्टां क्षतयोनिम् ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । निन्दितांमत्याह विधिवदिति । विगर्हितां दुष्कुलां व्याधितां अचिकित्स्यव्याधितां विप्रदुष्टां पुरुषान्तरसंसृष्टां छद्मना कुष्टादि व्याध्याच्छादनेन उपपादितां प्रात्ताम् ॥ ७२ ॥

**यस्तु दोषवतींकन्यामनाख्यायोपपादयेत् ॥ तस्य तद्वितथंकुर्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥**

( १ ) **मेधातिथिः** । कन्यादोषाउक्तास्ताननाख्यायानुक्त्वा प्रयच्छति ददाति तस्य तद्दानं वितथंनिष्फलंकुर्यात्प्रत्यर्पणेन उक्तएवायमर्थःपूर्वश्लोकेनातिस्पष्टीकृतः ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । तद्दानं वितथं गृहीतस्यपुनरग्रहणात् ॥ ७३ ॥

( ३ ) **कुल्लूकः** । यः पुनर्दोषवतींकन्यांदोषाननभिधाय ददाति तस्य कन्यादातुर्दुरात्मनोदानंतत्प्रत्यर्पणेन व्यर्थंकुर्यात् । एतदपि त्यागे दोषाभावकथनार्थम् ॥ ७३ ॥

( ४ ) **राघवानन्दः** । तत्र दातुर्दोषंप्रकटयन् त्यक्तुर्दोषाभावमाह यस्त्विति । अनाख्याय दोषमितिशेषः । वितथं प्रत्यर्पणेन व्यर्थम् । तेन त्यागे दोषोनास्तीतिभावः ॥ ७३ ॥

( ५ ) **नन्दनः** । वितथं विकृतं कुर्यात् पाणिग्राहकमनाख्यायेति विशेषणाद्दोषंज्ञापितमभ्युपगम्य परिग्रहीत्रा न परित्याज्येति सूचितम् ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । तत् दानरूपंकार्यं वितथं निष्फलं कुर्यात् ॥ ७३ ॥

**विधाय वृत्तिभार्यायाः प्रवसेत्कार्यवान्नरः ॥ अवृत्तिकर्षिताहि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥ ७४ ॥**

( १ ) **मेधातिथिः** । यदा प्रवसेत्तदा भार्यायावृत्तिंविधाय प्रवसेदिति [कृत्स्नं][1] विधिंविधायेत्येवमर्थंद्रष्टव्यं प्रवसन्भार्यायावृत्तिंविदधीतेति तथाकुर्याद्यथास्यायावत्प्रवासंवृत्तिर्भवति शरीरस्थितिहेतुभोजनाच्छादनगृह्योपकरणादि तांविधाय प्रवसेत्स्वदेशाद्देशान्तरंगच्छेत्कार्यवान्कार्यंपुरुषार्थौदृष्टोदृष्टश्च अपृष्टोधर्मौदृष्टावर्थकामौ । तथावक्ष्यति प्रोषितोधर्मकार्यार्थइत्यादिना अन्तरेणैतानि निमित्तानि भार्यांहित्वा प्रवासोनिषिध्यते । अवृत्तिकर्शिताहि दृष्टदोषप्रदर्शनमर्थवादः अवृत्त्या दरिद्रेण कर्शिता पीडिता प्रदुष्टेपुरुषान्तरसंपर्कादिना स्थितिमत्यपि स्थितिः कुलाचारस्तत्संपन्ना क्षुधावसरेदीना दोषमवाप्नुयादन्यंभर्तारमाश्रित्य जीवतीति भाव्यतएतत् । संभावनायां लिङ् ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । वृत्तिं प्राणवर्तनोपायम् । कार्यवान् प्रयोजनवान् । प्रदुष्येत धनलोभात्परपुरुषेण संयुज्येत । स्थितिमती वृत्तवती ॥ ७४ ॥

( ३ ) **कुल्लूकः** । कार्ये सति मनुष्यः पत्न्याग्रासाच्छादनादिप्रकल्प्य देशान्तरंगच्छेत् यस्माद्ग्रासाद्यभावपीडिता स्त्री शीलवत्यपि पुरुषान्तरसंपर्कंभजेत् ॥ ७४ ॥

( ४ ) **राघवानन्दः** । स्त्रीप्रसंगेन परलोकभीरुणा सर्वदा पत्नी पोष्येत्याह विधायेति । तत्रहेतुरवृत्तिकर्षितेतिप्रदुष्येद्ग्रासान्नलोभादिना परपुरुषं व्यभिचरेत् । अस्य दग्धोदरस्यार्थे कोन कुर्यादसांप्रतमितिन्यायात् स्थितिमती स्थिरा सापि प्रदुष्यतीति कैमुतिकम् ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । विधायेति प्रवासार्थमाह अवृत्तिकर्षिता स्त्री जीवनोपायरहिता ॥ ७४ ॥

**विधाय प्रोषिते वृत्तिजीवेन्नियममास्थिता ॥ प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥ ७५ ॥**

( १ ) **मेधातिथिः** । नियमोयथा निहते भर्तरि परिग्रहप्रयाणादिनिषेधएवंप्रोषितेपि आस्थिता आश्रिता गृहीतवती अकृत्वातु वृत्तिंप्रोषिते शिल्पैर्जीवेतेति कर्तनजालिकाकरणादिना गर्हितानि वस्तूनि विजनादीनि एषएव विधवादीनां निजश्रमजन्योवृत्त्युपायः ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । नियमं मनोवाक्कायनियमम् । शिल्पैः सूत्रकर्तनाद्यैः । अगर्हितैर्देशान्तरभ्रमणाद्यसाध्यैः ॥ ७५ ॥

( ३ ) **कुल्लूकः** । भक्ताच्छादनादिदत्वा पत्यौ देशान्तरंगते देहप्रसाधनपरगृहगमनरहिता जीवेत् अदत्वा पुनर्गते सूत्रनिर्माणादिभिरनिन्दितशिल्पेन जीवेत् ॥ ७५ ॥

( ४ ) **राघवानन्दः** । वृत्तिमतींशिक्षयन् तद्रहितायावृत्यन्तरमाह विधायेति । प्रोषिते विद्याद्यर्थे । नियमं परगृहोत्सवाद्यदर्शनम् । अविधाय वृत्तिमित्यनुषङ्गः । शिल्पैः सूत्रकर्तनाद्यैः ॥ ७५ ॥

---

( १ ) मे० ८

( ५ ) **नन्दनः** । अथप्रोषिते भर्तरि स्त्रियाकर्तव्यमाह विधायप्रोषितेति । प्रोषिते भर्तरि पत्न्यौ शिल्पैरगर्हितैः कर्तनावघाता दिभिः ॥ ७५ ॥

( ६ ) **रामचन्द्रः** । वृत्तिविधाय भर्तरि प्रोषिते गते सति नियममास्थिता जीवेत् । वृत्तिंअविधायैव प्रोषिते भर्तरि-अगर्हितैः शिल्पैःसूत्रकर्तनादिभिःजीवेत् ॥ ७५ ॥

**प्रोषितोधर्मकार्यार्थंप्रतीक्ष्योष्टौ नरः समाः ॥ विद्यार्थंषड्यशोऽर्थंवा कामार्थंत्रींस्तु वत्सरान्॥७६॥**

( १ ) **मेधातिथिः** । यदुक्तंकार्यवान्प्रवसेदिति तानि कार्याणि दर्शयति तद्विशेषेण प्रतीक्षाकालभेदः परतस्त्विदंतया कर्तव्यमिति चोक्तं तत्र केचिदाहुः प्रकरणादगर्हितैर्जीवेदिति तदयुक्तं प्रागस्मात्कालादगर्हितैरितीयंकिंभियतांनह्यस्या-आत्मत्यागइष्यते पुंसइव प्रतिषिद्धत्वात् तस्मात्प्रागप्यस्मात्प्रतीक्षणविधेरगर्हितैःशिल्पैरजीवन्तिगर्हितैर्जीवेत् । अन्येव्यभिचारमिच्छन्ति । तथाच स्मृत्यन्तरे॥ नष्टे मृते प्रव्रजिते क्लीबे चपतिते पतौ ॥ पञ्चस्वापत्सुनारीणांपतिरन्योविधीयते ॥ अन्ये-प्याहुः । नास्याज्ञाने ब्रह्मचर्यमपनेतुंशक्यते स्त्रीधर्मेषु हि तदस्याविहितंनतुनामापि गृह्णीयान्पत्यौमेते परस्यत्विति । मृते भर्तरि नास्ति व्यभिचारः किमङ्गप्रोषिते पतिशब्दोहिपालनक्रियानिमित्तकोग्रामपतिः सेनायाः पतिरिति अतश्चास्मादबाधनैषा भर्तृपरतंत्रा स्यात् अपित्वात्मनोजीवनार्थंसैरंध्रीकरणादिकर्मवदन्यमाश्रयेत तच्च यदा षण्मासभृत्या संवत्सरभृत्यावा कस्मिंश्चिदाश्रिते भर्ता यद्यागच्छेत्तदानींतांचेद्वशीकुर्याद्वशीकर्तुंशक्नुयात्स्यजत्वंभार्यामिति यावद्भवतिकालोन पूर्वःप्राक्पत्युरेव सा पंचमेचार्वितमन्यत् । अन्येप्यर्थमिममाहुः पुर्वेतु पुनर्भूवृत्तमिच्छन्ति या पत्या वा परित्यक्ता भवति यस्याः किल पतिरियन्तंकालंनिहितवृत्तिकोनागच्छति सा तेन त्यक्तैव भवति ततश्च यदि सा पुनर्भूधर्मेणान्येनोढा भवेत्तदा भर्ताऽभ्यागतोन किंचिद्ब्रूयात्पुनर्भवस्येयंभार्येति तदयुक्तं न निष्क्रयविसर्गाभ्यामिति तस्य श्लोकस्यार्थवत्त्वंदर्शयिष्यामः । धर्मश्च तत्कार्यंचधर्मकार्यंसोर्थः प्रयोजनंप्रवासस्येति धर्मकार्यार्थंकुतः नगृहस्थस्यधर्मार्थोदीर्घकालः प्रवासः अवश्यंह्यग्नयस्तेन परिचरणीयाः पांचयज्ञिकमनुष्ठेयं । कुतोगन्तव्यंवसन्ते वसन्ते ज्योतिषा यष्टव्यमिति तीर्थस्नानादीन्यपि स्मार्तानि च श्रौताविरोधीन्यनुष्ठेया-न्यसंविधाय प्रोषितस्य वा भवतीति येनोच्यते संविधायापि प्रवासआपर्वणः स्वयंपर्वणि जुहुयादत्विज्ञामेकतरकालइतियुक्तं । अनाहिताग्नेस्तीर्थयात्रायां पांचयाज्ञिकस्य तुल्यत्वेऽपि स्मार्तत्वे भार्यासहितस्योपपत्तेः न तत्त्यागेतीर्थगमनंयुक्तंसुच्यते गुरुवचनेन यंगुरवोधर्मार्जने राजोपसेवायां वा सुकार्याय प्रेषयन्ति सधर्मार्थंप्रवासः । प्रायश्चित्तंवा तपोवनदेशभ्रमणेन अथवार्थार्जनार्थमेव धर्मकार्यार्थमभिप्रेतंदरिद्रोहंकुतश्चिद्धनमर्जयिष्ये विद्यार्थं ननुस्नातस्य च भार्याधिगमः कृतविद्यस्य च स्नानंतत्र कुतः कृतविवाहस्य विद्यार्थिता दर्शितमेतत् ईषदवगतवेदार्थोविवाहेऽधिक्रियते । निश्चिते स्नानादौ नैतद्युक्तं । कृतार्था धर्मजिज्ञासायां स्नानंजिज्ञासा च विचारपूर्वकसंशयच्छेदननिश्चितार्था सत्यं नायंविधिर्विद्यार्थितायाः तथाच सति धर्मकार्यार्थमित्यनेनैवावगतास्यात् उत्पन्नेप्यधिकारोपयोगिन्यवगमेऽभ्यासातिशयार्थंविशेषार्थंचान्यासु विद्यासु क्षिप्रंशौर्ययशःख्यापनार्थंबहिःसविशेषविद्यात्वख्यापनार्थं । देशान्तरप्रवसने यशोहेतुः प्रवासः कामार्थंरूपाजीवानुगमोऽभिप्रेततरांभार्यामुद्वोढुं स्मृत्यन्तरे प्रसूताभेदेन च कालभेदः स्मर्यते तथा च विष्णुः अष्टौ विप्रसूताः षट्राजन्याः चतुरोवैश्याद्विगुणं प्रसुतेति ॥ नशूद्रायाः कालनियमः स्यात्संवत्सरमित्येकइति ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मकार्यार्थं तीर्थयात्रादिधर्मप्रतिग्रहादिकार्यार्थंम् । प्रतीक्ष्यस्तद्गृहावस्थानादिना । तदूर्ध्वंतु पत्युःसंनिकर्षमेव गच्छेत् ऊर्ध्वंभर्तुःसकाशंगच्छेदितिवासिष्ठस्मरणात् । यशोर्थमुद्राहादिना दिग्विजयाद्यर्थंगतः । कामार्थं स्त्र्यन्तरप्राप्त्यर्थम् ॥ ७६ ॥

( ३ ) **कुल्लूकः** । गुर्वाज्ञासंपादनादिधर्मकार्यनिमित्तंप्रोषितः पतिरष्टौ वर्षाणि पत्न्या प्रतीक्षणीयः ऊर्ध्वंपतिसन्निधिंगच्छेत् । तदाह वसिष्ठः ॥ प्रोषितपत्नीपञ्चवर्षाण्युपासीत ऊर्ध्वंपतिसकाशंगच्छेदिति । विद्यार्थंप्रोषितः षड्वर्षाणि प्रतीक्ष्यः निजविद्याविभाजनेन यशोर्थमपि प्रोषितः पतिः षडेव । भार्यान्तरोपभोगार्थंगतस्त्रीणि वर्षाणि ॥ ७६ ॥

( ४ ) **राघवानन्दः** । प्रोषितप्रसंगेन प्रयोजनं प्रदर्शयंस्तदुचितकालनियममाह प्रोषितइति । धर्मकार्यार्थं तीर्थाटन गुर्वाद्याज्ञार्थम् । प्रतीक्ष्यः स्त्रिया नरः पतिः तदूर्ध्वं पतिसमीपंगच्छेत् । समाः वत्सरान् । तदाहवसिष्ठः ॥ प्रोषितपत्नी पञ्चवर्षाण्युपासीत ऊर्ध्वंपञ्चभ्योभर्तुः सकाशंगच्छेदिति । अत्र पञ्चपदं न्यूनाधिकसंख्योपलक्षणार्थम् । कामार्थं पत्न्यंतरनिकटस्थितये ॥ ७६ ॥

( ५ ) **नन्दनः** । प्रतीक्ष्योभार्ययेति शेषः ऊर्ध्वं भर्त्रन्तरपरिग्रहेन दोषोस्तीन्यभिप्रायः यत्तुमृतभर्तृकाणां ब्रह्मचर्यवचनं तत्फलातिशयकामानांनान्यासामित्यविरोधः ॥ ७६ ॥

**संवत्सरंप्रतीक्षेत द्विषंतींयोषितंपतिः ॥ ऊर्ध्वंसंवत्सरात्त्वेनांदायंह्त्वा न संवसेत् ॥ ७७ ॥**

( १ ) **मेधातिथिः** । द्वेष्यः पतिर्यस्यास्तांद्विषाणां एतेन तु सनिष्कासनंकुर्यात् समपूर्वस्य वसेरेनामिति च द्वितीयानुपपत्तेर्वासयेदिति निर्भर्त्सयेत् पातकेऽपि तस्यानिष्कासनंनास्ति निरुन्ध्यादेकवेश्मनीति वचनात् । प्रायश्चित्तेप्यस्मिन्निमित्ते विनयाधानार्थोपहारइष्यते न सर्वेणसर्वआत्यन्तिकआच्छेदः ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । उदीक्षेत प्रतीक्षेत । द्विषन्तीं संभोगाद्यर्थमनुपस्थायिनीम् । दायं स्त्रीधनं स्वयंदत्तं संगृह्य गृहीत्वा नसंवसेत् त्यजेत् । जीवनंतु देयमेव ॥ ७७ ॥

( ३ ) **कुल्लूकः** । पतिर्विषयसंजातद्वेषांस्त्रियंवर्षंयावत्प्रतीक्षेत्ततऊर्ध्वमपि द्विषंतींस्वदत्तमलङ्कारादिधनंह्त्वा नोपगच्छेत् ग्रासाच्छादनमात्रन्तु देयमेव ॥ ७७ ॥

( ४ ) **राघवानन्दः** । संवत्सरादूर्ध्वमपि पतिं स्वरसतोद्विषत्याभरणमात्रं न भोगइत्याह संवत्सरमिति । दायं स्वदत्तमलंकारादिकं ह्त्वा ग्रासाच्छादनादिकं दद्यात् नसंवसेत् । नोपगच्छेत् ॥ ७७ ॥

( ५ ) **नन्दनः** । उदीक्षेत प्रतीक्षेत दायं भूषणादिकं नसंवसेन्नसंगच्छेत्तयासहेति शेषः ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । दायं स्वयंदत्तं ह्त्वा नसंवसेत् त्यजेदित्यर्थः ॥ ७७ ॥

**अतिक्रामेत्प्रमत्तंया मत्तंरोगार्त्तमेव वा ॥ सात्रीन्मासान्परित्याज्या विभूषणपरिच्छदा ॥ ७८ ॥**

( १ ) **मेधातिथिः** । अतिक्रमस्तदुपचर्यावज्ञानं पथ्यौषधादिष्वतत्परता न पुरुषान्तरसंचारः मासत्रयंपरित्यागश्च संभोगस्यैव पूर्वस्मादेवहेतोः हारकटकादिविभूषणैर्वियुक्ताकर्तव्या अपरिच्छदापरिग्रहेण भाण्डकुण्डादिना दासीदानेन च ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । अतिक्रामेत् तच्छासनंलङ्घयेत् नतु व्यभिचरेदित्यस्यार्थः । प्रमत्तं द्यूताद्याकृष्टमनसम् । मद्येन मत्तं । भूषणपरिच्छदादिना विरहिततत्वमापाद्य त्रीन्मासान्परित्याज्या तदूर्ध्वमुपादेया ॥ ७८ ॥

( ३ ) **कुल्लूकः** । या स्त्री द्यूतादिप्रमादवन्तंमदजनकपानादिना मत्तंव्याधितंवा शुश्रूषाद्यकरणे नावजानाति सा विगतालङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्या ॥ ७८ ॥

( ४ ) **राघवानन्दः** । भर्तृशुश्रूषणाद्यकरणे कंचित्कालं परित्यजेदित्याह अतीति । प्रमत्तं मानादिना । मत्तं मद्येन ।

---

( ७७ ) द्विषन्तीं=द्विषाणां ( मे० )

रोगार्त्तं कुष्ठाद्युपहतम् । साऽतिक्रामन्ती । अविभूषणेत्यादिच्छेदः । अतिक्रमणमत्र शुश्रूषाद्यकरणम् जारादिनातिक्रान्ता-यावधाद्युक्तेः । तदुत्तरं स्त्रीकार्यैतिशेषः ॥ ७८ ॥

( ५ ) **नन्दनः** । उत्क्रामत्यतिवर्तते विभूषणपरिच्छदा विगतभूषणादिपरिबर्हा त्रीन्मासान्परित्याज्या संगमादौ नो-ध्र्वमिति ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । अतिक्रामेत् आज्ञातिक्रमेण । प्रमत्तं द्यूतासक्तम् । मत्तं मद्यपानेन ॥ ७८ ॥

**उन्मत्तंपतितंक्लीबमबीजंपापरोगिणम् ॥ न त्यागोऽस्ति द्विषंत्याश्च न च दायापवर्तनम् ॥ ७९ ॥**

( १ ) **मेधातिथिः** । क्लीबबीजशब्दौ नपुंसकमाहतुः भेदस्तु वातरेता अप्रवृत्तेन्द्रियोपरः यादृशंयोद्वेष्टि तस्य नास्ति निग्रहः पूर्वोक्तअपवर्तमानमपहारः प्रोषितप्रतिषिद्धान्नादयः स्मृत्यन्तरनिषिद्धाः ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । उन्मत्तं वातादिना क्लीबं जन्मना अबीजमन्तरानष्टबीजं पापरोगाअपस्माराद्यास्तदाक्रान्तं पतिं द्विषन्त्यानार्यानत्यागोत्यन्तत्यागः नचद्दायापवर्तनं दायस्य स्त्रीधनस्यापहरणं नास्ति । तत्कालद्वेषिण्यपि सुरथेन परिग्राह्येत्यर्थः । द्विषाणायइतिक्वचित्पाठः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । वातादिक्षोभादप्रकृतिस्थंपतितमेकादशाध्याये वक्ष्यमाणंनपुंसकमबीजंनाध्यरेतस्त्वादिना बीजर-हितंकुष्ठाद्युपेतंच पतिमपरिचरन्त्यास्त्यागोन करणीयोनच धनग्रहणंकरणीयम् ॥ ७९ ॥

( ४ ) **राघवानन्दः** । अचिकित्सितव्याध्यादौ पतिं द्विषाणायान त्यागादीत्याह उन्मत्तमिति । अबीजं शुक्रहीनम् । एतादृशं पतिं द्विषन्त्याअपि नत्यागोनापि दायापवर्तनं ततोधनाद्याक्षानम् ॥ ७९ ॥

( ५ ) **नन्दनः** । अस्यापवादविधिमाह उन्मत्तंपतितमिति । अबीजमशुल्कमपवर्तनमपहरणम् ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । उन्मत्तंवातादिना । अबीजं द्विषन्ती या अपचरन्ती । दायापवर्तनं न स्त्रीधनं ॥ ७९ ॥

**मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् ॥ व्याधिता वाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥ ८० ॥**

( १ ) **मेधातिथिः** । मद्यपासौ मद्यपानरता पक्तिसंस्कारगृहकार्यानुष्ठानासमर्था तत्परिजागरया सा परिवेदनाया-मर्हति । या तु गुरुभिः प्रतिषेधमापद्यमाना तस्यादण्डंवक्ष्यति प्रतिषिद्धां पिबेदिति स्वयंनियमस्य त्वन्यनियमव्यतिक्रम-वत्प्रायश्चित्तेन प्रत्यापत्तिर्युक्ता पुनरधिवेदनंच तथाच धर्मानुष्ठानप्रजोत्पत्तिगृहकार्योपघातनिमित्तान्यधिवेदननिमित्तानि पठ्यन्ते । प्रतिकूलाव्याधितार्थघ्नीति । ब्राह्मण्यास्तु शास्त्रेण प्रतिषिद्धमद्यायास्ततः पानप्रायश्चित्तमेव भूयः अतिप्रवृत्तौ पा-तित्यंतुभ्रूणहत्त्रि हीनसेवायांस्त्रीपततीति परिसंख्यानान्नमद्यपानेपातित्यमिति । तदेकादशे वक्ष्यामः । उक्तंच पञ्चमे असत्य वृत्ताऽसाध्वाचारा भृत्येष्वसत्परुषवाक् बलिकर्मणां प्रागेवभुङ्क्ते दैवपित्र्ययोर्ब्राह्मणभोजनादौ नश्रद्धावती अतिव्ययशीला [ भाण्डोपस्करणं न परिरक्षति अनल्पमूल्येन क्रीणाति हिंसानाकुलशङ्कयास्यादेवातिताडणशीला ]‡ ऽच्चाह्निकस्य व्यय-स्यापहन्त्री अधिवेदनं तस्याउपर्यन्याविवाहः ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । असत्यवृत्ता सदामिथ्यावादिनी प्रतिकूला प्रतिकूलचेष्टा हिंस्रा ताडनादिना सदाभृत्यादि-हिंसाकारिणी अर्थघ्नी अप्रयोजकव्ययपरा अधिवेत्तव्या अधिवेदनंद्वितीयभार्यासंबन्धस्तेन प्रतियोगेनासंबन्धनीया ॥ ८० ॥

( ३ ) **कुल्लूकः** । निषिद्धमद्यपानरता असाध्वाचारा भर्त्तुः प्रतिकूलाचरणशीला कुष्ठादिव्याधियुक्ता भृत्यादिताडन-शीला सततमतिव्ययकारिणी या भार्या भवेत्साधिवेत्तव्या । तस्यां सत्यामन्योविवाहः कार्यः ॥ ८० ॥

---

( ८० ) असाधुवृत्ताच=असत्यवत्ताच ( मे० ) ‡ ( आ आ )

( ४ ) **राघवानन्दः** । स्त्र्यन्तरसत्त्वेऽपि स्त्र्यन्तरमुद्वहेदित्याह मद्यपेतिद्वाभ्याम् । मद्यपा निषिद्धमद्यपा । असत्प्रवृत्ता असदाचारा असत्यभाषिणीवा । अधिवेत्तव्या सत्यामपि तस्याम् अधिवेदनं पूर्वामधितस्याउपरि स्त्र्यन्तरस्वपरिग्रहः तेन पूर्वाकृतसपत्निकास्यादतः ॥ कृतसापत्निकाध्यूढाऽधिविन्नेत्यमरः ॥ हिंस्रा भृत्यादिताडनशीला । अर्थघ्नी अतिव्ययशीला व्ययेचामुक्तहस्तयेत्युक्तत्वात् ॥ ८० ॥

( ५ ) **नन्दनः** । अथाधिवेत्तव्यामाह मद्यपेति यस्यां विद्यमानायामेवाधिकं अपरा वोढव्या भवति साधिवेत्तव्या ॥ ८० ॥

( ६ ) **रामचन्द्रः** । स्त्रीणांत्यागे कारणमाह । मद्यपेति । मद्यपा असत्यवृत्ता सदामृषावादिनी हिंस्रा ताडनादिहिंसाकारिणी व्याधिता अधिवित्तव्या आसामुपरि अन्या विवाहितुं योग्या सदोषत्वात् ॥ ८० ॥

**वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ॥ एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ८१ ॥**

( १ ) **मेधातिथिः** । अन्यासामप्यधिवेदनमाह तत्रवन्ध्याऽष्टमेऽब्देऽधिवेद्या दशमे तु मृतप्रजा नाधिवेदनेऽपत्योत्पत्त्यभावाद्धिवन्ध्याया अनुष्ठानपरिपातनंस्यात् अपत्योत्पत्तिविधिराधानविधिश्च नापुत्रेह्याधानंश्रूयते एवंमृतप्रजायाः स्त्रीजनन्याः अप्रियवादिन्यास्तु दोषाभावेन नाधिवेदनेन सत्यां क्षमायां श्रमनियमः ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । वन्ध्याष्टमइत्यादियोग्यतायामष्टवर्षोपरि गर्भग्रहणाभावे प्रायशोगर्भग्रहणंनास्तीत्यादिशास्त्रान्तरसिद्धस्वभावनियमापेक्षयोक्तम् । एवंद्वादशाब्दानन्तरमपि मृतप्रजात्वानुवृत्तौ । एकादशोर्ध्वंच स्त्रीजन्मानुवृत्तौ । मृतप्रजात्वं स्त्रीप्रसूतिश्च न निवर्ततेइति शास्त्रान्तरादेव सिद्धम् । सद्यइति तया गृहिण्या सद्यएव गृहकार्यासिद्धेः ॥ ८१ ॥

( ३ ) **कुल्लूकः** । प्रथमऋतुमारभ्याविद्यमानप्रसूताऽष्टमे वर्षेऽधिवेदनीया मृतापत्यादशमे वर्षे स्त्रीजनन्येकादशे अप्रियवादिनी सद्यएव । यद्यपुत्राभवति पुत्रवत्यान्तुतस्यां धर्मप्रजासंपन्ने दारे नान्यांकुर्वीतान्यतरापायेतु कुर्वीतेत्यापस्तंबनिषेधादधिवेदनंन कार्यम् ॥ ८१ ॥

( ४ ) **राघवानन्दः** । किंच वन्ध्येति । अष्टमे षोडशवर्षादिप्रसूतियोग्यकालापेक्षया । मृतप्रजा म्रियते प्रजामात्रं यस्याः सा । स्त्रीजननीस्त्र्यपत्यमात्रं यस्याः सा । सद्यस्त्वप्रियवादिनीति धर्मप्रजासुसंपन्ने दारे नान्यां कुर्वीतेत्याद्यापस्तम्बवचनादप्रियवादित्वंधर्मपुत्रशून्याविषयम् ॥ ८१ ॥

( ५ ) **नन्दनः** । अष्टमेऽब्दे युक्तात्प्रसवकालादारभ्याष्टमेऽब्दे ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । अष्टमे अब्दे अधिवेद्या अन्याविवाह्या ॥ ८१ ॥

**या रोगिणीस्यात्तु हिता संपन्ना चैवशीलतः ॥ सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥ ८२ ॥**

( १ ) **मेधातिथिः** । भर्त्रे हिता परिचर्यापरानुज्ञापनावमानयोरिह विधानयोः पूर्वासाभेतद्भावात् रोगिणीग्रहणं वन्ध्यास्त्रीजनन्यावपि लक्षयति प्रकृतत्वाविशेषादवमाननिमित्ताभावाच्च कर्हिचित्कदाचिदवमाननं शिष्टयर्थपरिभाषणादि ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । हिता भर्तृहिता । अनुज्ञाप्य यद्यप्यनुमन्यते अननुमतौत्वननुज्ञाप्यैव ॥ ८२ ॥

( ३ ) **कुल्लूकः** । या पुनर्व्याधिता सती पत्युरनुकूला भवति शीलवती च स्यात्तामनुज्ञाप्यान्योविवाहः कार्यः । कदाचिच्चासौ नावमाननीया ॥ ८२ ॥

( ४ ) **राघवानन्दः** । साचेदनुकूलातदा तवैव सर्वमित्यादिस्तुत्या ततोधिवेदनार्थमनुमतिर्ग्राह्येत्याह येति । हिता हितैषिणी । शीलतश्चरित्रेण ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । यारोहिणीस्यात् अष्टवर्षा च रोहिणीसा अनुज्ञाप्य अधिवेत्तव्या न अवमान्या ॥ ८२ ॥

**अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ॥ सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ ८३ ॥**

( १ ) **मेधातिथिः** । क्रोधेनाधिवेदनहेतुना निर्गतायास्त्यागसंनिरोधौ विकल्पतोविधीयेतेननुयथोपपन्नहेतुना भोजनाच्छादनाभिताडनादिना तत्र भीत्या क्रोधावमार्जनंश्वश्रूभिः श्वशुरादिभिर्वापरिभाषणसंनिरोधोरक्षिपुरुषाधिष्ठानं त्यागोव्याख्यातः असंभोगः सहशय्यावर्जनं कुलंज्ञातयः तत्पितृपक्षाः स्वपक्षाश्च ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । निर्गच्छेत् गृहान्तरंगच्छेत् । संनिरोद्धव्या बन्धनेन । कुलस्य तत्पितृकुलस्य संनिधौ ॥ ८३ ॥

( ३ ) **कुल्लूकः** । या पुनः कृताधिवेदनास्त्री कुपिता निर्गच्छति सा तदहरेव रज्वादिना बद्धा स्थापनीया आकोपनिवृत्तेः पित्रादिकुलसन्निधौ वात्याज्या ॥ ८३ ॥

( ४ ) **राघवानन्दः** । कृतसपत्नीत्वज्ञानेन रुष्टांप्रत्याह अधिविन्नेति ॥ कृतसापत्निकाध्यूढाऽधिविन्नेत्यमरः ॥ सन्निरोत्धव्या बन्धनादिना कुलसंनिधौ जनसमूहःकुलं ज्ञातिर्वा देशकालापेक्षया विकल्पः ॥ ८३ ॥

( ५ ) **नन्दनः** । त्याज्या दुर्निरोधाचेत्त्यागविधानात् श्रौतस्मार्तकर्मणां तया विनानुष्ठाने नास्ति विरोधः ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । या आधिविन्ना नारी रुषिता क्रोधयुक्ता सासद्यः सन्निरोद्धव्या आकोपनिवृत्तेः त्याज्या । कुलसंनिधौ तत्पित्रेवा ॥ ८३ ॥

**प्रतिषिद्धापि चेद्या तु मद्यमभ्युदयेष्वपि ॥ प्रेक्षासमाजंगच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । प्रतिषेधे गुरुसंबन्धिव्ययंदण्डः क्षत्रियादिस्त्रीणां न शास्त्रीयो ब्राह्मणीनां नहि तत्र दण्डमात्रेण मोक्षः किंतर्हिमहता नच तत्राभ्युदयेषु पानाशङ्का अप्रतिषिद्धमद्यानांतु नियमेनोत्सवसमागतानामादरवतीप्रवृत्तिर्दृश्यते यांसम्यङ्निषेधत्यभ्युदयेष्वपीति दण्डश्चायंभर्त्रादीयते सत्यपि राजवृत्तित्वे स्त्रीणांभर्ताप्रभुरिति विज्ञायते अन्येषामपि परिग्रहवतांभृत्यादिविषये कियतिदण्डः स्वातन्त्र्येऽभ्युदयः पुत्रजन्मविवाहादयउत्सवाः प्रेक्षानटादिदर्शनं समाजोनितान्तमपि जनसमूहः तत्र कुतूहलिन्याअयंदण्डः ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । मद्यं सुराव्यतिरिक्तम् । अभ्युदयेषूत्सवेषु । क्षत्रियादयोमद्यंपिबन्ति । प्रेक्षा नृत्यादिदर्शनस्थानं समाजः सभा ॥ ८४ ॥

( ३ ) **कुल्लूकः** । या पुनः क्षत्रियादिका स्त्री भर्त्रादिनिवारिता विवाहाद्युत्सवेष्वपि निषिद्धमद्यंपिबेत् नृत्यादिस्थानजनसमूहौ वा गच्छेत् सा सुवर्णकृष्णलानि षट्व्यवहारप्रकरणाद्राज्ञा दण्डनीया ॥ ८४ ॥

( ४ ) **राघवानन्दः** । अकार्ये निषिद्धायाः पुनः प्रवृत्तौ दण्डमाह प्रतिषिद्धेति । अपि कामोद्बोधसंभावनार्थम् । प्रेक्षासमाजौ नृत्यादिदिदृक्षुजनसमूहः प्रेक्षा । समाजः उत्सवार्थजनता तौचेद्गच्छेत्तदादण्ड्या राज्ञेतिशेषः ॥ ८४ ॥

( ५ ) **नन्दनः** । प्रतिषेद्धेति विशेषणादप्रतिषिद्धायां मद्यपानेऽल्पदोषः अपि शब्दग्रहणादभ्युदयेऽल्पतरः अभ्युदय-उत्सवः अनभ्युदये प्रतिषिद्धायां भूयस्तरः ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । भर्त्रा प्रतिषिद्धा या स्त्री क्षत्रियादिका मद्यं सुराव्यतिरिक्तं अभ्युदयेपिबेत् प्रेक्षासमाजे नृत्यस्थलसभायांगच्छेत् सादण्ड्या कृष्णलानि गुंजाषट्परिमितंरजतम् ॥ ८४ ॥

**यदि स्वाश्चापराश्चैव विन्देरन्योषितोद्विजाः ॥ तासांवर्णक्रमेण स्याज्ज्यैष्ठ्यंपूजा च वेश्म च॥८५॥**

( १ ) **मेधातिथिः** । कामतः प्रवृत्ता यदि समानजातीयाश्च विन्देरन्विवाहयेयुस्तासांवर्णक्रमेण जात्यनुरूपंज्यैष्ठ्यं न वयस्तोनच विवाहक्रमतः फल[दि][1]दाननिमित्ते पूजा प्रथमंब्राह्मण्यास्ततः क्षत्रियावैश्ययोरित्येषवर्णक्रमः वेश्म प्रधानंगृहं तद्ब्राह्मण्याः सवर्णानांविवाहक्रमोनिश्च[लः][1]स्मृतः ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । स्वाःस्वजातीयाः । अवराअधमजातीयाः । द्विजाविप्रादयः । वर्णक्रमेण न वयसा । ज्यैष्ठ्यं ज्येष्ठासाध्यकर्मसंबन्धः । वेश्म सोत्कर्षम् ॥ ८५ ॥

( ३ ) **कुल्लूकः** । यदि द्विजातयः स्वजातीयाविजातीयाश्चोद्वहेयुस्तदा तासांद्विजातिक्रमेण वाक्संमानदायविभागोत्कर्षार्थंज्येष्ठत्वंपूजाच वस्त्रालङ्कारादिदानेन गृहंच प्रधानंस्यात् ॥ ८५ ॥

( ४ ) **राघवानन्दः** । किंच स्त्रीप्रसंगेन समानाऽसमानजातीयानामपि समानजातीयायाएव पूजावेश्मनी इतिसहेतुमाह यदीति । यदीत्यनुमितौ । स्वाः सजातीयाः अपराः विजातीयाः अनुविन्देरन् उद्वहेरन् । ज्यैष्ठ्यम् पूर्वं विप्रस्य विप्रोद्वाहः तथा प्रथमं पूजा प्रधानं वेश्मएव क्षत्रियवैश्ययोरिति वर्णक्रमः हेतुरत्र विवाहनोज्यैष्ठ्यम् ॥ ८५ ॥

( ५ ) **नन्दनः** । स्वाः सवर्णाः अपरा असवर्णाः द्विजास्त्रैवर्णिकाः वर्णक्रमेण ज्यैष्ठ्यं स्यान्नविवाहक्रमेण क्रमतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवरा इत्युक्तस्य क्रमस्यापवादादिना कृते भङ्गेसत्ययमुपदेशः ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । यदि स्वाः सवर्णाः अपराश्चैव असवर्णाः द्विजाःयोषितःविन्देरन् प्राप्नुयुः तासां स्त्रीणां वर्णक्रमेण ज्यैष्ठ्यं पूज्या पूजार्हा । वेश्मगृहादिकम् ॥ ८५ ॥

**भर्तुः शरीरशुश्रूषांधर्मकार्यंच नैत्यकम् ॥ स्वाचैव कुर्यात्सर्वेषांनास्वजातिः कथंच न ॥ ८६ ॥**

( १ ) **मेधातिथिः** । शरीरशुश्रूषा भर्तुरुपयोगिपाकादिलक्षणा दानभोजनप्रतिजारणं स्वास्वैव कुर्यात् पृष्ठपादसंवाहननिर्णेजनादौत्वनियमः युगपत्संनिधौ तु शरीरावयवक्रमोवर्णक्रमेण नैत्यकंधर्मकार्यं सायंत्वन्नस्येत्यादि अग्निशरणोपलेपनाचमनोदकतर्पणदानादि अस्यानिन्दार्थवादः ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मकार्यं यज्ञादि । नैत्यकं नित्यकर्तव्यंश्राद्धादि । नास्वजातिःस्वजातिसंभवे ॥ ८६ ॥

( ३ ) **कुल्लूकः** । भर्तुर्देहपरिचर्यामन्नदानादिरूपान्धर्मकार्यंच भिक्षादानातिथिपरिवेषणहोमीयद्रव्योपकल्पनादि प्रात्यहिकंसर्वेषांद्विजातीनांसजातिभार्यैव कुर्यान्नतु कदाचिद्विजातीयेति ॥ ८६ ॥

( ४ ) **राघवानन्दः** । यज्ञादिसहकारित्वान्नादिपाकशुश्रूषादावपि सजातीयायाएवाधिकारइत्याह भर्तुरिति । स्वास्वेतिवीप्सा । नैत्यकमिति विशेषणात्काम्येन्यासामपि प्रवेशः बहुसाध्यत्वात्तस्य ॥ ८६ ॥

( ५ ) **नन्दनः** । धर्मकार्यं अग्निशरणालेपनादि ॥ ८६ ॥

( ६ ) **रामचन्द्रः** । सर्वेषां वर्णानांस्वाःस्वाःनैत्यिकंनित्यंकर्मकुर्युः असजातिः अन्यजातिः न कथंचन ॥ ८६ ॥

**यस्तु तत्कारयेन्मोहात्सज्जात्या स्थितयान्यया ॥ यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः॥८७॥**

( ८५ ) वेश्मच=वेश्मनः ( र, व ) ( १ ) मे० ८

( १ ) **मेधातिथिः** । यस्त्वेतत्कर्माऽन्ययाऽसमानजातीययाकारयेत्सजातीयायां स्थितायां ब्राह्मणएव सचण्डालः पूर्वस्माद्दृष्टः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्स्फुटयति यस्त्विति । दृष्टपूर्वः पुराणे श्रुतः ॥ ८७ ॥

( ३ ) **कुल्लूकः** । यः पुनः स्वजातीयया सन्निहितया देहशुश्रूषादिकंकर्तव्यं विजातीयया मौर्ख्यात्कारयेत्सयथा ब्राह्मण्यां । शूद्राज्जातोब्राह्मणचाण्डालस्तथैव पूर्वैर्ऋषिभिर्दृष्टइति पूर्वानुवादः ॥ ८७ ॥

( ४ ) **राघवानन्दः** । असवर्णागुणमोहितंप्रत्याह यस्त्विति । तत् शुश्रूषादिकं स्थितिरप्रयोजिकास्थितया सुस्थयाअन्ययाऽसजात्या । ब्राह्मणचाण्डालः चातुर्वर्ण्यत्वेपि सति कुत्सिताचारत्वाच्चण्डालवदुपेक्ष्यःसइत्यर्थवादः । पूर्वदृष्टः पूर्वैर्मन्वादिभिः तथैव दृष्टः कथितः ॥ ८७ ॥

( ५ ) **नन्दनः** । तच्छरीरशुश्रूषादिकंस्वजात्यास्थितया स्वजातेरन्यथाब्राह्मणचण्डालः कृच्छ्रलब्धायांब्राह्मणजातौ तिष्ठन्नेव कर्मणा चण्डालः स्याद्यथा तथैव च पूर्वदृष्टः पूर्वैर्विद्वद्भिर्निरूपितः ॥ ८७ ॥

( ६ ) **रामचन्द्रः** । यस्तुपुरुषः सजात्या स्थितया स्त्रिया मोहात् अन्यया गृहकार्यं नैत्यिकंसहकारयेत्सः । ब्राह्मणः यथा चाण्डालः तथैवेति पूर्वदृष्टः प्राक्तनैर्मुनिभिर्दृष्टः ॥ ८७ ॥

**उत्कृष्टायाभिरूपाय वराय सदृशाय च ॥ अप्राप्तामपि तांतस्मै कन्यांदद्याद्यथाविधि ॥ ८८ ॥**

**[ प्रयच्छेन्नग्निकांकन्यामृतुकालभयान्वितः ॥ ऋतुमत्यां हि तिष्ठन्त्यामेनोदातारमृच्छति ॥१॥ ]+**

( १ ) **मेधातिथिः** । उत्कृष्टायाभिरूपायेति विशेषणविशेष्यभावः उत्कृष्टायाभिरूपतराय इत्यर्थः अथवोत्कृष्टाय जात्यादिभिरभिरूपायेति पृथग्विशेषणं रूपमाकृतिमाभिमुख्येन प्राप्नोति रूपस्वभाववचनोवा स्वभावः विद्वानप्यभिरूपउच्यते सदृशायजात्यादिभिर्वरोवोढा जामाताऽप्राप्तामप्ययोग्यामपि कामवशत्वेनवालामप्राप्तंकौमारंवयः स्मृत्यन्तरे नग्निकेत्युच्यते कामस्पृहायस्यानोत्पन्ना सा चाष्टवर्षा षड्वर्षावा नत्वत्यन्तबालैव तथाहि लिङ्गामष्टवर्षामिति इदमेव लिङ्गधर्मयुक्ते तामपि विवाहस्येति अन्यथा रागस्यैव प्रयोजकत्वे कुतोप्राप्तायाविवाहइत्याहुस्तदयुक्तं धनार्थिनोऽपि बालांविवाहयन्ति नाशास्त्रीयैव सर्वा प्रयुक्तिस्तृतीयेनिरूपिता ॥ ८८ ॥

( २ ) **सर्वज्ञनारायणः** । उत्कृष्टायोत्तमजातीयाय । अप्राप्तामष्टवर्षन्यूनवयसमपि ॥ ८८ ॥

( ३ ) **कुल्लूकः** । कुलाचारादिभिरुत्कृष्टाय सुरूपाय समानजातीयाय वरायाप्राप्तकालामपि विवाहयेदष्टवर्षामेवंधर्मोनहीयतइति दक्षस्मरणात् तस्मादपि कालात्प्रागपि कन्यांब्राह्मविवाहविधिना दद्यात् ॥ ८८ ॥

( ४ ) **राघवानन्दः** । कन्यायाः स्त्रीत्वेन विप्रादेरभ्यर्हितत्वेन च तत्प्रसंगमवलम्ब्य यादृग्गुणेनेत्युक्तं संस्मारयंस्तत्रैव नियमान्तरमाह उत्कृष्टायेतिद्वाभ्याम् । कुलसौन्दर्यविद्याशीलबलादिविशेषणैर्युक्तायेतिभावः । अप्राप्तां कन्यात्वमितिशेषः अष्टवर्षाभवेद्गौरीत्युक्तेः ॥ ८८ ॥

( ५ ) **नन्दनः** । अथकन्याप्रदानमाह उत्कृष्टायेति । अप्राप्तामपिवयोरूपादिभिरसदृशमपि ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । एतादृशायवराय प्राप्तां अष्टवर्षन्यूनवयस्कान्तांतस्मै कन्यां दद्यात् ॥ ८८ ॥

**काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ॥ न चैवैनांप्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९ ॥**

---

+ ( ट, ट, ड, ण )

( १ ) **मेधातिथिः** । प्रागृतोः कन्यायान दानं ऋतुदर्शनेपि न दद्याद्यावद्गुणवान्वरोनप्राप्तः । गुणोविद्याशौर्यातिशयः [शोभनाकृतिर्वयोमहत्त्वोपेतता लोकशास्त्रनिषिद्धपरिवर्जनंकन्यायामनुरागइत्यादिः ][1] ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः** । ऋतुलङ्घनेनापि गुणवतएव देयेत्यर्थः ॥ ८९ ॥

( ३ ) **कुल्लूकः** । संजातार्तवापि कन्या वरं मरणपर्यंतंपितृगृहे तिष्ठेन्नपुनरेनांविद्यागुणरहिताय कदाचित्पित्रादिर्दद्यात् ॥ ८९ ॥

( ४ ) **राघवानन्दः** । ऋतुमती स्पष्टरजाः । उक्तचतुष्टयविशेषणान्यतरहीनाय न देयेत्युत्कृष्टवरे तात्पर्यात् । अन्यथा अप्रयच्छंत्समाप्नोति भ्रूणहत्यामृतावृता विति याज्ञवल्क्यवचनविरोधः ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । एनां गुणहीनाय न प्रयच्छेत् दद्यात् ॥ ८९ ॥

**त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ॥ ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशंपतिम् ॥ ९० ॥**

( १ ) **मेधातिथिः** । रेतः ऋतुकालंतद्वत्यपि त्रीणिवर्षाणितद्गृहे आसीत । अतः परमुत्कृष्टाभावे सदृशंसमानजातीयंस्वयंवृणुयात् ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । उदीक्षेत प्रतीक्षेत न ततःप्राक्स्वयंवरणमस्तीत्यर्थः । उपासीतेति क्वचित्पाठः । विन्देत स्वप्रयत्नेनैव । सदृशमित्यधमव्यवच्छेदार्थम् ॥ ९० ॥

( ३ ) **कुल्लूकः** । पित्रादिभिर्गुणवद्वरायादीयमाना कन्या संजातार्तवा सती त्रीणि वर्षाणि प्रतीक्षेत । वर्षत्रयात्पुनरूर्ध्वमधिकगुणवरालाभे समानजातिगुणंवरंस्वयंवृणीत ॥ ९० ॥

( ४ ) **राघवानन्दः** । दातॄणामिवाभावे तु स्वयंवरा स्यादित्याह त्रीणीति । उदीक्षेत सद्वरं दातारंवा प्रतीक्षेत । एतस्माद्वर्षत्रयात् । सदृशं सजातिं विन्देत वृणुयादित्यन्वयः ॥ ९० ॥

( ५ ) **नन्दनः** । विन्देत स्वयंवृणीत ॥ ९० ॥

( ६ ) **रामचन्द्रः** । ऋतुमती सती कुमारी त्रीणि वर्षाणिउदीक्षेत । एतस्मात्कालात् ऊर्ध्वं सदृशं बन्धूनामभावे वर्णयोग्यंपतिं विन्देत प्राप्नुयात् ॥ ९० ॥

**अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ॥ नैनः किंचिदवाप्नोति नच यंसाऽधिगच्छति ॥ ९१ ॥**

( १ ) **मेधातिथिः** । वर्षत्रयादूर्ध्वमदीयमाना यंभर्तारंवृणुते तस्य दोषोन कन्यायाः । पूर्वेणैव दोषाभावउक्ते क्रियमाणस्य दोषार्थमिदं ऋतुदर्शनं चद्वादशवर्षाणामिति स्मर्यते ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः** । नैनः पापं पित्रननुमतिकृतं यंसाधिगच्छति सोपि नैनोरजस्वलापरिणयनादिकृतं प्राप्नोतीत्यनुषङ्गः ॥ ९१ ॥

( ३ ) **कुल्लूकः** । पित्रादिभिरदीयमाना कुमारी यथोक्तकाले यदि भर्तारंस्वयंवृणुते तदा सा न किंचित्पापंप्राप्नोति नच तत्पतिः पापंप्राप्नोति ॥ ९१ ॥

( ४ ) **राघवानन्दः** । कन्येच्छया पाणिग्रहणे कन्यातत्पत्योर्न पापाशङ्केत्याह अदीयमानेति । अदीयमाना पित्रादिभिः । पतिं निकृष्टमुत्कृष्टंवा । सापि यं गच्छति सोपि पापदण्डं न प्राप्नोतीत्यर्थः ॥ ९१ ॥

---

( १ ) आ आ

( ५ ) **नन्दनः** । यंसाधिगच्छति सच नैनः प्राप्नोति ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । अदीयमाना बन्धुहीना यदि स्वयंभर्तारमधिगच्छेत्स्वयंवरंकुर्यात्सा एनःपापंकिंचिन्नआप्नोति ॥ ९१ ॥

**अलङ्कारंनाददीत पित्र्यंकन्या स्वयंवरा ॥ मातृकंभ्रातृदत्तंवा स्तेना स्याद्यदि तंहरेत् ॥ ९२ ॥**

( १ ) **मेधातिथिः** । भ्रात्रादिभिर्यदादौ दत्तंस्वयंवरणाभिप्रायं तस्या अजानद्भिस्तदलङ्करणंतेषामेव प्रत्यर्पयेत् यदि तु तथाविधायाएकंददाति तदा न त्यागः तेनात्मैनवयमेनांदास्यामइत्येवमभिप्रायंय द्रूषणंन तस्मिन्नन्यथात्वमापन्ने युक्तं स्तेनः स्यादिति पुल्लिङ्गेन पाठान्तरं वरस्य चौरत्वमाहुस्तस्मात्तेन पित्रा नालङ्कारस्त्याजयितव्यः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । पित्र्यं परिणयनात्प्राग्दत्तम् । एवं भ्रातृकं भ्रातृदत्तंच ॥ ९२ ॥

( ३ ) **कुल्लूकः** । स्वयंवृतपतिका कन्या वरस्वीकरणात्पूर्वपितृमातृभ्रातृभिर्दत्तमलङ्कारंतेभ्यः समर्पयेत् । यदानार्पयेत्तदा चौरीस्यात् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । स्वयंवरात् पूर्वं पितृभ्रातृभ्योलब्धमपि धनं त्यक्त्वा पतिं भजेतेत्याह अलंकारमिति । पित्र्यं मातृकमिति भूतपूर्वगत्या । तमलंकारम् । उक्तवैपरीत्ये दोषमाह स्तेनेति । ग्रहणे स्तेनत्वं यतः स्वयंवरा स्वदेहमात्रमादाय वरं पतिं वृणीतेतस्याः पित्रादिधने नाधिकारः ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । यदि तं मातृभ्रातृदत्तं हरेत्सा स्वयंवरकन्या स्तेना चौरभाया स्यात् ॥ ९२ ॥

**पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतींहरन् ॥ सहि स्वाम्याद‌तिक्रामेदृतूनांप्रतिरोधनात् ॥ ९३॥**

( १ ) **मेधातिथिः** । शुल्कदेयायाऋतुमत्याः शुल्कनिरोधोयं सच स्वाम्यादतिक्रामेत् । बाल्ये पितुर्वशेतिष्ठेदित्युक्तं । वयोन्तरप्राप्तौ वेदयितुः पितुः स्वाम्यंनास्ति शुल्कादेयायाअपि हेतोः समानत्वात्पितुःस्वाम्यनिवृत्तिः अपक्रमणंनिवृत्तिः प्रतिरोधनंप्रतिरोधे ऽपत्योत्पत्तिकार्यै केचिदाहुः अमानवोयंश्लोकः ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । ऋतुमतीं पित्रादीयमानामपि । अत्रहेतुः सचेति । सपिता स्वाम्याच्छुल्कहेतोरतिक्रामेदपगच्छेत् । ऋतूनांप्रतिरोधनादिति गर्भनिरोधनकृतंपापमपेक्षितम् ॥ ९३ ॥

( ३ ) **कुल्लूकः** । ऋतुयुक्तांकन्यांवरः परिणयन्पित्रे शुल्कंन दद्यात् यस्मात्सपिता ऋतुकार्यापत्योत्पत्तिनिरोधात्कन्यायाः स्वामित्वाद्धीयते ॥ ९३ ॥

( ४ ) **राघवानन्दः** । आर्षे गोमिथुनं विहितमपि ऋतुमत्यां निषेधति मिथइति । सहि पिता स्वाम्यादतिक्रामेत्स्वाम्यात्प्रच्युतः । ऋतूनांप्रतिरोधनात् ऋतुजापत्यप्रतिरोधात् । ऋतुपर्यन्तं कन्यायाः कन्यात्वं पितुः स्वत्वंच यतः स्वयंवरा स्वदेहमात्रमादाय वरंवरयतीतिमित्राद्यनधीनत्वंबाल्ये पितुर्निदेशेतिष्ठेदित्युक्तेर्दशवर्षादिकालस्य स्वत्वनिवर्तकत्ववदृतुकालस्यापि स्वत्वनिवर्तकत्वात् । [ अष्टवर्षाभवेत्कन्यानव वर्षातुरोहिणी । दशवर्षाभवेद्गौरीअतऊर्ध्वंरजस्वलेत्युक्तेः ]* ॥ ९३ ॥

( ५ ) **नन्दनः** । सः पिता ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । सः पिता ॥ ९३ ॥

---

* ( न )

त्रिंशद्वर्षोद्वहेत्कन्यांहृद्यांद्वादशवार्षिकीम् ॥ त्र्यष्टवर्षोऽष्टवर्षांवा धर्मे सीदति सत्वरः ॥ ९४ ॥

( १ ) **मेधातिथिः** । इयता कालेन यवीयसी कन्यावोढव्या न पुनरेतावद्वयसएवविवाहइत्युपदेशार्थः । अथापि न यथाश्रुतवर्षसंख्यैव किंतर्हि बहुना कालेनयवीयसी वोढव्या नह्येतद्विवाहप्रकरणे श्रुतं येन संस्कार्यविशेषणत्वेन तदङ्गं दशादिवर्षापञ्चविंशत्यादिवर्षंच निवर्तयेत् ननु च वाक्यान्तरस्थस्याप्यङ्गविधिर्भवत्येव सत्यमिह प्रकरणोत्कर्षेण पाठादाचार्यस्याभिप्रायान्तरमनुमीयते तथाशिष्टसमाचारः सुतस्य च पुनर्दारक्रियायां नैषकालः संभवतीति पुनर्दारक्रियांकुर्यादिति नोपपद्यते ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिंशद्वर्षइत्येतद्ग्रहणान्तिकव्रतचरणपक्षे । धर्मे स्वकर्तव्ये गार्हस्थ्यधर्मे सीदति मन्दीभवतीति त्वराहेतुरुक्तः ॥ ९४ ॥

( ३ ) **कुल्लूकः** । त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कांमनोहारिणींकन्यामुद्वहेत् । चतुर्विंशतिवर्षोवाऽष्टवर्षांगार्हस्थ्यधर्मेवसादंगच्छतित्वरावान् एतच्च योग्यकालप्रदर्शनपरंनतु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदोभवति त्रिभागवयस्का च कन्या वोढुर्यूनोयोग्येति गृहीतवेदश्चोपकुर्वाणकोगृहस्थाश्रमंप्रति न विलंबेतेति सत्वरइत्यस्यार्थः ॥ ९४ ॥

( ४ ) **राघवानन्दः** । ब्राह्मादिविवाहे वयःपरिमाणमनुक्तं विकल्पेनाह त्रिंशदिति । वहेदुद्वहेत् त्र्यष्टवर्षः उत्कटरागापेक्षया गार्हस्थ्यधर्मापेक्षयावा । अतएवाह धर्मेसीदतीति । उद्वहेत्सदृशींभार्यामित्यस्य शेषोयम् स्थानभ्रष्टः । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिश्रौताधानस्यापत्योत्तरकालीनत्वादधर्मोत्रावसथ्याख्याग्निसाध्यः ॥ ९४ ॥

( ५ ) **नन्दनः** । त्र्यष्टवर्षश्चतुर्विंशतिवर्षः धर्मेसीदतिसत्वरः अन्यकन्यांवहेत् ब्रह्मचर्यविप्लवसंभावनायां वयोवस्थानियमोनादरणीयइत्यस्यार्थः ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । धर्मेसीदतिसति रजोदर्शने समुपागतेसति सत्वरोभवेत् ॥ ९४ ॥

देवदत्तांपतिर्भार्यांविन्दते नेच्छयात्मनः ॥ तांसाध्वींबिभृयान्नित्यंदेवानांप्रियमाचरन् ॥ ९५ ॥

( १ ) **मेधातिथिः** । साध्वी भार्या प्रातिकूल्याप्रियवादादिदोषयुक्तापि भर्त्रा न त्याज्येति श्लोकार्थः । अवशिष्टप्रशंसा यान्तुनिरुध्यादेकवेश्मनीत्यसाध्व्याऽपि विहिततत्सकृद्व्यभिचारे अभ्यासेतु त्यागएव नान्यथा तांसाध्वींबिभृयादित्यनेन किंचित्कृतंस्यात् । यदपि ॥ हृताधिकारांमलिनांपिण्डमात्रोपजीविनां ॥ परिभूतामधःशय्यांवासयेद्व्यभिचारिणीं ॥ तच्च सत्यांशक्तौ पत्युरिच्छासा अनिच्छायां तु त्यागएव यच्चेदंपतितताम्स्वपि वस्त्रान्नदानंदेयंचेत्यादिवक्ष्यति तद्ब्रह्महत्यादिषु प्रायश्चित्तेषु भैक्ष्यभोजनारम्भेनिवासप्राप्तौ प्रतिषेधवचनमिति वक्ष्यामः सर्वथा तु पुनर्व्यभिचारिण्याभरणंनास्ति नचात्र त्यागः श्रुतोयेन संभोगविषयतया कल्पेत सोमोददादित्यादि मन्त्रार्थवादेभ्योदेवतानांदातृत्वंप्रतीयते । अथवाविवाहे देवताभार्या भवत्यतउच्यते देवदत्तामिति विन्देत नात्मनइच्छया यथान्यद्व्रीहिरण्याद्यापणभूमौ लभ्यते नेयंभार्या । अतउच्यतेनेच्छयात्मनइति देवेभ्योहितंत्यक्तायां भार्यायां वैश्वदेवादिक्रियानिमित्ते नास्तिदेवहितं अतस्तांद्विषाणांद्विषतीमपि बिभृयात् पातित्ये तामधिकारप्राप्तांपतिर्विन्देत ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । देवदत्तां देवेनाग्निनादत्ताम् । रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमामितिमन्त्रलिङ्गात् ॥ ९५ ॥

( ३ ) **कुल्लूकः** । भगोर्यमा सविता पुरंधिर्मह्यंत्वादुर्गार्हपत्याय देवाइत्यादिमन्त्रलिङ्गाद्यादेवैर्दत्ता भार्या तांपतिर्लभते नतु स्वेच्छया तांसतींदेवानांप्रियंकुर्वन् ग्रासाच्छादनादिना सदा द्वेषाद्युपेतामपि पोषयेत् ॥ ९५ ॥

( ४ ) **राघवानन्दः** । भगोर्यमादेवःसविता पुरन्धिर्मह्यंत्वादुर्गार्हपत्याय देवाइति मन्त्रलिङ्गात् भार्यायादेवदत्तात्वं

ख्यापयन्नुपस्थितायां श्रद्धातिशयंविधत्ते देवदत्तामिति । विवाहोजन्ममरणंयदा यत्र च येन चेतिस्मारयन्नाह नेच्छयेति । द्वेषादिमत्यपि साध्वीति कृत्वा वस्त्रान्नादिना पोषयेदिति श्लोकार्थः ॥ ९५ ॥

( ५ ) **नन्दनः** । अतोस्यावृत्तिर्विधातव्येत्याह देवदत्तामिति । देवदत्तां सोमगन्धर्वाग्निभिर्दत्तां प्रियमाचरन्प्रिया-चरणहेतोः धर्मसाधारण्याच्च ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । देवदत्तां सोमादिभोगकाले दत्तां अथवा विवाहे देवदत्ता भार्या भवेति वा सोमोददद्गन्धर्वाय गन्धर्वोददद्नयइति श्रुतेः ॥ ९५ ॥

**प्रजनार्थंस्त्रियः सृष्टाः संतानार्थंच मानवाः ॥ तस्मात्साधारणोधर्मः श्रुतौ पत्न्यासहोदितः ॥ ९६ ॥**

( १ ) **मेधातिथिः** । प्रजनंगर्भग्रहणंसन्तानोगर्भाधानं तस्माद्धेतोरपत्योत्पत्तेरुभयाधीनत्वाद्विदे स्त्रीपुंसयोः साधारणो-धर्मः पत्न्यासहपुंसउक्तः अतः केवलस्याधिकाराभावात् । स्त्रियोद्वेष्याअपि न त्याज्याः ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रजनार्थं गर्भप्रसवार्थम् । संतानार्थं बीजनिक्षेपेण संतानसिद्ध्यर्थं मानवाः ॥ ९६ ॥

( ३ ) **कुल्लूकः** । यस्माद्गर्भग्रहणार्थंस्त्रियः सृष्टागर्भाधानार्थंच मनुष्यास्तस्माद्गर्भोत्पादनमेवानयोरग्न्याधानादिरपि धर्मः पत्न्यासह साधारणः । क्षौमे वसानावग्नीनादधीयातामित्यादिवेदेऽभिहितस्तस्माद्भार्यांबिभृयादिति पूर्वोक्तस्य शेषः ॥ ॥ ९६ ॥

( ४ ) **राघवानन्दः** । श्रद्धातिशयस्य प्रजोजनमाह प्रजनार्थमिति । प्रजनार्थं प्रजनं प्रजन्यतेनेनेति प्रजनं कामः तदर्थं तन्निवृत्त्यर्थं मशकार्थोधूमइतिवत् । संतानार्थं गर्भाधानार्थं मानवाः पुमांसश्च सृष्टाः मनुष्याणामिवमन्त्रतोगर्भाधान मिति सूचनार्थम् । क्षौमेवसानावग्नीनादधीयातामित्यादिश्रुत्युदितः पत्न्यासह साधारणोधर्मइत्यन्वयः । मानवाइति हे ऋ-षयइतिवा ॥ ९६ ॥

( ५ ) **नन्दनः** । भर्तव्येत्याह प्रजनार्थमिति । प्रजनार्थं गर्भधारणार्थं सन्तानार्थं बीजनिक्षेपणार्थं मानवाः पुरुषाः ॥ ९६ ॥

**कन्यायां दत्तशुल्कायांम्रियेत यदि शुल्कदः ॥ देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥ ९७ ॥**

( १ ) **मेधातिथिः** । यस्याः पित्रादिभिर्गृहीतंशुल्कंन च दत्ता केवलवचनेन देयत्वेन व्यवस्थिता अत्रान्तरे सचे न्म्रियेत तदाऽन्यद्द्रव्यवद्देवरेषु प्रजार्थेषुवा युधिष्ठरादिवत् तदभावे सपिण्डेष्वतोविशेषार्थमिदमुच्यते देवरायप्रदातव्येति न सर्वेभ्यो भर्तृभ्रातृभ्योनापि सपिण्डेभ्यः किंतर्ह्येकस्मै देवरायैव तत्रापि कन्यायाअनुमतौसत्यां अथासत्यांकन्यायाःशुल्क-स्य च का प्रतिपत्तिः यदि कन्यायै रोचते ब्रह्मचर्यं तदा शुल्कंकन्यापितृपक्षाणामेव अथपत्यन्तरमर्थयते तदा प्राग्गृही तंशुल्कंत्यक्त्वान्यस्मादादाय दीयते ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । पुरुषार्थंयद्यनुमन्यते अननुमतेतु नान्यस्मै देया किंतु कन्यैव तिष्ठेदिति फलिष्यति ॥९७॥

( ३ ) **कुल्लूकः** । कन्यायां दत्तशुल्कायां सत्यामसंजातविवाहायां यदि शुल्कदोवरोम्रियते तदा देवराय पित्रादि-भिर्वाऽसौ कन्या दातव्या यदि सा स्वीकरोति यस्याम्रियतइति प्रागुक्तंनियोगरूपं इदन्तुशुल्कग्रहणविषयम् ॥ ९७ ॥

( ४ ) **राघवानन्दः** । यस्याम्रियेत कन्यायाइत्यस्माद्विशेषं वक्तुमाह कन्यायामिति । वाग्दानशुल्कग्रहणाभ्यां वा भेदः । तथाच तस्याः स्वत्वनिवृत्तेरननुमतौ स्वयंवरा स्यान्नतु बलाद्दातुंशक्येत्याहयदीति ॥ ९७ ॥

( ५ ) **नन्दनः** । अनुमत्यभावेऽन्यस्मैदेया सकृत्कन्याप्रदीयतइत्यस्यायमपवादः ॥ ९७ ॥

आददीत न शूद्रोपि शुल्कंदुहितरंददन् ॥ शुल्कंहि गृह्णन्कुरुते छन्नंदुहितृविक्रयम् ॥ ९८ ॥

( १ ) **मेधातिथिः** । इच्छातः शुल्कग्रहणे पूर्वेण विधिरुक्तः कस्य चित्ततएवाशङ्कास्याददोषंशुल्कग्रहणं शास्त्रेगृहीतशुल्कायाविशेषउक्तोयतोतइमामाशङ्कामपनेनुमाह आददीत न शूद्रोपि शुल्कमिति इच्छातः प्रवृत्तौ शास्त्रीयोनियमोनतुशास्त्रेण पदार्थस्यैव कर्तव्यतोक्ता यथामद्यपीतस्य प्रायश्चित्ते मद्यपानंशास्त्रेणानुज्ञातंभवति शुल्कसंज्ञेन यदेवोक्तंगृह्णन्हि शुल्कंलोभेनेति । येन तु विशेषेण पुनः पाठोऽसौप्रदर्शितएव ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र प्रसंगादर्थान्तरमाह आददीतेति । छन्नमपिशुल्कं प्रतिग्रहादिरूपेणापि छद्मना कन्याभिसंधिनाशुल्कंगृह्णन्दुहितृविक्रयंकुरुते ॥ ९८ ॥

( ३ ) **कुल्लूकः** । शास्त्रानभिज्ञः शूद्रोपि पुत्रींददच्छुल्कंन गृह्णीयात्किंपुनः शास्त्रविद्विजातिः यस्माच्छुल्कंगृह्णन्गुप्तंदुहितृविक्रयंकुरुते न कन्यायाः पितेत्यनेन निषिद्धमपि शुल्कग्रहणंकन्यायामपि गृहीतशुल्कायां शास्त्रीयनियमदर्शनाच्छुल्कग्रहणे शास्त्रीयत्वशङ्कायांपुनस्तन्निषिध्यते ॥ ९८ ॥

( ४ ) **राघवानन्दः** । शुल्कदइत्यनेन कन्याशुल्कं परमते प्रतिषेधति आददीतेति । सर्वाशी सर्वविक्रयीति सर्वविक्रयिणःशूद्रग्रहणमत्यन्तपातकसूचनार्थं तंदेशं पतितं मन्ये यत्रास्ते शुक्रविक्रयीतिस्मरणात् । छन्नं गुप्तं पापमावश्यकमितिभावः ॥ ९८ ॥

एतत्तु न परे चक्रुर्नापरे जातु साधवः ॥ यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥ ९९ ॥

( १ ) **मेधातिथिः** । तदुक्तंगृहीते शुल्केन कन्येच्छायां सत्यां मृतेतु शुल्कदेऽस्याअन्यत्रदानमिति तन्निषेधति । यदन्यस्य शुल्कदस्यानुज्ञया पुनरन्यस्मै दीयते पुनःशुल्कंगृहीत्वेति वरंस्वयंवरंतु कारयेत्कन्या एषएवार्थः ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । अतोदेवरंप्रत्यननुमतायां कन्यायां नान्यस्मै सा देया । सोदरस्तु भ्रातात्मैवेति गृहीतस्य शुल्कस्य तद्धनत्वात्तस्मै दीयमानायां कन्यायां दोषाभावइति तात्पर्यम् । अभ्यनुज्ञाय शुल्कग्रहणेनान्यस्मै प्रतिपद्य ॥ ९९ ॥

( ३ ) **कुल्लूकः** । एतत्पुनः पूर्वे शिष्टान कदाचित्कृतवन्तोनाप्यपरे वर्तमानकालाः कुर्वन्ति यदन्यस्य कन्यामङ्गीकृत्य पुनरन्यस्मै दीयतइति एतच्च गृहीतशुल्ककन्यामदत्वा कस्य चित्कन्यायामिति तु गृहीतशुल्कविषयम् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । वाक्शुल्काभ्यांअस्मै प्रदाय देवरादन्यस्मै प्रदानं साधुकृत्याप्रसिद्धमित्याह एतदिति । अनपरे पूर्वे ‡ । देवरादतिरिक्तविषयमेतत् ॥ ९९ ॥

( ५ ) **नन्दनः** । परे पुरातनाः अपरे नूतनाः अभ्यनुज्ञायप्रतिश्रुत्य ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । यत्तुया कन्या अन्यस्य अभ्यनुज्ञाय दास्यामीति उक्त्वा पुनः अन्यस्मै दीयते ॥ ९९ ॥

नानुशुश्रुमजात्वेतत्पूर्वेष्वपि हि जन्मसु ॥ शुल्कसंज्ञेन मूल्येन छन्नंदुहितृविक्रयम् ॥ १०० ॥

( १ ) **मेधातिथिः** । न कुतश्चिदस्माभिः श्रुतं पूर्वेषु जन्मसु कल्पान्तरेष्वित्यर्थः ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । छन्नशुल्कग्रहेण दुहितृविक्रये प्रागुक्ते सदाचारविरोधं दर्शयति नानुशुश्रुमेति । पूर्वेषुजन्मसु लोकजन्मकालेषु कल्पेषु छन्नमपि नानुशुश्रुम किंपुनः स्पष्टम् ॥ १०० ॥

---

( ९८ ) ददन्=ददत् ( अ )

‡ अनपरे पूर्वे=अपरे वर्तमानकालीनाःपरेपूर्वे ( न )

( ३ ) कुल्लूकः। पूर्वकल्पेष्वप्येतद्वृत्तमिति कदाचिद्वयं श्रुतवन्तोयच्छुल्काभिधानेन मूल्येन कश्चित्साधुर्गूढं दुहितृविक्रयमकार्षीदिति शुल्कनिषेधार्थवादः ॥ १०० ॥

( ४ ) राघवानन्दः। न केवलं कृत्यविषयमपितु श्रवणपथं नावतीर्णमित्याह नेति। पूर्वेषुजन्मसु कल्पेषु मनोर्जातिस्मरत्वेऽविप्रतिपत्तेः कामबाणप्रपीडितायास्ताद्दृश्याअदीयमानाया भर्तारमधिगच्छेदिति गतिरुक्ता ॥ १०० ॥

( ५ ) नन्दनः। जन्मसु सृष्टिकालान्तरेष्वितियावत् ॥ १०० ॥

**अन्योन्यस्याव्यभीचारोभवेदामरणान्तिकः ॥ एषधर्मःसमासेनज्ञेयः स्त्रीपुंसयोः परः ॥ १०१ ॥**

( १ ) मेधातिथिः। अविशेषेण वचनवित्या सर्वक्रियास्वव्यभिचारः। तथाचापस्तम्बः ॥ धर्मेचार्थे च कामे च नाभिचरितव्येति एतावच्च श्रेयोधर्मोर्थः कामः। तथाचोक्तं त्रिवर्गइति तुस्थितिरिति यच्चाहुरपरित्यागोऽत्राव्यभिचारइतरथा स्त्रीवत्पुरुषस्यानेकाभार्यापरिणयनंनस्यात्तदयुक्तं। अस्तिपुरुषे वचनं कामतस्तुप्रवृत्तानां तथावन्ध्याष्टमेऽधिवेत्तव्याइति नतु स्त्रियाः तथाच लिङ्गान्तरंस्यादेकस्य बव्होजायाभवन्ति नैकस्याबहवः सहपतयइति। आमरणान्ते भव आमरणान्तिकः अन्यतरमरणेऽपि तस्यान्तोस्तीत्यर्थः। एषसंक्षेपेण स्त्रीपुंसयोः प्रकृष्टोधर्मोवेदितव्यः ॥ १०१ ॥

( २ ) सर्वज्ञनारायणः। आमरणान्तिकोयावदुभयोर्मरणम्। परउत्तमः ॥ १०१ ॥

( ३ ) कुल्लूकः। भार्यापत्योर्मरणान्तंयावद्धर्मार्थकामेषु परस्पराव्यभिचारः स्यादित्येव संक्षेपतः स्त्रीपुंसयोः प्रकृष्टोधर्मोज्ञातव्यस्तथा च सति ॥ १०१ ॥

( ४ ) राघवानन्दः। स्त्रीपुंसयोरामरणं नक्वापि वियोगोयुक्तइति द्रढयन्नाह अन्योन्यस्येतिद्वाभ्याम्। एषोवक्ष्यमाणः। परः उत्कृष्टो यतोव्यभिचारे ॥ संकरोनरकायैवेत्युक्तम् ॥ १०१ ॥

**तथा नित्यंयतेयातांस्त्रीपुंसौ तु कृतक्रियौ ॥ यथा नाभिचरेतान्तौ वियुक्तावितरेतरम् ॥ १०२ ॥**

( १ ) मेधातिथिः। यतेयातां प्रयत्नवन्तौतथास्यातां यथेतरेतरंपरस्परंनातिचरेतां अतिचारोऽतिक्रमः धर्मार्थकामेष्वसहभावः कृतक्रियौ कृतविवाहादिसंस्कारौनियुक्तौ ततः परोपसंहारः श्लोकोयंनानुक्तार्थोपदेशकः ॥ १०२ ॥

( २ ) सर्वज्ञनारायणः। कृतक्रियौ कृतनियमौ नातिचरेयातामिति । पुरुषोपि यथा परस्त्रियं न गच्छेदित्यर्थः ॥ १०२ ॥

( ३ ) कुल्लूकः। स्त्रीपुंसौ कृतविवाहौ तथा सदा यत्नंकुर्यातां यथा धर्मार्थकामविषये वियुक्तौ परस्परंन व्यभिचरेताम् ॥ १०२ ॥

( ४ ) राघवानन्दः। तदेवाह तथेति। यतक्रियौ यतचित्तौ ॥ १०२ ॥

( ५ ) नन्दनः। कृतक्रियौ यतेयातांक्रियाभिर्यतेयातामित्यर्थः ॥ १०२ ॥

( ६ ) रामचन्द्रः। नियुक्तौ धर्मार्थकामनियुक्तौ ॥ १०२ ॥

**एषस्त्रीपुंसयोरुक्तोधर्मोवोरतिसंहितः ॥ आपद्यपत्यप्राप्तिश्च दायभागंनिबोधत ॥ १०३ ॥**

---

( १०२ ) वियुक्तौ=नियुक्तौ ( राम० ) ( १०२ ) कृतक्रियौ=यतक्रियौ ( राघ० )

( १०३ ) दायभागम्=दायधर्मम् ( ज, झ, ञ, ट, ड, ढ, त )

( १ ) **मेधातिथिः** । पूर्वोक्तप्रकरणयोः संबन्धश्लोकोयं उक्तेषु स्त्रीपुंसयोश्चापत्योत्पत्तौ च दायधर्मस्य विभागस्यावसरः॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । अथ विभागंवक्तुमारभते एषइति । रतिसंहितोरतिसंबन्धी रतेरपि न विरोधी । दायधर्मान् दायमधिकृत्य विभागादिधर्मान् ॥ १०३ ॥

( ३ ) **कुल्लूकः** । एषभार्यापत्योरन्योन्यानुरागयुक्तोधर्मोयुष्माकमुक्तः संतानाभावे चापत्यप्राप्तिरुक्ता इदानींदीयतइति दायः पित्रादिधनंतस्य विभागव्यवस्थांशृणुत ॥ १०३ ॥

( ४ ) **राघवानन्दः** । उपसंहरति एषइति । रतिसंहितः परस्परानुरागयुक्तः । आपद्यपत्यप्राप्तिश्चत्वसुताभावे देवरादेरप्यपत्यावाप्तिश्च । दायभागं दीयतइतिदायः पित्रादिधनं तस्य भागोव्यवस्था ॥ १०३ ॥

( ५ ) **नन्दनः** । आपद्यपत्यप्राप्तिर्देवरादिनियोगः । दायधर्मैरिक्थपरिग्रहम् ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । ऐषतिसार्धेनाह । आपदि अपत्यप्राप्तिर्न पुनः दायधर्मन्निबोधत ॥ १०३ ॥

**ऊर्ध्वंपितुश्च मातुश्च समेत्य भ्रातरः समम् ॥ भजेरन्पैतृकंरिक्थमनीशास्ते हि जीवतोः ॥१०४॥**

( १ ) **मेधातिथिः** । भजेरन्निति प्राप्तकालतायां लिङ् तथा पञ्चमे प्रपञ्चितं अथवा यस्मिन्नुशयने संक्रामति ॥१०४॥

( २ ) **सर्वज्ञनारायणः** । पिता माताच पितरौ तयोः रिक्थं पैतृकम् । ऊर्ध्वं मरणात् । पितुर्मरणादूर्ध्वं पितुर्धनं विभजनीयं मातुरूर्ध्वं मातृकमिति विभज्य योज्यं स्मृत्यन्तरदर्शनात् । तत्रच मातृधनं दुहित्रभावएव पुत्रैर्ग्राह्यम् । समेत्यैकत्रस्थित्वा । समं नतु मातृपितृधनयोर्विभागे अन्योन्यं विशेषः । अनीशाः विभागेऽस्वतन्त्राः तेन पित्रोरनुमत्या जीवतोरपि तयोर्विभागइति लभ्यते ॥ १०४ ॥

( ३ ) **कुल्लूकः** । भ्रातरोमिलित्वा पितृमरणादूर्ध्वंपैतृकंमातृमरणादूर्ध्वंमातृकंधनंसमंकृत्वा विभजेरन् ज्येष्ठगोचरतयोद्धारस्य वक्ष्यमाणत्वात् । समभागोऽयंज्येष्ठभ्रातर्युद्धारमनिच्छति बोद्धव्यः । पित्रोर्मरणादूर्ध्वविभागहेतुमाह यस्मात्ते पुत्राजीवतोः पित्रोस्तदीयधने स्वामिनोन भवन्ति मातुरपि प्रकृतत्वात्पैतृकमित्यनेन मातृकस्यापि ग्रहणं । अयंच पितृमरणानन्तरंविभागोजीवतः पितुरिच्छाभावे द्रष्टव्यः पितुरिच्छया जीवत्यपि तस्मिन्विभागः । तदाह याज्ञवल्क्यः ॥ विभागंचेत्पिता कुर्यादिच्छया विभजेत्सुतानिति ॥ १०४ ॥

( ४ ) **राघवानन्दः** । तमेवाह ऊर्ध्वमिति । त्रिपञ्चाशता । ऊर्ध्वं मातापित्रोर्मरणात् । विभागेहेतु अनीशाः । अस्वामिनः जीवतोर्मातापित्रोः । तयोर्मरणं स्वत्वस्योत्पादकं व्यञ्जकं चोभयथापि ऊर्ध्वपदमुपलक्षणं पातित्यप्रव्रज्यादेः । स्वत्वध्वंसकत्वसाम्यात् । समं समभागंकुर्युरित्यपि पितुरिच्छापक्षे ॥ विभागंचेत्पिता कुर्यादिच्छया विभजेत्सुतान् ॥ ज्येष्ठंवाश्रेष्ठभागेन सर्वेवा स्युः समांशिनः ॥ इतियाज्ञवल्क्योक्तेस्तदिच्छैव कारणं न ज्यैष्ठ्यादिकम् ॥ १०४ ॥

( ५ ) **नन्दनः** । समेत्यएकशोभूत्वा पैतृकं पितृसंबन्धि पितुरूर्ध्वं पैतृकं रिक्थं भजेरन्विभजेरन् मातरूर्ध्वं मातृकं जीवतोः पित्रोः ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । जीवतोर्मातापित्रोः ते पुत्राः अनीशाः ॥ १०४ ॥

**ज्येष्ठएव तु गृह्णीयात्पित्र्यंधनमशेषतः ॥ शेषास्तमुपजीवेयुर्यथैव पितरंतथा ॥ १०५ ॥**

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठएवत्विति एतज्ज्येष्ठस्य गुणवत्वे अन्येषांच हीनवत्वे ॥ १०५ ॥

( ३ ) **कुल्लूकः** । यदापुनर्ज्येष्ठोधार्मिकोभवतितदा ज्येष्ठेति । ज्येष्ठएव पितृसंबन्धिधनंगृह्णीयात्कनिष्ठाः पुनर्ज्येष्ठंभक्ताच्छादनाद्यर्थंपितरमिवोपजीवेयुः एवंसर्वेषांसहैवावस्थानम् ॥ १०५ ॥

( ४ ) **राघवानन्दः** । धार्मिकज्येष्ठसत्वेत्वाह ज्येष्ठइतिषड्भिः । शेषाः कनीयांसः । अन्नाच्छादनाद्यर्थं पुत्रायथा पितरमुपजीवेयुस्तथेत्यन्वयः ॥ १०५ ॥

( ५ ) **नन्दनः** । पक्षान्तरमाह ज्येष्ठएवेति ॥ १०५ ॥

**ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः॥ पितॄणामनृणश्चैव सतस्मात्सर्वमर्हति ॥ १०६ ॥**

( २ ) **सर्वज्ञनारायणः** । पितॄणामनृणस्तेनैव तदृणापगमात् । अयं पूर्वस्यार्थवादः ॥ १०६ ॥

( ३ ) **कुल्लूकः** । उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान्भवति । ततश्च नापुत्रस्य लोकोस्तीतिश्रुतेः । पुण्यलोकाभावपरिहारोभवति । तथा प्रजयापितृभ्य इतिश्रुतेः । पुत्रेण जातमात्रेण पितॄणामनृणश्च सइति अतोज्येष्ठएवसर्वधनमर्हति पूर्वस्य अनुजास्तेन साम्ना वर्तेरन् ॥ १०६ ॥

( ४ ) **राघवानन्दः** । ज्येष्ठस्य सर्वधनभुक्तौ हेतुमाह ज्येष्ठेनेति । अनृणःनिस्तीर्णः ॥ जायमानोवै ब्राह्मणस्त्रिभिर्ऋणवाजायतइतिश्रुतेः पितुर्ऋणवतः श्रवणात् ॥ १०६ ॥

( ५ ) **नन्दनः** । कनिष्ठेभ्यो ज्येष्ठस्य विशेषमाह ज्येष्ठेनेति ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । ज्येष्ठेनेति । सः पिता तस्मात्पुत्रात् अनृणः भवति च पुनः सर्वं अर्हति ॥ १०६ ॥

**यस्मिन्नृणंसन्नयति येन चानन्त्यमश्नुते ॥ सएव धर्मजः पुत्रः कामजानितरान्विदुः ॥ १०७ ॥**

( १ ) **मेधातिथिः** । इतरानित्यर्थवादोयं यथाश्रुतितात्पर्यश्रुतिग्रहणाद्धिकनीयसामभागार्हतैव स्यात् । ततश्च वक्ष्यमाणविरोधः ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । आनन्त्यममृतत्वं उत्पादितपुत्रस्यैव मोक्षाश्रमाधिकारात् । धर्मजोधर्मार्थमुत्पादितः । कामजान् एकेनैव धर्मस्य सिद्धेः ॥ १०७ ॥

( ३ ) **कुल्लूकः** । यस्मिञ्जाते ऋणंशोधयति येनजातेनामृतत्वंप्राप्नोति । तथाच श्रुतिः ऋणमस्मिन्सन्नयत्यमृतत्वंच गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतोमुखमिति सएव पितुर्धर्मेण हेतुना जातः पुत्रोभवति तेनैकेनैव ऋणापनयनाद्युपकारस्य कृतत्वात् इतरांस्तु कामजान्मुनयोजानन्ति । ततश्च सर्वधनंगृह्णीयादित्यस्यैवायमपि विशेषः ॥ १०७॥

( ४ ) **राघवानन्दः** । तत्रैवार्थवादमाह यस्मिन्निति । यस्मिन् । प्रथमजे संनयति स्वर्णसमर्पयतिष्यति । तथाच श्रुतिः ॥ ऋणमस्मिन्त्संनयत्यमृतत्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतोमुखमिति ॥ धर्मजोधर्मार्थंजातइति॥१०७॥

( ५ ) **नन्दनः** । क्वचित्कुले ज्येष्ठोगुणहीनः कनिष्ठोगुणवांश्च दृश्यते तत्र किं प्रवर्तितव्यमित्यपेक्षायामाह यस्मिन्नृणमिति । ऋणं पितृभ्यः प्रदेयं पिण्डादिकं सन्नयति निक्षिपति येन यशस्विना संतानकरेणानन्त्यं मरणराहित्यमश्नुते सएव पुत्रो धर्मजः धर्मार्थं जातः ज्येष्ठइत्यर्थः । इतरान्निर्गुणान् ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । यस्मिन्पुत्रे ऋणं त्रिविधं देवर्षिपित्र्यं संनयति समार्पिनयति । धर्मतः धर्मार्थंजातः ॥ १०७ ॥

**पितेव पालयेत्पुत्रान्ज्येष्ठोभ्रातॄन्यवीयसः॥ पुत्रवच्चापि वर्तेरन्ज्येष्ठे भ्रातरि धर्मतः ॥ १०८ ॥**

( १ ) **मेधातिथिः** । पुत्रवत्पालनीयानतु बालाइति धनादिना गर्हणीयास्तदाह पुत्रवच्चापि वर्तेरन्निति ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । पालयेदन्नवस्त्रादिदानेन । धर्मतोधर्मापेक्षया ॥ १०८ ॥

( ३ ) **कुल्लूकः** । ज्येष्ठोभ्राता विभागाभावेऽनुजान्भ्रातॄन्भक्ताच्छादनादिभिः पितेव बिभृयात् । अनुजाश्च भ्रातरः पुत्राइव ज्येष्ठे भ्रातरि धर्माय वर्तेरन् ॥ १०८ ॥

( ४ ) **राघवानन्दः** । ज्येष्ठस्येतरेषु वृत्तिं सदृष्टान्तां शिक्षयति पितेति । पालयेत् धर्मतोज्येष्ठोज्येष्ठधर्मेण । कनिष्ठधर्मेणच ते ज्येष्ठे वर्तेरन् यवीयांसइतिशेषः ॥ १०८ ॥

( ५ ) **नन्दनः** । वर्तेरन् यवीयांसः ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । यवीयसः कनिष्ठान् । ज्येष्ठे भ्रातरि कनिष्ठाः पुत्रवच्चापि वर्तेरन् ॥ १०८ ॥

**ज्येष्ठः कुलंवर्धयति विनाशयति वा पुनः ॥ ज्येष्ठः पुज्यतमोलोके ज्येष्ठः सद्भिरगर्हितः ॥१०९॥**

( १ ) **मेधातिथिः** । अपरा प्रशंसा यएव गुणज्येष्ठः सवर्धयति कुलं अयमेव निर्गुणस्तत्कुलंविनाशयति शीलवति ज्येष्ठे कनीयांसोपि तथावर्तन्ते तेऽपि गुणहीनाविवदन्ति ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठइति तस्मिन्सम्यग्वृत्तावितरेषामन्यथात्वेपि कुलंवर्धतएवेत्यर्थः । पूज्यतमः कनिष्ठैः । सद्भिः शिष्टैः कनिष्ठैरगर्हितोनगर्हणीयः ॥ १०९ ॥

( ३ ) **कुल्लूकः** । अकृतविभागोज्येष्ठोयदि धार्मिकोभवति तदानुजानामपि तदनुयायित्वेन धार्मिकत्वाज्ज्येष्ठः कुलंवृद्धिंनयति यद्यधार्मिकोभवति तदाऽनुजानामपि तदनुयायित्वाज्ज्येष्ठः कुलंनाशयति । तथागुणवाञ्ज्येष्ठोलोके पूज्यतमः साधुभिश्चागर्हितोभवति ॥ १०९ ॥

( ४ ) **राघवानन्दः** । अत्राप्यर्थवादमाह ज्येष्ठइति । ज्येष्ठोहि धार्मिकतयाऽन्यानपि धर्मशिक्षया कुलं वर्धयति । एवमधार्मिकोपि नाशयत्यधर्मोपसेवनेन ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनइतिस्मृतेः ॥ १०९ ॥

( ५ ) **नन्दनः** । ज्येष्ठउक्तलक्षणः कुलं वर्द्धयतीतरोनाशयति तस्माल्लोके पूज्यतमः सद्भिरगर्हितश्च तथाविधो ज्येष्ठोनान्यः ॥ १०९ ॥

**योज्येष्ठोज्येष्ठवृत्तिः स्यान्मातेव सपितेव सः ॥ अज्येष्ठवृत्तिर्यस्तु स्यात्ससंपूज्यस्तु बन्धुवत्॥११०॥**

( १ ) **मेधातिथिः** । ज्येष्ठस्य वृत्तिः पुत्रे च स्नेहः कनीयांसोपि तथैव वर्तन्तेति पालनंशरीरधनेषु तदीयेषु स्ववदनुपेक्षाऽकार्येभ्योनिवर्तनं यस्त्वन्यथावर्तते तत्र बन्धुवत्प्रत्युत्थानाभिवादनैर्मातुलपितृव्यवत्संपूजा कर्तव्यान्यकरणविधेयतानुवृत्तिः ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । तद्दर्शयति यइति । ज्येष्ठवृत्तिः ज्येष्ठोचितपोषणादिकारी ॥ ११० ॥

( ३ ) **कुल्लूकः** । योज्येष्ठोऽनुजेषु भ्रातृषु पितृवद्वर्तेत सपितेव मातेवागर्हणीयोभवति यः पुनस्तथा न वर्तेत समातुलादिबन्धुवदर्चनीयः ॥ ११० ॥

( ४ ) **राघवानन्दः** । ज्येष्ठस्यैव पालकत्वतदभावाभ्यां पूजायां दृष्टान्तद्वयमाह यइति । ज्येष्ठवृत्तिर्ज्येष्ठस्येव वृत्तिः॰ पालनादिर्यस्य सज्येष्ठवृत्तिः समातृपितृवत्पूज्यइत्यनुषज्यते । तद्भिन्नोयःसः बन्धुवत् मातुलादिवत् ॥ ११० ॥

( ५ ) **नन्दनः** । ज्येष्ठवृत्तिः पितृवत्पालनम् ॥ ११० ॥

एवंसह वसेयुर्वा पृथग्वा धर्मकाम्यया ॥ पृथग्विवर्धतेधर्मस्तस्माद्धर्म्यापृथक्क्रिया ॥ १११ ॥

( १ ) **मेधातिथिः** ।स्वेच्छानियोज्यत्वाभावान्निरपेक्ष्यस्य द्रव्यसाध्येषु ज्योतिष्टोमादिष्वसंभवात्तत्सिद्ध्यर्थोयंन्यायप्राप्तोविभागउच्यते पृथग्वा धर्मकाम्ययेति न पुनरविभागादधर्मोविभागएवाग्निहोत्रादिवद्धर्मः ननु च धर्मानुष्ठानप्रतिबन्धहेतुत्वादधर्मत्वेवाविभागस्य नैषदोषः अधिकृतस्याननुष्ठानेप्रत्यवायः नचाविभक्तधनस्याधिकारोऽग्निमत्वाभावाद्विभागकालएवाग्निपरिग्रहस्य विहितत्वात् यस्तुजीवत्येव पितरि कृतविवाहस्तदैव च परिगृहीताग्निस्तस्याधिकृतत्वान्नैवाविभागः सोपि यदि विच्युतः परिग्रहादन्यतोवा विहितानुष्ठानपर्याप्तधनस्तदा नैव सहवसन्प्रत्यवेयात् नहि विभागाविभागयोर्धर्माधर्मतत्त्वरूपेणास्तीत्युक्तं ननु च भ्रातृणामविभक्तधनानामेकोधर्मः प्रवर्ततइति वचनाद्दंपत्योरिव सहानुष्ठाने प्राग्विभागादस्त्येव धर्म व्यक्तिः साधारण्याद्द्रव्यस्य सर्वैः संभूय कर्त्तव्यमिति नैतदग्निहोत्राद्याहवनीयादिषुह्यग्निहोत्रादयः संस्कारनिमित्ताश्चाहवनीयादयआत्मनेपददर्शनादन्यतरस्य संबन्धितांप्रतिपद्यन्ते परकीयेवाग्नौजुव्हतः प्रतिषेधदर्शनमस्ति नान्यस्याग्निषु यजतेति न स्मार्तेह्यपि गृह्येऽग्नौ विधानं गृहशब्दस्य विशिष्टोपादानादग्निवचनत्वादेषएवन्यायः अतिथ्यादिभोजनदाने महायज्ञमध्यपाठात् ॥ वैवाहिकेग्नौकुर्वतिगृह्यंकर्मयथाविधि ॥ पञ्चयज्ञविधानंचेति गृह्यतएवाधिकारस्तेनैतद्वचनमेकोधर्मइतिश्राद्धपूर्तान्नादिमात्रंविज्ञेयम् ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । पृथग्वेति यदि धर्मोचिताभवन्ति । पृथग्विवर्धतइति भूयान्भवतीत्यर्थः । धर्म्या धर्मवती ॥ १११ ॥

( ३ ) **कुल्लूकः** । एवमविभक्ताभ्रातरः सहसंवसेयुः यदि वा धर्मकामनया कृतविभागाः पृथग्वसेयुः यस्मात्पृथगवस्थाने सति पृथक्पृथक्पञ्चमहायज्ञाद्यनुष्ठानधर्मस्तेषांवर्धते तस्माद्विभागक्रिया धर्मार्था । तथा च बृहस्पतिः ॥ एकपाकेन वसतांपितृदेवद्विजार्चनम् । एकंभवेद्विभक्तानांतदेवस्याद्गृहे गृहे ॥ १११ ॥

( ४ ) **राघवानन्दः** । एवं पितुरूर्ध्वं सहवसतिमुक्त्वा सर्वेषां धार्मिकत्वे विभागमाह एवमिति पृथक्क्रिया विभागक्रियाधर्म्या धर्मार्था न स्वातन्त्र्यार्था । अतआह धर्मकाम्यया [ इति ॥ एकपाकेनवसतांपितृदेवद्विजार्चनम् । एकंभवेद्विभक्तानांतदेवस्याद्गृहेगृहेइतिबृहस्पतिः ]+ ॥ १११ ॥

( ५ ) **नन्दनः** । वसेयुर्भ्रातरः ॥ १११ ॥

ज्येष्ठस्य विंशउद्धारः सर्वद्रव्याच्च यद्वरम् ॥ ततोऽर्धंमध्यमस्य स्यात्तुरीयन्तुयवीयसः ॥ ११२ ॥

( १ ) **मेधातिथिः** । इयमुद्धारनियोगस्मृतिरतिक्रान्तकालविषया मत्वद्यत्वेनुष्ठेयै नियतकालत्वात्स्मृतीनामिति केचित् । अनुष्ठेयत्वव्यपदेशोदीर्घसत्रवज्ज्ञानादभ्युदयोयथास्यादिति नहि दीर्घसत्रमद्यत्वे केचिदाहरमाणादृश्यन्ते अधीयते तु तदुपदेशंब्राह्मणाः तथाचान्ये कलियुगे धर्माइत्युक्तंतेन देशनियमवत्कालनियमोपि धर्माणांद्रष्टव्यः नह्युपदिष्टोधर्मः सर्वत्रदेशेऽनुष्ठीयते तथाहि देशधर्मानियतदेशव्यवस्थिताउच्यन्ते अन्यथा सर्वानुष्ठाने नदेशव्यपदेश्यता धर्माणांतथाच पठति अयंद्विजैर्हिविद्वद्भिरित्यादि तस्मादुद्धारनियोगगोवधस्मृतयउपदिष्टानानुष्ठेयास्तदेतदपेशलं नह्येवंविधः कालनियमः क्वचिदपि श्रूयते सायंप्रातपर्वादिनियमादन्यत्र यच्चान्ये कृतयुगे धर्माइति तत्प्रथमएवव्याख्यातं । नहियुगभेदेन धर्मव्यवस्थाहेतुर्देशनियमोपि प्राचीनप्रवणादिव्यतिरेकेण मध्यदेशः सर्वदेशकृतोनैवास्तीत्युक्तं । निजान् जनपदधर्मान्सद्भिराचरि-

+ ( न )

तानित्यत्र दीर्घसत्रेष्वद्यत्वेप्यनुष्ठानसंभवः संवत्सरशब्दस्त्वहःसु प्रथमएवदर्शितः । यत्तुनाद्यत्वे केचिदनुतिष्ठन्तोदृश्यन्तइति उपदिष्टार्थस्य नित्यवदाम्नातस्यापि बहुभिः प्रकारैरनुष्ठानसाधनाशक्तयाफलानिच्छया वा नास्तिकतया वा यत्तवेने राज्यंप्रशासति तदा प्रभृतिकंमहापौर्वकालिकमनुष्ठानंदर्शयतीत्यर्थवादोसौ न कालोपदेशः । ज्येष्ठस्य विंशः ज्येष्ठस्य मध्यद्रव्याद्वा विंशतितमोभागउद्धृत्य दातव्यएव मध्यमस्य तदर्धंचत्वारिंशत्तमोभागः एवंकनिष्ठस्य तुरीयोज्येष्ठापेक्षयाऽशीतितमोभागः । एवमुद्धृते परिशिष्टंत्रिधाकर्तव्यंतत्र सर्वेभ्योद्रव्येभ्योयद्वरंश्रेष्ठंतज्ज्येष्ठस्यैव अथवा द्रव्येष्वपिपरंवरमितिपाठः । उत्तमाधममध्यमानि यानि द्रव्यादीनि सन्ति [ततस्त][1] स्याद्यदेकंश्रेष्ठंतत्तस्यैव तदुक्तंभवति । यत्र गावोऽश्वावासन्ति एकः श्रेष्ठोज्येष्ठस्य दातव्यो नद्रव्यान्तरेण मूल्येन वा स्वीकर्तव्यः त्रयाणांसर्वेषांगुणिनामयमुद्धारविधिर्गुणवतामुद्धारदर्शनात् ॥११२॥

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठस्येतिमध्यकाद्धनाद्विंशतितमंभागं कृत्वोद्धृत्योद्धारावशिष्टमध्योत्तमंकिंचिदेवद्रव्यसहितं ज्येष्ठायाद्यमुद्धारमन्यौतु द्वौ तदनन्तरजाभ्यांक्रमाद्दत्वा शेषं समंकृत्वा विभाज्यमित्यर्थः । एतत्समगुणत्वे सर्वेषांभ्रातॄणांच त्रित्वे ॥ ११२ ॥

( ३ ) **कुल्लूकः** । उद्ध्रियतइत्युद्धारः ज्येष्ठस्याविभक्तसाधारणधनादुद्धृत्य विंशतितमोभागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठंतद्दातव्यम् । मध्यमस्य चत्वारिंशत्तमोभागोदेयः । कनिष्ठस्य पुनरशीतितमोभागोदातव्यः अवशिष्टंधनंसमंकृत्वा विभजनीयम् ॥ ११२ ॥

( ४ ) **राघवानन्दः** । सति ज्येष्ठे विभागप्रकारमावेदयति ज्येष्ठस्येति । विंशउद्धारः उद्धृत्यादौ दीयते ज्येष्ठंप्रत्युद्धारः अविभक्तधनेभ्योविंशोभागएवमुत्तरत्र सर्वद्रव्येभ्यः श्रेष्ठं द्रव्यंचोद्धृत्य मध्यमंप्रति चत्वारिंशद्भागंचोद्धृत्य कनिष्ठंप्रत्यशीतिभागमुद्धृत्य शेषं समं विभजेयुः । विभज्यमाने द्रव्ये योग्ये ज्येष्ठः श्रेष्ठं गृह्णीयादितिभावः ॥ ११२ ॥

( ५ ) **नन्दनः** । विभागपक्षे कर्तव्यमाह ज्येष्ठस्य विंशइति । सर्वद्रव्याद्विंशो विंशतिभाग उद्धारो ज्येष्ठस्य स्यात् सर्वद्रव्याच्च यद्वरं तस्योद्धारः स्यात् । मध्यमस्य ततोर्धः परिशिष्टेभ्यएकोनविंशतिभागेभ्यो ज्येष्ठोद्धारपरिमाणादर्धपरिमाण उद्धारःस्यात् । यवीयसस्ततस्तुरीयं परिशिष्टेभ्योऽर्धाष्टादशभागेभ्यो ज्येष्ठोद्धारपरिमाणस्तुरीयपरिमाण उद्धारः स्यात् ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । ज्येष्ठस्य वंशउद्धारः । च पुनः सर्वद्रव्याच्च यत्परं श्रेष्ठं तज्ज्येष्ठेनैवग्राह्यम् । यवीयसः कनिष्ठस्य तुरीयं चतुर्थांशम् ॥ ११२ ॥

**ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् ॥ येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषांस्यान्मध्यमंधनम् ॥११३॥**

( १ ) **मेधातिथि** । त्रिभ्योधिकपुत्रस्य ज्येष्ठकनिष्ठयोर्गुणवतोयथोक्तमुद्धृत्य बहूनामपि मध्यमध्यमानांगुणवतोमध्यमस्य यश्चत्वारिंशत्तमोभागउक्तोनन्तरश्लोकैर्बहुभिरपि मध्यमैः संविभजनीयः समगुणानांतु मध्यमानांसर्वेषामेकैकस्य पूर्ववचनाच्चत्वारिंशत्तमोभागउक्तउद्धार्यस्तेषांस्यान्मध्यमंधनमिति उभयथा वचनंव्यज्यते मध्यमधनंयदनन्तरश्लोके निर्दिष्टंतत्सर्वेषांसमवायेन दातव्यं यदिवा प्रत्येकमेव ज्येष्ठकनिष्ठतामपेक्ष्यतत्र प्रथमपक्षोनिर्गुणेषुयुक्तस्तेन बहुधनार्होद्वितीयोगुणवत्स्वेव ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । यत्रानेकेमध्यमाभ्रातरस्तत्राह ज्येष्ठइति । कनिष्ठः सर्वकनिष्ठः । संहरेतां गृह्णीयाताम् । तेषांस्यान्मध्यमं प्रत्येकं मध्यमस्य यदुक्तमुद्धारधनं तन्मध्यभ्रातॄणां प्रत्येकमुद्धृत्योद्धृत्य देयमनेकत्वेपीत्यर्थः ॥ ११३ ॥

( १ ) मे० ८

( ३ ) **कुल्लूकः** । ज्येष्ठकनिष्ठौ पूर्वश्लोके यथोक्तमुद्धारंगृह्णीयातां ज्येष्ठकनिष्ठव्यतिरिक्तायेमध्यमास्तेषामेवावान्तरज्येष्ठकनिष्ठतामनपेक्ष्य मध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकंदातव्यः मध्यमानामवान्तरज्येष्ठकनिष्ठदेयभागेवैषम्यवारणार्थमिदम् ॥ ११३ ॥

( ४ ) **राघवानन्दः** । पुत्राणांत्रित्वे विभागमुक्त्वा चतुष्टयादौ तद्विशेषमाह ज्येष्ठश्चेति । यथोदितं विंशत्यशीतिभागौ संहरेतां गृण्हीयाताम् । मध्यमंधनमिति स्वरसात्तयोर्मध्यवर्तिनां समतया देयमिति । तेषामवान्तरज्येष्ठकनिष्ठता नास्तीतिभावः ॥ ११३ ॥

( ५ ) **नन्दनः** । मध्यमानां बहुत्वे कथमुद्धारइत्यत्राह ज्येष्ठश्चैवेति । संहरेतां लभेयातां तेषां मध्यमानां मध्यमं ज्येष्ठकनिष्ठयोर्मध्यं एतदुक्तं भवति यथैकस्य मध्यमस्योद्धारपरिमाणमुक्तं तथा बहूनामपि प्रत्येकं स्यादिति ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । अन्ये मध्यमाःतेषांमध्यमं धनम् ॥ ११३ ॥

**सर्वेषांधनजातानामाददीताग्र्यमग्रजः ॥ यच्च सातिशयंकिंचिद्दशतश्चाप्नुयाद्वरम् ॥ ११४॥**

( १ ) **मेधातिथिः** । आद्येनार्धश्लोकेन सर्वद्रव्याच्चयद्वरमित्युक्तमनुवदति जातशब्दोजातिपर्यायः प्रकारवचनोवा । अग्रजोज्येष्ठः अग्र्यंश्रेष्ठंयच्च सातिशयमेकमपि वस्त्रमलङ्कारंवा दशतोदशावयवाद्वा न लभते वर्गे दशशब्दः अन्येतु स्वार्थेतसिंचाचक्ष्यते दशैव दशतोवरानिति बहुवचनंपठन्ति दशवरानाददीत अन्यस्तद्विशिष्टान्स्मरति दशतःपशूनामेकशफद्विपदानामिति ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठस्यातिशयितगुणत्वमाह सर्वेषामिति । विभक्तेषुभागेषुमध्ये यःश्रेष्ठतमः सर्वेषामग्र्योभिरुचितोभागस्तंज्येष्ठोगृह्णीयात् । तथा सर्वेषु विभागेषु यत्किंचिदेकं सातिशयं तद्गृह्णीयात् । तथा दशसुपशुषु विभजनीयेषु मध्ये यएकउत्कृष्टःपशुः स्वभागाद्बहिर्ग्राह्यः दशतश्चपशूनामितिगौतमस्मृतेः । एतच्चातिबहुगुणज्येष्ठातिहीनगुणकनिष्ठविषयम् ॥ ११४ ॥

( ३ ) **कुल्लूकः** । सर्वेषांधनप्रकाराणांमध्याद्यच्छ्रेष्ठंधनंज्येष्ठस्तद्धनंगृह्णीयात्सर्वद्रव्याच्च यद्वरमित्युक्तमनूदितसमुच्चयबोधनाय यच्चैकमपि प्रकृष्टंद्रव्यंविद्यते तदपि ज्येष्ठएव गृह्णीयात्तथा दशतः पशूनामिति गौतमस्मरणात् । दशभ्योगवादिपशुभ्यएकैकंश्रेष्ठंज्येष्ठोलभते इदंच यदि ज्येष्ठोगुणवानितरे निर्गुणास्तद्विषयंसर्वेषांसमगुणत्वेतु ॥ ११४ ॥

( ४ ) **राघवानन्दः** । यद्वरमित्युक्तंतद्गुणवत्ज्येष्ठविषयेविशेषमाह सर्वेषामिति । सर्वेषां विभाज्यानाम् । दशतः दशभ्योगवादिपशुभ्यइति दशतःपशूनामिति गौतमोक्तेः संभवद्विषयम् ॥ ११४ ॥

( ५ ) **नन्दनः** । तुल्यगुणभ्रातृविषयोयमुद्धारउक्तः अथ गुणविशिष्टज्येष्ठभ्रातृविषयउच्यते सर्वेषामिति सर्वेषां धनजातानां गोभूहिरण्यादीनामग्र्यमग्रजः आददीत सातिशयमुत्कर्षयुक्तं यत्किञ्चिद्विभागानर्हं देवतादीनां प्रतिमादि तच्चाददीत ततो दशसु वरश्चाप्नुयात सर्वेषु दशधाकृतेष्वेकं भागमात्मनोंशत्वेन प्राप्नुयादित्यर्थः ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । सर्वेषांधनपातानांभागानांअग्र्यं श्रेष्ठंअग्रजः दशतः दशपशुभ्यः वरम् ॥ ११४ ॥

**उद्धारोन दशस्वस्तिसंपन्नानांस्वकर्मसु ॥ यत्किंचिदेव देयन्तु ज्यायसे मानवर्धनम् ॥ ११५॥**

( १ ) **मेधातिथिः** । दशसु पशुषु यः पूर्वत्रोद्धारउच्यते सनास्ति ये भ्रातरः स्वकर्मसु श्रुताध्ययनादिषु संपन्नाविशेषंतोदशस्विति चोपलक्षणंव्याख्यानयन्ति दशसु यत्र श्लोकउद्धारउक्तःससर्वएव नास्ति कर्मसंबन्धात् किंतु तैरपि यत्किंचिदेवाधिकमुपानविधिमानवर्धनंपूजाकरंज्येष्ठायदेयम् ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । अल्पगुणत्वेज्येष्ठस्य कनिष्ठानांच स्वस्वाचारादिकर्मसंपत्त्यासमगुणत्वे आह उद्धारइति । पूर्वश्लोकोक्तंदशवरोद्धारसहितमुद्धारसहितमुद्धारत्रयं दशस्वित्यनेनोपलक्षयति । स्वकर्मसंपन्नानां मध्यमानां दायविभागे यत्किंचिद्देयं किंचिदधिकंवस्त्वाकृष्यदेयं संमानायेत्यर्थः ॥ ११५ ॥

( ३ ) **कुल्लूकः** । दशतः प्रामुयाद्वरमिति योयमुद्धारउक्तः सोयमध्ययनादिकर्मसमृद्धानांभ्रातॄणांज्येष्ठस्य नास्ति तत्रापि यत्किंचिदस्य देयमिति द्रव्यंपूजावृद्धिकरंज्येष्ठाय देयं एवंच समगुणेषूद्धारप्रतिषेधदर्शनात्पूर्वत्रगुणोत्कर्षविशेषापेक्षयोद्धारवैषम्यंबोद्धव्यम् ॥ ११५ ॥

( ४ ) **राघवानन्दः** । सर्वेषां गुणवत्त्वेतु नाग्र्यप्राप्तिरग्रजस्येत्याह उद्धारइति दशसु दशभ्योयउद्धारउक्तःसनास्ति । स्वकर्मसु वेदाध्ययनादिषु । ज्येष्ठस्य सन्मानार्थं किंचिद्देयमित्याह यदिति । मानवर्धनं पूजार्थम् ॥ ११५ ॥

( ५ ) **नन्दनः** । उद्धारापवादमाह उद्धारोनदशस्वस्तीति । स्वकर्मसुसंपन्नानां दायविभागं ज्येष्ठस्य दशतश्चामुयात् मानवर्द्धनं सत्कारद्योतनम् ॥ ११५ ॥

( ६ ) **रामचन्द्रः** । उद्धारो विभागः सातिशयितवस्तूनां उपलक्षणं संपन्नानां दशसु उद्धारोनास्ति । ज्यायसे अतिगुणज्येष्ठे भ्रातरि मानवर्धनं मानस्यवर्धनम् ॥ ११५ ॥

**एवंसमुद्धृतोद्धारे समानंशान्प्रकल्पयेत् ॥ उद्धारेनुद्धृते त्वेषामियंस्यादंशकल्पना ॥ ११६ ॥**

( १ ) **मेधातिथिः** । समुद्धृतेपृथक्कृतउद्धारेऽधिकेभागेऽवशिष्टेधने समानंशान्प्रकल्पयेत् अनुद्धृते वक्ष्यमाणा भागकल्पना ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । समानंशानुद्धारशेषधने । उद्धारेऽनुद्धृते कथंचित् पित्रादेरनिच्छयाअनपेक्षयावक्ष्यमाणा ॥ ११६ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण समुद्धृतविंशद्भागाधिके धने समान्भागान्भ्रातॄणांकल्पयेत् विंशतितमभागादौ पुनरनुद्धृतइयंवक्ष्यमाणभागकल्पना भवेत् ॥ ११६ ॥

( ४ ) **राघवानन्दः** । उद्धारमुपसंहरन्कृतोद्धारे व्यवस्थितिजानीते एवमिति । समुद्धृतोद्धारे उद्धृतावशिष्टे धने । उद्धारव्यवस्थितिरुक्ताऽनुद्धृते इयं वक्ष्यमाणा ॥ ११६ ॥

( ५ ) **नन्दनः** । समुद्धृतोद्धारेखंडविभागमाह एवंसमुद्धृतोद्धारइति । एवं समुद्धृतोद्धारेद्रव्ये सति परिशिष्टं समानंशान्प्रकल्पयेत् । एषां भ्रातॄणामियं वक्ष्यमाणउद्धारेऽनुद्धृतइति वचनादुद्धारस्यानित्यता सूचिता ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । उद्धारेऽनुद्धृते तेषांइयंवक्ष्यमाणलक्षणाअंशकल्पना स्यात् ॥ ११६ ॥

**एकाधिकंहरेज्ज्येष्ठः पुत्रोध्यर्धंततोऽनुजः ॥ अंशमंशंयवीयांसइति धर्मोव्यवस्थितः ॥ ११७ ॥**

( १ ) **मेधातिथिः** । एकेनांशेनाधिकंस्वांशंहरेत्स्वीकुर्याद्वावंशौप्रतिपद्येतेत्यर्थः ततोनुजस्तदनन्तरमध्यर्धमर्धद्वितीयं यवीयांसस्तस्मादर्वाग्जाताः सर्वेसममंशंनाधिकंकिंचिन्नाल्पमित्यर्थः ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । एकाधिकं द्वौभागावित्यर्थः । ततोनन्तरःकनीयानध्यर्धं सार्धभागम् । इतरे समांशाइति गुणसाम्ये शेषाणाम् । गुणाधिक्येत्वेतदपेक्षयोन्नियम् ॥ ११७ ॥

( ३ ) **कुल्लूकः** । एकाधिकमंशंद्वावंशाविति यावज्ज्येष्ठपुत्रोगृह्णीयात् अधिकमर्धंयत्रांशे सार्धमंशंज्येष्ठादनन्तरजातो-

गृह्णीयात् कनिष्ठाः पुनरेकैकमंशंगृह्णीयुरिति व्यवस्थितोधर्मः इदन्तु ज्येष्ठतदनुजयोर्विद्यादिगुणवत्त्वापेक्षया कनिष्ठानांच निर्गुणत्वे बोद्धव्यं ज्येष्ठतदनुजयोरधिकदानदर्शनात् ॥ ११७ ॥

( ४ ) **राघवानन्दः**। तामाह एकेति। एकाधिकं अंशद्वयं अध्यर्धं सार्धैकमंशं ज्येष्ठतदनुजयोर्विद्यादिभिर्ज्यैष्ठत्वे कनीयसांविगुणत्वेज्ञेयं तुल्यत्वे तूक्तं ततोनुजः ज्येष्ठादव्यवहितः ताभ्यामन्ये यावन्तः शेषाः पुत्रास्तावन्तःसमभागाःस्युरिति ॥ ११७ ॥

( ५ ) **नन्दनः**। एकाधिकंएकांशाधिकमंशद्वयमिति यावत्। ततोनुजः अध्यर्धमंशं अंशमंशमेकैकमंशं यवीयांसोहरेयुः गुणवत्तरज्येष्ठविषयमेतत् ॥ ११७ ॥

( ६ ) **रामचन्द्रः**। एकाधिकं द्वावंशौ। ततोऽनुजः अर्धम्। यवीयांसः अंशमंशम् ॥ ११७ ॥

**स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ॥ स्वात्स्वादंशाच्चतुर्भागंपतिताः स्युरदित्सवः॥११८॥**

( १ ) **मेधातिथिः**। कन्याशब्दः प्रायोऽनुढासु प्रयुज्यते कानीनपुत्रः स्मृत्यन्तरेचोपात्तानामितिपठ्यते अतोऽनूढायामयंभागउच्यते स्वाभ्यः प्रजाभ्यइत्यपेक्षया स्वाभ्योभ्रातरः कन्याभ्यश्चतुर्भागमंशंदद्युःस्वादंशात्। यत्र बह्व्यः कन्याःसन्ति तत्र समानजातीयभ्रात्रपेक्षया चतुर्थांशे कल्पना कर्तव्या। तथाचायमर्थः त्रीनंशान्पुत्रआददीत चतुर्थंकन्येति यदपि केश्चिदुक्तं महानुपकारः पितृकरणंकन्यानामदत्तानांयेन जीवति पितरि तदिच्छया मूल्येनापि धनेन संस्क्रियन्तेमृतेत्वंशहराइति तत्पुत्रेऽपि तुल्यवाचनिकेचार्थेकेयंनोदना अथाभिप्रायसमाचारउद्धारमात्रप्रयोजनंदानमित्याचारोदुर्बलःस्मृतेरिति। नवैकान्तिकः अनैकान्तिकत्वे च स्मृतितोयंनियमोयुक्तः यदपीदंकेनचिदुक्तमुद्धारमात्रप्रयोजनंदेयंन चतुर्थोभागो यथाश्रुतमितिच इदंवाच्योनोद्वाहे परिमितधनदानमस्ति तस्य द्वादशशतंदक्षिणेतिवत् केवलमाच्छाद्यालङ्कृतांविवाहयेत् सौदायिकंवास्यादद्यादिति श्रूयते अलङ्कारत्वंसुवर्णमणिमुक्ताप्रवालादिरनेकधाभिन्नमिति तत्रनज्ञायते कियद्दातव्यंधनंकीदृशोवालङ्कारइत्यतश्च परिमाणार्थमेवेदंयुक्तंस्वादंशाच्चतुर्भागमिति नचास्मिन्नर्थे शास्त्रविरोधोयुक्तिविरोधावा स्मृत्यन्तराण्येवमेव पक्षमुपोद्बलयन्ति ॥ असंस्कृतास्तु संस्कार्याभ्रातृभिः पूर्वसंस्कृतैः॥भगिन्यश्चनिजादंशाद्दत्वांशंतुतुरीयकमिति तथा ॥ आसंस्काराद्धरेद्भागंपरतोबिभृयात्पतिरिति। अस्यायमर्थः यत्र स्वल्पंधनमस्ति भ्रातुर्भगिन्याश्च न चतुर्भागे कन्यायाभरणंभवति तत्र समभागंकन्याहरेदासंस्कारात्। परतस्तु स्मृत्यन्तराच्चतुर्भागंगृह्णीयात्स्वल्पमपि कथंतर्हि भरणमात्रंकुर्यादतउक्तंपरतोबिभृयात्पतिरिति भ्रातृग्रहणंसोदर्यार्थंव्याचक्षते कोभिप्रायः भ्रातृशब्दोनिरुपपदसोदर्यएव मुख्यया वृत्त्या वर्तते पृथक्वचनंच लिङ्गंयस्यास्तु हि सौदर्योनास्ति तस्याअयंदायःसौदायिकस्य प्राप्नोति वैमात्रेयोदास्यतीति चेन्नासति वचनान्तरे ददात्ययं भ्रातृशब्दाएकात्ममातृकाश्च गृह्यन्ते। पैतृष्वस्रेयादिषु तूपचाराद्वर्ततइति युक्तं एवमेकशब्दस्यानेकार्थत्वंनाभ्युपगतंभवति स्मृत्यन्तरसमाचारश्चेति श्रेयान् तत्र हि पठ्यते यच्छिष्टंपितृदायेभ्यः प्रदानिकमिति नात्र भगिनीशब्दोभ्रातृशब्दोवा श्रूयते यतइयमाशङ्कास्यात् यत्तुपृथगिति तदेकैकस्यैवसमूहः भागः सर्वाभ्यइत्येवमपि युज्यते यदप्युच्यते अददतांप्रत्यवायान्नतुहठाद्दाप्यन्ते यतउच्यते पतितास्युरदित्सवइति योहि यत्र यावत्यंशे स्वामी सहरेदित्युच्यते न पुनरनेनास्मै दातव्यमिति यथावोच्यते भ्राता भ्रात्रेदद्यादिति चोच्यते न पुनरस्वामिभ्यः ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः**। कन्याभ्योऽपुत्रीभ्यः। ब्राह्मणीपुत्रास्तत्कन्यायै क्षत्रियापुत्रास्तत्कन्यायाइति क्रमेण स्वस्वांशचतुर्थभागं दत्वा भागत्रयं गृह्णीयुः। अत्रच कन्याबहुत्वेपि तदेव विभजनीयम्। बहुत्वेतुभ्रातॄणां कन्यायाएवैकत्वे एकस्यभ्रातुर्भागाच्चतुर्थोभागोयावांस्तावद्धनं स्वस्वांशेभ्यआकृष्य देयम् ॥ ११८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारोभ्रातरः स्वजात्यपेक्षया स्वेभ्यश्चतुरोंशान्हरेद्विप्रइत्यादिना वक्ष्यमाणेभ्योभागेभ्यआत्मीयात्मीयाद्भागाच्चतुर्थभागंपृथक्कन्याभ्योऽनूढाभ्योभगिनीभ्यः या यस्य सोदर्या भगिनी सतस्याएव संस्कारार्थमिति एवंदद्युः सोदर्याभावे विमातृजैरुत्कृष्टैरपकृष्टैरपि संस्कार्यैव । तथा च याज्ञवल्क्यः ॥ असंस्कृतास्तुसंस्कार्याभ्रातृभिः पूर्वसंस्कृतैः ॥ भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम ॥ यदिभगिनीसंस्कारार्थंचतुर्भागंदातुंनेच्छंति तदा पतिताभवेयुः एतेनैकजातीयवैमात्रेयबहुपुत्रभगिनीसद्भावेऽपि सोदर्यभगिनीभ्यश्चतुर्थभागदानमवगन्तव्यम् ॥ ११८ ॥

( ४ ) **राघवानन्दः** । दुहितृरुत्त्वे तु व्यवस्थामाह स्वेभ्यइति । स्वांशात्तुरीयोभागः स्वजातिस्वभगिनीनां संस्कारार्थंदेयः । तदुक्तं याज्ञवल्क्येन ॥ असंस्कृताश्च संस्कार्याभ्रातृभिः पूर्वसंस्कृतैः ॥ भगिन्यश्च निजादंशाद्दत्वांशंतु तुरीयकम् ॥ त्रिधा विभक्ताये चतुर्भागास्तेषामेकं भ्रातरः पृथक्पृथग्भ्रातरइत्यर्थः । इदंत्वनेकमातृकाणांवक्ष्यमाणानाम् । तददाने दण्डमाह पतिताइति ॥ ११८ ॥

( ५ ) **नन्दनः** । विभक्ता भ्रातरः कन्याभ्यो वृत्ताभ्यो भगिनीभ्यः स्वेभ्योंशेभ्यः पृथक् प्रदद्युः कियता परिमाणेन चतुर्भागं कुतएतत्स्वात् स्वादंशाच्चतुर्भागनियमात् अदित्सवः पतिताः स्युरिति प्रत्यवायदर्शनाच्च ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । कन्यांप्रत्याह भ्रातरः स्वेभ्यःस्वेभ्योंशेभ्यः पृथक्पृथक् । कन्याभ्यः चतुर्भागंप्रदद्युः। पतिताभ्रातरः अदित्सवः अभागार्हाः ॥ ११८ ॥

## अजाविकंसैकशफंन जातु विषमंभजेत् ॥ अजाविकन्तु विषमंज्येष्ठस्यैव विधीयते ॥ ११९ ॥

( १ ) **मेधातिथिः** । एकशफमश्वाश्वतरगर्दभादयः विभागकाले समसंख्यया यद्विभक्तुमजाविकंन शक्यते ज्येष्ठस्यैवस्यान्नतदन्यद्द्रव्यांशपातेन समतांनयेद्विक्रीतंवा ततस्तन्मूल्यंदापयेत् । अजाविकमिति पशुद्वन्द्वांवधावेकवद्भावः ॥११९ ॥

( २ ) **सर्वज्ञनारायणः** । विषमं तावद्भ्योभ्रातृभ्यः एकैकत्वेन विभजनीयापर्याप्तं विक्रयादिना पदार्थान्तरीकृत्य नविभजेत् किंतु ज्येष्ठस्यैव । अजाविकंतुविषममित्येकशफस्याप्यश्वादेरुपलक्षणम् ॥ ११९ ॥

( ३ ) **कुल्लूकः** । एकशफाअश्वादयः छागमेषादि एकाशफसहितंविभागकाले समंकृत्वा विभक्तुमशक्यंतन्न विभजेत्किन्तु ज्येष्ठस्यैव तत्स्यान्नतु तत्तुल्यद्रव्यान्तरदानेन समीकृत्य विक्रीय वा तन्मूल्यंविभजेत् । अजाविकमिति पशुद्वन्द्वाद्विभाषैकवद्भावः ॥ ११९ ॥

( ४ ) **राघवानन्दः** । पशुषु गुणवज्ज्येष्ठस्यैव विषमंभागं विदधत्तदन्येषां तदभावमाह अजेति । अजाविकं अजाश्चावयश्च तत्सैकशफं एकशफाअश्वगर्दभादयः तैःसहवर्तमानं यावन्तःपुत्रास्तैरुक्तपशुषु समतया गृहीतेषु अधिकमूल्यं कुर्वानविभजनीयम् । सज्येष्ठस्यैवेतिभावः ॥ ११९ ॥

( ५ ) **नन्दनः** । एकाधिकं हरेज्ज्येष्ठइत्यादिनोक्तस्य विषमविभागस्य क्वचिद्विषयेऽपवादं श्लोकद्वयेनाह अजाविकमिति । एकशफमभिन्नखुरमश्वादिकं न विषमं भजेद्विभजेत्किन्तु सममेव विभजेत् विषमसंख्ययाविभक्तुमशक्यं यथा त्रयाणां भ्रातृणामेकं द्वेचत्वारोत्यादि संख्याया ज्येष्ठस्यैव विधीयते । कालतोविभज्य भोगेन वा विक्रीयमूल्यं विभज्य वांशत्वीकुर्यादित्यर्थः ॥ ११९ ॥

## यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ॥ समस्तत्र विभागः स्यादिति धर्मोव्यवस्थितः ॥ १२० ॥

( १ ) **मेधातिथिः** । ज्येष्ठस्य नियोगधर्मेण पितृव [त्सौदरेऽतिदे]'शे प्राप्ते तन्निवृत्त्यर्थमुच्यते । समस्तत्र विभागः स्यात् नचोद्धारंनचैवाधिकंहरेज्ज्येष्ठइति नापि यत्किंचिदेव देयमिति समः स्यात्केनोत्पादकेन पितृव्यकेण कनीयसा अनियु-

( १ ) मे० ८

न्कासुतस्य त्वभागार्हतैव वक्ष्यते इदंच लिङ्गंभ्रातरिसहिते सत्यपि भ्रातृशब्दे भ्रातृपुत्रेणाप्यसति भ्रातरि [ सह ][1] विभागः-कर्तव्यः ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । समस्तत्र पितृद्वारा । तस्मान्नापि देवरजाय समोभागोदेयोनतु पितृव्यैःसह तस्य विभागे तस्य पितृज्यैष्ठ्याज्ज्येष्ठोद्धारः । एतेन यवीयसोभार्यायांज्येष्ठेनापत्योत्पादने भागान्यूनतेत्यर्थादुक्तम् ॥ १२०॥

( ३ ) **कुल्लूकः** । कनिष्ठोयदि ज्येष्ठभ्रातृभार्यायां नियोगेन पुत्रंजनयेत्तदा तेन पितृव्येण सह तस्य क्षेत्रजस्य समोविभागः स्यान्नतु पितृवत्सोद्धारोभवतीति विभागव्यवस्था नियता । अनियोगोत्पन्नस्यानंशित्वंवक्ष्यति यद्यपि समेत्य भ्रातरः सममित्युक्तंतथाप्यस्मादेव लिङ्गात्पौत्रस्यापि मृतपितृकस्य पैतामहे धने पितृव्यवद्विभागोस्तीति गम्यते ॥१२०॥

( ४ ) **राघवानन्दः** । वक्ष्यमाणदशविधपुत्रेष्वौरसानां विभागमुक्त्वा क्षेत्रजे विशेषमाह यवीयानिति । ज्येष्ठभार्यायां ज्येष्ठभ्रातुःपत्न्याम् । समस्तत्र विभागइत्येव धर्मः ॥ १२० ॥

( ५ ) **नन्दनः** । पुत्रमिति जातावेकवचनं पुत्रावितिपाठः । गुरुनियोगादुत्पादयेदितिव्याख्येयम् । इतरोनाशइति वक्ष्यमाणत्वात्तत्र नियोगोत्पादिते ज्येष्ठे समोविभागः स्यात् ॥ १२० ॥

**उपसर्जनंप्रधानस्यधर्मतोनोपपद्यते ॥ पिता प्रधानंप्रजने तस्माद्धर्मेण तंभजेत् १२१ ॥**

( १ ) **मेधातिथिः** । उपसर्जनमप्रधानंक्षेत्रंक्षेत्रजस्य प्रधानस्यौरसस्य तुल्यइत्येतद्वाश्रित्य तद्धर्मतः शास्त्रतोन युज्यते औरसः किलपितृवज्ज्येष्ठांशंकृत्स्नंलभते अयंतु क्षेत्रजोऽप्रधानंतस्माद्धर्मेण तंभजेत् धर्मः पूर्वोक्ताभागकल्पना ननुचायमपि ज्येष्ठः पुत्रोभवति किमित्यौरसवन्न लभतेऽतआह पिता प्रधानंप्रजने । पिताजनकोत्राभिप्रेतः सप्रधानमपत्योत्पादने अयंचाप्रधानः कनीयसा जनितः उपसर्जनप्रधानस्य सममित्येवात्यन्त श्लोकोगम्यते अर्थवादोयंपूर्वस्य ज्येष्ठांशनिषेधस्यार्थवादत्वाच्च प्रधानोपसर्जनशब्दयोर्यत्किंचिदालम्बनामाश्रित्य व्याख्या कर्तव्या । अन्ये पठन्ति तस्माद्धर्मेण तंत्यजेदिति तदयुक्तं सर्वत्र समभागस्योक्तत्वात् अर्थवादत्वाच्चास्य नविनिकल्पाशङ्का कार्या ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः** । प्रधानस्य भ्रातृमध्येज्येष्ठस्य पितुःस्थाने उपसर्जनममुख्यःपुत्रोनोपपद्यते नयुज्यते अतोनज्येष्ठोद्धारः । नचैवंभागोनदेयोयस्मात् प्रजने संताने तत्र तत्पितैव ज्येष्ठतया प्रधानं तथाचतस्यानुकल्पिकःपुत्रः संततिमध्ये साम्यसहायेऽतस्तमपि धर्मेण युक्तेन क्रमेण समभागेन भजेन्नन्यूनेन । तेन यत्र पितुरप्राधान्यं तत्र न्यूनतापीति पूर्वोक्तशेषः ॥ १२१ ॥

( ३ ) **कुल्लूकः** । ज्येष्ठभ्रातुः क्षेत्रजः पुत्रोपि पितेव सोद्धारविभागी युक्तइतीमांशङ्कांनिराकृत्य पूर्वोक्तमेव द्रढयति। अप्रधानंक्षेत्रजः पुत्रः प्रधानस्य क्षेत्रिणः पितृधर्मेण सोद्धारविभागग्रहणरूपेण न संबध्यते । क्षेत्र्यपिपिता तद्वारेणापत्योत्पादने प्रधानंतस्मात्पूर्वोक्तेनैव धर्मेण विभागव्यवस्थारूपेण पितृव्येन सहतंक्षेत्रजंविभजेदिति पूर्वस्यैव शेषः ॥ १२१ ॥

( ४ ) **राघवानन्दः** । तत्र हेतुरुपेत्यादि । अयमर्थः । प्रधानस्य ज्येष्ठभ्रातुः । यद्यप्युद्धारेनोपसर्जनता तस्मांअवस्यमुद्धारोदेयस्तथापि तस्य मरणादौ तत्क्षेत्रे कनिष्ठस्य यस्मादुपसर्जनत्वमेवपितुरेव जनने प्राधान्यात्तस्य चात्र कनिष्ठत्वादतएव नोद्धारभागः पितुः समभागः पितृव्यैःसहेति तं क्षेत्रजं धर्मेणोत्पादकपित्रनुरूपेण नतु मात्रनुरूपेण ज्येष्ठता नास्तिहि स्त्रियाइति वक्ष्यमाणोहेतुरितिभावः ॥ १२१ ॥

( ५ ) **नन्दनः** । अत्र कारणमाह उपसर्जनमिति कनिष्ठप्रभावत्वादुपसर्जनमप्रधानं सपुत्रः प्रधानधर्मभाजनं न

( १ ) मे० ८, आ आ.

भवतीत्यर्थः । पिता प्रधानंप्रजने न माता तेन मातुः ज्येष्ठतया तस्य ज्यैष्ठ्यंनायाति तस्मात्पितुः प्राधान्याद्धर्मेण पूर्वश्लोकोक्तेन विधिना समंविभागं कनिष्ठप्रभवोभजेन्न ज्यैष्ठ्येन मातुरधिकम् ॥ १२१ ॥

( ६ ) **रामचन्द्रः** । उपसर्जनं गौणम् ॥ १२१ ॥

## पुत्रः कनिष्ठोज्येष्ठायां कनिष्ठायां च पूर्वजः ॥ कथंतत्र विभागः स्यादिति चेत्संशयोभवेत्॥१२२॥

( १ ) **मेधातिथिः** । ज्येष्ठा प्रथमोढा पश्चादूढा कनिष्ठा तयोर्जातानांकिंमातुरुद्वाहक्रमेण ज्यैष्ठ्यंस्यात्स्वजन्मक्रमेणेति संशयमुपन्यस्योत्तरत्र निर्णेष्यते संप्रतिपत्तुम् ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** । कनिष्ठोऽल्पवयाः ॥ १२२ ॥

( ३ ) **कुल्लूकः** । यदि प्रथमोढायां कनीयान्पुत्रोजातः पश्चादूढायां च ज्येष्ठस्तदा तत्र कथंविभागोभवेदिति संशयोयदि स्यात्किंमातुरुद्वाहक्रमेण पुत्रस्य ज्येष्ठत्वमुतस्वजन्मक्रमेणेति तदाह ॥ १२२ ॥

( ४ ) **राघवानन्दः** । बहुमातृकाणां पुत्राणां मातृविवाहक्रमेणैव ज्यैष्ठ्यम् उत सुतजन्मक्रमेणेति संदिग्धे पुत्रइति पूर्वजोज्येष्ठइति ॥ १२२ ॥

( ५ ) **नन्दनः** । यत्र विषये ज्येष्ठायां कनिष्ठः पुत्रः कनिष्ठायां ज्येष्ठः पुत्रः कथंतत्र विभागः स्यात्किंमातृज्यैष्ठ्येन विभागः किमपत्यजन्मना वेति संशयश्चेत्तत्रोत्तरं वक्ष्यामीति शेषः ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । ज्येष्ठायांस्त्रियां कनिष्ठःपुत्रः चपुनः कनिष्ठायांस्त्रियां पूर्वजः ज्येष्ठःपुत्रः भवेत् । यद्वा ब्राह्मणस्य द्वेभार्ये ब्राह्मणी क्षत्रिया चेति ज्येष्ठायां ब्राह्मण्यां कनिष्ठः पुत्रः कनिष्ठायां क्षत्रियायांच पूर्वजःज्येष्ठोभवेत् । ततोवैश्यायां क्षत्रियादिपुत्राणां स्वजातितः त्रि द्व्येकभागाःस्युः इतियोगीश्वरः ॥ १२२ ॥

## एकंवृषभमुद्धारंसंहरेत सपूर्वजः ॥ ततोऽपरेऽज्येष्ठवृषास्तदूनानांस्वमातृतः ॥ १२३ ॥

( १ ) **मेधातिथिः** । पूर्वस्यां जातः पूर्वजः कनीयान् वृषभस्योक्तोभागवान् ततोवृषादन्ये ये वृषभाअज्येष्ठास्ते बहूनामेकशः कृत्वा देयाः अतश्च ज्यैष्ठिनेयस्यैतावदुक्तमधिकंयच्छ्रेष्ठोवृषोगुणमात्रेणाधिक्यंन संख्यया तदूनानांतस्मात्पूर्वजादूनानांकियतामित्याह स्वमातृतः पुनर्मुख्यत्वोढत्वात्तेनात्र मातृज्यैष्ठ्यमाश्रितंभवति नजन्मतः ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । एकंश्रेष्ठं उद्धारमधिकं सपूर्वजः कनिष्ठःपुत्रः । ततोन्ये ये ज्येष्ठवृषाज्येष्ठग्राह्यवृषास्ते तदूनानां कानिष्ठिनेयाद्धीनवयसाम् । स्वमातृतः स्वमातृज्येष्ठत्वानुरूपेण यस्य माता ज्येष्ठा तस्याप्येकोवृषउद्धारः किंतु पूर्ववृषाद्धीनः । एवं तद्धीनोन्येषांतन्मातृकनिष्ठासुतानामिति क्रमेणोद्धृत्य शेषं समांशं विभाज्यमित्यर्थः ॥ १२३ ॥

( ३ ) **कुल्लूकः** । पूर्वस्यां जातः पूर्वजः ङ्यापोः संज्ञाछंदसोर्बहुलमितिन्हस्वत्वम् । सकनिष्ठोप्येकंवृषभमुद्धारंगृह्णीयात्ततः श्रेष्ठवृषभादन्ये ये संत्यग्र्याः श्रेष्ठवृषभास्ते तस्माज्ज्यैष्ठिनेयान्मातृतऊनानांकनिष्ठेयानांप्रत्येकमेकैकशोभवन्तीति मातुर्द्वाहक्रमेण ज्यैष्ठ्यम् ॥ १२३ ॥

( ४ ) **राघवानन्दः** । तन्निर्णयमाह एकमिति । पूर्वस्यांजातः ङ्यापोःसंज्ञाछन्दसोर्बहुलमिति न्हस्वः । अपरे ये पुत्रास्ते ज्येष्ठवृषान्यूनाये वृषास्ते भागत्वेन येषां सन्ति तेज्येष्ठवृषाः एकैकशः । तत्र हेतुः तदुत्पन्नानांस्वस्वमातुरुत्तरकालोद्वाहेन तेषां न्यूनत्वात्कनिष्ठत्वमिति ॥ १२३ ॥

( ५ ) **नन्दनः** । पूर्वजः कनिष्ठायां प्रथमंजातः संहरेल्लभेत न परे तस्माद्वृषभादन्ये ये ज्येष्ठवृषास्ते ज्येष्ठस्य ज्यैष्ठिनेयस्य वृषस्य बहुवचनात्त्र्यवरास्तदूनानां ज्येष्ठान्मातृभ्योन्यूनानां स्वमातृतोंशकल्पना न्यूनान्यूनतरा चेत्यर्थः ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । सपूर्वजः पूर्वस्यांजातः कनिष्ठापुत्रोवा ॥ १२३ ॥

**ज्येष्ठस्तु जातोज्येष्ठायां हरेद्वृषभषोडशाः ॥ ततः स्वमातृतः शेषाभजेरन्निति धारणा ॥ १२४ ॥**

( १ ) **मेधातिथिः** । उद्धारान्तरंवैकल्पिकमेषामुच्यते अज्येष्ठायां ज्येष्ठोजातः पंचदशगाहरेत् षोडशोवृषभोवृषभसंबन्धाद्वावोलभ्यन्ते यथास्य गोर्द्वितीये नार्थइति अन्ये शेषागाहरेरन्स्वमातृतः यथैवैषांमातागरीयसी कनीयसीमाहरेत् अथवा ज्यैष्ठिनेयस्यायमुद्धारोधिकउच्यते पूर्वस्तु स्थितएव नात्रानडुत्प्रश्लेषः शेषाःकनीयांसःस्वमातृतोहरेरन् स्वमातृतइति विविच्यते श्लोकद्वयस्यार्थवादत्वान्न विवेके यत्नः उपक्रममात्रमेतत् सिद्धान्तस्त्वयमुच्यते ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठायां प्रथमोढायाम् । षोडशोवृषभोयासां पञ्चदशानां गवां तासांसंघं वृषभषोडशम् । ततइति ततोन्ये स्वमातृज्यैष्ठ्यक्रमेणैकैकंवृषभमुत्तममहीनक्रमेणगृह्णीयुः ॥ १२४ ॥

( ३ ) **कुल्लूकः** । प्रथमोढायां पुनर्योजातोजन्मना च भ्रातृभ्योज्येष्ठः सवृषभः षोडशोयासांगवांतागृह्णीयात्पञ्चदशगाएकंवृषभमित्यर्थः । ततोनन्तरंयेऽन्ये बह्वीभ्योजातास्ते स्वमातृभागतऊढज्येष्ठापेक्षया शेषाभागादिविभजेरन्निति निश्चयः ॥ १२४ ॥

( ४ ) **राघवानन्दः** । ज्येष्ठायां जन्मतोपि ज्येष्ठस्तु वृषभैकोत्तराः पञ्चदश गाः प्राप्नुयादित्याह ज्येष्ठस्त्विति । स्वमातृतः मात्रुद्वाहक्रमेण शेषाः कनिष्ठायां जाताः सवार्णायां भजेरन् भागमितिशेषः ॥ १२४ ॥

( ५ ) **नन्दनः** । वृषभषोडशं वृषभषोडशकं धारणीयः ॥ १२४ ॥

( ६ ) **रामचन्द्रः** । षोडशवृषभः षोडशी ॥ १२४ ॥

**सदृशस्त्रीषु जातानांपुत्राणामविशेषतः ॥ न मातृतोज्यैष्ठ्यमस्ति जन्मतोज्यैष्ठ्यमुच्यते ॥ १२५ ॥**

( १ ) **मेधातिथिः** । सदृशः समानजातीयः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । अभिवादनादिक्रियांप्रतिविशेषमाह सदृशीति । वयोज्येष्ठएवाभिवादनादिविषयइत्यर्थः ॥ १२५ ॥

( ३ ) **कुल्लूकः** । समानजातीयस्त्रीषु जातानांपुत्राणांजातिगतविशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्यमृषिभिरुच्यते जन्मज्येष्ठानान्तु* पूर्वोक्तएव विंशतिभागादिरुद्धारोबोद्धव्यः । एवंच मातृज्यैष्ठ्यस्य विहितप्रतिषिद्धत्वात् षोडशीग्रहणाग्रहणवद्विकल्पः सच गुणवन्निर्गुणतया भ्रातृणांगुरुलघुत्वावगमाद्व्यवस्थितः । अतएव जन्मविद्यागुणज्येष्ठोर्ध्यंशंदायादवाप्नुयादिति बृहस्पत्यादिभिर्जन्मज्येष्ठस्य विद्याद्युत्कर्षेणोद्धारोत्कर्षउक्तः निर्गुणस्यैकवृषभमिति मन्दगुणस्य वृषभषोडशादिति मातृज्यैष्ठ्याश्रयणेनोद्धारोबोद्धव्यः । मातृज्यैष्ठ्यविधित्वनुवादंमेधातिथिरवदत् । गोविंदराजस्त्वन्यमतंजगौ । न केवलंविभागे जन्मज्यैष्ठ्यंकिन्तु ॥ १२५ ॥

( ४ ) **राघवानन्दः** । पुत्रःकनिष्ठइत्यादिश्लोकत्रयेणैकदेशिमतेविभागमुक्त्वा स्वमते तूक्तविभागान्वक्तुं पुत्राणां

---

* जन्मज्येष्ठानान्तु पूर्वोक्तएवविंशतिभागादिरुद्धारोबोद्धव्यः=किन्तु जन्मक्रमेणैवातः कनिष्ठाजोपि पूर्वोक्तमेव विंशभागद्व्यंशादिकंगृह्णीयात् ( अ )

जन्मतएव ज्यैष्ठ्यमाह सदृशस्त्रीष्विति। लाघवात्सदृशस्त्रीषु जन्मोत्कर्षउद्धारप्रयोजकोनतूद्वाहस्य यौगपद्यं क्रमिकत्वंचेति। मातृज्येष्ठत्वविधिनिषेधयोः पुत्रगतगुणवद्गुणवत्त्वव्यवस्थितविकल्पेन समाधिरिति कुल्लूकः। मेधातिथिस्त्वर्थवादमाह। वस्तुतस्तु जन्मज्यैष्ठ्यमेव प्रयोजकम् ॥ १२५ ॥

( ५ ) **नन्दनः**। इदंमातृतो ज्यैष्ठ्यं विभागविधावेव नान्यत्रेति श्लोकाभ्यामाह सदृशस्त्रीष्विति। सदृशस्त्रीषु सवर्णस्त्रीषु ॥ २५ ॥

## जन्मज्येष्ठेन चाह्वानंसुब्रह्मण्यास्वपि स्मृतम् ॥ यमयोश्चैव गर्भेषु जन्मतोज्येष्ठता स्मृता॥१२६॥

( १ ) **मेधातिथिः**। अर्थवादोयं जन्मज्येष्ठतामभ्युपगमयति सुब्रह्मण्यानाममन्त्रोज्योतिष्टोमेछन्दोगैः प्रयुज्यतइन्द्राह्वनाय सुब्रह्मण्यो ३३ इन्द्रआगच्छेत्यादिप्रयोगे बहुत्वाद्बहुवचनं तत्रेदमुच्यते प्रथमपुत्रेण पितरंव्यपदिश्यहूयते देवदत्तस्य पिता यजते जन्मनोज्यैष्ठ्यंमुख्यं अन्यत्र तु मातृविवाहसंबन्धाद्गौणं यमयोर्गर्भएककालनिषिक्तयोरपि जन्मतोज्यैष्ठ्यम् ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः**। श्रौतेपिकर्मण्येवमाह जन्मज्येष्ठेनेति। अमुकशर्मणः पिता यजतइत्याकारमाह्वानम्। जन्मतोज्येष्ठतेतियुक्तिप्राप्तस्यैवानुवादः ॥ १२६ ॥

( ३ ) **कुल्लूकः**। सुब्रह्मण्याख्योमन्त्रोज्योतिष्टोमइति इन्द्रस्याह्वानार्थंप्रयुज्यतेतत्र प्रथमपुत्रेण पितरमुद्दिश्याह्वानंक्रियते अमुकपिता यजतइत्येवमृषिभिः स्मृतं तथा यमयोर्गर्भएककालंनिषिक्तयोरपि जन्मक्रमेणैव ज्येष्ठता स्मृता। गर्भेष्विति बहुवचनंस्त्रीबहुत्वापेक्षया ॥ १२६ ॥

( ४ ) **राघवानन्दः**। तच्च श्रुतिसिद्धमित्याह जन्मेति सुब्रह्मण्यासु ज्योतिष्टोमेइन्द्राव्हानार्थं सुब्रह्मण्याख्योमन्त्रोस्ति तत्रप्रथमजपुत्रेण पितरमुद्दिश्याह्वानंक्रियते अमुकपिता यजेतइति। अतएव यमयोरपि प्रथमसेकजस्यैव ज्येष्ठतामाह यमेति। गर्भेषु जन्यतइतिवचनान्निषेककाले प्रथमं[प्राणसं]स्यैव ज्येष्ठत्वं योनिनिःसरणापेक्षयातु कनिष्ठत्वेपि। अन्यथा गर्भेष्विति व्यर्थंबहुवचनं स्त्रीषु व्यक्त्यपेक्षया तेन म[?]द्वयं गर्भद्वयं यदा धत्ते तत्रापि पूर्वनिषिक्तस्यैव ज्येष्ठता नतु दैवादष्टमासादिजातस्येतिभावः ॥ १२६॥

( ५ ) **नन्दनः**। सुब्रह्मण्यां सुब्रह्मण्याह्वाने एकगर्भेऽप्येककालनिषिक्तयोरपि सतोः ॥ १२६ ॥

( ६ ) **रामचन्द्रः**। सुब्रह्मण्यासु क्रियासु सोमयागादौ कोयजति अमुकशर्मणः प्रपौत्रोयजति। चपुनः कः अमुकशर्मणःपौत्रोयजति। च पुनः अमुकशर्मणः पुत्रःप्रपुत्रःयजति च पुनः अमुकशर्मा यजति। च पुनः एवंविधक्रियासु जन्मज्येष्ठेनआव्हानंस्मृतं यतः सुब्रह्मण्यवेदाध्यायिनां घोषाएवं भवन्ति। यमयोः निषिक्तयोःगर्भेषु जन्मतोज्येष्ठतास्मृता ॥ १२६ ॥

## अपुत्रोऽनेन विधिना सुतांकुर्वीत पुत्रिकाम् ॥ यदपत्यंभवेदस्यां तन्ममस्यात्स्वधाकरं॥१२७॥
## [ अभ्रातृकांप्रदास्यामि तुभ्यंकन्यामलंकृतां। अस्यां योजायते पुत्रः स मे पुत्रोभवेदिति ॥१॥]+

( १ ) **मेधातिथिः**। यदपत्यमस्यांजायेत तन्मेमह्यंस्वधाकरमौर्ध्वदेहिकस्य श्राद्धादिपुत्रकार्यलक्षणार्थःस्वधा शब्दोनत्वयमेवोच्चार्यः तथाच गौतमः पितोत्सृजेत्पुत्रिकामनपत्योग्निप्रजापतिचेष्ट्वास्मदर्थमपत्यमिति संवादाद्यभिसंबन्धमात्रा-

+ ( ख, ण, ल )

दियोगेन विनापि भवति पुत्रिका ननु संवादभावेन यद्यप्यभिसंबन्धे हृदयात्कृतमुच्यते सुतवचनेन यावन्नज्ञापितस्ताव-ज्जामाताविप्रतिपद्येत कुर्वीत पुत्रिकामेषतस्याव्यपदेशः ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः** । अनेन वक्ष्यमाणेन । यदपत्यमित्यादिअभिधाय दद्यादिति शेषः । स्वधाकरं पुत्रकार्य-श्राद्धादिपररम् ॥ १२७ ॥

( ३ ) **कुल्लूकः** । अविद्यमानपुत्रोयदस्यामपत्यंजायेत तन्मम श्राद्धाद्यौर्ध्वदेहिककरंस्यादिति कन्यादानकाले जामा-त्रासहसंप्रतिपत्तिरूपेण विधानेन दुहितरंपुत्रिकांकुर्यात् ॥ १२७ ॥

( ४ ) **राघवानन्दः** । पुत्रिकापुत्रस्य भागं विधास्यन् तत्प्रकारमाह अपुत्रइति । उत्पन्नपुत्रेण भागयोग्या पुत्रिका । स्वधाकरं पिण्डादिदातृ । पुत्रिकापुत्रस्यत्त्वष्टकाश्राद्धे विशेषोयतोमातामहस्य मातामहादिश्राद्धं नास्ति दौहित्रस्यास्ती-ति ॥ १२७ ॥

( ५ ) **नन्दनः** । अथपुत्रिकायाः पुत्रस्य च दायप्राप्तिं विवक्षन्पुत्रिकाविधिंतावदाह अपुत्रोनेनेति । अनेनोत्तरार्द्धेन वक्ष्यमाणेन विधिना संविद्वाक्येन पुत्रिकामिवार्थेकन्प्रत्ययः पुत्रानुकारिणीमित्यर्थः । स्वधाकरं पिण्डोदकप्रदानादिकरं इति शब्दोन्ते द्रष्टव्यः ॥ १२७ ॥

**अनेन तु विधानेन पुरा चक्रेथ पुत्रिकाः ॥ विवृद्ध्यर्थंस्ववंशस्य स्वयंदक्षः प्रजापतिः ॥ १२८ ॥**

( १ ) **मेधातिथिः** । प्रजोत्पादनविधिज्ञः प्रजापतिर्दक्षःसएवोदाह्रियतेऽर्थवादोयंपरकृतिर्नाम ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । स्ववंशस्य स्वसपिण्डधारायाः ॥ १२८ ॥

( ३ ) **कुल्लूकः** । अत्रपरप्रतिपत्तिरूपमनुवादमाह अनेनेति । दक्षः प्रजापतिः पुत्रोत्पादनविधिज्ञः स्ववंशवृद्ध्यर्थमने-नोक्तविधानेन कृत्स्नादुहितरः पूर्वंपुत्रिकाः स्वयंकृतवान् । कार्त्स्न्र्येऽथशब्दः ॥ १२८ ॥

( ४ ) **राघवानन्दः** । अस्य निर्मूलत्वंधुनोति अनेनेति ॥ ॥

( ५ ) **नन्दनः** । अस्यार्थवादंपरकृतिरूपं च श्लोकाभ्यामुदाहरति अनेनेति । अनेनोक्तेन प्रजाविज्ञोहि प्रजापतिः सोप्येव स्वयंचक्रे इति ॥ १२८ ॥

**ददौ सदश धर्माय कश्यपाय त्रयोदश ॥ सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ १२९ ॥**

( १ ) **मेधातिथिः** । सत्कृत्येति तदत्र विधीयते दशेत्यादिलिङ्गादानेकपुत्रिकाकरणमपीच्छन्ति ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । दश पुत्रिकाः । प्रीतात्मा पुत्रजन्मतुष्टिमान् ॥ १२९ ॥

( ३ ) **कुल्लूकः** । सदक्षोभाविपुत्रिकापुत्रलाभेन प्रीतात्माऽलङ्कारादिना सत्कृत्य दशपुत्रिकाधर्माय त्रयोदशकश्यपाय सप्तविंशतिचन्द्राय द्विजानामोषधीनांचराज्ञे दत्तवान् । सत्कारवचनमन्येषामपि पुत्रिकाकरणे लिङ्गम् । दशेत्यादिच बह्वी-नामपि पुत्रिकाकरणज्ञापकम् ॥ १२९ ॥

( ४ ) **राघवानन्दः** । तत्रैव पुरावृत्तं कथयति ददाविति । प्रीतात्मासइतिसर्वत्रानुषज्यते ॥ १२९ ॥

**यथैवात्मा तथापुत्रः पुत्रेण दुहिता समा ॥ तस्यामात्मनि तिष्ठन्त्यां कथमन्योधनंहरेत् ॥ १३० ॥**

( १ ) **मेधातिथिः** । यदपत्यंभवेदस्यांतन्ममस्यादित्युक्तं अपत्यमृक्त्थभाक् अतः पितरि मृते पुत्रिकायाअनु-त्पन्नपुत्रायाधनहरत्वमप्राप्तंविधीयतेऽर्थवादेन तस्यामात्मनि पुत्रनिमित्तंतिष्ठन्त्या [ मेवधनंनपुत्रोत्पत्तिस्तदीयाय युज्य-

ते अथवातस्यामात्मभूतायांपितृरूपायामिति ] ‡ पुत्रेण दुहितासमेति सामान्यवचनोदुहितृशब्दः प्रकरणात्पुत्रिकाविषयोविज्ञेयः ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः**। तथाच सैव पुत्रिकाऽपुत्रस्य धनंहरति नान्यइत्याह यथेति ॥ १३० ॥

( ३ ) **कुल्लूकः**। आत्मस्थानीयः पुत्रआत्मावैपुत्रनामासीति मन्त्रलिङ्गात्तत्समा च दुहिता तस्याअप्यङ्गेभ्यउत्पादनात् अतस्तस्यां पुत्रिकायां पितुरात्मस्वरूपायां विद्यमानायामपुत्रस्य मृतस्य पितुर्धनंपुत्रिकाव्यतिरिक्तः कथमन्योहरेत् ॥ ॥ १३० ॥

( ४ ) **राघवानन्दः**। ततः किंतत्राह यथेति। तस्यामात्मनीति सामानाधिकरण्ये सप्तम्यौ। आत्मावै जायते पुत्र इतिश्रुतेर्दुहिताप्यात्मा तेन अपुत्रस्य पितुः पुत्रिका धनभाक्। तत्पुत्रश्च पौत्रस्थानीयः। अन्योज्ञात्यादिः ॥ १३० ॥

( ५ ) **नन्दनः**। अथप्रकृतमेव दायविभागविधिमाह यथैवात्मेति। दुहिता पुत्रिका आत्मन्यात्मभूतायामन्योन्यात्मभूतोभ्रात्रादिर्धनं हरेल्लभेत ॥ १३० ॥

## मातुस्तु यौतकंयत्स्यात्कुमारीभागएव सः ॥ दौहित्रएव च हरेदपुत्रस्याखिलंधनम् ॥ १३१ ॥

( १ ) **मेधातिथिः**। यौतकशब्दःपृथग्भावेन च स्त्रीधने तत्र हि तस्याएव केवलायाः स्वाम्यं अन्येतु सौदायकमेव तत्संबन्धस्त्रीधनंतत्रहि तस्याः स्वातन्त्र्यम् ॥ सौदायिकंधनंप्राप्य स्त्रीणांस्वातन्त्र्यमिष्यते ॥ नभक्तभूषाद्युपयोगिनः आन्वाहिकाद्भर्तृदत्ताद्धनादुपयुक्तशेषमेव युवत्या स्वीकृतंयौतकमाहुः। कुमारीभागएव कुमारीग्रहणा [ दूनो ][1] स्ति एवकारस्यचप्रसिद्धानुवादकत्वात्प्रकरणबाधकत्वमतश्च पुत्रिकाकुमारीविषयमपियौतकं। एवंचगौतमः स्त्रीधनंतदपत्यानामित्युक्त्वाह दुहितृणामप्रत्तानामप्रतिष्ठितानांचेति। तत्राप्रतिष्ठितायाऊढा अनपत्या निधानाभर्तृगृहे याभिः प्रतिष्ठा नलब्धा दौहित्रएवच्च हरेदपुत्रस्यानौरसपुत्रस्याखिलधनंहरेत् सतित्वौरसे यावानंशस्तंवक्ष्यति अत्रापि पुत्रिकापुत्रएव दौहित्रोन सर्वत्र पूर्ववत्प्रकरणत्यागस्य यौतकविषयत्वएव प्रमाणसंभवात् ॥ १३१ ॥

( २ ) **सर्वज्ञनारायणः**। यौतकं स्त्रीधनम्। कुमारीभागोऽपुत्रकन्याभागः सत्यपिपुत्रे सत्यामपिपुत्रिकायां तत्पुत्रे-च। दौहित्रइति दौहित्रः पुत्रिकापुत्रः। अपुत्रस्य मातामहस्य अखिलम्। सतु ततः कुमारीभागाकर्म। एतेनपुत्रिकाविषयादन्यत्रापि मातुः स्त्रीधनं कुमारीणामेव तस्मिन्संगृहीते पितृवित्तात् स्वस्वांशचतुर्थभागदानंतासां न कर्तव्यम्। याज्ञवल्क्यस्मृतौ चतुर्थांशदानस्य भगिनीसंस्कारत्वेन श्रवणात् तस्यच मातृयौतकेनैव सिद्धेरितियाह्यम्। पुत्रिकायांत्वकृतायामपुत्रस्य धनंपत्न्यभावएव दुहितृदौहित्रगामि ॥ १३१ ॥

( ३ ) **कुल्लूकः**। मातुर्यद्धनंतत्तस्यां मृतायां कुमारीभागएव स्यान्न पुत्राणांतत्र भागः। कुमारी चानूढाभिप्रेता। तथागौतमः ॥ स्त्रीधनंदुहितॄणामदत्तानामप्रतिष्ठितानांच अपुत्रस्य च मातामहस्य दौहित्रएव प्रकृतत्वात्पौत्रिकेयः समग्रंधनं गृह्णीयात् ॥ १३१ ॥

( ४ ) **राघवानन्दः**। मातामहेन स्वभार्यायै यद्दत्तं तत्कुमार्या पर्याप्तं तन्मातुरूर्ध्वंतत्पुत्रएव तद्धरेदित्याह मातुस्त्विति। ननु पारितोषिके धने दातुः स्वत्वापरित्यागात्कथं तत्पुत्रस्तद्धरेत्तत्राह कुमारीभागइति। स्त्रीधनंतदपत्यानामितिगौतमोक्तेः। नकेवलमेवमपितु मातामहस्यापि धनभागित्याह अपुत्रस्येति ॥ १३१ ॥

---

‡ ( आ आ ) [1] ( १ ) मे० ८

( ५ ) **नन्दनः** । यौतकं मातुः पितृकुलप्राप्तं धनमसत्यपि पुत्रिका पुत्रे कुमार्यां यौतकप्राप्तिरेव कारणसूचिता अपुत्रस्य पुत्रिकाकरणोत्तरकालंजातपुत्रस्य मातामहस्याखिलंधनं दौहित्रः पुत्रिकापुत्रएव हरेन्नपुत्रिका ॥ १३१ ॥

( ६ ) **रामचन्द्रः** । यौतकं स्त्रीधनम् ॥ १३१ ॥

**दौहित्रोह्यखिलंरिक्थमपुत्रस्यपितुर्हरेत् ॥ सएव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥ १३२ ॥**

( १ ) **मेधातिथिः** । अपुत्रमातामहप्रमातामहाय पूर्वेणैव पौत्रिकेयदौहित्रस्याऽखिलंरिक्थहरत्वमुक्तमतोऽयंश्लोकस्तदनुवादेन पिण्डदानविधानार्थ इतिकैश्चिद्व्याख्यातं । हरेद्यदीति च ते पठन्ति यस्मिन्पक्षे सर्वंहरेत्तस्मिन्नेव पक्षे दद्याद्धातुः समस्तत्र विभागः स्यादिति पक्षस्तदा दद्यादन्यथा योयतआददीत सतस्मै दद्यादित्यनेनैव पिण्डदानेन सिद्धे पुनर्वचनमनर्थकं अखिलरिक्थग्रहणानुवादश्चानर्थकएव तदयुक्तं । अपुत्रस्य पितुर्हरेदित्ययमेवार्थोवगीतश्चिरन्तनपाठः । पितृशब्दश्च जनके प्रसिद्धतरोन मातामहे । अतश्च पुत्रिकायाभर्ता नतु तदन्यभार्यापुत्रपुत्रिका च पुत्रवती तदाऽनेनैव पुत्रेण जातेन पिता पितामहश्चोभावपि पुत्रवन्तौ वेदितव्यौ । यदातु बीजीतरासु जातःपुत्रस्तदा पुत्रिकापुत्रः समानजातीयायामूढायांजातोपि नैव बीजिनोरिक्थंहरेन्नापि पिण्डंदद्यात् अन्योहि जन्यजनकभावोन्यश्चापत्यापत्यवत्संबन्धः । अजनका अपि क्षेत्रजादिभिरपत्यवन्तोजनकाश्च विक्रीतापविद्धादिपितरोनीवाजीगर्तादयःपुत्रवन्तस्तथाचौरसलक्षणः स्वक्षेत्रइति स्वग्रहणंक्षेत्रंच पुत्रिकापितुरेव भर्ताहि तस्य चानुविधेयवरइति मातृकुलेस्वामी तस्मादेवंतद्वक्तव्यं यस्मिन्पक्षे विद्यमानान्यपुत्रपुत्रिकाभर्ता पुत्रिकापुत्रश्चाखिलद्रव्यहारी तस्मिन्पक्षे अञ्जसाअयंप्रयुङ्क्तेति रूढायाअपि मार्थमिकात्संप्रयोगादनपगतमेवानुषज्येत । प्रायेण ह्यत्र शास्त्रे कन्याशब्दः पुमांसंप्रयोगमाचष्टे अर्थसंस्कारहीनेति तदपि न यतः प्रथममेव वचनमेवंस्मरणाभिप्रायेण तत्र संभवि प्रमाणान्तरवशाल्लक्षणया.हिताइत्यत्र प्रतीयते । यथोक्तं ॥ पाणिग्रहणकामन्त्राः कन्यास्वेव प्रतिष्ठिताः । ताः कन्यास्वपितॄणांहियाहिताइति । अत्र धर्मलोपवचनलिङ्गात्पुरुषोपभुक्ताऽकन्येत्युच्यते तद्विपर्ययेणानुपभुक्ता कन्येति सर्वत्रैवमुख्यार्थमनुरुध्यक्रियमाणाधर्मालक्ष्यन्ते तेच न सर्वे किंतर्हि यावतांप्रमाणमस्ति । तथाहि कानीनइति पितुः स्वतासंस्काराभावश्च प्रतीयते केवले हि संस्काराभावेचोढा स्वैरिणी पुत्राः कानीनाः केवलायां च पितृस्वतालक्षणायां पुत्रिकापुत्रोपि कानीनइति व्यपदिश्यते । तथोक्तेस्वदारतस्तुनियमातिक्रमः प्राप्नोतीति नह्यस्यायमर्थः स्वदारेभ्योन्यागन्तव्येति परस्त्रियंचकामयते नचापरां दारांस्तथा सत्यनेनैव गतत्वात्परदारप्रतिषेधोनर्थकःस्यात्किंतर्हि स्वदारेषु रतिर्धारयितव्या रतिभावनयाऽभ्यासात्प्रीत्यतिशयोत्पत्तेः [ अक्षराणि ? ] स्त्रियंच न कामयते नचापरान्दारांस्तथासति धर्मेभ्यो नहीयतइत्यनुवादोयं । अथवा स्वदारनिरतोपि पर्ववर्जनमेनांव्रजेयुरसौ सुषुप्स्यैवमपत्यशेषएव परदाराप्रतिषेधोपि नास्ति । अनूढत्वात्केनचिद्वारव्यपदेशाभावात् किंपुनरपुत्रयुक्तमविवाह्येति अष्टौहिविवाहास्ते च स्वीकारभेदेन ब्राह्मादिव्यपदेशभेदंप्रतिपद्यन्ते नचास्यास्वकरणंभर्तुरस्ति पितुरेव स्वत्वानतिवृत्तेः अभ्रातृकायां च विवाहप्रतिषेधे पुत्रिकाप्रविवाह्यांदर्शयति यथा नाभ्रातृकामुपयच्छेत तोकंह्यस्य तद्भवतीति प्राकरणिकश्चायंप्रतिषेधस्तदप्रतिषेधेषूपलभ्यमानमूलत्वात्प्रकरणाधीनोपि संस्कारत्वमपनुदति । तथाच शिष्टादर्शनीयकन्याभावे कपिलादिरूपामुपयच्छन्ति । तथाच स्वधर्मानुष्ठानमाचरन्ति क्षतयोन्यन्यपूर्वाभावोत्र समानप्रवरादिकयोढ्यापि कथंचिन्नपत्नीकार्यंकुर्वन्ति एतदर्थमेव कैश्चिन्नोद्वहेत्कपिलामित्यत्र दृष्टदोषोपवर्णनंप्राकरणिकत्वेपि सपिण्डादिप्रतिषेधस्य चैकरूप्यंमाविज्ञायीति कथंपुनः स्पृष्टिप्रतिषेधोभ्रातृकामुपयच्छेतेतस्मिन्नोद्धारशङ्का उच्यते अस्य प्रतिषेधस्य वाक्यशेषः श्रूयतेऽपत्यंह्यस्य तद्भवतीति अनेन ततश्चापत्योत्पत्तावेव पुत्रिका नभार्या धर्मार्थमर्थकामयोस्त्वस्त्वेवसहाधिकारइति भवत्यपरिहारस्तु स्वकरणाभवादविवाहः ननु तस्मिन्पक्षे कानीनएव

पुत्रिकापुत्रःस्यान्नह्यसौ पितुः स्वस्यादसंस्कृतयोश्चापत्यमिति संस्कारपक्षेतु पितृसुतासंस्कारभावोनधर्मलक्षणप्रत्ययादन्यतरधर्माभावे कानीनाद्भिद्यतइतियुक्तं अत्रोच्यते नवयंपुत्रिकापुत्रस्य कानीनस्य लक्षणंतदस्य नास्तीति ब्रूमः इदंहितस्य लक्षणं ॥ पितृवेश्मनिकन्यातुयंपुत्रंजनयेद्रहः ॥ तंकानीनंवदेन्नाम्नावोढुःकन्यासमुद्भवमिति ॥ अस्यचार्थः य एवंलक्षणः सइहशास्त्रे कानीनग्रहणेषु ग्रहीतव्यः। सच कस्यापत्यमित्यपेक्षायां वोढुः कन्यासमुद्भवमिति द्वितीयंवाक्यं। अथवा नेह पदार्थोलक्ष्यते किंतर्हि संबन्धिता नियम्यते यएवंविधः कानीनस्तंवोढुः संबन्धिनंवदेदित्येकवाक्यतैव संबन्धिता च पदार्थभेदेचाप्युपाधिभेदाद्भिद्यतएव रहः प्रकाशभेदेन चैव मातामहस्य अन्येचाहुरितिपदार्थस्तु तदा कानीनशब्दस्य शब्दार्थसंबंधोऽवधितएवावगन्तव्यः ते चेदपत्यमात्रे कानीनंस्मरन्ति। भवतु पैतृके कानीने व्यवहारः। अन्येतु स्मृतिमेव विशेषनिष्ठामाहुः नहि कन्यापत्यमात्रे सर्वकानीनशब्दः प्रयुज्यते किंतर्हि मानवस्मृतिर्लक्ष्यते एतदप्यनुमन्यामहे निश्चिते प्रयोगाभावेऽवशेषस्मरणेऽपि पुण्यसिद्ध्यादितद्विशेषावगतिः प्रयोगतोन्याय्यैव ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः**। नकेवलंमातामहस्य धनंहरेदपितु पितुः बीजिनः स्वमातृभर्तुरप्यपुत्रस्य पुत्रान्तरशून्यस्य दौहित्रः पुत्रिकापुत्रोधनंहरेत् तद्बीजप्रभवत्वादस्य ज्ञात्यन्तरापेक्षयाऽन्तरङ्गत्वात्। पुत्रिकापुत्रनियमेच समेपुत्रइत्यभिधानस्य न ममैव पुत्रइतीतरपुत्रत्वव्यवच्छेदने तात्पर्यं किंतु स्वपुत्रतायाम्। यदासावृक्थहरस्तदा सएवमातामहाय यथैकोद्दिष्टंतत्पितृपितामहौचादाय पार्वणं यथा करोति तथा स्वबीजिनेऽपि कुर्यात्। पिण्डद्वयदानविधिः श्राद्धद्वयविधिपरः। द्व्यामुष्यायणस्य श्राद्धविधानं श्रुतौ श्रुतम् ॥ १३२ ॥

( ३ ) **कुल्लूकः**। दौहित्रः प्रकृतत्वात्पौत्रिकेयएव तस्य मातामहधनग्रहणमनन्तरोक्तंजनकधनग्रहणंच पिण्डदानार्थोयमारंभः पितृशब्दस्यतत्रैवप्रसिद्धत्वात्। अन्यस्य पौत्रिकेयः पुत्रान्तररहितस्य जनकस्य समग्रंधनंगृह्णीयात्सएव पितृमातामहाभ्यां द्वौ पिण्डौ दद्यात्। पिण्डदानंश्राद्धोपलक्षणार्थं पौत्रिकेयत्वेन जनकधनग्रहणपिण्डदानव्यामोहनिरासार्थंवचनम् ॥ १३२ ॥

( ४ ) **राघवानन्दः**। तत्रैव कैमुतिकन्यायमाह दौहित्रेति अपुत्रस्य पुत्रान्तररहितस्य स्वपितुर्मातामहस्यवा। अतआह सइति। नास्य पितृमातामहपक्षे पिण्डदातृत्वं मातामहमातृपक्षेतु पिण्डदातृत्वमितिभावः। पितुः पुत्रान्तरासत्वे स्वपितुर्धनस्य न्यायसिद्धत्वा त्पण्डदातृत्वं विधेयम्। पिण्डदानं श्राद्धाद्युपलक्षणार्थम् ॥ १३२ ॥

( ५ ) **नन्दनः**। दौहित्रोपि पुत्रिकापुत्रः सन्नपि अपुत्रस्य पुत्रान्तररहितस्य पितुः स्वजनकस्य रिक्थंहरेत् कस्माद्रिक्थहारित्वात् पिण्डं पित्रे स्वजनकायापुत्रायपितामहाय च सएव दद्यात् ॥ १३२ ॥

**पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ॥ तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ १३३ ॥**

( १ ) **मेधातिथिः**। पूर्वशेषोयमर्थवादः कथमविशेषस्तयोर्हि मातापितराविति ॥ १३३ ॥

( २ ) **सर्वज्ञनारायणः**। यदि पुत्रिकायांकृतायां पुत्रोजायते मातामहस्य तदा दुहित्रपेक्षया पुत्रस्याभ्यर्हितत्वादधिकभागतास्थित्याशङ्कांनिवारयति पौत्रेति। मातापितरौ पिताचमाताचेत्यर्थः। अत्रच दुहितुः पुत्रस्थानीयत्वात्तस्याश्च स्त्रीत्वेन बहिरङ्गत्वात्साम्योक्त्यसंभवात्पौत्रदौहित्रोपादानम्। तेन पुत्रतुल्यत्वात्पौत्रस्य तुल्यत्वाच्चदौहित्रस्य पुत्रेणसाम्यमित्युक्तम् ॥ १३३ ॥

( ३ ) **कुल्लूकः**। पौत्रपौत्रिकेययोर्लोके धर्मकृत्ये न कश्चिद्विशेषोस्ति यस्मात्तयोर्मातापितरौ तस्य देहादुत्पन्नाविति पूर्वस्यैवानुवादः ॥ १३३ ॥

( ४ ) **राघवानन्दः**। किंच पौत्रेति। लोके धर्मकृत्ये धर्मतः शास्त्रानुसारेण तयोः पौत्रदौहित्रयोर्नविशेषोस्ति यतः तस्य पितुः देहतोमातापितरौतयोः संभूताविति समाधिकारितेतिभावः ॥ १३३ ॥

( ५ ) **नन्दनः**। पुत्रिकायाः पुत्रस्य मातामहपिण्डप्रदत्वमुपपन्नमित्यभिप्रायेणाह पौत्रदौहित्रयोरिति। दौहित्रः पुत्रिकापुत्रः कार्य इहामुत्रच कर्तव्ये धर्मतोन्यायतः एवंन्यायउत्तरार्द्धेनोच्यते तस्य पुत्रदुहितृपितुर्देहतः तयोः पौत्रदौहित्रयोः मातापितरौ संजातौ पौत्रस्य पिता संभूतो दौहित्रस्य माता हि यस्मात्तस्मादविशेषोस्तीति ॥ १३३ ॥

( ६ ) **रामचन्द्रः**। तयोः पौत्रदौहित्रयोः ॥ १३३ ॥

**पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते ॥ समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥ १३४ ॥**

( १ ) **मेधातिथिः**। समस्तत्रतुल्योविभागोजातेन पुत्रेण ज्येष्ठांशनिषेधः ज्येष्ठतानास्तिहिस्त्रियाः रिक्थभागएव ज्येष्ठता निषिध्यते नत्वस्यांगुरुवृत्तौ ॥ १३४ ॥

( २ ) **सर्वज्ञनारायणः**। यद्येवंज्येष्ठत्वात्पुत्रिकापुत्रस्य ज्येष्ठस्य ज्येष्ठभागोदेयइत्यतआह पुत्रिकामिति। पुत्रोजायते मातामहस्य। ज्येष्ठता गुणविशेकृता विद्यादिगुणाभावान्नास्ति तद्द्वारातु पुत्रिकापुत्रस्यापि न ज्येष्ठताऽस्तीत्यर्थः ॥ १३४ ॥

( ३ ) **कुल्लूकः**। कृतायां पुत्रिकायां यदि तत्कर्तुः पुत्रोऽनन्तरंजायते तदा तयोर्विभागकाले समोविभागोभवेत् नोद्धारः पुत्रिकायै देयः यस्माज्ज्येष्ठायाअपि तस्याउद्धारविषये ज्येष्ठता नादरणीया ॥ १३४ ॥

( ४ ) **राघवानन्दः**। कृतपुत्रिकोत्तरकालोत्पन्नपुत्रस्यापि तत्समविभागं वदन् तस्याज्येष्ठत्वनिषेधेनोद्धाराभावमाह पुत्रिकायामिति। तस्यामातुर्ज्येष्ठत्वाभावेन तदौपाधिकपुत्रज्येष्ठत्वाभावादुद्धाराभावः ॥ १३४ ॥

( ५ ) **नन्दनः**। अनुजायते पुत्रिकाकरणात्पश्चाज्जायते स्त्रीग्रहणात्तदपत्यस्याप्युपलक्षणम् ॥ १३४ ॥

**अपुत्रायां मृतायान्तु पुत्रिकायां कथंच न ॥ धनंतत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥ १३५ ॥**

( १ ) **मेधातिथिः**। अस्वामिकान्यास्तुपुत्रिकायाभर्तुरप्राप्तधनसंबन्धउच्यते। अथ किं पुत्रिकाविवाहेन संस्क्रियते। उताहोन किंचन यदिसंस्क्रियते भार्यैवासौभवति भार्याकरणोहि विवाहः। ततश्च तद्धनं [ अ० ? ] नसंस्तूयते कन्यागमनंप्राप्नोति स्वदारनिरतः सदेति नियमातिक्रमश्च यथेच्छसितथास्तु [ अ० ? ] ननुचास्मिन्पक्षे श्लोकोयमनर्थकः। नैषदोषः अपरिपूर्णत्वायार्थवत्वस्य यथैतदयमपत्यं न भर्तुस्तेन वेत्याशङ्कानिवृत्त्यर्थोयुक्तएव श्लोकारम्भः। बहवश्चार्थवादिनोमानवाः श्लोकाः अथवा पुनरस्तु न संस्क्रियतइति। न तु चास्मिन्पक्षे कन्यागमनं प्राप्नोति किंकृतं तथा विधायां जातोमातामहस्य पुत्रइतःसाम्यं गंतुर्विध्यर्थातिक्रमनिरूपणेन प्राकरणिकं नच तानि नामानि न पतनीयानि [अ०३] किं पुनर्भवांकन्याशब्दार्थमत्वा चोदयति कन्याग्रहणं प्राप्नोतीति त्रिधाहि कन्याएकातावदप्रवृत्तपुंप्रयोगात्तथा [ अ० ? ] देवहिताः प्रथमे वयसि वर्तमानाच तत्र यदितावत्पुंसा संप्रयुक्ता येन कार्यमतः पिण्डदानं यदा तु बीजी सपुत्रः संपद्यते तदा सपुत्रिकापुत्रो नैवबीजिने पिण्डं दद्यात् नतु दौहित्र इत्युच्यते पौत्रिकेयइत्यर्थः यथा मातामहपक्षे पितुरपि योहरेत्तत्रापि सच दद्यादिति श्रूयते न पुनः पक्षान्तरेपि निषेधमनुमापयति पित्रे पितामहाय चेत्युभयोरप्राप्तत्वात् द्योतनं परिसङ्ख्येति अनुवमाने द्योतनमन्यस्माएवदद्यात्तद्युगपदुभाभ्यामनेनायमनुवादः यथैव पित्रे मातामहाय च एवं पितामहाय प्रपितामहाय च तथैव च ततः पराभ्यां द्वाभ्याम् ॥ १३५ ॥

( २ ) **सर्वज्ञनारायणः** । धनं तया जीवतोमृतस्य वा स्वपितुः प्राप्तम् ॥ १३५ ॥

( ३ ) **कुल्लूकः** । अपुत्रायां पुत्रिकायां कथंच न मृतायां तदीयधनंतद्भर्तैवाविचारयन्गृह्णीयात्पुत्रिकायाः पुत्रसमत्वेनानपत्यस्य पत्नीरहितस्य मृतपुत्रस्य पितुर्धनग्रहणप्रसक्तौतन्निवारणार्थमिदंवचनम् ॥ १३५ ॥

( ४ ) **राघवानन्दः** । अजातपुत्रा पुत्रिका म्रियेतचेद्धनं तद्भर्तुरेवेत्याह अपुत्रायामिति । अविचारयन् पुत्रिकापुत्रस्य मातामहसंबन्धित्ववत्तद्धनंतस्येत्यनभिशङ्कः । पुत्रस्यैवान्यार्थत्वं नतु पत्न्याःअतोऽस्यतद्धनस्वत्वमितिभावः ॥ १३५॥

( ५ ) **नन्दनः** । अपुत्रिकं भर्तैवाहरेन्न पुत्रिकापितृव्यादयः ॥ १३५ ॥

## अकृतावा कृतावा पि यंविंदेत्सदृशात्सुतम् ॥ पौत्रीमातामहस्तेन दद्यात्पिण्डंहरेद्धनम् ॥ १३६ ॥

( १ ) **मेधातिथिः** । अधस्तनोपरितनवाक्यपर्यालोचनयापुत्रिकापुत्रविषयएवायमतिशयोक्त्या प्रतीयते । अकृताया अपि दुहितुः पुत्रो मातामहधनभागित्युक्तं । किंपुनः कृतायाइत्येवमन्यशेषत्वात्पुत्रिकायाविधिष्वानर्थक्यप्रसङ्गान्नदौहित्रस्य रिक्थप्राप्त्यर्थः । ननु च स्मृत्यन्तरे दौहित्रमात्रस्य दानाधिकारः श्रूयते मातामहानामप्येवमिति । इहापि करणंहित्वा श्रुतिवाक्यसामर्थ्येन दौहित्रमात्रविषयतैव प्रतिपत्तुंन्याय्या दद्यात्पिण्डंहरेद्धनमिति । [ तथापरमुक्तंदौहित्रोह्यखिलंरिक्थमित्यादि अत्रोच्यते यदुक्तंमातामहानामिति ][1] तद्बहुवचनं किं व्यक्त्यपेक्ष्यमुतलक्षणया ममातामहाद्यभिप्रायेणव्यक्तिपक्ष एकस्यैव मातामहस्य प्राप्नोति श्राद्धादिवत् तच्च सपिण्डीकरणे कृते विरुद्धं एवंह्याहुरतऊर्ध्वंत्रिभ्योदद्यादिति । अथापि पितुरन्यस्य सपिण्डीकरणमेवनकरिष्यत इत्युच्यते तदपि निषेधाभावात् लक्षणयोः सन्निकर्षोविशेषाभावाल्लक्षणविशेषापरिज्ञानेऽनवगमत्वमेव स्मृत्यादिबलेन च कारणत्यागस्येति विरोधप्रसङ्गस्तंनिवेशोहि पदार्थप्रकरणादुत्कृष्यते द्वादशोपसदोहीनस्येतिवत् । अकृतावेत्यस्य चान्यपरत्वमुक्तं । तस्मात्पौत्रिकेयविषयमेतत् ॥ १३६ ॥

( २ ) **सर्वज्ञनारायणः** । अकृता पुत्रिकात्वेनापरिभाषिता । सदृशात् नोत्तमादधमाद्वा । कृतापुत्रोदद्यात्प्रथमंपिण्डंसर्वदा सएव धनं हरेत्सदैव । अकृतापुत्रस्य पुत्रपत्नीदुहित्रभावएव ॥ १३६ ॥

( ३ ) **कुल्लूकः** । अकृतावाकृतावेति पुत्रिकायाएव द्वैविध्यंतत्र यदपत्यंभवेदस्यां तन्ममस्यात्स्वधाकरमित्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृताभिसन्धिमात्रकृतावागूव्यवहारेण न कृता । तथा गोतमः अभिसन्धिमात्रात्पुत्रिकामे केषामिति । अतएव पुत्रिकाधर्मशङ्कयेति प्रागविवाह्यत्वमुक्तम् । पुत्रिकेव कृताऽकृतावा पुत्रंसमानजातीयाद्वोढुरुत्पादयेत्तेन दौहित्रेण पौत्रकार्यकरणात्पौत्रिकेयवान्मातामहः पौत्री तथाचासौ तस्मै पिण्डंदद्यात् । गोविन्दराजस्त्वकृता वेत्यपुत्रिकैव दुहिता तत्पुत्रोपि मातामहधने पौत्रिकेयइव मातामह्यादिसत्त्वेप्यधिकारीत्याह । तन्न पुत्रिकायाः पुत्रतुल्यत्वादपुत्रिकातत्पुत्रयोरतुल्यत्वेन तत्पुत्रयोस्तुल्यत्वायोग्यत्वादिति ॥ १३६ ॥

( ४ ) **राघवानन्दः** । दौहित्रस्य धनहरणादौ पुत्रिकाकरणमुपलक्षणमित्याह अकृतेति । सदृशात् सजातीयात् भर्तुः सुतंविन्देदुत्पादयेत् तेन मातामहः पौत्री स्वपुत्राभावेइतिशेषः ॥ १३६ ॥

( ५ ) **नन्दनः** । पुत्रिकात्वेनाकृताया दुहिता तेन पौत्रीस्यादितिशेषः । पुनःसन्तानहीनाय मातामह्याय पिण्डंदद्यात्तस्य धनंहरेत् ॥ १३६ ॥

---

( १ ) मे० ८

**पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥ अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ १३७ ॥**

( १ ) **मेधातिथिः** । पुत्रेण जातेन तत्कृतेनोपकारेण लोकान्स्वर्गादीन्दशविशोकान् जयतिप्राप्नोति । तत्रोत्पद्यतइतियावत् एवंपौत्रेणानन्त्यंतेष्वेव चिरन्तनकालमवस्थानंलभते । पौत्रस्य पुत्रेण ब्रध्नस्य विष्टपमादित्यलोकंप्राप्नोति । प्राकाश्यमश्नुते न केनचित्तमसा व्रियते ॥ १३७ ॥

( २ ) **सर्वज्ञनारायणः** । लोकान्स्वर्गम् । आनन्त्यं तदेव चिरस्थितम् । ब्रध्नस्य हिरण्यगर्भात्मनः सूर्यस्य । विष्टपं लोकम् ॥ १३७ ॥

( ३ ) **कुल्लूकः** । पुत्रेण जातेन स्वर्गादिलोकान्प्राप्नोतीति पौत्रेण तेष्वेव चिरकालमवतिष्ठते तदनन्तरंपुत्रस्य पौत्रेणादित्यलोकंप्राप्नोति । अस्य च दायभागप्रकरणेऽभिधानंपितुर्धने पत्न्यादिसद्भावेपि पुत्रस्य तदभावे पौत्रस्येत्येवंपुत्रसंतानाधिकारबोधनार्थम् ॥ १३७ ॥

( ४ ) **राघवानन्दः** । पुत्रादीनां त्रयाणां जन्ममात्रतः फलभेदमाह पुत्रेणेति । पुत्रेणायंलोकइतिश्रुतेः । आनन्त्यं पुत्रतः प्राप्तलोकेष्वेव चिरकालावस्थानम् । ततएव ब्रध्नस्य रवेः विष्टपं लोकं प्रपौत्रेणाप्नोतीत्यन्वयः ॥ १३७ ॥

( ५ ) **नन्दनः** । अकृतायाः पुत्रस्य मातामहरिक्थहरणेन पौत्रस्य तुल्यतामुपपादयिष्यन्निदन्तावच्छृणुतेत्याह पुत्रेणेति । आनन्त्यंनाशरहितत्वम् ॥ १३७ ॥

( ६ ) **रामचन्द्रः** । ब्रध्नस्य सूर्यस्य विष्टपं लोकं आप्नोति ॥ भास्कराहस्करब्रध्नेत्यमरः ॥ १३७ ॥

**पुन्नाम्नोनरकाद्यस्मात्त्रायते पितरंसुतः ॥ तस्मात्पुत्रइति प्रोक्तः स्वयमेव स्वयंभुवा ॥ १३८ ॥**

( १ ) **मेधातिथिः** । अपत्योत्पादनविधिशेषोयमर्थवादः । पुंनामनरकंचतुर्विधभूतोत्पत्तिः पृथिव्यांव्यपदिश्यते तनस्त्रायते पुत्रोजातः देवयोनौ जातइत्यर्थः तस्माद्धेतोः पुत्रइति व्यपदिश्यते ॥ १३८ ॥

( २ ) **सर्वज्ञनारायणः** । पुंनाम्नोयत्रापुत्रैर्गन्तव्यम् ॥ १३८ ॥

( ३ ) **कुल्लूकः** । यस्मात्पुन्नामधेयनरकात्सुतः पितरंत्रायते तस्मात्त्राणादात्मनैव ब्रह्मणा पुत्रइति प्रोक्तः । तस्मान्महोपकारकत्वात्पुत्रस्य युक्तंतदीयपुंसंतानस्य दायभागित्वमिति पूर्वदार्ढ्यार्थमिदम् ॥ १३८ ॥

( ४ ) **राघवानन्दः** । पुत्रपदस्यान्वर्थफलमाह पुमिति । स्वतः पुत्रपौत्रानपेक्षया सचकार्यविशेषः पुत्रस्यैवप्रोक्तः स्वयंभुवेति तद्वचनमेवात्र प्रमाणमितिभावः ॥ १३८ ॥

( ५ ) **नन्दनः** । नरकोदुःखंतस्य पुदिति नाम्नस्तस्मात्पितरं त्रायतइति पुत्रइति ॥ १३८ ॥

**पौत्रदौहित्रयोर्लोकेविशेषोनोपपद्यते ॥ दौहित्रोपि ह्यमुत्रैनंसंतारयति पौत्रवत् ॥ १३९ ॥**

( १ ) **मेधातिथिः** । अत्रापि दौहित्रः पुत्रिकापुत्रएवविज्ञेयः । दौहित्रोपि ह्यपुत्रैनंसंतारयति पौत्रवत् । अयमप्यर्थवादएवविहितत्वादर्थस्य एतयोर्विशेषोनास्ति । एकस्य माताऽन्यकुलीनाऽपरस्य पिता तस्माद्दौहित्रोप्यमुत्रलोक एनंप्रेतंसन्तंसततंसंतारयति नरकात्पूर्वस्मात् ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । नन्वेवं दौहित्रेण पुन्नामनरकत्राणं नस्यादित्यतआह पौत्रेति । पौत्रवत् लोकानन्त्यहेतुतया ॥ १३९ ॥

( ३ ) **कुल्लूकः** । दौहित्रः पुत्रिकापुत्रः पुत्रदौहित्रयोर्लोके कश्चिद्विशेषोन संभाव्यते यस्माद्दौहित्रोपि मातामहंप-

रत्लोके पौत्रवन्निस्तारयति । एतच्च पौत्रिकेयस्य पौत्रेण साम्यप्रतिपादनार्थंपुत्रिकाकरणानन्तरजातपुत्रेण सह धने तुल्य-भागबोधनार्थम् ॥ १३९ ॥

( ४ ) **राघवानन्दः** । पुत्रदौहित्रयोर्लोकइत्यत्रापूर्तिंपूरयति पौत्रेति । संतारयतीतिपूर्तिः । पौत्रेणपितामहान्तेभ्यो-दीयते पिण्डादि तथाऽयमपि ददातीतिभावः ॥ १३९ ॥

( ५ ) **नन्दनः** । यथा पुत्रादिभिः पितुरभ्युदयस्तथा दौहित्रेणापीत्याह पौत्रदौहित्रयोरिति । यतएवमतोऽस्य मातामहरिक्थहारित्वमुपपन्नमिति प्रासङ्गिकम् ॥ १३९ ॥

**मातुः प्रथमतः पिण्डंनिर्वपेत्पुत्रिकासुतः ॥ द्वितीयन्तु पितुस्तस्यास्तृतीयंतत्पितुः पितुः ॥ १४० ॥**

( १ ) **मेधातिथिः** । सएव दद्यात्पिण्डंच पित्रे मातामहायचेत्यत्र पुत्रिकापुत्रपिण्डदानंमातामहप्रक्रममुक्तं । तस्मादयमपरःक्रमः पुत्रिकापुत्रपिण्डदानस्य मातुः प्रथमतः पिण्डंनिर्वपेदित्येवमादि । द्वितीयन्तु तस्याएवेत्यनुमन्तव्यं येतु पठन्ति पितुस्तस्येति तत्प्रथमंपुत्रिकायै निरूप्य जनकाय निर्वपन्ति । न पितुः पितुरितिच जनकस्यैव पित्रे तृतीयमस्मिंस्तुपक्षे मातामहाय पिण्डदानंनोक्तंस्यात् ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । तत्र श्राद्धक्रममाह मातुरिति । मातुः प्रथमपिण्डस्ततोमातुःपितुस्ततोमातुःपितामहस्येति । एवंकृते यदि पितुरपि पुत्रान्तरं नास्ति तदा पितृपितामहतत्पितॄणां दद्यादिति प्रागेवोक्तम् ॥ १४० ॥

( ३ ) **कुल्लूकः** । पौत्रिकेयः प्रथमंमात्रे पिण्डं । द्वितीयंमातुः पित्रे । तृतीयंमातुः पितामहाय दद्यात् । पित्रादीनान्तु पित्रे मातामहाय चेत्युक्तत्वात्पितृक्रमेणैव पिण्डदानम् ॥ १४० ॥

( ४ ) **राघवानन्दः** । पुत्रिकासुतस्यापूर्वपिंडदानक्रममाह मातुरिति । तस्यामातुरित्युभयत्रान्वयः । तेन तस्याः पितुः पितुःपितुः प्रमातामहस्य मातृतः पितामहेभ्यः पिण्डत्रयं दद्यादिति । पुत्रिकाकरणपक्षे मातामहस्य मातामहादित्रिभ्योदद्यादन्वष्टकायामपि तथैवेतिविशेषः ॥ १४० ॥

( ५ ) **नन्दनः** । अकृतावाकृतावेति दुहितृपुत्रस्य दायं परिसमाप्य प्रकृतस्य पुत्रिकापुत्रस्य कर्तव्यमाह मातुः प्रथमतइति । प्रथमतः प्रथमं पितुः तस्याइत्येव । मातुः पितामहस्येति यावत् ॥१४०॥

**उपपन्नोगुणैः सर्वैः पुत्रोयस्य तु दत्रिमः ॥ सहरेतैव तद्रिक्थंसंप्राप्तोप्यन्यगोत्रतः ॥ १४१ ॥**

( १ ) **मेधातिथिः** ॥ न भ्रातरोन पितरः पुत्रारिक्थहराः पितुरिति । सर्वपुत्राणांरिक्थहरत्वमुक्तं । सति त्वौरसे प्रजीवनमात्रभाक्त्वंक्षेत्रजादीनां ॥ एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थंप्रदद्यात्तुप्रजीवनमिति ॥ अतोस्ति सिद्धमेव दत्रिमस्य रिक्थहरत्वं । इदन्तु वचनंसत्येवौरसे साम्यर्थमन्यथा न किंचिदनेन क्रियते कियांस्तु तस्य भागइति विंशदंशाभावात्समऔरसेनेति केचित् । तदयुक्तं साम्येह्यभिधीयमाने यथैव पुत्रिकाप्रकरणे पठितमेवमत्राप्यपठिष्यत् समस्तत्रविभागःस्यादिति तस्मात्क्षेत्रजवत्षष्ठाष्टमादिभागकल्पनाकार्येत्युच्यते । अत्राप्यस्ति वक्तव्यं यथैव भागविशेषउक्तः क्षेत्रजस्य षष्ठन्तु क्षेत्रजस्यांशमिति तथैव कृत्रिमेवक्ष्यति तस्मात्पुनर्वचने प्रयोजनंचिन्त्यं । उपाध्यायस्त्वाह पुनर्वचनाद्विशेषनिर्देशाभावाच्च क्षेत्रजान्न्यूना कल्पना युक्ता नत्वभागता नापि समभागता न क्षेत्रजतुल्यतेति ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । दत्रिमोमातापितृदत्तः । यदि सर्वपुत्रगुणयुक्तस्तदागोत्रान्तरे तदृक्थं पितृधनभागमन्यथासर्वमृक्थंगृह्णीयात् । तेनामुख्यपुत्रोप्यतिशयितगुणवत्तायांमुख्यपुत्रवत् भागहरइत्युक्तम् ॥ १४१ ॥

( ३ ) **कुल्लूकः** । पुत्रारिक्थहराः पितुरेवेति द्वादशपुत्राणामेव ऋक्थहरत्वंवक्ष्यति दशापरे तु क्रमशइति औरसक्षे-

त्रजाभावे दत्तस्य पितूरिक्थहरत्वंप्राप्तमेव अतः सत्यप्यौरसपुत्रे दत्तकस्य सर्वगुणोपपन्नस्य पितृरिक्थभागप्राप्त्यर्थमिदंवचनं। यस्यदत्तकः पुत्रोऽध्ययनादिसर्वगुणोपपन्नोभवति सोऽन्यगोत्रादागतोपि सत्यप्यौरसे पितृरिक्थभागंगृह्णीयात् अत्रैकैवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरित्यौरसस्य सर्वोत्कर्षाभिधानात्तेन नास्य समभागित्वं किन्तु क्षेत्रजोक्तषष्ठभागित्वमेवास्य न्याय्यम्। गोविन्दराजस्त्वौरसक्षेत्रजाभावे सर्वगुणोपपन्नस्यैव दत्तकस्य पितृरिक्थभागित्वार्थमिदंवचनमित्यवोचत्तन्न। कृत्रिमादीनांनिर्गुणानांपितृरिक्थभागित्वं दत्तकस्य तु तत्पूर्वपठितस्यापि सर्वगुणोपपन्नस्यैवेत्यन्याय्यत्वात्॥ १४१ ॥

( ४ ) **राघवानन्दः**। पुत्रारिक्थहराःपितुरितिद्वादशसुतानां वक्ष्यमाणानामेव रिक्थहरत्वमनुवदन्दत्रिमस्य तदाह उपपन्नइति। अप्यन्यगोत्रतइत्यत्रापिशब्दात्स्वगोत्रतश्च। गुणैः विद्याविनयपितृश्रद्धादिपुत्रगुणैः। वक्ष्यमाणोदत्रिमश्चौरसक्षेत्रजाभावे रिक्थं संहरेत॥ १४१ ॥

( ५ ) **नन्दनः**। अथ दत्तपुत्रस्य दायमाह उपपन्नइति ॥ १४१ ॥

( ६ ) **रामचन्द्रः**। उपपन्नइति श्लोकद्वयस्यतात्पर्यम्। यस्मैदत्तोयेनदत्तस्तयोरपि गोत्ररिक्थे हरेत्पुत्रोऽन्यगोत्रजोपि जनयितुः गोत्ररिक्थानपहारित्वे अन्यगोत्ररिक्थानुगःपिण्डोजनयितुर्ददतः स्वधा व्यपैति उभयपितुःश्राद्धं दूरीकरोति। उभावेकस्मिन्पित्रभेदइति साङ्ख्यायनसूत्रेण प्रतिग्रहीतृजनयित्रोःपिण्डयोर्विधानात् ततश्चोभयोर्गोत्ररिक्थहरणपूर्वकंपिण्डद्वयंदेयमित्यर्थः ॥ १४१ ॥ १४२ ॥

**गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः क्वचित्॥ गोत्ररिक्थानुगः पिण्डोव्यपैति ददतः स्वधा ॥ १४२॥**

( १ ) **मेधातिथिः**। इतश्च भागहरत्वंदत्रिमस्य नूक्तं यतोजनयितुः सकाशाद्गोत्रंधनंच नहरति वंशादपेतत्वात् गोत्ररिक्थग्रहणाभावेच पिण्डमपि जनयित्रे नददाति गोत्ररिक्थानुगाहि पिण्डोगोत्ररिक्थे ऽनुगच्छति यदीये गोत्ररिक्थे गृह्येते तस्मै पिण्डोदकदानादौर्ध्वदेहिकंक्रियते व्यपैतितस्मान्निवर्तते स्वधाकारसाधनंपिण्डश्राद्धादिलक्ष्यते तद्ददतेयोन्यस्मिन्स्वपुत्रंददाति तस्मान्निवर्तते न तस्य कर्तव्यमित्यर्थः। एषएवन्यायः कृत्रिमादीनांसहोढापविद्धद्व्यामुष्यायणानामुभयोपकारकत्वं अन्येतु न हरेन्नहरयेदित्यन्तर्भावितण्यर्थव्याचक्षतेतेनो भयस्यापि द्व्यामुष्यायणवदुपकर्तव्यमित्याहुः। उत्तरस्तूपकारोपक्रमः तमेवंगमयन्ति यदि गोत्ररिक्थे न हरेत्पुत्रस्तदातु व्याख्येयं नचैतदुक्तंनह्यर्थान्तरभावे प्रमाणंवक्तव्यम्॥ ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः**। अत्र दत्रिमस्य बीजिधनसंबन्धोन कथंचिदित्याह गोत्रेति। अतएव नासौ द्व्यामुष्यायणः प्रतिग्रहीतृगोत्रत्वात्। किंतुदेवरजपुत्रिकासुताविव द्विपितृकत्वात्। गोत्ररिक्थानुगोगोत्रैकत्वे रिक्थहरणेच पिण्डदानमित्यर्थः। पुत्रं ददतस्तेन पुत्रेणकार्या स्वधा श्राद्धमपैति ॥ १४२ ॥

( ३ ) **कुल्लूकः**। गोत्रधने जनकसंबन्धिनी दत्तकोन कदाचित्प्राप्नुयात् पिण्डश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव सपिण्डोदीयते तस्मात्पुत्रंददतोजनकस्य स्वधापिण्डश्राद्धादि तत्पुत्रकर्तृकंनिवर्तते ॥ १४२ ॥

( ४ ) **राघवानन्दः**। दत्रिमः किं जनयितुर्गोत्रधनपिण्डसंबन्धी नवेति संशयेसत्याह गोत्रेति। गोत्ररिक्थे वसुनि रिक्थमृक्थधनंवस्वित्यमरः। ते न प्राप्नोत्यतस्तद्दत्तपिण्डोपि पितरं न गच्छति। तत्रहेतुः गोत्ररिक्थानुगःपिण्डोगोत्ररिक्थनिमित्तः। ददतोजनयितुः स्वधाऽवैति। स्वधेत्युपलक्षणं त्रिष्वप्यनधिकारीति भावः॥ औरसक्षेत्रजाभावे दशपुत्राः प्रकीर्तिताइत्युक्तेस्तयोरभावे दत्रिमोधनभागिति गोविन्दः। तयोःसत्वेऽपि धनभाग्दत्रिमः। अन्यथा उपपन्नइत्यादिव्यर्थं विशेषणम्। अतआह मेधातिथिरिदंतु वचनं सत्यौरसे प्राप्त्यर्थमन्यथा न किंचिदनेन क्रियतइति ॥ १४२ ॥

( ५ ) **नन्दनः** । दत्रिमोजनयितुरिति दत्रिमोजनयितुर्गोत्ररिक्थे न भजेन्न स्वीकुर्यात् किन्तु स्वयं यस्मै दत्तस्तस्य गोत्ररिक्थे हरेत् अत्र हेतुरपरार्द्धेनोच्यते गोत्ररिक्थेऽनुगच्छतीनि । गोत्ररिक्थानुगः सगोत्ररिक्थहारी च पिण्डदोनान्य इत्यर्थः अतो ददतो जनयितुः स्वधापिण्डप्रदानादिकं व्यपैति ॥ १४२ ॥

**अनियुक्तासुतश्चैव पुत्रिण्यामश्च देवरात् ॥ उभौ तौ नार्हतोभागंजारजातककामजौ ॥ १४३ ॥**

( १ ) **मेधातिथिः** । अपुत्रे भर्तरि मृते पुत्रोत्पादने स्त्रियागुरुनियोगोपेक्षितव्यइत्युक्तंतस्यैवायमनुवादः । यागुरुभिरनियुक्ता पुत्रार्थिनी पुत्रमुत्पादयेत् क्षत्रंकिलाहंभर्तुः क्षेत्रजश्च पुत्रस्तदर्थहरइत्यनया भ्रान्त्या सतस्यांसमुत्पन्नोनरिक्थहरः । यद्यपि क्षेत्रजादिविशिष्टेन विधिनोत्पन्नस्य शास्त्रे क्षेत्रजव्यपदेशात् नैवचास्य क्षेत्रजस्य रिक्थहरत्वमत्रवार्यते पिण्डदानंतु ननिषिध्यते । यद्यपि पतितोत्पन्नोभवति । नारदस्तु विशेषंस्मरति ॥ जातायेत्वनियुक्तायामेकेन बहुभिस्तथा। अरिक्थभाजस्ते सर्वे बीजिनामेवतेसुताः ॥ दद्युस्तेबीजिनेपिण्डंमाताचेच्छुल्कतोहृता । अशुल्कोपनतायांतुपिण्डदावोढुरेवनइति ॥ सुतवचनात्कृत्रिमादिवदुत्पत्तिविध्यभावात्पुत्रमध्येचापरिगणितत्वात् त्रैवर्णिकानांच बीजजाः प्रजीवनमात्रभागान रिक्थहराः यतोऽविशेषेण सर्वपुत्राणांभर्तरिमेतेस्मर्यते ऊर्ध्वमपि पितुःपुत्रोपकर्तव्यशिष्टस्यधनस्य विभाज्यत्वाल्लभेरन्नेव प्रजीवनं एवमेवौरसादिपुत्रस्य सपिण्डबीजकाः प्रजीवनमात्रभागाःकर्तव्याः । रिक्थहरत्वंतु नास्ति परिगणितपुत्रविशेषोद्देशेनाश्रवणात् उक्तंचैतत् उक्तानांयद्येकरिक्थिनौस्यातामिति । अत्रानेन चतुर्दशेनानियुक्तासूतादथइतरत्रानंशत्वाद्बीजिनोरिक्थंलभेरन्निति रिक्थंप्रजीवनपर्याप्तमेतद्विज्ञेयं उक्तत्वादस्याभागार्थएव दासीव भण्यते या सप्तैतादासयोनयइति निरूपिता यासांप्रयोगार्थमवगन्तव्यं क्रियते तस्यांजातोनदासः सुतव्यपदेशाभावः शूद्रस्यापि तज्जाब्राह्मणादिवत्प्रजीवनभाजः । अन्यस्त्वाह नियतकर्मकराअपि दासाभवन्ति यथास्नापकः प्रसाधकः पाचकः पावकइति एवंकामतोप्यवरुद्धाभक्ताच्छादनेन पोष्यमाणादास्येभवन्ति । एवंपुत्रिण्याविद्यमाने पुत्र आप्तोदेवरान्नियुक्तयापि कथंपुनः पुत्रवत्याभियोगः देवरएव कामार्थनियुक्तः पुत्रोत्पादनव्यपदेशेनेत्यभिप्रायः जारजातकत्वमुभयोः कामजत्वन्तु पुत्रवत्यां जातस्य आद्यार्थायांपुत्रार्थेव प्रवृत्तिर्न कामतोयेन ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः** । नियोगापदोमिलितस्य देवरजस्य पुत्रत्वे निमित्तमाह अनियुक्तेति । असत्यपिपुत्रेनियोगादेवगुर्वादीनांप्रवर्तितव्यम् । एवं नियोगे सत्यपि स्वभर्तृजे सुतेऽसत्येव सैवचापदित्युच्यते । जारजातजकामजौ इत्युभयत्र । कामजः काममात्रोत्पादितः ॥ १४३ ॥

( ३ ) **कुल्लूकः** । योगुर्वादिनियोगंविना जातोयश्च सपुत्रायानियोगेनापि देवरादेः कामादुत्पादितस्तावुभौ क्रमेण जारोत्पन्नकामाभिलाषजौ धनभागंनार्हतः ॥ १४३ ॥

( ४ ) **राघवानन्दः** । निषेधप्रसंगेनान्यावपि भागित्वेन निषेधति अनियुक्तेति । अनियुक्ता अपुत्रा सती नियुक्तावांपुत्रवती । तत्र हेतुः जारेति । जारादुपपतेर्जातंजन्म यस्य सजारजातकः । कामाज्जातः कामजः पुत्रवत्यामातुःकामाज्जातः ॥ १४३ ॥

( ५ ) **नन्दनः** । अथ क्षेत्रजानपि कांश्चिद्दायानर्हान् श्लोकत्रयेणाह अनियुक्तासुतइति । गुरुभिरनियुक्तायां देवराज्जातः सुतः नियुक्तया तु पुत्रिण्या देवरादामश्च यथा संख्यं जारजातकामजातौ भागन्नार्हतः ॥ १४३ ॥

**नियुक्तायामपि पुमान्नार्याञ्जातोऽविधानतः ॥ नैवार्हः पैतृकंरिक्थंपतितोत्पादितोहि सः ॥१४४॥**

( १ ) **मेधातिथिः** । अविधानतः शुक्लवस्त्रादिनियमत्यागोविधानाभावः सनार्हति रिक्थंनासौक्षेत्रजइत्यर्थः नियम-

त्यागेन देवरभ्रातृजाययोः पुत्रोत्पादने प्रवर्तमानयोर्युक्तंपतितत्वं शास्त्रेण नियमितयोर्गमनानुज्ञानात् ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः** । एवं घृताभ्यङ्गादिनियमंविना पैतृकंक्षेत्रिणोबीजिनोवा धनम् ॥ १४४ ॥

( ३ ) **कुल्लूकः** । नियुक्तायामपि स्त्रियांघृताभ्यक्तत्वादिनियोगेतिकर्तव्यतांविना पुत्रोजातः सक्षेत्रिकस्य पितुर्द्धनंलब्धुंनार्हति यस्मादसौ पतितेनोत्पादितोनियुक्तौ यौ विधिंहित्वेत्यनेन पतितस्योक्तत्वात् ॥ १४४ ॥

( ४ ) **राघवानन्दः** । घृताभ्यक्तेतिकर्तव्यताशून्येन विनियुक्तोत्पन्नोपि रिक्थानर्हइत्याह नियुक्तायामपीति । नार्यां स्त्रियाम । अविधानतइतिच्छेदः । पतितोत्पादितः विध्यतिक्रमेण पतितेन देवरेणोत्पन्नः ॥ १४४ ॥

( ५ ) **नन्दनः** । अविधानतः घृताभ्यक्तत्वादिविधिराहित्येन ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । पैतृकं क्षेत्रिकपितृसंबन्धि । सः नार्यां विधानतः घृताभ्यक्तजातः ॥ १४४ ॥

## हरेत्तत्र नियुक्तायाञ्जातः पुत्रोयथौरसः ॥ क्षेत्रिकस्य तु तद्वीजंधर्मतः प्रसवश्च सः ॥ १४५ ॥

( १ ) **मेधातिथिः** । यथौरसइत्येतदत्र विधीयते ज्येष्ठांशप्राप्त्यर्थमन्यदा नोच्यते अनेन विधानेन ज्येष्ठांशउद्धारक्षेत्रजस्य प्राप्यते ज्येष्ठभार्याजातस्यातश्च यत्पुत्रसमांशभाक्कमुपसर्जनंप्रधानस्येत्यनेनतस्यायमपवादः । उभयस्य च प्रामाण्यात् विकल्पितस्य च गुणापेक्षया व्यवस्थानेह्यन्यदस्य श्लोकस्य प्रयोजनमस्ति । प्रागुक्तत्वात् सर्वस्य क्षेत्रिकस्य क्षेत्रस्वामिनस्तद्वीजंतत्कार्यकरत्वात् प्रशंसयैवमुच्यते । अतएवाह धर्मतः धर्मेण शास्त्रीयया व्यवस्थया तत्र प्रमाणान्तरंदृश्येत रूपेण प्रसवः अपत्यार्थवादःश्लोकः ॥ १४५ ॥

( २ ) **सर्वज्ञनारायणः** । यदातु यथोक्तविधिना जनितः क्षेत्रजस्तदाह । हरेद्धनम् । यथौरसइति समभागसिद्ध्यर्थम् । तच्च क्षेत्रिकस्यैव यतोभ्रातृबीजमपि तस्यैव तद्बीजं विनियोगादतएव तस्यैव प्रसवोपीत्यर्थः ॥ १४५ ॥

( ३ ) **कुल्लूकः** । तत्र नियुक्तायां योजातः क्षेत्रजः पुत्रऔरसइव धनंहरेत् यस्मात्तत्स्य कारणभूतंबीजंतत्क्षेत्रस्वामिनएव तत्कार्यकरणत्वात् । अपत्यमपि च धर्मतस्तदीयंतद्यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदीत्यनेन क्षेत्रजस्य पितामहधने पितृव्येन सह समभागस्य प्रोक्तत्वात् गुणवतः क्षेत्रजस्यौरसवत्त्वोद्धारभागप्राप्त्यर्थमिदमौरसतुल्यत्वाभिधानम् ॥ १४५ ॥

( ४ ) **राघवानन्दः** । विधितः क्षेत्रजस्य धनहारित्वं सदृष्टान्तमाह हरेदिति । धर्मतोन्यायतः भूम्यादौ तथा निर्णीतत्वात् । क्षेत्रिकस्य तद्बीजं क्षेत्रान्तर्गतत्वात् । अतःप्रसवः पुत्रश्च ॥ १४५ ॥

( ६ ) **रामचन्द्रः** । नियुक्तायांविधिपूर्वकमुत्पन्नः ॥ १४५ ॥

## धनंयोबिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च ॥ सोऽपत्यंभ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥ १४६ ॥

( १ ) **मेधातिथिः** । विभक्तधनस्य भ्रातुरभावे विधिरयमुच्यते पूर्वस्तु सहवसतएतावान्पूर्वोत्तरयोर्विध्योर्विशेषः सोपत्यंभ्रातुरुत्पाद्य नियोगधर्मेणेति व्याख्येयं न दद्यात्तस्यैवनपुनस्तदीयायै च मात्रे अनेनैवच्च दर्शन स्त्रियोभरणार्हा नतुपतिधनैश्वर्यइति अन्यथैववक्ष्यमाणत्वात्तस्यवचनंदद्यादिति ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । बिभृयात् रक्षेत् । उत्पाद्योक्तविधिनादद्यात्तस्यैव नतु स्वयमप्यंशहरः ॥ १४६ ॥

( ३ ) **कुल्लूकः** । योमृतस्य भ्रातुः स्थावरजङ्गमंधनंपत्न्यारक्षणाक्षमया समर्पितंरक्षेत्तांच पुष्णीयात् सनियोगधर्मेण तस्यामुत्पादितस्य भ्रातुरपत्यस्य दद्यात् । एतच्च धनंयोबिभृयाद्भ्रातुरित्यभिधानाद्विभक्तभ्रातृविषयं यवीयाञ्ज्येष्ठभार्यायामिति समभागाभिधानात् ॥ १४६ ॥

( ४ ) **राघवानन्दः** । अपत्यार्थे विनियुक्तविधवापत्यस्य धनहारित्वमाह धनमिति । चेति धनापेक्षया समुच्चये ।

तद्धनं विभक्तभ्रातुर्धनम् । अपत्याभावे तु साभर्तव्या न तु धनभाक् । ऋक्थंहरेतेत्यत्र श्लोके सह वसतोभ्रातुर्धनमौरसव त्क्षेत्रजोपि प्राप्नुयादितिभावः ॥ १४६ ॥

( ५ ) **नन्दनः** । तद्धनं तस्य मृतस्य भ्रातुर्धनम् ॥ १४६ ॥

( ६ ) **रामचन्द्रः** । यःमृतस्य भ्रातुःस्त्रियंधनंविभृयात् सः भ्रातुःक्षेत्रे अपत्यमुत्पाद्य तस्यैव । पुत्रस्य तद्धनं भ्रातृसंबन्धि धनंदद्यात् ॥ १४६ ॥

**या नियुक्तान्यतः पुत्रंदेवराद्वाप्यवाप्नुयात् ॥ तंकामजमरिक्थीयंवृथोत्पन्नंप्रचक्षते ॥ १४७ ॥**

( १ ) **मेधातिथिः** । अनियुक्तेन च प्रश्लेषोद्रष्टव्यः । पूर्वोक्तेन च विरोधे यतस्तथासत्यनर्थकइतिचेदुक्तः पौनरुक्त्यपरिहारस्तत्र तु पूर्वानुमतमिच्छन्ति ततश्चेयंव्याख्या नियुक्तायामपि जातः पैतृकंरिक्थंनार्हति जारजमिति । यत्तु उत्तरउच्यते यद्यपि नियोगात्प्रवर्तते न कामात्तथापि तत्र कामोवश्यभाव्युच्यते तंकामजमिति मिथ्योत्पन्नं यदर्थमुत्पादितस्तत्कार्यानर्हत्वादेवमुच्यते । एवंच पूर्वोक्तस्य भागार्हत्वस्य प्रतिषेधोयमतश्च विकल्पितं पाठे पुनःपाठान्न संगच्छेततरामित्युपाध्यायः ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः** । या अनियुक्तेति विभाव्यभावोपलक्षणम् । यथान्यतोजातोजारजस्तथा देवरादपि जातइति विशेषाभिधानार्थं पुनर्वचनम् । तेन देवरजन्यत्वमात्रेण विशेषोन शङ्कनीयइतितात्पर्यम् । मिथ्योत्पन्नं व्यर्थंजातं धर्मानधिकारिणमित्यर्थः ॥ १४७ ॥

( ३ ) **कुल्लूकः** । या स्त्री गुर्वादिभिरनुज्ञाता देवराद्वाऽन्यतोवा सपिंडात्पुत्रमुत्पादयेत्सयदि कामजोभवति तदा तमरिक्थभाजंमन्वादयोवदन्ति । अकामजएवरिक्थभागी । सच व्याहृतोनारदेन ॥ मुखान्मुखंपरिहरन्गात्रैर्गात्राण्यसंस्पृशन् । कुले तदवशेषे च संतानार्थंन कामतइति ॥ १४७ ॥

( ४ ) **राघवानन्दः** । अनियुक्तासुतइत्यस्योक्तदोषोयं येति । अनियुक्तेतिछेदः । अरिक्थीयं रिक्थिसंबन्धिभिन्नम् । अकामजस्तु नारदवचनात् ज्ञेयः । तथाहि ॥ मुखान्मुखं परिहरन्गात्रैर्गात्राण्यसंस्पृशन् । कुले तदवशेषे च संतानार्थं न कामतइति ॥ तल्लक्षणानाक्रान्तः कामजइतिध्येयम् ॥ १४७ ॥

( ५ ) **नन्दनः** । गुरुर्भिनियुक्ता देवरादन्यतोऽदेवराद्वा हरेत् तन्त्विति तन्त्वरिक्थं नियुक्तायां देवरे सपिण्डे वा ॥ १४७ ॥

( ६ ) **रामचन्द्रः** । याअनियुक्ताअरिक्थीयमभागार्हउत्पन्नंवृथा जातम् ॥ १४७ ॥

**एतद्विधानंविज्ञेयंविभागस्यैकयोनिषु ॥ बह्वीषु चैकजातानांनानास्त्रीषु निबोधत ॥ १४८ ॥**

( १ ) **मेधातिथिः** । एकयोनिषु एकजातीयजानांसर्वहरत्वमेव नानास्त्रीषु नानाजातीयास्विदानींव्याचक्षते । बह्वीष्वित्यनुवादः । अन्ये तु विवक्षितंमन्यन्तेऽनेन नानाजातीयायां जातानांसर्वहरत्वमेव ॥ १४८ ॥

( २ ) **सर्वज्ञनारायणः** । एकयोनिषु सर्ववर्णस्त्रीमात्रजनितेषु । एकजातानां एकेनजनितानां नानास्त्रीषु भर्तृभिन्नवर्णस्त्रीषु जातानाम् । बह्वीष्वित्युपलक्षणम् द्वयोरपि यथा ब्राह्मणस्य ब्राह्मणीक्षत्रिययोः पुत्रेष्विति ॥ १४८ ॥

( ३ ) **कुल्लूकः** । समानजातीयासु भार्यास्वेकेन भर्त्रा जातानामेषविभागविधिर्बोद्धव्यः इदानींनानाजातीयासु स्त्रीषु बह्वीषूत्पन्नानांपुत्राणांविभागंशृणुत ॥ १४८ ॥

( ४ ) **राघवानन्दः** । एकजातीयस्त्रीजातानां विभागमुपसंहरन्विजातीयस्त्रीजातानां विभागं प्रतिजानीते एतदिति । एकयोनिषु समानजातीयासु । एकजातानामेकपितृकाणाम् । नानास्त्रीषु विजातीयास्वित्यनुषज्यते* ॥ १४८ ॥

( ५ ) **नन्दनः** । एकयोनिष्वेकवर्णेषु एकजातानामेकेन पित्रा जातानां नानास्त्रीषु नानावर्णस्त्रीषु ॥ १४८ ॥

( ६ ) **रामचन्द्रः** । एकयोनिषु सवर्णासु । बह्वीषु भिन्नवर्णासु एकजातानां एकेन जातानाम् ॥ १४८ ॥

**ब्राह्मणस्यानुपूर्व्येण चतस्रस्तुयदि स्त्रियः ॥ तासांपुत्रेषु जातेषु विभागेऽयंविधिस्मृतः ॥ १४९ ॥**

( १ ) **मेधातिथिः** । अनुपूर्वग्रहणंतृतीये दर्शितस्य क्रमस्यानुवादः अयमपि वक्ष्यमाणसंक्षेपप्रतिज्ञानार्थः ॥ १४९ ॥

( २ ) **सर्वज्ञनारायणः** । आनुपूर्व्येण वर्णक्रमेण ॥ १४९ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य यदि क्रमेण ब्राह्मण्याद्याश्चतस्रोभार्याभवेयुस्तदा तासांपुत्रेषूत्पन्नेष्वयंवक्ष्यमाणोविभागविधिर्मन्वादिभिरुक्तः ॥ १४९ ॥

( ४ ) **राघवानन्दः** । तत्रादौ ब्राह्मणविषयकमाह ब्राह्मणस्येति । शूद्रायामननुमतिं सूचयति यदीति । विभागे कर्तव्ये अयंवक्ष्यमाणः ॥ १४९ ॥

( ५ ) **नन्दनः** । अयं वक्ष्यमाणः ॥ १४९ ॥

**कीनाशोगोवृषोयानमलङ्कारश्च वेश्म च ॥ विप्रस्यौद्धारिकंदेयमेकांशश्च प्रधानतः ॥ १५० ॥**

( १ ) **मेधातिथिः** । एकस्यां तु विजातीयायां कदर्येऽपिप्रयुज्यते । तस्येहासंभवादग्रहणं तथाच मंत्रः इन्द्रआसीत्सुरपतिः कीनाशाआसन्मरुतः यथासुतंकीनाशाअभियंतुवाहैरिति । यानंगन्त्र्यादिः । अलङ्कारः पितृधृताङ्गुलीयकादिः । वेश्म प्रधानं एकांशश्च यावन्तोऽशास्तत्एकः प्रधानभूतस्तस्य दातव्यः । एतन्मध्यकादुद्धृत्य ज्येष्ठस्य शिष्टंवक्ष्यमाणकल्पनया विभ जनीयम् ॥ १५० ॥

( २ ) **सर्वज्ञनारायणः** । कीनाशः कर्षकः । गोवृषोगोषु रेतःसेकयोग्यउक्तः । यानमेकं किंचिद्रथादि । अलंकारः पितुस्तस्यैव । वेश्मच । विप्रस्य विप्रपुत्रस्य । औद्धारिकमुद्धारः । तथा एकांशोयावानस्य विभज्यभागस्य त्र्यंशइत्यादिना वक्ष्यमाणस्य तृतीयांशस्तावानेकउद्धारभागः । प्रधानतोमुख्यधनादुत्कृष्टादित्यर्थः ॥ १५० ॥

( ३ ) **कुल्लूकः** । कीनाशः कर्षकोगवांसक्तोवृषोयानमश्वाद्यलङ्काराङ्गुलीयकादिवेश्मगृहंच प्रधानंयावन्तश्चांशास्तेष्वेकः प्रधानभूतोंशइत्येतत् ब्राह्मणीपुत्रस्योद्धारार्थंदेयमवशिष्टंवक्ष्यमाणरीत्या विभजनीयम् ॥ १५० ॥

( ४ ) **राघवानन्दः** । तत्रादौ सर्वद्रव्येभ्यः श्रेष्ठएकोंशोब्राह्मण्यपत्याय देयइत्याह कीनाशइति । कीनाशः हालिकः । गोवृषः गोषु सेक्ता उक्षेति यावत् । यानमश्वादि । वेश्म प्रधानम् प्रधानतस्तस्यैव सर्वधर्मेषु प्राधान्यात् । औद्धारिकमुद्धारेण जयति । संभवद्विषयम् ॥ १५० ॥

( ५ ) **नन्दनः** । कीनाशः कर्षकः एकांशश्च प्रधानद्रव्याणां संख्यासमं विभज्य तेष्वेकांशश्च विभज्य विप्रस्यौद्धारिकंदेयम् ॥ १५० ॥

( ६ ) **रामचन्द्रः** । कीनाशः कर्षकः । गोवृषः गवांसेक्ता । अलंकारः पितुः । औद्धारिकः उद्धारः । विप्रस्य विप्रासुतस्यसर्वद्रव्यादुद्धृत्यैकांशःप्रधानतोदेयः ॥ १५० ॥

---

* स्वित्यनुषज्यते = स्वप्येकजातानामित्यनुषज्यते ( राघ० २ )

त्र्यंशंदायाद्धरेद्विप्रोद्वावंशौ क्षत्रियासुतः ॥ वैश्याजः सार्धमेवांशमंशंशूद्रासुतोहरेत् ॥ १५१ ॥

( १ ) **मेधातिथिः** । सत्यप्येकत्वश्रवणाद्द्विबहुष्वपि समांशेष्वेवैव कल्पना दर्शिता विषमसंख्येष्वकल्पना ॥१५१॥

( २ ) **सर्वज्ञनारायणः** । इतरत्सर्वं सार्धसप्तभागान्कृत्वाऽनया व्यवस्थया विभज्यमित्यर्थः । अध्यर्धमेकमर्धाधिकम् । एतच्च यद्येकैकएव ब्राह्मण्यादिषु पुत्रस्तदा ॥ १५१ ॥

( ३ ) **कुल्लूकः** । त्रीनंशान्ब्राह्मणोधनाद्गृह्णीयात् द्वौ क्षत्रियापुत्रः सार्धंवैश्यापुत्रः अंशंशूद्रासुतः । एवंच यत्र ब्राह्मणीक्षत्रियापुत्रौ द्वावेव विद्येते तत्र पञ्चधाकृते धने त्रयोभागाब्राह्मणस्य द्वौक्षत्रियापुत्रस्य अनयैव दिशा ब्राह्मणीवैश्यापुत्रादौ द्विबहु पुत्रादौ च कल्पना कार्या ॥ १५१ ॥

( ४ ) **राघवानन्दः** । तदनन्तरं सर्वद्रव्यं विभजनीयमित्यत्र प्रकारमाह त्र्यंशमिति । दायाद्विभजनीयद्रव्यात् । अध्यर्धं अर्धाधिकमंशम् ॥ १५१ ॥

( ५ ) **नन्दनः** । एवमुद्धारे च दत्ते परिशिष्टस्य विभागमाह त्र्यंशंदायाद्धरेदिति ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । विप्रः विप्रासुतः ॥ १५१ ॥

सर्वंवा रिक्थजातंतद्दशधा परिकल्प्य च ॥ धर्म्यंविभागंकुर्वीत विधिनाऽनेन धर्मवित् ॥ १५२ ॥

( १ ) **मेधातिथिः** । ऋक्थजातंधनरूपं धर्मप्रवचनाद्धर्म्यंपूर्वोक्तेनानुमन्यते वक्ष्यमाणप्रतिज्ञाश्लोकात् ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः** । यदातु सर्वासामनेके सुतास्तदाह सर्ववेति । अत्रपक्षे नोद्धारः । एतच्च समानेकपुत्रतायाम् ॥ १५२ ॥

( ३ ) **कुल्लूकः** । यद्वा सर्वरिक्थप्रकारमनुद्धृतोद्धारंदशधा कृत्वा विभागधर्मज्ञोधर्मादनपेतंविभागमनेन वक्ष्यमाणविधिना कुर्वीत ॥ १५२ ॥

( ४ ) **राघवानन्दः** । तत्रैव विकल्पमाह सर्वंचेतिद्वाभ्याम् । धर्म्यं । धर्मादनपेतम् ॥ १५२ ॥

( ५ ) **नन्दनः** । पक्षान्तरमाह सर्वंवा रिक्थजातमिति । अनेन वक्ष्यमाणेन धर्मविदितिविशेषणेनास्य पक्षस्य मुख्यता सूचिता ॥ २५२ ॥

( ६ ) **रामचन्द्रः** । अनेनविधिना वक्ष्यमाणलक्षणेन ॥ १५२ ॥

चतुरोंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ॥ वैश्यापुत्रोहरेत् द्व्यंशमंशंशूद्रासुतोहरेत् ॥ १५३ ॥

( १ ) **मेधातिथिः**। इह विशेषेणापि क्षत्रियादिपुत्राणांभागश्रवणे स्मृत्यन्तरे विशिष्टायागमायाष्टमोभागविशेषः श्रूयते॥ न प्रतिग्रहभूर्देयाक्षत्रियासुतायवै । यद्यप्येषांपितादद्यान्मृतेविप्रासुतोहरेदिति ॥ प्रतिग्रहोपात्ताप्रतिग्रहभूः क्रयाद्युपात्तायाननिषेधस्तथान्यत्रपठ्यते ॥ शूद्रायांतु द्विजाज्जातोन भूमेर्भागमर्हतीति ॥ भूमिमात्रस्य शूद्रापुत्रे निषेधः । एतच्च यत्रान्यद्धनमस्ति तद्विषयंद्रष्टव्यं । अन्यथा दशमांशवचनमुपतिष्ठेत धनान्तराभावे च जीविकैव नस्यात् । अहन्तु ब्रुवे भागदानंतु निषिध्यते प्रजीवनार्थत्वंचोपकल्पनमनिवारितमेव । कोविशेष इतिचेत्द्भागपक्षे सर्वेण सर्वस्वरिक्थोत्पत्तौ दानविक्रयादिष्वपि युज्यते । इतरत्रतूपजीवनंतदुत्पन्नस्य व्रीह्योदनंच प्रजीवनं ब्राह्मणीपुत्रादेव शूद्रोलभ्यते । किंभूमिभागकल्पनया तथाचोक्तं लभतेतद्वृत्तिमूलंमतेवासिविधिनेति सत्यंपितृधननिमित्तंतु तस्य प्रजीवनंकल्पयितव्यं । भागकाले च यदिनकल्पेत तदा द्विजातयोभ्रात

रः कदाचिदसद्वृत्तयोनिमित्तान्तरतोवादानविक्रयादिनाऽपहरेयुः उच्छिद्येत। तदास्य जीवनंविकल्पिते तु तदीयामनुज्ञामन्तरेण लभतेऽन्यत्रनियुक्तम् ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः**। चतसृणां विषमानेकपुत्रत्वे विप्रापुत्रलभ्यभागात्पादहीनः प्रत्येकः क्षत्रियासुतानामेवं वैश्यासुतानामर्धं शूद्रासुतानांपादइति यथाविधि भागः पतति तथा विभजनीयमित्यर्थाल्लभ्यते। यदातु ब्राह्मणीक्षत्रिययोरेवापत्यानि तदा सप्तांशतां कृत्वा चतुरोंशानित्यादि । यदातु ब्रह्मविजातीयभार्यात्रयपुत्रास्तदा नवांशान्कल्पयित्वा। एवं ब्राह्मणीवैश्याशूद्रापुत्रेषु सत्सु सप्तांशान्। विप्राशूद्रापुत्रेषु सत्सु पञ्चेत्याद्यूह्यम्। एवं क्षत्रियस्य क्षत्रविट्शूद्रजातिभार्यात्रयपुत्रेषु सत्सु त्रयोद्वावेकांशइति षडंशाइत्यादिव्यवस्थोहनीया ॥ १५३ ॥

( ३ ) **कुल्लूकः**। चतुरोभागान्ब्राह्मणोगृह्णीयात् त्रीन्क्षत्रियापुत्रोद्वौवैश्यापुत्रः एकंशूद्राजः। अत्रापि ब्राह्मणीक्षत्रियापुत्रसद्भावे सप्तधाधने कृते चत्वारोभागाब्राह्मणस्य त्रयः क्षत्रियापुत्रस्य एवंब्राह्मणीवैश्यापुत्रादौ द्विबहुपुत्रेषु च कल्पना कार्या ॥ १५३ ॥

( ४ ) **राघवानन्दः**। विधिमेवाह चतुरइति। एवं चतुर्णां विभागे जाते तत्र यस्य सजातीया बहवोद्वित्रावा भ्रातरः सतेभ्यः समतया विभजेदितिभावः [ विकल्पस्याष्टदोषत्वाद्गुणवद्ब्राह्मणीपुत्रभेदेनैववा व्यवस्थेति ][1] ॥ १५३ ॥

**यद्यपि स्यात्तुसत्पुत्रो दसत्पुत्रोपि वा भवेत्॥ नाधिकंदशमाद्दद्याच्छूद्रापुत्राय धर्मतः॥१५४॥**

( १ ) **मेधातिथिः**। सपुत्रोविद्यमानपुत्रः ब्राह्मणीपुत्रएव वा विद्यमानोविवक्षितोनद्विजातिपुत्रमात्रमतश्चासति ब्राह्मणपुत्रे क्षत्रियवैश्ययोः सतोरप्यष्टमांशंलभते केवलेच वैश्यपुत्रे तृतीयं अन्येत्वविशेषेण द्विजातिपुत्राभावे पुत्रपदेनोक्तइत्याहुः अस्मिन्पक्षे सपिण्डगामिदशमांशशेषधनं इयन्तुदृष्टव्यवस्था बहुवचनंयोगक्षेमे तदा दशमांशंहरेच्छौद्रः। अथकतिपयजनजीवनपर्याप्तंतदा शूद्रपुत्रस्यैव क्षत्रियादीनांसमानभावजातीयास्त्रीजातानांस्मृत्यन्तरैविधिर्दर्शितः॥ क्षत्रजास्त्रिद्वेकभागा विड्जाःस्युर्द्व्येकभागिनः ॥ क्षत्रियाजातास्वजातीयविजातीयासु शूद्रपर्यन्तासु वर्णक्रमेण त्र्यादिभागहराः तदा तेन स्वधनंक्षत्रियस्य शूद्राः षष्ठमंशंलभन्ते विशश्च तृतीयम्। अन्येत्वस्य श्लोकस्य सामर्थ्यमाहुः। शूद्रपुत्राय यदा ददाति तदानेन धनंसङ्कलय्यदशोंशोदातव्योनतदधिकःसत्यपि स्वातन्त्र्ये। यथावक्ष्यति यदेवास्य पितादद्यादिति अस्मिन्पक्षे सपुत्रोदद्यादिति समानाधिकरणे पदे उपपन्नतरे इतरथायस्य सदसत्पुत्रः। पिता सदद्यादिति संबन्धोदुश्लिष्टः स्यात्। सपुत्रपदेनास्य पुत्रादेरभिधानं दद्यादिति जीवतः पुत्रसपिण्डादेः। ततश्च यदि क्षत्रियवैश्यापुत्रौ नस्तः केवलौ ब्राह्मणशूद्रौतदा न शूद्रस्य दशमएवांशः किंतर्ह्यत्यल्पंनाधिकतरंधनंलभते यत्र दशगावःसन्ति तत्र चतस्रोब्राह्मणस्यैकाशूद्रस्य पञ्चक्षत्रियवैश्ययोः। यदातौ नस्तः तदा पञ्चगावस्तथैवकल्पनया ब्राह्मणशूद्राभ्यां विभजनीयाः। यदि सर्वाब्राह्मणआदद्यान्नचांशहरः स्यान्नचतुरंशहरस्तस्माच्चतुरोंशान्हरेदिति चतुर्षु भ्रातृषु सत्सु कल्पना। शूद्रस्यापि दशमोंशहरत्वंचतुर्ष्वेव द्वयोस्त्रिषु चतुर्षूभयोर्भागाधिक्यम् ॥ १५४ ॥

( २ ) **सर्वज्ञनारायणः**। सत्पुत्रइत्युत्तमस्त्रीजातपुत्रवान् पिता अपुत्रइतरवर्णपुत्ररहितः। नाधिकइति शूद्रापुत्राय दशमंभागं दत्वा शेषं पत्न्यादिभिर्ग्राह्यमितरपुत्राभावेपीत्यर्थः ॥ १५४ ॥

( ३ ) **कुल्लूकः**। यदि ब्राह्मणोद्विजातिस्त्रीषु सर्वासु विद्यमानपुत्रः स्यादविद्यमानपुत्रोवा तथापि शूद्रापुत्रायानन्तराधिकारीयस्तेषु दशमभागादधिकंधर्मतोन दद्यात्। एवंच शूद्रापुत्रविषये निषेधादविद्यमानसजातिपुत्रस्य क्षत्रियावैश्यापुत्रौ सर्वरिक्थहरौ स्याताम् ॥ १५४ ॥

---

( १ ) न

( ४ ) **राघवानन्दः** । पितुरिच्छया विभागेऽपि शूद्रापत्याय दशमोभागोदेयइति नियमयति यद्यपीति। सत्पुत्रःविद्यमानपुत्रःब्राह्मण्यादिचतसृष्वपि यस्य ससत्पुत्रः। तास्वेवाविद्यमानःपुत्रोयस्य सोऽपुत्रइति। धर्ममनुरुध्य दशमांशादधिकं नदद्यादितिनियमः। अतएव याज्ञवल्क्यः ॥ चतुस्त्रिद्व्येकभागाःस्युर्वर्णशोब्राह्मणात्मजाः ॥ क्षत्रजास्त्रिद्व्येकभागाविड्जास्युर्द्व्येकभागिनइति ॥ अत्र ब्राह्मणात्मजाब्राह्मणाद्ब्राह्मण्यादिचतसृषु जाताः एवं क्षत्रजादिष्वित्यन्वयः॥ १५४ ॥

( ५ ) **नन्दनः** । सत्पुत्रः विद्यमानपुत्रः यद्यपि स्यात्। सपुत्रस्त्विति सम्यक्पाठः। नाधिकमंशंदशमादंशाच्छूद्रापुत्राय दद्यात् ॥ १५४ ॥

( ६ ) **रामचन्द्रः** । सत्पुत्रः विद्यमानब्राह्मणपुत्रः ॥ १५४ ॥

**ब्राह्मणक्षत्रियविशांशूद्रापुत्रोन रिक्थभाक् ॥ यदेवास्य पिता दद्यात्तदेवास्य धनंभवेत् ॥ १५५ ॥**

( १ ) **मेधातिथिः** । नरिक्थभागद्विजातीनांशूद्रापुत्रः किंसदा नेत्याह। यदेवास्य पितादद्यात्तदास्य पित्रा दशमांशकल्पना कृता तदेव तत्तस्य तदधिकंपैतृकंनान्यल्लभते। तत्रापि शङ्खेनोक्तं न शूद्रापुत्रोर्थभागी। यदेवास्य पिता दद्यात्सएव तस्य भागो गोमिथुनंत्वपरंदद्युर्विभागकालेभ्रातरइति वाक्यशेषः। अन्येत्वनूढायाःशूद्रायाः पुत्रस्येमंविधिमिच्छन्ति। नह्यत्र विवाहलिङ्गंकिंचिदस्तीति। जातिविशेषवचनःशूद्राशब्दोऽतोयदेवास्य पितादद्यात् अतोयदस्य प्रजीवनंपित्रादत्तंतदेव दातव्यं। अथ तेन का विभागकल्पना कृता यावज्जीवंजीवनाय तदा तदेवास्य धनंनभ्रातृभिः किंचिद्दातव्यं। यथा गौतमः शूद्रापुत्रप्रकरणएवाह अपरिग्रहीतास्वपि शुश्रूषा चेल्लभेत वृत्तिमूलमन्तेवासिविधिनेति। तेषांमतेक्षत्रियवैश्ययोरनूढयोर्जातारिक्थहराः प्राप्नुवन्ति तत्र च कियानंशइति न ज्ञायते यावानंशऊढयोरितिचेत्तत्रापि नोढाग्रहणंर्नालिङ्गंवचनंवास्ति। एकएवौरसः पुत्रइति धर्मपत्नीष्वौरसोनचानूढयोर्जातानामौरसलक्षणमस्ति उक्तंच अनियुक्तासुतश्चैवेत्यादि अभ्रातृजायाविषयमेतत्। तत्र किलनियोगेविहतेऽनियुक्तासुतइति प्रतिषेधेऽपि तद्विषया बुद्धिरुपजायते अत्राप्यस्ति तर्हि जातमात्रेष्विति तस्मात्परस्त्रीषु नियोगेनविनाऽनियुक्तासु ताः सर्वेषांचतेषांप्रजीवनमुक्तम् ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । पितृदत्तंत्वधिकमपि लभ्यतएवेत्याह ब्राह्मणेति। न रिक्थभागदशमांशाधिकरिक्थभाक्। तदेवधनमधिकंलभ्यम् ॥ १५५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणक्षत्रियवैश्यानां शूद्रापुत्रोधनभाक् न भवति किन्तु यदेव धनमस्मै पिता दद्यात्तदेव तस्य भवेत् एवंच पूर्वोक्तविभागनिषेधाद्विकल्पः सच गुणवद्गुणापेक्षः। अथवाऽनूढशूद्रापुत्रविषयोयंदशमभागनिषेधः॥ १५५ ॥

( ४ ) **राघवानन्दः** । पुत्रकर्तृकविभागेतु गुणहीनः शूद्रापुत्रोनदायभागित्याह ब्राह्मणेति। पितृतःप्राप्तधनस्य तस्य नांशोऽन्यथैकांशइत्युक्तम्। वस्तुतस्तु ज्येष्ठस्य विंशउद्धारइत्याद्युक्तगुणवद्विषयम् ॥ १५५ ॥

( ५ ) **नन्दनः** । किमयंदशमोंशः शूद्रापुत्रायदेयोनेत्याह ब्राह्मणक्षत्रियविशामिति ॥ १५५ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणेति अंशभाक्ब्राह्मणःपुत्रःनिर्गुणः ॥ १५५ ॥

**समवर्णासु ये जाताः सर्वे पुत्राद्विजन्मनाम् ॥ उद्धारंज्यायसे दत्वा भजेरन्नितरेसमम् ॥ १५६ ॥**

( १ ) **मेधातिथिः** । वाशब्दोद्वितीयंविकल्पमन्तरेणानुपपद्यमानः प्रकृतमपेक्ष्य निराकाङ्क्षोभवति। समवर्णास्वसमवर्णासु वाशूद्रस्यैव सर्वधनहरत्वनिषेधाद्द्विजातिविषयमेव विज्ञायते तेन ब्राह्मणस्यासति ब्राह्मणीपुत्रेक्षत्रियादिजाताः सर्वधनहराभवन्तीत्युक्तंभवति। एवंक्षत्रियावैश्यापुत्रः नत्वयमर्थः। उद्धारंज्यायसेदत्वासर्वेऽसवर्णाजाताः समंसवर्णापुत्रैर्भ-

जेरन् प्रागुक्तैकांशापचयविरोधात् यदप्युक्तंनिर्गुणेषु सवर्णापुत्रेषु गुणवत्स्वितरेषु युक्तमेवसाम्यं । तथाप्युक्तंसवर्णापुत्रोऽन्यायवृत्तो नलभते केषामिति तदेतदसत् [जातेरत्यन्तमान्यत्वात्][१] उत्पन्नोवार्थस्वाम्यमित्याचार्याइति तेनेयमत्रव्याख्या। असत्सु सवर्णेष्वपि येयातास्तेपि जायांशमुद्धारेण सवर्णाद्विभजेरन् ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः** । समेति समवर्णमात्रपुत्रत्वे उद्धारोद्धरणं ज्येष्ठस्य विंशउद्धारइत्यादि नान्यथेत्यर्थः॥१५६॥

( ३ ) **कुल्लूकः** । द्विजातीनांसमानजातिभार्यासु ये पुत्राजातास्ते सर्वे ज्येष्ठायोद्धारंदत्वाऽवशिष्टंसमभागंकृत्वा ज्येष्ठेन सहान्येविभजेरन् ॥ १५६ ॥

( ४ ) **राघवानन्दः** । अयंत्वगुणवद्विषयइत्याह समेति । उद्धारं किंचिच्छ्रेष्ठद्रव्यम् ॥ १५६ ॥

( ५ ) **नन्दनः** । अथपितृतोऽसवर्णानां मातृसवर्णानां विभागमाह समवर्णास्त्विति ॥ १५६ ॥

( ६ ) **रामचन्द्रः** । द्विजन्मनां ब्राह्मणक्षत्रियविशां सर्वद्रव्यात्तवरं ज्यायसे वर्णश्रेष्ठाय उद्धारमुद्धृत्य दत्वा पश्चादितरे भ्रातरः समं भजेरन् ॥ १५६ ॥

**शूद्रस्य तु सवर्णैव नान्या भार्याविधीयते ॥ तस्यां जाताः समांशाः स्युर्यदि पुत्रशतंभवेत्॥१५७॥**

( १ ) **मेधातिथिः** । प्रतिलोमाविवाहः शूद्रस्य नेष्यते उक्तानुवादोयं तस्यांजाताः समांशाः स्युरिति। पञ्चमस्य जात्यन्तरस्याभावादेवमुक्तंसवर्णैव तस्य भार्यानान्यास्तीति ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । समांशाःस्युर्नतूद्धारइत्यर्थः ॥ १५७ ॥

( ३ ) **कुल्लूकः** । शूद्रस्य पुनः समानजातीयैव भार्योपदिश्यते नोत्कृष्टाऽवकृष्टा वा तस्यां च ये जातास्ते यदि पुत्रशतमपि तदा समभागाएव भवेयुस्तेनोद्धारः कस्यचिन्न देयः ॥ १५७ ॥

( ४ ) **राघवानन्दः** । शूद्रस्यासवर्णाभावमनुवदंस्तत्पुत्राणां समएव विभागइत्याह शूद्रस्येति । पुत्रशतंभवेदिति कैमुत्यम् ॥ ॥५७ ॥

( ६ ) **रामचन्द्रः** । समांशाःस्युः सममंशंगृह्णीयुः ॥ १५७ ॥

**पुत्रान्द्वादशयानाहनृणांस्वायंभुवोमनुः ॥ तेषांषड्बन्धुदायादाः षडदायादबान्धवाः ॥ १५८ ॥**

( १ ) **मेधातिथिः** । वक्ष्यमाणसूत्रस्थानमेतत् बन्धुशब्दोबान्धवपर्यायः गोत्रहरादायहराश्च षडितरे विपरीताः यद्च तत्त्वंतदुपरिष्टान्निदर्शयिष्यते ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । बन्धुदायादाः बन्धूनां पितृव्यादीनां पुत्रपत्नीदुहित्राद्यभावे दायस्य तद्धनस्यादातारः । उत्तरेतु न दायादादायग्राहकाः पितृव्यादीनां किंतु पुत्रपत्न्यादिविरहेपि तेषां गोत्रजादयएव धनहरानमीबन्धवस्तूदकदानाद्यधिकारिणोभवन्ति । अदायादाअबान्धवाएवेत्यस्यार्थः ॥ १५८ ॥

( ३ ) **कुल्लूकः** । यान्द्वादशपुत्रान्हैरण्यगर्भोमनुराह तेषांमध्याद्याः षड्बान्धवागोत्रदायादाश्च तस्माद्बांधवत्वेन सपिण्डसमानोदकानांपिण्डोदकदानादिकुर्वन्त्यनतराभावे च गोत्रदायंगृह्णन्ति । पितृरिक्थभाक्तस्य पुत्ररिक्थहराःपितुरिति द्वादशविधपुत्राणामेव वक्ष्यमाणत्वात् उत्तरे षट् न गोत्रधनहराभवन्ति बान्धवास्तु भवन्ति ततश्च बन्धुकार्यमुदकक्रियादिकुर्वन्ति । मेधातिथिस्तु षडदायादबान्धवाइत्याद्युत्तरषट्कस्यादायत्वमबान्धवत्वंचाह तन्न । बौधायनेन बन्धुत्वस्याभिहितत्वात् । तदाह ॥ कानीनंच सहोढं च क्रीतंपौनर्भवंतथा ॥ स्वयंदत्तंनिषादंच गोत्रभाजःप्रचक्षते । १५८ ॥

---

( १ ) आ आ

( ४ ) **राघवानन्दः** । ते पुत्राः कतिविधेत्यपेक्षायांपूरयन् तेषु दायभाजमाह पुत्रानिति । बन्धुदायादाः गोत्र पिण्डोदकदानधनग्रहणप्रयोजनाः । अदायादबान्धवाः दायमंशं न लभन्तेऽथच बन्धुवदुदकदानेनोपकुर्वन्ति उदकमात्र प्रयोजनाइतिभावः ॥ १५८ ॥

( ५ ) **नन्दनः** । एवमौरसानां सवर्णानां समवाये विभागउक्तइदानीमौरसानां क्षेत्रजादीनाञ्च समवाये विभागंविवक्षन्पुत्राणां द्वैविध्यन्तावदाह पुत्रानद्वादशयानिति । बन्धवोदायादश्च बन्धुदायादाः पिण्डप्रदाः सगोत्रबान्धवाः । अदायादबान्धवा इत्यत्र दायादत्वं बन्धुत्वञ्च निषिध्यते नज्ञातिर्निषिध्यते दायादत्वमेवेति केचित् ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । तेषांयद्वबन्धुदायादाः बन्धुकृत्योदकदानादिकारिणः बन्धुदायादाः । षट् दायादबान्धवाः ॥१५८॥

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएव च ॥ गूढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट् ॥ १५९॥**

( १ ) **मेधातिथिः** । श्लोकद्वयेन संख्यानिर्देशोवर्गद्वयप्रदर्शनार्थः ॥ १५९ ॥ १६० ॥

( २ ) **सर्वज्ञनारायणः** । औरसकानीनइति श्लोकावेतौ द्विभागार्थौ । अत्र पुत्रिकापुत्रस्यौरसतुल्यतया पृथगभिधानम् ॥ १५९ ॥ १६० ॥

( ३ ) **कुल्लूकः** । औरसादयोवक्ष्यमाणाः षट् रिक्थभाजोबान्धवाश्च भवन्ति ॥ १५९ ॥

( ४ ) **राघवानन्दः** । पुत्राणां द्वादशत्वं विभजन्दायादानाह औरसइतिद्वाभ्याम् । एषां लक्षणानि वक्ष्यमाणानि । अत्रापि पूर्वषट्काभावे उत्तरोत्तरोगोत्ररिक्थभाक् । तथाच बौधायनः ॥ कानीनंच सहोढंच क्रीतं पौनर्भवं तथा ॥ स्वयं दत्तं निषादं च गोत्रभाजः प्रचक्षतइति ॥ अत्र गोत्रपदं रिक्थाद्युपलक्षणम् गोत्ररिक्थहराःपितुरित्येकवाक्यनिर्दिष्टत्वात् ॥ १५९ ॥ ॥ १६० ॥

( ५ ) **नन्दनः** । पुत्रिकापुत्रस्य पौत्रतुल्यतया पुत्रेष्वनुपादानं क्षेत्रजशब्देन संगृहीतत्वाच्चेति ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह औरसेति । औरसः १ क्षेत्रजः २ दत्तः ३ कृत्रिमः ४ गूढोत्पन्नः ५ अपविद्धः ६ ॥ १५९ ॥

**कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ॥ स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ १६० ॥**

( ३ ) **कुल्लूकः** । कानीनादयोवक्ष्यमाणलक्षणाः षड्गोत्ररिक्थहरान भवन्ति बान्धवाश्च भवन्तीति व्याख्यातम् ॥ १६० ॥

( ६ ) **रामचन्द्रः** । कानीनः ७ सहोढः ८ क्रीतः ९ पौनर्भवः १० स्वयंदत्तः ११ शूद्रायामुत्पन्नःशौद्रः १२ षडदायादबान्धवाः ॥ १६० ॥

**यादृशंफलमाप्नोति कुप्लवैः संतरञ्जलम् ॥ तादृशंफलमोति कुपुत्रैः संतरंस्तमः ॥ १६१॥**

( १ ) **मेधातिथिः** । क्षेत्रजादीनामौरसेन सहोपदेशात्तु नाशङ्का तन्निषेधार्थमिदं नतुल्यमौरसेनोपकारंकर्तुंशक्ताः कुपुत्राः क्षेत्रजादयः असत्यपि विशेषश्रवणे प्रकृतत्वादेवंव्याख्यानयन्ति । अन्ये तुकुपुत्रानभियुक्तासुतान्मन्यन्ते । एतदुक्तं भवति नैतेषु सत्सु पुत्रवानहमिति कृतिनमात्मानंमन्यन्ते किंतर्ह्यौरसोत्पादने पुनरपियत्नवता भवितव्यंतमपारलौकिकंदुष्कृतक मेजंदुःखमृणापाकरणनिमित्तंसप्रजयापितृभ्यइति ॥१६१ ॥

( २ ) **सर्वज्ञनारायणः** । कुप्लवैर्दूरप्लवनासमर्थैः प्लवैः गुणं पारगमनरूपं क्लेशेनाप्नोति । कुपुत्रैरमुख्यैः तमोनरकं संतरता । एतेन नात्यन्तफलाएवेत्युक्तम् ॥ १६१ ॥

( ३ ) **कुल्लूकः**। औरसेन सह क्षेत्रजादीनांपाठात्तुल्यत्वाशङ्कायांतन्निरासार्थमाह यादृशमिति । तृणादिनिर्मितकुत्सितोडुपादिभिरुदकंतरन्यथाविधंफलंप्राप्नोति तथाविधमेव कुपुत्रैः क्षेत्रजादिभिः पारलौकिकंदुःखंदुरुत्तरंप्राप्नोतीत्यनेन क्षेत्रजादीनांमुख्यौरसपुत्रवत्संपूर्णकार्यकरणक्षमत्वंन भवतीति दर्शितम् ॥ १६१ ॥

( ४ ) **राघवानन्दः**। सत्पुत्रेष्वेव यतितव्यमित्यर्थवादेन द्रढयति यादृशमिति । कुप्लवैस्तृणादिनिर्मितैः । फलं शीतादिकं दुःखं प्राप्नुवन्नपि तीर्णोभवत्येवम् । तमः पिण्डोदकाद्यदानकृतनरकम् । कुपुत्रैर्दत्तं मुख्यं न भवतीतिभावः॥१६१॥

( ५ ) **नन्दनः**। कुपुत्राणां पित्रापकारित्वं दायादत्वप्रतिपत्त्यर्थमाह यादृशं फलमिति । कुपुत्रैर्निर्गुणैरनियुक्तापुत्रादिभिश्च तमोनरकम् ॥ १६१ ॥

( ६ ) **रामचन्द्रः**। कुप्लवैः कुत्सितप्लवैर्जलंसंतरन्यादृशंगुणं दुःखमाप्नोति तादृशंगुणं कुपुत्रैः तमः नरकं संतरन् तादृशं गुणं दुःखंआप्नोति ॥ उडुपंतु प्लवःकोलइत्यमरः ॥ १६१ ॥

**यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ॥ यस्ययत्पैतृकंरिक्थंसतद्गृह्णीत नेतरः ॥ १६२ ॥**

( १ ) **मेधातिथिः**। क्लीबस्य प्रागुपात्तेक्षेत्रजे यत्तत्पजप्रमीतस्य व्याधितस्य वेति पश्चादौषधे कथंचित्क्लीबत्वनिवृत्तौसंभवति तदीयमेवासौ रिक्थंलभेतेति जनयितुर्यदि नाम पितृव्यपदेशः स्यादपिजनकोहेतुः तस्मादपि पुत्रः सुतोयमुपचारात्क्षेत्रजइत्युक्तस्तत्रौरसे बाले मातृधनेगृहीतेकथंचिदपचारिणः पुत्रमपत्यमुत्पादितंभवतीति नच तदायत्तमेव प्रीत्यादिना धनंकृतंनचास्य सपिण्डाःसन्ति अस्यामवस्थायां यद्यस्य पित्र्यमुपपद्यते लिङ्गमनियुक्तासुतादयोऽसत्सु सपिण्डेषु जनयितूरिक्थहराभवंतीति । अन्येतु व्याचक्षते सतिदायादिसमुत्पन्नः क्षेत्रजः सजनयितुर्लभतेरिक्थंन क्षेत्रिकात्सत्यौरसे उक्तश्च तस्य सत्यौरसेभागः औरसक्षेत्रजौ पुत्रौ पितूरिक्थस्य भागिनाविति । तथा षष्ठन्तु क्षेत्रजस्यांशमिति एकहस्तस्थधनौ यथाच तौ भवतस्तथा दर्शयति ॥ १६२ ॥

( २ ) **सर्वज्ञनारायणः**। अविभक्ते भ्रातरि मृते तद्धनंगृहीत्वा तत्पत्न्यां देवरेण पुत्रउत्पादिते तस्यापि सपुत्रत्वे पश्चात्तस्मिन्मृते विभागे क्रियमाणे क्षेत्रजस्य क्षेत्राधिपस्य पितुर्भागमात्रं नतु बीजिधनादपि भागोस्तीत्यर्थः ॥१६२॥

( ३ ) **कुल्लूकः**॥ अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ॥ उभयोरप्यसौरिक्थी पिण्डदाता च धर्मतइति याज्ञवल्क्योक्तविषये । यदा क्षेत्रिकस्य पितुः क्षेत्रजानन्तरमौरसः पुत्रोभवति तदा तावौरसक्षेत्रजावेकरिक्थिनौ एकस्य पितुर्यद्यपि रिक्थार्हौ भवतस्तथापि यद्यस्य जनकसंबन्धितदेव सगृह्णीयान्न क्षेत्रजः क्षेत्रिकपितुः । यत्तु वक्ष्यति ॥ षष्ठन्तुक्षेत्रजस्यांशंप्रदद्यात्पैतृकाद्धनात् ॥ औरसोविभजन्दायमिति तत्पुत्रबहुलस्य । यत्तु याज्ञवल्क्येनोभयसंबन्धिरिक्थहरत्वमुक्तंतत्क्षेत्रिकपितुरौरसपुत्राभावे बोद्धव्यम् । मेधातिथिगोविन्दराजौ तु औरसमनियुक्तापुत्रंच विषयीकृत्येमंश्लोकंव्याचक्षाते तन्न । अनियुक्तापुत्रस्याक्षेत्रजत्वादनियुक्तासुतश्चेत्यनेन तस्य रिक्थग्रहणनिषेधाद्यद्येकरिक्थिनावित्यनन्वयाच्च ॥ १६२ ॥

( ४ ) **राघवानन्दः**। तत्र यस्य विधितः क्षेत्रजादूर्ध्वमौरसोजातस्तस्य धनमौरसएव प्राप्नोतीत्याह यदीति । एकरिक्थिनावेकस्यपितुः नेतरः क्षेत्रजः । यस्तु ॥ अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ॥ उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतइति याज्ञवल्क्यवचनात्तदौरसाभावविषयम् । भावेतु क्षेत्रिणःस्वमौरसोहरेत् । बीजिनः स्वं क्षेत्रजइति आह यस्ययदिति । यदिबीजिनोधनमस्ति न चेदौरसनियुक्तापुत्रयोर्नियुक्तापुत्रस्यषष्ठांशस्य वक्ष्यमाणत्वादिति गोविन्दराजमेधतिथी ॥ १६२ ॥

( ५ ) **नन्दनः**। एकरिक्थिनावविभक्तधनौ यत्र कुले भ्रात्रोरेकस्यौरसः पुत्रोऽपरस्य क्षेत्रजस्तौच भ्रातरौ विभक्तधनौ मृतौ विभक्तधनयोरपि मृतयोः पश्चात्पितामहोमृतस्तद्विषयमेतद्वचनम् ॥ १६२ ॥

( ६ ) **रामचन्द्रः**। एकस्य रिक्थिनौ सुतौ स्यातां औरसक्षेत्रजयोःयस्यौरसस्य यत्पैतृकंरिक्थं अंशःतत्स गृह्णीयात् नेतरः इतरःक्षेत्रजो न गृह्णीयात् ॥ १६२ ॥

**एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ॥ शेषाणामानृशंस्यार्थंप्रदद्यात्तु प्रजीवनम् ॥ १६३ ॥**

( १ ) **मेधातिथिः**। सत्यौरसे क्षेत्रजादन्ये सर्वेऽदायादाःप्रजीवनमौरसाल्लभेरन्। आनृशंस्यमपापं अददत्पापमाप्नोति ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः**। एकएवेति इदमनेकविधपुत्रसद्भावे ॥ १६३ ॥

( ३ ) **कुल्लूकः** । व्याध्यादिना प्रथमौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरसउत्पन्ने सतीदमुच्यते औरसएवैकः पुत्रः पितृधनस्वामी शेषाणांक्षेत्रजव्यतिरिक्तानांतस्य षष्ठांशादेर्वक्ष्यमाणत्वात्। पापसंबन्धपरिहारार्थंग्रासाच्छादनंदद्यात् ॥ १६३ ॥

( ४ ) **राघवानन्दः**। एतदेवद्रढयन्नन्येषामपि क्षेत्रजंविना दत्तादीनां ग्रासाच्छादनमात्रमाह एकइति। वसुनो धनस्य। पित्र्यस्य पितृसंबन्धिनः। प्रजीवनं ग्रासाच्छादनादि ॥ १६३ ॥

( ५ ) **नन्दनः** । एवन्तावत्पितृभेदे क्षेत्रजस्यापि दायमाप्तिरुक्ता तदभेदेत्वौरसस्यैव दायप्राप्तिर्नान्येषामित्याह एकएवौरसः पुत्रइति। जीवनमेव प्रजीवनं अन्यतोलब्धवृत्तिना जीवना प्रदानेन दोषइति सूचितम् ॥ १६३ ॥

( ६ ) **रामचन्द्रः**। एकएवौरसःपित्र्यस्य वसुनो द्रव्यस्य प्रभुः। शेषाणांक्षेत्रजादीनामानृशंस्यार्थं पापयोगपरिहारार्थंप्रदद्यात् ॥ १६३ ॥

**षष्ठन्तु क्षेत्रजस्यांशंप्रदद्यात्पैतृकाद्धनात् ॥ औरसोविभजन्दायंपित्र्यंपञ्चममेव वा ॥ १६४॥**

( १ ) **मेधातिथिः**। ःक्रीतादिपुत्रवत्प्रजीवनमात्रे प्राप्ते क्षेत्रजस्य भागविकल्पोयमुच्यते सचगुणापेक्षः ॥ १६४ ॥

( २ ) **सर्वज्ञनारायणः** । यदात्वेकस्यांभार्यायामज्ञातगर्भायां भर्ता मृतः अन्याच पत्नी पुत्रार्थं देवरे नियुक्ता पुत्रमलभत पूर्वस्यांचौरसः पुत्रोजातस्तदा विभागमाह षष्ठंत्विति। षष्ठमनिर्गुणवत्वे गुणवत्वेतु पञ्चममिति ॥ १६४ ॥

( ३ ) **कुल्लूकः** । औरसः पुत्रः पितृसंबन्धिदायंविभजन्क्षेत्रजस्य षष्ठमंशंपञ्चमंवा दद्यात् निर्गुणसगुणापेक्षश्चायं विकल्पः ॥ १६४ ॥

( ४ ) **राघवानन्दः**। औरसानां परस्परं विभागे कर्तव्ये क्षेत्रजस्याप्यंशमाह षष्ठंत्विति। गुणवदगुणवद्भेदेन विकल्पः। एतत्तु बीजिधनाप्राप्तौ तत्प्राप्तौतु नांशभागित्युक्तं यद्यस्य पैतृकमित्यत्र ॥ १६४ ॥

( ५ ) **नन्दनः**। आनृशंस्यार्थमिति सत्यौरसेयोयं शेषाणामभागउक्तस्तस्य क्षेत्रजविषयेऽपवादमाह षष्ठन्तुक्षेत्रजस्यांशमिति। विकल्पोगुणापेक्षः एवंक्षेत्रजस्य देयोंशउक्तः ॥ १६४॥

( ६ ) **रामचन्द्रः**। औरसःपित्र्यंदायंविभजन्क्षेत्रजस्य षष्ठंवा पञ्चममेव वा ॥ १६४ ॥

---

( १६४ ) पित्र्यं=षष्ठं ( ख, ग )

**औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ॥ दशापरे तु क्रमशोगोत्ररिक्थांशभागिनः॥१६५॥**

( १ ) **मेधातिथिः**। आद्योयंश्लोकः पूर्वोक्तविध्यनुवादएव पुनर्विध्यन्तरमौरसेन साम्यंक्षेत्रजस्य नेष्यते गोत्रभागिनोरिक्थांशभागिनश्च रिक्थांशः प्रजीवनसंमितइत्युक्तः। दत्तके च क्षेत्रजवत्। स्मृत्यन्तरमुदाहरन्ति क्रमशः औरसक्षेत्रजौ युगपद्भागहरावन्येषांतु पूर्वाभावउत्तरस्य भागहरत्वं यद्येषांषट्दायादाः षडदायादाइति वर्गद्वयप्रतिभागेन दायाददायादयोरनयोरिक्थवचनमनुपपन्नं। सत्यौरसेऽदायादाइति आद्याः षण्महोपकाराइतेरेषट् न्यूनाइति। आद्याऔरसादन्ये समानाफ लाएवमुत्तरेषट् ततोन्यूनाअवान्तरपेक्षयातुल्याएव न पूर्वोत्तरपठितानांभेदोस्ति॥ १६५॥

( २ ) **सर्वज्ञनारायणः**। पितृरिक्थस्य पित्रार्जितधनस्य। अत्रौरसत्वेनपुत्रिकापुत्रोपि गृहीतः। दशापरइति गोत्ररिक्थं पितामहाद्युपात्तं ततोंशभागिनः नतु पित्रा स्वयमर्जितादंशादंशहारिणः। केचितु पितृरिक्थस्य कृत्स्नस्य गोत्रभागिनः पितृगोत्ररिक्थांशभागिनः स्वजीवमात्रोचितपितृरिक्थांशभागिनइत्यर्थमाहुः॥ १६५॥

( ३ ) **कुल्लूकः**। औरसक्षेत्रजौ पुत्रावुक्तप्रकारेण पितृधनहरा स्यातामन्ये पुनर्दशदत्तकादयः पुत्रागोत्रभाजोभवन्ति। पुर्वाभावे परः परइत्येवंक्रमेण धनांशहराश्च॥ १६५॥

( ४ ) **राघवानन्दः**। तयोरुक्तप्रकारेण धनभाक्त्वमनुवदन् तयोरभावेऽन्येष्वपि दशसु पूर्वपूर्वाभावे उत्तरोत्तरोधनभागित्याह औरसेति। क्रमशः पूर्वपूर्वाभावे परःपरइति॥ १६५॥

( ५ ) **नन्दनः**। अथ दत्तकृत्रिमादीनामंशमाह औरसक्षेत्रजौपुत्राविति। पुत्राविति दशापरे दत्तकृत्रिमादयोगोत्ररिक्थांशभागिनः गोत्रभागिनो रिक्थभागिनश्च रिक्थांशोजीवनमात्रं अन्येत्वाहुः पूर्वार्धेन क्षेत्रजस्यौरसतुल्यत्वं प्रतिपादितांशप्राप्त्यर्थं प्रतिपादितं उत्तरार्धेन दत्तादीनां रिक्थैकदेशभाक्त्वमिति॥ १६५॥

( ६ ) **रामचन्द्रः**। अपरेदशपुत्रादत्तकादयः क्रमशः गोरिक्थांशभागिनः पूर्वपूर्वाभावे परःपरोरिक्थभागी स्यात्॥ १६५॥

**स्वक्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धियम्॥ तमौरसंविजानीयात्पुत्रंप्रथमकल्पितम्॥ १६६॥**

( १ ) **मेधातिथिः**।आत्मीयवचनः स्वशब्दोन समानजातीयतामाह। एतेन स्वयंसंस्कृतायां जातऔरसइतरथाऽसंस्कृतायांनिवृत्तिपरः संस्कृतशब्दः संभाव्यते। ततश्चान्येन संस्कृतायामन्यऔरसः स्यात् उक्तार्थेच स्वशब्दे क्षत्रियादिपुत्रा अप्यौरसाभवन्ति तेषामन्यत्पुत्रलक्षणमस्ति अन्येतु प्राथमकल्पिकमौरसविशेषणंचतुरः। क्षत्रियापुत्रानौरसान्संपूर्णलक्षणान्मन्यन्ते। एवंतु व्याख्याने यथा स्वक्षेत्रे संस्कृतायामसंपुर्णलक्षणऔरसस्तचत्वेऽसंस्कृतायांप्राप्नोति किंपुनः क्षत्रियादीनामौरसत्वेन पुत्रास्तावद्भवन्ति परिमितांशभाजश्च। अथोच्यते असत्यौरसक्षेत्रजादिलक्षणे द्वादशसंख्यानियमात्कथंपुत्रत्वमिति। अत्रोच्यते किमुलक्षणेन लोकतोव्यवहारप्रसिद्धेः तथाहि योयतोजातः सतस्य पुत्रइति लौकिकाव्यवहरन्ति। तथा च जनके कश्चित्पितृव्यवहारंकुर्वन्नन्यो नेति बोध्यते नैषते पिता नहित्वमनेन जातइत्यन्वयव्यतिरेकाभ्यां जनकः पिता जन्यश्च पुत्रइत्येतदवगम्यते। विशेषव्यपदेशार्थस्तु लक्षणारम्भः येतुक्षेत्रजादिजनके वा पुत्रत्वमिति तत्कार्यनिबन्धनम पुत्रस्यापि कार्यविधानात्पुत्रत्वं पुत्रत्वस्य तन्निषेधान्नजातत्वमिति। तथाचैते प्रतिनिधयउच्यन्ते तैरत्रायंजन्मनिबन्धे हि पुत्रत्वे औरसपुनर्भवनियुक्तासुतानांविशेषोन स्याज्जन्मनस्तुल्यत्वात् किंच पुत्रकार्यकारणान्नैवकश्चिदपुत्रः स्यात् यस्तु लौकिकोव्यवहारः असौजनकेऽपि पितृव्यवहारादर्शनाद्व्यभिचारी तेन सत्यपि प्रयोगइन्द्रादिशब्दवल्लोकतोर्थातिशयाच्छास्त्रे चोत्पत्तिविधानाद्भार्यादिव्यवहारवत्पुत्रव्यवहारोवगन्तव्यः। तत्र च यदौरसस्य प्राथमकल्पिकत्ववचनंतत्र व्यवहारो-

वगन्तव्यः न व्यवहारे किंतर्ह्युपकारेपि पितुरुपकारेण दृष्टोयथौरसोभूयांसंशक्नोत्यपकर्तुमितिज्ञापयति। उपकारापचयोहि प्रायश्चित्तप्रतिनिधिव्यवहारः नह्येषांप्रतिनिधिता संभवति प्रारब्धस्य कर्मणोङ्गोपचारप्रतिनिधेर्नच पुत्रकर्मागमोऽपत्योत्पादनकर्मणोगुणकर्मत्वात् तेन सत्येव क्षेत्रजेप्रतिनिधित्ववचनमौरसत्वप्रशंसार्थं। यथाऽपशवोवाऽन्येगोऽश्वेभ्यः पशवोगोऽश्वानिति पशूनामपशुत्ववचनंगवा [श्वानां][1] प्रशंसितुं यदा च योयदीयाद्वीजाज्जातः सतस्य पुत्रइति तथा च दर्शितंमहाभारते। द्वैपायनाज्जाताः पाण्डुधृतराष्ट्रविदुरादयोनैते व्यासपुत्राइति व्यपदिश्यन्ते। अथत्वयंप्रयोजनंक्षत्रियादिपुत्राणामौरसत्वंतथोपपादितं। अथक्षत्रियापुत्रिकापुत्रत्वे द्वादशसंख्यातिरेकआप्नोति भवतु कोदोषः त्रयोदशोयंपुत्रोस्तुऔरसेन तुल्यफलत्वात् तद्ग्रहणमतस्तत्साम्याच्च। तथाच स्मृत्यन्तरं॥ तत्समः पुत्रिकासुतइति॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः**। उक्तपुत्राणांलक्षणान्याह स्वक्षेत्रइति। स्वक्षेत्रे स्वसवर्णक्षेत्रे संस्कृतायां स्वयंपरिणीतायाम्। प्राथमकल्पिकं मुख्यम्॥ १६६ ॥

( ३ ) **कुल्लूकः**। स्वभार्यायां कन्यावस्थायामेव कृतविवाहसंस्कारायां यंस्वयमुत्पादयेत्तंपुत्रमौरसंमुख्यंविद्यात् सवर्णायांसंस्कृतायामुत्पादितमौरसपुत्रंविद्यादितिबौधायनदर्शनात्सजातीयायामेव स्वयमुत्पादितऔरसोज्ञेयः॥ १६६ ॥

( ४ ) **राघवानन्दः**। उक्तौरसादीनां लक्षणमाह स्वक्षेत्रइतिचतुर्दशभिः। स्वयमुद्वाहितायामुरःसंश्लेषणजातत्वादौरसः। क्षेत्रजेतदभावोनारदेनोक्तोगोत्रैर्गोत्राण्यसंस्पृशन्नित्यादिना॥ सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं जानीयादितिबौधायनदर्शनात्सजातीयोत्पन्नः औरसः। अत्र सवर्णापदं द्विजत्वादिजातिपरं अन्यथा क्षत्रियावैश्याशूद्रासुजातानां विप्रादित्रयपितृकाणामौरसत्वाभावेनापुत्रत्वापत्तिरिति। तत्र परं सजातीये मुख्यमौरसत्वमन्येषां गौणमितिभावः। स्वक्षेत्रइति क्षेत्रशब्दस्याजहल्लिङ्गता। प्राथमक कल्पिकं उत्सर्गतः सर्वत्राधिकारिणम्॥ १६६ ॥

( ५ ) **नन्दनः**। अथौरसादीनां लक्षणमाह स्वक्षेत्रे संस्कृतायान्त्विति। प्रथमकल्पितंप्रधानत्वेन कल्पितम्॥१६६॥

( ६ ) **रामचन्द्रः**। औरसादीनांद्वादशानामुत्पत्तिमाह स्वेति स्वक्षेत्रे संस्कृतायामूढायांस्वयमुत्पादयेत् द्विजंतंऔरसंपुत्रं प्रथमकल्पितं पुत्रंमुख्यंविजानीयात्॥ १६६ ॥

**यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा॥ स्वधर्मेण नियुक्तायां सपुत्रः क्षेत्रजः स्मृतः॥१६७॥**

( १ ) **मेधातिथिः**। व्याधितस्याप्रतीकारराजयक्ष्मादिव्याधितस्यअवशिष्टंस्पष्टम्॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः**। तल्पं भार्या तस्यां सवर्णाद्वा देवराद्वा सपिण्डाद्वा जातः। स्वधर्मेण क्षेत्रजोत्पत्तिधर्मेण घृताभ्यङ्गादिना स्वपुत्रःक्षेत्रजः॥ १६७ ॥

( ३ ) **कुल्लूकः**। योमृतस्य नपुंसकस्य प्रसवविरोधिव्याध्युपेतस्यवा भार्यायां घृताक्तत्वादिनियोगधर्मेण गुरुनियुक्तायां जातः सक्षेत्रजः पुत्रोमन्वादिभिः स्मृतः॥ १६७ ॥

( ४ ) **राघवानन्दः**। क्षेत्रजं लक्षयति यइति। प्रमीतस्येति पतिताद्युपलक्षणम् क्लीबस्येत्यपत्यजनकत्वाभावपरं तेन पाण्डवाः संगताः। अत्रतु प्रयाजादिवत्पाठक्रमोविवक्षितस्तेन पूर्वपूर्वाभावे उत्तरोत्तरस्यैवाधिकारिता। क्षेत्रजः क्षेत्रमत्र पत्नी तत्रजातः॥ १६७ ॥

( ५ ) **नन्दनः**। तल्पजस्तल्पेषु दारेषु जातः नियुक्तायामित्युक्तत्वादन्येन देवरेण सपिण्डेन वा जनितः॥ १६७ ॥

( ६ ) **रामचन्द्रः**। यः तल्पजः भार्यायांजातः स्वधर्मेण घृताभ्यक्तेन नियुक्तायांसपुत्रः क्षेत्रजःस्मृतः॥ १६७ ॥

---



( १ ) मे० ८

**माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ॥ सदृशंप्रीतिसंयुक्तंसज्ञेयोदत्रिमः सुतः ॥ १६८ ॥**

( १ ) **मेधातिथिः** । चशब्दः पठितुंवायुक्तोमातापिताचेति नह्युभयोरपत्यमन्यतरानिच्छांदातुंयुक्तं । अथापि वाशब्दः पठ्यते । तथाचोक्तं माता पिता वा दद्यात्तयोरपि पिताश्रेयानिति कार्यान्तरविनियोगविषयमेतत् ननु सत्त्वापत्तौ मातुःस्वमिति पितरिपुत्रंप्रतिदानृत्वंसत्यंपितृतइति वचने अभावे बीजिनामितियोगविशेषविषयत्वात्सदृशमित्युक्तं । आहच वसिष्ठः न स्त्रीपुत्रंदद्यात्प्रतिगृह्णीयाच्चेति ॥ सदृशंन ज्ञातितः किंतर्हि कुलानुरूपैर्गुणैः क्षत्रियादिरपि ब्राह्मणस्य दत्तकोयुज्यते प्रीतिग्रहणलोभादिना प्रतिषेधार्थम् ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः** । माता पितर्यसति । अद्भिरुदकपूर्वम् । आपदि स्वतस्तस्य रक्षणाशक्तौ ॥ १६८ ॥

( ३ ) **कुल्लूकः** । शुक्रशोणितसंभवः पुरुषोमातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतइति वसिष्ठस्मरणात् । माता पिता वा परस्परानुज्ञया यंपुत्रंपरिग्रहीतुः समानजातीयंतस्यैव पुत्राभावनिर्मित्तायामापदि प्रीतियुक्तंनतुभयादिनोदकपुर्वंदद्यात्सदत्रिमाख्यः पुत्रोविज्ञेयः ॥ १६८ ॥

( ४ ) **राघवानन्दः** । दत्रिमस्य कृत्रिमस्यच लक्षणमाह मातेतिद्वाभ्याम् । अद्भिरित्यवश्यम् । आपदीति ग्रहीतुः संतानक्षयपरं दुर्भिक्ष्यादिपरंवादातुः । सदृशं जात्या प्रीतिसंयुक्तं न बलोपाधिकृतम् ॥ १६८ ॥

( ५ ) **नन्दनः** । सदृशं सवर्णं आपदीति विशेषणादनापदि दत्तस्य न्यूनत्वं प्रीतिसंयुक्तमितिविशेषणाद्भयादिना दत्तस्य न्यूनताग्राह्या आपदत्र सन्तानपरिक्षयः प्रतिग्रहीतुः ॥ १६८ ॥

**सदृशन्तु प्रकुर्याद्यंगुणदोषविचक्षणम् ॥ पुत्रंपुत्रगुणैर्युक्तंसविज्ञेयश्च कृत्रिमः ॥ १६९ ॥**

( १ ) **मेधातिथिः** । अत्रापि सदृशोगुणतएवविज्ञेयः सतु सदृशंसवर्णंव्याचक्षते । तेषांसजातीयइति एषपाठोयुक्तो यद्ययमर्थोभिप्रेतः ननुजात्यासादृश्यमपि तुक्तमेव गुणदोषविचक्षणंकेचिदाहुस्तावन्न क्रियते यावन्नग्राम्यव्यवहारः नह्यसौ गुणदोषानूजानाति तथात्वेवंजानाति जातोयेन च संप्रति पुत्रतया भरणंमे क्रियते तस्याप्यहंपुत्रइत्यभ्युपगतपुत्राभावात्तथैव ग्रहीतव्योऽपित्वन्यतरत्वे विशेषोनास्ति ॥ १६९ ॥

( २ ) **सर्वज्ञनारायणः** । सदृशं सवर्णं गुणदोषविचक्षणं नतु बालं कुर्यात् त्वंममपुत्रइतिनियम्य । पुत्रगुणैर्वयोल्पत्वादिभिः । गुणदोषविचक्षणइतिक्वचित्पाठः तत्र कर्तुर्गुणदोषज्ञानोक्त्या पतितादित्वेन ज्ञात्वा यदि पुत्रं कुरुते तदा नासौ पुत्रइति विवक्षितम ॥ १६९ ॥

( ३ ) **कुल्लूकः** । यंपुनः समानजातीयंपित्रोः पारलौकिकश्राद्धादिकरणाकरणाभ्यां गुणदोषौ भवतइत्येवमादिज्ञं पुत्रगुणैश्च मातापित्रोराराधनादियुक्तंपुत्रंकुर्यात्सकृत्रिमाख्यः पुत्रोवाच्यः ॥ १६९ ॥

( ४ ) **राघवानन्दः** । गुणदोषविचक्षणं अस्यैवाहइतिगुणादोषोजनैकपथनातितेति । पुत्रगुणैर्विद्याविनय श्राद्धश्रद्धाद्यैः ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । यं गुणदोषविचारक्षमं पुत्रं पुत्रगुणैः पित्रादिशुश्रूषादिकैर्युक्तं। योगी कृत्रिमस्यात्स्वयंकृतइति॥१६९॥

**उत्पद्यतेगृहे यस्य नच ज्ञायेत कस्य सः ॥ सगृहे गूढउत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ १७० ॥**

( १ ) **मेधातिथिः** । नच ज्ञायेत माता यद्युद्भ्रान्त्या बहुशोगता वा तदा नज्ञायते का पूनस्तस्य जातिर्यतः पुर्वैरु-

क्तं अविज्ञातबीजिनोमातृतः एतच्च यत्र हीनजातीयपुरुषशङ्कानास्ति तदा शङ्कायां हि प्रतिलोमसंभवः प्रतिलोमत्वान्नकचित्पुरुषकार्याधिकारिणः ॥ १७० ॥

( २ ) सर्वज्ञनारायणः । गृहे पाणिग्राहस्य सवर्णैरनेकैर्ऋतुकाले संसर्गोनिश्चितोपि व्यक्तिविशेषानिश्चयात्कस्यायंगर्भइत्यनिश्चयः । नत्वधमवर्णगमनसंदेहेपि । यस्य तल्पजोभार्यायां जातः ॥ १७० ॥

( ३ ) कुल्लूकः । यस्य गृहेऽवस्थितायां भार्यायां पुत्रउत्पद्यते सजातीयोयंभवतीति ज्ञानेपि कस्मात्पुरुषविशेषाज्जातोसाविति न ज्ञायते सगृहेऽप्रकाशमुत्पन्नस्तस्य पुत्रः स्याद्यदीयायां भार्यायां जातः ॥ १७० ॥

( ४ ) राघवानन्दः । गूढोत्पन्नं लक्षयति उदिति । तस्मिञ्जीवति गोलकइति बहुकालवशाद्यभिचारिण्यांपत्न्यामाकृत्यादिलिङ्गकोन्योत्पन्नः अयंत्वव्यक्तलिङ्गकोगूढोत्पन्नइति भेदः गृहे भार्यायां स्वपत्न्याम् । सबालः गृहे गूढं रहस्युत्पन्नः यस्य तल्पजस्तस्यैवसः [ तल्पोऽत्रपतिः ]* ॥ १७० ॥

( ५ ) नन्दनः । कस्यचिदत्रेतिकरणं द्रष्टव्यम् ॥ १७० ॥

( ६ ) रामचन्द्रः । यस्य तल्पजः भार्यायांजातः सतस्य स्यात् । योगी गृहे प्रच्छन्नउत्पन्नोगूढजः सुतः स्मृतः ॥ १७० ॥

**मातापितृभ्यामुत्सृष्टंतयोरन्यतरेण वा ॥ यंपुत्रंपरिगृह्णीयादपविद्धः सउच्यते ॥१७१॥**

( १ ) मेधातिथिः । बहुप्रजातया भरणासमर्थेनात्यन्तदुर्गत्या केनचिद्वादोषयोगेन मातापितृभक्तिहीनत्वादिना न पुनः मत्यक्षत्वेन तस्य न क्वचिदेव पुत्रकार्येधिकारइति दर्शितं । अन्यत्वमप्यन्यतरेणोत्सर्गः परिग्रहः पुत्रबुद्ध्या न तु तज्जीवितेच्छयाच ॥ १७१ ॥

( २ ) सर्वज्ञनारायणः । उत्सृष्टमन्यस्माअदत्वा त्वरादिना परित्यक्तं तत्कालेच तस्यापरिग्रहे रक्षणंनसंभवत्येवेति निश्चित्य गृह्णीयात् । अयमपि सवर्णएव ॥ १७१ ॥

( ३ ) कुल्लूकः । मातापितृभ्यां त्यक्तंतयोरन्यतरमरणेनान्यतरेण वा त्यक्तंपुत्रंस्वीकुर्यात्सोपविद्धाख्यः पुत्रउच्यते ॥ १७१ ॥

( ४ ) राघवानन्दः । अपविद्धं लक्षयति मातेति । ताभ्यामुत्सृष्टत्वादपविद्धत्वम् ॥ १७१ ॥

( ५ ) नन्दनः । अयमपि सर्वएव ॥ १७१ ॥

( ६ ) रामचन्द्रः । अन्यतरेणापि पुंसा तयोर्मातापित्रोःसकाशात् उत्सृष्टंयंपुत्रंपरिगृह्णीयात्सपुत्रोऽपविद्धउच्यते । योगी उत्सृष्टोगृह्यते यस्तुसोऽपविद्धोभवेत्सुतः ॥ १७१ ॥

**पितृवेश्मनि कन्या तु यंपुत्रंजनयेद्रहः ॥ तंकानीनंवदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ १७२ ॥**

( १ ) मेधातिथिः । अयंश्लोकःप्राक्स्वयंदत्तकृत्रिमापविद्धेषु अस्य च भागकल्पना प्राक्निरूपिता । प्रतिग्रहभूमिनिषेधश्च सत्यस्मिन्धनेन तावत् ॥ १७२ ॥

( २ ) सर्वज्ञनारायणः । वोढुः विवाहयितुः पुत्रं तथा मातामहस्याप्यसौ सुतान्तराभावे ऋक्थहरः मातामहसुतोमतइतियाज्ञवल्क्यवचनात् । एतदपिसवर्णोत्तमवर्णजनितस्य ज्ञाने ॥ १७२ ॥

---

* राघ ० २

( ३ ) **कुल्लूकः** । पितृगृहे कन्यायंपुत्रमप्रकाशंजनयेत्तंकन्यापरिणेतुः पुत्रंनाम्ना कानीनंवदेत् ॥ १७२ ॥

( ४ ) **राघवानन्दः** । कानीनमाह पित्रिति । वोढुः कन्याकालएव जनितपुत्रामुद्वाहकस्य । कानीनःकन्यकाजातोमातामहसुतोमतइति मातामहस्य पुत्राभावे तद्धनाद्यधिकारित्वपरमित्यन्यभेदं मनुवाक्यं विरुध्यते । यतो अकृता वाकृतावित्यनेनोद्वाहितासु तस्यधनहारित्वमिति भेदः ॥ १७२ ॥

( ५ ) **नन्दनः** । वोढुस्तंपुत्रं विदुः न कन्यापितुः ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । तं कन्यासमुद्भवं पुत्रं वोढुः विवाहकर्तुः ज्ञेयं । योगी कानीनः कन्यकाजातः ॥ १७२ ॥

**या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ॥ वोढुः सगर्भोभवति सहोढइति चोच्यते॥१७३॥**

( २ ) **सर्वज्ञनारायणः** । ज्ञाता गर्भिणीत्वेन । इदमपिपूर्ववत् ॥ १७३ ॥

( ३ ) **कुल्लूकः** । या गर्भवती अज्ञातगर्भाज्ञातगर्भा वा परिणीयते सगर्भस्तस्यां जातः परिणेतुः पुत्रोभवति सहोढइति व्यपदिश्यते ॥ १७३ ॥

( ४ ) **राघवानन्दः** । सहोढंलक्षयति येति । ज्ञाता ज्ञातोवोगर्भिणीत्वेनसं संस्क्रियते पाणिग्रहणमन्त्रैः । अतः-संस्क्रियमाणयाकन्यया सहोढः नामइति सहोढः ॥ १७३ ॥

( ५ ) **नन्दनः** । संस्क्रियते परिणीयते ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । याकन्या गर्भिणी संस्क्रियते विवाहादि संस्काराःक्रियन्तेज्ञाताज्ञातापि वा सती सगर्भो वोढुर्भवति सहोढजइत्युच्यते । योगी गर्भेविन्नःसहोढजः ॥ १७३ ॥

**क्रीणीयाद्यस्त्वपत्यार्थंमातापित्रोर्यमन्तिकात् ॥ सक्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा॥१७४॥**

( २ ) **सर्वज्ञनारायणः** । सदृशोऽसदृशः सवर्णोधमवर्णोवेत्यर्थः ॥ १७४ ॥

( ३ ) **कुल्लूकः** । यः पुत्रार्थंमातापित्रोः सकाशाद्यंक्रीणीयात्सक्रीतकस्तस्य पुत्रोभवति । क्रेतुर्गुणैस्तुल्योहीनोभवेन्न तत्र जातितः सादृश्यवैसादृश्ये सजातीयेष्वयंप्रोक्तस्तनयेषु मया विधिरिति याज्ञवल्क्येन । सर्वेषामेव पुत्राणांसजातीयत्वाभिधानत्वेन मानवेऽपि क्रीतव्यतिरिक्ताः सर्वे पुत्राः सजातीयाबोद्धव्याः ॥ १७४ ॥

( ४ ) **राघवानन्दः** । क्रीतं लक्षयति क्रीणीयादिति । यद्यस्मात् । सदृशोऽसदृशइति गुणवानगुणवान्वा नतु विजातीयः । सजातीयेष्वयंप्रोक्तस्तनयेषु विधिर्मयेतियाज्ञवल्क्योक्तेः ॥ १७४ ॥

( ५ ) **नन्दनः** । अन्तिकात्सकाशात् ॥ १७४ ॥

( ६ ) **रामचन्द्रः** । सक्रीतकः सुतस्तस्य मूल्यदातुःपुत्रः । सदृशःगुणैःसदृशोऽसदृशोपि वा क्रीतश्चताभ्यांविक्रीतः ॥ १७४ ॥

**याऽपत्या वा परित्यक्ता विधवावा स्वयेच्छया॥उत्पादयेत्पुनर्भूत्वा सपौनर्भवउच्यते॥१७५॥**

( २ ) **सर्वज्ञनारायणः** । पुनर्भूत्वान्यस्य भार्या भूत्वा ॥ १७५ ॥

( ३ ) **कुल्लूकः** । या भर्त्रा परित्यक्ता मृतभर्तृका वा स्वेच्छयाऽन्यस्य पुनर्भार्या भूत्वा यमुत्पादयेत्सउत्पादकस्य पौनर्भवः पुत्रउच्यते ॥ १७५ ॥

---

( १७४ ) यस्त्व = य्रस्त्व ( राघ ० २

( ४ ) **राघवानन्दः** । पौनर्भवं लक्षयति येति । स्वेच्छया पुनरन्यस्य भार्या भूत्वापुनर्वोढुर्भूत्वा विधवाभूत्वा यंपुत्रमुत्पादयेत्सपौनर्भवः उत्पादकस्येतिशेषः ॥ १७५ ॥

( ५ ) **नन्दनः** । पुनर्भूत्वा पुनः कस्यचिद्भार्याभूत्वा ॥ १७५ ॥

( ६ ) **रामचन्द्रः** । पुनर्भूत्वा अन्यस्य सवर्णस्य भार्या भूत्वा पुत्रमुत्पादयेत्सपौनर्भवउच्यते । योगी अक्षतायांक्षतायां वा जातः पौनर्भवः सुतः ॥ १७५ ॥

**सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ॥ पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥ १७६ ॥**

( २ ) **सर्वज्ञनारायणः** । पुनर्भूसंस्कारमाह साचेदिति । अक्षतयोनिः पत्या संस्कारमात्रंकृत्वा परित्यक्ता प्राग्वैधव्यावा । गतप्रत्यागतातु पित्राऽन्यस्माअङ्गीकृता स्वेच्छया परिणयार्थमन्यंप्रति गत्वा तेन परिणीता पुनः पित्रभिमतंवरंप्रत्यागता अक्षतयोनिरेव । पौनर्भवेन यंगत्वा विश्रान्ता तेन पुनर्विवाहहोमादिसंस्कारंसार्हति । एतेन या क्षतयोनिः पुनर्भूर्नसंस्कारार्हेत्युक्तम् । पुनर्भूत्वंतु उभयथापि । एतासूत्पन्नः पौनर्भवोबीजिनःसुतः ॥ १७६ ॥

( ३ ) **कुल्लूकः** । सा स्त्री यद्यक्षतयोनिः सत्यन्यमाश्रयेत्तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यंसंस्कारमर्हति । यद्वा कौमारंपतिमुत्सृज्यान्यमाश्रित्य पुनस्तमेव प्रत्यागता भवति तदा तेन कौमारेण भर्त्रा पुनर्विवाहाख्यंसंस्कारमर्हति ॥१७६॥

( ४ ) **राघवानन्दः** । प्रासंगिकमाह साचेति । यंबालं विहाय गता पुनर्यौवने तमेव प्रत्यागताऽपिवायं प्रतिगता वोभयोरपिपुनर्भवभर्तृत्वाद्वाभ्यामपि संस्कारमर्हति विवाहो चितम् । वाशब्दात्क्षतयोनिरपि क्षता क्षतजयुक्ता योनि र्यस्याः । ऋतुमती ॥ अक्षताच क्षता चैव पुनर्भूः संस्कृता पुनः । स्वैरिणी यापतिं हित्वा सवर्णं कामतः श्रयेदिति याज्ञवल्क्योक्तेः ॥ ज्ञातिधनगर्वात्स्वपतित्यागे श्वभक्षणं नतु कामतस्त्यागेकामस्य स्वाभाविकत्वादनेन पूर्वापराविरोधः ॥१७६॥

( ५ ) **नन्दनः** । अक्षतयोन्याः पुनः संस्कारानर्हत्वं प्रसङ्गेनाह साचेदक्षतयोनिः स्यादिति । भर्तृगृहाद्गताप्रत्यागता सत्यप्यक्षतयोनिश्चेत्पौनर्भवेन पुनर्भूपुत्रेण केनचिद्वरेण ॥ १७६ ॥

( ६ ) **रामचन्द्रः** । सा पुनर्भूः । अक्षतयोनिः स्यात्गतप्रत्यागतापिवा परिणेतृगृहेगतातेनाक्षतयोनिः वासापौनर्भवेन भर्त्रा पुनःसंस्कारमर्हति ॥ १७६ ॥

**मातापितृविहीनोयस्त्यक्तोवा स्यादकारणात् ॥ आत्मानंस्पर्शयेद्यस्मै स्वयंदत्तस्तुसस्मृतः ॥१७७॥**

( २ ) **सर्वज्ञनारायणः** । अकारणात्पातित्यादित्यागकारणेषुअसत्सु । स्पर्शयेद्दद्यात् तच्चोदकपूर्वमत्र । कृत्रिमेतु तेन परिग्रहमात्रमस्य सान्तत्येनेतिविशेषः ॥ १७७ ॥

( ३ ) **कुल्लूकः** । योमृतमातापितृकस्त्यागोचितकारणंविना द्वेषादिना ताभ्यांत्यक्तोवाऽऽत्मानंयस्मै ददाति सस्वयंदत्ताख्यस्तस्य पुत्रोमन्वादिभिः स्मृतः ॥ १७७ ॥

( ४ ) **राघवानन्दः** । स्वयंदत्तं लक्षयति मातेति । अकारणात् पातित्याद्यहेतोः । स्पर्शयेद्दद्यात् । त्यक्तः पितृभ्यामितिशेषः । यस्माआत्मानं स्पर्शयेत्तस्यैव पुत्रःसइतिस्मृतः ॥ १७७ ॥

( ५ ) **नन्दनः** । स्पर्शयेद्दद्यात् ॥ १७७ ॥

( ६ ) **रामचन्द्रः** । मातापितृविहीनः यः अकारणात्त्यक्तःयस्मैआत्मानं स्पर्शयेद्दद्यात्सः स्वयंदत्तः स्मृतः ॥ १७७ ॥

**यंब्राह्मणस्तु शूद्रायांकामादुत्पादयेत्सुतम् ॥ सपारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७८ ॥**

( २ ) **सर्वज्ञनारायणः** । कामादिति शूद्राभिगमस्यकाममात्रपरत्वादुक्तम् । ब्राह्मणइति क्षत्रियस्याप्युपलक्षणम् । वैश्यस्य शूद्रापुत्रोपि ब्राह्मणस्येव क्षत्रियापुत्रः स्ववर्णसदृशएव । पारयन्नेव कर्मणे शक्तएवसन् शवोऽनधिकारी । एतेन ज्ञात्यन्तरासत्वेपि तस्य न पित्र्यधनहारित्वं किंतु संबन्धिनोपि ब्राह्मणस्यैवेत्युक्तम् ॥ १७८ ॥

( ३ ) **कुल्लूकः** । विन्नास्वेषविधिः स्मृतइति याज्ञवल्क्यदर्शनात्परिणीतायामेव शूद्रायां ब्राह्मणः कामार्थंपुत्रंजनयेत्सजीवन्नेव शवतुल्यइति पारशवः स्मृतः । यद्यप्ययंपित्रुपकारार्थंश्राद्धादिकरोत्येव तथाप्यसंपूर्णोपकारकत्वाच्छवव्यपदेशः ॥ १७८ ॥

( ४ ) **राघवानन्दः** । शौद्रं लक्षयति यमिति । शूद्रायां यथाविध्यूढायां । सपारयन् जीवन्नेव शवतुल्यत्वात्पारशवः । शूद्रापत्यस्य निन्दितत्वं सूचयति कामादिति । असंपूर्णोपकारत्वाद्वा ॥ १७८ ॥

( ५ ) **नन्दनः** । पारयञ्जीवयन् शवोमृतप्रायः पारशवोनाम निर्वचनमेतत् बीजगुणस्य श्रैष्ठ्येपि क्षेत्रदोषात्सजीवन्मृतकल्पइत्यर्थः कर्मानधिकारात् ॥ १७८ ॥

( ६ ) **रामचन्द्रः** । यंसुतं शूद्रायांउत्पादयेत्कामतःसः पारयन्नेव कर्मसु शवएवशवः शवकल्पः तस्मात्पारशवः स्मृतः ॥ १७८ ॥

**दास्यां वा दासदास्यां वा यः शूद्रस्य सुतोभवेत् ॥ सोनुज्ञातोहरेदंशमिति धर्मोव्यवस्थितः ॥ १७९ ॥**

( १ ) **मेधातिथिः** । शूद्रस्यानूढायामनियुक्तायामपि जातः सुतएव । एवंयद्यपि दासस्य दासीत्यर्थेपि वचनात्तस्यां जातोनदासस्य दासस्वामिनः सोनुज्ञातःपित्रा सममंशमौरसेन हरेज्जीवितभागे क्रियमाणे अन्यथावा यदि ब्रूयादेषवः समांशइति यदा तु पिता नानुजानाति । तत्स्मृत्यंतरे पठितं ॥ जातोपि दास्यां शूद्रेण कामतोंशहरोभवेत् । कामतोयावन्तमंशंपि तानुजानाति ॥ मृतेपितरिकुर्युस्तंभ्रातरस्त्वर्धभागिनं ॥ तंकुर्युः स्वांशापेक्षया आत्मनाद्वौद्वौ परिगृह्णीयुर्भागौ तस्यैकंदद्युः । अभ्रातृकोहरेत्सर्वं असत्स्वौरसेषु सर्वंरिक्थंसएव हरेद्यदिदौहित्रोनस्यात् । सति तस्मिन्नौरसवत्कल्पना । दौहित्रस्यान्यस्याश्रुत त्वात्तस्य च प्रकृतत्वेन बुद्धौ सन्निवेशात् ब्राह्मणादीनांतु दासीसुताः प्रजीवनमात्रभाजोनरिक्थभाजइति स्थितिः ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । दास्यां शूद्रस्यानूढायां तथा शूद्रस्य योदासस्तस्यदास्यांप्रधानशूद्रेणोत्पादितोऽस्यापि शूद्रेभागोदेयइति । तेनपित्राऽनुज्ञातोहरेदंशंनत्वननुज्ञातस्तुजीवनमात्रंहरेदिति । एतेन शूद्रस्य शूद्रायामपरिणीतायामप्युत्पन्नस्तस्यांयथाकथंचित्स्वाम्येसति पुत्रोभवति नतु परपरिग्रहेऽपीतिदर्शितंभवति । अतएव दास्यांदासदास्यांवेत्युक्तम् ॥ १७९ ॥

( ३ ) **कुल्लूकः** । ध्वजाहृताद्युक्तलक्षणायां दास्यां दाससंबन्धिन्यां वा दास्यां शूद्रस्य यः पुत्रोजायते सपित्राऽनुज्ञातपरिणीतापुत्रैः समांशभागोभवान्भवत्वित्यनुज्ञातस्तुल्यभागंलभतइति शास्त्रव्यवस्था नियता ॥ १७९ ॥

( ४ ) **राघवानन्दः** । दास्यां ध्वजाहृताद्युक्तलक्षणाया तथाविधदासस्य भार्यायांवा दासदास्या अनुज्ञातःजीवता पित्रा परिणीताशूद्रापुत्रैःसममंशं हरेदितिधर्मोव्यवस्थितः ॥ न्यूनाधिकविभागानां धर्म्यः पितृकृतः स्मृतइति याज्ञवल्क्यो-

---

( १७९ ) दास्यांवा=कामाद्वा ( थ )

क्तेः ॥ पितरि ब्राह्मणे मृतेतु शूद्रापुत्रोन रिक्थभागित्युक्तेः । जीवत्यपि नाधिकं दशमाद्द्यात् शूद्रापुत्राय धर्मतइतिमनूक्तेः । दशमोंशएव दौहित्रान्तरस्याभावेमातृकोहरेत्सर्वमित्युक्तेः ॥ १७९ ॥

( ५ ) **नन्दनः** । अनुज्ञातःपित्रा अनुज्ञातइति विशेषणादननुज्ञातोन हरेत् ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । दास्यां शूद्रायामूढायांवा दासदास्यांवा शूद्रस्य योदासःस्तस्य या दासी तस्यांसपुत्रोअनुज्ञातः अंशंहरेत् ॥ १७९ ॥

**क्षेत्रजादीन्सुतानेतानेकादशयथोदितान् ॥ पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ १८० ॥**

( १ ) **मेधातिथिः** । मुख्याभावे प्रतिनिधिः अतोसत्यौरसएते कर्तव्याइत्युक्तंभवति । एतेषांस्मृत्यन्तरेऽन्यादृशः क्रम उक्तः यथा गूढोत्पन्नःकैश्चित्पंचमोऽपरैः षष्ठइति। तत्र पाठक्रमोनात्राङ्गमतएवानियमपाठात्प्रयोजनंचोत्तरत्रानङ्गत्वे दर्शयिष्यामः क्रियालोपाद्धेतोः क्रियतेऽपत्यमुत्पादयितव्यमित्यस्य विधिलोपोमाभूदिति नित्योह्ययंविधिःसयथा कथंचिद्गृहस्थेन संपाद्यस्तत्र मुख्यः कल्पऔरसस्तदसंपत्तावेतेकल्पाआश्रयितव्याः ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । क्षेत्रजादीन्तुपुत्रिकापुत्रमपि । क्रियालोपादौर्ध्वदेहिकक्रियालोपोमाभूदितिबुध्येत्यर्थः ॥ १८० ॥

( ३ ) **कुल्लूकः** । एतान्क्षेत्रजादीनेकादशपुत्रान्पुत्रोत्पादनविधिलोपः पुत्रकर्तव्यश्राद्धादिलोपश्च माभूदित्येवमर्थंपुत्रप्रतिछन्दकान्मुनयआहुः ॥ १८० ॥

( ४ ) **राघवानन्दः** । सर्वंहरेदिति खले वालीन्यायेनौरसातिरिक्तपुत्राणां प्रतिनिधित्वमाह क्षेत्रजादीनिति ॥ पुंसि मेढिः खले वाली न्यस्तं यत्पशुबन्धनइति सयथाअष्टाश्रीकरणरहितः पशुबन्धने नियुज्यतएवं पारशवादीनां पुत्रकार्ये नियोगेपि नोपनयनादिरितिन्यायार्थः ॥ १८० ॥

( ५ ) **नन्दनः** । अथौरसस्य श्रैष्ठ्यंश्लोकद्वयेनाह क्षेत्रजादीन्सुतानिति । पुत्रप्रतिनिधीनाहुर्नमुख्यान् क्रियालोपादुत्पादकक्रियायाअभावात् मुख्येसंभवत्यौरसे तत्प्रतिनिधिभिस्तत्कार्यं नकर्तव्यमित्यभिप्रायः ॥ १८० ॥

( ६ ) **रामचन्द्रः** । येतिप्रसङ्गात् औरसपुत्रप्रसङ्गात् एते पुत्राअन्यबीजजाअभिहिताः ते पुत्रायस्य बीजिनोभवन्ति तु पुनः इतरस्य ते सुताः क्षेत्रजादिवत्पुत्राः भवन्ति ॥ १८१ ॥

**यएतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ॥ यस्य ते बीजतोजातास्तस्य ते नेतरस्य तु ॥ १८१ ॥**

( १ ) **मेधातिथिः** । पूर्वोक्तस्याभावे विधिप्रतिषेधोर्यमिति व्याचक्षते । यएतेऔरसाभावे प्रतिनिधयः कर्तव्यतयाउक्तास्ते नकर्तव्याः । यतस्तेऽन्यबीजजातास्तस्यैवते पुत्रानेतरस्य येन क्रियन्ते तस्य तेनभवन्तीत्यर्थः । अतश्च पूर्वेण विधिरनेन प्रतिषेधइति विकल्पः सच व्यवस्थितोरिक्थग्रहणे कानीनसहोढपुनर्भवगूढोत्पन्नान रिक्थभाजः दत्तकादयस्तु रिक्थभाजः असत्यौरसे कानीनादयश्च सत्यप्यौरसे न पितृधनहराः ग्रासाच्छादनभाजः । केवलंसत्यसतिचौरसे यतउक्तं ॥ सर्वेषामपि चन्याय्यंदातुंशक्त्यामनीषिणः । ग्रासाच्छादनमत्यन्तंपतितोह्यददद्भवेत् ॥ सर्वेषामपि क्लीबादीनांच भक्तत्वेन दर्शितमिति अत्यन्तंयावज्जीवमित्यर्थः । शरीरधारणार्थत्वाद्ग्रासाच्छादनस्य भृत्यादेस्तदुपयोगिनः परिचारकस्यापि वेतनदानंविज्ञेयं नह्यन्धादेः परिचारकमन्तरेण जीवनसंभवः । येषांदारकरणंमतं तेषांसभार्याणांभरणंदातव्यंशक्नोति धनानुरूपेण भोजनवस्त्रादिदेयं पतितइत्यर्थवादः ॥ १८१ ॥

( २ ) **सर्वज्ञनारायणः** । एते क्षेत्रजादयः प्रसंगादौरसपुत्रप्रसंगादुक्ताः यस्य बीजतोजातास्तस्य ते न भवन्ति । किंत्वितरस्ययस्य क्षेत्रं येनवा क्रयणादिकृतं तस्यैव भवन्तीत्यर्थः । केचित्तु यएते दत्रिमादयउक्तास्ते यदि दात्रादीनां- क्षेत्रे तेभ्योन्यस्माज्जातास्तदा दात्रादिभिर्दत्ताअपि न प्रतिग्रहीत्रादीनां पुत्राः किंतु बीजिनएवेत्यस्यार्थइत्याहुः ॥१८१॥

( ३ ) **कुल्लूकः** । यएते क्षेत्रजादयोऽन्यबीजोत्पन्नाः पुत्राऔरसपुत्रप्रसङ्गेनोक्तास्ते यद्वीजोत्पन्नास्तस्यैव पुत्राभव- न्ति न क्षेत्रिकादेरिति सत्यौरसे पुत्रे पुत्रिकायां च सत्यां न ते कर्तव्याइत्येवंपरमिदमन्यबीजजाइत्येकादशपुत्रोपलक्ष- णार्थंत्वबीजजातावपि पौनर्भवशौद्रौन कर्तव्यौ । अतएव वृद्धबृहस्पतिः॥ आज्यंविना यथा तैलंसद्भिः प्रतिनिधिः स्मृतः ॥ तथैकादशपुत्रास्तु पुत्रिकौरसयोर्विना ॥ १८१ ॥

।( ४ ) **राघवानन्दः** । ननु तेपि पुत्राइति कथं प्रतिनिधित्वं तत्राह यइति । अशास्त्रीयस्य प्रतिनिधित्वाभावं द्यो तयितुं तेषां पुत्रोक्तिर्नतु ते वस्तुतः पुत्राभवन्ति कार्यातिदेशंविना न्यस्यान्यभावानुपपत्तेरितिभावः । अतएवाह यस्यत इत्यनेन जनकानां पुत्राभावे तएव श्राद्धादिकर्तारः । पौनर्भवशूद्रापत्ययोः स्वजातत्वेपि न मुख्यत्वम् । तथाच बृहस्प तिः ॥ आज्यंविना यथा तैलं सद्भिः प्रतिनिधीकृतम् ॥ तथैकादशपुत्रास्युःपुत्रिकौरसयोर्विनेति ॥ एकादशत्वंतु पुत्रिकापुत्र मादायपुत्रिकापुत्रोपि समयबन्धान्मातृद्वारौरसोन्यबीजजश्च । अतएवानयोरभावे उक्तदशपुत्राअर्थाधिकारिणइतिकुल्लूकः ॥ याज्ञवल्क्यस्तु ॥ पिण्डदोंशहरश्चैषांपूर्वाभावे परःपर इत्युपक्रम्य पत्न्यादिकमाह तेन गौणमुख्यपुत्राभावे पत्न्यादीनामधि कारइतिसुष्ठु ॥ १८१ ॥

( ५ ) **नन्दनः** । उत्पादकत्वं प्रतिपुत्रत्वं मुख्यमित्यतआह यएतइति ॥ १८१ ॥

( ६ ) **रामचन्द्रः** । एकजातानां एकेनैकस्यांजनितानाम् ॥ १८२ ॥

**भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ॥ सर्वांस्तांस्तेन पुत्रेण पुत्रिणोमनुरब्रवीत् ॥ १८२ ॥**

( २ ) **सर्वज्ञनारायणः** । एकजातानामिति एकेन जनितानां सापत्नानामपि । एवंच यदि भ्रातुरपत्योत्पादनश- क्तिरस्ति तदा तत्पुत्रेणैवेतरस्य पुत्रवत्वाद्देवरगमनेन क्षेत्रजपुत्रकरणमयुक्तमनापदीति निषेधाद्युक्तंभवति ॥ १८२ ॥

( ३ ) **कुल्लूकः** । भ्रातॄणामेकमातापितृकाणांमध्ये यद्येकः पुत्रवान्स्यादन्ये च पुत्ररहितास्तदा तेनैकपुत्रेण सर्वा- न्भ्रातॄन्सपुत्रान्मनुराह । ततश्च तस्मिन्सत्यन्ये पुत्रप्रतिनिधयोन् कर्तव्याः । सएव पिण्डदोंशहरश्च भवतीत्यनेनोक्तं । एतच्च पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा तत्सुताइति याज्ञवल्क्यवचनाद्भ्रातृपर्यन्ताभावे बोद्धव्यम् ॥ १८२ ॥

( ४ ) **राघवानन्दः** । भ्रातृपुत्रसत्वेक्षेत्रजादयः प्रतिनिधयोन कार्याइत्याह भ्रातॄणामिति । एकजातानामेकपितृजा तानाम् ॥ पत्नी दुहितरश्चैव पितरौभ्रातरस्तथा ॥ तत्सुतश्चेति याज्ञवल्क्योक्तेः ॥ भ्रातृपुत्रपर्यन्ताभावे प्रतिनिधिः कर्तु यो ग्यइतिभावः ॥ १८२ ॥

( ५ ) **नन्दनः** । अथद्वयेन पुत्रमतिदिशति भ्रातॄणामिति । एकजातानामेकपितृमातृकाणां पुत्रवानौरसवान्सति भ्रातृपुत्रेण पुत्रिणोमनुरब्रवीत् ॥ १८२ ॥

**सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ॥ सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ १८३ ॥**

( २ ) **सर्वज्ञनारायणः** । एवमेकस्यां सपत्न्यां पुत्रवत्यामन्यस्यामनपत्ययामपि नियोगोन कार्यइत्याह सर्वासा- मिति ॥ १८३ ॥

( ३ ) **कुल्लूकः**। एकपतिकानांसर्वासांस्त्रीणांमध्ये यद्येका पुत्रवती स्यात्तदा तेन पुत्रेण सर्वास्ताः पुत्रयुक्तामनुराह। ततश्च सपत्नीपुत्रे सति स्त्रिया नदत्तकादिपुत्राः कर्तव्याइत्येतदर्थमिदम् ॥ १८३ ॥

( ४ ) **राघवानन्दः**। एवमेकपतिकानांमध्ये कस्याश्चित्पुत्रवत्त्वे दत्तकादिनान्यतमया कर्तव्यमिति नियमयितुमाह सर्वासामिति। पुत्रवती पुत्रकार्यवती ॥ १८३ ॥

( ५ ) **नन्दनः**। पुत्रिणी औरसपुत्रिणी पुत्रत्वातिदेशस्य प्रयोजनंसत्स्वपि सोदरादिषु पूर्वोपदिष्टैरेव पुत्रैः सकलपुत्रकार्यलाभः ॥ १८३ ॥

( ६ ) **रामचन्द्रः**। सर्वासां एकपत्नीनां एकस्य भार्याणांमध्ये एका चेत्पुत्रिणी भवेत् ॥ १८३॥

**श्रेयसः श्रेयसोलाभे पापीयान्रिक्थमर्हति ॥ बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥१८४॥**

( २ ) **सर्वज्ञनारायणः**। श्रेयानुत्तमः। पापीयानपकृत्तमः। तन्निषेधश्च औरसपुत्रिकाजक्षेत्रजगूढजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वयंदत्तसहजोढजापविद्धानुक्रमेण परिगणय्य याज्ञवल्क्येन पिण्डदोंशहरश्चैषांपूर्वाभावे परःपरइतिविशेषतोविधानात्तद्वचनानुसारेण कर्तव्यः। अत्रतु क्रमपाठेनपूर्वपूर्वोत्कर्षइतिआपादनार्थः क्रमपाठोत्रस्वबन्धुदायादबान्धवविवेकपरत्वादिति। सदृशाऔरसाएवदत्रिमएवत्वियादि ॥ १८४ ॥

( ३ ) **कुल्लूकः**। औरसादीनांसर्वेषांपुत्राणांप्रकृतत्वादौरसादीनुपक्रम्य तेषांपूर्वः पूर्वः श्रेयान्सएव दायहरः सचान्यान्बिभृयादिति विष्णुवचनात्। औरसादीनांपुत्राणां पुर्वपुर्वाभावे परः परः रिक्थमर्हति पुर्वसद्भावेपरसंवर्द्धनंसएव कुर्यात् एवंच सिद्धे शूद्रापुत्रस्य द्वादशपुत्रमध्ये पाठः क्षेत्रजादिसद्भावे धनानर्हत्वज्ञापनार्थत्वेन सार्थकः अन्यथा तु क्षत्रियावैश्यापुत्रवदौरसत्वात्क्षेत्रजादिसद्भावेपि धनंलभेत पुर्वस्य परसंवर्धनमात्रंचापवादेतरविषये द्रष्टव्यं क्षेत्रजगुणवद्दत्तकपुत्रयोः पञ्चमंषष्ठंवा भागमौरसोदद्यादिति विहितत्वात्। यदि तु समानरूपाः पौनर्भवादयोबहवः पुत्रास्तदा सर्वएव विभज्य रिक्थंगृह्णीयुः ॥ १८४ ॥

( ४ ) **राघवानन्दः**। औरसानांमध्ये पुर्वःपुर्वः श्रेयस्तया श्रेयइत्याहश्रेयसइति। स्वजात्यपेक्षया श्रेयसः औरसादेः तदलाभे तदभावे। पापीयान् क्षेत्रजादिः ॥ पिण्डदोंशहरश्चैषांपुर्वाभावे परःपरइति याज्ञवल्क्योक्तेः ॥ अतोविष्णुरप्याह ॥ औरसादीनांपुत्राणांपूर्वपूर्वाभावे परःपरोरिक्थमर्हति ॥ पुर्वसद्भावे परस्य संवर्धनं सएवकुर्यादिति। संवर्धनं पोषणम्। बहवश्चेत्सदृशाब्राह्मणत्वादिजात्यारिक्थस्य भागिनः पिण्डदाश्च। यदेकादशपुत्रेषु शूद्रापुत्रस्यौरसत्वेपि गणना जीवत्पितृदत्तदशमांशातिरिक्तांशाभावार्थायदेवास्य पिता दद्यात्तदेवास्य धनं भवेदितिदशमांशोपलक्षणम्। तथाच ॥ ब्राह्मणक्षत्रियविशां शूद्रापुत्रोन रिक्थभागित्युक्तिःसंगता। अन्यथा विप्रजक्षत्रियावैश्यापुत्रयोस्तेषु गणनाप्रसक्तिः स्यात् धनाहारित्वसत्वाविशेषात्। अतएव शूद्रापत्यस्यांशाहारित्वं क्षेत्रजगुणवद्दत्तकयोरपि मुख्येन षष्ठांशादिदानमपि संगच्छते वचनादेव नात्रतर्कइति श्रेयसइत्यादावेकवचनमविवक्षितम्। तेषांपौनर्भवादीनां बहुत्वेपि भागहारित्वन्यायस्य तुल्यत्वमित्याह बहवश्चेदिति ॥ १८४ ॥

( ५ ) **नन्दनः**। इदानीं पुत्राणामुक्तसंख्यानां दायप्राप्तिक्रममाह श्रेयसः श्रेयसोऽलाभइति श्रेयसोमुख्यस्य पापीयान्गौणपुत्रः ॥ १८४ ॥

( ६ ) **रामचन्द्रः** । ज्येष्ठस्य श्रेयसोऽलाभे पापीयान् गुणादिनिकृष्टः रिक्थं भागं अर्हति । बहवश्चेत्सदृशाः समानवर्णाः ॥ १८४ ॥

**न भ्रातरोन पितरः पुत्रारिक्थहराः पितुः ॥ पिता हरेदपुत्रस्य रिक्थंभ्रातरएव च ॥ १८५ ॥**

( २ ) **सर्वज्ञनारायणः** । पुत्राऔरसादयोद्विजातिजनितशूद्रापुत्रादन्ये । पिता हरेदविभक्तस्य । भ्रातरएववा पित्रनुमत्या । विभक्तत्वेतु पत्न्येव तदभावेतु दुहित्रादेर्याज्ञवल्क्योक्तेः ॥ १८५ ॥

( ३ ) **कुल्लूकः** । न सोदरभ्रातरोन पितरः किन्त्वौरसाभावे क्षेत्रजादयोगौणपुत्राः पितृक्थहराभवन्तीत्यनेनोच्यते औरसस्य त्वेकएवौरसः पुत्रइत्यनेनैव सिद्धत्वात् । अविद्यमानमुख्यपुत्रस्य पत्नीदुहितृरहितस्य च पिता धनंगृह्णीयात्तेषांमातुश्चाभावे भ्रातरोधनंगृह्णीयुः एतच्चानन्तरंप्रपञ्चयिष्यामः ॥ १८५ ॥

( ४ ) **राघवानन्दः** । औरसपुत्रिकापुत्रादीनामेव धनहारित्वं व्यतिरेकेणद्रढयति नेति । उक्तपुत्राएव रिक्थहराः स्मृताः न भ्रातरोनपितरइत्यन्वयः । पुत्राभावेपितेत्याह पितेति । पितृपदं पत्न्याद्युपलक्षणम् । पुत्राइति श्रुतेः ॥ प्रमीतस्य पितुः पुत्रैः क्रिया कार्या प्रयत्नतइति शूलपाण्युक्तेः ॥ अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंसर्गदूषिता ॥ विप्राद्यभावे शूद्राजोप्यधिकारीति ॥ अतएव याज्ञवल्क्यः ॥ पत्नीदुहितरश्चैव पितरौभ्रातरस्तथा । तत्सुतागोत्रजाबन्धुः शिष्यः सब्रह्मचारिणः ॥ एषामभावे पूर्वस्य धनभागुत्तरोत्तरइति । अत्र च पाठएव क्रमःप्रयाजवद्विवक्षितः । येषांपत्न्यादीनांमध्ये पूर्वस्य पत्नीरूपस्याभावे परोदुहितेत्येवमन्वयः । बन्धुपदमाचार्योपलक्षकम् । यत्तु नपत्न्याधनहारित्वं स्त्रीणांतु जीवनंदद्या दितितत्तु दुःशीलाधार्मिकासत्विकायौवनस्थाविषयम् । अन्यथा ॥ अपुत्राशयनं भर्तुः पालयन्ती व्रते स्थिता॥ पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत चेतिबृहन्मनुवचनविरोधः ॥ यतिवानप्रस्थयोर्धनंतु ॥ वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ॥ क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनइत्यत्र प्रतिलोमेनान्वयः ॥ १८५ ॥

( ५ ) **नन्दनः** । दिष्टेषुच पुत्रेषु सत्सु न भ्रातरोन पितरोरिक्थहराः पुत्राएव पितृरिक्थहराः पिता हरेदपुत्रस्येति अपुत्रस्योपदिष्टपुत्ररहितस्य भ्रातरः सोदराः एवशब्देनापुत्रस्य रिक्थहरणे भ्रातॄणां पितृनोविशिष्टत्वं सूचितम् ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । पिताहरेत्अपुत्रस्यरिक्थं ॥ १८५ ॥

**त्रयाणामुदकंकार्यंत्रिषु पिण्डः प्रवर्तते ॥ चतुर्थः संप्रदातैषांपञ्चमोनोपपद्यते ॥ १८६ ॥**

**[ असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः । पितामह्यश्च ताः सर्वामातृकल्पाः प्रकीर्तिताः॥ १॥]‡**

( २ ) **सर्वज्ञनारायणः** । त्रयाणामिति पितृतत्पितृतत्पितॄणां उदकंकार्यं नियमेन तथा पिण्डःपिण्डदानम् । पञ्चमोनोपपद्यतइत्यवश्यमुदकंपिण्डंच दाप्यम् ॥ १८६ ॥

( ३ ) **कुल्लूकः** । इदानींक्षेत्रजानामप्यपुत्रपितामहादिधनेऽप्यधिकारंदर्शयितुमाह त्रयाणामिति । त्रयाणांपित्रादीनामुदकदानंकार्यंत्रिभ्यएव च तेभ्यः पिण्डोदेयः चतुर्थश्च पिण्डोदकयोर्दाता पञ्चमस्यात्रसंमन्धोनास्ति । तस्माद्युक्तोऽपुत्रपितामहादिधने गौणपौत्राणामधिकारः औरसपुत्रपौत्रयोश्च पुत्रेण लोकान् जयतीत्यनेनैवात्र पितामहादिधनभागित्वमुक्तम् ॥ १८६ ॥

( ४ ) **राघवानन्दः** । पितामहधनेऽप्येवमित्याह त्रयाणामिति । पितृपितामहप्रपितामहास्त्रयः । कार्यंदशविधैः पुत्रैः

‡ ( ग )

त्रिषु पितृषु देयत्वेन पिण्डः प्रवर्तते। चतुर्थः पुत्रादिः संप्रदाता पिण्डोदकयोः पञ्चमस्य पिण्डादिदातृत्वेन शास्त्राबोधित त्वान्नास्तिपञ्चमोनापि तस्य धनहारितेति। अनेन पितामहप्रपितामहयोरपि धनहारित्वं गौणपुत्राणामभावे इत्यसूचि ॥ १८६ ॥

( ५ ) **नन्दनः**। न केवलमसति। पुत्रे भ्रात्रादीनां रिक्थहरत्वं किन्तु सतोऽश्च पौत्रप्रपौत्रयोः पुत्रतुल्यकर्मकर्तव्यत्वात्तयोरित्यभिप्रायेणाह त्रयाणामुदकमिति। त्रयाणां पितृपितामहप्रपितामहानामुदकंकर्त्तव्यं न ततोधिकानां त्रिषु पिण्डश्च प्रवर्तते विधीयते नाधिकेषु। एषां त्रयाणां पिण्डोदकयोः संप्रदाता चतुर्थः। पुत्रपौत्रप्रपौत्रलक्षणं प्रपितामहादारभ्यतस्य चतुर्थत्वं पञ्चमः संप्रदाता नोपपद्यते न शास्त्रेषु विधीयते। मृतस्य धनिनः पुत्रः पौत्रप्रपौत्रज्ञात्यन्तरेष्वप्युपकारकतमः तेन तेष्वसत्स्वेव भ्रात्रादयोरिक्थहरानतु सत्सु ॥ १८६ ॥

( ६ ) **रामचन्द्रः**। त्रयाणां पितृपितामहप्रपितामहानां उदकं तर्पणं कार्यम् त्रिषु पितामहप्रपितामहादिषु पिण्डः प्रवर्तते। चतुर्थः संप्रदाता। एषांमध्ये पञ्चमोनोपपद्यते। लेपभाजश्चतुर्था द्याः ॥ १८६॥

**अनन्तरः सपिण्डाद्यस्तस्य तस्य धनंभवेत् ॥ अतऊर्ध्वंसकुल्यः स्यादाचार्यः शिष्यएव वा॥१८७॥**

**[ हरेरन्नृत्विजोवापि न्यायवृत्ताश्च याः स्त्रियः ॥ १ ॥ ]** *

( २ ) **सर्वज्ञनारायणः**। एषांमध्येसपिण्डानां मतोयोनन्तरोयथा पुत्रस्य पिता तस्य तत्पितेत्यादि। तस्यतस्यतुतद्धनम्। असतितु पितरि पितामहस्य तदभावे तत्पितुरपि। अत्रच पितामहापेक्षया भ्रातुर्भ्रातृपुत्रस्यच संनिकृष्टत्वात्पित्रभावे भ्राता तदभावे तत्सुतस्तदभावे पितामहादिर्योयः सन्निकृष्टस्तदभावे च समनोदकःसगोत्रोमातुलादिबन्धुरितिक्रमात्पूर्वपूर्वाभावे। एवं पितामहे वृत्ते तद्धनंपुत्रस्यैवधनं नपौत्रस्याधिकारः।यत्तु तत्रस्यात्सदृशंस्वाम्यमिति तत्पुत्रेच्छया विभजनीयंतदित्येतत्परम्। सकुल्योमातुलादिर्बन्धुः। तदभावेचाचार्योपि शिष्योवा यस्तदा प्रत्यासन्नइत्यर्थः ॥१८७॥

( ३ ) **कुल्लूकः**। अस्य सामान्यवचनस्योक्तौरसादिसपिण्डमात्रविषयत्वे वैयर्थ्यात्ततश्चानुक्तपत्न्यादिदायप्राप्त्यर्थमिदम्। सपिण्डमध्यात्सन्निकृष्टतरोयः सपिण्डः पुमान्स्त्री वा तस्य मृतधनंभवति। तत्रैकैवौरसः पुत्रइत्युक्तत्वात्साएव मृतधने स्वाधिकारी क्षेत्रजगुणवद्दत्तकयोस्तु यथोक्तंपञ्चमंषष्ठंवा भागंदद्यात्। कृत्रिमादिपुत्राणांसंवर्धनमात्रंकुर्यात्।औरसाभावे पुत्रिका तत्पुत्रश्च दौहित्रएव च हरेदपुत्रस्याखिलंधनमित्युक्तत्वादौरसपुत्ररहितएव तत्रापुत्रोविवक्षितस्तदभावे क्षेत्रजादयएकादशपुत्राः क्रमेण पितृधनाधिकारिणः परिणीतशूद्रापुत्रस्तु दशमभागमात्राधिकारी ना धिकंदशमाद्द्याच्छूद्रापुत्रायेत्याद्युक्त्वाद्दशमभागावशिष्टंधनंसन्निकृष्टसपिण्डोगृह्णीयात्त्रयोदशविधपुत्राभावे पत्नी सर्वभर्तृधनभागिनी। यदाहयाज्ञवल्क्यः ॥ पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥ तत्सुतोगोत्रजोबन्धुः शिष्यस्सब्रह्मचारिणः ॥ एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ॥ स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयंविधिः ॥ बृहस्पतिरप्याह ॥ आम्नाये स्मृतितन्त्रे च लोकाचारे च च सूरिभिः ॥ शरीरार्धंस्मृता जाया पुण्या पुण्यफलेसमा ॥ यस्य नोपरता भार्या देहार्धंतस्य जीवति ॥ जीवत्यर्धशरीरे तु कथमन्यः स्वमाप्नुयात् ॥ सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः ॥ अपुत्रस्य प्रमीतस्य पत्नीतद्भागहारिणी ॥ पूर्वप्रमीताग्निहोत्रंमृते भर्तरि तद्धनम् ॥ विन्देत्पतिव्रता नारी धर्मएषसनातनः ॥ जङ्गमंस्थावरंहेमकुप्यंधान्यमथांबरम् ॥ आदाय दापयेच्छ्राद्धंमासषाण्मासिकादिकम् ॥ पितृव्यगुरुदौहित्रान्भर्तृस्वस्रीयमातुलान् ॥ पूजयेत्कव्यपूर्ताभ्यांवृद्धानप्य-

* ( ख, ग )

तिर्थीस्त्रियः ॥ तत्सपिण्डाबान्धवावा ये तस्याः परिपन्थिनः ॥ हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेत् ॥ वृद्धमनुः ॥ अपुत्राशयनंभर्तुः पालयन्तीव्रते स्थिता ॥ पत्न्येवदद्यात्तत्पिण्डंकृत्स्नमर्थंलभेत च ॥ यदुक्तम् स्त्रीणान्तु जीवनंदद्यादिति संवर्धनमात्रवचनं तद्दुःशीलाधार्मिकसविकारयौवनस्थपत्नीविषयं । अतोयन्मेधातिथिना पत्नोनामंशभागित्वंनिषिद्धमुक्तंतद-संबद्धम् पत्नीनामंशभागित्वंबृहस्पत्यादिसंमतम् । मेधातिथिर्निराकुर्वन्नप्रीणाति सतांमनः । पत्न्यभावेप्यपुत्रिकादुहिता तदभावेपिता माता च तयोरभावे सोदर्यभ्राता तदभावे तत्सुतः । मातर्यपि च वृत्तायां पितुर्माताहरेद्धनमितिवक्ष्यमाणत्वा-त्पितृमाता तदभावेऽन्योपि सन्निकृष्टसपिण्डोमृतधनंगृह्णीयात् । तद्यथा पितामहसंतानेऽविद्यमाने प्रपितामहसंतानएव तदप्युक्तम् अतऊर्ध्वंसपिण्डसन्तानाभावे समानोदकआचार्यः शिष्यश्च क्रमेण धनंगृह्णीयात् ॥ १८७ ॥

( ४ ) **राघवानन्दः** । उक्तमुपसंहरन् सकुल्यादिर्धनहारित्वमाह अनन्तरेति । सपिण्डाद्याऔरसदुहितृजादनन्तराः प-त्नीप्रभृतयः पञ्च । तत्रापि ॥ सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः ॥ अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥ पूर्वप्रमी ताऽग्निहोत्रं मृते भर्तरि तद्धनम् ॥ विन्देत्पतिव्रता नारी धर्मएव सनातनइतिबृहस्पत्युक्तेः । प्रथमतः पत्नीति । सकुल्यपदं ब-न्धोरप्युपलक्षणम् । शिष्यपदंतु तीर्थानाम् । सकुल्योर्हतीत्यध्याहार्यमेवमुत्तरत्रापि ॥ १८७ ॥

( ५ ) **नन्दनः** । नच पुत्रपौत्रप्रपौत्राणां सत्यपि तुल्ये प्रेतोपकरणत्वे तुल्यवद्दायत्वं संभवेन्नापि तेषामभावे सपि-ण्डान्तराणां किन्तु पिण्डप्रत्यासत्तिक्रमेणैवेत्याह अनन्तरः सपिण्डादिति । प्रेतवचनोयं पिण्डशब्दस्तयोरभेदोपचारात् पि-ण्डादनन्तरः प्रत्यासन्नोयः सपिण्डस्तस्य धनंदेयंभवेत् । द्विर्वचनं क्रमप्राप्त्यर्थं अतऊर्ध्वमेभ्यः सपिण्डेभ्यऊर्ध्वं सपिण्डा-भावइतियावत् । सकुल्यः समानोदकोरिक्थहरइत्यनुकर्षः तेषामभावआचार्यः तस्याभावे शिष्योरिक्थहरः स्यात् ॥ १८७ ॥

( ६ ) **रामचन्द्रः** । सपिण्डात् अनन्तरः सनिकृष्टःतस्य तस्य धनं भवेत् ॥ १८७ ॥

## सर्वेषामप्यभावे तु ब्राह्मणारिक्थभागिनः ॥ त्रैविद्याः शुचयोदान्तास्तथा धर्मोन हीयते ॥ १८८ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणास्तद्ग्रामवासिनः । त्रैविद्यास्त्रयीवेदिनः । शुचयः स्वाचाराः । दान्ताः नियते-न्द्रियाः । एतच्च ब्राह्मणधनविषयमितरधनंराजगामि ॥ १८८॥

( ३ ) **कुल्लूकः** । एषामभावइति वक्तव्ये सर्वेषामभावइति यदुक्तंतत्सब्रह्मचार्यादेरपि धनहारित्वार्थं । सर्वेषामभावे ब्राह्मणावेदत्रयाध्यायिनोबाह्यान्तरशौचयुक्ताजितेन्द्रियाधनहारिणोभवन्ति तएवच पिण्डदाः तथासति धनिनोमृतस्य श्राद्धादिधर्महानिर्न भवति ॥ १८८ ॥

( ४ ) **राघवानन्दः** । उक्तानामभावेऽप्याह सर्वेषामिति । ब्राह्मणान्विशिनष्टि त्रैविद्याइति । धर्मोनहीयते त्रैविद्यैः श्राद्धादिनिर्वाहात् । विधिप्रसंगतुल्यत्वादनुवादोयं ब्राह्मणधनहारित्वं नृपतेस्तदन्यधनहारित्वमार्थं अयमप्यनुवादस्तेनैव गतत्वादिति ॥ १८८ ॥

( ५ ) **नन्दनः** । सर्वेषां पुंसां स्त्रीणाञ्च यथा कथञ्चित्संबन्धवताम् ॥ १८८ ॥

( ६ ) **रामचन्द्रः** । त्रैविद्येति । तथा राज्ञां धर्मोनहीयते ॥ १८८ ॥

## अहार्यंब्राह्मणद्रव्यंराज्ञा नित्यमिति स्थितिः ॥ इतरेषांतु वर्णानांसर्वभावे हरेन्नृपः ॥ १८९ ॥

( २ ) **सर्वज्ञनारायणः** । तदेतदाह अहार्यमिति । सर्वाभावे शिष्यपर्यन्ताभावे ॥ १८९ ॥

( ३ ) कुल्लूकः । ब्राह्मणसंबन्धिधनं न राज्ञा कदाचिद्ग्राह्यमिति शास्त्रमर्यादा । किन्तूक्तलक्षणब्राह्मणाभावे ब्राह्मणमात्रेभ्योपिदेयं । क्षत्रियादिधनंपुनःपूर्वोक्तरिक्थहराभावे राजा गृह्णीयात् ॥ १८९ ॥

( ४ ) राघवानन्दः । ब्राह्मणधनं ब्राह्मणब्रुवेपि देयमित्याह अहार्यमिति । ब्राह्मणे धर्मतोऽधर्मतोवा साम्यत्वरसात् ॥ १८९ ॥

( ६ ) रामचन्द्रः । सार्धेनाह इतरेति । इतरेषांतुवर्णानां क्षत्रियादीनाम् ॥ १८९ ॥

**संस्थितस्यानपत्यस्य सगोत्रात्पुत्रमाहरेत् ॥ तत्र यद्रिक्थजातंस्यात्तत्तस्मिन्प्रतिपादयेत् ॥ १९० ॥**

( २ ) सर्वज्ञनारायणः । सगोत्राद्यदि तन्तुसन्तानमाहरेदनियुक्तापि स्त्री तदा गोलकत्वेपि तस्य ज्ञात्यन्तराभावे क्षेत्रपतिधनहारित्वमित्यर्थः । एतच्च शूद्रांप्रत्येवोच्यतइतिकेचित् । अतएव तन्मते गूढजकानीनसहोढजाअपि शूद्रस्यैव पुत्राभवन्ति नतु विप्रादीनामिति ॥ १९० ॥

( ३ ) कुल्लूकः । अनपत्यस्य मृतस्य भार्या समानगोत्रात्पुंसोगुरुनियुक्ता सती नियोगधर्मेण पुत्रमुत्पादयेत्तस्मिन्मृतविषये यद्धनजातंभवेत्तत्तस्मिन्पुत्रे समर्पयेत् देवराद्वासपिंडाद्वाइत्युक्तत्वात् । सगोत्रान्नियोगप्राप्त्यर्थंतज्जस्यचकृत्स्नरिक्थभागित्वार्थमिदम् ॥ १९० ॥

( ४ ) राघवानन्दः । देवराद्वासपिण्डाद्वेत्युक्तमनुवदन्विधवाधनमुत्तरकालीनायापत्याय दापयन्नाह संस्थितस्येति । आहरेद्विधवाभूत्वा जनयेत् । तत्र अनपत्ये पतौ धनं योबिभृयादित्यस्यैवानुवादोयं न्यायस्य तुल्यत्वात् । तत्र जनकोदद्यादत्र जननीदद्यादिति वा भेदः ॥ १९० ॥

( ५ ) नन्दनः । एवमनपत्यधनस्य भ्रातृगामित्वमुक्तमधुना पक्षान्तरमाह संस्थितस्यानपत्यस्येति । अनपत्यस्य संस्थितस्य मृतस्य सगोत्राद्देवरादेस्तं पुत्रमाहरेत्पुत्रमुत्पादयेत् पत्नीगुरुयोगादितिशेषः ॥ १९० ॥

( ६ ) रामचन्द्रः । अनपत्यस्य संस्थितस्य मृतस्य सगोत्रात् तद्रिक्थं आहरेत् । तत्रयत् रिक्थजातंस्यात् तत्तस्मै ॥ १९० ॥

**द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियाधने ॥ तयोर्यद्यस्य पित्र्यंस्यात्तत्सगृह्णीत नेतरः ॥ १९१ ॥**

( २ ) सर्वज्ञनारायणः । एकः स्वभर्तृजोऽन्योगोलकः पौनर्भवोवा उभयोश्च पत्योर्धनं मातरि स्थितं तदा स्वबोजिधनव्यवस्थया ग्राह्यमित्यर्थः । स्त्रियाजातौ धनेपित्र्ये विवदेयातामित्यर्थः । नेतरत् स्वमातृपत्यन्तरधनम् ॥ १९१ ॥

( ३ ) कुल्लूकः । यद्येकारिक्थिनौ स्यातामित्यौरसक्षेत्रजयोरुक्तमिदंत्वौरसपौनर्भवविषयंयदोत्पन्नौरसभर्तुर्मृतत्वात् बाल्यापत्यतया स्वामिधनंस्वीकृत्य पौनर्भवंभर्तुः सकाशात्पुत्रान्तरंजनयेत् तस्यापि च पौनर्भवस्य भर्तुर्मृतत्वाद्रिक्थहरान्तराभावाद्धनंगृहीतवती पश्चात्तौ द्वाभ्यांजातौ यदि विवदेयातां स्त्रीहस्तगतधने तदातयोर्यस्य यज्जनकस्य धनंसतदेव गृह्णीयान्नत्वन्यपितृजोन्यजनकस्य ॥ १९१ ॥

( ४ ) राघवानन्दः । किंच यदिवासापत्या मृतभर्तृका धनमादाय पौनर्भवेन पुत्रान्तरं जनयित्वा यद्युभयोर्धनमादाय तिष्ठेत्तदा कस्य किं धनमित्यपेक्षायामाह द्वाविति । द्वावौरसपौनर्भवौ विवदेयातां धनमावाभ्यांग्राह्यं पोषणंतेकार्य-

---

( १९० ) सगोत्रात्पुत्रमाहरेत्=सगोत्रोवित्तमाहरेत् ( क )

=स्वगोत्रस्तुहरेद्धनम् ( ग )

मिति । नेतरः अन्यपैतृकमन्योन गृह्णीयादितिभावः । अथवा अध्यावहनिकादिस्त्रीधनमात्रविषयम् अतएव स्त्रिया धनमिति समाख्या संगच्छते ॥ १९१ ॥

( ५ ) **नन्दनः** । द्वाभ्यां पुरुषाभ्यां या सपुत्रा सधना भूत्वा पश्चात्पुनर्भूयपरस्मादपि पुत्रंजनयति तस्याः पुत्रयोरयंविभागः ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । द्विपितृकस्य व्यवहारमाह द्वाविति । स्त्रियाधने स्त्रीधननिमित्तेयौ विवदेयातां कीदृशौद्वौ द्वाभ्यांपितृभ्यां जातौ तयोः मातापित्रोः यत्पित्र्यं तत्तस्य विद्यमानपितुः पुत्रः गृह्णीत इतरः पूर्वभर्तृजन्यः न गृह्णीत ॥ १९१ ॥

**जनन्यां संस्थितायान्तु समंसर्वे सहोदराः ॥ भजेरन्मातृकंरिक्थंभगिन्यश्च सनाभयः ॥ १९२ ॥**

( २ ) **सर्वज्ञनारायणः** । समं नज्येष्ठोद्धारेण । मातृकं मातुःस्त्रीधनव्यतिरिक्तधनम् । भगिन्योऽपुत्राः । सनाभयः सोदराः । केचित्तु स्त्रीधनेपि भ्रातृविभागमिच्छन्ति ॥ स्त्रीधनंस्यादपत्यानां दुहिताच तदंशिनी ॥ अप्रत्ताचेत्समूढातु लाभसंमानमात्रकमिति बृहस्पतिवचनात् । एवंचाप्रत्तायाभ्रातृभिःसह तुल्यविभागः । इतरस्यास्तु संमानमात्रंदेयमिति । एतत्परमेवच स्त्रीधनंदुहितृगामीत्यादि ॥ १९२ ॥

( ३ ) **कुल्लूकः** । मातरि मृतायां सोदर्यभ्रातरोभगिन्यश्च सोदर्याअनूढामातृधनंसमंकृत्वा गृह्णीयुः । ऊढास्तु धनानुरूपंसंमानंलभन्ते । तदाह बृहस्पतिः॥ स्त्रीधनंस्यादपत्यानांदुहिता च तदंशिनी ॥ अपुत्रा*चेत्समूढा तु लभते मानमात्रकम्॥ ततश्चानूढानांपितृधनइवोढानांमातृधनंभ्रात्रा स्वादंशाच्चतुर्थभागोदेयः ॥ १९२ ॥

( ४ ) **राघवानन्दः** । मातृसत्वे व्यवस्थोक्ता दैवादविभक्तदशायां सा मृताचित्तदा कथं व्यवस्था तत्राह जनन्यामिति । संस्थितायां मृतायाम् । सनाभयः नाभिरत्र कुक्षिः एकनाभिजाः । अनूढाभ्यस्तु स्वांशेत्यत्र पितृसंबन्धिभ्रातृधने तुरीयांशभागित्वमनूढानां मातृधनेतु समांशभाक्त्वमिति भेदः । अतएव बृहस्पतिः ॥ स्त्रीधनं स्यादपत्यानां दुहिताच तदंशिनीति ॥ अप्रत्ताचेत्समूढातुलभतेमानमात्रकम् ॥ १९२ ॥

( ५ ) **नन्दनः** । एवं पैतृकस्य धनस्य विभागउक्तः इदानीं मातृकस्य धनस्याह जनन्यां संस्थितायामिति। सनाभयः सोदर्याः । भजेरन्संविभजेरन् । उद्धारोविषमविभागः स्यात् ॥ १९२ ॥

( ६ ) **रामचन्द्रः** । भगिन्यश्चसनाभयः साक्षात्स्वमातृदुहितरः ॥ १९२ ॥

**यास्तासांस्युर्दुहितरस्तासामपि यथार्हतः ॥ मातामह्याधनात्किंचित्प्रदेयंप्रीतिपूर्वकम् ॥ १९३ ॥**

( २ ) **सर्वज्ञनारायणः** । प्रत्तासुतु मृतासु ताभ्यःसंमानार्थंयद्देयं तत्तद्दुहितृभ्यः स्वेच्छया मातुलैर्देयमित्याह यास्तासामिति । प्रीतिपूर्वकं स्वेच्छया ॥ १९३ ॥

( ३ ) **कुल्लूकः** । तासांदुहितॄणांयाअनुढादुहितरस्ताभ्योपि मातामहीधनाद्यथा तासांपूजाभवति तथा प्रीत्या किंचिद्दातव्यम् ॥ १९३ ॥

( ४ ) **राघवानन्दः** । तासांदुहितृभ्योपि किंचिद्देयमित्याह याइति । प्रीतिपूर्वकं प्रीत्यर्थं न बलादिति ॥ १९३ ॥

( ५ ) **नन्दनः** । तासां भगिनीनां किंचित्प्रदेयम् प्रीतिपूर्वकमिति वचनादवश्यदेयमितिसूचितम् ॥ १९३ ॥

( ६ ) **रामचन्द्रः** । तासांदुहितरःस्युःतासांदौहित्रीणां यथार्हतोभागः ॥ १९३ ॥

---

* पुत्रा=प्रत्ता ( अ )

**अध्यग्न्यध्यावाहनिकंदत्तंच प्रीतिकर्माणि ॥ भ्रातृमातृपितृप्राप्तंषड्विधंस्त्रीधनंस्मृतम् ॥ १९४ ॥**

( २ ) **सर्वज्ञनारायणः** । अध्यग्नि होमविवाहकाले लब्धं यतःकुतश्चित् । तथा व्यावहारिकं पतिगृहनयनसमये-लब्धम् । प्रीतिकर्मणि रतिकाले पत्या दत्तम् । तत्स्त्रीधनमित्युक्तम् । भ्रात्रादिभिस्तु यदाकदापि दत्तं स्त्रीधनम् ॥१९४॥

( ३ ) **कुल्लूकः** । अध्यग्नीत्यव्ययं विभक्तिसमीपेत्यादिना सूत्रेण समीपार्थेऽव्ययीभावः विवाहकालेऽग्निसन्निधौ यत्पित्रादिदत्तंतदध्यग्निस्त्रीधनं । तदाह कात्यायनः ॥ विवाहकाले यत्स्त्रीभ्योदीयते त्यग्निसन्निधौ ॥ तदध्यग्निकृतंसद्भिः स्त्रीधनंपरिकीर्त्तितम् ॥ यत्तु पितृगृहाद्भर्तृगृहंनीयमानया लब्धंतदध्यावाहनिकं । तथा च कात्यायनः ॥ यत्पुनर्लभते नारी नीयमाना तु पैतृकात् ॥ अध्यावाहनिकंनाम तत्स्त्रीधनमुदाहृतम् ॥ यत्तु प्रीतिहेतुकर्मणि भर्त्रादिदत्तं तथा भ्रात्रा पित्रा च समयान्तरे यद्दत्तं एवंषट्प्रकारकंस्त्रीधनंस्मृतम् ॥ १९४ ॥

( ४ ) **राघवानन्दः** । ननु स्त्रीधनविभागोऽनुपपन्नस्तस्यान्यायोपात्तधनाभावादिति तत्राह अध्यग्नीति । अध्यग्नि-विवाहकालेऽग्निसमीपे पित्रायद्दत्तं तत् । तथाच कात्यायनः ॥ विवाहकाले यत्स्त्रीभ्योदीयते ह्यग्निसन्निधौ ॥ तदध्यग्नि-कृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥ तेनैवोक्तम् ॥ यत्पुनर्लभते नारी नीयमानाहिपैतृकात् ॥ अध्यावहनिकंनाम स्त्री-धनं परिकीर्तितम् ॥ दत्तं भर्त्रा प्रीतिकर्मणि रत्युत्सवादौ ॥ १९४ ॥

( ५ ) **नन्दनः** । अथ स्त्रीधनलक्षणमाह अध्यग्न्यध्यावाहनिकमिति । अध्यग्निविवाहाग्निसमीपे यद्धनंस्त्रिया कुत-श्चिल्लभ्यते तदध्यग्नि आहावनं पितृकुलाद्भर्तृकुलप्राप्तिः । आहवनसमयोपलब्धमाध्यावहनिकं विभक्त्यर्थावधिशब्दौ प्रीति-कर्मणि नमस्कारादौ श्वशुराभ्यान्दत्तं । तथाचकात्यायनः ॥ विवाहकाले यत्स्त्रीभ्योदीयतेह्यग्निसन्निधौ ॥ तदध्यग्निकृतं स-म्यक्स्त्रीधनंपरिकीर्त्तितम् ॥ यत्पुनर्लभते नारी नीयमानापि पैतृकात् ॥ तन्नाम्नाध्याहावनिकं स्त्रीधनं समुदाहृतम् ॥ प्रीति-दत्तंहियत्किञ्चिच्छ्वश्वा वा श्वशुरेणवा ॥ पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥ इतिषड्विधात्स्त्रीधनादन्यत्स्त्रिया य-ल्लब्धंभर्तृधनमेव नतु स्त्रीधनमित्यभिप्रायः ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । अग्निमधि अध्यग्नि विवाहहोमकाले लब्धंयत्किंचित्अध्यावाहनिकं प्रतिग्रहाय समयेय लब्धचं पुनः प्रीतिकर्मणि रतिकाले पत्या दत्तं ॥ भ्रातृमातृपितृप्राप्तंषड्विधं स्त्रीधनं स्मृतम् ॥ १९४ ॥

**अन्वाधेयंच यद्दत्तंपत्या प्रीतेन चैव यत् ॥ पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनंभवेत्॥१९५॥**

( २ ) **सर्वज्ञनारायणः** । अन्वाधेयं विवाहादुपरि भर्तृबन्धुभिर्दत्तम् । पत्याप्रीतेन रतिकालादन्यदा तदुभयं स्त्री-धनत्वाभावेपि पत्यौजीवति मृतायां अपत्यस्यैव । विशेषस्तु स्त्रीधनास्त्रीधनयोः स्त्रीधने दानादिस्वाम्यं स्त्रियानत्वन्यत्रे-ति ॥ १९५ ॥

( ३ ) **कुल्लूकः** । अन्वाधेयंव्याख्यातंकात्यायनेन ॥ विवाहात्परतोयत्तु लब्धंभर्तृकुले स्त्रिया ॥ अन्वाधेयंतदुक्तन्तु सर्वबन्धुकुले तथा ॥ विवाहादूर्ध्वंभर्तृकुले पितृकुले वा यत्स्त्रिया लब्धंभर्त्राच प्रीतेन दत्तंयदध्यग्न्यादिपूर्वश्लोकउक्तंतद्भ-र्तरि जीवति मृतायाः स्त्रियाः सर्वधनंतदपत्यानांभवति ॥ १९५ ॥

( ४ ) **राघवानन्दः** । तर्हिस्त्रीधनापहारोऽपत्यानांप्राप्तइति चेन्न अपत्यानांस्त्रीधनस्य वाचनिकत्वादित्याह अन्वा-धेयेति । अन्वाधेयं ॥ विवाहात्परतोयत्तु लब्धं भर्तृकुले स्त्रिया ॥ अन्वाधेयं तदुक्तं तु सर्वबन्धुकुलेतथेतिकात्यायनो-क्तम् ॥ पत्यौ सति वृत्तायां मातरीतिशेषः । प्रजायाः पुत्रादेः ॥ १९५ ॥

( ५ ) **नन्दनः** । विवाहादनन्तरं भर्तृकुलाद्बन्धुकुलाद्वा आधीयते आदीयते तदन्वाधेयं। रूपसौन्दर्यादिप्रीतेन च भर्त्रा यद्दत्तं धनं जीवति पत्यौ वृत्तायां मृतायां प्रजायाः पुत्रस्य दुहितुर्वा भवेत् । अत्र कात्यायनः ॥ विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ॥ अन्वाधेयन्तदुक्तन्तु लब्धं बन्धुकुलात्तथेति ॥ १९५ ॥

( ६ ) **रामचन्द्रः** । अन्वाधेयं भर्तृकुलेपुनर्लब्धं च पुनः भर्त्राप्रीतेनयत्यस्मात्कारणात् यद्वस्तुदत्तंरतिकालादन्यत्रप्रीतेन पत्या दत्तं वृत्तायाः मृतायाः मातुः प्रजाया दुहितॄणां तद्धनंभवेत् ॥ १९५ ॥

**ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु ॥ अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ १९६ ॥**

( २ ) **सर्वज्ञनारायणः** । ब्राह्मादिविवाहेनोढायायद्धनं स्त्रीधनास्त्रीधनरूपं अप्रजायामनपत्यायांवृत्तायांभर्तुरेव प्रजायांतु सत्यां प्रजायाएव ॥ १९६ ॥

( ३ ) **कुल्लूकः** । ब्राह्मादिषु पञ्चसु विवाहेषूक्तलक्षणेषु यत्स्त्रियः षड्विधंधनंतदनपत्यायां मृतायां भर्तुरेव मन्वादिभिरिष्यते ॥ १९६ ॥

( ४ ) **राघवानन्दः** । अनपत्यायास्तु धनं भर्तुरेवेत्याह ब्राह्मइति । उक्तब्राह्मविवाहादिपञ्चसु पित्रादिभ्योलब्धं भर्तृगामि ॥ १९६ ॥

( ५ ) **नन्दनः** । ब्राह्मादिषु पञ्चसु विवाहेषु यद्धनं स्त्रियै दत्तमितिशेषः ॥ १९६ ॥

( ६ ) **रामचन्द्रः** । ब्राह्म ( २ ) दैव ( ३ ) गान्धर्व ( ४ ) प्राजापत्येषु यद्धनंलब्धंअतीतायां मृतायां तद्धनंभर्तुरेवेष्यते ॥ १९६ ॥

**यत्त्वस्याः स्याद्धनंदत्तंविवाहेष्वासुरादिषु ॥ अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥ १९७ ॥**

( २ ) **सर्वज्ञनारायणः** । मातापित्रोर्नभर्तुः ॥ १९७ ॥

( ३ ) **कुल्लूकः** । यत्पुनः स्त्रियाआसुरराक्षसपैशाचेषूक्तलक्षणेषु विवाहेषु यत्स्त्रियाः षड्विधंधनमपि तदनपत्यायां मृतायां मातापित्रोरिष्यते ॥ १९७ ॥

( ४ ) **राघवानन्दः** । तथा आसुरादिविवाहसंबन्धिधनंतु तत्पित्रोरेवेत्याह यदिति । अतीतायां मृतायामपि । एषु वचनस्य नातिभारइतिन्यायः ॥ १९७ ॥

( ६ ) **रामचन्द्रः** । यत् आसुरादिषु विवाहेषु लब्धंतत्कन्यायाः मातापित्रोरिष्यते ॥ १९७ ॥

**स्त्रियान्तु यद्भवेद्वित्तंपित्रा दत्तंकथंचन ॥ ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥ १९८ ॥**

( २ ) **सर्वज्ञनारायणः** । पित्रादत्तं स्त्रियाःपित्रा तद्ब्राह्मणीकन्या हरेन्नतु भ्रातॄणां विभागः । तदभावे तस्याःस्त्रियाअपत्यस्य । कन्येति दुहितृमात्रपरम् । एवंच ब्राह्मणपरिणीतक्षत्रियाधनमपि तत्पितृदत्तं ब्राह्मणकन्यायाएवेत्युक्तंभवति ॥ १९८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य नानाजातीयासु स्त्रीषु क्षत्रियादिस्त्रियामनपत्यपतिकायां मृतायां तस्याः पितृदत्तंधनंसजातिविजातिसापत्न्यकन्यापुत्रसद्भावेपि ब्राह्मणी सापत्नेयी कन्या गृह्णीयात्तदभावे तदपत्यस्य तद्धनंभवेत् ॥ १९८ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणपरिगृहीतानांक्षत्रियादितिसृणामनपत्यपतिकानांमृतानांब्राह्मणी सापत्नेयी कन्यैव गृह्णीयात् तदभावे तदपत्यं तदभावे ब्राह्मणमात्रं न्यायस्यतुल्यत्वादित्याह नकेस्त्रियास्त्विवति । स्त्रीपदं विप्रपरिणताविजातीयापरं सजातीयानांव्यवस्थोक्तेः । तदपत्यस्य ब्राह्मणीकन्यापुत्रस्येत्यर्थः ॥ १९८ ॥

( ५ ) **नन्दनः** । कथश्चनयेन केन चित्कारेण ब्राह्मणी हरेन्नक्षत्रियादिः ॥ १९८ ॥

( ६ ) **रामचन्द्रः** । स्त्रियामितिसापत्नपुत्रः हीनजातिस्तंप्रत्याह । स्त्रियाः क्षत्रियादिस्त्रियाः यद्वित्तं कथंचन विवाहे पित्रादत्तं तद्धनं ब्राह्मणकन्या या पूर्वं ब्राह्मणी विवाहिता हरेत् गृह्णीयात् । वापक्षान्तरम् । तस्या अपत्यस्य तद्धनं भवेत् ॥ १९८ ॥

**न निर्हारंस्त्रियः कुर्युः कुटुंबाद्बहुमध्यगात् ॥ स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ १९९ ॥**

( २ ) **सर्वज्ञनारायणः** । निर्हारं स्वयमाकृष्यव्ययम् । कुटुम्बात् कुटुम्बपोषणार्थात् । बहुमध्यात् बहुसाधारणधनात् । स्वकात् स्वस्यासाधारणधनादपि स्त्रीधनव्यतिरिक्तात् पत्यनुमतिंविना नकुर्युः ॥ १९९ ॥

( ३ ) **कुल्लूकः** । भ्रात्रादिबहुसाधारणात्कुटुंबधनाद्भार्यादिभिः स्त्रीभीरत्नालङ्काराद्यर्थंधनसंचयंन कर्तव्यं नापिच भर्तृराज्ञांविना भर्तृधनादपि कार्यं ततश्च नेदंस्त्रीधनम् ॥ १९९ ॥

( ४ ) **राघवानन्दः** । वाचनिकातिरिक्तं धनं स्त्रियानेति वक्तुं साधारणधनेषु स्वाच्छन्द्यं निषेधति नेति । निर्हारं अलंकाराद्यर्थंसंचयम् । बहुमध्यगात् देवरादिसाधारणात् । स्वभर्तुरनुज्ञांविना स्वकाद्भर्तृसंबन्धिधनादपि नसंचिनुयादिति नैतादृशं स्त्रीधनमितिभावः ॥ १९९ ॥

( ५ ) **नन्दनः** । अथ स्त्रीधनकृत्यमाह ननिर्हारंस्त्रियइति । पूर्वार्धोपन्यासोदृष्टान्तार्थः। बहुमध्यगाद्बहुजनभोग्यात्कुटुम्बात् कुटुम्बशब्देन कुटुम्बार्थं भर्तृधनमभिप्रेतं निर्हारंव्ययं यथा भर्तुरनाज्ञयाऽऽज्ञया विना न कुर्युः । तथा स्वकादपि च वित्तादिति ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । कुटुम्बात् मध्यगात् एकत्राविभक्तकुटुम्बात् स्त्रियःनिर्हारं व्ययं स्वस्वभर्तुःअननुज्ञया न कुर्युः ॥ ॥ १९९ ॥

**पत्यौ जीवति यः स्त्रीभिरलङ्कारोधृतोभवेत् ॥ न तंभजेरन्दायादाभजमानाः पतन्ति ते ॥ २०० ॥**

( २ ) **सर्वज्ञनारायणः** । पत्यौ जीवति धृतः पत्या तासांभूषणमात्रार्थंदत्तोवाऽदत्तस्तमपि तस्यांजीवन्त्यां न पुत्राभजेरन् मृतायांतु भजेरन्नेव ॥ २०० ॥

( ३ ) **कुल्लूकः** । भर्तरि जीवति तत्संमताभिर्योऽलङ्कारः स्त्रीभिर्धृतस्तस्मिन्मृते विभागकाले तंपुत्रादयोन भजेरन् भजमानाः पापिनोभवन्ति ॥ २०० ॥

( ४ ) **राघवानन्दः** । अलंकारार्थं पत्या दत्तं तन्मृतौ देवरादयोविभजन्तः पापिनः स्युरित्याह पत्याविति । तमपि किंचिन्न्यूनाधिकनिमित्तंन गृह्णीयुरितिभावः ॥ २०० ॥

( ५ ) **नन्दनः** । अलङ्कारस्य स्त्रीधनेष्वनुपदिष्टत्वाद्भर्तृधनत्वेन भर्त्रभावे दायादानां माप्यपवादार्थोयमारंभः ॥२००॥

( ६ ) **रामचन्द्रः** । स्त्रीभिःदायादाः पुत्राः । तं अलंकारम् । ते पुत्राः ॥ २०० ॥

**अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ॥ उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥ २०१ ॥**

( २ ) **सर्वज्ञनारायणः** । अचिकित्स्यः क्लीबः । पतितोमहापातकी प्रायश्चित्तात्पूर्वम् । बधिरोपि जात्या । उन्मादयोऽचिकित्स्याः । जडोऽस्ववशकर्मेन्द्रियः । निरिन्द्रियाः स्पर्शग्रहणादिरहिताः कुणिप्रभृतयश्च ॥ २०१ ॥

( ३ ) **कुल्लूकः** । नपुंसकपतितजात्यन्धश्रोत्रविकलोन्मत्तजडमूकाश्च ये च कुणिपङ्ग्वादयोविकलेन्द्रियास्ते पित्रादिधनहरान भवन्ति किन्तुग्रासाच्छादनभागिनः ॥ २०१ ॥

( ४ ) **राघवानन्दः** । ननु दद्यात्पिण्डंहरेद्धनमित्यादिषु पिण्डदातृत्वेन धनहारित्वस्य सामानाधिकरण्यश्रवणादन्धादेःकागतिरिति चेत्तत्राह अनंशावितिद्वाभ्याम् जडोधर्मापेतोनिरुत्साहः । निरिन्द्रियाहस्तादिरहिताः ॥ २०१ ॥

( ५ ) **नन्दनः** । निरिन्द्रियाः कर्मेन्द्रियरहिताः पङ्ग्वादयोनिर्वीर्याश्च ॥ २०१ ॥

( ६ ) **रामचन्द्रः** । अनंशाविति अभाज्यानाह । अनंशौ अंशानामनर्हौ जात्यन्धबधिरौ । उन्मत्तः वातपित्तश्लेष्मसंनिपातकैर्ग्रहावेशलक्षणैः कम्पाद्यैरभिभूतः । जडः विकलान्तःकरणोहितावधारणाक्षमः । च पुनः ये केचिन्निरिन्द्रियाः व्याध्यादिना निर्गतंइन्द्रियंयेषांते ॥ २०१ ॥

**सर्वेषामपि तु न्याय्यंदातुंशक्त्या मनीषिणा ॥ ग्रासाच्छादनमत्यन्तंपतितोह्यददद्भवेत् ॥ २०२ ॥**

( २ ) **सर्वज्ञनारायणः** । अत्यन्तमददत्सर्वथाऽददत्पतितोभवेदित्यन्वयः ॥ २०२ ॥

( ३ ) **कुल्लूकः** । तदेवाह सर्वेषामिति । सर्वेषामेषांक्लीबादीनांशास्त्रज्ञेन ऋक्थहारिणा यावज्जीवंस्वशक्त्या ग्रासाच्छादनंदेयं । अददत्पापी स्यात् ॥ २०२ ॥

( ४ ) **राघवानन्दः** । एतेष्टौ भर्तव्याः । विपक्षेत्वाह अददत्पतितोभवेदिति । याज्ञवल्क्योप्याह ॥ क्लीबोथ पतितस्तज्जः पङ्गुरुन्मत्तकोजडः ॥ अन्धोचिकित्स्यरोगार्तोभर्तव्याश्च निरंशकाइत्यादि ॥ २०२ ॥

( ५ ) **नन्दनः** । सर्वेषां क्लीबादीनाम् ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । सर्वेषां क्लीबादीनां ग्रासाच्छादनमत्यन्तमददत्पतितो भवेत् ॥ २०२ ॥

**यद्यर्थिता तु दारैः स्यात्क्लीबादीनांकथंचन ॥ तेषामुत्पन्नतन्तूनामपत्यंदायमर्हति ॥ २०३ ॥**

( १ ) **मेधातिथिः** । अर्थितासंप्रयोगेच्छारतिनिमित्तंतस्यांसत्यांविवहेत् तत्रोत्पन्नसंतानानामपत्यंपुत्रोदुहिता वा दायंरिक्थविभागमर्हति । दुहितुर्यावान्भागः प्रागुक्तः वान्तरेतास्तु यः क्लीबस्तस्य भवत्येव मैथुनेच्छा कुतः पुनस्तस्य जंतूत्पत्तिः उक्तंच तस्य यस्तल्पजः न प्रमीतस्य क्लीबस्य व्याधितस्येति रागप्रयुक्तता वा तेन श्लोकेन विवाहस्य दर्शिता । धर्मप्रयुक्तत्वेह्यनधिकृतानांकर्मसु कुतस्तेषांविवाहः आदिग्रहणंचोक्तविषये चरितार्थं । यदिहि आदिग्रहणासामर्थ्यात्सर्वएव गृह्येरन्पतितोऽपि गृह्येत तस्य सर्वएवगृह्येरन्पतितोपि स्मृतिविरोधेनेष्टं अथवा कृताध्ययनानांकृतविवाहानामुन्मत्तादिरूपे समुपजाते विधिरेषविज्ञेयः । ननुच कृतविवाहानां यद्यर्थितातुदारैरिति नोपपद्यते नैतदेवं कृतविवाहानां जायार्थितायाःसंभवात् पूर्वैस्तु धर्म्येपि विवाहेऽस्यप्रयोजनंदृष्टंततश्च क्लीबस्य स्मार्तेष्वधिकारात्तदर्थोविवाहोऽसत्यामप्यर्थितायां युक्तएव । श्रौतेषु तु जातपुत्रस्याधानात्क्लीबस्य नाधिकारः यस्य च प्रयोजकत्वंयुक्तंतद्दर्शयितव्यम् ॥ २०३ ॥

( २ ) **सर्वज्ञनारायणः** । अर्थितेच्छा तेन दारसंबन्धंलक्षयति । क्लीबादीनामित्यतद्गुणसंविज्ञानोबहुव्रीहिः । तत्रपतितस्यापि दारकर्मणामनर्हत्वादग्रहणं तेन जात्यन्धादीनां ग्रहणम् । तेषामुत्पन्नजन्तूनां उत्पन्नापत्यानाम् । तेन पूर्वविभक्तैरपि भ्रातृभिः स्वभागादाकृष्य तत्पितृभागोदेयः । क्लीबपतितयोः पूर्वपरिगृहीतदारत्वे तत्रच क्षेत्रजपुत्रोत्पत्तौ तस्य विभागप्राप्तिरितितु प्रागेव सिद्धम् ॥ २०३ ॥

( ३ ) **कुल्लूकः** । कथंचनेत्यभिधानात्क्लीबादयोविवाहानर्हाइति सूचितं यदि कथंचिदेषांविवाहेच्छा भवेत्तदा क्लीबस्य क्षेत्रजउत्पन्नेऽन्येषामुत्पन्नापत्यानामपत्यंधनभाग्भवति ॥ २०३ ॥

( ४ ) **राघवानन्दः** । क्लीबादिरपत्योत्पत्तौ कागतिस्तत्राह यदीति । दारैःकृत्वा अर्थिता पुत्रादौ तदर्थं दारसंग्रहः । उत्पन्नतंतूनां प्राणधारणार्थं केवलमुत्पन्नानाम् । उत्पन्नजन्तूनामिति पाठे नियुक्तक्षेत्रादिना जनितपुत्राणाम् । एषां क्षेत्रजाद्यपत्यं दायमर्हतीत्यन्वयः ॥ २०३ ॥

( ५ ) **नन्दनः** । उत्पन्नानां स्वयं क्लीबानामपि क्षेत्रोत्पन्नापत्यानाम् ॥ २०३ ॥

( ६ ) **रामचन्द्रः** । तद्गुणसंविज्ञानोबहुव्रीहिः । क्लीबआदिर्येषांतेषांक्लीबादीनांदारैःस्त्रीभिर्यदि कथंचनार्थिता चेत् यदि तेषांक्लीबादीनामुत्पन्नतन्तूनां पुत्राणाम् । क्लीबस्य क्षेत्रजःसंभवत्येव अन्येषांऔरसाअपि ॥ २०३ ॥

**यत्किंचित्पितरि प्रेते धनंज्येष्ठोधिगच्छति ॥ भागोयवीयासांतत्र यदि विद्यानुपालितः॥ २०४ ॥**

( १ ) **मेधातिथिः** । पितृक्रमागतान्मित्राद्राजामात्यपुरोहितादेर्वाक्षेत्राद्वाकयाचिद्युक्त्याऽधिकोत्पत्तिंजनयेत्तत्सर्वेषां साधारणं नैवमन्तव्यं । मयैतद्बुद्ध्या पित्रा प्रागनुपार्जितं मयैतल्लब्धंममैवैतदितितिविद्यानुपालिनइति वचनाद्विद्याजोविनांशिल्पिकारुकप्रभृतीनामेष विधिर्वैद्यनटगायनादीनाम् ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठोविभक्तः स्वयं विद्याप्रकर्षेणापि लब्धे धने ज्येष्ठोभागंदद्यात् । विद्यानुपालिनस्तद्विद्यानुकूलकुटुम्बावश्चर्चाकारिणः । ज्येष्ठइतिवचनात्कनिष्ठार्जितेप्येवंभूतेषु न ज्येष्ठस्याधिकारइति दर्शितम् ॥ २०४ ॥

( ३ ) **कुल्लूकः** । पितरि मृते सति भ्रातृभिः सहाविभक्तोज्येष्ठः किंचित्स्वेन पौरुषेण धनंलभते ततोधनाद्विद्याभ्यासवतांकनिष्ठभ्रातॄणांभागोभवतिनेतरेषाम् ॥ २०४ ॥

( ४ ) **राघवानन्दः** । मृते पितरि स्वपौरुषेणाविभक्तोज्येष्ठोयदामुयात्तत्रापि कनीयसोभागिनइत्याह यदिति । ते यदि विद्यानुपालिनः विद्याभ्यासिनः । विद्यानुपालिनामितिक्वचित्पाठः ॥ २०४ ॥

( ५ ) **नन्दनः** । धनस्य विद्यार्जितस्याविभाज्यत्वं वक्ष्यन् तस्य पुरस्तादपवादमाह यत्किंचिदिति । धनमत्रविद्यार्जितं विवक्षितं यदि विद्यानुपालिनइति लिङ्गादुत्तरश्लोकानुगुण्याच्च कनिष्ठाविद्याधिगते विद्या धने विद्यानुपालिनामपि ज्येष्ठानां न भागः । ज्येष्ठग्रहणाद्यवीयसामिति वचनाच्च ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । पितरि प्रेते यत्किंचिद्धनंज्येष्ठः अधिगच्छति अविभक्तः सन्प्राप्नोति यदिविद्यानुपालितः ॥२०४॥

**अविद्यानान्तु सर्वेषामीहातश्चेद्धनंभवेत् ॥ समस्तत्र विभागः स्यादपित्र्यइति धारणा ॥ २०५॥**

( १ ) **मेधातिथिः** । अविद्याकृषिवाणिज्याराजोपसेवादि तत्र ईषन्न्यूनाधिकभावोनगणयितव्यः तत्रापि यदि केनचिदपि बह्वर्जितं तदाऽस्त्येव विभागता ज्येष्ठस्य तु ज्येष्ठांशनिषेधार्थंवचनं ईषदाधिक्ये तु सर्वेषांसमांशकल्पना अपित्र्येऽपि हेतुवचनादनपत्यधनस्याप्येषएव विधिः ॥ २०५ ॥

( २ ) **सर्वज्ञनारायणः** । यदि सर्वएव निर्विद्याः ईहातइतस्ततोगमनेन पितृधनक्षतिंविना धनमर्जितवन्तः*अविद्यानामिति । यदिसर्वएवनिर्विद्याः यदितु पितृधनेन वाणिज्यादिनार्जितंधनं तदा ज्येष्ठोद्धारोऽदेयइत्याह अपित्र्यइति ॥ २०५॥

( ३ ) **कुल्लूकः** । सर्वेषांभ्रातॄणांकृषिवाणिज्यादिचेष्टया यदि धनं स्यात्तदा पित्र्यवर्जिते तस्मिन्धने स्वार्जिते समोविभागः स्यान्नतूद्धारः अपित्र्यइतिनिश्चयः ॥ २०५ ॥

( ४ ) **राघवानन्दः** । तद्रहितानामपि धनाद्यर्थमीहमानानां समोभागइत्याह अविद्यानांचेति । अपित्र्ये पितृधनाति

---

* अविद्यानामिति=तत्रकनिष्ठेनार्जितेनापिज्येष्ठस्यसमभागिताअविद्यानामिति ( सर्वज्ञ० २ )

रिक्ते तस्मिंस्तु सोद्धारादिविषमविभागउक्तइति । धारणा शास्त्रमर्यादा । तेन विद्यानभ्यासिनामनीहमानानांच न तादृग्ध ने भागइतिभावः ॥ २०५ ॥

( ५ ) **नन्दनः** । ईहातः कृष्यादिचेष्टातः सर्वेऽपि यथासामर्थ्यंहरन्ति चेत्सर्वोहि विभागः स्यान्नान्यथेति अपित्र्ये-ऽपितृकृते पितृकृतस्य तु विभागवैषम्यमभ्यनुज्ञातमेव अत्रईशनस्य धनस्य समविभागवचनात्पूर्वस्मिन् श्लोके यवीयसां विद्याधनेषु समन्वयमात्रमभिहितं नत्वाम्यमित्यवगन्तव्यम् ॥ २०५ ॥

( ६ ) **रामचन्द्रः** । अविद्यानांसर्वेषां ईहातोवाणिज्यादिना चेद्धनंभवेत् समस्तत्र विभागःस्यात् अपित्र्यइतिधारणा ॥ २०५ ॥

**विद्याधनन्तु यद्यस्य तत्तस्यैव धनंभवेत् ॥ मैत्र्यमौद्वाहिकंचैव माधुपर्किकमेव च ॥ २०६ ॥**

( १ ) **मेधातिथिः** । विद्यायाअध्यापनादिना शिल्पकौशलेन वा तथा मित्रादर्जितमौद्वाहिकंचैव माधुपर्किकमा-र्त्विज्येन यदाप्येतदपि विद्याधनंभवति तथापि ज्ञायमानेन निमित्तेनोपादीयमानत्वाद्भेदेन व्यपदिश्यते श्वशुरगृहलब्ध-मौद्वाहिकमपरे उद्वाहनिमित्तेन यतस्तल्लभ्यते ॥ २०६ ॥

( २ ) **सर्वज्ञनारायणः** । विद्याधनं विद्ययाधनं एतच्च भ्रातॄणां विद्यानुपालिनः तद्विद्यानुकूलपालित्वेपिज्येष्ठस्य कनिष्ठेनविद्यया लब्धे । मैत्रं मित्रात्प्राप्तम् । औद्वाहिकं भार्याबन्धुभ्योलब्धम् । माधुपर्किकं स्नातकत्वादिनार्हणार्थंद-त्तान्मधुपर्काल्लब्धम् ॥ २०६ ॥

( ३ ) **कुल्लूकः** । विद्यामैत्रीविवाहार्जितंमाधुपर्किकंमधुपर्कदानकाले पूज्यतया यल्लब्धंतस्यैवतत्स्याद्यत्किंचि-त्पितरीत्युक्ताऽयमपवादः । विद्याधनंच व्याख्यातंकात्यायनेन ॥ परभक्तप्रदानेन प्राप्ताविद्यायदान्यतः । तया प्राप्तंच विधिना विद्याप्राप्तंतदुच्यते ॥ उपन्यस्ते च यल्लब्धंविद्यया पणपूर्वकम् । विद्याधनन्तु तद्विद्याद्विभागे न विभज्यते ॥ शिष्यादार्त्वि-ज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धंप्राध्ययनाच्च यत् ॥ विद्याधनन्तु तत्प्राहुर्विभागे न विभज्यते ॥ अतोयन्मेधातिथिगोविन्दराजाभ्यां माधुपर्किकमार्त्विज्यधनंव्याख्यातंतदयुक्तम् विद्याधनत्वात् ॥ २०६ ॥

( ४ ) **राघवानन्दः** । अविभक्तैरपि विद्यायुपार्जितं धनं न विभजनीयमित्याह विद्याधनमिति । शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात् ॥ अज्ञातशंसनाद्वादाल्लब्धंप्राध्ययनाच्चयत् ॥ विद्याधनंतु तत्प्राहुर्विभागे न विभज्यतइतिका-त्यायनोक्तेः ॥ विद्याधनंसमधाआर्त्विज्यतः आर्त्विज्यंकृत्वा । प्रश्नात्प्रश्नेन परितोष्य । अज्ञानशंसनात् खण्डनादज्ञान स्य । प्राध्ययनाद्विद्यार्जितगुणविशेषादित्यर्थः । मैत्रमित्रतोलब्धम् । माधुपर्किकं तत्संबन्धि राजतपात्रादि । तथाच याज्ञव-ल्क्यः ॥ पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ॥ मैत्रमौद्वाहिकंचापिदायादानां न तद्भवेत् ॥ पितृद्रव्याविरोधेनेत्यस्याय मर्थः पित्राशरीरमात्रोद्धरितःसन्यद्धनं संचिनोति तत्कस्मैचिन्न देयं । नतुपितृद्रव्यमुपजीव्ययदार्जितमिति ॥ २०६ ॥

( ५ ) **नन्दनः** । विद्याधनं प्रवचनशिल्पार्जितं । मैत्र्यं मित्रतो लब्धं । औद्वाहिकं विवाहकाले लब्धं । माधुपर्किकं मधु-पर्ककालेलब्धम् ॥ २०६ ॥

( ६ ) **रामचन्द्रः** । मैत्र्यं मित्रात्प्राप्तम् । औद्वाहिकं पारिबर्हम् । माधुपर्किकं मधुपर्ककाले प्राप्तम् ॥ २०६ ॥

**भ्रातॄणांयस्तु नेहेत धनंशक्तः स्वकर्मणा ॥ सनिर्भाज्यः स्वकादंशात्किंचिद्दत्वोपजीवनम् ॥ २०७ ॥**

( १ ) **मेधातिथिः** । ये भ्रातरः सहवसन्तिविद्यमानपितृधनाश्च कृष्यादिना व्यवहरन्ति तेषांयद्येकोनव्यवहरेत्तस्ये-यंनिर्भाज्यतापठ्यते सनिर्भाज्यःस्वकादंशादिति भागान्नेतव्योऽपसारयितव्यः स्वकादंशाद्यावदधिकंतदीयाद्धनाद्यव्यवहारे-

णोत्पन्नंतत्तस्य न दातव्यं नतुमूलधनस्य पैतृकस्यनिषेधः तत्रापि न सर्वेण सर्वनिर्भाज्यं किंचिदन्योपजीवनं क्लेशफलमात्मनोगृहीत्वा शिष्टमस्मैदातव्यम् । अथवानिर्भाज्यः पृथक्कार्यःसहवस्तुं नचेयंकदाचिदुत्तरकालशक्तिसाधारण्येन धनेनार्जितत्वात्समांशता तत्र भागकल्पना नारदेनदर्शिता तत्रवचनेनाद्रतस्य निर्गतस्य भूयान्भागोगृह्यतेऽनुक्तस्य स्वल्पइति ॥ २०७ ॥

( २ ) **सर्वज्ञनारायणः** । भ्रातॄणांमध्ये योनेहेत नेच्छेत दत्तं पित्र्यधनादंशउपजीवनंधनंकिंचिद्दत्वा निर्भाज्योविभक्तःकर्तव्योभ्रातृभिः स्वधनात् ॥ २०७ ॥

( ३ ) **कुल्लूकः** । राजानुगमनादिकर्मणा योधनमर्जितुंशक्तोभ्रातॄणांसाधारणंधनंनेच्छति सत्स्वीयादंशात्किंचिदुपजीवनंदत्वा भ्रातृभिः पृथक्कार्यः । तेन तत्पुत्रास्तत्र धने कालान्तरे न विवदन्ते ॥ २०७ ॥

( ४ ) **राघवानन्दः** । यस्तुप्रकारान्तरेण जीवितुं शक्तोयदि नेहेत नांशमिच्छेत्तस्मै किंचिद्दत्वा विभजेदित्याह भ्रातॄणामिति । निर्भाज्यः [ निर्गतभागःउपजीवनं तदपेक्षितम् । ]‡ दानंतु तत्पुत्रादिदायनिवृत्त्यर्थमितिभावः ॥ २०७ ॥

( ५ ) **नन्दनः** । निर्भाज्योऽभागः ॥ २०७ ॥

( ६ ) **रामचन्द्रः** । भ्रातॄणामितियोत्रस्वाधिकारीअलोभान्नजिघृक्षतितंप्रत्याह । भ्रातॄणां सकाशात् यः भ्राताधनंनईहेत न स्वीकुर्यात् सः स्वकादंशात् निर्भाज्यः नितान्तंभाज्यःदापनीयः किंचिद्दत्वोपजीवनंकिंचित् असारंतस्मैदत्वा सः विभक्तःकर्तव्यः कीदृशः यः स्वकर्मणा । उद्यमोपार्जितद्रव्येण शक्तः पूर्णः ॥ २०७ ॥

**अनुपघ्नन्पितृद्रव्यंश्रमेण यदुपार्जितम् ॥ स्वयमीहितलब्धंतन्नाकामोदातुमर्हति ॥ २०८ ॥**

( १ ) **मेधातिथिः** । विद्यानिमित्तस्य स्वयमर्जितस्यादानमुक्तं अनेन व्यतिरिक्तस्य कृष्यादिलब्धस्यादातव्यतोच्यते ननुचायमेव श्लोकोनवक्तव्यः स्वयमीहितेन स्वयंचेष्टया यल्लब्धंतन्नाकामोदातुमर्हतीति किंविद्याधनादिश्लोकेन उच्यते मन्त्रेविवाहादौ न सर्वस्य स्वयमीहोपपत्तिरितिभेदेन व्यपदेशः ॥ २०८ ॥

( २ ) **सर्वज्ञनारायणः** । श्रमेणातिश्रमजन्यकर्मणा स्वयमीहितेन स्वमात्रोद्यमेन लब्धं नाकामोदातुमर्हति यावद्दिच्छति तावत्किंचिद्दद्यान्नतुसमभागनियमः श्रमेणेत्युक्तत्वात् । अश्रमार्जिते प्रागुक्तः समभागः ॥ २०८ ॥

( ३ ) **कुल्लूकः** । पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्जयेत्तत्स्वचेष्टाप्राप्तमनिच्छन्भ्रातृभ्योदातुंनार्हति ॥ २०८ ॥

( ४ ) **राघवानन्दः** । तन्नदद्युरित्याह अनुपघ्नन्निति । अनुपघ्नन् अनुपजीवन् । ईहितंलब्धं विद्ययाप्राप्तं । तत्तुव्याख्यातं पूर्वयाञ्चवल्क्यव्याख्याकाले ॥ २०८ ॥

( ५ ) **नन्दनः** । अनुपघ्नन्हिंसननपाश्रयन्निति वा श्रमेण कृष्यादिकर्मणा पूर्वत्र सर्वेषु यथासामर्थ्यमीहमानेषु भ्रातृषु समविभागउक्तइत्यत्राविरोधोनुसन्धेयः ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । पितृद्रव्यंअनुपघ्नन्अव्ययंकुर्वन् स्वयमीहितलब्धं स्वव्यापारेण लब्धं यत् तत् अकामःसन् दातुंनार्हति ॥ २०८ ॥

**पैतृकन्तु पिताद्रव्यमनवाप्तंयदाप्नुयात् ॥ न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥ २०९ ॥**

( १ ) **मेधातिथिः** । ग्रहणादन्यदर्थयन्पित्रा स्वयमर्जितं तदाकामोन विभजनीयोऽधिकारप्राप्तैरपि पुत्रैः कःपुनर्जीव-

( ‡ ) न

ति पितरि पुत्राणांविभागकालउच्यते यदा तावत्स्वयंपिता पुत्रान्विभजते तदोक्तं मातुर्निवृत्तेरजसीति जीवतिचेच्छतीति तथा पितर्यगतस्पृहे निवृत्ते वापिरमणइति अन्यथा तु यदैवप्राप्ताःपुत्राभवन्ति यतस्ते पितामहधनस्येशते । तथाचोक्तं ॥ भूर्यापितामहोपात्तानिबन्धोद्रव्यमेववा । तत्र स्यात्सदृशंस्वाम्यंपितुः पुत्रस्य चोभयोरिति ॥ सत्यपि च पुत्रस्य स्वाम्ये[यावद्प्राप्तास्तावत्] सर्वथा विशेषाभावात्सर्वेपितामहधनभाजः स्वत्वपूर्वकत्वाद्विभागस्य बन्धक्रयादिक्रियासु पितृधनंजातपुत्रेण नियोक्तव्यं योगकुटुंबभरणादौ तु विनियोगोदर्शितः । आचारे सत्यपि चास्यामवस्थायांपुत्राणांस्वाम्ये पुत्रकामेन वाविभक्ताविति निन्दादर्शनाद्बलाद्विभाजयन्तः पापाइत्यनुमीयते यथाऽसकृत्प्रतिग्रहेणभवतिस्वाम्यं दोषस्तु पुरुषस्य तेनान्वयागतमितीदृशमशुद्धमेव अतः संभवत्युपायान्तरे नपितार्थनीयः अधर्मोहि तथास्यात् । स्वयमर्जितमपि धनमधिकारप्राप्तान्गुणवतः पुत्रान् ज्ञात्वा विभक्तमेव । उक्तंच वयसि स्थितः पिता पुत्रान्विभजेत् ज्येष्ठंश्रेष्ठांशेनेतरान्समैरंशैरिति । नचैतत्पितामहधनविषयं । नहि तत्र पिता ज्येष्ठस्याधिकांशदानाय प्रभवति तुल्यत्वादुभयोः स्वाम्यस्य यत्विदं ॥ न्यूनाधिकविभक्तानांधर्म्यः पितृकृतःस्मृतइति ॥ तत्पितामहेपिस्वल्पया मात्रयेच्छन्ति यत्र न परिपूर्णभागद्वयंगृहीतंस्वयमर्जितविषये ह्यपवादएव स्यात् ॥ २०९ ॥

( २ ) **सर्वज्ञनारायणः** । पैतृकं स्वपितृसंबन्धि अनवाप्तं स्वोद्यमेनापि स्वपित्रा । प्राप्नुयात् महतायत्नेन । अकामोनविभजेन्नविभजेत । एवंच स्वयमतिप्रयत्नाऽनुपार्जितं पितृद्रव्यं पुत्राणामिच्छयापि विभजेदित्युक्तम् । ततःपरंच तत्रस्यात्सदृशंस्वाम्यमितियाज्ञवल्क्यवचनम् ॥ २०९ ॥

( ३ ) **कुल्लूकः** । यत्पुनः पितृसंबन्धिधनंतेनासामर्थ्येनोपेक्षितत्वादनवाप्तं पुत्रःस्वशक्त्या प्राप्नुयात्तत्स्वयमर्जितमनिच्छन्पुत्रैः सह न विभजेत् ॥ २०९ ॥

( ४ ) **राघवानन्दः** । यद्धनं पितृपितामहादिसंबन्धि अथ केनापि बलवता न लब्धं पश्चात्पित्रालब्धं स्वयमर्जितं तदेव तदकामः पिता न पुत्रेभ्योविभजेदित्याह पैतृकमिति । याज्ञवल्क्योप्याह ॥ क्रमादभ्यागतंवित्तं हृतमभ्युद्धरेत्तु यः ॥ दायादेभ्योन तद्दद्याद्विद्यया लब्धमेव च ॥ एतत्पुत्राणां समुत्थानकृतविभागे । स्वयंकृतविभागेतु ॥ विभागंचेत्पिता कुर्यादिच्छया विभजेत्सुतानिति ॥ दायादेभ्यः स्वपुत्रेभ्यः ॥ २०९ ॥

( ५ ) **नन्दनः** । अनवाप्तमन्यैरपहृतत्वात्स्वयंपित्रा पूर्वप्रत्युत्पन्नं स्वयमाप्नुयात्प्रत्यापद्यतभजेत् स्वयमर्जितत्वादित्यर्थः । एवंवदता पितामहादिधनस्य विभागकाले पित्रा पुत्रैः सह सममेवावश्यं विभाज्यमित्यर्थादुक्तंभवति ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । पैतृकं द्रव्यंपिता यत् अनवाप्तंस्वपितृभ्यःस्वपुत्रादिभिः अनवाप्तं यत् आप्नुयात्स्वयमर्जितं अकामः सन्तत्पुत्रैःसार्धंन भजेत् ॥ २०९ ॥

**विभक्ताः सहजीवन्तोविभजेरन्पुनर्यदि ॥ समस्तत्र विभागस्याज्यैष्ठ्यंतत्र न विद्यते ॥२१०॥**

( १ ) **मेधातिथिः** । स्पष्टार्थः श्लोकः विभागधर्मे विभागस्योद्धारप्रत्याशङ्कानिवृत्त्यर्थंस्वपितृभ्यइति धारणेति वचनात् पित्र्यस्य सर्वधनस्योद्धारः इहतु भूतः सर्वगत्या पित्र्यंनास्तीत्याशङ्क्यावचनम् ॥ २१० ॥

( २ ) **सर्वज्ञनारायणः** । विभक्ताः पूर्वं पुनर्धनंसंगृह्य जीवन्तोयदि पुनर्विभागंकुर्युः । समोनतु ज्येष्ठोद्धारदानम् । ज्यैष्ठ्यं ज्येष्ठलभ्यउद्धारः ॥ २१० ॥

---

( १ ) मेधा० ८

( ३ ) कुल्लूकः । पूर्वसोद्धारंनिरुद्धारंवा विभक्ताभ्रातरः पश्चादेकीकृत्य धनंसहजीवन्तोयदि पुनर्विभागंकुर्वन्ति तदा तत्र समोविभागः कार्यः ज्येष्ठस्योद्धारोन देयः ॥ २१० ॥

( ४ ) राघवानन्दः । प्रथमं पितृकृतविभागांस्तदुत्तरमेकीभूतान् संसृष्टिनःपुनरपि भागेच्छून्प्रत्याह विभक्ताइति । ज्यैष्ठ्याभावतात्पर्यकमिति ॥ २१० ॥

( ५ ) नन्दनः । अथ संसृष्टीनांविभागे विशेषमाह विभक्ताः सहजीवन्तइति विभजेरन्संसृष्टिभिः पुनरार्जितद्रव्यं ज्यैष्ठ्यं ज्येष्ठेन दत्तोविभागातिशयः एवंवदता प्रथमविभागे ज्येष्ठस्य भागातिशयपक्षएवादरणीयइति ॥ २१० ॥

( ६ ) रामचन्द्रः । पूर्वविभक्ताःपश्चात्सहमिलित्वाजीवन्तोयदि पुनर्विभजेरन् ॥ २१० ॥

**येषाञ्ज्येष्ठः कनिष्ठोवा हीयेतांशप्रदानतः ॥ म्रियेतान्यतरोवापि तस्य भागोनलुप्यते ॥ २११ ॥**

( १ ) मेधातिथिः । येषांभ्रातॄणाञ्ज्येष्ठः कनिष्ठोवा भ्राताऽंशप्रदानाद्धीयते अंशप्रदानंविभागकालः हीयते यदित्याद्य विभागार्थंच हेतुमासादयेत् म्रियेत वा तस्यां भागोन लुप्यते तस्येयंप्रतिपत्तिः ॥ २११ ॥

( २ ) सर्वज्ञनारायणः । हीयेत विभागानन्तरोत्पन्नक्लीबत्वादिना म्रियेतान्यतरोविभागानन्तरं तस्यभागोयः पूर्वव्यवस्थितः सन लुप्यते न सर्वैर्विभज्यलोप्यः ॥ २११ ॥

( ३ ) कुल्लूकः । येषांभ्रातॄणांमध्ये कश्चिद्विभागकाले प्रव्रज्यादिना स्वांशाद्धीयेन्मृतोवा भवेत्तस्य भागोन लुप्येत् ॥ ॥ २११ ॥

( ४ ) राघवानन्दः । तथाविधेषु यदि कश्चित्प्रव्रजेन्म्रियेत वा तदंशं सर्वे सहोदराविभज्य गृह्णीयुरित्याह येषामितिद्वाभ्याम् । न लुप्यतेकिंतुयथायोगं विभज्यतइत्याह सोदर्याइति । अनूढभगिन्याः अस्य तात्पर्यमाह याज्ञवल्क्यः ॥ संसृष्टिनस्तु संसृष्टी सोदरस्यतु सोदरः ॥ दद्याच्चापहरेदंशं जातस्य च मृतस्य च ॥ तत्रापि ॥ अन्योदर्यस्तु संसृष्टी नान्योदर्योधनं हरेदिति ॥ संसृष्टीतु ॥ विभक्तोयः पुनःपित्राभ्रात्राचैकत्र संस्थितः ॥ पितृव्येनाथवा प्रीत्या सतु संसृष्टउच्यतइत्युक्तः । भगिन्योऽनूढाश्चेनस्य पुत्रपत्नीदुहितृपितृमात्रभावे ॥ २११ ॥ ॥ २१२ ॥

( ५ ) नन्दनः । अंशप्रदानतोवा हीयेतदूरं प्रोषितत्वात् पतितोवा स्यात् ॥ २११ ॥

( ६ ) रामचन्द्रः । येषां भ्रातॄणांमध्ये ज्येष्ठःकनिष्ठोवा अंशः प्रदानतः हीयेत सन्यस्य यतित्वादिना स्वयंभागंनाप्नोतिशुद्धोवा अन्यतरः मध्यमःम्रियेत वा तस्य भागोन लुप्यते ॥ २११ ॥

**सोदर्याविभजेरंस्तंसमेत्य सहिताः समम् ॥ भ्रातरोये च संसृष्टाभगिन्यश्च सनाभयः ॥ २१२ ॥**

( १ ) मेधातिथिः । सोदर्याभ्रातरोयेषांसंसृष्टार्थं गृह्णीयुः । भगिन्यश्च सनाभयः सोदर्याअपुत्रास्ताहि सनाभिव्यपदेश्याः प्रवृत्ताःपुनःप्रतिगोत्रभावमनुभवन्तीति न भ्रातॄणांसनाभयः येच संसृष्टाइति च शब्दोभगिनीसमुच्चिनोतित्वियमाशङ्काकर्तव्या। सोदर्यागृह्णीयुर्यश्च भ्रातरः संसृष्टाइति तथासत्यसोदर्याणामपि संसृष्टानांभागः प्रसज्येत सन्त्येव सोदर्याअसंसृष्टाः संसृष्टाश्च सोदर्यायत्र सन्ति तत्रोभयोरपि विभागेन विभागंगृह्णीयुः नचेदंविरुध्येत ॥ अन्योदर्यस्तु संसृष्टीनान्योदर्यधनंहरेत् । असंसृष्टोपिवादद्यात्सोदर्योनान्यमात्रिकः ॥ अस्यायमर्थः सापत्नोभ्राता सत्यपि संसृष्टित्वेन गृह्णाति यदासोदर्योऽसंसृष्टोऽपि विद्यते सोदर्याणांमध्यायेन संसृष्टःसएव नान्यः सत्यपि सोदर्यत्वे । तदुक्तं ॥ संसृष्टिनस्तु संसृष्टीसोदर्यस्य तुसोदरइति ॥ यदा तु सोदरानैव सन्ति तदा येरेव सापत्नैःसंसृष्टस्तएव गृह्णीयुर्नत्वितरे । सोदर्यविभक्तानांसहवसतांमहानिकटभावसत्यपि सा-

न्निध्यं विशेषकार्यसामान्योत्थविभक्तानामपि विज्ञायतइत्याहुः तेन विभक्तानामप्यन्यतरप्रमेयसोदर्यएव गृह्णीयान्नास्य भागः परिलुप्यते नचैतच्चोदनीयंनैवास्य तदानींभागउत्थितःपरलोकोवा चिन्त्यते यतउक्तं समुत्पन्ने वाच्यः स्वामीति। अनीशास्ते हि जीवतोरिति ॥ २१२ ॥

( २ ) **सर्वज्ञनारायणः**। यत्कार्यंतदाह सोदर्याइति। संसृष्टिनः सोदराः सापत्नावा। सनाभयः सोदराः। तत्रच संसृष्टिसोदरसद्भावे तस्यैवतत्। तदभावे*सापत्नस्यापि संसृष्टिनः तदभावे भगिनीनां सोदर्याणां तदभावे तद्भ्रातृभ्रातृपुत्राणां तदभावेत्वसोदरादेरपि। एतच्च सर्वं पुत्रपत्नीदुहितृमातृपित्रभावे तत्सद्भावेतु तेषामेव। केचित्तु वचनद्वयमेतदप्राप्तविभागस्य क्षीरादेर्विभागाद्वाप्रागेव मृतस्य विभागकाले भागमाकृष्य सोदरादिभिर्ग्राह्यमित्येतत्परंव्याचक्षते। अपरेतु विभक्ताएव यदि पुनः संसृष्टास्तन्मध्ये एकस्य भ्रातुर्मरणे तद्भागव्यवस्था श्लोकद्वयेन दर्शितेत्याहुः ॥ २१२ ॥

( ३ ) **कुल्लूकः**। किन्तु सोदर्याभ्रातरः समागम्य सहिताः भगिन्यश्च सोदर्यास्तमंशंसमंकृत्वा विभजेरन्सोदर्याणांसापत्न्यानामपि मध्यात् ये मिश्रीकृतधनत्वेनैकयोगक्षेमास्ते विभजेयुः समंसर्वेसोदर्यासपत्न्यावा एतच्च पुत्रपत्नीपितृमात्रभावे द्रष्टव्यम् ॥ २१२ ॥

( ५ ) **नन्दनः**। सोदर्याभ्रातरोविभागकाले सहिताभूत्वा समेत्यैकमत्यमुपागम्यतं प्रोषितप्रव्राजितादिभ्रातृभागं संविभजेरन् सोदराभावे संसृष्टास्तदभावेसनाभयोभगिन्यः समविभागविषयत्वादेवास्य संसृष्टिविभागोनन्तरमुक्तः न पुनः संसृष्टिविषयत्वेन अपुत्रभ्रातृविभागविषयं चैतत्स्मृत्यन्तरानुगुण्यात् ॥ २१२ ॥

( ६ ) **रामचन्द्रः**। सोदर्याः सहिताः समेत्यसमं भजेरन् येच सापत्नभ्रातरः संसृष्टाः चपुनःभगिन्यश्च सनाभयः सहोदरभगिन्यः समम् ॥ २१२ ॥

**योज्येष्ठोविनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः ॥ सोज्येष्ठः स्यादभागश्चनियंतव्यश्च राजभिः॥२१३॥**

( १ ) **मेधातिथिः**। तत्र पितुरूर्ध्वंरूमनन्तरमेव पुत्राणांस्वाम्यंदर्शयति विनिकारोराजपूजादिष्ववज्ञा परेधनेन वंचनं अज्येष्ठोबन्धुवत्पूज्यइत्युक्तं न सर्वेण सर्वे ज्येष्ठवृत्तिनिषेधोऽभागकत्वंच ज्येष्ठांशनिर्हत्वंनियन्तव्यमविशेषोपदेशात् वाग्दण्डधिग्दण्डाभ्यां धनंचार्थानुरूपेऽपराधे ॥ २१३ ॥

( २ ) **सर्वज्ञनारायणः**। विनिकुर्वीत लुप्तभागानल्पगान्वाकर्तुंयतेत। अज्येष्ठोज्येष्ठोचिताभिवादनाद्यनर्हः। एवंच ज्येष्ठइत्यभिधानान्नकनिष्ठानांलुब्धत्वकरणेऽभागत्वमितिग्राह्यम् ॥ २१३ ॥

( ३ ) **कुल्लूकः**। योज्येष्ठो भ्राता लोभात्कनीयसोभ्रातॄन्वंचयेत्सज्येष्ठभ्रातृपूजाशून्यः सोद्धारभागरहितश्च राजदण्ड्यश्च स्यात् ॥ २१३ ॥

( ४ ) **राघवानन्दः**। लोभादिना ज्येष्ठस्य कनीयस्त्यागे राजदण्डमाह यइति। विनिकुर्वीत निःसारयेत्। अज्येष्ठः ज्येष्ठत्वेन या पूजा तच्छून्यः। अभागः पितृधनाद्यपात्रम् ॥ २१३ ॥

( ५ ) **नन्दनः**। एवंज्येष्ठस्य संसर्गादिविषये समविभागत्वमुक्त्वेदानींतस्य क्वचिद्विषयेऽभागत्वमाह योज्येष्ठोविनिकुर्वीतेति। विनिकुर्वीत निराकुर्वीतेति ॥ २१३ ॥

( ६ ) **रामचन्द्रः**। योज्येष्ठोलोभाद्यवीयसोभ्रातॄन् विनिकुर्वीत परिभवेत् सोऽज्येष्ठोज्येष्ठवत्पूजार्होन भवति। च पुनः अभागः अधिकांशहरोन ॥ २१३ ॥

---

* तदभावे=तदभावेसोदरमात्रस्यतदभावे ( सर्व० २ ) ( १ ) समं=न ( अ )

**सर्वएवविकर्मस्थानार्हन्ति भ्रातरोधनम् ॥ नचादत्वा कनिष्ठेभ्योज्येष्ठः कुर्वीत यौतकम् ॥२१४॥**

( १ ) **मेधातिथिः** । विकर्मस्थाःप्रतिषिद्धाचरणाः कुटुंबार्थे चानुतिष्ठमानानांतेषामन्येषांभ्रातृणांसंबन्ध्युपविष्टंस्थापयेद्यत्तेवक्ष्यन्ते कुतस्तद्वर्धनमिति तदा मूलंदर्शयिष्यामीति तादृशवृद्धिसहितमपि सर्वेषामपि दापयेत् यदि तु तस्मिन्नेव काले भ्रातृणांदर्शयेदिदमधिकंदृश्यते तद्यथांशंगृह्णीताहमिति स्वतस्तत्पृथक्कृत्य वृद्धिंनेष्यामीति तदा नास्ति तेषांभागस्तस्यैवनयौतकम् ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । विकर्मस्थाः ब्राह्मणाःसन्तोगोरक्षणशूद्रसेवादिकुवृत्तिपराः । नचेति । यौतकं पित्रर्थादन्यत्कृतंपृथग्भूतं स्वार्थव्ययं पितृधनात्कनिष्ठेभ्यस्तावददत्वा न कुर्वीत । ज्येष्ठइति तत्कुटुम्बव्ययचिन्ताकारिपरम् ॥ २१४ ॥

( ३ ) **कुल्लूकः** । अपतिताअपि ये भ्रातरोद्यूतवेश्यासेवादिविकर्मासक्तास्ते ऋक्थंनार्हन्ति । नच कनिष्ठेभ्योऽननुकल्प्य ज्येष्ठः साधारणधनादात्मार्थमसाधारणधनंकुर्यात् ॥ २१४ ॥

( ४ ) **राघवानन्दः** । विकर्मस्थानां जीवनमात्रं नांशइत्याह सर्वइति । विकर्मस्थाः । द्यूतपानाद्यासक्ता [ द्यूतेसंबन्धिनेकथनमस्येति यौतकंसर्वसाधारणधनादात्मायार्थमसाधारणकरणमिति ][1] ॥ ११४ ॥

( ५ ) **नन्दनः** । विकर्मस्थाविप्रतिषिद्धकर्मप्रधानाः कनिष्ठेभ्योभागं दत्वा ज्येष्ठः स्वदुहितुः स्त्रीधनंनकुर्वीत । न दद्यादशेषपितृधनग्राहिणा कनिष्ठेन समविभक्तेन ज्येष्ठेन भ्रातृसाधारणाद्धनात् दुहितृयौतकंदेयं विभज्यत्वादंशादेवमिति भावः ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । भ्रातरोधनविभागंनार्हन्ति । ज्येष्ठोयौतकंपित्रर्थात्पृथग्भूतंकनिष्ठेभ्योऽदत्वा न कुर्वीत ॥ २१४ ॥

**भ्रातॄणामविभक्तानांयद्युत्थानंभवेत्सह ॥ न पुत्रभागंविषमंपिता दद्यात्कथंचन ॥ २१५ ॥**

( १ ) **मेधातिथिः** । यदुक्तं ॥ न्यूनाधिकविभक्तानांधर्म्यः पितृकृतःस्मृतइति ॥ तेभ्योस्मिन्विषये प्रतिषेधः सहोत्थानंसर्वएव धनमर्जयन्तीत्यर्थः । कश्चित्कृष्यादिना कश्चित्प्रतिग्रहेणकश्चित्सेवया कश्चिद्यशाद्धतंपरिरक्षति यथोपयोगमसंनिहितेषु विनियुक्ते तत्सर्वमेकीकृत्य समंविभजनीयं न स्नेहादिना कस्मैचित्पित्राधिकंदेयम् ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । सहोत्थानं संभूय वाणिज्यादिना वित्ताद्यर्जनम् । पिता अधिकायासादिकं ॥ देकस्य दृष्ट्वाऽधिकं न दद्यात् ॥ २१५ ॥

( ३ ) **कुल्लूकः** । भ्रातॄणांपित्रा सहावस्थितानामविभक्तानांयदि सहधनार्जनार्थमुत्थानंभवेत्तदा विभागकाले न कस्य चित्पुत्रस्याधिकंपिता कदाचिद्दद्यात् ॥ २१५ ॥

( ४ ) **राघवानन्दः** । न्यूनाधिकविभक्तानांधर्म्यःपितृकृतःस्मृतइति अस्यापवादकमाह भ्रातॄणामिति । उत्थानं धनादानं प्रतीच्छा । पितृकृतइति स्वयंयदा पुत्रान्विभजेत्तदान्यूनाधिक्यमितिभावः ॥२१५॥

( ५ ) **नन्दनः** । सहोत्थानं संभूयार्जनं विषमं ज्येष्ठानामधिभागमदानेन विषमम् ॥ २१५॥

( ६ ) **रामचन्द्रः** । यदि उत्थानं सह मिलित्वा धनार्जनं भवेत् पिता विषमं पुत्रभागं कथंचन नदद्यात् ॥ २१५ ॥

---

( २१५ ) यदुत्थानं=सहोत्थानं ( नं )    १ ( राघ० २ )

ऊर्ध्वंविभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ॥ संसृष्टास्तेन वा येस्युर्विभजेत सतैःसह ॥२१६॥

( १ ) **मेधातिथिः** । विभागोत्तरकालंपित्रायद्विभागेद्वयंगृहीतंद्वावंशौप्रतिपद्येते तदेव सत्यां पितुरिच्छायां ग्रहीतव्यं। पितुरूर्ध्वं वा न तत्र भ्रातृभिर्वाच्यंकिमित्ययंद्वावंशौ गृह्णातीति अथ च नास्ति पितुरिच्छा तदा समंच स्वसमोस्य भाग-उद्धर्तव्यः पितुरूर्ध्वंसंसृष्टास्तेषामेव सपैतृकोंशस्तद्दुत्थंदद्यादपरेषांस्वांशं जातस्यचमृतस्यचेति जातस्य संसृष्टिनएव दद्युः पितुरूर्ध्वंतदीयमंशंच तएवमेव विभक्ताःसहइत्यनयानुबुद्ध्या भगिन्याआप्रसवान्नैव विभागोस्तीतिवसिष्ठेन दर्शितम् ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । पित्र्यमेव पितृभागमेव । एतेन विभागकाले पितुरपि भागोदर्शितः । यदितु विभागादूर्ध्वमनेकेषां जन्म तदापि सएव भागोविभज्य तैर्ग्राह्यः । संसृष्टाइति यदिपुनः संसृष्टास्तेन सह कचिद्भ्रातरःस्युस्तदा तद्धनान्तर्भावेन पितृधनं संसृष्टैः सह विभज्य ग्राह्यमित्यर्थः ॥ २१६ ॥

( ३ ) **कुल्लूकः** । यदा जीवतैव पित्रा पुत्राणामिच्छया विभागः कृतस्तदा विभागादूर्ध्वंजातः पुत्रः पितरि मृते पितृऋक्थमेव गृह्णीयात् येकृतविभागाः पित्रा सहपुनर्मिश्रीकृतधनास्तैः सहासौ पितरि मृते विभजेत् ॥ २१६ ॥

( ४ ) **राघवानन्दः** । सर्वेषां पितृकृतविभागे तदुत्तरकालीनापत्यान्तरोत्पत्तौ कागतिस्तत्राह ऊर्ध्वमिति । मृतेपितरि पित्र्यं विभजनकाले यत्पितृभागं जीवतितु इच्छायाअनियतत्वेन येतेन पित्रासह संसृष्टास्तैः सह समंतं सपिता विभजेतेत्यन्वयः। तत्रच स्पष्टगर्भायां मातरि पितृभागाभावे मृते पितरि विभक्तैरप्यंशोदेयः।अस्पष्टगर्भायांतु प्रसूतिपर्यन्तं विभागाभावः । एवं पितामहधनं पौत्रे प्रतिषिद्धं पितुः स्वातन्त्र्यादितिध्येयंबृहस्पतिनोक्तेः ॥ २१६ ॥

( ५ ) **नन्दनः** । पित्र्यमेवहरेत् पुनर्विभक्तं भ्रातृधनमंशसाम्याय विभज्य हरेत् । अस्यापवादउत्तरार्धेनोच्यते तेन पित्रा यैर्विभक्ताः संसृष्टास्तैः समंवा विभजेत् ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । तेन पित्रा सह ये संसृष्टाः स्युः भवेयुः तैः संसृष्टैःसह सः पिता विभजेत ॥ २१६ ॥

अनपत्यस्यपुत्रस्य माता दायमवाप्नुयात् ॥ मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ २१७ ॥

( १ ) **मेधातिथिः** । व्याख्यातोयंश्लोकः ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । पत्नीदुहित्रभावे पुत्रस्य धनं पितृगामीति प्राक्सूचितं तत्र विशेषमाह अनपत्यस्येति । ‡ मातर्यपि वृत्तायां पश्चात्पितरि तद्गृहीतरि वृत्ते भ्रातृतत्सुतेष्वसत्सु तस्य वित्तान्तरोपार्जनासंभवेचायमनुग्रहउक्तः ॥२१७॥

( ३ ) **कुल्लूकः** । अनपत्यस्य पुत्रस्य धनंमाता गृह्णीयात्पूर्वंपिता हरेदपुत्रस्य ऋक्थमित्युक्तत्वात् । इह माता हरेदित्यादियाज्ञवल्क्येन पितरावित्येकशेषकरणात् । विष्णुना च अपुत्रस्य धनंपत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामीत्येकशेषस्यैव कृतत्वान्मातापितरौ विभज्य गृह्णीयाताम् । मातरि मृतायांपत्नीपितृभ्रातृभ्रातृजाभावे पितुर्माता धनंगृह्णीयात् ॥ २१७ ॥

( ४ ) **राघवानन्दः** । अनपत्यस्य सूनोर्मृतस्य मातुर्धनमित्याह अनपत्यस्येति । मातहरेदिति गर्भधारणपोषाभ्यां नेभ्यो माता गरीयसीतिन्यायात् । मातरिमृतायांतु पितामही हरेत् पिता रिक्थंहरेदितियाज्ञवल्क्योक्तेः । मातापितामह्यौ गृ-

---

‡मातर्यपि=पुत्रपत्नीदुहितृरहितोपलक्षणमिदम् । मातैवाप्नुयान्नपिता मात्रभावएवतुपितेत्यर्थः। मातर्यपीति मातर्यपि (सर्व०२)

ह्णीयातामित्युक्तंमनुना विष्णुनाच । अपुत्रस्य धनंपत्न्यभिगामितदभावे मातृगामि तदभावे पितृगामीतिवचनजातविरोधा द्विभज्य पितरौ गृह्णीयातामितिकुल्लूकः । मातापित्रोरयोगव्यवच्छेदमात्रं पत्नीगामित्वेपि संगतं त्रयाणां सत्त्वे त्रितयम धिकारीति । अन्याभावसहकृतविकल्पस्याभावादितितु तत्त्वम् । वृत्तायां मृतायाम् ॥ २१७ ॥

( ५ ) **नन्दनः** । अनपत्यस्येत्युपलक्षणं पुत्रपौत्रप्रपौत्रभार्यादुहितृरहितस्येत्यर्थः ॥ २१७ ॥

( ६ ) **रामचन्द्रः** । अनपत्यस्य पुत्रस्य पत्नी दुहिता वा माता पितरि सत्यपि दायमाप्नुयात् ॥ मातर्यपिच वृत्तायां पितुर्माता धनंहरेत् ॥ २१७ ॥

**ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि ॥ पश्चाद्दृश्येतयत्किंचित्तत्सर्वंसमतांनयेत् ॥ २१८ ॥**

( १ ) **मेधातिथिः** । अविज्ञानान्न्यूनमधिकंवा विभक्तंपरतोज्ञातंसमांशकीकर्तव्यं किंच विभागोत्तरकालंलब्धे नास्तिज्येष्ठस्योद्धारइति ॥ २१८ ॥

( २ ) **सर्वज्ञनारायणः** । पश्चाद्दृश्येत पूर्वनिह्नुतं यत्किंचिदृणंवा तत्सर्वं समंविभाज्यं नतु निह्नवकर्तुरपराधाद्भागाभावः । ऋणइत्यभिधानेनच ऋणमप्यर्थविभागकाले अर्थाभावेवा ऋणमात्रमपि विभजनीयम् । तत्रच ज्येष्ठत्वादिना विशेषोनास्तीत्यर्थात्कथितम् ॥ २१८ ॥

( ३ ) **कुल्लूकः** । ऋणे पित्रादिधार्यमाणे धने च तदीये सर्वस्मिन्यथाशास्त्रंविभक्ते सति पश्चाद्यत्किंचित्पैतृकमृणंधनंवा विभागकालेऽज्ञातमुपलभ्येत तत्सर्वंसमंकृत्वा विभजनीयं नतु शोध्यंग्राह्यंनवा ज्येष्ठस्योद्धारोदेयः ॥ २१८ ॥

( ४ ) **राघवानन्दः** । यदिपित्रादिकृतमादेयंदेयवर्णमस्ति तदा कथं विभागस्तत्राह ऋणइति । ऋ णे देये वा सतिसर्वस्मिन्धनेच विभक्ते यदि पश्चादृणंपरिज्ञातंतत्सर्वंसमतामुपशमतां नयेच्छोधयेत् । सर्वमधमर्णै दिभिः पि मृणंसमं कृत्वा नयेदिति । दुहितरि धनान्वयत्वेपि न ऋणायान्वयः । अतएव याज्ञवल्क्यः ॥ विभजेरन्सुताः पित्र र्ध्वमृक्थमृणं समम् ॥ मातुर्दुहितरः शेषमृणात्ताभ्यऋतेऽन्वयइति ॥ मातुर्धनंतु दुहितरऋणादृते भजेरन्नित्यर्थः ॥२१८ऋतम्

( ५ ) **नन्दनः** । यत्किञ्चित्कुत्रचित् ॥ २१८ ॥

( ६ ) **रामचन्द्रः** । तत्सर्वं समतां समानतांनयेत् प्रापयेत् ॥ २१८ ॥

**वस्त्रंपत्रमलंकारंकृतान्नमुदकंस्त्रियः ॥ योगक्षेमंप्रचारंच न विभाज्यंप्रचक्षते ॥ २१९ ॥**

( १ ) **मेधातिथिः** । वस्त्रपत्रालङ्कारकृतान्नोदकानामेकत्वंविवक्षितं पत्रंवाहनंगन्त्रीशकटादिअलङ्कारोङ्गुलीयकादि वस्त्रंसममूल्यंनतु महार्घं । उदकंकूपवाप्यादि स्त्रियोदास्योयोगक्षेमंयतोयोगे क्षेमोभवति मन्त्रिपुरोहितामात्यवृद्धावास्तुचारादिभ्यस्ततोरक्षाभवति । स्मृत्यन्तरे च पठ्यते वास्तुनिविभागोन विद्यते । प्रचारंयत्र गावश्चरन्ति प्रवेत्रत्याह तेन यत्पैतृकनोक्तंनह्यत्र धर्मातिक्रमः कश्चिदस्तीति तदनुपपन्नंदर्शयति अदृष्टासुहिते प्रतिषेधास्तदतिक्रमादधर्मोन स्यात् ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः** । वस्त्रं तेनतेन परिहितमधिकत्वेनापि दृश्यमानम् । पत्रं वाहनं अश्वादि तेनतेन परिगृहीतम् । एवमलंकारोङ्गुलीयादिः । कृतान्नं तत्तदुद्देशेन यत्सिद्धमन्नं विषयमपि । उदकं कूपादि । स्त्रियोभार्या एकस्यैका अन्यस्य द्वे एवंवैषम्येपि । योगक्षेमं योगोराजादिलभ्योनिबन्धादिः स्वयमुपात्तः क्षेमः रक्षोपायः प्राकारेष्टकादिः । प्रचारोवर्त्म । यत्तु ॥ कृतान्नंचकृतान्नेन परिवर्त्यविभज्यतइत्याद्युक्तं बृहस्पतिना तदतिप्रचुरकृतान्नादेरपि तन्मात्रधनैर्विभागःकार्यइत्येतत् ॥ २१९ ॥

---

( २१९ ) पत्रमलंकार=पात्रमलंकार ( नं )

( ३ ) **कुल्लूकः**। वस्त्रंवाहनमाभरणमविभागकाले यद्येनोपभुक्तंतत्तस्यैव न विभाज्यं। एतच्च नातिन्यूनाधिकमूल्यविषयं। यत्तु बहुमूल्यमाभरणादिकंतद्विभाज्यमेव। तद्विषयमेव विक्रीयवस्त्राभरणमिति बृहस्पतेर्विभागवचनं। कृतान्नमोदनसक्त्वादितन्न विभजनीयं तत्रातिप्रचुरतरमूल्यंसक्त्वादितावन्मात्रमूल्यधनेन ॥ कृतान्नंचाकृतान्नेन परिवर्त्य विभज्यतइति बृहस्पतिवचनाद्विभाजनीयमेव। उदकंकूपादिगतंसर्वैरुपभोग्यमविभजनीयम्। स्त्रियोदास्याद्यायास्तुल्यभागान भवन्ति तान विभाज्याः किन्तु तुल्यंकर्मकारयितव्याः । योगक्षेमंमन्त्रिपुरोहितादियोगक्षेमहेतुत्वात्। प्रचारोगवादीनांप्रचारमार्गः। एतत्सर्वंमन्वादयोऽविभाज्यमाहुः ॥ २१९ ॥

( ४ ) **राघवानन्दः**। न्यूनाधिकमूल्याभावेतु पित्रादिदत्तं यद्येन भुज्यते तत्तस्यैवेति दृष्टार्थतयाह वस्त्रमिति। पत्रमश्वादि। कृतान्नं अविभागकाले यद्येन भुक्तम्। उदकं कूपतडागादिस्थम्। स्त्रियोदास्यः। योगोऽलब्धलाभः लब्धस्य परिरक्षणं क्षेमः तयोः प्रचारं प्रचर्यते निर्वाह्यते येनेति तद्धेतुमन्त्रिपुरोहितादिः । एतान्यपि दत्तानिन विभजनीयानि अत्यन्तमूल्ये विभजनीयानि विक्रीय वस्त्राभरणमिति बृहस्पत्युक्तेः दासदास्यस्तु समं कर्म कार्याइतिभावः ॥ २१९ ॥

( ५ ) **नन्दनः**। अथाविभाज्यमाह वस्त्रंपात्रमलङ्कारमिति। पात्रं उदपात्रं वस्त्रादीनिचत्वार्यभागवेलायां येन परिगृहीतानि विभागवेलायामुद्धारंतानि तस्मै देयानि द्रव्यान्तरैरेचेद्विभज्यानि। उदकं कूपादिस्थं दायादैः सर्वैरुपभोज्यं न विभाज्यं। स्त्रियोभार्यात्वेन परिगृहीतादास्यादयस्तासां स्वत्वेन विभागप्रसक्तावप्यविभाज्यत्वमुच्यते। ऋणं वा धनंवा विभागात्पश्चात्कुत्रचिद्दृश्येतोभयमपि सर्वैविभक्ताःसंविभजेरन्नित्यर्थः। योगक्षेमइति अप्राप्तप्रापणंयोगः प्राप्तस्य रक्षणं क्षेमः अत्र योगक्षेमशब्दे [illegible] क्षेमहेतवोविवक्षिताः योगहेतवोयाज्याः शिष्यादयः क्षेमहेतवोद्वारग्रामपालादयः उभयहेतवोग्रामपत्तनाधिपादयस्[illegible] र्वदेवस्थापनीयान विभाज्याः। प्रचारः क्षेत्रारामादिप्रवेशयोग्योमार्गः सोपि सर्वैः प्रचरितव्योऽनुभावयितव्योन विभ[illegible] ॥ २१९ ॥

( ६ ) **रामचन्द्रः**। अविभाज्यमाह वस्त्रमिति। वस्त्रं पत्रं वाहनं अलंकारं मातुः कृत्तान्नं पक्कान्नं उदकं कूपादि स्त्रियः दास्यः [illegible] क्षेमौ अलब्धलाभोयोगः लब्धस्य परिपालनंक्षेमः प्रचारं मार्गं जलवाहादि विभाज्यंन प्रचक्षते ॥ २१९॥

**अयमुक्तोविभागोवः पुत्राणांच क्रियाविधिः ॥ क्रमशः क्षेत्रजादीनांद्यूतधर्मंनिबोधत ॥ २२० ॥**

( २ ) **सर्वज्ञनारायणः**। द्यूतंवक्तुमुपक्रमते अयमिति। पुत्राणां क्षेत्रजादीनां क्रियाविधिः पुत्रत्वोत्पादनविधिः क्रमेण। द्यूतधर्मं निबोधतेत्यन्वयः ॥ २२० ॥

( ३ ) **कुल्लूकः**। एषदायभागः पुत्राणांक्षेत्रजादीनांक्रमेण विभागकरणप्रकारोयुष्माकमुक्तः। इदानींद्यूतव्यवस्थांशृणुत ॥ २२० ॥

( ४ ) **राघवानन्दः**। विभागप्रकरणमुपसंहरन्द्यूतंप्रतिजानीते अयमिति । पुत्राणामौरसादीनाम् । क्रियाविधिः पिण्डदानं च ॥ २२० ॥

( ६ ) **रामचन्द्रः**। विभागानन्तरं द्यूतधर्मान् निबोधत शृणुत ॥ २२० ॥

**द्यूतंसमाह्वयंचैव राजा राष्ट्रान्निवारयेत् ॥ राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ २२१॥**

( २ ) **सर्वज्ञनारायणः**। अत्रच तुल्यविषयत्वात्समाह्वयमप्येकीकृत्य दर्शयति द्यूतमिति ॥ २२१ ॥

---

( २२१ ) राजान्तकरणौ=राज्यान्तकरणौ ( राघवानन्दः )

( ३ ) **कुल्लूकः** । द्यूतसमाह्वयौ वक्ष्यमाणलक्षणौ । राजा स्वराष्ट्रान्निवर्तयेत् यस्मादेतौ द्वौ दोषौ राज्ञांराज्यविनाशकारिणौ ॥ २२१ ॥

( ४ ) **राघवानन्दः** । द्यूतमेव सप्रतियोगि सदोषमाह द्यूतमितिद्वाभ्याम् । राज्यान्तकरणौ राज्यनाशकौ ॥ २२१ ॥

( ५ ) **नन्दनः** । अत्र तावद्राज्ञः कर्तव्यमाह द्यूतं समाह्वयश्चैवेति द्यूतं प्राणिद्यूतं कुक्कुटमेषादि ॥ २२१ ॥

( ६ ) **रामचन्द्रः** । द्यूतं समाह्वयं प्राणिद्यूतं राजा राष्ट्रात् निवारयेत् ॥ २२१ ॥

**प्रकाशमेतत्तास्कर्यंयद्देवनसमाह्वयौ ॥ तयोर्नित्यंप्रतीघाते नृपतिर्यत्नवान्भवेत् ॥ २२२ ॥**

( २ ) **सर्वज्ञनारायणः** । प्रत्यक्षमनिह्नुतम् ॥ २२२ ॥

( ३ ) **कुल्लूकः** । प्रकटमेतच्चौर्यंयत् द्यूतसमाह्वयौ तस्मात्तन्निवारणे राजा नित्यंयत्नयुक्तः स्यात् ॥ २२२ ॥

( ४ ) **राघवानन्दः** । राज्ञाऽत्र प्रयत्नवता भाव्यमितिविवक्षन्दृष्टार्थवादमाह प्रकाशमिति । प्रकाशं द्यूतसमाह्वयद्वयं सर्वजनसमक्षं तास्कर्यं चौर्यम् । अतस्तयोस्तत्कर्त्रोः प्रतीघाते नाशे ॥ २२२ ॥

( ६ ) **रामचन्द्रः** । तास्कर्यं चौर्यम् । यद्देवनसमाह्वयौ नृपतिः तयोः प्रतीघाते नाशाय यत्नवान्भवेत् ॥ २२२ ॥

**अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ॥ प्राणिभिः क्रियते यस्तु सविज्ञेयः समाह्वयः ॥२२३ ॥**

( २ ) **सर्वज्ञनारायणः** । द्यूतं अप्राणिभिरक्षशलाकादिभिर्यत्क्रियते पणेन क्रीडनम् । प्राणिभिर्मेषादिभिर्युद्धकरणेन यत्नेन नियम्य क्रीडनं तत्समाह्वयः ॥ २२३ ॥

( ३ ) **कुल्लूकः** । अक्षशलाकादिभिरप्राणैर्यत्क्रियते तल्लोके द्यूतंकथ्यते । यः पुनः प्राणिभिर्मेषकुक्कुटादिभिः पणपूर्वकंक्रियते ससमाह्वयोज्ञेयः लोकप्रसिद्धयोरप्यनयोर्लक्षणकथनंपरिहारार्थम् ॥ २२३ ॥

( ४ ) **राघवानन्दः** । तयोर्लक्षणमाह अप्राणिभिरिति । अप्राणिभिरक्षशलाकादिभिर्यत्क्रियते तत् द्यूतम् । प्राणिभिर्मेषकुक्कुटादिभिः यत्कर्म पणपुरःसरमितिशेषः ॥ २२३ ॥

( ५ ) **नन्दनः** । द्यूतसमाह्वययोः करणतएव भेदोन स्वरूपतइत्यभिप्रायेणाह अप्राणिभिर्यदिति । अप्राणिभिर्दान्तशार्ङ्गदारवमार्त्तिकैरक्षैः प्राणिभिः कृकवाकुमेषमहिषवर्त्यादिभिः ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । अप्राणिभिः अक्षशलाकादिभिःश्रूयते तल्लोके द्यूतमुच्यते । प्राणिभिर्यस्तु क्रियते सःद्यूतः समाह्वयः ॥ २२३ ॥

**द्यूतंसमाह्वयंचैव यः कुर्यात्कारयेत वा ॥ तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥२२४ ॥**

( २ ) **सर्वज्ञनारायणः** । घातयेत्ताडनादिना । द्विजलिङ्गिनोद्विजलिङ्गोपवीतादिधरान् ॥ २२४ ॥

( ३ ) **कुल्लूकः** । द्यूतसमाह्वयौ यः कुर्यात् योवा सभिकः कारयेत्तेषामपराधापेक्षया राजा हस्तच्छेदादिवधंकुर्यात् यज्ञोपवीतादिद्विजचिन्हधारिणः शूद्रान्हन्यात् ॥ २२४ ॥

( ४ ) **राघवानन्दः** । निमित्तमनुवदन्नैमित्तिकमाह द्यूतमिति । कारयेत्सभिकः । घातयेत् अपराधानुरूपेण हस्तच्छेदं कुर्यात् । तत्रैव ब्राह्मणत्वेन प्रतीयमानाअपि ये शूद्रास्तान्प्रत्याह द्विजलिङ्गिनइति । एतेऽवश्यमनपेक्ष्यतया देशान्निःसारणीयाइतिभावः ॥ २२४ ॥

---

( २२२ ) प्रकाशं=प्रत्यक्षं ( सर्व० )

( ६ ) **रामचन्द्रः** । द्विजलिङ्गिनः शूद्रान् राजा घातयेत् ॥ २२४ ॥

**कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान् ॥ विकर्मस्थान्शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ २२५ ॥**

( २ ) **सर्वज्ञनारायणः** । कितवान् द्यूतसमाह्वयकर्तॄन् । कुशीलवान् नटान् । केरानतिवक्रचेष्टितान् । पाषण्डान् बौद्धादीन् । विकर्मस्थानधर्महेतुकर्मकर्तॄन् । पतितानन्त्यजादीन् । शौण्डिकान् मद्यविक्रेतॄन् । नवासयेत् बहिरेव वासयेत्॥२२५॥

( ३ ) **कुल्लूकः** । द्यूतादिसेविनोनर्तकगायकान्वेदविद्विषः श्रुतिस्मृतिबाह्यव्रतधारिणः अनापदि परकर्मजीविनः शौण्डिकान्मद्यकरान्मनुष्यान्क्षिप्रंराजा राष्ट्रान्निर्वासयेदिति कितवप्रसङ्गेनान्येषामप्यभिधानम् ॥ २२५॥

( ४ ) **राघवानन्दः** । कितवान्दृष्टान्तीकृत्य प्रसंगेनान्यानपि संकलयति कितवानिति । कुशीलवान् नृत्यजीविनः । केरान्गायकान् । पाषण्डान् पाषण्डंलिङ्गंतद्भूतान् वेदविद्विषःविकर्मस्थान् । अनापद्यपि परधर्मरतान् । शौण्डिकान् तेहि मद्यस्त्रीप्रदानेन धर्म*प्रणाशात् सर्वानर्थकारिणः । मानवानिति तादृशानन्यानपि यद्वा कुशीलवादिदोषोमनुष्येष्वेव नगन्धर्वादिष्विति द्योतितम् ॥ २२५ ॥

( ५ ) **नन्दनः** । कितवान्द्यूतवृत्तीन् । कुशीलवान्गायनवृत्तीन् । कैलान्केलिशीलान् । शौंडिकान्मद्यपान् । पुरशब्दोराष्ट्रस्याप्युपलक्षणार्थः । कितवसधर्मत्वात् कुशीलवादीनामुपन्यासः प्रासङ्गिकः ॥ २२५ ॥

( ६ ) **रामचन्द्रः** । कितवान् द्यूतवेदिनः । कुशीलवान् विषयशीलान् । चौरान् वक्रचेष्टान् । विकर्मस्थान् अधर्मस्थान् । हेतुकर्तॄन् पानासक्तान् । एतान्कितवादीन् पुरात्क्षिप्रं निर्वासयेत् ॥ २२५ ॥

**एते राष्ट्रे वर्तमानाराज्ञः प्रच्छन्नतस्कराः ॥ विकर्मक्रियया नित्यंबाधन्ते भद्रिकाः प्रजाः ॥ २२६॥**

( २ ) **सर्वज्ञनारायणः** । एते कितवादयः तथा प्रच्छन्नतस्करावेषान्तरधराश्चौराविकर्मक्रियया सज्जनेष्वपि द्यूतादिक्रियाप्रवर्तनेन बाधन्ते बाधांकुर्वन्ति । भद्रिकाः सद्वृत्ताः । अत्रकितवप्रसंगादप्युक्तम् ॥ २२६ ॥

( ३ ) **कुल्लूकः** । अत्रहेतुमाह एते इति । एते कितवादयोगूढचौराराज्ञोराष्ट्रेवसन्तोनित्यंवंचनात्मकक्रियया सज्जनान्पीडयन्ति ॥ २२६ ॥

( ४ ) **राघवानन्दः** । अतएषां निरासे यत्नाधिक्यं सूचयति एतइति वर्तमानाः स्वस्वकर्मणा विकर्मक्रियया विकर्मणा चौर्यादिना या क्रिया देहधारणादितया बाधन्ते साधुभिः संगमय्यस्वदोषैस्तान्दूषयन्तीतिभावः । भद्रिकाभद्रेण साधुना धनपुत्रादिसूचककर्मणा जीवतीः ॥ २२६ ॥

( ५ ) **नन्दनः** । भद्रिकाः सुशीलाः बाधन्ते दुःशीलाः कुर्वन्ति ॥ २२६ ॥

( ६ ) **रामचन्द्रः** । भद्रिकाः सद्वृत्ताः प्रजाः विकर्मक्रिययावंचनादिक्रिया एते बाधन्ते ॥ २२६ ॥

**द्यूतमेतत्पुराकल्पे दृष्टं वैरकरंमहत् ॥ तस्माद्द्यूतंन सेवेत हास्यार्थमपि बुद्धिमान् ॥ २२७॥**

( २ ) **सर्वज्ञनारायणः** । पुराकल्पे पुराणकथासु ॥ २२७ ॥

---

( २२५ ) क्रूरान्=चौरान् ( ण, राम० ) =कैलान् ( नं ) = केरान् ( सर्व० )

* धर्मप्रणाशात् = धनग्रहणात् ( राघ० २ )

( ३ ) **कुल्लूकः**। नेदानीमेव परंकिन्तु पूर्वस्मिन्नपि कल्पे द्यूतमेतदतिशयेन वैरकरंदृष्टमतः प्राज्ञः परिहासार्थमपि तन्न सेवेत ॥ २२७ ॥

( ४ ) **राघवानन्दः**। द्यूतस्यानर्थावहत्वमैतिह्येनाह द्यूतमिति । पुराकल्पे संसारानादितया बलभद्रदन्तवक्त्रयुधिष्ठिरदुर्योधनादिकाले । हास्यार्थं कुतूहलार्थमपि । द्यूतपदं समाह्वयोपलक्षकम् धनत्कारित्ववैरकत्वहेतोरुभयसाधारण्यात् ॥ २२७ ॥

( ५ ) **नन्दनः**। द्यूतस्य दोषमाह स्वयमपि राज्ञा द्यूतंनकार्यमिति चाह द्यूतमेतत्पुराकल्पे दृष्टमिति । पुराकल्पे पूर्वस्मिन्काले वैरकरं दृष्टं नलयुधिष्ठिरादिषु ॥ २२७ ॥

**प्रच्छन्नंवा प्रकाशंवा तन्निषेवेत योनरः॥ तस्यदण्डविकल्पः स्याद्यथेष्टंनृपतेस्तथा ॥ २२८ ॥**

( १ ) **मेधातिथिः**। विविधः कल्पोविकल्पः समएवराज्ञोच्यते द्यूतधर्मंनिबोधतेति ततआरभ्यद्वित्राः श्लोकाविधायकाः सर्वोप्यर्थवादः ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः**। प्रकाशं कर्तव्यवृत्त्युत्पादनेन । यथेष्टं यस्य यथेच्छतिनृपस्तस्य तथा कार्योदण्डभेदः । नत्वत्र शास्त्रे दण्डोनियम्यतइत्यर्थः ॥ २२८ ॥

( ३ ) **कुल्लूकः**। योमनुष्यस्तत् द्यूतंगूढंप्रकटंवा कृत्वा सेवेत तस्य यथा नृपतेरिच्छा भवति तथाविधोदण्डोभवति ॥ २२८ ॥

( ४ ) **राघवानन्दः**। तस्मात्तत्कारी दण्डार्हइत्याह प्रच्छन्नमिति । तत् द्यूतसमाह्वयंप्रच्छन्नं । यथा स्यात्प्रकाशंयथास्यादिति । नृपतेरिच्छया दण्डोवधोवेत्यन्वयः । यद्वा पणे सहस्रं नृपतेरित्युक्तम् ॥ २२८ ॥

( ५ ) **नन्दनः**। दण्डविकल्पः दण्डभेदोर्थहरणादिलक्षणः ॥ २२८ ॥

( ६ ) **रामचन्द्रः**। तत् द्यूतं यः निषेवेत तस्य दण्डविकल्पः शतदण्डः स्यात् यथेष्टं नृपतेः तथावादण्डः ॥ २२८ ॥

**क्षत्रविट्शूद्रयोनिस्तु दण्डंदातुमशक्नुवन् ॥ आनृण्यंकर्मणा गच्छेद्विप्रोदद्याच्छनैः शनैः॥ २२९ ॥**

( १ ) **मेधातिथिः**। क्षत्रियादयोनिर्धनान संबन्धेनावसादयितव्याः किंतर्हि कर्मणा यद्यस्योचितंकर्मराजोपयोगि तेन दण्डधनंसंशोधयितव्याः । ब्राह्मणस्तु कुटुंबानामविरोधेन शनैर्दाप्योबन्धताडनकर्मणि तस्य निषिध्येते । धनिकविषयः प्रागुक्तःश्लोकः दण्डविषयोयमपौनरुक्त्यम् ॥ २२९ ॥

( २ ) **सर्वज्ञनारायणः**। आनृण्यं दण्डापक्रियाम् । कर्मणागृहादिकर्मकरणेन ॥ २१९ ॥

( ३ ) **कुल्लूकः**। इदानींपराजितानांधनाभावे सतीदमाह क्षत्रेति । क्षत्रवैश्यशूद्रजातीयोनिर्धनत्वेन दण्डंदातुमसमर्थस्तदुचितकर्मकरणेन दण्डशोधनंकुर्यात् । ब्राह्मणः पुनः यथालाभंक्रमेण दद्यान्न कर्मकारयितव्यः ॥ २२९ ॥

( ४ ) **राघवानन्दः**। दण्डं संकलयति क्षत्रेतिषड्भिः । ऋणदानासमर्थस्यैवदण्डस्य आनृण्यं शोधनं कर्मणा चेतनादिनागच्छेत्कुर्यात । विप्रस्तु दद्यादेव तच्चापि शनैः ॥ २२९ ॥

( ५ ) **नन्दनः**। विप्रःशनैरर्थंदद्यान्नतुदण्डानृण्यं कर्मणागच्छेत् ॥ २२९ ॥

( ६ ) **रामचन्द्रः**। अनृणस्य भावं आनृण्यं कर्मण्या कर्मकरणेन विप्रःशनैःशनैर्दद्यात् ॥ २२९ ॥

सोनुशिष्टस्तु साक्षिभिर्यः प्रकीर्तितइति यत्रक्वचन राजसभाया अन्यत्रापि तीरितं चानुशिष्टं च व्यवहारपददण्डदशबन्धार्थं ननिवर्तयेदित्यर्थः ॥ २३३ ॥

( ६ ) **रामचन्द्रः** । निर्णीतं शास्त्रविषयेनिर्धारितं धर्मतोनिर्णीतंच पुनः अनुशिष्टं कृतदण्डं च कार्यं दण्डपर्यन्तंनीतं यत्र क्वचन यद्भवेत्तत्कृतंधर्मतोविद्यात् भूयस्तन्निर्णीतं न निवर्तयेत् न प्रवर्तयेत् ॥ २३३ ॥

**अमात्याः प्राड्विवाकोवा यत्कुर्युः कार्यमन्यथा ॥ तत्स्वयंनृपतिः कुर्यात्तान्सहस्रंच दण्डयेत् ॥ २३४ ॥**

( १ ) **मेधातिथिः** । धनग्रहणसंबन्धेन पूर्वंनिःस्वीकरणं अर्थतस्तु निमित्तान्तरेण प्रज्ञादिनाऽमात्योराजस्थानीयादिस्तंसहस्रंच दण्डयेत् । गर्गशतदण्डनवत्समुदायेन वाक्यपरिसमाप्तिः ॥ २३४ ॥

( २ ) **सर्वज्ञनारायणः** । अमात्यः सेनापत्यादिः । अन्यथाकुर्युरुत्कोचादिना । कुर्याद्व्यवस्थापयेत् । सहस्रमित्यल्पविषये सहस्रपणविवादे । अधिकेत्वधिकम् ॥ २३४ ॥

( ३ ) **कुल्लूकः** । राजामात्याः प्राड्विवाकोवा व्यवहारेक्षणे नियुक्तोयदसम्यग्व्यवहारनिर्णयंकुर्युस्तत्स्वयंराजा कुर्यात्पणसहस्रंच तान्दण्डयेत् । इदंचोत्कोचधनग्रहणेतरविषयं उत्कोचग्रहणे ये नियुक्तास्त्वित्युक्तत्वात् ॥ २३४ ॥

( ४ ) **राघवानन्दः** । स्वकृतमनिवर्तयन्परकृतं निवर्तयेदेवेत्याह अमात्यइति । अन्यथाप्रमादमोहादिना । राज्ञा नियुक्ताः अमात्यः प्राड्विवाकोवा । प्रत्येकं पणसहस्रम् । दण्डः उत्कोचादिग्रहणनिमित्तः ॥ २३४ ॥

( ५ ) **नन्दनः** । कुर्यान्निरुपयेत्सहस्रं पणानाम् ॥ २३४ ॥

( ६ ) **रामचन्द्रः** । प्राड्विवाकः विवादानुगतंपृच्छेत् सभ्यांस्तान् प्रतिवर्तते । विचारयति येनासौ प्राड्विवाकस्तुस्मृतः । अन्यथा कार्यं यः कुर्यात्तमन्यथाकारिणम् ॥ २३४ ॥

**ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ॥ एते सर्वे पृथक्ज्ञेयामहापातकिनोनराः ॥ २३५ ॥**

( १ ) **मेधातिथिः** । सुरापोब्राह्मणएव महापातकी । तस्करोब्राह्मणसुवर्णापहारी । नराःकथिताः उक्तार्थकथनमुत्तरार्थम् ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः** । सुरापः पैष्टीपाता क्षत्रियोवैश्यश्च विप्रोगौडीपैष्टीमाध्वीपाता । तस्करोब्राह्मणस्वर्णहर्ता । पृथगेकैकशः ॥ २३५ ॥

( ३ ) **कुल्लूकः** । योमनुष्योब्राह्मणंहतवान्सब्रह्महा । सुरापोद्विजातिः पैष्ट्याः पाता ब्राह्मणश्च पैष्टी माध्वी गौडीनां । तस्करोब्राह्मणसुवर्णहारीमनुष्यः । यश्च कश्चिद्गुरुपत्नीगामीत्येते सर्वे प्रत्येकंमहापातकिनोबोद्धव्याः ॥ २३५ ॥

( ४ ) **राघवानन्दः** । द्वादशवार्षिकप्रायश्चित्तनिमित्ताधिकारिणोदेहादिदण्डार्थमनुवदति ब्रह्महेति । ब्राह्मणजात्यवच्छिन्नस्य हन्ता । सुरापः [ गौडीमाध्वी ][1] पैष्टीनां पाता विप्रः । तस्करोत्र ब्राह्मणसुवर्णहारीसाहचर्यात् । गुरुतल्पगः गुरोस्तल्पवदधस्तनत्वात्पत्नी तां गन्तुं शीलः । मनुष्याधिकारकंशास्त्रमित्याह एतेयदि नरास्तदा महापातकिनः नान्ये अतएव देवादीनां पापंतत्प्रायश्चित्तभूतभाव्यर्थवादत्वेननयेनतु देवत्वतिर्यक्त्वदशायां ते स्तइतिभावः ॥ २३५ ॥

( ५ ) **नन्दनः** । अथ महापातकिनोदण्डविवक्षयाह ब्रह्महाचेति । नरोब्राह्मणस्वर्णचोरः ॥ २३५ ॥

---

१ ( न० )

( ६ ) **रामचन्द्रः** । स्तेयी विप्रसुवर्णस्तेयी ॥ २३५ ॥

**चतुर्णामपि चैतेषांप्रायश्चित्तमकुर्वताम् ॥ शारीरंधनसंयुक्तंदण्डंधर्म्यंप्रकल्पयेत् ॥ २३६ ॥**

( १ ) **मेधातिथिः** । ननुच सुरापोब्राह्मणएव पातकी तस्य च शारीरसंयुक्तोगृह्यते पूर्वमनुपात्तोऽपि चतुःसंख्यासामर्थ्यात् अन्येत्वंकिनःशरीरमुक्तमित्याहुः तच्च ब्राह्मणस्याप्यस्ति अन्येत्वपिशब्दात्पञ्चानामयंदण्डइत्याहुः चतुर्णामप्यपिशब्दात्पञ्चमस्यापि तत्संसर्गिणोब्राह्मणस्यवधेपूर्वेशरीरदण्डउक्तएव स्त्रीबालब्राह्मणघ्नांश्चहन्यादिति। अनेनान्तरशरीरात्समाङ्कनमेवोच्यते धर्म्यमित्यपराधानुरूपेण गुरुतरलाघवंकार्यमित्यर्थः ॥ २३६ ॥

( २ ) **सर्वज्ञनारायणः** । शरीरयुक्तमङ्कनादि । धनसंयुक्तंसर्वस्वादानादि । नाङ्क्यांराज्ञाललाटइतिललाटेप्राप्ताङ्कननिषेधात्तत्रैवाङ्कनम् ॥ २३६ ॥

( ३ ) **कुल्लूकः** । चतुर्णामप्येषांमहापातकिनांप्रायश्चित्तमकुर्वतांशारीरंधनग्रहणेन च धनसंबन्धमपराधानुसारेण धर्मादनपेतंवक्ष्यमाणंदण्डंकुर्यात् ॥ २३६ ॥

( ४ ) **राघवानन्दः** । चतुर्णामेषामपि प्रत्येकं संसर्गात्पातकी पञ्चमइतिशेषः नैमित्तिकमाह शारीरमिति ॥ २३६ ॥

( ५ ) **नन्दनः** । संसर्गिणः पञ्चमस्य तत्तुल्यदण्डत्वाच्चतुर्णामित्युक्तम् ॥ २३६ ॥

( ६ ) **रामचन्द्रः** । एतेषांचतुर्णांप्रायश्चित्तंअकुर्वतांशरीरधनसंयुक्तं धर्मं समानरूपं दण्डं प्रकल्पयेत् ॥ २३६ ॥

**गुरुतल्पेभगः कार्यः सुरापाने सुराध्वजः ॥ स्तेये च श्वपदंकार्यंब्रह्महण्यशिराः पुमान् ॥ २३७ ॥**

( १ ) **मेधातिथिः** । ललाटाङ्कनमप्रतिषेधविधौ नाङ्क्याराज्ञा ललाटेष्विति तच्छ्रवणात् ॥ २३७ ॥

( २ ) **सर्वज्ञनारायणः** । भगोभगाकृतिः । सुराध्वजः सुराचिन्हस्यूतशौण्डिकगृहध्वजाकृतिः । अब्रह्मण्ये ब्रह्महत्यायां अशिराः कबन्धः । ब्रह्महण्यशिराइतिक्वचित्पाठः ॥ २३७ ॥

( ३ ) **कुल्लूकः** । नाङ्क्याराज्ञा ललाटेस्युः इति वक्ष्यमाणत्वाल्ललाटमेवाङ्कनस्थानमवगम्यते तत्र गुरुपत्नीगमने यावज्जीवस्थायितप्तलोहेन ललाटेभगाकृतिंगुरुपत्नीगमनचिन्हंकार्यं । एवंसुरापाने कृते पातुर्दीर्घसुराध्वजाकारं। सुवर्णापहारे सत्यपहर्तुः कुक्कुरपादरूपंकार्यं । ब्रह्महणि कबन्धःपुमान्कर्तव्यः ॥ २३७ ॥

( ४ ) **राघवानन्दः** । तत्रादौ शारीरं दण्डमाह गुरुतल्पेभगइति । भगः गुरुतल्पगस्य ललाटे भगाकृतिचिन्हं यावज्जीवंस्थायि कुर्यात्तप्तेन लोहेन । एवमुत्तरत्र । सुराध्वजः तप्ता तु दीर्घा ध्वजाकारा रेखा श्वपदं शुनःपदाकारं । अशिराः कबन्धः तदाकाररेखा ॥ २३७ ॥

( ५ ) **नन्दनः** । अत्र भगादयएकरूपाविज्ञेयाः सुराध्वजः सुराकलशः अशिराः पुमान्कबन्धः ॥ २३७ ॥

( ६ ) **रामचन्द्रः** । भगः भगाकारः । सुराध्वजः सुराध्वजरूपः । स्तेये श्वपदं पदसदृशम् । ब्रह्महणि अशिराः पुमान् शिरः शून्यः पुमान्कार्यः ॥ २३७ ॥

**असंभोज्याह्यसंयाज्याअसंपाठ्याविवाहिनः ॥ चरेयुः पृथिवींदीनाः सर्वधर्मबहिष्कृताः ॥ २३८ ॥**

---

( २३८ ) ह्यसंयाज्यः=ह्यसंयोज्याः ( नं० मे० )

( २३८ ) विवाहिनः=विवादिनः ( नं० ) विगर्हिताः ( मे० )

( २३८ ) असंपाठ्याः=असंपोष्याः ( मे० )

( २३८ ) असंभोज्याः=असंपङ्क्त्याः ( राम० )

( १ ) **मेधातिथिः** । सर्वधर्मग्रहणादेवासंभोजनादीनांसिद्धे प्रतिषेधे दोषगुरुत्वख्यापनार्थमेषामुपादानं । संभोगएकत्र-ग्रसनंगीतादिश्रवणंच । संयोजनंतेषामेवयोजनंवा एवंसंपाठोपिद्रष्टव्यः असंपाठ्याविगर्हिताइति असंपाठ्याश्च अविगर्हिना-श्चेति द्वन्द्वः । दीनाइति सत्यपि स्वरत्वे तत्संबन्धिभिक्षादिभोजनेनपरयाऽवज्ञयाचवस्त्रखण्डादिवर्जनम् ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । असंभोज्याएकपङ्क्तिभोजनानर्हाः । असंयाज्याअयाज्याः । असंपाठ्याअध्यापनसंबन्धा-नर्हाः । अविवाहिनोविवाहसंबन्धानर्हाः । चरेयुर्नैकत्र वसेयुः ॥ २३८ ॥

( ३ ) **कुल्लूकः** । अन्नादिकंनैते भोजयितव्याः नचैते याजनीयाः नाप्येतेऽध्यापनीयाः नाप्येतैः कन्यादानसं-बन्धः कर्तव्यः एते च निर्धनत्वाद्याचनादिदैन्ययुक्ताः सर्वश्रौतादिकर्मवर्जिताः पृथिवींपर्यटेयुः ॥ २३८ ॥

( ४ ) **राघवानन्दः** । नकेवलमेवमन्यदपीत्याह असंभोज्याइतिद्वाभ्याम् । असंभोज्या सहभोजनाय नार्हन्त्येते । एवं असंयाज्यायाजनायनार्हाएते । एवं असंपाठ्याःपाठनायनार्हन्ति । अविवाहिनः विवाहोवैवाहिकोयौनसंबन्धस्तद्र-हिताः । सर्वधर्मबहिष्कृताः स्वस्वाश्रमधर्मरहिताः ॥ २३८ ॥

( ५ ) **नन्दनः** । असंभोज्या भोजनानर्हाः असंयोज्याःस्थानासनशयनादिषु सामीप्यानर्हाः असंपाठ्याः सहाध्यय-नानर्हाः विवादिनः सहभाषणानर्हाः ॥ २३८ ॥

( ६ ) **रामचन्द्रः** । गुरुतल्पगादयः सर्वधर्मबहिष्कृताः पृथिवींचरेयुः । असंपङ्क्त्याःपङ्क्त्यनर्हाअसंयाज्याः यष्टुं अर्हान ॥ २३८ ॥

**ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ॥ निर्दयानिर्नमस्कारास्तन्मनोरनुशासनम् ॥ २३९ ॥**

( १ ) **मेधातिथिः** । कृतलक्षणाइतिनिश्चिते तत्कार्यकरत्वमित्यर्थः । व्याध्यादियोगेप्येषु दया न कर्तव्या । ज्येष्ठा-दिगुणदोषेपि चनैतेनमस्कार्याःप्रत्युत्थानादिभिः एषएववचनसामर्थ्याद्धर्मोविज्ञेयः ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः** । कृतलक्षणाः कृताङ्कनाः । निर्दयाः दयायाअविषयाः । निर्नमस्काराअनमस्काराः ॥ २३९ ॥

( ३ ) **कुल्लूकः** । ज्ञातिभिः संबन्धिभिर्मातुलाद्यैरेते कृताङ्कास्त्यजनीयाः नचैषांदयाकार्या नाप्येते नमस्कार्याइती-यंमनोराज्ञा ॥ २३९ ॥

( ४ ) **राघवानन्दः** । [ किंचज्ञातीति ][1] कृतलक्षणाः [ भगादिचिन्हाःनिर्दयाअहोब्रह्मघ्नइतिकृत्वा ][1] ॥ २३९ ॥

( ५ ) **नन्दनः** । निर्दयानिर्नमस्काराः दयानमस्कारयोरविषयभूताः ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । एते ज्ञातिसंबन्धिभिः कृतलक्षणाः कृतचिन्हाः त्यक्तव्याः । निर्दयाः निर्गता दया येषांते । निर्न-मस्काराः निर्गतानमस्कारायेषांते ॥ २३९ ॥

**प्रायश्चित्तन्तुकुर्वाणाःसर्ववर्णायथोदितम् ॥ नाङ्क्याराज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥ २४० ॥**

( १ ) **मेधातिथिः** । शूद्रादावन्यपूर्ववर्णास्तेषांप्रायश्चित्तंकुर्वतामङ्कनंनास्ति दण्डस्तूत्तमसाहसंपणसहस्रंदाप्यते ॥ २४० ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वे प्रागुक्ताः क्षत्रादिवर्णास्त्रयः । दाप्याउत्तमसाहसं प्रायश्चित्ते कृतेऽपि ॥ २४० ॥

( ३ ) **कुल्लूकः** । शास्त्रविहितंप्रायश्चित्तंपुनः कुर्वाणाब्राह्मणादयस्त्रयोवर्णाराज्ञा ललाटेऽङ्कनीयान भवेयुः उत्तमसाह-संपुनर्दण्डनीयाः ॥ २४० ॥

---

( २४० ) सर्व=पूर्वे ( ज, झ, ढ, ट, ठ, थ, ल, न, य, ( सर्व० ) १ ( राघ० २ )

( ४ ) **राघवानन्दः** । [ प्रायश्चित्तमकुर्वतामित्युक्तंतत्करणेतुनचिन्हादिकंकार्यमित्याह प्रायश्चित्तमिति । यथोदितमत्र वक्ष्यमाणत्वेनवेदोक्तंयथा] [1] भवत्येववेदमूलत्वात्स्मृतेः । धनसंयुक्तमित्युक्तंतदाहोत्तमसाहसमिति । दण्डोत्रपुनःप्रसक्तिवारणाय ॥ २४० ॥

( ५ ) **नन्दनः** । पूर्वैवर्णास्त्रैवर्णिकाः अनेन ज्ञायते ललाटेषु कर्तव्यमङ्कनमिति ॥ २४० ॥

( ६ ) **रामचन्द्रः** । पूर्वैवर्णाश्चत्वारोगुरुतल्पगादयःयथोदितंकुर्वाणाराज्ञा ललाटे नांक्याःस्युः नकृतचिन्हाभवेयुः । क्षत्रियादिविषयं ॥ २४० ॥

**आगस्सु ब्राह्मणस्यैव कार्योमध्यमसाहसः ॥ विवास्योवा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः॥२४१॥**

( १ ) **मेधातिथिः** । प्रायश्चित्तन्तुकुर्वाणाइत्येतदत्र नापेक्षते एतेषु ब्राह्मणहत्यादिष्वपराधिषु ब्राह्मणोमध्यमसाहसंदण्ड्यः।अकामतइत्युतरश्लोकादपकृष्यते दण्डयित्वा प्रायश्चित्तंकारयितव्यः सपरिच्छदः गुणवतोब्राह्मणस्यानुग्राह्यस्यैतत् अकामंवाऽनिर्वास्यः ॥ २४१ ॥

( २ ) **सर्वज्ञनारायणः** । महापातकिनोमध्यमसाहसःकृतप्रायश्चित्तस्यब्राह्मणस्य । अकृतप्रायश्चित्तस्तु निर्वास्यः । द्रव्यंधनं परिच्छदोरथादिः ॥ २४१ ॥

( ३ ) **कुल्लूकः** । इतरे कृतवन्तस्त्वित्युत्तरश्लोके श्रूयमाणमकामतइति चात्रापि योजनीयं तेनाकामतइत्येतेष्वपराधेषु गुणवतोब्राह्मणस्य मध्यमसाहसोदण्डःकार्यः । पूर्वोक्तस्तूत्तमसाहसोनिर्गुणस्य द्रष्टव्यः कामतस्तेष्वपराधेषु धनधान्यादिपरिच्छदसहितोब्राह्मणोदेशान्निर्वास्यः ॥ २४१ ॥

( ४ ) **राघवानन्दः** । विगुणेषु चतुर्षूत्तमसाहसमुक्त्वा गुणवत्स्विच्छानिच्छाभ्यां व्यवस्थापयन्नादौ ब्राह्मणस्य तदाह आगस्विति । आगःसु पापेषु । मध्यमसाहसोऽकामतस्तदितरतोनिर्वास्यः । तस्य तृणमात्रं न ग्राह्यमित्याह सपरिच्छदइति ॥ २४१ ॥

( ५ ) **नन्दनः** । अथ महापातकिनामकृतप्रायश्चित्तानामङ्कितानामेव निमित्तविशेषं श्लोकद्वयेनाह आगःसु ब्राह्मणस्यैवकार्यइति । आगःसु पापेषु । अकामकृतविषयोमध्यमसाहसः कामकृतविषयं विवासनमिति व्याख्यातमुत्तरश्लोकानुगुण्यात् ॥ २४१ ॥

( ६ ) **रामचन्द्रः** । एषुआगस्सु गुरुतल्पगाद्यपराधेषु ब्राह्मणस्य मध्यमसाहसः दण्डः कार्यः । वा राष्ट्राद्वा विवास्यः निष्कास्यः सद्रव्यः सपरिच्छदः ॥ २४१ ॥

**इतरे कृतवन्तस्तु पापान्येतान्यकामतः ॥ सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥२४२॥**

( १ ) **मेधातिथिः** । इतरेक्षत्रियादयोवर्णाएतानि पापानि महापातकान्यकामतोऽनिच्छया कृतवन्तः सर्वस्वहरणाः कार्याः केचित्प्रायश्चित्तमपि कुर्वतामेतद्दण्डंपूर्वेण वैकल्पिकमिच्छंति कामतस्तेषांवधउक्तः शूद्रस्याकामतोङ्कनसर्वस्वहरणे कामतोवधः ॥ २४२ ॥

( २ ) **सर्वज्ञनारायणः** । इतरे क्षत्रादयः अकामतः कृतवन्तः प्रायश्चित्ताकरणे सर्वस्वहरणमात्रम् । कामतःकैतेनूक्तप्रकारं प्रवासनमङ्कनादिसहितम् । एतच्चाऽपारम्भविषयं आरम्भमहत्वेतु हन्यादित्युक्तम् ॥ २४२ ॥

---

[1] ( राघ० २ )

(३) **कुल्लूकः**। ब्राह्मणादन्ये पुनः क्षत्रियादयएतानि पापान्यनिच्छन्तः कृतवन्तः सर्वस्वहरणमर्हन्ति। इदंच सर्वस्वहरणंपूर्वोक्तेनोत्तमसाहसेन वृत्तापेक्षया व्यवस्थापनीयं इच्छया पुनरेषामेतेष्वपराधेषु प्रवासनंवधोर्हति॥ प्रवासनंपरासनंनिसूदनंहिंसनमिति। वधपर्यायंप्रवासनशब्दंपठन्त्याभिधानिकाः॥ २४२॥

(४) **राघवानन्दः**। क्षत्रियादीनांत्वाह इतरइति। एतानि ब्रह्महत्यादीनि। कृतवतांसर्वस्वहारं सर्वस्वहरणमिद मुत्तमसाहसेनसह विकल्पः॥ प्रवासनं परासनं निषूदनं निर्हिसनमिति वधपर्याय इति केचित्। तन्न राजकृत दण्डचिन्हस्यापि द्वादशवार्षिकादिव्रतोपदेशान्मरणे तदसंभवादेवंविधे धनहारः प्रवासनं चेति॥ २४२॥

(५) **नन्दनः**। इतरे क्षत्रियादयः॥ २४२॥

(६) **रामचन्द्रः**। इतरे क्षत्रियादयः एतानि पापानि अकामतःकृतवन्तः सर्वस्वहारंअर्हन्ति। तु पुनः कामतः प्रवासनं प्रवासमेवमारणं अर्हन्ति॥ २४२॥

**नाददीत नृपः साधुर्महापातकिनोधनम्॥ आददानस्तु तल्लोभात्तेन दोषेण लिप्यते॥ २४३॥**

(१) **मेधातिथिः**। ननुधनेनदण्डनंराज्ञोवृत्तिरितिस्थापितंकथमिहतद्धनस्याग्रहणंउक्तं राजनिर्धूतदण्डाइत्यत्रान्तरे॥ २४३॥

(२) **सर्वज्ञनारायणः**। धनं दण्डरूपमपि॥ २४३॥

(३) **कुल्लूकः**। धार्मिकोराजा महापातकसंबन्धिधनंदण्डरूपं न गृह्णीयात्। लोभात्पुन स्तद्गृह्णन्महापातकदोषेण संयुज्यते॥ २४३॥

(४) **राघवानन्दः**। साधूराजा दण्डधनमेषां नात्मसात्कुर्यादित्याह नेति। दोषेण तत्तुल्यप्रायश्चित्तेन परलोकनाशेनवा लिप्यते संबध्यते पापेनेतिक्वचित्पाठः॥ २४३॥

(५) **नन्दनः**। धनदण्डरूपेण ग्राह्यं नाददीत न स्वीकुर्यात्॥ २४३॥

(६) **रामचन्द्रः**। एवंविद्वान्अनुशासत् नेति। नृपः साधुर्यथामहापातकिनः सकाशाद्धनं दण्डंधनं नआददीत कोशे नप्रवेशयेत्। तद्दण्डधनं लोभात् आददानः॥ २४३॥

**अप्सु प्रवेश्य तंदण्डंवरुणायोपपादयेत्॥ श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥ २४४॥**

(१) **मेधातिथिः**। वरुणायेदमिति मनसा ध्यायन्नप्सु दद्यादप्सुनिक्षिपेत् ब्राह्मणाय वा विद्याशीलसंपन्नाय दद्यात्॥ २४४॥

(२) **सर्वज्ञनारायणः**। उपपादयेत् दद्यात्। वृत्तमाचारः॥ २४४॥

(३) **कुल्लूकः**। कातर्हि दत्तधनस्य प्रतिपत्तिरित्येतदर्थमाह अप्स्विति। तद्दण्डधनंनद्यादिजले प्रक्षिपेद्वरुणाय दद्याच्छ्रुतवृत्तसंपन्नब्राह्मणाय वा दद्यात्॥ २४४॥

(४) **राघवानन्दः**। तर्हि तत्किंकार्यमित्याह अप्स्विति॥ २४४॥

(५) **नन्दनः**। तं दण्डं दण्डधनम्॥ २४४॥

**ईशोदण्डस्य वरुणोराज्ञांदण्डधरोहि सः॥ ईशः सर्वस्य जगतोब्राह्मणोवेदपारगः॥ २४५॥**

(१) **मेधातिथिः**। पूर्वस्य प्रतिपत्तिविधेरर्थवादोयं महापातकिनंदण्डस्य वरुणईष्टे यतोराज्ञांसदण्डधरोनेता ईशितेति यावत् एवंब्राह्मणोपि तद्धनस्येशोनेन ग्राह्यः॥ २४५॥

( २ ) सर्वज्ञनारायणः । राज्ञामपि दण्डधरः शास्तायतः ॥ २४५ ॥

( ३ ) कुल्लूकः । महापातकिदण्डधनस्य वरुणः स्वामी यस्माद्राज्ञामपि दण्डधारित्वात्प्रभुः तथा ब्राह्मणः समस्तवेदाध्यायी सर्वस्य जगतः प्रभुः अतः प्रभुत्वात्तौ दण्डधनमर्हतः ॥ २४५ ॥

( ४ ) राघवानन्दः । तद्धनस्य ब्राह्मणार्पणे व्रीहियववद्विकल्पद्योतकार्थवादमाह ईशइति । वस्तुतस्तु वरुणाय संकल्प्यविप्रायोपपादयेत् अतएव तद्धनंस्वीकर्तुर्विप्रस्य प्रायश्चित्तमाह याज्ञवल्क्यः ॥ आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी मतेति ॥ २४५ ॥

( ५ ) नन्दनः । अत्र कारणमाह ईशोदण्डस्य वरुणोराज्ञामिति दण्डधरइत्येतद्ब्राह्मणेऽपि योजनीयं तस्मात्तद्धनंराज्ञा न स्वीकार्यं तयोरन्यतरस्मै तद्देयमिति ॥ २४५ ॥

**यत्र वर्जयते राजा पापकृद्भ्योधनागमम् ॥ तत्र कालेन जायन्तेमानवादीर्घजीविनः ॥ २४६ ॥**

( १ ) मेधातिथिः । प्रसिद्धाविमावप्यर्थवादश्लोकौ कालेन जायन्तइति वर्तमानजन्म विवक्षितंजातंजनिष्यमाणश्च विकृतिःकर्णाक्षविहानम् ॥ २४६ ॥ २४७ ॥

( २ ) सर्वज्ञनारायणः । कालेन संपूर्णे गर्भे ॥ २४६ ॥

( ३ ) कुल्लूकः । यत्र देशेप्रकृतंमहापातकिधनंराजा न गृह्णाति तत्र परिपूर्णेन कालेन मनुष्याउत्पद्यन्ते दीर्घायुषश्च भवन्ति। वैश्यानांच यथैव धान्यादि सस्यान्युप्तानि तथैव पृथक्प्रथक्जायन्ते अकाले न बालाम्रियन्ते दीर्घजीविनइत्युक्तेप्यादरार्थंबालानांपुनर्वचनंव्यङ्गंचन किंचिद्भूतमुत्पद्यते ॥ २४६ ॥ २४७ ॥

( ४ ) राघवानन्दः । पापिनांधनस्यराज्ञामनात्मसात्करणे हेतुतयाऽर्थवादमाह यत्रेतिद्वाभ्याम् । वर्जयते नगृह्णीयात् । दीर्घजीविनः शतोर्ध्वजीविनः ॥ २४६ ॥

( ५ ) नन्दनः । दण्डधनवर्जने राज्ञः फलं श्लोकद्वयेनाह यत्र वर्जयते राजेति । धनागमोदण्डधनस्वीकारः ॥ २४६ ॥

( ६ ) रामचन्द्रः । पापकृभ्द्यः सकाशात् धनागमम् यत् राजानं नवर्तयते ॥ २४६ ॥

**निष्पद्यन्ते च सस्यानि यथोप्तानि विशांपृथक् ॥ बालाश्च न प्रमीयन्तेविकृतंन च जायते॥२४७॥**

( २ ) सर्वज्ञनारायणः । बालानमीयन्तइति दीर्घजीवित्वस्य सार्वत्रिकत्वमुक्तम् । बालपदं गर्भपरमित्यन्ये । विकृतं अन्धत्वपङ्गुत्वादि ॥ २४७ ॥

( ४ ) राघवानन्दः । निष्पद्यन्ते उत्पद्यन्ते । विशां वैश्यानाम् । नप्रमीयन्ते नम्रियन्ते । विकृतं ॥ अतिवृष्टिरनावृष्टिः शलभामूषिकाः खगाः ॥ प्रत्यासन्नाश्चराजानः षडेते ईतयः स्मृताइति ॥ ईतयोदुर्भिक्षादिवा ॥ २४७ ॥

( ५ ) नन्दनः । निष्पद्यन्ते फलन्ति ॥ २४७ ॥

( ६ ) रामचन्द्रः । निरिति । तत्र राज्ञे देशे निष्पद्यन्ते ॥ २४७ ॥

**ब्राह्मणान्बाधमानन्तु कामादवरवर्णजम् ॥ हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८ ॥**

---

( १ ) वर्जयते = वर्जयेत ( राध० २ )

( १ ) **मेधातिथिः** । अवरवर्णजः शूद्रः बाधनंधनाद्याहरणंशिरश्छेदोऽङ्गकल्पनं खड्गप्रहारकार्तिकाइत्याद्याः उद्वेजनकरैर्दीर्घकालपीडाकरैः ॥ २४८ ॥

( २ ) **सर्वज्ञनारायणः** । बाधमानमत्यन्तदुःखोत्पादनेन । अवरवर्णजं शूद्रम् । चित्रैर्नानाविधैर्हस्तपादछेदादिभिः ॥ २४८ ॥

( ३ ) **कुल्लूकः** । शरीरपीडाधनग्रहणादिना शूद्रमिच्छातोब्राह्मणान्बाधमानंछेदादिभिरुद्वेगकरैर्वधोपायैर्नृपोहन्यात् ॥ ॥ २४८ ॥

( ४ ) **राघवानन्दः** । ईशःसर्वस्य जगतइत्यनेन ब्राह्मणानां श्रैष्ठ्यमुक्तं । ते यैः शरीरधनादिभिःपीड्यन्तेतेहन्तव्या इत्याह ब्राह्मणानिति । चित्रैर्वधोपायैः तिलशोहस्तच्छेदादिभिः ॥ २४८ ॥

( ५ ) **नन्दनः** । दण्ड्यान्तरमाह ब्राह्मणान्बाधमानन्त्विति । अवरवर्णजंशूद्रम् ॥ २४८ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणान्बाधमानं बाध्यमानं नृप उद्वेजनकरैः वधोपायैः मुण्डनादिभिः उपायैः हन्यात् ताडयेत् हनहिंसागत्योरित्यस्यधातोरूपं । अवरजवर्णजं क्षत्रियादिवर्णजं चित्रैःविविधोपायैर्हन्यात् करचरणच्छेदनादिभिः उपायैःनृपःहन्यात् ॥ २४८ ॥

**यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे ॥ अधर्मोनृपतेर्दृष्टोधर्मस्तु विनियच्छतः॥२४९॥**

( १ ) **मेधातिथिः** । अवध्यवधेयोदोषस्तत्तुल्योवध्यमोक्षणे राज्ञोऽप्रयुक्तेषु । अथ भागहरस्य धर्मानकुर्वतः प्रत्यवायेन वश्यंभवितव्यंकुर्वतस्तु न कदाचिददृष्टसिद्धिः । यस्त्वयंधर्मस्तुविनियच्छति एवमादिधर्मप्रवादः सर्वोसौस्वकर्मानुष्ठानानुशंसार्थोर्थवादः नियहोपसंस्कारार्थस्त्वयंवधोपदेशोऽतोयथाश्रुतिचित्रवधोपायैः कर्तव्यः। इष्टार्थेषु राज्यतन्त्रसिद्ध्यर्थमुपदेशेषु प्रवचनंयथादमंयोधांश्चहन्यादितियुक्तं तत्र दृष्टप्रयोजनत्वादुपदेशस्य न नियतोवधः । एवंच सत्युपायांतरेणापि बन्धनादिना विनियच्छतोदोषः ॥ २४९ ॥

( २ ) **सर्वज्ञनारायणः** । विनियच्छतोदण्डयतोदण्ड्यम् ॥ २४९ ॥

( ३ ) **कुल्लूकः** । अवध्यस्य वधे यावानधर्मोनृपतेः शास्त्रेण ज्ञातस्तावानेव वध्यस्य त्यागेपि यथा शास्त्रंदण्डन्तुकुर्वतोधर्मः स्यात्तस्मात्तंकुर्यात् ॥ २४९ ॥

( ४ ) **राघवानन्दः** । वध्यस्योवधे दोषं सदृष्टान्तं कथयंस्तत्रयत्नमाधत्ते यावानिति । यावान् दृष्टादृष्टरूपः । दृष्टः श्रुत्यादिभिः प्रमीतो वध्यस्य वधार्हस्यरक्षणे । विनियच्छतःयथाशास्त्रंदण्डयतः धर्मस्तावान्दृष्टइत्यन्वयः ॥ २४९ ॥

( ५ ) **नन्दनः** । दण्डस्योपेक्षणे दोषगौरवमाह यावानवध्यस्य वधइति । अवध्यस्य ब्राह्मणस्य यावान्धर्मः । विनियच्छतोदण्डयतः ॥ २४९ ॥

( ६ ) **रामचन्द्रः** । नृपतेः यावानवध्यस्य वधेऽधर्मोदृष्टस्तावान्वध्यस्य वधार्हस्य मोक्षणेअधर्मोदृष्टः । तुपुनः विनियच्छतः विनयं कुर्वतः ॥ २४९ ॥

**उदितोयंविस्तरशोमिथोविवदमानयोः ॥ अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥**

( १ ) **मेधातिथिः** । सर्वव्यवहारोपसंहारार्थः श्लोकः ॥ २५० ॥

( २ ) **सर्वज्ञनारायणः** । विवादमुपसंहरति उदितइति ॥ २५० ॥

( ३ ) **कुल्लूकः** । अष्टादशऋणादानादिषु व्यवहारपदेषु परस्परंविवदमानयोरर्थिप्रत्यर्थिनोः कार्यनिर्णयोयंविस्तरेणोक्तः ॥ २५० ॥

( ४ ) **राघवानन्दः** । अष्टादशव्यवहारानुपसंहरन्राजधर्मस्य परिशिष्टानाह उदितइति । उदितोऽष्टमाध्यायमारभ्य नियच्छतइत्यन्तैः । विवदमानयोरित्युपलक्षणव्यवहारमात्रस्य द्वित्रिसाध्यत्वात् मार्गेषु अतीवान्वेषणीयविषयेषु ॥ २५० ॥

( ५ ) **नन्दनः** । उपसंहरति उदितोऽयंविस्तरशइति ॥ २५० ॥

( ६ ) **रामचन्द्रः** । विस्तरशः विस्तरः ॥ २५० ॥

**एवंधर्म्याणिकार्याणि सम्यक्कुर्वन्महीपतिः॥ देशानलब्धान्लिप्सेत लब्धांश्च परिपालयेत् ॥२५१॥**

( १ ) **मेधातिथिः** । अलब्धाल्लिप्सेतेति संतोषपरेण न भवितव्यमित्यर्थः ॥ २५१ ॥

( २ ) **सर्वज्ञनारायणः** । राजकृत्यशेषमाह एवमिति ॥ २५१ ॥

( ३ ) **कुल्लूकः** । अनेनोक्तप्रकारेण धर्मादनपेतान्व्यवहारान्निर्णयन्राजा जनानुरागादलब्धा देशाँल्लब्धुमिच्छेल्लब्धांश्च सम्यक्पालयेदेवंसम्यगव्यवहारदर्शनस्यालब्धप्रदेशप्राप्त्यर्थत्वमुक्तम ॥ २५१ ॥

( ४ ) **राघवानन्दः** । महीपतित्वंद्योतयति देशानिति ॥ २५१ ॥

( ५ ) **नन्दनः** । कुर्वँल्लिप्सेत नाकुर्वन् ॥ २५१ ॥

( ६ ) **रामचन्द्रः** । अलब्धान् अमात्यान् लिप्सेत ॥ २५१ ॥

**सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः॥ कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥**

( १ ) **मेधातिथिः** । देशनिवेशोदुर्गकरणंयत्सप्तमाध्याये उक्तंतत्कृत्यंकण्टकोद्धरणंतेनापि राष्ट्ररक्षाक्रियते कण्टकशब्दःपीडाहेतुसामान्यात्तस्करादिषु प्रयुक्तः ॥ २५२ ॥

( २ ) **सर्वज्ञनारायणः** । निविष्टदेशोजनाध्युषितदेशः । शास्त्रतः शास्त्रोक्तविधिना कण्टकानां क्षुद्रशत्रूणां तस्करादीनामुद्धरणे ॥ २५२ ॥

( ३ ) **कुल्लूकः** । जाङ्गलंसस्यसंपन्नमित्युक्तरीत्या सम्यगाश्रितदेशस्तत्र सप्तमाध्यायोक्तप्रकारेण कृतदुर्गश्चौरसाहसिकादिकण्टकनिराकरणे प्रकृष्टयत्नंसदा कुर्यात् ॥ २५२ ॥

( ४ ) **राघवानन्दः** । जाङ्गलंसस्यसंपन्नमित्याद्युक्तरीत्यासम्यङ्निविष्टदेशः धन्वदुर्गमित्यादिशास्त्रतः शास्त्रानुसारेण कृतदुर्गश्च कण्टकाद्यूतसुवर्णकारादयस्तेषामुद्धरणमुन्मूलनं तत्र यत्नमातिष्ठेदित्यन्वयः ॥ २५२ ॥

( ५ ) **नन्दनः** । अथकण्टकशोधनमाह सम्यङ्निविष्टदेशस्त्विति। सतां बाधकाः कण्टकाः । उद्धरणं निराकरणम् ॥ २५२ ॥

( ६ ) **रामचन्द्रः** । सम्यक् प्रकारेण निविष्टदेशः स्वस्यदेशः कण्टकस्य उद्धरणे नित्यमुत्तमंयत्नंआतिष्ठेत् ॥ २५२ ॥

**रक्षणादार्यवृत्तानांकण्टकानांच शोधनात् ॥ नरेन्द्रास्त्रिदिवंयान्ति प्रजापालनतत्पराः ॥ २५३ ॥**

( १ ) **मेधातिथिः** । एतदेवदर्शयति आर्यवृत्तंशास्त्रनोदितंकर्तव्येतरानुष्ठाननिषेधस्तद्वृत्तंयेषामुत्तरपदलोपीसमासः तेच

दीनानाथश्रोत्रियाअकरशुल्कदागृह्यन्ते तद्रक्षणाद्धि त्रिदिवगमनंयुक्तं । अन्येषांतु वृत्तिपरिक्रीतत्वादकरणे प्रत्यवायोयथो-त्तरत्रवक्ष्यति स्वर्गाच्च परिहीयतइति रक्षानुवृत्तिनिष्क्रयणेन प्रत्यवायाभावमात्रेण तु स्वर्गः अथवा वृत्तिनियमापेक्षंत्रि-दिवप्राप्तिवचनंयथोक्तंप्राक् अन्येषांतु दर्शनमर्थवादमात्रं राज्ञः स्वर्गवचनं अवृत्तिदपरिपालनेपि वृत्तिप्रयुक्तंस्वराजभागस्था-नीयस्य तद्राज्ञोयथैव च शिल्पिजीविनः शिल्पिनोमासिमास्येकैकंकाम्यंकुर्युरिति वृत्यर्थशिल्पंकुर्वाणाराज्ञा कर्मकार्यन्ते-करग्रहणाय एवंराजापि वृत्तियुक्तः प्रजापालनप्रवृत्तोनित्यकर्मवदनार्यपरिपालनंकार्यते । शास्त्रेण यथैव हि कामश्रुतितोऽ-ग्याहितोनित्यानुतिष्ठति न स्वर्गादिलाभाय नहि तानि फलार्थतया नोदितानि अथ च क्रियन्ते तद्वदेतद्द्रष्टव्यं अथोयावती काचित्फलश्रुतिः सा सर्वार्थवादइति कोवरविष्णुस्वामी । यदत्र तत्त्वंतद्दर्शितमधस्तात् ॥ २५३ ॥

( २ ) **सर्वज्ञनारायणः** । शोधनादनुसंधानात् ॥ २५३ ॥

( ३ ) **कुल्लूकः** । यस्मात्साध्वाचाराणांरक्षणाच्चोरादीनांच शासनात्प्रजापालनोद्युक्ताराजानः स्वर्गगच्छन्ति तस्मात्क-ण्टकोद्धरणे यत्नंकुर्यात् ॥ २५३ ॥

( ४ ) **राघवानन्दः** । तेन किं तत्राह रक्षणादिति । आर्यवृत्तानां सदनुष्ठिताचाराणां रक्षणाद्वलभूमिदानादिना । कण्टकादीनां चोरादीनां शोधनान्निरसनात्ताभ्यांयःपुण्यराशिस्तेनदिवंस्वर्गंयान्ति ॥ २५३ ॥

( ५ ) **नन्दनः** । अत्र फलमाह रक्षणादार्यवृत्तानामिति ॥ २५३ ॥

( ६ ) **रामचन्द्रः** । आर्यवृत्तानां साधूनाम् ॥ २५३ ॥

**अशासंस्तस्कारान्यस्तु बलिंगृह्णाति पार्थिवः ॥ तस्य प्रक्षुभ्यते राष्ट्रंस्वर्गाच्च परिहीयते ॥ २५४ ॥**

( १ ) **मेधातिथिः** । शासनंयथाशास्त्रंवधादिदण्डमन्तरेणतस्कराणांनिग्रहरक्षा नशक्यते अतोवृत्तिंगृहीत्वा यस्त-स्करवधाज्जुगुप्सते तस्योभयोदोषः इहराष्ट्रकुतोऽमुत्र स्वर्गपरिहानिः युक्ता च बलिपरिगृहीतस्य तन्निष्कृतिमकुर्वतोदोष-वत्ता ॥ २५४ ॥

( २ ) **सर्वज्ञनारायणः** । प्रक्षुभ्यते द्वेषवद्भवति ॥ २५४ ॥

( ३ ) **कुल्लूकः** । यथा पुनर्नृपतिश्चौरादीननिराकुर्वन्षड्भागाद्युक्तंकरंगृह्णाति तस्यैराष्ट्रवासिनोजनाः कुप्यन्ति । कर्मान्त-रार्जिताप्यस्य स्वर्गप्राप्तिरनेन दुष्कृतेन प्रतिबध्यते ॥ २५४ ॥

( ४ ) **राघवानन्दः** । अन्येषांप्रजानांपालनेनसतः उक्ताकरणे दोषमाह अशेति । अशासदनिगृह्णन् । बलिंकरशु-ल्कादि । परिहीयते नृपतिः पापप्रतिबन्धात् ॥ २५४ ॥

( ५ ) **नन्दनः** । विपर्ययेदोषमाह अशासंस्तस्करान्यस्त्विति ॥ २५४ ॥

( ६ ) **रामचन्द्रः** । अशासन् अरक्षन् ॥ २५४ ॥

**निर्भयन्तु भवेद्यस्य राष्ट्रंबाहुबलाश्रितम् ॥ तस्य तद्वर्धते नित्यंसिच्यमानइव द्रुमः ॥ २५५ ॥**

( १ ) **मेधातिथिः** । प्रसिद्धमेवैतच्छ्लोके तस्करधर्मविशेषतयाऽनूद्यते ॥ २५५ ॥

( २ ) **सर्वज्ञनारायणः** । निर्भयं कण्टकभयशून्यम् ॥ २५५ ॥

---

( २५५ ) निर्भयन्तुभवेद्यस्य=निर्भयंयस्यवसति ( नं )

( ३ ) **कुल्लूकः** । यस्य राज्ञोबाहुवीर्याश्रयेण राष्ट्रंचौरादिभयरहितंभवति तस्य नित्यंतद्वृद्धिंगच्छति उदकसेकेनेव वृक्षः ॥ २५५ ॥

( ४ ) **राघवानन्दः** । किंच निरिति । राष्ट्रं राष्ट्रस्थाः प्रजाः । यस्य बाहुबलाश्रितंसदित्यन्वयः ॥ २५५ ॥

( ५ ) **नन्दनः** । कण्टकशोधनेदृष्टफलंभूयिष्ठमित्याह निर्भयंयस्य वसतीति । वसतिजीवति ॥ २५५ ॥

**द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् ॥ प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ २५६ ॥**

( १ ) **मेधातिथिः** । चाराः प्रच्छन्नाराष्ट्रे राजकृत्यज्ञानिनस्ते चक्षुषीइव यस्य सचारचक्षुः । प्राकाशस्तस्कराणांनातितस्करव्यवहारोयथालोकेऽन्येषामटवीरात्रिचराणामाप्तस्तैः सामान्योपादानंतद्वन्निग्रहार्थंक्रियते ॥ २५६ ॥

( २ ) **सर्वज्ञनारायणः** । परद्रव्यापहारिणस्तस्करांस्तस्करसंज्ञान् ॥ २५६ ॥

( ३ ) **कुल्लूकः** । चारएव चोरज्ञानहेतुत्वाच्चक्षुरिव यस्यासौ राजा चारैरेव प्रकटतयागूढतयाद्विप्रकारान्न्यायेन परधनग्राहिणोजानीयात् ॥ २५६ ॥

( ४ ) **राघवानन्दः** । पालनेन जलस्थानीयेन सिच्यमानमिवप्रकाशवंचकाः । समक्षं द्रव्यान्तरं मिश्रीकृत्य दुग्धघृततैलादिव्यवहारिणः । अप्रकाशाइत्यस्यव्याख्या ॥ २५६

( ५ ) **नन्दनः** । के पुनः कण्टकास्तानाह द्विविधांस्तस्करानिति । चारचक्षुषा जानीयात् ॥ २५६ ॥

( ६ ) **रामचन्द्रः** । तद्विधान् प्रकाशान् वणिक्प्रभृतीन् राजा विद्यात् ॥ २५६ ।

**प्रकाशवंचकास्तेषांनानापण्योपजीविनः ॥ प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः ॥ २५७ ॥**

( १ ) **मेधातिथिः** । तत्र ये क्रयार्थमानतुलादिना मुष्णन्ति द्रव्याणामागमस्थाननिर्गमनापेक्षार्थंकुर्वन्ति ते प्रकाशकाः [ जवनिकामच्छन्नायेरात्रेरनुहरन्तितेस्तेनाआटविका ][1] विजने प्रदेशे वसन्ति अपरेतु प्रसह्य हारिणोन केवलमेतएव किंतर्हीमे चान्ये यानूर्ध्ववक्ष्यामः ॥ २५७ ॥

( २ ) **सर्वज्ञनारायणः** । नानापण्योपजीविनोमूल्यादिवञ्चनेन वञ्चकाहेमकारादयः । तथोत्कोचिकादयोवक्ष्यमाणास्तेनाःसंध्यादिकर्तारः । अटव्याआटविकाः अटव्यां गहनादौ द्रव्यापहर्तारः ॥ २५७ ॥

( ३ ) **कुल्लूकः** । तेषांपुनश्चौरादीनांमध्याद्येतुलाप्रतिमानोपचयापचयादिना हिरण्यादिपण्यविक्रयिणः । परधनमनुचितेन गृह्णन्ति ते प्रकाशवंचकाःस्तेनाश्चौराः सन्धिच्छेदादिना गुप्ताऽटव्याश्रयाश्च परधनंगृह्णन्ति ते प्रच्छन्नवंचकाः ॥ २५७ ॥

( ४ ) **राघवानन्दः** । प्रच्छन्नवञ्चकाइति । स्तेनाआटविकादयः स्तेनाःचोराः । अटव्यांचरतीत्याटविकोदस्युस्तद्वादयः । सन्धिराषः । क्वचित् स्तेनाआटविकादयइतिपाठः ॥ २५७ ॥

( ६ ) **रामचन्द्रः** । ये स्तेनाः आटविकादयः अटवींभ्रमन्तीत्यर्थः ॥ २५७ ॥

**उत्कोचकाश्चौपधिकावञ्चकाः कितवास्तथा ॥ मङ्गलादेशवृत्ताश्चभद्राश्चेक्षणिकैः सह ॥ २५८ ॥**

( १ ) **मेधातिथिः** । उत्कोचकार्येण कस्यचित्कार्येण कस्यचिद्राजामात्यादेः प्रवृत्तोग्रहणातिकार्यसिद्धौ प्रवर्तंते औपधिकाःछद्मव्यवहारिणः अन्यद्ब्रुवन्नन्यदाचरन्ति प्रत्यक्षंप्रीतिंदर्शयित्वा हठोपकारे वर्तन्ते विनाप्यर्थग्रहणेन निमि-

( २५८ ) वास्तथा=वा शठाः ( ख, ग, ण ) ( १ ) आआ

त्तान्तरतः अन्यतोपरस्य कार्यसिद्धिमवश्यंविज्ञाय मयातवैतत्क्रियत इति परं गृह्णन्ति भीषिकाप्रदर्शनंवा उपधावनग्रहणार्थे सदादेविनइत्यर्थः । पृथगर्थेवा पादवञ्चकाविप्रलम्भकाः इदंकार्यंवयमेवकरिष्यामस्तव नान्यत्रस्थाइत्युक्त्वा न कुर्वत उपेन्य नानाकारणनानाविधैरुपायैर्ग्रामिणान्मुष्णन्ति शिवमाधवादयः शिवमादित्यंजीवन्ति मङ्गलादेशवृत्तायान्त्युपदेशिकाज्योतिषिकादयः अथवाएतांदेवतां त्वदर्थेनाहंप्रीणयामि दुर्गांमार्तण्डंचेति तथाऽऽढ्यानांधनमुपजीवन्ति अथवामङ्गलं तथास्त्विति वादिनः आदेशवृत्ताः सर्वस्य करवर्धने अभद्राभद्रामेक्षणकाः प्रशंसिपुरुषलक्षणाः ॥ २५८ ॥

( २ ) **सर्वज्ञनारायणः** । उत्कोचिकाउत्कोचग्राहिणः । औपधिकाः स्तुत्यादिकृतेनोपधेनछलेन गृह्णन्तः । वञ्चकवेषान्तरेण भ्रममुत्पाद्यदातारः । कितवाद्यूतकृतः । मङ्गलादेशोमङ्गलस्तुतिपाठः वृत्तं चरितं येषाम् । भद्रालरूपतामात्मनोविधाय स्त्र्यादिव्यामोहकाः । ईक्षणीकाः प्रेक्षणीयकर्तारोनयदयः ॥ २५८ ॥

( ३ ) **कुल्लूकः** । किंच उत्कोचकाइति असम्यगिति उत्कोचकाये कार्यिभ्योधनंगृहीत्वा कार्यमयुक्तंकुर्वन्ति औपाधिकाभयदर्शनाद्ये धनमुपजीवन्ति वञ्चकाये सुवर्णादिद्रव्यंगृहीत्वाऽपद्रव्यप्रक्षेपेण वञ्चयन्ति । कितवाद्यूतसमाह्वयवेदिनः धनपुत्रलाभादिमङ्गलममत्वमादिश्य ये वर्तन्ते ते मङ्गलदेशवृत्ताः भद्राः कल्याणाकारमच्छन्नपापाये धनग्राहिणः ईक्षणिकाहस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीविनः महामात्राहस्तिशिक्षाजीविनः चिकित्सकाः चिकित्साजीविनः असम्यक्कारिणइति महामात्रचिकित्सकविशेषणं शिल्पोपचारयुक्ताश्चित्रलेखाद्युपायजीविनस्तेप्यनुपजीव्यमानशिल्पोपायप्रोत्साहनेन धनंगृह्णन्ति । पण्यस्त्रियश्च परवशीकरणकुशलाइत्येवमादीन्प्रकाशंलोकवंचकान् चारैर्जानीयात् । अन्यानपि प्रच्छन्नचारिणः शूद्रादीन्ब्राह्मणादिवेषधारिणोधनग्राहिणोजानीयात् ॥ २५८ ॥ २५९ ॥ २६० ॥

( ४ ) **राघवानन्दः** । किंच एतेति प्रकाशवञ्चकाइत्याह उदितिद्वाभ्याम् । उत्कोचका कार्यिभ्योधनंगृहीत्वाऽयुक्तकारिणः । औपधिका उपधिर्भयादिप्रदर्शनं तेनोपजीविनः । वञ्चकाः रसविद्धताम्रादि रजतादिरूपेण दर्शयित्वा सुवर्णादिकं ये गृह्णन्ति ते । कितवाः ये द्यूतसमाह्वयवेदिनः । मङ्गलादेशवृत्ताः धनपुत्रादिलाभंसूचयन्तोधनग्राहिणः । भद्राः धनार्थं कल्याणाचरणेन मच्छन्नपापाः । ईक्षणिकाहस्तादिरेखाद्यवलोकनेन शुभाशुभफलशंसिनः ॥ २५८ ॥

( ५ ) **नन्दनः** । उत्कोचका उत्कोचकजीविनः । औपधिकाः कूटतुलामानजीविनः । वञ्चकामायिनः । मङ्गलादेशवृत्तयोमङ्गलोपदेशपराः भद्राभद्रवेषधारिणः शुभाशुभत्वेक्षणेन ये जीवन्तित ऐक्षणिकाः ॥ २५८ ॥

( ६ ) **रामचन्द्रः** । उत्कोचकाः भयादिप्रदर्शनेन धनोपजीवकाः । आकरे ग्राहकाः औपधिकाः तुलादिकृतेनोपाधिना छलेन गृह्णन्तः । वंचकाःभ्रममुत्पाद्य गृह्णन्तः । कितवाद्यूतवेदिनः मङ्गलादेशवृत्ताश्चमङ्गलोपदेशकाः । भद्राकल्पनकाराः । प्रच्छनपापाः । प्रेक्षणिकैः हस्तादिप्रेक्षकैः ॥ २५८ ॥

## असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः ॥ शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ॥ २५९ ॥

( १ ) **मेधातिथिः** । महामात्रामन्त्रिपुरोहितादयोराजनिकटिकास्तेचेदसम्यक्कारिणः । चिकित्सकावैद्याः शिल्पोपचारयुक्ताः चित्रपत्रछेदरूपकारादयः उपचारउपायनमनुपयुज्यमानत्वाशिल्पकौशलंदर्शयित्वानुष्ठायधनंनयन्ति । एवंपण्ययोषितो निपुणाश्चापकारिणासत्प्रीतिदर्शनेन असम्यक्कारिणइति सर्वत्रानुयुज्यते ॥ २५९ ॥

( २ ) **सर्वज्ञनारायणः** । महामात्राः अमात्याः राज्ञः तथा चिकित्सकाः भिषजः । असम्यक्कारिणोऽनुक्तकारि-

( २५९ ) शिल्पोपचार=शिल्पोपकार ( नं )

णः। शिल्पेयुक्ताश्चित्रकारादयः । उपकारयुक्ताःकेशादिसंस्कर्तारः । निपुणाः स्वस्ववृत्तिकुशलाः । **पण्ययोषितोवेश्याः** ॥ २५९ ॥

( ४ ) **राघवानन्दः** । महामात्राहस्तिशिक्षाजीविनः । महामात्रचिकित्सयोर्विशेषणमसम्यक्कारिणइति । ते हि गजादेरोगादिमन्त्रादिना संपाद्याऽसाध्यमित्याख्याप्य पुनःसाधयन्ति । शिल्पोपचारयुक्ताः विचित्रपत्रछेदादिनिपुणास्तेनैवबालान्श्रोत्साहयन्तोधनंगृह्णन्ति । पण्ययोषितः स्तनजघनादिचालनेन काममुद्भाव्य पुंवशीकरणकुशलाःदूत्योवेश्यावा ॥२५९॥

( ५ ) **नन्दनः** । असम्यक्कारिणइति महमात्राणांचिकित्सकानांच विशेषणं शिल्पोपकारयुक्ताः छत्रतालवृन्ताद्युपकारकारिणः ॥ १५९ ॥

( ६ ) **रामचन्द्रः** । महामात्राः हस्तिशिक्षकाः । वैद्याः । निपुणाः परपुरुषवशीकरणकुशलाः । पण्ययोषितः **पण्यस्त्रीगृहं** ॥ २५९ ॥

## एवमादीन्विजानीयात्प्रकाशाँल्लोककण्टकान् ॥ निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः॥२६०॥

( १ ) **मेधातिथिः** । एवमाद्यान शक्यन्ते धूर्तानांपरद्रव्यापहाराणांप्रकारान्संख्यातुमित्याद्यग्रहणंतथाह्यशक्यंकथयन्ति अवधारयन्तीमनुरागिणींतथाभृत्योभृत्यवदात्मानंदर्शयित्वा न यदिहिरण्यमृजुप्रकृतेर्नचार्थभृतस्त्वंब्रह्मात्वंबृहस्पतिरित्युक्त्वा मूर्खाद्यान्नयन्ति देहि प्रसादेन कतिपयैर्वाहोभिः प्रत्यर्पयामीति सिद्धे प्रयोजने तनुतरोभवति प्रियवाद्यप्रियवादिसंपद्यते निगूढचारणस्तुल्यकर्मकारिभिर्विद्यापूर्वयेतत्कर्मकृतवन्तः अथवासंप्रत्येवतत्कर्मकार्यन्ते अन्तर्भावसिध्यर्थंलब्धान्तराआगत्य कथयिष्यन्ति ॥ २६० ॥

( २ ) **सर्वज्ञनारायणः** । विजानीयात् किमन्याय्यंकुर्वन्तीति । प्रकाशान् धनिनः समक्षंग्रहीतॄन् । निगूढकारिणोनिह्नवेनाहर्तॄन् । आर्यलिङ्गिनोब्रह्मचर्यादिवेषान् ॥ २६० ॥

( ४ ) **राघवानन्दः** । लोककण्टकान् कण्टकवदुःखहेतून् । आर्यलिङ्गिनः सन्यासादिवेषधारिणः ॥ २६० ॥

( ६ ) **रामचन्द्रः** । अनार्यान् आर्यलिङ्गिनः विजानीयात् ॥ २६० ॥

## तान्विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः ॥ चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत् ॥२६१॥

( १ ) **मेधातिथिः** । तथाचैरपिचारैस्तत्कर्मकारिभिरनेकसंस्थानैः ॥ २६१ ॥

( २ ) **सर्वज्ञनारायणः** । सुचिरतैः सम्यक्चरद्भिः तत्कर्मकारिभिश्चोरत्वेन तेष्वात्मानं प्रकाशयद्भिः गूढैश्चारैरनेकसंस्थानैरनेकवेशैःप्रोत्साह्य चौर्यादिकरणे प्रवर्त्य वशमानयेत् गृह्णीयात् ॥ २६१ ॥

( ३ ) **कुल्लूकः** । तानुक्तान्वञ्चकान्सभ्यैः प्रच्छन्नैस्तत्कर्मकारिभिर्वणिजांस्तेये वणिग्भिरित्येवमादिभिः पुरुषैरेतद्व्यतिरिक्तैः सप्तमाध्यायोपदिष्टकापटिकादिभिश्चारैरनेकस्थानस्थैर्ज्ञात्वा प्रोत्साद्य स्ववशान्कुर्यात् ॥ २६१ ॥

( ४ ) **राघवानन्दः** । अनेकसंस्थानैः सप्तमाध्यायोक्तकापटिकादिभिः । प्रोत्साह्यउत्साहंजनयित्वा । एषा वृत्तिस्त्याज्या कृषिवाणिज्यादिना धनोपार्जनं कुरुध्वमिति धनलोभेन सद्वृत्तिंनयेदितिभावः ॥ २६१ ॥

( ५ ) **नन्दनः** । अनेकसंस्थानैर्नानावेषैः ॥ २६१ ॥

( ६ ) **रामचन्द्रः** । तानिति अनेकसंस्थानः नामरूपैः ॥ २६१ ॥

**तेषांदोषानभिख्याप्य स्वेस्वे कर्मणि तत्त्वतः ॥ कुर्वीत शासनंराजा सम्यक्सारापराधतः॥२६२॥**

( २ ) **सर्वज्ञनारायणः** । दोषान् स्तेयादीनभिख्याप्य लोके लोकानुद्वेगार्थम् । स्वेस्वेकर्मणि वित्तग्रहणघातनादौकृते । सारापराधतइति मुषितवस्तुनःसारतांज्ञात्वा सादृश्याच्चौरापराधंज्ञात्वेत्यर्थः ॥ २६२ ॥

( ३ ) **कुल्लूकः** । तेषांप्रकाशाप्रकाशतस्कराणांस्वकर्मणि चौर्यादौ ये पारमार्थिकादोषाः संधिच्छेदादयस्तान् लोके प्रख्याप्य तद्गतधनशरीरादिसामर्थ्यापेक्षयापराधापेक्षया च राजा दण्डंकुर्यात् ॥ २६२ ॥

( ४ ) **राघवानन्दः** । स्वे स्वे कर्मणि येदोषास्तान् लोके प्रचारंकृत्वाऽनुशासनं कुर्यादित्याह तेषामिति । सारापराधतः अपराधस्य सारः उत्कटता कर्तृगतधनादिसामर्थ्यंवा तदनुरूपं शासनं कुर्वीतेत्यन्वयः ॥ २६२ ॥

( ५ ) **नन्दनः** । सारापराधतः सारतश्चापराधतश्च ॥ २६२ ॥

( ६ ) **रामचन्द्रः** । तेषा मिति सापराधतः ज्ञात्वा ज्ञातापराधतः अपराधानुसारेण ॥ २६२ ॥

**नहि दण्डादृते शक्यः कर्तुंपापविनिग्रहः ॥ स्तेनानांपापबुद्धीनांनिभृतंचरतांक्षितौ ॥ २६३ ॥**

( २ ) **सर्वज्ञनारायणः** । पापविनिग्रहः पापान्निवृत्तिः स्तेनानाम् ॥ २६३ ॥

( ३ ) **कुल्लूकः** । यस्माच्चौराणांपापाचरणबुद्धीनांविनीतवेषेण पृथिव्यां चरतांदण्डव्यतिरेकेण पापक्रियायां नियमंकर्तुमशक्यमतएषांदण्डंकुर्यात् ॥ २६३ ॥

( ४ ) **राघवानन्दः** । नन्वेषां किमिति दण्डोपदेशः उपदेशेनैव विशिष्टत्वंस्यात्तत्राह नहीति । पापविनिग्रहः पापिनां विनिग्रहः । तत्रहेतुः पापबुद्धीनां पापरुचीनांअतएव निभृतंनिह्नुत्य चरतां तत्तत्कारिणाम ॥ २६३ ॥

( ५ ) **नन्दनः** । पापविनिग्रहः पापात्कर्मणः प्रतिषेधः ॥ २६३ ॥

( ६ ) **रामचन्द्रः** । नहीति । दण्डात्ऋतेपापविनिग्रहःकर्तुं न हि शक्यः क्षितौ निभृतं गूढचरितं ॥ २६३ ॥

**सभा प्रपापूपशालावेशमद्यान्नविक्रयाः ॥ चतुष्पथाश्चैत्यवृक्षाः समाजा प्रेक्षणानिच ॥ २६४॥**

( २ ) **सर्वज्ञनारायणः** । सभा मण्डपः । प्रपाजलशाला । अपूपशालाः पूपविक्रयशालाः । वेशोवेश्याश्रयः । मद्यान्नविक्रयाः तद्विक्रयस्थानानि । चैत्यवृक्षाग्रामादिप्रधानवृक्षाः । समाजोलोकमेलकः । मेक्ष्यां रङ्गः ॥ २६४ ॥

( ३ ) **कुल्लूकः** । सभाग्रामनगरादौ नियतंजनसमूहस्थानंप्रपाजलदानगृहमपूपविक्रयवेश्मपण्यस्त्रीगृहंमद्यान्नविक्रयस्थानानि चतुष्पथाः प्रख्यातवृक्षमूलानि जनसमूहस्थानानि जीर्णवाटिकाअटव्यः शिल्पगृहाणि शून्यगृहाण्याम्रादिवनानि कृत्रिमोद्यानानि एवंप्रकारान्देशान्सैन्यैः पदातिसमूहैः स्थावरजङ्गमैः एकस्थानस्थितैः प्रचारिभिश्चान्यैश्चारैस्तस्करनिवारणार्थंचारयेत्प्रायेणैवंविधे देशेऽन्नपानस्त्रीसंभोगस्वप्रहूर्त्त्याद्यन्वेषणार्थंतस्कराअवतिष्ठन्ते ॥ २६४ ॥ २६५ ॥ ॥ २६६ ॥

( ४ ) **राघवानन्दः** । ते तर्हि क्व चरन्तीत्यपेक्षायामाह सभेतिद्वाभ्याम् । [ प्रपाबहुप्राण्युद्दिश्यप्रचुरतरजलस्थलं । ] अपूपशालातद्देशम् । वेशः पण्यस्त्रीगृहम् । चैत्यवृक्षाः प्रख्यातवृक्षमूलानि । समाजाः जनसमूहस्थलानि प्रेक्षणंनृत्यगीतस्थानानि ॥ २६४ ॥

---

१ राघ० २

( २६४ ) मापूपशाला=पायूपशाला ( क )

( ५ ) **नन्दनः**। अथाप्रकाशतस्करपरिज्ञानोपायं प्रपञ्चयति सभाप्रपाऽपूपशालेति। अपूपशाला अपूपविक्रयशाला। मद्यंयत्रप्रदेशे विक्रीयते समद्यविक्रयः एवमन्नविक्रयः प्रेक्षणानि वृत्तस्थानानि ॥ २६४ ॥

( ६ ) **रामचन्द्रः**। त्रिभिराह सभेति। वेशः पण्यस्त्रीगृहम्। मद्यान्नविक्रयाःचैत्यवृक्षाः ग्रामेप्रख्यातवृक्षाः। मूल-प्रेक्षणानि ॥ २६४ ॥

**जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ॥ शून्यानि चाप्यगाराणि वनान्युपवनानि च॥२६५॥**

( २ ) **सर्वज्ञनारायणः**। अरण्यानि महाटव्यः। कारुकावेशनानिचित्रकारगृहाणि। वनं क्षुद्रारण्यम्। उपवनं गृहोद्यानम् ॥ २६५ ॥

( ४ ) **राघवानन्दः**। जीर्णत्वान्नोपसर्पन्तिकेचन कारुकावेशनानिच कारुकानां पण्यस्थानानि तत्र स्थित्वा धनादि छिद्रानुसारिणश्चोराःस्युरितिभावः। अगाराणि गृहाणि। वनानिजलाहरणस्थलानि। उपवनानि कृत्रिमवनानि ॥ २६५ ॥

( ५ ) **नन्दनः**। अरण्यानी महारण्यं। कारुकावेशनानि कर्मकरशिल्पकरणशालाः ॥ आवेशनं शिल्पशालेत्यमरः ॥ २६५ ॥

**एवंविधान्नृपोदेशान्गुल्मैः स्थावरजङ्गमैः ॥ तस्करप्रतिषेधार्थंचारैश्चाप्यनुचारयेत् ॥ २६६ ॥**

( २ ) **सर्वज्ञनारायणः**। गुल्मैर्निरोधेन रक्षकैः। स्थावरैः खातादिभिः। अनुचारयेत् लक्षयेत् ॥ २६६ ॥

( ४ ) **राघवानन्दः**। ते कथमन्वेषणीयास्तत्राह एवमिति। गुल्मैः पत्तिभिः स्थावरैः स्थिरतरैः जङ्गमैः सर्वदा चरद्भिः चारैः कापटिकादिभिः अनुचारयेदहर्निशंचरेत् ॥ २६६ ॥

( ५ ) **नन्दनः**। गुल्मैः व्यूहैःसैन्यकैः ॥ २६६ ॥

( ६ ) **रामचन्द्रः**। नृपः एवंविधान्देशान्। गुल्मैःपत्तिसमूहैः स्थावरजंगमैः नियतदेशस्थैर्भ्रमणशीलैःतस्करप्रतिषेधा-र्थं एवंविधैः चारैः अनुचारयेत् ॥ २६६ ॥

**तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः ॥ विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥ २६७ ॥**

( २ ) **सर्वज्ञनारायणः**। तत्सहायैस्तेषामेव तस्कराणां सहायतांगतैः। सम्यक्तेषामनुगतैः। नानाकर्मप्रवेदिभिः तत्कर्मप्रवेदिभिः। नानाकर्मप्रचारिभिरितिक्वचित्पाठः। उत्साहयेच्चौर्यंकुर्मइत्युक्त्वा उद्यमंकारयेत्। पूर्वतस्करैः अन्यरा-ष्ट्रे कृतचौर्यैः ॥ २६७ ॥

( ३ ) **कुल्लूकः**। तेषांसाहाय्यंप्रतिपाद्यमानैस्तच्चरितानुवृत्तिभिः संधिच्छेदादिकर्मानुष्ठानवेदिभिः पूर्वचौरैश्चाररूपै-श्चारमायानिपुणैस्तस्कराञ्जानीयादुत्सादयेच्च ॥ २६७ ॥

( ४ ) **राघवानन्दः**। ते कथं ज्ञेयास्तत्राह तत्सहायैरिति। तत्सहायैः तेषांसाहाय्यंगतैः समक्षं कदाचित्परद्रव्यहरणरूपैस्तैस्तैःसाहसैर्वा नानाकर्मप्रवेदिभिः एवं भित्तिछेदः एवंप्रकारकछेदइत्येतदुपदेष्टृभिः पूर्वतस्करैः पूर्वतस्कराभूत्वा राज्ञश्चाररूपेण व्यवहरन्ति तैः विद्यात्तस्करानुत्साहयित्वाचोरत्वेनजानीयादितिभावः ॥ २६७ ॥

( ५ ) **नन्दनः**। स्वानुगतैः आत्मवशैः पूर्वतस्करैः पूर्वस्मिन्काले वृत्तिकर्शिकत्वादिति स्युस्ततोमुष्णन्तोजीवन्तः

---

( २६७ ) उत्सादयेत्=उत्साहयेत् ( सर्व० ) ( २६७ ) अरण्यानि=अरण्यानी ( नं० )

( २६७ ) रनुगतैः=स्वानुगतैः ( नं )

कदाचिदारक्षपुरुषैर्गृहीतार्थवादिनःसामर्थ्यातिशयदर्शनेन राज्ञा कल्पितवेतनाश्चारकर्मणि नियुक्तायुक्तकारिणः प्रामविश्वासाः पुरुषाः पूर्वतस्करास्तैस्तान्गूढतस्करान्विद्यात् । अहिरेवाहेः पादान्वेत्तीति न्यायेन उत्साहयेःसमवेतान्कर्तुम् ॥ ॥ २६७ ॥

( ६ ) **रामचन्द्रः** । विद्यात् एतैः लक्षणैः जानीयात् ॥ २६७ ॥

**भक्ष्यभोज्योपदेशैश्च ब्राह्मणानांच दर्शनैः ॥ शौर्यकर्मापदेशैश्च कुर्युस्तेषांसमागमम् ॥ २६८ ॥**

( २ ) **सर्वज्ञनारायणः** । चौराविधाराप्रस्थापननयनोपायमाह भक्ष्येति । अत्र गत्वा भक्षयामइत्यादिच्छलैः । ब्राह्मणानांदर्शनैः ब्राह्मणंदर्शयामीतिव्याजेनारण्याद्ग्रामनयनेन । शौर्यं ममेदृशंयुद्धकौशलं कर्मचेद्दर्शनाद्यादि करिष्यामिग्रामंगत्वा तदागच्छेत्येतादृशैर्व्यपदेशैःसमागतंकुर्यात् । ग्रामादौ तत्रच गृह्णीयात् ॥ २६८ ॥

( ३ ) **कुल्लूकः** । ते पूर्वचौराश्चरभूताआगच्छ तास्मद्गृहङ्गच्छामस्तत्र मोदकपायसादीन्यश्नीमइत्येवंभक्ष्यभोज्यव्याजेनास्माकंदेशे ब्राह्मणोस्ति सोभिलषितार्थसिद्धिंजानाति तंपश्यामइत्येवंब्राह्मणानांदर्शनैः कश्चिदेकएव बहुभिः सहयोत्स्यते तंपश्यामइत्येवंशौर्यकर्मव्याजेन तेषांचौराणांराज्ञोदण्डधारकपुरुषाः समागमंकुर्युः ग्राहयेयुश्च ॥ २६८ ॥

( ४ ) **राघवानन्दः** । किंच भक्ष्येति । भक्ष्यभोज्यापदेशैः । भक्ष्यं मोदकादि भोज्यं लेह्यं पेयं चोष्यंच तेषांअनायासेन प्राप्तिव्यपदेशैरस्मद्गृहमागच्छाम एतान्यश्नीमइत्येवंव्यपदेशैः ब्राह्मणानांचदर्शनैरमुकस्मिन्देशे सर्वज्ञादिगुणसंपन्नोद्विजोस्ति तं दर्शयामीति शौर्यकर्मापदेशैश्च एकोभूत्वा बहुभिर्योत्स्येऽहमित्येवमादिव्यपदेशैश्च समागतानांतेषां दण्डधारकराजपुरुषैः समागमंकुर्युः संगृह्णीयुः ॥ २६८ ॥

( ५ ) **नन्दनः** । तान्पुनः केनोपायेन समवेतान्कुर्युरित्यत्राह भक्ष्यभोज्यापदेशैश्चेति । दर्शनैर्दर्शनापदेशैः कुर्युः पूर्वतस्कराः तेषांगूढतस्कराणां समागमे राजपुरुषैर्ग्रहणयोग्ये देशे ॥ २६८ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणानां सर्वोपायज्ञानां दर्शनैः ग्रामंगत्वागच्छेतादृशैर्व्याजैःसमागमंकुर्यात् ॥ २६८ ॥

**ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये ॥ तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान् ॥ २६९ ॥**

( २ ) **सर्वज्ञनारायणः** । नोपसर्पेयुर्जातशङ्काः । मूलप्रणिहिताः स्वराष्ट्रस्थितप्रकृत्यादिप्रेषिताः । प्रसह्य तत्रगत्वा बलात् ॥ २६९ ॥

( ३ ) **कुल्लूकः** । ये चौरास्तत्र भक्ष्यभोज्यादौ निग्रहणशङ्कया नोपसर्पन्ति ये च मूले राजनियुक्तपुराणचौरवर्गे प्रणिहिताः सावधानभूताःतैः सहसङ्गतिंभजन्ते तांश्चौरांस्तेभ्यएव ज्ञात्वा तदेकतापन्नमित्रपित्रादिज्ञातिस्वजनसहितान्बलादाक्रम्य राजा हन्यात् ॥ २६९ ॥

( ४ ) **राघवानन्दः** । ये तत्र नोपसर्पेयुः भक्ष्यभोज्यलोभेनापि । मूलप्रणिहिताः राजनियुक्तचौरेषु सावधानाःमूलतैः कृतविमतयः ॥ २६९ ॥

( ५ ) **नन्दनः** । तत्र समागमे ये यदृच्छयानोपसर्पेयुरिति प्रणिहिताप्रणिहितमूलाः ज्ञातकारणाः । अभक्ष्यभोज्यापदेशेनात्मवधंजानन्तइति यावत् ॥ २६९ ॥

( ६ ) **रामचन्द्रः** । ये तत्र समागमंनोपसर्पेयुः येमूलप्रणिहिताराजनियुक्ताः पुराणचौरवर्गप्रणिहिताःत्रिभिराह सन्मित्रादीन् एतादृशान् नृपः प्रसह्य हन्यात् ॥ २६९ ॥

**न होढेन विना चौरंघातयेद्धार्मिकोनृपः ॥ सहोढंसोपकरणंघातयेदविचारयन् ॥ २७० ॥**

( २ ) **सर्वज्ञनारायणः** । सहोढेन चोरितद्रव्येण दृष्टेनविनेत्यर्थः । एतेन चौर्यादिव्यभिचारिलिङ्गदर्शनमुपलभ्यते । नघातयेत् ग्रहमात्रेण । सहोढं चोरितद्रव्यवत्तयादृष्टम् । उपकरणं चौर्यसाहसादेः छुरिकादि । अविचारयन् अविलम्बेन ॥ २७० ॥

( ३ ) **कुल्लूकः** । धार्मिकोराजा हृतद्रव्यसंधिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावं घातयेत्किन्तु हृतद्रव्येण चौर्योपकरणेन च निश्चितचौरभावमविचारयन्घातयेत् ॥ २७० ॥

( ४ ) **राघवानन्दः** । किंचनेति । होढेनापहृतद्रव्येण विशिष्टं सहोढं तत्संयुक्तमितियावत् । सोपकरणं चौर्योपकरणयुक्तम् । अविचारयन्नविलम्बमानः तत्क्षणादेवेति ॥ २७० ॥

( ५ ) **नन्दनः** । होढेनापहृतद्रव्येण सोपकरणंचौर्योपकरणयुक्तम् ॥ २७० ॥

( ६ ) **रामचन्द्रः** । होढेन चौर्यचिन्हेनविना चौरं न हन्यात् । सहोढं सोपकरणं संधिच्छेदशस्त्रसहितम् ॥ २७० ॥

**ग्रामेष्वपि च ये केचिच्चौराणांभक्तदायकाः ॥ भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत्॥२७१॥**

( २ ) **सर्वज्ञनारायणः** । भाण्डं मूलधनं शस्त्रादिक्रयणार्थम् । अवकाशः शयनादिस्थानम् । एतच्च चौरताज्ञाने- सति ॥ २७१ ॥

( ३ ) **कुल्लूकः** । ग्रामादिष्वपि ये केचिच्चौराणांचौरत्वंज्ञात्वा भक्तदाः चौर्योपयुक्तभाण्डादिगृहावस्थानंये ददति तानपि नैरन्तर्याद्यपराधगोचरापेक्षया घातयेत् ॥ २७१ ॥

( ४ ) **राघवानन्दः** । किंच ग्रामेष्विति । भक्तदायकाः चोराइतिज्ञात्वापि । भाण्डावकाशदाः चौरैः परधनहरणार्थं भाण्डमपहृतद्रव्यस्थलं तद्दायिनः । तानप्यविलम्बेन घातयेत् ॥ २७१ ॥

( ६ ) **रामचन्द्रः** । भक्तदायकाः भाण्डावकाशदाः एतान् सर्वान् घातयेत् ॥ २७१ ॥

**राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान्॥ अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिवद्रुतम्॥२७२॥**

( २ ) **सर्वज्ञनारायणः** । कृतौ सामन्तान् समीपवासिनः । चोदितानाहूतान् । अभ्याघातेषु चौरैःक्रियमाणेषु घातेषु । मध्यस्थानुदासीनतया स्थितान् ॥ २७२ ॥

( ३ ) **कुल्लूकः** । ये राष्ट्रेषु रक्षानियुक्ताये च सीमान्तवासिनोक्रूगः सन्तः चौर्योपदेशे मध्यस्थाभवन्ति तांश्चौरवत्क्षिप्रंदण्डयेत् ॥ २७२ ॥

( ४ ) **राघवानन्दः** । रक्षकोयत्रभक्षकइतिन्यायमाश्रित्याह राष्ट्रेष्विति । यथोदितान् सामन्तानपि चोराणांभाण्डावकाशदायिनः अभ्याघातेषु चोरादपहृतद्रव्येषु चोरघातकेषुवा मध्यस्थान् चोरोपि नचोरोयमितिवादिनः द्रुतं शीघ्रं शिष्यात् दण्डादिना ॥ २७२ ॥

( ५ ) **नन्दनः** । अभ्याघातेषु चोराटविकादिहिंसासु मध्यस्थानुपेक्षकान् ॥ २७२ ॥

( ६ ) **रामचन्द्रः** । त्रिभिराह राष्ट्रेष्विति । उदितान सपृद्धान् समन्ताद्भवाः सामंताः ॥ संत्यक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः । आघातेषु आक्रोशेषु ॥ २७२ ॥

**यश्चापि धर्मसमयात्प्रच्युतोधर्मजीवनः ॥ दण्डेनैवतमप्योषेत्स्वकाद्धर्माद्धि विच्युतम् ॥ २७३ ॥**

( २ ) **सर्वज्ञनारायणः** । धर्मजीवनोब्राह्मणोधर्मसमयात् च्युतः स्वकर्तव्यभ्रष्टः दण्डेनैवतमप्योषेत् दण्डेन विवासनादिना तमप्योषेत् दहेदित्यर्थः ॥ २७३ ॥

( ३ ) **कुल्लूकः** । याजनप्रतिग्रहादिनापरस्य यागदानादिधर्ममुत्पाद्य योजीवति सधर्मजीवनोब्राह्मणः । सोपि योधर्ममर्यादायाश्च्युतोभवति तमपि स्वधर्मात्परिभ्रष्टंदण्डेनोपतापयेत् ॥ २७३ ॥

( ४ ) **राघवानन्दः** । स्वयं धर्माचरणहीनः धर्मजीवनः याजनादिनापरस्य यागदानादिधर्ममुत्पाद्य योजीवति तंस्वधर्मात्परिच्युतं चोषेत् शोषयेत् धनहान्यादिनापि ॥ २७३ ॥

( ५ ) **नन्दनः** । धर्मसमयाद्धर्माधिकारात् धर्माधिकत्वख्यापनेन योजीवति सधर्मजीवनः । ओषेच्छिष्यात् । तस्य दण्डत्वे हेतुरुक्तः स्वकाद्धर्माद्धिविच्युतमिति । धर्मात्प्रच्युतोधार्मिकत्वख्यापनेन जीवंश्चोरतुल्यइत्यभिप्रायः ॥ २७३ ॥

( ६ ) **रामचन्द्रः** । धर्मसमयात् यः प्रच्युतः धर्मजीवनः यः प्रतिग्रहादिना परस्यधर्ममुत्पादयतिदण्डेनैवतमपिओषेत् दहेत् । उषदाहे ॥ २७३ ॥

**ग्रामघाते हिताभङ्गे पथिमोषाभिदर्शने ॥ शक्तितोनाभिधावन्तोनिर्वास्याः सपरिच्छदाः ॥ २७४ ॥**

( १ ) **मेधातिथिः** । शक्तौसत्यामालस्यादिनातेनिर्वास्याः येतु चौरैः कृतसंकेतास्तेषांपूर्वत्रवधउक्तोघातयेदिति । परिच्छदोगवाश्वादिः तदपि निर्वास्येनापहर्तव्यं नासत्परिच्छदः कर्तव्योधनंतुहर्तव्यम् ॥ २७४ ॥

( २ ) **सर्वज्ञनारायणः** । तटाभङ्गे सेत्वादिभङ्गे । हिताभङ्गइतिक्वचित्पाठः । हिता नदीमध्यसेतुः । पथि मोषादि चौर्यसाहसादि तेषांमर्षणे सहने ॥ २७४ ॥

( ३ ) **कुल्लूकः** । ग्रामलुण्ठने तस्करादिभिःक्रियमाणे हिताभङ्गे जलसेतुभङ्गे जाते क्षेत्रोत्पन्नसस्य नाशने वृत्तिभङ्गे चेति मेधातिथिः । पथिचौरदर्शने तन्निकटवर्तिनोयथाशक्तितोये रक्षांन कुर्वन्ति ते शय्यागवाश्वादिपरिच्छदसहितादेशान्निर्वासनीयाः ॥ २७४ ॥

( ४ ) **राघवानन्दः** । किंचैतान्ग्रामान्निःसारयेदित्याहग्रामेति । ग्रामघाते ग्रामस्य लुण्ठने तस्करादिभिः क्रियमाणे । हिताभङ्गे जलसेतु भङ्गेसपरिच्छदाः गवाश्वादिपरिच्छदसहिताः । तेषामनिरासे तान्दृष्ट्वाऽन्येषां तथाभूतत्वेन लोकस्य सर्वनाशः स्यादितिभावः ॥ २७४ ॥

( ५ ) **नन्दन** । शक्ताग्रामघातसेतुभङ्गादिपरिहारेऽनभिधावन्तः ॥ २७४ ॥

( ६ ) **रामचन्द्रः** । ग्रामघाते लुण्ठने । हिताभंगे उदकसेतुभङ्गे वृत्तिभङ्गे वा । पथि मोषाभिमर्शने मार्गे चौर्याभिमर्शने चौर्यस्वहरणे ॥ २७४ ॥

**राज्ञः कोपापहर्तॄंश्च प्रतिकूलेषु च स्थितान् ॥ घातयेद्विविधैर्दण्डैररीणांचोपजापकान् ॥ २७५ ॥**

( १ ) **मेधातिथिः** । कोशोराज्ञांधनसंचयस्थानं तत्रापहर्तारोद्रव्यज्ञातिपरिमाणानपेक्षमेव वध्याः । ये च प्रातिकूल्येन वर्तन्ते यद्राज्ञां देशान्तरादानेतुमभिप्रेतंतद्देशदुर्लभमाजानेयाश्वादि प्राच्यानामुदीच्यानांकलिङ्गदेशोद्भवहस्त्यादि

---

( २७४ ) मोषाभिदर्शने=मोषाभिमर्षणे ( सर्व० )

तदानयनप्रतिबन्धे ये वर्तन्ते तथायानि मित्राणि तानिशत्रून्कुर्वते कृत्वाशत्रुभिः संयोजयन्ति अरीणामुपजापका प्रोत्साहकास्तान्घातयेत् स्वतन्त्रप्रयोजनत्वान्नावश्यंघातनमित्युक्तम् ॥ २७५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रतिकूलेषु कर्मसु स्थितान् उद्युक्तान् । अरीणांसंबन्धिनउपजापकान् स्वप्रकृतिभेदकान् ॥ २७५ ॥

( ३ ) **कुल्लूकः** । राज्ञोधनगृहाद्धनापहारिणस्तथा तदाज्ञाव्याघातकारिणः शत्रूणांच राज्ञा सहवैरिवृद्धिकारिणोऽपराधापेक्षया करचरणजिव्हाछेदनादिभिर्नानाप्रकारदण्डैर्घातयेत् ॥ २७५ ॥

( ४ ) **राघवानन्दः** । किंचैतान्घातयेदेवेत्याह राज्ञइति कोशापहर्तॄन् धनगृहाद्धनापहारिणः । प्रतिकूलेष्ववस्थितान् राज्ञइतिशेषः । उपजापकान् तत्पक्षपातिनोभूत्वा राज्ञश्छिद्रप्रकटकान् ॥ २७५ ॥

( ५ ) **नन्दनः** । अरीणामुपजमॄन्मित्राण्यरयोयथा भवेयुस्तथा भेदकानित्यर्थः कृतसन्धीनामरीणामुपजापकानितिवा ॥ २७५ ॥

( ६ ) **रामचन्द्रः** । उपयाजकान् शत्रूणाम् ॥ २७५ ॥

**सन्धिंछित्त्वा तु ये चौर्यंरात्रौ कुर्वन्ति तस्कराः ॥ तेषांछित्त्वा नृपोहस्तौ तीक्ष्णे शूले निवेशयेत् ॥ २७६ ॥**

( २ ) **सर्वज्ञनारायणः** । संधिः गृहवास्तुगर्भः ॥ २७६ ॥

( ३ ) **कुल्लूकः** । ये रात्रौ संधिच्छेदंकृत्वा परधनंतस्करामुष्णन्ति तेषांराजा हस्तद्वयंछित्त्वा तीक्ष्णे शूलेतानारोपयेत् ॥ २७६ ॥

( ४ ) **राघवानन्दः** । एषां शूलार्पणमेवेत्याह सन्धिमिति । सन्धिं भित्तिछेदम् । निवेशयेदारोपयेत् ॥ २७६ ॥

( ५ ) **नन्दनः** । सन्धिः कपाटयन्त्रादिकम् ॥ २७६ ॥

**अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ॥ द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ २७७ ॥**

( १ ) **मेधातिथिः** । ग्रन्थिंभिनत्तीति ग्रन्थिभेदः भेदनंमोक्षोग्रन्थेर्वस्त्रप्रान्तादौग्रन्थिः यद्वा यद्द्रव्यंगृहीतंतत्केन चिच्छलेन ग्रन्थिमवमोच्ययेनिनीषन्ति ते ग्रन्थिभेदाः तेषांप्रथमायां प्रवृत्तावङ्गुलीनांच्छेदः द्वितीयस्यां प्रवृत्तौ हस्तचरणयोस्तृतीयस्यां मारणम् ॥ २७७ ॥

( २ ) **सर्वज्ञनारायणः** । अङ्गुली अङ्गुष्ठतर्जन्यौ ग्रन्थिभेदस्य ग्रन्थिविस्रस्यसुवर्णादिहरतः प्रथमेग्रहे प्रथमवारे । एवं द्वितीयइत्यादौ । एतेनान्यत्रापि पुनःपुनःकरणे दण्डाधिक्यं द्रष्टव्यम् ॥ २७७ ॥

( ३ ) **कुल्लूकः** । पटप्रान्तादिस्थितंसुवर्णादिकंग्रन्थिमोक्षणेन यश्चोरयति सग्रंथिभेदस्तस्य प्रथमे द्रव्यग्रहणेऽङ्गुलीश्छेदयेत्तेचाङ्गुष्ठतर्जन्यौ ॥ उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकाविति याज्ञवल्क्यवचनात् । द्वितीये ग्रहणे हस्तपादौ छेदयेत्तृतीये ग्रहणे वधार्होभवति ॥ २७७ ॥

( ४ ) **राघवानन्दः** । किंच अङ्गुलीति । अङ्गुली अङ्गुष्ठतर्जन्यौ ॥ उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकाविति याज्ञवल्क्योक्तेः । ग्रन्थिभेदस्य पटप्रान्तादिस्थितं सुवर्णादिद्रव्यं ग्रन्थिमोक्षणेन हरतः । प्रथमे ग्रहे एकवारद्रव्यग्रहणे व्यवस्थितविकल्पः ॥ २७७ ॥

( ५ ) **नन्दनः** । अङ्गुल्या तर्जनीमध्यमे । ग्रन्थिभेदस्य सन्धिच्छेदकस्य । ग्रहे चौर्यइति यावत् । तृतीयादिषु कर्तव्यंपूर्वोक्तं शूलारोपणं कर्तव्यमित्यभिप्रायः ॥ २७७ ॥

( ६ ) **रामचन्द्रः** । ग्रन्थभेदस्यग्रन्थच्छेदस्यप्रथमेऽपराधे अङ्गुलीं छेदयेत् ॥ २७७ ॥

**अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ॥ संनिधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः ॥ २७८॥**

( १ ) **मेधातिथिः** । सीतापनोदनाद्यर्थंयेऽग्निंददति शस्त्रंकर्तरिकादि मोक्षस्य सन्निधातारः कर्तारःसर्वेचौरवत् ज्ञेयाः शस्त्रावकाशदग्रहणंप्रागुक्तमन्युपसंहारार्थमुच्यते ॥ २७८ ॥

( २ ) **सर्वज्ञनारायणः** । अग्निदानं गृहदाहाद्यर्थंततः करिष्यतीति ज्ञात्वापि । संनिधातॄन् मोषस्थानसमीपनेतॄन् । मोषस्य चोरस्य ॥ २७८ ॥

( ३ ) **कुल्लूकः** । ग्रन्थिभेदादिकारिणोविज्ञायाग्निभक्तशस्त्रावस्थानप्रदान्मुष्यतइति मोषश्चौरधनंतस्यावस्थापकान् चौरवद्राजा निगृह्णीयात् ॥ २७८ ॥

( ४ ) **राघवानन्दः** । किंच अग्निदानिति । भक्तं भक्तसंयुक्तंगरादादिदातॄन् । शस्त्रावकाशदान् शस्त्रैःशरीरस्यावकाशदातॄन् तच्छेदकान् । संनिधातॄन् मोषस्य मुष्टस्य ज्ञात्वापि क्रयादिकारिणोवा भक्तदायकादीनामुक्तत्वात् । ईश्वरइत्यनेन समर्थः । सामन्ताअपि तथा कुर्युरितिध्वनितम् ॥ २७८ ॥

( ५ ) **नन्दनः** । मोषस्य मोषितद्रव्यस्य समोषसाधनस्य वा ॥ २७८ ॥

( ६ ) **रामचन्द्रः** । मोषस्य मुषितस्य वस्तुनः सन्निधातॄन् समीपवर्तिनः ईश्वरःचौरानिव शिष्यात् क्षिपेत् ॥ २७८ ॥

**तडागभेदकंहन्यादप्सु शुद्धवधेन वा ॥ यद्वापि प्रतिसंस्कुर्याद्दाप्यस्तूत्तमसाहसम् ॥ २७९ ॥**

( १ ) **मेधातिथिः** । तडागग्रहणमुपलक्षणार्थं नद्युदकहरणेप्ययंदोषइतिकेचित् तदयुक्तंमहान्हितडागभेदनेऽपराधः स्वल्पोनदीभेदने तडागस्य हि वप्रभेदनेनोदकेप्ययमेव विधिः ॥ २७९ ॥

( २ ) **सर्वज्ञनारायणः** । तडागभेदकं तडागजलस्य बहिर्निःसारकं अप्सु मज्जयित्वा हन्यात् । शुद्धवधेन शिरश्छेदेन । यस्त्वङ्गुलीकरच्छेदादिकोवधःसोतिदुःखहेतुत्वादशुद्धवधः । एतत्कामतः । अकामेत्वाह यद्वापीति । तत्तडागादिविगुणीकृतं सम्यक्कृत्वोत्तमसाहसंदण्डंदद्यात् ॥ २७९ ॥

( ३ ) **कुल्लूकः** । यः स्नानदानादिना जनोपकारकंतडागंसेतुभेदादिना विनाशयति तमप्सु मज्जनेन प्रकारान्तरेण वा हन्यात् । यद्वा यदि तडागंपुनः संस्कुर्यात्तदोत्तमसाहसंदंड्यः ॥ २७९ ॥

( ४ ) **राघवानन्दः** । किंच तडागेति । अप्सु निमज्जनेन मारणम् । शुद्धवधः शिरश्छेदः । तदाद्यपेक्षयावाशब्दः । अनेककोटिजीवनाशकत्वाद्वधार्हः । प्रतिसंस्कुर्यात् पुनः संपादयेत् । यदि वा प्रतिसंस्कुर्यात् विषादिना द्रव्येन दूषयेत्तदा संस्कुर्यादिति । पणानां सहस्रमुत्तमोदण्डः ॥ २७९ ॥

( ५ ) **नन्दनः** । शुद्धवधेन शस्त्रवधेन वधशब्देन नात्राङ्गच्छेदोविवक्षितस्तद्भिन्नस्थानं प्रतिसंस्कुर्यात्प्रतिसमादध्यात् तटाकभेदकदोषतारतम्यापेक्षयाविकल्पः ॥ २७९ ॥

( ६ ) **रामचन्द्रः** । यद्वापि तत्तडागमपि प्रतिसंस्कुर्यात् संस्कारंतडागबन्धनरूपंकुर्यात् ॥ २७९ ॥

कोष्ठागारायुधागारदेवतागारभेदकान् ॥ हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥ २८० ॥

( २ ) सर्वज्ञनारायणः । कोष्ठागारं राजगृहम् ॥ २८० ॥

( ३ ) कुल्लूकः । राजसंबन्धिधान्यादि धनागारायुधगृहयोर्देवप्रतिमागृहस्य च बहुधनव्ययसाध्यस्य विनाशकान्हस्त्यश्वरथस्य चापहर्तॄन शीघ्रमेव हन्यात्। यत्तु संक्रमध्वजयष्टिदेवताप्रतिमाभेदिनः पञ्चशतदण्डंवक्ष्यति सोऽस्मादिवदेवतागारभेदकस्य वधविधानान्मृन्मयपूजितोज्झितदेवताप्रतिमाविषयोत्र द्रष्टव्यः ॥ २८० ॥

( ४ ) राघवानन्दः । किंचैतेऽवश्यं हन्तव्याइत्याह कोष्ठेति । कोशागारं धनगृहं । भेदकान्केनापि प्रकारेण नाशकान् । अविचारयन्नित्यनेन सदस्यपि प्रश्नोनकार्यः ॥ २८० ॥

( ६ ) रामचन्द्रः । कोष्ठागारायुधागारदेवताग,रभेदकान् ॥ २८० ॥

यस्तु पूर्वनिविष्टस्य तडागस्योदकंहरेत् ॥ आगमंवाप्यपांभिद्यात्सदाप्यः पूर्वसाहसम् ॥ २८१ ॥

( २ ) सर्वज्ञनारायणः । हरेत् स्वसमीपतडागंप्रति नयेत् । आगमं तडागेजलागमं रुन्ध्यात । आगमंवाप्यपांभिद्यादिति क्वचित्पाठः । सदाप्यः तत्सम्यक्करणपूर्वम् ॥ २८१ ॥

( ३ ) कुल्लूकः । यः पुनः प्रजार्थपूर्वकेनचित्कृतस्य तडागस्योदकमेव गृह्णाति कृत्स्नतडागोदकनाशने वधदण्डःप्रागुक्तस्तथोदकगमनमार्गसेतुबन्धादिना योनाशयति स प्रथमसाहसंदण्ड्यः ॥ २८१ ॥

( ४ ) राघवानन्दः । किंच यस्त्विति । पूर्वनिविष्टस्य सर्वप्राणिसाधारणस्य । कृतमुदकंस्वधान्याद्यर्थंहरेत । आगममागम्यतेऽनेनोदकमिति जलपूरणनिःसारणयोर्मार्गं भिद्याद्रोधयेद्वा । पूर्वसाहसं सार्धपणशतद्वयम् ॥ २८१ ॥

( ५ ) नन्दनः । पूर्वनिविष्टस्य स्नापनार्थं पूर्वस्मिन्काले कल्पितस्य उदकंहरेत् ॥ २८१ ॥

( ६ ) रामचन्द्रः । अपां जलानां आगमं स्वीकारं स्वकीयत्वंपारंपर्यागतं यःभिन्द्यात् क्षेत्रादिसिञ्चनार्थंसः पूर्वसाहसं प्रतिसंस्कारानन्तरं दाप्यः ॥ २८१ ॥

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ॥ सद्वौ कार्षापणौ दद्यादमेध्यंचाशु शोधयेत् ॥ २८२॥

( १ ) मेधातिथिः । राजमार्गे ग्रामनगरे रथ्यायाममेध्यंमूत्रपुरीषंसमुत्सृजेदन्यतोवाऽऽनीय चण्डालादिर्निक्षिपेत् अनापदि आपद्वेगेनात्यर्थमुक्तंभवति चण्डालादेर्मूल्यंदत्वाऽपासयेत्स्वयंवाऽन्यासंभवे ॥ २८२ ॥

( २ ) सर्वज्ञनारायणः । अनापदि व्याध्याद्यभावे ॥ २८२ ॥

( ३ ) कुल्लूकः । अनार्त्तः सन्योराजपथेषु पुरीषंकुर्यात्सकार्षापणद्वयंदण्डंदद्यात्सचामेध्यंशीघ्रमेवापसारयेत् ॥२८२॥

( ४ ) राघवानन्दः । किंच समुत्सृजेदिति । अनापदि व्याघ्रादिभयानुपस्थितौ आरोग्ये वा । कार्षापणौ ताम्रिकपणद्वयम् ॥ २८२ ॥

आपद्गतोऽथवा वृद्धागर्भिणी बालएव वा ॥ परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥२८३॥

( १ ) मेधातिथिः । आपद्गतः पूर्वोक्तः । वृद्धादयोये बहिर्ग्रामंनिर्गन्तुमशक्तागृहान्ते शोणितमपि कर्तुमित्याशंकयन्ते मेध्यमपि व्यपदेष्टंनपुनरेवंकर्तव्यं पुनः करणे राजतोमहान्प्रत्यवायोभवति । क्रोधगर्भमीदृशवचनंपरिभाषणंतच्च शोध्यमितिराज्ञ उपदेशः यद्युत्स्रष्टारोन ज्ञायन्ते तथाच रथ्याचण्डालादिभिरपासनीया ॥ २८३ ॥

---

( २८१ ) भिद्यात्=रुन्ध्यात् ( सर्व० ) ( २८२ ) दद्यात्=दण्ड्यः ( च )

( २ ) **सर्वज्ञनारायणः** । परिभाषणं भर्त्सनम् । तच्चामेध्यं शोध्यमपनेयम् ॥ २८३ ॥

( ३ ) **कुल्लूकः** । व्याधितवृद्धगर्भिणीबालान दण्डनीयाः । किंतु ते पुनः किंकृतमितिपरिभाषणीयाः तच्चामेध्यंशोधनीयाइति शास्त्रमर्यादा ॥ २८३ ॥

( ४ ) **राघवानन्दः** । एते तु भर्त्स्याइत्याह आपदिति । परिभाषणं पुनर्माकुर्विति । तच्चामेध्यम् ॥ २८३ ॥

( ५ ) **नन्दनः** । परिभाषणंगर्हणं न द्वौ कार्षापणाविति ॥ २८३ ॥

( ६ ) **रामचन्द्रः** । एते वृद्धादयः । परिभाषणं पुनः कार्यं इति ॥ २८३ ॥

**चिकित्सकानांसर्वेषांमिथ्याप्रचरतांदमः ॥ अमानुषेषु प्रथमोमानुषेषु तु मध्यमः ॥ २८४ ॥**

( १ ) **मेधातिथिः** । चिकित्सकाभिषजस्तेषांमिथ्याप्रचाराणामौषधदानमुभयथा संभवति । यदि वाऽविज्ञातशास्त्रप्रयोगतयाशास्त्रे परिचितेऽपि वाऽनन्यरतयाऽर्थलिप्सयाऽमानुषेषु गवाश्वहस्त्यादिषु प्रथमःसाहसशब्दोनुषक्तव्यः । एवंमानुषेषु तु मध्यमइति तथाप्रचारेण यद्याश्वेव विपद्येत तदा महान्दण्डः कल्पनीयः ॥ २८४ ॥

( २ ) **सर्वज्ञनारायणः** । मिथ्याप्रचरतामज्ञात्वोपचरताम् । अमानेषु गवादिषु । एतच्च तन्मरणाभावे तत्र दण्डाधिक्यात् ॥ २८४ ॥

( ३ ) **कुल्लूकः** । सर्वेषांकायशल्यादिभिषजांदुश्चिकित्सांकुर्वतांदण्डः कर्त्तव्यस्तत्र गवाश्वादिविषये दुश्चिकित्सायां प्रथमसाहसदण्डोमानुषविषये पुनर्मध्यमसाहसः ॥ २८४ ॥

( ४ ) **राघवानन्दः** । चिकित्सकानां कायशल्यरसायनादिभिर्दुर्भिषजाममिथ्याप्रचरतां क्षणप्रतीकारं कुर्वताम् । अमानुषेषु गवाश्वादिषु प्रथमःसाहसःपणानांसार्धशतद्वयम् । मध्यमः पञ्चशतानि ॥ २८४ ॥

( ५ ) **नन्दनः** । दमोऽमानुषेष्वश्वादिषु प्रथमः प्रथमसाहसः ॥ २८४ ॥

( ६ ) **रामचन्द्रः** । मिथ्याउपचरतां अमानुषेप्रथमः पूर्वसाहसःदण्डःकार्यः ॥ २८४ ॥

**संक्रमध्वजयष्टीनांप्रतिमानांच भेदकः ॥ प्रतिकुर्याच्च तत्सर्वंपञ्चदद्याच्छतानि च ॥ २८५ ॥**

( १ ) **मेधातिथिः** । येन संक्रामन्तिमार्गेणावतरन्ति जलोपस्पर्शादिना निमित्तेन शुभ्रंवासः संक्रमध्वजचिन्हंराजामात्यादीनां देवायतनेषु च यष्टिः ईदृशे च प्रतिमानामिति व्याख्यातं । प्रतिकुर्यात्समदधीताप्रत्यापत्तिंनयेत् ॥ २८५ ॥

( २ ) **सर्वज्ञनारायणः** । ध्वजोदेवकुलादिध्वजः । यष्टिः ग्रामादिपताकायष्टिः । प्रतिमानां मनुष्यप्रतिकृतीनां । देवप्रतिमासु तु वधस्तदायतनभेदएव वधोक्तेः ॥ २८५ ॥

( ३ ) **कुल्लूकः** । संक्रमोजलोपरिगमनार्थंकाष्ठशिलादिरूपोध्वजः चिन्हं राजद्वारादौ यष्टिःपुष्करिण्यादौ प्रतिमाश्च क्षुद्रामृन्मय्यादयस्तासांविनाशकः पञ्चशतपणान्दद्यात् तच्च विनाशितंसर्वंपुनर्नवंकुर्यात् ॥ २८५ ॥

( ४ ) **राघवानन्दः** । किंच संक्रमेति । संक्रमः जलोपरिगमनार्थं काष्ठशिलादिभिर्निर्मितं वर्त्म प्रतिमानांमृन्मयादि क्षुद्राणां स्थिरप्रतिमाभङ्गेवधस्योक्तत्वात् । ध्वजश्चिन्हंनृपद्वारादौ स्थितम् । यष्टिः पुष्करिण्यादौ स्थापिता काष्ठादिमयी । प्रतिकुर्यात् तच्चतुष्टयं नवं कुर्यात् ॥ २८५ ॥

( ६ ) **रामचन्द्रः** । संक्रमः सोपानादिमार्गः । ध्वजयष्टीनां ध्वजः देवस्य राज्ञोवा चिन्हं यष्टिः इन्द्रदण्डयष्टिः तेषां भेदकःचपुनःप्रतिमानां पूजारहितानां भेदकः । चपुनः तत्सर्वंपूर्ववत्प्रतिकुर्यात् च पञ्चशतानि दद्यात् ॥ २८५ ॥

अदूषितानांद्रव्याणांदूषणे भेदने तथा ॥ मणीनामपवेधे च दण्डःप्रथमसाहसः ॥ २८६॥

( १ ) **मेधातिथिः** । यानि स्वयमदुष्टानि द्रव्याणि लाभार्थी दूषयति तथाधान्यविक्रयी क्षेत्रेनिर्दोषंधान्यमुत्तमंतृणबुसैर्योजयति कुंकुमादेश्च तेन कुंकुमादिना द्रव्यान्तरेणैकीकरणं मणयोमुक्तास्तेषांभेदनंद्विधाकरणं । अत्रवेधतिर्भेदनेविद्यते अनेकार्थत्वाद्धातूनांविधतेरूपमेतत् । मणयोहीनमध्यमोत्कृष्टतमाभवन्ति तत्रदण्डकल्पना कर्तव्या मध्यमेषुमध्यमउत्तमेषूत्तमः ॥ २८६ ॥

( २ ) **सर्वज्ञनारायणः** । अदूषितानां कुङ्कुमादीनांदूषणे ओषधादिनानाशेन भेदने । रत्नादेः असम्यक्वेधनेन नाशने ॥ २८६ ॥

( ३ ) **कुल्लूकः** । अदुष्टद्रव्याणामपद्रव्यप्रक्षेपेण दूषणे मणीनांच माणिक्यादीनामभेद्यानांविदारणे वेध्यानामपि मुक्तादीनामनवस्थानवेधने प्रथमसाहसोदण्डः कार्यः । सर्वत्र परकीयद्रव्यनाशे द्रव्यान्तरदानादिना स्वामितुष्टिः कार्या ॥ ॥ २८६ ॥

( ४ ) **राघवानन्दः** । किंचएतत्त्रिषु प्रत्येकं सार्धशतद्वयंदण्डइत्याह अदूषितानामिति । दूषणे अपद्रव्यप्रक्षेपणे । भेदने अभिन्नानांविदारणे । मणीनां मुक्तादीनां अपवेधे अस्थाने रन्ध्रकरणे ॥२८६ ॥

( ५ ) **नन्दनः** । अदूषितानांकांस्यादीनां चण्डालभोजनादिना दूषणे अपवेधेऽस्थानवेधे ॥ २८६ ॥

समैर्हिविषमंयस्तु चरेद्वैमूल्यतोपि वा ॥ समाप्नुयाद्दमंपूर्वंनरोमध्यममेव वा ॥ २८७॥

( १ ) **मेधातिथिः** । येषांद्रव्याणांसमत्वेन विनिमयउक्तोयथा तिलाधान्येन तत्समइति । तत्र यदि विषममाचरति व्यवहारार्थेतिलंदत्वा बहुधान्यंव्रीह्यादिगृह्णीयादसतिवा विनिमये मूल्यतः क्रयव्यवहारेण व्रीह्यादिधान्येभ्योऽधिकेन मूल्येन क्रीणाति अथवा कस्यचिदुत्तरीयमुपबर्हणमस्ति विक्रेतव्यंकस्यचिदन्तरे शाटकास्तत्र यस्योपबर्हणमस्ति तस्यान्तरउपयुज्यन्ते उपबर्हणेन च ते सममूलास्तत्रतदीयांकार्यवत्तांज्ञात्वा समत्वेन ददात्यधिकमूल्यंगृह्णाति सउच्यते समैर्विषमंचरति मूल्येन तयोः क्रेतुर्विक्रेतुश्च तौ दण्डौ चरति मूल्यतइत्येकार्थस्तथैव वाशब्दोस्मिन्पक्षे पादपूरणएव प्रथममध्यमोक्तौ क्रयविक्रयौ विकल्पितौ द्रव्यसारापेक्षया ॥ २८७ ॥

( २ ) **सर्वज्ञनारायणः** । समैर्ऋजुशीलैः विषमंवक्रं विचरेत् व्यवहारंकुर्यात् । मूल्यतोविषमंचरेत् अधिकंगृह्णीयात् । व्यवहारमात्रे पूर्वदमम् । मूल्यतोमध्यमम् ॥ २८७ ॥

( ३ ) **कुल्लूकः** । समैः सममूल्यदातृभिः सहोत्कृष्टापकृष्टद्रव्यदानेन योविषमंव्यवहरति सममूल्यंद्रव्यंदत्वा यः कस्यचिद्बहुमूल्यंकस्यचिदल्पमूल्यमितिविषमंमूल्यंगृह्णाति सोऽनुबन्धविशेषापेक्षया प्रथमसाहसंमध्यमसाहसं वा दण्डंप्राप्नुयात् ॥ २८७ ॥

( ४ ) **राघवानन्दः** । किंच समैरिति । समैः सममूल्यदातृभिः विषमं न्यूनपरिमाणं दद्यात् मूल्यतोवाल्पंद्रव्यंप्रति बहुमूल्यं गृह्णाति बहुमूल्यंवा स्वल्पमूल्येन गृह्णातिगृहीत्वा बहुमूल्येन तदेव विक्रीणीते तदा प्रथमंसाहसं न्यूनमूल्येन क्रयणे तु मध्यमं विकल्पः द्रव्यस्य सारासारापेक्षयावा ॥ २८७ ॥

( ५ ) **नन्दनः** । समपण्ये मानतुलादिना योविषमंचरेत् योवा मूल्यतोविषमंचरेत् पूर्वंदमंप्रथमंसाहसम् ॥ २८७ ॥

( ६ ) **रामचन्द्रः** । समैः ऋजुभिः विषमं कुर्यात् वैनिश्चयेन मूल्यतोपि वा विषमं अन्यथा मूल्यं कुर्यात् ॥ २८७ ॥

**बन्धनानि च सर्वाणि राजा मार्गे निवेशयेत्॥ दुःखितायत्र दृश्येरन्विकृताःपापकारिणः॥२८८॥**

( १ ) **मेधातिथिः** । प्रसिद्धे राजरथ्याप्रदेशे बन्धगृहाणि संनिवेशयेत्कुर्यात् दुःखितायत्र दृश्येरन्नित्यन्यत्रापि संनिवेशनंतत्प्रदेशभ्रमणंदर्शयति एतेनान्याअपि बन्धसंस्थानांपीडाः कर्तव्याइत्याह शरीरात्यन्तकार्श्याद्यवस्थांतरापत्या-विकृताअभोजनेनेषद्भोजनादिना शेषंस्पष्टम् ॥ २८८ ॥

( २ ) **सर्वज्ञनारायणः** । बन्धनानि बन्धनस्थानानि ॥ २८८ ॥

( ३ ) **कुल्लूकः** । बन्धनगृहाणि सर्वजनदृश्ये राजमार्गे कुर्यात् यत्र निगडबन्धनाद्युपेताः क्षुत्तृष्णाभिभूतादीर्घकेश-नखश्मश्रवः कृशाः पापकारिणोन्यैरकार्यकारिभिरकार्यनिवृत्यर्थंदृश्येरन् राजा गृहपुरादिसंबन्धिनः प्राकारस्य भेदकंत-दीयानामेव परिखाणांपूरयितारंतद्गतानांद्वाराणांभञ्जकंशीघ्रमेव देशान्निर्वासयेत् ॥ २८८ ॥ २८९ ॥

( ४ ) **राघवानन्दः** । किंचैवं राज्ञा कार्यमित्याह बन्धनानीति । बन्धनानि निगडादीनि असत्कार्यिणां भयप्रदर्श-नार्थम् । यत्र येषु । दुःखिताः क्षुधाद्यार्त्ताः विकृताः हस्तादिच्छेददीर्घकेशलोमनखश्मश्रवः दृश्येरन् साधुचरितैरपि ॥२८८॥

( ५ ) **नन्दनः**। पापकर्मणांपापनिवृत्त्युपायकारणमाह बन्धनानि च सर्वाणीति। बन्धनानि शृंखलादीनि यत्र बन्धना दिषु निमित्तेषु विकृताः ॥ २८८ ॥

( ६ ) **रामचन्द्रः** । बन्धनानि बन्धनगृहाणि । यत्र राजमार्गे दुःखिताः दृश्येरन् विकृताकाराः ॥ २८८ ॥

**प्राकारस्य च भेत्तारंपरिखाणांच पूरकम् ॥ द्वाराणांचैव भङ्क्तारंक्षिप्रमेव प्रवासयेत् ॥ २८९ ॥**

**[ एतेनैवतुकर्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्माण्यारभमाणन्तुपुरुषंश्रीनिषेवते ॥ १ ॥ ] ***

( १ ) **मेधातिथिः** । दुर्गतानांप्राकारादीनांविनाशने प्रवासनंदण्डः । परिखाभूभागाःखाताः ॥ २८९ ॥

( २ ) **सर्वज्ञनारायणः** । द्वाराणां द्वारार्गलादीनाम् ॥ २८९ ॥

( ४ ) **राघवानन्दः** । किंच प्राकारस्येति । परिखाः परितःसजलखाताः । ते चेत्स्थास्यन्ति पुनःकरिष्यन्तीति कृ-त्वा क्षिप्रं प्रवासनमिति ॥ २८९ ॥

( ६ ) **रामचन्द्रः** । द्वाराणां प्राकारादीनां ॥ २८९ ॥

**अभिचारेषु सर्वेषु कर्तव्योद्विशतोदमः ॥ मूलकर्मणि चानाप्तेः कृत्यासु विविधासु च ॥ २९० ॥**

( १ ) **मेधातिथिः** । अदृष्टेनोपायेन मन्त्रादिशक्त्या मारणमभिचारस्तत्र प्रवृत्तानाममृतेऽभिचारणीये दण्डोयं अन-भिचारणीयाभिचारेषु नैतावतामुच्यते तत्र मनुष्यमारणदण्डःसविज्ञेयः सर्वग्रहणंलौकिकवैदिकयोरविशेषेण दण्डार्थं । वैदि-काश्येनादयः लौकिकाः पदपांशुग्रहणसूचीभेदनादयः मूलकर्मवशीकरणादि आप्ताः पौत्रभार्यादयस्ततोऽन्येनाप्ताः कृत्या-अभिचारप्रकाराएव मन्त्रादिशक्तय उच्चाटनसुहृद्बन्धुकुलाद्विविचित्रीकरणादिहेतवोभूताद्याधराः प्रसिद्धाः ॥ २९० ॥

( २ ) **सर्वज्ञनारायणः** । अभिचारेषु विद्वेषोच्चाटनादिषु । अनाप्ते असंबन्धिनि विषये । मूलकर्मणि सूनादिप्रयो-गरूपवशीकरणकर्मणि । भर्त्रादौतु संबन्धिनि वशीकरणे कृते नदोषः । अनाप्तैरितिपाठेऽसंबन्धिभिरित्यर्थः । कृत्यासु रो-गाद्युत्पत्तिमातृग्रहाद्युत्थापने ॥ २९० ॥

---

( २८९ ) अयंश्लोकः २८९ स्य प्रथमार्धस्य पश्चात् ( ट ) चिन्हितपुस्तकेदृश्यते । ( १ ) भूताद्या=भूतविद्या ( मे०८ )

( ३ ) **कुल्लूकः**। अभिचारहोमादिषु शास्त्रीयेषु मारणोपायेषु लौकिकेषु च मूलनिखननपदपांशुग्रहणादिषुकृतेष्वनुत्पन्नमरणफलेषु द्विशतपणग्रहणरूपोदण्डः कर्तव्यः। मरणे तु मानुषमारणदण्डः। एवंमातापितृभार्यादिव्यतिरिक्तैरसत्यैर्वामोत्य धनग्रहणाद्यर्थवशीकरणे। तथा कृत्यासूच्चाटनापाटवादिहेतुषु क्रियमाणासु नानाप्रकारासु द्विशतपणदण्डएव कर्तव्यः ॥ २९० ॥

( ४ ) **राघवानन्दः**। अभिचारेषु अभिचारहोमेषु श्येनसंदंशनादिषु। मूलकर्मणि वशीकरणाख्ये। अनाप्तैरनिपुणैः कृतेषु फलानुदयेतत्कर्तॄणां दण्डइतिवाक्यार्थः। कृत्यासूच्चाटनादिषु ॥ २९० ॥

( ५ ) **नन्दनः**। अनाप्तेऽनाप्तविषये वशीकरणे कृत्यासु उच्चरादिप्रक्रियासु ॥ २९० ॥

( ६ ) **रामचन्द्रः**। दमः मरणात् प्राक् मूलकर्मणि वशीकरणे सूनादिप्रयोगरूपवशीकर्मणि। अनाप्तैःमातापितृभार्याव्यतिरिक्तैः ॥ २९० ॥

## अबीजविक्रयी चैव बीजोत्कृष्टातथैव च ॥ मर्यादाभेदकश्चैव विकृतंप्राप्नुयाद्वधम् ॥ २९१ ॥

( १ ) **मेधातिथिः**। अबीजंबीजमित्युक्त्वा विक्रीणीते स्वरूपलोपेन धान्यशाकादीनांबिजानि चिरप्रोषितानि क्षेत्रेप्ररोहन्ति नच तानि शक्यन्तेवन्ध्यानीति क्षेत्रात्तुबीजंयत्कर्षति शोभनंयद्बीजंक्षिप्तंप्ररोहति तदुत्कृष्य तदाभासंप्रतिधान्यादिक्षिप्त्वा विक्रीणीते। अथवान्युप्तंबीजंक्षेत्रादेवोद्धृत्यनयन्ति। मर्यादा शास्त्रदेशाचारनिरूढास्थितिः। विकृतंकर्णनासादिकर्तनम् ॥ २९१ ॥

( २ ) **सर्वज्ञनारायणः**। अबीजविक्रयी बीजमेतदित्युक्त्वा। बीजस्योत्कृष्टा बीजकाले महर्घताकामोत्कर्षकारी। मर्यादायाग्रामादिसमयस्य भेदकः। विकृतं कुत्सितं नासाछेदादि ॥ २९१ ॥

( ३ ) **कुल्लूकः**। अबीजंबीजप्ररोहासमर्थंव्रीह्यादि प्ररोहसमर्थमिति कृत्वा योविक्रीणीते तथापकृष्टमेव कतिपयोत्कृष्टप्रक्षेपेण सर्वमिदंसोत्कर्षमिति कृत्वा योविक्रीणीते यश्च ग्रामनगरादिसीमांविनाशयति सविकृतनासाकरचरणकर्णादिरूपंवधंप्राप्नुयात् ॥ २९१ ॥

( ४ ) **राघवानन्दः**। अपिचैते वधार्हाइत्याह अबीजेतिद्वाभ्याम्। अबीजविक्रयी मूषिकाघ्रातादिना दूषितान्यपि बीजानि प्रशस्तानीति विख्याप्य विक्रयी। बीजोत्कृष्टा अपकृष्टंकतिचित्ततोत्कृष्टे प्रक्षिप्य विक्रयी। मर्यादाभेदकः मर्यादा ग्रामचतुष्टयावच्छेदिकासीमा तन्नाशकः। विकृतंनासाच्छेदादि ॥ २९१ ॥

( ५ ) **नन्दनः**। अबीजविक्रयी बीजाभासविक्रयी बीजोत्कृष्टोमानां बीजानामुद्धर्ता ॥ २९१ ॥

( ६ ) **रामचन्द्रः**। बीजमेतदित्युक्त्वाऽबीजविक्रयी। तथैव बीजोत्कृष्टा अन्यद्रव्यमेलकः बीजमहार्घकर्ता ॥२९१॥

## सर्वकण्टकपापिष्ठंहेमकारंतु पार्थिवः ॥ प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥ २९२ ॥

( १ ) **मेधातिथिः**। यावन्तः केचनकण्टकाःपूर्वमुक्तास्तेषांपापतमः सुवर्णकारः यदि निर्धारणे षष्ठी कथंन न निर्धारणइति समासाभावः। तस्यचपापतमत्वंस्वल्पेनैवापहरणेन महतएनसोत्पत्तिर्ब्राह्मणस्वर्णापहरणे च महापातकमतस्तमन्याये प्रवर्तमानं छेदयेत्खण्डशः परिवर्तनतुलान्तरतापच्छेदादिभिः। अपहरन्ति गृह्णते नचात्रह्रियमाणद्रव्यपरिमाणापेक्षा न स्वामिजात्यपेक्षा अभ्यासस्त्वपेक्ष्यतइति महत्त्वाद्दण्डस्या। न्यायेतुप्रवृत्तौ धनदण्डेन क्षुरमांसलवच्छेदोविनिमातव्यः। शारीरनिग्रहे निगृह्यमाणानांपापमपैतीति प्रतिपादितम् ॥ २९२ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वेभ्यः कण्टकेभ्यः क्षुद्रशत्रुभ्यः पापिष्ठम् ॥ २९२ ॥

( ३ ) **कुल्लूकः** । सर्वकण्टकानांमध्येऽतिशयेन पापतमंसुवर्णकारंतुलाछद्मकषपरिवर्तापद्रव्यप्रक्षेपादिना हेमादिचौर्ये प्रवर्त्तमानमनुबन्धापेक्षयाङ्गविशेषेण सर्वदेहंवा खण्डशश्छेदयेत् ॥ २९२ ॥

( ४ ) **राघवानन्दः** । सर्वकंटकनांमध्येअतिशयेन पापतमं हेमकारं हेम्ना व्यवहर्तुंशीलमस्य । अन्याये चौर्यापद्रव्यादिमिश्रणे । लवशोलवंलवंकृत्वा ॥ २९२ ॥

( ६ ) **रामचन्द्रः** । सर्वकण्टकपापिष्ठं हेम्नः तुलार्थं लोहस्यकण्टकं तस्मिन्कण्टके माषकण्टके माषकुण्गलमन्यथाकारीतिपापिष्ठं हेमकारं स्वर्णकारं एवंअन्याये वर्तमानं लवशः खण्डशः क्षुरैः छेदयेत् ॥ २९२ ॥

## सीताद्रव्यापहरणे शस्त्राणामौषधस्य च ॥ कालमासाद्य कार्यंच राजादण्डंप्रकल्पयेत् ॥ २९३ ॥

( १ ) **मेधातिथिः** । कृष्यमाणाभूमिःसीता तद्द्रव्याणि लाङ्गलकुद्दालकादीनि । तदपहरणेदण्डः प्रकल्प्यः । किंइच्छयैव नेत्याह कालमासाद्य कार्यश्च कर्षणकाले प्रत्यासन्ने महान्दण्डः । अकृष्टे च यदा तस्मिन्महतः फलस्य नाशस्तदाभूयानेव आसाद्याऽऽसन्नंज्ञात्वेत्यर्थः । अन्यदा तु द्रव्यज्ञानाद्यनुरूपः एवंशस्त्राणांच खड्गादीनांयुद्धकाले औषधस्य भेषजार्थमुपयोगकाले तेन चौषधेन त्वतेनानुपयुक्तेन यद्यातुरस्य महती पीडा जायतेऽन्यच्च । तस्मिन्काले न लभ्यते तल्लभ्यमपि बाधकादिसंस्कारापेक्षया चिरेणोपयोगार्थमेवमाद्यपेक्षा राजदण्डप्रकल्पनायै प्रभवेत् । शस्त्राणांराजोपकरणानां । अन्यथापि जनपदस्य भ्रातृव्यतस्कराशङ्किनस्तदामहादण्डः स्वल्पे स्वल्पः ॥ २९३ ॥

( २ ) **सर्वज्ञनारायणः** । सीताद्रव्यंहलादि । शष्पाणां औषधिद्रव्याणाम् । शस्त्राणामिति क्वचित् । कालं कृषिसमयादिं कार्यं दुर्भिक्षादिना बहुप्रयोजनतां ज्ञात्वा दण्डतारतम्यं कुर्यात् ॥ २९३ ॥

( ३ ) **कुल्लूकः** । कृष्यमाणभूमिद्रव्याणांहलकुद्दालादीनामपहरणे खड्गादीनांच शस्त्राणामौषधस्य च कल्याणघृतादेः चौर्ये सत्युपयोगकालेतरकालापेक्षया प्रयोजनापेक्षया च राजा दण्डंकुर्यात् ॥ २९३ ॥

( ४ ) **राघवानन्दः** । किंच केषुचिद्द्रव्येषुदण्डमात्रमित्याह सीतेति । सीताद्रव्यापहरणे लाङ्गलादीनांहरणे । औषधस्य कल्याणघृतादेः । कालंअपहृतद्रव्याप्राप्तिकालेसुभिक्षादौ दुर्भिक्षादौ न दण्डइतिभावः ॥ २९३ ॥

( ५ ) **नन्दनः** । सीताद्रव्याणि हलयुगयोग्यफालादीनि आसाद्य बुद्ध्वा कार्यंच गुर्विदमिति ॥ २९३ ॥

( ६ ) **रामचन्द्रः** । सीताद्रव्यापहरणे हलादिद्रव्यापहारे शस्त्राणां औषधस्य अपहरणे कालंवर्षाकालं आसाद्य प्राप्य च पुनः कार्यं औषधस्य आसाद्य शस्त्रस्यकार्यं आसाद्यराजादण्डयेत् ॥ २९३ ॥

## स्वाम्यमात्यौ पुरंराष्ट्रंकोशदण्डौ सुहृत्तथा ॥ सप्तप्रकृतयोह्येताः सप्ताङ्गंराज्यमुच्यते ॥ २९४॥

( १ ) **मेधातिथिः** । सप्तमायां कण्टकशुद्धौ केवलंराज्यतन्त्रोपयोगीराजधर्मउच्यते यथैतस्मिन्ननुष्ठीयमाने सज्यानाशः । एवंव्यवहारदर्शने कण्टकशुद्धौ वाक्रियमाणायां तुल्योरान्यानाशः । किंच महिषीकुमारराजवल्लभसेनाध्यक्षाश्रिताः प्रायेण भवन्ति कण्टकास्तान्कदाचिदनया बुद्ध्याज्ञानोद्धरेत् प्रकृतक्षोभशङ्कायांमहत्तममप्रयोजनं । सेनाध्यक्षेण सामन्तेन च क्रिमनेन निगृहीतेन राष्ट्रापराधिना तदर्थमुच्यते । तुल्यंराष्ट्रंस्वाम्यादिति राज्यप्रकृतित्वेन तत्परिहर्तव्यंराष्ट्रंततोदुर्बलान्केनचिदुपायेन वा ग्रोधयित्वा कण्टकशुद्धिंकरिष्यामीति न सहसाप्रवर्तितव्यं अतःसप्तमाध्यायोपदेशतोप्युत्कृष्यास्मिन्नवधा-

( २९३ ) शस्त्राणां=शष्पाणां ( सर्व० )

बुध्यते। स्वामी राजैव अमात्योमन्त्रिपुरोहितः सेनानी पुरंनिवासनगरं राष्ट्रंजनपदाः कोशोरूप्यसुवर्णरूपकादिधनसंचयः हस्त्यश्वरथपादातंदण्डः धर्मदंडादिव सुहृत्समानकार्यः यथोक्तं मित्रंतस्मादनन्तरमिति एताराज्यस्य प्रकृतयः कारणमव-यवायथाघटस्य कापालिनि। स्वभाववचनोवा प्रकृतिशब्दः एवं तदात्मकमेव राज्यंसमस्तंक्षिप्तं अस्यैव भेदोविस्तारोह्रासप्र-तिरस्तत्रापि योज्योभेदः सउक्तएव ॥ २९४ ॥

( २ ) **सर्वज्ञनारायणः**। स्वामी राजा । अमात्यामन्त्र्यादयः। पुरं दुर्गीभूतमात्मनःशिबिरम् । राष्ट्रं जानपदोज-नः । कोषोधनं । दण्डोदण्डप्रणयनजंतेजः । सन्मित्रं। प्रकृतयोवयवतया तत्समुदायरूपस्य राज्यस्योत्पादनादिसमस्तं मिलितं अवयविस्थानीयं राज्यमुच्यते ॥ २९४ ॥

( ३ ) **कुल्लूकः**। स्वामी राजा। अमात्योमन्त्र्यादिः। पुरंराज्ञः कृतदुर्गनिवासनगरं। राष्ट्रंदेशः। कोशोवित्तनिचयः। दण्डोहस्त्यश्वरथपादातं। मित्रंत्रिविधंसप्तमाध्यायोक्तमित्येताः सप्तप्रकृतयोअङ्गानि सप्ताङ्गमिदंराज्यमित्युच्यते ॥ २९४ ॥

( ४ ) **राघवानन्दः**। प्रकृतिसंपन्नइत्यादौ कतिप्रकृतयइत्यपेक्षां पूरयन्नाह स्वामीति। स्वामी राजा। अमात्याः प्रकृतयः। पुरं राजाधिवसतिः। राष्ट्रं देशः। कोशोधनम्। दण्डोहस्त्यश्वरथपादातमिति। अथवोत्तमसाहसादि हस्त्या-दीनां राजन्यन्तर्गतत्वात् तंविना राजत्वानुपपत्तेः। सुहृत्सप्तमाध्यायोक्तस्त्रिविधः दूतोवा ॥ २९४ ॥

( ५ ) **नन्दनः**। एवंकण्टकशोधनमुक्तं। अथराजधर्मानुक्तशिष्टान्वक्तुमुपक्रमते स्वाम्यमात्याविति ॥ २९४ ॥

( ६ ) **रामचन्द्रः**। स्वामीमहोत्साहइत्युक्तलक्षणोमहीपतिः अमात्यामन्त्रिपुरोहितादयः पुरं समृद्धं राष्ट्रं दुर्गं धन्व-दुर्गादि कोशः सुवर्णादिद्रव्यराशिः दण्डः हस्त्यश्वरथपत्तिलक्षणंचतुरङ्गबलं सुहृन्मित्राणि एताः सप्त प्रकृतयोराज्यस्य अथवा समस्तं राज्यमुच्यते ॥ २९४ ॥

**सप्तानांप्रकृतीनांतु राज्यस्यासांयथाक्रमम् ॥ पूर्वंपूर्वंगुरुतरंजानीयाद्व्यसनंमहत् ॥२९५॥**

( १ ) **मेधातिथिः**। मित्रव्यसनात्स्वबलव्यसनंगरीयः सुवर्णसंपन्नोहिशक्नोति मित्रमनुगृह्णीयात् एवंदण्डः कोशना शेहि दण्डोपि नश्यत्येव एवंकोशराष्ट्रं राष्ट्रनाशेहि कुतः कोशोत्पत्तिः पुनः राष्ट्राविनाशकार्ये पुरंयत्नतोरक्षितव्यं तत्रहि सर्वावयवसाधनादिसंभवति पुरादमात्यप्रधानं प्रधानादमात्यनाशे सर्वनाशः ॥ २९५ ॥

( २ ) **सर्वज्ञनारायणः**। ससप्तानांप्रकृतीनां द्वयोस्तिसृणांवा व्यसने पूर्वंपूर्वं [प्रथमतश्चिकित्स्यं गुरुत्वादित्यर्थः ][1] ॥ २९५ ॥

( ३ ) **कुल्लूकः**। ततःकिमित्याह सप्तेति। आसांराज्यप्रकृतीनांसप्तानांक्रमोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्वस्याःपूर्व-स्याविनाशविषये गरीयोव्यसनंजानीयात्। तथा हि मित्रव्यसनात्सबलव्यसनंगरीयः संपन्नबलस्यैव मित्रानुग्रहे सामर्थ्यं तु। एवंबलात्कोशोगरीयान्कोशनाशे बलस्यापि नाशात्कोशाद्राष्ट्रंगरीयोराष्ट्रनाशे कुतः कोशोत्पत्तिः एवंराष्ट्राद्दुर्गनाशोपि दुर्गादे-वयवसेन्धनादिसंपन्नाद्राज्यरक्षासिद्धिः दुर्गादमात्योगरीयान्प्रधानामात्यनाशे सर्वाङ्गवैकल्यात् अमात्यादप्यात्मा सर्वस्या-त्मार्थत्वात्तस्मादुत्तरापेक्षया पूर्वंयत्नतोरक्षेत् ॥ २९५ ॥

( ४ ) **राघवानन्दः**। भवतु राज्यंततःकिंतत्राह सप्तेति। आसां प्रकृतीनां मध्ये सुहृद्व्यसनाद्दण्डव्यसनं गरीयइ-त्येवं पूर्वंपूर्वं स्वाम्यन्तं बोद्धव्यम् ॥ २९५ ॥

( ५ ) **नन्दनः**। व्यसनं वैकल्यं पुर्वं पूर्वं गुरुतरं सुहृद्व्यसनाद्दण्डव्यसनं गुरुतरमित्यादि ॥ २९५ ॥

---

१ ( सर्वज्ञ० २ )

**समाङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत्॥ अन्योन्यगुणवैशेष्यान्न किंचिदतिरिच्यते॥२९६॥**

( १ ) **मेधातिथिः**। तथाचदृष्टान्तः विश्रब्धस्य त्रिदण्डवदित्यवष्टब्धस्यान्योन्यस्याधारभावेनैतदेवाह अन्योन्यगुणवैशेष्यात् परस्परस्योपकार्योपकारकभावेनैकैकस्य विशेषोपपत्तिर्भूमिवीजोदकसामग्र्योवकुञ्जरजनने तस्मात्सर्वेषां पूज्यताऽत्रोच्यते। अस्त्येवात्र गुरुलघुभावः यत्तु न किंचिदतिरिच्यतइति तदनादरेणमित्रादिरक्षायां वर्तितव्यमित्येवंपरमेतत्। मित्रनाशेऽचिरेण राज्यनाशोयदा बलवतोपरोधोनतदानीमेवेत्यालंबनलघीयस्तया॥ २९६॥

( २ ) **सर्वज्ञनारायणः**। [ नचैवं तत्तदुत्तरप्रकृतिव्यसने नप्रतिकर्तव्यमेव स्वकार्ये सर्वप्राधान्यादित्याह समाङ्गस्येति। विष्टब्ध ][1] स्यान्योन्याधारतया। त्रिदण्डवदन्योन्यावष्टम्भगृह्यादिदण्डत्रयवत्। अन्योन्यगुणवैशिष्ट्यात् स्वस्वगुणेन सर्वासां वैशिष्ट्यात् नकिंचिद्व्यसनमतिरिच्यते अतितुच्छताजातिचारानर्हत्वं भवतीत्यर्थः॥ २९६॥

( ३ ) **कुल्लूकः**। उक्तसमाङ्गवतोलोके राष्ट्रस्य त्रिदण्डवदन्योन्यसंबन्धस्य परस्परविलक्षणोपकारणान्न किंचिदङ्गमधिकंभवति यद्यपि पूर्वश्लोके पूर्वपूर्वाङ्गस्याधिक्यमुक्तंतथाप्येषामङ्गानांमध्यादन्यस्याङ्गसंबन्धिनमपकारमन्यदङ्गंकर्तुं न शक्नोतिस्मादुत्तरोत्तराङ्गमप्यपेक्षणीयमित्येवंपरोयमाधिक्यनिषेधः अत्र प्रसिद्धंयतित्रिदण्डमेव दृष्टान्तः तद्धि चतुरङ्गुलगोवालवेष्टनादन्योन्यसबंन्धं नच तन्मध्ये त्रिदण्डधारणशास्त्रार्थे कश्चिद्दण्डोधिकोभवति॥ २९६॥

( ४ ) **राघवानन्दः**। किंच समेति। समस्वाम्यादयोङ्गंपरस्परसहकारि यस्य तस्य समाङ्गस्यविष्टब्ध स्य विष्टम्भनरूपस्य अन्योन्यगुणवैशेष्यात्। अन्योन्येन गुणानां स्वाम्यादीनां परस्परोपकारितालक्षणगुणवैशेष्यात् राज्यं स्यात् स्वातन्त्र्ये तु नाकिंचित्सिध्येत्। यद्यप्यत्र पूर्वपूर्वं गुरुतरमित्युक्तं तथापि राज्यलक्षणकार्येन कस्यापि प्राधान्यमिति। अत एव दृष्टान्तः त्रिदण्डवत् तैर्हि भक्ष्यादौस्वतन्त्रार्अपि घटधारणादौ न कस्यापि स्वातन्त्र्यमितिभावः॥ २९६॥

( ५ ) **नन्दनः**। त्रिदण्डवद्विष्टब्धस्य दण्डत्रयवदन्योन्यापाश्रयेणास्थितस्य नाकिंचिदङ्गमतिरिच्यते सर्वाण्यङ्गानि तुल्यगुणानीत्यर्थः॥ २९६॥

( ६ ) **रामचन्द्रः**। विष्टब्धस्य अन्योन्यसापेक्षस्य त्रिदण्डवत् अन्योन्याधारभूतदण्डत्रयवत् राज्यस्य समानांप्रकृतीनां यथाक्रमंअन्योन्यगुणवैशिष्ट्यान्न किंचिदतिरिच्यते॥ २९६॥

**तेषु तेषु तु कृत्येषु तत्तदङ्गंविशिष्यते॥ येन यत्साध्यते कार्यंतत्तस्मिन् श्रेष्ठमुच्यते॥ २९७॥**

( १ ) **मेधातिथिः**। नास्ति तद्वस्तु यद्राज्ञोनोपयुज्यते भवति तत्कार्यंयन्निकृष्टेन साध्यते न महता तस्मात्सर्वाः प्रकृतयोयत्नतः पालनीयाः। असद्दण्डादिना न राष्ट्रंकर्शनीयं चोराद्युपद्रवेभ्यश्च यत्नतोरक्ष्यमिति तात्पर्यार्थः। अतः कण्टकशुद्धिशेषोयम्॥ २९७॥

( २ ) **सर्वज्ञनारायणः**। तदेवाह तेषुतेष्विति। तत्तन्मात्रसंपाद्येष्वित्यर्थः। येनयदिति पूर्वार्धार्थस्यैव स्फुट्यर्थंप्रपञ्चनम्॥ २९७॥

( ३ ) **कुल्लूकः**। यस्मात्तेषु तेषु संपाद्येषु कार्येषु तत्तदङ्गस्यातिशयोभवति तत्कार्यमन्येन कर्तुमशक्तेः एवंच येनाङ्गेन यत्कार्यंसंपाद्यते तस्मिन्कार्ये तदेव प्रधानमुच्यते। ततश्चान्योन्यगुणविशेषादि यदुक्तंतदेवानेन स्फुटीकृतम्॥ २९७॥

( ४ ) **राघवानन्दः**। तत्रैव क्षितिसलिलबीजन्यायमाह तेष्विति। कृत्येषु साध्येषु विशिष्यते। प्रधानतयेतिशेषः।

1 ( सर्वज्ञ० २ )

साधनायत्तत्वात्साध्यस्य तद्यथा अङ्कुरस्य बीजावयवंतूपादानमेवंराजा सर्वत्र प्रधानम् । यथा क्षितिरङ्कुरधारणे एवं पुरम् । सलिलं यथा तदुच्छूनतायामेव दण्डोरक्षाहेतुः । यथा पवनः परिणामहेतुतया वृद्धेर्हेतुरेवंकोशः । यथा तत्र तेजः परिपाकहेतुरेवमेवामात्यः एवमन्यत् ॥ २९७ ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह तेषुतेषुचेति तदङ्गंतस्मिन्कार्ये ॥ २९७ ॥

( ६ ) **रामचन्द्रः** । येनाङ्गेनयत्कार्यंसाध्यते तदङ्गंतस्मिन्कार्ये श्रेष्ठमुच्यते ॥ २९७ ॥

## चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ॥ स्वशक्तिपरशक्तिंच नित्यंविद्यान्महीपतिः ॥ २९८ ॥

( १ ) **मेधातिथिः** । परस्यात्मनश्च नित्यंशक्तिंविद्यात् किमयंमारिप्सते किंचमयिकर्तुंशक्तःकिंचाहमस्मिन्निति एतन्नित्यंवेदितव्यं । कथंचैतच्छक्यते वेदितुंचारेणसप्तमाध्यायोक्तेन उत्साहयोगेन दानादिपरितोषितावुत्साहेन युज्यन्ते संपन्नकृष्यादिफलाश्चक्रिययैव च कर्मणा कर्माणि वा निवेशादीनि तदारंभेन शक्तिमान् रिपुरवगम्यते तानि ह्यर्थसंपत्कराणि ततः सामर्थ्योत्पत्तेः ॥ २९८ ॥

( २ ) **सर्वज्ञनारायणः** । परात्मनोः शत्रोःस्वस्यच स्वशक्तिं स्वामिगतांशक्तिं प्रभावोत्साहमन्त्रजां परशक्तिममात्यादिषडङ्गशक्तिं गताम् । चारेण चरेण । उत्साहयोगेनोद्यमदर्शनेन । कर्मणां कार्याणां क्रियया निष्पादनेन कर्मणांफलान्तरदर्शनरूपेणच विद्यात् अहमशक्तोऽन्योवेति ॥ २९८ ॥

( ३ ) **कुल्लूकः** । सप्तमाध्यायोक्तकापटिकादिना बलस्योत्साहयोगेन कर्मणांच हस्तिबन्धवणिक्पथादीनामनुष्ठानेन ज्ञातांशत्रोरात्मनश्च शक्तिंराजा सदा जानीयात् ॥ २९८ ॥

( ४ ) **राघवानन्दः** । संप्रति चारस्य कृत्यमाह चारेणेति । चारेणोत्साहयोगेन चाराणां कृतकार्याणां वस्त्रालंकारादिप्रसादेनोत्साहः तेषामेवच कार्यार्थं पुनःसंयोगश्चतेनपरशक्तिंजानीयात् स्वशक्तिंतुकर्मणां हस्तिबन्धशत्रुवशीकारादीनां क्रिययाऽनुष्ठानेन ॥ २९८ ॥

( ५ ) **नन्दनः** । परात्मनोः शत्रोरात्मनश्च स्वशक्तिं स्वपरिकरशक्तिं परस्यान्यस्य मित्रादेः शक्तिंच चारेणोत्साहयोगेन अतन्द्रितत्वेन कर्मणा क्रियया विद्यात् चारेणेत्याप्तवचनमत्रविवक्षितं उत्साहयोगेनेति प्रत्यक्षकर्मणां क्रिययेत्यनुमानम् ॥ २९८ ॥

( ६ ) **रामचन्द्रः** । चारेण चारस्य प्रेषणेन उत्साहयोगेन उद्यमदर्शनेन पदातीनां क्रिययैव चपुनः कर्मणां वणिक्पथादीनां स्वशक्तिं पूर्वं पूर्वं अस्य राज्यस्य सप्तानां प्रकृतीनां अवयवानां यथाक्रमं एवंपरात्मनः परः शत्रुः तस्य आत्मनः शक्तिं नित्यं विद्यात् ॥ २९८ ॥

## पीडनानि च सर्वाणि व्यसनानि तथैव च ॥ आरभेत ततः कार्यंसंचिन्त्यगुरुलाघवम् ॥ २९९ ॥

( १ ) **मेधातिथिः** । पीडनानि नरकदुर्भिक्षपातादीनि । तथाऽवर्षादिवर्षपर्ययमूषिकशलभाशनिप्रभृतयः व्यसनानि कामक्रोधस्वपुत्रसंग्रामदैवविघटनयोपन्यासेन वा तथापि ननित्यमुत्साहेन भवितव्यं अथवानसंतोषिणा भवितव्यं । अथतावत्षाड्गुण्यचिन्ता अन्वाहिकौ चायव्ययौ कया चिन्मात्रया गतौ च राष्ट्रवृत्तं प्रकृतिसमहीतंचरमुखादवधूतम् ॥ २९९ ॥

---

( २९८ ) विद्यान्महीपतिः=विद्यात्परात्मनोः ( सर्व० )

( २ ) सर्वज्ञनारायणः । पीडनानि परपुरोपरोधनादीनि व्यसनानि राष्ट्रभङ्गामात्योपजापादीनि परस्य विद्यात् । गुरुलाघवं गुरुत्वलघुत्वे संचित्य कार्यमारभेत ॥ २९९ ॥

( ३ ) कुल्लूकः । पीडनानि मारकादीनि कामक्रोधोद्भवानि दुःखानि च स्वपरचक्रगतानि तेषांच गुरुलघुभावंपर्यालोच्य सन्धिविग्रहादिकार्यमारभेत ॥ २९९ ॥

( ४ ) राघवानन्दः । किंच पीडनानीति । पीडनानि परराष्ट्रे दुर्भिक्षमारणानि । व्यसनानि प्रकृतिक्रोधजादीनि । कार्यं सन्धिविग्रहादि बलवति शत्रौ सन्धिर्गुरुरप्यनुष्ठेयः स्वरक्षाहेतुत्वात् । क्षीणे तस्मिन्नानुष्ठेयः आपन्नकालत्वात् ॥ २९९ ॥

( ५ ) नन्दनः । पीडनान्यात्मनः परकृतानि व्यसनानि द्यूतादीनि विद्यादित्यनुकृष्यते गुरुलाघवतः गौरवेण लाघवेन च विविच्य कर्तव्यंकुर्यात् ॥ २९९ ॥

( ६ ) रामचन्द्रः । पुरोपरोधादीनि सर्वाणि व्यसनानि राष्ट्रभङ्गामात्योपायादीनि तथैव जानीयात् । ततः कार्यं संधिविग्रहादि गुरुलाघवं संचिन्त्य आरभेत ॥ २९९ ॥

**आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ॥ कर्माण्यारभमाणंहि पुरुषंश्रीर्निषेवते ॥ ३०० ॥**

( १ ) मेधातिथिः । गीतादिविषयेषु भावेन व्यापारान्तरेण वा पुनः कर्माणि वेदितव्यानि पुरुषग्रहणंतिष्ठतुतावद्राजानोपि जनपदउद्योगश्रियोपचीयन्ते एतदुक्तमामृत्योः श्रियमन्विच्छेदिति ॥ ३०० ॥

( २ ) सर्वज्ञनारायणः । कर्माणि राज्यरक्षादीनि ॥ ३०० ॥

( ३ ) कुल्लूकः । राजा स्वराज्यवृद्धिपरापचयनिमित्तानि कार्याणि कथंचिदिदंसंजातमिति छलान्यप्यारभ्यात्मना खिन्नः पुनः पुनस्तान्यारभेतैव यस्मात्कर्माणि सृज्यमानंपुरुषंश्रीर्नितरांसेवते तथा नाब्राह्मणे नानाश्रये श्रीरस्तीति प्ररोहितापि शोषमेति नच युगानुरूपेण कर्माणि फलन्तीति राज्ञोदासितव्यम् ॥ ३०० ॥

( ४ ) राघवानन्दः । किंच नृपोन कृतार्थंमन्यःस्यादित्याह आरभेतेति । श्रान्तः संजातफलोपि श्रान्तः खिन्नः असंपूर्णमिवात्मानंमन्यमानः । एवंविधं नृपतिं श्रीर्लक्ष्मीः निषेवते नितरांसेवते ॥ उद्योगिनंपुरुषसिंहमुपैति लक्ष्मीरितिन्यायात् ॥ ३०० ॥

( ६ ) रामचन्द्रः । श्रान्तः कर्मकरणेन ॥ ३०० ॥

**कृतंत्रेतायुगंचैव द्वापरंकलिरेव च ॥ राज्ञोवृत्तानि सर्वाणि राजा हि युगमुच्यते॥ ३०१ ॥**

( १ ) मेधातिथिः । इतश्च कर्मारंभपरेण भवितव्यं अनारंभीकलिः स्यात्सचमहान्दोषः नचैवंमन्तव्यंराज्ञा कलिर्नामविशेषतइतिहासप्रसिद्धेः कथमहंस्यामिति यतोराज्ञोवृत्तादितदुत्तरेण निर्दिश्यते ॥ ३०१ ॥

( २ ) सर्वज्ञनारायणः । राज्ञोवृत्तानि राजचरितान्येवैतानि ॥ ३०१ ॥

( ३ ) कुल्लूकः । यतः कृतमिति । कृतत्रेताद्वापरकलयोराज्ञएव चेष्टितविशेषास्तैरेव सत्यादिविशेषप्रवृत्तेः । तस्माद्राजैव कृतादियुगमभिधीयते ॥ ३०१ ॥

( ४ ) राघवानन्दः । राजाहि कृतादिचतुष्टयस्य धर्मप्रवर्त्तकत्वेन तद्रूपमित्याह कृतमिति ॥ ३०१ ॥

---

( ३०० ) श्रान्तः श्रान्तः=दान्तः शान्तः ( ग )

( ५ ) **नन्दनः** । राज्ञः कर्मणामारंभविशेषेणयुगविशेषोपीत्याह कृतंत्रेतायुगंचैवेति । राज्ञोवृत्तानि राज्ञः संबन्धीनि वृत्तानि ॥ ३०१ ॥

**कलिः प्रसुप्तोभवति सजाग्रद्द्वापरंयुगम् ॥ कर्मस्वभ्युद्यतस्त्रेता विचरंस्तुकृतंयुगम् ॥ ३०२ ॥**

( १ ) **मेधातिथिः** । अनुष्ठानशीलः प्रसुप्तः कलिर्भवति । जानानश्चोत्कर्षाभ्युपायानातिष्ठन्सजाग्रद्द्वापरंभवति । व्यवसितकर्मप्रयोगस्त्रेतायुगंभवति । विश्वस्य सर्वरूपाणि यथाशास्त्रंकर्मफलसंपादात्कृतयुगंभवति ॥ ३०२ ॥

( २ ) **सर्वज्ञनारायणः** । कथंतदित्यतआह कलिरिति । प्रसुप्तोऽनवेक्षितराज्यः तदा कलिदोषप्रवृत्तेः । जाग्रत् प्रतिसंधानमात्रंकुर्वन् । अभ्युदितउद्यतः । विचरन्निष्पादनार्थे कर्मणाम् । प्रस्वापादीनांकल्यादियुगतुल्यत्वात्प्रसुप्तादेस्तत्त्वमुक्तं ॥ ३०२ ॥

( ३ ) **कुल्लूकः** । कीदृक्चेष्टितः कृतादियुगमित्यतआह कलिरिति । अज्ञानालस्यादिना यदा निरुद्यमोराजाभवति तदा कलिः स्यात् यदा जानन्नपि नानुतिष्ठति तदा द्वापरम् यदा कर्मानुष्ठानेऽवस्थितस्तदा त्रेता यथा शास्त्रंपुनः कर्माण्यनुतिष्ठन्विचरति तदा कृतयुगं तस्माद्राज्ञा कर्मानुष्ठानपरेण भाव्यमिति । अत्र तात्पर्यंनतु वास्तवकृतयुगाद्यपलापे ॥ ॥ ३०२ ॥

( ४ ) **राघवानन्दः** । तदेव विवृणोति कलिरिति । प्रसुप्तः स्वापंगतः राजनि सुप्ते दुष्टानां भयात्कर्माद्यनुपस्थितिः । तस्मिञ्जाग्रतिसाधूनामभयदानादिपुण्योपस्थितिः तद्द्वापरम् । कर्मकर्तव्यम् । स्वाभिमुख्येनोद्यमी तदा यज्ञादिप्रवृत्तेस्त्रेता । विचरन् स्वराज्ये कण्टकाघातनायपर्यटन् कृतं सत्यं ध्यानास्पदं सर्वत्र निर्भयाद्ध्यानंकृतइत्युक्तेः ॥ ३०२ ॥

( ५ ) **नन्दनः** । प्रसुप्तोनिष्कर्मा राजा लोकस्य कलिर्भवति जाग्रत्कर्माण्यारब्धव्यानीत्यवगच्छन्कर्मस्वभ्युद्यतः कर्मसूद्युक्तोऽव्यवसितइतियावत् । विचरन्कर्माणि कुर्वन् ॥ ३०२ ॥

( ६ ) **रामचन्द्रः** । प्रसुप्तः अनपेक्षितराज्यः कलिर्भवति । सञ्जाग्रत् प्रतिसन्धिमात्रपरः द्वापरंभवति । कर्मसु अभ्युद्यतं उद्यमयुक्तं त्रेतायुगं भवति । विचरंस्तु व्यवहारंपश्यन् कृतयुगं भवति ॥ ३०२ ॥

**इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ॥ चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तंनृपश्चरेत् ॥ ३०३ ॥**

( १ ) **मेधातिथिः** । तेजः शुक्रंकार्यसामर्थ्यमित्यर्थः ॥ ३०३ ॥

( २ ) **सर्वज्ञनारायणः** । इन्द्रादीनां प्रत्येकं वृत्तानुवृत्तिं प्रागुक्तामपि वीवरीतुमनुवदति इन्द्रस्येति । तेजोवृत्तमिति तेजोबलं यथावृत्तं चरितम् ॥ ३०३ ॥

( ३ ) **कुल्लूकः** । इंद्रादिसंबन्धिनोवीर्यस्यानुरूपंचरितंराजानुतिष्ठेत्तथा च राजा कण्टकोद्धारेण प्रतापानुरागाभ्यां संयुक्तः स्यात् ॥ ३०३ ॥

( ४ ) **राघवानन्दः** । नकेवलमेवं किंतु इन्द्रस्येति । तेजोवृत्तं तत्तदीयां प्रागल्भ्येन चेष्टाम् ॥ ३०३ ॥

( ५ ) **नन्दनः** । तेजः प्रभावस्तदर्थं वृत्तं तेजोवृत्तम् ॥ ३०३ ॥

**वार्षिकांश्चतुरोमासान्यथेन्द्रोऽभिप्रवर्षति ॥ तथाभिवर्षेत्स्वंराष्ट्रंकामैरिन्द्रव्रतंचरन् ॥ ३०४ ॥**

( १ ) **मेधातिथिः** । नात्र प्रकरणे मासनियमोऽभिप्रेतः केवलंचतुर्षु मासेषु सन्ततवर्षी पर्जन्योभवति अतःसन्ततंस-

---

( ३०३ ) तेजोवृत्तंनृपश्चरेत्=तेषांवृत्तंनृपोहरेत् ( च )

र्वकालंस्वराष्ट्रंकामैः पूरयेदित्युक्तंभवति तथा कर्तव्यंयथा स्वराष्ट्रियाअनुरक्ताभवन्ति ॥ ३०४ ॥

( २ ) **सर्वज्ञनारायणः** । कामैरपेक्षितदानैः ॥ ३०४ ॥

( ३ ) **कुल्लूकः** । कथमिन्द्रादिचरितमनुतिष्ठेदित्याह वार्षिकेति । ऋतुसंवत्सरपक्षाश्रयणेनेदमुच्यते यथा श्रावणादींश्चतुरोमासानिन्द्रः सस्यादिसिद्धये वर्षन्त्येवमिन्द्रचरितमनुतिष्ठन्राजा स्वदेशायातसाधूनभिलषितार्थैः पूरयेत् ॥ ३०४ ॥

( ४ ) **राघवानन्दः** । तदेवाह वार्षिकानित्यष्टभिः । कामैर्दानमानाद्यैः ॥ ३०४ ॥

( ५ ) **नन्दनः** । कामैरपेक्षितभोगैः इंद्रव्रतंचरन्निन्द्रव्रतमेतदित्यर्थः ॥ ३०४ ॥

**अष्टौ मासान्यथादित्यस्तोयंहरति रश्मिभिः ॥ तथा हरेत्करंराष्ट्रान्नित्यमर्कव्रतंहि तत् ॥ ३०५ ॥**

( १ ) **मेधातिथिः** । [ स्तोकंस्तोकमपिरसमीषत्तापेनादत्तेयथादित्यस्तथाकरमादद्यादित्येषउपमार्थः ][1] ॥ ३०५ ॥

( २ ) **सर्वज्ञनारायणः** । तथाहरेत्करं क्रमेण ॥ ३०५ ॥

( ३ ) **कुल्लूकः** । यथा सूर्योमार्गशीर्षाद्यष्टमासान्रश्मिभिस्तोकंस्तोकंरसमीषत्तापेनादत्ते तथा राजा शास्त्रीयकरानपीडया सदा राष्ट्राद्गृह्णीयात् यस्मादेतदस्यार्कव्रतम् ॥ ३०५ ॥

( ४ ) **राघवानन्दः** । रश्मिस्थानीयैः करग्राहकचराद्यैः । हरेत् गृह्णीयात् ॥ ३०५ ॥

( ५ ) **नन्दनः** । अष्टौ मासाः कार्तिकादयः ॥ ३०५ ॥

**प्रविश्य सर्वभूतानि यथा चरति मारुतः ॥ तथाचारैः प्रवेष्टव्यंव्रतमेतद्धि मारुतम् ॥ ३०६ ॥**

( २ ) **सर्वज्ञनारायणः** । चारैश्चरद्वारा प्रवेष्टव्यं परराष्ट्रे ॥ ३०६ ॥

( ३ ) **कुल्लूकः** । यथा प्राणाख्योवायुः सर्वजन्तुष्वन्तः प्रविश्य विचरत्येवंचारद्वारेण स्वपरमण्डलजालेषु चिकीर्षितार्थज्ञानार्थमन्तः प्रवेष्टव्यम् यस्मादेतन्मारुतंचरितम् ॥ ३०६ ॥

( ४ ) **राघवानन्दः** । चारैः उक्तकापटिकादिपञ्चविधैः । प्रवेष्टव्यं भद्राभद्रं ज्ञातव्यम् ॥ ३०६ ॥

**यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ॥ तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रम् ॥ ३०७ ॥**

( १ ) **मेधातिथिः** । अपराधेन प्रियद्वेष्ययोर्निग्रहसमत्वेन वर्तितव्यम् ॥ ३०७ ॥

( २ ) **सर्वज्ञनारायणः** । नियन्तव्याः प्राप्तेकाले ॥ ३०७ ॥

( ३ ) **कुल्लूकः** । यद्यपि यमस्य शत्रुमित्रे नस्तस्तथापि तन्निन्दकार्चकयोः शत्रुमित्रयोर्यथा यमःशत्रुमित्रमरणकाले तुल्यवन्नियमयत्येवंराज्ञाऽपराधकालेरागद्वेषपरिहारेण प्रजाः प्रमापणीयाः यस्मादेतदस्य याम्यंव्रतम् ॥ ३०७ ॥

( ४ ) **राघवानन्दः** । यथा यमः प्रियद्वेष्यौ हित्वा प्रजाकृतानुरूपेण नियच्छति दण्डादि करोत्येवमसौ ॥ ३०७ ॥

( ५ ) **नन्दनः** । सर्वेप्रियद्वेष्याः ॥ ३०७ ॥

( ६ ) **रामचन्द्रः** । प्राप्ते काले मरणकाले । नियच्छति नियमयति ॥ ३०७ ॥

**वरुणेन यथा पाशैर्बद्धएवाभिदृश्यते ॥ तथा पापान्निगृह्णीयाद्व्रतमेतद्धिवारुणम् ॥ ३०८ ॥**

( १ ) **मेधातिथिः** । अवशङ्किताएव कार्यकारिणोनिग्रहीतव्यायथा न पलायन्ते ॥ ३०८ ॥

---

( १ ) आ आ

( २ ) **सर्वज्ञनारायणः** । बद्धएवदृश्यते नतु बन्धनप्राप्तिकाले ज्ञायते ॥ ३०८ ॥

( ३ ) **कुल्लूकः** । योवरुणस्य रज्जुभिर्बन्धयितुमिष्टः सयथा तेनाविशङ्कितः पाशैर्बद्धएव लक्ष्यते तथा पापकारिणोऽविशङ्कितानेव यावन्न पारयन्तेतावच्छासयेत् यस्मादितदस्य वारुणंव्रतम् ॥ ३०८ ॥

( ४ ) **राघवानन्दः** । यथा वारुणैः पाशैर्बद्धोनरकस्थः एवं साहसकादिर्निगडैर्बद्धोदृश्येतेति ॥ ३०८ ॥

( ५ ) **नन्दनः** । गृह्णीयान्निबध्नीयात् ॥ ३०८ ॥

( ६ ) **रामचन्द्रः** । यथा पापं पापकारणं । निगृह्णीत गृह्णीयात् ॥ ३०८ ॥

**परिपूर्णंयथा चन्द्रंदृष्ट्वा हृष्यन्ति मानवाः ॥ तथा प्रकृतयोयस्मिन्सचान्द्रव्रतिकोनृपः ॥ ३०९ ॥**

( १ ) **मेधातिथिः** । अक्रोधनेन प्रसाधनालङ्कारवता प्रहृष्टवदनेन प्रजादर्शनकाले भवितव्यं । निर्वाताआपन्नपरितापाभवन्तीत्यर्थः ॥ ३०९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतयोयस्मिन्परिपूर्णे हृष्यन्तीत्यनुषङ्गः ॥ ३०९ ॥

( ३ ) **कुल्लूकः** । यथा पूर्णेन्दुदर्शनेन मनुष्याहर्षमुत्पादयंत्येवममात्यादयोयस्मिन्दृष्टे तुष्टिमुपगच्छन्ति सचन्द्राचारचारी नरेन्द्रः ॥ ३०९ ॥

( ४ ) **राघवानन्दः** । यस्मिन्राजनि दृष्टे प्रकृतयोहृष्यन्ति सराजा चान्द्रव्रतिकः ॥ ३०९ ॥

( ५ ) **नन्दनः** । प्रकृतयइत्यमात्यादयः ॥ ३०९ ॥

( ६ ) **रामचन्द्रः** । परिपूर्णं यथा चन्द्रं दृष्ट्वा तथा समाङ्गेन पूर्णराजानं दृष्ट्वा प्रकृतयोहृष्यन्ति ॥ ३०९ ॥

**प्रतापयुक्तस्तेजस्वी नित्यंस्यात्पापकर्मसु ॥ दुष्टसामन्तहिंस्रश्च तदाग्नेयंव्रतंस्मृतम् ॥ ३१० ॥**

( १ ) **मेधातिथिः** । भृशमुद्वेजनीयोदुष्टइत्याग्नेयव्रतं । सामन्ता अमात्याएव बहुसाधनयुक्ताः ॥ ३१० ॥

( २ ) **सर्वज्ञनारायणः** । प्रतापयुक्तः तापकारी । तेजस्वी अधृष्यः । यथा दुष्टदिव्येऽग्निर्हिनस्ति तथा दुष्टानां सामन्तानां राज्यसमीपवर्तिनां हिंस्रः ॥ ३१० ॥

( ३ ) **कुल्लूकः** । पापकारिषु सदादण्डपातेन प्रचण्डोऽसहनःस्यात्तथा प्रतिकूलामात्यहिंसनशीलोभवेत् तदस्याग्निसंबन्धिव्रतंस्मृतम् ॥ ३१० ॥

( ४ ) **राघवानन्दः** । पापकर्मसु प्रतापयुक्तः स्यात् तेजस्वी च घृतकाञ्चनपरीक्षादौ दाहस्तद्वत् दुष्टसामन्तेषु हिंस्रोपि ॥ ३१० ॥

( ६ ) **रामचन्द्रः** । दुष्टसामन्तः संसक्तकारस्तुसामन्ताः ॥ ३१० ॥

**यथा सर्वाणि भूतानि धरा धारयते समम् ॥ तथा सर्वाणि भूतानि बिभ्रतः पार्थिवंव्रतम् ॥ ३११ ॥**

( १ ) **मेधातिथिः** । धरा पृथ्वी तद्वद्दीनानाथाश्च वंशाश्चभरणीयाः ॥ ३११ ॥

( २ ) **सर्वज्ञनारायणः** । समंधारयेत् नत्वेकंपरित्यज्यैकमेव । बिभ्रतः पुष्णतः ॥ ३११ ॥

( ३ ) **कुल्लूकः** । यथा पृथिवी सर्वाण्युच्चावचानि स्थावरजङ्गमान्युत्कृष्टापकृष्टानि समंकृत्वा धारयते तद्वद्द्विर्द्धनिकगुणवद्भूतानि तदितराणि च दीनानाथादिसर्वभूतानि रक्षणधनदानादिना सामान्येन धारयतः पृथिवीसंबन्धिव्रतंभवति ॥ ३११ ॥

( ४ ) राघवानन्दः । समं भूतानि प्रजाः बिभ्रतः पुष्णतो राज्ञः पार्थिवं व्रतं ज्ञेयम् ॥ ३११ ॥

( ४ ) रामचन्द्रः । यथासर्वाणिभूतानि प्रदानादिनाबिभ्रतः पुष्णतः ॥ ३११ ॥

**एतैरुपायैरन्यैश्च युक्तोनित्यमतन्द्रितः ॥ स्तेनान्राजा निगृह्णीयात्स्वराष्ट्रे परएव च ॥ ३१२ ॥**

( १ ) मेधातिथिः । उपसंहारः श्लोकः । एतैर्दैवव्रतैरन्यैर्लौकतोवगम्यैः ॥ ३१२ ॥

( २ ) सर्वज्ञनारायणः । एतैः प्राग्व्यवधानेनोक्तैः । स्वराष्ट्रे स्वराष्ट्रस्थितान् । परएव च परराष्ट्रादागतान् ॥ ३१२ ॥

( ३ ) कुल्लूकः । एतैरुक्तोपायैरन्यैश्चानुक्तैरपि स्वबुद्धिप्रयुक्तैराजाऽनलसः सन्स्वराष्ट्रे ये चौरावसन्ति ये च परराष्ट्रे-वसन्तस्तद्देशमागत्य मुष्णान्तितानुभयप्रकारान्निगृह्णीयात् ।सोऽग्निर्भवति वायुश्चेत्यादिना पूर्वसिद्धवदुक्तमग्न्यादिरूपत्वं इह तु तद्गुणत्यागेन स्फुटीकृतमित्यपुनरुक्तिः ॥ ३१२ ॥

( ४ ) राघवानन्दः । उपसंहरति एतैरिति । परे परराष्ट्रे जयादिनात्मसात्कृते तत्रत्यानपिस्तेनान्निगृह्णीयादित्यन्वयः ॥ ३१२ ॥

( ६ ) रामचन्द्रः । स्तेनान् चौरान् स्वराष्ट्रे स्थितान् परएव वा परराष्ट्रस्थितान् परराष्ट्रे स्थितान् गत्वा मुष्णतः ॥ ३१२ ॥

**परामप्यापदंप्राप्तोब्राह्मणान्न प्रकोपयेत् ॥ तेह्येनंकुपिताहन्युःसद्यः सबलवाहनम् ॥ ३१३ ॥**

( १ ) मेधातिथिः । यः क्षीणकोशोबलीयसा च राज्ञा दण्ड्यते तथापि न ब्राह्मणधनमप्यापदि ग्रहीतव्यं नचावज्ञानादिना प्रकोपनीयाः ॥ ३१३ ॥

( २ ) सर्वज्ञनारायणः । नप्रकोपयेदर्थग्रहणादिना ॥ ३१३ ॥

( ३ ) कुल्लूकः । कोशक्षयादिना प्रकृष्टामप्यापदंप्राप्तोराजा ब्राह्मणान्न प्रकोपयेद्यस्मात्ते रुष्टाः सबलवाहनमेनंसद्यएव शापाभिचाराभ्यां हन्युः ॥ ३१३ ॥

( ४ ) राघवानन्दः । एवंविधस्यापि नृपतेर्ब्राह्मणाधीनत्वं वक्तुं ब्राह्मणस्य निग्रहानुग्रहसामर्थ्यमाह परामित्यादिना ॥ ३१३ ॥

( ६ ) रामचन्द्रः । हि निश्चयेन । ते ब्राह्मणाः एवं राजानम् ॥ ३१३ ॥

**यैः कृतः सर्वभक्ष्योग्निरपेयश्चमहोदधिः ॥ क्षयी चाप्यायितः सोमः कोन नश्येत्प्रकोप्य तान्॥३१४॥**

( १ ) मेधातिथिः । प्रागुक्तार्थसिद्धये ब्राह्मणमाहात्म्यं इतिहासंलोकप्रसिद्धमनुवदति एष्वर्थेष्वाख्यानानि महाभारतादवगमयितव्यानि ॥ ३१४ ॥

( २ ) सर्वज्ञनारायणः । सर्वभक्ष्योऽग्निर्भृगुणा कृतः । वडवामुखोनामर्षिस्तेन मेरौ तपःकुर्वता समुद्रआहूतोनागतस्तेन क्रोधादात्मगात्रोष्मणा समुद्रस्तिमितजलः कृतः प्रस्वेदप्रस्यन्दसदृशश्चास्य लवणभावोजनितउक्तश्चापेयोभविष्यसीति भारते मोक्षधर्मेषूक्तम् । क्षयीकृत्वापश्चादाप्यायनेनोपायकथनेनाप्यायितश्चन्द्रोदक्षेण ॥ ३१४ ॥

( ३ ) कुल्लूकः । तथाहि यैरिति । यैर्ब्राह्मणैरभिशापेन सर्वभक्ष्योग्निः कृतः समुद्रश्चापेयजलश्चंद्रश्च क्षययुक्तः पश्चात्पूरितस्तान्कोपयित्वा कोन नश्येत् ॥ ३१४ ॥

( ४ ) राघवानन्दः । भृगोः पत्नीयमित्युक्तेग्निनाऽसुरस्तां जहार तत्कृत्वा भृगुणा शप्तोग्निः सर्वभक्षोभवेदिति ।

तथा मोक्षधर्मे नारायणीये कृष्णार्जुनसंवादे नारायणो लोकहितार्थं वडवामुखोनामार्षिः पुरा बभूव तस्य मेरौ तपस्तप्यतः समुद्रआहूतोनागतस्तेनामर्षितेनात्रगात्रोष्मणा समुद्रः स्तिमितजलःकृतः स्वेदस्यन्दनसदृशश्चास्य लवणभावोजनितउक्तश्चापेयोभविष्यस्येवं त्वत्तोयंवडवामुखेयोग्निस्तेन पीयमानं मधुरं भविष्यतीत्यपेयोमहोदधिः समुद्रः । क्षयी यक्ष्मणायुक्तः । आप्यायितः पूरितः ॥ ३१४ ॥

( ६ ) **रामचन्द्रः**। यैर्ब्राह्मणैः सोमः क्षयी आप्यायितः पूर्णतांप्रापितः तान् ब्राह्मणान् प्रकोप्य को न नश्येत्॥३१४॥

**लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः ॥ देवान्कुर्युरदेवांश्च कः क्षिण्वंस्तान्समृध्नुयात् ॥ ३१५ ॥**

( १ ) **मेधातिथिः**। क्षिणोति छादयति तदविशेषात्स्मृतीनां क्षिण्वन्हि संक्षेपोप्युत्तमानामेवेति युधिष्ठिरेण गाण्डिवे विक्षिप्ते व्यासमुनिना दर्शितम् ॥ ३१५ ॥

( २ ) **सर्वज्ञनारायणः** । लोकानन्यानिति विश्वामित्रचरितम् । लोकपालानिति इन्द्रांतरसृष्ट्याद्युद्यमेन गरुडंसृजतां वालखिल्यानां चरितम् । देवानदेवानिति वाय्वादीनांवृत्तम् । क्षिण्वन् दुःखजननादेव ॥ ३१५ ॥

( ३ ) **कुल्लूकः** । किंच लोकानामिति । येस्वर्गादिलोकान्परानन्यांश्च लोकपालान्सृजन्तीति संभाव्यते देवांश्च शापेन मानुषादीन्कुर्वन्ति तान्पीडयन्कः समृद्धिप्रामुयात् ॥ ३१५ ॥

( ४ ) **राघवानन्दः** । किंच लोकेति । सृजेयुः विश्वामित्रादयः एवं देवानित्यपि माण्डव्यशापेन यमोपि विदुरतां गतः । क्षिण्वन् पीडयन् । समृध्नुयात् समृद्धिंगच्छेत् ॥ ३१५ ॥

( ५ ) **नन्दनः** । एतत्पद्यत्रयं राज्ञां वर्ज्यतमत्वकथनं लोकानन्यान्सृजेयुर्यइति । क्षिण्वन्बाधमानः समृध्नुयात्सदीपयेत् ॥ ३१५ ॥

( ६ ) **रामचन्द्रः** । ये ब्राह्मणाः देवान् अदेवान् देवकार्यरहितान् कुर्युः । क्षिण्वन् पीडयन् ॥ ३१५ ॥

**यानुपाश्रित्यतिष्ठन्ति लोकादेवाश्च सर्वदा ॥ ब्रह्मचैव धनंयेषांकोहिंस्यात्तांजिजीविषुः ॥ ३१६ ॥**

( १ ) **मेधातिथिः** । लोकास्त्रयः पृथिव्यादयः देवाआहुतिद्वारेण ब्राह्मणोपाश्रिताः अध्यापनाधिक्येन कर्मबहुत्वेन ब्राह्मणोदेवानामाश्रयोन तथा क्षत्रियवैश्यौ ॥ ३१६ ॥

( २ ) **सर्वज्ञनारायणः** । यांस्समाश्रित्य यत्साध्यान्यज्ञानाश्रित्य । ब्रह्म वेदः ॥ ३१६ ॥

( ३ ) **कुल्लूकः** । अपिच यानित्यादि । यान्ब्राह्मणान्यजनयाजनकर्तृकानाश्रित्याग्नौ प्रास्ताहुतिरिति न्यायेन पृथिव्यादिलोकादेवाश्च स्थितिंलभन्ते वेदएवच येषामभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च तांजीवितुमिच्छन्कोहिंस्यात् ॥ ३१६ ॥

( ४ ) **राघवानन्दः** । किंच यानिति । याजनाध्यापनकुशलान्ब्राह्मणानाश्रित्यैवापूर्वद्वारालोकांश्चतुर्दशभुवनानि देवाइन्द्रादयश्च स्युरितिभावः ॥ ३१६ ॥

( ५ ) **नन्दनः** । ब्रह्म वेदः ॥ ३१६ ॥

( ६ ) **रामचन्द्रः** । यान् ब्राह्मणान् । येषां ब्राह्मणानाम् । ब्रह्म वेदः धनं ॥ ३१६ ॥

**अविद्वांश्चैव विद्वांश्च ब्राह्मणोदैवतंमहत् ॥ प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतंमहत् ॥ ३१७ ॥**

( १ ) **मेधातिथिः** । जातिमात्राश्रयाणामनवज्ञानं नविद्वत्तामपेक्षेत नादिक्रियास्विव यथाचैतन्नपादतः कुर्यादित्यग्नौ ॥ ३१७ ॥

( २ ) **सर्वज्ञनारायणः** । अविद्वानपि नतुविद्वानेव । प्रणीतोग्निः होमार्थमुद्धृतः ॥ ३१७ ॥

( ३ ) **कुल्लूकः** । एवंतर्हि विद्वांसंब्राह्मणंसेवेतेत्यतआह अविद्वानिति । यथाहितोऽनाहितोवाग्निर्महती देवतैवंमूर्खोविद्वांश्च प्रकृष्टा देवतेति ॥ ३१७ ॥

( ४ ) **राघवानन्दः** । अहोकिंवक्तव्यमित्याह अविद्वानिति । दैवतं देवतावृन्दम् । प्रणीतः आहितः तद्भिन्नोऽप्रणीतः ॥ ३१७ ॥

( ५ ) **नन्दनः** । वृत्तहीनोपि ब्राह्मणोन गर्हणीयइति श्लोकद्वयेनाह अविद्वांश्चैवविद्वांश्चेति ॥ ३१७ ॥

( ६ ) **रामचन्द्रः** । प्रणीतः होमार्थमुद्धृतः समृद्धःकृतः । अप्रणीतः लौकिकः अनाहितः ॥ ३१७ ॥

**श्मशानेष्वपि तेजस्वी पावकोनैवदुष्यति ॥ हूयमानश्च यज्ञेषु भूयएवाभिवर्धते ॥ ३१८ ॥**

( १ ) **मेधातिथिः** । गतार्थोयंदुराचारोप्यविज्ञेयइत्यर्थः ॥ ३१८ ॥

( २ ) **सर्वज्ञनारायणः** । श्मशानेष्वपिनदुष्यति नपापेयुज्यते यतःतज्जातीययज्ञेहूयमानोवर्धते नह्यग्निस्ततोन्यस्ततोन्यत्र एकत्वाद्देवतायाः ॥ ३१८ ॥

( ३ ) **कुल्लूकः** । यथाग्निर्महातेजाः श्मशानेशवंदहन्कार्येपि नैव दुष्टोभवति किन्तु पुनरपि यज्ञेषु हूयमानोऽभिवर्धते ॥ ३१८ ॥

( ४ ) **राघवानन्दः** । नैवदुष्यति क्रव्यादमग्निमित्यादिमन्त्रलिङ्गकादृष्टदोषेपि दृष्टदोषाभावान्नहि तदग्निर्दाहप्रकाशहीनः । हूयमानः होमेन संस्क्रियमाणोऽदृष्टदोषंपरित्यज्य फलजनकतया वर्धतइतिभावः ॥ ३१८ ॥

( ६ ) **रामचन्द्रः** । श्मशानेष्वपि वर्धते आहुतिभिः ॥ ३१८ ॥

**एवंयद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ॥ सर्वथा ब्राह्मणाः पूज्याः परमंदैवतंहितत् ॥ ३१९ ॥**

( १ ) **मेधातिथिः** । अनिष्टेषु प्रतिषिद्धेषु वर्तमानामृदूपक्रमैर्यथाशास्त्रंदण्ड्यानसहसाऽऽक्रम्य वर्णान्तरवत् ॥ ३१९ ॥

( २ ) **सर्वज्ञनारायणः** । अनिष्टेषु लोकविद्विष्टेषु ॥ ३१९ ॥

( ३ ) **कुल्लूकः** । एवंकुत्सितकर्मस्वपि सर्वेषु यद्यपि ब्राह्मणाः प्रवर्तन्ते तथापि सर्वप्रकारेण पूज्याः यस्मात्प्रकृष्टंतद्दैवतं स्तुत्यर्थत्वाच्चास्य न यथाश्रुतार्थविरोधः शङ्कनीयः ॥ ३१९ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् । अनिष्टेषु कुत्सितकर्मसु देववृन्दादपि परमं दृष्टशापानुग्रहहेतुत्वात् धनमानादिना ॥ ३१९ ॥

( ५ ) **नन्दनः** । अनिष्टेषु सतामसंमतेषु सर्वकर्मस्वितरजनकर्मसु ॥ ३१९ ॥

( ६ ) **रामचन्द्रः** । तद्द्विजाःपरमं दैवतम् ॥ ३१९ ॥

**क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रतिसर्वशः ॥ ब्रह्मैव सन्नियंतृस्यात्क्षत्रंहिब्रह्मसंभवम् ॥ ३२० ॥**

( १ ) **मेधातिथिः** । क्षत्रियस्य ब्राह्मणान्प्रतिबाधितुंप्रवृत्तस्य ब्राह्मणाएव संनियन्तारः ओमदावलिमावस्थाभङ्गेन

वर्तमानः क्षत्रियाजपहोमादिशापादिना ब्राह्मणैर्मार्गे व्यवस्थाप्यन्ते अत्र हेतुः क्षत्रंब्रह्मसंभवं ब्राह्मणजातेः सकाशात्क्षत्रियाणांसंभवः अत्रार्थवादएवायं ननु योयस्योत्पत्तिहेतुर्नासौ तस्य नाशकः ॥ ३२० ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणान्प्रतिप्रवृद्धस्यात्मनाभिभवितुंविप्रमिच्छतः ॥ ३२० ॥

( ३ ) **कुल्लूकः** । क्षत्रियस्य ब्राह्मणान्प्रति सर्वथा पीडानुवृत्तस्य ब्राह्मणाएव शापाभिचारादिना सम्यङ्नियन्तारः यस्मात्क्षत्रियोब्राह्मणात्संभूतः ब्राह्मणबाहुप्रसूतत्वात् ॥ ३२० ॥

( ४ ) **राघवानन्दः** । ब्राह्मणान्प्रति अतिवृद्धस्य क्षत्रियस्यापि ब्रह्मैव नियन्तृ इत्यन्वयः । तत्र हेतुः ब्रह्म ब्राह्मणत्वजात्यवच्छिन्नोजीवः ततः संभवं सैषा क्षत्रस्य योनिर्यद्ब्रह्मेतिश्रुतेः । तदुत्तरभावित्वाद्वा क्षत्रियस्य ॥ ३२० ॥

( ५ ) **नन्दनः** । इतरैश्च ब्राह्मणोनातिक्रमणीयइत्याह क्षत्रस्येति अतिप्रवृत्तस्य लङ्घितशास्त्रमर्यादस्य सन्नियन्तृस्यान्नियन्तुं शक्नुयात् कुतः क्षत्रंहि ब्रह्मसंभवम् ॥ ३२० ॥

( ६ ) **रामचन्द्रः** । ब्रह्मैव ब्राह्मणः संनियन्तृ स्यात् क्षत्रस्य संनियन्ता स्यात् । क्षत्रं ब्रह्मसंभवं ब्राह्मणात् संभवोयस्यतं ब्रह्मसंभवम् ॥ ३२० ॥

**अद्भ्योग्निर्ब्रह्मतः क्षत्रमश्मनोलोहमुत्थितम् ॥ तेषांसर्वत्रगन्तेजः स्वासु योनिषु शाम्यति ॥ ३२१॥**

( १ ) **मेधातिथिः** । केनैवं अद्भ्यओषधिवनस्पतिभ्यएव जायतइत्येवमग्निरद्भ्यएवउत्पन्नस्तस्य सर्वगंतेजः सर्वदाह्यंदहति तेजसाऽभिभवति अपः प्राप्य तदस्य तेजः शाम्यति अश्मनोलोहंखड्गादि तेन सर्वंविदार्यते अश्मसंपातात्स्फुटति एवंक्षत्रियाः सर्वजिगीषवोविजयन्ते ब्राह्मणेषु चेदौद्धत्येन वर्तन्ते तदा विनश्यन्ति ॥ ३२१ ॥

( २ ) **सर्वज्ञनारायणः** । अद्भ्योग्निरप्पर्यन्तत्वात् । ब्रह्मतःक्षत्रं क्षत्रक्षयानन्तरं ब्राह्मणैःसह संभूय क्षत्रियाभिःपुत्राणांजननात् । अश्मनआकरस्थपाषाणकणेभ्यः । शाम्यति भाःप्राप्य संघर्षणे नश्यति ॥ ३२१ ॥

( ३ ) **कुल्लूकः** । तथाच अद्भ्यइति । जलब्राह्मणपाषाणेभ्योऽग्निक्षत्रियशस्त्राणि जातानि तेषांसंबन्धितेजः सर्वत्र दहनाभिभवच्छेदनार्थंकंकार्यंकरोति स्वकारणेषु जलब्राह्मणपाषाणाख्येषु दहनाभिभवच्छेदनात्मकंकार्यंन करोति ॥३२१॥

( ४ ) **राघवानन्दः** । अतएवाह अद्भ्यइति । अयमर्थः । अद्भ्यर्थमिन्धनं हि मथ्यमानं रसक्षयेऽग्निमभिव्यनक्ति ॥ अथार्णवस्य क्षुब्धस्य तस्मिन्नंभसिमंथिते । कृष्णवर्त्मा समभवत् विभुर्वैश्वानरोऽविमान ॥ इत्यब्जोग्निः पौष्करेश्रुतः । विद्युद्रूपाग्नेः प्रत्यक्षजलजत्वम् । पाषाणोलोहबीजगर्भोध्मायमानोलोहंव्यनक्ति तत्रासऽत्वे न ततः स्यादतोऽभिव्यक्त्यपेक्षयाश्मजत्वम् । क्षत्रियेत्वानन्तर्यापेक्षया ब्राह्मणोस्य मुखमासीद्बाहूराजन्यः कृतइति श्रुतेश्चततःकिंतत्राह एषामिति । सर्वत्रगं सर्वद्रव्येषु दाहच्छेददण्डादिकर्तृत्वेन वर्तमानं तेजोग्नेर्दग्धृत्वं लोहस्य तैक्ष्ण्यं राज्ञोदण्डनंच स्वासु योनिषु जलहीरकविप्रेषुन विकरोति किंतु शाम्यति ब्राह्मणस्त्वक्षतोव्रजेदित्युक्तेः ॥ ३२१ ॥

( ५ ) **ननन्दः** । एतदेवोपपादयति अद्भ्योग्निर्ब्रह्मतः क्षत्रमिति । अद्भ्योऽग्निरितिच पौराणिकाः ब्रह्मतोब्राह्मणतः ब्राह्मणाहि दक्षमरीच्यादयः स्रष्टारः तेषांमन्वादीनांसर्वत्र गन्तुं शक्तंतेजः शक्तिः स्वासु योनिषु शाम्यति क्षरते एतदुक्तंभवति अग्निः सर्वं दग्धुर्मीष्टे नापः क्षत्रियः सन्नियन्तुमीष्टे न ब्राह्मणं लोहं लोहंसर्वंच्छेत्तुमीष्टे अग्निलोहयोरुपन्यासोदृष्टान्तार्थः ॥ ३२१ ॥

( ६ ) **रामचन्द्रः** । अद्भ्यः जलेभ्यः अग्निर्भवति । ब्रह्मतः क्षत्रं जातम् अश्मनःलोहम् । तेषां ब्रह्मादीनां ॥ ३२१ ॥

**नाब्रह्मक्षत्रमृध्नोति नाक्षत्रंब्रह्म वर्धते ॥ ब्रह्म क्षत्रंच संपृक्तमिह चामुत्र वर्धते ॥ ३२२ ॥**

( १ ) **मेधातिथिः** । यत्क्षत्रियब्राह्मणरहितं राज्यंमन्त्रिपुरोहितादयोयत्र न ब्राह्मणास्तत्र कुतः समृद्धिः एवंब्राह्मणा अपि राजोपाश्रिताः कुतः संपत्तिंलभन्ते उभौ युक्तौ जगज्जयतः ब्रह्मक्षत्रशब्दौ ब्राह्मणक्षत्रियजातिवचनौ ॥ ३२२ ॥

( २ ) **सर्वज्ञनारायणः** । संपृक्ते परस्पराविरुद्धे वर्धेते अवश्ययोद्धव्यरणोपस्थितौ ॥ ३२२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणरहितक्षत्रियोवृद्धिंन याति शान्तिकपौष्टिकव्यवहारे क्षणादिधर्मविरहात् । एवंक्षत्रियरहितोपि ब्राह्मणोन वर्तते रक्षांविना यागादिकर्मानिष्पत्तेः किंतुब्राह्मणः क्षत्रियश्च परस्परसंबद्धएवेह लोके परलोके च धर्मार्थकाममोक्षावास्या वृद्धिमेति । दण्डप्रकरणे चेयंब्राह्मणस्तुतिः ब्राह्मणानामपराधिनामपि लघुदण्डप्रयोगनियमार्था ॥ ३२२ ॥

( ४ ) **राघवानन्दः** । इतश्च ब्राह्मणः श्रेष्ठइत्याह नेति । याजनाद्याशंसाकर्तृतयाऽविद्यमानं ब्राह्मणजात्यवच्छिन्नं यस्य क्षत्रियस्य तत् न ऋध्नोति वृद्धिंनगच्छति । नाक्षत्रं नविद्यते क्षत्रं याज्यपालकादितया यस्य तत् । संपृक्तं परस्पराकांक्षया संयुक्तम् ॥ ३२२ ॥

( ६ ) **रामचन्द्रः** । अब्रह्म क्षत्रं न ऋध्नोति न वृद्धियाति । अक्षत्रं ब्रह्म नवर्धते । तस्माद्ब्रह्मक्षत्रं संप्रयुक्तं इहलोके अमुत्र परलोके ॥ ३२२ ॥

**दत्वा धनन्तु विप्रेभ्यः सर्वदण्डसमुत्थितम् ॥ पुत्रेराज्यंसमासृज्य कुर्वीत प्रायणंरणे ॥ ३२३ ॥**

( १ ) **मेधातिथिः** । यदा तु रजसाभिभूयेत कृतकृत्यः स्यात्तदा वसुनि धने सति सर्वदण्डसमुद्भूतंब्राह्मणेभ्योदद्यात् । महापातकिधनस्य वरुणाय प्रतिपादनमुक्तंनराज्ञा तद्ग्रहीतव्यं अन्यत्तुदण्डधनंराज्ञा दृष्टादृष्टकार्यार्थवादाद्बहुधनमस्ति प्रयाणकालश्च तदा सर्वस्यायंविनियोगः । अन्येतुदण्डग्रहणंकरशुल्कादीनामपि प्रदर्शनार्थंव्याचक्षते तथासति सर्वस्वंदद्यादित्युक्तंभवति वाहनायुधभूमिपुरुषवर्जं सर्वंदातव्यं एवंतु व्याख्याने पुत्रे राज्यंसमासाद्येति न घटते नहितस्यकोशस्यराजकरणसंभवः कुर्वीत प्रायणंरणे आत्मत्यागेसंग्रामंकुर्यात् यदि कथंचिदन्त्यावस्थायां रणंनोपलभेत तदाग्न्युदकादिना शरीरंजह्यात् फलातिशयसंपत्तिस्तु रणेसमासंजनमारोपणम् ॥ ३२३ ॥

( २ ) **सर्वज्ञनारायणः** । रणेप्रायणमन्यथा तुदैवकृतैरेव रोगादिभिरुभयथापि दत्वाधनमित्यादि तुल्यम् । प्रायणमात्रधर्मत्वात् ॥ ३२३ ॥

( ३ ) **कुल्लूकः** । यदातु विशिष्टै*दर्शनेनाचिकित्स्यव्याधिना वाऽऽसन्नमृत्युर्भवति तदा दत्वेति। महापातकिधनव्यतिरिक्तविनियुक्तावशिष्टसर्वदण्डधनंब्राह्मणेभ्योदत्वा पुत्रे राज्यंसमर्प्यासन्नमृत्युः फलातिशयप्राप्तये संग्रामे प्राणत्यागंकुर्यात् संग्रामासंभवेत्वनशनादिनापि ॥ ३२३ ॥

( ४ ) **राघवानन्दः** । क्षत्रियस्य वीतरागस्य नृपतेः कार्यान्तरं विधत्ते दत्वेति । प्रायणं प्राणत्यागं रणे कुर्यादिति । वने इतिक्वचित्पाठस्तदा वनवासंकुर्यादिति ॥ ३२३ ॥

( ५ ) **नन्दनः** । अथ चरमे वयसि राज्ञः कर्तव्यमाह दत्वाधनन्तु विप्रेभ्यइति । प्रायणं मरणम् ॥ ३२३ ॥

( ६ ) **रामचन्द्रः** । धनं महापातकादिव्यतिरिक्तं सर्वदण्डसमन्वितं व्युत्थितं प्रायणं प्रयाणम् ॥ ३२३ ॥

**एवंचरन्सदा युक्तोराजधर्मेषु पार्थिवः ॥ हितेषु चैवलोकस्य सर्वान्भृत्यान्नियोजयेत् ॥ ३२४ ॥**

( १ ) **मेधातिथिः** । एवंचरन्विहरन्राजधर्मेषु शास्त्रोपदिष्टेषु तदायुक्तस्तत्परः लोकेभ्यस्तत्परः लोकेभ्यः स्वराष्ट्रीयेभ्योहितेषु सर्वान्भृत्यान्नियोजयेत् ३२४ ॥

---

* तुविशिष्ट=त्वनिष्ट ( अ )

( २ ) **सर्वज्ञनारायणः** । राजधर्मेषु व्यवहारदर्शनादिषु ॥ ३२४ ॥

( ३ ) **कुल्लूकः** । एवमध्यायत्रयोक्तराजधर्मेषु व्यवहार्यमाणोराजा सर्वदा यत्रतान्प्रजाहितेषु सर्वान्भृत्यान्विनियोजयेत् ॥ ३२४ ॥

( ४ ) **राघवानन्दः** । तत्रासमर्थस्य वृत्यन्तरंप्रदर्शयन्वैश्यशूद्रयोः कर्माह एवमितिद्वाभ्याम् । भृत्यानमात्यान् । पार्थिवइति जात्यन्तरंचेत्पृथिवीपालकः। उक्तधर्मानुष्ठानमावश्यकं तस्यापि ॥ ३२४ ॥

( ५ ) **नन्दनः** । युक्तोवहितः भृत्यानधिकारिणः ॥ ३२४ ॥

**एषोऽखिलः कर्मविधिरुक्तोराज्ञः सनातनः ॥ इमंकर्मविधिंविद्यात्क्रमशोवैश्यशूद्रयोः ॥ ३२५ ॥**

( १ ) **मेधातिथिः** । आद्येनानेन शूद्रेण कण्टकशुद्धिपर्यन्तोराजधर्मउपसंह्रियते द्वितीयेन वैश्यशूद्रयोरुपचारेचेत्युक्तमनुस्मारयन्ति ॥ ३२५ ॥

( २ ) **सर्वज्ञनारायणः** । राजधर्मानुपसंहृत्य वैश्यशूद्रयोर्धर्मावसाधारणौ क्रमप्राप्तावव तारयति एषइति । इमं वक्ष्यमाणम् ॥ ३२५ ॥

( ३ ) **कुल्लूकः** । एतद्राज्ञः कर्मानुष्ठानंपारंपर्यागततया नित्यंसमग्रमुक्तं इदानींवैश्यशूद्रयोः क्रमेण वक्ष्यमाणमिदंकर्मानुष्ठानंजानीयात् ॥ ३२५ ॥

( ५ ) **नन्दनः** । इमंवक्ष्यमाणम् ॥ ३२५ ॥

( ६ ) **रामचन्द्रः** । इमं वक्ष्यमाणलक्षणम् ॥ ३२५ ॥

**वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ॥ वार्तायां नित्ययुक्तः स्यात्पशूनांचैव रक्षणे ॥३२६ ॥**

( १ ) **मेधातिथिः** । कृतसंस्कारउपनीतः कृतविवाहश्च वार्तायां वक्ष्यमाणकालसमुदायोवार्ता तत्र नियुक्तः स्यात् यथा बार्हस्पत्येवार्तासमुपदिष्टा ॥ ३२६ ॥

( २ ) **सर्वज्ञनारायणः** । वार्तायां कृषौ ॥ ३२६ ॥

( ३ ) **कुल्लूकः** । वैश्यः कृतोपनयनपर्यन्तसंस्कारोविवाहादिकंकृत्वा जीविकायां वक्ष्यमाणायां कृष्यादिकार्यार्थंपशुपालने च सदा समायुक्तः स्यात् पशुरक्षणस्य वार्तात्वेपि प्राधान्यख्यापनार्थंपृथग्विधानं तथाचोत्तरश्लोकाभ्यां प्राधान्यंदर्शयति ॥ ३२६ ॥

( ४ ) **राघवानन्दः** । तत्रादौ वैश्यवृत्तीराह वैश्यस्त्विति ॥ ३२६ ॥

( ५ ) **नन्दनः** । संस्काराजातकर्मादयोगोदानव्रतान्ताः वार्तायां कृषिगोरक्षवाणिज्यवार्धुष्येषु ॥ ३२६ ॥

( ६ ) **रामचन्द्रः** । वैश्यस्तु वार्तायां कृष्यादौ नित्ययुक्तःस्यात् ॥ ३२६ ॥

**प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ॥ ब्राह्मणाय च राज्ञे च सर्वाः परिददेप्रजाः॥ ३२७॥**

( १ ) **मेधातिथिः** । पशुरक्षणंवैश्यस्य नकेवलंजीविका यैर्यावद्धर्माय प्रीतिंदर्शयत्यर्थवादेन । कथंपुनर्दृष्टे सत्यदृष्टमुक्तंप्रजापालनर्वान्नियमात्परिपालनीयंत्वयेति नियोगपरिदानं क्षत्रियस्य प्रजापालनेऽधिकारोनिरूपितः ब्राह्मणस्य प्रायश्चित्तोपदेशादिना जपहोमादिनाच आदित्याज्जायतेवृष्टिरिति सर्वाधिकारः दृष्टान्तार्थंचैतत् तथैव धर्मएववैश्यस्य पशुरक्षणादिः ॥ ३२७ ॥

( २ ) **सर्वज्ञनारायणः** । परिददौ रक्षणाय ददौ । ब्राह्मणाय पारलौकिकसिद्ध्यर्थम् ॥ ३२७ ॥

( ३ ) **कुल्लूकः** । यस्माद्ब्रह्मापशून्सृष्ट्वा रक्षणार्थंवैश्याय दत्तवानतोवैश्येन रक्षणीयाःपशवइति पूर्वानुवादः प्रजाश्च सर्वाः सृष्ट्वा ब्राह्मणाय राज्ञे च रक्षणार्थंदत्तवानिति प्रसङ्गादिनदुक्तम् ॥ ३२७ ॥

( ४ ) **राघवानन्दः** । पशुरक्षणंहेतुः प्रजापतिरिति । ब्राह्मणायेत्यादिनियतरक्षणे दृष्टान्तार्थं । ब्राह्मणक्षत्रिययोर्धर्मस्योक्तत्वात् ॥ ३२७ ॥

( ५ ) **नन्दनः** । वैश्येनावश्यंरक्षणीयाः पशवइत्याह प्रजापतिर्हिवैश्यायेति । परिदानं निक्षेपः उत्तरार्धोपन्यासोदृष्टान्तार्थः ॥ ३२७ ॥

( ६ ) **रामचन्द्रः** । वैश्यान्पशून् रक्षणाय ददे दत्तवान् । ब्राह्मणायउपदेशार्थम् । राज्ञे क्षत्रियायसर्वाः प्रजाः रक्षार्थे ददे ॥ ३२७ ॥

**नच वैश्यस्य कामः स्यान्नरक्षेयंपशूनिति ॥ वैश्ये चेच्छति नान्येन रक्षितव्याः कथंच न॥३२८॥**

( १ ) **मेधातिथिः** । ननु कोजीवितार्थंकामः यदुक्तं यद्यप्यदृष्टंतदा दृष्टाश्रितमेव भोजने प्राङ्मुखतायामेव तत्र कथंचिदिदमुच्यते नचवैश्यस्य कामंस्यादिति नह्यबुभुक्ष्यमाणः प्रत्यवैति सत्यमेवंकृष्टाविकृष्टंपाशुपाल्यमिति ज्ञापयितुं । कश्चिन्मन्यते सर्वाण्येतानि नियमार्थानि तुल्यफलानीति तत्र तुल्यफलत्वे च पक्षेऽकामोपिस्यात्कर्मान्तरंकामयमानस्य- यदात्वन्येभ्योगुणवत्तरोयदा तदातु तेनाजीवेन्नकर्मान्तरे प्रकृतिः अतएव तदालंबनोजीवेत् ॥ ३२८ ॥

( २ ) **सर्वज्ञनारायणः** । कामःस्यादीदृगुद्यमःस्यात् । वैश्येचेच्छत्युद्यमंकुर्वति नान्येनवर्णेन रक्ष्यास्तदभावे न शूद्रेण रक्ष्याइत्यर्थः ॥ ३२८ ॥

( ३ ) **कुल्लूकः** । पशुरक्षणंन करोमीति वैश्येनेच्छा न कार्या अतः कृष्यादिवृत्तिसंभवेपि वैश्येन पशुरक्षणमवश्यं करणीयं । वैश्ये च पशुरक्षणंकुर्वत्यन्यः पशुरक्षणंन कारयितव्यः ॥ ३२८ ॥

( ४ ) **राघवानन्दः** । वैश्यस्यावश्यकत्वमनुवदन् अनापद्धर्ममाह नचेति ॥ ३२८ ॥

**मणिमुक्ताप्रवालानांलोहानांतांतवस्य च ॥ गंन्धानांच रसानांच विद्यादर्घबलाबलम् ॥३२९॥**

( १ ) **मेधातिथिः** । लोहशब्देन ताम्रायस्कांस्यान्याह अर्घबलाबलंन्यूनताऽर्घस्य न्यूनताधिक्ये देशकालापेक्षे कस्मिन्देशइदंमहार्घंकस्मिन्वाऽपचितार्घमेवंकालेऽपि ॥ ३२९ ॥

( २ ) **सर्वज्ञनारायणः** । मणिरश्ममणिर्माणिक्यादिः । लोहानां हिरण्यादीनाम् । तान्त..्य कौशेयादेः । अर्घबलावलं मूल्योत्कर्षापकर्षौ ॥ ३२९ ॥

( ३ ) **कुल्लूकः** । किंचमर्णाति । मणिमुक्ताविद्रुमलोहवस्त्राणां गन्धानांकर्पूरादीनां रसानांलवणादीनां उत्तममध्यमानांदेशकालापेक्षयामूल्योत्कर्षापकर्षंवैश्यः जानीयात् ॥ ३२९ ॥

( ४ ) **राघवानन्दः** । नकेवलं पशुसंरक्षणमेव वैश्यस्यान्यदपीत्याह मर्णीति । मणिमुक्तादीनाम् लोहानां सुवर्णरजतादीनाम् । तान्तवस्य वस्त्रादेः । गन्धानां चन्दनकुङ्कुमादीनाम् । रसानां तैलादीनाम् । अर्घबलाबलं देशकालाद्यपेक्ष्य न्यूनाधिकमूल्यम् ॥ ३२९ ॥

( ६ ) **रामचन्द्रः** । तान्तववस्त्रस्य ॥ ३२९ ॥

**बीजानामुप्तिविच्चस्यात्क्षेत्रदोषगुणस्य च ॥ मानयोगंच जानीयात्तुलायोगांश्च सर्वशः ॥ ३३०॥**

( १ ) **मेधातिथिः**। इदंबीजंविस्तृतमुच्यतइदंसंहतमुच्यतइत्येनामुप्तिंविंद्यात् इदंबीजमस्मिन्क्षेत्रे प्ररोहतीदंन इदंच बलवत्फलति एवमादयोगुणदोषाः द्रोणशूर्पाढकादयोमानविशेषास्तेषांयोगाये हस्तेन मीयन्ते ॥ ३३० ॥

( २ ) **सर्वज्ञनारायणः**। उप्तिविच्चस्यात् वापनकलादिवित्स्यात्। क्षेत्रदोषगुणस्य वेदिता। मानयोगान् द्रोणादीन्। तुलायोगान् पलादीनि। योगपदेन यत्रयादृशमासनंबन्धस्तद्विद्यादित्युक्तम् ॥ ३३० ॥

( ३ ) **कुल्लूकः**। बीजानांसर्वेषांवपनविधिज्ञः स्यात् इदंबीजमस्मिन्काले तत्र संहतंचोप्तंप्ररोहत्यस्मिन्नेत्येवं तथेदमूषरमिदंसस्यप्रदमित्यादिक्षेत्रदोषगुणज्ञश्च स्यात्। मानोपायांश्च प्रस्थद्रोणादीन् तुलोपायांश्च सर्वान् तत्त्वतोजानीयात् यथान्योन वञ्चयति ॥ ३३० ॥

( ४ ) **राघवानन्दः** । अन्यदपि तत्कृत्यमाह बीजानामितिचतुर्भिः। उप्तिविद्वपनकालवित् इदंबीजमिदानींप्ररोहति नेदमिदानीमिति ऊषरानूषरादिक्षेत्रदोषगुणयोर्ज्ञातेतिशेषः । मानयोगांश्च प्रस्थद्रोणाढकादीनि मानानि यैः परिमाणप्रकारैर्युज्यन्ते संभवंति तान्मानोपायान्। तदुक्तंसप्तमेऽष्टमुष्टिरित्यादि। तुलायोगान् त्रसरेण्वादिपलान्तान् ॥ ३३० ॥

( ५ ) **नन्दनः**। क्षेत्रबीजगुणस्यवेत्ता स्यादिति विपरिणामः ॥ ३३० ॥

( ६ ) **रामचन्द्रः**। बीजानां उप्तिवित्स्यात् वपनवित् मानयोगांश्च जानीयात् प्रस्थादींश्च प्रस्थाढकादयः ॥ ३३० ॥

**सारासारंच भाण्डानांदेशानांच गुणागुणान् ॥ लाभालाभंच पण्यानांपशूनांपरिवर्धनम् ॥३३१॥**

( १ ) **मेधातिथिः**। भाण्डशब्देन विक्रेयंवस्त्राजिनान्युच्यन्ते तत्र सारासारता यत्कालान्तरे स्थितंच न नश्यति तत्सारंतदितरदसारं अस्मिन्देशे व्रीहयोभूयांसे ऽस्मिन्काले यवाअस्मिन्नोदृशआचारईदृशोजानपदानांस्वभावएवमादयोदेशे गुणागुणाः अनेन च यवसेनेदृशेन चलवणेनास्मिन्काले प्रयुक्तेन पशवोवर्धन्तइति ॥ ३३१ ॥

( २ ) **सर्वज्ञनारायणः**। भाण्डानां विक्रयद्रव्याणाम् । देशानां देशान्तसणाम्। गुणागुणं लाभालाभहेतुत्वम्। लाभालाभं कालान्तरेण ॥ ३३१ ॥

( ३ ) **कुल्लूकः**। इदमुत्कृष्टमेतदपकृष्टमित्येकजातीनामपि द्रव्याणांविशेषंजानीयात्तथा देशानांप्राक्पश्चिमादीनांक्किमल्पमूल्यंकिंबहुमूल्यंचेत्यादिदेशगुणदोषौबुध्येत विक्रेयद्रव्याणांचेयता कालेनेयानपचयोपचयोवेति विद्यात्तथाऽस्मिन्देशे कालेऽनेनच तृणोदकयवादिना पशवोवर्धन्तेऽनेन क्षीयन्तइत्येतदपि जानीयात् ॥ ३३१ ॥

( ४ ) **राघवानन्दः** । सारेतिपक्कनिबिडादितारतम्येन स्थायित्वास्थायित्वे भाण्डानां मृन्मयादीनां एकजातीयानामपि। गुणागुणं लवणादिरसोत्पत्तिनिम्नोन्नतादिसत्त्वेन गौडादिदेशानाम् । पशूनां विवर्धनं वटकण्टकमाषतृणादिभक्षणीयद्रव्यम् ॥ ३३१ ॥

( ५ ) **नन्दनः**। भाण्डानांद्रव्याणां देशानां क्षेत्रादीनाम् ॥ ३३१ ॥

**भृत्यानांच भृतिंविद्याद्भाषाश्च विविधान्नृणाम् ॥ द्रव्याणांस्थानयोगांश्च क्रयविक्रयमेव च॥३३२॥**

( १ ) **मेधातिथिः**। भृत्यादासाः प्रेष्यादयः गोपालाजपालमहामात्राद्यास्तेषांच कियतीवृत्तिरिति विद्यात् माल्व-

कमगधद्रविडादिदेशभाषाः एतद्देशाअस्मिन्नर्थईदृशमुच्चारयन्ति इदंद्रव्यमेवंस्थाप्यतएवंसंवर्ततएवमान्नियतेऽनेन योज्यत इयताविक्रीयते ॥ ३३२ ॥

( २ ) **सर्वज्ञनारायणः** । भृत्यानांभृतिमेतयाभृत्यैतत्कर्ममासंकार्यमिति । भाषा दाक्षिणात्यादिभाषाभेदान् । द्रव्याणांस्थानयोगानत्रैतद्रुत्पद्यतइति । क्रयविक्रयमत्रास्यक्रयविक्रयाविति ॥ ३३२ ॥

( ३ ) **कुल्लूकः** । गोपालमहीषपालादीनामिदमस्य देयमिति देशकालकर्मानुरूपंवेतनंजानीयात् गौडदाक्षिणात्यादीनांच मनुष्याणांनानाप्रकाराभाषाविक्रयाद्यर्थंविद्यात्तथेदंद्रव्यमेवंस्थाप्यतेऽनेन च संयुक्तंचिरंतिष्ठतीति बुध्येत तथेदंद्रव्यमस्मिन्देशे काले चेयता विक्रीयतइत्येतदपि जानीयात् ॥ ३३२ ॥

( ४ ) **राघवानन्दः** । भृत्यानां कर्मकुर्वताम् । भाषाश्च क्रयविक्रयार्थं लडपाभ्यंगतैलादिरूपाः । नृणामुत्कलादिस्थानाम् । नृणामितिविशेषणाद्वेदस्मृत्यादावन्येषामप्यधिकारइति । स्थानयोगांश्च पूगलवङ्गादीनां स्थापनोचितार्द्रहुक्षादीनि स्थानानि सुवर्णाद्याकरान्वा ॥ ३३२ ॥

( ५ ) **नन्दनः** । स्थानयोगान्निधानोपायान् ॥ ३३२ ॥

( ६ ) **रामचन्द्रः** । भृत्यानां भृतिंवेतनं विद्यात् । द्रव्याणां स्थानयोगांश्च अत्रेदंवस्तूत्पद्यतइति ३३२ ॥

श्रीरामचन्द्र भट्टविरचितायां मनुभावार्थदीपिकायां नवमोध्यायः समाप्तः ॥ ९ ॥

**धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ॥ दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥ ३३३ ॥**

( १ ) **मेधातिथिः** । बहु अन्नंदातव्यमित्यर्थः अन्यथा राज्ञादण्ड्यःएवमर्थमत्रोच्यते महाधनस्यचैतत् ॥ ३३३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नमेवदद्यात् दद्यादेवान्नं कृषीवलतया बह्वन्नत्वात् ॥ ३३३ ॥

( ३ ) **कुल्लूकः** । धर्मेण विक्रयादिनोक्तप्रकारेण धनवृद्धौ प्रकृष्टंयत्नंकुर्यात् हिरण्यादिदानमपेक्ष्यान्नमेव प्राणिभ्योविशेषेण दद्यात् ॥ ३३३ ॥

( ४ ) **राघवानन्दः** । किंच । धर्मेण अशीतिभागोवृद्धिःस्यादित्यनेन धनवृद्धौयत्नंकुर्यात् । सर्वभूतानां क्षुधार्तानां कृष्यादिसंचितमन्नंदद्यात् । न तेषु क्लिश्यमानेषु अधिकलाभार्थं [ अधमर्णस्यसुवर्णादिकं ][1] स्थापयेदित्यर्थः ॥ ३३३ ॥

( ५ ) **नन्दनः** । सर्वभूतानांशूद्रादीनां दद्यादेवेत्यन्वयः ॥ ३३३ ॥

**विप्राणांवेदविदुषांगृहस्थानांयशस्विनाम् ॥ शुश्रूषैव तु शूद्रस्य धर्मोनैश्रेयसः परः ॥ ३३४ ॥**

( १ ) **मेधातिथिः** । यशस्विनामिति साध्वाचारोलक्ष्यते शुश्रूषापरिचर्यैव तस्य धर्मः परंश्रेयआवहति ॥ ३३४ ॥

( २ ) **सर्वज्ञनारायणः** । शूद्रधर्मानाह विप्राणामिति । गृहस्थानामित्यन्यैर्भरणासंभवादित्युक्तम् । नैःश्रेयसोनिःश्रेयसहेतुः ॥ ३३४ ॥

( ३ ) **कुल्लूकः** । शूद्रस्य पुनर्वेदविदांगृहस्थानांस्वधर्मानुष्ठानेन यशोयुक्तानांब्राह्मणानांयापरिचर्या सैव प्रकृष्टस्वर्गादिश्रेयोहेतुर्धर्मः ॥ ३३४ ॥

( ४ ) **राघवानन्दः** । उपसंहारव्याजेन शूद्रवृत्तिं कथयति विप्राणामितिद्वाभ्याम् । गृहस्थानामितिविशेषणादा-

---

१ एवमेवमूले । राघ० २ चिन्हितपुस्तके च ।

* विक्रयादिना=द्विकशतादिना ( अ ) ( २ ) राघ० ३

श्रमान्तरेषु शूद्रापेक्षानिषेधः स्वयंदासास्तपस्विनइतिन्यायात् । तत्रापि न तपस्विनामितिभावः । यशस्विनां यशोर्थिनाम् । कदर्यशुश्रूषा भृत्यदुःखकरी नतु सुखकरी उदर्केपि भक्ष्यालाभद्वेषादिना दुरदृष्टजदुःखरूपफलत्वात् ॥ ३३४ ॥

( ५ ) **नन्दनः** । नैश्रेयसः निश्रेयसहेतुः ॥ ३३४ ॥

**शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ॥ ब्राह्मणाद्याश्रयोनित्यमुत्कृष्टांजातिमश्नुते ॥ ३३५ ॥**

( १ ) **मेधातिथिः** । शुचिमृद्वारिशुध्येन्द्रियसंयमनेन च उत्कृष्टान्त्रैवर्णिकान् शुश्रूषुर्मृदुवाङ्तर्कादिशास्त्रगन्थितयापरुषभाषी उत्कृष्टां ब्राह्मणादिजातिमाप्नोतीत्यर्थः स्पष्टमुक्तं प्रयोजनं पुनर्ब्राह्मणापाश्रयग्रहणात् अन्यानण्याश्रितस्यान्यशुश्रूषकस्यैतदविरोधेन धर्मएव ॥ ३३५ ॥

( २ ) **सर्वज्ञनारायणः** । शुचिरान्तरबाह्यशौचवान् । उत्कृष्टस्य ब्राह्मणस्य शुश्रूषुः ब्राह्मणायाश्रयः कंचिदेकंब्राह्मणमाश्रित्यस्थितः । जातिमुच्छ्रितां जन्मान्तरे वैश्यादिजातिताम् । उत्कर्षजातिनइतिक्वचित्पाठः ॥ ३३५ ॥

( ३ ) **कुल्लूकः** । बाह्याभ्यन्तरशौचोपेतः स्वजात्यपेक्षयोत्कृष्टद्विजातिपरिचरणशीलोऽपरुषभाषी निरहङ्कारः प्राधान्येन ब्राह्मणाश्रयस्तदभावे क्षत्रियवैश्याश्रयोपि स्वजातितउत्कृष्टांजातिंमाप्नोति ॥ ३३५ ॥

( ४ ) **राघवानन्दः** । उत्कृष्टशुश्रूषुः उत्कृष्टानां द्विजानां शुश्रूषुः । उच्छ्रितिं सच्छूद्रताम् ॥ ३३५ ॥

( ५ ) **नन्दनः** । उत्कृष्टशुश्रूषा पूर्वपूर्ववर्णपूजनम् ॥ ३३५ ॥

**एषोऽनापदि वर्णानामुक्तः कर्मविधिः शुभः ॥ आपद्यपि हि यस्तेषांक्रमशस्तन्निबोधत ॥ ३३६ ॥**

**इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥**

( १ ) **मेधातिथिः** । स्पष्टमुक्तंप्रयोजनंच ॥ ३३६ ॥

इतिभट्टवीरस्वामिसूनोर्भट्टमेधातिथिकृतौ मनुभाष्ये नवमोध्यायः समाप्तः ॥

( २ ) **सर्वज्ञनारायणः** । यस्त्वेषांकर्मक्रमोवृत्तिक्रमश्च क्रमशोनिबोधत मध्येप्रसंगागतंकिंचिदुक्त्वाऽजीवंस्तुयथोक्तेनेत्यादिना वक्ष्यमाणः ॥ ३३६ ॥

श्रीनारायणसर्वज्ञोक्तंमन्वर्थनिबन्धनम् । वीक्ष्य धर्मान्वराब्रूत वेद्यंसर्वकृतेकृतम् ॥ १ ॥

इति श्रीसर्वज्ञनारायणकृतौ मन्वर्थविवृतौ नवमोध्यायः ॥ ९ ॥ समाप्तोयं समस्तव्यवहाराणामापदांच निस्तारकृन्नामाध्यायः ॥ छ ॥

( ३ ) **कुल्लूकः** । एषवर्णानामनापदि चतुर्णामपि कर्मविधिर्धर्मउक्तः आपद्यपि यस्तेषांधर्मस्तंसंकीर्णश्रवणादूर्ध्वंक्रमेणशृणुत ॥ ३३६ ॥

इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥

( ४ ) **राघवानन्दः** । वृत्तवर्तिष्यमाणयोरध्याययोः संबन्धार्थमनापद्धर्ममुपसंहरन्नापद्धर्मं प्रतिजानीते एषइति ॥ ३३६ ॥

इति श्रीराघवानन्दसरस्वतीविरचितायां मन्वर्थचन्द्रिकायां नवमोध्यायः ॥ ९ ॥ ॥ छ ॥

( ५ ) **नन्दनः** । एतद्द्वितीयादिभिरष्टाभिरध्यायैरुक्तं पूर्वयः कश्चिदापद्धर्मउक्तः सोल्पकइत्यभिप्रेत्याह अनापदीति । शास्त्रानुक्रमाभ्युद्देशेनक्रमशोनिबोधत आपद्धर्मतः पश्चाद्वक्ष्यमाणेनेत्यर्थः ॥ ३३६ ॥

इतिमानवधर्मानुशासनव्याख्याने श्रीनन्दनकृते नवमोध्यायः ॥

॥ श्री ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ दशमोऽध्यायः प्रारभ्यते ॥

अधीयीरंस्त्रयोवर्णाः स्वकर्मस्थाद्विजातयः ॥ प्रब्रूयाद्ब्राह्मणस्त्वेषांनेतराविति निश्चयः ॥ १ ॥

( १ ) **मेधातिथिः** । ग्रहणार्थंत्रैवर्णिकानांस्वाध्यायविधिरुक्तोगृहीतस्य [ वेदस्यवा ][1] विस्मरणमप्युक्तंसर्वाश्रमिणां स्वाध्यायेनित्ययुक्तः स्यात्तथा नित्यंशास्त्राण्यवेक्षेत शास्त्रंप्रमुख्यया वृत्त्यैव शासनाद्धिशास्त्रंप्रमाणान्तरानवगतविधिप्रतिपादनाच्च वेदएवेति तदेव शास्त्रमन्यत्रग्रन्थसंदर्भसामान्याच्छास्त्रशब्दप्रयोगः तथा नियतोवेदमभ्यसेत् ब्रह्मोज्झता वेदनिंदेति । यस्तु ब्रह्मयज्ञः सएकेनापि सूक्तेन साम्नानुवाकेन खण्डेन कण्डिकयावैकयैव यावज्जीवमधीतया सिध्यति न तेन ब्रह्मस्मरणमाक्षिप्यते तदेवंनिर्विषयत्वादस्य विधेरनुवादार्थंतैवप्रब्रूयाद्ब्राह्मणस्तेषांनेतराविति क्षत्रियवैश्ययोः प्रवचनंनिवर्तयितुम् । ननुचाध्यापनंब्राह्मणस्येत्यादिना तयोस्तदप्राप्तमेव । नैषदोषः वृत्तिकरणस्याश्रुतत्वात्तदर्थैव निवृत्तिः संभाव्यते धर्मार्थन्तुविद्यादानंतयोरप्यस्त्येवेत्याशङ्कांनिवर्तयति अथास्तिसामान्येन निषेधः एवंतर्हि ज्ञातिलक्षणप्रसङ्गजननार्थंसिद्धमेवोच्यते एवंच कृत्वाऽनुक्रमणीयः संबन्धोनहातव्योयमिति भविष्यति वैश्यशूद्रोपचारंच संकीर्णानांचसंभवइति कश्चिदाह अध्यापनंशब्दोच्चारणशिक्षणं प्रवचनंतु तदर्थव्याख्यानमपि अतोभिन्नत्वान्नाध्यापननिवृत्त्या तदर्थव्याख्याननिवृत्तिर्भवतीत्यतः पुनरुपदेशः । ननुच नात्र वेदशब्दोस्ति कुतस्तत्कर्मता अध्ययनक्रियया ऽलौकिकगद्यपद्यविषयमपीदमध्ययनमुच्यते तथासत्यदृष्टार्थोविधिः स्यात् यतश्चाधिकारकल्पना प्रसज्येत मूलकल्पना च स्यात् तथातुव्याख्यातं उपलब्धमूलैवेयंस्मृतिर्भवतीति नादृष्टमूलकल्पना प्रसङ्गः द्विजातयइति सिद्धे त्रयोवर्णाइति पादपूरणमेवस्वकर्मस्थाइति ॥ १॥

( २ ) **सर्वज्ञनारायणः** । श्रीमहागणपतयेनमः । चत्वारोवर्णाउक्तास्तद्धर्माश्च अथ क्रमप्राप्तं संकीर्णानां स्वरूपं तद्वृत्तयश्च वाच्याः तद्वृत्तिप्रसंगाच्च वर्णानामपि वृत्तिर्वक्ष्यते तत्र संकीर्णानामध्ययननिषेधार्थं वर्णत्रयस्यापि स्थितमध्ययनमाचक्षाणः प्रसंगादध्यापकमपि नियमयति अधीयीरन्निति । त्रित्वं शूद्रेणसह माभूदित्यतउक्तंद्विजातयइति । विकर्मस्थानां शौद्रवृत्त्या जीवतां माभूदित्यतउक्तंस्वकर्मस्थाइति । आपदि तु क्षत्रवैश्यकर्मापि विप्रस्य स्वकर्मैवेति ग्राह्यम् । अस्य निषेधार्थतां प्रवचननिषेधे दर्शयति नेतराविति ॥ १ ॥

( ३ ) **कुल्लूकः** । वैश्यशूद्रधर्मानन्तरंसंकीर्णानांच संभवमिति प्रतिज्ञातत्वात् तस्मिन्वाच्ये वर्णेभ्यएव संकीर्णानामुत्पत्तेः वर्णानुवादार्थं त्रैवर्णिकस्य प्रधानधर्ममध्ययनं ब्राह्मणस्य चाध्यापनमनुवदति । ब्राह्मणादयस्त्रयोवर्णा अध्ययनानुभूतस्वकर्मानुष्ठातारोवेदंपठेयुः । एषांपुनर्मध्ये ब्राह्मणएवाध्यापनंकुर्यान्न क्षत्रियवैश्याविन्त्ययंनिश्चयः । प्रब्रूयाद्ब्राह्मणः पुनस्त्वेषामित्यनेनैव क्षत्रियवैश्ययोरध्यापननिषेधसिद्धौ नेतराविति पुनर्निषेधवचनं प्रायश्चित्तगौरवार्थम् ॥ १ ॥

---

( १ ) आ आ  २ साम्नानु=शास्त्रानु ( आआ )

( ४ ) **राघवानन्दः**। तत्रादौ आपद्धर्मे वक्तुमनापद्धर्मान्स्मारयति अधीयीरन्निति षड्भिः। स्वकर्मस्थाअग्निहोत्राद्य-नुष्ठानेच्छवः एवाधीयीरन्नतेनाध्ययनाख्यसंस्कारसंस्कृतवेदार्थावबोधोनुष्ठानाङ्गंवाध्ययनमात्रमितिभावः । तेषांमध्येब्राह्म-णएव मब्रूयाद्धर्ममितिशेषः। इतरौ क्षत्रियवैश्यौ ॥ १ ॥

( ५ ) **नन्दनः**। अथ शास्त्रानुक्रमण्युद्देशक्रमेण संकीर्णानां संभवंवक्ष्यंस्तत्प्रकृतिभूतानां चतुर्णांवर्णानामुत्कर्षापकर्षौ तावदाह अधीयीरन्निति। निर्णयः अयमभिप्रायः द्विजातित्वाद्विधिविहितधर्मानुष्ठायित्वादध्ययनयोगाच्च त्रयोवर्णाः शूद्रा-दुत्कृष्टाः ब्राह्मणस्त्वाचार्यत्वात्क्षत्रियवैश्याभ्यामुत्कृष्टइति ॥ १ ॥

( ६ ) **रामचन्द्रः**। त्रयोवर्णाः अधीयीरन् पठेयुः। तेषां वर्णत्रयाणांब्राह्मणःप्रब्रूयात् न इतरौ नृपवैश्यौ न ॥१ ॥

**सर्वेषांब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि ॥ प्रब्रूयादितरेभ्यश्च स्वयंचैव तथा भवेत् ॥ २ ॥**

( १ ) **मेधातिथिः**। नचास्योपदिशेद्धर्ममिति नकश्चिद्धर्मोपदेशः शूद्रस्य कर्तव्यइत्युक्तंवृत्तिधर्माउपदेष्टव्याइति तस्यापवादः वृत्तिः शरीरकुटुम्बस्थितिस्तदर्थाउपायास्तान्विद्यात्। प्रब्रूयात्सर्वेभ्यइतरेभ्यइति बहुवचनंशूद्रावरोधार्थंस्वयंच तथा भवेद्यथोपदिष्टावृत्तिनियमाअनुष्ठेयाइत्यर्थः ॥ २ ॥

( २ ) **सर्वज्ञनारायणः**। ब्राह्मणोवृत्त्युपायान् धर्म्यान् जीवनोपायानध्यापनादीन् विद्यादिति ब्राह्मणस्य नियम्य-ते नत्वन्यस्य निषिध्यते। तथाभवेत् तथाविहितवृत्त्या जीवेत् ॥ २ ॥

( ३ ) **कुल्लूकः**। किंच सर्वेति। सर्वेषांवर्णानांजीवनोपायंयथाशास्त्रंब्राह्मणोजानीयात्तेभ्यश्चोपदिशेत्स्वयंच यथोक्त-वन्नियममनुतिष्ठेत् ॥ २ ॥

( ४ ) **राघवानन्दः**। वृत्त्युपायान्जीवनोपायान्। दण्डशुल्ककृषिवाणिज्यादीन्। नकेवलमेवमित्याह स्वयंचेति। तथा स्वधर्मेण याजनाध्यापनप्रतिग्रहैर्जीवीतंस्यादिति ॥ २ ॥

( ५ ) **नन्दनः**। इतश्चापि ब्राह्मणउत्कृष्टइत्याह सर्वेषांब्राह्मणोविद्यादिति। सर्वेषांवर्णानांशास्त्रेषु विहितान्वृत्त्युपाया-न्ब्राह्मणोविद्यादितरेभ्यश्च प्रब्रूयादुपदिशेत् तथा स्वयंच शास्त्रोक्तमाचरेन्नेतरः। तेनोत्कृष्टइतिभावः ॥ २ ॥

( ६ ) **रामचन्द्रः**। ब्राह्मणः सर्वेषां वृत्त्युपायान् विद्यात् ब्राह्मणस्वरूपोपादानवैशिष्ट्यात् तथा स्वयं वैभवेत् ॥ २ ॥

**वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् ॥ संस्कारस्य विशेषाच्च वर्णानांब्राह्मणः प्रभुः ॥३॥**

( १ ) **मेधातिथिः**। किंपुनः कारणंब्राह्मणएव प्रकृतत्वेनाऽधिक्रियते न पुनः क्षत्रियादयोपि यतएतच्छेषतया प्ररो-चनंपठति वैशेष्याद्विशिष्टत्वादित्यर्थः गुणाधिक्यादिति यावत् तदिदानीमाधिक्यमाह प्रकृतिश्रैष्ठ्यादुत्तमाङ्गोद्भवादिदमुक्तं। प्रकृतिः कारणं नियमस्य च धारणान्मद्यपानप्रतिषेधादयमेवनियमोऽभिप्रेतः स्नातकव्रतानि वा वैणवधारणादीनि ब्राह्मण-स्यैव संस्कारस्य च विशेषोऽत्ददयङ्गमाभिरित्यादि [ ग्रामएव ][1] नियमोभिप्रेतः स्नातकव्रतानिच विशेषोऽत्ददयङ्गमाभिरित्या-देरुपनयनादेर्वाबालस्यैवविधानात् क्षत्रियवैश्ययोस्त्वतीतशैशवयोरेकादशतोऽतोहेतोर्वर्णानांब्राह्मणः प्रभुःशासिता ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः**। वैशेष्यात् जातवैशिष्ट्यात् प्रकृतेर्ब्रह्ममुखरूपोपादानस्य श्रैष्ठ्यात्। नियमस्य स्नातकव्र-तादेः। संस्कारस्योपनयनादेरतिबाल्यकृतत्वादिना विशेषात् ॥ ३ ॥

( ३ ) **कुल्लूकः**। अत्रानुवादः वैश्येष्यादिति। जात्युत्कर्षात्प्रकृतिः कारणंहिरण्यगर्भोत्तमाङ्गरूपकारणोत्कर्षान्नियम्य-तेऽनेनेति नियमोवेदस्तस्या ध्ययनाध्यापनव्याख्यानादियुक्तसातिशयवेदधारणात् अतएव ब्रह्मणश्चैव धारणादिति साति-

( १ ) मे० ८

शयवेदधारणेनैव ब्राह्मणोत्कर्षउक्तः । गोविन्दराजस्तुस्नातकव्रतानांधारणादिति व्याख्यातवान् तन्न क्षत्रियादिसाधारण्यात्संस्कारस्योपनयनाख्यस्य क्षत्रियाद्यपेक्षयाप्राधान्यविधाने विशेषाद्वर्णानामध्यापनवृत्त्युपदेशयोर्ब्राह्मणएवेश्वरः ॥ ३ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्यैव धर्मवदने जात्युत्कर्षब्रह्ममुखजत्ववेदाध्यापकत्वसोमपातृत्वानि चत्वारि हेतवइत्याह वैशेष्यादिति । वैशेष्यात् । ज्यैष्ठ्यात् ब्रह्मवाइदमग्रआसीदितिश्रुतेः । प्रकृतिश्रैष्ठ्यात् प्रकृतिरुत्पत्तिस्थलम् ब्राह्मणोस्यमुखमासीदितिश्रुतेः । नियमस्य स्नातकव्रतकलापादेः । संस्कारस्य सोमपात्वसंन्यासित्वस्य ॥ ३ ॥

( ५ ) **नन्दनः** । अन्यानपि हेतून्ब्राह्मणोत्कर्षसाधकानाह वैशेष्यादिति । प्रकृतिश्रैष्ठ्याद्ब्रह्मणउत्तमाङ्गब्राह्मणस्य प्रकृतिः । तस्याः क्षत्रियादिप्रकृतिभ्योबाह्वादिभ्यः श्रैष्ठ्यात् । धारणाद्रक्षणात् चतुर्षु हेतुषु प्रथमेन स्वरूपतउत्कर्षउक्तः द्वितीयेन कारणतः तृतीयचतुर्थाभ्यां कर्मतइत्यनुसंधातव्यमिति ॥ ३ ॥

( ६ ) **रामचन्द्रः** । वैशेष्यात् प्रकृतिश्रैष्ठ्यात् ब्राह्मणस्वरूपोपादानवैशिष्ट्यात् नियमस्य व्रतानां वेदस्य धारणात् संस्कारस्य विशेषात् अतिबाल्ये उपनयनादि संस्कारविशेषात् ब्राह्मणोवर्णानांप्रभुः ॥ ३ ॥

**ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णाद्विजातयः ॥ चतुर्थएकजातिस्तु शूद्रोनास्ति तुपञ्चमः ॥ ४ ॥**

( १ ) **मेधातिथिः** । केपुनरमी वर्णानाममनुष्यजातिवचनोवर्णशब्दोनेत्याह चत्वारोवर्णाब्राह्मणाद्याः शूद्रपर्यन्ताः अन्येतु बर्बरकैवर्तादयः संकीर्णयोनयोयथा वक्ष्यन्ते । तत्र चतुर्णांत्रयोद्विजातयउपनयनस्य तेषांविहितत्वात् एकजातिः शूद्रोनहितस्योपनयनमस्ति उपनयनविधौ ब्राह्मणादिवर्णविशेषसंयोगात् । अष्टमे ब्राह्मणमुपनयीतैकादशे राजन्यंद्वादशे वैश्यमिति नकस्मिंश्चित्काले शूद्रंपठन्ति । ननु कालविशेषानुपादानादनियतकालंशूद्रोपनयनमस्तु भवेद्ययसंयुक्ता सामान्येनोपनयनस्योत्पत्तिः स्यादेवत्वर्णकालविशेषयुक्तोनिमित्तार्थः स्तुतयः स्युः नतु पृथगुत्पत्तिरस्यास्ति तत्कस्य प्रमाणस्य सामर्थ्येनास्योपनयनमनियतकालंक्रियतां यद्येवंकिंतर्ह्यनेनचतुर्थएकजातिरिति सत्यं आशङ्कामात्रनिवारणार्थमन्त्रवर्जंतदुच्यतइति अमन्त्रकस्य नियतकालस्य प्राप्तिराशङ्क्यते । ननु च पाकयज्ञविधावेतद्वाक्यंतत्सन्निधौ श्रवणात्तत्रकृतार्थेनान्यत्र भवितुमर्हति अतएवाशङ्कामात्रमित्युक्तं परमार्थतस्तु व्यवहारनियमार्थमयंश्लोकः ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । एतेद्विजातयोद्विजातिशब्दवाच्याः सावित्रीतोद्विजातिजन्मलाभात् । तथा चतुर्थोवर्णएकजातिरेकमेवास्य जन्म मातुःसकाशात् पञ्चमोवर्णोनास्ति संकरजानामवर्णत्वात् । एतच्च तेषांवर्णप्राप्तिर्माभूदित्येतदर्थमुक्तम् ॥ ४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणादयस्त्रयोवर्णाद्विजास्तेषामुपनयनविधानात् शूद्रः पुनश्चतुर्थोवर्णएकजातिरुपनयनाभावात्पंचमः पुनर्वर्णोनास्ति । संकीर्णजातीनांत्वश्वतरवन्मातापितृजातिव्यतिरिक्तजात्यंन्तरत्वान्न वर्णत्वं । अयंच जात्यन्तरोपदेशः शास्त्रे संव्यवहरणार्थः ॥ ४ ॥

( ४ ) **राघवानन्दः** । शूद्रस्तु चतुर्थएकजातिरित्यन्वयः । पञ्चमोऽनुलोमजोनास्तीति ॥ ४ ॥

( ५ ) **नन्दनः** । उक्तमर्थंनिगमयति ब्राह्मणः क्षत्रियोवैश्यइति । क्रमोपादानं ब्राह्मणाद्विजातेरपि क्षत्रियः किंचिदपकृष्टः क्षत्रियाद्वैश्यइति ज्ञापनार्थं शूद्रस्यैवजातित्वग्रहणं पृथगुपादानं चापकृष्टतमत्वख्यापनार्थं पञ्चमोनास्ति चत्वारएव वर्णाइत्यर्थः ॥ ४ ॥

( ६ ) **रामचन्द्रः** । चतुर्थएकजातिःशूद्रस्तु पुनः पंचमःनास्ति ॥ ४ ॥

**सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ॥ आनुलोम्येन संभूताजात्या ज्ञेयास्तएव ते ॥ ५ ॥**

( १ ) **मेधातिथिः** । के पुनरमी ब्राह्मणादयोनाम नह्येषांपरस्परोभेदः शक्यो वसातुं व्यक्त्यधीनाधिगमाहि जातयोनच व्यक्तयः स्वावयवसन्निवेशविशेषावगमशून्याः शक्नुवन्ति तासांभेदमावेदयितुं नच ब्राह्मणक्षत्रियादीनांगवाश्वस्येव वाऽऽकारभेदोस्ति येन रूपिसमवायाच्चाक्षुष्यः स्युः नापि विलीनघृततैलगन्धरसादिभेदेन क्रियान्तरगोचराः नापि शौचाचारपिङ्गलकेशत्वादिभिर्धर्मै शक्यंभेदावसानास्तेषांसर्वत्र संकरोपलब्धेः व्यवहारश्च पुरुषाधीनोविप्रलंभभूयिष्ठत्वाच्च पुरुषाणांनान्ततोवस्तुसिद्धिरित्यतोजातिलक्षणमुच्यते सर्ववर्णेष्वेतल्लक्षणंजातेर्यत्तुल्यासु समानजातीयासु भर्तृसंभृतासु पत्नीषूढासु जातास्तएव जात्याज्ञेयाः प्रायेण मातापित्रोर्या जातिः सैवापत्यस्योढायां जातस्य वेदितव्या संबन्धिशब्दत्वात्पत्नीग्रहणास्यातोवोढापिता लभ्यते तेन येनैवोढा तनयस्तस्यामेव जातस्तदा तज्जातीयोभवति । अक्षतयोनिग्रहणंपुनर्विवाहसंस्कारेण पत्नीत्वमाशङ्कमानंनिवर्तयति । सहोढकानीनमातृणांच ननुच नैवैतासांविवाहसंस्कारोस्तिपाणिग्रहणिकामन्त्राःकन्यास्वितिवचनात् यद्यपि वोढुः सगर्भोभवतीति विवाहश्रवणेनशास्त्रीयसंस्कारप्रतिपत्तिः आमिमात्रवचनत्वात्तस्य नविहितवचनीयंप्रत्यभिज्ञानमस्ति तस्मात्स्वीकारमात्रे धातुर्वर्तते स्वीकर्तुरित्यर्थः पित्रादीन्वंचयित्वा येनैव स्वीकृता तस्यैव सा भवति ततः पुत्रश्चेति तस्यार्थः । पुनर्भूसंस्काराभावात् सा चेदक्षतयोनिः स्यादिति पठ्यते । गतप्रत्यागतायामपि पुनःपुनः शब्दप्रत्यभिज्ञानाद्धेतुरुक्ता नच ताभिः सहाभिः सहाधिकारोस्तियज्ञसंयोगेस्ति पत्नीशब्दः अतोक्षतयोनिशब्दोऽतिरिच्यते अत्र पूर्वेपत्नीशब्दमपसार्यनारीष्विति पठन्ति तदपि न किंचित् केवले ह्यक्षतयोनिशब्देत्वसंस्कृतास्वपि जातास्तज्जातीयाः स्युः । पत्नीशब्दपाठेन शास्त्रीयेण विधिनाया संस्कृता भार्यात्वमापादिता सा गृह्यते । यास्तु कुमार्यएवोपगम्यन्ते भवन्ति ताअक्षतयोनयोनतुपत्न्यः तस्मादक्षतयोनिशब्दस्य प्रयोजनंवाच्यं उच्यते यत्तावदुक्तंनताः पत्न्योयज्ञसंयोगाभावादिति यदि विवाहैरनूसएव यज्ञः स्यात्तत्रापिपूषवरुणार्यम्णामस्त्येवयागः समानार्थौ च यागयज्ञशब्दौ तस्मात्स्युरेवपत्न्यः अकन्यात्वादविवाह्यतयैव न पत्न्यइति युक्तंअतश्चानर्थक्येऽक्षतयोनिशब्दस्य प्रयोजनमुच्यते । दृश्यते लक्षणयाऽसत्यपियज्ञसंयोगे पत्नीशब्दः प्रयुज्यमानोलोकेरजकस्य पत्नी यथान्यत्रावरुद्धासु स्त्रीषु गृहिणी शब्दः सोपि भार्यावचनएव केनचिद्धर्मसाम्येन तत्रापि प्रयुज्यते यद्यपि सतिमुख्ये लक्षणा न न्याय्या तथापि मन्दधियांसुत्पद्भूत्वाशङ्कामात्रंनिवर्तयति किंनाम नाशङ्क्यते मूढमतिभिः। आनुलोम्य ग्रहणमुत्तरार्थंयेऽपि तएवतइति पठन्ति तेषामपि सएवार्थस्तज्जातीयाइति। अत्रोच्यते किंप्रमाण [मूलमेतत्स्मृतिकाराणांस्मरणमकार्यरूपत्वान्नधर्माधर्मोपदेशतुल्यंप्रमाणंतैरेवनास्तीत्युक्तंस्मृत्यन्तर][१] मूलत्वेऽन्धपरंपराप्रसङ्गः प्रमाणश्लोकैर्दर्शितः । उच्यते वृद्धव्यवहारोमूलंसाधुत्वस्मृतिवत् ननु च पुरुषापराधोसावित्युक्तं अतएव नियामकाः स्मृतयः फलवत्यः अभियुक्तस्मरणमन्यथेति न शक्यते वक्तुं शास्त्रस्थाः प्रसिद्धाः प्रमाणतराः संभवतिच तेषामनादिव्यवहारोमूलं एतत्स्मृतिसंस्कृतानांवावगताभिजनजातीयानांप्रत्यक्षमभ्युपपद्यतइति । केषांचिद्दर्शनं एतत्स्मृतिविवेके प्रपंचितं ननु च स्मृत्यन्तरे नायंविशेषोस्ति ॥ सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥ अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाइति ॥ आद्येनार्धेनजातिर्लक्ष्यते उत्तरेण हि ब्राह्मादिविवाहजातानांसंतानवचनत्वात्तत्र सवर्णेभ्यः सवर्णास्विति नात्र पत्नीशब्दोस्ति कथंनास्ति यावता विन्नास्वेषविधिः स्मृतइति मा वा भूदविशेषस्मृतेर्विशेषस्मृतिर्बलीयसी यद्दर्शनाद्दर्शनं बलीयोयतः केन विशेषेन दृष्टोऽपरेण दृष्टइतिसंभवत्येतत् अतोभियुक्तस्मरणंसंभवन्मूलतया प्रमाणं ननुचाव्याप्तेरलक्षणमेतत् । नहि सहोढकानीनपौनर्भवादीनामनेन ब्राह्मण्यंभवतिकुण्डगोलकयोः । क्षेत्रजस्य च अनभिप्रेतमेव तत्तेषामिति चेन्का त-

( १ ) आ आ, मे० ८

हितेषांजातिः कुण्डगोलकयोश्च असति ब्राह्मण्ये श्राद्धेप्राप्त्यभावादनर्थकोनिषेधः स्यात्स्मृत्यन्तरविरोधश्च ॥ सजातीयेष्वयं-प्रोक्तस्तनयेषु मया विधिरिति ॥ किंच यदेवलक्षणंतदेवलक्ष्यमनिर्ज्ञातंलक्ष्यंभवति निर्ज्ञातंलक्षणं। यथा कोदेवदत्तइति संशयेऽङ्गदी कुण्डली व्यूढोरस्कोवृत्तबाहुः। इह तु यथाकश्चित्ब्रूयात्कः काकइत्युक्ते काकाज्जातइत्युत्तरंतादृगेव कोब्राह्मणो योब्राह्मणाज्जातइति जनकेऽपि हि ब्राह्मण्यमप्रसिद्धमेव न्यायविरोधश्च सजातीयात्सजातीयायां जातः सलोके सजातीयोभवति यथागोर्गति गारश्वाद्वैडवायामश्वः अत्रोच्यतेयत्तावदुक्तंकातेषांजातिरिति किमन्यया जात्या मनुष्यास्तावद्भवन्ति पुरुषधर्मैश्चाधिक्रियतेऽनुपात्तजातिविशेषैः पुत्रत्वाच्छ्राद्धादिभिश्च दाने च सर्वेषामधिकारः ननु च विशेषस्योपदेशेन विनाव्यवहारोन सिध्यति सर्वसाधारणत्वान्मनुष्यजातेःअसदेतत्सर्वस्यैव स्वसंज्ञाविशेषोविद्यते। प्रतिपुरुषंदेवदत्तोयज्ञदत्तइति अथापि संबन्धव्यपदेशः कर्तव्यइति कानीनः सहोढइत्येतदुपदिश्यते सोपि चातुर्वर्ण्ये सद्भावात्सामान्यरूपएवेतिचेद्देवदत्तस्य कानीनइत्यादि जनकेन व्यपदेशः करिष्यते। तस्मादसंबद्धमेतद्यदुच्यते व्यपदेशः कथमिति एवंतर्हि सर्वएव धर्माश्चातुर्वर्ण्यप्रतिबोध्यन्ते अन्तरे प्रभवानांच तत्र बहुत्वंब्राह्मणादिजातिचतुष्टयविषयं नचैतेषामप्येकजातिः सर्वजातिष्वे तस्य लक्षणस्य प्रवृत्तेः। यथैव ब्राह्मणादूढायां ब्राह्मण्यांजातोब्राह्मणएवंक्षत्रियादयोपिसमजातीयमातृपितृजाताः सर्वविशेषाभावे च कुतः सामान्यं नहि शिंशपादिसर्वविशेषाभावेवृक्षत्वसंभवः अन्तरप्रभवाश्चानुलोमप्रतिलोमास्तत्रानुलोमामातृजातीयाः प्रतिलोमास्तुधर्महीनाअन्यत्राहिंसादिभ्यस्ते सर्वैस्वसंज्ञाभिर्विशेषतोनिर्दिष्टाः नचैषांनामापि तत्रास्ति तत्र कतमे ते धर्माः [अमीअधिक्रियेरन् क्वचतद्वचनंयदेतानधिकुर्वीत। नहिकश्चिज्जातिविशेषःस्वीयोधर्म][1] विधिरस्ति सर्ववर्णानामन्तरभावानांचेति शास्त्रादधिकृतत्वाच्च उच्यते यत्तावदहिंसादिषुचातुर्वर्ण्यवचनंतन्नरमात्रोपलक्षणार्थमेव । सत्यपि प्रतिलोमाधिकारे मुख्यार्थवृत्तेः प्रत्युतसहचारिजात्यन्तरेण त्रित्वमेवलक्षयितुंक्षमंनान्तरावस्थातुमर्हति तत्रैव च वक्ष्यामः इदंचास्ति ॥ शूद्राणांतु सधर्माणः सर्वेपध्वंसजाःस्मृताइति । अपध्वंसोऽसंस्कारः सचाष्टविधः व्यभिचारेण वर्णानामित्यादिनोक्तः। व्यभिचारः परस्त्रीषु गमनं सजातीयासु अन्यद्वक्ष्यामस्तस्मादसत्यपि वर्णत्वे वाचनिकएव तेषामधिकारः। क्षत्रियस्य तु मातृजातीयत्वमेव लिङ्गदर्शनात् पुत्रोद्यामुष्यायणस्यसंविधानादितिकर्तव्यताविशेषः श्रुतः अन्येष्वपि श्रौतेषु तस्य विधानान्तरंदृश्यते तस्मादेव ब्राह्मणादिजातीयएव समभागः स्वपितृव्येण तस्माद्धर्मेण तंभजेदिति नच यथोक्ते विधौ तदुक्तंतदाह्मयंशूद्रधर्मा धनस्य यज्ञार्थतायामुक्तायांकुतस्तस्य तावद्भागः। कुण्डगोलकौ क्षेत्रजावेव शिष्टसमाचारश्चैवमेव पाण्डुधृतराष्ट्रविदुराः क्षेत्रजाः सन्तोमातृजातीयाःअतोयुक्तः श्राद्धे प्रतिषेधः। किंच पतितोऽपि तत्र प्रतिषिद्धोयस्य सर्वधर्मबहिष्कृतत्वात्प्राप्त्याशङ्कैव नास्ति यत्तु सजातीयेष्वपि स्मृत्यन्तरंतदुक्तानुवादत्वाद्यथासंभवंव्याख्येयं कार्यपुत्रविषयतयावा यच्च निर्ज्ञातंलक्षणंभवति । तत्किंब्राह्मणार्थोनैवलोकप्रसिद्धः यत्र ब्राह्मणादिशब्दः प्रयुज्यतएवापध्वंसनिवृत्त्यर्थंच सच मातापित्रोरेतदेव जातिलक्षणं नचानवस्थानादित्वात्संसारस्य प्रस्तुतन्यायविरोधस्तु साक्षात्व्यवसायगम्यत्वआसांजातीनांस्यात् तासु स्मृतिलक्षणायथास्मरणंभवितुमर्हन्ति। यथा वा वसिष्ठादयः शब्दा अन्तरेणैवाद्यत्वंधर्ममनवच्छिन्नस्मृतिपारंपर्यैकैश्च विदितार्थेषु प्रयुज्यते भवन्ति व्यवहारहेतवोवसिष्ठब्राह्मणावासिष्ठाः शृण्वंतीति तद्वदेतद्दृष्टव्यं। यथा समाने ब्राह्मणत्वे केचिद्भृगवोवत्साभारद्व.जाइत्यादिविशेषःस्मृत्येकप्रमाणः। तथैव समाने पुरुषत्वेऽमी ब्राह्मणाक्षत्रियाइत्यादिरुपपन्नो-व्यवहारः। यैरपि लिङ्गदर्शनत्वे जाबालश्रुतिरुक्ता सत्यकामोजाबालोमातरमपृच्छात्किंगोत्रोहमस्मीति सैवंप्रत्यब्रवीत् बह्वहं-

(१) आ आ

चरन्तीपरिचारिणीयौवने त्वामालभे नाहंतद्वेदेति सएवमुपश्रुत्य हारिद्रुमंतंगौतममियाय तंहोवाचब्रह्मचर्यंभवतोविवत्स्यामि सएवमुवाच किंगोत्रस्त्वमसीति सप्रत्युवाचापृच्छंमातरंसामातापत्यब्रवीत् यौवनेत्वामित्यादि गौतमोनचैतद्ब्राह्मणोवक्तुमर्हति समिधंसोम्याहरोपत्वानेष्ये। अस्यायमर्थः बहुभिरहंयौवने पुंभिः संगताभूवंन जाने केन जातोसीति। गौतमस्तुसत्यवचनान्निश्चिकाय ब्राह्मणेनायंजातस्त्वतस्तमुपनिन्येऽतोमन्यामहे स्वैरिणीष्वप्यनूढासु समानजातीयाज्जातास्तज्जातीयाभवन्ति तदेतन्नाकिंचिद्यतेयौवने त्वामालभे यौवने किलनस्मृतिर्दृढीभवत्युत्कलिकाबहुलत्वाद्यौवने चेतसः। किंच परिचारिणीपरिचारिकाहेतोः क्षुधापीडिता बहुविचरन्ती नैकस्मिन्स्थाने ततोमे नस्मृतिरस्तिभर्तुः किंगोत्रमिति अतः स्तिमेतत्समानजातीयोढायां जातास्तज्जातीयाइति। गौतमस्यापि नततोवचनाद्ब्राह्मणोयमित्यवगमः प्रागेवासौ तंब्राह्मणइति वेद गोत्रंतु न वेद गोत्रप्रश्नेन चरणप्रश्नोवेदितव्यस्तत्रोपनयनभेदोस्तिनतु गोत्रभेदेनोपनयने प्रयोजनं। ननु यथा केचिदाहुः जातिप्रश्नोयमाभिजात्याद्गोत्रएवजातिमवगमिष्यामि साक्षाज्जाति प्रश्ने हि मुखरता स्यात् ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः**। वर्णेष्वित्युपलक्षणं संकीर्णेष्वपि। तुल्यासु सवर्णासु मूर्धावसिक्तत्वादिजातिसजातीयासु वा। पत्नीषु परिणीतासु नत्वेवमेवगृहीतासु। अतएव याज्ञवल्क्योविन्नास्वेषविधिरित्युपसंहारमाह। एतेन कुण्डगोलकयोर्वर्णबाह्यतोक्ता। अतएव बौधायनः ॥ एतानर्थस्यविवाहानाहुरेतैःसंस्कृताभिरुत्पन्नास्तज्जातीयाभवन्ति नान्यइति। व्यासश्च ॥ भार्याजाताःसमानाःस्युः संकराःस्युरतोन्यथेति। देवलश्च ॥ द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अवत्राट्इतिख्यातः शूद्रजन्मा सजातितः। व्रतहीनाअसंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्याइति बहिष्कृताः ॥ शूद्रजन्मेति त्रैवर्णाप्रवेश्यत्वाभिप्रायेणोक्तम्। शूद्रस्यतु जातोपि दास्यांशूद्रेणांशहरइत्यभिधानादनूढोत्पन्नोपि परिणीतभार्योत्पन्नसमएवातएवसशूद्रः। नच कुण्डगोलकयोरब्राह्मणत्वे ततएव श्राद्धानधिकाराच्छ्राद्धप्रकरणे तन्निषेधवैयर्थ्यमेवं स्यात् पंक्तिदूषकतया हि तेषां तत्राभिधानं तच्च ब्राह्मणभ्रमस्य तत्रसंभवात्प्रवेशे पंक्तेरेव दूषणाच्छ्राद्धंव्यर्थंभवतीत्येतदर्थमुक्तम्। तुल्यासुअक्षतयोनिषु परिणेतुरन्येनासंस्पृष्टासु। एतेन पौनर्भवस्याप्यब्राह्मण्यमुक्तम्। आनुलोम्येन वयसआनुलोम्येन वरापेक्षयाऽल्पवयसि कन्यायामुत्पन्नइत्यर्थः। तेनाधिकवयसः परिणीतायाःसवर्णाया अपि पुत्रोन ब्राह्मणइत्युक्तम्। अतएव यज्जातीयौ यन्मातापितरौ तज्जातीयाएव ॥ ५ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि समानजातीयासु यथाशास्त्रंपरिणीतास्वक्षतयोनिष्वानुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायामित्यनेनानुक्रमेण ये जातास्ते मातापित्रोर्जात्यायुक्तास्तज्जातीयाएव ज्ञातव्याः। आनुलोम्यग्रहणंचात्र मन्दोपयुक्तमुत्तरश्लोकउपयोक्ष्यते गवाश्वादिवदवयवसन्निवेशस्य ब्राह्मणजात्यभिव्यञ्जकत्वाभावादेतद्ब्राह्मणादिलक्षणमुक्तम्। अत्र च पत्नीग्रहणादन्यपत्नीजनितानां ब्राह्मणादिजातित्वम्। तथाचदेवलः। द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अववाटइति ख्यातः शूद्रधर्मा सजातितः ॥ व्रतहीनान संस्कार्याः स्वतन्त्रास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्याइव बहिष्कृताः ॥ व्यासः ॥ येतु जाताः समानासु संस्कार्याः स्युरतोन्यथा ॥ याज्ञवल्क्योपि ॥ सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥ इत्यभिधाय विन्नास्वेषविधिः स्मृतइति ब्रुवाणःस्वपत्न्युत्पादितस्यैव ब्राह्मणादिजातित्वंनिश्चिकाय ॥ ५ ॥

( ४ ) **राघवानन्दः**। अक्षतयोनिष्वितिविशेषणात् कानीनादेर्द्विजत्वं गौणम्। आनुलोम्येन ब्राह्मण्यांब्राह्मणाज्जातः तथैव ब्राह्मणत्वजात्याविशिष्टः। एवं क्षत्रियविट्शूद्रेषु ॥ ५ ॥

( ५ ) **नन्दनः**। अथवर्णानां लक्षणमाह सर्ववर्णेषु तुल्यासु पत्नीष्विति। तुल्यासु अर्हासुसापिण्ड्यदोषरहितास्वि-

त्यर्थः । अक्षतयोनिष्वनन्यपूर्वासु आनुलोम्यमनिंद्याविवाहास्तेषु संभूताये वर्णास्तेजात्यन्तराएव ज्ञेयाः ॥ ५ ॥

( ६ ) **रामचन्द्रः** । अक्षतयोनिषु संभोगान्नक्षतायोनयोयासांताअक्षतयोनयस्तासु आनुलोम्येन संभूताः वयसः आनुलोम्येन वरापेक्षयाहीनवयसि कन्यायां जाताः ते अनुलोमजाः ॥ ५ ॥

**स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् ॥ सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥ ६ ॥**

( १ ) **मेधातिथिः** । अनन्तरास्वव्यवहितास्वानुलोम्येन यउत्पन्नाः पुत्रास्ते सदृशाज्ञेयाः नतु तज्जातीयाः यथा ब्राह्मणात्क्षत्रियायां क्षत्रियाद्वैश्यायां तेन सदृशाः नतु तएव । अत्र हेतुः मातृदोषविगर्हितान् तन्सदृशग्रहणान्मातृतउत्कृष्टान्पितृतोनिकृष्टान् । द्विजैरिति बहुवचननिर्देशान्मातृतश्च ग्रहणादानुलोम्येष्वेतत्संभवति प्रातिलोम्ये पितृतोग्रहणेन मातृतः पितुर्निकृष्टजातीयत्वात् । अतआनुलोम्यग्रहणंपूर्वश्लोके यदुक्तमंतरार्थमिति तदिहानर्थकमतः परेषु श्लोकेषूपदिश्यते ॥ ६ ॥

( २ ) **सर्वज्ञनारायणः** । अनन्तरजातासु ब्राह्मणस्यक्षत्रियायां क्षत्रियस्यवैश्यायां वैश्यस्यशूद्रायाम् । द्विजैरित्यनुवादस्तेषामेवानन्तरजसंभवात् । सदृशान् पितुर्मातुश्च नतु सजातीयान् क्रमात्स्मृत्यन्तरोक्तमूर्धावसिक्तमाहिष्यकरणसंज्ञान् । पितृमातृसादृश्याभिधानं ब्रह्मक्षत्रियवैश्याजातान् श्रैष्ठ्यार्थम् । मातृदोषेण मातृभिन्नजातीयत्वेन विगर्हितान् वर्णमध्यबहिष्कृतान् ॥ ६ ॥

( ३ ) **कुल्लूकः** । आनुलोम्येनाव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये उत्पादिताः पुत्राः यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां तान्मातुर्हीनजातीयत्वदोषाद्गर्हितान्पितृसदृशान्नतु पितृसजातीयान्मन्वादय आहुः । पितृसदृशग्रहणान्मातृजातेरुत्कृष्टाः पितृजातितोनिकृष्टाज्ञेयाः एतेषांच नामानि मूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि । वृत्तयश्चैषामुशनसोक्ताः हस्त्यश्वरथशिक्षाअस्त्रधारणंच मूर्द्धाभिषिक्तानां नृत्यगीतनक्षत्रजीवनं सस्यरक्षा च माहिष्याणां द्विजातिशुश्रूषा धनधान्याध्यक्षता राजसेवादुर्गांतःपुररक्षा च पारशवोग्रकरणानामिति ॥ ६ ॥

( ४ ) **राघवानन्दः** । स्वजातीयाव्यवहितजातीयासु ब्राह्मणक्षत्रियवैश्यैरुत्पादितत्वान्न ते द्विजातयइत्याह स्त्रीष्विति सार्धेन । सदृशान् तद्भिन्नत्वेसति तद्वत भूयोधर्मशालिनः । अतआह मातृदोषविगर्हितान् मातुर्हीनजातित्वेन जात्यन्तर कर्मान्तरयुक्तत्वेन निन्दितान् मूर्धाभिषिक्तमाहिष्यकरणाख्यानितिशेषः ॥ ६ ॥

( ५ ) **नन्दनः** । अथवर्णसंकरजातानाह स्त्रीष्वनन्तरजातास्विति । अनन्तरजातास्वनन्तरवर्णजातासु द्विजैरुत्पादितान्ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रयाञ्चोत्पादितान्सुतान् सदृशान् एवकारोजात्यन्तरभ्रमनिवृत्त्यर्थः । भ्रमप्राप्तौ कारणत्वेनोक्तं मातृदोषविगर्हितानिति विशेषणं तथापि सदृशानित्यर्थः ऊढासुतविषयमेतन्मातृदोषमात्रस्यैवोपन्यासादनुद्वाहस्योभयदोषवत्वात् ॥ ६ ॥

**अनन्तरासुजातानांविधिरेषसनातनः ॥ द्व्येकान्तरासु जातानांधर्म्यंविद्यादिमंविधिम् ॥ ७ ॥**

( १ ) **मेधातिथिः** । आद्येनार्धश्लोकेनोक्तमर्थमनुवदति द्वितीयेन वक्ष्यमाणसंक्षेपः द्व्येकान्तरा द्व्यन्तरा ब्राह्मणस्य शूद्रा एकान्तरा वैश्या नातीवश्लोकः सप्रयोजनः ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । द्व्यन्तरासु स्वद्वितीयान्तरितासु स्वस्यानन्तरवर्णव्यतिरिक्तवर्णस्त्रीष्वितियावत् ब्राह्मण-

---

( ७ ) द्व्येकान्तरासु जातानां=द्व्यन्तरासु च जातानाम् ( ख, च )

स्य वैश्यायांशूद्रायांच क्षत्रस्य शूद्रायाम् । धर्म्यं धर्मादनपेतं विधिं मकारम् । यद्यप्यग्रे संज्ञामात्रमुक्तं तथापि तत्सं-ज्ञानुवादेनान्यत्रोक्तान्धर्मानभिप्रेत्य धर्ममित्युक्तम् ॥ ७ ॥

( ३ ) **कुल्लूकः**। एषपारंपर्यागततया नित्योविधिरनन्तरजातिभार्योत्पन्नानामुक्तः । एकेन द्वाभ्यांच वर्णाभ्यां व्यवहितासूत्पन्नानां । यथा ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन शूद्रायामिमंवक्ष्यमाणंधर्मादनपेतंविधिंजानीयात् ॥७॥

( ४ ) **राघवानन्दः**। अम्बष्ठादीनामुत्पत्तिमाह द्वीति । द्विश्चैकाचेति छेदः । ताभ्यामेतासु जातानां विधिमुत्पत्तिं इमं वक्ष्यमाणम् । तेनात्र विप्रस्यैकान्तरा क्षत्रिया तामपेक्ष्य वैश्या द्व्यन्तरा तांचापेक्ष्य शूद्रा त्र्यन्तरा इतितिस्रः । क्षत्रिया तु वैश्याद्व्यन्तरामपेक्ष्यैकान्तराशूद्राएवंद्वे अतएव वक्ष्यति विप्रस्य त्रिषु वर्णेष्वित्यादि ॥ ७ ॥

( ५ ) **नन्दनः**। एषविधिः पूर्वश्लोकाभ्यामुक्तोविधिः। द्व्यन्तरासु स्वानन्तरजातिभ्यां व्यवहितासु ब्राह्मणस्य वैश्यासु क्षत्रियस्य शूद्रास्वित्यर्थः। ब्राह्मणस्य त्र्यन्तरायाः शूद्रायाअप्युपलक्षणमेतत् इमंविधिंवक्ष्यमाणं वर्णातत्वंद्व्यन्तरत्र्यन्तरयोः ॥ ७ ॥

( ६ ) **रामचन्द्रः**। द्व्यन्तरासु ब्राह्मण [त] वैश्यायां शूद्रायांच । नृपकन्यायां वैश्ये उत्पन्ने शूद्रे उत्पन्ने सति उभौ अम्बष्ठौ भवतः । आत्मा विज्ञायते पुत्रइति ॥ ७ ॥

ब्राह्मणाद्वैश्यकन्यायामंबष्ठोनामजायते ॥ निषादःशूद्रकन्यायांयः पारशवउच्यते ॥ ८ ॥

( १ ) **मेधातिथिः**। एकान्तरा ब्राह्मणस्य वैश्या तत्र जातोऽबष्ठः । स्मृत्यन्तरे भृज्जकण्ठइत्युक्तः । द्व्यन्तरायां शूद्रकन्यायां निषादः पारशवश्च निषादशब्दः प्रतिलोमजातीयेऽपि वर्तते । कन्याग्रहणंस्त्रीमात्रोपलक्षणार्थमितिव्याचक्षते वैश्यस्त्रियामित्यर्थः । एवंसर्वत्रद्रष्टव्यम् ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः**। निषादसंज्ञायां मत्स्यघातकर्मता माभूदित्यस्य निषादान्तरत्वंद्योतयितुं पारशवसंज्ञानुवादः ॥ ८ ॥

( ३ ) **कुल्लूकः** । कन्याग्रहणादत्रोढायामित्यध्याहार्यं विन्नास्वेषविधिः स्मृतइति याज्ञवल्क्येन स्फुटीकृतत्वाच्च । ब्राह्मणाद्वैश्यकन्यायामूढायामंबष्ठाख्योजायते। शूद्रकन्यायामूढायां निषादउत्पद्यते यतः संज्ञान्तरेण पारशवश्चोच्यते ॥८॥

( ४ ) **राघवानन्दः**। वैश्यशूद्रयोर्नास्त्येव द्व्यन्तरजातिरित्याह ब्राह्मणादिति। यइति नवमाध्यायोक्तानुवादः ॥ ८ ॥

( ५ ) **नन्दनः**। ब्राह्मणस्य संभूतावाह ब्राह्मणाद्वैश्यकन्यायामिति । पारशवउच्यते पारशवनामा चेत्यर्थः ॥ ८ ॥

( ६ ) **रामचन्द्रः**। शूद्रकन्यायां ब्राह्मणाज्जातोनिषादः यःपारशवइतिनामाउच्यते ॥ ८ ॥

क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ॥ क्षत्रशूद्रवपुर्जन्तुरुग्रोनामप्रजायते ॥ ९ ॥

( १ ) **मेधातिथिः**। आचारविहारौ कायचेष्टावाग्व्यापारश्च तावस्यक्रूरौ भवतः स्वभावानुवादोयं वपुः शब्दः स्वभाववचनएव उभयजातिसंभूतत्वादुभयधर्माभवति ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः**। क्रूरोहिंस्रआचारोवृत्तं तेन विहारःक्रीडा यस्य ॥ ९ ॥

( ३ ) **कुल्लूकः**। क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टः क्रूरकर्मरतिश्च क्षत्रशूद्रस्वभावउग्राख्यः पुत्रोजायते ॥ ९ ॥

( ४ ) **राघवानन्दः**। क्षत्रियात्तूग्रजातेरुत्पत्तिरित्याह क्षत्रियादिति । शूद्रवपुः क्षत्रियः पिता शूद्रामाता ताभ्यां वपुर्यस्य सः ॥ विप्रान्मूर्धावसिक्तोहि क्षत्रियायांविशःस्त्रियाम् ॥ जातोम्बष्ठस्तु शूद्रायां निषादः पारशवोपि वा ॥ वैश्याशू-

द्वयोस्तु राजन्यान्माहिष्योग्रौस्मृतौसुतौ ॥ वैश्यात्तु करणः शूद्र्यां विन्नास्वेषविधिः स्मृतइति । याज्ञवल्क्योक्तेर्मूर्धाभिषिक्तमाहिष्यकरणानां क्षत्रविट्शूद्रकन्यासु विधिवदूढासु यथाक्रममन्तर्भावोज्ञेयः ॥ ९ ॥

( ५ ) **नन्दनः** । क्षत्रियस्य द्यन्तरायां जातमाह क्षत्रियाच्छूद्रकन्यायामिति । क्षत्रियोत्पन्ननिमित्तैः क्रूराचारैः विहारः कालक्षेपोयस्यास्ति सक्रूराचारविहारवान् ॥ ९ ॥

**विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ॥ वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः ॥१० ॥**

( १ ) **मेधातिथिः** । अत्रत्रिपाद्यनुवादः चतुर्थस्तु पादोऽपसदाभिधानार्थः । एते त्रैवर्णिकानामेकान्तरद्यन्तरस्त्रीजाताअपसदाएते वेदितव्याः । सदा पुत्रार्थफलदाअपशीर्णाः समानजातीयपुत्रापेक्षाया भिद्यन्ते ॥ १० ॥

( २ ) **सर्वज्ञनारायणः** । षडेते अनन्तरद्यन्तरजाः प्रागुक्ताः । अपसदाः सदः सस्यं प्रजारूपं सापकृष्टानेनेत्यपसदइति नाम कृतम् ॥ १० ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य क्षत्रियादित्रयस्त्रीषु क्षत्रियस्य वैश्यादिवर्णद्वयोः स्त्रियोः वैश्यस्य च शूद्रायां वर्णत्रयाणामेतेषु षट्पुत्राः सवर्णपुत्रकार्यापेक्षयाऽपसदाअवसन्नानिकृष्टाः स्युः ॥ १० ॥

( ४ ) **राघवानन्दः** । अतएवाह विप्रस्येति । नृपतेर्द्वयोः वैश्याशूद्रयोः एकस्मिन् शूद्ररूपे शूद्रायां वैश्यात्करणाख्यः । अपसदाः निकृष्टजाः सवर्णापेक्षया ॥ १० ॥

( ५ ) **नन्दनः** । अथ तासु तेभ्यश्चौर्यतोजातानाह विप्रस्य त्रिषु वर्णेष्विति । त्रिषु क्षत्रियादिषु । द्वयोर्वैश्यशूद्रयोः । एकस्मिन् शूद्रे । वर्णशब्देन वर्णस्त्रियोविवक्षिताः । सदशब्देन फलमुच्यते अपगतसदाअपसदाः सवर्णानन्तरापुत्रकार्यहीनाइत्यर्थः ॥ १० ॥

( ६ ) **रामचन्द्रः** । विप्रस्य कन्यायां त्रिषु [ क्षत्रिय ] वैश्यशूद्रेषु जातेषु सत्सु नृपतेः क्षत्रियस्य कन्यायां वर्णयोः वैश्यशूद्रयोः नृपकन्यायां चैवं वैश्ये उत्पन्ने शूद्रे उत्पन्ने सति उभौ अपसदौ आत्माविज्ञायते पुत्र इति वैश्यस्यकन्यायां वर्ण एकस्मिन् शूद्रे उत्पन्ने सति ॥ १० ॥

**क्षत्रियाद्विप्रकन्यायां सूतोभवति जातितः ॥ वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥ ११ ॥**

( १ ) **मेधातिथिः** । आनुलोम्ये पूर्वोविधिः प्रातिलोम्ये नत्वयमुच्यते कन्याग्रहणमुक्तार्थं वैश्यान्मागधवैदेहौ यथासंख्येन राजस्त्रियां मागधः ब्राह्मण्यां वैदेहः ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः** । अनुलोमजानुक्त्वा प्रतिलोमजानाह क्षत्रियादिति । राजाङ्गना क्षत्रस्त्री ॥ ११ ॥

( ३ ) **कुल्लूकः** । एवमनुलोमानुक्त्वाप्रतिलोमानाह क्षत्रियादिति । अत्र विवाहासंभवात्कन्याग्रहणंस्त्रीमात्रप्रदर्शनार्थम् अत्रैव श्लोके राजविप्राङ्गनासुताविति ब्राह्मण्यां क्षत्रियाज्जात्यासूतनामा संजायते वैश्याद्यथाक्रमंक्षत्रियाब्राह्मण्योर्मागधवैदेहाख्यौ पुत्रौ भवतः एषांच वृत्तयोमनुनैवाभिधास्यन्ते ॥ ११ ॥

( ४ ) **राघवानन्दः** । प्रतिलोमजानाह क्षत्रियादितिद्वाभ्याम् । कन्याग्रहणं योषिन्मात्रपरम् ॥ ब्राह्मण्यां क्षत्रियात्सूतोवैश्याद्वैदेहकस्तथा ॥ शूद्राज्जातस्तु चाण्डालःसर्वधर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ॥ शूद्रादायोगवं वैश्याजनयामास वै सुतमिति ॥ याज्ञवल्क्यवचनमेवानयोर्व्याख्यानमितिविरम्यते । अङ्गेन स्वभोगायनीयतइत्यङ्गना ॥ ११ ॥

( ५ ) **नन्दनः** । एवमनुलोमजाउक्ताः अथप्रतिलोमजानाह क्षत्रियाद्विप्रकन्यायामिति ॥ ११ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियाद्विप्रकन्यायांजातः सूतः । वैश्याद्राजकन्यायां मागधः वैतालिकोभवति । वैश्याद्विप्रकन्यायां वैदेहोनाम भवति ॥ ११ ॥

**शूद्रादायोगवः क्षत्ता चण्डालश्चाधमोनृणाम् ॥ वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः॥१२॥**

( १ ) **मेधातिथिः** । अत्रापि यथासंख्यमेव वैश्यराजन्यइति निर्देशे जातिपरेपि सामर्थ्यात्स्त्रीलिङ्गप्रतिपत्तिः । मृगक्षीरंकुक्कुटाण्डइति यथा वृत्तानुरोधात्स्त्रीप्रत्ययोनकृतः ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । वैश्यराजन्यविप्रासु तज्जातीयस्त्रीषु क्रमादायोगवादयस्त्रयः । एषांच प्रतिलोमपरिणयनासंभवादपरिणीतास्वेव जन्म ॥ १२ ॥

( ३ ) **कुल्लूकः** । शूद्राद्वैश्याक्षत्रियाब्राह्मणीषु क्रमेणायोगवः क्षत्ता नृणामधमश्चाण्डालश्च वर्णानांसंकरोयेषु जनयितव्येषु ते वर्णसंकराजायन्ते ॥ १२ ॥

( ४ ) **राघवानन्दः** । शूद्राद्वैश्यक्षत्रियविप्रकन्यासुयथाक्रममायोगवक्षत्तृचण्डालाः स्युरितिभावः ॥ १२ ॥

( ५ ) **नन्दनः** । राजन्यशब्दे छन्दोनुरोधात् स्त्रीप्रत्ययोनियुक्तः ॥ १२ ॥

( ६ ) **रामचन्द्रः** । शूद्राद्वैश्यायामायोगवः । शूद्रात्क्षत्रियायांक्षत्ता । शूद्राद्ब्राह्मण्यांजातश्चाण्डालः । सर्वधर्मबहिष्कृतावैश्यराजन्यविप्रास्वेवंवर्णसंकराजायन्ते । विप्रान्मूर्धाभिषिक्तोहि क्षत्रियायां विशस्त्रियां । शूद्र्यांनिषादोजातः । पाराशर्योपिवायोगी ॥ ब्राह्मण्यांक्षत्रियात्सूतोवैश्याद्वैदेहकःस्मृतः । शूद्राज्जातस्तु चाण्डालः । क्षत्रिया मागधंवैश्यात् ॥ शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यांविन्नास्वेषविधिःस्मृतः ॥ १२ ॥

**एकान्तरे त्वानुलोम्यादंबष्ठोग्रौ यथास्मृतौ ॥ क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येपि जन्मनि ॥ १३ ॥**

( १ ) **मेधातिथिः** । एकान्तरे वर्णे ब्राह्मणाद्वैश्यायामम्बष्ठः क्षत्रियाच्छूद्रायामुग्रः एतावानुलोम्येन एवमेकान्तरे प्रातिलोम्येन शूद्रात्क्षत्रियायां क्षत्ता वैश्याद्ब्राह्मण्यां वैदेहः तौ तुल्यौ भवनादिक्रियासु नत्वध्ययनादिषु। चण्डालएकः प्रतिलोमोऽस्पृश्यः यथा च दिवाकिर्तिरलोकेतत्स्पर्शएवंस्नानंनान्येषु प्रतिलोमेषु सूतमागधायोगवानामनन्तरजातानांचण्डालदण्डापूपिकायां सिद्धः स्पर्शादिसंबन्धः ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । विप्राद्वैश्यायां यथाम्बष्ठोयथावा क्षत्रियाच्छूद्रायामुग्रः पुत्रआनुलोम्येन जातोप्यनन्तरस्त्रीजातपुत्रापेक्षया निन्दितस्तथा वैश्याद्विप्रायांजातोवैदेहः शूद्रात्क्षत्रियायां जातश्च क्षत्ता । अनन्तरप्रतिलोमजातापेक्षयैकान्तरितजातत्वान्निन्दितइत्यर्थः । यथास्मृतौ निन्दितावितिशेषः ॥ १३ ॥

( ३ ) **कुल्लूकः** । एकान्तरेपि वर्णे ब्राह्मणाद्वैश्यकन्यायामंबष्ठः क्षत्रियाच्छूद्रकन्यायामुग्रः एतावानुलोम्येनं यथास्पर्शाद्यर्हौ तद्वदेकान्तरे प्रतिलोमजननेपि शूद्रात्क्षत्रियायां क्षत्ता वैश्याद्ब्राह्मण्यां वैदेहः एतावपि स्पर्शादियोग्यौ विज्ञेयौ । एकान्तरोत्पन्नयोः स्पर्शाद्यनुज्ञानादनन्तरोत्पन्नानांसूतमागधायोगवानांस्पर्शादियोग्यत्वंसिद्धंभवति । अतश्चाण्डालएवैकः प्रतिलोमतः स्पर्शादौ निरस्यते ॥ १३ ॥

( ४ ) **राघवानन्दः** । क्षत्तृवैदेहयोः स्पृश्यत्वं सदृष्टान्तमाह एकान्तरइति । स्वस्वजातितोभिन्नैकाजातिरन्तरा व्यवधानं यस्य जन्मनस्तस्मिन्नेकान्तरे जन्मनि यथानुलोमजावम्बष्ठोग्रौस्पृश्यावेवं शूद्रात्क्षत्रियाजः क्षत्ता वैश्याद्ब्राह्मणीजोवै-

देहश्च तुल्यौ स्पृश्यत्वादिना स्मृतावित्यन्वयः । वर्णसंकराणां मातृजातीयसंस्कारं प्रापयितुं तेषामनुवादः ॥ १३ ॥

( ५ ) **नन्दनः** । उक्तमेवार्थंश्लोकत्रयेण प्रपञ्चयति एकान्तरेत्वानुलोम्यादिति । आनुलोम्यादेकान्तरे जन्मनि यथा ब्राह्मणाद्वैश्यायामंबष्ठः यथाक्षत्रियाच्छूद्रायामुग्रः यथा प्रातिलोम्येनैकान्तरे जन्मनि शूद्रात्क्षत्रियायां क्षत्ता तथा वैश्याद्ब्राह्मण्यां वैदेहकः आयोगवश्च क्षत्ताचण्डालश्चेतिप्रातिलोम्येन जायन्ते शूद्राद्वैश्यायामायोगवः क्षत्रियायां क्षता ब्राह्मण्यां चण्डालइत्यर्थः वैश्यान्मागधवैदेहौ क्षत्रियाद्ब्राह्मण्यां सूतइत्यर्थः परेऽन्ये एतेप्यपसदाइत्यर्थः ॥ १३ ॥

( ६ ) **रामचन्द्रः** । एकेन अन्तरे आनुलोम्यात् ब्राह्मणाद्वैश्यकन्यायां अम्बष्ठः। तु पुनः शूद्रात् वैश्यायां आयोगवः। शूद्रात्क्षत्रियायां क्षत्ता । शूद्राद्ब्राह्मण्यांअधमः एकेन अन्तरे राजन्यात् शूद्रायां जातः उग्रः अम्बष्ठोग्रौयथास्मृतौ भाषणस्पर्शयोग्यौक्षत्तृवैदेहिकौ प्रतिलोमेन जन्मनि तद्वत् भाषण स्पर्शयोग्यौ । क्षत्रियायां शूद्रात् क्षत्तारं जनयति ब्राह्मण्यां वैश्यात् वैदेहकः ॥ १३ ॥

## पुत्रायेऽनन्तरस्त्रीजाः क्रमेणोक्ताद्विजन्मनाम् ॥ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥ १४ ॥

( १ ) **मेधातिथिः** । यथा ब्राह्मणात्क्षत्रियायां वैश्यायां च एवंक्षत्रियादुभयोस्ताननन्तरानाम्नः प्रचक्षते । अनन्तराऽनुलोमा या जातिः समाना तेषांमातृजातीयाइत्यर्थः । अनन्तरग्रहणमविवक्षितमतएवाह मातृदोषादिति पितृजात्युत्कर्षेण नोदुष्यन्ते। अतश्च सत्यपि वर्णसंकरत्वे वचनान्मातृजात्याः स्मृताः संस्कारास्तेषु कर्तव्याइत्युक्तं भवति तर्ह्येवद्वचनमन्तरेण क्षत्रियादिसंस्कारास्तेषु लभ्यन्ते अश्वतरवज्जात्यन्तरत्वात् वचनेन तु मातृजातावुक्तायामदोषाः ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । अनन्तरस्त्रीजाः विप्रस्यक्षत्रियायां क्षत्रस्यवैश्यायां वैश्यस्यशूद्रायाम । अनन्तरनाम्नः क्षत्रियादिनाम्नः प्रचक्षते मातृदोषात् । क्षत्रियादिमातृकत्वान्मातृजातिसाधारणोधर्मस्तेषामित्यर्थः । अनन्तरनाम्नइति नामग्रहणान्नाममात्रं नजातिरिति दर्शितम ॥ १४ ॥

( ३ ) **कुल्लूकः** । मातुर्दोषादिति हेतूपन्यासात् अनन्तरग्रहणमनन्तरवच्चैकान्तरद्व्यन्तरप्रदर्शनार्थं ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः पूर्वमुक्ताः पुत्रास्तान्हीनजातिमातृदोषान्मातृजातिव्यपदेश्यानाचक्षते । मातापितृव्यतिरिक्तसंकीर्णजातित्वेप्येषांमातृजातिव्यपदेशकथनंमातृजातिसंस्कारादिधर्मप्राप्त्यर्थम ॥ १४ ॥

( ४ ) **राघवानन्दः** । पुनःस्पृश्यत्वार्थमनुलोमजात्यन्तरत्रयमाह पुत्राइति । द्विजन्मनामनन्तरासु स्त्रीषु उग्राम्बष्ठायोगवजातीयासु विप्राद्यैः पुत्राजायन्ते ते अनन्तरनाम्नः आवृतादिनामकजातियोगिनः । तत्संज्ञामातृजातिसंस्कारार्थेतिमेधातिथिः ॥ १४ ॥

( ५ ) **नन्दनः** । पक्षान्तरमाह पुत्रायेनन्तरस्त्रीजाइति । अनन्तरनाम्नोनन्तरवर्णनाम्नः क्रमेण क्षत्रियवैश्यशूद्रनाम्नः मातृजातीयानित्यर्थः ॥ १४ ॥

( ६ ) **रामचन्द्रः** । अनन्तरस्त्रीजाये पुत्राअम्बष्ठोग्रक्षत्तृवैदेहकायोगवाः एते पुत्राः अनन्तरस्त्रीजाता अनन्तरनामानः ॥ १४ ॥

## ब्राह्मणादुग्रकन्यायामावृतोनाम जायते ॥ आभीरोंऽबष्ठकन्यायामायोगव्यान्तुधिग्वणः ॥ १५ ॥

( १ ) **मेधातिथिः** । अयंनिषादोस्मिँश्लोकेन शूद्रायां ब्राह्मणाज्जातोयः प्रागुक्तः किंतर्हि यः प्रतिलोमोवक्ष्यमाणः

( १४ ) नाम्नस्तु=जातांस्तु ( य )

प्रतिलोमाधिकारात्प्रतिलोमादिपुल्कसाजातिः प्रसिद्धा । एवंशूद्रान्निषाद्यांकुकुटकः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणादिति अनुलोमविलोमसंकरस्त्रीभूतमवर्णजनितमेतत्कुलम् ॥ १५ ॥

( ३ ) **कुल्लूकः** । क्षत्रियेण शूद्रायामुत्पन्नोग्रा उग्रा चासौ कन्याचेत्युग्रकन्या तस्यां ब्राह्मणादावृतनामा जायते । ब्राह्मणेन वैश्यायामुत्पन्ना अंबष्ठा तस्यां ब्राह्मणादाभीराख्योजायते शूद्रेण वैश्यायामुत्पन्नाऽऽयोगवी तस्यां ब्राह्मणाद्धिग्वणोजायते ॥ १५ ॥

( ४ ) **राघवानन्दः** । ते एवावृताभीरधिग्वणजातयइत्याह ब्राह्मणादिति ॥ १५ ॥

( ५ ) **नन्दनः** । अथान्यान्सङ्करजातानाह ब्राह्मणादुग्रकन्यायामिति ॥ १५ ॥

( ६ ) **रामचन्द्रः** । आवृतोहस्तिपः । अम्बष्ठकन्यायां विप्रात् आभीरः । आब्राह्मणात् आयोगव्यांधिग्वणः ॥१५॥

**आयोगवश्च क्षत्ता च चण्डालश्चाधमोनृणाम् ॥ प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः॥ १६ ॥**

( २ ) **सर्वज्ञनारायणः** । अयोगवइतिप्रागुक्तमातृकर्मणाधमःसर्वसंकरजेभ्योऽप्यधमः । शूद्राज्जाताएतइत्यर्थः । अयोगव्यांयोजातः कैवर्ताख्यः सोत्रनिषादजत्वान्निषादः एववैश्यादित्यत्रापि ॥ १६ ॥

( ३ ) **कुल्लूकः** । आयोगवः क्षत्ता चण्डालश्च मनुष्याणामधमइत्येते त्रयोन्युत्क्रमेण वैश्याक्ष त्रयाब्राह्मणीषु पुत्रकार्यादपगतास्त्रयः शूद्राजायन्ते । पुत्रकार्यक्षमत्वप्रतिपादनार्थमुक्तानामप्येषांपुनर्वचनं एवमुत्तरश्लोकउक्तानामपि ॥ १६ ॥

( ४ ) **राघवानन्दः** । पुत्रकार्यविच्छेदाय षण्णां प्रागमपसदत्वमनुवदति आयोगवश्चेतिद्वाभ्याम् । अपत्यकार्यात्सीदन्तीत्यपसदाः ॥ १६ ॥

**वैश्यान्मागधवैदेहौ क्षत्रियात्सूतएव तु ॥ प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः ॥ १७ ॥**

( २ ) **सर्वज्ञनारायणः** । एतेप्यपरे त्रयोऽपसदाअत्यन्तापकृष्टाइत्यर्थः ॥ १७ ॥

( ३ ) **कुल्लूकः** । क्षत्रियाब्राह्मण्योर्मागधवैदेहौ क्षत्रियाद्ब्राह्मण्यां सूतइत्येवंप्रातिलोम्येनापरेपि त्रयः पुत्रकार्यादपजायन्ते ॥ १७ ॥

( ४ ) **राघवानन्दः** । प्रतीपंप्रातिकूल्यम् । संकरोनरकायैवेत्युक्तेःप्रातिलोम्यमेवात्रहेतुः ॥ १७ ॥

( ६ ) **रामचन्द्रः** । वैश्यात्क्षत्रियायां मागधः । वैश्यात् विप्रकन्यायां वैदेहः । क्षत्रियात् विप्रकन्यायां सूतः भवन्ति । एते प्रतीपं विपरीतं जायन्ते ॥ १७ ॥

**जातोनिषादाच्छूद्रायां जात्या भवति पुक्कसः ॥ शूद्राज्जातोनिषाद्यान्तु सवै कुक्कुटकः स्मृतः॥१८॥**

( २ ) **सर्वज्ञनारायणः** । निषादात् ब्राह्मणशूद्रापुत्रात् । एवंनिषाद्यामित्यपि ॥ १८ ॥

( ३ ) **कुल्लूकः** । निषादाच्छूद्रायां जातोजात्या पुक्कसोभवति । निषाद्यां पुनः शूद्राद्योजातः सकुक्कुटकनामा स्मृतः ॥ १८ ॥

( ४ ) **राघवानन्दः** । अन्यानपितथाविधानाह जातइतिद्वाभ्याम् ॥ १८ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियायांनिषादाज्जातो जात्या पुल्कसः भवति । निषाद्यांशूद्राज्जातःकुकुटकःस्मृतः ॥ १८ ॥

---

( १८ ) पुक्कसः=पुल्कसः ( ण )

क्षत्तुर्जातस्तथोग्रायां श्वपाकइति कीर्त्यते ॥ वैदेहकेन त्वंबष्ठ्यामुत्पन्नोवेणउच्यते ॥ १९ ॥

( १ ) मेधातिथिः । अनुलोमाः स्त्रियः प्रतिलोमाः पुमांसस्तयोः संभवे श्वपाकवेनौ प्रतिलोमजातीयौ ॥१९ ॥

( २ ) सर्वज्ञनारायणः । क्षत्तृजातइति पितृदोषात् ॥ १९ ॥

( ३ ) कुल्लूकः । शूद्रेण वैश्यायां जातः क्षत्ता क्षत्रियेण शूद्रायां जाता उग्रा तेन तस्यां जातः श्वपाकइत्युच्यते । वैदेहकेनांबष्ठ्यां ब्राह्मणेन वैश्याजातायां वेणइति कथ्यते ॥ १९ ॥

( ४ ) राघवानन्दः । वेणोबुरुडः ॥ १९ ॥

( ६ ) रामचन्द्रः । उग्रायां उग्रजात्यांक्षत्तुःजातः श्वपाटकः । आंबष्ठ्यांवैदेहकेन जातः वेनइति उच्यते ॥ १९ ॥

द्विजातयः सवर्णासुजनयंत्यव्रतांस्तु यान् ॥ तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ॥ २० ॥

( १ ) मेधातिथिः । नैते प्रतिलोमवर्णसंकरास्युरतोस्मिन्विधावुच्यते द्विजातयोयान्सवर्णासु जनयन्ति ते वेदव्रताभवन्ति । अब्रह्मचारिणः सावित्रीपरिभ्रष्टाउपनयनहीनाश्च तदा व्रात्याइति तान्निर्दिशेत् । अव्रताञ्जनयन्तीति नायंसंबन्धः नहि व्रतिनोऽव्रतावा जन्यन्ते जातानामुपनयनसंस्कारविधानात् उक्तव्रात्यलक्षणानुवादउत्तरविवक्षया यस्त्वयंपाठोऽव्रतायाञ्जनयन्ति तान्व्रात्यान्विनिर्दिशेत्तदसत् उक्तव्रात्यलक्षणविरोधात् ॥ २० ॥

( २ ) सर्वज्ञनारायणः । सावित्रीपरिभ्रष्टाननुपदेश्यसावित्रीकान् । व्रात्यनाम्नोवर्णबाह्यान् ॥ २० ॥

( ३ ) कुल्लूकः । द्विजातयः सवर्णासु स्त्रीषु यान्पुत्रानुत्पादयन्ते ते चेदुपनयनाख्यव्रतहीनाभवन्ति तदा तानकृतोपनयनान्व्रात्येत्यनया संज्ञया व्यपदिशेत् अतऊर्ध्वंत्रयोप्येतइत्युक्तमपि व्रात्यलक्षणंप्रतिलोमजपुत्रवदस्याप्युपकाराक्षमपुत्रत्वप्रदर्शनार्थमस्मिन्संकीर्णप्रकरणेऽनूदितम् ॥ २० ॥

( ४ ) राघवानन्दः । व्रात्यानामिवतज्जानामपिपुत्रकार्यनिवृत्त्यर्थं व्रात्यत्वमाह द्विजातयइति । तेत्रयमव्रताः कालेऽप्राप्तोपनयनाःअनुलोमेनोद्वाहितास्वक्षतयोनिषुसवर्णास्वपिजनयन्तियान् तान् सावित्रीभ्रष्टत्वेनाव्रतानितिकृत्वा व्रात्यान्निर्दिशेदित्यन्वयः ॥ २० ॥

( ५ ) नन्दनः । अथत्रैवर्णिकानामनुपनीतानां जात्यन्तरत्वमाह द्विजातयस्सवर्णास्विति । यान्सुताञ्जनयन्ति तान्व्रतानुपनीतान् अतएव सावित्रीपरिभ्रष्टान् ॥ २० ॥

( ६ ) रामचन्द्रः । अव्रतान् अकृतयज्ञोपवीतान् सावित्रीपरिभ्रष्टान् व्रात्यान् इति अभिनिर्दिशेत् कथयेत् ॥ २० ॥

व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ॥ आवन्त्यवाटधानौ च पुष्पधः शैखएव च ॥ २१ ॥

( १ ) मेधातिथिः । सवर्णास्वपि पूर्वश्लोकादनुवर्त्यते इह स्त्रीजातेरनुपादानादत्रश्यंभावाच्च तदपेक्षायाः स्मृत्यन्तरे वैश्यायां ब्राह्मणाज्जातोभृज्जकण्टकः स्मर्यते अतोविशिनष्टि । पापात्मेति सह्यनुलोमत्वान्नपापात्मा अयंचासंस्कृतात्मनोव्रात्याज्जातोनधिकारित्वायुक्तंयन्निन्द्यते नच पर्यायशब्दादेशभेदेन प्रसिद्धप्रयोगभेदाः पूर्वैस्तुव्याख्यातंतत्पुत्रपौत्राणामेताआख्याभृज्जकण्टकोब्राह्मण्यां जातआवन्त्यश्चावन्त्यां तस्यामेव वाटधानो वाटधानात्पुष्पशेखरएवमुत्तरेष्वपि ॥ २१ ॥

( २ ) सर्वज्ञनारायणः । व्रात्याद्विप्रात् व्रात्यायामेव विप्रायां सवर्णास्वित्यनुवृत्तेः तत्र भूर्जकण्टकः सवर्णयोरप-

( २१ ) पुष्पधःशैख=पुष्पशेखर ( मे० )

त्यम् । भूर्जकण्टकस्त्रियां विप्राद्व्रात्यादावन्त्यः । आवन्त्यांवाटइत्यादिपूर्ववज्जातिस्त्रीषु व्रात्येन विप्रेण जनिताविप्रजाः । ऋणादिष्वपि व्रात्यक्षत्रियादिजनितेषु सुधन्वाचार्यादिषुच व्रात्यवैश्यजनितेषूह्यम् । आद्यस्य तज्जातीयस्त्रियामुत्तरेषांतु पूर्वपूर्वजातिस्त्रियां जन्मेति । पापात्मेतिविशेषणं निन्दार्थम् ॥ २१ ॥

( ३ ) **कुल्लूकः** । व्रात्याद्ब्राह्मणात्सवर्णास्वित्यनुवृत्तेर्ब्राह्मण्यां पापस्वभावो भूर्जकण्टकोजायते । तथाऽऽवन्त्यवाटधानपुष्पधशैखाजायन्ते एकस्य चैतानि देशभेदप्रसिद्धानि नामानि ॥ २१ ॥

( ४ ) **राघवानन्दः** । तेतु व्रात्यास्त्रयस्तज्जातानाह व्रात्यात्त्विततित्रिभिः । तत्र तथाविधब्राह्मणजाः पञ्च भूर्जकण्टकादयः । झल्लादयः सप्त क्षत्रियजाः । पञ्चवैश्यजाः । पंचेतिदेशसंज्ञाभिरेते प्रसिद्धाइतिमेधातिथिः । देशभेदेनैकैकस्य नामानीतिकुल्लूकः अन्यथैकजात्यावर्णद्वयानुपपत्तेः ॥ २१ ॥ ॥ २२ ॥ ॥ २३ ॥

( ५ ) **नन्दनः** । विप्रादिति विशेषणंव्रात्यत्वेप्यस्य विप्रत्वमूलच्छेदोनास्तीति सूचयितुं । असंस्कृतपितृजातः पापत्वइत्यभिप्रायेणोक्तंपापात्मेति । पञ्चैते सजातिषूढासु स्त्रीषु जाताअपि संस्कारविप्रकर्षादुत्तरोत्तरमपकृष्टावृत्तितोदेशतोवा भिन्नसंज्ञाविज्ञेयाः षष्ठादीनामवचनन्तु जात्यन्तरत्वेनाप्रसिद्धेः ॥ २१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणक्षत्रियवैश्यजातीनांव्रात्यजातिर्भवति उपनयनाभावात् । व्रात्याद्विप्राद्विप्रकन्यायांभूर्जकण्टकोनाम जातिर्जायते । भूर्जकण्टकः स्मृतः कण्टको ज्ञेयः आवन्त्यः ॥ २१ ॥

**झल्लोमल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ॥ नटश्च करणश्चैव खसोद्रविडएव च ॥ २२ ॥**

( १ ) **मेधातिथिः** । एताभिः संज्ञाभिः प्रसिद्धाएवंजातीयावेदितव्याः ॥ २२ ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । और्णादयः सप्त राजन्याद्व्रात्यात् ॥ २२ ॥

( ३ ) **कुल्लूकः** । क्षत्रियाद्व्रात्यात्सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्याजायन्ते एतान्यप्येकस्यैव नामानि ॥ २२ ॥

( ५ ) **नन्दनः** । श्लोकद्वयमनेन व्याख्यातम् ॥ २२ ॥

( ६ ) **रामचन्द्रः** । राजन्याद्व्रात्यात्क्षत्रियायां जातः झल्लनिच्छवः नटःकरणःखसःद्रविडः ॥ २२ ॥

**वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्यएव च ॥ कारुषश्च विजन्मा च मैत्रः सात्वतएव च ॥ २३ ॥**

( २ ) **सर्वज्ञनारायणः** । सुधन्वाचार्यादयःपञ्चवैश्याद्व्रात्यात् ॥ २३ ॥

( ३ ) **कुल्लूकः** । वैश्यात्पुनर्व्रात्यात्सवर्णायांसुधन्वाचार्यकारुषविजन्ममैत्रसात्वताख्याजायन्ते एकस्य चैतान्यपि नामानि ॥ २३ ॥

( ६ ) **रामचन्द्रः** । वैश्याद्व्रात्याद्वैश्यायांजाताःसुधन्वादिसात्वतान्ताः ॥ २३ ॥

**व्यभिचारेण वर्णानामवेद्यावेदनेन च ॥ स्वकर्मणांच त्यागेन जायन्ते वर्णसंकराः ॥ २४ ॥**

( १ ) **मेधातिथिः** । व्यभिचारः परस्त्रीगमनंतत्समानजातीयासु परकीयास्वनुलोमप्रतिलोमासूढास्वनूढासु च तास्वयं अवेद्यावेदनमविवाह्याविवाहः अविवाह्याः स्वसृमात्रादयस्तदयोन्यः । स्वकर्मणांत्यागउपनयनवेदग्रहणादीनांक्षत्रवृत्त्यादयोपि पुत्रपौत्रान्वयिनएवमुक्ताःकेचित् ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । व्यभिचारेण सवर्णायामेव परभार्यायां व्यभिचारेण कुण्डगोलकपौनर्भवाः । असवर्णा-

यांच यथा ब्राह्मण्यांक्षत्रियस्य व्यभिचारात्सूतइति । अवेद्यावेदनेनाविवाह्यानामसवर्णानांसवर्णानामपिसगोत्रादीनांविवाहेमूर्धावसिक्तचाण्डालाद्याः । स्वकर्मणामुपनयनव्रतानां त्यागात् व्रात्यजाः । वर्णसंकराश्चातुर्वर्ण्यबाह्याः ॥ २४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणादिवर्णानामन्योन्यस्त्रीगमनेन सगोत्रादिविवाहेनोपनयनरूपस्वकर्मत्यागेन वर्णसंकरोनाम जायते अतोयुक्तमस्मिन्प्रकरणे व्रात्यानामभिधानम् ॥ २४ ॥

( ४ ) **राघवानन्दः** । प्रकारान्तरेणापि वर्णसंकरोभवतीति संक्षिप्याह व्यभिचारेणेति । विहाय विन्नास्वपतिमाभिमुख्येन कामुकम् । चरतीति स्वतन्त्रा या सा स्मृता व्यभिचारिणीतिव्यभिचारेण वर्णानामन्योन्यस्त्रीगमनेनेति दृष्टान्तार्थः । व्यतिषङ्गेनेतिमेधातिथिः । नियुक्तातिरिक्तपरस्त्रीगमनेनेत्यर्थः । अवेद्याः सगोत्राः सवर्णावा तासां विवाहेन । स्वकर्मणां संध्यादीनां त्यागेन स्वकालाप्राप्तोपनयनैर्व्रात्यानां संकरत्वस्योक्तत्वात् ॥ २४ ॥

( ५ ) **नन्दनः** । यदीदंसंस्काराभावे जात्यन्तरत्वमुक्तंतदनुपपन्नमित्याशङ्क्यदृष्टान्तेन स्थापयति व्यभिचारेण वर्णानामिति । अवेद्याअविवाह्याः पुनर्भ्वादयस्तासांवेदनेन विवाहेन संकरोमातापित्रोरविद्याजातिमाभिः । व्यभिचारेण वर्णानामिति प्रसिद्धव्यभिचारोदृष्टान्तार्थः ॥ २४ ॥

( ६ ) **रामचन्द्रः**। वर्णानांव्यभिचारेण च पुनः अवेद्यावेदनेन च अविवाह्याविवाहेन स्वकर्मणामुपनयनादीनांत्यागेन वर्णसंकाराजायन्ते ॥ २४ ॥

## संकीर्णयोनयोये तु प्रतिलोमानुलोमजाः ॥ अन्योन्यव्यतिषक्ताश्च तान्प्रवक्ष्याम्यशेषतः॥२५॥

( १ ) **मेधातिथिः** । व्यतिषङ्गःसंबन्धइतरेतरमनुलोमानामनुलोमैःप्रतिलोमैश्चैवंप्रतिलोमानामन्यैः प्रतिलोमैरनुलोमैश्च वक्ष्यमाणसंज्ञायैवचनम् ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । यउक्ताः प्रतिलोमानुलोमजास्तेपि यदा अन्योन्यं संकीर्णैरेव व्यवतिष्ठन्ते व्यभिचरन्ति । व्यतिषङ्गजत्वाद्व्यतिषक्ताव्रात्याः । तत्र ये जायन्ते तान्वक्ष्यामीत्यर्थः ॥ २५ ॥

( ३ ) **कुल्लूकः** । ये संकीर्णयोनयः प्रतिलोमैरनुलोमैश्च परस्परसंबन्धाज्जायन्ते तान्विशेषेण वक्ष्यामि ॥ २५ ॥

( ४ ) **राघवानन्दः** । पुनश्च सूतादीनां चण्डालातिरिक्तपञ्चानामनुलोमजत्वाद्यर्थमाह संकीर्णेतित्रिभिः । अनुलोमजाइतिदृष्टान्तार्थम् । अन्योन्यव्यतिषक्ताः अन्योन्योन्यं परस्त्रीपुंभ्यः कामतोव्यतिषक्तेभ्योजाताः ॥ २५ ॥

( ५ ) **नन्दनः** । एवंसंकीर्णपितृमातृकाः प्रायशः प्रतिलोमानुलोमाउक्ताइदानींसंकीर्णपितृमातृकान्प्रतिलोमजानुलोमजान्वक्ष्यामीत्याह संकीसंकीर्णयोनयइति । संकीर्णयोनयः संकीर्णेभ्योजाताअन्योन्यव्यतिषक्ताः प्रतिलोमानुलोमजैः संबद्धाः ॥ २५ ॥

( ६ ) **रामचन्द्रः** । ये प्रतिलोमानुलोमजाः प्रतिलोमजानाह सूतवैदेहचाण्डालाः अनुलोमजाअम्बष्ठनिषादमाहिष्योग्रकरणाः षट् अन्योन्यव्यतिषक्ताः प्रतिलोमानुलोमानांपरस्परव्यभिचारयुक्ताः तान् ॥ २५ ॥

## सूतोवैदेहकश्चैव चण्डालश्च नराधमः ॥ मागधः क्षत्तृजातिश्च तथाऽयोगवएवच ॥ २६ ॥

( १ ) **मेधातिथिः** । उक्तलक्षणाएते प्रातिलोमाउत्तरार्धेपुनरुपन्यस्यन्ते ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । सूतादयः प्रागुक्ताः ॥ २६ ॥

( ३ ) **कुल्लूकः** । एते षडुक्तलक्षणाः सूतादयः उत्तरार्धमनूद्यन्ते ॥ २६ ॥

( ४ ) **राघवानन्दः** । प्रतिलोमजादपि नराधमः शूद्रस्यब्राह्मणीगमने महापातकित्वात्तस्याअपि तथात्वात् । चण्डालग्रहणं निवीतंमनुष्याणामितिवद्व्यतिरेकमुखेन स्तुत्यर्थः ॥ २६ ॥

( ५ ) **नन्दनः** । तत्र प्रतिलोमजेभ्यः प्रसूतान्वक्तुंप्रतिलोमजानुक्तांस्तावदनुक्रामति सूतोवैदेहकश्चैवेति । सूतोविप्रायां क्षत्रियाज्जातः वैदेहकस्तस्यामेव वैश्यात् चण्डालस्तस्यामेव शूद्रात् मागधः क्षत्रियायां वैश्यात् क्षत्ताजातिस्तस्यामेव शूद्रात् आयोगवोवैश्यायां शूद्राज्जातइति पूर्वमुक्तंहीत्यर्थः ॥ २६ ॥

( ६ ) **रामचन्द्रः** । सूतइति द्वाभ्यामाह । ततः सूतः वैदेहकः चाण्डालाःनराधमाः ज्ञेयाः मागधः क्षत्ता अयोगवएते षट् सदृशान्वर्णान् प्रतिलोमानुलोमयोनिषुजनयन्ति । प्रवरासु उत्तमासु चकारात् क्षत्रियपुत्रोमागधोब्राह्मण्यां अपकृष्टासु योनिषुमातृजात्यामातृसमानजातीयाः ॥ २६ ॥ २७ ॥

**एते षट्सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु ॥ मातृजात्यांप्रसूयन्ते प्रवरासु च योनिषु ॥ २७ ॥**

( १ ) **मेधातिथिः** । एते सूतादयः प्रतिलोमाः स्वयोनिसदृशान् जनयन्ति तज्जातीयानित्यर्थः । तद्यथा सूतः सूतायां सूतमेव जनयति एवंचण्डालः चण्डालायां येच मातृजात्याः प्रसूयन्तेऽनुलोमामातृजातीयाये पूर्वमुक्तास्ताननन्तरानाम्न इति तेऽपि स्वयोनिषु सदृशानेव जनयन्ति यथा ऽम्बष्ठोम्बष्ठांतथा वैश्यायामात्मनोहीनावैश्याञ्जनयन्ति मातृजातित्वस्योक्तत्वात् । अन्ये पुनः पठन्ति मातृजातौ प्रसूयन्ते अर्थश्चायंवर्णयोनिषु आम्बष्ठादौ मातृजातौ च वैश्यायां सदृशानेव जनयन्ति । यद्यपि शुद्धवैश्येभ्यउत्कृष्टाअम्बष्ठादयस्तथापि साम्यमुच्यते वैश्यधर्मउभयेषामधिकारात् अनुलोमग्रहणंमातृजाति [ पदसामर्थ्याल्लिभ्यतेसत्यपिप्रतिलोमप्रत्यवमर्शकत्वेप्रसज्यतइति । प्रवरासुचयोनि ][1] षु प्रतिलोमागच्छन्तोजनयन्तिहीनतरमित्येवंज्ञेयंवक्ष्यमाणपर्यालोचनया दृष्टमयोगवादिभिः स्वजातीयासु जनिताअयोगवादिव्यपदेशंलभन्ते सदृशग्रहणंतु प्रातिलोम्यंच सामान्येन हीनतरत्वंचावान्तरविशेषमनपेक्ष्य प्रयुक्तंतेनायमत्र वाक्यार्थः प्रतिलोमेभ्यः समानजातीयासूत्कृष्टजातीयासु च प्रतिलोमाएव भवन्ति ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । स्वयोनिषु सूतादिजातीयासु स्त्रीषु सदृशान् स्वसदृशधर्मणः । तथा मातृजात्यांसूतादिमातृसमजातीयायां ब्राह्मण्यादिरूपायाम् । तथा मातृजातिषु प्रवरासूत्तमासु यथा क्षत्रियापुत्रोमागधोब्राह्मण्यामिति । स्वजातीयत्वमातृजातितदुत्कृष्टजातियोगात्त्रिविधोव्यभिचारः ॥ २७ ॥

( ३ ) **कुल्लूकः** । एते पूर्वोक्ताः षट्प्रतिलोमजाः स्वयोनिषु सुतोत्पत्तिंकुर्वन्ति । यथा शूद्रेण वैश्यायां जातआयोगवः आयोगव्यामेव मातृजातौ वैश्यायां प्रवरासु क्षत्रियाब्राह्मणीयोनिषु चकारादपकृष्टायामपि शूद्रजातौ सर्वत्र सदृशान्वर्णाञ्जनयन्ति सदृशत्वंच न पित्रपेक्षया किन्तु मातृजात्यादिषु चातुर्वर्ण्यस्त्रीष्वेव पितृतोधिकगर्हितपुत्रोत्पत्तेर्वक्ष्यमाणत्वात्तत्सदृशान्पितृतोऽधिकगर्हितान्स्वजातावपि जनयन्तीत्येतावदेवाप्राप्तत्वादनेन विधीयते । किन्तु जघन्यवर्णेनोत्तमवर्णस्त्रीषु जनितत्वात्क्रियादुष्टाआयोगवाद्याः प्रतिलोमजाः क्रियादुष्टाभ्यां च मातापितृभ्यां तुल्याभ्यामपि जनिते आयोगवादिपुत्रे ब्रह्महत्त्रनन्तरजनितोब्रह्महन्तृमातापितृजनितवदधिकदुष्टएव न्याय्यः शुद्धब्राह्मणादिजातोयेन शुद्धब्राह्मण्यादिसजातीयायां जनितः पितृतुल्यएवोचितोनतु क्रियादुष्टोभयजनितोऽपि ॥ २७ ॥

( ४ ) **राघवानन्दः** । किंच एते षट् सूतादयः स्वयोनिषु ब्राह्मणीक्षत्रियावैश्यासु सदृशान् सजातीयान् । एतदेव निगमव्याजेन हेतून्प्रदर्शयन्नाह मातृजात्यामिति । प्रवरासु स्वयोनिषु तत्तन्मातृजात्यवच्छिन्नासु प्रसूयन्ते यतः अतएव प्र-

१ ( आआ )

तिलोमजास्तुकर्महीनाइतिगौतमवचनम् । अतएव मातृवद्वर्णसंकरइत्यपि संगच्छते । यथा शूद्रात् वैश्यायामायोगवएव मायोगव्यामेव मातृजातौ वैश्यायां प्रवरायामायोगवः यंसुतं जनयेत्ससुतोवैश्यजात्युक्तसंस्काराहः । एवं शूद्रात्क्षत्रियाजः क्षत्ता क्षत्रियायां क्षत्रजातीयंजनयेत्सः क्षत्रियसंस्कारार्हः । वैश्यात्क्षत्रियाजोमागधः सच क्षत्रियायां यंजनयेत्सोपि क्षत्रियसंस्कारार्हः । एवं सूतवैदेहयोरपि । प्रवरास्वितिविशेषणाच्चण्डालस्यनसंस्कारइमिमेधातिथिः । पितृतोधिकगार्हतांस्व-जातावपि जनयन्तीत्येतावन्मात्रं विवक्षितमिति कुल्लूकः ॥ २७ ॥

( ५ ) **नन्दनः** । ततः किमित्यपेक्षायामाह एतेषडिति । एते सूतादयः षट्सदृशान्सजातीयान्वर्णान् योनिषु सूतीवैदे-हिकीचण्डालीप्रभृतिषु जनयन्ति वर्णशब्दोमनुष्यावान्तरजातिमात्रवचनः मातृजात्यां स्वमातृजातिसदृशानेव जनयन्ति सूतवैदेहकचण्डालानां मातृजातिर्ब्राह्मणजातिः मागधक्षत्रोर्मातृजातिः क्षत्रियजातिः आयोगवस्य मातृजातिर्वैश्यजातिः तासु जातिषु सदृशानेव जनयन्तीत्यर्थः किञ्चित्प्रवरासु च योनिष्वात्मनः प्रवरासु मातृजातिव्यतिरिक्तासु चातुर्वर्ण्यस्त्रीषु च सदृशानेव प्रसूयन्ते जनयन्ति । अनेन श्लोकेनैतदुक्तंभवति सूतः सूत्यां सूतमेव जनयति नान्यं एवंमातृजात्यां च ब्राह्मण्यां सूतमेव तदितरासु क्षत्रियवैश्यस्त्रीषु च सूतमेव एवंवैदेहकादयोपीति ॥ २७ ॥

**यथा त्रयाणांवर्णानांद्वयोरात्मास्य जायते ॥ आनन्तर्यात्स्वयोन्यान्तु तथा बाह्येष्वपि क्रमात् ॥ २८ ॥**

( १ ) **मेधातिथिः** । अस्य ब्राह्मणस्य त्रयाणांवर्णानामात्माजायते द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्द्विजत्वंजायते तथा-स्वयोनौ एवंत्रयणांवर्णानांब्राह्मणोद्विजान् जनयति एवंबाह्येष्वपि प्रातिलोम्येन वैश्यक्षत्रियाभ्यां क्षत्रियब्राह्मणोरात्माद्वि-जत्वंभवति सति च द्विजत्वे उपनयनकर्तव्यं वक्ष्यन्ति च एते षट्द्विजधर्माणइति एतावांस्तु विशेषः । अनुलोमतामातृजा-त्यामातृजातीया स्तुतिमात्रमिदंवक्ष्यामः ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । आनन्तर्यादनन्तरवर्णे आत्मजातिसदृशजातिमूर्धावसिक्तादिः । स्वयोन्यां स्ववर्णेचात्म-जातीयएव । तथा बाह्येष्वपि । तथाहि मूर्धावसिक्तान्मूर्धावसिक्तायां तज्जातीयएव । ततएवत्वावन्त्यामात्मसदृशइत्या-दिः । पारशव्यांतु ततोपि हीनजातिरेवमनुलोमजानपेक्ष्य प्रतिलोमजानामतिहीनत्वात्तेषां प्रतिलोमजानां स्वजातीयायाम-नन्तरायां सदृशव्यवहितायां हीनतरमपत्यमिति ॥ २८ ॥

( ३ ) **कुल्लूकः** । यथा त्रयाणांवर्णानांक्षत्रियवैश्यशूद्राणांमध्यात् द्वयोर्वर्णयोः क्षत्रिवैश्ययोर्गमने ब्राह्मणस्यानुलोम्या-त् द्विजउत्पद्यते सजातीयायां च द्विजोजायते एवंबाह्येष्वपि क्षत्रियवैश्याभ्यां वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जातेषूत्कर्षा-पकर्मोभवति शूद्रजातप्रतिलोमापेक्षया द्विजाद्युत्पन्नप्रतिलोमभाशस्त्यार्थमिदम् । मेधातिथिस्तु द्विजत्वप्रतिपादकमेतदेषांवच-नमुपनयनार्थमित्याह तन्न प्रतिलोमजास्तु धर्महीनाइति गौतमेन संस्कारनिषेधात् ॥ २८ ॥

( ४ ) **राघवानन्दः** । एतेषामुत्कृष्टत्वं सदृष्टान्तं निगमयति यथेति । त्रयाणां विप्रादीनां मध्ये यथास्यब्राह्मणस्य स्व-योन्यामिवानुलोम्येन द्वयोः क्षत्रियावैश्ययोः आत्माद्विजउत्पद्यते एवंवैबाह्येषु वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योरात्मा द्विजउत्पद्यते एवं क्षत्रियवैश्ययोरपि । तेषु आयोगवादितिसृष्वपिब्राह्मण्यादिषु ॥ २८ ॥

( ५ ) **नन्दनः** । एतदेवस्थापयति यथा त्रयाणां वर्णानामिति । त्रयाणां ब्राह्मणक्षत्रियवैश्यानां अनन्तर्याऽनन्तरजा-तया स्वयोन्यां द्वयोरात्मा स्वस्ववर्णोयथा जायते तथा बाह्येष्वपि क्रमः प्रतिलोमानामपि तथा प्रकारः । एतदुक्तंभवति यथा वैदेहकः स्वस्यां ब्राह्मण्यां च वैदेहकं आयोगवः स्वस्यां क्षत्रियायां चायोगवं क्षत्ता स्वस्यां चण्डाल्यां च क्षत्तारंज-नयतीति अनेन सिद्धवदनुदितेन दृष्टान्तेन ज्ञाप्यते ॥ २८ ॥

( ६ ) **रामचन्द्रः** । यथेतिदृष्टान्तः । यथा त्रयाणां क्षत्रियादीनां स्वयोन्यामानन्तर्यात् द्वयोःक्षत्रियवैश्ययोरात्मैव जायते तद्यथा क्षत्रियात्क्षत्रियायां वैश्याद्वैश्यायां उत्तमासु योनिषु आत्मैव जायते पुत्रइति श्रुतेः । शूद्रायांइतितथा बाह्येषु आयोगवादिषु प्रतिलोमजेषु क्रमः ॥ २८ ॥

**ते चापि बाह्यान्सुबहूंस्ततोप्यधिकदूषितान् ॥ परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ २९ ॥**

( १ ) **मेधातिथिः** । तेचाप्ययोगवादयः षट्बाह्यान् सुबहून् परस्परदारेषु जनयन्ति तद्यथायोगवः [क्षत्रियायांक्षत्रा-योगव्यांपरस्परमात्मापेक्षयागर्हितान् जनयन्ति तद्यथायोगवःक्षत्रियाया][1] मात्मनोबाह्यतरंजनयति ततोपि बाह्यतरं च-ण्डालाभ्यः एवंसर्वत्र ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । तदेतदाह ततोभ्यधिकदूषितानिति ॥ २९ ॥

( ३ ) **कुल्लूकः** । ते चायोगवादयः षट्परस्परजातीयासु भार्यासु सुबहूनानुलोम्येऽप्यधिकदुष्टान्सत्क्रियाबहिर्भूता-ञ्जनयन्ति । तद्यथाआयोगवः क्षत्तृजायायामात्मनोहीनतरंजनयति तथा क्षत्ताप्यायोगव्यामात्मनोहीनतरमुत्पादयति एवम-न्येष्वपि प्रतिलोमेषु द्रष्टव्यं ॥ २९ ॥

( ४ ) **राघवानन्दः** । तेभ्योपि संकरजातीन्वक्तुमाह तइति । आयोगवादयस्ते अधिकदूषितान् पूर्वेभ्योपिनिकृ-ष्टान् ॥ २९ ॥

( ५ ) **नन्दनः** । अनन्तरासु जातानां पितृवर्णत्वमपि पक्षान्तरमिति तेचापि बाह्यानिति । ते सूतादिभ्यः प्रसूता अपि ततोभ्यधिकदूषितान्स्वेभ्योहीनतमानतएव विगर्हितान्सुबहून्परस्परस्य दारेषु जनयन्ति स्वयोनिषु स्वानेव जनयन्ति पर-स्परस्य दारेष्विव ॥ २९ ॥

( ६ ) **रामचन्द्रः** । ते अयोगवादयः बाह्यान् वर्णबाह्यान् विगर्हितान परस्परदारेषुजनयन्ति ॥ २९ ॥

**यथैव शूद्रोब्राह्मण्यां बाह्यंजन्तुंप्रसूयते ॥ तथा बाह्यतरंबाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ ३० ॥**

( १ ) **मेधातिथिः** । एवंपरस्परगमने स्त्रीप्रतिलोमानांपूर्वेण बाह्यतरेण बाह्याजाताः । इदानींचातुर्वर्ण्येकथ्यते सूय-तिर्जनिनात्यन्तसमानार्थोत्र प्रकरणे प्रयुक्तः प्रसूयते जनयतीत्यर्थः । तदुत्तर श्लोकेन निर्दिश्यते ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । तथा बाह्यतरं चाण्डालतोऽप्यधमम् । बाह्यात चाण्डालात् । चातुवर्ण्ये चातुर्वर्ण्या स्त्री प्रसूयते ॥ ३० ॥

( ३ ) **कुल्लूकः** । यथा ब्राह्मण्यां शूद्रोऽपकृष्टंचलण्डालाख्यंप्राणिनंप्रसूयते जनयत्येवंबाह्यश्चण्डालादिवर्णचतुष्टये च-ण्डालादिभ्योप्यपकृष्टंपुत्रंप्रसूयते ॥ ३० ॥

( ४ ) **राघवानन्दः** । तत्र दृष्टान्तमाह यथेति । बाह्यं बहिरेव वर्तमानं जन्तुं जन्ममरणमात्रशालिनम् । बाह्यश्चा ण्डालादिः धर्मादावनधिकारित्वात् ततोपिभिन्नंसंकरान्तरम् । चातुर्वर्ण्ये चातुर्वर्णस्त्रीषु ॥ ३० ॥

( ५ ) **नन्दनः** । वर्णजातानांसूतादिप्रतिलोमजानांच परस्परसङ्करउक्तः प्रतिलोमजप्रसूतानांजनकेभ्यः प्रतिलोम-जेभ्योन्यूनतमत्वमुदाहरणविशेषेणव्यनक्ति यथैव शूद्रोब्राह्मण्यामिति । बाह्यजन्तुं चण्डालं बाह्यः सूतादिः चातुर्वर्ण्येचतुर्व-र्णस्त्रीषु ॥ ३० ॥

---

( ३० ) बाह्यतरम्=ह्यनन्तरम् ( क ) ( १ ) आ आ

( ६ ) रामचन्द्रः । यथैव शूद्रोब्राह्मण्यां बाह्यंजन्तुं निकृष्टंचाण्डालं प्रसूयते तथा बाह्यः आयोगवः बाह्यतरं अत्यन्तनिकृष्टं चतुर्वर्णेषु सूयते ॥ ३० ॥

**प्रतिकूलंवर्त्तमानबाह्याबाह्यतरान्पुनः ॥ हीनाहीनान्प्रसूयन्ते वर्णान्पञ्चदशैव तु ॥ ३१ ॥**

( १ ) मेधातिथिः । एकैकस्य तु वर्णस्यसंकीर्णयोनयोभवन्ति कस्यचिदनुलोमाः कस्यचित्प्रतिलोमाः कस्यचिदनुलोमप्रतिलोमाः । ब्राह्मणस्यानुलोमाशूद्रस्य प्रतिलोमाएव क्षत्रियवैश्ययोरनुलोमाः प्रतिलोमाः क्षत्रियस्य द्वावनुलोमौएकः प्रतिलोमो वैश्यस्यैकोनुलोमोद्वौ प्रतिलोमौ एवमेते द्वादशानुलोमप्रतिलोमा एतेषामेकैकस्य चतुर्षु गच्छतश्चत्वारोभेदाभवन्ति ते च केचिद्धीना बाह्यतरास्तु सर्वएव बाह्यतरत्वंमातापितृजातेर्विप्रकर्षः कर्मभ्योहीनत्वात्तदेतदुदाहरणैः स्फुटीक्रियते । प्रतिलोमांस्तावद्गृहीत्वा वक्ष्यामः । अयोगवोवैश्यायां शूद्राज्जातः शूद्रायां वैश्यायां क्षत्रियायां ब्राह्मण्यां चतुरोजनयति सोयमात्मना सह पंचधाऽऽयोगवः । एवं क्षत्रियचण्डालाअपि एवंशूद्रास्त्रयःपंचकाः पंचदशधाभवन्ति । एवंवैश्याप्रभवौ द्वौ प्रतिलोमौ क्षत्रियायां मागधोब्राह्मण्यां वैदेहकः शूद्रायामनुलोमस्तत्र यः शूद्रायां जातः सयदा चातुर्वर्ण्यं जनयति तदैषएवप्रकारः सयदा शूद्रांगच्छति तदा हीनतरोवर्णोजायते तदपेक्षया । एवंवैश्यांगच्छन्हीनतरंजनयति । एवंक्षत्रियायां ब्राह्मण्यां च केवलशूद्राज्जातोत्कृष्टा एवमित्यपेक्षावशाद्धीनांश्चाहीनांश्च एवंक्षत्रिये ब्राह्मणे च द्रष्टव्यं ब्राह्मणस्यत्वयंविशेषोऽनुलोमाएव तस्य भवन्ति एवंचतुर्वर्णानांप्रत्येकं पंचदशधाभेदाः षष्टिः संपद्यन्तो मुख्याश्चत्वारोवर्णाः साचतुः षष्टिर्भवति । परस्परसंपर्कात्तेषामअन्येऽनन्तभेदाभवन्ति । तदुक्तं तेचापि बाह्यांत्सुबहूनिति प्रतिकूलं शास्त्रव्यतिक्रमेण वर्तमानामिथुनीभवन्ति हीनाहीनानित्येकंपदं अथवा हीनाः सन्तोऽहीनान्प्रसूयन्ते जनयन्तीत्यर्थः वर्णान्पंचदशैवेति नास्तितु पंचमइति पंचमस्य वर्णाभावात्पंचदशसु वर्णत्वमुपचाराद्द्रष्टव्यम् ॥ ३१ ॥

( २ ) सर्वज्ञनारायणः । एतत्प्रपञ्चयति प्रतिकूलमिति । बाह्यावर्णबाह्यास्तादृशानेव तथा हीनाअत्यधमाहीनानत्यधमानेव प्रसूयन्ते । शूद्रात् ब्राह्मण्यादिषु चण्डालक्षत्रायोगवाख्यास्त्रयोहीनाअधमाबाह्यवर्णाव्रात्याश्च प्रतिकूलं प्रतिलोमं वर्तमानाः शूद्रादिस्त्रीषु चतसृषु हीनान्नवान्यान्प्रसूयन्तइति प्रत्येकं चाण्डालादिभ्यश्चत्वारश्चत्वारइतितथाद्वादश । तथा स्वजातीयासु त्रीनिति पञ्चदश बाह्यान् जनयन्ति । वर्णान्वर्णरूपतया न वस्तुतस्तादृशान् ॥ ३१ ॥

( ३ ) कुल्लूकः । एतदेवविस्तारयति प्रतिकूलमिति । अत्र मेधातिथिगोविन्दराजयोर्व्याख्यानंचातुर्वर्ण्यबाह्याश्चण्डालक्षत्रायोगवाः शूद्रप्रभवास्त्रयश्चातुर्वर्ण्ये गच्छन्तआत्मनोहीनतरान्परस्परापेक्षयाप्रकृष्टोत्कृष्टवर्णप्रभवत्वात्पञ्चदशवर्णान्संपादयन्ति । तद्यथा चण्डालः शूद्रायामात्मनोहीनतरंवैश्याक्षत्रियाब्राह्मणीजातिभ्यउत्कृष्टंजनयति । एवंवैश्यायां ततोप्यपसदंक्षत्रियायां ब्राह्मणीजातादुत्कृष्टंजनयति ततोपसदंक्षत्रियायांब्राह्मणीजातादुत्कृष्टंततोपि हीनंब्राह्मण्यां जनयति । एवंक्षत्रायोगवावपि चातुर्वर्णे चतुरश्चतुरोऽजनयतइत्येते शूद्रप्रभवचण्डालक्षत्रायोगवेभ्यः चातुर्वर्ण्यद्वादशप्रभेदा उत्पद्यन्ते आत्मना च चण्डालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्रभवाः पञ्चदशउत्पद्यन्ते एवंवैश्यक्षत्रियब्राह्मणप्रभवाः प्रत्येकंपञ्चदशसंभवन्ति एवंषष्टिश्चातुर्वर्ण्येन सह चतुःषष्टिप्रभेदाभवन्ति । ते तु परस्परगमनेन नानावर्णाञ्जनयन्तीति नैतन्मनोहरं । पूर्वश्लोके षण्णांप्रतिलोमजानांप्रकृतत्वात्तद्विस्तारकथनत्वाच्चास्य अत्रापि श्लोके प्रतिकूलंवर्त्तमानाइत्युपादानात्प्रतिलोमजमात्रविषयोयंश्लोकोनानुलोमजविषयः । तथा च वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकंपञ्चदशसंभवन्त्येवंषष्टिरिति न संगच्छते नच संभवमात्रेणैवेयंषष्टिरुक्ता न दुष्टतया शूद्रप्रभवायोगवक्षत्तृचण्डालाएव चातुर्वर्ण्यसंतानोपेताः पञ्चदशगर्हिताइति वाच्यं । यतोवै-

( ३१ ) पञ्चदशैवतु=पञ्चदशैवते ( नं )

श्यक्षत्रियाभ्यामपि प्रतिलोमतउत्पादितानांत्रयाणांहीनत्वात्तैरपि चातुर्वर्ण्ये जनितानांगर्हितत्वस्य संभवात्तथा बाह्यतरंबाह्यश्चातुर्वर्ण्ये प्रसूयतइति मनुनैवानन्तरंस्फुटमुक्तत्वात्। युवाभ्यामपि तथैव व्याख्यातत्वाच्चातुर्वर्ण्येन सह चतुःषष्टिरितिसर्वथैवाप्रकृतम्। नहि संकीर्णप्रकरणे शुद्धचातुर्वर्ण्यगणनोचिता किंच वर्णान्पञ्चदशप्रसूयन्तइतिश्रूयमाणद्वादशजनानुक्त्वा ते चात्मनाचण्डालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्रभवाः पञ्चदशेति न युक्तम्। अपि चात्मनासह पञ्चदशसंपादयन्तीति न संगच्छते असंपाद्यत्वादात्मनः पञ्चदशसंपद्यन्तइति च व्याख्यानेऽध्याहारएव दोषः तस्मादेवंव्याख्यायते प्रतिकूलंवर्त्तमानाः प्रतिलोमजाः बाह्याद्द्विजप्रतिलोमजेभ्योनिकृष्टत्वात्। शूद्रप्रभवायोगवक्षत्तृचण्डालास्त्रयः पूर्वश्लोकादनुवर्त्तमाने चातुर्वर्ण्ये स्वजातावेते षट्सदृशानित्यत्र सजात्युत्पन्नस्य पितृतोगर्हितत्वाभिधानात् आत्मापेक्षयाबाह्यांतरान्प्रत्येकंपञ्चदशपुत्राञ्जनयन्ति तद्यथा आयोगवश्चातुर्वर्ण्यस्त्रीषु चायोगव्यामात्मनोनिकृष्टान्पञ्चपुत्राञ्जनयन्ति एवंक्षत्तृचाण्डालावपि प्रत्येकंपञ्चपुत्राञ्जनयतइत्थंबाह्यास्त्रयः पञ्चदशपुत्राञ्जनयन्ति तथानुलोमजेभ्योहीनावैश्यक्षत्रियप्रभवामागधवैदेहसूताआत्मापेक्षया हीनान्पूर्ववच्चातुर्वर्ण्यस्त्रीषु सजातौ प्रत्येकंपञ्चपुत्राञ्जनयन्तोहीनाअपि त्रयः पञ्चदशैव पुत्राञ्जनयन्ति एवंत्रिंशदेते भवन्ति। अथवा बाह्यशब्दोहीनशब्दश्च षडेव प्रतिलोमजानाह। अत्र बाह्यश्चण्डालक्षत्रायोगववैदेहमागधसूताः षट्यथोत्तरमुत्कर्षान्प्रातिलोम्येन स्त्रीषु वर्तमानाबाह्यतरान्पञ्चदशैव पुत्राञ्जनयन्ति। तद्यथा चण्डालः क्षत्रियादिषु पञ्चसु स्त्रीषु क्षत्तायोगव्यादिषु चतसृष्वायोगवोवैदेह्यादितिसृषु वैदेहोमागधीसूत्योः मागधः सूत्यांसूतस्तु प्रतिलोमाभावात्प्रातिलोम्येन पञ्चदशैव पुत्राञ्जनयति पुनरिति निर्देशाद्धीनाः सूतादयश्चाण्डालान्ताः षड्यथोत्तरमपकर्षात् आनुलोम्येनापि प्रपिलोमोक्तरीत्या स्वापेक्षया हीनान्पञ्चदशैव पुत्राञ्जनयन्त्येवंत्रिंशदेतेभवन्ति ॥ ३१ ॥

( ४ ) **राघवानन्दः**। ते बाह्याः कति इत्यपेक्षां पूरयति प्रेति। प्रतिकुलं प्रातिलोम्यम् बाह्याः सूतादयः षडेव हीनाः स्वयं हीनान् नव बाह्यतरान्। जनयन्तीति वर्णान् पञ्चदशैतेषुवर्णपदमुपचारात् ॥ ३१ ॥

( ५ ) **नन्दनः**। प्रतिकूलंवर्तमानाअसजातीयस्त्रीषु वर्तमानाः। हीनाअनुलोमजेभ्योऽपकृष्टाः। बाह्याः प्रतिलोमजाः षट् सूतादयः हीनानात्मनोपकृष्टान् बाह्यतरान्बाह्यतरनाम्नः प्रसूयन्ते वर्णाः पञ्चदशैव ते ते बाह्यन्तरवर्णाः संकरजातयः प्रत्येकंसूतादिभिरुत्पादिताः पञ्चदशैव नाधिकाः असजातीयानांजनयितॄणां पञ्चदशत्वात्तत्प्रसूतानांवर्णानां पञ्चदशत्वं ब्राह्मणप्रभृतयश्चतस्रः अनुलोमजास्त्रयः षट्प्रतिलोमजाश्च एवंषोडशजातिषु स्त्रीषूत्पादिताः सजातीयाः पञ्चदशैवेति सूतादयस्तावदासु षोडशस्त्रीषु स्वस्त्रीमन्तरेणासु पञ्चदशसु पञ्चदशवर्णाञ्जनयन्ति एवं वैदेहकादयोपि प्रत्येकमिति ॥ ३१ ॥

( ६ ) **रामचन्द्रः**। प्रतिकूलंवर्तमानात् आनुलोम्येन वर्तमानान् बाह्यान्तरान्पुनःप्रसूयन्ते । हीनाहीनान्प्रसूयन्ते वर्णान् वर्णभवत्वात। वर्णान् पञ्चदशैवतु द्विजात्युत्पन्नशूद्रपुरुषजातानांत्रयाणां चातुर्वर्ण्यसंबन्धे द्वादश रूपतश्च त्रयइति पञ्चदश ॥ ३१ ॥

**प्रसाधनोपचारज्ञमदासंदासजीवनम् ॥ सैरिन्ध्रंवागुरावृत्तिसूते दस्युरयोगवे ॥ ३२ ॥**

( १ ) **मेधातिथिः**। प्रसाधनंमण्डनमुपचारोऽनुवृत्तिः केशरचनाकंकुमचन्दनादिनाऽनुलेपनविच्छित्तिः पाणिपादविमर्दनंप्रामिलाभकर्मकार्यक्षिप्रकारिताकार्याणामवसरमित्यादिविधिज्ञएवमुच्यते। अदासंदास्यजीवनं वत्सरभृत्या [ षण्मासभृत्या] [१] च कंचनसेवते अथवैतद्विधिज्ञतया सर्वोपस्थापकोभवति जीवनाय [मता] [२] वागुरावृत्तिर्द्वितीयोयंवृत्त्युपायः वागु-

( १ ) मे०८, आआ　　( २ ) मे०८

रारण्यपशुहिंसनं तच्चार्याणांदैवपित्र्यर्थंक्षुधार्थंच नतु व्याधवत्पशून्हत्वा मांसविक्रयेण जीवनं राजनियोगाद्बहुप्राणिवधोजीविकार्थः सैरंध्रनामानंसूते उत्पादयति वर्णकः दस्युर्नामवक्ष्यमाणः अयोगवे जातिविशेषे सामर्थ्यात्स्त्रीत्वलाभः ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः**। अन्यानपि कांश्चिदुपलक्षणतया संकीर्णजान्वृत्यासह दर्शयति प्रसाधनेति । प्रसाधनमलंकरणं । उपचारोगात्रसंवाहनादिः । अदासं दास्यानर्हं शूद्रस्यैवतदर्हत्वात् । दास्यजीवनं दासयोग्येन कर्मणा जीवनम् । सैरन्ध्रनामानम् । वागुरावृत्तिं पाशबन्धनवृत्तिम् । दस्युः प्रागुक्तपञ्चदशविधसंकरजात्यन्तरः । अयोगवेअयोगवस्त्रियाम् जातिवाचित्वात्स्त्रीलिङ्गनिर्देशः ॥ ३२ ॥

( ३ ) **कुल्लूकः**। केशरचनादिः प्रसाधनस्तस्योपचारज्ञं अदासमुच्छिष्टभक्षणादिदासकर्मरहितमङ्गसंवाहनादिदासकर्मजीवनंपाशबन्धनेन मृगादिवधाख्यवृत्त्यन्तरजीवनंसौरिन्ध्रनामानंमुखबाहूरुपज्जानामिति श्लोके वक्ष्यमाणोदस्युरायोगवस्त्रीजातौ शूद्रेण वैश्यायामुत्पन्नायां जनयति तच्चास्य मृगादिमारणंदेवपित्रौषधार्थंवेदितव्यम् ॥ ३२ ॥

( ४ ) **राघवानन्दः**। तानेव नवविवृणोति प्रसाधनेति । प्रसाधनोपचारज्ञं केशप्रसाधनादिनिपुणम् अदासंहिंसोपजीवित्वेपि दाशाद्भिन्नं उच्छिष्टाभोजित्वात् । दास्यजीवनं दासकर्मणा जीवनवन्तम् । वागुरावृत्तिं वागुरा मृगबन्धनी तया मृगघातिनम् । आयोगवे शूद्राद्वैश्याजन्यायाम् । दस्युर्वक्ष्यमाणः ॥ ३२ ॥

( ५ ) **नन्दन**। अपरमपि संकीर्णयोनिमाह प्रसाधनोपचारज्ञमिति । दस्युः प्रतिलोमः सूतादिः । अयोगवे आयोगवस्त्रियां वृत्तभङ्गपरिहारार्थे ह्रस्वः । सैरन्ध्रनामानं प्रसाधनोपचारवृत्त्याजीवन्तं । अदासंकस्यचिदपि नदासभूतं । दस्यूनांबहुत्वात्सैरन्ध्राणामपि बहुत्वं वृत्तिभेदोपन्यासेन सूचितम् ॥ ३२ ॥

( ६ ) **रामचन्द्रः**। प्रसाधनं अलंकरणमात्रं संवहनादि उपचारज्ञं । अदास्यं दास्यानर्हमदास्यं । यत्जीवनं प्राणनं आयोगवोदस्युः वागुरावृत्तिं पाशबन्धनवृत्तिं सूते ॥ ३२ ॥

### मैत्रेयकन्तुवैदेहोमाधूकंसंप्रसूयते ॥ नॄन्प्रशंसत्यजस्रंयोघण्टाताडोरुणोदये ॥ ३३ ॥

( १ ) **मेधातिथिः**। मैत्रेयकंनाम्नावर्णमायोगव्यां संप्रसूयते जनयति वैदेहनामा ब्राह्मण्यां वैश्याज्जातोयः पाठान्तरंमैरेयकमिति माधूकमुपमापदमेतत् मधूककुसुमतुल्यं मधुरभाषित्वात् अथवा मधुकायतीति अन्येष्वपि दृश्यते इतिडः अन्येषामपीति दीर्घः स्वार्थिकेन चादिवृद्धिस्तस्य वृत्तिः नॄनमनुष्यान्प्रशंसन्ति अतस्तंसर्वदा बन्दाति यः कथ्यते । अरुणोदये प्रबोधकाले घण्टांताडयत्याहन्ति राज्ञामीश्वराणांचान्येषांप्रबोधाय आयोगव्यामेवायंजनयति प्रकृतत्वात् ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः**। मैत्रेयकं मैत्रेयकनामानम् । माधुकं मधुरस्तुतिपाठकम् । सूते अयोगवस्त्रियामेव । घण्टाताडोघण्टावाद्यकारी ॥ ३३ ॥

( ३ ) **कुल्लूकः**। वैश्याद्ब्राह्मण्यां जातोवैदेहः । प्रकृतायामायोगव्यां मैत्रेयाख्यंमधुरभाषिणंजनयति यः प्रातर्घण्टामाहत्य राजप्रभृतीन्सततंवृत्त्यर्थंस्तौति ॥ ३३ ॥

( ४ ) **राघवानन्दः**। मैत्रेति मैत्रेयकं माधुकं मधुरभाषिणं अयोगव्यां । नॄन् राजादीन् । घण्टाताडः तत्ताडनशीलः । अरुणोदये प्रातः प्रातरेवतान्बोधयन्प्रशंसतीति । वैदेहोवैश्यात् ब्राह्मणीजः ॥ ३३ ॥

( ५ ) **नन्दनः**। माधुरंमधुरभाषिणं सुतं प्रसूयते आयोगवइत्यनुवर्तते तस्य वृत्तिरुत्तरार्धेनोक्ता । घण्टां ताडयतीति घण्टाताडः ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । वैदेहोमैत्रेयकनामानं तुपुनःमाधूकं मधुरस्तुतिपाठकमायोगव्यां संप्रसूते । अरुणोदयेयोनृनज-स्रंप्रशंसतिसंघण्टानादः भाषायांजागाइति प्रसिद्धः ॥ ३३ ॥

**निषादोमार्गवंसूते दासंनौकर्मजीविनम् ॥ कैवर्त्तमिति यंप्राहुरार्यावर्त्तनिवासिनः ॥ ३४ ॥**

( १ ) **मेधातिथिः** । प्रतिलोमप्रकरणान्नयः शूद्रायां ब्राह्मणाज्जातोनिषादः पूर्वमुक्तः सइहगृह्यतेअपि तु दस्युवत्प्र-तिलोमएवमार्गवंनामप्रतिलोमंसूते आयोगव्यामेव यस्येमेअपरे नामनीदासःकैवर्तइति आर्यावर्तः प्रसिद्धः तस्य वृत्तिर्नौ कर्मणा नौवाहनेन जीवति ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । निषादः शूद्रायां विप्राज्जातः अयोगवस्त्रियामेव सूते । मार्गवं मार्गवनामानम् । दासं दासापरनामानम् । अयोगवइत्यधिकारादेतावप्यायोगव्यामेव ॥ ३४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणेन शूद्रायां जातोनिषादः प्रागुक्तायामायोगव्यां मार्गवंदासापरनामानंनौव्यवहारजीविनं-जनयति आर्यावर्तदेशवासिनः कैवर्तशब्देन कीर्तयन्ति ॥ ३४ ॥

( ४ ) **राघवानन्दः** । निषादोब्राह्मणात् शूद्रकन्याजः । मार्गवं मृगयुरिवहिंसाकर्मिणं । नौकर्मजीविनं नावोयत्कर्म मत्स्यघातनोत्तारणादि तेन जीवितुंशीलम् । तस्यैव देशभेदेन नामान्तरं कैवर्तइति ॥ ३४ ॥

( ५ ) **नन्दनः** । निषादः शूद्रायां ब्राह्मणाज्जातः पूर्वमुक्तः । मार्गवं मार्गवनामानं क्वचिद्दाशनामानं । सूते आयोगव-इत्येव ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । निषादः आयोगव्यांमार्गवंसूते दासंनौकर्मजीविनं ॥ ३४ ॥

**मृतवस्त्रभृत्सु नारीर्गर्हितान्नाशनासु च ॥ भवन्त्यायोगवीष्वेते जातिहीनाः पृथक्त्रयः ॥ ३५ ॥**

( १ ) **मेधातिथिः** । येऽनन्तरउपदिष्टास्त्रये मार्गवपर्यन्ता स्तेषांमातृजातिर्नोक्ता तत्प्रतिपादनार्थोयंश्लोकः आयो-गवीषु स्त्रीष्वेते जायन्ते तासांच विशेषणं मृतवस्त्रभृत्सु शववासांसि परिदधतीष्वित्यर्थः अनार्याअस्पृश्याः गर्हितमुच्छि-ष्टमांसादिचान्नमश्नन्ति ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येपि त्रयस्तस्यामेव जायन्तइत्याह मृतेति । पूर्वार्धेनायोगवीनां धर्मउक्तः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । सैरिन्ध्रमैत्रेयमार्गवाहीनजातीयास्त्रयः मृतवस्त्रपरिधानासु क्रूरासूच्छिष्टादिभक्तान्नाशनायोगवीषु पितृभेदाद्भिन्नाभवन्ति ॥ ३५ ॥

( ४ ) **राघवानन्दः** । त्रयाणामेषांमातृराह मृतेति । मृतवस्त्रभृत्सु तदेव वासोयासांतासु । गर्हितान्नाशनासु गर्हितं लशुनमद्याद्यशनं यासां तासु । आयोगवीकन्यासु । पृथगितितासामेकजातीयत्वेपिपतीनांभिन्नजातीयत्वात् ॥ ३५ ॥

( ५ ) **नन्दनः** । अनार्यासुकेनचित्कर्मदोषण निन्द्यासु जातिहीनामातृकर्मदोषेण निकृष्टतमाः एतेउत्तरश्लोके वक्ष्य-माणाः ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । मृतवत्सासु अनार्यासु अविवाहितासु गर्हितमन्नमश्नन्त्योऽनार्याःतासु योगी [ श्वरः ] ॥ कद-र्यैर्वृद्ध चौराणां क्लीबरङ्गावतारिणाम् ॥ एतेगर्हिता एतासु आयोगवीषु एतेजातिहीनाःपृथक्त्रयोभवन्ति ॥ ३५ ॥

---

( ३५ ) मृतवस्त्रभृत्सु नारी=मृतवत्सास्वनार्यासु ( ख, )=मृतवस्त्रभृत्स्वनार्यासु ( क, च, ण )

( ३५ ) त्रयः=क्रियाः ( य, ब, ल )

कारावरोनिषादात्तु चर्मकारः प्रसूयते ॥ वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥ ३६ ॥

( १ ) **मेधातिथिः** । उत्तरत्र वैदेह्यामेव जायन्तइत्येवकारकरणा लिङ्गादिहापि वैदेह्यां निषादात्कारावरोनामजायतइति संबन्धप्रतीतिः वैदेहिकाद्वावांध्रमेदौकस्यांस्त्रियां कारावरीनिषाद्यौ तयोरत्रसन्निधानात् वैदेह्यां च वैदेह्याभिन्नवर्णसंभवादेवं व्याख्यायेते स्त्रीभेदे कस्माद्वर्णादेते द्वे जाती बहिर्ग्रामं प्रतिश्रयोनिवासोययोः ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । निषादादायोगव्यां कारावरनामा चर्मकारस्तद्वृत्तिः प्रसूयते प्रजायते । वैदेहकादायोगव्यामेव तत्र आन्ध्रोऽनन्यपूर्वायामन्यपूर्वायांतु मेदः ॥ ३६ ॥

( ३ ) **कुल्लूकः** । वैदेह्यामेव जायतइत्युत्तरत्र श्रवणात् अत्राप्याशङ्कायां सैव संबध्यते निषाद्वैदेह्यां जातः कारावराख्यश्चर्मच्छेदनकारीजायते अतएवौशनसे कारावाराणांचर्मच्छेदनाचरणमेव वृत्तित्वेनोक्तम् । वैदेहकसैरिन्ध्रमेदाख्यौ ग्रामबहिर्वासिनौ अन्तरानिर्देशाद्वैदेहकेन च वैदेह्यां जातस्य गर्हितवैदेहकस्याप्युचितत्वात् । कारावरनिषादजात्योश्चात्र श्लोके सन्निधानात्कारावरनिषादस्त्रियोरेव क्रमेण जायते ॥ ३६ ॥

( ४ ) **राघवानन्दः** । वैदेह्यांकारावरादिषण्णामेवजन्मेतिवक्तुंपितृभेदमाह कारेतिद्वाभ्याम् । निषादवैदेहकचण्डालनिषादाश्चत्वारः पितरःकाराखान्ध्रमेदाद्याःषट् पुत्रावैदेह्यामितिजात्येकवचनंचेतिपौल्कस्यांशूद्रनिषादजातायांअत्रनवजातेरन्यद्विशेषणंसैरन्ध्रकःमैत्रेयकःमार्गवःकारारवः आन्ध्रमेदौ देशभेदेनैकएव पाण्डुसोपाकः आहितुण्डिकः सोपाकः अन्त्यावसायीचैते नव सूतादयः षट्तेन पञ्चदश बाह्याबाह्यतराइति व्याख्यायन्ते पञ्चदशशब्दस्वरसात् । कुल्लूकस्तु सूतादयः षडेतेसैरन्ध्रादयोनवेति पञ्चदश तथा अयोगवक्षत्तृचण्डालाश्चातुर्वर्ण्यस्त्रीषु स्वयोन्यांच पञ्च पञ्च जनयन्तीति एवं दश पूर्वोक्ताश्च पञ्चदशेति त्रिंशत् । मेधातिथिस्तु विप्रस्यानुलोम्येन त्रयः प्रतिलोमाभावात् क्षत्रियस्य ब्राह्मण्यामेकः प्रतिलोमः अनुलोमद्वयं वैश्याशूद्रयोः वैश्यस्यच विप्राक्षत्रिययोः प्रतिलोमद्वयमनुलोमएकः शूद्रायां शूद्रस्यतु प्रतिलोमत्रयं विप्राक्षत्रियवैश्याङ्गनासु अनुलोमाभावादिति द्वादश संकरास्तेषां मातृजातीयप्रतिलोमानुलोमासु पञ्चसु प्रत्येकं पञ्चपञ्चेति षष्टिरेवं संकराइति ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

( ५ ) **नन्दनः** । तानेवत्रीनाह कारावरइति चर्मकारश्चर्मसंस्कारवृत्तिः । कारावरान्ध्रमेदाः क्रमेण मृतवस्त्रभृत्त्वनार्यासु गर्हितान्नाशनात्सायोगवीषु जायन्तइति ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । निषादाद्वैदेह्यांकारावरोनाम चर्मकारः प्रसूयते वैदेहकादंध्रमेदौ भवतः ॥ ३६ ॥

चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ॥ आहिण्डिकोनिषादेन वैदेह्यामेव जायते ॥३७॥

( १ ) **मेधातिथिः** । चाण्डालात् वैदेह्यापाण्डुसोपाकोनामवर्णोजायते । तस्य वृत्तिस्त्वक्सारव्यवहारत्वात् त्वक्सारोवेणुःतद्व्यवहारेण वंशक्रयविक्रयादिना कटा दिकरणेन वा जीवति निषादात्तस्यामेवाहिण्डकस्तस्य वृत्तिरेषैवान्वेष्यावा ॥३७॥

( २ ) **सर्वज्ञनारायणः** । चाण्डालदायोगव्यामेव पाण्डुसोपाकः पाण्डुसोपाकनामा । त्वक्सारव्यवहारोवेणुविदलैर्जीवनम् । अत्रचान्ध्रमेदयोर्मातापितृजात्यभेदादिकत्वंविवक्षतापूर्वेत्रयइत्युक्तम् । निषादेन विप्रशूद्राजेन ॥ ३७ ॥

( ३ ) **कुल्लूकः** । वैदेह्यां चण्डालात्पाण्डुसोपाकाख्योवेणुव्यवहारजीवी जायते । निषादेन च वैदेह्यामेवाहिण्डिका-

( ३७ ) आहिण्डिकोनिषादेन वैदेह्यामेव=आहिण्डिकोनिषाद्यान्तु वैदेहेन ( नं )

स्योजायते । अस्य च बन्धनस्थानेषु बाह्यसंरक्षणादाहिण्डिकानामित्यौशनसे वृत्तिरित्युक्का समानमातापितृकत्वेऽपि कारावराहिण्डिकयोर्वृत्तिभेदसंश्रवणाद्व्यपदेशभेदः ॥ ३७ ॥

( ५ ) **नन्दनः** ॥ आहिण्डिकोनिषाद्यान्तु वैदेहेनैव जायते इतिपाठः । त्वक्सारोवेणुवेत्रादिस्तस्य व्यवहारोविक्रयकर्म ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । चाण्डालाद्वैदेह्यां पाण्डुसोपाकनामा त्वक्सारव्यवहारवान् वेणुव्यवहारजीवी जायते । निषादेन-वैदेह्यामाहिण्डकोजायते ॥ ३७ ॥

**चण्डालेन तु सोपाकोमूलव्यसनवृत्तिमान् ॥ पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥ ३८ ॥**

( १ ) **मेधातिथिः** । व्यसनंदुःखंतस्यमूलंमारणंतद्वृत्तिर्वध्यमारणं राजादेशादनाथशववहनंतद्वस्त्रादिग्रहणं प्रेतपिण्ड-भोजनमित्येवमादिवृत्तिः । पुल्कस्यांचाण्डालेन जायते अथवा मूलादिवृक्षादीनांतद्व्यसनंविभागकरणंसा वृत्तिर्व्यवच्छिन्नेषु वृक्षेषु यदनुवृत्तंमूलंतदुद्धृत्य विक्रयादिना जीवति ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । चण्डालेन पुल्कस्यां मूलव्यसनवृत्तिमान् मूलखननंकृत्वा तद्विक्रयणजीवनइत्यर्थः ॥३८॥

( ३ ) **कुल्लूकः** । शूद्रायां निषादेन जातायां पुक्कस्यां चण्डालेनजातः सोपाकाख्यः पापात्मा सर्वदा साधुभिर्नि-न्दितोमारणोचितापराधस्य मूलंवध्यः तस्य व्यसनंराजा देशेन मारणंतेन वृत्तिर्यस्य सजायते ॥ ३८ ॥

( ५ ) **नन्दनः** । मूलव्यसनमौषधखननम् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । चाण्डालेन सोपाकनामातथा पुल्कस्यांजायते । कीदृशः मूलव्यसनवृत्तिमान् मूलखननवृत्ति-मारणोचितःयद्वा मूलं बध्यं तस्य व्यसनं राजादेशेन मारणंवा ॥ ३८ ॥

**निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् ॥ श्मशानगोचरंसूते बाह्यानामपि गर्हितम् ॥ ३९ ॥**

( १ ) **मेधातिथिः** । अन्त्यावसायिनंचण्डालमेव वदन्ति अथवा निषाद्यां चण्डालादुत्पन्नस्यान्तावसायीति नाम-धेयं श्मशानगोचरंशवदहनादिवृत्तिराहारादीनि कर्माणि तैः प्रसिद्धैः सोपाकादिनामतया तज्जातीयएवसोऽतश्चाण्डालादपि कुत्सिततरोविज्ञेयः । तदेतदानन्त्यात्संकराणांप्रदर्शनमात्रंकृतम् ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । निषादस्त्री निषादजातीया स्त्री ॥ ३९ ॥

( ३ ) **कुल्लूकः** । निषादीचण्डालादन्त्यावसायिसंज्ञंचण्डालादिभ्योपि दुष्टतमंश्मशानवासिनंतद्वृत्तिंच जनयति ॥३९॥

**सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ॥ प्रच्छन्नावा प्रकाशावा वेदितव्याः स्वकर्मभिः ॥ ४० ॥**

( १ ) **मेधातिथिः** । यान्येतान्यनन्तरमुद्दिष्टानि त्वक्सारव्यवहारादीनि कर्माणि तैरप्रसिद्धाःसोपाकादिनामतयात-ज्जातीयावेदितव्याः पित्रामात्राच विभागेन दर्शिताः प्रच्छन्नावा प्रकाशावातज्जातीयावेदितव्याः । आयोगव्यांमात्रा विभा-गोनिषादाद्वैदेहिकादान्ध्रमेदाविति पित्रा दर्शितोविभागः ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । पितृमातृप्रदर्शिताः पितृमातृविशेषेण कथिताः । स्वकर्मभिर्गर्हितकर्मवर्तनशीलतया वेदित-व्याः प्रच्छन्नाप्रच्छन्नाअपि ॥ ४० ॥

( ३ ) **कुल्लूकः** । वर्णसङ्करविषयएताजातयोयस्येयंजनयित्र्ययंजनकः सएवंजातीय इत्येवं पितृमातृकथनपूर्वकंद-र्शिताः तथा गूढाः प्रकटावा तज्जात्युदितकर्मानुष्ठानेन ज्ञातव्याः ॥ ४० ॥

( ४ ) **राघवानन्दः** । संकीर्णप्रकरणमुपसंहरति संकरइति । पितृलोमातृतः कर्मभिर्वा विभाव्याइत्याह प्रच्छन्नावेति ॥ ४० ॥

( ५ ) **नन्दनः** । पितृमातृविगर्हिताः पितृमातृदोषविगर्हिताः आसु जातिषु द्विजधर्मिणः ब्राह्मणक्षत्रियवैश्यशूद्रस्त्रीषु जाताः अनुलोमजाइतियावत् द्विजधर्मिणोन केवलं स्वजातिजानामेव द्विजधर्मित्वं किन्त्वनन्तरासु जातानामपि साकल्येन द्विजधर्मित्वमस्तीत्यर्थः । तत्र ब्राह्मणाद्ब्राह्मण्याञ्जातस्य योद्विजधर्मस्सएव तस्मात्क्षत्रियायाञ्जातस्यापि एवमुत्तरयोरपियोज्यं वैश्याच्छूद्रायाञ्जातस्यानेन शूद्रेभ्योवैशिष्ट्यमित्यवगन्तव्यम ॥ ४० ॥

( ६ ) **रामचन्द्रः** । संकरे एताजातयः पितृमातृप्रदर्शिताः पितृमातृपूर्वकंकथिताः । प्रच्छन्नावा प्रकाशावा स्वकर्मभिर्वेदितव्याः ॥ ४० ॥

**सजातिजानन्तरजाः षट्सुताद्विजधर्मिणः ॥ शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥४१॥**

( १ ) **मेधातिथिः** । स्वजातीयास्त्रैवर्णिकेभ्यः समानजातीयास्तु जातास्ते द्विजधर्माणइत्येतत्सिद्धमेवानुद्यते अनन्तरजानांतुल्यता भिधानंतद्धर्मप्राप्त्यर्थं अनन्तरजाअनुलोमाब्राह्मणात्क्षत्रियवैश्ययोःक्षत्रियाद्वैश्यायांजातास्तेपि द्विजधर्माणउपनेयाइत्यर्थः उपनीताश्च द्विजातिधर्मैः सर्वैरधिक्रियन्ते ननु च ताननन्तरनाम्नइति मातृजातीयत्वमेषामुक्तमेव ततश्च तज्जात्या समेषु धर्मेषु सिद्धएवाधिकारः सत्यमनन्तरनामइति नामग्रहणात्संज्ञैवैषां नतु जात्यतिदेशइति कस्यचिदाशङ्कास्यादतःस्पष्टार्थंषट्सुताद्विजधर्मिणइतिवचनान्तरं धर्मिणइतिशब्दस्यधर्मोर्थनीयः । येपुनरपध्वंसजाःसंकरजास्तेशूद्राणांसधर्माणःसमानाचारास्तद्धर्मैरधिक्रियन्तइत्यर्थः । प्रतिलोमानांतु विशेषोवक्ष्यते अनन्तरग्रहणमनुलोमोपलक्षणार्थमेव तेन व्यवहितोऽपि ब्राह्मणाद्वैश्यायां जातोगृह्यते षट्संख्यातिरिक्तत्वान्न शूद्रायां पारशवः ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । अनुलोमजेषु विशेषमाह स्वजातीति । ब्राह्मणस्य ब्राह्मण्यां अनन्तरयोश्च क्षत्रियावैश्ययोरिति त्रयः क्षत्रियस्य क्षत्रियावैश्ययोः द्वौ वैश्यस्य वैश्यायामेकइति षट् द्विजानांसुताः द्विजधर्मिणः पितृजातीयसदृशाः । अत्र स्वजातिजग्रहणाद्वृत्यन्तरत्वेन योग्याःउपनयनादौ । अपरेत्वपध्वंसजाः संकरजाः शूद्रसधर्माणोनतथाविधसंस्काराद्यर्हाः ॥ ४१ ॥

( ३ ) **कुल्लूकः** । द्विजातिसमानजातीयासु जातास्तथानुलोम्येनोत्पन्नाब्राह्मणेन क्षत्रियावैश्ययोः क्षत्रियेण वैश्यायामेवंषट्पुत्राद्विजधर्मिणउपनेयाः ताननन्तरजास्त्विति यदुक्तंतत्तज्जातिव्यपदेशार्थंनसंस्कारार्थमिति कस्य चिद्भ्रमः स्यात् अतएषांद्विजातिसंस्कारार्थमिदंवचनं ये पुनरन्ये द्विजात्युत्पन्नाअपि सूतादयः प्रतिलोमजास्ते शूद्रधर्माणोनैषामुपनयनमस्ति ॥ ४१ ॥

( ४ ) **राघवानन्दः** । तत्रविप्रादिवत् करणान्तानां त्रयाणां द्विजवदाशौचोपनयानाद्यतिदिशन्आयोगवक्षत्तृचण्डालमागधवैदेहसूतानां षण्णां शूद्रवदाशौचादिप्राप्तिमाह सजातिजाइति। अपध्वंसजाइति पारिभाषिकाआयोगवादयः ॥४१॥

( ५ ) **नन्दनः** । सङ्कीर्णजातीनांपरिज्ञानोपायं शूद्रधर्मिणश्चाह स्वजातिजानन्तरजाइति । ब्राह्मणक्षत्रियवैश्यशूद्राः स्वजातिजाः अनन्तरवर्णजाताः अपध्वंसाः प्रतिलोमजातयः ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । स्वजातिजाः षट् सुताः द्विजधर्मिणः द्विजधर्मार्हाः उपनेयाः । शूद्राणांसधर्माणः सर्वे अपसजाः संकरजाः स्मृताः ॥ ४१ ॥

स्कृत-

---

( ४१ ) सजातिजा=स्वजातिजा ( नं )

**तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ॥ उत्कर्षंचापकर्षंच मनुष्येष्विह जन्मतः ॥ ४२ ॥**

( १ ) **मेधातिथिः** । तएतेऽनन्तरजाः तपःसामर्थ्येन बीजसामर्थ्येन युगेयुगे जन्मनिजन्मनि उत्कर्षमपकर्षंच गच्छन्ति तद्वक्ष्यामः शूद्रायां ब्राह्मणजातइत्यत्र ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । तपोबीजप्रभावेन तपसा जात्युत्कर्षार्थकृतेन बीजस्यच द्विजजातीयसंबन्धिनः प्रभावेन तेयोग्यतया व्यवहिताअपि द्विजधर्माणः युगेयुगे उत्तरोत्तरप्रसूतिषु क्रमान्मनुष्येषु जन्मतोजात्युत्कर्षंप्रथमप्रथमजातितः-श्रेष्ठत्वमसत्कर्मकरणाच्चापकर्षंशूद्रतोप्यधमांजातिंयान्ति । युगपदं मातापितृयोगसाध्यतया तत्साध्यायांसंततौ वर्तते । एतेन ब्राह्मणात्क्षत्रियायां जातोमूर्धावसिक्तोमूर्धावसिक्तांविवाह्य स्वाचारादप्युक्तायां जनयति सततउत्कृष्टः । एवमुत्तरोत्तरंज्ञेयम् । एवं क्रमेण पञ्चमी प्रसूतिर्ब्राह्मणजातिरेव भवति । एकान्तरवर्णजानांतु सप्तमी प्रसूतिः । एवं क्षत्रियाद्वैश्यायांजातेऽपि । एतदुक्तं याज्ञवल्कयेन ॥ जात्युत्कर्षोयुगे ज्ञेयः पञ्चमे सप्तमेपि वा । एवमसत्कर्मणां सद्विधानवत्पूर्वजात्युत्कर्षोपि द्रष्टव्यः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । सजातिजानन्तरजास्तपः प्रभावेण विश्वामित्रवद्बीजप्रभावेण ऋष्यशृङ्गादिवत्कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षंगच्छन्ति अपकर्षंच वक्ष्यमाणहेतुना यान्ति ॥ ४२ ॥

( ४ ) **राघवानन्दः** । तपोबीजप्रभावैः सूतादीनामप्युत्कर्षोभवतीत्याह तपइति । युगे जन्मनि । तपःप्रभावेन विश्वामित्रवत् । बीजप्रभावेन ऋष्यशृङ्गवत् । अपकर्षः कर्मणांत्यागादिना ॥ ४२ ॥

( ५ ) **नन्दनः** । एवंतावद्बीजक्षेत्रवशाज्जातीनामुत्कर्षापकर्षौ वृत्ता विदानींहेत्वन्तरवशादप्याह तपोबीजप्रभावैश्चेति । ते ब्राह्मणादयोद्विजधर्मिणश्च वर्णास्तपएव बीजंतपोबीजंतपोबीजत्ववचनंजात्यन्तरोत्पादकत्वनिबन्धनं युगे युगे मिथुने मिथुने संताने सन्ताने पुत्रपौत्रादीष्वपीत्यर्थः । युगशब्दस्य सन्तानवचनत्वमुत्तरत्र व्यक्तीभविष्यति इहमनुष्येषु मध्ये जन्मतउत्कर्षमपकर्षंच गच्छति तस्मादुत्कर्षहेतुः सेव्योऽपकर्षहेतुस्त्याज्यइत्यभिप्रायः ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । युगेयुगे जन्मनिजन्मनि तपोबीजप्रभावैरुत्कर्षंगच्छन्ति । जन्मतः जात्याइहमानुषेषु अपकर्षं नीचत्वं गच्छन्ति ॥ ४२ ॥

**शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ॥ वृषलत्वंगतालोके ब्राह्मणादर्शनेन च ॥ ४३ ॥**

( १ ) **मेधातिथिः** । यदुक्तंस्वकर्मणांत्यागेनेति तस्यैवायंप्रपञ्चः । क्रियालोपोयत्र संस्कार्यतया संबध्यते तथोपनयनादिषु यत्र वा कर्तृतया यथानित्याग्निहोत्रसंध्योपासनादिषु तासांलोपउभयासामप्यननुष्ठानमतश्च न केवलमुपनयनसंस्काराभावेन जातिभ्रंशः । अपितूपनीतानांविहितक्रियात्यागेनापि तथाचाह शनकैरिति पुत्रपौत्रादिसंततेः प्रभृतिशूद्रत्वंनतु जातस्यैव उपनयनाभावेतु तस्यैव व्यपदेशान्तरंप्रवर्तते । यद्यपि सा जातिर्ननिवर्तते तत्पुत्रपौत्राणां भृज्जकण्टकादिजात्यन्तरमेव व्यपदेशहेतुकमपि ब्राह्मणातिक्रमेण ब्राह्मणविधिविहितानिक्रमेणेत्यर्थः । अथवा शास्त्रार्थसंशये प्रायश्चित्ते वा परिषद्गमनाभावः ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रदृष्टान्तमाह शनकैरिति । शनकैः क्रमेण वृषलत्वं शूद्रत्वं गताः क्रियालोपात् तत्रहेत्वाः ब्राह्मणादर्शनम् ॥ ४३ ॥

( ३ ) **कुल्लूकः** । इमावक्ष्यमाणाः क्षत्रियजातय उपनयनादिक्रियालोपेन ब्राह्मणानांच याजनाध्यापनप्रायश्चित्ताशिताः तथा गूवेन शनैः शनैर्लोके शूद्रतांप्राप्ताः ॥ ४३ ॥

( ४ ) **राघवानन्दः**। तत्रैव कैमुतिकन्यायमाह शनैरितिद्वाभ्याम्। क्रियालोपेन उपनयनाद्यभावेन। ब्राह्मणादर्शनेन याजनाध्यापनप्रायश्चित्ताद्यर्थं तेषां दर्शनाभावेन ॥ ४३ ॥

( ५ ) **नन्दनः**। तपोबीजप्रभावउत्कर्षहेतुत्वेनोक्तः कः पुनरपकर्षहेतुरत्रेत्यपेक्षायामाह शनकैरिति। शनकैः संतानेसंताने ब्राह्मणानामदर्शनात्क्रियालोपाद्ब्राह्मणादर्शननिमित्तात्क्रियालोपात् इमाउत्तरश्लोके वक्ष्यमाणाः ॥ ४३ ॥

( ६ ) **रामचन्द्रः**। लोके क्रियालोपात् सत्क्रियालोपात् इमाःक्षत्रियजातयः शनकैः वृषलत्वं शूद्रतां ब्राह्मणादर्शनेन ब्राह्मत्वबोधित कर्माननुष्ठानेन ॥ ४३ ॥

**पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजायवनाः शकाः ॥ पारदापह्लवाश्चीनाः किरातादरदाः खशाः॥४४॥**

(१) **मेधातिथिः**। पुंड्रकादयः शब्दाः परमार्थतोजनपदशब्दाइहतु क्षत्रियेषु मुख्यास्तत्संबन्धत्वाज्जनपदेषु वर्तन्तइत्येतद्दर्शनमाश्रितं। यथालुग्विधौ तस्य निवासोजपदेलुगिति नतुयथालुग्योगाप्रख्यानादिति नैतेषु देशेषु बाहुल्येन चातुर्वर्ण्यमस्तीत्येतदालंबनं। वृषलत्ववचनं यदि वा पुंड्रादयः शब्दाः कथंचिद्देशसंबन्धेन विना दृश्यन्ते तदैतज्जातीयावेदितव्याः। महाभारतादौ क्षत्रियावर्ण्यन्ते तथाद्यत्वेऽप्येते क्षत्रियाएवेति कस्यचित् भ्रान्तिः स्यादतएवमुक्तमेते वृषलाइति येचैते दिगन्तवासिनः किरातवैनदरदादयस्तेषामप्रामरूपंवेदेनानूद्यते नतमियान्नांतमियादिति ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः**। तानाह पुण्ड्रकाइति ॥ ४४ ॥

( ३ ) **कुल्लूकः**। पौण्ड्रादिदेशोद्भवाः संतः क्रियालोपादिना शूद्रत्वमापन्नाः ॥ ४४ ॥

( ४ ) **राघवानन्दः**। पौण्ड्रकादयएकादश पतितक्षत्रियानरजातयः ॥ ४४ ॥

( ५ ) **नन्दनः**। ताएव जातीरुदाहरति पौण्ड्रकाइति ॥ ४४ ॥

( ६ ) **रामचन्द्रः**। एते पौण्ड्रकादयः खशान्ता उक्ताः ॥ ४४ ॥

**मुखबाहूरुपज्जानांयालोके जातयोबहिः ॥ म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः॥४५॥**

( १ ) **मेधातिथिः**। असदविद्यमानार्थासाधुशब्दतयावाक् म्लेच्छोच्यते। यथाशबराणांकिरातानामन्येषांवान्त्यानां आर्यवाच आर्यावर्तनिवासिनस्तेचातुर्वर्ण्यादन्यजातीयत्वेन प्रसिद्धास्तदादस्यवउच्यन्ते। एतदुक्तंभवति न देशनिवासेन म्लेच्छवाक्संकरत्वे कारणमपि तु यथोक्तबर्बरादिशब्दप्रसिद्धिर्मुखादिजानां बहिष्क्रियते ब्राह्मणादिशब्दैरप्रसिद्धैरित्यर्थः ते सर्वे दस्यवउच्यन्ते ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः**। उक्तमर्थंसंक्षिप्याह मुखेति। पञ्चम्यर्थेषष्ठी। चतुर्भ्योवर्णेभ्योयेन्ये तेयदि म्लेच्छदेशस्थतया म्लेच्छवाचःस्युर्यदिवार्यदेशवासादार्यवाचस्तथापि दस्यवोऽपसदाएव ॥ ४५ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणक्षत्रियवश्यशूद्राणांक्रियालोपादिना याजातयोबाह्याजाताम्लेच्छभाषायुक्ताआर्यभाषोपेतावा तेदस्यवः सर्वे स्मृताः ॥ ४५ ॥

( ४ ) **राघवानन्दः**। बाह्यानुलोमप्रतिलोमजानां त्रिंशतां कर्माणि वक्ष्यंस्तानानुवदति मुखेतिद्वाभ्याम्। मुखबाहूरुपज्जानां ब्रह्मक्षत्रियविट्शूद्राणां तेभ्यश्चतुर्भ्योबहिर्जातयस्ताः म्लेच्छवाचः म्लेच्छवत् भाषणानि येषांते ॥ ४५ ॥

( ५ ) **नन्दनः**। अनुलोमजातीनांप्रतिलोमजानांच साधारणींसंज्ञामाह मुखबाहूरुपज्जानामिति। आर्यवाचः संस्कृतवाचः ॥ ४५ ॥

---

( ४४ ) पल्हवाः=बाल्हिकाः ( क )

( ६ ) **रामचन्द्रः** । मुखबाहूरुपज्जानां चतुर्वर्णानांजातयः याःलोके बहिर्द्विजक्षेत्रवैश्यशूद्रात् अन्ये सर्वे ते दस्यवः स्मृताः ॥ ४५ ॥

## ये द्विजानामपसदाये चापध्वंसजाः स्मृताः ॥ ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ॥ ४६ ॥

( १ ) **मेधातिथिः** । अपसदाअनुलोमाःप्रतिलोमाः अपध्वंसजागोबलीवर्दवद्भेदः द्विजानामुपयोगिभिः प्रेष्यकर्मभिर्वर्तयेयुः आत्मानोनिन्दितैः प्रेष्यकार्यत्वान्निन्दितानि ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । द्विजानामपसदाद्विजसधर्माणः षट् ये चापध्वंसजाः शूद्रसधर्माणः । निन्दितैर्द्विजानां कर्मभिःद्विजानांभृत्यतया तत्तदुशनःप्रभृति स्मृत्युक्तकर्म कुर्वन्तः ॥ ४६ ॥

( ३ ) **कुल्लूकः** । ये द्विजानामानुलोम्येनोत्पन्नाः षडेतेऽपसदाः स्मृताइति तेषामपि पितृतोजघन्यत्वेनापसदशब्देन प्रागभिधानादपध्वंसजास्ते द्विजात्युपकारकैरेव निन्दितैर्वक्ष्यमाणैः कर्मभिर्जीवेयुः ॥ ४६ ॥

( ४ ) **राघवानन्दः** । अपसदामूर्धाभिषिक्तादयःषट् । अपध्वंसजाः सूतादयः । सैरन्ध्रादीनां विशेषणेनैव कर्मलाभः । प्रायेणनिन्दितैः द्विजातिषु प्रतिषिद्धैः द्विजानां द्विजात्यपेक्षितैः कर्मभिः ॥ ४६ ॥

( ५ ) **नन्दनः** ।अथदस्यूनां साधारणीं वृत्तिमाह येद्विजानामपसदाइति।अपसदाः चौर्यजाता अनुलोमजाः अभिषिक्तादयः।अपध्वंसजाः प्रतिलोमजाः सूतादयः अनुलोमजेष्वप्यनन्तराः पुत्रव्यतिरिक्ताअंबष्ठादयश्च सजातीयेष्वपि कुण्डगोलकादयश्च द्विजानामेव कर्मभिर्द्विजार्थैरेव कर्मभिः चिकित्साश्वसारथ्यादिभिर्वर्तयेयुर्जीवेयुः ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । ये द्विजानां ब्राह्मणक्षत्रियविशां सकाशादपसदाः सूताम्बष्ठवैदेहकमागधादयः ये अपध्वंसजाः ते निन्दितैः कर्मभिः सेवादिभिः द्विजानां कर्मभिःउपयोगिभिःवर्तेरन् ॥ ४६ ॥

## सूतानामश्वसारथ्यमंबष्ठानांचिकित्सनम् ॥ वैदेहकानांस्त्रीकार्यंमागधानांवणिक्पथः ॥ ४७ ॥

( १ ) **मेधातिथिः** । तथाचवक्ष्यते स्त्रीकार्यमन्तःपुररक्षाकारित्वं वणिक्पथः स्थलपथवारिपथादिप्रसिद्धः ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । तदेव कियदप्याह सूतानामिति । स्त्रीकार्यमन्तःपुररक्षा । वणिक्पथोवाणिज्यम् ॥ ४७ ॥

( ३ ) **कुल्लूकः** । सूतानामश्वदमनयोजनादिरथसारथ्यंजीवनार्थं अम्बष्ठानांरोगशान्त्यादिचिकित्सा वैदेहकानामन्तःपुररक्षणं मागधानांस्थलपथवणिज्या ॥ ४७ ॥

( ४ ) **राघवानन्दः** । तानि कर्माण्याह सूतानामितिदशभिः । चिकिित्सतं भिषक्क्रिया स्त्रीकार्यमन्तःपुरादिरक्षा । वणिक्पथः नौयायित्वम् ॥ ४७ ॥

( ५ ) **नन्दनः** । तेषांसाधारणींच वृत्तिमाह सूतानामश्वसारथ्यमिति । स्त्रीकार्यमन्तःपुरादिषु स्त्रीरक्षा । वणिक्पथोवाणिज्यम् ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । अम्बष्ठानां शूद्रादम्बष्ठाजाताः चिकित्सकंशास्त्रं वैद्यकं । स्त्रीकार्यं अन्तःपुररक्षणम् ॥ ४७ ॥

## मत्स्यघातोनिषादानांत्वष्टिस्त्वायोगवस्य च ॥ मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥ ४८ ॥

( १ ) **मेधातिथिः** । ताष्टिर्दारुतक्षणंतक्षकर्म ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । निषादानां निषादजानां कैवर्तानां तेन कैवर्तोपि निषादपदेनोच्यतइति दर्शितम् । तथाच । जातोनिषादाच्छूद्रायामित्यत्र निषादपदेन सएवोच्यतइति । त्वष्टिस्तक्षणं काष्ठादेः । चुंचुमद्गू झल्लमल्लपदाभ्यां प्रागुक्तौ ॥ ४८ ॥

( ३ ) **कुल्लूकः** । निषादानामुक्तानांमत्स्यवधः आयोगवस्य काष्ठतक्षणं मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुमारणं चुञ्चुमद्गुश्च वैदेहकबन्दिस्त्रियोर्ब्राह्मणेन जातौ बौधायनेनोक्तौ बोद्धव्यौ बन्दीस्त्रीच क्षत्रियेण शूद्रायां सोग्रैवँ ग्राह्या ॥४८॥

( ४ ) **राघवानन्दः** । त्वष्टिः काष्टतक्षणम् । चञ्चुमद्गूवैदेहीमागध्यौ ब्राह्मणजौ बौधायनोक्तौ ॥ ४८ ॥

( ५ ) **नन्दनः** । तष्टिस्तक्षणं चञ्चुमद्गूजातिविशेषौ शास्त्रान्तरप्रसिद्धिमाश्रित्योक्तौ अथवातद्विषयश्लोकोनूनंलेखपराधाद्भ्रष्टः ॥ ४८ ॥

( ६ ) **रामचन्द्रः** । आयोगवस्य त्वष्टिस्तक्षणम् । मेदान्ध्रचुंचुमद्गूनां आरण्यपशुजीवनम् ॥ ४८ ॥

**क्षत्त्रुग्रपुक्कसानांतु बिलौकोवधबन्धनम् ॥ धिग्वणानांचर्मकार्यंवेणानांभाण्डवादनम् ॥ ४९ ॥**

( १ ) **मेधातिथिः** । बिलौकसोहिनकुलगर्गरादयस्तेषांवधबन्धनंक्षत्रादीनांजीविका चर्मकार्यंकवचादिसीवनमुपानद्ग्रथनमित्येवमादि भांडवादनंमुरजार्धमुरजादीनाम् ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । बिलौकसः सर्पाद्याः । भाण्डवादनं वाद्यभाण्डवादनम् ॥ ४९ ॥

( ३ ) **कुल्लूकः** । क्षत्रादीनांबिलनिवासिगोधादिवधबन्धनं धिग्वणानां चर्मकरणंतद्विक्रयश्च चर्मकरणंतद्विक्रयश्च जीवनंधिग्वणानामित्यौशनसदर्शनात् अतएव कारावरेभ्यएषांवृत्तिच्छेदः वेणानांकांस्यमुरजादिवाद्यभाण्डवादनम् ॥ ४९ ॥

( ४ ) **राघवानन्दः** । बिलौकोवधबन्धनं बिलौकोगोधाकूर्मादि । चर्मकार्यंचर्मशोधनं पादुकादिनिर्माणं कारावरस्येति विशेषः । भाण्डं वादनभाण्डं कांस्यमुरजादि ॥ ४९ ॥

( ५ ) **नन्दनः** । बिलौकोवधबन्धनं बिलौकसः श्वाविमूषिकगोधादयः कार्मार्यंकर्मकारकृत्यंशस्त्रमार्जनम् ॥ ४९ ॥

( ६ ) **रामचन्द्रः** । क्षत्ता उग्रः पुल्कसः बिलौकसर्पादीनां वधजीवनं सर्पान्बध्वाजीवन्ति ॥ ४९ ॥

**चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ॥ वसेयुरेते विज्ञानावर्तयन्तः स्वकर्मभिः ॥ ५० ॥**

( १ ) **मेधातिथिः** । बहिर्ग्रामनिवासिनः पर्वतलक्षणप्रदेशे निवसेयुः विज्ञातोविज्ञातिचिन्हैर्विदुषां यद्यस्य कर्मविहितंसतेनैव जीवेत् उत्कृष्टंकर्मसंकरंकर्तुंन लभते ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । एते सूतादयः विज्ञाताश्चिन्हिताः ॥ ५० ॥

( ३ ) **कुल्लूकः** । ग्रामादिसमीपे ख्यातवृक्षश्चैत्यद्रुमस्तन्मूले श्मशानपर्वतवनसमीपेषु चामी प्रकाशकाः स्वकर्मभिर्जीवन्तोवसेयुः ॥ ५० ॥

( ४ ) **राघवानन्दः** । किंच चैत्येति । स्वकर्मभिर्विज्ञाताश्चैत्यवृक्षादिषुवसेयुरित्यन्वयः ॥ ५० ॥

( ५ ) **नन्दनः** । विज्ञातास्तेज्ञातयः वर्तयन्तः जीवन्तः ॥ ५० ॥

( ६ ) **रामचन्द्रः** । स्वकर्मभिर्वर्तयन्तोऽविज्ञाताएते पौण्ड्रकादयःवसेयुः ॥ ५० ॥

**चण्डालश्वपचानांतु बहिर्ग्रामात्प्रतिश्रयः ॥ अपपात्राश्च कर्तव्याधनमेषांश्वगर्दभम् ॥ ५१ ॥**

( १ ) **मेधातिथिः** । प्रतिश्रयोनिवासस्तेषांग्रामान्निष्क्रान्तःस्यात् अपपात्राश्चिरवसानीयास्तैर्येषु पात्रेषुभुक्तं तानि नसंस्कार्याणि त्यक्तव्यानि सौवर्णराजताभ्यामन्यानि तयोः शुद्धिविशेषाउक्ताः । अथवाऽपपात्राय तदीयेषु च शक्तेषु

* सोग्रैव=तदुक्तयैव

पात्रेषुसक्तुभक्तादिनदातव्यमिष्टेपात्रेऽन्यहस्तस्थेवादत्वातत्पात्रंभूमौस्थितंतद्गृह्णीयुः भिन्नंवा पात्रमवपात्रंयथावक्ष्यति भिन्नभाण्डे च भोज्यादि धनमेषांश्वगर्दभगवाश्वादि सुवर्णरजतादि धनत्वेन गृह्णीयुः ॥ ५१ ॥

( २ ) सर्वज्ञनारायणः । चाण्डालश्वपचानांतु ग्राममलाद्याकर्षकर्तृकत्वाद्ग्रामाद्बहिरेवावस्थानम् । अवपात्राः पात्राद्बहिर्भूताः तैःस्पृष्टं पात्रादि न स्पृश्यमित्यर्थः ॥ ५१ ॥

( ३ ) कुल्लूकः । प्रतिश्रयोनिवासः चण्डालश्वपाकानान्तु ग्रामाद्बहिर्निवासःस्यात् पात्ररहिताः कर्तव्यायत्नलोहादिपात्रैतैर्भुक्तंतत्संस्कृत्यापि न व्यवहर्तव्यं धनंचैषांकुक्कुरखरं वृषभादि वासांसि च शववस्त्राणि भिन्नशरावादिषु चभोजनं लोहवलयादिचालङ्करणं सर्वदा च भ्रमणशीलत्वम् ॥ ५१ ॥ ५२ ॥

( ४ ) राघवानन्दः । उक्तः श्वपाकः श्वपचः तेषां प्रतिश्रयोनिवासः । अवपात्राः तैर्भुक्तानि पात्राणि संस्कृतान्यपि न व्यवहरणीयानि ॥ ५१ ॥

( ५ ) नन्दनः । बहिर्ग्रामान्निर्गतः अपपात्रा अपगतकांस्यादिपानभोजनपात्रामृण्मयपात्राइत्यर्थः ॥ ५१ ॥

( ६ ) रामचन्द्रः । अपपात्राः अस्पृश्यपात्राः धातुमयपात्ररहिताः कर्तव्याः । एषां चाण्डालादीनां धनंश्वगर्दभम् ॥ ५१ ॥

**वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ॥ कार्ष्णायसमलङ्कारः परिव्रज्याच नित्यशः ॥५२॥**

( १ ) मेधातिथिः । सर्वकालंपरिव्रज्या नैकत्रस्थाने वसेयुः ॥ ५२ ॥

( २ ) सर्वज्ञनारायणः । कार्ष्णायसं लौहम् । परिव्राज्या सर्वतोभ्रमणमेकत्रानवस्थानम् ॥ ५२ ॥

( ४ ) राघवानन्दः । अतएवाह भिन्नभाण्डेति । पृथक् पात्रे भोजनं देयम् । कार्ष्णायसमलंकारःकृष्णायोलोहतद्विकारः प्रव्रज्या भ्रमणं न तेषांस्थिरनिकेतनम् । नित्यपदेन संन्यासीव्यावर्तितः दयार्थंसर्वभूतानांवर्षास्वेकत्र संवसेदिति संन्यासिनः स्थितिस्मरणात् ॥ ५२ ॥

( ५ ) नन्दनः । परिव्रज्यादूरोपसर्पणम् ॥ ५२ ॥

( ६ ) रामचन्द्रः । कार्ष्णायसं लोहमयंपरिव्रज्या नित्यभ्रमणंपरिधानार्थं मृतानां चैलानिवासांसि ॥ ५२ ॥

**न तैः समयमन्विच्छेत्पुरुषोधर्ममाचरन् ॥ व्यवहारोमिथस्तेषांविवाहः सदृशैः सह ॥ ५३ ॥**

( १ ) मेधातिथिः । समयः संकेतएककार्यता संगतिरित्यनर्थान्तरं एकत्रस्थानासनविहारास्तैः सह नकर्तव्याइत्यर्थः । विवाहोदारग्रहणादिः सोप्येवमेव ॥ ५३ ॥

( २ ) सर्वज्ञनारायणः । समयं व्यवहारम् । व्यवहारः संभाषणेभाजनादिः ॥ ५३ ॥

( ३ ) कुल्लूकः । धर्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादिव्यवहारंन कुर्यात् तेषांच ऋणदानग्रहणादिव्यवहारोविवाहश्च समानजातीयैः सहान्योन्यंस्यात् ॥ ५३ ॥

( ४ ) राघवानन्दः । योहि धर्ममाचरन् सतैः समयं दर्शनालापादि नान्विच्छेदित्यन्वयः । व्यवहारऋणादिः ॥५३॥

( ५ ) नन्दनः । समयंसंगतं धर्ममाचरन्धार्मिकमिति यावत् मिथोन्योन्यव्यवहारः क्रयविक्रयौ ॥ ५३ ॥

( ६ ) रामचन्द्रः । समयं व्यवहारं तैः सह नियच्छेत् ॥ ५३ ॥

अन्नमेषांपराधीनंदेयंस्याद्भिन्नभाजने ॥ रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥ ५४ ॥

( १ ) मेधातिथिः । रात्राविति तत्साक्षादेषांनदातव्यं प्रेष्यैः कैश्चित्पूर्वोक्तेन प्रकारेण दापयितव्योरात्रौ स्पर्शाशङ्कयान्तर्ग्रामनगरचर्याप्रतिषेधः ॥ ५४ ॥

( २ ) सर्वज्ञनारायणः । अन्नं पक्वं पराधीनं परपाकसिद्धं नत्वयंगृहे निवसन्तः पचेयुरित्युर्थः । भिन्नभाजने भग्नशरावादौ ॥ ५४ ॥

( ३ ) कुल्लूकः । अन्नमेषांपरायत्तंकार्यसाक्षादेभ्योन देयंकिन्तु प्रेष्यैर्भिन्नपात्रे दातव्यम् तेच रात्रौ ग्रामनगरयोर्न पर्यटेयुः ॥ ५४ ॥

( ४ ) राघवानन्दः । पराधीनं परंपरया देयं तत्रापि भिन्नभाजने भग्ने । रात्रौ नचरेयुः दस्युत्वात्तेषामितिभावः ॥ ५४ ॥

( ५ ) नन्दनः । भिन्नभाण्डइत्येवसिद्धे भिन्नभाजनइति पुनर्वचनमादरातिशयार्थम् ॥ ५४ ॥

( ६ ) रामचन्द्रः । अन्नं एषां पराधीनं परपाकसिद्धं स्वसहायशूद्रद्वारादातव्यं वाभिन्नभाजने भिन्नशरावादौ॥५४॥

दिवाचरेयुः कार्यार्थंचिन्हिताराजशासनैः॥ अबान्धवंशवंचैव निर्हरेयुरिति स्थितिः॥ ५५ ॥

( १ ) मेधातिथिः । दिवाविचरन्तिकार्यार्थंक्रयविक्रयस्वकार्यसिध्यर्थंराजकार्याय वा चरेयुर्नगरोत्सवप्रेक्षादिनिमित्तं तत्रापिच चिन्हितराजशासनैरुपलक्षिता राजादिष्टैर्वस्त्रादिचिन्हैर्वध्यवधशासनैर्वा परशुकुठारादिभिः स्कन्धारोपितैः ॥ ५५ ॥

( २ ) सर्वज्ञनारायणः । राजशासनैः राज्ञा नियमितैश्चिन्हैः लोहाभरणवत्पिच्छादिभिः । निर्हरेयुः बहिर्नयेयुः ॥ ५५ ॥

( ३ ) कुल्लूकः । दिवाग्रामादौ क्रयविक्रयादिकार्यार्थंराजाज्ञया चिन्हाङ्किताः सन्तः पर्यटेयुः अनाथंच शवंग्रामान्निर्हरेयुरिति शास्त्रमर्यादा ॥ ५५ ॥

( ४ ) राघवानन्दः । दिवसेचेच्चिन्हिताः ललाटादिष्वङ्किताः । निर्हरेयुर्ग्रामात् ॥ ५५ ॥

वध्यांश्च हन्युः सततंयथाशास्त्रंनृपाज्ञया ॥ वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥ ५६ ॥

( १ ) मेधातिथिः । तथाचाह ॥ ५६ ॥

( २ ) सर्वज्ञनारायणः । यथाशास्त्रं दण्डप्रकरणोक्तक्रमेण ॥ ५६ ॥

( ३ ) कुल्लूकः । वध्यांश्च शास्त्रानतिक्रमेण शूलारोपणादिना सर्वदा राजाज्ञया हन्युः तद्वस्त्रशय्यालङ्कारांश्च गृह्णीयुः ॥ ५६ ॥

( ४ ) राघवानन्दः । वध्यान् वधार्हान् । यथाशास्त्रं शूलार्पणादिना ॥ ५६ ॥

( ५ ) नन्दनः । नृपाज्ञयायथाशास्त्रंयथाशासनंयथाज्ञप्तंहन्युः शय्याश्चाभरणानि च वध्यानामिति विपरिणामः ॥ ५६ ॥

वर्णापेतमविज्ञातंनरंकलुषयोनिजम् ॥ आर्यरूपमिवानार्यंकर्मभिः स्वैर्विभावयेत् ॥ ५७ ॥

( १ ) मेधातिथिः । वर्णादपेतंचातुर्वर्ण्याद्बहिष्ट्यं । अविज्ञातंसत्यां शङ्कायां जारजातंवक्ष्यमाणैः कर्मभिः स्वभावा

तिशयैश्च निश्चिनुयात् । हीनकर्मरतिः क्रूरकर्माच सत्यांशङ्कायां कलुषयोनिजोजारजातोवेदितव्यः ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । वर्णापेतं वर्णभ्रष्टं वर्णबाह्यम् । अविज्ञातं तथाचनिश्चितम् । तथा कलुषयोनिजमननुरूपविवाहजातम् । अनार्यं वस्तुतः । कर्मभिर्वक्ष्यमाणैः स्वैः संकरजानांसाधारणैः ॥ ५७ ॥

( ३ ) **कुल्लूकः** । वर्णत्वादपेतंमनुष्यंसङ्करजातंलोकतस्तथात्वेनाविज्ञातमतएवार्यसदृशंवस्तुतः पुनरनार्यंनिन्दितयोन्यनुरूपाभिश्चेष्टाभिर्वक्ष्यमाणाभिर्निश्चिनुयात् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । देशान्तरादौ प्रच्छन्नाः कथंज्ञायेरन् तत्राह वर्णेतिषड्भिः । वर्णापेतं वर्णाच्चातुर्वर्ण्यादपेतंसंकरतांगतम् विभावयेन्निश्चिनुयात् कृष्णवर्णादियुतंवा । आर्यरूपं दैवात्सुवर्णशोभनवस्त्रादिधारिणं कर्मभिरपेयपानचौर्याद्यैः ॥ ५७ ॥

( ५ ) **नन्दनः** । अन्यगूढोत्पन्नानांपरिज्ञानोपायमाहवर्णापेतमिति । वर्णापेतंचातुर्वर्ण्याद्बहिष्टं कलुषयोनिजंसंकीर्णयोनिजंविभावयेदनुमिमीत ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । वर्णापेतं वर्णभ्रष्टम् ॥ ५७ ॥

## अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ॥ पुरुषंव्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥

( १ ) **मेधातिथिः** । अनार्योद्वेषमत्सरप्रधानः स्वार्थपरः क्रूरो लोभहिंसापरः निःक्रियात्मा विहितक्रियावर्जितः एतैः स्वभावैः कलुषयोनिता व्यज्यते ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । अनार्यता अनृजुता । निष्ठुरता अक्रियता । क्रूरताहिंस्रता । निष्क्रियात्मता धर्मक्रियावैमुख्यम् । कलुषयोनिजं वर्णापेतंच ॥ ५८ ॥

( ३ ) **कुल्लूकः** । निष्ठुरत्वपरुषभाषित्वहिंस्रत्वविहिताऽननुष्ठातृत्वानि सङ्करजातित्वमस्मिन्लोके प्रकटीकुर्वन्ति ॥ ॥ ५८ ॥

( ४ ) **राघवानन्दः** । कलुषयोनित्वव्यञ्जककर्माण्याह अनार्यतेति । निष्ठुरता परुषभाषिता । क्रूरता अनिमित्तहिंसनं । निष्क्रियात्मता अशीतिन्यूनवयस्त्वेपि क्रियारहितता । कलुषयोनिजं कलुष जात्यन्तरबीजाक्रान्ताजात्यन्तरा या योनिस्ततो जातम् ॥ ५८ ॥

( ५ ) **नन्दनः** । कानि पुनस्तानि कर्माणीत्यपेक्षायामाह अनार्यतेति । अनार्यता नास्तिकता निष्ठुरतानृशंसता क्रूरता स्वल्पापराधेऽपि प्रखरभावता निषिद्धात्मता सकलकर्मवर्जनशीलता व्यञ्जयन्ति अनुमापयन्ति अनार्यतादीनि समस्तानि न पुनर्व्यस्तानि ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । पुरुषंपूर्वोक्तागुणाः व्यञ्जयन्ति । ईर्ष्यामत्सरप्रधानोऽनार्यः । स्वार्थपरोनिष्ठुरः । लोभहिंसापरः क्रूरः । विहितक्रियारहितोनिष्क्रियः ॥ ५८ ॥

## पित्र्यंवा भजते शीलंमातुर्वोभयमेव वा ॥ न कथंचन दुर्योनिः प्रकृतिंस्वांनियच्छति ॥ ५९॥

( १ ) **मेधातिथिः** । दुर्योनिः संकीर्णजन्मा प्रकृतिंस्वामात्मीयकारणं न नियमेन गृह्णाति ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । पित्र्यंमातुरुभयंवा न भजते किंतु स्वामेव संकरजातिप्रकृतिं प्रयच्छति प्रतिगृह्णातीति योज्यम् ॥ ५९ ॥

( ३ ) **कुल्लूकः** । यस्मात् पित्र्यंवेति । असौ सङ्करजातोदुष्टयोनिः पितृसंबन्धिदुष्टस्वभावत्वंसेवते मातृसंबन्धिवोभयसंबन्धिवा न कदाचिदसावात्मकारणंगोपयितुंशक्नोति ॥ ५९ ॥

( ४ ) **राघवानन्दः** । ननियच्छति स्वकारणमपह्नोतुंनशक्नोति ॥ ५९ ॥

( ५ ) **नन्दनः** । लिङ्गान्तरमप्याह पितुर्वा भजतेशीलमिति । प्रकृतिकारणम् ॥ ५९ ॥

**कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः ॥ सश्रयत्येव तच्छीलंनरोऽल्पमपि वा बहु ॥ ६० ॥**

( १ ) **मेधातिथिः** । तस्य शीलंयेन जातोनतु यस्य क्षेत्रंसलोके प्रसिद्धः ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । तदेव स्फुटयति कुलइति । योनिसंकरोऽसदृशयोनिसांकर्यम् । तच्छीलं संकरशीलम् ॥ ६० ॥

( ३ ) **कुल्लूकः** । महाकुलप्रसूतस्यापि यस्य योनिसङ्करः प्रच्छन्नोभवति समनुष्योजनकस्वभावंस्तोकंप्रचुरंवा सेवतएव ॥ ६० ॥

( ४ ) **राघवानन्दः** । तदेव स्पष्टयति कुलेति । मुख्ये विप्रादिरूपे योनिसंकरः स्वोत्पादकयोनौ विजातीयरेतःप्रवेशात् तच्छीलं तयोः पितृमात्रोः स्वभावम् ॥ ६० ॥

( ५ ) **नन्दनः** । एतदेव स्थिरीकरोति कुलेमुख्येऽपीति । तच्छीलंपितृमातृशीलं संश्रयति यथा परिज्ञातजन्मानोबाह्याव्यवहारादिबाह्याएवमनुचितजन्मानोप्येतदित्यभिप्रायः ॥ ६० ॥

**यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः ॥ राष्ट्रिकैः सह तद्राष्ट्रंक्षिप्रमेव विनश्यति ॥ ६१ ॥**

( १ ) **मेधातिथिः** । तस्माद्वर्णसंकरोराज्ञा परिवर्जनीयः राष्ट्रियाजानपदाः राष्ट्रममात्यादयः ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । यत्रराष्ट्रे वर्णसंकरप्रवृत्त्या प्रथमं जायन्ते वर्णसंकराः संकरजाः । राष्ट्रियैः राष्ट्रजैः ॥ ६१ ॥

( ३ ) **कुल्लूकः** । यस्मिन्राष्ट्रएते वर्णसङ्करावर्णानांदूषकाजायन्ते तद्राष्ट्रंराष्ट्रवासिजनैः सह शीघ्रमेव नाशमेति तस्माद्राज्ञा वर्णानांसङ्करोनिरसनीयः ॥ ६१ ॥

( ४ ) **राघवानन्दः** । यत्रराष्ट्रेराष्ट्रियैः राष्ट्रनिवासिभिर्जनैः ॥ ६१ ॥

( ५ ) **नन्दनः** । राष्ट्रे स्वस्मिन्वर्णसङ्करोराज्ञा परिहरणीयइत्यभिप्रायेणाह यत्रत्वेतेपरिध्वंसाइति परिध्वंसाः संकरजन्मानः गूढोत्पन्नत्वादपरिज्ञानाद्ये वर्णास्तैस्सह संगच्छेरन्नेतान्दूषयन्तीति वर्णदूषकाः ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । वर्णदूषकाः वर्णसंकरा जायन्ते ॥ ६१ ॥

**ब्राह्मणार्थे गवार्थे वा देहत्यागोनुपस्कृतः ॥ स्त्रीबालाभ्युपपत्तौ च बाह्यानांसिद्धिकारणम् ॥ ६२ ॥**

( १ ) **मेधातिथिः** । [ अनुपस्कृतोधनमगृहीत्वा । अभ्यवपत्तिरनुग्रहः बाह्यानांप्रतिलोमानांसिद्धिकारणं ][1] उत्कृष्टजातौ जन्मसिद्धेः सिद्धिहेतुत्वमेवमुच्यते तादृशंजन्म लभन्ते यथाधिकृताभवन्ति स्वर्गादिप्राप्तिर्वा सिद्धिः ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । अनुपस्कृतः स्वकीयदृष्टकार्याभिसन्धिरूपोपस्कारशून्यः । स्त्रीबालाभ्युपपत्तौ ब्राह्मणेतरवर्णयोरपि स्त्रीबालयोरुपरक्षार्थं देहत्यागः बाह्यानां प्रागुक्तानां सूतादीनां सिद्धिः स्वर्गगमनम् ॥ ६२ ॥

( ३ ) **कुल्लूकः** । गोब्राह्मणस्त्रीबालानामन्यतरस्यापि परित्राणार्थंदृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमजानांस्वर्गप्राप्तिकारणम् ॥ ६२ ॥

---

( १ ) आ आ

( ४ ) **राघवानन्दः** । किंच ब्राह्मणेति । देहत्यागोनुपस्कृतोऽलाभख्यातिपूजाद्यनाक्रान्तः स्त्रीबालाद्युपपत्तौ तेषांमामारणादिभ्योरक्षणंच बाह्यानां वर्णधर्मबहिष्कृतानां सिद्धिकारणं स्वर्गगमनहेतुः किल्बिषनाशहेतुर्वा ॥ ६२ ॥

( ५ ) **नन्दनः** । अथबाह्यानांधर्मानाह ब्राह्मणार्थइति । अनुपस्कृतोऽर्थकामानुबन्धरहितः बाह्यवर्णाधर्मेष्वधिकृताःप्रतिलोमजाः ॥ ६२ ॥

( ६ ) **रामचन्द्रः** । अनुपस्कृतः स्वकीयदृष्टकार्याभिसंधिरूपोपस्कारशून्यः ब्राह्मणेष्वपि स्त्रीबालयोः अभ्युपपत्तौ रक्षार्थं देहत्यागः बाह्यानां आयोगवादीनाम् ॥ ६२ ॥

**अहिंसा सत्यमस्तेयंशौचमिन्द्रियनिग्रहः [ श्राद्धकर्मातिथेयंच दानमस्तेयमार्जवम् ॥ प्रजनं स्वेषु दारेषु तथाचैवानुसूयता ॥ १ ॥ ]* एतंसामासिकंधर्मचातुर्वर्ण्येऽब्रवीन्मनुः ॥ ६३ ॥**

( १ ) **मेधातिथिः** । शौचंमृज्जलादिबाह्यगतं [ सामासिकं ][१] समस्तस्य सर्वमनुष्यभेदजातेरुक्तं न ब्रह्मणादिजातिविभागेन व्याख्यातमन्यत् यद्यहिंसाप्रतिलोमानांधर्माः स्यात्कथंताह तदुक्तं ॥ मत्स्यघातोनिषादानां बिलौकोवधबन्धन । क्षत्रादीनामरण्येयंपशुहिंसनमेवच ॥ केचिदाहुः येजीविकाहेतुतया वध्यत्वेनोक्तास्ततोन्यत्राहिंसा । अन्ये मन्यन्ते अहिंसास्तेषामभ्युदयसाधनहेतुत्वेन धर्मोनतु प्रतिषेधोहिंसायाः संमतइति । यथानमांसभक्षणे दोषइति वत् यद्यहिंसाधर्मस्तेषांकथंतर्हितैर्जीवितव्यं । यथाकुतश्चिदवगमस्तेषामुत्पन्नः हिंसानिवृत्तिर्नोधर्मायेतिचेत्तदाकोजीवनोपायः अन्याश्च वृत्तयः प्रतिवर्णनियताअध्यापनादयस्तावदत्यन्तासंभवादप्राप्ताः कृष्यादयोपि वैश्यनियताः शूद्रस्यसेवान्यावासाधारणीवृत्तिरस्ति । यथावर्तेरन्विद्याशिल्पमित्यत्र दर्शयिष्यामः । यदपीदमुच्यतेऽतिनिन्दितैर्वर्तयेयुर्द्विजानामेवकर्मभिरितितत्र किमस्तिनिन्दिततरमन्यदतोहिंसायाः नच मत्स्यघातोद्विजानामुपयुज्यते श्राद्धेऽतिथिभोजनादौ च कदाचित्कउपयोगोन सार्वकालिकोजीविकाभावः तस्मान्नघातादिस्वतंत्रम् ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः** । अहिंसा हिंसानिवृत्तिः । अस्तेयं परद्रव्यानभिलाषः । शौचं मनःकायशौचम् । इन्द्रियनिग्रहः कामार्थेतदप्रवर्तनम् । सामासिकं साधारणम् । बाह्यैःसह चातुर्वर्ण्यं चतुर्णांवर्णानाम् । बाह्यानामप्येतद्धर्मसाधनमित्यर्थः । अतएव याज्ञवल्क्यः सर्वेषांधर्मसाधनमित्याह ॥ ६३ ॥

( ३ ) **कुल्लूकः** । हिंसात्यागोयथार्थाभिधानम् अन्यायेन परधनस्याग्रहणंमृज्जलादिना विशुद्धिरिन्द्रियसंयमइत्येवंधर्मसंक्षेपतश्चातुर्वर्ण्यानुष्ठेयंमनुराह प्रकरणसामर्थ्यात्संकीर्णानामप्ययंधर्मोवेदितव्यः ॥ ६३ ॥

( ४ ) **राघवानन्दः** । असाधारणंधर्ममुक्त्वा साधारणंधर्ममाह अहिंसेति । सत्यं यथोपलब्धाभिधानम् । चातुर्वर्ण्य इति दृष्टान्तार्थः अन्यथा प्रकरणबाधः । यथाऽयंधर्मश्चातुर्वर्ण्ये साधारणस्तथाऽपसदानामपीतिभावः । अतएव बौद्धाअपि तत्स्वीकुर्वते सामासिकं समासवदने कोपसंग्राहकत्वादिति मेधातिथिः । यद्यपि वध्यघातनं बिलौकस्यादिहिंसनंनयुक्तं तथापि प्रकारान्तरेण जीवितुं शक्तानां ततोनिवृत्तिसिद्धेःकरणं तदनिरिक्ताहिंसनंचेति भावः ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । सामासिकं साधारणम् चातुवर्ण्ये मनुः अब्रवीत् ॥ ६३ ॥

**शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ॥ अश्रेयान्श्रेयसींजातिंगच्छत्या सप्तमाद्युगात् ॥ ६४ ॥**

( १ ) **मेधातिथिः** । गर्भंगृह्णाति गर्भश्च श्रवणाज्जातइतिपुल्लिङ्गनिर्देशे पित्र्यर्थे योगता विज्ञेया अतइदमुक्तंभवति

( ६३ ) त्यमस्तेयम्=त्यमक्रोधः ( क, च, ज, झ, ञ ) * ( क, च ) ( १ ) आ आ

शूद्रायांब्राह्मणात् या जाता कुमारी सा चेच्छ्रेयसा जात्युत्कर्षवता ब्राह्मणेनैव प्रजायते विवाहादि संस्कृताऽपत्योत्पत्तिहेतुसंबन्धंप्राप्नोति तस्यामपि यदि कुमारीजायतेसा ब्राह्मणेनैव विवाह्यत एवमनया परंपरया सप्तमे पुरुषे प्राप्ते ब्राह्मण्यायस्तत्र जायते तस्य भवति श्रेयसे सति । यद्यप्युत्कृष्टजातीयमात्रे वर्तते तथापीह ब्राह्मणपदसन्निधानादुत्तरत्र च शूद्रोब्राह्मणतामेतीति वचनात् ब्राह्मण्यप्राप्तिः शूद्रवर्णस्य विज्ञेया । अनयैव कल्पनया पञ्चमे वैश्यायां जातस्य वर्णस्य तृतीये क्षत्रियायामत्रापि स्त्रीतउत्कर्षः । एवंवैश्यस्य तृतीये क्षत्रियत्वंशूद्रायां जातायाः कुमार्यावैश्यान्तरेण संयोगे तृतीये जन्मनि वैश्यत्वंक्षत्रियजातायाः शूद्रायाः पञ्चमे युगइति युगशब्दोजन्मवचनः आश्रयान्निकृष्टजातीयः श्रेयसीमुत्कृष्टजातिंगच्छति प्राप्नोति आङ्अभिविधौ एषएवार्थः ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । यःपारशवउक्तः श्रेयसा श्रेष्ठवर्णेनसह प्रजायते श्रेष्ठायांपारशव्यामेव वृत्तादिमत्यामपत्यं जनयति एवमासप्तमाद्युगादासप्तमात् उत्कर्षतेसोत्कर्षमातापितृपरंपरया विच्छिद्यते स्वधर्मान्तरच्युतिस्तदाऽश्रेयानपि सप्तमे श्रेयसींजातिं द्विजातितामाप्नोति । तस्य सप्तमी संततिर्द्विजातितांयाति । यदि मध्ये श्वश्रूतुल्यैरेव विवाहैरुत्पत्तिरित्यर्थः । युगशब्दोमातापित्रोर्युग्मतया तत्परः ॥ ६४ ॥

( ३ ) **कुल्लूकः** । इदानींसर्ववर्णेषु तुल्यास्वित्युक्तलक्षणव्यतिरेकेणापि ब्राह्मण्यादिदर्शयितुमाह शूद्रेति । शूद्रायां ब्राह्मणाज्जातः पारशवाख्योवर्णः प्रजायतइति सामर्थ्यात्स्त्रीरूपः स्यात् । सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूयते सा दुहितरमेव जनयति साप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति साप्येवमेवंसप्तमे युगे जन्मनि सपारशवाख्योवर्णोबीजप्राधान्याद्ब्राह्मण्यंप्राप्नोति आसप्तमाद्युगादित्यभिधानात्सप्तमेजन्मनि ब्राह्मणः संपद्यतइत्यर्थः ॥ ६४ ॥

( ४ ) **राघवानन्दः** । तपोबीजप्रभावैरित्युक्तेर्न्यूनंपूरयति शूद्रायामिति । जातइति पारशवाख्योवर्णः सच स्त्रीरूपः । अन्यथा जातः प्रजायाइति पुनरुक्तिः । सा चेच्छ्रेयसा ब्राह्मणेनोढा श्रेयसींदुहितरं प्रजायते सूते स्त्रियं साप्यन्येन ब्राह्मणेन परिणीयते ततोप्यन्यादुहिता प्रजायते साप्यन्येन ब्राह्मणेनेत्थंसप्तमे पञ्चमे वा जन्मनि श्रेयसीं ब्राह्मण्यं प्राप्नोतीत्यन्वयः ॥ ६४ ॥

( ५ ) **नन्दनः** । अथानुलोमजसंतानानान्धर्मोत्कर्षवशेन प्रत्यपत्यंजात्युत्कर्षोभवतीत्याह शूद्रायां ब्राह्मणादिति । शूद्रायां ब्राह्मणाज्जातः पारशवः श्रेयसा प्रजायते चेद्धर्मेण युक्तोभवतिचेत् अश्रेयानपकृष्टजातिरपि श्रेयसीमुत्कृष्टतरांजातिमासप्तमाद्युगादासप्तमात्संतानाद्गच्छति एतदुक्तं भवति पारशवसंतानविच्छिन्नसंतानश्चेत्सप्तमादपत्यादारभ्य ब्रह्मत्वमाप्यतइति । यथाचाह बौधायनः निषादेन निषाद्यमापञ्चमाज्जातिरपहन्तिशूद्रतांतमुपनयेत्षष्ठे याजयेत्तपोबीजप्रभावेनेत्यादिश्लोकस्यायंप्रपञ्चः ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । शूद्रायां ब्राह्मणाज्जातः पारशवः श्रेयसा ब्राह्मणेन चेत् प्रजायते अश्रेयान् अहीनवर्णः श्रेयसीं उत्कृष्टजातिं आसप्तमात् जन्मनः सप्तमपूरुषः ब्राह्मणो भवति तद्यथा याज्ञवल्क्यः ॥ मूर्धावसिक्तादयः यथा ब्राह्मणेन शूद्रायामुत्पादिता निषादीसा ब्राह्मणेनोढादुहितरं कांचिज्जनयति सापि ब्राह्मणेनोढान्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । अंबष्ठी साप्यनेन प्रकारेण पंचमी षष्ठंब्राह्मणंजनयति । मूर्द्धावसिक्ताप्यनेन प्रकारेण चतुर्थी पंचमं ब्राह्मणमेव जनयति । उग्रा क्षत्रियेोढा माहिष्याच [ यथाक्रमं षष्ठं पंचमं ] क्षत्रियं च जनयति । तथा करणी वैश्योढा पंचमं वैश्यमित्येवमन्यत्राप्यूहनीयम् ॥ ६४ ॥

**शूद्रोब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ॥ क्षत्रियाज्जातमेवंतु विद्याद्वैश्यात्तथैवच ॥ ६५ ॥**

( १ ) **मेधातिथिः** । शूद्रोब्राह्मणतामितीत्युक्तोर्थः । ब्राह्मणएति शूद्रतां ब्राह्मणोत्र पारशवोब्राह्मणजातोविज्ञेयः सचोक्तलक्षणशूद्रांयदिपरिणयते तदापकर्षं [ जन्मनि ][1] प्राप्नोति तृतीयइतिव्याचक्षते । एते यथोक्ते युगपरिवर्तउत्कर्षमाप्नंयथा संस्कारैः कर्मभिश्चाधिक्रियन्ते ॥ ६५ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्स्फोटयति शूद्रइति । शूद्रः शूद्रासंतानजः ब्राह्मणोब्राह्मणसंतानजः । शूद्रतामेति यथातदग्रेवक्ष्यति । क्षत्रियाद्वैश्याद्वा शूद्रायांजातोप्येवं सप्तमे युगेतूत्कर्षं लभते । तथा मूर्धावसिक्तादीनां तत्तत्सदृशविवाहपरंपरयापञ्चमपुरुषे प्रकृतिजातिलाभसिद्धिः ॥ ६५ ॥

( ३ ) **कुल्लूकः** । एवंपूर्वश्लोकोक्तरीत्याशूद्रोब्राह्मणतांयाति ब्राह्मणश्च शूद्रतामेति ब्राह्मणात्र ब्राह्मणाच्छूद्रायामुत्पन्नः पारशवोज्ञेयः सयदि पुमान्केवलशूद्रोद्वाहेन तस्यांपुमांसमेव जनयति सोपि केवलशूद्रोद्वाहेनापरंपुमांसमेव जनयति सोप्येवंतदा सब्राह्मणः सप्तमंजन्मप्राप्तः केवलशूद्रतांबीजनिकर्षात्क्रमेण प्राप्नोति । एवंक्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात् । किन्तु जातेरपकर्षात्॥ जात्युत्कर्षोयुगे ज्ञेयः सप्तमेपञ्चमेपि वेति॥ याज्ञवल्क्यदर्शनाच्च क्षत्रियाज्जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ बोद्धव्यौ । वैश्याज्जातस्य ततोप्युत्कर्षात् याज्ञवल्क्येनापि वाशब्देन पक्षान्तरस्यसंगृहीतत्वाद्वृद्धव्याख्यानुरोधाच्च तृतीयजन्मन्युत्कर्षापकर्षौ ज्ञेयौ अनेनैवेन्यायेन ब्राह्मणेन वैश्यायां जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ क्षत्रियायां जातस्य तृतीये क्षत्रियेण वैश्यायां जातस्य तृतीयएव बोद्धव्यौ ॥ ६५ ॥

( ४ ) **राघवानन्दः** । पूर्वोक्तमनुवदन्ब्राह्मणोप्येवं शूद्रां परिणीय शूद्रतां यातीत्याह शूद्रइत्यर्धेन । उक्तमर्थं क्षत्रियवैश्ययोरतिदिशति क्षत्रियेत्यर्धेन । अतएवाह याज्ञवल्क्यः ॥ जात्युत्कर्षोयुगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ॥ व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरमिति ॥ युगे जन्मनि विप्रोढाशूद्रागर्भोपि श्रेष्ठः यतोनिषादस्थपतिंयाजयेदिति वेदे श्रूयते । सचेत् शूद्रायां पुत्रं सूते सपुत्रः शूद्रां परिणीय तत्रपुत्रंजनयत्येवंसप्तमावधौ तद्वंश्यस्य शूद्रत्वमेवं विप्रस्य क्षत्रियवैश्ययोरपीति याज्ञवल्क्यवचने व्यत्ययपदाशयः ॥ ६५ ॥

( ५ ) **नन्दनः** । न केवलमनुलोमजानामेवायंन्यायः किन्तु प्रतिलोमजानापीत्याह शूद्रो ब्राह्मणतामिति । श्रेयसा चेत्प्रजायतइत्यनुकर्षः ब्राह्मणश्चैति शूद्रतामश्रेयसाचेत्प्रजायतइत्यभिप्रायः क्षत्रियाज्जातमुग्रनामानम् ॥ ६५ ॥

**अनार्यायांसमुत्पन्नोब्राह्मणात्तु यदृच्छया ॥ ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वंक्केति चेद्भवेत्॥६६॥**

( १ ) **मेधातिथिः**।किंशब्दः क्षेपे यदि बीजप्राधान्याद्धीन जातौ यासु जातामातृजातेरुत्कृष्टाःक्रमेण पितृजातितांप्राप्नुवन्ति । इदंतर्हि क्षेत्रप्राधान्येऽपि द्रष्टव्यं यथा क्षेत्रजः पुत्रोऽतश्च यथाऽनार्यायां शूद्रायां ब्राह्मणाज्जातउत्कृष्टोभवति यदृच्छया यथाकथंचिदनूढायामपि एवंब्राह्मण्यामनार्याच्छूद्रात्क्षेत्रप्राधान्येन श्रेयस्त्वंयथोक्तंक्वचित् [ बीजं ][1] क्वचिद्योनिरिति ॥ ६६ ॥

( २ ) **सर्वज्ञनारायणः** । प्रागेवोक्तं ब्राह्मणस्याब्राह्मण्यं यत्र तद्विचार्य निर्धारयति अनार्यायामिति । सावित्रीपतितादिकन्यायां ब्राह्मणाच्छ्रेष्ठाद्यदृच्छया अबुद्धिपूर्वमपि । बुद्धिपूर्वेतु किं वाच्यमित्याशयः । ब्राह्मण्यामुत्तमायामनार्यात्पतितसावित्रीकादेः ॥ ६६ ॥

---

( ६६ ) क्वेतिचेद्भवेत्=केनचित्भवेत् ( य, ल )         ( १ ) मे० ८

( ३ ) **कुल्लूकः**। एकः शूद्रायां यदृच्छयाऽनूढायामपि ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातोद्वयोर्मध्ये कचोत्पन्नस्य श्रेयस्त्वमिति चेत्संशयः स्यात् संशयबीजंच यथाबीजोत्कर्षात् ब्राह्मणाच्छूद्रायां जातः साधुः शूद्रः एवंक्षेत्रोत्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुःशूद्रोनस्यात् ॥ ६६ ॥

( ४ ) **राघवानन्दः**। अनूढाविशेषेणानुलोमप्रतिलोमजौ श्रेष्ठत्वाश्रेष्ठत्वेन संदिग्धेऽनार्यायामितिसंशय्य जनकानुरूपेण निर्णयमाह अनार्यायामितित्रिभिः । अनार्यपदमत्र शूद्रपरं आर्यपदंतु ब्राह्मणपरमिति । यदृच्छयोद्वहनंविना ॥ ६६ ॥

( ५ ) **नन्दनः**। अनार्यायां शूद्रायां ब्राह्मणब्राह्मणी शब्दौ द्विजात्युपलक्षणार्थौ यदृच्छया कामचारेणोत्पन्नः कश्चिदनार्याच्छूद्राद्ब्राह्मण्यामुत्पन्नः कश्चित्तयोः श्रेयस्त्वंबीजोत्कर्षेण क्षेत्रोत्कर्षेण वा केन भवेत् अत्रेति शब्दोद्रष्टव्यः भवेच्चेदित्यन्वयः चेदिति वा प्रश्नश्चेच्छृणुतेत्यभिप्रायः ॥ ६६ ॥

( ६ ) **रामचन्द्रः**। अनार्यायां शूद्रायां अनूढायां यदृच्छया ब्राह्मणः समुत्पन्नः तु पुनः अनार्यात् शूद्राद्ब्राह्मण्यां श्रेयस्त्वेउत्कृष्टत्वे कइतिचेत् किंचन न भवेत् ॥ ६६ ॥

## जातोनार्यामनार्यायामार्यादार्योभवेद्गुणैः ॥ जातोऽप्यनार्यादार्यायामनार्यइति निश्चयः ॥ ६७ ॥

( १ ) **मेधातिथिः**। नार्यास्त्रियामनार्यायां हीनजातीयायामार्याज्जातउत्कृष्टजातीयाद्ब्राह्मणादार्यएव भवेत् । किंब्राह्मणजातीयत्वंनेत्याह गुणैर्गुणतोगौण्यावृत्त्या पाकयज्ञाद्यधिकारमात्रेण वक्ष्यमाणानार्यापेक्षयाऽऽर्यइत्युच्यते अनार्याच्छूद्रादार्यायां ब्राह्मण्यां जातोऽनार्यएवैषनिश्चयः एतदुक्तंभवति यावद्वचनमेव प्राधान्यमवतिष्ठते नानुमानेन शक्यमन्यत्प्रसंजयितुमतः समानजातीयागमनमेव युक्तं क्षेत्रप्राधान्यं क्षेत्रजएवमन्यत्र ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः**। अनार्यायांनार्यामार्याज्जातः आर्यएव श्रेष्ठएव बीजप्राधान्याद्भवेत् । गुणैर्यद्यार्यगुणैर्युज्यते । यद्यार्यायामनार्याज्जातः सब्राह्मणोत्पन्नोपि शूद्रतुल्यइत्यर्थः ॥ ६७ ॥

( ३ ) **कुल्लूकः**। तत्रनिर्णयमाह जातइति । शूद्रायां स्त्रियां ब्राह्मणाज्जातः स्मृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्योभवति शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमतउत्पन्नतया शूद्रधर्मेष्वप्यनधिकारादप्रशस्यइति निश्चयः न्यायप्राप्तोप्यर्थोवचनप्रामाण्यादत्र बोध्यते ॥ ६७ ॥

( ४ ) **राघवानन्दः**। अनार्यायोषिति आर्याज्जातआर्यएव । तथा अनार्यादार्यायांजातोपि अनार्यः ॥ ६७ ॥

( ५ ) **नन्दनः**। बीजमुत्कर्षहेतुर्न क्षेत्रमित्यस्यार्थः ॥ ६७ ॥

( ६ ) **रामचन्द्रः**। नार्यां स्त्रियां अनार्यायां इन्द्रियाज्जातः गुणैः पाकयज्ञादिभिः आर्यः द्विजः भवेत् । अनार्यायां जातोपि अनार्यः शूद्रस्य पाकयज्ञानधिकारात् इतिनिश्चयः ॥ ६७ ॥

## तावुभावप्यसंस्कार्याविति धर्मोव्यवस्थितः ॥ वैगुण्याज्जन्मनः पूर्वउत्तरः प्रतिलोमतः ॥ ६८ ॥

( १ ) **मेधातिथिः**। एवंचकृत्वोभावपि चण्डालः पाराशवश्चासंस्कार्यावनुपनेयौ अत्र हेतुमन्निगदोर्थवादः वैगुण्याज्जन्मतः पूर्वब्राह्मणाद्यः शूद्रायां जातः सत्यपि बीजप्राधान्ये विगुणमेतस्यजन्म योनिदोषात् उत्तरश्चण्डालः सप्रतिलोमोऽत्यन्तप्रातिलोम्यात् सत्यपि क्षेत्रप्राधान्ये पितृदोषात् ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः**। यद्यपि पूर्वस्य श्रैष्ठ्यं तथापि मातृदोषेण जन्मवैगुण्यात्पूर्वोनसंस्कारार्हः उत्तरस्तु प्रा-

तिलोम्यात् क्षेत्रापेक्षया बीजस्यापकर्षादित्याह तावुभाविति। एतच्च पूर्वस्योपनयनादियोग्यत्वमार्यतोक्त्या प्रागुक्तापि पुनः संस्कारानर्हताभिधानान्नास्योपनयने उपनेतृदोषः। उपनीतत्वेपिच यज्ञादियोग्यत्वंनास्त्यतोऽग्राह्ययाजनं तद्याजनमिति दर्शयितुं संस्कारानर्हत्वमुक्तम्। अतएवाग्रे सर्वसंस्कारमिति विशेषयति ॥ ६८ ॥

( ३ ) **कुल्लूकः**। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यवस्थिता शास्त्रमर्यादा। पूर्वः पारशवः शूद्राजातत्वेन जातिवैगुण्यादनुपनेयः प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वादित्युत्तरत्वेनानुपनेयः ॥ ६८ ॥

( ४ ) **राघवानन्दः**। तौ पारशवचण्डालौ असंस्कार्यौ उपनयनादिरहितौ। अत्र हेतुर्वैगुण्याज्जन्मनः। आविर्भावोऽस्याजनन्याः पूर्वः संस्कारानर्हः। उत्तरोपि संस्कारानर्हः प्रतिलोमतः पितुर्जातिमपेक्ष्येत्यन्वयः ॥ ६८ ॥

( ५ ) **नन्दनः**। असंस्कार्यावनुपनेयौ पूर्वआर्यः जन्मनोवैगुण्यात्क्षेत्रासौष्ठवात् उत्तरः अनार्यः प्रातिलोम्यतोबीजासौष्ठवादिति यावत् ॥ ६८ ॥

( ६ ) **रामचन्द्रः**। तौ उभौ पारशवचाण्डालौ [ अ ] संस्कार्यौ वैगुण्याज्जन्मनः मातृदोषेणजातः पूर्वः अनुलोमजः असत् उत्तरः प्रतिलोमजः सन् असत् ॥ ६८ ॥

**सुबीजंचैव सुक्षेत्रे जातंसंपद्यते यथा ॥ तथाऽऽर्याज्जातआर्यायां सर्वसंस्कारमर्हति ॥ ६९ ॥**

( १ ) **मेधातिथिः**। पूर्वोक्तावसंस्कार्यौ स्वजातिजास्तुसंस्कार्याइत्युभयत्राप्यर्थवादः अतएतदेव स्थितंकचिद्बीजं कचिद्योनिरिति यथोपदेशात् एकान्तरपरिग्रहस्तुनयुक्तः ॥ ६९ ॥

( ३ ) **कुल्लूकः**। यथा शोभनबीजंशोभनक्षेत्रे जातंसमृद्धंभवति एवंद्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सवर्णसंस्कारंक्षत्रियवैश्यसंस्कारंच सर्वश्रौतस्मार्तंचार्हति। नच पारशवचण्डालाविति पूर्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

( ४ ) **राघवानन्दः**। सदृष्टान्तं प्रतियोगितयाह सुबीजमिति। सुक्षेत्रे शोभनंबीजमिव ब्राह्मणेनोढब्राह्मणीजः संस्कारार्हः [ इत्यनुवादमात्रं सर्वसंस्कारान्तेऽस्यैव पारिव्राज्यंपारिव्राज्यदर्शनाच्चेतिशंकरभगवदुक्तेः ] ‡ ॥ ६९ ॥

( ५ ) **नन्दनः**। कस्तर्हि संस्कारयोग्यइत्यपेक्षायामाह सुबीजमेवसुक्षेत्रइति ॥ ६९ ॥

( ६ ) **रामचन्द्रः**। तथा आर्यात् आर्यायां ततः सच संस्कारं अर्हति ॥ ६९ ॥

**बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ॥ बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥ ७० ॥**

( १ ) **मेधातिथिः**। यथात्रयएतेपक्षास्तेषां कश्चित्पक्षः केनचित्परिगृहीतः केचिदाहुर्बीजमेवज्यायस्तथाच ब्राह्मणाज्जातः क्षत्रियादिस्त्रिषु मातृजातितउत्कृष्टः। अन्ये पुनराहुः क्षेत्रश्रेष्ठ्यंयतः क्षेत्रियोयत्र क्षेत्रे जातः तज्जातीयोभवति तस्यैव च तदपत्यं। अपरे मन्यन्ते उभये बीजक्षेत्रे ज्यायसी तदुक्तं सुबीजंचैवसुक्षेत्रइति तदेतत्सर्वमारोचयमानआह तत्रेयंतुव्यवस्थितिः इयमत्रनिरूप्यावस्थितिः ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः**। बीजमेकइति विप्रतिपत्तेः संशयहेतोरभिधानम् ॥ ७० ॥

( ३ ) **कुल्लूकः**। दर्शनान्तराण्युक्तस्यैवार्थस्य स्थैर्यार्थमाह बीजमिति। केचित्पण्डिताबीजंस्तुवन्ति हरिण्याद्युत्पन्न-

‡ राघ० २, न, श

ऋष्यशृङ्गादेर्ब्रह्ममुनित्वदर्शनात्। अपरे पुनः क्षेत्रंस्तुवन्ति क्षेत्रस्वामिपुत्रत्वदर्शनात्। अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति सुबीजस्य सुक्षेत्रे समृद्धिदर्शनात्। एतस्मिन्मतभेदे वक्ष्यमाणेयंव्यवस्थाज्ञेया ॥ ७० ॥

( ४ ) राघवानन्दः। [बीजप्राधान्यं ]‡ उक्तमपि स्मारयन्नाहबीजमितित्रिभिः। मतभेदेनैवम् ॥ ७० ॥

( ५ ) नन्दनः। इयंवक्ष्यमाणा ॥ ७० ॥

( ६ ) रामचन्द्रः। एके बीजं ऋष्यशृङ्गादयोमनीषिणः क्षेत्रं वियोगपातादौ प्रशंसन्ति। तथा अन्यबीजक्षेत्रे इयंव्यवस्थितिः ॥ ७० ॥

## अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ॥ अबीजकमपि क्षेत्रंकेवलंस्थण्डिलंभवेत् ॥ ७१ ॥

( १ ) मेधातिथिः। अक्षेत्रे ऊषरे उत्सृष्टमुप्तमपि बीजमन्तरैवादत्वैवफलंनश्यति अबीजकमयोग्यबीजकंवा क्षेत्रंस्थण्डिलमेव भवेत्केवलंततोनफलंलभ्यतइत्यर्थः ॥ ७१ ॥

( २ ) सर्वज्ञनारायणः। अनिश्चये हेतुमाह अक्षेत्रइति। अन्तरैवाङ्कुरोत्पादात्प्रागेव ॥ ७१ ॥

( ३ ) कुल्लूकः। ऊषरप्रदेशे बीजमुप्तंफलमददन्तरालएव विनश्यति शोभनमपि क्षेत्रंबीजरहितंस्थण्डिलमेव केवलंस्यान्नतु सस्यमुत्पद्यते तस्मात्प्रत्येकनिन्दया सुबीजंचैव सुक्षेत्रइति प्रागुक्तमुभयप्राधान्यमेवाभिहितम् ॥ ७१ ॥

( ४ ) राघवानन्दः। अक्षेत्रे ऊषरादौ अन्तरा अंकुरमजनयित्वैव स्थण्डिलं सस्यानुत्पत्तिस्थलम्। मनुजपक्षे अन्तरालजातिर्भूत्वा विनश्यति संस्कारानर्हः। स्थण्डिलं योग्यपुत्राजनकम् ॥ ७१ ॥

( ५ ) नन्दनः। अक्षेत्रे क्षेत्रंविनान्तरैव मध्यएव विनश्यति वस्तुन भविष्यति नापि प्ररोहति अबीजकं बीजंविनोभयमन्योन्यापेक्षमित्यर्थः ॥ ७१ ॥

( ६ ) रामचन्द्रः। अबीजकं क्षेत्रं केवलं स्थण्डिलंभवेत ऊषरं भवेत् ॥ ७१ ॥

## यस्माद्बीजप्रभावेण तिर्यग्जाऋषयोऽभवन् ॥ पूजिताश्च प्रशस्ताश्च तस्माद्बीजंप्रशस्यते ॥ ७२ ॥

( १ ) मेधातिथिः। पूजिताः सर्वेण केनचित्प्रणम्यन्तेप्रशस्ताः स्तुतिवचनैः स्तूयन्ते तस्माद्बीजंविशिष्यत इति बीजप्राधान्यवादिनस्तदेतदयुक्तमित्युक्तं तत्रेयंतु व्यवस्थितिरिति। अथवा बीजप्रभावेनेति न बीजप्राधान्यंदर्शितमपि तु दूषणमेव यदाशक्यन्ते बीजप्राधान्यान्मन्दपालादीनांतिर्यग्जाऋषयइति बीजप्राधान्यंतद्दर्शनात् न तत्र बीजप्राधान्येन तदपत्यानामृषित्वमपि तु तपःश्रुतादिजेन प्रभावेन धर्मविशेषेण ॥ ७२ ॥

( २ ) सर्वज्ञनारायणः। यद्येवं तथापि बीजस्यातिप्राधान्याद्बीजशुद्धिरेव ग्राह्येति स्वमतमुपसंहरति यस्मादिति। तिर्यग्जाऋष्यशृङ्गादयः पूजिताअभवन्। प्रशस्ताश्चऋषयोब्रह्मर्षयः ॥ ७२ ॥

( ३) कुल्लूकः। इदानींबीजप्राधान्यपक्षेदृष्टान्तमाह यस्मादिति। यस्माद्बीजमाहात्म्येन तिर्यग्जातिहरिण्यादिजाताअपि ऋष्यशृङ्गादयोमुनित्वंप्राप्ताः पूजिताश्चाभिवाद्यत्वादिना वेदज्ञानादिना प्रशस्तावाचा संस्तुतास्तस्माद्बीजंप्रस्तूयते। एतच्च बीजप्राधान्यनिगमनंबीजयोन्योर्मध्ये बीजोत्कृष्टा जातिः प्रधानमित्येवंपरतया बोद्धव्यम् ॥ ७२ ॥

( ४ ) राघवानन्दः। हरिण्यादिजाताऋष्यशृङ्गादयस्तिर्यग्जाःप्रशस्ताः अन्येषु सत्सु ऋषिषु दशरथयज्ञऋष्यशृङ्गःप्राशस्त्यंगतः। तिर्यग्जोपि संस्क्रियते तज्जातेरपर्युदस्तत्वात्। न शूद्रे पातकंकिंचिन्नच संस्कारमर्हतीतिशूद्रजातेः पर्युदस्तत्वान्नपारशवादेः संस्कारइतिभावः ॥ ७२ ॥

‡ राघ० २, न, श

( ५ ) **नन्दनः** । तथापि बीजंप्रधानमित्याह यस्माद्वीजमिति । तिर्यग्जाः ऋष्यश्रृङ्गादयः ॥ ७२ ॥

**अनार्यमार्यकर्माणमार्यंचानार्यकर्मिणम् ॥ संप्रधार्याब्रवीद्धाता न समौ नासमाविति ॥ ७३॥**

( १ ) **मेधातिथिः** । अनार्यः शूद्रः आर्यकर्माद्विजातिशुश्रूषादिरतः पाकयज्ञयाजीच देवद्विजनमस्कारपरः आर्यो-ब्राह्मणादिः सोनार्यकर्माप्रतिषिद्धाचरणोविहितकर्मत्यागी तावुभौ संप्रधार्यतद्गुणत्वेनावगम्य तयोः किंकस्यचित्सातिशयोगुणः कस्यश्चिद्वान्ते निरूपणबुद्धिःसंप्रधार्यधाताप्राजपतिर्मनुर्बुद्ध्वा निरूप्याब्रवीत् नसमौ जातेर्गरीयस्या उत्कृष्टगुणोपि शूद्रतुल्यः स्यात् पुनराह समौकिंजात्यातूत्कृष्टयापि बहुदोषावगृहीतस्यैतदुक्तंभवति न जातिबलमाश्रित्यनरोमाननीयोकिंतुगुणामाननीयाः न गुणहीनंजातिः परित्रातुमलं प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात् अनार्यायां समुत्पन्नइत्यत आरभ्य यावदयंश्लोकोवर्णसङ्करनिन्दाकर्मप्रशंसार्थोनात्र किंचिद्विधीयते प्रतिषिध्यते वा नापूर्वार्थोज्ञाप्यते ऽभिलक्षणवत् तस्मात्प्रशंसार्था एवैते ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । यथा क्षेत्रविशेषोत्पन्नत्वेपि बीजदोषान्नश्रेष्ठत्वं तथा दुष्टकर्मकरणादपि नश्रैष्ठ्यमित्याह अनार्यमिति । अनार्यं व्रात्याद्युत्पन्नमार्यकर्माणंब्राह्मणकर्मकर्तारम् । तथा आर्यमव्रात्योत्पन्नमपि निन्दितकृष्यादिकरम् । न समौ ब्राह्मणैः सदृशौ दोषसद्भावात् । नासमौ नात्यन्तमपकृष्टौ ब्राह्मण्यभावात् । एवंचवृत्युत्कर्षे तेषामपि क्रमादुत्कर्षइत्युक्तम् । अतएवापस्तम्बोयेषामपतितसावित्रीकाः पूर्वपुरुषाः केपि ज्ञायन्ते तेषामपि प्रायश्चित्तपूर्वकं संस्कारं विहितवान् । एतदर्थमेव चार्यंचानार्यकर्माणमित्यप्रकृतमप्युक्तम् ॥ ७३ ॥

( ३ ) **कुल्लूकः** । शूद्रंद्विजातिकर्मकारिणंद्विजातिंच शूद्रकर्मकारिणंब्रह्माविचार्य न समौ नासमावित्यवोचद्यतः शूद्रोद्विजातिकर्मापि न द्विजातिसमः तस्यानधिकारिणोद्विजातिकर्माचरणेपि तत्साम्याभावात् एवंशूद्रकर्मापि द्विजातिः न शूद्रसमः निषिद्धसेवनेन जात्युत्कर्षस्यानपायात् नाप्यसमौनिषिद्धाचरणेनोभयोः साम्यात् तस्माद्यस्य विगर्हितंतत्तेन नकर्तव्यमिति संकरपर्यन्तवर्णधर्मोपदेशः ॥ ७३ ॥

( ४ ) **राघवानन्दः** । अनधिकारिणा क्रियमाणं कर्म न फलायेति ज्ञापनार्थं चातुर्वर्ण्येषु प्रथमाध्यायायुक्ताः स्वधर्मवृत्तीः संस्मारयन्नापद्धर्ममाह अनार्येत्यध्यायसमाप्तेः । अनार्यं क्षत्रियादिभार्यकं आर्यकर्माणं याजनादिकर्तारं आर्यं युद्धसेवादिकारिणं नसमौ कर्मणा जात्यन्तरानुत्पत्तेः नाऽसमौ उभयोर्निषिद्धाचरणस्य तुल्यत्वात् परधर्मोभयावहइत्युक्तेः ॥ ७३ ॥

( ५ ) **नन्दनः** । अनार्यमद्विजातितोपकृष्टं आर्यकर्माणंगुणतोविशिष्टं न समौ नातिविषमावल्पान्तरावित्यर्थः ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । अनार्यं व्रात्याद्युत्पन्नं आर्यकर्माणं च पुनः आर्यमनार्यकर्मिणं धाता संप्रधार्य अवधार्य समौ न असमौन इत्यब्रवीत् ॥ ७३ ॥

**ब्राह्मणाब्रह्मयोनिस्थाये स्वकर्मण्यवस्थिताः ॥ ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम् ॥ ७४॥**

( १ ) **मेधातिथिः** । आपद्धर्माणामुपोद्घातो योनिः कारणं ब्राह्मणाब्रह्मयोनिस्थास्ते षट्कर्माण्युपजीवेयुरनुतिष्ठेयुः अनेकार्थाधातवोयथाक्रमंयथाविकारंयस्मिन्कर्मणि योधिकारीकानिचिद्विध्यर्थानि कानिचिद्दृष्टार्थानि ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मयोनिस्थाः ब्राह्मणमातापितृजन्याः सम्यक् कृत्स्नानि षट्कर्माणि उपजीवेयुरनुतिष्ठेयुः नतु व्रात्यादयः तेषामध्ययनादावनधिकारात् । यथाक्रमं यथायोगम् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । इदानींब्राह्मणानामापद्धर्मंप्रतिपादयिष्यन्निदमाह ब्राह्मणाइति । ये ब्राह्मणाब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाः स्वकर्मानुष्ठाननिरताश्च ते षट्कर्माणि वक्ष्यमाणान्यध्यापनादीनि क्रमेण सम्यगनुतिष्ठेयुः ॥ ७४ ॥

( ४ ) **राघवानन्दः** । विप्रस्य वृत्तीराह ब्राह्मणाइतिचतुर्भिः । ब्राह्मणाब्रह्मबुभूषवः । ब्रह्मयोनिस्थाब्रह्मयोनिजाः ॥ ७४ ॥

( ५ ) **नन्दनः** । एवंतावद्धर्माधिकारिणोवर्णाः सान्तरप्रभावाः सोत्कर्षापकर्षाः प्रतिपादिताः आपद्धर्मान्विवक्षुरनापद्धर्मंपूर्वोक्तंसंक्षिप्य सप्तभिः श्लोकैरनुभाषते ब्राह्मणाब्रह्मयोनिस्थाइति । ब्रह्मयोनिर्धर्मइति यावत्तत्रस्थाः अथवा वेदस्य योनित्वेन प्रवक्तृत्वेन स्थिताः यथाक्रममित्यस्यायमर्थः स्वयंनित्यंस्वाध्यायशीलः स्यादध्यापयेच्च स्वयंयजेद्याजयेच्च स्वयंदद्यात्प्रतिगृह्णीयाच्चेति षट्कर्माणि वक्ष्यमाणानि सम्यगापत्कल्पेनोपजीवेयुरनुतिष्ठेयुः ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । ते यथाक्रमं द्विजाः षट्कर्माणि षट्कर्मणा उपजीवेयुः ॥ ७४ ॥

**अध्यापनमध्ययनंयजनंयाजनंतथा ॥ दानंप्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥ ७५ ॥**

( १ ) **मेधातिथिः** । प्रथमेऽध्याये शास्त्रस्तुत्यर्थंएषांपाठइहतु विध्यर्थं यद्यपि तेषांकेवलानांविधिरुक्तस्तथापीह समस्य निर्दिश्यते सौहार्देन विध्यन्तरसापेक्ष्यमेवेदंरूपंवचनाच्चैतेषांकर्मणामतोयथाविहितमनूद्य वक्ष्यमाणोर्थोविधीयते ॥७५॥

( २ ) **सर्वज्ञनारायणः** । तान्येव षट्कर्माणि प्रथमाध्यायोक्तान्यपि स्मारयति अध्यापनमिति ॥ ७५ ॥

( ३ ) **कुल्लूकः** । तानिकर्माण्याह अध्येति । अध्यापनाध्ययने साङ्गस्य वेदस्य तथा यजनयाजने दानप्रतिग्रहौ चेत्येतानि षट्कर्माणि ब्राह्मणस्य वेदितव्यानि ॥ ७५ ॥

( ४ ) **राघवानन्दः** । किंच अध्यापनमिति । दानं स्वस्वत्वध्वंसपुरःसरं परस्वत्वापत्तिफलकम् अग्रजन्मनोविप्रस्य ॥ ७५ ॥

**षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥७६॥**

( १ ) **मेधातिथिः** । कर्मत्रिकविभागस्पष्टप्रयोजनः एकंत्रिकंदृष्टार्थमुपात्तं सामर्थ्यादन्यस्यादृष्टार्थता विशुद्धोऽपापकर्माएवंशूद्रोपिविशुद्धः प्राप्नोति कोभवतोमत्सरःस्मृत्यन्तरविरोधः प्राप्नोति प्रशस्तानांस्वकर्मसुद्विजातीनांब्राह्मणोभुञ्जीत प्रतिगृह्णीयाच्चेति एवंतर्हि यथाऽविरोधोभवति तथा व्याख्येयं नह्यविरोधे संभवति विरोधोन्याय्यः अपिचाऽनुवादएवायं राजतोधनमन्विच्छेदिति एवमादावस्यार्थस्य विहितत्वात् ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । जीविका जीवनोपायः । याजनाध्यापने शुद्धे अदुष्टे । विशुद्धः परिग्रहदोषरहितः ॥७६॥

( ३ ) **कुल्लूकः** । अस्य ब्राह्मणस्यैषामध्यापनादीनांषण्णांकर्मणांमध्याद्याजनमध्यापनंविशुद्धप्रतिग्रहैर्द्विजातिभ्योधनंलिप्सेत् प्रशस्तेभ्योद्विजइति वचननिर्देशाद्द्विजातेः प्रतिग्रहइत्येतानि त्रीणि कर्माणि जीवनार्थानि ज्ञेयानि ॥ ७६ ॥

( ४ ) **राघवानन्दः** । षण्णां कर्मणां मध्ये जीविकाःजीवनहेतवः ॥ ७६ ॥

( ५ ) **नन्दनः** । विशुद्धात्स्वकर्मनिरतात्त्रैवर्णिकात् ॥ ७६ ॥

**त्रयोधर्मानिवर्तन्ते ब्राह्मणात्क्षत्रियंप्रति ॥ अध्यापनंयाजनंच तृतीयश्चप्रतिग्रहः ॥ ७७ ॥**

( १ ) **मेधातिथिः** । जीविकाकर्माण्येतानि क्षत्रियस्य न भवन्ति यानि त्वदृष्टार्थानीष्ट्यध्ययनदानानि न विवर्तन्ते वेदस्य च प्रकृतत्वादेतदध्यापनंनिषिध्यते नतु धनुर्वेदशिल्पकलाविद्याः ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणाब्राह्मणसंबन्धिनोधर्माः ॥ ७७ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणापेक्षया क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि वृत्त्यर्थानि त्रीणि कर्माणि निवर्तन्ते अध्ययनयागदानानितु तस्यापि भवन्ति ॥ ७७ ॥

( ४ ) **राघवानन्दः** । याजनादित्रयोब्राह्मणात् ब्राह्मणं स्वधर्मित्वेन प्राप्य क्षत्रियंप्रति निवर्तन्तइत्यन्वयः ॥ ७७ ॥

( ५ ) **नन्दनः** । ब्राह्मणानांब्राह्मणसंबन्धिनां धर्माणांमध्ये याजनाध्यापनप्रतिग्रहाः याजनाध्यापनप्रतिग्रहाणांरक्षा युद्धानामिव तेषांजीविकात्वेपि धर्मत्वनिवृत्यभावख्यापनार्थंधर्माइत्युक्तम् ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । त्रयोधर्माःक्षत्रियंप्रति निवर्तन्ते अध्ययनं याजनं प्रतिग्रहः एतत्त्रयम् ॥ ७७ ॥

**वैश्यंप्रतितथैवैते निवर्तेरन्निति स्थितिः ॥ नतौ प्रतिहितान्धर्मान्मनुराह प्रजापतिः ॥ ७८ ॥**

( १ ) **मेधातिथिः** । पूर्वेणैतद्व्याख्यातंतौ क्षत्रियवैश्यौ प्रत्येतेऽध्यापनादयोधर्मामनुना प्रजापतिना नोक्तान स्मृता-इत्यर्थः ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । एतेधर्माअध्यापनादयस्त्रयः ॥ ७८ ॥

( ३ ) **कुल्लूकः** । यथाक्षत्रियस्याध्यापनयाजनप्रतिग्रहानिवर्तन्ते तथा वैश्यस्यापीति शास्त्रव्यवस्था यस्मान्मनुः प्रजापतिः तौ क्षत्रियवैश्यौ प्रति तानिवृत्त्यर्थानि कर्माणि कर्तव्यत्वेन नोक्तवान् एवंवैश्यस्याप्यध्ययनयागदानानि भवन्ति ॥ ७८ ॥

( ४ ) **राघवानन्दः** । एवं वैश्यंप्रतीति । तौ क्षत्रियवैश्यौ । तान्याजनादीन् ॥ ७८ ॥

( ५ ) **नन्दनः** । एतौ क्षत्रियवैश्यौ तानध्यापनादीन् ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । तथैव वैश्यंप्रति तान्धर्मान् अध्ययनादीन् मनुःप्रजापतिर्नाह ॥ ७८ ॥

**शस्त्रास्त्रभृत्त्वंक्षत्रस्य वणिक्पशुकृषिर्विशः ॥ आजीवनार्थंधर्मस्तु दानमध्ययनंयजिः ॥ ७९ ॥**

( १ ) **मेधातिथिः** । इदंतयोर्जीविकाकर्म शस्त्रंखड्गादि अस्त्रंतन्मन्त्राधनुर्वेदप्रसिद्धाः अयमप्युक्तानुवादएव वणि-पशुशब्दौ वणिक्कर्मान्तर्भावेन प्रयुक्तौ वणिज्यापशुपालनंच यद्यप्यध्ययनादिधर्माःसर्वेषांसन्ति तथापि प्राधान्यमेतेषाम् ॥ ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । शस्त्रं खड्गादिकमुक्तं अस्त्रं शरादिमुक्तं तद्धारणं नतत्साध्यंद्रव्यादिकंलक्षयति तदाजीव-वनार्थं क्षत्रस्येत्यर्थः । वणिक् वाणिज्यं पशुः पाशुपाल्यं वणिक्पशुकृषीरिति प्रथमाबहुवचने पूर्वसवर्णेन छान्दसंरूप-म् । एतच्च सर्वत्रयागोजीवनार्थम् । धर्मोधर्मसाधनम् । यजिर्यागः ॥ ७९ ॥

( ३ ) **कुल्लूकः** । शस्त्रंखड्गादि अस्त्रंबाणादि एतद्धारणंप्रजारक्षणाय क्षत्रियस्य च वृत्त्यर्थम् । वाणिज्यपशुरक्षणकृ-षिकर्माणि वैश्यस्य जीवनार्थानि धर्मार्थाः पुनरनयोर्दानाध्ययनयागाभवन्ति ॥ ७९ ॥

( ४ ) **राघवानन्दः** । क्षत्रियवैश्ययोरसाधारणान्याह शस्त्रेति । शस्त्रं खड्गादि अस्त्रं तत्प्रेरकमन्त्रादि । आजीव-नार्थं वृत्त्यर्थं वणिक् वाणिज्यं तेनसह पशुकृषी वा । धर्मस्तु दानादित्रयमित्यन्वयः । धर्मोधर्मार्थम् ॥ ७९ ॥

( ५ ) **नन्दनः** । क्षत्रियवैश्ययोर्वृत्तिधर्मत्वाह शस्त्रास्त्रभृत्त्वंक्षत्रस्येति । शस्त्रमायुधरूपं शस्त्रास्त्रभरणेन तत्कार्याणि रक्षायुद्धादीनिलक्ष्यन्ते । वणिग्वाणिज्यंपशुरक्षणं यजिर्यजनम् ॥ ७९ ॥

( ६ ) **रामचन्द्रः** । क्षत्रस्य शस्त्रास्त्रभृत्त्वं शस्त्रं खड्गादिकं अस्त्रं शरादिकम् ॥ ७९ ॥

**वेदाभ्यासोब्राह्मणस्य क्षत्रियस्य च रक्षणम् ॥ वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥ ८० ॥**

( १ ) **मेधातिथिः** । वेदाभ्यासोवृत्तिप्रकरणादध्यापनं एवंविशिष्टानि स्वकर्मशास्त्रप्रवृत्तिकर्मसन्न्येभ्योजीवनकर्मभ्य-इमानि श्रेयस्करतराणि ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । वेदाभ्यासः सदा जप्यपरता । वार्ताकर्म वार्तया कृष्याऽर्जितेन धनेन कर्म दानयागकर्म ननु वार्तारूपं तस्य कर्म जीविकात्वात् स्वाध्यायसमभिव्याहारयोगात् ॥ ८० ॥

( ३ ) **कुल्लूकः** । वेदाभ्यासोवेदाध्यापनंरक्षावार्ताभ्यां वृत्त्यर्थाभ्यांसहोपदेशात्तद्ब्राह्मणस्य प्रजारक्षणंक्षत्रियस्य वाणिज्यंपाशुपाल्यंवैश्यस्य । एतान्येतेषांवृत्त्यर्थकर्मसु श्रेष्ठानि ॥ ८० ॥

( ४ ) **राघवानन्दः** । किंच वेदेति । वेदाभ्यासरक्षावार्ताश्च द्विजानां यथाक्रममतीव प्रशस्ताइतिभावः ॥ ८० ॥

( ५ ) **नन्दनः** । वार्ताकर्म वाणिज्यकर्म ॥ ८० ॥

( ६ ) **रामचन्द्रः** । रक्षणं प्रजायाः द्विजस्य वेदाभ्यासः वैश्यस्य वार्ताकर्म स्वकर्मे स्वकर्मसु विशिष्टानि ॥ ८० ॥

**अजीवंस्तु यथोक्तेन ब्राह्मणस्वेन कर्मणा ॥ जीवेत्क्षत्रियधर्मेण सह्यस्य प्रत्यनन्तरः ॥ ८१ ॥**

( १ ) **मेधातिथिः** । यदाऽस्य शरीरकुटुंबनित्यकर्मावसादो भवति न तेभ्यः प्राप्तंधनंभवति तदा यमजीवन्नित्यु-च्यतेयथोक्तेनाध्यापनादिना तदा क्षत्रियवत्ग्रामनगररक्षादिना शस्त्रास्त्रधरणेन सति संभवेसर्वाधिपत्येन जीवेत् जीवति-र्व्याख्यातार्थः शरीरमात्रसंधारणेनवर्तते किंतर्हि कुटुंबस्वकर्मनित्यकर्मावस्थितिमपि लक्षयति सह्यस्य प्रत्यनन्तरोऽनन्त-रएवप्रत्यनन्तरः हेतुवचनाद्व्यवहितनिवृत्तिः पापकारीस्ववृत्तिपरित्यागेपि नैवंमन्तव्यं शस्त्रातिक्रमकृतस्तत्र न विशेषे वैश्य-शूद्रेष्वपीति ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । अनापद्वृत्तिरुक्ताऽऽपद्वृत्तीःप्रस्तौति अजीवन्निति । प्रत्यनन्तरोऽनन्तरतःप्रतिनिधिः ॥८१॥

( ३ ) **कुल्लूकः** । अधुनाऽऽपद्धर्ममाह अजीवन्निति । यथोक्तेनाध्यापनादिस्वकर्मणा ब्राह्मणोनित्यकर्मानुष्ठानकुटुंब-संवर्धनपूर्वकमजीवन्क्षत्रियकर्मणा ग्रामनगररक्षणादिना जीवेत् यस्मात्क्षत्रियधर्मोस्य सन्निकृष्टा वृत्तिः ॥ ८१ ॥

( ४ ) **राघवानन्दः** । यथोक्तेन याजनाध्यापनप्रतिग्रहेण । पूर्वस्य पूर्वस्य प्राशस्त्यार्थं प्रत्यनन्तरः प्रातिलोम्यवृ-त्तावप्यव्यवहितः संनिधेरपि मानत्वात् ॥ ८१ ॥

( ५ ) **नन्दनः** । अथापद्धर्मानाह अजीवंस्त्विति ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । अजीवंश्चेत् क्षत्रियधर्मेण जीवेत् सः क्षात्रधर्मः अस्य द्विजस्य प्रत्यनन्तरउक्तः ॥ ८१ ॥

**उभाभ्यामप्यजीवंस्तु कथंस्यादिति चेद्भवेत् ॥ कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥ ८२ ॥**

( १ ) **मेधातिथिः** । तथाचाह उभाभ्यामप्यजीवंस्तु क्रमोनेनप्रदर्श्यते प्रथममनन्तरावृत्तिस्तदभावे व्यवहितेति कृषिगोरक्षाग्रहणंवैश्यवृत्तिमात्रप्रदर्शनार्थंतथाच वणिग्व्यायामविक्रयप्रतिषेधंवक्ष्यति जीवेद्वैश्यस्यजीविकामिति सामा-न्यविशेषभावेन क्रियायाःसाध्यसाधनभावः प्रागुपपादितस्तत्र कृषिवाणिज्यकुशीदान्यनापद्येवोक्तान्यध्यापनादिवत् प्रमृतं-कर्षणंस्मृतंसत्यानृतंतुवाणिज्यमिति तु केचिदाहुः कृषिवाणिज्ये वा स्वयंकृते कुसीदंचेत्युक्तंस्वयंकरणमत्राभ्यनुज्ञायते यत्त्वध्यापनादिवदिति साम्यमाशङ्कितमत्रैवपरिहृतं यदि सर्वेषांकृष्यादयः समत्वेन स्युः कथमिदमुच्यते वणिक्पशुकृषी-र्विशआजीवनार्थंब्राह्मणक्षत्रिययोरपि नाऽऽजीवनार्थस्तद्वा किंच ॥ याजनाध्यापनेचैव विशुद्धाच्चप्रतिग्रहइत्यत्र तान्यपि

समाख्यास्यत्तस्मादध्यापनादिनियमैर्जीवतः कृष्यादयः प्रतिषिद्धाएव यस्तुप्रकरणादन्यत्रैषामुपदेशः सतत्रैव प्रदर्शितप्रयोजनः ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । उभाभ्यां स्वस्वानन्तरवृत्तिभ्याम् । जिज्ञासागोरक्षं कृष्यर्थंगोरक्षणम् । कृषिरत्रास्वयंकृता ॥ ८२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणउभाभ्यां स्ववृत्तिक्षत्रियवृत्तिभ्यामजीवन्केन प्रकारेण वर्तेतेति यदि संशयः स्यात्तदा कृषिपशुरक्षणे आश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत् कृषिगोरक्षग्रहणंवाणिज्यदर्शनार्थं । तथाच विक्रेयाणि वक्ष्यति स्वयंकृतंचेदं कृष्यादि ब्राह्मणापद्वृत्तिः अस्वयंकृतस्य ऋतामृताभ्यां जीवेतेत्यनापद्येव विहितत्वात् ॥ ८२ ॥

( ५ ) **नन्दनः** । उभाभ्यां धर्मक्षयधर्माभ्यामिति भवेच्चेदिति वः प्रश्नोभवेच्चेच्छृणुतेत्यर्थः । कृषिगोरक्षशब्दोवाणिज्यस्याप्युपलक्षणार्थः गांरक्षतीति गोरक्षस्तस्य कर्म गौरक्ष्यम् ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । उभाभ्यां ब्रह्मक्षत्रयोर्वृत्तिभ्यां अजीवंस्तुतदावैश्यजीवी कृषिपशुवृत्तिंगोरक्षमास्थाय जीवेत् ॥ ८२ ॥

## वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोपि वा ॥ हिंसाप्रायांपराधीनांकृषियत्नेन वर्जयेत् ॥ ८३ ॥

( १ ) **मेधातिथिः** । कृषिनिन्देतरवैश्यवृत्तिस्तुत्यर्था न पुनस्तस्यामप्रतिषेधार्था तथाच सतिउपदेशोऽन्यर्थोस्यापद्यते ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । स्वयंकृतायांदोषमाह वैश्यवृत्त्येति । पराधीनामनेकोपकरणसीतादिसंपाद्याम् ॥ ८३ ॥

( ३ ) **कुल्लूकः** । संप्रतिकृष्यादेर्बलाबलमाह वैश्येति । ब्राह्मणः क्षत्रियोऽपिवा वैश्यवृत्त्यापि जीवन्भूमिष्ठजन्तुहिंसाबहुलांबलीवर्दादिपराधीनांकृषियत्नतस्त्यजेत् । अतः पशुपालनाद्यभावे कृषिः कार्येति द्रष्टव्यम् । क्षत्रियोपि वेत्युपादानात्क्षत्रियस्याप्यात्मीयवृत्त्यभावे वैश्यवृत्तिरस्तीत्यभिगम्यते ॥ ८३ ॥

( ४ ) **राघवानन्दः** । वैश्यस्य जीविकामास्थापयेत्युक्तेः कृष्यादेः चतुष्टयस्य प्राप्तत्वेन कृषिमनूद्य निषेधति वैश्येति । हिंसाप्रायां हिंसा प्रायेण बाहुल्येन यत्र ताम् । पराधीनां हलवृष्टिकर्षकाद्यधीनाम् ॥ ८३ ॥

( ५ ) **नन्दनः** । पराधीनांस्वयमेकेन कर्तुमशक्याम् ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । पराधीनां अनेकोपकरणसाध्यां कृषिं स्वयंकृतां वर्जयेत् ॥ ८३ ॥

## कृषिसाध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ॥ भूमिभूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥ ८४ ॥

( १ ) **मेधातिथिः** । कृषिंलोकाः साध्वेव कर्मेति मन्यन्ते नतु तद्युक्तंकर्षतः पुरुषस्य बहुधान्यं भवति ततोतिथ्यादिभ्योन्नदानेनोपकरोत्यतः साध्वी तथाचोक्तं नाकृष्यतोऽतिथिप्रियः कृषिंयत्नेन कुर्वीत मौर्व्यासर्वत्र यत्नतः । तथालाङ्गलंपवीरवं सुशेवंसुमतित्सरु उदित्कृषतिगामाविंप्रफर्व्यंच पीवरीमित्यादि तेन सम्यक् मन्यन्ते साहि वृत्तिः सद्भिर्निन्द्यते कस्य हेतोर्भूमिंहन्ति काष्ठमयोमुखंलाङ्गलं भूमिशयांश्च भूमौशेरते ये प्राणिनस्तृणजलूकादयस्तांश्च हन्ति ननु च भूमेः कीदृशंहननंन हि सा प्राणिवत्काष्ठवत्पीडामनुभवति अनुभवन्तीतु सर्वविदारणं भूमेर्दोषवदिति ज्ञापयति ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । भूमिं भूमिदेवताम् ॥ ८४ ॥

( ३ ) **कुल्लूकः** । साध्विदंजीवनमिति कृषिंकेचिन्मन्यन्ते सा पुनर्जीविका साधुभिर्निन्दिता यस्माद्धलकुद्दालादिलोहप्रान्तंकाष्ठंभूमिंभूमिष्ठजन्तूंश्च हन्ति ॥ ८४ ॥

( ४ ) **राघवानन्दः** । तद्दोषसहिष्णुंप्रत्याह कृषिमिति । भूमिशयान् प्राणिनः । अयोमुखं फलाकाराद्ययोमुखे यस्य तत् लाङ्गलमित्यर्थः । अतएव कुद्दालाद्यपि गृहीतम् ॥ ८४ ॥

( ५ ) **नन्दनः** । हिंसाप्रायतांप्रपञ्चयति कृषिंसाध्विति मन्यन्तइति । काष्ठंकाष्ठमयं हलादिकं तेन वाणिज्याद्यभावे कृषिः कर्तव्येति सूचितम् ॥ ८४ ॥

( ६ ) **रामचन्द्रः** । कृषिंसाध्वितिमन्यन्ते सा वृत्तिः सद्भिर्विगर्हिता । अयोमुखं काष्ठं हि भूमिं भूमिशयान् जीवाન्हन्ति ॥ ८४ ॥

## इदन्तु वृत्तिवैकल्यात्त्यजतोधर्मनैपुणम् ॥ विट्पण्यमुद्धृतोद्धारंविक्रेयंवित्तवर्धनम् ॥ ८५ ॥

( १ ) **मेधातिथिः** । इदमिति वक्ष्यमाणस्य प्रतिनिर्देशः विशःपण्यंविट्पण्यंवैश्यानांयद्विक्रेयंतदपिवृत्तिवैकल्याद्दानाभावाद्ब्राह्मणेनविक्रेयं उद्धार्याणि द्रव्याण्युद्धारशद्बेनोच्यन्ते उद्धृतउद्धारोयस्मिन्तदेवमुच्यते वक्ष्यमाणानिद्रव्याण्यतउद्धृत्यान्यानि विक्रेयाणि वित्तवर्धनमिति भावानुवादः वाणिज्यायां हि धनवृद्धिः प्रसिद्धा त्यजतोधर्मनैपुण्यंधर्मेयानिष्ठाऽतस्तेन पण्यविक्रयोन कर्तव्यइति ज्ञापयति अतश्चेदमवगम्यते सर्वासांवैश्यवृत्तीनांगर्हिता कृषिः ततोगोरक्षादयः ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । इदं वक्ष्यमाणं वित्तवैकल्याद्वित्ताभावात् । धर्मनैपुणं धर्मवृत्तिं स्वजीविकां त्यजतोविप्रस्य क्षत्रियस्यच । विट्पण्यं वैश्यविक्रेतव्यं तद्वतोद्धारं त्यक्तत्याज्यं त्यक्तपातित्यहेतुरसादिविक्रयमित्यर्थः ॥ ८५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य क्षत्रियस्य चात्मीयवृत्तेरसंभवे धर्मप्रति यथोक्तनिष्णातत्त्वंत्यजतोवैश्येन यद्विक्रेतव्यंद्रव्यजातंतद्वक्ष्यमाणवर्जनीयवर्जितंधनवृद्धिकरंविक्रेयं ॥ ८५ ॥

( ४ ) **राघवानन्दः** । यज्वनः कुटुम्बिनोविप्रस्य वित्तवर्धनोपायमाह इदमिति । वृत्तिवैकल्याद्वृत्त्यभावात् धर्मनैपुणं स्वधर्मनिष्ठां त्यजतोविप्रस्य त्रयमिदं विट्पण्यं वैश्येनयद्विक्रीयते । तेन चर्मपादुकादिव्यावृत्तिः उद्धृतोद्धारं विक्रेयं विनिमेयं राजदण्डविशिष्टं कुसीदं च ॥ ८५ ॥

( ५ ) **नन्दनः** । तथावाणिज्यवृत्त्यानियममाह इदन्तुवृत्तिवैकल्यादिति । धर्मनैपुणमनापद्धर्मं वृत्तिवैकल्यात्त्यजतोविप्रस्य इदमिति वक्ष्यमाणं विपण्यंविक्रेयं वित्तवर्धनं लाभवर्धनं उद्धृतउद्धारोयस्मात्तदुद्धृतोद्धारमुद्धृतमुद्धार्यंत्यजन्निषिद्धमितियावत् ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । इदं धर्मनैपुण्यं वित्तवैक्लव्यात्त्यजतां विट्पण्यं वैश्यविक्रेयं उद्धृतोद्धारं परित्यक्ताविक्रेयं वित्तवर्धनम् ॥ ८५ ॥

## सर्वान् रसानपोहेत कृतान्नंच तिलैः सह ॥ अश्मनोलवणंचैव पशवोये च मानुषाः ॥ ८६ ॥

( १ ) **मेधातिथिः** । मधुरादयःषड्रसाः तत्प्रधानानि द्रव्याणि गुडदाडिमकिराततिक्तकादीनि प्रतिषिध्यन्ते नहिकेवलानांरसानांसंभवः यद्यपि रसशब्दोनस्वयंद्रव्येशुक्लादिशब्दवद्वर्ततेसामानाधिकरण्येन तथापि लक्षयति द्रव्यंगंगायां घोषइति तथा अपोहेत त्यजेन्नविक्रीणीयादिति यावत् कृतान्नंसिद्धमन्नमोदनादितण्डुलादिर्चातिलैःसह तिलाअपि न विक्रेया, नतु पुनस्तिलकृतान्नयोः सहप्रयुक्तयोः प्रतिषेधः केवलयोरभ्यनुज्ञानं अश्मानः सर्वपाषाणाः लवणमपाषाणरूपमपि सैन्धवस्य

---

( ८५ ) विक्रेयं=विज्ञेयं ( भ )

पाषाणशब्देन ग्रहणं रसपक्षे लवणस्य नित्यार्थआरंभस्तेन मधुरादीनां पाक्षिकोविक्रयः पशवोग्राम्यारण्याः मानुषामनुष्याः ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः**। तदेवाह सर्वानिति । रसान् पत्रकाष्ठादिनिर्यासान् अपोहेत विक्रये त्यजेत् नविक्रीणीतेत्यर्थः । अश्मनः उपलान् । पशवश्छागाः । येचमानुषास्तानितिपूरणीयम् ॥ ८६ ॥

( ३ ) **कुल्लूकः**। तानि वर्जनीयान्याह सर्वानिति । सर्वानचोद्यमानानधर्मान्यथा सिद्धार्थतिलपाषाणलवणपशुमनुष्यान्नविक्रीणीत रसत्वेनैव लवणस्य निषेधसिद्धौ विशेषेण निषेधोदोषगौरवज्ञापनार्थः तच्च प्रायश्चित्तगौरवार्थमेवमन्यस्यापि पृथङ्निषेधोव्याख्येयः ॥ ८६ ॥

( ४ ) **राघवानन्दः**। प्राप्तं पण्यं परिसंख्याति रसानिति चतुर्भिः । अपोहेत् ब्राह्मणइति शेषः । रसान् सर्षपादिस्नेहान् । कृतान्नं पक्वान्नं । अश्मनः पाषाणतद्विकारान् । पशवोयेच मानुषागवाश्वादयः ॥ ८६ ॥

( ५ ) **नन्दनः**। कानि पुनस्त्याज्यानि द्रव्याणीत्याह सर्वान् रसानिति । अपोहेत त्यजेन्नविक्रीणीयात् ये पशवोये च मानुषास्तानपि ॥ ८६ ॥

( ६ ) **रामचन्द्रः**। सर्वानिति चतुर्भिराह । सर्वान् रसान्विक्रये परित्यजेत् । कृतान्नं सिद्धान्नम् । पशवः छागादयः ॥ ८६ ॥

## सर्वंच तान्तवंरक्तंशाणक्षौमाविकानि च ॥ अपिचेत्स्युररक्तानि फलमूले तथौषधीः ॥ ८७ ॥

( १ ) **मेधातिथिः**। तान्तवंतन्तुनिर्मितं वस्त्रपटबृहतिकादि रक्तं लोहितं लोहिते वर्णे रक्तशब्दः प्रसिद्धतरः तथाहि रक्तोगौर्लोहितउच्यते यद्यपि शुक्लस्य वर्णान्तरापादनमपिरञ्जेरर्थः ॥ शाणक्षौमाजिनान्यरक्तान्यपि यतआह अपिचेत्स्युररक्तानि शिष्टंप्रसिद्धम् ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः**। तन्तुकृतं पटादि कुसुम्भादिरक्तम् । शाणं शणसूत्रकृतं आविकमविरोमकृतम् । अरक्तमप्येतत्त्रयम् । फलपदं क्रीतपण्यफलपरम् । अन्यस्यापस्तम्बेन क्रीतपण्यमेवहरेत् मुञ्जवल्कलैर्मूलफलैरितिविक्रेतव्यतया विधानात् । ओषधीस्त्रिवृदाद्याः ॥ ८७ ॥

( ३ ) **कुल्लूकः**। सर्वतन्तुनिर्मितवस्त्रंकुसुंभादिरक्तंवर्जयेत् शणक्षुमातन्तुमयान्याविकलोमभवानि च यद्यलोहितान्यपि भवेयुस्तथापि न विक्रीणीत तथा फलमूलगुडूच्यादीनि वर्जयेत् ॥ ८७ ॥

( ४ ) **राघवानन्दः**। तान्तवं कार्पासजं रक्तंचेत् शाणं शणविकारः । क्षौमं क्षुमोद्भवम् । आविकं कम्बलादि । तान्तवे रक्ते प्रतिषेधः । शाणादिषु रक्तेष्वपीतिभावः फलमूले फलंताम्बूलादि मूलंलशुनादि ओषधीरपक्वाः ॥ ८७ ॥

( ५ ) **नन्दनः**। रक्तंरागरूषितं शाणक्षौमाविकानि रक्तान्यपि चेत्स्युस्तान्यपोहेत ॥ ८७ ॥

( ६ ) **रामचन्द्रः**। सर्वं तान्तवं रक्तं रक्तवस्त्रं क्षौमविकारि अरक्तानि ॥ ८७ ॥

## अपः शस्त्रंविषंमांसंसोमंगन्धांश्च सर्वशः ॥ क्षीरंक्षौद्रंदधिघृतंतैलंमधुगुडंकुशाम् ॥ ८८ ॥

( १ ) **मेधातिथिः**। शस्त्रंखड्गपाशादि गन्धास्तगरोशीरचन्दनादयोद्रव्यविशेषाः रसशब्दवदेतद्व्याख्येयं । क्षीरंरसविकारं स्मृत्यंतरप्रसिद्धमतोमस्तुकिलाटोदश्विदादीन्यपि न विक्रेयानि दधिघृतग्रहणंप्राधान्यादुपात्तं मधुमधूच्छिष्टमेकदेश-

( ८७ ) क्षौमाविकानि=क्षौमविकारि ( राम० ) ( ८८ ) मधु=मज्जा ( रा )

लोपाद्देवदत्तोदत्तइतिवत् स्मृत्यन्तरे हितत्प्रतिषिद्धं इह च क्षौद्रशब्देन सारघस्य निषिद्धत्वान्माध्वीकस्य च मद्यग्रहणेनो-त्तरत्रप्रतिषेधात्। अन्येतु माध्वीकस्यैवाप्राप्तमद्यावस्थस्य प्रतिषेधार्थमधुशब्दंवर्णयन्ति तदयुक्तं नायंनिष्पीडितमृद्विकारसव-चनः किंतर्हि मद्यरूपतयैव वर्ततउभौमध्वासवक्षीवाविति प्रयोगदर्शनात् क्षीवतामद्यकृतैव गुडस्यरसत्वप्रतिषेधे निवृत्त्य-र्थग्रहणं अन्येतु खण्डमत्स्यण्डिकादीनामनुज्ञानार्थं व्याचक्षते ॥ ८८ ॥

( २ ) **सर्वज्ञनारायणः**। अपो जलं। शस्त्रं लोहं। गन्धान् चन्दनादीन्। क्षारं यवक्षारादि क्वचित्क्षीरमित्यपि पाठः। क्षौद्रं मधुमधूच्छिष्टं दधीति क्वचित्पाठः। मज्जा जन्तूनामस्थिपीतसारआकृष्टः। गुडस्य तदाकारत्वेपि दृढतयाऽ-फलत्वशङ्कांनिरसितुं पुनरुक्तिः ॥ ८८ ॥

( ३ ) **कुल्लूकः**। जललोहविषमांससोमक्षीरदधिघृततैलगुडदर्भान् तथा गन्धवन्तिसर्वाणि कर्पूरादीनि क्षौद्रंमाक्षिकं-मधुमधूच्छिष्टं सभ्रामरमधूच्छिष्टेति याज्ञवल्क्येन पठितंवर्जयेत् ॥ ८८ ॥

( ४ ) **राघवानन्दः**। शस्त्रं शृङ्गादिनिर्मितं लोहनिर्मितस्य लोहनिषेधेन निषिद्धत्वात्। विषं शैलजादि। सोमं सोमलताम्। गन्धान् गुग्गुलादीन्। क्षौद्रं माक्षिकं मधुमधूच्छिष्टं सिक्थम्। अत्र ये पुनरुक्ताः पदार्थास्तेषु प्रायश्चित्ता धिक्यं ज्ञेयम् ॥ ८८ ॥

**आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ॥ मद्यंनीलिंच लाक्षांच सर्वांश्चैकशफांस्तथा॥ ८९॥**

**[ त्रपुसीसंतथालोहंतैजसानि च सर्वशः ॥ बालांश्चर्मतथास्थीनि सस्नायूनि च वर्जयेत् ॥ १ ॥ ]***

( १ ) **मेधातिथिः**। आरण्यपशुशब्दौ गुडलवणेनैव व्याख्यातौ ग्राम्यपश्वनुज्ञानार्थं ग्राम्याअपि पशवोहिंसायां संयोगइति निषिद्धार्थः। दंष्ट्रिणः श्वशूकरादयः वयांसि पक्षिणः एकशफाअश्वाअश्वतरगर्दभादयः बहूनिति तथा शब्दस्थाने पठन्ति एकस्यविक्रये तथा न दोषः ॥ ८९ ॥

( २ ) **सर्वज्ञनारायणः**। दंष्ट्रिणः कुक्कुराद्यान् ग्राम्यानपि। वयांसि पक्षिणः। नीलिं नीलीरागः ॥ ८९ ॥

( ३ ) **कुल्लूकः**। आरण्यान्सर्वान्पशून्हस्त्यादीन्दंष्ट्रिणः सिंहादीन् तथा पक्षिजलजन्तून्मद्यादीन् एकशफांश्चाश्वादीन् न विक्रीणीत ॥ ८९ ॥

( ४ ) **राघवानन्दः**। दंष्ट्रिणः सूकरादीन्। वयांसि पक्षिणः। एकशफान् अश्वगर्दभादीन् ॥ ८९ ॥

( ५ ) **नन्दनः**। दंष्ट्रिणोमार्जारादयः एकशफाअश्वादयः ॥ ८९ ॥

[ **नन्दनः**। तैजसानि कांस्यादीनि अस्थीनि गजदन्तादीनि अत्र सामान्यतोपि निषेधोविशेषतश्च निषेधोदोषा-तिशयप्रकाशनार्थः ॥ १ ॥ ]

( ६ ) **रामचन्द्रः**। आरण्यान्पशून् हस्त्यादीन् दंष्ट्रिणः सूकराद्यान् सर्वान् एतान् तथा एकशफान् वर्जयेत् ॥८९ ॥

**काममुत्पाद्यकृष्यांतु स्वयमेव कृषीवलः ॥ विक्रीणीत तिलान् शूद्रान्धर्मार्थमचिरस्थितान्॥९०॥**

( १ ) **मेधातिथिः**। कृतान्नंच तिलैः सहेति प्रतिषिद्धानांतिलानांस्वरूपप्रयोजनविशेषाश्रयः प्रतिप्रसवः शुद्धानचिर-स्थितानिति च स्वरूपविशेषः धर्मार्थमितिप्रयोजनविशेषः शुद्धाव्रीह्यादिभिरमिश्राः कृशराद्यर्थं मिश्राणांविक्रयासंभवः। अ-चिरस्थिताः अर्थादिकंलाभमनपेक्ष्यस्वल्पंमूल्यमद्यकालान्तरेणागामीबहुमूल्यंलभेयेत्येवंनप्रतीक्षितव्यं अथवाशुद्धाअकृष्णाः

---

*( क ) ( ९० ) शूद्रान्=शुद्धान् ( ट, ठ, ड, त, थ )

कृष्णतिलानां प्रतिषेधः अचिरस्थितंहिकृष्णंभवति कृष्याउत्पाद्य क्रीत्वा नविक्रेयाः स्वयंकृष्याकृषीवलइति प्रायिकोऽनुवादोनविवक्षितानि पदानि प्रतिग्रहाद्यर्जितानामप्यप्रतिषेधः धर्मप्रयोजनेयवतिलानविक्रीयन्ते इहचरूपकैर्गावोदक्षिणाद्यर्थंस्वाध्यायाग्निहोत्राद्यर्थंक्रीयन्ते श्राद्धादयोवादर्शपूर्णमासाद्यर्थंसधर्मार्थोविक्रयः यस्यवातिलाएवदानादिधर्मायोपयुज्यन्तेभेषजतैलोपयोगे वाक्रेतुःसोप्येवमेव ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः** । तिलान्विक्रीणीत हिरण्येनापि । शुद्धान् बुसशून्यान् । धर्मार्थं क्रेता यदि दानाद्यर्थं क्रीणीते । अचिरस्थितान् लवनानन्तरमेव नतु लाभार्थं चिरंस्थापयित्वा । एवंच कृष्युत्पत्तिशुद्धत्वधर्मार्थत्वाचिरस्थत्वविशिष्टतिलविक्रयोब्राह्मणस्याप्यापद्वृत्तिरिति दर्शितम् ॥ ९० ॥

( ३ ) **कुल्लूकः** । कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्तरेण मिश्रानुत्पत्त्यन्तरमेव नतु लाभार्थंकालान्तरंप्रतीक्ष्य धर्मनिमित्तमिच्छतोविक्रीणीत निषिद्धस्य तिलविक्रयस्य धर्मार्थमयंप्रतिप्रसवः ॥ ९० ॥

( ४ ) **राघवानन्दः** । तिलवाणिज्यं निषिद्धं कृष्युत्पन्नतिलान्प्रत्याह काममिति । शुद्धानन्यद्रव्यामिश्रितान् धर्मार्थं यज्ञादिकर्मनिमित्तं तदैव विक्रीणीत नतु लाभार्थं चिरंसंचिनुयात् ॥ ९० ॥

( ५ ) **नन्दनः** । तिलानां प्रतिप्रसवमाह काममुत्पाद्य कृष्यान्त्विति । शुद्धानिति विशेषणात्कृष्णानांप्रतिषेधः ॥९०॥

( ६ ) **रामचन्द्रः** । विक्रीणीत हिरण्येनापि ॥ ९० ॥

**भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ॥ कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥ ९१ ॥**

( १ ) **मेधातिथिः** । प्रकृततिलविशेषव्यतिरेकेण तिलविक्रयप्रतिषेधे विशेषोयमर्थवादः । ननुचोक्तंप्रतिषेधानांदोषसूचनंफलतयैवसंबध्यते तत्किंभोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुतेतिलैः कृमिभूतइत्ययमर्थवादइत्युच्यते असंभविनःफलस्यशास्त्रान्तरेणविरुद्धस्यचश्रवणादेवमुच्यते तथा पितृभिःसहेत्युच्यते नचतैःकिंचिदपराद्धं सुकृतदुष्कृतयोःफलंहिकर्तृगामी न चपितॄणांकथंचिदपिकर्तृत्वमित्येतत्प्रागुक्तमेव किंचसद्यःपततिमांसेनेति पतितत्ववचनंपरेषांनपातित्यमितिनियमात् तस्मादस्तिकिंचिदनिष्टमित्येतावन्मात्रंप्रतिषेधेन संबध्यते यथाश्रुतमेव युक्तं भोजनादिक्रियायत्र तद्व्यतिरेकेणयदन्यद्विक्रयस्थानादि तत्रतिलैर्यःकुरुतेस कृमित्वंप्राप्नोतियथोक्तेन दोषेणसंयुज्यते ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः** । यदन्यत्कुरुते विक्रयाद्यनापत्तौ ॥ ९१ ॥

( ३ ) **कुल्लूकः** । भोजनाभ्यङ्गदानव्यतिरिक्तंयदन्यनिषिद्धंविक्रयादि तिलानांकुरुते तेन पितृभिः सह कृमित्वंप्राप्तः कुक्कुरपुरीषे मज्जति ॥ ९१ ॥

( ४ ) **राघवानन्दः** । अतआह भोजनेति । अभ्यञ्जनं तैलादिना । दानपदंधर्मार्थंतदर्थविक्रयोपलक्षकम् । अन्यत्क्रयविक्रयादिनकर्तव्यमित्यत्रतात्पर्यंपितृभिःसहेतिविरुद्धफलश्रवणात् सुकृतदुष्कृतयोःफलंतुकर्तर्येवेतिनात्रपितॄणामपराधःकश्चिदितिमैव ॥ ९१ ॥

( ५ ) **नन्दनः** । कुरुते विप्रइति शेषः ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । भोजनात् अभ्यञ्जनात्दानात्तिलैः विक्रयं कुरुते सपुरुषः श्वविष्ठायां कृमिभूतः पितृभिःसह मज्जति ॥ ९१ ॥

**सद्यः पतति मांसेन लाक्षया लवणेन च ॥ त्र्यहेण शूद्रोभवति ब्राह्मणः क्षीरविक्रयात् ॥ ९२ ॥**

( १ ) **मेधातिथिः** । उक्तार्थः ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । पतति द्विजातिकर्मभ्योहीयते । एतदेव स्पष्टीकृतं शूद्रोभवतीति । त्र्यहेणेति त्रिविक्रयणमुपलक्ष्यते ॥ ९२ ॥

( ३ ) **कुल्लूकः** । मांसलाक्षालवणविक्रयैर्ब्राह्मणस्तत्क्षणादेव पततीति दोषगौरवव्याख्यानार्थमेतत् पञ्चानामेवमहापातकिनांपातित्यहेतूनांवक्ष्यमाणत्वात् क्षीरविक्रयात्त्र्यहेण शूद्रतांप्राप्नोति एतदपि दोषगौरवात्प्रायश्चित्तगौरवख्यापनार्थम् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । उक्तद्रव्येषुकानिचिदनुवदन् तद्विक्रये [ दोषमाहसद्यइतिद्वाभ्याम् । त्र्यहेणाव्यवहितेन ]‡ ॥९२॥

( ५ ) **नन्दनः** । मांसेन विक्रीतेन ॥ ९२ ॥

**इतरेषांतु पण्यानांविक्रयादिह कामतः ॥ ब्राह्मणः सप्तरात्रेण वैश्यभावंनियच्छति ॥ ९३ ॥**

( १ ) **मेधातिथिः** । कामतइतिवचनादनापदित्यनुमीयते गुरुलघुत्वदर्शनं मांसादीनांप्रायश्चित्तविशेषार्थंगुरुणिगुरूणिलघुनिलघूनीतिवक्ष्यामः ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । इतरेषामपण्यानांकृतान्नादीनांनिषिद्धानांकामतोऽकामतस्तु पापमात्रम् ॥ ९३ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणउक्तेभ्योमांसादिभ्योऽन्येषांप्रतिषिद्धानांपण्यानामिच्छातोनतु प्रमादाद्द्रव्यान्तरसंश्लिष्टानांसप्तरात्रविक्रयणेन वैश्यत्वंगच्छति ॥ ९३ ॥

( ४ ) **राघवानन्दः** । [ इतरेषां निषिद्धानां पण्यानां विक्रयिणां ]‡ ॥ ९३ ॥

( ५ ) **नन्दनः** । अपण्यानामविक्रेयाणां कामतः अनापदि ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । इतरेषां पण्यवस्तूनाम् ॥ ९३ ॥

**रसारसैर्निमातव्यानत्वेव लवणंरसैः ॥ कृतान्नंचाकृतान्नेन तिलाधान्येन तत्समाः ॥९४॥**

( १ ) **मेधातिथिः** । रसाः पूर्वोक्तास्तेरसैर्निमातव्याः मधुररसंगुडादिदत्वा ऽऽम्लादिरसमामलक्यादिग्रहीतव्यं नकेवलंलवणंदत्वारसान्तरमादेयं पाठान्तरंलवणंतिलैरिति अस्मिन्पाठेतिलैरेवलवणस्यप्रतिषेधोनरसान्तरैः कृतान्नंसक्तोदनाद्यन्येन पायसादिनानिमातव्यं तिलास्तुधान्येनव्रीह्यादिनातत्समाः प्रस्थंदत्वाप्रस्थएवग्रहीतव्योनार्थापेक्षयाधिकंवादेयं विनिमयोनामविक्रयएव क्रीणातिरत्तद्रव्यविनिमयेपठ्यते नहितद्युक्तं विक्रये प्रकृतिविनिमयस्त्विवति गौतमेनैवंदर्शितं एवंतर्हिप्रसिद्धेनरूपकादिनाद्रव्यार्पणंविक्रयः तदन्यद्रव्यपरिवृत्तौविनिमयः ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । रसागुडादयोरसैर्निमातव्याः परिवर्तनेन ग्राह्याः । लाभप्रेप्सया इयत्तानवधारणेन ग्रहणं विनिमयोविक्रयस्त्वियत्तावधारणेन लाभेच्छयेति विशेषः । तत्र रसानांरसैर्विनिमयः कार्योनतु विक्रयः । लवणंतु मृन्निर्यासतया रसभूतं विनिमेयमपि न रसैः । कृतान्नं सक्त्वाद्यकृतान्नेन यवादिना विनिमेयम् । नतु नेत्यत्रान्वितमप्रामार्थनिषेधायोगात् । तिलाधान्येनेति स्वयंकृष्याद्युत्पादितत्वाद्यभावेपि धान्यैर्विनिमये नास्ति दोषइत्यर्थः । किंतु तत्समान न्यूनाधिकाः ॥ ९४ ॥

( ३ ) **कुल्लूकः** । रसागुडादयोरसैर्घृतादिभिः परिवर्तनीयाः लवणंपुनः रसान्तरेण न परिवर्तनीयं सिद्धान्नंचामान्नेन परिवर्तनीयं तिलाधान्येन धान्यप्रस्थप्रस्थेनेत्येवंतत्समाः परिवर्तनीयाः ॥ ९४ ॥

---

‡ न

( ४ ) **राघवानन्दः** । [ विप्रक्षत्रिययोरकृतरसादिपरिवर्तनेन दोषइति ]‡ वदन् वाचनिकप्रतिनिधीनाहरसाइति । अकृतान्नेनामेन ॥ ९४ ॥

( ५ ) **नन्दनः** । अथ रसादीनां विक्रयोपायमाह रसारसैर्निमातव्याइति । रसारसैः कृतान्नं कृतान्नेन धान्येन तिलाश्च निमातव्याव्यत्येतव्याः तत्समः समपरिमाणः लवणं रसैर्नतुनिमातव्यम् ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । रसैरसानिमातव्याः मानंपरस्परंकर्तव्याः अन्यरसैः लवणं न । अकृतान्नेनकृतान्नं तिलधान्येन तत्समाः ॥ ९४ ॥

## जीवेदेतेन राजन्यः सर्वेणाप्यनयंगतः ॥ नत्वेव ज्यायसींवृत्तिमभिमन्येत कर्हिचित् ॥ ९५ ॥

( १ ) **मेधातिथिः** । एतेन सर्वेणापि प्रतिषिद्धपण्यप्रतिप्रसवोयंराजन्यस्य नांकिंचित्तस्याविक्रेयंवैश्यवत् किंतु सत्यपि स्ववृत्तित्यागेन ज्यायसींब्राह्मणवृत्तिंकदाचिदप्यभिमन्येत इमांकरोमीतिचेतसि न कुर्यात् प्रतिकूलंदैवमनयएतदापदुपलक्षणार्थंगतः प्राप्त आपद्गतइतियावत् ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । एतेन सर्वेण निषिद्धेनापि रसादिना विक्रीतेन अनयमवृत्तिम् । ज्यायसीं ब्राह्मणस्यवृत्तिं प्रतिग्रहादि अभिमन्येत स्वीकुर्यात् ॥ ९५ ॥

( ३ ) **कुल्लूकः** । क्षत्रियः आपदंप्राप्तः एतेनेत्यभिधाय सर्वेणेत्यभिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन वैश्यवज्जीवेत् न पुनः कदाचिद्ब्राह्मणजीविकामाश्रयेत् न केवलंक्षत्रियः क्षत्रियवदन्योपि ॥ ९५ ॥

( ४ ) **राघवानन्दः** । आपद्गतक्षत्रियस्यतु वैश्यवृत्तिमनुवदन् [ विप्र ]‡ वृत्तिनिषेधति जीवेदिति । सर्वेण निषिद्धविक्रयेणापि अतएवास्य मांसादिविक्रयोन पातित्यहेतुः । अतस्तत्प्रकरणे ब्राह्मणपदम् । अनयमापदम् । ज्यायसीं अध्यापनयाजनादिकाम् । अत्रप्रतिलोमपरिणयनवत्प्रतिलोमवृत्तिरपि निषिद्धा । यत्त्वापत्काले क्षत्रियादप्यध्ययनं अब्राह्मणादध्ययनमापत्काले विधीयतइति विप्रस्य तद्विप्राकांक्षाप्रयुक्तत्वान्नतस्य जीविकार्थतेति भावः ॥ ९५ ॥

( ५ ) **नन्दनः** । अनयमापदं एतेन वाणिज्येन सर्वेण प्रतिषिद्धद्रव्यविक्रयेणापीत्यर्थः ज्यायसींवृत्तिंब्राह्मणवृत्तिम् ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । अनयंगतः आपद्गतः ज्यायसीं विप्रसंबन्धिनीं वृत्तिंकर्हिचित् ॥ ९५ ॥

## योलोभादधमोजात्या जीवेदुत्कृष्टकर्मभिः ॥ तंराजानिर्धनंकृत्वा क्षिप्रमेव प्रवासयेत् ॥ ९६ ॥

( १ ) **मेधातिथिः** । योजात्याऽधमोनिकृष्टः क्षत्रियादिः सत्यपि प्रकृतत्वे राजन्यस्य सर्वेषामयं ब्राह्मणवृत्तिप्रतिषेधएवमेवायंश्लोकः । उत्कृष्टोनिरपेक्षो ब्राह्मणएव कर्मभिरध्ययनादिभिर्जीवति दण्डोयंसर्वस्वग्रहणप्रवासनैः ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । एवंवैश्यादेरपि क्षत्रधर्मग्रहोनिषिद्धइत्याह यइति ॥ ९६ ॥

( ३ ) **कुल्लूकः** । योनिकृष्टजातिः सँल्लोभादुत्कृष्टजातिविहितकर्मभिर्जिवेत्तंराजा गृहीतसर्वस्वंकृत्वा तदानीमेव देशान्निःसारयेत् ॥ ९६ ॥

( ४ ) **राघवानन्दः** । तत्रैवं दृष्टादृष्टार्थं सामान्योक्तिमाह यइतिद्वाभ्याम् । जात्या क्षत्रियत्वादिनाधमः । उत्कृष्टकर्मभिः उत्कृष्टाःपूर्वपूर्वेण तेषां कर्मभिः । प्रवासयेत् बहिर्निर्वासयेत् ॥ ९६ ॥

---

‡ न

( ६ ) **रामचन्द्रः** । जात्या अधमः उत्कृष्टकर्मभिर्नजीवेत् ॥ ९६ ॥

**वरंस्वधर्मोविगुणोन पारक्यः स्वनुष्ठितः ॥ परधर्मेण जीवन्हि सद्यः पतति जातितः ॥ ९७ ॥**

( १ ) **मेधातिथिः** । पूर्वस्यविधेर्निन्दार्थवादोयं योयस्य विहितोधर्मोजात्याश्रयेण विगुणोप्यपरिपूर्णाङ्गोऽपि युक्तोनुष्ठातुंनपरधर्मः सर्वाङ्गसंपूर्णोपि अत्रनिन्दार्थवादः परधर्मेणेति ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र वैश्यवृत्तेरुक्तायावरमशूद्रात्प्रतिग्रहोविगुणोभूतापि स्ववृत्तिः स्ववृत्तिनया प्रशस्तेत्यवतारयति वरमिति । पततिजातितः स्वानन्तरजातितुल्यतांयाति ॥ ९७ ॥

( ३ ) **कुल्लूकः** । विगुणमपि स्वकर्मकर्तुंन्याय्यं न परकीयंसंपूर्णमपि यस्माज्जात्यन्तरविहितकर्मणा जीवंस्तत्क्षणादेव स्वजातितः पततीति दोषोवर्जनार्थः ॥ ९७ ॥

( ४ ) **राघवानन्दः** । पारक्यः परकीयः स्वनुष्ठितः साङ्गोपि न श्रेयान् । स्वधर्मोविगुणःश्रेयान् परधर्मोभयावह इतिस्मृतेः । जातितः कर्मजात्यन्तरप्राप्त्याजात्यन्तरंजायतेततःसाम्यादितिमनुभट्टोक्तेः ॥ ९७ ॥

( ५ ) **नन्दनः** । वरशब्दउत्कृष्टवचनः ॥ ९७ ॥

**वैश्योजीवन्स्वधर्मेण शूद्रवृत्त्यापि वर्तयेत् ॥ अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ॥ ९८ ॥**

( १ ) **मेधातिथिः** । स्वधर्मेणाजीवतोवैश्यस्य शूद्रवृत्तिरनुज्ञायते पादधावनादिशुश्रूषया अनाचरन्नकार्याणि उच्छिष्टापमार्जनाद्यकार्यं तत्परिहर्तव्यं शक्तिमान्निवर्तेतेति सर्वशेषः । अत्रकेनचिदुक्तं सामर्थ्यात् ब्राह्मणक्षत्रिययोरप्येतददतिदिश्यतेतत्रापरेण संदिह्यते कथंशूद्रवृत्तिं ब्राह्मणःकुर्यात् एवंहि श्रूयते। उत्कृष्टंचापकृष्टंच विद्येते कर्मणी तयोः । मध्यमे कर्मणीहित्वा सर्वसाधारणेहिते ॥ इति तदुक्तंनत्वस्यायमर्थो ब्राह्मणस्य शूद्रवृत्तिरनुज्ञायते सामर्थ्यादिति किंतर्हिनिवर्तेतच शक्तिमानिति यदस्माभिरुक्तंसर्वशेषइति ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । अकार्याण्युच्छिष्टभक्षणादीनि । निवर्तेतशक्तिमान् यदि जीवनुशक्तः प्रकारान्तरेण तदा न कुर्यादित्यर्थः ॥ ९८ ॥

( ३ ) **कुल्लूकः** । वैश्यः स्ववृत्त्या जीवितुमशक्नुवनशूद्रवृत्त्यापि द्विजातिशुश्रूषयोच्छिष्टभोजनादीन्यकुर्वन्वर्तेत निस्तीर्णापत्क्रमशः शूद्रवृत्तितोनिवर्तेत ॥ ९८ ॥

( ४ ) **राघवानन्दः** । विप्रराजन्ययोरापद्धर्ममुक्त्वा वैश्यशूद्रयोरप्याह वैश्यइतित्रिभिः । अजीवन्निितिच्छेदः । अकार्याणि उच्छिष्टभक्षणादीनि । निवर्तेत शूद्रवृत्तेः । शक्तिमान् लब्धस्ववृत्तिश्चेत् लब्धवृत्योर्विप्रक्षत्रिययोरपि निवृत्तिः प्रायश्चित्तपूर्विका शक्तिमानित्यनेनसूचिता ॥ ९८ ॥

( ५ ) **नन्दनः** । अजीवन्निति पदं अकार्याण्यभक्ष्यभक्षणादीनि शक्तिमानापद्विमुक्तः निवर्तेत शूद्रवृत्तितः ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । वैश्यःस्वधर्मेणाजीवन् शूद्रवृत्त्यापि वर्तयेत् अकार्याणि उच्छिष्टभक्षणादीनि न कुर्यात् शक्तिमान्निस्तीर्णापत्क्रमशः शूद्रवृत्त्या निवर्तेत ॥ ९८ ॥

**अशक्नुवंस्तु शुश्रूषांशूद्रः कर्तुंद्विजन्मनाम् ॥ पुत्रदारात्ययंप्राप्तोजीवेत्कारुककर्मभिः ॥ ९९ ॥**

( १ ) **मेधातिथिः** । कारुकाः शिल्पिनः सूदतन्तुवायादयस्तेषांकर्माणि पाकवयनादीनि प्रसिद्धानि तैर्जीवेत पुत्रदारात्ययस्तद्भरणासमर्थता एतेन धनतन्त्रभंगेनतस्यापदिविवाहादिकर्मणामेषांविधानान्निकृष्टताऽनुमीयते ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । पुत्रदारात्ययंप्राप्तस्तेषांजीवनाभावेन कर्तुमशक्नुवन् । कारुकाणां विशिष्टकर्मकराणां चित्रकरादीनां कर्मभिः ॥ ९९ ॥

( ३ ) **कुल्लूकः** । शूद्रः द्विजातिशुश्रूषांकर्तुमक्षमः क्षुदवसन्नपुत्रकलत्रः सूपकारादिकर्मभिर्जीवेत् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । पुत्राद्यत्ययं नाशं ॥ ९९ ॥

( ५ ) **नन्दनः** । शूद्रस्यापद्वृत्तिमाह अशक्नुवंस्तुशुश्रूषामिति । अशक्नुवन्वृत्तिहान्येति शेषः ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । पुत्रदारात्ययं प्राप्तः भृत्यभावेन जीवनम् ॥ ९९ ॥

**यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ॥ तानि कारुककर्माणि शिल्पानि विविधानि च॥१००॥**

( १ ) **मेधातिथिः** । प्रचरितैरनुष्ठितैः शुश्रूष्यन्ते सेव्यन्ते । तदुपयोगीनि यानि कर्माणि शिल्पानि यद्यपि शिल्पमपि कारुकर्मैवतथापीहभेदेनोपादानात्तक्षकिवर्धकिप्रभृतयः कारवस्तेषांकर्माणि तक्षणवर्धनादीनि शिल्पानि यत्र छेदरूपकर्माण्यालेख्यानि ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । शिल्पानि पटनिर्माणादीनि ॥ १०० ॥

( ३ ) **कुल्लूकः** । पूर्वोक्तकारुकर्मविशेषाभिधानार्थमिदं यैः कर्मभिः कृतैर्द्विजातयः परिचर्यन्ते तानि च कर्माणि तक्षणादीनि शिल्पानि च चित्रलिखितादीनि नानाप्रकाराणि कुर्यात् ॥ १०० ॥

( ४ ) **राघवानन्दः** । यैः कटघटनिर्माणैः सुरचितैः सुष्ठुकृतैः शुश्रूष्यन्ते शुश्रूषामाप्नुवन्ति । द्विजात्यपेक्षितकारुककर्माणि कुर्यादिति ॥ १०० ॥

( ५ ) **नन्दनः** । कानि पुनस्तानि कारुकर्माणीत्याह यैः कर्मभिः सुचरितैरिति । शिल्पानि सुवर्णलोहच्छत्रादिकरणानि ॥ १०० ॥

**वैश्यवृत्तिमनातिष्ठन्ब्राह्मणः स्वे पथि स्थितः ॥ अवृत्तिकर्षितः सीदन्निमंधर्मंसमाचरेत् ॥ १०१ ॥**

( १ ) **मेधातिथिः** । अनातिष्ठन्निच्छयैतदुक्तंभवति क्षत्रवृत्त्यसंभवे यदि वा वैश्यवृत्तिमाचरेदसत्प्रतिग्रहंवा तुल्ये एते वृत्ती असत्प्रतिग्रहात्क्षत्रवृत्तिः श्रेयसी अथवानातिष्ठन्वैश्यवृत्तिरसंभवे ततश्चासत्प्रतिग्रहोवैश्यवृत्तेर्हीनतरः स्वेपथिस्थित इति ब्रुवन्नापद्वृत्तीनांसमुच्चयोस्तीति ज्ञापयति अवृत्त्या कर्शितंसीदन्नवसादंप्राप्नुयात् ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः** । वरंस्वधर्मइति यदुक्तं तत्स्फारयति वैश्येति । स्वेपथि स्ववृत्तौ स्थितउद्यतः अतएव क्षत्रवृत्तिमप्यनातिष्ठन् । इमं वक्ष्यमाणम् ॥ १०१ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणोवृत्त्यभावपीडितोऽवसादंगच्छन्क्षत्रियवैश्यवृत्तिमनातिष्ठन् स्वधर्मोवरम् विगुणइत्युक्तत्वात् । स्ववृत्तावेववर्तमानइमांवक्ष्यमाणांवृत्तिमनुतिष्ठेत् अतश्च विगुणप्रतिग्रहादिस्ववृत्त्यसंभवे परवृत्त्याश्रयणंज्ञेयम् ॥ १०१ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् वैश्यवृत्त्याऽपरितुष्यतोब्राह्मणस्य स्ववृत्तौ स्वाच्छन्द्यमाह वैश्येतिद्वभ्याम् । स्वेपथि वेदाभ्यासादौ । इममसत्प्रतिग्रहाख्यम् ॥ १०१ ॥

( ५ ) **नन्दनः** । अथ ब्राह्मणस्यापद्यप्यनाश्रितवृत्त्यन्तरस्य स्वधर्मनिरतस्य कर्तव्यमाह वैश्यवृत्तिमनातिष्ठन्निति । स्वे पथि स्वेधर्मे इमंवक्ष्यमाणम ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मण इति क्षत्रियस्याप्युपलक्षणम् । इमं वक्ष्यमाणलक्षणम् ॥ १०१ ॥

**सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयंगतः ॥ पवित्रंदुष्यतीत्येतद्धर्मतोनोपपद्यते ॥ १०२ ॥**

( १ ) **मेधातिथिः**। सर्वत इति प्रतिग्राह्यजातिगुणानामपेक्षा न कर्तव्या अत्रापि हीनहीनतरहीनतमेषु क्रमेण पूर्वपूर्वाभावउत्तरोत्तरप्राप्तिरस्त्येव यथा क्षत्रवृत्त्यभावे वैश्यवृत्तिः पवित्रंगङ्गास्रोतस्तदमेध्यसंसर्गेण दुष्यति नदीवेगेन शुध्यतीत्युक्तं एवंब्राह्मणोपीति ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः**। पवित्रं वन्ह्यादि । धर्मतोधर्मबलात् ॥ १०२ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणआपदंप्राप्तः सर्वेभ्योपिनिन्दिततमेभ्यः क्रमेण प्रतिग्रहंकुर्यात् अत्रार्थान्तरन्यासोनामालङ्कारः। यस्मात्पवित्रगङ्गादिरथ्योदकादिना दुष्यतीत्येतच्छास्त्रस्थित्या नोपपद्यते ॥ १०२ ॥

( ४ ) **राघवानन्दः**। अनयं मरणम् पवित्रं वेदाभ्यासेन सर्वदा पूतोविप्रः प्रकरणात्पवित्रं वन्ह्यादिदृष्टान्तीवाधर्मतोधर्मशास्त्रात्स्वधर्मत्वाद्वा यत्पवित्रं तन्नदुष्यतिनदुष्टमिति प्रमितम् ॥ १०२ ॥

( ५ ) **नन्दनः**। सर्वतः अप्रतिग्राह्यादपि प्रतिगृह्णीयादिति याजनाध्यापनयोरप्युपलक्षणम् ॥ १०२ ॥

( ६ ) **रामचन्द्रः**। अनयंगतः आपद्गतः धर्मतः पवित्रं द्विजं न दुष्यति एतदुपपद्यते युक्तमेव ॥ १०२ ॥

**नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ॥ दोषोभवति विप्राणांज्वलनांबुसमाहि ते ॥ १०३॥**

( १ ) **मेधातिथिः**। पूर्वेणासत्प्रतिग्रहयुक्तोऽनेन याजनाध्यापने अनुज्ञायेति गर्हितादितिसिंहावलोकितवत्पूर्वाभ्यामप्यभिसंबध्यते यथाग्निरापश्च सर्वत्र शुद्धाएवंब्राह्मणाअपीति प्रशंसा केचिदाहुः। असत्प्रतिग्रहवदसद्याजनाध्यापने अभ्यनुज्ञायेते यद्यभविष्यतां तदा पूर्वश्लोकएवंप्रतिग्रहवदपठिष्यतां इहतु विधिप्रत्ययाभावाद्दोषोभवति। विप्राणामिति वर्तमानप्रत्ययेन सिद्धव्यपदेशादर्थवादताप्रतीतेः किंच प्रतिवचनंतावदर्थवादः पूर्वेण सिद्धत्वात्तदेव वाक्यत्वापत्तेर्याजनाध्यापने अप्येवं भवितुमर्हतः वयंतु ब्रूमोऽसंभवे सत्प्रतिग्रहस्यतत्रापिवृत्तिर्युक्ता यतः प्रभृतिः स्मर्यते यथा कथंचित्सआत्मानमुद्धरेदथप्रत्यवायेभ्यः कर्मार्थस्त्वापद्धर्मपाठः ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः**। गर्हितादिति त्रिष्वन्वितम् । विप्राणां वेदविद्यावताम् । यथा ज्वलनोऽशुचीनपि दहन् अप्पूरंनद्यादिर्मलक्षालनंकुर्वन्नपि न दुष्यति ॥ १०३ ॥

( ३ ) **कुल्लूकः**। यस्मात् नाध्यापनादिति । ब्राह्मणानामापदि गर्हिताध्यापनयाजनप्रतिग्रहैरधर्मोन भवति यस्मात्स्वभावतः पवित्रत्वेनाग्न्युदकतुल्यास्ते ॥ १०३ ॥

( ४ ) **राघवानन्दः**। अतएवाह नेति । यथा याजनाध्यापने दोषानापादके दृष्टान्तः ज्वलनेन ग्रीष्मातपेन युक्तोर्कइववेदाभ्यासेनयुक्तोविप्रः प्रतिग्रहोपितथाविशुद्धाच्चप्रतिग्रह इत्यत्र विशुद्धपदं तदर्जितधनस्य फलसिद्धत्वार्थम् ॥१०३॥

( ५ ) **नन्दनः**। एतदेव स्थिरीकरोति नाध्यापनाद्याजनाच्चेति ॥ १०३ ॥

( ६ ) **रामचन्द्रः**। ज्वलनार्कसमाहितः समीपे आपद्गतस्य दोषोन ॥ १०३ ॥

**जीवितात्ययमापन्नोयोऽन्नमत्ति यतस्ततः ॥ आकाशमिव पङ्केन न सपापेन लिप्यते ॥ १०४ ॥**

( १ ) **मेधातिथिः**। पूर्वेणासत्प्रतिग्रहउक्तोऽनेन प्रतिग्रहदुष्टमन्नमभ्यनुज्ञायते ततस्ततइति जातिकर्मात्तदपेक्षमत्रस्वामिनमाह शेषार्थवादश्च ॥ १०४ ॥

---

( १०३ ) ज्वलनाम्बु समाहिते=ज्वलनार्क समाहिते ( च, ण ) = ज्वलनार्क समाहितः ( राम )

( २ ) **सर्वज्ञनारायणः** । किंपुनः प्रतिग्रहादिकुर्वन् ॥ १०४ ॥

( ३ ) **कुल्लूकः** । यः प्राणात्ययंप्राप्तः प्रतिलोमजादन्नमश्नाति सोंऽतरिक्षमिव कर्दमेन पापेन न संबध्यते ॥ १०४ ॥

( ४ ) **राघवानन्दः** । किंच जीवितेति । यइति सामान्यशब्दोपि ब्राह्मणविषयएव प्रकरणात् अन्येषां प्रतिग्रहनिषेधाच्च । अत्रअनदनीयोदनम् अवृत्तिकर्शितत्वंजीवितात्ययमितिलिङ्गत्रयं पवित्रमित्यादिदृष्टान्तद्वयंच लौकिकालौकिकं सर्वथाऽदोषतात्पर्यकम् ॥ १०४ ॥

( ५ ) **नन्दनः** । सवत्र भोजनमप्यस्यादृष्टमित्याह जीवितात्ययमापन्नइति ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । जीवितात्ययं आपन्नः जीवितस्य अत्यर्थं नाशं प्राप्तः सन् यतस्ततः प्रतिलोमजातात् यः अन्नं अत्ति भक्षयति ॥ १०४ ॥

**अजीगर्तः सुतंहन्तुमुपासर्पद्बुभुक्षितः ॥ न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥ १०५ ॥**

( १ ) **मेधातिथिः** । अजीगर्तोनामऋषिः सक्षुत्परिपीडितः पुत्रंसुतं शुनः । शेपनामानं हंतुमुपासर्पत्प्रचक्रमे नचासौ क्रव्यादइतियुज्यते । शौनःशेपमाख्यानंबह्वृचि सुप्रसिद्धं नात्र विस्तरआगमस्योपयुज्यते परमार्थस्तु प्रकृतिरूपोर्थवादएवं सर्वएते द्रष्टव्याः ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । सुतं शुनःशेपम् ॥ १०५ ॥

( ३ ) **कुल्लूकः** । अत्रपरकृतिरूपाऽर्थवादमाहअजीगर्तइति ऋषिरजीगर्ताख्योबुभूक्षितः सन्पुत्रंशुनःशेपनामानंस्वयंविक्रीतवान् यज्ञे गोशतलाभाययज्ञयूपे बद्धा विशसिता भूत्वा हंतुंप्रचक्रमे नच क्षुत्प्रतीकारार्थंतथा कुर्वन्पापेन लिप्तः एतच्च बह्वृचब्राह्मणे शुनःशेपाख्यानेषु व्यक्तमुक्तम् ॥ १०५ ॥

( ४ ) **राघवानन्दः** । अत्रार्थे ऐतिह्यं प्रमाणयति अजीगर्तइतिचतुर्भिः । सुतं शुनःशेपम् हन्तुं वरुणार्थं पुरुषमेधे । उपासर्पद्विक्रीतस्य सुतस्य पुनर्हननार्थं गतवान् ॥ १०५ ॥

( ५ ) **नन्दनः** । अत्र शिष्टाचारान्दर्शयति अजीगर्तःसुतंहंतुमिति । आचरन्निति हेत्वर्थे शतृप्रत्ययः ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । अजीगर्तः ऋषिः । सुतं शुनःशेपं । दोषेण न अलिप्यत ॥ १०५ ॥

**श्वमांसमिच्छन्नार्त्तोऽत्तुंधर्माधर्मविचक्षणः ॥ प्राणानांपरिरक्षार्थंवामदेवोनलिप्तवान् ॥ १०६ ॥**

( १ ) **मेधातिथिः** । एवंवामदेवोनामऋषिः सआर्त्तःक्षुधाश्वमांसमत्तुंभक्षयितुमैच्छत् ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । श्वमांसमिच्छन्नार्त्तोत्तुमितीच्छामात्रेणापि पापोत्पत्तिं दर्शयति ॥ १०६ ॥

( ३ ) **कुल्लूकः** । वामदेवाख्यऋषिर्धर्माधर्मज्ञः क्षुधार्त्तः प्राणत्राणार्थंश्वमांसंखादितुमिच्छन्दोषेण न लिप्तवान् ॥१०६॥

( ४ ) **राघवानन्दः** । श्वमांसं शुनोमांसं वामदेवोप्यत्तुमिच्छन्नलिप्तवानित्यन्वयः ॥ १०६ ॥

( ५ ) **नन्दनः** । न लिप्तवान्दोषन्न स्पृष्टवान् ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । श्वमांसंवामदेवः क्षुधार्त्तोऽत्तुमिच्छन्पापेन नलिप्तवान् ॥ १०६ ॥

**भरद्वाजः क्षुधार्त्तस्तु सपुत्रोविजने वने ॥ बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णोमहातपाः ॥ १०७ ॥**

( १ ) **मेधातिथिः** । वृधोनामतक्षा अप्रतिग्राह्यस्ततोबह्वीर्गाभरद्वाजोनामऋषिः प्रतिजग्राह ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । बह्वीर्गाइति सतात्पर्यं विशेषणं एकैव गौः प्रतिग्राह्येति वचनात् । बृहत्तक्ष्णोरथकारात् ॥ १०७ ॥

( ३ ) **कुल्लूकः** । भरद्वाजाख्योमुनिः महातपस्वी पुत्रसहितोनिर्जने वनेऽरण्यउषित्वा क्षुत्पीडितोवृधुनाम्नस्तक्ष्णोबह्वीर्गाः प्रतिगृहीतवान् ॥ १०७ ॥

( ४ ) **राघवानन्दः** । वृधोर्वृधुनामकस्य तक्ष्णोआयोगवजातेः विजने निह्नुत्य प्रतिजग्राहेत्यन्वयः । अत्रहेतुः महातपाइति तेन संभवत्प्रकारान्तरे न कार्यं तदिति भावः ॥ १०७ ॥

( ६ ) **रामचन्द्रः** । बृहत्तक्ष्णोराज्ञः प्रतिग्रहः ॥ १०७॥

**क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ॥ चण्डालहस्तादादाय धर्माधर्मविचक्षणः॥१०८॥**

( १ ) **मेधातिथिः** । विश्वामित्रोनाममहामुनिः प्रसिद्धः। सकस्मिंश्चिदवसरे क्षुधादुःखेनश्वजाघनींचण्डालहस्तादादायात्तुमभ्यागतआभिमुख्येनाध्यवसितः । नकेवलंपरिदुष्टेऽन्नेदोषोस्ति यावत्स्वभावदुष्टेपीति श्वजाघनीग्रहणं सर्वदोषदुष्टमप्यापदि भक्षयितव्यमितिश्लोकतात्पर्यार्थः ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । श्वजाघनीं शुनःपुच्छमूलमांसम् ॥ १०८ ॥

( ३ ) **कुल्लूकः** । ऋषिर्विश्वामित्रोधर्माधर्मज्ञः क्षुत्पीडितः चण्डालहस्ताद्गृहीत्वा कुक्कुरजघनमांसंभक्षितुमध्यवसितवान् ॥ १०८ ॥

( ४ ) **राघवानन्दः** । श्वजाघनीं शुनो जघनवर्तमानंमांसम् ॥ १०८ ॥

( ५ ) **नन्दनः** । श्वजाघनींश्वमांसं अत्तुंभक्षितुम् ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । क्षुधार्त्तोविश्वामित्रः श्वजाघनीं श्वपुच्छमूलमांसं अत्तुं अभ्यगात् ॥ १०८ ॥

**प्रतिग्रहाद्याजनोद्वा तथैवाध्यापनादपि ॥ प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥ १०९ ॥**

( १ ) **मेधातिथिः** । आपदीषद्गर्हितयोर्याजनाध्यापनयोः संभवेनगार्हितप्रतिग्रहे वर्तितव्यमितिश्लोकार्थः ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र पुनर्विशेषमाह प्रतिग्रहादिति ॥ १०९ ॥

( ३ ) **कुल्लूकः** । गर्हितानामप्यध्यापनयाजनप्रतिग्रहाणांमध्याद्ब्राह्मणस्यासत्प्रतिग्रहोनिकृष्टः परलोके नरकहेतुः ततश्चापदि प्रथमंनिन्दिताध्यापनयाजनयोः प्रवर्तितव्यंतदसंभवेत्वसत्प्रतिग्रहइत्येवंपरमेतत ॥ १०९ ॥

( ४ ) **राघवानन्दः** । याजनाध्यापने प्रतिग्रहात्प्राशस्त्ये इत्यनुवदति प्रतिग्रहादिति । प्रत्यवरः प्रति पूर्वं अपेक्ष्यावरोनिकृष्टः प्रेत्य स्थितस्यापि नरकहेतुत्वात् ॥ १०९ ॥

( ५ ) **नन्दनः** । याजनाध्यापनाभ्यामसत्प्रतिग्रहस्यावरत्वमाह प्रतिग्रहाद्याजनाच्चेति । प्रेत्य परलोके ॥ १०९ ॥

( ६ ) **रामचन्द्रः** । प्रतिग्रहः प्रत्यवरः हीनहीनः ॥ १०९ ॥

**याजनाध्यापने नित्यंक्रियेते संस्कृतात्मनाम् ॥ प्रतिग्रहस्तु क्रियते शूद्रादप्यंत्यजन्मनः ॥ ११० ॥**

( १ ) **मेधातिथिः** । अत्रैवहेतुरूपोर्थवादः । प्रवृत्तिरेवेदृशी लोकस्य यदनुपनीतानाधीयते नच यजन्ते अतःसुष्ठ्वार्त्तोपि न शूद्रंयाजयिष्यत्यध्यापयिष्यति वा। दानंतु सार्ववर्णिकंप्रसिद्धं शूद्रादपि प्रतिग्रहः कर्तुमाप्नोत्यतः सप्रत्यवरः ॥११०॥

( २ ) **सर्वज्ञनारायणः** । संस्कृतात्मनां द्विजानामेव संभवति नतु तस्य शूद्रे प्रसंगः । प्रतिग्रहस्तु प्रवर्तमानः शूद्रेपि प्रसज्यतएवेति युक्तेर्निन्दितत्वात् । नकेवलं शूद्रात् किंतु अप्यन्त्यजन्मनः चण्डालात् ॥ ११० ॥

---

( ११० ) क्रियते=नियते ( र )

( ३ ) **कुल्लूकः** । अत्रहेतुमाह याजनेति। याजनाध्यापने आपद्यनापदि चोपनयनसंस्कृतात्मनांद्विजातीनामेव क्रियेते प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते तस्मादसौ ताभ्यां गर्हितः ॥ ११० ॥

( ४ ) **राघवानन्दः** । अत्रहेतुमाह याजनेति । संस्कृतात्मनां वेदेनैव संस्कारोद्विजानाम् । शूद्रस्य याजनमपि प्रतिग्रहवन्निन्दितम् ॥ ११० ॥

( ५ ) **नन्दनः** । अत्र कारणमाह याजनाध्यापने नित्यंक्रियेते संस्कृतात्मनात्त्रैवर्णिकानामेव नित्यमापद्यनापद्यपि क्रियते ॥ ११० ॥

( ६ ) **रामचन्द्रः** । जन्मनः निकृष्टजातेः ॥ ११० ॥

**जपहोमैरपैत्येनोयाजनाध्यापनैः कृतम् ॥ प्रतिग्रहनिमित्तंतु त्यागेन तपसैव च ॥ १११ ॥**

( १ ) **मेधातिथिः** । जपेन होमेन चैनः पापमपैति विनश्यति । तेच वक्ष्यति प्रतिग्रहाद्यदेनस्तत्त्यागेन तस्य प्रतिग्रहस्य तपसा वक्ष्यमाणेन मासंगोष्ठे पयःपीत्वेत्यादि ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । जपहोमैर्नतु तदुपात्तवित्तत्यागैरेव अतः सुशकप्रायश्चित्ततापि । त्यागेन प्रतिग्रहोपात्तवित्तस्य । तपसा चान्द्रायणादिना । तपसैवेति क्वचित्पाठः । तद्वित्तस्य त्यागासंभवे तपसापि भूयसाऽपैतीत्यर्थः ॥१११॥

( ३ ) **कुल्लूकः** । एनोग्रहणादसत्प्रतिग्रहयाजनाध्यापनैर्यदुपपन्नंपापंतत्प्रायश्चित्तप्रकरणे वक्ष्यमाणक्रमेण जपहोमैर्नश्यति असत्प्रतिग्रहजनितंपुनः प्रतिगृहीतद्रव्यत्यागेन मासंगोष्ठेपयःपीत्वेत्येवमादिवक्ष्यमाणतपसाऽपगच्छति ॥ १११ ॥

( ४ ) **राघवानन्दः** । प्रायश्चित्तगौरवादपि ताभ्यां प्रतिग्रहोऽवरइत्याह जपेति । एनः पापम् त्यागेन तद्द्रव्यस्य । तपसा गोष्ठे पयःपीत्वेत्येवमादिवक्ष्यमाणेन ॥ १११ ॥

( ५ ) **नन्दनः** । प्रतिग्रहस्तु दानस्य सर्वसाधारणत्वादन्त्यजन्मनः प्रतिलोमादपि क्रियते कर्तुंप्राप्तोभवति तेन प्रतिग्रहः प्रत्यवरइत्याह जपहोमैरपैत्येनइति । प्रायश्चित्तगौरवादप्यसत्परिग्रहः प्रत्यवरइत्यर्थः ॥ १११ ॥

( ६ ) **रामचन्द्रः** । तु पुनः त्यागेन प्रतिगृहीतवस्तुनः त्यागेन वा तपसैव गोष्ठे पयः पीत्वा वक्ष्यमाणतपसा ॥१११॥

**शिलोञ्छमप्याददीत विप्रोऽजीवन्यतस्ततः ॥ प्रतिग्रहाच्छिलः श्रेयांस्ततोप्युञ्छः प्रशस्यते॥११२॥**

( १ ) **मेधातिथिः**। अस्याप्यनुवादोऽर्थवादमेवाह । महदेतदन्याय्यंयत्परद्रव्यग्रहणं तत्र कदाचिदश्रूयमाणस्य ग्रहणेपीदंभवद्दुष्यतोप्येतावता प्रशस्यत्वमत्रभूयः प्रतिग्रहःसमानजातीयः सएवायंप्रकर्षप्रत्ययहेतुर्भवति प्रतिग्रहाच्छिलः श्रेयानिति यतोनिकृष्टमपेक्ष्योत्कृष्टत्वनिमित्तं प्रकर्षमनुभवति नहि भवति चण्डालाद्ब्राह्मणः श्रेयानतः शिलोञ्छयोरपि ग्रहणेप्रशस्यत्वग्रहणं तथापि शिलोञ्छःश्रेयः यद्यपि शिलोञ्छवृत्तिरित्यन्तोत्कृष्टोक्तातथाप्यस्ति प्रतिग्रहेण किंचित्स्यात् [ यतस्त ]‡ त्राधिदेवतानिष्ठि [ त ]‡ भृत्यागतंक्रियावैकल्यमसत्प्रति ग्रहेप्यात्मनि ग्रहउपपन्नेन कुर्वीतयमिति तत्रेतरसंनिहितद्रव्यस्याऽऽत्मनिग्रहोतःशिलोञ्छवृत्तिरपि ननिरवद्या ततोयुक्तंप्रतिग्रहाच्छिलः श्रेयानित्यादि ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । शिलोञ्छमिति । जीवनासंभवे यतस्ततोपि चाण्डालादिक्षेत्रजादियतस्ततोपीत्यन्वयः । लूनशीर्णमनुज्ञातंशिलमिति देवलः । तदेव स्वामिनात्यक्तं तदनुमतिंविनैव गृह्यमाणमुञ्छः एकैककणादानमुञ्छः कनि-

( ‡ ) मे० ८

शादानंतुशिलमित्यन्ये । तद्वृत्तिद्वयजीवनसंभवेसत्प्रतिग्रहोपि न कार्यः । तत्राप्युञ्छेनजीवनसंभवेशिलं न ग्राह्यं तत्रोपरोधसंभवात् ॥ ११२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः स्ववृत्त्याऽजीवन्यतस्ततोपि शिलोञ्छंगृह्णीयान्नतु तत्संभवेऽसत्प्रतिग्रहंकुर्यात् यस्मादसत्प्रतिग्रहाच्छिलः प्रशस्तः मञ्जर्यात्मकानेकधान्योन्नयनंशिलस्ततोप्युञ्छःश्रेष्ठः एकैकधान्यादिगुडकोच्चयनमुञ्छः ॥ ॥ ११२ ॥

( ४ ) **राघवानन्दः** । याजनादिभ्योपि शिलोञ्छे प्रशस्ते इत्यनुवदंस्तयोरपि शिलादुञ्छं प्रशस्ततरमित्याह शिलेति । उञ्छेन जीवंच्छिलंनकुर्यात् । शिलेन जीवन्नध्यापनंनकुर्यात् । अध्यापनेन जीवन्याजनंनकुर्यात् । याजनेन जीवन्प्रतिग्रहंन कुर्यात् । तत्रापि विशुद्धेन जीवन्नविशुद्धंनकुर्यादितिभावः ॥ ११२ ॥

( ५ ) **नन्दनः** । कल्पान्तरमाह शिलोञ्छमप्याददीतेति । अजीवन्नितिपदं यतस्ततोविशिष्टाविशिष्टधनेभ्यः क्षेत्रखलादिषु शिलमुञ्छंवाददीत उत्तरार्धेन यतस्ततः प्रतिग्रहशिलोञ्छानांविशेषउक्तः यतस्ततः प्रतिग्रहादन्यतः प्रतिग्रहाच्छिलःश्रेयान् ततोपि तस्मादपि एतौ शिलोञ्छौ अदत्तादानविषयौ चतुर्थाध्यायोक्तावापद्धर्मवृत्त्यर्थौ उञ्छोधान्यशः आदानं कणिशाद्यर्जनंशिलमिति ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । पूर्वं शिलोञ्छं शिलंवा उञ्छंवा यदाऽपर्याप्तं तदा यतस्ततः महापातकिनोपि उपपातकादिभ्योपि गृह्णीयात् । ततः शिलात् उञ्छः प्रशस्यते ॥ ११२ ॥

**सीदद्भिः कुप्यमिच्छद्भिर्धनेवा पृथिवीपतिः ॥ याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति॥११३॥**

(१) **मेधातिथिः** । अत्र त्रीणि निमित्तानि राजप्रतिग्रहउच्यन्ते। सीदद्भिः कुटुंबावसादंप्राप्तैरापदीत्यर्थः। कुप्यमिच्छद्भिः कुण्डलकटकाद्युष्णीषासनादि काञ्चनादि अन्यद्वाधनंगोहिरण्यादि यज्ञोपयोग्यन्यत्र वा निमित्तैः पृथिवीपतिर्याच्योदेशेश्वरोऽभ्यर्थयितव्यः। अत्र यदुक्तंन राज्ञः प्रतिगृह्णीयादिति सदुष्टराजविषयः प्रतिषेधोद्रष्टव्यः। तथाचोक्तं लुब्धस्योच्छास्त्रवर्तिनइति अदित्सन्नयाचितःसन्दातुंयोनेच्छति सत्यागमर्हति तस्य विषये नवस्तव्यं अथवात्यागोहानिरन्यस्य चानिर्देशाद्धर्महानिंप्राप्नोति ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । सीदद्भिरन्नाभावेन उञ्छस्याप्यलाभात् । तथा कुप्यं कांस्यताम्रादीच्छद्भिस्तदर्थिभिः । तथा धनं बहुसुवर्णादिकोशमिच्छद्भिः । अजीवनदशायामतिरागौत्कल्व्येवा नृपतिर्याच्योनान्यथेत्यर्थः । सच नृपोऽदित्सन्ब्राह्मणैरन्यैरपि त्याज्यः ॥ ११३ ॥

( ३ ) **कुल्लूकः** । स्नातकैर्ब्राह्मणैर्धनाभावाद्धर्मार्थकुटुंबावसादंगच्छद्भिः सुवर्णरजतव्यतिरिक्तंधान्यवस्त्रादिकुप्यं धनंयागाद्युपयुक्तं हिरण्याद्यन्यापत्प्रकरणात्क्षत्रियोप्युच्छास्त्रवर्तीयाचितव्यः स्यात् । यश्च दातुंनेच्छति कृपणत्वेनावधारितः सत्याज्योन याचनीयइत्यर्थः । मेधातिथिगोविन्दराजौ तु त्यागमर्हतीति तस्य देशे नवस्तव्यमितिव्याचक्षाते ॥ ११३ ॥

( ४ ) **राघवानन्दः** । स्नातकैर्हि राज्ञोपि धनं ग्राह्यमित्याह सीदद्भिरिति । बहुवचनलिङ्गाद्बहुतरकुटुम्बैः । कुप्यं सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि । धनपदं सुवर्णादिपरम् । पृथिवीपतिः राजा याच्यः आपत्प्रकरणत्वादुच्छास्त्रवर्त्यपि अन्यथा धर्मजीवनयोर्हानावतीव पातकितेतिभावः । अदित्सन्कार्पण्यात् । त्यागं तस्यराज्ञः देशस्य वा ॥ ११३ ॥

( ५ ) **नन्दनः** । कुप्यंवस्त्रादिकं धनंहिरण्यादिकं त्यागंयाजनादिषु नादेयत्वम् ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । स्नातकैर्विप्रैः सीदद्भिः कुप्यं ताम्रादिधनं इच्छद्भिः पृथिवीपतिर्याच्यःस्यात् अदित्सन् अप्रयच्छन् तर्हित्यागं अर्हति ब्राह्मणैरन्यैस्त्याज्यः तद्देशेन स्थातव्यम् ॥ ११३ ॥

**अकृतंच कृतात्क्षेत्राद्गौरजाविकमेव च ॥ हिरण्यंधान्यमन्नंच पूर्वंपूर्वमदोषवत् ॥ ११४ ॥**

( १ ) **मेधातिथिः** । अकृतमकृष्टंक्षेत्रंप्रशस्यं अजाविकंचभवति परस्परविशेषउक्तार्थःश्लोकोगम्यते ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । अकृतं खिलं । कृतं परिकर्मितं । अन्नं पक्वं । कृतादकृतं । ततः क्रमेणाजादौ । तत्रापि पूर्वंपूर्वं न दोषवत् परिग्रहेऽल्पदोषम् ॥ ११४ ॥

( ३ ) **कुल्लूकः** । अकृतमनुप्तसस्यंक्षेत्रंतत्कृतादुप्तसस्यात्प्रतिग्रहे दोषरहितं तथा गोछागमेषहिरण्यधान्यसिद्धान्नानांमध्यात्पूर्वंपूर्वमदुष्टम् ततश्चैषांपूर्वपूर्वासंभवे परः परोज्ञेयः ॥ ११४ ॥

( ४ ) **राघवानन्दः** । ग्राह्येष्वेतेषु पूर्वपूर्वप्रशस्तिमाह अकृतेति । अकृतमनुप्तसस्यं क्षेत्रं ततोनीवारादेर्ग्रहणम् । कृतादुप्तसस्यात् । अन्नं सिद्धान्नम् । नात्र तर्कापेक्षा किमिव वचनं न करोतीतिन्यायात् ॥ ११४ ॥

( ५ ) **नन्दनः** । अथ ब्राह्मणस्य प्रतिग्रहे द्रव्यविशेषेषु दोषतारतम्यमाह अकृतश्चगृहंक्षेत्रमिति पूर्वं पूर्वमदोषकंपरस्मात्परस्मात्पूर्वंपूर्वंद्रव्यंप्रतिग्रहणेऽल्पदोषम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । अकृतं अनुप्तसस्यंक्षेत्रात् कृतात् हलादिना पूर्वं अदोषभाक् ॥ ११४ ॥

**सप्तवित्तागमाधर्म्यादायोलाभः क्रयोजयः ॥ प्रयोगः कर्मयोगश्च सत्प्रतिग्रहएव च ॥ ११५ ॥**

( १ ) **मेधातिथिः** । दायोन्वयागतंधनं लाभोनिध्यादेः पित्राद्यर्जिताद्वानिबन्धात्संविभागः यद्यपि तत्पित्रादिक्रमायातं तथापि नतदीयशब्देन शक्यमभिधातुं बहुसाधारण्यात् । तथाच निबन्धोद्रव्यमिति स्मृत्यन्तरेपठितं । अथवामित्राच्छ्वशुरगृहाद्वायल्लब्धंप्रीत्या सलाभः क्रयः प्रसिद्धः जयः संग्रामे प्रयोगकर्मयोगौ कुसीदकृषिवाणिज्यान्यतश्च वर्णभेदेनैतेषांधर्म्यत्वं तत्राद्यास्त्रयः सर्वसाधारणाः । जयः क्षत्रियस्य प्रयोगकर्मयोगौ वैश्यस्य सत्प्रतिग्रहो ब्राह्मणस्य विशेषश्रवणेपि प्राग्दर्शनन्यायोविभागः। केचित्क्रयेविवदन्ते तन्नयुक्तंसर्वव्यवहारोच्छेदप्रसङ्गात् । जयंयानबन्धेनापि केचिदिच्छन्ति सर्वविषयंतदयुक्तं द्यूतधनस्य स्मृत्यन्तरेष्वशुद्धित्ववचनात् पार्श्वकद्यूतेत्यत्र तथा परे प्रयोगमव्यापारमाहुः तथाहि प्रयोगोदृश्यते ज्ञानपूर्वप्रयोगइति तत्र शब्दस्य प्रयोगइति गम्यते तथाकर्मप्रयोगः कर्मप्रचारआवर्जनः ॥ ११५ ॥

( २ ) **सर्वज्ञनारायणः** । धर्म्याधर्मानपेताः । दायः पित्रादिधनस्य विभागादिनालभ्यस्य प्राप्तिः । लाभोनिध्यादेरकस्माल्लाभः । क्रयोधनेन प्राक्स्थितेन भूम्यादेः परिग्रहः । जयोयुद्धोद्योगात्प्राप्तिः । प्रयोगः कलावाणिज्यादिना वर्धनम् । कर्मयोगः शिल्पादिकर्मकृत्वा भृतिग्रहः । सत्प्रतिग्रहः शुद्धाच्छुद्धस्य द्रव्यस्य तिलादिव्यतिरिक्तस्य प्रतिग्रहः । अत्राद्यास्त्रयः सर्वेषांवर्णानां ततः परे त्रयः क्षत्रविट्शूद्राणामेवंक्रमादन्त्योविप्रस्यैवेति ॥ ११५ ॥

( ३ ) **कुल्लूकः** । दायाद्याः सप्तधनागमाः । यथाधर्नाधिकारंधर्मादनपेतास्तत्र दायोऽन्वयागतधनं । लाभोनिध्यादेः मैत्र्यादिलब्धस्य च । क्रयःप्रसिद्धः। एते त्रयश्चतुर्णामपि वर्णानांधर्म्याः। जयधनंविजयत्वेन क्षत्रियस्य । धर्म्यः प्रयोगोवृद्ध्यादिधनस्य कर्मयोगश्च कृषिवाणिज्ये एतौ प्रयोगौ वैश्यस्य धर्म्यौ । सत्प्रतिग्रहोब्राह्मणस्य धर्म्यः एवंचैतेषांधर्मत्ववचनादेतदभावेऽन्येष्वनापद्विहितेषु वृत्तिकर्मसु प्रवर्तितव्यं तदभावे चापद्विहितेषु प्रकृतेष्वित्येतदर्थमेतदिहोच्यते ॥ ११५ ॥

( ४ ) **राघवानन्दः** । प्रतिग्रहप्रसंगेन धनोपायान्तरमनुवदन्नुपसंहरति सप्तेति । वित्तागमाधनस्य प्राप्त्युपायाः ध-

म्यांधर्मादनपेताः। दायः पित्रादिधनादेर्विभजनम्। लाभो निध्यादेः। क्रयोस्वधनेन विनिमयेनवा। जयः द्यूतयुद्धाद्यैः। प्रयोगोवृद्ध्यर्थधनस्य। कर्मयोगः कृषिवाणिज्ये। अत्रदायलाभक्रयाश्चातुर्वर्ण्यस्य साधारणाः। जयः क्षत्रियस्यासाधारणः। प्रयोगकर्मयोगौवैश्यस्य। सत्प्रतिग्रहोब्राह्मणस्य। आपदि प्रतिग्रहशङ्कानिरासाय विवरणम्॥ ११५॥

( ५ ) **नन्दनः** । अथ ब्राह्मणस्यानापद्विषयांस्तावदाह सप्तवित्तागमाइति। धर्म्याधर्मयुक्ता अनापद्विषयाइत्यर्थः। दायः प्रसिद्धः। लाभोनिध्यागमादिः। क्रयः क्षेत्रादिक्रयः। जयोवादिषुप्रतिवादिनिग्रहः। प्रयोगः अध्यापनं कर्मयोगोयाजनं सत्प्रतिग्रहोविशुद्धद्विजातिप्रतिग्रहः॥ ११५॥

( ६ ) **रामचन्द्रः**। दायः पित्र्यांशलाभः निध्यादेःप्राक्स्थितस्यभूम्यादेः परिग्रहः। जयोयुद्धयोगादेः प्राप्तिः। प्रयोगः कलावाणिज्यादिना वर्धनम्। कर्मयोगः शिल्पादिकर्म कृत्वा सप्तैते धर्म्या वित्तागमाः वित्तस्यआगमोपायाः॥ ११५॥

**विद्या शिल्पंभृतिः सेवा गोरक्ष्यंविपणिः कृषिः॥ धृतिर्भैक्ष्यंकुसीदंच दशजीवनहेतवः॥ ११६॥**

( १ ) **मेधातिथिः**। सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते तत्र विद्या वेदविद्याव्यतिरेकेण वैद्यकतर्कभूतविषासनविद्यासर्वेषांजीवनार्था न दुष्यति शिल्पंव्याख्यातं भृतिः प्रेष्यकत्वं सेवापरवृत्तानुवृत्तित्वं धृतिः संतोषः दृष्टान्तार्थैवैतत्। अतोयथाविहितवृत्तिभावेनैते जीवनोपायाः संकीर्यन्ते पुरुषमात्रेविषयत्वात्॥ ११६॥

( २ ) **सर्वज्ञनारायणः**। विद्यादयोदश जीवनहेतवः प्राणधारणहेतवः धर्माधर्मसाधारणाः। विद्या विद्यातिशयस्तेन प्रसादादिना धनलाभः। शिल्पं चित्रादिकौशलम्। भृतिः परप्रेषणंकृत्वा मासादिनियतभृतिः। सेवा चाटुकारेण नियतं धनप्राप्तिः। गोरक्षं पशुपालनंकृत्वा यथोक्तपशुभागग्रहणम्। वाणिज्यंकृषिः कर्षणम्। धृतिः प्राप्तेनाल्पेनापि संतोषः। भैक्ष्यं याच्ञालब्धं। कुसीदं वृद्ध्याधान्यादिदानम्। सर्वमेतदापदि यथायोगं वर्णानां तत्र विप्रस्य सेवाश्ववृत्तिरित्यादिना सेवा निन्दिता॥ ११६॥

( ३ ) **कुल्लूकः**। आपत्प्रकरणाज्जीवनहेतवइति निर्देशात् एषांमध्ये यया वृत्त्या यस्यानापदि नजीवनंतया तस्यापद्यभ्यनुज्ञायते यथाब्राह्मणस्य भृतिसेवादि एवंशिल्पादावपि ज्ञेयम्। विद्यावेदविद्या व्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या सर्वेषामापदि जीवनार्थेन दुष्यति शिल्पंगन्धयुक्त्यादिकरणं* भृतिः प्रैष्यभावेन वेतनग्रहणं सेवा पराज्ञासंपादनं गोरक्ष्यंपशुपाल्यं विपणिर्वणिज्या कृषिः स्वयंकृता धृतिः संतोषः तस्मिन्सत्यल्पकेनापि जीव्यते भैक्ष्यंभिक्षासमूहः कुसीदंवृद्ध्याधनप्रयोगः स्वयंकृतोपिइत्येभिर्दशभिरापदि जीवनीयम्॥ ११६॥

( ४ ) **राघवानन्दः**। अनापद्धर्मान् संक्षिप्योक्त्वा आपद्धर्मान्संक्षिपति विद्येति। विद्या तर्कनयादि वेदस्थानापद्धर्मत्वात्। शिल्पं चित्रादिकृतिः। भृतिर्वेतनम्। सेवा परचित्ताराधनम्। विपणिर्वाणिज्यम्। धृतिःसंतोषः धनार्थंव्याजेनापि धृतिमते साधुरितिकृत्वा धनं प्रयच्छन्तो दृश्यन्ते अर्थस्य मूलं निकृतिः क्षमाचेत्युक्तेः। जीवनहेतवः जीवनप्रयोज्याः अतः सर्वपुरुषाणामापद्वृत्तिरिय मनुज्ञायतइति मेधातिथिः॥ ११६॥

( ५ ) **नन्दनः**। अथापद्विषयानर्थलाभानाह विद्याशिल्पंभृतिः सेवेति। विद्या नृत्यवादित्रादि। शिल्पंछत्रादिनिर्माणं। भृतिर्भारोद्वहनं द्विजातिविषये। विपणिर्वाणिज्यं गिरिपर्वतप्ररूढफलमूलविक्रयः। कुसीदंवृद्धिप्रयोगः जीवनहेतवआपदिजीवनमात्र हेतवोनत्वर्थार्जनहेतवः॥ ११६॥

---

* गंधयुक्त्यादिकरणं=लिखनादि ( अ )

( ६ ) रामचन्द्रः । भृतिः भृतकाध्यापनं विपणिः कृषिः धृतिः ग्रामेनाल्पेन संतोषः ॥ ११६ ॥

**ब्राह्मणः क्षत्रियोवापि वृद्धिंनैव प्रयोजयेत् ॥ कामंतु खलु धर्मार्थंदद्यात्पापीयसेऽल्पिकाम् ॥ ११७ ॥**

( १ ) **मेधातिथिः** । धर्मार्थमिति पूर्वोक्तैवा ऽऽपत्तिवृत्तिर्वेदितव्या पापीयसइति वचनाद्धार्मिकादल्पापि न ग्रहीतव्या यदुक्तं अध्यापनतुल्यानि कृषिवाणिज्यकुसीदानि तदापद्गतेन ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । कुसीदमिदानींब्राह्मणक्षत्रिययोरकर्तव्यतया दर्शयति ब्राह्मणइति । अत्यन्तापदि वृद्धिदानमपि पापिष्ठेषु सूतादिष्वत्यन्तापकृष्टेषु कर्तव्यम् । तदापि नातिबहु किंत्वल्पमेव तच्च धर्मार्थं पञ्चमहायज्ञादिधर्मोद्देशेनेत्यर्थः ॥ ११७ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः क्षत्रियोवापि वृद्ध्यादिधनमापद्यपि नप्रयुञ्जीत किन्तु निकृष्टकर्मणा धर्मार्थमनुकल्पितया* वृत्त्या प्रयुञ्जीत ॥ ११७ ॥

( ४ ) **राघवानन्दः** । विप्रक्षत्रिययोरनापदि कुसीदाभावमनुवदन्नापदि तत्र लभ्याल्पतामाह ब्राह्मणइति । धर्मार्थं पापीयसेपापकर्मणे स्वस्मादधमवर्णायवा । आल्पिकां अल्पपरिमाणां अशीतिभागाम् वृद्धिम् ॥ ११७ ॥

( ५ ) **नन्दनः** । कुसीदस्यात्रापदिजीवनमात्रत्वमुक्तंवित्तार्थस्तु कुसीदोन ब्राह्मणक्षत्रिययोरापद्यपुक्तइत्याह ब्राह्मणःक्षत्रियोवापीति । पापीयसः शूद्रादेः अल्पिकामल्पवृद्धियुक्ताम् ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । वृद्धिं वृद्धिजीविकां । न प्रयोजयेत् धर्मार्थे पापीयसे निकृष्टकर्मणे कामं भैक्षिकं खलु दद्यात् अल्पकं स्वल्पकलया ॥ ११७ ॥

**चतुर्थमाददानोपि क्षत्रियोभागमापदि ॥ प्रजारक्षन्परंशक्त्या किल्बिषात्प्रतिमुच्यते ॥ ११८ ॥**

( १ ) **मेधातिथिः** । राज्ञःक्षीणकोशस्य षड्भागग्रहणापवादश्चतुर्थभागोभ्यनुज्ञायते परिशिष्टोऽर्थवादः परमिति क्रियाविशेषणंपरया रक्षयेत्यर्थः ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । यत्रधान्येष्टमोभागोग्राह्यस्तत्र आपदि कोशक्षये रक्षार्थंचतुर्थंभागंगृह्णन् परमत्यर्थं रक्षांकुर्वन्पापादधिककरादानजन्यान्मुच्यते ॥ ११८ ॥

( ३ ) **कुल्लूकः** । इदानींराज्ञामापद्धर्ममाह चतुर्थमिति । राज्ञोधान्यादीनामष्टमइत्याद्युक्तंसआपदि धान्यादेश्चतुर्थमपि भागंकरार्थंगृह्णन्परया शक्त्या प्रजारक्षन्नधिककरग्रहणपापेन न संबध्यते ॥ ११८ ॥

( ४ ) **राघवानन्दः** । राजाप्यापदि धान्यादीनां चतुर्थमंशं गृहीत्वा प्रजाः पालयेदित्याह चतुर्थमिति । किल्बिषादधिकग्रहणजपापात् ॥ ११८ ॥

( ५ ) **नन्दनः** । अथक्षत्रियस्यापदिकरादानप्रकारमाह चतुर्थमाददानोपीति । किल्बिषादादाननिमित्तात् ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । क्षत्रियः चतुर्थं भागं आपदि आददानोऽपि परः शक्तिपरया शक्त्या प्रजारक्षन् ॥ ११८ ॥

**स्वधर्मोविजयस्तस्य नाहवे स्यात्पराङ्मुखः ॥ शस्त्रेण वैश्यान्रक्षित्वा धर्म्यमाहारयेद्बलिम् ॥ ११९ ॥**

( १ ) **मेधातिथिः** । विजयशब्देन विजयफलयुक्तं स्वधर्मतया विधीयते तथाचाहवे नस्यात्पराङ्मुखः भयउप-

* मनुकल्पितयावृत्या=मल्पिकयावृद्ध्या ( अ )

स्थिते पराङ्मुखोयुद्धेनस्यादित्यर्थः । अनेन प्रकारेण प्रजारक्षित्वा वैश्याद्बलिर्हारयितव्यः वैश्यामहाधनाभवन्ति ततस्तथा हरणेनियुक्ताः कृतापराधानहन्यन्ते ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । विजयोयुद्धेपरहिंसा स्वधर्मोऽसाधारणोधर्महेतुः अतोन तत्र दोषः । धर्म्यमनापदि वक्ष्यमाणम् ॥ ११९ ॥

( ३ ) **कुल्लूकः** । कस्मात्पुनरापद्यपि राज्ञोऽपि रक्षणमुच्यतेयस्मात्स्वधर्मइति राज्ञः शत्रुविजयः स्वधर्मोविजयफलं युद्धमित्यर्थः प्रजारक्षणप्रयुक्तस्य यदि कुतश्चिद्भयंस्यात्तदा स युद्धपराङ्मुखोभवेत् एवंच शस्त्रेणवैश्यान्दस्युभ्योरक्षित्वा तेभ्योधर्मादनपेतमाप्तपुरुषैर्बलिमाहारयेत् ॥ ११९ ॥

( ४ ) **राघवानन्दः** । वैश्येतराणांभागमुक्त्वा राज्ञे वैश्यविषयकतद्विशेषमाह स्वधर्मइतिसार्धेन । विजयान्वेषी नपराङ्मुखः स्यात् ११९ ॥

( ५ ) **नन्दनः** । क्षत्रियस्य मुख्या वृत्तिरेषेति श्लोकाभ्यामाह स्वधर्मोविजयस्तस्येति । तस्य स्वधर्मोविजयः तस्मादाहवे पराङ्मुखोन स्यात् ॥ ११९ ॥

( ६ ) **रामचन्द्रः** । धर्म्यं धर्मार्हं बलिं आरभेत ॥ ११९ ॥

**धान्येऽष्टमंविशांशुल्कंविंशंकार्षापणावरम् ॥ कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा॥१२०॥**

( १ ) **मेधातिथिः** । धान्यव्यवहारिणः शूद्राः कर्म उपकरणमुपकारोयेषां न ते किंचिद्दापयितव्याः एवंशिल्पिनः कारवस्तदेवमुक्तंप्राक्शिल्पिनोमासिमासीत्यादि । अधिकभागग्रहणार्थोयंश्लोकः ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । विशांवैश्यानामष्टमं शूद्राणांतु चतुर्थमेव शुल्कं भागम् । विंशत्कार्षापणमिति धान्यान्येषु विंशद्विंशतिकार्षापणमूल्यं तादृशलाभे कार्षापणएकोराज्ञा ग्राह्यइत्यवरःपक्षः संभवेत्वधिकमपिग्राह्यमित्यर्थः । कर्मोपकरणाः कर्मभिर्विश्वमुपकुर्वन्तस्तन्तुवायादयः शूद्राः कारवोवर्णबाह्यानटचित्रकाराद्याः शिल्पिनश्च रथकाराद्यास्तेपि कर्म कृत्वा भृतिल्वेपि विंशतिकार्षापणालाभे कार्षापणावरं शुल्कं दद्युरितिशेषः । त्रिंशत्कार्षापणावरमितिक्वचित्पाठः ॥ १२० ॥

( ३ ) **कुल्लूकः** । कोसौ बलिस्तमाह धान्यइति । धान्ये विंशउपचये वैश्यानामष्टमंभागंशुल्कमाहारयेत् । धान्यानां द्वादशोपि भागउक्तः आपद्ययमष्टमउच्यते अन्यन्तापदि भागुक्तश्चतुर्थोवेदितव्यः । तत्रापि विंशंप्राह्यंतथाहिरण्यादीनांकार्षापणान्तानांविंशतितमंभागंशुल्कंगृह्णीयात्तत्रापि पञ्चाशद्भागआदेयोराज्ञा । पशुहिरण्ययोरित्यनापदि पञ्चाशद्भागउक्तः । आपद्ययंविंशउच्यते । तथा शूद्राः कारवः सूपकारादयः शिल्पिनः तक्षादयः कर्मणैवोपकुर्वन्ति नतु तेभ्यआपद्यपि करोग्राह्य ॥ १२० ॥

( ४ ) **राघवानन्दः** । धर्म्यंबलिमाह धान्यइति । अनापदि विशां धान्यानांद्वादशभागउक्तः हिरण्यादिकार्षापणानांतु पञ्चाशद्भागः अत्रतु तेषां संकोचउक्तः धान्यानामष्टमोभागःषष्ठोद्वादशएववेत्युक्तत्वात् । तत्र विंशंप्रति षष्ठांशग्रहणे सपादाढकत्रयं द्वादशांशग्रहणे किंचिदधिकसार्धाढकं चतुर्थांशग्रहे त्वाढकपञ्चकम् । एवंच सुवर्णादिषु विंशंप्रति तोलकमन्यत्रैवम् । परिचारककारुशिल्पिनां तु विशेषमाह कर्मेति । कर्मोपकरणाः कर्मैव उपकरणंयेषां ते तथा तेषामपि विंशं प्रत्यकेकैःस्वकर्मणि प्रयोक्तव्योऽनापद्यपि ते करदाइत्यर्थः ॥ १२० ॥

( ५ ) **नन्दनः** । विंशांकार्षापणावरं यः शुल्कोधान्यव्यतिरिक्तेषु विंशोभागः पूर्वमुक्तः सपणः कार्षापणावरः कार्षा-

पणान्यूनतरश्चेन्नग्राह्यः । कर्मोपकरणाः कर्मोपकारिणः । करार्थकर्मैव शूद्रादीन्कारयेन्नार्थं दापयेदित्यर्थः ॥ १२० ॥

( ६ ) रामचन्द्रः । धान्ये विशां अष्टमं शुल्कं अष्टमं भागं विंशं अपरं वा कर्मोपकरणाः कर्मकर्तुं शूद्रायोग्याः ॥ १२० ॥

**शूद्रस्तु वृत्तिमाकांक्षन्क्षत्रमाराधयेद्यदि ॥ धनिनंवाप्युपाराध्य वैश्यंशूद्रोजिजीविषेत् ॥ १२१ ॥**

( १ ) मेधातिथिः । शूद्रस्तु वृत्तिमाकांक्षेत्तदा क्षत्रमाराधयेत् वृत्तिग्रहणाज्जीविकार्थमेवक्षत्राराधनं न धर्मार्थं ब्राह्मणाराधनंतूभयार्थमपीत्युक्तंभवति एवंधनिनंवैश्यमाराध्य जीवेत् ॥ १२१ ॥

( २ ) सर्वज्ञनारायणः । यदि वृत्तिमाकांक्षन्भवेच्छूद्रस्तदा क्षत्रमाराधयेदित्यन्वयः ॥ १२१ ॥

( ३ ) कुल्लूकः । शूद्रोब्राह्मणशुश्रूषयाऽजीवन्यदि वृत्तिमाकांक्षेत्तदा क्षत्रियंपरिचर्य तदभावे धनिनंवैश्यंपरिचर्यजीवितुमिच्छेत् । द्विजातिशुश्रूषणासामर्थ्येतु प्रागुक्तानि कर्माणि कुर्यात् ॥ १२१॥

( ४ ) राघवानन्दः । ब्राह्मणशुश्रूषोः शूद्रस्य धनाकांक्षायां तदुपायमाह शूद्रास्त्विति । यदिवा धनिनं वैश्यमित्यन्वयः ॥ १२१ ॥

( ५ ) नन्दनः । अथ शूद्रस्यापदि वृत्तिमाह शूद्रस्तुवृत्तिमाकांक्षेदिति । क्षत्रमाराधयेदपि क्षत्रमप्याराधयेत् ॥१२१ ॥

( ६ ) रामचन्द्रः । शूद्रस्तु वृत्तिमाकांक्षन्यदिक्षत्रमाराधयेत् । धनिनंवावैश्यं उपाराध्य जिजीविषेत् ॥ १२१ ॥

**स्वर्गार्थमुभयार्थंवा विप्रानाराधयेत्तु सः ॥ जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥ १२२ ॥**

( १ ) मेधातिथिः । आराधयेदित्युक्तं तदाह जातब्राह्मणशब्दस्य ब्राह्मणीयमिति यदस्यविशिष्टंकर्मैषशब्दोभवति तदासौ कृतकृत्यः कृतार्थोवेदितव्यः । अथवा जातब्राह्मणव्यपदेशस्येति व्याख्येयं ब्राह्मणश्रितोऽयमिति यदस्य व्यपदेशोजायते ॥ १२२ ॥

( २ ) सर्वज्ञनारायणः । [ उभयार्थं वृत्त्यर्थं स्वर्गार्थंच । विप्रानेवाभिवाचयेदितिकचित्पाठः । ]* अभिवादनं सेवा । जातब्राह्मणशब्दस्य ब्राह्मणदासोयमितिजातप्रसिद्धेः । सा ब्राह्मणदासत्वेन प्रसिद्धिः ॥ १२२ ॥

( ३ ) कुल्लूकः । स्वर्गप्राप्त्यर्थंस्वर्गस्ववृत्तिलिप्सार्थंवा ब्राह्मणानेव शूद्रः परिचरेत् । तस्माज्जातोब्राह्मणाश्रितोयमिति शब्दोयस्य शाकपार्थिवादित्वात्समासः । सास्य शूद्रस्य कृतकृत्यता तद्व्यपदेशतयाऽसौ कृतकृत्योभवति ॥ १२२ ॥

( ४ ) राघवानन्दः । तस्य यद्यनापदि चेद्द्विजशुश्रूषणमेवोभयत्र सुखदमित्याह स्वर्गार्थमिति । सशूद्रः । उभयार्थं-दृष्टार्थं जातब्राह्मणशब्दस्य जातो ब्राह्मणाश्रितोयमितिशब्दोयस्य सतथा तस्य शाकपार्थिवादित्वात्समासः । अतः सा शुश्रूषा तादृशीशब्दप्रवृत्तिर्वा कृतकृत्यता कर्तव्यपर्यन्तता दास्यायैव हि सृष्टोसौ ब्राह्मणस्येत्युक्तेः ॥ १२२ ॥

( ५ ) नन्दनः । उभयार्थमैहिकपारत्रिकार्थमाराधये । जातब्राह्मणशब्दस्य दास्यादितिशेषः । ब्राह्मणाराधनेन ब्राह्मणवद्भवतीत्यर्थः ॥ १२२ ॥

( ६ ) रामचन्द्रः । उभयार्थं स्वर्गार्थं भूमौसुखार्थंच शूद्रोजातब्राह्मणशब्दस्य जातब्राह्मणव्यपदेशस्येत्यर्थः । ब्राह्मणाश्रितोयमिति यदस्य व्यपदेशोजायते ब्राह्मणस्यदासीयं सासेवा अस्य शूद्रस्य कृतकृत्यता ॥ १२२ ॥

**विप्रसेवैव शूद्रस्य विशिष्टंकर्मकीर्त्यते ॥ यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ १२३ ॥**

---

( १२२ ) जातब्राह्मणशब्दस्य=यातुब्राह्मणसेवास्य ( ल )  *( सर्व०२ )

( १ ) **मेधातिथिः** । ब्राह्मणशुश्रूषैव मुख्यः शूद्रस्य धर्मः ततोयदन्यद्व्रतोपवासादिकुरुते तदस्यनिष्फलं नतु दानपाकयज्ञादीनामस्य प्रतिषेधः प्रत्यक्षविधानात् इतरप्रतिषेधोब्राह्मणशुश्रूषास्तुत्यर्थः ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । यदतोन्यदेतद्विनाकुरुते ॥ १२३ ॥

( ३ ) **कुल्लूकः** । यतएवमतःविप्रेति । ब्राह्मणपरिचर्यैव शूद्रस्य कर्मान्तरेभ्यः प्रकृष्टंकर्मशास्त्रेऽभिधीयते यस्मादेतद्यतिरिक्तंयदसौ कर्म कुरुते तदस्य निष्फलंभवतीति पूर्वस्तुत्यर्थंनत्वन्यनिवृत्तये पाकयज्ञादीनामपि तस्य विहितत्वात् ॥ ॥ १२३ ॥

( ४ ) **राघवानन्दः** । तामेवद्रढयन्नन्यदस्य निषेधति विप्रसेवेति । निष्फलं दृष्टधनादिसंपत्तिरपि नपरलोकफलहेतुः ॥ १२३ ॥

( ५ ) **नन्दनः** । एतदेव प्रपञ्चयति विप्रसेवैवशूद्रस्येति ॥ १२३ ॥

**प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुंबाद्यथार्हतः॥ शक्तिंचावेक्ष्य दाक्ष्यंच भृत्यानांच परिग्रहम् ॥१२४॥**

( १ ) **मेधातिथिः** । द्विजातीनामयंधर्मस्तस्य वृत्तिः कल्पनीया शुश्रूषमाणस्य स्वकुटुंबादिति पुत्रवदसौपालनीयः आत्मीयांशक्तिमवेक्ष्य दाक्ष्यंच तस्य कार्येषु योगं भृत्यानांच पुत्रदाराणां तदीयानांपरिग्रहं कियंतोस्यभर्तव्याइत्येतदपेक्ष्य सर्वेषांभरणंकर्तव्यम् ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । तैर्द्रव्यैःस्वकुटुम्बार्थधनात् । शक्तिं कर्मसु सामर्थ्यम् । दाक्ष्यमुत्साहम् । भृत्यानां भरणीयानां पुत्रादीनां परिग्रहमियतास्येतिविशिष्टसंख्याभरणीयत्वम् ॥ १२४ ॥

( ३ ) **कुल्लूकः** । तस्य परिचारकशूद्रस्य परिचर्यासामर्थ्यकर्मोत्साहंपुत्रदारादिभर्तव्यपरिमाणंचावेक्ष्य तैर्ब्राह्मणैः स्वगृहादनुरूपाजीविका कल्पनीया ॥ १२४ ॥

( ४ ) **राघवानन्दः** । तादृशस्य शूद्रस्य विप्रदत्तंदेहभरणमनुजानंस्तंनियमयति प्रकल्प्येतिद्वाभ्याम् । तैर्विप्रैः । वृत्तिर्वस्त्राच्छादनादिका । स्वकुटुम्बात् स्वगृहात् । यथार्हतः यद्यदर्हति न तदतिक्रमतः । शक्तिं परिचर्यासामर्थ्यम् । दाक्ष्यं कर्मसामर्थ्यम् । परिग्रहं पुत्रादिसंख्याम् ॥ १२४ ॥

( ५ ) **नन्दनः** । तैर्ब्राह्मणादिभिः भृत्यानांभर्तव्यानाम् ॥ १२४ ॥

( ६ ) **रामचन्द्रः** । तैः द्विजैः स्वकुटुम्बात्तस्य यथार्हतोवृत्तिःप्रकल्प्या ॥ १२४ ॥

**उच्छिष्टमन्नंदातव्यंजीर्णानि वसनानिच॥ पुलाकाश्चैव धान्यानांजीर्णाश्चैवपरिच्छदाः॥ १२५ ॥**

( १ ) **मेधातिथिः** । उच्छिष्टशब्दोव्याख्यातार्थः अतिथ्यादिभुक्तशिष्टमाश्रिताय शूद्राय दातव्यं एवंवासांसि जीर्णानि धौतानि शुक्लानि पुलकाअसारधान्यान्येवंपरिच्छदाः शय्यासनादयः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । उच्छिष्टं पाकभाण्डावशिष्टं नतु भुक्तोच्छिष्टंनिषिद्धत्वात् । पुलाकाः तुच्छधान्यासारभूतानि धान्यानि विक्रीय जीवितुंजीर्णाः परिच्छदाः ॥ १२५ ॥

( ३ ) **कुल्लूकः** । तस्मै मदुताश्रितशूद्राय भुक्तावशिष्टान्नंब्राह्मणैर्देयं । एवंच न शूद्रायमतिंदद्यान्नोच्छिष्टमित्यनाश्रितशूद्रविषयमवतिष्ठते । तथाजीर्णवस्त्रासारधान्यजीर्णशय्यापरिच्छदाअस्मैदेयाः ॥ १२५ ॥

( ४ ) **राघवानन्दः** । किंच उच्छिष्टमिति । जीर्णानि स्वभोगेन । पुलाकाः असारधान्यानि । परिच्छदाः शय्यासनादयोपि जीर्णाः न शूद्राय मतिंदद्यादित्यादिकंत्वनाश्रितशूद्रविषयम् ॥ १२५ ॥

( ५ ) **नन्दनः** । न शूद्रायमतिंदद्यान्नोच्छिष्टमिति यदुक्तंतस्यापद्विषये प्रतिप्रसवोयदुच्छिष्टमन्नंदातव्यमिति । पुलाकास्तुच्छधान्यानि । परिच्छदाआसनादयः ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । धान्यानांपुलाकाः असारधान्यानि चूर्णानि ॥ १२५ ॥

**नशूद्रे पातकंकिंचिन्नच संस्कारमर्हति ॥ नास्याधिकारोधर्मेस्ति न धर्मात्प्रतिषेधनम् ॥ १२६ ॥**

( १ ) **मेधातिथिः** । सर्वोयमनुवादश्लोकः । यदस्याहत्यशृङ्ग्याहिकया नप्रतिषिद्धं यथाहिंसास्तेयाद्यनादृतवर्णविशेषंसामान्यशास्त्रप्रतिषिद्धं न तद्यतिक्रमादस्य पापमुत्पद्यते श्रुतमेवास्य शब्देन यथाहिंसास्तेयादिस्तत्रास्य भवत्येवदोषः नच संस्कारमुपनयनलक्षणमर्हति तदुक्तं त्रयोवर्णाद्विजातयइति । एवंनास्याधिकारोधर्मेस्ति स्नानोपवासदेवतार्चनादौ नास्यनित्योधिकारोस्ति अकरणे न प्रत्यवैति न धर्मात्प्रतिषेधनं येषु स्नानोपवासव्रतादिषु नित्याधिकरोनास्त्यकरणे प्रत्यवायाभावो ऽथनिषेधोनास्ति तादृशेभ्यो धर्मेभ्योन प्रतिषेधः । नचेदृशादस्य प्रतिषेधोऽतः शिष्टप्रतिषिद्धत्वादभ्युदयकामस्य तदनुष्ठाननंयुज्यते । तदुक्तं निवृत्तिस्तुमहाफला एवंलशुनादिभक्षणनिवृत्तिरप्यभ्युदयायास्य वेदितव्या ॥ सामान्यशास्त्रविहितंनिवृत्तिस्तु महाफलेति ॥ अतोनधर्मात्प्रतिषेधनमिति यत्रारम्भः ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः** । पञ्चयज्ञादिकरणरूपाद्धर्मात्प्रतिषेधनम् ॥ १२६ ॥

( ३ ) **कुल्लूकः** । लशुनादिभक्षणेन शूद्रे न किंचित्पातकंभवति नतु ब्रह्मवधादावपि अहिंसासत्यमित्यादेश्चातुर्वर्ण्यसाधारणत्वेन विहितत्वात् । नचाप्युपनयनादिसंस्कारमर्हति नास्याग्निहोत्रादिधर्मेऽधिकारोस्ति अविहितत्वात् । नच शूद्रविहितात्पाकयज्ञादिधर्मादस्य निषेधः । एवंचास्य सर्वस्य सिद्धार्थत्वादयंश्लोकउत्तरार्थोनुवादः ॥ १२६ ॥

( ४ ) **राघवानन्दः** । शूद्रस्य विप्रसेवेति पुनःपुनर्द्रढयन्प्राप्तमर्थवादतयाऽनुवदति नेतिचतुर्भिः । पातकं सूनादिकृतं नतु विप्रवधादिकृतं अहिंसासत्यमस्तेयमित्यादिचातुर्वर्ण्यसाधारणस्योक्तत्वात् । न धर्मात्पञ्चयज्ञादेः ॥ १२६ ॥

( ५ ) **नन्दनः** । पातकंविहितकर्माननुष्ठानप्राप्तःप्रत्यवायः शूद्रे नास्ति तस्याऽविहितधर्मत्वात् । संस्कारंनिषेकादिकं श्रौते धर्मेऽधिकारोनास्ति धर्मात्पाकयज्ञादेः ॥ १२६ ॥

( ६ ) **रामचन्द्रः** । शूद्रेऽभक्ष्यभक्षणेकृते किंचित्पातकंन ॥ १२६ ॥

**धर्मेप्सवस्तु धर्मज्ञाः सतांवृत्तमनुष्ठिताः ॥ मन्त्रवर्ज्यंन दुष्यन्ति प्रशंसांप्राप्नुवन्ति च ॥ १२७ ॥**

( १ ) **मेधातिथिः** । एतदेवाह धर्ममाप्तुमिच्छन्तोऽभ्युदयकामाः सतांसाधूनांधर्ममनुष्ठिताः समाश्रिताः मन्त्रवर्जेन दुष्यन्ति अतस्तानेकाहोपवासदेवतार्चनगुरुब्राह्मणनमस्कारादि सनांवृत्तमाचरन्तोन दुष्यन्ति प्रशंसाफलंच प्राप्नुवन्ति न पुनरेतन्मन्तव्यं यानिसमन्त्रकाणि ब्राह्मणादीनां कर्माणि दर्शपौर्णमासादीनि तानि मन्त्रवर्जंशूद्रस्य न दुष्यन्तीति । यतः समन्त्रेषूत्पन्नेषु मन्त्ररहितेनानुष्ठानमशाब्दंस्यात् मन्त्रवर्जमित्येतस्य दर्शितोविषयः । तथाच भगवान्व्यासः ॥ नचेह शूद्रः पततीतिनिश्चयोनचापिसंस्कारमिहार्हतीति ॥ स्मृतिप्रयुक्तंतुन धर्ममश्नुते नचास्य धर्मे प्रतिषेधनंस्मृतमिति ॥ एतदपि यथाविहितानुवाद्येव । लशुनसुरापानादेर्न पतति संस्कारानर्हतोक्तैव उक्तंचानुपनीतत्वाच्छ्रुतिविहितधर्माभावे स्मृतिविषये सामान्यविहिताधर्मा यथोक्तप्रकारास्तेनास्य प्रतिषिध्यन्ते । तथाच स्मृत्यंतरं पाकयज्ञैः स्वयंयजेत अनुज्ञातोस्य नमस्कारोमन्त्रइति । ये पुनराहुः आवसथ्याधानपार्वणवैश्वदेवान्नपाकयज्ञादिषु शूद्राणांपाक्षिकोधिकारस्तेषामभिप्रायंनविद्मः आवसथ्याधानंतावद्गृह्यकारैराम्नातंत्रैवर्णिकोद्देशेनैव मन्वादिभिश्चनैवमाम्नातं तथा केवलंवैवाहिकाग्नौ कुर्वीतगृह्यंकर्मेति तत्रनैवाम्नातं कुतः शूद्रस्याधानं आथपाकयज्ञविधयाधानाक्षपस्तदपि न लौकिकाग्नौ वैश्वदेवोभविष्यति यावद्वचनंवाचनिकं

नान्यदाक्षिमुमलंविवाहाग्नावित्यत्र च प्रदर्शितं पार्वणशब्देन च यद्यामावास्यंश्राद्धमुच्यते तदभ्यनुजानीमः अष्टकापार्वणश्राद्धवैश्वदेवानांविहितत्वात् । अथ दर्शपौर्णमासौ तदपाकृतम् ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः** । तदेवाह धर्मेप्सवइति । मंत्रवर्जनसोमयागादिकर्मइहकामयज्ञकरणे प्रशंसां प्राप्नुवन्ति धर्मंच लभन्तइत्यपि द्रष्टव्यम् । पञ्चमहायज्ञकरणे न दोषइत्युक्तम् । सतांवृत्तमनुष्ठिताः सतांवृत्तं लक्षीकृत्योद्युक्ताः । प्रशंसां सच्छूद्रताम् ॥ १२७ ॥

( ३ ) **कुल्लूकः** । ये पुनः शूद्राः स्वधर्मवेदिनोधर्ममात्रिकामास्त्रैवर्णिकानामाचारमनिषिद्धमाश्रितास्ते ॥ नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेदिति याज्ञवल्क्यवचनान्नमस्कारमन्त्रेण मन्त्रान्तररहितंपञ्चयज्ञादिधर्मान्कुर्वाणान प्रत्यवयन्ति ख्यातिंच लोकेलभन्ते ॥ १२७ ॥

( ४ ) **राघवानन्दः** । अतएवाह धर्मेति । धर्मेच्छवोधर्मैकर्तुकामाः । धर्मज्ञाः पुराणादिद्वारा धर्मानुष्ठानज्ञाः । तथाच याज्ञवल्क्यः ॥ नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत् ॥ सतांधर्मं ब्राह्मणाद्यनुष्ठितं पञ्चयज्ञादिरूपम् । मन्त्रवर्जं नमोतिरिक्तमन्त्रवर्जम् ॥ १२७ ॥

( ५ ) **नन्दनः** । यद्यप्येवंतथापि धर्मेप्सवोधर्मज्ञाः सतांवृत्तिनिषेकादिसंस्कारंमन्त्रवर्जितमनुष्ठिताअनुष्ठितवन्तः शूद्रानदुष्यन्ति ॥ १२७ ॥

( ६ ) **रामचन्द्रः** । धर्मेप्सवः धर्मज्ञाः मन्त्रवर्जं अध्ययनवर्जं न दुष्यन्ति ॥ १२७ ॥

## यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ॥ तथा तथेमंचामुंच लोकंप्राप्नोत्यनिन्दितः ॥ १२८ ॥

( १ ) **मेधातिथिः** । उक्तार्थःश्लोकः ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । तत्रयुक्तिमाह यथेति । अनसूयकोऽद्विजद्वेष्टा ॥ १२८ ॥

( ३ ) **कुल्लूकः** । परगुणानिन्दकः शूद्रोयथायथाद्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा जनैरनिन्दितइह लोकउत्कृष्टः स्मृतः स्वर्गादिलोकंच प्राप्नोति ॥ १२८ ॥

( ४ ) **राघवानन्दः** । अनिन्दितो [ लोकैरितिशेषः ]‡ ॥ १२८ ॥

( ५ ) **नन्दनः** । सद्वृत्तानुष्ठानस्य फलमाह यथायथाहिसद्वृत्तमिति ॥ १२८ ॥

( ६ ) **रामचन्द्रः** । तथातथा इमं लोकं अमुं परलोकं अनिन्दितं प्राप्नोति ॥ १२८ ॥

## शक्तेनापि हि शूद्रेण न कार्योधनसंचयः ॥ शूद्रोहिधनमासाद्य ब्राह्मणानेवबाधते ॥ १२९ ॥

( १ ) **मेधातिथिः** । शक्तेनापि कृष्यादिकर्मणा धनसंचयः शूद्रेण न कर्तव्यस्तत्रहेतुस्वरूपमर्थवादमाह शूद्रोधनंबह्वासाद्य स्वीकृत्य ब्राह्मणानेव बाधते । का पुनर्ब्राह्मणानांबाधा महाधनत्वादत्यर्थं ब्राह्मणान्प्रतिग्राहयेत् शूद्रप्रतिग्रहश्चतेषांप्रतिषिद्धः तत्रनिमित्तभावमापद्यमानोदुष्येत् एतच्च न विहितंकुर्वतः कर्मदोषाशङ्का तस्माद्ब्राह्मणान्परिचरेदित्येषैवबाधा ॥ १२९ ॥

( २ ) **सर्वज्ञनारायणः** । शक्तेनार्जनसमर्थेनापि ॥ १२९ ॥

( ३ ) **कुल्लूकः** । धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गसंवर्धनपञ्चयज्ञाद्युचितादधिकबहुधनसंचयोन कर्तव्यः ।

---

‡ ( न )

यस्माच्छूद्रोधनंप्राप्य शास्त्रानभिज्ञत्वेन धनमदात् शुश्रूषायाश्चाकरणात् ब्राह्मणानेव पीडयतीत्युक्तस्यानुवादः ॥ १२९ ॥

( ४ ) **राघवानन्दः** । शक्तेनापि तेन धनोद्यमोन कार्यः । तत्र हेतुः शूद्रोहीति । बाधते धनगर्वितः ॥ १२९ ॥

( ६ ) **रामचन्द्रः** । शक्तेन समर्थेन ॥ १२९ ॥

**एते चतुर्णांवर्णानामापद्धर्माः प्रकीर्तिताः ॥ यान्सम्यगनुतिष्ठंतोव्रजन्तिपरमांगतिम् ॥ १३० ॥**

( १ ) **मेधातिथिः** । सम्यगापद्धर्मानुष्ठानात्परमागतिः प्राप्यते शरीररक्षणार्थद्विहितातिक्रमोन भवतीति युक्ताशुभफलप्राप्तिः नापद्गतेनासत्प्रतिग्रहादौ विचिकित्सितव्यमिति शास्त्रन्यायानुवादः ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः** । आपद्धर्माः प्रसंगायाताः । सम्यगापत्कालएव ॥ १३० ॥

( ३ ) **कुल्लूकः** । अमी चतुर्णांवर्णानामापद्यनुष्ठेयाधर्माउक्तायान्सम्यगाचरन्तोविहितानुष्ठानान्निषिद्धानाचरणाच्च निष्पापतया ब्रह्मज्ञानलाभेन परमांगतिंमोक्षलक्षणांलभते ॥ १३० ॥

( ४ ) **राघवानन्दः** । उपसंहरति एतइति । यानापद्धर्मान् । सम्यक् तत्कालानुरूपेण । परमां मोक्षाख्याम् । लब्धविप्रजन्मानइति शेषः ॥ १३० ॥

( ५ ) **नन्दनः** । प्रकरणार्थफलोपपादनेनोपसंहरति एतेचतुर्णांवर्णानामिति ॥ १३० ॥

( ६ ) **रामचन्द्रः** । चतुर्णांवर्णानां उक्तः चातुर्वर्ण्यः धर्मविधिः ॥ १३० ॥

इतिश्रीरामचन्द्रविरचितटीकायां दशमोध्यायः

**एषधर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्तितः ॥ अतः परंप्रवक्ष्यामि प्रायश्चित्तविधिंशुभम् ॥ १३१ ॥**

**इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥**

( १ ) **मेधातिथिः** । पाठादेवसिद्धार्थोयमिति ॥ १३१ ॥

मान्याकापि मनुस्मृतिस्तदुचिता व्याख्या हि मेधातिथेः सालुप्तैव विधेर्वशात्क्वचिदपि प्राप्यंनयत्पुस्तकं ॥ क्षोणीन्द्रोमदनः सहारणसुतोदेशान्तरादाहृतंजीर्णोद्धारमचीकरत्ततइतस्तत्पुस्तकैर्लेखितैः ॥ इतिश्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्येदशमोध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥

( २ ) **सर्वज्ञनारायणः** । चातुर्वर्ण्यस्य तद्भवस्य संकरस्यच । कीर्तितोदशभिरध्यायैः ॥ १३१ ॥

मनुवृत्तौ जातिविवेकापद्धर्माधिकारनामा दशमोध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥

( ३ ) **कुल्लूकः** । अयंचतुर्णांवर्णानामाचारः समग्रः कथितः अतऊर्ध्वंप्रायश्चित्तानुष्ठानंशुभमभिधास्यामि ॥ १३१ ॥

इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां दशमोऽध्यायः ॥ १० ॥

( ४ ) **राघवानन्दः** । वृत्तवर्तिष्यमाणयोः संबन्धंवक्तुं वृत्तमनूद्य वर्तिष्यमाणं प्रतिजानीते एषइति । शुभं शोभकम् वध्यघातकसंगतिः ॥ १३१ ॥ इति मन्वर्थचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥ छ ॥

( ५ ) **नन्दनः** । पूर्वोक्तंसर्वमर्थमुपसंहृत्यार्थान्तरंप्रस्तौति एषधर्मविधिःकृत्स्नइति । उत्तरे अध्याये प्रायश्चित्तप्राधान्यस्य वक्ष्यमाणत्वात्सत्यप्यर्थान्तरोपन्यासे प्रायश्चित्तंवक्ष्यामीत्युक्तम् ॥ १३१॥

इतिश्रीनन्दनविरचिते मानवव्याख्याने दशमोध्यायः ॥ छ ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ एकादशोऽध्यायः प्रारभ्यते ॥

**सान्तानिकंयक्ष्यमाणमध्वगंसर्ववेदसम् ॥ गुर्वर्थंपितृमात्रर्थंस्वाध्यायार्थ्युपतापिनः ॥ १ ॥**

( १ ) **मेधातिथिः** । श्लोकद्वयेन च वाक्यार्थसमाप्तिः स्नातकविशेषेग विशिष्टोदानार्थोविधीयते । सान्तनिकादिभ्योधर्मार्थंभिक्ष्यमाणेभ्योनिःस्वेभ्यो विद्याविशेषेणदातव्यमिति । संप्रतिसंप्रदानविशेषणत्वे धर्मभिक्षुकशब्दस्याधिकार संपादनमपि प्रतीयते एवंनैवं विशिष्टायाश्चैवनिमित्तमिति नैमित्तिकोदानाधिकारश्चोच्यते । संतानं प्रजाप्रयोजनमस्येति सान्तानिकोविवाहार्थी भण्यते तत्र हि धनमुपयुज्यते भवतिचपारंपर्येण संतानप्रयोजनः धर्मग्रहणात्कामतस्तु प्रवृत्तानामिति द्वितीयादिविवाहप्रवृत्तौ न नियमतोदेयमिति। एवंवक्ष्यमाणो नित्ययज्ञाग्निष्टोमाद्यर्थोवृत्तिवचनंयः करोति सवेदितव्यः। अध्वगः क्षीणपथ्योदनः सार्ववेदसोविश्वजिति सर्वस्वं दक्षिणात्वेन दत्तवान्नतुप्रायश्चित्ताद्यर्थं। स्वाध्यायार्थी यद्यपि ब्रह्मचारिणोऽध्ययनंविहितं भिक्षाभोजनंच तथापि वस्त्रार्थोपयोगि धनंदातव्यं अथवा गृहीतवेदस्य तदर्थजिज्ञासा भैक्षभुजोपि । उपतापीरोगो स्नातकग्रहणं प्रशंसार्थं गुर्वर्थस्वाध्यायार्थत्वंप्रायः स्नातकविषयेविद्यते । ब्रह्मचारिणोगुर्वर्थंकर्तव्यमितिविहितं निश्चित्य निर्वचनेभ्यो विद्याविशेषतो बहुविद्याय बहुस्वल्पविद्यायाल्पमिति । ननु च सर्वमेवेदमप्रकृतंप्रक्रियते एवंहि प्रतिज्ञातम् अतः परंप्रवक्ष्यामि प्रायश्चित्तविधिशुभमिति नैषदोषआश्रमधर्मत्वादस्य प्रकरणस्य प्रायश्चित्तानामतुल्यरूपतया सहोपदेशस्तत्रप्रायश्चित्तनिमित्तत्वादस्यार्थस्यप्रथममभिधानं दानंदेयमित्युक्तंदानशब्दश्चकर्मसाधनः किंतद्देयमित्यपेक्षायामुत्तरश्लोकः ॥ १ ॥ २ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तंप्रक्रमते सांतानिकमिति । प्रायश्चित्तप्रक्रमेपि दानादेः प्रक्रमाभिधानं तद्रूपस्यापि प्रायश्चित्तस्य सद्भावात्तद्विशेषप्रतीत्यर्थम् । सांतानिकं संतानार्थं विवाहार्थमिच्छन्तंधनार्थमागतम् । यक्ष्यमाणं यागार्थिनम् । अध्वगमध्वनि क्षीणवृत्तिम् । सार्ववेदसं तत्तत्क्रतुविशेषेषु दत्तसर्वधनं वेदोधनम् । गुर्वर्थं गुरुदक्षिणादानार्थिनम् । स्वाध्यायार्थं जपसिद्ध्यर्थं वृत्त्यर्थम् । उपतापी रोगी ॥ १ ॥

( ३ ) **कुल्लूकः** । नन्वतः परंप्रवक्ष्यामि प्रायश्चितविधिशुभमिति प्रायश्चित्तस्य वक्तव्यतया प्रतिज्ञातत्वात्सान्तानिकादिभ्योदेयमित्यादेः कः प्रस्तावउच्यते दानेनाकार्यकारिणइति प्रागुक्तत्वाद्दानेन वधनिर्णकंसर्पादीनामशक्नुवन्नित्यादेश्च वक्ष्यमाणत्वात्प्रकृष्टप्रायश्चित्तात्मकदानपात्रोपन्यासः प्रकृतोपयुक्तएव । वर्णाश्रमधर्मादिव्यतिरिक्तप्रायश्चित्तादिनैमित्तिकधर्मकथनार्थत्वाच्चाध्यायस्यान्यस्यापि नैमित्तिकधर्मस्यात्रोपन्यासोयुक्तः सन्तानप्रयोजनत्वाद्विवाहस्य । सान्तानिकोविवाहार्थी । यक्ष्यमाणोऽवश्यकर्तव्यज्योतिष्टोमादियागंचिकीर्षुः। अध्वगः पान्थः सर्ववेदसः कृतसर्वस्वदक्षिणविश्वजिद्यागः विद्यागुरोर्ग्रासाच्छादनाद्यर्थः प्रयोजनंयस्यसगुर्वर्थः एवंपितृमात्रर्थावपि स्वाध्यायार्थी स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी उपतापीरोगी एतान्नवब्राह्मणान्धर्मभिक्षाशीलान्स्नातकाञ्जानीयात् । एतेभ्योनिर्धनेभ्योगोहिरण्यादिदीयतइति दानंविद्याविशेषानुरूपेण दद्यात् ॥ १ ॥ २ ॥

( ४ ) **राघवानन्दः** । ननु प्रायश्चित्तप्रतिज्ञायां दानविचारोऽकाण्डताण्डवितइतिचेन्न यतः दानेनाकार्यकारिणः अन्नादे भ्रूणहा मार्ष्टि तरति ब्रह्महत्यां योश्वमेधेन यजते दानेन वधनिर्णेकमित्यादिवक्ष्यमाणवचनजातेन दानादेः प्रायश्चित्तान्तर्गतत्वेन तत्पात्राणि ज्ञापयन्नादौ दानमाह सान्तानिकमितिचतुर्भिः । सान्तानिकं प्रजार्थं विवाहोद्योगिनम् । यक्ष्यमाणं ज्योतिष्टोमादिकर्तारम् । अध्वगं तीर्थयात्रिणम् । सर्ववेदसं कृतसर्वस्वदक्षिणविश्वजिद्यागम् । गुर्वर्थं विद्यागुरोर्ग्रासाच्छादनादि प्रयोजनं तं*दर्थं समावर्तनकालदक्षिणार्थंवा । पितृमात्रर्थं पितृमातृपोषणं प्रयोजनं यस्य तम् । स्वाध्यायार्थी तत्कालीनान्नाद्यर्थी उपतापीरोगी चतौ ॥१॥

( ५ ) **नन्दनः** । एवमापद्धर्माउक्ताः इदानीमापन्नेषु भिक्षितैरप्रत्याख्येयान्पात्रविशेषान् श्लोकत्रयेणाऽऽह सान्तानिकंयक्ष्यमाणमिति । सान्तानिकः सन्तानप्रयोजनः विवाहार्थीतियावत् । सर्ववेदसोदत्तसर्वस्वः । अर्थिशब्दोगुर्वर्थादिभिः प्रत्येकमभिसम्बध्यते गुर्वर्थार्थी पितृमात्रर्थार्थी स्वाध्यायार्थी वेदपारायणार्थी । उपतापीरोगी ॥ १ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह सान्तानिकमिति । नैमित्तिकधर्माःकथ्यन्ते । सान्तानिकं विवाहार्थिनम् । यक्ष्यमाणं यागार्थिनम् । अध्वगम् अध्वनिक्षीणवृत्तिम् । सर्वस्वविश्वजितिसर्वस्वदातारम् । गुर्वर्थं पित्र्यर्थं स्वाध्यायार्थं विद्यार्थम् । उपतापी रोगी ॥ १ ॥

**नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभिक्षुकान् ॥ निःस्वेभ्योदेयमेतेभ्योदानंविद्याविशेषतः ॥ २ ॥**

( २ ) **सर्वज्ञनारायणः** । नवस्नातकान् सतोधर्मभिक्षुकान् दातुर्धर्महेतून् भिक्षमाणान् । विद्याविशेषतोविद्यानुरूपेण ॥ २ ॥

( ४ ) **राघवानन्दः** । स्नातकान् स्नातकोभविष्यद्वारः । धर्मभिक्षुकान् धर्मार्थमेव भिक्षयन्ति प्रतिगृह्णन्तीति सुस्थशरीरादेर्धर्महेतुत्वात् । दानं दीयतइति गोहिरण्यादि । विद्याविशेषतः विद्यानुसारेण । विद्याश्च वेदादीनि ॥ २ ॥

( ५ ) **नन्दनः** । धर्मभिक्षुकान्धर्मार्थंभिक्षमाणान् एतेभ्योभिक्षमाणेभ्योदानंच संतानार्थं विद्याविशेषतोपि तारतम्याद्भिक्षितैर्देयमन्यथाप्रत्यवायइति ॥ २ ॥

( ६ ) **रामचन्द्रः** । विद्याविशेषतः विद्यामानेन ॥ २ ॥

**एतेभ्योहिद्विजाग्र्येभ्योदेयमन्नंसदक्षिणम् ॥ इतरेभ्योबहिर्वेदिकृतान्नंदेयमुच्यते ॥ ३ ॥**

( १ ) **मेधातिथिः** । दक्षिणाशब्दोयद्यपि कर्मकरसंयुक्ते संत्यागे वर्तते तथापि गोभूमिहिरण्यादिभाजनादन्यद्देयंद्रव्यमुच्यते तथापि लौकिकीप्रसिद्धिरिति इतरेभ्यएतद्व्यतिरिक्तायेभिक्षुकास्तेभ्यः कृतान्नंसिद्धमन्नंभोजनार्थंदातव्यं बहिर्वेदियज्ञादन्यत्रातिथिभ्योदानंगृहस्थधर्मेषु यदेतत्तदेवानूद्यते ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नं सदक्षिणमन्नंदत्वा दक्षिणात्वेन धनं देयम् । बहिर्वेदि इतरेभ्यः एतद्ब्राह्मेभ्योबहिर्वेदि यज्ञाद्बहिः कृतमन्नं पक्वान्नमवश्यंदेयम् । वेद्यांतु याचितंसर्वमेव देयमित्यर्थः ॥ ३ ॥

( ३ ) **कुल्लूकः** । एतेभ्योनवभ्योब्राह्मणश्रेष्ठेभ्योऽन्तर्वेदि सदक्षिणमन्नंदातव्यम् । एतद्व्यतिरिक्तेभ्यः पुनः सिद्धान्नंबहिर्वेदिदेयत्वेनोपदिश्यते धनदानेत्वनियमः ॥ ३ ॥

( ४ ) **राघवानन्दः** । दीक्षितोन ददातीत्यस्य वेदस्य प्रतिप्रसवार्थमाह सदक्षिणमिति । दाने दृष्टलोभाद्यसंभवेन

---

* तदर्थं = यस्यतं ( न )

स्मृतेः प्राबल्यादितिभावः । कृतान्नं सिद्धान्नम् तच्च प्राणिमात्रे सर्वदा देयमित्याह बहिर्वेदीति । अन्नस्य क्षुधितःपात्रमितिस्मृतेः ॥ ३ ॥

( ५ ) **नन्दनः** । अपि बहिर्वेदि वेदेर्बहिरपि यज्ञादन्यत्रापि यावत् । दक्षिणांत्वर्णादिकसहितं देयमन्नंकृतमकृतंवादेयं इतरेभ्योब्राह्मणेभ्योकृतान्नमेवदेयं । बहिर्वेदिकृतान्नविधानादन्तर्वेदितेभ्योविकृतान्नमपि सूचितम् ॥ ३ ॥

( ६ ) **रामचन्द्रः** । इतरेभ्यः नवभ्योभिक्षुकेभ्योऽन्ये ये तेभ्यः बहिर्वेदि यज्ञाद्बहिः ॥ ३ ॥

**सर्वरत्नानि राजा तु यथार्हंप्रतिपादयेत् ॥ ब्राह्मणान्वेदविदुषोयज्ञार्थंचैव दक्षिणाम् ॥ ४ ॥**

( १ ) **मेधातिथिः** । सर्ववर्णानांस्वर्गादिफलाय पुरुषार्थोपयोगिदानं विहितं । अयंतुराज्ञो नियमार्थमुपदेशोबहुधनेन राज्ञा सर्वरत्नानि मणिमुक्तादीनि यथार्हंविद्याकर्मानुरूपेण ब्राह्मणेभ्योदातव्यानि यज्ञार्थंच दक्षिणा काम्यकर्मसिद्धयेऽपीति पुनरुपदेशंप्रतिपादयेत्स्वीकारयेत् ग्राहयेदिति यावत् ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणान् प्रतिपादयेत् प्रतिग्राहयेत् । यज्ञार्थं तेषाम् ॥ ४ ॥

( ३ ) **कुल्लूकः** । राजा पुनः सवरत्नानि मणिमुक्तादीनि यागोपयोग्यानि च दक्षिणार्थंधनंविद्यानुरूपेण वेदविदोब्राह्मणान्स्वीकारयेत् ॥ ४ ॥

( ४ ) **राघवानन्दः** । राज्ञोविशेषमाह सर्वेति । प्रतिपादयेत् स्वीकारयेत् । यज्ञार्थं तेषामेव ॥ ४ ॥

( ५ ) **नन्दनः** । सान्तानिकादिषुराज्ञा कर्तव्यमाह सर्वरत्नानि राजात्विति । ब्राह्मणान्सान्तानिकादीन्प्रतिपादयेद्बहिर्वेदीत्यनुवर्तते सर्वरत्नानि प्रतिपादयेदित्येव सिद्धे दाने यज्ञार्थंश्चैव दक्षिणाइति पृथगुपन्यासोवक्ष्यमाणप्रत्यादरातिशयार्थः ॥ ४ ॥

( ६ ) **रामचन्द्रः** । यथार्हं प्रतिपादयेत् प्रतिग्राहयेत् ॥ ४ ॥

**कृतदारोऽपरान्दारान्भिक्षित्वा योऽधिगच्छति ॥ रतिमात्रंफलंतस्य द्रव्यदातुस्तु सन्ततिः ॥ ५ ॥**

( १ ) **मेधातिथिः** । कामतोद्वितीयादिविवाहप्रवृत्तौ भिक्षमाणस्यनिषेधोयं । रतिमात्रंफलमित्यादिरर्थवादोन यथाश्रुतमेवप्रतिपत्तव्यम् । अन्ये तु व्याचक्षते धर्मार्थंसान्तानिकाय दातव्यंनकामप्रवृत्तायेति सएवायमर्थः । पुनरन्यथोच्यते सान्तानिकाय दातव्यं अयन्तुरतिकामो नसान्तानिकइत्यर्थः द्रव्यदातुर्हिसासंततिर्न तस्येति ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । सांतानिकमितियदुक्तं तत्र विशेषमाह कृतदारइति । कृतदारः प्राप्तधर्मप्रजासंपन्नदारः । द्रव्यदातुस्तुसंततिः फलेन हानिरस्तीत्यर्थः ॥ ५ ॥

( ३ ) **कुल्लूकः** । यः सभार्यः सन्तत्यर्थादिनिमित्तमन्तरेणापरान्दारान्भिक्षित्वा करोति तस्य रतिमात्रंफलं धनदातुः पुनस्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः। नैवंविधेन धनंयाचित्वाऽन्योविवाहः कर्तव्योनाप्येवंविधाय नियमतोधनंदेयमिति ॥ ५ ॥

( ४ ) **राघवानन्दः** । [ सान्तानिकमित्युक्तंसचेत् ][1] कृतदारोपि यद्यपरान्दारान्धनंभिक्षित्वोद्वहेत्तंभीषयन्नाह कृतदारइति । रतिमात्रं संभोगमात्रं निन्दामात्रम् द्रव्यदातुरिति तेन सतिसंभवे भिक्षया किंचिन्नकार्यमितिभावः ॥ ५ ॥

---

१ ( राघ० २ )

( ५ ) **नन्दनः** । अथसान्तानिकस्येतिकर्तव्यं प्रसङ्गादाह कृतदारोऽपरान्दारानिति । भिक्षित्वा अर्थम् ॥ ५ ॥

( ६ ) **रामचन्द्रः** । कृतदारः प्राप्तधर्मप्रजासंपन्नदारः । अपरान् दारान् भिक्षित्वा यः अधिगच्छति ॥ ५ ॥

**धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत् ॥ वेदवित्सु विविक्तेषु प्रेत्य स्वर्गंसमश्नुते ॥ ६ ॥**

( ३ ) **कुल्लूकः** । धनानि गोभूहिरण्यादीनि शक्त्यनतिक्रमेण ब्राह्मणेषु वेदज्ञेषु विविक्तेषु पुत्रकलत्राद्यवसक्तेषु प्रतिपादयेत्तद्वशाच्च स्वर्गप्राप्तिर्भवतीति ॥ ६ ॥

**यस्य त्रैवार्षिकंभक्तंपर्याप्तंभृत्यवृत्तये ॥ अधिकंवापि विद्येत ससोमंपातुमर्हति ॥ ७ ॥**

( १ ) **मेधातिथिः** । त्रीणि वर्षाणि यस्य पर्याप्तं भृत्यभरणाय धनंतत्त्रैवार्षिकंततोधिकंवा यस्यास्ति ससोमंपातुमर्हति श्रुतौनित्यस्य सोमस्यावश्यकर्तव्यतयानुक्तत्वात् भृत्योपरोधेऽपि नैषनिषेधः प्रवर्तते बलीयस्त्वाच्छ्रुतेरतइच्छासोमविषयोऽयंनिषेधः। ननुच सोमे धनंपरिक्रयार्थमुपयुज्यते तस्य द्वादशशतंदक्षिणेति तत्र वृत्तिर्विर्धतेऽतश्चसोमेतत्र धनमुपयुज्यते नोच्यते यस्य त्रैवार्षिकमिति । ननुच वृत्तिधनमसति धने नित्यवदस्तीति विद्यमानधनेनापि तत्कर्तव्यमेवेष्यते । प्राशस्त्यकरदानशब्दोभक्तमात्रेयदिहिरण्यदानंसोमक्रयार्थमेवमादिनिवृत्तिः ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । भृत्याः भरणीयाजायाद्याः । अधिकंवापीति वाकारः समुच्चये । त्रिवर्षभृत्यवृत्तये योग्यं त्रैवार्षिकं धनं स्थापयित्वा यद्यधिकं सामर्थ्यं पर्याप्तं तदैवेत्यर्थः ॥ ७ ॥

( ३ ) **कुल्लूकः** । यस्यावश्यपोष्यभरणार्थंवर्षत्रयपर्याप्तंतदधिकंवा भक्तादिस्यात्सकाम्यसोमयागंकर्तुमर्हति नित्यस्य पुनर्यथाकथंचिदवश्यकर्तव्यत्वान्नायंनिषेधः । अतएव समान्तेसौमिकैर्मखैरिति नित्यविषयत्वमुक्तवान् ॥ ७ ॥

( ४ ) **राघवानन्दः** । संभवद्धनस्य यागदानयोः स्वेष्टसाधनत्वेन भृत्यादिपरिपीडनेनापि तत्कर्तव्यता प्राप्ता तत्राह यस्येति चतुर्भिः । भृत्यवृत्तये तत्पोषणाय पर्याप्तं क्षमम् । यस्य त्रैवार्षिकंधनं ससोमंपातुमर्हतीतिस्मृत्यन्तरात्सोमं काम्यं समान्तेसोमिकैर्मखैरितिनित्यस्यावश्यकर्तव्यतोक्तेः । वसन्तेवसन्ते ज्योतिषा यजेतेतिश्रुतेर्नानेन निषेधोनित्यस्य श्रुतिबाधेन स्मृतेर्दुर्बलत्वात् ॥ ७ ॥

( ५ ) **नन्दनः** । भिक्षित्वा वक्ष्यमाणस्यापि कर्तव्यंश्लोकद्वयेनाह यस्यत्रैवार्षिकंभक्तमिति । भृत्याभरणीयाः ॥ ७ ॥

( ६ ) **रामचन्द्रः** । भक्तं अन्नं त्रिवर्षपर्यन्तं यःसोमं पातुं अर्हति ॥ ७ ॥

**अतः स्वल्पीयसि द्रव्ये यः सोमंपिबति द्विजः ॥ सपीतसोमपूर्वोपि न तस्याप्नोति तत्फलम् ॥ ८ ॥**

( १ ) **मेधातिथिः** । प्रतिषेधातिक्रमेणानधिकारिणःकुर्वतोन्यायसिद्धफलाभावोनेनानूद्यतेफलग्रहणाच्च काम्यविषयतास्फुटतराप्रतीयते सपीतसोमपूर्वोपि अनेन प्रथमयज्ञस्यावश्यकर्तव्यतांदर्शयति सपीतत्वाद्यर्थवादोयं न पुनरपीतसोमस्य प्रतिषेधः ॥ ८ ॥

( २ ) **सर्वज्ञनारायणः** । नफलमाप्नोति कथंचिन्मध्ये दुर्भिक्षादिना भृत्यनाशे प्रत्यवायाधिक्यादित्यर्थः ॥ ८ ॥

( ३ ) **कुल्लूकः** । त्रैवार्षिकधनादल्पधने सति यः सोमयागंकरोति तस्य प्रथमसोमयागोनित्योपि न संपन्नोभवति सुतरांद्वितीययागः काम्यः ॥ ८ ॥

---

( १ ) धनं = धान्यं ( राघ० २ )

( ४ ) **राघवानन्दः** । अतोनियमयति अतइति । सः पीतः पूर्वयागशेषः सोमोयेन सः पूर्वकृतसोमस्यापि फलं न प्राप्नोतीति निन्दा ॥ ८ ॥

( ५ ) **नन्दनः** । अतस्त्रैवार्षिकाद्भक्ताद्यस्य पूर्वैरपीतसोमः सपीतसोमपूर्वः ॥ ८ ॥

( ६ ) **रामचन्द्रः** । अतः त्रैवार्षिकात् धनात् अल्पीयसि द्रव्ये योद्विजःसोमंपिबति सः अपीतसोमः पीतस्य सोमस्य सोमपानस्य फलंन प्राप्नोति ॥ ८ ॥

**शक्तः परजने दाता स्वजने दुःखजीविनि ॥ मध्वापातोविषास्वादः सधर्मप्रतिरूपकः ॥ ९ ॥**

( १ ) **मेधातिथिः** । यःस्वजनोभृत्यामात्यमातृपितृपुत्रदारादिस्तस्मिन् दुःखजीविनि यः परजने यशोर्थंवदति तस्यासौविषास्वादः आपाते सन्निपाते मधुरोयथा विषस्यास्वादः सन्निपातमधुरोविपाकविरसोमरणफलत्वादेवंतादृशंदानंयद्यपि संप्रतियशः सुखंजनयत्यमुत्रप्रत्यवायोत्पत्त्याविषास्वादसमंसंपद्यते तदेवाह धर्मप्रतिरूपकोसौसदृशोनधर्मः शुक्तिरिवरजतज्ञानस्य ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । शक्तः स्वजनपोषणे । स्वजनान् भार्यादीन् विहाय कीर्त्याधिक्यादिबोधेन परजने दाता । आपाततोमधुभूतकीर्तिलाभान्मध्वापातः । विषास्वादोविषभक्षणं पापहेतुरूपानर्थहेतुत्वात् । धर्मप्रतिरूपकोधर्मसदृशोऽधर्मः ॥ ९ ॥

( ३ ) **कुल्लूकः** । योबहुधनत्वाद्दानशक्तः सन्नवश्यभरणीये पितृमात्रादिज्ञातिजने दौर्गत्या दुःखोपेते सति यशोर्थमन्येभ्योददाति सतस्य दानविशेषोधर्मप्रतिरूपकोनतुं धर्मएव मध्वापातोमधुरोपक्रमः प्रथमंयशस्करत्वाद्विषास्वादश्चान्ते नरकफलत्वात्तस्मादेतन्न कार्यम् ॥ ९ ॥

( ४ ) **राघवानन्दः** । अतआहशक्तइति । दाता दानशीलोयःसपरजने प्राणान्प्रदातुं शक्तोपि सतिस्वजने दुःखिनि नदद्यादित्याह । मध्वापातः मधुवदापाततः कीर्तिसुखकरत्वात् विषास्वादः विषवदास्वादनीयं फलं यस्य सः उदर्के संतापादिदृष्टेः । विषमपि मारकत्वेप्यतिमधुरम् ॥ दीयतेच परिक्लिष्टं तद्दानं राजसं स्मृतमित्युक्तेः ॥ धर्मप्रतिरूपकः धर्माभासः॥९॥

( ५ ) **नन्दनः** । प्रासङ्गिकं समाप्य प्रकृतमेव सान्तानिकादिषु भिक्षितैः कर्तव्यमुपसंक्रम्याह शक्तः परजनेदातेति । शक्तः धनवान् । स्वजने स्वकुटुम्बे । मधु ईषत्पिबतीति मध्वापातः । विषं समंतात्स्वादयतीति विषास्वादः प्रभूतविषाशीतियावत् । सधर्मप्रतिरूपकः धर्मप्रतिरूपसहितः स्वजने दुःखजीविनि सान्तानिकानि सान्तानिकादिष्वपि दातुर्धर्मोभूयानित्यर्थः ॥ ९ ॥

( ६ ) **रामचन्द्रः** । शक्तः स्वजनपोषणसमर्थः स्वजने स्वभर्तव्ये दुःखजीविनि मध्वापीतः मधुरोपक्रमः विषास्वादः नरकदर्श [ नम् ] धर्मप्रतिरूपकोधर्मसदृशोऽधर्मः ॥ ९ ॥

**भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदेहिकम् ॥ तद्भवत्यसुखोदर्कंजीवतश्च मृतस्य च ॥ १० ॥**

**[ वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ॥ अप्यकार्यशतंकृत्वा भर्तव्यामनुरब्रवीत्॥१॥]** ‡

( १ ) **मेधातिथिः** । पूर्वस्यनिन्दार्थवादोयं । भृत्याव्याख्याताः उपरोधो भक्तवस्त्रादिनायथोपयोगमाहरणं और्ध्वदेहिकंपरलोकप्रयोजनमसुखोदर्कमुदर्कः आगामीकालः सोस्यदानस्यासुखोदर्के भवतीतिप्रयोजनंसिद्धमेव ॥ १० ॥

---

‡ ( ट, ठ, ण, य, ल )

( २ ) **सर्वज्ञनारायणः**। न केवलं कीर्त्यर्थदानादावेवमदृष्टबुद्ध्यापि करणे तथेत्याह भृत्यानामिति। उपरोधोवृत्तिसंकोचः। जीवतोऽसुखोदर्कं वृत्त्यभावेन भार्यादिनाशात् ॥ १० ॥

( ३ ) **कुल्लूकः**। पुत्रदाराद्यवश्यभर्तव्यपीडनेन यत्पारलौकिकधर्मबुद्ध्या दानादिकरोति तस्य दातुर्जीवतोमृतस्य च तद्दानंदुःखफलंभवतीति पूर्वकीर्त्यादिदृष्टार्थदानप्रतिषेधः अयंत्वदृष्टार्थदानप्रतिषेधः ॥ १० ॥

( ४ ) **राघवानन्दः**। ततः किं तत्राह भृत्यानामिति । भृत्यानामुपरोधेन भरणीयानांपीडया। और्ध्वदेहिकं पारलौकिकम्। असुखोदर्के इह भरणीयव्यग्रमनस्तयाजीवतः मृतस्यतु अमुत्र फलराहित्येन च अतोभृत्यापीडया दृष्टादृष्टं दानादिकं कर्तव्यमितिभावः ॥ १० ॥

( ५ ) **नन्दनः**। न केवलं दानमेव स्वजनोपरोधेन न कार्यं किन्तु सर्वोपि धर्मोनकार्यइत्याह भृत्यानामुपरोधेनेति। मरणादूर्ध्वं येन देहः प्राप्यते सऊर्ध्वदेहस्तस्मै हितमौर्ध्वदेहिकं धर्ममिति यावत् ॥ १० ॥

( ६ ) **रामचन्द्रः** । भृत्यानांजीवनोपरोधेन और्ध्वदेहिकं पारलौकिकं अस्यजीवतोमृतस्यवाऽसुखोदर्कं तद्द्वयं भवति ॥ १० ॥

## यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ॥ ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ११ ॥

( १ ) **मेधातिथिः**। अत्राङ्गहरणान्नकेवलंसर्वासांदक्षिणानामसंपत्तौ वैश्यानामिदमाहरणंविधीयते। अपिचतस्मिन्नपि पश्वादावाहरेदिति तत्स्वीकारोत्पत्तिमात्रमुच्यते नोपायविशेषः। अतश्च याञ्चयाविनिमये चौर्येणैवापहर्तव्यंनच चौर्येणस्वाम्यंनोत्पद्यतइत्युक्तं नैषदोषः इहस्वशब्देनैवोक्तंहर्तव्यमिति एवंचादः कर्तव्यंहीनकर्मणइति अयंवापहारः प्रागारब्धयागस्यसर्वाङ्गोपेतस्यैकाङ्गासंपत्तौ प्रारिप्स्यमानस्य वेति न विशेषहेतुरस्ति ब्राह्मणस्य विशेषेणनिर्वचनात्क्षत्रियवैश्ययोरप्यस्ति तदेकाङ्गग्रहणमस्मिन्निमित्ते ननुकःक्षत्रियोयाचेदिति क्षत्रियस्ययाञ्चाप्रतिषिद्धा अत्यल्पमिदमुच्यते ब्राह्मणस्यापिचौर्यनिषिद्धंतस्मात्तस्मिन्निमित्तेनास्त्यर्जनोपायनियमोधार्मिकेसतीत्यनुवादोयं योहि धर्मज्ञोराजा तस्मिन्निमित्ते चौर्यं विहितमिति अन्यस्य तु निगृहीतत्वात्कुतः प्रवृत्तिः। बहुपशुग्रहणंधनमात्रोपलक्षणार्थंकुतः कर्मयोगादन्यदपि दानादि नकरोति सत्यमसोमपे कुटुंबाद्गृहादित्यर्थः। गृहाद्धिचौर्यदोषवत्तरमतस्तदनुज्ञायते न पुनरप्येवमेवनियमोऽन्यतोपि यत्खलादेः संपद्यते तत्कर्तव्यमेव वक्ष्यतिच खलात्क्षेत्रादगाराद्वेति ॥ ११ ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः**। यज्वनः क्षत्रियस्य विशेषेणतु ब्राह्मणस्य। एकेनाङ्गेनाप्राप्तेन आज्यस्य पशोर्वस्त्रादीनांवा दक्षिणानामन्यतमस्याभावेन प्रतिरुद्धः प्रतिबद्धः। धार्मिकेसतीत्यधार्मिकस्य राज्ञोयज्ञसंपत्त्यनुरोधेन वैश्यधनापहरणानुपपत्तेरुक्तम्। ११ ॥

( ३ ) **कुल्लूकः**। क्षत्रियादेर्यजमानस्य विशेषतोब्राह्मणस्य यदि यज्ञइतराङ्गसंपत्तौ सत्यामेकेनाङ्गेनासंपूर्णः स्यात्तदा योवैश्योबहुपश्वादिधनः पाकयज्ञादिरहितोऽसोमयाजी तस्य गृहात्तदङ्गोचितंद्रव्यंबलेन चौर्येण वा हरेत्। एतच्च धर्मप्रधानेसति राजनिकार्यंसहि शास्त्रार्थमनुतिष्ठन्तंन निगृह्णाति ॥ ११ ॥ १२ ॥

( ४ ) **राघवानन्दः**। विहितदक्षिणातु शूद्रादिप्रतिग्रहेणापि देयेत्याह यज्ञश्चेतिपञ्चभिः। प्रतिरुद्धः असमाप्तकल्पः। एकेन दक्षिणारूपेण। धार्मिकइतिविशेषणाद्बलादपि वैश्यादिभ्योदक्षिणा ग्राह्येतिशेषः। ब्राह्मणस्य विशेषेणेतिविशेषणं दक्षिणार्थं क्षत्रियस्यापि भिक्षासूचकम् ॥ ११ ॥

( ५ ) **नन्दनः**। अथवर्षत्रयपर्याप्तभृत्यवृत्तिना वक्ष्यमाणेन किञ्चिन्न्यूनधनेन स्नातकेन निवेदितस्य कोशहीनस्य

राज्ञः कर्तव्यमाह यज्ञश्चेत्प्रतिरुद्धःस्यादिति । श्लोकद्वयमेकं वाक्यंसति राजनि दानशीले राजनि विद्यमानेऽपि एकेनाङ्गे-नैकाङ्गवैकल्येन यज्ञः प्रतिरुद्धश्चेद्विघ्नितश्चेन राज्ञः कोशाभावादिति भावः ॥ ११ ॥

( ६ ) **रामचन्द्रः** । द्वाभ्यामाह यज्ञेति । यज्वनः यज्ञः एकेनांशेन प्रतिरुद्धः स्यात् ॥ ११ ॥

**योवैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः ॥ कुटुम्बात्तस्यतद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ १२ ॥**

( २ ) **सर्वज्ञनारायणः** । हीनक्रतुरकृतपञ्चमहायज्ञः । असोमपः अपीतसोमः । एतेन सोमपस्य पञ्चयज्ञाकरणेपि श्रेष्ठतोक्ता । तस्य वैश्यस्य कुटुम्बात् कुटुम्बार्थधनादाकृष्यैकमंशं राजा ब्राह्मणाय दद्यात ॥ १२ ॥

( ४ ) **राघवानन्दः** । किंच यइति । कुटुम्बात् गृहादपि ग्राह्मम् । यज्ञसिद्धये यज्ञसमाप्तये । तद्द्रव्यं दक्षिणारूपमितिभावः ॥ १२ ॥

( ५ ) **नन्दनः** । हीनक्रतुः अनग्न्याधानादिकान्तस्य वैश्यस्य कुटुंबाद्गृहाद्यज्ञसिद्धयएकाङ्गहीनयज्ञस्य समाप्तये यावताद्रव्येण सयज्ञः सिध्यति तावद्द्रव्यमाहरेत्प्रसह्यगृह्णीयात्सराजेति विपरिणामः । राजैव कर्ता न यज्वा कुतएतद्राज्ञएवाहरणबलोपपत्तेः महाभारतेप्यस्य वचनस्य चतुर्थः पादोयज्ञार्थंपार्थिवोहरेदिति पठ्यते तेनापि राजैक कर्तव्याख्येयोनयज्वेति ॥ १२ ॥

( ६ ) **रामचन्द्रः** । धार्मिके राजनि सति । योवैश्योबहुपशुः हीनः क्रतुर्यस्य सः । सः असोमपः तस्य कुटुम्बात् गृहात् तद्द्रव्यं यज्ञसिद्धये राजा आहरेत् स्वीकुर्यात् ॥ १२ ॥

**आहरेत्रीणि वा द्वे वा कामंशूद्रस्य वेश्मनः ॥ नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥ १३॥**

( १ ) **मेधातिथिः** । वैश्यासंभवे शूद्रादप्याहर्तव्यं त्रीणिवाद्वेवेत्यङ्गप्रकरणादङ्गानि वेदितव्यानि । अत्रार्थवादोनहि शूद्रस्येति । यद्यपि पूर्वमनेकोपायकृतमाहरणंविहितंतथापि भिक्षणमत्रनास्ति न यज्ञार्थंधनंशूद्राद्विप्रोभिक्षेतेति ननुच स्मृत्यन्तरेऽविशेषेण शूद्रधनेन यागः प्रतिषिद्धः अस्योपदेशस्य सामर्थ्याच्छूद्रात्प्रतिगृह्णीतेतिद्रष्टव्यम् । अन्येत्वाहुः ब्राह्मणेन स्वीकृतत्वान्नैवतच्छूद्रधनमिति । यस्तु प्रतिषेधः सशूद्रस्य शान्तिकपौष्टिकादियेन धनेन करोति ऋत्विग्वत्तत्र द्रष्टव्यः इहतु-भूतपूर्वगत्या शूद्रधनव्यपदेशोऽस्य स्यात् सांप्रतिकस्याभावेच सा ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । यदितुयज्ञाङ्गद्वयत्रयस्यासंपत्तिस्तदा शूद्रस्यैव तथाविधस्य धनादित्याह आहरेदिति । यज्ञेषुपरिग्रहोयज्ञनिमित्तधनपरिग्रहोयज्ञार्थताधनस्य ॥ १३ ॥

( ३ ) **कुल्लूकः** । यज्ञस्य द्वित्र्यङ्गवैकल्ये सति तानि त्रीणि चाङ्गानि द्वे वाङ्गे वैश्यादलाभे सति निर्विशङ्कंशूद्रस्य गृहाद्बलेन चौर्येण वा हरेत् यस्माच्छूद्रस्य क्वचिदपि यज्ञसंबन्धोनास्ति नयज्ञार्थंधनंशूद्राद्विप्रोभिक्षेतेति वक्ष्यमाणप्रतिषेधः शूद्रायाचनस्य नतु बलग्रहणादेः ॥ १३ ॥

( ४ ) **राघवानन्दः** । तत्रच कैमुत्यमाह आहरेदिति गवाम् । कश्चिदिति यज्ञोद्देशेन नयज्ञार्थंधनमित्यादिवचनविरोधात् तत्समाप्त्यर्थंतु नदोषः ॥ १३ ॥

( ५ **नन्दनः** । वैश्याभावे राजा किंकुर्यादित्यपेक्षायामाह आहरेत्रीणि वा द्वेवेति । न केवलमङ्गंराजा शूद्रस्य गृहादाहरेत्किन्तुत्रिभिरङ्गैः यज्ञप्रतिग्रहहेतुरुत्तरार्धेनोक्तः परिग्रहः संबन्धः ॥ १३ ॥

( ६ ) **रामचन्द्रः** । शूद्रस्य त्रीणि यज्ञस्याङ्गानि द्वे वाङ्गे हीने भवतःतदास्यवेश्मतः आहरेत् । शूद्राद्धनादानं कुर्यात् । कश्चित् परिग्रहः संबन्धः शूद्रस्य यज्ञेषु नास्ति ॥ १३ ॥

**योनाहिताग्निः शतगुरयज्वा च सहस्रगुः ॥ तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १४॥**

( १ ) **मेधातिथिः** । ब्राह्मणक्षत्रियाभ्यामप्येवंविधाभ्यामाहर्तव्यमिति श्लोकार्थः । गोग्रहणंतावत्परिमाणधनोपलक्षणार्थं अयज्ञोऽसोमयाजी ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । क्षत्रियादप्येवंभूतादिकमंशमानेतव्यमित्याह योनाहिताग्निरिति । अयज्वा असोमयाजी ॥ १४ ॥

( ३ ) **कुल्लूकः** । योनाहिताग्निर्गोशतपरिमाणधनआहिताग्निर्वाऽसोमयाजी गोसहस्रपरिमितधनः द्वयोरपि गृहाभ्यांप्रकृतमङ्गद्वयंत्रयंवा शीघ्रंसंपादयितुंब्राह्मणेन द्वाभ्यामाहरणीयंब्राह्मणक्षत्रियाभ्यामपि ब्राह्मणआहरेत् क्षत्रियस्य तु अदस्युक्रियावद्ब्राह्मणस्वहरणंनिषेधयिष्यति ॥ १४ ॥

( ४ ) **राघवानन्दः** । किंच यइति । शतगुः शतंविद्यमानागावोयस्य । एवं सहस्रगुरपि । अयज्वाचेद्ब्राह्मणःक्षत्रियोवा अविचारयन् द्वित्राणामाहरणे तेषां क्लेशाभावात् ॥ १४ ॥

( ५ ) **नन्दन** । शूद्राभावे च किंकुर्यादित्याह योनाहिताग्निः शतगुरिति । योनाहिताग्निः परिशेषात्क्षत्रियोब्राह्मणश्च आहरेद्द्वेधेत्रीण्यङ्गानि द्वाभ्यांचेद्द्वे सर्वैश्चेत्सर्वाणीत्युक्तम् ॥ १४ ॥

( ६ ) **रामचन्द्रः** । योऽनाहिताग्निः शतगुः गोशब्दउपलक्षणं तावद्धनमुच्यते च पुनः यः अयज्वा असोमयाजी च सहस्रगुः तयोः शतगुसहस्रग्वोः कुटुम्बाभ्यां त्रैवर्णिके अविचारयन् राजा आहरेत् ॥ १४ ॥

**आदाननित्याच्चादातुराहरेदप्रयच्छतः ॥ तथा यशोस्य प्रथते धर्मश्चैव प्रवर्धते ॥ १५ ॥**

( १ ) **मेधातिथिः** । अयंसर्ववर्णविषयः श्लोकः । आदाननित्योयः सर्वकालंकृषिप्रतिग्रहकुसीदादिभिर्धनमर्जयति नच ददाति ततउपायान्तराण्याश्रयणीयानि आदातुरित्ययागशीलस्यापि द्रष्टव्यम् ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । अदातुरदानशीलादादाननित्यान्नित्यार्जकादप्रयच्छतः तदा तद्धनमददतोपि त्रैवर्णिकादाहरेत् । एकमङ्गंद्वयंत्रयमित्यन्येषूक्तमतस्तु बह्वपि ग्राह्यम् । ब्राह्मणस्यत्वयज्वनोपि धनमनादेयमिति वक्ष्यति । एतच्च राजा स्वकोशे सत्यपि गृहीत्वा दद्यादिति ग्राह्यम् ॥ १५ ॥

( ३ ) **कुल्लूकः** । प्रतिग्रहादिना आदानंधनग्रहणंनित्यंयस्यासावादाननित्यः ब्राह्मणस्तस्मादिष्टापूर्तदानरहिताद्यज्ञाङ्गद्वयत्रयार्थायां याचनायां कृतायामददतोबलेन चौर्येण वा हरेत् तथाकृतेऽपहर्तुः ख्यातिः प्रकाशते धर्मश्च वृद्धिमेति ॥ १५ ॥

( ४ ) **राघवानन्दः** । आदाननित्यात् प्रतिग्रहपरात् । अदातुः स्वरसतः । अप्रयच्छतः अनिषेधकात् । अस्यायज्वनोयज्वनोवा । यशोऽमुकस्य धनेनास्मद्यागः समाप्तइति वर्धते परधर्मोत्पादकत्वोपकारात् ॥ १५ ॥

( ५ ) **नन्दनः** । एवंकुर्वतोराज्ञः फलमाह आदाननित्याच्चादातुरिति । अदातुरित्यप्रयच्छतोदातुः कदर्यादितियावत् तद्द्रव्यमाहरेत्तथाकुर्वतोराज्ञोयशः प्रथते ॥ १५ ॥

( ६ ) **रामचन्द्रः** । आदातुः आददतः आदाननित्यात्प्रतिग्रहादिना नित्यात्स्वकृत्यात् अप्रयच्छतः आहरेत् स्वीकुर्यात् अस्य यशः प्रथते ॥ १५ ॥

**तथैव सप्तमे भक्ते भक्तानि षडनश्नता ॥ अश्वस्तनविधानेन हर्तव्यंहीनकर्मणः ॥ १६ ॥**

( १ ) **मेधातिथिः** । आत्मकुटुम्बावसादेपि पूर्ववत्परादानंकर्तव्यं अश्वस्तनग्रहणादेकदिनवृत्त्यर्थमेवानुजानाति नाधिकंहीनकर्मणइति कर्मार्थस्मृत्यंतरे ॥ हीनादादेयमादौस्यात्तदलाभे समादपि । असंभावे त्वाददीत विशिष्टादपि धार्मिकात् ॥ सप्तमे भक्ते त्र्यहंयेन न भुक्तं चतुर्थे हनि प्रातर्भोजनार्थंपरादानेप्रवर्तेत सायंप्रातर्भुञ्जीतेत्यहन्यहनि भक्तद्वयंविहितम् ॥१६॥

( २ ) **सर्वज्ञनारायणः** । त्र्यहमुपोषितेन चतुर्थदिनेप्युपवासशङ्कायां तद्दिनमात्रपर्याप्तम् । हीनकर्मणः पतितादपि ॥ १६ ॥

( ३ ) **कुल्लूकः** । सायंप्रातर्भोजनोपदेशात्त्रिरात्रोपवासे वृत्ते चतुर्थेऽहनि प्रातः सप्तमे भक्ते दानादिधर्मरहितादेकदिनपर्याप्तमर्थंचौर्यादिना हर्तव्यम् ॥ १६ ॥

( ४ ) **राघवानन्दः** । धर्मार्थस्यैव प्राणात्ययप्रायेपि ग्राह्यमित्याह तथैवेतिद्वाभ्याम् । सप्तमे चतुर्थेऽहनि प्रातर्भक्ष्ये एतत्स्पष्टयति भक्तानिषडिति । अनश्नताचातुर्वर्ण्येन अश्वस्तनविधानेन परदिनासंचयित्वेन हर्तव्यं चौर्यादिना । हीनकर्मणः कदर्यादपि ॥ १६ ॥

( ५ ) **नन्दनः** । एवंयज्ञापदि राज्ञः कर्तव्यमुक्तमधुना क्षुत्पीडापदि पुरुषेण कर्तव्यमाह तथैवसप्तमेभक्तइति । सप्तमे भक्तानिषडनश्नता त्र्यहमभुञ्जानेन सप्तमे भक्ते सप्तम्यां भुक्तंतु चतुर्थेऽहनि हीनकर्मणः स्वस्माद्धीनकर्मणः पुरुषात् अश्वस्तननिधानाय श्वोभवं श्वस्तनंनिधानंन्यासः श्वस्तनश्चतन्निधानंचेति श्वस्तनन्निधानं तदभावायाश्वस्तननिधानाय एवमापद्विषये परस्वहरणं यथोक्तंकुर्वन्राज्ञा न दण्ड्यः ॥ १६ ॥

( ६ ) **रामचन्द्रः** । सप्तमेभक्ते चतुर्थदिने षट्भक्तानि अन्नानि अनश्नता त्रीणि दिनानि अनश्नता हीनकर्मणः शूद्रात् अश्वस्तनविधानेन एकदिनपर्याप्तंअन्नादानंकर्तव्यम् ॥ १६ ॥

**खलात्क्षेत्रादगाराद्वा यतोवाप्युपलभ्यते ॥ आख्यातव्यन्तु तत्तस्मै पृच्छते यदि पृच्छति ॥१७॥**

( १ ) **मेधातिथिः** । यतोवापीति आरामादेरपि आख्यातव्यंपृच्छतइत्येव यदिपृच्छतीति वचनंनहठात्पुनः प्रेषणादिना प्रश्नमसौ कारयितव्यः । अथवा पृच्छते धनस्वामिने यदि पृच्छति राजेति राजपुराय नीतएव विषयभेदोदर्शयितव्यः । तथाचगौतमः आचक्षीतराज्ञापृष्टइति भक्तच्छेदे यज्ञप्रतिबन्धतः प्रकरणविशेषादुभयत्रार्यविधिर्ज्ञेयः ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । खलादेरपिरक्षितात्स्वयमेवाहर्तव्यं प्रार्थनेनवा ग्राह्यम् । न तेनास्य पतितग्रहणदोषः । दिने वारद्वयभोजननियमाद्भोजनद्वयंभवतीतिव्यवस्थया सप्तमेभक्तइत्युक्तम् । आख्यातव्यमिति तस्मै तथाऽन्यस्माअपि अरक्षितादाने कुतःप्राप्तमिदमितिपृष्टेन नाक्षेप्तव्यं तथाप्युरित्यर्थः ॥ १७ ॥

( ३ ) **कुल्लूकः** । धान्यादिमर्दनस्थानात्क्षेत्राद्वा गृहाद्वा यतोवाऽन्यस्मात्प्रदेशाद्धान्यंहीनकर्मसंबन्धि लभ्यते ततोहर्तव्यं यदि वासौ धनस्वामी पृच्छति किन्निमित्तंकृतमिति पृच्छते निमित्तंचौर्यादिवक्तव्यम् ॥ १७ ॥

( ४ ) **राघवानन्दः** । हरणस्थलान्याह खलेति । खलात् प्राङ्गणात् । त्वया हृतमेतदिति यदिपृच्छति तदा तस्मै पृच्छते मया हृतमेतदिति वक्तव्यम ॥ १७ ॥

( ५ ) **नन्दनः** । अश्वस्तननिधानायभक्तंद्रव्यं कुतोहर्तव्यमित्यपेक्षायामाह खलात्क्षेत्रादगाराद्वेति । यतोवाप्युपपद्य लभ्यते ततोहर्तव्यमित्यनुषञ्जनीयम ॥ १७ ॥

( ६ ) **रामचन्द्रः** । यतः स्थानात् ॥ १७ ॥

**ब्राह्मणस्वं नहर्तव्यंक्षत्रियेण कदाचन ॥ दस्युनिष्क्रिययोस्तु स्वमजीवन्हर्तुमर्हति ॥ १८ ॥**

( १ ) **मेधातिथिः** । क्षत्रियेणेति। क्षत्रियग्रहणंवैश्यशूद्रयोरपि प्रदर्शनार्थं । कदाचनेति महत्यामापदीत्यर्थः दस्युनिष्क्रिययोर्ब्राह्मणयोरेव दस्युस्तस्करोनिष्क्रियस्त्वकर्मानाश्रमी ॥ १८ ॥

( २ ) **सर्वज्ञनारायणः** । दस्युः शूद्रः निष्क्रियौ क्षत्रियविशौ तेषां वित्तमजीवन्क्षत्रियोराजा गृह्णीयात् ॥ १८ ॥

( ३ ) **कुल्लूकः** । उक्तेष्वपि निमित्तेषु क्षत्रियेण ब्राह्मणस्य धनंततोपकृष्टत्वान्न हर्तव्यं समानन्यायतया तु वैश्यशूद्राभ्यामुत्कृष्टजातितोन हर्तव्यंप्रतिषिद्धकृद्विहितानन्नुष्ठायिनोः पुनर्ब्राह्मणक्षत्रिययोरत्यन्तापदि क्षत्रियोहर्तुमर्हति ॥ १८ ॥

( ४ ) **राघवानन्दः** । तत्र प्रतिप्रसवमाह ब्राह्मणेति । क्षत्रियेणेत्युपलक्षणं वैश्यशूद्रयोः दस्युनिष्क्रिययोः । अजीवन् वृत्त्यन्तराभावात् । निष्क्रियोधर्महीनः ॥ १८ ॥

( ५ ) **नन्दनः** । तद्द्रव्यंतस्मै स्वामिने जात्या स्वस्मादपकृष्टाद्धर्तव्यंनोत्कृष्टादित्याह ब्राह्मणस्वंनहर्तव्यमिति । ब्राह्मणक्षत्रियग्रहणमुत्कृष्टापकृष्टजात्युपलक्षणार्थं । अस्यापवादेनोत्तरार्धेनोक्तंदस्युः सहिंसः निष्क्रियस्त्यक्तनिजधर्मक्रियः दस्युनिष्क्रिययोर्ब्राह्मणयोरिति विपरिणामः अजीवन्वृत्तिहीनः ॥ १८ ॥

( ६ ) **रामचन्द्रः** । दस्यति यः सः दस्युः निष्क्रियः तस्करानाश्रमिणौ तयोः स्वंद्रव्यं क्षत्रियः अजीवन् हर्तुं स्वीकर्तुं अर्हति ॥ १८ ॥

**योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति ॥ सकृत्वा प्लवमात्मानंसंतारयति तावुभौ ॥ १९ ॥**

( १ ) **मेधातिथिः** । प्लवःसमुद्रतरणः उभौ यस्यापहरति शेषोऽर्थवादः ॥ १९ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मानंप्लवंकृत्वेत्यात्मनस्तरणंतारणं परस्येति दर्शयति । तथाच राजा दस्युनिष्क्रिययोर्द्रव्यंगृहीत्वापि देयमित्यर्थः । तावुभावित्यर्थलाभेन साधूनन्यांश्च तद्वित्तविनियोगेन ॥ १९ ॥

( ३ ) **कुल्लूकः** । योहीनकर्मादिभ्यउत्कृष्टेभ्योऽभिहितेष्वपि निमित्तेषूक्तानुरूपंयज्ञाद्यादिसाधनंकृत्वा साधुभ्यउत्कृष्टेभ्यऋत्विगादिभ्योधनंददाति सयस्यापहरति तद्दुरितंनाशयति यस्मै तद्ददाति तद्दौर्गत्याभिघातादित्येवंद्वावप्यात्मानमुडुपंकृत्वा दुःखान्मोचयति ॥ १९ ॥

( ४ ) **राघवानन्दः** । चातुवर्ण्यस्य बलबुद्धिमतः उपायान्तरमाह यइति । असाधुभ्योदस्य्वादिभ्यः । साधुभ्यो यागादिशीलेभ्यः । उभौ दातृप्रतिग्राहकौ । प्लवम् प्लवस्थानीयम् ॥ १९ ॥

( ५ ) **नन्दनः** । अपरमपिपरस्वादानविषयमाह योऽसाधुभ्योऽर्थमादायेति । असाधुभ्योऽयज्ञशीलेभ्यः ताउभौ तानुभयान् ॥ १९ ॥

( ६ ) **रामचन्द्रः** । यः असाधुभ्योऽर्थं आदाय साधुभ्यः संप्रयच्छति सः क्षत्रियःआत्मानं प्लवं तरणसाधनं कृत्वा तौउभौ असाधुसाधूसंतारयति ॥ १९ ॥

**यद्धनंयज्ञशीलानांदेवस्वंतद्विदुर्बुधाः ॥ अयज्वनांतु यद्वित्तमासुरस्वंतदुच्यते ॥ २० ॥**

( १ ) **मेधातिथिः** । अयमस्यार्थवादएव गुणवद्भ्योनापहर्तव्यंनिर्गुणेभ्यस्तुनदोषः ॥ २० ॥

( २ ) **सर्वज्ञनारायणः** । यद्धनमित्यस्यैवशेषः ॥ २० ॥

( ३ ) **कुल्लूकः** । यज्ञशीलानांयद्धनंतद्यागादौ विनियोगाद्देवस्वंविद्वांसोमन्यन्ते यागादिशून्यानान्तु यद्द्रव्यंतद्धर्मविनियोगाभावादासुरस्वमुच्यते अतस्तदप्यपहृत्य यागसंपादनात्तद्देवस्वंकर्तव्यम् ॥ २० ॥

( ४ ) **राघवानन्दः** । यज्वाऽयज्वनोर्धनेषु देवासुरस्वदृष्टिमारोपयति यदिति ॥ २० ॥

( ५ ) **नन्दनः** । अत्रोपपत्तिमाह यद्धनंयज्ञशीलानामिति ॥ २० ॥

( ६ ) **रामचन्द्रः** । देव चं देवांशं । असुरांशं दैत्यांशम् ॥ २० ॥

**नतस्मिन्धारयेद्दण्डंधार्मिकः पृथिवीपतिः ॥ क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥२१॥**

( १ ) **मेधातिथिः** । अस्मिन्निमित्ते चौरत्वेनानीतेभ्योराज्ञा दण्डोनकर्तव्योयतस्तस्यैवबालिश्यान्मौर्ख्यात्क्षुधावसीदन्ति क्षुधेत्यविवक्षितमुभयोः प्रकरणादर्थवादत्त्वाच्च ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । तस्मिन्निति तत्पदं व्यवहितवाचि येनाश्वस्तनविधानेन त्रिरात्रोप [ वासादिनाऽ ] र्थ-[ हरणं ] कृतं तस्मिन्नित्यर्थः । बालिश्यादज्ञानात् ॥ २१ ॥

( ३ ) **कुल्लूकः** । तस्मिन्नुक्तनिमित्तेचौर्यबलात्कारंकुर्वाणे धर्मप्रधानोराजा दण्डंन कुर्यात् यस्माद्राज्ञोमूढत्वाद्ब्राह्मणः क्षुधावसादंप्राप्नोति ॥ २१ ॥

( ४ ) **राघवानन्दः** । आरोपस्य फलमाह नेति । तस्मिन्नासुरधनहारिणि ब्राह्मणे । ब्राह्मणस्यान्यधनापहरणं क्षुधासीदनं वा क्षत्रियस्यैवापराधइत्याह क्षत्रियस्येति ॥ २१ ॥

( ६ ) **रामचन्द्रः** । तस्मिन्ब्राह्मणे क्षत्रियस्य बालिश्यात् ॥ २१ ॥

**तस्य भृत्यजनंज्ञात्वा स्वकुटुम्बान्महीपतिः ॥ श्रुतशीले च विज्ञाय वृत्तिंधर्म्यांप्रकल्पयेत् ॥२२॥**

( १ ) **मेधातिथिः** । धर्म्यावृत्तिर्यया नित्यकर्मण्यपि संपद्यन्ते क्षीणकोशेनापि महिषीराजपुत्रादिकल्पिताद्दायाद्विहिताच्च धनाच्च किंचिदवकृष्यदातव्यमिति स्वकुटुम्बादित्यादिनामहाधनस्यैव राज्ञोयंविधिः सर्वरत्नानीति वचनात् ॥ २२॥

( २ ) **सर्वज्ञनारायणः** । तस्य ब्राह्मणस्य । कुटुम्बात् स्वकुटुम्बमध्यांशकाद्धनात् । शीलं वृत्तम् । धर्म्यां असद्दानादिव्यतिरिक्ताम् ॥ २२ ॥

( ३ ) **कुल्लूकः** । ततश्चतस्येति । तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गंज्ञात्वा श्रुताचारोचिततदनुरूपांवृत्तिंस्वगृहाद्राजा कल्पयेत् ॥ २२ ॥

( ४ ) **राघवानन्दः** । अतआहतस्येतिद्वाभ्याम् । भृत्यजनं पोष्यजनम् । स्वकुटुम्बादपि धर्म्यां स्वधर्मोत्पत्तये हेतुभूताम् ॥ २२ ॥

( ५ ) **नन्दनः** । तस्य ब्राह्मणस्य ॥ २२ ॥

( ६ ) **रामचन्द्रः** । स्वकुटुम्बात् गृहात् तस्य ब्राह्मणस्य श्रुतिशीले वेदाभ्यासरते ॥ २२ ॥

**कल्पयित्वाऽस्यवृत्तिंच रक्षेदेनंसमन्ततः ॥ राजा हि धर्मषड्भागंतस्मात्प्राप्नोति रक्षितात् ॥ २३ ॥**

( १ ) **मेधातिथिः** । स्पष्टार्थोऽयंश्लोकः ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । वृत्तिं दानादिना । रक्षेच्चौरादेः ॥ २३ ॥

( ३ ) **कुल्लूकः** । अस्य ब्राह्मणस्य जीविकांविधाय शत्रुचौरादेः सर्वतोरक्षयेत यस्माद्ब्राह्मणाद्रक्षितात्तस्य धर्मषड्भागं प्राप्नोति ॥ २३ ॥

( ४ ) **राघवानन्दः** । रक्षेत्ताम्रपट्टलिखितादिना ब्राह्मणरक्षणे परमलाभइत्याह राजेति । बलिषड्भागमिव रक्षितात्प्रजारूपात्तद्धर्मात् षड्भागमाप्नोतीत्यन्वयः ॥ २३ ॥

( ५ ) **नन्दनः** । समन्ततः सर्वापद्भ्यः फलंषड्भागं यत्पुण्यंप्रत्यहंक्रियते तस्य फलषड्भागम् ॥ २३ ॥

( ६ ) **रामचन्द्रः** । अस्य द्विजस्य वृत्तिं कल्पयित्वा एनं द्विजं तस्मात् द्विजात् धर्मस्य षड्भागं आप्नोति ॥ २३ ॥

**न यज्ञार्थंधनंशूद्राद्विप्रोभिक्षेत कर्हिचित् ॥ यजमानोहि भिक्षित्वा चण्डालः प्रेत्य जायते॥२४॥**

( १ ) **मेधातिथिः** । भिक्षणमत्रनिषिध्यते अयाचितोपपन्नन्तु नदुष्यति तथाचोक्तं॥ अयाचितोपपन्नानांद्रव्याणांयः प्रतिग्रहः। विशिष्टलोकशास्त्राभ्यांतंविद्यादप्रतिग्रहमिति ॥ यज्ञार्थोयंप्रतिषेधोनतुभृत्यभरणे केचित्पूर्वशेषमेव मन्यन्ते। भिक्षणेदोषदर्शनादुपायान्तरेणोक्तमादानम् ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । शूद्राद्भिक्षित्वा यजमानोयागंकुर्वाणः ॥ २४ ॥

( ३ ) **कुल्लूकः** । यज्ञसिद्धये धनंब्राह्मणः कदाचिन्नशूद्राद्याचेत् यस्माच्छूद्राद्याचित्वा यज्ञकुर्वाणोमृतश्चण्डालोभवति। अतोयाचननिषेधाच्छूद्रादयाचितोपस्थितंयज्ञार्थमप्यविरुद्धम् ॥ २४ ॥

( ४ ) **राघवानन्दः** । ननु दक्षिणार्थं गोत्रयादिवद्यागार्थमपि किंचिच्छूद्रात्प्रतिगृह्णीयात्तत्राह नेति । दक्षिणायायागोत्तरकालीनत्वाद्यागस्योद्देश्यत्वाभावात् यजमानोहि तेन धनेनेतिशेषः ॥ २४ ॥

( ५ ) **नन्दनः** । पुनर्वक्ष्यमाणत्वात्न नयज्ञार्थंधनमिति । अत्र हेतुरुत्तरार्धेनोक्तः यजमानः यजन् ॥ २४ ॥

**यज्ञार्थमर्थंभिक्षित्वा योन सर्वंप्रयच्छति ॥ सयाति भासतांविप्रः काकतांवा शतंसमाः ॥ २५ ॥**

( १ ) **मेधातिथिः** । भिक्षितस्य यज्ञार्थंपरिशेषितस्य कार्यान्तरायफलंकाकता भासता प्राप्तिः ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । भिक्षत्वा द्विजेभ्योपि न प्रयच्छति तत्रयज्ञे न त्यजति ॥ २५ ॥

( ३ ) **कुल्लूकः** । यज्ञसिद्ध्यर्थंधनंयाचित्वा योयज्ञे सर्वंनविनियुङ्क्तेसशतंवर्षाणि भासत्वंकाकत्वंवा प्राप्नोति ॥ २५॥

( ४ ) **राघवानन्दः** । त्रैवर्णिकेभ्योपियज्ञार्थं यावद्धनं गृहीतं कुतश्चिन्निमित्तात्तददन्पक्षिषु स्यादतस्तदवश्यं यज्ञे देयमिति सार्थवादमाह यज्ञेति । भासः पक्षिविशेषः । समाः अब्दान्व्याप्य ॥ २५ ॥

( ५ ) **नन्दनः** । भिक्षितात्प्रतियाह्यात् भासोगृध्रविशेषः ॥ २५ ॥

( ६ ) **रामचन्द्रः** । अर्थंद्रव्यम् ॥ २५ ॥

**देवस्वंब्राह्मणस्वंवा लोभेनोपहिनस्ति यः ॥ सपापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २६ ॥**

( १ ) **मेधातिथिः**। यागशीलानांत्रयाणांवर्णानांयद्वित्तंतद्देवस्वंब्राह्मणस्यायागशीलस्यापि यत्स्वंतद्ब्राह्मणस्वमिति एवमपिश्लोकोमच्छत्येव अर्थवादश्लोकोसौ धनंयज्ञशीलानामिति नचौर्यादिशब्दवच्छब्दार्थपरिभाषापरोऽतोन्यथा व्याख्यायते देवानुद्दिश्य यागादिक्रियार्थंधनंयदुत्सृष्टंतद्देवस्वंमुख्यस्य स्वस्वामिसंबन्धस्य देवानामसंभवात्। नहि देवताइच्छया धनंनियुञ्जते नच परिपालनव्यापारस्तासांदृश्यते स्वंच लोके तादृशमुच्यते तस्माद्देवोद्देशेन यदुक्तंनेदंमम देवतायाइदमिति तद्देवस्वंतच्च दर्शपूर्णमासादियागेष्वग्न्यादिदेवताभ्यश्चोदितं शिष्टसमाचारप्रसिद्धयैवगौणोपायदुर्गायागादिषु। ननुचतुर्भुजादि-

प्रतिमासंबन्धिलोके देवस्वमुच्यते लोकप्रसिद्धश्चशब्दार्थः शास्त्रेग्रहीतुंन्याय्यः स्यादेवंयदिदेवस्वशब्दोनिर्भागः प्रसिद्धिमुपेयात् देवानांस्वंदेवस्वमित्यवयवप्रसिद्ध्या समुदायार्थः प्रकृष्टेनचवाक्यान्तरप्रकल्पना प्रमाणेनाप्यस्तिमुख्यंचतुर्भुजादीनांदेवत्वं-प्रतिमाव्यवहारेणैवापत्ततं नच यथुक्तलक्षणमस्ति अथसमाचारतोदेवस्वंभवतु स्वस्वामिभावस्तावन्नास्ति यथोक्तेन च प्रकारेण स्वव्यवहारोपपत्तिरिति शिष्टंद्वितीये ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । देवस्वं देवोद्देशेनोत्सृष्टं यज्वनांच धनम् ॥ २६ ॥

( ३ ) **कुल्लूकः** । प्रतिमादिदेवतार्थमुत्सृष्टंधनंदेवस्वंब्राह्मणस्वंच योलोभादपहरति सपापत्मभावोजन्मान्तरे गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

( ४ ) **राघवानन्दः** । यज्ञार्थेभिक्षितं देवस्वमिति ज्ञापयन्सदृष्टान्तनरकपातमाह । ब्राह्मणस्वमिति दृष्टान्तार्थम् । यथाहि विप्रधनं नरकोत्पादकं तथा देवस्वमपीति । तस्मादुभयं न ग्राह्यमिति ॥ २६ ॥

( ५ ) **नन्दनः** । एतदेवोपपादयति देवस्वंब्राह्मणस्वंचेति । यज्ञार्थंयज्ञभिक्षितंतद्देवस्वंब्राह्मणस्वंचोपहिनस्त्यपहरति सर्वंप्रयच्छतीतियावत् उच्छिष्टजीवनंयउपयोगार्हद्रवोच्छेषणात् ॥ २६ ॥

( ६ ) **रामचन्द्रः** । यः लोभेन देवस्वं उपहिनस्ति नाशयति ॥ २६ ॥

## इष्टिंवैश्वानरींनित्यंनिर्वपेदब्दपर्यये ॥ क्लृप्तानांपशुसोमानांनिष्कृत्यर्थमसंभवे ॥२७॥

( १ ) **मेधातिथिः** । वैश्वानर्याइष्टेर्गृह्यस्मृतिभ्यः स्वरूपमवसातव्यंसमाप्ते वर्षे द्वितीयवर्षस्यप्रवृत्तिरब्दपर्ययः । क्लृप्तानांविहितानांपशुसोमानांनित्यानांषाण्मास्यः सांवत्सरः पशुर्नित्यंवसन्तेसोमस्तेषामसंभवे धनाभावादिदोषेण निष्कृत्यर्थं-नित्यस्याकरणे योदोषस्तन्निवृत्त्यर्थंश्रुतेऽस्मिन्निमित्तेऽन्यकर्म समामनन्ति तत्र केचित्समुच्चयंमन्यन्ते सत्यप्येककार्यत्वेप्रमाणभेदेन विधिनात्रतदयुक्तं तथाचब्रह्महत्याप्रायश्चित्ते श्रौते स्मार्तेचस्वशब्देन विकल्पंवक्षत्यभिजिद्विश्वजिद्भ्यां चेति ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । इष्टिंवैश्वानरीमिति पशुबन्धादिककरणाशक्तस्यानुकल्पोयागप्रसंगादुक्तः । क्लृप्तानां नियतानामसंभवे धनाभावे न । निष्कृत्यर्थं प्रत्यवायानुत्पादार्थम् । पशुः पशुहविष्कोयागः । सोमः सोमहविष्कः ॥ २७ ॥

( ३ ) **कुल्लूकः** । समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्ययंचैत्रशुक्लादिवर्षप्रवृत्तिस्तत्र वर्षान्तरे वैश्वानरीमिष्टिंविहितसोमयागासंभवे तदकरणदोषनिर्हरणार्थंसर्वदा शूद्रादितउक्तधनग्रहणरूपामिष्टिंकुर्यात् ॥ २७ ॥

( ४ ) **राघवानन्दः** । यस्यत्रैवार्षिकमित्यत्र यागस्य कर्तव्यतां सामान्यतःप्रोक्तां विशेषे स्थापयति इष्टिमिति । मध्वापीतइत्यादिनिन्दास्तु नित्यातिरिक्तविषयाः । अब्दपर्यये पूर्ववर्षसमापकोत्तरवर्षाद्यचैत्रशुक्लप्रतिपदादिकाले क्लृप्तानां आवश्यकत्वेन निष्कृत्यर्थं तदकरणपापनिवृत्त्यर्थम् ॥ २७ ॥

( ५ ) **नन्दनः** । अथ पशुसोमयोः प्रत्यब्दंकर्तव्ययोरापदि प्रत्याम्नायमाह इष्टिंवैश्वानरींचैवेति । नित्यमब्दंक्लृप्तानामनुष्ठेयत्वेन विहितानांनिष्कृत्यर्थंप्रत्याम्नायार्थं असंभवे द्रव्यासंभवे ॥ २७ ॥

( ६ ) **रामचन्द्रः** । क्लृप्तानांनियतानांपशुसोमानां असंभवे अब्दपर्यये नित्यंवैश्वानरीं इष्टिं प्रायश्चित्तार्थं निर्वपेत् ॥ २७ ॥

**आपत्कल्पेन योधर्मंकुरुते नापदि द्विजः ॥ सनाप्नोति फलंतस्य परत्रेति विचारितम् ॥ २८ ॥**

( १ ) **मेधातिथिः** । आपत्कल्पप्रतिनिधिंवैश्वानरींवा विद्यमानधनोयोगौणपक्षमाश्रयति तस्य नसोऽर्थःसिध्यति ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । नचैवं विभवेपि तन्मात्रेपि प्रत्यवायासंभवइत्याह आपत्कल्पेनेति ॥ २८ ॥

( ३ ) **कुल्लूकः** । आपद्विहितेन विधिना योऽनापदि धर्मानुष्ठानंद्विजः कुरुते तस्य तत्परलोके निष्फलंभवतीति मन्वादिभिर्विचारितम् ॥ २८ ॥

( ४ ) **राघवानन्दः** । तर्हि समर्थेनापि सैवेष्टिः कार्या कृतं पशुसोमैस्तत्राह आपदितिद्वाभ्याम् । आपत्कल्पेन प्रतिनिध्यादिना करोति तस्य कर्मणः फलंनाप्नोति ॥ २८ ॥

( ५ ) **नन्दनः** । संभवेतु मुख्यः कल्पएव कार्योनापत्कल्पइत्याह आपत्कल्पेन योधर्ममिति ॥ २८ ॥

( ६ ) **रामचन्द्रः** । अनापदि यः द्विजः आपत्कल्पेन आपत्कालसदृशेन व्यवहारेण धर्मंकरोति तस्य धर्मस्य फलं नप्राप्नोति ॥ २८ ॥

**विश्वैश्चदेवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ॥ आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः॥ २९॥**

( १ ) **मेधातिथिः** । एषएवार्थः आपदिप्रतिनिधिराश्रयितव्योनसंपदि ॥ २९ ॥

( २ ) **सर्वज्ञनारायणः** । मरणाद्भीतैर्नासोमपोऽश्रयेतेत्यादिनिषिद्धोऽसोमपादिर्मरणभीतेः । विधेर्विहितस्य प्रतिनिधिः प्रतिरूपकः ॥ २९ ॥

( ३ ) **कुल्लूकः** । विश्वेदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिर्ब्राह्मणैर्मरणाद्भीतैरापत्सु मुख्यस्य विधेः सोमादेर्वैश्वानर्यादिः प्रतिनिधिरनुष्ठितोऽसौ मुख्यासभवे कार्यः नतुमुख्यसंभवे ॥ २९ ॥

( ४ ) **राघवानन्दः** । मरणादावश्यकानामकरणात्तज्जन्यनरकाद्वा भीतैस्तैःप्रतिनिधिः सोमाद्यभावे वैश्वानर्यादि च त्रयंसमुच्चयः ॥ २९ ॥

( ५ ) **नन्दनः** । आपदित्वकरणादापत्कल्पएव श्रेयानिति परकृतिरूपेणार्थवादेनाह विश्वैश्चदेवैरिति ॥ २९ ॥

( ६ ) **रामचन्द्रः** । विधेर्विहितस्य पशुबन्धादिकर्मणः प्रतिनिधिः कृतः ॥ २९ ॥

**प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥ न सांपरायिकंतस्य दुर्मतेर्विद्यते फलम् ॥ ३० ॥**

( १ ) **मेधातिथिः** । अयमपि पूर्वशेषोऽर्थवादः । सांपरायिकंपारलौकिकम् ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । प्रभुःशक्तः । प्रथमकल्पस्य मुख्यस्य । अनुकल्पेन प्रतिनिध्यादिना । सांपरायिकं पारलौकिकम् ऐहिककीर्त्यादेस्तु लाभोभवत्येव ॥ ३० ॥

( ३ ) **कुल्लूकः** । योमुख्यानुष्ठानसंपन्नः सन् आपद्विहितेन प्रतिनिधिनाऽनुष्ठानंकरोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयरूपंप्रत्यवायपरिहारार्थंफलंच न भवति आपत्कल्पेन योधर्ममित्यनेनोक्तमप्येतच्छास्त्रादरार्थंपुनरुच्यते ॥ ३० ॥

( ४ ) **राघवानन्दः** । समर्थस्यापत्कल्पप्रवर्तने बाधकमाह प्रभुरिति । प्रभुर्मुख्यकरणे समर्थः । सांपरायिकं पारलौकिकम् ॥ ३० ॥

( ५ ) **नन्दनः** । शक्तोमुख्यकल्पमेव कुर्यान्नानुकल्पमित्याह प्रभुः प्रथमकल्पस्येति । प्रभुः शक्तः प्रथमकल्पस्य मुख्यकल्पस्य सांपरायोविपत्तनउत्तारकं सांपरायिकं उक्तस्यार्थस्य पुनर्वचनमादरार्थम् ॥ ३० ॥

( ६ ) **रामचन्द्रः** । शक्तः तस्य अनुकल्पकर्तुः सांपरायिकं पारलौकिकं फलं न विद्यते ॥ ३० ॥

**न ब्राह्मणोवेदयेत किंचिद्राजनि धर्मवित् ॥ स्ववीर्येणैव तान् शिष्यान्मानवानपकारिणः ॥ ३१ ॥**

( १ ) **मेधातिथिः** । निमित्तेऽभिचारोनदोषायेति श्लोकार्थः नत्वभिचारोविधीयते नच राजनि वेदनंप्रनिषिध्यते केवले सतिनिमित्तेऽभिचरितुंप्रवृत्तोराज्ञा न किंचिद्वक्तव्यः [ तथा ][1] वक्ष्यति विधाता शासिता वक्तेति तस्मैनाकुशलंब्रूयादितिराजेति प्रीतयेऽभिच्छिन्द्यादित्यपि । सत्यपि विधौराजनि निवेदयेन्न च प्रतिषेधउपसंहारश्लोकपर्यालोचनयातत्परमवतिष्ठते निमित्तानि चोक्तानि भार्यातिक्रमकारीचेत्यादीनि किंचित्पीडानिमित्तमनेन मे कृतमिति राज्ञे निवेदयेद्धर्मवित् अभिचारविधिज्ञःस्ववीर्येण मन्त्राभिशापाभ्यां तत्रैवोत्तरश्लोकार्थः ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रप्रसंगात्प्रायश्चित्तस्य वक्ष्यमाणस्य ब्राह्मणेन स्वशत्रावभिचारेण मार्यमाणे भाव्योराज्ञइवास्य शत्रुवधइत्याह नब्राह्मणइति । वेदयेत निवेदयेत् ॥ ३१ ॥

( ३ ) **कुल्लूकः** । धर्मज्ञोब्राह्मणः किंचिदप्यपकृतंन राज्ञः कथयेत् अपि तु स्वशक्त्यैव वक्ष्यमाणाभिचारादिनापकारिणोमनुष्यान्निगृह्णीयात् ततश्च स्वकीयधर्मविरोधादपकृष्टापराधकरणेसत्यभिचारादि न दोषायेत्येवंपरमेतन्नत्वभिचारोविधीयते राजनि वेदनंवा निषिध्यते ॥ ३१ ॥

( ४ ) **राघवानन्दः** । अदृष्टभये ब्राह्मणस्य तपएव साधनं दृष्टभयेतु किं स्यात्तत्राह नेतिपञ्चभिः । वेदयेत न निवेदयेत् ममेदमपकृतमिति । स्ववीर्येण तपआदिना शिष्यान्निगृह्णीयात् ॥ ३१ ॥

( ५ ) **नन्दनः** । अथ शत्रुपीडापदि ब्राह्मणस्य कर्तव्यमाह नब्राह्मणोवेदयेतेति । किञ्चिदपहरणम् ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणः राजनि किंचित् स्ववीर्येणैव अभिचारंवर्तयन् न वेदयेत् न निवेदयेत् ॥ ३१ ॥

**स्ववीर्याद्राजवीर्याच्च स्ववीर्यंबलवत्तरम् ॥ तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन्द्विजः ॥ ३२ ॥**

( १ ) **मेधातिथिः** । राजा कदाचिदनिपुणतया न निग्रहेण प्रवर्तेतस्वतस्तुन कदाचिदुपेक्षेतिस्ववीर्यंबलीयः ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । बलवत्तरमधिकं प्रयत्नाधिक्यसंभवात् ॥ ३२ ॥

( ३ ) **कुल्लूकः** । यस्मात्स्वसामर्थ्याद्राजसामर्थ्याच्च पराधीनराजसामर्थ्यापेक्षया स्वसामर्थ्यमेव स्वाधीनत्वाद्बलीयः तस्मात्स्वेन वीर्येणैव शत्रून्ब्राह्मणोनिगृह्णीयात् ॥ ३२ ॥

( ४ ) **राघवानन्दः** । तत्रहेतुः स्ववीर्यादिति । राजवीर्यस्य धनाद्युपाधिदर्शनात् ॥ ३२ ॥

( ५ ) **नन्दनः** । अत्र हेतुमाह स्ववीर्याद्राजवीर्याच्चेति । द्विजः द्विजोत्तमः ॥ ३२ ॥

**श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ॥ वाक्शस्त्रंवै ब्राह्मणस्य तेन हन्यादरीन्द्विजः ॥ ३३ ॥**

**[ तदस्त्रंसर्ववर्णानामनिवार्यंच शक्तितः । तपोवीर्यप्रभावेण अवध्यानपि बाधते॥ १ ॥ ]** [१]

---

( ३३ ) त्यविचारयन्=त्यवधारितं ( च )=त्यभिचारयन् ( ख, घ ) १ ( ट ) ( १ ) मे० ८

( १ ) **मेधातिथिः**। किंतत्त्ववीर्यमिति शङ्कानिवृत्त्यर्थोऽयंश्लोकः। श्रूयन्तइति श्रुतयः अथर्वणवेदे येऽभिचारप्रकाराः श्रुतास्तेकर्तव्याइत्यर्थः। बाहुल्येन तत्राभिचाराणांविधानात् अथर्वाङ्गिरसग्रहणंन पुनरन्येषु वेदेष्वननुज्ञातं। अथवाऽभिचारश्रुतयोऽथर्वाङ्गिरसशब्देनोपात्ताः अथवाऽथर्वणशब्दाएवंविधएवार्थेप्रयुज्यन्ते यज्ञोऽथर्वणवित्काम्यइति ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः**। श्रुतीरथर्वाङ्गिरसीः तच्छ्रुत्युक्तानि कर्माणि कुर्यात् इत्यनेनहेतुनेत्यर्थः। अभिचारयन्नभिचारंप्रवर्तयन् ॥ ३३ ॥

( ३ ) **कुल्लूकः**। तत्किंतत्त्ववार्यमित्याह श्रुतीरिति। अथर्ववेदस्याङ्गिरसीर्दृष्टाभिचारश्रुतीरविचारयन्कुर्यात्तदर्थमभिचारमनुतिष्ठेदित्यर्थः यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रकार्यकरणाच्छस्त्रंतेन ब्राह्मणः शत्रून्हन्यान्नतु शत्रुनियमाय राजा वाच्यः ॥ ३३ ॥

( ४ ) **राघवानन्दः**। अथर्वाङ्गिरसीः अथर्ववेदअङ्गिरसादृष्टाअभिचारश्रुतीः। अभिचारयन् अभिचाररीत्या तत्र हेतुः वाक्शस्त्रं तेन अरीनपकारिणः ॥ ३३ ॥

( ५ ) **नन्दनः**। हेत्वन्तरमप्याह श्रुतीरथर्वाङ्गिरसीति। अभिचारितमभिचारितमभिचारंकुर्यादित्यथर्वशिरसि श्रुतिवाक्यमस्ति तेन युक्तंतदाश्रयणमिति तच्चाङ्गंसर्वशास्त्राणामिति तच्चाभिचारितं मातृरूपंशस्त्रंवाङ्मन्त्रस्तेनवाङ्मयेन शस्त्रेण ॥ ३३ ॥

( ६ ) **रामचन्द्रः**। अथर्वाङ्गिरसीः श्रुतीः अभिचारयन्। वाक्शस्त्रं आथर्वश्रुत्युपचाररूपंकुर्यात् ॥ ३३ ॥

**क्षत्रियोबाहुवीर्येण तरेदापदमात्मनः ॥ [ तद्धि कुर्वन्यथाशक्तिप्राप्नोति परमांगतिम् ॥ ]‡ धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ ३४ ॥**

( १ ) **मेधातिथिः**। पूर्वशेषएव ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः**। धनेन राज्ञे धनंदत्त्वा तेन स्ववैरिमारणेन ॥ ३४ ॥

( ३ ) **कुल्लूकः**। क्षत्रियः स्वपौरुषेण शत्रुतः परिभवलक्षणामात्मनआपदंनिस्तरेत् वैश्यशूद्रौ पुनः प्रतिकर्त्रे धनदानेन ब्राह्मणस्त्वभिचारात्मकैर्जपहोमैः ॥ ३४ ॥

( ४ ) **राघवानन्दः**। अत्रार्थे दृष्टान्तः क्षत्रियइत्यादि। प्रासंगिकमुपायपरंवा। जपहोमैरभिचारात्मकैः। विकल्पस्त्वरिगतगुणवत्त्वाद्यपेक्षया। एतेन क्षत्रियादीनां। नवाक्शस्त्रावरणमित्युक्तम् ॥ ३४ ॥

( ५ ) **नन्दनः**। नेयं वर्णानामापदि प्रतीकारोपायव्यवस्थेत्याह क्षत्रियोबाहुवीर्येणेति ॥ ३४ ॥

( ६ ) **रामचन्द्रः**। वैश्यशूद्रौ राज्ञे धनदानेन ॥ ३४ ॥

**विधाता शासिता वक्ता मैत्रोब्राह्मणउच्यते ॥ तस्मै नाकुशलंब्रूयान्न शुष्कां गिरमीरयेत् ॥ ३५ ॥**

( १ ) **मेधातिथिः**। प्राग्व्याख्यातोयं तस्मै ब्राह्मणायाभिचरेणनिगृह्णतामयमित्यकुशलंन ब्रूयात् नशुष्कांगिरमीरयेत् वाग्दण्डधिग्दण्डयोरपि प्रतिषेधः। अथवा सर्वेषांवर्णानांनब्राह्मणः क्षोभयितव्योयस्मात्वीर्यविद्याप्रभावेणशक्तः स्वयंनिग्रहीतुं

---

‡ ( ख, ग ) ( ३५ ) नशुष्कां=नशुक्तां ( क, ख, ग, च, ण )=नाशुभां ( घ )

विधाता स्रष्टान्यस्य राज्ञः शासितानिग्रहीता वक्ता हितानतोमैत्रस्तस्मात्सर्वप्रशक्तियुक्तत्वान्नदुर्बलोयमित्यवमन्तव्यः ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । विधाता यज्ञादिद्वारेण जगतःस्रष्टा । शासिताऽधर्मस्य । वक्ताऽध्यापकः । मैत्रोऽहिंस्रः । अतोबहूपकारकत्वादकुशलमयुक्तं हिंसादि न कुर्यात् । शुष्कांपर्युषिताम् ॥ ३५ ॥

( ३ ) **कुल्लूकः** । विहितकर्मणामनुष्ठाता पुत्रशिष्यादीनां शास्ता प्रायश्चित्तादिधर्माणांवक्ता सर्वभूतमैत्रीप्रधानोब्राह्मणउच्यते । तस्मै निगृह्यतामयमित्येवमनिष्टंन ब्रूयान्नापि साक्रोशांवाचंवाग्दण्डधिग्दण्डरूपांतस्योच्चारयेत् ॥ ३५ ॥

( ४ ) **राघवानन्दः** । अन्येषां विप्रापेक्षत्वं विमात् भीतिंच व्यञ्जयंस्तस्यत्वन्यत्र नैरपेक्ष्यमाह विधातेति । विधाता कर्तुमकर्तुमन्यथाकर्तुंसमर्थः । शासिता वाक्शस्त्राद्यैर्वक्ता धर्मादेः मैत्रोहितानुसंधाता । अकुशलं बीभत्सम् । शुष्कां शोकजननीं आक्रोशवाचकमिति यावत् ॥ ३५ ॥

( ५ ) **नन्दनः** । तस्माद्ब्राह्मणोनावमन्तव्यइति प्रसङ्गादाह विधाताशासितावक्तेति । अभिचारादीनांविधाता शासिता कारयिता वक्ता उपदेष्टा मित्रस्यभावोमैत्री तद्वान्मैत्रः सर्वभूतहितः अकुशलमनिष्टं शुष्कंविरसम् ॥ ३५ ॥

( ६ ) **रामचन्द्रः** । विधाता यज्ञादिद्वारेण जगतः स्रष्टा । शासिता धर्मस्याध्यापकः । वक्ता हितानाम् तस्मै ब्राह्मणाय अकुशलंन ब्रूयात् । न शुष्कां निष्ठुरां गिरं ईरयेत् ॥ ३५ ॥

## नवै कन्या नयुवतिर्नाल्पविद्योन बालिशः॥ होता स्यादग्निहोत्रस्य नार्त्तोनासंस्कृतस्तथा ॥३६॥

( १ ) **मेधातिथिः** । अग्निहोत्रे ऋत्विग्वरणस्यरुमाम्नानात् जुहुयाद्धावयेद्वेति स्त्रीपुंसयोरविशेषेण क्षीरहोतृताप्राप्तौ कन्यायुवत्योः प्रतिषेधः । एवमाहुतिद्वयमात्रविधिज्ञस्याल्पविद्यस्य बालिशस्य वाप्राप्तिः प्रतिषिध्यते । आर्त्तोव्याधिना असंस्कृतोनुपनीतः एतच्चायुक्तं श्रौते ह्यग्निहोत्रे स्वयंपर्वणि जुहुयात् ऋत्विजामेकइतरेषांकालमिति समाचरन्ति नच स्त्रीणामार्त्विज्यसंभवोतोगृह्याग्निविषये कन्यायुवत्योः प्रतिषेधोजातपुत्रायाःप्राप्त्यर्थइति वर्णयन्ति । तथाचान्येपि सूत्रकाराः कामंगृह्येऽग्नौ पत्नीजुहुयात्सायंप्रातर्होमाविति अन्येतु वैतानकुशलइति वचनात्त्रेताग्निविषयमेवेदमन्यन्ते वितानो विहारः सच श्रौतेष्वग्निषु संभवति नच तत्रस्त्र्यादीनांप्राप्तिर्नत्वविदुषां विशिष्टानामिव पुंसामार्त्विज्यविधानात् अतोग्निहोत्रग्रहणंसर्वकर्मणांहोतृग्रहणंच सर्वर्त्विजांप्रदर्शनार्थमतः श्रुत्यर्थानुवादमात्रमेषास्मृतिः ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । यथा कन्यादयोहोतारस्तथा अविद्योऽतिबालोदुःखाद्यार्त्तश्च न होतास्यादिति त्रितयदृष्टान्ततया त्रयाणां कन्यायुवत्यसंस्कृतानामभिधानम् । अतएवाग्रे तथैवोपसंहारः ॥ ३६ ॥

( ३ ) **कुल्लूकः** । कन्याऽनूढा ऊढापि तरुणी तथाऽल्पाध्यायिमूर्खव्याध्यादिपीडितानुपनीताः श्रौतान्सायंप्रातर्होमान्न कुर्युः । हावयेदिति प्रसक्तावयंकन्यादीनांप्रतिषेधः ॥ ३६ ॥

( ४ ) **राघवानन्दः** । विधेः प्रतिनिधिरित्युक्तेनासमर्थस्य नित्ये प्रारब्धे वा कर्मणि प्रतिनिधिःप्राप्तस्तं विशिनष्टि नेति । कन्या युवतिश्च ऊढानूढे ॥ असामर्थ्ये शरीरस्य व्रतेच समुपस्थिते । कारयेद्धर्मपत्नींवा पुत्रंवा विनयान्वितमिति ॥ स्वपत्न्याः प्रतिनिधित्वेन प्रापतत्वात् । बालिशोदेहमात्राहंबुद्धिरधीतवेदवेदाङ्गोपि नास्तिकः अल्पविद्यनिरासेन मूर्खस्य निरस्तत्वात् । आर्त्तोरोगी । असंस्कृतोऽनुपनीतइति प्राप्तपुत्रनिषेधार्थः ॥ ३६ ॥

( ५ ) **नन्दनः** । आपद्यग्निहोत्रहोमोऽर्हणैवकर्तव्योनानर्हणेति । श्लोकद्वयेनाह नैवकन्यानयुवतीरिति । अल्पविद्योऽमन्त्रज्ञः असंस्कृतोऽनुपनीतः ॥ ३६ ॥

**नरके हि पतन्त्येते जुह्वतः सच यस्य तत् ॥ तस्माद्वैतानकुशलोहोता स्याद्वेदपारगः ॥ ३७ ॥**

( १ ) **मेधातिथिः** । एतेकन्यादयोजुह्वतोनरकंगच्छन्ति सच यजमानोहावयिता ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । एतेऽल्पविद्यादयोजुह्वतोहोमंकुर्वाणाः । यस्य तदग्निहोत्रम् । वैतानमग्निहोत्रकर्म तत्र कुशलः शक्तोऽबालत्वानार्त्तत्वाभ्याम् । वेदपारगोतिविद्यः ॥ ३७ ॥

( ३ ) **कुल्लूकः** । एते कन्यादयोहोमंकुर्वाणानरकंगच्छन्ति यस्य तदग्निहोत्रंप्रतिनिधिरूपेण कुर्वन्तिसोपि नरकंगच्छति तस्माच्छ्रौतकर्मप्रवीणः समस्तवेदाध्यायी होता कार्यः ॥ ३७ ॥

( ४ ) **राघवानन्दः** । तत्रैव निन्दांप्रदर्शयंस्तद्व्यतिरिक्तान्द्रढयति नरकमिति । तदग्निहोत्रं जुह्वतः कुर्वाणाः एते यस्य सोपि नरकं पतत्यतोवैतानकुशलः श्रौतकर्मकुशलः होता स्यादित्यन्वयः ॥ ३७ ॥

( ५ ) **नन्दनः** । एते कन्यादयोयस्याहिताग्नेस्तदग्निहोत्रंसच नरके पतति ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । एते कन्यादयः । तत् अग्निहोत्रं यजमानः प्रतिनिधित्वेन होमं कुर्वाणः सः नरके पतति ॥ ३७॥

**प्राजापत्यमदत्वाश्वमग्न्याधेयस्य दक्षिणाम् ॥ अनाहिताग्निर्भवति ब्राह्मणोविभवे सति ॥ ३८ ॥**

( १ ) **मेधातिथिः** । अग्न्याधेयेऽश्वोदक्षिणा दातव्या प्राजापत्यग्रहणंस्तुत्यर्थं अथवा नात्युत्कृष्टोनातिनिकृष्टः प्राजापत्यः अथच लौकिकाईदृशेवस्तुनि प्रजापति शब्दमुदाहरन्ति विभवे सतीति वचनादसंपत्तावददद्भवत्येवाहिताग्निः ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रजापतिः पश्वाग्निरूपोविराट् तत्संबन्धिनं तन्निष्पत्त्यर्थत्वात् । अनाहिताग्निरित्याहवनीयाद्यसिद्धिरुक्ता ॥ ३८ ॥

( ३ ) **कुल्लूकः** । आधाने प्राजापत्यमश्वंप्रजापतिदेवताकंधनसंपत्तौ सत्यां ब्राह्मणोदक्षिणामदत्वा कृतेऽप्याधानेऽनाहिताग्निर्भवति आधानफलंन लभते तस्मादाधानेऽश्वंदक्षिणांदद्यात् ॥ ३८ ॥

( ४ ) **राघवानन्दः** । समर्थस्यानुकल्पनिषेधेन दक्षिणाननुकल्पं प्राप्तमनूद्य तत्रैव विशेषमाह प्राजापत्यमिति । प्राजापत्यं प्रजापतिदैवताकं प्रजापतिर्विराट् सयथाअस्मदादिहिरण्यगर्भयोर्मध्यमएवं मध्यमपरिमाणोऽश्वोवा । विभवेसतीति विशेषणमत्र स्तुतिः । अनाहिताग्निरसंस्कृताग्निः ॥ ३८ ॥

( ५ ) **नन्दनः** । आपद्यग्न्याधाने किंचिन्न्यूनापि दक्षिणादातव्येति सूचितम् ॥ ३८ ॥

( ६ ) **रामचन्द्रः** । प्राजापत्यं प्रजापतिरूपोविराट् तत्संबन्धिनं अश्वं अग्न्याधेयस्यदक्षिणां अदत्वा अनाहिताग्निर्भवति ॥ ३८ ॥

**पुण्यान्यन्यानि कुर्वीत श्रद्दधानोजितेन्द्रियः ॥ नत्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥ ३९ ॥**

( १ ) **मेधातिथिः** । यावती दक्षिणा विहिता ततोन्यूना दीयते यत्र सोऽल्पदक्षिणोयज्ञः परिक्रयः किलदक्षिणा स्वल्पेन चेत्परिक्रयेण कर्मकरोलभ्यते किमिति बहुदीयते लोकइववाहादीनां पणलभ्यंहि कः प्राज्ञः क्रीणाति दशभिःपणैर्द्वादशशतदानं तत्फलभूयस्त्वायेति मन्यमानस्य प्रतिषेधः । येतु स्वल्पदक्षिणाउत्पत्त्यैवचसोमेदक्षिणेतिक्रतुमन्तोन तन्निषिध्यते ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । पुण्यान्यन्यानि जपादीनि ॥ ३९ ॥

---

( ३७ ) नरके = नरकम् ( राघ० )

( ३ ) **कुल्लूकः** । श्रद्धावान्वशीकृतेन्द्रियःयज्ञव्यतिरिक्तानि तीर्थयात्रादीनि कर्माणि पुण्यानि कुर्वीत नतु शास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेत परोपकारार्थत्वाद्दक्षिणायाः स्वल्पेनापि ऋत्विगादिदोषै*निषेधार्थमिदंवचनम् ॥ ३९ ॥

( ४ ) **राघवानन्दः** । किंच पुण्यानीति । अन्यान्यल्पधनसाध्यानिअन्नदानादीनि ॥ ३९ ॥

( ५ ) **नन्दनः** । अग्न्याधानएवानुकल्पदक्षिणा न यज्ञेष्वित्याह पुण्यान्यन्यानिकुर्वीतेति ॥ ३९ ॥

**इन्द्रियाणि यशः स्वर्गमायुः कीर्तिप्रजाः पशून् ॥ हन्त्यल्पदक्षिणोयज्ञस्तस्मान्नल्पधनोयजेत्॥४०॥**

**[ अन्नहीनोदहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः । दीक्षितंदक्षिणाहीनोनास्ति यज्ञसमोरिपुः ॥ १ ॥ ]‡**

( १ ) **मेधातिथिः** । पूर्वविध्यतिक्रमेफलकथनम् ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । यशः परैर्गुणज्ञानम् । कीर्तिः परैस्तत्कीर्तनम् ॥ ४० ॥

( ३ ) **कुल्लूकः** । चक्षुरादीनीन्द्रियाणि जीवतः ख्यातिरूपंयशः स्वर्गायुषीमृतस्य ख्यातिरूपांकीर्तिमपत्यानि पशूंश्चाल्पदक्षिणोयज्ञः नाशयति तस्मादल्पदक्षिणादानेन यागंन कुर्यात् ॥ ४० ॥

( ४ ) **राघवानन्दः** । दक्षिणानुकल्पाभावं सार्थवादं निगमयति इन्द्रियाणीति । उक्तप्राजापत्याश्वद्वादशशतादि दक्षिणागुणसंख्याभावेऽसाङ्गत्वात्स्वर्गस्य हृतिः इतरेषांब्राह्मणापरितोषादिभिरितिभावः ॥ ४० ॥

( ५ ) **नन्दनः** । अत्रहेतुमाह इन्द्रियाणियशः स्वर्गमिति ॥ ४० ॥

( ६ ) **रामचन्द्रः** । अल्पदक्षिणः यज्ञः इन्द्रियादीनिहन्ति ॥ ४० ॥

**अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः ॥ चान्द्रायणंचरेन्मासंवीरहत्यासमंहि तत् ॥ ४१ ॥**

( १ ) **मेधातिथिः** । अपविध्यत्यक्त्वा त्यागश्चनित्यानामग्निहोत्रादीनां अकरणमुद्वापनंच प्रसङ्गादत्रप्रकरणात्प्रायश्चित्तोपदिशोऽग्नीनितिबहुवचननिर्देशात् गृह्याग्नित्यागे कल्पना कार्या वीरहत्यासमामिति श्रुतिर्वीरहावाएषदेवानामिति कामकारवचनादकामत्यागे कल्पनैव ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । चान्द्रायणंचरेत्तच्चरणानन्तरं पुनरादध्यादित्यर्थः । वीरहत्या पुत्रहत्या स्वयमुत्पादितत्वादग्नीनां वीरइति पुत्रनाम ॥ ४१ ॥

( ३ ) **कुल्लूकः** । अग्निहोत्री ब्राह्मणइच्छातोग्निषु सायंप्रातर्होमानकृत्वा मासंचांद्रायणंचरेत् यस्माद्वीरः पुत्रः तस्य हत्या हननंतत्तुल्यमेतत्तथाच श्रुतिः वीरहावाएषदेवानांभवतियोऽग्निमुद्वासयते अन्येतु मासमपविध्येति समर्थयन्ति ॥४१॥

( ४ ) **राघवानन्दः** । किंच अग्नीति । अपविध्य त्यक्त्वा । कामकारतः शास्त्राद्दते । चान्द्रायणचरणे हेतुः वीरं वीरहत्या वीरोदेवोज्येष्ठपुत्रोवा तस्य हत्या हननं । तथाच श्रुतिः । वीरहावा एषदेवानां योऽग्निमुद्वासयेदिति ॥ ४१ ॥

( ५ ) **नन्दनः** । अनापद्यग्निहोत्रंपरित्याज्यमित्याह अग्निहोत्र्यपविध्याग्नीनिति । कामकारतोऽनापदीत्यर्थः । वीरहत्याऽयुध्यमानस्य क्षत्रियस्य वधःतदपिवेधनं कामकारतइति विशेषणादापदि दोषाभावःसूचितः ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । कामकारतो अग्निहोत्री ब्राह्मणःअग्नीन् अपविध्य परित्यज्य मासंचान्द्रायणंचरेत् । वीरहत्यासमं पुत्रहत्यासमम् । व्रतंचरेत् । वीरहा वाएषदेवानामिति श्रुतेः ॥ ४१ ॥

---

* दोषनिषेधार्थं=तोषसिद्धौ ( अ )  ‡ ( ञ, ट, ठ, ड, य, ल )

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ॥ ऋत्विजस्ते हि शूद्राणांब्रह्मवादिषु गर्हिताः ॥ ४२ ॥

( १ ) **मेधातिथिः** । शूद्रादधिगतेनार्थेन प्रीत्यादिनाऽग्न्याधेयंनकर्तव्यमिति व्याचक्षते नतु प्रवृत्तकर्मणोनित्यकर्मानुष्ठानंप्रतिषिध्यते । तथाचोक्तं नशूद्राद्भिक्षित्वानुष्ठानंकरणीयमयाचितलाभेतु नास्ति दोषः प्रवृत्तकर्मणस्तदर्थंतथाचासत्प्रतिग्रहादात्मवृत्तिरेका प्रतिषिद्धा नित्यानि कर्माण्यभ्यनुज्ञातान्यतः शूद्रधनेन प्रार्थितलब्धेन वाऽविशेषाभिधानसामर्थ्यादग्न्याधेयस्यैवास्य प्रतिषेधोयंविज्ञायते । यदि सर्वकर्मार्थोयंप्रतिषेधः स्यादनेनैव सिद्धत्वान्नभिक्षणंप्रतिषिध्येत नयज्ञार्थंधनंशूद्रादिति अग्नीनांवृषलाग्नित्ववचनंलिङ्गात् ॥ ४२ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मवादिनोवेदवादिनः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । ये शूद्रादधिगम्यार्थंप्राप्य सामान्याभिधानेन याचनेन वाऽर्थंस्वीकृत्य वृषलाग्न्युपसेविनामिति वक्ष्यमाणलिङ्गादाधानपूर्वकमग्निहोत्रमनुतिष्ठन्ति ते शूद्राणामेव याजकानतु तेषांतत्फलंभवति अतस्ते वेदवादिषु निन्दिताः ॥ ४२ ॥

( ४ ) **राघवानन्दः** । पूर्वं नयज्ञार्थमित्यनेन शूद्रभिक्षितेन न यज्ञादिकं कर्तव्यमित्युक्तं संप्रति विधितया शूद्राग्निहोत्रोपासकान्प्रत्याह यइति । अधिगम्य तवाग्निहोत्रंकर्तास्मीति धनमादाय ॥ ४२ ॥

( ५ ) **नन्दनः** । आपद्यपि न शूद्रादग्निहोत्रार्थमतिग्रहःकार्यइत्याह श्लोकद्वयेन येशूद्रादधिगम्यार्थमिति ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । ये शूद्रात् अर्थंप्राप्य अग्निहोत्रं उपासते ॥ ४२ ॥

तेषांसततमज्ञानांवृषलाग्न्युपसेविनां ॥ पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत् ॥ ४३ ॥

( १ ) **मेधातिथिः** । पूर्वविध्यतिक्रमे दोषाभिधाने निखिलप्रकरणमेतत् ॥ ४३ ॥

( २ ) **सर्वज्ञनारायणः** । दाता सशूद्रः । तदेतत्सर्वमग्निहोत्रविषयंप्रसंगादुक्तम् ॥ ४३ ॥

( ३ ) **कुल्लूकः** । तेषांशूद्रधनाहिताग्निपरिचारिणांमूर्खाणांमूर्ध्निपादंदत्वा शूद्रस्तेन दानेन सततंपरलोके दुःखेभ्योनिस्तरति नतु यजमानानांफलंभवति ॥ ४३ ॥

( ४ ) **राघवानन्दः** । ततः किं तत्राह तेषामिति । पदा पादेन । दाता प्रतिनित्यमर्थंधनस्य । दुर्गाण्यापदः ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । वृषलानांद्रव्येणाग्न्युपसेविनां मस्तकं पदा चरणेन अज्ञादीनांमस्तकं आक्रम्य दाता दुर्गाणि नरकान् संतरेत ॥ ४३ ॥

अकुर्वन्विहितंकर्मनिन्दितंच समाचरन् ॥ प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ ४४ ॥

( १ ) **मेधातिथिः** । इदानींप्रकृतान्येवप्रायश्चित्तानि कथ्यन्ते प्रथमंतावत्तेष्वधिकारंनिरूपयति । कोत्राधिकारोविहितनित्यनयासंध्योपासनाग्निहोत्रादियावज्जीवमग्निहोत्रंजुहुयादित्यादिभिः पदैर्ज्ञापितनित्यभावात् यदप्यनियतनिमित्तेऽशुचिः स्पर्शनादौस्नानादितद्विहितमकुर्वन्प्रमादालस्यादिना तथानिन्दितंप्रतिषिद्धंसुरापानादि तदपि शास्त्रमतिक्रम्य सेवमानः प्रायश्चित्तीयतेतदेतदुक्तंभवतिनैमित्तिकोयमधिकारीविहिताकरणात्प्रतिषिद्धसेवनाच्चप्रायश्चित्तं ननुच ग्रामकामस्य सांग्रहणीविहिता ततोग्रामार्थिनः कथंचिदकरणेविहितातिक्रमःस्यात् यदि नाम ग्रामार्थीमत्यवेयात्ततस्तत्कामोस्य यदातु ग्रामंकामयते तदा तस्य तद्विहितंभवति नचेत्प्रवर्तते विहितमतिक्रामेदतश्च प्रायश्चित्तेप्राप्तउच्यते ग्रामस्य त्वा-

भीस्यामिति फललिप्सया तस्य तत्र प्रवृत्तिर्नविधिलक्षणा शास्त्रंतु यागग्रामयोःसाध्यसाधनसंबन्धावेदकमेव वस्तुतोय-द्यपि तत्रापि कर्तव्यता प्रधानप्रसाधनोवाक्यार्थस्तथापि फलासिद्ध्यर्थमेवकर्तव्यताविधिरवगमयत्यतश्च नावगमंकु-र्वतः फलंनिषिध्यते नपुनः प्रत्यवायोत्र प्रत्यवायस्तत्र च प्रायश्चित्तं ननु च नित्यानामकरणे प्रत्यवायोभवतीतिकुतद्द-यमवगतिः नह्येवमग्निहोत्रादौ श्रूयते योन कुर्यात्सप्रत्यवेयात् श्रूयते वाक्यशेषेषु वेदिभ्यःपरमाभवतीति सर्वत्रार्थ-वादाः प्रत्यवायप्रदर्शनार्थाः सन्ति । अवश्यंचतेषामालंबनंवाच्यंनान्यथाविधिनैकवाक्यतांभजंति यत्रापि न श्रूयन्ते तत्रा-पि विध्यनुग्रहार्थाअर्थवादाः प्रकल्प्यंते किंचार्थवादैर्विधेरेव प्रवर्तकत्वमन्यथानोपपद्यते । यावदप्रवृत्तौ प्रत्यवायप-रिहारोनकल्पित एवंविधएवार्थेवृद्धव्यवहारेविधिः प्रवर्तते बाध्यतेतु पुरुषप्रवर्तना रूढोसौ नचपुरुषाअपुरुषार्थंप्रवर्तयितुं-शक्यन्तेऽतः प्रवर्तकत्वविहतविधिर्माभूदितिश्रुतिसिद्ध्यर्थाकल्पनैषा । यद्यपिस्वर्गादिकल्पनानामपि तथार्थलाभस्तथापि यावज्जीवादिपदविरोधात्प्रत्यवायपरिहारार्थतापिस्यात् । उक्तं॥ भयाद्धियादृशीपुंसां प्रवृत्ति रुपजायते॥ नतादृशीभवेदत्रवि-धिकोटिशतैरपि ॥ तस्मादकुर्वन्विहितमितिनित्यंकर्मेति द्रष्टव्यं । ननुचाशुचिस्पर्शनादौ न नित्यावेदिकिंचित्पदमस्ति याव-ज्जीवमित्यादिवत् किमत्रान्येन पदेन निमित्तंविशेषयेत् श्रुतंतस्य चतन्निमित्तेन कर्तव्यता नामप्रतीयतेनाधिकारान्तरंप्रत्य-पेक्षा याजायते यदानिमित्तसंविधानंतदाकर्तव्यमित्युपगमैर्नित्यतासिद्धिरग्निहोत्रादावपि न नित्यशब्दोस्ति निमित्य-नित्यत्वात् । प्रसज्जन्नविदितत्वेषु विषयेषु संस्कृतान्नभोजनचन्दनानुलेपनादिषुतात्पर्यतआसेवाप्रसङ्गोविषयाभिलाषपरतेति यावत् ननुचैतदपि प्रतिषिद्धमिन्द्रियैःसुखलुब्धेषु नप्रसज्येतकामतइति स्नातकव्रताधिकारान्नायंप्रतिषेधइति मन्यते । व्रत-शब्दाधिकारेहितत्रप्रतिषेधकः संकल्पविशेषोहि मानसस्तत्रोपदिश्यतइदंमयानकर्तव्यमिति । अथवाकश्चिदल्पप्रतिषेधेनतु-ल्यतांमन्येत पदार्थस्तावदयंननिषिध्यतइति मन्यमानोऽतःसमानीक्रियते अथवासामान्येतद्धूनस्यापि विशेषस्यपृथगुपदे-शोदृष्टः प्राधान्यख्यापनार्थंयथाब्राह्मणाआयातावसिष्ठोप्यायातइति प्रायश्चित्तीयते प्रायश्चित्तशब्दोरूढिरूपेण विशिष्टेनै-मित्तिकेवर्तते तदेतीच्छतिवेति विनिमयःकर्तव्योव्यत्ययोबहुलमिति नरइति वचनंचातुर्वर्ण्याधिकारार्थम् ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । एवं प्रासंगिकंतत्तद्विक्षिप्तं समर्थ्य प्रकृतंप्रायश्चित्तमुपक्रमते अकुर्वन्निति । विहितं नित्यं-संध्योपासनादि नतु काम्यमपि । निन्दितं निषिद्धं परस्त्रीगमनकलञ्जभक्षणादि समाचरंस्तद्विषयं कायव्यापारं कुर्वन् । इन्द्रियार्थेषु तेष्वेव प्रसजन् मनसा व्याप्रियमाणः । एतेन निषिद्धविषयौ कायिकमानसव्यापारौ गृहीतौ । वाचिकोपि व्यापारः प्रायिकएव । प्रायश्चित्तीयते प्रायश्चित्तार्होभवति ॥ ४४ ॥

( ३ ) **कुल्लूकः** । नित्यंयद्विहितंसन्ध्योपासनादिनैमित्तिकंच शवस्पर्शादौ स्नानादि तदकुर्वन् तथा प्रतिषिद्धंहिंसाद्यनु-तिष्ठन्नविहितनिषिद्धेष्वत्यन्तासक्तिकुर्वन्नरोमनुष्यजातिमात्रंप्रायश्चित्तमर्हति नन्विन्द्रियार्थेषु सर्वेषु न प्रसज्येत । कामइति निषेधान्निन्दितपदेनैव प्रसक्तश्चेन्द्रियार्थेष्वित्यपि संगृहीतमतः पृथङ्न वक्तव्यं उच्यतेऽस्य स्नातकव्रतेषु पाठात्तत्र व्रतानी-मानि धारयेदित्युपक्रमान्नायंप्रतिषेधः किन्तु व्रतविधिः तद्अकुर्वन्विहितंकर्मेत्यनेनैव प्राप्तत्वात्पृथङ्नवक्तव्यमितिचेन्न स्नातकेतरविषयत्वेनास्य सविषयत्वात् ॥ ४४ ॥

( ४ ) **राघवानन्दः** । प्रायश्चित्तार्थं तन्निमित्तान्यनुवदति अकुर्वन्निति । विहितमग्निहोत्रादि । निन्दितं ब्राह्मणवधा-दि । प्रसजन् अत्यन्तंप्रसक्तिंकुर्वन् स्वदारेष्वनृतौ गच्छन् अरण्येष्वपि दिवा स्त्रीसंभोगत्रिचतुर्वारभोजनादौप्रायश्चित्तीयते तदधिकारीच । [ स्यात्पापं ] विशोधकंकर्म प्रायश्चित्तं तदकरणे नरकः । तत्र याज्ञवल्क्यः ॥ विहितस्याननुष्ठाना-न्निन्दितस्य चसेवनात् ॥ अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छतीति ॥ ४४ ॥

( ५ ) **नन्दनः** । अथप्रायश्चित्तंवक्तुंप्रायश्चित्तनिमित्तानि तावत्सामान्यतआह अकुर्वन्विहितंकर्मेति । विहितंनित्यनैमित्तिकं । निन्दितंप्रतिषिद्धं । प्रसजन्प्रकर्षेण सङ्गंकुर्वन् ननुइन्द्रियार्थेषु नप्रसज्येत प्रसङ्गोपि निषिद्धएव तद्धि स्नातकब्राह्मणमात्रविषयमत्रनरग्रहणं मनुष्यमात्राधिकारार्थम् ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । विहितंकर्म सन्ध्योपासनादि ॥ ४४ ॥

**अकामतः कृते पापे प्रायश्चित्तंविदुर्बुधाः ॥ कामकारकृतेप्याहुरेके श्रुतिनिदर्शनात् ॥ ४५ ॥**

( १ ) **मेधातिथिः** । कामकारकृतेप्यतिक्रमे प्रायश्चित्तगौरवार्थमिदमुच्यते । अकामतः कृतइति प्रमादकृतेपापे शास्त्रव्यतिक्रमे प्रायश्चित्तमाहुः कस्य पुनर्हेतोर्विधिःप्रतिशास्त्रमतिक्रम्याकार्ये प्रवर्तते सप्रायश्चित्तमाचरिष्यतइति । कोत्रविशेषहेतुस्तस्मात्कामकृते दोषे प्रायश्चित्तंशास्त्रानर्थक्यमिति मन्यन्ते । एवंपूर्वपक्षभङ्ग्योपन्यस्यति कामकारकृतेऽपीति शब्दात्कामतोकामतश्चकृते व्यतिक्रमे प्रायश्चित्तंकर्तव्यमितिशास्त्रार्थः । श्रुतिनिदर्शनादिति वैदिकलिङ्गनिदर्शनमुपहव्यब्राह्मणमुपकर्तव्यं । इन्द्रोयतीन्शालावृकेभ्यः प्रायछत् नच श्वभ्योदानंयतीनामकामतः संभवति उपहव्यंप्रायश्चित्तार्थंप्रजापतिरिन्द्रायप्रायच्छदिति स्पष्टार्थः ॥ ४५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तं पापनिर्णेजकंतपोविदुषःकर्तव्यत्वेन । कामकारकृतेतु महापातके वैधमरणान्निष्कृतिरन्यथातु भोगादेवेति केषांचिन्मतम् । तत्र स्वमतं प्रमाणदर्शनपूर्वकं दर्शयति कामकारेति । कामकारः कामपूर्वकः प्रयत्नः । तरतिमृत्युं तरतिब्रह्महत्यां योश्वमेधेन यजतइतिश्रुतिः । नचात्राकामकृता ब्रह्महत्या ग्राह्या । इन्द्रोयतीन्सालावृकेभ्यः प्रायच्छत्तमश्लीलावागभ्यदवत्सप्रजापतिमुपाधावत्तस्माएतमुपहव्यंप्रायच्छदितिप्रक्रमान्नचाज्ञानादेवात्रापि हत्येति प्रकल्प्यं यतीनां तपसोभयादेव । तेन ज्ञात्वा घातनस्य प्रकृतत्वादि [ यदाचैवंस्थितंतदाह अकामतइति । अकामतोऽज्ञानेसत्यपि अग्रेमोहादित्युक्तेः । वेदाभ्यासेन गायत्र्यादिजपेन । विप्रस्य जप्येनैवतुसंसिध्येद्ब्राह्मणइ ]* त्युक्तत्वात् ॥ ४५ ॥

( ३ ) **कुल्लूकः** । अबुद्धिकृते पापे प्रायश्चित्तंभवतीत्याहुः पण्डिताः एके पुनराचार्याः कामतः कृते पापे प्रायश्चित्तंभवतीत्याहुः एतच्च पृथकृत्याभिधानंप्रायश्चित्तगौरवार्थंश्रुतिनिदर्शनादिति । इन्द्रोयतीन् सालावृकेभ्यः प्रायच्छत् तमश्लीलावागित्यवदत् सप्रजापतिमुपाधावत्तस्मात्तमुपहव्यंप्रायच्छदिति अस्यार्थः इंद्रोयतीन्बुद्धिपूर्वकंस्वभ्योदत्तवान्सप्रायश्चित्तार्थंप्रजापतिसमीपमगमत्तस्मैप्रजापतिरुपहव्याख्यंकर्मप्रायश्चित्तंदत्तवान । अतः कामकारकृतेप्यस्ति प्रायश्चित्तम् ॥ ४५ ॥

( ४ ) **राघवानन्दः** । इच्छानिच्छाकृते पापे मतभेदं प्रदर्शयन्प्रायश्चित्तमाह अकामतइतिद्वाभ्याम । श्रुतिनिदर्शनात् इन्द्रोयतीन्सालावृकेभ्यः प्रायच्छत्तमश्लीलावागभ्यवदत्सप्रजापतिमुपाधावत्तस्माइंद्रायैतमुपहव्यं प्रायच्छदितिश्रुतेः । सालावृकेभ्यःश्वभ्यः अश्लीलाब्रह्महासीत्येवंरूपा उपहव्यमश्वमेधरूपं प्रायश्चित्तं प्रायच्छदुपदिदेशेतिश्रुतेरर्थः । एके मन्वादयः ॥ ४५ ॥

( ५ ) **नन्दनः** । अकामतोऽमतिपूर्वतः बुधाः सर्वे विद्वांसः एके कतिपये श्रुतिनिदर्शनात् ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । एके आचार्याः कामकारकृते पापे प्रायश्चित्तं आहुः ॥ ४५ ॥

**अकामतः कृतंपापंवेदाभ्यासेन शुध्यति ॥ कामतस्तु कृतंमोहात्प्रायश्चित्तैः पृथग्विधैः ॥ ४६ ॥**

( १ ) **मेधातिथिः** । किंपुनरेतानि प्रायश्चित्तानि निमित्तमात्रपर्यवसायीनि संध्योपासनादिवदुतकार्यपर्यन्तानि शारी-

( १ ) राघ० २ ( * ) सर्व०२

रशौचवदुत्पन्नदोषनिर्घातार्थानि । तत्र केचिदाहुः नहि कर्मक्षीयते कार्यविरागित्वमेव धर्माधर्मयोः नहि कर्माणि स्वफलमदत्वा प्रलीयन्ते । तदुक्तंनहिकर्मक्षीयतइति तस्माद्योतिक्रमकारी सततोनरकफलंभुंक्तएवंप्रायश्चित्तानि यदि नकरोति ततस्तदतिक्रमात्प्रत्यवायान्तरोत्पत्तिः तदेतदयुक्तंनहिकर्मचरितव्यमतोनित्यंप्रायश्चित्तं विशुध्यतइति स्वशब्देनैव शुद्ध्यर्थता विहिता तथापि तैः कृतैरपोहेत पापंस्वयंकृतत्वात् यदप्युच्यते प्रतिषेधविधिना प्रतिषिध्यमानक्रियाकर्तुः प्रत्यवायभागित्वमवगमितं नतस्य प्रायश्चित्तैर्मिथ्यात्वंशक्यते कर्तुंतदप्ययुक्तं । यतस्तेन दुःखहेतुता तस्यावगमिता प्रायश्चित्तेष्वपि तपोदानादि दुःखमस्त्येव अल्पेन तादात्मिकेन दुःखेनागामिनः संभाव्यमानस्यमहतोदुःखस्यनिवृत्तिर्युक्तैवयथाव्याधेस्तिक्तकटुकौषधदानलघ्वाहरादिना यथाव्यतिक्रमंकृत्वाकश्चित्स्वयमागत्यराजनि वेदनंकरोत्येवंकर्मास्मीति सोर्द्धदण्डभाग्भवति । यस्तुराजपुरुषैर्हठादानीयेत सभूयोदण्ड्यते एवमुपदेशानामर्थवत्वासिद्धिरतः स्वयंकार्यविरोधित्वमस्य विहितत्वान्निष्कृतिः प्रायश्चित्तमिति समाख्यातमपितत्तदेव कृतदोषस्य निर्यातनमप्यकारणंनिर्यातोनिष्कृतिरिति उच्यते । एवंप्रायश्चित्तमपि नास्याधिकारप्रतिप्रसवार्थंपंचानामेव पातकानामधिकारोपगमविहितत्वाद्द्विजातिकर्मभ्योहानिः पतनमिति नचात्र वेदाभ्यासोऽकामतः कामतस्तपइति विषयविभागोबोद्धव्यः उभयार्थोभयत्रोपदर्शनार्थत्वात् । निमित्तोपदेशकरणेपठितत्वान् ब्रह्महाद्वादशेत्यादिप्रायश्चित्तानामुपक्रम्यमाणत्वात् । तस्मादकामतोलघुप्रायश्चित्तंकामतोगरीयइति श्लोकस्यतात्पर्यं ननु चाकामतोनैवतस्यकर्तृत्वंबुद्धिपूर्वंकुर्वन्कर्तेत्युच्यते यथा च लौकिकोदैवेनकार्यते किमयंकरोतीति किंचलिप्सया यत्र प्रवृत्तिस्तत्रप्रतिषेधः । कायोहि मद्यपःस्पृहयति सपिपासुंनकदर्थति मापासीःसुरामिति यस्तुजलार्थीजलबुद्ध्यायसुरांपीतवांस्तस्याजानतोनापराधोनहि तस्य सुरालिप्सया प्रवृत्तिः । अथोच्यतेविधिलक्षणप्रवृत्तिर्नंनिषिध्यते सत्यंभवत्वर्थलक्षणानतु मध्ये तर्ह्युदकेनच सर्वस्यार्थलक्षणायाः प्रतिषेधः । केचिदाहुः प्रत्यवायपर्यन्तोविधिर्विषभक्षणवन्निषेधशास्त्रार्थस्तेषामचोद्यमेतद्विषमविशेषेणोपात्तंज्ञानतोज्ञानतश्चमरणायकल्पतएव एवंब्रह्महत्यादयोपीति येषामपि कर्तव्यमिति वचनात् । क्रियते नकर्तव्यमिति नक्रियते तेषामपि लौकिकक्रिययाप्रवर्तमानस्य निषेधः प्रवर्तमानश्चोच्यतेप्रवृत्तःकर्ता कर्तृत्वमबुद्धिपूर्वकमप्यस्तिकूलपततीति नचायंगौणकर्तृताभावः स्वतंत्रःकर्तेति हिस्मर्यते नेच्छया प्रवर्तते यःसकर्तेति किंचास्मादेव वचनात्प्रमादकृतोदोषोस्ति प्रायश्चित्तमिति किमपरेण विकल्पितेन ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । अन्येषांतु तत्स्थाने दानाद्येव । एतच्चानिर्दिष्टप्रायश्चित्तविशेषपापविषयम् । मोहादज्ञानेनापि । कामतइच्छया कृतं पृथग्विधैः पराकादिप्रायश्चित्तैः । एतेन कामादेव प्रायश्चित्तं वृद्धिह्रासयोः कारणं नतु ज्ञानाज्ञाने इतिकथयति । यत्रापिच ज्ञानात्कृच्छ्राब्दमज्ञानादैन्दवद्वयमित्यादौ ज्ञानपदेनोल्लेखस्तत्रापि कामनाहेतुज्ञानमेवेष्टतेनकामनैव लक्ष्यते कर्तृत्वंप्रतिच ज्ञानात्कामनैव नेदीयसी ज्ञानमिच्छाप्रयत्नइतिक्रमादतःसैवान्वयव्यतिरेकाभ्यांकर्तृत्वोत्कर्षापकर्षनिबन्धनप्रायश्चित्तवृद्धिह्रासहेतुः । नच ज्ञाने विषयविनिगमनापि शङ्क्या किंपापविशेषप्रयोजकीभूतब्राह्मणत्वाद्युपाधिज्ञानमिष्टमुत तद्वधपापहेतुत्वज्ञानमिति ॥ ४६ ॥

( ३ ) **कुल्लूकः** । अनिच्छातः कृतंपापंवेदाभ्यासेन शुध्यति नश्यति वेदाभ्यासेनेति कामकृतविषयप्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तांतराणामपि विधानाद्रागद्वेषादिव्यामूढतया पुनरनिच्छातः कृतंनानाप्रकारैः प्रायश्चित्तैर्विद्याधनतपोभिः शुध्यतीति गुरुप्रायश्चित्तपरं अतः पूर्वोक्तस्यैवायंव्याकारः यद्यप्यधिकारनिरूपणंप्रकृतप्रायश्चित्तंत्वनंतरंवक्ष्यति तथाप्यज्ञानाल्लघुप्रायश्चित्ताधिकारी ज्ञानात् गुरुप्रायश्चित्तेऽधिक्रियतइति अधिकारिनिरूपणमेवेदम् ॥४६॥

( ४ ) **राघवानन्दः** । पापं ब्रह्महत्यादि । वेदाभ्यासेन वक्ष्यमाणपावमान्याद्यभ्यासेन । पृथग्विधैः द्वादशवार्षिकाद्यैः ॥ ४६ ॥

( ५ ) **नन्दनः** । मोहः कामक्रोधाद्यभिभवः ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । मोहात् रागादिव्यामूढतया । कामतस्तुकृतं एनः पृथग्विधैः प्रायश्चित्तैः अपैति ॥ ४६ ॥

**प्रायश्चित्तीयतांप्राप्यदैवात्पूर्वकृतेन वा ॥ न संसर्गंव्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४७ ॥**

**[ प्रायोनामतपः प्रोक्तंचित्तंनिश्चयउच्यते । तपोनिश्चयसंयुक्तंप्रायश्चित्तमिति स्मृतम १ ॥ ] १**

( १ ) **मेधातिथिः** । दैवात्स्वीकृतात्प्रमादादित्यर्थः अन्येतु दैवशब्दस्थाने मोहादितिपठन्ति मोहादेवाकार्यंक्रियते कोह्यमूर्खःशास्त्रंव्यतिक्रमिष्यति पूर्वकृतेनजन्मान्तरकृतेनचोपभुक्तफलेन कर्मणा विशेषेण कौनख्यादिलिङ्गाद्यनुमितेनैतदुक्तंभवति । इहजन्मकृते व्यतिक्रमे बुद्धिदर्शपूर्वमबुद्धिपूर्ववा तथा जन्मान्तरकृतेऽपि लिङ्गानुमेयेकर्तव्यं किंपुनः कुनख्यादीनांप्रायश्चितंकृछ्रातिकृछ्रौचान्द्रायणमिति सर्वप्रायश्चित्तानिवसिष्ठेनतु यस्य यल्लिङ्गंतेन तदेवप्रायश्चित्तंकेनचिदंशेन कर्तव्यमिति पठितमतश्चैवते सर्वेऽकृतप्रायश्चित्तानसंसर्गंसद्भिर्वर्जयेयुरध्ययनादिक्रियैकस्थानादिरूपतयासंसर्गोयद्द्०ुभश्रयत्वादन्यतरप्रतिषेधेनोभयोरपिसिद्धिःप्रतिषेधस्तथापि सद्भिस्तैः संसर्गोनकर्तव्यइति पुनःप्रतिषिध्यते । उत्तरत्र कर्तृभेदादेकस्यहि प्रतिषेधेसएव प्रायश्चित्तीस्यान्नद्वितीयः । सत्यपिसंसर्गेऽतउभयोः प्रायश्चित्तार्थमुभयत्र प्रतिषेधः । सतामसतांचातःश्यावदन्तिप्रभृतिभिरकृतप्रायश्चित्तैः शिष्टैःसहसंसर्गोनकर्तव्यः ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तीयतां जपपराकादिप्रायश्चित्तार्हताम् । दैवादनिच्छया । पूर्वकृतेन पूर्वं स्वेच्छया कृतेन । अकृते प्रायश्चित्ते नसंसर्गं सद्भिर्गच्छेत् तत्करणपरस्यापि पापोत्पादनेन पापाधिक्यापत्तेः ॥ ४७ ॥

( ३ ) **कुल्लूकः** । दैवात्प्रमादादन्यशरीरकृतेन* पूर्वजन्मार्जितदुष्कृतेन क्षयरोगादिभिः सूचितेन प्रायश्चित्तीयतांप्राप्याकृते प्रायश्चित्ते साधुभिः सहयाजनादिना संसर्गेन गच्छेत् ॥ ४७ ॥

( ४ ) **राघवानन्दः** । निमित्तद्वैविध्यमनुवदंस्तद्वतोनियममाह प्रायइति । प्रायश्चित्तीयतां प्रायश्चित्तनिमित्तब्रह्महत्यादिमताम् । दैवादनवधानात् । पूर्वकृतेन ऐहिकेन जन्मान्तरकृतेन कौनख्यादिव्यङ्ग्येन । अकृते प्रायश्चित्ते सद्भिरदुष्टैः संसर्गं सवन्धं नव्रजेत् द्विजइत्युपलक्षणम् नरमात्रस्य ॥ ४७ ॥

( ५ ) **नन्दनः** । प्रायश्चित्तस्य कर्तव्यत्वे कारणमाह प्रायश्चित्तीयतामिति । प्रायश्चित्तीयतांप्रायश्चित्तार्हतां दैवात्प्रायश्चित्तीयतान् वक्ष्यमाणं रूपविपर्ययंयुक्तत्वमकृतइति पदं सद्भिः संसर्गेन व्रजेन्नसंसर्गयोग्यः अयमभिप्रायः । केवलमामुष्मिकप्रत्यवायपरिहारार्थ मेवप्रायश्चित्तंकर्तव्यम् ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । प्रायश्चित्तीयतांप्रायश्चित्तमिति यस्य सःप्रायश्चित्ती तस्य भावः प्रायश्चित्तीयताताम् । द्विजः अकृते प्रायश्चित्ते सद्भिःसंर्गेन व्रजेत् ॥ ४७ ॥

**इह दुश्चरितैः केचित्केचित्पूर्वकृतैस्तथा ॥ प्राप्नुवन्ति दुरात्मानोनराद्दूपविपर्ययम् ॥ ४८ ॥**

( १ ) **मेधातिथिः** । एतदेवाह इहदुःश्चरितैः केचिदस्मिन् जन्मनि प्रतिषिद्धाचरणैस्तथापूर्वकृतैःकर्मभिस्तथोक्तं प्राक्सइदानींरूपविपर्ययप्रपंचोदुष्कृतशेषेचिन्हरूपतोऽनुक्रम्यते ॥ ४८ ॥

---

१ ( ख ) * अन्यशरीर=एतच्छरीर ( अ )

( २ ) **सर्वज्ञनारायणः** । इहेहजन्मनि । दुश्चरितैरुत्कटैः । रूपविपर्ययं कौनख्यादि लभन्ते । केचि त्पूर्वकृतैर्नरकेऽननुभूतैः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । इहजन्मनि निषिद्धाचरणैः केचित्पूर्वजन्मकृतैर्दुष्टस्वभावामनुष्याः कौनख्यादिकंरूपविपर्ययंप्राप्नुवन्ति ॥ ४८ ॥

( ४ ) **राघवानन्दः** । एतत्स्पष्टयति इहेति । अत्युत्कटैःपुण्यपापैरिहैव फलमभुतइत्युक्तेरिह जन्मन्यपि फलप्रदत्वं कर्मणां पापःपापेनेतिश्रुतेः । रूपपदं दुःखस्याप्युपलक्षकम् ॥ ४८ ॥

( ५ ) **नन्दनः** । किन्तु ऐहिकसंसर्गयोग्यत्वार्थंप्रायश्चित्तंकर्तव्यमितिकारणान्तरमाह इहदुश्चरितैरिति । अत्राप्यकृते प्रायश्चित्तइत्यनुषक्तव्यमियतोस्मिँल्लोके रूपविपर्ययंप्राप्नुवन्ति तस्मादपिप्रायश्चित्तादिकंकर्तव्यमित्यभिप्रायः ॥ ४८ ॥

( ६ ) **रामचन्द्रः** । दुरात्मानः कृतपापाः नराः पूर्वविपर्ययं प्राप्नुवन्ति ॥ ४८ ॥

**सुवर्णचौरः कौनख्यंसुरापः श्यावदंतताम् ॥ ब्रह्महा क्षयरोगित्वंदौश्चर्म्यंगुरुतल्पगः ॥ ४९ ॥**

( १ ) **मेधातिथिः** । [ क्षयोनामरोगोराजयक्ष्मेतिवैद्यानांप्रसिद्धस्तेनतद्वान्भवति ब्रह्महत्याविशेषेण गुरुस्त्रीगामी ]* दुश्चर्माकथितगन्धवाहिन्या नासिकया युक्तः पिशुनएवंसूचकोदुर्गन्धवाहास्यः ननुचसूचकःपिशुनएव सत्यमेकःकल्पयित्वा परदोषान्प्रकाशयति अन्यस्तु सत्यानेवाविदितानितिभेदः । आतिरिक्यमर्धिकांगता । मिश्रकेयोद्रव्याण्यद्रव्यैस्तदाभासैः संमर्दयति यथाकुंकुमंकुसुंभेनान्यैरन्यानि । आमयावीयस्यभुक्तमन्नंनसम्यक् जीर्यते । मौक्यंवावैकल्यंयत्राप्रतिपत्तिमानपस्मारी शिष्टंप्रसिद्धं । विकृताकृतयः आकृतिः संस्थानंविकृताऽमनोरमानिन्दितैषांकर्मविशेषेणेति एषांकर्मणांकुम्भीपाकयमयातनास्थानेषु फलंतदनुभूतवतईषच्छेषे· तस्मिन्कर्मण्युद्रिक्तेच सुकृतेऽदत्तफले फलदानोन्मुखेदुष्कृतस्यासद्भावोतः कर्मावशेषोपपत्तिः ॥ ४९ । ५० । ५१ । ५२ ॥

( २ ) **सर्वज्ञनारायणः** । किंविशिष्टैरेतत्प्रपश्चयति सुवर्णचोरइति । श्यावदन्तः कपिशदन्तः । दौश्चर्म्यमकोशलिङ्गत्वम् ॥ ४९ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणसुवर्णचौरः कुत्सितनखत्वंप्राप्नोति निषिद्धसुरापः श्यावदन्ततां ब्रह्महाक्षयरोगित्वंगुरुभार्यागामी विकोपमेहनत्वं पिशुनोविद्यमानदोषाभिधायीदुर्गंधिनासत्वं अविद्यमानदोषाभिधायकोदुर्गंधिमुखत्वं धान्यचौरोऽङ्गहीनत्वं धान्यादेरपद्रव्येण मिश्रणकर्ताऽतिरिक्ताङ्गत्वं अन्नचौरोमन्दानलत्वं अननुज्ञाताध्यायीमूकत्वं वस्त्रचौरः श्वेतकुष्ठत्वम् अश्वचौरः खंजत्वं एवंबुद्धिवाक्चक्षुः श्रोत्रविकलाविकृतरूपाः साधुविगर्हिताश्च प्राग्जन्मार्जितोपभुक्तदुष्कृतशेषेणोत्पद्यन्ते ॥ दीपहर्ता भवेदन्धः काणोनिर्वापकस्तथा । हिंसारुचिः सदारोगीवाताङ्गः पारदारिकः ॥ ४९ ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥

( ४ ) **राघवानन्दः** । तत्र किं निमित्तं किं रूवैप्यमित्यत्राह सुवर्णेतित्रिभिः । कौनख्यं क्लिन्ननखता तेनैव तदपिहरणात् । श्यावदन्तता स्वभावतःश्यामदन्तता पानकाले सुरया तत्स्पृष्टेः । क्षयरोगित्वं राजयक्ष्मयुक्तता । दौश्चर्म्यं शश्नस्यविकारोअकोशलिङ्गत्वं शिश्नेन तत्कृतैश्च ॥ ४९ ॥

( ५ ) **नन्दनः** । रूपविपर्ययप्राप्तिमेव चतुर्भिः श्लोकैर्दर्शयति सुवर्णचोरः कौनख्यमिति ॥ ४९ ॥

---

* मेधा० ८

( ६ ) **रामचन्द्रः** । तेन तेन स्वपापेन रूपविपर्ययमाह सुवर्णेति । सुवर्णचौरः विप्रसंबन्धिनःसुवर्णस्य चौरः कौनख्यं कुनखस्य भावं । गुरुतल्पगः दौश्चर्म्यं दुश्चर्मणः भावः तम् ॥ ४९ ॥

**पिशुनः पौतिनासिक्यंसूचकः पूतिवक्त्रताम् ॥ धान्यचौरोऽङ्गहीनत्वंयातिरैत्यन्तु मिश्रकः ॥ ५० ॥**

( २ ) **सर्वज्ञनारायणः** । अतिरिक्तमङ्गाधिक्यम् आतिरेक्यमितिकचित्पाठः । मिश्रकोबुसादिना मिश्रीकृत्य धान्यविक्रेता ॥ ५० ॥

( ४ ) **राघवानन्दः** । सतोदोषस्य वक्ता पिशुनः । असतस्तु सूचकः । आतिरैक्यमङ्गस्यैव । मिश्रकः धान्यस्येतरेण यवादिना ॥५० ॥

( ५ ) **नन्दनः** । आतिरैक्यमतिरिक्ताङ्गत्वंतत्तदाभासैर्धान्यादि मिश्रीकृत्य येन विक्रयादि क्रियते समिश्रकः ॥५०॥

( ६ ) **रामचन्द्रः** । पिशुनः अविद्यमानपरदोषप्रख्यापनशीलः पूतिनासिक्यं दुर्गन्धनासिकः सदोषंसंकीर्तयित्वामिश्रकः धान्यस्य अन्नादेर्द्रव्यस्यमेलकः आतिरेक्यं अङ्गाधिक्यं षडङ्गुल्यादि ॥ ५० ॥

**अन्नहर्तामयावित्वंमौक्यंवागपहारकः ॥ वस्त्रापहारकः श्वैत्र्यंपङ्गुतामश्वहारकः ॥ ५१ ॥**

**[ दीपहर्ता भवेदन्धः काणोनिर्वापकोभवेत्[1] । हिंसया व्याधिभूयस्त्वमरोगित्वमहिंसया ॥१॥* ]**

( २ ) **सर्वज्ञनारायणः** । आमयावित्वमग्निमान्द्यम् । वागपहारकोन्यस्य पदरचनामात्मीयां ज्ञापयन् ॥ ५१ ॥

( ४ ) **राघवानन्दः** । अन्नहर्ता पक्वान्नहर्ता आमयावित्वं मन्दानलताम् । मौक्यं मूकताम् । वागपहारकोस्मादेतन्नाधीतमिति मिथ्यावादी यस्तत्कृतं पुस्तकं स्वनाम्नाअङ्कयति सोवागपहारकः। श्वैत्र्यं श्वेतकुष्ठताम् । देहस्यकुत्सितार्थंतिष्ठतीतिकौनख्यादि [ इतिद्वादशं सुवर्णचौरादयःप्राप्नुवन्तीत्यनुषज्यते ] दीपहर्ता भवेदन्धः काणोनिर्वापकोभवेत् ॥ हिंसारतः सदारोगी षंढश्च पारदारिकइतिकचित् [ पाठः ] ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । अन्नहर्ता अन्नस्यहर्ता आमरोगित्वम् । मौक्यं मूकस्यभावः । वागपहारकः पुस्तकापहारकः श्वैत्र्यं श्वेतमण्डलकारकम् ॥ ५१ ॥

[ **रामचन्द्रः** । तथा दीपहर्ता अन्धः । दीपनिर्वापकः काणः ॥ १ ॥ ]

**एवंकर्मविशेषेण जायन्ते सद्विगर्हिताः ॥ जडमूकान्धबधिराविकृताकृतयस्तथा ॥ ५२ ॥**

( २ ) **सर्वज्ञनारायणः** । कर्मविशेषेण पूर्वमरणान्तरतःकर्मविशेषेणात्र जायन्ते भवन्ति । तथा पूर्वजन्मभुक्तावशेषेण जायन्ते उत्पद्यन्तइति व्याख्येयम् । जडोऽनायत्ताङ्गः ॥ ५२ ॥

( ४ ) **राघवानन्दः** । उपसंहरति एवमिति । विकृताकृतयः जडादिविकृतरूपाः ॥ ५२ ॥

( ५ ) **नन्दनः** । येयमुक्ता रूपविपर्ययप्राप्तिर्नतत्पापस्य प्रधानफलंरौरवादिषु भुक्तशेषस्येत्याह एवंकर्मविशेषेति । सद्विगर्हिताः सत्संसर्गानर्हाः ॥ ५२ ॥

---

( ५१ ) विशेषेण=विपाकेन ( ण )

१ ( ख, क. ग, ञ, ट, ठ, ड, ण, य, ल, ) *( क, ग, ञ, ट, ठ, ड, ण, य, ल, )

( १ ) राघ० २

( ६ ) **रामचन्द्रः** । सद्भिर्विगर्हिताः निन्द्याः ॥ ५२ ॥

**चरितव्यमतोनित्यंप्रायश्चित्तंविशुध्दये ॥ निन्द्यैर्हिलक्षणैर्युक्ताजायन्तेऽनिष्कृतैनसः ॥ ५३ ॥**

( १ ) **मेधातिथिः** । निन्द्यैर्हिलक्षणैः कुनखश्यावदन्तादिभिरनिष्कृतैःसह ॥ ५३ ॥

( २ ) **सर्वज्ञनारायणः** । अनिष्कृतैनसोऽकृतप्रायश्चित्ताः ॥ ५३ ॥

( ३) **कुल्लूकः** । यस्मादनिष्कृतमनाशितमेनोयैस्तेऽनिष्कृतैनसः अकृतप्रायश्चित्ताः परलोकोपभुक्तदुष्कृतशेषेण निन्द्यैर्लक्षणैः कुनखित्वादिभिर्युक्ताजायन्ते तस्माद्विशुद्धये पापनिर्हरणार्थंप्रायश्चित्तंसदा कर्तव्यं एवंभिन्ने जुहोतीतिवन्नैमित्तिकमात्रंप्रायश्चित्तंकिंत्वनिष्कृतैनसइत्युपादानात् तथा विशुद्धये चरितव्यमित्युपदेशात्पापक्षयार्थिनएवाधिकारः । तथाहि प्रायश्चित्तंहिचरितव्यमिति विधावधिकारापेक्षायां फलमात्रनिर्देशाद्रात्रिसत्रन्यायेन श्रूयमाणमेव विशुद्धयइति फलमधिकारिविशेषणंयुक्तं । इममेवार्थंस्फुटयति याज्ञवल्क्यः ॥ विहितस्याननुष्ठानान्निन्दितस्य चसेवनात् । अनिग्रहाच्चेन्द्रियाणांनरः पतनमृच्छति ॥ तस्मात्तेनेह कर्तव्यंप्रायश्चित्तंविशुद्धये । पतनमृच्छति पापंप्राप्नोतीत्यर्थः । विशुद्धये पापविनाशायबहून्वर्षगणान्घोरान्नरकान्प्राप्य तत्क्षयात्संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमानित्यादिना महापातक्यादीनां नरकादिप्राप्तिंवक्ष्यति नतन्नैमित्तिकमात्रत्वंप्रायश्चित्तानांसंगच्छते । तस्माद्ब्रह्मवधादिजनितपापक्षयार्थिनएव प्रायश्चित्तविधावधिकारइतिज्ञेयम् ॥ ५३ ॥

( ४ ) **राघवानन्दः** । फलितमाह चरितव्यमिति । अनिष्कृतैनसः अकृतप्रायश्चिताः निन्दितैः कौनख्यादिलक्षणैः चिन्हैः युक्तादृश्यन्ते । यतोमहापातकिनोऽतस्तैर्विशुद्धये प्रायश्चितं चरितव्यं कार्यमित्यन्वयः ॥ ५३ ॥

( ५ ) **नन्दनः** । अकृतप्रायश्चित्तपापास्तैर्लक्षणैः कौनख्यादिभिर्युक्ताजायन्ते तस्मादपि प्रायश्चित्तंचरितव्यमिति ॥ ५३ ॥

( ६ ) **रामचन्द्रः** । अनिकृतैनसः अकृतप्रायश्चित्ताः ॥ ५३ ॥

**ब्रह्महत्यासुरापानंस्तेयंगुर्वङ्गनागमः ॥ महान्तिपातकान्याहुः संसर्गश्चापितैः सह ॥ ५४ ॥**

( १ ) **मेधातिथिः** । गुर्वंगनागमः स्तेयंपतितसंप्रयोगः । सर्ववर्णानांमहापातकानिसुरापानंब्राह्मणस्यैवस्तेयंब्राह्मणसुवर्णहरणंस्मृत्यन्तरात् ब्राह्मणसुवर्णापहरणे महापातकमिति । पातकशब्दः पातयतीतिव्युत्पत्त्यासर्वव्यतिक्रमेषुवर्तते महापातकेषूपपातकेषु च महच्छब्दोगुरुत्वप्रदर्शनार्थः तैश्च संयोगमेकैकेनापि । सच वक्ष्यति संवत्सरेणपततीत्यादिना ॥ ५४ ॥

( २ ) **सर्वज्ञनारायणः** । सुरापानं द्विजानाम् । स्तेयं ब्राह्मणस्वर्णस्य ब्राह्मणसुवर्णापहरणंमहापातकमित्यापस्तम्बस्मृतेः । गुर्वङ्गना गुरुपत्नीअत्रोच्यते । संयोगमेकशय्यामन्नादिसंसर्गश्चतैश्चतुर्भिर्नतुसहसंसर्गिभिरिति । एतच्च संज्ञाकरणं शास्त्रे व्यवहारलाघवाय । एवमग्रेपि ॥ ५४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणप्राणवियोगफलकोव्यापारोब्रह्महत्या । सच साक्षादन्यंवानियुज्य तथागोहिरण्यग्रहणादिनिमित्तकार्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या नन्वेवमिषुकारस्यापीषूत्पादनद्वारेण तथा वध्यस्यापिहन्तृगतमन्यूत्पादनद्वारा ब्रह्महत्यास्यात् । उच्यते शास्त्रतोयस्य ब्राह्मणहन्तृत्वंप्रतीयते सएव ब्रह्महन्ता । अतएव शातातपः ॥ गोभूहिरण्यग्रहणे स्त्रीसंबन्धकृतेऽपिवा । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ एवंचान्यान्यपि शास्त्रीयाण्येव ब्रह्मवधनि-

मित्तानि ज्ञेयानि । तथा ॥ रागाद्द्वेषात्प्रमादाद्वा स्वतः परतएव वा । ब्राह्मणंघातयेद्यस्तु तमाहुर्ब्रह्मघातकमिति ॥ प्रयोजकस्यापि हन्तृत्वंशास्त्रीयम् । तथा निषिद्धसुरापानंब्राह्मणसुवर्णहरणंगुरुभार्यागमनं गुरुरत्र पिता निषेकादीनि कर्माणीत्यादिना तस्य गुरुत्वेन विधानात् । एतैश्च सह संसर्गः संवत्सरेण पततीत्येतानि महापातकान्याहुः । महापातकसंज्ञा चेयंवक्ष्यमाणस्योपपातकादिसंज्ञालाघवार्थम् ॥ ५४ ॥

( ४ ) **राघवानन्दः** । नवमाध्यायोक्तमहापातकान्यनुवदन्नुपपातकान्याह ब्रह्महेतिपञ्चभिः । ब्रह्महत्या ब्राह्मणप्राणवियोगफलकोव्यापारः ॥ आक्रुष्टस्ताडितोवापि धनैर्वाविप्रयोजितः । यमुद्दिश्य त्यजेत्प्राणं तमाहुर्ब्रह्मघातकम् ॥ एवं वृद्धशातातपोपि ॥ गोहिरण्यादिग्रहणे स्त्रीसंबन्धकृतेपिचेति निमित्तीपादभागूभवेदित्युद्देश्ये संकोचः । तैः महापातकिभिः संसर्गीनिद्यादिति संबन्धोपि महापातकं प्राहुरित्यन्वयः ॥ ५४ ॥

( ५ ) **नन्दनः** । अथनिन्दिताचरणलक्षणान्सत्पथगामिनउक्त्वाथमहान्तिपातकानि प्रायश्चित्तविशेषोपदेशार्थमुपदिशति ब्रह्महत्यासुरापानमिति । अत्र सुरापानंब्राह्मणस्य महापातकंनान्यस्य । स्तेयंब्राह्मणसुवर्णस्तेयंकुतएतत्स्मृत्यन्तरानुरोधात् तैर्ब्राह्मणादिभिःसंयोगयज्ञाध्यापनयौनसंबन्धलक्षणव्यवहारः संयोगिनोब्रह्महत्यादिभिस्तुल्यदोषास्तान्मन्तव्याः संयुक्तसंयोगिनामपिपातित्यवचनात् ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । तैःसह ब्रह्महन्त्रादिचतुर्भिःकर्तृभिः संयोगी संसर्गंयःकुरुते सः पञ्चमः ॥ ५४ ॥

**अनृतंच समुत्कर्षे राजगामिच पैशुनम् ॥ गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ५५॥**

( १ ) **मेधातिथिः** । समुत्कर्षइति निमित्तसप्तमी चर्मणिद्वीपिनंहंतीतिवत् समुत्कर्षंप्राप्स्यामीति यदनृतमभिधीयते तद्ब्रह्महत्यया समं यत्रपूजातिशयोवासनातिशयोब्राह्मणत्वेन श्रोत्रियत्वेन महाकुलीनतया वा प्राप्यते तत्रातपद्रस्तपमात्मानमावेदयति योवापात्रातिशयेनपुण्यस्कन्धोत्कर्षप्राप्तुमिच्छति तस्यापात्रंपात्रमित्युच्यते । एवंविधेसमुत्कर्षेऽनृतंनपुनः स्वल्पवस्तुनि अपेक्षायांसत्यपि समुत्कर्षव्यपदेशेपिशुनमलीकवदितिपरच्छिद्रप्रकाशनंगुरोश्चालीकनिर्बन्धोऽसत्याभिधानेनचित्तसंक्षोभः । कन्यातेगर्भिणीइत्येवमादिना निष्प्रयोजनोद्वेषः । राजकुलात्तेन सहविवादोनिर्बन्धोनृतादिशंसनंवा । तथाच गौतमोगुरावनृताभिशंसनमिति पातकसमानि ॥ ५५ ॥

( २ ) **सर्वज्ञनारायणः** । समुत्कर्षे अयंमहापातकीत्युत्कर्षविषयेऽनृतम् । समुत्कर्षइत्युपलक्षणमपकर्षस्यापि । यथाऽयंमहापातकीत्यपकर्षेऽअनृतम् । तेन पापविषयसंदेहेऽन्यथानिर्णयउक्तः । राजगामिपैशुनं राज्ञि गत्वाऽपकारकरणम् । अलीकनिर्बन्धोऽप्रियनिर्बन्धः ॥ ५५ ॥

( ३ ) **कुल्लूकः** । जात्युत्कर्षनिमित्तमुत्कर्षभाषणंयथा ब्राह्मणोहमिति अब्राह्मणोब्रवीति । राजनि वा स्तेनादीनांपरेषांमरणफलकंदोषाभिधानंगुरोश्चानृताभिशंसनं । तथा चगौतमः गुरोरनृताभिशंसनमिति महापातकसमानीति । एतानि ब्रह्महत्यासमानीति ॥ ५५॥

( ४ ) **राघवानन्दः** । अनुपातकं लक्षयति अनृतमिति । समुत्कर्षे ब्राह्मणोहमित्यस्य ब्राह्मणस्य भाषणादौ । अलीकनिर्बन्धः कन्यातेगर्भिणीत्यादिसत्याभिधानेन गुरोश्चित्तक्षोभइतिमेधातिथिः अनृताभिशंसनंवा ॥ ५५ ॥

( ५ ) **नन्दनः** । जात्या कर्मणा गुणेन वा स्वस्माद्विशिष्टमुत्कर्षः अलीकनिबन्धोऽनिष्टस्य पुनः करणं ब्रह्महत्यया समानीति दोषातिशयख्यापनमेतत् नतुसमत्वख्यापनम् ॥ ५५ ॥

( ६ ) **रामचन्द्रः** । समुत्कर्षे समुत्कर्षो यस्यामिति यदनृतमधीयते निमित्ते सप्तमी निर्बन्धः असत्याभिधानेन चित्तसंक्षोभः राजगामि पैशुनंपैशुनेन राज्ञि गत्वापकरणम् । गुरोः अलीकनिर्बन्धः अप्रियकरनिर्बन्धः ॥ ५५ ॥

**ब्रह्मोज्झतावेदनिन्दाकौटसाक्ष्यंसुहृद्वधः ॥ गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥ ५६ ॥**

( १ ) **मेधातिथिः** । अधीतस्यवेदस्यानाभ्यासेन विस्मरणंब्रह्मोज्झता नित्यस्वाध्यायविधेः त्यागोवा कूटसाक्ष्यं समुत्कर्षादन्यच्चापि सुहृद्वधोमित्रमारणं गर्हितानाद्ययोर्गर्हितंशास्त्रप्रतिषिद्धं लशुनाद्यनाद्यममनस्तुष्टिदंतान्भोक्ष्यइति कल्प्ययुज्यते ॥ ५६ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्मोज्झता वेदस्यात्यन्तत्यागोऽनध्ययनम् । सुहृदोमित्रस्यवधः । गर्हितानाद्ययोरिति गर्हितं संसर्गदुष्टचाण्डालान्नादि । अनाद्यं जात्यैवाभक्ष्यंलशुनादि । जग्धिर्भक्षणम् । एतत्पृथगेव द्वयं ग्राह्यम् ॥ ५६ ॥

( ३ ) **कुल्लूकः** । ब्रह्मणोधीतवेदस्यानभ्यासेन विस्मरणमसच्छास्त्राश्रयणेन वेदकुत्सनंसाक्ष्येमृषाभिधानंमित्रस्याब्राह्मणस्य वधः निषिद्धस्यलशुनादेर्भक्षणं अनाद्यस्य पुरीषादेरदनम् । मेधातिथिस्तु नभोक्ष्यतइति संकल्प्य यद्भुज्यते तदनाद्यमित्याचष्टे । एतानि सुरापानसमानि ॥ ५६ ॥

( ४ ) **राघवानन्दः** । ब्रह्मोज्झता अधीतवेदत्यागः । गर्हितान्नाद्ययोर्जग्धिः गर्हितस्य निषिद्धस्य लशुनादेः अनाद्यस्य पुरीषादेः अनापदि भक्षणम् । समानि स्युः प्रायश्चित्तार्थं ततःकिंचिन्न्यूनानि प्रायश्चित्तानि ॥ ५६ ॥

( ५ ) **नन्दनः** । ब्रह्मोज्झितंवेदत्यागः । गर्हितान्नंनिषिद्धान्नमुच्छिष्टादिगर्हितान्नलशुनादिजग्धिभक्षणम् ॥ ५६ ॥

( ६ ) **रामचन्द्रः** । ब्रह्मोज्झता असच्छास्त्राद्यभ्यासेन वेदत्यागः । कौटसाक्ष्यं कपटेनयत्साक्ष्यंकृतम् । गर्हितानाद्ययोर्जग्धिःसंसर्गदोषः चाण्डालान्नादि संसर्गदोषः । लशुनादि अभिशस्ताद्यन्नलशुनादिभक्षणम ॥ ५६ ॥

**निक्षेपस्यापहरणंनराश्वरजतस्य च ॥ भूमिवज्रमणीनांच रुक्मस्तेयसमंस्मृतम् ॥ ५७ ॥**

( १ ) **मेधातिथिः** । निक्षेपस्यासारद्रव्यस्यापि नरशब्दोजातिशब्दोनारीहरणेप्येतदेव योहिदुहितरंदत्वाऽसतीनरदोषेऽन्यस्मैपुनर्ददाति तस्याप्येतदेव तदुक्तंप्राप्नोति पुरुषोनृतमिनि ॥ ५७ ॥

( २ ) **सर्वज्ञनारायणः** । निक्षेपस्य निक्षिप्तं नराश्वादिद्रव्यमपि तस्य तेन हरणं बलादपि ॥ ५७ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणसुवर्णव्यतिरिक्तनिःक्षेपस्य हरणं तथा मनुष्यतुरगरूप्यभूमिहीरकमणीनांहरणंसुवर्णस्तेयतुल्यम् ॥ ५७ ॥

( ४ ) **राघवानन्दः** । निःक्षेपस्य सुवर्णातिरिक्तस्यनिक्षेपादिसप्तकस्य प्रत्येकं हरणे रुक्मं सुवर्णं तदपहरणसममेवमुत्तरत्र ॥ ५७ ॥

( ६ ) **रामचन्द्रः** । निक्षेपस्य अपहरणं अब्राह्मणसंबन्धिनः ॥ ५७ ॥

**रेतः सेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ॥ सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमंविदुः ॥ ५८ ॥**

( १ ) **मेधातिथिः** । स्वयोनयोभगिन्यएकोदरसंभूताः कुमार्योऽनूढाः । अन्त्यजाबर्बरस्त्रियः सख्युःसखामित्रंतस्यास्त्रियः स्त्रीग्रहणंनजायायामेवप्रतिषेधार्थं एवंपुत्रस्यान्यापिया अवरुद्धामैथुनधर्मेण । वयंतुब्रूमः सत्यपि ग्रहणेनोढानूढयोर्विषयसमीकरणस्यन्यायत्वात्समत्ववचनमेतन्नप्रायश्चित्तनिर्देशार्थंकिंतर्हिगुरुत्वख्यापनपरमतश्चगुरुतरंप्रायश्चित्तंभवति । तथाचोक्तं एनसिगुरुणिगुरूणि लघुनिलघूनियदिह्येतत्प्रायश्चित्तनिर्देशार्थमभविष्यत्प्रायश्चित्तंनिर्देशप्रकरणएववावक्ष्यत्॥कौटसाक्ष्यमुहृ-

द्वयोश्चेह सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तातिदेशमुपरिष्टान्नकुर्यात् । गुरोश्चालीकनिर्बन्धइत्येतस्यचेहब्रह्महत्यासमीकृतस्य पुनरुपरिष्टात् ब्रह्महत्याप्रायश्चित्ताभिधानात् तथाकुमार्यामितिरेतः सेकस्य गुरुतल्पसमीकृतस्येह पुनस्तत्र गुरुतल्पप्रायश्चित्तविधानाद्गम्यते नेदंप्रायश्चित्तार्थं समीकरणमिति । अन्येतु मन्यन्ते भेदेन समीकरणंगुरुत्वभावेपि वक्ष्यते । नत्याज्यमतःप्रायश्चित्तार्थानामेव सुरापानस्य समीकृतयोश्च कौटसाक्ष्यसुहृद्वधयोर्ब्रह्महत्याप्रायश्चित्तनिर्देशोविकल्पार्थं । सुरापानप्रायश्चित्तेनास्यचातिदेशएवश्रूयते । समीकरणे तुविकल्पोनास्ति यथा हत्वागर्भमविज्ञातमिति ॥ ५८ ॥

( २ ) **सर्वज्ञनारायणः** । स्वयोन्यासु भगिनीषु । कुमारीष्वपरिणीतासु ब्राह्मणस्य कन्यासु । अन्त्यजासु चण्डाल्यादिषु । सख्युर्मित्रस्य स्त्रियाम् । तथा पुत्रस्य स्त्रियां स्नुषायाम् ॥ ५८ ॥

( ३ ) **कुल्लूकः** । सोदर्यभगिनीकुमारीचण्डालीसखिपुत्रभार्यासु योरेतः सेकस्तंगुरुभार्यागमनसमानमाहुः एतेषांभेदेन समीकरणंयद्येन समीकृतंतस्य तेन प्रायश्चित्तार्थं यत्कौटसाक्ष्यसुहृद्वधयोः सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तंवक्ष्यतितद्विकल्पार्थं । यत्पुनर्गुरोरलीकनिर्बन्धस्य ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टाद्ब्रह्महत्याप्रायश्चित्तनिर्देशः । समीकृतानांन्यूनप्रायश्चित्तंभवतीति ज्ञापनार्थं तथाच लोके राजसमः सचिवइत्युक्ते सचिवस्य न्यूनतैव गम्यते अत्रौपदेशिकप्रायश्चित्तेभ्यआतिदेशिकप्रायश्चित्तानांन्यूनंप्रायश्चित्तंसमीकृतानांच ॥ ५८ ॥

( ४ ) **राघवानन्दः** । किंच रेतइति । एवमुत्तरोत्तरंज्ञेयम् । अतएवाह ॥ अनुपातकिनस्त्वेते महापातकिनोयथा ॥ अश्वमेधेन शुध्यन्ति तीर्थाभिगमनेन चेति ॥ तीर्थाभिगमनमनुपातकिप्रायश्चित्तम् । स्वयोनीषुस्वस्य गन्तुर्योनीषूत्पादकत्वेन याअर्हन्तीति ताः स्वोदर्यासु । कुमारीषु ब्राह्मणकन्यासु । पुत्रस्यौरसातिरिक्तस्य तत्रातिपातकमित्येके । आसु प्रत्येकं योनिषु योरेतःसेकस्तं गुरुतल्पसमंविदुरित्यन्वयः । यत्तु मातृगमनदुहितृगमनस्नुषागमनमित्यतिपातकानीत्याह विदुरिति तद्यत्नगौरवार्थं यतोब्रह्महत्याश्वमेधाभ्यांनपरंपुण्यपापयोरित्यवधिकरणं स्मृतम् ॥ ५८ ॥

( ५ ) **नन्दनः** । स्वयोन्यादिषुदुहित्रादिषु ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । स्वयोनीषुभगिन्यादिषुरेतः सेकोरेतसःपातः । कुमारीषु अविवाहितासु सख्युः स्त्रीषु गुरुतल्पसमं विदुः ॥ ५८ ॥

## गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः ॥ गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च॥५९॥

( १ ) **मेधातिथिः** । इदानीमुपपातकान्याह । अयाज्याअविरुद्धापातकिशूद्रादयस्तेषामसंयाज्यसंयाजनं भावेण्यच्छांदसः आत्मविक्रयंगवादिद्रव्यवदात्मनःपरविधेयकरणंदास्येनअन्येन अन्येतुपारदार्यमविक्रयमितिपठन्ति । अनुत्साहोनिराहारःस्वल्पएवोपघातेवसादाश्रयणं गुरोस्त्यागोयथावदनुवृत्तिरध्यापनसमर्थेऽध्यापयितर्युपाध्यायान्तराश्रयः । एवंमातापित्रोरपतितानांचैतेषांत्यागोदोषाय पतितानांत्विष्टएव स्वाध्यायाग्न्योस्त्यागइतिसंबध्यतेस्वाध्यायस्त्यागश्चाहरहःस्वाध्यायमधीयीतेत्यस्यविधेरननुष्ठानं किमैकाहिकेमाससांवत्सरिकेवात्यागेव्यतिक्रमोयं अविशेषादैहिकेप्रामोतितदयुक्तं । एतस्य विधेर्नित्यत्वात् नित्यानांच व्यतिक्रमे प्रायश्चित्तांतरंवक्ष्यति । तस्माद्विस्मरणपर्यन्तस्त्यागोभिप्रेतः सब्रह्मोज्झतापदेनसुरापानेनसमीकृतस्तत्रविकल्पनार्थमेतत् । अस्यच लघुत्वात्तस्यगुरुत्वाद्यवस्थायां विकल्पोयोज्यः तत्रयोवैदिकएवान्यस्मिन्कर्मणियुक्ततयास्वाध्यायंजहाति तस्योपपातकत्वं । यस्तु भोगसेवयाऽर्थपरतया कलहशीलतया जहातितस्यसुरापानसमत्वं अग्नेस्त्वेकत्वविशिष्टस्येहोपादानाद्गृह्यस्येतिद्रष्टव्यं प्रागग्नीनितिबहुवचनाच्छ्रौतानांग्रहणं । ननुच तत्रापि चान्द्रायणमुक्तमिहाप्युपपातकत्वात्तदेवात्रवाच्यंनैषदोषः । उपपातकेष्वप्यन्यान्यपिप्रायश्चित्तानि सन्ति । शक्त्यपेक्षया गुरुलघुभावोन्यूनाधिक-

भावोऽतोनियमार्थंतत्रचान्द्रायणग्रहणम् । सुतस्य त्यागोऽभरणंगृहान्निष्काशनमशिशोःप्राप्तस्य चगुणवतः पातकिनस्तुनदोषः ॥ ५९ ॥

( २ ) **सर्वज्ञनारायणः** । पारदार्यं परदारगमनम् । आत्मनोमूल्येन विक्रयः शूद्रादन्येषाम् । पारदार्यात्मविक्रय इत्येकवचनंछान्दसम् । गुर्वादीनामवृत्तीनांशक्तौसत्यामपोषणंत्यागः । अत्र गुरुराचार्योऽभिप्रेतः पृथक्पितृग्रहणात् । स्वाध्यायस्याधीतस्याभ्यासस्यत्यागोऽधीतविस्मरणम् । अग्नयस्त्रेताग्नयः ॥ ५९ ॥

( ३ ) **कुल्लूकः** । इदानीमुपपातकान्याह गोहननं जातिकर्मदुष्टानांयाजनंपरपत्नी गमनं आत्मविक्रयः मातापितृगुरूणांच शुश्रूषाद्यकरणं सर्वदाब्रह्मयज्ञत्यागः नवेदविस्मरणंब्रह्मोज्झतेत्यनेनोक्तत्वात् अग्नेश्चस्मार्तस्यत्यागः श्रौतानामग्निहोत्र्यपविध्याग्नीनित्युक्तत्वात्सुतस्य च संस्कारभरणाद्यकरणम् ॥ ५९ ॥

( ४ ) **राघवानन्दः** । उपपातकमाह गोवधइत्यष्टभिः । तत्र गोवधउपपातकम् । अयाज्येसंयाज्यत्युपपातकमित्येवान्ययोमलावहपर्यन्तम् । पारदार्यमनियुक्तेसति परस्त्रीगमनम् । आत्मविक्रयः अपत्यपत्न्योर्विक्रयः । त्यागोऽनिमित्तः । संन्यासादौ तु षण्णां । त्यागोयदहरेव विरजेदितिश्रुतिसिद्धः ॥ ५९ ॥

( ५ ) **नन्दनः** । अथोपपातकान्यष्टभिः श्लोकैराह गोवधोयाज्यसंयाज्यमिति । याजनानर्हस्य याजनमयाज्यसंयाज्यं पारदार्यंपरदारगमनं स्वाध्यायाग्न्योः सुतस्यच त्यागइत्यनुकर्षः स्वाध्यायोनित्याध्ययनम् ॥ ५९ ॥

( ६ ) **रामचन्द्रः** । गोवधेत्यारभ्यत्रयोदशेनसंबन्धः त्रयोदशभिराह गुरुमातृपितृत्यागः शुश्रूषाऽकरणम् ॥ ५९ ॥

## परिवित्तितानुजेनूढे परिवेदनमेव च ॥ तयोर्दानंच कन्यायास्तयोरेव च याजनम् ॥ ६० ॥

( १ ) **मेधातिथिः** । अनुजःकनीयान्भ्राता तयोर्याजनंविवाहेदर्शपूर्णमासादौवाऽऽर्त्विज्यम् ॥ ६० ॥

( २ ) **सर्वज्ञनारायणः** । परिवित्तिता स्वस्मिन्नकृतदाराग्निपरिग्रहे कनिष्ठभ्रातुर्दारपरिग्रहोज्येष्ठस्य दोषाय । तथा अनुजेन परिवेदनं भ्रातरि ज्येष्ठेऽनूढे अनग्नौवाग्निपरिग्रहः कनिष्ठस्य पापहेतुः । तयोस्ताभ्यां कन्यादातुः । एवंचाकृतप्रायश्चित्ताय परिवित्तयेपि दानंनिषिद्धं लक्ष्यते । तयोर्याजनं अग्निहोत्रादावृत्विक्त्वेन ॥ ६० ॥

( ३ ) **कुल्लूकः** । कनीयसाऽऽदौ विवाहे कृते ज्येष्ठस्य परिवित्तित्वंभवति दाराग्निहोत्रसंयोगइत्यादिनाप्रागुक्तं कनिष्ठस्य परिवेत्तृत्वंतयोश्चकन्यायादानंतयोरेव विवाहहोमादियागेष्वार्त्विज्यम् ॥ ६० ॥

( ४ ) **राघवानन्दः** । परिज्येष्ठंविहायानुजेनोढे न कृतविवाहे परिपश्चाद्यदि ज्येष्ठस्य वेदनं विवाहस्तदातस्य ज्येष्ठस्य परिवित्तिता अतः कनिष्ठस्यापिपरिवेत्तृत्वं दाराग्निहोत्रमित्यनेनोक्तम् । तयोस्तादृशज्येष्ठकनिष्ठयोः ॥ ६० ॥

( ५ ) **नन्दनः** । अनुजेन ज्येष्ठस्य परिवित्तता तदनुजस्य च परिवेदनंतयोः परिवित्तिपरिवेत्रोः ॥ ६० ॥

( ६ ) **रामचन्द्रः** । तयोः परवित्तिपरिवेत्रोः ॥ ६० ॥

## कन्यायादूषणंचैव वार्धुष्यंव्रतलोपनम् ॥ तडागारामदाराणामपत्यस्य च विक्रयः ॥ ६१ ॥

( १ ) **मेधातिथिः** । कन्यायादूषणंनेयंकन्यापुरुषेणोपभुक्तेत्यध्यवसायेनप्रतिपादनं अङ्गुष्ठादिनावाप्रजननंधर्मभेदोमैथुनधर्मवर्जतत्रहि गुरुतल्पसाम्यमुक्तं । वार्धुषित्वंधनापदिधनप्रयोगेनवृत्तिग्रहणं । वासिष्ठेतु वृद्धेस्तुप्रयोक्ताधान्यानांवार्धुषित्वंतदुच्यते ॥ साच शास्त्रपरिभाषा नलौकिकेवापदार्थेव्रतच्युतिरसिष्टप्रतिषिद्धेऽमुष्यगृहे नभोक्तव्यमुपवस्तव्यमेवंरूपःसंकल्पोव्रतंततोयःसंकल्पाच्चलतिसातस्यव्रतच्युतिः ननुचव्रतमितिशास्त्रतोनियमउच्यतेचोदितश्चेच्छास्त्रकृतःसंकल्पस्ततो-

निवृत्तौ कःशास्त्रातिक्रमोविहितमकुर्वन्प्रायश्चित्तीयतइत्युक्तं । नचैतद्विहितं। उच्यते सत्यमिथ्यालक्षणआरंभः समाप्तिस्तु-शास्त्रीया यथासौंदर्यादीनांकाम्यानांकर्मणांलिप्सातःप्रवृत्तिः समाप्तिस्तुशास्त्रीया अतीतायां फलेच्छायामवाप्ते फले यथोक्तं-तदर्थएवावशिष्टंवर्जयेयुःप्राक्रमिकोयंकापुरुषइतिवदन्तः स्नातकव्रतानांत्वत्यन्तलघीयः प्रायश्चित्तंप्रवक्ष्यते तेनेदंविकल्पि-तुमर्हति अरामउद्यानोपवनादिस्मृत्यन्तरे सर्वभूमिरविक्रेया ॥ ६१ ॥

( २ ) **सर्वज्ञनारायणः** । कन्यादूषणमङ्गुल्यादिप्रवेशेन कन्यायाअकन्यात्वकरणम् । वार्धुष्यं वृद्ध्याजीवनं वि-प्रक्षत्रिययोः । व्रतलोपनं परिगृहीतव्रतनियमभङ्गः । तडागादेरप्रतिष्ठितस्य स्वयंकृतस्य विक्रयः उत्सृष्टेष्वन्याभावात्॥ ६१॥

( ३ ) **कुल्लूकः** । कन्यायामैथुनवर्जमङ्गुलीप्रक्षेपादिनादूषणं । रेतःसेकपर्यन्तमैथुनेषु तु रेतःसेकः स्वयोनीषु कुमारी-ष्वन्त्यजासु च इत्युक्तत्वात्प्रतिषिद्धंवृद्धिजीवनंब्रह्मचारिणोमैथुनंतडागोद्यानभार्यापत्यानांविक्रयः ॥ ६१ ॥

( ४ ) **राघवानन्दः** । कन्यायादूषणं ब्राह्मणातिरिक्तकन्यायाः तत्र समत्वस्योक्तत्वात् । उपभोगातिरिक्तप्रकारा न्तरेण वा । प्रतिषिद्धवृद्धिजीवनं वार्धुष्यम् । व्रताच्युतिर्ब्रह्मचारिणोमैथुनम् । व्रतलोपनमितिक्वचित्पाठः ॥ ६१ ॥

( ६ ) **रामचन्द्रः** । कन्यायादूषणं अङ्गुल्यादिना योनिविदारणम् । व्रतलोपनं प्रतिगृहीतनियमभङ्गः ॥ ६१ ॥

**व्रात्यता बान्धवत्यागोभृत्याध्यापनमेव च भृताच्चाध्ययनादानमपण्यानांच विक्रयः॥ ६२ ॥**

( १ ) **मेधातिथिः** । बान्धवाज्ञातयोऽसोदरादिभ्योऽन्येपि मातुलमातृष्वस्रेयादयः सतिविभवे तेप्यजीवन्तोभर्त-व्याः तदुक्तंस्वजनेदुःखजीविनीति यद्येवंसुतस्येत्याद्यनर्थकंनानन्यार्थंवचनं जालपादप्रतिषेधेहंसप्रतिषेधवत्तेनमात्रादि-त्यागउपपातकमेव । इहतु लघीयइति भृत्याध्यापनंभृतकस्य सतोऽध्यापकत्वात् यश्च भृतकादधीते अपत्यानि दशमेउ-क्तानि ॥ ६२ ॥

( २ ) **सर्वज्ञनारायणः** । व्रात्यता काले साविभ्यग्रहणं पितृपितामहयोः सोमपानाबान्धवानां पितृव्यादीनां श-क्तौ त्यागोऽपोषणम् । भृतेन नियतमूल्यक्रीतेनाध्यापनमध्यापकस्य दोषः । अपण्यानामन्नादीनाम् ॥ ६२ ॥

( ३ ) **कुल्लूकः** । यथाकालमनुपनयनंव्रात्यता । तथाचोक्तं ॥ अतऊर्ध्वंत्रयोप्येते यथा कालमसंस्कृताःइति बान्ध-वानांपितृव्यादीनामननुवृत्तिः। प्रतिनियतवेतनग्रहणपूर्वकमध्यापनं प्रतिनियतवेतनप्रदानपूर्वकमध्ययनंच अविक्रय्यादीनां-तिलादीनांविक्रयः ॥ ६२ ॥

( ४ ) **राघवानन्दः** । व्रात्यता षोडशवर्षादावप्यनुपनयनम् । बान्धवत्यागः पितृव्यादेस्त्यागः । भृत्यैव जीवतीति भृतकोगुरुः तादृशस्याध्यापनं तस्यैवोपपातकहेतुः भृतात् भृतं वेतनं तेन पुष्टादध्ययनादानं वेदपाठः शिष्यस्योपातकम् । भृतेर्नियमपूर्वकत्वेदोषोऽन्यथा गुरुदक्षिणा न स्यात् [ अपण्यानां रसादीनाम् ॥ ६२ ॥ ]

( ५ ) **नन्दनः** । भृताध्यापनंपरेण भृतस्य भिक्षावृत्तेरध्यापनंभृत्याध्यापनं भृताच्चाध्ययनादानमध्यापनपरिसमाप्तेः प्रागध्यापनमध्येऽन्येन धार्मिकेण शिष्येण वा भृताद्विदस्य स्वीकारः । अपण्यानां विक्रयानर्हाणांद्रव्याणाम् ॥ ६२ ॥

**सर्वाकरेष्वधीकारोमहायन्त्रप्रवर्तनम् ॥ हिंसौषधीनांस्त्र्याजीवोऽभिचारोमूलकर्म च ॥ ६३ ॥**

( १ ) **मेधातिथिः** । आकराःसुवर्णादिभूमयस्तत्राधिकारोराजनियोगेनाधिपतित्वंसर्वग्रहणादन्यदप्यर्थोत्पत्तिस्था-

---

( ६२ ) अपण्यनां=अपत्यानां ( ट, त) ( १ ) राघ० २, न

नंगृह्यते तेन ग्रामनागरनियोगोव्यवहारदर्शनदण्डग्रहणादिनियोगएव एवमेवयन्त्राणिसेतुबन्धादीनिजलप्रवाहनियमार्था-स्तेषांमहतांवर्धनं औषधीनामशुष्काणांहिंसाच्छेदः स्त्रीणामाजीवःस्त्रियमुपजीव्यते स्त्रीधनेन शरीरकुटुंबधारणंक्रियते वोवेशस्त्रीप्रयोजनंवाऽभिचारोवैदिकेन शापादिनामन्त्रप्रयोगेण सेनादियागेन वा शत्रुमारणं मूलकर्मवशीकरणंमन्त्रा-भार्यापण्यभादिक्रियथैव ॥ ६३ ॥

( २ ) **सर्वज्ञनारायणः** । आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु अधिकारोव्यापारत्वम् । महायन्त्रं वराहादिमहाप्राणि-हिंसार्थयन्त्रं तन्निर्माणम् । स्त्रिया भार्यया परगृहादिप्रेषितया जीवोवर्तनम् । अभिचारोहिंसार्थः श्येनादिः । मूलकर्म म-न्त्रादिना वशीक्रिया ॥ ६३ ॥

( ३ ) **कुल्लूकः** । सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारः महतांप्रवाहप्रतिबन्धहेतूनांसेतुबन्धादीनांप्रवर्तनं । औष-धीनांजातिमात्रादीनांहिंसनं । एतच्च ज्ञानपूर्वकाभ्यासक्रियायां प्रायश्चितगौरवात् यत्नूत्कृष्टजानामौषधीनामित्यादिना व-क्ष्यति तत्सकृद्धिंसायां प्रायश्चित्तलाघवात् भार्यादिस्त्रीणांवेश्यात्वंकृत्वा तदुपजीवनं श्येनादियज्ञेनानपराद्धस्य मारणं म-न्त्रौषधिना वशीकरणम् ॥ ६३ ॥

( ४ ) **राघवानन्दः** ।सर्वाकरेषु लवणाद्युत्पत्तिस्थलेषु । महायन्त्रप्रवर्तनं उदकप्रतिबन्धकसेतूनां स्वभूम्याद्यर्थंकर-णं तत्रानेकजन्तुवधस्य संभवात् तिलादीनां पेषणीवा । ओषधीनां मारणम् । स्त्र्याजीवः परगृहसेवाद्यर्थं विक्रीतभार्यस्त थाऽवाप्तधनेन जीवोजीवनं वायस्य । अभिचारोविप्रातिरिक्तस्य रोगाद्युत्पादनम् । मूलकर्म वशीकरणम् । ॥ ६३ ॥

( ५ ) **नन्दनः** । महायन्त्रमिक्षुयन्त्रादिकं हिंस्रोषधिस्त्र्युपाजीवः हिंस्रौषधीनां स्त्रीणां चोपजीवनं स्त्रियार्जितद्रव्यजी-वनंचेत्यर्थः मूलकर्म वशीकरणम् ॥ ६३ ॥

( ६ ) **रामचन्द्रः** । महायन्त्रप्रवर्तनं महावारादिसंबन्धनम् । हिंसौषधीनां आर्द्राणांहिंसा । स्त्र्याजीवः स्त्र्युपार्जितधन-जीवनम् । मूलकर्म अभिनयोवशीकरणम् ॥ ६३ ॥

## इन्धनार्थमशुष्काणांद्रुमाणामवपातनम् ॥ आत्मार्थंच क्रियारम्भोनिन्दितान्नादनंतथा ॥ ६४ ॥

(१ ) **मेधातिथिः** । इन्धनाद्यर्थंतुनदोषः अग्निशुद्धत्वाच्छुक्तसर्वसंभवेक्रियारंभः पाकारंभः आतुरत्वादेवात्मार्थंनभ-वेदिति प्रतिषेधात् क्रियारंभएवंव्याख्यायते क्रियारंभेहि प्रायश्चित्तोपदेशादेव प्रतिषेधः कल्प्येत नह्यप्रतिषिद्धप्रायश्चि-त्तंयुक्तंनिन्दितंच समाचरन्नितिवचनात् अद्यपुनर्यत्प्रभाषितं तथासिद्धेप्रतिषेधेप्रायश्चित्तंविधीयते नकल्पतागौरवंभवति तेन निन्दितान्नादनंनतुगर्हितान्नाद्यतः कुतएतद्विकल्पार्थमभ्यासेतत्प्रायश्चित्तमिदंतु सकृदेव प्रत्ययभेदोवा ॥ ६४ ॥

( २ ) **सर्वज्ञनारायणः** । क्रियारम्भः पिष्टकादिपाकारम्भः । निन्दितान्नं राजान्नादि ॥ ६४ ॥

( ३ ) **कुल्लूकः** । पाकादिदृष्टप्रयोजनार्थमात्रमेव वृक्षच्छेदनं । अनातुरस्य देवपित्राद्युद्देशमन्तरेण पाकाद्यनुष्ठान निन्दितान्नस्य लशुनादेः सकृदनिच्छया भक्षणं इच्छापूर्वकाभ्यासभक्षणे पुनर्गर्हितानाद्ययोर्जघिरित्युक्तत्वात् ॥ ६४ ॥

( ४ ) **राघवानन्दः** । अवपातनं छेदः बहुत्वमत्राविवक्षितम । क्रियारम्भोवैश्वदेवाद्यर्थंविना पाकारम्भः । निन्दि तान्नादनं कितवराजादिर्निन्दितः ॥ ६४ ॥

( ५ ) **नन्दनः** । आत्मार्थक्रियारम्भोदेवतादिबहिष्कारेण स्वार्थपाकाद्यारम्भः निन्दितस्यान्नादनं निन्दितान्नाद-नम् ॥ ६४ ॥

( ६ ) **रामचन्द्रः** । क्रियारम्भः पाकक्रियारम्भः आत्मार्थम् । निन्दितस्यान्नस्य अदनं भक्षणम् ॥ ६४ ॥

अनाहिताग्निता स्तेयमृणानामनपक्रिया ॥ असच्छास्त्राधिगमनंकौशीलव्यस्य च क्रिया ॥६५॥

(१) **मेधातिथिः**। कृतविवाहस्य विदुषोद्रव्यसंपत्तौ जातपुत्रस्य वानाहिताग्निता साधिकाराविशेषान्नित्यश्रुतयोनित्याधानस्य प्रयोजिकाइति स्मृतिकारोमन्यते। कथंपुनः श्रुतिप्रयुक्तमाधानंविहितंकस्यचित्प्रकरणे कथ्यते येनागमोप्युच्छिद्येतस्वतश्चप्रतीयमानाधिकारत्वादग्निनिष्पत्यर्थतया कुतोधिकारान्तरप्रयुक्तिरग्नयस्तावद्विनियुक्तायदाहवनीयेजुहोतीत्यादिना नचाधानेन विना तेषांनिष्पत्तिरित्यतोग्निषु प्रयुक्तेषु तदपिप्रयुक्तमित्युच्यते। यद्येवमग्निनिष्पत्यर्थंतदाहिताग्निर्ष्वधिकारोसत्स्वग्निषु नाधिक्रियते नचाधानंनित्यंयावज्जीवादिविधिवदतः कथमनाहिताग्नितादोषोकुर्वन्विहितंकर्मेतिविहिताकरणेप्रायश्चित्तंविहितमग्नीनादधीतेतिसत्यंविहितंन स्वर्गाय नाधिकारान्तरसंपत्तये किंतर्ह्यग्निनिष्पत्तये अग्नेश्चज्ञातप्रयोजनायस्यैतः प्रयोजनंसतेनोपायेनार्जयति। अन्यस्तु नेति कातत्रविहिताकरणाशङ्कायेनप्रायश्चित्तीस्यात्। योहिसुवर्णनार्जयतिकथमसौ दुष्येत। उच्यते अस्मादेव वचनात्सत्यधिकारेऽग्नयोवश्यमर्जनीयाइति गम्यते स्तेयमुक्ते योद्रव्येभ्योन्यस्य ऋणानांचतुर्भिर्ऋणैरित्येतच्छ्रुतेरनुष्ठानं असच्छास्त्राणि चार्वाकनिर्ग्रन्थाः यत्र नप्रमाणं न वेदकर्मफलसंबद्धमापद्यते कौशीलवत्वं चारणत्वं नर्तनत्वं गायनत्वम्॥ ६५॥

(२) **सर्वज्ञनारायणः**। अनाहिताग्निता धनसंभवे। स्तेयं वस्त्रादेः। ऋणानां धार्यमाणधनानाम्। असच्छास्त्रं पाषण्डशास्त्रम्। कौशीलव्यस्यमाघस्य॥ ६५॥

(३) **कुल्लूकः**। सत्यधिकारेऽग्न्यनाधानं सुवर्णादन्यस्य सारद्रव्यस्यापहरणं। ऋणानांच ऋणैस्त्रिभिर्ऋणवान्नरो जायते तदनपकरणं। श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणं नृत्यगीतवादित्रोपसेवनम्॥ ६५॥

(४) **राघवानन्दः**। अनाहिताग्निता आवसथ्याख्याग्निशून्यता। स्तेयं सुवर्णातिरिक्तधातोः। अनपक्रिया ऋणोपरिशोधनम्। असच्छास्त्राधिगमनं श्रुतिस्मृतिविरुद्धार्थप्रतिपादकशास्त्राभ्यासः। कौशीलव्यस्य गीतनृत्यवाद्यादेः क्रियाऽनुष्ठानम्॥ ६५॥

(५) **नन्दनः**। ऋणानां शास्त्रसिद्धानां लोकप्रसिद्धानां वाऽनपक्रिया शक्तौसत्यामनपाकरणं कौसल्यंकुत्सितशीलत्वं व्यसनक्रिया रूयक्षादिप्रसङ्गः॥ ६५॥

(६) **रामचन्द्रः**। सत्यधिकारेअनाहिताग्निता। असच्छास्त्राधिगमनं अभिचारप्रयोगः। कौशीलव्यसनाद्यस्य क्रियाकरणम्॥ ६५॥

धान्यकुप्यपशुस्तेयमद्यपस्त्रीनिषेवणम्॥ स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यंचोपपातकम्॥ ६६॥

(१) **मेधातिथिः**। शणसप्तदशानि धान्यानि कुप्यंलोहताम्रादिमयंकुण्डपठाहादि ननुचाविशेषेण पूर्वश्लोकेस्तेयमुक्तंपरित्दतमेतद्धंसप्रतिषेधवदिति। अथवा स्तेयंयदन्यस्मादुद्यमगृहीते संभवेनाशोध्यते नहिजातुस्तेयमिति लोकप्रसिद्धंयथाधैर्यादिनाजयकरणम्। मद्यपेति। ब्राह्मणस्य क्षत्रियादिस्त्रीनिषेधनंसहशयनंसंप्रयोगंवा स्त्रियावधोब्राह्मण्याअपि नास्तिक्यंनास्तिपरलोकोनास्तिदत्तमित्याद्यभिनिवेशः॥ ६६॥

(२) **सर्वज्ञनारायणः**। कुप्यं ताम्रादि। पशुः गोव्यतिरिक्तचतुष्पदः। निषेवणं मैथुनम्। स्त्रीति ब्राह्मणस्त्रीसाधारण्येन अन्यथा शूद्रादिपदेनैव तत्प्राप्तेस्त्रीपदंव्यर्थंस्यात्। नास्तिक्यं परलोकाभावनिश्चयः। उपपातकं पातकाद्धीनम्। अत्रच यस्यान्यत्रापि गुरुषु लघुवा पापेषु गणनं कृतं तत्र ज्ञानाज्ञानविशिष्टाविशिष्टपुरुषसंबन्धसकृदभ्यासापेक्षया स्वयं व्यवस्थोह्या॥ ६६॥

( ३ ) **कुल्लूकः**। धान्यताम्रलोहादेः पशूनां च चौर्यं द्विजातीनांपीतमद्यायाः स्त्रियागमनं स्त्रीशूद्रवैश्यक्षत्रियहननं अदृष्टार्थकर्माभावबुद्धिः एतत्प्रत्येकमुपपातकं बान्धवत्यागइत्यनेनैव मात्रादीनांत्यागप्राप्तौ । पृथग्वचननिन्दार्थं पितृव्यादिबान्धवत्यागेनावश्यमेव प्रायश्चित्तंभवति किंतु मात्रादित्यागप्रायश्चित्तान्न्यूनमपि भवति ॥ ६६ ॥

( ४ ) **राघवानन्दः**। मद्यपस्त्रीनिषेवणं निपीतमद्यायाः स्त्रियाः ब्राह्मण्यादेः सेवनं अन्त्यजस्त्रीनिषेधस्योक्तत्वात् । नास्तिक्यं नास्तिपरलोकइति बुद्धिः ॥ ६६ ॥

**ब्राह्मणस्य रुजः कृत्याघ्रातिरघ्रेयमद्ययोः ॥ जैह्म्यंच मैथुनंपुंसि जातिभ्रंशकरंस्मृतम् ॥ ६७ ॥**

( १ ) **मेधातिथिः**। दण्डहस्तादिनाशरीरपीडाजननंरुजःकृत्यं किंपुनरघ्रेयंनहि भक्षणंप्रतिषेधवत् घ्राणप्रतिषेधः क्वचिदस्ति नतुशक्यंविज्ञातुंयदभक्ष्यंतदघ्रेयमिति घृतादेर्यागार्थमुपात्तस्याभक्षत्वमनाघ्रेयत्वमुच्यते पूतिदुर्गन्धतया घ्राणंविकरति लशुनपलाण्डुपुरुषपुरीषादितदुच्यते मद्यसाहचर्याच्चयदभक्ष्यंतदेवविज्ञायतेनपूतिदार्वादिजैह्म्यंकुटिलताऽप्रसन्नहृदयत्वअन्यदुच्यतेऽन्यत्क्रियते हृदयेचान्यत् ॥ ६७ ॥

( २ ) **सर्वज्ञनारायणः**। रुजःकृत्या व्रणादिपीडाकरणम् । अघ्रेयं लशुनादि मद्यं सुरा मद्येतयोर्घ्राणं कामतः । जैह्म्यमनार्जवमृजुषु पुंसि पुरुषमुखादौ मैथुनं शिश्नप्रक्षेपः । जातिभ्रंशकरं सजातीयेभ्योऽपचयकारीतियोगोरूढिश्च ॥६७॥

( ३ ) **कुल्लूकः**। ब्राह्मणस्य दण्डहस्तादिना पीडा क्रिया यदतिशयदुर्गन्धितयाऽघ्रेयंलशुनपुरीषादि तस्य मद्यस्य चाघ्राणंकुटिलत्वंवक्रता पुंसि च मुखादौ मैथुनमित्येतत्प्रत्येकंजातिभ्रंशकरंस्मृतम् ॥ ६७ ॥

( ४ ) **राघवानन्दः**। जातिभ्रंशकरादिचतुष्टयस्य प्रायश्चित्तार्थं संग्राहिब्राह्मणस्येतिचतुर्भिः । रुजःपीडाघ्रातिर्गन्धग्रहणम् । अघ्रेयमद्ययोरघ्रेयंपुरीषलशुनादि कामतः। जैह्मं कुटिलता । मैथुनं गुदादौ । अत्रापि प्रत्येकं जातिभ्रंशकरं स्मृतं मन्वादिभिरेवमुत्तरत्र ॥ ६७ ॥

( ५ ) **नन्दनः**। उपपातकत्वेऽपि नैतानि तुल्यकक्ष्याणिमंतव्यानि प्रायश्चित्तवैषम्यस्य वक्ष्यमाणत्वात् । ब्राह्मणस्य रुजः कृत्यमिति । कृत्यंकृतिः योयस्यां जातौ जातः तस्य तस्याः प्रच्युतिर्जातिभ्रंशः ॥ ६७ ॥

( ६ ) **रामचन्द्रः**। रुजःकृत्या हस्तदण्डादिनारोगोत्पादनम् । रुजः रोगोत्पादकहस्तदण्डादिनाशरीरपीडाकरं । जैह्म्यं कुटिलता अप्रसन्नहृदयत्वं ॥ ६७ ॥

**खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ॥ सङ्करीकरणंज्ञेयंमीनाहिमहिषस्य च ॥ ६८ ॥**

( १ ) **मेधातिथिः**। मृगारुरुपृषतादय आरण्याः इभोहस्ती सत्यपिमृगत्वे बाहुल्येन ग्रामवासित्वाद्ग्रहणंमीनोमत्स्यः अहिः सर्पः ॥ ६८ ॥

( २ ) **सर्वज्ञनारायणः**। खरेभोमृगोहरिणाद्याः । षष्ठ्याःसाकांक्षत्वाद्वधपदेनान्वयः । संकरीकरणं संकरजातीयतुल्यत्वरूपहीनताकरमत्यन्ताभ्यासादितियोगोरूढिश्च ॥ ६८ ॥

( ३ ) **कुल्लूकः**। गर्दभतुरगोष्ट्रमृगहस्तिछागमेषमत्स्यसर्पमहिषाणांप्रत्येकंवधः सङ्करीकरणंज्ञेयं ॥ ६८ ॥

( ४ ) **राघवानन्दः**। एवं खरादिदशानां प्रत्येकं वधः संकरीकरणम् इभोहस्ती ॥ ६८ ॥

---

( ६७ ) मुखादौ=गुदादौ ( अ )

( ५ ) **नन्दनः** । संकीर्णयोनिजन्मकरंतत् ॥ ६८ ॥

( ६ ) **रामचन्द्रः** । संकरस्तुल्यजातीयतुल्यत्वहीनता ॥ ६८ ॥

**निन्दितेभ्योधनादानंवाणिज्यंशूद्रसेवनम् ॥ अपात्रीकरणंज्ञेयमसत्यस्य च भाषणम् ॥ ६९ ॥**

( १ ) **मेधातिथिः** । निन्दिताअप्रतिग्राह्याः शूद्रायेपापकर्मण स्तेभ्योधनादानंप्रतिग्रहेणनपुनः प्रत्यादिष्टप्रतिग्रहस्य-प्रतिषिद्धत्वात् ॥ ६९ ॥

( २ ) **सर्वज्ञनारायणः** । निन्दितेभ्यः पतितादिभ्यः धनादानं विनाविप्रतिग्रहम् । वाणिज्यं शूद्रसेवा च विप्रक्ष-त्रयोः । असत्यभाषणं साक्ष्यादिव्यतिरेकेणापि । अपात्रीकरणं दानानर्हताहेतुरितियोगोरूढिश्च ॥ ६९ ॥

( ३ ) **कुल्लूकः** । अप्रतिग्राह्यधनेभ्यः प्रतिग्रहोवाणिज्यं शूद्रस्य परिचर्याऽनृताभिधानमित्येतत्प्रत्येकमपात्री-करणं ज्ञेयम् ॥ ६९ ॥

( ४ ) **राघवानन्दः** । [ अप्रतिग्राह्यधनेभ्यः प्रतिग्रहः वाणिज्यं शूद्रस्यपरिचर्या अनृताभिधानमित्येतत्प्रत्येकमपा-त्रीकरणंज्ञेयम् ॥ ६९ ॥ ]‡

( ५ ) **नन्दनः** । अपात्रीकरणमपात्रीकरणत्वम् ॥ ६९ ॥

( ६ ) **रामचन्द्रः** । अपात्रीकरणं अपात्रहस्ते यद्दत्तं ॥ ६९ ॥

**कृमिकीटवयोहत्यामद्यानुगतभोजनम् ॥ फलैधः कुसुमस्तेयमधैर्यंच मलावहम् ॥ ७० ॥**

( १ ) **मेधातिथिः** । कृमयोभूमिशरणाः क्षुद्रजन्तवः कीटास्तथाविधाएवकिंचिदुपचितमूर्तयोऽपक्षाः सपक्षाश्च म-क्षिकाशलभादयोवयांसि पक्षिणः शुकसारिकादयः मद्यानुगतंमद्येन संस्पृष्टंतद्गन्धाचितंच अधैर्यंचेतसोस्थिरत्वं स्वल्पे-प्युपघातेऽध्वंसः ॥ ७० ॥

( २ ) **सर्वज्ञनारायणः** । कृमयोमांसादिगता [ यूकाद्याः कीटाः भूम्यादिगताः पिपीलिकाद्याः वयांसिपक्षिणः । म-द्यानुगतं मद्यसन्निकर्षागतं घृता ][2] दि तस्य भोजनम् । फलैधःकुसुमस्तेयं स्वार्थे न देवताद्यर्थम् । अधैर्यं चापलम् । मलावहं पापावहमितियोगोरूढिश्च ॥ ७० ॥

( ३ ) **कुल्लूकः** । कृमयःक्षुद्रजन्तवस्तेभ्यईषत्स्थूलाः कीटास्तेषांवधः पक्षिणांच मद्यानुगतंयद्भोज्यमपि शाकाद्येक-त्रपिटकादौकृत्वा मद्येन सहानीतंतस्य भोजनम् । मेधातिथिस्तु मद्यानुगतंमद्यसंस्पृष्टमाह तन्न तत्र प्रायश्चित्तगौरवात् । फलकाष्ठपुष्पाणांच चौर्यं अल्पेऽपचयेप्यत्यन्तवैक्लव्यं एतत्सर्वंप्रत्येकंमलिनीकरणम् ॥ ७० ॥

( ४ ) **राघवानन्दः** । मद्यानुगतभोजनं मद्यमनुगच्छति मद्यपात्रस्थितं मद्यैःसह गतं मद्यमनुगतं संयुक्तं यस्मिन्नि-तिवा तस्य भोजनं एधःकुसुमयोर्भोगार्थंस्तेयं [ अधैर्यंअत्यन्तक्लीबताएतत्सर्वंमलावहमित्यन्वयः ]‡ ॥ ७० ॥

( ५ ) **नन्दनः** । अधैर्यंचपलता मलापहंमलकरम् ॥ ७० ॥

( ६ ) **रामचन्द्रः** । वयः पक्षी । मद्यानुगतभोजनं मद्यसंनिकर्षघृतादिभोजनम् ॥ ७० ॥

**एतान्येनांसि सर्वाणि यथोक्तानि पृथक्पृथक् ॥ यैर्यैर्व्रतैरपोह्यन्ते तानि सम्यङ्निबोधत ॥ ७१ ॥**

( १ ) **मेधातिथिः** । प्रायश्चित्तनिमित्तान्युक्तानि संज्ञाभेदश्चप्रायश्चित्तभेदार्थः वक्ष्यमाणस्य संक्षेपवचनम् ॥ ७१ ॥

‡ ( न, श )    (२) सर्व०२

( २ ) **सर्वज्ञनारायणः** । यथोक्तानियेन तानि तेन क्रमेण निबोधत । अत्रच क्वचित्क्वचिद्व्यवस्थापि वक्ष्यते यत्रतु व्यवस्था नोक्ता तत्र सा कामधेनुदीपिकायामस्माभिः सम्यगुक्तेति ॥ ७१ ॥

( ३ ) **कुल्लूकः** । एतानि ब्रह्महत्यादीनि सर्वाणि पापानि भेदेन यथोक्तानि यैर्यैर्व्रतैः प्रायश्चित्तरूपैर्नाश्यन्ते तानि यथावच्छृणुत ॥ ७१ ॥

( ४ ) **राघवानन्दः** । निमित्तान्यनुवदन्नैमित्तिकं बाधं प्रतिजानीते एतानीति । ब्रह्महत्यादीनि पापानि येनभेदेनोक्तानि यैर्यैःप्रायश्चित्तैरपोह्यन्तेनाश्यन्ते तानि शृण्वते त्यन्वयः ॥ ७१ ॥

( ५ ) **नन्दनः** । यथोक्तानि महापातकत्वेन जातिभ्रंशकरत्वेन संकीर्णकरणत्वेनापरिणत्वेन मलावहत्वेन चोक्तानि ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । एनांसि पापानि । यैर्यैर्व्रतैरपोह्यन्तेतानि व्रतानि सम्यङ्निबोधत ॥ ७१ ॥

**ब्रह्महाद्वादशसमाः कुटींकृत्वा वने वसेत् ॥ भैक्षाश्यात्मविशुद्ध्यर्थंकृत्वा शवशिरोध्वजम्॥७२॥**

( १ ) **मेधातिथिः** । तृणपर्णादिकृतोनिकेतोवर्षातपशीतत्राणादिहेतुर्गृहंकुटीतिकथ्यते। समावर्षाणि भैक्षाशीति स्मृत्यन्तरेसप्तागारमनभिसंहितंचभैक्ष्यमुक्तं शवशिरोहतस्यान्यस्य वाध्वजे काष्ठादिमयींशिरःप्रतिकृतिमुद्यतांधारयेदिति मन्यते नैवंशब्दोर्थवादः नहि तच्छवशिरइत्युच्यते अन्योप्यत्रविधिर्भविष्यतिकृतवापनोनिवसेदित्यादि ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । कुटी तृणपर्णादिकृतंगृहम् । भैक्षाशी ग्राममागत्य भिक्षांगृहीत्वा वने भुञ्जानः । शवस्य तस्यैवान्यस्यवा शिरः कपालं ध्वजं ब्रह्महचिन्हमग्रतःकृत्वा । अत्र सर्वत्र स्मृत्यन्तरोक्तमङ्गजातमुपहर्तव्यम् । एतदकामतोघाते ॥ ७२ ॥

( ३ ) **कुल्लूकः** । योब्राह्मणंहतवान्सवने कुटींकृत्वा हतस्य शिरः कपालंतदभावेऽन्यस्यापि चिन्हंकृत्वाऽरण्ये भैक्षभुगात्मनः पापनिर्हरणाय द्वादशवर्षाणि वसेद्व्रतंकुर्यात् अत्रापि कृतवपनोनिवसेदिति वक्ष्यति मुन्यन्तरोक्ताअपि विशेषाग्राह्याः । तथाचयमः ॥ सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च ॥ संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने ॥ भ्रूणघ्नेदेहि मेभिक्षामिनोविख्याप्य संचरेत् ॥ एककालंचरेद्भैक्ष्यंतदलब्ध्वोदकंपिबेत् ॥ अयंच द्वादशवार्षिकविधिः । ब्राह्मणस्याज्ञानकृतब्राह्मणवधे इयंविशुद्धिरुदिता प्रमाप्याकामतोद्विजमिति वक्ष्यमाणत्वात् । क्षत्रियवैश्यशूद्राणान्तुक्रमेणैतद्द्वादशवार्षिकंद्विगुणंत्रिगुणंचतुर्गुणंच द्रष्टव्यम् । यथोक्तंभविष्यपुराणे॥ द्विगुणाः क्षत्रियाणान्तु वैश्यानांत्रिगुणाः स्मृताः ॥ चतुर्गुणास्तु शूद्राणांपर्षदुक्तामहात्मनाम् ॥ पर्षदुच्यव्रतंप्रोक्तंशुद्धये पापकर्मणाम् ॥ यावद्भिर्ब्राह्मणैर्ब्राह्मणानांसभा ततोद्विगुणैः क्षत्रियाणांद्रष्टव्यव्यवहारदर्शनाद्यर्थासभा भवेत्त्रिगुणैर्वैश्यैर्वैश्यानांचतुर्भिः शूद्रैः शूद्राणामिति सभावच्च क्षत्रियादीनांत्रयाणांव्रतमपि द्विगुणत्रिगुणचतुर्गुणमित्यर्थः । एतानि च मनूक्तब्रह्मवधप्रायश्चित्तवचनानि गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेन भविष्यपुराणे व्याख्यातानि । हन्ताचेद्गुणवान्वीरअकामान्निर्गुणोहतः॥ कर्तव्यानि मनूक्तानि कृत्वा वैआश्वमेधिकम् ॥ ब्रह्महाद्वादशाब्दानिकुटींकृत्वावनेवसेत् ॥ गच्छेदवभृथंवापि अकामान्निर्गुणेहते ॥ जातिशक्तिगुणापेक्षंसकृद्बुद्धिकृतंतथा ॥ अनुबन्धादिविज्ञाय प्रायश्चित्तंप्रकल्पयेत् ॥ इति विश्वामित्रवचनात्प्रायश्चित्ताधिक्यमूहनीयम् । कामकृतेतु ब्राह्मणवधे द्विगुणंब्रह्मवधप्रायश्चित्तंचतुर्विंशतिवर्षतदाहाङ्गिराः ॥ अकामतः कृते पापे प्रायश्चित्तंन कामतः ॥ स्यात्त्वकामकृते यत्तुद्विगुणंबुद्धिपूर्वके ॥ ७२ ॥

( ४ ) **राघवानन्दः** । तत्रादौ ब्रह्महत्यानिवर्तकमाह ब्रह्महेतिसप्तदशभिः। कुटीं तृणपर्णादिनिर्मिताम् । शवशिरोध्वजं तस्यैवान्यस्यवा शवस्यशिरःखट्वाङ्गादियुक्तं पाणौ विभ्रद्भिक्षाशी स्याद्वादशाब्दान्व्याप्य । एतत्किमर्थं आत्मशुद्धयर्थमित्यर्थः । तथाच यमः ॥ सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च ॥ संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने ॥ भ्रूणघ्नो देहि मे भिक्षामेनोविख्याप्य संचरेत् ॥ एककालं चरेद्भैक्ष्यं तदलब्धौ जलं पिबेदिति ॥ अत्र वक्ष्यमाणकेशवापनादिकंज्ञेयम् । इदंत्वकामतोऽगुणवद्ब्राह्मणे । इयंच शुद्धिरुदिता प्रमाप्याकामतोद्विजमिति वक्ष्यमाणत्वात् । गुणवद्ब्राह्मणकृतवधे तु भविष्योक्तम् ॥ निहन्ता गुणवान्वीरअकामान्निर्गुणोहतः ॥ कर्तव्यानि मनूक्तानि त्यक्त्वा वै आश्वमेधिकमिति ॥ क्षत्रियवैश्यशूद्राणांतु द्विगुणत्रिगुणचतुर्गुणानि ॥ द्विगुणा क्षत्रियाणांतु वैश्यानां त्रिगुणा च सा ॥ चतुर्गुणातु शूद्राणां पर्षदुक्ता महात्मनामिति ॥ परिषद्रूपंविश्वामित्रोप्याह ॥ जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा ॥ अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेदिति ॥ कामकृतंतु विप्रस्यापि द्विगुणम् ॥ अकामतः कृते पापे प्रायश्चित्तं न कामतः ॥ स्यात्त्वकामकृते यद्धि द्विगुणं बुद्धिपूर्वकं इत्यङ्गिरसोक्तेरितिसार्वत्रिकम् ॥ ७२ ॥

( ५ ) **नन्दनः** । आत्मविशुद्धयर्थंनलोकसंव्यवहार्यमात्रार्थं कृत्वाशवशिरोध्वजंशवशिरोध्वजंस्वरूपलक्षणंकृत्वा शवाहरणंजीवच्छिरस्स्वरूपतानिवृत्त्यर्थम् ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । शवः मृतःशवशिरः ध्वजंकृत्वा ॥ ७२ ॥

**लक्ष्यंशस्त्रभृतां वास्याद्विदुषामिच्छयात्मनः ॥ प्रास्येदात्मानमग्नौ वा समिद्धेत्रिरवाक्शिराः ॥ ७३॥**

( १ ) **मेधातिथिः** । धानुष्कायत्र युद्धंकर्तुंलक्षंविध्यन्तितत्रतद्भूतेन भवितव्यं अथवा संग्रामेऽन्यत्र युध्यमानानां शस्त्रप्रहाराःप्रतीप्सितव्याः आत्मानइच्छयेतिनप्रमादात्तदंतरंगतस्य सत्यपितद्वधेन शुद्धिः विदुषामित्यवजानते प्रायश्चित्तोपदेशोयमिति अथवा धनुर्वेदज्ञानमग्नौवाऽऽत्मानंक्षिपेत्समिद्धेत्रिरुत्थाय पुनःपतेत् ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । कामतस्त्वाह लक्ष्यमिति । शस्त्रभृतां लक्ष्यंस्यात् मां शस्त्रेण घातयतेति । विदुषामयंब्रह्महेतिजानताम् । इच्छयात्मनोनतु दैवात्तथात्वे पापमोक्षः । लक्ष्यंस्यादित्यनेनच तेनोपायेन मरणं विहितम् । प्रास्येत् क्षिपेत् । त्रिरित्येकद्विवारेणामरणे त्रिरितिच संभवन्मरणहेतुवारोपलक्षणम् । यदात्वेतन्नकर्तुमुत्सहते तदा आपस्तम्बवचनानुसारेण यावज्जीवं ब्रह्महत्याव्रतं प्रागुक्तं चरेत् ॥ ७३ ॥

( ३ ) **कुल्लूकः** । धनुःशराद्यायुधधारिणांब्रह्मवधपापक्षयार्थमयंलक्षीभूतइत्येवंजानतांस्वेच्छया बाणलक्ष्यभूतोवावतिष्ठेद्यावन्मृतोमृतकल्पोवा विशुध्येत्तदाह याज्ञवल्क्यः ॥ संग्रामे वा हतोलक्ष्यभूतः शुद्धिमवाप्नुयात् ॥ मृतकल्पः प्रहारार्त्तोजीवन्नपि विशुध्यति ॥ अग्नौ प्रदीप्ते वाऽधोमुखस्त्रीन्वारान्शरीरंप्रक्षिपेत् तथा प्रास्येत यथा म्रियेतेत्यापस्तंबवचनात् एवंप्रक्षिपेदेतत्प्रायश्चित्तद्वयमनन्तरेवक्ष्यमाणंच यजेत वाश्वमेधेनेत्येवंप्रायश्चित्तत्रयमिदंकामतः क्षत्रियस्य, ब्राह्मणवधविषयं मनुश्लोकमेव लिखित्वा यथाव्याख्यानंभविष्यपुराणे॥ लक्ष्यंशस्त्रभृतांवास्याद्विदुषामिच्छयात्मनः ॥ प्रास्येदात्मानमग्नौ वा समिद्धेत्रिरवाक्शिराः ॥ यजेत वाश्वमेधेन क्षत्रियोविप्रघातकः ॥ प्रायश्चित्तत्रयंह्येतत्क्षत्रियस्य प्रकीर्तितम् ॥ क्षत्रियोनिर्गुणोधीरंब्राह्मणंवेदपारगम् ॥ निहत्यकामतोवीरलक्ष्यः शस्त्रभृतोभवेत् ॥ चतुर्वेदविदंधीरंब्राह्मणंचाग्निहोत्रिणम् ॥ निहत्यकामादात्मानंक्षिपेदग्नाववाक्शिराः ॥ निर्गुणंब्राह्मणंहत्वा कामतोगुणवान्गुह ॥ यष्ट्वावा अश्वमेधेन क्षत्रियोयोमहीपतिः ॥ ७३ ॥

( ४ ) **राघवानन्दः** । कामतोवेदविद्ब्राह्मणवधे राजन्यस्याह लक्ष्यमिति । विदुषां ब्रह्महत्यापापक्षयार्थंस्वयंक्षत्रियो-

लक्षीभूतइत्येवम् । एभ्योजीवन्नपि शुध्येत् ॥ संग्रामे वा हतोलक्ष्यभूतः शुद्धिमाप्नुयात् ॥ मृतकल्पः महारार्तोजीवन्नपि विशुध्यतीतियाज्ञवल्क्योक्तेः ॥ भविष्योक्तमपि ॥ प्रायश्चित्तत्रयंह्येतत्क्षत्रियस्य प्रकीर्तितम् ॥ व्यवस्थितंच तत्रैव ॥ क्षत्रियोनिर्गुणोधितं ब्राह्मणं वेदपारगम । निहत्य कामतोवीर लक्ष्यं शस्त्रभृतां भवेत् ॥ चतुर्वेदविदं वीर ब्राह्मणं चाग्निहोत्रिणम ॥ निहत्य कामतोऽत्मानं क्षिपेदग्नाववाक्शिराः ॥ निर्गुणं ब्राह्मणं हत्वा कामतोगुणवानह ॥ यजेत चाश्वमेधेन क्षत्रियोयोमहीपतिः ॥ ७३ ॥

( ५ ) **नन्दनः** । द्वादशाब्दव्रताशक्तौ कर्तव्यमाह लक्ष्यंशस्त्रभृतां वास्यादिति । आत्मनइच्छया स्वया स्वमिच्छतिचेत् विदुषां धनुर्वेदभृताम् ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । विदुषां अयं ब्रह्महेतिजानतां शस्त्रभृतां इच्छया लक्ष्यं वेध्यं स्यात् प्रास्येत् क्षिपेत् त्रिःत्रीनूवारान् क्षत्रियः अवाक्शिराः ॥ ७३ ॥

**यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ॥ अभिजिद्विश्वजिद्भ्यांवा त्रिवृताग्निष्टुतापि वा ॥ ७४ ॥**

( १ ) **मेधातिथिः** । जनपदेश्वरस्याश्वमेधेऽधिकारस्तत्रहिरणादिप्राच्यादिग्भ्यः आहृतंद्रव्यंदक्षणाविहितायेचानाहिताग्नयस्ते न यागेष्वधिक्रियन्तेनपुनस्तदर्थमेवाधानंकर्तव्यं कर्माणिहिमायश्चित्तार्थानि सांगानि नचांगमाधानम् ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । क्षत्रियस्यराज्ञोबुद्धिपूर्वकंअनपकृष्टवृत्तेःब्राह्मणहननेऽश्वमेधः । ब्राह्मण [ ब्रुव ] हननेतु स्वर्जिदान्यतरयज्ञानुष्ठानम् । तत्रैव विषये चतुर्णामपि वर्णानाम् । स्वर्जिन्नामयागविशेषः । अभिजिद्विश्वजिद्भ्यामभिजिता विश्वजितावेत्यर्थः । त्रिवृता त्रिवृत्स्तोमेन । अग्निष्टोमेनाग्निष्टुन्नाम्ना । अत्रापि व्यापारतारतम्याद्यपेक्षया बहुप्रयोगाल्पप्रयोगयज्ञविकल्पोद्रष्टव्यः ॥ ७४ ॥

( ३ ) **कुल्लूकः** । यजेत वाश्वमेधेनेत्यनन्तरंव्याख्यातं स्वर्जिता यागविशेषेण गोसवेन वाऽभिजिता विश्वजिता वा त्रिवृताऽग्निष्टुता वा याजयेत् एतानि चाज्ञानतोब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि । तदुक्तंभविष्यपुराणे ॥ स्वर्जितादे श्चयद्वीरकर्मणांपृतनापते ॥ अनुष्ठानंद्विजातीनांवधे ह्यमतिपूर्वके ॥७४ ॥

( ४ ) **राघवानन्दः** । त्रैवर्णिकस्याज्ञानतः ब्राह्मणवधे साधारणमाह स्वर्जितेतिपादन्यूनेन । स्वर्जिता बलवता गोसवेन ॥ स्वर्जितादेश्च षड्वीरकर्मणःपृतनायते ॥ अनुष्ठानं द्विजातीनां वधेत्वमतिपूर्वकः इतिभविष्योक्तेः ॥ त्रिवृताग्निष्टुतेति अग्निष्टोमस्य विकृतिरेकाहोऽग्निष्टुत् सच । पृष्ठस्तोत्रत्रिवृद्युक्तत्वात्त्रिवृदिति कथ्यते । एतानि विकल्पितानि शक्त्यपेक्षया व्यवस्थितानि वा ॥ ७४ ॥

( ५ ) **नन्दनः** । षडेते क्रतवः पापगौरवलाघवानुसारेण व्यवस्थापनीयाः एवमुत्तरेष्वपि विकल्पेषु कल्पनीयम् ॥ ७४ ॥

**जपन्वान्यतमंवेदंयोजनानांशतंव्रजेत् ॥ ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ॥ ७५ ॥**

( १ ) **मेधातिथिः** । मितभुग्यावतानतृप्यति नियतेन्द्रियोब्रह्मचारी विषयेष्वगृध्नुः ॥ ७५ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणस्य ब्राह्मणब्रुवहननेऽकामकृते ॥ ७५॥

( ३ ) **कुल्लूकः** । वेदानांमध्यादेकंवेदंजपन्स्वल्पाहारः संयतेन्द्रियोब्रह्महत्यापापनिर्हरणाय योजनानांशतंगच्छेदेतदप्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तं । तथाच भविष्यपुराणेऽयमेव श्लोकःपठितोव्याख्यातश्च ॥ जा तिमात्रंयदाविप्रंहन्यादमतिपूर्वकम ॥ वेदविच्चाग्निहोत्रीच तदा तस्य भवेदिदम् ॥ ७५ ॥

( ४ ) **राघवानन्दः** । जातिमात्रब्राह्मणवधेप्याह जपन्निति तथाच यमः ॥ जातिमात्रं यदा विप्रं हन्यादमतिपूर्व-

कम् ॥ वेदविदग्निहोत्री च तदा तस्य भवेदिदम् ॥ जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ॥ ब्रह्महत्यावनोदाय मितभुङ्नियतेन्द्रियइति ॥ ७५ ॥

## सर्वस्वंवेदविदुषेब्राह्मणायोपपादयेत् ॥ धनंवाजीवनायालंगृहंवासपरिच्छदम् ॥ ७६ ॥

( १ ) **मेधातिथिः** । यावत्किंचिद्व्रीहिहिरण्यादिकंतत्सर्वंदातव्यं अत्रार्थवादोधनंहिजीवनायालमिति तावताधनेन दत्तेनान्यस्मैजीवितंदत्तंभवतीत्येवसाम्यं गृहंवासः परिच्छदंपरिछदशब्देन यावत्किंचिद्गृहोपकरणं सर्पिस्तैलधान्यादि कुण्डकटाहादिकुप्यशयनासनादि तत्सर्वंगृह्यते ॥ ७६ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वस्वं सहस्रादूर्ध्वम् । धनंवाजीवनायालमितिनिमित्तमात्रेण जीवनाय सत्कुटुम्बस्य द्विजस्य । गृहंवेत्यत्यल्पवित्ततायाम् । सपरिच्छदं परिच्छदः उल्लेखनादिः ॥ ७६ ॥

( ३ ) **कुल्लूकः** । सर्वस्वंवा वेदविदे ब्राह्मणाय दद्यात् यावद्धनंजीवनाय समर्थंगृहंवा गृहोपयोगिधनधान्यादियुतमतः सर्वस्वंवा गृहवासपरिच्छदंदद्यात् । जीवनायालमिति वचनाज्जीवनपर्याप्तंसर्वस्वंगृहंवादद्यान्न ततोऽल्पं एतच्चाज्ञानतोजातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम् । तथा च भविष्यपुराणम् ॥ जातिमात्रंयदाहन्याद्ब्राह्मणंब्राह्मणोगृह वेदाभ्यासविहीनोवै धनवानग्निवर्जितः ॥ प्रायश्चित्तंतदा कुर्यादिदंपापविशुद्धये ॥ धनंवा जीवनायालंगृहंवासपरिच्छदम् ॥ ॥ ७६ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्यैव जातिमात्रस्याज्ञानतः तद्वधेप्याह सर्वस्वमिति । अलं जीवनपर्यन्तस्थायि । तथोक्तं भविष्ये ॥ जातिमात्रं यदा हन्यात् ब्राह्मणोब्राह्मणं गृह ॥ वेदाभ्यासविहीनोवै धनवानग्निवर्जितः ॥ प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये ॥ धनं वा जीवनायालं गृहं वासपरिच्छदे सर्वस्वंवावदेविदेब्राह्माणायोपपादयेदिति ॥ ७६ ॥

( ५ ) **नन्दनः** । उपपादयेद्दद्यात् ॥ ७६ ॥

( ६ ) **रामचन्द्रः** । जीवनायालं धनं जीवनपर्याप्तम् ॥ ७६ ॥

## हविष्यभुग्वाऽनुसरेत्प्रतिस्रोतः सरस्वतीम् ॥ जपेद्वानियताहारस्त्रिर्वैवेदस्यसंहिताम् ॥ ७७ ॥

( १ ) **मेधातिथिः** । हविष्यंमुन्यन्नंनीवारादि ग्राम्यमपिपयोघृतादि । प्रतिस्रोतः स्रोतःस्रोतः प्रतियावन्तिसरस्वत्याः स्रोतांसितावन्त्यनुसरेत् । नियताहारआहारनिवृत्तिंकृत्वावेदसंहितांसमन्त्रब्राह्मणकांत्रिरावर्तेत एतेषांप्रायश्चित्तानामियमत्रव्यवस्था बुद्धिपूर्वेण ब्रह्मणमात्रवधे द्वादशवार्षिकंलक्ष्यंशस्त्रभृतामनेन विकल्पते । यद्यपि द्वादशवार्षिकेन मरणान्ततंथापि दैवोपपत्तिपतितेऽन्तरामरणे सामिकृतेप्रायश्चित्तेशुद्ध्यभावात्प्रत्यवायोननिवर्तते द्वितीयेतु तदानीमेव निर्मुक्तपापाः शस्त्रहतोवाकदाचिन्नम्रियेत अतएव आद्योपात्तप्रायश्चित्तमिच्छया विकल्पेन दातव्यं । अग्नौप्रवेशस्तुश्रोत्रियत्वादिगुणयुक्ते तत्रापि सवनगुणेऽग्नौसन्तिब्रह्मघ्नस्त्रिरवरथास्तस्यावसानंशस्त्रेणगात्राणांखण्डशोविदारणंसवनगतइति पठन्ति । नचप्राणान्तिकेषु द्वैगुण्यसंभवः नह्येकस्मिन्जन्मनिर्द्विर्मरणोपपत्तिस्तत्तुल्यपीडानुभवात्तस्यद्वैगुण्यं नचद्वादशवार्षिकंद्विगुणंयुक्तंकोहिदेवसमश्नुतुर्विंशतिवर्षाणिप्रायश्चित्तंचरेत्संवत्सरशेषेहि मृतस्य सर्वंनिष्फलंस्यात् अश्वमेधयागस्तुत्रैवर्णिकानांसतिसंभवे पूर्वोक्तैर्विकल्पते । गोसवादयस्त्वबुद्धिपूर्वमहागुणवतिहन्तरिस्युर्योजनश्रुतंदृष्टाचब्राह्मणजातीयमात्रवधएवमुत्तराण्यपि त्रिवृताग्निष्टुतेतिसमानाधिकरणे एवंस्वर्जितागोसवेनेति अभिजिद्विश्वजितौद्वेप्रायश्चित्ते ॥ ७७ ॥

( २ ) **सर्वज्ञनारायणः** । हविष्यभुग्वेति सर्वस्वदानेनविकल्पितम् । प्रतिस्रोतः प्रभासमारभ्य प्लक्षस्रवणान्तं यत्र-

यत्र सरस्वती तत्रतत्र स्रोतोलक्षीकृत्य तीरेण गमनम् । जपेद्वेति ब्राह्मणहत्यायाम् । संहितां मन्त्रभागमेकस्य वेदस्य ॥ ७७ ॥

( ३ ) **कुल्लूकः** । नीवारादिहविष्यान्नभोजीविख्यातप्रसरणादारभ्यापश्चिमोदधेःस्रोतः प्रतिसरस्वतींयायात् । एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्वके । तथा भविष्यपुराणे ॥ जातिमात्रे हते विप्रे देवेन्द्रमतिपूर्वकम्॥हन्ता यदा वेदहीनोधनेन च भवेद्धृतः॥ तदैतत्कल्पयेत्तस्य प्रायश्चित्तंनिबोधमे ॥ हविष्यभुग्चेरद्वापि प्रतिस्रोतः सरस्वतीम् ॥ अथ वा परिमिताहारस्त्रीन्वारान्वेदसंहिताम् ॥ संहिताग्रहणात्पदक्रमव्युदासोऽत्रापि भविष्यपुराणीयोविशेषः॥ जातिमात्रन्तु योहन्याद्विप्रंत्वमतिपूर्वकम् ॥ ब्राह्मणोऽत्यन्तगुणवान् तेनेदंपरिकल्पयेत् ॥ जपेद्वानियताहारस्त्रिर्वैवेदस्य संहिताम् ॥ ऋचोयजूंषिसामानित्रैविद्याख्यंसुरोत्तम ॥ ७७ ॥

( ४ ) **राघवानन्दः** । ज्ञानतोजातिमात्रतद्वधे सगुणस्य निर्गुणस्य वा ब्राह्मणस्याह हविष्येति । तथाच भविष्ये ॥ जातिमात्रे हते विप्रे दैवादमतिपूर्वकम् ॥ हन्ता यदा वेदहीनोधनेन चभवेद्दृह ॥ तदा तत्कल्पयेत्तस्य प्रायश्चित्तं निबोधमे ॥ हविष्यभुक् चरेत्तीरे प्रतिस्रोतः सरस्वतीम् ॥ प्रतिस्रोतः समुद्रादिसंगममारभ्य प्रतिकूलतयानिःसरणदेशपर्यन्तंगच्छेदिति ॥ जातिमात्रंतु योहन्यात् विप्रंतु मतिपूर्वकम् ॥ ब्राह्मणोत्यन्तगुणवान् तदेतत्परिकल्पयेत् ॥ जपेद्वा नियताहारस्त्रिःकृत्वोवेदसंहिताम् ॥ ऋचोयजूंषि सामानि त्रैविद्याख्यां सुरोत्तमेति ॥७७॥

( ५ ) **नन्दनः** । प्रतिस्रोतः प्रतिस्रोतसम् ॥ ७७ ॥

( ६ ) **रामचन्द्रः** । प्रतिस्रोतः सरस्वतीं अनुसरेत् गच्छेत् ॥ ७७ ॥

**कृतवापनोनिवसेद्ग्रामांते गोव्रजेपिवा ॥ आश्रमे वृक्षमूले वागोब्राह्मणहिते रतः ॥ ७८ ॥**

( १ ) **मेधातिथिः** । द्वादशवार्षिकस्यायंविशेषः कश्चिद्वैकल्पिकधर्मउपदिश्यते कश्चिदपूर्ववचनः अपूर्वमाश्रमवृक्षमूले वैकल्पिकमेववाकुटीस्यात् किमर्थंपुनस्तत्रैव नोक्तंप्रक्रान्तद्वादशवार्षिकस्य वक्ष्यमाणंयथास्यात्पृथक्प्रायश्चित्तंमाभूदितिपूर्वैर्व्याख्यातंस्वतन्त्रंह्यन्यस्मिन्प्रक्रान्तेऽन्यत्रप्राप्नोति प्रक्रान्तासमाप्तौ दोषश्रवणात्पृथगधिकारात्पृथक्प्रयोगताऽन्यस्यान्यतरप्रयोगः ॥ ७८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तव्रतेषु साधारणंधर्ममाह कृतवापनोनिवसेदिति । ग्रामान्ते ग्रामाद्बहिः ॥ ७८ ॥

( ३ ) **कुल्लूकः** । इदानींसमाप्ते द्वादशवर्षइत्युपदेशाद्द्वादशवार्षिकस्य विशेषमाह॥लूनकेशनखश्मश्रुर्गोब्राह्मणहितेरतः॥ गोब्राह्मणोपकारान्कुर्वन्ग्रामसमीपे गोष्ठपुण्यदेशवृक्षमूलान्यतमे निवसेत् वने कुटींकृत्वेत्यस्य विकल्पार्थमिदम् ॥ ७८ ॥

( ४ ) **राघवानन्दः** । द्वादशवार्षिकस्य विशेषानाह कृतवापनइति चतुर्भिः । कृतवापनोलूनकेशश्मश्रुरित्यपूर्वविधिः । कृतवापस्थितिरितिकुत्रचिदर्थः ॥ सएव स्वाश्रमे पुण्ये कुटींकृत्वावने वसेदित्यस्योपलक्षणार्थत्वात् ॥ ७८ ॥

( ५ ) **नन्दनः** । मतान्तरमाह कृतवापनोनिवसेदिति । कृतवापनोव्युप्तकेशश्मश्रुः ग्रामान्ते ग्रामसमीपे ॥ ७८ ॥

( ६ ) **रामचन्द्रः** । कृतवापनः मुण्डः ॥ ७८ ॥

**ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् ॥ मुच्यते ब्रह्महत्यायागोप्ता गोब्राह्मणस्य च ॥ ७९ ॥**

( १ ) **मेधातिथिः** । अपरित्रायापि सम्यक्प्राणपरित्यागेनमुच्यतेपरीत्रायाप्राणत्यागेनापि ॥ ७९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र प्रारब्धव्रतस्यासमाप्तेपि व्रते येन कर्मणा पापक्षयस्तदाह ब्राह्मणार्थइति ब्राह्मणार्थे

ब्राह्मणस्य प्राणरक्षार्थम् । एवं गवार्थे । सद्योमुच्यतइत्यन्वयः । एतच्च तत्प्राणरक्षोद्देशेन मरणे प्राणरक्षायामसिद्धायामपि तथा तत्प्राणरक्षणेनामृतस्यापि शुद्धिरित्याह गोमेति ॥ ७९ ॥

( ३ ) **कुल्लूकः** । प्रक्रान्ते द्वादशवार्षिकेऽन्तराऽयुदकहिंसकाद्याक्रान्तब्राह्मणस्य गोर्वापरित्राणार्थंप्राणान्परित्यजन्ब्रह्महत्याया मुच्यते गोब्राह्मणंत्राततः परित्रायामृतोप्यसमाप्तद्वादशवर्षापि मुच्यते ॥ ७९ ॥

( ४ ) **राघवानन्दः** । आरब्धद्वादशवार्षिकस्य विकल्पमाह ब्राह्मणार्थइतिद्वाभ्याम् । ब्राह्मणार्थे इति अभ्युदकहिंसाद्याक्रान्तयोर्गोब्राह्मणयोःकृते मरणेन तयोरक्षणेनवा व्यापृतोविमुच्यते ॥ ७९ ॥

( ५ ) **नन्दनः** । परित्यक्तप्राणोरिक्तप्राणोपिवा गोब्राह्मणगोप्ता ब्रह्महत्यायामुच्यते ॥ ७९ ॥

**त्रिवारंप्रतिरोद्धा वा सर्वस्वमवजित्य वा ॥ विप्रस्य तन्निमित्ते वा प्राणालाभेपिमुच्यते ॥ ८० ॥**

( १ ) **मेधातिथिः** । प्रतिरोद्धा प्रवृत्तःशस्त्रेण क्षतोवा युद्धकरणेत्र्यवरंयदिन्यूनंतदातिस्रआवृत्तयः कृतेयुद्धेऽसौमुच्यते ऽपरित्रायमृतोपि सर्वस्वमवजित्येति ब्राह्मणादीनांचौरापहृतं यदिप्रत्यानयति तदामुच्यते ब्राह्मणस्यवा तन्निमित्ते प्राणदाने ननुचोक्तंगोब्राह्मणस्येति सत्यंयुद्धेनान्येन वा शरीरव्यापारेण गांपङ्कलग्नांदस्युभिर्वाह्यमानांब्राह्मणंशत्रुभिश्चौरैर्नद्यावापह्रियमाणंयदिमोक्षयति ततः शुध्यतीत्युक्तं । इहतु तन्निमित्तग्रहणाद्यदि धनेपह्रियमाणेब्राह्मणोव्यामूढतयाऽऽत्मानंहन्ति निरपेक्षंवाचौरैर्युध्यते तत्र तत्समधनदानेन मामृथाअहंतइयद्धनंददामीति तमाश्वास्यदत्वामुच्यते ॥ ८० ॥

( २ ) **सर्वज्ञनारायणः** । प्रकारान्तरमाह त्र्यवरमिति । त्रयोऽवरायत्र तत्त्र्यवरं बहून्वारानित्यर्थः । प्रतिरोद्धा गोब्राह्मणरक्षार्थंकृतवैशसोऽशक्ततयाऽकृतरक्षोजीवन्नपि मुच्यते । सर्वस्वमिति । तथा ब्राह्मणसर्वस्वं चौरैर्ह्रियमाणमवजियानीय ब्राह्मणाय दत्वा । विप्रस्य सर्वस्वमित्यन्वयः । तन्निमित्ते विप्रसर्वस्वनिमित्ते प्राणालाभे मरणे वित्ताप्राप्तावपि मुच्यते असमाप्तव्रतोपि निष्पापोभवतीत्यर्थः ॥ ८० ॥

( ३ ) **कुल्लूकः** । स्तेनादिभिर्ब्राह्मणसर्वस्वेऽपह्रियमाणे तदानयनार्थंनिर्व्याजंयथा शक्तिप्रयत्नंकुर्वन् तत्र त्रिवाराण्युद्धे प्रवर्त्तमानोनानीतेऽपि सर्वस्वे ब्रह्महत्यापापात्प्रमुच्यते अथवा प्रथमवारएव विप्रसर्वस्वमपहृतंजित्वाऽर्पयति तथापि मुच्यते यद्वा धनापहारकत्वेन स्वेनैव ब्राह्मणोयुद्धेन मरणे प्रवर्तते तदा यद्यप्यपहृतसमधनदानेन तंजीवयतितदापि तन्निमित्ते तस्य प्राणलाभे ब्रह्महत्यापापान्मुच्यते एतदितरप्रकारान्तरेण तु रक्षणे गोप्तागोब्राह्मणस्य चेत्यपुनरुक्तिः ॥८०॥

( ४ ) **राघवानन्दः** । त्र्यवरमिति । विप्रस्य तं त्रयोऽवरानिकृष्टायस्मात्समुदायात्तं ब्राह्मणान् चतुरःपञ्चवा । सर्वमक्षीणं स्वंयस्य तं अवजित्य दस्युभ्यः प्रतियोद्धा रक्षिता च । पुनस्तेभ्यः तन्निमित्तेतादृशनिमित्तेऽपि प्राणलाभेजीवति सति मुच्यते ब्रह्महत्यातइति । तन्निमित्ते धननिमित्ते मरणोद्यतस्य धनदानेन रक्षणान्मुच्यतइतिमेधातिथिः । पूर्वत्र जीवरक्षणमत्रतु धनरक्षणमितिभेदः । तथाच याज्ञवल्क्यः ॥ ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा ॥ दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ॥ दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महाशुचिः ॥ आनीय तस्य सर्वस्वं हृतं घातितएववा ॥ तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ॥ ८० ॥

( ५ ) **नन्दनः** । विप्रस्य परंप्रतिरोधः विप्रस्यापहृतंधनंत्रिःप्रत्याहृत्य वा सर्वस्वमपि जित्य विप्रस्यापहृतंसत्रैस्वंसक-

---

( ८० ) त्रिवारं=त्र्यवरं ( ख, ध, च, ण राघ० ) ( ८० ) प्रतिरोद्धा = प्रतियोद्धा ( राघ० )

द्रव्यपहर्तॄन् जित्वाप्रत्याहृत्य विप्रस्य तन्निमित्तेप्रायश्चित्तनिमित्ते प्राणलाभे विप्रस्य व्याघ्रचोरादिभ्यः प्राणवधपरिहृत्ये-त्यर्थः मुच्यते ब्रह्महत्यायाइत्येव ॥ ८० ॥

( ६ ) **रामचन्द्रः** । त्र्यवरं बहुवारम् । प्रतिरोधोवामरणे गोब्राह्मणरक्षणम् । सर्वस्वंअपजित्य आनीय ब्राह्मणाय दत्त्वा वा । तन्निमित्ते प्राणलाभेकृतवैशसः सर्वस्वनिमित्ते प्राणालाभे मरणे धनाप्राप्तावपि मुच्यते ॥ ८० ॥

## एवंदृढव्रतोनित्यंब्रह्मचारी समाहितः ॥ समाप्ते द्वादशे वर्षे ब्रह्महत्यांव्यपोहति ॥ ८१ ॥

( १ ) **मेधातिथिः** । तस्माद्वचनादाद्यशेषमुत्क्रान्तविज्ञायते दृढव्रतइति । समाहितइतिच पादपूरणेपदे उपसंहारो-यंपूर्वस्य ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । यदातु व्रतनिमित्तहेतुः ब्राह्मणरक्षादि न कृतं तदाह एवमिति । दृढव्रतः स्मृत्यन्तरसिद्ध-सर्वनियमकारी । समाहितइष्टदेवतादिस्मरणवान् ॥८१ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेण सर्वदानियमोपहितः स्त्रीसंयोगादिशून्यः संयतमनाः समाप्ते द्वादशे वर्षे ब्रह्मह-त्यापापंनाशयनि एवंब्राह्मणार्थइत्यादिसर्वप्रक्रान्तद्वादशवार्षिकस्य बोद्धव्यम् ॥ ८१ ॥

( ४ ) **राघवानन्दः** । उपसंहरति एवमिति । हठव्रतः आस्तिक्यबुद्ध्याअचाल्यव्रतः । द्वादशवार्षिकस्योपसंहारदर्श-नान्मध्येष्वपि पठ्यमानाःपक्षाएतस्यैवविकल्परूपाः षोडशीग्रहणवदिति तथाचजैमिनिसूत्रम् ॥ प्रायश्चित्तेषु चैकार्थ्यान्निष्प-न्नेनाभिसंयोगस्तस्मात्सर्वेषुनिर्घात्यः । प्रायश्चित्तेषु मध्ये एकैकशस्तस्य निष्पन्नेन पापेननिवर्तकतया संबन्धः ॥ कुतः ऐकार्थ्यात् एकार्थास्तु विकल्पेरन्निति न्यायादेकेन प्रायश्चित्तेनैकस्य पापस्य निरस्यतया अपराकांक्षाविरहात् अ-न्यथाऽ प्रवृत्तेरितिसूत्रार्थः । अतएव ॥ व्रतमध्ये मृगैर्वापि रोगैर्वाविनिषूदितः ॥ गोनिमित्तंद्विजार्थंवा प्राणान्वापि परित्य-जेत् ॥ यद्वा दद्यात् द्विजेन्द्राय गवामयुतमुत्तमम् ॥ एतेष्वन्यतमं कृत्वा ब्रह्महा शुद्धिमाप्नुयादिति नारदोक्तमपि संगतमि ति । अतोन्यतममास्थायेति वक्ष्यति । प्राणान्तिकपक्षे तत्पुत्राद्यैस्तदन्त्येष्टिकरणादिकं फलमितिश्लोकतात्पर्यम् ॥ ८१ ॥

( ५ ) **नन्दनः** । कृतवापनोनिवसेदित्यारभ्योक्तानांनियमानामन्यतमंनिमित्ताभावादकुर्वतः कियताकालेन ब्रह्म-हत्यायामोक्षइत्यपेक्षायामाह एवंदृढव्रतोनित्यमिति । एवमिति कृतवापनइत्याद्यारभ्योक्तानांनियमानांपरामर्शः समाहितः गोब्राह्मणरक्षणएकाग्रचित्तः ॥ ८१ ॥

## शिष्ट्वा वा भूमिदेवानांनरदेवसमागमे ॥ स्वमेनोऽवभृथस्नातोहयमेधे विमुच्यते ॥ ८२ ॥

( १ ) **मेधातिथिः** । चरमपक्षउच्यते शिष्ट्वास्वमेनआत्मीयंदोषंभूमिदेवतानांब्राह्मणानांनरदेवैः क्षत्रियैः समागमेऋ-त्विजोब्राह्मणः क्षत्रियोयजमानएवंकृताश्वमेधेऽवभृथस्नातोविमुच्यते द्वादशवार्षिकस्योपसंहृतत्वात्स्वतन्त्रमिदंवैकल्पिक-मिच्छति । अन्येइत्याहुर्वैकल्पिकानांमध्यउपदेशात्प्रक्रान्तद्वादशवार्षिकस्यैव गोब्राह्मणपरित्राणवत्समाप्त्यवधिमाहुर्यथा सारस्वतेन पक्षंवा प्रस्रवणंप्राप्योत्थानमिति । वयन्तु ब्रूमउपसंहृतत्वादाज्यस्यवैकल्पिकमध्येवा पाठादुभयरूपतास्यप्रक्रा-न्तेऽपक्रान्ते चसतिसंभवे ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । शिष्ट्वा कथयित्वात्मनःपापम् । नरदेवैः राजभिः भूमिदेवानां ब्राह्मणानां समागमेऽश्वमेधा-वभृथे स्नातोमुच्यते ब्रह्महत्यया ॥ ८२ ॥

( ३ ) **कुल्लूकः** । अश्वमेधे ब्राह्मणानामृत्विजांक्षत्रियस्य यजमानस्य समागमेषु ब्रह्महत्यापापंशिष्ट्वा निवेद्यावभृथ-स्नातोब्रह्महत्यापापान्मुच्यते द्वादशवार्षिकस्योपसंहृतत्वात् स्वतन्त्रमेवेदंप्रायश्चित्तं । तथा च भविष्यपुराणे ॥ यदा तु गुण-वान्विप्रोहत्वा विप्रंतुनिर्गुणम् ॥ अकामतस्तदागच्छेत्स्नानंचैवाश्वमेधिकम् ॥ गोविंदराजस्तुअश्वमेधविवर्जितसकलप्रा-यश्चित्तशेषतअस्यप्रक्रांतद्वादशवार्षिकप्रायश्चित्तस्यांतराऽवभृथस्नानेतेनैवशुद्धिरित्याह तदयुक्तंभविष्यपुराणवचनविरोधात् ॥ ८२ ॥

( ४ ) **राघवानन्दः** । गुणवतोनुमन्तुरनारब्धव्रतस्यवा निर्गुणब्राह्मणवधे स्वतन्त्रं प्रायश्चित्तमाह शिष्ट्वेति । शिष्ट्वा नि-वेद्य स्वमेनःइतिशेषः । भूमिदेवानां विप्राणां हयमेधेऽश्वमेधयागे तत्रत्यानां नरदेवानां नृपाणां समागमे मेलने ॥ तथाच भविष्ये ॥ यदा च गुणवान्विप्रोहन्याद्विप्रंतु निर्गुणम् ॥ अकामतस्तदा गच्छेत्स्नानंचैवाश्वमेधिकमिति ॥ ८२ ॥

( ५ ) **नन्दनः** । स्वमेनः शिष्ट्वा विख्याप्य ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । शिष्ट्वानिवेद्य अस्य एनः अवभृथस्नातोहयमेधेविमुच्यते ॥८२॥

**धर्मस्य ब्राह्मणोमूलमग्रंराजन्यउच्यते ॥ तस्मात्समागमे तेषामेनोविख्याप्य शुध्यति ॥ ८३ ॥**

( १ ) **मेधातिथिः** । यजमानर्त्विजांब्राह्मणक्षत्रियाणामश्वमेधसमागमएनोविख्यापनीयमित्यत्रार्थवादः ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रोपपत्तिमाह धर्मस्येति । मूलं तदुपदेशेन धर्मप्रवृत्तेः । अग्रंराजन्यस्तेनार्तरक्षणेन वि-स्तार्यते । मूलाग्राभ्यां वृक्षावरोधात्मधर्मावरोधात्कृत्स्नधर्मसंबन्धिजनसंसर्गादधर्मक्षयइत्यर्थः ॥ ८३ ॥

( ३ ) **कुल्लूकः** यस्माद्ब्राह्मणोधर्मस्य कारणंब्राह्मणेन धर्मोपदेशे कृते धर्मानुष्ठानाद्राजा तस्याग्रंप्रान्तंमन्वादिभिरुच्यते ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्मतरुनिष्पत्तेः तस्मात्तेषांसमागमेऽश्वमेधे पापंनिवेद्यावभृथस्नातः शुद्ध्यतीत्यस्यैव विशेषः ॥ ८३ ॥

( ४ ) **राघवानन्दः** । एतदेव सोपपत्तिकंद्रढयति धर्मस्येति । अग्रंआदिः*विप्रोहि धर्ममुपदिशंस्तमुत्पादयति राजा तमनुपालयत्यतस्ताभ्यां धर्मवृक्षस्य समग्रोत्पत्तिः । एनः पापं विख्याप्यशुध्यति ख्यापनेनानुतापनेनेत्यत्र ख्यापनस्या-पि विशुद्धहेतुतोक्तेः ॥ ८३ ॥

( ५ ) **नन्दनः** । विख्यापनस्य प्राधान्यमुपपादयति धर्मस्य ब्राह्मणोमूलमिति । मूलमुपदेशकत्वात् अग्रमनुष्ठापक-त्वात् ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । तेषां ब्राह्मणक्षत्रियाणां समागमे एनः पापं विख्याप्य कथयित्वा विशुध्यति ॥ ८३ ॥

**ब्राह्मणः संभवेनैव देवानामपि दैवतम् ॥ प्रमाणंचैव लोकस्य ब्रह्मात्रैव हि कारणम् ॥ ८४ ॥**

( १ ) **मेधातिथिः** । प्रायश्चित्तिनापरिषद्प्रश्नंकर्तव्यं परिषत्पूज्यस्तुविधिरनुष्ठेयःसाचैवंरूपापरिषदेवमर्थश्लोकोय-मुत्तरश्च उत्पत्त्यैव ब्राह्मणोदेवानामपिदेवोलोकस्य प्रमाणंप्रत्ययितः प्रत्यक्षदर्शनवत् नतदोयंवचनमपिशङ्क्यते कश्चित अत्र-कारणंब्रह्मवेदस्तदर्थज्ञोह्यदृष्टमुपदर्शयनप्रमाणीक्रियते ॥ ८४ ॥

( २ ) **सर्वज्ञनारायणः** । अत्र प्रायश्चित्तज्ञानोपायमाह ब्राह्मणइति । संभवेनैवोत्पत्त्यैव संस्कारेष्वनुत्पन्नेष्वपि दे-वानामपि दैवतमाराध्यः । प्रमाणंचैवलोकस्य धर्मनिश्चये । अत्र हेतुमाह ब्रह्मात्रैवहिकारणमिति । यतः कारणंधर्मनि-श्चये ब्रह्मवेदस्तत्रैव नियमेनास्तिततइत्यर्थः ॥ ८४ ॥

---

* आदिः = प्रान्तः ( न, श )

( ३ ) **कुल्लूकः**। ब्राह्मणउत्पत्तिमात्रेणैव किंपुनः श्रुतादिभिर्देवानामपि पूज्यः सुतरांमनुष्याणांलोकस्य च प्रत्यक्ष-वत्प्रमाणंतदुपदेशस्य प्रामाण्यात् यस्मात्तत्र वेदएव कारणंवेदमूलकत्वादुपदेशस्य यतएवमतः ॥ ८४ ॥

( ४ ) **राघवानन्दः**। ब्राह्मणोधर्मस्यमूलमित्यत्रोपपत्त्यन्तरमाह ब्राह्मणइति। संभवेनोत्पत्तिमात्रेणैव। अपिशब्दान्म-नुष्याणां सुतरां प्रमाणं तदुपदेशस्यैव धर्मजनकतया प्रमाणत्वात् नेतरे। ब्रह्म वेदः अत्रार्थे कारणं प्रमाणम्। ब्राह्मणै-रुपदिश्यमानएव धर्मः फलजनकइति ॥ ८४ ॥

( ५ ) **नन्दनः**। निमित्तविशेषेषु प्रायश्चित्तविशेषोब्राह्मणनिर्णीतः कर्तव्यइति वक्तुंब्राह्मणस्य वैशिष्ट्यंतावदाह ब्राह्म-णः सम्भवेनेति। दैवतंईश्वरत्वार्हः अनेनशक्त्यातिशयउक्तः प्रमाणंविश्रंभार्हमनेन ज्ञानातिशयेन ब्राह्मणाब्राह्मण्यमेव कारणंनान्यत् ॥ ८४ ॥

( ६ ) **रामचन्द्रः**। ब्राह्मणः संभवेनैवउत्पत्त्यैव। ब्रह्म वेदः। अत्रैव कारणं प्रमाणम् ॥ ८४ ॥

**तेषांवेदविदोब्रूयुस्त्रयोप्येनः सुनिष्कृतिम् ॥ सा तेषांपावनाय स्यात्पवित्रंविदुषांहि वाक् ॥ ८५ ॥**

( १ ) **मेधातिथिः**। परिषद्गमनंप्रायश्चित्तिनोऽनेनकथ्यते। तस्याश्चलक्षणंब्राह्मणावेदविदस्त्रयःपरिषदिति ननुच-दशावरावापरिषदितिवक्ष्यति तथैकोपिवेदविद्धर्ममिति नदशसंख्यापुरुषाणामुपदिश्यते किंतर्हि गुणानां। तथाचत्रैविद्योहै-तुकस्तर्कीतिगुणानामेवनिर्देशः एकोपिवेदविदित्यनेनचैतत्प्रकटीकरोतिहैतुकत्वाद्गुणांतराभावेपिकेवलेनैववेदेनवेदवित्परिष-त्वंलभ्यते अयंतु श्लोकः संख्यानिर्देशार्थः अत्रयद्यपिवेदविदइत्युपात्तंहैतुकत्वादयोपि गुणागृह्यन्ते नह्यन्यथावेदवित्त्वं-शिष्टपरिषल्लक्षणं। तत्रैवव्याख्यास्यामः यदि वेदवित्त्वंनहैतुकत्वादिना विना भवति कथंतर्हीदमुक्तमेकोपि वेदविदिति गुणान्तराभावेपि वेदवित्परिग्रहार्थमित्येतदपि। तत्रैववक्ष्यामः अतः प्रायश्चित्तिनात्रयः समुदिताः प्रष्टव्याः एकस्य कदा-चित्प्रमादोऽनवधानंस्यात् तथैतत्परिषद्गमनंविदुषाप्यदृष्टार्थंकर्तव्यमिति। तथाच पवित्रंविदुषांहिवाक् नच रहस्यप्राय-श्चित्ताभावप्रसङ्गः यत्र कस्याप्यविदितं तद्रहस्यं विदितेतुपरिषद्गमनं। तथाचोक्तं ख्यापनेनानुतापेनेति तदेतदयुक्तं कल्पनाविषयत्वादस्यशक्तिंपापंचावेक्ष्य प्रायश्चित्तंविकल्पयेदिति अनुक्तनिष्कृतीनांप्रायश्चित्तंकल्पयेत्तत्र त्रिभिर्याकल्पना-कृता साप्रमाणयितव्या ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः**। ततःकिमतमाह तेषामिति। त्रयोपि अत्यन्तालाभे तेषांपापिनां पावनाय प्रायश्चित्तज्ञाप-नद्वारा। पवित्रंहीति हेतूक्त्या ब्राह्मणैर्बहुभिरुपदिष्टमेव कर्तव्यं नान्यथा पापक्षयइत्यर्थः। पवित्रंपावनींचेतिदर्शनात्। स्यामित्यध्याहर्यं। तेषांवेदविदइतिक्वचित्पाठः ॥ ८५ ॥

( ३ ) **कुल्लूकः**। तेषांविदुषांब्राह्मणानांमध्ये वेदज्ञास्त्रयोपि किमुताधिकाः यत्पापनिर्हरणाय प्रायश्चित्तंब्रूयुस्तत्पा-पिनांविशुद्धये भवति यस्माद्विदुषांवाक्पावयित्री ततश्च प्रकाशप्रायश्चित्तार्थंविदुषामपि परिषदवश्यंकार्या रहस्यप्रायश्चित्ते पुनरेतन्नास्तिरहस्यत्वविरोधात् ॥ ८५ ॥

( ४ ) **राघवानन्दः**। एतदेव स्पष्टयति तेषामिति। तेषां चतुर्णां वर्णानां एनस्सु जातेषु निष्कृतिं प्रायश्चित्तं ब्रूयुः। सा निष्कृतिः। अत्रहेतुः पवित्रमित्यादि। विदुषां त्रयाणां ब्राह्मणानां वाक् ज्ञानाग्न्यादिवत्पावनीतिभावः। धर्मस्येत्यादिश्लो-कत्रयं परिषद्गमनस्तुत्यर्थमिति मेधातिथिः ॥ ८५ ॥

( ५ ) **नन्दनः**। ततः किमायातमित्यपेक्षायामाह तेषांवेदविदोब्रूयुरिति। वेदविदोवेदार्थविदस्तेषां प्रायश्चित्तानाम् ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । तेषां पापिनां एनःसु निष्कृतिं त्रयोवेदविदोब्रूयुः । तेषां विदुषां सावाक् पावनाय पवित्रं स्यात् ॥ ८५ ॥

**अतोन्यतममस्थाय विधिंविप्रः समाहितः ॥ ब्रह्महत्याकृतंपापंव्यपोहत्यात्मवत्तया ॥ ८६ ॥**

( १ ) **मेधातिथिः** । सर्वेषांब्रह्महत्याप्रायश्चित्तानामुपसंहारार्थः श्लोकोयं । विप्रग्रहणंचात्र सर्ववर्णप्रदर्शनार्थं । व्यपोहत्यपहरति आत्मवत्तयाऽऽत्मज्ञानतया शास्त्रार्थकृताभिनिवेशआत्मवानित्युच्यते तस्यायमध्यवसायोन शास्त्रार्थमन्यथावर्त्तते ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । अन्यतममिति तत्तदपनोद्यपापविशेषापेक्षया व्यवस्थितमित्यर्थः । विधिं प्रकारम् । विप्रइतिप्राधान्यादुक्तंयथोक्तव्यवस्थया तु योज्यम् । आत्मवत्तया प्रयत्नवत्तया ॥ ८६ ॥

( ३ ) **कुल्लूकः** । अस्मात्प्रायश्चित्तगणादन्यतमंप्रायश्चित्तंब्राह्मणादिः संयतमनाआश्रित्य प्रशस्तार्थतया ब्रह्महत्याकृतपापमपनुदति एतच्च ब्रह्मवधादिप्रायश्चित्तविधानंसकृत्पापकरणविषयंपापावृत्तौ त्वावर्त्तनीयं एनसि गुरुणिगुरुणिलघुनिलघूनीति गोतमस्मरणात् पूर्णेचानस्यनस्भान्तशूद्रहत्याव्रतंचरेदिति बहुमारणे प्रायश्चित्तबहुत्वस्य वक्ष्यमाणत्वाच्च ॥ विधेः प्राथमिकादस्माद्द्वितीये द्विगुणंस्मृतम्॥ तृतीये त्रिगुणंप्रोक्तमिति गोतमस्मरणात् गृहदाहादिना युगपदनेकब्राह्मणहनने तु भविष्यपुराणीयोविशेषः ॥ ब्राह्मणोब्राह्मणंवीरब्राह्मणौ वा बहून्गुह ॥ निहत्य युगपद्वीरएकंप्राणान्तिकंचरेत् ॥ कामतस्तु यदा हन्याद्ब्राह्मणान्सुरसत्तम ॥ तदात्मानंदहेदग्नौ विधिना येन तच्छृणु ॥ एतच्चाज्ञानविषयंसर्वमेवैतत् । तथा ॥ अकामतोयदा हन्याद्ब्राह्मणान्ब्राह्मणोगुह ॥ चरेद्वने तथाघोरे यावत्प्राणपरिक्षयम् ॥ एतच्चाज्ञानवधे। प्रकृतत्वायुगपन्मारणविषयं । क्रममारणेतु विधेः प्राथमिकादस्मादित्यावृत्तिविधायकंवेदवचनम् ॥ ८६ ॥

( ४ ) **राघवानन्दः** । निमित्ततारतम्येनोक्तं नैमित्तिकतारतम्यमुपसंहरति अतइति । अन्यतमं ब्रह्महाद्वादशेत्यात्यादिमध्ये । आत्मवत्तया अस्त्यात्मा परलोकभागिति दृढात्मबुध्या नह्यनात्मवित्कश्चित्क्रियाफलमुपाश्नुतइत्युक्तेः॥८६ ॥

( ५ ) **नन्दनः** । उक्तमर्थमुपसंहरति अतोन्यतममास्थायेति । अतएषांविधीनांविप्रशब्दः क्षत्रियवैश्ययोरप्युपलक्षणार्थः । केचिद्ब्राह्मणानामेव सर्वत्र प्रायश्चित्तानि विहितानि क्षत्रियादीनान्तु दण्डविशेषानुसारेणाहवनीयाइति मन्यन्ते ॥ ८६ ॥

**हत्वा गर्भमविज्ञातमेतदेव व्रतंचरेत् ॥ राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥८७॥**

**[ जन्मप्रभृतिसंस्कारैः संस्कृतामन्त्रवाचया । गर्भिणींत्वथवा स्यात्तामात्रेयींचविदुर्बुधाः ॥१॥ ]**‡

( १ ) **मेधातिथिः** । गर्भोब्राह्मणजातीयत्वएवकेन गर्भस्य पातनंकारयेत् अविज्ञातमज्ञातस्त्रीपुरुषविशेषव्यञ्जनं उपज्ञातेयथायथंस्त्रीपुंसनिमित्तमेव कथंपुनः स्त्रियामहतायांगर्भस्य वधोभवति औषधादियोगेन गर्भस्यपातनं एतदेवेत्येकवचनात्प्रत्यासन्नद्वादशवार्षिकमेवातिदिश्यतइत्याहुः अन्येएतदिति शुद्धिकारणंसामान्यापेक्षायामतः सर्वप्रायश्चित्तातिदेशः । क्षत्रियवैश्यौचेजानौयजमानौ भूतकालता नविवक्षिता । स्मृत्यन्तरे सवनगतौ राजन्यवैश्याविति । अतश्च प्रारब्धसोमपानयोरेषविधिर्नदर्शपूर्णमासादियजमानयोःलिङ्गदर्शनंतु यजमानमात्रयोर्भावयतीतिब्राह्मणीभूयैवयजतइति आत्रेयींस्त्रियमत्रिगोत्रजातांजातेरविशेषान्नस्त्रीपुंसयोर्ब्राह्मणीनामपिमाभावात्रेय्यावचनमन्यगोत्रनिवृत्यर्थमतो ब्राह्मण्याअप्यन्यस्यावध-

‡ ( र )

उपपातकमेव स्त्रीविट्क्षत्रियवधइति । येतु स्त्रीसुहृद्वधइति तच्चातुर्वर्ण्यस्त्रीमात्रे अवमस्त्रीणामुपपातकंमहापातकप्रायश्चित्ते- विकल्पते भर्तृत्वगुणापेक्षोविकल्पोबुद्धिपूर्वाबुद्धिपूर्वकृतश्च सस्तनपबालापत्ययोस्तदभावे बालानांदुःशके जीविते विजा- तियायाअपि ब्राह्मणभार्यायाभर्तृद्वेषादनपराधिन्यानिमित्तान्तरतोवोपजाप्यमानाया.शीलंरक्षन्त्याअसंप्रयुज्यमानायावधः एवमप्युत्प्रेक्षयास्त्रीसुहृद्वधमित्यादेशादन्यत्रतु स्त्रीशूद्रेत्यात्रेय्यांत्वविकल्पः। अन्येत्वात्रेयींगर्भसाहचर्यादृतुमतीमाहुः पत्यते भ्रूणहात्रेयाश्चहन्तेति भ्रूणहाब्राह्मणवधकारी साच ब्राह्मण्येव अत्र कुक्ष्यावश्यंगर्भउत्पन्नतइत्यात्रेयी यद्यपीदृश्यांवृत्तौन- द्वितोनस्मर्यते । प्रयोगानुसारेण तु भवतीति ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । गर्भं ब्राह्मणेन ब्राह्मण्यामाहितमविज्ञातं पुंनपुंसकस्त्रीवधायुक्तमेव । ईजानौ सोमेन । आत्रेयीमत्रिगोत्रां रजस्वलांच । तथाहि । ऋतुमतीमात्रेयीमाहुरिति गौतमः । अत्रिगोत्रांवा नारीमिति विष्णुः । साच- ब्राह्मण्येव आत्रेयींब्राह्मणीमिति शङ्खस्मृतेः । व्रतमित्यभिधानात्कामतोपि हनने न मरणान्तं किंतु द्वादशवार्षिकमेव । अकामतस्तदर्धम् ॥ ८७ ॥

( ३ ) **कुल्लूकः** । प्रकृतत्वाद्ब्राह्मणगर्भविषयंस्त्रीपुन्नपुंसकत्वेनाविज्ञातंक्षत्रियंवैश्यंच यागप्रवृत्तंहत्वाऽऽत्रेयींचस्त्रियंब्रा- ह्मणींतथात्रेयींच ब्राह्मणीमिति यमस्मरणात् । हत्वा ब्रह्महत्याप्रायश्चित्तंकुर्यात् । आत्रेयीच रजस्वला ऋतुस्नातोच्यते रज- स्वलाऋतुस्नातामात्रेयीमिति वसिष्ठस्मरणात् । एवंचानात्रेयी ब्राह्मणी वधे त्रैवार्षिकमुपपातकंयथोक्तंस्त्रीशूद्रविट्क्षत्रवधइति यत्तूत्तरश्लोके कृत्वा चस्त्रीसुहृद्वधमिति तदाहिताग्निब्राह्मणस्य ब्राह्मणी भार्याविषयम् । तथाचाङ्गिराः । आहिताग्नेर्ब्राह्मण- स्य हत्वा पत्नीमनिंदिताम् ॥ ब्रह्महत्याव्रतंकुर्यादात्रेयीघ्नस्तथैव च ॥ ८७ ॥

( ४ ) **राघवानन्दः** । विप्रवधप्रायश्चित्तप्रसंगेन तदर्थमातिदेशिकब्रह्महत्यामाह । हत्वेतिद्वाभ्याम् । प्रकृतत्वाद्विप्र- रेतोजंगर्भं स्त्रीपुंनपुंसकतयाऽज्ञातम् । ईजानौ यागार्थंदीक्षितौ ॥ यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणोव्रतम् ॥ गर्भहा च यथावर्णं तथात्रेयीनिषूदकइतियाज्ञवल्क्योक्तेः ॥ यथावर्णं एकगुणायुक्तभेदेन आत्रेयी रजस्वला रजस्वलामृतुस्नाता मात्रे- यीमिति वसिष्ठवचनात् । तथात्रेयींच ब्राह्मणीमितियमस्मृतेर्विप्रैवसा जातिस्तु बादरायणइतिन्यायात् आत्रिगोत्रा वा ॥८७॥

( ५ ) **नन्दनः** । अथ ब्रह्महत्याव्रतंकेषुचिन्निमित्तेष्वतिदिशति हत्वागर्भमविज्ञातमिति । अविज्ञातमविज्ञातस्त्रीपुंस- विभागं । गर्भंब्राह्मणगर्भं । आत्रेयीं रजस्वलामविज्ञातामात्रेयीमाहुरिति वसिष्ठः रजस्वलामत्रिगोत्रजामिति वैष्णववचनम् ॥ ८७ ॥

( ६ ) **रामचन्द्रः** । अविज्ञातं गर्भंस्त्रीपुंनपुंसकंहत्वा ईजानौ राजन्यवैश्यौ आत्रेयीं रजस्वलामत्रिगोत्रां ऋतुस्नातां वात्रेयीमाहुः ॥ ८७ ॥

**उक्त्वा चैवानृतंसाक्ष्ये प्रतिरुध्य गुरुंतथा ॥ अपहृत्य च निःक्षेपंकृत्वा च स्त्रीसुहृद्वधम् ॥ ८८ ॥**

( १ ) **मेधातिथिः** । हिरण्यभूम्यादिसाक्ष्येतुवधादिसंशयेवाऽनृताभिधाने प्रायश्चित्तमेतत् अत्रहि दोषातिशयः श्रूयते भजतामित्याद्यन्यत्र गुरुलघुभावेन कल्पनाकार्या प्रतिरभ्येति यदुक्तमलीकनिर्बन्धइतितदेवेदप्रतिरंभः संरंभपूर्वकोगुरो- रुपद्रवारंभः निक्षेपः अत्रापि दरिद्रस्य महतोधनवतोऽधमस्योतान्यस्यब्राह्मणजातीयस्येत्यादिकल्पना यत्रत्वेकमेव- श्रूयतेतत्र यथाश्रुत्यैव भवितुमर्हतिकः कल्पनायाअवसरोनचकौटिल्यसाक्षिनिक्षेपयोर्लघुप्रायश्चित्तमस्ति । यदपिसुरापाने तदपि तुल्यमनेन गरीयः श्रुताश्रुतविषयत्वंशंकिचावेक्षेतियत्सत्यप्यनुक्तनिष्कृतीनामितिश्रवणे ॥ ८८॥

( २ ) **सर्वज्ञनारायणः** । साक्ष्ये यत्रसत्यवचसि वर्णिनांवधः । प्रतिरुध्यमिथ्याभिशापेन संयोज्यनिःक्षेपं ब्राह्मण-

स्यापि सुवर्णरूपं रजताद्यपि ब्राह्मणस्य। स्त्री स्वभार्याअत्रेष्टा अनात्रेयी यद्भार्यांवधस्तूपपातकमेव ब्राह्मगोत्रत्वेपि तथाचान्यत्र दर्शितम्। सुहृन्मित्रमब्राह्मणोपि तस्य वधम्॥ ८८॥

( ३ ) **कुल्लूकः**। हिरण्यभूम्यादियुक्तसाक्ष्येऽनृतमुक्त्वा गुरोश्च मिथ्याभिशापमुत्पाद्य निक्षेपंच ब्राह्मणसुवर्णादन्य-द्रजतादिद्रव्यं क्षत्रियादेः सुवर्णमपि चापहृत्य स्त्रीवधंच यथाव्याख्यातंकृत्वा मित्रंचाब्राह्मणंहत्वा ब्रह्महत्याप्रायश्चित्तंकु-र्यात्॥ ८८॥

( ४ ) **राघवानन्दः**। साक्ष्ये दातव्ये साक्ष्ये भूम्याद्यर्थे अन्यत्र प्राणायामाचमनयोर्विधानात्। प्रतिलभ्य मिथ्या-भिशापमुत्पाद्य। प्रतिरुध्येतिपाठे सएवार्थः। गुरुं ब्रह्मदम्। निक्षेपं ब्राह्मणसुवर्णातिरिक्तम्। स्त्रीसुहृद्वधं कृत्वा प्रायश्चि-त्तंकुर्यादित्यध्याहारेणान्वयः। स्त्री आहिताग्नेर्ब्राह्मणी [ ज्ञा ] तव्यावा अंगिराः॥ आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनि-न्दिताम् ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैवचेति॥ सुहृत् यागस्थक्षत्रियवैश्यब्राह्मणमित्रम्॥ ८८॥

( ५ ) **नन्दनः**। गुरुंप्रति लभ्यगुरोः प्रातिकूल्यंकृत्वा स्त्रीभार्याएतदेव व्रतंचरेदित्यनुषङ्गः॥ ८८॥

( ६ ) **रामचन्द्रः**। गुरुं प्रतिरुध्यमिथ्याशयः॥ ८८॥

**इयंविशुद्धिरुदिता प्रमाप्याकामतोद्विजम्॥ कामतोब्राह्मणवधे निष्कृतिर्न विधीयते॥ ८९॥**

( १ ) **मेधातिथिः**। प्रमाप्यहत्वा निष्कृतिरिति प्रागयंव्याख्यातार्थः प्रायश्चित्तगौरवोपदेशपरः॥ ८९॥

( २ ) **सर्वज्ञनारायणः**। इयंविशुद्धिस्तद्देहावच्छिन्नस्य देहिनोव्रतादिना शुद्धिः। नविधीयतेनिष्कृतिः तद्देहाव-च्छेदेन मरणेनतु भवत्येव॥ ८९॥

( ३ ) **कुल्लूकः**। एतत्प्रायश्चित्तंविशेषोपदेशमन्तरेणाकामतोब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे नेयंनिष्कृ-तिः नैतत्प्रायश्चित्तंकिन्त्वतोद्विगुणादिकरणात्मर्कमिति प्रायश्चित्तगौरवार्थंनतुप्रायश्चित्ताभावार्थं कामतस्तु कृतंमोहात्प्राय-श्चित्तैः पृथग्विधैरिति पूर्वोक्तविरोधात्॥ ८९॥

( ४ ) **राघवानन्दः**। ब्रह्महत्यानिष्कृतिमुपसंहरति इयमिति। प्रमाप्य हत्वा। नविधीयतइतिप्रायश्चित्तगौरवार्थं निन्दाद्वैगुण्यस्योक्तत्वात्। इयमुक्ता द्वादशवार्षिकादिका। अत्रैवचकामतस्तु कृतंमोहात्प्रायश्चित्तैः पृथग्विधैरित्युक्तम-न्यथा पूर्वापरविरोधइति। नचतद्विप्रातिरिक्तविषयकं संकोचे मानाभावात्॥ ८९॥

( ५ ) **नन्दनः**। उदिताब्रह्महाद्वादशाब्देऽह्नीत्यादिनोक्ताः कामतोब्राह्मणवधे निष्कृतिर्नविधीयते इदंविशेषविषयं कामकारेप्याहुरेकेश्रुतिनिदर्शनात्॥ कामतस्तु कृते मोहात्प्रायश्चित्तैः पृथग्विधैरित्येते॥ सामान्यविषयेपीन्द्रोयतीन्सालावृ-केभ्यः प्रायच्छदित्यादिकंधर्मप्रधानलोकोपकारकविशिष्टपुरुषविषयं न सार्वत्रिकमित्यविरोधोवगन्तव्यः॥ ८९॥

( ६ ) **रामचन्द्रः**। अकामतः द्विजं प्रमाप्य हत्वा॥ ८९॥

**सुरांपीत्वा द्विजोमोहादग्निवर्णांसुरांपिबेत्॥ तया सकाये निर्दग्धे मुच्यते किल्बिषात्ततः॥ ९०॥**

( १ ) **मेधातिथिः**। द्विजश्रुतिर्ब्राह्मणार्थैव आहचस्मृत्यन्तरे ब्राह्मणस्यउष्णांवापिबेयुः सुरामिति मोहादित्यनुवादो-ग्निवर्णावर्णश्रुतिग्रहणंसामान्यलक्षणार्थमतएवाह कायेनिर्दग्धेमुच्यतइति॥ ९०॥

( २ ) **सर्वज्ञनारायणः**। सुरापानप्रायश्चित्तमाह सुरामिति। पैष्टीपाने त्रयाणां गौडीमाध्वीपानेतु विप्रस्येत्याशयेन द्विजइत्युक्तम्। मोहात् रागात् नत्वज्ञानात्। निर्दग्धइतिमृत्युहेतुतांदर्शयति। अग्नीवर्णामग्निसदृशमौष्ण्येन। एतदुत्तरे-ष्वपीत्यनुषज्यते॥ ९०॥

( ३ ) **कुल्लूकः** । सुराशब्दः पैष्टीमात्रे मुख्योनतु गौडीमाध्वीपैष्टीषु त्रितयानुगतैकरूपाभावात्प्रत्येकंच शक्तिकल्पने शक्तित्रयकल्पना गौरवप्रसङ्गात गौड्यादिमदिरासु गुणवृत्त्यापि सुराशब्दप्रयोगोपपत्तेः । अतएव भविष्यपुराणे ॥ सुराच पैष्टीमुख्योक्ता न तस्यास्त्वितरे समे ॥ पैष्ट्याः पानेन चैतासांप्रायश्चित्तंनिबोधत ॥ मनुनोक्तमहाबाहोसमासव्यासयोगतः ॥ एतासामिति निर्द्धारणे षष्ठी । एतासांगौडीमाध्वीपैष्टीनांप्रकृतानांमध्ये पैष्टीपाने मनूक्तप्रायश्चित्तं । सुरांपीत्वा द्विजोमोहादिति निबोधतेत्यर्थः । मुख्यांसुरापैष्टींरागादिव्यामूढतया द्विजोब्राह्मणादिश्च पीत्वाऽग्निवर्णांसुरांपिबेत्तया सुरया शरीरे निर्दग्धे सति द्विजस्तस्मात्पापान्मुच्यते । एतच्च गुरुत्वात्कामकारकृतसुरापानविषयम् । तथा च बृहस्पतिः ॥ सुरापाने कामकृते ज्वलन्तींतांविनिःक्षिपेत् ॥ मुखे तया सनिर्दग्धोमृतः शुद्धिमवाप्नुयात् ॥ ९० ॥

( ४ ) **राघवानन्दः** । सुरापानप्रायश्चित्तं सार्थवादमाह सुरांपीत्वेत्यष्टभिः । कामतस्तत्पाने मरणान्तिकप्रायश्चित्तम । तथाच बृहस्पतिः ॥ सुरापाने कामकृते ज्वलन्तींचैव तां मुखे ॥ क्षिपेत्तया सनिर्दग्धोमृतः शुद्धिमवाप्नुयादिति ॥ सुरापदमत्र पैष्ट्यां मुख्यं अन्यत्रमादकयोगाद्गौणम् । अतएव भविष्ये ॥ सुराच पैष्टी मुख्योक्ता नतस्यास्त्वितरे समे ॥ पैष्ट्याः पानेतुचैतासां प्रायश्चित्तं निबोधतेति ॥ एतासां सुराणांमध्ये । सुरा वै मलमन्नानामिति वक्ष्यति अन्नानामिति लिङ्गात्पैष्टीति ॥ ९० ॥

( ५ ) **नन्दनः** । अमोहान्मतिपूर्वकं एवंव्याख्याने स्मृत्यन्तराणि संगच्छन्ते अग्निवर्णामग्निस्पर्शां स्वकाये निदग्धे मरणे सति ॥ ९० ॥

( ६ ) **रामचन्द्रः** । तया सुरया ॥ ९० ॥

**गोमूत्रमग्निवर्णंवा पिबेदुदकमेव वा ॥ पयोघृतंवामरणाद्गोशकृद्रसमेव वा ॥ ९१ ॥**

( १ ) **मेधातिथिः** । अन्यतरप्रायश्चित्तमग्निवर्णंभवत्येव गोमूत्रादयोद्रव्यविशेषाअन्यप्रकारमरणानिवृत्त्यर्थाः सुराचपैष्टीर्तिविज्ञेया तांमुख्येत्युपचरन्ति अन्यत्रतु प्रयोगोगौणः कामतः पानेचैतत् । तथाचवक्ष्यति ॥ अज्ञानाद्वारुणींपीत्वासंस्कारेणैवशुध्यति । अग्निवर्णामत्यग्निस्पर्शमितिज्ञातव्यं । तथाचाहामरणादिति । सुराचस्त्रीणामपि प्रतिषिद्धाउक्तंहिवासिष्ठेतया ब्राह्मणीसुरापीभवति नतांदेवाः पतिलोकंनयांति । इहैव साभ्रमतिक्षीणपुण्यालोकेप्रेत्यावाप्सुच जलभुग्भवति ॥९१॥

( २ ) **सर्वज्ञनारायणः** । आमरणाद्यावद्भिर्वारैर्मरणंभवति । गोशकृद्रसंनिष्पीड्य गृहीतम् । एतत्कामतःपापे । अकामतःस्मृत्यन्तरोक्तंज्ञेयम् ॥ ९१ ॥

( ३ ) **कुल्लूकः** । गोमूत्रजलगोक्षीरगव्यघृतगोमयरसानामन्यतममग्निस्पर्शंकृत्वा यावन्मरणंपिबेत ॥ ९१ ॥

( ४ ) **राघवानन्दः** । आमरणा[१]दितिच्छेदः [ कपिदेहेततःसुरापानजात् । तदभावे गोमूत्रादिपंचअग्निवर्णमितिपदानां विशेषणम ]‡ ॥ ९१ ॥

( ५ ) **नन्दनः** । उदकादीनामपि विशेषणमग्निवर्णमिति आमरणात्पिबेद्यथा गोमूत्रादीनामन्यतमस्य पानेन मरणं प्राप्नोति तथापिबेदिति ॥ ९१ ॥

**कणान्वा भक्षयेदब्दंपिण्याकंवा सकृन्निशि ॥ सुरापानापनुत्यर्थंवालवासाजटीध्वजी ॥ ९२ ॥**

( १ ) **मेधातिथिः** । इदंप्राणात्ययऔषधार्थं अन्येनविहितस्यापि तस्य अज्ञानात्तत्प्रकृतसहितः पुनः संस्कारोदर्श-

१ आमरणात् = आमोहात ( राघ०२ ) ‡ ( राघ०२ )

यिष्यते अन्येतुगौडीमाध्व्योरुपचरितसुराभावयोरिच्छन्ति । तथा च स्मृत्यन्तरे । असुरामद्यपानेचांद्रायणमभ्यसनीयं । सकृदितिकणपिण्याकयोरुभयोः शेषः निशायामवालमयं गोलोमाजालोमादिकृतंवासोजटीशिखयाऽन्यैर्वाकेशैर्ध्वजीमद्यघटिकादिनेति ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । कणान् तण्डुलकणान् यवागूंपक्त्वापिबेत् । पिण्याकं तिलकल्कं जलेनालोड्यावदसकृन्निशि । चीरवासाइत्यादिचोभयगतम् । चीरं खण्डवस्त्रम् । ध्वजी सुराभाण्डध्वजं पुरस्कृत्वा । एतच्च कामतउपलभ्यमानमधुसुरासंसृष्टजलपाने ॥ ९२ ॥

( ३ ) **कुल्लूकः** । अथवा गोरोमादिकृतवासाजटावान्सुराभाजनचिन्हः सूक्ष्मतण्डुलावयवान् आकृष्टतैलंनिलंवा रात्रावेकवारंसंवत्सरपर्यंतंसुरापानपापनाशनार्थंभक्षयेत् । इदमबुद्धिपूर्वकममुख्यसुरापाने द्रष्टव्यं । नतु गुणान्तरवैकल्पिकंलघुत्वात् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । अकामतःपैष्टीपानेकामतश्च गौडीमाध्व्योःपानआह कणानिति । कणान् तण्डुलस्य सूक्ष्मांस्तुषयुक्तावयवान् । पिण्याकंनिःसारिततैलंतिलंवालवासाः.गोवालनिर्मितवासाः । ध्वजी मद्यघटिका ध्वजरूपा यस्य सः ॥ ९२ ॥

( ५ ) **नन्दनः** । अकामतः पाने प्रायश्चित्तमाह कणान्वाभक्षयेदब्दमिति । वालवासागोवालकृतवस्त्रधरः जटीध्वजीसुराकलशचिन्हयुक्तश्च भूत्वाकणान्पिण्याकंवा सकृन्निशिसंवत्सरमिह भक्षयेत् ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । सुरापानस्य अपनुत्यर्थं बालवासाः प्रावारकम्बलादि ॥ ९२ ॥

**सुरा वै मलमन्नानांपाप्माच मलमुच्यते ॥ तस्माद्ब्राह्मणराजन्यौ वैश्यश्च नसुरांपिबेत् ॥ ९३॥**

( १ ) **मेधातिथिः** । अन्नशब्दोयद्यप्यदनक्रियाकर्मणि व्युत्पाद्यते तथापि व्रीह्यादिप्रभृतावेव भक्तसक्तुपूपादौप्रसिद्धतरप्रयोगस्तथाचान्येन व्यञ्जनमिति भेदोपपत्तिः । अतः पिष्टविकारत्वात्सुरायाअन्नव्यपदेशेलब्धेऽन्नानांमलमिति निवारणोपपत्तौ पैष्ट्याः सुरायाः प्रतिषेधेलिङ्गमिदं लिङ्गंत्रयाणांवर्णानांसंपद्यते ब्राह्मणक्षत्रियवैश्यैरपिवर्णैः पैष्टीनपातव्या किंच सैव सुरामुख्या गौडीमाध्व्योः एवंयथासीधुमाध्वीकयोर्गुरुप्रायश्चित्तंनतथान्येषामारिष्टादीनांमद्यानां मलशब्दः पाप्मेतिव्याख्यातोनिन्दातिशयदर्शनार्थः सत्यपिप्रायश्चित्तप्रकरणे वाक्यान्नसुरापाननिषेधोयंभिन्नवाक्यत्वाच्चनार्थवादः ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नानांमलं अन्नानामशुद्धभागः । यच्चमलमशुद्धभागःसपाप्मा पापहेतुः । शूद्रस्तु स्वतएव पापत्वात्पिबन्नपि नाधिकपापवान्भवतीत्यर्थः । अन्नानामित्युक्तत्वादन्नपिष्टप्रभवत्वात्पैष्ट्येवत्रयाणांवर्णानांनिषिद्धा ॥ ९३ ॥

( ३ ) **कुल्लूकः** । यस्मात्तंडुलपिष्टसाध्यत्वात्सुराअन्नमलंमलशब्देनचपापमुच्यतेतस्माद्ब्राह्मणक्षत्रियवैश्याःपैष्टींसुरांनपिबेयुरित्यनेन प्रतिषेधेसति एतदतिक्रमे सुरांपीत्वेति प्रायश्चित्तं अन्नमलानुवादाच्च पैष्टीनिषेधएव स्फुटः त्रैवर्णिकस्य मनुनैवोक्तः ॥ ९३ ॥

( ४ ) **राघवानन्दः** । त्रयाणां पैष्टीभक्षणाभावं सार्थवादं निगमयति सुरेति । मलपाप्मनोरेकपर्यायत्वेन तद्भुक् मलभुगेव ॥ ९३ ॥

* गुणान्तर-स्मरणेन ( अ )

( ५ ) **नन्दनः** । सुरायाःपैष्ट्याः पाने त्रैवर्णिकैरेतत्प्रायश्चित्तंकर्तव्यमित्यभिप्रायेणाह सुरावैमलमन्नानामिति । अन्नानांमलमिति वचनसामर्थ्यात्पैष्टीगम्यते प्रतिषिध्यते चेति गम्यते ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । सुराअन्नानां मलंपिष्टेन यत्कृतं ॥ ९३ ॥

**गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ॥ यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥९४॥**

( १ ) **मेधातिथिः** । गुडविकारोगौडीयेषामपीक्षुरसमेव मद्यतामापद्यते तेषामपिकारणे कार्योपचारेण गौडीव्यपदेशोनविरुद्धः । मधुनोविकारोमाध्वी मधुमाध्वीकंविकारवृत्त्यानसंयोजातस्यमृद्वीविकारस्यप्रतिषेधोयावन्मद्यावस्थामप्राप्तस्येतिदर्शयति अविकृतंहिमधुमाध्वीकमिच्छन्तीतिस्मरति । यत्रापि मद्यशब्देन प्रतिषेधस्तत्राप्यनासादितमद्यपानशक्तियोगस्यनैवप्रतिषेधस्तस्य मद्यशब्देनानभिधानात् । यथाशुक्तशब्दोऽवस्थाविशेषवति प्रवर्तते नाविशेषेण नहि तदेवामृतामनापन्नंशुक्तमित्युच्यते यथासएव गौर्वत्सावस्थायांनबलीवर्दः किंच पिष्टोदकादिसंघातसंभृश्यान सुरा यावत्कालपरिवासेन मदशक्तिमापन्ना एवमिक्षुरसमृद्वीविकारयोर्द्रष्टव्यं अल्पायास्तर्हिपानंप्राप्नोति यावत्यामात्रया पीतान मदयति प्रतिबन्धकद्रव्ययोगेनच नैषदोषोनायंमदोत्पत्तिप्रतिषेधः तथाकर्तव्यंयथामत्तःक्षीबोन भवतीति किंतर्हि यन्मदजननसमर्थशक्तियुक्तंतन्नपातव्यमिति अल्पायाअपिसाशक्तिर्विद्यते यावतारूक्षमल्पप्राणंस्वल्पमपिमद्यंमदयति स्निग्धंमहाप्राणंबह्वपिनेति नैतावतामदशक्त्यभावःशक्योवक्तुंकार्याभावेन कारणभावान्मद्यानामपि नैवनिश्चीयते नहिमहत्काष्ठंदग्धुमसमर्थस्याग्नेरदाहकत्वमनुमीयते शुष्कतृणेन तादृशस्यैव दाहकत्वोपलंभात् । यदप्युक्तंद्रव्यान्तरेण शक्तिप्रतिबन्धकत्वेपानप्राप्तिरिति तदप्यचोद्यं नहि तृणेनतादृशस्यैव दाहेतदानींसा तस्यशक्तिर्नास्ति किंतु विद्यमानापि कार्यारंभंप्रत्यसमर्था शक्तिसंभवश्च प्रतिहेतुर्नतेनित्यकार्यंतद्द्रव्यान्तराणि शक्तिंविनाशयन्ति अपितु कार्यारंभंप्रतिबध्नन्ति तथाच तत्परिमाणारंभकद्रव्ययोगेपि पैत्तिकोमाद्यति नश्लैष्मिकोतोनुमीयते न तस्य विनाशस्तस्मान्न भाविमद्यावस्थस्य प्रतिषेधोनापिप्राप्तावस्थाविशेषस्य प्रतिबन्धकाभावादिवत्तत्प्रतिषेधोयथाचौरः सवर्जनीयइति नोदश्वितोऽप्राप्तामुभावस्य प्रतिषेधोमाध्वीति कथंयावतागुणेन माध्वीति भवितव्यंसंज्ञापूर्वकोविधिरनित्यइति परिहारः ज्ञापकंचास्याः परिभाषायाओरादिति वक्तव्ये गुणइति गुणग्रहणम् अत्रद्विजोत्तमग्रहणंच क्षत्रियवैश्ययोर्मद्यानुज्ञानार्थं । तथाचमहाभारते ॥ भारतानांयादवानांमद्यपानंतुवर्ण्यते ॥ उभौमध्वासवक्षीबौदृष्टौमेकेशवार्जुनावित्युत्तरश्लोकादर्थवादएव । ननुच तथा सर्वाइति बहुवचनंकथंयावताएकमुपमानंद्वेउपमेये अन्नमलत्वंचात्रहेतुमन्निगदोर्थवादोमलंहेतुर्यथा शूर्पेण जुहोति तेनह्यन्नंक्रियतइति ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणं प्रतिविशेषमाह गौडीति । गुडभवा तत्प्रकृतीक्षुरसजाच । माध्वी द्राक्षारसकृतेति केचित् । मधूकपुष्पेण मधुनावा कृता वाच्या त्रिविधा सुरा । यथैका सुरा पैष्टी त्रिभिर्वर्णैर्न पेया तथा सर्वा त्रिविधा द्विजोत्तमैः ब्राह्मणैरित्यर्थः ॥ ९४ ॥

( ३ ) **कुल्लूकः** । यागुडेन कृता सा गौडी एवंपिष्टेन कृता पैष्टी मधुकवृक्षोमधुः तत्पुष्पैः कृता सा माध्वी एवंत्रिःप्रकारा सुरा जायते मुख्यसुरासाम्यनिबोधनमितरसुरापेक्षया ब्राह्मणस्य गौडीमाध्वीपाने प्रायश्चित्तगौरवार्थम् । यथावैका पैष्टी मुख्या सुरा पूर्ववाक्यनिषिद्धत्वात् त्रैवर्णिकस्यापेक्षया तथा पूर्वा गौडी माध्वी च द्विजोत्तमैर्न पातव्या ॥ ९४ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणमित्युपसंहारात् विप्रस्य तु सुरात्रयमभक्ष्यमित्याह गौडीति । एका पैष्टी यथा ब्राह्मणंप्रति तथेतरेतंप्रतिनिषिद्धतया तुल्ये । द्विजोत्तमैः विप्रैः ॥ ९४ ॥

( ५ ) **नन्दनः** । ब्राह्मणस्य गौडीमाध्व्योरपि पाने प्रायश्चित्तमेतत्कर्तव्यमित्यभिप्रायेणाह गौडीमाध्वीच पैष्टीचेति । एकापूर्वश्लोके प्रतिषिद्धापैष्टी ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । गुडेन कृता गौडी । पिष्टस्यपैष्टी । माध्वी मधूकपुष्पस्य यथैव एका तथा सर्वा सुरा प्रकृतिद्रव्यं मदहेतुः ॥ ९४ ॥

**यक्षरक्षः पिशाचान्नंमद्यंमांसंसुरासवम् ॥ तद्ब्राह्मणेन नात्तव्यंदेवानामश्नता हविः ॥ ९५ ॥**

( १ ) **मेधातिथिः** । यक्षादयोनिन्द्याः प्राणिनोभक्ष्याभक्ष्यविवेकशून्यामांसमभक्षयन् सुराचासवश्च सुरासवंजातेरप्राणिनामित्येकवद्भावः । आसवोत्रमद्यविशेषएव ईषन्मद्याद्भिन्नंगोबलीवर्दवदिहोपादानं देवानामश्नतादेवदेयानिहवींषिचरुपुरोडाशादीनिदर्शपूर्णमासोदितानिब्राह्मणस्याशितुंयुक्तानि नपिशाचाद्यन्नंमद्यमांसादीनि ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । नकेवलं सुरा ब्राह्मणानामपेया किंतु सुरावन्मद्यासवमांसानि क्षत्रियादिभक्ष्याण्यपि ब्राह्मणस्याभक्षणीयान्याह यक्षइति । यक्षाः कुबेरानुचराः । राक्षसाः रावणाद्याः । पैशाचावेतालाद्याः । एतेन मद्यादीनां रजस्तमःप्रधानतोक्ता । तेन तदाहारता सत्त्वप्रधानस्य विप्रस्यायुक्तेत्यर्थः । मद्यंत्रिविधं सुरातोन्यन्मदहेतुः । आसवोमद्यसुराप्रकृतिद्रव्यजोमदहेतुः । देवानां सात्त्विकानां हविर्भक्ष्यमश्नताऽशितुं योग्येन ॥ ९५ ॥

( ३ ) **कुल्लूकः** । मद्यमत्रनिषिद्धपैष्टीगौडीमाध्वीव्यतिरिक्तंनवविधंबोद्धव्यं । तान्याहपुलस्त्यः ॥ पानसद्राक्षमाध्वीकंखार्जूरंतालमैक्षवम् ॥ माध्वीकंटांकमार्द्वीकमैरेयंनारिकेरजम् ॥ सामान्यानि द्विजातीनांमद्यान्येकादशैव च ॥ द्वादशंतु सुरामद्यंसर्वेषामधमंस्मृतम् ॥ मांसंचप्रतिषिद्धंसुराच त्रिप्रकारा प्रोक्ता । असूयतइति आसवोमद्यानामवस्थाविशेषः सद्यःकृतसंसाधनःसंजातमद्यस्वभावः । यमधिकृत्येदंपुलस्त्योक्तप्रायश्चित्तम् ॥ द्राक्षेक्षुटंकखर्जूरपनसादेश्चयोरसः ॥ सद्योजातन्तु पीत्वा तु त्र्यहाच्छुध्येद्द्विजोत्तमः ॥ एवंमद्यादिचतुष्टयंयक्षरक्षःपिशाचसंबन्ध्यन्नंततस्तद्ब्राह्मणेन देवानांहविर्भक्षयता नाशितव्यम् निषिद्धायाः सुरायाइहोपादानंयक्षरक्षःपिशाचान्नतया निन्दार्थम् । अत्रकेचिद्देवानामश्नताहविरितिपुंल्लिंगनिर्देशाद्ब्राह्मणस्य पुंसएव मद्यप्रतिषेधोन स्त्रियाइत्याहुस्तदसत् ॥ पतिलोकंनसायातिब्राह्मणीयासुरांपिबेत् । इहैव सा शुनी गृध्री सूकरी चोपजायते ॥ इति याज्ञवल्क्यादिस्मृतिविरोधात् ॥ ९५ ॥

( ४ ) **राघवानन्दः** । किंच यक्षइति । मद्यंनवविधं सुराच त्रिविधा । तथाच पुलस्त्यः ॥ पानकं वार्क्षमाधूकं खार्जूरं तालमैक्षवम् ॥ माक्षीकं टाङ्कमाध्वीकं मैरेयं नारिकेरिजम् ॥ समानानि द्विजातीनामद्यान्ये कादशानि तु ॥ द्वादशं तु सुरामद्यं सर्वेषां मध्यमं स्मृतमिति ॥ आसवं सद्यःकृतसंधानेन प्राप्तमद्यभावम् । एतत्सर्वंविप्राभक्ष्यम् । अनदनेहेतुर्देवानांहविर्यज्ञावशिष्टमन्नमश्नन्ति ते । मांसमत्रामं यक्षरक्षइतिलिङ्गात् ॥ ९५ ॥

( ५ ) **नन्दनः** । ब्राह्मणस्यमद्यवर्जनेयुक्तमाह यक्षरक्षइति । मद्यंमदकरं द्रव्यंमासमित्यनतव्यप्रसङ्गादुक्तं सुरापैष्टी आसवोमाध्वीगौडीच हविर्हविःशेषम् ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । यक्षरक्षः पिशाचान्नं कृतं मद्यादि हविः तद्ब्राह्मणेन नात्तव्यं न अदनीयम् ॥ ९५ ॥

**अमेध्ये वापतेन्मत्तोवैदिकंवाप्युदाहरेत् ॥ अकार्यमन्यत्कुर्याद्वा ब्राह्मणोमदमोहितः ॥ ९६ ॥**

( १ ) **मेधातिथिः** । अमेध्येपतनंदेवान्नाशनवदर्थवादः । ननुच वैदिकोदाहरणंकथमकार्यं अत्रोच्यते तदपेक्षयाऽन्यदकार्यंकुर्यादिति कथंनकार्यं अशुचेर्वेदाक्षरोच्चारणप्रतिषेधात् ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः**। मद्ये ब्राह्मणस्य दृष्टप्रत्यवाय मप्याह अमेध्यइति । वैदिकमुपाहरेत् उच्छिष्टादि काले ॥ ९६ ॥

( ३ ) **कुल्लूकः**। ब्राह्मणोमद्यपानमदमूढबुद्धिःसन् अशुचौ वापतेद्वेदवाक्यंवोच्चारयेद्ब्रह्महत्याद्यकार्यंवा कुर्यादतस्तेनमद्यपानंन कार्यमिति पूर्वस्यैवानुवादः ॥ ९६ ॥

( ४ ) **राघवानन्दः**। तत्रैव दृष्टार्थतामाह अमेध्येतिद्वाभ्याम् । अवैदिकं म्लेच्छभाषितम् । अकार्यं स्वकन्यागमनादि । तत्र हेतु र्मदमोहितः मद्येन कृतवैचित्त्यः ॥ ९६ ॥

( ५ ) **नन्दनः**। इतश्चापि ब्राह्मणस्य मद्यंवर्ज्यमिति श्लोकद्वयेनाह अमेध्येवापतेन्मत्तइति। अमेध्येऽगम्यागमनादौ वैदिकंवेदरहस्यमुदाहरेत् श्रवणानर्हेषु ॥ ९६ ॥

( ६ ) **रामचन्द्रः**। मत्तः द्विजः अमेध्ये पुरीषादौ वापतेत् पक्षान्तर वैदिकं वोदाहरेत् ॥ ९६ ॥

**यस्य कायगतंब्रह्म मद्येनाप्लाव्यते सकृत् ॥ तस्य व्यपैति ब्राह्मण्यंशूद्रत्वंच सगच्छति ॥ ९७ ॥**

( १ ) **मेधातिथिः** । अधीतवेदब्रह्मसंस्काररूपेणावस्थितहृदयेनोच्यते तदपेक्षयाऽकार्यंकुर्यादिति हृदयेमद्येनाप्लाविते सशूद्रतांगच्छति ब्राह्मण्यवचनंसर्वप्रकारमद्यनिषेधार्थं ब्राह्मणस्य क्षत्रियवैश्ययोःपैष्ट्याएवनिषेधइतिदर्शयति ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः**। ब्रह्म वेदः । शूद्रत्वं वर्णत्रयबाह्यत्वम् ॥ ९७ ॥

( ३ ) **कुल्लूकः**। यस्य ब्राह्मणस्य कायगतंब्रह्म वेदः संस्काररूपेणावस्थितःएकदेहत्वात् जीवात्मैकवारमपि मद्येनाप्लाव्यते तथाचैकवारमपि योब्राह्मणोमद्यंपिबति ब्राह्मण्यंव्यपैति शूद्रतांसमाप्नोति तस्मान्मद्यंसर्वथैव न पातव्यम् ॥९७॥

( ४ ) **राघवानन्दः**। ब्रह्म वेदः । शूद्रत्वं शूद्रवद्वेदाभ्यासादेर्बहिष्कृतत्वं पतितत्वादस्य शूद्रस्यापकृष्टत्वात् संभाषणादित्यागोपि ॥ ९७ ॥

( ५ ) **नन्दनः**। ब्रह्मब्राह्मण्यम् ॥ ९७ ॥

( ३ ) **रामचन्द्रः**। यस्य ब्राह्मणस्य कायगतंब्रह्म मद्येनाप्राप्यतेसकृत् तस्य ब्राह्मणस्य ॥ ९७॥

**एषा विचित्राभिहिता सुरापानस्य निष्कृतिः॥ अतऊर्ध्वंप्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥ ९८॥**

( १ ) **मेधातिथिः**। उक्तप्रयोजनौ पूर्वोत्तरश्लोकै ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः**। विचित्रा स्मृत्यन्तरोक्ता निष्कृतिः । साहित्येन विविधा ॥ ९८ ॥

( ३ ) **कुल्लूकः**। इदंसुरापानजनितपापस्य नानाप्रकारंप्रायश्चित्तमभिहितं तस्मात्परंब्राह्मणसुवर्णहरणपापस्य निष्कृतिंवक्ष्यामि ॥ ९८ ॥

( ४ ) **राघवानन्दः**। सुरापाणां प्रायश्चित्तमुपसंहरंत्स्वर्णस्तेयप्रायश्चित्तं प्रतिजानीते एषेति । विचित्रा [ अग्निवर्णा*मित्यादिर्ना ] नानाप्रकारामद्यस्तस्यापि नानात्वात् ॥ ९८ ॥

( ५ ) **नन्दनः**। विचित्रा विविधा ॥ ९८ ॥

( ६ ) **रामचन्द्रः**। एषानिष्कृतिः पापानि विचित्राहरेत् ॥ ९८ ॥

---

* न

**सुवर्णस्तेयकृद्विप्रोराजानमभिगम्य तु ॥ स्वकर्मख्यापयंन्ब्रूयान्मांभवाननुशास्त्विति॥ ९९ ॥**

( १ ) **मेधातिथिः** ।.ब्राह्मणसुवर्णस्तेयएतत्प्रायश्चित्तं विप्रग्रग्रहणंसर्ववर्णप्रदर्शनार्थं क्षत्रियादीनामन्यस्य प्रायश्चित्तस्यासमाम्नानात् मामनुशास्तु निग्रहंकरोतु राजा गत्वा च वक्तव्यः अत्र च राजशब्दोदेशेश्वरवचनएवक्षत्रियजात्यपेक्षः ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । सुवर्णस्तेयकृत् ब्राह्मणसंबन्धिपरिमितसुवर्णचोरः । विप्रइति न केवलं क्षत्रियादयोविप्रोपीत्यर्थः । एतच्च परमतमिति स्फुटीभविष्यति ॥ ९९ ॥

( ३ ) **कुल्लूकः** ॥ अपहृत्य सुवर्णंतुब्राह्मणस्य यतः स्वयमिति शातातपस्मरणात् ब्राह्मणसुवर्णचौरोब्राह्मणोराजानंगत्वा ब्राह्मणसुवर्णापहारंस्तैयंकर्मकथयन्ममनिग्रहंकरोत्विति ब्रूयात् । ब्राह्मणग्रहणंमनुष्यमात्रप्रदर्शनार्थम् । प्रायश्चित्तीयते नरइति प्रकृतत्वात्क्षत्रियादीनांच प्रायश्चित्तान्तरानभिधानात् ॥ ९९ ॥

( ४ ) **राघवानन्दः** । तदेवाह सुवर्णामितित्रिभिः । सुवर्णस्तु ॥ पञ्चकृष्णलकोमाषस्ते सुवर्णस्तु षोडशेति ॥ तदेवाहविप्रइति ब्राह्मणेतरमात्रोपलक्षकम् प्रायश्चित्तीयतेनरइत्युपक्रमात् न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितमित्युक्तेश्च ॥ ९९ ॥

( ५ ) **नन्दनः** । सुवर्णब्राह्मणसुवर्णं विप्रग्रहणंक्षत्रियादीनामप्युपलक्षणार्थम् ॥ ९९ ॥

**गृहीत्वा मुसलंराजा सकृद्धन्यात्तुतंस्वयम् ॥ वधेन शुध्यति स्तेनोब्राह्मणस्तपसैव तु ॥ १०० ॥**

( १ ) **मेधातिथिः** । मुशलंदण्डविशेषआयसोदारुमयोवासकृत्स्वयमितिविवक्षितं वधेन शुध्यति सकृत्प्रहारेण वधोमरणफलोवाभवतु मावास्तुतादृशेनमुशलप्रहारेण शुद्धोभवति ब्राह्मणस्तु तपसा वक्ष्यमाणेन अत्रापि ब्राह्मणग्रहणमविवक्षितंतथाचोत्तरत्रद्विजग्रहणंयद्यपिचकृष्णलग्रहणेमहापातकंतथापिमरणान्तंप्रायश्चित्तंसुवर्णशतहरणेद्रष्टव्यं उक्तंदण्डप्रायश्चितंतुल्यरूपेण तत्र चोक्तंशतादभ्यधिके वधइत्यतोर्वाक्कल्पनाकार्या यस्तुमरणात्पूतोभवतीतिप्रायश्चित्तान्तरंतस्मिन्राजशस्त्रउदुंबरआदद्यात्तस्मात्तंप्रमापयेन्मरणात्पूतोभवतीतिविज्ञायते यदाक्षत्रियादिर्हन्तास्वामीच गुणवांस्तत्रैतद्विज्ञायते यदातु मरणोद्यतस्तदास्यादिति प्रयोजने प्रयोजनापहारस्तदावाशिष्टंनिष्कालकोघृताक्तोगोमयादिनापातप्रभृतिः ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । वधेन तेनघातेन मृतोऽमृतोवा । यत्तूक्तंविप्रोपीति । तन्निरस्यति ब्राह्मणइति । तपसात्रतेनाऽकामकृतात् । कामकृतात्तु स्मृत्यन्तरोक्तमरणप्रकारोत्पादनरूपेण तपसेत्यर्थः । चेतिपूर्वपक्षनिवृत्तौ ॥ १०० ॥

( ३ ) **कुल्लूकः** । स्कन्धेनादाय मुसलमित्यादेरुक्तत्वात्तेनार्पितमुसलादिकंगृहीत्वा स्तेयकारिणंमनुष्यमेकवारंराजा स्वयंहन्यात् । सच स्तेनोवधेन मुसलाभिघातेन हतोमुक्तोपि वा शुचिरिति याज्ञवल्क्यस्मरणात् । मृतोवा मृतकल्पोवा जीवन् तस्मात्पापान्मुच्यं ब्राह्मणः पुनस्तपसैववेत्येवकारदर्शनात । तथाच न जातुब्राह्मणंहन्यात्सर्वपापेष्ववस्थितमिति तपसैव शुध्यति अतएव मन्वर्थव्याख्यानपरे भविष्यपुराणे ॥ यदेतद्वचनंवीरब्राह्मणस्तपसैव वा । तत्रैव कारणाद्विद्धिन्ब्राह्मणस्य सुराधिप ॥ तपसैवेत्यनेनेह प्रतिषेधोवधस्य तु वाशब्दश्च क्षत्रियादीनामपि तपोविकल्पार्थः । ब्राह्मणस्य तु तपएवेति नियमोनतु ब्राह्मणस्यैव तपः । अतएवभविष्यपुराणे ॥ इतरेषामपिविभोतपोन प्रतिषिध्यतइति ॥ तदेव तपआह॥१०० ॥

( ४ ) **राघवानन्दः** । अतएवाह तपसैवेति । शुध्यति जीवन् मृतोवा मृतकल्पोवा जीवंस्तस्मात्प्रमुच्यतइति याज्ञवल्क्योक्तेः । वाशब्दोगायत्रीजपविकल्पार्थः । तथाच चतुर्विंशतिमतम् ॥ गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति ॥

लक्षाशीतिं जपेद्यस्तु सुरापानात्प्रमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्यालक्षसप्ततिः । गायत्र्यालक्षषष्ट्यातु मुच्यते गुरुतल्पग इति ॥ गुरुतरत्वात्प्रकाशाविषयमिदम् जपतोनास्ति पातकमिति च ॥ १०० ॥

( ५ ) **नन्दनः** । सकृद्धन्यादित्यस्यायमभिप्रायोव्याख्यातःस्मृत्यन्तरेण ॥ तस्मात्तुमुसलंगृह्णन्यथाप्राणेन भूपतिः । सकृद्धन्यान्मृतोवापि जीवन्नपि विशुध्यति ॥ मृते जीवति वा तस्मिन्पार्थिवोपि विशुध्यतीति । वा शब्देन ब्राह्मणस्य पक्षान्तरमुक्तं क्षत्रियादौ वधएव ॥ १०० ॥

( ६ ) **रामचन्द्रः** । स्तेनः ब्राह्मणसुवर्णचोरः ॥ १०० ॥

## तपसाऽपनुनुत्सुस्तुसुवर्णस्तेयजंमलम् ॥ चीरवासाद्विजोऽरण्येचरेद्ब्रह्महणोव्रतम् ॥१०१॥

( १ ) **मेधातिथिः** । इति च द्वादशवार्षिकं धर्मानुवादात्तस्यैवातिदेशोनब्रह्महत्यायाः प्रायश्चित्तान्तरं ब्रह्महणियद्व्रतमुक्तंतच्चरेदितियोजना । अपनुनुत्सुरपनेतुमिच्छुः शुद्धिंचिकीर्षतीतियावत् ॥ १०१ ॥

( २ ) **सर्वज्ञनारायणः** । ब्रह्महणिनिमित्ते यद्व्रतमुक्तं द्वादशवार्षिकादि तज्जातिशक्त्याद्यपेक्षया द्रव्यस्योत्तमाधमसंबन्धितया च यथायोगमुन्नेयमित्यर्थः ॥ १०१ ॥

( ३ ) **कुल्लूकः** । तपसा स्वर्णस्तेयउत्पन्नंपापंद्विजोनिर्हर्तुमिच्छन्नरण्यग्रहणात्प्राथम्याच्च ब्रह्महणि यद्व्रतमुक्तंतत्कुर्यात् । एतच्च द्वादशवार्षिकंक्लेशगौरवात्क्षत्रियादीनांमरणेन विकल्पितत्वाच्चब्राह्मणसंबन्धिनःसुवर्णापहरणे ॥ पञ्चकृष्णलकोमाषस्तेसुवर्णस्तुषोडशेति सुवर्णपरिमाणंद्रष्टव्यंन ततोन्यूनस्य परिमाणापेक्षयामनुक्तपरिमाणस्य ग्रहीतुंन्याय्यत्वात् । यत्त्वधिकपरिमाणंभविष्यपुराणे श्रूयते तत्तथानुबन्धविशिष्टापहारे तथाविधप्रायश्चित्तविषयमेव । तथा भविष्यपुराणे ॥ क्षत्रियाद्यास्त्रयोवर्णानिर्गुणाद्यूतत्पराः ॥ गुणाढ्यस्य तु विप्रस्य पञ्चनिष्कान्हरन्तिचेत् ॥ निष्कानेकादशतथादग्ध्वात्मानंतु पावके ॥ शुध्येयुर्मरणाद्वीर चरेद्ब्रह्मात्मशुद्धये ॥ १०१ ॥

( ४ ) **राघवानन्दः** । एतदेवतपः कथं कार्यमित्यपेक्षां पूरयति तपसेति । अपनुनुत्सुः खण्डयितुमिच्छुः । ब्रह्महणोव्रतमिति द्वादशाब्दसंख्यामुण्डनकुटीवासभैक्षचर्यमित्यतिदेशार्थं नतुतत्स्वरूपप्रदर्शनार्थम् । ब्राह्मणस्यनिष्कचतुष्टयातिरिक्तसुवर्णापहारे क्षत्रियादीनांमरणमेव । तथाच भविष्ये ॥ क्षत्रियाद्यास्त्रयोवर्णानिर्गुणाद्यूततत्पराः ॥ गुणाढ्यस्यतु विप्रस्य पञ्चनिष्कान्हरन्तिचेत् ॥ निष्कानेकादशान्वापि दग्ध्वात्मानं तु पावके ॥ शुध्यन्ति मरणाद्वीरतन्निर्यात्यातु तस्य तदिति ॥ निर्यात्यातावत्सुवर्णस्यदानेन एकादशेत्यभ्युच्चयमात्रं तेयदि साधवइति ॥ १०१ ॥

( ५ ) **नन्दनः** । अपनुनुत्सुरपनोदितुमिच्छन् ॥ १०१ ॥

( ६ ) **रामचन्द्रः** । मलं पापं तपसाऽपनुनुत्सुः ब्रह्महणोव्रतं द्वादशवार्षिकादि व्रतंचरेत् ॥ १०१ ॥

## एतैर्व्रतैरपोहेत पापंस्तेयकृतंद्विजः ॥ गुरुस्त्रीगमनीयंतु व्रतैरेभिरपानुदेत् ॥ १०२ ॥

( १ ) **मेधातिथिः** । ननुच वधेन शुध्यति स्तेनस्तपसाचेतिद्वयस्य प्राक्तनत्वादेतैरिति बहुवचनंनसम्यक् एतदेवज्ञापकं एषनिःशेषोक्तानप्यनुक्तानूकल्पेतानुबन्धाद्यपेक्षया गुरुस्त्रीगमनप्रयोजनं गुरुस्त्रीगमनीयं निमित्तमपि प्रयोजनमुच्यते प्रयोजयति प्रवर्तयतीति ॥ १०२ ॥

( २ ) **सर्वज्ञनारायणः** । गुरोः पितुः स्त्री गुरुस्त्री माता तद्गमनीयं तदभिगमनम् ॥ १०२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणसुवर्णस्तेयजनितपापमेभिर्व्रतैर्द्विजोनिर्हरेद्व्रततपसोर्द्वयोरुक्तत्वात् । एतैरिति बहुवचनंसंब-

न्धापेक्षया मनूक्तमपि प्रायश्चित्तंकल्पनीयमिति ज्ञापनार्थम् । गुरुस्त्रीगमननिमित्तंपुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् ॥ १०२ ॥

( ४ ) **राघवानन्दः** । सुवर्णस्तेयप्रायश्चित्त मुपसंहरन्गुरुतल्पप्रायश्चित्तमाह एतैरितिपञ्चभिः । एतैरितिबहुवचनेन याज्ञवल्क्योक्तंव्रतमसूचि ॥ अनिवेद्य नृपे शुध्येत्सुरापव्रतमाचरन् । आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृदिति ॥ गुरुस्त्रीगमनीयं तद्भागायगमननिमित्तंपापम् । एभिः वक्ष्यमाणैः ॥ १०२ ॥

( ५ ) **नन्दनः** । एतैरुक्तैर्व्रतैरिति बहुवचनग्रहणमतिदिष्टस्य ब्रह्महत्याव्रतस्य बहुत्वात् गुरुस्त्रीगमनीयं गुरुस्त्रीगमनभवं एभिर्वक्ष्यमाणैः ॥ १०२ ॥

( ६ ) **रामचन्द्रः** । गुरुस्त्रीगमनेपापं एभिर्व्रतैः वक्ष्यमाणलक्षणैः अपनुदेत् दूरंकुर्यात् ॥ १०२ ॥

**गुरुतल्प्यभिभाष्यैनस्तप्तेस्वप्यादयोमये ॥ सूर्मीज्वलंतींस्वाश्लिष्येन्मृत्युना सविशुध्यति ॥१०३॥**

( १ ) **मेधातिथिः** । गुरुतल्पगोगुरुतल्पीतिवा पाठः तल्पीतिमत्वर्थीयेन विशिष्टएवस्त्रीपुंसयोः संसर्गउच्यते गुरुराचार्यःपिताचेति तल्पशब्दोदारवचनः आचार्याणीमत्वेदंप्रायश्चित्तमपरामातैव समानजातीयागमनइमानि त्रीणि प्रायश्चित्तानि कल्पते बुद्धिपूर्वंचाभिभाष्यैनः पापंविख्याप्य तप्तेशयनेऽग्निस्पर्शेऽयोमयेशयीत मृत्युनाशुध्यतीति वचनात् तप्तास्त्रीप्रकृतिरयोमयीतामाश्लिष्येदालिंग्येत् ॥ १०३ ॥

( २ ) **सर्वज्ञनारायणः** । गुरुतल्पोगुरुतल्पगः । अभिभाष्य कथयित्वा । अयोमये शयने तप्ते तापेन मृत्युहेतौ । सूर्मी लोहप्रतिमाम् ॥ १०३ ॥

( ३ ) **कुल्लूकः** । निषेकादीनि कर्माणीत्युक्तत्वाद्गुरुः पिता तल्पंभार्या गुरुतल्पंगुरुभार्या तद्गामी गुरुभार्यागमनपापंविख्याप्य लोहमये तप्तशयने स्वप्यात् लोहमयींस्त्रीप्रकृतिंकृत्वा ज्वलंतीमालिङ्ग्यमृत्युना सविशुद्धोभवति ॥ १०३ ॥

( ४ ) **राघवानन्दः** । तत्रादौ ज्ञानतः सवर्णादिगुरुपत्नीविषयरेतोविसर्गपर्यन्तंतावदाह गुर्वितिद्वाभ्याम् । गुरुतल्पीतिमत्वर्थीयेन पाठेन संयोगविशेषः प्राप्यतइतिमेधातिथिः । अभिभाष्य विख्याप्य । एनः पापम् । अयोमये शयने । सूर्मीं तादृशींप्रतिकृतिंवा ज्वलन्तीमङ्गाराकारां श्लिष्येदालिङ्गेत् ॥ १०३ ॥

( ५ ) **नन्दनः** । अयोमये तल्पइतिशेषःसूर्मींस्थूणाम् ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । गुरुतल्पी सभायां एनः अभिभाष्य उक्त्वा अयोमये तल्पे स्वप्यात सूर्मीं ज्वलन्तींलोहप्रतिमां आश्लिष्येत् । सः मृत्युनाविशुध्यति ॥ १०३ ॥

**स्वयंवा शिश्नवृषणावुत्कृत्याधायचाञ्जलौ ॥ नैर्ऋतींदिशमातिष्ठेदानिपातादजिह्मगः ॥ १०४ ॥**

( १ ) **मेधातिथिः** । उत्कर्तनेन कल्पेन शोधनंशस्त्राद्याक्षिप्तशक्तिः सर्वत्र सहकारिणी येनशक्येत छेत्तुंतत्सामर्थ्याल्लभ्यते प्रत्यगुदग्दक्षिणानैर्ऋती दिक् अजिह्मगोऽकुटिलगः श्वभ्रकूपादि न परिहरेदित्यर्थः कुड्यादिषुप्रतियातनंहि तदापाताद्गच्छेदेव ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । वृषणमण्डकोशः । आतिष्ठेत् गच्छेत् । आनिपातादामरणात् । अजिह्मगोजलाग्न्यादिपरिहारार्थंवक्रगतिमकुर्वाणः ॥ १०४ ॥

---

( १०३ ) न्तींस्वाश्लि=न्तींवाश्लि ( क, ख, ग, घ, ण, )

( ३ ) **कुल्लूकः** । आत्मनैव वा लिङ्गवृषणौ छित्वाञ्जलौ कृत्वा यावच्छरीरपातमवक्रगतिः सन्दक्षिणपश्चिमांदिशंगच्छेत् । एवंचोक्तप्रायश्चित्तद्वयंगुरुत्वात्सवर्णगुरुभार्याविषयं । ज्ञानतोरेतोविसर्गपर्यन्तमैथुनविषयम् ॥ १०४ ॥

( ४ ) **राघवानन्दः** । शिश्नं लिङ्गं वृषणौ मुष्कौ तत्त्रयं उत्कृत्य छित्वा आनिपातात् । मरणफलकनिपातपर्यन्तं अजिह्मगः अकुटिलवर्त्माऽनुरोधी आतिष्ठेद्गच्छेत्यदिन्वयः ॥ १०४ ॥

( ५ ) **नन्दनः** । आनिपातादाशरीरपातात् अजिह्मगोयथोपनतमार्गगामी ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । शिश्नवृषणौ स्वयमुत्कृत्य छित्त्वाऽञ्जलावाधाय नैर्ऋतींदिशमातिष्ठेत् । अजिह्मगः जलाग्निपरिहारार्थं वक्रगतिमकुर्वाणः ॥ १०४ ॥

**खट्वाङ्गीचीरवासा वा श्मश्रुलोविजने वने ॥ प्राजापत्यंचरेत्कृच्छ्रमब्दमेकंसमाहितः ॥ १०५ ॥**

( १ ) **मेधातिथिः** । अबुद्धिपूर्वकंस्वभार्याभ्रान्त्यागमनइदंप्रायश्चित्तं द्विजातीयगमनेबुद्धिपूर्वकमपि ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । स्वपितृभार्यान्तरस्यस्वानन्तरजातीयस्य कामाद्गमनआह खट्वाङ्गीति । खट्वाङ्गं खट्वायादण्डस्तच्चिन्हतया धार्यम् । अर्थाच्चस्वानन्तरानन्तरजातीयपितृभार्यागमनेस्यार्धम् ॥ १०५ ॥

( ३ ) **कुल्लूकः** । खट्वाङ्गभृद्वस्त्रखण्डाच्छन्नोऽच्छिन्नकेशनखलोमश्मश्रुधारी संयतमनानिर्जने वने वर्षमेकंप्राजापत्यव्रतंचरेत् । एवंच वक्ष्यमाणप्रायश्चित्तलघुत्वात्स्वभार्यादिभ्रमेणाज्ञानविषयंबोद्धव्यम् ॥ १०५ ॥

( ४ ) **राघवानन्दः** । स्वभार्यादिभ्रमेण अज्ञानात् गमनेत्वाह खट्वाङ्गीति । खट्वाङ्गी खट्वाङ्गः शूलं तद्युक्तः । चीरवासाः धृतवस्त्रखण्डः । श्मश्रुलोऽकृतश्मश्रुः । प्राजापत्यं वक्ष्यमाणम् ॥ १०५ ॥

( ५ ) **नन्दनः** । खट्वाङ्गं पृष्ठावंशास्थि ॥ १०५ ॥

**चान्द्रायणंवा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः ॥ हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये॥१०६॥**

( १ ) **मेधातिथिः** । अतिदिष्टगुरुभावानांमातुलपितृव्यादीनांयाभार्यास्तद्गमनइदंप्रायश्चित्तं हविष्यंपयोमूलघृतादि यवागूद्रवपेयादि चीरंवस्त्रखण्डं श्मश्रुलोरूढश्मश्रुः समानजातीयायाअपि व्यभिचारिण्यागमने लघ्वेवप्रायश्चित्तम् ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणस्य शूद्रजातिस्वपितृभार्यागमनआह चान्द्रायणमिति । हविष्येण यवाग्वावेति चान्द्रायणव्रताङ्गभोजनसाधनाभिधानम् । यवाग्वा यवकृतविलेप्या ॥ १०६ ॥

( ३ ) **कुल्लूकः** । यद्वा गुरुभार्यागमनपापनिर्हरणायसंयतेन्द्रियः फलमूलादिना हविष्येण नीवारादिकृतयवाग्वा वा त्रीन्मासांश्चान्द्रायणान्याचरेत् । एतच्च पूर्वोक्तादपि लघुत्वादसाध्वीमसवर्णांवा गुरुभार्यागच्छतोद्रष्टव्यम् ॥ १०६ ॥

( ४ ) **राघवानन्दः** । अतिदिष्टगुरुत्वानां मातुलपितृव्यादीनां सवर्णासाध्वीगमनविषयेत्वाह चान्द्रायणमिति । एतया भक्षणीयं द्रव्यं विकल्पेनाहहविष्येति ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । चान्द्रायणं हविष्येण यवाग्वा वा गोधूमचूर्णस्य गुरुतल्पी चान्द्रायणं चरेत् पापापनुत्तये॥१०६॥

**एतैर्व्रतैरपोहेयुर्महापातकिनोमलम् ॥ उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः॥ १०७॥**

( १ ) **मेधातिथिः** । उक्तवक्ष्यमाणसंक्षेपवचनोयम् ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । महापातकसमतयोक्तेषु प्रायश्चित्तमाह एतैर्व्रतैरिति । यदातु मरणान्तिकप्रायश्चित्तंकिंतु-

[ नरो ] द्वादशवार्षिक्यादज्ञानतस्तु तदर्धमित्युन्नेयम् । महापातकिनोमहापातकिसमाः । तत्राप्यनृतंचसमुत्कर्षइत्यादिनो-क्तेषु गुरुलघुपापापेक्षया अनुबन्धाननुबन्धाद्यपेक्षया च पूर्वोक्तानि लघुगुरुप्रायश्चित्तानि यथायोगमुन्नेयानि । उपपात-किनस्त्वेवंविधैर्नियमैरिमैःरेभिर्वक्ष्यमाणैः ॥ १०७ ॥

( ३ ) कुल्लूकः । एभिरुक्तव्रतैर्ब्रह्महत्यादिमहापातककारिणः पापंनिर्हरेयुः । गोवधाद्युपपातककारिणः पुनर्वक्ष्यमा-णप्रकारेणानेकरूपव्रतैः पापानि निर्हरेयुः ॥ १०७ ॥

( ४ ) राघवानन्दः । महापातकिप्रायश्चित्तमुपसंहरन्नुपपातकप्रायश्चित्तमाह एतैरिति । एतैरुक्तैमलमन्पापान्यपोहेयु-र्नाशयेयुः । एतै वक्ष्यमाणैः ॥ १०७ ॥

( ५ ) नन्दनः । एतैरुक्तैरेभिर्वक्ष्यमाणैरत्रपतितैःसंसर्गिणांप्रायश्चित्तवचनंतैस्तेषामत्यन्ततुल्यताभ्रमावनोदनार्थमित्य-वगन्तव्यम् ॥ १०७ ॥

( ६ ) रामचन्द्रः । महापातकिनःमलान् एतैर्व्रतै रपोहेयुः ॥ १०७ ॥

**उपपातकसंयुक्तोगोघ्नोमासंयवान्पिबेत् ॥ कृतवापोवसेद्गोष्ठे चर्मणा तेन संवृतः ॥ १०८ ॥**

( १ ) मेधातिथिः । गोघ्नोगोघाती मूलविभुजाविदर्शनात्कः यवान्पिबेदिति यवसक्तुपानंकेचिदाहुः अन्येतु प्रकृतिश-ब्दःकार्येयवाग्वांप्रयुक्तोतोयवान्पिष्ट्वापाययेदित्युक्तंभवति पूर्वस्मिन्पक्षेऽश्रुतोदकादिद्रवकल्पनाभवति नहि यवाउदका-दिनाविनापातुंशक्यन्ते इहतु लक्षणमात्रमश्रुतकल्पनायाश्चलघ्वीलक्षणा कृतवपनः कृतमौण्ड्यः केशच्छेदवचनोवा गो-ष्ठे यत्रगावआसते चर्मणातेनयेनगौर्हता अपित्वन्यस्यापि ॥ १०८ ॥

( २ ) सर्वज्ञनारायणः । उपपातकसंयुक्तइति शरणागतत्वादिविशेषणवद्गोहत्यायामहापातकतुल्यत्वात्तद्यवच्छेदा-र्थमुक्तम् । यवान्पिबेत् यवागूंकृत्वा मासं यवानश्नीयादित्यर्थः । कृतवापोमुण्डितः । तेन चर्मणा तस्यागोश्चर्मणा संवृतः कृतोत्तरीयः ॥ १०८ ॥

( ३ ) कुल्लूकः । अनेन विधिना यस्त्विति यावत्कुलकमुपपातकयुक्तोगोघाती शिथिलयवागूरूपेण प्रथममासंयवा-न्पिबेत् । सशिखंमुण्डितशिरालूनश्मश्रुस्तेन हतगोचर्मणाच्छादितदेहोमासत्रयमेव गोष्ठे वसेत् । गोमूत्रेणाचरेत्स्नानंसंयतेंद्रियः कृत्रिमलवणवर्जितंहविष्यमन्नमेकाहंभुक्त्वा द्वितीयेऽह्नि सायंद्वितीयतृतीयमासावश्नीयात् । मासत्रयमेव दिवाप्रातस्तागाअनु-गच्छेत्तासांच गवांखुरप्रहारादूर्ध्वमुत्थितंरजस्तिष्ठन्नास्वादयेत्कण्डूयनादिना ताः परिचर्य प्रणम्य च रात्रौ भित्त्यादिकम-ननुवेश्योपविष्टआसीत । तथा शुचिर्विगतक्रोध उत्थितासु गोषु पश्चादुत्तिष्ठेद्वने च परिभ्रमन्तीषु पश्चात्ततः परिभ्रमेत् । उप-विष्टासु गोषूपविशेत् । व्याधितांचौरव्याघ्रादिभयहेतुभिदाक्रान्तांपतितांकर्दमलग्नांवा यथाशक्तिमोचयेत् । तथोष्णे आदित्ये तपति मेघेच वर्षति शीते चोपस्थिते मारुते चात्यर्थंवातिगोर्ययथाशक्तिरक्षामकृत्वाऽऽत्मनस्त्राणंन कुर्यात्तथाऽऽत्मनीऽन्ये-षांवा गेहे क्षेत्रे खलेषु सस्यादिभक्षणंकुर्वन्तींवत्संच क्षीरंपिबन्तंन कथयेत् । अनेनोक्तविधानेन योगोघ्नोगाः परिचरति स-गोवधजनितपापंत्रिभिर्मासैरपनुदति ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥

( ४ ) राघवानन्दः । तत्रादौ गोवधविषयकमाह उपेतिनवभिः । मासंयवान्पिबेत् कृतवापोगोष्ठेवसेच्च । तेन तदा येन तदलाभे तज्जातीयेन ॥ १०८ ॥

( ५ ) नन्दनः । मांसपृथङ्मासंयवान्यवागूः कृतवापउभकेशश्मश्रुः तेन चर्मणा ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । यवान् गोमूत्रमिश्रितां यवागूं पिबेत् ॥ १०८ ॥

**चतुर्थकालमश्नीयादक्षारलवणंमितम् ॥ गोमूत्रेणाचरेत्स्नानंद्वौ मासौ नियतेन्द्रियः ॥ १०९ ॥**

( १ ) **मेधातिथिः** । द्वौमासावेकैकमाहारंभुक्त्वाद्वितीयेऽहनि सायमश्नीयात् । लवणविशेषेण क्षारग्रहणात्सैन्धवस्याप्रतिषेधः । स्वतन्त्रःक्षारप्रतिषेधोहिद्वन्द्वेसतिस्यात् तत्रवचनप्रवृत्तिःपदद्वयस्यच लक्षणार्थो युगपदधिकरणतायांद्वन्द्वः । स्थितेविशेषणसमासे विशिष्टस्यार्थस्यनानुज्ञासंबन्धः । मितंस्वल्पमित्यर्थः नयावतातृप्तिर्भवति शरीरस्थितिश्चजायते गोमूत्रस्नानंत्रिष्वपि कालेषु चतुर्थकालंद्वौमासाविति संबन्धः । एवंस्मृत्यंतरे ॥ कृतवपनोवसेद्गोष्ठे चर्मणा तेन संवृतः ॥ द्वौमासौस्नानमप्यस्य गोमूत्रेण विधीयते ॥ पादशौचक्रियाकार्यमद्भिः कुर्वीत केवलं ॥ नचास्यद्वौमासावित्यनेन संबन्धःसंभवति स्नानग्रहणंपादपूरणार्थंस्नानकाले यदिपादाद्यशुद्धिर्भवत्यर्थात्तदुदकेनैव द्रव्यशुद्धिविधिना शोधनीयमतआचमनमपिशुद्ध्यर्थमुदकेनैवस्नानकालेऽन्यदामृदाशुद्धिःसामृद्वारिक्रमेणैवकर्तव्या स्नानविधौ गोमूत्रश्रवणादाचमनादौ कः प्रसङ्गः स्नानेऽपिप्रायश्चित्ताङ्गेन शुद्ध्यर्थम् ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । ततःपरं द्वौ मासौ यवक्षारादिक्षारसैन्धवादिलवणवर्जितमन्नं मितमष्टग्रासनियमस्यात्यपकर्षेण परिमाणत्वात्तावन्नियतं चतुर्थकालं पूर्वदिने नक्ताशनोऽपरदिने उपोष्य द्वितीयदिने सायमश्नीयात् । प्रतिदिनंहि द्वौ द्वौ भोजनकालौ तत्कालत्रयमतिक्रम्यैवं भुक्तं भवति । गोमूत्रेण तन्मात्रेण । अत्र चर्मसंवृतत्वगोमूत्रस्नानाचरणाद्युक्तवक्ष्यमाणाङ्गजातं प्रथममासे द्वितीयादौचोपसंहार्यम् ॥ १०९ ॥

( ४ ) **राघवानन्दः** । किंच चतुर्थेति । द्वौ मासौ गोमूत्रेण स्नानमाचरन् चतुर्थकालं चतुर्थभोजनमक्षारलवणान्वितमश्नीयात्कुर्यादित्यन्वयः त्रिभिर्मासैर्व्यपोहतीत्युपसंहारात् ॥ १०९ ॥

( ५ ) **नन्दनः** । मासयोर्द्वितीयतृतीययोः कर्तव्यमाह चतुर्थकालमश्नीयादिति । चतुर्थकालंचतुर्थकालएकदिनमुपोष्य द्वितीये दिने सायमिति यावत् । क्षारंजिव्हाक्षरणकुदूषणसारभूतं ॥ १०९ ॥

( ६ ) **रामचन्द्रः** । मितं परिमितं ॥ १०९ ॥

**दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्ध्वंरजः पिबेत् ॥ शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनंवसेत् ॥ ११० ॥**

( १ ) **मेधातिथिः** । यासांगवांस्थाने वसति ताश्चरितुंगच्छन्तीःपश्चाद्गच्छेत् । तच्छब्देनप्रत्यवमर्शाद्यासांगृहेस्थितस्तासां अन्यासांगच्छन्तीनांन भवत्यनुगमनं ताभिः समुत्थापितंरजोरेणुरूर्ध्वंगच्छन् पिबेत् एवंतत्रैव ताभिः सहदिवसंविहृत्य ताभिरेवसहपुनर्गोष्ठमागच्छेत् शुश्रूषयित्वा कण्डूकर्षणरजोपनोदनेनोपगच्छन्नमस्कृत्य जानुशिरसाप्रणामंकृत्वा वीरासनोवसेत् भित्तिशय्यादावनिषद्ययदुपविष्टस्यावस्थानंतद्वीरासनम् ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । दिवानुगच्छेन्नाग्रे गच्छेत् । एतच्च यदा गावोगच्छन्ति तदैव । आगोवासंगोष्ठेवसेत् । दिवाच यदातदा खुराघातादूर्ध्वमुत्क्षिप्तं रजः पिबेत् मुखवातेन वक्त्रे प्रवेशयेत् । शुश्रूषित्वा कण्डूयनादिना । वीरासनंवसेत् येनासनेनादावासीनस्तेनैवासनेन रात्रिंक्षपयेत् । एतच्च तिष्ठन्तीष्वपि गोषु ॥ ११० ॥

( ४ ) **राघवानन्दः** । तेष्वेवेतिकर्तव्यतामाह दिवेत्यादिपञ्चभिः । ऊर्ध्वं ऊर्ध्वगामि रजः पिबेदास्वादयेत् । रात्रौ तासां गवां सन्निधौवीरासनंकृत्वा वसेत्तिष्ठेदित्यन्वयः ॥ ११० ॥

( ५ ) **नन्दनः** । रजःपिबेत् रजोगोधूलिरक्तास्योमुहुर्गोखुरोद्भूतंपवित्रम् ॥ ११० ॥

( ६ ) **रामचन्द्रः** । दिवातुगाः अनुगच्छेत् तिष्ठनूऊर्ध्वरजः गोसंबन्धिरजः पिबेत् ॥ ११० ॥

**तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ॥ आसीनासु तथासीनोनियतोवीतमत्सरः ॥ १११ ॥**

( १ ) **मेधातिथिः** । तिष्ठन्तीत्येवमादिकोविधिर्यत्रकाश्चित्तिष्ठन्ति काश्चिद्व्रजन्ति काश्चिद्वाऽऽसते तत्र भूयसीनांधर्मसमाश्रयेत् । वीतोमत्सरोलोभोयस्येति प्रदर्शनार्थंचैतत् त्यक्तरागादिमनोदोषइतियावत् नियतेन्द्रियवचनात् ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । दिवाकर्तव्यमाह तिष्ठन्तीष्विति । आसीनासूपविष्टासु । नियतस्तपःस्वाध्यायादियावच्छ्वयनियमवान् । मत्सरः क्रोधः ॥ १११ ॥

( ४ ) **राघवानन्दः** । किंच तिष्ठन्तीष्विति । आसीनासु शयानासु उपविष्टः सन् । वीतमत्सरः किमित्येवं कुर्वन्त्येताइत्यनुद्विग्नहृदयः ॥ १११ ॥

( ५ ) **नन्दनः** । वीतमत्सरः तिष्ठन्तीषुगोष्विति विपरिणेतव्यम् ॥ १११ ॥

**आतुरामभिशस्तांवा चौरव्याघ्रादिभिर्भयैः ॥ पतितांपङ्कलग्नांवा सर्वोपायैर्विमोचयेत् ॥ ११२ ॥**

( १ ) **मेधातिथिः** ।आतुरांव्याधितां अभिशस्तांगृहीतां भयैर्व्याघ्रादिनिमित्तैः सर्वेण सामर्थ्येन प्राणशब्देनोल्लासपवनएव अल्पप्राणैर्महाप्राणइति । स्थूलेबलवति च प्रयोगदर्शनात् तेनस्वयमशक्तेनसहायकोपादानेनाप्युद्धारः कर्तव्यः ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । भयैर्भयसाधनैरभिषक्तांपराकृताम् । सर्वोपायैर्यावच्छक्ति ॥ ११२ ॥

( ४ ) **राघवानन्दः** । आतुरामौषधादिनासुखिनींकुर्यात् तथापि मृतायां नदोषः । तदुक्तम् ॥ औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु यः ॥ दीयमाने विपत्तिः स्यान्न सपापेन लिप्यतइति ॥ अभिशस्तां जीर्णतया स्वपोषकैः परित्यक्ताम् । पतितां चोरादिभयैः । पङ्कमग्नांच । सर्वप्राणैः प्राणसत्वेन तद्रक्षातोनिवर्तेतेतिभावः ॥ ११२ ॥

( ५ ) **नन्दनः** । अभिशस्तांपीडितां भयैर्भयहेतुभिः ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । अभिशस्तां आक्रान्तां भयैः भयसाधनैः ॥ ११२ ॥

**उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ॥ न कुर्वीतात्मनस्त्राणंगोरकृत्वा तु शक्तितः॥११३॥**

( १ ) **मेधातिथिः** । उष्णेन भृशं तपत्यादित्ये वर्षति पर्जन्ये शीते वा मारुते वाति वायौ भृशमिति ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । उष्णे आतपे । वर्षति वृष्टिकाले । शीते शीतपीडासमये । मारुते भृशंवाति झञ्झावातादौ । अकृत्वा त्राणम् ॥ ११३ ॥

( ४ ) **राघवानन्दः** । उष्णे सूर्याद्यातपे छत्रादिनात्मत्राणंन कुर्यात्तासामकृत्वा ॥ ११३॥

( ५ ) **नन्दनः** । उष्णेआतपे ॥ ११३ ॥

**आत्मनोयदि वान्येषांगृहे क्षेत्रेथवा खले ॥ भक्षयन्तींन कथयेत्पिबन्तंचैव वत्सकम् ॥ ११४ ॥**

---

( ११२ ) भिशस्तां=भिषक्तां ( ख, ग, च, ण )

( ११२ ) सर्वोपायैः=सर्वप्राणैः ( क, ख, ग, घ, च, ज, झ, ञ, ट, ठ, ड, ढ, ण, त, थ )

( १ ) **मेधातिथिः** । व्रीह्यादिभक्षयन्तींगांनधारयेत् नचान्यानाचक्षीतनिवारणार्थं यदितु बध्नीयादाशंक्यतेबाधेति तृप्त्या तदा पूर्वोक्त करणेनदोषस्तदनुग्रहोविधीयतएवंपिबंतंवत्सकमपि ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । भक्षयन्तीं सस्यानि । पिबन्तं मातुःस्तन्यम् । नान्यस्मै तन्निवारणाय कथयेत् । धयन्तमितिक्वचित्पाठः ॥ ११४ ॥

( ४ ) **राघवानन्दः** । भक्षयन्तीं सस्यमितिशेषः । दुग्धं पिबन्तं वत्सं च न कथयेत् ॥ ११४ ॥

( ५ ) **नन्दनः** । भक्षयन्तींगां पिबन्तंस्तनम् ॥ ११४ ॥

## अनेन विधिना यस्तु गोघ्नोगामनुगच्छति ॥ सगोहत्याकृतंपापंत्रिभिर्मासैर्व्यपोहति ॥ ११५ ॥

( १ ) **मेधातिथिः** । दशगावोदेया एकोवृषभः शक्तौचत्वारिव्रतान्यविद्यमाने गदितधने ततोन्यूनं सर्वस्वंदेयंवेदविद्भ्यइति बहुशः द्वयोरेकस्मिन्वा वेदविद्ग्रहणंनबहुत्वार्थमनुवादोवेदविदामेव पात्रतयोक्तत्वात् यत्तुस्मृत्यन्तरेदहनवाहनबन्धनदामपाशयोजनतैलौषधादियोगविपन्नांसशिखंवपनं कृत्वाप्राजापत्यंचरेत्ततश्चैलखण्डंदद्यादिति तस्यनातिप्रयत्नेनैतासु क्रियासु प्रवर्तते । तस्यप्रमादजेपराधे प्रायश्चित्तमेतत् यतः ॥ यंत्रणेगोश्चिकित्सायांगूढगर्भविमोचने ॥ यत्ने कृते विपत्तिःस्यात्प्रायश्चित्तंनविद्यते ॥ औषधंस्नेहमाहारंदद्याद्गोब्राह्मणेषुयः ॥ दीयमानेविपत्तिःस्यान्नसपापेनलिप्यतइति सांवर्ते तथान्यासामासेच न शुद्धिरुक्ता पंचगव्यंपिबेत् षष्ठे कालेपयः समाप्ते ब्राह्मणांस्तर्पयेत् तिलधेनुंच दद्यात् तथान्यार्द्धमासेन सक्तुयावकशाकपयोदधिघृतं सकृदिति विकल्पानेतान्वक्ष्यामि येन द्रव्येण यः प्रयोगआरब्धः सतेनैवसमापनीयोनतु कस्मिंश्चिदह्निसक्तवः कस्मिंश्चिद्यावकादीनीति व्रीहिभिर्यजेत यवैर्वेतिविकल्पतेपि द्रव्यद्वयेन व्रीहिषूपपत्तेः स्वेच्छयाचैतेषांवा विनाशे यवाउपादीयन्ते प्रतिनिधिनैवंप्रयोगसमाप्तिस्तत्रापि गोदानंविहितंतथैतावन्त्येवतपांस्यतोवत्ससहितांगांदद्यादित्यत्रोक्तंगौतमीयेच गांवैश्यवदिति तत्र श्रोत्रियस्य यज्ञविदुषोभ्याहितस्य दोग्ध्रींबहुक्षीरांबालवत्सांनिर्धनस्यगांहत्वा गौतमीयंक्षेत्रारामादौ व्रीह्यादिषु चप्रविश्यतन्निवारणार्थंप्रवृत्ते मामारयाम्येनामिति नमयाबुद्ध्याकथंमृतायामिदमासितव्यं । तथाऽश्रोत्रियस्यजरत्याअक्षीरायाश्च बुद्धिपूर्ववधेत्रैमासिकं सर्वतोनिर्गुणायानिर्गुणस्वामिकायाअबुद्धिपूर्ववधेप्राजापत्यं तस्याएवबुद्धिपूर्वमृतायांत्रैमासिकमिति ॥ ११५ ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । गामनुगच्छति गवानुगमनसहितं व्रतं करोति ॥ ११५ ॥

( ४ ) **राघवानन्दः** । उपसंहरति अनेनेति । विधिना उक्तेन ॥ ११५ ॥

## वृषभैकादशागाश्च दद्यात्सुचरितव्रतः ॥ अविद्यमाने सर्वस्वंवेदविद्भ्योनिवेदयेत् ॥ ११६ ॥

( २ ) **सर्वज्ञनारायणः** । वृषभैकादशाः यासांगवां वृषभएकादशः एकंवृषंदशस्त्रीगवीरितियावत् । अविद्यमानएतावद्वित्ताभावे ॥ ११६ ॥

( ३ ) **कुल्लूकः** । वृषभएकादशोयासांताः सम्यगनुष्ठितप्रायश्चित्तोदद्यात् अविद्यमाने तावतिधने सर्वस्वंवेदज्ञेभ्योब्राह्मणेभ्योदद्यात् ॥ ११६ ॥

( ४ ) **राघवानन्दः** । वृषभैकादशाः वृषभः एकादशोयासु गोषु । चरितव्रतः कृतोपवासत्रयः । अत्रतु व्रतत्रयमेवोचितं मासत्रयसाध्यमेकं त्रिभिर्मासैर्व्यपोहतीत्युपसंहाराद्ब्राह्मणधेनुविषयम् । तदितरधेनुविषयंच उपोषणत्रयपुरःसरं गवामेकादशकदानम् । अज्ञानेन गोमात्रवधेतु सर्वस्वदानम् । दानव्रताद्यसमर्थस्य तु यत्यादेश्चान्द्रायणमेव । अतएव याज्ञव-

ल्क्योक्तविकल्पत्रयमपि संगच्छते । तथाहि ॥ पञ्चगव्यं पिबन्गोघ्नोमासमासीत संयतः ॥ गोष्ठेशयोगोनुगामी गोप्रदानेन शुध्यति ॥ कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः ॥ दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गाइति ॥ याज्ञवल्कीये मासपदमुपलक्षणं मासत्रयस्येति । अत्र शूलपाणिः ॥ मासत्रये द्वादशधेनवस्तेन षट्त्रिंशत्कार्षापणागवांदशकस्य दशकार्षापणावृषभस्य पञ्चकार्षापणास्तेनैकपञ्चाशत्पणाइत्येवं गोदानपर्यन्तमेकं व्रतमिति ॥ ११६ ॥

( ५ ) **नन्दनः** । अविद्यमाने वृषभएकादशके ॥ ११६ ॥

( ६ ) **रामचन्द्रः** । एकादशोवृषभोदश गाः ॥ ११६ ॥

## एतदेव व्रतंकुर्युरुपपातकिनोद्विजाः ॥ अवकीर्णिवर्ज्यंशुद्ध्यर्थंचान्द्रायणमथापि वा ॥ ११७ ॥

( १ ) **मेधातिथिः** । एतदेवेति गोघातकप्रायश्चित्तंसर्वेषूपपातकेष्वतिदिशति । वैकल्पिकंचान्द्रायणमप्युपपातकित्वे विशेषोपदेशान्नगोघ्नस्य चान्द्रायणमिच्छन्ति तेषामुपपातकित्ववचने गोघ्नस्य प्रयोजनंमृग्यम् ॥ ११७ ॥

( २ ) **सर्वज्ञनारायणः** । एतदेवव्रतं हतगोचर्मपरिधानमस्यासंभवात्तच्छून्यम् । उपपातकिनः पूर्वोक्ताः । एतत् ज्ञानतः । अज्ञानतस्त्वाह चान्द्रायणमिति । इदंच यत्र निष्कृतिर्विशेषतोनोक्ता तद्विषयम् । तत्रापि पापगुरुत्वापेक्षयाऽऽवृत्त्या योज्यम् ॥ ११७ ॥

( ३ ) **कुल्लूकः** । अपरेतूपपातकिनोवक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थमेतदेव गोवधप्रायश्चित्तंचान्द्रायणंवा लघुत्वात्कुर्युः चान्द्रायणन्तु लघुन्युपपातके जातिशक्तिगुणाद्यपेक्ष्यंवा योजनीयम् ॥ ११७ ॥

( ४ ) **राघवानन्दः** । उपपातकप्रायश्चित्तमुपसंहरन् अन्यत्रातिदिशति एतदेवेति । अपिना पयःपराकयोर्ग्रहणम् ॥ उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ॥ पयसावापि मासेन पराकेणापि वा पुनरितियाज्ञवल्क्योक्तेरितिमनूक्तेषु प्रायश्चित्तेषु उपपातकेषु त्रयाणां विकल्पेन प्रवेशः तथैकार्थास्तु विकल्परन्निति न्यायात् इति ॥ ११७ ॥

( ५ ) **नन्दनः** । एतद्गोहत्याव्रतं ॥ अवकीर्णीभवेद्गत्वा ब्रह्मचारीतुयोषितमितियाज्ञवल्यः । बुद्धिपूर्वविषयंगोव्रतमबुद्धिपूर्वविषयचान्द्रायणम् ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । अवकीर्णिसंज्ञंपुरुषंवर्जयित्वा ॥ ११७ ॥

## अवकीर्णीतु काणेन गर्दभेन चतुष्पथे ॥ पाकयज्ञविधानेन यजेत निर्ऋतिंनिशि ॥ ११८ ॥

( १ ) **मेधातिथिः** । अवकारोऽवकीर्णो ब्रह्मचारिणोव्रतनियमःस्त्रीसंप्रयोगलक्षणः सोस्यास्तीत्यवकीर्णी वक्ष्यति कामतोरेतसः सेकमिति काणेन गर्दभेनेति सगुणद्रव्यनिर्देशः । चतुष्पथेनेति देशस्य निशीति कालस्य नैर्ऋतमितिदेवताया पाकयज्ञविधानेनेतीति कर्तव्यताविधानं ननुचपशुयागाअग्निष्टोमीयपशुयागाअग्निषोमीयपशुप्रकृतयः सत्यंसएवपाकयज्ञप्रकृतिः सत्यधिकारेहि उक्तंच पशुरपिद्रवति पयोपिद्रवतीति पाकयज्ञाः पूर्णमासादयः ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । अवकीर्णिप्रायश्चित्तमाह अवकीर्णीति । पाकयज्ञसहचरितःपशुकल्पआश्वलायनगृह्यादावुक्तः । निशि रात्रौ । निर्ऋतिदेवताम् । एतच्चालौकिकाग्नावेव ॥ ११८ ॥

( ३ ) **कुल्लूकः** । अवकीर्णी वक्ष्यमाणः काणेन गर्दभेन रात्रौ चतुष्पथे पाकयज्ञेन तन्त्रेण निर्ऋत्याख्यांदेवतांयजेत् ॥ ११८ ॥

---

( ११७ ) कीर्णिवर्ज्यं=कीर्णीव ( ग )

( ४ ) **राघवानन्दः** । अवकीर्णि [ वर्जमित्युक्तंतस्यप्रायश्चित्तमाह अवकीर्णीति षड्भिः । पाकयज्ञविधानेन वैश्वदेवविधानेन ][1] ॥ ११८ ॥

( ५ ) **नन्दनः** । काणेन गर्दभेन काणंगर्दभं पशुमालभ्य पाकयज्ञविधानेन पाकयज्ञप्रयोगेणस्मार्त्तेनेत्यर्थः॥ ११८॥

( ६ ) **रामचन्द्रः** । अवकीर्णी क्षतव्रतः निर्ऋतिंदेवतां पाकयज्ञविधानेन सप्तपाकसंस्थाप्रकारेण काणेन गर्दभेन एकाक्षिगर्दभेन निशि यजेत् ॥ ११८ ॥

**हुत्वाग्नौ विधिवद्धोमानंततश्चसमेत्यृचा ॥ वातेन्द्रगुरुवह्नीनांजुहुयात्सर्पिषाहुतीः ॥ ११९ ॥**

( १ ) **मेधातिथिः** । अग्नौयदाहोममग्निहोमाश्च त्वदयस्यायइति अतः समासेषु होमेषु मरुभ्यइन्द्राय बृहस्पतयेऽग्नयेऽप्याहुतीर्जुहुयात् समित्यनया ॥ संमासिञ्चन्तु मरुतःसमिन्द्रःसंबृहस्पतिः ॥ संचायमग्निःसिञ्चतु प्रजयाच धनेनचेत्येतयाजुहुयान्मान्त्रवर्णिकत्वात् । देवतानांश्लोकेवातमरुच्छब्दौमरुद्बृहस्पतिशब्दलक्षणावतोवातादिषु स्वाहाकारादौ मरुद्बृहस्पतिशब्दौप्रयोक्तव्यौ न वातगुरुशब्दौ ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । विधिवन्नैर्ऋतदैवतमन्त्रैः । होमान् वपया मांसेन च प्रधानदेवतायै स्विष्टकृतेचान्ततइति तिस्रआहुतीः । तदन्ते संमासिञ्चन्तुमरुतः समिन्द्रः संबृहस्पतिरित्यृचा एतदृक्प्रतिपाद्यादिदेवतानां घृतेनाहुतीराहुतित्रयं जुहुयात् ॥ ११९ ॥

( ३ ) **कुल्लूकः** । ततोनिर्ऋत्यैगर्दभवपादिहोमान्यथावच्चतुष्पथे कृत्वा तदन्ते संमासिंचन्तु मरुतइत्येतया ऋचा मारुतेन्द्रबृहस्पत्यग्नीनांघृतेनाहुतीर्जुहुयात् ॥ ११९ ॥

( ४ ) **राघवानन्दः** । [ होमान् गर्दभरसादिहोमान् । तेच ][1] कामाय स्वाहा निर्ऋतये स्वाहा रक्षोदेवताभ्यः स्वाहेतिवसिष्ठस्मरणात् । समित्यृचा समासिञ्चन्तुमरुतइत्येतयर्चा गुरुः बृहस्पतिः ॥ ११९ ॥

( ५ ) **नन्दनः** । तत्र प्रधानहोममुपहोमांश्चाह हुत्वाग्नौ विधिवद्धोममिति । संततमविच्छिन्नधारं । समेत्यृचासममासिञ्चन्त्वित्यृचा ॥ ११९ ॥

( ६ ) **रामचन्द्रः** । विधिवदग्नौ हुत्वा होमान् अन्ततः पश्चात् समित्यृचा वातोवायुः इन्द्रः गुरुः बृहस्पतिः एषामाहुतीःसर्पिषा जुहुयात् ॥ ११९ ॥

**कामतोरेतसः सेकंव्रतस्थस्य द्विजन्मनः ॥ अतिक्रमंव्रतस्याहुर्धर्मज्ञाब्रह्मवादिनः ॥ १२० ॥**

( १ ) **मेधातिथिः** । अवकीर्णिपदार्थनिरूपणमतश्चोपात्तव्रतातिरिक्तविषयएवंविज्ञायते व्रतस्यास्येति । ब्रह्मचर्याश्रमस्थस्येति स्मृत्यन्तरदर्शनाद्विज्ञेयं रेतःसेकस्त्वस्यैव विशेषतःप्रतिषिद्धोन्तरेणापि स्त्रीसंप्रयोगं कामतःसेकेविधिरयम् ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । अत्रान्तरा कामतइत्यवकीर्णिलक्षणाभिधानंवातादिदैवतर्चाहोमस्तुतिं प्रस्तावयितुम् । व्रतं ब्रह्मचर्यवनस्थयतित्वनियमपरिग्रहः चान्द्रायणादिव्रतंच तत्र स्थितस्य व्रतस्यातिक्रमम् ॥ १२० ॥

( ३ ) **कुल्लूकः** । अप्रसिद्धत्वादवकीर्णवतोलक्षणमाह कामतइति । इच्छातोद्विजः ॥ अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितमिति वचनात्स्त्रीयोनौ शुक्रोत्सर्गेब्रह्मचर्यस्यातिक्रमवकीर्णरूपंसर्वज्ञावेदविदः प्राहुः ॥ १२० ॥

---

( १ ) राघ० २, न, श

( ४ ) **राघवानन्दः** । वादादीनामेवहोमोऽर्थवादः । कामतइत्यवकीर्णिलक्षणं ॥ अवकीर्णीभवेद्गत्वा ब्रह्मचारी तु योषितमिति याज्ञवल्योक्तेः ॥ १२० ॥

( ५ ) **नन्दनः** । एतदकामतोरेतः सेकविषये प्रायश्चित्तमुक्तमथ कामतस्तु विशेषमाह कामतोरेतसः सेकमिति । अतिक्रमंलोपंव्रतस्य ब्रह्मचर्यस्य ॥ १२० ॥

( ६ ) **रामचन्द्रः** । व्रतस्थस्य कामतः रेतसःसेकं रेतसः क्षरणम् ॥ १२० ॥

**मारुतंपुरुहूतंच गुरुंपावकमेव च ॥ चतुरोव्रतिनोऽभ्येति ब्राह्मंतेजोऽवकीर्णिनः ॥ १२१ ॥**

( १ ) **मेधातिथिः** । आद्याहुतिरिति विधेरर्थवादोव्रतिनः सतअवकीर्णिनः यत्ब्रह्मतेजोविविधविज्ञानोपार्जितं-पुण्यंतद्देवतांदेवतामुपैत्युपसंक्रामति तत्र लयंगच्छतीतियावत् । व्रतिनोपैतीतिविवक्षितम् ॥ १२१ ॥

( २ ) **सर्वज्ञनारायणः** । विकिरणाद्विक्षेपाद्व्रतस्थस्यावकीर्णीतियोगउक्तः । मारुतमितिप्रकृताहुतिस्तुत्युपयुक्तम् । गुरुं बृहस्पतिम् । ब्राह्मं वेदेन सहितं तेजः ॥ १२१ ॥

( ३ ) **कुल्लूकः** । व्रतचारिणोवेदाध्ययननियमानुष्ठानजंतेजः तदवकीर्णिनः सतोमरुदिन्द्रबृहस्पतिपावकांश्चतुरः संक्रामति अतस्तेभ्यआज्याहुतीर्जुहुयात् इत्याज्याहुतेरयमनुवादः ॥ १२१ ॥

( ४ ) **राघवानन्दः** । पुरुहूतं पुरुभिर्बहुभिर्हूयतेऽस्माइति शक्रम् । ब्राह्मं वेदाध्ययनजम् ॥ १२१ ॥

( ५ ) **नन्दनः** । व्रतिनोऽवकीर्णिनोब्राह्मंतेजोमरुतादींश्चतुरोप्येति प्रविशति चतुर्थेत्याहुःब्रह्मवादिनइति श्रुतेः॥१२१॥

( ६ ) **रामचन्द्रः** । अवकीर्णिनः व्रतिनः बाल्ये [ ब्राह्मं ? ] तेजः चतुरः मारुतादीनां देवानां सकाशमभ्येति॥१२१॥

**एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ॥ सप्तागारांश्चरेद्भैक्षंस्वकर्मपरिकीर्तयन् ॥ १२२ ॥**

( १ ) **मेधातिथिः** । वसित्वा आच्छाद्य स्वकर्मावकीर्णोस्मीत्येवम् ॥ १२२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रकृतकर्मशेषमाह एतस्मिन्निति । पूर्वोक्तंहोमं कृत्वा एतदप्यंकर्तव्यमित्यर्थः । गर्दभस्य हविरुत्पादनभूतस्याजिनंचर्म स्वकर्माधिकरणम् ॥ १२२ ॥

( ३ ) **कुल्लूकः** । एतस्मिन्नवकीर्णाख्येपापउत्पन्ने पूर्वोक्तंगर्दभयागादि कृत्वा गर्दभचर्मपरिधायेति हारीतस्मरणात्स-गर्दभसंबन्धिचर्मप्रावृतोवकीर्ण्यहमिति स्वकर्मख्यापनंकुर्वन्सप्तगृहाणि भैक्षंचरेत् ॥ १२२ ॥

( ४ ) **राघवानन्दः** । गर्दभहोमोत्तरकृत्यमाह एतस्मिन्निति । एतस्मिन्नवकीर्णिनिमित्ते । वसित्वा परिधाय । स्वकर्म-अवकीर्ण्यस्मीतिख्यापयन् ॥ १२२ ॥

( ५ ) **नन्दनः** । एतस्मिन्नेनसि कामतःकृतेऽवकीर्णत्वे ॥ १२२ ॥

( ६ ) **रामचन्द्रः** । एतस्मिन् एनसि प्राप्ते सति गर्दभाजिनंगर्दभस्यचर्म ॥ १२२ ॥

**तेभ्योलब्धेन भैक्षेण वर्तयन्नेककालिकम् ॥ उपस्पृशंस्त्रिषवणंत्वब्देन सविशुध्यति ॥ १२३ ॥**

( १ ) **मेधातिथिः** । प्रातर्मध्याह्नापराह्णेषूपस्पृशनस्नानंकुर्वन्संवत्सरेण पूतोभवति ॥ १२३ ॥

( २ ) **सर्वज्ञनारायणः** । एककालिकं दिने एकवारम् । वर्तयन् भोजनेन प्राणस्थितिंकुर्वन् । उपस्पृशन् स्नानंकुर्व-न् ॥ १२३ ॥

( ३ ) **कुल्लूकः** । तेभ्यः सप्तगृहेभ्योलब्धेन भैक्षेणैककालमाहारंकुर्वन्सायंप्रातर्मध्यंदिनेषु च स्नानमाचरन्सोवकीर्णी-संवत्सरेणैव विशुध्यति ॥ १२३ ॥

( ४ ) **राघवानन्दः** । उपस्पृशन् स्नानंकुर्वाणएव शुध्यतीतिभावः ॥ १२३ ॥

( ५ ) **नन्दनः** । तेभ्योऽगारेभ्यः वर्तयञ्जीवन् ऐककालिकमिति स्वार्थे ठक्प्रत्यः । उपस्पर्शनंस्नानम् ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । तेभ्यः सप्तागारेभ्यः । त्रिषवणं त्रिकालम् । उपस्पृशन् स्नानंकुर्वन् ॥ १२३ ॥

**जातिभ्रंशकरंकर्म कृत्वान्यतममिच्छया ॥ चरेत्सान्तपनंकृच्छ्रंप्राजापत्यमनिच्छया ॥ १२४ ॥**

( १ ) **मेधातिथिः** । समाप्तान्युपपातकानि । अन्यतममित्यनुवादोनह्निनिमित्तानांसमाहारसंभवःसमुदायविवक्षायां नचकस्यचित्प्रायश्चित्तमुपदिशति । कोहि मनुष्यः सर्वाणि जातिभ्रंशकराण्यकार्याणिकुर्यात् । एकएवशब्दः प्रायश्चित्तानुदेशोऽशास्त्रताप्रसङ्गेन च साहित्यविवक्षाप्युक्ता लक्षणत्वेन श्रवणात्पुरुषंप्रतिनिमित्तानामतः प्रत्येकंवाक्यपरिसमाप्तिर्यस्यपितापितामहःसोमंनपिबेदित्यन्यतरस्य पितुःपितामहस्य वासोममपीतवतोभवत्येव पशुर्यथासत्यप्युभयश्रवणेयद्युभयंहविरिरितियाच्यादित्यन्यतरहविर्विनाशेपिभवत्येवपंचशरावः । एवंसर्वप्रायश्चित्तेषु द्रष्टव्यम् । इच्छयेति विवक्षितमनिच्छयेतिच प्राजापत्यसान्तपनयोःस्वरूपंवक्ष्यति ॥ १२४ ॥

( २ ) **सर्वज्ञनारायणः** । जातिभ्रंशकरं पूर्वोक्तम् । इच्छया कामतः । सांतपनं सप्ताहसाध्यम् ॥ १२४ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य रुजः कृत्वेत्यादिजातिभ्रंशकर्मोक्तंतन्मध्यादन्यतमंकर्मविशेषंइच्छातः कृत्वा वक्ष्यमाणं सान्तपनंसप्ताहसाध्यंकुर्यात् । अनिच्छातः पुनः कृत्वा प्राजापत्यंवक्ष्यमाणंचरेत् ॥ १२४ ॥

( ४ ) **राघवानन्दः** । उक्तजातिभ्रंशकरमनूद्य प्रायश्चित्तमाह जातिभ्रंशेति । इच्छया कृत्वेत्यन्वयः सान्तपनादिव्रतज्ञातस्य लक्षणं वक्ष्यमाणम् । अनिच्छयातुप्राजापत्यं कृच्छ्रम् ॥ १२४ ॥

( ५ ) **नन्दनः** । जातिभ्रंशकरमिति । ब्राह्मणस्य रुजःकृत्वेत्याद्युक्तंकर्म ॥ १२४ ॥

( ६ ) **रामचन्द्रः** । इच्छया सान्तपनंकृच्छ्रं अनिच्छया प्राजापत्यंकृच्छ्रम् ॥ १२४ ॥

**सङ्करापात्रकृत्यासु मासंशोधनमैन्दवम् ॥ मलिनीकरणीयेषु तप्तः स्याद्यवकस्त्र्यहम् ॥ १२५ ॥**

( १ ) **मेधातिथिः** । सङ्करीकरणमपात्रीकरणंपूर्वमुक्तेनेति । एवंसङ्करापात्रकृत्यास्विति संज्ञिभेदाद्बहुवचनम् । कृत्याशब्दः प्रत्येकमभिसंबध्यते । कृत्यंकारणम् । ऐन्दवोमासःचान्द्रायणोयावकोयवविकारःपेयलेह्यादिः । अत्राविशेषश्रवणेपीच्छानिच्छयोर्गुरुलघुभावोविज्ञेयः ॥ १२५ ॥

( २ ) **सर्वज्ञनारायणः** । संकरापात्रकृत्यासु संकरीकरणेषु [ अपात्रीकरणेषु ] च मासंक्रियमाणमैन्दवं चान्द्रायणं शोधनम् । मासमिति प्रायश्चित्तसौम्यकृच्छ्रस्यैन्दवपदेन परिग्रहशङ्कानिरासार्थम् । एतत्कामतः पूर्वोक्तंसांतपनम् । तप्तोयावकैः प्रसृतिमात्रं यवानांचूर्णं गोमूत्रेसाधयित्वा तस्य तप्तस्य पानम् । एतदकामतः । कामतोद्विगुणम् ॥ १२५ ॥

( ३ ) **कुल्लूकः** । खराश्वोष्ट्रेत्यादिना सङ्करीकरणान्युक्तानि निन्दितेभ्योधनादानमित्यादिना चापात्रीकरणान्युक्तानि तेषांमध्यादन्यतममिच्छातः कृत्वा चान्द्रायणंमासंशुद्धये कुर्यात् । कृमिकीटवयोहत्येत्यादिना मलिनीकरणान्युक्तानि तन्मध्यादेकमिच्छातः कृत्वा त्रिरात्रंयवागूंक्वथितामश्नीयात् ॥ १२५ ॥

( ४ ) **राघवानन्दः** । एवं संकरापात्रीकरणयोराह संकरेति । ऐंदवं चान्द्रायणम् । यावकोयवागूः सतप्तःत्र्यहं भोक्तव्यः ॥ १२५ ॥

---

( १२५ ) तप्त=तप्तं ( नं ) ( १२५ ) यावकः=यावकं ( नं )

( ५ ) **नन्दनः**। सङ्करणीषु पात्रत्वकरणीषु च क्रियासु ऐन्दवंचान्द्रायणं मलिनीकरणीयेषु मलावहेषु तप्ततप्तकृच्छ्रं त्र्यहंयावकमयावान्नम् ॥ १२५ ॥

( ६ ) **रामचन्द्रः**। संकरः वर्णसंकरः अपात्रहस्ते दानकरणं कृत्यासु अभिचारादिक्रियासु ऐन्दवं चान्द्रायणं मासं मासपर्यन्तं कायशोधनम्। तु पुनः मलिनीकरणीये कर्मणि तप्तः तप्तकृच्छ्रः स्यात् त्र्यहं यावकः यावकाहारः ॥ १२५ ॥

**तुरीयोब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ॥ वैश्येऽष्टमांशोवृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥ १२६ ॥**

( १ ) **मेधातिथिः**। सवनगतयोराजवैश्ययोर्ब्राह्मणसमुक्तं इहतु ततोन्यत्र स्वधर्मानुष्ठानयोश्चतुर्थाष्टमविभागविधिः। तथाच वृत्तस्य ग्रहणंसर्वक्रियार्थम्। त्रीणि वर्षाणि क्षत्रियस्य सार्धवर्षवैश्यस्य नवमासान्शूद्रस्य । यत्तु स्त्रीशूद्रस्य विट्क्षत्रियवधइति तत्परित्यक्तस्वकर्मणोवैश्यवृत्तौवैश्यस्य वृत्ताविव वाऽधर्मस्थितयोःशूद्रस्य वृत्तंद्विजशुश्रूषादि नमहायज्ञानुष्ठानंचवृत्तंशीलंतिष्ठति गहने यथा समये स्वधर्मपराणांविधिवत्प्रायश्चित्तम् ॥ १२६ ॥

( २ ) **सर्वज्ञनारायणः**। क्षत्रादिहत्यासु प्रायश्चित्तमाह तुरीयइति। ब्रह्महत्यायाः ब्रह्महत्यादिप्रायश्चित्तस्य द्वादशवार्षिकादेः तुरीयश्चतुर्थभागः नतु मरणस्य तत्तुरीयभागासंभवात् तत्तदुपाधिविशेषादेव प्रायश्चित्तानामधिकाल्पत्वे। अत्रापि क्षत्रियविशेषणतया वृत्तस्थपदमावर्तनीयम्। वैश्ये हतइतिशेषः । अष्टमांशोब्रह्मवधप्रायश्चित्तस्य। एवं षोडशइत्यत्रापि शूद्रे वृत्तस्थे। अत्रच प्रायश्चित्तं विशेषतउपदिशतापि स्त्रीशूद्रविट्क्षत्रवधइति क्षत्रादिवधानामुपपातकसंज्ञाकरणं तत्संसर्गिणामुपपातकिसंसर्गितया कर्मानधिकाराभावज्ञापनार्थम्। महापानकत्वेह्येषां तत्संसर्गस्य पातित्यहेतुत्वात्। द्विजातिकर्मभ्योहानिःपतनमितिवचनात्प्राक्प्रायश्चित्तात्सर्वकर्महानिःस्यादिति ॥ १२६ ॥

( ३ ) **कुल्लूकः**। ब्रह्महत्यातुरीयोभागः त्रैवार्षिकरूपः द्वादशवार्षिकस्य चतुर्थोभागः। एतच्च प्रायश्चित्तंस्त्रीशूद्रविट्क्षत्रवधइत्युपपातकत्वेनोपदिष्टं। त्रैवार्षिकत्वापेक्षया* गुरुत्वाद्वृत्तस्थक्षत्रियस्य कामतोवधे द्रष्टव्यं। वैश्ये साध्वाचारे कामतोहतेऽष्टमोभागः सार्धवार्षिकंव्रतं शूद्रे वृत्तस्थे कामतोहते नवमासिकंद्रष्टव्यम् ॥ १२६ ॥

( ४ ) **राघवानन्द**। स्त्रीशूद्रक्षत्रियवधोनास्तिकयंचोपपातकमित्युपपातकत्वेनोक्तानां विशेषतः प्रायश्चित्तमाह तुरीयइति। तुरीयस्त्रैवार्षिकः। अष्टमांशः सार्धसांवत्सरिकः। षोडशोंशोनवमासिकः एतद्व्रतस्थक्षत्रियादीनां कामतोवधे। ब्रह्महत्यायाइति तद्धर्मभिक्षामुण्डनादिप्राप्तये वृत्तस्थइतित्रिष्वनुषञ्जनात् ॥ १२६ ॥

( ५ ) **नन्दनः**। क्षत्रियस्य वृत्तस्थस्येतिविपरिणामः ॥ १२६ ॥

( ६ ) **रामचन्द्रः**। इति क्षत्रियादिकर्मकर्तृकमित्यविरोधः। जातिमात्रक्षत्रियवधे वृत्तस्थक्षत्रियवधे ॥ १२६ ॥

**अकामतस्तु राजन्यंविनिपात्य द्विजोत्तमः ॥ वृषभैकसहस्रागादद्यात्सुचरितव्रतः॥ १२७ ॥**

( १ ) **मेधातिथिः**। इदमपरंदानप्रायश्चित्तंसंभवद्वित्तस्य। तपोनास्तीति वक्ष्यति दानेन वधनिर्णेकमित्यादि। अकामतइति नविवक्षितंमहत्त्वात्प्रायश्चित्तस्य। यदिवा सवनगतयोरेवाकामतइति कल्पनीयम्। वृषभएकोयासांसहस्रे ता-वृषभैकसहस्राः ॥ १२७ ॥

( २ ) **सर्वज्ञनारायणः**। यागस्थक्षत्रियविट्घातेतुकामतोब्रह्महव्रतमुक्तमकामतस्तत्राह अकामतइति । वृषभएकोगावश्च स्त्रियःसहस्रमिति वृषभैकसहस्रागावः ॥ १२७ ॥

---

*वार्षिकत्वापेक्षया=मासिकापेक्षया ( अ )

( ३ ) **कुल्लूकः** । अबुद्धिपूर्वकंपुनः क्षत्रियंनिहत्य वृषभैणैकेनाधिकंसहस्रंयासांगवांताआत्मशुद्ध्यर्थंब्राह्मणेभ्योदद्यात् ॥ १२७ ॥

( ४ ) **राघवानन्दः** । तेषामेवाकामतोवधेप्याह अकामतइतिचतुर्भिः । द्विजोत्तमः द्विजउत्तमोयत्र समुदाये सतथा चातुर्वर्ण्यमित्यर्थः । वृषभैकावृषभएकोयासुगोषु एवमेकशतमित्यादिज्ञेयम् ॥ १२७ ॥

( ५ ) **नन्दनः** । कामतोवधएतदुक्तमकामतस्त्वाह अकामतस्तु राजन्यमिति । ऋषभेणैकेनाधिकं सहस्रं यासांताऋषभैकसहस्रागाः ॥ १२७ ॥

**त्र्यब्दंचरेद्वा नियतोजटी ब्रह्महणोव्रतम् ॥ वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः ॥ १२८ ॥**

( १ ) **मेधातिथिः** । आद्योर्धःश्लोकस्तुरीयइतरस्यानुवादोजटीति चीरखट्वाङ्गधारणादिनिवृत्त्यर्थमिति केचित् । तदुक्तंतत्रैवतेधर्मास्तदीयतुरीयभागातिदेशोनान्येषांसत्यपि संभवे सरस्वतीपरिसर्पणादीनामिवप्रयोजनसत्त्वोपपत्तौदूरतइति-ग्रामान्निवृत्तिर्वृक्षमूले कुटींकृत्वेति ॥ १२८ ॥

( २ ) **सर्वज्ञनारायणः** । त्र्यब्दंचरेदिति दानाशक्तौ । एवंच त्र्यब्दब्रह्महव्रतप्रायश्चित्तस्य गोसहस्रदानानुकल्पत्वेनाभिधानात्स्वकल्पितगणनानुरोधेन यत्कैश्चिद्द्वादशवार्षिकव्रतानुकल्पत्वेन षष्ठ्यधिकगोशतत्रयदानं कैश्चिद्द्वादशीत्यधिकगोशतदानंव्यवस्थापितं तद्भ्रमादेवेति मन्तव्यम् ॥ १२८ ॥

( ३ ) **कुल्लूकः** । यद्वा संयतोजटावान्ग्रामाद्विप्रकृष्टवृक्षमूले कृतनिवासोब्रह्महणि यदुक्तंब्रह्महाद्वादशसमाइत्यादि तद्वर्षत्रयंकुर्यात् । नतु तुरीयोब्रह्महत्यायाइत्यनेन पुनरुक्तिर्वाच्या । जटी दूरतरे ग्रामाद्वृक्षमूलनिकेतनइति वचनाद्व्यतिरिक्तशवशिरोध्वजधारणादिसकलधर्मनिवृत्त्यर्थत्वादस्य ग्रन्थस्याकामाधिकाराच्चेदमकामतः अतएवाङ्गलाघवाद्युचितम् ॥ १२८ ॥

( ४ ) **राघवानन्दः** । दुर्वृत्तानां कामतोवधापेक्षया वा विकल्पः । अत्र जटीतिविशेषणात्पूर्वं मुण्डनं बोद्धव्यं । ब्रह्महत्यायाइत्यादिविशेषणं भैक्षचर्याशिरोध्वजादिधारणाद्यर्थं । त्र्यब्दतुरीयांशयोःसमानत्वेऽपि मुण्डनादिभेदेन कामतोऽकामतइति ॥ १२८ ॥

**एतदेव चरेदब्दंप्रायश्चित्तंद्विजोत्तमः ॥ प्रमाप्य वैश्यंवृत्तस्थंदद्याद्वैकशतंगवाम् ॥ १२९ ॥**

( १ ) **मेधातिथिः** । पूर्वत्राष्टमोंशः । अनेन द्वादशोविधीयते । अतुल्यत्वादब्दन्यूनगुणस्य विधिरयमितिविज्ञायते । ननुवृत्तस्थइतिश्रुतंसत्यंसंप्रतिवृत्तस्थोवधकाले प्राङ्निर्गुणइति । यस्तु सर्वदैव वृत्तस्थस्तस्य पूर्ववदितिज्ञेयम् ॥१२९॥

( २ ) **सर्वज्ञनारायणः** । एतदेवेति सवनस्थवैश्यवधे । दद्याद्वैकशतंगवामिति वाकारः समुच्चयार्थः । व्रतान्ते एकवृषाधिकगोशतदानंकार्यमित्यर्थः । अन्यथाहि दानमुक्त्वा तदनुकल्पतया व्रतमुपदिश्येतेति युज्येत । त्रिवर्षानुकल्पसहस्रव्यवस्थाश्रयणेनच वार्षिकगोशतदानस्यासंगतिरेवेति । दद्याच्चैकशतमितिक्वचित्पाठः ॥ १२९ ॥

( ३ ) **कुल्लूकः** । एतदेव द्वादशवार्षिकव्रतमकामतः साध्वाचारंवैश्यंनिहत्य वर्षमेकंब्राह्मणादिः कुर्यात् । एकाधिकंवा गोशतंदद्यात् ॥ १२९ ॥

( ४ ) **राघवानन्दः** । एतदेवेति । जटादिधारणवृक्षमूलनिकेतनादिविशिष्टंगोदानेनसह विकल्पितम् ॥ १२९ ॥

( ५ ) **नन्दनः** । ऋषभैणैकाधिकंगवांशतं एतदेव प्रकृतम् ॥ १२९ ॥

**एतदेव व्रतंकृत्स्नंषण्मासान् शूद्रहा चरेत् ॥ वृषभैकादशावापि दद्याद्विप्राय गाः सिताः॥ १३० ॥**

( १ ) **मेधातिथिः** । अत्रापि मासषट्कंनवकंच वृत्तस्थेतरभेदेनयोज्यम् । यथाश्रुतसंख्यंच गोदानंसर्वत्र वैकल्पिकं द्विजोत्तमग्रहणंच प्रदर्शनार्थं सिता न वर्णतः किंतर्हि शुद्धिसामान्याद्याबहुक्षीराळ्यपत्याअनष्टप्रजाश्च ॥ १३० ॥

( २ ) **सर्वज्ञनारायणः** । एवं वृत्तस्थशूद्रवधोक्तद्वादशवार्षिकब्रह्महव्रतषोडशांशचरणाशक्तौ । एतदेव व्रतमितिकचित्पाठः । तत्र वृत्तस्थशूद्रवधोक्तद्वादशवार्षिकब्रह्महव्रतषोडशांशचरणाशक्तौ । एतदेवव्रतमिति षण्मासव्रताचरणं वृषभाधिकदशगोदानसहितमत्रोपदिष्टम् । उभयतोधिकस्यैकस्यवृषभस्यदानविधानाद्वैश्येप्यधिकएकोवृषभोदेयइतिगम्यते । वसेद्दूरतरइत्यादिनाच ग्रामान्तादिवासोवैकल्पिकोब्रह्महव्रतोक्तोत्रप्युदस्यते । जटीतित्वनुवादमात्रंशवशिरोधारणाद्यङ्गान्तरनिवृत्त्यर्थम् । अत्रच द्विजोत्तमइत्यभिधानाद्ब्राह्मणस्यैव तद्व्रतमन्येषां स्वोत्कृष्टवर्णहननेभविष्ये बहुतराभिधानात्किंचिदाधिक्यमुन्नेयम् । सिताइति शूद्रवधप्रायश्चित्तउक्तत्वात्तत्रैवान्वितम् ॥ १३० ॥

( ३ ) **कुल्लूकः** । एतदप्यकामतइदमेव व्रतंशूद्रहा षण्मासंचरेत् । वृषभएकादशोयासांगवांताः शुक्लवर्णाब्राह्मणाय दद्यात् ॥ १३० ॥

( ४ ) **राघवानन्दः** । वृत्तस्थशूद्रेप्येवमित्याह एतदेवेति ॥ १३० ॥

( ६ ) **रामचन्द्रः** । वृषभ एकादशोयासांतावृषभैकादशगाः ॥ १३० ॥

**मार्जारनकुलौ हत्वा चाषंमण्डूकमेव च ॥ श्वगोधोलूककाकांश्च शूद्रहत्याव्रतंचरेत् ॥ १३१ ॥**

( १ ) **मेधातिथिः** । अतिमहत्त्वात्प्रायश्चित्तस्य समुदायविषे प्रायश्चित्तमेतत् । ननुचात्र साहित्यंनविवक्षितमित्युक्तंयतोजातिभ्रंशकरादिषु कथंचैतत् एवंसर्वे चैकस्य हन्तारउपनयेयुः । अतिरिक्तसद्भावे न तन्निमित्तंस्यात् । अर्थान्तरमेवैतद्दशनैवतच्छक्यते वक्तुंतेनावृत्तेनहन्ता । अधिकवधेत्वन्यद्भविष्यति नैतच्छूयते न्यूने वधे च न स्यात् । पयःपिबेदित्यादिप्रत्येकविधेनसंबध्यतेनसमुदायेप्रत्येकंवाक्यपरिसमाप्तिः समुदाये वा । अर्थान्तरे तु नचेत्स्थातुंलभ्यन्ते । यत्तावदुच्यते साहित्यंनविवक्षतमिति तत्र नविवक्ष्यते यत्र प्रत्येकंसंबन्धिवाच्यमर्थवद्यथा यस्य पितापितामहः सोमंनपिबेदिति यत्रपुनरविवक्ष्यमाणे वाच्यमेवानर्थकंतत्र तत्परिहारार्थंयुक्ताविवक्षा यथावक्ष्यति सहस्रस्य प्रमापणे पूर्णेवानसीति अत्राविवक्षायांसहस्रस्येतिव्यर्थंस्यात् । एवंहिशास्त्रान्तरविरोधादतिमहत्त्वे युक्तैवविवक्षा । ननुचपदोपादानतायामपि लक्षणागतस्य विशेषणस्याविवक्षैव यथायस्योभयंहविरित्युभयशब्दार्थंतत्रतुल्यं अत्र हविरुभयमितिच पदद्वये वक्ष्यमाणेवाक्यभेदोहविरत्रोभयवेति यत्रावस्थाभेदस्तत्रवाक्यभेदपरिहारार्थमावश्यंभेदोऽन्यतरस्मिन्व्यवहितोगुणोवाहातव्योभवति । तथोभयशब्दे सर्वमस्ति । यच्छेदिति हविःशब्देन व्यवहितोभवतिसंख्यानुरूपत्वात्गुणानुवादकत्वंवास्य संभवति । अविवक्षिते च तस्मिन्परिशिष्टंवाक्यमर्थवादएव इहपुनःसमुदायविवक्षायां सहस्रशब्दविवक्षायां वा कृत्स्नमेववाक्यमनर्थकंतथाह्येतावद्वाक्यंस्यात् । स्थानतांप्रमाणतांतथास्यांशूद्रहत्याव्रतमित्येतावद्वक्तव्यंस्यात्प्रमाणेशूद्रहत्येति एतावतामेवाहिंसासंभवति । तथान्यदप्येवंजातीयकंविशेषणंनविवक्ष्येत समानन्यायत्वात् । फलदानंतु वृक्षाणामिति ततश्च सर्वमसमंजसंस्यात् । पौरुषेयंचेदंवाक्यंनैववैदिकं वेदेच कस्य पुरुषस्यप्रयोगः किमर्थमनर्थकंप्रयुक्तमिति । इहतु बुद्धिपूर्वे प्रयोगे मात्रायामप्ययुक्तमानर्थक्येतत्साहित्यविवक्षाविशेषणविवक्षायुक्तैवयच्चोक्तंकथंचेदिति सर्वमेवेतिच तत्राप्याखेटकमृगयादावदाहिनोवोपपाद्यतयैव यदप्युक्तमतिरिक्तसद्भावेन तन्निमित्तमिति तदप्ययुक्तं नत्वाधिक्ये पूर्वेषांनाशोन्यूनेषु च तथैव कल्पना कार्या ॥ १३१ ॥

( २ ) **सर्वज्ञनारायणः**। चाषः स्वर्णकाकः शतपत्रः। शूद्रहत्याव्रतं कुर्याच्छूद्रवधंप्राप्यतप्तकृच्छ्रमितिसंबन्धोक्तम्। एतच्च कामकृते ॥ १३१ ॥

( ३ ) **कुल्लूकः**। बिडालनकुलचाषभेककुक्कुरगोधापेचककाकानामेकैकंहत्वा शूद्रहत्याव्रतंस्त्रीशूद्रवधइत्युपपातकप्रायश्चित्तंगोवधव्रतंचान्द्रायणंचरेत्। नतु शूद्रे ज्ञेयस्तुषोडशेत्यादिप्रायश्चित्तं पापस्यलघुत्वात् चान्द्रायणमप्येतत्कामतोऽभ्यासादिविषये द्रष्टव्यम् ॥ १३१ ॥

( ४ ) **राघवानन्दः**। मार्जाराद्यष्टानां कामतः प्रत्येकवधे षण्मासव्रतमाह मार्जारेति। चाषं शतपत्राख्यपक्षिणम्। चान्द्रायणमितिकेचित्। तत्र श्रुतस्यैव नियामकत्वादुपपातकत्वेन चान्द्रायणमिति विशेषतोनुक्तस्थलइतिभावः ॥१३१ ॥

( ५ ) **नन्दनः**। शूद्रहत्याव्रतंप्रत्येकंचरेदिति ॥ १३१ ॥

( ६ ) **रामचन्द्रः**। चाषं स्वर्णकाकम् नीलकण्ठश्वागोधोलूकः शूद्रहत्याव्रतंकामकृतेतप्तकृच्छ्रंचरेत् ॥ १३१ ॥

## पयःपिबेत्त्रिरात्रं वा योजनंवाऽध्वनोव्रजेत् ॥ उपस्पृशेत्स्रवन्त्यांवा सूक्तंवाब्दैवतंजपेत् ॥ १३२ ॥

( १ ) **मेधातिथिः**। प्रत्येकंवधेप्रायश्चित्तान्तरमुच्यते पयःक्षीरंप्रसिद्धतरत्वात्प्रयोगस्य नापः सत्यामप्युभयार्थतायां यथा पयसा जुहोति। यथैववराहशब्दोमेघे पर्वते सूकरे वर्तते प्रसिद्धतरसूकरेनपर्वतादिप्रवृत्तौसमानाधिकरण्यमपेक्ष्यतेव-राहोहिमवान्वराहः पारियात्रइति। माकृतेच भोजनेभक्तादौ शरीरस्थित्यर्थंप्राप्ते तत्स्थानेपयोविधीयमानमन्यदन्नंनिवर्त-यति। तपोरूपत्वाच्चैतदेव प्रतिपत्तुंयुक्तंतापयतिदुःखयतीतितपोऽतोयथा प्राणायामघृतप्राशनमितिनात्रपौरस्यभोजनंनिव-र्त्यते। एवमिहनाचमनंनिवर्तयति योघृतप्राशनंभोजनान्तरनिमित्तंबाधतइतिनापःपयःपानेनविकल्पिताः। किंतर्हि उपस्पृशे-त् स्रवत्यामिति पयःपानात्तद्गमने अध्वगमनशब्दउक्तः। स्रवन्त्यांस्रवन्तिवचनात्तडागसरसोर्निवृत्तिः। अब्दैवतंआपो-हिष्ठेत्यादि ऋक्समुदायोक्तंपवमानसूक्तंस्मृत्यन्तरेषुकुशरभोजनमेकार्थंलोहदण्डंचदक्षिणेति। व्रजेन्नदेशान्तरप्राप्तिरित्येव किंतर्हिपदाभ्यांगमनम् ॥ १३२ ॥

( २ ) **सर्वज्ञनारायणः**। अकामतस्त्वाह पयःपिबेदिति। पयः क्षीरमल्पम्। योजनंवाध्वनोव्रजेदिति भेषजार्थं तद्धिसायाम्। क्षत्रियादीनां उपस्पृशेदितिद्वयम्। ब्राह्मणस्य उपस्पर्शः स्नानम्। अब्दैवतं आपोहिष्ठेतितृचम् ॥ १३२ ॥

( ३ ) **कुल्लूकः**। अबुद्धिपूर्वकंमार्जारादीनांवधे त्रिरात्रंक्षीरंपिबेत्। अथमन्दानलत्वादिना न समर्थः त्रिरात्रंप्रतियो-जनमध्वनोव्रजेत् अत्राशक्तस्त्रिरात्रंनद्यांस्नायात् तत्राप्यक्षमस्त्रिरात्रमापोहिष्ठेत्यादिसूक्तंजपेत् यथोत्तरंलघुत्वात्पूर्वपूर्वासं-भवउत्तरोत्तरपरिग्रहोनतुवैकल्पिकः ॥ १३२ ॥

( ४ ) **राघवानन्दः**। एषामकामतोवधे प्रायश्चित्तचतुष्टयमाह पयइति। तत्राप्यशक्तितोव्यवस्था न तु वैकल्पिकं उत्तरोत्तरस्य लघुत्वात्। पयोत्र दुग्धं हत्वात्र्यहंपिबेत्क्षीरमितियाज्ञवल्क्योक्तेः। त्रिरात्रं व्रतचतुष्टयेप्यनुगतम्। स्रवन्त्यां पुण्यनद्याम्। अब्दैवतं आपोहिष्ठेति ॥ १३२ ॥

( ५ ) **नन्दनः**। असकृत्कृतविषयमेतत्सकृत्कृतविषयेप्याह पयः पिबेत्त्रिरात्रंवेति। अब्दैवतं हिरण्यवर्णइत्यादिकम् ॥ १३२ ॥

( ६ ) **रामचन्द्रः**। पयः दुग्धं त्रिरात्रंवा पिबेत्। अध्वनो योजनंत्रिरात्रं व्रजेत्। उपस्पृशेदिति भेषजार्थंन कूलायां क्षत्रियवैश्ययोः स्रवंन्त्यां उपस्पृशेत् स्नायात् ॥ १३२ ॥

अभ्रिकार्ष्णायसींदद्यात्सर्पंहत्वा द्विजोत्तमः ॥ पलालभारकंषण्ढे सैसकंचैकमाषकम् ॥ १३३ ॥

( १ ) मेधातिथिः । द्विजोत्तमग्रहणमतंत्रं तीक्ष्णामायसीमभ्रींकार्ष्णायसीग्रहणंकाष्ठादिनिवृत्त्यर्थंषण्ढे नपुंसके तच्चतुर्विधं अरेतोवा सरेतोवाऽप्रवृत्तेइन्द्रियमुभयव्यञ्जनंवा सप्राणिमात्रसंबन्धेनैतत्प्रायश्चित्तंब्राह्मणस्य शूद्रस्य मेषस्य छागस्यच ॥ १३३ ॥

( २ ) सर्वज्ञनारायणः । अभ्रि खनित्रं कार्ष्णायसीं सर्वलोहाम् । द्विजोत्तमइति विप्रोपीत्यर्थः । पलालभारकं धान्यतृणभारं पञ्चकृष्णलसीससहितम् । षण्डे नपुंसके मानुषएव ॥ १३३ ॥

( ३ ) कुल्लूकः । सर्पंहत्वा ब्राह्मणाय तीक्ष्णाग्रंलोहदण्डंदद्यात् । नपुंसकंहत्वा पलालभारंसीसकंच माषकंब्राह्मणाय दद्यात् ॥ १३३ ॥

( ४ ) राघवानन्दः । वैधेतरहिंसायाः पापजनकत्वं ज्ञापयन् प्रायश्चित्तमाह अभ्रिमिति द्वादशभिः ॥ अभ्रिःस्त्री काष्ठ कुद्दालः ॥ अभ्रिस्तीक्ष्णकोणयुक्तातीक्ष्णामलोहदंडंच षण्देहतेतच्चतुर्विधं कृत्रिमाकृत्रिमौभयव्यञ्जनसदंशेन्द्रियंचेति मनुष्यादिसाधारणकर्मानधिकृतत्वाविशेषात् । माषकं माषपरिमितसीसकं पलालभारसहितम् । [ विशुद्धिमतापितृजत्वेपिजातंतुबादरायणइत्यत्रस्त्रीपुंसोर्ग्रहणंनतुषंढस्यपुण्यपापयोर्वचनस्यैवप्रमाणत्वादिति ][2] ॥ १३३ ॥

( ५ ) नन्दनः । अभ्रिःकुद्दालकः पलालभारंदद्यादित्येव माषकंमाषपरिमाणम् ॥ १३३ ॥

( ६ ) रामचन्द्रः । सर्पंहत्वा कार्ष्णायसीमभ्रिं लोहदण्डं दद्यात् । षण्ढे नपुंसके हते धान्यस्य पलालभारं दद्यात् धान्यस्यपलालभारंपवारमिति । सैसकंमाषकं सीसस्य माषमात्रम् ॥ १३३ ॥

घृतकुम्भंवराहे तु तिलद्रोणंतु तित्तिरौ ॥ शुकेद्विहायनंवत्संक्रौंचंहत्वा त्रिहायनम् ॥ १३४ ॥

( १ ) मेधातिथिः । वराहःसूकरस्तस्मिन्हते घृतघटंदद्यात् । चतुराढकद्रोणोहायनःहायनोवर्षवत्सोगोजातीयोबालः ॥ १३४ ॥

( २ ) सर्वज्ञनारायणः । कुम्भः पलशतद्वयम् । द्रोणमष्टाविंशतिपलाधिकपलशतम् । द्विहायनं द्विवर्ष.वत्सं गोः ॥ १३४ ॥

( ३ ) कुल्लूकः । सूकरे हते घृतपूर्णं घटंब्राह्मणाय दद्यात्तित्तिरिसंज्ञिनि पक्षिणि हते चतुराढकपरिमाणंतिलंदद्यात् शुके हते द्विवर्षवत्संक्रौंचाख्यंपक्षिणंहत्वा त्रिवर्षवत्संब्राह्मणाय दद्यात् ॥ १३४ ॥

( ४ ) राघवानन्दः । घृतकुम्भं मध्यमघटपूर्णघटम् । तिलद्रोणं द्रोणपरिमितंतिलं तित्तिरौ पक्षिणि हते । द्विहायनं वत्सं द्व्यब्दवयसं गोवत्सं दद्यादित्यध्याहार्यम् । एवं त्रिहायणम् ॥ १३४ ॥

( ५ ) नन्दनः । अत्रापि दद्यादित्यनुवर्तते द्विहायनमिति देववत्सरविशेषणम् ॥ १३४ ॥

( ६ ) रामचन्द्रः । वराहेतु हते घृतकुंभं कुम्भः पलशतरूपः । क्रौंचंहत्वा त्रिहायनंवत्सं ॥ १३४ ॥

हत्वा हंसंबलाकांच बकंबर्हिणमेव च ॥ वानरंश्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ १३५ ॥

( १ ) मेधातिथिः । हंसादयः पक्षिणोवानरोमर्कटः । स्पर्शयेद्दद्यात्प्रत्येकवधेचैतत्प्रायश्चित्तं द्वन्द्वानिर्देशादित्युक्तम् ॥ १३५ ॥

---

( १३३ ) षंढे=सञ्ज्ञे ( ग ) ( १ ) सदंशे = प्रवृत्ते ( राघ २ ) ( २ ) राघ० २

( २ ) सर्वज्ञनारायणः । बलाका विशकण्ठी । बर्हिणं मयूरम् । भासं शतपत्राख्यपक्षिणम् । स्पर्शयेत् दद्यात् ॥ १३५ ॥

( ३ ) कुल्लूकः । हंसबलाकामयूरवानरश्येनभासाख्यंपक्षिणामन्यतमंहत्वा ब्राह्मणाय गांदद्यात् ॥ १३५ ॥

( ४ ) राघवानन्दः । बर्हिणं मयूरं । स्पर्शयेद्दद्याद्गांधेनुम् ॥ १३५ ॥

( ५ ) नन्दनः । स्पर्शयेत्प्रत्येकम् ॥ १३५ ॥

( ६ ) रामचन्द्रः । हंसादीन्हत्वा ब्राह्मणाय गाः स्पर्शयेद्दद्यात् ॥ १३५ ॥

## वासोदद्याद्धयंहत्वा पंचनीलान्वृषान्गजम् ॥ अजमेषावनड्वाहंखरंहत्वैकहायनम् ॥ १३६ ॥

( १ ) मेधातिथिः । हयोश्वोगजोहस्ति अनड्वान्पुंगवोऽजमेषवधे खरवधे । अनडुत्साहचर्यादेकहायनोगोवत्सः ॥ १३६ ॥

( २ ) सर्वज्ञनारायणः । वासः प्रकृष्टं हयं केनाप्यपरिगृहीतम् । एवं गजमपि । अजमेषौ हत्वा अनड्वाहमनोवहनशक्तं वृषं दद्यात् । एकहायनं वत्सम् ॥ १३६ ॥

( ३ ) कुल्लूकः । अश्वंहत्वा वस्त्रंदद्याद्धस्तिनंहत्वा पंचनीलान्वृषभान्दद्यात्प्रत्येकंछागमेषौ हत्वा वृषभंदद्याद्गर्दभंहत्वैकवर्षवत्संदद्यात् ॥ १३६ ॥

( ४ ) राघवानन्दः । नीलान् नीलवर्णान्पश्चगोवृषान्गजंहत्वादद्यादित्यन्वयः । अनड्वाहं वृषं दद्यादित्यनुषङ्गः । एकहायनं वत्सम् ॥ १३६ ॥

( ५ ) नन्दनः । एकहायनमनड्वाहमित्यनुवर्तते ॥ १३६ ॥

( ६ ) रामचन्द्रः । अजमेषौ हत्वाअनड्वाहं । खरंहत्वा एकहायनंवत्सं दद्यात् ॥ १३६ ॥

## क्रव्यादांस्तु मृगान्हत्वा धेनुंदद्यात्पयस्विनीम् ॥ अक्रव्यादान्वत्सतरीमुष्ट्रंहत्वा तु कृष्णलम् ॥ १३७ ॥

( १ ) मेधातिथिः । क्रव्यादास्तरक्षुसिंहमृगादयः । अक्रव्यादाःरुरुपृषदादयः । धेनुर्गौरेव । कृष्णलंविशिष्टपरिमाणंसुवर्णं दण्डाधिकारशास्त्रपरिभाषा । अन्यत्रलौकिकमेव शतकृष्णलंघृतमायुष्कामइति ॥ १३७ ॥

( २ ) सर्वज्ञनारायणः । क्रव्यादान् मांसादान् मृगान् हिंस्रव्याघ्रादीन् । धेनुं सवत्सां पयस्विनीं बहुक्षीराम् । अक्रव्यादान् मृगादीन् हरिणादीन् । वत्सतरीं द्विहायनीं गाम् । उष्ट्रमपरिगृहीतम् । कृष्णलं सुवर्णकृष्णलम् ॥ १३७ ॥

( ३ ) कुल्लूकः । आममांसभक्षिणीमृगान्व्याघ्रादीन्हत्वा बहुक्षीरांधेनुंदद्यात् आममांसभक्षकान्हरिणादीन्हत्वा प्रौढवत्सिकांदद्यात् उष्ट्रंहत्वा सुवर्णकृष्णलंरक्तिकांदद्यात् ॥ १३७ ॥

( ४ ) राघवानन्दः । क्रव्यादान् व्याघ्रादीन् । पयस्विनीं प्रभूतदुग्धाम् । वत्सतरीं प्रौढवत्सिकाम् । कृष्णलं सुवर्णस्य ॥ १३७ ॥

( ५ ) नन्दनः । क्रव्यादान्मृगान्व्याघ्रादीन् कृष्णलंकृष्णलपरिमाणंसुवर्णम् ॥ १३७ ॥

( ६ ) रामचन्द्रः । क्रव्यादान् व्याघ्रादीन् । मृगान् अक्रव्यादान् कुरंगादीन् । वत्सतरीं धेनुं उष्ट्रं हत्वा कृष्णलं सुवर्णस्य कृष्णलं सुवर्णस्य कृष्णलमात्रम् ॥ १३७ ॥

जिनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये ॥ चतुर्णामपि वर्णानांनारीर्हत्वाऽनवस्थिताः ॥ १३८ ॥

[ वर्णानामानुपूर्व्येणत्रयाणामविशेषतः । अमत्याच प्रमाप्य स्त्रींशूद्रहत्याव्रतंचरेत् ॥ १॥ ] ‡

( १ ) **मेधातिथिः** । अनवस्थिताबहुभिःसंगच्छमाना वेश्यावृत्तमाचरन्त्योऽनवस्थिताभवन्ति । नपुनःशास्त्रातिक्रममात्रंतथासति न परपुरुषसंप्रयोगएवलभ्यते । वर्णक्रमेणजीनादिदानात् जीनंचर्मपुटंमुटकाधारादिप्रयोजनं कार्मुकंधनुः बस्तःछागोऽविर्मेषः । पृथग्ग्रहणंलिङ्गादुक्तंसमुदायेप्रायश्चित्तमिति । केचिद्धत्वेतिपठन्ति तदयुक्तंहिंसाप्रकरणात् ॥ १३८ ॥

( २ ) **सर्वज्ञनारायणः** । जीनंचर्मपुटम् । कार्मुकं धनुः । बस्तश्छागः । अविर्मेषः । पृथक् क्रमादेकैकमारणे । अनवस्थिताः अनियताः अनियतवर्गगानारीः ॥ १३८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणादिवर्णस्त्रियोलोभादुत्कृष्टापकृष्टपुरुषव्यभिचारिणीर्हत्वा ब्राह्मणादिक्रमेण चर्मपुटधनुश्छागमेषान् शुद्ध्यर्थंदद्यात् ॥ १३८ ॥

( ४ ) **राघवानन्दः** । जीनं चर्मपुटम् । कार्मुकं धनुः । बस्तश्छागः । अविर्मेषः । अनवस्थिताः अनेकपुंदुष्टाः । अकामतइतिशेषः । तथाच याज्ञवल्क्यः ॥ दुर्वृत्ताब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्यतु । दृतिं धनुर्बस्तमविंक्रमाद्दद्याद्विशुद्धये ॥ अप्रदुष्टांस्त्रियं हत्वाशूद्रहत्याव्रतंचरेदिति ॥ १३८ ॥

( ५ ) **नन्दनः** । अनवस्थिताअतिचारिणीः ॥ १३८ ॥

( ६ ) **रामचन्द्रः** । अनवस्थितांव्यभिचारिणीं हत्वा जीनंधृतजलाधारं चर्मकोशं ब्राह्मणीवधे दद्यात् । क्षत्रियायाः वधे कार्मुकंदद्यात् । वैश्यायाःवधे बस्तंछागंदद्यात् । शूद्रायावधेअविंदद्यात् अन्तआचामेत् ॥ १३८ ॥

दानेन वधनिर्णेकंसर्पादीनामशक्नुवन् ॥ एकैकशश्चरेत्कृच्छ्रंद्विजः पापापनुत्तये ॥ १३९ ॥

( १ ) **मेधातिथिः** । निर्णेकः शुद्धिः हिंसायांदानमुख्यमिति दर्शयतिनचतस्यैकैकशइतिलिङ्गात्केचित्समुदायेपीति । द्विजइत्यादिपादपूरणं अविशेषग्रहणेकृच्छ्रशब्दंप्राजापत्यइतिस्मरन्ति ॥ १३९ ॥

( २ ) **सर्वज्ञनारायणः** । दानेनेति सर्पादीनां न मार्जारादीनाम् । एकैकशः प्रत्येकम् । कृच्छ्रं प्राजापत्यं तस्यैव कृच्छ्रेषु प्रथमपाठात् । तथाच कार्ष्णायसदानाभिसक्तावेकप्राजापत्यचरणमन्येषु मूल्योत्कर्षापकर्षापेक्षया प्राजापत्यार्धतद्वैगुण्यादि योज्यम् ॥ १३९ ॥

( ३ ) **कुल्लूकः** । अभ्रिप्रभृतीनामभावाद्दानेन सर्वपापनिर्हरणंकर्तुमसमर्थोब्राह्मणादिः प्रत्येकंवधे कृच्छ्रंप्राथम्यात्प्राजापत्यंद्विजः पापनिर्हरणार्थंचरेत् । सर्पादयश्चाभ्रिकार्ष्णायसींदद्यादित्येवमारभ्यैतत्पर्यन्तागृह्यन्ते ॥ १३९ ॥

( ४ ) **राघवानन्दः** । सर्पादिस्त्रीपर्यन्तानामुक्तप्रायश्चित्ताशक्तौ प्रतिस्वं कृच्छ्रमेकं चरेदित्याह दानेनेति । द्विजोनरमात्रं छत्रिन्यायेन अतएवोपसंहारे वक्ष्यति ॥ एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिरिति । कामतस्तु चान्द्रायणं एतच्च कामकृतइति वक्ष्यति ॥ १३९ ॥

( ५ ) **नन्दनः** । वधनिर्णेकंवधपापशुद्धिम् ॥ १३९ ॥

( ६ ) **रामचन्द्रः** । सर्पादिवधनिर्णेकं प्रायश्चित्तं दानेनकर्तुमशक्नुवन्तदाएकैकशः कृच्छ्रंद्विजः चरेत् ॥ १३९ ॥

---

‡ ( क, ग, ञ, ठ, ड ) ( १३८ ) जीन=नील ( ट, ठ)=जीर्ण ( ड )

**अस्थिमतांतु सत्वानांसहस्रस्य प्रमापणे ॥ पूर्णेचानस्यनस्थ्नांतु शूद्रहत्याव्रतंचरेत् ॥ १४० ॥**

( १ ) **मेधातिथिः** । स्वल्पशरीरत्वमिहास्थिमत्त्वमनस्थिसाहचर्यात् । अनःशकटस्तत्संख्यानमेतत् । उक्तार्थंसत्येव ॥ १४० ॥

( २ ) **सर्वज्ञनारायणः** । अस्थन्वतां अस्थिमतां अनस्थिसाहचर्यात्क्षुद्रजन्तूनांज्येष्ठककलासादीनां सहस्रस्य । अनस्थ्नां पिपीलिकादीनां पूर्णेऽनसि शकटवाह्ये भारे हते शूद्रहत्याव्रतं तप्तकृच्छ्रम् ॥ १४० ॥

( ३ ) **कुल्लूकः** । अनस्थिसाहचर्यादस्थिमतांप्राणिनांककलासादीनांसहस्रस्य वधे शूद्रवधप्रायश्चित्तमौपदेशिकं-कुर्यात् अस्थिरहितानांचमत्कुणादीनांशकटपरिमितानांवधे तदेवप्रायश्चित्तंकुर्यात् ॥ १४० ॥

( ५ **नन्दनः** । अनस्थ्नांसत्त्वानांपूर्णे ऽनस्यनस्थभिः सत्त्वैः प्रमापितैः पूर्णे शकटेपूर्णे पर्याप्तभारइति यावत् ॥१४०॥

( ६ ) **रामचन्द्रः** । अस्थिमतां सत्त्वानांककलासादि पूर्णे चानसिशकटे प्रमापणे अनस्थ्नांतु पुनः अनसिपूर्णे शूद्रहत्या व्रतं कृच्छ्रं चरेत् ॥ १४० ॥

**किंचिदेव तु विप्राय दद्यादस्थिमतांवधे ॥ अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति॥१४१॥**

( १ ) **मेधातिथिः** । किंचिदिति स्वल्पधनमुच्यते । परिमाणतः प्रयोजनोमूल्यतश्च पूर्वेषामेवप्रत्येकवधएतत् । अनुक्तनिष्कृतयश्चास्थिमन्तोज्ञेयाः आत्मनिरोधः प्राणायामः मलिनीयेषुयत्कृमीकीटवयोग्रहणंतदुपचितग्रहपरिमाणार्थं इदंतु ये क्षुद्रामशकादयः ॥ १४१ ॥

( २ ) **सर्वज्ञनारायणः** । अस्थिमतां सहस्रोनवधे किंचिद्दद्यादिति पणोदेयइतिसुमन्तुवचनात्पणोदेयः । अनस्थ्नामिति शकटभारादूनवधएतत ॥ १४१ ॥

( ३ ) **कुल्लूकः** । अस्थिमतांक्षुद्रजन्तूनांककलासादीनांप्रत्येकंवधे किंचिदेवदद्यात् । अस्थिमतांवधे पणोदेयइतिसुमन्तुस्मरणात्किंचिदेवेति । पणोबोद्धव्यः अनस्थिमतांतु यूकामत्कुणादीनांप्रत्येकंवधे प्राणायामेन शुद्धोभवति । प्राणायामश्च॥ सव्याहृतिकांसप्रणवांसावित्रींशिरसासह ॥ त्रिःपठेदायतप्राणः प्राणायामः सउच्यते इति वसिष्ठप्रोक्तलक्षणोग्राह्यः ॥१४१॥

( ४ ) **राघवानन्दः** । किंच उक्तसर्पाद्यतिरिक्तानामल्पदेहानामस्थिमतां वधे किंचिद्देयम् । अनस्थिमतां शकटान्न्यूने प्राणायामः । तत्र प्राणायामलक्षणं वसिष्ठः प्राह ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसासह ॥ त्रिः पठेदायतप्राणः प्राणायामः सउच्यतइति ॥ गायत्र्यनधिकारिणांमनसा । संन्यासिनां प्रणवेनैवेत्युक्तम् ॥ १४१ ॥

( ५ ) **नन्दनः** । किञ्चिच्छब्देन मुष्ट्यष्टकमुच्यतइति व्याचक्षते ॥ अष्टमुष्टिर्भवेत्किंचित्किंचिच्चत्वारिपुष्कलं ॥ पुष्कलानि चचत्वारिपूर्णपात्रंविधीयतइति ॥ १४१ ॥

( ६ ) **रामचन्द्रः** । अस्थिमतां वधे किंचित् अष्टमुष्टि किंचिद्यच्छेत किंचिद्विप्रायदद्यात् ॥ १४१ ॥

**फलदानांतु वृक्षाणांछेदने जप्यमृक्शतम् ॥ गुल्मवल्लीलतानांच पुष्पितानांच वीरुधाम् ॥१४२॥**

( १ ) **मेधातिथिः** । फलदाआम्रकण्टक्यादयः ऋक्शतंजपोद्विजानांशूद्रस्य तर्हिकिंकेचिदाहुरिन्धनार्थमशुष्काणामि त्युपपातकप्रायश्चित्तंतच्च नातिमहत्त्वाद्यदि नतद्भवति किमर्थंतर्ह्युपपातकेषूपदेशोभूयोभूयः प्रवृत्तस्यादिति । तस्माच्छूद्रस्य द्वि रात्रत्रिरात्रादीत्येवकल्पयेत् । गुल्मादयोव्याख्याताः लतावृक्षशाखाः ॥ १४२ ॥

( २ ) **सर्वज्ञनारायणः** । ऋक्शतं गायत्र्याऋचःशतावृत्त्याजपइत्यर्थः । गुल्मावीजपूराद्याः । वल्यः कूष्माण्डा-

चाः । लतावृक्षारोहिण्योवल्यः । वीरुत् दूरप्रसारिणी लता । पुष्पितानांचेति सर्वत्रान्वितम् । तथा फलदानामित्यपि ॥ १४२ ॥

( ३ ) **कुल्लूकः** । फलदानामाम्रादीनांवृक्षाणांगुल्मानांकुब्जकादीनांवल्लीनांगुडूच्यादीनांलतानांवृक्षशाखासक्तानांपुष्पितानांच वीरुधांकूष्माण्डादीनांप्रत्येकंछेदने पापप्रमोचनार्थंसाविश्यादिऋक्शतंजपनीयं ॥ इन्धनार्थमशुष्काणांद्रुमाणामवपातनम् इत्यादेरुपपातकमध्ये पठितस्य गुरुप्रायश्चित्ताभिधानात् । इदंफलवद्वृक्षादिछेदने लघुप्रायश्चित्तंसकृदबुद्धिपूर्वकविषयंवेदितव्यम् ॥ १४२ ॥

( ४ ) **राघवानन्दः** । वृक्षादिवीरुदंतानां छेदेण्याह । ऋक्शतं ऋगत्र गायत्री । वीरुधां कूष्माण्डादीनाम् ॥ १४२ ॥

( ५ ) **नन्दनः** । भक्ष्यफलदायिनांपुष्पितानांभोज्यपुष्पाणाम् ॥ १४२ ॥

( ६ ) **रामचन्द्रः** । फलादिविरुद्धे हतानां ऋक्शतं गायत्रीसंजाप्यम् ॥ १४२ ॥

**अन्नाद्यजानांसत्त्वानांरसजानांच सर्वशः ॥ फलपुष्पोद्भवानांच घृतप्राशोविशोधनम् ॥ १४३ ॥**

( १ ) **मेधातिथिः** । अन्नाद्भक्तसक्त्वादेश्चिरस्थिताद्यानिजायन्ते सत्वानि प्राणिनः । रसजानामितिगुडोदश्विदादिभ्य उदुंबरमशकादीनि फलपुष्पोद्भवानि । घृतप्राशः अशनप्रारंभेघृतंपातव्यंप्रशब्दआदिकर्मणि तेननप्राकृतंभोजनंनिवर्तते । यथापयोव्रतादौतथाचैतेप्राणिनः क्षुद्रजन्तवोयेषांवधेप्राणायामउक्तस्तदपेक्षयोपवासोऽतिमहान् तस्मादाचमनवत् घृतमाशनम ॥ १४३ ॥

( २ ) **सर्वज्ञनारायणः** । अन्नाद्यमोदनादि । सत्त्वानांकृमीणाम् । रसोगुडादिस्तज्जानाम् । घृतप्राशोघृतमात्रेणैकैकदिनवर्तनं शकटेष्वप्यन्तवधे । अन्यथातु प्राणायामएव ॥ १४३ ॥

( ३ ) **कुल्लूकः** । अन्नादिषु जातानांगुडादिरसजातानांचोदुम्बरादिफलसंभवानांमधूकादिपुष्पोद्भवानांच सर्वप्राणिनांवधे घृतप्राशनंपापशोधनम् ॥ १४३ ॥

( ४ ) **राघवानन्दः** । किंच अन्नेति । अन्नाद्यजानां धान्यादिषुजातानां सत्त्वानां प्राणिनाम् । घृतप्राशः दिनमेकं किंचिद् घृतमात्रप्राशनम् ॥ १४३ ॥

( ५ ) **नन्दनः** । अन्नाद्यजानांवधइति शेषः ॥ १४३ ॥

( ६ ) **रामचन्द्रः** । अन्नाद्यजानां सत्त्वानां सूनानाम् ॥ १४३ ॥

**कृष्टजानामोषधीनांजातानांच स्वयंवने ॥ वृथालम्भेऽनुगच्छेद्गांदिनमेकंपयोव्रतः ॥ १४४ ॥**

( १ ) **मेधातिथिः** । फालकुद्दालादिनायाःकृष्टेजायन्ते । याश्चस्वयंवने तासांवृथारंभेगवादिप्रयोजनेन विनाछेदनं गवामनुगमनं । दिनमेकंपरमहर्षायपरिचर्यते । पयोव्रतंभोजनान्तरनिवृत्तिः ॥ १४४ ॥

( २ ) **सर्वज्ञनारायणः** । कृष्टजानां कृष्या जनितानाम् । वृथा अग्निगवादिप्रयोजनंविना । आलम्भे हिंसायाम् । अनुगच्छेत् गोहत्याव्रतवत् । पयोव्रतः क्षीरमात्राहारः । ज्ञानात्कृतमुक्तक्रमेण । अज्ञानकृतंतदर्धेन ॥ १४४ ॥

( ३ ) **कुल्लूकः** । कर्षणपूर्वकजातानामौषधीनांषष्टिकादीनांवने च स्वयमुत्पन्नानांनीवारादीनांनिःप्रयोजनच्छेदने क्षीराहारः एवंकमहोगोरनुगमनंकुर्यात् ॥ १४४ ॥

( ४ ) **राघवानन्दः** । कृष्टजातानां कृषिजातानाम् । वने स्वयंजातानां नीवारादीनाम् । एतेषामुपपातकप्रकरणपठित

त्वेऽपि लघुप्रायश्चित्तं सकृदबुद्धिपूर्वविषयकमितिकेचित् । तन्नवाचनिकत्वात् । अतएव याज्ञवल्क्यः ॥ वृक्षगुल्मलतावी-रुच्छेदेने जप्यमृक्शतमिति उपपातकप्रकरणपठनंतु निवृत्तितात्पर्यकमिति । अतएव वक्ष्यति ज्ञानाज्ञानकृतमिति ॥१४४॥

( ५ ) **नन्दनः** । वृथालम्भोवृथाच्छेदकः पयोव्रतः क्षीरान्नः ॥ १४४ ॥

( ६ ) **रामचन्द्रः** । कृष्टजानां हलेनोत्पादितानां ओषधीनां वृथालम्भे वृथाछेदे गांअनुगच्छेत ॥ १४४ ॥

**एतैर्व्रतैरपोह्यंस्यादेनोहिंसासमुद्भवम् ॥ ज्ञानाज्ञानकृतंकृत्स्नंश्रृणुतानाद्यभक्षणे ॥ १४५ ॥**

( १ ) **मेधातिथिः** । हिंसासमुद्भवंहिंसातउत्पन्नमेनः पापमेतैरनन्तरोक्तैःप्रायश्चित्तैरपोह्यमपनोद्यंबुद्धिपूर्वकृतमबुद्धिपूर्वकृतंवा अनाद्यभक्षणेऽभक्ष्यभक्षणेयथापापमपोह्यते तथाश्रुणुत ॥ १४५ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनोऽमोक्षंशोध्यम् । अनाद्यस्याभक्ष्यस्य भक्षणे प्रायश्चित्तमितिशेषः ॥ १४५ ॥

( ३ ) **कुल्लूकः** । एभिरुक्तप्रायश्चित्तैर्हिंसाजनितपापंज्ञानाज्ञानकृतंनिर्हरणीयं । इदानीमभक्ष्यभक्षणप्रायश्चित्तंवक्ष्य-माणंश्रृणुत ॥ १४५ ॥

( ४ ) **राघवानन्दः** । हिंसाप्रायश्चित्तमुपसंहरन् अभक्ष्यभक्षणे तत्प्रतिजानीते एतैरितिषोडशभिः । ज्ञानाज्ञानकृतमेवापोह्यंनाश्यम् । अनाद्यभक्षणे प्रायश्चित्तं श्रृण्वन्त्वित्यन्वयः ॥ १४५ ॥

( ५ ) **नन्दनः** । एतैरुक्तैः अनाद्यमभक्ष्यम् ॥ १४५ ॥

**अज्ञानाद्वारुणींपीत्वा संस्कारेणैव शुध्यति ॥ मतिपूर्वमनिर्देश्यंप्रणान्तिकमिति स्थितिः ॥१४६॥**

( १ ) **मेधातिथिः** । मेखलादीनांनिषेधादुपनयनंविज्ञायते । ततश्चस्मृत्यन्तरात्तप्तकृच्छ्रसहितं एवंहिगौतमः अमत्या मद्यपानेपयोघृतमुदकंवायुश्चेतित्र्यहंतप्तातितप्तकृच्छ्रव्रतोऽस्यसंस्कारः । सुराचात्र नपैष्टीकिंतर्हिगौडीमाध्वी कुतएतत्स्मृत्यन्तरदर्शनात् ॥ प्रमादान्मद्यमसुरांसकृत्पीत्वाद्विजोत्तमः । गोमूत्रयावकाहारोदशरात्रेणशुध्यति ॥ पैष्ट्याश्च प्रमादपाने मत्यवायः प्रायश्चित्तात् । व्रतंविधितोविज्ञायसंवत्सरं कणभक्षश्चान्द्रायणाभ्यासोवा । मतिपूर्वतयोरपिपानएतदनिर्देश्यंकिंतर्हियेनप्राणानामन्तोभवतिकिंतत्यत्र मुख्या या सुरोक्ता । अभ्यासेचैतद्द्रष्टव्यं सकृत्पाने सुरापाने चान्द्रायणमाचरेदिति श्रेयमत्रव्यवस्थाबुद्धिपूर्वपैष्ट्याःपानेप्राणान्तमेवतस्याएवाबुद्धिपूर्वसकृत्पानेकणभक्षणचांद्रायणाभ्यासोऽबुद्धिपूर्वेबुद्धिपूर्वेच । अन्येषांतु मद्यपानांबुद्धिपूर्वत्वे चांद्रायणमभ्यसेदिति । अबुद्धिपूर्वसकृत्पानेतप्तकृच्छ्रसंस्कारगोमूत्रयावकद्रव्या । अबुद्धिपूर्वमसकृत्पानेपैष्टीवत् ॥ १४६ ॥

( २ ) **सर्वज्ञनारायणः** । वारुणीं गौडीं माध्वींच क्षत्रियविशौ त्रिविधसुरेतरद्राक्षादिमद्यंच ब्राह्मणः पीत्वेत्यर्थः । संस्कारेणैव पुनःसंस्कारेणैव नतु तंविना तच्च गौतमोक्ततप्तकृच्छ्रप्रायश्चित्ताचरणंकृत्वा कार्यम् । मतिपूर्वमपि तत्पाने प्राणान्तिकं प्रायश्चित्तमनिर्देश्यं नादेष्टव्यं किंतु स्मृत्यन्तरोक्तप्रायश्चित्तान्तरमेव संस्कारसहितं कार्यम् ॥ १४६ ॥

( ३ ) **कुल्लूकः** । महापातकप्रकरणव्यवधानेनास्याम्नानान्नेदंमुख्यपैष्टीसुराविषयंवचनंकिन्तु तदितरविषयं । तत्र यथाचैका तथा सर्वागौडीमाध्व्योर्मुख्यसुरासाम्यबोधनमितरमद्यापेक्षया ब्राह्मणस्य प्रायश्चित्तगौरवार्थमित्युक्तं तेनाबुद्धिपूर्वकंगौडींमाध्वींच पीत्वा गोतमोक्तंतप्तकृच्छ्रंकृत्वा पुनः संस्कारेणैव शुध्यति । तथा च गौतमः अमत्यामद्यपाने पयो-

---

( १४५ ) श्रृणुतानाद्यभक्षणे=श्रृणुतान्नाद्यभक्षणे ( क, ख, ग, च, ण )

घृतमुदकंवायुंप्रत्यहंतप्तकृच्छ्रः ततोऽस्य संस्कारः इत्थमेव व्याख्यातंभविष्यपुराणे ॥ अकामतः कृते पाने गौडीमाध्व्योर्नराधिप ॥ तप्तकृच्छ्रविधानंस्याद्गौतमेन यथोदितम् ॥ बुद्धिपूर्वकन्तु पैष्टीतरमद्यपाने प्राणान्तिकमनिर्देश्यमिति शास्त्रमर्यादा। तथा गौडीमाध्व्योर्ज्ञानात्पाने मरणनिषेधादितरमद्यापेक्षया गुरुत्वाच्च मानवमेव कणान्वाभक्षयेदब्दमिति प्रायश्चित्तमुक्तं। अतएव गौडीमाध्व्योः कामतः पानानुवृत्तौ भविष्यपुराणे ॥ यद्वाऽस्मिन्नेव विषये मानवीयंप्रकल्पयेत् ॥ कणान्वा भक्षयेदब्दंपिण्याकंवा सकृन्निशि ॥ सुरापापापनुत्त्यर्थंबालवासाजटीध्वजीति पैष्टीगौडीमाध्वीव्यतिरिक्तपुलस्त्योक्तपानसादिनवविधमद्यस्य प्रत्येकंपाने लघुत्वात्संस्कारमात्रमेव केवलमन्यद्वा लघुत्वात्प्रायश्चित्तंब्राह्मणस्य युक्तम् बुद्धिपूर्वपानसादिमद्यपाने तु ॥ मतिपूर्वंसुरापाने कृते वै ज्ञानतोगुरु ॥ कृच्छ्रातिकृच्छ्रौ भवतः पुनः संस्कारएवहीति भविष्यपुराणीयमन्यद्विविधंमुन्यन्तरोक्तम् ॥ १४६ ॥

( ४ ) **राघवानन्दः**। तत्रादौ सुरापानादिविषयकमाह षड्भिः । वारुणीं पैष्ट्यतिरिक्तां महापातकप्रकरणोल्लङ्घनात्। तदुक्तं गौतमेन गौडीमाध्व्योरमत्या पाने पयआदित्र्यहं तप्तकृच्छ्रं कृत्वा पुनः संस्कारइति ॥ भविष्येतु ॥ अकामतःकृते पाने गौडीमाध्व्योर्नराधिप ॥ तप्तकृच्छ्रविधानंस्याद्गौतमेन यथोदितमिति ॥ अत्र हेतुर्मतिपूर्वमिति । पैष्ट्यतिरिक्तभक्षणे प्राणान्तिकमनिर्देश्यं नप्रायश्चित्तत्वेन कथितमिति ॥ मत्यापाने त्वसुरयोः कृते वै ज्ञानतोगुरू॥ कृच्छ्रातिकृच्छ्रौ भवतः पुनः संस्कारमर्हतीतिभविष्योक्तेः। असुरयोरनुदराकवदीषत्सुरयोर्गौडीमाध्व्योः ॥ १४६ ॥

( ५ ) **नन्दनः**। संस्कारेणोपनयनेनमतिपूर्ववारुणीपानं अनिर्देश्यंप्रायश्चित्तव्रतोपदेशैन वक्तुमशक्यं तेन प्राणान्तिकमिति प्राणान्तिकंप्रायश्चित्तंयुक्तम् ॥ १४६ ॥

( ६ ) **रामचन्द्रः**। वारुणीं पैष्टीं कुशवारि क्वथितोदकं त्र्यहं पिबेत्। मतिपूर्वं प्राणान्तिकं प्रायश्चितं अनिर्देश्यं नादेष्टव्यं किंतु स्मृत्यन्तरोक्तं संस्कारसहितं प्रायश्चित्तं भवति ॥ १४६ ॥

**अपः सुराभाजनस्थामद्यभाण्डस्थितास्तथा ॥ पञ्चरात्रंपिबेत्पीत्वा शङ्खपुष्पीश्रितंपयः॥१४७॥**

( १ ) **मेधातिथिः**। यत्रसुरारसोऽनुभूयतेतत्र तद्भाजनस्थानामपांपाने प्रायश्चित्तमेतत् । ननुच मद्यशब्दस्य सामान्यशब्दत्वान्मद्यभाण्डस्थिताइत्येवसिद्धे अपःसुरेत्यादिनवक्तव्यंसत्यंयद्यपि सुरामद्ययोर्मद्यपानेऽत्यन्तप्रायश्चित्तभेदोनस्यात् सतितस्मिन्कल्पनायाश्चानुज्ञातत्वात्। सुराभाजनस्थानामधिकतरततोऽतः कल्पनावृत्त्यर्थंसमप्रायश्चित्तवचनं पंचरात्रंशंखपुष्पीघृतंपयोघृतग्रहणात्पयःक्षीरमेव क्षीरहविषोरेवघृतशब्दः। सुघृतशब्दःसाधुः शंखपुष्पीनामौषधिस्तया सूष्टंक्वथितंपंचाहानिपयः पातव्यम् ॥ १४७ ॥

( २ ) **सर्वज्ञनारायणः**। उपलभ्यगन्धसुराभाण्डस्थजलपाने क्षत्रियविशोः ब्राह्मणस्यतुतादृङ्मद्यभाण्डस्थजलपाने शङ्खपुष्पीसंज्ञकौषधिसहितं यत्क्षीरं श्रितं तत्पानं पञ्चरात्रम् ॥ १४७ ॥

( ३ ) **कुल्लूकः**। पैष्टीसुराभाण्डे तदितरमद्यभाण्डेऽवस्थिताअपः सुरारसगन्धवर्जिताः पीत्वा शंखपुष्पाख्यौषधिप्रक्षेपेण पक्वंक्षीरंनतूदकंशंखपुष्पीविपक्केनत्र्यहंक्षीरेण वर्तयेदिति बोधायनस्मरणात्। पञ्चरात्रंपिबेत् सुरामद्ययोः सर्वत्रैव गुरुलघुप्रायश्चित्ताभिधानादिहापि ज्ञानाज्ञानादिप्रकारभेदेन विषयसमीकरणंसमाधेयम्। वाचनिकमेव प्रायश्चित्तंसाध्यमिति मेधातिथिराह ॥ १४७ ॥

( ४ ) **राघवानन्दः**। सुराभाजनस्था सुरात्र पैष्टी शङ्खपुष्पीश्रतं चोरिकाशङ्खपुष्पीस्यादित्यौषधिस्तस्या श्रतंपक्कंक्षीरम् ॥ १४७ ॥

( ५ ) नन्दनः । सुरा पैष्ट्यादिर्मद्यंमदकरद्रव्यम् ॥ १४७ ॥

( ६ ) रामचन्द्रः । सुराभाजनस्थाः तथा मद्यभाण्डस्थिताः अपः पीत्वा शङ्खपुष्पीश्रितं क्वथितंपयः पञ्चरात्रं पिबेत् ॥ १४७ ॥

**स्पृष्ट्वा दत्वा च मदिरांविधिवत्प्रतिगृह्य च॥ शूद्रोच्छिष्टाश्च पीत्वापः कुशवारिपिबेत्र्यहम्॥१४८॥**

( १ ) मेधातिथिः । विधिवत्प्रतिगृह्य स्वस्तिवाचनिकेन एवंदत्वेत्यपि व्रीह्यादौनदोषः । कुशोदर्भः ॥ १४८ ॥

( २ ) सर्वज्ञनारायणः । मदिरां सुरां दत्वा शूद्रायापि पिबेत् कुशवारि । विधिवत्प्रतिगृह्यचेति जन्मान्तरे यत्प्रामुमिच्छति तस्य दानार्हत्वात्सुराप्राप्तिकामः सुरामपि विधिवद्ददाति युज्यते । तथा शूद्रपीतोच्छिष्टाअपः पीत्वा विधिवत्सांतपनकुशोदकग्रहणमन्त्रेण संस्कृतं कुशमिश्रितं वारि त्र्यहं पिबेदित्यर्थः ॥ १४८ ॥

( ३) कुल्लूकः । सुरांस्पृष्ट्वा दत्वा च स्वस्तिवाचनपूर्वकंच प्रतिगृह्य शूद्रोच्छिष्टाश्चापः पीत्वा प्रतिगृह्येत्युपादानात् ब्राह्मणोदर्भक्वथितमुदकंत्र्यहंपिबेत् ॥ १४८ ॥

( ४ ) राघवानन्दः । किंच स्पृष्ट्वेति । स्पृष्ट्वादिवाद्यर्थं दत्वा परस्मै प्रतिगृह्यस्वस्तिपूर्वकम् । कुशवारिकुशोदकम्[१] ॥१४८॥

( ५ ) नन्दनः । विधिवत्प्रतिगृह्य सौत्रामण्यादौ ॥ १४८ ॥

( ६ ) रामचन्द्रः । त्र्यहं कुशवारि क्वथितोदकं पिबेत् ॥ १४८ ॥

**ब्राह्मणस्तुसुरापस्य गन्धमाघ्राय सोमपः ॥ प्राणानप्सु त्रिरायम्य घृतंप्राश्य विशुध्यति ॥१४९॥**

( १ ) मेधातिथिः । सुरापस्यगन्धमिति सुरायाएवजाठरेणाग्निना धातुभिश्चसंयोगेनगन्धघ्राणेलघीयः । भाण्डान्तरस्थितायाः प्रमिरघ्रायैव अन्येतुव्याचक्षते सुरापस्य ब्राह्मणस्य आघ्राणेप्येतदेव सोमपइतिवचनाद्दर्शपूर्णमासयाजिनः-कल्पेन । घृतंप्राश्येति अत्रापि न भोजनान्तरनिवृत्तिः सुराग्रहणान्नमद्यस्य ॥ १४९ ॥

( २ ) सर्वज्ञनारायणः । गन्धं तत्पीतसुरागन्धम् । अप्सु जलान्तः प्राणानायम्याघमर्षणेन । त्रिः त्रिःपाठेन । घृतं घृतमात्रं तद्दिने । असोमपस्य प्राणायाममात्रम् ॥ १४९ ॥

( ३ ) कुल्लूकः । ब्राह्मणः पुनः कृतसोमयागः सुरापस्य मुखसंबन्धिनंगन्धंघ्रात्वा जलमध्ये प्राणायामत्रयंकृत्वा घृतंप्राश्य विशुद्धोभवति ॥ १४९ ॥

( ४ ) राघवानन्दः । सोमपः सोमोत्रयज्ञावशिष्टः सुरापस्य पुंसः ॥ १४९ ॥

( ५ ) नन्दनः । प्राणानप्सु त्रिरायम्याप्सु निमज्य त्रीन्प्राणायामान्कृत्वा ॥ १४९ ॥

( ६ ) रामचन्द्रः । सोमपोब्राह्मणः सुरापस्य गन्धमाघ्राय अप्सु त्रिः प्राणान् आयम्य घृतंप्राश्य विशुध्यति । असोमपस्य द्विजस्य प्राणायामात्रम् ॥ १४९ ॥

**अज्ञानात्प्राश्य विण्मूत्रंसुरासंस्पृष्टमेव च ॥ पुनः संस्कारमर्हन्ति त्रयोवर्णाद्विजातयः ॥ १५० ॥**

( १ ) मेधातिथिः । विण्मूत्रग्रहणंरेतसउपलक्षणार्थं । स्मृत्यन्तरे पुरीषकुणपरेतसांप्राशनेचैवमिति । किंजातीयविण्मूत्रप्राशनएतन्मनुष्याणामेव अन्येषांतु वक्ष्यामः । अत्रापि तप्तकृच्छ्रंसमुच्चीयते । दर्शितश्चहेतुः द्विजातयइति विवक्षितं शूद्रस्यान्यद्वक्ष्यामः अज्ञानादित्यनुवादः । कोहिज्ञात्वाविण्मूत्रमश्नीयात् यथामद्यपानएतदेवोक्तंमद्यंभुंक्त्वाचरेत्कृच्छ्रमिति यदितुसंस्कारोभवति तदावचनात्तुल्यमेव ॥ १५० ॥

---

( १ ) कुशोदकम्=कुशैःसहक्वथितमुदकम् ( न )

( २ ) **सर्वज्ञनारायणः** । अज्ञानादपि किंपुनर्ज्ञानतः सुरासंस्पृष्टमनुपलभ्यमानगन्धम् । पुनःसंस्कारः स्मृत्यन्तरोक्तप्रायश्चित्तान्तः । द्विजातयइत्यस्य ब्राह्मणमात्रपरतानिरासार्थं त्रयोवर्णाइति ॥ १५० ॥

( ३ ) **कुल्लूकः** । विड्वराहादीनांवक्ष्यमाणत्वादबुद्धिपूर्वकंमनुष्यसंबन्धिमूत्रंपुरीषंवा प्राश्य मद्यसुरासंस्पृष्टंच भक्तादिरसंवा प्राश्य द्विजातयस्त्रयोवर्णाः पुनरुपनयनमर्हन्ति ॥ १५० ॥

( ४ ) **राघवानन्दः** । सुरासंस्पृष्टभक्षणेपि सुराभक्षणं भवत्येव । अत्र तादृशरसाद्यज्ञानंविवक्षितं अन्यथापूर्वापर विरोध इति प्राश्यभुक्त्वापुनःसंस्कारमर्हतीत्यन्वयः ॥ १५० ॥

( ५ ) **नन्दनः** । सुरासंसृष्टंद्रव्यमितिशेषः ॥ १५० ॥

( ६ ) **रामचन्द्रः** । सुरासंस्पृष्टमेव ओदनादि । चकाराद्रेतःस्पर्शात् ॥ १५० ॥

**वपनंमेखलादण्डोभैक्ष्यचर्याव्रतानि च ॥ निवर्तन्ते द्विजातीनांपुनःसंस्कारकर्मणि ॥ १५१ ॥**

( १ ) **मेधातिथिः** । व्रतानिवेदव्रतानि तदयुक्तंग्रहणार्थत्वात्तेषांकुतः प्राप्तिः तस्मादान्युपनयनकाले मादिवास्वाप्सीःसायंप्रातःसमिधमादध्याआचार्याधीनोभवन्त्येवमादीनिचव्रतानिनिवर्तन्ते ॥ १५१ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसंगात्पुनःसंस्कारविधिमाह वपनमिति । व्रतानि वेदव्रतानि मधुमांसवर्जनादीनिच । तेन होममात्रं कार्यमित्यर्थः ॥ १५१ ॥

( ३ ) **कुल्लूकः** । शिरोमुण्डनंमेखलाधारणंदण्डधारणंभैक्षाणि व्रतानि च मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तानि पुनरुपनयने द्विजातीनांन भवन्ति ॥ १५१ ॥

( ४ ) **राघवानन्दः** । संस्कारान्तर्गततया वपनादेस्तस्यापि प्राप्तौप्रतिषेधति वपनमिति । व्रतानि मधुमांसादीनि [ नवर्ज्यानि ]* ॥ १५१ ॥

( ६ ) **रामचन्द्रः** । व्रतानि वेदाभ्यासादीनि निवर्तंते ॥ १५१ ॥

**अभोज्यानांतु भुक्त्वान्नंस्त्रीशूद्रोच्छिष्टमेव च ॥ जग्ध्वा मांसमभक्ष्यंच सप्तरात्रंयवान्पिबेत् ॥ १५२ ॥**

( १ ) **मेधातिथि** । येषामन्नंन भुज्यते तेऽभोज्याःपुरुषाअश्रोत्रियस्त्रीसंग्रामजीव्ययाज्ययाजकादयः । शूद्रजातिग्रहणादेवजातिनिर्देशात्स्त्रीग्रहणंलब्धसवर्णार्थंविज्ञेयं उच्छिष्टंतदास्पृष्टं यच्चनित्यमास्यंशुचिःस्त्रीणामिति तस्य विषयोदर्शितः । शूद्रोच्छिष्टानामपापानिपूर्वत्रकृशवायुक्तं इहतु सप्तरात्रंयवानिति । अगामिकत्वादस्यार्थस्योभयत्रभक्ताद्युच्छिष्टभोजनेदंद्रष्टव्यं अभक्ष्यंमांसंप्लवहंसचक्रवाकादीनां इदंतुबुद्धिपूर्वकमभ्यासभक्षणे द्रष्टव्यं अन्यत्र शेषंपूपवसेदहरिति । एत्देवपयःपीत्वा सूकरोष्ट्रादिभ्योअन्यत्रतत्रप्रतिपदंप्रायश्चित्तान्तराम्नानात् । सक्तुपानंयवकपानंभवत्येव ॥ १५२ ॥

( २ ) **सर्वज्ञनारायणः** । अभोज्यानां राजादीनाम् । स्त्रियः सवर्णाया अप्युच्छिष्टम् । शूद्रोच्छिष्टंचान्नम् । अभक्ष्यंमांसं जालपादादीनाम् । यवान् यवागूं पिबेत् स्मृत्यन्तरोक्तप्रसृतयावकविधिना । एतच्च कामतःकृतेऽनिन्दिताभोज्यान्नाशने तु द्विगुणादि तत्रतत्रोह्यम् ॥ १५२ ॥

( ३ ) **कुल्लूकः** । अभोज्यानांन्नाश्रोत्रियकृते यज्ञइत्याद्युक्तानामन्नंभुक्त्वा जलमिश्रितसक्तुरूपेण यवागूरूपेण वा यवान्पानयोग्यान्कृत्वा सप्तरात्रंपिबेत् । अमुष्मिन्नेव विषये मत्या भुक्त्वा चरेत्कृच्छ्रमिति चतुर्थाध्याये प्रायश्चित्तमुक्तंतेन

---

* राघ० २

सह वैकल्पितं विकल्पश्च कर्तृशक्त्यपेक्षः तथाद्विजातिस्त्रीणामुच्छिष्टंशूद्रोच्छिष्टंवा भुक्त्वैतदेव कुर्यात्तथा क्रव्यादसूकरोष्ट्राणामित्यादिना यद्विशेषप्रायश्चित्तंतन्निषिद्धमांसंभुक्त्वेदमेव कुर्यात् ॥ १५२ ॥

( ४ ) **राघवानन्दः** । कदन्नभक्षणविषयकमाह । अभोज्यानां नाश्रोत्रियहुतेयज्ञइत्यादिचतुर्थाध्यायोक्तानांविशेषतोऽनुक्तनिष्कृतीनांप्रायश्चित्तार्थमनुवादमात्रम् । अभक्ष्यं पूर्वंभक्षणीयत्वेन निषिद्धं विशेषतोनुक्तप्रायश्चित्तंच कुच्छ्राशक्तपरंवा । यवान् सक्तून् ॥ १५२ ॥

( ६ ) **रामचन्द्रः** । जग्ध्वामांसं च पुनः अभक्ष्यं वस्तु जग्ध्वा सप्तरात्रं यवान् यवागूं पिबेत ॥ १५२ ॥

## शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः ॥ तावद्भवत्यप्रयतोयावत्तन्न व्रजत्यधः ॥१५३॥

( १ ) **मेधातिथिः** । अमेध्यानिशुक्तानि दधिभक्ष्यंच शुक्तेष्वित्येतत्रयाभ्यनुज्ञानाद्यस्तुसत्यपिशुक्तत्वेभक्ष्यतायाविहितत्वान्नैषविधिःपवित्रंहितदितिस्मरन्ति । कषायावैद्यकप्रसिद्धाअनेकौषधिसंयोगेन येक्वाथ्यन्ते । अप्रयतोऽशुचिर्यावद्व्रजत्यधः अधोगमनंजीर्णानांमूत्रपुरीषभावेन निष्क्रामणाद्यदिवापक्वाशयप्राप्तिः ॥ १५३ ॥

( २ ) **सर्वज्ञनारायणः** । शुक्तान्यतिकालादिनाम्लतांगतानि । कषायान् गुडूच्यादिक्वाथान् । मेध्यान्यपि सामान्यतोऽनिषिद्धान्यपि । अप्रयतःकर्मानधिकारी नाधोव्रजति पुरीषतां न याति ॥ १५३ ॥

( ३ ) **कुल्लूकः** । यानि स्वभावतोमधुरादिरसानि कालयोगेनोदकपरिणामादिनाम्लभावंव्रजन्ति तानि शुक्तानि कषायान्विभीतकादीन् क्वथितान्यप्रतिषिद्धान्यपि पीत्वा यावन्नजीर्णानि भवन्ति तावदशुचिः पुरुषोभवति ॥ १५३ ॥

( ४ ) **राघवानन्दः** । शुक्तानिहि स्वभावतोमधुराणि कालादाम्लतांगतानि । कषायाणि बिभीतकादिक्वाथांभांसि । अमेध्यानि लशुनादीनि तावदप्रयतोऽशुचिः व्रजत्यधः अपानेन भूमौ निःसरतियावत् ॥ १५३ ॥

( ५ ) **नन्दनः** । शुक्तानि कालातिपत्यास्वरसंपरित्यज्य रसान्तरापन्नानि द्रव्याणि अमेध्यानि लशुनादीनि ॥१५३॥

( ६ ) **रामचन्द्रः** । शुक्तानि कालेनाम्लीभूतानि कषायांश्च गुडूचीहरीतक्यादिकषायान् पीत्वा द्विजः तावदप्रयतोभवतियावदधोन व्रजति । परिपाकेन ॥ १५३ ॥

## विड्वराहखरोष्ट्राणांगोमायोः कपिकाकयोः ॥ प्राश्यमूत्रपुरीषाणि द्विजश्चान्द्रायणंचरेत् ॥१५४॥

( १ ) **मेधातिथिः** । विशेषानुपदेशादमत्यावातुल्यमेवच युक्तं लाघवकल्पनात् ॥ १५४ ॥

( २ ) **सर्वज्ञनारायणः** । गोमायोः सृगालस्य । अज्ञानात्प्राश्यविण्मूत्रमिति तु नरविण्मूत्राशनेपि तदुक्त प्रायश्चित्तान्तेकार्यम् । चान्द्रायणं कामतः ॥ १५४ ॥

( ३ ) **कुल्लूकः** । ग्राम्यसूकरखरोष्ट्रशृगालवानरकाकानांमूत्रंपुरीषंवा द्विजातिर्भुक्त्वा चान्द्रायणंकुर्यात् । शोधनंयत्तुच्छत्राकंविड्वराहंचेत्यनेन विड्वराहग्रामकुक्कुटयोर्बुद्धिपूर्वकभक्षणे पञ्चमाध्याये प्रायश्चित्तमुक्तंतदभ्यासविषये व्याख्यातं । इदन्त्वनभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ॥ १५४ ॥

( ४ ) **राघवानन्दः** । विड्वराहोग्रामसूकरः । गोमायुः सृगालः । एषु प्रत्येकं चान्द्रायणम् ॥ १५४ ॥

( ५ ) **नन्दनः** । पूर्वं सामान्येन मूत्रपुरीषप्राशनेषु पुनस्संस्कारउक्तस्तस्येदानींकंचिदपवादमाह विड्वराहखरोष्ट्राणामिति ॥ १५४ ॥

---

( १ ) कुशोदकम्=कुशैःसहक्वथितमुदकम् ( नं० )

**शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च ॥ अज्ञातंचैव सूनास्थमेतदेव व्रतंचरेत् ॥१५५॥**

( १ ) **मेधातिथिः** । शुष्काणिवल्लूरादीनि भौमानीति कोटरजातानामनिषेधार्थं अज्ञातंमेषस्यमहिषस्येतिप्रकृतेरज्ञानात् । सूनाघातस्थानंयत्रविक्रयार्थंपशवोहन्यन्तेऽतोन्यत्रस्थितस्य लघुप्रायश्चित्तम् । ननुसूनास्थइतिवचनादन्यत्रस्थितस्य प्रायश्चित्ताभावएवयुक्तः नैतदेवंसौनमित्यविशेषेण प्रतिषेधात् । प्रायश्चित्तेतुस्थग्रहणात्तदुत्थितस्य गुरुलघुभावोयुक्ततरस्तदेवचांद्रायणं ज्ञातेतुजातिविशेषेऽभ्यासे सप्तरात्रंयावकपानं । शेषेषूपवसेदहरिति ॥ १५५ ॥

( २ ) **सर्वज्ञनारायणः** । शुष्काणि नीरसानि । भौमानि भूम्युद्भवानि कवकानि छत्राकानि । काष्ठछत्राके तु स्मृत्यन्तरोक्तमल्पप्रसृतप्रायश्चित्तम् । तथा अज्ञातमज्ञातप्रकृतिमांसम् । तथासूनास्थं प्राणिघातस्थानस्थमेव यत्क्रीतं लब्धभागंअंशं । एतदेव चान्द्रायणं कामतोभक्षणे ॥ १५५ ॥

( ३ ) **कुल्लूकः** । वाय्वादिना शोषितानि मांसानि भुक्त्वा भूम्यादिप्रभवाणि छत्राकानि भुक्त्वा भूमिजंवा वृक्षजंवा छत्राकंभक्षयन्ति ये ब्रह्मघ्नांस्तान्विजानीयादिति यमेन वृक्षस्यापि निषेधात् हरिणमांसंवा रासभमांसमिति भक्ष्याभक्ष्यतया यन्नज्ञातं तथा हिंसास्थानंसूना ततोयदानीतंतद्भुक्त्वा चान्द्रायणमेव कुर्यात् ॥ १५५ ॥

( ४ ) **राघवानन्दः** । किंच शुष्काणीति । मांसपदंमत्स्योपलक्षकं भौमानि छत्राकादीनि । कवकानि वार्क्षाणि ॥ भूमिजं वृक्षजं वापि छत्राकं भक्षयन्तिये ॥ ब्रह्मघ्नास्तान्विजानीयादिति यमोक्तेः ॥ सूनास्थं व्याधविक्रीतम् एतदेव चान्द्रायणमेव ॥ ५५ ॥

( ५ ) **नन्दनः** । विपरिणामः तद्वियोगादिकस्य प्राणिविशेषस्येदमित्यविज्ञातं सूनास्थंसूनास्थानस्थितंमांसंच एतद्व्रतंचान्द्रायणम् ॥ १५५ ॥

( ६ ) **रामचन्द्रः** । सूनास्थं प्राणिहिंसास्थानस्थितं कवकानि छत्राकानि वर्जयेत् एतदेव व्रतं चान्द्रायणं चरेत् ॥ १५५ ॥

**क्रव्यादसूकरोष्ट्राणांकुक्कुटानांच भक्षणे ॥ नरकाकखराणांच तप्तकृच्छ्रंविशोधनम् ॥ १५६ ॥**

( १ ) **मेधातिथिः** । चेतिपूर्वश्लोकोत्राकृष्यते तेनविड्वराहादीनांभक्षणएतदेव । द्वितीयेन शब्देन क्रव्यादानांविण्मूत्रप्राशने यदेवविड्वराहादीनां स्मृत्यन्तरेचनरमात्राधिकारेणेहद्विजग्रहणमविवक्षितंद्विजश्चांद्रायणमिति । एवमियंद्विश्लोकीबिडालकाकादन्यत्रापेक्षते अतश्चैतेषामप्युच्छिष्टप्राशनेबिडालादिवत्ततोस्यांत्रिश्लोक्यांसमुद्दिष्टं मूत्रपुरीषंचसर्वेषांप्रतिषिद्धमतश्च यत्क्रव्यादानांमूत्रपुरीषप्राशनेतद्बिडालादीनामपि ॥ १५६ ॥

( २ ) **सर्वज्ञनारायणः** । क्रव्यादाः आममांसादाः व्याघ्रादयः कुक्कुटानां ग्राम्याणाम् । भक्षणे मांसस्य । तप्तकृच्छ्रं ज्ञानतः ॥ १५६ ॥

( ३ ) **कुल्लूकः** । आममांसभक्षिणांग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानांतथामानुषकाकगर्दभानांप्रत्येकंबुद्धिपूर्वकंमांसभक्षणे वक्ष्यमाणंतप्तकृच्छ्रंप्रायश्चित्तंग्राम्यशूकरकुक्कुटयोर्बुद्धिपूर्वकभक्षणे पञ्चमाध्यायेपातित्यमुक्तं तदभ्यासविषये व्याख्यातं इदंतुनाभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ॥ १५६ ॥

( ४ ) **राघवानन्दः** । क्रव्यादः गृध्रादिः । अज्ञातमित्यन्वेति । खरान्तसप्तभक्षणे तप्तकृच्छ्रं पावनम् धीपूर्वभक्षणेतुविड्वराहकुक्कुटयोः पातित्यमितिभेदः ॥ १५६ ॥

( ५ ) **नन्दनः** । भक्षणे मांसभक्षणे ॥ १५६ ॥

मासिकान्नंतु योऽश्नीयादसमावर्तको द्विजः ॥ सत्रीण्यहान्युपवसेदेकाहंचोदके वसेत् ॥ १५७॥

( १ ) **मेधातिथिः** । मासिकमेकोद्दिष्टश्राद्धं कृतेसपिण्डीकरणेप्रतिमासंतुवत्सरमितिआमावास्यस्यतुमासिकव्यपदेशेप्यनुज्ञातत्वात् । काममभ्यर्थितोश्नीयादितिकुतः प्रायश्चित्तं अन्येत्वभ्यर्थितस्यानुज्ञानादनभ्यर्थ्यमानस्योक्तमेवेत्याहुः । असमावर्तकोगुरुकुलेतिष्ठन्नर्थाद्ब्रह्मचार्युच्यते । त्र्यहादन्यतरस्मिन्नहन्युदके वसेत् त्र्यहस्यैवबुद्धौस्थितत्वात्तर्हिचतुर्थमहस्त द्दिवसः ॥ १५७ ॥

( २ ) **सर्वज्ञनारायणः** । मासिकार्थं प्रेतश्राद्धार्थम् । क्वचिन्मासिकान्नमितिपाठः । तत्र मासिकश्राद्धार्थोद्दिष्टमित्यर्थः । असमावर्तकोद्विजोब्रह्मचारी । उदकेवसेदुपवाससबन्धित्रिरात्रप्रथमदिने ॥ १५७ ॥

( ३ ) **कुल्लूकः** । योब्रह्मचारी ब्राह्मणोमासिकश्राद्धसंबन्ध्यन्नमश्नाति एतच्च सपिण्डीकरणात्पूर्वमेकोद्दिष्टश्राद्धार्थोपलक्षणंसत्रिरात्रमुपवसेत्त्रिरात्रमध्यएकस्मिन्नहनि जलमावसेत् ॥ १५७ ॥

( ४ ) **राघवानन्दः** । मासिकान्नं प्रेतोद्देशेन मासिमासि क्रियमाणं श्राद्धम् । असमावृत्तिकः ब्रह्मचारी । एकाहेएव ह दिनत्रयान्तर्गतम् ॥ १५७ ॥

( ५ ) **नन्दनः** । आवर्तकोऽब्राह्मणचारी ॥ १५७ ॥

( ६ ) **रामचन्द्रः** । मासिकस्यार्थं मासिकश्राद्धार्थम् योऽश्नीयात् असमावर्तकोद्विजः ॥ १५७ ॥

ब्रह्मचारी तु योश्नीयान्मधुमांसंकथंचन ॥ सकृत्वा प्राकृतंकृच्छ्रंव्रतशेषंसमापयेत् ॥ १५८ ॥

( १ ) **मेधातिथिः** । व्रतचारीप्रयुक्तोब्रह्मचर्याश्रमस्थएव । कथंचनापद्यपीत्यर्थःप्राणानामेवचात्ययइत्यापदिविधानात् । असतिदोषे नतन्निर्घातार्थमेतत्प्रायश्चित्तंकिंतर्हिनिमित्तमात्रपर्यवसायिवचनात्क्रियते । प्राकृतंप्राजापत्यंप्रकृतौभवंप्राकृतं सर्वकृच्छ्राणांप्रकृतित्वादेवमुच्यते व्रतशेषंसमापयेत् ॥ १५८ ॥

( २ ) **सर्वज्ञनारायणः** । व्रतचारी ब्रह्मचारिवनस्थविधवाभिक्षुप्रभृतिः । कथंचनाज्ञानात् । प्राकृतं प्रकृतिः प्राजापत्यं तद्रूपं कृच्छ्रम् । स्वार्थेऽण् । व्रतशेषं व्रतं निःशेषं कार्यम् ॥ १५८ ॥

( ३ ) **कुल्लूकः** । योब्रह्मचारीमाक्षिकंमांसंवाऽनिच्छातआपदि वा ऽश्यात्सप्राजापत्यंकृत्वा प्रारब्धब्रह्मचर्यव्रतशेषंसमापयेत् ॥ १५८ ॥

( ४ ) **राघवानन्दः** । किंच ब्रह्मचारीति । प्राकृतं प्राजापत्यम् । व्रतशेषं प्रारब्धवेदाध्ययनादि अकृतप्रायश्चित्तस्य वेदसमाप्तावनधिकारात् ॥ १५८ ॥

( ५ ) **नन्दनः** । व्रतचारीब्रह्मचारी कथंचनाकामतोप्यप्राकृतंनिरुपपदंप्राजापत्यमितियावत् व्रतविशेषंसमापयेद्ब्रह्मचर्यशेषंसमापनयोग्योभवेत् समावृत्तस्यापि व्रतस्थस्यमधुमांसभक्षणेप्रायश्चित्तमेतदितिकेचित् ॥ १५८ ॥

( ६ ) **रामचन्द्रः** । व्रतचारीयो ऽज्ञानान्मधुमांसंसःप्राकृतंप्राजापत्यं कृच्छ्रं कृत्वा ॥ १५८ ॥

बिडालकाकाखूच्छिष्टंजग्ध्वा श्वनकुलस्य च ॥ केशकीटावपन्नंच पिबेद्ब्रह्मसुवर्चलाम् ॥१५९॥

( १ ) **मेधातिथिः** । अकृतप्रायश्चित्तस्यावशिष्टव्रतसमाप्तावनधिकारमाह आखुर्मूषकः । अवपन्नमेतत्संपर्कदूषितं ब्रह्मसुवर्चलांपिष्टोदकेनसह पिबेदेकाहमविशेषात्तेनैवशास्त्रार्थस्यकृतत्वात् ॥ १५९ ॥

---

( १५७ ) असमावर्तको=असमावृत्तिको ( राघ० ) ( १५८ ) ब्रह्मचारी=व्रतचारी ( नं० )

( १५९ ) ब्रह्मसुवर्चलां=ब्राह्मींसुवर्चलां ( न, ल )

( २ ) सर्वज्ञनारायणः । केशकीटावपन्नं केशकीटसहसिद्धम् । ब्रह्मसुवर्चलां श्वेतसुवर्चलां तत्क्वाथं जलंपिबेदेकाहम् । एतत्श्वकाकोच्छिष्टाशनेऽकामकृते अन्येषु तु कामकृतेषु ॥ १५९ ॥

( ३ ) कुल्लूकः । बिडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टंकेशकीटरूपसंसर्गदुष्टंवाऽकृतमृत्क्षेपविशुद्धिकंज्ञात्वा भुक्त्वा ब्रह्मसुवर्चलांकथितमुदकंपिबेत् ॥ १५९ ॥

( ४ ) राघवानन्दः । ब्राह्मींसुवर्चलां तत्कथितमुदकं श्वेतपुष्पा सूर्यप्रिया सुवर्चलेति भारते धृतत्वात् ॥ १५९ ॥

( ५ ) नन्दनः । ब्रह्मसुवर्चलां ब्रह्मसुवर्चलारक्तपुष्पाश्च दंष्ट्रा ॥ १५९ ॥

( ६ ) रामचन्द्रः । कीटकेशावपन्नं तत्सहपक्वं अन्नं ब्राह्मीं सुवर्चलां पिबेत् ॥ १५९ ॥

**अभोज्यमन्नंनात्तव्यमात्मनः शुद्धिमिच्छता ॥ अज्ञानभुक्तंतूत्तार्यंशोध्यंवाप्याशु शोधनैः॥१६०॥**

( १ ) मेधातिथिः । आद्योर्धःश्लोकोनुवादः अज्ञातभुक्तशुद्ध्यर्थमित्येतद्विधीयते समनन्तरंवमितव्यमित्यर्थः । क्षिप्रंवाशोधनैःप्रार्याश्चित्तैःशोध्यं अन्येतुशोधनानिहरीतक्यादीनि रेचनान्याहुः । गौतमीयेचेदमुदाहरन्ति । अभोज्यभोजनेपुरीषाभावइति तदेतदसाधकं उपवासेनापि निष्पुरीषत्वोपपत्तेस्तस्माद्भ्रान्तौयथाश्रुतप्रायश्चित्तमेव वेदितव्यम् ॥ १६० ॥

( २ ) सर्वज्ञनारायणः । संदिह्यमानभोज्यत्वमपि । अज्ञानेभुक्तं पश्चादभोज्यत्वेन ज्ञातं उत्तार्यं वमनेन । शोध्यंचाप्याशु नत्वतिचिरेण शोधनैः ब्रह्मसुवर्चलापानादिभिः । शोध्यंवाप्याशुशोधनैरितिपाठे वमनाशक्तौ बहुभिःशोधनैः शीघ्रं शोध्यमित्यर्थः ॥ १६० ॥

( ३ ) कुल्लूकः । आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नंनादनीयं । प्रमादात्तु भुक्तंवमितव्यं तदसंभवे प्रायश्चित्तैः क्षिप्रंशोधनीयं । वमनपक्षे तु लघुप्रायश्चित्तंभवत्येव ज्ञानतः पुनः पूर्वोक्तंप्रायश्चित्तम् ॥ १६० ॥

( ४ ) राघवानन्दः । किंच अभोज्येति । शुद्धिं प्रायत्यं । दैवाद्भुक्तंचेत्पुनरुत्तार्यं । उद्वमितव्यंआशुशोधनैः प्राणायामादिभिः ॥ १६० ॥

( ५ ) नन्दनः । प्रायश्चित्तंकरिष्यामीति निश्चित्याभोज्यमन्नमदनीयन्नात्तव्यं तथाकृते प्रायश्चित्तगौरवमस्तीत्यभिप्रायेणोक्तमात्मनः शुद्धिमिच्छतेत्युद्धार्यमुद्गार्यंशोध्यंविरेच्यंशोधनैर्विरोचनद्रव्यैः ॥ १६० ॥

( ६ ) रामचन्द्रः । नात्तव्यं नभक्षणीयम् । अज्ञातभुक्तंतूत्तार्यंवमितव्यम् ॥ १६० ॥

**एषोनाद्यादनस्योक्तोव्रतानांविविधोविधिः ॥ स्तेयदोषापहर्तॄणांव्रतानांश्रूयतां विधिः ॥ १६१ ॥**

( १ ) मेधातिथिः । व्रतानामनाद्यादनस्याभक्ष्यभक्षणस्यस्तेयंतद्दोषशमस्तमपहरन्तियानिव्रतानि तेषामिदानींविधिरुच्यते ॥ १६१ ॥

( २ ) सर्वज्ञनारायणः । स्तेयदोषापहर्तॄणां महापातकेतरस्तेयदोषहराणाम् ॥ १६१ ॥

( ३ ) कुल्लूकः । अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्नानाप्रकारविधानमुक्तं स्तेयपापहारिणांविधानमधुना श्रूयताम् ॥ १६१ ॥

( ४ ) राघवानन्दः । अभोज्यान्नभक्षणप्रकरणमुपसंहरंस्तेयप्रायश्चित्तंप्रजितानीते एषेत्यष्टभिः । [ स्तेयदोषापहर्तॄणां स्तेयकृतदोषनाशकानां व्रतानाम् । स्तेयमत्र सुवर्णनिक्षेपाभ्यामतिरिक्तद्रव्यहरणम् । तेषांविधिःप्रकारः ][1] ॥ १६१ ॥

( ५ ) नन्दनः । अनाद्यभक्ष्यम् ॥ १६१ ॥

---

१ राघ० २, न, श

( ६ ) **रामचन्द्रः** । अनाद्यदनस्य अभक्ष्यभक्षणस्य एषः विधिः उक्तः । अपहर्तॄणां अन्नाद्यवहराणां व्रतानां नियमानां स्तेयदोषविधिः श्रूयतां ॥ १६१ ॥

**धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः॥ स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥१६२॥**

( १ ) **मेधातिथिः** । द्विजोत्तमग्रहणंप्रदर्शनार्थंक्षत्रियादीनामपि । द्विजोत्तमशब्दसन्निपाताच्चस्वजातीयगृहादिति ब्राह्मणगृहाद्विजायते तेनैतदुक्तंभवति सर्वएववर्णाब्राह्मणगृहात्धनंहृत्वाकृच्छ्राब्देनशुध्येयुः । धनग्रहणात्सर्वस्मिन्धनेसिद्धे धान्यान्नग्रहणंसद्धान्यार्थं अल्पसाराणामन्यंविधिंवक्ष्यति अतःसारभूतप्रधानद्रव्यापहरणइदंविज्ञायते तेषांनहिपरस्परद्रव्यापहरणेब्राह्मणस्यतदीयधनापहारे कतरत्प्रायश्चित्तमुच्यते हिंसाप्रायश्चित्तवत्तुर्याष्टमादिभागकल्पनाकर्तव्या क्षत्रियस्य धने त्रीन् वैश्यस्य सार्धं शूद्रस्य द्वाविंशतिरात्रंवा किंचित्परिमाणे धान्येऽपहृतेदशभ्यःकुंभेभ्यः किंचिदूनेमहत्त्वात्प्रायश्चित्तस्य धनमाप्यैवंकालंनकल्पनेतिविज्ञेयम् । कामादिति श्लोकपूरणंनह्यकामस्य परधनहरणसंभवः । धान्यंव्रीह्यादितदेवापहृतमन्नंसिद्धमांसंच धान्यादीनांप्रत्येकंहरणेऽप्यद्वंकृच्छ्रम् । केचिच्चसमुदायहरणे प्रायश्चित्तमिच्छन्ति गरीयोह्येतत् ॥ १६२॥

( २ ) **सर्वज्ञनारायणः** । अन्नंसिद्धान्नम् । धनं वृत्तिहेतु यथा ब्राह्मणानां निबन्धः क्षत्रवृत्तीनां शरादि वैश्यवृत्तीनां लाङ्गलादीनि । स्वजातीयगृहात् ब्राह्मणगृहात् । ब्राह्मणइत्यादिक्रमेण । कामतोत्यन्ताभ्यासेन करणे कृच्छ्राब्देन वत्सरकृतैः प्राजापत्यैरेव ॥ १६२ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणोब्राह्मणगृहाद्धान्यभक्ताद्यन्नरूपाणि धनचौर्याणीच्छातः कृत्वा नत्वात्मीयभ्रान्त्या नीत्वा संवत्सरंप्राजापत्यव्रताचरणेन शुध्यति एतच्च देशकालद्रव्यपरिमाणस्वामिगुणाद्यपेक्षया महत्त्वादिबोद्धव्यं एवमुत्तरत्रापि ॥ १६२ ॥

( ४ ) **राघवानन्दः** । धान्यं व्रीह्यादिः । अन्नं सिद्धान्नम् कृछ्राब्देन कृच्छ्रंच तदब्दंव्ययितेन । द्विजोत्तमइतिअन्योन्यतज्जातीयपरम् ॥ १६२ ॥

( ५ ) **नन्दनः** । कामादनापदि अनेनापदिप्रायश्चित्तस्य लाघवंसूचितं कृच्छ्राब्देन संवत्सरचरितेन कृच्छ्रेण ॥ १६२ ॥

( ६ ) **रामचन्द्रः** । स्वजातीयगृहादेव चौर्याणिकृत्वा ॥ १६२ ॥

**मनुष्याणांतु हरणे स्त्रीणांक्षेत्रगृहस्य च ॥ कूपवापीजलानांच शुद्धिश्चांद्रायणंस्मृतम् ॥ १६३॥**

( १ ) **मेधातिथिः** । मनुष्याणांदासानांस्त्रीणांदासीनांक्षेत्रंभूभागोब्राह्मणादिधान्योत्पत्तिस्थानं कूपवाप्योर्जलशब्दः प्रत्येकमभिसंबध्यते । उद्धृतोदकस्येरणादिस्थस्यापहरणेतद्भवति । जलग्रहणाच्छुष्कयोःकूपवाप्योर्विध्यन्तरं वापीखातः तडागेप्येवमेव ॥ १६३ ॥

( २ ) **सर्वज्ञनारायणः** । मनुष्याणां पुंसाम् । कूपवापीजलानांपरकीयानां स्वक्षेत्रे सेकादिसिद्ध्यर्थं हरणे चान्द्रायणमज्ञानात् ॥ १६३ ॥

( ३ ) **कुल्लूकः** । पुरुषस्त्रीक्षेत्रगृहाणामन्यतमहरणे कूपजलस्य वापीजलस्य वा समस्तस्य वा हरणे चान्द्रायणंप्रायश्चित्तंमन्वादिभिः स्मृतम् ॥ १६३ ॥

( ४ ) **राघवानन्दः** । कूपवापीजलानामिति स्वक्षेत्राद्यर्थम् । तडागानामितिपाठे तेषां । हरणं ममेदमिति मिथ्यात्वेन । शुध्यत्यनयेतिशुद्धिः ॥ १६३ ॥

(५) **नन्दनः**। मनुष्याणांदास्यादीनाम् ॥ १६३ ॥

(६) **रामचन्द्रः**। कूपवापीजलानांहरणं स्वक्षेत्रार्थम् ॥ १६३ ॥

**द्रव्याणामल्पसाराणांस्तेयंकृत्वाऽन्यवेश्मतः ॥ चरेत्सान्तपनंकृच्छ्रंतन्निर्यात्यात्मशुद्धये ॥१६४॥**

(१) **मेधातिथिः**। अल्पसाराणिनचिरमवतिष्ठन्ते । स्वल्पमूल्यानिच मृन्मयानि स्थालीपिठरादीनि दारुमयानि द्रोणाढकादीन्ययोमयानि लेपनीकुद्दालकादीनि वेश्मनीतिगृहस्थितापहारेभूयान्दोषःनतथाखलक्षेत्रादिगते । निर्यात्यदत्वा सर्वशेषश्चायंविशेषाभावात् । यत्रत्वपहृतंदातुमशक्यंतत्रद्विगुणंप्रायश्चित्तम् ॥ १६४ ॥

(२) **सर्वज्ञनारायणः**। अल्पसाराणामल्पोपायानां पलालादीनाम् । अन्यवेश्मतोसमहीनवर्णगृहात् । सांतपनं द्व्यहसाध्यम् । तन्निर्यात्य हृतं द्रव्यं स्वामिने समर्प्य तन्मूल्यद्वारापि ॥ १६४ ॥

(३) **कुल्लूकः**। द्रव्याणामल्पार्घाणामल्पप्रयोजनानांचानुक्तप्रायश्चित्तविशेषाणांत्रपुसीसकादीनांपरगृहाचौर्यंकृत्वा तदपहृतंद्रव्यंस्वामिने दत्वा सांतपनंकृच्छ्रंप्रायश्चित्तंवक्ष्यमाणंचात्मशुद्धये कुर्यात्स्वामिनेऽपहृतंद्रव्यंनिर्यात्येति सर्वस्तेयप्रायश्चित्तशेषः ॥ १६४ ॥

(४) **राघवानन्दः**। अल्पसाराणां सीसकादीनाम् तन्निर्यात्यायदपहृतंद्रव्यं तस्य स्वामिनंप्रति निर्यात्या दानेन स्तेयप्रायश्चित्ताधिकारी सर्वत्रेतिज्ञेयम् ॥ १६४ ॥

(५) **नन्दनः**। द्रव्याणामल्पसाराणामल्पमूल्यानां तन्निर्यात्यातद्द्रव्यंप्रतिपाद्य अत्राल्पसाराणामिति विशेषणात्पूर्वत्रधान्यादिग्रहणंबहुसारविषयमित्यनुसन्धातव्यम् ॥ १६४ ॥

(६) **रामचन्द्रः**। तत्निर्जित्य हृतंद्रव्यं स्वामिने दत्वा आत्मविशुद्ध्यर्थं सान्तपनंकृच्छ्रं चरेत् ॥ १६४ ॥

**भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ॥ पुष्पमूलफलानांच पञ्चगव्यंविशोधनम् ॥१६५॥**

(१) **मेधातिथिः**। यानंगन्त्र्यादि शय्याखट्वादि आसनंबृस्यासंदीपट्टादि भक्षभोज्ययोःखरविशदतद्वैपरीत्येनभेदोविज्ञेयः । भक्ष्यंमोदकशष्कुल्यादि भोज्यंयावकादि पंचगव्यंप्रसिद्धं अत्राप्येकाहमेव ॥ १६५ ॥

(२) **सर्वज्ञनारायणः**। भक्ष्यं फलादि । भोज्यं सक्त्वादि । यानं रथादि । फलोद्भवानां तैलादीनां पुष्पोद्भवादीनां कुङ्कुमादीनां हरणे पञ्चगव्यं पञ्चगव्योपलक्षितं महासांतपनम् । एतच्चाज्ञानाद्धरणे ॥ १६५ ॥

(३) **कुल्लूकः**। भक्ष्यस्य मोदकादेर्भोज्यस्य पायसादेर्यानस्य शकटादेः शय्यायाआसनस्य च पुष्पमूलफलानां च प्रत्येकमपहरणे पञ्चगव्यपानंविशोधनम् ॥ १६५ ॥

(४) **राघवानन्दः**। भक्ष्यस्य मोदकादेः। भोज्यस्य पायसादेः। भक्ष्यादिरूपाणां पञ्चगव्यंपञ्चगव्यपानंकृत्वा तदहरुपोषणम् । शोधनं प्रायश्चित्तम् ॥ १६५ ॥

(५) **नन्दनः**। इतः प्रभृतिनिर्यात्येत्यनुवर्तते पुष्पमूलफलानाञ्चापहरणइति संबन्धनीयंपञ्चगव्यप्राशनम् ॥ १६५ ॥

(६) **रामचन्द्रः**। भक्ष्यंफलादि ॥ १६५ ॥

**तृणकाष्ठद्रुमाणांच शुष्कान्नस्य गुडस्य च ॥ चैलचर्मामिषाणांच त्रिरात्रंस्यादभोजनम् ॥१६६॥**

(१) **मेधातिथिः**। तृणादीनांपूर्वस्मात् यानादेरधिकहरणेप्रायश्चित्तमेतत् काष्ठमघटितंवंशःस्तंभादिद्रुमसाहचर्यात्

---

(१६४) निर्यात्य=निर्जित्य (राम०)

द्रुमोवृक्षः शुष्कान्नंतण्डुलादिभ्रष्टयवावा गुडग्रहणंस्वविकारार्थंतेनखण्डमत्स्यण्डिकादेर्ग्रहणंचैलंवस्त्रंबहूनामुत्तमानांच वास-सांप्रागुक्तेन धनग्रहणेन कृच्छ्रादेश्चर्मकवचं मांसमामिषम् ॥ १६६ ॥

( २ ) **सर्वज्ञनारायणः**। द्रुमाणां जीवताम्। शुष्कान्नस्य तण्डुलादेः। त्रिरात्रमज्ञानाद्धरणे ॥ १६६ ॥

( ३ ) **कुल्लूकः**। तृणकाष्ठवृक्षाणांशुष्कान्नस्य च तण्डुलादेर्वस्त्रचर्ममांसानामध्यएकस्याप्यहरणे त्रिरात्रमुपवासंच-रेत् ॥ १६६ ॥

( ४ ) **राघवानन्दः**। किंच तृणेति। शुष्कान्नस्य पृथुकादेः। आमिषाणां मांसानाम्। तृणाद्यष्टानां हरण इतिशेषः। उपोषणत्रयम् ॥ १६६ ॥

( ५ ) **नन्दनः**। अत्राप्यवहरणइत्येव ॥ १६६ ॥

( ६ ) **रामचन्द्रः**। चैलचर्मामिषाणां हरणे त्रिरात्रं अभोजनम् ॥ १६६ ॥

**मणिमुक्ताप्रवालानांताम्रस्य रजतस्य च ॥ अयः कांस्योपलानांच द्वादशाहंकणान्नता ॥ १६७॥**

( १ ) **मेधातिथिः**। स्वल्पबहुत्वापेक्षयाच कालह्रासःसकृदावृत्तौच ॥ १६७ ॥

( २ ) **सर्वज्ञनारायणः**। अयःपदंरूप्यताम्रकांस्येतरलोहग्रहणार्थम्। उपलः प्रस्तरः। कणान्नता कणास्तण्डुल-सूक्ष्मावयवास्तन्मात्रान्नता। एतच्चानापदि अन्यत्राल्पहरणेकणानां नात्यल्पलक्षणम् ॥ १६७ ॥

( ३ ) **कुल्लूकः**। मणिमुक्ताविद्रुमताम्ररूप्यलोहकांस्योपलानांच प्रत्येकमपहरणे द्वादशाहंतण्डुलकणभक्षणंकुर्यात्सर्व-त्र चात्र सकृदभ्यासदेशकालद्रव्यस्वामिगुणादौशक्त्यपेक्षया उत्कृष्टापकृष्टद्रव्यापहारिविषयसमीकरणंसमाधेयम् ॥ १६७ ॥

( ४ ) **राघवानन्दः**। मण्याद्यष्टानां हरणे कणान्नता कणमेवान्नं भक्षणीयं यस्यापहर्तुः सकणान्नः तस्य भावः ॥ १६७ ॥

( ५ ) **नन्दनः**। अपहरणइत्येव कणान्नताकणभक्षणंस्यादित्येव ॥ १६७ ॥

( ६ ) **रामचन्द्रः**। अयस्कान्तस्य उपलानां हरणे कणान्येवान्नं कणान्नं तस्य भावःकणान्नता तण्डुलसूक्ष्मा-वयवास्तद्भक्ष ॥ १६७ ॥

**कार्पासकीटजोर्णानांद्विशफैकशफस्य च ॥ पक्षिगन्धौषधीनांच रज्ज्वाश्चैव त्र्यहंपयः ॥१६८॥**

( १ ) **मेधातिथिः**। कीटजाः पट्टाः द्विशफागवादयः एकखुरा अश्वादयः पक्षिणः शुकश्येनादयः रज्जुकूपादे-रुदकोदंचनी ॥ १६८ ॥

( २ ) **सर्वज्ञनारायणः**। कार्पासजास्तन्तवः। कीटजाः कौशेयाद्याः। ऊर्णामेषादिरोमाणि द्विशफाअजाद्याः। ए-कशफाः खराद्याः। गन्धाः कस्तूरिकादयः। ओषध्यः औषधानि दशमूलादीनि। रज्जुः पटादिकृतः। एषामापद्यत्यल्पानां हरणे त्र्यहं क्षीरं पयः पिबेदिति शेषः ॥ १६८ ॥

( ३ ) **कुल्लूकः**। कार्पासकृमिकोशजोर्णानांवस्त्राणांद्विशफैकशफस्य गोरश्वादेः पक्षिणांशुकादीनांगन्धानांच चंदन-प्रभृतीनांरज्ज्वाश्च प्रत्येकंहरणे त्र्यहंक्षीराहारः स्यात् अत्रापि पूर्ववद्विषयसमीकरणपरिहारः स्वामिनश्चोत्कृष्टापकृष्टद्रव्य-समर्पणादपि वचनादेकरूपप्रायश्चित्ताविरोधः ॥ १६८ ॥

* गुणादौशक्त्यपेक्षया=गुणदौर्गत्यापेक्षया ( अ )

( ४ ) **राघवानन्दः** । कीटजं पट्टादिसूत्रं ऊर्णामेषलोमानि एषाम् । द्विशफोगवादिः एकशफोऽश्वादिः । द्विखुरइति पाठेसएवार्थः । कार्पासादिनवानामपहरणे प्रत्येकं त्र्यहं केवलं उदकपानं । कार्पासादिपदं तन्निर्मितवस्त्राद्युपलक्षकम् प्रायश्चित्ताकरणे श्वित्रादिरोगः ॥ १६८ ॥

( ५ ) **नन्दनः** । रज्ज्वाश्चापहरणइत्येव पयःपानम् ॥ १६८ ॥

( ६ ) **रामचन्द्रः** । कीटजोर्णानां कीटजतंतूनां क्षौमादीनां पक्षगन्धः सुगन्धः औषधीनां दशमूलादीनां रज्ज्वाहरणे त्र्यहं पयः पिबेत् ॥ १६८ ॥

**एतैर्व्रतैरपोहेत पापंस्तेयकृतंद्विजः ॥ अगम्यागमनीयंतु व्रतैरेभिरपानुदेत् ॥ १६९ ॥**

( १ ) **मेधातिथिः** । उक्तार्थःश्लोकः ॥ १६९ ॥

( २ ) **सर्वज्ञनारायणः** । अगम्यागमनीयं महापातकेतरागम्यागमनसंबन्धि ॥ १६९ ॥

( ३ ) **कुल्लूकः** । एतैरुक्तैः प्रायश्चित्तैः स्तेयजनितपापंद्विजातिरपानुदेत् । अगम्यागमननिमित्तंपुनरेभिर्वक्ष्यमाणैर्व्रतैर्निर्हरेत् ॥ १६९ ॥

( ४ ) **राघवानन्दः** । अपहरणप्रकरणमुपसंहरन् अगम्यागमनप्रायश्चित्तमाह एतैरितिदशभिः । एभिर्वक्ष्यमाणैः ॥ १६९ ॥

( ५ ) **नन्दनः** । एतैरुक्तैरेभिर्वक्ष्यमाणैः ॥ १६९ ॥

( ६ ) **रामचन्द्रः** । एतैर्व्रतैः स्तेयकृतंपापं अपोहेत नाशयेत ॥ १६९ ॥

**गुरुतल्पव्रतंकुर्याद्रेतः सिक्त्वा स्वयोनिषु ॥ सख्युःपुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ १७० ॥**

( १ ) **मेधातिथिः** । गुरुतल्पव्रतमित्यविशेषवचनेपि नतेनस्वयोन्यादिष्वित्येवमाद्यतिदिश्यते अपितु प्राजापत्यंचरेदब्दमिति महापातकत्वात् नहिमहापातकेभ्योन्यत्रमरणांतंप्रायश्चित्तमस्ति अभ्यासेतु स्यादिति । स्वयोनयोभागिन्यःसोदराः । सख्युःस्त्रीषु सुहृद्भार्यासु सुहृत्त्वमेवात्रकारणंनयौनादिविशेषः । नापिश्रोत्रियत्वादिगुणः एवंपुत्रस्यस्त्रीषु स्नुषात्वसमानजातीयास्वपिकुमारीषु पुत्रादिभिरदत्तासुस्वयं संप्रीत्यानुपनतास्वेतदेवबलाद्गमने अत्रापि नसत्यपेक्षा यद्यप्यतिदेशेविशेषोनास्तितथापिप्रायश्चित्तद्वयंस्यादिति दृष्टत्वात् । तथाच गुरुलघुभावाद्धीनजातीयासु कृच्छ्राब्दाचांद्रायणंमासत्रयंलघीयआदेश्यं अन्त्यजाश्चाण्डालम्लेच्छादिस्त्रियः । चण्डालादिस्त्रीषुच स्मृत्यन्तरेज्ञानाज्ञानकृतोविशेषउक्तोऽन्त्यावसायागमने कृच्छ्रार्धममत्यासु द्वादशरात्रम् ॥ १७० ॥

( २ ) **सर्वज्ञनारायणः** । गुरुतल्पव्रतं द्वादशाब्दव्रतम् । स्वयोनिष्वेकयोनिषु सापत्नभगिनीषु । सख्युर्मित्रस्य । पुत्रस्य गूढजादेः । औरसादिपुत्रत्रयभार्यागमनंत्वतिपातकम् । कुमारीष्वपरिणीतासु । अन्त्यजासु चाण्डालीतरविलोमजशूद्रादिस्त्रीषु ॥ १७० ॥

( ३ ) **कुल्लूकः** । स्वयोनिषु सोदर्यभगिनीषु तथामित्रभार्यासु पुत्रपत्नीषु कुमारीषु चाण्डालीषु प्रत्येकंरेतः सिक्त्वा गुरुदारगमनप्रायश्चित्तंकुर्यात् । अत्रापि ज्ञानाभ्यासाद्यनुबन्धापेक्षया मरणांतिकं अतएव ॥ रेतः सिक्त्वा कुमारीषु चाण्डालीष्वन्त्यजासुच ॥ सपिंडापत्यदारेषु प्राणत्यागोविधीयतइति यमेन मरणान्तिकमुपदिष्टं अज्ञानाच्चद्व्रतम् ॥ १७० ॥

( ४ ) **राघवानन्दः** । तत्रादावनुपातकप्रायश्चित्तमाह गुरुतल्पेति । स्वयोनिषु सोदर्यासु । पुत्रस्यौरसस्य । कुमा-

रीषु ब्राह्मणजातासु । इदंतु ज्ञाताभ्यासापेक्षया ॥ रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च ॥ सपिण्डापत्यदारेषु प्राणत्यागोविधीयतइति यमवचनात् ॥ अज्ञानात्तु प्राजापत्यं चान्द्रायणंवा तथोक्तं खट्वाङ्गीत्यत्र ॥ प्राजापत्यं चरेत्कृच्छ्रं समावा गुरुतल्पगः ॥ चान्द्रायणं वा त्रीन्मासानभ्यस्यन्वेदसंहितामिति याज्ञवल्क्यः ॥ १७० ॥

( ५ ) **नन्दनः** । स्वयोनिषु स्वदुहितृषु स्त्रीषु सख्युस्त्रीषु पुत्रस्य च स्त्रीषु ॥ १७० ॥

( ६ ) **रामचन्द्रः** । स्वयोनिषु भगिन्यादिषु रेतःसिक्त्वा गुरुतल्पव्रतंकुर्यात् पुत्रस्य गूढजादेः स्त्रीषु अन्त्यजासु॥१७०॥

## पैतृष्वसेयींभगिनींस्वस्रीयांमातुरेव च ॥ मातुश्च भ्रातुस्तनयांगत्वा चान्द्रायणंचरेत् ॥१७१॥

( १ ) **मेधातिथिः** । पितृष्वसुर्दुहितापैतृष्वस्रेयीभगिनी । मातृष्वस्रीयामाष्वसुर्दुहिता । मातुश्चभ्रातुर्मातुलदुहिता । आप्तस्यसोदर्यस्येत्यर्थः ॥ १७१ ॥

( २ ) **सर्वज्ञनारायणः** । पितृष्वसृसुतां भगिनीम् । मातुः स्वस्रेयीं मातुर्या स्वसा तस्यादुहितरम् । मातुश्च यआप्तःसोदरोभ्राता तस्य सुतामितिशेषः । एताअपरिणीताअज्ञानाद्गत्वा चान्द्रायणम् ॥ १७१ ॥

( ३ ) **कुल्लूकः** । पितृष्वसुर्मातृष्वसुश्च दुहितरंभगिनींमातुश्च सोदर्यभ्रातुर्दुहितरंसोदर्यभगिनीमिवनिषिद्धगमनांगत्वा चान्द्रायणंकुर्यात् सकृदज्ञानव्यभिचरिता विषयमल्पत्वात् ॥ १७१ ॥

( ४ ) **राघवानन्दः** । पैतृष्वस्रेयीं पितृष्वसुर्दुहितरम् । तथा मातृष्वसुरपि मातुर्भ्रातुराप्तस्य सहोदरस्य दुहितरमितिशेषः । अन्यथैतास्तिस्रइत्यनुपपत्तिः । स्वभगिनीमिवैताइत्यर्थः ॥ १७१ ॥

( ५ ) **नन्दनः**। पैतृष्वसेयींपितृष्वसुः पुत्रीं स्वस्रीयां मातृष्वसुः पुत्रीं मातुर्भ्रातुर्मातुलस्याप्तां । दुहितरमेतास्तिस्रोगत्वा चान्द्रायणश्चरेत् । भगिनींतिस्रामिति तिसृणामेतासांधारणम् ॥ १७१ ॥

( ६ ) **रामचन्द्रः** । पैतृष्वसेयीं मातुः स्वस्रीयां मातुलस्यपत्नीं मातुः साक्षात् आप्तसोदरस्य अज्ञानात् गत्वा चान्द्रायणं चरेत् ॥ १७१ ॥

## एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तुबुद्धिमान् ॥ ज्ञातित्वेनानुपेयास्ताः पततिह्युपयन्नधः ॥ १७२॥

( १ ) **मेधातिथिः** । ननुच सपिण्डाचेत्यनेनैवैतासामविवाह्यत्वे सिद्धे किमर्थमिदंनोपयच्छेतेति । केचिदाहुः । अन्यासांपक्षेऽभ्यनुज्ञानार्थंसपिण्डश्लोकेप्रतिषिद्धानांतदयुक्तं पततिह्युपयन्नधइतिप्रायश्चित्ताविशेषात् । एतस्मिंश्चप्रयोजनेसंभवतिसपिण्डश्लोकस्य पाक्षिकोबाधोयुक्तोऽगत्याहिविकल्पआश्रीयते । ज्ञातित्वेन बन्धुत्वेनेत्यर्थः । अनुपेयाअविवाह्यअगम्याश्च । उपयन्विवाहयन् अधः पततिनरकंप्राप्नोतीतियावत् । अथवाज्ञातितोभ्रश्यतिहीनजातीयः संपद्यते । यद्यपिजातेर्जीवत्पिण्डानपायस्तथापि तत्कर्मानविकारादेवमुच्यते ॥ १७२ ॥

( २ ) **सर्वज्ञनारायणः** । अथतासांस्वयंपरिणयनंनिषेधति एताइति । भार्यार्थेभार्यानिष्पाद्यकर्मार्थे नोपयच्छेत् नोद्वहेत् । ज्ञातेयेन एकबीजिना । चाज्ञातेयेनेतित्वन्यासामपि तादृशीनामपरिणेयत्वार्थमुक्तम् । अधःपतति द्विजकर्मतो हीयते । प्रायश्चित्तंतु स्मृत्यन्तरोक्तम् ॥ १७२ ॥

( ३ ) **कुल्लूकः** । तिस्रएताः पैतृष्वसेय्याद्याभार्यार्थे प्राज्ञोनोद्वहेत् ज्ञातित्वेन बान्धवत्वेन तानोपेतव्याः । यस्मादेताउपयन्नुपगच्छन्नरकंयाति असपिण्डा च या मातुरित्यनेन निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन निषेधदार्ढ्यार्थंपुनर्वचनम् ॥ १७२ ॥

( ४ ) **राघवानन्दः** । अतएवासांविवाहोपि निषिद्धइत्याह एताइति । ज्ञातेयोबन्धुजनतेत्यभिधानाद्बान्धवैः अनुपेयाः अविवाह्याः ताउपयन्नुद्वहन्नधःपततीत्यन्वयः ॥ १७२ ॥

( ५ ) **नन्दनः** । अविवाह्याश्चैतास्तिस्रइत्याह एतास्तिस्रस्तुभार्यार्थंइति । ज्ञायतेज्ञातित्वेन ॥ १७२ ॥

( ६ ) **रामचन्द्रः** । एतास्तिस्रः एताःकाः तत्रउच्यते पैतृष्वस्रेयीं मातृष्वसारं मातुलानींसोदरस्यस्त्रीं अज्ञानाद्गत्वा चान्द्रायणंचरेत बुद्धिमान् नउपयच्छेत । ज्ञातित्वेन सापिण्ड्येगताः अनुमेयाः । उपयन् गच्छन् अधःपतति ॥ १७२ ॥

**अमानुषीषुपुरुषउदक्यायामयोनिषु ॥ रेतःसिक्त्वाजलेचैव कृच्छ्रंसांतपनंचरेत् ॥ १७३ ॥**

( १ ) **मेधातिथिः** । अमानुष्योवडवाद्याः गोरमानुषित्वेपि सखिसयोनिसगोत्राशिष्यभार्यासु स्नुषायांगविचगुरुतल्पसममेव । अवकरइतिविशेषविहितमेव । अनयोर्गुरुतल्पावकीर्णप्रायश्चित्तयोरबुद्धिपूर्वबुद्धिपूर्वभेदेन व्यवस्था । तल्पशब्देनप्रसिद्धसंबन्धादत्रशास्त्रेगुरुतल्पमेवोच्यते । अवकरोऽवकीर्णीनिमित्तं निमित्तेचातिदिष्टेतत्कार्यातिदेशः । सखीचात्रयापुरुषवन्मैत्रीमागता नतुयासख्युःस्त्री नह्यत्रपुंयोगात्प्रवृत्तिः नचभार्यासंबन्धेन संबन्धोस्ति सयोनिपदेन व्यवधानात् । तथा चवसिष्ठेगुर्वीसखी नच पात्रांगत्वात्कृच्छ्राब्दपात्रं नचपात्रकुमारी अनयोस्तूपस्थादन्यत्र । उदक्यायांच मासिकेन रजसाभिप्लुतोदक्या पाठान्तरंपीत्वाधरंपुरुषइति उदक्यायामयोनिषु एकएवार्थः । अयोनिः स्त्रीलिङ्गादन्यत्रस्थानंतथान्येजलेखेचेतिपठन्ति । ननुचायोनिग्रहणादेवसिद्धंखइतिनपठितव्यं आकाशः खशब्देनोच्यते । योनेरन्यश्चसः नैषदोषः योनिशब्देन साहचर्यादन्यदङ्गमेवोच्यतइतिमन्यन्ते । जलेसाक्षात ॥ १७३ ॥

( २ ) **सर्वज्ञनारायणः** । अमानुषीषु वडवादिषु गवितु गविच तत्तुल्यमिति गुरुतल्पप्रायश्चित्तस्य गौतमेनोक्तत्वादधिकंप्रायश्चित्तम् । उदक्यायां रजस्वलायाम् । अयोनिषु योनिदेशादन्यत्र मुखादौ । जले जलमध्ये । सांतपनं कामतः ॥ १७३ ॥

( ३ ) **कुल्लूकः** । अमानुषीषु वडवाद्यासु नगवि गोष्ववकीर्णीसंवत्सरंप्राजापत्यंचरेदिति शंखलिखितादिभिर्गुरुप्रायश्चित्ताभिधानात् । तथा रजस्वलायां योनितश्चान्यत्र स्त्रियां जले रेतः सेकंकृत्वा पुरुषः सान्तपनंकृच्छ्रंकुर्यात् ॥ १७३ ॥

( ४ ) **राघवानन्दः** । किंच अमेति । अमानवीषु मेष्यादिषु गवातिरिक्तासु गोष्वकीर्णी संवत्सरं प्राजापत्यं चरेदितिशङ्खोक्तेः पुरुषइत्यनुवादमात्रम् । अयोनिषु गुदादिषु स्वस्त्रियाएव । केवले जले । कृच्छ्रं सान्तपनाख्यं वक्ष्यमाणम् ॥ १७३ ॥

( ६ ) **रामचन्द्रः** । न मानुषीषु च उदक्यासु उदक्यायां ॥ १७३ ॥

**मैथुनंतुसमासेव्य पुंसि योषिति वा द्विजः ॥ गोयानेप्सु दिवा चैव सवासाःस्नानमाचरेत् ॥ १७४ ॥**

( १ ) **मेधातिथिः** । मैथुनेषु समनन्तरंसवाससः स्नानंगोयानेगन्त्र्यादावप्सुचापि ॥ १७४ ॥

( २ ) **सर्वज्ञनारायणः** । पुंसि तस्य मुखादौ । योषिति स्वयोषित्यपि यदिगोयाने गोयुक्तरथादौ संविष्टायाम् । अप्सुयाने नौकायाम् । तथा दिवागमने । स्नानेनशुद्धिरकामतः । कामतस्तु प्रायश्चित्तं स्मृत्यन्तरोक्तम् ॥ १७४ ॥

( ३ ) **कुल्लूकः** । यत्र देशेकापि पुरुषे मैथुनंसेवित्वा स्त्रियांगोयाने शकटादौ जले दिवाकाले मैथुनंच सेवित्वा सवस्त्रश्च स्नायात् ॥ १७४ ॥

( ४ ) **राघवानन्दः** । किंच मैथुनमिति । गोयानेत्याद्यधिकरणम् पुंसिगुदादिषुयोषिति स्वयोनिष्विति ॥ १७४ ॥

( ५ ) **नन्दनः** । पुंसि योषिति पुंसोयोषितश्चोपर्यन्यथासह मैथुनंसमाप्येत्यर्थः । एवंगोधानामपि वियोज्यम् ॥१७४॥

( ६ ) **रामचन्द्रः** । पुंसिवा योषिति वा मैथुनं समासेव्य गत्वा गोयाने नौकायां मैथुनंदिवाचैव ॥ १७४ ॥

**चंडालांत्यस्त्रियोगत्वा भुक्त्वा च प्रतिगृह्य च ॥ पतत्यज्ञानतोविप्रोज्ञानात्साम्यंतु गच्छति ॥१७५॥**

( १ ) **मेधातिथिः** । चण्डालाम्लेच्छादिगन्तवासिनस्तत्स्त्रीगमनेप्रायश्चित्तंतदन्नभोजनेप्रतिग्रहेच पततीतिवचनात्कृच्छ्राब्दादधिकंप्रायश्चित्तंनपुनःपातित्यमेव भोजने । अभोज्यानांतु भुक्त्वान्नमिति [ प्रागेवचनमिदंकृच्छ्राब्दप्रायश्चित्तार्थमेवंप्रतिग्रहेऽपिमासंगोष्ठेपयइतिप्रागेतदर्थमेवज्ञानात्सम्यगिति ][1] कामकारकृतेप्रायश्चित्तविधानार्थोऽर्थवादोयं यत्स्मृत्यन्तरेऽद्भशब्देनज्ञाताज्ञातयोः प्रायश्चित्तमुक्तंतच्चदर्शितमतः कुतोऽधिकप्रायश्चित्तार्थता भुक्त्वाचेतिकेनसंबध्यतेचाण्डालान्त्येत्यनेन । ननु च गुणीभूतमेतत् गुणीभूतस्याप्यपेक्षायांसंबन्धोदर्शितः । भुक्त्वाकस्येत्याकांक्षायामन्यस्याश्रुतत्वात्साम्यवचनाच्चचाण्डालान्त्यानामेवसंबन्धः अतोयमर्थोभवति चाण्डालस्त्रोम्लेछानामन्नमशित्वा तेभ्यः प्रतिगृह्यच स्त्रियंगत्वा सकृद्गमनात्प्रायश्चित्तं अभ्यासेतु साम्यमेवयुक्तमनधिकारप्रायश्चित्तेन । यतः प्रतिनिमित्तंनैमित्तिकेनभवितव्यंनच तान्येकेन जन्मना शक्यन्तेऽनुष्ठातुम् ॥ १७५ ॥

( २ ) **सर्वज्ञनारायणः** । चाण्डालानां स्त्रियस्तथा तदन्ये अन्त्यावसायिनोबाह्याः सूताद्याः तेषांस्त्रियः सकृदपि गत्वा तथा तेषामेवान्नंचिरकालं भुक्त्वा तेभ्यःप्रतिगृह्यचात्यन्ताभ्यासेन बहुधनं महापातकितुल्योभवति । ज्ञानात् कामात् साम्यंच तज्जातिप्रवेशमत्यन्तान्नाशे न तत्र प्रायश्चित्तमित्यर्थः ॥ १७५ ॥

( ३ ) **कुल्लूकः** । चण्डालस्यान्त्यजानांच म्लेच्छशबरादीनामज्ञानतोब्राह्मणः स्त्रियोगत्वा तेषांचान्नंभुक्त्वा तेभ्यः प्रतिगृह्य पतति । पतितस्य प्रायश्चित्तंकुर्यात् एतच्च गुरुत्वाच्चाभ्यासतोभोजनप्रतिग्रहविषयम् । ज्ञानात्तु तेषांस्त्रीगमनंकृत्वा समानतांगच्छति एतच्च प्रायश्चित्तगौरवार्थम् ॥ १७५ ॥

( ४ ) **राघवानन्दः** । चण्डालश्चान्त्योयवनादिस्तयोः स्त्रियं गत्वा संभोग्यत्वेन । गोविन्दराजस्तु पानाशनादूर्ध्वंपतति याजनादिभिस्तु ततोऽर्वागिति । अन्येतु पानाशनादिभिरब्देन नतु सद्यः याजनादिभिस्तु सद्यः । तथाच देवलबौधायनौ ॥ याजनं योनिसंबन्धं स्वाध्यायं सहभोजनं ॥ कृत्वा सद्यः पतन्त्येते पतितेन समं नराः ॥ संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनान्नसद्यःशयनासनात् । भुक्त्वातेषामन्नं प्रतिगृह्य तेषामेव सुवर्णादि पतति पतितप्रायश्चित्तंकुर्यात् अज्ञानतोऽभ्यस्य । ज्ञानतोभ्यासेतु साम्यमिति प्रायश्चित्तगौरवार्थम् । नह्यन्यजातेरन्यजातित्वं वस्तुतो घटते ॥ १७५ ॥

( ५ ) **नन्दनः** । अन्त्यः पुल्कसादिभिर्भुक्त्याचण्डालादीनांभोजनंतेभ्यएव प्रत्यगृह्यगमनभोजनप्रतिगृहेषु समुचितेष्वेतदित्यत्रप्रायश्चित्तमूह्यम् ॥ १७५ ॥

( ६ ) **रामचन्द्रः** । अज्ञानतःपतति असकृद्भोजनप्रतिग्रहौ कृत्वेत्यर्थः सकृद्विप्रःज्ञानात्साम्यंगच्छति ॥१७५॥

**विप्रदुष्टांस्त्रियंभर्ता निरुंध्यादेकवेश्मनि ॥ यत्पुंसःपरदारेषु तच्चैनांचारयेत्व्रतम् ॥ १७६ ॥**

( १ ) **मेधातिथिः** । विशेषेणप्रदुष्टांनिरुन्ध्यात्पत्नीकार्येभ्योनिर्वतयेत्अर्थस्यसंग्रहेचैनामित्यादिभ्यः । एकवेश्मनीतिनिगडबन्धेकर्तव्यानस्वैरं भर्तृगृहेविहर्तुंलभेततत्रनिरुद्धांप्रायश्चित्तंकारयेत्किंपुनर्यत्पुंसः परदारेषुप्रायश्चित्तमुपपातकंब्राह्मणस्य तत्समानहीनजातीयासुपारदार्यमितिवर्णान्तराणांतदेव । उत्तमागमनेतुद्विगुणंवैश्यस्य त्रिगुणं ब्राह्मण्यां क्षत्रिय-

( १ ) आ आ

स्य तथायंविशेषोद्वेपरदारेत्रीणिश्रोत्रियस्येति । शूद्रस्य ब्राह्मणीगमने महापातकप्रायश्चित्तं वैश्यस्य क्षत्रियागमनउपपातकंद्विगुणंत्रिगुणं केचित्तूत्तमागमने शूद्रस्य ब्राह्मणीवदिच्छन्ति प्रातिलोम्येवधःपुंसामितिलिङ्गदर्शनात् । एतदुक्तंदण्डेष्वपि विशेषोदर्शितः । यथैवोत्तमागमनेपुंसांव्यवस्था तथैव स्त्रीणांहीनजातीयपुरुषसंपर्केयुवतिद्वेषेऽपि स्त्रीणामर्धप्रायश्चित्तं ॥ प्रायश्चित्तार्द्धमर्हन्तिस्त्रियोरोगिणएवच ॥ बालश्चाषोडशाद्वर्षादशीतिपरतःपुमान् ॥ तथादृष्टव्यभिचारायांगमनेलघीयः स्वैरिण्यांवृषल्यामवकीर्णः सचैलस्नानादुदकुंभंदद्याद्ब्राह्मणाय । वैश्यायांचतुर्थकालाहारोब्राह्मणंभोजयेत् क्षत्रियायांत्रिरात्रोपोषणंयवाढकंदद्यात् वैश्यवदित्यपिस्मर्यते । तद्वच्छूद्रभार्यायांद्रष्टव्यं ऋतौवागच्छतोगर्भमादधतोवा ॥ ब्राह्मणक्षत्रियविशांस्त्रियःशूद्रेणसंगताः ॥ अप्रजाताविशुध्येयुःप्रायश्चित्तेननेतराः ॥ अथवायाएतानकेनचिदूह्यन्ते वैश्येनचरन्ति तद्गमनेऽस्तिप्रायश्चित्तंनेतिसंदेहः । कुतःसंशयः दारशब्दस्यसंस्कारशब्दत्वात् असतिविवाहे नताअस्यदाराइतिव्यपदेशमर्हन्ति पारदार्येचप्रायश्चित्तमतोनास्तीत्यवगच्छामः यतस्तु स्वदारनिरतइतिनियमोविहितोऽतोभवतीतिमन्यामहे । किंपुनरत्रयुक्तमस्तीति कुतोनियमस्यविहितत्वात् अकुर्वन्विहितमित्यादितदतिक्रमे प्रायश्चित्तस्मरणात् । माभून्नामोपपातकंनतावताप्रायश्चित्तार्थमुपपातकजातिभ्रंशकरादिपरिगणितं सामान्यंतुनिमित्तंसर्वत्राकुर्वन्विहितमित्यादि । उक्तंच प्राक्स्वैरिणीत्यादि । ननुच मृतभर्तृपक्षेण पितृपक्षेणवासंबद्धैवपरदारव्यपदेश्या अधिकामविहारित्वात्स्वैरिण्यः । सत्यंवेश्यात्वपित्वातन्त्र्यावलंबनःस्वैरिशब्दोनविरुध्यते अतश्चतासांसचैलस्नानोदकुंभादिदानं । तत्रकेचिदाहुः व्रतमेतत्तस्य व्रतमित्युपक्रमम्य व्रतानीमानिधारयेदितिच यानिविहितानितानिस्नातकव्रतानि नसर्वपुरुषधर्मः ॥ १७६ ॥

( २ ) **सर्वज्ञनारायणः** । विप्रदुष्टांविशेषेण महापातकादन्येन प्रायश्चित्तापनोद्यदोषपरपुरुषगमनेन प्रदुष्टां निरुन्ध्यात् गृह्यकर्मादिभ्योनिवर्तयेत् । एकवेश्मनि स्वनिवासगृहे भूयोव्यभिचारनिरासार्थम् । यत्पुंसस्तत्तदुपाधिविशेषनिबन्धनं परदारेषुगमने व्रतमुक्तं तदेनां चारयेत् । एतच्च सवर्णागमने । उत्तमाधमवर्णगमनेतु क्रमादल्पं महच्च प्रायश्चित्तं स्मृत्यन्तरसिद्धं ग्राह्यम् ॥ १७६ ॥

( ३ ) **कुल्लूकः** । विशेषेण प्रदुष्टामिच्छया व्यभिचारिणीमित्यर्थः । भर्ता निरुन्ध्यात्पत्नीकार्येभ्योनिवर्त्य निगडबद्धामिवैकगृहे धारयेत् यच्च पुरुषस्य सजातीयपरदारगमने प्रायश्चित्तंतदेवैनांकारयेत्ततश्च स्त्रीणामर्धप्रदातव्यमिति यद्वसिष्ठादिभिरुक्तंतदनिच्छया व्यभिचारे च कर्तव्यम् ॥ १७६ ॥

( ४ ) **राघवानन्दः** । किंच विप्रेति । विप्रदुष्टामिच्छातोव्यभिचारिणीम् । एकेमुख्यान्यकेवलाइत्यभिधानादन्य आत्मवेश्मनि । परदारेषु यद्व्रतं सजातीयेषु एनां व्यभिचारिणीं तद्व्रतं कारयेत् । तथाच विष्णुः । अविद्यमाने सर्वस्वमित्युपक्रम्य एतदेवव्रतंकुर्युरुपपातकिनोनराइत्युपसंहृत्य स्त्रीणामर्धप्रदातव्यमित्याह अतः सर्वस्वार्धं व्रतम् ॥ १७६ ॥

( ६ ) **रामचन्द्रः** । विप्रदुष्टां व्यभिचारिणीम् । यद्व्रतं पुंसःपरदारेषु तद्व्रतमेनां संचारयेत् ॥ १७६ ॥

**सा चेत्पुनःप्रदुष्येत्तु सदृशेनोपयंत्रिता ॥ कृच्छ्रंचांद्रायणंचैव तदस्याःपावनंस्मृतम् ॥ १७७ ॥**

**[ ब्राह्मणक्षत्रियविशांस्त्रियः शूद्रेऽपसङ्गताः ॥ अप्रजाताविशुध्येयुः प्रायश्चित्तेन नेतराः ॥ १ ॥ ]+**

( १ ) **मेधातिथिः** । प्रार्थितासमानजातीयेनपुनःसंसर्गेचांद्रायणमुपपातकत्वात्सिद्धं गोघ्ननिवृत्त्यर्थंपुनश्चांद्रायणविधानंसाकल्यविधानार्थंयावच्चैवमुक्तं ॥ मातामातृष्वसाश्वश्रूर्मातुलानि पितृष्वसा ॥ पितृव्यसखिशिष्यस्त्रीभगिनीतत्सखीस्नुषा ॥

+ ( अ, ट, ड )

दुहिताचार्यभार्या च सगोत्राशरणागता ॥ राज्ञीप्रव्रजितासाध्वीधात्रीवर्णोत्तमा चया ॥ अत्रसत्यप्यतिदेशेन तुल्यप्रायश्चित्तता दण्डविशेषदर्शनात् । तत्र मातर्युक्तमेव मातृष्वसृप्रभृतीनांदुहित्रन्तानांकृच्छ्राब्दोऽवशिष्टानांचान्द्रायणाभ्यासस्तत्रयाउक्ता-स्ताःसगोत्राउच्यन्ते तज्जातीयास्तेन व्यपदिश्यन्ते । उपायमैर्दत्तास्तद्गोत्राइत्युभयेनेत्याह उभयथालिङ्गदर्शनात् गोत्रंवंशः पित्रादिरभिजनः प्रबन्धाच्च पितृष्वसृग्रहणमनर्थकं असगोत्राहिसा अथयेनैकतांगतास्तद्भावमनुभवन्ति तदाभर्तृगोत्रव्यप-देशार्हास्तस्मिन्पक्षे पितृव्यस्त्रीग्रहणमनर्थकं भवतिहि सा सगोत्रा नन्वियंकस्येति लिङ्गाभावादुभयोरपि युक्तासर्वेषान्तुद-र्शनंभर्तृगोत्राः सगोत्राः यत्तु कैश्चिदुच्यते श्राद्धविधौनुकुर्वन्पैत्रिकंगोत्रमिति तत्तत्रैवास्ति अथवाप्यस्तिवचनात्तथाक्रियते ॥ १७७ ॥

( २ ) **सर्वज्ञनारायणः** । साचेत्पुनर्द्वितीयवारे प्रदुष्येत् सदृशेन सवर्णेन उपमन्त्रिता प्रापिता । एतेनाकामकृ-तामुपलक्षयति । कृच्छ्रं प्राजापत्यं तथा चान्द्रायणं पूर्वोक्तप्रायश्चित्तकरणानन्तरमधिकंकार्यमित्यर्थः ॥ १७७ ॥

( ३ ) **कुल्लूकः** । सा स्त्री सजातीयगमने सकृद्दुष्टा कृतप्रायश्चित्ता यदि पुनः सजातीयेनाभ्यर्थिता सती तद्गमनं-कुर्यात्तदास्याः प्रायश्चित्तंप्राजापत्यंकृच्छ्रचान्द्रायणंच मन्वादिभिः स्मृतम् ॥ १७७ ॥

( ४ ) **राघवानन्दः** । साकृतप्रायश्चित्तापि । उपयन्त्रिता निरुद्धापि । पुनर्दुष्टाकुर्यात्कृच्छ्रचान्द्रायणे सकृदसकृदपेक्षे ॥ १७७ ॥

( ५ ) **नन्दनः** । सदृशेन समानवर्णेन उपयन्त्रितोपहूता ॥ १७७ ॥

( ६ ) **रामचन्द्रः** । सदृशेन सवर्णेन पुरासाचेत्पुनः उपयन्त्रिताप्रार्थिता ॥ १७७ ॥

**यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः ॥ तद्भैक्षभुग्जपन्नित्यंत्रिभिर्वर्षैर्व्यपोहति ॥ १७८॥**

( १ ) **मेधातिथिः** । वृषल्यत्रचण्डाल्यभिप्रेता महत्त्वाद्द्विरभ्यासेचेद्बुद्धिपूर्वेद्रष्टव्यं अन्यथाकृच्छ्रशब्दएवंवा एकरात्रग्र-हणात् । सर्वारात्रिंशयनस्य तया सहगच्छतश्चैतद्विज्ञेयं । सेवनंसंभोगः वृषलीशब्दोनिन्दया प्रयुक्तोनजातिशब्दे । यत्करोति तत्पापंजनयति तत्त्रिभिर्वर्षैर्व्यपोहति विनाशयति भैक्षाहारोजपन्नित्यविशेषचोदनायांभावी आसुपरंचनास्तीत्याहुः । अ-न्येतु यथाश्राद्धमन्यानिमन्त्रब्राह्मणवाच्यानि नतुलौकिकंवाच्यमविशेषेणमन्त्रजपस्य शुद्ध्यर्थंविहितत्वादृक्संहितामि-त्यादि यत्तु त्रिभिर्मासैः सेवित्वावृषलींशूद्रामेवाचक्षते तदप्ययुक्तंशूद्राविवाहस्याविहितत्वात् । स्वैरिण्याश्चलघुप्रायश्चित्त-स्योपदेशादन्यस्याश्चोपपातकत्वाद्गुरुतरमिदमयुक्तम् ॥ १७८ ॥

( २ ) **सर्वज्ञनारायणः** । यत्करोतिपापम् । वृषली शूद्रा शूद्रायाःसेवनेद्विजइतिपुराणेवसिष्ठेनोक्तत्वाच्च । अत्रच सेवमानइत्यत्रोत्पन्नगुणं गर्भाधानकारणं मैथुनमुक्तं वृषलीमभिमजातस्त्रीणिवर्षाणीतिस्मृत्यन्तरात् । भैक्षभुक् चतुर्थकालइ-तिस्मृत्यन्तरात् । जपन् गायत्रीम् ॥ १७८ ॥

( ३ ) **कुल्लूकः** । वृषल्यत्र चण्डालीप्रायश्चित्तगौरवात् चण्डालीगमने यदेकरात्रेण ब्राह्मणः पापमर्जयति तद्भैक्षाशी नित्यंसाविञ्यादिकंजपन् त्रिभिर्वर्षैरपनुदति । तथाचापस्तम्बः यदेकरात्रेण करोति पापंकृष्णंवर्णंब्राह्मणः सेवमानः च-तुर्थकालउदकआत्मजापीभैक्षचारीत्रिभिर्वर्षैस्तद्व्यपोहति पापम् । मेधातिथिस्तु इत्थमेव व्याख्यातवान् । गोविन्दराजस्तु अक्रमपरिणीतशूद्रागमनप्रायश्चित्तमिदमाह ॥ १७८ ॥

---

( १७८ ) जपन्नित्यं=जपन्नाप्याः ( नं० )

( ४ ) **राघवानन्दः** । किंचान्यदपि । वृषली गोघ्नी चाण्डाली प्रायश्चित्तगौरवात् । जपन् सावित्रीम् । तथाचापस्तम्बः । यदेकरात्रेण करोति पापं कृष्णंवर्णंब्राह्मणःसेवमानः अम्भोधिवासे नचतुर्थभक्तस्त्रिभिर्वर्षैस्तदपहन्ति पापमिति ॥ गोविन्दराजेनतु अक्रमपरिणीतशूद्रागमनविषयकमुक्तं वृषलीफेनपीतस्येत्याद्यपि तथैव व्याख्यातम् ॥ १७८ ॥

( ५ ) **नन्दनः** । यत्पापं आप्याअब्दैवत्यआपोहिष्ठेत्यादिकाः ॥ १७८ ॥

( ६ ) **रामचन्द्रः** । वृषली सेवनं गर्भजनकं तत् भैक्ष्यभुक् चतुर्थकालेभिक्षान्नभुक् गायत्रींजपन्नित्यम् ॥ १७८ ॥

**एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः ॥ पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः॥१७९॥**

( १ ) **मेधातिथिः** । ऋज्वर्थः श्लोकः ॥ १७९ ॥

( २ ) **सर्वज्ञनारायणः** । चतुर्णामपीत्यपिशब्दउपपातकसंग्रहाय । निष्कृतीर्निष्कृतयउक्ताः ॥ १७९ ॥

( ३ ) **कुल्लूकः** । इयं हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनकारिणांचतुर्णामपि पापकृतांविशुद्धिरुक्ता इदानींसाक्षात्पापकर्द्भिः सहसंसर्गिणामिमावक्ष्यमाणाः संशुद्धीः शृणुत ॥ १७९ ॥

( ४ ) **राघवानन्दः** । अगम्यागमनप्रायश्चित्तमुपसंहरन्संसर्गजप्रायश्चित्तमाहएषेतितिभिः । निष्कृतिरुक्ता । संप्रयुक्तानां यौनादिसवन्धिनां निष्कृतीः शृणुतेत्यन्वयः । तत्रद्वितीयेन पातित्यकारणं ज्ञापयन् संबन्धानुवदनं तृतीयेन प्रायश्चित्तव्यवस्थितिरितिभेदः ॥ १७९ ॥

( ५ ) **नन्दनः** । चतुर्णांवर्णानां विप्रादीनां पतितैरेतैश्चतुर्भिः संसर्गिणां इमावक्ष्यमाणाः ॥ १७९ ॥

( ६ ) **रामचन्द्रः** । एषानिष्कृतिः चतुर्णांवर्णानांपापकृतांउक्ता । पतितैःसह युक्तानां इमाः वक्ष्यमाणलक्षणानिष्कृतीः शृणुत ॥ १७९ ॥

**संवत्सरेण पतति पतितेन सहाचरन् ॥ याजनाध्यापनाद्यौनान्नतु यानासनाशनात् ॥ १८० ॥**

( १ ) **मेधातिथिः** । द्विजातिकर्मभ्योहानि पतत्यर्थः पततिभ्रश्यति हीयतेऽधिकारात् । पतिताश्चत्वारोब्राह्मणादयः । तैःसहाचरन् संवत्सरेण पतितोभवति तत्तुल्योभवतीत्यर्थः । किमाचरन् यानासनाशनसंलापगात्रस्पर्शादिना सहागमनमासनं तादृशमेव शय्यायामेकस्मिन्नासन आसनमेकपात्रे भोजनंयाजनाध्यापनाद्यौनाकृत्वाप्यविच्छेदः । किंयाजनादिभिर्नंच पातित्यमथार्वाक्संवत्सरादूर्ध्वंवेत्येतद्वक्तव्यं स्मृत्यन्तरदर्शनादिभिः सद्योयाजनाध्यापनमिति द्वितीयान्तपाठोयुक्तः । आचरन्निति । शत्राहेत्वर्थस्यगमितत्वात् ॥ १८० ॥

( २ ) **सर्वज्ञनारायणः** । संवत्सरेण संवत्सरकृतेन सहाचरणेनेत्यर्थः । पतति पातकितुल्योभवति । सहाचरन् संसर्गेण प्रवर्तमानः । याजनाध्यापनादिति तंयाजयति तेनवा याज्यते एवं तमध्यापयति तेनवाध्याप्यते । तथा पतितयास्त्रिया पतितेन पुंसा वा सह मैथुनेन पुमान् स्त्री वा संगृह्यतइत्यर्थः । केचित्तु ब्राह्मान्यौनांश्च संबन्धानिति विवाहेपि यौनपदप्रयोगात्तस्याप्यत्र यौनपदेन संग्रहमिच्छन्ति तत्रच संवत्सरेणेति तत्कृत्वा अकृतप्रायश्चित्तस्य वासेनावस्थानेनेत्यर्थः । नतुयानेति । सहयानसहासनाभ्यां सहाशनेनचैकपंक्तिभोजनेन संवत्सरंक्रियमाणेन नपतति नतत्तुल्योभवति किंतु चतुरोवत्सरांस्तत्करणेनैवेत्यर्थः । चतुर्वत्सरनियमश्च बलाद्गृहीतोम्लेच्छाद्यैरित्यादिदेवलस्मृतिदर्शनाद्बोध्येयः ॥ १८० ॥

( ३ ) **कुल्लूकः** । पतितेन सहसंसर्गमाचरन्नेकयानगमनएकासनोपवेशनएकपङ्क्तिभोजनरूपान्संसर्गानाचरन्संवत्सरेण पतति। नतु याजनाध्यापनाद्यौनात्संवत्सरेण पतति किन्तुसद्यएवेत्यर्थः । अध्यापनमन्त्रोपनयनपूर्वकंसावित्रीश्रावणं । याज-

नादीनांच सद्यः पातित्यमाह देवलः ॥ याजनंयोनिसंबन्धंस्वाध्यायंसहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ॥ विष्णुः ॥ आसंवत्सरात्पततिपतितेन सहाचरन् ॥ सहयानासनाभ्यासाद्यौनात्तु सद्यएवहि ॥ बौधायनः ॥ संवत्सरेण पतति पतितेन सहाचरन् ॥ याजनाध्यापनाद्यौनात्सद्योन शयनासनादिति ॥ गोविन्दराजस्तु याजनादीनांत्रयाणांसंवत्सरेण पातित्यहेतुत्वंसहासनादीनांलघुत्वान्न संवत्सरेण किंतुतस्मादूर्ध्वमपीति व्याचष्टे अस्मदीयमनुव्याख्यामुनिव्याख्यानुसारिणीं नैनांगोविन्दराजस्य कल्पनामनुरुन्ध्महे ॥ १८० ॥

( ४ ) **राघवानन्दः** । नतुसंवत्सरा [ न्तरेपतति । तदाहतुर्देवलबौधायनौ ॥ याजनंयोनिसंबन्धं स्वाध्यायं सहभोजनम् । कृत्वासद्यःपतन्त्येतेपतितेनसमंनराइति । ] [१] अत्रसहभोजनमेकपात्राभ्यासपरम् । एतत्समुदितानां प्रत्यहमभ्यासे । मनूक्तंत्वसमुदितान्तरायपरम् । अन्यथामनुविरोधे सर्वाः स्मृतयोऽप्रमाणम् ॥ १८० ॥

( ५ ) **नन्दनः** । याजनादीनि संवत्सरमाचनूपतति ॥ १८० ॥

( ६ ) **रामचन्द्रः** । पतितेन सह यानाशनानि कुर्वन् संवत्सरेण पतितोभवति । याजनाध्यापनात् यौनात् विवाहसंबन्धात् संवत्सरेण न पतति किंतु सद्यएवपतति ॥ १८० ॥

**योयेन पतितेनैषांसंसर्गंयाति मानवः ॥ सतस्यैव व्रतंकुर्यात्तत्संसर्गविशुद्धये ॥ १८१ ॥**

( १ ) **मेधातिथिः** । यस्य पतितस्य यद्विहितंतत्प्रायश्चित्तंकुर्यात्तत्संसर्गस्य शुद्धये । एषामितिनिर्धारणेषष्ठी । एषांपतितानांयेन पतितेन यः संसर्गंयाति पूर्वोक्तसंसर्गंगच्छति सतस्यैव पतितस्य यद्विहितंप्रायश्चित्तंतत्कुर्यात् । तत्संसर्गाद्योदोषउत्पन्नस्तद्विशुद्धये तद्विनाशाय । अनुवादोयंश्लोकपूरणः । अथयदिदमुच्यते पतितात्यागपतितात्यागीत्यादिनिन्दितकर्माभ्यासेनपतनं तत्र यदेतत्पतितत्ववचनं तत्किमुपदिश्यत आहोस्विदतिदिश्यते । यदितावदुपदिश्यते पंचपातकानीति प्रसिद्धमूलंवाच्यं अथपंचानुगमौपदेशिकमन्येषामातिदेशिकैर्व्यवहारेभेदेनकश्चिदर्थः । तान्येवप्रायश्चित्तानि तएवधर्मायस्माउपदिश्यते अतिदेशेनव्यवहारेणकोर्थः । अत्रोच्यते नव्यवहाराः प्रयोजनएवभिद्यन्ते अपित्वन्यतोपि निमित्तादिहचास्तिप्रमाणतोभेदः । यत्र पतितत्वमभिधायद्विजातिकर्मभ्योहानिः पतितस्योदकंकार्यमित्याद्यभिधीयते सकृत्स्वधर्माभिधानादुपदेशः । यत्रतु तत्संबन्धवचनान्नाम्नालिङ्गसंयोगाद्वातद्धर्मप्राप्तिः सोऽतिदेशः । सूर्याग्निपदयोर्नहिसौर्येकश्चिद्धर्मः अतोयेनातिदेशेसत्ययंविशेषोलभ्यइतिनिश्चीयते तदसत् यतः सूर्यादिशब्दस्यैव प्रभुता अकृतत्वाद्वेदस्यायपौरुषेयोग्रन्थः पुरुषश्चासतिभेदेकिमितिव्यवहारंनवंप्रवर्तयति यातुप्रत्यक्षानुमानाभ्यांबाधकाभावात्सिद्धिःसात्र कदाचिदुपलभ्यते योप्यभ्यासः सोपिद्विरावृत्तिस्तत्रततःप्रवृत्तिः आवृत्तिशतेष्वभ्यासरूपतयैकएवेति । लोकेतावदावृत्तिमात्रमभ्यासः तत्र योपिद्विरपवादः योपिशतकृत्वः तौद्वावपि प्रायश्चित्ते समौ स्यातां निन्दितंच कर्मप्रतिषिद्धं तत्रयोपिद्विर्दिवाहुप्याद्योपिगाअसकृद्धन्यात्तत्र निन्दितकर्माभ्यासेऽविशेषेणपतनप्राप्तिस्तस्माद्विचिन्त्यमेतत् किमत्रचिन्त्यते पंचानांतावत्पातकित्वंसर्वस्मृतिकारैरुच्यते । अन्येषांकेषांचित्समत्वंतदुभयमपि बाधितुंतत्रविशेषोनास्तीति संकल्पइष्यते । शक्तिंचावेक्ष्यपापंचेति । नहितस्य तत्सदृशस्येतिवा एकत्वंयुक्तं गोर्गवयस्येवअथकेषांचिद्धर्मणांभेदःकेषांचिदेकत्वेसादृश्यंभवति । तस्मात्तत्समानांपतित्वंभवति । अतःकिंचिदूनंतत्समानांपतितप्रायश्चित्तं अधिकारागमेकेचिद्विशेषमाहुः । श्रौतेष्वधिकरोनिवर्तते साक्षान्नस्मार्तेषु । यदप्युक्तंद्विरावृत्तौशतकृत्वश्चाभेदोनस्यादिति तत्राप्यभ्यासानांभेदः कथंतुल्यप्रत्यवायता । यदपि दिवास्वभगोवधयोर्निन्दितत्वाविशेषात्तदभ्यासेतुल्यंपतितत्वमिति कथमविशेषोनिंदायायत्रार्थवादेषु प्रत्यवायविशेषः श्रूयते । प्रायश्चित्तबहुत्वंबाहु-

---

( १ ) न

ल्येपि प्रतिषेधे तत्रायंविधिः । निन्दितकर्माभ्यासे पतनमिति नप्रतिषिद्धमात्रे तथाच पूर्णेवानसीति सत्यपिनिन्दितकर्माभ्यासे नैवपातित्यमस्ति । १८१ ॥

( २ ) **सर्वज्ञनारायणः** । संवत्सरादिना तत्साम्यापत्तौ प्रायश्चित्तमाह योयेनेति । येन यत्पातकवता संसर्गस्तत्साम्यापत्तिहेतुकालपर्यन्तं व्रतंदानद्वादशवार्षिकादि नतु मरणमपि । अतः कामकृते संसर्गे येन यत्पातकिनापि संसृज्यते तत्तुल्योभवति । अकामतोऽर्धम् ॥ १८१ ॥

( ३ ) **कुल्लूकः** । पतितशब्दोयंपापकारिवचनः सकलपापिनामविशेषपाठात् एषांपतितानांमध्ये योयेन पापकारिणा सह पूर्वोक्तंसंसर्गंकरोति सतस्यैव व्रतरूपंप्रायश्चित्तंकुर्यान्नतु मरणान्तिकमित्यभिहितं तदपि व्रतंसंसर्गिणाक्रियमाणंब्रह्महा द्वादशसमाइत्यादिकंपादहीनंकर्तव्यम् । तथा च व्यासः ॥ योयेन संसृजेद्वर्षंसोपि तत्समतामियात् ॥ पादन्यूनंचरेत्सोपि तस्य तस्य व्रतंद्विजः ॥ १८१ ॥

( ४ ) **राघवानन्दः** । तस्यैव ब्रह्महत्यादेः । व्रतं द्वादशवार्षिकादिकं ॥ १८१ ॥

( ५ ) **नन्दनः** । तेषांपातकिनांमध्ये येन तस्य पतितस्यैव व्रतप्रायश्चित्तम् ॥ १८१ ॥

( ६ ) **रामचन्द्रः** । एषां पतितानांमध्ये येन पतितेन संसर्गमानयति सः संसर्गी तस्यैव पतितस्य व्रतं कुर्यात् तस्य संसर्गस्य शुद्धये ॥ १८१ ॥

**पतितस्योदकंकार्यंसपिण्डैर्बान्धवैर्बहिः ॥ निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १८२ ॥**

( १ ) **मेधातिथिः** । जीवतएवपतितस्यप्रायश्चित्तमनिच्छतोघटोदकदानंमृतस्येवकर्तव्यमुच्यते । सपिण्डाः सप्तमपुरुषावधयः एकवंश्यास्ततोन्ये बान्धवाः सगोत्राश्चनिन्दितेहनि चतुर्दश्यादौ सायाह्नेऽस्तमितेरवौ ज्ञात्यृत्विक् ज्ञात्यादयःकर्तॄणां तथापतितस्य ॥ १८२ ॥

( २ ) **सर्वज्ञनारायणः** । पतितस्योदकं पातित्येन संबन्धात्प्रच्युतस्य पृथक्करणार्थं वैधं कर्म । बान्धवैः सपिण्डैः संबन्धिभिः । निन्दिते विष्ट्यादौ सायाह्नेऽपराह्णे । ज्ञातिः समानोदकादिः गुरुरुपाध्यायादिः पतितस्यतत्संनिधौ तैःसह संभूयेत्यर्थः ॥ १८२ ॥

( ३ ) **कुल्लूकः** । महापातकिनोजीवतएव प्रेतस्योदकक्रियावक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञातिऋत्विक्गुरुसन्निधाने रिक्तायां नवम्यां तिथौ दिनान्तेकर्तव्या ॥ १८२ ॥

( ४ ) **राघवानन्दः** । तत्संसर्गभीरूणां कर्तव्यमाह पतितस्येतिचतुर्भिः । जीवतएव संबन्धत्यागात्प्रेतस्य । निन्दिते नवम्यादितिथौ । सपिण्डैः पुत्रादिभिः ज्ञात्यादिसन्निधौ ॥ १८२ ॥

( ५ ) **नन्दनः** । अथ पतितेषुसपिण्डैः कर्तव्यमाह पतितस्येति ॥ १८२ ॥

( ६ ) **रामचन्द्रः** । सपिण्डाएकवंश्याः ततोन्येबान्धवाः निन्दिते वृष्ट्यादियुक्ते पतितस्य निराकरणार्थंउदकंकार्यंऋत्विग्गुरुसंनिधौ ॥ १८२ ॥

**दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचंबान्धवैः सह ॥ १८३ ॥**

( १ ) **मेधातिथिः** । प्रेतवदिति कर्तव्यतोपदेशोयं दासीप्रेष्योदकुंभंपदापादेनपर्यस्येत्क्षिपेदिदममुष्माइति । क्षिप्तेतस्मिन्नहोरात्रमाशौचंयुक्तं बान्धवैःसह तथासीरन्नेकत्रस्थाने निवसेयुस्तदहः । दासीग्रहणात्स्वयंकरणंनिषधति । यद्येवंज्ञात्यृत्विक्गुरुसन्निधावित्यस्वयंकरणपक्षेज्ञातीनां सपिण्डानांचकोविशेषोयेनोच्यतएतेषांसंनिधानएतेनकर्तव्यमिति । यावतासर्व-

एवसन्निधानमात्रेणोपकुर्वन्ति तस्यासन्निपात्योपकारत्वात् । नैतदेवंसपिण्डादयः प्रयोजकत्वेनकर्तारः ज्ञात्यादयस्तु सन्निधाप्यन्ते केवलमदृष्टायेति ॥ १८३ ॥

( २ ) **सर्वज्ञनारायणः** । घटं पुराणं अग्रेनवमितिवक्ष्यमाणत्वात् । अपामशुद्धानाम् । पर्यस्येदावर्तयेत् । प्रेत्यवत् प्रेतार्हजलदानवत् दक्षिणामुखत्वादिधर्मेण । प्रेतवदितिक्वचित्पाठः । तदा सव्येन स्मृत्यन्तरात् । आशौचं कर्मानधिकारम् । बान्धवैःसहेत्यत्र सपिण्डानामन्येषांच तुल्याशौचार्थम् ॥ १८३ ॥

( ३ ) **कुल्लूकः** । सपिण्डसमानोदकप्रयुक्ता दास्युदकपूर्णघटंप्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथासनिरुदकोभवति तदनु ते सपिण्डाः समानोदकैः सहाहोरात्रमशौचमाचरेयुः ॥ १८३ ॥

( ४ ) **राघवानन्दः** । पर्यवस्येत् पदा वामेन क्षिपेत् । प्रेतवद्दक्षिणाभिमुखा भूत्वेत्यर्थः । उपासीरन् कुर्युः । बान्धवैर्मातुलादिभिः १८३ ॥

( ५ ) **नन्दनः** । प्रेतवत्प्रेतस्येव अनेन दक्षिणापवर्गादिकंगृह्यते उपासीरन्नङ्गीकुर्युः बान्धवाज्ञातयः ॥ १८३ ॥

( ६ ) **रामचन्द्रः** अपांपूर्णं दासीघटं दास्याःशिरसिघटं आदाय प्रेतवत् प्रेतार्हजलदानवत् पर्यस्येत् आवर्जयेत् । सादासीवेगेन ग्रामाद्बहिर्गत्वा तत्कुंभस्यजलेन तर्पणं बान्धवैःकार्यम् । योगीश्वरः ॥ दासीकुम्भंबहिर्ग्रामान्निनयेरन्स्वबान्धवाः । पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ बान्धवैःसहाहोरात्रमासीरन् ॥ १८३ ॥

**निवर्तेरंश्च तस्मात्तु संभाषणसहासने ॥ दायाद्यस्य प्रदानंच यात्रा चैव हि लौकिकी ॥ १८४ ॥**

( १ ) **मेधातिथिः** । कृतोदकेयथावर्तितव्यं तथेदानीमुच्यते संभाषणमितरेतरमुक्तिप्रत्युक्तिरूपोव्यवहारः दायाद्यंधनंतदपितस्मै नदातव्यंलौकिकीयात्रासंगतयोः कुशलप्रश्नादिका विवाहादौ नैमित्ते गृहानयनंभोजनंचेत्येवमादि । ननुच संभाषणप्रतिषेधा देवैषुनिवृत्तिः सिद्धेवा । अभ्युत्थानासनत्यागस्यापि निवृत्तिरूपस्यसंभवात् । संभाषणंतुशब्दात्मकमेव ॥ १८४ ॥

( २ ) **सर्वज्ञनारायणः** । निवर्तेरन् निवर्तयेयुः । नकुर्वीतेतिक्वचित्पाठः । लौकिकींयात्रां तद्गृहगमनादि ॥ १८४ ॥

( ३ ) **कुल्लूकः** । तस्मात्पतितात्सपिण्डादीनांसंभाषणमेकासनोपवेशनंच तस्मै ऋक्थप्रदानंसांवत्सरिकादौ निमन्त्रणादिरूपोलोकव्यवहारएतानि निवर्तेरन् ॥ १८४ ॥

( ४ ) **राघवानन्दः** । दायाद्यस्यांशस्य । लौकिकी गुरुंपरिचरेदित्याद्युक्ता ॥ १८४ ॥

( ५ ) **नन्दनः** । तस्मात्कृतोदकात्पतितात् आद्यशब्देन प्रेतपिण्डादिकमुच्यते ॥ १८४ ॥

**ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यंच यद्धनम् ॥ ज्येष्ठांशंप्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः॥ १८५॥**

( १ ) **मेधातिथिः** । ज्येष्ठावाप्यंचयद्वसु अत्रापिचोद्यते दायाद्यदाननिषेधाज्ज्येष्ठप्राप्यवसुनोधनस्य सिद्धएवनिषेधः । केचिदाहुर्गुणतोधिकस्ययवीयसस्तदंशप्राप्त्यर्थमनूद्यते । अन्येतुमन्यन्ते दायाद्यशब्देन धनमात्रमुच्यते नान्वयागतमेव तथाचाभिधानकोशेदायाद्यंधनमिष्यतइति । स्मर्यते अतोयं तस्मात्केनचिदृणत्वेनगृहीतंतेनापितन्नदातव्यंकिंतर्हिकर्तव्यंपुत्रभ्रात्रादिरिक्थहारिणामर्पणीयम् । अन्येतुमन्यन्ते अविभक्तधनानादायाद्यधननिषेधः कृतेतु विभागउद्धारस्येवज्येष्ठांशस्यैवोच्छेदः । सत्स्वपिपुत्रेषूद्धारंवर्जयित्वाऽन्यस्यपुत्राएवेशते ॥ १८५ ॥

---

( १ ) न ।

( २ ) **सर्वज्ञनारायणः** । ज्येष्ठावाप्यस्याप्राप्तनिषेधानुवादस्तदव्यवहितकनिष्ठस्य तत्प्राप्त्यर्थः ॥ १८५ ॥

( ३ ) **कुल्लूकः** । ज्येष्ठस्य यत्प्रत्युत्थानादिकंकार्यंतत्तस्य न कार्यं ज्येष्ठलभ्यंच तस्य विंशत्युद्धारादिकंधनंनदेयं। यद्यपि ऋक्थप्रदानप्रतिषेधादेवाप्युद्धारप्रतिषेधः सिद्धस्तथापि यवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैव ज्येष्ठस्य संबन्धिधनं-सोद्धारांशंतदनुजोगुणाधिकोलभते ॥ १८५ ॥

( ४ ) **राघवानन्दः** । ज्येष्ठावाप्यंतमुद्धारमेतदनुवदन्मनुजस्य ज्येष्ठत्वविधानार्थम् ॥ १८५ ॥

( ६ ) **रामचन्द्रः** । च पुनः ज्येष्ठावाप्यं च यद्वस्तु तत्प्राप्नोति ॥ १८५ ॥

**प्रायश्चित्ते तु चरिते पूर्णकुम्भमपांनवम् ॥ तेनैव सार्धंप्रास्येयुः स्नात्वा पुण्ये जलाशये ॥१८६॥**

( १ ) **मेधातिथिः** । कृतप्रायश्चित्तस्येदानीमुदकक्रियोच्यते तेनैव सार्धंस्नात्वा जलाशये पुण्यस्रवन्त्यांमहाह्रदे-वाप्रभासमानसादौवातीर्थविशेषेकृतस्नानोऽपांकुंभंनवंस्वयंप्रास्येयुः। कुंभग्रहणाद्दासीग्रहणाच्चात्र पूर्वत्रोपयुक्तस्यक्रियासुकुं-भस्यग्रहणं उदकेनपूरयित्वाहरणमुक्तम् ॥ १८६ ॥

( २ ) **सर्वज्ञनारायणः** । पतितस्वीकारविधिमाह प्रायश्चित्तेत्विति । तेनैव कृतप्रायश्चित्तेन । जलाशये स्नात्वा प्रा-स्येयुः क्षिपेयुः ॥ १८६ ॥

( ३ ) **कुल्लूकः** । । कृते पुनः पतितेन प्रायश्चिते सपिण्डसमानोदकास्तेनैव कृतप्रायश्चित्तेन सह पवित्रे जलाधारे स्नात्वा जलपूर्णनवंघटंप्रक्षिपेयुः । इह नवघटग्रहणाद्दासीघटमित्यत्र कृतोपयोगिघटः प्रतीयते ॥ १८६ ॥

( ४ ) **राघवानन्दः** । कृतप्रायश्चित्तंप्रति कर्तव्यमाह प्रायश्चित्तेति । प्रास्येयुः क्षिपेयुः पुत्राद्याः । अत्र नवमितिवि-शेषणात्पूर्वं पुरातनं ज्ञेयम् ॥ १८६ ॥

( ५ ) **नन्दनः** । तेन चीर्णप्रायश्चित्तेन प्रास्येयुर्ज्ञातयः ॥ १८६ ॥

( ६ ) **रामचन्द्रः** । प्रायश्चित्ते चरिते कृते पुण्ये जलाशये स्नात्वाअपां पूर्णं कुम्भंनवं आदाय तेनैव कृतप्रायश्चि-त्तेन सार्धं प्रास्येयुः ॥ १८६ ॥

**सत्वप्सु तंघटंप्रास्य प्रविश्य भवनंस्वकम् ॥ सर्वाणि ज्ञातिकार्याणि यथापूर्वंसमाचरेत् ॥१८७॥**

( १ ) **मेधातिथिः** । पुनरसौघटः प्रक्षेप्तव्यइत्याह यास्वप्सुस्नातास्तास्वेवघटः प्रक्षेप्तव्यः । ततस्तंपुरस्कृत्य तदीयं-भवनंप्रविशेयुः । ततोयथापूर्वंसंभोजनादीनिज्ञातिकार्याणि प्रवर्तयेयुः । अन्येतुसकृत्प्रायश्चित्तइति संबध्नन्ति । घटप्रासनं-तेनैव कर्तव्यमेषाचास्यपतितोदकक्रिया नान्यस्यत्याज्यस्य । त्यजेच्चेत्पितरंराजघातकंसुयाजकमित्यादेः ॥ १८७ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञातिकार्याण्येकज्ञातिषु कर्तव्यान्यभिवादनादीनि ॥ १८७ ॥

( ३ ) **कुल्लूकः** । सकृतप्रायश्चित्तस्तंपूर्वोक्तघटंजलमध्ये क्षिप्त्वा ततः स्वकीयभवनंप्रविश्य यथापूर्वंसर्वाणि ज्ञातिक-र्माणि कुर्यात् ॥ १८७ ॥

( ४ ) **राघवानन्दः** । ततः किंनु कुर्यादित्याह सत्विति । स्वकमित्युपलक्षणं दायाददेतदवाप्यानिसर्वाणिज्ञाति कार्याणि सहभक्षणादीनि समाचरेत्कुर्यात् ॥ १८७ ॥

( ६ ) **रामचन्द्रः** । सःपुरुषस्तंघटमप्सु प्रास्य स्वकंभवनं प्रविश्य यथापूर्वं ज्ञातिकार्याणि समाचरेत् ॥ १८७ ॥

एतमेव विधिंकुर्याद्योषित्सु पतितास्वपि ॥ वस्त्रान्नपानंदेयंतु वसेयुश्च गृहान्तिके ॥ १८८ ॥

( १ ) **मेधातिथिः** । योषित्सुस्त्रीष्वपिपतितास्वेषएवविधिः पतिताःस्वकृतप्रायश्चित्तासुच ताभ्यस्तुकृतोदकाभ्योपिवस्त्रान्नंदातव्यंदानग्रहणात् । वस्त्रान्नेशरीरस्थितिमात्रसंपादिनीदातव्येनभोगादयः । पानमौचित्यादुदकंतच्चप्राचुर्याददत्तमपिलभ्यते । वचनंतुपरानुरोधादपि स्वांतन्त्र्येणवानुमासंनदेयं यादृशंचपानंतादृशेएववस्त्रान्नेऽतोनिकृष्टंवस्त्रंचान्नंदातव्यं । तथोक्तं ॥ हृताधिकारांमलिनांपिण्डपात्रोपजीविनीं ॥ परिभूतामधःशय्यांवासयेद्व्यभिचारिणीं ॥ पातित्यहेतवश्चस्त्रीणांयएवमनुष्यस्ययत्तुभ्रूणहनिहीनवर्णसेवायां नचस्त्रीणामधिकंभ्रूणहनीतितत्तुल्यतार्थंनतुपरिसंख्यार्थं । तथाचयाज्ञवल्क्यः ॥ नैवाभिगमनंगर्भपातनंभर्तृहिंसनं ॥ विशेषपतनीयानिस्त्रीणामेतान्यपिध्रुवं ॥ वसेयुः स्वगृहान्तिके प्रधानगृहान्निष्कास्य कुटीगृहे वासयितव्येत्यन्तिकग्रहणं । केचिदाहुः प्रायश्चित्तन्तुकुर्वतीनामेतद्देयंनत्वन्यथा ॥ तदयुक्तं वस्त्रान्नदानव्यवहारस्य तत्रयोगत्वात् । प्रायश्चित्तेभिक्षाहारतापयोव्रतंचांद्रायणविधिश्चेत्यादि । नचभैक्षाहारताचानेनविवर्तयितुंशक्या वृत्तिविधानेनचरितार्थत्वात् तस्माद्यस्याःप्रायश्चित्तेष्वनधिकारःशक्ततयातिपुष्टतयावातस्याअपि वस्त्रादिदानंकर्तव्यमिति श्लोकार्थः ॥ १८८ ॥

( २ ) **सर्वज्ञनारायणः** । गृहान्तिकेवासः पुनः पापप्रसंगनिवृत्त्यर्थः ॥ १८८ ॥

( ३ ) **कुल्लूकः** । स्त्रीष्वपि पतितास्वेवमेव पतितस्योदकंकार्यमित्यादिविधिंभर्त्रादिसपिण्डसमानोदकवर्गः कुर्यात् ग्रासाच्छादनानि पुनराभ्योदेयानि गृहसमीपे चासांवासार्थंकुटीर्दद्युः ॥ १८८ ॥

( ४ ) **राघवानन्दः** । पुंस्युक्तंप्रकारं स्त्रीष्वतिदिशति एतमिति । स्त्रीणां प्रायश्चित्तमनिच्छन्तीनाम् । आवश्यकमाह वस्त्रेत्यादि ॥ १८८ ॥

( ५ ) **नन्दनः** । व्रतंदासीघटप्रासनादिकंकुर्यात वसेयुर्योषितः ॥ १८८ ॥

( ६ ) **रामचन्द्रः** । योषित्सुपतितासुएवमेवविधिं कुर्यात् ॥ १८८ ॥

एनस्विभिरनिर्णिक्तैर्नार्थंकिंचित्सहाचरेत् ॥ कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित् ॥ १८९ ॥

( १ ) **मेधातिथिः** । एनस्विनःप्रकृतत्वात्पातकिनः तैरनिर्णिक्तैरशुद्धैरकृतप्रायश्चित्तैर्नार्थःकिंचिदृणदानक्रयविक्रियायाजनाद्युक्तं । निर्णेजनंशोधनंपापापनोदनंतस्मिन्कृतेनैनांजुगुप्सेतकृतप्रायश्चित्तांनकुत्सयेत् ॥ १८९ ॥

( २ ) **सर्वज्ञनारायणः** । अनिर्णिक्तैरकृतप्रायश्चित्तैः । अर्थं कार्यं दानप्रतिग्रहादि ॥ १८९ ॥

( ३ ) **कुल्लूकः** । पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमर्थंकिंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तान्नैव कदाचिदपि पूर्वकृतपापत्वेन निन्देत्किंतु पूर्ववद्व्यवहरेत् ॥ १८९ ॥

( ४ ) **राघवानन्दः** । अत्रार्थवादमाह एनस्विभिरिति । अनिर्णिक्तैः अकृतप्रायश्चित्तैः । कृतनिर्णेजनान् चरितप्रायश्चित्तान् ॥ १८९ ॥

( ५ ) **नन्दनः** । अनिर्णिक्तैरकृतप्रायश्चित्तैः एनस्विभिः पतितैः ॥ १८९ ॥

( ६ ) **रामचन्द्रः** । एवंएभिर्व्रतैः अनिर्णिक्तैः अकृतप्रायश्चित्तैः ॥ १८९ ॥

---

( १८८ ) विधिं = व्रतं ( नं. )

**बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ॥ शरणागतहंतॄंश्च स्त्रीहंतॄंश्च न संवसेत् ॥ १९० ॥**

( १ ) **मेधातिथिः** । शरणागतोयःशत्रुभिरभिहन्यमानोबलवतान्येनवोपद्रूयमानः परित्राणार्थंकिंचिदन्यमभिधावेत्त्रायस्वमामिति एवंकृतदोषोविद्वान्समुपधावेदुद्धरमांदेहिप्रायश्चित्तमिति शरणागतः । कृतघ्नः कृतमुपकारंविस्मृत्ययोऽपकाराययततेयोवाकृतोपकारंपुनर्विनाशयति तस्यैवोपकृतस्यापकार्यउद्यच्छति यद्यप्येषाशब्दव्युत्पत्तिस्तथापि लोकप्रसिद्धेर्यत्रोपकर्तुरपकारे वर्तते सकृतघ्नः । अत्रजातिर्नापेक्षते बालादिस्वरूपमेवकारणं स्त्रियोव्यभिचारिण्योपि यद्यपितासांस्वल्पंप्रायश्चित्तंतथापि वाचनिकः संवासःप्रतिषेधः । संवासःसंगतिस्तद्गृहनिवासश्च ॥ १९० ॥

( २ ) **सर्वज्ञनारायणः** । कृतघ्नानुपकारहन्तॄन् । धर्मतोधर्मचरणेनप्रायश्चित्तक्रियया । न संवत्सरंस्वसमीपे वासयेत् ॥ १९० ॥

( ३ ) **कुल्लूकः** । अस्यापवादमाह बालघ्नानिति । बालंयोहतवान् कृतोपकारमपकाराचरणेन योविनाशितवान् प्राणरक्षार्थमागतंयोहतवान् स्त्रियंच योव्यापादितवान् एतान्यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत् ॥ १९० ॥

( ४ ) **राघवानन्दः** । एनोहिद्विविधमेकमात्मगतंप्रायश्चित्तादिनाश्यमपरंदेहगतंयावद्देहस्थायि तत्रात्मगतस्य प्रायश्चित्तैर्निरासेपि देहागतस्यानिरासतांवाचनिकीमाह बालघ्नांश्चेति । कृतघ्नान् कृतोपकारहन्तॄन् । धर्मतः धर्मशास्त्रोक्तप्रायश्चित्तेन व्यपगतात्मपापान् । न चैतदर्थवादमात्रमुक्तप्रकारान्तरेण स्वार्थपरत्वोपपत्तौ तस्य जघन्यत्वात् । शरणागतबालस्त्रीहिंसकान्न संपिबेत् एतैःसह पानादीन्नकुर्यादित्यर्थः । चीर्णव्रतानपि सदा कृतघ्नसहितानिमानितियाज्ञवल्क्य संवादात् । अतएव वेनदेहात्पापपुरुषनिर्गमनं देहस्य पापान्तरे लिङ्गमिति ॥ १९० ॥

( ५ ) **नन्दनः** । विशुद्धानपि धर्मतः कृतप्रायश्चित्तानपि संवसेत् ॥ १९० ॥

( ६ ) **रामचन्द्रः** । एतैः सहनसंवसेत् ॥ १९० ॥

**येषांद्विजानांसावित्री नानूच्येत यथाविधि॥ तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत्॥१९१॥**

( १ ) **मेधातिथिः** । आषोडशाद्ब्राह्मणस्येत्यादिनोपनयनकालनियमः कृतः । तदतिक्रमेप्रायश्चित्तमिदं गर्भाष्टमात्प्रभृतियावत्षोडशवर्षंब्राह्मणस्य सावित्रीनान्वूच्येत सावित्र्यनुवचनेनोपनयनाख्यसंस्कारोलक्ष्यते । अस्मिन्काले यद्युपनयनंनक्रियेत एवमाद्वाविंशात्क्षत्रियस्य आचतुर्विंशतेर्विशः । अतऊर्ध्वंत्रीन्कृच्छ्रांश्चारयितव्यः । निरुपपदकृच्छ्रश्रवणे प्राजापत्यप्रत्ययइतिस्मृतितन्त्रसिद्धिः । अन्येतु कृच्छ्रातिकृच्छ्रानाहुः । कृच्छ्रेषुकृतेषूपनेतव्यायथाविधीत्यनुवादः ॥ १९१ ॥

( २ ) **सर्वज्ञनारायणः** । यथाविधि स्वगृह्योक्तप्रकारेण परमतेन स्वमतेनाप्यसंपूर्णविधिनावानानूच्येतेत्यर्थः । कृच्छ्रान् प्राजापत्यानिति ॥ १९१ ॥

( ३ ) **कुल्लूकः** । येषांब्राह्मणक्षत्रियविशामानुकल्पिककालउपनयनंयथाशास्त्रंन कृतवान्तान्प्राजापत्यत्रयंकारयित्वा यथाशास्त्रमुपनयेत् । यत्तु याज्ञवल्क्यादिभिर्व्रात्यस्तोमादिप्रायश्चित्तमुक्तंतेनसहास्य गुरुलाघवमनुसंधाय जातिशक्त्याद्यपेक्षोविकल्पोमन्तव्यः ॥ १९१ ॥

( ४ ) **राघवानन्दः** । संस्कारकालोत्तीर्णानां द्विजानां प्रायश्चित्तानि दर्शयन् तेषामेवोपनयनाधिकारितामाह येषामिति । नानूच्येत गुरोरुच्चारणानान्तरं नाधीयीत ॥ १९१ ॥

( ५ ) **नन्दनः** । अवृत्तानांप्रायश्चित्तमाह येषांद्विजानांसावित्रीति ॥ १९१ ॥

( ६ ) **रामचन्द्रः** । तान् सावित्रीपतितान् कृच्छ्रान् चारयित्वा यथाविधि उपनाययेत् ॥ १९१ ॥

**प्रायश्चित्तंचिकीर्षन्ति विकर्मस्थास्तु येद्विजाः ॥ ब्रह्मणाच परित्यक्तास्तेषामप्येतदादिशेत् ॥ १९२ ॥**

( १ ) **मेधातिथिः** । विकर्मस्थायथाब्राह्मणाः शूद्रसेवाद्यभिरताः यस्ययत्कर्मजीविकाहेतुस्तयातत्तस्यविहितंकर्म । यस्यनविहितंतस्यतद्विकर्म । द्विजातीयस्यविहितंविजातीयस्यविकर्म । ब्रह्मणापरित्यक्ताउपनीताअप्यस्वीकृतवेदाअधीत्य वावेदमुपविस्मरेयुस्तेषामप्येतत्कृच्छ्रत्रयंप्रायश्चित्तंचिकीर्षतीत्यनुवादएवायं इच्छन्नेवयतःप्रवर्तते ॥ १९२ ॥

( २ ) **सर्वज्ञनारायणः** । विकर्मस्थाअविक्रय्यविक्रयिणः । ब्रह्मणा वेदेन त्यक्ताः उपनीताअप्यनधीतवेदाः । एतत् कृच्छ्रत्रयम् । इदंच विकर्म त्यक्त्वा कर्तव्यम् तथा अनधीतवेदेन वेदमध्येतुमधिकारार्थं कार्यम् ॥ १९२ ॥

( ३ ) **कुल्लूकः** । ये प्रतिषिद्धशूद्रसेविनोद्विजास्ते चोपनीताअप्यनधीतवेदाः प्रायश्चित्तंकर्तुमिच्छन्ति तेषामप्येतत्प्राजापत्यादित्रयमुपदिशेत् ॥ १९२ ॥

( ४ ) **राघवानन्दः** । शूद्रादिसेविनोपि कृतप्रायश्चित्तेन वेदाधिकारितां वदन्कृच्छ्रत्रयं तेषां प्रायश्चित्तमाह प्रेति । ब्रह्मणाच साविञ्यादिर्वेदेन । एतत् कृच्छ्रत्रयम् ॥ १९२ ॥

( ६ ) **रामचन्द्रः** । ये विकर्मक्रयविक्रयिणः तेषांएतत्प्राजापत्यत्रयं आदिशेत् ॥ १९२ ॥

**यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणाधनम् ॥ तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥ १९३ ॥**

( १ ) **मेधातिथिः** । गर्हितेनेत्यविशेषेप्यसत्प्रतिग्रहणेति द्रष्टव्यं उत्तरत्रविशेषविधेस्तत्प्रत्येवोपदिश्यमानत्वात् । मुच्यतेऽसत्प्रतिग्रहादिति । उत्सर्गः त्यागोममतानिवृत्तिर्दानेनवा । अनपेक्ष्यदृष्टमदृष्टंराजरथ्यादिषु त्यागे नादेयं ममयोगृह्णातिसगृह्णात्वित्याद्यभिधायक्षिपेत् । श्वभ्रेगर्तेनद्यादिषुवा जपतपसीवक्षत्युपदिष्टश्लोके । अन्येतुब्राह्मणशब्दस्थाने वर्णशब्दं पठित्वैवंव्याचक्षते । यस्यवर्णस्य द्विजातेः शूद्रस्य वा धनार्जनोपायतया यत्प्रतिषिद्धंतत्तस्य गर्हितं यथाब्राह्मणः क्षत्रियोवापि वृद्धिंनैवप्रयोजयेदित्यादि तेनयेऽर्जयन्तिधनंकर्मणातस्योत्सर्गजपतपांसि त्रीणिसमुच्चितानिप्रायश्चित्तानि ब्राह्मणस्यासत्प्रतिग्रहउत्तरोविशेषविधिः ॥ १९३ ॥

( २ ) **सर्वज्ञनारायणः** । यद्गर्हितेनेति दुष्टप्रतिग्रहादिना ननु चौर्येप्येतत् । उत्सर्गेण त्यागेन जपसहितेन तपःसहितेनवा जप्यानुक्तौ । जपोगायत्र्याः ॥ १९३ ॥

( ३ ) **कुल्लूकः** । गर्हितेन कर्मणा निषिद्धदुष्प्रतिग्रहादिनाब्राह्मणायद्धनमर्जयन्ति तस्य धनस्य त्यागेन जपतपोभ्यां वक्ष्यमाणाभ्यां शुध्यन्ति धनत्यागेन च प्रायश्चित्तविधानाद्बहुमूल्येच करितुरगादावल्पमूल्येच लौहादौ परिगृहीते तुल्यप्रायश्चित्ताभिधानमुपपन्नं एवमविक्रय्यविक्रयादावपि ॥ १९३ ॥

( ४ ) **राघवानन्दः** । नीचप्रतिग्रहनिषिद्धक्रयविक्रयादिनोपार्जितद्रव्यं परित्यजतोजपतपोभ्यां शुद्धिरित्याह यदिति । उत्सर्गेण त्यागेन ॥ १९३ ॥

( ५ ) **नन्दनः** । विकर्मस्थाः प्रतिषिद्धकर्मकृतः एतत्कृच्छ्रत्रयाचरणम् ॥ १९३ ॥

( ६ ) **रामचन्द्रः** । गर्हितेन दुष्टप्रतिग्रहादिना कर्मणा ॥ १९३ ॥

**जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः॥मासंगोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्॥१९४**

( १ ) **मेधातिथिः** । त्रीणिसावित्रीसहस्राणि प्रत्यहमितिकेचिदाहुः। अन्येतु मासंत्रीण्यभिसंबध्नन्ति । अतश्च प्रत्यहमेकैकंशतं गोष्ठइति वासस्थानम् ॥ १९४ ॥

( २ ) **सर्वज्ञनारायणः** । मासं पयः क्षीरं पीत्वा गोष्ठे तिष्ठन् गायत्र्यास्त्रिसहस्रंजप्त्वा । एतच्च जपसहितम् । जपमापदि ॥ १९४ ॥

( ३ ) **कुल्लूकः** । त्रीणि सावित्रीसहस्राणि जपित्वा गोष्ठे वा मासंक्षीराहारोऽसत्प्रतिग्रहजनितात्पापान्मुक्तोभवति शूद्रप्रतिग्रहादावप्येतदेव प्रायश्चित्तं द्रव्यदोषेण च दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति ॥ १९४ ॥

( ४ ) **राघवानन्दः** । जप्येनेत्युक्तं तत्र कस्यजपः कोवानियमः कतिवासंख्येत्यपेक्षायामाह जपित्वेतिचतुर्भिः । मासंव्याप्य दुग्धभक्षणं नियमः ॥ १९४ ॥

( ५ ) **नन्दनः** । असत्प्रतिग्रहविशेषमाह जपित्वा त्रीणि सावित्र्याइति । मुच्यतेऽसत्प्रतिग्राही ॥ १९४ ॥

( ६ ) **रामचन्द्रः** । असत्प्रतिग्रहात् मुच्यते ॥ १९४ ॥

**उपवासकृशंतन्तु गोव्रजात्पुनरागतम् ॥ प्रणतंप्रतिपृच्छेयुः साम्यंसौम्येच्छसीति किम् ॥ १९५ ॥**

( १ ) **मेधातिथिः** । कार्श्यवचनात्स्वल्पंपयःपानमाह प्रणतंजानुभ्यांस्थितंभुवि तेविद्वांसोब्राह्मणाःपृच्छेयुस्तंहेसौम्येच्छसिसत्यमिति अथपुनरपिशास्त्रमवगणय्य नप्रवर्तितव्यमसत्प्रतिग्रहलोभेनेतिपृष्टेनवा तेनवक्तव्यंसत्यमिति ॥ १९५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रतिग्रहेकामकृतेप्रायश्चित्तेषु चीर्णेषु कथंचित्पापक्षयसंदेहे यथा निर्णयस्तत्प्रसंगादत्राह उपवासेति । उपवासैः प्रायश्चित्तार्थासक्तैः । तमिति कृतनिर्णेजनपरामर्शः । गोव्रजादिति प्रायश्चित्तदेशोपलक्षणम् ॥१९५॥

( ३ ) **कुल्लूकः** । केवलक्षीराहारेणेतरभोजनव्यावृत्त्या कृशदेहंगोष्ठात्प्रत्यागतंप्रणतंनम्रीभूतंकिमस्माभिः सहसाम्यमिच्छसि पुनरसत्प्रतिग्रहंन करिष्यसीत्येवंधर्मंब्राह्मणाः परिपृच्छेयुः ॥ १९५ ॥

( ४ ) **राघवानन्दः** । पुनरागतं स्वगृहंप्रति । प्रणतं नम्रीभूतम् । किमस्माभिःसह साम्यमिच्छसि पुनरसत्प्रतिग्रहादिकं न करिष्यसीति ॥ १९५ ॥

( ५ ) **नन्दनः** । तमसत्प्रतिग्राहिणं परिपृच्छेयुर्विप्राः साम्यमस्माभिः साम्यम् ॥ १९५ ॥

( ६ ) **रामचन्द्रः** । तमसत्प्रतिग्राहिणं प्रायश्चित्ते चरिते उपवासाशक्तौ पापक्षयसन्देहे तत् ज्ञानोपायमाह हे सौम्य। अस्माभिः किंइच्छसीति ॥ १९५ ॥

**सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसंगवाम् ॥ गोभिः प्रवर्तिते तीर्थे कुर्युस्तस्य परिग्रहम् ॥ १९६ ॥**

( १ ) **मेधातिथिः** । येनमार्गेणगावोविचरन्ति नदीप्रस्रवणादिजलंपातुंतास्मिंस्तीर्थेतरणप्रदेशे ते ब्राह्मणाः परिग्रहमस्यकुर्युस्तेहिहस्तारोपणेनान्तिकवेशमानयेयुः ॥ १९६ ॥

( २ ) **सर्वज्ञनारायणः** । सत्यमुक्त्वा यत्पापं यच्चव्रतं चीर्णम् । विकिरेद्गवामग्रे । गोभिर्घासभक्षणेन तीर्थे व्यवहारवर्त्मनि । अन्यथा पुनः प्रायश्चित्ताचरणम् ॥ १९६ ॥

( ३ ) **कुल्लूकः** । सत्यमेतत्पुनरसत्प्रतिग्रहंन करिष्यामीत्येवंब्राह्मणेषूक्त्वा ग्रासंगवांदद्यात् तस्मिन्यवसंभक्ष्यमाणे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते ब्राह्मणास्तस्य संव्यवहारे स्वीकारंकुर्युः ॥ १९६ ॥

( ४ ) **राघवानन्दः** । एवमुक्तेसत्यं पुनरसत्प्रतिग्रहंनकरिष्ये । यवसं घासं विकिरेत्गवांदद्यात् । तीर्थे गोष्ठे गोभिः शुद्धिर्व्यञ्जितव्येत्यर्थः । गवां यवसदानं शुद्धिपरीक्षण नोत्तराप्रतिपत्तिः ताश्चेन्न भक्षयन्ति नो तदा शुद्धिरितिभावः ॥ १९६ ॥

( ५ ) **नन्दनः** । एवंपृष्टः किमपरः कुर्यादित्यपेक्षायामाह सत्यमुक्त्वा तु विप्रेभ्यइति । सत्यंप्रायश्चित्तंयथार्थयवसंग्रासंगवां पुरतोविकिरेद्विक्षिपेत् गोभिःप्रवर्तिते तीर्थे गोभिर्वाभक्षितेयवसइत्यर्थः तस्य प्रतिग्रहंविप्राः कुर्युरभिक्षिते न कुर्युरिति ॥ १९६ ॥

( ६ ) **रामचन्द्रः** । यवसं तृणम् । गोभिःप्रवर्तिते तीर्थे च व्यवहारमार्गे तस्य परिग्रहं स्वीकारंकुर्युः ॥ १९६ ॥

**व्रात्यानांयाजनंकृत्वा परेषामन्त्यकर्म च ॥ अभिचारमहीनंच त्रिभिःकृच्छ्रैर्व्यपोहति ॥ १९७ ॥**

( १ ) **मेधातिथिः** । व्रात्याःसावित्रीपतितास्तेषांव्रात्यानांव्रात्यःस्तोमःक्रतुर्विहितस्तेनयेयाजयन्ति आर्त्विज्येनोपदेष्टृत्वेनचपरेषांमातापितृगुरुवर्जमन्त्यकर्मश्मशानादि । अभिचारंश्येननिधनादि । अहीनेचद्विरात्रिकंकृच्छ्रैर्विशुध्यति । अन्येत्वाहुर्नायमभिचाराहीनयोर्यजमानस्यविधिः कस्यतर्हिऋत्विजां । तथाच व्रात्यानांयाजनमितीदृशएवाधिकारः । यजमानस्यतु विधिलक्षणाप्रवृत्तिस्तस्याःप्रतिषेधाभावेकुतः प्रायश्चित्तं भवत्वहीनेशास्त्रतः प्रवृत्तिः श्येनादौतु कथं नहिशत्रून्मारयेदिति नोदनास्ति किंतर्हियः शत्रोर्मारणंकामयते तेनतत्सिध्यर्थंश्येनादिकर्तव्यं शत्रुमारणेच लिप्सालक्षणाप्रवृत्तिःसाचनिषिद्धा नहिंस्यात्सर्वाभूतानीति । अहीनेप्यपिलिप्सातएवप्रवृत्तिः । फलकामस्यहितत्राधिकारोभवति नतुफलकामनातत्रनिषिद्धा । नापिकाम्यमानार्थनिष्पादकोव्यापारः । इहतूभयंनिषिद्धंनहिंस्यादिति मरणफलव्यापारेण प्रवर्तितव्यंतत्फलंचश्येनादेरेव इहतु नास्तिनिषेधः । स्वर्गादिफलकर्मणःकर्तव्यमितिकेचिदाहुः । वाक्शस्त्रंवैब्राह्मणस्येत्यभिचारिणीयाऽभिचारोप्यनुज्ञयाम्नातएव । तुल्यावहीनाभिचारौ तत्रऋत्विजामेवप्रायश्चित्तंयुक्तं । ननुच काम्यान्यनिषिद्धानि कामात्मतानप्रशस्तेति यस्तस्यविषयःसतत्रैवव्याख्यातः । श्रुतिश्चाहीनतया याजनंकार्यमिति । अभिचारिणीयाभिचारेच यजमानस्यायुक्तंकथमाम्नातंयज्ज्योतिषोभिचार्यन्ते । तद्विधिप्रायश्चित्तान्युक्तान्येव । अस्य चर्त्विग्विषयेऽभिचरणीयाभिचारे सविषयत्वाद्वैदिकेन जपहोमादिना शत्रोर्मारणमभिचारः ॥ १९७ ॥

( २ ) **सर्वज्ञनारायणः** । परेषामबन्धूनामर्थाभिसंधिना । अन्त्यकर्म श्मशानकर्म । अहीनं द्विरात्रादि ॥ १९७ ॥

( ३ ) **कुल्लूकः** । व्रात्यानामतऊर्ध्वंत्रयोप्येतइत्युक्तानांव्रात्यस्तोमादियाजनंकृत्वा पितृगुर्वादिव्यतिरिक्तानांच निषिद्धौर्ध्वदेहिकदाहश्राद्धादिकृत्वा अभिचारंच श्येनादिकर्मभिचारोऽनभिचारणीयस्य अहीनंयागविशेषः । अहीनयजनमशुचिकरमितिश्रुतेः । त्रिरात्रादितस्य यजनंकृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति ॥ १९७ ॥

( ४ ) **राघवानन्दः** । ब्राह्मणस्य सत्प्रतिग्रहोदेहाद्यर्थः याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्जयेदित्युक्तं तत्रासत्प्रतिग्रहे प्रायश्चित्तमुक्तंतथाविधयाजनेपि तदाह व्रात्यानामिति । परेषां निषिद्धौर्ध्वदेहिकानांपतितादीनाम् । अन्त्यकर्मदाहादि । अहीनं त्रिरात्रादिसाध्यमभिचारं कारयित्वाकृत्वावा ॥ १९७ ॥

( ५ ) **नन्दनः** । अन्त्यकर्मदासकृत्यं परेषांसपिंडानांप्रेतकर्मवाहीनंकृत्वा द्विरात्रादिष्वार्त्विज्यंकृत्वा ॥ १९७ ॥

( ६ ) **रामचन्द्रः** । अपरेषां पित्राचार्यादि व्यतिरिक्तानां सपिण्डानां अन्त्यकर्म श्मशानकर्म च अनभिचरणीयस्य अभिचारं अहीनंयागविशेषं त्रिभिःकृच्छ्रैःशुध्येत् ॥ १९७ ॥

शरणागतंपरित्यज्य वेदंविप्लाव्य च द्विजः ॥ संवत्सरंयवाहारस्तत्पापमपसेधति ॥ १९८ ॥

( १ ) **मेधातिथिः** । द्विविधःशरणागतःआगुक्तस्तस्यपरित्यागःप्रत्याख्यानंनसत्यांशक्तौ प्राक्तद्विचारितम् । वेदंविप्लाव्यामध्यायाध्ययनंकृत्वाऽधिकारेणाधीयानस्यतुयोगदानंकिपठसिनाशितंत्वयेति । अथवा धनहेतोःपरीक्षास्थानेष्वनियुक्तेनपठ्यतेस्मृतिश्च । दत्वानियोगंधनहेतोःपतितान्मनुरब्रवीत् ॥ १९८ ॥

( २ ) **सर्वज्ञनारायणः** । शरणागतंपरित्यज्यत्यक्त्वा विप्लाव्यार्थान्तरपरत्वव्याख्यादिना । विसर्गानुस्वारादिवैकल्येनमिथ्यार्थंकृत्वा । यवाहारोयवान्नाहारः ॥ १९८ ॥

( ३ ) **कुल्लूकः** । शरणागतंपरित्राणार्थमुपगतंशक्तः सन्नुपेक्षते द्विजातिरनध्याप्यंच वेदमध्याप्य तज्जनितंपापंसंवत्सरंयवाहारोऽपनुदति ॥ १९८ ॥

( ४ ) **राघवानन्दः** । महापातकादिभिन्नानां स्वातन्त्र्येण मातिस्विकं प्रायश्चित्तमाह शरणागतेत्यष्टभिः । शरणागतं शक्तःसन्परित्यज्य अशक्तत्वे न दोषः ॥ मृत्युर्बुद्धिमताऽपोह्योयावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोस्ति देहिनः इतिशुकोक्तेः ॥ वेदं अनेभ्यासेन विप्लाव्य विस्मृत्य कामतस्त्यागेऽनुपातकत्वोक्तेः । अपसेधति अपनुदति ॥ १९८ ॥

( ५ ) **नन्दनः** । अनध्याप्याध्यापनंवेदविप्लावनम् ॥ १९८ ॥

( ६ ) **रामचन्द्रः** । वेदं विप्लाव्यद्विजः अर्थान्तरव्याख्यानादिमिथ्यार्थमुक्त्वा अनध्यायेऽध्ययनं कृत्वावा ॥ १९८ ॥

श्वसृगालखरैर्दष्टोग्राम्यैः क्रव्याद्भिरेव च ॥ नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ १९९ ॥
[ शुनाघ्रातोपलीढस्य दन्तैर्विदलितस्य च । अद्भिः प्रक्षालनंप्रोक्तमग्निना चोपचूलनम् ॥ १ ॥ + ]

( १ ) **मेधातिथिः** । दष्टोदन्तैर्दंष्ट्राभिर्ग्राम्यैः क्रव्याद्भिर्मार्जारनकुलादिभिः ॥ १९९ ॥

( २ ) **सर्वज्ञनारायणः** । अग्राम्यैःक्रव्याद्भिर्वृकादिभिः ॥ १९९ ॥

( ३ ) **कुल्लूकः** । कुक्कुरसृगालगर्दभनराश्ववराहाद्यैर्ग्राम्यैश्चाममांसादैर्मार्जारादिभिर्दष्टः प्राणायामेन शुध्यति ॥१९९॥

( ४ ) **राघवानन्दः** । क्रव्याद्भिः गृहमर्कटमार्जारादिभिः । नरैःपुंश्चलीवराहैः काकैः । प्राणायामेन जलेस्थित्वेतिशेषः ॥ पुंश्चलीवानरखरैर्दष्टः श्वोष्ट्रादिवायसैः ॥ प्राणायामंजले कृत्वा घृतं प्राश्य विशुध्यतीति याज्ञवल्क्योक्तेः ॥ १९९ ॥

( ६ ) **रामचन्द्रः** । क्रव्याद्भिः वृकादिभिर्दष्टः ॥ १९९ ॥

षष्ठान्नकालता मासंसंहिताजपएव वा ॥ होमाश्च साकलानित्यमपाङ्क्त्यानांविशोधनम् ॥ २०० ॥

( १ ) **मेधातिथिः** । अपांक्त्यास्तृतीयाध्यायउक्ताः येषांप्रतिपदंप्रायश्चित्तमन्यत्राम्नातंतेषांमासंसंहिताजपः शाकलहोमः षष्ठान्नकालताचेतिसमुच्चयः । काष्ठशलाकादिदेवकृतस्येत्यादिभिर्मन्त्रैर्हूयतेसशाकलहोमः । नित्यग्रहणंसमासेपि संहिताजपे पुनः पुनरावृत्त्यर्थं यावन्मासःपूर्णः ॥ २०० ॥

( २ ) **सर्वज्ञनारायणः** । षष्ठान्नकालता एकभक्तपूर्वकदिनद्वयोपवासानन्तरंतृतीयदिनभोजनं मासपर्यन्तम् । संहिताजपः संहिता कस्याश्चिच्छाखायामन्त्रभागः । शाकलहोमादेवकृतस्येत्यादिमन्त्रैर्यज्ञाङ्गवृक्षशकलहोमाः । अपाङ्क्त्यायेस्तेनपतितक्लीबाइत्यादिनोक्ताः । तेषांमध्ये अनुक्तनिष्कृतीनां मिलितमेतत्त्रयं शोधनम् ॥ २०० ॥

---

+ ( क )          ( २०० ) साकलानित्यं=शाकलानित्यं ( ज, झ, ञ, ट, ड, ढ, त, थ )

( ३ ) **कुल्लूकः** । अपाङ्क्त्याः येस्तेनपतिताः क्लीबाइत्यादिनोक्तास्तेषांविशेषतोऽनुपदिष्टप्रायश्चित्तानांमासंत्र्यहमभुक्त्वा तृतीयेऽह्निसायंभोजनंवेदसंहिताजपोदेवकृतस्यैनसोऽवयजनमसीत्यादिभिरष्टभिर्मन्त्रैर्होमः प्रत्येकंकार्यः । एतत्समुद्दिष्टंपापशोधनम् ॥ २०० ॥

( ४ ) **राघवानन्दः** । किंच षष्ठेति । अपाङ्क्त्यानां स्तेनपतितक्लीबाइत्यादिनोक्तानां पङ्क्त्यभोजिनांविशेषतोऽनुद्दिष्टप्रायश्चित्तानां । षष्ठान्नकालता षष्ठस्यान्नस्य भोजनीयस्य यः कालः सएव भोजनकालोयस्य सतथा तस्य भावः । दिनद्वयमभुक्त्वा तृतीयदिने सायं भोजनमिति संहिता वेदस्य । देवकृतस्यैनसोवयजनमसिस्वाहेत्यादिकाः शाकलाहोमाः शाकलस्यतु येहोमाइत्यनेनोक्तावा ॥ २०० ॥

( ५ ) **नन्दनः** । देवकृतस्यैनसइत्यादिमन्त्रकृताः शाकलाहोमाश्चशब्दात्समुच्चितानां प्रायश्चित्तत्वं अपाङ्क्त्याः श्राद्धप्रकरणेप्रोक्ताः ॥ २०० ॥

( ६ ) **रामचन्द्रः** । षष्ठान्नकालतामासं दिनद्वयमुपोष्य तृतीयदिने सायं भुञ्जते इति प्राप्तं होमाश्च शाकलाः । देवकृतस्यैनसइत्यादिमन्त्राः । अपाङ्क्तानां अनुक्तप्रायश्चित्तानाम् । विशोधनम् ॥ २०० ॥

**उष्ट्रयानंसमारुह्य खरयानन्तु कामतः ॥ स्नात्वा तु विप्रोदिग्वासाः प्राणायामेन शुध्यति ॥२०१॥**

( १ ) **मेधातिथिः** । उष्ट्रैर्युक्तंयानंगन्त्र्यादि साक्षादुष्ट्रादावारोहणमव्यवधानेनचाधिकतरंप्राणायामानामावृत्तिः । दिग्वासानग्नोनग्नदोषनिर्हरणार्थंपुनः सवासास्नानंकृत्वाप्राणायामःकर्तव्यः ॥ २०१ ॥

( २ ) **सर्वज्ञनारायणः** । उष्ट्रयानमुष्ट्रयुक्तं तत्पृष्ठंवा यानम् । एवंखरयानम् । दिग्वासानग्नः । प्राणायामेन गायत्र्या त्रिःपठितया ॥ २०१ ॥

( ३ ) **कुल्लूकः** । उष्ट्रैर्युक्तंयानंशकटादि एवंखरयानमपि तत्कामतआरुह्याव्यवधानउष्ट्रखराभ्यां याने प्राणायामबहुत्वं नग्नश्च कामतः स्नानंकृत्वा प्राणायामेन शुद्धोभवति ॥ २०१ ॥

( ४ ) **राघवानन्दः** । किंच उष्ट्रयानमिति । दिग्वासादिगम्बरः प्राणायामपर्यन्तम् ॥ २०१ ॥

( ६ ) **रामचन्द्रः** । दिग्वासानग्नः स्नात्वाचकारात् नग्नभोजनदिवास्त्रीगमनादिनिषेधः जलमध्ये प्राणायामेन शुध्यति ॥ २०१ ॥

**विनाद्भिरप्सु वाप्यार्त्तः शारीरंसन्निवेश्य च ॥ सचैलोबहिराप्लुत्य गामालभ्य विशुध्यति ॥२०२॥**

( १ ) **मेधातिथिः** । विनाद्भिरसंनिहितास्वप्सुअदृष्टगोचरस्थास्वप्सु आर्त्तोविष्टयास्तब्धशरीरंमूत्रपुरीषोत्सर्गसन्निवेश्यसचैलोयत्प्रावृतंवस्त्रंतेनसहितः । बहिर्ग्रामान्नद्यादावाप्लुत्यनिमज्यततोगामालभ्यस्पृष्ट्वाशुध्यति ॥ २०२ ॥

( २ ) **सर्वज्ञनारायणः** । विना अद्भिः शौचाद्भिः असन्निहितेशौचार्थजलइत्यर्थः । अप्सु जलमध्ये शारीरं मूत्रपुरीषोत्सर्गम् । आर्त्तः आपत्काले अनापदित्वन्यत्प्रायश्चित्तम् । आलभ्य स्पृष्ट्वा ॥ २०२ ॥

( ३ ) **कुल्लूकः** । असन्निहितजलेजलमध्ये वा वेगार्त्तो मूत्रंपुरीषंवा कृत्वा सवासाबहिर्ग्रामान्नद्यादौ स्नात्वा गांच स्पृष्ट्वा विशुद्धोभवति ॥ २०२ ॥

( ४ ) **राघवानन्दः** । अद्भिर्मलक्षालनंविनाशारीरं विण्मूत्रादि संनिवेश्यार्त्तोपिक्षिप्त्वा । बहिर्ग्रामान्नद्यादौ । आलभ्यस्पृष्ट्वा ॥ २०२ ॥

---

* त्र्यहं=द्व्यहं ( अ )

( ५ ) **नन्दनः** । आर्त्तआपन्नः शारीरंमूत्रादिकं अद्भिर्विनासंनिवेश्यजलरहितंकृत्वा अप्सुवाशारीरंसंनिवेश्योत्सृज्य बहिर्ग्रामात् आर्त्तग्रहणात्तस्य प्रायश्चित्तगौरवंद्रष्टव्यम् ॥ २०२ ॥

( ६ ) **रामचन्द्रः** । अद्भिर्विना अविहितैः शौचार्थजलैः शारीरं मूत्रपुरीषादि संनिषेव्य कृत्वा बहिः सचैलः आप्लुत्य स्नात्वा गामालभ्य विशुध्यति ॥ २०२ ॥

वेदोदितानांनित्यानांकर्मणांसमतिक्रमे ॥ स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २०३ ॥

( १ ) **मेधातिथिः** । वेदविहितानांदर्शपौर्णमासादीनांश्रौतानांस्मार्तानांचसंध्योपासनादीनां तान्यपिवेदोदितानितन्मूलत्वात्स्मृतीनांस्नातकव्रतानि नजीर्णमलवद्वासाइत्यादीनि । तेषांलोपएकाहमुपवासः । श्रौतकर्मातिक्रमे याइष्टयउक्तास्ता-अनेन समुच्चीयन्ते ॥ २०३ ॥

( २ ) **सर्वज्ञनारायणः** । वेदोदितानामिति । वेदोक्तनित्यसंध्यादिकर्ममध्ये अनाम्नातप्रायश्चित्तकर्मलोपे । स्नातकव्रतेषु वैणवींधारयेद्यष्टिमित्यादिषु अनाम्नातप्रायश्चित्तकर्मलोपे । अभोजनमेकरात्रमेव ॥ २०३ ॥

( ३ ) **कुल्लूकः** । वेदविहितानांकर्मणामग्निहोत्रादीनामनुपदिष्टप्रायश्चित्तविशेषाणांच परिलोपे स्नातकव्रतानांचतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासंप्रायश्चित्तंकुर्यात् ॥ २०३ ॥

( ४ ) **राघवानन्दः** । किंच वेदेति । कर्मणां होमसंध्यावन्दनादीनां । अतिक्रमे अकरणे कालतः स्वरूपतोवा । स्नातकव्रतं चतुर्थाध्यायोक्तम् । अभोजनं तदहरुपोषणम् ॥ २०३ ॥

( ५ ) **नन्दनः** । वेदोदितानामग्निहोत्रादीनां स्नातकव्रतानि पञ्चमहायज्ञादीनि ॥ २०३ ॥

हुङ्कारंब्राह्मणस्योक्त्वा त्वङ्कारंच गरीयसः ॥ स्नात्वाऽनश्नन्नहः शेषमभिवाद्य प्रसादयेत् ॥ २०४ ॥

( १ ) **मेधातिथिः** । सक्रोधाक्षेपेहुंकारेणहुंकुरुतेतूष्णीमास्वहुंमाएवंवादीरित्येवमादिष्वर्थक्रियासुतन्निषेधार्थंहुंकारकरणंब्राह्मणस्यज्येष्ठस्य समस्य कनीयसोवाशिष्यस्यपुत्रस्यवातथागरीयसस्त्वंकारमुक्त्वा त्वमेवमात्थत्वयेदंकृतम् । एकवचनान्तयुष्मच्छब्दोच्चारणे प्रायश्चित्तमेतत् । प्रथमादिविभक्तिर्नविवक्षिता । तथाच समाचारोगुरौयुष्मास्वित्यादिबहुवचनंप्रयोक्तव्यमिति । स्नात्वानश्नन्प्रातर्भक्तत्यागः । उपसंग्रहणंकृत्वाप्रसाद्यक्रोधंत्याजयित्वासायमश्नीयात् ॥ २०४ ॥

( २ ) **सर्वज्ञनारायणः** । गरीयसोगुरोरब्राह्मणस्यापि हुंकारंत्वंकारंचोक्त्वा तथाऽगरीयसोपि ब्राह्मणस्य तद्द्वयमुक्त्वा स्नात्वेत्यादिप्रायश्चित्तंकुर्यात् । अहःशेषमहोरात्रस्य शेषम् ॥ २०४ ॥

( ३ ) **कुल्लूकः** । हुंतूष्णींस्थीयतामित्याक्षेपंब्राह्मणस्य कृत्वा त्वङ्कारंच विद्याद्यधिकस्योक्त्वाऽभिवादनकालादारभ्याहःशेषंयावत्स्नात्वा भोजननिवृत्तः पादोपग्रहणेनापगतकोपंकुर्यात् ॥ २०४ ॥

( ४ ) **राघवानन्दः** । किंच हुंकारेति । गरीयसोगुरोः । अहःशेषं उपोषणंकृत्वेत्यर्थः । अभिवाद्य प्रणतिंकृत्वा । प्रसादयेत्तदात्मनि प्रसादमुत्पादयेत् । तथाच याज्ञवल्क्यः ॥ गुरुंहुंकृत्यत्वंकृत्यविप्रंनिर्जित्य वादतः ॥ बध्वावा वाससाक्षिप्रं प्रसाद्योपवसेद्दिनमिति ॥ २०४ ॥

( ५ ) **नन्दनः** । प्रसादयेत ब्राह्मणंगरीयांसञ्च ॥ २०४ ॥

( ६ ) **रामचन्द्रः** । गरीयसः ज्येष्ठस्य ॥ २०४ ॥

ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा॥ विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥२०५॥

( १ ) मेधातिथिः । तृणेनपीडाकरेणापिताडयित्वा प्रहृत्य वाससापिकण्ठेमृदुस्पर्शेन बध्वा । विवादेलौकिकेकलहे विनिर्जित्यप्रणिपत्य नम्रेणभूत्वाप्रसादयितव्यः । वादजल्पयोस्तुनायंविधिः ॥ २०५ ॥

( २ ) सर्वज्ञनारायणः । वाससाकण्ठेबद्धासंपदात्रवात्वेयतत्कार्यचिररात्रादिनियतःलघुगुरुनियमातिक्रमापेक्षयायोज्यं अत्र प्रकृतयोर्ब्राह्मणगरीयसोः कर्मत्वेन ग्रहणम् ॥ २०५ ॥

( ३ ) कुल्लूकः । प्राकृतंब्राह्मणंतृणेनापि ताडयित्वा कण्ठे वाबध्य वाससावा वाक्कलहेन जित्वा प्रणिपातेन प्रसादयेत् ॥ २०५ ॥

( ५ ) नन्दनः । ताडयित्वाब्राह्मणमित्येव ॥ २०५ ॥

अवगूर्यत्वब्दशतंसहस्रमभिहत्य च ॥ जिघांसया ब्राह्मणस्य नरकंप्रतिपद्यते ॥ २०६ ॥

( १ ) मेधातिथिः । अवगुरणप्रतिषेधोयं परिशिष्टोर्थवादोजिघांसयाहन्तुमिच्छयादण्डादिकमुद्यम्य संवत्सरशतंनरकेष्वास्ते । अभिहत्यप्रहारंदत्वा सहस्रंसंवत्सराणांजिघांसयानपरिहासतः ॥ २०६ ॥

( २ ) सर्वज्ञनारायणः । जिघांसया मारणेच्छया । अवगूर्य दण्डाद्युद्यम्य । अभिहत्य दण्डादि निपात्य ॥२०६॥

( ३ ) कुल्लूकः । ब्राह्मणस्य हननेच्छया दण्डमुद्यम्य वर्षशतंनरकंप्राप्नोति दण्डादिना पुनः प्रहृत्य वर्षसहस्रंनरकंप्राप्नोति ॥ २०६ ॥

( ४ ) राघवानन्दः । योब्राह्मणायावगुरेत्तं शतेन यातयादितिश्रुतिमाश्रित्य ब्राह्मणावगोरणादौ नरकंज्ञापयन्प्रायश्चित्तमाह अवगूर्येतिचतुर्भिः । अवगूर्य दण्डमुद्यम्य । अब्दशतं अब्दानांशतं अभिव्याप्य नरकंप्रतिपद्यते । एवमुत्तरत्र ॥ २०६ ॥

( ५ ) नन्दनः । ब्राह्मणावगुरादिषु प्रायश्चित्तंवक्तुंतन्निमित्तंपापफलंतावत् श्लोकाभ्यामाह अवगूर्यत्वब्दशतमिति । अवगूर्य प्रहर्तुंहस्तादिकमुद्धृत्य ॥ २०६ ॥

शोणितंयावतांपांसून्संगृह्णाति महीतले ॥ तावन्त्यब्दसहस्राणि तत्कर्ता नरके वसेत् ॥ २०७ ॥

( १ ) मेधातिथिः । ब्राह्मणस्य रुधिरदण्डादिप्रहारेण भूमौपतितंयावत्पांशून्रजोवयवान्संगृह्णाति तावन्तिसंवत्सरसहस्राणि तस्य जनयितानरकेव्रजेद्वसेत् । अयमप्यर्थवादः ॥ २०७ ॥

( २ ) सर्वज्ञनारायणः । संगृह्णाति संग्रहीतुं योग्यंभवति । द्विजन्मनोविप्रस्य । तत्कर्ता शोणितोत्पादकः ॥ २०७॥

( ३ ) कुल्लूकः । प्रहतस्य ब्राह्मणस्य रुधिरयावत्संख्याकान्रजः कणान्भूमौ पिण्डीकरोति तावत्संख्यकानि वर्षसहस्राणि तच्छोणितोत्पादकोनरके वसेत् ॥ २०७ ॥

( ४ ) राघवानन्दः । दण्डादिनोत्पादितं संगृह्णाति पिण्डीकरोति ॥ २०७ ॥

( ५ ) नन्दनः । द्विजन्मनः द्विजोत्तमस्य ॥ २०७ ॥

अवगूर्यचरेत्कृच्छ्रमतिकृच्छ्रंनिपातने ॥ कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम्॥२०८॥

( १ ) मेधातिथिः । पूर्वस्यप्रायश्चित्तमेतत् । ब्राह्मणरजःकृत्वेति शोणितोत्पादनादन्यत्रैतत् यदिवा तेनेदंविकल्पते ॥ २०८ ॥

---

( २०७ ) महीतले=द्विजन्मनः ( ख, ग, च, ण )

( २ ) **सर्वज्ञनारायणः** । फलमुक्त्वा प्रायश्चित्तमाह अवगूर्येति । कृच्छ्रं प्राजापत्यम् । कृच्छ्रातिकृच्छ्रौपूर्वार्धोक्तौ ॥ २०८ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य हननेच्छया दण्डाद्युद्यमने कृच्छ्रंकुर्यात् । दण्डादिप्रहारे दत्तेऽतिकृच्छ्रंवक्ष्यमाणंचरेत् । रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्वीत ॥ २०८ ॥

( ४ ) **राघवानन्दः** । उक्तेषु त्रिषु प्रायश्चित्तमाह अवगूर्येति । अवगूर्य दण्डमुद्यम्य ॥ २०८ ॥

( ५ ) **नन्दनः** । अत्र प्रायश्चित्तमाह अवगूर्यचरेत्कृच्छ्रमिति ॥ २०८ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणे अवगूर्य दण्ड मुत्थाप्य कृच्छ्रं चरेत् ॥ २०८ ॥

## अनुक्तनिष्कृतीनांतु पापानामपनुत्तये ॥ शक्तिंचावेक्ष्य पापंच प्रायश्चित्तंप्रकल्पयेत् ॥ २०९ ॥

( १ ) **मेधातिथिः** । अनुक्तानिष्कृतयः प्रायश्चित्तानि येषांविकर्मणां यथाचाण्डालादिप्रतिलोमवधेतत्रकल्पयेत् । ननुचात्राप्युक्तं किंचिदेवतुविप्रायदद्यादस्थिमतांवध इति अनस्थिसाहचर्यात्क्षुद्रजन्तुप्रायास्तत्रास्थिमन्तोगृह्यन्ते । महाकायानांतुनैषविधिः । ननुचत्वारोवर्णानास्तिपंचमइतिशूद्रप्रभेदाएवंप्रतिलोमाः यदि नामपंचमोवर्णोनजातोनैतावताशूद्रैस्तैर्भवितव्यंतेषामपि लक्षणस्य नियतत्वात् समानजात्यामूढायांजातः शूद्रइति वर्णसंकरजाश्चेत्तस्मान्नशूद्रहत्याप्रायश्चित्तं नापिकिंचिदेवतुविप्रायेत्यन्यस्तत्रकल्पनायाअनवसरः । शक्तिःप्रायश्चित्तिनस्तपसि तथाकिमयंतपसिसमर्थउतदाने । पापंच हिंसायाविहितप्रायश्चित्तमेव अभक्ष्यभक्षणेतदेव । अथपापस्यगुरुलघुभावोपेक्षणीयः । ननुचगुरुलघुभावः पापस्य कथंज्ञायतेप्रायश्चित्तमहत्त्वादितिचेत् अनुक्तप्रायश्चित्तविषयेयंकल्पनासत्यमर्थवादेदोषातिशयश्रवणाद्गुरुत्वात् तथाबुद्धिपूर्वानुकृतेच किंचनेदमनुक्तनिष्कृतिविषयमेवप्रकल्पयेत् उक्तेपि कल्पनाकार्या कुतएतत् दण्डप्रायश्चित्तयोस्तुल्यत्वात् । दण्डेनचोक्तानुक्तविषयमनुज्ञायते । किंचैतस्मिन्व्यतिक्रमे गुरुलघूनामुपदेशात्तत्रावश्यंभावनीयाकल्पना अतउद्दिष्टानुद्दिष्टसर्वशेषोयम् ॥ २०९ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तं कृच्छ्रादि प्रकल्पयेत् स्वयंविद्वानूहेत् । एतच्च सर्वं महापातकादिप्रायश्चित्तजालं शुद्धिदीपिकायां विषयव्यवस्थयास्माभिः प्रपञ्चेनोक्तमतोत्र पदार्थमात्रं प्रकाशितमिति ॥ २०९ ॥

( ३ ) **कुल्लूकः** । अनुक्तप्रायश्चित्तानांयथाप्रतिलोमवधादिकृतानांनिर्हरणार्थंकर्तुः शरीरधनानि सामर्थ्यमवेक्ष्य पापंच ज्ञात्वा ज्ञानाज्ञानसकृदावृत्त्यनुबन्धादिरूपेण प्रायश्चित्तंप्रकल्पयेत् ॥ २०९ ॥

( ४ ) **राघवानन्दः** । निमित्तनैमित्तिकभावमुपसंहरन्प्रायश्चित्तस्वरूपं प्रतिजानीते अनुक्तेति द्वाभ्याम् । अनुक्तनिष्कृतीनामननुष्ठितप्रायश्चित्तानाम् प्रकल्पयेत्परिषदिति शेषः ॥ २०९ ॥

( ५ ) **नन्दनः** । अनुक्तनिष्कृतीनामनुपदिष्टप्रायश्चित्तादीनाम् ॥ २०९ ॥

( ६ ) **रामचन्द्रः** । अनुक्तनिष्कृतीनां अनुक्तप्रायश्चित्तानां पापंविचार्य ॥ २०९ ॥

## यैरभ्युपायैरेनांसि मानवोव्यपकर्षति ॥ तान्वोऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान् ॥ २१० ॥

( १ ) **मेधातिथिः** । ननुचोक्ताएवाभ्युपायाः इहचान्द्रायणं इहप्राजापत्यं इहद्वादशवार्षिकमिति । सत्यंसंज्ञामात्रेण निर्दिष्टाइहतु स्वरूपंसेतिकर्तव्यताकमुच्यते । उपायएवाभ्युपायः व्यपकर्षति अपमार्ष्टिदेवर्षीत्यादिः स्तुतिः । मानवग्रहणंसर्ववर्णार्थम् ॥ २१० ॥

( २ ) **सर्वज्ञनारायणः** । उपायैः साधनैः ॥ २१० ॥

( ३ ) **कुल्लूकः** । यैर्हेतुभिर्मनुष्यः पापान्यपनुदति तान्पापनाशहेतून्देवर्षिपितृभिरनुष्ठितान्युष्माकंवक्ष्यामि ॥ २१० ॥

( ४ ) **राघवानन्दः** । व्यपकर्षति नाशयतिदेवर्षिपितृपदं भाविपरं तिर्यगधिकरणविरोधात् न तेषां प्राप्तदेवत्वानां तत्प्रायश्चित्ताधिकारः । सेवितान्निर्णीतान्वा ॥ २१० ॥

( ६ ) **रामचन्द्रः** । मानवो यै रुपायैः एनांसि पापानि व्यपकर्षति तानुपायान् वः वक्ष्यामि देवर्षिपितृभिः सेवितान् ॥ २१० ॥

**त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहंपरंच नाश्नीयात्प्राजापत्यंचरन्द्विजः ॥ २११ ॥**

( १ ) **मेधातिथिः** । यद्यप्यहर्मुखंप्रातस्तथापि पूर्वाह्णकालोलक्ष्यते । द्वितीयाह्णकालप्रतिषेधादस्यप्रातःकालविधौहि यदृच्छयाभोजनंप्राप्तंवर्तते [ केवलमत्यर्थंहिमध्यंदिनेवामनुष्याणामिति अयाचितत्वात्प्राप्तमर्थित्वाद्भोजनंतदेवचेत्प्रातःकालेविधीयते तदा माध्यंदिनंनिवर्तेत ][1] नसायंतनं । अद्यपुनर्यदेवपौरस्त्यंपूर्वाह्णमध्यंदिनकालयोर्विकल्पितयोःप्राप्तंभोजनंतदेवपुनरुच्यमानंकालान्तरनिवृत्त्यर्थंसंपद्यते व्रतत्वाच्चैतदेवयुक्तम्। एकाहारताहि व्रतपरिगणनायांसंख्यायते तपश्चेदंतापयति दुःखयतीति। यदिचद्वितीयंभोजनंनिवर्तते तत्र सायंतनं निवर्तेत।अन्येतु हविष्यान् प्रातराशानिति स्वल्पपरिमाणताभोजनस्य लक्ष्यतइत्याहुः प्रातराशेहिस्वल्पंभुंजते । यत्तच्छीलाःप्रकृतपुरुषास्तथासिद्धेपाके भोजनंप्राप्तंभुक्त्वेतिव्यपदिशन्ति । सायमितिवापरस्मिन् त्र्यहे ततोनन्तरां तथाहस्तवेदिकायांयावद्भुज्यते तावदनुज्ञायते । उक्तंच स्मृतिकारैरीषत्भुक्त्वार्थसंविशेषात् । अयाचितेपि हविष्यभोजनमेककालिकंच स्वगृहेपि दीयतांमेभोजनमिति यत्भृत्यादयआज्ञायन्ते तदपि याचितमेव प्रार्थनमात्रं याञ्चाप्रेषणाध्येषणयोःसाधारणं अतःस्वगृहेपि यदिभार्यादयोऽननुज्ञाताउपहरन्ति तथाभोक्तव्यंनत्वन्यथेति ॥ २११ ॥

( २ ) **सर्वज्ञनारायणः** । प्रातः प्रातरेव । एवं सायम् । तथा अयाचितं यद्ययाचितंलभ्यते । अलाभेतूपवासः ॥ २११ ॥

( ३ ) **कुल्लूकः** । प्राजापत्याख्यंकृच्छ्रमाचरन्द्विजातिराद्यंदिनत्रयंप्रातर्भुञ्जीत । प्रातः शब्दोयंभोजनानामौचित्यप्राप्तदिवाकालपरः । अतएव वसिष्ठः त्र्यहंदिवा भुङ्क्तेनक्तमत्ति च त्र्यहंत्र्यहमयाचितव्रतंत्र्यहंन भुङ्क्तइति च कृच्छ्रः । आपस्तंबोप्याह त्र्यहंनक्ताशी* दिवाशी च ततस्त्र्यहंत्र्यहमयाचितव्रतस्त्र्यहंनाश्नाति किंचनइति कृच्छ्रद्वादशरात्रस्य विधिः अपरंच दिनत्रयंसायंसध्यायामतीतायां भुञ्जीत अन्यद्दिनत्रयमयाचितंतावदन्नंभुञ्जीत शेषंच दिनत्रयंन किञ्चिदश्नीयात् । अत्र ग्राससंख्यापरिमाणापेक्षायां पराशरः ॥ सायंद्वात्रिंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा ॥ अयाचिते चतुर्विंशत्परंचानशनंस्मृतम् ॥ कुक्कुटाण्डप्रमाणंच यावांश्च प्रविशेन्मुखम् ॥ एतंग्रासंविजानीयाच्छुध्यर्थंग्रासशोधनम् ॥ हविष्यंचान्नमश्नीयाद्यथा रात्रौ तथा दिवा ॥ त्रींस्त्रीण्यहानि शास्त्रीयान्ग्रासान्संख्याकृतान्यथा ॥ अयाचितंतथैवाद्यादुपवासस्त्र्यहंभवेत् ॥ २११ ॥

( ४ ) **राघवानन्दः** । प्राजापत्यादिस्वरूपमाह पञ्चदशभिः । त्र्यहं दिनत्रयंव्याप्य । प्रातःशब्दोत्र दिवाभोजनोचितकालपरः । अतएव वसिष्ठः । त्र्यहं दिवाभुङ्क्ते नक्तमत्तिचत्र्यहं त्र्यहमयाचितं त्र्यहमभुङ्क्तइति कृच्छ्रः । तत्र ग्राससंख्या-

---

* शी=श्य ( अ ) ( १ ) आ आ

परिमाणोपादानानि पराशरोक्तानि ॥ सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ॥ अयाचिते चतुर्विंशत्परं चानशनं स्मृतम् ॥ कुक्कुटाण्डप्रमाणस्तुयावान्वा प्रविशेन्मुखम् ॥ एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनमिति ग्रासपरिमाणम् ॥ हविष्यान्नः प्रातराशःसायमाशस्तथैव च ॥ अयाचितं तथैवाद्यादुपवासत्र्यहं भवेदिति हविष्यान्नादिर्ग्रासोपादानद्रव्यम् ॥ २११ ॥

( ५ ) **नन्दनः** । प्राजापत्याख्यंकृच्छ्रम् ॥ २११ ॥

( ६ ) **रामचन्द्रः** । प्राजापत्यमाह त्र्यहमिति । प्रातस्त्र्यहं नक्तंत्र्यहं अयाचितं अद्यात् । त्र्यहंपरंनाश्नीयात् उपवासत्रयंएवंद्वादशदिनसाध्यंएकंप्राजापत्यव्रतंचरन् द्विजः अयाचितान्नं परकीयान्नं प्रातःस्वकीयान्नस्यपाचनम् ॥ २११ ॥

## गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ एकरात्रोपवासश्च कृच्छ्रंसान्तपनंस्मृतम् ॥ २१२ ॥

( १ ) **मेधातिथिः** । गोमूत्रादीनांकुशोदकानांसमाहारमाहुरेकस्मिन्नहन्येकरात्रोपवासश्च ततोद्यहंसांतपनं । अन्येतु प्रत्यहमेकैकंभक्षयितव्यं संहतस्याश्रुतत्वात् अतःसमाहानिसांतपनं द्वावप्येतौपक्षौस्मृत्यन्तरे परिगृहीतौ ॥ २१२ ॥

( २ ) **सर्वज्ञनारायणः** । क्षीरादित्रयमपि गोरेव । कुशोदकं कुशमिश्रजलम् । एतत्सर्वं मिलितमेकस्मिन्दिने प्राश्योत्तरेद्युरुपवसेत् ॥ २१२ ॥

( ३ ) **कुल्लूकः** । गोमूत्राद्येकीकृत्यैकैकस्मिन्नहनि भक्षयेन्नान्यत्किंचिदद्यात् । अपरदिने चोपवासइत्येतत्सान्तपनंकृच्छ्रंस्मृतम् । यदा तु गोमूत्रादिषट्प्रत्येकंषड्दिनान्युपभुज्य सप्तमे दिने चोपवासस्तदा महासान्तपनंभवति । तथाच याज्ञवल्क्यः ॥ कुशोदकंच गोक्षीरंदधिमूत्रंशकृद्घृतम् ॥ जग्ध्वा परेह्न्युपवसेत्कृच्छ्रंसान्तपनंचरन् ॥ पृथक्सान्तपनद्रव्यैः षडहः सोपवासिकः ॥ सप्ताहेनतु कृच्छ्रोयंमहासान्तपनंस्मृतम् ॥ २१२ ॥

( ४ ) **राघवानन्दः** । सांतपनं लक्षयति गोमूत्रमिति । गोमूत्रादिषट्कं मिश्रयित्वाएकस्मिन्दिने भक्षयतोऽपरस्मिन् दिनोपवासेन सान्तपनं द्व्यहःसाध्यम् । एतदेव महासान्तपनं गोमूत्रादिप्रत्येकं प्रत्यहं भोजनेएकोपवासश्च ॥ कुशोदकं तुगोक्षीरं दधि मूत्रं शकृत् घृतम् । जग्ध्वा परेद्युपवसेत् कृच्छ्रं सान्तपनं चरेत् ॥ पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ॥ सप्ताहेन तु कृच्छ्रोयं महासान्तपनः स्मृतइति याज्ञवल्क्योक्तेः ॥ २१२ ॥

( ५ ) **नन्दनः** । षडङ्गानिषडहानि यथाक्रमं गोमूत्रादीनद्यात् ॥ २१२ ॥

( ६ ) **रामचन्द्रः** । गोमूत्रादीन्षडप्येकीकृत्य पीत्वा आहारान्तररहितस्तिष्ठेत् परेद्युरुपवसेदिति दिनद्वयसाध्यः कृच्छ्रः ॥ २१२ ॥

## एकैकंग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ॥ त्र्यहंचोपवसेदंत्यमतिकृच्छ्रंचरन्द्विजः ॥ २१३ ॥

( १ ) **मेधातिथिः** । पूर्ववदितिप्राजापत्यविधिमतिदिशति एष्वेवकालेष्वेकैकंग्रासमश्नीयात् ॥ २१३ ॥

( २ ) **सर्वज्ञनारायणः** । त्र्यहानित्रीणि पूर्ववत् त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितमिति ॥ २१३ ॥

( ३ ) **कुल्लूकः** । अतिकृच्छ्रंद्विजातिरनुतिष्ठन्प्रातः सायमयाचितादिरूपेणैकैकंग्रासंत्र्यहाणि त्रीणित्रीणिपूर्ववत् अन्यच्च त्र्यहंन किंचिद्भुञ्जीत ॥ २१३ ॥

( ४ ) **राघवानन्दः** । अतिकृच्छ्रं लक्षयति एकेति । त्र्यहाणित्रीणि नवदिनानि। पूर्ववत् प्रातःसायमयाचितमितिपूर्वोक्तवत् ग्रासमत्रपाणिपूर्णान्नं ॥ अयमेवातिकृच्छ्रःस्यात्पाणिपूर्णान्नभोजनइति याज्ञवल्क्योक्तेः ॥ २१३ ॥

( ५ ) **नन्दनः** । त्र्यहाणित्रीणि नवदिनानीत्यर्थः पूर्ववत्प्राजापत्यवत् ॥ २१३ ॥

( ६ ) **रामचन्द्रः** । त्रीणि त्र्यहाणि नवदिनानि च पूर्ववत्तु पुनः अन्यत्र्यहमुपवसेत् । एवं द्वादशदिनसाध्यमतिकृच्छ्रम् ॥ २१३ ॥

**तप्तकृच्छ्रंचरन्विप्रोजलक्षीरघृतानिलान् ॥ प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायी समाहितः ॥ २१४ ॥**

**[ अपांपिबेच्च त्रिपलंपलमेकंच सर्पिषः । पयः पिबेत्तुत्रिपलंत्रिमात्रंचोक्तमानतः ॥ १ ॥ ] ‡**

( १ ) **मेधातिथिः** । तेष्वेवकालेषु जलादीनि यावतानातितृप्तिर्भवति । क्वचित्परिमाणंपठ्यते । अपांपिबेत्तुत्रिपलंपलमेकंतुसर्पिषः ॥ पयःपिबेत्तुद्विपलंत्रिपलंचोष्णमारुतं ॥ सकृत्स्नायीतित्रिरह्नःत्रिर्निशायामित्यस्यापवादः ॥ २१४ ॥

( २ ) **सर्वज्ञनारायणः** । जलादिचतुष्टयस्यैकैकंत्र्यहंत्र्यहंपिबेत् । तस्योष्णत्वमग्निसमीपे व्यजनादिनोत्पादितव्यम् ॥ २१४ ॥

( ३ ) **कुल्लूकः** । तप्तकृच्छ्रंचरन्द्विजातिः त्र्यहमुष्णोदकंत्र्यहमुष्णक्षीरंत्र्यहमुष्णघृतंत्र्यहमुष्णवायुमेकवारंस्नानंकुर्वन्संयमवान्पिबेत् । अत्र पराशरोक्तोविशेषः ॥ षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् ॥ पलमेकंपिबेत्सर्पिस्तप्तकृच्छ्रंविधीयते ॥ २१४ ॥

( ४ ) **राघवानन्दः** । तप्तकृच्छ्रं लक्षयति तप्तेति । प्रतित्र्यहं प्रत्येकंद्रव्यं क्रमेणत्र्यहंपिबेदित्यन्वयः । अनिलपदमेकरात्रोपवासपरम् । सकृत्पिबेत्सकृत्स्नायाच्चेत्यन्वयः ॥ तप्तक्षीरघृताम्बूनां प्रत्येकं प्रत्यहं पिबेत् ॥ एकरात्रोपवासश्च तप्तकृच्छ्रंतुयावकमिति याज्ञवल्क्योक्तेः । द्रव्यपरिमाणंतु ॥ षट्पलं तु पिबेदम्भस्त्रिपलंतु पयः पिबेत् ॥ पलमेकंपिबेत्सर्पिस्तप्तकृच्छ्रं विधीयतइति पराशरोक्तंसर्वत्र ॥ २१४ ॥

( ६ ) **रामचन्द्रः** । दुग्धसर्पिरुदकानां तप्तानामेकैकं प्रतिदिवसंपिबेत् परेद्युः उपवसेत् । एवं दिवसचतुष्टय [ त्रय ] साध्यंतप्तकृच्छ्रम् ॥ २१४ ॥

**यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ॥ पराकोनामकृच्छ्रोऽयंसर्वपापापनोदनः ॥ २१५ ॥**

( १ ) **मेधातिथिः** । यतात्मासंयतेन्द्रियोगीतादिशब्दश्रवणेष्वनभिलाषी अप्रमत्तस्तत्परः । अर्थवादोयं सर्वकृच्छ्रेष्वस्यधर्मस्यविहितत्वात् ॥ २१५ ॥

( २ ) **सर्वज्ञनारायणः** । यतात्मनोजितेन्द्रियस्य । अप्रमत्तस्य व्रताङ्गविस्मृतिशून्यस्य । एतच्च द्वयं पराके आवश्यकमङ्गमित्येतदर्थं साधारणमपि व्रताङ्गमुक्तम् ॥ २१५ ॥

( ३ ) **कुल्लूकः** । विगतानवधानस्य संयतेन्द्रियस्य द्वादशाहमभोजनमेव पराकाख्यःकृच्छ्रः । सकृदावृत्तितारतम्येन गुरुलघुसमफलपापापनोदनः ॥ २१५ ॥

( ४ ) **राघवानन्दः** । पराकंलक्षयति यतेति । यतात्मनोजितेन्द्रियस्य । सर्वपापनोदनइति गुरुतरानुक्तपापे प्रायश्चित्तातिदेशार्थम् ॥ २१५ ॥

( ५ ) **नन्दनः** । पराकशब्दउपवासवचः ॥ २१५ ॥

( ६ ) **रामचन्द्रः** । द्वादशाहं अभोजनं द्वादशाहोपवासेन पराकाख्यः भवति ॥ २१५ ॥

---

‡ ( ग )

**एकैकंह्रासयेत्पिण्डंकृष्णे शुक्ले च वर्धयेत् ॥ उपस्पृशं स्त्रिषवणमेतच्चान्द्रायणंस्मृतम् ॥ २१६ ॥**

( १ ) **मेधातिथिः** । चतुर्दश्यामुपोष्यत्वयंभूतायांपौर्णमास्यांपंचदशग्रासानश्नीयात् । ग्रासप्रमाणंचास्याधिकारेण ग्रासानुमंत्रणंच । आप्यायस्वसन्तेपयांसीति स्मृत्यन्तरोक्तोविधिरपेक्षितव्यः । एकशास्त्रत्वात्सर्वस्मृतीनामसतिविरोधे समग्रंयोज्यंविरोधे तुविकल्पः । प्रतिपदमारभ्यैकैकंग्रासंदिवसेदिवसेह्रासयेत् प्रतिपदि चतुर्दशद्वितीयस्यांत्रयोदशेत्यादियावच्चतुर्दश्यामेकोग्रासोभवति ततोऽमावास्यायामुपोष्य प्रतिपद्येकंग्रासमश्नीयात् द्वितीयस्यांद्वावेवमेकैकंवर्धयेद्यावत्पौर्णमास्यांपञ्चदशभवन्ति । उपस्पृशन्स्नानंकुर्वन् त्रिषवणंप्रातर्मध्यंदिनापराह्णेषु त्रिर्निशायामितिनिवर्तते विशेषविहितत्वात् ॥ २१६ ॥

( २ ) **सर्वज्ञनारायणः** । एकैकमिति पौर्णमास्यां पञ्चदशग्रासान्भुक्त्वा प्रतिपत्प्रभृत्येकैकग्रासापचयः । अमावास्यायां मध्ये उपोष्य प्रतिपदादि एकद्विक्रमेण ग्रासवृद्ध्या पौर्णमास्यां पञ्चदशग्रासाइत्यर्थः । पिण्डः ग्रासः ॥ २१६ ॥

( ३ ) **कुल्लूकः** । सायंप्रातर्मध्याह्नेषु स्नानंकुर्वाणः पौर्णमास्यां पञ्चदशग्रासानशित्वा ततः कृष्णप्रतिपत्क्रमेणैकैकंग्रासंन्ह्रासयेत्तथा चतुर्दश्यामेकोग्रासः संपद्यते । ततोऽमावास्यायामुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकंग्रासंवृद्धिनमेवंपौर्णमास्यां पञ्चदशग्रासाः संपद्यन्ते । एतत्पिपीलिकामध्याख्यंचान्द्रायणंस्मृतम् ॥ २१६ ॥

( ४ ) **राघवानन्दः** । चान्द्रायणस्य लक्षणमाह एकैकेतिद्वाभ्याम् पौर्णमास्यांपञ्चदशग्रासानशित्वा कृष्णपक्षप्रतिपत्क्रमेणैकैकंग्रासंन्ह्रासयेदमावास्यायामुपोषणमेव । ततः शुक्लप्रतिपदारभ्य पौर्णमास्यन्तमेकैकक्रमेण पञ्चदशग्रासान्वर्धयेदिति । पिपीलिकामध्याख्यमिदं कृष्णपक्षादिनियतम् ॥ २१६ ॥

( ५ ) **नन्दनः** अथचान्द्रायणमाह एकैकमिति कृष्णेकृष्णपक्षे ॥ २१६ ॥

( ६ ) **रामचन्द्रः** । शुक्ले एकं पिण्डं कवलं वर्धयेत् । च पुनः कृष्णेएकं पिण्डं ह्रासयेत् । त्रिषवणं त्रिकालस्नानं । वसिष्ठः ॥ एकैकंवर्धयेत्पिण्डंशुक्ले कृष्णे च न्हासयेत् । इन्दुक्षये च भुञ्जीत एषचान्द्रायणोविधिः ॥ २१६ ॥

**एतमेव विधिंकृत्स्नमाचरेद्यवमध्यमे ॥ शुक्लपक्षादिनियतश्चरंश्चान्द्रायणंव्रतम् ॥ २१७ ॥**

( १ ) **मेधातिथिः** । यवमध्यमेऽमावास्यायामुपोष्यप्रतिपद्येकोग्रासः । द्वितीयस्यां द्वौ यावत् पौर्णमास्यांपंचदश पुनः प्रतिपदमारभ्य कृष्णपक्षएकैकग्रासापचयोयावदमावास्यामुपवासः ॥ २१७ ॥

( २ ) **सर्वज्ञनारायणः** । अमावास्यायाःप्रतिपदाद्यैकैकग्रासवृद्ध्या पञ्चदशग्रासान्पौर्णमास्यांभुक्त्वा एकैकापचयेन प्रतिपदादिषुदर्शे नोपवासइत्यर्थः ॥ २१७ ॥

( ३ ) **कुल्लूकः** । एतमेव पिण्डन्हासवृद्धित्रिषवणस्नानात्मकंविधानंयवमध्याख्येचान्द्रायणे शुक्लपक्षमादितः कृत्वा संयतेन्द्रियश्चान्द्रायणमनुतिष्ठन्नाचरेत् । ततश्च शुक्लप्रतिपदमारभ्यैकैकंपिण्डंवर्धयेत् । यथा पौर्णमास्यां पञ्चदशग्रासाः संपद्यन्ते ततः कृष्णप्रतिपदमारभ्यैकैकंपिण्डंह्रासयेद्यथाऽमावास्यायामुपवासोभवति ॥ २१७ ॥

( ४ ) **राघवानन्दः** । शुक्लप्रतिपदारभ्य पौर्णमास्यन्तं पञ्चदशग्रासान्वर्धयित्वा ततः कृष्णप्रतिपादारभ्यैकैकंग्रासं न्हासयित्वाऽमावास्यायामुपोषणमिति यवमध्याख्यम् ॥ तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिखण्डसंमितान् ॥ एकैकं न्हासयेत्कृष्णे पिण्डं चान्द्रायणंचरन्निति याज्ञवल्क्योक्तेः ॥ २१७ ॥

( ५ ) **नन्दनः** । यवमध्याख्यचान्द्रायणमाह एतमेवेति ॥ २१७ ॥

**अष्टावष्टौ समश्नीयात्पिण्डान्मध्यंदिने स्थिते ॥ नियतात्मा हविष्याशी यतिचान्द्रायणंचरन् ॥ २१८ ॥**

( १ ) **मेधातिथिः**। प्रत्यहंमासमष्टौग्रासानकृष्णपक्षाद्वाऽऽरभ्य शुक्लपक्षाद्वा यतिचांद्रायणंभवति । मध्यंदिने स्थिते प्रवृत्ते पूर्वाह्णापराह्णौवर्जयित्वेत्यर्थः । शिष्टंप्रसिद्धम् ॥ २१८ ॥

( २ ) **सर्वज्ञनारायणः**। अत्रापि मासइतिवर्तते । हविष्याशीति सर्वव्रतसाधारणमप्यत्रोपदर्शितं अवश्यंकाप्युपचयदर्शनीयत्वात् ॥ २१८ ॥

( ३ ) **कुल्लूकः**। यतिचान्द्रायणमनुतिष्ठन् शुक्लपक्षात्कृष्णपक्षाद्वाऽऽरभ्य मासमेकंसंयतेन्द्रियः प्रत्यहमष्टावष्टौग्रासान्मध्यंदिने भुञ्जीत । मध्यंदिनइति गृहस्थब्रह्मचारिणोः सायंभोजननिवृत्त्यर्थम् ॥ २१८ ॥

( ४ ) **राघवानन्दः**। यतिचान्द्रायणंत्वाह अष्टाविति । कृष्णपक्षाच्छुक्लपक्षाद्वारभ्य मासमेकंप्रत्यहमष्टौ ग्रासान्हविष्यान्नस्यमध्यंदिनेऽश्नीयात् ॥ २१८ ॥

( ५ ) **नन्दनः**। यतिचान्द्रायणमाह अष्टाविति हविष्यपिण्डानित्यन्वयः ॥ २१८ ॥

( ६ ) **रामचन्द्रः**। यतिचान्द्रायणं चरेत् ॥ २१८ ॥

**चतुरःप्रातरश्नीयात्पिण्डान्विप्रःसमाहितः ॥ चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणंस्मृतम् ॥ २१९ ॥**

( १ ) **मेधातिथिः** । अत्रप्रातः शब्दोस्तमयसाहचर्यात्सूर्योदयप्रत्यासन्नंकालंलक्षयति अस्तमितेसूर्येप्रदोषइत्यर्थः ॥ २१९ ॥

( २ ) **सर्वज्ञनारायणः**। चतुरइत्यत्रापि मासएवावधिः ॥ २१९ ॥

( ३ ) **कुल्लूकः**। प्रातश्चतुरोग्रासानश्नीयात् अस्तमिते च सूर्ये चतुरोग्रासान्भुञ्जीत एतच्छिशुचान्द्रायणंमुनिभिः स्मृतम् ॥ २१९ ॥

( ४ ) **राघवानन्दः**। शिशुचान्द्रायणं लक्षयति चतुरिति । शिशुभोजनकाले प्रातस्त्रिघटिकोज्ञेयइतिस्मृतेः ॥ २१९ ॥

( ५ ) **नन्दनः**। शिशुचान्द्रायणमाह चतुरइति ॥ २१९ ॥

( ६ ) **रामचन्द्रः**। चतुरःपिण्डान्प्रातरश्नीयात् चतुरोऽस्तमिते सूर्ये एतच्छिशुचान्द्रायणंभवेत् ॥ २१९ ॥

**यथा कथंचित्पिण्डानांतिस्रोऽशीतीः समाहितः ॥ मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ ॥ २२० ॥**

( १ ) **मेधातिथिः**। कस्मिंश्चिद्दिवसे चतुरोग्रासान् कस्मिंश्चिद्द्वादशकस्मिंश्चिन्नाश्नाति यथाकथंचिच्छब्दात्रौप्रवृत्तिः । यदिकस्मिंश्चित्कस्मिंश्चित्षोडश अयंतुनियमःतिस्रोशीतीर्मासेनेतिद्वेशतेचत्वारिंशदधिके चंद्रलोकंप्राप्नोति ॥ २२० ॥

( २ ) **सर्वज्ञनारायणः** । एकैकदिनभोज्यग्रासनियमंविना चत्वारिंशदधिकशतद्वयमित्यर्थग्रासानां मासेन भोजनात् अपरंचान्द्रायणम् । पिपीलिकमध्येहि प्रथमे चान्द्रायणे पौर्णमास्यामारम्भे पञ्चदशग्रासाअधिकाभुक्तास्तैःसह तिस्रोऽशीतयोभवन्ति तदपेक्षयैव यतिशिशुचान्द्रायणयोरत्र ग्रासाशीतित्रयोपयोगः । यवमध्येतु पञ्चविंशत्यधिकग्रासशतद्वयमेव ॥ २२० ॥

( ३ ) **कुल्लूकः**। नीवारादिहविष्यसंबन्धिनांग्रासानांद्वेशते चत्वारिंशदधिके कदाचिद्दशकदाचित्पञ्चकदाचित्षोडश-कदाचिदुपवासइत्येवमाद्यनियमेन यथा कथंचित्पिण्डान्मासेन संयतवान्भुञ्जानश्चन्द्रसलोकतांयाति। एवंपापक्षयार्थमभ्युद-यार्थंचेदमुक्तं। अतएव याज्ञवल्क्यः॥ धर्मार्थंयश्चरेदेतच्चन्द्रस्यैति सलोकतां ॥ कृच्छ्रकृच्छ्रमकामस्तु महतींश्रियमाप्नुया त्॥ अतः प्राजापत्यादिकृच्छ्रमप्यभ्युदयफलमिति याज्ञवल्क्येनोक्तम्॥ २२०॥

( ४ ) **राघवानन्दः**। यथाकथंचिच्छुक्लपक्षंवारभ्य नत्वनियमेन व्रतस्य नियमरूपत्वात्। तिस्रोशीतीश्चत्वारिंशद-धिकशतद्वयम्॥ मेधातिथिस्त्वनियमपक्षः कदाचिच्चत्वारि कदाचिद्दशेति। चन्द्रस्यैतिसलोकतामित्यनेन चान्द्रायणस्य काम्यत्वमपि धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामितिसंवादात्॥ २२०॥

( ५ ) **नन्दनः**। पिण्डवृद्धिन्ह्रासौभोजनकालनियमश्च पिण्डसंख्यानियमश्च नाश्रयणीयइति सूचितम्॥ २२०॥

( ६ ) **रामचन्द्रः**। हविष्यंपिण्डानां तिस्रोऽशीतीः चत्वारिंशच्छतद्वयसङ्ख्याकं २४० मासेन अश्नन् चन्द्रस्य सलोकतामेति। अष्टौ प्रत्यहमश्नीयादित्यर्थः। चत्वारिंशच्छतद्वयं इतिज्ञेयम्॥ २२०॥

**एतद्रुद्रास्तथादित्यावसवश्चाचरन्व्रतम्॥ सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः॥ २२१॥**

( १ ) **मेधातिथिः**। एतच्चांद्रायणंव्रतंसर्वेदेवाःसमाचेरुः सर्वेषामकुशलानांविमोक्षायनकेवलंयत्रैवोक्तमनुक्तेष्वपिद्र-ष्टव्यम्। तदुक्तं कृच्छ्रातिकृच्छ्रौचांद्रायणमिति सर्वप्रायश्चित्तानि। अत्रेदंसंदिह्यते यदेतत्सर्वप्रायश्चित्तवचनंकिंतत्त्रेणसर्वेषांशो-धनमुतयोगसिद्धिन्यायेन प्रतिनिमित्तमावर्ततइति। उच्यते यद्यप्येतन्न्याय्यंनिमित्तावृत्तौनैमित्तिकावृत्तिरिति तथापीदमनाम्ना-तप्रतिपदप्रायश्चित्तनिमित्तेष्वसंविदितेषु कृतसंभावनायामाम्नायते। तत्रयेषांतावत्संभावनामात्रेण शुद्धिःक्रियते तथासंवत्स-रस्यैकमपीति। तत्रनिमित्तस्यानिश्चितत्वादुपपत्तेःकुतआवृत्तिसंभवोयथासुप्तस्यपरिवर्तनैः शय्यागतसूक्ष्मप्राणिवधस्तथा नगरस्य रथ्यासुभ्राम्यतः परस्त्रीमुखसंदर्शनमागृहप्राप्तेरसकृत्संभवति तादृग्विषये तन्त्रभावएवयुक्तः। दर्शितंचैतत् अरश्व-न्वतामित्यादौ समुदायवधएकंप्रायश्चित्तमिति। यानिचगरीयांसि पापानि तत्रसर्वत्रप्रायश्चित्तान्याम्नातानि। इदंच यथाप्र-दर्शितएवविषये भवितुमर्हति महत्त्वाच्चानावृत्तौन्याय्यं तस्मात्संशितेष्वपिकथंचित्प्रायश्चित्तेषुनिमित्तान्तरोत्पत्तौयुक्तएवत-न्त्रभावः। तथाच तन्त्रधर्मएवन्याय्यइति दर्शयति। यद्दिवाच नक्तंचैनश्चकृम यत्स्वपंतश्चकृम यज्जाग्रतश्चापियदितिच। वीप्सायांयुगपदशेषपापवर्जनम्॥ २२१॥

( २ ) **सर्वज्ञनारायणः**। अकुशलं पापम्॥ २२१॥

( ३ ) **कुल्लूकः**। एतच्चान्द्रायणाख्यंव्रतंरुद्रादित्यवसुमरुतश्च महर्षिभिः सह सर्वपापनाशाय गुरुलघुपापापेक्षया सकृदावृत्तिप्रकारेण कृतवन्तः॥ २२१॥

( ४ ) **राघवानन्दः**। उक्तचान्द्रायणचतुष्टयेऽर्थवादमाह एतदिति। अत्र रुद्राद्याभाविवृत्त्यपेक्षयातथाच। श्रुतिः। अग्निर्वाअकामयत अन्नादोदेवानोमन्नादःस्यामिति॥ सकृत्तिकाभ्योष्टाकपालंनिरवपत् सोऽग्निरभवदित्यदष्टाकपालया-गनिर्वापानन्तरंअग्निभावश्रुतेरिति। सर्वाकुशलमोक्षाय सर्वपापनिवृत्तये। पापोद्देश्यकव्रतानामपि नान्तरीयकामदत्वंनवि-रुद्धमिति। तथाच श्रुतिः॥ यथाम्रेनिमित्ते छायागन्धावनुत्पद्येते एवंधर्मंचरिन्वानस्यार्थकामौ प्रसिध्यतइति॥ याज्ञ-वल्क्योपि॥ धर्मार्थंयश्चरेदेत चन्द्रस्यैति सलोकताम्॥ कृच्छ्रकृच्छ्रमकामस्तु महतीं श्रियमाप्नुयादिति॥ २२१॥

( ५ ) **नन्दनः**। एतत्कृच्छ्रादिव्रतम्॥ २२१॥

(६) **रामचन्द्रः** । रुद्रादयः सर्वे अकुशलमोक्षाय ॥ २२१ ॥

**महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ॥ अहिंसासत्यमक्रोधमार्जवंच समाचरेत् ॥२२२॥**

(१) **मेधातिथिः** । अत्रवदन्ति सर्वेष्वेतेष्विति कर्तव्यतेयमुच्यते सर्वहोमेष्वाज्यद्रव्यमनुपात्तेद्रव्यविशेषेदर्शितंस्वयं-ग्रहणात्परकर्तृकतानिवर्तेत किंपुनरयंहोमोलौकिकेऽग्नावनावसथ्यस्य भवतिनेतिविचार्यते । इदमेवतावद्विचार्यंकुतोग्नौहोमः प्रक्षेपावधिकस्त्यागोजुहोतेरर्थः । तत्र यस्मिनकस्मिंश्चिदाधारेप्रक्षेपेणसिध्यत्येवहोमः ततश्च स्थलेजलेवाग्नौवाक्रियतांहोमो-गृह्याग्निमतस्तुनलौकिकेऽग्नौहोमः ग्राम्याग्नौतस्यतद्धोमप्रतिषेधात् । समाचारादग्निसिद्धिरितिचेत्समाचारएवतर्ह्यन्विष्यतां गृ-ह्यकारैस्तत्प्रणीताग्न्यधिकारैः कृच्छ्रविधिषु होमआम्नातः । तद्दर्शनेनानावसथस्य प्रायश्चित्तेनाहोमकाःकृच्छ्राः । अभ्युदया-र्थिनस्तुनैवानग्निकस्य सन्ति सर्वांगोपसंहारेण फलसिद्धेरहिंसा शिष्यभृत्याद्यपि ताड्यंनताडनीयं सत्यंनर्मणापि नानृतं यदिवापुरुषार्थतयाप्राप्तयोरङ्गत्वायविधानं आर्जवमक्रूरता ॥ २२२ ॥

(२) **सर्वज्ञनारायणः** । चान्द्रायणव्रतान्याह महाव्याहृतिभिरिति । तिसृभिः समस्ताभिरित्यर्थः । आज्यंहविर-नादेशइतिवचनादाज्येन होमः । आर्जवमवक्रताम् ॥ २२२ ॥

(३) **कुल्लूकः** । महाव्याहृतिभिर्भूर्भुवः स्वरेताभिः आज्यंहविरनादेशेजुहोतिषु विधीयत इति परिशिष्टवचनादा-ज्येन प्रत्यहंहोमंकुर्यात् अहिंसा सत्याक्रोधाकौटिल्यानि चानुतिष्ठेद्यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रताङ्गत-यायमुपदेशः ॥ २२२ ॥

(४) **राघवानन्दः** । प्राजापत्यानां सर्वेषामुत्तराङ्गमाह व्याहृतीतिचतुर्भिः । व्याहृत्यादिपञ्चकमाचरेदनुति-ष्ठेत् ॥ २२२ ॥

(५) **नन्दनः** । अथव्रतधर्मानाह महेति ॥ २२२ ॥

(४) **रामचन्द्रः** । कृच्छ्रचान्द्रायणनियमानाह महाव्याहृतिरिति । महाव्याहृतिभिः समस्ताभिः ॐभूःस्वाहाॐभुवः स्वाहा ॐस्वःस्वाहा आभिर्होमः कर्तव्यः ॥ २२२ ॥

**त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत् ॥ स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥२२३॥**

(१) **मेधातिथिः** । त्रिरह्नइतिसवनेष्वनुसवनमुदकोपस्पर्शनमिति गौतमोनिशायामपित्रिषुयामेषु महानिशांवर्जयि-त्वातदवधिनहि अस्तिस्नानकालः । यदेववासोयुगमाच्छादनार्थमौचित्यप्राप्तंतेनैवसहजलंप्रविशेदाविशेदितिनोद्धृतोदकेने-त्यर्थः । स्त्रियोब्राह्मणीरपिनाभिभाषेत अन्यत्रमातृज्येष्ठभागिन्यादिभ्योभार्ययासहकर्मोपयोगीसंलापोननिषिध्यते अन्य-स्तुनकर्तव्यएव ॥ २२३ ॥

(२) **सर्वज्ञनारायणः** । त्रिरह्नः आदिमध्यान्तेषु । एवं निशायाः । एतच्च न पिपीलिकमध्ये तत्र त्रिषवणोक्तेः । नापि यवमध्ये तत्र पूर्वधर्मातिदेशात् । तथा न तप्तकृच्छ्रे सकृत्स्नायीत्युक्तेः ॥ २२३ ॥

(३) **कुल्लूकः** । अहनि रात्रावादिमध्यावसानेषु स्नानार्थंसचैलोनद्यादिजलंप्रविशेत् । एतच्चपिपीलिकामध्ययवमध्य-चान्द्रायणेतरचान्द्रायणविषयं । तयोरुपस्पर्शत्रिषवणमित्युक्तत्वात् स्त्रीशूद्रपतितैश्च सह यावद्व्रतंकदाचित्संभाषणंन कुर्यात् ॥ २२३ ॥

(४) **राघवानन्दः** । त्रिस्त्रिरितिवीप्सा । अन्हः प्रातःकाले निशायां सायंकाले मध्याह्नेच प्रत्यहंस्नानत्रयं कुर्या-

त् । तेनन्यूनातिरिक्तसंख्याव्यवच्छेदः । सचेलत्वादिगुणविधिः । एतत्तुचान्द्रायणद्वयाङ्गमितिकेचित् । तत्र तप्तकृच्छ्रातिरिक्ते सर्वत्र ॥ कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ॥ पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेदिति याज्ञवल्क्योक्तेः ॥ पिण्डान् ग्रासान् तेष्वेवमित्युपसंहारदर्शनाच्च सन्निधेः प्रकरणस्य बलवत्वात् । अन्यथा सर्वशब्दपीडा स्यात्सर्वव्रतशेषत्वात्स्नानस्य उपस्पृशंस्त्रिषवणमितिवक्ष्यमाणमनुवादमात्रं यएवंविद्वान्पौर्णमासीं यजतइतिवत् ॥ २२३ ॥

( ५ ) **नन्दनः** । कर्हिचिदापद्यपि ॥ २२३ ॥

( ६ ) **रामचन्द्रः** । त्रिः अह्नः त्रिः निशायां प्रातःसायं जलं आविशेत स्नायादित्यर्थः ॥ २२३ ॥

**स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा ॥ ब्रह्मचारी व्रती चस्याद्गुरुदेवद्विजार्चकः ॥ २२४ ॥**

( १ ) **मेधातिथिः** । उत्थितआसीनउपविष्टोऽथवा नक्तचिन्निषीदेदशक्तावधःशयीत नपर्यङ्के । ब्रह्मचारीमैथुननिवृत्तः व्रती शिष्टाप्रतिषिद्धेषु नियमंगृह्णीयादिदंमयानकर्तव्यमिति गुर्वादीनामर्चाप्रणतेन स्रगनुलेपनाद्युपहर्तव्यम् ॥ २२४ ॥

( २ ) **सर्वज्ञनारायणः** । स्थानमुत्थितत्वम् । आसनमुपवेशनम् । विहरेत् कालंनयेत् । यथा गौतमः । तिष्ठेदहनि रात्रावासीतेति । अधोभूमौ । ब्रह्मचार्यष्टाङ्गमैथुननिवृत्तः । व्रती मौञ्जीदण्डकमण्डलुरग्निकार्यंचेति शङ्खोक्तव्रताङ्गकारी ॥ २२४ ॥

( ३ ) **कुल्लूकः** । अहनि रात्रौ चोत्थितआसीनः स्यान्नतु शयीत । असामर्थ्येतु स्थण्डिले शयीत नखट्वादौ । ब्रह्मचारीस्त्रीसंयोगरहितव्रतः व्रतीमौञ्जीदण्डादियुक्तः ॥ पालाशंधारयेद्दण्डंशुचिर्मौञ्जींच मेखलामिति यमस्मरणात् । गुरुदेवब्राह्मणानांचपूजकोभवेत् ॥ २२४ ॥

( ४ ) **राघवानन्दः** । किंचान्यत् स्थानेति । विहरेन्नशयीत शक्तःसन् । अशक्तःशयीतेतिभावः ॥ २२४ ॥

( ५ ) **नन्दनः** । विहरेत्कालक्षेपंकुर्यात् ॥ २२४ ॥

( ६ ) **रामचन्द्रः** । अशक्तः अधः भूमौ शयीत ॥ २२४ ॥

**सावित्रींच जपेन्नित्यंपवित्राणि च शक्तितः ॥ सर्वेष्वेव व्रतेष्वेवंप्रायश्चितार्थमादृतः ॥ २२५ ॥**

( १ ) **मेधातिथिः** । सावित्रीतत्सवितुरितिगायत्री सवितृदेवत्वाज्जपचोदनासु सावित्रीशब्देन तस्याः सर्वत्राधिकारः । पवित्राण्यघमर्षणपावमानीपुरुषसूक्तादीनि शुक्रियाध्यायाजनरौहिरणेयादीनि सामानि सर्वकृच्छ्रेषु आदृतोयत्नवान् । सर्वेष्वित्यादिश्लोकपूरणस्तथाविधस्यैवाधिकारात् ॥ २२५ ॥

( २ ) **सर्वज्ञनारायणः** । जपेन्नित्यं दिवा रात्रौच । पावनानि पवित्राण्यस्यवामीयादीनि । व्रतान्तरेष्वप्येतदिति सर्वेष्विति । एवमुक्ताभुंजीत काम्येष्वपि प्राजापत्यादिषु तथा प्रायश्चित्तार्थेष्वपि कुर्यात् ॥ २२५ ॥

( ३ ) **कुल्लूकः** । सावित्रींच सदा जपेत्पवित्राणि चाघमर्षणादीनि यथाशक्तिजपेत् । एतच्च यथाचान्द्रायणे तथा प्राजापत्यादिकृच्छ्रेष्वपि यत्नवान्प्रायश्चित्तार्थमनुतिष्ठेत ॥ २२५ ॥

( ४ ) **राघवानन्दः** । किंच सेति । पवित्राण्यघमर्षणादीनि आदृतः श्रद्धालुः प्रायश्चित्तार्थं तत्सहकारितया जपेदित्यन्वयः । अतएव न व्रतेषु शूद्रस्याधिकारः किंतुतपःशूद्रस्य सेवनमिति वक्ष्यति । अतएवोक्तम् । नशूद्रेपातकंकिंचित् । प्रातिस्विकपापानुरूपप्रायश्चित्तादर्शनान्नमोमंत्रजपोवा ॥ २२५ ॥

( ५ ) **नन्दनः** । पवित्राणि पावमान्यादीनि ॥ २२५ ॥

( ६ ) **रामचन्द्रः** । पवित्राणि शक्तितः अस्यवामीयादीन् मन्त्रान् जपेत् एवंसर्वेषुप्रायश्चित्तार्थआदृतः ॥ २२५ ॥

एतैर्द्विजातयःशोध्याव्रतैराविष्कृतैनसः ॥ अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ॥ २२६ ॥

( १ ) **मेधातिथिः**। आविष्कृतंप्रकाशंलोकविदितमेनः पापंयेषांतएतैःकृच्छ्रैः शोध्याः। येतुरहस्यपापास्तेषांनकृच्छ्रतपांसि किंतर्हि मन्त्रैर्होमैश्चशोधयेत्। यदितावत्यपरिषदः ननुरहस्येषु नास्तिपरिषद्गमनमाविष्कृतंनस्याद्विदुषांहितत्राधिकारः उच्यते नप्रायश्चित्तमनागतं शोधयेदित्युच्यते अपितु शास्त्रव्याख्यानकाले शिष्याणामुपदेशादिदंरहस्येषु शोधनंबोद्धव्यमिति ॥ २२६ ॥

( २ ) **सर्वज्ञनारायणः**। आविष्कृतैनसः प्रख्यातपापाः। अनाविष्कृतपापाः तत्पापहेतुकर्माविनाभूतव्यतिरिक्तैरज्ञातपापास्तान्मन्त्रैर्होमैश्च शोधनैः पावनतया विहितैः। एवंच परस्त्रीगमनादौ तत्क्रियाविनाभूतया परस्त्रिया तज्ज्ञानेपि न रहस्यत्वाभावः तदन्येन तु कर्तृव्यतिरिक्तेन ज्ञाते रहस्यत्वमपैति ॥ २२६ ॥

( ३ ) **कुल्लूकः**। लोकविदितपापाद्विजातयएभिरुक्तप्रायश्चित्तैर्वक्ष्यमाणपरिषदाशोधनीयाः। अप्रकाशितपापांस्तु मानवान्मन्त्रैर्होमैश्च परिषदेवशोधयेत्। यद्यपि परिषदि निवेदने रहस्यत्वस्य नाशः तथाप्यमुकपापे कृते केनापि लोकाविदिते किंप्रायश्चित्तंस्यादिति सामान्यप्रश्ने न विरोधः ॥ २२६ ॥

( ४ ) **राघवानन्दः**। प्रकटपापिनां व्रतान्युपसंहरन्प्रच्छन्नपापस्य प्रायश्चित्तमुपदिशंस्तपःश्रैष्ठ्यमाह एतैरित्येकविंशत्या। अनाविष्कृतपापान् स्त्रीपुंमिथुनातिरिक्ताविदितान्। एतस्यपापस्येदंप्रायश्चित्तमिति परोक्षवादेनपृष्टापरिषन्मन्त्राद्युपदेशेन शोधयेदितिशेषः ॥ २२६ ॥

( ५ ) **नन्दनः**। यान्येतानि व्रतान्युपदिष्टानि तानि प्रकाशितानां प्रायश्चित्तमप्रकाशितानांजपहोमादयइत्याह एतैरिति ॥ २२६ ॥

( ६ ) **रामचन्द्रः**। आविष्कृतैनसः लोकविदितैनसः एतैर्व्रतैर्द्विजातयः संशोध्याः। तु पुनः अनाविष्कृतपापान् रहस्याचरितपापान् मन्त्रैर्होमैः शोधयेत् ॥ २२६ ॥

ख्यापनेनानुतापेन तपसाऽध्ययनेन च ॥ पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥ २२७ ॥

( १ ) **मेधातिथिः**। विप्राणांविदितेऽन्येषामप्येवंकर्मास्मीतिप्रकाशयेत् एतत्ख्यापनमनुतापः। तस्मात्तापेन धिङ्मांमहदकार्यमकरवमनर्थोमेदुष्कृतकारिणोजन्मन्येवमादिः चित्तपरिखेदः। अध्ययनंसाविञ्याजपोवेदपाठोवाहिंसायामन्नत्रासमर्थस्यतपसिदानं एतदाहेदानींनचापदितिप्रक्रांततपसः आपदिपीडायामनिग्रहणेदानम् ॥ २२७ ॥

( २ ) **सर्वज्ञनारायणः**। ख्यापनेन प्रकाशपापानां पुनः प्रकाशनेन। अनुतापेन रहस्ये प्रकाशेच। तपसा नाशकादिना। अध्ययनेन जपेन। आपदि तपोजपाशक्तौ दानेन ॥ २२७ ॥

( ३ ) **कुल्लूकः**। पापकारी नरोलोकेषु निजपापकथनेन धिङ्मामतिपापकारिणमिति पश्चात्तापेन शुध्यति। तपसा चोग्ररूपेण सावित्रीजपादिना च पापान्मुच्यते। तपस्याशक्तोदानेन च पापान्मुक्तोभवति। ख्यापनंचेदंप्रकाशप्रायश्चित्ताङ्गभूतंन रहस्यप्रायश्चित्ताङ्गंरहस्यत्वहानिप्रसङ्गात्। अनुतापश्च प्रकाशरहस्याङ्गमेव दानेनेति प्राजापत्यव्रतएकधेनुविधानात् धेनुश्च पञ्चपुराणीया त्रिपुराणीया वेति एतेन ब्रह्महत्यानिमित्तके द्वादशवार्षिकव्रते मासि सार्धद्वयप्राजापत्यान् वत्सरे त्रिंशद्धेनवोभवन्ति द्वादशभिर्वर्षैः षष्ट्यधिकशतत्रयंधेनवोभवन्तीति ॥ २२७ ॥

( ४ ) **राघवानन्दः** । ख्यापनेन मयेदंकृतमितिकथनेन तत्कथने लोकावज्ञास्पदत्वात् पुनर्न प्रवर्ततइतिभावः । अनुतापेन धिगस्तु मामित्यनुशोचनेन । तथाच विष्णुपुराणम् ॥ कृते पापेऽनुतापोवै यस्य पुंसः प्रजायते ॥ प्रायश्चित्तंतु तस्यैकं हरिसंस्मरणं परम् ॥ आपदिपूर्वोक्ताशक्तौदानेनवै ॥ २२७ ॥

( ५ ) **नन्दनः** । अथोभयेषु पापेषु प्रायश्चित्तविशेषापद्धर्मानपरानाह ख्यापनेनेति । ख्यापनंप्रकाशितपापविषयं सामर्थ्याद्गम्यते इतराण्युभयविषयाणि दानेनचापदीत्यापद्ग्रहणात्सर्वैः प्रायश्चित्तविशेषैर्दानस्यतुल्यार्थता नानुतापाद्विवंगतेत्यस्यप्रपञ्चइति ॥ २२७ ॥

( ६ ) **रामचन्द्रः** । ख्यापनेन पापानां कथनेन रहस्यस्यानुतापेन च पुनः तपसा वेदाध्ययनेन आपदिदानेन ॥ २२७ ॥

**यथा यथा नरोऽधर्मंस्वयंकृत्वानुभाषते ॥ तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते ॥ २२८ ॥**

( १ ) **मेधातिथिः** । ख्यापनविधेरर्थवादः । नरोऽधर्ममितिनञः प्रश्लेषोधर्मस्य स्वयंख्यापनंनिषिद्धं नगुणाः स्वयंवाच्याइति प्रकृतश्चाधर्मएव तेनाधर्मेणेति श्रूयतएव ॥ २२८ ॥

( २ ) **सर्वज्ञनारायणः** । ख्यापनस्य पापक्षयत्वंदृढयति तथायथेति ॥ २२८ ॥

( ३ ) **कुल्लूकः** । यथा यथा स्वयंपापंकृत्वा नरोभाषते लोके ख्यापयति तथा तथा तेन पापेन सर्पइव जीर्णत्वचा मुच्यतइति ख्यापनविधेरनुवादः ॥ २२८ ॥

( ४ ) **राघवानन्दः** । तत्र ख्यापनानुवादयोरर्थवादमाह यथेतित्रिभिः । तेनोक्तेन अधर्मेणत्वचेवाहिः ॥ २२८ ॥

( ५ ) **नन्दनः** । अनुतापंश्लोकत्रयेणप्रपञ्चयति यथेति ॥ २२८ ॥

( ६ ) **रामचन्द्रः** । नरः स्वयमधर्मंकृत्वा अनुभाषते कथयति तथा तेनाधर्मेण मुच्यते कइव अहिः त्वचेव ॥२२८॥

**यथा यथा मनस्तस्य दुष्कृतंकर्मगर्हति ॥ तथा तथा शरीरंतत्तेनाधर्मेण मुच्यते ॥ २२९ ॥**

( १ ) **मेधातिथिः** । शरीरमन्तरात्मैव नभूतात्मा पुण्यपापयोस्तदाश्रयात् । उपचाराद्धि आत्मनः शरीरशब्दोयंद्रष्टव्यः । अनुतापार्थवादोयंगर्हाख्याता ॥ २२९ ॥

( २ ) **सर्वज्ञनारायणः** । अनुतापस्य पापनाशकतां दृढयति यथायथामनइति । शरीरं लिङ्गदेहः ॥ २२९ ॥

( ३ ) **कुल्लूकः** । तस्य पापकारिणोमनोयथा यथा दुष्कृतंकर्मनिन्दति तथा तथा शरीरंजीवात्मा तेनाधर्मेण मुक्तोभवति अयमनुतापानुवादइति ॥ २२९ ॥

( ४ ) **राघवानन्दः** । पापकर्तुर्मनः पापंकर्मगर्हति शरीरंलिङ्गदेहम् ॥ २२९ ॥

( ५ ) **नन्दनः** । निन्दत्यनुतपति शरीरमिति शरीरस्थआत्मालभ्यते शरीरीति साधुःपाठः ॥ २२९ ॥

**कृत्वा पापंहि संतप्य तस्मात्पापात्प्रमुच्यते ॥ नैवंकुर्यांपुनरिति निवृत्त्या पूयते तुसः ॥ २३० ॥**

( १ ) **मेधातिथिः** । निमित्तपर्यन्तमित्याहुस्तदयुक्तं संतापोमनःपरिखेदः प्रमादैतन्मयाकृतमित्येवंरूपः । निवृत्तिस्तु संकल्पोनकर्तव्यः पुनरितिक्रियाभेदंचदर्शयति क्त्वाप्रत्ययेन संतप्यनिवर्तेतेत्यतः प्रायश्चित्तवत्ख्यापनानुतापनिवृत्तयः प्रायश्चित्तिनाकर्तव्याः । प्रयतःसिद्धिमाप्नोति ॥ २३० ॥

( २ ) **सर्वज्ञनारायणः** । संतप्य संतापानन्तरं प्रायश्चित्तमल्पमपि चरित्वेति तात्पर्यम् । नकेवलमुत्पन्नपापस्य नाशोऽनुत्पन्नस्याप्यनुत्पादःपश्चात्तापादित्याह नैवमिति । पूयते संभवदुत्पत्तिपापशून्योभवति ॥ २३० ॥

( ३ ) **कुल्लूकः** । पापंकृत्वा पश्चात्संतप्य तस्मात्पापान्मुच्यतइत्युक्तमपि नैवंकुर्यांपुनरित्येवमनूदितं । यदा तु पश्चात्तापोनैवंपुनः करिष्यामीति एवंनिवृत्तिरूपसंकल्पफलकः स्यात्तदा सुतरांतस्मात्पापात्पूतोभवतीति । एतच्च निवृत्तिसंकल्पस्य प्रकाशाप्रकाशप्रायश्चित्ताङ्गविधानार्थम् ॥ २३० ॥

( ४ ) **राघवानन्दः** । न कुर्यामितिनिवृत्त्या पूयते पुनरपिनप्रवर्तते ॥ २३० ॥

( ६ ) **रामचन्द्रः** । च पुनः एवं पापं न कुर्यां इति निवृत्त्या सः पूयते ॥ २३० ॥

**एवंसंचिन्त्यमनसा प्रेत्यकर्मफलोदयम् ॥ मनोवाङ्मूर्त्तिभिर्नित्यंशुभंकर्मसमाचरेत् ॥ २३१ ॥**

( १ ) **मेधातिथिः** । एवमितिकृत्स्नस्य विधिनिषेधसमूहस्य प्रत्यवमर्शः प्रेत्यकर्मफलोदयंशुभस्य कर्मणःस्वर्गादिफलावाप्तिरशुभस्यनरकोपपत्तिरकृतेप्रायश्चित्ते प्रायश्चित्तंचातिदुःखरूपमेतन्मनसिसंचिन्त्यशुभंकर्मसमाचरेत् विहितंशुभंतत् तथासंकल्पमूलःकामोवाक्यार्थानियताइति च तस्माद्यद्यपि नाहिंस्यादित्युद्यमननिपातनेदण्डादेःपरदुःखोत्पादने उच्येते । तथाप्येवमादिशास्त्रपर्यालोचनयाध्यवसायादिनिषेधः । एवमभक्ष्यभक्षणादावपिद्रष्टव्यं यद्यपिभक्षणमात्रादन्नादिनिगरणपर्यन्तंतथापि मानसोऽध्यवसायोनिषिद्धएव । एवमगम्यागमनेपि । यद्यपिहीन्द्रियसमापत्तिर्गमनंतथापि तदर्थाध्यवसायोव्यापारएवमादिशास्त्रान्तरैर्निषिध्यते । यद्येवंहननभक्षणागम्यागमनेषु यत्प्रायश्चित्तंतदध्यवसायेऽपिप्राप्नोति नैषदोषः ब्राह्मणवधेतावदिष्टमेव अहत्वापीतिवचनात् । अन्यत्रतुमुख्यस्यैव शब्दार्थस्य परिग्रहोन्याय्यः । प्रतिषेधेतूक्तशास्त्रपर्यालोचनया समनोव्यापारात्प्रभृतिकायव्यापारपर्यन्तविषयोऽवतिष्ठते । यद्येवंनिन्दितंसमाचरन्निति प्रायश्चित्तनिमित्तोपदेशात्प्रतिषेधानुसारिप्रायश्चित्तंप्राप्नोति कएवमाहनास्तिप्रायश्चित्तमिति किंचतच्छब्दचोदितान्नभवत्यन्यस्य लघुकल्प्यंतथाचसर्वप्रायश्चित्तानामेवमादिरपिविषयोन्याय्यः । कुतः पुनरयंविशेषोलभ्यते प्रतिषेधाध्यवसायादिति प्रायश्चित्तानितु शब्दार्थेष्वेव व्रतनियमधर्माश्चसर्वेसंकल्पजाइति । अनेनविधिप्रतिषेधावेवोच्येते । व्रतानिविधिरूपाणि यमाःप्रतिषेधलक्षणास्तत्रैवचकृतार्थत्वान्नैमित्तिकेषु यावत्प्रवर्तितुमर्हन्ति अस्तिचप्रतिषेधसामान्यनिमित्तमतोभवतिप्रायश्चित्तं नचपरद्रव्येष्वभिध्यानमितिचात्रैवान्तेदर्शयिष्यामः ॥ २३१ ॥

( २ ) **सर्वज्ञनारायणः** । एवंसंचित्य प्रायश्चित्तम् । तथा प्रेत्य मरणानन्तरं कर्मफलस्य नरकादेरुदयम् । मूर्तिर्देहः ॥ २३१ ॥

( ३ ) **कुल्लूकः** । एवंशुभाशुभानांकर्मणांपरलोकइष्टानिष्टफलंमनसा विचार्य मनोवाक्कायैः शुभमेव सर्वकर्मकुर्यादिष्टफलत्वात् नाशुभंनरकादिदुःखहेतुत्वात् ॥ २३१ ॥

( ४ ) **राघवानन्दः** । किंचएवमिति प्रेत्य कर्मफलोदयं वक्ष्यमाणं यातनोत्थम् । मूर्तिभिर्देहैःशुभमेव समाचरेत् । अनुतिष्ठेत् ॥ २३१ ॥

( ६ ) **रामचन्द्रः** । मनोवाङ्मूर्तिभिः मनोवाक्कायैः ॥ २३१ ॥

**अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्मविगर्हितम् ॥ तस्माद्विमुक्तिमन्विच्छन्द्वितीयंन समाचरेत् ॥ २३२ ॥**

( १ ) **मेधातिथिः** । कृतप्रायश्चित्तस्यापिपुनरकार्यप्रवृत्तावधिकतरंप्रायश्चितमिति एवमर्थंद्वितीयंनसमाचरेदिति ।

अथवानिवृत्तेरनन्तरोपदिष्टायाअर्थवादोद्वितीयंनसमाचरितव्यमिति । व्रतंनहातव्यं तस्मादाद्यकृताद्यतिक्रमाद्विमुक्तिमिच्छन्-मोक्षमिच्छन्पुनर्नकुर्यादतश्चैतदुक्तंभवति। कृतेऽपि प्रायश्चित्ते नविमुच्यते यदिपुनःसमाचरति नचनिष्कृतौकृतायामकृतायामपि मोक्षोयुक्तोऽतोमुक्तस्यमुक्तिमन्विच्छन्निति नोपपद्यते तस्मादाधिक्यायपुनर्वचनम् ॥ २३२ ॥

( २ ) **सर्वज्ञनारायणः** । द्वितीयंनाचरेत्पापं द्वितीयकरणेतु पूर्वस्यापिबहुप्रायश्चित्तापनेयता भवतीत्यर्थः ॥ २३२ ॥

( ३ ) **कुल्लूकः** । प्रमादादिच्छातोवा निषिद्धंकर्मकृत्वा तस्मात्पापान्मुक्तिमिच्छन्पुनस्तन्न कुर्यात् एतच्च पुनः करणे प्रायश्चित्तगौरवार्थम् । अतएव देवलः ॥ विधेः प्राथमिकादस्माद्द्वितीये द्विगुणंभवेदिति ॥ २३२ ॥

( ४ ) **राघवानन्दः** । फलितमाह तस्मादिति । तस्मादज्ञानादि कृताद्विशुद्धितस्मात्पूर्वार्चितपापात् द्वितीयं तज्जातीयं नसमाचरेन्नकुर्यात् । किमुक्तिमितिक्वचित्पाठः । अतएव देवलः ॥ विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम् ॥ तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिरिति ॥ २३२ ॥

( ५ ) **नन्दनः** । यतएवमतआह अज्ञानादिति । द्वितीयंपुनरपीतियावत् ॥ २३२ ॥

( ६ ) **रामचन्द्रः** । अज्ञानात् यदिवाज्ञानात् तस्माद्विमुक्तिंइच्छन्द्वितीयं नसमाचरेत् ॥ २३२ ॥

**यस्मिन्कर्मण्यस्य कृते मनसः स्यादलाघवम् ॥ तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरंभवेत्॥२३३॥**

( १ ) **मेधातिथिः** । असत्यांचित्तशुद्धौ विहितातिरेककरणार्थमिदं दुष्कृतेकर्मण्यलाघवंकापिविचिकित्सायदि भवति । ततः कृतेऽपिप्रायश्चित्तआत्मनः प्रसादोत्पत्तेरावर्तयितव्यम् । तपोग्रहणंदानादीनामपियथाविहितदर्शनार्थम् ॥२३३॥

( २ ) **सर्वज्ञनारायणः** । यस्मिन्कर्मणि प्रायश्चित्तेकृतेपि लाघवमक्षीणपापोस्मीतिमतिः । तुष्टिकरं क्षीणपापोहमितिबुद्धेर्जनकम् ॥ २३३ ॥

( ३ ) **कुल्लूकः** । अस्य पापकारिणोयस्मिन्प्रायश्चित्ताख्ये कर्मण्यनुष्ठिते न चित्तस्य संतोषः स्यात्तस्मिंस्तदेव प्रायश्चित्तंतावदावर्त्तयेद्यावन्मनसः संतोषः प्रसादः स्यात् ॥ २३३ ॥

( ४ ) **राघवानन्दः** । किंच यस्मिन्निति । यस्मिन्प्रायश्चित्ताख्ये कृते । अलाघवमसंतोषः । तस्मिंस्तदेव प्रायश्चित्तं तावदावर्तयेद्यावन्मनः प्रसादः स्यात् ॥ २३३ ॥

( ५ ) **नन्दनः** । अथतपः प्रपञ्चयति यस्मिन्निति अलाघवं गौरवं तुष्टिरितियावत् ॥ २३३ ॥

( ६ ) **रामचन्द्रः** । यस्मिन्नसुकृतेःकर्मणि मनसः अलाघवं स्यात् चित्तस्य असंतोषः स्यात् तस्मिन्तावत्तपः कुर्यात् । यावन्मनः तुष्टिकरंभवेत् यस्मिन्पापेकर्मणिकृते प्रायश्चित्ते निष्पापोहमित्यात्मनि लघुतामेति ॥ २३३ ॥

**तपोमूलमिदंसर्वंदैवमानुषकंसुखम् ॥ तपोमध्यंबुधैः प्रोक्तंतपोन्तंवेददर्शिभिः ॥ २३४ ॥**

( १ ) **मेधातिथिः** । मनुष्यलोके यत्सुखमाभिमानीकंजनपदैश्वर्यादि यच्चैहिकमरोगित्वादि यच्चसांसर्गिकंधनपुत्रादि संपत् यथाभिमतकान्तादिविषयोपभोगलक्षणमैन्द्रियकं यच्चवेदेषुमनुष्याणांशतमानन्दाःसएकआजानदेवेष्वित्यादितस्यसर्वस्यतपोमूलंउत्पत्तिकारणं तपोमध्यमुत्पन्नस्यस्थितिर्मध्यावस्थाऽतोवसानंतदपेक्षयेतिवेदविदांदर्शनं यथैवकर्माणि स्वर्गयामाद्यभिमतफलसाधनान्येवंतपोविज्ञेयम् ॥ २३४ ॥

---

( २३३ ) स्यकृते = सुकृते ( क, ख )

( २ ) **सर्वज्ञनारायणः** । मूलं जन्महेतुः । दैवं देवानांसुखम् । मानुषकं मनुष्याणाम् । मध्यं स्थितिहेतुः । अन्तोनाशहेतुः वैषयिकसुखस्यापवर्गकारी । तत्रयं तपएवेत्यर्थः ॥ २३४ ॥

( ३ ) **कुल्लूकः** । यदेतत्सर्वंदेवानांमनुष्याणांचसुखंतस्य तपः कारणं तपसैव च तस्य स्थितिः तपोऽन्तःप्रतिनियतविधिरेवदेवादिसुखस्य तपसा जननादादिष्टंवेदार्थज्ञैरुक्तं उक्तप्राजापत्यादिप्रायश्चित्तात्मकतपः । प्रसङ्गेन चेदंवक्ष्यमाणंच सर्वतपोमाहात्म्यकथनम् ॥ २३४ ॥

( ४ ) **राघवानन्दः** । तपसोनासाध्यमित्याविदयन्नाह तपइति । तपोमूलं तपएवोत्पत्तिहेतुः । मध्यं स्थितिहेतुः । अंतं विनाशहेतुः । आसुरतपसा दैवसुखस्य नाशदर्शनात् ॥ २३४ ॥

( ६ ) **रामचन्द्रः** । बुधैःतपः मध्यं प्रोक्तं वेददर्शिभिः तपः अन्तं शरीरस्यान्ते तपः फलति ॥ २३४ ॥

**ब्राह्मणस्य तपोज्ञानंतपःक्षत्रस्य रक्षणम् ॥ वैश्यस्य तु तपोवार्ता तपः शूद्रस्य सेवनम् ॥ २३५॥**

( १ ) **मेधातिथिः** । नैवंमन्तव्यंतपसिसमर्थोतएवसर्वफलसिद्धिमवाप्स्यामि विध्यतिशययोगाच्च । विहिताकरणेपि न द्रव्येणकथंमेनुष्ठेयोधर्मइति यनोब्राह्मणस्यतपोज्ञानं ज्ञानंवेदार्थावबोधः तस्मिन्नसति नतत्फलसाधनमतोज्ञानमेव तपउच्यते । महत्यपिव्रतसिद्धिः तेन स्वधर्मोनहातव्यइत्येवमर्थोयंश्लोकः । ज्ञानग्रहणंस्वाध्यायग्रहणाध्ययनात्मभृतिसर्वस्वधर्माणां प्रदर्शनार्थमेवंतपःक्षत्रियस्येति । शूद्रस्यसेवनंद्विजातीनामिति शेषस्तत्सेवायाविहितत्वात् । अस्यचानुवादत्वात् ॥ २३५ ॥

( २ ) **सर्वज्ञनारायणः** । ब्राह्मणस्य यत्ज्ञानमसाधारणाभ्युदयहेतुस्तदपि तपएव तपोमूलत्वात् । एवं रक्षणादावपि । सेवनं सेवायांप्रवृत्तिः ॥ २३५ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणस्य ब्रह्मचर्यात्मकवेदान्तावबोधनंतपोराजन्यस्य रक्षणंतपो वैश्यस्य कृषिवाणिज्यपाशुपाल्यादिकंतपः शूद्रस्य ब्राह्मणपरिचर्या पइति वर्णविशेषेणोत्कर्षबोधनार्थम् ॥ २३५ ॥

( ४ ) **राघवानन्दः** । कृच्छ्रचान्द्रायणादेः तपःशब्दप्रसंगेन प्रतिनियतचातुर्वर्ण्यधर्मे तदर्तादिशनुशूद्रस्य सेवैव तपइतिविधत्ते ब्राह्मणस्येति । ज्ञानं वेदतदर्थयोः । रक्षणं प्रजायाः । वार्ता कृषिवाणिज्यादिः । सेवनं द्विजानां शुश्रूषा ॥२३५॥

( ५ ) **नन्दनः** । ब्राह्मणादीनांज्ञानादीनि यानि धर्मान्तरेभ्यः प्रधानत्वेनोपदिष्टानितानि तपएव ज्ञानादिभिःप्राप्यंफलंतपसा प्राप्यतइत्यर्थः ॥ २३५ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्य तपोज्ञानं तपोजन्यत्वात् । तपः क्षत्रस्य रक्षणं प्रजारक्षणरूपम् । वैश्यस्य वार्तायां कारणं तपः । शूद्रस्य द्विजसेवनंतपः ॥ २३५ ॥

**ऋषयः संयतात्मानःफलमूलानिलाशनाः ॥ तपसैव प्रपश्यन्ति त्रैलोक्यंसचराचरम् ॥ २३६ ॥**

( १ ) **मेधातिथिः** । अतीन्द्रियज्ञानातिशयासादनमपिमुनीनांतपोबलेनैवेत्यर्थः । वाङ्मनःकायनियमात्संयतात्मानः फलमूलेत्याहारनियमः । ईदृशेनतपसात्रैलोक्यंप्रत्यक्षवत्पश्यन्ति ॥ २३६ ॥

( २ ) **सर्वज्ञनारायणः** । तपसा योगस्तेन प्रपश्यन्ति ॥ २३६ ॥

( ३ ) **कुल्लूकः** । ऋषयोवाङ्मनःकायनियमोपेताः फलमूलवायुभक्षाः तपसैव जङ्गमस्थावरसहितंपृथिव्यन्तरिक्षस्वर्गात्मकंलोकत्रयमेकदेशस्थाः सन्तोनिष्पापान्तःकरणाः प्रकर्षेण पश्यन्ति ॥ २३६ ॥

( ४ ) **राघवानन्दः** । तपसः किं दुरापमस्तीत्याविदयंन् साश्चर्यमाह ऋषयइतिनवभिः । संशितव्रतास्तपसातनूकृतपापाः । सचराचर स्थावरजङ्गमात्मकंत्रैलोक्यं एकदेशस्थआर्षेणज्ञानेनप्रत्यक्षीकुर्वन्ति ॥ २३६ ॥

( ५ ) **नन्दनः**। तपसा त्रैलोक्यं प्रपश्यन्ति तपसा दिव्यज्ञानोभूत्वासर्वविदोभवन्तीत्यर्थः ॥ २३६ ॥

( ६ ) **रामचन्द्रः**। ऋषयः फलमूलाशिनः ॥ २३६ ॥

**औषधान्यगदोविद्यादैवी च विविधा स्थितिः ॥ तपसैव प्रसिद्ध्यन्ति तपस्तेषांहि साधनम् ॥ २३७॥**

( १ ) **मेधातिथिः**। औषधानिरसायनानि अगदाव्याध्युपशमभेषजानि । विद्या भूतविशेषादिविषया दैवीस्थितिरणिमादिशक्तियोगोऽनेकप्रकारः ॥ २३७ ॥

( २ ) **सर्वज्ञनारायणः**। औषधानि भैषज्यानि । अगदाविषघ्नमन्त्ररूपाणि । विद्या वेदार्थज्ञानानि । दैवीस्थितिरिन्द्रत्वादिका । प्रसिध्यन्ति प्रकर्षेण सिध्यन्ति फलन्ति ॥ २३७ ॥

( ३ ) **कुल्लूकः**। औषधानि व्याध्युपशमनहेतुकानि । अगदोगदाभावोनैरुज्यमितियावत् । विद्याब्रह्मधर्मचर्यात्मकवेदार्थज्ञानंवेदसंबन्धिनी च नानारूपा स्वर्गादाववस्थितिः । इत्येतानि तपसैव प्राप्यन्ते यस्मात्तपएषांप्राप्तिनिमित्तम् ॥२३७॥

( ४ ) **राघवानन्दः**। औषधानि महौषधिप्रभृतीनि । अगदः गदोरोगस्तन्निरसनं । सुश्रुतशास्त्रं तपसैवनिर्मितम् । विद्याब्रह्मविद्या ॥ तपसाब्रह्म विजिज्ञासस्वेतिश्रुतेः ॥ दैवीचन्द्रलोकादिसंस्थितिः चन्द्रस्यैतिसलोकतामित्युक्तेः । प्रकृष्टतयोत्पद्यन्तइत्याह प्रसिध्यन्तीति ॥ २३७ ॥

( ५ ) **नन्दनः**। अगदोव्याधिरहितोविविधा दैवी स्थितिः विविधदैवताप्राप्तिः अत्र कारणत्वेनोक्तंतपस्तेषांहिसाधनमिति । तेषामौषधादीनांसाधनंसाधकम् ॥ २३७ ॥

( ६ ) **रामचन्द्रः**। औषधानि विषघ्नमन्त्ररूपाणि विद्या वेदार्थज्ञानं दैवी इन्द्रत्वादिका विविधा स्थितिर्मर्यादा२३७॥

**यद्दुस्तरंयद्दुरापंयद्दुर्गंयच्च दुष्करम् ॥ सर्वंतु तपसा साध्यंतपोहि दुरतिक्रमम् ॥ २३८ ॥**

( १ ) **मेधातिथिः**। दुःखेन यत्तीर्यते तद्दुस्तरं व्याधिनिमित्तामहत्यापदतिबलेन शत्रूणांयदुपरोधः एतदपि तपस्वीनांसुसाध्यम् । कृच्छ्रेणयत्प्राप्यते तद्दुरापमाकाशगमनादि । दुर्गंमेघपृष्ठारोहणादि । दुष्करमभिशापवरदानादि । अन्यथात्वकरणंयथा संवर्तस्यान्यदेवतासृष्टिः । सर्वमेव तपसा सिध्यति । श्लोकत्रयेण संयोगपृथक्त्वादभ्युदयार्थता कृच्छ्राणामुच्यते । ननुच प्रायश्चित्तानांप्रकृतत्वात्कृच्छ्रस्तुतिस्तच्छेषतयैवन्याय्या नाभ्युदयार्थिनोविधेयतया नच दुस्तरादयोऽर्थवादतयानसंभवन्ति । एवंविधःमहांतःकृच्छ्रायदुस्तरमपिसमुद्रादितीर्यते किंपुनर्दुष्पापंनापनोत्स्यंते । उच्यते गृह्यस्मृतिषु सामविधौचानानुक्रम्यैव प्रायश्चित्तानांकृच्छ्रविधिः समाम्नातः तत्रचानारभ्याधीतत्वाद्युक्तैवाभ्युदयार्थता । आहच अथैतान् कृच्छ्रांश्चरित्वा सर्वेषु वेदषु ज्ञातोभवतीति । वेदेषु ज्ञातइत्यनेन नियमपूर्वकंवेदाध्ययनानुष्ठानाद्यफलंतत्सिद्धमाह । यस्तुनिष्फलोग्रहणार्थोऽध्ययनविधिःसएकवेदाध्ययनेनात्रापि संपद्यते । एवमनेकवेदाध्ययनंतुधर्मायैवेत्युक्तंवेदेषुज्ञातइत्यनेनाशेषयागफलावाप्तिमाह । यजमानोहिवेदैर्ज्ञायते योह्यर्थवादतयासंभवति नप्रायश्चित्तानिदानभावंगच्छद्भिरिहापिस्वधर्मनिवृत्तिमाशङ्कमानेनत्राह्मणस्यतपोज्ञानमिति यदुक्तंतदभ्युदयार्थत्वेसंभवति नप्रायश्चित्तानि पापप्रमोचनार्थानि काम्यानि फलसाधनानि तत्रभिन्नविषयत्वात्कुतःप्रायश्चित्तैर्निवृत्तिराशङ्क्यते । अभ्युदयार्थत्वेतु कृच्छ्राणामन्येषांचकर्मणांतुल्यत्वाद्युक्तानिवृत्त्याशङ्का तथामहापातकिनश्चेति पापप्रमोचनार्थेपिचोद्यते यद्दुस्तरमित्यादिना । अभ्युदयार्थतेतिभिन्नेएवतेवाक्ये तेन च प्रकरणस्यबाधोयुक्तएव । तथाचद्वैपायनमुनिप्रभृतयस्तपःप्रभावाद्बुद्धीर्विचित्रास्तावक्ष्यन्ते तस्मात्सर्वफलानितपांसि । नच यथासर्वार्थान्यपि वैदिकानि कर्माणि नियतफलानि सर्वेभ्योदर्शपूर्णमासौ सर्वेभ्योज्योतिष्टोमइत्याधिकारात्तत्रसर्व-

त्रयान्येववेदेस्वर्गादीनि फलानि श्रुतानि तदपेक्षयैव सर्वार्थता नतुकध्यतिशयातिभोगेनैवमिति किंतर्हियदुस्तरमित्यादिय-थानिर्दशितम् ॥ २३८ ॥

( २ ) **सर्वज्ञनारायणः** । दुस्तरं समुद्रादि । दुरापं चिन्तामण्यादि । दुर्गं मेरुपृष्ठादि । दुष्करं लोकसृष्ट्यादि ॥२३८॥

( ३ ) **कुल्लूकः** । यद्दुःखेन तीर्यते ग्रहदोषसूचितापदादि यद्दुःखेन प्राप्यते क्षत्रियादिना यथा विश्वामित्रेण । तेनैव शरीरेण ब्राह्मण्यादि यद्दुःखेन गम्यते मेरुपृष्ठादि यद्दुःखेन क्रियते गोःप्रचुरदानादि तत्सर्वंतपसासाधितुंशक्यते यस्मादतिदुष्करकार्यकरणंसर्वंतपसा साध्यते तपोदुर्लंघनशक्ति ॥ २३८ ॥

( ४ ) **राघवानन्दः** । किंच यदिति । दुस्तरं ग्राहादिकुलानिष्टम् । दुरापं जात्यन्तरस्य जात्यन्तरप्राप्तिर्यथा विश्वामित्रस्य ब्राह्मण्यावाप्तिः । दुर्गंगरुडस्यामृताहरणम् । दुष्करमगस्त्यस्य सिन्धुपानम् । उक्तंसर्वंतपसा साध्यमिति नकेवलमपितु तपोह्यनुल्लङ्घनीयमित्याह तपोहीति । दुरतिक्रममतिक्रमशून्यम् ॥ २३८ ॥

( ५ ) **नन्दनः** । शक्यंसाध्यं अत्रापि कारणत्वेनोक्तंतपोहिदुरतिक्रममिति । केनचिदपि तपोलङ्घयितुंनशक्यमित्यर्थः॥ २३८ ॥

( ६ ) **रामचन्द्रः** । यत् दुस्तरं समुद्रादि । यत् दुरापं चिन्तामण्यादि । यत् दुर्गं मेरुपृष्ठादि । यत् दुष्करं लोकसृष्ट्यादि ॥ २३८ ॥

**महापातकिनश्चैव शेषाश्चाकार्यकारिणः ॥ तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ २३९ ॥**

( १ ) **मेधातिथिः** । उक्तार्थमेतत् ॥ २३९ ॥

( २ ) **सर्वज्ञनारायणः** । तपसैव मुच्यन्ते जपस्यापि भेदत्वात् ॥ २३९ ॥

( ३ ) **कुल्लूकः** । ब्रह्महत्यादिमहापातककारिणोऽन्यउपपातकाद्यकार्यकारिणः तपसैवोक्तरूपेणानुष्ठितेन तस्मात्पापान्मुच्यन्ते उक्तस्यापि पुनर्वचनंप्रायश्चित्तस्तुत्यर्थं ॥ २३९ ॥

( ४ ) **राघवानन्दः** । किंच महेति । शेषामहापातकिभिन्नाः । ततोमहापातकोपपातकादेः ॥ २३९ ॥

( ५ ) **नन्दनः** । चतुर्णामितेषांचत्वार्युदाहरणानि यथासंख्यंचतुर्भिःश्लोकैर्दर्शयति महापातकिनश्चैवेति । ततः किल्बिषान्मुच्यन्ते दुस्तरंतत्किल्बिषंतरति ॥ २३९ ॥

( ६ ) **रामचन्द्रः** । महापातकिनोहि अकारिणःतपसैवततःकिल्बिषात् मुच्यन्ते ॥ २३९ ॥

**कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च ॥ स्थावराणि च भूतानि दिवंयान्ति तपोबलात् ॥२४०॥**

( १ ) **मेधातिथिः** । तपस्तुतिरियं येनतपसासर्वत्रगमनात्सर्वेस्वर्गमासतइति । यथानधिकृताअपिकीटादयस्तपोबलाद्दिवंगच्छन्ति किंपुनर्विद्वांसोब्राह्मणाआलंबनं कीटादीनांजातिसहजंदुःखंतदेवतपः तेनच क्षीणकल्मषाऽधिकारिजन्मान्तरकृतेन सुकृतेन दिवंयान्ति ॥ २४० ॥

( २ ) **सर्वज्ञनारायणः** । श्वानोऽहयः । पतङ्गाश्च श्वाहिपतङ्गाश्च । पशवोगवाद्याः । तपोबलात् यजमानादिनिधनप्राप्तिरूपतपोबलात् ॥ २४० ॥

( ३ ) **कुल्लूकः** । कीटसर्पशलभपशुपक्षिणः स्थावराणि च वृक्षगुल्मादीनि भूतानि तपोमाहात्म्येन स्वर्गंयान्ति इति-

( २४० ) कीटाश्चाहि=कीटाश्वाहि ( सर्वज्ञ० )

हासादौ कपोतोपाख्यानादिषु पक्षिणोप्यग्निप्रवेशादिकंतपस्तपन्तीति श्रूयते । कीटानांयज्जातिसहजंदुःखंतत्समंतपस्तेन च क्षीणकल्मषाअविकारिणोजन्मान्तरकृतेन सुकृतेन दिवंयान्ति ॥ २४० ॥

( ४ ) **राघवानन्दः** । निकृष्टस्याप्युत्कृष्टत्वं तपोमूलमित्याह कीटेति । कपोताख्यानादिष्वग्निप्रवेशादितपःश्रवणात् । पशवोगजेन्द्रादयः । वयांसि गरुडादयः । स्थावराः कल्पद्रुमादयः । वस्तुतस्तु कीटादीनां सहजं दुरदृष्टजन्यं दुःखमेव तपस्तेन प्रतीतमुत्तीर्य पूर्वार्जितपुण्यवशात्स्वर्गं यान्तीति तपसोऽर्थवादमात्रं तादृशशरीरे तपाद्यधिकाराभावादिति ॥ २४० ॥

( ५ ) **नन्दनः** । दिवंयान्ति कीटादिभिर्दुरापाह्यास्तेपि तपसा दिवंप्राप्नुवन्ति । तथाहि महाभारते कीटाख्यानकपोताख्यानादिषु तिरश्चामपि तपसादिवप्राप्तिराख्यायते ॥ २४० ॥

( ६ ) **रामचन्द्रः** । कीटादयः तपोबलात् यज्ञादि निधनप्राप्तिरूपतपोबलात् दिवंयान्ति ॥ १४० ॥

**यत्किंचिदेनः कुर्वन्ति मनोवाङ्मूर्त्तिभिर्जनाः ॥ तत्सर्वंनिर्दहन्त्याशु तपसैव तपोधनाः ॥ २४१ ॥**

( १ ) **मेधातिथिः** । वाङ्मनःकायकृतस्य जपहोमाभ्यांशुद्धिःस्मर्यते तत्रतपसानिवृत्तिः स्यात् । अतइदमारभ्यतेतदपितपसानूद्यते ॥ २४१ ॥

( २ ) **सर्वज्ञनारायणः** । तपोधनास्तपएवोद्दिश्य नतु धनाद्युद्दिश्यतपःकुर्वाणाः ॥ २४१ ॥

( ३ ) **कुल्लूकः** । यत्किंत्पापंमनोवाग्देहैर्मानवाः कुर्वन्ति तत्सर्वंपापंनिर्दहन्ति तपसैव तपोधनाइति तपएव धनमिव रक्षणीयंयेषांते तपोधनाः ॥ २४१ ॥

( ४ ) **राघवानन्दः** । किंच यदिति । निर्दहन्ति फलाजनकतांसंपादयन्ति । तपोधनाः तपएव दरिद्रस्य धनमिवोपादेयं येषां ते ॥ २४१ ॥

( ५ ) **नन्दनः** । तदेनस्तपसा निर्णुदन्ति दुर्गपापंतपसा नाशयन्ति ॥ २४१ ॥

( ६ ) **रामचन्द्रः** । यत्किंचित्एनः मनोवाङ्मूर्तिभिः मनोवाक्कायकर्मभिः जनाः कुर्वन्ति तत्सर्वं निर्दहन्ति-दूरीकुर्वन्ति ॥ १४१ ॥

**तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ॥ इज्याश्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च ॥ २४२ ॥**

( १ ) **मेधातिथिः** । काम्यकर्मारंभे पूर्वंतपः कर्तव्यं तदपितावदनूद्यते । तथाचोक्तं प्रथमंचरित्वाशुचिःपूतः कर्मण्योभवति यत्रतावद्दीक्षोपशमनाद्यङ्गंतत्रतदेवतपः एकस्तनंव्रतमुपेत्युपयन्तितिविहितंचेतितपएव । यत्रापिशान्तिकपौष्टिकादौ गृहादिविषये तत्रापि पूर्वंतपः कर्तव्यमिति श्लोकार्थः । ब्राह्मणग्रहणंयोगाधिकृतकाममात्रप्रदर्शनार्थं । उक्तंच ॥ नातप्ततपसः पुंसोहविर्गृह्णन्तिदेवताः ॥ नागृहीतहविष्यस्य कामः संपद्यतेक्वचित् ॥ यद्यपिनदेवतातत्फलंतथापि यागस्य देवतया विनाऽनिष्पत्तेर्देवताः संवर्धयन्तीत्युच्यते हविर्ग्रहीतृत्वंच नपुनर्देवतानांचस्वीकारः किंतर्हिसंप्रदानतयोद्देशोऽनिराकरणम् ॥ २४२ ॥

( २ ) **सर्वज्ञनारायणः** । तपसा दीक्षादिना । शुद्धस्य दिवौकसः । इज्याः यज्ञान् । प्रतिगृह्णन्ति वयमेभिः पूजिताइतिमन्यन्ते ॥ २४२ ॥

( ३ ) **कुल्लूकः** । प्रायश्चित्ततपसा क्षीणपापस्य ब्राह्मणस्य यागे हवींषि देवाः प्रतिगृह्णन्त्यभिलषितार्थांश्च प्रयच्छन्ति ॥ २४२ ॥

( ४ ) **राघवानन्दः** । किंचान्यदित्याह तपसेति । दिवौकसोदेवाःइज्याः पूजायागाद्याः। कामान् भोगान् ॥ इष्टान् भोगान् हिवोदेवादास्यन्ते यज्ञभाविताः इतिगीतोक्तेः ॥ २४२ ॥

( ५ ) **नन्दनः** । इज्यया देवानांतोषणंतेभ्यः कामावाप्तिश्च दुष्करन्तश्च तपसा शक्यतइति ॥ २४२ ॥

( ६ ) **रामचन्द्रः** । ब्राह्मणस्यदिवौकसः इज्यायागादि प्रतिगृह्णन्ति चपुनः दिवौकसः कामान् संवर्धयन्ति ॥ २४२ ॥

**प्रजापतिरिदंशास्त्रंतपसैवासृजत्प्रभुः ॥ तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४३ ॥**

( १ ) **मेधातिथिः** । मनोर्येयंप्रतिष्ठाग्रन्थस्य सातपसः सामर्थ्यजैव अन्योपि योग्रंथप्रतिष्ठाकामस्तेनापि तपःपूर्वंकृत्वा ग्रन्थः प्रणेतव्यः ऋषीणामपि यत्तादृक्कंवेदाः प्रादुर्भवन्तितत्तपसैव ॥ २४३ ॥

( २ ) **सर्वज्ञनारायणः** । प्रजापतिर्ब्रह्मा । इदंशास्त्रं मानवम् ॥ २४३ ॥

( ३ ) **कुल्लूकः** । हिरण्यगर्भः सकललोकोत्पत्तिस्थितिप्रलयप्रभुः । तपःकरणपूर्वकमेवेमंग्रन्थमकरोत् तथैव ऋषयोवसिष्ठादयस्तपसैव मन्त्रब्राह्मणात्मकान्वेदान्प्राप्तवन्तः ॥ २४३ ॥

( ४ ) **राघवानन्दः** प्रदीपवच्चातुर्वर्ण्यस्य चातुराश्रम्यस्य निषेकादिश्मशानान्तस्य क्रियाकलापस्यावभासकमपीदंशास्त्रंतपोरहितैर्मनसा दुःसंभाव्यमितितपसैवासृजदित्याह प्रजापतिरिति । सर्गादावृषयोपि सुप्तप्रबुद्धस्येवतपोबलादेववेदानापुरित्याह तथैवेति । प्रपेदिरे प्रापुरितितपोमहीकरणम् ॥ २४३ ॥

( ५ ) **नन्दनः** । तपसा दुष्करमपि कर्तुंशक्यमित्यत्र पुनरप्युदाहराति प्रजापतिरिदंसर्वमिति । इदंशास्त्रमिति च पठन्ति ॥ २४३ ॥

( ६ ) **रामचन्द्रः** । इदंशास्त्रं मानवंशास्त्रं तपसैव प्रभुः ब्रह्मा असृजत् ॥ २४३ ॥

**इत्येतत्तपसोदेवामहाभाग्यंप्रचक्षते ॥ सर्वस्यास्य प्रपश्यन्तस्तपसः पुण्यमुत्तमम् ॥ २४४ ॥**

**[ ब्रह्मचर्यंजपोहोमःकाले शुद्धाल्पभोजनं । अरागद्वेषलोभाश्चतपउक्तंस्वयंभुवा ॥ १॥ ]+**

( १ ) **मेधातिथिः** । तपस्तुत्युपसंहारः । यदेतत्तपसोमहाभाग्यमहाफलत्वमुक्तंत्तद्देवाः प्रचक्षते । नकेवलंमनुष्याएव सर्वस्यास्येतिजगन्निदर्शयति कृत्स्नस्य जगतःपुण्यमुद्भवंशुभजन्मतपसः सकाशात्पश्यन्तः ॥ २४४ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वस्य पूर्वोक्तकार्यस्य । उद्भवं जन्महेतुम् । तपसः सकाशात् परं पुण्यं पश्यन्तः ॥२४४॥

( ३ ) **कुल्लूकः** । सर्वस्यास्यजन्तोर्यद्दुर्लभंजन्म तपसः प्रकाशादित्येवंदेवाः प्रपश्यन्तः तपोमूलमिदंसर्वमित्यादितपोमाहात्म्यंप्रवदन्ति ॥ २४४ ॥

( ४ ) **राघवानन्दः** । किंच देवादरत्वेनापितपःप्राशस्त्यमाह इत्येतदिति । सर्वस्य प्राणिमात्रस्य अस्यसुखतत्साधनवस्त्रमाल्यादयः तपसःसकाशादुद्भवमुत्पत्तिम् । पुण्यं दुःखाननुविद्धं पुण्योगन्धइत्यादिस्मृतेः ॥ धर्मात्सुखंचज्ञानंचेतिस्मृतेः । तदेवं पुण्यमुद्भवं प्रपश्यन्तस्तपसोभाग्यमवश्यकर्तव्यतया भजनीयत्वं प्राहुरित्यन्वयः ॥ २४४ ॥

( ५ ) **नन्दनः** । सर्वस्यास्य प्रपञ्चस्य पुण्यंकल्याणमुत्तमंतपसा पश्यन्तस्तपोनिमित्तंपश्यन्तः ॥ २४४ ॥

( ६ ) **रामचन्द्रः** । इति एतत् देवाः तपसः महाभाग्यं प्रचक्षते ॥ २४४ ॥

[ **रामचन्द्रः** । ब्रह्मचर्यादयः स्वयंभुवा तपः उक्तम् । रागश्च द्वेषश्च लोभश्च रागद्वेषलोभाः ते नंविद्यन्ते ॥ १ ॥ ]+

( २४३ ) शास्त्रं = सर्वं ( नं )　　+ ( क, ल )

**वेदाभ्यासोऽन्वहंशक्त्या महायज्ञक्रियाक्षमा ॥ नाशयन्त्याशुपापानि महापातकजान्यपि ॥२४५॥**

( १ ) **मेधातिथिः** । वेदाभ्यासादीनांनित्यानांकर्मणां पापप्रणोदनार्थताधिकारान्तरत्वेनोच्यते अनिर्दिष्टप्रायश्चित्तानामप्रत्ययकृतानांप्रतिभूतानांचैतद्विज्ञायते अन्येत्वाहुर्यदेवोक्तंब्राह्मणस्यतपोज्ञानमिति तपोविधानेन कर्मान्तरनिवृत्तिमाशङ्कमानस्य वचनं इदमपितथैवविज्ञेयं अनुसंधानार्थेक्षमाग्रहणम् । सर्वात्मगुणप्रदर्शनार्थमहापातकान्यपीति । अपिशब्दाच्छ्रुतिः प्रतीयतेनेनमहापातकनिवृत्त्यर्थतानचाकस्मात्समर्थितेतइति तथाप्रदर्शितैर्विषयैर्विज्ञायते ॥ २४५ ॥

( २ ) **सर्वज्ञनारायणः** । महायज्ञक्रिया वेदाभ्यासस्य तदन्तर्गतस्यापि पृथगुक्तिः । सर्वासंभवे वेदाभ्यासमात्रेण संसिद्धिरित्येतदर्थम् ॥ २४५ ॥

( ३ ) **कुल्लूकः** । यथाशक्तिप्रत्यहंवेदाध्ययनं पञ्चमहायज्ञानुष्ठानमपराधसहिष्णुत्वमित्येतानि महापातकजनितान्यपि पापानि शीघ्रंनाशयन्ति किमुतान्यानि ॥ २४५ ॥

( ४ ) **राघवानन्दः** । कृच्छ्रादावशक्तस्याप्येतत्त्रयं महापातकादिनाशहेतरित्याह वेदेति । महायज्ञावैश्वदेवादयस्तेषांक्रियानुष्ठानम् । क्षमा अपराधसहिष्णुता ॥ २४५ ॥

( ५ ) **न्दननः** । अथाध्ययनंप्रपञ्चयति वेदाभ्यासोन्वहंशक्त्येति ॥ २४५ ॥

( ६ ) **रामचन्द्रः** । पञ्चमहायज्ञक्रियाः क्षमायोग्याः ॥ २४५ ॥

**यथैधस्तेजसा वन्हिः प्राप्तंनिर्दहति क्षणात् ॥ तथा ज्ञानाग्निना पापंसर्वंदहति वेदवित् ॥ २४६ ॥**

( १ ) **मेधातिथिः** । ज्ञानप्रशंसेयं विदुषःस्वल्पेनप्रायश्चित्तेन शुद्धिरित्यस्मिन् प्रकरणआज्ञायते । ज्ञानंच सरहस्यंवेदार्थविषयंज्ञेयं प्रायश्चित्तविधिज्ञानं केवलंशुद्धयेप्रयोगार्थत्वात् नह्यन्यथाप्रयोगोपपत्तिः । यस्तुदेवादिसत्तत्त्वविज्ञानंरहस्याधिकारज्ञानंच तस्याकामार्थत्वाद्युक्तं तद्विताः पापनिष्क्रियाः आहच यथापुष्करपलाशआपोनश्लिष्यन्ति एवमेवंविदिपापं कर्मनश्लिष्यतीति । एधोदार्विन्धनं यथाशुष्कदारुचाग्नौक्षिप्तंक्षिप्रंदह्यते नत्विषा एवंज्ञानमग्निरिवपापस्यदाहकत्वाद्विनाशसामान्यादेवमुच्यते । वेदविदितिज्ञानंविशिष्यते तेन तर्ककलाकाव्यादिज्ञानमपास्तंभवति ॥ २४६ ॥

( २ ) **सर्वज्ञनारायणः** । ज्ञानाग्निना वेदार्थानुचिन्तनेनाग्निनेव दुष्करप्रतिबन्धेन ॥ २४६ ॥

( ३ ) **कुल्लूकः** । यथाग्निः काष्ठान्यासन्नानि क्षणेनैव तेजसा निःशेषंकरोति तथा ज्ञानाग्निना पापंसर्ववेदार्थज्ञोब्राह्मणोनाशयतीत्येतत्परमात्मज्ञानस्यैतत्पापक्षयोत्कर्षज्ञापनार्थमेतत् ॥ २४६ ॥

( ४ ) **राघवानन्दः** । ज्ञानमेव पावनमविद्यानाशद्वारा समूलकाषं कषति नान्यदित्याह यथेति । तथाच श्रुतिस्मृती । सर्वे पाप्मानोतोनिवर्तन्ते ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्यकर्माणि तस्मिन्दृष्टे परावरे ॥ नहवा एवंविदि किंचनपापंविद्यतेयथालोष्टोरजसाध्वंसते ॥ यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन ॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ नहिज्ञानेन सदृशं पवित्रमिह विद्यतइति ॥ एते श्लोकागोविन्दराजसंमतामेधातिथिसंमताइति । वस्तुतस्तु अनाविष्कृतपापानामित्यनेन गतार्थत्वात् ॥ २४६ ॥

( ५ ) **नन्दनः** । ज्ञानाग्निना मन्त्रज्ञानाग्निना कुतएवंव्याख्यायते अस्य प्रकरणस्याध्ययनप्राधान्यात् ॥ २४६ ॥

( ६ ) **रामचन्द्रः** । यथा एधान् काष्ठानि वह्निः तत्क्षणाद्दहति तथा ॥ २४६ ॥

**इत्येतदेनसामुक्तंप्रायश्चित्तंयथाविधि ॥ अतऊर्ध्वंरहस्यानांप्रायश्चित्तंनिबोधत ॥ २४७ ॥**

( १ ) **मेधातिथिः** । पूर्वोत्तरप्रकणाभिसंबन्धार्थः ॥ २४७ ॥

( २ ) **सर्वज्ञनारायणः** । रहस्यानामप्रकाशानांपापानाम् ॥ २४७ ॥

( ३ ) **कुल्लूकः** । इत्येतद्ब्रह्महत्यादीनांपापानांप्रकाशानांप्रायश्चित्तंयथाविध्यभिहितं अतऊर्ध्वमप्रकाशानांपापानां प्रायश्चित्तंशृणुत । अयंश्लोकोगोविन्दराजेनालिखितः मेधातिथिना तु लिखितएव ॥ २४७ ॥

( ४ ) **राघवानन्दः** । विस्पष्टपापानां प्रायश्चित्तमुपसंहरन्रहस्यानांतत्प्रतिजानीते इतीति । एषविधिःप्रकारः । एषामितिपाठे एषां रहस्यानाम् ॥ २४७ ॥

( ६ ) **रामचन्द्रः** । एतत् एनसां पापानां प्रायश्चित्तं उक्तं विशुद्धये उक्तं ॥ २४७ ॥

**सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ॥ अपि भ्रूणहणंमासात्पुनंत्यहरहः कृताः ॥२४८॥**

( १ ) **मेधातिथिः** । मुखनासिकासंचारीवायुः प्राणस्तस्यायामोनिरोधः सचोभयपथाप्राणप्रवृत्तेर्बहिः क्रमतोऽपानप्रवृत्तेर्वायद्रेचकारव्यंप्रसिद्धं । व्याहृतयः सप्तप्रणवओंकारोव्याहृतिभिः प्रणवेनचसहप्राणायामाः कर्तव्याइतिषोडशेत्यावृत्तिसंख्यानं कीदृशःसहभावः केचिदाहुः प्राणायामंकृत्वा व्याहृतिः प्रणवजपः प्रत्यावृत्ति कर्तव्यः । अन्येत्वाहुः श्वासनिरोधकालेन ध्यातव्याः । किंपरिमाणः प्राणायामानांकालोयावतानाति महतीश्वासनिरोधनपीडाजायते कुंभकरेचकपूरकाश्च प्राणायामाः स्मर्यन्ते । तेन श्वासनिरोधमात्रं यथाऽप्रमाणं नासिद्धेरिति। असाध्यतयैव परिमाणानामपिभ्रूणहनमपि शब्दात्तत्समेषु ॥ २४८ ॥

( २ ) **सर्वज्ञनारायणः** । सव्याहृतीः सप्रणववाइति एतदुपलक्षणं सावित्र्याः शिरसश्च । मासादितिच यावदब्दवचनमनुवर्तते । अनुक्तसंख्येषुच सूक्तादिषु प्रत्यहं शतमष्टोत्तरं जप्यम् । अनादेशेतु संख्यायाः शतमष्टोत्तरमितिसामान्यविधानात् ॥ २४८ ॥

( ३ ) **कुल्लूकः** । सव्याहृतिसप्रणवाः सावित्रीशिरोयुक्ताः पूरककुम्भकरेचकादिविधिना प्रत्यहंषोडशप्राणायामाः कृतामासाद्ब्रह्मघ्नमपि निष्पापंकुर्वन्ति । अपिशब्दादातिदेशिकब्रह्महत्याप्रायश्चित्ताधिकृतमपि एतच्च प्रायश्चित्तंद्विजातीनामेव न स्त्रीशूद्रादेर्मन्त्रानधिकारात् ॥ २४८ ॥

( ४ ) **राघवानन्दः** । महापातकानुपपातकोपपातकेषु स्पष्टेषु मन्त्रहोमख्यापनानुतापयोर्व्रताध्ययनदानवेदाभ्या समहायज्ञक्षमाज्ञानानि सामान्यतोविशेषतश्च नाशकत्वेनोक्तानिइदानीं तेषां रहसिकृतानां प्रतिस्विकव्यवस्थितनाशसाधनान्याह सव्याहृतिमित्यष्टादशभिः । अपिनातिदेशिकपातकसंग्रहार्थः । मासान्मासावधि अहरहःकृताः प्रत्यहमभ्यस्यमानाः पुनन्ति भ्रूणहनं ब्रह्मघ्नं शोधयन्तीत्यन्वयः ॥ २४८ ॥

( ६ ) **रामचन्द्रः** । सव्याहृतिकाः प्रणवाः षोडश प्राणायामाः अहरहः कृताअपि भ्रूणहनं मासात्पुनंति ॥ २४८ ॥

**कौत्संजप्त्वापइत्येतद्वासिष्ठंच प्रतीत्यृचम् ॥ माहित्रंशुद्धवत्यश्च सुरापोपि विशुध्यति ॥ २४९ ॥**

( १ ) **मेधातिथिः** । कुत्सेनऋषिणा दृष्टंप्रोक्तंकौत्समपनःशोशुचदघमित्यष्टर्चैबह्वृचेपठ्यते । वासिष्ठंचप्रतीत्यृचंलि-

---

( २४७ ) इत्येतदेनसामुक्तंप्रायश्चित्त यथाविधि = इत्येषोविहितःकृत्स्नःप्रायश्चित्तस्यवोविधिः ( राघ० )

( २४९ ) माहित्रं = माहेन्द्रं ( ट, ड )

स्त्रकृचःसमात्हतास्त्यृचं प्रतीतिसूक्तादिप्रतीक रा यंचेति प्रतिस्तोमेभिरुषसंवशिष्ठाइत्येतत्। माहेंद्रंमाहित्रीणामिति तृचमेव महितृशब्दोऽस्मिन्सूक्तेस्तीति विमुक्त।दिप्रक्षेपात्। अक्रतुरूचोयेतुमाहेन्द्रमिति पठन्ति तेषांमहांइन्द्रोयओजसेत्यष्टचत्वारिंशतंपयःसूक्तमाहुः शुद्धवत्यश्चैतोन्विन्द्रंस्तवांशुद्धंशुद्धेनेति। अत्रापिशब्दस्तत्समानार्थः ॥ २४९ ॥

( २ ) **सर्वज्ञनारायणः**। कौत्सं कुत्सदृष्टमपनःशोशुचदघमितिसूक्तम्। वसिष्ठदृष्टं प्रतिस्तोमेभिरितितृचंऋक्त्रयम्। माहेन्द्रं महांइन्द्रोयओजसेतितृचम् । माहित्रमितिकचित्पाठः । तत्र महित्रीणामवोस्त्विति तृचं ग्राह्यम्। शुद्धवत्यः शुद्धवतीः एतोन्विन्द्रमितितृचम्। एतत्सर्वं वक्ष्यमाणंच प्रत्येकमेव प्रायश्चित्तं नैकैकश्लोकोक्तं समुदितम् ॥ २४९ ॥

( ३ ) **कुल्लूकः**। कौत्सेन ऋषिणा दृष्टं अपनः शोशुचदघमित्येतत्सूक्तं वसिष्ठेन ऋषिणादृष्टंच प्रतिस्तोमेभिरुषसंबशिष्ठाइत्येवंऋचं माहित्रंमहित्रीणामवोस्त्वित्येतत्सूक्तं शुद्धवत्यएतोन्विन्द्रंस्तवामशुद्धमित्येतास्तिस्रऋचः। प्रकृतंमासमहरहः षोडशकृत्वोपि जपित्वा सुरापोऽपि विशुध्यति अपिशब्दादातिदेशिकसुरापानप्रायश्चित्ताधिकृतोऽपि ॥ २४९ ॥

( ४ ) **राघवानन्दः**। कौत्सं कुत्सनामर्षिणा दृष्टं। अपनःशोशुचदघमित्येतत्सूक्तम्। एवं वासिष्ठमपि प्रतिस्तोमेभिरुषसंवसिष्ठामित्येतामृचम्। माहित्रं महित्रीणामवोचमित्येतत्सूक्तम्। शुद्धवत्यः। एतोन्विन्द्रंस्तवामेति शुद्धंशुद्धेनेति। एतास्तिस्रऋचः। प्रकृतत्वान्मासादेर्मासंव्याप्य प्रतिदिनं षोडशकृत्वोजपित्वाशुध्यत्येव । अपिशब्दादतिदिष्टसुरापानादिकृतोपि ॥ २४९ ॥

( ५ ) **नन्दनः**। अपेत्येतदपनःशोशुचदघमित्यादिकंप्रतिस्तोमेभिरुषसंवसिष्ठाइत्यादिकंवासिष्ठंतृचं माहित्रंसूक्तंमहित्रीणामवोस्त्वित्यादिकंशुद्धशब्दयुक्ताऋचः शुद्धलिङ्गाएतानिन्द्रंस्तवामइत्याद्याः ॥ २४९ ॥

( ६ ) **रामचन्द्रः**। कौत्सं कुत्सदृष्टं अपनःशोशुचदघमित्येतत् जपेत् वासिष्ठं प्रतिस्तोमेभिरिति वसिष्ठदृष्टं तिसृणामृचां समाहारस्तृचं इतिवा माहित्रं महां इन्द्रोयओजसेतितृचं एतोन्विन्द्रं स्तवामशुद्धमिति तृचं सुरापोपि विशुध्यति२४९

**सकृज्जप्त्वास्य वामीयंशिवसंकल्पमेव च ॥ अपहृत्य सुवर्णंतु क्षणाद्भवति निर्मलः ॥ २५० ॥**

( १ ) **मेधातिथिः**। अत्रसकृद्ग्रहणात्पूर्वत्रपाठावृत्तिः प्रतीयते साच समाचारादन्यत्रदर्शनाच। त्रिर्जपित्वाघमर्षणमित्यत्रापेक्षायामधिकृतेनसंबन्धः । अस्यवामशब्दोस्मिन्सूक्तेस्तीतिमतौच्छः सूक्तनाम्नोरिति । शब्दव्युत्पत्तिरस्य वामस्य पलितस्य होतुरितिद्वापंचाशदृचंसूक्तं शिवसंकल्पमपियज्जाग्रतोदूरमुदैतीतिवाजसनेयषड्चम् ॥ २५० ॥

( २ ) **सर्वज्ञनारायणः**। अस्यवामीयमस्यवामस्यपलितस्येत्यादि सरस्वन्तमवसेजोहवीमीत्यन्तम्। सकृत्सकृत्प्रत्यहंजपित्वा। शिवसंकल्पं यज्जाग्रतइत्यादिषड्चम्। क्षणान्मासात् नतत्क्षणएव ॥ २५० ॥

( ३ ) **कुल्लूकः**। ब्राह्मणसुवर्णमपहृत्यास्यवामस्य पलितस्य एतत्सूक्तंप्रकृतत्वान्मासमेकंप्रत्यहमेकवारंजपित्वा शिवसंकल्पच यज्जाग्रतोदूरमित्येतद्वाजसनेयकेयत्पठितंतज्जपित्वा सुवर्णमपहृत्य क्षिप्रमेव निष्पापोभवति ॥ २५० ॥

( ४ ) **राघवानन्दः**। अस्यवामीयं अस्यवामस्येति द्विपञ्चाशत्सूक्तं। प्रकृतत्वान्मासमेकंसकृत्प्रत्यहमेकवारं जपित्वा। शिवसंकल्पंच यज्जाग्रतइतिवाजसनेयपठितम्। एतद्द्वयं जपित्वा विप्रसुवर्णहर्ता निर्मलोनिष्पापः ॥ २५० ॥

( ५ ) **नन्दनः**। आस्यवामीयं अस्य वामस्य पलितस्य होतुरित्यादिकं यज्जाग्रतोदूरमुपैतीत्यादिकंसूक्तंशिवसंकल्पः ॥ २५० ॥

( ६ ) **रामचन्द्रः**। सकृत् प्रत्यहं वामीयं च पुनः शिवसंकल्पं इतिद्वयं सुवर्णस्तेयी जप्त्वा तत्क्षणात् निर्मलो भवति ॥ २५० ॥

**हविष्यन्तीयमभ्यस्य न तमंहइतीति च ॥ जपित्वा पौरुषंसूक्तंमुच्यते गुरुतल्पगः ॥ २५१ ॥**

( १ ) **मेधातिथिः** । प्रतीकार्थोद्वितीयइति इतिकरणः पदार्थविपर्यासकृत् ततोमन्त्रस्वरूपग्रहणमितिवेत्यत्रलभ्यते । पौरुषंसहस्रशीर्षापुरुषइतिषोडशर्चंसूक्तम् ॥ २५१ ॥

( २ ) **सर्वज्ञनारायणः** । हविष्यन्तीयं हविष्याङ्कमजरमित्यादिब्राह्मणोहोतुरवरोनिषीदन्नित्यन्तम् । नतमंहोनदुरितमित्यष्टर्चम् । इतीतिच इतिवाइतिमेमनइतिसूक्तम् । पौरुषं सहस्रशीर्षेति ॥ २५१ ॥

( ३ ) **कुल्लूकः** । हविष्यन्तमजरंस्वर्विदामेकोनाविंशतिऋचः नतमंहोनदुरितमित्यष्टौ इति वाइतिमेमनः शिवसंकल्प-इति च सूक्तं सहस्रशीर्षापुरुषइत्येतच्च षोडशर्चसूक्तं मासमेकंप्रत्यहमभ्यस्येति श्रवणात्प्रकृतत्वात् षोडशाभ्यासात् जपित्वा गुरुदारगः तस्मात्पापान्मुच्यते ॥ २५१ ॥

( ४ ) **राघवानन्दः** । गुरुतल्पगस्याह हविष्यान्तीति । हविष्यान्तमजरमिति एकोनाविंशतिर्ऋचः । न तमंहोनइति अष्टौ । हविष्यान्तमजरमिति मेधातिथिः । पौरुषं सहस्रशीर्षेति षोडशर्चं शाखाभेदेन न्यूनाधिकमपि अत्रापि मासावच्छिन्नोजपः । अभ्यस्येति प्रत्यहंषोडशधा ॥ २५१ ॥

( ५ ) **नन्दनः** । हविष्यान्तमजरंस्वर्विदामित्यादिकंहविष्यन्तीयं नतमंहोनदुरितमित्यादिकंनतमंहइतीति चेत्यत्रेति शब्देनेतिमेमनइत्यत्रस्य सूक्तस्य ग्रहणम् ॥ २५१ ॥

( ६ ) **रामचन्द्रः** । हविष्यन्तीयं अभ्यस्य जप्त्वा नतमंह इति जप्त्वा पौरुषं सूक्तं सहस्रशीर्षेति ॥ २५१ ॥

**एनसांस्थूलसूक्ष्माणांचिकीर्षन्नपनोदनम् ॥ अवेत्यृचंजपेदब्दंयत्किंचेदमितीति वा ॥ २५२ ॥**

( १ ) **मेधातिथिः** । अर्वाङ्महापातकेभ्यएनांसि स्थूलसूक्ष्माण्युच्यन्ते । उपपातकादीनितेषामपनोदनं चिकीर्षन्नवेत्यृचंजपेदब्दं अवेत्यवशब्देन प्रतीकेनावतेहेळोवरुणनमोभिरितिलक्ष्यते । पापप्रमोचनलिङ्गत्वान्नत्वतत्संदुर्हणायतइति यत्किंचेदंवरुणदैव्येजनइतिएषाम् ॥ २५२ ॥

( २ ) **सर्वज्ञनारायणः** । स्थूलानिमहापातकादीनि । सूक्ष्माणि ज्ञातिविभ्रंशकरादीनि । अवेत्यृचं अवतेहेडोवरुणेत्येकामृचम् । यत्किंचेदंवरुणेतिचर्चम् । इतीतिचेतितथेत्यर्थः । नत्वेतदपिसूक्तप्रतीकग्रहणम् ॥ २५२ ॥

( ३ ) **कुल्लूकः** । स्थूलानांपापानांमहापातकानांसूक्ष्माणांचोपपातकादीनांनिर्हरणंकर्तुमिच्छन् अवतेहेळोवरुणनमोभिरित्येतामृचंयत्किंचेदंवरुणदैव्येजनेइत्येतांच ऋचाम् इतिवाइतिमेमनइत्येतत्सूक्तं संवत्सरमेकवारंप्रत्यहंजपेत् ॥ २५२ ॥

( ४ ) **राघवानन्दः** । किंच एनसां स्थूलसूक्ष्माणां महापातकोपपातकानाम् । अवेत्यृचं अवते हेडोवरुणनमोभिरित्येतामृचं अब्दंव्याप्य प्रत्यहमेकवारं जपित्वा अपनोदनं नाशं चिकीर्षुर्नाशयेदितिशेषः । यत्किंचेदंवरुणदैव्येजनइति एतामृचं एतत्सूक्तंवा ॥ २५२ ॥

( ५ ) **नन्दनः** । अथसर्वपापसाधारणंध्यानमाह एनसांस्थूलसूक्ष्माणामिति । अवेत्यृचं अवतेहेळोवरुणनमोभिरिरिति यत्किञ्चेदंवरुणमितीत्यत्रेति शब्दानुषङ्गेण संबध्यते इतीतिवेतीतिवा इति मेमनइति सूक्तंवेत्यर्थः ॥ २५२ ॥

---

( २५१ ) हविष्यन्ति=हविष्यान्ति ( राघ० )

( ६ ) **रामचन्द्रः** । स्थूलसूक्ष्माणां एनसां महापातकादि जातिभ्रंशकरादीनां अपनोदनंचिकीर्षन् अवेति अवते- हेळोवरुणनमोभिरित्येकामृचं जपेत् अब्दं अब्दपर्यन्तं यत्किंचेदंवरुणेतितृचं ॥ २५२ ॥

**प्रतिगृह्याप्रतिग्राह्यंभुक्त्वा चान्नंविगर्हितम् ॥ जपंस्तरत्समंदीयंपूयते मानवस्त्र्यहात् ॥ २५३ ॥**

( १ ) **मेधातिथिः** । अप्रतिग्राह्यंमद्यादि यदप्यप्रतिग्राह्यंपापकर्मणः सुवर्णादितदग्राह्यमेव । विगर्हितमन्नंचतुर्विधंस्व- भावकालपरिग्रहसंसर्गदुष्टम् । तरत्समंदीधावति । पावमानीषुचतुष्टयम् ॥ २५३ ॥

( २ ) **सर्वज्ञनारायणः** । विगर्हितं लशुनादीनि । तरत्समन्दीयं तरत्समन्दीधावतीत्याद्यृक्चतुष्टयम् ॥ २५३ ॥

( ३ ) **कुल्लूकः** । स्वरूपतोमहापातकिधनत्वादिना वा प्रतिग्राह्यंप्रतिगृह्यचान्नंस्वभावकालप्रतिग्रहसंसर्गदुष्टंभुक्त्वा तरत्समंदीधावतीत्येताऋचश्चतस्रोजपित्वा त्र्यहंतस्मात्पापान्मनुष्यः पूतोभवति स्नानमर्यम्णामिति ऋक्त्रृचंवा ॥ २५३ ॥

( ४ ) **राघवानन्दः** । किंच प्रतीति । प्रतिगृह्याप्रतिग्राह्यंअप्रतिग्राह्यंस्वरूपतोमहापातकिधनंप्रतिगृह्य । अनाप- त्कालेच गर्हितान्नादि भुक्त्वाच तरत्समन्दीयं तरत्समन्दीधावतीत्येताश्चतस्रऋचः ॥ २५३ ॥

( ६ ) **रामचन्द्रः** । अप्रतिग्राह्यंप्रतिगृह्य विगर्हितमन्नंचभुक्त्वा तरत्समन्दीयं तरत्समन्दीधावतीतिधारासुतस्यांधसः तरत्समंदीधावतीतिऋचंजपन् त्र्यहान्मानवःपूयते ॥ २५३ ॥

**सोमारौद्रंतुबह्वेनामासमभ्यस्य शुध्यति ॥ स्रवन्त्यामाचरन्स्नानमर्यम्णामिति च तृचम् ॥ २५४ ॥**

( १ ) **मेधातिथिः** । सोमारुद्राधारयेथामस्र्यमिति चतस्रोयज्ञंचभरणानीन्द्रियंचेतिऋक् समासंवत्सरंचाज्ञानइदंलिङ्गं यदुक्तंकचित्तन्त्रेणापिप्रायश्चित्तमस्तीति । स्रवन्त्यामितितडागसरसीनिवर्तते ॥ २५४ ॥

( २ ) **सर्वज्ञनारायणः** । सोमारौद्रं सोमारुद्राधारयेथामित्यृक्चतुष्टयम् । बह्वेनाबहुक्षुद्रपापः । अर्यम्णां अर्यम- णंवरुणंमित्रंचेतितृचम् ॥ २५४ ॥

( ३ ) **कुल्लूकः** । सोमारुद्राधारयेश्यामस्वयमिति चतस्रः अर्यमणंवरुणंमित्रंचेति ऋक्त्रयंनद्यांच स्नानंकृत्वा मास- मेकंमत्येकमभ्यस्य बहुपापोविशुध्यति बहुष्वपि पापेषु तन्त्रेणैकंप्रायश्चित्तंकार्यमिति ज्ञापकमिदम् ॥ २५४ ॥

( ४ ) **राघवानन्दः** । सोमारुद्रंतु सोमारुद्राधारायथामनसुर्यमितिचतस्रऋचः बह्वेनाः बहुपापयुक् प्रत्यहं षोडश- धाभ्यस्य शुध्यतीत्यन्वयः । अर्यम्णमिति अर्यम्णंवरुणंमित्रंचेतिऋक्त्रयम । स्रवन्त्यां गङ्गादिनद्याम् । अत्र मन्त्रयो- र्विकल्पोजपस्नानंसाधारणम् ॥ २५४ ॥

( ५ ) **नन्दनः** । सोमारौद्रंसोमोरुद्रदेवत्यंसूक्तंसोमारुद्राधारयेश्यामस्वयमित्यादि बह्वेनाः बहुपापः अर्यम्णमृचंमायां- तिवृषभस्तुविष्टानित्यादिकम् ॥ २५४ ॥

( ६ ) **रामचन्द्रः** । सोमारौद्रं बह्वेनाः सोमारुद्राधारयेथामसुर्यमित्यृक्चतुष्टयं मासमभ्यस्य शुध्यति ॥ २५४ ॥

**अब्दार्धमिन्द्रमित्येतदेनस्वी सप्तकंजपेत् ॥ अप्रशस्तंतु कृत्वाप्सु मासमासीत भैक्षभुक् ॥ २५५ ॥**

( १ ) **मेधातिथिः** । इंद्रंमित्रंवरुणमग्निमित्येतत्सप्तकं षण्मासान् जपेदेनस्वीत्यविशेषात्सर्वैनसाम् अप्रशस्तंमैथुनं तत्रपुरीषोत्सर्गोवातदप्सुकृत्वा मासंभैक्षाहारोभवेत् ॥ २५५ ॥

---

( २५५ ) अप्रशस्तं = अप्रकाशं ( क, ख, ग )

( २ ) **सर्वज्ञनारायणः** । इन्द्रंमित्रंवरुणमग्निमूतयइत्यादिसप्तर्चमेनस्वी बहुपापयुक्तः । अप्रकाशं रहस्यं कृतमेनः पापं यत्किंचित् ॥ २५५ ॥

( ३ ) **कुल्लूकः** । एनस्वीत्यविशेषात्सर्वेष्वेव पापेषु इन्द्रंमित्रंवरुणमग्निंत्रयइत्येताः सप्तऋचः षण्मासंजपेत् । अप्रशस्तंमूत्रपुरीषोत्सर्गादिकंजले कृत्वा मासंभैक्षभोजीभवेत् ॥ २५५ ॥

( ४ ) **राघवानन्दः** । किंच अब्दार्धमिति । इन्द्रमित्येताःसप्तऋचः अशीत्युत्तरशतदिनानि प्रत्यहं जपेत् । एनस्वी मासंसर्वपापयुक्तः । अप्रशस्तं जलादौमूत्रोत्सर्गादि कृत्वामितभुक्मासंव्याप्य गायत्रीमभ्यस्यासीतेति ॥ २५५ ॥

( ५ ) **नन्दनः** । इन्द्रमिद्गाथिनोबृहदित्यादिकमृचांसप्तकं अप्रशस्तमलमूत्रादिकंकृत्वा ॥ २५५ ॥

( ६ ) **रामचन्द्रः** । अब्दार्धं इन्द्रंमित्रं वरुणमग्निमूतयइति ऋचं एनस्वी एनः विद्यते यस्यासौ एनस्वी जपेत् । अप्रकाशमेनःकृत्वा भैक्ष्यभुग्मासमासीत ॥ २५५ ॥

**मन्त्रैः शाकलहोमीयैरब्दंहुत्वा घृतंद्विजः ॥ सुगुर्वप्यपहंत्येनोजप्त्वा वा नमइत्यृचम् ॥ २५६ ॥**

( १ ) **मेधातिथिः** । देवकृतस्यैनसोवयजनमसीत्येवमादायोष्टौमन्त्राः शाकलहोमीयास्तैर्घृतमब्दंहुत्वागुर्वप्यपहन्त्येनः सर्वमहापातकान्यपीत्यर्थः । जपित्वानमोरुद्रायतवसेकपर्दिन इत्येवंमन्त्रंसंवत्सरमेवमेतांसिद्धिमाप्नुयात् । अन्तरेणापिशाकलहोमंतदिदंवैकल्पिकंजपकर्मपूर्वेणशाकलमन्त्रहोमेन प्रायश्चित्तमन्येन वा जपित्वावामनइत्यृचं सातु शिष्टेभ्यः सुगमयितव्या ॥ २५६ ॥

( २ ) **सर्वज्ञनारायणः** । शाकलहोमीयैः देवकृतस्यैनसइत्यादिभिर्मन्त्रैरष्टभिरष्टाहुतीःप्रत्यहंजुहुयात् प्रत्यहंवाष्टोत्तरशतावृत्त्या । नमइत्यृचं नमआविवेश इत्यृचमब्दंजपेत् ॥ २५६ ॥

( ३ ) **कुल्लूकः** । देवकृतस्येत्यादिभिः शाकलहोममन्त्रैःसंवत्सरंघृतहोमंकृत्वा नमइन्द्रश्चेत्येतांवाऋचंसंवत्सरंजपित्वा महापातकमपि पापंद्विजातिरपहन्ति ॥ २५६ ॥

( ४ ) **राघवानन्दः** । किंच मन्त्रैरिति । मन्त्रैर्देवकृतस्यैनसइत्यादिभिः शाकलहोमीयैः । द्विजस्त्रैवर्णिकः । नमइत्येतामृचंवा सुगुर्वपि महापातकमप्यपहन्तीत्यन्वयः । नमइत्यृचंवाजप्त्वापहन्ति ॥ २५६ ॥

( ५ ) **नन्दनः** । नमइत्यृचंनमोमित्रस्यवरुणस्येत्यृचम् ॥ २५६ ॥

( ६ ) **रामचन्द्रः** । शाकलहोमीयैर्मन्त्रैः देवकृतस्यैनसइत्यष्टभिः अब्दं अब्दपर्यन्तं घृतंहुत्वा सुष्ठु गुरु सुगुरु अपि एनःअपहन्ति । वापक्षान्तरं नमइति उग्रंनमआविवास इतिऋचं जप्त्वाशुध्येत् ॥ २५६ ॥

**महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः ॥ अभ्यस्याब्दंपावमानीर्भैक्षहारोविशुध्यति ॥ २५७ ॥**

( १ ) **मेधातिथिः** । महापातकसंयुक्तइति पूर्वपदार्थसंख्याविशेषप्रतिपत्तिरनेनापीतिगम्यते । एकैकस्य लघुनःप्रायश्चित्तविधानमनेकेनापियुक्तं पावमान्यः कृत्स्नमेवमण्डलंदाशतयंस्वादिष्ठयामदिष्ठयेत्यारभ्य यत्तेराजञ्छृतंहविरिति । पदंनामगवामनुगमन गवामनुगमनंनानुव्रज्यामात्रंकिंतर्हिपरिचर्या साचगोघ्नप्रायश्चित्तादनुसंधेया ॥ २५७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रायश्चित्तमाह महापातकेति । अब्दं प्रत्यहं गाश्चरणाय गच्छन्तीरनुगम्य समाहितमनाः प्रत्यहं पावमानीः स्वादिष्ठयामदिष्ठयेत्यादिकाः इन्द्रायेन्दोपरिस्रवेत्यन्ताः जपेत् भैक्ष्याहारइत्यर्थः ॥ २५७ ॥

---

( २५७ ) महापातक = उपपातक ( क, ण )

( ३ ) **कुल्लूकः** । ब्रह्महत्यादिमहापातकयुक्तोभिक्षालब्धाहारोवर्षमेकंसंयतेन्द्रियोगवामनुगमनंकुर्वन्यः पावमानीर्वि-द्यादिऋचोऽन्वहमभ्यासेन जपित्वा तस्मात्पापाद्विशुद्धोभवति ॥ २५७ ॥

( ४ ) **राघवानन्दः** । किंच महेति । गाःअनुगच्छेत् शुश्रूषेत् । पावमानीः प्रसिद्धाः ॥ २५७ ॥

( ६ ) **रामचन्द्रः** । गाअनुगच्छेत् चारणार्थम् । पावमानीः स्वादिष्ठया मदिष्ठयापवस्वसोमधारया इन्द्रायपातवेसुतः इन्द्रायेन्दोपरिस्रवेत्यन्ताः एताऋचः अब्दमभ्यस्य भैक्षाहारोविशुध्यति ॥ २५७ ॥

**अरण्ये वा त्रिरभ्यस्य प्रयतोवेदसंहिताम् ॥ मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥२५८॥**

( १ ) **मेधातिथिः** । महापातकसंयुक्तस्यैव प्रायश्चित्तान्तरमेतत् वेदसंहितांमन्त्रब्राह्मणं षट्त्रिंशद्रात्रमुपोष्येतिसंहि-तामरण्ये जपन्प्रमुच्यते ॥ २५८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रथमं षट्त्रिंशदुपवासान्कृत्वा यस्यकस्यचिद्वेदस्य कस्याश्चिच्छाखायाः संहितांमन्त्र-भागमरण्ये त्रिर्जपित्वा सर्वैःपातकैर्महापातकैर्मुच्यते त्यज्यतइत्यर्थः ॥ २५८ ॥

( ३ ) **कुल्लूकः** । त्रिभिः पराकैः पूतोमन्त्रब्राह्मणात्मिकांवेदसंहितामरण्ये वारत्रयमभ्यस्य वा प्रयतोबाह्याभ्यन्तर-शौचयुक्तः सर्वैर्महापातकैर्मुच्यते ॥ १५८ ॥

( ४ ) **राघवानन्दः** । पातकैः स्वयंकृतैः पराकैःशोधितः पूतःवेदसंहितां मन्त्रब्राह्मणात्मिकांत्रिरभ्यस्य मुच्यत-इत्यन्वयः ॥ २५८ ॥

( ६ ) **रामचन्द्रः** । अरण्ये वेदसंहितामभ्यस्य सर्वपातकैर्मुच्यते त्रिभिः पराकैःशोधितः ॥ २५८ ॥

**त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ॥ मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥ २५९ ॥**

( १ ) **मेधातिथिः** । अपोभ्युपयन् जपित्वाघमर्षणमिति संबन्धः । अन्तश्चान्तर्जलंजपसिद्धिरेवंस्मृत्यन्तरानुग्रहो-घमर्षणमंत्रविशेषस्तृचउक्तः ॥ २५९ ॥

( २ ) **सर्वज्ञनारायणः** । अत्रैव विषयेऽन्यदाह त्र्यहमिति । युक्तोनियतः । त्र्यहमुपवसन् प्रत्यहंत्रिषवणस्नानं कुर्वन् स्नानान्ते ऋतंचसत्यंचेति त्रिर्जले निमग्नोजपन्नित्येवं त्र्यहेण सप्तविंशत्यावृत्त्या जपंकुर्यादित्यर्थः ॥ २५९ ॥

( ३ ) **कुल्लूकः** । त्रिरात्रमुपवसन्संयतः प्रत्यहंप्रातर्मध्याह्नसायंकालेषु स्नानंकुर्वन् त्रिषवणस्नानकालएव जले नि-मज्य ऋतंच सत्यंचेति सूक्तमघमर्षणं त्रिरावृत्तंजपित्वा सर्वैः पापैर्मुच्यते । तत्र गुरुलघुपापापेक्षया पुरुषशक्त्याद्यपेक्षया चावर्तनीयम् ॥ २५९ ॥

( ४ ) **राघवानन्दः** । किंचत्रीति । अभ्युपयन्नपःत्रिकालस्नानं तत्कालएव त्रिवारंजप्त्वा पुरुषशक्त्यपेक्षया लघुपा-पापेक्षयावा ॥ २५९ ॥

( ५ ) **नन्दनः** । अह्नस्त्रिरपोभ्युपयन्प्रत्यहंत्रिषवणस्नानंकुर्वन् ॥ २५९ ॥

( ६ ) **रामचन्द्रः** । यः त्र्यहंउपवसेत् तु पुनःत्रिः अह्नः अपः अभ्युपयन् उपस्पृशन् त्रिःत्रिवारं अघमर्षणं ऋतंच सत्यंचाभीद्धात्तपसोध्यजायतेत्येवमादिसूक्तं जप्त्वा सर्वैःपातकैर्विमुच्यते ॥ २५९ ॥

यथाश्वमेधः क्रतुराट्सर्वपापापनोदनः ॥ तथाऽघमर्षणंसूक्तंसर्वपापापनोदनम् ॥ २६० ॥

( १ ) मेधातिथिः । स्तुत्यर्थःश्लोकः ॥ २६० ॥

( ३ ) कुल्लूकः । यथाऽश्वमेधयागः सर्वयागश्रेष्ठः सर्वपापक्षयहेतुस्तथाऽघमर्षणसूक्तमपि सर्वपापक्षयहेतुरित्यघमर्षणसूक्तोत्कर्षः ॥ २६० ॥

( ४ ) राघवानन्दः । अत्रार्थवादः यथेति ॥ २६० ॥

( ६ ) रामचन्द्रः । यथा अधमर्षणं सूक्तंपापप्रणोदनम ॥ २६० ॥

हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ॥ ऋग्वेदंधारयन्विप्रोनैनः प्राप्नोति किंचन ॥ २६१ ॥

( १ ) मेधातिथिः । इयमपिस्तुतिः ऋग्वेदधारिणोरहस्यप्रायश्चित्तार्था । अन्येतु महापातकिसंयुक्तइत्यारभ्यरहस्यार्थमपीच्छन्ति ॥ २६१ ॥

( २ ) सर्वज्ञनारायणः । उक्तवक्ष्यमाणसंहिताजपेषु ऋक्संहिताजपस्य । प्राशस्त्यंकथयितुमृग्वेदमेव स्तौति हत्वापीति ॥ २६१ ॥

( ३ ) कुल्लूकः । भूरादिलोकत्रयमपि हत्वा महापातक्यादीनामप्यन्नमश्नन्नृग्वेदंधारयन्विप्रादिः न किंचित्पापंप्राप्नोति । ऋग्वेदंरहस्यप्रायश्चित्तार्थमुक्तंततश्चरहस्यपापे कृते ऋक्संहितांमन्त्रब्राह्मणात्मिकामभ्यसेत् ॥ २६१ ॥

( ४ ) राघवानन्दः । किंच हत्वेति । लोकान् भुवादित्रयम् । ऋग्वेदं रहस्य प्रायश्चित्तार्थम् । एनः पापं पापफलं न भुङ्क्ते न स्तुतिमात्रम् ॥ २६१ ॥

( ५ ) नन्दनः । धारयन् जपन् ॥ २६१ ॥

( ६ ) रामचन्द्रः । त्रीनिमांल्लोकान्हत्वा यतस्ततः अनुलोमप्रतिलोमतः अश्नन्नपि विप्रः ऋग्वेदंधारयन्नेनः किंचिन्नाप्नोति ॥ २६१ ॥

ऋक्संहितांत्रिरभ्यस्य यजुषांवा समाहितः ॥ साम्नांवा सरहस्यानांसर्वपापैः प्रमुच्यते ॥ २६२ ॥

( १ ) मेधातिथिः । ऋगादिविशेषणात् ब्राह्मणनिवृत्तिः रहस्यानिसामान्यारण्यकाधीतानि ॥ २६२ ॥

( २ ) सर्वज्ञनारायणः । संहिता मन्त्रभागः । यजुषामित्यत्रापि सरहस्येनान्वितम् । रहस्यमुपनिषद्भागः । साम्नांसंहितां तद्योनिसंहितांसामगीतिम् ॥ २६२ ॥

( ३ ) कुल्लूकः । तदाह ऋगिति । ऋक्संहितांमन्त्रब्राह्मणात्मिकांनतुमन्त्रमात्रात्मिकाममनन्तरंवेदे त्रिवृतीति मन्त्यवमर्षात् यजुषांवा मन्त्रब्राह्मणानांसंहितांसाम्नांवा ब्राह्मणोपनिषत्संहितांवारत्रयमभ्यस्य सर्वपापैः प्रमुक्तोभवति ॥ २६२ ॥

( ४ ) राघवानन्दः । किंच ऋगिति । ऋक्संहितां मन्त्रब्राह्मणात्मिकां तदुपनिषद्भागव्यतिरिक्ताम् । एवं यजुर्वेदादौ । सरहस्यानां रहस्यमारण्यकं तद्युक्तानाम् ॥ २६२ ॥

( ६ ) रामचन्द्रः । ऋग्वेदादीनां त्रयाणांसंहितां अभ्यस्य सर्वपापैः प्रमुच्यते ॥ २६२ ॥

यथा महाह्रदंप्राप्य क्षिप्तंलोष्टंविनश्यति ॥ तथा दुश्चरितंसर्वंवेदे त्रिवृति मज्जति ॥ २६३ ॥

( १ ) मेधातिथिः । व्यवयवस्त्रिवृदेकाकार्यत्वादवयवव्यवहारात् वेदोवेदान्तरस्यावयवः ॥ २६३ ॥

( ३ ) **कुल्लूकः** । ऋगाद्यात्मना त्रिरावर्ततइति त्रिवृत् यथा महाह्रदंप्रविश्य लोष्टंविशीर्यते तथा सर्वंदुश्चरितंत्रिवृति वेदे विनश्यति ॥ २६३ ॥

( ४ ) **राघवानन्दः** । किंच यथेति । लोष्टं पांसुपिण्डम् । वेदेत्रिवृति वेदत्रयाभ्यायिनि । निमज्जति विनश्यति॥२६३

( ५ ) **नन्दनः** । लोष्टंमृत्पिण्डम् ॥ २६३ ॥

**ऋचोयजूंषि चान्यानि सामानि विविधानि च ॥ एषज्ञेयस्त्रिवृद्वेदोयोवेदैनंसवेदवित् ॥ २६४ ॥**

( १ ) **मेधातिथिः** । तन्यवयवंदर्शयति आद्यानिमुख्यानीत्यर्थः । ब्राह्मणाध्येयानिचपठितानि । अथवापदक्रमितानि विविधानि सामानि ग्राम्यारण्यविभागेन ॥ २६४ ॥

( २ ) **सर्वज्ञनारायणः** । अन्यानिचेति यजुषामृग्व्यतिरिक्तानां तन्मध्यपठितानामृचांच संग्रहः । विविधान्यक्षररूपयोगिगीतात्मकसमरूपाणि योवेदार्थतोग्रन्थतश्च ॥ २६४ ॥

( ३ ) **कुल्लूकः** । त्रिवृत्त्वमेवाह ऋचइति । ऋचऋङ्मन्त्राःयजूंषि यजुर्मन्त्राः सामानि बृहद्रथन्तरादीनि नानाप्रकाराण्यन्यान्येषांत्रयाणांपृथक्पृथक् मन्त्रब्राह्मणान्येषत्रिवृद्वेदोज्ञातव्योयएनंवेद सवेदविद्भवति ॥ २६४ ॥

( ४ ) **राघवानन्दः** । त्रिवृत्त्वमेवाह ऋचइति । अन्यानि गीतिसाम्नभिन्नानि च । एनं वेदत्रयसमुदायम् ॥ २६४ ॥

( ५ ) **नन्दनः** । कःपुनरिहत्रिवृद्वेदोभिप्रेतस्तमाह ऋचोयजूंषिचान्यानीति । ऋचोयजूंषि सामानि वेदः न ब्राह्मणानीत्यर्थः ॥ २६४ ॥

( ६ ) **रामचन्द्रः** । ऋचोयजूंषिसामानि त्रिवृद्वेदः एनं वेदत्रयस्य अध्ययनं वेद सवेदवित् ॥ २६४ ॥

**आद्यंयत्त्र्यक्षरंब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ॥ सगुह्योऽन्यस्त्रिवृद्वेदोयस्तंवेद सवेदवित् ॥ २६५॥**

**[ एषवोभिहितः कृत्स्नः प्रायश्चित्तस्य निर्णयः । निश्रेयसंधर्म विधिविप्रस्येमंनिबोधत ॥ १ ॥ ] +**

**[ पृथग्ब्राह्मणकल्पाभ्यां सहिवेदस्त्रिवृत्स्मृतः ॥ २ ॥ ] ‡**

**॥ इतिमानवेधर्मशास्त्रे भृगुप्रोक्तायां सं०एकादशोऽध्यायः ॥ ॥ ७ ॥ ॥ ७ ॥**

( १ ) **मेधातिथिः** । त्र्यक्षरमक्षरत्रयसमाहारओंकारआद्यंब्रह्मगुह्यंरहस्याधिकारेयथावदुपदिष्टत्वाच्छब्दब्रह्मरूपतयोपासनकर्मत्वेनविहितःपरमात्मवाचकतयावागुह्योनतुज्ञानाक्षरत्वेन सहिलोकप्रसिद्धओमित्यभ्युपगमस्त्रयीयस्मिन्नेषासंकुचिता सर्वाणि वर्णानीत्येवमादि तस्योपासना पुरस्तादुक्तेति एवमोमित्येतदक्षरमुपासीतेतिपूर्वश्लोके मन्त्रार्थवेदनेन वेदत्वमुक्तमनेनवेदान्तज्ञानं कर्मवेदनन्त्वध्ययनविध्याक्षिप्तमेवेतिप्रसिद्धम् ॥ २६५ ॥

मान्याकापिमनुस्मृतिस्तदुचिताव्याख्याहिमेधातिथेःसालुप्तैवविधेर्वशात्क्वचिदपिप्राप्यंनयत्पुस्तकं ॥ क्षोणींद्रोमदनःसहारणसुतोदेशांतरादाहृतैर्जीर्णोद्धारमचीकरत्ततइतस्तत्पुस्तकैर्लेखितैः ॥ इतिश्रीभट्टवीरस्वामिसूनुभट्टमेधातिथिविरचितएकादशोध्यायः ॥

( २ ) **सर्वज्ञनारायणः** । आद्यं सर्ववेदादौ पाठ्यत्वादाद्यम् । त्र्यक्षरं अकारोकारमकारैः । ब्रह्म तत्प्राप्यहेतुत्वात् । प्रतिष्ठिता अन्तर्भूता तस्य तत्सारत्वात् । गुह्योनकस्मैचित्कथनीयः । योवेदैनं उपास्यत्वेन ॥ २६५ ॥

सर्वज्ञनारायणकृतौ मन्वर्थविवृतौ प्रायश्चित्तविधिर्नामैकादशोध्यायःसंपूर्णः ॥ ११ ॥ ७ ॥ ॥

---

+ ( क, ट, ड, राघ० ) ‡ ( ट, ड )

( ३ ) **कुल्लूकः** । सर्ववेदानामाद्यंयद्ब्रह्मवेदसारमकारोकारमकारात्मकत्वेन त्र्यक्षरंयत्र त्रयोवेदाः स्थिताः सोन्यस्त्रिवृद्वेदः प्रणवाख्योगुह्योगोपनीयोवेदमन्त्रश्रेष्ठत्वात् परमार्थाभिधायकत्वात्परमार्थकत्वेन धारणजपाभ्यां मोक्षहेतुत्वाच्च यस्तंस्वरूपतोऽर्थतश्च जानाति सवेदवित् ॥ प्रायश्चित्ते बहुमुनिमतालोचनाद्यन्मयोक्तंसद्व्याख्यानंखलुमुनिगिरांतद्भजध्वंगुणज्ञाः ॥ नैतन्मेधातिथिरभिदधे नापि गोविन्दराजोव्याख्यातारोन जगुरपरेऽप्यन्यतोदुर्लभंवः ॥२६५ ॥

इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तावेकादशोऽध्यायः ॥ ११ ॥ छ ॥

( ४ ) **राघवानन्दः** । अतिरहस्यं त्रिवृदाह आद्यमिति । प्रणवंत्र्यक्षरम् । गुह्योध्यानजपाभ्यांमोक्षहेतुत्वादतिगोप्यः । त्रयी ऋगादिवेदत्रयम् । प्रतिष्ठितोपादेयत्वेनांगीकारेण सर्वावाक्संतृण्णेति श्रुतेः । संतृण्णोपादानतया व्याप्तेत्यर्थः ॥ २६५॥

[ **राघवानन्दः** । उपसंहरति एषइति । कर्मविधिं कामतःसुखदुःखजनकप्रकारम् । नैःश्रेयसं यथासंभवं वैराग्यादस्पृहांविना न मोक्षइति साध्यसाधनसंगतिरुत्तराध्यायेन ॥ १ ॥ ]

इति श्रीराघवानन्दसरस्वतीविरचितायां मन्वर्थचन्द्रिकायामेकादशोध्यायः ॥ ११ ॥ ॥ छ ॥

( ५ ) **नन्दनः** । नकेवलमृग्यजुस्सामविदेववेदवित्किन्तुप्रणवविदपीत्याह आद्यंयत्त्र्यक्षरम्ब्रह्मेति त्र्यक्षरमकारोकारमकारात्मकं योवेदैनंसवेदवित्प्रणवध्यायीभवतीत्यर्थः ॥ २६५ ॥

इतिश्रीनन्दनाचार्यविरचिते मानवव्याख्यानएकादशोध्यायः ॥ ॥ छ ॥

( ६ ) **रामचन्द्रः** । यदाद्यं त्र्यक्षरं अकारोकारमकारात्मकं ब्रह्म यस्मिन् ब्रह्मणि त्रयी वेदत्रयी ऋग्यजुःसामात्मिका प्रतिष्ठिता सगुह्योन्यस्त्रिवृद्वेदः तं त्रिवृदात्मकं वेद सवेदवित् ॥ २६५ ॥

इति श्रीरामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायामेकादशोध्यायः ॥ ११ ॥ ॥ छ ॥

॥ श्रीगणेशायनमः ॥

# ॥ अथ द्वादशोऽध्यायः प्रारभ्यते ॥

चातुर्वर्ण्यस्यकृत्स्नोयमुक्तोधर्मस्त्वयानघ ॥ कर्मणांफलनिर्वृत्तिंशंसनस्तत्त्वतः पराम् ॥ १ ॥

( १ ) मेधातिथिः । आद्योर्धःश्लोकः शास्त्रार्थपरिसमाप्तिदर्शनेनाधिकाकांक्षानिवृत्त्यर्थः कृत्स्नग्रहणंसामान्यार्थं एतावन्तःस्मार्ताधर्मायस्मिन् शास्त्रे रहस्यपर्यन्तउपदिष्टाश्च शिष्यमुखेनाचार्यस्यैवकृत्स्नकारिता शास्त्रस्यप्रतिपाद्यते नविवक्षिता नात्रशिष्याचार्यवस्तुतःप्रतिपत्तव्यंग्रन्थकारएवग्रन्थमेवंविभजति । धर्मशब्दश्चकर्तव्यतावचनोविधिप्रतिषेधसमूहमनुवदति तेनकर्मफलसंबन्धोऽनुक्तोऽपीतऊर्ध्वंप्रतिपाद्यते कृत्स्नोधर्मउक्तस्त्वया विधिप्रतिषेधापेक्षया वचनमुपपन्नंभवति । कस्यपुनः कर्मणः फलसंबन्धोजिज्ञास्यते येनोच्यते कर्मणांफलनिर्वृत्तिंशंसेति । यावता तावन्ति तावन्नित्यानि शास्त्रनोदितत्वादेवक्रियन्ते नतेषांफलमभिसंधेयं नहि तानि फलार्थानि यान्यतुल्यानि तत्रापि प्रतिकर्मप्रायशः फलान्युक्तान्येव वारिदस्तृप्तिमाप्नोति स्वर्गायुश्चेत्यादीनि यत्रापिनोक्तमिवमन्येत तत्रापिस्वर्गादिसाधितमेव । यानिजातकर्मादीनि संस्कारकर्माणि तानि संस्कार्यविशेषोक्तस्यक्रियाफलेनैवफलवन्ति नादृष्टमाकांक्षन्ति । यान्यपि नैमित्तिकानि द्रव्यशुद्ध्यादीनि चाण्डालस्पर्शनस्नानादीनि तान्यपि दृष्टप्रयोजनान्येव शुद्धये हि तानि क्रियन्ते अशुद्धेर्व्यवहारप्रतिषेधात् । प्रायश्चित्तानिचानन्तरमुक्तप्रयोजनान्येव अतोनविद्मः कस्य कर्मणःफलमभिजिज्ञास्यते । प्रतिषेधानांशरीरजैः कर्मदोषैः कृते तेषामेववक्ष्यमाणत्वात्तथाप्रतिषेधानुष्ठानमपिशास्त्रचोदितमेव । नचतत्रफलार्थित्वेहि न सर्वविषयोधिकारः स्यात् अर्थितावाधिक्रियेत उच्यते नैवात्रनादृशंफलमभिधीयते यत्काम्यते अनिष्टफलदर्शनमत्रक्रियते नैवतत्काम्यते नैवचकश्चिदनिष्टप्राप्तिमिच्छत्यतः सर्वविषयतासिद्धिः । यदप्युच्यते शास्त्राचोदितंप्रतिषेधानुष्ठानंक्रियते अत्यल्पमिदमुच्यते एवंतत्र नानुष्ठानमिति सर्वमेवशास्त्रनोदितंक्रियते किन्तुतच्छास्त्रंफलार्थिनः कस्यचित्कर्तव्यतांस्थापयति कस्यचिदन्तरेणफलंनैमित्तिकत्वेन इहतु यावज्जीवमिवनिर्निमित्तश्रुतेरभावात्किमर्थंप्रतिषिद्धंनक्रियतइत्यपेक्षा प्रत्यवायश्च दृश्यते । जिघांसया ब्राह्मणस्य नरकंप्रतिपद्यते ननुच यत्प्रतिषिद्धंब्राह्मणवधादि नतच्छास्त्रचोदितं शास्त्रनोदितस्य हि शास्त्रीयेण फलेन संबन्धोयुक्तः यथास्वर्गकामोयजेतेतिशास्त्रतोहियागस्य कर्तव्यताप्रतिपत्तिर्नान्यतः इहतु द्वेषादिना लौकिको प्रवृत्तिरशास्त्रीया नचाशास्त्रीयस्य शास्त्रीयेण फलेन संबन्धोन्याय्यः । यदप्युक्तमुपेक्षायांप्रत्यवायःप्रदर्शितइति किमित्यत्राकांक्षा यावता द्विषन्तंप्रवर्तमानस्य नकर्तव्यमितिशास्त्रतोऽवगतिर्जायते तावता वाक्यार्थसमाप्तिः किमत्र पदमस्ति यदाकांक्षीत एतद्विविच्यमानंमहान्तंग्रन्थविस्तरमाक्षिपति । सक्षेपस्त्वयंनहिंस्याद्भूतानीति प्रतिषेधविधेःप्रतिषेधोभावार्थः कर्तृकरणइतिचश्रूयते । तत्रविधिस्तावन्नियोज्यविषयाकांक्षा तत्रनियोज्यस्येयमवगतिर्भवति । मयैतत्कर्तव्यंनार्थस्तत्रनियुक्तः पुरुषनियोगरूपत्वाद्विधेः सचात्रनियोज्योलौकिकयाद्वेषलक्षणयाप्रवृत्त्यार्थेनप्रवर्तमानांहिंसात्स्वभावोपदेशेन समर्पितः यःस्वेच्छयाहनने प्रवर्तते सहन्यादिति । नचैतेन युज्यते सहस्त्रविधेर्विषयः । नचेति शून्येषु भावार्थस्यान्यतःप्राप्तत्वात्पुरुषोपलक्षणत्वात्स्वेनविषयत्वेन विधेःसंबन्धः । यश्चासौनि-

र्योज्यः सनतीर्थत्वेन नियोज्यभावमात्मनः प्रतिपद्यते यावत्तद्विषयस्यप्रतिषिध्यमानस्य नानिष्टफलतामध्यवस्यति तथाहि लोके व्युत्पत्तिः । सन्ध्यायांगुलिर्देयेतिवदनूप्रतिषिद्धे तदतिक्रमेण तदनुष्ठीयमानमनर्थहेतुतया प्रतिपन्नंतत्रलौकिकींव्युत्पत्तिमवमृज्यहेत्वन्तरमुपन्यासमर्हति नचाश्रुताप्यनिष्टफलता प्रतिषेधसामर्थ्यात्कल्पयितुंयुक्ता किंपुनर्यत्रश्रूयतएव नहिश्रुतस्योत्सर्गोन्याय्यः नचात्र वादमात्रोपलक्षकत्वंनरकादिफलश्रुतियुक्तमुक्तेन न्यायेन फलापेक्षान्वयःसकाशात् । किंचार्थवादाविधिविशेषाभवन्ति । नचेहकश्चिद्विधिःश्रुतःप्रकृतोवा कर्मफलसंबन्धस्यैव प्राधान्येन प्रतिपादयिष्यमाणत्वान । नह्यत्र कर्माणि विधीयन्ते अतश्चतेषांफलसंबन्धउच्यते । नचैतावता भवन्ति वाक्यशतान्यनर्थकानि भवन्त्वर्हन्तुस्मृतिकारणंतावदेतद्दर्शनं नह्यन्यथैतानि वाक्यानि व्याख्यातुंशक्यन्ते । अविधिशेषइहनास्ति गुणवादेनैतद्व्याख्यानं शास्त्रकाराणामपि भ्रान्तिरितिचेन्न नैवंवादिनआत्मनःप्रकर्षतोमहर्षीनवजानते । अघंपापमनघेति संबोधनंनिष्कल्मषतया स्तुत्यर्थं शंसेतिवाग्यतोवर्तते ॥ १ ॥

( २ ) **सर्वज्ञनारायणः** । श्रीगणेशायनमः । कर्मनिर्णययोगमुपक्रमते । चातुर्वर्ण्यस्येति मुनिप्रश्ननिबन्धनेनाकांक्षितत्वं वक्ष्यमाणस्य दर्शितम् । कर्मणां सुकृतदुष्कृतानां फलस्य निर्वृत्तिं निष्पत्तिम् ॥ १ ॥

( ३ ) **कुल्लूकः** । हेपापरहित ब्राह्मणादिवर्णचतुष्टयस्य सान्तरप्रभवस्यायंधर्मस्त्वयोक्तः इदानींकर्मणांशुभाशुभफलप्राप्तिंपरांजन्मान्तरप्रभवांपरमार्थरूपामस्माकंब्रूहीति महर्षयोभृगुमवोचन् ॥ १ ॥

( ४ ) **राघवानन्दः** । उक्तेर्थे स्वमेधावित्वप्रकटनार्थं पृच्छन्ति चातुर्वर्ण्यस्येति । तत्प्रकटने हि गुरूणां विद्यादानेच्छा स्यादिति । फलनिर्वृत्तिं शुभाशुभफलप्राप्तिं शंस कथय तत्त्वतः परांमुक्तिंच तत्त्वधीसाध्याम् सतादृशःप्रतिज्ञाकारी भृगुरुवाच इति स्वयं कथयति याज्ञवल्क्यंमुनिश्रेष्ठमितिवत् । मानवोमनोःशिष्यः ब्राह्मणत्वादस्य । कर्मयोगस्य कर्मैव योगः पुंसःफलयोगिसाधनत्वादस्य कायादिसाध्यस्य निर्णयं येन कायादिना यत्कर्मजन्यते येनभुज्यते यत्फलंचेति ॥ १ ॥ २ ॥

( ५ ) **नन्दनः** । शाधि नस्त्वं ततः परं फलनिर्वृत्तिफलोदयम् ॥ १ ॥

( ६ ) **रामचन्द्रः** । कर्मणां फलनिर्वृत्तिनिष्पत्तिं नः अस्माकं शंस कथय तत्त्वतः परांउत्कृष्टांनिर्वृत्तिं ॥ १ ॥

**सतानुवाच धर्मात्मा महर्षीन्मानवोभृगुः ॥ अस्य सर्वस्य शृणुत कर्मयोगस्य निर्णयम् ॥ २ ॥**

( १ ) **मेधातिथिः** । पृष्टप्रतिवचनमेतत् यदहंपृष्टः शृणु तत्कर्मणोयोगमितिसंबन्धः सचप्रकृतत्वात्फलेनैव विज्ञेयः ॥ २ ॥

( ३ ) **कुल्लूकः** । सधर्मप्रधानोमनोरपत्यात्मा भृगुरस्य सर्वस्यकर्मसंबंधस्य फलनिश्चयंशृणुतेति तान्महर्षीनब्रवीत् ॥२॥

( ५ ) **नन्दनः** । अस्यकर्मयोगस्य युक्तस्यकर्मानुष्ठानस्य निर्णयंफलविशेषनिर्णयम् ॥ २ ॥

( ६ ) **रामचन्द्रः** । कर्मयोगस्य संबन्धस्य निर्णयंशृणुत ॥ २ ॥

**शुभाशुभफलंकर्म मनोवाग्देहसंभवम् ॥ कर्मजागतयोनॄणामुत्तमाधममध्यमाः ॥ ३ ॥**

( १ ) **मेधातिथिः** । शुभस्य निर्देशोदृष्टान्ततयामनोवाग्व्यापारविष्यर्थोवा मनसोवाचोदेहाच्च संभवति कर्मशब्दो नचेज्यामेवकायपरिस्पन्दे वर्तते किंतर्हि क्रियामात्रयोगध्यानवचनात्मकेऽपि फलशब्दः प्रत्येकमभिसंबध्यते । शुभमशुभ-

फलंचनैवंविज्ञेयंकायव्यापरसाधनादिवत्कर्मानुष्ठानाच्छुभाशुभफलप्राप्तिः अपितु मनोवाक्कायसंभवादप्येवमेव तस्मादपि त्रिविधात्कर्मणस्तुविधीयतेफलप्राप्तिः ॥ ३ ॥

( २ ) **सर्वज्ञनारायणः** । उत्तमा धर्मात् । अधमा पापात् । मिश्रा मध्यमा नात्युत्तमा नाधमा गतिः ॥ ३ ॥

( ३ ) **कुल्लूकः** । मनोवाग्देहहेतुकंकर्म विहितनिषिद्धरूपंसुखदुःखफलकंतज्जन्याएव मनुष्यतिर्यगादिभावेनोत्कृष्टमध्यमाधमापेक्षया मनुष्याणांगतयोजन्मान्तरप्राप्तयोभवन्ति । कर्मशब्दश्चात्र न कायचेष्टायामेव किन्तु ममेदंस्वमिति संकल्परूपयोगादिध्यानाचरणादावपि क्रियामात्रे वर्तते ॥ ३ ॥

( ४ ) **राघवानन्दः** । तदेवाह शुभेति । शुभं सुखं दुःखाभावोवा अशुभं दुःखं तएवफले यस्य कर्मणस्तत्कर्मकर्मत्वमिन्द्रियमात्रजन्यत्वं तेनमनआदेः संग्रहः देहोपीन्द्रियाश्रयतया कर्महेतुर्नस्वरूपतोमृतदेहे व्यभिचारात् । उत्तमाधममध्यमाः देवतिर्यङ्मनुष्यादिरूपाः गतयोजन्मानि जातीर्वा ॥ ३ ॥

( ५ ) **नन्दनः** । शुभमशुभफलंचेतिद्विविधंकर्मेत्युक्तंशुभाशुभकर्मेति । तस्याधिष्ठानंत्रिविधमनोवाग्देहसंभवमिति शुभफलमशुभफलंचप्रत्येकंत्रिविधमित्युक्तं उत्तमाधममध्यमाइति कर्मजागतयः कर्मफलानि ॥ ३ ॥

( ६ ) **रामचन्द्रः** । मनोवाग्देहसंभवं शुभाशुभफलरूपम् ॥ ३ ॥

## तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ॥ दशलक्षणयुक्तस्य मनोविद्यात्प्रवर्तकम् ॥ ४ ॥

( १ ) **मेधातिथिः** । ननुच दण्ड्यानयजेत नाहिंस्यादिति शुभमशुभंचते सर्वे कायव्यापारसाध्ये तदानेनात्मनः स्वत्वनिवृत्तिः परस्यच स्वत्वसंपादनंतच्चपूर्वेदक्षिणेन हस्तेनेत्यादिविहितं यागोपि प्रयोगरूपोऽवभृथान्तः कायव्यापारनिर्वर्त्योभवति एवंसंघातदण्डाद्यविद्यात् कायिकतया प्रसिद्धैव तत्र किंतत्कर्मयन्मनसः संभवत्यतआह अर्थस्यास्यमनोविद्यात्प्रवर्तकं मनसोहिव्यापाराः सर्वदर्शनादयः । नचत्रिष्वसत्सु भौतिकोव्यापारः तथाहि प्रथमंतावन्मनसायमर्थंसंपश्यत्ययमीदृशएवतस्यवस्तुनः सुखंदुःखंवास्यकारणात् ततआयत्ते कथमेतन्मनः संपद्यते ततोऽध्यवस्यति संपादयाम्यतोनेदमिति तत्रउदरेक्रियाप्रधाने कायपरिस्पन्दरूपवाग्व्यवहारश्चातः सर्वस्यमनः प्रवर्तकंप्रेक्षापूर्वकारिणः अबुद्धिपूर्वन्तुनावश्यंसद्दर्शनादयः पूर्वभाविरूपस्य ताद्रूप्येण ग्रहणंयथामेघवर्णसादृश्यात्पानकबुद्ध्याप्रवृत्तिः संन्तमासंभवात्तयापरस्त्रीष्वन्यत्तुदैवोपनिपतितं यथासुप्तस्य हस्तसंचारपार्श्वपरिवर्तनादिना मशकादिप्राणिवधस्तत्रापिकर्तृत्वमुपपादितं प्रायश्चित्तेषु प्रवृत्तिहेतुर्विविधस्यवाङ्मनःकायसाधनभेदेन त्र्यधिष्ठानस्योत्तमाधममध्यमगतिभेदेन दशलक्षणयुक्तस्यमनः कायकर्मणोः प्रत्येकंत्रैविध्यंवाङ्मयंचतुर्विधं एतानि दशलक्षणानि तान्युपरिष्टाद्वक्ष्यति ॥ ४ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिविधस्य गतिभेदात् अधिष्ठानस्य मनोवाक्कायानांकर्महेतूनामधिष्ठानस्याश्रयस्य देहिनः वक्ष्यमाणदशलक्षणयुक्तस्य मनएव प्रवर्तकंविद्यात् । वाग्देहयोरपि तद्विनाऽप्रवृत्तेः व्यापारविशेषापेक्षया प्रवर्तकमित्युक्तम् । यद्वा देहिनइतिव्यधिकरणं देहिनः सबन्धि यत्कर्म तस्येत्यर्थः ॥ ४ ॥

( ३ ) **कुल्लूकः** । तस्य देहिसंबन्धिनः कर्मणउत्कृष्टमध्यमाधमतया त्रिःप्रकारस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशलक्षणोपेतस्य मनएव प्रवर्तकंजानीयात् । मनसा हि संकल्पितमुच्यते क्रियते च । तथातैत्तिरीयोपनिषदि तस्माद्यत्पुरुषोमनसाऽभिगच्छति तद्वाचा वदति तत्कर्मणाकरोतीति ॥ ४ ॥

( ४ ) **राघवानन्दः** । कतिसंख्यस्य कत्यधिष्ठानस्य कतिलक्षणस्य कतिप्रवर्त्यस्यैतागतयोभवन्तीत्यतआह तस्ये-

ति । तस्य देहिनोजीवस्य त्रिविधस्य सात्त्विकादिभेदभिन्नस्य देवादिभेदभिन्नस्य वा त्र्यधिष्ठानस्य मनोवाग्देहाअधिष्ठानं यस्य तदाश्रितस्य वक्ष्यमाणपरद्रव्येष्वभिध्यानमित्यादिदशलक्षणयुक्तस्य दशविधकर्मणइतिव्यधिकरणे षष्ठ्यौ । मनः संकल्पविकल्पात्मकं प्रवर्तकंविद्यादित्यन्वयः । यन्मनसा ध्यायति तद्वाचा वदति कर्मणा चोपपादयतीति [ स्मृतेः ] मनःपूर्वकत्वात्कर्ममात्रस्य मनसा वा अग्रे संकल्प्याथवाचा व्याहरतीतिश्रुतेः ॥ ४ ॥

( ५ ) **नन्दनः** । त्रिविधस्योत्तमाधममध्यमस्य त्र्यधिष्ठानस्यमनोवाग्देहाश्रयस्य वक्ष्यमाणदशलक्षणयुक्तस्य कर्मणः प्रवर्तककर्म देहिनोमनसैव यन्मनसा ध्यायति तदेव वेदति करोति चेति ॥ ४ ॥

( ६ ) **रामचन्द्रः** । इह तस्य देहिनः तत्संबन्धिप्रवर्तकंमनःविद्यात् कीदृशस्य तस्य त्रिविधस्य उत्तममध्यमाधमरूपस्य पुनःकीदृशस्य त्र्यधिष्ठानस्य मनोवाक्कायानामधितिष्ठन् अस्य पुनः वक्ष्यमाणलक्षणमुक्तस्य ॥ ४ ॥

## परद्रव्येष्वभिध्यानंमनसानिष्टचिन्तनम् ॥ वितथाभिनिवेशश्च त्रिविधंकर्ममानसम् ॥ ५ ॥

( १ ) **मेधातिथिः** । अभिध्यानंनाम परद्रव्यविषयेर्ष्याबुद्ध्या परद्रव्याभिभवानुचिन्तनं कियदश्वगोधनंकियद्वाजातिकमिति च विभवोऽश्वाः धिग्दैवंकस्मादस्येयती समृद्धिः । अथचकथंनामैतस्यापहरेयमथसाधुर्भवति यद्येतस्यैतन्नभवति । अन्येत्वाहुरेतद्धनंसमभिभवत्यनिष्टचिन्तनपरस्येत्यभिसंबध्नन्ति । परवधोपायचिन्तनंयदि म्रियते तन्ममास्त्विनिवा । ननुच परद्रव्याभिध्यानमीदृशमेवोक्तमनेनैवसिद्धेतदनर्थकं सामान्यशब्दोह्ययं यदनिष्टमनभिप्रेतंपरस्य तन्नचिन्तनीयं धननाशोपि परस्य नैवेष्टः एतद्भयाच्च किंचनपरस्येत्येतन्नव्याहरन्ति । अनिष्टंच यत्प्रतिषिद्धंतद्याचक्षते अस्मिन्नपि पक्षे परद्रव्याभिध्यानं प्राधान्यार्थमेव एवंवितथाभिनिवेशोपि । पूर्वपक्षार्थस्य सिद्धान्तत्वेनग्रहणंविज्ञानवादोविदांप्रामाण्यं अनात्मतायहइत्येवमादि । अन्येतु नित्यनिरामिषद्वेषमाहुः इयंच त्रिविधाऽकुशलामानसीप्रवृत्तिः अतोन्याकुशला अस्पृहापरस्वेषु दयासर्वसत्त्वेषु श्रद्धाधर्मोद्यस्तित्वादिषु तथाचभगवान्व्यासः ॥ अनभिध्यापरस्वेषु सर्वसत्वेषु सौहृदं ॥ धर्मिणांफलमस्तीतित्रिविधंमनसास्मरेत् ॥ ५ ॥

( २ ) **सर्वज्ञनारायणः** । अभिध्यानं स्वाम्यननुमत्या आदातुंयत्नः । अनिष्टचिन्तनं पराभिघातचिन्तनम् । वितथाभिनिवेशोमिथ्याग्रहः परलोकोनास्ति नास्तिपरलोकइत्यादिदृढप्रत्ययः ॥ ५ ॥

( ३ ) **कुल्लूकः** । तानि दशलक्षणानि कर्माणि दर्शयितुमाह परद्रव्येति । कथंपरधनमन्यायेन गृह्णामीत्येवंचिन्तनंमनसा ब्रह्मवधादिनिषिद्धाकांक्षा नास्ति परलोकः देहएवात्मेत्यतद्ग्रहश्च इत्येवंत्रिःप्रकारमशुभफलंमानसंकर्म । एतत्त्रयविपरीतबुद्धिश्च त्रिविधंशुभफलंमानसंकर्म शुभाशुभफलंकर्मेत्युभयस्यैव प्रक्रान्तत्वात् ॥ ५ ॥

( ४ ) **राघवानन्दः** । तत्र मानसं कर्म संकलयति परेति । अभिध्यानं जिघृक्षा अनिष्टचिन्तनं ब्रह्मवधादिचिन्तनम् । वितथाभिनिवेशः नास्ति परलोकइति ॥ अनभिध्यापरस्वेषु सर्वसत्त्वेषुसौहृदम् । धर्मिणांफलमस्तीति त्रिविधंमनसा स्मरेदिति ॥ व्यासोक्तेः । एतद्विपरीतोमनोव्यापारोनरकहेतुः ॥ ५ ॥

( ५ ) **नन्दनः** । अभिध्यानंजिघृक्षा ॥ ५ ॥

( ६ ) **रामचन्द्रः** । परद्रव्येषु मनसा अभिध्यानं मनसा अनिष्टचिन्तनं वितथाऽभिनिवेशः नास्ति परलोकइतिग्रहः एतत्त्रिविधंकर्म मानसं मनसा कृतम् ॥ ५ ॥

---

( १ ) राघ०२

पारुष्यमनृतंचैव पैशून्यंचापि सर्वशः ॥ असंबद्धप्रलापश्च वाङ्मयंस्याच्चतुर्विधम् ॥ ६ ॥

( २ ) सर्वज्ञनारायणः । पारुष्यं परपीडाजनकोच्चारणम् । पैशून्यं परगुणासहिष्णुत्वेन तद्धीनतावचनम् । अनिबद्धप्रलापोमिथ्याभाषणम् ॥ ६ ॥

( ३ ) कुल्लूकः । अप्रियाभिधानमसत्यभाषणंपरोक्षे परदूषणकथनंसत्यस्यापि राजदेशपौरवार्तादेर्निष्प्रयोजनवर्णनमित्येवंचतुःप्रकारमशुभफलंवाचिकंकर्मभवेत् । एतद्विपरीतंप्रियसत्यपरगुणाभिधानंश्रुतिपुराणादौ च राजादिचरितकथनंशुभफलम् ॥ ६ ॥

( ४ ) राघवानन्दः । वाचनिकं संकलयति पारुष्यमिति । म्लेच्छपुत्रोसीत्यादि रुक्षभाषिता । अदृष्टाश्रुतभाषणमनृतम् । पैशून्यं परछिद्रप्रकटनम् । असंबद्धप्रलापश्च कलहहेतुः सत्यस्यापि राजपौरवार्तादेर्निष्प्रयोजनस्य वर्णनम् ॥ ६ ॥

( ६ ) रामचन्द्रः । पारुष्यं ॥ पारुष्यमतिवादःस्यादित्यमरः । अनृतं पैशून्यं परगुणासहिष्णुत्वेन तद्धीनतापादनं । असंबद्धप्रलापः ॥ प्रलापोऽनर्थकंवचइत्यमरः । एतच्चतुर्विधंवाङ्मयं स्यात् ॥ ६ ॥

अदत्तानामुपादानंहिंसा चैवाविधानतः ॥ परदारोपसेवा च शारीरंत्रिविधंस्मृतम् ॥ ७ ॥

( १ ) मेधातिथिः । शास्त्रीयाप्राधान्यतयास्यादत्तानामसद्भ्यउपादानंदुष्टंचैव तथाकुमार्यादिपरदारावपिविपरीतधर्मादानंपरित्राणमिन्द्रियसंयमश्च । इदंमनोवाग्देहभेदेन दशविधं भवतिकुशलाकुशलविभागेनविंशतिप्रकाराः ॥ ७ ॥

( २ ) सर्वज्ञनारायणः । स्वाम्यदत्तानां धनानां स्वभोगसाधनत्वेन व्यापारणम् । भार्यायां न स्वामिसंबन्धोऽतः परदारोपसेवायाः पृथगुक्तिः । एवंचैते दशाधर्महेतवः । एतदकरणसंकल्पाअपि दशैव धर्महेतवोऽर्थादुक्ताः । तेच मानसवाचिकशारीरप्रतियोगित्वान्मानसादयः । अतएव प्रागुक्तं शुभाशुभफलंकर्म मनोवाग्देहसंभवमिति ॥ ७ ॥

( ३ ) कुल्लूकः । अन्यायेन परस्वग्रहणमशास्त्रीयहिंसा परदारगमनमित्येवंत्रिःप्रकारमशुभफलंशारीरंकर्म एतद्विपरीतंत्रयंशुभफलम् ॥ ७ ॥

( ४ ) राघवानन्दः । कायिकं संगृह्णाति अदत्तेति । उपादानं स्वीकारः तदप्यन्यायेन । हिंसा अशास्त्रीया । परदारोपसेवा भोग्यत्वेन परस्त्रीसमीपोपगमनम् ॥ ७ ॥

( ५ ) नन्दनः । विधानतोहिंसा शास्त्रविहितहिंसा एतद्वैपरीत्येन शुभस्य कर्मणोपि दशलक्षणत्वमर्थादुक्तमिति वेदितव्यम् ॥ ७ ॥

( ६ ) रामचन्द्रः । अदत्तानां उपादानं स्वीकारः अविधानतःहिंसाचैव यज्ञीयपशुहिंसायानिषिद्धत्वाभावात् । त्रिविधंशारीरंकर्म स्मृतम् ॥ ७ ॥

मानसंमनसैवायमुपभुङ्क्तेशुभाशुभम् ॥ वाचा वाचा कृतंकर्म कायेनैव च कायिकम् ॥ ८ ॥

[ त्रिविधंच शरीरेण वाचाचैव चतुर्विधम् ॥ मनसा त्रिविधंकर्म दशधर्मपथांस्त्यजेत् ॥ १ ॥ ]*

( १ ) मेधातिथिः । परस्यमनस्तापोयेनजन्यते कर्मणा ततोमानसंदुःखमाप्नोतीतिकेचित् । वयन्तुब्रूमो यत्त्रिविधंमानसमुक्तंततोमनोदुःखाप्तिरेवमुत्तरयोरपि ॥ ८ ॥

---

( ६ ) असंबद्धप्रलापश्च=अनिबद्धप्रलापश्च ( सर्वज्ञ० ) *( क )

( २ ) **सर्वज्ञनारायणः** । मनसा शोकाद्यनुभवेन । वाचा परमयुक्ताक्रोशादिना । कायेन व्याध्यङ्गच्छेदादिना । एवं पुण्येऽप्यूह्यम् ॥ ८ ॥

( ३ ) **कुल्लूकः** । मनसा यत्सुकृतंदुष्कृतंवा कर्म कृतंतत्फलंसुखदुःखरूपमिह जन्मनि जन्मान्तरे वा मनसैवायमुपभुङ्क्ते । एववाचाकृतंशुभाशुभंवाग्द्वारेण मधुरगद्गदभाषित्वादिना शारीरंशुभाशुभंशरीरद्वारेण स्रक्चन्दनादिप्रियोपभोगव्याधितत्वादिनानुभवति । तस्मात्प्रयत्नेन शारीरमानसवाचिकानि धर्मरहितानि च वर्जयेन्न कुर्याच्च ॥ ८ ॥

( ४ ) **राघवानन्दः** । मनआदिजनितकर्मफलभोगोपि मनआदिभिरित्याह मानसमिति । तूर्ष्णीभूतस्यापि मनस्याकस्मिकं दुःखं सुखमप्येवं मानसं । । वाचनिकं परोक्तपरुषादिवाक्योत्थं अग्निचन्दनादिजंकायिकम् ॥ ८ ॥

( ५ ) **नन्दनः** । कर्मफलभीरौरवादिषुभुक्तम् ॥ ८ ॥

( ६ ) **रामचन्द्रः** । मानसंशुभाशुभं कर्म मनसोव्यभिचारेण कृतंकर्म अयं पुरुषः मनसैवोपभुंक्ते । वाचा कृतंशुभाशुभं सर्ववाचावचसवोपभुंक्ते । तु पुनः कायिकं देहेन कृतंशुभाशुभं कायेनैवोपभुंक्ते ॥ ८ ॥

**शरीरजैः कर्मदोषैर्याति स्थावरतांनरः ॥ वाचिकैः पक्षिमृगतांमानसैरन्त्यजातिताम् ॥ ९ ॥**

**[ शुभैः प्रयोगैर्देवत्वंव्यामिश्रैर्मानुषोभवेत् ॥ अशुभैः केवलैश्चैव तिर्यग्योनिषु जायते ॥१ ॥ ***

**वाग्दण्डोहन्ति विज्ञानंमनोदण्डः परांगतिम् ॥ कर्मदण्डस्तु लोकांस्त्रीन्हन्यादपरिरक्षितः ॥ २ ॥ ‡**

**वाग्दण्डोऽथभवेन्मौनंमनोदण्डस्त्वनाशनम् ॥ शारीरस्य हि दण्डस्य प्राणायामोविधीयते ॥३॥ ऽऽ**

**त्रिदण्डंधारयेद्योगी शारीरंन तु वैणवम् ॥ वाचिकंकायिकंचैव मानसंच यथाविधि ॥४ ॥ ][1]**

( १ ) **मेधातिथिः** । भूयस्त्वाभिप्रायमेतत् । प्रायेणैतासांजातीनामेतानियथाविभागंनिमित्तानि । नत्वयंनियमः तथा महापातकिनांतिर्यक्पर्यटन्तीतिवक्ष्यतीति पक्षिमृगग्रहणंतिर्यग्जातिमात्रप्रदर्शनार्थम् । मनोवाक्कायकर्मणामुत्तरोत्तरस्य गुरुत्वप्रदर्शनार्थंपरम् ॥ ९ ॥

( २ ) **सर्वज्ञनारायणः** । शरीरजैः प्रचुरैः । एवमन्यत्रे तद्विशेषैस्तु श्वशूकरखरोष्ट्राणामितिवक्ष्यति । अन्त्यजातितां चाण्डालत्वादिम् ॥ ९ ॥

( ३ ) **कुल्लूकः** । यद्यपि पापिष्ठानांशारीरवाचिकमानसिकान्येव त्रीणि पापानि संभवन्ति तथापि सयदि प्रायशोऽधर्ममेव सेवते धर्ममल्पमिति बाहुल्याभिप्रायेणेतिव्याख्यातं बाहुल्येन शरीरकर्मजपापैर्युक्तः स्थावरत्वंमानुषः प्राप्नोति बाहुल्ये नवाक्कृतैः पक्षित्वंमृगत्वंवा बाहुल्येन मनसा कृतैश्चाण्डालादित्वंप्राप्नोति ॥ ९ ॥

( ४ ) **राघवानन्दः** । कस्मात्कीदृशंफलमुत्पन्नमितिविवेचयन्नाह शरीरेति । तत्रादौ देहप्रधानैः स्थावरतां दुःखैकयोनितरुगुल्मलतात्वम् । एतत्त्वत्यन्ताभ्यासपरं अथाप्येकलहिनइत्यादिश्रुतौताच्छील्यप्रत्ययदर्शनात् । अन्त्यजातितांचण्डालादियोनिं श्वयोनिंचण्डालयोनिंचेतिश्रुतेः । पूर्वाध्याये तथाज्ञानाग्निना पापंकृत्स्नं दहति वेदविदित्युक्तं तत्तुज्ञानं वैराग्यशमदमात्मानात्मविवेकसाध्यं तस्माच्छान्तोदान्तउपरतस्तितिक्षुःसमाहितोभूत्वाआत्मन्येवात्मानंपश्येदितिश्रुतेः ।

* ( क, ट, ठ. ड ) , ‡ ( क, ञ, ट, ठ, ड ) ऽऽ ( क, ञ, ट, ठ, ड, त ) ( १ ) ञ

तत्र वैराग्यार्थं गतयः स्थावरान्ताउपन्यस्ताः। संसारोतीव कष्टतरोयत्र जन्ममरणप्रवाहैरनिशमुह्यमानं बम्भ्रमीति स्थावरादियोनिषु प्राणभृन्मात्रमिति ॥ ९ ॥

( ५ ) **नन्दनः**। शेषस्य कर्मणइहलोकेफलविशेषमाह शरीरजैरिति। पक्षिमृगग्रहणंतिर्यक्जातिप्रदर्शनार्थम् ॥ ९ ॥

( ६ ) **रामचन्द्रः**। मनोवाक्कायकृतं कर्मणः फलमाह शरीरेति। मानसैः कर्मभिः अन्त्यजातितां याति ॥ ९ ॥

**वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ॥ यस्यैते निहिताबुद्धौ त्रिदण्डीति सउच्यते ॥१०॥**

( १ ) **मेधातिथिः**। दमनंदण्डः वाचोदण्डःपारुष्याप्रवृत्तिरेवमुत्तरयोरपि। यस्यैतेदण्डाबुद्धौनिहितानैतन्मयाकर्तव्यमिति योनस्खलति सत्रिदण्डीत्युच्यते नत्वनार्योगुरुकाष्ठदण्डंधारयति ॥ १० ॥

( २ ) **सर्वज्ञनारायणः**। वाग्दण्डोवाचाऽपापकरणम्। एवमुत्तरत्र। नियताव्यवस्थिताः। सउच्यते नतु वैणवदण्डत्रयवत्तामात्रेण ॥ १० ॥

( ३ ) **कुल्लूकः**। दमनंदण्डः यस्य वाङ्मनः कायानांदण्डानिषिद्धाभिधानासत्संकल्पप्रतिषिद्धव्यापारत्यागेन बुद्धाववस्थिताः सत्रिदण्डीत्युच्यते। नतु दण्डत्रयधारणमात्रेणेत्याभ्यन्तरदण्डत्रयप्रशंसा ॥ १० ॥

( ४ ) **राघवानन्दः**। तत्रादौ सार्थवादं दमं विधत्ते वागितिद्वाभ्याम्. दण्डोदमोनियमनमिन्द्रियाणां विषयेभ्यः वाक्शब्दः कर्मेन्द्रियोपलक्षकः। कायशब्दोज्ञानेन्द्रियोपलक्षकः। वागादिविना कायेन कर्मान्तरादृष्टेः। निहिताःस्वस्वविषयपरित्यागेनावस्थिताः क्वचिन्नियताइतिपाठः। सत्रिदण्डीति स्तूयते ॥ १० ॥

( ६ ) **रामचन्द्रः**। वाग्दण्डः असद्वचनालापे अवधारणा मौनमित्यर्थः। अथानन्तरं मनोदण्डः विषयेषु निरीहत्वं। कर्मदण्डः शुभाशुभक्रियाशून्यत्वं। एते यस्य नियताःदण्डाबुधैःसत्रिदण्डीत्युच्यते ॥ १० ॥

**त्रिदण्डमेतन्निक्षिप्य सर्वभूतेषु मानवः ॥ कामक्रोधौ तु संयम्य ततः सिद्धिंनियच्छति ॥ ११ ॥**

( १ ) **मेधातिथिः**। त्रयाणांदण्डानांसमाहारस्त्रिदण्डं पात्रादिदर्शनादस्त्रियांभाषणात्। बुद्धौनिक्षिप्यबुद्धौकृत्वा सर्वभूतेष्ववघातकत्वंचावस्थितं त्रिदण्डंवानिहितं कामक्रोधयोःसंयमःसुसाधुस्ततःसिद्धिंमोक्षाख्यांगच्छति प्राप्नोति। आध्यात्मिकत्वोपन्यासउपक्रमोयं कस्यपुनरेषासिद्धिः कस्यत्रान अत्रविकारकर्मफलानांभोक्तृत्वंभस्मान्तंशरीरं नचततोऽन्यमुपलभामहे तेसर्वेधर्माधर्मेष्वधिकारिपुरुषंप्रदर्शयितुकामःप्रारभते ॥ ११ ॥

( २ ) **सर्वज्ञनारायणः**। सर्वभूतेषु विषयेषु। कर्मत्रयप्रतियोगिकत्वाद्दण्डत्रयमपि तद्विषयकमुक्तम्। तन्निक्षिप्य। नियम्य आत्मनि व्यवस्थाप्य वाचिकादि ॥ ११ ॥

( ३ ) **कुल्लूकः**। एवंनिषिद्धवागादीनांसर्वभूतगोचरतया दमनंकृत्वैतद्दमनार्थमेव कामक्रोधौ तु नियम्य ततोमोक्षावाप्तिलक्षणांसिद्धिमनुष्योलभते ॥ ११ ॥

( ४ ) **राघवानन्दः**। तत्कथं तत्राह त्रीति। त्रिदण्डं निक्षिप्य भूतेषु पारुष्यादि कामक्रोधाविन्द्रियाणां प्रवर्त [ के ] भूतौच त्यक्त्वा सिद्धिं मोक्षावाप्तिफलामात्मानात्मविवेचनां नियच्छति गच्छतीत्यन्वयः। कामक्रोधाविति द्वेषस्याप्युपलक्षणम् ॥ इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितावित्युक्तेः। कामेन क्रोधस्य संग्रहः ॥ ११ ॥

---

( १ ) न

( ६ ) **रामचन्द्रः** । एतत्त्रिदण्डं मानवः सर्वभूतेषु सर्वविषयेषु निक्षिप्य तु पुनः कामक्रोधौ संयम्य ततःसिद्धिं नियच्छति प्राप्नोति ॥ ११ ॥

**योऽस्यात्मनः कारयिता तंक्षेत्रज्ञंप्रचक्षते ॥ यःकरोति तु कर्माणि सभूतात्मोच्यते बुधैः ॥ १२ ॥**

( १ ) **मेधातिथिः** ।अस्यशरीरस्यक्रियापरिस्पन्दात्मिकांक्रियांत्वयंप्रवर्तयिताप्रयत्नवशेनास्यकर्तृत्वंसक्षेत्रज्ञः । अस्यात्मनइतिसमानाधिकरणेषष्ठी आत्मशब्दस्यशरीरे तस्याप्यात्मार्थत्वात् । यःकरोतिपाणादिलक्षणंतज्जन्योयःशरीराख्यः कर्ता सभूतात्मोच्यते पृथिव्यादिभूतसंघातोजघन्यत्वात् । भूतविकारआत्माभूतात्मा तथाचोक्तं द्वावात्मानावन्तरात्मना-शरीरात्मना ॥ १२ ॥

( २ ) **सर्वज्ञनारायणः** । अस्यात्मनोदेहमनःप्रभृतिजडसमुदायस्य कारयिता प्रवर्तकः । क्षेत्रज्ञमस्यैवक्षेत्रस्य स्वाभेदेन ज्ञातारं चेतनमित्यर्थः । भूतात्मा भूतादिजडरूपआत्मा संसारप्रपञ्चस्यायतनकारी ॥ १२ ॥

( ३ ) **कुल्लूकः** । कोसौ सिद्धिमाप्नोतीत्यतआह यइति ।अस्य लोकसिद्धस्यात्मोपकारकत्वादात्मनः शरीराख्यस्य यः कर्मसु प्रवर्तयिता तंक्षेत्रज्ञंपण्डितावदन्ति । यः पुनरेषध्यापारान्करोति शरीराख्यः सपृथिव्यादिभूतारब्धत्वाद्भूतात्मैवेति पण्डितैरुच्यते ॥ १२ ॥

( ४ ) **राघवानन्दः** । तत्र सिद्धिप्रकारमाह यइतिद्वाभ्याम् । अस्यात्मनइतिव्यधिकरणे षष्ठ्यौ । अस्य मत्यक्षीभूतस्य स्थूलदेहस्य षाट्कौशिकस्यान्नमयकोशस्य आत्मनोलिङ्गशरीरस्य च ज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चकमाणपञ्चक-बुद्धिमनइति सप्तदशावयवस्य विज्ञानमयमनोमयप्राणमयेतिकोशत्रयात्मकस्य कारयिता संनिधानमात्रेण लोहस्यायस्कान्तमणिरिव निर्व्यापारःसन्वर्तयितेव लोकैः संभाव्यमानस्तं क्षेत्रज्ञं शरीरद्वयद्रष्टारमाचक्षतइत्यन्वयः । तदुक्तम् महाभारते ॥ महाभूतान्यहंकारोबुद्धिरव्यक्तमेव च ॥ इन्द्रियाणि दशैकंच पञ्चचेन्द्रियगोचराः ॥ इच्छा द्वेषःसुखंदुःखंसंघातश्चेतना धृतिः ॥ एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदइति ॥ अत्राव्यक्तं स्थूलशरीरं महतःपरमव्यक्तमित्यत्र श्रुतेस्तथैव व्याख्यातत्वात् । अविद्यावा इन्द्रियगोचराणां विषयाणां भूतकार्यत्वेन तदनन्यत्वादिच्छादीनामपि शरीरकार्यतया तदन्तर्गतत्वात् ॥ एतस्माज्जायते प्राणोमनःसर्वेन्द्रियाणि च ॥ खंवायुर्ज्योतिरापश्च पृथिवी विश्वधारिणीतिश्रुत्या बोधनात्तदतिरिक्तानामत्रैवान्तर्भावादिति । अस्येत्यनेनोक्तंस्थूलदेहं विशिनष्टि यइति । भूतारब्धश्चात्मनोगमकत्वादात्मा च सचेति ॥ आत्मा यत्नोधृतिर्बुद्धिः स्वभावोब्रह्मवर्ष्मचेत्यभिधानात् । तदन्वयव्यतिरेकसिद्धत्वात्कर्तृत्वादिभावाभावयोः । भूतात्मा शरीरं । तथाच मैत्रायणश्रुतिः ॥ अन्योवाअपरःकोयमात्माख्यइत्युपक्रम्य कतमएषइति मध्ये पराम्रश्यास्तिखल्वन्योपरोभूतात्माख्योयोयं सितासितैःकर्मफलैरभिभूयमानः सदसद्योनिमापद्यतइत्यर्वाङ्गोर्ध्वावागतिं द्वन्द्वैरभिभूयमानः परिभ्रमतीत्यस्याप्यिव्याख्यानं । तत्रैव पञ्चतन्मात्राभूतशब्देनोच्यन्ते अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते अथ तेषां यत्समुदायं तच्छरीरमित्युक्तमथयोह खलु वावशरीरइत्युक्तं सभूतात्मेत्युक्तम् । तथैव श्वेताश्वतरेयःकर्ता सोयं भूतात्मा करणैः कारयितान्तःपुरुषइति ॥ १२ ॥

( ५ ) **नन्दनः** । अथकर्मणः कारयितारं कर्तारंचाह योऽस्याऽऽत्मनः कारयितातमिति । आत्मनः शरीरकर्मेन्द्रियवर्गस्येति यावत् क्रियाकारयिताक्रियासु प्रवर्तकः क्षेत्रज्ञंप्रचक्षतइति जीवात्माकारयितेत्यर्थः । यः कर्माणिकरोति सर्वभूतात्मासकर्मेन्द्रियवर्गः कर्मणः कर्तेत्यर्थः ॥ १२ ॥

( ६ ) **रामचन्द्रः** । यः पुरुषः अस्य आत्मनःकारयिता जडसमुदायस्य । अस्यैव क्षेत्रस्य अभेदेनज्ञातारं चेतनंतं क्षेत्रज्ञं प्रचक्षते । यः कर्माणि करोति सः भूतात्मा भूतादीनामात्मा बुधैरुच्यते ॥ १२ ॥

**जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम् ॥ येन वेदयते सर्वसुखंदुःखंच जन्मसु ॥ १३ ॥**

( १ ) **मेधातिथिः** । किंपुनरयंजीवोनामयावताक्षेत्रज्ञमेवजीवंमन्यन्ते द्वौचात्रोपलभ्येते शरीरमहंप्रत्ययविज्ञेयश्चान्तरात्मा ततोन्यःकश्चिज्जीवोनाम । केचित्तावदाहुः महदभिभूतंसूक्ष्मपरिवेष्टितंलिङ्गं यत्पठ्यते संसरतिनानारूपंभोगभावैरधिवासितंलिङ्गमिति । येनेतिकरणत्वंच वेदनंप्रतितस्योपपद्यते तद्धिस्थूलभूतानामाश्रयस्तस्यैवशरीराख्यबाह्यभूताश्रयत्वात् । शरीरेचसत्यात्मनः सुखदुःखभोक्तृत्वमतोयेनेतिकरणविभक्त्योच्यते । अन्यतु मन्यन्ते अन्तःकरणंमनोबुद्ध्यहंकाररूपंजीवस्तस्यचान्तःकरणसंज्ञत्वाद्युक्तएवकरणविभक्त्यानिर्देशःअन्तरात्मशब्दश्च तादर्थ्याद्युक्तएव । सहशब्दस्यामोक्षप्राप्तेराप्रलयाच्च तदपियोगेन ॥ १३ ॥

( २ ) **सर्वज्ञनारायणः** । जीवसंज्ञश्चैतन्यप्रतिबिम्बमायोमहाबुद्ध्यादिपदवाच्यः । सहजः संसारप्रवृत्तिदशायां जातः । येनोपायेन जनितम् ॥ १३ ॥

( ३ ) **कुल्लूकः** । जीवशब्दोयंमहत्परः येनेतिकरणविभक्तिनिर्देशात् उत्तरश्लोके च तावुभौ भूतसंपृक्तौ महान्क्षेत्रज्ञएवचेति तच्छब्देन प्रत्यवमर्षात् शरीरक्षेत्रज्ञातिरिक्तोऽन्तः शरीरमात्माख्यत्वादाजीवाख्यः सर्वक्षेत्रज्ञानांसहजआत्मा तत्प्राप्तेस्तैस्तस्य विनियोगात् येनाहंकारेन्द्रियरूपतया परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्मसुखंदुःखंचानुभवति ॥१३॥

( ४ ) **राघवानन्दः** । आत्मनइत्यनेनोक्तं लिङ्गदेहं विशिनष्टि जीवसंज्ञइति । जीवः प्राणधारयितृत्वात् जीवोपाधित्वात् । सजीवोयत्पुनर्भव इत्यत्र श्रीधरस्वामिना तथैव व्याख्यातत्वात् । [अन्तरात्मा अन्तः शरीरं याव ]॑ दुधिरं व्याप्नोतीति । अन्यःस्थूलशरीरचैतन्याभ्यांसहजश्चिदात्मनाऽविनाभूतोऽहंधीविषयः मरणादावविनाशी च । तदुक्तं गीतासु ॥ मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ येन लिङ्गदेहेन वेदयते भूतात्मेतिशेषः । तथाच नारायणी श्रुतिः ॥ अथ यथाग्निनायःपिण्डोवाभिभूतः कर्तृभिर्हन्यमानोनानात्वमुपैति एवंवाचखल्वसौ भूतात्मान्तःपुरुषेणाभिभूतोगुणैर्हन्यमानो नानात्वमुपैतीति । गुणैः फलैराकृष्यमाणं नानात्वं देवादिदेहाकार भूतात्मा तत्तादात्म्यापन्नोवेदयतइतिभावः । वेदनामयश्च लिङ्गशरीरंमनइतिवेदान्तसिद्धान्तः । कामःसंकल्पोश्रद्धा । धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनइतिश्रुतेः । जन्मसु देवादियोनिषु । स्थूलशरीरे देवोहंमनुष्योहंपशुरहमितिवा लब्धाभिमानःसन्करोतीतिस्थूलदेहस्यैव कर्तृतेत्युक्तम् ॥ १३ ॥

( ५ ) **नन्दनः** । कर्मफलभोगसाधनमाह जीवसंज्ञोन्तरात्मान्यइति । येनकरणभूतेन सुखदुःखंच क्षेत्रज्ञैरमोक्षादविनाभूतः क्षेत्रज्ञाधिष्ठानेनैव तस्य चैतन्यमित्युक्तं जीवसंज्ञइति जीवात्संज्ञाज्ञानंयस्य सजीवसंज्ञः । १३ ॥

( ६ ) **रामचन्द्रः** । अन्यः देहाख्यः अन्तरात्मा जीवसंज्ञः सर्वदेहिनां सहजः येन जीवात्मना सर्वं सुखं दुःखंच जन्मसु वेदयते ज्ञापयते ॥ १३ ॥

**तावुभौ भूतसंपृक्तौ महान्क्षेत्रज्ञएव च ॥ उच्चावचेषु भूतेषु स्थितंतंव्याप्य तिष्ठतः ॥ १४ ॥**

**[ उत्तमः पुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ॥ १ ॥ ] ***

( १ ) **मेधातिथिः** । उच्चावचेषु बहुविधेषु नानारूपेषु भूतेषु सर्वेषु यःस्थितोव्याप्य तानि भूतानि तिष्ठतःसंश्रयतः ।

* ( ट, ठ, ड ) । भगवद्गीतायां १५ ध्याये ।

अतश्च सर्वकर्मकर्तृत्वंतिष्ठतेरनेकार्थत्वात् । कोसावुच्चावचेषु भूतेषु व्याप्य स्थितः परमात्मा चेतनाचेतनजगत्परित्यक्तः परमानन्दरूपःपरस्ताच्च प्रतिपादयिष्यते । भूतसंपृक्तौभूतानि पंचमहान्ति येनवेदयतइत्युक्तक्षेत्रज्ञस्यात्मनइति । यथाव्याप्य पक्षेऽपिद्वितीयस्थितांतमितिसंश्रयणंच तत्कारणत्वात्सर्वस्यास्यजगतः । कार्यंच कारणमाश्रयत्यतोऽपेक्षैवसंश्रवणं तथाच । भगवान्व्यासः ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ क्षरशब्देन सर्वंचैतदुच्यते विचारप्रपंचरूपमक्षरंप्रकृतिकरणं कूटस्थशब्देन कारणरूपतया प्रलयेप्यविनाशात् । अथवाक्षरंशरीरमक्षरःक्षेत्रज्ञः । कूटस्थत्वन्तुतस्यामोक्षप्राप्तेः कर्तृत्वभोक्तृत्वानिवृत्त्या ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ १४ ॥

( २ ) **सर्वज्ञनारायणः** । भूतसंपृक्तौ भूतात्मनाऽमुक्तौ उच्चावचेषु नानाविधेषु भूतेषु प्राणिषु साक्षितया तिष्ठन्तं संततंपरमात्मानं व्याप्य स्वाभेदविषयेण मोहेनावृतंकृत्वा ॥ १४ ॥

( ३ ) **कुल्लूकः** । तौ द्वौ महत्क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंपृक्तौ वक्ष्यमाणंसर्वलोकवेदस्मृतिपुराणादिप्रसिद्धतयातमिति निर्दिष्टंपरमात्मानमुत्कृष्टापकृष्टसत्वेषु व्यवस्थितमाश्रित्य तिष्ठतः ॥ १४ ॥

( ४ ) **राघवानन्दः** । तल्लाभोपि अभ्यासएवेत्याह ताविति । भूतसंपृक्तौ अग्निहोत्रादिष्वाहुतितयाक्षिप्यमाणंद्रवद्रव्यादिसारभूतपञ्चभूतैः संपृक्तौ संवेष्टितौ महानितिर्बुद्धिस्तदुपलक्षितं लिङ्गशरीरं क्षेत्रज्ञजीवात्मानौ उच्चावचेषु देवत्वादिजात्याक्रान्तेषु सर्वभूतेषु भोगायतनत्वेन स्थितं स्थूलदेहं व्याप्याध्यासमनुभूय भोक्तृतया तिष्ठतइत्यन्वयः । तथाच श्रुतिः । ताआपः पुरुषवचसोभवन्ति तद्यथा पेशस्कारी पेशसोमात्रामपादायान्य नवतरं कल्याणतरंवा रूपं तनुतइति । आरप्स्यमाणस्थूलशरीरमात्रोपादानपरम् । ताआपः लिङ्गशरीरवेष्टनभूताः पुरुषवचसः पुरुषाकारशरीरमारभन्तइत्यर्थः । व्याससूत्रमपि ॥ तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्यामिति देहान्तरप्राप्तौ तैर्भूतैः परिष्वक्तएव जीवोरंहति गच्छतीति सूत्रार्थः । महानत्र लिङ्गदेहउक्तः । तथाचेश्वरकृष्णःसांख्यकृत् । महदादिसूक्ष्मपर्यन्तमिति व्याख्यातंच वाचस्पतिना महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तमेषांसमुदायः सूक्ष्मशरीरमिति । अथवा । उच्चावचेषु उच्चं देवादिशरीरं अवचं पश्वादिशरीरं तानि उच्चावचानि मनुष्यशरीराणि द्व्यात्मकत्वात् तानितानि चेत्येकशेषादुच्चावचानि तेष्वेव स्थूलशरीरेषु भूतेषु पञ्चीकृतपञ्चभूतानद्धेषु मध्ये स्थितं वर्तमानं तं जरायुजाद्यन्यतमदेहं व्याप्य तादात्म्याध्यासमनुभूयरुधिरदेशपर्यन्तं महान् क्षेत्रज्ञश्च तिष्ठतइति वाक्यार्थः । यद्वा तं परमात्मानं त्रिविधदेहलाभाय व्याप्याश्रित्य भोगाय तिष्ठतः पर्यवस्यतः तथा ॥ योनिमन्ये प्रपद्य ते शरीरत्वाय देहिनः ॥ स्थाणुमन्येनुसंयन्ति यथाकर्म यथाश्रुतमितिश्रुतेः ॥ १४ ॥

( ५ ) **नन्दनः** । अन्यक्षेत्रसंज्ञाद्भूतात्मा चेन्द्रियवर्जयोक्षेत्रज्ञाधीनत्वमाह ताउभौ भूतसंपृक्ताविति । ताउभाविन्द्रियविवर्जौ भूतसंपृक्तौ शरीरेण सङ्कच्छेते क्षेत्रज्ञश्च भूतसंपृक्तइति विपरिणामः । महत्त्वमेवव्यनक्ति उत्तरार्धेन । उच्चावचेषु स्थूलसूक्ष्मेषु शरीरेषु स्थितंतंक्षेत्रज्ञंतौ व्याप्य संश्रित्य तिष्ठतः तेनाधिष्ठितत्वात्तिष्ठतइत्यर्थः ॥ १४ ॥

( ६ ) **रामचन्द्रः** । महान् महत्तत्वं महदहंकाररूपः च पुनः क्षेत्रज्ञोपि एतावुभौ भूतसंयतौसंमितौ स्थितंतं परमानन्दरूपं व्याप्य तिष्ठतः ॥ १४ ॥

**असंख्यामूर्त्तयस्तस्य निष्पतन्ति शरीरतः ॥ उच्चावचानि भूतानि सततंचेष्टयन्ति याः ॥ १५॥**

( १ ) **मेधातिथिः** । मूर्तिशब्देन यावत्किञ्चिद्भौतिकंकार्यकारणमितिशक्तिश्चतदुच्यते तदेतत्सर्वंतस्य परमात्मनः शरीरात्प्रादुर्भवति । स्वभावएव तस्य शरीरंशिलापुत्रकस्य शरीरमितिवद्भेदेनव्यपदेशः । असंख्याअनन्ताः समुद्रादिवोर्मयोनिष्पतन्ति प्रादुर्भवन्तीत्युक्तंताभिः प्रादुर्भूताभिरिदंजगच्चेष्टतेसक्रियंभवतीत्यर्थः । शरीरेन्द्रियविज्ञानैर्विनाचेष्टायाअभावाच्चेष्टयतीत्युच्यते । अन्येतु शरीरतः प्रधानंच परमात्मनः शरीरंतदधीनप्रवृत्तित्वात् ॥ १५ ॥

( २ ) **सर्वज्ञनारायणः** । मूर्तयोदेहाः क्षेत्रज्ञरूपाः तस्य शरीरात्स्वरूपान्निष्पतन्ति । भूतानि सत्वानि यामूर्तयश्चेष्टयन्ति ॥ १५ ॥

( ३ ) **कुल्लूकः** । अस्य परमात्मनः शरीरादसङ्ख्यमूर्तयोजीवाः क्षेत्रज्ञशब्देनानन्तरमुक्तालिङ्गशरीरावच्छिन्नावेदान्तउक्तप्रकारेणाग्नेरिव स्फुलिङ्गानिःसरन्ति । यामूर्त्तयउत्कृष्टापकृष्टाभूताग्निदेवरूपतया परिणतानि सर्वदा कर्मसु प्रेरयन्ति ॥ १५ ॥

( ४ ) **राघवानन्दः** । एतस्योक्तशरीरद्वयस्य ज्ञाननाश्यत्वद्योतनायेशविवर्ततामाह असंख्याइति । संख्यारहिता असंख्याः अनाद्यनन्तत्वात्संसारस्य मूर्तयः मूर्तिरूपाः पञ्चीकृतभूतकार्यत्वाल्लिङ्गशरीरस्य तदवच्छिन्नात्मानोजीवाः तस्य सगुणब्रह्मणस्तदिति सर्वनाम सर्वंच ब्रह्म तस्य नाम तस्य शरीरतः अवच्छेदकत्वसाम्यादविद्याताः निष्पतन्ति जायन्ते । जायमानाश्चोच्चावचानि भूतानि चतुर्विधदेहानवाप्यैव चेष्टयन्ति कर्मसु प्रवर्तन्ते । तथाच श्रुतिः ॥ सयथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रान्युस्फुलिङ्गाव्युच्चरन्त्येव मेतस्मादात्मनः सर्वेप्राणाः सर्वे लोकाः सर्वेवेदाः सर्वाणि च भूतानि सर्वएवात्मानोव्युच्चरन्तीति ॥ याज्ञवल्क्योपि ॥ निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ॥ सकाशादात्मनस्तद्वदात्मानः प्रभवन्तिहीति ॥ आपस्तम्बोपि ॥ तस्मात्कायात्प्रभवन्ति सर्वे समूलाः शाश्वातिकः सनित्यइति स्वतस्त्वात्मनोजन्माभावात् । यद्वा ततोजातायामूर्तयस्ताः सर्वभूतानि सर्वे जीवाः चेष्टयन्ति चेष्टवतीः कुर्वन्ति । यद्वा उच्चावचभूतानि जीवानुद्दिश्य मूर्तयः स्थूलदेहाजाताइत्यन्वयः । ताभ्योगामानयत्ताभ्योऽश्वमानयत्ताभ्यः पुरुषमानयदितिश्रुतेः ताभ्योदेवताशब्दवाच्याभ्य आत्मभ्योगवादिशरीरमनयदित्यर्थः ॥ १५ ॥

( ५ ) **नन्दनः** । क्षेत्रज्ञस्योच्चावचभूतस्थितत्वमेवोपपादयति । असंख्यामूर्त्तयस्तस्येति तस्य क्षेत्रज्ञस्य शरीरतोऽसंख्यमूर्त्तिनिष्पादनहेतवोंऽशानिष्पतन्ति बीजाद्बीजप्रभवेनेत्यभिप्रायः । उच्चावचानि भूतानि शरीराणि याश्चेष्टयन्ति निष्पादयन्ति तेनास्योच्चावचभूतस्थितिरुपपन्नेति ॥ १५ ॥

( ६ ) **रामचन्द्रः** । तस्य जीवस्य शरीरतः असङ्ख्यामूर्तयोनिष्पतन्ति यामूर्तयश्चोच्चावचानि भूतानि सततंचेष्टयन्ति ॥ १५ ॥

**पञ्चभ्यएव मात्राभ्यः प्रेत्य दुष्कृतिनांनृणाम् ॥ शरीरंयातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥ १६ ॥**

( १ ) **मेधातिथिः** । नात्रभूतानि पंचभ्योभूतेभ्योऽन्यच्छरीरमित्योत्पद्यते । एतदुक्तंभवति शुक्रशोणितमन्तरेणैवपाञ्चभौतिकंशरीरमुत्पद्यते दुष्कृतीनांचपाञ्चभौतिकंशरीरं पण्यकृतान्तु तेजसाऽऽकाशमात्राणिभवन्ति । यथोक्तंवायुभूतः स्वमूर्तिमानिति । यातना पीडातिशयः यद्यतिदृढमलौकिकदुःखंसहिष्णुः ॥ १६ ॥

( २ ) **सर्वज्ञनारायणः** । मात्राभ्योभूतमात्राभ्यः ॥ १६ ॥

( ३ ) **कुल्लूकः** । पंचभ्यएव पृथिव्यादिभूतेभ्योदुष्कृतकारिणांमनुष्याणांपीडानुभवप्रयोजकंजरायुजादिदेहव्यतिरिक्तंदुःखसहिष्णुशरीरंपरलोके जायते ॥ १६ ॥

( ४ ) **राघवानन्दः** । यातनाशरीरमपि तत्तदीयाग्निहोत्रादिषु क्षिप्यमाणसारभूतपञ्चभूतकार्यमित्याह पञ्चभ्यइति । अन्यत् देवतिर्यग्मनुष्यशरीरव्यतिरिक्तं जरायुजादिचतुर्विधभिन्नं वातान्येव भूतानि यमपुरुषादिभिरीक्षितानि यातनाशरीराकारेण विवर्तन्तइति ध्रुवं निश्चितमेव लिङ्गदेहमात्रेण यातनाभोगानुपपत्तेर्देहान्तरोपपत्तिः ध्रुवं ककचदारणादावपि यावद्यातनास्थायि वा ॥ १६ ॥

( ५ ) **नन्दनः** । नतुमृतस्य नष्टशरीरस्य कुतः शरीरमुत्पद्यते येन रौरवादिप्राप्तिरित्यपेक्षायामाह पञ्चभ्यएवमात्राभ्यइति । पञ्चानामेव मात्राभ्यइति पञ्चानां महाभूतानांमात्राभ्यः अंशेभ्यः नृणांक्षेत्रज्ञानां दढंच्छेददाहादिभिरविनाश्यम्॥१६॥

( ६ ) **रामचन्द्रः** । पञ्चभ्यएव मात्राभ्यः शब्दादिभ्यः दुष्कृतिनांनृणां प्रेत्य यमस्य यातनाएवार्थोयस्य तद्यातनार्थीयं शरीरं अन्यदुत्पद्यते ॥ १६ ॥

**तेनानुभूयतायामीः शरीरेणेह यातनाः ॥ तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः ॥ १७ ॥**

( १ ) **मेधातिथिः** । यमोनामदेवताविशेषोदुष्कृतिनांनिग्रहादिकृत्तद्दृष्टायातना अस्य ताअनुभूयच्च तेनपांचभौतिकेन शरीरेण तानि शरीराणि पुनःप्रलीयन्ते तासु सूक्ष्मासु भूतमात्रासु ॥ १७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रलीयन्ते यातनादेहजनकानि स्थूलभूतानि ॥ १७ ॥

( ३ ) **कुल्लूकः** । तेन निर्गतेन शरीरेण तायमकारितायातनादुष्कृतिनोजीवाः सूक्ष्मानुभूतस्थूलशरीरनाशे तेष्वेवारम्भकभूतभागेषु यथास्वंप्रलीयन्ते तत्संयोगिनोभूत्वाऽवतिष्ठन्तइत्यर्थः ॥ १७ ॥

( ४ ) **राघवानन्दः** । फलितमाह तेनेति । तेन यातनार्थसृष्टेन । भोगानन्तरं यातनाशरीरनाशे तेतु लिङ्गदेहावच्छिन्नाजीवास्तेष्वेव भूतेषु लिंपन्तइव प्रतीयन्ते संयोगिनोभवन्तीति केचित् । वस्तुतस्तु यातनानुभवानन्तरं तदारम्भकाणि स्वस्वभागे लीयन्ते अतएवोक्तं विभागशः तथाच श्रुतिः । पृथिवीशरीरमित्यादि ॥ १७ ॥

( ५ ) **नन्दनः** । क्षेत्रज्ञास्तेनशरीरेण यामीर्यमसंबन्धिनीस्तायातनाअनुभूय तास्वेव पञ्चभूतमात्रासु फलभोगान्ते तद्विनाशश्च न्यायसाम्याद्याख्यातावित्यनुसंधानव्यमिति ॥ १७ ॥

( ६ ) **रामचन्द्रः** । ततः लिङ्गशरीरप्राप्त्यनन्तरं तायामीर्यातनाः शरीरेणानुभूय तास्वेव भूतमात्रासु विभागशः प्रलीयन्ते ॥ १७ ॥

**सोऽनुभूयासुखोदर्कान्दोषान्विषयसङ्गजान् ॥ व्यपेतकल्मषोभ्येति तावेवोभौ महौजसौ ॥ १८ ॥**

( १ ) **मेधातिथिः** । विषयसङ्गात्प्रतिषिद्धविषयोपसेवनात्प्रतिषिद्धान् ततःसङ्गाच्च ये जातादोषाः पापनिर्मिताः । नरकादुःखान्यनुभूय तेन च दुःखोपभोगेन व्यपेतकल्मषोऽपहतपाप्माचेति । तावेवोभौ महौजसौ कावुभौमहाक्षेत्रज्ञाच्चतौप्रकृतावनन्तरश्लोकेन च क्षेत्रज्ञएवानुभाविता सुखदुःखयोः सइति चतस्यैव परामर्शोऽतः क्षेत्रज्ञमभ्येतीतिप्राप्तं । तच्च विरुद्धंसएवमाप्यः प्रापकश्च सत्यमौपचारिकोभेदोऽभिप्रेतः अभ्येतीत्ययमर्थः । एतावन्मात्रशेषोभवति यदुतक्षेत्रज्ञतयामाणादि-

संघात्मकेन महानिति व्यपदिष्टेनफलैषुतावन्मात्रः परिशिष्यते । लिङ्गजीवश्च क्षेत्रज्ञः । अन्येतु महत्परमात्मानाविति व्याचक्षते । सुखोदर्कान्क्षीणेपापउत्तरकालंसुखमनुभूयते मतिरंभिणि पापे स्वल्पेपि नसुखोत्पत्तिः यथास्वल्पेप्यजीर्णे न भोजनंसुखाय ॥ १८ ॥

( २ ) सर्वज्ञनारायणः । समहाननुभूयेत्यसमानकर्तृत्वेपिक्त्वा । अनुभूय फलतः । दोषानधर्मान् । भोगेन क्षीयमाणपापस्तावुभौ जीवपरमात्मानौ महौजसौ महाप्रभावौ अभ्येति महदाख्योजीवोपाधिः प्रलयकाले ॥ १८ ॥

( ३ ) कुल्लूकः । सशरीरीभूतसूक्ष्मादिलिङ्गशरीरावच्छिन्नोनिषिद्धशब्दस्पर्शरूपरसगन्धाख्यविषयोपभोगजनितयमलोकदुःखाद्यनुभूयानन्तरंभोगादपहतपाप्मातावेव महत्परमात्मानौ महावीर्यौ द्वावाश्रयति ॥ १८ ॥

( ४ ) राघवानन्दः । अतएव स्थूलदेहे नष्टे लिङ्गात्मनोभोगान्तरंवक्तुकामआह सइति । सलिङ्गोपलक्षितोजीवः । सइत्यनेन तस्यैव परामर्शोयोग्यत्वात् सजीव इत्युत्तरे परामर्शात् ॥ पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यतइति भगवदुक्तेश्च । असुखोदर्कान् । उदर्कफलमसुखरूपं येषांदोषाणां पापानां ते तथा तान् विषयसंगजान् निषिद्धब्रह्मवधाद्विविषयनिमित्तकान् विषयासक्तिजान्वा अनुभूय भुक्त्वा व्यपेतकल्मषः व्यपेतं कल्मषं भोगेन यस्माल्लिङ्गावच्छिन्नादात्मनस्तेन देहेन कृतभोगस्यैवात्मनःस्थूलदेहनाशे अभ्येति अनुगच्छति शरीरान्तरारम्भाय नचेदमप्रामाणिकम् । तद्यथा पेशस्कारः पेशसोमात्रामपादायान्यंनवतररूपंतनुतएवमेवायमात्मेदंशरीरं निहत्याविद्यांगमयित्वा अन्यंनवतरंकल्याणतररूपं कुरुते पित्र्यंवा गान्धर्वंवा दैवंवा प्राजापत्यंवा । ब्राह्मंवान्येषांवा भूतानामितिश्रुतेः । अयमर्थः । यथा पेशस्कारीसुवर्णाभरणादिकृत् जीर्णकुण्डलादि । सुवर्णमादाय नूतनं कुरुते एवं लिङ्गोपलक्षितात्मापि पूर्वदेहं निहत्य म्रियमाणंत्यक्त्वाअविद्यांजडतांगमयित्वा तस्य देहस्य सारभूतमादाय शरीरान्तरंकुरुते । पित्र्यं पितृलोकभावादि समर्थइति । यातनादेहनाशे तौ महत्क्षेत्रज्ञौ महौजसौ महावेगौ यावन्मनःक्षिपेत्तावदादित्यंगच्छेदितिश्रुतेः । समर्थौवा ॥ १८ ॥

( ५ ) नन्दनः । क्षेत्रज्ञस्य यातनाशरीनाशेऽपि न कर्मविनाशइत्याह सोऽनुभूयासुखोदर्कानिति । सइति क्षेत्रज्ञानांजातावेकवचनेन परामर्शः । महौजसावक्षयवीर्यौ ताविन्द्रियवर्गावभ्येत्येव प्राप्नोत्येव न कदाचिदपि द्वौ विमुञ्चतीत्यर्थः॥१८॥

( ६ ) रामचन्द्रः । सजीवः व्यपेतकल्मषः ताविवोभौ क्षराक्षरात्मकौ अभ्येति कीदृशौ तौ महौजसौ ॥ १८ ॥

**तौ धर्मंपश्यतस्तस्य पापंचातन्द्रितौ सह ॥ याभ्यां प्राप्नोति संपृक्तः प्रेत्येह च सुखासुखम् ॥ १९ ॥**

( १ ) मेधातिथिः । ननुच यदि तौ महान्क्षेत्रज्ञश्च संबध्येते ततस्तस्य पश्यतइति तस्येतिकः संबध्यते जीवइतिकेचित् । उक्तंच सएवक्षेत्रज्ञः सएवजीवइति । अथलिङ्गं ननुच महच्छब्देन तदेवोक्तं अथान्तः प्रकरणंमहद्बुद्ध्यादि तत्रापिकः संबन्धोलिङ्गस्य धर्माधर्माभ्यां तद्धिसूक्ष्मभूतरूपमेव । यथोक्तंतेषामिदन्तुसप्तानामित्यत्रान्तरे अतोमन्यामहे यदेवान्यैर्व्याख्यातमस्ति नश्लोकेताविवोभाविति महत्परमात्मानौबुध्येते इति तदेवमुक्तंपश्यामः तथोहिदृष्टान्तउपपद्यते महतः करणस्य ततःकर्तृत्वोपचारात् । काष्ठानिपचन्तीति यथा तस्येति च क्षेत्रज्ञस्य परामर्शभेदोपपत्तिः । परमात्मनश्च क्षेत्रज्ञाश्रययोर्धर्माधर्मयोर्दृष्टान्तवचनं सर्वस्यसुखदुःखोपभोगस्य तदधीनताख्यापनार्थं । यथोक्तं ॥ ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववा । प्रेरणाच धर्माधर्मनियमितेच्छैव । ननुच धर्माधर्मयोरिच्छांप्रतिनियन्तृत्वऐश्वर्यंहीयते तथांशारीरके दर्शितं यथे-

( १ ) भावादि=भोगादि ( राघ०२ )

ह राजा सेवानुरूपंददाति नच तस्येश्वरत्वमपैत्यतोमहत्परमात्मानौ पश्यतइति व्यपदिश्यते। तस्येति क्षेत्रज्ञज्ञानंतदप्ययुक्त-मुत्तरग्रन्थविरोधात् ताभ्यांप्राप्नोतिसंपृक्तइति नहिपरमात्मना कस्यचित्संपर्कः संबन्धउच्यते। नचपरमात्मना कश्चित्सं-बन्धोपि एवंतर्ह्यथयाभ्यामिति नैवंमहत्परमात्मानौसंबध्येते किंतर्हि धर्मः पापंच तयोरपिप्रकृतत्वात्। तौधर्मंपश्यतस्त-स्यपापंचेति यदिमहच्छब्देनान्तःकरणमुच्यते सुतरामनुपपत्तिः नहिपरमात्मनोद्रष्टृत्वेकारणापेक्षा अधिकरणमेवहिबोधिप-रमात्मस्वरूपमभ्येतितावेवचोभाविति। कीदृशमेतदभिगमनंयदितद्भावापत्तिः सानैवकल्मषव्यपायमात्रसाध्या। अथत-त्प्राप्तिप्रवणभासापि नैवप्रलीनेषु भूतेष्वशरीरस्य भवति तस्मात्तौधर्मंपश्यतस्तस्यतस्यैवात्मनइति पूर्ववन्नेयम्॥ १९॥

( २ ) **सर्वज्ञनारायणः**। धर्मभुक्ताऽवशिष्टम्। धर्मपापदर्शनंचात्र तत्फलप्रकाशएव। पश्यतोज्ञानस्य तदधीनत्वा-त्। अतन्द्रितौ नित्यप्रकाशौ॥ १९॥

( ३ ) **कुल्लूकः**। तौमहत्परमात्मानावनलसौ तस्य जीवस्य धर्मंभुक्तशेषंच पापंसहविचारयतोयाभ्यां धर्माधर्मा-भ्यां युक्तोजीवः परलोकेहलोकयोः सुखदुःखे प्राप्नोति॥ १९॥

( ४ ) **राघवानन्दः**। न कर्मणालिप्यते पापकेन अनन्वागतंपापेनान्वागतंपुण्येनेतिश्रुतेरात्मनोऽसंगत्वं। प्रतिपादयन् स्थूलदेहावच्छिन्नकर्तृत्वमनुवदन्नाह ताविति। तौ महाक्षेत्रज्ञौ यागादिजंधर्मं ब्रह्महत्यादिजंपापं सन्निधानेन पश्यतः कारयतोवाधिष्ठानंस्थूलंदेहंविना तददर्शनात् स्थूलदेहावच्छेदभेदमन्तरेणात्मनः पापाद्यकर्तृत्वात् तदवच्छेदेनैव कर्तृत्वात्। तथाच श्रुतिः॥ शरीरे पाप्मनोहित्वेति स्थूलदेहप्रसूतपापपुण्ये इत्यर्थः। याभ्यांमहत्क्षेत्रज्ञाभ्यांसंपृक्तस्तदभ्या सापन्नःसन्शुभाशुभफलं प्राप्नोतिभुङ्क्ते॥ १९॥

( ५ ) **नन्दनः**। धर्मंपापंच पश्यतः कर्तुमुद्युक्तस्य तस्य क्षेत्रज्ञस्य ताविन्द्रियवर्गावतन्द्रितौजागरूकौ सहसंहते-कारणे भवतइत्यर्थः। न केवलंकर्मकालएव सहभवतः किंतु तत्फलभोगकालेऽपीत्युत्तरार्धेन याभ्यामिन्द्रियवर्गाभ्याम्॥ १९॥

( ६ ) **रामचन्द्रः**। तौ क्षराक्षरात्मकौ तस्य धर्मं पापंतत्कृतौ भूयः पश्यतः याभ्यां क्षराक्षराभ्यां संपृक्तः मेत्ये-हच हिताहितं प्राप्नोति॥ १९॥

**यद्याचरति धर्मंसप्रायशोऽधर्ममल्पशः॥ तैरेव चावृतोभूतैः स्वर्गे सुखमुपाश्नुते॥ २०॥**

( १ ) **मेधातिथिः**। प्रायशोबाहुल्येन तैरेवभूतैर्महदादिभिर्महाभूतपर्यन्तैः स्वर्गेसुखमाप्नोति॥ २०॥

( २ ) **सर्वज्ञनारायणः**। प्रायशोबाहुल्येन धर्मम्। तैरेव स्वर्गाय देहजनकैः॥ २०॥

( ३ ) **कुल्लूकः**। सयदि जीवोमानुषदशायां बाहुल्येन धर्ममनुतिष्ठत्यल्पंचाधर्मंतदा तैरेव पृथिव्यादिभूतैः स्थूल-शरीररूपतया परिणतैर्युक्तः स्वर्गसुखमनुभवति॥ २०॥

( ४ ) **राघवानन्दः**। आत्मानात्मानौ विविच्य तयोरभ्यासवशात्पापादिकर्तृत्वमित्युक्तं संप्रति प्रामाध्यासमात्मा-नमनूद्य धर्माधर्माल्पानल्पत्वापेक्षया स्वर्गनरकौ स्यातामित्याह यदीतिद्वाभ्याम्। सलिङ्गदेहाध्यासमापन्नश्चिदात्मातैः स्थूलदेहादाकृष्य नीतैर्भूतैरावृतः परिष्वक्तः स्वर्गे पुण्यलोके उपाश्नुते भुङ्क्ते॥ २०॥

( ५ ) **नन्दनः**। अथ क्षुधापापयोः किंप्रथममनुभूयतइत्यपेक्षयामाह यद्याचरतिधर्मंसइति। सक्षेत्रज्ञः प्रायशः बहुलं अल्पशः अल्पं तैः पूर्वोक्ताभिः पञ्चमहाभूतमात्राभिः पञ्चभूतारब्धशरीरइत्यर्थः॥ २०॥

( ६ ) **रामचन्द्रः** । सजीवः पुरुषः यदि धर्मप्रायशः आचरति अल्पशः अधर्मं आचरति तैरेव भूतैःसह स्वर्गाय देहजनकैः ॥ २० ॥

## यदि तु प्रायशोधर्मंसेवते धर्ममल्पशः ॥ तैर्भूतैः सपरित्यक्तोयामीः प्राप्नोति यातनाः॥ २१ ॥

( १ ) **मेधातिथिः** । ननुचपंच भ्यएवमात्राभ्यः शरीरंदुष्कृतिनामित्युक्तंकिमिदानीमुच्यते तैर्भूतैःपरित्यक्तइति उच्यते नभौतिकंशरीरंनाप्यशरीरस्ययातनाः किंतर्हि अत्यन्तविलक्षणे ते मानुषशरीरेऽतोन्यान्येताङ्क्मिदुःस्निग्धसुकुमारशरीरारंभकाण्यत्यन्तविलक्षणाद्दुःखाभिघातनिष्क्रत्यापरित्यक्तउच्यते यानि स्वर्गशरीराणि भक्ष्याणितैः परित्यक्तः ॥ २१ ॥

( २ ) **सर्वज्ञनारायणः** । तैर्भूतैरैहिकस्वर्गाय देहजनकैः त्यक्तोमृतइत्यर्थः ॥ २१ ॥

( ३ ) **कुल्लूकः** । यदिपुनः सजीवोमानुषदशायां बाहुल्येन पापमनुतिष्ठत्यल्पंच पुण्यंतदा तैरेव भूतैर्मानुषदेहरूपतया परिणतैस्त्यक्तोमृतः सन्नन्तरंपञ्चभ्यएव मात्राभ्यइत्युक्तरीत्या यातनानुभवोचितसंपातकठिनदेहोयामीः पीडाअनुभवति ॥ २१ ॥

( ४ ) **राघवानन्दः** । अधर्मबाहुल्येत्वाह यदीति । धर्मादिकर्तृत्वावच्छेदकदेहजैः परित्यक्तइतिनारकिदेहोमायिको भौतिकत्वेऽसिपत्रकुम्भीपाकाद्यनुपपत्तिः अथवाभूतैर्भूतारब्धैः पुष्कलैरिन्द्रियैर्नारकिनइन्द्रियसाकल्यानुपयुक्तत्वेन कादाचित्कत्वात् परिवर्जयेत् परिवर्जनार्थः अपरित्यक्तइत्यर्थोवा ॥ २१ ॥

( ६ ) **रामचन्द्रः** । यामीः यातनाः प्राप्नोति ॥ २१ ॥

## यामीस्तायातनाः प्राप्य सजीवोवीतकल्मषः ॥ तान्येव पञ्चभूतानि पुनरप्येति भागशः॥ २२ ॥

( १ ) **मेधातिथिः** । प्राग्व्याख्यातोयं एतच्चान्यलोकचतुष्टयस्यतात्पर्यं यदि भूयानधर्मस्तदायाम्योयातनाः नतुस्वल्पेऽधर्मेऽस्मिन्नेव लोके सुखानुभवेन स्वर्गावाप्तिः ॥ २२ ॥

( २ ) **सर्वज्ञनारायणः** । तान्येव तज्जातीयान्यैवैहिकस्वर्गाय देहारम्भकाणि भागशःप्रविभक्तानि पञ्चापि ॥ २२ ॥

( ३ ) **कुल्लूकः** । सजीवोयमकारितास्ताः पीडास्तेन कठिनदेहेनानुभूय ततोभोगेनापहतपाप्मा तान्पञ्चजरायुजादिशरीरारम्भकान्पृथिव्यादिभूतभागानधितिष्ठति मानुषादिशरीरंगृह्णातीत्यर्थः ॥ २२ ॥

( ४ ) **राघवानन्दः** । सजीवोघटीयन्त्रवद्भ्रमतीत्याह यामीरिति । प्राप्य भुक्त्वा वीतकल्मषः तन्नरकप्रारम्भकपापान्मुक्तः । अप्येतितानि नारकिशरीराच्छरीरान्तरारम्भकाणि । पूर्वशरीरात् भागशः । भागंभागमवाप्य । स्थूलदेहान्तरार्थमभ्येत्यनुगच्छतीत्यन्वयः ॥ २२ ॥

( ५ ) **नन्दनः** । अथनरकभुक्तावशिष्टदुष्कृतस्य क्षेत्रज्ञस्य पुनरावृत्तिमाह यामीस्तायातनाः प्राप्येति जीवः क्षेत्रज्ञः तान्येव पञ्चभूतानि पुनरप्येति पुनरपिकर्मभूमौ जायतइत्यर्थः । एतेन स्वर्गभुक्तावशिष्टकृतस्यापि क्षेत्रज्ञस्यापि कर्मभूमिप्राप्तिर्न्यायसाम्यादुक्तेत्येवगन्तव्यम् ॥ २२ ॥

( ६ ) **रामचन्द्रः** । जीवः ताः यामीः यमसंबन्धिनीः यातनाः प्राप्य तान्येव पञ्चमहाभूतानि पुनः भागशः अभ्येति ॥ २२ ॥

**एतादृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा ॥ धर्मतोधर्मतश्चैव धर्मे दध्यात्सदा मनः ॥ २३ ॥**

( १ ) **मेधातिथिः** । स्वल्पार्थोयंधर्मतोऽधर्मतइति नञःप्रश्लेषः । धर्माधर्मनिमित्ताज्जीवस्य क्षेत्रज्ञस्यात्मनः स्वेनैव चेतसा शास्त्राप्रामाण्यात्तदनुभवे कृत्स्नशास्त्रार्थफलोपसंहारः ॥ २३ ॥

( २ ) **सर्वज्ञनारायणः** । धर्मतोगतिस्स्वर्गम् । अधर्मतश्च नरकम् ॥ २३ ॥

( ३ ) **कुल्लूकः** । अस्य जीवस्यैताधर्माधर्महेतुकाः स्वर्गनरकाद्युपभोगोचितप्रियाप्रियदेहप्राप्तीरन्तःकरणे ज्ञात्वा धर्मानुष्ठाने मनः सदा सङ्गतंकुर्यात् ॥ २३ ॥

( ४ ) **राघवानन्दः** । गतीरनुवदन्धर्ममेव कर्तव्यतयोपदिशति एताइति । धर्माधर्माभ्यामेव गतयः स्वर्गे नरके च जीवस्य भवन्तीति प्रमाणतोदृष्ट्वा धर्मएवकर्तव्यतया मनोदेयमिति । तथाच श्रुतिः ॥ धर्मेण पापमपनुदति । धर्मात्सुखंचज्ञानंचेतिस्मृतिः ॥ श्रुतिस्मृत्योर्धर्मस्यैव ज्ञानादिहेतुत्वात् ॥ २३ ॥

( ५ ) **नन्दनः** । यतएवमतआह एतान्दृष्ट्वास्य जीवस्येति । धर्मे सदा मनोदध्यान्नाधर्मइत्यभिप्रायः ॥ २३ ॥

( ६ ) **रामचन्द्रः** । धर्मतोऽधर्मतश्च जीवस्य एतागतीः स्वेनैव चेतसा दृष्ट्वा धर्मे मनः सदा दध्यात् ॥ २३ ॥

**सत्त्वंरजस्तमश्चैव त्रीन्विद्यादात्मनोगुणान् ॥ यैर्व्याप्येमान्स्थितोभावान्महान्सर्वानशेषतः ॥ २४ ॥**

( १ ) **मेधातिथिः** । धर्माधर्मयोःकर्मकाण्डोपयोगियत्तदुक्तं इदानींविद्याकाण्डमारिप्सते । तत्रद्वैताश्रयमिवतावदंगार्थप्रक्रियते । सत्त्वादयस्त्रयोगुणाआत्मनः नात्रात्माजीवः किंतर्हिमहानेव । आत्मशब्दःस्वभाववचनोनप्रत्यक्त्ववचनः । निर्गुणोहिपुरुषः । अथवाभोग्यतया भोक्तुरेवात्मनः संबन्धित्वेन व्यपदिश्यते । महानितिच प्रधानमेवोच्यते प्रत्यासत्तेः आद्याहिविक्रियोद्भूतिःप्रधानस्य महदाख्या यथाजीवन्त्यैप्रमावस्थावाप्यत्रभवान्विकारानवस्थितः प्रकृतित्वात्सर्वविकाराणामिदमुच्यते ॥ २४ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनोमहत्तत्त्वस्य भागभूता ॥ २४ ॥

( ३ ) **कुल्लूकः** । सत्त्वरजस्तमांसि त्रीणि वक्ष्यमाणगुणलक्षणानि आत्मोपकारकत्वादात्मनोमहतोगुणान् जानीयाद्यैर्व्याप्तोमहानिमान्स्थावरजङ्गमरूपान्पदार्थान्निःशेषेण व्याप्य स्थितः ॥ २४ ॥

( ४ ) **राघवानन्दः** । ननु किमिति धर्ममेव नाचरेत् इतिचेत् गुणपारतंत्र्यान्नाचरतीत्याह सत्त्वमिति । आत्मनः आत्मावच्छेदस्यान्तःकरणस्य गुणान् महत्तत्त्वाख्यस्य यैः सत्त्वादिभिः भावान् पदार्थान् प्राणिनोवा अतआह महान् लिङ्गशरीरप्रधानं बुद्धिः । अशेषतोऽनवशेषेण ॥ २४ ॥

( ५ ) **नन्दनः** । अथ गुणतोऽपि कर्मनिर्वृत्तिविशेषंविवक्षन्गुणविभागं तावदाह सत्त्वरजस्तमश्चेति । आत्मनः महत्तत्त्वस्य तथाचोक्तं ॥ महामनोमतिश्चात्मा प्रबुद्धिः ख्यातिरीश्वरइति । यै गुणैरिमान्भावान्पदार्थान्महान्महत्तत्वम् ॥ २४ ॥

( ६ ) **रामचन्द्रः** । सत्त्वरजस्तमांसि त्रीणि आत्मनः महत्तत्त्वस्य गुणान्विद्यात् । यैः सत्त्वरजस्तमोभिः महान् महत्तत्त्वमेवअशेषतः सर्वान्सात्त्विकादिभावान् व्याप्य स्थितः । तद्यथा सात्त्विकाहंकारराजसाहंकारस्तामसाहंकारश्चेतिस्थितः । यद्वामहान् जीवः ॥ २४ ॥

**योयदैषांगुणोदेहे साकल्येनातिरिच्यते ॥ सतदा तद्गुणप्रायंतंकरोति शरीरिणम् ॥ २५ ॥**

( १ ) **मेधातिथिः** । यद्यपिसर्वंत्रिगुणंतथापि योयदा गुणःसाकल्येन कार्त्स्न्येनातिरिच्यतआधिक्यंप्राप्नोति

पूर्वकर्मातिशयवशात्सतदा पुरुषस्य गुणान्तरमभिभवति अतः शरीरी तद्गुणप्रायोभवति तदीयमेव धर्ममादर्शयति गुणान्तरं-जहातीव ॥ २५ ॥

( २ ) **सर्वज्ञनारायणः** । साकल्येनान्येषु गुणेषु न्यूनेष्वशक्तेष्वयंपूर्णत्वेनातिरिच्यते । तद्गुणप्रायंतद्गुणसधर्मकव्यापारम् ॥ २५ ॥

( ३ ) **कुल्लूकः** । यद्यपि सर्वमेवेदंत्रिगुणंतथापि यत्र देहे येषांगुणानांमध्ये योगुणोयदा साकल्येनाधिकोभवति तदा तद्गुणलक्षणबहुलंतंदेहिनंकरोति ॥ २५ ॥

( ४ ) **राघवानन्दः** । ननु गुणानां महदाश्रितत्वे कर्तुः किमायातं तत्राह यद्दति । एषां गुणानांमध्ये देहे लिङ्गदेहे अतिरिच्यते गुणद्वयमभिभूय योगुणः प्रधानः स्यात् । तद्गुणप्रायं तद्गुणरूपचेष्टाकारिणम् । शरीरिणं जीवम् । करोति जीवोपि तदनुरूपंचेष्टतइतिभावः ॥ २५ ॥

( ५ ) **नन्दनः** । एषांसत्त्वादीनांमध्येऽतिरिच्यते इतरौगुणावभिभूयोद्भवति तद्गुणप्रायंतद्गुणबहुलंकरोति सत्त्वस्य साकल्यं ज्ञानसुखादिरूपाणांसामग्र्यं रजसस्तु रागद्वेषादिरूपाणां तमसस्तु प्रमादाज्ञानादिरूपाणाम् ॥ २५ ॥

( ६ ) **रामचन्द्रः** । यदा एषां त्रयाणांमध्ये योगुणः साकल्येन देहे अतिरिच्यते देहंव्याप्य गुणः तिष्ठति तदा सः सत्त्वादिगुणः तं पुरुषं तद्गुणप्रायं सात्त्विकेनसहवर्तते सः सात्त्विको भवति । एवमग्रे ऊह्यम् ॥ २५ ॥

**सत्त्वंज्ञानंतमोऽज्ञानंरागद्वेषौरजः स्मृतम् ॥ एतद्व्याप्तिमदेतेषांसर्वभूताश्रितंवपुः ॥ २६ ॥**

( १ ) **मेधातिथिः** । सामान्यमेतदेषांलक्षणंव्यापि सर्वप्राणिषु ज्ञानंवेदकं अज्ञानंमोहः उभयरूपता रजः रागद्वेषशब्देनोभयधर्मयोगउच्यते । न यथा मदमूर्च्छाद्यवस्थात्वचैतन्यमेव नापिसम्यक्ज्ञानवशानामतिशयेन क्रोधोन चातिप्रसादः तत्तद्रजोवपुःस्वभावः ॥ २६ ॥

( २ ) **सर्वज्ञनारायणः** । सत्त्वं ज्ञानव्यापारम् । व्यापारसत्त्वयोरभेदविवक्षया सामानाधिकरण्यम् । एवमुत्तरत्र । एतत् ज्ञानादि । एतेषां सत्वादीनाम् । व्याप्तिमद्व्याप्तिकम् । वपुरिव वपुः ॥ २६ ॥

( ३ ) **कुल्लूकः** । संप्रति सत्त्वादीनांलक्षणमाह सत्त्वमिति । यथार्थावभासोज्ञानंतत्सत्त्वस्य लक्षणं एतद्विपरीतमज्ञानंतत्तमोलक्षणं विषादाभिलाषंमानसकार्यंरजोलक्षणं स्वरूपंतु सत्त्वरजस्तमसांप्रीत्यप्रीतिविषादात्मकं । तथाचपठन्ति प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवजननमिथुनवृत्तयश्च गुणाः एतच्चैषांस्वरूपमनंतरश्लोकत्रयेण वक्ष्यति एतेषांसत्त्वादिगुणानामेतत् ज्ञानादि सर्वप्राणिव्यापकंलक्षणम् ॥ २६ ॥

( ४ ) **राघवानन्दः** । गुणाननूद्य तत्कार्यमाह सत्त्वमिति । सत्त्वंज्ञानमिति कार्यकारणयोरभेदविवक्षया ॥ सत्त्वात्संजायतेज्ञानमिति स्मृतिः । एवमुत्तरत्र अज्ञानमितिच्छेदः । सर्वभूताश्रितं पाञ्चभौतिकंवपुः अस्य देवादिरूपेण सात्त्विकादिभेदभिन्नम् ॥ २६ ॥

( ५ ) **नन्दनः** । अथगुणानांस्वरूपमाह सत्त्वमिति । ज्ञानंज्ञानरूपं अज्ञानमज्ञानरूपं रागद्वेषौ रागद्वेषरूपौ एतेषांगुणानां एतद्व्याप्तिमदेतद्व्याप्तित्रिकं वपुः सर्वभूताश्रितंसर्वप्राण्याश्रयम् ॥ २६ ॥

( ६ ) **रामचन्द्रः** । सत्त्वं ज्ञानरूपं तमः अज्ञानं रागद्वेषौ रजसः भवतः एतेषां सत्त्वादीनां सर्वभूतान्येव आश्रयो यस्यतत् सर्वभूताश्रितवपुः एतत् अज्ञानादेतस्य व्याप्तिमत् ॥ २६ ॥

**तत्र यत्प्रीतिसंयुक्तंकिंचिदात्मनि लक्षयेत् ॥ प्रशान्तमिव शुद्धाभंसत्त्वंतदुपधारयेत् ॥ २७ ॥**

( १ ) **मेधातिथिः** । प्रीतिसंयुक्तं संवेदनंशुद्धाभंशुद्धमिवाभाति रजस्तमोभ्यामकलुषितंमदमानरागद्वेषलोभमोह-भयशोकमात्सर्यदोषरहितं एवंसर्वमनुच्छेदाद्बीजवासनायाआब्रह्मप्राप्तिरिस्थितत्वादेषाचावस्था स्वसंवेद्यैवकस्यांवेलायांभवेत् ॥ २७ ॥

( २ ) **सर्वज्ञनारायणः** । प्रीतिःसुखं तत्संयुक्तं किंचित्प्रशान्तं क्रोधादिरजोगुणशून्यम् । शुद्धाभं शुद्धप्रवृत्तिमूलं शून्यमाभासमानंच प्रकाशात्मकत्वात् । सत्त्वं सत्त्वज्ञम् ॥ २७ ॥

( ३ ) **कुल्लूकः** । तस्मिन्नात्मनि यत्संवेदनंप्रीतियुक्तंप्रत्यस्तमितक्लेशंप्रकाशरूपमनुभवेत्तत्सत्त्वंजानीयात् ॥ २७ ॥

( ४ ) **राघवानन्दः** । नकेवलं ज्ञानादि तेषां कार्यं सुखाद्यपीत्याह तत्रेतित्रिभिः । प्रीतिसंयुक्तं प्रीत्यां सुखे संयुनक्तीति तद्विषयकंयतआत्मनिलक्षयेत् सुखं लब्ध्वा जन्तुरविचलइवावतिष्ठते । एवं दुःखसंयुक्तम् । प्रशान्तं प्रत्यस्तमितक्लेशं शुद्धाभं स्वच्छं तत्र तदा समुद्रिक्तंसत्त्वमवधारयेत् निश्चिनुयात् । एवमुत्तरत्र ॥ २७ ॥

( ५ ) **नन्दनः** । आत्मनि मनसि शरीरे वा समस्तहेयविकारविधुरत्वात्प्रशान्तमिवसमस्तदोषरहितत्वं शुद्धाभंशुद्ध-मिव ॥ २७ ॥

( ६ ) **रामचन्द्रः** । यतः प्रीतिसंयुक्तं प्रीतियुक्तः किंचिदात्मनिलक्षयेत् ॥ २७ ॥

**यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः ॥ तद्रजोप्रतिपंविद्यात्सततंहारि देहिनाम् ॥ २८ ॥**

( १ ) **मेधातिथिः** । दुःखेनसमायुक्तंसंभिन्नंशुद्धंप्रीतिरूपंनभवत्यतउच्यतेऽप्रीतिकरंदुःखानुविद्धतया प्रीत्या नयुक्तं अप्रतिपमप्रत्यक्षंपारमार्थिकमेतद्रजसोरूपंभर्तृविषयेषु प्रवर्तकंस्पृहाजनकमित्यर्थः ॥ २८ ॥

( २ ) **सर्वज्ञनारायणः** । अप्रीतिरधृतिः । हारि मनसःप्रवर्तकम् ॥ २८ ॥

( ३ ) **कुल्लूकः** । यत्पुनः संवेदनंदुःखानुविद्धमतएव सत्त्वशुद्धात्मप्रीतेरजनकं सर्वदा च शरीरिणांविषयस्पृहोत्पा-दकंतत्त्वनिर्वारकत्वात्प्रतिपक्षंरजोजानीयात् ॥ २८ ॥

( ४ ) **राघवानन्दः** । किंच यत्त्विति । अप्रतिघं प्रतिघातरहितं सुचञ्चलत्वात् । चलंचरजइत्युक्तेः देहिनां देहिनं म-नोवा हारि अन्तर्मुखत्वात्प्रच्याव्यविषयप्रवणकारि ॥ २८ ॥

( ५ ) **नन्दनः** । हारि चित्तविक्षेपकरं अप्रतिघमप्रतिहतम् ॥ २८ ॥

( ६ ) **रामचन्द्रः** । अप्रत्यक्षं विद्यात् देहिनां सततं हारि एनसः प्रवर्तकं ॥ २८ ॥

**यत्तु स्यान्मोहसंयुक्तमव्यक्तंविषयात्मकम् ॥ अप्रतर्क्यमविज्ञेयंतमस्तदुपधारयेत् ॥ २९ ॥**

( १ ) **मेधातिथिः** । मोहोवैचित्त्यंयुक्तायुक्तविवेकाभावः विषयआत्मास्वभावोयस्य । ननुचायमविषयोन्तरात्म-त्वादेव तत्कथंविषयस्वभावोमोहविषयानुरागात् बुद्धिरिव एवमुच्यते विषयाद्वातीवबुद्धिस्तदात्मिकासंपद्यतइतिसंख्यात्रै-गुण्यंनत्वन्तर्बहिसत्त्वानामविशब्दं अप्रतर्क्यंतदनुमानागोचरमविज्ञेयं अंतर्बहिःकरणानामगोचरइत्यर्थः ॥ २९ ॥

---

* तत्त्वनिवारकत्वात्=तद्दुर्निवारत्वात् ( अ )

( २ ) **सर्वज्ञनारायणः** । अव्यक्तः अप्रकाशः विषयआत्माच यत्र । अप्रतर्क्यं तर्कवृत्तिविषयशून्यं तर्कविज्ञानाभ्यां रहितमित्यर्थः ॥ २९ ॥

( ३ ) **कुल्लूकः** । यत्पुनः सदसद्विवेकशून्यं अस्फुटविषयाकारस्वभावमतर्कणीयस्वरूपमन्तःकरणबहिःकरणाभ्यां दुर्ज्ञातंतत्तमोजानीयात् एषांच गुणानांस्वरूपकथनंसत्त्ववृत्त्यवस्थितौ यत्नवता भवितव्यमित्येतत्प्रयोजनकम् ॥ २९ ॥

( ४ ) **राघवानन्दः** । मोहसंयुक्तं सदसद्विवेकरहितम् । अव्यक्तविषयात्मकं अस्फुटविषयस्वभावकं देहेन्द्रियाणां गुरुत्वाद्विषयोपि न रोचते । अतएवाप्रतर्क्यं अविज्ञेयं गुरुचरणकमेव तमइत्युक्तेः ॥ २९ ॥

( ५ ) **नन्दनः** । अप्रतर्क्यमनुमानेन अविज्ञेयंप्रत्यक्षेण ॥ २९ ॥

( ६ ) **रामचन्द्रः** । यत् मोहसंयुक्तं स्यात् मोहोदुराचारता युक्तायुक्तविवेकाभावः अव्यक्तं विषयात्मकं अप्रतर्क्यं तर्कासहंमनोऽगोचरं अविज्ञेयंअन्तर्बहिःकरणानामविज्ञेयं तमस्तु उपधारयेत् ॥ २९ ॥

**त्रयाणामपि चैतेषांगुणानांयः फलोदयः ॥ अग्र्योमध्योजघन्यश्च तंप्रवक्ष्याम्यशेषतः ॥ ३० ॥**

( १ ) **मेधातिथिः** । त्रयाणामेषामासेव्यमानानांयत्फलमुत्पद्यतउत्तमाधममध्यमंतद्वक्तव्यतया प्रतिज्ञायते यस्मिन्गुणउद्रिक्तेयःपुरुषस्य स्वभावोभवति सउच्यतइति प्रतिज्ञा ॥ ३० ॥

( २ ) **सर्वज्ञनारायणः** । यःफलोदयोऽग्र्योमुख्यः । मध्योऽल्पापकृष्टः । जघन्योऽतिसूक्ष्मः ॥ ३० ॥

( ३ ) **कुल्लूकः** । एतेषांसत्त्वादीनांत्रयाणामपि गुणानांयथाक्रममुत्तममध्यमाधमरूपोयः फलोत्पादकस्तंविशेषेण वक्ष्यामि ॥ ३० ॥

( ४ ) **राघवानन्दः** । गुणानां फलभेदं प्रतिजानीते त्रयाणामिति । फलोदयः फलोत्पादः । अग्र्यःश्रेष्ठः । जघन्योऽधमः । अशेषतः एकैकगुणस्य निरवशेषेण ॥ ३० ॥

( ५ ) **नन्दनः** । अग्र्यःसत्त्वस्य मध्योरजसः जघन्यस्तमसः ॥ ३० ॥

( ६ ) **रामचन्द्रः** । एतेषां त्रयाणां सत्त्वादिगुणानां यः फलोदयः अग्र्यः मध्यः जघन्यः कनिष्ठः तमशेषतः प्रवक्ष्यामि ॥ ३० ॥

**वेदाभ्यासस्तपोज्ञानंशौचमिन्द्रियनिग्रहः ॥ धर्मक्रियात्मचिन्ता च सात्त्विकंगुणलक्षणम् ॥ ३१ ॥**

( १ ) **मेधातिथिः** । तत्कस्येति संबन्धगुणलक्षणमित्येवंवक्तव्यतया प्रतिज्ञायते सात्त्विकमिति कथंचिद्योजयितव्यं गुणोलक्ष्यते येन तद्गुणलक्षणं तत्कस्येति सात्विकमिति संबन्धः।प्रयोजनंसमुदायसंबन्ध्यवयवापि दृश्यन्ते तेनैतदुक्तंभवतिसंबन्धस्य गुणस्यैतल्लक्षणं यथादेवदत्तस्य गुरुकुलं गुरुर्द्वारोपसर्जनीभूतोपि देवदत्तपदेन संबध्यते तद्वदेतत् द्रष्टव्यम् । पदार्थाव्याख्याताः ॥ ३१ ॥

( २ ) **सर्वज्ञनारायणः** । सात्त्विकं सत्त्वजन्यम् । गुणस्य तस्यैव लक्षणं चिन्हम् । एवमुत्तरत्र ॥ ३१ ॥

( ३ ) **कुल्लूकः** । वेदाभ्यासः प्राजापत्याद्यनुष्ठानंशास्त्रार्थावबोधमृद्वार्यादिशौचमिन्द्रियसंयमोदानादिधर्मानुष्ठानमात्मध्यानपरता एतत्सत्त्वाख्यगुणस्य कार्यम् ॥ ३१ ॥

( ४ ) **राघवानन्दः** । फलभेदएव सत्त्वादिगुणोद्रिक्तलिङ्गकमित्याह वेदेतित्रिभिः । ज्ञानं शास्त्रीयम् । शौचं बाह्माभ्यन्तरम् । तदुक्तम् ॥ मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥ धर्मक्रिया नित्यनैमित्तिकाऽनुष्ठानम् । आ-

त्मचिन्ता वेदान्तविचारणा ॥ श्रोतव्योमन्तव्यइतिश्रुतेः ॥ सात्त्विकमुद्रिक्तसत्त्वकार्यम् । गुणस्य लक्षणं तैरुद्रिक्तस्य सत्त्व-गुणस्योदयोलक्ष्यते । एवंसर्वत्र ज्ञेयम् । पूर्वं सत्त्वादीनां ज्ञानादिकार्यं स्वरूपतोस्तीत्युक्तम् । तथाहेश्वरकृष्णः । प्रीत्य-प्रीतिविषदात्मकाः प्रकाशप्रवृत्तिनियमार्थाइति । अत्रात्मपदं कार्यकारणयोरभेदविवक्षया दुःखाभावादिव्यावृत्त्यर्थमुक्तम-न्यथा ॥ सत्त्वात्संजायते ज्ञानं रजसोलोभएवचेत्यादि विरुद्धम् ॥ ३१ ॥

( ५ ) **नन्दनः** । आत्मचिन्ताशरीरात्मविवेकः सत्त्वरजस्तमसांफलंवक्ष्यामीति । प्रतिज्ञानं सात्विकंगुणलक्षणमित्येवं वदतोऽयमभिप्रायः ॥ ३१ ॥

( ६ ) **रामचन्द्रः** । आत्मचिन्ता आत्मनःपरमेश्वरस्य चिन्ता ॥ ३१ ॥

## आरम्भरुचिता धैर्यमसत्कार्यपरिग्रहः ॥ विषयोपसेवा चाजस्रंराजसंगुणलक्षणम् ॥ ३२ ॥

( १ ) **मेधातिथिः** । कर्मणांकाम्यानांदृष्टार्थानामदृष्टार्थानांचारंभेरतिर्वृथारंभश्चैतत् राजसलक्षणम् । अधैर्यमल्पेप्युप-घातहतौ चेतसोऽसमाश्वासोदैन्यग्रहणमुत्साहत्यागः । असत्कार्यंलोकशास्त्रविरुद्धं तस्य परिग्रहआचरणम् ।विषये संगोऽज-स्रंपुनःपुनःप्रवृत्तिः ॥ ३२ ॥

( २ ) **सर्वज्ञनारायणः** । आरम्भरतिता प्रवृत्तिरसिकता । अधैर्यमतुष्टिः । एवं तामसेपि ॥ ३२ ॥

( ३ ) **कुल्लूकः** । फलार्थकर्मानुष्ठानशीलताऽल्पेऽप्यर्थे वैक्लव्यंनिषिद्धकर्माचरणमजस्रंशब्दादिविषयोपभोगइत्येतद्र-जोभिधानगुणस्य कार्यम् ॥ ३२ ॥

( ४ ) **राघवानन्दः** । आरम्भरुचिता काम्यकर्मनिष्ठता कर्मसंगेन देहिनइत्युक्तेः । अधैर्यमल्पेप्यनर्थेमहद्वैकल्प-म् । असत्कार्यपरिग्रहः निषिद्धाचरणम् ॥ ३२ ॥

( ५ ) **नन्दनः** । आरम्भरुचिता कर्मपरता अधैर्यमितिपदम् ॥ ३२ ॥

( ६ ) **रामचन्द्रः** । आरम्भरुचिता लोकशास्त्रविरुद्धता । अधैर्यं असत्कार्यपरिग्रहः स्वीकारः विषयाणां उपसे-वा ॥ ३२ ॥

## लोभः स्वप्नोऽधृतिः क्रौर्यंनास्तिक्यंभिन्नवृत्तिता ॥ याचिष्णुता प्रमादश्च तामसंगुणलक्षणम् ॥ ३३ ॥

( १ ) **मेधातिथिः** । धनादिषु रागोलोभः क्रौर्यंस्वल्पेऽपराधे वैरानुबन्धः नास्तिक्यंप्रमादता भिन्नवृत्तिता शीलभ्रंशः गणनंशिष्टविगर्हणा याचिष्णुता याचकत्वं तच्छीलता प्रमादोऽनवधानंधर्मादिष्वपायपरिहारेऽनादरः । स्वप्नोऽधृतिरितिगज्-प्रश्लेषः ॥ ३३ ॥

( २ ) **सर्वज्ञनारायणः** । भिन्नवृत्तिता दुराचारता ॥ ३३ ॥

( ३ ) **कुल्लूकः** । अधिकाधिकधनस्पृहा निद्रात्मता कातर्यपैशुन्यंपरलोकाभावबुद्धिराचारपरिलोपः याचनशी-लत्वंसंभवेपि धर्मादिष्वनवधानमित्येतत्तामसाभिधानस्य गुणस्य लक्षणम् ॥ ३३ ॥

( ४ ) **राघवानन्दः** । अधृतिः कातर्यम् । क्रौर्यमकृपालुता । नास्तिक्यं परलोकशून्यताधीः । भिन्नवृत्तिता आ-चारपरित्यागः धर्मेष्वनाश्वासोवा ॥ ३३ ॥

( ५ ) **नन्दनः** । अधृतिरितिपदम् ॥ ३३ ॥

( ६ ) **रामचन्द्रः** । याचिष्णुता याचकस्य भावः ॥ ३३ ॥

**त्रयाणामपि चैतेषांगुणानांत्रिषु तिष्ठताम् ॥ इदंसामासिकंज्ञेयंक्रमशोगुणलक्षणम् ॥ ३४ ॥**

( १ ) **मेधातिथिः** । त्रिषु कालेषु साम्योपचयापचयेषु वोत्तमाधममध्यमेषु च फलोदयेष्विदमिति वक्ष्यमाणस्यनिर्देशः ॥ ३४ ॥

( २ ) **सर्वज्ञनारायणः** । त्रयाणांवेदाभ्यासादीनां गुणानांवर्गाणाम् । त्रिषुगुणेषु प्रकृतिभूतेषु । सामासिकं समासः संक्षेपः तद्युक्तं गुणचिन्हम् ॥ ३४ ॥

( ३ ) **कुल्लूकः** । एषांसत्त्वादीनांत्रयाणामपि गुणानांत्रिषु कालेषु भूतभविष्यद्वर्तमानेषु विद्यमानानामिदंवक्ष्यमाणसाक्षेपिकंक्रमेण गुणलक्षणंज्ञातव्यम् ॥ ३४ ॥

( ४ ) **राघवानन्दः** । संप्रति संक्षेपतोगुणोद्रिक्तताज्ञानं संप्रति प्रतिजानीते त्रयाणामिति । त्रिषु भूतादिकालत्रयेषु । सामासिकं समासः संक्षेपः तत्रभवम् ॥ ३४ ॥

( ५ ) **नन्दनः** । इदंवक्ष्यमाणत्रिषु जीवेषु सामासिकंसंक्षिप्तम् ॥ ३४ ॥

( ६ ) **रामचन्द्रः** । त्रयाणां वेदाभ्यासादीनां गुणजकार्याणां त्रिषु गुणयुक्तेषु सामासिकंसमासेनकृतं सामासिकं क्रमशःगुणानां सत्त्वादीनां लक्षणं ज्ञेयम् ॥ ३४ ॥

**यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ॥ तज्ज्ञेयंविदुषासर्वंतामसंगुणलक्षणम् ॥ ३५ ॥**

( १ ) **मेधातिथिः** । यदुक्तंत्रिष्विति कालनिर्देशस्तद्दर्शयति कृत्वाकुर्वन्करिष्यन्निितिच । कदाचित्त्रिष्वपिकालेषु कदाचिदन्यतरस्मिन् । किमर्थमहमेवमकरवं कथंशिष्टानामग्रतोभवामीतिलज्जाचेतसिपरिखेदः ॥ ३५ ॥

( २ ) **सर्वज्ञनारायणः** । लज्जतीति स्वतएव दुष्टत्वेनावधारितमित्यर्थः ॥ ३५ ॥

( ३ ) **कुल्लूकः** । यत्कर्मकृत्वाकुर्वन्करिष्यंश्च लज्जावान्भवति कालत्रयेद्वयोरन्यत्रवेति विवक्षितंतत्सर्वंतमःकार्यत्वात्तमोभिधानंगुणलक्षणंशास्त्रविदा बोद्धव्यम् ॥ ३५ ॥

( ४ ) **राघवानन्दः** । तद्यनक्ति यदिति त्रिभिः । लज्जते लोकावज्ञातः । विदुषा स्वानुभवं साक्षात्कुर्वता ॥ ३५ ॥

( ५ ) **नन्दनः** । तमस्तावदाह यत्कर्मेति ॥ ३५ ॥

**येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ॥ नच शोचत्यसंपत्तौ तद्विज्ञेयन्तु राजसम् ॥ ३६ ॥**

( १ ) **मेधातिथिः** । लोके साधुवादोममैवंस्यादिति बुध्या यद्यागतपोधनानामाचरणंतच्च ख्यापनार्थं यथातीर्थकालेभ्योदानं राजनिस्पर्धयाजल्पः शूद्रेभ्यःशास्त्रव्याख्यानं पुष्कलमित्यनेनानुषंगित्वात्ख्यातेः सहायतामाह धर्मार्थप्रवर्तमानस्य यदिजनाःप्रकाशयन्ति तादृशोधर्मोनदोषाय तदुक्तंयथेक्षुहेतोरिति यथामहाभारताख्याने कृष्णद्वैपायनेनोक्तं ॥ यथेक्षुसक्तोयुधिकर्षकोस्तिनृणानिवल्लीरपिसंचरन्ते ॥ तथानरोधर्मपथेनसंचरन्यशश्चकामांश्चवसूनिचाश्नुते ॥ असंपत्तौच कर्मफलानांनशोचति नदुःखमस्ति । अथवाकर्मणामसंपत्तौ ॥ ३६ ॥

( २ ) **सर्वज्ञनारायणः** । नशोचत्यतिशायितपुरुषाणांभावात् ॥ ३६ ॥

( ३ ) **कुल्लूकः** । इह लोके महतींख्यातिं प्राप्नुयामित्येतदर्थमेव योयत्कर्मकरोति न परलोकार्थं नच तत्कर्मफलासंपत्तौ दुःखी भवति तद्रजः कार्यत्वाद्रजोगुणलक्षणंविज्ञेयम् ॥ ३६ ॥

( ४ ) **राघवानन्दः** । इच्छति परलोकनिरपेक्षतयैवैहिकीं पुष्कलां परिपूर्णां ख्यातिं यशोर्थेधर्मसेवनमित्युक्तेः । नशोचति असंपत्तौ कर्मणो असिद्धावपि पुनः कर्मान्तरमारभते नतु शोकेन ततोनिवर्ततइत्यर्थः ॥ ३६ ॥

( ५ ) **नन्दनः** । शोचति विरज्यति असंपत्तावनिष्पत्तौ ॥ ३६ ॥

( ६ ) **रामचन्द्रः** । येन कर्मणा अस्मिँल्लोके पुष्कलांख्यातिमिच्छति च पुनः असंपत्तौ न शोचति तद्विज्ञेयं राजसम् ॥ ३६ ॥

**यत्सर्वेणेच्छति ज्ञातुंयन्न लज्जति चाचरन् ॥ येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ॥ ३७ ॥**

( १ ) **मेधातिथिः** । विस्पष्टोयम् ॥ ३७ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वेण प्रकारेण ज्ञातुंकर्तुमिच्छति ॥ ३७ ॥

( ३ ) **कुल्लूकः** । यत्कर्मवेदार्थसर्वात्मना ज्ञातुमिच्छति यच्च कर्माचरन्कालत्रयेपि न लज्जति येन येन कर्मणास्यात्मनुष्टिर्जायते तत्सत्त्वाख्यस्य गुणस्य लक्षणंज्ञेयम् ॥ ३७ ॥

( ४ ) **राघवानन्दः** । सर्वेण सोपकरणं यद्वेदार्थादि ज्ञातुमिच्छति ज्ञात्वाचानु [ तिष्ठन्नलज्जते किंतु तुष्यति संतुष्टहृदयःस्यादित्यर्थः ][1] ॥ ३७ ॥

( ६ ) **रामचन्द्रः** । यत्सर्वेण कर्मणा ज्ञातुंकर्तुं यत् आचरन् न लज्जति येन कर्मणा अस्य आत्मा तुष्यति तत्सत्त्वगुणलक्षणम् ॥ ३७ ॥

**तमसोलक्षणंकामोरजसस्त्वर्थउच्यते ॥ सत्त्वस्य लक्षणंधर्मः श्रैष्ठ्यमेषांयथोत्तरम् ॥ ३८ ॥**

( १ ) **मेधातिथिः** । ननुच कामेपि सुखमस्ति तत्र यत्प्रीतिसंयुक्तंतत्सत्त्वलक्षणमितिप्राप्तं कथंतमसोलक्षणं उच्यते मोहरूपंतमोत्रसंवेदनमस्ति तदपिसत्त्वस्यैवलक्षणं सत्यंज्ञानमित्युक्तत्वात् । उच्यते नात्रभोक्तृभोग्यभावावस्थाभिप्रेता किंतर्हिविषयगतस्पृहातिशयः । नचतस्यामवस्थायांसुखोत्पत्तिरव्यक्तविषयत्वंच विद्यते कामप्रधानस्य युक्तायुक्तविवेकशून्यत्वादस्त्येवमोहरूपता । ईदृशश्चात्रकामोभिप्रेतः नयद्दतौशास्त्रार्थतया स्वदारेषु गमनौत्सुक्यम् ॥ ३८ ॥

( २ ) **सर्वज्ञनारायणः** । लक्षणं कार्यम् ॥ ३८ ॥

( ३ ) **कुल्लूकः** । कामप्रधानता तमसोलक्षणं अर्थनिष्ठता रजसः धर्मप्रधानता सत्त्वस्य एषांच कामादीनामुत्तरोत्तरस्य श्रेष्ठत्वंकामादर्थः श्रेयान् अर्थमूलत्वात्कामस्य ताभ्यां च धर्मः तन्मूलत्वात्तयोः ॥ ३८ ॥

( ४ ) **राघवानन्दः** । इतोपि संक्षिप्याह तमसइति । तमसउद्रिक्तस्य कामः स्त्र्यादिष्वतिप्रीतिः । एवमर्थधर्मयोः । यथाक्रममुत्तरोत्तरम् । अत्रचयत्किंचित्पौनरुक्त्यं तन्नदोषभाक् अध्यात्मकप्रकरणत्वात् गुणातिरिक्तस्यात्मनः कर्तृत्वाभावतात्पर्यकत्वाच्च । तदुक्तम् ॥ नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति । गुणेभ्यश्च परंवेत्ति मद्भावं सोधिगच्छति ॥ गुणातीतः सउच्यतइतिच ॥ ३८ ॥

---

( १ ) न

( ६ ) **रामचन्द्रः** । तमसः लक्षणम् । अर्थः रजसोलक्षणम् । धर्मः सत्त्वस्य लक्षणम् । येषां सत्त्वादीनां यथाक्रमं-श्रैष्ठ्यम् ॥ ३८ ॥

**येन यस्तु गुणेनैषांसंसारान्प्रतिपद्यते ॥ तान्समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥ ३९ ॥**

( १ ) **मेधातिथिः** । एषांगुणानांमध्ये येन गुणेन यान्संसारान्पुरुषः प्रतिपद्यते । संसारशब्दोगतिवचनः यानि जन्मानि प्राप्नोतीत्यर्थः । तदुत्तरत्रवक्ष्यत इतिप्रतिज्ञाश्लोकः ॥ ३९ ॥

( २ ) **सर्वज्ञनारायणः** । संसारान् जातीः ॥ ३९ ॥

( ३ ) **कुल्लूकः** । एषांसत्त्वादीनांगुणानांमध्ये येन गुणेन स्वकार्येण यागतीर्जीवः प्राप्नोति ताः सर्वस्यास्य जगतः-संक्षेपतः क्रमेण वक्ष्यामि ॥ ३९ ॥

( ४ ) **राघवानन्दः** । उक्तगुणकार्यरतानां प्रतिज्ञापूर्वकं गतीराह येनेति द्वाभ्याम् । एषामिति निर्धारणे तेन येन-गुणेनयं संसारं प्रतिपद्यतेतं देवत्वादिरूपंवक्ष्यामीत्यन्वयः ॥ ३९ ॥

( ५ ) **नन्दनः** । सर्वस्यास्य प्राणिजातस्य तान्संसारानित्यन्वयः ॥ ३९ ॥

( ६ ) **रामचन्द्रः** । येन गुणेन यान् एषांसत्त्वादीनां गुणेन संसारात यथा प्रपद्यते तान् गुणान् ॥ ३९ ॥

**देवत्वंसात्त्विकायान्ति मनुष्यत्वंच राजसाः ॥ तिर्यक्त्वंतामसानित्यमित्येषा त्रिविधा गतिः ॥ ४० ॥**

( १ ) **मेधातिथिः** । सामान्येनगतिनिर्देशोगुणनिमित्तोयम् ॥ ४० ॥

( २ ) **सर्वज्ञनारायणः** । तिर्यक्त्वं पशुत्वम् ॥ ४० ॥

( ३ ) **कुल्लूकः** । ये सत्त्ववृत्ताववस्थितास्ते देवत्वंयान्ति । ये तु रजोवृत्त्यवस्थितास्ते मनुष्यत्वं । ये तमोवृत्तिस्थास्तेतिर्यक्त्वंचेत्येषा त्रिविधा जन्मप्राप्तिः ॥ ४० ॥

( ४ ) **राघवानन्दः** । तिर्यक्त्वं पक्षिमृगताम् ॥ ४० ॥

( ६ ) **रामचन्द्रः** । इति एषां त्रिविधागतिः ॥ ४० ॥

**त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः ॥ अधमा मध्यमाग्र्याच कर्मविद्या विशेषतः ॥ ४१ ॥**

( १ ) **मेधातिथिः** । एषा त्रिविधा गौणिकी सत्त्वादिगुणप्रयुक्ता प्रत्येकंपुनः त्रिविधोत्तमाधममध्यमभेदेनातोनवधासंपद्यते । कर्मविद्याविशेषाच्चानन्ताः कुशलाकुशलकर्मवशात् । बुद्धिपूर्वप्रयोगश्च कर्मणांच बहुभेदत्वात्तदिदमाह कर्मविद्याविशेषतइति ॥ ४१ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिविधा याउक्ता गौणिकी गुणनिमित्ता सा प्रत्येकं त्रिविधा । कर्म तामसादिरूपं विद्या ज्ञानं तदपि भूतादिविषयतया तामसादिरूपम् ॥ ४१ ॥

( ३ ) **कुल्लूकः** । या सत्त्वादिगुणत्रयनिमित्ता त्रिविधा जन्मान्तरप्राप्तिरुक्ता सा देशकालादिभेदेन संसारहेतुभूत-कर्मभेदाज्ज्ञानभेदाच्चाधममध्यमोत्तमभेदेन पुनस्त्रिविधा बोद्धव्या ॥ ४१ ॥

( ४ ) **राघवानन्दः** । तागतीरथवातास्त्रिविधभेदभिन्नाइति ज्ञापयन्नाह त्रिविधेति । गौणिकी तमआदिगुणनिमित्ता कर्मविद्याविशेषतः परलोकंइयासन्तंजीवंविद्याकर्मवासनानामनुगतेस्तंविद्याकर्मणीसमन्वारभेते पूर्वप्रज्ञा चेतिश्रुतेरवगतत्वात् ॥ ४१ ॥

( ५ ) **नन्दनः** । गौणकीगुणसंबन्धिनीकर्मविद्याविशेषतः कर्मविशेषतोज्ञानविशेषतश्च ॥ ४१ ॥

( ६ ) **रामचन्द्रः** । गौणिकीगतिः त्रिविधा तु पुनः एषा गतिः त्रिविधा विज्ञेया एकैकस्य गुणस्य त्रिधा त्रिविधा । गतिः ज्ञेया एवं नवधा गतिः तद्यथा एकस्य गुणस्य त्रिविधा कर्मणः विद्या अधमा विद्या मध्यमाचपुनः । विशेषतः कर्मणःविद्या अग्र्या श्रेष्ठाएवं एकस्य त्रिविधा ॥ ४१ ॥

**स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः ॥ पशवश्च मृगाश्चैव जघन्या तामसी गतिः॥४२॥**

( २ ) **सर्वज्ञनारायणः** । कृमयोमांसादिसंभवाः क्षुद्रजन्तवः । सरीसृपावृश्चिकाद्याः । पशवोगवाद्याः ॥ ४२ ॥

( ३ ) **कुल्लूकः** । स्थावरावृक्षादयः कृमयः सूक्ष्माः प्राणिनस्तेभ्यईषत्स्थूलाः कीटाः तथामत्स्यसर्पकूर्मपशुमृगाश्चेत्येषा तमोनिमित्ता जघन्या गतिः ॥ ४२ ॥

( ४ ) **राघवानन्दः** । तत्रादौ तामसस्यावान्तरभेदमाह स्थावराइतित्रिभिः । तस्मात्पश्यन्ति पादपाः स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमितिश्रुतेः । स्थावरदेहोपि भोगार्थः । कृमयोमहीलताद्याः । कीटाः पिपीलिकाद्याः पशवः श्वादयः । जघन्या निकृष्टाः । तामसी उद्रिक्ततमोनिमित्ता । एवमुत्तरत्र ॥ ४२ ॥

( ६ ) **रामचन्द्रः** । स्थावराद्याः गामृगान्ताः जघन्या अधमा तामसी गतिः ॥ ४२ ॥

**हस्तिनश्च तुरङ्गाश्च शूद्राम्लेच्छाश्च गर्हिताः ॥ सिंहाव्याघ्रावराहाश्च मध्यमातामसी गतिः॥४३॥**

( २ ) **सर्वज्ञनारायणः** । म्लेच्छाः शबराद्याः ॥ ४३ ॥

( ३ ) **कुल्लूकः** । हस्त्यश्वशूद्रम्लेच्छसिंहव्याघ्रसूकरास्तमोगुणनिमित्ता मध्यमा गतिः गर्हिताइति म्लेच्छानांस्वरूपानुवादः ॥ ४३ ॥

( ४ ) **राघवानन्दः** । तुरङ्गोश्वः तुरङ्गपदं गवामुपलक्षणम् । म्लेच्छायवनाः विगर्हितानिषादाद्याः ॥ ४३ ॥

( ६ ) **रामचन्द्रः** । हस्त्यादिवराहान्ताः मध्यमा तामसी गतिः ॥ ४३ ॥

**चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ॥ रक्षांसि च पिशाचाश्च तामसीषूत्तमागतिः॥४४॥**

( १ ) **मेधातिथिः** । चारणाः कथकगायकस्त्रीसंयोजकादयः । सुपर्णाः पक्षिविशेषाः शूद्रागर्हिताइतिसंबन्धः । येब्राह्मणानवजानते ये च तद्वृत्त्युपजीविनो ये च मदमानादियुक्ताहिंस्राश्चौराइत्येवमादयोविगर्हिताः ॥ ४४ ॥

( २ ) **सर्वज्ञनारायणः** । चारणारङ्गाद्युपरि वृत्तिकारिणः । सुपर्णागरुडाद्याः । रक्षांसि क्रव्यादविशेषाः कुम्भकर्णाद्याः । पिशाचाः पूतिमांसादिबीभत्सान्नादाः ॥ ४४ ॥

( ३ ) **कुल्लूकः**। चारणानटादयः सुपर्णाः पक्षिणः छद्मना कर्मकारिणः पुरुषाराक्षसाः पिशाचाश्चेत्येषा तामसीषूत्तमागतिः ॥ ४४ ॥

( ४ ) **राघवानन्दः** । चारणाः देवयोनिविशेषाः सुपर्णाः अरुणादयः ॥ ४४ ॥

( ६ ) **रामचन्द्रः** । चारणादि पिशाचान्ताः तामसीषु उत्तमा गतिः ॥ ४४ ॥

**झल्लामल्लानटाश्चैव पुरुषाः शस्त्रवृत्तयः ॥ द्यूतपानप्रसक्ताश्च जघन्याराजसी गतिः ॥ ४५ ॥**

( १ ) **मेधातिथिः** । झल्लामल्लाइति रङ्गावतारकास्तत्रमल्लाबाहुयोधिनः झल्लायष्टिप्रहारिणः परिहासजीविनोवा ॥ ४५ ॥

---

( ४५ ) झल्ला=तुष्टा ( ग )=ऊशाक ( क )

( २ ) **सर्वज्ञनारायणः** । झल्लोमल्लश्च राजन्याद्व्रात्यायाम् । कुवृत्तयः सेवादिकुवृत्तयः ॥ ४५ ॥

( ३ ) **कुल्लूकः** । झल्लामल्लाः क्षत्रियाद्व्रात्यात्सवर्णायामुत्पन्नादशमाध्यायोक्ताज्ञेयातत्र झल्लायष्टिप्रहरणामल्लाबाहुयोधिनः रङ्गावतारकानटाः शस्त्रजीविद्यूतपानप्रसक्ताश्च पुरुषाअधमा राजसीगतिर्ज्ञेया ॥ ४५ ॥

( ४ ) **राघवानन्दः** । राजस्याभेदमाह । झल्लमल्लौ जातिसंकरौ मल्लायुद्धाचार्याः नटाः रङ्गावतारिणः । नर्तकाः ॥ ४५ ॥

( ६ ) **रामचन्द्रः** । झल्लादिपानप्रसक्तान्ताः प्रथमा राजसी गतिः ॥ ४५ ॥

**राजानः क्षत्रियाश्चैव राज्ञांचैव पुरोहिताः ॥ वादयुद्धप्रधानाश्च मध्यमा राजसीगतिः ॥ ४६ ॥**

( १ ) **मेधातिथिः** । राजानोजनपदेश्वरक्षत्रियास्तदनुजीविनः सामन्ताः । वादप्रधानाः शास्त्रार्थगहनेष्वितरेतरंजल्पन्ति । युद्धप्रधानायोधकाः ॥ ४६ ॥

( २ ) **सर्वज्ञनारायणः** । क्षत्रियाः अराजानोपि ॥ ४६ ॥

( ३ ) **कुल्लूकः** । राजानोऽभिषिक्ताजनपदेश्वराः तथाक्षत्रियाराजपुरोहिताश्च शास्त्रार्थकलहप्रियाश्च एषा राजसीगतिर्मध्यमा बोद्धव्या ॥ ४६ ॥

( ४ ) **राघवानन्दः** । वादप्रसक्ताः शास्त्रार्थकलहिनः युद्धविशारदाः शूराः ॥ ४६ ॥

( ६ ) **रामचन्द्रः** । दानयुद्धप्रधानाः दानदातृत्वप्रधानाः ॥ ४६ ॥

**गन्धर्वागुह्यकायक्षाविबुधानुचराश्चये ॥ तथैवाप्सरसः सर्वाराजसीषूत्तमागतिः ॥ ४७ ॥**

( १ ) **मेधातिथिः** । गन्धर्वादयोदेवास्तेषामर्थवादेतिहासेभ्योभेदोविज्ञेयः । विबुधादेवास्तेषामनुचराः सिद्धविद्याधरादयः ॥ ४७ ॥

( २ ) **सर्वज्ञनारायणः** । गुह्यकाः बालादिहिंसाकारिणोमायाप्रधानाः । यक्षाः धनरक्षाकारिणः ॥ ४७ ॥

( ३ ) **कुल्लूकः** । गन्धर्वागुह्यकायक्षाजातिविशेषाः पुराणादिप्रसिद्धाः ये च देवानुयायिनोविद्याधरादयोऽप्सरसश्च देवगणिकाः सर्वाइत्येषा राजसीमध्यउत्कृष्टा गतिः ॥ ४७ ॥

( ४ ) **राघवानन्दः** । गन्धर्वादयोदेवावान्तरयोनयः तदधीनाःगन्धर्वाश्चित्ररथादयः । गुह्यकाःधनरक्षकाः यक्षाः कुबेरादयः । अप्सरसः उर्वश्यादयः ॥ ४७ ॥

( ६ ) **रामचन्द्रः** । विबुधाः सुराइत्यमरः ॥ ४७ ॥

**तापसायतयोविप्राये च वैमानिकागणाः ॥ नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकीगतिः ॥ ४८ ॥**

( १ ) **मेधातिथिः** । तापसास्तपःप्रधानावानप्रस्थादयः । यतयःपरिव्राजकादयः अनेनच ज्ञापयतिनकेवलंजन्मोपपत्तिर्गतिजातस्य कर्माचरणादपि यतोनतापसादयःकतिचिज्जातिविशेषाः किंतर्हिकर्मनिमित्ताएतेव्यपदेशाः । अन्येतु

( ४६ ) प्रधानाः = प्रसक्ताः ( राघ० )

( ४६ ) वादयुद्ध=दानयुद्ध ( ल )

( ४६ ) वादयुद्धप्रधानाः=दानयुद्धप्रधानाः ( राम० )

मन्यन्ते सन्तिमेरुनिवासिनःकेचिज्जनपदायतयोनामश्रूयन्ते इन्द्रोयतीन्सालावृकेभ्यःप्रायच्छदिति । विमानानियानविशेषाः पुष्पकादयस्तैश्चरन्तिवैमानिकाः अन्तरिक्षचराःकेचिद्देवयोनयः प्रथमानिकृष्टाः ॥ ४८ ॥

( २ ) **सर्वज्ञनारायणः** । तापसाः वनस्थाः । यतयोलब्धज्ञानाभिक्षवः । वैमानिकाः स्वर्गिणोविमानेषु चरन्तः । दैत्याहिरण्यकशिपुप्रभृतयोये क्रव्यादास्तीक्ष्णस्वभावाः । सिद्धाइतिपाठे विद्यासिद्धाः ॥ ४८ ॥

( ३ ) **कुल्लूकः** । वानप्रस्थाभिक्षवोब्राह्मणाश्च अप्सरसोव्यतिरिक्तापुष्पकादिविमानचारिणोनक्षत्राणि दैत्याश्चेत्येषा सत्त्वनिमित्ताऽधमागतिः ॥ ४८ ॥

( ४ ) **राघवानन्दः** । सात्त्विकभेदानाह तापसाइति । गणागणशश्चरणशीलास्तएव वैमानिकाइतिवणिजांव्यावृत्त्यर्थं तएव विश्वेदेवादयः । दैत्याः बलिप्रभृतयः ॥ ४८ ॥

## यज्वानऋषयोदेवावेदाज्योतींषि वत्सराः ॥ पितरश्चैव साध्याश्च द्वितीया सात्त्विकीगतिः ॥ ४९ ॥

( १ ) **मेधातिथिः** । आनुपूर्वीविशिष्टःशब्दोवेदः । ननुचगत्यधिकारेकः प्रसंगोऽचेतनानां अचेतनाश्चशब्दादयः अत्यल्पमिदमुच्यतेशब्दादयोऽचेतनाइति । सर्वएवैतेदेवादयःस्थावरान्ताःशरीरात्मानः तत्रसर्वशरीराणामचेतनादितच्छक्तिः केवलं पुरुषादिचैतन्यरूपिणीप्राप्यते निर्गुणश्च पुरुषस्तदधिष्ठितानिशरीराण्यचेतनान्यपिचेतनान्युच्यन्ते । अतएतदुक्तंभवति सत्त्वप्रधानोवेदस्तदभ्यासात्सात्त्विकीगतिःप्राप्यते नपुनःसत्त्वप्रधानस्यवेदत्वप्राप्तिःसात्त्विकीगतिरुच्यते । अन्येषान्तुप्रदर्शनंसर्वक्षेत्रज्ञाःसन्त्यधिष्ठातारोवेदपुरुषावारुणेलोकेश्रूयन्ते ॥ ४९ ॥

( २ ) **सर्वज्ञनारायणः** । यज्वानःफलाभिसंधिना यजमानाः । ऋषयोज्ञानपराः । ज्योतींषि चन्द्रसूर्याद्याः । वत्सरा वत्सराधिष्ठात्री देवता ॥ ४९ ॥

( ३ ) **कुल्लूकः** । यागशीलास्तथर्षयोदेवावेदाभिमानिन्यश्च देवताविग्रहवत्यइतिहासप्रसिद्धाः ज्योतींषिध्रुवादीनि वत्सराइतिहासदृष्ट्या विग्रहवन्तः पितरः सोमपादयः साध्याश्च देवयोनिविशेषाइत्येषा सत्त्वनिमित्ता मध्यमा गतिः ॥ ४९ ॥

( ४ ) **राघवानन्दः** । वेदास्तदभिमानिनः । तदुक्तं ग्रहाधिकरणे भट्टैः ॥ ऋग्वेदादिसमूहेषु क्षेत्रज्ञाये प्रतिष्ठिताः ॥ तेषांवायमभिप्रायः स्याद्विवक्षाविवक्षयोरिति ॥ एवं वत्सराः । ज्योतींषि नक्षत्रभिन्नान्यादित्यादीनि ॥ ४९ ॥

## ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेव च ॥ उत्तमांसात्त्विकीमेतांगतिमाहुर्मनीषिणः ॥ ५० ॥

( १ ) **मेधातिथिः** । विश्वसृजोमरीच्यादयः प्रजापतयः । धर्मोवेदार्थः पूर्ववेदस्वरूपमुक्तमिदानींतदर्थःस्वरूपार्थःप्रधानतरइत्युक्तंभवति । अथवाधर्मादयश्च विग्रहवत्त्वंपूर्ववद्द्रष्टव्यं महानितिसंज्ञांतरं अव्यक्तंप्रधानंप्रकृतिरित्येकोर्थः । ननुच सत्त्वाधिक्ये प्रधानस्य तद्विकारत्वाज्जगतःसर्वेषांविकाराणांसत्त्वाधिक्यंप्राप्तं ततश्च रजस्तमसोःकुतोतिरेकः अतोयदुक्तं ॥ योयदेषांगुणोदेहेसाकल्येनातिरिच्यतइतितदनुपपन्नं उच्यतेनैतदेवपरंप्रधानरूपताप्राप्याकिंतर्हियेयेप्रकाराःसन्ति यदि प्राप्योव्यक्तिभावोयदिवाऽदृष्टविधिर्यदिवानैवायंसंख्येयःप्रधानेऽव्यक्तशब्दोवर्तते क्रियानिमित्तोह्ययंनास्यव्यक्तिर्विद्यतइति अस्फुटप्रकाशत्वादव्यक्तं तथाचपरमात्मनिवृत्तिर्भवति । महत्त्वंचतस्यविभुत्वादुपपद्यतएव । ननुचनैवास्यसात्त्विकीगतिः अगुणत्यागाचाप्येवं यदाहिनाहंनममकिंचिदितिमुक्ताहंकारममकारोभवतितदाब्रह्मताभवतीतिविज्ञायते । निदिध्यासनयब्रह्मप्राप्तिःकिन्तुसत्त्वप्रधानाएवज्ञानादितत्पराभवन्ति नतामसीराजसीचेति । एवंकृत्वोच्यतउत्तमात्सात्त्विकी·

गतिः अन्यौपक्षावनुपपन्नौ । नहिप्रधानभावंप्राप्य काचित्पुरुषार्थसिद्धिः अचेतनंहितद्यपदिशन्त्यचैतन्यं स्थावरेभ्योपि यद्धीनाहिमदमूर्च्छावस्थाःकेचिदर्थयन्ते । दृष्टविधिस्तुनैवसंभवत्यश्रुतत्वादात्मावारेद्रष्टव्यइतिश्रुतितःप्रधानंद्रष्टव्यमितितस्मात्परमात्मविषयावेवमहानव्यक्तइत्येतौशब्दौ ॥ ५० ॥

( २ ) **सर्वज्ञनारायणः** । विश्वसृजोमरीच्याद्याः । अव्यक्तमहंकारः ॥ ५० ॥

( ३ ) **कुल्लूकः** । चतुर्वदनोविश्वसृजश्च मरीच्यादयः धर्मोविग्रहवान्महान्अव्यक्तंच सांख्यप्रसिद्धंच तत्त्वद्वयंतदधिष्ठातृदेवताद्वयमिह विवक्षितं अचेतनगुणत्रयमात्रस्योत्तमसात्त्विकगतित्वानुपपत्तेः एतांचतुर्वदनाद्यात्मिकांसत्त्वनिमित्तामुत्कृष्टांगतिंपण्डितावदन्ति ॥ ५० ॥

( ४ ) **राघवानन्दः** । ब्रह्मा हिरण्यगर्भः । विश्वसृजोमरीच्यादयः । अत्राचेतनत्वेन प्रसिद्धानां तदभिमानिदेवतापरत्वं तदभिमानिव्यपदेशादितिन्यायात् । नचाव्यक्तस्य जन्मासंभवइतिवाच्यं यत्तत्सूक्ष्ममविज्ञेयमिति परं ब्रह्म प्रकृत्यसह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यतेत्युक्ता ॥ तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥ तथाव्यक्तंतु पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयतइतिकार्यत्वस्मरणात् ॥ ५० ॥

( ६ ) **रामचन्द्रः** । ब्रह्मा विश्वसृजः मरीच्याद्याः । महान्महत्तत्वम् । अव्यक्तं प्रधानम् ॥ ५० ॥

**एषसर्वः समुद्दिष्टस्त्रिः प्रकारस्य कर्मणः ॥ त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः ॥ ५१ ॥**

( १ ) **मेधातिथिः** । त्रिःप्रकारस्यवाङ्मनःकायसाधनस्य त्रिविधःसत्त्वादिगुणभेदेनपुनस्त्रिविधः उत्तमादिविशेषतोयाअप्यत्रगतयोविशेषतोनुक्तास्ताअप्युक्तसादृश्यादन्तर्भावनीयाः । गुणप्रकरणोपसंहारउत्तरोपिश्लोकोवक्ष्यमाणसूचकः ॥ ५१ ॥

( २ ) **सर्वज्ञनारायणः** । त्रिःप्रकारस्य तमोरजःसत्त्वजन्यतया । त्रिविधोपि पुनस्त्रिविधः । संसारः संसारिवर्गः सर्वभूतसंबन्धी ॥ ५१ ॥

( ३ ) **कुल्लूकः** । एषमनोवाक्कायरूपत्रयभेदेन त्रिःप्रकारस्य कर्मणः सत्त्वरजस्तमोभेदेन त्रिविधः पुनः प्रथममध्यमोत्तमभेदेन त्रिविधः सर्वप्राणिगतः समग्रोगतिविशेषः कात्स्र्न्येनोक्तः सार्वभौतिकइत्यभिधानात् अनुक्ताअप्यत्र गतयोद्रष्टव्याः उक्तगतयस्तु प्रदर्शनार्थाः ॥ ५१ ॥

( ४ ) **राघवानन्दः** । गुणसर्गमुपसंहरति एषइति । त्रिप्रकारस्य कायिकादिभेदभिन्नस्य सात्विकादिभेदभिन्नस्य वा । त्रिविधस्त्रिविधोनवविधः सात्त्विकादितद्याप्यभेदेन । सार्वभौमब्रह्मादिस्थावरा तत्प्राणभृत्संबन्धी ॥ ५१ ॥

( ६ ) **रामचन्द्रः** । सात्त्विकादेःत्रिःप्रकारस्य कर्मणः त्रिविधस्त्रिविधः संसारः समुद्दिष्टः कीदृशःसंसारः सार्वभौतिकः सर्वभूतेषु प्राणिमात्रेषु जातः पंचभूतात्मको देहः ॥ ५१ ॥

**इन्द्रियाणांप्रसङ्गेन धर्मस्यासेवनेन च ॥ पापान्संयान्ति संसारानविद्वांसोनराधमाः ॥ ५२ ॥**

( १ ) **मेधातिथिः** । इंद्रियसंगोऽप्रतिषिद्धसेवनप्रदर्शनार्थः असेवनंधर्मस्यशिष्टाकरणं एतच्चाविदुषांभवत्यतओंह्याविद्वांसोतएवनराधमाः अतश्चपरमात्संसारात्कुत्सितानिजन्मस्थानानि संयान्तिप्राप्नुवन्ति । तत्रप्रसिद्धएवतावत्कर्मविपाकःप्रचक्ष्यते ॥ ५२ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसंगेन यथेच्छं विषयेषु प्रवृत्या । संसारान्निन्दितान् ॥ ५२ ॥

( ३ ) **कुल्लूकः** । इन्द्रियाणांविषयेषु प्रसङ्गेन निषिद्धाचरणेन च प्रायश्चित्तादिधर्माननुष्ठानेन मूढामनुष्यापसदाः कुत्सिता गतीः प्राप्नुवन्ति ॥ ५२ ॥

( ४ ) **राघवानन्दः** । नरकप्राप्तौ हेतुद्वयं संक्षिपन्क्रमेण नरकप्राप्तीराह इन्द्रियाणामिति । प्रसंगेनातिप्रसक्त्या अविरुद्धविषयेष्वपि ब्राह्मणवधादिषु च धर्मस्यासेचनेन अधिकारसत्वेपिधर्मस्याकरणात्पापान् पापजन्यागतीस्ताएव संसारानित्यन्वयः ॥ ५२ ॥

( ५ ) **नन्दनः** । इन्द्रियाणांविषयेष्वतिप्रसक्ता ॥ ५२ ॥

( ६ ) **रामचन्द्रः** । इन्द्रियाणांप्रसंगेन विषयाणांप्रसक्त्या ॥ ५२ ॥

**यांयांयोनिंतु जीवोयंयेन येनेह कर्मणा ॥ क्रमशोयाति लोकेऽस्मिंस्तत्तत्सर्वंनिबोधत ॥ ५३ ॥**

( २ ) **सर्वज्ञनारायणः** । क्रमशोनिबोधत ॥ ५३ ॥

( ३ ) **कुल्लूकः** । अयंजीवोयेन येन पापेन कर्मणेह लोके कृतेन यद्यज्जन्मप्राप्नोति तत्सर्वंक्रमेण शृणुत ॥ ५३ ॥

( ४ ) **राघवानन्दः** । तत्रादाविन्द्रियप्रसंगेनेत्यस्य प्रतिज्ञापुरःसरं गतीराह यामितिसप्तदशभिः ॥ ५३ ॥

( ५ ) **नन्दनः** । एकमेव कर्म बह्वीः योनीः प्रापयतीत्युक्तं क्रमशइति ॥ ५३ ॥

**बहून्वर्षगणान्घोरान्नरकान्प्राप्य तत्क्षयात् ॥ संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥ ५४ ॥**

( १ ) **मेधातिथिः** । घोरान्नरकान् दुःखप्रसहनव्यथयाघोरायातनास्थानानि नारकान् तत्क्षणाद्दुद्भूतरूपस्य कर्मणः फलोपभोगेनक्षयं ततईषदवशिष्टेकर्मणि संसारप्रतिपत्तिः । कथंपुनःसर्वकर्मतत्रैवनभुज्यते उक्तं इंद्रियस्य कर्मणोनरकफलेनोपशान्तस्य कार्यविरोधित्वाच्चकर्मणांफलेनोपशमः तत्रयथैवचज्वलितस्याग्नेरुदर्चिषोदाहोविनियोगोतपश्चादंभएवस्थितस्यैवंनरकेष्वपिद्रष्टव्यं अग्नेस्तुद्वेअवस्थेभवतः प्रशान्तताज्वालाच नरकस्तुएकरूपएवसर्वदा । उदर्चिषइवाग्नयःकर्माणि चोपचयापचयवन्त्यतउपचितस्यकर्मणोनरकोऽपचीयमानस्य ततोऽन्यत्रोपभुक्तिः तत्रयुक्तं ततःशेषेणेति ॥ ५४ ॥

( ३ ) **कुल्लूकः** । ब्रह्महत्यादिमहापातककारिणोबहून्वर्षसमूहान्भयंकरान्नरकान्प्राप्य तदुपभोगक्षयाद्दुष्कृतशेषेण वक्ष्यमाणान् जन्मविशेषान्प्राप्नुवन्ति ॥ ५४ ॥

( ४ ) **राघवानन्दः** । तामेवाह बहूनिति । नरकान् । वक्ष्यमाणांस्तामिस्रादीन् प्राप्य तत्फलंभुक्त्वा संसारान् संसरणयोग्यजातीः । इमान् । वक्ष्यमाणसूकरादिकान् ॥ ५४ ॥

( ५ ) **नन्दनः** । तत्क्षयान्नरकंप्राप्यन्ते इमान्वक्ष्यमाणान् ॥ ५४ ॥

( ६ ) **रामचन्द्रः** । नरकादीन्प्राप्य तत्क्षयात् तत्कर्मणः भोगक्षयात् संसारान्प्रतिपद्यन्ते जन्मानि प्रतिपद्यन्ते इमान् वक्ष्यमाणलक्षणान् ॥ ५४ ॥

**श्वसूकरखरोष्ट्राणांगोजाविमृगपक्षिणाम् ॥ चण्डालपुक्कसानांच ब्रह्महा योनिमृच्छति ॥ ५५ ॥**

( ३ ) **कुल्लूकः** । कुक्कुरसूकरगर्दभोष्ट्रगोच्छागमेषमृगपक्षिचण्डालानांपुक्कसानांच निषादेन शूद्रायां जातानांसंबन्धिनींजातिंब्रह्महा प्राप्नोति तत्र पापशेषगौरवलाघवापेक्षया क्रमेण सर्वयोनिप्राप्तिर्बोद्धव्या एवमुत्तरत्राऽपि ॥ ५५ ॥

( ४ ) **राघवानन्दः** । तानेवाह श्वेति । दशजातिषु ब्रह्महा योनिं जन्मऋच्छति प्राप्नोति । तथाच श्रुतिः । श्वयोनिं वा सूकरयोनिंवा चण्डालयोनिंचेति ॥ ५५ ॥

**कृमिकीटपतङ्गानांविड्भुजांचैव पक्षिणाम् ॥ हिंस्राणांचैव सत्त्वानांसुरापोब्राह्मणोव्रजेत् ॥ ५६ ॥**

( १ ) **मेधातिथिः** । विड्भुजावायसादयः । हिंस्राणांव्याघ्रादीनाम् ॥ ५६ ॥

( ३ ) **कुल्लूकः** । कृमिकीटशलभानांपुरीषभक्षिणांपक्षिणांहिंसनशीलानांच व्याघ्रादीनांप्राणिनांजातिंसुरापोब्राह्मणो-गच्छति ॥ ५६ ॥

( ४ ) **राघवानन्दः** । पैष्टींपीत्वा विप्रो विड्भुजां कुक्कुटादीनां हिंस्राणां सर्पवृश्चिकादीनां योनिं व्रजेदित्यन्वयः । सुरा वै मलमन्नानामित्युक्तेः ॥ ५६ ॥

( ५ ) **नन्दनः** । बहुशः कृमिकीटादियोनिः प्राप्नोतीत्युक्तं असकृदिति योनिमिच्छतीत्यनुषङ्गः एवमुत्तरत्र ॥ ५६ ॥

**लूताहिसरटानांच तिरश्चांचाम्बुचारिणाम् ॥ हिंस्राणांच पिशाचानांस्तेनोविप्रः सहस्रशः ॥५७॥**

( ३ ) **कुल्लूकः** । ऊर्णनाभसर्पकृकलासानांजलचराणांच तिरश्चांकुम्भीरादीनांहिंसनशीलानांच योनिंसुवर्णहारी ब्राह्मणः सहस्रवारान्प्राप्नोति ॥ ५७ ॥

( ४ ) **राघवानन्दः** । लूता ऊर्णनाभिः । अहिः सर्पः । सरटः काकः कृकलासोवा प्रसिद्धः । तिरश्चामित्यस्य विशेषणमम्बुचारिणामिति । हिंस्राणांनक्रादीनां ब्रह्मराक्षसानांवा । विप्रः चातुर्वर्ण्यः । विप्रग्रहणं कैमुत्यार्थं विप्रोपि यदा तदाऽन्येषां का कथेति । सहस्रशोजन्मानि ॥ ५७ ॥

( ५ ) **नन्दनः** । सरटः कृकलासः । विप्रग्रहणेनस्तेयंब्राह्मणक्षत्रियादिभ्योतिरिक्तफलमिति संकुचितम् ॥ ५७॥

( ६ ) **रामचन्द्रः** । लूता मर्कटिका । अहिः सर्पः । लूतादीनां योनिषु स्तेनः सुवर्णस्तेनः विप्रः सहस्रशः सहस्र-कृत्वोजायते ॥५७ ॥

**तृणगुल्मलतानांच क्रव्यादांदंष्ट्रिणामपि ॥ क्रूरकर्मकृतांचैव शतशोगुरुतल्पगः ॥ ५८ ॥**

( १ ) **मेधातिथिः** । क्रूरकर्मकृताः परवधशीलाः ॥ ५८ ॥

( ३ ) **कुल्लूकः** । तृणानांदूर्वादीनांगुल्मानामप्रकाण्डादीनांलतानांगुडूच्यादीनामाममांसभक्षिणांगृध्रादीनां दंष्ट्रिणांसिंहा-दीनांक्रूरकर्मशालिनांवधशीलानांच व्याघ्रादीनांजातिंशतवारान्प्राप्नोति गुरुदारगामी ॥ ५८ ॥

( ४ ) **राघवानन्दः** । दंष्ट्रिणां व्याघ्रादीनाम् । अत्र श्वेत्यादिपद्यचतुष्टयमेव भेदकं महापातकचतुष्टयफलस्य ॥ ५८ ॥

( ६ ) **रामचन्द्रः** । तृणगुल्मलतानां सरूपतां गुरुतल्पगः प्राप्नोति । चपुनः क्रव्यादादीनां योनिषु गुरुतल्पगःशतशः शतकृत्वः जायते ॥ ५८ ॥

---

( ५९ ) प्रेतान्त्ये=प्रेत्यान्त्य ( क, ण )

**हिंस्राभवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः॥ परस्परादिनस्तेनाः प्रेताऽन्त्यस्त्रीनिषेविणः॥५९॥**

( १ ) **मेधातिथिः**। क्रव्यादागृध्रादयः। अमेध्यभक्षिणः कृमयः परस्परमदन्ति यथामहामार्जारोमार्जारं महामत्स्यः सूक्ष्ममत्स्यं नैकभेदमिवअन्त्यस्त्रीनिषेविणोबर्बरादयः॥ ५९॥

( २ ) **सर्वज्ञनारायणः**। एवमभक्ष्यभक्षिणःकृमयः। एवं विप्रस्वर्णेतरस्तेनाः अन्योन्यभक्षिणोमत्स्याद्याः। गुरुतल्पेतरान्यदारगमने प्रेताः। प्रेतान्त्येति संधिश्छान्दसः॥ ५९॥

( ३ ) **कुल्लूकः**। ये प्राणिवधशीलास्ते आममांसाशिनोमार्जारादयोभवन्ति। अभक्ष्यभक्षिणोये ते कृमयोजायन्ते। महापातकव्यतिरिक्ताश्चौरास्ते परस्परंमांसस्यादिनोभवन्ति। ये चाण्डालादिस्त्रीगामिनस्ते प्रेताख्याः प्राणिविशेषाजायन्ते। प्रेतान्त्यस्त्रीनिषेविणइतिछन्दः समानत्वात्स्मृतीनांसर्वे विधयश्छन्दसि विकल्प्यन्तइति विसर्गलोपे च यद्वा यलोपे च सवर्णदीर्घः॥ ५९॥

( ४ ) **राघवानन्दः**। किंचान्यदित्याह हिंस्राइति। हिंस्रानराः क्रव्यादाः भवन्त्येवमभक्ष्यभक्षिणः कृमयः। स्तेनाः परस्परादिनः परस्परमत्तुशीलाः प्रेतान्त्येतिसन्धिरार्षः। येन्त्यजगामिनस्ते प्रेताः इत्यन्वयः॥ ५९॥

( ५ ) **नन्दनः**। हिंस्रास्तेक्रव्यादायेऽभक्ष्यभक्षणादिनः येऽन्यस्त्रीनिषेवकास्ते परस्परादिनोमत्स्याभवन्ति॥ ५९॥

( ६ ) **रामचन्द्रः**। अभक्ष्यभक्षिणः पापाः क्रव्यमदन्ति क्रव्यादाःकृमयोभवन्ति। परस्परादिनः परस्परं अदन्तिते परस्परादिनः अन्त्यस्त्रीनिषेविणः परस्परादीनां स्त्रीणां निषेविणः प्रेत्य हिंस्राभवन्ति॥ ५९॥

**संयोगंपतितैर्गत्वा परस्यैव च योषितम्॥ अपहृत्य च विप्रस्वंभवति ब्रह्मराक्षसः॥ ६०॥**

( २ ) **सर्वज्ञनारायणः**। परयोषिद्गमने ब्रह्मराक्षसतापि फलम्॥ ६०॥

( ३ ) **कुल्लूकः**। यावत्कालीनपतितसंयोगेन पतितोभवति तावन्तंकालंब्रह्महादिभिश्चतुर्भिः सह संसर्गंकृत्वा परेषांच स्त्रियंगत्वा ब्राह्मणसुवर्णादन्यदपहृत्यैकैकपापकारेण ब्रह्मराक्षसोभूतविशेषोभवति॥ ६०॥

( ४ ) **राघवानन्दः**। किंच संयोगमिति। अपेति ब्राह्मणादिसंबन्धेन योषितं भोग्यतया। गत्वा चातुर्वर्ण्योब्रह्मराक्षसीभवतीत्यन्वयः॥ ६०॥

( ५ ) **नन्दनः**। पतितसंसर्गिणांयोन्यन्तरप्राप्तिमाह संयोगंपतितैर्गत्वेति॥ ६०॥

**मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः॥ विविधानि च रत्नानि जायते हेमकर्तृषु॥ ६१॥**

( १ ) **मेधातिथिः**। हेमकर्तारःपक्षिणः॥ ६१॥

( २ ) **सर्वज्ञनारायणः**। मणयोमाणिक्याद्याःस्थलजाः। रत्नान्युत्तमद्रव्याणि। हेमकर्तृषु स्वर्णकारेषु। हेमकर्ता पक्षिविशेषइत्यन्ये॥ ६१॥

( ३ ) **कुल्लूकः**। मणीन्माणिक्यादीनि मुक्ताविद्रुमौ च नानाविधानि च रत्नानि वैदूर्यहीरकादीनि लोभेन हृत्वा स्मीयभ्रमाद्विना सुवर्णकारयोनौ जायते केचित्तु हेमकारपक्षिणमाचक्षते॥ ६१॥

( ४ ) **राघवानन्दः**। किंच मणीति। हेमकर्तृषु सुवर्णकारइति ख्यातेषु॥ ६१॥

( ६ ) **रामचन्द्रः**। मण्यादीनां तस्करः हेमकर्तृषु सुवर्णकारगृहेषु जायते पक्षिविशेषेषु वाजायते॥ ६१॥

धान्यंहृत्वा भवत्याखुः कांस्यंहंसोजलंप्लवः॥ मधुदंशः पयः काकोरसंश्वा नकुलोघृतम्॥ ६२॥

( १ ) मेधातिथिः। आखुःमूषकः॥ ६२॥

( २ ) सर्वज्ञनारायणः। प्लवोजलकाकः। मधु हृत्वा दंशः। पयः क्षीरं। रसं पारदम्॥ ६२॥

( ३ ) कुल्लूकः। धान्यमपहृत्य मूषिकोभवति। कांस्यंहृत्वा हंसः। जलंहृत्वा प्लवाख्यः पक्षी। माक्षिकंहृत्वा दंशः। क्षीरंहृत्वा काकः विशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादिरसंहृत्वा श्वा भवति। घृतंहृत्वा नकुलोभवति॥ ६२॥

( ४ ) राघवानन्दः। धान्यादिदशापहृत्या ख्वादिदशजातयः स्युरित्याह धान्यमितिषड्भिः। कांस्यं कांस्यपात्रादि। मधुदंशः मक्षिकापयोदुग्धम्। रसमाम्रादिजम्॥ ६२॥

( ५ ) नन्दनः। कांस्यंहृत्वा हंसोभवति एवमुत्तरत्रान्वयः। पयःदुग्धं। रसंगुडादिकम्॥ ६२॥

( ६ ) रामचन्द्रः। धान्यंहृत्वा आखुर्भवति। कांस्यं हृत्वा हंसः। जलं हृत्वा प्लवः जलकुक्कुटः। रसं पारदं हृत्वा श्वा भवति। घृतं हृत्वा नकुलोभवति॥ ६२॥

मांसंगृध्रोवपांमद्गुस्तैलंतैलपकः खगः॥ चीरीवाकस्तु लवणंबलाकाशकुनिर्दधि॥ ६३॥

( २ ) सर्वज्ञनारायणः। वपां मेदः। तैलपकः तैलपायिकाख्यः पक्षी। चीरवाकोटिण्टीकीटः॥ ६३॥

( ३ ) कुल्लूकः। मांसंहृत्वा गृध्रोभवति। वपांहृत्वा मद्गुनामाजलचरोभवति। तैलंहृत्वा तैलपायिकाख्यः पक्षी। लवणंहृत्वा चीराख्यउच्चैस्वरः कीटः। दधिहृत्वा बलाकाख्यः पक्षी जायते॥ ६३॥

( ४ ) राघवनान्दः। वपामितिपाठे वपा हृदयस्थश्वेतमांसविशेषः। मद्गुः बकविशेषः। चीरीवाकः उच्चैःस्वरः कीटः। बलाकाशकुनिः दधिहृत्॥ ६३॥

( ५ ) नन्दनः। हृत्वेत्यनुषङ्गः तैलपकः खगः चिरीवाकः॥ ६३॥

( ६ ) रामचन्द्रः। वसांहृत्वा मद्गुः॥ मद्गुः कारण्डवःप्लवइत्यमरः। तैलंहृत्वा तैलपायिकाख्यः पक्षी। चीरी लवणहारकः झिल्लीकीटकः। दधि हृत्वा दात्यूहपक्षिणी बलाका॥ ६३॥

कौशेयंतित्तिरिर्हृत्वा क्षौमंहृत्वा तु दर्दुरः॥ कार्पासतान्तवंक्रौञ्चोगोधागांवाग्गुदोगुडम्॥ ६४॥

( १ ) मेधातिथिः। दर्दुरःमंडूकस्तोकः॥ ६४॥

( २ ) सर्वज्ञनारायणः। क्षौमं दुकूलम्। कार्पासकं कार्पासविधानं तान्तवं पटादि। वाग्गुदः पक्षिविशेषः॥ ६४॥

( ३ ) कुल्लूकः। कीटकोशनिर्मितवस्त्रंहृत्वा तित्तिरिर्नामा पक्षी भवति। क्षौमकृतंवस्त्रंहृत्वा मण्डूकः। कार्पासमयंपटंहृत्वा क्रौञ्चाख्यःप्राणी। गांहृत्वा गोधा। गुडंहृत्वा वाग्गुदनामा शकुनिर्भवति॥ ६४॥

( ४ ) राघवानन्दः। कौशेयं कृमिकोशोत्थंवस्त्रम् वाग्गुदस्तन्नामा शकुनीरात्रिचरः॥ ६४॥

( ५ ) नन्दनः। दर्दुरोमण्डूकः॥ ६४॥

( ६ ) रामचन्द्रः। दर्दुरः भेकः। गां हृत्वा गोधा। गुडं हृत्वा वाग्गुदोबकः॥ ६४॥

छुच्छुन्दरिः शुभान्गन्धान्पत्रशाकन्तु बर्हिणः॥ श्वावित्कृतान्नंविविधमकृतान्नंतु शल्यकः॥ ६५॥

( १ ) मेधातिथिः। बर्हिणोमयूराः॥ ६५॥

( २ ) सर्वज्ञनारायणः । पत्रशाकं पत्ररूपंशाकम् । बर्हिणोमयूराः ॥ ६५ ॥

( ३ ) कुल्लूकः । सुगन्धिद्रव्याणि कस्तूर्यादीनि हृत्वा छुच्छुन्दरिर्भवति । वास्तूकादिपत्रशाकंहृत्वा मयूरः । सिद्धान्नमोदनसक्तादिनानाप्रकारकंहृत्वा श्वाविधाख्यः प्राणी । अकृतान्नंतु व्रीहियवादिकंहृत्वा शल्यकसंज्ञोजायते ॥ ६५ ॥

( ४ ) राघवानन्दः । छुछुन्दरिदुर्गन्धिमूषकविशेषः । बर्हिणोमयूराः श्वावित्सेधा । कृतान्नं सिद्धान्नम् ॥ ६५ ॥

( ६ ) रामचन्द्रः । कृतान्नं हृत्वा श्वावित् । अकृतान्नंतु शल्यकः ॥ ६५ ॥

**बकोभवति हृत्वाग्निंगृहकारीह्युपस्करम् ॥ रक्तानि हृत्वा वासांसि जायते जीवजीवकः॥६६॥**

( २ ) सर्वज्ञनारायणः । गृहकारी पक्षिभेदः ॥ ६६ ॥

( ३ ) कुल्लूकः । अग्निंहृत्वा बकाख्यः पक्षी जायते । गृहोपयोगिशूर्पमुसलादिहृत्वा भित्त्यादिषु मृत्तिकादिगृहकारी सपक्षः कीटोभवति । कुसुम्भादिरक्तानि वासांसि हृत्वा चकोराख्यः पक्षीजायते ॥ ६६ ॥

( ४ ) राघवानन्दः । गृहकारी भूमौ खननेन छिद्रंकृत्वा तत्र कीटान्तरप्रवेशकः । उपस्करं गृहोपयोगिशूर्पमार्जन्यादि । जीवजीवकः चकोरः ॥ ६६ ॥

( ५ ) नन्दनः । उपस्करंगृहोपकरणम् ॥ ६६ ॥

( ६ ) रामचन्द्रः । उपस्करं शूर्पमुसलादि हृत्वा गृहकारी पक्षिविशेषः ॥ ६६ ॥

**वृकोमृगेभंव्याघ्रोऽश्वंफलमूलन्तु मर्कटः ॥ स्त्रीमृक्षः स्तोककोवारियानान्युष्ट्रः पशूनजः ॥ ६७ ॥**

( १ ) मेधातिथिः । जलंप्लवइत्यत्रपानार्थमुदकंज्ञेयं स्तोककोवारीत्यत्रधान्यसेकाद्यर्थं रसश्चाद्यंरसमाहुर्यदिवातिरिक्तौषधादिद्रष्टव्यम् ॥ ६७ ॥

( २ ) सर्वज्ञनारायणः । मृगेभं मृगमिभंच । स्तोककः चातकः ॥ ६७ ॥

( ३ ) कुल्लूकः । मृगंहस्तिनंवा हृत्वा वृकाख्योहिंस्रः पशुर्भवति । घोटकंहृत्वा व्याघ्रोभवति । फलमूलंहृत्वा मर्कटोभवति । स्त्रियंहृत्वा भल्लूकोभवति । पानार्थमुदकंहृत्वा चातकाख्यः पक्षी । यानानि शकटादीनि हृत्वोष्ट्रोभवति । पशूनुक्तेतरान्हृत्वा छागोभवति ॥ ६७ ॥

( ४ ) राघवानन्दः । वृकः खल्पव्याघ्रः । इभं हस्तिनम् । मर्कटः शाखामृगः । ऋक्षोभल्लूकः । चातकः स्तोककः । वारि पानार्थम् ॥ ६७ ॥

( ५ ) नन्दनः । मृगाख्यइभोमृगेभः मृगोमृगजातिविशेषः अथवा मृगश्चेभाश्चेति मृगेभं । स्तोककः चातकः । अत्र वारिशब्देन पानीयमभिप्रेतम् ॥ ६७ ॥

( ६ ) रामचन्द्रः । ऋक्षः प्रसिद्धः । अजः छागः । उष्ट्रानुष्ट्रः ॥ ६७ ॥

**यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ॥ अवश्यंयाति तिर्यक्त्वंजग्ध्वा चैवाहुतंहविः ॥ ६८ ॥**

( १ ) मेधातिथिः । नात्रतिरोहितमिवकिंचिदस्ति ॥ ६८ ॥ ६९ ॥

( २ ) सर्वज्ञनारायणः । अपहृत्यअपह्नवेन हृत्वा अहुतंहविः पुरोडाशादि यागात्प्राक् ॥ ६८ ॥

( ६७ ) स्तोकको–चातको (ट)

( ३ ) कुल्लूकः । यत्किंचिदसारमपि परद्रव्यमिच्छातोमानुषोऽपहृत्य पुरोडाशादिकंतु हविरहुतंभुक्त्वा निश्चितंतिर्यक्त्वंप्राप्नोति ॥ ६८ ॥

( ४ ) राघवानन्दः । किंबहुनेत्याह यद्वेति । आहुतंदेवार्थंच संचितं हविः पुरोडाशादि ॥ ६८ ॥

( ५ ) नन्दनः । अहुतंहोष्यमाणम् ॥ ६८ ॥

( ६ ) रामचन्द्रः । यद्वातद्वा परद्रव्यमपहृत्य तिर्यक्त्वं याति । अहुतं हविश्च जग्ध्वा ॥ ६८ ॥

**स्त्रियोप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ॥ एतेषामेव जन्तूनांभार्यात्वमुपयान्ति ताः ॥ ६९ ॥**

( २ ) सर्वज्ञनारायणः । एतेन कल्पेन एवंविधानेन वस्तूनीत्यर्थः । दस्यूनां शबरादीनाम् ॥ ६९ ॥

( ३ ) कुल्लूकः । स्त्रियोप्येतेन प्रकारेणेच्छातः परस्वमपहृत्य पापंप्राप्नुवन्ति तेन पापेनोक्तानांजन्तूनांभार्यात्वंप्रतिपद्यन्ते ॥ ६९ ॥

( ४ ) राघवानन्दः । किंच स्त्रियइति । कल्पेनप्रकारेण । अन्यथैषांस्त्रीणामाकस्मिकत्वापत्तिः । भार्यात्वं तद्रेतोधारित्वम् ॥ ६९ ॥

( ६ ) रामचन्द्रः । स्त्रियं हृत्वा एतेनकुल्येन यातेन दोषंआप्नुयुः । ताः स्त्रियः हृत्वा एतेषांजन्तूनांपत्नीत्वं यान्ति ६९ ॥

**स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युतावर्णाह्यनापदि ॥ पापान्संसृत्य संसारान्प्रेष्यतांयान्ति शत्रुषु ॥७० ॥**

( १ ) मेधातिथिः । ब्राह्मणोध्यापनादिजीविकाकर्मत्यागेन यदिक्षत्रियादिवृत्तिमुपजीवेत् एवंक्षत्रियादयः स्वकर्मच्युताः पापान्संसारान् तिर्यग्योनीरनुभूय मनुष्यत्वे जातादस्युषु चौरादिहिंस्रादिषु भृत्यभावंप्राप्नुवन्ति । अनापदीत्यनुवादः आपदि विहितत्वाद्दोषाभावः ॥ ७० ॥

( ३ ) कुल्लूकः । एवंनिषिद्धाचरणफलान्यभिधायाधुना विहिताकरणफलविपाकमाह । स्वेभ्यइति ब्राह्मणादयश्चत्वारोवर्णाआपदंविना पञ्चयज्ञादिकर्मत्यागिनोवक्ष्यमाणाः कुत्सितायोनीः प्राप्य ततोजन्मान्तरे शत्रुदासत्वंप्राप्नुवन्ति ॥७०॥

( ४ ) राघवानन्दः । अधुना धर्मस्यासेवनेनचेत्येतद्विवृण्वंस्तज्जन्यागतीराह स्वेभ्यइति । च्युताःस्वेच्छया अनापद्यपि । संसृत्य भुक्त्वा । प्रेष्यतां दासत्वम् । दस्युषु संकरजातिषु जाताःसन्तइत्यर्थः ॥ ७० ॥

( ५ ) नन्दनः । एवंप्रतिषिद्धसेवायांविपाकउक्तः अधुना विहिताकरणविपाकमाह स्वेभ्यस्वेभ्यस्तुकर्मभ्येति । नप्रेततांपिशाचतां दस्युषु कलिंगसिंहादिषु दस्युदेशेषु ॥ ७० ॥

( ६ ) रामचन्द्रः । स्वेभ्यः कर्मभ्यः च्युताः वर्णाः ब्राह्मणादयः पापान् संसारान् जन्ममरणादीन् संसृत्य प्राप्य दस्युषु शबरेषु प्रेष्यतां यान्ति ॥ ७० ॥

**वान्ताश्युल्कामुखः प्रेतोविप्रोधर्मात्स्वकाच्च्युतः ॥ अमेध्यकुणपाशीच क्षत्रियः कटपूतनः ॥७१॥**

( १ ) मेधातिथिः । स्वकर्मच्युतानांपापगतयःप्रदर्श्यन्ते वान्तमश्नाति उल्कयाचास्यंमुखंदह्यते । कुणपःशवशरीरं

---

( ७० ) यांतिशत्रुषु=यांतिदस्युषु ( न, ब, भ, ल, र, नं० )

( ७० ) प्रेष्यतां = प्रेततां ( नं )

कूटपूतनः कुत्सितगंधानासिकास्यभवति कटपूतनइतिवापाठः । प्रकटःपूतनोनामपिशाचादिः सतुकश्चिदृदृश्योभूतविशेषः श्मशानिकभूमिसेवी ॥ ७१ ॥

( २ ) **सर्वज्ञनारायणः** । वांताशीत्यादि बहुतरस्वधर्मत्यागविषयम् । च्युतःस्वधर्मात् । अमेध्यकुणपोमानुषादिभक्ष्यशवः । कटपूतनइति प्रेतभेदनाम ॥ ७१ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणः स्वकर्मभ्रष्टश्छर्दितभुक् ज्वालामुखः प्रेतविशेषोजायते क्षत्रियः पुनर्नष्टकर्मापुरीषशवभोजी कटपूतनाख्यः प्रेतविशेषोभवति ॥ ७१ ॥

( ४ ) **राघवानन्दः** । तथैव चतुरोवर्णानांहारनामभेदेनाह वान्ताशीतिद्वाभ्याम् । विच्युतइत्यनुवादः । वान्ताशी-वान्तान्नभोजी । नाम्नोल्कामुखः । एवं कुणपाशी कुणपः शवः तदाशी पुरीषगन्धभोजी वा । कटपूतनएतन्नामा ॥ ७१ ॥

( ५ ) **नन्दनः** । च्युतः कर्मभ्रष्टोविप्रउल्कामुखोनामप्रेतोजायते तस्य तदानीं भोज्यनिर्देशोवान्ताशीति । स्वकर्मच्युतः क्षत्रियः कटपूतनोनामप्रेतोभवति तस्यतदानींभोज्यनिर्देशोऽमेध्यकुणपाशीति ॥ ७१ ॥

( ६ ) **रामचन्द्रः** । वान्ताशी उल्कामुखोनाम प्रेतोभवति । च पुनः क्षत्रियः अमेध्यं कुणपं अश्नातीति कुणपः शवः कटपूतनः प्रेतभेदः कुत्सितगन्धनासिकोभवति ॥ ७१ ॥

**मैत्राक्षज्योतिकः प्रेतोवैश्योभवति पूयभुक् ॥ चैलाशकश्च भवति शूद्रोधर्मात्स्वकाच्च्युतः॥ ७२ ॥**

( १ ) **मेधातिथिः** । मैत्राक्षिज्योतिकाइति शब्दान्तरं पिशाचवचनंपूर्ववत् । अथवामैत्राख्येज्योतिर्दृष्टावपीतिमैत्रमंगंपायुःतदक्षिविवरंछिद्रम् । अन्येतूलूकमाहुः । मैत्रमादित्यलोकः अक्षंज्योतिः ऐन्द्रियकंदर्शनंसह्यादित्याल्लोके न पश्यति ॥ ७२ ॥

( २ ) **सर्वज्ञनारायणः** । मैत्र्यार्थाख्योज्योतिषिकइतिप्रेतनाम । चैलाशकः चेलकीटकः ॥ ७२ ॥

( ३ ) **कुल्लूकः** । वैश्योभ्रष्टकर्मा मैत्राक्षज्योतिकनामा पूयभक्षः प्रेतोजन्मान्तरेभवति । मित्रदेवताकत्वान्मैत्रः पायुस्तदेवाक्षंकर्मेन्द्रियंतत्र ज्योतिर्यस्य समैत्राक्षज्योतिकः पृषोदरादित्वात् ज्योतिषः षकारलोपः । शूद्रः पुनर्भ्रष्टकर्माचैलाशकाख्यः प्रेतोभवति । चेलंवस्त्रंतत्संबन्धिनींयूकामश्नातीति चैलाशकः । गोविन्दराजस्तु चेलाशकाख्यः कीटश्चैलइत्युच्यते तद्भक्षश्च सभवतीत्याह तदयुक्तं प्रेताख्यप्राणिविशेषप्रकरणात् ॥ ७२ ॥

( ४ ) **राघवानन्दः** । मैत्राख्यज्योतिकमिति । शब्दान्तरं पिशाचवाचीतिमेधातिथिः । मैत्रं मित्रदेवताधिष्ठितंपाय्विन्द्रियं तत्रैव ज्योतिर्ज्ञानं यस्यसइति अतएव पूयभुक् । पूयपदं पुरीषपरं तत्र तस्यैव संभाव्यमाणत्वात् चेलशकः चेलसंबन्धिनी यूकामश्नातीति तदाख्यां गतः ॥ ७२ ॥

( ५ ) **नन्दनः** । स्वकर्मच्युतोवैश्योमैत्राक्षिद्योतनोनाम प्रेतोभवति तस्य तदानीं भोज्यनिर्देशः पूयभुगिति । चैलाशकोनामकश्चित्प्रेतविशेषः तस्येदानीं भोज्यनिर्देशोनाम्नैव गम्यतइति नपृथगुक्तः चैलमश्नातीति चैलाशकः ॥ ७२ ॥

( ६ ) **रामचन्द्रः** । वैश्यः मैत्राक्षज्योतिकसंज्ञःपूयभुक्भवति । शूद्रःस्वकाद्धर्मच्युतःचैलाशकः चेलकीटः भवति ॥७२॥

---

( ७१ ) कटपूतनः=कूटपूतनः ( मे० )

( ७२ ) मैत्राक्षज्योतिकः=मैत्राक्षिद्योतनः ( नं )

**यथा यथा निषेवन्ते विषयान् विषयात्मकाः ॥ तथा तथा कुशलता तेषांतेषूपजायते ॥ ७३ ॥**

( १ ) **मेधातिथिः** । भेदग्रहगृहीतानांपुत्रदाराभिष्वंगधनादिलोभेविषयसुखगंधमात्मैकत्वपरिपन्थिविद्याप्रतिपक्ष-भूतंनिवर्तयितुं संसारस्वरूपंमानुष्यकंजन्मयथास्थितमनूद्यते । सर्वस्य प्रसिद्धंयथायथाविषयेष्वभ्यासेनप्रवर्तन्ते । विषया-त्मिकाविषयलालसाः आत्मशब्देनप्रवृत्तस्यस्यात्तत्स्वभावतयैव भवतीत्याहुः । यस्तु कथंचित्सहितंभुंक्ते तस्य भोगादिना-तत्स्मृत्युपपत्तावभिलाषोजायते । यस्त्वत्यन्तमेवाधरः सतद्भावनया तदात्मन्वेचसंपद्यते । तदिदमाह तथातथाकुशलतेति कुशलतातदेकरसीभावोऽतश्च सन शक्नोतिविषयान्परिहर्तुं ईदृश्येव प्रवृत्तिरशिष्टाप्रतिषिद्धेष्वपि । स्वदारगमनादिष्वाग-मार्जितद्रव्योपपादकेन भोज्याविशेषेष्वपि प्रतिषिद्धा ॥ ७३ ॥

( २ ) **सर्वज्ञनारायणः** । विषयात्मकाः विषयप्रवणबुद्धयः । कुशलता दृढसंस्कारता । तथा जरसातुराअपि वि-षयरागिणएव भवन्तीत्यर्थः ॥ ७३ ॥

( ३ ) **कुल्लूकः** । यथा यथा शब्दादिविषयान्विषयलोलुपानि तान्तंसेवन्ते तथा तथा विषयेष्वेव तेषांप्रावीण्यंभव-तीति ततः ॥ ७३ ॥

( ४ ) **राघवानन्दः** । इन्द्रियाणांप्रसंगेनेत्युक्तं तदुचितगतिजानि दुःखान्याह यथेतिसप्तभिः । विषयात्मका विषयैकदृष्टयः । कुशलता निपुणता ॥ ७३ ॥

( ५ ) **नन्दनः** । पुनः कर्मविपाकमेवसंक्षेपेणाह यथायथानिषेवन्तइति । तेषु विषयेषु कुशलता लालसता ॥ ७३ ॥

( ६ ) **रामचन्द्रः** । तथा कुशलता दृढसंस्कारता तेषां विषयात्मनां तेषु विषयेषु वा तिर्यगादिषु वा जायते ॥ ७३ ॥

**तेऽभ्यासात्कर्मणांतेषांपापानामल्पबुद्धयः ॥ संप्राप्नुवन्ति दुःखानि तासु तास्विहयोनिषु ॥ ७४ ॥**

( १ ) **मेधातिथिः** । ततश्चतेषांपापानांप्रतिषिद्धानांकर्मणामभ्यासान्निन्दितकर्माभ्यासे पतनमिति तद्भवतुदुःखानिप-श्यन्ति । तासु तासु कृमिकीटादियोनिषु ॥ ७४ ॥

( २ ) **सर्वज्ञनारायणः** । एतदाह तेभ्यासादिति । कर्मणांतेषां विषयासादितकर्मरूपाणाम् ॥ ७४ ॥

( ३ ) **कुल्लूकः** । तेऽल्पधियस्तेषांनिबद्धविषयोपभोगानामभ्यासतारतम्यात्तासु तासु गर्हितगर्हिततरगर्हिततमासु तिर्यगादियोनिषु दुःखमनुभवन्ति ॥ ७४ ॥

( ४ ) **राघवानन्दः** । अतएवाह तेऽभ्यासादिति । अभ्यासोहिकर्मणां कौशलमावहतीति न्यायः सूचितः । योनिषु प्रेतनारकादिदेहेषु । अनेन विषयसंगिनां स्वधर्मच्युतिरावश्यकीतिसूचितं ॥ ७४ ॥

( ५ ) **नन्दनः** । अभ्यासात्पुनः पुनः करणात् अनेनसकृदापद्यं मत्या च कृतंपापंन दुःखप्राप्तिहेतुरितिसूचितम् ॥ ७४ ॥

( ६ ) **रामचन्द्रः** । ते तेषां पापानां कर्मणां अभ्यासात् । अल्पबुद्धयः इहलोके तासु तासु योनिषु जन्मानि प्राप्नु-वन्ति ॥ ७४ ॥

**तामिस्रादिषु चोग्रेषु नरकेषु विवर्तनम् ॥ असिपत्रवनादीनि बन्धनच्छेदनानि च ॥ ७५ ॥**

( १ ) **मेधातिथिः** । तामिस्रमन्धतामिस्रमित्याद्याः प्रागुक्तानरकास्तत्रविवर्तनमेकेनपार्श्वेनासित्वापार्श्वान्तरेणाव-

( ७४ ) तेऽभ्यासात्=अभ्यासात् ( नं० )

र्तनं अबद्धस्यौत्तानस्यवाखड्गधारानिशितपत्रैर्वृक्षैर्बन्धनं भूमिष्ठैर्वापत्रैरेव कदलीदलखंडवत् । तथाविधैर्मैत्रीदुष्कृतिना-मंगच्छेदप्राप्तिः ॥ ७५ ॥

( २ ) सर्वज्ञनारायणः । विवर्तनं परिवर्तनम् । बन्धनमितिबध्यन्तेस्मिन्नित्यधिकरणे ल्युट् । एवंछेदनम् ॥ ७५ ॥

( ३ ) कुल्लूकः । संप्राप्नुवन्तीति पूर्वश्लोकस्थमिहोत्तरत्रचानुवर्तते तामिस्रादिषु चतुर्थाध्यायोक्तेषु घोरेषु नरकेषु-दुःखानुभवंप्राप्नुवन्ति तथाऽसिपत्रवनादीनि बन्धनच्छेदनात्मकान्नरकान्प्राप्नुवन्ति ॥ ७५ ॥

( ४ ) राघवानन्दः । तामिस्रादिषु । चतुर्थाध्यायोक्तेषु दुःखप्रायासुदुःखबहुलेष्वेकविंशतिषु । याज्ञवल्क्योप्याह ॥ तामिस्रं लोहशंकुं च महारौरवशाल्मली ॥ रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ संघातं लोहितोदं च सविषं संप्रता-पनम् । महानरककाकोलं संजीवनमहापथम् ॥ अवीचिमन्धतामिस्रं कुम्भीपाकंचरौरवम् ॥ असिपत्रवनं चैव तपनं चैकविंशकमिति विवर्तनमनिशंजन्म ॥ ७५ ॥

( ६ ) रामचन्द्रः । तामिस्रेति विवर्तनं ॥ ७५ ॥

विविधाश्चैव सपीडाः काकोलूकैश्च भक्षणम् ॥ करम्भवालुकातापान्कुंभीपाकांश्च दारुणान् ॥ ७६ ॥

( १ ) मेधातिथिः । करंभः कर्दमः । कुंभीषुप्रक्षिप्तास्तेहितापेनाऽऽग्नेयेनान्नादिवत्पच्यन्ते ॥ ७६ ॥

( २ ) सर्वज्ञनारायणः । कुम्भीस्थतैलपाकः कुम्भीपाकः ॥ ७६ ॥

( ३ ) कुल्लूकः । विविधपीडनंकाकाद्यैर्भक्षणं तथा तप्तवालूकादीन्कुम्भीपाकादींश्च नरकान्दारुणान्प्राप्नुवन्ति ॥ ७६ ॥

( ४ ) राघवानन्दः । करंभवालुकातापान् सुतप्तवालुकाजनिततापान् ॥ ७६ ॥

( ५ ) नन्दनः । द्वाभ्यांनरकप्राप्तिरुक्ता ॥ ७६ ॥

( ६ ) रामचन्द्रः । कुम्भीस्थतैलपाकः ॥ ७६ ॥

संभवांश्च वियोनीषु दुःखप्रायासु नित्यशः ॥ शीतातपाभिघातांश्चविविधानि भयानि च ॥ ७७ ॥

( १ ) मेधातिथिः । वियोनयः तिर्यक्प्रेतपिशाचादयः । तत्रसंभवोजन्म दुःखबहुलासु ॥ ७७ ॥

( २ ) सर्वज्ञनारायणः । अभिघातः पीडा ॥ ७७ ॥

( ३ ) कुल्लूकः । संभवान् तिर्यगादिजातिषु नित्यंदुःखबहुलासूत्पत्तिंप्राप्नुवन्ति । तत्र शीतातपादिपीडनादिना नाप्रका-राणि च प्राप्नुवन्ति ॥ ७७ ॥

( ४ ) राघवानन्दः । वियोनिषुकुम्भ्यादिषु ॥ ७७ ॥

असकृद्गर्भवासेषु वासंजन्म च दारुणम् ॥ बन्धनानि च काष्ठानि परप्रेष्यत्वमेव च ॥ ७८ ॥

( १ ) मेधातिथिः । स्पष्टार्थः ॥ ७८ ॥

( ३ ) कुल्लूकः । पुनः पुनर्गर्भस्थानेषु वासः समुत्पत्तिच योनियन्त्रादिभिर्दुःखावहां उत्पन्नाश्च शृङ्खलादिभिर्बन्ध-नादिपीडामनुभवन्ति परदासत्वंच प्राप्नुवन्ति ॥ ७८ ॥

( ४ ) राघवानन्दः । असकृद्गर्भवासेषु भेकादिषु वासं वसतिम् ॥ ७८ ॥

बन्धुप्रियवियोगांश्च संवासंचैव दुर्जनैः ॥ द्रव्यार्जनंच नाशंच मित्रामित्रस्य चार्जनम् ॥ ७९ ॥

( १ ) मेधातिथिः । एतावप्युक्तार्थौ ॥ ७९ ॥ ८० ॥

( ३ ) **कुल्लूकः** । बान्धवैः सुहृद्भिः सह वियोगान् दुर्जनैश्च सहैकत्रावस्थानं धनार्जनप्रयासंधनविनाशं कष्टेन मित्रार्जनंशत्रुप्रादुर्भावंप्राप्नुवन्तिच ॥ ७९ ॥

( ४ ) **राघवानन्दः** । सहि दुर्जनैः सह कृतोतीव दुःखदः । नाशं द्रव्यस्येतिशेषः ॥ ७९ ॥

**जरांचैवाप्रतीकारांव्याधिभिश्चोपपीडनम् ॥ क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥८०॥**

( २ ) **सर्वज्ञनारायणः** । क्लेशान् द्वेषमोहान् मृत्युंच प्राप्नुवन्तीत्यन्वयः ॥ ८० ॥

( ३ ) **कुल्लूकः** । जरांचाविद्यमानप्रतीकारांव्याधिभिश्चोपपीडनंक्षुत्पिपासादिना च नानाप्रकारान्क्लेशान्मृत्युंच दुर्वारंप्राप्नुवन्ति ॥ ८० ॥

( ४ ) **राघवानन्दः** । क्लेशान् रागादीन् । तापान् आध्यात्मिकाधिदैविकाधिभौतिकरूपान् दुःखहेतून् । प्राप्नुवन्तीत्यनुषज्यते ॥ ८० ॥

( ५ ) **नन्दनः** । संभवांश्चवियोनिष्वित्यादिचतुर्भिःश्लोकैः पापविशेषैर्मर्त्यलोके दुःखप्राप्तिरुक्तेत्यनुसन्धेयं अत्र प्राप्नोतीत्यनुवर्तते ॥ ८० ॥

( ६ ) **रामचन्द्रः** । क्लेशान् द्वेषमोहादीन् ॥ ८० ॥

**यादृशेन तु भावेन यद्यत्कर्मनिषेवते ॥ तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ८१ ॥**

( १ ) **मेधातिथिः** । सात्त्विकेन राजसेन वा भावेन यद्यत्कर्मनिषेवते सात्त्विकंराजसंतामसंवाशरीरेण तादृशेनेत्यर्थः । सत्त्वबहुलेनरजोबहुलेन तमोबहुलेन वा तत्तत्फलमुपाश्नुते । सात्त्विकंराजसंतामसंवा यतश्चैतदेवंरजस्तमोबहुलात्कर्मणोऽकुशलसंकल्पहेतोरनिष्टफलप्राप्तिः । अतस्तत्परिवर्जनेन कुशलसंकल्पकर्मणाभवितव्यम् ॥ ८१ ॥

( २ ) **सर्वज्ञनारायणः** । यादृशेनभावेन सत्त्वाद्युत्कटेन । तादृशेन देवादिशरीरेण ॥ ८१ ॥

( ३ ) **कुल्लूकः** । यथा विधेन सात्त्विकेन राजसेन तामसेन वा चेतसा यद्यत्कर्मस्नानदानयोगाद्यनुतिष्ठति तादृशेनैव शरीरेण सात्त्विकेन रजोधिकेन तमोधिकेन वा तत्तत्स्नानादिफलमुपभुङ्क्ते ॥ ८१ ॥

( ४ ) **राघवानन्दः** । भावेन मनोवृत्तिरूपेण । यादृशेन सात्त्विकादिरूपेण । तादृशेन सात्विकभेदभिन्नेन । देवादिदेहेन । तदुक्तं योर्चितः प्रतिगृह्णाति योर्चितंच प्रयच्छतीति ॥ ८१ ॥

( ५ ) **नन्दनः** । भावेन मनसा ॥ ८१ ॥

( ६ ) **रामचन्द्रः** । यादृशेन भावेन सत्त्वादियुक्तेन यद्यत्कर्म निषेवते तादृशेन शरीरेण सत्त्वादियुक्तेन तत्तत्फलं उपाश्नुते ॥ ८१ ॥

**एषसर्वः समुद्दिष्टः कर्मणांवः फलोदयः ॥ नैःश्रेयसकरंकर्म विप्रस्येदंनिबोधत ॥ ८२ ॥**

( १ ) **मेधातिथिः** । प्रतिषिद्धानांच कर्मणांयावत्फलोत्पत्तिस्तानिसमुपदिष्टानि ततोवर्तितव्यम् । यतोदुःखानुबन्धीविषयसुखोपभोगोऽतस्ततोनिवर्तन्ते । श्रेयसे कर्मविधौ मोक्षोपाये वक्ष्यमाणविद्याकाण्डउपदिष्टे स्थातव्यंतदिदानींवक्ष्यामः ॥ ८२ ॥

( २ ) **सर्वज्ञनारायणः** । नैःश्रेयसकरं मोक्षहेतुम् ॥ ८२ ॥

( ३ ) **कुल्लूकः** । एषयुष्माकंविहितप्रतिषिद्धानांकर्मणांसर्वः फलोदयउक्तः इदानींब्राह्मणस्य निःश्रेयसाय मोक्षाय हितंकर्मानुष्ठानमिदंश्रृणुत ॥ ८२ ॥

( ४ ) **राघवानन्दः** । वैराग्यार्थमुक्तेन्द्रियप्रसक्तिजनितागतीरूपसंहरन्मोक्षोपयोगिः कर्म प्रतिजानीते एषइतिपञ्चविंशत्या । नैःश्रेयसं निःश्रेयसस्य मोक्षस्य साधनम् ॥ ८२ ॥

( ५ ) **नन्दनः** । श्रेयः पुरुषार्थः नितरांश्रेयोनिश्रेयसंतत्रभवंच नैश्रेयसं अत्र पूर्वोक्तेषु श्रेयस्कारेष्वकर्मसु प्रकृष्टतरमित्यर्थः । विप्रग्रहणं क्षत्रियवैश्ययोरप्युपलक्षणार्थम् ॥ ८२ ॥

( ६ ) **रामचन्द्रः** । नैःश्रेयसं निःश्रेयसः भावः नैःश्रेयसं तं मोक्षसाधनम् ॥ ८२ ॥

**वेदाभ्यासस्तपोज्ञानमिन्द्रियाणांच संयमः ॥ अहिंसा गुरुसेवा च निःश्रेयसकरंपरम् ॥ ८३ ॥**

( १ ) **मेधातिथिः** । निःश्रेयसशब्देन नपुनःपुरुषार्थसिद्धिरुच्यते । अपितु निश्चितसुखदुःखानुबन्धःप्रीतिविशेषोपि । वेदाभ्यासादीनांतत्रतत्रोक्तानांपुनर्वचनमात्मज्ञानस्तुत्यर्थं ज्ञानंवेदार्थविषयं उक्तार्थान्यन्यानि पदानि ॥ ८३ ॥

( २ ) **सर्वज्ञनारायणः** । तपः प्राणायामादि । ज्ञानं ध्यानम् ॥ ८३ ॥

( ३) **कुल्लूकः** । उपनिषदादेर्वेदस्य ग्रन्थतोऽर्थतश्चावर्तनं तपः कृच्छ्रादि ज्ञानंब्रह्मविषयं इंद्रियजयोऽविहितहिंसावर्जनंगुरुशुश्रूषेत्येतत्प्रकृष्टंमोक्षसाधनम् ॥ ८३ ॥

( ४ ) **राघवानन्दः** । वेदाभ्यासोऽर्थतः शब्दतश्च । तपऐकाग्र्यं मनसः मनसश्चेन्द्रियाणांच एकाग्र्यं परमं तपइत्युक्तेः । ज्ञानं ज्ञानार्थंनित्यनैमित्तिककर्म देवयाजिनः श्रेयानात्मयाजीतिश्रुतेः । देवयाजिनः फलार्थं आत्मयाजी अन्तःकरणशुद्ध्यर्थं नित्यनैमित्तिककर्मानुष्ठाता श्रेष्ठः तथाच सूत्रम् । सर्वापेक्षा यज्ञादिश्रुतेरश्ववदिति । ज्ञाने जनयितव्ये सर्वेषां कर्मणामपि तज्जनकतयापेक्षेति तमेतंवेदानुवचनेनेत्यादिश्रुतेरित्यर्थः । संयमइत्युपलक्षणंनियमादेः । तथाच पतञ्जलेः सूत्रम् । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोष्टावङ्गानीति । परं वेदाभ्यासादिकर्मभ्यइत्यन्वयः ॥ ८३ ॥

( ५ ) **नन्दनः** । ज्ञानंधर्माधर्मज्ञानम् ॥ ८३ ॥

( ६ ) **रामचन्द्रः** । वेदानां अभ्यासः १ तपः दानानि २ ज्ञानं ध्यानं ३ इन्द्रियाणांच संयमः ४ अहिंसा ५ गुरुसेवाच ६ नैःश्रेयसकरंपरं ७ उत्कृष्टं ॥ ८३ ॥

**सर्वेषामपि चैतेषांशुभानामिह कर्मणाम् ॥ किंचिच्छ्रेयस्करतरंकर्मोक्तंपुरुषंप्रति ॥ ८४ ॥**

( २ ) **सर्वज्ञनारायणः** । सर्वेषामितिमुनीनांप्रश्नः । किंचिदिति किमित्यर्थे ॥ ८४ ॥

( ३ ) **कुल्लूकः** । सर्वेषामप्येतेषांवेदाभ्यासादीनांशुभकर्मणांमध्ये किंचित्कर्मातिशयेन मोक्षसाधनंस्यादिति वितर्के ऋषीणांजिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह ॥ ८४ ॥

( ४ ) **राघवानन्दः** । कर्मणआराद्दुपकारकत्वमित्युक्तेःस्यादाशङ्का ऋषीणाम् । शुभकर्मणां मध्ये कर्म पुरुषंप्रति न किंचित् जन्मप्रवाहानुच्छेदकत्वात् ॥ ८४ ॥

( ५ ) **नन्दनः** । किंस्यादितिपृच्छेदथचेदित्यर्थः ॥ ८४ ॥

---

( ८४ ) किंचिच्छ्रेयस्करतरं=किंस्याच्छ्रेयस्करतरं ( नं० )

( ६ ) **रामचन्द्रः** । सर्वेषां वेदाभ्यासादीनां कर्मणां पुरुषंप्रति किंनिश्रेयस करं परं कर्म सर्वेषां वेदानां कर्मफलस्वानि यमात्कर्मसाध्यफलानां भस्मीभूतदेहादानसंभवात् इहव्यतिरिक्तात्मदर्शनार्थे श्रोतव्योमंतव्योनिदिध्यासितव्य इत्यादिश्रुतीनामात्मज्ञानं मोक्षसाधनतरमपि कर्मैवचोत्तरमीमांसामतमाश्रित्य श्रेयस्तरमिति ॥ ८४ ॥

**सर्वेषामपि चैतेषामात्मज्ञानंपरंस्मृतम् ॥ तद्ध्यग्र्यंसर्वविद्यानांप्राप्यते ह्यमृतंततः ॥ ८५ ॥**

( १ ) **मेधातिथिः** । द्विविधमात्रज्ञानंदेहेंद्रियबुद्ध्यादिव्यतिरिक्तस्य कर्तृभोक्तृत्वोपपत्तिरूपस्य । अहंप्रत्ययप्रमेयतयाऽऽत्मनि विषयप्रतीत्यन्तर्गतस्य जीवक्षेत्रविज्ञानात्मादिपर्यायस्य शरीरनाशेप्यनष्टानांकर्मफलानामौर्ध्वदेहिकानांभोक्तृत्वज्ञानं अपरंसर्वस्य जगतोजन्मादीनांपरमात्मैककारणत्वेनित्यस्य सतएकस्याविद्यावासनोपहितनानारूपस्य तिर्यङ्मनुष्यादिष्वेकत्वदर्शनं । आत्मावाअरेद्रष्टव्यःश्रोतव्योमन्तव्योनिदिध्यासितव्यइत्येवमादिश्रुतिभिरुपदर्शितस्वरूपस्यज्ञानं । तत्रक्षेत्रज्ञपरिज्ञानंकर्मविधिषूपयुज्यते । असतिहिदेहादिव्यतिरिक्तेस्मिन्नौर्ध्वदेहिकानांभोक्तरि फलानांस्वर्गकामादिचोदनाअनर्थिकाः स्युरतस्तत्र नकश्चित्प्रवर्तेतातस्तत्कर्मानुष्ठानोपयोगि । यत्तुपरमात्मैकत्वज्ञानतिरोधानोपसेनाभ्याससामर्थ्येनोपपद्यमानंशुद्धबुद्धमुक्तानन्दनित्याविनश्वरभावस्यात्मनः प्रकाशनंतत्रेदमुपपद्यते ॥ तदग्र्यंसर्वविद्यानांप्राप्यतेह्यमृतंतत इति अमृतंततः गतेर्व्याप्तिततइतिविद्यानिर्देशआत्मविधायाः । क्षेत्रज्ञज्ञानंतु कर्मोपकारकत्वादमृतत्वायकल्पते । अतोवेदान्तोपदिष्टस्य समस्तस्य द्वैताद्वैतविषयस्य सदात्मनोदर्शनं तदात्मज्ञानमभिप्रेतम् ॥ ८५ ॥

( २ ) **सर्वज्ञनारायणः** । उत्तरं सर्वेषामिति । आत्मज्ञानं ध्यानम् । अग्र्यं मुख्यम् ॥ ८५ ॥

( ३ ) **कुल्लूकः** । एषांवेदाभ्यासादीनांसर्वेषामपि मध्यउपनिषदुक्तपरमार्थज्ञानंप्रकृष्टंस्मृतं यस्मात्सर्वविद्यानांप्रधानम् । अत्रैव हेतुमाह यतोमोक्षस्तस्मात्प्राप्यते ॥ ८५ ॥

( ४ ) **राघवानन्दः** । तत्रोत्तरं सर्वेषामिति । आत्मज्ञानं परंस्मृतमिति कर्मणोप्युद्देश्यंतं वेदेतिश्रुतेः ॥ सर्वंकर्माखिलमितिस्मृतेः ॥ तदग्र्यश्रेष्ठउपासनायाअप्युद्देश्यम् जानीहि तत्रहेतुः प्राप्यतेह्यमृतं तस्यैवसर्वपुंवाञ्छास्पदत्वात् ॥ ८५ ॥

( ५ ) **नन्दनः** । तच्छृणुतेत्याह सर्वेषामिति । पञ्चम्यर्थेषष्ठी आत्मज्ञानंपरात्मज्ञानम् ॥ ८५ ॥

( ६ ) **रामचन्द्रः** । सर्वेषां कर्मणां मध्ये आत्मज्ञानं परमात्मनोज्ञानंपरं उत्कृष्टं स्मृतम् । तत् ज्ञानं सर्वविद्यानां सर्वतत्त्वज्ञानानां अग्र्यं मुख्यम् । ततः ज्ञानात् अमृतं मोक्षं प्राप्यते ॥ ८५ ॥

**षण्णामेषांतु सर्वेषांकर्मणांप्रेत्य चेहच ॥ श्रेयस्करतरंज्ञेयंसर्वदा कर्मवैदिकम् ॥ ८६ ॥**

( १ ) **मेधातिथिः** । वेदाभ्यासादीनि षट्कर्माणि श्रेयस्कराणि तेभ्योनिःश्रेयसकरत्वंवैदिकस्य ज्योतिष्टोमादेःकर्मणस्तेषु मोक्षत्वंप्रतिपद्यते । ननुचयदितावत्पूर्वेषामितिनिर्धारणेषष्ठी तदनुपपन्नंनिर्धारणंहिसमुदायभूतविशेषस्य केनचिद्धर्मेण तदेकविषयेण चोपपद्यमानस्यावान्तरेणासंभविना क्षत्रियोमनुष्याणांशूरतमइति मनुष्यजातौक्षत्रियोप्यन्तर्भूतःसशूरतमत्वेन निर्धार्यते । अनुपदिष्टस्यानन्तरितस्य कुतोनिर्धारणंनहिभवति नचेह प्राग्वैदिकंकर्मादिष्टं अथोच्यते अन्तर्वेदाभ्यासादीनि वैदिकान्येव कथमुद्दिष्टंवैदिकंकर्म । यद्येवंसामान्यसामान्यात्सुतरामनिर्धारणं नहिभवतिगवांगौरुत्पन्नक्षीरतमेति । यदिह्यवैदिकानिचोदिष्टार्थान्यभविष्यंस्ततएवैतदपेक्षेतवैदिकंश्रेयस्करमिति । किंच कानि तावदत्रवैदिकानि कर्माण्यभिप्रेतानि ।

( ८६ ) सर्वेषां=पूर्वेषां ( मे० )

यदितावत् ज्योतिष्टोमादीनि विशेषग्रहणे प्रमाणंवक्तव्यम् वेदाभ्यासादीनामवैदिकत्वात् । अथस्मार्तत्वान्नतानि वैदिकानि यान्येव प्रत्यक्षश्रुतिविहितानि तान्येववैदिकादीनि । नहिसर्वेवैदिकेषुकर्मसुवेदाभ्यासादीनामंगत्वेनतद्भावः एतच्चयद्वक्ष्यत्यन्तर्भवतिक्रमशः तस्मिन्क्रियाविधाविति तद्धितस्यनेति तर्ह्यग्निहोत्रादौतपोगुरुसंपाद्यंस्यात् अनेनतेनोक्तेननकश्चिदर्थः । वेदाभ्यासादीनामप्यनुष्ठेयान्यग्निहोत्रादीन्यपि तत्रनविद्मः कीदृशममीषांश्रेयस्करत्वंनापिसमानिफलानि येनफलस्योत्कर्षवत्तयैवमुच्यते यथागोदानात्स्वर्गस्य ज्योतिष्टोमाच्च दीर्घकालाद्यनुवृत्तता यथोक्तंलोकवत्परिमाणवत्फलविशेषःस्यादिति । अत्रोच्यते यदुक्तंचैतेनोक्तेन नकश्चिदर्थइति तत्रकेचिदाहुः विरोधेस्मार्तेश्रौतेबाधकत्वज्ञापनार्थंवैदिकानांश्रेयस्करत्वेवचनं यथोक्तकल्पविरोधेविकल्पः अतुल्यायाःश्रुतेःस्मृत्याबाधइति ॥ श्रुतिद्वैधंतुयत्रस्यात्तत्रधर्मावुभौस्मृतौ । स्मृतिद्वैधेअनुवादस्मृतिरित्यर्थयुक्तंभवति अमुनैवावगतत्वादवाच्यमेतत् । विस्पष्टीकरणार्थमेवपुनरुच्यतइत्यदोषः । अथवान्योपितथार्थःसंभाव्याते शुद्धेचविकल्पवचनं ॥ स्मृतिद्वैधेनतद्विकल्पार्थंतेनायमर्थःस्मार्तेभ्योवैदिकानिबलीयांसि । वेदाभ्यासादिग्रहणंसर्वस्मार्तप्रदर्शनार्थंवृत्तानुरोधादेवंपठितं । वयंतुब्रूमोन्यायसिद्धोयमर्थोंन्यायसिद्धस्यापिसौहार्देनाभिधानमनारभ्ययुक्तं इहात्मनोज्ञानंप्रतिपदंपठ्यते तत्रकःप्रसंगोबाधात्तस्य स्मृतिकारानचस्ववाक्यानिस्ववाक्यैरेवप्रमाणयितुमर्हन्ति । अथोच्यये याज्ञवल्कीयायाःस्मृतेर्विधिस्तैरुच्यते नात्मीयायाःसमानता । यत्तावदात्मीयायामप्युक्तंभवत्यतःप्रकरणानुरोधाद्वेदाभ्यासादिपदंप्रथक्अग्निहोत्राद्युपदेशः । नेहात्मानंप्रतिज्ञायेदंपठ्यते कथंचतैर्व्याख्यातमिति आत्मज्ञानंश्रुतिपरत्वेनवेदाभ्यासादिभ्योवैदिकंयागादिकर्मश्रेष्ठमिति ततोध्यात्मज्ञानमितरथान्यत्रप्रजायाअन्यदुच्यमानमन्यत्रास्तमन्यत्रपतितंस्यात् । अथवावैदिकंमनआत्मज्ञानमेवमर्थस्य वेदस्य तत्प्रतिपादनपरत्वादग्निहेत्राद्युपदेशऔषधपानेवृद्ध्युपदेशवद्बालादिप्रवृत्त्यर्थः । यदिवाकर्मकाण्डेनशिष्टाःस्वाभाविकोमेनामनाद्यविद्यांवासनाविषयासंगहेतुभूतामवधूयशाखाभ्यासवासनासामर्थ्यवशात्क्रमेणोपजातवैराग्यशिथिलीभूतदृढतृष्णारागग्रहणउत्तमाधिकारानुशासनेनियोज्यतांप्रतिपत्तुं समस्तमपिश्रुत्यादिष्टत्वमधिकारोपकारकत्वंकर्मकाण्डस्यविज्ञायतइतिब्रह्मवादिनः अतोवक्ष्यमाणनिवृत्त्याख्यकर्माभिप्रायमेतच्छ्रेयस्करतरंज्ञेयंसर्वथाकर्मवैदिकमिति । अथवा भेदोयदि सर्वेषामपि स्वमवदसत्यदर्शनद्वयेप्यात्मैकत्वज्ञानेश्रेयइत्यर्थः । स्ववेदाभ्यासादीनांभेदोपदेशादिनोद्यंतत्कर्तव्यम् । षष्ठीनोद्यंतुतैरेवसमाहितं बुद्ध्यारोपितान्तरेणपृथक्त्वोपपत्तेर्यथामथुराःपाटलीपुत्रकेभ्यआढ्यतराइति तथासतीपंचमीस्यादितिचेत् अत्रापिप्रतिविहितंधर्माविशेषात् ॥ ८६ ॥

( २ ) **सर्वज्ञनारायणः** । षण्णामेषां वेदाभ्यासादीनांमध्ये यदेतैर्जन्यंश्रेयोपवर्गाख्यं प्रेत्येहच जीवन्मुक्तिभुक्तिकरं वैदिकंकर्म यज्ञादिफलानभिसन्धिना कृतम् ॥ ८६ ॥

( ३ ) **कुल्लूकः** । एषांपुनः षण्णांपूर्वोक्तानांवेदाभ्यासादीनां कर्मणांमध्ये वैदिकंकर्म परमात्मज्ञानमैहिकामुष्मिकश्रेयस्करतरंज्ञातव्यं । पूर्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तमिहत्वैहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यतइत्यपौनरुक्त्यं । तथाहि प्रतीकोपासनानांसंशयोदयंनाम ब्रह्मेत्युपास्ते यावन्नाम्नोगतंतत्रास्य कामचारोभवति । गोविंदराजस्तु एषांपूर्वश्लोकोक्तानांवेदाभ्यासादीनांषण्णांकर्मणांमध्यात्स्मार्तकर्मापेक्षया वैदिकंकर्मसर्वदेहपरलोके सातिशयंसातिशयेन कीर्तिस्वर्गनिःश्रेयः साधनंज्ञेयमितिव्याख्यातवान् तदयुक्तं । वेदाभ्यासादीनांषण्णामपि प्रत्येकंश्रुतिविहितत्वात्तेषु मध्ये स्मार्तापेक्षया किंचिदेवांकिंचिच्च नेति न संभवति ततश्च कथंनिर्धारणे षष्ठी तस्माद्यथोक्तैव व्याख्या ॥ ८६ ॥

( ४ ) **राघवानन्दः** । षण्णां वेदाभ्यासादीनां कर्मणां कृतिसाध्यानां श्रेयस्करतरं निष्कामं नित्यादिकर्म कर्मणा शुद्धान्तःकरणस्यैव ज्ञानाधिकारात् ॥ श्रेयोहि ज्ञानमभ्यासाज्ज्ञानाध्यानं विशिष्यते ॥ ध्यानात्कर्मफलत्यागस्त्यागाच्छा-

न्तिरनन्तरम् । इतिभगवतोक्तत्वात् ॥ नावेदविन्मनुतेतंबृहन्तमितिश्रुतेः । कर्म क्रियत इतिव्युत्पत्त्या श्रवणमननादि तत्साध्याहं ब्रह्मास्मीति ज्ञानंवा अतएव वैदिकम् ॥ ८६ ॥

( ५ ) **नन्दनः** । अपरमपिश्रेयस्करमाह षण्णामेषान्तुपूर्वेषामिति । वेदाभ्यासादीनां वैदिकंकर्माग्निहोत्रादि ॥ ८६ ॥

( ६ ) **रामचन्द्रः** । एषां षण्णां वेदाभ्यासादीनां सर्वेषां कर्मणां मध्ये फलंच पुनः इहलोके च फलं । वैदिकं कर्म सर्वदा श्रेयस्करतरं ज्ञेयम् ॥ ८६ ॥

**वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः ॥ अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन्क्रियाविधौ ॥८७॥**

( १ ) **मेधातिथिः** । एतावद्वैदिककर्म ज्योतिष्टोमाद्याचक्षते तेषामेवंश्लोकयोजना क्रियाविधिः कर्मविधिर्वैदिककर्मयोगेकर्मप्रयोगेबहिः संपाद्यावस्थाः एतान्युपनिषद्वेदाभ्यासादीन्यन्तर्भवन्ति तस्मिन्निति व्याप्यतयाक्वचित्कस्यचित्समेषामन्तर्भावमाह कर्मयोगइत्युक्तेक्रियाविधिग्रहणंश्लोकपूरणार्थं क्रतुंयज्ञेभ्यइतितद्वासोमयागभेदेनभेदोव्याख्येयः । तत्रवेदाभ्यासस्तावत्तत्रेऽन्तर्भवति यजमानमन्त्रेषु सर्वत्रोपयोगतः तपोदीक्षोपदेशसोमयागेषु पयोव्रतं ब्राह्मणस्येत्यादिज्ञानंसर्वत्रापिदुःखानधिकारादेवमिन्द्रियसंयमः भत्यहगामिनःस्त्रियमपेयान्नमांसमश्नीयादिति । अहिंसानिरतांरात्रिप्राणभृतः प्राणेनाच्छिन्द्यादपिकृकलासस्येति गुरुसेवादेरित्थमप्रवृत्तिः । येतुनिवृत्तमेवकर्माहुस्तेषांवेदाभ्यासादीनामनुवृत्त्यर्थःश्लोकोऽन्तर्भवन्त्युपासनापरस्यापितेषामनुष्ठानादन्तर्भावः । तथाचोपनिषद्ध्यउपासकस्य प्रायश्चित्तनिर्देशः पापक्षपणार्थो नपुनः प्रतिविधानविकारएवोक्तोभवति अतोविहिताकरणेप्रतिषिद्धसेवने सतिप्रत्यवायएवतर्हिकुतोमोक्षः फलोपभोगेन जन्मान्तरोपात्तदुरितक्षयादकरणात्त्वबुद्धिपूर्वमजानानस्य प्रमादकृतस्य प्राणायामविद्याविशेषाभ्यासातिशय्येन कृतिनिष्कृतित्वात् निरुपाध्यात्मस्वरूपसाक्षात्करणाच्च प्रथमंतंवेदयेत्तद्भावापत्तिर्मोक्षः । अतश्चब्रह्मनिष्ठापरेणापि वेदाभ्यासादीन्यनुष्ठेयानि । यस्य यस्यकर्मन्यासः श्रूयते सषष्ठे व्याख्यातः । वीप्सायाविधिरुपासनविधिरेव द्रष्टव्यः श्रोतव्यइत्यादिनोदितोबहुत्वाच्चोपासनाप्रकाराणांतस्मिंस्तस्मिन्निति वीप्सायुज्यतएव । अतोब्राह्मणान्युपासीत यएषआदित्येहिरण्मयः पुरुषइति । सचएषआत्मापहतपाप्मेत्यादि । क्वचिदुपात्तबुद्ध्याध्यारोपितश्चोद्यते क्वचिद्धिरण्मयइत्यादौलक्षणयातस्यैवोपासना क्वचित्सर्वोपासनाधिपत्येननिष्कलंकमिवात्मनस्तस्यैवाधस्तात्सउपरिष्टादिनिचोदनाबहुत्वाद्वीप्सोपपत्तिः ॥ ८७ ॥

( २ ) **सर्वज्ञनारायणः** । सर्वाण्यन्तर्भवन्ति यस्मिन्क्रियमाणे एतान्यपि विनाभावितानि सिध्यन्तीत्यर्थः । तस्मिंस्तस्मिन्निति यथा यज्ञे जपादिवेदाभ्यासः । तपोदीक्षानियमादौ । उद्गीथादिचिन्तनेन ध्यानम् । इतराणिच त्रीणि सर्वत्रानुसंततानि ॥ ८७ ॥

( ३ ) **कुल्लूकः** । इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्य स्पष्टयति वैदिके इति । वैदिके पुनः कर्मयोगे परमात्मोपासनारूपे सर्वाण्येतानि पूर्वश्लोकोक्तान्यैहिकामुष्मिकश्रेयांसि तस्मिन्नुपासनाविधौ क्रमशः संभवन्ति । अथवा सर्वाण्येतानीति वेदाभ्यासादीन्येव परामृष्यन्ते । परमात्मज्ञानेवेदाभ्यासादीनि तमेतंवेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति श्रुतिविहिताङ्गत्वेनान्तर्भवन्ति ॥ ८७ ॥

( ४ ) **राघवानन्दः** । अतएवाह वैदिकइति । वैदिके वेदैकसाध्ये ज्ञाने । अतएव कर्मयोगे कर्मणः परंपरया साधनतयायुज्यमानत्वात् अन्तर्भूतं कारणतया ॥ सर्वंकर्माखिलंपार्थ ज्ञाने परिसमाप्यत इत्यादिस्मृतेः । कथमन्तर्भवन्ती-

त्याकांक्षायामाह तस्मिन्निति । क्रियामित्यादिकर्म विधीयते अस्मैअन्तःकरणशुद्धिरूपा यत्तदप्युपासना यैर्विधीयते । तेन च श्रवणादि तदपि । ज्ञानिपर्यवस्यतीति [ क्रमशइत्यर्थः ][1] ॥ ८४ ॥

( ५ ) **नन्दनः**।वैदिककर्मणोवैशिष्ट्यकारणमाह वैदिकेकर्मयोगेहीति। कर्मयोगे कर्मानुष्ठाने एतानि वेदाभ्यासादीनि। श्रौतानांमन्त्रसाध्यत्वात्तेषु वेदाभ्यासस्यान्तर्भावः उपवासव्रतादिचोदना तपसोन्तर्भावः। अज्ञातस्यानुष्ठानासंभवाज्ज्ञानस्यान्तर्भावः । स्त्रीसङ्गवर्जनमौनादिविधानादिन्द्रियसंयमस्यान्तर्भावः तस्मादेतांरात्रिंप्राणभृतः प्राणान्नविच्छिन्द्यादितिविधानादहिंसायामन्तर्भावः ऋत्विगाचार्यानुवर्तनाद्गुरुसेवायामन्तर्भावइति ॥ ८७ ॥

( ६ ) **रामचन्द्रः** । वैदिके कर्मयोगे एतानि सर्वाणि कर्माणि अशेषतः अन्तर्मध्ये तस्मिन्क्रिया विधौ क्रमशः भवन्ति ॥ ८७ ॥

## सुखाभ्युदयिकंचैव नैःश्रेयसिकमेव च ॥ प्रवृत्तंच निवृत्तंच द्विविधंकर्म वैदिकम् ॥ ८८ ॥

( १ ) **मेधातिथिः** । ननुच प्रवृत्तमेववैदिकंकर्मव्याख्यातं किमिदमुच्यते द्विविधमिति नैषदोषः प्राधान्यंतत्रनिवृत्तंवैदिकंव्याख्यातंनपुनरग्निहोत्रादीनि वैदिकंतु सर्वत्राविशिष्टंसुखमुपेत्योपपद्यते यदपिसुखाभ्युदयिकंसुखोदयः प्रयोजनमस्येतिवाऽन्वर्थोवाकर्तव्यः निःश्रेयसंप्रयोजनमस्येतिच केचनप्रवृत्तपदे यथासंख्यंपूर्ववत्संबन्धनीये ॥ ८८ ॥

( २ ) **सर्वज्ञनारायणः** । स्वर्गादिसुखं तद्रूपाभ्युदयोयत्र तत्सुखाभ्युदयिकंकर्म । प्रवृत्तं उत्तरोत्तरप्रवृत्तिहेतुत्वात् । निःश्रेयसजनकंतु निवृत्तं अत्यन्तनिवृत्तिहेतुत्वात् ॥ ८८ ॥

( ३ ) **कुल्लूकः** । वैदिकंकर्मात्र ज्योतिष्टोमादि प्रतीकोपासनादि च गृह्यते स्वर्गादिसुखप्रापकरसंसारप्रवृत्तिहेतुत्वात्प्रवृत्ताख्यंवैदिकंकर्म । तथानिःश्रेयसंमोक्षस्तदर्थंकर्म नैःश्रेयसिकंसंसारनिवृत्तिहेतुत्वान्निवृत्ताख्यमित्येवंवैदिकंकर्म द्विप्रकारंकंवेदितव्यम् ॥ ८८ ॥

( ४ ) **राघवानन्दः** । नित्यनैमित्तिकानामेव कर्मणां ज्ञानहेतुत्वंवदन् काम्यंततोभिनत्ति सुखेति । सुखाभ्युदयिकं सुखंस्वर्गादि अभ्युदयं पशु पुत्रादि तयोः साधनं । प्रवृत्तं काम्यं निवृत्तं निष्कामं नित्यनैमित्तिकं तन्नैःश्रेयसिकं निःश्रेयसोमुक्तेस्तदर्थत्वात् ॥ ८८॥

( ५ ) **नन्दनः** । सुखाभ्युदयस्तन्निमित्तंसुखाभ्युदयिकं निश्रेयसंमोक्षस्तन्निमित्तंनैश्रेयसिकंतयोर्यथाक्रमंसंज्ञे प्रवृत्तंनिवृत्तंचेति ॥ ८८ ॥

( ६ ) **रामचन्द्रः** । सुखं आभ्युदयिकं ॥ ८८ ॥

## इहचामुत्र वा काम्यंप्रवृत्तंकर्म कीर्त्यते ॥ निष्कामंज्ञानपूर्वन्तु निवृत्तमुपदिश्यते ॥ ८९ ॥

## [ अकामोपहतंनित्यंनिवृत्तंच विधीयते ॥ कामतस्तु कृतंकर्म प्रवृत्तमुपदिश्यते ॥ १ ॥ ] +

( १ ) **मेधातिथिः** । इहकारीरीवैश्वानर्याद्यमुत्रज्योतिष्टोमादिकाम्यसंपादकंकर्म । काम्यतइतिकाम्यं फलस्य काम्यत्वात्साधनमपिकर्मकाम्यतएव । निष्कामंनित्यंज्ञातंपूर्वमुभयत्रशेषमविदुषोनाधिकारात् अनयोपिरहस्याधिकारिज्ञानमुपदिश्यते तदातदुभयशेषः । पूर्वशब्दश्चाद्यर्थंलक्षयति ज्ञानमाद्यंमुख्यंयस्येतिविग्रहः योभिमुख्यः सलोकः पूर्वंक्रियांप्रतिलभते । अतश्चैतदुक्तंभवति ज्ञानंप्रधानंप्रधानतोऽनुष्ठेयं वेदाभ्यासादितुशास्त्रमात्रया ॥ ८९ ॥

---

( १ ) राघ० २ + ग

( २ ) **सर्वज्ञनारायणः** । तद्विवृणोति इहचेति ॥ ८९ ॥

( ३ ) **कुल्लूकः** । एतदेवस्पष्टयति इहेति । इह काम्यसाधनंवृष्टिहेतुकारियागादिरत्र स्वर्गादिफलसाधनंज्योतिष्टोमादि यत्कामतया क्रियते तत्संसारप्रवृत्तिहेतुत्वात्प्रवृत्तमित्युच्यते दृष्टादृष्टफलकामनारहितंपुनर्ब्रह्मज्ञानाभ्यासपूर्वकंसंसारनिवृत्तिहेतुत्वान्निवृत्तमित्युच्यते ॥ ८९ ॥

( ४ ) **राघवानन्दः** । एतद्विभजते इहेति । इह काम्यं कारीर्यादि । अमुत्र ज्योतिष्टोमादि । निष्कामं तु ज्ञानपूर्वं ज्ञानस्य पूर्वं जनकतया वर्तमानत्वात् ज्ञानमुत्पद्यते पुंसांक्षयात्पापस्य कर्मणइतिस्मृतेः ॥ ८९ ॥

( ५ ) **नन्दनः** । ज्ञानंसर्वज्ञभूतेषु चात्मानमित्युत्तरत्र वक्ष्यमाणम् ॥ ८९ ॥

( ६ ) **रामचन्द्रः** । इह लोके यत्काम्यं चपुनः अमुत्र परलोके निमितं यत्कर्म तत्कर्म प्रकृतंकीर्त्यते । तु पुनः ज्ञानपूर्वं कृतं यत्कर्म निष्कामं तन्निवृत्तिः उपदिश्यते कथ्यते ॥ ८९ ॥

**प्रवृत्तंकर्मसंसेव्य देवानामेति साम्यताम् ॥ निवृत्तंसेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९० ॥**

( १ ) **मेधातिथिः** । ननुचकाम्यंकर्मप्रवृत्तमित्युक्तं काम्यानिचकानिचित्स्वर्गफलानि कानिचिद्दिष्ट्यास्वर्गफलानि तदेव साम्यताफलं किंचिदिष्टंकर्मातः किमिदमुच्यते देवानामेति साम्यतामिति यान्यश्रुतफलानि विश्वजिदादीनि तान्यपि स्वकल्पस्वर्गफलान्यतोनविद्मः कर्मणादेवसाम्यताप्राप्तिःफलं नचशक्यंवक्तुंयानिफलवन्तिश्रुतानितानि निष्कामेणानुष्ठेयानि । तथाचानुष्ठितानि वैदेवत्वफलानि संपद्यन्ते । श्रुतहानिरश्रुतपरिकल्पनाच तथास्यात् । काम्यमानंच वेदेफलंशांतग्रामकःस्वर्गकामइति नवस्तुस्वाभाव्येनविषभक्षणात् । अथोदेवत्वादिप्राप्तिर्भवति नचकाम्यइतिविरुद्धमिति प्रतिषेधाधिकारेष्वकामिनंकथमितिचेत्तथाभूतस्यैवतत्रफलत्वेनान्वयः नह्यतिष्ठमानंकाम्यंभवति अथनित्यानांफलमितःकथ्यते नित्यताहनियावज्जीवादिफलैश्च तत्रनित्यफलमवगमितं अथाचम्यंकल्प्यते प्रत्यवायपरिकरः कल्प्यतां तद्विकल्पकानांनित्यत्वेनविरुध्यते योप्युत्तरःश्लोकः प्रभूतान्यप्येतिपंचधेति तथाप्यप्येतिविमुच्यतइतिविद्मः । अन्यत्राप्ययोलयउच्यते नचेहभूतेषुजीवस्यलयइष्यते अपितुब्रह्मरूपापत्तिंयेपठन्ति । अन्येपिव्याचक्षते नचातिक्रामतिपंचभूतानि पांचभौतिकंतस्य शरीरंभवति अपितुतेजोमूर्तिचान्वेति तदपिनकिंचित् शरीराग्रहणंहिमोक्षः तच्चशरीरमेकंवाभवत्पांचभौतिकंच कोविशेषः संसरित्वेऽतोव्याख्येयोयंश्लोकउच्यते । यत्तावदुक्तंकस्यकर्मणोदेवसाम्यताफलमिति नित्याकामफलत्वात् । कामानांचफलान्तरयागादिति तत्रब्रूमः नानेनसर्वेषांवैदिकानांकर्मणामेतत्फलमुच्यते किंतर्हिनिवृत्तस्य कर्मणोयत्फलंतत्रप्रवृत्तंकिंचनविद्यते अथनतत्फलमाप्यतइति तेनैतदुक्तंभवति कर्मकाण्डेयत्कर्तव्यतया वेदितंसास्यपरागतिर्देवत्वप्राप्तिर्नतुमोक्षः । यत्तुरहस्याधिकारोक्तकर्मतदनावृत्तिहेतुस्तत्रकामयमानस्य फलंकल्पोपहतत्वात्कर्मबन्धहेतुःकर्मणाह्येषतदभावोयत्स्वफलदानार्थमधिकारिणः कार्यकारणमारभन्ते तथैवनित्यान्यव्यतिक्रियमाणानिप्रत्यवायहेतवोभवन्ति । तान्यपिशरीरमारंभतएव । यद्येवंनित्यानिकरिष्यति काम्यानिप्रतिषिद्धानिचकरिष्यति । तस्यशरीरारंभककर्माभावाद्धेत्वभावेनमोक्षमवाप्स्यति'। आत्मज्ञानस्योपभोगः यथोक्तं ॥ नित्यनैमित्तिकेकुर्यात्प्रत्यवायजिहासया ॥ मोक्षहीनःप्रवर्तते तत्रकाम्ययोरित्युक्तगर्भवद्भिन्नंविद्यमानंतस्यैव विद्ययाक्षयोरिति । नचानुष्ठितयोगविद्यायाब्रह्मरूपापत्तिः एतदेवाभिप्रेत्योक्तंनिष्कामंज्ञानंपूर्वमिति तथाकामात्मतानप्रशस्ता समानक्रियस्यसामार्ष्टिस्तस्यभावःसाम्यता देवैःसमानगतिर्भवतीत्यर्थः । येचापिभूतान्यप्येतीत्य-

ध्ययंप्रतिव्यामोहःसोपिनयुक्तः विप्रलापनमध्ययउच्यते तुषारनिखिलप्रपंचोभवतीत्यर्थः। अभ्येतीत्यपिपाठेऽशरीरत्वमुक्तं-भवति ॥ ९० ॥

( २ ) **सर्वज्ञनारायणः**। सार्ष्टितां सायुज्यतां समानाकारतामितियावत्। भूतान्यभ्येति लिङ्गदेहंजहाति ॥ ९० ॥

( ३ ) **कुल्लूकः**। प्रवृत्तकर्माभ्यासेन देवसमानगतित्वंतत्फलंकर्मणा प्राप्नोति। एतच्च प्रदर्शनार्थमन्यफलकेन कर्मणा प्रवृत्तेन फलान्तरमपि प्राप्नोति। निवृत्तकर्माभ्यासेन पुनः शरीरारंभकानि पञ्चभूतान्यतिक्रामति मोक्षंमाप्नोतीत्यर्थः ॥ ९० ॥

( ४ ) **राघवानन्दः**। अतएवाह प्रवृत्तमिति। सार्ष्टितां समानैश्वर्यम् साम्यतामितिकचित्। तावत्पर्यन्तमेव प्रवृत्तकर्मणां गतिः। भूतानि सकारणभूतभौतिकानि स्थूललिङ्गशरीरद्वयं। अत्येति नाशयति अभितोवोपादानतयाप्नोति भूतारभ्यत्वादुभयोः। यज्ज्ञानेनाज्ञाननाशद्वारेणेति शेषः। आरोपितस्य ज्ञाननाश्यत्वेऽविप्रतिपत्तेः ॥ ९० ॥

( ५ ) **नन्दनः**। साष्टाङ्गसायुज्यंसाधर्मादितियावत् भूतात्ययोमुक्तिः ॥ ९० ॥

( ६ ) **रामचन्द्रः**। प्रवृत्तंकर्म संसेव्य कृत्वा देवानां साम्यतां एति प्राप्नोति। तु पुनः निवृत्तं कर्म सेवमानः पञ्चभूतात्मकंलिङ्गदेहं प्राप्नोत्येव ॥ ९० ॥

## सर्वभूतेषु चात्मानंसर्वभूतानि चात्मनि ॥ समंपश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥

( १ ) **मेधातिथिः**। कथंपुनःप्रपंचःकर्तव्यइत्यतआह भूतशब्देनयत्किंचित्स्थावरजंगमंपुण्यप्राणितत्सर्वमुच्यते तत्रचात्मानंपश्येत् अहमिवैतज्जगदिति। तथाचश्रुतिः अहंवृक्षस्यरेरिवेति प्रतिषेधवद्भेदावभासत्वपरव्यवहारंजह्यात् अयमहमेतन्ममनेदंममेति अद्यतेवंध्यस्त्यक्तात्मात्मीयाभिनिवेशस्योज्झितस्वपरभेदस्यकेवलात्मैकत्वंभातिनस्वाराज्यंदेवतार्थः। सर्वभूतानिचात्मनीति यदेवविकारप्रपंचरूपंजगत्तदेवतन्मयिस्थितं अहमेकःस्रष्टाकर्ताध्याताध्येयश्चेतिसंपद्यते। आत्मयाजी आत्मानमेवसर्वदेवतामयत्वेन योयजते मन्यते नास्त्यादित्योवा देवता अहमेवदेवतेत्येवंपश्यन्नात्मयाजी संपद्यते नपुनरात्मापदेशेन यागःकर्तव्यतया चोच्यते। केचिदाहुः नाग्नेयादिष्वग्न्यादयोदेवताआत्मत्वेनापि न वक्तव्याः। स्वाराज्यात् स्वे राज्ये भवाः स्वाराज्याः परमात्मवत्स्वतन्त्रःसंपद्यते स्वप्रकाशश्च भवति चंद्रादित्याद्यालोकमपेक्षतेंद्रियाणिचक्षुरादीनि नान्तःकरणंमनआदितःपश्यन्तीतिच भावेतदुच्यते दर्शनमात्रंसकलबाह्याभ्यन्तरव्यापारतिरस्करणे तद्भावनापरस्यात् ॥ ९१ ॥

( २ ) **सर्वज्ञनारायणः**। सर्वेषु इज्यमानदेवतासु आत्मानमिज्यत्वेन पश्यन् सर्वभूतात्मन्यात्मनीज्यमानेन सर्वभूतानीज्यन्तइति सममुभयत्रात्मानमिज्यमानं पश्यन्नात्मयाजी भवति सच स्वाराज्यंस्वतः सर्वाधिपत्यमधिगच्छति ॥ ९१ ॥

( ३ ) **कुल्लूकः**। सर्वभूतेषु स्थावरजङ्गमात्मकेष्वहमेवात्मरूपेणास्मि सर्वाणि भूतानि परमात्मपरिणामसिद्धानि मय्येव परमात्मन्यासतइति सामान्येन जानन्नात्मयाजी ब्रह्मार्पणन्यायेन ज्योतिष्टोमादिकुर्वन्स्वेन राजते प्रकाशतइति स्वराट् ब्रह्म तस्य भावः स्वाराज्यंब्रह्मत्वंलभते मोक्षमाप्नोतीत्यर्थः। तथाच श्रुतिः सर्वंखल्विदंब्रह्मतज्जलानिति शान्तउपासीत तथायजुर्वेदमन्त्रः यस्तुसर्वाणि भूतान्यात्मन्येवानुपश्यति सर्वभूतेषु चात्मानंततोन विजुगुप्सते ॥ ९१ ॥

( ४ ) **राघवानन्दः**। आत्मज्ञानंपरमित्युक्तं तत्कीदृशं किमधिकारिकं किंफलमिति संक्षिप्याह सर्वभूतेष्विति। सर्वभूतेष्वधिष्ठानतयानुस्यूत सर्वभूतानि चाधिष्ठेयतया तस्मिन्नेवारोपितानीति। समंपश्यन्नितियोजना सर्वंखल्विदंब्रह्मेतिश्रुतेः। आत्मयाजी आत्मान्तःकरणं तच्छुद्ध्यर्थं कर्मकारी तदधिकारिकंज्ञानमित्यधिकारिनिर्देशः। स्वाराज्यं मुक्तिरिति फलनिर्देशः। स्वेनैव राजते स्वराट् स्वप्रकाशमनन्यप्रकाशंब्रह्म तस्यभावः स्वाराज्यम् ॥ ९१ ॥

---

( ९० ) पञ्चैते = पञ्चधा ( मे० )

( ५ ) **नन्दनः** । निष्कामज्ञानपूर्वंतन्निवृत्तिमुपदिश्यतइतीत्युक्तंकिन्तज्ज्ञानमित्यपेक्षायामाह सर्वभूतेषु चात्मानमिति । आत्मानंपरमात्मानं आत्मनि परमात्मनि कुतएतत् श्रीभगवद्गीतायादर्शनात् ॥ योमांपश्यति सर्वत्र सर्वंच मयि पश्यति । तस्याहंनप्रणश्यामि सचमेनप्रणश्यति ॥ श्रुतिमूलानांनित्यनैमित्तिकानांकर्मणांपरमात्मनिसमर्पणमात्मयाजित्वमेतदपि श्रीभगवद्गीतासूक्तं ॥ यतः प्रवृत्तिर्भूतानांयेन सर्वमिदंजगत् ॥ स्वकर्मणा समभ्यर्चसिद्धिंविन्दति मानवइति । स्वराट्परमात्मा तस्य भावः स्वाराज्यम् ॥ ९१ ॥

( ६ ) **रामचन्द्रः** । आत्मयाजी आत्मानमेव सर्वदेवतामयत्वेन योयजते सः स्वाराज्यं स्वर्लोकं गच्छति ॥ ९१ ॥

**यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ॥ आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ ९२ ॥**

( १ ) **मेधातिथिः** । यथोक्तान्यपिकर्माणीति नानेनाग्निहोत्रादीनांकर्मणांपरिहानिर्विधीयते । अपित्वात्मज्ञानेयंत्नवान्स्यादित्यात्मज्ञानाभ्यासोविधीयते कर्माणिपरिहायेतित्वालंबनंप्रशस्तदेवतायतनप्रदक्षिणमत्रगुरुगमनादीनि मुक्त्वोप्यात्मज्ञानमभ्यस्येन्नहिनित्यानांकर्मणांस्वेच्छयापरित्यागोस्तिपुरुषमेधादिषु विहिते नास्ति त्यागेनविना ॥ ९२ ॥

( २ ) **सर्वज्ञनारायणः** । पूर्वमात्मज्ञानार्थंयज्ञादीनामप्यनुष्ठेयत्वमुक्तमधुनात्वशक्तौ ध्यानजपेन्द्रियनिग्रहमात्रेपि तत्सिद्धिरित्याह यथोक्तान्यपीति । परिहाप्य परिहाय ॥ ९२ ॥

( ३ ) **कुल्लूकः** । शास्त्रचोदितान्यप्यग्निहोत्रादीनि कर्माणि परित्यज्य ब्रह्मध्यानेन्द्रियजयप्रणवोपनिषदादिवेदाभ्यासेषु ब्राह्मणोयत्नंकुर्यात् एतच्चैषांमोक्षोपायान्तरङ्गोपायत्वप्रदर्शनार्थंनत्वग्निहोत्रादिपरित्यागपरत्वमुक्तम् ॥ ९२ ॥

( ४ ) **राघवानन्दः** । स्वाराज्यसाधनज्ञानस्य शमादिसहितं श्रवणमनननिदिध्यासनमेवासाधारणसाधनमित्याह यथेति । परिहाय असाधनत्वेन त्यक्त्वा शान्तोदान्तउपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानंपश्येदिति । तथा ॥ नकर्मणानप्रजयाधनेनत्यागेनैके अमृतत्वमानशुः ॥ किमहंसाधुनाकरवं किमहंपापमकरवमिति ॥ त्यजधर्ममधर्मंच उभेसत्यानृतेत्यजइत्यादिश्रुतेः ॥ आत्मध्याने मनननिदिध्यासनयोः मननंविना निदिध्यासनानुपपत्तेः । शमे शमदमोपरतितितिक्षासु । वेदाभ्यासे उपक्रमादिनोपनिषदर्थनिर्धारणे श्रवणार्थापरपर्याये विचारे ॥ आत्मावारे द्रष्टव्यः श्रोतव्योमन्तव्यइतिश्रुतेः । उपक्रमादिभिरात्मज्ञानफलकतया श्रवणादेर्विधानात् । फलवान् [1] आदरनैरन्तर्यदीर्घकालादियुक्तःस्यात् । आत्मज्ञाने इतिक्वचित्पाठे तदात्मज्ञाने जनयितव्ये शमादौ यत्नवान्स्यादित्यन्वयः ॥ ९२ ॥

( ५ ) **नन्दनः** । अथनिश्रेयसफलानांकर्मणामन्योन्यविप्रतिषेधे कर्तव्यमाह यथोक्तान्यपीति । यथोक्तानि श्रेयस्करत्वेनोक्तानि शमे रागोपशमे तपसीति यावत् ॥ ९२ ॥

( ६ ) **रामचन्द्रः** । द्विजोत्तमः आत्मज्ञाने शमे शान्तौ मनः समावेश्य च पुनः वेदाभ्यासेन यत्नवान्भवेत् ॥ ९२ ॥

**एतद्विजन्मसाफल्यंब्राह्मणस्य विशेषतः ॥ प्राप्यैतत्कृतकृत्योहि द्विजोभवति नान्यथा ॥ ९३ ॥**

( १ ) **मेधातिथिः** । द्विजन्मनांभवति क्षत्रियवैश्ययोरप्यात्मज्ञानेऽधिकारंदशर्यति । यथाचराणकश्रुतिः ब्राह्मणस्यविशेषतइति वेदाभ्यासइतिसंबन्धनीयं आत्मज्ञेनसमत्वेनाभ्यासितेनैवसंभवतः यदात्मज्ञानंप्राप्यकृतकृत्योद्विजोभवति पुरुषार्थएतावतासमाप्यते नहिमोक्षादपरः पुरुषार्थोस्तीति । ननुच यदुक्तंसर्वात्मैकत्वेनायंपश्येत्प्रत्यक्षविरुद्धमिव प्रत्यक्षेण हि-

( १ ) फलवान्=यत्नवान् ( राघ० २ ) ( ९२ ) परिहाय=परिहाप्य ( सर्व० )

भिन्नाभावःप्रतिभातितेनकथमेकत्वेनग्राह्यः अनारभ्यस्त्वार्थउपदिष्टःस्यात् कथंभिन्नमभिन्नंद्रष्टुंशक्यं नहिखरोगौरिवबुद्ध्याग्रहीतुंशक्यः इन्द्रियदोषेणान्यत्रावभासरूपप्रयाप्रतीयते शुक्तिकारजताकारतया नतूपदेशतः । योह्युपदिशेत्तंहस्तिनंप्रतिपद्यते नासौवचनफलमंजसाश्नुवीत ॥ ९३ ॥

( २ ) **सर्वज्ञनारायणः** । एतत्त्रयं जन्मसामग्र्यं जन्मनेऽपेदग्रहस्य संपूर्णप्रयोजनत्वम् । प्राप्यैतत्त्रयम् ॥ ९३ ॥

( ३ ) **कुल्लूकः** । एतदात्मज्ञानवेदाभ्यासादिद्विजातेर्जन्मसाफल्यापादकत्वाज्जन्मनः साफल्यंविशेषेण ब्राह्मणस्य यस्मादेतत्प्राप्य द्विजातिः कृतकृत्योभवति न प्रकारान्तरेण ॥ ९३ ॥

( ४ ) **राघवानन्दः** । यस्मिन् जन्मनि श्रवणादिसंपत्तिस्तऽज्जन्म महीकरोति एतदिति । अत्र हेतुः प्राप्येति । कृतकृत्यः कृतंआवश्यकंसंसारनाशनं कृत्यं येनसः आत्मानंचेविदितिश्रुतेः । एतद्बीति स्मृतेश्च । नान्यभेत्युपायशतेनापि तमेव विदित्वेतिश्रुतेः । ब्राह्मणस्येति विशेषणात् संन्यासादात्मज्ञानदेव मुक्तिरिति मनोः संमतिः । अतएव ब्राह्मणाविविदिषन्तीत्यादिना विप्रदेहएव मुक्तिहेतुरन्यत्र परंपरयेति ॥ ९३ ॥

( ५ ) **नन्दनः** । एतदात्मज्ञानादित्रयम् ॥ ९३ ॥

( ६ ) **रामचन्द्रः** । द्विजन्मनां विप्रक्षत्रियविशां एतद्वेदाभ्यासादि अग्र्यं मुख्यं विशेषतो ब्राह्मणस्य ॥ ९३ ॥

## पितृदेवमनुष्याणांवेदश्चक्षुः सनातनम् ॥ अशक्यंचाप्रमेयंच वेदशास्त्रमिति स्थितिः ॥ ९४ ॥

( १ ) **मेधातिथिः** । रूपप्रत्ययोभवत्येवंवेदादिति चक्षुरित्युक्तं सनातनंशाश्वतंनित्यं अनेनापुरुषकृतत्वात् महापुरुषकृतत्वेहि तत्प्रामाण्यात्प्रमादोपीत्यत्रनप्रमाणमस्ति अतःपुरुषगतगुणदोषसद्भावनिश्चयात्तदभावादपौरुषेयत्वेनवेदःप्रमाणं अतोवेदप्रामाण्यात्दृश्यार्थस्य नकश्चन विरोधः । ननुच यद्येवमुपदिशेदग्निनासिंचेदुदकेनचादीपयेत् किंनभवेद्विरोधः विषमउपन्यासस्तत्रहि दृष्टयापदार्थशक्त्यादृष्टएवार्थःकर्तव्यतयोपदिश्यते । तत्रप्रमाणान्तरगोचरत्वंतस्यार्थस्यतद्विपर्ययाद्युक्तंतदेतद्युतं इहतु विधिपरत्वात्वाच्यानांप्रमाणान्तराणांच विधिविषयत्वाभावात्सिद्धस्वरूपवस्तुगोचरत्वेनासत्येकविषयत्वेकुतोविरोधः इहह्यनात्मभूतानामाभासतोभावान्महत्त्वेन दर्शनंविधीयते । स्वाराज्यफलायांतत्र यत्राधिकंभेददर्शनंतस्याभ्यासतः शक्यमन्यथाकर्तुं तथाहि रागादयश्चित्तधर्माभावनातिशययोगांगानशक्यन्तेनियन्तुं द्वेष्यमपिमैत्रादिनाद्वेष्यताबुद्धिर्निवर्ततइति सर्वस्यैतत्स्वसंवेद्यंपृष्ठंच भावनायाअविद्यमानवस्तुस्वाभाव्यमवभासतेसामर्थ्यात् । तथाविप्रलंभे कामिनःसर्वत्रकामिनीवत्पश्यन्तिकिमंगंयत्रतात्त्विकमेकत्वमस्ति तत्कथंभेदेनविरुद्धत्वादवभासते । त्वद्रूपाहि सर्वभावना साभिन्नाविद्यते ईदृशंचात्रदर्शनंसमत्वेन विधीयते यत्रममेतन्नेदंममेतिबुद्धेरनुपपत्तिः । यथोक्तं ममेतिद्व्यक्षरोमृत्युर्नममेतिचशाश्वतमिति तस्मान्नास्तिविरोधः । पितृदेवमनुष्याणामित्यादीनि श्रुतिपदानि देवादयोपि सिध्यन्ति संयुक्तानचेदक्तेतीन्द्रियमर्थंपश्यन्ति श्रुतिमन्तरेरुद्ज्ञातुमशक्यत्वात् । अप्रमेयंचाप्यनन्तत्वाद्वेदशाखानां अथवाप्रमातुंशक्यमर्थतोवेदांगवेदाः ॥ ९४ ॥

( २ ) **सर्वज्ञनारायणः** । अतर्क्यं तर्केणान्यथाऽसंभाव्यम् । अप्रमेयं प्रमाणान्तरेण विरोधिनान्यथाऽकल्प्यम् । वेदरूपं शास्त्रं सामकम् ॥ ९४ ॥

( ३ ) **कुल्लूकः** । इदानींवेदादेव ब्रह्मज्ञातव्यमिति प्रदर्शयितुंवेदप्रशंसामाह पितृदेवेति । पितृदेवमनुष्याणांहव्यकव्यान्नदानेषु वेदएव चक्षुरिवचक्षुरनश्वरंतत्प्रमाणत्वादसन्निकृष्टफलकव्यदानादौ प्रमाणान्तरानवकाशात् अशक्यंच वेदशा-

स्त्रंकर्तुमनेनापौरुषेयतोक्ता अप्रमेयंच मीमांसादिन्यायनिरपेक्षतयाऽनवगम्य मानप्रमेयमेवंव्यवस्था ततश्च मीमांसया व्याकरणाद्यैश्चसर्वब्रह्मात्मकंवेदार्थंजानीयादिति व्यवस्थितम् ॥ ९४ ॥

( ४ ) **राघवानन्दः** । तर्हि कृतं वेदान्ताभ्यासेन अनुमानादिनाप्यात्मज्ञानसिद्धेःतत्राह पित्रिति । वेदश्चक्षुरिति । असंदिग्धाऽविपर्यस्ताऽनधिगतफलवदात्मापरोक्षधीहेतुत्वात् । तंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः सनातनंनित्यंब्रह्म-स्वयंभु इतिश्रुतेश्च त्रिंशदुत्तरैकादशशतशाखत्वात् वेदस्याशक्यमध्येतुंकर्तुंच तथा अप्रमेयं भेदाभेदसदसद्धर्मादितात्पर्या-निरूपणादिति । वेदश्चासौ शास्त्रंचेति अनधिगताबाधितशासनात् । अथवा सनातनं नित्यं चर्मचक्षुर्हि जन्मान्तरे इहा-पि कदाचिल्लुप्यते इदंतु न तथा जन्मान्तरे विलुप्यते तंविद्याकर्मणी समन्वारभेते पूर्वप्रज्ञाचेतिश्रुतेः ॥ अनेकजन्मसंसि-द्धस्ततोयातिपरांगतिमितिस्मृतेश्च ॥ जन्मजन्म यदभ्यस्तं दानमध्ययनं तपइत्युक्तेः । अशक्यं शक्तेरविषयः ब्रह्म तदप्र-तिपादकत्वात् । अप्रमेयं प्रमाबोधःफलं तदविषयकं ब्रह्म एतदप्रमेयं ध्रुवं ॥ यतोवाचोनिवर्तन्ते अप्राप्य मनसासहेतिश्रु-तेः ॥ एवंभूतं ब्रह्मविषयं वेदशास्त्रं वेदेनैव शास्यते ज्ञाप्यते शक्त्याअबोधकत्वेपि जहदजहल्लक्षणया तत्त्वमस्यादिवा-क्योत्थाऽखण्डचैतन्यानन्दाकारवृत्तिविषयत्वेपि चैतन्यघनत्वेन वृत्तिप्रतिफलितबोधाविषयत्वादिति । तदुक्तम् ॥ फल-व्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते ॥ स्वयंप्रकाशमानत्वान्नाभासउपयुज्य-तइति स्थितिः । शास्त्रतात्पर्यं तंत्वौपनिषदंपुरुषंपृच्छामि ब्रह्म वेद ब्रह्मैव भवति एतदप्रमेयं ध्रुवमित्यादिश्रुतीनां तत्रैव ता-त्पर्यात् । पदार्थसंग्रहे विस्तरग्रन्थगौरवभयादुपरम्यते ॥ ९४ ॥

( ५ ) **नन्दनः** । आत्मज्ञानेन च शमेनच समानतावेदाभ्यासस्योक्ता तस्य युक्तमुपादयन्वेदस्य शास्त्रान्तरेभ्यो-विशेषमाह पितृदेवमनुष्याणामिति । पितृदेवमनुष्याश्चक्षुषैव सर्वानर्थान्वेदेन पश्यन्तीति पितृदेवमनुष्याणांवेदश्चक्षुरित्युक्तं सकलकल्पमन्वन्तरानुयायित्वात्सनातनं अतर्क्यमीदृशमित्यध्यवसातुमशक्यमपौरुषेयत्वात् अप्रमेयमेतावदित्यध्यवसा-तुमशक्यमक्षयफलत्वात् ॥ ९४ ॥

( ६ ) **रामचन्द्रः** । पितृदेवमनुष्याणां वेदःसनातनंचक्षुः अतर्क्यं तर्केणान्यथाऽसंभाव्यं अमेयं प्रमाणान्तरेण विरो-धिनाऽन्यथाऽल्पं अनन्तशरीरत्वात् ॥ ९४ ॥

**यावेदबाह्याः स्मृतयोयाश्च काश्च कुदृष्टयः ॥ सर्वास्तानिष्फलाः प्रेत्य तमोनिष्ठाहि ताः स्मृताः ॥ ९५ ॥**

( १ ) **मेधातिथिः** । पूर्वत्वपौरुषेयत्वेन वेदस्यप्रामाण्यमुक्तेदानींपौरुषेयाणांवेदानामप्रामाण्यं अथवेदबाह्यावेदवि-रुद्धाअवेदमूलाःश्रुतयोग्रंथसंदर्भेषुनोदनाश्चैत्यवन्दनेनस्वर्गोभवतीत्याद्या निर्ग्रंथशौभादिसिद्धांतप्रसिद्धाः । कुदृष्ट्याअसत्तर्क-दर्शनानिवेदकर्तुःसाधनमपूर्वदेवतादिनिराकरणमेवमाद्याःकुदृष्टयः सर्वास्तानिष्फलाः प्रेत्यप्रकर्षप्राप्य संनिरूपितहेतुदृष्टान्तः अंततोनिष्फलाउक्ताअप्ययुक्तानामाभासरूपत्वात्ताश्चयुक्तयोन्यवतिवर्त्मनि रात्रियति महाग्रंथविस्ताराभवन्ति संक्षेपरूपा-स्तथापौरुषेयाणामुपदेशेनाप्रामाण्येपुरुषाणामतींद्रियार्थदर्शनशक्त्यभावात् शक्यमपिशक्तेरुद्देशिकस्य प्रमाणाभावात् । अयंसर्वज्ञस्तेनायमागमः मणितइति नाकिंचिदत्रप्रमाणंक्रमते । नविद्यमानेपिकर्तृपूर्वत्वेदृष्टार्थादृष्टकल्पनाप्रसंगस्तत्प्रमाणत्वे-देवतासिद्धिः अतस्तायुक्तयोव्यामोहमूलाइत्यर्थः । अन्येतु व्याचक्षते प्रेत्यमत्यास्यतानिष्फलास्तानिष्ठास्तामसयोनिहेतु त्वात् अस्मिन्पक्षेऽसमानकर्तृकत्वात्प्रेत्येतिदुर्लभत्वंनिष्ठान्ताद्वासममीपठितव्याप्रेतइति ॥ ९५ ॥

( २ ) **सर्वज्ञनारायणः** । वेदबाह्यावेदार्थविरोधिभ्यः श्रुतयःशब्दाः कुदृष्टयोवेदविरोधितया कुत्सितदृष्टयः प्रमाणा-भासान्यनुमानादीनि ऐहिकलौकिकभोगादिकफलसाधनत्वेदृश्यमानेपि निष्फलाः तमोनिष्ठाः मोहप्रभावाः ॥ ९५ ॥

( ३ ) **कुल्लूकः** । याः स्मृतयोवेदमूलान भवन्ति दृष्टार्थवाक्यानि चैत्यवन्दनात्स्वर्गोभवतीत्यादीनि यानि चासत्तर्कमूलानि देवताऽपूर्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्वाकदर्शनानि सर्वाणि परलोके निष्फलानि यस्मान्नरकफलानि तानिमन्वादिभिः स्मृतानि ॥ ९५ ॥

( ४ ) **राघवानन्दः** । ननु किमिति वेदगम्यमात्मतत्त्वं वेदबाह्यानामपि तत्प्रसिद्धेस्तत्राह याइति । वेदबाह्यावेदार्थबहिष्कृताबौद्धाद्यागमाः याश्च कुदृष्टयः तेषां नैय्यायिकानांवा अनुमानजात्मविषयज्ञानानि ताःसर्वाः प्रेत्य निष्फलाः इहलोके व्याप्त्यादिबलात् वन्ह्यादिसिद्धत्वेपि वेदैकसमधिगम्यात्मरूपादि सर्वधर्महीनंब्रह्मस्वर्गापूर्वादौ तदभावात् । अतएव तमोनिष्ठास्तमोनरकं तन्निष्ठाभोग्यत्वेन तदेकशरणाः । तर्कितकर्माणःफलाजनकत्वेनाकरणादविशेषात् । स्मृता मन्वादिभिः ॥ ९५ ॥

( ५ ) **नन्दनः** । कुदृष्टयः कुतर्कयुक्तानि शास्त्राणि ॥ ९५ ॥

( ६ ) **रामचन्द्रः** । वेदबाह्यायाःस्मृतयः च पुनः याःकाः कुदृष्टयः ताः सर्वाः प्रेत्य निष्फलाभवन्ति । तास्तमोनिष्ठाः तमःप्रभावाःस्मृताः ॥ ९५ ॥

**उत्पद्यन्ते च्यवंते च यान्यतोन्यानि कानिचित् ॥ तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ९६ ॥**

( १ ) **मेधातिथिः** । अतोवेदाद्यान्यन्यानिशासनानि तान्युत्पद्यन्तेविनश्यन्तिच । उत्पादविनाशित्वादनित्यानि वेदस्तुतद्विपर्ययान्नित्यः । अर्वाक्कालिकतयेदानींतनेनपुरुषेण केनचित्कृतत्वादतोनिष्फलान्यदृष्टस्य फलस्याभावात् यदिनामकेचिद्विप्रलंभमोदकादिलक्षणंसिद्धेपि ॥ ९६ ॥

( २ ) **सर्वज्ञनारायणः** । एतद्विवृणोति उत्पद्यन्तइति । उत्पद्यन्ते केनचिदुत्पाद्यन्ते उत्सीदन्तिच । यानि शास्त्राणि । अर्वाक्कालिकतया वेदादनुत्पन्नादविनाशिनश्चार्वाचीनतया । निष्फलत्वेहेतुरनृतानीति ॥ ९६ ॥

( ३ ) **कुल्लूकः** । एतदेवस्पष्टयति उत्पद्यन्तइति । यान्यतोवेदादन्यमूलानि च कानिचिच्छास्त्राणि पौरुषेयत्वादुत्पद्यन्ते एवमाशुविनश्यन्ति तानि चेदानींतनत्वान्निष्फलान्यसत्यरूपाणि च स्मृत्यादीनांतु वेदमूलत्वादेव प्रामाण्यम् ॥ ९६ ॥

( ४ ) **राघवानन्दः** । अत्र हेतुः उत्पद्यन्तइति । उत्पद्यन्ते पुंमतिप्रभवत्वेनोर्ध्वमूर्ध्वंपद्यन्ते । अन्यथान्यथाभवन्तीति । अतोवेदादर्वाक्कालीनतया आधुनिकपुरुषज्ञानजन्यतया पुंसांच मतेश्चवैरूप्यात् । अतएवाग्रेफलापर्यवसायितया निष्फलानि वेदार्थस्य धर्मादेरनैन्द्रियकत्वेन । योगजधर्मस्यापि वेदानुष्ठानजन्यत्वेनान्योन्याश्रयतया अयथार्थाविषयत्वात्फलासाधनत्वात् । न केवलमेवंवेदमूलंविकलतया स्वतोअनृतानिप्रतारकादि वाक्यवत् ॥ ९६ ॥

( ५ ) **नन्दनः** । उत्पद्यन्ते दोषबहुत्वेषु कालेषु एवंवेदबाह्यानामनादर्तव्यत्वंप्रतिपादितम् ॥ ९६ ॥

( ६ ) **रामचन्द्रः** । यानि कर्माणि उत्पद्यन्ते च पुनः विलीयन्ते अतःअन्यानि कानिचित् तानि अर्वाक्कालिकतया निष्फलानि ज्ञेयानि । च पुनः अनृतानि अनृतस्य रूपाणि ॥ ९६ ॥

**चातुर्वर्ण्यंत्रयोलोकाश्चत्वारश्चाश्रमाः पृथक् ॥ भूतंभव्यंभविष्यंच सर्ववेदात्प्रसिध्यति ॥ ९७ ॥**

( १ ) **मेधातिथिः** । इयमपिस्तुतिरेव चातुर्वर्ण्यंवेदात्प्रसिध्यति अधिकारित्वेनावतिष्ठते वसन्ते ब्राह्मणोग्रीष्मेराजन्यइत्यादि स्वरूपंतु व्यवहारावगम्यंसर्ववर्णेष्वतुल्यत्वादन्यत्रदर्शितं । त्रयोलोकाइतःप्रदानंदेवाउपजीवन्त्यनेनत्रै-

लोक्यस्थितिहेतुत्वंवेदस्यसिद्धमेव । वेदमूलत्वात्स्मृतीनांताआश्रमोपिवेदावेदभूतमतीतंजन्मसुखदुःखादियच्चभवद्वर्तमानं-यच्चभविष्यति तत्सर्वस्य वेदएवशरणीयम् ॥ ९७ ॥

( २ ) **सर्वज्ञनारायणः** । भव्यंभवत् । प्रसिध्यति जायते ॥ ९७ ॥

( ३ ) **कुल्लूकः** । ब्राह्मणोऽस्यमुखमासीदित्यादिवेदादेव चातुर्वर्ण्यंप्रसिध्यति ब्राह्मणीभूतमातापितृजनितत्वमिति तदुपजीवितया स्वर्गादिलोकोपि वेदादेव प्रसिद्धः एवंब्रह्मचर्याद्याश्रमाअपि चत्वारोवेदमूलकत्वाद्वेदादेव प्रसिध्यन्ति । किंब-हुना यत्किंचिदतीतंवर्तमानंभविष्यंचतत् सर्वमग्नौ प्रास्ताहुतिःसम्यगित्यादिन्यायेन वेदादेव प्रसिध्यति ॥ ९७ ॥

( ४ ) **राघवानन्दः** । न केवलमात्मतत्त्वं । धर्मादिच वेदगम्यमपितु सर्वमित्याह चातुर्वर्ण्यमितिद्वाभ्याम् । वेदेनै-वचातुर्वर्ण्याश्रमादीनामितरेतरविभाजकत्वात् ॥ ब्राह्मणोस्य मुखमासीद्बाहूराजन्यःकृतः ऊरूतदस्य यद्वैश्यः पद्भ्यांशूद्रो अजायतेति चातुर्वर्ण्यं । भूर्भुवःस्वरिति त्रयोलोकाः । ब्रह्मचर्यंसमाप्य गृही भवेत् गृहीभूत्वा वनी भवेत् वनीभूत्वा प्रव्रजे-दित्यादिश्रुते श्चत्वारः आश्रमाः वेदादेव प्रसिध्यन्ति ज्ञायन्ते ॥ ९७ ॥

( ५ ) **नन्दनः** । पुनरपिवेदस्य वैशिष्ट्यमेवप्रपञ्चयति चातुर्वर्ण्यंत्रयोलोकाइति । चातुर्वर्ण्यंवेदात्प्रसिध्यति चतुर्वर्ण-विभागोवेदादवगम्यते त्रयोलोकावेदात्प्रसिध्यन्ति वेदोक्तकर्मानुष्ठाने सिध्यन्ति । चत्वारआश्रमाश्च वेदात्प्रसिध्यन्ति चतुराश्रम्यविभागोवेदादवगम्यते भूतंभव्यंभविष्यंच सर्वंदेवतादवगम्यते ॥ ९७ ॥

( ६ ) **रामचन्द्रः** । चातुर्वर्ण्यादि सर्वं वेदात्प्रसिध्यति ॥ ९७ ॥

**शब्दस्पर्शश्चरूपंच रसोगन्धश्च पञ्चमः ॥ वेदादेव प्रसूयन्ते प्रसूतिंगुणकर्मतः ॥ ९८ ॥**

( १ ) **मेधातिथिः** । शब्दादीनांभोग्यत्वेन सुखसाधनानांवेदादेवप्रसिद्धिः । वैदिककर्मानुष्ठानाद्गीतादिशब्दोपपत्तिः तत्परित्यागाच्छ्रुतिकर्मशब्दश्रवणमतःशरीरारंभकाः शब्दादयस्ताभ्यांस्वविषयत्वेनोपतिष्ठमानावेदाःप्रसिध्यन्तीत्येतदभिप्रा-यमेतन्नपुनर्वेदउपादानकरणं अतःशरीरारंभकाः शब्दादयस्ताभ्यामेतदेवाह प्रसूतिर्गुणकर्मतः प्रसूतिःशब्दादीनामुत्पत्तिः तदर्थंगुणकर्मफलार्थत्वात्प्रधानकर्मचचित्रादिषु गुणधर्मइत्युक्तं । पाठान्तरंप्रसूतेर्गुणधर्मतःइति गुणाःसत्त्वादयस्तेषांधर्मो-विपरिणामस्तस्ययाप्रसूतिस्तस्यावस्थायाः प्रच्युतिस्तदुद्रेकोविश्वग्भावश्च तत्र वेदएवहेतुरदृष्टनिमित्तत्वात् । वैचित्र्यपाठा-न्तराणिनिष्प्रयोजनत्वान्नलिख्यन्ते ॥ ९८ ॥

( २ ) **सर्वज्ञनारायणः** । प्रसूतिः जन्महेतुः गुणउत्कटत्वादिः धर्मः सुरभित्वादिः । तृतीयार्थेतसिः । एतैरुपलक्षि-ताद्वेदादेव प्रसिध्यन्ति ज्ञायन्ते । एषामपि विवेकोवेदाधीनइत्यर्थः ॥ ९८ ॥

( ३ ) **कुल्लूकः** । यदिहलोके परलोकेच शब्दादयोविषयाः प्रसूयन्ते प्रयुज्यन्ते एतैरिति प्रसूतयः प्रसूतयश्च गुणा-श्चेति सत्त्वरजस्तमोरूपास्तन्निबन्धनवैदिककर्महेतुत्वाद्वेदादेव प्रसिध्यन्ति ॥ ९८ ॥

( ४ ) **राघवानन्दः** । तस्मादक्षरान्महान्महतोवै अहंकारस्तस्मादेवाहंकारात्पञ्चतन्मात्राणि तेभ्यः पञ्चभूतानीतिश्रुतेः । प्रसूतिगुणकर्मतः एषामपिप्रसिद्धिर्वेदादेव प्रसूतिरुत्पत्तिरुक्ता गुणाः आकाशादीनां शब्दादयः कर्म आकाशस्यावकाशादि वायोः शरीरधारणादितेजसः पाकादि जलस्य क्लेदनादि भूमेर्धारणादि । यद्वाप्रसूतिमात्रादि अम्बष्ठस्य वैश्या माता विप्रःपितेत्यादि गुणाः सत्त्वादीनि तदनुरूपयाजनादीनि कर्म अग्निहोत्रादि तानिच ॥ ९८ ॥

( ५ ) **नन्दनः** । प्रसूतिः शब्दादीनामुत्पत्तिस्थानं आकाशादिकंगुणास्तेषां शब्दादिकाः कर्म तेषांव्यापारंइन्द्रियल-क्षणादिकः एतैर्युक्ताः शब्दादयोवेदादेवप्रसिध्यन्ति शब्दादीनांविविधाभेदामोक्षधर्मेषु स्मर्यन्ते ॥ ९८ ॥

( ६ ) **रामचन्द्रः** । शब्दादिपञ्च वेदादेव प्रसिध्यन्ति । प्रसूतिर्जन्महेतुः गुणः उत्कृष्टत्वादिः धर्मः । सुरभित्वादिः । तृतीयार्थे तसिः ॥ ९८ ॥

## बिभर्ति सर्वभूतानि वेदशास्त्रंसनातनम् ॥ तस्मादेतत्परंमन्ये यज्जन्तोरस्य साधनम् ॥ ९९ ॥

( १ ) **मेधातिथिः** । तस्मादेतत्परंमन्येसर्वभूतभरणंच वेदशास्त्रस्यदर्शितंब्राह्मणे तथाचहविरग्नौहूयते सोग्निरादित्यमुद्वयति तत्सूर्योरश्मिभिर्वर्क्ष्यति तेनान्नंभवति ततोहवैनामुत्पत्तिस्थितिर्वैतिहविर्ज्ञायतइति इहाप्युक्तम् ॥ अग्नौप्रास्ताहुतिः सम्यगादित्यमुपतिष्ठतइत्येवमादि । तस्मादेतत्परंमन्येपुरुषार्थकारणं यद्येवंकारणेनजन्तोरस्यधर्मानुशासनमेतस्मात्कारणात्तेषु यथा दर्शितोपपत्तिः । ननुचयद्यौपादानिकमर्थकिंतद्वेदयुक्तं लौकिकमर्थमिति उच्यते अनुष्ठानमस्यवैदिकं कार्यंतुदृष्टत्वाल्लौकिकमेव ॥ ९९ ॥

( २ ) **सर्वज्ञनारायणः** । बिभर्ति यज्ञादिकर्मस्वरूपोपदेशद्वारा वर्तनात् ततश्च वृष्ट्याद्युत्पत्तेरुक्तत्वात् । वेदशास्त्रं वेदरूपं शास्त्रम् । यदस्य जन्तोः साधनमपवर्गसाधनं परं ध्यानं ध्येयादिति तदेतस्माद्वेदादेव । मन्ये जाने ॥ ९९ ॥

( ३ ) **कुल्लूकः** । वेदशास्त्रंनित्यंसर्वभूतानि धारयति तथा च हविरग्नौहूयते सोग्निरादित्यमुपसर्पति तत्सूर्योरश्मिभिर्वर्षति तेनान्नंभवति अथेहभूतानामुत्पत्तिस्थितिश्चेति हविर्जायतइति ब्राह्मणं । तस्माद्वेदशास्त्रमस्य जन्तोर्वैदिककर्माधिकारिपुरुषस्य प्रकृष्टंपुरुषार्थसाधनंजानन्ति ॥ ९९ ॥

( ४ ) **राघवानन्दः** । प्राणिमात्रस्य स्वर्गापवर्गयोः साधनं वेदप्रमाणकमिति संक्षिप्याह बिभर्तीति । बिभर्ति यागादिद्वारा पुष्णाति । अस्य स्वर्गापवर्गादेः । जन्तोरितिव्यधिकरणेषष्ठी । एतद्वेदाख्यम् ॥ ९९ ॥

( ५ ) **नन्दनः** । बिभर्ति पुष्णाति होमोद्देशेनेत्यभिप्रायः । तथाहि पूर्वमुक्तमग्नौप्रास्ताहुतिः सम्यगिति अस्य जन्तोर्यत्परंसाधनंतदेतद्वेदशास्त्रंमन्यइत्यन्वयः ॥ ९९ ॥

( ६ ) **रामचन्द्रः** । यःसनातनं वेदशास्त्रं बिभर्तिसः सर्वशास्त्राणि बिभर्ति तस्मात्कारणादेतद्वेदशास्त्रं परं उत्कृष्टं मन्ये । यत् यतः अस्य वेदशास्त्रं धनम् ॥ ९९ ॥

## सेनापत्यंच राज्यंच दण्डनेतृत्वमेव च ॥ सर्वलोकाधिपत्यंच वेदशास्त्रविदर्हति ॥ १०० ॥

( १ ) **मेधातिथिः** । अतिस्तुतिरियं दण्डेनतावद्दण्डनायका ग्रामनगरयोः कृताकृतप्रेक्षणनियुक्ताः सेनाहस्त्यश्वरथपादातंतस्याःपतिः राज्यंमण्डलेश्वरत्वं सर्वलोकाधिपत्यंसार्वभौमत्वम् ॥ १०० ॥

( २ ) **सर्वज्ञनारायणः** । दण्डनेतृत्वं राजनियुक्त्या ॥ १०० ॥

( ३ ) **कुल्लूकः** । सेनापत्यंराज्यंदण्डप्रणेतृत्वंसर्वभूम्याधिपत्यादीन्येतत्सर्वमुक्तप्रयोजनंवेदात्मकशास्त्रज्ञएवार्हति १००

( ४ ) **राघवानन्दः** । राजन्यबन्धुर्नराज्याधिकारी अपितु वेदविदेवेत्याह सैनेति । सैनापत्यं चतुरङ्गसेनाध्यक्षताम् ॥ १०० ॥

( ५ ) **नन्दनः** । यतएवमतआह सेनापत्यंच राज्यंचेति ॥ १०० ॥

( ६ ) **रामचन्द्रः** । वेदशास्त्रवित्सैनापत्यादिकमर्हति ॥ १०० ॥

यथा जातबलोवह्निर्दहत्यार्द्रानपि द्रुमान् ॥ तथा दहति वेदज्ञः कर्मजंदोषमात्मनः ॥ १०१ ॥

[ न वेदबलमाश्रित्य पापकर्मरुचिर्भवे त् ॥ अज्ञानाच्च प्रमादाच्च दहते कर्मनेतरात् ॥ १ ॥ ] ‡

( १ ) मेधातिथिः । इयमपिपूर्ववत्स्पष्टापदयोजनाप्रसिद्धाश्चपदार्थाः ॥ १०१ ॥

( २ ) सर्वज्ञनारायणः । कर्मजं निषिद्धाचरणजम् ॥ १०१ ॥

( ३ ) कुल्लूकः । यथावृद्धोग्निरार्द्रानपि द्रुमान्दहत्येवंग्रन्थतोऽर्थतश्च वेदज्ञः प्रतिषिद्धाद्याचरणादिकर्मजनितंपापमात्मनोनाशयति एवंच नकेवलंवेदःस्वर्गापवर्गादिहेतुः किंत्वहितनिवृत्तिहेतुरिति दर्शितः ॥ १०१ ॥

( ४ ) राघवानन्दः । सएव कर्मदोषं विनाशयतीति सदृष्टान्तमाह यथेति । जातबलोवायुतृणाभ्याम् । ज्ञानाग्निरित्युक्तेः ॥ १०१ ॥

( ५ ) नन्दनः । नकेवलंवेदशास्त्रविदोगुणातिशयएव किन्तु दोषहानिरपीत्याह यथाजातबलोवह्निरिति ॥ १०१ ॥

( ६ ) रामचन्द्रः । आत्मनः कर्मजं दोषम् ॥ १०१ ॥

वेदशास्त्रार्थतत्त्वज्ञोयत्र तत्राश्रमे वसन् ॥ इहैव लोके तिष्ठन्सब्रह्मभूयाय कल्पते ॥ ॥ १०२ ॥

( १ ) मेधातिथिः । ब्रह्मभूयाय ब्रह्मभावाय ब्रह्मत्वप्राप्तये इतियावत् । तत्रेतिव्युत्थायव्युत्क्रमेणापि यथोक्तंविद्विषणाच्चाप्युत्थाय ब्राह्मणादिभिक्षाचर्यमनुवेद्यव्रजन्तीति ॥ १०२ ॥

( २ ) सर्वज्ञनारायणः । यत्रतत्र गार्हस्थ्योपि । इहैव लोके तिष्ठन्वर्तमानोब्रह्मभूयाय जीवन्मुक्त्या ब्रह्मभावाय समर्थोभवति ॥ १०२ ॥

( ३ ) कुल्लूकः । यस्तत्त्वतोवेदंतदर्थंच कर्मब्रह्मात्मकंजानाति सनित्यनैमित्तिककर्मानुगृहीतब्रह्मज्ञानेन ब्रह्मचर्याद्याश्रमावस्थितोऽस्मिन्नेव लोके तिष्ठन्ब्रह्मत्वाय कल्पते ॥ १०२ ॥

( ४ ) राघवानन्दः । नकेवलमेवं जीवन्मुक्तः सएवेति । ब्रह्मभूयायब्रह्मत्वाय ॥ १०२ ॥

( ५ ) नन्दनः । अर्थतत्त्वज्ञोऽर्थतत्त्वाध्यवसायी ॥ १०२ ॥

( ६ ) रामचन्द्रः । ब्रह्मभूयाय कल्पते ब्रह्मरूपसमर्थोभवति ॥ १०२॥

अज्ञेभ्योग्रन्थिनः श्रेष्ठाग्रन्थिभ्योधारिणोवराः ॥ धारिभ्योज्ञानिनः श्रेष्ठाज्ञानिभ्यो व्यवसायिनः ॥ १०३ ॥

( १ ) मेधातिथिः । अज्ञामूर्खा अनधीयाना न पुनर्विद्वांसोग्रंथमात्राभिधायिनस्तेभ्यो धारिणइत्येतदमत्या परतां पूर्वेतुनातिप्रयत्नतः ग्रंथस्येति तत्रापिसंबध्यते ग्रंथस्यधारिणइति । श्रेष्ठमेतेषांजपप्रतिग्रहादिष्वधिकारात् । ज्ञानिनस्तुसर्वत्राधिकृताइति श्रेष्ठतराज्ञानपूर्वंजपादयोऽनुष्ठीयमानाः फलातिशयदायिनोभवन्ति । तदुक्तं यदेवविद्ययाकरोति श्रद्धयोपनिषदात्तदेववीर्यवत्तरं भवतीति अन्यवशानामनुष्ठातारोनिर्विचिकित्साद्यानैतदन्यथेतिशक्यते एतदपि स्तुत्यर्थमध्ययनमात्रेण वेदाःपुरुषायप्रभवन्ति किंपुनस्तदर्थानैव ॥ १०३ ॥

‡ ( क, ट, ठ )

( २ ) **सर्वज्ञनारायणः** । अज्ञेभ्योऽत्यन्ताज्ञेभ्यः ग्रन्थिनः वेदरूपग्रथनाध्येतारः । धारिणस्तदर्थज्ञाःसन्तोत्यन्तमनुस्मरन्ति । ज्ञानिनः आत्मतत्त्वनिश्चयवन्तः । अध्यवसायिनः तदनुरूपचिन्तनध्यानप्रवृत्ताः ॥ १०३ ॥

( ३ ) **कुल्लूकः** । उभयोः प्रशस्यत्वे सत्यन्यतरातिशयविवक्षायां श्रेष्ठइतीष्ठिनोविधानादीषदध्ययनाअज्ञास्तेभ्योः समग्रग्रन्थाध्येतारः श्रेष्ठास्तेभ्योऽधीतग्रन्थधारणसमर्थाः श्रेष्ठास्तेनग्रन्थिनः पठितविस्मृतग्रन्थाबोद्धव्याः धारिभ्योऽधीतग्रन्थार्थज्ञाःप्रकृष्टास्तेभ्योऽनुष्ठातारः ॥ १०३ ॥

( ४ ) **राघवानन्दः** । इतरपर्युदासेन ब्रह्मविदः श्रेष्ठत्वमेव दृढयति अज्ञेभ्यइति । ग्रन्थिनः ग्रन्थमात्राभ्यासिनः । धारिणोमेधाविनः । ज्ञानिनः मीमांसापरिशीलनतोजातेन ज्ञानेन कर्मानुष्ठानिनः । व्यवसायिनः वेदान्तमीमांसाजनितज्ञानयोगिनः व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दनेत्युक्तेः ॥ कर्तृषु ब्रह्मवेदिनइत्यत्रापि तथैवोक्तेः ॥ १०३ ॥

( ५ ) **नन्दनः** । अज्ञेभ्योऽनधीतवेदशास्त्रेभ्यः ग्रन्थिनोऽधीतविस्मृतवेदाः धारिणः पाठकारिणोज्ञानिनोवेदार्थविदोव्यवसायरहिताः ॥ १०३ ॥

( ६ ) **रामचन्द्रः** । अज्ञेभ्यः मूर्खेभ्यः ग्रन्थाविद्यन्ते येषांते ग्रन्थिनः श्रेष्ठाः । ग्रन्थिभ्यः ग्रन्थपाठकेभ्यः ग्रन्थधारिणः वराउत्कृष्टाः । धारिभ्यः ज्ञानिनः श्रेष्ठाः । ज्ञानिभ्यः अध्यवसायिनः विचारज्ञाः श्रेष्ठाः ॥ १०३ ॥

**तपोविद्या च विप्रस्य निःश्रेयसकरंपरम् ॥ तपसा किल्बिषंहन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥**

( १ ) **मेधातिथिः** । अनेनैतद्दर्शयति सत्यामपिविद्यायांनाक्षीणपापस्यमोक्षः सत्यपिकर्मक्षयेनासत्यामात्मविद्यायां अतोयदुक्तंतेतुभावेनमुच्यन्तइति तदसत् अमृतमपुनरावृत्तिर्येयंबलानंदरूपता ॥ १०४ ॥

( २ ) **सर्वज्ञनारायणः** । तपोयज्ञानशनादिकर्म विद्यात्मज्ञानम् । निःश्रेयसं मोक्षस्तत्करम् । तपसाऽनभिसंधिकृतेन कल्मषं ज्ञानप्रतिषेधकम् । विद्यया ज्ञानेन अमृतं मोक्षम् ॥ १०४ ॥

( ३ ) **कुल्लूकः** । तपः स्वधर्मवृत्तित्वमिति भारतदर्शनात् आश्रमविहितंकर्मआत्मज्ञानंच ब्राह्मणस्य मोक्षसाधनं तत्र तपसोऽवान्तरव्यापारमाह तपसा पापमपहन्ति ब्रह्मज्ञानेन मोक्षमाप्नोति । तथाच श्रुतिः विद्यांचाविद्यांच यस्तीर्त्वोभयंसहअविद्ययामृत्युंतीर्त्वा विद्ययामृतमश्नुतेविद्यातोऽन्यदविद्याकर्मंमृत्युवद्दुःखसाधनत्वान्मृत्युः पापं श्रुत्यर्थएवायंमनुना व्याख्यायोक्तः ॥ १०४ ॥

( ४ ) **राघवानन्दः** । ब्रह्मत्वस्य ज्ञानकर्मसमुच्चयसाध्यत्वमाशङ्क्याह तपइति । तपोविद्या च निःश्रेयसकरमितिवाद्यभिमतं । यत्तत्सत्त्वं तत्र तपसआरादुपकारकत्वं । विद्यायाः कारणत्वमितिव्यवस्थां गृहाणेत्याह । तपइति । तपसः पापनाशकत्वं धर्मेणपापमपनुदतीतिश्रुतिसिद्धम् । अन्यथा नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः ॥ ज्ञानादेव तु कैवल्यंप्राप्यते ब्रह्मशाश्वतम् ॥ तमेव विदित्वातिमृत्युमेति । नान्यः पन्थाविद्यतेयनाय इत्यादिश्रुतिशतविरोधः ॥ १०४ ॥

( ५ ) **नन्दनः** । एवंतावच्छ्रेयस्कराणांमध्ये आत्मज्ञानंतपोवेदाभ्यासंच प्रधानमित्युक्तमिदानींतेष्वप्यात्मज्ञानंतपश्च प्रधानमित्याह तपोविद्याच विप्रस्येति । विद्यात्मज्ञानं परमपितत्त्वद्वारेण ॥ १०४ ॥

( ६ ) **रामचन्द्रः** । विद्यया ज्ञानेन अमृतंमोक्षं अश्नुते ॥ १०४ ॥

प्रत्यक्षंचानुमानंच शास्त्रंच विविधागमम् ॥ त्रयंसुविदितंकार्यंधर्मशुद्धिमभीप्सता ॥ १०५ ॥

( १ ) **मेधातिथिः** । सुद्धद्भूत्वोपदिशति लौकिकमर्थंधर्मोवेदार्थस्तस्यशुद्धिर्विवरपूर्वकाशयनिराकरणेऽङ्कनिश्चितसिद्धांतव्यवस्थापनमुतैतत्प्रत्यक्षादिप्रमाणनिश्चयेसतिभवति । सुविदितेहि प्रत्यक्षेज्वालादिवैषम्येण प्रत्यभिज्ञायते शब्दनित्यत्वात्सिद्धिः यस्यतुसम्यक् नास्तिविवेकः सउभयोरविशेषेणप्रत्यक्षमध्यवसायःस्यात् ज्वालादिषुचानुमानेनोपरिदृष्टाशब्देऽपि तथासंभावयेत् तथा नित्यशब्दसमुदायात्मकोवेदःस्यात् । यस्यतुविहितानि कुशलप्रमाणेषु प्रशब्दोऽतद्ग्रहणनिबंधनोनास्त्यभिज्ञानोमन्यमानोज्वालाविदुषोभेदग्रहणनिबन्धनमिवसितविशितंविशेषोनज्वालाबाधेनशब्देबाधंसंभावयति एवमनुमानमपि सुविवेचितंनभारतादिप्रमाणोपलक्षणत्वाच्च तेनशौर्यादिशास्त्रान्तेकर्मण्यतासिद्धिः । अनुविवेचितंह्यनुमानं सपक्षयोर्दर्शनादर्शनमात्रेणानुमानप्रवृत्तिमन्वानोवेदेपिकर्तारंकल्पयेत् यदातुनिपुणमतिर्भवति तत्तत्प्रयोजकस्यस्वातव्यलक्षणयातस्यकर्तृत्वस्वकरणस्याभावादपौरुषेयत्वमध्यवस्यति । शास्त्रंच विविधागमंशास्त्रेविविधप्रतिषेधात्तस्यविविधोऽनेकप्रकारआगमोयत्रागम्यते स आगमः । बहुशास्त्रत्वाद्वेदस्य श्रुतिस्मृतिभेदेनचविविधत्वमुक्तं सचायमर्थः स्वाध्यायविद्याक्षेपः शुद्धभावेनोपदिष्टः सहिजिज्ञासाचनिश्चयावसानेन च प्रत्यक्षादिषु सम्यङ्निधिः स्त्रीशूद्रोच्छिष्टमेवेत्यदत्तंभवितुमर्हति । नहितच्छूद्रस्योच्छिष्टमितिशक्यंवक्तुं किंतेनतदुच्छिष्टमिति एवमादौसंदेहेतूच्छिष्टवचनंप्रमाणंकर्तव्यं यथायेशूद्रादयोविप्राःशास्तेषामयंधर्मसंदेहः शिष्टोपदिष्टमेवयुक्तंकर्तुं ततश्चन्यूनाधिकभावेन याकृताकल्पनासएवतत्रधर्मस्तेषामपितथोपदिशतां नदोषः ।यतआह सधर्मस्यादशंकितइति ।अधर्मंतूतेदोषधर्मेनुकापिचिकित्सा । तथागोत्रप्रवरसंदेहे कथंचस्मृतिविच्छेदे ब्राह्मणवचनात् गोत्रप्रवरसिद्धिः। तत्रचप्रवरसंदेहे सर्वेषांमानवेसंशयइत्युक्तं। गोत्रसंशये तर्हिभविष्यति तत्रचगोत्रसंशयाभावेकुतः प्रवरसंशयः प्रतिगोत्रप्रवराणांभेदेनपठितत्वात् उपपद्यएवमेतद्गोत्रनामधेयं प्रवराश्चभिन्नानानागोत्राणि तत्रसत्यपि प्रवरनिश्चये योत्रसंदेहउत्पद्यते ॥ १०५ ॥

( २ ) **सर्वज्ञनारायणः** । प्रत्यक्षमिन्द्रियज्ञानम् । अनुमानं लिङ्गजम् । शास्त्रं वेदरूपं शास्त्रं शब्दजम् । आगच्छन्ति जायन्तइत्यागमाः स्मृतिपुराणार्थाः तैर्नानाविधैः सहितं सुविदितं सम्यक्तर्केणनिर्णीतं तत्त्वम् । धर्मस्य शुद्धिः सम्यक्ज्ञानम् ॥ १०५ ॥

( ३ ) **कुल्लूकः** । धर्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षमनुमानंच धर्मसाधनभूतद्रव्यगुणजातितत्त्वज्ञानाय शास्त्रंच वेदमूलंस्मृत्यादिरूपंनानाप्रकारधर्मस्वरूपविज्ञानाय सुविदितंकर्तव्यंतदेवचप्रमाणत्रयंमनोरभिमतं उपमानार्थापत्त्यादेश्चानुमानान्तर्भावः ॥ १०६ ॥

( ४ ) **राघवानन्दः** । धर्मादेः शास्त्रगम्यत्वमुक्तमनुवदंस्तत्सहकारितया प्रत्यक्षानुमाने आह प्रत्यक्षेति । प्रत्यक्षं साधुमनस्तुष्ट्यादि द्रव्यगुणब्राह्मण्यादि जात्यादिविषयकंवा अनुमानंप्रपञ्चोमिथ्या दृश्यत्वात् शुक्तिरूप्यवत् । सुखं धर्मैकनियतमित्यादि त्र्यवयवं पञ्चावयवंवा शास्त्रं हितोपदेष्टृ वेदाख्यं विविधागमं शब्दत्वावच्छिन्नं बौद्धवाक्येतरपुराणादयोविविधागमाः सहकारिणोयस्य तत् त्रयं प्रत्यक्षादि सुविदितंकार्यं मीमांसादिना प्रत्यक्षाभासशब्दाभासहेत्वाभासनिरासेन स्वस्वविषयप्रतिष्ठितं कार्यम् । धर्मशुद्धिमभीप्सता धर्मपदं ब्रह्माप्युपलक्षयति जगद्विधारकत्वात् ॥ १०५ ॥

( ५ ) **नन्दनः** । नैश्रेयसफलंकर्ममाह प्रत्यक्षमनुमानंचेति । विविधागमंबहुकर्तृकं सुविदितमवगतदोषबलाबलम् ॥ १०५ ॥

( ६ ) **रामचन्द्रः** । प्रत्यक्षानुमानंशास्त्रं च पुनः विविधागमं स्मृतिपुराणेतिहासादीनि अभीप्सता पुंसा त्रयंसुतरां विदितं कार्यम् ॥ १०५ ॥

## आर्षंधर्मोपदेशंच वेदशास्त्राऽविरोधिना ॥ यस्तर्केणानुसंधत्ते सधर्मंवेद नेतरः ॥ १०६ ॥

( १ ) **मेधातिथिः** । ऋषिर्वेदस्तत्रभवः आर्षोधर्मोपदेशोयोवैदिकोयस्तर्केणानुमानान्तरेण युक्त्यानिरूपयति सधर्मंवेदेति पदयोजना तर्कऊहापोहान्तर्यसिद्धिः इदमत्रयुक्तमूहितुमिदमपोहितुंयदासौर्येकर्मणिनिर्वापमन्त्रेदेवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नयेत्वाजुष्टंनिर्वपामीति प्रकृतितः प्राप्ते मन्त्रेऽग्निपदस्यार्थसमवायादपोहः सूर्यपदस्यचक्षेपः । अयंतर्कोनविरुध्यतेवेदेन योप्येवंमन्यते । सौर्येकर्मण्यग्नेर्देवतायाःअभावादर्थेनच मन्त्राणां प्रयोज्यत्वादेकदेशोपशमेच मंत्रत्वाभावात् कृत्स्नस्यवैमंत्रस्यलोपः एषवेदार्थविरोधीतर्कः । यदुच्चारणेनमंत्राणामयंविधिः अयमर्थवादः अस्यात्रतात्पर्यं इदश्युपेक्षायदत्रैतच्चमीमांसातोज्ञायतेऽतोधर्मशुद्ध्यर्थंमीमांसावेदनमेतेनचोदितम् । अन्येतुव्याचक्षते तर्केणेति तर्कप्रधानाग्रंथालौकिकप्रमाणस्वरूपेण परान्यायवैशेषिकलोकायतिकाउच्यन्ते तत्रवेदविरुद्धानि बौद्धलोकायतिकनैर्ग्रंथादीनि पर्युदस्यन्ते तानिवेदविरुद्धानि तत्रप्रमाणंवेदः कपिलकणादक्रियामविरथतानिग्रहान्तादिषुहि शब्दः प्रमाणं तथाचाक्षपादसूत्रं प्रत्यक्षानुमानोपमा शब्दाःप्रमाणानि वैशेषिकाअपितद्वचनानामाम्नायप्रामाण्यमित्याहुः अतस्तानिशास्त्राणिश्रोतव्यानीतिच। तथाच महाभारते भगवताकृष्णद्वैपायनेनदर्शितं ॥ श्रोत्रियस्येवतेराजन्मंदकस्याल्पबुद्धयः ॥ अनुवाकहताबुद्धिर्नैषासूक्ष्मार्थदर्शिनी ॥ अनुवाकहतेतितर्कहतामप्युपपत्तिमाह केवलत्वादसत्तया तयेदमपरमुतकश्चिन्नलोकायतिकानब्राह्मणान्स्मार्तःसेवते ॥ अनर्थकुशलाह्येते मूर्खाःपण्डितमानिनइति ॥ अनेनासत्तर्कश्रवणंप्रसिद्धंपूर्वेणसत्तर्कानुज्ञानंतदेवतदितिकिंचित् । वेदःप्रामाण्यंवेदस्याहुरीश्वरप्रणेतृकतया नचतस्यास्तिसंभवः नचतस्मिन्पक्षेवेदःप्रमाणंतस्यह्यसावीश्वरः समयोपस्थापकएतेषुश्रूयमाणेषु प्रामाणिकोविपरीतोभिनिवेशोजायते अतोऽसत्तर्काएव तेनच वैदिकस्य वाक्यावबोधेकस्यचिदप्युपयुज्यते । तथाचसांख्यः सह्यविशुद्धिःक्षयातिशययुक्तइत्याहुः अक्षपादैरपितदप्रामाण्यंमन्यते । तथाचयाज्ञिकपूर्वपक्षेनिर्धारितंयदपिकेनचित्पठतंकर्ममीमांसावेद्यंतर्कभाषाभ्यामेवमभिधानं यथाश्रुति विज्ञायते देवाअस्माल्लोकादमुंलोकमायंस्तानृषयोन्वीयुस्तान्मनुष्याअब्रुवन्कथमथोभविष्यामः एभ्यस्तर्वंकर्मऋषयःप्रयच्छत तस्माद्यत्नब्राह्मणउक्तवांस्तर्कयत्यार्षमेवतद्भवतीतिश्रुतेरेषांयथोक्ततर्कपदार्थानुवादीनि ॥ १०६ ॥

( २ ) **सर्वज्ञनारायणः** । एतदेव स्पष्टयति आर्षमिति । आर्षमृषिप्रणीतंस्मृत्यादि धर्मोपदेशकत्वहेतुत्वम् । वेदएव शास्त्रं तदविरोधिना । अनुसंधत्ते वेदेनसह संघटयति ॥ १०६ ॥

( ३ ) **कुल्लूकः** । ऋषिदृष्टत्वादार्षंवेदंधर्मोपदेशंच तन्मूलस्मृत्यादिकंयस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति सधर्मंजानाति नतु मीमांसानभिज्ञः धर्मे करणंवेदोमीमांसाचेति कर्तव्यता स्थानीया । तदुक्तंभट्टवार्तिककृता ॥ धर्मे प्रमीयमाणे हि वेदेन करणात्मना ॥ इतिकर्तव्यताभागंमीमांसा पूरयिष्यति ॥ १०६ ॥

( ४ ) **राघवानन्दः** । किंच आर्षमिति । ऋषिर्मन्त्रद्रष्टामुनिस्तदुक्तोवेदः । धर्मोपदेशं धर्मशास्त्रं मन्वादि । तर्केण मीमांसया पुराणन्यायमीमांसाइत्यादि मीमांसासंज्ञकस्तर्कइत्युक्तेः । अतएव ते सर्वे सर्वार्थेषु मीमांस्ये इति संगच्छते ।

अनुसंधत्ते विचारयति श्रुतिलिङ्गादिनोपक्रमादिना च संधत्ते । धर्मं ब्रह्म च वेदान्निश्चिनोति । नेतरोबहिर्मुखइत्यन्वयः ॥ १०६ ॥

( ५ ) **नन्दनः** आर्षंवेदमृषिभिःस्तुतत्वात्तथाचाह भगवान्वेदव्यासः ॥ युगान्तेऽन्तर्हितान्वेदासेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञातास्वयंभुवाइति ॥ धर्मोपदेशंधर्मशास्त्रं वेदशास्त्राभ्यामविरोधोवेदशास्त्राविरोधः ॥ १०६ ॥

( ६ ) **रामचन्द्रः** । सः धर्मं वेद जानाति इतरः न ॥ १०६ ॥

**नैःश्रेयसमिदंकर्म यथोदितमशेषतः ॥ मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥**

( १ ) **मेधातिथिः** । वक्ष्यमाणार्थादारातिशयोत्पत्यर्थःश्लोकोयं श्रोत्रियसंबोधनार्थः । रहस्यंगुह्यम् ॥ १०७ ॥

( २ ) **सर्वज्ञनारायणः** । एतन्नैःश्रेयसं मानवस्य शास्त्रस्य निःश्रेयससाधनं कार्यम् ॥ १०७ ॥

( ३ ) **कुल्लूकः** । एतन्निःश्रेयससाधनंकर्मनिःशेषेण यथावदुदितम् अतऊर्ध्वमस्य मानवशास्त्रस्य रहस्यंगोपनीयमिदंवक्ष्यमाणंशृणुत ॥ १०७ ॥

( ४ ) **राघवानन्दः** । इदंतु शास्त्रं मोक्षोपयोगिकर्तव्यतात्पर्यकमित्याह नैःश्रेयसमिति । यथोदितं कर्माशेषतः साक्षात्परंपरया वा नैःश्रेयसकरमेवेति । रहस्यमुपदिश्यतइत्यन्वयः ॥ १०७ ॥

**अनाम्नातेषु धर्मेषु कथंस्यादिति चेद्भवेत् ॥ यंशिष्टाब्राह्मणाब्रूयुः सधर्मः स्यादशङ्कितः ॥ १०८ ॥**

( १ ) **मेधातिथिः** । ननुचानाम्नातेषुकःसंदेहः नोजानेनेहकथंस्यादितिचेत् यतोनैवतेषांतदुच्यते नेहेदृशमनाम्नातमभिप्रेतंकिंतर्हियत्सामान्यतआम्नातंविशेषतस्तुनज्ञायतेननुच तत्रापिकः संदेहः सामान्यस्यविशेषमात्रापेक्षाद्येनकेनचित्सिद्धशास्त्रार्थयथाद्भिराचमेदितिकुप्यस्यावरनादेयादिभेदेन भिन्नास्वप्सुताः काश्चिदुपादीयमानाःसंपादयन्तिशास्त्रार्थं सत्यंयत्रप्रतिषेधश्रुतेर्नचवैशेषिकंप्रायश्चित्तमुपदिष्टं यत्रेदमुपदिश्यते यदाशूद्रोच्छिष्टंकिंचित्पात्रंतदशुद्धंतत्संपर्कादशुचि तस्मिन्नुकृतेशुद्धेयदिकेनचिद्भुक्तंस्यातदा किंप्रायश्चित्तमिति संदेहः । नचद्वयमपिप्रशंसेव ॥ १०८ ॥

( २ ) **सर्वज्ञनारायणः** । इदानीं मनूक्तस्य ग्रन्थस्य सतत्त्वं रहस्यं विगूढं तदुदीक्षते । अनाम्नातेषु विशेषतइतिचेद्भवेत्संशयः । शिष्टाः ब्राह्मणाः परिषद्भूताः ॥ १०८ ॥

( ३ ) **कुल्लूकः** । अस्य शास्त्रस्यासमस्तधर्माभिधानमाशङ्क्यानयासामान्योक्त्यासमग्रधर्मोपदेशकत्वंबोधयति । सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथंकर्तव्यंस्यादिति यदि संशयोभवेत्तदा यंधर्मंवक्ष्यमाणलक्षणाः शिष्टाब्राह्मणाब्रूयुः सतत्र निश्चितोधर्मः स्यात् ॥ १०८ ॥

( ४ ) **राघवानन्दः** । ननु वेदार्थस्यातीव दुरवगमत्वात्तेनास्पृष्टेषु धर्मेषु कागतिस्तत्राह अनाम्नातेति । ब्रूयुरयंधर्मइति'। सः अशङ्कितः फलाजनकत्वेन शङ्कारहितः ॥ १०८ ॥

( ५ ) **नन्दनः** । तदेवरहस्यंप्रश्नपूर्वकंव्याकरोति अनाम्नातेषु सर्वेष्विति ॥ १०८ ॥

( ६ ) **रामचन्द्रः** । अनाम्नातेषु धर्मेषु अजातेषु सत्सु कथंस्यादिति भवेत् तत्राह यंधर्मंशिष्टाब्राह्मणाब्रूयुः स धर्मः अशङ्कितः स्यात् ॥ १०८ ॥

**धर्मेणाधिगतोयैस्तु वेदः सपरिबृंहणः ॥ ते शिष्टाब्राह्मणाज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥**

( १ ) **मेधातिथिः** । शिष्टलक्षणमनेन कथ्यते । ननुचार्थकामेष्वसक्तानामित्यत्रोक्तानामेवशिष्टलक्षणादन्योपित-

स्यतत्रार्थ आशंकितोऽतोनतस्यलक्षणपरतैव । यच्चविशिष्टेनोक्तं शिष्टःपुनरकामात्मेति तत्रविद्वत्तयाश्रुतत्वात् यत्रपरिपूर्णत्वादधिगतोऽर्थतश्च विदितः परिबृंहणानि । तथा च भगवान्व्यासः ॥ इतिहासपुराणाभ्यांवेदार्थमुपबृंहयेदिति ॥ स्मृतयोप्येवंगृहीतार्था भवन्ति । ब्राह्मणग्रहणमनुवादस्तेषामपिधर्मप्रवचनाधिकारात् । श्रुतिप्रत्यक्षहेतवः प्रत्यक्षंहेतवश्च प्रत्यक्षहेतवः हेतुशब्देन प्रत्यक्षादन्याभिधानमुच्यते । श्रुतःप्रत्यक्षोहेतुश्चतेषांश्रुतिप्रत्यक्षहेतवः एतदुक्तंभवति यथाप्रत्यक्षंनिर्विवादंप्रामाण्यमेवताद्दर्शीं श्रुतिमन्यन्ते । यान्यपिहेतूत्थानिप्रमाणानितेषुविश्वसन्ति श्रुतिमेवतर्कमन्यन्तेहेतुशास्त्राश्रयणेनचेदंनप्रमाणीकुर्वन्ति । अथवाश्रुतेःप्रत्यक्षश्रुतेः प्रत्यक्षशब्दःश्रौतेप्रत्यये प्रत्यक्षतुल्यत्वात्प्रयुक्तः । सचहेतुर्धर्माधर्मपरिज्ञानेकारणं येषांतएवमुच्यन्ते ॥ १०९ ॥

( २ ) **सर्वज्ञनारायणः** । शिष्टानेव लक्षयति धर्मेणेति । परिबृहणं अङ्गधर्मशास्त्रपुराणादि । श्रुतेर्वेदस्य प्रत्यक्षं श्रोत्रप्रत्यक्षं तद्धेतवः अध्ययनसंप्रदायकर्तारः ॥ १०९ ॥

( ३ ) **कुल्लूकः** । ब्रह्मचर्याद्युक्तधर्मेण यैरङ्गमीमांसाधर्मशास्त्रपुराणाद्युपबृंहितोवेदोऽधिगतस्ते ब्राह्मणाः श्रुतेःप्रत्यक्षीकरणे हेतवोये श्रुतिंपठित्वा तदर्थमुपदिशन्ति ते शिष्टाविज्ञेयाः ॥ १०९ ॥

( ४ ) **राघवानन्दः** । तेषां शिष्टानां ब्राह्मणानां लक्षणमाह । धर्मेण ब्रह्मचर्यादिना । अधिगतोऽधीतः । सपरिबृंहणः व्याकरणादि [ संयुक्तः ][1] । श्रुतिप्रत्यक्षहेतवः श्रुतिप्रत्यक्षानुमानानिहेतवः प्रमाणत्वेन धर्मादौ वर्तन्तेयेषांशिष्टानां ते । श्रुतेः प्रत्यक्षकरणे हेतवोगर्भाधानादिसंस्कारावा ते तथोक्ताः ॥ १०९ ॥

( ५ ) **नन्दनः** । केपुनः शिष्टाइत्यपेक्षायामाह धर्मेणाधिगतोयैस्त्विति । सपरिबृंहणइतिहासपुराणसहितोयेषांश्रवणंप्रत्यक्षंच धर्मज्ञानवचनयोर्हेतुश्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥

( ६ ) **रामचन्द्रः** । यैः धर्मेण धर्मशास्त्रपुराणादिना वेदः अधिगतः प्राप्तः सपरिबृंहणः शिक्षाकल्पादिषडङ्गयुक्तः ते शिष्टाज्ञेयाः ॥ १०९ ॥

**दशावरा वा परिषद्यंधर्मंपरिकल्पयेत् ॥ त्र्यवरावापि वृत्तस्था तंधर्मंन विचालयेत् ॥ ११० ॥**

**[ पुराणंमानवोधर्मोसाङ्गोपाङ्गचिकित्सकः॥ आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥१॥ ]***

( १ ) **मेधातिथिः** । दशावरेयस्यादशावराः यदिबहवोनसंनिधीयन्तेदशावश्यंसंनिधातव्यास्तदभावेत्र्यवराः वृत्तस्थेतियदुक्तमर्थकामेष्वसक्तानामितितस्यैवायमनुवादः । नचैषापुरुषसंख्यापितुगुणसंख्या तथाचवक्ष्यत्येकोपिवेदविदिति एकस्ययतोगुणसमूहस्य बाहुल्येनासंभवात्पुरुषप्रधानतयासंख्यायानिर्देशःकृतः तानीदानींपरिषत्त्वहेतुः ॥ ११० ॥

( २ ) **सर्वज्ञनारायणः** । दशसंख्यात्यन्तापकृष्टा यत्र सा दशावरा । वेति त्र्यवरापेक्षया विकल्पः । एवं त्र्यवरा वृत्तस्था स्वयमपि धर्मचारिणी कुर्यात् ॥ ११० ॥

( ३ ) **कुल्लूकः** । यदि बहवः सन्तोऽवहितान भवन्ति तदा दशावरात्र्यवराश्चेति वक्ष्यमाणलक्षणा यस्याः सांपरिषत्तदभावे त्रयोऽवरायस्याः सा वा सदाचारायंधर्मंनिश्चिनुयात्तंधर्मत्वेन स्वीकुर्यान्नविसंवदेत् ॥ ११० ॥

( ४ ) **राघवानन्दः** । उक्तब्राह्मणानां समूहः परिषदितिज्ञापयन्ब्राह्मणसंख्यां विकल्पेनाह दशेति । दशब्राह्मणाअवरान्यूनसंख्यावच्छेदकायस्यां सा तथा । एवं त्र्यवरापि । वृत्तस्थाः वृत्तं जीवनं तद्युक्ताः वृत्तिकर्षणाल्लोभादिना धर्मच्युतेः संभाव्यमानत्वात् । नविचालयेदप्रमाणतया फलाहेतुशङ्कया वा ॥ ११० ॥

( १ ) राघ० २ *( क, ग, ट, ठ )

( ५ ) **नन्दनः** । कतीनांविशिष्टानामुक्तिः धर्मसंक्षये किंप्रमाणमित्यपेक्षायामाह दशावरावा परिषदिति ॥ ११० ॥

( ६ ) **रामचन्द्रः** । दशावरा दशभ्यःअवरान्यूना सा परिषत् यंधर्मं परिकल्पयेत् चपुनः त्र्यवरा त्रिभ्यः अवरा वृत्तस्था स्वधर्मं न विचालयेत् ॥ ११० ॥

**त्रैविद्योहैतुकस्तर्की नैरुक्तोधर्मपाठकः ॥ त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ १११ ॥**

( १ ) **मेधातिथिः** । गुणानदर्शयति पुरुषप्रधानेपि निर्देशेगुणपरतैवविज्ञेया । पूर्वोक्ताच्चेतोविषाणीवरुद्धान्प्रतिबालधिः साधावनितिगोत्रेलिप्सामिति । यस्त्रैविद्योवेदत्रयस्याध्येतातदर्थस्यचवेदिता अनुमानादिकुशलस्तर्की अयमूहापोहबुद्धियुक्तः । ननुचनैवंविदेविदार्थवित्त्वमेवसंभवतीत्युक्तं सत्यं परोपदेशादपिकस्यचिद्याचनावतीवेदनमात्रा संभवत्यपि अतश्च प्रत्ययेन विनावेदार्थग्रहणार्थहेतुकेनभातीत्युक्तं एतेननिर्मुक्तोव्याख्यातः । धर्मपाठकोमन्वादिस्मृतिश्रुतिशास्त्राणामध्येता । त्रयश्चाश्रमिणोह्येतेह्यनुष्ठानपराकुशलतरधर्मेषुभवन्ति पूर्वोब्रह्मचारीगृहस्थोभिक्षुरित्येके तस्यहिग्रामप्रवेशोनानिषिद्धोगौतमेनचेयंमानुषीपठिता ॥ ब्रह्मचारीगृहस्थोभिक्षुर्वैखानसइति ॥ अन्येत्वाहुः हिंसानुज्ञानास्तीति कथमसौधर्माश्रयात्तस्मात्तापससकाशमन्यैः सहगंतव्यम् ॥ १११ ॥

( २ ) **सर्वज्ञनारायणः** । त्रैविद्यइत्येकोपाध्यपेक्षमेकवचनं ऋग्यजुःसामार्थज्ञास्त्रयइत्यन्वयः । हैतुकः अनुमानज्ञः । तर्की मीमांसावाक्यार्थानुकूलतर्कज्ञः । नैरुक्तः पदार्थनिरुक्तिकुशलः । धर्मं भणयति धर्मभाणकः स्मृतिपुराणेतिहासज्ञः । त्रयआश्रमिणोव्रतिगृहस्थवनस्थाः पूर्वे परिव्राजकादन्ये । एतदभावे च त्र्यवराग्राह्याः ॥ १११ ॥

( ३ ) **कुल्लूकः** । वेदत्रयसंबन्धशाखात्रयाध्येता श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञोमीमांसात्मकतर्कविन्निरुक्तज्ञोमानवादिधर्मशास्त्रवेदी ब्रह्मचारी गृहस्थवानप्रस्थाइत्येषा दशावरा परिषत्स्यात् ॥ १११ ॥

( ४ ) **राघवानन्दः** । परिषद्द्वयंक्रमेण विवृणोति त्रैविद्यइति द्वाभ्याम् । त्रैविद्यः ऋग्यजुःसामानीतित्रयीविद्यास्तीति वेदत्रयशाखाध्येतारः । हेतुकः तार्किकः हेतुः पञ्चावयवानुमानं तेनैव व्यवहरति । तर्की मीमांसकः । नैरुक्तः निरुक्तंवेदाङ्गं तेन व्यवहरति तदुक्तम् । शिक्षाकल्पोव्याकरणं निरुक्तं छन्दोज्योतिषमिति । निरुक्तपदं षण्णामुपलक्षणम् । धर्मपाठकः मन्वादिधर्मशास्त्राध्यायी । आश्रमिणः पूर्वे ब्रह्मचारी गृही वानप्रस्थश्चैकैकशः ॥ १११ ॥

( ५ ) **नन्दनः** । केपुनस्ते दशतानाह त्रैविद्योहैतुकस्तर्कीति । त्रिवेदी त्रिविद्या यस्तामधीते वेत्तिवेति सत्रैविद्यः ऋग्वेदविद्यजुर्वेदवित्सामवेदविदश्चेतित्रयइत्यर्थः । हैतुकः हेतुभिरर्थनिर्णयेकुशलः तर्की ऊहापोहसमर्थः नैरुक्तः निरुक्तवित् धर्मपाठकोधर्मशास्त्राध्यायी आश्रमिणइति प्रशंसार्थेप्रत्ययः । ब्रह्मचर्यंयेन सम्यगनुष्ठितंयेन गार्हस्थ्यंयेन वानप्रस्थंते त्रयोपीति एतेदशपुरुषाद्दशावरापरिषदिति ॥ १११ ॥

( ६ ) **रामचन्द्रः** । त्रैविद्यः ऋग्यजुःसामपाठकः हैतुकः तर्कमीमांसार्थवाक्यानुकूलतत्त्वज्ञः नैरुक्तः पदार्थनिरुक्तिकुशलः धर्मपाठकः स्मृतिपुराणेतिहासज्ञः च पुनः पूर्वे त्रयः आश्रमिणः ब्रह्मचारिप्रभृतयः एषादशावरा परिषत् ॥ १११ ॥

**ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ॥ त्र्यवरापरिषज्ज्ञेया धर्मसंशयनिर्णये ॥ ११२ ॥**

( १ ) **मेधातिथिः** । निरुक्तव्याकरणमीमांसाभिर्वेदार्थोज्ञायते तेचसर्वेसाधारणाः नहितत्रैकस्यवेदस्यार्थोज्ञायतेऽन्यस्यनित्यमयंप्रकारोस्ति । अथऋग्वेदादीत्यादिकथंभेदोपपत्तिः तथातत्रगृह्यसूत्रभेदेनचेदमुक्तम् ॥ ११२ ॥

( २ ) **सर्वज्ञनारायणः** । तानाह ऋग्वेदविदिति । तद्विचदर्थवित् ॥ ११२ ॥

( ३ ) **कुल्लूकः** । ऋग्यजुःसामवेदशाखानांयेऽध्येतारस्तदर्थज्ञाश्च त्रयः सा धर्मसंदेहनिरासार्थंत्र्यवरापरिषद्बोद्धव्या ॥ ११२ ॥

( ४ ) **राघवानन्दः** । त्र्यवरात्रयऋग्वेदादिविदोऽवरायेषु धर्मानिर्णयकर्तृषु धर्मसंशयनिर्णये कर्तव्ये परिषत् ज्ञेया ॥ ११२ ॥

( ६ ) **रामचन्द्रः** । ऋग्यजुः सामवेदवित् ॥ ११२ ॥

**एकोपि वेदविद्धर्मंयंव्यवस्येद्विजोत्तमः ॥ सविज्ञेयः परोधर्मोनाज्ञानामुदितोऽयुतैः ॥ ११३ ॥**

( १ ) **मेधातिथिः** । व्यवस्येन्निश्चित्य कथयेदित्यर्थः । नाज्ञानांमूर्खाणां अयुतैरप्युदितः । उत्तरःप्रागेवव्याख्यायते ॥ ११३ ॥

( २ ) **सर्वज्ञनारायणः** । वेदत्रयार्थवित् । विचक्षणस्तर्ककुशलः । नत्वज्ञानां वेदहेत्वादिज्ञानशून्यानाम् ॥११३ ॥

( ३ ) **कुल्लूकः** । तदभावे एकोपीति । एकोऽपि वेदार्थधर्मज्ञोयंधर्मंनिश्चिनुयात् प्रकृष्टोधर्मः सबोद्धव्योनवेदानभिज्ञानांदशभिः सहस्रैरप्युक्तः वेदविच्छब्दोऽयंवेदार्थधर्मज्ञपरः । एतच्च अंशोपलक्षणंस्मृतिपुराणमीमांसान्यायशास्त्रज्ञोपि गुरुपरंपरोपदेशविच्च ज्ञेयः । तथा ॥ केवलंशास्त्रमाश्रित्य नकर्तव्योविनिर्णयः । युक्तिहीनविचारेतु धर्महानिः प्रजायते ॥ तेनबहुस्मृतिज्ञोपि यदि सम्यक्प्रायश्चित्तादिधर्मंजानाति तदातेनाप्येकेन धर्मउक्तः प्रकृष्टोधर्मोज्ञेयः । अतएव यमः ॥ एकोद्वौ वा त्रयोवापि यद्ब्रूयुर्धर्मपाठकाः ॥ सधर्मइति विज्ञेयोनेतरेषांसहस्रशः ॥ ११३ ॥

( ४ ) **राघवानन्दः** । एतेषामभावे वेदविदेकोपि धर्मवक्ता नाज्ञानां दशसहस्रमित्याह एकइति । व्यवस्येत् निश्चिनुयात् । अज्ञानामयुतैरुदितोन धर्मइत्यन्वयः ॥ ११३ ॥

( ६ ) **रामचन्द्रः** । एकोपि वेदत्रयार्थवित् यंधर्मं व्यवस्येत् विचालयेत् सपरोधर्मः अज्ञानामयुतैः योधर्म उदितः सनकार्यः ॥ ११३ ॥

**अव्रतानाममन्त्राणांजातिमात्रोपजीविनाम् ॥ सहस्रशः समेतानांपरिषत्त्वंन विद्यते ॥ ११४ ॥**

( १ ) **मेधातिथिः** । अव्रतानामितिप्रागुक्तएवार्थोव्यतिरेकद्वारेणकथ्यते । व्रतिनोवेदाध्यायिनः निश्चयंब्रुवते तत्रनविचिकित्सितव्यं विद्वद्भिरविद्वद्भिर्वाऽतएवनलघुपरिकल्पोगुणतुल्यवद्विकल्पते ॥ ११४ ॥

( २ ) **सर्वज्ञनारायणः** । अयुतैरित्युक्तंतत्स्पष्टयति अव्रतानामिति । अव्रतानामचीर्णवेदव्रतानाम् । अमन्त्राणामनधीतवेदानाम् । सहस्रशः सहस्रसंख्यया । परिषत्त्वं धर्मोपदेशकत्वम् ॥ ११४ ॥

( ३ ) **कुल्लूकः** । साविच्यादिब्रह्मचारिव्रतरहितानांमन्त्रवेदाध्ययनरहितानांब्राह्मणजातिमात्रधारिणांबहूनामपिमिलितानांपरिषत्त्वंनास्ति धर्मनिर्णयसामर्थ्याभावात् ॥ ११४ ॥

( ४ ) **राघवानन्दः** । व्रतमन्त्रविहीनानां ब्रह्मबन्धूनां न परिषत्वमित्याह अव्रतानामतपस्विनां अमन्त्राणांवेदहीनानाम् ॥ ११४ ॥

( ६ ) **रामचन्द्रः** । अव्रतानां अमन्त्राणां मन्त्रमात्रे रहितानां द्विजानांजातिमात्रोपजीविनां सहस्रशः समेतानां एतेषांमिलितानां परिषन्न विद्यते ॥ ११४ ॥

यंवदन्ति तमोभूतामूर्खाधर्ममतद्विदः ॥ तत्पापंशतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥

( १ ) मेधातिथिः । वक्तॄणामविदुषांदोषकथनम् ॥ ११५ ॥

( २ ) सर्वज्ञनारायणः । तमोविपरीतज्ञानं उद्भूतास्तत्प्रायाः । मूर्खाअनधीतवेदाः । अतद्विदोधर्ममजानन्तः तद्धर्माभासकरणे यथोक्तधर्मपरित्यागेन यत्पापं तच्छतधा शतप्रकारं शतगुणमित्यर्थः । तद्वक्तॄन् तद्धर्मान्वक्तॄंस्तानेव मूर्खान् ॥ ११५ ॥

( ३ ) कुल्लूकः । तमोगुणबहुलामूर्खाः धर्मप्रमाणवेदार्थानभिज्ञाअतएव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मयंपुरुषंप्रत्युपदिशन्ति तदीयंपापंशतगुणंभूत्वा वाचकान्बहून्भजेत ॥ ११५ ॥

( ४ ) राघवानन्दः । न केवलं परिषत्वाभावोऽपितु तन्निर्णीतमनर्थावहमित्याह यमिति । तमोभूतास्तमसाऽविवेकेनाभिभूताः । तत्पापं कर्तुः पापं शतगुणंभूत्वा तद्वक्तॄन्धर्मनिर्णयकर्तॄननुगच्छति फलायेतिशेषः ॥ ११५ ॥

( ६ ) रामचन्द्रः । तमोभूताः विपरीतज्ञानंप्राप्ताः यंधर्मं वदन्ति तत्पापं शतधा शतगुणितं भूत्वा तद्वक्तॄननुगच्छति प्राप्नोति ॥ ११५ ॥

एतद्वोऽभिहितंसर्वंनिःश्रेयसकरंपरम् ॥ अस्मादप्रच्युतोविप्रः प्राप्नोतिपरमांगतिम् ॥ ११६ ॥

( १ ) मेधातिथिः । प्रतिज्ञानधर्मोपसंहारःश्लोकोयं धर्मान्नोवक्तुमर्हसीतियत्पृष्टंमहर्षीन्श्रूयतामिति यद्वक्तव्यतयाप्रतिज्ञातंतत्सर्वंकथितमितिशास्त्रपरिसमाप्तिमाह । ननुचपरस्तादप्यस्तिशास्त्रंहंतव्यादिशास्त्रंसाचविधितःश्रूयतेतत्रविधिविषयेकश्चिदितिकथमुच्यते शास्त्रमुपसंह्रियतइति वक्तुर्नकरोतिप्रायउपसंहारः । परस्ताच्चकर्मशेषात्त्वप्रधानाशुद्धैवत्रिचोपदेशतइतिनविरोधः । सर्वत्रश्रेयसीशास्त्रार्थधर्मलक्षणाविद्येत्युपसंहृत्याभिधानेप्रयोजनम् ॥ ११६ ॥

( २ ) सर्वज्ञनारायणः । अपच्युतः अत्यक्तोयमः ॥ ११६ ॥

( ३ ) कुल्लूकः । एतन्निःश्रेयससाधकंप्रकृष्टंधर्मादिकंसर्वंयुष्माकमभिहितं एतदनुतिष्ठन् ब्राह्मणादिः परमांगतिंस्वर्गापवर्गरूपांप्राप्नोति ॥ ११६ ॥

( ४ ) राघवानन्दः । धर्मान्नोवक्तुमर्हसीतियत्पृष्टं महर्षीन् श्रूयतामितियत् प्रतिज्ञातं तत्सर्वं स्वोक्तं परमप्रकृतमुपसंहरन् धर्मस्य मोक्षफलत्वमाह एतदिति । अस्मान्मनूक्तान्नित्यनैमित्तिकाद्धर्मादप्रच्युतोऽपरिभ्रष्टः परमां मोक्षाख्यां प्राप्नोत्येव । तदुक्तम् भगवता वासुदेवेन ॥ सर्वंकर्माखिलं पार्थ ज्ञाने परिसमाप्यतइति ॥ आरादुपकारकत्वेन ज्ञानहेतुत्वं कर्मणामित्युक्तं तन्न प्रस्मर्तव्यम् ॥ ११६ ॥

( ६ ) रामचन्द्रः । एतद्वोयुष्माकं परंनिःश्रेयसकरं गुह्यं धर्मजातंसर्वं अभिहितं कथितं अस्मादप्रच्युतः अत्यक्तधर्मः ॥ ११६ ॥

एवंसभगवान्देवोलोकानांहितकाम्यया ॥ धर्मस्य परमंगुह्यंममेदंसर्वमुक्तवान् ॥ ११७ ॥

( १ ) मेधातिथिः । सभगवान्मनुरिदंशास्त्रंसर्वलोकहिताय मोक्तवानिति भृगुःशिष्यानाह अनेनाधिकाराकांक्षानिवर्तते । गुह्यंयदध्यात्मं तदपिमनुर्मामुपदिश्यप्रकाशयांचक्रे ममापियथागमंभवतां प्रकटीकृतमतिनिकार्याधिकाकांक्षा ॥११७

( २ ) सर्वज्ञनारायणः । धर्मगुह्यं सारम् ॥ ११७ ॥

( ३ ) **कुल्लूकः** । सभगवानैश्वर्यादिसंयुक्तोद्योतनाद्देवोमनुरुक्तप्रकारेणेदंसर्वंधर्मस्य परमार्थंशुश्रूषुशिष्येभ्यः अगोपनीयंलोकहितेच्छया ममेदंसर्वमुक्तवानिति भृगुर्महर्षीनाह ॥ ११७ ॥

( ४ ) **राघवानन्दः** । अस्य शास्त्रस्य स्वकपोलरचितत्वं व्यावर्तयितुं स्वगुरोर्वृत्तमाह एवमिति । इदंमन्वाख्यं-परमंस्मृत्यन्तरेभ्यःश्रेष्ठं गुह्यमार्यसंरक्षणीयत्वाद्धर्मस्यवस्तु [ तस्तु ][1] धर्मस्यानुष्ठीयमानस्येदमपरोक्षीभूतम् परमं परेण वेदान्तमानेन मीयते ब्रह्म अतएव गुह्यं यतः सर्वसर्वस्याधिष्ठानत्वेसतिसर्वावधिभूतं सर्वंखल्विदं ब्रह्म तज्जलान् पुरुषान्नपरं किंचित्साकाष्ठासा परागतिरितिश्रुतेः ॥ ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च ॥ शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चेतिभगवदुक्तेश्च ॥ ११७ ॥

( ५ ) **नन्दनः** । अधीतधर्मशास्त्रस्याप्तपुरुषमूलत्वमाह एवंसभगवान्देवइति । एवंदेवः स्वायम्भुवोमनुरनेनास्य ज्ञानातिशयउक्तः लोकानांहितकाम्यया कारुण्यमेवोपदेशकारणंनान्यदित्युक्तम् ॥ ११७ ॥

( ६ ) **रामचन्द्रः** । धर्मस्यपरमं गुह्यं धर्मं स्मृतं ममइदं सर्वं उक्तवान् ॥ ११७ ॥

**सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ॥ सर्वंह्यात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥ ११८ ॥**

( १ ) **मेधातिथिः** । सर्वंजगत्सदसद्रूपमुत्पत्तिविनाशधर्मकं अथवान्यःशशविषाणादिवत्यच्चनित्यमाकाशादिवत्-सर्वमात्मनिसंपश्येदात्मनिव्यवस्थितमुपासीत । संदर्शनार्थस्यस्पष्टार्थस्य साक्षात्करणपर्यन्ततयोपासनयाविज्ञायते । नहिसकृद्दर्शनेन साक्षात्कारःसंभवति तथोपदिश्यते रहस्यशास्त्रंतत्रात्मध्यानायैतदुक्तंभवति श्रोतव्योमंतव्योनिदिध्यासितव्यइति-ध्यानपर्यन्ततासद्दर्शनेन दर्शनस्याप्यात्मध्यानं यथोपदिष्टज्ञानाभ्यासो विजातीयप्रत्ययान्तरितमुच्यते । अथवासामर्थ्याद-भ्यासाक्षेपः यतःसंस्कारकर्मणिच संस्कार्येविशेषाधानेन संपन्नस्वार्थानि भवन्ति । यथाव्रीहीनवहंतीनि अश्रुतोपभ्यासतुषकणविप्रमोकफलेभ्यस्तत्संदर्शनेन ह्यदृष्टार्थतास्यात् । तथाच कर्मविधित्वात्षष्ठिसंस्कारकर्मताहानिश्च । अतः संपश्येदितिज्ञेयान्तरविषयज्ञाननिराकरणेन तदेकज्ञेयनिष्ठामनुब्रूयात् अत्रात्मनीति विवदन्ते कोयमात्मानाम यदितावदयंविकरणक्षेत्रज्ञ-तउत्तरंविरुध्येत प्रशासितारंरुक्माभमिति । नहिकर्मत्वशरीरस्यमृत्योरुत्पत्तिः श्रूयते नैतस्यवाऽक्षरस्यप्रशासने गार्गीद्यावापृथिव्यौविधृतेतिष्ठतइति तस्मान्नेह प्रत्ययप्रमेयआत्मन्यपि संसारविधिः । अतोन्याकाचित्तस्यस्वरूपसिद्धिर्वक्तव्या । किंचैवंसति पश्येदिति आदिनाबाह्यात्मनामप्याधिभूताधिदैवभाविनव्यवस्थितोनामाध्यात्ममुपसंहारः । शिष्यतेचश्रौतमतोस्तरागः साधनतयाकारणात्मनाजितस्यसंबन्धितांप्रतिपद्यते । ननुयःसर्वजगत्कारणपुरुषावच्छेदमुक्तंसदाप्रत्यात्मनिसंपश्येदिति तत्रकीदृशमात्मनोदर्शनमात्मनीतिवक्तव्यम् । अन्येतुमन्यन्ते शरीरात्मनएवैतत्संनिवेशनंयुक्तं तस्यहि श्रोतृसंनिवेशेन-तद्वत्तायुक्ता तत्रोच्यते आत्मशब्दस्तावत्परमात्मविषयतयादर्शितवाक्यान्तरसमन्वयप्रमाणः यत्रस्वरूपसिद्धिर्वक्तव्येतितत्र-किमन्यच्छक्यंनवक्तुमन्यदतःश्रोतृत्वज्ञानविधेः तानिचवाक्यानिप्रतिशाखंसर्वोपनिषद्भ्योवगन्तव्यानि । प्रमाणान्तराणाम-प्येकत्वप्रतिपादनपरत्वादेवग्राहिणःप्रत्यक्षस्यमिश्रैःकृतएवक्लेशः ॥ उक्तंचवाक्यपदीये नतदस्तिचतन्नाम्नीत्यादि विध्यवगम्यताच शरीरावरकादवसातव्या । यदप्युक्तमसत्कथंदर्शयन्निितिसचासच्चेत्ययमर्थःस्यात् सदितिविकारस्यग्राम्यस्यनिर्देशः असदितिप्रत्यक्षतैवसूक्ष्मतयाक्षरावधारत्वात् । यदप्युक्तंनास्तिपरमात्मनः श्रोत्रसंबन्धइति किमत्रसंबन्धिसर्वस्यजगत्-स्थित्युत्पत्तिविनाशानांतत्कारणतयोपपादित्वात् यश्चायंसंनिवेशविधिस्तस्यायमर्थः यावद्यत्किंचिद्भेदवदवभासते तत्सर्व-

---

( १ ) राघ० २

* अशुश्रूषु शिष्येभ्योगोपनीयं ( अ )

मद्वैतिकत्वेमविलापयेत् । सर्वमात्मस्थमित्येतत्परमात्मनोविरतिसामान्येहेतुर्विद्यतइति । समाहितः समाधिर्नामचित्तवृत्तिनिरोधोपायोयोगशास्त्रादागमयितव्यइत्यर्थः । नाधर्मेकुरुतेमतिंबुद्धिश्चेतसोनिश्चलताभावः तावदभ्यसेद्यावद्वादिभिश्चेतोनापह्रियेतअतश्चयावत्कश्चिद्भेदकत्वेमतिविलापयेत ॥ ११८ ॥

( २ ) **सर्वज्ञनारायणः** । आत्मनि परमात्मनि स्थितं न ततोन्यत्र पश्येदित्यर्थः । सद्वर्तमानम् । असद्व्यलीकम् । समाहितोध्यानस्थः । नाधर्मेमनःकुरुते रागद्वेषाभावात् ॥ ११८ ॥

( ३ ) **कुल्लूकः** । एवमुपसंहृत्य महर्षीणांहितायोक्तमध्यात्मज्ञानंप्रकृष्टमोक्षोपकारकतया पृथक्कृत्याह सर्वमिति । सद्भावमसद्भावंसर्वंब्राह्मणोजानन्ब्रह्मस्वरूपमात्मन्युपस्थितंतदात्मकमनन्यमनाध्यानप्रकर्षेण साक्षात्कुर्यात् यस्मात्सर्वमात्मत्वेन पश्यन्रागद्वेषाभावादधर्मे मनोन कुरुते ॥ ११८ ॥

( ४ ) **राघवानन्दः** । एतदेवोपपादयतिअध्यारोपापवादाभ्यां सर्वमितिसप्तभिः । सर्वं सचित्कंजगत् सत् स्थूलं पृथिव्यादि असत् आकाशादि द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचेतिश्रुतेः । आत्मन्यध्यस्तमिति सं सम्यक् पश्येन्नतु योषित्यग्निवत्पश्येत् । हि अधर्मे धारणाद्धर्मोब्रह्म तद्भिन्ने अनात्मनि मनोन कुरुते आसक्तिन कुर्यात् । अथवा अधार्मिकोस्मीति नमन्येत धर्माधर्मयोस्तद्धेतोः कर्तृत्वादेरसत्त्वात् नसाधुना कर्मणा वर्धते नोएवासाधुना कनीयान् सर्वे पाप्मानोऽतोनिवर्तन्ते । किमहंसाधुनाकरवंकिमहंपापमकरवमितिश्रुतेश्च ॥ ११८ ॥

( ५ ) **नन्दनः** । अथधर्मशास्त्रार्थोपदेशत्वेनोपदिष्टयोः परस्परमात्मज्ञानयोगयोरादरातिशयार्थंज्ञानंतावत्प्रपंचयति सर्वमात्मनिसंपश्येदिति । सदसत्कारणकार्ये शुभाशुभे वा सर्वमात्मनि संपश्येदात्मनिसर्वमाकाशेवायुमिवस्थितंपश्येदित्यर्थः । नाधर्मे कुरुते मनइत्यनेन ज्ञानस्यानुषङ्गिकंफलमुक्तम् ॥ ११८ ॥

( ६ ) **रामचन्द्रः** । सर्वं आत्मनि परमात्मनि संपश्येत् । सच्चासच्च समाहितः ध्यानस्थः ॥ ११८ ॥

## आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ॥ आत्माहि जनयत्येषांकर्मयोगंशरीरिणाम् ॥११९॥

( १ ) **मेधातिथिः** । सर्वत्रयागादिक्रियाः स्वर्गादयोदेवताआत्मत्वेनद्रष्टव्याः । योयमग्निर्देवताअग्नेरियमन्यात्मैवासौनान्योग्निर्देवतास्तीति । तदप्युक्तं एकआत्माबहुधाश्रूयतइति यत्रयुक्तएकएवाहमात्मादेवतेति तथाइंद्रंमित्रंवरुणमग्निमाहुः एकंसद्विप्राबहुधावदन्तिबहुरूपपरमात्मनोऽन्यांदेवतांपश्यन्ति । सतांपरादादित्यनेनकर्मांगदेवतानामात्मदृष्टिर्विधीयते किंतर्हिनतस्य देवतादिकृत्यमस्ति । आत्मतयैवसर्वसिद्धिः कथंनार्थात्मनिजनयत्येषामिति कर्मयोगे कर्मफलसंबंधः सआत्मातेषांनिष्पादयति नान्यादेवतानतद्गुणकमिति ॥ ११९ ॥

( २ ) **सर्वज्ञनारायणः** । एवंभूतनिश्चयहेतुभूतामुपसंहारभावनामाह आत्मैवेति । सर्वदेवताभ्योन्यदपि अवस्थितमभेदेन । यस्मात्कर्मकर्तृत्वं योगकर्तृत्वं शरीरिणां जीवानामात्मा परमात्मा जनयतीति तदेतत्कर्तृत्वाधीनभावनागोचरमित्यनुचिन्तयेदित्यर्थः ॥ ११९ ॥

( ३ ) **कुल्लूकः** । एतदेवस्पष्टयति आत्मैवेति । इन्द्राद्याः सर्वदेवताः परमात्मैव सर्वात्मत्वात्परमात्मनः सर्वजगदात्मन्येवावस्थितंपरमात्मपरिणामत्वात् हिरवधारणार्थे । परमात्मैवैषांक्षेत्रज्ञादीनांकर्मसंबन्धंजनयति । तथाचश्रुतिः एषह्येव साधुकर्मकारयति यमूर्ध्वंनिनीषति एषह्येवासाधुकर्मकारयति यमधोनिनीषतीति ॥ ११९ ॥

( ४ ) **राघवानन्दः** । ननु कथंकर्तृत्वाद्यभावइतिचेदिन्द्रियगणस्य तदधिष्ठातृदेवतागणस्यात्मन्यध्यस्ततया तन्मात्रत्वंयदातदाजीवस्यसुतरामकर्तृत्वादित्याह आत्मैवेति । एवशब्दोऽन्ययोगव्यवच्छेदार्थः । देवताशब्दोजगद्विवर्तपरः । अतएवाह सर्वमिति । अवस्थितमध्यस्तं चिदचितोर्वास्तवसंबन्धानिरूपणात् । जनयति अयस्कान्तमणिरिव स्वसंनिधानेन प्रवर्तयतीव [ ध्यायतीवलेलायती ] चेतिश्रुतेः । शरीरिणां स्थूलशरीरानच्छिन्नलिङ्गशरीरिणां ॥ विज्ञानंयज्ञंतनुते ॥ कर्माणितनुतेपिचेतिश्रुतेः ॥ अन्वागत पुण्येनान्वागत पापेन असंगोह्ययंपुरुषः [ केवलो ] निर्गुणश्च न लिप्यते कर्मणा पापपंकेनेत्यात्मनोसंगत्वश्रुतेः ॥ ११९ ॥

( ५ ) **नन्दनः** । सर्वादेवताआत्मैव सर्वदेवताः परमात्मनोविभूतिभूतानि सर्वमात्मन्यवस्थितंसर्वमात्मपरतन्त्रमित्यर्थः पारतन्त्र्यमेवोत्तरार्धेनोपपादितम् ॥ ११९ ॥

( ६ ) **रामचन्द्रः** । सर्वादेवताः आत्मैव । सर्वमात्मनि अवस्थितम् । आत्मा परमात्मा एषां शरीरिणां जीवात्मनां कर्मयोगं कर्तृत्वं जनयति ॥ ११९ ॥

**खंसन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम् ॥ पक्ति दृष्ट्योः परंतेजः स्नेहेऽपोगांच मूर्तिषु ॥ १२० ॥**

( १ ) **मेधातिथिः** । यान्येतानि नवच्छिद्राणि तेषु बाह्यमाकाशंनियच्छेत् बाह्यमाकाशंतदेवतन्नबाह्यंकिंचिदस्तीति । अनियतोवायुः तंसन्निवेशयेत । चेष्टते स्पंदते तत्रकाचिच्छरीरावस्था हस्तपादाद्युक्तविहरणलक्षणायाश्चायंस्पर्शोवाय्वादिलक्षणस्तत्रवायुंसंनिवेशयेत् । पक्तिर्जाठराग्निकृता दृष्टिश्च कुशलोनिवेशयेत् सर्वंतत्परंकृष्णमित्यात्मनावस्थितं स्नेहोमेदोमज्जादिरूपेसंनिवेशयेदिति वर्तते गांपृथिवीमूर्तिषुशरीरभागेषु एवंमहाभूतानामुपसंहारः इदानींदेवतानामाधानमुपसंहरिष्यते ॥ १२० ॥

( २ ) **सर्वज्ञनारायणः** । अत्राप्यशक्तस्य स्वशरीरएव सर्वदेवता सर्वभूतोपसंहारभावनां सुकरां चित्तस्थैर्यसिध्यर्थमाह खमिति । खं बाह्यमाकाशं स्वदेहच्छिद्रेषु संनिवेशयेदेकीभूतंभावयेत् । चेष्टनः शरीरभूतोवायुः स्पर्शनः स्पर्शज्ञानहेतुस्त्वगिन्द्रियं अनिलोबाह्यः । पक्तिरन्नपाककारी वन्हिः । दृष्टिश्चक्षुस्तेजः । परं बाह्यम् । स्नेहे स्निग्धत्वहेतौ शारीरजले । अपोबाह्याः । गां पृथ्वीम् । मूर्तिषु कठिनावयवेषु ॥ १२० ॥

( ३ ) **कुल्लूकः** । इदानींवक्ष्यमाणब्रह्मध्यानविशेषोपयोगितया दैहिकाकाशादिषु बाह्याकाशादीनांलयमाह खमिति । बाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषु लीनमेकत्वेन धारयेत् । तथाचेष्टास्पर्शकारणभूतदैहिकवायौ बाह्यवायुं औदर्यचाक्षुषतेजसोरग्निसूर्ययोःप्रकृष्टंतेजः दैहिकास्वप्सु बाह्याअपः बाह्याःपृथिव्यादयःशरीरपार्थिवभागेषु ॥ १२० ॥

( ४ ) **राघवानन्दः** । आरोपमुक्त्वाऽपवादप्रकारमाह खमिति । खं सकार्यंपञ्चीकृतमाकाशं निवेशयेत् संहरेत् । खेषु अपञ्चीकृताकाशतत्कार्यश्रोत्रियेन्द्रियेषु विषयग्रहणार्थमिन्द्रियंतत्संहारेण तेषामपि संहरणं भवतीतिभावः । एवमुत्तरत्र । एवमाकाशं संहृत्यानिलं बाह्यंवायुं तस्मिन् । स्पर्शनेनत्वचिचचेष्टनेआन्तरमाणवायौ । पक्तिदृष्ट्योः पचनप्रकाशद्वययुजि जाठराग्नौ चक्षुषि च तेजोनिवेशयेदित्यनुषज्यते । स्नेहे शरीरस्थे रसनायांजलमिव अपोबाह्याः । मूर्तिषु शरीरस्थपृथिव्यां गां बाह्यपृथिवीम् ॥ १२० ॥

---

( १ ) न ( १२० ) पक्तिदृ=पङ्क्तिदृ ( क, ग, घ, ण ) =पथिदृ ( च )

( ५ ) **नन्दनः** । अथयोगंमपश्चयति खंसन्निवेशयेखेष्विति । खेषु श्रोत्रादिषु शरीररन्ध्रेषु खमाकाशाभिमानिनींदेवतांसंनिवेशयेत्तदात्मकतयाध्यायेदित्यर्थः । एवमुत्तरत्र निवेश्यत्वेन वक्ष्यमाणत्वात्तदभिमानिनींदेवताइत्यवगन्तव्यं । चेष्टनस्पर्शनेपाणित्वगिन्द्रिययोःकर्मणी अनिलंवायुः । पक्तिर्जाठरोग्निस्तस्मिन्दृष्टौचतेजःअग्निंस्नेहे शरीरस्यस्निग्धत्वमूर्तिषुअस्थिषु गांभूमिम् ॥ १२० ॥

( ६ ) **रामचन्द्रः** । खं बाह्याकाशं खेषु देहछिद्रेषु संनिवेशयेत् । चेष्टनः शरीरवायुसंस्पर्शने ज्ञानहेतुःअनिलं । बाह्यंपक्तिदृष्ट्योः अन्नपाककरीवह्निपरं चक्षुषोर्बाह्यं तेजः । स्नेहः अपः । गां पृथ्वीं मूर्तिषु ॥ १२० ॥

## मनसीन्दुंदिशः श्रोत्रे क्रान्तेविष्णुंबलेहरम् ॥ वाच्यग्निमित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥ १२१॥

( १ ) **मेधातिथिः** । योयमिन्दुश्चन्द्रमास्तंमनसिसंनिवेशयेत् नैषचन्द्रोगगनसंचारीकिंतर्हिममनसिव्यवस्थितः । याश्चदिशःश्रोत्रेन्द्रियशक्तौ । ततोविष्णुंयोयत्राल्पमतिक्रामतिविष्णुरेकान्तेकर्मणासंनिविष्टः । एवंचतेहरहनुरेतोद्रागप्युत्थानसचेन्द्रियावकाशःकालाकृतिरिन्द्रियकर्मैवतत् । यंयंवागग्नेरेवायमुत्सर्गोवाप्वाचर्मन्त्रैःपश्येत् । एवमध्यात्ममुपसंहृत्य सर्वंपरमात्मनिपश्येत् । एवमात्मकोहेतुःपरमात्मनिष्यवस्थितोनाहंकश्चित्ततोभिन्नइति । एवमेषासर्वोपासनाकर्तव्या ॥१२१ ॥

( २ ) **सर्वज्ञनारायणः** । इन्दुश्चन्द्रः तस्य मनोदेवतात्वात् । एवमुत्तरेष्वपि देवतोपसंहारेषु । क्रान्ते गमनहेतौचरणे । बले सामर्थ्ये हरमीश्वरम् । उत्सर्गे पाय्विन्द्रिये प्रजापतिं ब्रह्माणम् ॥ १२१ ॥

( ३ ) **कुल्लूकः** । मनसिचन्द्रंश्रोत्रेदिशः पादेन्द्रियेविष्णुमबले हरंवागिन्द्रियेऽग्निपाय्विन्द्रिये मित्रमुपस्थेन्द्रिये प्रजापतिं लीनमेकत्वेन भावयेत् । एवमाध्यात्मिकभूतादिकंलीनमेकत्वेनभावयित्वा योयमग्न्यादीनांदैहिकादिनियमोयच्च कर्मणांफलंप्रतिनियतंतत्सर्वंपरमात्माधीनं । तथा चैतस्य चक्षुरस्य प्रशासनेगार्गीस्तर्पयति । तथा भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमइति ॥ १२१ ॥

( ४ ) **राघवानन्दः** । एवं स्थूलपृथिव्यादिपञ्चकस्य बाह्यस्य देहारम्भकेष्विन्द्रियपञ्चकेषु च लयमुक्त्वा इन्द्रियेषु तदधिष्ठातृदेवतालयमाह मनसीति । इन्द्रियानुग्राहकतया देवतासृष्टेस्तत्रैव लयः ॥ चन्द्रमामनसोजातश्चक्षोःसूर्योअजायतेतिश्रुतेः । क्रान्ते पादे । बले पाणौ हरिं इन्द्रं बलकर्माहिइन्द्रइतिश्रुतेः । हरमितिप्रमादपाठः । अहरमितिवा छेदेन हरतुल्यतया हरिर्विष्णुस्तत्पर्यायइन्द्रः । उत्सर्गे पायौ मित्रं मित्राख्यं सूर्यं । प्रजने लिङ्गे प्रजापतिं दक्षम् ॥ १२१ ॥

( ५ ) **नन्दनः** । क्रान्ते पादे विष्णुंउपेन्द्रंहारिंइन्द्रं वाचि वागिन्द्रिये उत्सर्गेगुदे प्रजनने मेढ्रे अत्र निवेशयेदित्यनुषङ्गः ॥ १२१ ॥

( ६ ) **रामचन्द्रः** । मनसिइन्दुं । दिशः श्रोत्रे । क्रान्ते विष्णुं । बले सामर्थ्ये हरं । वाचि अग्निं । मित्रं मित्रदैवतं उत्सर्गे । प्रजनने उपस्थेन्द्रिये प्रजापतिम् ॥ १२१ ॥

## प्रशासितारंसर्वेषामणीयांसमणोरपि ॥ रुक्माभंस्वमधीगम्यंविद्यात्तंपुरुषंपरम् ॥ १२२ ॥

( १ ) **मेधातिथिः** । एवमेवाह प्रशासितारंनियंतारंसर्वेषांब्राह्मणादिशूद्रपर्यन्तानांयोयमग्न्यादीनामौष्ण्यादिस्वभावनियमोयच्चभित्यादीनामनिशमन्तःपरमोजःजगतभ्रमणप्रकाशनादिस्वव्यापारोयश्चकर्मणांफलंप्रतिनियमः ससर्वस्तस्मिन्नियंतरि सति । यदुक्तमेतस्यैवाक्षरस्यप्रशासनेगार्गीत्यादिना तथातत्सूर्यस्तपतिचयावद्वर्षतिचंद्रमाभयादग्निश्चवायुश्चमृत्युर्धावतिपंचमइति । अणीयांसमणोरपीति । यःकश्चिद्द्वारानिरतिशयवालाग्रशतभागादिस्तत्तेतृतीयांशपरिमाणकत्वमसूत्प्रतिपाद्यते ।

अस्थूलमंतश्चान्यादिसर्वधर्मप्रतिषेधात् किंतर्हिकुशाग्रीयायाबुद्धेर्गम्यत्वात् एतदुक्तं भवति योनात्यन्तंकुशलोनचतदभ्यासेपरिष्वक्तः ॥ १२२ ॥

( २ ) सर्वज्ञनारायणः । एवमुपसंहारे भावनया मनसएकाग्रत्वे सिद्धे यादृग्ध्येयंतदाह प्रशासितारमिति । रुक्माभं प्रकाशकं स्वमधीगम्यं स्वेम विषयाणां बाह्यानामात्मन्येवाध्यासादधिष्ठानतया सर्वत्र प्रकाशमानमहंकारावच्छिन्नं । पुरुषं पुरिलिङ्गशरीरे निषण्णं जीवात्मानं परंपरत्मानं प्रशासितारं विश्वस्य परमेश्वरं अणोरतिसूक्ष्मादप्यणीयांसमतिसूक्ष्मं दुर्विज्ञानं विद्यात् भावयेदहंब्रह्मास्मीति जीवात्मपरमात्मनोः प्रत्यक्षपरोक्षयोस्तदुपाधिद्वयपरित्यागेनैक्यं चिन्तयेदित्यर्थः ॥ १२२ ॥

( ३ ) कुल्लूकः । प्रशासितारंनियंतारंब्रह्मादिस्तम्बपर्यन्तस्य चेतनाचेतनस्य जातेः योयमग्न्यादीनामौष्ण्यादिनियमोयश्चादित्यादीनांभ्रमणादिनियमोयच्च कर्मणांफलंप्रतिनियतमेतत्सर्वंपरमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासनेगार्गीत्याद्युपनिषदः तथा भयादस्याग्निस्तपति भयात्तपति सूर्यः ॥ भयादिन्द्रश्च वायुश्च मृत्युर्धावतिपञ्चमइति। तथा अणोरणीयांसंसर्वात्मत्वात्तथा च श्रुतिः ॥ बालाग्रशतभागस्य शतधाकल्पितस्यच ॥ भागोजीवेतिविज्ञेयः सचानन्त्याय कल्पते ॥ रुक्माभंयद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनिषदारूपंपरमात्मनोनिषिद्धं तथाप्युपासनाविशेषे शुद्धसुवर्णाभम् अतएवयएषोऽन्तरादित्ये हिरण्मयइत्यादिछान्दोग्योपनिषत् स्वमधीगम्यंदृष्टान्तोयम् स्वमधीसदृशज्ञानग्राह्यंयथा स्वप्नधीः चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यतएवमात्मधीरपि । अतएव व्यासः ॥ नैवासौ चक्षुषा ग्राह्योनच शिष्टैरपीन्द्रियैः । मनसातु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः ॥ एवंविधंपरात्मानमनुचिन्तयेत् ॥ १२२ ॥

( ४ ) राघवानन्दः । एवं पिण्डमात्रावशेषं विचिन्त्य तदप्यात्मतां नयेदित्याह प्रेति ॥ योसावतीन्द्रियग्राह्यः सूक्ष्मोव्यक्तः सनातनः ॥ सर्वभूतमयोचिन्त्यः सएव स्वयमुद्बभावित्युपक्रमाधिष्ठानभूतमात्मानमनात्मनोनिष्कृष्य विशिनष्टि प्रशासितारमिति । यत्तस्यैव प्रशासने गार्गिसूर्याचन्द्रमसौ विधृतौ तिष्ठतइतिश्रुतेः । अनेन स्वभावाभावप्रधानपरमाण्वादिव्यावृत्तिस्तेषामचेतनत्वात् । अणोयांसं विष्णुत्वेपि निरवयवत्वात्सूक्ष्ममेतेनपृथिव्यादेः कारणत्वं निरस्तम् । रुक्माभं स्वप्रकाशं स्वयंज्योतिरितिश्रुतेः । रुक्माभंस्वप्रकाशं तेन नैयायिकमतस्यनिरासः । स्वमधीगम्यं तत्त्वमस्यादिवाक्योत्थनिर्विकल्पकधीग्राह्यमित्यनेन विज्ञानवादिमतं निरस्तं तेषां ग्राह्यग्राहकत्वाद्विज्ञानस्य । पूरुषं पूर्णं देशकालवस्तुपरिच्छेदरहितत्वात् । एवं प्रकृतिरदृष्टंभूतान्येव वाजगत्कारणमिति सांख्यमीमांसकादिमतं निरस्तं । अतएव परं अविद्यातत्कार्ययोः अक्षरात्परतःपरइतिश्रुतेः । तमहंब्रह्मेति विद्यात् तदात्मानमेवावेदहंब्रह्मास्मीतिश्रुतेः । ततः स्वयंभूर्भगवानव्यक्तोव्यञ्जयन्निदमित्युपक्रमे कीर्तितं ब्रह्म सर्वदुःखैर्विनिर्मुक्तोब्रह्मण्येवावतिष्ठतइतिमध्येपि परामृष्टं प्रशासितारमित्यन्तेऽपि निर्दिष्टमतउपक्रमादिभिस्तत्रैव शास्त्रतात्पर्यमतःसर्वंतच्छेषभूतमिति । तथा चश्रुतिः पुरुषान्नपरंकिंचित्सा काष्ठा सा परागतिरिति ॥ १२२ ॥

( ५ ) नन्दनः। एवमेताभिर्देवताभिर्न्यस्तशरीरस्य कर्तव्यमाह प्रशासितारंसर्वेषामिति । सर्वेषामन्तः प्रविश्यप्रशासितारमणीयांसमतिसूक्ष्मं स्वमधीगम्यंप्रपंचस्वमबुद्धियैषांतेस्वमधियस्तैरगम्यं नेयं परं पुरुषंपरमात्मानंविद्यात् ध्यायेत् ॥ १२२ ॥

( ६ ) रामचन्द्रः । प्रशासितारं नियन्तारं अणीयांसंअतिसूक्ष्मं अणोरपि रुक्माभं प्रकाशकं स्वमधीगम्यं तं परं पुरुषं विद्यात् ॥ १२२ ॥

**एतमेकेवदन्त्यग्निमनुमन्ये प्रजापतिम् ॥ इन्द्रमेके परे प्राणमपरे ब्रह्मशाश्वतम् ॥ १२३ ॥**

( २ ) **सर्वज्ञनारायणः** । किंचिद्यद्यन्निरतिशयंवस्तु तदप्यसावेवेति तदुपासनमप्यस्योपासनमित्याह एतमिति । अग्निमुखत्वाद्देवानांतदुपलक्षणार्थमस्याभिधानम् । जगत्पालनलब्धातिशयःसर्वेषांबलजीवनस्पन्दनाद्यसाधारणकर्मातिशयलब्धप्रकर्षःप्राणोऽयमेव । एषुच यत्र यत्र येषामतिप्रकर्षधीः ते तंतमेवैवंवदन्ति । यथा श्रुति इन्द्रं मित्रं वरुणमग्निमित्यादि । अत्रोत्तरेणाग्निपदेनानन्तर्यमस्योच्यते । अपरे तत्त्वविदः । ब्रह्म विभुः शाश्वतं नित्यमाकाशादेरपि । नित्यानित्यज्ञाअन्यएवंवदन्तीत्युक्तिरत्रोपासकोपलक्षणार्था । तमेव प्रपञ्चरूपेणनिष्प्रपञ्चरूपेणचोपासीतेत्यर्थः ॥ १२३ ॥

( ३ ) **कुल्लूकः** । एतंच परमात्मानमग्नित्वेनैकेयाज्ञिकाउपासते तथा तमेकमग्निरित्यध्वर्यवउपासते । अन्ये पुनः स्रष्टृत्वात्स्रष्ट्राख्यप्रजापतिरूपतयोपासते एके पुनरैश्वर्ययोगादिन्द्ररूपतयोपासते । अपरे पुनः प्राणत्वेनोपासते सर्वाणि भूरादीनीमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहतइत्यादिश्रुतिदर्शनात् । अपरे पुनरपगतप्रपञ्चात्मकंसच्चिदानन्दस्वरूपंपरमात्मानमुपासते । मूर्तामूर्तस्वरूपे च ब्रह्मणि सर्वाएवोपासनाश्रुतिप्रसिद्धाभवन्ति ॥ १२३ ॥

( ४ ) **राघवानन्दः** । अमुमेवात्मानमाश्रित्य विवदन्ते वादिनइत्याह एतमिति । एतमपरोक्षीभूतमप्यात्मानमविद्यावशात्त्रयीनिष्ठाअग्निं मन्यन्ते मनुं प्रजापतिमिति अन्ये धर्म शास्त्रनिष्ठाः इन्द्र ईश्वरं नैयायिकाः । प्राणं हिरण्यगर्भमिति पातञ्जलाः । ब्रह्मेतिवेदान्तिनः । शाश्वतं शश्वत् निरन्तरं अविद्यातत्कार्यरहिततयैकरूपेण वर्तमानं निष्क्रियं निष्कलं शान्तमितिश्रुतेः । शब्दमात्रेविप्रतिपत्तिरर्थस्त्वेकएवेति ॥ १२३ ॥

( ५ ) **नन्दनः** । ननुअन्यादयोपिध्येयत्वेन श्रूयन्तेतत्कथंपरः पुमानेव ध्यानत्वेनोच्यते अत्राह एतमेकेवदन्त्यग्निमिति । एतदुक्तंभवति तन्मन्त्रेष्वग्न्यादिशब्द प्रतिपाद्यःपरःपरः पुमानेव नान्यइति एवंवदता पुरुषसूक्तानुसारेण मन्त्रान्तराणि योजयितव्यानिनतुतदनुसारेण पुरुषसूक्तमित्युक्तं भवति । तदुक्तंमहाभारते मोक्षधर्मे ॥ इदंपुरुषसूक्तंहि सर्ववेदेषु पठ्यते । ऋतंचसत्यञ्चप्रख्यातमृषिसिंहेनचिन्तितमिति ॥ १२३ ॥

( ६ ) **रामचन्द्रः** । एतं अग्निं एके वदन्ति । अन्ये मनुं प्रजापतिम् । एके इन्द्रं । अपरे प्राणं प्राणवायुं । अपरे शाश्वतं ब्रह्म ॥ १२३ ॥

**एषसर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ॥ जन्मवृद्धिक्षयैर्नित्यंसंसारयति चक्रवत् ॥ १२४ ॥**

( २ ) **सर्वज्ञनारायणः** । पञ्चभिर्मूर्तिभिः पृथिव्यादिभूतैः । वृद्धिकार्यजनकत्वंस्थितिरितियावत् । संसारयति भ्रामयति ॥ १२४ ॥

( ३ ) **कुल्लूकः** । एषआत्मा सर्वान्प्राणिनः पञ्चभिः पृथिव्यादिभिर्महाभूतैः शरीरारम्भकैः परिगृह्य पूर्वजन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिविनाशैरथादिचक्रवदसकृदुपावर्तमानैरामोक्षात्संसारिणः करोति ॥ १२४ ॥

( ४ ) **राघवानन्दः** । एषएवान्तर्यामित्वमनुभवतीत्याह एषइति पंचभिः अण्व्योमात्रादशार्धानामित्याद्युक्तैः मूर्तिभिः सच्चिच्छब्दवाच्यैः व्याप्य पटेषु तन्तुवत् जन्मवृद्धिक्षयैरुत्पत्तिस्थितिलयैः संसारयति । अनिशमावर्तयति नान्योतोस्ति द्रष्टा नान्योतोस्ति श्रोता नान्योतोस्तिमन्ता नान्योतोस्तिविज्ञातैषत आत्मान्तर्याम्यमृतइतिश्रुतेरिति ॥ १२४ ॥

( ५ ) **नन्दनः** । एषपरः पुरुषइति पंचभिर्मूर्तिभिर्महाभूताख्यादिभिः ॥ १२४ ॥

---

* स्रष्ट्राख्य = मन्वाख्य ( अ )

( ६ ) **रामचन्द्रः** । एषपुरुषः सर्वाणिभूतानि पञ्चभिर्मूर्तिभिः पृथिव्याऽदिपञ्चभिः व्याप्य जन्मवृद्धिक्षयैः नित्यं चक्रवत् संसारयति वर्तयति ॥ १२४ ॥

**एवंयः सर्वभूतेषु पश्यत्यात्मानमात्मना ॥ ससर्वसमतामेत्य ब्रह्माभ्येति परंपदम् ॥ १२५ ॥**

**[ चतुर्वेदसमंपुण्यमस्यशास्त्रस्य धारणात् । भूयोवाप्यतिरिच्येत पापनिर्यातनंमहत् ॥ १ ॥ ] ***

( २ ) **सर्वज्ञनारायणः** । एतादृगनुचिन्तनफलमाह एवंयइति । सर्वभूतेष्वेकत्वेनात्मानं परमात्मानं प्रयत्नेन पश्यति ध्यायति । सर्वं परमात्मा सर्वरूपत्वात् तत्समतामीशित्वादिगुणैरेत्य जीवन्मुक्तः पश्चाद्देहाधायककर्मापाये देहद्वयरूपोपाधित्यागात्तदेव ब्रह्माभ्येति नित्यानन्दप्रकाशस्वरूपेणावतिष्ठतइत्यर्थः ॥ १२५ ॥

( ३ ) **कुल्लूकः** । इदानींमोक्षत्वेनोक्तसर्वधर्मश्रेष्ठतया सर्वत्र परमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति एवंयः सर्वभूतेष्विति । सर्वभूतेषु चात्मानमित्याद्युक्तप्रकारेण यः सर्वभूतेष्ववस्थितमात्मानमात्मना पश्यति सब्रह्मसाक्षात्कारात्परंश्रेष्ठंपदंस्थानंब्रह्मप्राप्नोति तत्रात्यन्तंलीयते मुक्तोभवतीत्यर्थः ॥ १२५ ॥

( ४ ) **राघवानन्दः** । [ मोक्षस्य परमपुरुषार्थत्वं प्रदर्शयन् तत्रैवास्य शास्त्रस्य तात्पर्यमाह एवंयइति । पदंपद्यते ज्ञानेनैवाप्यते पदंब्रह्मतद्विष्णोःपरमं पदमित्युक्तेः । आत्मनाबुध्याअभ्येति तादात्म्यमाप्नोति ब्रह्मैवसन् ब्रह्माप्येतीति श्रुतेः ] [1] ॥ १२५ ॥

( ५ ) **नन्दनः** । एवंप्रपञ्चितस्य परमात्मज्ञानस्य फलमाह एवंयः सर्वभूतेष्विति । आत्मना मनसा ब्रह्मपरंपुरुषम् ॥ १२५ ॥

( ६ ) **रामचन्द्रः** । एवं यः सर्वभूतेषु आत्मनाऽऽत्मानं पश्यति सः सर्वसमतामेत्य सनातनंब्रह्माभ्येति प्राप्नोति ॥१२५॥

इति श्रीरामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायां द्वादशोऽध्यायः ॥ ॥ छ ॥ ॥ छ ॥

**इत्येतन्मानवंशास्त्रंभृगुप्रोक्तंपठन्द्विजः ॥ भवत्याचारवान्नित्यंयथेष्टांप्राप्नुयाद्गतिम् ॥ १२६ ॥**

**[ मनुः स्वायंभुवोदेवः सर्वशास्त्रार्थपारगः । तस्यास्य निर्गतंधर्मंविचार्य बहुविस्तरम् ॥ २ ॥**

**ये पठन्ति द्विजाः केचित्सर्वपापोपशान्तिदम् । ते गच्छन्ति परंस्थानंब्रह्मणः सद्म शाश्वतम् ॥३॥] †**

**इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ॥ १२ ॥ समाप्तैषामनुसंहिता ॥ छ ॥**

( १ ) **मेधातिथिः** । इतिःशास्त्रसमाप्तिमाह पठन्भवत्याचारवान् अन्योअध्याहार्यआचारोयथापठितशास्त्रान्तरात्स्वनुष्ठानं एवंविधश्चेद्भवतियथेष्टांदेवतादिलक्षणांगतिंब्रह्माभ्येति ब्रह्मभावमापद्यते । मैत्राद्यवभासेन रागद्वेषक्षयमनुवदति । अनेनचाविजातीयप्रत्ययान्तरितात्मैकत्वज्ञानमनुष्ठेयमाह ॥ नहिविजातीयप्रत्ययोत्पत्तौसर्वसंमतताभवति अंतश्चैतदुक्तंभवति ॥ अहंममेतित्यक्त्वाहंकारममकारस्यतदेकज्ञाननियततयानिरतिशयपरमानंदरूपंब्रह्मप्राप्नोति । अनिष्टनिवृत्तिःशास्त्रप्रदर्शिताभिप्रेतप्रतिनियमेनच फलसिद्धिर्भवति इत्यर्थः ॥ १२६ ॥

इतिश्रीभट्टवीरस्वामिसूनोर्भट्टमेधातिथिविरचितेमनुभाष्येद्वादशोऽध्यायः ॥ १२ ॥ समाप्तं ॥ शुभंभवतु

---

* ( ड, थ, न, श, राघ० २ )

( १ ) राघ० २, न.

† ( क )

( २ ) **सर्वज्ञनारायणः** । इत्येतदिति शास्त्राध्ययनफलस्य पूर्वप्रक्रान्तस्योपसंहारः । मानवं मनुना प्रथमं प्राप्तं भृगुणाच प्रोक्तं प्रकर्षेण मुनिषु प्रकाशितमित्यर्थः ॥ १२६ ॥

॥ एतस्मिन्भृगुभारतीविवरणे कैर्नामनारोपितं चेतश्चेतयिता न कश्चन पुनस्तत्त्वस्य तत्राजनि । अस्माभिस्तु गुरूपदेशविशदप्रज्ञाप्रकर्षस्फुरद्धेतुर्हेतुगमैर्नमानवगिरां सर्वोऽयमाविष्कृतः ॥ इति श्रीसर्वज्ञनारायणकृतौ मन्वर्थनिबन्धे नैःश्रेयसकर्मसंकीर्तनंनाम द्वादशोध्यायः ॥ १२ ॥ समाप्तमिदं मानवशास्त्रविवरणं सर्वज्ञप्रोक्तम् ॥ शिवप्रदमस्तु ॥

( ३ ) **कुल्लूकः** । समाप्त्यर्थइति शब्दः एतत्स्मृतिशास्त्रंभृगुणा प्रकर्षेणोक्तंद्विजातिः पठन्विहितानुष्ठाननिषिद्धवर्जनात्सदाचारवान्भवति यथाऽपेक्षितांच स्वर्गापवर्गादिरूपांगतिंप्राप्नुयादिति ॥ १२६ ॥

सारासारवचः प्रपञ्चनविधौ मेधातिथेश्चातुरीस्तोकंवस्तुनिगूढमल्पवचनाद्गोविन्दराजोजगौ ॥ ग्रन्थेऽस्मिन्धरणाधरस्य बहुशः स्वातन्त्र्यमेतावता स्पष्टंमानवमर्थतत्त्वमखिलंवक्तुंकृतोऽयंश्रमः ॥ १ ॥ प्रायोमुनिभिर्विवृतं कथयत्येषामनुस्मृतेरर्थम् ॥ दशभिर्ग्रन्थसहस्रैः सप्तदशैः*युता कृता वृत्तिः ॥ २ ॥ सेयंमया मानवधर्मशास्त्रे व्यधायि वृत्तिर्विदुषांहिताय ॥ दुर्बोधजातेर्दुरितक्षयाय भूयात्ततोमे जगतामधीशः ॥ ३ ॥ इति वारेन्द्रिनन्दनावासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः ॥ इति श्रीकुल्लूकभट्टविरचितामन्वर्थमुक्तावली समाप्ता ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

[ ( ४ ) **राघवानन्दः** । एतच्छास्त्रस्य पठनफलं ज्ञापयन्नुपसंहरति इतीति । भृगुप्रोक्तमृषिभ्योभृगुणैवपाठितं यथेष्टाख्यां स्वर्गाख्यां मोक्षाख्यां वा धर्मविद्ब्रह्मविच्च ॥ १२६ ॥ ][1]

इयंकृतिः सरस्वत्याः पदकंजसमर्पिता ॥ विदुषाचित्तकुमुदशशिनीवमनोरमा ॥ मन्वर्थचंद्रिकाह्येषाराघवानंदनिर्मिता ॥ करोतुविदुषांप्रीतिंविस्तरध्वांतवर्जनात् ॥ इतिश्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्येण श्रीराघवानंदसरस्वत्याविरचितमन्वर्थचंद्रिकायांद्वादशोध्यायः ॥ १२ ॥ श्रीरामचंद्रायनमः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

( ५ ) **नन्दनः** । शास्त्राध्ययनस्य फलमाह इत्येतंमानवंशास्त्रमिति । यथेष्टांगतिमवाप्नुयाद्यथैषांफलमवाप्नोति ॥१२६॥

इति श्रीभारद्वाजगोत्रतिलकेन श्रीलक्ष्मणविचक्षणानुजेन नन्दनसूरिणा विरचिते मानवव्याख्याने द्वादशोऽध्यायः ॥

---

* दश=शत ( अ )

( १ ) राघ० २, न

**समाप्तम्**

# प्रथमपरिशिष्टस्यानुक्रमणिका.

| | श्लोक संख्या. | | |
|---|---|---|---|
| | मनु | वृद्धमनु | बृहन्मनु |
| १ धर्माब्धिसारः | १ | ० | ० |
| २ स्मृतिचन्द्रिका | ३२ | २८ | ० |
| ३ दानहेमाद्रिः | ११ | ५ | ० |
| ४ व्रतहेमाद्रिः | १ | ० | ० |
| ५ श्राद्धहेमाद्रिः | ३१ | ० | ० |
| ६ स्मृतिरत्नाकरः | ५३ | ४ | २ |
| ७ शूद्रकमलाकरः | १४ | ७ | १ |
| ८ पराशरमाधवः | ४७ | ८ | ४ |
| ९ निर्णयसिन्धुः | १६ | १६ | ४ |
| १० मिताक्षरायाज्ञवल्क्यस्मृतिटिका | १३ | ० | १ |
| ११ संस्कारकौस्तुभः | ६ | ० | ० |
| १२ प्रयोगरत्नम् | २ | ० | ० |
| १३ विवादभङ्गार्णवः | १७ | १ | ३ |
| १४ व्यवहारतत्त्वम् | १ | ० | ० |
| १५ दायक्रमसंग्रहः | २ | ० | ० |
| १६ दायतत्त्वम् | २ | ० | ० |
| १७ श्रीमद्भागवते श्रीधरस्वामिकृतटीकायाम् | १ | ० | ० |
| १८ शङ्करविजयः | २ | ० | ० |
| १९ संस्कारमयूखः | ५ | ० | ० |
| २० आचारमयूखः | ८ | ० | ० |
| २१ श्राद्धमयूखः | २ | २ | ० |
| २२ व्यवहारमयूखः | २ | १ | ० |
| २१ प्रायश्चित्तमयूखः | ७ | २ | १ |

॥ श्री ॥

# ॥ मनुस्मृतिप्रथमपरिशिष्टम् ॥

( हेमाद्रिमाधवादिभिर्मनूक्तत्वेन स्वीकृतेषुवचनेषुयानिसंप्रत्युपलब्धमुद्रितमनुस्मृतिपुस्तकेषुनोपलभ्यन्तेतान्यस्मिन्परिशिष्टे संकलितानि )

## ॥ धर्माब्धिसारः ॥

विवाहव्रतचूडासु मातायदिरजस्वला ॥ तस्याःशुद्धेःपरंकार्यमङ्गलंमनुरब्रवीत् ॥ १ ॥

## ॥ स्मृतिचन्द्रिका ॥

### व्यवहारकाण्डम्

यत्क्षिप्तोमर्षयत्यार्तैस्तेनस्वर्गेमहीयते ॥ यस्त्वैश्वर्यान्नक्षमतेनरकंतेनगच्छति ॥ १ ॥

त्र्यवरैःसाक्षिभिर्भाव्यौनृपब्राह्मणसन्निधौ ॥ २ ॥

स्वभावेनैवयद्ब्रूयुस्तद्ग्राह्यंव्यावहारिकं ॥ यतोयदन्यद्विब्रूयुर्धर्मार्थंतदपार्थकम् ॥ ३ ॥

ऋत्विजःसमवेतास्तुयथासत्रेनिमन्त्रिताः ॥ कुर्युर्यथार्हतःकर्मगृह्णीयुर्दक्षिणांतथा ॥ ४ ॥

विभागेतुकृतेकिंचित्सामान्यंयत्रदृश्यते ॥ नासौविभागोविज्ञेयःकर्तव्यःपुनरेवहि ॥ ५ ॥

विभागेयत्रसंदेहोदायादानांपरस्परं ॥ पुनर्विभागः कर्तव्यःपृथक्स्थानस्थितैरपि ॥ ६ ॥

आरंभकृत्सहायश्चदोषभाजौतदर्धतः ॥ ७ ॥

गायत्रीमात्रसारोपिवनंविप्रःसुयन्त्रितः ॥ गायत्रीतश्चतुर्वेदीसर्वाशीसर्वविक्रयी ॥ ८ ॥

आसुराणांकुलेजाताजातिपूर्वपरिग्रहे ॥ तस्यादर्शनमात्रेणनिराशाःपितरोगताः ॥ ९ ॥

### ॥ आह्निकप्रकरणम् ॥

शिष्टाचारस्मृतिर्वेदास्त्रिविधंधर्मलक्षणम् ॥ १० ॥

धर्मव्यतिक्रमोदृष्टोहिमहतांसाहसंतथा ॥ तदन्वीक्ष्यप्रयुञ्जानःसीदत्येवरजोबलः ॥ ११ ॥

यथैववेदाध्ययनंधर्मशास्त्रमिदंतथा ॥ अध्येतव्यंब्राह्मणेननियमंस्वर्गमिच्छया ॥ १२ ॥

पुत्रजन्मनियत्नेचतथासंक्रमणेरवेः ॥ राहोश्चदर्शनेस्नानंप्रशस्तंनान्यथानिशि ॥ १३ ॥

पुराकल्पेकुमारीणांमौञ्जीबन्धनमिष्यते ॥ अध्यापनंचवेदानांसावित्रीवचनंतथा ॥ १४ ॥

पितापितृव्योभ्रातावाचैनामध्यापयेत्पुरः ॥ स्वगृहेचैवकन्यायाभैक्षचर्याविधीयते ॥ १५ ॥

वर्जयेदजिनंदण्डंजटाधारणमेवच ॥ १६ ॥

समतिक्रान्तकालाश्चपतिताःसर्वएवते ॥ नैवावधिपूर्तावदापद्यपिचकर्हिचित् ॥ १७ ॥

हस्तदत्तातुयाभिक्षालवणंव्यञ्जनानिच भुक्त्वाह्यशुचितांयातिदातास्वर्गंनगच्छति ॥ १८ ॥

---

( १ ) निर्णयसिन्धुः
( ३ ) पराशरमाधवः ।
( ४ ) पराशरमाधवः
( ५ ) पराशरमाधवः । व्यवहारमयूखः ।
( ६ ) पराशरमाधवः
( ८ ) श्राद्धहेमाद्रिः
( ११ ) स्मृतिरत्नाकरः ।
( १४ ) आमरकोशटीकायां पराशरमाधवेयमद्दत्युक्तम् ।

सायंप्रातर्द्विजातीनामशनंश्रुतिचोदितं ॥ नान्तराभोजनंकुर्यादग्निहोत्रसमोविधिः ॥ १९ ॥
ऋषिदेवमनुष्याणांवेदःचक्षुःसनातनः ॥ २० ॥
दशानांतुसहस्राणांयुक्तानांधुर्यवाहिनां ॥ सुपात्रेविनियुक्तानांकन्याविद्याचतत्समम् ॥ २१ ॥
शक्रध्वजनिपातेचउल्कापातेतथैवच ॥ अनध्यायस्त्रिरात्रंतुभूमिकम्पेतथैवच ॥ २२ ॥
सामर्थ्ययनेऋग्यजुषिनाधीयीतकदाचन ॥ २३ ॥
अस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरेन्नतु ॥ २४ ॥
नाग्निहोत्रादिभिस्तत्स्याद्रक्षतोब्राह्मणस्यवा ॥ यत्कन्यांविधिवद्दत्त्वाफलमाप्नोतिमानवः ॥ २५ ॥
कन्याद्वादशवर्षैयानप्रदत्तागृहेवसेत् ॥ भ्रूणहत्यापितुस्तस्याःसाकन्यावरयेत्स्वयम् ॥ २६ ॥
नष्टेमृतेप्रव्रजितेक्लीबेचपतितेपतौ ॥ पञ्चस्वापत्सुनारीणांपतिरन्योविधीयते ॥ २७ ॥
अलाभेदेवखातानांसरसांसरितांतथा ॥ उद्धृत्यचतुरःपिण्डान्पारक्येस्नानमाचरेत् ॥ २८ ॥
अग्निवत्कपिलासत्रीराजाभिक्षुर्महोदधिः ॥ दृष्टमात्रापुनन्त्येतेतस्मात्पश्येतनित्यशः ॥ २९ ॥
तृणंवायदिवाकाष्ठंपुष्पंवायदिवाफलं ॥ अनापृष्टन्तुगृह्णानोहस्तच्छेदनमर्हति ॥ ३० ॥
समर्घंपण्यमादत्यमहार्घंयःप्रयच्छति ॥ सवैवार्धुषिकोनामयश्चवृध्याप्रयोजयेत् ॥ ३१ ॥
ग्रासमात्राभवेद्भिक्षाअग्रंग्रासचतुष्टयं ॥ अग्रंचतुर्गणीकृत्यहंतकारोविधीयते ॥ ३२ ॥

## दानहेमाद्रिः ॥

इष्टेयज्ञेयद्दीयतेदक्षिणादितदैष्टिकम् ॥ बहिर्वेदिचयद्दानंदीयतेतद्धिपौर्तिकम् ॥ १ ॥
स्वर्गायुर्भूतिकामेनतथापापोपशान्तये ॥ मुमुक्षुणाचदातव्यंब्राह्मणेभ्यस्तथान्वहम् ॥ २ ॥
येव्यपेताःस्वकर्मभ्यःपरपिण्डोपजीविनः ॥ द्विजत्वमभिकाङ्क्षन्तितांश्चशूद्रवदाचरेत् ॥ ३ ॥
अव्रताह्यनधीयानायत्रभैक्ष्यचराद्विजाः ॥ तंग्रामंदण्डयेद्राजाचौरभक्तप्रदोहिसः ॥ ४ ॥
पात्रभूतोहियोविप्रःप्रतिगृह्यप्रतिग्रहम् ॥ असत्सुविनियुञ्जीततस्यदेयंनकिंचन ॥ ५ ॥
संचयंकुरुतेयश्चप्रतिगृह्यसमंततः ॥ धर्मार्थंनोपयुङ्क्तेयोनतंतस्करमर्चयेत् ॥ ६ ॥
नकुर्यात्कस्यचित्पीडांकर्मणामनसागिरा ॥ आचरन्नभिषेकन्तुकर्माण्यप्यन्यथाचरन् ॥७ ॥
सन्ध्ययोरुभयोर्जप्येभोजनेदन्तधावने ॥ पितृकार्येचदैवेचतथामूत्रपुरीषयोः ॥ ८ ॥
गुरूणांसन्निधौदानेयोगेचैवविशेषतः ॥ एषुमौनंसमातिष्ठन्स्वर्गंप्राप्नोतिमानवः ॥ ९ ॥
विष्णुः पराशरोदक्षः संवर्तव्यासहारिताः ॥ शातातपोवसिष्ठश्चयमापस्तंबगौतमाः ॥ १० ॥
दवलेःशङ्खलिखितौभरद्वाजोशनोत्रयः ॥ शौनकोयाज्ञवल्क्यश्चदशाष्टौस्मृतिकारिणः ॥ ११ ॥

## ॥ व्रतहेमाद्रिः ॥

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः ॥ निषिद्धसेवनंनित्यंवर्जनीयंप्रयत्नतः ॥ १ ॥

---

( १९ ) पराशरमाधवः । आचारमयूखः ( २८ ) हेमाद्रिः । स्मृतिरत्नाकरः । ( ५ ) पराशरमाधवः
( २४ ) मिताक्षरा । ( २९ ) पराशरमाधवः । ( ६ ) पराशरमाधवः
( २७ ) पराशरमाधवः ( ३२ ) पराशरमाधवः । आचारमयूखः

## ॥ श्राद्धहेमाद्रिः ॥

यत्किंचिन्मधुसंमिश्रंगोक्षीरघृतपायसं ॥ दत्तमक्षयमित्याहुःपितरस्त्वेवदेवताः ॥ १ ॥
अलाभेभिन्नकालानांनान्दीश्राद्धत्रयंबुधः ॥ पूर्वेद्युर्वैप्रकुर्वीतपूर्वाह्णेमातृपूर्वकम् ॥ २ ॥
एकपिण्डकृतानांतुपृथक्त्वंनोपपद्यते ॥ सपिण्डीकरणादूर्ध्वंमृतेकृष्णचतुर्दशीम् ॥ ३ ॥
कुर्वन्प्रतिपदिश्राद्धंसरूपानलभतेसुतान् ॥ कन्यकांतुद्वितीयायांतृतीयायांतुबन्दिन ॥ ४ ॥
पशून्क्षुद्रांश्चतुर्थ्यान्तुपंचम्यांशोभनान्सुतान् ॥ षष्ठ्यांद्यूतंकृषिंचापिसप्तम्यांलभतेनरः ॥ ५ ॥
अष्टम्यामपिवाणिज्यंलभतेश्राद्धदःसदा ॥ नवम्यामेकखुरकंदशम्यांद्विखुरांस्तथा ॥ ६ ॥
एकादश्यांतथारौप्यंब्रह्मवर्चस्विनःसुतान् ॥ द्वादश्यांजातरूपंचरजतंकुप्यमेवच ॥ ७ ॥
ज्ञातिश्रैष्ठ्यंत्रयोदश्यांचतुर्दश्यांतुसुप्रजाः ॥ प्रीयन्तेपितरश्चास्ययेशस्त्रेणहतारणे ॥ ८ ॥
पक्षत्यादिविनिर्दिष्टान्विपुलान्मनसःप्रियान् ॥ श्राद्धदःपंचदश्यांतुसर्वान्कामान्समश्नुते ॥ ९॥
सर्ववायदिवाप्यर्थंपादंवायदिवाक्षरं ॥ सकाशाद्यस्यगृह्णीयान्नियतंतस्यगौरवम् ॥ १० ॥
नानृग्ब्राह्मणोभवतिनवणिग्नकुशीलवः ॥ नशूद्रप्रेषणंकुर्वन्नस्तेयोनचिकित्सकः ॥ ११ ॥
परपूर्वापतिंधीरावदन्तिदधिषूपतिं ॥ द्विजोग्रेदधिषूश्चैवयस्यसैवकुटुंबिनी ॥ १२ ॥
यस्तयोरन्नमश्नातिसकुण्डाच्यवतेद्विजः ॥ १३ ॥
अतिथिंपूजयेद्यस्तुश्रान्तंवाप्यदृष्टमानसं ॥ सवृषंगोशतंतेनदत्तंस्यादितिमेमतिः ॥ १४ ॥
येषामन्नंचनातिथिर्विप्राणांव्रजतेगृहात् ॥ तेवैखरत्वमुष्ट्रत्वमश्वत्वंप्रतिपेदिरे ॥ १५ ॥
किंब्राह्मणस्यपितरंकिंवापृच्छतिमातरं ॥ श्रुतंचेदस्तिवेद्यंवातन्मातापितरौस्मृतौ ॥ १६ ॥
अनर्हतेयद्ददातिनददातियदर्हते ॥ अर्हानर्हानभिज्ञानात्सोपिधर्माद्दहीयते ॥ १७ ॥
परिच्युतेष्टवस्थानान्निगरन्नेवतच्छुचिः ॥ १८ ॥
निमन्त्र्यविप्रास्तदहर्वर्जयेन्मैथुनंक्षुरम ॥ प्रमत्तानांचस्वाध्यायंक्रोधाशौचंतथानृतम् ॥ १९ ॥
अभ्युष्णंसर्वमन्नंस्याद्भुञ्जीरंश्चैववाग्यतः ॥ नवद्विजातयोब्रूयुर्दात्रापृष्टाहविर्गुणान् ॥ २० ॥
उपासनाग्नौकुर्वीतगृह्यंकर्मयथाविधि ॥ पञ्चयज्ञान्नपक्तिंश्चयच्चान्यद्गृह्यकृत्यकम् ॥ २१ ॥
बह्वग्नयस्तुयेविप्रायेवैकाग्नयएवच ॥ तेषांसपिण्डनादूर्ध्वमेकोद्दिष्टंनपार्वणम् ॥ २२॥
पूर्वाह्णेवैदिकंश्राद्धमपराह्णेतुपार्वणम ॥ एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकम् ॥ २३ ॥
पिण्डान्वाहार्यकंश्राद्धंक्षीणेराजनिशस्यते ॥ वासरस्यतृतीयेंऽशेनातिसन्ध्यासमीपतः ॥ २४ ॥
यस्यचैवगृहेविप्रोवसेत्कश्चिदभोजितः ॥ नतस्यपितरोदेवाहव्यंकव्यंचभुञ्जते ॥ २५ ॥
अतिथिर्यस्यवैग्रामेभिक्षमाणःप्रयत्नतः ॥ सचेन्निरसितस्तत्रब्रह्महत्याविधीयते ॥ २६ ॥
अपिशाकंपचानस्यशिलोञ्छेनापिजीवतः ॥ स्वदेशेपरदेशेवानातिथिर्विमनाभवेत् ॥ २७ ॥

---

( ४ ) पराशरमाधवः । ( ६ ) पराशरमाधवः । ( ८ ) पराशरमाधवः ।
( ५ ) पराशरमाधवः ( ७ ) पराशरमाधवः । ( ९ ) पराशरमा०

यस्यमित्रप्रधानानिश्राद्धानिचहवींषिच ॥ पितृषुदैवयज्ञेषुदातास्वर्गंनगच्छति ॥ २८ ॥
श्राद्धेनयःकुरुतेसंगतानिनदेवयानेनपथासयाति ॥ विनिर्मुक्तंपिप्पलंबन्धतोवास्वर्गाल्लोकाद्भ्रश्यतिश्राद्धमित्रः॥२९॥
यत्प्रोषितंभवेन्मांसंब्राह्मणानांचकाम्यया ॥ यथाविधिनियुक्तश्चप्राणानामेवचात्यये ॥ ३० ॥
यस्तुभक्षयतेमांसंब्राह्मणानांचकाम्यया ॥ सलोकेऽप्रियतांयातिव्याधिभिश्चैवपीड्यते ॥ ३१ ॥

## ॥ स्मृतिरत्नाकरः ॥

यस्यधर्मध्वजोनित्यंसुराध्वजइवोच्छ्रितः ॥ चरितानिचपापानिबैडालंनामतंविदुः ॥ १
रजकश्चर्मकारश्चनटोबुरुडएवच ॥ कैवर्तमेदभिल्लाश्चसप्तैतेऽन्त्यजजातयः ॥ २ ॥
आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयेत् ॥ लोभाद्यःपितरौमोहात्सकदर्यइतिस्मृतः ॥ ३ ॥
योर्थार्थीमांद्विजेदद्यात्पठेचैवविधानतः ॥ अध्यायेचधनंप्राहुर्वेदविभावकंबुधाः ॥ ४ ॥
प्रख्यापनंनाध्ययनंप्रश्नपूर्वप्रतिग्रहः ॥ याजनाध्यापनेवादःषड्विधोवेदविक्रयः ॥ ५ ॥
स्वभावाद्यत्रविचरेत्कृष्णसारमृगोद्विजाः ॥ विज्ञेयोधार्मिकोदेशोम्लेच्छदेशस्ततःपरः ॥ ६ ॥
निवर्तकंहिपुरुषंनिवर्तयतिजन्मतः ॥ प्रवर्तकंहिसर्वत्रपुनरावृत्तिहेतुकं ॥ ७ ॥
संसारभीरुभिस्तस्माद्वियुक्तंकामवर्जनम् ॥ विधिवत्कर्मकर्तव्यंज्ञानेनसह्सर्वदा ॥ ८ ॥
नदेहिनांयतःशक्यंकर्तुंकर्माण्यशेषतः ॥ तस्मादामरणाद्वैधंकर्तव्यंयोगिनासदा ॥ ९ ॥
अर्थकामेष्वसक्तानांधर्मज्ञानंविधीयते ॥ धर्मजिज्ञासमानानांप्रमाणंप्रथमंश्रुतिः ॥ १० ॥
हतंज्ञानंक्रियाहीनंहतास्त्वज्ञानिनःक्रियाः ॥ अपश्यन्नन्धकोदग्धःपश्यन्नपिचपङ्गुकः ॥ ११ ॥
नान्यचित्तश्चिरंतिष्ठेन्नस्पृशेत्पाणिनाशिरः ॥ नब्रूयान्नदिशःपश्येद्विण्मूत्रोत्सर्जनेबुधः ॥ १२ ॥
परस्यशोणितस्पर्शेरेतोविण्मूत्रजेतथा ॥ चतुर्णामपिवर्णानांद्वात्रिंशन्मृत्तिकाःस्मृताः ॥ १३ ॥
दन्तवद्दन्तलग्नेषुजिव्हास्पर्शेशुचिर्नतु ॥ परिच्युतेष्ववस्थानान्निगरेन्नैवतच्छुचिः ॥ १४ ॥
त्रीन्पिण्डानथवोद्धृत्यस्नायादापत्सुनासदा ॥ अन्यैरपिकृतेकूपेसरोवाप्यादिकेतथा ॥ १५ ॥
तत्रस्नात्वाचपीत्वाचप्रायश्चित्तंनविद्यते ॥ १६ ॥
नातुरोनारुणकरन्नाक्रान्तेचनभस्तले ॥ नपरांभसिनाल्पेचनाशिरस्कःकथंचन ॥ १७ ॥
गतेदेशान्तरंपत्यौगन्धमाल्याञ्जनानिच ॥ दन्तकाष्ठंचतांबूलंवर्जयेद्वनितासती ॥ १८ ॥
आराध्यंदेवमाराध्यबन्धूनप्यनुसृत्यच ॥ मुक्त्वाव्याधौचनस्नायात्तैलेनापिनिशास्वपि ॥ १९ ॥
राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकंकार्यंनिशिकाम्यव्रतेषुच ॥ २० ॥
पुच्छेबिडालकंस्पृष्ट्वास्नात्वाविप्रोविशुध्यति ॥ भोजनेकर्मकालेचविधिरेषउदाहृतः ॥ २१ ॥
प्रक्षाल्यपादौहस्तौचद्विराचान्तोवाग्यतःशुचिः ॥ तिथिवारादिकंश्रुत्वासुसंकल्प्ययथाविधि ॥ २२ ॥
नोपतिष्ठेतयःपूर्वामुपास्तेनचपश्चिमाम् ॥ सशूद्रवद्बहिष्कार्यःसर्वस्मात्साधुकर्मणः ॥ २३ ॥
यस्यदेशंनजानातिस्थानंत्रिपुरुषंकुलम् ॥ कन्यादानंनमस्कारंश्राद्धंतस्यविवर्जयेत् ॥ २४ ॥

( १ ) श्राद्धहेमाद्रिः ( १३ ) आचारमयूखः ( १४ ) पराशरमाधवः

एवंसन्ध्यामुपास्याथपितरावग्रजान्गुरून् ॥ त्रिवर्णपूर्वशिष्टांश्चपार्श्वस्थानभिवादयेत् ॥ २५ ॥
अग्निहोत्रस्यशुश्रूषासन्ध्योपासनमेवच ॥ कार्यंपत्न्याप्रतिदिनंबलिकर्मचनैत्यकम् ॥ २६ ॥
मुख्यकालेव्यतिक्रान्तेगौणकालेतथाचरेत् ॥ २७ ॥
आत्मशाखांपरित्यज्यपरशाखासुवर्तते ॥ नजातुपरशाखोक्तंबुधःकर्मसमाचरेत् ॥ २८ ॥
समूलश्चभवेद्दर्भःपितॄणांयज्ञकर्मणि ॥ मूलेनलोकाञ्जयतिशक्रस्यचमहात्मनः ॥ २९ ॥
मातापितागुरुर्भ्राताप्रजादीनःसमाश्रितः ॥ अभ्यागतोऽतिथिश्चाग्निःपोष्यवर्गाउदाहृताः ॥ ३० ॥
द्विजातिभ्योयथालिप्सेत्प्रकृष्टेभ्योविशेषतः ॥ अपिवाजातिमात्रेभ्योनतुशूद्रात्कथंचन ॥ ३१ ॥
उत्कृष्टंवापकृष्टंवातयोःकर्मनविद्यते ॥ मध्यमेकर्मणीहित्वासर्वसाधारणेहिते ॥ ३२ ॥
चणकव्रीहिगोधूमयवानांमुद्गमाषयोः ॥ अनिषिद्धोग्रहीतव्योमुष्टिरेकोध्वनिर्जितैः ॥ ३३ ॥
त्रीण्याहुरतिदानानिगावःपृथ्वीसरस्वती ॥ अतिदानंहिदानानांनास्तिदानंततोऽधिकम् ॥ ३४ ॥
ज्ञानमत्तस्ययोदद्याद्विद्शास्त्रसमुद्भवम् ॥ अपिदेवास्तमर्चन्तिभर्गब्रह्मदिवाकराः ॥ ३५ ॥
पूर्वजन्मकृतंपापंव्याधिरूपेणबाधते ॥ तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ३६ ॥
यत्तज्ज्ञात्वाद्विजोधर्मंपापंनैवसमाचरेत् ॥ ३७ ॥
गुरूणामध्यधिक्षेपोवेदनिन्दासुहृद्वधः ॥ ब्रह्महत्यासमंज्ञेयमधीतस्यचनाशनम् ॥ ३८ ॥
तैलभेषजपानेतुऔषधार्थंप्रकल्पयेत् ॥ विषतैलेनगर्भाणांपुत्रतेनास्तिपातकम् ॥ ३९ ॥
अतिबालामतिकृशामतिवृद्धामरोगिणीम् ॥ हत्वापूर्वविधानेनचरेच्चान्द्रायणंद्विजः ॥ ४० ॥
एकवर्षेहतेवत्सेकृच्छ्रपादोविधीयते ॥ अबुद्धिपूर्वंवेशःस्यात्प्रभृतेनास्तिपातकम् ॥ ४१ ॥
अग्निविद्युद्विपन्नानांप्रभृतेनास्तिपातकं ॥ यन्त्रितंगोचिकित्सार्थंमूढगर्भातिपातने ॥ ४२ ॥
यत्नेकृतेविपत्तिश्चेत्प्रायश्चितंसमाचरेत ॥ गवाचपर्वतारोहेनदीतीरेतथैवच ॥ ४३ ॥
प्रायश्चित्तंप्रकुर्वन्तिद्विजावेदपरायणाः ॥ ४४ ॥
द्विजातीनामयंदेहोनभोगायप्रकल्पते ॥ इहक्लेशायमहतेप्रेत्यानन्तसुखायच ॥ ४५ ॥
यदातूपघातोच्छिष्टानियानिच ॥ शुध्यन्तिदशभिःक्षारैःश्वकाकोपहतानिच ॥ ४६ ॥
बालैरनुमनुक्रान्तंनित्यंमेध्यमितिस्थितिः ॥ ४७
आपोहिष्ठादिमन्त्रेणमार्जयित्वायथाविधि ॥ आपःपुनन्तुमन्त्रेणजलंपीत्वासमाहितः ॥ ४८ ॥
सुरभिमत्यासहालिङ्गैर्मार्जयित्वार्घ्यमुत्क्षिपेत् ॥ द्वौपादौसंपुटौकृत्वापाणिभ्यांपूरयेज्जलम् ॥ ४९ ॥
रवैरभिमुखस्तिष्ठंस्त्रिरूर्ध्वंसन्ध्ययोःक्षिपेत् ॥ ५० ॥
आर्द्रवासस्तुयःकुर्याज्जपहोमौप्रतिग्रहम् ॥ तत्सर्वंनिष्फलंविद्यादित्येवंमनुरब्रवीत् ॥ ५१ ॥
धात्र्याःखादेन्नतुदिवादधिसक्तूंस्तथानिशि ॥ सर्वंचतिलसंबन्धंनाद्यादस्तमयंप्रति ॥ ५२ ॥
तिलार्द्रदधिमिश्राणांतिलशाकानिनिस्वदन् ॥ ५३ ॥

---

( ३३ ) मिताक्षरा । प्रायश्चित्तमयूखः ।

## ॥ शूद्रकमलाकरः ॥

जपस्तपस्तीर्थसेवाप्रव्रज्यामन्त्रसाधनम् ॥ देवतासाधनंचैवस्त्रीशूद्रपतनानिषट् ॥ १ ॥
गृह्याग्नौतुपचेदन्नंलौकिकेवापिनित्यशः ॥ यस्मिन्नग्नौपचेदन्नंतस्मिन्होमोविधीयते ॥ २ ॥
बैजिकादभिसंबन्धादनुरुन्ध्यादहंग्यहम् ॥ ३ ॥
द्विजस्यमरणेवेश्मविशुध्यतिदिनत्रयात् ॥ ४ ॥
विप्रःशुध्यत्यपःस्पृष्ट्वाक्षत्रियोवाहनायुधे ॥ वैश्यःप्रतोदरश्मीन्वायष्टिंशूद्रःकृतक्रियः ॥ ५ ॥
तस्माद्यत्नेनरक्ष्यास्ताभर्तव्यामनुरब्रवीत् ॥ ६ ॥
ग्राम्यधर्मेचपत्न्यांचपरिग्राहस्यरक्षणे ॥ ७ ॥
पत्यौजीवतियानारीउपोष्यव्रतचारिणी ॥ आयुष्यंहरतेभर्तुर्नरकंचैवगच्छति ॥ ८ ॥
भर्तादैवंगुरुर्भर्ताधर्मतीर्थव्रतानिच ॥ तस्मात्सर्वंपरित्यज्यपतिमेकंसमाचरेत् ॥ ९ ॥
भुङ्क्तेभुक्तेपतौयातुत्वासीनाचापिवासिते ॥ विनिद्रितेविनिद्रातिसास्त्रीज्ञेयापतिव्रता ॥ १० ॥
स्त्रियाःश्रुतौवाशास्त्रेवाप्रव्रज्यानाभिधीयते ॥ प्रजाहितस्याःस्वोधर्मःसवर्णादितिधारणा ॥ ११ ॥
अष्टाशीतिसहस्राणिमुनीनामूर्ध्वरेतसाम् ॥ दिवंगतानिविप्राणामकृत्वाकुलसंततिम् ॥ १२ ॥*
ब्राह्मणाःक्षत्रियावैश्याःस्वावधेरूर्ध्वमद्व्रतः ॥ अकृतोपनयासर्वेवृषलाएवतेस्मृताः ॥ १३ ॥
प्रायश्चित्तंचिकित्सांचज्योतिषंधर्मनिर्णयम् ॥ विनाशास्त्रेणयोब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ १४ ॥

## ॥ पराशरमाधवः ॥

प्रजापतिर्हियस्मिन्कालेराज्यमभूभुजत् ॥ धर्मैकतानाःपुरुषास्तदासन्सत्यवादिनः ॥ १ ॥
तदानव्यवहारोऽभूद्द्वेषोनापिमत्सरः ॥ नष्टेधर्मेमनुष्येषुव्यवहारःप्रवर्तते ॥ २ ॥
द्विजान्विहायसंपश्येत्कार्याणिवृषलैःसह ॥ तस्यप्रक्षुभितंराष्ट्रंबलंकोशंचनश्यति ॥ ३ ॥
संदिग्धेषुतुकार्येषुद्वयोर्विविदमानयोः ॥ दृष्टश्रुतानुभूतत्वात्साक्षिभ्योव्यक्तदर्शनम् ॥ ४ ॥
ब्राह्मणावामनुष्याणामादित्यस्तेजसामिव ॥ शिरोवासर्वगात्राणांधर्माणांसत्यमुत्तमम् ॥ ५ ॥
सत्यमेवपरंदानंसत्यमेवपरंतपः ॥ सत्यमेवपरोधर्मोलोकोत्तरमितिस्थितिः ॥ ६ ॥
सत्येदेवाःसमुद्दिष्टामनुष्यास्त्वनृतंस्मृतं ॥ इहैवतस्यदेवत्वंयस्यसत्येस्थितामतिः ॥ ७ ॥
नास्तिसत्यात्परोधर्मोनानृतात्पातकंपरम् ॥ साक्षिधर्मेविशेषेणसत्यमेववदेनसः ॥ ८ ॥
ऋत्विक्पुरोहितामात्याःपुत्राःसंबन्धिबान्धवाः ॥ धर्माद्विचलितादण्ड्यानिर्वास्याराजभिःपुरात् ॥ ९ ॥
ऋणिकःसधनोयस्तुदौरात्म्यान्नप्रयच्छति ॥ राज्ञादापयितव्यःस्याद्गृहीत्वाद्विगुणंततः ॥ १० ॥
द्रव्यमस्वामिविक्रीतंमूल्याराज्ञेनिवेदितं ॥ नतत्रविद्यतेदोषोनस्यात्तद्रुपविक्रयात् ॥ ११ ॥
आर्त्तस्यकुर्यात्सच्छंसनयथाभाषितप्रादितः ॥ सुदीर्घस्यापिकालस्यतल्लभेतेवचेतनाम् ॥ १२ ॥
तएवदण्डपारुष्येव्याप्यादण्डायथाक्रमं ॥ १३ ॥

---

( १० ) संस्कारमयूखः     * अयं पञ्चमाध्यायगतैकोनषष्ट्यधिकशततमश्लोकस्य द्वितीयः पादइव भाति

यः कुमारींमेषपशूनृक्षांश्ववृषभंतथा ॥ वाहयेत्साहसंपूर्णंप्राप्नुयादुत्तमंवधे ॥ १४ ॥
महापापोपवक्तारोमहापातकशंसकाः ॥ आमध्यमोत्तमादण्ड्यादद्युस्तेचयथाक्रमम् ॥ १५ ॥
मध्यमोजातिपूगानांप्रथमोग्रामदेशयोः ॥ १६ ॥
अन्त्याभिगमनेत्वङ्क्याकबन्धेनप्रवासयेत् ॥ शूद्रस्तथाङ्क्यएवस्यादण्ड्यःस्याद्गमनेवधः ॥ १७ ॥
अयोनौगच्छतोयेषांपुरुषंवापिमोहतः ॥ चतुर्विंशतिकोदण्डस्तथाप्रव्रजितोहिसः ॥ १८ ॥
यःकारणंपुरस्कृत्यव्रतचर्यांनिषेवते ॥ पापंव्रतेनसंछाद्यबैडालंनामतद्व्रतम् ॥ १९ ॥
सहस्रगुणितंदानंभवेद्दत्तंयुगादिषु ॥ कर्मश्राद्धादिकंचैवतथामन्वन्तरादिषु ॥ २० ॥
वृद्धौचमातापितरौसाध्वीभार्यासुतःशिशुः ॥ अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीत् ॥ २१ ॥
दीपोत्सवचतुर्दश्यांकार्यंतुयमतर्पणम् ॥ कृष्णांगारचतुर्दश्यामपिकार्यंतथैववा ॥ २२ ॥
यमायधर्मराजायमृत्यवेचान्तकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच ॥ २३ ॥
औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायतेनमः ॥ २४ ॥
चन्द्रसूर्यग्रहेनाद्यादद्यात्स्नात्वाविमुक्तयोः ॥ अमुक्तयोरस्तगतयोर्दृष्ट्वास्नात्वापरेहनि ॥ २५ ॥
उपस्थानेचयत्प्रोक्तंभिक्षार्थंब्राह्मणेनहि ॥ तात्कालिकमितिख्यातंतदत्तव्यंमुमुक्षुणा ॥ २६ ॥
सिद्धमन्नंभक्तजनैरानीतंयन्मठंप्रति ॥ उपपन्नंतदित्याहुर्मुनयोमोक्षकाङ्क्षिणः ॥ २७ ॥
उभयत्रदशाहानिकुलस्यान्नंनभुज्यते ॥ दानंप्रतिग्रहोहोमःस्वाध्यायश्चनिवर्तते ॥ २८ ॥
जातेकुमारेतदहःकामंकुर्यात्प्रतिग्रहम् ॥ हिरण्यधान्यगोवासास्तिलानांगुडसर्पिषाम् ॥ २९ ॥
मातुलेश्वशुरेमित्रेगुरौगुर्वङ्गनासुच ॥ आशौचंपक्षिणींरात्रिंमृतामातामहीयदि ॥ ३० ॥
श्वशुरयोश्चभगिन्यांचमातुलान्यांचमातुले ॥ ३१ ॥
ग्राममध्येमृतोयावच्छवस्तिष्ठतिकस्यचित् ॥ ग्रामस्यतावदाशौचंनिर्गतेशुचितामियात् ॥ ३२ ॥
ग्रामेश्वरेकुलपतौश्रोत्रियेचतपस्विनि ॥ शिष्येपञ्चत्वमापन्नेशुद्धिर्नक्षत्रदर्शनात् ॥ ३३ ॥
तिस्रःकोट्योऽर्धकोटीचयानिरोमाणिमानुषे ॥ तावत्कालंवसेत्स्वर्गेभर्तारंयानुगच्छति ॥ ३४ ॥
उग्रात्तुजातःक्षत्तायांश्वपाकइतिकीर्त्यते ॥ ३५ ॥
ब्राह्मणस्यरणद्वारेपूयशोणितसंभवे ॥ कृमिरुत्पद्यतेयस्तुप्रायश्चित्तंकथंभवेत् ॥ ३६ ॥
गवांमूत्रपुरीषेणत्रिसन्ध्यंस्नानमाचरेत् ॥ त्रिरात्रंपञ्चगव्याशीअधोनाभ्याविशुध्यति ॥ ३७ ॥
नाभिकण्ठान्तरोद्भूतेव्रणेचोत्पद्यतेकृमिः ॥ षड्रात्रंतुतदाप्रोक्तंप्राजापत्यंशिरोव्रणे ॥ ३८ ॥
विधिःप्राथमिकादस्माद्द्वितीयोद्विगुणंचरेत् ॥ तृतीयेत्रिगुणंचैवचतुर्थेनास्तिनिष्कृतिः ॥ ३९ ॥
अपात्रीकरणंत्वातप्तकृच्छ्रेणशुध्यति ॥ शीतकृच्छ्रेणवाशुद्धिमहःसांतपनेनवा ॥ ४० ॥

---

( १३ ) मिताक्षरा ।
( २१ ) मिताक्षरा । विवादभङ्गार्णवः ।
( २२ ) निर्णयसिन्धुः । मदनपारिजातः । आचारमयूखः ।
( ३५ ) इदं श्वपाकलक्षणं दशमाध्यायगतैकोनविंशतितमश्लोकोक्तलक्षणात् तथा चामरकोशोक्तलक्षणाद्भिन्नं वर्तते ।
( ३६ ) मिताक्षरा । प्रायश्चित्तमयूखः
( ३७ ) मिताक्षरा । प्रायश्चित्तमयूखः
( ३८ ) मिताक्षरा । प्रायश्चित्तमयूखः
( ३९ ) मिताक्षरा ।

श्रुतिंपश्यन्तिमुनयःस्मरन्तिचतथास्मृतिम् ॥ तस्मात्प्रमाणमुभयंप्रमाणैःप्रापितंभुवि ॥ ४१ ॥
वाक्याभावेतुसर्वेषांदेशदृष्टमनन्तयेत् ॥ ४२ ॥
यस्यदेशस्ययोधर्मःप्रवृत्तःसार्वकालिकः ॥ श्रुतिस्मृत्यविरोधेनदेशदृष्टःसउच्यते ॥ ४३ ॥
देशपत्तनगोष्टेषुपुरग्रामेषुवादिनाम् ॥ तेषांस्वसमयैर्धर्मःशास्त्रतोउन्येषुतैःसह ॥ ४४ ॥
लेख्यंयत्रनविद्येतनभुक्तिर्नचसाक्षिणः ॥ नचदिव्यावतारोस्तिप्रमाणंतत्रपार्थिवः ॥ ४५ ॥
उभयाभ्यर्थितेनैवमयाह्यमुकसूनुना ॥ लिखितंह्यमुकेनेतिलेखकःस्वंतुतल्लिखेत् ॥ ४६ ॥
शोधयेत्तंचच्छन्देनवेदयेद्धनिकंनृपे ॥ सराज्ञर्णचतुर्भागंदाप्यंतस्यचतद्धनम् ॥ ४७ ॥

## ॥ निर्णयसिन्धुः ॥

पुष्पालङ्कारवस्त्राणिगन्धधूपानुलेपनम् ॥ उपवासेनदुष्यन्तिदन्तधावनमञ्जनम् ॥ १ ॥
आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात् ॥ समाप्तेतूदकंकृत्वात्रिरात्रमशुचिर्भवेत् ॥ २ ॥
यदातुनैवकश्चित्स्यात्कन्याराजानमाह्वयेत् ॥ ३ ॥
राज्ञस्तथाग्रुरौवैश्येशूद्रेचान्त्यस्तुगर्हितः ॥ ४ ॥
षंढान्धबधिरादीनांविवाहोस्तियथोचितम् ॥ विवाहासंभवेतेषांकनिष्ठोविवहेत्तदा ॥ ५ ॥
वसवःपितरोज्ञेयारुद्राज्ञेयाःपितामहाः ॥ प्रपितामहास्तथादित्याःश्रुतिरेषासनातनी ॥ ६ ॥
अविद्वान्प्रतिगृह्णानोभस्मीभवतिदारुवत् ॥ ७ ॥
सर्वायासविनिर्मुक्तैःकामक्रोधविवर्जितैः ॥ भवितव्यंभवद्भिर्नःश्वोभूतेश्राद्धकर्मणि ॥ ८ ॥
दद्यात्रिभ्यःपरेभ्यस्तुजीवेच्चेत्त्रितयंयदि ॥ ९ ॥
आशौचेचव्यतिक्रान्तेनामकर्मविधीयते ॥ १० ॥
वृद्धःशौचस्मृतेलुप्तप्रत्याख्यातभिषक्क्रियः ॥ आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनाम्बुभिः ॥ ११ ॥
तस्यत्रिरात्रमाशौचंद्वितीयेत्वस्थिसंचयः ॥ तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरेत् ॥ १२ ॥
अस्वर्ग्याह्याहुतिःसास्याच्छूद्रसंपर्कदूषिता ॥ १३ ॥
ब्रह्मचर्यंचरेद्वापिप्रविशेद्वाहुताशनम् ॥ १४ ॥
मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदैहिकम् ॥ कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतात् ॥ १५ ॥
इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततः ॥ १६ ॥

## ॥ मिताक्षरा ॥

अकामतस्त्वहोरात्रंशेषेषूपवसेदहः ॥१॥
मानुषास्थिशवंविष्ठारेतोमूत्रार्तवंवसा ॥ स्वेदाश्रुदूषिकाश्लेष्ममद्यंचामेध्यमुच्यते ॥ २ ॥
विष्णोहव्यंचकव्यंचब्रूयाद्रक्षेतिचक्रमात् ॥ ३ ॥

( ४ ) संस्कारकौस्तुभः ( ३ ) श्राद्धमयूखः

सभासदश्चयेतत्रस्मृतिशास्त्रविदःस्थिताः ॥ यथालेख्यविधौतद्वत्स्वहस्तंतद्युरेवते ॥ ४ ॥
निष्केतुसत्यवचनंद्विनिष्केपादलम्बनम् ॥ त्रिकादर्वाक्तुपुण्यंस्यात्कोशपानमतःपरम् ॥ ५ ॥
विभक्तावाविभक्तावासपिण्डाःस्थावरेसमाः ॥ एकोह्यनीशःसर्वत्रदानाधमनविक्रयः ॥ ६ ॥
वाक्पारुष्येयएवोक्ताप्रतिलोमानुलोमतः ॥ ७ ॥
ब्राह्मणस्यवधेमौण्ड्यंपुरान्निर्वासनाङ्कने ॥ ललाटेवाभिशस्ताङ्कःप्रयाणंगर्दभेनतु ॥ ८ ॥
सूतकेतुकुलस्यान्नमदोषंमनुरब्रवीत् ॥ ९ ॥
बहूनामेककार्याणांसर्वेषांशस्त्रधारिणाम् ॥ यद्येकोघातयेत्तत्रसर्वेतेघातकाःस्मृताः ॥ १० ॥
ततोमुसलमादायसकृद्धन्यात्तुतंस्वयम् ॥ ११ ॥
एतान्येवतथापेयान्येकैकंतुद्व्यहंद्व्यहम् ॥ अतिसांतपनंनामश्वपाकमपिशोधयेत् ॥ १२ ॥
विद्वद्विप्रनृपस्त्रीणांनेष्यतेकेशवापनम् ॥ ऋतेमहापातकिनोगोहन्तुश्चावकीर्णिनः ॥ १३ ॥

## ॥ संस्कारकौस्तुभः ॥

सर्वदेशेषुपूर्वाह्णंमुख्यंस्यादुपनायनम् ॥ मध्याह्नेमध्यमंप्रोक्तमपराह्णेचगर्हितम् ॥ १ ॥
विवाहेनाधिकारेणज्येष्ठकन्योत्थितायदा ॥ तदनुज्ञांविनाचापिकनिष्ठामुद्वहेत्तदा ॥ २ ॥
शर्मदेवश्चविप्रस्यवर्मराजाचभूभुजः ॥ गुप्तोदत्तश्चवैश्यस्यदासःशूद्रस्यकारयेत् ॥ ३ ॥
चाण्डालान्नंद्विजोभुक्त्वासम्यक्चान्द्रायणंचरेत् ॥ बुद्धिपूर्वंतुकृच्छ्राद्वंपुनः संस्कारमेवच ॥ ४ ॥
प्रदोषपश्चिमौयामौवेदाभ्यासेनयोजयेत् ॥ यामद्वयंशयानस्तुब्रह्मभूयायकल्पते ॥ ५ ॥
चत्वारोब्राह्मणस्याद्याःशस्तागान्धर्वराक्षसौ ॥ ६ ॥

## ॥ नारायणभट्टकृतप्रयोगरत्नम् ॥

जातकर्मादिसंस्काराःस्वकालेनभवन्तिचेत् ॥ चौलादर्वाक्प्रकुर्वीतप्रायश्चित्तादनन्तरम् ॥ १ ॥†
लेखामात्रस्तुदृश्येतरश्मिभिस्तुसमन्वितः ॥ उदितंतुविजानीयात्तत्रहोमंप्रकल्पयेत् ॥ २ ॥*

## ॥ विवादभङ्गार्णवः ॥

भरणंपोष्यवर्गस्यप्रशस्तंस्वर्गसाधनम् ॥ नरकंपीडनेचास्यतस्माद्यत्नेनतंभरेत् ॥ १ ॥
येजातायेप्यजाताश्चयेचगर्भेव्यवस्थिताः ॥ वृत्तिंतेऽपिहिकाङ्क्षन्तिवृत्तिलोपोविगर्हितः ॥ २ ॥
ऋणमस्मिन्सन्नयत्यमृतत्वंचविन्दति ॥ तेनचानृणतांयातिपितॄणांजीवतांसुखम् ॥ ३ ॥
षाण्मासिकेपिकालेतुभ्रान्तिःसंजायतेनृणाम् ॥ धात्राक्षराणिसृष्टानिपत्रारूढान्यतःपुरा ॥ ४ ॥
ब्राह्मणःक्षत्रियोवापिवृद्धिंनैवप्रयोजयेत् ॥ कामीचखलुधर्मार्थंदद्यात्पापीयसेऽल्पकम् ॥ ५ ॥
धर्मार्थंब्राह्मणेदानंयशोर्थेतदनर्थकम् ॥ ६ ॥

---

† संस्कारमयूखः । * संस्कारमयूखः

सर्वत्रादायकंराजाहरेद्ब्रह्मस्ववर्जितम् ॥ अदायकंतुब्रह्मस्वंश्रोत्रियेभ्यःप्रदापयेत् ॥ ७ ॥
विरोधेतुमिथस्तेषांव्यवहारोनसिध्यति ॥ ८ ॥
ऋतुस्नातातुयाभार्याभर्तारंनोपगच्छति ॥ तांग्राममध्येविख्याप्यभ्रूणघ्नींविनिवासयेत् ॥ ९ ॥
स्वच्छन्दगाचयानारीतस्यास्त्यागोविधीयते ॥ नचैवस्त्रीवधंकुर्यान्नचैवाङ्गविकर्तनम् ॥ १० ॥
स्वच्छन्दव्यभिचारिण्याविवस्वांस्त्यागमब्रवीत् ॥ नवधंनचवैरूप्यंबन्धंस्त्रीणांविवर्जयेत् ॥ ११ ॥
दानात्प्रभृतियातुस्याद्यावदायुःपतिव्रता ॥ साभर्तृलोकमाप्नोतियथैवारुन्धतीतथा ॥ २१ ॥
यल्लब्धंलाभकालेतुस्वजात्याकन्ययासह ॥ कन्यागतंतुतद्विद्याच्छुद्धंवृद्धिकरंस्मृतम् ॥ १३ ॥
वैवाहिकंतुतद्विद्याद्भार्यायायत्समागतम् ॥ धनमेवंविधंसर्वंविज्ञेयंधर्मसाधनम् ॥ १४ ॥
आरुह्यसंशयंयत्रप्रसभंकर्मकुर्वते ॥ तस्मिन्कर्मणितष्टेनप्रसादःस्वामिनाकृतः ॥ १५ ॥
तत्रलब्धंतुयत्किंचिद्धनंशौर्येणतद्भवेत् ॥ ध्वजाहृतंभवेद्यचविभाज्यंनैवतत्स्मृतम् ॥ १६ ॥
संग्रामादाहृतंयत्तुविद्राव्यद्विषतांबलम् ॥ स्वाम्यर्थेजीवितंत्यक्त्वातद्ध्वजाहृतमुच्यते ॥ १७ ॥

---

## ॥ व्यवहारतत्त्वम् ॥

नाध्यापयतिनाधीतेसब्राह्मणब्रुवःस्मृतः ॥ १ ॥

---

## ॥ दायक्रमसंग्रहः ॥

पतितस्तुसुतःक्लीबःपङ्गुश्चोन्मत्तकोजडः ॥ अन्धोऽचिकित्स्यरोगार्त्तोभर्तव्यास्तेनिरंशकाः ॥ १ ॥

सामान्यंपुत्रकन्याधिःसर्वस्वंन्याययाचितम् ॥ अदेयान्याहुरष्टैवयच्चान्यस्मैप्रतिश्रुतम् ॥ २ ॥

---

## ॥ दायतत्त्वम् ॥

राजालब्ध्वानिधिंदद्याद्द्विजेभ्योऽर्धंद्विजःपुनः ॥ विद्वानशेषमादद्यात्ससर्वस्यप्रभुर्यतः ॥ १ ॥
इतरेणनिधौलब्धेराजाषष्ठांशमाहरेत् ॥ अनिवेदितविज्ञातादाप्यस्तंदण्डमेवच ॥ २ ॥

## श्रीमद्भागवते

३ स्कन्धे १ अध्याये ३६ श्लोक टीकायां

येनशुक्लीकृताहंसाःशुकाश्चहरितीकृताः ॥ मयूराश्चित्रितायेनसतेवृत्तिंविधास्यति ॥ १ ॥

---

## ॥ शङ्करविजयेप्रथमप्रकरणे ॥

पूज्येषुसेवकानीचाःपुण्यमार्गक्रियानुगाः ॥ तत्तद्देवपदंचापुर्यथाजातिकुलस्थितिः ॥ १ ॥
विप्राणांदैवतंशंभुःक्षत्रियाणांतुमाधवः ॥ वैश्यानांतुभवेद्ब्रह्माशूद्राणांगणनायकः ॥ २ ॥*

---

* ब्राह्मणेनशिवःशिवतत्त्वविदासेवितव्यः । क्षत्रियादिनातुतत्तत्त्वविदेतिनिरवद्यं मनुस्मृतेरितरथाकर्तुमशक्यत्वात् । परन्तुक्षीणेपुण्येलघुधर्मतयाक्लेशभाजि कलियुगे परस्परागादिग्रस्तेषु ब्राह्मणादिषु सत्यज्ञानशून्येषु निगमाचारपरित्यक्तेषु लोकप्रवृत्तिःकाचिदासीत् ॥ २ ॥

## ॥ मयूखाः ॥

### ॥ संस्कारमयूखः ॥

शूद्रोप्येवंविधःकार्योविनामन्त्रेणसंस्कृतः ॥ १ ॥

ततोन्नप्राशनंमासिषष्ठेकार्यंयथाविधि ॥ अष्टमेवाथकर्तव्यंयद्वेष्टंमङ्गलंगृहे ॥ २ ॥

तिस्रोवर्णानुपूर्व्येणद्वेतथैकायथाक्रमम् ॥ ब्राह्मणक्षत्रियविशांभार्यास्वाशूद्रजन्मनः ॥ ३ ॥

अथाग्न्योर्गृह्ययोर्योगंसपत्नीभेदजातयोः ॥ सहाधिकारसिद्ध्यर्थमहंवक्ष्यामिशौनक ॥ ४ ॥

क्षुधितंतृषितंश्रान्तंबलीवर्दंनयोजयेत् ॥ ५ ॥

### ॥ २ ॥ आचारमयूखः ॥

यस्मिन्देशेतुयत्तोयंयाचयत्रैवमृत्तिका ॥ सैवतत्रप्रशस्तास्यात्तयाशौचंविधीयते ॥ १ ॥

मूत्रेतिस्रःपादयोस्तुहस्तयोस्तिस्रएवतु ॥ मृदःपञ्चदशामेध्येहस्तादीनांविशेषतः ॥ २ ॥

नष्पीड्यस्नानवस्त्रंतुपश्चात्सन्ध्यांसमाचरेत् ॥ अन्यथाकुरुतेयस्तुस्नानंतस्याफलंभवेत् ॥ ३ ॥

असामर्थ्याच्छरीरस्यकालशक्त्याद्यपेक्षया ॥ मन्त्रस्नानादिकंप्रोक्तंमुनिभिःशौनकादिभिः ॥ ४ ॥

वस्त्रेणाच्छाद्यतुकरंदक्षिणंयःसदाजपेत् ॥ तस्यतत्सफलंजप्यंतद्धीनमफलंस्मृतम् ॥ ५ ॥

भोजनंतुननिःशेषंकुर्यात्प्राज्ञःकथंचन ॥ अन्यत्रदधिसक्त्वाज्यपललक्षीरमध्वपः ॥ ६ ॥

स्त्रीणांचप्रेक्षणात्स्पर्शात्तहास्यशृंगारभाषणात् ॥ स्पन्दतेब्रह्मचर्यंचनदोरष्वृतुसंगमात् ॥ ७ ॥†

ऋतौतुगर्भशंकित्वात्स्नानंमैथुनिनःस्मृतं ॥ अनृतौतुयदागच्छेच्छौचंमूत्रपुरीषवत् ॥ ८ ॥

### ॥ ४ ॥ श्राद्धमयूखः ॥

मुन्यन्नंब्राह्मणस्योक्तंमांसंक्षत्रियवैश्ययोः ॥ मधुप्रधानंशूद्रस्यसर्वेषांचाविरोधियत् ॥ १ ॥

कृच्छ्रद्वादशरात्रेणमुच्यतेकर्मणस्ततः ॥ तन्माद्विद्वान्नैवदद्यान्नयाचेन्नचदापयेत् ॥ २ ॥

### ॥ ६ ॥ व्यवहारमयूखः ॥

दत्तक्रीतादिपुत्राणांबीजवापुःसपिण्डता ॥ पञ्चमीसप्तमीचैवगोत्रंतुपालकस्यच ॥ १ ॥

स्त्रीधनंस्यादपत्यानांदुहिताचतदर्थिनी ॥ अप्रत्ताचेत्समूढातुलभतेमानमात्रकम् ॥ २ ॥

### ॥ १० ॥ प्रायश्चित्तमयूखः ॥

पतत्यर्धंशरीरस्यभार्यायस्यसुरांपिबेत् ॥ पतितार्धशरीरस्यनिष्कृतिर्नविधीयते ॥ १ ॥

योयस्यहिंस्याद्द्रव्याणिज्ञानतोऽज्ञानतोऽपिवा ॥ एतस्योत्पादयेत्तुष्टिंराज्ञांदद्याच्चतत्समम् ॥ २ ॥

यत्पुंसः परदारेषुतच्चैनांचारयेद्व्रतम् ॥ ३ ॥

गोमूत्रंगोमयंक्षीरंदधिः सर्पिः कुशोदकम् ॥ स्नात्वापीत्वाचकृत्वाचकृमिदष्टः शुचिर्भवेत् ॥ ४ ॥

असत्प्रतिग्रहीतारस्तथैवायाज्ययाजकाः ॥ नक्षत्रैर्जीवतेयश्चसोऽन्धकारंप्रपद्यते ॥ ५ ॥

अटव्यामटमानस्यब्राह्मणस्यविशेषतः ॥ प्रनष्टसलिलेदेशेकथंशुद्धिर्विधीयते ॥ ६ ॥

अपांदृष्ट्वैवविप्रस्तुकुर्याच्चैवसचैलकम् ॥ गायत्र्याष्टशतंजाप्यंस्नानमेतत्समाचरेत् ॥ ७ ॥

---

† समयमयूखः

देशकालंसमासाद्यावस्थानात्मनस्तथा ॥ धर्मशौचेवतिष्ठेतनकुर्याद्वेगधारणम् ॥ ८ ॥
त्रिरात्रंवाप्युपवसेत्र्यहंत्रिःपर्वणीभवेत् ॥ तथैवाम्भसिनग्नस्तुत्रिःपठेदघमर्षणम् ॥ ९ ॥
यदह्नाकुरुतेपापंकर्मणामनसागिरा ॥ आसीनःपश्चिमांसन्ध्यांप्राणायामैर्निहन्तितैः ॥ १० ॥

---

## ॥ वृद्धमनुः ॥

## ॥ स्मृतिचन्द्रिका ॥

प्रतिश्रुत्यनकुर्याद्यःसकार्यःस्याद्बलादपि ॥ सचेन्नकुर्यात्तत्कर्मप्राप्नुयाद्विशतंदमम् ॥ १ ॥
पथिविक्रीयतद्भाण्डंवणिक्भृत्यंत्यजेद्यदि ॥ अथतस्यापिदेयंस्याद्भृतेरर्थंलभेतसः ॥ २ ॥
योभाटयित्वाशकटंनीत्वाचान्यत्रगच्छति ॥ भाटंनदद्याद्दाप्यःस्यादरूढस्यापिभाटकम् ॥ ३ ॥
स्थापितांचैवमर्यादामुभयोर्ग्रामयोस्तथा ॥ अतिक्रामन्तियेपापास्तेदण्ड्याद्विशतंदमम् ॥ ४ ॥
अपुत्राशयनंभर्तुःपालयन्तीव्रतेस्थिता ॥ पत्न्येवदद्यात्तत्पिण्डंकृत्स्नमंशंलभेतच ॥ ५ ॥
कुर्यादनुपनीतोपिश्राद्धमेकोहियःसुतः ॥ पितृयज्ञाहुतिंपाणौजुहुयाद्ब्राह्मणस्यसः ॥ ६ ॥
यस्यामस्तंरविर्यातिपितरस्तामुपासते ॥ तिथिंतेभ्योयतोदत्तोह्यपराह्णःस्वयंभुवा ॥ ७ ॥
मघ्येवायदिवाप्यन्तेयत्रकन्यांरविर्व्रजेत् ॥ पक्षःसकालःसंपूर्णःश्राद्धंतत्रविधीयते ॥ ८ ॥
ऋतुकालेनियुक्तोवानैवगच्छेत्स्त्रियंक्वचित् ॥ तत्रगच्छन्समाप्नोतिह्यनिष्टंफलमेवच ॥ ९ ॥
स्वयंधौतेनकर्तव्याःक्रियाधर्म्याविपश्चिता ॥ १० ॥
समाहितोपलिम्पेतुद्वारिकुर्वीतमण्डले ॥ ननियुक्तःशिरोवर्ज्यंमाल्यंशिरसिवेष्टयेत् ॥ ११ ॥
अनुष्ठितंतथादेवैर्मुनिभिर्यदनुष्ठितम् ॥ नानुष्ठितंमनुष्यैस्तदुक्तंकर्मसमाचरेत् ॥ १२ ॥
खादिरस्यकरंजस्यकदंबस्यतथैवच ॥ अर्कस्यकरवीरस्यकुटजस्यविशेषतः ॥ १३ ॥
पक्षादौचरवौषष्ठ्यांरिक्तायांचतथातिथौ ॥ तैलेनाभ्यज्यमानस्तुधनायुर्भ्यांप्रहीयते ॥ १४ ॥
अन्यायोपात्तवित्तस्यपतितस्यचवार्धुषेः ॥ नस्नायादुदपानेषुस्नात्वाकृच्छ्रंसमाचरेत् ॥ १५ ॥
मृतेजन्मनिसंक्रान्तौश्राद्धेजन्मदिनेतथा ॥ अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणा ॥ १६ ॥
संक्रान्त्यांभानुवारेचसमम्यांराहुदर्शने ॥ आरोग्यपुत्रमित्रार्थीनस्नायादुष्णवारिणा ॥ १७ ॥
सगोहत्याकृतंपापंप्राप्नोत्येवनसंशयः ॥ १८ ॥
षडोङ्कारंजपन्विप्रोगायत्रींमनसाशुचिः ॥ अनेकजन्मजैःपापैर्मुच्यतेनात्रसंशयः ॥ १९ ॥

---

( २ ) पराशरमाधवः । व्यवहारमयूखः
( ५ ) शूद्रकमलाकरः । पराशरमाधवः । निर्णयसिन्धुः । मिताक्षरा
( ६ ) पराशरमाधवः । निर्णयसिन्धुः ।
( ७ ) श्राद्धहेमाद्रिः । निर्णयसिन्धुः
( ८ ) निर्णयसिन्धुः । श्राद्धहेमाद्रिः
( ९ ) श्राद्धहेमाद्रिः । पराशरमाधवः । निर्णयसिन्धुः ।
( ११ ) निर्णयसिन्धुः
( १५ ) श्राद्धहेमाद्रिः । स्मृतिरत्नाकरः । मिताक्षरा ।
( १६ ) हेमाद्रिः । स्मृतिरत्नाकरः । निर्णयसिन्धुः । आचारमयूखः ।

तिस्रोव्याहृतयःपूर्वषडोङ्कारसमन्विताः ॥ पुनःसंहृत्यचौङ्कारंमन्त्रस्याद्यन्तयोस्तथा ॥ २० ॥
सौङ्कारचतुरावृत्त्यविज्ञेयासाशताक्षरा ॥ शताक्षरांसमावर्त्यसर्ववेदफलंलभेत् ॥ २१ ॥
एतयाज्ञातयानित्यंवाङ्मयंविदितंभवेत् ॥ उपासितंभवेत्तेनविश्वंभुवनसप्तकम् ॥ २२ ॥
यथायोधनहस्तेभ्योराज्यंगच्छतिधार्मिकः ॥ एवंतिलसमायुक्तंजलंप्रेतेषुगच्छति ॥ २३ ॥
एकैकस्यतिलैर्मिश्रान्त्रींस्त्रीन्कृत्वाजलाञ्जलिम् ॥ यावज्जीवकृतंपापंतत्क्षणादेवनश्यति ॥ २४ ॥
इहजन्मकृतंपापमन्यजन्मकृतंचयत् ॥ अङ्गारकचतुर्दश्यांतर्पयंस्तद्व्यपोहति ॥ २५ ॥
नपिबेन्नचभुञ्जीतद्विजःसव्येनपाणिना ॥ नैकहस्तेनचजलंशूद्रेणावर्जितंपिबेत् ॥ २६ ॥
पिबतोयत्पतेत्तोयंभोजनेमुखनिःसृतं ॥ अभोज्यन्तद्भवेदन्नंभोक्ताभुञ्जीतकिल्बिषी ॥ २७ ॥
पीतावशेषितंकृत्वाब्राह्मणःपुनरापिबेत् ॥ त्रिरात्रंतुव्रतंकुर्याद्वामहस्तेनवापुनः ॥ २८ ॥

## ॥ श्राद्धहेमाद्रिः ॥

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ॥ यद्यमारविवारेणव्यतीपातःसउच्यते ॥ १ ॥
यश्चवाकुरुतेवाचंयश्चमीमांस्यतेऽध्वरं ॥ यश्चवेत्त्यात्मकैवल्यंपङ्क्तिपावनपावनाः ॥ २ ॥
यांकांचित्सरितंप्राप्यकृष्णपक्षेचतुर्दशी ॥ यमुनायाविशेषेणब्राह्मणोनियतेन्द्रियः ॥ ३ ॥
हिरण्यंवैश्वदेवेतुदद्याद्दैवदक्षिणांबुधः ॥ पित्रेतुरजतंदेयंशक्त्याभूमिगवादिकम् ॥ ४ ॥
प्रोषितस्ययदाकालोगतश्चेद्द्वादशाब्दिकः ॥ प्राप्तेत्रयोदशेवर्षेप्रेतकार्याणिकारयेत् ॥ ५ ॥

## ॥ स्मृतिरत्नाकरः ॥

चण्डालादेस्तुसंस्पर्शेवारुणंस्नानमेवहि ॥ इतराणितुचत्वारियथायोग्यंस्मृतानिह ॥ १ ॥
मनुष्यतर्पणेचैवस्नानंवस्त्रादिपीडने ॥ निवीतीस्तूभयेविप्रस्तथामूत्रपुरीषयोः ॥ २ ॥
वस्त्रंत्रिगुणितंयस्तुनिष्पीडयतिमूढधीः ॥ वृथास्नानंभवेत्तस्ययच्चैवादशमम्बुभिः ॥ ३ ॥
और्ध्वपुण्ड्रोमृदाधार्योयतिनाचविशेषतः ॥ भस्मचन्दनगन्धादीन्वर्जयेद्यावदायुषा ॥ ४ ॥

## ॥ शूद्रकमलाकरः ॥

विधवाकारयेच्छ्राद्धंयथाकालमतन्द्रिता ॥ स्वभर्तृप्रभृतित्रिभ्यःस्वपितृभ्यस्तथैवच ॥ १ ॥

---

( २३ ) श्राद्धहेमाद्रिः ।
( २४ ) श्राद्धहेमाद्रिः ।
( २५ ) श्राद्धहेमाद्रिः । आचारमयूखः ।
( २६ ) शूद्रकमलाकरः । पराशरमाधवः । आचारमयूखः ।
( २७ ) पराशरमाधवः । आचारमयूखः ।
( २८ ) पराशरमाधवः । आचारमयूखः
( १ ) श्राद्धमयूखः
( ६ ) निर्णयसिन्धुः । श्राद्धमयूखः

संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते ॥ संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितः ॥ २ ॥
पित्रोःस्वसरितद्वच्चपक्षिणींपक्षयन्निशाम् ॥ ३ ॥
भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते ॥ मित्रेजामातरिप्रेतेदौहित्रेभगिनीसुते ॥ ४ ॥
शालकेतत्सुतेचैवसद्यःस्नानेनशुध्यति ॥ ५ ॥
षण्ढंतुब्राह्मणंहत्वाशूद्रहत्याव्रतंचरेत् ॥ ६ ॥
शूद्रकन्यांसमुत्पन्नोब्राह्मणेनतुसंस्कृतः ॥ अपरोनापितःप्रोक्तःशूद्रधर्माधिकोपिसः ॥ ७ ॥

## ॥ पराशरमाधवः ॥

यदितस्मिन्दाप्यमानेभवेन्मोषेतुसंशयः ॥ मुषितःशपथंदाप्योबन्धुभिर्वापिसाधयेत् ॥ १ ॥
नप्रातर्नप्रदोषश्चसन्ध्याकालोतिकालहि ॥ मुख्यकालेनुकल्पश्चसर्वस्मिन्कर्मणिस्मृतः ॥ २ ॥
पीत्वापोऽशनमश्नीयात्पात्रेदत्तमगर्हितम् ॥ भार्याभृतकदासेभ्यउच्छिष्टंशेषयेत्ततः ॥ ३ ॥
अनिन्दन्भक्षयेन्नित्यंवाग्यतोन्नमकुत्सयन् ॥ पञ्चग्रासान्महामौनंप्राणाद्याप्यायनंमहत् ॥ ४ ॥
महानद्यन्तरंयत्रगिरिर्वाव्यवधायकः ॥ वाचोयत्रविभिद्यन्तेतद्देशान्तरमुच्यते ॥ ५ ॥
पित्रोरुपशमेस्त्रीणामूढानांतुकथंभवेत् ॥ त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमः ॥ ६ ॥
नभस्यस्यापरःपक्षोयत्रकन्यांव्रजेद्रविः ॥ समहालयसंज्ञःस्याद्गजच्छायाह्वयस्तथा ॥ ७ ॥
सप्तहस्तेनदण्डेनत्रिंशद्दण्डनिवर्तनम् ॥ तान्येवदशगोचर्मदातापापैःप्रमुच्यते ॥ ८ ॥

## ॥ निर्णयसिन्धुः ॥

अर्धरात्रादधस्ताच्चेत्संक्रान्तिग्रहणंतदा ॥ उपाकर्मनकुर्वीतपरतश्चेन्नदोषभाक् ॥ १ ॥
एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः ॥ नसानक्रियांकुर्यान्मातृभेदेविधीयते ॥ २ ॥
पितापितामहोभ्राताज्ञातयोगोत्रजाग्रजाः ॥ उपायनेधिकारीस्यात्पूर्वाभावेपरःपरः ॥ ३ ॥
जीवन्यदिसमागच्छेद्घृतकुंभेनिमज्यच ॥ उद्धृत्यस्नापयित्वास्यजातकर्मादिकारयेत् ॥ ४ ॥
सप्तम्यांभानुवारेचमातापित्रोर्मृतेहनि ॥ तिलैर्यस्तर्पणंकुर्यात्सभवेत्पितृघातकः ॥ ५ ॥
तैलाभ्यंगोनाकवारेनभौमेनोसंक्रान्तौवैधृतौविष्टिषष्ठ्योः ॥ पर्वस्वष्टम्यांचनेष्टःसइष्टःप्रोक्तान्मुक्त्वावासरेसूर्यसूनोः ॥ ६ ॥
स्नुषास्वस्रीयतत्पुत्रज्ञातिसंबन्धिबान्धवाः॥ पुत्राभावेतुकुर्वीरन्सपिण्डान्तंयथाविधि ॥ ७ ॥
श्राद्धंकरिष्यन्कृत्वावाभुक्त्वावापिनिमन्त्रितः ॥ उपोष्यचतथाभुक्त्वानोपेयाच्चऋतावपि ॥ ८ ॥
निमन्त्र्यविप्रांस्तदहर्वर्जयेन्मैथुनंक्षुरं ॥ प्रमत्तांचस्वाध्यायंक्रोधशौचेतथानृतं ॥ ९ ॥

---

शू०क० ( २ ) पराशरमाधवः । निर्णयसिन्धुः ।
शू०क० ( ३ ) पराशरमाधवः
शू०क० ( ४ ) पराशरमाधवे (बृहन्मनुः ) निर्णयसिन्धुः
शू०क० ( ५ ) पराशरमाधवः । निर्णयसिन्धुः ।
प०मा० ( ४ ) आचारमयूखः
प०मा० ( ५ ) विवादभङ्गार्णवः
प०मा० ( ६ ) निर्णयसिन्धुः
नि०सि० ( १ ) प्रयोगपारिजातकः ।
नि०सि० ( २ ) संस्कारकौस्तुभः ।
नि०सि० ( ४ ) हेमाद्रिः । श्राद्धमयूखः
नि०सि० ( ९ ) श्राद्धमयूखः

मृन्मयंदारुजंपात्रमयःपात्रंचयद्भवेत् ॥ राजतंदैविकेकार्येशिलापात्रंचवर्जयेत् ॥ १० ॥
अमृतंमृतमाकर्ण्यकृतंयस्यौर्ध्वदेहिकं ॥ प्रायश्चित्तमसौस्मार्तंकृत्वाग्नीनादधीतच ॥ ११ ॥
द्वादशाहव्रतंचर्यात्रिरात्रमथवास्यतु ॥ स्नात्वोद्वहेततांभार्यामन्यांवातदभावतः ॥ १२ ॥
अग्नीनाधायविधिवद्व्रात्यस्तोमेनवायजेत् ॥ अथैन्द्राग्नेनपशुनागिरिंगत्वाचतत्रतु ॥ १३ ॥
क्लीबाद्यानोदकंकुर्युस्तेनाव्रात्याविधार्मिणः ॥ गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितः ॥ १४ ॥
दशाहस्यान्तरोयस्यगङ्गातोयेऽस्थिमज्जति ॥ गयायांमरणंयादृक्तादृक्फलमवाप्नुयात् ॥ १५ ॥
द्वादशेहनिविप्राणामाशौचान्तेचभूभुजां ॥ वैश्यानान्तुत्रिपक्षादावथवास्यात्सपिण्डनं ॥ १६ ॥

॥ विवादभङ्गार्णवः ॥

ब्रह्मदायागतांभूमिंहरेयुर्ब्राह्मणीसुताः ॥ गृहंद्वितयःसर्वंतथाक्षत्रंक्रमागतं ॥ १ ॥

॥ श्राद्धमयूख ॥

शुक्लाःसमुन्नतःश्रेष्टास्तथापद्मोत्पलानितु ॥ गन्धरूपोपयुक्तानिऋतुकालोद्भवानिच ॥ १ ॥
जपादिकुसुमंरिण्ठीरूपिकासुकुरण्टिका ॥ पुष्पाणिवर्जनीयानिश्राद्धेकर्मणिनित्यशः ॥ २ ॥

॥ व्यवहारमयूखः ॥

प्रमादान्नाशितंदाप्यःसमहिद्रोहनाशितं ॥ नतुदाप्योत्हृतंचोरैर्दग्धमूढंजलेनवा ॥ १ ॥

॥ प्रायश्चित्तमयूखः ॥

पतितान्त्यश्वपाकेनसंस्पृष्टाचेद्रजस्वला ॥ तान्यहानिव्यतिक्रम्यप्रायश्चित्तंसमाचरेत् ॥ १ ॥
प्रथमेऽह्नित्रिरात्रंस्याद्द्वितीयेद्व्यहमेवतु ॥ अहोरात्रंतृतीयेऽह्निचतुर्थेनक्तमेवच ॥ २ ॥

---

॥ बृहन्मनुः ॥

॥ स्मृतिरत्नाकरः ॥

त्रयोदश्यांन्तुसप्तम्यांचतुर्थ्यामर्धरात्रतः ॥ अर्वाक्नाध्ययनंकुर्यादिच्छेत्तस्यपरायणम् ॥ १ ॥
रात्रौयामद्वयादर्वाक्यदिपश्येत्त्रयोदशीम् ॥ सारात्रिःसर्वकर्मघ्नीशङ्कराराधनंविना ॥ २ ॥

शूद्रकमलाकरः

जीवञ्जातोयदिततोमृतःसूतकमेवतु ॥ सूतकंसकलंमातुःपित्रादीनांत्रिरात्रकम् ॥ १ ॥

---

( १२ ) श्राद्धमयूखः । ( १३ ) श्राद्धमयूखः ।

## ॥ पराशरमाधवः ॥

समानोदकभावस्तुनिवर्तेताचतुर्दश ॥ जन्मनामस्मृतेरेकेतत्परंगोत्रमुच्यते ॥ १ ॥
आषाढीमवधिंकृत्वापञ्चमंपक्षमाश्रिताः ॥ काङ्क्षन्तिपितरःक्लिष्टाअन्नमप्यन्वहंजलम् ॥ २ ॥
तस्मात्तत्रैवदातव्यंदत्तमन्यत्रनिष्फलम् ॥ आषाढीमवधिंकृत्वायःपक्षःपञ्चमोभवेत् ॥ ३ ॥
तत्रश्राद्धंप्रकुर्वीतकन्यास्थोऽर्कोभवेन्नवा ॥ ४ ॥

## ॥ निर्णयसिन्धुः ॥

असंबन्धाभवेन्मातुःपिण्डेनैवोदकेनवा ॥ साविवाह्याद्विजातीनांत्रिगोत्रान्तरिताचया ॥ १ ॥
श्वशूद्रपतिताश्चान्त्यामृताश्चेद्द्विजमन्दिरे ॥ शौचंतत्रप्रवक्ष्यामिमनुनाभाषितंयथा ॥ २ ॥
दशरात्राच्छुनिमृतेमासाच्छूद्रेभवेच्छुचिः ॥ द्वाभ्यान्तुपतितेगेहमन्त्योमासाचतुष्टयात् ॥ ३ ॥
अत्यन्तंवर्जयेद्गेहमित्येवंमनुरब्रवीत् ॥ ४ ॥

## ॥ मिताक्षराः ॥

दशाभ्यन्तरेबालेप्रमीतेतस्यबान्धवैः ॥ शावाशौचंनकर्तव्यंसूत्याशौचंविधीयते ॥ १ ॥

## ॥ विवादभङ्गार्णवः ॥

देशनामनदीभेदान्निकटेपिभवेद्यदि ॥ तत्तुदेशान्तरंप्रोक्तंस्वयमेवस्वयंभुवा ॥ १ ॥
दशरात्रेणयावार्तायत्रनश्रूयतेऽथवा ॥ गुरोःशिष्येपितुःपुत्रेदंपत्योःस्वामिभृत्ययोः ॥ २ ॥
एकोदरेजीवतितुसापत्नोनलभेद्धनं ॥ स्थावरेप्येवमेवस्यात्तदभावेलभेलवै ॥ ३ ॥

## ॥ प्रायश्चितमयूखः ॥

मातुर्मातृगमनेपितुर्मातृगमनेतथा ॥ एतास्त्वकामतोगत्वाद्विजश्चान्द्रायणंचरेत् ॥ १ ॥

॥ समाप्तम् ॥

---

स्मृ०' ( २ ) आचारमयूखः ।　प०मा० ( २ ) श्राद्धमयूखः
शू० ( १ ) मिताक्षरा　प०मा० ( ३ ) श्राद्धमयूखः

# मेधातिथिपाठभेदाः

## चिन्हानि

मे०१=मुद्रितपुस्तकम् । मे०२=वङ्गपुस्तकम् ।

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| | | **अध्यायः १** | |
| १ | १४ | शास्त्रकात्स्न्येन | शास्त्रकात्स्न्येनपर्यालोचनावसेयोऽर्थोबुद्धिगोचरमावहति । |
| | १६ | तत्तूक्तमपि | यत्तूक्तमपि । |
| | १७ | निश्चयोनास्तिनास्तीति | निश्चयोऽस्तिनास्तीति। |
| | ,, | अर्थसंशयेऽपि | अथसंशयेपि । |
| | ,, | सिद्धौ | सिद्धेः । |
| | २१ | सिद्धिः | सिद्धेः । |
| | ,, | चावेद्यते | चवेद्यते । |
| | २३ | चाव्युत्पन्न | चव्युत्पन्न । |
| | २० | अनेकार्थवाद | नचार्थवाद । |
| | २१ | पुरुषार्थोपयोगी | पुरुषोपयोगी । |
| २ | ४ | आदेश | उपदेश । |
| | | अकृत्रिमप्रतिमत्वं | उत्पत्तिमप्रतिमत्वं । |
| | | प्रयोजनात् | प्रयोजनानूदर्शयन् । |
| | ४ | शब्दादितरैरविहिते | शब्दान्तिमैः । |
| | १० | त्यागेनयदृच्छया | त्यागेननयदृच्छया । |
| | ११ | नह्यकुशलः | नहिकुशलः । |
| | १२ | आसनेन | अथवा आसनेन |
| | १३ | विशेषणम् | विशेषणेन । |
| | | कुशलप्रश्नानुरूप | कुशलश्नानुरूप |
| | | अविक्षिप्त | अनिक्षिप्त । |
| | १५ | निवृत्तौ | प्रतिपत्तौ । |
| | | अनवधारणे | अवधारणे । |
| | २१ | तपोविशेषात् | तयोर्विशेषात् । |
| | २३ | वाक्पक्षे | वाक्यपक्षे । |
| ५ | १६ | वीर्यादि भगशब्दः | वीर्यादिषु । |
| | | मनुः | मनोः |
| | १७ | चतिसृषु चतसृषु । | ज्ञातिषु जातिषु । |
| | | अवरोधार्थे | अवबोधार्थं । |
| | १९ | वैदेहिक | वैदेहक । |
| | २१ | ततज्जातीया | तेनतज्जातीया । |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| ५ | २२ | धर्मादिना | धर्महीना । |
| ६ | ४ | लक्षणयायोग्यतया | लक्षणयोग्यतया |
| | ५ | तत्तेन | तेन |
| | ७ | एवंचैत्यवन्दना- | एवंचैत्येवंहनना- |
| ६ | ७ | दावपि | दावपि |
| | | कतमे | कुताये |
| ७ | ६ | अभयंसहस्र | अयंसहस्र |
| | | आहवनीयोपस्थाने | आहवनीयमुपतिष्ठते ङेप्रत्यक्षएवावादयंविधत्तेयेतथैवेतितृतीयया प्रयक्षस्यैवमन्त्रस्य । आहवनीयोपस्थाने |
| | ७ | दामि | ददामि |
| | १२ | कुमारिलपक्षः | कुशादिलून(वा)नूनपक्षः । (अस्पष्टम्) |
| | १३ | स्वयंभुवा | स्वयंभुवो । |
| | १८ | पाताः | याताः |
| | २० | अन्यतो | पातात् । |
| | २४ | अभिलप्य | अभिलक्ष्य |
| | २७ | भेदो | वेदो । |
| | २९ | महत्त्वस्यएतेन | महत्वख्यापनेन । |
| | ३० | नस्तस्य | यस्तस्य |
| ८ | १ | क्रियेति | क्रियते । |
| | | परिस्पन्दमान | परिस्यन्दमान |
| | ३ | पारमार्थिकोऽर्थो | पारमार्थिको |
| | ४ | सनतत्त्वार्थो | सएवचार्थो । |
| | ८ | प्रतीयमानैकवाक्यताबोधने | प्रतीयमानैककर्ताव्रभ्येत |
| | १३ | शक्तत्वमनुब्रूहि | शक्तिमनुब्रूहि । |
| ९ | ८ | शब्दत्वं | भ्रष्टत्वं |
| | | चाविरुद्धं | चापिविरुद्धं । |
| | १० | समुयास्यते | समासज्ञः |
| | १३ | अत्रोच्यते | सोपपाद्यते |
| | १४ | अत्राहअत्रपरिहरन्ति | तत्राहंकारमत्रपरिहरति । |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| ९ | १५ | अर्हन्तैः | अर्हसतै । |
| १० | ५ | धर्माधर्म | धर्म |
| | १० | नकस्यचित् | कस्यचित् |
| | ११ | प्रकेतं | अप्रकेतं |
| | ११-१२ | सूक्ष्मेणाभूस्थलं | सूक्ष्मेणअस्थूलं |
| | १५ | महाप्रलयेऽपि | महाप्रलयोऽपि |
| | १८ | प्रमाणसिद्धौ | प्रमाणशुद्धौ |
| १० | २५ | तदपिचालक्षणं | तदपिनालक्षणं |
| | २६ | तर्कयितुं | वर्णयितुं |
| | | तर्कप्रकारं | सर्वप्रकारं |
| | २८ | विज्ञेयं | अविज्ञेयं |
| | २९ | स्वमवर्त्ता | स्वमवृत्तीः |
| | ३० | निःसंबोध | संबोध |
| | ” | प्रध्वस्त | प्रशान्त |
| १३ | ८ | यदार्त्तंतु | यदातु |
| १४ | ११ | आदित्या | आदित्याद्या |
| | ११ | इन्द्रियाणामत्ययोऽतीन्द्रियम् | इन्द्रियाणामतीतोयअतीन्द्रियम् |
| | १७ | परिकल्यानां | विकल्पानां |
| | | अभ्यासेऽपि | आभासेषु |
| | १९ | त्यप्यादिमत्वेऽन्तत्वाभावान् | नित्यस्वाभाविकत्वंसत्यन्यथादिमत्वेऽतत्वाभावात् । |
| | १२ | शरीरः | शरीरश्चशरीरः |
| | | अत्यन्तं | असन्तं |
| | २३ | अभेदात् | भेदात् |
| | २३-२४ | एकत्वाद्विरोधिनी | एकत्वाविरोधिनी |
| | २४ | नततोऽभिपद्यन्ते | ततोनभिद्यन्ते |
| | २७ | एव | एवं |
| १५ | २५ | स्वाद्यत्तेन | स्वाद्रूपातेन |
| | २६-२७ | व्यापारेण | शरीरेण |
| १६ | २ | सङ्कोचाद्या | संवेद्या |
| | ” | प्रकृत | प्रकृति |
| १७ | २ | भवमृद्रूपं | द्रवद्रूपं |
| | ३ | अंशुसामान्यात् | शुद्धसामान्यात् |
| | | नागमिकः | चागमिकः |
| | ९ | अनिदंपरेभ्यः | अनिन्द्यपारेभ्यः |
| | १० | धर्माभिधाने | धर्माभिधानम् |
| | ११ | संजातस्य | संज्ञातस्य |
| १८ | ९ | व्यवहारे | व्यवहारः |
| | १० | सभवेत् | सतावत् |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| १८ | ११ | वसिष्ठाभगवतस्ताबभु | वसिष्ठोभगवांस्तथा |
| | १२ | अस्य | तस्यास्य |
| १९ | ११ | नकार्योन | कार्ये |
| | ११,१२ | नित्ययुक्त··योगउच्यते | नित्यमुक्तमित्युक्तोयः सदसदात्मकंचसच्चासच्चसदसतीतिआत्मा स्वभावोयस्यतदेवमुच्यते।कथंपुनरेकस्यविरुद्धभावाभावरूपधर्मद्वययोगउत्पत्तेः। |
| | १४ | पररूपेणासन्तः | पररूपाणामतः |
| | १६ | उपविष्टः | उपतिष्ठते |
| | १७ | अभिनयने | अभिनयेन |
| | १९ | यद्यबुधस्य | यथाबुद्धस्य |
| | २१ | स्वंकार्यं | सत्कार्या |
| | | अहंकारस्य | अहंकारश्च |
| | २९ | यथेच्छं | यस्येच्छाम् |
| २० | ३ | कारणमव्यक्तं | क्रमेणेत्युक्तं |
| | ४ | प्रधानेपुल्लिङ्ग | प्रधानेषुलिङ्ग |
| | | समानां | सद्भावानां |
| | ५ | कार्य | व्यापार |
| २२ | ६ | प्रधानात् | प्रधानादात्मनः |
| | ६,७ | स्वस्माद्रूपात् | स्वस्वरूपात् |
| | ८ | कार्य | स्वकार्य |
| २३ | ४ | अनुरूपम् | अनुरूपत्वं |
| | ६ | इत्यादिनावक्ष्यन्ते | इत्यादिवक्ष्यते |
| | ६,७ | नामच | नामानिच |
| २४ | १२ | अहंकारात् | अहंकारान् |
| | ” | संनिहत्य | संहत्य |
| | १५ | चकारात्··पाठः | चकारात्ममात्रास्त्विन्यत्रात्ममात्राभिरितियुक्तःपाठः |
| २५ | १४ | च | अ |
| | १५ | तस्य | तेभ्यः |
| | १८ | भुक्तइति | भुक्तमिति |
| २६ | १४ | कारणं | धारणंसरणं |
| | ” | एकशः | एकत्र |
| २७ | १० | नतु | ननु |
| | १२ | अथयावत् | अव्ययात् |
| | ” | संभृत | संभूत |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| २७ | १३ | भूताद्ययं | भूताद्व्ययाद्ययं |
| | ,, | विप्रकीर्णे | विप्रकर्णे |
| | १७ | स्वागतमात्रापेक्षत्वं | स्वगतमात्रापेक्षयाउत |
| २७ | १७ | प्रभुरिति | प्रकृतिरिति |
| २८ | ६ | एककर्मेन्द्रियाणि | एवंसकर्मेन्द्रियाणिततो |
| | ७ | यामूर्त्यर्थाः | मूर्तयः |
| | ९ | चतानि | वचनानि |
| | १० | यदाद्यन्तवत् | यद्यतः |
| | ११ | जायत इति | यतइति |
| | १२ | पूर्णः । वतेः | पूर्णवतोः |
| | १४ | पूर्ण | पूर्व |
| ३० | ३१ | यथेन्द्रादयः | यथेन्द्राग्नयः |
| ३१ | १ | दर्शना । अतः | दर्शनाश्रयः |
| | २५ | अभावयत् | अधावयत् |
| | ,, | वर्णात्मा | वर्णात्मक |
| | ,, | नोपपद्यते | चोपपद्यते |
| | ३० | अन्यदर्शने | पदार्थदर्शने |
| | ३१ | ऋग्वेदेऽतोऽग्नेः | ऋग्वेदोग्नेः |
| ३२ | १ | वायुनावर्षदानेन | वायुना वर्षदानेन |
| | ,, | उर्क् | ऋक् |
| | ,, | वायुरेव | वायुरेववायोरेव |
| | २ | सर्वाः | ताः |
| | १८ | द्रव्यात्मा | द्व्यात्मकः |
| | | प्रतानः | प्रधानः |
| ३३ | ५-६ | धर्मवच्छरीरंधर्मं | धर्मतच्छरीरधर्मं |
| | ८ | कालकादिषु | कारकादिषु |
| | २५ | समर्थोनवा | सामर्थ्यादिना |
| | २६ | एकत्वंच | एकंच |
| | २७ | त्यवेचयत् | व्ययेचयत् |
| | २७,२८ | विभागाय | विभागादयः |
| ३४ | २ | कर्माणां | धर्माणां |
| ३५ | ८ | तिर्यक्प्रेताषु | तिर्यगादिषु |
| | १० | सापेक्षस्य | सापेक्षं |
| | ११ | स्वकर्मणि | स्वकृतान्यपिकर्माणि |
| | १६ | क्षेत्रज्ञान् | क्षेत्रजान् |
| | २२ | बलादिच्छोपजायते | बलादिवोपजायते |
| | २३ | यंतु | यत्तु |
| | २५ | परवधादौ | परवधादौसिंहादिकं |
| | २६ | कृतत्वात् | कृतानि |
| | २९ | प्रागभ्यासजात्यन्तरगतस्यविस्मारयन्तिइति | जात्यन्तरगतस्यभागभ्यासस्यविस्मरणम् |
| | ,, | एतदेवविस्तारयति | तदेवविस्मारयति |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| ३६ | १५ | अनुरूप्यं | अनुरूपं |
| ३७ | १५,१६ | योत्राह्मणाय ··शेषेभ्यः | नैवंजानानःद्दष्टस्तु व्यापारस्तेनाप्यपेक्ष्यते योनामकार्यवशात् गुरुरेनं सतेनयातयेदितिवाक्यशेषेभ्यः |
| | १८ | अस्ति विहितंकम ··विशेषाः | यातयेदितिवाक्यशेषेभ्योऽस्ति विहितकर्मधर्मतया विशेषाः |
| | २० | कारणसंबंधीनि | करणसंबद्धानि |
| ३८ | ५ | मुखाद्ब्राह्मणं | मुखाद्ब्राह्मणंबाहुभ्यांराजन्यंउरुभ्यां वैश्यं शूद्रं पादतइति तसिरपादाने कारणात्कार्यनिष्कृष्यत इवेतिभवत्यपापेसत्यपादानत्वंआद्यकंचिद्ब्राह्मणं |
| | ८ | पशुरूपंरक्षतो | पशूनांरक्षातथा |
| | ९ | भ्रमणं | प्रयाणं |
| | २२ | तस्यैवेत्यन्ये | तस्यैबेत्पत्यो |
| | २२ | समुद्गतं | समुद्धृतं |
| | २३ | पृथगेवतां | प्रथमातारताम् |
| | २४ | मैथुनेन | मिथुनेन |
| | २५ | कार्येष्वविभागात् | कार्येविभागात् ( अवग्रहोनवर्तते ) |
| ३९ | १३ | तन्मध्येशुद्धि | जन्मशुद्धि |
| | ,, | सर्वशक्ति | ऐश्वर्यशक्ति |
| | १४ | तरीकरिष्यती | बरतिकरिष्यती |
| | १५ | श्रुतोऽपि | श्रुतेऽपि |
| | १६ | सत्यामपि | सृत्यमपि |
| | १६ | पारंपर्येणामस्तुतो | पारंपर्येणात्मस्तुतो |
| ,, | २८ | तान् | तान् इदानीं |
| ४० | ११ | एकं | एवं |
| ४० | १२,१३ | दे··ही | देवताकार्यहि |
| ,, | ३० | छद्मकरणेन | छद्मना |
| ४१ | ३ | देववत् | एव |
| | १७ | पर्याया | पर्या |
| | १८ | सूक्ष्मदृश्यश्चवर्षधारादिवत्प | तत्सदृश्यश्मवर्षधारादिवः |
| | १९ | संघाताआन्तरिक्षाः | संचयादान्तरिक्षाः |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| ४१ | २० | धनुराकारताऽधिकास्य | धनुराकारतांबार्कस्य |
| ४१ | २१ | भूम्यन्तरिक्ष | भोमान्तरिक्ष |
| | २१ | केतव | कुत |
| ४२ | ८ | सिंहव्याघ्रादयः | हिंसाव्याघ्रादयः |
| ४३ | २ | प्रकारप्रत्ययपरामर्शः | प्रकारपरामर्शः |
| | ३ | मुत्पत्तुं | मुत्पन्नं |
| | १८ | स्वभावतोहिंस्रम हिंस्रंवा | स्वभावात्तादृशंवा |
| | १९ | यत्रेदंयक्षरक्षादि | यथेदंजक्षतइत्यादि |
| | २० | क्षणनाद्रक्षांसि | क्षणाद्रक्षणाद्वारक्षांसि |
| ४४ | २८ | मग्न्ययादित्यादिताप | मग्न्यादिना |
| ४५ | ९ | उद्भिज्जाः | उद्भिज्जा |
| | ९ | जायन्ते | जायन्ते प्ररोहन्ति |
| ४६ | ३ | वृक्षेभ्यश्च | वृक्षेभ्यश्चौषधिभ्यश्च |
| | | अभिधानं | विधानानां |
| | ५ | स्तम्भे | स्तम्भं |
| | १८ | वाकंचित् | चोद्यं |
| ४७ | ३ | दुःखादि | दुःखात्मिकादि |
| | ,, | अधर्म | धर्म |
| ४८ | १७ | शताद्रष्टव्यः | शताद्रष्टव्यः |
| | १८ | अनन्ताः | असंख्याः |
| ४९ | १९ | सुस्थे | स्वस्थे |
| | २० | स्वस्थे | स्वास्थ्यं |
| | २२ | संबंधानुथवादेव | संबंधानुभवादेव |
| | ३२ | निर्वृत्तिः | अभिनिवृत्तिः |
| ५० | १५ | कुटुम्बभूतं | जगदु ( वा'द्व' ) त्कंपंच भूतम् |
| | १७ | चैतस्य | अचैतन्यात्प्रधानस्य |
| ५१ | ४ | मूर्तस्य | भूतस्य |
| | ७ | वास | वासि |
| | | नाम | नवा |
| | ८ | निरुपयोगिशरीरं | तदानीमुपभोगशरीरं |
| | १२ | तच | तत्र |
| | ,, | भूतेन्द्रियवर्गः | बुद्धीन्द्रियवर्गःएकः |
| | १२ | तच्छरीरं | तदस्यशरीरं |
| | १३,१४ | अधिवासितं | अधिवासिनं |
| ५२ | ३ | बीजं | जन्तोः |
| | ४ | संसृष्टः | तेनसंसृष्टः |
| ५३ | १५ | मनस्कतादिगुणः | मनस्कामादिगुणः |
| | ,, | अर्हैर्वातः | अवहितान् |
| १७ | १७ | अध्ययनाविरामाय | अध्ययनादिभावाधिगमाय. |
| ५३ | १७ | एषचेदशोमहाम् | एषाचेदशंमाहात्म्यम् |
| | ८ | मनुः | यत् |
| | ,, | उपाध्यायः | अभ्युपाध्यायः |
| ५४ | ६ | अध्यापयिष्यति | व्याख्यास्यति |
| | ७ | शास्त्रस्यैतदा | शास्त्रस्यतदा |
| ५४ | ८ | स्वभाव | प्रभावः |
| | १० | शास्त्रे | शास्त्रं |
| ५५ | ६,७ | अथवा··अन्वयेन | एकस्मिन्व्यवहारधर्मान्वये |
| | ७ | तं | तेषां |
| | २७ | संपद्यन्ते | पठ्यन्ते |
| ५७ | ४ | नैसर्गिकंकर्म | नैसर्गिककम्प |
| | ५ | अविकृतं | व्यक्तं |
| | ७ | प्रभेषुभूतेषु | प्रलयेष |
| | २५ | मासयो | मासाख्ययोः |
| | ,, | पक्षाश्रितः | एताश्रितः |
| ५० | १५ | दिशि | हि |
| | १६ | हित्वा | हित्वासविता |
| | २९ | संनुध्यन्ते | संबुध्यन्ते |
| | ,, | प्रतिज्ञाकरणंतत्त्वज्ञापनार्थम् | प्रतिज्ञानंज्ञकरणान्तरत्वज्ञापनार्थम् |
| ५९ | १ | वेदनाच्च | विज्ञानाच्च |
| ६० | ४ | शब्दस्य | शतशब्दस्य |
| | ६ | शतं | तत् |
| | २३ | युगंनाम | युग |
| ६१ | ८ | असंख्यया | संख्यया |
| ६१ | २० | स्तुत्याविधिप्रतिपत्तिः | श्रुत्याविचित्रप्रतिपत्तिः |
| ६२ | ८ | प्रलयेऽयंक्रमः | प्रलयोपक्रमः |
| | १० | प्रागुक्तंमहानिति | प्रागुक्तक्रमहानिः |
| ६३ | २ | एषा | एषां |
| | ,, | उच्यते | उच्यतेविकुरुतेविशेषतःकरोति |
| | १७ | स्पर्शमात्रा | महतःस्पर्शनमात्रा |
| | १८ | वायुकर्मणः कम्पाक्षेपोर्ध्वाधस्तिर्यक् | वायुकर्मापेक्षविक्षेपोद्वोधस्तिर्यक् |
| | ,, | स्पन्दितं | स्पन्दितं |
| ६४ | १० | संसर्गात्तु | संसर्गात्तु |
| ६५ | १३ | नक्रीडा प्रयुक्तौ | तत्क्रीडाप्रयुक्तो |
| | १४ | कौतुकेन | निष्प्रयोजना |

| पृष्ठम् | पङ्क्तिः | मे० १ | मे० २ |
|---|---|---|---|
| ६६ | २ | दाता | दानं |
| | ४ | आख्यातेचोपसर्ग | आख्यातोपसर्ग |
| | ६ | किंचित् | नवेदवाक्यंकिंचित् |
| ६६ | ६ | सकलं | सबलं |
| | ८ | विज्ञानार्थोवा | विद्यायाअर्थस्यवा |
| | | अनुष्ठातुः | मनुष्यान् |
| | ३१ | तावदेव | वेद |
| ६७ | २१ | प्रमीयते | प्रमीयन्ते |
| | ” | म्रियते | प्रमीयन्तेनाप्राप्यचतुर्थं वयःप्रमीयन्तेम्रियन्ते |
| | ” | पूर्वत्र | पूर्ववत् |
| ६८ | २२ | पादशइति | यादशइति |
| | १२ | ग्रन्थः | पन्था |
| | १४ | प्रतीयते | विधीयते |
| | १६ | नामसु | मानेषु |
| | २० | अनुयुगंफलन्तीति | चतुर्युगंफलतीति |
| ६९ | ३ | स्वभावभेदस्य | स्वभावात् |
| | ” | यागादि | याग |
| ६९ | १७-१८ | सर्वाणि | सत्राणि |
| ७१ | २५-२६ | चित्तानुपालनं | तच्चित्तानुपालनम् |
| ७२ | २६ | उत्पत्ति | उद्गति |
| ७३ | १५ | पितॄनुद्दिश्यतत्कव्यं | पितॄनुद्दिश्ययत्क्रियतेतत्कव्यम् |
| | १५ | प्रतिप्रापणाय | प्रतिपादनाय |
| | १६ | प्रदानं | प्रदाने |
| ७४ | ५ | न्योस्त्यन्यतो | न्योस्ति अतो |
| | १५ | भावा | भवन्ति |
| | १८ | पूज्यतमा | पूज्यमाना |
| | १८ | सर्वेण | सर्वे |
| ७५ | ५ | बौद्धादिभिःकलुषी क्रियन्ते | बौद्धादिभिःकथंचित्कलुषीक्रियन्ते |
| | ६ | ब्रह्मस्वरूप··नन्दः | ब्रह्मस्वरूपपरिज्ञाने ब्रह्माक्षयानन्दः |
| | २४ | मुज्झित्वा | अर्जित्वा |
| | २५ | श्रुतिः | स्तुतिः |
| ७७ | ५ | परपाकेनेति | परपाकइति |
| | ” | स्वं | एवं |
| | ६ | स्वकृत्या | स्वकस्या |
| | ७ | प्रभूतं | प्रभुत्वं |
| | १९ | सर्वस्याब्राह्मणश्रुतेः | सर्वस्यास्य ब्राह्मणस्तुतेः |
| | २० | एष | एवं |
| ७८ | ४ | प्रवक्तव्य | प्रयोक्तव्यं |
| | ४,५ | अयं ·· एव | अयंतु अनुवादएव |
| | ९ | विद्वत्तोपयोगिनी | तद्वतोपयोगिनी |
| | ” | नसंपाठे | नसंपाते |
| | १० | लक्ष्यत | लभ्यत |
| | ११ | त्रैवर्णाधिकारं | त्रैवर्णिकार्थं |
| | २८ | परिपूर्ण ·· यथाशास्त्रं | परिपूर्णयमनियमादीनि यथाशास्त्रं |
| ७८ | २९ | विहिताति | विहितानि |
| | ” | दोषैर्न | दोषैःपापैर्न |
| ७९ | ११ | नुपरितना | नुपरितता |
| | ” | तदर्थस्य | तदर्थस्पष्टार्थ |
| ८० | १ | प्रमोक्षाद्बुद्धिविवृद्धिः | विमोक्षाद्बुद्धिसिद्धिः |
| | २ | यशः । निः | यशोभिः |
| | २ | श्रेयसं | श्रेयससर्वं |
| | १७ | साकल्येन | साकल्पेन |
| | ” | रन्यनिरपेक्षतामाह | रन्यानिरपेक्षतामाह |
| | १९ | एवंहिसाकल्यं | एवंहिसाकल्पं |
| | २० | यदि | यत् |
| | ” | गुणपदेन | गुणदोषपदेन |
| | २१ | वृत्त | व्रत |
| | ” | चतुर्णाम··ल्यार्थम् | चतुर्णामेतदपिसाकल्यम् |
| | २१,२२ | सर्वस्येतो | सर्वइतो |
| ८१ | ५ | अतो | अस्त्यर्थे |
| | २०,२१ | वेद··इत्युक्तम् | तदविहितकर्मानुष्ठानफलंनप्राप्नोतिवेदविहितंकर्मफलंवेदफलमित्युक्तम् |
| | २१ | वैदिकानि | अविकलानि |
| | | अनुतिष्ठन्त्यथाचार | अनुतिष्ठन्तियथाआचारेण |
| | २२ | यद्वदन्ति | यद्वृत्तिः |
| ८२ | ६-७ | आचारान्··क्लेशकरं | आचारंदृष्ट्वाधर्मस्यमुनिभिर्गीतिः। श्रमिरिति क्लेशकरं |
| | ७ | तदापि | तदपि |
| | १८ | अतीन्द्रियः | ईदृशः |
| | १९ | नातिबहूनि | तानिबहूनि |
| | २० | तत्त्वभावभेदो | तत्स्वभावभेदो |

